टोऽड्विदितिङ्त्त्वात् नित्यंङित्वइतिसकारस्यलोपः आडुत्तमस्यपिच्चेत्याडागमः प्रत्ययस्यपि-त्त्वादनुदात्तत्वं धातुस्वरएव । स्वाध्यः ध्यैचिन्तायां स्वाङोरुपसर्गयोःप्राक्प्रयोगः अन्येभ्योऽपिदृश्यन्तइतिक्विप् दृशिग्रहणस्यविध्यन्तरोपसंग्रहणार्थत्वादत्रसंप्रसारणेसविपरपूर्वत्वं हलइति दीर्घः जसिपरनेकाचइतियणादेशः गतिकारकोपपदात्कृदित्युत्तरपदप्रकृतिस्वरत्वं उदात्तयणो-हल्पूर्वादितिजसउदात्तत्वंनभवति तत्रासर्वनामस्थानमित्यनुवृत्तेः अतउदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्येतिस्वरितत्वमेवभवति ॥ ९ ॥

९. सौ यज्ञ करनेवाले इन्द्र ! गायों और घोड़ों से तुम हमारी सारी अभिलाषायें भली भाँति पूर्ण करो। हम ध्यानस्थ होकर तुम्हारी स्तुति करते हैं।

इन्द्रावरुणयोरित्यादिकंनवर्चंसूक्तं अतएवनवशब्दानुवृत्तावनुक्रम्यते—इन्द्रावरुणयोरैन्द्रा-वरुणंयुवाकुपादनिचृताविति अत्रदेवतावसिष्ठा ऋषिश्छन्दसीपूर्ववदनुवर्तेते अयंतुविशेषः युवा-कुहीत्यादिकेद्वेऋचौपादनिचृन्नामकच्छन्दोयुक्ते विनियोगस्तुस्मार्तोलैंगिकोवाकश्चिदवगन्तव्यः।

तस्मिन्सूक्तेप्रथमामृचमाह—

इन्द्रावरुणयोरहंसम्राजोरवआवृणे । तानोमृळातईदृशे ॥ १ ॥

इन्द्रावरुणयोः । अहम् । सम्ऽराजोः । अवः । आ । वृणे ।
ता । नः । मृळातः । ईदृशे ॥ १ ॥

अहमनुष्ठातासम्राजोः समीचीनराज्योपेतयोः सम्यग्दीप्यमानयोर्वा इन्द्रावरुणयोर्देव-योःसंबन्धि अवोरक्षणंआवृणेसर्वतःप्रार्थये ता तौदेवौ ईदृशेएवंविधेऽस्मदीयवरणेनिमित्तभूतेस-तिमृळातः अस्मान्सुखयतः ॥ इन्द्रशब्दोरन्प्रत्ययान्तः वरुणशब्दउनन्प्रत्ययान्तः उभौनित्त्वादा-द्युदात्तौ समासे देवताद्वन्द्वेचेतिपूर्वपदस्यानङादेशः उभेयुगपदित्यनुवृत्तौदेवताद्वन्द्वेचेतियुगपदुभ-यपदप्रकृतिस्वरत्वम्। सम्राजोः राजृदीप्तौ सत्सूद्विषेत्यादिनाक्विप् समोमोऽनुस्वारइत्यनुस्वारेप्रा-प्ते मोराजिसमःक्वावितिमकारादेशः कृदुत्तरपदप्रकृतिस्वरत्वं कर्तृकर्मणोःकृतीतिकर्तरिषष्ठी। अ-वरक्षणादिषुभावेअसुन् नित्त्वादाद्युदात्तः । ता सुपांसुलुगित्यादिनाद्विवचनस्याडादेशः टिलोपे विभक्तेरुदात्तनिवृत्तिस्वरः। मृळातः मृडसुखने प्रार्थनायांलिङर्थेलेट् द्विवचनं तस्य तस् लेटो-डाटावित्याडागमः तुदादिभ्यःशः ङित्त्वाल्लघूपधगुणाभावः । ईदृशे त्यदादिषुदृशोनालोचने-कञ्चेतिइदम्शब्देउपपदेदृशेःकञ् उपपदसमासे इदंकिमोरीश्कीइतीदमईश् शित्त्वात्सर्वादेशः कञः कित्त्वाद्गुणाभावः ञित्त्वादुत्तरपदस्याद्युदात्तत्वम् उपपदसमासेकृदुत्तरपदप्रकृतिस्वरत्वे-नतदेवशिष्यते ॥ १ ॥

१. मैं सम्राट् इन्द्र और वरुण से, अपनी रक्षा के लिए, याचना करता हूं। ऐसी याचना करने पर ये दोनों हमें सुखी करेंगे।

द्वितीयामृचमाह—

गन्तारा हि स्थोऽवसे हवं विप्रस्य मावतः । धर्तारा चर्षणीनाम् ॥ २ ॥

गन्तारा । हि । स्थः । अवसे । हवम् । विप्रस्य । माऽवतः ।
धर्तारा । चर्षणीनाम् ॥ २ ॥

हेइन्द्रावरुणौ अवसे अवितुमनुष्ठातारं रक्षितुं मावतोमद्विधस्यविप्रस्य ब्राह्मणस्यर्त्विजो-
हवमाह्वानंगन्तारौस्थोहि गमनशीलौभवथःखलु· कीदृशौ चर्षणीनांमनुष्याणांधर्तारौ योग-
क्षेमसंपादनेनधारयितारौ ॥ गन्तारा गमेस्ताच्छील्येतृन् द्विवचनस्यसुपांसुलुगित्यादिनाआ-
कारादेशः ऋदृशोङिगुणः अप्तृन्नित्यादिनोपधादीर्घत्वं तृनोनित्त्वादाद्युदात्तत्वम्। स्थः अस
भुवि लट्मध्यमपुरुषद्विवचनंथस् अदिप्रभृतिभ्यःशपइतिशपोलुक् हिचेतिनिघातप्रतिषेधः।अव-
से अवरक्षणे तुमर्थेसेसेनित्यसेन् नित्त्वादाद्युदात्तः। हवं ह्वेञोबहुलंछन्दसीत्यनैमित्तिकेसंप्र-
सारणेपरपूर्वत्वेच ऋदोरबित्यप् गुणावादेशौ अपःपित्त्वादनुदात्तत्वं धातुस्वरएव। विप्रस्य टुव-
पीजसंताने ऋज्रेन्द्रेत्यादिनारन्निपातितोनित्त्वादाद्युदात्तः। मावतः वतुप्प्रकरणे यु-
ष्मदस्मद्भ्यांछन्दसिसादृश्यउपसंख्यानं वतुप् प्रत्ययोत्तरपदयोरस्मदोमपर्यन्तस्यमादेशः आसर्व-
नाम्नइतिदकारस्यआकारः सवर्णदीर्घः मतुपःपित्त्वादनुदात्तत्वम् प्रातिपदिकान्तोदात्तत्वे
सएवशिष्यते। धर्तारा धृञ्धारणे ण्वुल्तृचाविति तृच् एकाचउपदेशेऽनुदात्तादितीट्प्रतिषेधः गुणोरपर-
त्वं अप्तृन्नित्यादिनाउपधादीर्घः सुपांसुलुगित्याकारः तृचश्चित्त्वादन्तोदात्तत्वम्। चर्षणीनां
कृषेरादेश्चचइतिअनिप्रत्ययः तत्संनियोगेनककारस्यचकारः प्रत्ययाद्युदात्तत्वंबाधित्वा छा-
न्दसमन्तोदात्तत्वम् अथवानामन्यतरस्यामितिविभक्तेरुदात्तत्वम् तत्रहि मतुपि योह्रस्वान्तः
अन्तोदात्तःतस्मात्परस्यनामउदात्तत्वमितिव्याख्यातम्॥ २ ॥

२. तुम मेरे जैसे पुरोहितों की रक्षा के लिए मेरा आह्वान ग्रहण करो। तुम मनुष्यों के स्वामी हो।

तृतीयामृचमाह—

अनुकामं तर्पयेथामिन्द्रावरुण राय आ । ता वां नेदिष्ठमीमहे ॥ ३ ॥

अनुऽकामम् । तर्पयेथाम् । इन्द्रावरुणा । रायः । आ । ता ।
वाम् । नेदिष्ठम् । ईमहे ॥ ३ ॥

इन्द्रावरुणा हेइन्द्रावरुणौ अनुकामं अस्मदीयाभिलाषमनुरायोधनस्यप्रदानेन आतर्प-
येथां सर्वतोस्मांस्तृप्तान्कुरुतं वयंप्रदायप्रदायधनंकामयामहेतदातदाप्रयच्छतमित्यर्थः ता वां

यादृशौ युवां नेदिष्ठं अतिशयेन सामीप्यं यथा भवति तथा ईमहे याचामहे कालविलंबमन्तरेण धनं दातव्यमित्यर्थः सप्तदशसु याञ्चाकर्मसु ईमहे इति पठितम् ॥ अनुकामं कामस्य पश्चादनुकामं अथवा कामं अनु अनुकामं अनुरिह पश्चादर्थे अथवा वीप्सालक्षणे यथार्थे योग्यता वीप्सा पदार्थानतिवृत्तिः सादृश्यं चेति चत्वारो हि यथार्था गृहीताः अव्ययं विभक्तीत्यादिना अव्ययीभावसमासः अव्ययीभावश्चेत्यव्ययसंज्ञायां अव्ययादाप्सुप इति प्राप्तस्य लुकोपवादो नाव्ययीभावादतोऽम्त्वपञ्चम्या इति विभक्तेरमादेशः समासस्येत्यन्तोदात्तत्वम् । सर्पयेथां ऋपेर्ण्यन्ताल्लोटो णिचश्चेत्यात्मनेपदम् मध्यमद्विवचनमाथां टेरेत्वे आमेतरित्यामादेशः शपि सत्यतो येय इत्यनुवृत्तौ आतो ङित इत्याकारस्य इयादेशः आर्धधातुकोपलोपश्च । इन्द्रावरुणा सुपां सुलुगिति द्विवचनस्य आकारः आमन्त्रिताद्युदात्तत्वं संहितायामाकारस्य ह्रस्वत्वम् । रायः ऊडिदमित्यादिना विभक्तेरुदात्तत्वम् । वा सुपां सुलुगिति विभक्तेराकारः पदात्परत्वाद्युवामित्यस्य वामादेशोऽनुदात्तः । नेदिष्ठं अतिशयेनान्तिकं अतिशायने इष्ठन् अन्तिकबाढयोर्नेदसाधाविति नेदादेशः यस्येति लोपः इष्ठनो नित्त्वादाद्युदात्तत्वम् । ईमहे ईङ्गतौ ङित्त्वादात्मनेपदम् बहुलं छन्दसीति श्यनो लुक् निघातः ॥ ३ ॥

३. इन्द्र और वरुण! हमारे मनोरथ के अनुसार, धन देकर हमें तृप्त करो। हमारी यही इच्छा है कि तुम हमारे पास रहो।

चतुर्थीमृचमाह—

युवाकु हि शचीनां युवाकु सुमतीनाम् । भूयाम वाजदाव्नाम् ॥ ४ ॥

युवाकु । हि । शचीनाम् । युवाकु । सुऽमतीनाम् । भूयाम ।
वाजऽदाव्नाम् ॥ ४ ॥

हि यस्मात्कारणात् शचीनामस्मदीयकर्मणां संबन्धि सोमरूपं हविर्युवाकु सतीवर्यैकधनात्मकैरुदकैः पयःसक्त्वादिद्रव्यान्तरैश्च मिश्रितं तथा सुमतीनां शोभनबुद्धियुक्तानामृत्विजां स्तोत्ररूपं वचनमपि युवाकु नानाविधैःस्तुत्यगुणैर्मिश्रितं तस्मात्कारणात् हे इन्द्रावरुणौ तथाविधं हविः स्वीकुर्वतोर्युवयोः प्रसादाद्वयं वाजदाव्नां अन्नप्रदानां पुरुषाणां मध्ये मुख्या भूयाम भवेम अपः अप्न इत्यादिषु षड्विंशतिसंख्याकेषु कर्मनामसु शची शमी इति पठितम् ॥ युवाकु यु मिश्रणे कठिकुषिभ्यां काकुरित्यत्र बाहुलकाद्यौतेरपि काकुः प्रत्ययः कित्त्वेन गुणाभावादुकारस्योवङादेशः प्रत्ययस्वरेण मध्योदात्तत्वम् । शचीशब्दः केषांचिन्मते शार्ङ्गरवादिङीनन्तो नित्त्वादाद्युदात्तः उभे वनस्पत्यादिषु युगपदित्यत्र वृत्तिकृतोक्तम् । सुमतीनां विद्याम सुमतीनामित्यत्रोक्तम् । भूयाम प्रार्थनायां लिङ् उत्तमबहुवचने नित्यं ङित इति सकारलोपः यासुट् परस्मैपदेषूदात्तो ङिच्चेत्युदात्तो यासुडागमः लिङःसलोपोऽनन्त्यस्येति सकारलोपः बहुलं छन्दसीति शपो लुक् सति शिष्टत्वाद्यासुडुदात्त एव

शिष्यते । वाजदात्नां वाजंददातीतिवाजदावानः आतोमनिन्नित्यादिनावनिप् तस्यपित्त्वाद्धातु-स्वरएवशिष्यते समासे कृदुत्तरपदप्रकृतिस्वरत्वेनसएवशिष्यते आमिअल्लोपोनइत्यकारलोपः तस्याचःपरस्मिन्निविस्थानिवद्भावाल्लोपोव्योर्वलीतियकारलोपोनभवति ॥ ४ ॥

४. हमारे यज्ञ में हव्य मिला हुआ है और इसमें पुरोहितों का स्तोत्र भी सम्मिलित हो गया है; इसलिए हम अन्नदाताओं में अग्रणी हों।

इन्द्रः॑ सहस्रदाव्नां॒ वरु॑णः॒ शंस्या॑नाम् ॥ क्रतु॑र्भवत्यु॒क्थ्यः॑ ॥ ५ ॥ ३२ ॥

इन्द्रः॑ । स॒ह॒स्र॒ऽदाव्ना॑म् । वरु॑णः । शंस्या॑नाम् । क्रतुः॑ । भ॒व॒ति॒ । उ॒क्थ्यः॑ ॥ ५ ॥

अयमिन्द्रः सहस्रदाव्नां सहस्रसंख्याकधनप्रदानांमध्ये क्रतुःधनदानस्यकर्ताभवति प्रभूतंप्रदातीत्यर्थः तथा वरुणःशंस्यानांस्तुत्यानांमध्ये उक्थ्यःस्तुत्योभवति अतिशयेनस्तुत्यइत्यर्थः॥ वरुणः उनन्प्रत्ययोनित्त्वादाद्युदात्तः । शंस्यानां शंसुस्तुतौ ऋहलोर्ण्यत् तित्स्वरितमितिप्राप्ते ईड-वंदवृशंसदुहांण्यतइत्याद्युदात्तः । क्रतुः कृञः कृतुरितिकतुः कित्त्वाद्गुणाभावेयणादेशः प्रत्ययस्वरे-णाद्युदात्तः । उक्थ्यः उक्थंशस्त्रं तेनस्तुत्यत्वेनतत्रभवउक्थ्यः भवेछन्दसीतियत् यस्येति लोपः अत्रतित्स्वरितमित्येतद्बाधित्वातीर्ध्यायकूम्यायेत्यादिवत्प्रचुलात् यतोनावइतिप्राप्तमाद्यु-दात्तत्वम् सर्वेविधयश्छन्दसिविकल्प्यन्तइतिनक्रियते ननुयस्येतिलोपात्प्रागेवतित्स्वरितत्वमस्तु नहिवदायतोनावइत्येतदस्ति प्रचुलाभावात् अतएवऊर्म्यायचसूर्म्यायचेत्यादौस्वरितत्वं दृश्यते नचपरत्वान्नित्यत्वाच्च यस्येतिलोपेनप्रथमंतोभाव्यमितिवाच्यम् प्रकृतिप्रत्ययाश्रयात्व-हिरङ्गायस्येतिलोपात्प्रत्ययमात्राश्रयतयाअन्तरङ्गत्वेनतित्स्वरितमित्येतस्यप्राबल्यात् अतऊ-र्म्यायेत्यादिवत् उक्थ्यइत्यत्रापिलक्षणतएवस्वरितत्वंभविष्यतीतिकिंछान्दसेन यत्रहिलोप-मन्तरेणप्रचुलं तत्रयतोनावइत्येतद्भवति यथाचेयंजेयमितिलोपनिबन्धनप्रचुलप्रदेशेषुतु स्वरि-तेनैवभवितव्यमिति एवंतर्हितीर्ध्यायकूम्यायेत्यादौयदाद्युदात्तत्वं तदेवच्छान्दसमस्तु अथ भगतु वार्णादाङ्गंबलीयइत्यन्तरङ्गत्वेऽपिस्वरितत्वंबाधित्वालोपएवभविष्यति तर्हिउक्थ्येऊर्म्यायसूर्म्यायि-त्यादौचछान्दस्यमस्तु सर्वथैकत्रछान्दस्यात्रमुच्यते ॥ ५ ॥

५. असंख्य धनदाताओं में इन्द्र धन के दाता और स्तवनीय देवों में वरुण स्तुति-पात्र हैं।

इतिप्रथमस्यप्रथमेद्वात्रिंशोवर्गः ॥ ३२ ॥

---

०१ वीरवीर्यौचेत्यत्रवीर्यग्रहणाद्यतोनावइत्यनित्यमितिज्ञापितत्वात्तित्स्वरितमितिस्वरितत्वम् । २. आवूल्यं भृगवाणः ( ऋ० सं० १. ५. १५. ) इत्यत्रवेदभाष्यम् ।

सूक्तेषष्ठीमृचमाह—

तयोरिदवंसावयंसनेमनिचंधीमहि । स्यादुतप्ररेचनम् ॥ ६ ॥

तयोः । इत् । अवंसा । वयम् । सनेम । नि । च । धीमहि ।
स्यात् । उत । प्रऽरेचनम् ॥ ६ ॥

तयोरित्पूर्वोक्तयोरिन्द्रावरुणयोरेव अवसा रक्षणेन वयमनुष्ठातारः सनेम संभजेम धनमितिशेषः निधीमहिच प्राप्तेधनेयावदपेक्षितं तावद्भुक्त्वा ततोवशिष्टं धनंकंचिन्निधिरूपेणस्थापयामश्च उतअपिचप्ररेचनं भुक्तान्निहिताच्च प्रकर्षेणाधिकंधनं स्यात् संपद्यताम् ॥ अवसा असुन् नित्त्वादाद्युदात्तः वयं यूयंहिस्थेत्यत्रयदुक्तंतदत्रद्रष्टव्यम् । सनेम आशिषिलिङ् तस्यमस् नित्यंङित इतिसकारलोपः किदाशिषीतियासुट् छन्दस्युभयथेतिसार्वधातुकमप्यस्तीति लिङःसलोपोऽनन्त्यस्येतिसकारलोपः अतोयेयइतिइयादेशः लोपोव्योर्वलीतियलोपः लिङ्याशिष्यङिति अङ् आद्गुणः पादादित्वाच्चनिघातः । धीमहि डुधाञ्धारणपोषणयोः आशिषि लिङोमहिङ् तस्यछन्दस्युभयथेतिसार्वधातुकार्धधातुकसंज्ञे तत्रसार्वधातुकत्वेनलिङःसलोपोऽनन्त्यस्येतिसकारलोपः सार्वधातुकमपिदितिङित्त्वम् शप् च बहुलंछन्दसीतिजुहोत्यादेरपिशपोलुक् आर्धधातुकत्वादातोलोपइटिचेत्याकारलोपः निघातः सनेमेत्यपेक्षयाद्वितीयत्वादचघायोगेमध्येतिननिषेधः । स्यात् अस्तेःप्रार्थनायांलिङ् तिप् इतश्चेतीकारलोपः यासुट्परस्मैपदेषूदात्तोङिच्चेति यासुट्ङित्त्वे अदिप्रभृतिभ्यःशपइतिशपोलुक् श्नसोरल्लोपइत्यकारलोपः पादादित्वाच्चनिघातः । उत एवमादीनामन्तइत्यन्तोदात्तः । प्ररेचनं रिचिर्विरेचने भावेल्युट् योरनादेशः लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् गतिसमासः कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ ६ ॥

६. उनके रक्षण से हम धन का उपयोग और संचय करते हैं। इसके अतिरिक्त हमारे पास यथेष्ट धन हो।

सप्तमीमृचमाह—

इन्द्रावरुणवामहंहुवेचित्रायराधसे । अस्मान्त्सुजिग्युषस्कृतम् ॥ ७ ॥

इन्द्रावरुणा । वाम् । अहम् । हुवे । चित्राय । राधसे । अस्मान् ।
सु । जिग्युषः । कृतम् ॥ ७ ॥

इन्द्रावरुणा हेइन्द्रावरुणौ वांयुवामुभौ अहं हुवे आह्वयामि किमर्थं चित्रायमणिमुक्तादिरूपेणविविधायराधसेधनाय तदाहूतौ युवांअस्माननुष्ठातॄन् सुजिग्युषः शत्रुविषयेसुष्ठुजयमुक्तान् कृतं कुरुतम् ॥ इन्द्रावरुणा सुपांसुलुगित्यादिना संबोधनस्यआकारः देवताद्वन्द्वेचेति

पूर्वपदस्यानङ् आमन्त्रिताद्युदात्तत्वम् संहितायांछान्दसंह्रस्वत्वम्। हुवे ह्वयतेर्लट्युत्तमैकवचनं इट् शपइत्यनुवृत्तौबहुलंछन्दसीतिलुक् ह्वइत्यनुवृत्तौबहुलंछन्दसीतिसंप्रसारणं परपूर्वत्वं अचि-श्नुधात्वित्यादिनाउवङ् नचहुश्नुवोरित्यादिनायणादेशः जुहोतेरेवहिमविपदोकस्यतत्वन्पुनरस्य लाक्षणिकत्वात् इटःप्रत्ययस्वरेणोदात्तत्वं पादादित्वान्ननिघातः। राधसे असुन् नित्त्वादाद्युदात्तत्वम्।अस्मान् शसि द्वितीयायांचेत्यात्वम् शसोनइतिनत्वम्। जिग्युषः जिजये लिटःक्वसुश्चेति क्वसुः द्विर्भावः सन्लिटोर्जेरितिद्वितीयस्यकुत्वं क्वसोःकित्त्वाद्गुणाभावः क्रादिनियमात्प्राप्तस्येटो-वस्वेकाजाद्धसामितिनियमेननिवृत्तिः द्वितीयाबहुवचनंशस् भसंज्ञायां वसोःसंप्रसारणमिति संप्रसारणंपरपूर्वत्वं एरनेकाचइतियणादेशः शासिवसिघसीनांचेतिषत्वं प्रत्ययस्वरेणउकार-उदात्तः। कृतं कृञ्करणे लोण्मध्यमद्विवचनस्य लङ्वल्लावत्समादेशः शपोबहुलंछन्दसीतिलुक् विकृतिङ्इतिनिघातः ॥ ७ ॥

७. इन्द्र और वरुण! तरह-तरह के धनों के लिए मैं तुम लोगों को बुलाता हूँ। हमें भली भाँति विजयी बनाओ।

इन्द्रा॑वरुण॒नूनुवा॒ंसिषा॑सन्तीषुधी॒ष्वा। अ॒स्मभ्यं॒शर्म॑यच्छतम् ॥ ८ ॥

इन्द्रा॑वरुणा। नु। नु। वा॒म्। सिसा॑सन्तीषु। धी॒षु। आ।
अ॒स्मभ्य॑म्। शर्म॑। य॒च्छ॒त॒म् ॥ ८ ॥

इन्द्रावरुणा हेइन्द्रावरुणौ धीष्वस्मदीयबुद्धिषुवां युवां सिषासन्तीषु सनितुं संभक्तुं सम्यक् सेवितुमिच्छन्तीषुसतीष्वानीमासमन्तादस्मभ्यं शर्मसुखं नूनु अतिशयेनक्षिप्रंयच्छतंदत्तं यद्वैरा-विसंस्थाकेषुक्षिप्रनामसु नुमक्षिवितिपठितम् तस्यद्विरावृत्त्यबलात् अतिशयोलभ्यते॥इन्द्रावरुणा उक्तम्। नूनु ऋचितुनुघमक्षुतङ्कुत्रोरुष्याणामिति पूर्वस्यदीर्घत्वम्। सिषासन्तीषु वनषणसंभक्तौ धात्वादेःषःसः इच्छायांसन् द्विर्भावोहलादिशेषः सन्यतइतीत्वं आदेशप्रत्यययोरितिषत्वं सनीवन्तेत्यादिनाविकल्पादिडभावः जनसनखनांसञ्झलोरितिनकारस्यआकारः उपरिष्टः शतृ कर्तरिशप् उगितश्चेतिङीप् शप्श्यनोर्नित्यमितिनुम् ङीपःशपश्चपित्त्वाच्छतुश्चलसार्व-धातुकत्वेनचानुदात्तत्वम् सनोनित्त्वादाद्युदात्तत्वम् तदेवशिष्यते। धीषु सावेकाचइतिविभक्तेरुदात्तत्वम्। अस्मभ्यं अस्मभ्यमप्रतिभ्कृतइत्यत्रोक्तम्। यच्छतं दाण्दाने शपि पाघ्रेत्यादिनायच्छादेशः ॥ ८ ॥

८. इन्द्र और वरुण! तुम्हारी अच्छी तरह से सेवा करने के लिए हमारी बुद्धि अभिलाषिणी है। हमें शीघ्र सुख दो।

नवमीमृचमाह—

प्रवा॑मश्नोतुसुष्टु॒तिरिन्द्रा॑वरुण॒यांहु॒वे। याम॒धाथे॑स॒धस्तु॑तिम्॥९॥ २३॥

प्र। वाम्। अश्नोतु। सुऽस्तुतिः। इन्द्रावरुणा। याम्। हुवे।
याम्। ऋधाथे इति। सधऽस्तुतिम्॥ ९॥ ३३॥

इन्द्रावरुणा हेइन्द्रावरुणौ यामस्मत्कर्तृकांशोभनस्तुतिंप्रतिहुवेयुवामुभावाह्वयामि किञ्च सधस्तुतिं युवयोरुभयोःसाहित्येनक्रियमाणयास्तवक्रिययायुक्तां यां सुष्टुतिं प्रतिलभ्य ऋधाथे युवांवर्धाथे तादृशीसुष्टुतिः शोभनस्तुतिहेतुभूतऋक्समूहोवामश्नोतु युवां व्याप्नोतु॥ अश्नोतु अशूव्याप्तौ लोटोव्यत्ययेनतिप् स्वादिभ्यःश्नुः। सुष्टुतिः नञ्विषेअस्यसुष्टुतिमित्यत्रोक्तम्। इन्द्रावरुणाहुवेउक्ते अवनु यद्वृत्तयोगादनिघातः। ऋधाथे ऋधुवृद्धौ लट् व्यत्ययेनात्मनेपदम् मध्यमद्विवचनेश्नोर्बहुलंछन्दसीतिलुक् प्रत्ययस्वरेणआकारउदात्तः यच्छब्दयोगान्ननिघातः। सधस्तुतिं सहस्तुतिर्यस्यांसुष्टुतौसासधस्तुतिः अत्रसुष्टुतिरित्यन्यपदार्थे स्तुतिशब्दस्यस्तूयतेअनयेतिकरणसाधनत्वेनऋक्परत्वे अयंस्तुतिशब्दोभावसाधनतयास्तवनक्रियापरः तस्मिन्भावसाधनत्वेनक्रियापरे अयंकरणसाधनतयाऋक्परइतिसमस्यमानपदार्थादन्यः सहेत्यत्रहकारस्यव्यत्ययेनधकारः सहशब्दएवमादित्वादन्तोदात्तः बहुव्रीहित्वेनपूर्वपदप्रकृतिस्वरत्वम्॥ ९॥

९. इन्द्र और वरुण! जिस स्तुति से हम तुम्हें बुलाते हैं, अपनी जिस स्तुति को तुम परिवर्द्धित करते हो, वही सुशोभन स्तुति तुम्हें प्राप्त हो।

॥इतिप्रथमस्यप्रथमेत्रयस्त्रिंशोवर्गः॥ ३३॥

इतिचतुर्थोनुवाकः॥ ४॥

सोमानमित्यादिषट्सूक्तात्मकेपञ्चमानुवाकेसोमानमित्यादिकंनवर्चंसूक्तम् ऋषिच्छन्दसी पूर्ववत् देवताविशेषस्त्वेवमनुक्रम्यते सोमानमितिपञ्चब्राह्मणस्पत्याश्चतुर्थ्यामिन्द्रश्चसोमश्च पञ्चम्यांदक्षिणाचान्त्याःसादसस्पत्यानाराशंसीवान्त्येति सूक्तगताआद्याःपञ्चर्चोब्रह्मणस्पतिदेवताकाः तासांमध्येसघावीरइत्येतस्याश्चतुर्थ्याऋचोब्रह्मणस्पतिरिन्द्रश्चसोमश्चेतितिस्रोदेवताः त्वन्तमित्येतस्याःपञ्चम्यादक्षिणयासहपूर्वोक्तास्तिस्रोदेवताः षष्ठीमारभ्यतिसृणांसदसस्पतिर्दैवता नराशंसमित्येतस्यानवम्याःसदसस्पतिर्नराशंसोवाविकल्प्यते विनियोगस्तुपूर्ववत्॥

तस्मिन्सूक्तेप्रथमामृचमाह—

सोमानंस्वरणंकृणुहिब्रह्मणस्पते। कक्षीवन्तंयऔशिजः॥ १॥

सोमानम्। स्वरणम्। कृणुहि। ब्रह्मणः। पते। कक्षीवन्तम्।
यः। औशिजः॥ १॥

हेब्रह्मणस्पते एतन्नामकदेव सोमानमभिषवस्यकर्तारंमांअनुष्ठातारंस्वरणंदेवेषुप्रकाशनवन्तं कृणुहि कुरु अत्रदृष्टान्तः—कक्षीवन्तंएतन्नामकमृषिं इवशब्दोऽत्राध्याहर्तव्यः कक्षीवान्यथादेवेषुप्रसिद्धः तद्वदित्यर्थः यःकक्षीवानृषिरौशिजःउशिजःपुत्रःतमिवेतिपूर्वत्रयोजना कक्षीवदोनुष्ठातृषुमुनिषुप्रसिद्धिःतैत्तिरीयैराम्नायते—एतंवैपरआट्णारःकक्षीवाँऽऔशिजोवीतहव्यः श्रायसस्त्रसदस्युःपौरुकुत्स्यःप्रजाकामाअचिन्वतेति । ऋगन्तरेऽप्यृषित्वकथनेनुष्ठातृप्रसिद्धिः सूच्यते—अहंकक्षीवाँऋषिरस्मिविप्रइति । तस्मादस्यानुष्ठातारंमतिदृष्टान्तत्वंयुक्तं सोयंमन्त्रोयास्केनैवंव्याख्यातः—सोमानंसोतारंप्रकाशनवन्तंकुरुब्रह्मणस्पतेकक्षीवन्तमिवयऔशिजःकक्षीवान्कक्ष्यावानौशिजउशिजःपुत्रउशिग्वष्टेःकान्तिकर्मणोपित्वयंमनुष्यकक्षएवाभिप्रेतःस्यात्तंसोमानं सोतारंमांप्रकाशनवन्तंकुरुब्रह्मणस्पतइति । अस्मिन्मन्त्रेसोमानमितिपदेनब्रह्मणइतिपदेनसूचितं तात्पर्यं तैत्तिरीयाआमनन्ति—सोमानंस्वरणमित्याह सोमपीथमेवावरुन्धे कृणुहिब्रह्मणस्पतइत्याह ब्रह्मवर्चसमेवावरुन्धइति ॥ सोमानं सुनोतीति षुञ्अभिषवे अन्येभ्योऽपिदृश्यन्तइति मनिन् दृशिग्रहणस्यविध्यन्तरोपसंग्रहणार्थत्वान्नित्त्वेऽपिनाद्युदात्तत्वं किंतुप्रत्ययस्वरएव उणादिषुवासोमनशब्दोद्रष्टव्यः बहुलग्रहणादौणादिकोवामनिर्द्रष्टव्यः । स्वरणं प्रख्यातं स्वृशब्दोपतापयोः छन्दस्यल्युटोबहुलमितिकर्मणिल्युट् लिद्दीत्यकारउदात्तः । कृणु हि कृविहिंसाकरणयोश्च इदितोनुम्धातोरितिनुम् लोटःसिपोहिःशपिप्राप्तेधिन्विकृण्व्योरचेत्युप्रत्ययः तत्सन्नियोगेनवकारस्याकारः तस्यातोलोपइतिलोपः तस्यस्थानिवद्भावात्लघूपधगुणः हेर्ङित्त्वादुकारस्यनगुणःउतश्चप्रत्ययाच्छन्दोवावचनमितिहेर्नलुक् सतिशिष्टस्वरबलीयस्त्वंमन्यत्र विकरणेभ्यइतिवचनाद्धेरेवप्रत्ययस्वरेणोदात्तत्वम् पादादित्वान्ननिघातः । ब्रह्मणः षष्ठ्याःपतिपुत्रेत्यादिनासंहितायांविसर्जनीयस्यसकारः सुबामन्त्रितपराङ्गवद्भावात्तदद्वयस्यामन्त्रितनिघातः। कक्षीवन्तं कक्षेभवाकक्ष्या अश्वोदरसंबन्धिनीरज्जुः भवेछन्दसीतियत्प्रत्ययः साअस्यास्तीत्यर्थेआसंदीवदष्ठीवच्चक्रीवत्कक्षीवदितिऋषिविशेषनामकक्षीवच्छन्दोनिपातितः छन्दसीरइतिवत्वं यप्रत्ययस्वरेणतदादेशोनिपातितईकारउदात्तः मतुप्सुपौपित्त्वादनुदात्तौ । औशिजः वशकान्तौ इगुपधात्कित्वनुवृत्तौ वशेःकिच्चेतिइजिप्रत्ययः तस्यकित्त्वाद्ग्रहिज्येत्यादिनासंप्रसारणं परपूर्वत्वेगुणाभावः तवस्यापत्यमितिप्राग्दीव्यतोऽण् आदिवृद्धिः प्रत्ययस्वरेणान्तोदात्तत्वम् ॥१॥

१. हे ब्रह्मणस्पति ! मुझ सोमरस-दाता को उशिज्-पुत्र कक्षीवान् की तरह देवताओं में प्रसिद्ध करो।

द्वितीयामृचमाह—

**योरेवान्योअमीवहावसुवित्पुष्टिवर्धनः । सनःसिषक्तुयस्तुरः ॥ २ ॥**

---

१ तै०सं. ५. ६. ५ । २ ऋ० ४. ६. १५ । ३ नि० ६. १०. । ४ तै० सं. १. ५. ७. ।

यः । रे॒वान् । यः । अ॒मी॒व॒ऽहा । व॒सु॒ऽवित् । पु॒ष्टि॒ऽवर्धनः ।
सः । नः॒ । सि॒स॒क्तु॒ । यः । तु॒रः ॥ २ ॥

योब्रह्मणस्पतिः रेवान्धनवान्यश्चामीवहारोगाणांहन्ता वसुविद्धनस्यलब्धा पुष्टिवर्धनः पुष्टेर्वर्धयिता यश्चतुरःत्वरोपेतः शीघ्रफलदः सब्रह्मणस्पतिर्नोऽस्मान् सिषक्तुसेवतां परिगृह्यानुगृह्णात्वित्यर्थः अत्रसिषक्तुशब्दस्यसेवार्थत्वंयास्कआह—सिषक्तुसचतइतिसेवमानस्येति[1]। प्रत्यायकौशब्दावितिशेषः ॥ रेवान् रयिरस्यास्तीतिमतुप् रयेर्मतौबहुलमितियकारस्यसंप्रसारणं परपूर्वत्वं छन्दसीरइतिवत्वं आद्गुणः ननुवत्वस्यासिद्धत्वाद्बहिरङ्गत्वाच्चप्रागेवगुणेकृते इवर्णाभावान्नवत्वं नचान्त्यादिवच्चेत्यादिवद्भावेनइवर्णसंपादनम् वर्णाश्रयविधौतत्प्रतिषेधात् अन्यथास्वद्भिरित्यत्रसवर्णदीर्घस्यान्तवद्भावेनअकारत्वादतोभिसऐसित्यैसादेशःस्यात् नचनिरवकाशत्वेनवत्वस्यानवकाशत्वम् अग्निवान्मेदर्भस्तंबैः[2]। ऊर्णनाभिहरिवइत्यादावकाशलाभात् सत्यं अत्रगुणप्रवृत्तेः प्रागिकारात्परोमतुप्कदाचिदिवर्णात्परस्यमतुपःपश्चादेकारादेशेनइवर्णाभावेऽपिभवतिवत्वमितिछन्दसीरइतिसूत्रकृताविवक्षितम् अमुनैवाभिप्रायेण हरिवइत्यादिकमुदाहृत्यापि अन्येवृत्तिकृताआरेवानित्यप्युदाहृतम् ह्रस्वनुड्भ्यामित्यत्रआरेशब्दान्मतुपइत्युदात्तत्वंवक्तव्यमित्यत्रारेशब्दोरेशब्दस्याप्युपलक्षणम् अतएवहि रेवाँइन्द्रेत्यादौमतुपउदात्तत्वंदृष्टम् अथवाह्रस्वनुड्भ्यामित्यत्रापिकदाचिद्ध्रस्वात्परस्यमतुपउदात्तत्वमित्येवव्याख्येयं एवं चसंप्रसारणपरपूर्वत्वयोःकृतयोर्गुणात्प्राक्ह्रस्वात्परोमतुबितिरेवानारेवानित्यादौसर्वत्रोदात्तत्वंसिध्यति अयमेवसूत्रकृतोभिप्रायोवार्तिककृताव्याख्यातइति । अमीवहा अमरोगइत्येतस्माद्वन्प्रत्ययेनअमीवशब्दोनिपातितः तंहन्तीतिबहुलंछन्दसीतिक्विप् कृदुत्तरपदप्रकृतिस्वरत्वम् । वसुवित् वसुविन्दतीतिवसुवित् क्विप्चेतिक्विप् उत्तरपदप्रकृतिस्वरत्वम् । पुष्टिवर्धनः वर्धयतेर्नन्द्यादित्वाल्ल्युः लितीतिप्रत्ययात्पूर्वस्योदात्तत्वं पुष्टेर्वर्धनइतिकर्मणिषष्ठ्यासमासः कृदुत्तरपदप्रकृतिस्वरत्वम् । सिषक्तु षचसमवाये लोटि बहुलंछन्दसीतिशपःश्लुः श्लाविति द्वित्वे इत्वाविशेषेण बहुलंछन्दसीत्यभ्यासाकारस्यइकारः । तुरः तुरत्वरणे इगुपधज्ञाप्रीकिरःकः प्रत्ययस्वरः ॥२॥

२. जो सम्पत्तिशाली, रोगापसारक, धन-दाता, पुष्टि-वर्द्धक और शीघ्र फलदाता हैं, वे ही ब्रह्मणस्पति या बृहस्पति देवता हमारे ऊपर अनुग्रह करें।

तृतीयामृचमाह—

मानःशंसोअररुषोधूर्तिःप्रणङ्मर्त्यस्य । रक्षाणोब्रह्मणस्पते ॥ ३ ॥

मा । नः॒ । शंसः॑ । अर॑रुषः । धू॒र्तिः । प्रण॑क् । मर्त्य॑स्य । रक्ष॑ । नः॒ । ब्र॒ह्म॒णः॒ । प॒ते॒ ॥ ३ ॥

१ नि० ३. २१. । २ तै० ब्रा० २. २. १. । ३ ऋ० सं. १. १. ५. । ४ तै०. सं० २. २. १२. ।

अररुषोमर्त्यस्यउपद्रवंकर्तुमस्मत्समीपंप्राप्तस्यशत्रुरूपस्यमनुष्यस्यधूर्तिःहिंसकःशंसः शंसनमधिक्षेपइत्यर्थः तादृशोवाग्विशेषोनोस्मान्माप्रणक्मासंपृणक्तु शत्रुणाप्रयुक्तोधिक्षेपः कदाचिदस्मान्माप्राप्नोत्वित्यर्थः तदर्थंहेब्रह्मणस्पते नोऽस्मान् रक्षपालय ॥ मा निपातः । शंसनंशंसः भावेघञ् ञित्वादाद्युदात्तः । अररुषः अर्तेररुरित्यन्वयभावितण्यर्थात् ऋगतावित्यस्मादरुस् गुणोरपरत्वं प्रत्ययस्वरेमाप्ते वृषादित्वादाद्युदात्तः । धूर्तिः धुर्वीहिंसायां क्तिन्नूर्त्तौचसंज्ञायामितिक्तिन् विधुनवथसिद्धुसरकसेषुचेतीट्प्रतिषेधः उपधायाश्चेत्युपधादीर्घत्वं वलिलोपंबाधित्वाच्छ्वोःशूडनुनासिकेचेतिवकारलोपः । प्रणक् पृचीसंपर्के लङस्तिप् इतश्चेतीकारलोपः हल्ङ्यादिलोपः कुत्वं रुधादिभ्यःश्नम् तस्यश्नम्प्रत्ययोबहुलमित्यडागमः यणादेशः अकारस्यागमानुदात्तत्वंबाधित्वा श्नस्यस्येनउदात्तत्वम् चादिलोपेविभाषेतिनिघाताभावः । मर्त्यस्य वक्ष्यमाणत्वागे असिदसिशस्त्यादिनाऔणादिकस्तन्प्रत्ययः मर्तेषु भवइत्यर्थेभवेछन्दसि इतियत् यतोनावइत्याद्युदात्तत्वम्। रक्ष रक्षपालने शपःपित्त्वादनुदात्तत्वं धातुस्वरएवशिष्यते पादादित्वान्ननिघातः । रक्षाणः द्व्यचोऽतस्तिङइतिदीर्घः उपसर्गाद्बहुलमितिबहुलग्रहणात् अनुपसर्गादपिनसोणत्वम् । ब्रह्मणस्पते षष्ठ्याःपतिपुत्रेतिसंहितायांविसर्गस्यसकारः सुबामन्त्रितपराङ्गवत्स्वरेइत्याद्युदात्तत्वम्सामन्त्रितनिघातः ॥ ३ ॥

३. अधम मचानेवाले मनुष्यों की आह-भरी निन्दा हमें न छू सके। हे ब्रह्मणस्पति ! हमारी रक्षा करो ।

स घा॑ वी॒रो न रि॑ष्यति॒ यमिन्द्रो॒ ब्रह्म॑ण॒स्पतिः॑ । सोमो॑ हि॒नोति॒ मर्त्य॑म् ॥४॥

सः । घ॒ । वी॒रः । न । रि॒ष्य॒ति॒ । यम् । इन्द्रः॑ । ब्रह्म॑णः । पतिः॑ ।
सोमः॑ । हि॒नोति॑ । मर्त्य॑म् ॥ ४ ॥

इन्द्रोदेवोयंमर्त्यंयक्ष्यमाणंहिनोतिप्रामोतिवर्धयतिवा तथाब्रह्मणस्पतिर्देवोहिनोतितथासोमोहिनोति सघ सएवयजमानःवीरोवीर्ययुक्तःसन् नरिष्यति नविनश्यति ॥ घ चादिरनुदात्तः संहितायां ऋचितुनुघमक्षुतङ्कुत्रोरुष्याणामितिदीर्घः । ब्रह्मणस्पतिः उक्तम्। हिनोति हिगतौवृद्धौच स्वादिभ्यःश्नुः तिपःपित्त्वात्श्नुप्रत्ययस्वरएवशिष्यते ॥ ४ ॥

४. जिसे इन्द्र, वरुण और सोम उन्नत करते हैं, वह वीर मनुष्य विनाश को प्राप्त नहीं होता ।

पञ्चमीमृचमाह—

त्वं तं ब्र॑ह्मणस्पते॒ सोम॒ इन्द्र॑श्च॒ मर्त्य॑म् । दक्षि॑णा पा॒त्वंह॑सः ॥ ५ ॥ २४ ॥

त्वम् । तम् । ब्रह्मणः । पते । सोमः । इन्द्रः । च । मर्त्यम् ।
दक्षिणा । पातु । अंहसः ॥ ५ ॥ ३४ ॥

हेब्रह्मणस्पते त्वंतंमर्त्यं अनुष्ठातारंमनुष्यं अंहसः पापात्पाहीतिशेषः तथासोमःपातु इन्द्रश्चपातु दक्षिणाख्यादेवताचपातु ॥ दक्षिणा दक्षवृद्धौ द्रुदक्षिभ्यामिनन् नित्त्वादाद्युदात्तः । अंहसः नविषयस्येत्यादिनाद्युदात्तः ॥ ५ ॥

५. हे ब्रह्मणस्पति ! तुम, सोम, इन्द्र और दक्षिणादेवी—सब उस मनुष्य को पाप से बचाओ ।

इतिप्रथमस्यप्रथमेचतुर्स्त्रिंशोवर्गः ॥ ३४ ॥

अनुप्रवचनीयचरोर्होमेसदसस्पतिमित्येषाविनियुक्ता तथाचगृह्ये मेखलामाबध्येतिखण्डे पठ्यते—आचार्यःसमन्वारब्धेजुहुयात्सदसस्पतिमद्भुतमिति ।

तामेतांसूक्तेषष्ठीमृचमाह—

सदसस्पतिमद्भुतंप्रियमिन्द्रस्यकाम्यम् । सनिंमेधामयासिषम् ॥ ६॥

सदसः । पतिम् । अद्भुतम् । प्रियम् । इन्द्रस्य । काम्यम् ।
सनिम् । मेधाम् । अयासिषम् ॥ ६ ॥

मेधांलब्धुंसदसस्पतिं एतन्नामकंदेवं अयासिषं याचमानस्मि कीदृशं अद्भुतमाश्चर्यकरं इन्द्रस्यप्रियं सोमपानेसहचारित्वात् काम्यंकमनीयं सनिंधनस्यदातारम् ॥ सदसः षद्लृविशरणादौ सर्वधातुभ्योऽसुन् नित्त्वादाद्युदात्तः । पतिं पातेर्डतिः टिलोपः प्रत्ययस्वरः । प्रियं इगुपधज्ञाप्रीकिरःकः इयङादेशः प्रत्ययस्वरः । काम्यं कामयतेरचोयत् णेरनिटीतिणिलोपः यतोनावइत्याद्युदात्तत्वम् । सनिं षणुदाने षात्वादेःषःसः अचइरित्यनुवृत्तौ खनिकषिकस्यजसिवशिष्वनिस्वनिवनिसनिग्रन्थिचरिभ्यश्चेतिइप्रत्ययः प्रत्ययस्वरः । अयासिषं याचापणे लुङ् मिपः अमादेशः यमरमनमातांसक्चेतिसिचइडागमः धातोःसगागमः निघातः ॥ ६ ॥

६. आश्चर्यकारक, इन्द्र-प्रिय, कमनीय और धनदाता सदसस्पति अग्नि) के पास हम स्मृति-शक्ति की याचना कर चुके हैं ।

यस्मादृतेनसिध्यतियज्ञोविपश्चितश्चन । सधीनांयोगमिन्वति ॥ ७ ॥

यस्मात् । ऋते । न । सिध्यति । यज्ञः । विपःऽचितः । चन ।
सः । धीनाम् । योगम् । इन्वति ॥ ७ ॥

यज्ञोयमनुष्ठातव्योविपश्चितश्चनविदुषोऽपियजमानस्ययस्मात्सदसस्पतिदेवादृतेनसिध्यति सोऽयंसदसस्पतिर्देवोधीनांमनोनुष्ठानविषयाणांअस्मद्बुद्धीनामनुष्ठेयकर्मणांवायोगंसंबन्धमिन्वति

व्याप्नोति यजमानमनुग्रह तदीयंयज्ञंनिष्पादयतीत्यर्थः ॥ यस्माद् अन्यारादित्यादिनाकर्मयो-गात्पञ्चमी सावेकाचइतिविभक्तेरुदात्तत्वेप्राप्ते नगोश्वन्त्साववर्णेतिप्रतिषेधः। सिध्यति षिधुसंसि-द्धौ श्यनोनित्त्वादाद्युदात्तत्वम् यद्वृत्तान्नित्यमितिनिघातप्रतिषेधः । धीनां सावेकाचइतिविभ-क्तेरुदात्तत्वम्। योगं युजिर्योगे घञोञित्त्वादाद्युदात्तत्वम्। इन्वति इविव्याप्तौ शप् इदितोनु-म्धातोरितिनुम् निघातः ॥ ७ ॥

७. जिनकी प्रसन्नता के बिना ज्ञानवान् का भी यज्ञ सिद्ध नहीं होता, वही अग्नि हमारी मानसिक वृत्तियों को सम्बन्ध-युक्त किये हुए हैं।

**आदृध्नोतिहविष्कृतिंप्राञ्चंकृणोत्यध्वरम्। होत्रादेवेषुगच्छति ॥ ८ ॥**

आत्। ऋध्नोति। हविःऽकृतिम्। प्राञ्चम्। कृणोति। अध्वरम्।
होत्रा। देवेषु। गच्छति ॥ ८ ॥

आत्अनन्तरमेवहविष्कृतिं हविःसंपादनयुक्तं यजमानंऋध्नोति सदसस्पतिर्देवोवर्धयतिऋद्-धिर्दानानन्तरमेवफलंप्रयच्छतीत्यर्थः तथाविधफलसिद्धये अध्वरंयजमानेनानुष्ठीयमानंयज्ञं प्राञ्चंप्रकर्षेण गच्छन्तंअविघ्नेनपरिसमाप्तियुक्तंकृणोतिकरोति होत्राहूयमानादेवतातुष्टासतीयज-मानंमत्स्यापयितुंदेवेषुगच्छति यद्वा होत्राअस्मदीयस्तुतिरूपावाक्देवान्परितोषयितुंदेवेषुगच्छति श्लोकोधारेत्यादिषुसप्तपञ्चाशत्सुवाङ्नामसु होत्रागीरितिपठितम् ॥ हविष्कृतिं हविषःकृतिः संपादनंयस्ययजमानस्यसोयंहविष्कृतिः बहुव्रीहौप्रकृत्येतिपूर्वपदप्रकृतिस्वरत्वम्।प्राञ्चं अनिग-न्तोञ्चतौप्रत्ययेइतिगतेःप्रकृतिस्वरत्वम् पश्चादेकादेशस्वरः। अध्वरं नविद्यतेध्वरोहिंसायस्मिन् नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् हूयतेअस्यामिति होत्रादेवता हुयामाश्रुभसिभ्यस्त्रन्नि-तित्वन् नित्त्वादाद्युदात्तः ॥ ८ ॥

८. अनन्तर वही अग्नि हव्य-सम्पादक यजमान की उन्नति करते और अच्छी तरह यज्ञ की समाप्ति करते हैं। उनकी कृपा से हमारी स्तुति देवों को प्राप्त हो।

**नराशंसंसुधृष्टममपश्यंसप्रथस्तमम्। दिवोनसद्ममखसम् ॥१॥३५ ॥**

नराशंसम्। सुऽधृष्टमम्। अपश्यम्। सप्रथःऽतमम्। दिवः।
न। सद्मऽमखसम् ॥ १ ॥ ३५ ॥

नराशंसंएतन्नामकं देवविशेषं यद्वा अवयवार्थमनुसृत्यासदसस्पतिदेवतापरोयंशब्दः अनु-स्वर्गिचयास्कोदर्शयति—नराशंसोयज्ञइतिकात्थक्योनराअस्मिन्नासीनाः शंसन्त्यग्निरितिशाकपू-

१ नि० ८. ६.।

भिर्नरैःप्रशस्योभवतीति । अत्राग्निवत्सदसस्पतेरपिनरैःशस्यमानत्वान्नराशंसत्वं एवमेवाभिप्रा- यंहृदिनिधायब्राह्मणमेवमाम्नायते—प्रजावैनरोवाक्शंसइति । अतोमनुष्यैःशस्यमानोयःसदस- स्पतिर्योवानराशंसनामकोदेवः तमपश्यंशास्त्रदृष्ट्याद्दृष्टवानस्मि कीदृशंसुधृष्टमंअत्यधिकयेनधा- र्ष्ट्येयुक्तंसप्रथस्तमं अतिशयेनप्रख्याततंसद्मसंप्राप्ततेजस्कं तत्रदृष्टान्तः—दिवोन द्युलोकमिव आदित्यचन्द्रादिभिरधिष्ठिताद्युलोकविशेषायथातेजस्विनः तद्वदयंनराशंसःतेजस्वीत्यर्थः । सुधृष्टमं शोभनंधृष्णोतीतिसुधृक् क्विप्चेतिक्विप् अतिशायनिकस्तमप् ककारस्यजश्त्वाभाव- श्छान्दसः कृदुत्तरपदप्रकृतिस्वरत्वेनककारउदात्तः । अपश्यं पाघ्राध्मेत्यादिनापश्यादेशः लुङ्ल- ङ्लृङ्क्ष्वडुदात्तइत्यटउदात्तत्वम् पादादित्वादनिघातः । सप्रथस्तमं प्रथमख्याने प्रथनंप्रथः सर्व- धातुभ्योसुन् निच्वादाद्युदात्तत्वं सहप्रथसावर्ततइति तेनसहेतितुल्ययोगेइतिबहुव्रीहिसमासः वोपसर्जनस्येतिसादेशः पूर्वपदप्रकृतिस्वरत्वेप्राप्ते परादिश्छन्दसिबहुलमितिउत्तरपदाद्युदात्त- त्वम् ॥ दिवः ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम् । सद्ममखसं सीदतीतिसद्म षद्लृविशरणादौ अन्येभ्योऽपिदृश्यन्तइतिमनिन् निच्वादाद्युदात्तः सद्ममहोयस्येतिबहुव्रीहौहकारस्यव्यत्ययेनख- कारः ॥ ९ ॥

९. प्रतापशाली, प्रसिद्ध और आकाश की तरह तेजस्वी, नराशंस देवता को मैं देख चुका हूँ।

इतिप्रथमस्यप्रथमेपञ्चत्रिंशोवर्गः ॥ ३५ ॥

प्रतित्यमितिनवर्चंसूक्तं ऋषिच्छन्दसीपूर्ववत् देवतात्वनुक्रम्यते—प्रतित्यमाग्निमारुतमिति कारीरीष्टौप्रतित्यमेताधाय्या तथाचसूत्रितम्—सर्वकामेष्टिःकारीरीतस्यां प्रतित्यंचारुमध्वरमीळे- अग्निःस्वतवसंनमोभिरितिधाय्येइति ।

तामेतांसूक्तगतांप्रथमामृचमाह—

प्रति॒त्यंचारु॑मध्व॒रंगो॑पी॒थाय॒प्रहू॑यसे । म॒रुद्भि॑रग्न॒आग॑हि ॥ १ ॥

प्रति॑ । त्यम् । चारु॑म् । अ॒ध्व॒रम् । गो॒ऽपी॒थाय॑ । प्र । हू॒य॒से॒ । म॒रुत्ऽभिः॑ । अ॒ग्ने॒ । आ । ग॒हि॒ ॥ १ ॥

त्यच्छब्दः सर्वनाम तच्छब्दपर्यायः हेअग्ने योयज्ञः चारुरंगवैकल्यरहितः त्वं तथाविधं चारुमध्वरंप्रतिलक्ष्य गोपीथायसोमपानायप्रहूयसे प्रकर्षेणत्वंहूयसे तस्मादस्मिन्नध्वरे त्वं म- रुद्भिः देवविशेषैःसहआगहि आगच्छ सेयमृक् यास्केनैवंव्याख्याता—तंप्रतिचारुमध्वरंसो-

१ ऐ० ब्रा० २. ४. । २ नि० १०. ३६. ।

मपानायमहूयसेसोमेमरुद्भिःसहागच्छेति॥ प्रति निपातआद्युदात्तः। त्यंत्यदादीनामः शाविप-
विकस्वरः। चारुं दृसनिजनिचरीत्यादिनाञ्ण् अवउपधायाइविवृद्धिः ञित्त्वादाद्युदात्तः।
गोपीथाय निशीथगोपीथावगथाइतिथक्प्रत्ययान्तोनिपातितः। प्र निपातस्वरः॥ १॥

१. अग्निदेव! इस सुन्दर यज्ञ में सोमरस का पान करने के लिए
तुम बुलाये जाते हो; इसलिए मरुद्‌गण के साथ आओ।

द्वितीयामृचमाह—

**नहिदेवोनमर्त्योमहस्तवक्रतुंपरः। मरुद्भिरग्नआगहि ॥ २ ॥**

नहि। देवः। न। मर्त्यः। महः। तव। क्रतुम्। परः। मरुत्ऽभिः।
अग्ने। आ। गहि ॥ २ ॥

हे अग्ने महोमहतस्तवसंबन्धिक्रतुं कर्मविशेषमुल्लंघ्य परोनहि उत्कृष्टोदेवोनभवति
खलु तथा मर्त्योमनुष्यश्चपरोनभवति येमनुष्यास्त्वदीयं क्रतुमनुतिष्ठन्ति येच देवास्त्वदी-
येक्रतावििज्यन्तेतएवोत्कृष्टाइत्यर्थः मरुद्भिरित्यादिपूर्ववत्। नहि एवमादीनामित्यन्तोदात्तः।
देवः पचाद्यजन्तश्चित्त्वादन्तोदात्तः। महः महतस्तलोपश्छान्दसः बृहन्महतोरुपसंख्यानमिति
विभक्तेरुदात्तत्वम्। तव युष्मदस्मदोर्ङसीत्याद्युदात्तत्वम्। क्रतुं कृञःक्रतुः प्रत्ययाद्युदात्तत्वं
गहि गमॢसृॢगतौ लोटःसेर्हिः बहुलंछन्दसीतिशपोलुक् अनुदात्तोपदेशेत्यादिनाऽनुनासिकलोपः
तस्यासिद्धवदत्राभादित्यसिद्धत्वादतोहेरितिलुङ्नभवति निघातः॥ २॥

२. अग्निदेव! तुम महान् हो। ऐसा कोई उच्च देव या मनुष्य
नहीं है, जो तुम्हारे यज्ञ का उल्लङ्घन कर सके। मरुद्‌गण के साथ आओ।

**येमहोरजसोविदुर्विश्वेदेवासोअद्रुहः। मरुद्भिरग्नआगहि ॥ ३ ॥**

ये महः। रजसः। विदुः। विश्वे। देवासः। अद्रुहः। मरुत्ऽभिः।
अग्ने। आ। गहि ॥ ३ ॥

हे अग्ने येमरुतोमहोरजसोमहत्त्वं उदकस्यवर्षणप्रकारं विदुः तैर्महद्भिरित्यन्वयः की-
दृशामरुतः विश्वे सर्वे सप्तविधगणोपेताः। सप्तगणावैमरुतइतिश्रुतेः। देवासोद्योतमानाः अद्रु-
होद्रोहरहिताः वर्षणेनसर्वभूतोपकारित्वात् तथाचोपरिष्टादाम्नायते—उदीरयथामरुतःसमुद्र-
तोयूयंवृष्टिंवर्षयथापुरीषिणइति। शाखान्तरेपि मन्त्रान्तरस्यब्राह्मणमेवमाम्नायते—मरुतांपृष-
तयःस्थेत्याह। मरुतोवैवृष्ट्याईशतइति। रजःशब्दोयास्केनबहुधाव्याख्यातः—रजोरजतेर्ज्यो-

१ तै०सं. २. २. ५.। २ ऋ०सं. ४. ९. १७.। ३ तै०ब्रा० ३. ३. ९.। ४ नि०.१९.।

वीरजउच्यतउदकंरजउच्यतेलोकारजांस्युच्यन्तेसृगहनीरजसीउच्येतेइति ॥ रजसः नञ्चि-षयस्यानिसन्तस्येत्याद्युदात्तः विदुः विदज्ञाने विदोलटोवेतिझेर्जुसादेशः प्रत्ययस्वरः यद्वृ-त्तयोगान्निघाताभावः । विश्वे । विशेःक्वन्नन्तस्य नित्त्वादाद्युदात्तत्वम् । देवासः आज्जसेरसुक् देवशब्दःपचाद्यजन्तः चित्त्वादन्तोदात्तः । अद्रुहः संपदादित्वाद्भावेक्विपिसति बहुव्रीहौ नञ्सु-भ्यामित्यन्तोदात्तत्वम् कर्तरिवाक्विप् तत्पुरुषेहिअव्ययपूर्वपदप्रकृतिस्वरत्वंस्यात् नचकृदुत्तरपद-प्रकृतिस्वरत्वं यतोनञ् नगतिर्नैचकारकइति ॥ ३ ॥

३. अग्निदेव ! जो प्रकाशशाली और हिंसा-शून्य मरुद्गण महा-वृष्टि करना जानते हैं, उन मरुतों के साथ आओ।

चतुर्थीमृचमाह—

यउ॒ग्रा अ॒र्कमा॑नृ॒चुरना॑धृष्टास॒ ओज॑सा । म॒रुद्भि॑रग्न॒ आग॑हि ॥ ४ ॥

ये । उ॒ग्राः । अ॒र्कम् । आ॒नृ॒चुः । अना॑धृष्टासः । ओज॑सा ।
म॒रुत्ऽभिः॑ । अग्ने॑ । आ । ग॒हि॒ ॥ ४ ॥

ये मरुतः उग्रास्तीव्राःसन्तः अर्कमुदकं आनृचुः अर्चितवन्तः वर्षणेन संपादितवन्त इत्यर्थः तैर्मरुद्भिरित्यन्वयः कीदृशामरुतः ओजसाबलेन अनाधृष्टासः अतिरस्कृताः स-र्वेभ्योऽपिप्रबलाइत्यर्थः अर्कशब्दस्योदकवाचित्वंवाजसनेयिनआमनन्ति—आपोवाअर्कइति तन्निर्वचनंचतएवामनन्ति—सोर्चंश्चचरत्तस्यार्चतआपोजायन्तार्चतोवैमेकमभूदितितदेवार्कस्यार्क-त्वमिति । सजगत्स्रष्टा हिरण्यगर्भउदकंस्रष्टुमुद्युक्तअर्चन् उदकसत्यसंकल्पत्वमहिमप्रख्याप-नेन स्वात्मानं पूजयन्नचरत् यथा पूजयतोहिरण्यगर्भस्यसकाशादुदकमुत्पन्नं तदानीमर्चतो-मत्तः कमभूदित्यवोचत् तेनोदकस्यार्कनामनिष्पन्नमित्यर्थः । आनृचुः अर्चतेरपस्पृधेथामित्या-दिनानिपातितः प्रत्ययस्वरः यद्वृत्तयोगान्ननिघातः । अनाधृष्टासः अव्ययपूर्वपदप्रकृतिस्वरत्वम् । ओजसा उब्जेर्बलेबलोपश्चेत्यसुन् नित्त्वादाद्युदात्तः ॥ ४ ॥

४. जिन उग्र और अजेयबलशाली मरुतों ने जल-वृष्टि की थी; अग्निदेव, उन्हीं के साथ पधारो।

येशु॒भ्रा घो॒रव॑र्पसः सुक्ष॒त्रासो॑ रि॒शाद॑सः । म॒रुद्भि॑रग्न॒ आग॑हि ॥ ५ ॥ ३६ ॥

ये । शु॒भ्राः । घो॒रऽव॑र्पसः । सु॒ऽक्ष॒त्रासः॑ । रि॒शाद॑सः । म॒रुत्ऽभिः॑ ।
अग्ने॑ । आ । ग॒हि॒ ॥ ५ ॥ ३६ ॥

---

१ उग्रशब्दोरक्प्रत्ययान्तः ऋजेन्द्रेतिसूत्रेण तत्रहिलक्ष्यानुरोधेनरन्प्रत्ययान्तारक्प्रत्य-यान्ताश्चनिपातिताः । २ अकारस्यस्थानेऋकारोनिपात्यते. ।

येमरुतः शुभ्रत्वादिगुणोपेताः तैर्मरुद्भिरित्यन्वयः शुभ्राः शोभनाः घोरवर्पसःउग्ररूपधराः सुक्षत्रासः शोभनधनोपेताः रिशादसः हिंसकानांभक्षकाः मघमित्यादिष्वष्टाविंशतिसंख्याकेषुधननामसुक्षत्रंभगइतिपठितम्॥ शुभ्राः स्फायितञ्चीत्यादिनाशुभेरौणादिकोरक् प्रत्ययस्वरः । घोरवर्पसः घोरंवर्पोयेषां बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्। सुक्षत्रासः बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वं आद्युदात्तंद्व्यच्छन्दसीत्येतत्तुनभवति क्षत्रशब्दस्यान्तोदात्तत्वात् रिशंतिहिंसन्तीतिरिशाः तानदन्तीतिरिशादसः सर्वधातुभ्योऽसुन्प्रत्ययः नित्स्वरेणउत्तरपदमाद्युदात्तं कृदुत्तरपदप्रकृतिस्वरेणसएवशिष्यते ॥ ५ ॥

५. जो सुशोभन और उग्र रूप धारण करनेवाले हैं, जो पर्याप्त-बलशाली और शत्रु-संहारी हैं, अग्निदेव, उन्हीं मरुद्गण के साथ आओ।

इतिप्रथमस्यप्रथमेषट्त्रिंशोवर्गः ॥ ३६ ॥

सूक्तेषष्ठीमृचमाह—

येनाकस्याधिरोचनेदिविदेवासआसते । मरुद्भिरग्नआगहि॥ ६ ॥

ये । नाकस्य । अधि । रोचने । दिवि । देवासः । आसते ।

मरुत्ऽभिः । अग्ने । आ । गहि ॥ ६ ॥

येमरुतोनाकस्याधि दुःखरहितस्यसूर्यस्योपरि दिविद्युलोके रोचने दीप्यमाने येदेवासः स्वयमपिदीप्यमानाआसते तैर्मरुद्भिरित्यन्वयः ॥ नाकस्य कंसुखंतद्यस्मिन्नास्ति असावकइतिबहुव्रीहिंकृत्वा पश्चान्नञ् नत्रकोनाकइतिनञ्तत्पुरुषः नलोपोनञइतिनलोपोनभवति नभ्राण्नपादित्यादिनाप्रकृतिभावात् तत्पुरुषेतुल्यार्थेत्यादिनाअव्ययपूर्वपदप्रकृतिस्वरत्वेनउदात्तत्वं प्रथमंतत्पुरुषंकृत्वा पश्चाद्बहुव्रीहौउत्तरपदान्तोदात्तत्वंस्यात् । अधिशब्दउपर्यर्थे उपसर्गप्रतिरूपकोनिपातः । रोचने रुचदीप्तौ अनुदात्तेतश्चहलादेरितियुच् चितइत्यन्तोदात्तत्वम् । दिवि ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम् । देवासः आज्जसेरसुगित्यसुक् । आसते आसउपवेशने अनुदात्तेत्वादात्मनेपदं झस्यअदादेशः अदिप्रभृतिभ्यःशपइतिशपोलुक् अनुदात्तेत्वाल्लसार्वधातुकानुदात्तत्वम् यद्वृत्तयोगान्ननिघातः ॥ ६ ॥

६. आकाश के ऊपर प्रकाश-स्वरूप स्वर्ग में जो दीप्तिमान् मरुत रहते हैं, अग्नि! उन्हीं के साथ आओ।

यईङ्खयन्तिपर्वतान्तिरःसमुद्रमर्णवम् । मरुद्भिरग्नआगहि॥ ७ ॥

ये । ईङ्खयन्ति । पर्वतान् । तिरः । समुद्रम् । अर्णवम् ।

मरुत्ऽभिः । अग्ने । आ । गहि ॥ ७ ॥

येमरुतः पर्वतान्मेघानीङ्खयन्तिचालयन्ति तथा अर्णवंउदकयुक्तंसमुद्रं तिरस्कुर्वन्तीति शेषः निश्चलस्यजलस्यतरंगाद्युत्पत्तयेचालनंतिरस्कारः तैर्मरुद्भिरित्यन्वयः ॥ ईङ्खयन्ति

उत्सणस्वेत्यादावीरिसर्गेत्यर्थः हेतुमतिचेतिणिच् इदितोनुम्धातोरितिनुम् णिजन्तधातोर्ण्वित्‌-इत्यन्तोदात्तत्वम् शपःपित्त्वादनुदात्तत्वं तिङ्श्चलसार्वधातुकस्वरेणधातुस्वरएवशिष्यते। पर्व-तोन् पूर्वपर्वमर्वपूरणे औणादिकोतच् प्रत्ययस्वरः ॥ ७ ॥

७. जो मेघ-माला का संचालन करते और जल-राशि को समुद्र में गिराते हैं, अग्नि। उन्हीं मरुद्गण के साथ आओ।

आयेतन्वन्तिरश्मिभिस्तिरःसमुद्रमोजसा। मरुद्भिरग्नआगहि ॥ ८ ॥

आ। ये। तन्वन्ति। रश्मिऽभिः। तिरः। समुद्रम्। ओजसा।
मरुत्ऽभिः। अग्ने। आ। गहि ॥ ८ ॥

येमरुतोरश्मिभिः सूर्यकिरणैःसह आतन्वन्ति आप्नुवन्ति आकाशमितिशेषः किंच ओजसास्वकीयेनबलेनसमुद्रंतिरस्कुर्वन्ति तैर्मरुद्भिरित्यन्वयः ॥ तनुविस्तारे लटोझोऽन्तः तना-दिकृञ्भ्यउः सतिशिष्टस्वरबलीयस्त्वमन्यत्रविकरणेभ्यइतिविङएवाद्युदात्तत्वम्। रश्मिभिः नियोमिरित्यनुवृत्तौ अश्नोतेरशचेतिमिः प्रत्ययस्वरः। समुद्रं उन्दीक्लेदने स्फायीतंचीतिरक् समासेकृदुत्तरपदप्रकृतिस्वरः ॥ ८ ॥ नवमीमृचमाह—

८. जो सूर्य-किरणों के साथ समस्त आकाश में व्याप्त हैं और जो बल से समुद्र को उत्क्षिप्त करते हैं, अग्निदेव, उन्हीं मरुद्गण के साथ आओ।

अभित्वापूर्वपीतयेसृजामिसोम्यंमधु। मरुद्भिरग्नआगहि॥९॥२७॥१॥

अभि। त्वा। पूर्वऽपीतये। सृजामि। सोम्यम्। मधु।
मरुत्ऽभिः। अग्ने। आ। गहि ॥ ९ ॥ २७ ॥ १॥

हेअग्ने पूर्वपीतयेपूर्वकाले प्रवृत्तायपानाय त्वांप्रतिसोम्यंमधु सोमसंबन्धिनंमधुररसं अभि-सृजामि सर्वतःसंपादयामि अतस्त्वंमरुद्भिःसहात्रआगच्छ ॥ अभि एवादीनामन्तइत्यन्तो-दात्तः। त्वामौद्वितीयायाइतित्वादेशःसर्वानुदात्तः। पूर्वपीतये पूर्वाचासौपीतिश्च पुंवत्कर्मधार-येत्यादिनापुंवद्भावः। सृजामि सृजविसर्गे मिपःपित्त्वादनुदात्तत्वं विकरणस्वरः। सोम्यं सोममर्हतियइतियः।प्रत्ययस्वरेणान्तोदात्तः। मधु फलिपाटिनमीत्यादिनाउप्रत्ययः निदित्यनुवृ-त्तेराद्युदात्तत्वम्। अन्यद्गतम्॥ अत्रयास्कः—अभिसृजामित्वापूर्वपीतयेपूर्वपानायसोम्यंमधुसो-ममयंसोग्नेमरुद्भिःसहागच्छेति ॥ ९ ॥

९. तुम्हारे प्रथम पान के लिए सोम-मधु दे रहा हूँ। अग्निदेव! मरुद्गण के साथ आओ।

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन्। पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेणसाय-णाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्ये प्रथमाष्टके प्रथमोऽध्यायः संपूर्णः॥१॥

---

१ भृमृदृशियजिपर्विपच्यमितमिनमिहर्यिभ्योऽतच्। २ नि० १०, ३७।

## ॥ श्रीगणेशायनमः ॥

यस्यनिःश्वसितंवेदायोवेदेभ्योऽखिलंजगत् ॥ निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥ १ ॥ अथप्रथमाऽष्टकेद्वितीयोऽध्यायआरभ्यते । तत्रायंदेवायेत्यष्टर्चंसूक्तं तस्य ऋषिच्छन्दसीपूर्ववत् ऋभुदेवताकत्वमनुक्रम्यते—अयमष्टावार्भवमिति। विनियोगस्तुसूक्तस्यलैङ्गिकःस्मार्तोवाद्रष्टव्यः। व्यूळ्हस्यप्रथमेछन्दोमे वैश्वदेवशस्त्रे अयंदेवायजन्मनइत्यार्भवस्तृचः अथछन्दोमाइतिखण्डेसूत्रितम्—अभित्वादेवसवितरेवायज्ञस्यशम्भुवायंदेवायजन्मनइति ।

तस्मिन्सूक्तेप्रथमामृचमाह—

**अ॒यंदे॒वाय॒जन्म॑ने॒स्तोमो॒विप्रे॑भिरा॒सया॑ ॥ अका॑रिरत्न॒धात॑मः ॥ १ ॥**

अ॒यम् । दे॒वाय॑ । जन्म॑ने । स्तोम॑ः । विप्रे॑भिः । आ॒स॒या ।
अका॑रि । र॒त्न॒ऽधात॑मः ॥ १ ॥

ऋभवोहिमनुष्याःसन्तस्तपसादेवत्वंप्राप्ताः तेचास्मिन्सूक्तेदेवताः ततश्चजायमानवाचिनाजन्मशब्देनैकवचनान्तेनात्रनिर्दिश्यते जन्मने जायमानायर्भुसंघरूपायदेवायतत्प्रीत्यर्थं अयं स्तोमः स्तोत्रविशेषः विप्रेभिः मेधाविभिर्ऋत्विग्भिरासयास्वकीयेनास्येन अकारि निष्पादितः कीदृशः स्तोमः रत्नधातमः अतिशयेनरमणीयमणिमुक्तादिधनप्रदः स्तोत्रेण तुष्टाऋभवोधनंप्रयच्छन्तीत्यर्थः ॥ आसया आस्यशब्दात्तृतीयैकवचनस्यसुपांसुलुगित्यादिनायाजादेशः व्यत्ययेनमकारयकारस्यलोपः चितइत्यन्तोदात्तः । रत्नधातमः रत्नानिदधातीतिरत्नधाः कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ १ ॥

१. जिन ऋभुओं ने जन्म ग्रहण किया था, उन्हीं के उद्देश्य से मेधावी ऋत्विकों ने, अपने मुख से, यह प्रभूत धन-प्रद स्तोत्र स्मरण किया था।

द्वितीयामृचमाह—

**यइन्द्रा॑यवचो॒युजा॑तत॒क्षुर्मन॑सा॒हरी॑ ॥ शमी॑भिर्य॒ज्ञमा॑शत ॥ २ ॥**

ये। इन्द्रा॑य । व॒चः॒ऽयुजा॑ । त॒त॒क्षुः । मन॑सा । हरी॒ इति॑ । शमी॑भिः।
य॒ज्ञम् । आ॒श॒त ॥ २ ॥

येऋभवः इन्द्राय इन्द्रप्रीत्यर्थंवचोयुजाउच्चारणादिकंविनावाङ्मात्रेणरथेयुज्यमानौहरि-शिखौहरीएतन्नामकावश्वौमनसाततक्षुः संपादितवन्तः ऋभूणांसत्यसङ्कल्पत्वात्सङ्कल्पमात्रेणे-

न्द्रस्याश्वौसंपन्नावित्यर्थः तेऋभवः शमीभिः मद्दचमसादिनिष्पादनरूपैःकर्मभिः यज्ञमस्मदीयमाशतव्याप्तवन्तः अपःअप्नइत्यादिषुषड्विंशतिसंख्याकेषुकर्मनामसुशमीशिमीतिपठितम् ॥ वचोयुजा वचसायुज्यते सत्सूद्विषेत्यादिनाक्विप् सुपांसुलुगित्यादिनाविभक्तेराकारः कृदुत्तरपदप्रकृतिस्वरः । ततक्षुः तक्षूत्वक्षूतनूकरणे लिटि झेरुसादेशः पादादित्वादनिघातः । शमीभिः शमयन्तिपापानीतिशम्यःकर्माणि औणादिकइन् कृदिकारादक्तिनइतिङीष् वृषादित्वादाद्युदात्तः। आशत अशूव्याप्तौ लुङि झस्य अदादेशः स्वादिभ्यःश्नुः तस्यबहुलंछन्दसीतिलुक् अडागमः तिङ्ङतिङइतिनिघातः ॥ २ ॥

२. जिन्होंने इन्द्र के उन हरि नाम के घोड़ों की, मानसिक बल से, सृष्टि की है, जो घोड़े आज्ञा पाते ही रथ में संयुक्त हो जाते हैं, वे ही ऋभुलोग, चमस आदि उपकरण-द्रव्यों के साथ, हमारे यज्ञ में व्याप्त हैं।

तक्ष॒न्नास॑त्याभ्यां॒परि॑ज्मानंसु॒खंरथ॑म् ॥ तक्ष॒न्धे॒नुंस॑ब॒र्दुघा॑म् ॥ ३ ॥

तक्ष॑न् । नास॑त्याभ्याम् । परि॑ऽज्मानम् । सु॒ऽखम् । रथ॑म् । तक्ष॑न् । धे॒नुम् । स॒ब॒ःऽदुघा॑म् ॥ ३ ॥

नासत्याभ्यांअश्विदेवमीत्यर्थंरथंतक्षन् ऋभवोदेवाः कंचिद्रथमतक्षन् तक्षणेनसंपादितवन्तः कीदृशंपरिज्मानं परितोगन्तारं सुखंउपर्युपवेशनेसुखकरं किञ्चधेनुं कांचिद्गांतक्षन् धातूनामनेकार्थत्वात्तक्षतिरत्रसंपादनवाची कीदृशींधेनुं सबर्दुघां सबरःक्षीरस्यदोग्ध्रीम् ॥ तक्षन् बहुलंछन्दसीत्यडभावः । नासत्याभ्यां नविद्यतेसत्यंययोस्तावसत्यौ नअसत्यौनासत्यौ नभ्राण्नपादित्यादिनानञ्लोपाभावः । परिज्मानं अजेःपरिपूर्वस्यश्वन्नुक्षन्नित्यादिनामन्प्रत्ययेअकारलोपआद्युदात्तत्वंचनिपातनात् । सबर्दुघां सबःपयोदोग्धीतिसबर्दुघा दुहःकब्घश्चेतिकप् सबरितिरेफान्तंप्रातिपदिकंक्षीरवाचीतिसंप्रदायविदः कपःपित्त्वादनुदात्तत्वं धातुस्वरएवशिष्यते समासेकृदुत्तरपदप्रकृतिस्वरः ॥ ३ ॥

३. ऋभुओं ने अश्विनीकुमारद्वय के लिए सर्वत्र-गन्ता और सुखवाही एक रथ का निर्माण किया था और दूध देनेवाली एक गाय भी पैदा की थी।

द्वितीयेछन्दोमेवैश्वदेवशस्त्रेयुवानापितरापुनरित्यार्भवस्तृचः द्वितीयस्याग्निंवोदेवमितिखण्डेसूत्रितम्—महीद्यौःपृथिवीचनोयुवानापितरापुनरितितृचाविति ।

युवा॑नापि॒तरा॒पुनः॑स॒त्यमं॑त्राऋजू॒यवः॑ ॥ ऋ॒भवो॑वि॒ष्ट्य॑क्रत ॥४ ॥

युवा॑ना । पि॒तरा॑ । पुनरिति॑ । स॒त्यऽम॑न्त्राः । ऋ॒जु॒ऽयवः॑ । ऋ॒भवः॑ । वि॒ष्टी । अ॒क्र॒त ॥ ४ ॥

ऋभवएतन्नामकादेवाःपितरौस्वकीयौमातापितरौपूर्वंवृद्धावपिपुनर्युवानावकृणावक्रतकृतव-न्तः कीदृशाः सत्यमन्त्राः अवितथमन्त्रसामर्थ्योपेताः पुरश्चरणाद्यनुष्ठानेनसिद्धमन्त्राःयद्यत्फल-मुद्दिश्यमन्त्राःप्रयुज्यन्तेतत्तत्फलंतथैवसंपद्यते तस्माज्जीर्णयोःपित्रोर्युवत्वंसंपादयितुंसमर्थाइत्यर्थः ऋजूयवः ऋजुत्वमात्मनइच्छन्तः छलरहिताइत्यर्थः अतएवैतेषामनुष्ठितामन्त्राःसिध्यन्ति विष्टी विष्टयोव्याप्तियुक्ताःसर्वेषुकार्येषुएतदीयस्यमन्त्रसामर्थ्यस्यामतिघातोभव्याप्तिरुच्यते ऋभुशब्दंया-स्कएवंनिर्वक्ति—ऋभवउरुभान्तीतिवर्तेनभान्तीतिवर्तेनभवन्तीतिवेति[१]॥ युवाना युवन्शब्दोयौतेः कनिन्प्रत्ययान्तोनित्वादाद्युदात्तः सुपांसुलुगित्यादिनाविभक्तेराकारः। पितरा पूर्ववदाकारः। सत्यम-न्त्राःबहुव्रीहौपूर्वपदप्रकृतिस्वरः। ऋजुशब्दोभावपरः ऋजुत्वमात्मनइच्छन्तीतिक्यच् अकृत्सार्वधा-तुकयोर्दीर्घइतिदीर्घः। क्याच्छन्दसीत्युप्रत्ययः प्रत्ययस्वरः। विष्टी विषृव्याप्तौ क्तिच्क्तौचसंज्ञा-यामितिक्तिच् तितुत्रेत्यादिनाइट्प्रतिषेधः तस्मात्सुपांसुलुगित्यादिनासुपांसुपोडियाजिकाराणामुपसंख्यानमिति तस्यईकारादेशः सचाऽलोऽन्त्यस्येति सकारस्यभवति ततआदुणइतिगुणेकृतेप्रथमयोःपूर्वसवर्णइति पूर्वसवर्णदीर्घः तंबाधित्वा परत्वात् असिचेतिहस्वस्यगुणेनभवितव्यमितिचेत् न संज्ञापूर्वकस्य विधेरनित्यत्वात्। अक्रत कृञोलुङ् आत्मनेपदं झस्यअदादेशः मन्त्रेघसेत्यादिनाच्लेर्लुक् यणादे-शःअडागमः निघातः॥ ४॥

४. सरल-हृदय और सब कर्मों में व्याप्त ऋभुओं का मंत्र विफल नहीं होता। उन्होंने अपने मा-बाप को फिर जवान बना दिया था।

पञ्चमीमृचमाह—

**संवोमदासोअग्मतेन्द्रेणचमरुत्वता॥ आदित्येभिश्चराजभिः॥५॥१॥**

सम्। वः। मदासः। अग्मत। इन्द्रेण। च। मरुत्वता।
आदित्येभिः। च। राजऽभिः॥ ५॥ १॥

हेऋभवोयुष्माकंसंबन्धिनोमदासोमदहेतवःसोमाः इन्द्रेणचादित्येभिरादित्यैश्चसमग्मतसं-गताःऋभूणामिन्द्रादित्यैःसहसोमपानंतृतीयसवनेस्ति अतएवावाहननिगदआश्वलायनेनैवंपठितः-इन्द्रमादित्यवन्तंऋभुमन्तंविभुमन्तंवाजवन्तंबृहस्पतिमन्तंविश्वदेव्यावन्तमावहेति। कीदृशेनेन्द्रे-ण मरुत्वतामरुद्भिर्युक्तेन अतएवमन्त्रान्तरमेवमाम्नायते—मरुद्भिरिन्द्रसख्यंतेअस्त्विति[२]। कीदृशैरा-दित्येभिः राजभिःदीप्यमानैः॥मदासः माद्यन्त्येभिरितिमदाःसोमाः मदोनुपसर्गेइत्यप् तस्यपित्वा-दनुदात्तत्वं धातुस्वरएवशिष्यते। आज्जसेरसुगितिजसोऽसुक्। अग्मत गमेःसंपूर्वाल्लुङ् समोगम्यृ-च्छीत्यादिनाआत्मनेपदं झस्यअदादेशः मन्त्रेघसेत्यादिनाच्लेर्लुक् गमहनेत्यादिनाउपधालोपःव्यत्य-

१ नि० ११. १५। २ ऋ० सं० ६. ४. २२।

हिताश्चेतिसमोव्यवहितप्रयोगः निपातः । मरुत्वता मरुतःअस्यसन्तीतिमरुत्वान् तसौमत्वर्थेइ-
तिभसंज्ञपापदसंज्ञायाबाधितत्वाज्जश्त्वाभावः झयइतिमतुपोवत्वम् । आदित्येभिः बहुलंछन्द-
सीतिभिसऐसादेशाभावेबहुवचनेझल्येदित्येत्वम् । राजभिः राजन्शब्दस्यकनिन्प्रत्ययान्तत्वेननित्त्वा-
दाद्युदात्तत्वम् ॥ ५ ॥

५. ऋभुगण ! मरुद्गण से संयुक्त इन्द्र और दीप्यमान सूर्य के साथ तुम लोगों को सोमरस प्रदान किया जाता है।

उ॒त त्यं च॑म॒सं नवं॒ त्वष्टु॑र्दे॒वस्य॒ निष्कृ॑तम् ॥ अक॑र्त च॒तुरः॒ पुनः॑ ॥ ६ ॥

उ॒त । त्यम् । च॒म॒सम् । नव॑म् । त्वष्टुः॑ । दे॒वस्य॑ । निःऽकृ॑तम् ।
अक॑र्त । च॒तुरः॑ । पुन॒रिति॑ ॥ ६ ॥

उतअपिच त्वष्टुः एतन्नामकस्यदेवस्यसंबन्धितक्षणव्यापारः नवंनूतनंत्यंचमसंतंसोमधा-
रणक्षमंकाष्ठपात्रविशेषंनिष्कृतं निःशेषेणसंपादितमकरोदितिशेषः तक्षणव्यापारकुशलस्यत्व-
ष्टुः शिष्याऋभवः तेननिर्मितंतमेकंचमसंपुनरपिचतुरोकर्त चतुर्धाविभक्तांश्चमसानकृतवन्तः एक-
स्यचतुर्विधत्वकरणरूपोयमर्थोमन्त्रान्तरेपिविस्पष्टः—एकंचमसंचतुरःकृणोतनेति[1] ॥ नवं णुस्तुतौ
नूयतइतिनवं कर्मणिअप्प्रत्ययः सहिघञोपवादत्वात् घञर्थेसर्वत्रभवति घञ्प्रत्ययश्च अकर्त-
रिचकारकेसंज्ञायामितिकर्तृव्यतिरिक्तेसर्वत्रकारकेभवति यद्यपितत्रसंज्ञायामित्युक्तंतथापिचका-
रस्यसंज्ञाव्यभिचारार्थत्वादसंज्ञायामपिभवत्येव । संबध्यतेइतिसंबन्धः कर्मणिघञित्युक्तम् ।
त्वष्टुः तक्षूत्वक्षूतनूकरणे औणादिकस्तृन् ऊदित्त्वात्पक्षेइडभावः स्कोःसंयोगाद्योरन्तेचेतिक-
कारलोपः । निष्कृतं कृञोनिरुपसृष्टात्कर्मणिक्तः पादिसमासे नित्यंसमासेनुत्तरपदस्यस्येतिषत्वं
अत्र कर्तृकर्मणोःकृतीतिप्राप्तषष्ठी यद्यपिनलोकाव्ययेतिनिषिद्धा तथापिकर्तुःशेषत्वेनविव-
क्षितत्वात्कर्तृकरणयोस्तृतीयेत्येतस्याःप्राप्तेःशैषिकीषष्ठी यथाकर्मणिशेषत्वेनविवक्षिते माषाणा-
मश्नीयादिति गतिरनन्तरइतिनिसउदात्तत्वम् । अकर्तअकृषत कृञोलुङि झस्य व्यत्ययेनतादे-
शः मन्त्रेघसेत्यादिनाच्लेर्लुक् छन्दस्युभयथेतितिङआर्धधातुकत्वात्ङित्त्वाभावेनगुणः । चतुरः
चतुरःशसीत्युकारउदात्तः । पुनः स्वरादिष्वाद्युदात्तःपठितः ॥ ६ ॥

६. त्वष्टा का यह नया चमस बिलकुल तैयार हो गया था; परन्तु उसे ऋभुओं ने चार टुकड़ों में विभक्त कर दिया।

तृतीयेछन्दोमे वैश्वदेवशस्त्रे तेनोरत्नानिधत्तनेतिद्वेऋचावार्भव्यौ तृतीयस्यामन्त्रमहेवि
त्वणेसूत्रितम्—इन्द्रइवेददायुनस्तेनोरत्नानिधत्तनेत्येकाद्वेचेति[2] ।

---

[1] अत्यमिचमीत्यादिनाअसचुचित्वादन्तोदात्तः । [2] ऋ० सं० २. ३. ४. ।

तयोरार्थांसूक्तेसमीपवचमाह—

तेनो॒रत्ना॑नि धत्तन॒ त्रिरासा॒प्तानि सुन्व॒ते ॥ एक॑मेकं सुश॒स्तिभिः ॥ ७ ॥

ते । न॒ः । रत्ना॑नि । ध॒त्तन॒ । त्रिः । आ । साप्ता॑नि । सुन्व॒ते ।
एक॑म्ऽएकम् । सुश॒स्तिऽभिः ॥ ७ ॥

पूर्वोक्तृभु येमविपादिताऋभवस्तेयूयं सुशस्तिभिः शोभनैरस्मदीयशंसनैर्युक्ताः सन्तो-नोस्माकं संबन्धिने सुन्वते सोमाभिषवंकुर्वतेयजमानाय रत्नानिरमणीयानि सुवर्णमणिमुक्ता-दीनि धनानि एकमेकं क्रमेणप्रत्येकं धत्तन प्रयच्छत सुवर्णादीनांमध्ये प्रतिद्रव्यंयावदपेक्षितं तावदितिविवक्षया एकमेकमित्युक्तं कीदृशानिरत्नानि त्रिरा त्रिवारमावृत्तानि उत्तमानिमध्य-मानिअधमानिचेत्येवंरत्नानांत्रिरावृत्तिः किञ्च साप्तानिसप्तसंख्यानिप्रथमवर्गरूपाणि कर्माणि च धत्तन संपादयत कीदृशानिसाप्तानि त्रिरा त्रिवारमावृत्तानि अग्न्याधेयदर्शपूर्णमासादी-नांसप्तानांहविर्यज्ञानामेकोवर्गः । औपासनहोमोवैश्वदेवइत्यादीनांसप्तानांपाकयज्ञानांवर्गो-द्वितीयः । अग्निष्टोमोत्यग्निष्टोमइत्यादीनांसप्तानांसोमसंस्थानांवर्गस्तृतीयः ॥ रत्नानि रमुक्री-डायां निदित्यनुवृत्तौ रमेस्तचेति नप्रत्ययः तत्संनियोगेनमकारस्यतकारः नित्त्वादाद्युदात्तः । धत्तन दधातेस्तनप्तनथनाश्चेतितशब्दस्यतनादेशः । सप्तानांवर्गःसाप्तं सप्तनोऽञ्छन्दसीतिवर्गे अञ्प्रत्ययः नस्तद्धितेइतिटिलोपः ञित्त्वादादिवृद्धिः आद्युदात्तत्वंच अत्रवर्गवचनेवर्गा-नेन वर्गिणोलक्ष्यन्ते तेनबहुवचनं अन्यथासेकएववर्गस्त्रिरावृत्तइत्येकवचनमेवस्यात् । सुन्वते शतुरनुमइतिविभक्तेरुदात्तत्वम् । एकमेकं नित्यवीप्सयोरितिवीप्सायांद्विर्भावः एकशब्दः इणः कन्नन्योनित्त्वादाद्युदात्तः द्वितीयस्यैकशब्दस्य तस्यपरमाम्रेडितमित्याम्रेडितसंज्ञायां अनुदात्तं-चेतिअनुदात्तत्वम् । सुशस्तिभिः शस्यतेभ्यागिरिरितिशस्तयऋचः शंसुस्तुतौ करणेक्तिन् तस्य कित्त्वान्नलोपः शोभनाःशस्तयइतिप्रादिसमासे यद्यपिचक्तिनोनित्त्वादाद्युदात्तत्वेनकृदुत्तरपदप्रकृ-तिस्वरत्वेन तदेवप्राप्तं तथापिपरेणमन्क्तिन्व्याख्यानेत्यादिना उत्तरपदान्तोदात्तत्वेनबाध्यते ॥७॥

७. ऋभुगण ! तुम हमारी शोभन प्रार्थना प्राप्त कर हमारा सोमरस तैयार करनेवाले को तीन तरह के रत्न, एक एक कर, प्रदान करो और उसके सातों गुण तीन बार सम्पादन करो ।

---

१ अग्न्याधेयदर्शपूर्णमासाग्निहोत्राग्रयणचातुर्मास्यनिरूढपशुबन्धसौत्रामणीतिसप्तहविर्य-ज्ञसंस्थाः । २ पञ्चमहायज्ञाष्टकाश्राद्धपार्वणश्राद्धश्रवणाकर्मप्रत्यवरोहणंशूलगवः आश्व-युजीकर्मेतिसप्तपाकयज्ञसंस्थाः १ औपासनहोमवैश्वदेवयोर्ग्रहणंपञ्चमहायज्ञोपलक्षणम् । ३ अग्निष्टोमोत्यग्निष्टोमउक्थ्यः षोडशीवाजपेयोतिरात्रोप्तोर्यामइतिसप्तसोमयज्ञसंस्थाः ।

अष्टमीमृचमाह–

अधारयन्त॒वह्न॑योऽभ॑जन्तसुकृ॒त्यया॑ ॥ भा॒गंदे॒वेषु॑य॒ज्ञिय॑म् ॥ ८ ॥२॥

अधा॑रयन्त । वह्न॑यः । अभ॑जन्त । सु॒ऽकृ॒त्यया॑ । भा॒गम् । दे॒वेषु॑ । य॒ज्ञिय॑म् ॥ ८ ॥ २ ॥

वह्नयश्चमसादिसाधननिष्पादनेनयज्ञस्यवोढारऋभवःअधारयन्तपूर्वंमनुष्यत्वेन मरणयोग्याअप्यमृतत्वलाभेनप्राणान्धारितवन्तः तथाचमन्त्रान्तरमाम्नायते–मर्तासःसन्तोअमृतत्वमानशुरिति । किञ्चतेसुकृत्ययायज्ञसाधनद्रव्यसंपादनरूपेणशोभनव्यापारेणदेवेषुमध्येस्थित्वा यज्ञियंयज्ञार्हंभागंहविर्लक्षणंअभजन्तसेवितवन्तः अयमर्थः सौधन्वनायज्ञियंभागमानशुरित्यादिमन्त्रान्तरेषुविस्पष्टः । ब्राह्मणेपि ऋभवोवैदेवेषुतपसासोमपीथमभ्यजयन्नित्याद्युपाख्यानंविस्पष्टम्॥ वह्नयः निदित्यनुवृत्तौ वहिश्रीत्यादिनानिप्रत्ययः । अभजन्त पादादित्वादनिघातः । सुकृत्यया विभाषाकृवृषोरिति कृञःकर्मणिक्यप् शोभनंकृत्यमस्याःभजनक्रियायाः सासुकृत्या बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वंबाधित्वा नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वं ननु कृत्यशब्देक्यपःपित्त्वेनानुदात्तत्वाद्धातुस्वरेणआद्युदात्तः ततश्चाद्युदात्तंद्व्यच्छन्दसीत्यनेनाद्युदात्तत्वेनभवितव्यं तेनहिपुरस्तादपवादेनपरमपिनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वंबाध्यतइत्युक्तं एवंतर्हिकृञःशचेति स्त्रियांभावेक्यप्प्रत्ययान्तःकृत्याशब्दः क्यपःपित्त्वेपिव्यत्ययेनउदात्तत्वं प्रादिसमासेकृदुत्तरपदप्रकृतिस्वरत्वेनतदेवशिष्यते । भागं कर्षात्वतइत्यन्तोदात्तः । यज्ञियं यज्ञमर्हतीत्यर्थे यज्ञर्त्विग्भ्यांघखञोइतिघः तस्यइयादेशः प्रत्ययस्वरः॥ ८ ॥

८. यज्ञ के वाहक ऋभुगण मनुष्य-जन्म ले चुकने पर भी अविनाशी आयु प्राप्त किये हुए हैं और अपने सत्कर्म-द्वारा देवों के बीच यज्ञ-भाग का सेवन करते हैं।

॥ इतिप्रथमस्यद्वितीयेद्वितीयोवर्गः ॥२॥

इहेन्द्राग्नीइत्यादिकंषळृचंसूक्तं ऋषिश्छन्दसीपूर्ववत् देवतात्वनुक्रम्यते–इहषळैन्द्राग्नमिति । विनियोगस्तु अग्निष्टोमे अच्छावाकशस्त्रे इहेन्द्राग्नीउपह्वयइतिसूक्तम् स्तोत्रमग्रेशस्त्रादितिखण्डे-इहेन्द्राग्नीउपेयंवामस्यमन्मनइतिनवेतिसूत्रितत्वात् । तथा अभिप्लवषडहेप्रातःसवनेअच्छावाकशस्त्रेस्तोमातिशंसनार्थमेतदेवसूक्तम् तथाचसूत्रितम्–अभिप्लवपृष्ठ्याहानीत्युपक्रम्येहेन्द्राग्नीइन्द्राग्नीआगतमिति ।

तस्मिन्सूक्तेप्रथमामृचमाह–

इ॒हेन्द्रा॒ग्नीउप॑ह्वये॒तयो॒रित्स्तोम॑मुश्मसि ॥ तासोमं॑सोम॒पात॑मा ॥ १ ॥

१ ऋ० सं० १. ७. ३१. । २ ऋ० सं० ३. ४. ५. । ३ ऐ० ब्रा० ३. ३०. ।

इह । इन्द्राग्नी इति । उप । ह्वये । तयोः । इत् । स्तोमम् ।
उश्मसि । ता । सोमम् । सोमऽपातमा ॥ १ ॥

इहास्मिन्कर्मणिइन्द्राग्नीदेवावुपह्वयेआह्वयामि तयोरिवइन्द्राग्न्योरेवस्तोमंस्तोत्रमुश्मसिका-मयामहे सोमपातमा अतिशयेनसोमंपातुंक्षमौवौद्वौदेवौसोमंपिबतामितिशेषः ॥ इन्द्राग्नी अत्र देवताद्वन्द्वेपिपूर्वपदस्यानङ्नभवति नत्रहिद्वन्द्वइत्यनुवृत्तौपुनर्द्वन्द्वग्रहणाल्लोकमसिद्धसाहचर्याणा-मेवद्वन्द्वेआनङित्युक्तं तस्मादत्रावग्रहेहस्वइन्द्रशब्दः समासस्येत्यन्तोदात्तत्वं देवताद्वन्द्वेचेत्युभ-यपदप्रकृतिस्वरत्वंतुनभवति अग्निशब्दस्यानुदात्तादित्वेननोत्तरपदेनुदात्तादावितिप्रतिषेधात् । उश्मसि वशकान्तौ लटोमस् इदन्तोमसिरितिइकारोपजनः अदादित्वात् शपोलुक् ग्रहोर्ज्यावयि-व्यधिवष्टीत्यादिनासंप्रसारणं । ता सोमपातमा उभयत्र सुपांसुलुगित्याकारः ॥ १ ॥

१. इस यज्ञ में इन्द्र और अग्नि का मैं आह्वान करता हूँ। उन्हीं की स्तुति करना चाहता हूँ। वेही इन्द्र और अग्निविशेष सोमपायी हैं। आवें, सोमपान करें।

तायज्ञेषुप्रशंसतेन्द्राग्नीशुंभतानरः ॥ तागायत्रेषुगायत ॥ २ ॥

ता । यज्ञेषु । प्र । शंसत । इन्द्राग्नी इति । शुंभत । नरः । ता ।
गायत्रेषु । गायत ॥ २ ॥

हेनरोमनुष्याऋत्विजस्तापूर्वोक्तौ ताविन्द्राग्नीयज्ञेषुअनुष्ठीयमानकर्मसुप्रशंसत शस्त्रैः तथा शुंभत नानाविधैरलङ्कारैः शोभितौकुरुत तथा तापूर्वोक्ताविन्द्राग्नी गायत्रेषुगायत्रीछन्दस्केषुम-न्त्रेषुसामरूपेणगायत ॥ ता सुपांसुलुगित्याकारः । शुंभत अन्यसंहितायामन्येषामपिदृश्यतइति दीर्घः ॥ २ ॥

२. मनुष्यगण! इस यज्ञ में उन्हीं इन्द्र और अग्नि की प्रशंसा करो और उन्हें सुशोभित करो; उन्हीं दोनों के उद्देश्य से गायत्री छन्द द्वारा गाओ।

तामित्रस्यप्रशस्तयइन्द्राग्नीताहवामहे ॥ सोमपासोमपीतये ॥ ३ ॥

ता । मित्रस्य । प्रऽशस्तये । इन्द्राग्नी इति । ता । हवामहे । सोमऽपा ।
सोमऽपीतये ॥ ३ ॥

मित्रस्यस्नेहविषयस्यप्रशानुष्ठातुः प्रशस्तयेतापूर्वोक्तौदेवौसंपद्येतामितिशेषः यद्वा मित्र-स्यप्रसंबन्धिनौ ताविन्द्राग्नीप्रशस्तयेप्रशंसितुमिच्छामइतिशेषः सोमपानक्षमौतापूर्वोक्ताविन्द्रा-

वि । वातऽजूतः । अतसेषु । तिष्ठते । वृथा । जुहूभिः । सृण्या । तुविऽस्वनिः । तृषु । यत् । अग्ने । वनिनः । वृषऽयसे । कृष्णम् । ते । एम । रुशत्ऽऊर्मे । अजर ॥ ४ ॥

वातजूतोवायुनाप्रेरितःतुविष्वणिःमहास्वनः एवंभूतोग्निः जुहूभिःस्वकीयाभिर्जिह्वाभिःसृण्यासरणशीलेनतेजःसमूहेनचयुक्तःसन् वृथेत्यनायासवचनः वृथाअनायासेनैवअतसेषुउन्नतेषुवृक्षेषुवितिष्ठतेविशेषेणतिष्ठति हेअग्ने यद्यदावनिनोवनसम्बन्धान्वृक्षान्दग्धुंवृषायसेवृषवदाचरसिदहसीत्यर्थः हेरुशदूर्मेदीप्तज्वाल अजरजरारहिताग्ने तेतवएमगमनमार्गःकृष्णंकृष्णवर्णोभवति ॥ वातजूतः जूइतिसौत्रोधातुः वातेनजूतोवातजूतः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम्। वितिष्ठते समवप्रविभ्यःस्थइत्यात्मनेपदम्। जुहूभिः हुदानादनयोः हूयतेआस्विति जुहूःस्रुचः। ध्रुवचेतिक्विप् चकाराद्दीर्घः। ध्रुवद्भावाभ्यासह्रस्वत्वाभावौ धातोरित्यन्तोदात्तत्वम् । सृण्या सृगतौ सरतीतिसृणिः सृवृषिभ्यांकिदितिनिप्रत्ययः । एम एत्यनेनेत्येम मार्गः इण्गतावित्यस्मात्करणेऔणादिकोमनिन् नित्वादाद्युदात्तत्वम् ॥ ४ ॥

४. अग्नि, वायु-द्वारा प्रेरित होकर, महाशब्द, ज्वलन्त जिह्वा और तेज के साथ, अनायास पेड़ों को व्याप्त कर देते हैं। अग्नि! जिस समय तुम वन्य वृक्षों को शीघ्र जलाने के लिए साँड़ की तरह व्यग्र होते हो, हे दीप्त-ज्वाल अजर अग्नि! उस समय तुम्हारा गमन-मार्ग काला हो जाता है।

तपुर्जम्भोवनआवातचोदितोयूथेनसाह्वाँअववातिवंसगः।
अभिव्रजन्नक्षितंपाजसारजःस्थातुश्चरथंभयतेपतत्रिणः॥५॥२२

तपुःऽजम्भः । वने । आ । वातऽचोदितः । यूथे । न । साह्वान् । अव । वाति । वंसगः । अभिऽव्रजन् । अक्षितम् । पाजसा । रजः । स्थातुः । चरथम् । भयते । पतत्रिणः ॥ ५ ॥ २२ ॥

तपुर्जम्भःतपूंषिज्वालाएवजम्भाआयुधानिमुखानिवायस्यसतथोक्तः वातचोदितःवायुनाप्रेरितः एवंभूतोग्निर्यूथेज्वालासमूहेसति अक्षितमक्षीणंरजःआर्द्रवृक्षान्तर्गतमुदकं पाजसातेजोबलेनअभिव्रजन्आभिमुख्येनगच्छन्वनेअरण्येसाह्वान्सर्वमभिभवन् आ आभिमुख्येनअववातिव्याप्नोति यत्तदहान्तः वंसगोन यथावननीयगतिर्वृषःगोयूथेसर्वमभिभवन्वर्ततेतद्वत् यस्मादेवंतस्मात्पतत्रिणःपतनवतोग्नेःसकाशात्स्थातुः स्थावरं चरथंचरज्जंगमंच भयतेबिभेति ॥ साह्वान् दाश्वान्साह्वानितिक्वसुप्रत्ययान्तोनिपातितः दीर्घादटिसमानपादेइतिसंहितायांनकारस्यरुत्वम् आतो-

टिनित्यमितिसानुनासिकआकारः एत्वलोपौ ह्रस्वश्छान्दसः। स्थातुः कमिमनिजनीत्यादिनाविहितः तुमन्प्रत्ययोबहुलवचनाचिछतेरपिभवति यद्वा स्थातुरनन्तरंचरथंभयते प्रथमंस्थातुःस्थावरंनिश्चलमिति पश्चाच्चरथमित्यर्थः। चरथं चरगत्यर्थः असादीनादिकोथप्रत्ययः। भयते ञिभीभये व्यत्ययेनात्मनेपदम् बहुलंछन्दसीतिश्लोरभावः गुणावादेशौ ॥ ५ ॥

५. अग्नि वायु-द्वारा प्रेरित होकर, शिखारूप आयुध धारण करके, महातेज के साथ, अप्रयुक्त वृक्ष-रस आक्रमण करके और गो-वृन्द के बीच में साँड़ की तरह सबको पराभूत करके चारों ओर व्याप्त होते हैं। सारे स्थावर और जंगम अग्नि से डरते हैं।

द॒धुष्ट्वा॒भृग॑वो॒मानु॑षे॒ष्वार॒यिंनचारुं॑सु॒हवं॒जने॑भ्यः।
होता॑रमग्ने॒अति॑थिं॒वरे॑ण्यंमि॒त्रंनशेवं॑दि॒व्याय॒जन्म॑ने ॥ ६ ॥

द॒धुः। त्वा॒। भृग॑वः। मानु॑षेषु। आ। र॒यिम्। न। चारु॑म्। सु॒ऽहव॑म्। जने॑भ्यः। होता॑रम्। अ॒ग्ने॒। अति॑थिम्। वरे॑ण्यम्। मि॒त्रम्। न। शेव॑म्। दि॒व्याय॑। जन्म॑ने ॥ ६ ॥

हेअग्ने त्वात्वांमानुषेषुमनुष्येषुमध्ये भृगवः एतत्संज्ञामहर्षयः दिव्यायजन्मनेदेवत्वप्राप्तये चारुंरयिं न शोभनंधनमिवआदधुः आधानसंभारेषुमन्त्रैःस्थापनेनसमस्कुर्वन् कीदृशंत्वां जनेभ्यः सुहवंयजमानार्थमाह्वातुंसुशकं होतारंदेवानामाह्वातारंअतिथिंअतिथिवत्पूज्यं यद्वा देवयजनदेशेषुसततंगन्तारंवरेण्यंवरणीयं मित्रंनशेवं यथासखासुखकरोभवतितद्वत्सुखकरमित्यर्थः॥ दधुः लिटधुसिआतोलोपइटिचेत्याकारलोपः युष्मत्तत्ततक्षुष्वन्तःपादमितिविसर्जनीयस्यषत्वम्। सुहवं ह्वयतेरीषद्दुःसुष्विति खल् बहुलंछन्दसीतिसंप्रसारणम् परपूर्वत्वं गुणावादेशौ लिधीतिप्रत्ययात्पूर्वस्योदात्तत्वम् कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ ६ ॥

६. अग्नि! मनुष्यों के बीच में महर्षि भृगु लोगों ने, दिव्य जन्म पाने के लिए, तुम्हें शोभन धन की तरह धारण किया था। तुम आसानी से लोगों का आह्वान सुननेवाले और देवों का आह्वान करनेवाले हो। तुम यज्ञ-स्थान में अतिथि-रूप और उत्तम मित्र की तरह सुखदाता हो।

होता॑रंस॒प्तजु॒ह्वो॒३॒॑यजि॑ष्ठं॒यंवा॒घतो॑वृ॒णते॑अध्व॒रेषु॑।
अ॒ग्निंविश्वे॑षामर॒तिंवसू॑नांसप॒र्यामि॒प्रय॑सा॒यामि॒रत्न॑म् ॥ ७ ॥

होता॑रम्। स॒प्त। जु॒ह्वः॑। यजि॑ष्ठम्। यम्। वा॒घतः॑। वृ॒णते॑। अ॒ध्व॒रेषु॑। अ॒ग्निम्। विश्वे॑षाम्। अ॒र॒तिम्। वसू॑नाम्। स॒प॒र्यामि॑। प्रय॑सा। यामि॑। रत्न॑म् ॥ ७ ॥

सप्त सप्तसंख्याकाः जुह्वः होतारः वाघतः ऋत्विजःअध्वरेषुयागेषु यजिष्ठंयष्टृतमंहोतारंदेवानामाह्वातारं यमग्निंवृणतेसम्भजन्ते विश्वेषांसर्वेषांवसूनांअरतिंप्रापयितारंतमग्निमयसाहविर्लक्षणेनान्नेनसपर्यामिपरिचरामि रत्नंरमणीयंकर्मफलंच यामि याचामि॥वृणते वृङ्संभक्तौ क्रैयादिकःप्रत्ययस्वरः। अरतिं ऋगतिप्रापणयोः अस्मादौणादिकोवहिवस्यर्तिभ्यश्चिदित्यतिप्रत्ययः चित्त्वादन्तोदात्तत्वम्। सपर्यामि सपर्यतिःपरिचरणकर्मा सपरपूजायामितिधातुःकण्ड्वादिःअतोयकएवस्वरःशिष्यते पादादित्वान्निघाताभावः। यामि याचामीत्यस्यवर्णलोपश्छान्दसः ॥ ७ ॥

७. सात आह्वानकारी ऋत्विक् जो यज्ञों में परम यज्ञार्ह और देवाह्वानकारी अग्नि को वरण करते हैं, उसी सर्व-धनदाता अग्नि को मैं यज्ञान्न से सेवित करता हूँ और उनसे रमणीय धन की याचना करता हूँ।

अच्छिद्रासूनोसहसोनोअद्यस्तोतृभ्योमित्रमहःशर्मयच्छ।
अग्नेगृणन्तमंहसउरुष्योर्जोनपात्पूर्भिरायसीभिः॥८॥

अच्छिद्रा। सूनो इति। सहसः। नः। अद्य। स्तोतृऽभ्यः। मित्रऽमहः। शर्म। यच्छ॥ अग्ने। गृणन्तम्। अंहसः। उरुष्य। ऊर्जः। नपात्। पूःऽभिः। आयसीभिः॥ ८॥

हेसहसःसूनो बलस्यपुत्रबलेनहिमथ्यमानोग्निर्जायते मित्रमहः अनुकूलदीप्तिमन्नग्ने नोस्मभ्यं स्तोतृभ्यः अद्यास्मिन्कर्मणिअच्छिद्राअच्छेद्यानिशर्मशर्माणिसुखानियच्छदेहि किंच हेऊर्जोनपात् अन्नस्यपुत्र भुक्तेनान्नेनजठराग्नेःप्रवर्धनादग्नेरन्नपुत्रत्वं एवंविधाग्ने गृणन्तंत्वांस्तुवन्तंआयसीभिःअयोमयीभिः यद्वा अयोवद्दृढतरैः पूर्भिःपालनैःअंहसःपापादुरुष्यरक्ष उरुष्यतीरक्षाकर्मेतियास्कः॥ अच्छिद्रा शेश्छन्दसीतिशेर्लोपः। सूनोसहसः परमपिछन्दसीतिपरस्यषष्ठ्यन्तस्यपूर्वामन्त्रितानुप्रवेशात्पूर्वपदस्यषाष्ठिकं सर्वानुदात्तत्वम्। शर्म सुपांसुलुगितिविभक्तेर्लुक्। ऊर्जोनपात् नपातयतीतिनपात् नभ्राण्नपादितिनञःप्रकृतिभावः सुबामन्त्रितेपराङ्गवत्स्वर इतिषष्ठ्यन्तस्यपराङ्गवद्भावेसतिपादादित्वादाष्टमिकनिघाताभावेषाष्ठिकमामन्त्रिताद्युदात्तत्वम्। पूर्भिः पॄपालनपूरणयोरित्यस्मात्सम्पदादिलक्षणोभावेक्विप् उत्वदीर्घौ सावेकाचइतिविभक्तेरुदात्तत्वम्॥८॥

८. बलपुत्र और अनुरूप दीप्तियुक्त अग्नि ! आज हमें अच्छेद्य सुख दान करो। अन्न-पुत्र ! अपने स्तोता को, लोहे की तरह, दृढ़ रूप से रक्षा करते हुए पाप से बचाओ।

भवावरूथंगृणतेविभावोभवामघवन्मघवद्भ्यःशर्म।
उरुष्याग्नेअंहसोगृणन्तंप्रातर्मक्षूधियावसुर्जगम्यात्॥९॥२४॥

१ नि० ५. २३.

भव । वरूथम् । गृणते । विभाऽवः । भव । मघऽवन् । मघवत्ऽभ्यः ।
शर्म । उरुष्य । अग्ने । अंहसः । गृणन्तम् । प्रातः । मक्षु ।
धियाऽवसुः । जगम्यात् ॥ ९ ॥ २४ ॥

हेविभावः विशिष्टप्रकाश अग्ने गृणतेत्वांस्तुवते यजमानाय वरूथमितिगृहनाम वरूथंअनिष्टनिवारकंगृहंभव हेमघवन् धनवन्नग्ने मघवद्भ्योहविर्लक्षणधनयुक्तेभ्योयजमानेभ्यः शर्मसुखंयथाभवति तथाभव हेअग्ने गृणन्तंस्तुवन्तंअंहसःपापकारिणः शत्रोरुरुष्यरक्ष ॥ धियावसुः कर्मणाबुद्ध्यावाप्राप्तधनोग्निः प्रातरिदानीमिवपरेद्युरपिमक्षुशीघ्रंजगम्यात् आगच्छतु ॥ वरूथम् वृञ्वरणे जॄवृञ्भ्यामूथनित्यूथन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् । गृणते शतुरनुमइतिविभक्तेरुदात्तत्वम् । विभावः विशिष्टाभाःविभाः आतोमनिन्क्वनिब्वनिपश्च तदस्यास्तीतिमतुप् मादुपधायाइतिमतुपोवत्वम् मतुवसोरुरितिनकारस्यरुत्वम् । मघवद्भ्यः मघवाबहुलमितिमघवन्शब्दस्य तृआदेशः सचनानुबन्धकत्वमनेकाल्त्वमितिविवचनात् अलोन्त्यस्येत्यन्त्यस्यभवति । मक्षु ऋचितुनुघमक्ष्वितिदीर्घः । धियावसुः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् पूर्वपदस्यसावेकाचइतिविभक्तेरुदात्तत्वम् लुगभावश्छान्दसः । जगम्यात् गम्लृगतौ बहुलंछन्दसीतिशपःश्लुः ॥ ९ ॥

९. प्रभावान् अग्नि! तुम स्तोता के गृह-रूप बनो। धनवान् अग्नि! धनवानों के प्रति कल्याण-स्वरूप बनो। अग्नि! स्तोताओं को पाप से बचाओ। प्रज्ञारूप धन से सम्पन्न अग्नि! आज प्रातःकाल शीघ्र आओ।

॥ इतिप्रथमस्यचतुर्थेचतुर्विंशोवर्गः ॥ २४ ॥

वयाइदितिसप्तर्चंद्वितीयंसूक्तम् नोधसआर्षंत्रैष्टुभं वैश्वानरगुणकोग्निर्देवता तथाचानुक्रान्तम्—वयाइत्सप्तवैश्वानरीयमिति सूक्तविनियोगोलिङ्गादवगन्तव्यः ।

तत्रप्रथमामृचमाह—

वयाइदग्नेअग्नयस्तेअन्येत्वेविश्वेअमृतामादयन्ते ।
वैश्वानरनाभिरसिक्षितीनांस्थूणेवजनाँउपमिद्ययन्थ ॥१॥

वयाः । इत् । अग्ने । अग्नयः । ते । अन्ये । त्वे इति । विश्वे ।
अमृताः । मादयन्ते । वैश्वानर । नाभिः । असि । क्षितीनाम् ।
स्थूणाऽइव । जनान् । उपऽमित् । ययन्थ ॥ १ ॥

वयाः शाखावेतेर्वावायनाभवन्तीतियास्कः । हेअग्ने येन्येअग्नयःसन्तितेसर्वेपितेतववयाइत् शाखाएव तवत्वचोन्येनसन्तीतिभावः किञ्च त्वेत्वयिसतिविश्वेसर्वेअमृताअमरणधर्माणोदेवा-

नि० १. ४.

मादयन्तेहृष्यन्ति नहित्वद्व्यतिरेकेणवैजीवितुंशक्यते हेवैश्वानरविश्वेषांनराणांजाठररूपेणसम्बन्धिन्नग्ने क्षितीनांमनुष्याणांनाभिःसन्नद्धासि अवस्थापकोभवसि अतस्त्वंउपमिद्वउपस्थापयितासन् यद्वा उपमिदित्येतद्दृष्टान्तविशेषणम् जनान्ययन्थअधारयः तत्रदृष्टान्तः—उपमिद्वउपनिखातास्थूणेव वंशाधारणार्थनिखातस्तम्भोयथागृहोपरिस्थवंशंधारयतितद्वत् ॥ वैश्वानर विश्वेचेमेनराःविश्वानराः नरेसंज्ञायामितिपूर्वपदस्यदीर्घः तत्सम्बन्धीवैश्वानरः तस्येदमित्यण् । नाभिः नहोभश्चेति इञ्प्रत्ययोभकारश्चान्तादेशः ञित्त्वादाद्युदात्तत्वम् । असि षासस्त्योर्लोपइतिसलोपः । क्षितीनां क्षिनिवासगत्योः अस्मात् क्तिच्क्तौचसंज्ञायामितिक्तिच् अन्तोदात्तात् क्षितिशब्दादुत्तरस्यनामोनामन्यतरस्यामित्युदात्तत्वम् । उपमित् डुमिञ्प्रक्षेपणे अस्मादुपपूर्वात् बहुलवचनात्कर्मणिक्विप्तुगागमः । ययंथ यमउपरमे लिटिथलिक्रादिनियमादिटिप्राप्तेउपदेशेत्वतइतिप्रतिषेधः ॥ १ ॥

१. अग्निदेव ! अन्यान्य जो अग्नि हैं, वे तुम्हारी शाखायें हैं अर्थात् सब अंग हैं और तुम अङ्गी हो। तुममें सब अमर देवगण तृप्ति पाते हैं। वैश्वानर ! तुम मनुष्यों की नाभि हो। तुम निखात स्तम्भ के समान मनुष्यों को धारण करते हो।

विषुवत्संज्ञेहन्याग्निमारुतेमूर्धादिवोनाभिरग्निःपृथिव्याइतिवैकल्पिकोनुरूपस्तृचः ॥ सूत्रितंच—मूर्धानंदिवोअरतिंपृथिव्यामूर्धादिवोनाभिरग्निःपृथिव्याइतिवेति ।

**मूर्धादिवोनाभिरग्निःपृथिव्याअथाभवदरतीरोदस्योः ।**
**तंत्वादेवासोजनयन्तदेवंवैश्वानरज्योतिरिदार्याय ॥ २ ॥**

**मूर्धा । दिवः । नाभिः । अग्निः । पृथिव्याः । अथ । अभवत् । अरतिः । रोदस्योः । तम् । त्वा । देवासः । अजनयन्त । देवम् । वैश्वानर । ज्योतिः । इत् । आर्याय ॥ २ ॥**

अयमग्निः दिवोद्युलोकस्यमूर्धाशिरोवत्प्रधानभूतोभवति पृथिव्याभूमेश्चनाभिःसन्नाहकः रक्षकइत्यर्थः अथानन्तरं रोदस्योर्द्यावापृथिव्योः अयंअरतिः अधिपतिरभवत् हेवैश्वानर तंतादृशंदेवंदानादिगुणयुक्तंत्वात्वांदेवासःसर्वेदेवाः आर्यायविदुषेमनवेयजमानायवा ज्योतिरिव ज्योतीरूपमेवअजनयन्तउदपादयन् ॥ मूर्तमस्मिन्धीयतइतिमूर्धा श्वन्नुक्षन्नित्यादौनिपातनाद्रूपसिद्धिः । पृथिव्याः पृथिवीशब्दः षिद्गौरादिभ्यश्चेतिङीष्प्रत्ययान्तोन्तोदात्तः । अजनयन्त जनीप्रादुर्भावेणिचोपरतस्वरोमन्ताश्चेतिमित्त्वान्मितांह्रस्वइतिह्रस्वत्वम् ॥ २ ॥

२. अग्नि स्वर्ग के मस्तक, पृथिवी की नाभि और द्युलोक तथा पृथिवी के अधिपति हुए थे। वैश्वानर ! तुम देवता हो। देवों ने आर्य या विद्वान् मनुष्य के लिए ज्योतिःस्वरूप तुमको उत्पन्न किया था।

तृतीयामृचमाह—

आसूर्येनरश्मयोध्रुवासोवैश्वानरेदधिरेऽग्नावसूनि ।
यापर्वतेष्वोषधीष्वप्सुयामानुषेष्वसितस्यराजा ॥ ३ ॥

आ । सूर्ये । न । रश्मयः । ध्रुवासः । वैश्वानरे । दधिरे । अग्ना ।
वसूनि । या । पर्वतेषु । ओषधीषु । अप्ऽसु । या । मानुषेषु । असि ।
तस्य । राजा ॥ ३ ॥

अग्नौवैश्वानरेअग्नौवसूनिधनान्यादधिरेआहितानिस्थापितानिबभूवुः तत्रदृष्टान्तः—ध्रुवासोनिश्चलारश्मयःकिरणाःसूर्येन यथासूर्येआधीयन्तेतद्वत् अतस्त्वंपर्वतादिषुयानिधनानिविद्यन्तेतस्यधनजातस्यराजाअसिअधिपतिर्भवसि॥ अग्ना सुपांसुलुगितिविभक्तेर्डादेशः । या शेश्छन्दसिबहुलमितिशेर्लोपः।ओषधीषु उषदाहे ओषःपाकःभावेघञ् ञित्वादाद्युदात्तत्वम् ओषआस्वधीयतेत्योषधयः कर्मण्यधिकरणेचेतिकिप्रत्ययः दासीभारादिषुपठितत्वात् पूर्वपदप्रकृतिस्वरत्वम्। सप्तमीबहुवचनेओषधेश्चविभक्तावप्रथमायामितिदीर्घः। अप्सु ऊडिदमितिविभक्तेरुदात्तत्वम्॥३॥

३. जिस तरह निश्चल किरणें सूर्य में स्थापित हुई हैं, उसी तरह वैश्वानर अग्नि में सम्पत्तियाँ स्थापित हुई थीं। पर्वतों, औषधियों, जलों और मनुष्यों में जो, धन है, उसके राजा तुम्हीं हो।

चतुर्थीमृचमाह—

बृहतीइवसूनवेरोदसीगिरोहोतामनुष्योऽनदक्षः ।
स्वर्वतेसत्यशुष्मायपूर्वीर्वैश्वानरायनृतमाययह्वीः ॥ ४ ॥

बृहतीइवेति बृहतीऽइव । सूनवे । रोदसी इति । गिरः । होता ।
मनुष्यः । न । दक्षः । स्वःऽवते । सत्यऽशुष्माय । पूर्वीः । वैश्वानराय ।
नृऽतमाय । यह्वीः ॥ ४ ॥

रोदसीद्यावापृथिव्यौसूनवेस्वपुत्रायवैश्वानराय बृहतीइव प्रभूतेइवाभूतां वैश्वानरस्यद्यावापृथिव्योःपुत्रत्वंमन्त्रान्तरेसमाम्नायते—उभापितरामहयन्नजायताग्निर्द्यावापृथिवीभूरिरेतसेति। महतोवैश्वानरस्यावस्थानायद्यावापृथिव्यौविस्तृतेअभूतामित्यर्थः किञ्चायंहोतादक्षःसमर्थः पूर्वीर्बहुविधाःयह्वीर्महतीर्गिरःस्तुतीर्वैश्वानरायाग्नयेप्रयुङ्क्तेइतिशेषः कीदृशायस्वर्वतेशोभनगमनयु-

१ ऋ० सं० २. ८. ११.

कायसत्यशुष्मायावितथबलाय नृतमायातिशयेनसर्वेषांनेत्रे वदद्दष्टान्तः—मनुष्योन यथामनुष्यो-लौकिकोबन्दीदातारंप्रभुम् बहुविधयास्तुत्यास्तौति तद्वत् ॥ मनुष्यः मनोर्जातावन्यतौषुक्चेतिजा-तौगम्यमानायांमनुशब्दाद्यत्नुगागमश्च तित्स्वरितमितिस्वरितत्वम् यतोनावइत्याद्युदात्तत्वं-भवति तनहि प्रजित्यनुवर्तते । स्ववेते सुपूर्वादर्तेर्भावेविच् ततोमतुप् मादुपधायाइतिवत्वम् ॥४॥

४. द्यावापृथिवी वैश्वानर के लिए विस्तृत हुए थे । जैसे बन्दी प्रभु की स्तुति करता है, वैसे ही इस निपुण होता ने सुमति-सम्पन्न, प्रकृत-बलशाली और नेतृश्रेष्ठ वैश्वानर के उद्देश से बहुविध महान् स्तुति-वाक्य का प्रयोग किया है ।

दिवश्चित्तेबृहतोजातवेदोवैश्वानरप्ररिरिचेमहित्वम् ।
राजाकृष्टीनामसिमानुषीणांयुधादेवेभ्योवरिवश्चकर्थ ॥५॥

दिवः । चित् । ते । बृहतः । जातऽवेदः । वैश्वानर । प्र । रिरिचे । महिऽत्वम् । राजा । कृष्टीनाम् । असि । मानुषीणाम् । युधा । देवेभ्यः । वरिवः । चकर्थ ॥ ५ ॥

हेजातवेदः जातानांवेदितः वैश्वानराग्ने तेतवमहित्वंमाहात्म्यंबृहतोमहतः दिवश्चिद्द्युलो-कादपिप्ररिरिचेप्रवबृधे किञ्च त्वंमानुषीणांमनोर्जातानांकृष्टीनांप्रजानांराजासिअधिपतिर्भवसि तथावरिवःअसुरैरपहृतंधनंयुधायुद्धेनदेवेभ्यश्चकर्थदेवाधीनमकार्षीः ॥ वैश्वानर पादादित्वादा-ष्टमिकनिघाताभावः । रिरिचे रिचिर्विरेचने अत्रोपसर्गवशात्तद्विपरीतेआधिक्येवर्तते । कृष्टीनां नाम्अन्यतरस्यामितिनामउदात्तत्वम् । मानुषीणां मनुषशब्दोमनोर्जातावित्यञ्प्रत्ययान्तः जातिल-क्षणेङीषिमाप्तेवदपवादत्वयाशार्ङ्गरवाद्यञइतिङीन् नित्त्वादाद्युदात्तत्वम् ङ्याश्छन्दसिबहुलमितिब-हुलवचनान्नामउदात्तस्याभावः । युधा युधसम्प्रहारेइत्यस्मात्संपदादिलक्षणोभावेक्विप् वरिवइ-तिधननाम नविषयस्येत्याद्युदात्तत्वम् ॥ ५ ॥

५. वैश्वानर ! तुम सब प्राणियों को जानते हो । आकाश से भी तुम्हारा माहात्म्य अधिक है । तुम मानव-प्रजाओं के राजा हो । तुमने देवों के लिए युद्ध करके धन का उद्धार किया है ।

प्रनूमहित्वंवृषभस्यवोचंयंपूरवोवृत्रहणंसचन्ते ।
वैश्वानरोदस्युमग्निर्जघन्वाँअधूनोत्काष्ठाअवशंबरंभेत् ॥ ६ ॥

प्र । नु । महिऽत्वम् । वृषभस्य । वोचम् । यम् । पूरवः । वृत्रऽहनम् । सचन्ते । वैश्वानरः । दस्युम् । अग्निः । जघन्वान् । अधूनोत् । काष्ठाः । अव । शम्बरम् । भेत् ॥ ६ ॥

वर्षकर्मणास्तुतिःसम्भवतिअग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते । आदित्याज्जायतेवृष्टिर्वृष्टे-रन्नंततःप्रजाःइतिस्मरणात्प्रत्यवरोहोऽपिनकर्तव्यः । तृतीयसवनस्यशाकपूर्णमतत्वात् एतत्सर्वंयास्के-नवैश्वानरःकस्मादित्यादिनाबहुधाप्रपञ्चितम् अत्रयदनुक्तंतत्सर्वंतत्रैवानुसन्धेयम् ॥ ६ ॥

६. मनुष्य जिन वृत्र-हन्ता या मेघभेदनकारी वैश्वानर या विद्युदग्नि की, वर्षा के लिए, अर्चना करते हैं, उन्हीं जलवर्षी वैश्वानर का माहात्म्य मैं शीघ्र बोलता हूँ। वैश्वानर अग्नि ने दस्यु या राक्षस को हनन किया है, वर्षा का जल नीचे गिराया है और शम्बर को भिन्न किया है।

वैश्वानरोमहिम्नाविश्वकृष्टिर्भरद्वाजेषुयजतोविभावा ।
शातवनेयेशतिनीभिरग्निःपुरुणीथेजरतेसूनृतावान् ॥७॥२५॥

वैश्वानरः । महिम्ना । विश्वऽकृष्टिः । भरत्ऽवाजेषु । यजतः ।
विभाऽवा । शातऽवनेये । शतिनीभिः । अग्निः । पुरुऽनीथे ।
जरते । सूनृताऽवान् ॥ ७ ॥ २५ ॥

वैश्वानरोऽग्निर्महिम्नामहत्त्वेनविश्वकृष्टिः कृष्टिरितिमनुष्यनाम विश्वेसर्वेमनुष्याःयस्यसवशाः सतथोक्तःभरद्वाजेषुपुष्टिकरहविर्लक्षणान्नवत्सुयागेषु यद्वा एतत्संज्ञेष्वृषिषुयजतोयष्टव्यःविभावावि-शेषेणप्रकाशयिता सूनृतावान् सूनृताप्रियासत्यावाक्तद्युक्तः एवंभूतोऽग्निःशातवनेयेशतसंख्याकान् क्रतून्वनतिसम्भजतइतिशतवनिः तस्यपुत्रःशातवनेयःतस्मिन्पुरुणीथेबहूनानेतरिएतत्संज्ञकेरा-जनिच शतिनीभिर्बह्वीभिःस्तुतिभिःजरतेस्तूयते॥ भरद्वाजेषु भरन्तिपोषयन्तिभोक्तृनितिभरन्त्यःआ-इत्यादायेषु बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वेप्राप्तेभरद्वाजादित्वात्पूर्वपदान्तोदात्तत्वम् । यजतः भृम्-दृशियजिपर्विपच्यमितमिनमिहर्यैभ्योऽतजितियजतेरतच्प्रत्ययः । विभावाभादीप्तौ आतोमनिन्क्वनि-प्वनिप् तस्यपित्त्वादनुदात्तत्वेधातुस्वरःशिष्यते । शातवनेये इतश्चानिञइतिढक्प्रत्ययः शतव-निशब्दात् इकश्चानिञइतिढक् कित्त्वात्अन्तोदात्तत्वम् । शतिनीभिः शतशब्दान्मत्वर्थीयइनिःऋ-न्नेभ्योङीप्।पुरुणीथे पूर्वपदात्संज्ञायामगइतिणत्वम् । जरते व्यत्ययेनकर्मणिकर्तृप्रत्ययः॥७॥

७. अपने माहात्म्य-द्वारा वैश्वानर सब मनुष्यों के अधिपति और पुष्टिकर तथा अन्नशाली यज्ञ में यजनीय हैं। वैश्वानर प्रभा-सम्पन्न और सुनृत-वाक्यशाली हैं। शतयज्ञकर्त्ता या शतवनि के पुत्र पुरुनीथ राजा, अनेक स्तुतियों के साथ, उन अग्नि की स्तुति करते हैं।

बर्हिर्मितिपञ्चर्चंतुरीयंसूक्तम् नोधसआर्षंत्रैष्टुभमाग्नेयम्—अनुक्रान्तंच—बर्हिःपञ्चेति।मा-तरनुवाकस्याग्नेयेक्रतौवैष्टुभेछन्दसीदंसूक्तमाश्विनेशस्त्रेच तथाचसूत्रितम्—बर्हिर्नयशसमुपप्रयन्-त्वग्निविशीर्णीति ।

---

१ नि० ७. २१ ।

पञ्चमध्यायमाह—

वह्निंयशसंविदथस्यकेतुंसुप्राव्यंदूतंसद्योअर्थम् ।
द्विजन्मानंरयिमिवप्रशस्तंरातिंभरद्भृगवेमातरिश्वा ॥१॥

वह्निम् । यशसम् । विदथस्य । केतुम् । सुप्रऽअव्यम् । दूतम् ।
सद्यःऽअर्थम् । द्विऽजन्मानम् । रयिम्ऽइव । प्रऽशस्तम् । रातिम् ।
भरत् । भृगवे । मातरिश्वा ॥ १ ॥

वह्निंहविषांवोढारंयशसंयशस्विनंविदथस्यकेतुंयज्ञस्यप्रकाशयितारं सुप्राव्यंसुष्ठुप्रकर्षेण-रक्षितारंदूतंदेवैर्हविर्वहनलक्षणेदूत्येनियुक्तम् सद्योअर्थं यदाहवींषिगृह्णाति सद्यस्तदानीमेवह-विर्भिःसहदेवान्गन्तारं यद्वा सद्योअर्थंअरणं गमनंयस्यतं द्विजन्मानं द्वयोर्द्यावापृथिव्योररण्यो-र्वाजायमानं रयिमिवधनमिवप्रशस्तंप्रख्यातं एवंभूतमग्निं मातरिश्वावायुः भृगवेएतत्संज्ञकाय महर्षये रातिंभरन्मित्रमाहरत्सखायमकरोदित्यर्थः रातिर्नामसम्भाव्येत्यत्ररातिर्मित्रमितिकपर्दिनोक्तं रातिः पुत्रइत्येके एतदर्थप्रतिपादकंमन्त्रान्तरमपिभवति—रातिंभृगूणामुशिजंकविक्रतुमिति ॥ वह्निं वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्योनित् इति वहतेर्निप्रत्ययः नित्त्वादाद्युदात्तत्वम् । यशसं यशस्-शब्दादुत्तरस्यविनोलुक् व्यत्ययेनान्तोदात्तत्वम् यद्वा अर्शआदित्वादच् स्वरःपूर्ववत् । सुप्राव्यं सुष्ठुप्रकर्षेण अवतिरक्षतीतिसुप्रावीः उपसर्गद्वयोपसृष्टादवतेः अवितृस्तृतन्त्रिभ्यईः इतीकारप्रत्ययः वाछन्दसीति अमिपूर्वत्वस्यविकल्पेसतियणादेशः उदात्तस्वरितयोर्यणःस्वरितत्वम् । स-द्योअर्थम् उषिकुषिगार्तिभ्यस्थन्निति ऋधातोः कर्तरिथन्प्रत्ययः सद्यएवार्थोगन्तासद्योअर्थः अव्य-यपूर्वपदप्रकृतिस्वरत्वम् यदितु अव्ययेनञ्कुनिपातानामितिवक्तव्यमित्यव्ययग्रहणेनविरुध्यतसंगृ-ह्येत बहुव्रीहिस्वरोभविष्यति । मातरिश्वा सर्वनिर्माणहेतुत्वात् माताऽन्तरिक्षम् श्वसितिरत्र-गतिकर्मा मातर्यन्तरिक्षेश्वसितिगच्छतीतिमातरिश्वा श्वन्नुक्षन्नित्यादौनिपातनाद्रूपसिद्धिः यद्वा मातर्यन्तरिक्षे शुआशु अनतिगच्छतीतिमातरिश्वा अनगतिदीप्त्यादानेष्वित्यस्माद्औ-णादिकोड्वन्प्रत्ययः एतच्चयास्केनोक्तम्—मातर्यन्तरिक्षेश्वसितिमातर्याश्वनितीतिवेति ॥ १ ॥

१. अग्नि हव्यवाहक, यशस्वी, यज्ञप्रकाशक और सम्यक् रक्षण-शील तथा देवों के दूत हैं; सदा हव्य लेकर देवों के पास जाते हैं। यह दो काष्ठों से, अरणि-मन्थन से, उत्पन्न और धन की तरह प्रशंसित हैं। मातरिश्वा उन्हीं अग्नि को, मित्र की तरह, भृगु-वंशियों के पास ले आयें।

अस्यशासुरुभयासःसचन्तेहविष्मन्तउशिजोयेचमर्ताः ।
दिवश्चित्पूर्वोन्यसादिहोतापृच्छ्योविश्पतिर्विक्षुवेधाः ॥२॥

---

१ तै० सं० ५. ६. १. । २ ऋ० सं० २. ८. १७. । ३ नि० ७. २६. ।

अस्य । शासुः । उभयासः । सचन्ते । हविष्मन्तः । उशिजः ।
ये । च । मर्ताः । दिवः । चित् । पूर्वः । नि । असादि । होता ।
आऽपृच्छ्यः । विश्पतिः । विक्षु । वेधाः ॥ २ ॥

शासुः शासितुरस्याग्नेः उभयासः उभयेऽपि देवा मनुष्याश्च यद्वा स्तुतिभिः स्तोतारो यज्ञैर्यजमानाश्च इममग्निं शासितारं सचन्ते सेवन्ते देवा उशिजः कामयमानाः देवा हविष्मन्तः हविषा युक्ताः ये च मर्ताः मरणधर्माणो यजमानाः यद्वा उशिज इति मेधाविनाम उशिजो मेधाविनः स्तोतारः हविष्मन्तो हविर्युक्ताः यजमानाः किञ्चायं होता होमनिष्पादकोऽग्निः दिवश्चिदादित्यादपि पूर्वः उषःसु वर्तमानो भूत्वाग्निहोत्रहोमार्थं विक्षु यजमानेषु न्यसादि अध्वर्युभिराज्याधानेन स्थापितः स्थाप्यते कीदृशो होता आपृच्छ्यः आमन्त्र्यः पूज्य इत्यर्थः विश्पतिः विशां प्रजानां पालयिता वेधाः विधाता अभिमतफलस्य कर्ता ॥ शासुः शासु अनुशिष्टौ तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटाविति तृन्प्रत्यय इडागमाभावश्च षष्ठ्येकवचने तकारलोपश्छान्दसः नित्त्वादाद्युदात्तत्वम् । उशिजः वशः किदिति वष्टेरिजिप्रत्ययः ग्रहिज्यादिना सम्प्रसारणम् । मर्ताः मृङ् प्राणत्यागे असिहसिमृग्रिण्वामीत्यादिना तन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् । आपृच्छ्यः प्रच्छ ज्ञीप्सायाम् आङ्पूर्वादस्माच्छन्दसि निष्टर्क्येत्यादौ क्यप्प्रत्ययो निपातितः ग्रहिज्यादिना सम्प्रसारणम् क्यपः पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते । विश्पतिः पत्यावैश्वर्य इति पूर्वपदप्रकृतिस्वरत्वे प्राप्ते परादिश्छन्दसि बहुलमित्युत्तरपदान्तोदात्तत्वम् ॥ २ ॥

२. हव्यग्राही देव और मानव—दोनों इन शासनकर्ता की सेवा करते हैं; क्योंकि ये पूज्य, प्रजापालक और फलदाता अग्नि सूर्योदय से भी पहले यजमानों के बीच स्थापित हुए हैं।

तृतीयामृचमाह—

तंनव्यसीहृदआजायमानमस्मत्सुकीर्तिर्मधुजिह्वमश्याः ।
यमृत्विजोवृजनेमानुषासःप्रयस्वन्तआयवोजीजनन्त ॥३॥

तम् । नव्यसी । हृदः । आ । जायमानम् । अस्मत् । सुऽकीर्तिः ।
मधुऽजिह्वम् । अश्याः । यम् । ऋत्विजः । वृजने । मानुषासः ।
प्रयस्वन्तः । आयवः । जीजनन्त ॥ ३ ॥

नव्यसी नवतरा सुकीर्तिः सुष्ठु कीर्तयित्री अस्मत् अस्माकं स्तुतिः हृदः हृदयस्थितात् प्राणात् जायमानमुत्पद्यमानं अग्निर्हि वायोरुत्पद्यते वायुश्च प्राण एव यः प्राणः स वायुरित्याम्नानात् ।

---

१ नि० १. २०.

मधुजिह्वंमादयितृत्वात् एवंभूतंतमग्निमास्याः आभिमुख्येनव्याप्नोतु वृजनेसङ्ग्रामेपाशेसविका-यवोमनुष्याः यमग्निंजीजनन्वयज्ञार्थमुत्पादयन् कीदृशाः मनुष्याः ऋत्विजः कलौकालेपद्यहारः मानुषासः मनोःपुत्राः प्रयस्वन्तः हविर्लक्षणान्नोपेताः ॥ नव्यसी नवीयसीत्यनईकारलोपश्छान्दसः । हृदः अत्रहृदयशब्देनतत्स्थःप्राणोलक्ष्यते पद्दन्नित्यादिनाहृदयशब्दस्यहृदादेशः । जायमानं जनीप्रादुर्भावे श्यनिज्ञाजनोर्जेविजादेशः अदुपदेशाल्लसार्वधातुकानुदात्तत्वेश्यनोनि-त्त्वादाद्युदात्तत्वम् अस्नत् सुपांसुलुगितिविभक्तेर्लुक् । अस्याः अशूव्याप्तौ लिङ्बहुलंछन्दसीति विकरणस्यलुक् व्यत्ययेनपरस्मैपदमव्यमौ । जीजनन् जनीप्रादुर्भावे ण्यन्ताल्लुङिच्लेश्चङादेशः द्विर्भावहलादिशेषसन्वद्भावेत्वदीर्घाः अदुपदेशाल्लसार्वधातुकानुदात्तत्वेचङ्यस्वरेप्राप्ते व्यत्ययेनाभ्यस्तस्याद्युदात्तत्वम् ॥ ३ ॥

३. हृदय या प्राण से उत्पन्न और मिष्ठजिह्व अग्नि के सामने हमारी नई स्तुति व्याप्त हो। मनु-पुत्र मानव लोग यथासमय यज्ञ-सम्पादन और यज्ञान्न-प्रदान करके इस अग्नि को संग्राम समय में उत्पन्न करते हैं।

उशिक्पावकोवसुर्मानुषेषुवरेण्योहोताधायिविक्षु ।
दमूनागृहपतिर्दमआँअग्निर्भुवद्रयिपतीरयीणाम् ॥४॥

उशिक् । पावकः । वसुः । मानुषेषु । वरेण्यः । होता । अधायि । विक्षु । दमूनाः । गृहऽपतिः । दमे । आ । अग्निः । भुवत् । रयिऽपतिः । रयीणाम् ॥ ४ ॥

उशिक् कामयमानः पावकः शोधकः वसुर्निवासयितावरेण्योवरणशीलएवंभूतोहोताग्निः विक्षुयज्ञगृहप्रविष्टेषुमानुषेषुयजमानेषुमधायिस्थाप्यते सचाग्निर्दमूनाः रक्षसांदमनकरणमनसा युक्तोगृहपतिर्गृहाणांपालयिताचसन् दमेयज्ञगृहेरयिपतिः धनाधिपतिः आभुवत्आसमन्ताद्भवति नकेवलमेकस्यरयेः अपितुसर्वेषामित्याह रयीणामिति यद्वा रयीणांमध्येउत्कृष्टंयद्धनंतस्य पतिरित्यर्थः ॥ अधायि छन्दसिलुङ्लङ्लिटइतिवर्तमानेकर्मणिलुङिच्लेश्चिणादेशोआतोयुक्चिण्कृतोरितियुगागमः।दमयतिराक्षसादिकमितिदमूनाः दमउपशमे दमेरूनसिरितिऔणादिकऊनसिप्रत्ययः यास्कस्त्वाह—दमूनादममनावादानमनावादान्तमनावाअपिवादमइतिगृहनामतन्मनाःस्यादिति । दमआँअग्निः आङोनुनासिकश्छन्दसीतिआकारस्यसानुनासिकत्वम् प्रकृतिभावश्च । भुवत् लेटघडागमः इतश्चलोपइतीकारलोपः । रयिपतिः परादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वम् । रयीणां नामन्यतरस्यामितिनामउदात्तत्वम् ॥ ४ ॥

४. अग्नि कामना-पात्र, विशुद्धिकारी, निवास-हेतु, वरणीय और देवाह्वानकारी हैं। यज्ञ में प्रविष्ट मनुष्यों के बीच अग्नि को स्थापित किया गया है। अग्नि शत्रुदमन में कृतसंकल्प और हमारे घरों में पालनकर्त्ता हों। यज्ञ-भवन में धनाधिपति हों।

पञ्चमीमृचमाह—

तंत्वा॑व॒यंपति॑मग्नेरयी॒णांप्रशं॑सामोम॒तिभि॒र्गोत॑मासः ।
आ॒शुंनवा॒जंभ॒रंम॒र्जय॑न्तःप्रा॒तर्म॒क्षूधि॒याव॑सुर्जगम्यात् ॥५॥२६॥

तम् । त्वा॒ । व॒यम् । पति॑म् । अ॒ग्ने॒ । र॒यी॒णाम् । प्र । शं॒सा॒मः॒ । म॒तिऽभिः॑ । गोत॑मासः । आ॒शुम् । न । वा॒जम्ऽभ॒रम् । म॒र्जय॑न्तः । प्रा॒तः । म॒क्षु । धि॒याऽव॑सुः । ज॒ग॒म्या॒त् ॥ ५ ॥ २६ ॥

गोतमासोगोतमगोत्रोत्पन्नावयं नोधसः स्तोतुरेकत्वेप्यात्मनिपूजार्थंबहुवचनम् हेअग्ने रयीणांधनानांपतिंरक्षितारं तादृशंत्वात्वांमतिभिर्मननीयैःस्तोत्रैः प्रशंसामः प्रकर्षेणस्तुमः किंकुर्वन्तःवाजंभरम् वाजस्यहविर्लक्षणान्नस्यभर्तारंत्वांमर्जयन्तोमार्जयन्तः तत्रदृष्टान्तः—आशुंन अश्वमिव यथाअश्वमारोहन्तःपुरुषाः तस्यवहनप्रदेशंहस्तैर्निमृजन्ति तद्वद्वयमप्यग्नेर्हविर्वहनप्रदेशंनिमृजन्तइत्यर्थः तथाचाग्निसंमार्जनप्रकरणे वाजसनेयिभिराम्नातम्—अथसमन्ततुष्णीमेव पाणिनासंमार्ष्टि यथामुक्त्वामेहिवहेत्यश्वंसंमृज्यादेवमेतदग्निंयुक्त्वोपक्षिपतिमेहिदेवेभ्योहव्यंवहेति । धियावसुः कर्मणायुष्माकंप्राप्तधनःसोग्निःप्रातः श्वोभूतस्याह्नःप्रातःकालेमक्षुशीघ्रंजगम्यात् आगच्छतु ॥ मतिभिः मनज्ञानेइत्यस्मात्कर्मणिक्तिन् मन्त्रेवृषेषेत्यादिनाक्तिन उदात्तत्वम् । वाजंभरं अग्नेरेषावैदिकीसंज्ञा संज्ञायांभृतृवृजीतिभृञःखच्कर्मण्युपपदेखच्प्रत्ययः अरुर्द्विषदजन्तस्यमुमिति मुमागमः चित इत्यन्तोदात्तत्वम् । मर्जयन्तः संज्ञापूर्वकस्यविधेरनित्यत्वात् मृजेर्वृद्धिरितिवृद्ध्यभावः अदुपदेशाल्लसार्वधातुकानुदात्तत्वेणिचएवस्वरःशिष्यते । जगम्यात् लिङि बहुलंछन्दसीतिशपःश्लुः ॥ ५ ॥

५. अग्नि ! हम गोतमगोत्रज हैं और तुम धनपति, रक्षणशील और यज्ञान्न के कर्त्ता हो। जैसे सवार हाथ से घोड़े को साफ़ करता है, वैसे ही हम भी तुम्हें मार्जित करके मननीय स्तोत्र द्वारा प्रशंसा करेंगे। प्रज्ञा द्वारा अग्नि ने धन प्राप्त किया है। इस प्रातःकाल में तुरत आओ।

॥ इतिप्रथमस्यचतुर्थेषड्विंशोवर्गः ॥ २६ ॥

अस्माइदुप्रतवसइतिषोडशर्चंचतुर्थंसूक्तंनोधसआर्षमैन्द्रंत्रैष्टुभं अनुक्रान्तंच—अस्माइदुषोडशेति । अस्यसूक्तस्यनोधाऋषिरित्येतद्ब्राह्मणेसमाम्नायते—अस्माइदुप्रतवसेतुरायेतिनोधाःसूक्तमेवमातःसवनेदेवि । षळहस्तोत्रियायावापवत्सुचतुर्विंशमहाव्रतादिष्वहस्सुमाध्यंदिनेसवनेब्राह्मणाच्छंसिशस्त्रेमरुत्वतीयेसम्पतेत्यस्याआरम्भणीयायाऊर्ध्वंप्रहीनसूक्तसंज्ञमेतच्छंसनीयम् तथाचसूत्रितम्—

1 यथंवहेतिपाठः । २ ऐ० ब्रा० ६. १८. ।

अस्माइदुप्रतवसेऽशाससव्द्धिरितीतरावहीनसूक्तेऽपि । ब्राह्मणंचभवति—स्पृतोभागःसवनेपञ्चहस्तो-नियान्शास्त्वामाध्यंदिनेहीनसूक्तानिशंसन्तीति ।

तत्रप्रथमामृचमाह—

अस्माइदुप्रतवसेतुरायप्रयोनहर्मिस्तोमंमाहिनाय ।
ऋचीषमायाध्रिगवओहमिन्द्रायब्रह्माणिराततमा ॥१॥

अस्मै । इत् । ऊम् इति । प्र । तवसे । तुराय । प्रयः । न । हर्मि ।
स्तोमम् । माहिनाय । ऋचीषमाय । अध्रिऽगवे । ओहम् ।
इन्द्राय । ब्रह्माणि । रातऽतमा ॥ १ ॥

इदुइतिनिपातद्वयंपदपूरणे अथापिपदपूरणाःकमीमिद्विती॑तियास्कः । यद्वा अवधारणार्थम् तवसेप्रवृद्धायतुरायत्वरमाणाय यद्वा तुर्विर्हिंसार्थःशत्रूणांहिंसित्रेमाहिनायगुणैर्महतेऋचीषमाय ऋचास-माय यादृशीस्तुतिःक्रियतेतत्समायेत्यर्थः अध्रिगवेअधृतगमनायाप्रतिहतगमनायेत्यर्थः तथा-चयास्कः—अधृतगमनकर्मवानिन्द्रोऽप्यध्रिगुरुच्यतइति॑ । एवं भूतायास्माइन्द्रायस्तोमंस्तोत्रंप्र-हर्मिप्रहरामिकरोमीत्यर्थः तत्रदृष्टान्तः—प्रयोन प्रयइत्यन्ननाम यथाबुभुक्षितायपुरुषायकश्चिदन्नं प्रहरति कीदृशंस्तोमंओहंवहनीयंप्रापणीयंवाअत्यन्तोत्कृष्टमित्यर्थः नकेवलंस्तोमं किंतर्हिअस्मा-इन्द्रायब्रह्माणिहविर्लक्षणान्यन्नानि कीदृशानि राततमा पूर्वैर्यजमानैरतिशयेनदत्तानि इन्द्रस्तुत्याहविषाचपरि-चरेयेतिभावः।तुराय तुरत्वरणे इगुपधलक्षणःकः यद्वा तुर्वीहिंसार्थःतुर्वतीतितुरः पचाद्यच्छान्द-सोवलोपः।हर्मि हृञ्हरणे बहुलंछन्दसीतिशपोलुक्।माहिनाय महपूजायामित्यस्मान्महेरिनण्चे-तीनण्प्रत्ययः उपधावृद्धिश्च । ऋचीषमाय ऋचीषमऋचासमइतियास्कः॑ ।तृतीयातत्कृतेतिसमा-सः तृतीयापूर्वपदप्रकृतिस्वरत्वम् पृषोदरादित्वादीकारोपजनः सुषामादित्वात्षत्वम् केचिदा-हुः ऋचस्तुतावित्यस्मादिगुपधात्किदितीप्रत्ययः कृदिकारादक्तिनइतिङीष् ऋचीस्तुतिः त-यासमःपूर्ववत्षत्वम् अस्मिन्पक्षे तृतीयापूर्वपदप्रकृतिस्वरत्वेसतिङीषउदात्तत्वेनभवितव्यम् त-थाचनदृश्यते तस्मात्स्वरश्चिन्तनीयः यद्वा दिवोदासादित्वाद्द्रष्टव्यः । अध्रिगवे अधृतोऽन्येनानिवा-रितोगौर्गमनंयस्यसतथोक्तः गोस्त्रियोरुपसर्जनस्येतिह्रस्वत्वम् पृषोदरादित्वाद्धृतशब्दस्याध्रिभा-

१ ऐ० ब्रा० ६. १८. ।    २ नि० ५. ११. ।    ३ नि० ६. २३. ।

मः । ओहम् वहतेःकर्मणिघञिछान्दसंसम्प्रसारणम्, यद्वा वुहिर्दुहिर्वुहिर्अर्दनेइत्यस्मादोहतेः पूर्ववत्स् । रातमा राङानेइत्यस्मान्निम्नन्तादातिशायनिकस्तमप् शेश्छन्दसीतिविलोपः ॥ १ ॥

१. इन्द्र बली, क्षिप्तकारी, गुण-द्वारा महान्, स्तुति-पात्र और अबाध-गति हैं। जैसे बुभुक्षित को अन्न दिया जाता है, वैसे ही मैं इन्द्र को ग्रहण-योग्य स्तुति और पूर्ववर्ती यजमान-द्वारा दिया हुआ यज्ञान्न प्रदान करता हूँ।

अस्मा इदु प्रय॑ इव॒ प्र यं॑सि॒ भरा॑म्याङ्गू॒षं बाधे॑ सुवृ॒क्ति ।
इन्द्रा॑य हृ॒दा मन॑सा मनी॒षा प्र॒त्नाय॒ पत्ये॒ धियो॑ मर्जयन्त ॥२॥

अ॒स्मै । इत् । ऊँ॒ इति॑ । प्रयः॑ऽइव । प्र । यं॑सि॒ । भरा॑मि ।
आ॒ङ्गू॒षम् । बाधे॑ । सु॒ऽवृ॒क्ति । इन्द्रा॑य । हृ॒दा । मन॑सा । म॒नी॒षा ।
प्र॒त्नाय॑ । पत्ये॑ । धियः॑ । म॒र्ज॒य॒न्त॒ ॥ २ ॥

अस्माइदु अस्माएवेन्द्राय प्रयइत्यन्ननाम प्रयइवअन्नमिवप्रयंसिप्रयच्छामि यदेवसर्हीकि-मये बाधेशत्रूणांबाधनायसमर्थंसुवृक्तिंसुष्ठुआवर्जकंआङ्गूषंस्तोत्ररूपमाघोषंभरामिसंपादयामि अन्येपिस्तोतारःप्रत्नायपुराणायपत्येस्वामिनेइन्द्रायहृदाहृदयेनमनसावदन्तर्वर्तिनान्तःकरणेनमनी-षामनीषयातज्जन्येनज्ञानेनचधियःस्तुतीःकर्माणिवामर्जयन्त मार्जयन्तिसंस्कुर्वन्ति ॥ प्रयंसि य-मउपरमेइत्यस्मात् लटिपुरुषव्यत्ययः बहुलंछन्दसीतिशपोलुक् । आङ्गूषंआङ्गूषस्तोमआघोषइति यास्कः । आङ्पूर्वाद्घुषेर्घञिपृषोदरादित्वात्घोइत्यस्यगूआदेशः आङोङकारस्यलोपाभावश्च या-थादिनोत्तरपदान्तोदात्तत्वम् । बाधे बाधृविलोडनेइत्यस्मात्तुमर्थेसेसेनसेअसेन्निति भावेकेन्प्रत्ययः ए-णन्तत्वादव्ययत्वेनसुपोलुक् । मनीषा सुपांसुलुगितितृतीयायाडादेशः । पत्ये पतिःसमासएवेति घिसंज्ञायाःसमासविषयत्वात् घेर्ङितीतिगुणाभावेयणादेशः ॥ २ ॥

२. इन्द्र को, अन्न की तरह, हव्य दान करता हूँ। शत्रुपराजय के साधन-स्वरूप स्तुति-वाक्यों का मैंने सम्पादन किया है। अन्य स्तोता भी उस पुरातन स्वामी इन्द्र के लिए हृदय, मन और ज्ञान से स्तुति-सम्पादन करते हैं।

अस्मा इदु॒ त्यमु॑प॒मं स्व॒र्षां भरा॑म्याङ्गू॒षमा॒स्ये॑न ।
मंहि॑ष्ठ॒मच्छो॑क्तिभिर्मती॒नां सु॑वृ॒क्तिभिः॑ सू॒रिं वा॑वृ॒धध्यै॑ ॥३॥

अ॒स्मै । इत् । ऊँ॒ इति॑ । त्यम् । उ॒प॒ऽमम् । स्वः॒ऽसाम् । भरा॑मि ।
आ॒ङ्गू॒षम् । आ॒स्ये॑न । मंहि॑ष्ठम् । अच्छो॑क्तिऽभिः । म॒ती॒नाम् ।
सु॒वृ॒क्तिऽभिः॑ सू॒रिम् । व॒वृ॒धध्यै॑ ॥ ३ ॥

---

१ नि० ५. ११.।

अस्मादिदु अस्माएवेन्द्रायत्यंप्रसिद्धम् उपमम् उपमानहेतुभूतम् स्वर्षांसुवुअरणीयस्य धनस्यदातारं सूरिंविपश्चिवमिन्द्रंवनृधध्यैवर्धयितुंसुवृक्तिभिः सुष्ठुआवर्जकैःसमर्थैरित्यर्थः मतीनांस्तुतीनांसम्बन्धिभिः अच्छोक्तिभिः स्वच्छैर्वचोभिः मंहिष्ठमतिशयेनमहत्वं एवंलक्षणमांगूषं आघोषंआस्येनमुखेनभरामिकरोमीत्यर्थः ॥ उपमं उपमीयतेनेनेत्युपमः घञर्थेकविधानमितिकरणेकप्रत्ययः आतोलोपइटिचेत्याकारलोपः । स्वर्षां सुपूर्वात्सनोतेर्विजन्तःस्वर्शब्दः षणुदाने जनसनखनक्रमगमोविट् विड्वनोरनुनासिकस्यादित्यात्वम् सनोतेरनइतिषत्वम् । भरामि पादादित्वान्निघाताभावः । अच्छोक्तिभिः अच्छाउक्तयोयेषां बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । मतीनां नामन्यतरस्यामितिनामउदात्तत्वम् । ववृधध्यै वृधुवृद्धावित्यस्मादन्तर्भावितण्यर्थात् तुमर्थेसेसेनितिकध्यैप्रत्ययः कित्त्वाद्गुणाभावः द्विर्भावश्छान्दसः यद्वा यङ्लुगन्तादस्मिन्प्रत्ययेआगमानुशासनस्यानित्यत्वान्नीगाद्यभावः अन्येषामपिदृश्यतइतिसांहितिकंअभ्यासस्यदीर्घत्वम् प्रत्ययाद्युदात्तत्वम् ॥ ३ ॥

३. उन्हीं उपमानभूत, वरणीय-धनवाला और विज्ञ इन्द्र को वर्द्धन करने के लिए मैं मुख द्वारा उत्कृष्ट और निर्मल स्तुति वचनों से युक्त तथा अति महान् शब्द करता हूँ।

चतुर्थीमृचमाह—

अस्मादिदुस्तोमंसंहिनोमिरथंनतष्टेवतत्सिनाय ।
गिरश्चगिर्वाहसेसुवृक्तीन्द्रायविश्वमिन्वंमेधिराय ॥४॥

अस्मै । इत् । ऊम् इति । स्तोमम् । सम् । हिनोमि । रथम् । न । तष्टाऽइव । तत्ऽसिनाय । गिरः । च । गिर्वाहसे । सुऽवृक्ति । इन्द्राय । विश्वम्ऽइन्वम् । मेधिराय ॥ ४ ॥

अस्माएवेन्द्रायस्तोमंशस्त्ररूपंस्तोत्रंसंहिनोमिप्रेरयामि तत्रदृष्टान्तः—तत्सिनाय सिनमित्यन्ननाम सिनमन्नंभवतिसिनातिभूतानीतियास्कः । तेनरथेन सिनमन्नंयस्यसतथोक्तःतस्मैरथस्वामिनेतष्टेवतष्टातक्षकोरथनिर्माताऽरथंन यथारथंप्रेरयतितद्वत् इवेत्येतत्पदपूरणम् तथागिर्वाहसे गीर्भिःस्तुतिभिरुह्यमानायेन्द्राय गिरश्चशस्त्रसम्बन्धिनीःकेवलाऋचश्चसुवृक्तिशोभनमार्जनंयथाभवति तथाप्रेरयामि तथामेधिरायमेधाविनेइन्द्रायविश्वमिन्वंविश्वंव्यापकंविश्वैर्व्याप्यं सर्वोत्कृष्टंहविश्चसंहिनोमीत्यनुषङ्गः ॥ हिनोमि हिगतौवृद्धौच स्वादित्वात्श्नुः । तष्टेव तक्षूत्वक्षूतनूकरणे ताच्छीलिकस्तृन् ऊदित्त्वात्पक्षेइडभावः स्कोःसंयोगाद्योरन्तेचेतिककारलोपः नित्त्वादाद्युदात्तत्वम् । तत्सिनाय सिनशब्दः षिञ्बन्धनेइत्यस्मात् इणषिञ्जिदीङ्उष्यविभ्योनक्इतिनक्प्र-

१ नि० ५. ५ ।

त्वयान्तः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । गिर्वाहसे वहिहाधाञ्भ्यश्छन्दसीतिवहतेःकेवला-द्विहितोऽसुन्प्रत्ययोगतिकारकयोरपिपूर्वपदप्रकृतिस्वरत्वंचेतिवचनात्कारकपूर्वस्यापिभवति पूर्वपद-प्रकृतिस्वरत्वंच णिदित्यनुवृत्तेरुपधावृद्धिः हळिचेतिदीर्घाभावश्छान्दसः। विश्वमिन्वं इविव्यामो विश्वमिन्वतिव्याप्नोतीतिविश्वमिन्वम् पचाद्यच् लुगभावश्छान्दसः यद्वा खल्प्रत्ययोबहुल-वचनादस्मादपिधातोर्द्रष्टव्यः । मेधिराय मेधाअस्यास्तीतिमेधिरः मेधारथाभ्यामिरन्निरचौ वक्तव्याविति मत्वर्थीयइरन् नित्वादाद्युदात्तत्वम् ॥ ४ ॥

४. जिस प्रकार रथ-निर्माता रथ-स्वामी के पास रथ चलाता है, उसी प्रकार मैं भी इन्द्र के उद्देश से स्तोत्र प्रेरण करता हूँ। स्तुतिपात्र इन्द्र के लिए शोभन स्तुतिवचन प्रेरण करता हूँ। मेधावी इन्द्र के लिए विश्वव्यापी हवि प्रेरण करता हूँ।

अस्मा इदु सप्तिमिव श्रवस्येन्द्रायार्कं जुह्वा३ समञ्जे ।
वीरं दानौकसं वन्दध्यै पुरां गूर्तश्रवसं दर्माणम् ॥५॥२७॥

अस्मै । इत् । ऊं इति । सप्तिम्ऽइव । श्रवस्या । इन्द्राय । अर्कम् । जुह्वा । सम् । अञ्जे । वीरम् । दानऽओकसम् । वन्दध्यै । पुराम् । गूर्तऽश्रवसम् । दर्माणम् ॥ ५ ॥ २७ ॥

अस्माएवेन्द्रायअर्कं स्तुतिरूपंमन्त्रंश्रवस्या श्रवस्ययाअन्नेच्छयाअन्नलाभायेत्यर्थः जुह्वा आह्वानसाधनेनवागिन्द्रियेणसमञ्जेसम्यक्करोमि एकीकरोमीत्यर्थः तत्रदृष्टान्तः—सप्तिमिव य-थान्नलाभायगन्तुकामःपुमान् अश्वंरथेनैकीकरोतितद्वत् एकीकृत्यचवीरं शत्रुक्षेपणकुशलं दा-नौकसंदानानामेकनिलयं गूर्तश्रवसंप्रशस्यान्नं पुरांअसुरपुराणांदर्माणंविदारयितारं एवंगुणवि-शिष्टमिन्द्रंवन्दध्यैवन्दितुंस्तोतुंप्रवृत्तोस्मीतिशेषः॥ सप्तिमिव षपसमवाये समवैतिरथेनैकीभवतीति सप्तिरश्वः वसस्तिविविधिधीयमानस्तिप्रत्ययोबहुलवचनादस्मादपिधातोर्भवति प्रत्ययस्य पित्वादनुदात्तत्वेधातुस्वरः इवेनसमासउक्तः । श्रवस्या श्रवस्शब्दात्सुपआत्मनःक्यच् क्यच्-अन्तात्धातोअप्रत्ययादित्यकारप्रत्ययः ततष्टाप् सुपांसुलुगितितृतीयायाआडादेशः उदात्तनिवृ-त्तिस्वरेणतस्योदात्तत्वम् । अर्कम् अर्चस्तुतौ अर्च्यतेस्तूयतेनेनेत्यर्कोमन्त्रः पुंसिसंज्ञायांघःप्रायेणे-तिकरणेघप्रत्ययः चजोःकुघिण्ण्यतोरितिकुत्वम् उञ्छादिषु पाठात् गुणःप्रत्ययस्वरः। जुह्वा बहुलंछन्दसीति ह्वयतेःसम्प्रसारणस्यहेओहुवः जुहोतेर्वा क्विप् धातोर्दीर्घश्च धातुस्वरेणान्तोदात्तत्वम् तृतीयैकवचने उदात्तस्वरितयोर्यणःस्वरितोऽनुदात्तस्य इतिस्वरितत्वम् उदात्तयणोहल्पूर्वादित्यस्यविभक्त्युदात्तत्वस्य नोङ्धात्वो-रितिप्रतिषेधः। अञ्जे अञ्जूव्यक्तिम्रक्षणकान्तिगतिषु व्यत्ययेनात्मनेपदम्। वन्दध्यै वदिअभिवा-दनस्तुत्योः तुमर्थेसेसेनिति कध्यैप्रत्ययः। गूर्तश्रवसम् गृशब्दे निष्ठायांश्र्युकःकितीतीट्प्रतिषेधः व-

बहुलंछन्दसीत्युत्वम् इष्टिचेविदीर्घः नसत्तनिषत्तेत्यादौनिपातनान्निष्ठानत्वाभावः गूर्तश्रवोयस्य ब-हुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ दर्माणम् दृविदारणे अन्येभ्योपिदृश्यन्तइतिमनिन् नेड्वशिकृती-तीट्प्रतिषेधः व्यत्ययेनप्रत्ययाद्युदात्तत्वम् यद्वा औणादिकोमनिमत्ययोद्रष्टव्यः ॥ ५ ॥

५. जैसे घोड़े को रथ में लगाया जाता है, वैसे ही मैं भी अन्न-प्राप्ति की इच्छा से स्तुति-रूप मंत्र उच्चारण करता हूँ। उन्हीं वीर, दानशील, अन्नविशिष्ट और असुरों के नगरविदारी इन्द्र की वन्दना में प्रवृत्त होता हूँ।

अस्मा इदु त्वष्टा तक्षद्वज्रं स्वपस्तमं स्वर्यं१ रणाय।
वृत्रस्य चिद्विदद्येन मर्म तुजन्नीशानस्तुजता कियेधाः ॥६॥

अस्मै। इत्। ऊम् इति। त्वष्टा। तक्षत्। वज्रम्। स्वपःऽतमम्। स्वर्यम्। रणाय। वृत्रस्य। चित्। विदत्। येन। मर्म। तुजन्। ईशानः। तुजता। कियेधाः ॥ ६ ॥

त्वष्टाविश्वकर्मा अस्माइदुअस्माएवेन्द्राय वज्रंवर्जकमायुधं रणाययुद्धार्थंतक्षत्तीक्ष्णमकरोत् कीदृशंवज्रं स्वपस्तमंअतिशयेनशोभनकर्माणंस्वर्यंसुष्ठु शत्रुषुप्रेर्यं यद्वा स्तुत्यं तुजन् शत्रून्हिंसन्नीशा-नःऐश्वर्यवान्कियेधाः बलवान् एवंगुणविशिष्टइन्द्रः वृत्रस्यचित्आवरकस्यअसुरस्यमर्ममर्मस्था-नंतुजताहिंसकायेनवज्रेणविदद्वाझर्मीदित्यर्थः ॥ स्वपस्तमं शोभनंअपःकर्मयस्यासौ अतिशये-नस्वपाः स्वपस्तमः तमपःपित्त्वादनुदात्तत्वम् सोर्मनसीअलोमोषसीत्युत्तरपदाद्युदात्तत्वम्। स्वर्यं स्वर्यंतस्तक्षेत्यत्रोक्तम्। विदत् विदॢलाभे लृदित्त्वाच्च्लेरङादेशः बहुलंछन्दस्यमाङ्योगेपीत्यडभावः यद्वृत्तयोगादनिघातः। तुजन् तुजहिंसायाम् शपिप्राप्तेव्यत्ययेनशः अदुपदेशाल्लसार्वधातुकानु-दात्तत्वेविकरणस्वरः। ईशानः ईशऐश्वर्ये शानचिअदादित्वाच्छपोलुक् अनुदात्तेत्त्वाल्लसार्वधातु-कानुदात्तत्वेधातुस्वरः। तुजता शतुरनुमइतिविभक्तेरुदात्तत्वम्। कियेधाः अत्रनिरुक्तम्—कि-येधाःकियद्धाइतिवाक्रममाणधाइतिवेति। अस्यायमभिप्रायः—कियत्किंपरिमाणमित्यस्यबल-स्यधादर्शबलंदधातिधारयतीतिकियद्धाः यःकोप्यस्यबलस्यइयत्तांनजानातीत्यर्थः। यद्वा क्रममा-णाक्रममाणंपरेषांबलंधारयतिनिवारयतीतिक्रममाणधाः। उभयत्रापिपृषोदरादित्वात्पूर्वपदस्य कियेभावः दधातेर्विच् ॥ ६ ॥

६. इन्द्र के लिए, त्वष्टा ने, युद्ध के निमित्त शोभन-कर्मा और सुप्रेरणीय वज्र का निर्माण किया था। शत्रु-नाश के लिए तैयार होकर ऐश्वर्यवान् और अपरिमित बलशाली इन्द्र ने हननकर्ता वज्र से वृत्र का मर्म काटा था।

---

१ ऋ० सं० १, २, १६। २ नि ६, २०।

सप्तमीमृचमाह–

अस्येदु मातुः सवनेषु सद्यो महः पितुं पपिवाञ्चार्वन्ना ।
मुषायद्विष्णुः पचतं सहीयान्विध्यद्वराहं तिरो अद्रिमस्ता ॥७॥

अस्य । इत् । ऊम् इति । मातुः । सवनेषु । सद्यः । महः । पितुम् । पपिऽवान् । चारु । अन्ना । मुषायत् । विष्णुः । पचतम् । सहीयान् । विध्यत् । वराहम् । तिरः । अद्रिम् । अस्ता ॥ ७॥

उ इत्येतन्निपातद्वयं पदपूरणम्. यद्वा अवधारणार्थम् मातुः वृष्टिद्वारेण सकलस्य जगतो निर्मातुः महो महतोऽस्य यज्ञस्य सवनेषु अवयवभूतेषु प्रातःसवनादिषु त्रिषु सवनेषु पितुं सोमलक्षणमन्नं सद्यः पपिवान् यदा सोमो हूयते तदानीमेव पानं कृतवानित्यर्थः तथा चार्वन्ना चारूणि शोभनानि धानाकरम्भादीनि हविर्लक्षणान्यन्नानि भक्षितवानिति शेषः किञ्च विष्णुः सर्वस्य जगतो व्यापकः पचतं परिपक्वमसुराणां धनं यदस्ति तन्मुषायदपहरत् सहीयान् अतिशयेन शत्रूणामभिभविता अद्रिमस्ता अद्रेर्वज्रस्य क्षेपकः एवंभूत इन्द्रः तिरः सन् व्यवहितमस्यैव तिरस्कः । तिरः प्राप्तः सन् वराहं मेघं विध्यत् अताडयत् यद्वा विष्णुः स्वल्पविषयात्मको यज्ञः यज्ञो वै विष्णुरिति श्रुतेः विष्णुरूपं कृत्वेत्याम्नानात्। स विष्णुः पचतं परिपक्वमसुरधनं यत्तन्मुषायत् अचूचुरत् तदनन्तरं दीक्षोपसदात्मनां दुर्गरूपाणां सप्तानामह्नां परस्ताद्वासीव अद्रिमस्ता सहीयानिन्द्रः दुर्गाण्यतीत्य तिरः प्राप्तः सन् वराहं यज्ञरूपं दिवसरूपं वयज्ञं विध्यत् यथा तैत्तिरीयकम्–वराहोऽयं वाममोषः सप्तानां गिरीणां परस्ताद्वित्तं वेद्यमसुराणां बिभर्तीति स दर्भपिञ्जूलमुद्वृह्य सप्त गिरीन्भित्त्वा तमहन्निति ॥ महः महतः अच्छब्दलोपश्छान्दसः यद्वा महत्त्वेनैतत्पितुविशेषणं महः प्रशस्तं पितुमित्यर्थः । पपिवान् पिबतेर्लिटः क्वसुः वस्वेकाजाद्घसामितीडागमः आतो लोप इटि चेत्याकारलोपः प्रत्ययस्वरः। चारु सुपां सुलुगिति विभक्तेर्लुक्। मुषायत् मुषस्तेये पञ्चर्थे कविधानमिति शावेकप्रत्ययः मुषमात्मन इच्छति सुप आत्मनः क्यच् न च्छन्दस्यपुत्रस्येती त्वदीर्घस्यापि प्रतिषेधे व्यत्ययेन दीर्घः अस्मात्क्यजन्तात् लङः शप् आगमानुशासनस्यानित्यत्वाभ्यभावः द्वितीयपक्षे तु क्यजन्तात् लङि बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः अत्र स्तेयेच्छया तदुत्तरभाविनी क्रिया लक्ष्यते। पचतं भृमृदृशीत्यादिना पचेरतच्प्रत्ययः चित्त्वादन्तोदात्तत्वम्। विध्यत् व्यध ताडने लङि दिवादित्वाच्छ्यन् तस्य ङित्त्वाद्ग्रहिज्यादिना सम्प्रसारणम् श्यनो नित्त्वादाद्युदात्तत्वम् पादादित्वान्निघाताभावः । वराहं वरमुदकमाहारो यस्य यद्वा वरमाहरतीति वराहारः सन् पृषोदरा-

1 नि० ३. २०.। 2 तै० सं० ६. २. ४. १। 3 तै० ६. २. ४.।

दित्वाद्वराह इत्युच्यते । अत्र निरुक्तम्—वराहो मेघो भवति वराहारो वरमाहारमाहार्षीरिति च ब्राह्मणं-मिति । यद्यपक्षे तु वरं च वदहो वराहः राजाहःसखिभ्य इति समासान्तष्टच्प्रत्ययः चित्त्वादन्तोदात्तत्वम्। अस्ता असु क्षेपणे इत्यस्मात् साधुकारिणि तृन् इडभावश्छान्दसः न लोकाव्ययेति षष्ठीप्रतिषेधः ॥ ७ ॥

७. जगत् के निर्माणकर्त्ता इन्द्र को इस महायज्ञ में जो तीन अभिषव किये गये हैं, इन्द्र ने उनमें तुरत सोमरूप अन्न पान किया है। साथ ही शोभनीय हव्यरूप अन्न भी भक्षण किया है। सारे संसार में इन्द्र व्यापक हैं। उन्होंने असुरों का धन हरण किया है। वे शत्रुविजयी और वज्र चलानेवाले हैं। उन्होंने मेघ को पाकर उसे फोड़ा था।

अ॒स्मा इदु॒ ग्नाश्चि॑द्दे॒वप॑त्नी॒रिन्द्रा॑या॒र्कम॑हि॒हत्य॑ ऊवुः ।
परि॒ द्यावा॑पृथि॒वी ज॑भ्र उ॒र्वी नास्य॒ ते म॑हि॒मानं॒ परि॑ ष्टः ॥८॥

अ॒स्मै । इत् । ऊँ॒ इति॑ । ग्नाः । चि॒त् । दे॒वऽप॑त्नीः । इन्द्रा॑य । अ॒र्कम् । अ॒हि॒ऽहत्ये॑ । ऊ॒वु॒रित्यू॑वुः । परि॑ । द्यावा॑पृथि॒वी इति॑ । ज॒भ्रे । उ॒र्वी इति॑ । न । अ॒स्य॒ । ते इति॑ । म॒हि॒मान॑म् । परि॑ । स्त॒ इति॑ स्तः ॥८॥

अस्मा एवेन्द्राय अहिहत्ये अहेर्वृत्रस्य हनने निमित्तभूते सति ग्नाश्चित् गमनस्वभावा अपि स्थिताः देवपत्नीः देवानां पात्न्यः त्योगाय न्याद्या देवता अर्कमर्चनसाधनं स्तोत्रं ऊवुः समवन्यत चक्रुरित्यर्थः स चेन्द्रः उर्वी विस्तृते द्यावापृथिवी द्यावापृथिव्यौ परिजभ्रे स्वतेजसा परिजहार अतिचक्रामेत्यर्थः ॥ ऊवुः वेञ् तन्तुसन्ताने लिटि वेञो वयिः लिटः कित्त्वाद्यथादित्वेन सम्प्रसारणे क्रियमाणे यकारस्य लिटि वयो य इति प्रतिषेधात् वकारस्य सम्प्रसारणं परपूर्वत्वं द्विर्वचनादि वचास्यान्यतरस्यां किति इति यकारस्य वकारादेशः । जभ्रे हृञ् हरणे लिटि श्लुत्वात्कर्मभिप्राये आत्मनेपदम् हृग्रहोर्भ इति भत्वम् । उर्वी उरुशब्दाद्वोतो गुणवचनादिति ङीष् वा छन्दसीति पूर्वसवर्णदीर्घत्वम् ॥ ८ ॥

८. इन्द्र-द्वारा अहि या वृत्र का विनाश होने पर गमनशील देवपत्नियों ने इन्द्र की स्तुति की थी। इन्द्र ने विस्तृत आकाश और पृथिवी को अतिक्रम किया था; किन्तु द्युलोक और पृथिवीलोक इन्द्र की मर्यादा का अतिक्रम नहीं कर सकते।

अ॒स्येदे॒व प्र रि॑रिचे महि॒त्वं दि॒वस्पृ॑थि॒व्याः पर्य॒न्तरि॑क्षात् ।
स्व॒राळिन्द्रो॒ दम॒ आ वि॒श्वगू॑र्तः स्व॒रिरम॑त्रो ववक्षे॒ रणा॑य ॥९॥

---

१ नि०५, ३.।

अस्य । इत् । एव । प्र । रिरिचे । महिऽत्वम् । दिवः । पृथिव्याः ।
परि । अन्तरिक्षात् । स्वऽराट् । इन्द्रः । दमे । आ । विश्वऽगूर्तः ।
सुऽअरिः अमत्रः । ववक्षे । रणाय ॥ ९ ॥

अस्येदेव इदितिपदपूरणः अस्यैवेन्द्रस्य महित्वम् माहात्म्यं प्ररिरिचे अतिरिच्यते अधिकं भवती-त्यर्थः अत्रोपसर्गो धात्वर्थस्य निवृत्तिमाचष्टे यथा प्रस्मरणं प्रस्थानमिति कुतः सकाशात् प्ररिरिचे इत्यत आह दिवो द्युलोकात् पृथिव्याः भूलोकात् अन्तरिक्षात् द्यावापृथिव्योर्मध्ये वर्तमानात् अ-न्तरिक्षलोकाच्च परिउपर्यर्थः त्रीन्लोकानतीत्य उपरि प्ररिरिच इत्यर्थः दमे दमयितव्ये विषये स्वरा-ट्स्वेनैव तेजसा राजमानः विश्वगूर्तः विश्वस्मिन् सर्वस्मिन् कार्ये उद्गूर्णः समर्थः यद्वा विश्वं सर्वमा-युधं गूर्तं उद्यतं यस्य स तथोक्तः स्वरिः शोभनशत्रुकः शोभनेरात्रौ हन्तव्ये सति हन्ता वीर्यं प्रथयति गम्यते यथा अंकवारिं दिव्यं राजानमिन्द्रमिति । अकुत्सितारिमिति विहितस्यार्थः अमत्रः युद्धादिगुणम-नकुशलः मात्रया इयत्तया रहितो वा अमत्रो यानो महान्भवत्यभ्यमितो वेति यास्कः । एवं भूत इन्द्रो रणाय रणं युद्धं आववक्षे आवहति मेघान् प्रापयति मेघैः परस्परयुद्धं कारयित्वा वृष्टिं चकारेति भावः यद्वा यु-द्धाय स्वकीयान् भटान् गमयति ॥ अस्य ऊडिदमिति विभक्तेरुदात्तत्वम् । रिरिचे रिचिर् विरेचने छ-न्दसि लुङ्लङ्लिट इति वर्तमाने कर्मणि लिट् । पृथिव्याः उदात्तयणो हलि विभक्तेरुदात्तत्वम् । स्वराट् राजृ दीप्तावित्यस्मात् सत्सूद्विषेति क्विप् व्रश्चादिना षत्वे जश्त्वम् । दमे दमु उपशमे इत्यस्मात्कर्म-णि घञ् नोदात्तोपदेशस्य मान्तस्यानाचमेरिति वृद्धिप्रतिषेधः ञित्वादाद्युदात्तत्वम् । विश्व-गूर्तः गृ निगरणे अस्मान्निष्ठायां श्र्युकः किति इतीट्प्रतिषेधः बहुलं छन्दसीत्युत्वम् हलि चेति दीर्घः यद्वा गुरी उद्यमे अस्मात् निष्ठा नसत्तनिषत्तेत्यादौ निपातनान्निष्ठानत्वाभावः तत्पुरुषपक्षे गतिकारकोपपदात्कृदितिकृदुत्तरपदप्रकृतिस्वरत्वम् बा-दित्वात्पूर्वपदान्तोदात्तत्वम् बहुव्रीहिपक्षेतु बहुव्रीहौ विश्वं संज्ञायामिति असंज्ञायामपि पूर्वपदान्तो-दात्तत्वम् । अमत्रः अम गत्यादिषु अमिनक्षियजिवधिपतिभ्योऽत्रन्नित्यादिना उणादिकोऽत्रन्प्रत्ययः नित्त्वादा-द्युदात्तत्वम् । ववक्षे वहेर्लेटि सिब्बहुलं लेटीति सिप् बहुलं छन्दसीति शपः श्लुः ढत्वकत्वषत्वानि लो-पस्त आत्मनेपदेष्विति तलोपः । रणाय क्रियाग्रहणं कर्तव्यमिति कर्मणः सम्प्रदानत्वाच्चतुर्थी यद्वा गत्यर्थकर्मणीति चतुर्थी ॥ ९ ॥

९. द्युलोक, भूलोक और अन्तरिक्ष की अपेक्षा भी इन्द्र की महिमा अधिक है। अपने अधिवास में अपने तेज से इन्द्र स्वराज करते हैं। इन्द्र सर्व-कार्य-क्षम हैं। इन्द्र का शत्रु सुयोग्य है और इन्द्र युद्ध में निपुण हैं। इन्द्र मेघरूप शत्रुओं को युद्ध में बुलाते हैं।

---

१ ऋ० सं० १.३.११. । २ नि० ६.२३. ।

दशमीमृचमाह—

अस्येदेवशवसाशुषन्तंविवृश्चद्वज्रेणवृत्रमिन्द्रः ।
गानव्राणाअवनीरमुञ्चदभिश्रवोदावनेसचेताः ॥१०॥२८॥

अस्य । इत् । एव । शवसा । शुषन्तम् । वि । वृश्चत् । वज्रेण ।
वृत्रम् । इन्द्रः । गाः । न । व्राणाः । अवनीः । अमुञ्चत् । अभि ।
श्रवः । दावने । सऽचेताः ॥ १० ॥ २८ ॥

अस्यैवेन्द्रस्यशवसाबलेनशुषन्तंशुष्यन्तंवृत्रमिन्द्रोवज्रेणविवृश्चत्व्यवृश्चत् अच्छिनत् तथा गाःन चोरैरपहृतागावइव व्राणाःवृत्रेणावृताः अवनीःरक्षणहेतुभूताःअपःअमुञ्चत्अवर्षीत् तथा दावने हविर्दानाययजमानायसचेताः तेनयजमानेनसमानचित्तःसन् श्रवःकर्मफलभूतमन्नंअभिआभिमुख्येनददातीतिशेषः ॥ शुषन्तं शुषशोषणे श्यनिप्राप्तेव्यत्ययेनशः अदुपदेशाल्लसार्वधातुकानुदात्तत्वेविकरणस्वरएवशिष्यते । व्राणाः वृञ्वरणे कर्मणिलटःशानचि बहुलंछन्दसीतियकोलुक् शानचोङित्त्वाद्गुणाभावेयणादेशः । अवनीः अवतेः करणे अर्तिसृधृधम्यादिनाअनिप्रत्ययः प्रत्ययाद्युदात्तत्वम् । दावने आतोमनिन्क्वनिब्वनिप् चतुर्थ्येकवचनेअल्लोपाभावश्छान्दसः ॥१०॥

१०. अपने वज्र से इन्द्र ने जल-शोषक वृत्र को छिन्न-भिन्न किया था। साथ ही चोरों के द्वारा अपहृत गायों की तरह वृत्रासुर-द्वारा अवरुद्ध तथा संसार के रक्षक जल को छुड़वा दिया था। हव्यदाता को इन्द्र उसकी इच्छा के अनुसार अन्न दान करते हैं।

॥इतिप्रथमस्यचतुर्थेऽष्टाविंशोवर्गः॥ २८॥

एकादशीमृचमाह—

अस्येदुत्वेषसारन्तसिन्धवःपरियद्वज्रेणसीमयच्छत् ।
ईशानकृद्दाशुषेदशस्यंतुर्वीतयेगाधंतुर्वणिःकः॥११॥

अस्य । इत् । ऊम् इति । त्वेषसा । रन्त । सिन्धवः । परि । यत् ।
वज्रेण । सीम् । अयच्छत् । ईशानऽकृत् । दाशुषे । दशस्यन् ।
तुर्वीतये ॥ गाधम् । तुर्वणिः । करिति कः ॥ ११ ॥

अस्यैवेन्द्रस्यत्वेषसादीप्तेनबलेनसिन्धवःसमुद्राः यद्वा गङ्गाद्याःसप्तनद्यः रन्त स्वेस्वेस्थानेरमन्त यद्यस्मादयमिन्द्रोवज्रेणसीमेनान्सिन्धून्वज्रेणपर्ययच्छत् परितोनियमितवान् अपिच ईशानकृत् वृत्रादिशत्रुवधेनात्मानमैश्वर्यवन्तंकुर्वन्निन्द्रोदाशुषेहविर्दत्तवतेयजमानाय फलंदशस्यन्प्रयच्छन् तुर्वणिस्तूर्णसम्भजनः तूर्वणिस्तूर्णवनिरितियास्कः[1]। यद्वा तुर्वितारःशत्रूणां

[1] नि० ६, १४।

हिंसित्वा एवंभूतइन्द्रः तुर्वीतये एतत्संज्ञाय उदके निमग्नाय ऋषये गाधं अवस्थानयोग्यं धिष्ण्यं पदे- शंकः अकार्षीत्॥ रन्त रमुक्रीडायां छान्दसेलुङिबहुवचने बहुलंछन्दसीतिशपोलुक् धातोरन्त्यलो- पश्छान्दसः। अयच्छन् यमउपरमे इषुगमियमांछइतिछत्वम्। कः करोतेर्लुङि मन्त्रेघसह्वरणशवृ- हादिनाच्लेर्लुक् गुणः हल्ङ्यादिनातल्लोपः बहुलंछन्दस्यमाङ्योगेपीत्यडभावः ॥ ११ ॥

११. इन्द्र की दीप्ति के द्वारा नदियाँ अपने-अपने स्थान पर शोभा पाती हैं; क्योंकि वज्र-द्वारा इन्द्र ने उनकी सीमा निर्दिष्ट कर दी है। अपने को ऐश्वर्यवान् करके और हव्यदाता को फल प्रदान करके इन्द्र ने तुरत तुर्वीति ऋषि के निवास-योग्य एक स्थान बनाया।

अस्माइदुप्रभंरातूतुंजानोवृत्रायवज्रमीशांनःकियेधाः।
गोर्नपर्वविरदातिरश्चेष्यन्नर्णांस्यपांचरध्यै ॥१२॥

अस्मै। इत्। ऊम् इति। प्र। भर। तूतुंजानः। वृत्राय। वज्रम्। ईशानः। कियेधाः। गोः। न। पर्व। वि। रद। तिरश्चा। इष्यन्। अर्णांसि। अपाम्। चरध्यै ॥ १२ ॥

तूतुजानइतिक्षिप्रनाम तूतुजानस्त्वरमाणः यद्वा शत्रून्हिंसन् ईशानःईश्वरःसर्वेषांकियेधाः कियतःअनवधृतपरिमाणस्यबलस्यधाता यद्वा क्रममाणंशत्रुबलंदधात्यवस्थापयतीतिकियेधाः हेइन्द्र एवंभूतस्त्वंअस्मैवृत्रायवज्रंप्रभर इमंवृत्रंवज्रेणप्रहरेत्यर्थः प्रहृत्यच अर्णांसिवृष्टिजलानिइष्य- न् तस्माद्वृत्रादवगमयंस्त्वं अपांचरध्यै तासामपांचरणायभूप्रदेशंप्रतिगमनायतस्यवृत्रस्यमेघरूपस्य पर्वपर्वाणिअवयवसन्धीन् तिरश्चा तिर्यगवस्थितेनवज्रेणविरदविलिख छिन्धीत्यर्थः तत्रदृष्टान्तः- गोर्न यथामांसस्यविकर्तारोलौकिकाःपुरुषाःपशोरवयवान्विवस्ततोविभजन्तितद्वत्। अत्रनिरु- क्तम्—अस्मैप्रहरतूर्णंत्वरमाणोवृत्रायवज्रमीशानःकियेधाःकियद्धाइतिवाक्रममाणधाइतिवागो- रिवपर्वाणिविरदमेघस्येष्यन्नर्णांस्यपांचरणायेति ॥भर हग्रहोर्भइतिभत्वम् द्व्यचोतस्तिङइतिसां- हितिकोदीर्घः। तूतुजानः तुजहिंसायां कानचितुजादीनांदीर्घोभ्यासस्येत्यभ्यासस्यदीर्घत्वम् छ- न्दस्युभयथेतिकानचःसार्वधातुकत्वेसति अभ्यस्तानामादिरित्याद्युदात्तत्वम्।कियेधाः तुजतोंकि- येधाइत्यत्रोक्तम्। रद रदविलेखने तिङ्ङतिङइतिनिघातः। तिरश्चा तिरोअञ्चतीतितिर्यङ् ऋत्विगि- त्यादिनाक्विन् अनिदितामितिनलोपः तृतीयैकवचनेभसंज्ञायामचइत्यकारलोपः श्चुत्वेनसकारस्य शकारः उदात्तनिवृत्तिस्वरेणविभक्तेरुदात्तत्वम्। इष्यन् इषगतावित्यस्मादन्तर्भावितण्यर्थाच्छ- तरि दिवादिभ्यःश्यन् तस्यनित्त्वादाद्युदात्तत्वम्। चरध्यै तुमर्थेसेसेनिति चरतेरध्यैप्रत्ययः॥१२॥

१२. इन्द्र क्षिप्तकारी, सर्वेश्वर और अपरिमितशक्तिशाली हैं। इन्द्र! तुम इस वृत्र के ऊपर वज्र-प्रहार करो। पशु की तरह वृत्र के शरीर की संधियाँ तिर्यग् भाव से अवस्थित वज्र से काटो; ताकि वृष्टि बाहर हो सके और पृथिवी पर जल विचरण कर सके।

त्रयोदशीमृचमाह—

अ॒स्येदु॒ प्र ब्रू॑हि पू॒र्व्याणि॑ तु॒रस्य॒ कर्मा॑णि॒ नव्य॑ उ॒क्थैः ।
यु॒धे यदि॑ष्णा॒न आयु॑धान्यृघा॒यमा॑णो निरि॒णाति॒ शत्रू॑न् ॥१३॥

अ॒स्य । इत् । ऊ॒म् इति॑ । प्र । ब्रू॒हि॒ । पू॒र्व्याणि॑ । तु॒रस्य॑ । कर्मा॑णि । नव्यः॑ । उ॒क्थैः । यु॒धे । यत् । इ॒ष्णा॒नः । आयु॑धानि । ऋ॒घा॒यमा॑णः । नि॒ऽरि॒णाति॑ । शत्रू॑न् ॥ १३ ॥

उक्थैःशस्त्रैर्नव्यःस्तुत्योयइन्द्रः अस्येदुअस्यैवतुरस्ययुद्धार्थंत्वरमाणस्येन्द्रस्यपूर्व्याणि पुराणानिकर्माणिपराक्रमरूपाणि हेस्तोतः प्रब्रूहिप्रशंस यद्यदायुधेयोधनायआयुधानिवज्रादीनिइष्णानः आभीक्ष्ण्येनप्रेरयन्शत्रून्ऋघायमाणोहिंसन्इन्द्रोनिरिणातिअभिमुखंगच्छति तदानींप्रब्रूहीतिपूर्वेणसम्बन्धः पूर्व्यमितिपुराणनाम पूर्व्यंप्रत्नायेतिपुराणनामसुपाठात्॥तुरस्य तुर त्वरणे इगुपधलक्षणःकः। नव्यः णुस्तुतौ अचोयदितियत् गुणः धातोस्तन्निमित्तस्यैवेत्यवादेशः। इष्णानः इषआभीक्ष्ण्ये क्र्यादिकः व्यत्ययेनात्मनेपदम् शानचश्चित्त्वादन्तोदात्तत्वम्। ऋघायमाणः नहित्वारोदसीउभेऋघायमाणमित्यत्रव्युत्पादितम्। निरिणाति रीगतिरेषणयोः क्र्यादिभ्यःश्ना प्वादीनांह्रस्वइतिह्रस्वत्वम् तिपःपित्त्वादनुदात्तत्वेविकरणस्वरःशिष्यते तिङ्ङतिङइतिनिघातः यद्वृत्तयोगात्तिङ्ङतिङइतिनिघाताभावः ॥ १३ ॥

१३. जो मंत्रों-द्वारा स्तुत्य हैं, उन्हीं युद्धार्थक्षिप्रगामी इन्द्र के पूर्व कर्मों का वर्णन करो । इन्द्र युद्ध के लिए बार-बार सारे शस्त्र फेंककर और शत्रुओं का वध कर उनके सम्मुख जाते हैं।

चतुर्दशीमृचमाह—

अ॒स्येदु॑ भि॒या गि॒रय॑श्च दृ॒ळ्हा द्यावा॑ च॒ भूमा॑ ज॒नुष॑स्तुजेते ।
उपो॑ वे॒नस्य॒ जोगु॑वान ओ॒णिं स॒द्यो भु॑वद्वी॒र्या॑य नो॒धाः ॥१४॥

अ॒स्य । इत् । ऊ॒म् इति॑ । भि॒या । गि॒रयः॑ । च॒ । दृ॒ळ्हाः । द्यावा॑ । च॒ । भूम॑ । ज॒नुषः॑ । तु॒जे॒ते॒ इति॑ । उपो॒ इति॑ । वे॒नस्य॑ । जोगु॑वानः । ओ॒णिम् । स॒द्यः । भु॒व॒त् । वी॒र्या॑य । नो॒धाः ॥ १४ ॥

---

१ ऋ० सं० १.१-२०. ।

अस्यैवेन्द्रस्यभियापक्षच्छेदभयेनगिरयःपर्वताअपिदृह्ळाःनिश्चलाःस्वस्वदेशेवतिष्ठन्ते जनुषः प्रादुर्भूतादस्मादेवेन्द्राद्भीत्याद्यावाभूमाचद्यावापृथिव्यावपितुजेते तुजिर्हिंसार्थोऽप्यत्रकम्पनेव्र-हव्यः कंपेतेइत्यर्थः किञ्च वेनस्यकान्तस्यास्यओणिंदुःखस्यापनायकंरक्षणंउपोजोगुवानः अने-कैःसूक्तैःपुनःपुनरुपशब्दयनृत्रपश्लोकयचित्यर्थः एवंभूतोनोधाऋषिः सद्यस्तदानीमेववीर्यामभु-वद्वीर्यंवानभवत् ॥ द्यावाचभूमा द्यावाभूमेत्यनयोर्मध्येचशब्दस्यपाठश्छान्दसः दिवोद्यावेतिवि-भक्त्यास्यद्यावादेशः सुपांसुलुगितिविभक्तेराकारादेशः छान्दसमत्वंपदकारैःकृतम् देवताद्वन्द्वेचेत्यु-भयपदप्रकृतिस्वरत्वम् "दह्वयमसिद्धिरपिसाम्पदायिकी । जनुषः जनीप्रादुर्भावे जनेरुसिरि-त्यौणादिकउसिप्रत्ययः । जोगुवानः गुङ्अव्यक्तेशब्दे अस्माद्यङ्लुगन्ताद्व्यत्ययेनशानच् अदा-दिवच्चेतिवचनाच्छपोलुक् उवङादेशः अभ्यस्तानामादिरित्याद्युदात्तत्वम् । ओणिं ओणृअपनय-ने अस्मादौणादिकइप्रत्ययः । भुवत् भवतेर्लेट्यडागमः बहुलंछन्दसीतिशपोलुक् भूसुवोस्तिङी-तिगुणप्रतिषेधः । नोधाः नोधाऋषिर्भवतिनवनंदधातीतियास्कः[1] । तस्माद्बाधोऽसुन् नवश-ब्दस्यनोभावश्च ॥ १४ ॥

१४. इन्हीं इन्द्र के डर के मारे पर्वत निश्चल हो रहते हैं और इन्द्र के प्रकट होने पर आकाश और पृथिवी काँपने लगते हैं। नोधा ऋषि ने इन्हीं कमनीय इन्द्र की रक्षण-शक्ति की, सूक्तों-द्वारा, बार-बार प्रार्थना करके तुरन्त ही वीर्य या शक्ति प्राप्त की थी।

पञ्चदशीमृचमाह—

अस्मा॒इदु॒त्यदनु॑दाय्येषा॒मेको॒यद्व॒व्नेभूरे॒रीशा॑नः ।
प्रैत॑शं॒सूर्ये॒पस्पृ॒धा॒नंसौव॑श्व्ये॒सुष्वि॑मा॒व॒दिन्द्रः॑ ॥१५॥

अ॒स्मै । इत् । ऊ॒म् इति॑ । त्यत् । अनु॑ । दा॒यि॒ । ए॒षा॒म् । एकः॑ । यत् । व॒व्ने । भूरेः॑ । ईशा॑नः । प्र । एत॑शम् । सूर्ये॑ । प॒स्पृ॒धा॒नम् । सौव॑श्व्ये । सुस्वि॑म् । आ॒व॒त् । इन्द्रः॑ ॥ १५ ॥

एकःएकएवराजसूनेजेगुंसमर्थःभूरेर्बहुविधस्यधनस्यईशानःस्वामीयत्स्तोत्रंवव्नेययाचेएषांस्तो-तॄणांसम्बन्धि यद्वा विभक्तिव्यत्ययःएतैःस्तवद्भिर्यत्सिद्धंस्तोत्रमस्माइन्द्रायअनुदायिप्रकारीत्यर्थः। उत्तरार्धस्यइयमाख्यायिका—स्वश्वोनामकश्चिद्राजासचपुत्रकामःसूर्यमुपासाञ्चक्रे तस्यचसूर्य-एवपुत्रोबभूव तेनसहएतशनाम्नोमहर्षेःयुद्धंजातमितितदेतदिहोच्यते—अयमिन्द्रःसौवश्व्येस्वश्व-पुत्रेसूर्येपस्पृधानंस्पर्धमानेसुष्विंसोमनामभिषोतारंएतशंप्रावत्संग्रामेपिप्रावद्रक्षितवान् अदायि बहुलं-छन्दस्यमाङ्योगेपीत्यडभावः । ववने वनुयाचने लिटिव्यत्ययेनोपधालोपः । पस्पृधानं स्पर्धसंघर्षे

1 नि० ४. १६ ।

पुत्रोन पुत्रइव जातःप्रादुर्भूतोऽग्निःदुरोणेगृहेरण्वोरमयिताभवति वाजीन अश्वइव प्रीतोहर्ष-युक्तःसन् विशः संग्रामेवर्तमानाःशत्रुभूताःप्रजाः वितारीत् विशेषेणतरति अतिक्रामति अपिच नृभिः ऋत्विग्लक्षणैर्मनुष्यैःसहितोहं सनीळाः समाननिवासस्थानाःविशोदैवीःप्रजाःयद्यदाअह्वे आह्वयामि तदानीमयमग्निर्विश्वानिसर्वाणिदेवत्वादेवत्वानिअश्याः अश्नुतेप्राप्नोतिस्वयमेवद-वदेवतारूपोभवतीत्यर्थः । तथाचमन्त्रान्तरमाम्नायते—त्वमग्नेवरुणोजायसेयत्त्वंमित्रोभवसियत्-त्समिद्धइत्यादि[1] ॥ अश्याः अशूङ्व्याप्तौ लिङ्व्यत्ययेनपरस्मैपदम्मध्यमो बहुलंछन्दसीतिविकर-णस्यलुक् ॥ ३ ॥

३. घर में पुत्र की तरह उत्पन्न होकर अग्नि आनन्द प्रदान करते हैं तथा अश्व की तरह हर्षान्वित होकर युद्ध में शत्रुओं को अतिक्रम करते हैं। जब मैं मनुष्यों के साथ में समान-निवासी देवों को बुलाता हूँ, तब तुम अग्नि! सब देवों का देवत्व प्राप्त करते हो।

नकिष्टएताव्रतामिनन्तिनृभ्योयदेभ्यःश्रुष्टिंचकर्थ । (७)
तत्तुतेदंसोयदहन्त्समानैर्नृभिर्यद्युक्तोविवेरपांसि ( ८ ) ॥४॥

नकिः । ते । एता । व्रता । मिनन्ति । नृऽभ्यः । यत् । एभ्यः । श्रुष्टिम् । चकर्थ (७) । तत् । तु । ते । दंसः । यत् । अहन् । समानैः । नृऽभिः । यत् । युक्तः । विवेः । रपांसि ( ८ ) ॥ ४ ॥

हेअग्ने तेतवसम्बन्धीनि एताव्रता एतानिपरिदृश्यमानानिदर्शपूर्णमासादीनिकर्माणि नकि-र्मिनन्ति राक्षसादयोबाधकानहिंसन्ति यद्यस्मात्त्वंएभ्यः कर्मसुवर्तमानेभ्योनृभ्योनेतृभ्यएभ्यो-यजमानेभ्यःश्रुष्टिंश्रुआशुअश्नुतेव्याप्नोतीतिश्रुष्टिः यज्ञफलरूपंसुखंचकर्थकृतवानसि सतिहि तवव्रतानांबाधकेएतन्नोपपद्यतेअतोवगम्यतेतवव्रतानांहिंसकानसन्तीति हेअग्ने तेत्वदीयंतत्तुदंसः तदेवकर्मयद्यदिराक्षसादिरहन्अहन्विनाशयति तदानींसमानैःसप्तगणरूपेणसदृशैर्नृभिर्नेतृभिर्मरु-द्भिर्युक्तस्त्वं रपांसिबाधकानिराक्षसादीनियद्यस्मात्त्वंविवेःगमयसिपलायनंप्रापयसितत्तस्मात्तव व्रतानिनहिंसन्तीतियोज्यम् ॥ मिनन्ति मीञ्हिंसायां क्र्यादिकः प्वादीनांह्रस्वइतिह्रस्वत्वम् । विवेःछन्दसिलुङ्लङ्लिटइतिवर्तमानेलङ् वीगत्यादिषु सिपिअदादित्वाच्छपोलुकिप्राप्ते बहुलंछ-न्दसीतिशपःश्लुः ॥ ४ ॥

४. राक्षसादि तुम्हारे व्रत आदि को ध्वंस नहीं करते; क्योंकि तुम उन व्रतादि में वर्त्तमान यजमानों को यज्ञ-फलरूप सुख प्रदान करते हो। यदि राक्षसादि तुम्हारे व्रत का नाश करें, तो अपने साथी नेता मरुतों के साथ तुम उन बाधकगणों को भगा देते हो।

---

१ ऋ० सं० . ३. ८. १६. ।

पञ्चमीमृचमाह—

उषोनजारोविभावोस्रःसंज्ञातरूपश्चिकेतदस्मै । ( ९ )
त्मनावहन्तोदुरोव्यृण्वन्नवन्तविश्वेस्वर्[1]दृशीके (१०) ॥५॥१३॥

उषः । न । जारः । विभाऽवा । उस्रः । संज्ञातऽरूपः । चिकेतत् ।
अस्मै । (९) त्मना । वहन्तः । दुरः । वि । ऋण्वन् । नवन्त । विश्वे ।
स्वः । दृशीके (१०) ॥ ५ ॥ १२ ॥

उषोनजारउषसोजरयिताआदित्यइव विभावाविशिष्टप्रकाशयुक्तःउस्रोनिवासयितासंज्ञातरूपःसर्वैःप्राणिभिरवगतस्वरूपः देवतान्तरवदप्रत्यक्षोनभवतीत्यर्थःएवम्भूतोग्निरस्मैयजमानायचिकेतत् जानातु अभिमतफलंददात्वित्यर्थःयद्वा विभक्तिव्यत्ययः अस्मैइदंसूक्तरूपंस्तोत्रंचिकेततजानातु तथाअस्यरश्मयःत्मनाआत्मनैवस्वयमेववहन्तोहवींषिवहनंकुर्वन्तोदुरोयज्ञगृहस्यद्वाराणिव्यृण्वन् विशेषेणगच्छन्तिव्याप्नुवन्तीत्यर्थः तदनन्तरंदृशीकेदर्शनीयेस्वःनभसिविश्वेसर्वेतेरश्मयोनवन्तगच्छन्ति नवतिर्गतिकर्मा देवान्प्राप्नुवन्तीत्यर्थः ॥ उस्रः वसनिवासे स्फायितञ्चीत्यादिनारक् यजादित्वात्सम्प्रसारणम् । चिकेतत् कितज्ञाने जौहोत्यादिकः लेट्यडागमः बहुलंछन्दसीतिविकल्पमितिवचनाज्ञ्यस्तस्यापिपितीतिलघूपधगुणप्रतिषेधाभावः अभ्यस्तानामादिरित्याद्युदात्तत्वम्। ऋण्वन् ऋविरिविरविधिविगत्यर्थाः इदित्त्वान्नुम् छान्दसोलुङ् व्यत्ययेनरेफस्य सम्प्रसारणम् यद्वा ऋणुगतौ तनोत्यादिः ॥ ५ ॥

५. उषा-प्रेमी सूर्य की तरह अग्नि ज्योतिः-सम्पन्न और निवास-हेतु हैं। अग्नि का रूप संसार जानता है। अग्नि उपासक को जानें। अग्नि की किरण स्वयं हव्य वहन करके यज्ञ-गृह के द्वार पर फैलती हैं; तदनन्तर दर्शनीय आकाश में जाती हैं।

॥ इतिप्रथमस्यपञ्चमेत्रयोदशोवर्गः ॥ १३ ॥

वनेमेतिद्वैपदमेकादशर्चं अध्ययनतःषड्र्चमेकादशंसूक्तम् व्याख्याताःपूर्ववत् अनुक्रान्तंच—वनेमैकादशेति।विनियोगोलैङ्गिकः।

तत्रप्रथमामृचमाह—

वनेमपूर्वीरर्योमनीषाअग्निःसुशोकोविश्वान्यश्याः। ( १ )
आदैव्यानिव्रताचिकित्वानामानुषस्यजनस्यजन्म ( २ )॥१॥

---

१ नि० ३, २०, ।

वनेम । पूर्वीः । अर्यः । मनीषा । अग्निः । सुऽशोकः । विश्वानि । अश्याः । (१) आ । दैव्यानि । व्रता । चिकित्वान् । आ । मानुषस्य । जनस्य । जन्म ( २ ) ॥ १ ॥

पूर्वीः प्रभूताः इषोन्नानिवनेमसंभजेमहि अग्निस्तादृशान्यन्नानिददात्वित्यर्थः मनीषामनीषयाबु-द्ध्याअर्योगन्तव्यः प्राप्तव्यः यद्वा मनीषयाअर्यःस्वामीसुशोकः शोभनदीप्तिःएवम्भूतोग्निःविश्वा-निसर्वाणिकर्माणिअश्याः अश्नुतेव्याप्नोति किंकुर्वन् दैव्यानिदेवेषुभवानिव्रतानिव्रतानिकर्माणिचिकि-त्वान्आसमन्तादवजानन् तथामानुषस्यजनस्यमनुष्यजातस्यजन्मउत्पत्तिरूपंकर्मचिकित्वान् आ-भिमुख्येनजानन्द्यावापृथिव्योः सम्बन्धीनियानिकर्माणितानिसर्वाणिअवगच्छन् अश्याःव्या-प्नोतीत्यर्थः॥वनेम वनषणसम्भक्तौ शपिप्राप्तेव्यत्ययेनशः आत्मनेपदंच अदुपदेशाल्लसार्वधातुका-नुदात्तत्वेविकरणस्वरःशिष्यते। पूर्वीः पुरुशब्दाद्वोतोगुणवचनादितिङीष् हलिचेतिदीर्घः । मनी-षा ईषाअक्षादित्वात् प्रकृतिभावः। सुशोकः शुचदीप्तौ भावेघञ् चजोःकुघिण्ण्यतोरितिकुत्वम्। शोभनःशोकोयस्य आद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम् । अश्याः देवताविश्वान्यश्यो-इविवद । चिकित्वान् कितज्ञानेलिटःक्वसुः ॥ १ ॥

१. जो शोभन दीप्ति से युक्त अग्नि ज्ञान के द्वारा प्रापणीय हैं, जो सारे देवों के कर्म और मनुष्यों के जन्मरूप कर्म के विषय समझ-कर सारे कार्यों में व्याप्त हैं, उन्हीं अग्नि से हम प्रभूत अन्न माँगते हैं।

द्वितीयामृचमाह—

गर्भोयोअपांगर्भोवनानांगर्भश्चस्थातांगर्भश्चरथाम् । (३)
अद्रौचिदस्माअन्तर्दुरोणेविशांनविश्वोअमृतःस्वाधीः (४)॥२॥

गर्भः । यः । अपाम् । गर्भः । वनानाम् । गर्भः । च । स्थाताम् । गर्भः । चरथाम् । (३)अद्रौ । चित् । अस्मै । अन्तः । दुरोणे । विशाम् । न । विश्वः । अमृतः । सुऽआधीः ( ४ ) ॥ २ ॥

योग्निरपांगर्भोगर्भवदन्तर्वर्तीअपान्नपात्संज्ञः यश्चवनानांअरण्यानांगर्भःदावाग्निरूपेणव-नमध्येवर्तते यश्चस्थातांस्थावराणांकाष्ठादीनांगर्भोन्तरवस्थाता चरथांचरणशीलानांजन्तूनां गर्भोजाठररूपेणदेहमध्येवतिष्ठते एवम्भूतायास्माअग्नयेदुरोणेदुस्तर्पंगृहेअद्रौचित्पर्वतेपिजनाहवि-र्ध्येहविःप्रयच्छन्तीतिशेषः सोयंअमृतः अमरणधर्माग्निः स्वाधीः शोभनकर्मयुक्तःशोभनध्या-नोवाअस्माकंभवत्वितिशेषःतत्रदृष्टान्तः—विश्वः निवेशयिताश्चसुखेनावस्थापयितागाजाविशांन प्र-

'१ ऋ० सं० १. ५. ११. ।

णानांयथारक्षणरूपशोभनकर्मयुक्तोभवतितद्वत् ॥ स्थातां तिष्ठतेःक्विपि छान्दसस्तुक् यद्वा औणादिकस्तुंप्रत्ययः आमिअन्त्यलोपश्छान्दसः। चरथां शीङ्शपिकगमीविविधीपमानोयम्-त्ययोबहुलवचनाच्चरेरपिद्रष्टव्यः आगमानुशासनस्यानित्यत्वादामोनुड भावेसवर्णदीर्घः। विश्वः विशप्रवेशने अस्मादन्तर्भावितण्यर्थादशूपुषीत्यादिनाक्वन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् ॥ २ ॥

२. जो अग्नि जल, वन, स्थावर और जंगम के बीच अवस्थान करते हैं, उन्हें यज्ञ-गृह और पर्वत के ऊपर लोग हवि प्रदान करते हैं। जैसे प्रजावत्सल राजा प्रजा के हित का कार्य करते हैं; वैसे ही अमर अग्नि हमारे हितकर कार्य का सम्पादन करें।

सहिक्षपावाँअग्नीरयीणांदाशद्योअस्माअरंसूक्तैः। (५)
एताचिकित्वोभूमानिपाहिदेवानांजन्ममर्तांश्चविद्वान् (६) ॥३॥

सः। हि। क्षपाऽवान्। अग्निः। रयीणाम्। दाशत्। यः। अस्मै। अरम्। सुऽउक्तैः। (५) एता। चिकित्वः। भूम। नि। पाहि। देवानाम्। जन्म। मर्तान्। च। विद्वान् (६) ॥ ३ ॥

सएषअग्निःक्षपावान् क्षपेतिरात्रिनाम रात्रिमान् आग्नेयीवैरात्रिरितिश्रुतेः[1]। रात्रेरग्निसम्बन्धोपि अग्निर्ज्योतिर्ज्योतिरग्निःस्वाहेतिहूयमानत्वात्। यद्वा राक्षसादीनांक्षपणेन नाशनेनयुक्तः एवम्भूतोग्निः स्तोत्रेयजमानायरयीणांधनानिदाशद्दाशतिप्रयच्छति योयजमानःअस्माअग्नये सूक्तैः सुष्टूक्तैःयथारात्रंं मयुक्तैर्मंत्रैःअरंअलंपर्याप्तं स्तोत्रंकरोतितस्माइत्यर्थः हेचिकित्वः चिकित्वांश्चेतनावानितियास्कः। हेचेतनावन्सर्वज्ञ अग्ने त्वं देवानामिन्द्रादीनां जन्मजन्मानिमर्तांश्च मनुष्यांश्चविद्वान् जानन् एताएतानिभूमभूम्नुपलक्षितानिभूतजातानिनिपाहिनितरांपालय यस्त्वंदेवमनुष्यादीन् सर्वान् जानासिअतएवमुच्यसइत्यर्थः ॥ रयीणां क्रियाग्रहणंकर्तव्यमितिकर्मणःसम्प्रदानत्वाच्चतुर्थ्यर्थेषष्ठी । दाशत् दाशृदाने लेटचडागमः । अरं वाल्मूलेत्यादिनालत्वविकल्पः । सूक्तैः सुपमानात्क्त इत्युत्तरपदान्तोदात्तत्वम्। चिकित्वः मतुवसोरिविनकारस्यरुत्वम्। भूम सुपांसुलुगितिभूमिशब्दादुत्तरस्याद्वितीयायाडादेशः पदकालेह्रस्वश्छान्दसः॥३॥

३. मंत्र-द्वारा जो यजमान अग्नि की यथेष्ट स्तुति करता है, उसे रात्रि में प्रदीप्त अग्नि धन देते हैं। हे सर्वज्ञाता अग्नि ! तुम देवों और मनुष्यों के जन्म जानते हो; इसलिए समस्त जीवों का पालन करो।

वर्धान्यंपूर्वीःक्षपोविरूपाःस्थातुश्चरथमृतप्रवीतम्। (७)
अराधिहोतास्वर्निषत्तःकृण्वन्विश्वान्यपांसिसत्या (८) ॥४॥

1 तै० ब्रा० १. १. ४.। 2 तै० ब्रा० २. १. ९.। 3 नि० २. ११.।

वर्धान् । यम् । पूर्वीः । क्षपः । विऽरूपाः । स्थातुः । च । रथम् ।
ऋतऽप्रवीतम् । ( ७ ) अराधि । होता । स्वः । निऽसत्तः । कृण्वन् ।
विश्वानि । अपांसि । सत्या ( ८ ) ॥ ४ ॥

पूर्वीर्बहुरूपाःउषसःक्षपोनिशाश्चविरूपाः शुक्लकृष्णतयाविविधरूपाःसत्यःयमग्निंवर्धान्वर्धय-न्ति तथास्थातुः स्थावरंवृक्षादिकं रथंरंहमाणंजङ्गमंमनुष्यादिकंचऋतप्रवीतं ऋतेनोदकेनसत्येनय-ज्ञेनवाप्रकर्षेणवेष्टितंयमग्निंवर्धयन्ति सोग्निःस्वःसुष्ठुअरणीयेदेवयजनेनिषत्तोनिषण्णः उपविष्टः सन् होतादेवानामाह्वाता अराधि संसिद्धोभूत् यद्वा ऋत्विग्भिरराधि आराधितइत्यर्थः किंकु-र्वन् विश्वानिसर्वाणिसत्यासत्सुयजमानेषुभवानि यद्वा सत्यफलानिअपांसिकर्माणिकृण्वन्कुर्वन्॥ वर्धान् वृधेर्ण्यन्ताल्लेटयाडागमः छन्दस्युभयथेतिशपआर्धधातुकत्वाण्णिलोपः इतश्चलोपइती-कारलोपे संयोगान्तलोपः । ऋतप्रवीतं व्येञ्संवरणे अस्मात्कर्मणिनिष्ठा वचिस्वपीत्यादिनास-म्प्रसारणं हलइतिदीर्घः गतिकारकपूर्वस्यग्रहणात् तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् । अराधि राधसाधसंसिद्धौ कर्मणिलुङिव्यत्ययेनच्लेश्चिण् ॥ ४ ॥

४. विभिन्न-स्वरूप होकर भी उषा और रात्रि अग्नि को वर्द्धन करती हैं। स्थावर और जंगम पदार्थ यज्ञ-वेष्टित अग्नि को वर्द्धन करते हैं। देवों के आह्वानकारी वही अग्नि देव-पूजन-स्थान में बैठकर और सारे यज्ञ कर्मों को सत्य-फल-सम्पन्न करके पूजित होते हैं।

गोषु प्रशस्तिं वनेषु धिषे भरन्त विश्वे बलिं स्वर्णः । ( ९ )
वि त्वा नरः पुरुत्रा सपर्यन्पितुर्न जिव्रेर्वि वेदो भरन्त (१०) ॥५॥

गोषु । प्रऽशस्तिम् । वनेषु । धिषे । भरन्त । विश्वे ।
बलिम् । स्वः । नः । ( ९ ) वि । त्वा । नरः । पुरुऽत्रा । सपर्यन् ।
पितुः । न । जिव्रेः । वि । वेदः । भरन्त (१०) ॥ ५ ॥

हेअग्ने त्वंवनेषुवननीयेषु सम्भजनीयेषुगोषुअस्मदीयेषुपशुषुप्रशस्तिं प्रशंसां धिषे दधिषे स्थापयसि अस्माकंप्रशस्ताःगवादिपशवोभवन्त्वित्यर्थः विश्वेसर्वेजनाः नोस्मभ्यं स्वःसुष्ठु अ-रणीयंबलिंउपायनरूपंधनंभरन्तआहरन्तु हेअग्ने त्वात्वांनरोमनुष्याः पुरुत्राबहुषुदेवयजनदेशे-षुविसपर्यन् विविधंपूजयन्ति पूजयित्वाचवेदोधनंविभरन्त त्वत्तोविशेषेणहरन्तिगृह्णन्तीत्यर्थः त-त्रदृष्टान्तः—जिव्रेर्जीर्णाद्वृद्धात्पितुर्नपितुरिव यथापुत्राःवृद्धात्पितुःसकाशाद्धनंहरन्तितद्वत् ॥ धिषे छान्दसोवर्तमानेलिट् द्विर्वचनप्रकरणेछन्दसिवेतिवक्तव्यमितिद्विर्वचनाभावः। भरन्त हृञ्हरणे के-

यद्वोपिसोपसर्गोर्थोद्रष्टव्यः छान्दसोलङ् इमहोभंइतिभत्वम्। पुरुषा देवमनुष्यपुरुषपुरुमर्त्येत्या-
दिनासप्तम्यर्थेत्राप्रत्ययः। जिवेः कृग्रुवघोहानौ कृशृस्तृभ्यःस्न्यःकिन् कृतश्छावोरितीत्वम् उणा-
दयोव्युत्पन्नानिमातिपदिकानीतिजिव्रिः क्रियोगियोरित्येवमादिपुदीर्घोनभवतीत्युक्तत्वात् इडि-
चेविदीर्घस्याभावःरेफवकारयोर्विपर्ययःउक्तंच—वर्णागमोवर्णविपर्ययश्चेति नित्त्वादाद्युदात्तत्वम्।
वेदइतिधननाम विद्यतेलभ्यतइतिवेदः विद्लृलाभे कर्मण्यसुन् ॥ ५ ॥

५. अग्नि! हमारे काम में आने योग्य गौओं को उत्कृष्ट करो। सारा संसार हमारे लिए ग्रहण योग्य उपासना-रूप धन ले आवे। अनेक देव-स्थानों में मनुष्यलोग तुम्हारी विविध प्रकार की पूजा करते तथा बूढ़े पिता के समीप से पुत्र की तरह तुम्हारे पास से धन प्राप्त करते हैं।

द्विपदास्वपुक्संख्याश्रुयान्याविरिष्यतेसावथैवपठितव्येत्युक्तम् उत्तरातादृशीद्विपदा।

तामेतांषष्ठीमृचमाह—

साधुर्नगृध्नुरस्तेवशूरोयातेवभीमस्त्वेषःसमत्सु (११)॥६॥१४॥

साधुः। न। गृध्नुः। अस्ताऽइव। शूरः। याताऽइव। भीमः।
त्वेषः। समत्ऽसु (११)॥ ६ ॥ १४ ॥

अयमग्निः साधुर्नसाधकइवगृध्नुःगृहीता यथासाधकःसाध्यफलमाशुगृह्णाति तद्वदग्निर-
पिसर्वंस्वीकरोतीत्यर्थः तथायमग्निःअस्तेवशूरोयथाइषूणांक्षेप्ताधानुष्कः शत्रून्मेरयतितद्वदग्निर-
पिदहन्सर्वप्राणिजातंमेरयति तथायातेवभीमः यातायातयिताहिंसकः भीमःसर्वेषांभयंकरोभवति
तद्वदग्निरपिदह्यमानेनसर्वेषांभयमुत्पादयति अतएवंविधोग्निः समत्सुसङ्ग्रामेषुत्वेषोदीप्तःसन्
अस्माकंसहायोभवत्वित्यर्थः ॥ गृध्नुः गृधुअभिकांक्षायां त्रसिगृधिधृषिक्षिपेःक्नुः। शूरः शुग-
तौ अन्तर्भावितण्यर्थादस्मात् शुषिचिमीनांदीर्घश्चेतिक्रन् ॥ ६ ॥

६. साधक की तरह अग्नि धन अधिकृत करते हैं। अग्नि धनुर्धर की तरह शूर, शत्रु की तरह भयंकर और युद्ध-क्षेत्र में प्रज्वलित हैं।

उपमेतिदशर्चंसप्तमंसूक्तम् अत्रानुक्रम्यते—उपप्रदशेति। ऋषिश्चान्यस्मादितिपरिभाषयापा-
किपुत्रःपराशरऋषिः अनादेशपरिभाषयात्रिष्टुप् परमाग्नेयमैन्द्रादितिपरिभाषितत्वादग्निर्देवता प्रा-
तरनुवाकस्याग्नेयेक्रतौत्रैष्टुभेछन्दसीदमादीनित्रीणिसूक्तानि अथैतस्याइतिखण्डेतथैवसूत्रितम्—
उपप्रजिन्वन्निविनीणिकावउपेतिरितिसूक्तेइति। आश्विनशस्त्रेपिमातरनुवाकाविदेशादिदमादीनि
त्रीणिसूक्तानि तथैवसूत्र्यते—एवयामेयंगायत्रमुपसन्ननुयात्यासरनुवाकन्यायेनेति।

प्रथमामृचमाह--

उपप्रजिन्वन्नुशतीरुशन्तंपतिंननित्यंजनयःसनीळाः ।
स्वसारःश्यावीमरुषीमजुषञ्चित्रमुच्छन्तीमुषसंनगावः ॥१॥

उप । प्र । जिन्वन् । उशतीः । उशन्तम् । पतिम् । न । नित्यम् । जनयः । सऽनीळाः । स्वसारः । श्यावीम् । अरुषीम् । अजुषन् । चित्रम् । उच्छन्तीम् । उषसम् । न । गावः ॥ १ ॥

उशतीरुशन्तःकामयमानाः सनीळाः नीळोनिवासस्थानंसमाननिवासस्थानाः एकस्थानवस्थानाः स्वसारः स्वसारइत्यङ्गुलिनाम एवंभूताअङ्गुल्यःउशन्तंकामयमानमग्निंजनयोजायानित्यंअसाधारणंपतिं न भर्तारमिवउपप्रजिन्वन्उपप्रागत्यहविःप्रदानादिकर्मणाप्रीणयन्ति प्रीणयित्वाच चित्रंचायनीयंपूजनीयंतमग्निंअजुषन्अनेनाजुषन्असेवन्त अत्रदृष्टान्तः—श्यावींश्याववर्णांरात्रिसम्बन्धात्कृष्णांतथाउच्छन्तींसूर्यकिरणसम्बन्धात्तमोवर्जयन्तीं अतएवारुषींआरोचमानां यद्वा शुक्लवर्णयुक्तांउषसंनउषोदेवतांगावोरश्मयोयथासेवन्तेतद्वत् यथारश्मयउषसानित्यसम्बद्धाः एवं सर्वेष्वहःसुअग्निपरिचरणेनअङ्गुल्योनित्यसम्बद्धाइतितात्पर्यार्थः ॥ जिन्वन् जिविःप्रीणनार्थः इदितोनुम् लेटयडागमः । उशतीः वाछन्दसीतिपूर्वसवर्णदीर्घत्वम् शतुरनुमइतिनद्याउदात्तत्वम् । स्वसारः असुक्षेपणेइत्यस्मात् सुन्यसेर्ऋन्निति ऋन् नषट्स्वस्रादिभ्यइतिङीप्प्रतिषेधः नित्त्वादाद्युदात्तत्वम् । श्यावीं श्यावो वर्णतोऽस्याःश्यावी वर्णादनुदात्तादितिङीप्प्रत्ययः अरुषीं अरुषमितिरूपनाम अरुषी अरुषी अनिम्वानुषम् छन्दसीवनिपावितिमत्वर्थीयईकारः व्यत्ययेनाद्युदात्तत्वम् । अजुषन् जुषीप्रीतिसेवनयोः तौदादिकः ठञ्व्यत्ययेनपरस्मैपदम् इतिइत्यनुवृत्तौबहुलंछन्दसीत्यन्तावेरस्यरुडागमः ॥ १ ॥

१. जैसे स्त्री स्वामी को प्रसन्न करती है, वैसे ही एक-स्थान-वर्तिनी और आकांक्षिणी भगिनी-रूपिणी अँगुलियाँ अभिलाषी अग्नि को हव्य प्रदान-द्वारा प्रसन्न करती हैं। पहले उषा कृष्णवर्णा और पीछे शुक्लवर्णा होती है; उन उषा की जैसे किरणें सेवा करती हैं, वैसे ही सारी अँगुलियाँ अग्नि की सेवा करती हैं।

द्वितीयामृचमाह--

वीळुचिद्दृळ्हापितरोनउक्थैरद्रिंरुजन्नङ्गिरसोरवेण ।
चक्रुर्दिवोबृहतोगातुमस्मेअहःस्वर्विविदुःकेतुमुस्राः ॥२॥

वीळु । चित् । दृळ्हा । पितरः । नः । उक्थैः । अद्रिम् । रुजन् ।
अङ्गिरसः । रवेण । चक्रुः । दिवः । बृहतः । गातुम् । अस्मे इति ।
अहरिति । स्वः । विविदुः । केतुम् । उस्राः ॥ २ ॥

नोऽस्माकंपितरोऽङ्गिरसः एतत्संज्ञाऋषयः उक्थैःशस्त्रैः अग्निंस्तुत्वा वीळुचिद्दृळ्हा वीळुरिति-बलनाम बलवन्तंदृढाङ्गमपिअद्रिमत्रचारंपणिनामानमसुरं रवेणस्तुतिशब्दमात्रेणैवरुजन्अभञ्जन् तैःस्तुतोऽग्निस्तमसुरंहतवानित्यर्थः किञ्च बृहतोमहतोदिवोद्युलोकस्यगातुंमार्गंअस्मेअस्माकंचक्रुः कृतवन्तः आवरकस्यासुरस्य अग्निनाहतत्वात्मार्गंकृत्वाचस्वः सुष्ठुअरणीयं असुररहितत्वेनसुखेनप्राप्यंअहःदिवसंविविदुरजानन्लब्धवन्तोवा तथा केतुंअह्नांकेतयितारं ज्ञापयितारमादित्यंउस्राः पणिनापहृतागाश्चविविदुरित्यनुषङ्गः॥ वीळु सुपांसुलुगितिविभक्तेर्लुक् । दृळ्हा दृहःस्थूलबलयोरिति निपातितः सुपांसुलुगितिडादेशः । रुजन् रुजोभङ्गे तौदादिकः बहुलंछन्दस्यमाङ्योगेऽपीत्यडभावः । विविदुः विदज्ञाने विदुलाभेइतिवा लिटिउसिरूपम् ॥ २ ॥

२. हमारे अङ्गिरा नाम के पितरों ने मंत्र-द्वारा अग्नि की स्तुति करके बली और दृढाङ्ग पणि असुर को स्तुति-शब्द-द्वारा ही नष्ट किया था तथा हमारे लिए महान् द्युलोक का मार्ग दिया था। अनन्तर उन्होंने सुखकर दिवस, आदित्य और पणि-द्वारा अपहृत गौओं को पाया था।

तृतीयामृचमाह—

दधन्नृतंधनयन्नस्यधीतिमादिदर्योदिधिष्वो३विभृत्राः ।
अतृष्यन्तीरपसोयन्त्यच्छादेवाञ्जन्मप्रयसावर्धयन्तीः ॥३॥

दधन् । ऋतम् । धनयन् । अस्य । धीतिम् । आत् । इत् ।
अर्यः । दिधिष्वः । विऽभृत्राः । अतृष्यन्तीः । अपसः । यन्ति ।
अच्छ । देवान् । जन्म । प्रयसा । वर्धयन्तीः ॥ ३ ॥

ऋतंदेवयजनदेशंप्राप्तमग्निंअङ्गिरसोमहर्षयःदधन् गार्हपत्यादिरूपेणाधारयन् धारयित्वा चास्याग्नेर्धीतिंकर्मअग्निहोत्रादिलक्षणंधनयन्धनमकुर्वन् यथापुरुषाःधनंसंपादयन्तितद्वदग्निदि-धत्संकर्मान्वतिष्ठन्नित्यर्थः आदित्अङ्गिरसामनुष्ठानानन्तरमेव अर्यःअर्याःधनस्यस्वामिन्यःदि-धिष्वःयेनधनेनअग्नीनांधारणंकुर्वन्त्यःकृताग्न्याधानाइत्यर्थः विभृत्राःआहितानग्नीनग्निहोत्रादि-कर्मणिविहरन्त्यः अतृष्यन्तीःविषयान्तरतृष्णारहिताः अतएवापसः अपसाकर्मणायुक्ताः प-वैभूवायजमानलक्षणाःप्रजाःप्रयसाहविर्लक्षणेनान्नेनदेवान्इन्द्रादीन्जन्मजातान्मनुष्यांश्चवर्धय-

धीःधर्षयन्त्यःसत्यः एनमग्निमच्छआभिमुख्येनयन्तिप्राप्नुवन्तिपरिचरन्तीतियावत् ॥ दधन् दृ-
षधारणे छन्दस्यपयेनपरस्मैपदम् बहुलंछन्दस्यमाङ्योगेपीत्यडभावः। धनयन् धनशब्दात्तत्क-
रोतीतिणिच् इष्ठवण्णौमातिपदिकस्येतीष्ठवद्भावाट्टिलोपः छन्दःपूर्ववत्। अर्यः अर्यःस्वामिवैश्य-
योरितिनिपातितः लिङ्गवचनव्यत्ययौ अर्यःस्वाम्याख्याचेदित्यन्तोदात्तत्वम्। दिधिष्वः डुधाञ्धा-
रणपोषणयोः सन्वत्कर्मणीत्याभ्यांअन्दूदृम्भूजम्बूकफेलूककर्कन्धूदिधिषूरितिकूप्रत्ययान्तोनिपातितः
प्रत्ययस्वरः उदात्तस्वरितयोर्यणइतियणःस्वरितत्वम् । विभृत्राः हृञ्हरणे विपूर्वाद्दृस्वादौणा-
दिकःत्रन्प्रत्ययः इमहोर्भइतिभत्वम्। अतृष्यन्तीः ञितृषापिपासायां वासिवाछन्दसीतिपूर्व-
सवर्णदीर्घस्यविकल्पितत्वात्पूर्वसवर्णदीर्घः अव्ययपूर्वपदप्रकृतिस्वरत्वम् ।अपसः अपसृशब्दादु-
त्तरस्यमत्वर्थीयस्यविनोबहुलंछन्दसीतिबहुलवचनाल्लुक् विनन्तस्यस्थिनिडित्वेननविनप्रत्यया-
भावस्त्रातिपदिकस्वरेणान्तोदात्तत्वम् अन्य आयन्यइतिअन्यानोमनुष्याः अन्येभ्योपिदृश्यन्तइतिम-
निन् सुपांसुलुगितिशसोलुक् ॥ ३ ॥

३. अङ्गिरोवंशीयों ने धन-रूप अग्नि को, धन की तरह, धारण किया था। अनन्तर जिन यजमानों के पास धन है और जो अन्य-विषयाभिलाष त्याग करके अग्नि को धारण करते एवं अग्नि की सेवा में रत रहते हैं, वे हव्य के द्वारा देवों और मनुष्यों की श्रीवृद्धि करके अग्नि के सामने जाते हैं।

मथीद्यदींविभृतोमातरिश्वागृहेगृहेश्येतोजेन्योभूत् ।
आदींराज्ञेनसहीयसेसचासन्नादूत्यं१भृगवाणोविवाय ॥४॥

मथीत् । यत् । ईम् । विऽभृतः । मातरिश्वा । गृहेऽगृहे ।
श्येतः । जेन्यः । भूत् । आत् । ईम् । राज्ञे । न । सहीयसे ।
सचा । सन् । आ । दूत्यम् । भृगवाणः । विवाय ॥ ४ ॥

मातरिश्वाव्यानवृत्तिस्वरूपेणावस्थितोमुख्यःप्राणः ईमिनमग्निंयद्यदामथीत् अमथ्नात् अग्नेर्म-
न्थनस्यव्यानवायुसाध्यत्वम् अथयःप्राणापानयोःसन्धिःसव्यानइत्युपक्रम्यछन्दोगैराम्नातम्—अ-
तोयान्यन्यानिवीर्यवन्तिकर्माणियथाग्नेर्मन्थनमाजेःसरणंदृढस्यधनुषआयमनमप्राणन्ननपानस्ता-
निकरोतीति मन्त्रान्तरंचभवति—आन्यंदिवोमातरिश्वाजभारामथ्नादन्यंपरिश्येनोअद्रेरिति। की-
दृशोमातरिश्वा विभृतःप्राणिषुप्राणापानादिपञ्चवृत्तिरूपेणविहृतोविभज्यस्थितः तदपिप्राणसंवा-
देश्रैवाम्नातम्—तान्वरिष्ठःप्राणउवाच माभोहमापद्यथाहमेवैतत्पंचधात्मानंप्रविभज्यैतद्बाणमवष्ट-
भ्यविधारयामीति।मन्थनेनोत्पन्नोयमग्निःश्येतःशुभ्रवर्णोगृहेगृहेसर्वेस्मिन्यजमानगृहेयदाजेन्यःप्रादुर्भू-

१ ऋ० सं० १.६.२८.।

योभूत् यद्वा रससजिन्योजेताअग्निरभवत् तथाचतैत्तिरीयकम्—देवासुराःसंयत्ताआसन्तेदेवा-
बिभ्यतोऽग्निंप्राविशन्तस्मादाहुरग्निःसर्वादेवताइति। तेऽग्निमेववरूथंकृत्वाऽसुरानभ्यभवन्निति। ऐ-
तरेयिणोऽप्यामनन्ति—तेदेवाअबिभयुरग्निंपुरस्तात्प्रातःसवनेपर्यौहंस्तेऽग्निनैवपुरस्तात्प्रातःसवनेऽसुर-
रक्षांस्यपाघ्नतेति। आत् यज्ञगृहेप्रादुर्भावानन्तरं ईं एनमग्निं भृगवाणोभृगुर्ऋषिःसइवाचरन्यजमानो-
दूत्यंदूतस्यकर्म आविवाय शास्त्रमर्यादयाप्रापयामास तत्रदृष्टान्तः—नचासन्नतराभवमन्योराधास-
हीयसेऽभिप्रविभिमबलापराजेन यथाराजेऽस्वपुरुषःदूतकर्मप्रापयतितद्वत्॥ मथीत् मथेविलोडने
लुङि स्यन्तक्षणेविवृद्धिप्रतिषेधः। जेन्यः जनीप्रादुर्भावे अस्मादौणादिकएन्यप्रत्ययः टिलोपश्चेति
भट्टभास्करमिश्रः। यद्वा जिजयेइत्यस्मात्कृत्यल्युटोबहुलमितिबहुलवचनात्कर्तर्यर्थेपोयदिविषय
स्यनुक्तासमश्च यतोनावइत्याद्युदात्तत्वम्। दूत्यं दूतस्यकर्मेदूत्यंदूतस्यभागकर्मणीइतियत् तित्स्व-
रितमितिस्वरितत्वम् यतोनावइत्याद्युदात्तत्वंतु अनित्यमितिविभीरवीर्यौंचेत्यत्रज्ञापितम्। भृगवाणः
भृगुरिवाचरन् सर्वप्रातिपदिकेभ्यःक्विब्वक्तव्यइतिक्विप् तदन्ताल्लटोव्यत्ययेनशानच् अनुपदेशात्त-
सार्वधातुकानुदात्तत्वेप्रत्ययान्तधातोरन्तोदात्तत्वेप्राप्तेवृषादेराकृतिगणत्वादाद्युदात्तत्वम्। विवाय
वीगत्यादिषु अस्माद्व्यत्ययोविवप्यर्थोलिट् ॥ ४ ॥

४. मातरिश्वा या व्यान-वायु के विलोड़ित करने पर शुभ्रवर्ण होकर अग्नि समस्त यज्ञ-गृह में प्रकट होते हैं। उस समय जिस तरह मित्र राजा प्रबल राजा के पास अपने आदमी को दूत-कर्म में नियुक्त करता है, उसी तरह भृगु ऋषि की तरह यज्ञ-सम्पादक यजमान अग्नि को दूत-कर्म में नियोजित करता है।

महेयत्पित्रईंरसंदिवेकरवत्सरत्पृशन्यश्चिकित्वान्।
सृजदस्ताधृषतादिद्युमस्मैस्वायांदेवोदुहितरित्विषिंधात्॥५॥१५॥

महे। यत्। पित्रे। ईम्। रसम्। दिवे। करः। अव। त्सरत्।
पृशन्यः। चिकित्वान्। सृजत्। अस्ता। धृषता। दिद्युम्।
अस्मै। स्वायाम्। देवः। दुहितरि। त्विषिम्। धात्॥ ५॥ १५॥

महे महतेपित्रेपालयित्रेदिवेद्योतमानायदेवगणाययदीमेरसंपृथिव्याःसारभूतंहविः यष्टा-
यजमानः कःकरोति तदानींपृशन्यःस्पर्शनकुशलोराक्षसादिषुचिकित्वानहवींषिवहन्तं हे अग्ने त्वां
जानन् अवत्सरत् अपत्सरत् छद्मनापलायते अस्ता इषुक्षेपणशीलोऽग्निः धृषता धर्षकेणधनुषा अस्मैपलाय-
मानायराक्षसादये दिद्युंदीप्यमानंबाणंसृजत् विसृजति देवोदीप्यमानः उषःकालंप्राप्तोऽग्निः स्वायां
स्वकीयायांदुहितरिदुहितृवत्तदनन्तरभाविन्यामुषसित्विषिंस्वकीयांदीप्तिंधात् स्थापयति उषःका-

१ तै० सं० ६. २. २.। २ ऐ०ब्रा० ६. ४.।

ष्वेहिसूर्यकिरणाःप्रादुर्भवन्ति तैःस्वकीयंप्रकाशमेकीकरोति यथाचतैत्तिरीयकम्—उद्यन्तंवा-वादित्यमग्निरनुसमारोहति तस्माद्धूमएवाग्नेर्दिवाददृशइति । अतउषसिदीप्तिंनिदधातीत्युच्यते ॥ कः करोतेर्लुङि मन्त्रेघसेत्यादिनाच्लेर्लुक् ।तरत्सरच्छमगतौ लेटयडागमः इतश्चेतीकारलोपः।प्र-शन्यः स्पृशसंस्पर्शने कृपृवृजीविविधीयमानःक्युप्रत्ययोबहुलवचनादस्मादपिभवति स्पृशनं स्पर्शः तत्रसाधुरितियत् सलोपश्छान्दसः तित्स्वरितमितिस्वरितत्वम् । दिद्युं दिद्युदितिवज्रनाम अन्त्यलोपश्छान्दसः । धात् छान्दसोवर्तमानेलुङ् ॥ ५ ॥

५. जिस समय यजमान महान् और पालक देवता को हव्य-रूप रस देता है, उस समय, अग्निदेव ! स्पर्शन-कुशल राक्षस आदि तुम्हें हविर्वाहक जानकर भाग जाते हैं। बाणप्रक्षेपक अग्नि भागते हुए राक्षसों के प्रति अपने रिपु-संहारी धनुष से दीप्तिशाली बाण फेंकते हैं तथा प्रकाशशाली अग्नि अपनी पुत्री उषा में अपना तेज स्थापित करते हैं।

स्वआयस्तुभ्यंदमआविभातिनमोवादाशादुशतोअनुद्यून् ।
वर्धोअग्नेवयोअस्यद्विबर्हायासद्रायासरथंयंजुनासि ॥६॥

स्वे । आ । यः । तुभ्यम् । दमे । आ । विऽभाति । नमः । वा । दाशात् । उशतः । अनु । द्यून् । वर्धो इति । अग्ने । वयः । अस्य । द्विऽबर्हाः । यासत् । राया । सऽरथम् । यम् । जुनासि ॥ ६ ॥

हेअग्ने तुभ्यं त्वांस्वेदमेस्वकीयेयज्ञगृहेयोयजमानः एकआकारोमर्यादायांयथाशास्त्रंआ-विभातिआसमन्तात् समिदादिभिःकाष्ठैःप्रज्वलयति अनुद्यून् अनुदिवसंउशतःकामयमानाय तुभ्यंनमोवादाशात् हविर्लक्षणमन्नंवाददात् अस्ययजमानस्य हेअग्ने द्विबर्हाः द्वयोर्मध्यमोत्त-मस्थानयोः वृंहितोवर्धितस्त्वं वयोन्नंवर्धोवर्धयैव सरथंरथेनसहितं युयुत्सुंयंपुरुषंजुनासि युद्धे प्रेरयसि सपुरुषः रायाधनेनयासत्संगच्छते ॥ तुभ्यं क्रियाग्रहणंकर्तव्यमितिकर्मणःसम्प्रदा-नत्वाच्चतुर्थी । दाशात् दाश्रृदाने लेटयाडागमः । उशतः शतुरनुमइतिविभक्तेरुदात्तत्वम् चतु-र्थ्यर्थे बहुलंछन्दसीतिषष्ठी । अनुद्यून् द्युरित्यहर्नाम लक्षणे अनोःकर्मप्रवचनीयत्वम् कर्मप्रवच-नीययुक्तेद्वितीया।वर्धो वर्धं उ वृधेर्ण्यन्ताल्लोटिछन्दस्युभयथेतिशपआर्धधातुकत्वात्णेरनिटी-तिणिलोपः शपःपित्त्वादनुदात्तत्वेधातुस्वरःशिष्यते उआसहैकादेशेउञइतिप्रगृह्यत्वम् । यासत् यामापणे सिब्बहुलंलेटीतिसिप् लेटोडाटावित्यडागमः । जुनासि जुइतिगत्यर्थःसौत्रोधातुः शपि प्राप्तेव्यत्ययेनश्ना ॥ ६ ॥

६. अग्नि ! अपने, यज्ञ-गृह में, मर्यादा के साथ, जो यजमान तुम्हें चारों तरफ़ प्रज्वलित करता है; और, अनुदिन अभिलाष करके तुम्हें अन्न प्रदान करता है, हे द्विबर्हा यश वो मध्यम-उत्तम स्थानों में-

वर्द्धित अग्नि ! तुम उनका अन्न वर्द्धित करते हो। जो युद्धार्थी पुरुष को, रथ के साथ, युद्ध में प्रेरण करता है, उसे धन प्राप्त हो।

अ॒ग्निं विश्वा॑ अ॒भि पृक्षः॑ सचन्ते समु॒द्रं न स्र॒वतः॑ स॒प्त य॒ह्वीः ।
न जा॒मिभि॒र्वि चि॑कि॒ते वयो॑ नो वि॒दा दे॒वेषु॒ प्रम॑तिं चिकि॒त्वान् ॥७॥

अ॒ग्निम् । विश्वाः॑ । अ॒भि । पृक्षः॑ । स॒च॒न्ते॒ । स॒मु॒द्रम् । न । स्र॒वतः॑ । स॒प्त । य॒ह्वीः । न । जा॒मिऽभिः॑ । वि । चि॒कि॒ते॒ । वयः॑ । नः॒ । वि॒दाः । दे॒वेषु॑ । प्रऽम॑तिम् । चि॒कि॒त्वान् ॥ ७ ॥

विश्वाः पृक्षः चरुपुरोडाशादीनि सर्वाण्यन्नानि अग्निं अंगनादिगुणयुक्तं एनं अभि सचन्ते आभिमुख्येन समवयन्ति प्राप्नुवन्ति अत्र दृष्टान्तः—स्रवतः समुद्रं न यथा स्रवन्त्यो नद्यः समुद्रमभिगच्छन्ति तद्वत् कीदृश्यो नद्यः सप्त सप्तसंख्याकाः इमं मे गंगे इत्यस्यामृचि समाम्नाता नद्यः प्राधान्येन भूयन्ते यह्वीः महन्नामैतत् महत्यः जामिभिः बन्धुभिः एकस्मिन्पात्रे सह भुञ्जानैर्विज्ञातयो ज्ञातयः दैन्यात्स्वदीयं वयो अन्नं न विचिकिते न ज्ञायते तेभ्योदातुमस्माकं अन्नं प्रभूतं नास्तीति भावः अतो हे अग्ने त्वं देवेषु दीव्यन्तीति देवाः धनपतयः तेषु प्रमतिं प्रकर्षेण मननीयं धनं चिकित्वान् अवगच्छन् विदाः अस्मभ्यं लम्भय यद्वा प्रमतिं प्रकृष्टं स्तोत्रं देवेषु विदाः वेदय ज्ञापय पृक्षः अन्ननामैतत् पृची संपर्के इत्यस्मादौणादिकः कर्मणि क्विप् धातोः सुमागमश्च यद्वा असुनि सुपां सुलुगिति जसो लुक्। स्रवतः स्रुगतौ स्रवणं स्रवः तत्कुर्वन्ति सर्वप्रातिपदिकेभ्यः क्विब्वक्तव्य इति क्विप् एतदन्ताद्धातोः क्विप् चेति क्विप् ह्रस्वस्य पिति कृति तुक् क्विबन्ताद्धातोः सविधिष्टत्वाद्धातुस्वरेणान्तोदात्तत्वम्। यह्वीः पिप्पल्यादिभ्यश्चेति गौरादिषु पठितत्वात् तस्य चाकृतिगणत्वाद्वा ङीष् वा छन्दसीति पूर्वसवर्णदीर्घत्वम्। चिकिते छान्दसो वर्तमाने कर्मणि लिट्। विदाः विद्लृ लाभे अन्तर्भावितण्यर्थात् लेटि आडागमः तुदादित्वाच्छः आगमानुशासनस्यानित्यत्वान्नुमभावः विकरणस्वरः शिष्यते यद्वा विदेर्ज्ञानार्थस्य लेटि व्यत्ययेन शः ॥ ७ ॥

७. जिस प्रकार विशाल सात नदियाँ समुद्राभिमुख धावित होती हैं, उसी प्रकार हव्य का अन्न अग्नि को प्राप्त होता है। हमारी ज्ञातिवाले हमारे अन्न का भाग नहीं पाते अर्थात् हमारे पास प्रचुर धन नहीं है; इसलिए हे अग्नि ! तुम प्रकृष्ट अन्न जानकर देवों को सूचित करो।

आ यदि॒षे नृ॒पतिं॒ तेज॒ आन॒ट् शुचि॒ रेतो॒ निषि॑क्तं॒ द्यौर॒भीके॑ ।
अ॒ग्निः शर्ध॑मनव॒द्यं युवा॑नं स्वा॒ध्यं॑ जनयत्सू॒दय॑च्च ॥८॥

आ । यत् । इषे । नृऽपतिम् । तेजः । आनट् । शुचि । रेतः ।
निऽसिक्तम् । द्यौः । अभीके । अग्निः । शर्धम् । अनवद्यम् ।
युवानम् । सुऽआध्यम् । जनयत् । सूदयत् । च ॥ ८ ॥

अग्नेर्यत्तेजोनृपतिंनृणांपालकंयजमानंआनट्   जाठररूपेणआसमन्ताद्व्याप्नोति किमर्थंइषेन्नाय   कीदृशंशुचिशुद्धं द्यौर्दीप्तं येनतेजसापरिपक्वंमन्नरसरूपंरेतोवीर्यंअभीके अ-
भ्यकेअभिगतेअभिप्राप्तेगर्भस्थानेनिषिक्तंनितरांसिक्तं  अग्निःवक्ष्यमाणगुणविशिष्टपुत्ररूपेणज-
नयत् जनयतु  शर्धंबलवन्तं अनवद्यं  अवद्यरहितंयुवानंतरुणंजरारहितमित्यर्थः स्वाध्यं शो-
भनकर्माणंशोभनध्यानंवाउत्पन्नंपुत्रंसूदयच्च यागादिकर्मसुप्रेरयतुच यद्वा रेतइत्युदकनाम  निषि-
क्तंमेघेनवृष्टमुदकं इषेन्नायसस्यादिनिष्पत्तयेअग्नेर्यत्तेजःआनट्व्याप्नोत् वृष्टेनोदकेनभौमाग्नेः संयो-
गेसतिहिसस्यान्युत्पद्यन्ते कीदृशंतेजः नृपतिंनृणांरक्षकंशुचिदीप्तंवाहक्तेजसायुक्तोद्यौर्दीप्तोग्निःअ-
भीकेआसन्नकालएवशर्धादिगुणविशिष्टंपुत्रंजनयतुचप्रेरयतुयज्ञादौ ॥ इषे सावेकाचइतिविभक्तेरु-
दात्तत्वम् । नृपतिं परादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वम् । आनट् अशूव्याप्तौ छन्दसिव्यत्यये-
नपरस्मैपदमश्नोतेर्लङि आडागमः अथादिषत्वेढत्वम् । निषिक्तं षिचिर्क्षरणे कर्मणिनिष्ठा गतिरनन्त-
रइतिगतेःप्रकृतिस्वरत्वम् उपसर्गात्सुनोतीतिषत्वम् । अभीके अभिपूर्वादञ्चतेःनाचायमि पृषो-
दरादित्वाद्रूपसिद्धिः यद्वा इण्गतावित्यस्मादौणादिकः कन्प्रत्ययः उभयथापि दासीभारादित्वा-
त्पूर्वपदप्रकृतिस्वरत्वम् । स्वाध्यं एरनेकाचइतियणादेशः उदात्तस्वरितयोर्यणइतिस्वरितत्वम् ।
जनयत् जनेर्ण्यन्ताल्लेट्यडागमः । सूदयत् षूदक्षरणे पूर्ववल्लेट्यडागमः ॥ ८ ॥

८. अग्नि का विशुद्ध और दीप्तिमान् तेज अन्न-प्राप्ति के लिए मनुष्य-पालक या यजमान को व्याप्त हो। उसी तेज-द्वारा अग्नि गर्भ-निषिक्त वीर्य बलवान् प्रशस्य, युवक और शोभनकर्मा पुत्र उत्पन्न करें तथा यज्ञ आदि कर्म में प्रेरण करें।

नवमीमृचमाह—

मनो॒न योऽध्व॑नः स॒द्य एत्येकः॑ स॒त्रा सूरो॒ वस्व॑ ईशे ।
राजा॑ना मि॒त्रावरु॑णा सुपा॒णी गोषु॑ प्रि॒यम॒मृतं॒ रक्ष॑माणा ॥ ९ ॥

मनः॑ । न । यः । अध्व॑नः । स॒द्यः । एति॑ । एकः॑ । स॒त्रा । सूरः॑ ।
वस्वः॑ । ई॒शे॒ । राजा॑ना । मि॒त्रावरु॑णा । सु॒पा॒णी इति॑ सु॒ऽपा॒णी ।
गोषु॑ । प्रि॒यम् । अ॒मृत॑म् । रक्ष॑माणा ॥ ९ ॥

यःसूरः सूर्यः एकःएकाकीअसहायःसन् अध्वनोदिव्यान्मार्गान्सद्यएवआशुगच्छति असहायत्वंचश्रूयते—सूर्यएकाकीचरतीत्याह असौवाआदित्यएकाकीचरतीति। शीघ्रगमनंचस्मर्यते—योजनानांसहस्रेद्वेद्वेशतेद्वेचयोजने। एकेननिमिषार्धेनक्रममाणनमोस्तुतइति। शीघ्रगमनेदृष्टान्तः—मनोनयथामनः शीघ्रंगच्छति तद्वत् सचशूरःवस्वोधनस्यसद्यःसहैवयुगपदेवईशेईष्टे योहि शीघ्रंगच्छति सबहुषुदेशेष्ववस्थितानिधनानिप्राप्नोति यथा राजा ना राजमानौसुपाणीशोभनबाहू मित्रावरुणामित्रावरुणौअस्मदीयासुगोषुप्रियंसर्वेषांप्रीतिकरंअमृतंअमृतवत्स्वादुभूतंपयोरक्षमाणारक्षन्तौवर्तेते हेअग्ने यत्त्वद्रूपेणत्वमेवैवंवर्तसइतिभावः॥ वस्वः छिन्नप्रत्ययः षष्ठ्यादिषुछन्दसिवावचनमितिघेर्ङितीतिगुणाभावेयणादेशः। ईशे ईशऐश्वर्ये लोपस्तआत्मनेपदेष्वितितलोपः। मित्रावरुणा देवताद्वन्द्वेचेतिपूर्वपदस्यानङादेशः देवताद्वन्द्वेचेत्युभयपदप्रकृतिस्वरत्वम्॥ ९ ॥

९. मन की तरह शीघ्रगामी जो सूर्य स्वर्गीय पथ में अकेले जाते हैं, वे तुरत ही विविध धन प्राप्त करते हैं। शोभन और सुबाहु मित्र और वरुण हमारी गौओं, के प्रीतिकर और अमृत-तुल्य दूध की रक्षा करते हुए अवस्थान करें।

दशमीमृचमाह—

मानोअग्नेसख्यापित्र्याणिप्रमर्षिष्ठाअभिविदुष्कविःसन्।
नभोनरूपंजरिमामिनातिपुरातस्याअभिशस्तेरधीहि॥१०॥१६॥

मा। नः। अग्ने। सख्या। पित्र्याणि। प्र। मर्षिष्ठाः। अभि। विदुः। कविः। सन्। नभः। न। रूपम्। जरिमा। मिनाति। पुरा। तस्याः। अभिऽशस्तेः। अधि। इहि॥ १० ॥ १६ ॥

हेअग्ने पित्र्याणिपितरंवसिष्ठमुपक्रम्यागतानि सख्यासखित्वानिमाप्रमर्षिष्ठाः माविनाशय अत्रप्रइत्येतदुपसर्गवशात्अर्थान्तरेवृत्तिः यतस्त्वंकविः क्रान्तदर्शीसन् अभिआभिमुख्येनविदुः सर्वंविद्वान्नभोनरूपं यथान्तरिक्षंरूपवन्तःसूर्यरश्मयःआच्छादयन्तितद्वदाच्छादयति जरिमा जरामिनातिमांसकृदुत्तरंहिनस्ति अभिशस्तेर्हिंसाहेतोस्तस्याजरायाः पुराअधीहिमांबुध्यस्व यावज्जरांनप्राप्नोमितथाकुरु अमृतत्वंमयच्छेतियावत्॥ सख्यासख्युर्भावःसख्यं सख्युर्यइतियः। पित्र्याणि पितृभ्यआगतानि पितुर्यच्चेतियत्प्रत्ययः रीङृतइतिरीङादेशः यस्येतिचेतीकारलोपः यतोनावइत्याद्युदात्तत्वम्। मर्षिष्ठाः मृषतितिक्षायां प्रार्थनायांछान्दसोलुङ् नमाङ्योगइत्यडभावः। विदुः विदज्ञाने बहुलमन्यत्रापीत्युसिप्रत्ययः अतएवबहुलवचनाद्गुणाभावः छन्दसिवाप्राप्ते-

१ तै० ब्रा० २.८.५.।

विनयोरितिविसर्जनीयस्यषत्वम्। नशः नशेर्दिविसर्गोत्यन्तुन्। जरिमा जृष्वयोहानो औणादिको-ऽवेदमनिच्प्रत्ययः। मिनाति मीञ्हिंसायां प्वादीनांह्रस्वइतिह्रस्वत्वम्। अभिशस्तेः अभि-शस्यतेहिंस्यतेनयेत्यभिशस्तिः करणेक्तिन् गादौचेतिगतेःप्रकृतिस्वरत्वम्। अधीहि इक्स्मरणे लोटिअदादित्वाच्छपोलुक् हेरपित्त्वेनङित्त्वाद्गुणाभावः ॥ १० ॥

१०. हे अग्नि! हमारी पैतृक मित्रता नष्ट नहीं करना; क्योंकि तुम भूतदर्शी और वर्तमान विषय-ज्ञाता हो। जैसे सूर्य की किरणें अन्तरिक्ष को ढक लेती हैं, वैसे ही जरा या बुढ़ापा हमारा विनाश करता है। विनाश-कारण जरा जिस प्रकार न आने पाये, वैसा करो।

निकाव्येतिदशर्चंमष्टमंसूक्तं पैतृकमाग्नेयंपराशरस्यार्षं अनुक्रान्तंच—निकाव्येति मातरनु-दाकाश्विनयास्तयोरुक्तोविनियोगः।

निकाव्या॑वे॒धसः॒शश्व॑तस्क॒र्हस्ते॒दधा॑नो॒नर्या॑पु॒रूणि॑।
अ॒ग्निर्भु॑वद्रयि॒पती॑र॒यी॒णांस॒त्राच॑क्रा॒णोअ॒मृता॑नि॒विश्वा॑ ॥१॥

नि। काव्या॑। वे॒धसः॑। शश्व॑तः। क॒रिति॑ क॒रः। हस्ते॑। दधा॑नः।
नर्या॑। पु॒रूणि॑। अ॒ग्निः। भु॒व॒त्। र॒यि॒ऽपतिः॑। र॒यी॒णाम्। स॒त्रा।
च॒क्रा॒णः। अ॒मृता॑नि। विश्वा॑ ॥ १ ॥

शश्वतःशाश्वतस्यनित्यस्यवेधसोविधातुःब्रह्मणःसम्बन्धीनिकाव्याकाव्यानिमन्त्ररूपाणिस्तो-त्राणि अयमग्निर्निकःनियमेनस्वात्माभिमुखंकरोति किंकुर्वन् नर्यानृभ्योहितानि पुरूणिबहूनिधनानिहस्तेदधानोहस्तेधारयन् ईदृग्भुवनभिमतलोकयसर्वेजनाःस्तुवन्तीतिभावःस्तो-तृभ्योधनेषुदत्तेष्वपिअग्नेर्धनंनक्षीयतइत्याह—अग्निरिति अयमग्निःरयीणांरयिपतिर्भुवत् धना-नांमध्येश्रेष्ठानिधनानिउत्कृष्टानितेषांस्वामीभवति किंकुर्वन् विश्वा विश्वानिसर्वाणिअमृतानि हिर-ण्यनामैतत् अमृतंवैहिरण्यमितिश्रुतेः। सर्वाणिहिरण्यानिस्तोतृभ्यःसत्रासहैवचक्राणःकुर्वन्युग-पत्प्रयच्छन्नित्यर्थः ॥ कः करोतेश्छान्दसोलुङ् मन्त्रेघसेतिच्लेर्लुक् हल्ङ्याब्भ्यइतितकारलोपः। नर्या नरशब्दात्हितार्थेगवादिलक्षणोयत्प्रत्ययोद्रष्टव्यः यद्वा तत्रसाधुरितियत्। चक्राणः करो-तेर्लिटःशानच् बहुलंछन्दसीतिविकरणस्यश्लुः नन्वेवंसतिअभ्यस्तानामादिरित्याद्युदात्तत्वंप्राप्नोति एवंतर्हिलिटःकानजस्तु तस्यार्धधातुकत्वेनअभ्यस्ताद्युदात्तत्वाभावेचित्स्वरएवशिष्यते ॥ १ ॥

१. ज्ञाता और नित्य अग्नि की स्तुति आरम्भ करो अथवा नित्य ब्रह्मा के मंत्र अग्नि ग्रहण करते हैं। अग्नि मनुष्यों के हितसाधक धन हाथ में धारण करते हैं। अग्नि स्तुति-कर्त्ताओं को अमृत या हिरण्य प्रदान करते हैं। अग्नि ही सर्वोच्च धन के अधिपति हैं।

---

१ तै० ब्रा० १. २. ७.।

द्वितीयामृचमाह—

अ॒स्मे व॒त्सं परि॒ षन्तं॒ न वि॑न्दन्नि॒च्छन्तो॒ विश्वे॑ अ॒मृता॒ अमू॑राः ।
श्र॒म॒युवः॑ पद॒व्यो॑ धियं॒धास्त॒स्थुः प॒दे प॑र॒मे चार्व॒ग्नेः ॥ २ ॥

अ॒स्मे इति॑ । व॒त्सम् । परि॑ । सन्त॑म् । न । वि॒न्द॒न् । इ॒च्छन्तः॑ । विश्वे॑ । अ॒मृताः॑ । अमू॑राः । श्र॒म॒ऽयुवः॑ । प॒द॒ऽव्यः॑ । धि॒य॒म्ऽधाः । त॒स्थुः । प॒दे । प॒र॒मे । चारु॑ । अ॒ग्नेः ॥ २ ॥

अस्मे अस्माकं वत्सं वत्सवद्त्यन्तं प्रियं यद्वा वत्सः पुत्रः पश्चादुत्पन्नत्वात् तद्वदग्निरप्यस्माकं पुत्रः पश्चादुत्पन्नत्वात् तथा चाम्नायते—अग्नेर्वै सत्त्वहहव्यान्यग्ने पुत्रः पितेव लोकं कृण्वाय वेदइति । परिषन्तं परितः सर्वं प्रवर्तमानं देवेभ्यो निर्गत्य अश्वत्थवेण्वादिषु निलीनं सन्तमित्यर्थः एवंविधमग्निमिच्छन्तो विश्वे अमृताः सर्वेऽमरणधर्माणो देवाः अमूराः अमूढा मरुतश्च न विन्दन् तमग्निं नालभन्त अलभमानाश्च ते श्रमयुवः हव्यवाहनस्याभावेन हविषामभावात् तदन्वेषणश्रमेण क्लेशेन पक्वीभूताः तस्याग्नेरन्वेषणाय पदव्यः पादैर्गच्छन्तः धियंधाः धियां अग्नेः शयनासनस्थानादिलक्षणानां कर्मणां धारयितारः एवंविधाः सन्तः चारु चारुणि शोभने अग्नेः परमे उत्तमे अन्त्ये पदे यत्र स अग्निर्निलीनो वर्तते तत्र तेनेत्यर्थः यस्मिन्नदे तस्थुः स्थितवन्तः बहुविधेन प्रयासेनाग्निं ददृशुरित्यर्थः ॥ परिषन्तं उपसर्गात्सुनोतीत्यादिना षत्वम् । श्रमयुवः युमिश्रणे श्रमेण यूयन्त इति श्रमयुवः क्विप्चेति क्विप् । अमूराः ... विधीयमानौ किन्दीर्घौ अस्मादपि धातोर्भवतः छन्दादित्वाद्वुक् । पदव्यः वीगत्यादिषु पादेन वियन्ति गच्छन्तीति पदव्यः क्विप्चेति क्विप् । धियंधाः आतोनुपसर्गे क इति कः तत्पुरुषे कृति बहुलमिति बहुलवचनात् द्वितीयाया अप्यलुक् । तस्थुः पादादित्वान्निघाताभावः । चारु सुपांसुलुगिति सप्तम्या लुक् ॥ २ ॥

२. सारे अमरण-धर्मा देवगण और मोह-रहित मरुद्गण, अनेक कामना करने पर भी हमारे प्रिय और सर्वव्यापी अग्नि को नहीं पा सके। पैदल चलते-चलते थककर और अग्नि के प्रकाश को लक्ष्य कर अन्त को वे लोग अग्नि के घर में उपस्थित हुए।

तृतीयामृचमाह—

ति॒स्रो यद॑ग्ने श॒रद॒स्त्वामिच्छुचिं॑ घृ॒तेन॒ शुच॑यः सप॒र्यान् ।
नामा॑नि चिद्दधिरे य॒ज्ञिया॒न्यसू॑दयन्त त॒न्वः१ सुजा॑ताः ॥ ३ ॥

१ तै० ब्रा० १. २. १ ।

ति॒स्रः । यत् । अ॒ग्ने॒ । श॒रदः॑ । त्वाम् । इत् । शुचि॑म् । घृ॒तेन॑ ।
शुच॑यः । स॒प॒र्यान् । नामा॑नि । चि॒त् । द॒धि॒रे॒ । य॒ज्ञिया॑नि ।
असू॑दयन्त । त॒न्वः॑ । सुऽजा॑ताः ॥ ३ ॥

शुचयःशोधयितारोदीप्तावामरुतः हेअग्ने शुचिंशुद्धंदीप्यमानंवात्वामित् देवेभ्योनिर्गतं त्वामेवोद्दिश्य तिस्रःशरदस्त्रीन्संवत्सरान्घृतेनाज्येनयद्यदासपर्यान् पूजांकुर्युः तदानींत्वमाविर-भूः तदनन्तरंतेमरुतःत्वयानुगृहीताःसन्तोयज्ञियानियज्ञार्हाणियज्ञेप्रयोक्तुंयोग्यानिनामानिचित् नामान्यपिदधिरेअधारयन् नामानिचैवंतैत्तिरीयके समाम्नायन्ते—ईदृङ्चान्यादृङ्चैतादृङ्चप्रतिदृङ्-चमितश्चसंमितश्चसभराइत्यादीनि[1] । एतैर्नामभिश्चयनेमारुताःसप्तकपालाहूयन्ते नामानि धारयित्वाचसुजाताः पूर्वरूपंपरित्यज्यशोभनमरुत्त्वंप्राप्ताःसन्तः तन्वःस्वकीयानिशरीराणिअ-सूदयन्तस्वर्गंप्रापितवन्तः॥ तिस्रः शसि त्रिचतुरोःस्त्रियांतिसृचतसृ पूर्वसवर्णदीर्घत्वेप्राप्तेअचिरऋ-तइतिरेफादेशः त्रिशब्दःकिदित्यन्तोदात्तः तिस्रादेशस्यापिस्थानिवद्भावेनान्तोदात्तत्वेउदात्त-यणोहल्पूर्वादितिविभक्तेरुदात्तत्वम् । शरदः शॄहिंसायां शीर्यन्तेऽस्यामोषधयइतिशरत्संवत्सरः शॄदृभसोऽदिरित्यदिप्रत्ययः उभयत्र कालाध्वनोरत्यन्तसंयोगेइतिद्वितीया । सपर्यान् सपरपूजा-यां कण्ड्वादिः लेट्याडागमः इतश्चलोपइतीकारलोपः । यज्ञियानि यज्ञर्त्विग्भ्यांघखञौइतिघ-प्रत्ययः ॥ ३ ॥

३. हे दीप्तिमान् अग्नि! दीप्तिमान् मरुतों ने तीन वर्ष तक तुम्हारी घृत से पूजा की थी। अनन्तर उन्हें यज्ञ में प्रयोग योग्य नाम और उत्कृष्ट अमर-शरीर प्राप्त हुआ।

चतुर्थीमृचमाह—

आरोद॑सीबृह॒तीवेवि॑दानाः॒प्ररु॒द्रिया॑जभ्रिरेय॒ज्ञिया॑सः ।
वि॒दन्मर्तो॑ने॒मधि॑ताचिकि॒त्वान॒ग्निंप॒देप॑र॒मेत॑स्थि॒वांस॑म् ॥४॥

आ । रोद॑सी॒ इति॑ । बृ॒ह॒ती इति॑ । वेवि॑दानाः । प्र । रु॒द्रिया॑ । ज॒भ्रि॒रे॒ । य॒ज्ञिया॑सः । वि॒दत् । मर्तः॑ । ने॒मऽधि॑ता । चि॒कि॒त्वान् । अ॒ग्निम् । प॒दे । प॒र॒मे । त॒स्थि॒ऽवांस॑म् ॥ ४ ॥

---

१ तै० सं० ४. ६. ५।

बृहतीमहत्यौरोदसीद्यावापृथिव्यौ आवेविदानाः अत्यर्थंज्ञापयन्तः कुशाभिर्वेवेत्तेर्विपर-स्मरंतवन्तोद्यावापृथिव्योर्मध्येवर्तमानाइत्यर्थः यद्वा महत्योर्द्यावापृथिव्योर्मध्येआवेविदानाः अग्निमुपलभ्यमानाः एवंभूतायज्ञियासोयज्ञार्हादेवाः रुद्रियारुद्रोग्निर्देवानामसुरैःसहयुद्धसमये देवैःस्थापितंधनंअपहृत्यगतवन्तमग्निंदेवाआगत्यअग्निसकाशाद्बलेनतद्धनमगृह्णन् तदानींसो-ग्निःअरोदीत् तस्माद्रुद्रइत्याख्यायते तथाचतैत्तिरीयकम्—तदग्निर्न्यकामयत तेनापाक्रामत तद्दे-वाविजित्यावरुरुत्समानाअन्वायन् तदस्यसहसादित्सन्तसोऽरोदीद्यदरोदीत्तद्रुद्रस्यरुद्रत्वमिति[1]। तस्यरुद्रस्याहाणिस्तोत्राणिप्रजभ्रिरेप्रजह्रिरेचक्रुरित्यर्थः नेमधिता नेमशब्दोर्धवचनः तथाचया-स्कः—त्वोनेमइत्यर्धस्येति[2]। सर्वेषांदेवानामर्धभागेनधीयतेधार्यतेइतिनेमधितइन्द्रः सर्वेदेवाएकोर्धः इन्द्रएकएवापरोर्धइतियावत् तथाचतैत्तिरीयकम्—यत्सर्वेषामर्धमिन्द्रःप्रतितस्मादिन्द्रोदेवतानां-भूयिष्ठभाक्तमइति[3]। तेनेन्द्रेणसहितोमर्तोमरुद्गणः परमेउत्तमेअन्त्येपदेस्थानेअश्वत्थादौतस्थिवां-संस्थितवन्तं तमग्निंचिकित्वान् जानन् विदत्अलभत॥ वेविदानाः विदेर्ज्ञानार्थाद्यङ्लुगन्ताद्व्यत्य-न्याल्लटःशानच् बहुलंछन्दसीतिशपोलुक् छन्दस्युभयथेतिशानचआर्धधातुकत्वादल्लोपयलोपौ अभ्यस्तानामादिरित्याद्युदात्तत्वम्। विदत् विद्लृलाभे लृदित्त्वाद् च्लेरङादेशः। नेमधिता दधातेः कर्मणिनिष्ठा सुधितवसुधितनेमधितेतिनिपात्यते तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् सुपांसुलुगितितृतीयायाआकारः। तस्थिवांसं तिष्ठतेर्लिटः क्वसुः वस्वेकाजाद्घसामितीडागमः॥४॥

४. यज्ञार्ह देवों ने विशाल द्युलोक और पृथिवी में विद्यमान रह-कर रुद्र या अग्नि के उपयुक्त स्तोत्र किया था। मरुतों ने इन्द्र के साथ उत्तम स्थान में निहित अग्नि को समझकर उसे प्राप्त किया था।

घर्माभिष्टवेसंजानानाइत्येषा अथोत्तरामितिखण्डेसूत्रितम्—संजानानाउपसीदन्नभिज्ञु-दशाभिर्विवस्वतइति।

यामेतोक्तकेपञ्चमीमृचमाह—

संजानानाउपसीदन्नभिज्ञुपत्नीवन्तोनमस्यंनमस्यन्।
रिरिक्वांसस्तन्वःकृण्वतस्वाःसखासख्युर्निमिषिरक्षमाणाः॥५॥१७

सम्ऽजानानाः। उप। सीदन्। अभिऽज्ञु। पत्नीऽवन्तः। नमस्यम्।
नमस्यन्निति नमस्यन्। रिरिक्वांसः। तन्वः। कृण्वत। स्वाः।
सखा। सख्युः। निऽमिषि। रक्षमाणाः॥ ५॥ १७॥

१ तै० सं० १.५.१. २ नि० ३.२०। ३ तै० सं ५.१.८।

हे अग्ने त्वां सं जानानाः सम्यग्जानन्तो देवाः उपसीदन् उपसीदन्ति प्राप्नुवन्ति उपसदनं कृत्वा च पत्नीवन्तः सपत्नीकाः सन्तः नमस्यन् नमस्कारार्हं अभिज्ञु आभिमुख्येनावस्थितजानुयुक्तं त्वां नमस्यन् अपूजयन्। पूजयित्वा च सख्युः मित्रस्य तव निमिषि दर्शने निमित्तभूते सति रक्षमाणाः त्वया परिरक्ष्यमाणाः सखायः सखायो देवाः स्वाः स्वाः तन्वः स्वकीयानि शरीराणि रिरिक्वांसः अनशनादिरूपेण दीक्षानियमेन रिक्तीकुर्वन्तः शोषयन्तः कृण्वत यागानकुर्वन् देवा वै यज्ञमतन्वतेति श्रुतेः॥ नमस्यन् नमोवरिवश्चित्रङः इति पूजार्थे क्यच्। लङि बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः। रिरिक्वांसः रिचिर् विरेचने लिटः क्वसुः। निमिषि मिषस्पर्धायाम् अत्रोपसर्गवशाद्दर्शनार्थः सम्पदादिलक्षणो भावे क्विप्। रक्षमाणास्त्वया परिरक्ष्यमाणाः कर्मणि लटः शानच् यकि प्राप्ते व्यत्ययेन शप्॥ ५ ॥

५. हे अग्निदेव ! देवता तुम्हें अच्छी तरह जानकर बैठ गये और अपनी स्त्रियों के साथ सम्मुखस्थ जानुयुक्त अग्नि की पूजा की। अनन्तर मित्र अग्नि को देखकर, अग्नि-द्वारा रक्षित, मित्र देवों ने अग्नि के शरीर का शोषण कर यज्ञ किया।

॥ इति प्रथमस्य पञ्चमे सप्तदशो वर्गः ॥ १७ ॥

षष्ठीमृचमाह—

त्रिः सप्त यद्गुह्यानि त्वे इत्पदाविदन्निहिता यज्ञियासः।
तेभी रक्षन्ते अमृतं सजोषाः पशूञ्च स्थातॄञ्चरथं च पाहि ॥६॥

त्रिः। सप्त। यत्। गुह्यानि। त्वे इति। इत्। पदा। अविदन्। निऽहिता। यज्ञियासः। तेभिः। रक्षन्ते। अमृतम्। सऽजोषाः। पशून्। च। स्थातॄन्। चरथम्। च। पाहि ॥ ६ ॥

त्रिः सप्त एकविंशतिसंख्याकानि गुह्यानि रहस्यानि वेदैकसमधिगम्यानि यत् यानि पदा पदानि पद्यन्ते गम्यन्ते स्वर्गं एभिरिति व्युत्पत्त्या पदशब्देन यज्ञा उच्यन्ते ते च एकविंशतिसंख्याकाः औपासनहोमवैश्वदेवादयः सप्त पाकयज्ञाः अग्न्याधेयदर्शपूर्णमासादयः सप्त हविर्यज्ञाः अग्निष्टोमात्यग्निष्टोमादयः सप्त सोमयज्ञाः एवमेकविंशतिसंख्याकानि यज्ञलक्षणानि पदानि हे अग्ने त्वे इत् त्वय्येव निहिता स्थापितानि तेषां सर्वेषां त्वत्प्रधानत्वात् न हि त्वामन्तरेण यागा अनुष्ठातुं शक्यन्ते यज्ञियासो यज्ञार्हाः अर्थित्वसामर्थ्यवैदुष्यादिभिरधिकारहेतुभिर्युक्ताः तथा चोक्तम्—अर्थी समर्थो विद्वान् शास्त्रेणाप-

---

१ ऐ० ब्रा० ६. ४. । २ एषां परिसंख्या पूर्वं ( १८३ ) पृष्ठे तेनो रत्नानि धत्तनेति १. २. २. मन्त्रभाष्यटिप्पण्यां दर्शिता.

युंदस्तःकर्मण्यधिकारीति। एवंविधलक्षणोपेतायजमानाःतानिपदान्यविदन्अलभंत तल्ब्धाच तेनिर्यज्ञलक्षणैःपदैरमृतममरणधर्माणंत्वारक्षन्तेपालयन्तियजन्तीत्यर्थः सजोषासंतैर्यजमानैःसमानप्रीतिस्त्वं पशून्गवाश्वादिपशून्तस्थातृनत्रीसादिस्थावराणि चरथंचरथुव्यतिरिक्तंमन्यद्य-त्यागिजातमस्तितत्पाहिरक्ष तेभुहिरक्षितेभुत्वदीयायागाःकर्तुंशक्यन्ते नान्यथा अवस्तमेवमुप्यसदत्यर्थः ॥ पद् सुपांसुलुगितिविभक्तेर्लुक् गुहानि गुहायांभवानि भवेच्छन्दसीतियत् यतो-नावइत्याद्युदात्तत्वम्। त्वे सुपांसुलुगितिसप्तम्याःशेआदेशः। अविदन् विदुलाभे लुङि इरितोवेत्यङ्। पशून्स्थातॄन् उभयत्रउभयथार्क्ष्वितिनुभयथाभावाच्चकारस्यरुत्वाभावः॥६॥

६. अग्नि! तुम्हारे अन्दर निहित एकविंशति निगूढ़ पदों या यज्ञों को यजमानों ने जाना है और उन्हीं से तुम्हारी पूजा करते हैं। तुम भी यजमानों के प्रति उसी प्रकार स्नेह-युक्त होकर उनके पशु और स्थावर-जंगम की रक्षा करो।

विद्वाँअग्नेवयुनानिक्षितीनांव्यानुषक्शुरुधोजीवसेधाः।
अन्तर्विद्वाँअध्वनोदेवयानानतन्द्रोदूतोअभवोहविर्वाट् ॥७॥

विद्वान्। अग्ने। वयुनानि। क्षितीनाम्। वि। आनुषक्। शुरुधः। जीवसे। धाः। अन्तःऽविद्वान्। अध्वनः देवऽयानान्। अतन्द्रः। दूतः। अभवः। हविःऽवाट् ॥ ७ ॥

हेअग्नेवयुनानि ज्ञाननामैतत् इहतुज्ञातव्यपरमेतानि सर्वाणिज्ञातव्यानिविद्वान्जानंस्त्वं क्षितीनांप्रजानामलक्षणानां प्रजानां जीवसेजीवितुंशुरुधः शुचुःस्तस्यरोधकस्यरोधयित्रीरिषोन्नानिआनुषक् अनुषक्तं सततंयथाभवतितथाविधाः विधेहिकुर्वित्यर्थः एवंयजमानानन्नसमृद्धान्कृत्वाअनन्तरंहविर्वोट्वैर्देवेभ्यः प्रदत्तंहविर्वहन्दूतोभवः देवानांदूतः भवसि कीदृशस्त्वं अन्तर्विद्वान् द्यावापृथिव्योर्मध्येजानन् किंजानन्अध्वनोमार्गान् कीदृशान्देवयानान् देवाःयैर्मार्गैर्यन्तिगच्छन्तितान्देवयानानित्यर्थः अतन्द्रः पुनःपुनर्हविर्वहनेपिअनलसः ॥ वयुनानि अवगतिविशेषणयोः अजिवधिभ्यांउन्नित्यर्थेतिकर्मण्युनप्रत्ययः अजेर्व्यघञपोरितिवीभावः। क्षितीनां क्षियन्तिनिवसन्तीति क्षितयोमनुष्याः क्तिच्क्तौचसंज्ञायामितिक्तिच् अन्त्योदात्तत्वम् इतिस्वान्तत्वक्षितिरिगन्दादुपर-स्यनामोनामन्यतरस्यामितिउदात्तत्वम्। शुरुधः शुचंरुन्धन्तीतिशुरुधः क्विप्चेतिक्विप् पूर्वपदस्यान्त्यलोपः पृषोदरादित्वात् ॥ ७ ॥

७. अग्नि! सारे जानने योग्य विषयों को जानकर प्रजाओं के जीवन-धारण के लिए क्षुधा-निवृत्ति करो। आकाश और पृथिवी पर जिस मार्ग से देवलोक जाते हैं, वह जानकर और आलस्य-रहित होकर, दूत-रूप से, हव्य वहन करो।

अष्टमीमृचमाह—

स्वाध्योदिवआसप्तयह्वीरायोदुरोव्यृतज्ञाअजानन् ।
विदद्गव्यंसरमादृळ्हमूर्वंयेनानुकंमानुषीभोजतेविट् ॥८॥

सुऽआध्यः । दिवः । आ । सप्त । यह्वीः । रायः । दुरः । वि । ऋतऽज्ञाः । अजानन् । विदत् । गव्यम् । सरमा । दृळ्हम् । ऊर्वम् । येन । नु । कम् । मानुषी । भोजते । विट् ॥ ८ ॥

स्वाध्यः शोभनकर्मयुक्ताः यह्वीः यह्व्यो महत्यः सप्त गङ्गाद्याः सप्त नद्यः दिवः द्युलोकात् आगत्य भूम्यां प्रवहन्तीति शेषः हे अग्ने ईदृग्विधा नद्यः त्वया स्थापिताः अग्नौ होमे सति हितेन रसः सूर्यो वृष्टिं करोति तस्मिन्नर्थे स्मृतिः पूर्वमुदाहृता अतो वृष्टिद्वारा अग्निरेव नदीः करोतीत्युच्यते तथा ऋतज्ञाः ऋतस्य यज्ञस्य ज्ञातारोऽङ्गिरसः रायो बलनाम्ना असुरेणापहृतस्य गोरूपस्य धनस्य दुरो द्वाराणि गमनमार्गान् व्यजानन् त्वया ज्ञापितवन्तः त्वत्साध्येन यागेन प्रीत इन्द्रो गवामन्वेषणाय सरमां नाम देवशुनीं प्रेषितवान् सा च सरमा गवां स्थानमवगत्य इन्द्राय न्यवेदयत् इन्द्रश्च तानङ्गिरसो गाः प्रापयत् अत एतत्सर्वं त्वमेव कृतवान् अङ्गिरोभ्यः सकाशाद् गव्यं गवि भवं दृळ्हं स्थूलं बहुलमित्यर्थः एवंविधं पयोलक्षणं ऊर्वम् अन्नं सरमा देवशुनी विदत् अलभत कमित्येतत्पदपूरणम् येन नु येन हि गव्येन मानुषी विट् मनोः सम्बन्धिनी प्रजा भोजते इदानीं भुङ्क्ते तद्गव्यमपि परम्परयाऽग्निरेव करोति ॥ स्वाध्यः सु आङ्पूर्वाद्धीशब्दाज्जसि एरनेकाच इति यणादेशः । यह्वीः वा छन्दसीति पूर्वसवर्णदीर्घत्वम् । गव्यं सर्वत्र गोरादिमत्स्य प्रत्ययस्य यत्प्रत्ययः इति भवार्थे यत् । ऊर्वं उर्वी हिंसार्थः ऊर्वति हिनस्तीत्यूर्वमन्नं पचाद्यच् । भोजते भुज पालनाभ्यवहारयोः अभिधानेऽर्थे लेटि ॥ ८ ॥

८. शोभन-कर्म-सम्पन्ना विशाल सप्त नदियाँ द्युलोक से निकली हैं। ये सारी नदियाँ अग्नि-द्वारा स्थापित हैं। यज्ञज्ञाता अङ्गिरा लोगों ने असुरों-द्वारा चुराये हुए गोधन का गमन-मार्ग तुमसे जाना था। तुम्हारी कृपा से सरमा ने उनके पास से प्रचुर गोदुग्ध प्राप्त किया था। उसके द्वारा मनुष्य की रक्षा होती है।

आयेविश्वास्वपत्यानितस्थुःकृण्वानासोअमृतत्वायगातुम् ।
मह्नामहद्भिःपृथिवीवितस्थेमातापुत्रैरदितिर्धायसेवेः ॥९॥

आ । ये । विश्वा । सुऽअपत्यानि । तस्थुः । कृण्वानासः । अमृतऽत्वाय । गातुम् । मह्ना । महत्ऽभिः । पृथिवी । वि । तस्थे । माता । पुत्रैः । अदितिः । धायसे । वेरिति वेः ॥९॥

येआदित्याःअमृतत्वायअमरणत्वसिद्धये गातुंमार्गमुपायंकृण्वानासःकुर्वाणाःसन्तःविश्वा विश्वानिसर्वाणिस्वपत्यानिशोभनान्यपतनहेतुभूतानिचतुर्दशरात्रषट्त्रिंशद्रात्राद्यादित्यानामयनादीनिकर्माण्ययावस्युः आस्थितवन्तःकृतवन्तइत्यर्थः यथाचतैत्तिरीयकम्—आदित्याअकामयन्त सुवर्गंलोकमियामेतीति वएतंषट्त्रिंशद्रात्रमपश्यन् तमाहरन्तेनायजन्तेतिच। महद्भिःअनुभावेन महानुभावैःतैःपुत्रैःसहिताभाताजनयित्रीअदितिरदीनापृथिवीधायसेसर्वस्यजगतोधारणायमह्ना स्वकीयेनमहत्त्वेनवितस्येविशेषेणतिष्ठति हेअग्ने यतस्त्वंवेःआदित्यैरनुष्ठितेषुयागेषुचरुपुरोडाशादीनिहवींषिभक्षयः अतएतत्सर्वंजातमित्यर्थः॥ कृण्वानासः कृविर्हिंसाकरणयोश्च व्यत्ययेनात्मनेपदम् धिन्विकृण्व्योरचेत्युप्रत्ययः तत्सन्नियोगेनअकारान्तादेशश्च तस्यातोलोपेसतिस्थानिवद्भावाद्गुणाभावः शानचश्चित्त्वादन्तोदात्तत्वम् आज्जसेरसुक्। मह्ना महिम्नेत्यस्यवर्णलोपश्छान्दसः। धायसे दधातेर्धाञ्प्रत्ययश्छन्दसीतिदधातेर्भावेसुन् णिदित्यनुवृत्तेरातोयुक्चिण्कृतोरितियुक्। वेः वीगतिव्याप्तिप्रजनकान्त्यसनखादनेषु छान्दसीपिअदादित्वाच्छपोलुक् बहुलंछन्दस्यमाङ्योगेपीत्यडभावः। धायसे इत्यस्यवाक्यान्तरगतत्वादस्यनिघाताभावः॥ ९ ॥

९. आदित्यगण ने अमरत्व-सिद्धि के लिए उपाय करके पतन-निरोध के लिए जो सारे कर्म किये थे, अदिति-रूपिणी जननी पृथ्वी ने सारे जगत् के धारण के लिए उन महानुभाव पुत्रों के साथ जो विशेष महत्त्व प्राप्त किया था, अग्निदेव ! तुमने हव्य भक्षण किया था, यही सबका कारण है।

अधिश्रियंनिदधुश्चारुमस्मिन्दिवोयदक्षीअमृताअकृण्वन्।
अधक्षरन्तिसिन्धवोनसृष्टाःप्रनीचीरग्नेअरुषीरजानन्॥१०॥१८॥

अधि। श्रियम्। नि। दधुः। चारुम्। अस्मिन्। दिवः। यत्।
अक्षी इति। अमृताः। अकृण्वन्। अध। क्षरन्ति। सिन्धवः।
न। सृष्टाः। प्र। नीचीः। अग्ने। अरुषीः। अजानन्॥ १० ॥ १८ ॥

अस्मिन्नग्नौचारुंशोभनांश्रियंपरिस्तरणपरिषेचनादिरूपांयज्ञसम्पदंअधिनिदधुः यजमानाःस्थापितवन्तः निधायचयद्यदाअक्षीयज्ञस्यआज्यभागलक्षणेचक्षुषीअकृण्वन्कुर्वन्ति चक्षुषीवाएतेयज्ञस्ययदाज्यभागावितिश्रुतेः।तदानींदिवःद्युलोकात्अमृताःअमरणधर्माणोदेवाःयागसमयेअयत्यर्थगम्यश्चागच्छन्तीतिशेषः अधअथआज्यभागानन्तरंसृष्टाःअग्नेःउत्पन्नाःसिन्धवोन नदीवगच्छन्त्योनद्यइव नीचीःनितरांसर्वासुदिक्षुगच्छन्तीरुषीःरोचमानाः यज्ञानिर्मलरूपाःहेअग्ने एवं

1 तै० सं० ७. ४. ६. । 2 तै० सं० ७. ४. ६. ।

द्यावस्त्वदीयाज्वाला:वत्सभा:क्षरन्ति सञ्चलन्ति सर्वासुदिक्षुगच्छन्तीत्यर्थः आगतादेवायजमानं अस्माकंहोमायईदृशोज्वालावत्वाइविहृष्टाःसन्तःप्रकर्षेणजानन्ति ॥ अक्षी परस्वानुवंशा-धित्वाईच्छित्वचनेइतिअक्षिशब्दस्यईकारान्तादेशः सचोदात्तः ईत्वेकृतेसकृदवपरिभाषयापुनर्नुम् नभवति सवर्णदीर्घः । नीचीः निपूर्वादञ्चतेः ऋत्विगित्यादिनाक्विन् अनिदितामितिनलोपः अच्चवेधोपसङ्ख्यानमितिङीप् अचइत्यकारलोपेचाविति दीर्घत्वम् न्यधीचेतिगतेःप्रकृतिस्वरत्वम् । अरुषीः अरुषमितिरूपनाम ऋहनिभ्यामुषजितिअर्वेरुषच् छन्दसीवनिपाविति मत्वर्थीयईकारः ॥ १० ॥

१०. इस अग्नि में यजमानों ने सुन्दर यज्ञ-सम्पत् स्थापित की थी एवं यज्ञ के चक्षुःस्वरूप घृत दिया था। अनन्तर देवता लोग आये। यह देखकर अग्निदेव! तुम्हारी समुज्ज्वल शिखा, वेगवती नदी की तरह, सारी दिशाओं में फैली और देवों ने भी उसे जाना।

॥ इतिप्रथमस्यपञ्चमेष्टादशोवर्गः ॥ १८ ॥

रयिर्नेतिदशर्चंनवमंसूक्तंपराशरस्यार्षंत्रैष्टुभमाग्नेयं अनुक्रान्तंच—रयिर्नेति प्रातरनुवाका-श्विनशस्त्रयोरुक्तोविनियोगः।

तत्रप्रथमामृचमाह—

र॒यिर्न यः पि॑तृवि॒त्तो व॑यो॒धाः सु॒प्रणी॑तिश्चिकि॒तुषो॒ न शासुः॑ ।
स्यो॒न॒शीरति॑थि॒र्न प्री॑णा॒नो होते॑व॒ सद्म॑ विध॒तो वि ता॑रीत् ॥ १ ॥

र॒यिः । न । यः । पि॒तृ॒ऽवि॒त्तः । व॒यः॒ऽधाः । सु॒ऽप्रनी॑तिः ।
चि॒कि॒तुषः॑ । न । शासुः॑ । स्यो॒न॒ऽशीः । अति॑थिः । न । प्री॒णा॒नः ।
होता॑ऽइव । सद्म॑ । वि॒ध॒तः । वि । ता॒री॒त् ॥ १ ॥

पितृवित्तःपितुःसकाशात्लब्धोरयिर्धनमिव योऽग्निर्वयोधाःअन्नस्यदातायथापैतृकंधनंविस्रम्भेण व्यवह्रियमाणंसत्अन्नप्रदंभवति तद्वदग्निरपिसर्वैर्पुपहेषुविस्रम्भेणव्यवह्रतःसन् अन्नप्रदोभवतीत्यर्थः चिकितुषोविदुषोधर्मशास्त्राभिज्ञस्यशासुःन शासनमिवसुप्रणीतिः सुखेनप्रणेतव्यः यथाविद्वच्छासनंसर्वैरनुष्ठेयेषुतत्संशयनिर्णयायनीयतेतद्वदग्निरपिसर्वैर्पुपहेषुप्रणीयते यश्चस्योनशीःसुखप्रदेमाहवस्यायतनादौशयानोऽतिथिर्न सुखासनउपवेशितोऽर्घपाद्यादिभिः सत्कृतोऽतिथिरिव प्रीणानोहविर्भिस्तर्पणीयःसोऽग्निर्विधतःपरिचरतोयजमानस्यसद्मगृहंवितारीत् प्रवर्धयतिवृद्धाविना वत्र दृष्टान्तः—होतेव होताहोमकर्त्तायथायुस्वचरुकर्मकरणेनफलैर्यजमानस्यगृहंयथावर्धयतितद्वत्॥पितृवित्तः विद्लृलाभे कर्मणिनिष्ठा यस्यविभाषेतीट्प्रतिषेधः विभाषागमहनविदविशामितिविकल्पनस्य-

धातोरिटोविकल्पितत्वात् तत्रापिविशिसाहचर्यात् तौदादिकस्यविदिर्ग्रहणमित्युक्तम् विदोभोगप्रत्यययोरितिनिष्ठानत्वाभावोनिपातितः। वयोधाः डुधाञ्धारणपोषणयोः आतोमनिन्क्वनिब्वनिपश्च इतिविच्। सुप्रणीतिः प्रणीयतइतिप्रणीतिः कर्मणिक्तिन् दादौचेतिगतेः प्रकृतिस्वरत्वम् पुनःसुशब्देनसमासे कृदुत्तरपदप्रकृतिस्वरत्वम्। चिकितुषः लिटःक्वसुः षष्ठ्येकवचनेवसोःसम्प्रसारणमितिसम्प्रसारणम् शासिवसिघसीनांचेतिषत्वम्। शास्तुः शासुअनुशिष्टौ तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायांचानिटौ इत्यादिनाविधीयमानउभयत्रप्रत्ययोबहुलवचनादस्मादपिभवति तत्रनिदित्यनुवृत्तेराद्युदात्तत्वम्। स्योनशीः स्योनमितिसुखनाम स्योनेसुखकरेगार्हपत्यादिस्थानेशेतइतिस्योनशीः क्विप्चेतिक्विप्। प्रीणानः प्रीञ्तर्पणे कर्मणिशानचित्यप्रत्ययेनभा। विधतः विधविधाने विधतिः परिचरणकर्मेतिनैरुक्ताः। तुदादित्वाच्छप्रत्ययः शतुरनुमइतिविभक्तेरुदात्तत्वम्॥ १॥

१. पैतृक धन की तरह अग्नि अन्नदाता हैं; शास्त्रज्ञ व्यक्ति के शासन की तरह अग्नि नेता हैं; उपविष्ट अतिथि की तरह अग्नि प्रीतिपात्र हैं; और, होता की तरह अग्नि यजमान का घर वर्द्धित करते हैं।

द्वितीयामृचमाह—

देवोनयःसवितासत्यमन्माक्रत्वानिपातिवृजनानिविश्वा।
पुरुप्रशस्तोअमतिर्नसत्यआत्मेवशेवोदिधिषाय्योभूत्॥२॥

देवः। न। यः। सविता। सत्यऽमन्मा। क्रत्वा। निऽपाति।
वृजनानि। विश्वा। पुरुऽप्रशस्तः। अमतिः। न। सत्यः।
आत्माऽइव। शेवः। दिधिषाय्यः। भूत्॥ २॥

देवोनसविता द्योतमानः सर्वस्यप्रेरकः सूर्यइवयोऽग्निः सत्यमन्मासत्यज्ञानःयथार्थदर्शीसोऽग्निः क्रत्वाआत्मीयेनकर्मणाविश्वाविश्वानिवृजनानिनिपाति वृजनानिवर्जनीयानि सर्वेभ्यःसमागमेभ्यः निपातिनिवारयति यद्वा हिंस्यन्तेऽस्मिन्निविवृजनंसङ्ग्रामः अपिचपुरुप्रशस्तः पुरुभिर्यजमानैः स्तुतोऽग्निः अमतिर्न रूपनामैतत् रूपमिव सत्योबाधरहितः रूप्यतइतिरूपंस्वरूपं यथापृथिव्यादेः स्वरूपं आगमापायिषुविशेषेषुसत्स्वपिस्वधर्मैकरूप्येणनित्यंभवति तद्वदग्निरपिजाबचेषुसर्वेषुकर्मसुस्वयंएकएवव्याप्यवर्तते सोऽग्निः शेवः सुखकरः तत्रदृष्टान्तः—आत्मेव परमप्रेमास्पदतयानिरतिशयानन्दस्वरूपआत्मायथा सर्वान्सुखयतितस्यैवानन्दस्यान्यानिभूतानिमात्रामुपजीवन्ति। एतस्यैवानन्दस्यान्यानीतिश्रुतेः। तद्वदग्निरपिस्वर्गादिफलहेतुत्वात्सुखयति एवंभूतोऽग्निर्दिधिषाय्योभूत् सर्वैर्यजमानैर्धारणीयोभवति परित्यागेहिवीरहत्याख्येदोषोभवति तथाचतैत्तिरीयकम्—वीर-

१ नि० ३. १२। २ तै० सं० अष्टमपाठके.

इयायदेवानांयोग्निःसुवासयवेदति ॥ सत्यमन्मा मननंमन्म मनज्ञाने अन्येभ्योपिदृश्यन्तइतिमनि-न् सत्यमवितथंमन्मयस्य बहुव्रीहिस्वरः । वृजनानि वृजीवर्जने कृपृवृजीत्यादिनाक्युप्रत्ययः । पु-रुप्रशस्तः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वेप्राप्तेपरादीनांचेत्युत्तरपदान्तोदात्तत्वम् सत्राह-विमणइत्युक्तम् । अमतिः अमगत्यादिषु अमेरतिः । दिधिषाय्यः दधातेर्दिधिषाय्यइतिआय्य-प्रत्ययान्तोनिपात्यते ॥ २ ॥

२. प्रकाशमान सूर्य की तरह यथार्थदर्शी अग्नि अपने कार्य-द्वारा समस्त दुःखों से रक्षा करते हैं। यजमानों के प्रशंसित अग्नि प्रकृति के स्वरूप की तरह परिवर्तन-रहित हैं। अग्नि आत्मा की तरह सुख-कर हैं। ऐसे अग्नि यजमानों-द्वारा धारणीय हैं।

देवोनयःपृथिवींविश्वधायाउपक्षेतिहितमित्रोनराजा ।
पुरःसदःशर्मसदोनवीराअनवद्यापतिजुष्टेवनारी ॥३॥

देवः । न । यः । पृथिवीम् । विश्वऽधायाः । उपऽक्षेति ।
हितऽमित्रः । न । राजा । पुरःऽसदः । शर्मऽसदः । न । वीराः ।
अनवद्या । पतिजुष्टाऽइव । नारी ॥ ३ ॥

देवोनद्योतमानःसूर्यइव योऽग्निःविश्वधायाःसर्वस्यजगतोधर्ता यथासूर्योवृष्ट्यादिप्रदानेन सर्वंजगद्धत्ते एवमग्निरपियज्ञादिसाधनेन कृत्स्नस्यजगतोधारयिता सोऽग्निः पृथिवींपृथिव्यां उप-क्षेतिसर्वेषांप्रियःसन्प्रत्यक्षगृहादौनिवसति तत्रदृष्टान्तः—हितमित्रोनराजा हितान्यनुकूलानिमित्राणि यस्यतादृशोराजायथासुखेननिवसतितद्वत् यथासर्वजनप्रियोराजा एवमग्निरपिसर्वजनप्रिय इत्यर्थः । नकारश्चकारार्थे यस्याग्नेःपुरःसदः पुरस्तात्सीदन्तःउपविशन्तःपुरुषाःशर्मसदोनवीराः पितृगृहेवर्तमानाःपुत्राइववर्तन्ते पितापुत्रानिवाग्निःस्वस्यपरिचारकान् रक्षतीतिभावः सोयमग्निः अतिशयेनशुद्धःकर्मयोग्योभवति तत्रदृष्टान्तः—अनवद्याअनिन्दितापतिजुष्टेवनारीस्वपतिनासे-वितास्त्रीकुलवतीयथाविशुद्धासर्वकर्मयोग्याभवतिएवमग्निरपि ॥ विश्व-धायाः गतिकारकयोरपिपूर्वपदप्रकृतिस्वरत्वंचेतिवचनात् कारकपूर्वादपिदधातेःबहिहाधाञ्भ्य-श्छन्दसीत्यसुन् णिदित्यनुवृत्तेरातोयुक्चिण्कृतोरितियुक् मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम् । उपक्षेति क्षिनिवासगत्योः बहुलंछन्दसीतिविकरणस्यलुक् । अनवद्या बहुव्रीहौनञ्सुभ्यामित्यु-त्तरपदान्तोदात्तत्वम् । पतिजुष्टेव तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् । नारी नृनरयोर्वृद्धिश्चे-तिशार्ङ्गरवादिषुपाठात् ङीनन्तआद्युदात्तः ॥३॥

३. द्युतिमान् सूर्य की तरह अग्नि समस्त संसार को धारण करते हैं। अनुकूल सुहृद्-से सम्पन्न राजा की तरह अग्नि पृथिवी पर निवास करते हैं। संसार अग्नि के सामने पितृ-गृह में पुत्र की तरह बैठता है। अग्नि पति-सेविता और अभिनन्दनीया स्त्री की तरह विशुद्ध हैं।

---

१ तै०सं० १.५.२।

चतुर्थीमृचमाह—

तन्त्वा॒नरो॒दम॒आनित्य॑मि॒द्धमग्ने॒सच॑न्तक्षि॒तिषु॑ध्रु॒वासु॑ ।
अधि॑द्यु॒म्नंनिद॑धु॒र्भूर्य॑स्मि॒न्भवा॑वि॒श्वायु॑र्ध॒रुणो॑रयी॒णाम् ॥४॥

तम् । त्वा॒ । नरः॑ । दमे॑ । आ । नित्य॑म् । इ॒द्धम् । अग्ने॑ । सच॑न्त । क्षि॒तिषु॑ । ध्रु॒वासु॑ । अधि॑ । द्यु॒म्नम् । नि । द॒धुः॒ । भूरि॑ । अ॒स्मि॒न् । भव॑ । वि॒श्वऽआ॑युः । ध॒रुणः॑ । र॒यी॒णाम् ॥ ४ ॥

हेअग्ने तंत्वापूर्वोक्तगुणविशिष्टं त्वांनरोयज्ञस्यनेतारोयजमानाःध्रुवासुक्षितिषुनिश्चलासुचलनरहितासुभूमिषुनिरुपद्रवेषुग्रामेष्वित्यर्थः दमेस्वकीयेयज्ञगृहेनित्यमिद्धंअनवरतंसमिद्भिःप्रज्वलितंकृत्वाआसचन्तआभिमुख्येनसेवन्ते किञ्च अस्मिन्नग्नौद्युम्नं हविर्लक्षणमन्नंभूरिचरुपुरोडाशादिरूपेण बहुविधंअधिनिदधुःस्थापितवन्तः एवंगुणविशिष्टोयोग्निःसत्वंविश्वायुःउक्तप्रकारेणसर्वान्नोभूत्वारयीणांधनानांधरुणोधारयिताभव अस्मभ्यंदातुंधनानिधारयेत्यर्थः ॥ सचन्त षचसमवाये छान्दसोवर्तमानेलङ् बहुलंछन्दस्यमाङ्योगेपीत्यडभावः । भव द्व्यचोतस्तिङइतिसंहितायांदीर्घः । धरुणः धारेर्णिलुक्चेत्युनप्रत्ययः ॥ ४ ॥

४. हे अग्नि ! संसार उपद्रव-शून्य स्थान पर अपने घर में, अनवरत काष्ठ से जलाकर, तुम्हारी सेवा करता है। साथ ही अनेक यज्ञों में अन्न भी प्रदान करता है। तुम विश्वायु या सर्वान्न होकर हमें धन दो।

पञ्चमीमृचमाह—

विपृक्षोअग्ने॒मघवा॑नोअश्यु॒र्विसू॒रयो॒दद॑तो॒विश्व॒मायुः॑ ।
स॒नेम॒वाजं॑समि॒थेष्व॒र्यो भा॒गंदे॒वेषु॒श्रव॑से॒दधा॑नाः ॥५॥१९॥

वि । पृ॒क्षः॑ । अग्ने॑ । म॒घऽवा॑नः । अ॒श्युः॒ । वि । सू॒रयः॑ । दद॑तः । विश्व॑म् । आयुः॑ । स॒नेम॑ । वाज॑म् । स॒म्ऽइ॒थेषु॑ । अ॒र्यः । भा॒गम् । दे॒वेषु॑ । श्रव॑से । दधा॑नाः ॥ ५ ॥ १९ ॥

हेअग्ने मघवानोहविर्लक्षणेनधनेनयुक्तायजमानाः पृक्षोन्नानिव्यश्युः व्याप्नुवन्तु त्वयानुगृहीताः सर्वाण्यन्नानिभुञ्जतां येचसूरयोविद्वांसःत्वांस्तुवन्तिददतःयेचतुभ्यंहवींषिददतःप्रयच्छन्तोवर्तन्ते तेसर्वेविश्वमायुः सर्वंजीवितंव्यश्युः व्याप्नुवन्तु वयंचसमिथेषुसंग्रामेषुअर्यःअरेःशत्रोः सम्बन्धिनंवाजमन्नंसनेमत्वत्प्रसादात् संभजेमहि तदनन्तरंदेवेषुत्वत्प्रमुखेषुहव्यादिभागंश्रवसेयश-

सेवद्धं भागंहविर्भागंदधानाः स्थापयन्तोभूयासेविशेषः ॥ अश्युः अशूव्याप्तौ व्यत्ययेनपरस्मैपदम् बहुलंछन्दसीतिविकरणस्यलुक् । ददतः नाभ्यस्ताच्छतुरितिनुमागमप्रतिषेधः अभ्यस्तानामादिरित्याद्युदात्तत्वम्। सनेम वनषणसम्भक्तौ व्यत्ययेनशः । अर्यः अरिशब्दात्षष्ठ्येकवचनेअसादिषुछन्दसिवावचनमितिघेर्ङितीतिगुणाभावेयणादेशः अरिशब्दःअचइरितिइप्रत्ययान्तोन्तोदात्तः उदात्तयणइतिविभक्तेरुदात्तत्वम्। भागं कर्मात्वतइत्यन्तोदात्तत्वम् ॥ ५ ॥

५. अग्निदेव ! धनशाली यजमान अन्न प्राप्त करे। जो विद्वान् तुम्हारी स्तुति करते और तुम्हें हव्य-दान करते हैं, वे दीर्घ आयु प्राप्त करें। हम लड़ाई के मैदान में शत्रु का अन्न लाभ करें। अनन्तर यश के लिए देवों का अंश देवों को अर्पण करें।

॥ इतिप्रथमस्यपञ्चमेएकोनविंशोवर्गः॥१९॥

यदीमृचमाह—

ऋतस्यहिधेनवोवावशानाःस्मदूध्नीःपीपयन्तद्युभक्ताः ।
परावतःसुमतिंभिक्षमाणाविसिन्धवःसमयासस्रुरद्रिम् ॥६॥

ऋतस्यं । हि । धेनवः । वावशानाः । स्मत्ऽऊध्नीः । पीपयन्त । द्युऽभक्ताः । पराऽवतः । सुऽमतिम् । भिक्षमाणाः । वि । सिन्धवः । समया । सस्रुः । अद्रिम् ॥ ६ ॥

ऋतस्यहियज्ञदेवयजनदेशं प्रागमित्येवधेनवः अग्निहोत्रादिहविषांदोग्ध्योगावःपीपयन्तक्षीरादिलक्षणंगव्यंअपाययन् कीदृश्योगावःवावशानाःअग्निंपुनःपुनःकामयमानाःस्मदूध्नीः स्मच्छब्दोनित्यशब्दसमानार्थः नित्यंऊधसायुक्ताः सर्वदापयसःप्रदात्र्यइत्यर्थः द्युभक्ताः दिवाप्रकाशेन सम्भक्ताःसंश्लिष्टास्तेजस्विन्यइत्यर्थः अपिचसिन्धवः स्यन्दनशीलाःनद्यःसुमतिंअस्माभिःशोभनामनुग्रहात्मिकांबुद्धिंभिक्षमाणाः याचमानाः सत्यः अद्रिंसमयाअद्रेःपर्वतस्यसमीपेपरावतोदूरदेशाद्विसस्रुः विशेषेणगच्छन्तिप्रवहन्ति अग्रयेदातव्यानांहविषांनिष्पत्तयेप्रवहन्तीत्यर्थः ॥ ऋतस्य क्रियाग्रहणंकर्तव्यमितिकर्मणःसम्प्रदानत्वाच्चतुर्थ्यर्थेषष्ठी । वावशानाः वशकान्तौ यङ्लुगन्तात्ताच्छीलिकः चानश् नवशइतिसम्प्रसारणप्रतिषेधः बहुलंछन्दसीतिशपोलुक् छन्दस्युभयथेतिशानचआर्धधातुकत्वाद्अतोलोपयलोपौ अवयवलसार्वधातुकानुदात्तत्वाभावेचित्स्वरएवशिष्यते। स्मदूध्नीः स्मदितिनित्यानिऊधांसियासांताः ऊधसोनङित्यनङादेशःसमासान्तः संख्याव्ययादेर्ङीविति ङीप् भसंज्ञायामल्लोपोनइत्यल्लोपः ङीपःपित्त्वादनुदात्तत्वेबहुव्रीहिस्वरएवशिष्यते । पीपयन्त पापाने अस्माद्धेतुमतिणिच् शाच्छासाह्वेतियुक् ण्यन्ताल्लुङिचङिअजादेशादि ह्रस्वन्यत्वर-

स्यामितिचक्रःपूर्वस्योदात्तत्वम् हिचेतिनिघातप्रतिषेधः । परावतः परागतादूर्ध्वदेशादिपरागतंग-हति अस्मिन्नर्थेगम्यमानेउपसर्गाच्छन्दसिधात्वर्थेइतिवतिः ॥ ६॥

६. नित्य दुग्धशालिनी और तेजस्विनी गायें अग्नि की अभिलाषा करके यज्ञस्थान में अग्नि को दुग्ध पान कराती हैं। प्रवहमाना नदियाँ अग्नि के पास अनुग्रह की याचना करके, पर्वत के पास दूर देश से प्रवाहित होती हैं।

त्वेअग्नेसुमतिंभिक्षमाणादिविश्रवोदधिरेयज्ञियासः ।
नक्ताचचक्रुरुषसाविरूपेकृष्णंचवर्णमरुणंचसंधुः ॥७॥

त्वे इति । अग्ने । सुऽमतिम् । भिक्षमाणाः । दिवि । श्रवः । दधिरे । यज्ञियासः । नक्ता । च । चक्रुः । उषसा । विरूपेइतिविऽरूपे । कृष्णम् । च । वर्णम् । अरुणम् । च । सम् । धुरितिधुः ॥ ७ ॥

हेअग्नेत्वयर्तिशोभनामनुग्रहात्मिकांबुद्धिंभिक्षमाणाःयाचमानाःयज्ञियासोयज्ञार्हाः सर्वे देवाः दिविद्योतमानेत्वेत्वयिश्रवोहविर्लक्षणमन्नंदधिरेअस्थापयन् अग्निर्देवानाममुखमितिश्रुतेः। तदनन्तरंतादृशो हविर्युक्तायअनुष्ठानायविरूपेउषसाउषःकालोपलक्षितमहः नक्तं नक्तं रात्रिंचचक्रुः अकुर्वन् एतदेवस्पष्टयति—कृष्णांचवर्णरात्र्यांश्यामलवर्णमन्धकारं अह्निअरुणमारोचनंश्वेतवर्णंचसन्धुः सम्यक्स्थापितवन्तः ॥ त्वे सुपांसुलुगितिसप्तम्याःशेआदेशः। नक्ता देवेनद्वितीयायाआदेशः। उषसा देवेनविभक्तेराकारः। धुः दुधाञ्धारणपोषणयोः लुङि गातिस्थेतिसिचोलुक् आतइतिझेरुसादेशः बहुलंछन्दस्यमाङ्योगेपीत्यडभावः ॥ ७ ॥

७. हे द्युतिमान् अग्नि! यज्ञाधिकारी देवों ने तुम्हारे अनुग्रह की याचना करके तुम्हारे ऊपर हव्य स्थापन किया है। अनन्तर भिन्न-भिन्न अनुष्ठान के लिए उषा और रात्रि को भिन्नरूपिणी किया है। रात्रि को कृष्णवर्ण और उषा को अरुणवर्ण किया है।

यान्रायेमर्तान्त्सुषूदोअग्नेतेस्याममघवानोवयंच ।
छायेवविश्वंभुवनंसिसक्ष्यापप्रिवान्रोदसीअन्तरिक्षम् ॥८॥

यान् । राये । मर्तान् । सुसूदः । अग्ने । ते । स्याम । मघऽवानः । वयम् । च । छायाऽइव । विश्वम् । भुवनम् । सिसक्षि । आपप्रिऽवान् । रोदसी इति । अन्तरिक्षम् ॥८॥

हेअग्ने यान्मर्तान्मनुष्यानस्मान्रायेधनायसुषूदः अग्निहोत्रादिषुकर्मसुप्रेरयसि तेवादयाव-यंचमघवानोधनिनः स्यामभवेम रोदसीद्यावापृथिव्यौ अन्तरिक्षंचआपप्रिवान्स्वतेजसापूरयन्

केनथाआपूरितवांस्त्वं च विश्वं भुवनं सर्वं जगत् सिससि सिसेवसे अनुगृह्य सर्वं रक्षसीत्यर्थः तत्र दृष्टान्तः-छायेव यथा छत्रादेश्छाया आतपादिजनितं क्लेशं निवार्य रक्षति तद्वत् ॥ राये क्रुद्धिदमिविविभक्तेक-शाचत्वम्। जुहूरः हूस्पर्धायाम् शब्दे च । छेन्दसत्वात् पूरणे डेटपडागमः बहुलंछन्दसीति शपः श्लुः अभ्यस्तानामादिरित्याद्यु-दात्तत्वम् यद्वृत्तयोगान्निघातप्रतिषेधः । सिससि षच समवाये बहुलंछन्दसीति शपः श्लुः इ-दित्यनुवृत्तौ बहुलंछन्दसीत्यभ्यासस्येत्वम् । आपप्रिवान् प्रा पूरणे लिटः क्वसुः वस्वेकाजाद्घसा-मितीडागमः आतोलोप इटि चेत्याकारलोपः द्विर्वचनेचीति स्थानिवद्भावाद्द्विर्वचनादि ॥ ८ ॥

८. तुम जो मनुष्यों को, अर्थ-लाभ के लिए, यज्ञ-कर्म में प्रेरित करते हो—वे और हम धनी होंगे। तुमने आकाश, पृथिवी और अन्त-रिक्ष को परिपूर्ण किया है। साथ ही सारे संसार को, छाया की तरह, रक्षित करते हो।

अर्वद्भिरग्ने अर्वतो नृभिर्नॄन्वीरैर्वीरान्वनुयामा त्वोताः।
ईशानासः पितृवित्तस्य रायो वि सूरयः शतहिमा नो अश्युः ॥९॥

अर्वत्ऽभिः । अग्ने । अर्वतः । नृऽभिः । नॄन् । वीरैः । वीरान् ।
वनुयाम । त्वाऽऊताः । ईशानासः । पितृऽवित्तस्य । रायः ।
वि । सूरयः । शतऽहिमाः । नः । अश्युः ॥ ९ ॥

हेऽग्ने त्वोताः त्वया रक्षिताः सन्तो वयम् अर्वद्भिः अस्मदीयैरश्वैः अर्वतः शत्रुसम्बन्धिनोऽश्वान् नृभिर् अस्मदीयैर्भटैर्नॄन् शत्रोर्भटान् वीरैर्विविधमायन्त्य विवीराः पुत्राः तैर्वीरान् शत्रुपुत्रांश्च वनुयाम हन्याम वनुष्य-तिर्हन्तिकर्मा तनभवसंस्कारोभवतीति यास्कः । पितृवित्तस्य पित्रादिपरंपरया लब्धस्य रायो धनस्य ईशानासः स्वामिनः सूरयो विद्वांसः नोऽस्माकं पुत्राः शतंहिमाः शतंसंवत्सरान् जीवन्तः सन्तः व्यश्युः वि-शेषेण भुञ्जन्तां अस्मदीयानां पुत्राणां आरोग्यं दीर्घमायुश्च भवत्वित्यर्थः ॥ त्वोताः त्वया ऊताः सत्यपो-परस्पयोर्थे विभक्तिर्यन्तस्य त्वादेशः व्यत्ययेनात्वम् तृतीयाकर्मणीति पूर्वपदप्रकृतिस्वरत्वम् । शत-हिमाः अत्र हिमशब्देन तद्वान् हेमन्तो लक्ष्यते ब्राह्मणं च भवति-शतंहिमा इत्याह शतं त्वा हेमन्तान्निन्धि-षीयेति वा एतदाहेति । शतंहिमाः शतहेमन्तवर्षवोयेषां ते शतसंवत्सरजीविन इत्यर्थः । अश्युः अश-भोजने बहुलंछन्दसीति विकरणस्य लुक् ॥ ९ ॥

९. अग्निदेव! तुम्हारे द्वारा सुरक्षित होकर हम अपने अश्व से शत्रु के अश्व का वध करेंगे। अपने योद्धाओं के द्वारा शत्रु के योद्धाओं को और अपने वीरों-द्वारा शत्रु के वीरों का वध करेंगे। हमारे विद्वान् पुत्र पैतृक धन के स्वामी होकर सौ वर्ष जीवन का भोग करें।

---

१ नि० ५. २ । २ तै० सं० १. ५. ७.

दशमीमृचमाह—

एतातेअग्नउचथानिवेधोजुष्टानिसन्तुमनसेहृदेच ।
शकेमरायःसुधुरोयमंतेधिश्रवोदेवभक्तंदधानाः ॥१०॥२०॥

एता । ते । अग्ने । उचथानि । वेधः । जुष्टानि । सन्तु । मनसे ।
हृदे । च । शकेम । रायः । सुऽधुरः । यमम् । ते । अधि ।
श्रवः । देवऽभक्तम् । दधानाः ॥ १० ॥ २० ॥

हेवेधःमेधाविन्नामैतत् मेधाविन्नग्ने एताउचथानिएतानि इदानींअस्माभिःप्रयुक्तानिस्तोत्राणि तेतवमनसेमनोवृत्तयेहृदेहृदयमिवेन्तःकरणायचजुष्टानिसन्तु प्रियाणिभवन्तु तेतवसम्बन्धिनः सुधुरः सुष्ठुनिर्वाहकस्य यद्वाशोभनंधूर्वतिदारिद्र्यंहिनस्तीतिसुधूः तादृशस्यरायोधनस्ययमंनियमंकर्तुंशकेमशक्ताभूयास्म किंकुर्वन्तःदेवभक्तंदेवैःसंभजनीयंश्रवोहविर्लक्षणमन्नंअधिदधानाः अग्नेरुपरिधारयन्तः अग्नौहविर्भिर्होमंकुर्वन्तइत्यर्थः ॥ उचथानि वचपरिभाषणे हनिविदिभ्यो किदितिविधीयमानोऽयंप्रत्ययःकित्त्वंचबहुलवचनादस्मादपिभवति ग्रह्यादिनासंप्रसारणम् । जुष्टानि जुष्टार्पितेचच्छन्दसि नित्यंमन्त्रेइत्याद्युदात्तत्वम् । हृदे पद्दन्नित्यादिनाहृदयशब्दस्यहृदादेशः । शकेम शकॢशक्तौ लिङ्याशिष्यङ् । सुधुरः धुर्वीहिंसार्थः क्विप्चेतिक्विप् राल्लोपइतिवकारलोपः नपूजनादितिसमासान्तप्रतिषेधः । देवैर्भक्तंदेवभक्तं तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् ॥ १० ॥

१०. हे मेधावी अग्नि ! हमारे सब स्तोत्र तुम्हारे मन और अन्तःकरण को प्रिय हों। देवों के संभोग योग्य अन्न तुम्हारे अन्दर स्थापित करके हम तुम्हारे दारिद्र्य-विनाशी धन की रक्षा कर सकें।

॥ इतिप्रथमस्यपञ्चमेविंशोवर्गः ॥ २० ॥

॥ इतिप्रथमेमण्डलेद्वादशोनुवाकः ॥ १२ ॥

त्रयोदशानुवाकेएकादशसूक्तानि तत्रोपप्रयन्तइतिनवर्चंप्रथमंसूक्तं तस्यानुक्रम्यते—उपप्रयन्तोनवगौतमोराहूगणोगायत्रंत्विति । अस्यायमर्थः—रहूगणनामाकश्चिदृषिः तस्यपुत्रोगोतमोऽस्यसूक्तस्यऋषिः गायत्रंत्वित्युक्तत्वादिदमुत्तरंचगायत्रीछन्दस्कं परत्वाग्नेयमैन्द्रादिरितिपरिभाषितत्वादग्निर्देवता प्रातरनुवाकस्याग्नेयेक्रतौगायत्रेछन्दस्येतदादिकेद्वेसूक्ते सूत्रितंच—आपोरेवतीःक्षयथाहिवस्वउपप्रयन्तइतिसूक्तेइति । आश्विनशस्त्रेऽप्येतेसूक्ते प्रातरनुवाकन्यायेनेत्यतिदेशात् पृष्ठ्यषडहस्यप्रथमेहन्येतदेवसूक्तमाज्यशस्त्रम् सूत्रितंच—उपप्रयन्तइतित्रुप्रथमेऽहन्याज्यमिति ।

तमग्निमाश्चमाह—

उपप्रयन्तोअध्वरंमन्त्रंवोचेमाग्नये। आरेअस्मेचशृण्वते ॥ १ ॥

उपऽप्रयन्तः। अध्वरम्। मन्त्रम्। वोचेम। अग्नये। आरे। अस्मे इति। च। शृण्वते ॥ १ ॥

अध्वरंहिंसारहितं अग्निष्टोमादियज्ञं उपप्रयन्तः उपेत्यप्रकर्षेणयन्तोगच्छन्तः मार्गविच्छेदेनसम्यगनुतिष्ठन्तइत्यर्थः तादृशावयमग्नयेअन्नादिगुणयुक्तायदेवायमन्त्रंमननसाधनं एतत्सूक्तरूपंस्तोत्रंवोचेम वक्तारोभूयास्मेत्याशास्महे कीदृशायाग्नये आरेअस्मेचशृण्वते चशब्दोप्यर्थे आरेशब्दात्परोद्रष्टव्यः आरेपदूरेविस्थितायअस्माकंस्तुतीःशृण्वते अस्मास्वतिशयेनसर्वेषवर्तमानोग्निःअस्मदीयमेवस्तोत्रंशृणोतीतिभावः ॥ वोचेम ब्रुवोवचिः लिङ्याशिष्यङ् वचउमित्युमागमः। शृण्वते शतुरनुमइतिविभक्तेरुदात्तत्वम् ॥ १ ॥

१. जो अग्नि दूर रहकर भी हमारी स्तुति सुनते हैं, यज्ञ में आगमनशील उन अग्नि की हम स्तुति करते हैं।

यःस्नीहितीषुपूर्व्यःसंजग्मानासुकृष्टिषु। अरक्षद्दाशुषेगयम् ॥२॥

यः। स्नीहितीषु। पूर्व्यः। सम्ऽजग्मानासु। कृष्टिषु। अरक्षत्। दाशुषे। गयम् ॥ २ ॥

पूर्व्यश्चिरन्तनोयोग्निः स्नीहितीषुवधकारिणीषुकृष्टिषुशत्रुभूतासुप्रजासुसंजग्मानासुसंगतासुसतीषु दाशुषेहवींषिदत्तवतेयजमानायगयंधनंअरक्षद्ररक्षति तस्मैमन्त्रंवोचेमेतिपूर्वेणसम्बन्धः ॥ स्नीहितीषु ष्णिहस्नेहने चुरादिः स्नेहयतीतिवधकर्मसुपठितं स्नेहन्तेर्हिंस्यन्तेअनयाभिरितिस्नेहितयः करणेक्तिन् तितुत्रेष्वग्रहादीनामितिइटकल्प मितिवचनान्निगृहीतिर्निपठितेरितिवदिडागमः व्यत्ययेनएकारस्यईकारादेशःक्तिनोदीर्घश्च नित्स्वादाद्युदात्तत्वम्। संजग्मानासु समोगम्यृच्छीत्यात्मनेपदं लिटःकानच् गमहनेत्यादिनोपधालोपः। अरक्षत् छन्दसिलुङ्लङ्लिटइतिवर्तमानेलङ् ॥ २ ॥

२. जो अग्नि, वधकारिणी शत्रुभूता प्रजाओं के बीच संगत होकर हविर्दानकारी यजमान के लिए धन की रक्षा करते हैं, उन अग्नि की हम स्तुति करते हैं।

अग्निमन्थने जातायानुब्रूहीतिउक्ते उतब्रुवन्त्वित्येषानुवचनीया पावर्वैश्वदेव्यामितिखण्डेसूत्रितम्—शिष्टेनोत्तराभुवब्रुवन्तुजन्तवइति तथासाकमेधेषुमरुद्भ्यःक्रीळिभ्यःपुरोडाशमित्यस्यामिष्टौ एषैवप्रथमाज्यभागानुवाक्या सूत्रितंच—मरुद्भ्यःक्रीळिभ्यउतब्रुवन्तुजन्तवइति ॥

तामेतां सूक्ते तृतीयामृचमाह—

उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि । धनंजयो रणेरणे ॥३॥

उत । ब्रुवन्तु । जन्तवः । उत् । अग्निः । वृत्रऽहा । अजनि ।
धनम्ऽजयः । रणेऽरणे ॥ ३ ॥

अग्निरुदजनि अरण्योः सकाशादुत्पन्नः उत अनन्तरं जन्तवो जायमानाः सर्वे ऋत्विजो ब्रुवन्तु तमग्निं स्तुवन्तु कीदृशोऽग्निः वृत्रहा वृत्राणामावरकाणां शत्रूणां हन्ता रणेरणे सर्वेषु संग्रामेषु धनंजयः शत्रुधनानां जेता ॥ धनंजयः संज्ञायां भृतॄवृजीति खच् अरुर्द्विषदजन्तस्य मुम् चित्स्वरेणान्तोदात्तत्वम् । रणेरणे रणशब्दार्थः रमन्ते अस्मिन्निति रणः संग्रामः घञर्थे कविधानमित्यप् नित्यवीप्सयोरिति द्विर्वचनं आम्रेडितानुदात्तत्वम् ॥ ३ ॥

३. सारा लोक उत्पन्न होते ही अग्नि की स्तुति करे, अग्नि शत्रु-हन्ता और युद्ध में शत्रु-धन की जय करते हैं।

यस्य दूतो असि क्षये वेषि हव्यानि वीतये । दस्मत्कृणोष्यध्वरम् ॥४॥

यस्य । दूतः । असि । क्षये । वेषि । हव्यानि । वीतये । दस्मत् ।
कृणोषि । अध्वरम् ॥ ४ ॥

हे अग्ने यस्य यजमानस्य क्षये देवयजनलक्षणे गृहे देवानां दूतस्त्वं असि भवसि यस्य च हव्यानि चरुपुरोडाशादीनि हवींषि वीतये देवानां भक्षणाय वेषि गमयसि यस्य चाध्वरं यज्ञं दस्मत् दर्शनीयं कृणोषि करोषि तमित्सुहव्यमित्युत्तरया सम्बन्धः ॥ वेषि वी गत्यादिषु अन्तर्भावितण्यर्थोऽयम् अदादित्वाच्छपो लुक् पादादित्वान्निघाताभावः । दस्मत् दसि दंसनदर्शनयोः इषियुधीन्धीत्यादिना मक् दस्ममित्यत्र मकारस्य वर्णव्यापत्त्या तकारः । कृणोषि कृवि हिंसाकरणयोश्च धिन्विकृण्व्योरच्चेत्युप्रत्ययः तत्संनियोगेन वकारस्याकारः तस्यातो लोपे सति स्थानिवद्भावाल्लघूपधगुणाभावः यस्येत्यनुषङ्गान्निघाताभावः ॥ ४ ॥

४. अग्नि ! जिस यजमान के यज्ञ-गृह में तुम देव-दूत होकर उनके भोजन के लिए हव्य वहन करते और यज्ञ शोभित करते हो—

पञ्चमीमृचमाह—

तमित्सुहव्यमङ्गिरः सुदेवं सहसो यहो । जना आहुः सुबर्हिषम् ॥५॥२१

तम् । इत् । सुऽहव्यम् । अङ्गिरः । सुऽदेवम् । सहसः । यहो इति ।
जनाः । आहुः । सुऽबर्हिषम् ॥ ५ ॥ २१ ॥

हेसहसोयहोबलस्यपुत्र अङ्गिरःअङ्गनादिगुणयुक्ताग्ने योयजमानःपूर्वमुक्तः तमेवतमेव यजमानंसुहव्यंशोभनहविष्कं सुदेवंशोभनदैवतंसुबर्हिषं बर्हिरितियज्ञनाम शोभनयज्ञंच जनाः सर्वेमनुष्याआहुःकथयन्ति ॥ सुहव्यमित्यादिषुनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । सहसोयहो सुबामन्त्रितेइतिपराङ्गवद्भावात्षष्ठ्यामन्त्रितसमुदायस्याष्टमिकमामन्त्रितानुदात्तत्वम् ॥ ५ ॥

५. हे बल के पुत्र अङ्गिरा (अग्नि)! उसी यजमान को सारे मनुष्य शोभन-देव-संयुक्त, शोभन-हव्य-सम्पन्न और शोभन-यज्ञयुक्त करते हैं।

आचवहासिताँइहदेवाँउपप्रशस्तये । हव्यासुश्चन्द्रवीतये ॥६॥

आ । च । वहासि । तान् । इह । देवान् । उप । प्रऽशस्तये ।
हव्या । सुऽचन्द्र । वीतये ॥ ६ ॥

हेसुश्चन्द्रशोभनाह्लादनाग्ने तान्देवानिहास्मिन्कर्मणि उप अस्मत्समीपंप्रशस्तयेस्तुतयेआवहासिचआवहमापयच आगतेभ्यस्तेभ्योहव्याहव्यानिचरुपुरोडाशादीनिहवींषि वीतयेभक्षणाय मापयेत्यर्थः ॥ वहासि वहप्रापणे लेट्याडागमः । प्रशस्तये शंसुस्तुतौ भावेक्तिन् तितुत्रेतीट्प्रति-षेधः अनिदितामितिनलोपः तादौचेतिगतेःप्रकृतिस्वरत्वम् । सुश्चन्द्र ह्रस्वाच्चन्द्रोत्तरपदेमन्त्रे-इतिसुट् ॥ ६ ॥

६. हे ज्योतिर्मय अग्नि! इस यज्ञ में, स्तुति ग्रहण करने के लिए देवों को हमारे समीप ले आओ और भोजन करने के लिए हव्य प्रदान करो।

नयोरुपब्दिरश्व्यःशृण्वेरथस्यकच्चन । यदग्नेयासिदूत्यम् ॥७॥

न । योः । उपब्दिः । अश्व्यः । शृण्वे । रथस्य । कत् । चन । यत् ।
अग्ने । यासि । दूत्यम् ॥ ७ ॥

हेअग्ने यद्यदादूत्यंदेवानांदूतत्वंयासिप्राप्नोषि कच्चनकदाचनइदानींसर्वदापियोःगच्छतः तवरथस्यअश्व्यःअश्वैरुत्पादितःउपब्दिःश्रवणार्हःशब्दोनशृण्वेनश्रूयते रथस्यशीघ्रगमनेनअ-स्माभिः शब्दोनोपलभ्यतइत्यर्थः ॥ योः याप्रापणेइत्यस्माद्योद्वेचेत्यौणादिकःकुप्रत्ययः बहुल-वचनाद्द्विर्भावाभावः । उपब्दिः इत्येतच्छ्रोतुमर्हस्यशब्दस्याख्या तथाचतैत्तिरीयाणांमान्त्रिका-ख्यम्—सशब्दमुपब्दिमद्दिवि । शृण्वे श्रुश्रवणे कर्मणिलटिश्रुवःशृचेतिश्नुप्रत्ययेनशृः श्नुभावश्च लोपस्तआत्मनेपदेष्वितितलोपः हुश्नुवोःसार्वधातुकेइतियणादेशः ॥ ७ ॥

७. हे अग्नि! जिस समय तुम देवों के दूत बनकर जाते हो, उस समय तुम्हारे गतिशाली रथ के अश्व का शब्द नहीं सुनाई देता।

अष्टमीमाह—

त्वोतोवाज्यह्रयोभिपूर्वस्मादपरः । प्रदाश्वाँअग्नेअस्थात् ॥८॥

त्वाऽऊतः । वाजी । अह्रयः । अभि । पूर्वस्मात् । अपरः । प्र । दाश्वान् । अग्ने । अस्थात् ॥ ८ ॥

यःपुरुषःपूर्वस्मादस्मादधिकारादपरोनिकृष्टोभवति हेअग्ने सइदानींदाश्वान्तुभ्यंहवींषिदा- तवान्सन्त्वोतः त्वया ऊतोरक्षितः वाजी अन्नवान्अह्रयोलज्जारहितःएवंभूतःसन्अभिप्रास्था- द ऐश्वर्यमभिप्राप्यप्रतितिष्ठति सर्वोत्कृष्टोभवतीत्यर्थः॥अह्रयः ह्रीलज्जायां जिहेतीतिह्रयः नह्रयः अह्रयः अव्ययपूर्वपदप्रकृतिस्वरत्वम्। दाश्वान् दाशृदाने दाश्वान्साह्वान्मीढ्वांश्चेति क्वसुप्रत्ययान्तो- निपातितः ॥ ८ ॥

८. जो पुरुष पहले निकृष्ट है, वह तुम्हें हव्य दान करके तुम्हारे द्वारा रक्षित और अन्न-युक्त होकर लज्जा-रहित (ऐश्वर्यशाली) बनता है।

उतद्युमत्सुवीर्यंबृहदग्नेविवाससि । देवेभ्योदेवदाशुषे ॥९॥२२॥

उत । द्युऽमत् । सुऽवीर्यम् । बृहत् । अग्ने । विवाससि । देवेभ्यः । देव । दाशुषे ॥ ९ ॥ २२ ॥

उतअपिच हेदेवद्योतमानाग्ने देवेभ्योदाशुषेचरुपुरोडाशादीनिहवींषिदत्तवतेयस्मैयजमाना- य बृहन्महान्तंधनंविवाससिगमयितुमिच्छसितस्मैप्रयच्छसीतिभावः कीदृशं द्युमत् अतिशयेनदीप्तं सुवीर्यं शोभनवीर्योपेतम्॥ सुवीर्यं वीरवीर्यौचेत्युत्तरपदाद्युदात्तत्वम्। विवाससि वागतिगन्धनयोः सनि- इडभावेसन्यतइतीत्वम्। दाशुषे चतुर्थ्येकवचनेवसोःसम्प्रसारणमितिसम्प्रसारणम् शासिवसि- घसीनांचेतिषत्वम् ॥ ९ ॥

९. हे प्रकाशमान अग्नि ! जो यजमान देवों को हव्य प्रदान करता है, उसे प्रभूत, दीप्त और वीर्यशाली धन दान करो।

॥ इतिप्रथमस्यपञ्चमेद्वाविंशोवर्गः ॥२२॥

भुवस्त्वेतिपञ्चर्चंविंशीयंसूक्तं अनुक्रान्तंच—भुवस्त्वपञ्चेति । ऋष्याद्याःपूर्ववत् प्रातर- नुवाकाश्विनशस्त्रयोःपूर्वसूक्तेनसहोक्तःसूक्तविनियोगः पशौस्तोकानुवचनेआद्याविनियुक्ता सूत्रितंच—मेधिवःस्तोकेभ्योन्वाहभुवस्त्वसमयस्वमिति ।

यामेवांसूक्तेप्रथमामृचमाह—

जुषस्वसप्रथस्तमंवचोदेवप्सरस्तमम् । हव्याजुह्वानआसनि ॥१॥
जुषस्व । सप्रथःऽतमम् । वचः । देवप्सरःऽतमम् । हव्या । जुह्वानः ।
आसनि ॥ १ ॥

हेअग्ने सप्रथस्तमंअतिशयेनविस्तीर्णंवचःस्तोत्रलक्षणमस्मदीयंवचनंजुषस्व सेवस्व कीदृशं देवप्सरस्तमंदेवानामतिशयेनप्रीणयितृतमम् किंकुर्वन् आसनि तवास्येहव्याहव्यानिसोमलक्षणानिहवींषिजुह्वानःप्रक्षिपन् इमानिसोमलक्षणानिहवींषिबृथामाभूवन् तत्सर्वंत्वदीयेनमुखेनस्वीकुर्वित्यर्थः॥देवप्सरस्तमम् स्पृशीविचलनयोः देवान्स्पृशतीतिप्रीणयतीतिदेवप्सराः गतिकारकयोरपिपूर्वपदप्रकृतिस्वरत्वंच सकारपकारयोःस्थानविपर्ययः अतिशयेनदेवप्सराःदेवप्सरस्तमः। जुह्वानः जुहोतेर्व्यत्ययेनशानच् अभ्यस्तानामादिरित्याद्युदात्तत्वम्। आसनि पद्दन्नित्यादिनाआस्यशब्दस्यआसन्नादेशः ॥१॥

१. अग्निदेव ! मुख में हव्य ग्रहण करके देवों को अतीव प्रसन्न करो और हमारा अतिविशाल स्तोत्र ग्रहण करो।

द्वितीयामृचमाह—

अथातेअङ्गिरस्तमाग्नेवेधस्तमप्रियम् । वोचेमब्रह्मसानसि ॥२॥

अर्थ । ते । अङ्गिरःऽतम । अग्ने । वेधःऽतम । प्रियम् । वोचेम ।
ब्रह्म । सानसि ॥ २ ॥

हेअङ्गिरस्तम अतिशयेनाङ्गनादिगुणयुक्त यद्वा अङ्गिरसांवरिष्ठवेधस्तम वेधाइतिमेधाविनाम अतिशयेनमेधाविन्नग्ने अथानन्तरंतेतुभ्यं सानसिसम्भजनीयंप्रियंप्रीतिकरंब्रह्मस्तोत्रंवोचेमवक्तारोभूयास्म॥वोचेम लिङ्याशिष्यङ् वचउमित्युमागमः। सानसि वनषणसंभक्तौ सानसिवर्णसीत्यादावसिप्रत्ययान्तोनिपात्यते॥ २ ॥

२. हे अङ्गिरा ऋषि के पुत्रों और मेधावियों में श्रेष्ठ ! हम तुम्हारे ग्रहणयोग्य और प्रसन्नता-दायक स्तोत्र सम्पादन करते हैं।

तृतीयामृचमाह—

कस्तेजामिर्जनानामग्नेकोदाश्वध्वरः । कोहकस्मिन्नसिश्रितः ॥३॥

कः । ते । जामिः । जनानाम् । अग्ने । कः । दाशुऽअध्वरः । कः ।
ह । कस्मिन् । असि । श्रितः ॥ ३ ॥

हेअग्ने जनानांमनुष्याणांमध्येतेतवकोजामिः कोबन्धुः त्वंसर्वैर्गुणैरधिकोसि तवानुरूपो-बन्धुर्नास्तीतिभावः कोदाशध्वरः दाशुर्दत्तोध्वरोयज्ञोयेनसतथोक्तः त्वां यष्टुमपिसमर्थःकोपि-नास्तीत्यर्थः कोहत्वं कथंभूतस्त्वमीदृग्रूपइतिसर्वैर्नज्ञायसइत्यर्थः कस्मिन्स्थानेश्रितआश्रि-तोसिवर्तसेतत्स्थानमपिनकेनचिज्ज्ञायते अतस्त्वमस्माभिर्मांसदृष्टिभिः कथमुपलब्धव्यइत्यभिः प्रायस्यते॥ दाश्वध्वरः दाशृदाने उणादयोबहुलमितिबहुलवचनात्कर्मण्युण्प्रत्ययः बहुव्रीहौपूर्व-पदप्रकृतिस्वरत्वम् यणादेशेउदात्तस्वरितयोर्यणःस्वरितोनुदात्तस्येतिस्वरितत्वम्॥ ३ ॥

३. अग्नि! मनुष्यों में तुम्हारा योग्य बन्धु कौन है? तुम्हारा यज्ञ कौन कर सकता है? तुम कौन हो? कहां रहते हो?

त्वंजा॒मिर्जना॑ना॒मग्ने॑मि॒त्रोअ॑सिप्रि॒यः। सखा॒सखि॑भ्य॒ईड्यः॑॥४॥

त्वम्। जा॒मिः। जना॑नाम्। अग्ने॑। मि॒त्रः। अ॒सि॒। प्रि॒यः।
सखा॑। सखि॑ऽभ्यः। ईड्यः॑॥ ४ ॥

हेअग्ने त्वंउक्तप्रकारेणाचिन्त्यरूपोपिअनुगृहीतृतयासर्वेषांजनानांजामिर्बन्धुरसि यथापि-यः प्रीणयितात्वंयजमानानांमित्रःप्रमीतेस्त्रायकोसि ईड्यः स्तुतिभिःस्तुत्यः त्वंसखिभ्यः समा-नख्यानेभ्यऋत्विग्भ्यः सखासखिवद्त्यन्तंप्रियोसि॥ जामिः जमुअदने जमन्तिसहैकस्मिन्पा-त्रे अदन्तीतिजामयोबन्धवः जनिघसिभ्यामिणितिविधीयमानोबहुलवचनादस्मादपिद्रष्टव्यः। ईड्यः ईडस्तुतौ ईडवन्दवृशंसदुहांण्यतइत्याद्युदात्तत्वम्॥ ४ ॥

४. अग्नि! तुम सबके बन्धु हो, तुम प्रिय मित्र हो। तुम मित्रों के स्तुति-पात्र मित्र हो। पञ्चमीमृचमाह—

यजा॑नोमि॒त्रावरु॑णा॒यजा॑दे॒वाँऋ॒तंबृ॒हत्। अग्ने॒यक्षि॒स्वंदम॑म्॥५॥२३॥

यज॑। नः॒। मि॒त्रावरु॑णा। यज॑। दे॒वान्। ऋ॒तम्। बृ॒हत्। अग्ने॑।
यक्षि॑। स्वम्। दम॑म्॥ ५ ॥ २३ ॥

हेअग्ने नोस्मदर्थंमित्रावरुणाएतत्संज्ञौदेवौयज हविषापूजय यथादेवानिन्द्रादीन्यजपूजय ऋतंसत्यंयथार्थफलंयज्ञंचयजेत्येव तदर्थंबृहत्प्रौढंस्वंस्वकीयंदमंयज्ञगृहंयक्षियज सम्बध्यस्व त-स्मिन्नन्तर्विद्यमानेसतिहियज्ञगृहंपूज्यते॥ यज द्व्यचोतस्तिङइतिसंहितायांदीर्घत्वम्। देवान् दीर्घा-दटिसमानपादेइतिसंहितायांनकारस्यरुत्वम् आतोटिनित्यमित्यनुनासिकआकारः यत्वलोपौ। यक्षि यजेर्बहुलंछन्दसीतिशपोलुक्॥ ५ ॥

५. अग्नि! हमारे लिए मित्र और वरुण की अर्चना करो और देवों की पूजा करो। विशाल यज्ञ का सम्पादन करो और अपने यज्ञ-गृह में गमन करो।

॥ इतिप्रथमस्यपञ्चमेत्रयोविंशोवर्गः॥ २३ ॥

कातइतिपञ्चर्चंसूक्तंद्वितीयं कातइत्यनुक्रान्तम् राहूगणोगोतमऋषिः त्रिष्टुप्छन्दः अग्निर्दे-
वता प्रातरनुवाकस्याग्नेयेक्रतौत्रैष्टुभेछन्दसीदमादिकेद्वेसूक्ते सूत्रितंच—उपप्रजिन्वन्नितितिस्रो-
ऽग्निकातउपेतिरितिद्विसूक्तेइति आश्विनशस्त्रेऽप्येते प्रातरनुवाकातिदेशात्।

तत्रप्रथमामृचमाह—

कातउपेतिर्मनसोवरायभुवदग्नेशंतमाकामनीषा।
कोवायज्ञैःपरिदक्षंतआपकेनवातेमनसादाशेम ॥१॥

का। ते। उपऽइतिः। मनसः। वराय। भुवत्। अग्ने। शम्ऽतमा।
का। मनीषा। कः। वा। यज्ञैः। परि। दक्षम्। ते। आप।
केन। वा। ते। मनसा। दाशेम ॥ १ ॥

हेअग्ने तेतवमनसोवरायनिवारणायअस्मास्ववस्थापनायकाउपेतिर्भुवत् कीदृशमुपगमनं भवेत् नकाप्यस्ति तवोचितमुपगमनं वयंकर्तुंनशक्नुमइतिभावः मनीषास्तुतिः शंतमा अतिश-येनसुखकरी का कीदृशीभवेत् तवोचितास्तुतिरपिनास्तीत्यर्थः कोवायजमानः यज्ञैः तवसम्ब-न्धिभिर्यागैः दक्षंवृद्धिंबलंवा पर्याप पर्याप्नोत् नकोपीत्यर्थः तवोचितान्यागाननुष्ठाय यैः फलं प्राप्यतइत्येतदपिदुर्घटमेवेतिभावः उपगमनादिकंतावदास्तां तस्यसर्वस्यसाधनभूतंमनएवास्मा-कंदुर्लभमित्याह केनेति हेअग्ने तेतुभ्यंकेनमनसाकीदृश्याबुद्ध्यादाशेमहवींषिप्रयच्छाम तवोपग-मनाद्यनुरूपंमनोस्माकंनोत्पद्यतइत्यर्थः॥ उपेति तादौचनिघाते:प्रकृतिस्वरत्वम्। वराय वृञ्वरणे अस्मादन्तर्भावितण्यर्थात् ग्रहवृदृनिश्चिगमश्चेत्यप् तस्यपित्त्वादनुदात्तत्वेधातुस्वरः। भुवत् लेटघडागमः बहुलंछन्दसीतिशपोलुक् भूसुवोस्तिङीतिगुणप्रतिषेधः। दक्षं दक्षवृद्धौ भावेकरणे वाघञ् ञित्वादाद्युदात्तत्वम् ॥ १ ॥

१. अग्नि! तुम्हारी मनस्तुष्टि करने का क्या उपाय है? तुम्हारी आनन्ददायिनी स्तुति कैसी है? तुम्हारी क्षमता का पर्याप्त यज्ञ कौन कर सकता है? कैसी बुद्धि के द्वारा तुम्हें हव्य प्रदान किया जाय?

द्वितीयामृचमाह—

एह्यग्नइहहोतानिषीदादब्धःसुपुरएताभवानः।
अवतांत्वारोदसीविश्वमिन्वेयजामहेसौमनसायदेवान् ॥२॥

आ । इहि । अग्ने । इह । होता॑ । नि । सीद । अदब्धः । सु । पुरःऽएता । भव । नः । अवताम् । त्वा । रोदसी इति । विश्वमिन्वे इति विश्वम्ऽइन्वे । यज॑ । महे । सौमनसाय॑ । देवान् ॥ २ ॥

हेअग्ने एहिआगच्छ इहास्मिन्यज्ञेहोतादेवानामाह्वातासन् निषीदउपविश उपविश्य नोस्माकंपुरएतापुरतोगन्तासुभवसुष्ठुभव यस्मात्त्वंअदब्धः राक्षसादिभिरहिंस्योसि तादृशंत्वाविश्वमिन्वेसर्वव्यापिन्यौरोदसीद्यावापृथिव्यौअवतांरक्षतां आगत्योपविश्यचद्यावापृथिवीभ्यांरक्षितःसन् महेमहतेसौमनसायसौमनस्यायदेवान् दानादिगुणयुक्तानिन्द्रादीन्यजहविर्भिःपूजय ॥ निषीद सदिरप्रतेरितिषत्वम् । सौमनसाय सुमनसोभावःसौमनसं तस्येदमितिसम्बन्धसामान्येइत्यण्प्रत्ययः सचात्रभावलक्षणेसम्बन्धविशेषेपर्यवस्यति यद्वा हायनान्तयुवादिभ्योणितिभावेण् युवादिष्वस्यपाठोद्रष्टव्यः ॥ २ ॥

२. अग्नि ! इस यज्ञ में आओ। देवों को बुलाकर बैठो। तुम हमारे नेता बनो; क्योंकि कोई तुम्हारी हिंसा नहीं कर सकता। सारा आकाश और पृथिवी तुम्हारी रक्षा करें एवं तुम देवों की अत्यन्त प्रसन्न करने के लिए पूजा करो।

प्रसुविश्वान्रक्षसोधक्ष्यग्नेभवायज्ञानामभिशस्तिपावा ।
अथावहसोमपतिंहरिभ्यामातिथ्यमस्मैचकृमासुदाव्ने ॥३॥

प्र । सु । विश्वान् । रक्षसः । धक्षि । अग्ने । भव॑ । यज्ञाना॑म् । अभिशस्तिऽपावा । अथ । आ । वह । सोम॑ऽपतिम् । हरि॑ऽभ्याम् । आतिथ्यम् । अस्मै । चकृम । सुऽदाव्ने ॥ ३ ॥

हेअग्ने विश्वान्सर्वान्रक्षसोराक्षसान् प्रसुधक्षिप्रकर्षेणदह दग्ध्वाच यज्ञानामस्माभिरनुष्ठेयानां यागानांअभिशस्तिपावा अभिशस्तेर्हिंसायाःपावारक्षिताभव अथानन्तरंसोमपतिंसर्वेषां सोमानांपालकं इन्द्रं हरिभ्यांतदीयाभ्यामश्वाभ्यांआवह अस्मद्यज्ञंप्रापय आगतायास्मैसुदाव्नेशोभनस्यफलस्यदात्रेइन्द्रायआतिथ्यंअतिथ्यर्हंसत्कारंचकृमकुर्मः ॥ धक्षि दहभस्मीकरणे बहुलंछन्दसीतिशपोलुक् ढत्वभष्भावकत्वषत्वानि । अभिशस्तिपावा शसुहिंसायां अस्माद्भिपूर्वात्क्तिन् अभिशस्तेःपातीत्यभिशस्तिपावा पारक्षणे आतोमनिन्क्वनिब्वनिपश्च । सोमपतिं पत्यावैश्वर्यइतिपूर्वपदप्रकृतिस्वरत्वम् । सुदाव्ने पूर्ववद्ददातेर्वनिप् अल्लोपोनइत्यकारलोपः ॥ ३ ॥

३. अग्नि ! सारे राक्षसों को दहन करो तथा हिंसाओं से यज्ञ की रक्षा करो। सोम-रक्षक इन्द्र को, उनके हरि नाम के दोनों अश्वों के साथ, इस यज्ञ में ले आओ। हम सुफलदाता इन्द्र का आतिथ्य प्रदर्शन करेंगे।

चतुर्थीमृचमाह—

प्रजावता वचसा वह्निरासा च हुवे नि च सत्सीह देवैः।
वेषि होत्रमुत पोत्रं यजत्र बोधि प्रयन्तर्जनितर्वसूनाम् ॥४॥

प्रजाऽवता । वचसा । वह्निः । आसा । आ । च । हुवे । नि । च । सत्सि । इह । देवैः । वेषि । होत्रम् । उत । पोत्रम् । यजत्र । बोधि । प्रऽयन्तः । जनितः । वसूनाम् ॥ ४ ॥

प्रजायमानेभ्यो दातव्यापत्यादिफलोपेतेन वचसा स्तोत्रेण स्तुवन् सन् योऽग्निः आसा आस्यस्थानीयया ज्वालया वह्निः देवेभ्यो हविषां वोढा तमग्निम् आ च हुवे आह्वयामि आहूतः सन् त्वं एतस्मिन्कर्मणि देवैरन्यैः सह नि षत्सि च निषीद च निषण्णो भव च हे यजत्र यजनीयाग्ने होत्रं होत्रा क्रियमाणं कर्म उत अपि च पोत्रं पोत्रा कृतं कर्म च वेषि कामयस्व वसूनां धनानां प्रयन्तः प्रकर्षेण नियन्तः वसूनि अस्मदायत्तानि कुर्वन् जनितः आहुतिद्वारा सर्वस्य जनयितरग्ने बोधि अस्मान् बोधय ॥ आसा पद्दन्नित्यादिना आस्यशब्दस्य आसन्नादेशः सुपां सुलुगिति तृतीयाया डादेशः टिलोपे उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । हुवे ह्वेञो लटि बहुलं छन्दसीति संप्रसारणम् बहुलं छन्दसीति शपो लुक् चवायोगे प्रथमेति निघातप्रतिषेधः । बोधि बुध अवगमने अस्माण्ण्यन्तात् छन्दस्युभयथेति हेरार्धधातुकत्वात् णेरनिटीति णिलोपः हुझल्भ्यो हेर्धिः धातोरन्त्यलोपश्छान्दसः हेरपित्त्वाच्चस्वे-पस्वरः शिष्यते ॥ ४ ॥

४. जो अग्नि मुख-द्वारा हव्य वहन करते हैं, उन्हें अपत्य आदि फलों से युक्त स्तोत्र-द्वारा आह्वान करते हैं। अग्नि! तुम अन्य देवों के साथ बैठो और हे यजनीय अग्नि! तुम होता और पोता के कार्य करो। तुम धन के नियामक और जन्मदाता होकर हमें जगाओ।

एकादशिनस्याग्नेयस्य पशोः यथा विप्रस्येत्येषा पशुपुरोडाशस्य याज्या सूत्रितं च पञ्चानामा-मिति खण्डे—यथा विप्रस्य मनुषो हविर्भिः प्र कारवो मनना वच्यमाना इति ।

तामेतां सूक्ते पञ्चमीमृचमाह—

यथा विप्रस्य मनुषो हविर्भिर्देवाँ अयजः कविभिः कविः सन् ।
एवा होतः सत्यतर त्वमद्याग्ने मन्द्रया जुह्वा यजस्व ॥५॥२४॥

यथा । विप्रस्य । मनुषः । हविःऽभिः । देवान् । अयजः । कविऽभिः । कविः । सन् । एव । होतरिति । सत्यऽतर । त्वम् । अद्य । अग्ने । मन्द्रया । जुह्वा । यजस्व ॥ ५ ॥ २४ ॥

कविः क्रान्तदर्शीसन्कविभिः मेधाविभिःऋत्विग्भिःसह विप्रस्यमेधाविनः मनुषोमनोर्यज्ञे हविर्भिः चरुपुरोडाशादिभिः हेअग्नेयथादेवानयजः एवमेवहोतः होमनिष्पादकसत्यतरअतिश-येनसत्यसाधोऽग्ने त्वं अद्यास्मिन्यज्ञेमन्द्रयाहर्षयित्र्याजुह्वाहोमसाधनभूतयास्रुचायजत्र देवान् हविर्भिःपूजय ॥ मनुषः मनज्ञाने बहुलमन्यत्रापीतिमनेरुसिन्प्रत्ययः ॥ ५ ॥

५. तुमने मेधावियों में मेधावी बनकर जैसे मेधावी मनु के यज्ञ में हव्य-द्वारा देवों की पूजा की थी, वैसे ही हे होम-निष्पादक सत्य अग्नि ! तुम इस यज्ञ में देवों की आनन्ददायक जुहू आसुक् से पूजा करो।

॥ इतिप्रथमस्यपञ्चमेचतुर्विंशोवर्गः ॥ २४ ॥

कथेतिपञ्चर्चंचतुर्थंसूक्तंरहूगणपुत्रगोतमस्यार्षमाग्नेयम् अनुक्रान्तंच—कथेति । प्रातरनुवाका-श्विनशस्त्रयोः पूर्वसूक्तेनसहोक्तोविनियोगः ।

कथादाशेमाग्नयेकास्मैदेवजुष्टोच्यतेभामिनेगीः ।
योमर्त्येष्वमृतऋतावाहोतायजिष्ठइत्कृणोतिदेवान् ॥१॥

कथा । दाशेम । अग्नये । का । अस्मै । देवऽजुष्टा । उच्यते ।
भामिने । गीः । यः । मर्त्येषु । अमृतः । ऋतऽवा । होता । यजिष्ठः ।
इत् । कृणोति । देवान् ॥ १ ॥

अस्माअग्नयेकथादाशेम कथंहवींषिदद्याम अग्नेःअनुरूपंयज्ञंकर्तुमशक्ताःवयमित्यर्थः अ-थवास्मैभामिनेतेजस्विनेअग्नयेदेवजुष्टासर्वैःदेवैःसेवितव्यावाक्स्तुतिरपिकाकीदृश्युच्यते यादृशीं स्तुतिमपिकर्तुंनशक्ताइत्यर्थः अमृतोमरणरहितः ऋतावाऋतवान् सत्यवान् यज्ञवान्वाहोतादे-वानामाह्वाताहोमनिष्पादकोवायजिष्ठोऽतिशयेनयष्टाएवंभूतोयोग्निः मर्त्येषुमरणधर्मसुअस्मासुवर्त-मानःसन्देवान् इत्कृणोति हविर्भिर्युक्तान्करोत्येव तादृशायाग्नयेकथादाशेमेतिपूर्वेणान्वयः ॥ कथा थाहेतौचच्छन्दसीतिथाप्रत्ययः । भामिने भादीप्तौ अर्तिस्तुसुइत्यादिनामन्प्रत्ययः यस्तोमत्व-र्थीयइनिः । ऋतावा छन्दसीवनिपाविविमत्वर्थीयोवनिप् अन्येषामपिदृश्यतइतिदीर्घत्वम् ॥ १ ॥

१. जो अग्नि अमर, सत्यवान् देवाह्वानकारी और यज्ञ-सम्पादक हैं तथा जो मनुष्यों के बीच रहकर देवों को हवियुक्त करते हैं, उन अग्नि के हम अनुरूप हव्य कैसे प्रदान करेंगे? तेजस्वी अग्नि की, सब देवों के उपयुक्त, कैसी स्तुति करेंगे?

योअध्वरेषुशंतमऋतावाहोतातमूनमोभिराकृणुध्वम् ।
अग्निर्यद्वेर्मर्तायदेवान्त्सचाबोधातिमनसायजाति ॥२॥

यः । अध्वरेषु । शम्ऽतमः । ऋतऽवा । होता । तम् । ऊम् इति । नमःऽभिः । आ । कृणुध्वम् । अग्निः । यत् । वेः । मर्ताय । देवान् । सः । च । बोधाति । मनसा । यजाति ॥ २ ॥

योग्निःअध्वरेषुयागेषुशंतमः अतिशयेनसुखकारीऋतावासत्यवान्यथार्थदर्शीत्यर्थः होतादेवानामाह्वाताभवति हेऋत्विग्यजमानायूयंतमुएवमेवाग्निंनमोभिःस्तोत्रैःआकृणुध्वमभिमुखीकुरुत यद्यदायमग्निः मर्तायमनुष्यायजमानार्थंदेवान्वेः वेत्ति गच्छति तदानींसोग्निःयष्टव्यान्सर्वान्देवान् बोधातिचजानातिच ज्ञात्वाच मनसानमसावान् यजातिच हविर्भिःपूजयति अतस्तमेवाग्निमाकृणुध्वमितियोज्यम् ॥ वेः वीगत्यादिषु छन्दसिलुङ्लङ्लिटइतिवर्तमानेलङ् सिब्बहुलंलेटीतिप्रथमपुरुषैकवचनस्यमध्यमपुरुषैकवचनादेशः । बोधाति बुधअवगमने लेटयाडागमः शपःपित्त्वादनुदात्तत्वेधातुस्वरःशिष्यते यद्योगेप्रथमेतिनिघातप्रतिषेधः । मनसा मकारनकारयोःस्थानविपर्ययः ॥ २ ॥

२. जो अग्नि यज्ञ में अत्यन्त सुखकारी, यथार्थदर्शी और देवाह्वानकारी हैं, उन्हें स्तोत्र-द्वारा हमारे अभिमुख करो। जिस समय अग्नि मनुष्यों के लिए देवों के पास जाते हैं, उस समय वे देवों को जानते और मन या नमस्कार-द्वारा पूजा करते हैं।

तृतीयामृचमाह—

सहिक्रतुःसमर्यःससाधुर्मित्रोनभूदद्भुतस्यरथीः ।
तंमेधेषुप्रथमंदेवयन्तीर्विशउपब्रुवतेदस्ममारीः ॥३॥

सः । हि । क्रतुः । सः । मर्यः । सः । साधुः । मित्रः । न । भूत् । अद्भुतस्य । रथीः । तम् । मेधेषु । प्रथमम् । देवऽयन्तीः । विशः । उप । ब्रुवते । दस्मम् । आरीः ॥ ३ ॥

सह्यग्निःक्रतुःकर्मणांकर्तासएवमर्योमारयितावित्र्यस्योपसंहर्ता साधुःसाधयिताउत्पादयितापिसएव अद्भुतस्याभूतस्यालब्धस्यधनस्यरथीःरंहयिताप्रापयिताभूद्भवति तत्रदृष्टान्तः— मित्रोन यथासखाधनानिप्रापयति तद्वत् एवंभूतोयोग्निस्तमेवमेधेषुयज्ञेषुदेवयन्तीर्देवयन्त्योदेवानात्मनइच्छन्त्योविशःप्रजाःप्रथममुपब्रुवते स्तुतिभिरुपेत्यप्रधानभूतइतिकथयन्ति कीदृश्योविशःदस्मंदर्शनीयंतमग्निमारीर्गच्छन्त्यःभजन्तइत्यर्थः॥ मर्यः मृङ्प्राणत्यागे अस्मादन्तर्भावितण्यर्थाच्छन्दसिनिष्टर्क्येत्यादौनिपातनाद्यत् छत्यल्युटोबहुलमितिबहुलवचनात्कर्तरिकृत्यः यतोनावइत्याद्युदात्तत्वम् । देवयन्तीः वाछन्दसीतिपूर्वसवर्णदीर्घत्वम् । आरीः ऋगतौ जनिघसि-

स्यामिमिति बहुलग्रहणादस्मादपि इण् प्रत्ययः कृदिकारादक्तिनः इति ङीष् वाछन्दसीति पूर्वसवर्णदीर्घत्वम् प्रत्ययेनाद्युदात्तत्वम् ॥ ३ ॥

३. अग्नि यज्ञ-कर्त्ता हैं, अग्नि संसार के उपसंहारक और जनयिता हैं। सखा की तरह अग्नि अलभ्य धन देते हैं। देवाभिलाषी प्रजागण उन दर्शनीय अग्नि के समीप जाकर अग्नि को ही यज्ञ का प्रथम देवता मानकर स्तुति करते हैं।

**सनोनृणांनृतमोरिशादाअग्निर्गिरोवसावेतुधीतिम् ।**
**तनाचयेमघवानःशविष्ठावाजप्रसूताइषयन्तमन्म ॥४॥**

सः । नः । नृणाम् । नृऽतमः । रिशादाः । अग्निः । गिरः । अवसा । वेतु । धीतिम् । तना । च । ये । मघऽवानः । शविष्ठाः । वाजऽप्रसूताः । इषयन्त । मन्म ॥ ४ ॥

नृणां यज्ञस्य नेतॄणां मध्ये नृतमोऽतिशयेन नेता रिशादाः रिशानां शत्रूणां अत्ता भक्षयिता यद्वा रिशा हिंसका अस्यन्ति निरसिता एवंविधः सोऽग्निः नोऽस्माकं गिरः स्तुतीः अवसा हविर्लक्षणेनान्नेन युक्तां धीतिं कर्म च वेतु कामयताम् अपि च ये यजमानाः तना धनानामेतत् विस्तृतेन धनेन मघवानो धनवन्तः शविष्ठाः अतिशयेन बलिनः सन्तः वाजप्रसूताः प्रसूतं प्रेरितं वाजो हविर्लक्षणमन्नं यैः तादृशाः सन्तः अग्नेर्मननीयं स्तोत्रं इषयन्त एषयन्ति ऋत्विग्भिः कारयितुमिच्छन्ति तेषामपि स्तुतिं अग्निः कामयतामिति भावः ॥ नृणां नृचेत्युभयथाभावाद्दीर्घाभावः नामन्यतरस्यामिति नाम उदात्तत्वम् । तना तनु विस्तारे पचाद्यच् तृतीयैकवचनस्य सुपां सुलुगित्याकारः वृषादेराकृतिगणत्वादाद्युदात्तत्वम् । शविष्ठाः शव इति बलनाम अस्मायामेधास्रजो विनिः तत आतिशायनिक इष्ठन् विन्मतोर्लुगिति विनो लुक् टेरिति टिलोपः इष्ठनो नित्त्वादाद्युदात्तत्वम् । इषयन्त इष इच्छायां अस्मात् ण्यन्तात् छान्दसो लङ् संज्ञापूर्वकस्य विधेरनित्यत्वात् णौ लघूपधगुणाभावः अडुपदेशात् सार्वधातुकानुदात्तत्वे णिच एव स्वरः शिष्यते ॥ ४ ॥

४. अग्नि नेताओं के बीच उत्कृष्ट नेता और शत्रुओं के विनाशकारी हैं। अग्नि हमारी स्तुति और अन्नयुक्त यज्ञ की अभिलाषा करें तथा जो धनशाली और बलशाली यजमान लोग अन्न प्रदान करके अग्नि के मननीय स्तोत्र की इच्छा करते हैं, अग्नि उन लोगों की स्तुति की भी इच्छा करें।

**एवाग्निर्गोतमेभिर्ऋतावाविप्रेभिरस्तोष्टजातवेदाः ।**
**सएषुद्युम्नंपीपयत्सवाजंसपुष्टिंयातिजोषमाचिकित्वान् ॥५॥२६॥**

एव । अग्निः । गोतमेभिः । ऋतऽवा । विप्रेभिः । अस्तोष्ट ।
जातऽवेदाः । सः । एषु । द्युम्नम् । पीपयत् । सः । वाजम् । सः ।
पुष्टिम् । याति । जोषम् । आ । चिकित्वान् ॥ ५ ॥ २५ ॥

ऋतावा ऋतवान् यज्ञवान् जातवेदाः जातधनो जातप्रज्ञो वा अयमग्निः विप्रेभिः मेधाविभिर्गोतमेभिर्गोतमैर्ऋषिभिरेवमुक्तेन प्रकारेणास्तोष्ट स्तुतोऽभूत् स्तुतश्च सोऽग्निः एषु गोतमेषु द्युम्नं द्योतमानं सोमं पीपयत् अपिबत् यद्वा तानृषीन् पाययत् तथा सोऽग्निर्वाजं हविर्लक्षणमन्नं पीपयदित्येव एवं सोमलक्षणं चरुपुरोडाशादिलक्षणं हविश्च स्वीकृत्य सोऽग्निः जोषं अस्माभिः कृतं सेवनं आ चिकित्वान् आसमन्तात् जानन् पुष्टिं याति पोषं प्राप्नोतु यद्वा अस्माकं धनानि पोषं प्रापयतु ॥ गोतमेभिः ऋष्यन्धकवृष्णिकुरुभ्यश्चेति विहितस्याणः अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्चेति बहुषु लुक् । अस्तोष्ट स्तौतेः कर्मणि लुङि चिणभावश्छान्दसः । पीपयत् पा पाने ण्यन्तात् लुङि चङि रूपम् । जोषं जुषी प्रीतिसेवनयोः भावे घञ् ञित्त्वादाद्युदात्तत्वम् ॥ ५ ॥

५. यज्ञयुक्त और सर्वज्ञ अग्नि इसी प्रकार मेधावी गोतम आदि ऋषियों-द्वारा स्तुत हुए थे। अग्नि ने भी उन्हें प्रकाशमान सोमरस का पान और भोजन कराया था। हमारी सेवा जानकर अग्नि पुष्टि प्राप्त करें।

इति प्रथमस्य पञ्चमे पञ्चविंशो वर्गः ॥ २५ ॥

अभि त्वेति पञ्चर्चं पञ्चमं सूक्तं गोतमस्यार्षमाग्नेयं गायत्रं तथा चानुक्रान्तम्—अभि त्वा गायत्रं त्विति विनियोगो लैङ्गिकः ।

अभि त्वा गोतमा गिरा जातवेदो विचर्षणे । द्युम्नैरभि प्र णोनुमः ॥ १ ॥

अभि । त्वा । गोतमाः । गिरा । जातऽवेदः । विऽचर्षणे । द्युम्नैः ।
अभि । प्र । नोनुमः ॥ १ ॥

हे जातवेदो जातानां वेदितः विचर्षणे विशेषेण सर्वस्य द्रष्टः एवंभूताग्ने त्वां गोतमाः अस्मत्कुलस्य द्रष्टा गोतमऋषिः ऋषेरेकत्वेऽपि पूजार्थं बहुवचनं गिरा स्तोत्रलक्षणया वाचा अभि आभिमुख्येन अस्तौदिति शेषः वयमपि त्वां द्युम्नैः त्वदीयगुणप्रकाशकैर्मन्त्रैः अभि प्र णोनुमः आभिमुख्येन पुनःपुनः स्तुमः ॥ नोनुमः णु स्तुतौ अस्माद्यङ्लुगन्तात् लट् उपसर्गादसमासेऽपीति णत्वम् ॥ १ ॥

१. हे उत्पन्नज्ञाता और सर्वद्रष्टा अग्नि! गोतम-वंशीयों ने तुम्हारी स्तुति की है। द्युतिमान् स्तोत्र-द्वारा हम तुम्हारी स्तुति करते हैं।

द्वितीयामृचमाह—

तमुत्वागोतमोगिरारायस्कामोदुवस्यति। द्युम्नैरभिप्रणोनुमः ॥२॥

तम् । ऊम् इति । त्वा । गोतमः । गिरा । रायःऽकामः । दुवस्यति । द्युम्नैः । अभि । प्र । नोनुमः ॥ २ ॥

रायस्कामोधनकामोगोतमोयमग्निंगिरास्तुत्यादुवस्यतिपरिचरति तमु तमेवत्वांद्युम्नैर्द्योतमानैःस्तोत्रैः आभिमुख्येनपुनःपुनःस्तुमः ॥ रायस्कामः रायोधनानिकामयतइतिरायस्कामः कर्मण्यण् तत्पुरुषेकृतिबहुलमितिबहुलवचनादलुक् ऊडिदमित्यादिनापूर्वपदस्यविभक्तेरुदात्तत्वम् दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् अतःकृकमिकंसकुम्भेतिविसर्जनीयस्यसत्वम् । दुवस्यति दुवसउपतापे परिचरणेकण्ड्वादिः ॥ २ ॥

२. धनाकाङ्क्षी होकर गोतम जिन अग्नि की स्तुति-द्वारा सेवा करते हैं, उन्हीं की, गुण-प्रकाशक स्तोत्र-द्वारा, हम बार-बार स्तुति करते हैं।

तृतीयामृचमाह—

तमुत्वावाजसातममङ्गिरस्वद्धवामहे। द्युम्नैरभिप्रणोनुमः ॥३॥

तम् । ऊम् इति । त्वा । वाजऽसातमम् । अङ्गिरस्वत् । हवामहे । द्युम्नैः । अभि । प्र । नोनुमः ॥ ३ ॥

हेअग्ने वाजसातमंवाजानामन्नानामतिशयेनसनितारंदातारंतमेवत्वांअङ्गिरस्वत् अङ्गिरसइवहवामहेआह्वयामः शिष्टंगतम् ॥ वाजसातमम् षणुदाने जनसनखनक्रमगमोविट् विड्वनोरनुनासिकस्यादित्यात्वम् अतिशयेनवाजसाःवाजसातमः तमपःपित्त्वादनुदात्तत्वेकृदुत्तरपदप्रकृतिस्वरत्वंशिष्यते। अङ्गिरस्वत् तेनतुल्यमितिवतिः नभोऽङ्गिरोमनुषांवत्युपसंख्यानमितिभत्वेपदत्वाभावाद्रुत्वाद्यभावः ॥ ३ ॥

३. अङ्गिरा की तरह सर्वापेक्षा अधिकतर अन्नदाता अग्नि को हम बुलाते हैं और द्युतिमान् स्तोत्र-द्वारा स्तुति करते हैं।

तमुत्वावृत्रहन्तमंयोदस्यूँरवधूनुषे। द्युम्नैरभिप्रणोनुमः ॥४॥

तम् । ऊम् इति । त्वा । वृत्रहन्ऽतमम् । यः । दस्यून् । अवऽधूनुषे । द्युम्नैः । अभि । प्र । नोनुमः ॥ ४ ॥

हेऽग्ने दस्यूनुपक्षपयित्नूनराक्षसादीन्यस्त्वम् वधूनुषेअवचाट्यसि स्थानात्प्रच्यावयसि वृत्रहन्तमंवृत्राणांपाप्मनांअतिशयेनहन्तारंतमुत्वांतमेवत्वांद्युम्नैरित्यादिपूर्ववत् ॥ वृत्रहन्तमं अतिशयेनवृत्रहावृत्रहन्तमः पदसंज्ञायांनलोपेनाद्गस्येतितमपोनुट् । दस्यून् दीर्घादटिसमानपादेइति नकारस्यरुत्वम् अत्रानुनासिकःपूर्वस्यतुवेतिअकारःसानुनासिकः ॥ ४ ॥

४. हे अग्निदेव ! तुम दस्युओं, अनार्यों या शत्रुओं को स्थान-भ्रष्ट करो । तुम सर्वापेक्षा शत्रु-हन्ता हो । द्युतिमान् स्तोत्र-द्वारा हम तुम्हारी स्तुति करते हैं ।

अवोचाम रहूगणा अग्नये मधुमद्वचः । द्युम्नैरभि प्र णोनुमः ॥५॥२६॥

अवोचाम । रहूगणाः । अग्नये । मधुऽमत् । वचः । द्युम्नैः । अभि । प्र । नोनुमः ॥ ५ ॥ २६ ॥

ऋषिःकृतंस्तोत्रंअनयोपसंहरति रहूगणाःरहूगणस्यपुत्रावयंगोतमाः अग्नयेअग्न्यादिगुणयुक्तायदेवायमधुमद्वचः माधुर्योपेतंवचनंअवोचाममावादिष्म तद्वचनरूपैर्द्युम्नैर्द्योतमानैःस्तोत्रैःपुनःपुनरग्निंवयमभिप्रणोनुमः आभिमुख्येनप्रकर्षेणस्तुमः ॥ ५ ॥

५. हम रहूगण-वंशीय हैं । हम अग्नि के लिए माधुर्ययुक्त वाक्य का प्रयोग करते और द्युतिमान् स्तोत्र-द्वारा स्तुति करते हैं ।

इतिप्रथमस्यपञ्चमेषड्विंशोवर्गः ॥ २६ ॥

हिरण्यकेशइतिद्वादशर्चंषष्ठंसूक्तंरहूगणपुत्रस्यगोतमस्यार्षं अत्रानुक्रम्यते—हिरण्यकेशो द्वादशाद्यौदृचौत्रैष्टुभौष्णिहौपूर्वोग्नयेषामध्यमायेतिपूर्वत्रगायत्रंत्विस्युक्तत्वादिदमपिगायत्रंसूक्तं एतावांस्तुविशेषः आद्यस्तृचस्त्रैष्टुभः द्वितीयस्त्वौष्णिहः प्रथमतृचस्यमध्यमस्थानोवैद्युतोग्निःसुक्ताग्निर्वादेवता शिष्टानवर्चःकेवलाग्निदेवत्याकाः प्रातरनुवाकस्याग्नेयेक्रतौत्रैष्टुभेछन्दसिआश्विनशस्त्रेचायस्तृचः सूत्रितंच—हिरण्यकेशइतितिस्रोपरस्यमस्यमइवइतिसूक्तेइति । कारीर्यामग्नेर्धामच्छदः हिरण्यकेशइतिद्वेऋचौयाज्यानुवाक्ये सूत्रितंच—हिरण्यकेशोरजसोविसारइतिद्वे त्वंत्याचिदच्युताग्नेपशुर्नयवसेधामान्तेविश्वंभुवनमधिश्रितमितिद्वे इति ।

तत्रप्रथमामृचमाह—

हिरण्यकेशो रजसो विसारेऽहिर्धुनिर्वातइव ध्रजीमान् ।
शुचिभ्राजा उषसो नवेदा यशस्वतीरपस्युवो न सत्याः ॥१॥

हिरण्यऽकेशः । रजसः । विऽसारे । अहिः । धुनिः । वातःऽइव । ध्रजीमान् । शुचिऽभ्राजाः । उषसः । नवेदाः । यशस्वतीः । अपस्युवः । न । सत्याः । १ ॥

हिरण्यकेशः हितरमणीयाः केशस्थानीयाज्वाला यस्य स तथोक्तः सुवर्णवद्दीप्यमानज्वालो-ऽग्निः आगत्य हन्ता मेघानां धुनिः तेषां कम्पयिता वात इव वायुरिव ध्रजीमान् शीघ्रगतियुक्तः एवं-भूतो वैद्युतोऽग्निः रजस उदकस्य विसारे विसरणे मेघान्निर्गमने निमित्तभूते सति शुचिभ्राजाः शोभन-दीप्तिः सन् मेघाज्जलानि निर्गमयितुं जानाति उषसः उषोदेवताः नवेदाः न विदन्तीति नवेदाः मेघादु-दकस्य निःसारणं अग्निरेव जानाति उषसस्तु न जानन्तीत्यर्थः अज्ञाने दृष्टान्तः—यशस्वतीः अन्न-युक्ताः अन्नवत्यः अपस्युवः अपः कर्म आत्मन इच्छन्त्यः सत्याः अवितथा इव प्रजा एवंभूताः प्र-जा इव अथो उषसामज्ञानेन अग्निः प्रशस्यते न तु ता निन्द्यन्ते नहि निंदा निन्द्यं निन्दितुं अपि तु स्तुत्यं स्तो-तुमिति न्यायात् ॥ ध्रजीमान् ध्रज गतौ इन् सर्वधातुभ्य इति भावे इन्प्रत्ययः तदो मतुप् तस्यापि त्वा-दनुदात्तत्वे इनो नित्त्वात् प्रातिपदिकस्याद्युदात्तत्वम् । नवेदाः नञ्पूर्वाद्विदेः पचाद्यच् नभ्राण्नपान्नवेदा-इत्यादिना नञः प्रकृतिभावः । अपस्युवः अपस्शब्दात् सुप आत्मनः क्यच् क्याच्छन्दसीत्युप्रत्ययः यन्वादीनां छन्दसि बहुलमुपसंख्यानमिति उवङ् ॥ १ ॥

१. सुवर्ण केशवाले अग्नि (विद्युत्-रूप में) हननशील मेघ को कम्पित करते और वायु की तरह शीघ्रगामी हैं। वे सुन्दर दीप्ति से युक्त होकर मेघ से वारि-वर्षण करना जानते हैं। उषा यह बात नहीं जानती। उषा अन्नशाली, सरल और निजकार्य-परायण प्रजा की तरह है।

आ ते॑ सुप॒र्णा अ॑मिनन्तँ॒ एवैः॑ कृ॒ष्णो नो॑नाव वृष॒भो यदी॒दम् ।
शि॒वाभि॒र्न स्मय॑मानाभि॒रागा॒त्पत॑न्ति॒ मिहः॑ स्त॒नय॑न्त्य॒भ्रा ॥२॥

आ । ते॒ । सु॒ऽप॒र्णाः । अ॒मि॒न॒न्त॒ । एवैः॑ । कृ॒ष्णः । नो॒ना॒व॒ । वृ॒ष॒भः । यदि॑ । इ॒दम् । शि॒वाभिः॑ । न । स्मय॑मानाभिः । आ । अ॒गा॒त् । पत॑न्ति । मिहः॑ । स्त॒नय॑न्ति । अ॒भ्रा ॥ २ ॥

हे अग्ने ते तव सुपर्णाः शोभनपतनाः रश्मयः एवैर्गन्तृभिर्मरुद्भिः सह अमिनन्त आ समन्ता-न्मेघं हिंसन्ति वर्षणार्थं ताडयन्ति महतश्च कृष्णः कृष्णवर्णो वृषभो वर्षिता मेघः नोनाव भृशं श-ब्दमकरोत् यदि यदा इदमीदृशं कर्म तदानीं शिवाभिः सुखकारिणीभिः स्मयमानाभिः हसनवतीभिः कान्तिभिरिव शुभ्रवर्णाभिः फेनयुक्ताभिरिवाद्भिर्विद्युद्भिर्वा सह आगात् वैद्युताग्निप्रेरितः पर्जन्य आ-गच्छति तदनन्तरं मिहः आपः पतन्ति दिवः सकाशात् प्रवृष्टा भवन्ति अभ्रा अभ्राणि अद्भिः पूर्णा मेघाः स्त-नयन्ति ह्रस्वतः शब्दं कुर्वन्ति ॥ अमिनन्त मीञ् हिंसायां क्र्यादिकः व्यत्ययेनान्तादेशः ईशाभ्य-स्तादित्वात्प्रकृतिभावः अणोऽप्रगृह्यस्येति वैकल्पिकमवसाने विधीयमानमनुनासिकत्वम् व्यत्ययेना-ऽसंहितायामपि द्रष्टव्यम्। नोनाव नौतेर्यङ्लुगन्तात् लिटि अमन्त्रे इति निषेधादाम्प्रत्ययाभावः । स्म-यमानाभिः ष्मिङ् ईषद्धसने शपः पित्त्वादनुदात्तत्वं शानचो लसार्वधातुकस्वरेण धातुस्वरः शिष्यते ।

स्तनयन्ति स्तन शब्दे चुरादिरदन्तः यदन्निस्तनयन्तीत्यनयोः पादादित्वाद्वाक्यादित्वाद्वा निघाताभावः॥ २ ॥

२. अग्नि! तुम्हारी सुन्दर और पतनशील किरण, मरुतों के साथ, मेघ को ताड़ित करती है। कृष्णवर्ण और वर्षणशील मेघ गरजता है। मेघ सुखकर और हास्य-युक्त वृष्टि-बिन्दु के साथ आता है। पानी गिर रहा है, मेघ गरज रहा है।

यदीमृतस्य पयसा पियानो नयन्नृतस्य पथिभी रजिष्ठैः।
अर्यमा मित्रो वरुणः परिज्मा त्वचं पृञ्चन्त्युपरस्य योनौ॥३॥

यत्। ईम्। ऋतस्य। पयसा। पियानः। नयन्। ऋतस्य। पथिऽभिः। रजिष्ठैः। अर्यमा। मित्रः। वरुणः। परिऽज्मा। त्वचम्। पृञ्चन्ति। उपरस्य। योनौ॥ ३ ॥

यदीं यदायमग्निः ऋतस्योदकस्य पयसा पयोवत्सारभूतेन रसेन पियानो जगदाप्यायनं कुर्वन् आप्यायितं च जगत् ऋतस्योदकस्य सम्बन्धिभिः रजिष्ठैः ऋजुतमैः पथिभिर्मार्गैः स्नानपानादिभिः नयन् प्रापयन् वर्तते तदानीम् अर्यमा मित्रो वरुणश्च परिज्मा परितो गन्ता मरुद्गणश्च उपरस्य मेघस्य योनौ वृष्ट्युदकोत्पत्तिस्थाने त्वचं पृञ्चन्ति वृष्ट्युदकस्याच्छादकं प्रदेशं स्वकीयैरायुधैः संयोजयन्ति उद्घाटयन्तीत्यर्थः॥ पियानः स्फायी ओप्यायी वृद्धौ बहुलं छन्दसीति विकरणस्य लुक् धातोर्व्यत्ययेन पीभावः अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः शिष्यते। रजिष्ठैः ऋजुशब्दादिष्ठनि विभाषर्जोश्छन्दसीति ऋकारस्य रत्वम् टेरिति टिलोपः। पृञ्चन्ति पृची संपर्के रौधादिकः ॥ ३ ॥

३. जिस समय अग्नि, वृष्टि-जल-द्वारा, संसार को पुष्ट करते हैं तथा जल के व्यवहार का सरल उपाय (स्नान, पान आदि) दिखा देते हैं, उस समय अर्यमा, मित्र, वरुण और समस्त दिग्गामी मरुद्गण मेघ के जलोत्पत्ति-स्थान का आच्छादन उद्घाटित कर देते हैं।

यावदनुवाकस्याग्नेये क्रतौ औष्णिहे छन्दसि आश्विनशस्त्रे चाग्ने वाजस्येत्याद्यास्तिस्रः। सूत्रितं च—अग्ने वाजस्येति तिस्रः पुरूण्यग्न इति।

अग्ने वाजस्य गोमत ईशानः सहसो यहो।
अस्मे धेहि जातवेदो महि श्रवः॥ ४ ॥

अग्ने। वाजस्य। गोऽमतः। ईशानः। सहसः। यहो इति। अस्मे इति। धेहि। जातऽवेदः। महि। श्रवः॥ ४ ॥

हे सहसो यहो बलस्य पुत्राग्ने गोमतो बहुभिर्गोभिर्युक्तस्य वाजस्यान्नस्य ईशान ईश्वरस्त्वमसि अतोऽस्मे अस्मासु हे जातवेदो जातधन जातानां विदितवाग्ने महि महत् भूतं श्रवोऽन्नं धेहि स्थापय ॥ सहसो यहो पराङ्गवद्भावादामन्त्रितस्य चेति षष्ठ्यामन्त्रितसमुदायो निहन्यते । अस्मे सुपां सुलुगिति सप्तम्याः शेआदेशः ॥ ४ ॥

४. हे बल-पुत्र अग्नि! तुम प्रभूत गो-युक्त अन्न के मालिक हो। हे सर्वभूतज्ञाता! हमें तुम बहुत धन दो।

**सइ॑धा॒नोवसु॒ष्कवि॑र॒ग्निरी॒ळेन्यो॒गि॒रा । रे॒वद॒स्मभ्यं॑पुर्वणीकदीदिहि ॥ ५ ॥**

सः । इ॒धा॒नः । वसुः॑ । क॒विः । अ॒ग्निः । ई॒ळेन्यः॑ । गि॒रा ।
रे॒वत् । अ॒स्मभ्य॑म् । पु॒रु॒ऽअ॒नी॒क॒ । दी॒दि॒हि॒ ॥ ५ ॥

सोऽग्निः इधानो दीपनशीलः वसुर्निवासयिता सर्वेषां कविः क्रान्तदर्शनो मेधावी वा गिरा स्तोत्ररूपया वाचा ईळेन्यः स्तोतव्यो भवति हे पुर्वणीक अनीकं मुखं पुरुभिर्बह्वीभिरनीकस्थानीयाभिर्ज्वालाभिर्युक्ताग्ने अस्मभ्यं रेवद्धनयुक्तमन्नं यथा भवति तथा दीदिहि दीप्यस्व ॥ इधानः ञिइन्धी दीप्तौ ताच्छीलिकश्चानश् बहुलं छन्दसीति विकरणस्य लुक् । ईळेन्यः ईड स्तुतौ औणादिक एन्यप्रत्ययः । रेवत् रयेर्मतौ बहुलमिति सम्प्रसारणम् छन्दसीर इति मतुपो वत्वम् रेशब्दाच्च मतुप उदात्तत्वं वक्तव्यमिति मतुप उदात्तत्वम् । दीदिहि दीदेतिश्छान्दसो दीप्तिकर्मा ॥ ५ ॥

५. दीप्तियुक्त, निवास-स्थानदाता और मेधावी अग्नि स्तोत्र-द्वारा प्रशंसनीय हैं। हे बहुमुख अग्नि! जिस प्रकार हमारे पास धन-युक्त अन्न हो, उसी प्रकार दीप्ति प्रकाशित करो।

षष्ठीमृचमाह—

**क्ष॒पोरा॑जन्नु॒तत्मनाग्ने॒वस्तो॑रु॒तोषसः॑ ।**
**सति॑ग्मजम्भर॒क्षसो॑दह॒प्रति॑ ॥ ६ ॥ २७ ॥**

क्ष॒पः । रा॒ज॒न् । उ॒त । त्मना॑ । अग्ने॑ । वस्तोः॑ । उ॒त । उ॒षसः॑ ।
सः । ति॒ग्म॒ऽज॒म्भ॒ । र॒क्षसः॑ । द॒ह॒ । प्रति॑ ॥ ६ ॥ २७ ॥

हे राजन् राजनशीलाग्ने क्षपः क्षपय राक्षसादीन् स्वकीयैः पुरुषैर्बाधस्व उत अपि च त्मना न केवलमन्यैरेव आत्मनापि तान् बाधस्व कदेति चेद् उच्यते वस्तोः सर्वाण्यहानि उत अपि च उषसः उषःकालोपलक्षिता रात्रीः अत्यन्तसंयोगे द्वितीया सर्वेष्वहस्सु सर्वासु रात्रिषु चेत्यर्थः हे तिग्मजम्भ तीक्ष्णमुखाग्ने रक्षसो राक्षसान् उक्तप्रकारेण क्षपयित्वा स एव त्वं प्रतिदह प्रत्येकं दह न किंचिदवशिष्टं कुर्वित्यर्थः ॥ क्षपः क्षपयतेर्लोडर्थे छान्दसो लङ् छन्दस्युभयथेति शप आर्धधातुकत्वात्

णेरनिटीति णिलोपः उदात्तनिवृत्तिस्वरेणाद्युदात्तत्वम्। त्मना मन्त्रेष्वाङ्यादेरात्मन इत्याकारलोपः। रक्षसः रक्ष पालने रक्षितव्यमस्मादिति रक्षः भीमादित्वादपादाने असिप्रत्ययः क्षरतेर्वाण्यन्तादसिप्रत्यये णिलोपः वर्णविपर्ययश्च अस्य च रक्षःशब्दस्य असिप्रत्ययान्तत्वात्प्रत्ययस्वरएव सिध्यते ॥ ६ ॥

६. उज्ज्वल अग्नि! दिन अथवा रात्रि में स्वयं या प्रजा-द्वारा राक्षसादि को विताड़ित करो। हे तीक्ष्ण-मुख अग्नि! राक्षस को दहन करो।

॥ इति प्रथमस्य पञ्चमे सप्तविंशो वर्गः ॥ २७ ॥

प्रातरनुवाकस्याग्नेये क्रतौ गायत्रे छन्दसि अवा नो अग्न इत्याद्याः षळृचः सूत्रितं च—अवा नो अग्न इति षळग्निमीळे भुजां यविष्ठमिति आश्विनशस्त्रे चैवाः शंसनीयाः प्रातरनुवाकातिदेशात्।

षट्सु प्रथमां सूक्ते सप्तमीमृचमाह—

अवा नो अग्न ऊतिभिर्गायत्रस्य प्रभर्मणि। विश्वासु धीषु वन्द्य ॥ ७ ॥

अव। नः। अग्ने। ऊतिऽभिः। गायत्रस्य। प्रऽभर्मणि।
विश्वासु। धीषु। वन्द्य ॥ ७ ॥

विश्वासु धीषु सर्वेषु कर्मसु वन्द्य स्तुत्य हे अग्ने गायत्रस्य गायत्रसाम्नः गायत्रीछन्दस्कस्य सूक्तस्य वा प्रभर्मणि प्रभरणे सम्पादने निमित्तभूते सति नोऽस्मान् ऊतिभिः त्वदीयैः पालनैः अव रक्ष। अव द्व्यचोऽतस्तिङ इति संहितायां दीर्घत्वम् ॥ ७ ॥

७. अग्निदेव! तुम सारे यज्ञों में स्तुति-भाजन हो। हमारी गायत्री-द्वारा तुष्ट होकर, रक्षण-कार्य-द्वारा, हमें पालित करो।

आ नो अग्ने रयिं भर सत्रासाहं वरेण्यम्। विश्वासु पृत्सु दुष्टरम् ॥ ८ ॥

आ। नः। अग्ने। रयिम्। भर। सत्राऽसहम्। वरेण्यम्। विश्वासु।
पृत्ऽसु। दुस्तरम् ॥ ८ ॥

हे अग्ने रयिं धनं नोऽस्मभ्यम् आ भर प्रयच्छ कीदृशं सत्रासाहं सत्रा सह युगपदेव दारिद्र्यस्य नाशकं वरेण्यं सर्वैर्वरणीयं विश्वासु पृत्सु सर्वेषु सङ्ग्रामेषु दुष्टरं शत्रुभिस्तरीतुमशक्यम् ॥ सत्रासाहं छन्दसि सह इति ण्विः। वरेण्यं वृञ एण्यः। पृत्सु पदादिषु मांस्पृत्स्नूनामुपसंख्यानमिति पृतनाशब्दस्य पृदादेशः सावेकाचस्तृतीयादिर्विभक्तेरुदात्तत्वम् ॥ ८ ॥

८. अग्नि! हमें दारिद्र्य-विनाशी, सबके स्वीकार योग्य और सारे संग्रामों में धन दो।

आयुष्कामेष्ट्यां प्रथमस्याज्यभागस्यानुवाक्या आनोअग्नइति सूत्रितंच—आयुष्कामेष्ट्यांअग्नीवाआयुष्मन्तावानोअग्नेसुचेतुनेति । महापितृयज्ञेऽप्येवंप्रथमस्याज्यभागस्यानुवाक्या सूत्रितंच—अग्नीवायुष्मन्तौसोमोवर्धस्वेति ।

नवमीमृचमाह—

आनो॑अग्नेसु॒चेतु॑नार॒यिंवि॒श्वायु॑पोषसम् । मा॒र्डी॒कंधे॑हिजी॒वसे॑ ॥ ९ ॥

आ । नः॒ । अ॒ग्ने॒ । सु॒ऽचेतु॑ना । र॒यिम् । वि॒श्वायु॑ऽपोषसम् ।
मा॒र्डी॒कम् । धे॒हि॒ । जी॒वसे॑ ॥ ९ ॥

हेअग्ने नोऽस्माकंजीवसे जीवनायसुचेतुनाशोभनेनज्ञानेनयुक्तंरयिंधनं आधेहि आस्थापय कीदृशंमार्डीकं मृडीकंसुखं तद्धेतुभूतं विश्वायुपोषसंसर्वस्मिन्नायुषिदेहादेःपोषकं यावज्जीवमस्खलद्भोगपर्याप्तमित्यर्थः ॥ सुचेतुना चितीसंज्ञाने औणादिकउप्रत्ययः कृदुत्तरपदप्रकृतिस्वरत्वम् । विश्वायुपोषसं विश्वमायुरस्मिन्शरीरादौतद्विश्वायुः बहुव्रीहौविश्वंसंज्ञायामितिपूर्वपदान्तोदात्तत्वम् पुष्णातीतिविश्वायुपोषाः गतिकारकयोरपिपूर्वपदप्रकृतिस्वरत्वंचेत्युत्तरपदप्रकृतिस्वरत्वंच सकारलोपश्छान्दसः दीर्घायुत्वायवर्चसइतियथा ॥ ९ ॥

९. अग्नि! हमारे जीवन के लिए सुन्दर ज्ञानयुक्त, सुख-हेतु-भूत और सारी आयु का पुष्टि-कारक धन प्रदान करो।

दशमीमृचमाह—

प्रपू॒तास्ति॒ग्मशो॑चिषे॒वाचो॑गोतमा॒ग्नये॑ । भर॑स्वसुम्न॒युर्गिरः॑ ॥ १० ॥

प्र । पू॒ताः । ति॒ग्मऽशो॑चिषे । वाचः॑ । गो॒त॒म॒ । अ॒ग्नये॑ ।
भर॑स्व । सु॒म्न॒ऽयुः । गिरः॑ ॥ १० ॥

हेगोतमसूक्तद्रष्टः सुम्नयुःसुम्नंधनमात्मनइच्छंस्त्वंतिग्मशोचिषेतीक्ष्णज्वालायाग्नयेपूताः शुद्धावाचःअग्नेर्गुणानामभिधायिनीः गिरःस्तुतीः प्रभरस्व प्रकर्षेणसम्पादय ॥ तिग्मशोचिषे तिजनिशाने युक्तिजिभ्यांकुत्वंचेतिमक् तिग्मानिशोचींषियस्य बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । सुम्नयुः सुम्नशब्दात्क्यचिनच्छन्दस्यपुत्रस्येतीत्वदीर्घयोःप्रतिषेधः क्याच्छन्दसीत्युप्रत्ययः ॥ १० ॥

१०. हे धनाभिलाषी गोतम! तीक्ष्ण-ज्वालायुक्त अग्नि की विशुद्ध स्तुति करो।

यः । अ॒ग्नीषोमा॑ । ह॒विषा॑ । स॒प॒र्यात् । दे॒व॒द्रीचा॑ । मन॑सा । यः । घृ॒तेन॑ । तस्य॑ । व्र॒तम् । र॒क्ष॒त॒म् । पा॒त॒म् । अंह॑सः । वि॒शे । जना॑य । महि॑ । शर्म॑ । य॒च्छ॒त॒म् ॥ ८ ॥

योयजमानः अग्नीषोमा अग्नीषोमौ देवद्रीचादेवानञ्चतादेवतापरायणेनश्रद्धायुक्तेन मनसान्तःकरणेनयुक्तःसन्हविषा चरुपुरोडाशादिनासपर्यात् सपर्यतिपरिचरति यश्चयजमानो-घृतेनाज्येनाग्नीषोमौपरिचरति तस्ययजमानस्यव्रतंकर्मरक्षतं अंहसः पापात्तंचयजमानं पातंरक्ष-तम् विशेयागेषुप्रविशते तस्मैजनाययजमानाय महिमहत्प्रभूतं शर्मसुखंयच्छतंदत्तम् ॥ अग्नी-षोमा देवताद्वन्द्वेचेत्युभयपदप्रकृतिस्वरत्वम् । सपर्यात् सपरपूजायां कण्ड्वादिः लेटयाडागमः । देवद्रीचा देवान् अञ्चतीतिदेवद्र्यङ् अञ्चतेःक्विन्गित्यादिनाक्विन् अनिदितामितिनलोपः विष्व-ग्देवयोश्चटेरद्र्यञ्चतावप्रत्ययेइति देवशब्दस्यटेरद्र्यादेशः तृतीयैकवचने अचइत्यकारलोपेचौ-इतिदीर्घत्वम् कृदुत्तरपदप्रकृतिस्वरत्वेप्राप्ते अद्रिसध्र्योरन्तोदात्तनिपातनंकृत्स्वरनिवृत्त्यर्थमि-तिवचनादद्र्यादेशोऽन्तोदात्तोनिपातितः । विशे सावेकाचइतिविभक्तेरुदात्तत्वम् ॥ ८ ॥

८. अग्नि और सोम, जो यजमान देवता-परायण चित्त से हव्य-द्वारा अग्नि और सोम की पूजा करता है, उसके व्रत की रक्षा करो। उसे पाप से बचाओ तथा उस यज्ञ-रत व्यक्ति को प्रभूत सुख दो।

पौर्णमासयागेऽग्नीषोमीयस्ययागस्यअग्नीषोमेत्येषानुवाक्या तथाचसूत्रितंउक्तादेवता-द्वितिखण्डे—अग्नीषोमासवेदसायुवमेतानिदिविरोचनानीति ।

अ॒ग्नीषो॑मा॒सवे॑दसा॒सहू॑तीवनतं॒गिरः॑ । सं॑दे॑व॒त्राब॑भूवथुः ॥९॥

अग्नीषो॑मा । स॒ऽवे॑दसा । सहू॑ती॒ इति॒ स॒ऽहू॑ती । व॒न॒त॒म् । गिरः॑ । सम् । दे॒व॒ऽत्रा । ब॒भू॒व॒थुः ॥ ९ ॥

हेअग्नीषोमौ युवांसवेदसा समानेनएकेनवेदसाहविर्लक्षणेनधनेनयुक्तौसहूतीसमानाह्वानौ सन्तौ गिरः अस्मदीयाः स्तुतीर्वनतं संभजेथां देवत्रा देवेषुसर्वेषु यौयुवांसंबभूवथुः संभूतौ संभावितौयद्वास्तौस्थः राजानौवाएतौदेवतानांयदग्नीषोमावितिश्रुतेः[1] ॥ सवेदसा समानंवेदोय-योः समानस्यच्छन्दसीतिसभावः । वनतं वनषणसंभक्तौ । देवत्रा देवमनुष्यपुरुषपुरुमर्त्येभ्यो-द्वितीयासप्तम्योर्बहुलमितित्राप्रत्ययः ॥ ९ ॥

९. अग्नि और सोम, तुम सारे वेदों में प्रशंसनीय, समान-धन-युक्त और एकत्र आह्वान-योग्य हो। तुम हमारी स्तुति सुनो।

---

१ तै० सं० २, ६, २।

दशमीमृचमाह—

अग्नीषोमावनेनवांयोवांघृतेनदाशति। तस्मैंदीदयतंबृहत्॥१०॥

अग्नीषोमौ। अनेन। वाम्। यः। वाम्। घृतेन। दाशति। तस्मै। दीदयतम्। बृहत्॥ १० ॥

हेअग्नीषोमौ वांयुवयोःसंबन्धीयोयजमानः अनेनघृतेनउत्पवनादिभिःसंस्कृतेनाज्येनयु-क्तंहविः वांयुवाभ्यांदाशतिप्रयच्छति तस्मैयजमानायबृहत्प्रभूतंधनंदीदयतंप्रकाशयतंप्रयच्छतमि-त्यर्थः॥दाशति दाशृदाने शप्तिपोःपित्त्वादनुदात्तत्वेधातुस्वरः यद्वृत्तयोगादनिघातः। दीदयतम् दीदयतिर्दीप्तिकर्मा ॥ १० ॥

१०. अग्नि और सोम, जो तुम्हें घृत प्रदान करता है, उसे प्रभूत धन दो।

एकादशीमृचमाह—

अग्नीषोमाविमानिनोयुवंहव्याजुजोषतम्। आयातमुपनःसचा॥११॥

अग्नीषोमौ। इमानि। नः। युवम्। हव्या। जुजोषतम्। आ। यातम्। उप। नः। सचा॥ ११ ॥

हेअग्नीषोमौ युवंयुवांनोऽस्मदीयानीमानिहव्याहवींषिजुजोषतंसेवेथाम् तदर्थंनोऽस्मान्स-चासह युवामुपायातंउपगच्छतम्॥ जुजोषतं जुषीप्रीतिसेवनयोः लोटिव्यत्ययेनशप् छान्दसंद्वि-र्वचनम् यद्वा विकरणस्यबहुलंछन्दसीतिश्लुः ततोव्यत्ययेनशप् बहुलंछन्दसीतिविकल्पमिति वचनात् नाभ्यस्तस्याचिपितीतिलघूपधगुणप्रतिषेधाभावः॥ ११ ॥

११. अग्नि और सोम, हमारा यह हव्य ग्रहण करो और एकत्र आगमन करो।

द्वादशीमृचमाह—

अग्नीषोमापिपृतमर्वतोनआप्यायन्तामुस्रियाहव्यसूदः।
अस्मेबलानिमघवत्सुधत्तंकृणुतंनोअध्वरंश्रुष्टिमन्तम्॥१२॥२१॥

अग्नीषोमा। पिपृतम्। अर्वतः। नः। आ। प्यायन्ताम्। उस्रियाः। हव्यऽसूदः। अस्मे इति। बलानि। मघवत्ऽसु। धत्तम्। कृणुतम्। नः। अध्वरम्। श्रुष्टिऽमन्तम्॥ १२ ॥ २१ ॥

हे अग्नीषोमौ नोऽस्माकं अर्वतोऽश्वान्पिपृतंपालयतम् हव्यसूदः क्षीरादिहविषामुत्पादयित्र्यः उस्रियाअस्मदीयागावःआप्यायन्तां आप्यायिताःप्रवृद्धाःसन्तु मघवत्सुहविर्लक्षणधनयुक्तेषु अस्मे अस्मासुबलानिधत्तंस्थापयतम् तथानोऽस्माकंअध्वरंयागंश्रुष्टिमन्तंधनयुक्तंकुरुतम् ॥ पिपृतं पृपालनपूरणयोः पृइत्येके जुहोत्यादित्वाच्छपःश्लुः अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वम् ।हव्यसूदः हव्यंसूदन्तेक्षरन्तीतिहव्यसूदः षूदक्षरणे क्विप् । अस्मे सुपांसुलुगितिसप्तम्याःशेआदेशः । श्रुष्टिमन्तं श्रुष्टीतिधननाम श्रुआशुअश्नुतेव्याप्नोतेर्वाश्रुष्टिः पृषोदरादिः ह्रस्वनुड्भ्यांमतुबितिमतुपउदात्तत्वम् ॥ १२ ॥

१२. अग्नि और सोम, हमारे अश्वों की रक्षा करो। हमारी क्षीर आदि हव्य की उत्पादिका गायें वर्द्धित हों। हम धनशाली हों; हमें बल प्रदान करो। हमारा यज्ञ धन-युक्त हो।

॥ इतिप्रथमस्यषष्ठेएकोनत्रिंशोवर्गः ॥ २९ ॥

॥ इतिप्रथमेमण्डलेचतुर्दशोऽनुवाकः ॥ १४ ॥

पञ्चदशेऽनुवाकेद्वादशसूक्तानि तत्रेमंस्तोममितिषोडशर्चंप्रथमंसूक्तम् आङ्गिरसस्यकुत्सस्यार्षम् पञ्चदशीषोडश्यौत्रिष्टुभौ शिष्टाजगत्यः अग्निर्देवता पूर्वोदेवाभवतुसुन्वतोरथइतित्रयः पादादेवदेवत्याः तच्चोमित्रइत्यर्धर्चोलिङ्गोक्तमित्रावरुणादिबहुदेवत्यः अथवा तस्याप्यग्निरेवदेवता मित्रावरुणादयस्तुनिपातभाक्त्वेनाप्रधानाः एतत्सर्वमनुक्रान्तम्—इमंषोडशकुत्सआग्नेयंतद्धित्रिष्टुबन्त्ये पूर्वोदेवास्त्रयःपादादेवास्तच्चोमित्रोऽर्धर्चोलिङ्गोक्तदेवतोयद्देवत्यंवासूक्तमिति । प्रातरनुवाकस्याग्नेयेक्रतौजागतेछन्दस्येतत्सूक्तं आश्विनशस्त्रेच तथाचसूत्रितम्—इमंस्तोममर्हतेसंजातवह्निरिति । आभिप्लविकेषष्ठेहनि आग्निमारुतेप्येतत्सूक्तंजातवेदस्यमितिविधानं सूत्रितंच—प्रयज्यवइमंस्तोममित्याग्निमारुतमिति । तृतीयसवनेइमंस्तोममित्येषाग्नीध्रस्थितयाज्या सूत्रितंच—इमंस्तोममर्हतेजातवेदसइतितार्तीयसवनिक्यइति ।

वामेवांसूक्तेप्रथमामृचमाह—

इमंस्तोममर्हतेजातवेदसेरथमिवसंमहेमामनीषया ।
भद्राहिनःप्रमतिरस्यसंसद्यग्नेसख्येमारिषामावयंतव ॥१॥

इमम् । स्तोमम् । अर्हते । जातऽवेदसे । रथम्ऽइव । सम् । महेम । मनीषया । भद्रा । हि । नः । प्रऽमतिः । अस्य । सम्ऽसदि । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ १ ॥

अर्हते पूज्याय जातवेदसे जातानां वेदित्रे जातप्रज्ञाय जातधनाय वाग्नये मनीषया नि-शितया बुद्ध्या इमं एतत् स्तूकरूपं स्तोमं स्तोत्रं रथमिव यथा तक्षा रथं संस्करोति तथा सं महेम सम्यक् पूजितं कुर्मः अस्याग्नेः संसदि संभजनेनोऽस्माकं प्रमतिः प्रकृष्टा बुद्धिः भद्रा हि कल्याणी खलु भवत्वा नुग्राह्यस्तु भवत्वर्थः हे अग्ने तव सख्ये ऽस्माकं तया सह सखित्वे सति वयं मा रिषाम हिंसिता न भवाम अ-स्माकं क्षेत्यर्थः ॥ अर्हते अर्ह पूजायां अर्हः प्रशंसायामिति शतृप्रत्ययः शपः पित्त्वादनुदात्तत्वम् धातुस्वरः ॥ महेम मह पूजायाम् । रिषाम रिष हिंसायां व्यत्ययेन शः । तव युष्मदस्मदोर्ङसीत्याद्युदात्तत्वम् ॥ १ ॥

१. हम पूजनीय और सर्व-भूतज्ञ अग्नि की रथ की तरह, बुद्धि-द्वारा, इस स्तुति को प्रस्तुत करते हैं। अग्नि की अर्चना से हमारी बुद्धि उत्कृष्ट होती है। हे अग्नि, तुम्हारे हमारे मित्र रहने पर हम हिंसित नहीं होंगे।

यस्मै॒ त्वमा॒यज॑से॒ स सा॑धत्यन॒र्वा क्षे॑ति॒ दध॑ते सु॒वीर्य॑म् ।
स तू॑ताव॒ नैन॑मश्नोत्यं॒हति॒रग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥२॥

यस्मै॑ । त्वम् । आ॒ऽयज॑से । सः । सा॒ध॒ति॒ । अ॒न॒र्वा । क्षे॒ति॒ । दध॑ते । सु॒ऽवीर्य॑म् । सः । तू॒ता॒व॒ । न । ए॒न॒म् । अ॒श्नो॒ति॒ । अं॒ह॒तिः । अग्ने॑ । स॒ख्ये । मा । रि॒षा॒म॒ । व॒यम् । तव॑ ॥ २ ॥

यस्मै यजमानाय हे अग्ने त्वं आयजसे देवानाभिमुख्येन यजसि स यजमानः साधति स्वाभिलषि-तं साधयति प्राप्नोतीत्यर्थः किञ्च स यजमानः अनर्वा शत्रुभिरप्रत्यृतः सन् क्षेति निवसति तथा सुवी-र्यं शोभनवीर्योपेतं धनं दधते धारयति प्राप्नोतीत्यर्थः तूताव च स यजमानः तूताव वर्धते एनं यजमानं अंहतिः दारिद्र्यं न अश्नोति न प्राप्नोति अन्यत्पूर्ववत् ॥ साधति षिधु संराद्धौ णिचि सिध्यतेरपा-रलौकिके इत्यात्वम् छन्दस्युभयथेति शप आर्धधातुकत्वात् णेरनिटीति णिलोपः। क्षेति क्षि निवासग-त्योः बहुलं छन्दसीति विकरणस्य लुक् । दधते दध धारणे भौवादिकः । तूताव तु इति सौत्रो धातुः अस्माच्छान्दसो लिट् तुजादित्वादभ्यासस्य दीर्घत्वम् । अश्नोति व्यत्ययेन परस्मैपदम्। अंहतिः हन्तेरंह चेति अतिप्रत्ययः चितिति प्रत्ययस्वरेणान्तोदात्तत्वम् ॥ २ ॥

२. अग्नि, जिसके लिए तुम यज्ञ करते हो, उसकी अभिलाषा पूर्ण होती है और वह उत्पीड़ित न होकर निवास करता, महाशक्ति धारण करता और वर्द्धित होता है। उसे कभी दरिद्रता नहीं मिलती। हे अग्नि, तुम्हारे हमारे बन्धु होने पर हम हिंसित नहीं होंगे।

श॒केम॑ त्वा स॒मिधं॑ सा॒धया॒ धिय॒स्त्वे दे॒वा ह॒विर॑द॒न्त्याहु॑तम् ।
त्वमा॑दि॒त्याँ आ व॑ह॒ तान्ह्यु१॒॑श्मस्यग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥३॥

---

१ धातुस्वरापवादेनाद्युदात्तत्वं इति पाठः।

शकेर्म । त्वा । सम्ऽइर्धम् । साधर्य । धियः । त्वे इर्ति । देवाः ।
हविः । अदन्ति । आऽहुतम् । त्वम् । आदित्यान् । आ । वह ।
तान् । हि । उश्मसि । अग्नें । सख्ये । मा । रिषाम । वयम् । तर्व ॥३॥

हेऽग्ने त्वांत्वांसमिधंसम्यगिध्धंकर्तुंशकेम शक्ताभूयास्म त्वंच धियःअस्मदीयानिदर्शपूर्णमासादीनिकर्माणिसाधयनिष्पादय त्वयाहिसर्वेयागानिष्पाद्यन्ते यस्मात्त्वे त्वय्यग्नावाहुतंस्तुतिभिःप्रक्षिप्तंचरुपुरोडाशादिकंहविःदेवाअदन्तिभक्षयन्तितस्मादेवंसाधयेत्यर्थः अपिच त्वं आदित्यान् अदितेःपुत्रान्सर्वान्देवानावह अस्मद्यज्ञार्थमानय तान्हिइदानीमेववयमुश्मसि कामयामहे अन्यत्पूर्ववत् ॥ शकेम शक्लृशक्तौ लिङ्याशिष्यङ् अनुपदेशात्सार्वधातुकानुदात्तत्वेन धातुस्वरःशिष्यते।समिधं ञिइन्धीदीप्तौ अस्मात्संपदादिलक्षणःकर्मणिक्विप्।त्वे सुपांसुलुगिति सप्तम्येकवचनस्यशेआदेशः । उश्मसि वशकान्तौ इदन्तोमसिः अदादित्वाच्छपोलुक् ग्रहिज्येत्यादिनासंप्रसारणम् ॥ ३ ॥

३. अग्नि, हम तुम्हें अच्छी तरह प्रज्वलित कर सकें। तुम हमारा यज्ञ साधन करो; क्योंकि तुममें फेंका हुआ हव्य देवता लोग खाते हैं। तुम आदित्यों को ले आओ। उन्हें हम चाहते हैं। अग्नि, तुम्हारे मित्र होने पर हम हिंसित नहीं होंगे।

भरामेध्मंकृणवामाहवींषितेचितयन्तःपर्वणापर्वणावयम् ।
जीवातवेप्रतरंसाधयाधियोग्नेसख्येमारिषामावयंतव ॥४॥
भराम । इध्मम् । कृणवाम । हवींषि । ते । चितयन्तः ।
पर्वणाऽपर्वणा । वयम् । जीवातवे । प्रऽतरम् । साधय । धियः ।
अग्नें । सख्ये । मा । रिषाम । वयम् । तव ॥ ४ ॥

हेऽग्ने त्वद्यागार्थं इध्मंइन्धनसाधनं एकविंशत्यादिदार्वात्मकं समित्समूहं भराम संपादयाम तदनन्तरंतेतुभ्यंहवींषिचरुपुरोडाशलक्षणान्यन्नानिचवयंकृणवाम करवाम किंकुर्वन्तः पर्वणापर्वणा प्रतिपक्षमावृत्ताभ्यांदर्शपूर्णमासाभ्यां चितयन्तः त्वांप्रज्ञापयन्तः सत्वंजीवातवे अस्माकंजीवनौषधाय चिरकालावस्थानाय धियःकर्माणि अग्निहोत्रादीनि प्रतरं प्रकृष्टतरं साधयनिष्पादय अन्यत्समानम्॥ चितयन्तः चितीसंज्ञाने संज्ञापूर्वकस्यविधेरनित्यत्वाल्लघूपधगुणाभावः । पर्वणापर्वणा नित्यवीप्सयोरितिवीप्सायांद्विर्भावः तस्यपरमाम्रेडितमितिपरस्याम्रेडितसंज्ञायां अनुदात्तंचेत्यनुदात्तत्वम्।प्रतरं प्रपूर्वात्तरतेःशब्दात्क्रियाप्रकर्षेवर्तमानादमुचच्छन्दसीत्यमुप्रत्ययः॥४॥

४. अग्नि, हम इन्धन इकट्ठा करते हैं। तुम्हें ज्ञात कराकर हव्य देते हैं। हमारी आयुर्वृद्धि के लिए तुम यज्ञ सम्पन्न करो। अग्नि, तुम्हारे मित्र रहने पर हम हिंसित नहीं होंगे।

पञ्चमीमृचमाह—

विशांगोपाअस्यचरन्तिजन्तवोद्विपच्चयदुतचतुष्पदक्तुभिः।
चित्रःप्रकेतउषसोमहाँअस्यग्नेसख्येमारिषामावयंतव ॥ ५ ॥ ३० ॥

विशाम् । गोपाः । अस्य । । चरन्ति । जन्तवः । द्विऽपत् । च ।
यत् । उत । चतुःऽपत् । अक्तुऽभिः । चित्रः । प्रऽकेतः । उषसः ।
महान् । असि । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ ५ ॥ ३० ॥

अस्याग्नेर्जन्तवोजायमानारश्मयोविशांसर्वेषांप्राणिनांगोपाः गोपायितारोरक्षकाःसन्तः चर-
न्ति उद्गच्छन्ति यदनन्तरं यच्चद्विपद्द्विपान्मनुष्यादिकमस्ति उत अपिच चतुष्पत् चतुष्पाद् ग-
वादिकंयदस्ति तदुभयमक्तुभिःअञ्जकैः अस्यरश्मिभिः अकमाण्डितमभूत् हेअग्ने चित्रोवि-
चित्रदीप्तियुक्तः प्रकेतःरात्रावन्धकारावृतानांसर्वेषांप्रज्ञापयितादर्शयिता उषसः उषोदेवताया-
अपिमहान्गुणैरधिकोऽसिभवसि उषास्तुरात्रेश्चरमभागेप्रकाशयति अग्निस्तुसर्वस्यांरात्रौप्रकाश-
यतीतितस्यगुणाधिक्यम् ॥ गोपाः गुपूरक्षणे गुपूधूपविच्छीत्यायप्रत्ययः अस्मात्क्विप् अतोलोपः
वेरपृक्तलोपाद्वलिलोपोयलोपानितिपूर्वविप्रतिषेधेनयलोपः यलोपस्यस्थानिवत्त्वं नपदान्तेत्यादिनाय-
लोपंप्रतिवत्तिषेधात्। द्विपत् द्वौपादावस्येतिबहुव्रीहौ संख्यासुपूर्वस्येतिपादशब्दस्यान्त्यलोपःसमा-
सान्तः अथवपादितेनप्रत्येनपादः पदितिपदादेशः एकदेशविकृतस्यानन्यत्वात् द्वित्रिभ्यांपाद्-
न्मूर्धस्वितिउत्तरपदान्तोदात्तत्वम्। चतुष्पत् पूर्ववत्समासान्तःपद्भावश्च इदुदुपधस्यचाप्रत्ययस्ये-
तिविसर्जनीयस्यषत्वम् त्रिःसंख्यायाइतिपूर्वपदप्रकृतिस्वरः सएवबहुव्रीहिस्वरेणशिष्यते॥५॥

५. उन (अग्नि) की किरणें प्राणियों की रक्षा करती हुई विचरण करती हैं। द्विपद और चतुष्पद जन्तु उन (अग्नि) की किरणों में विचरण करते हैं। तुम विचित्र दीप्ति से युक्त और सारी वस्तुएं प्रदर्शित करते हो। तुम उषा से भी महान् हो। अग्नि, तुम्हारे मित्र रहने पर हम हिंसित नहीं होंगे।

षष्ठीमृचमाह—

त्वमध्वर्युरुतहोतासिपूर्व्यःप्रशास्तापोताजनुषापुरोहितः।
विश्वाविद्वाँआर्त्विज्याधीरपुष्यस्यग्नेसख्येमारिषामावयंतव ॥ ६ ॥

त्वम् । अध्वर्युः । उत । होता । असि । पूर्व्यः । प्रऽशास्ता । पोता ।
जनुषा । पुरःऽहितः । विश्वा । । विद्वान् । आर्त्विज्या । धीर ।
पुष्यसि । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ ६ ॥

हेऽग्ने त्वं अध्वर्युः अध्वरस्ययागस्यनेतादेवान्प्रतिप्रेरयिता यद्वा यागेऽध्वर्यवस्यकर्त्ताभवसि अध्वर्योमनुष्येजाठररूपेणवाग्निन्द्रियाधिष्ठातृत्वेनवावस्थाय यागनिष्पादकोऽसि उत अपिच पूर्व्यःमुख्योहोतादेवानामाह्वातापूर्ववद्वोतर्यवस्थायहौत्रस्यकर्मणःकर्त्तासिभवसि मानुषोहोताअमुख्यः तदपेक्षयास्यमुख्यत्वम् तथाप्रशास्ताप्रकर्षेणशास्तासर्वेषांशिक्षकोऽसि यद्वा होतर्यजप्रोतर्यजेत्यादिनाप्रैषेणशास्तीतिमित्रावरुणःप्रशास्ता पूर्ववत्तस्मिन्नवस्थाययागनिष्पादकोऽसि पोता यज्ञस्यपावयिताशोधयितासि यद्वा पोतृनामकस्यर्त्विजः पूर्ववदधिष्ठायागनिष्पादकोऽसि तथा जनुषाजन्मनास्वाभाव्येनपुरोहितः पुरस्तादागामिनिस्वर्गादौहितः अनुकूलाचरणोऽसि यद्वा सर्वेषुकर्मसु पूर्वस्यांदिश्याहवनीयेस्थापितोऽसि अथवापुरोहितोब्रह्मा देवपुरोहितस्यबृहस्पतेः प्रतिनिधित्वात् तथाचमन्त्रान्तरम्—बृहस्पतिर्देवानांब्रह्माअहंमनुष्याणामिति । अतस्तस्मिन्ब्रह्मणिपूर्ववदवस्थायतद्रूपःसन्विश्वा सर्वाणि आर्त्विज्या ऋत्विजःकर्माण्याध्वर्यवादीनिविद्वाञ्जानंस्त्वं हेधीर प्राज्ञाग्ने पुष्यसि न्यूनाधिकभावराहित्येनसंपूर्णानिकरोषि अन्यत्समानम् ॥ जनुषा जनेरुसिः । पुरोहितः दधातेः कर्मणिनिष्ठा पूर्वाधरेत्यादिना असिप्रत्ययान्तःपुरस्शब्दोऽन्तोदात्तः तद्धितश्चासर्वविभक्तिरित्यव्ययसंज्ञायां पुरोव्ययमितिगतित्वाद्गतिरनन्तरइतिपूर्वपदप्रकृतिस्वरत्वम् । आर्त्विज्या ब्राह्मणादित्वात्ष्यञ् ञित्त्वादाद्युदात्तत्वम् ॥ ६ ॥

६. अग्नि, तुम अध्वर्यु, मुख्य होता, प्रशास्ता, पोता और जन्म से ही पुरोहित हो। ऋत्विक् के सारे कार्यों से तुम अवगत हो। इसलिए तुम यज्ञ सम्पूर्ण करो। अग्नि, तुम्हारे मित्र रहने पर हम हिंसित नहीं होंगे। सप्तमीमृचमाह—

योवि॒श्वतः॑सु॒प्रती॑कःस॒दृङ्ङसि॑दू॒रेचि॒त्सन्त॒ळिदि॒वाति॑रोचसे ।
रात्र्या॑श्चि॒दन्धो॒अति॑देवपश्य॒स्यग्ने॑स॒ख्येमारि॑षामाव॒यंतव॑ ॥७॥

यः । वि॒श्वतः॑ । सु॒ऽप्रती॑कः । स॒ऽदृङ् । असि॑ । दू॒रे । चि॒त् । सन् । त॒ळित्ऽइ॑व । अति॑ । रो॒च॒से॒ । रात्र्याः॑ । चि॒त् । अन्धः॑ । अति॑ । दे॒व॒ । प॒श्य॒सि॒ । । अग्ने॑ । स॒ख्ये । मा । रि॒षा॒म॒ । व॒यम् । तव॑ ॥ ७॥

हेऽग्ने यस्त्वंसुप्रतीकः शोभनाङ्गःसन्विश्वतः सर्वस्मादपिसदृङ्ङसि अन्यूनःसदृशोभवसि सत्वंदूरेचित्सन्दूरेऽपिवर्तमानःसन् तळिदिव अन्तिकंनामैतत् अन्तिकेवर्तमानइवअतिरोचसे

१ त्वमिन्द्रियाधिष्ठातृत्वेनेतिवापाठः। २ तै०ब्रा० ३. ७. ६.।

अतिशयेनदीप्यसे तदुक्तंयास्केन—दूरेऽपिसन्नन्तिकइवसंदृश्यसइति[1] । रात्र्याश्चित् रात्रेरपि रा-
त्रेःसंबन्धिनमन्धः बहुलमन्धकारमपि हेदेव द्योतमानाग्ने अतिपश्यसि अभिभूयप्रकाशसे अन्यत्पू-
र्ववत्॥ सुप्रतीकः शोभनंप्रतीकोऽङ्गंयस्य क्रत्वादयश्चेत्युत्तरपदाद्युदात्तत्वम् । सदृङ् समानान्य-
र्थोभिविवक्ष्यमितिसमानोपपदाद्दृशेःक्विन् दृग्दृशवतुष्वितिसमानस्यसभावः दृक्स्ववःस्वतवसां
छन्दसीतिनुम् संयोगान्तलोपः क्विन्प्रत्ययस्यकुरितिकुत्वं कृदुत्तरपदप्रकृतिस्वरत्वम् । रात्र्याः
रात्रेश्चाजसाविति ङीप् ॥ ७ ॥

७. अग्नि, तुम सुन्दर हो, तो भी सबके समान हो। तुम दूर-स्थित हो, तो भी पास ही दीप्यमान हो। अग्निदेव, तुम रात के अन्धकार को मर्दन करके प्रकाशित होते हो। अग्नि, तुम्हारे मित्र रहने पर हम हिंसित नहीं होंगे।

पूर्वोदेवाभवतुसुन्वतोरथोऽस्माकंशंसोअभ्यस्तुदूढ्यः ।
तदाजानीतोतपुष्यतावचोऽग्नेसख्येमारिषामावयंतव ॥८॥

पूर्वः । देवाः । भवतु । सुन्वतः । रथः । अस्माकम् । शंसः । अभि । अस्तु । दुःऽध्यः । तत् । आ । जानीत । उत । पुष्यत । वचः । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ ८ ॥

हेदेवाः अग्न्यवयवभूताःसर्वेदेवाः सुन्वतः सोमाभिषवंकुर्वतोयजमानस्यरथः पूर्वः अन्ये-
षामयजमानानांरथेभ्योमुख्योभवतु अपिचास्माकंशंसः शंसनीयंअभिशापरूपंपापं दूढ्यः दुर्धि-
यः पापबुद्धीन् अस्मदनिष्टाचरणपरान्शत्रून् अभ्यस्तुअभिभवतु तत् तदिदंमद्वाक्यं हेदे-
वाः आजानीतआभिमुख्येनावगच्छत उत अपिच वचोऽस्मदीयंवचनंतदर्थाचरणेनपुष्यतप्र-
र्धयत हेसर्वदेवात्मकाग्ने सख्येइत्यादिपूर्ववत्॥ सुन्वतः शतुरनुमइतिविभक्तेरुदात्तत्वम् । शंसः शंस्य-
तेकीर्त्यतेइतिशंसोभिशापः कर्मणिघञ् ञित्त्वादाद्युदात्तत्वम् ।दूढ्यः दुष्टंध्यायन्तीतिदुर्धियः ध्यै-
चिन्तायामित्यस्मात्क्विप्चेतिक्विप् दृशिग्रहणानुवृत्तेः यस्यचविध्यन्तरोपसंग्रहार्थत्वात्संप्रसारणं
पृषोदरादिषु ध्यैचेतिपाठाद्दुरोरेफस्योत्वं उत्तरपदादेष्टुत्वंच ॥ ८ ॥

८. अग्नि के अङ्गभूत देव, सोम का अभिषव करनेवाले यजमान का रथ सबसे आगे करो। हमारा अभिशाप शत्रुओं को परास्त करे। हमारी यह स्तुति समझो और हमें प्रवृद्ध करो। अग्नि, तुम्हारे मित्र रहने पर हम हिंसित नहीं होंगे।

वधैर्दुःशंसाँअपदूढ्योजहिदूरेवायेअन्तिवाकेचिदत्रिणः ।
अथायज्ञायगृणतेसुगंकृध्यग्नेसख्येमारिषामावयंतव ॥९॥

---

1 नि॰ ३, ११.

वधैः । दुःऽशंसान् । अप । दुःऽध्यः । जहि । दूरे । वा । ये । अन्ति । वा । के । चित् । अत्रिणः । अथ । यज्ञाय । गृणते । सुऽगम् । कृधि । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ ९ ॥

हेअग्ने त्वंवधैः हननसाधनैरायुधैः दुःशंसान् दुःखेनकीर्तनीयान् दूढ्यःदुर्धियः पापबुद्धीन् अपजहि वधंप्रापय येकेचिद्येकेचनदूरेविप्रकृष्टदेशेवा अन्ति अन्तिके समीपदेशेवावर्तमानाः अत्रिणोऽत्तारोराक्षसादयोविद्यन्ते तान्दुर्धियोपजहीत्यर्थः अथानन्तरं यज्ञाययज्ञपतये गृणते त्वांस्तुवतेयजमानायसुगंशोभनंमार्गंकृधिकुरु अन्यत्पूर्ववत् ॥ वधैः हनश्चवधइतिहन्तेः करणेअप् वधादेशश्च सचादन्तोन्तोदात्तः तस्यातोलोपेसतिउदात्तनिवृत्तिस्वरेणप्रत्ययस्योदात्तत्वम् । दुःशंसान् ईषद्दुःसुष्वितिकर्मणिखल् लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् । जहि लोटिहिः हन्तेर्जइतिजादेशः तस्यासिद्धवदत्राभादित्यसिद्धत्वाद्धेर्लुगभावः । अन्ति अन्तिकस्यकादिलोपोबहुलमितिकलोपः । अत्रिणः अदेस्त्रिनिश्चेतित्रिनिप्रत्ययः इकारोनकारपरित्राणार्थः । गृणते शतुरनुमइति विभक्तेरुदात्तत्वम् । सुगं सुदुरोरधिकरणइतिगमेर्डः । कृधि श्रुशृणुपृकृवृभ्यश्छन्दसीति हेर्धिः बहुलंछन्दसीतिविकरणस्यलुक् ॥ ९ ॥

९. सांघातिक अस्त्र-द्वारा तुम दुष्टों और बुद्धि-विहीनों का विनाश करो। दूरवर्ती और निकटस्थ शत्रुओं का विनाश करो। अनन्तर अपने स्तुति-कर्त्ता यजमान के लिए सुगम मार्ग कर दो। अग्नि, तुम्हारे मित्र रहने पर हम हिंसित नहीं होंगे।

दशमीमृचमाह—

यदयुक्थाअरुषारोहितारथेवातजूतावृषभस्येवतेरवः।
आदिन्वसिवनिनोधूमकेतुनाग्नेसख्येमारिषामावयंतव॥१०॥२१॥

यत् । अयुक्थाः । अरुषा । रोहिता । रथे । वातऽजूता । वृषभस्यऽइव । ते । रवः । आत् । इन्वसि । वनिनः । धूमऽकेतुना । अग्ने । सख्ये । मा रिषाम । वयम् । तव ॥ १० ॥ २१ ॥

हेअग्ने अरुषा रोचमानौ रोहिता लोहितवर्णौ रोहितइत्यग्नेरश्वस्याख्या रोहितोऽग्नेरितिदर्शनात् रोहितेनत्वाग्निर्देवतांगमयत्विति मन्त्रवर्णाच्च। एतेवैदेवाश्वइतिहितत्रत्याख्यातम् वातजूता वातस्यवायोर्जूतंजवोवेगइववेगोययोस्तौ ईदृशावश्वौरथेयद्यदा अयुक्थाः अयोजयः तदानीं वनानिदहतस्तेतव रवःशब्दोवृषभस्येव दृप्तस्यमहोक्षस्यशब्दइवगंभीरोभवति आदनन्तरंवनि-

१ तै० सं० १. ६. ४.।

नोवनसंबन्धान् वृक्षान्धूमकेतुनाधूमःकेतुःप्रज्ञापकोयस्यतादृशेनरंहसिनाइन्वसि व्याप्नोषि अ-न्यत्पूर्ववत् ॥ अयुक्थाः युजिर्योगे लुङि झलोझलीतिसकारलोपः । अकर्षेत्यादिषुविभक्तिषु सुपांसुलुगित्याकारः । रवः रु शब्दे ऋदोरबितिभावेऽप् । इन्वसि इविव्याप्तौ भौवादिकः इ-दित्वान्नुम् ॥ १० ॥

१०. अग्नि, जिस समय तुम दीप्यमान, लोहितवर्ण और वायुगति दोनों घोड़ों को रथ में संयुक्त करते हो, उस समय तुम वृषभ की तरह शब्द करते हो और वन के सारे वृक्षों को धूमरूप केतु (पताका) द्वारा व्याप्त करते हो। अग्नि, तुम्हारे बन्धु होने पर हम हिंसित नहीं होंगे।

अधस्वनादुतबिभ्युःपतत्रिणोद्रप्सायत्तेयवसादोव्यस्थिरन् ।
सुगंतत्तेतावकेभ्योरथेभ्योऽग्नेसख्येमारिषामावयंतव ॥११॥

अध । स्वनात् । उत । बिभ्युः । पतत्रिणः । द्रप्साः । यत् । ते ।
यवसऽअदः । वि । अस्थिरन् । सुऽगम् । तत् । ते । तावकेभ्यः ।
रथेभ्यः । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ ११ ॥

हेअग्ने अध वनप्रवेशानन्तरं स्वनात्त्वदीयात्पूर्वोक्तगंभीरशब्दादथवाशब्दोऽस्यर्थः पत-त्रिणः पक्षिणोऽपिबिभ्युः बिभ्यविभयंप्राप्नुवन्ति उत्पतनेनदेशान्तरंगन्तुंसमर्थाःपक्षिणोऽपि यदाभयंप्राप्नुवन्ति किमुवक्तव्यमन्येषांतत्रत्यानांमृगादीनांभीतिर्जायतइति अतस्त्वयिवनंप्रविश-ति सर्वेप्राणिनोभयंप्राप्नुवन्तीत्यर्थः तादृशास्त्वदीयाद्रप्साः ज्वालैकदेशाः यवसादः यवसा-नामरण्येवर्तमानानांतृणानामत्तारःसन्तोयद्यदाव्यस्थिरन् विविधमवतिष्ठन्ते तत्तदातेसर्वमर-ण्यं सुगंसुखेनगन्तुंशक्यं भवतितावकेभ्यस्त्वदीयेभ्योरथेभ्यश्च तदरण्यंसुगंभवति पूर्वंप्रवृद्धै-र्ज्वालाग्रैस्तृणादिषुदग्धेषुसत्सुत्वदीयारथाः प्रतिबन्धमन्तरेणप्रगच्छन्तीतिभावः अन्यत्समान-म् ॥ बिभ्युः ञिभीभये छान्दसोलिट् एरनेकाचइतियण् । व्यस्थिरन् समवप्रविभ्यःस्थइत्या-त्मनेपदम् लुङिव्यत्ययेनझस्यरन् स्थाघ्वोरिच्चेतीत्वम् ह्रस्वादङ्गादितिसलोपः । तावकेभ्यः तवकममकावेकवचनेइतियुष्मदस्तवकादेशः ॥ ११ ॥

११. तुम्हारे शब्द सुनकर चिड़ियाँ भी डरती हैं। जिस समय तुम्हारी शिखायें तिनके जलाकर चारों दिशाओं में विस्तृत होती हैं, उस समय सारा वन तुम्हारे और तुम्हारे रथ के लिए सुगम हो जाता है। अग्नि, तुम्हारे मित्र होने पर हम हिंसित नहीं होंगे।

अयंमित्रस्यवरुणस्यधायसेऽवयातांमरुतांहेळोअद्भुतः ।
मृळासुनोभूत्वेषांमनःपुनरग्नेसख्येमारिषामावयंतव ॥१२॥

अयम् । मित्रस्य । वरुणस्य । धायसे । अवऽयाताम् । मरुताम् ।
हेळः । अद्भुतः । मृळ । सु । नः । भूतु । एषाम् । मनः । पुनः ।
अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ १२ ॥

अयमग्नेःस्तोतामित्रस्य अहरभिमानिनोदेवस्य वरुणस्यरात्र्यभिमानिनश्च संबन्धिनेधा-यसेधारणाय अवस्थापनायभवतु मित्रावरुणाविममग्नेःस्तोतारंधारयतामित्यर्थः अवयातांअव-स्थायगच्छतांस्वर्गलोकस्याधस्तादन्तरिक्षेवर्तमानानां मरुतांएतत्संज्ञानां देवानांहेळः क्रोधः अद्भुतः महान्भवति अद्भुतमित्येतन्महन्नाम यस्मात्क्रोधादिममग्नेःस्तोतारंमित्रावरुणौरक्षतामितिशेषः अपिच नोऽस्मान् हेअग्ने सुसुष्ठुमृळसुखय एषांमरुतांमनश्च पुनर्भूतु पुनरपिप्रसन्नंभवतु अ-न्यत्समानम्॥धायसे दधातेर्धाञ्ञ्यम्छन्दसीतिभावेअसुन् णिदित्यनुवृत्तेरातोयुक्चिण्कृतोरितियुक्।अवयातां यामापणे अस्मादवपूर्वाल्लटःशतृ शतुरनुमइतिविभक्तेरुदात्तत्वम्।मृळ मृडसुख-ने छन्दस्युभयथेतिशपआर्धधातुकत्वात् णेरनिटीतिणिलोपः द्व्यचोतस्तिङइतिसंहितायांदीर्घत्व-म्। भूतु बहुलंछन्दसीतिशपोलुक् ॥ १२ ॥

१२. इस स्तोता को मित्र और वरुण धारण करें। अन्तरिक्षचारी मरुतों को क्रोध अत्यधिक होता है। हमें सुखी करो और इन महान् मरुतों का मन प्रसन्न हो। अग्नि, तुम्हारे बन्धु रहने पर हम हिंसित नहीं होंगे।

त्रयोदशीमृचमाह—

देवोदेवानामसिमित्रोअद्भुतोवसुर्वसूनामसिचारुरध्वरे ।
शर्मन्त्स्यामतवसप्रथस्तमेऽग्नेसख्येमारिषामावयंतव ॥१३॥

देवः । देवानाम् । असि । मित्रः । अद्भुतः । वसुः । वसूनाम् । असि ।
चारुः । अध्वरे । शर्मन् । स्याम । तव । सप्रथःऽतमे । अग्ने । सख्ये ।
मा । रिषाम । वयम् । तव ॥ १३ ॥

हेअग्ने देवोद्योतमानस्त्वं देवानांसर्वेषां अद्भुतोमहान्मित्रोऽसि मित्रःसखाभवसि यथाचारुः द्योतमानस्त्वं अध्वरेयज्ञे वसूनांसर्वेषांधनानांवसुरसि निवासयिताभवसि अतोऽस्माकंवसूनिदेही-

त्यर्थः किञ्च समथस्त्वमेसर्वतःपृथुतमेअतिशयेनविस्तीर्णे यत्र तत्संबन्धिनिशर्मन्शर्मणियज्ञगृहेस्यामवर्तमानाभवेम अन्यत्पूर्ववत् ॥ शर्मन् सुपांसुलुगितिसप्तम्यालुक् ॥ १३ ॥

१३. द्युतिमान् अग्नि, तुम सारे देवों के परम बन्धु हो। तुम सुशोभन और यज्ञ के सारे धनों के निवास-स्थान हो। तुम्हारे विस्तृत यज्ञ-गृह में हम अवस्थान करें। अग्नि, तुम्हारे बन्धु रहने पर हम हिंसित नहीं होंगे।

तत्तेभद्रंयत्समिद्धःस्वेदमेसोमाहुतोजरसेमृळयत्तमः ।
दधासिरत्नंद्रविणंचदाशुषेग्नेसख्येमारिषामावयंतव ॥१४॥

तत् । ते । भद्रम् । यत् । सम्ऽइद्धः । स्वे । दमे । सोमऽआहुतः ।
जरसे । मृळयत्ऽतमः । दधासि । रत्नम् । द्रविणम् । च । दाशुषे ।
अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ १४ ॥

हेअग्ने तेत्वत्संबन्धितत्खलुभद्रंभजनीयंप्रशस्तमित्यर्थः किंपुनस्तत् स्वेदमेस्वकीयेउत्तरवेदिलक्षणेनिवासस्थाने तस्यैषस्वोलोकोयदुत्तरवेदीनाभिरितिश्रुतेः। तस्यामुत्तरवेद्यांसमिद्धः सम्यगिद्धःप्रज्वलितः सोमाहुतोहुतेनसोमरसेनसंतर्पितःसन् जरसेऋत्विग्भिःस्तूयसे इतियदस्ति तद्भद्रमित्यर्थः एवंभूतस्त्वंमृळयत्तमः अतिशयेनास्माकंसुखयिताभूत्वा रत्नंरमणीयंकर्मफलं द्रविणंधनंच दाशुषेहवींषिदत्तवतेयजमानायदधासिप्रयच्छसि अन्यत्समानम् ॥ समिद्धः ञिइन्धीदीप्तौ कर्मणिनिष्ठा श्वीदितोनिष्ठायामितीट्प्रतिषेधः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम्। सोमाहुतः सोमेनाहुतः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम्। जरसे जरतिःस्तुतिकर्मा व्यत्ययेन कर्मणिकर्तृप्रत्ययः यद्वृत्तयोगादनिघातः। दधासि अनुदात्तेचेत्यभ्यस्तस्याद्युदात्तत्वम् ॥ १४ ॥

१४. अपने स्थान पर प्रज्वलित सोमरस-द्वारा आहूत होकर जिस समय तुम पूजित होते हो, उस समय तुम सुखकर उपभोग करते हो। तुम हमारे लिए सुखकर होकर हव्यदाता को रमणीय फल और धन दान करो। अग्नि, तुम्हारे बन्धु रहने पर हम हिंसित नहीं होंगे।

पञ्चदशीमृचमाह—

यस्मैत्वंसुद्रविणोददाशोनागास्त्वमदितेसर्वताता ।
यंभद्रेणशवसाचोदयासिप्रजावताराधसातेस्याम ॥१५॥

---

१ ऐ० ब्रा० १.२८. । २ नि० १०. ८. ।

यस्मै । त्वम् । सुऽद्रविणः । ददाशः । अनागाःऽत्वम् । अदिते ।
सर्वऽताता । यम् । भद्रेण । शवसा । चोदयासि । प्रजाऽवता ।
राधसा । ते । स्याम ॥ १५ ॥

हे सुद्रविणः शोभनधन अदिते अखण्डनीयाग्ने सर्वताता सर्वासु कर्मततिषु यज्ञा सर्वेषु यज्ञेषु वर्तमानाय यस्मै यजमानाय अनागास्त्वं अपापत्वं पापराहित्येन कर्माहितां त्वं ददाशः प्रयच्छसि स यजमानः समृद्धो भवति यं च यजमानं भद्रेण भजनीयेन कल्याणेन शवसा बलेन चोदयासि संयोजयसि सोऽपि समृद्धो भवति वयं च स्तोतारः प्रजावता प्रजाभिः पुत्रपौत्रैर्युक्तेन ते राधसा त्वया दत्तेन धनेन युक्ताः स्याम भवेम ॥ सुद्रविणः शोभनानि द्रविणानि धनानि यस्य सुगतौ सुदक्षिण्यापिनद् द्रविणशब्दस्यान्ते सकारोपजनश्छान्दसः । ददाशः दाश्दाने लेटचडागमः बहुलंछन्दसीति शपः श्लुः अभ्यस्तानामादिरित्याद्युदात्तत्वम् । सर्वताता सर्वदेवात्तातिलिति स्वार्थे तातिल्प्रत्ययः या-स्कपक्षेषु सर्वास्ततयोयेषु यागेषु इति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् वर्णव्यापत्त्या आत्वं उभयत्रा-पि सुपां सुलुगिति सप्तम्या डादेशः । चोदयासि चुदप्रेरणे लेट्याडागमः ॥ १५ ॥

१५. शोभन धन से युक्त और अखण्डनीय अग्नि, सब यज्ञों में वर्त्तमान जिस यजमान को तुम पाप से उद्धार करते और कल्याणवाही बल प्रदान करते हो, वह समृद्ध होता है। हम भी तुम्हारे स्तोता हैं। हम भी पुत्र-पौत्रादि के साथ तुम्हारे धन से सम्पन्न हों।

षोडशीमृचमाह—

सत्वमग्नेसौभगत्वस्यविद्वानस्माकमायुःप्रतिरेहदेव ।
तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीउतद्यौः ॥१६॥२२॥

सः । त्वम् । अग्ने । सौभगऽत्वस्य । विद्वान् । अस्माकम् । आयुः ।
प्र । तिर । इह । देव । तत् । नः । मित्रः । वरुणः । ममहन्ताम् ।
अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ १६ ॥ २२ ॥

हे देव दानादिगुणयुक्ताग्ने स पूर्वोक्तगुणविशिष्टस्त्वं सौभगत्वस्य सुभगत्वं सौभाग्यं विद्वान् जानन् इहास्मिन्कर्मणि अस्माकमायुः प्रतिर प्रवर्धय प्रपूर्वस्तिरतिर्वर्धनार्थः त्वया प्रवर्धितं नोऽस्माकं यदायुः मित्रादयः षड्देवताः ममहन्तां पूजयन्तां रक्षन्त्वित्यर्थः मित्रः प्रमीतेस्त्राता वरुणः अवरिष्टानां निवा-रयिता अदितिः अदीना अखण्डनीया वा देवमाता सिन्धुः स्यन्दनशीलोदकाला देवता पृथिवीम-

थिवी भूदेवता उतेतिसमुच्चये द्यौःप्रकाशमानाद्युलोकात्मादेवता एताश्चसर्वाअग्निनाप्रवर्धितमायुर्मे-महन्तामितिपूर्वेणान्वयः ॥ सौभगत्वस्य सुभगस्यभावःसौभगं सुभगान्मन्त्रेइतिउद्गात्रादिषुपाठात् भावे अञ् पुनरपिभावप्रत्ययोत्वंविश्छान्दसी । ममहन्तां महपूजायां भौवादिकः लोटि बहुलं छन्दसीतिशपःश्लुः तुजादित्वादभ्यासस्यदीर्घत्वम् ॥ १६ ॥

१६. अग्निदेव, तुम सौभाग्य जानते हो। इस कार्य में तुम हमारी आयु बढ़ाओ। मित्र, वरुण, अदिति, सिन्धु, पृथ्वी और आकाश हमारी उस आयु की रक्षा करें।

॥ इतिप्रथमस्यषष्ठेद्वात्रिंशोवर्गः ॥ ३२ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेणसायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येप्रथमाष्टकेषष्ठोध्यायः समाप्तः ॥ ६ ॥

## ॥श्रीगणेशायनमः॥

यस्यनिःश्वसितंवेदायोवेदेभ्योऽखिलंजगत् । निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥ १ ॥

प्रथमेमण्डलेपञ्चदशेनुवाकेप्रथमंसूक्तंव्याख्यातम् द्वेविरूपइत्येकादशर्चंद्वितीयंसूक्तम् तत्रानुक्रम्यते—द्वेएकादशौषसाप्रवाग्नेयेइति ऋषिश्चान्यस्मादितिपरिभाषयाकुत्सस्यानुवृत्तेराङ्गि-रसःकुत्सऋषिः अनादेशपरिभाषयात्रिष्टुप्छन्दः उषसिप्रातःकालेहविर्भाग्भ्योऽग्निरस्यसदेवता य-द्वा आग्नेयंतदितिपूर्वत्रोक्तत्वात् तुह्यादिपरिभाषयाइदमादीनिपञ्चसूक्तानिकेवलाग्निदेवत्यानि अ-तोऽस्यसूक्तस्यऔषसगुणविशिष्टोऽग्निः शुद्धोऽग्निर्वादेवतेतिप्रशब्दार्थः प्रातरनुवाकस्याग्नेयेक्रतौत्रिष्टु-भेछन्दसि इदमादिकेद्वेसूक्ते तथाचसूत्रितंअथैतस्याइतिखण्डे—द्वेविरूपेइतिसूक्तेइति । आश्विन-शस्त्रेचैवेमाप्रातरनुवाकन्यायेनतस्यैवसमाम्नायस्येत्यविदिष्टत्वात् ।

तत्रप्रथमामृचमाह—

ओम् द्वेविरूपेचरतःस्वर्थेअन्यान्यावत्समुपधापयेते ।
हरिरन्यस्यांभवतिस्वधावाञ्छुक्रोअन्यस्यांददृशेसुवर्चाः ॥१॥

द्वे इति । विरूपे इति विऽरूपे । चरतः । स्वर्थे इति सुऽअर्थे ।
अन्याऽअन्या । वत्सम् । उप । धापयेते इति । हरिः । अन्यस्याम् ।
भवति । स्वधाऽवान् । शुक्रः । अन्यस्याम् । ददृशे । सुऽवर्चाः ॥१॥

स्वर्थेस्वरणेशोभनगमनायने यद्वा अर्थःप्रयोजनंशोभनप्रयोजनोपेते विरूपेविषमरूपे शुक्लकृष्णतयानानारूपेद्वेअहोरात्रेचरतः पुनःपुनःपर्यावर्तेते तेचाहोरात्रेअग्नेःसूर्यस्यचजनन्यौत-त्रात्रेःपुत्रःसूर्यःसद्विगर्भवद्रात्रावन्तर्हितःसन्तस्याःपरमभागादुत्पद्यते अह्नःपुत्रोऽग्निः सहितत्वि-द्यमानोऽपिप्रकाशराहित्येनासत्कल्पःसन्तस्मादह्नःप्रकाशान्निर्मुक्तःप्रकाशमानंस्वात्मानंलभते अ-नयोरेतयोःपुत्रत्वंचतैत्तिरीयैराम्नायते— तयोरेतौवत्सौ अग्निश्चादित्यश्च रात्रेर्वत्सःश्वेतआदि-त्यः अह्नोऽग्निस्ताम्रोऽरुणइति[1] । तेचाहोरात्रेवत्संस्वंस्वंपुत्रंअन्यान्यापरस्परस्यविहारेणोपधापयेते स्वकीयंरसंपाययतः यथान्याकर्तव्यंस्तन्यपुत्रस्यादित्यस्यरसस्यपायनंतदहःकरोति यदह्नाकर्तव्यं

१ तै० आ० प्रथमप्रपाठके.

स्वपुत्रस्याग्नेः रक्षणं पालनं च दावाग्निः करोति एतच्च सायंप्रातःकालीनाहुत्यभिप्रायम् श्रूयते च—यस्मा-अग्नये सायं हूयते सूर्याय प्रातरिति[1] । यस्मादेवं तस्मादन्यस्यां स्वजनन्यामन्यस्यामहरात्मिकायां अग्नेर्जनन्यां हरिः रसहरणशील आदित्यः स्वधावान् हविर्लक्षणान्नवान् भवति शुक्रः निर्मलदीप्तिरग्निः स्वजनन्यामन्यस्यां रात्र्यामादित्यस्य जनन्यां सुवर्चाः शोभनदीप्तियुक्तः सन् ददृशे दृश्यते ॥ स्वर्थे चर-तो उषिकुषिगार्तिभ्यस्थन्निति ऋगतावेः कर्मणि वा थन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् शोभनोऽर्थो ययोस्ते आ-सुपार्थं च छन्दसीत्युत्तरपदाद्युदात्तत्वम् । अन्यान्या कर्मव्यतिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यं स-मासवच्च बहुलमिति द्विर्भावः बहुलग्रहणात्समासवद्भावाभावे तस्य परमाम्रेडितमिति परस्याम्रेडितसं-ज्ञायामनुदात्तं चेत्याम्रेडितानुदात्तत्वम् । धापयेते धेट् पाने आदेच इत्यात्वम् ततो हेतुमति णिच् अ-र्तिह्रीत्यादिना धातोः पुगागमः तद्धि लक्षणप्रतिपदोक्तपरिभाषया नास्तीति ज्ञापितम् शाच्छासाह्वा-व्येति प्रत्यात्वानां निर्देशेन तद्धि युक्प्रापि ज्ञापनार्थः यदि च लक्षणप्रतिपदोक्तपरिभाषया युक्पा-भोऽपि स्यात् अनर्थकः स्यात् तस्मादप्यापयतीत्यादाविव धापयेते इत्यत्रापि पुगागमः सिद्धः निगरणच-लनार्थेभ्यश्चेति प्राप्तस्य परस्मैपदस्य पादिषु धेट उपसंख्यानमिति प्रतिषेधादात्मनेपदम् । हरिः हृञ् हरणे औणादिक इन्प्रत्ययः ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वम् । भवति एकान्याभ्यां समर्थाभ्यामिति प्रथमायास्तिङ्विभक्तेर्निघातप्रतिषेधः । ददृशे दृशेः छन्दसि लुङ्लङ्लिट इति वर्तमाने लिट् । सुव-र्चाः शोभनं वर्चस्तेजो यस्य सोर्मनसी अलोमोषसीत्युत्तरपदाद्युदात्तत्वम् ॥१॥

१. विभिन्न रूपों से संयुक्त दोनों समय (दिन और रात), शोभन प्रयोजन के कारण, विचरण करते हैं। दोनों, दोनों के वत्स की रक्षा करते हैं। एक (रात्रि) के पास से सूर्य अन्न प्राप्त करते और दूसरे (दिन) के पास से शोभन दीप्ति से युक्त होकर प्रकाशित होते हैं।

दशेमं त्वष्टुर्जनयन्त गर्भमतन्द्रासो युवतयो विभृत्रम् ।
तिग्मानीकं स्वयशसं जनेषु विरोचमानं परि षीं नयन्ति ॥२॥

दश । इमम् । त्वष्टुः । जनयन्त । गर्भम् । अतन्द्रासः । युवतयः । विऽभृत्रम् । तिग्मऽअनीकम् । स्वऽयशसम् । जनेषु । विऽरोचमानम् । परि । सीम् । नयन्ति ॥ २ ॥

अतन्द्रासः स्वकार्ये जगतः पोषणे अनलसाः आलस्यरहिताः जागरूका इत्यर्थः युवतयः नित्यतरुण्यः अजरामरणा इत्यर्थः एवम्भूता दश प्राच्याद्या दशसंख्याका दिशः गर्भं-मेघेषु गर्भरूपेणान्तर्वर्तमानं त्वष्टुर्दीप्तान्मध्यमाद्वायोः सकाशाज्जनयन्त वैद्युतमग्निमुत्पादयन्ति यद्वा

[1] तै० ब्रा० २.१.२.

दशसंख्याकाअङ्गुलयः त्वष्टुर्दीप्तस्यवायोः गर्भंस्वकारणभूतेवायौगर्भरूपेणवर्तमानं अग्नेर्हिवा-युःकारणं वायोरग्निरितिश्रुतेः । एवंभूतमिममग्निंअरण्योःसकाशाज्जनयन्तउत्पादयन्ति कीदृ-श्योऽङ्गुलयःअतन्द्रासः पुनःपुनःकर्मकरणेआलस्यरहिताः युवतयः अपृथक्त्वेनवर्तमानाः एकस्मि-न्पाणौसंहत्यावस्थिताइत्यर्थः कीदृशमग्निं विभृत्रंसर्वेषुभूतेषुविहृतंजाठररूपेणविभज्यवर्तमानमि-त्यर्थः तिग्मानीकं तीक्ष्णमुखंतीक्ष्णतेजसं अतएवहिवैद्युताग्निदर्शनेदृष्टिःप्रतिहन्यते स्वयशसंस्वा-यत्तयशस्कं अतिशयेनयशस्विनमित्यर्थः जनेषुजनपदेषुसर्वेषुदेशेषुविरोचमानंविशेषेणदीप्यमा-नं बहूनामुपकारकमित्यर्थः एवंभूतंसीं एनमग्निंपरिपरितः सर्वतोनयन्ति स्वस्वोपकारायसर्वेजनाः स्वकीयंदेशंप्रापयन्ति ॥ त्वष्टुः त्विषदीप्तौ नप्तृनेष्टृत्वष्टृक्षत्तृइत्यादिनाउणादिषुतृजन्तोनिपातितः अयोनित्त्वादाद्युदात्तत्वम् । विभृत्रं हृञ्हरणे अस्मात्कर्मणिनिष्ठा छान्दसोरेफोपजनःगतिरनन्तर-इतिगतेःप्रकृतिस्वरत्वम् हृग्रहोर्भश्छन्दसीतिभत्वम् यद्वा औणादिकःक्रप्रत्ययः । तिग्मानीकं तिजनिशा-ने युजिरुचितिजांकुश्चेतिमक् अनप्राणने अनिहृषिभ्यांचेतिकीकन् तिग्मंतीक्ष्णमनीकंयस्य बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । परिषीं पूर्वपदादितिषत्वम् ॥ २ ॥

२. दसों अँगुलियाँ इकट्ठी होकर अनवरत काष्ठ-घर्षण करके वायु के गर्भ-स्वरूप और सब भूतों में वर्त्तमान अग्नि को उत्पन्न करती हैं। यह अग्नि तीक्ष्ण-तेजा, यशस्वी और सारे लोक में दीप्यमान है। इस अग्नि को सारे स्थानों में ले जाया जाता है।

त्रीणि जाना परि भूषन्त्यस्य समुद्र एकं दिव्येकमप्सु ।
पूर्वामनु प्र दिशं पार्थिवानामृतून्प्रशासद्वि दधावनुष्ठु ॥३॥

त्रीणि । जाना । परि । भूषन्ति । अस्य । समुद्रे । एकम् । दिवि । एकम् । अप्ऽसु । पूर्वाम् । अनु । प्र । दिशम् । पार्थिवानाम् । ऋतून् । प्रऽशासत् । वि । दधौ । अनुष्ठु ॥ ३ ॥

अस्याग्नेस्त्रीणित्रिसंख्याकानि जाना जननानिजन्मानिपरिभूषन्ति परितःसर्वतोऽलं-कुर्वन्ति यद्वा परीत्येषसमित्येतस्यस्थाने अस्याग्नेस्त्रीणिजन्मानिसंभवन्ति समुद्रे अन्तरिक्षवडवा-नलरूपेणैकंजन्म दिविद्युलोकेआदित्यात्मनाएकं अप्सुआपइत्यन्तरिक्षनाम अन्तरिक्षेवैद्युताग्नि-रूपेणैकं एवमग्निस्त्रिधात्मानंविभज्यत्रिषुस्थानेषुवर्ततइत्यर्थः यथादित्यात्मनावर्तमानःसोऽग्निर्ऋ-तून्वसन्तादीनृतून्प्रशासत्प्रकर्षेणविभक्ततयाज्ञापयन् पार्थिवानांपृथिव्याःसम्बन्धिनां स-र्वेषांप्राणिनांपूर्वांप्राचींमदिशंप्रकर्षेणाक्रम्य अनुष्ठु इत्येतदव्ययंसम्यक्शब्दसमानार्थं ह्रस्वविप-र्या सम्यगनुक्रमेणविदधौकृतवान् स्वपीभेदरहितयोरसप्तमयोर्दिक्कोड्योः प्राच्यादिभेदोनस्या-

दिभेदश्चसूर्यगत्यानिष्पाद्यते अतःसूर्यएवतयोःकर्तेत्यर्थः ॥ जाता जनीप्रादुर्भावे भावेक्त् कर्मात्वनद्दत्यन्तोदात्तत्वेप्राप्ते वृषादेराकृतिगणत्वादाद्युदात्तत्वम् शेश्छन्दसिबहुलमितिशेर्लोपः। भूषन् भूषअलंकारे णौवादिकः यद्वा भवतेर्लेटिसिब्बहुलंलेटीतिसिप् आगमानुशासनस्यानित्यत्वादिडभावः संज्ञापूर्वकस्यविधेरनित्यत्वाद्गुणाभावश्च। दिवि अप्सु उभयत्र ऊडिदमिति विभक्तेरुदात्तत्वम्। पार्थिवानां पृथिव्याञाञावितिप्राग्दीव्यतीयोऽञ्प्रत्ययः। प्रशासत् शासुअनुशिष्टौ अस्माल्लटःशतृ जक्षित्यादयःषडितिअभ्यस्तसंज्ञायां नाभ्यस्ताच्छतुरितिनुम्प्रतिषेधः कृदुत्तरपदप्रकृतिस्वरत्वम्। अनुष्ठु अपदुःसुषुस्थइतिविधीयमानःकुप्रत्ययोबहुलवचनात्तिष्ठतेरनुपूर्वादपिभवति ॥ ३ ॥

३. इन अग्नि के तीन जन्म-स्थान हैं—(१) समुद्र, (२) आकाश और (३) अन्तरिक्ष। अग्नि ने (सूर्य-रूप से) ऋतुओं का विभाग करके पृथिवी के सारे प्राणियों के हित के लिए पूर्व दिशा का यथाक्रम निष्पादन किया है अर्थात् सूर्य-काल (ऋतु) और दिक्—दोनों को बनाया है।

कड्मं॑वो॑नि॒ण्यमाचि॑केतव॒त्सोमा॒तुर्जन॑यतस्व॒धाभिः॑।
ब॒ह्वी॒नां गर्भो॑अ॒पसा॑मु॒पस्था॑न्म॒हान्क॒विर्निश्च॑रतिस्व॒धावा॑न् ॥४॥

कः। इ॒मम्। व॒ः। नि॒ण्यम्। आ। चि॒के॒त॒। व॒त्सः। मा॒तॄः। ज॒नय॒त॒। स्व॒धाभिः॑। ब॒ह्वी॒नाम्। गर्भः॑। अ॒पसा॑म्। उ॒पऽस्था॑त्। म॒हान्। क॒विः। निः। च॒र॒ति॒। स्व॒धाऽवा॑न् ॥ ४ ॥

हेऋत्विग्यजमानाः निण्यं निर्णीतांतर्हितनामैतत् अन्तर्हितंगर्भरूपेणान्तर्हितं तथाचमन्त्रान्तरम्—गर्भोयोअपांगर्भोवनानांगर्भश्चस्थातांगर्भश्चरथामिति। एवंभूतमिममग्निंवोयुष्माकंमध्येकआचिकेतकोजानाति नकोपीत्यर्थः सोयमग्निर्वत्सःमेघस्थानामपांवैद्युताग्निरूपेणपुत्रस्थानीयःसन्मातृःतस्यमातृस्थानीयानिवृष्ट्युदकानिस्वधाभिर्हविर्लक्षणैरन्नैःजनयतउत्पादयति तथाचस्मर्यते—अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाइति। अपिच बह्वीनांमेघस्थानामपांगर्भःवैद्युतरूपेणगर्भस्थानीयः सोग्निःअपसामुपस्थात्समुद्रान्निश्चरति औषसाग्निरूपेणादित्यःसन्निर्गच्छति कीदृशः महान् तेजसाप्रौढः कविःक्रान्तदर्शी स्वधावान्हविर्लक्षणान्नवान् एकएवाग्निर्होमनिष्पादकलक्षणेनपार्थिवरूपेणवैद्युतात्मनाऔषसरूपेणादित्यात्मनाचविभज्यवर्ततइत्यर्थः ॥ चिकेत कितज्ञाने छान्दसोलिट्। जनयत जनीप्रादुर्भावे णिच् ...मन्त्रात्वेतिमित्त्वान्मितांह्रस्वइतिह्रस्वत्वम् पूर्ववच्छान्दसोलङ्। बह्वीनां नित्यंछन्दसी

---

१ ऋ० सं० १. ५. १४।

विषदुरान्वाच्छीत् न्याच्छन्दसिबहुलमितिनामउदात्तत्वम् । अपसां आपूर्व्याप्तौ आपःकर्माख्या-यांह्रस्वश्चनुट्चवेतिबहुलवचनादकर्माख्यायामपिआप्नोतेरसिप्रत्ययोह्रस्वश्च । उपस्थात् उपति-ष्ठन्त्यापोऽस्मिन्नित्युपस्थः आतश्चोपसर्गेइतिकृत्यल्युटोबहुलमितिबहुलवचनादधिकरणेकप्रत्ययः मरु-द्वृधादित्वात्पूर्वपदान्तोदात्तत्वम् ॥ ४ ॥

४. जल, वन आदि में अन्तर्हित अग्नि को तुममें से कौन जानता है? पुत्र होकर भी विद्युद्रूप अग्नि अपनी माताओं (जल-रूपिणी) को हव्य-द्वारा जन्म दान करते हैं। महान् मेधावी और हव्य-युक्त अग्नि अनेक जलों के गर्भ (सन्तान)-रूप हैं। सूर्य-रूप अग्नि समुद्र से निकलते हैं।

आविष्ट्यो॑ वर्धते॒ चारु॑रासु जि॒ह्मानां॑मू॒र्ध्वः स्वय॑शा उ॒पस्थे॑ ।
उ॒भे त्वष्टु॑र्बिभ्यतु॒र्जाय॑मानात्प्रती॒ची सिं॒हं प्रति॑ जोषयेते ॥५॥१॥

आ॒विःऽत्यः॑ । व॒र्ध॒ते॒ । चारुः॑ । आ॒सु॒ । जि॒ह्माना॑म् । ऊ॒र्ध्वः । स्वऽय॑शाः । उ॒पऽस्थे॑ । उ॒भे इति॑ । त्वष्टुः॑ । बि॒भ्य॒तुः॒ । जाय॑मानात् । प्र॒ती॒ची इति॑ । सिं॒हम् । प्रति॑ । जो॒ष॒ये॒ते॒ इति॑ ॥ ५ ॥ १ ॥

आसुमेघस्थास्वप्सु वैद्युतात्मनावर्धमानोऽग्निः चारुःशोभनदीप्तिःसन् आविष्ट्योवर्धतेआ-विर्भूतः प्रकाशमानोवृद्धिंप्राप्नोति किंकुर्वन् जिह्मानांकुटिलानांमेघेषुतिर्यगवस्थितानांआसामपामु-पस्थेउत्सङ्गेस्वयशाः स्वायत्तयशस्कोऽग्निः ऊर्ध्वः ऊर्ध्वज्वलनःसन् अकारणात्स्वभावतस्तिर्यगवस्थि-तास्वपिस्वयमूर्ध्वंज्वलन्नित्यर्थः तदुक्तंवैशेषिकैः—अग्नेरूर्ध्वज्वलनंवायोस्तिर्यक्पवनमणुमनसो-राद्यंकर्मेत्यदृष्टकारितानीति । अपिच उभेद्यावापृथिव्यौत्वष्टुर्दीप्ताज्जायमानादुत्पद्यमानात्तस्मात्-अग्नेर्बिभ्यतुः भयंप्राप्नुतः तदनन्तरंखलुसिंहंसहनशीलंअभिभवनशीलंतमग्निंप्रतीची प्रत्यञ्चन्त्यौ प्रतिगच्छन्त्यौ आभिमुख्येनप्राप्नुवन्त्यौप्रतिजोषयेतेसेवेते यास्कस्त्वाह—आविरावेदनात्त्योव-र्धतेचारुरासुचारुचरतेर्जिह्मंजिहीतेरूर्ध्वंउच्छ्रितोभवतिस्वयशाआत्मयशाउपस्थउपस्थानेउभे त्वष्टुर्बिभ्यतुर्जायमानात्प्रतीचीसिंहंप्रतिजोषयेतेद्यावापृथिव्याविति वाहोरात्रेइतिवारणीइतिवा-पिबैनेप्रत्युकेसिंहंसहनंप्रत्यासेवेतेइति[1] ॥ आविष्ट्यः आविःशब्दात् छन्दसीविशैषिकस्त्यप् ह्रस्वात्तादौतद्धितइतिषत्वम् । आसु इदमोन्वादेशेऽशनुदात्तस्तृतीयादावित्यशादेशोऽनुदात्तः विभक्तिश्चसुप्त्वादनुदात्तेति सर्वानुदात्तत्वम् नचोडिदमिति विभक्तेरुदात्तत्वंशङ्कनीयम् अन्वादेशात् इदंशब्दादित्युक्तत्वात् ॥ प्रतीची प्रतिपूर्वादञ्चतेःऋत्विगित्यादिनाक्विन् अनिदितामितिनलोपः अञ्चतेश्चोपसंख्यानमितिङी-

1 नि० ८. १५ ।

ए भवत्यकारलोपेचाविविदीलर्थम् उदात्तनिवृत्तिस्वरेणङीपउदात्तत्वम् याछन्दसीतिपूर्वसवर्ण-दीर्घः । जोषयेते जुषीप्रीतिसेवनयोः स्वार्थेणिच् ॥ ५ ॥

५. कुटिल (मेघ-जल के) पार्श्ववर्ती यशस्वी अग्नि ऊपर चलकर, शोभन दीप्ति के साथ, प्रकाशित होकर बढ़ते हैं। अग्नि के दीप्त या त्वष्टा के साथ उत्पन्न होने पर उभय (काष्ठ) भीत होते और सिंह या सहनशील के सामने आकर उसकी सेवा करते हैं।

उभेभद्रेजोषयेतेनमेनेगावोनवाश्राउपतस्थुरेवैः ।
सदक्षाणांदक्षपतिर्बभूवाञ्जन्तियंदक्षिणतोहविर्भिः ॥६॥

उभे इति । भद्रे इति । जोषयेते इति । न । मेने इति । गावः । न । वाश्राः । उप । तस्थुः । एवैः । सः । दक्षाणाम् । दक्षऽपतिः । बभूव । अञ्जन्ति । यम् । दक्षिणतः । हविःऽभिः ॥ ६ ॥

उभेभद्रे अहोरात्रे इव यद्वा द्यावापृथिव्यौ अरणी वा भद्रे भजनीये शोभने अग्निंमेने स्त्रियौ नजोषये-तेन सेवेते इव यथा शोभने स्त्रियौ उभयतः सेवेते एवं द्यावापृथिव्यौ एनमग्निमुभ-यतः सेवेते इत्यर्थः अपिच वाश्राः हंभारवंकुर्वन्त्यः गावोन गावोयथा एवैः स्वकीयै-र्गमनैः आदरातिशयेनस्वकीयान्वत्सानुपतस्थुः संगच्छन्ते यथेममग्निंद्यावापृथिव्यावुपस्थिते भवतः पूर्वंसेवनमात्रमुक्तं इदानींपुनः गोनिदर्शनेनवत्सेष्वादरातिशयोद्योत्यते अतःसोऽग्निर्द-क्षाणांसर्वेषांबलानांदक्षपतिर्बभूव आसीत् बलानांमध्येयदतिशयितंबलंतस्याधिपतिर्बभूवेत्यर्थः यमग्निंदक्षिणतः आहवनीयस्यदक्षिणभागेवस्थिताऋत्विजः हविर्भिश्चरुपुरोडाशादिभिः अञ्जन्ति व्यक्तीकुर्वन्तिवर्धयन्ति सोऽग्निरितिपूर्वेणान्वयः ॥ वाश्राः वाशृशब्दे स्फायितञ्चीत्या-दिनारक् । एवैः इण्गतौ इण्शीङ्भ्यांवन् हविर्भावेऐत्वमत्ययः ॥ ६ ॥

६. उभय (काष्ठ या दिवारात्रि) सुन्दरी स्त्री की तरह उन (अग्नि) की सेवा करते और बोलती हुई गौ की तरह, पास में रहकर, उनको वत्स की तरह पालित करते हैं। दक्षिण भाग में अव-स्थित ऋत्विक् लोग हव्य-द्वारा जिस अग्नि का सेवन करते हैं, वह सब बलों के बीच बलाधिपति हुए हैं।

ऊर्ध्वंयमीतिसवितेवबाहूउभेसिचौयततेभीमऋञ्जन् ।
उच्छुक्रमत्कमजतेसिमस्मान्नवामातृभ्योवसनाजहाति ॥७॥

उत् । यंयमीति । सविताऽइव । बाहू इति । उभे इति । सिचौ । यतते । भीमः । ऋञ्जन् । उत् । शुक्रम् । अत्कम् । अजते । सिमस्मात् । नवा । मातृऽभ्यः । वसना । जहाति ॥ ७ ॥

सवितेवसर्वस्यप्रेरकः आदित्योयथाबाहूबाहुस्थानीयान्रश्मीनुद्गमयति तथा अयमग्निरपिस्वकीयानितेजांसिउद्यंयमीति भृशं उद्यतानिऊर्ध्वाभिमुखानिकरोति तदनन्तरं भीमः सर्वेषांभयंकरोग्निः उभेसिचौ उभेद्यावापृथिव्यौ प्रअजन्प्रसाधयन्स्वतेजसाअलंकुर्वंस्तयतस्वव्यापारे प्रयतते तदनन्तरंसिमस्मात्सर्वस्माद्भूतजाताद् शुक्रंदीप्तंअत्कंसारभूतंरसंउदकंवारश्मिभिरूर्ध्वंना-दत्ते अपिच मातृभ्यःस्वमातृस्थानीयेभ्योऽन्तरिक्षपुदकेभ्यःसकाशात्नवा नवानिमत्यप्राणिवसनासर्वस्यजगतः आच्छादकानितेजांसिजहातिउद्गमयति॥यंयमीति यमउपरमे अस्माद्यङ्लुकि नुगतो-नुनासिकान्तस्येतिअभ्यासस्यनुगागमः एवमनुस्वारोपलक्षणार्थम्। सिचौ षिचिरक्षरणे सिञ्च-तः फलेनसंयोजयतइतिसिचौद्यावापृथिव्यौ क्विप्चेतिक्विप्।यतते यतीप्रयत्ने। अत्कम् अत-सातत्यगमने इण्भीकापाशल्यतिमर्चिभ्यःकन् इतिकन् नित्त्वादाद्युदात्तत्वम्। सिमस्मात् सि-मशब्दःसर्वशब्दपर्यायः। नवा वसना उभयतः शेश्छन्दसिबहुलमितिशेर्लोपः। जहाति ओहाक् त्यागे जौहोत्यादिकः॥ ७॥

७. अग्नि, सूर्य की तरह, अपनी किरण-रूपिणी भुजाओं को बार-बार विस्तृत करते हैं तथा वही भयंकर अग्नि उभय (दिवारात्रि) को अलंकृत करके निज-कर्म साधित करते हैं। वे सारी वस्तुओं से दीप्त और साररूप रस ऊपर खींचते हैं। वे माताओं (जलों) के पास से आच्छादक अभिनव रस बनाते हैं।

त्वेषंरूपंकृणुतउत्तरंयत्संपृञ्चानःसदनेगोभिरद्भिः।
कविर्बुध्नंपरिमर्मृज्यतेधीःसादेवतातासमितिर्बभूव ॥८॥

त्वेषम्। रूपम्। कृणुते। उत्ऽतरम्। यत्। सम्ऽपृञ्चानः।
सदने। गोभिः। अत्ऽभिः। कविः। बुध्नम्। परि। मर्मृज्यते।
धीः। सा। देवऽताता। सम्ऽइतिः। बभूव ॥८॥

सदनेन्तरिक्षेगोभिर्गन्त्रीभिरद्भिर्मेघस्थाभिःसहसंपृञ्चानःवैद्युतरूपेणसंयुक्तःसन् त्वेषंदी-प्तंसर्वैर्द्रष्टुमशक्यंउत्तरंउत्कृष्टतरंरूपंवैद्युतंप्रकाशंयद्यदाकृणुतेकरोति तदानींकविःक्रान्तदर्शीधीः सर्वेषांधारकःसोग्निःबुध्नंसर्वस्योदकस्यमूलभूतमन्तरिक्षंपरिमर्मृज्यतेपरितोमार्ष्टिस्वतेजसाआच्छा-दयतितस्याग्नेःसादेवताता देवेनदेवनशीलेनाग्निना ततावित्तारितादीप्तिःअस्माभिःस्तुवासर्वासमि-तिर्बभूव तेजसांसंहतिर्भवति॥ संपृञ्चानः पृचीसंपर्के रौधादिकः अस्माल्लटःशानच् श्नसोरल्लोपइ-त्यकारलोपः।सदने सीदन्त्यस्मिन्गन्धर्वादयइतिसदनमन्तरिक्षं अधिकरणेल्युट्।मर्मृज्यते मृजू-शुद्धौ अस्माद्यङि मर्मृज्यतेमर्मृज्यमानासइति चोपसङ्ख्यानमितिनिपातनादभ्यासस्यरुगाग-

णः। देवताता देवैस्ततादेवताता तनोतेःकर्मणिनिष्ठा अनुदात्तोपदेशेत्यादिनानुनासिकलोपः ल्यस्यपेनात्वम् तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् ॥ ८ ॥

८. जिस समय अग्नि अन्तरिक्ष में गमनशील जल द्वारा संयुक्त होकर दीप्त और उत्कृष्ट रूप धारण करते हैं, उस समय वह मेधावी और सर्वलोक-धारक अग्नि (सारे जलों के) मूलभूत (अन्तरिक्ष को) तेज द्वारा आच्छादित करते हैं। उज्ज्वल अग्नि द्वारा विस्तारित वह दीप्ति तेजःपुञ्ज हुई थी।

उ॒रु ते॒ जयः॒ पर्ये॑ति बु॒ध्नं वि॒रोच॑मानं महि॒षस्य॒ धाम॑।
विश्वे॑भिरग्ने॒ स्वय॑शोभिरि॒द्धोऽद॑ब्धेभिः पा॒युभिः॑ पाह्य॒स्मान् ॥९॥

उ॒रु। ते॒। जयः॑। परि॑। ए॒ति॒। बु॒ध्नम्। वि॒ऽरोच॑मानम्। म॒हि॒षस्य॑। धाम॑। विश्वे॑भिः। अ॒ग्ने॒। स्वय॑शःऽभिः। इ॒द्धः। अद॑ब्धेभिः। पा॒युऽभिः॑। पा॒हि॒। अ॒स्मान् ॥ ९ ॥

महिषस्यमहतः ते तव जयःराक्षसादीनामभिभावुकंविरोचमानंविशेषेणदीप्यमानं उरुविस्तीर्णंधामतेजःबुध्नंसर्वेषांमूलभूतंअन्तरिक्षंपर्येतिपरितोव्याप्नोति. हेअग्ने इद्धः अस्माभिःप्रज्वलितः त्वं विश्वेभिःसर्वैःस्वयशोभिःस्वकीयैरात्मीयैस्तेजोभिरस्मान्पाहिरक्ष कीदृशैःअदब्धेभिःराक्षसादिभिरहिंसितैः पायुभिःपालनशक्तैः ॥ जयः जिजिअभिभवे असुन्। अदब्धेभिः दम्भुदम्भे निष्ठायां यस्यविभाषेतीट्प्रतिषेधः अनिदितामितिनलोपः झषस्तथोर्धोधइतिधत्वम् नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम् बहुलंछन्दसीतिभिसऐसभावः ॥ ९ ॥

९. अग्नि, तुम महान् हो। सबको पराजित करनेवाला तुम्हारा दीप्यमान और विस्तीर्ण तेज अन्तरिक्ष को व्याप्त किये हुए है। अग्नि, हमारे द्वारा प्रज्वलित होकर अपने अहिंसित और पालन-समतेज-द्वारा हमारा पालन करो।

धन्व॒न्त्स्रोतः॑ कृणुते गा॒तुमू॒र्मिं शु॒क्रैरू॒र्मिभि॑र॒भि न॑क्षति॒ क्षाम्।
विश्वा॒ सना॑नि ज॒ठरे॑षु धत्ते॒ऽन्तर्नवा॑सु चरति प्र॒सूषु॑ ॥१०॥

धन्व॑न्। स्रोतः॑। कृ॒णु॒ते॒। गा॒तुम्। ऊ॒र्मिम्। शु॒क्रैः। ऊ॒र्मिऽभिः॑। अ॒भि। न॒क्ष॒ति॒। क्षाम्। विश्वा॑। सना॑नि। ज॒ठरे॑षु। ध॒त्ते॒। अ॒न्तः। नवा॑सु। च॒रति॒। प्र॒ऽसूषु॑ ॥ १० ॥

धन्वन्धन्वनिगातुंगमनशीलमूर्मिंप्रवृद्धमुदकसंघमयमग्निःस्रोतःकृणुते स्रोतसांप्रवाहरूपेणकुरुते शुक्रैर्निर्मलैरूर्मिभिः तेजःसंघैःक्षांभूमिमभिनक्षति अभिव्याप्नोति स्वतेजोभिरन्तरिक्षस्थंजलंप्रस्राव्यतेनसर्वांभूमिमभिव्याप्नोतीत्यर्थः पश्चाद्विश्वासर्वाणिसनानि सम्भजनीयान्यन्नानि जठरेषु धत्ते

निचलेषुधचे अवस्थापयति तदर्थंनवाद्यवृष्ट्यनन्तरमुत्पन्नाद्य मध्येषुसर्वेषामन्नानांमध्येविनीच्यो-षधीषु पाकार्थमन्तर्धरविमध्येवर्तते अन्तरवस्थितेनभौमाग्निनासर्वाओषधयःपच्यन्ते ॥ धन-र्च रिचिरविषविगत्यर्थाः इदित्वान्नुम् कनिन्युवृषीत्यादिनाकनिन् सुपांसुलुगितिसप्तम्यालुक् धन्वान्तरिक्षंधन्वन्त्यस्मादापइतियास्कः । नित्त्वादाद्युदात्तत्वम् । गातुं गाङ्गतौ कमिमनिज-नीत्यादिनातुप्रत्ययः । ऊर्मिम् अर्तेरूचेतिमिप्रत्ययः । नक्षति नक्षगतौ ॥ १० ॥

१०. आकाशगामी जल-संघ को प्रवाहरूप में अभियुक्त करते और उसी निर्मल जल-संघ-द्वारा पृथिवी को व्याप्त कर डालते हैं। अग्नि जठर में अन्न को धारण करते और इसी लिए (वृष्टिजात) अभिनव शस्य के बीच में निवास करते हैं।

एवानोअग्नेसमिधावृधानोरेवत्पावकश्रवसेविभाहि ।
तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीउतद्यौः॥११॥२

एव । नः । अग्ने । सम्ऽइधा । वृधानः । रेवत् । पावक । श्रवसे । वि । भाहि । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ ११ ॥ २ ॥

हेपावक शोधकाग्ने समिधाअस्माभिर्दत्तेनसमिदादिद्रव्येण एव एवमुक्तप्रकारेणवृधानोवर्ध-मानःसन् रेवत् रयिमतधनयुक्तायनोस्माकंश्रवसेन्नायविभाहि विशेषेणदीप्यस्वअस्माकंवाद्दशम-न्नंप्रयच्छेत्यर्थः नोस्माकंतदन्नंमित्रादयोममहन्तांपूजयन्तांरक्षन्त्वित्यर्थः उतशब्दःसमुच्चये पृ-थिवीचद्यौश्चेत्यर्थः॥ एव निपातस्यचेतिसंहितायांदीर्घः। वृधानः वृधेरन्तर्भावितण्यर्थाच्छा-न्दसिकःशानच् बहुलंछन्दसीतिशपोलुक् चानशःसार्वधातुकत्वेनङित्त्वाल्लघूपधगुणाभावः उसा-र्वधातुकत्वाभावेनअनुदात्तत्वाभावेचित्स्वरएवशिष्यते । रेवत् रयिशब्दान्मतुप् रयेर्मतौबहुल-मितिसम्प्रसारणम् छन्दसीरइतिमतुपोवत्वम् रेशब्दाच्चेतिमतुपउदात्तत्वम् सुपांसुलुगितिचतु-र्थ्यालुक् ॥ ११ ॥

११. विशुद्धकारी अग्नि, काष्ठों द्वारा वृद्धि प्राप्त कर हमें धन-युक्त अन्न देने के लिए दीप्तिमान् बनो। मित्र, वरुण, अदिति, सिन्धु, पृथिवी और आकाश हमारे उस अन्न की पूजा करें।

॥ इतिप्रथमस्यसप्तमेद्वितीयोवर्गः ॥ २ ॥

सप्तर्चमेकिमदर्चंतृतीयंसूक्तं कुत्सस्यार्षत्रैष्टुभं द्रविणोदस्त्वगुणविशिष्टोग्निः शुद्धाग्निर्वादेव-ता तथाचानुक्रान्तम्—सप्तस्थानवद्रविणोदसइति । प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेनसहो-

---

१ नि० ५, ५ ।

क॰सूक्तविनियोगः न्यूढस्यदशरात्रस्य षष्ठेहन्याग्निमारुतेइदंसूक्तंआवपेतस्यनिविधानं न्यूह्ळ-श्चेदितिखण्डेसूत्रितम्—सप्रत्नथेत्याग्निमारुतमितिः। सप्रत्नथासहसाजायमानइतिजातवेदस्यं स्व-मानोदर्कमित्यादिनाखंणम्। महापितृयज्ञेस्विष्टकृत्स्थानीयस्यकव्यवाहनस्यसप्रत्नथेत्येषायाज्या दक्षिणाग्निरितिखण्डेसूत्रितम्—सप्रत्नथासहसाजायमानइत्यग्निःस्विष्टकृत्कव्यवाहनइति।

सप्तमेतास्सूक्तेप्रथमामृचमाह—

सप्रत्नथासहसाजायमानःसद्यःकाव्यानिबळधत्तविश्वा।
आपश्चमित्रंधिषणाचसाधन्देवाअग्निंधारयन्द्रविणोदाम्॥१॥

सः। प्रत्नऽथा। सहसा। जायमानः। सद्यः। काव्यानि। बट्।
अधत्त। विश्वा। आपः। च। मित्रम्। धिषणा। च। साधन्।
देवाः। अग्निम्। धारयन्। द्रविणःऽदाम्॥१॥

सहसाबलेनजायमानोनिर्मथनेनोत्पद्यमानःसोग्निः सद्यस्तदानीं उत्पन्नएवं प्रत्नथाप्रत्नइव चिरन्तनइवविश्वाविश्वानिसर्वाणिकाव्यानिकवेःकान्तदर्शिनःप्रगल्भस्यकर्मा-णि बट् सत्यं अधत्तअधारयत् पूर्वविद्यमानइवअग्निरुत्पत्तेःसमकालमेवस्वकीयंहविर्वहनादिकं सर्वकार्यमकरोदित्यर्थः इममग्निंविद्युद्रूपेणवर्तमानंमेघेष्ववस्थिताआपश्च धिषणाच या मा-ध्यमिकावाक् साच मित्रंसखिभूतंसाधन्साधयन्ति कुर्वन्ति तमिमंद्रविणोदां द्रविणस्यध-नस्यदातारमग्निंदेवाऋत्विजोधारयन्गार्हपत्यादिरूपेणधारयन्ति यद्वा देवाएवेन्द्रादयइममग्निं द्रविणोदां हविर्लक्षणस्यधनस्यदातारंकृत्वा दूत्येधारयन् धारयन्ति॥ प्रत्नथा प्रत्नपूर्वविश्वे-मात्थाच्छन्दसीतिइवार्थेथाल्प्रत्ययः। काव्यानि कवेःकर्मकाव्यं गुणवचनब्राह्मणादिभ्यइति ष्यञ् ञित्त्वादाद्युदात्तत्वम्। साधन् षिधुसंराद्धौ णिचि सिध्यतेरपारलौकिकेइत्यात्वम् लेटयड-डागमः इतश्चलोपइतीकारलोपः छन्दस्युभयथेतिशपआर्धधातुकत्वात् णेरनिटीतिलोपः। द्रवि-णोदां द्रविणानिददातीतिद्रविणोदाः ददातौ अदक्षिण्यामिनन् छान्दसःपूर्वपदस्यलुक् अन्ये-भ्योपिदृश्यन्तइतिददातेर्विच् सकारान्तंतु असुनिकृतेनिष्पद्यते॥१॥

१. बल या काष्ठ-घर्षण-द्वारा उत्पन्न अग्नि तुरत ही, पुरातन की तरह, सत्य ही सारे मेधावियों का यज्ञ ग्रहण करते हैं। जल और शब्द उस विद्युद्रूप अग्नि को मित्र जानते हैं। देवों ने उन धन-दाता अग्नि को दूत-रूप से नियुक्त किया था।

१ ऐ० ब्रा० ५. १५.।

द्वितीयामृचमाह—

सपूर्वयानिविदाकव्यतायोरिमाःप्रजाअजनयन्मनूनाम् ।
विवस्वताचक्षसाद्यामपश्चदेवाअग्निंधारयन्द्रविणोदाम् ॥२॥

सः । पूर्वया । निःविदा । कव्यता । आयोः । इमाः । प्रःजाः ।
अजनयत् । मनूनाम् । विवस्वता । चक्षसा । द्याम् । अपः । च ।
देवाः । अग्निम् । धारयन् । द्रविणःदाम् ॥ २ ॥

सोग्निः पूर्वयाप्रथमयाअग्निर्देवेद्धइत्यादिकयानिविदाकव्यता गुणिनिष्ठगुणाभिधानलक्षणास्तुतिःकुर्वताआयोर्मनोः सम्बन्धिनाउक्थेनचस्तूयमानः सोग्निर्मनूनांसम्बन्धिनीरिमाः प्रजाअजनयत् उदपादयत् मनुनास्तुतःसन् मानवीःसर्वाःप्रजाअजनयदित्यर्थः तथाविवस्वताविवासनवताविशेषेणाच्छादयताचक्षसाआत्मीयेनतेजसाद्यांद्युलोकंअपश्चान्तरिक्षंचव्याप्नोतीतिशेषः अन्यत्समानम् ॥ कव्यता कुशब्दे अचोयदितिभावेयत् कव्यंकवनंस्तुतिंकरोति तत्करोतीतिणिच् तदन्तात्क्विप् बहुलमन्यत्रापिसंज्ञाछन्दसोरितिणिलुक् ततस्तुक् धातुस्वरेणान्तोदात्तत्वम् ॥ आयोः इणूगतौ छन्दसीणइत्युण्प्रत्ययः ॥ २ ॥

२. अग्नि ने अयु या मनु के प्राचीन और स्तुति-गर्भ मंत्र से तुष्ट होकर मानवी प्रजा की सृष्टि की थी। उन्होंने आच्छादक तेज-द्वारा आकाश और अन्तरिक्ष को व्याप्त किया है। देवों ने उन धन-दाता अग्नि को दूत-रूप से नियुक्त किया था।

तमीळतप्रथमंयज्ञसाधंविशआरीराहुतमृञ्जसानम् ।
ऊर्जःपुत्रंभरतंसृप्रदानुंदेवाअग्निंधारयन्द्रविणोदाम् ॥३ ॥

तम् । ईळत । प्रथमम् । यज्ञःसाधम् । विशः । आरीः । आऽहुतम् ।
ऋञ्जसानम् । ऊर्जः । पुत्रम् । भरतम् । सृप्रःदानुम् । देवाः ।
अग्निम् । धारयन् । द्रविणःदाम् ॥ ३ ॥

हेविशः सर्वेमनुष्याः आरीः अभिस्वामिनंगच्छन्त्योयूयंतंअग्निमीळतस्तुध्वम् कीदृशं प्रथमं सर्वेषुदेवेषुमुख्यं यज्ञसाधं यज्ञस्यदर्शपूर्णमासादेःसाधकंनिष्पादकं आहुतंहविर्भिस्तर्पितं

ऋञ्जसानं स्तोत्रैःप्रसाध्यमानं ऊर्जोऽन्नस्यपुत्रंपुत्रेणाग्नेनजाठराग्नेर्वर्धनात्अग्नेरन्नपुत्रत्वम् । भ-रतं हविषोभर्तारं यद्वा प्राणरूपेणसर्वासांप्रजानांभर्तारं श्रूयतेच—सदेहवान्प्राणोभूत्वाप्रजा-बिभर्तितस्मादेषभरतइति । सुमद्रानुं सर्पणशीलदानयुक्तं अविच्छेदेनधनानिप्रयच्छन्तमित्य-र्थः ॥ देवाइत्यादिगतम् । ईळव ईडस्तुतौ लोटिव्यत्ययेनपरस्मैपदम् बहुलंछन्दसीतिशपोलुग-भावः । यज्ञसाधं यज्ञंसाधयतीतियज्ञसाध् साधयतेःक्विप् णेरनिटीतिणिलोपः । आरीः ऋगतौ सर्तिसृत्वीत्यादिनायङ् यङोचिचेतिचशब्देनबहुलग्रहणाद्नैमित्तिकोलुक् प्रत्ययलक्षणेनद्विर्भा-वेउरदत्त्वइत्यादिशेषौ रुग्रिकौचलुकीतिरुक् यङ्लुगन्तादौणादिकःक्विप्रत्ययः यणादेशेरोरी-तिरेफलोपः ढ्रलोपेपूर्वस्येतिदीर्घत्वम् छदिकारादक्तिनइतिङीष् जसि वाछन्दसीतिपूर्वसवर्ण-दीर्घत्वम् व्यत्ययेनाद्युदात्तत्वम् । ऋञ्जसानं ऋञ्जतिःप्रसाधनकर्मा ऋञ्जिवृधिमन्दिसहिभ्यः कित् इतिकर्मण्यसानच् । भरतं भृञ्भरणे भृमृदृशीत्यादिनाअतच् । सुमद्रानुं स्फायि-तञ्चीत्यादिनारक् सुभद्रोदानुर्दानंयस्य बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ ३ ॥

३. मनुष्यो, स्वामी अग्नि के पास जाकर उनकी स्तुति करो। वे देवों में मुख्य यज्ञ-साधक हैं। वे हव्य-द्वारा आहूत और स्तोत्र-द्वारा तुष्ट होते हैं। वे अन्न के पुत्र, प्रजा-पोषक और दानशील हैं। देवों ने उन धनद अग्नि को दूत नियुक्त किया था।

समातरिश्वापुरुवारपुष्टिर्विदद्गातुंतनयायस्वर्वित् ।
विशांगोपाजनितारोदस्योर्देवाअग्निंधारयन्द्रविणोदाम् ॥४॥

सः । मातरिश्वा । पुरुवारऽपुष्टिः । विदत् । गातुम् । तनयाय ।
स्वःऽवित् । विशाम् । गोपाः । जनिता । रोदस्योः । देवाः । अग्निम् ।
धारयन् । द्रविणःऽदाम् ॥ ४ ॥

सोऽग्निस्तनयायअस्मदीयायपुत्रायगातुंअनुष्ठानमार्गंविदत् लम्भयतु कीदृशः मातरिश्वा मातरिसर्वस्यजगतोनिर्मातर्यन्तरिक्षेश्वसन् वर्तमानः पुरुवारपुष्टिः पुरुभिर्बहुभिर्वारैर्वरणीयापु-ष्टिभिर्वृद्धिर्यस्यसतथोक्तः स्वर्वित् स्वः स्वर्गस्ययागद्वारेणलम्भयिताविशांसर्वासांप्रजानांगो-पागोपायितारक्षिता रोदस्योर्द्यावापृथिव्योर्जनिताजनयिताउत्पादयिता ॥ देवाइत्यादिगतम् । मातरिश्वा श्वन्नुक्षन्नित्यादौमातृशब्दोपपदात् श्वसप्राणनेइत्यस्मात् कनिन्प्रत्ययान्तोनिपात्य-ते । विदत् विदॢलाभे अस्मादन्तर्भावितण्यर्थात् छान्दसोलुङ् लृदित्वात् च्लेरङादेशः पादादित्वा-न्निघाताभावः । जनिता जनितामन्त्रे इतिणिलोपोनिपात्यते ॥ ४ ॥

४. वे अन्तरिक्षस्थ अग्नि अनेक वरणीय पुष्टि प्रदान करते हैं। अग्नि स्वर्ग-दाता, सर्वलोक-रक्षक और द्यावा-पृथिवी के उत्पादक हैं। अग्नि हमारे पुत्र को अनुष्ठान-मार्ग दिखा दें। देवों ने उन धन-प्रदाता अग्नि को दूत बनाया था।

मा । छेद्म । रश्मीन् । इति । नाधमानाः । पितृणाम् । शक्तीः ।
अनुऽयच्छमानाः । इन्द्राग्निऽभ्याम् । कम् । वृषणः । मदन्ति ।
ता । हि । अद्री इति । धिषणायाः । उपऽस्थे ॥ ३ ॥

रश्मीन् रश्मिशब्दो रज्जुवाची यथा रश्मयो दीर्घा अविच्छिन्ना भवन्ति एवमविच्छिन्नान् पुत्रपौत्रादीन्मा छेद्म मा विच्छिन्नान् कुर्म इति एवं यथा नाधमानाः इन्द्राग्न्योः सकाशात् तथाविधान् पुत्रादीन् याचमानाः तदनन्तरं पितॄणां शक्तीः शक्यपुत्रोत्पादकान् वीर्योत्पादकांस्तान् पुत्रादीन् अनुयच्छमानाः अनुक्रमेण नियतान् कुर्वन्तः वृषणः सेक्तारः पुत्रोत्पादनसमर्थाः सपत्नीका इत्यर्थः एवंभूता यजमाना इन्द्राग्निभ्यां कं सुखं यथा भवति तथा मदन्ति स्तुवन्ति हि यस्मात् अद्री शत्रूणामादरणौ हिंसन्तौ विदारयन्तौ वा इन्द्राग्नी धिषणायाः स्तुत्या उपस्थे उपस्थाने समीपे भवतः तस्मात्ताभ्यां स्तुवन्तीति भावः यद्वा निपातानामनेकार्थत्वाद्धिशब्दोऽपदेश्यर्थे यदा ताविन्द्राग्नी वहिष्यन्तौ अद्री अभिषवसाधनभूतौ ग्रावाणः धिषणायाः उपस्थे धिषणा अधिषवणचर्म तस्योपरि तदा इन्द्राग्न्यर्थं सोममभिषुण्वन्ति तदा तदा यजमानाः स्तुवन्तीति योजनीयम् ॥ छेद्म छिदिर् द्वैधीकरणे छन्दसि लुङ् छन्दसि विविकरणस्य लुक् छन्दस्युभयथेत्यार्धधातुकत्वेन ङित्त्वाभावाल्लघूपधगुणः नमाङ्योग इत्यडभावः । रश्मीन् दीर्घादटि समानपाद इति संहितायां नकारस्य रुत्वम् अत्रानुनासिकः पूर्वस्य तु वेति ईकारः सानुनासिकः । नाधमानाः नाधृ याच्ञायाम् । पितॄणाम् नामन्यतरस्यामिति नाम उदात्तत्वम् । मदन्ति मदि स्तुतौ आगमानुशासनस्यानित्यत्वान्नुमभावः व्यत्ययेन परस्मैपदम् ॥ ३ ॥

३. हम पुत्र-पौत्रादि-रूप रज्जु कभी न काटें—ऐसी प्रार्थना करके और पितरों की तरह शक्तिशाली पुत्र आदि उत्पादन करके उत्पादन-समर्थ यजमान इन्द्र और अग्नि की सुख-पूर्वक स्तुति करते हैं। शत्रु-हिंसक इन्द्र और अग्नि स्तुति के पास उपस्थित रहते हैं।

युवाभ्यां॑ दे॒वी धि॒षणा॒ मदा॒येन्द्रा॑ग्नी॒ सोम॑मुश॒ती सु॑नोति ।
ताव॑श्विना भद्रहस्ता सुपाणी॒ आ धा॑वतं॒ मधु॑ना पृ॒ङ्क्तम॒प्सु ॥ ४ ॥

युवाभ्याम् । देवी । धिषणा । मदाय । इन्द्राग्नी इति । सोमम् ।
उशती । सुनोति । तौ । अश्विना । भद्रऽहस्ता । सुपाणी इति सुऽपाणी । आ । धावतम् । मधुना । पृङ्क्तम् । अप्ऽसु ॥ ४ ॥

हे इन्द्राग्नी युवाभ्यां मदाय युवयोर्हर्षाय देवी द्योतमाना उशती युवां कामयमाना धिषणा मद्भूत वाक् सोमं सुनोति अभिषुणोति यद्वा धिषणा अधिषवणचर्म द्योतमानं तद्युवयोर्मदं का-

मयमानंसवं सोमं अभिषुणोति ग्रावभिः स्वस्मिन्नभिषवात्तस्याभिषवकर्तृत्वम् अश्विनाअश्वमयमानं... एवंभूतौहेइन्द्राग्नी बन्धौभद्रहस्ताशोभनदोर्दण्डौ सुपाणीमणिबन्धादूर्ध्वभागःपाणिःशोभनपाणी एवंभूतौहेइन्द्राग्नी युवांआयातं शीघ्रमागच्छतम् आगत्यच अप्सुउदकेषुवर्तमानेनमधुना माधुर्योपेतेन सारांशेनयुवां कंअस्मदीयंसोमंसंयोजयतम् यद्वाअप्सुवसतीवरीषुमधुनामाधुर्यंसंयोजयतम् विभक्तिव्यत्ययः॥ युवाभ्याम् षष्ठ्यर्थेचतुर्थी। उशती वशकान्तौ अदादित्वाच्छपोलुक् ग्रहिज्यादिनासंप्रसारणम् अगित्यैविहीप शतुरनुमइतिनद्याउदात्तत्वम्। पृंक्तम् पृचीसंपर्के रौधादिकः लोटिथसस्तम् अनुगित्येविलीप शतुरनुमइतिनद्याउदात्तत्वम् नवाचःपरस्मिन्नित्यल्लोपस्यस्थानिवत्त्वम् नपदान्तेत्यादिनानिसोरल्लोपः अनुस्वारपरसवर्णौ नवाच्चःपरस्मिन्नित्यल्लोपस्यस्थानिवत्त्वम् नपदान्तेत्यादिनानिषेधात्॥ ४॥

४. इन्द्र और अग्नि, तुम्हारे लिए दीप्तिमती प्रार्थना की कामना करके तुम्हारे हर्ष के लिए सोमरस का अभिषव करते हैं। तुम अश्व-सम्पन्न शोभन-बाहु-युक्त और सुपाणि हो। तुम लोग शीघ्र आकर जलस्थ माधुर्य-द्वारा हमारा सोम-रस संयुक्त करो।

युवामिन्द्राग्नीवसुनोविभागेतवस्तमाशुश्रवत्रहत्ये।
तावासद्याबर्हिषियज्ञेअस्मिन्प्रचर्षणीमादयेथांसुतस्य॥५॥२८॥
युवाम्। इन्द्राग्नी इति। वसुनः। विऽभागे। तवःऽतमा।
शुश्रव। वृत्रऽहत्ये। तौ। आऽसद्य। बर्हिषि। यज्ञे। अस्मिन्।
प्र। चर्षणी इति। मादयेथाम्। सुतस्य॥ ५॥ २८॥

हेइन्द्राग्नी वसुनोधनस्यविभागेस्तोतृभ्योदातुंविभजनेवात्पर्येणवर्तमानौयुवां वृत्रहत्येवृत्रस्याशुरस्यहननेतवस्तमा अतिशयेनबलिनौप्रवृद्धबलौशुश्रव अश्रौषम् हेचर्षणी सर्वस्यद्रष्टाराविन्द्राग्नी तौयुवामस्मदीयेस्मिन्यज्ञेबर्हिषि वेद्यामास्तीर्णेदर्भे आसद्योपविश्य सुतस्याभिषुतस्यसोमस्यपानेनप्रमादयेथां प्रकर्षेणहृष्टौभवतम्। विभागे भजसेवायाम् भावेघञ् चजोःकुघिण्ण्यतोरितिकुत्वम् थाथादिनोत्तरपदान्तोदात्तत्वम्। तवस्तमा तवइतिबलनाम लुप्तमत्वर्थीयादेतस्मादातिशायनिकस्तमप् यद्वा तवतिर्वृद्ध्यर्थःसौत्रोधातुः तस्मादौणादिकःकर्तरिअसिप्रत्ययः सुपांसुलुगितिविभक्तेःपूर्वसवर्णदीर्घत्वम्। वृत्रहत्ये हनस्तचेतिहन्तेर्भावेक्यप् तत्संनियोगेनतकारान्तादेशश्च कृदुत्तरपदप्रकृतिस्वरत्वम्॥ ५॥

५. इन्द्र और अग्नि, स्तोताओं के बीच धन-विभाग में रत रहकर वृत्र-हनन में अतीव बल-प्रकाश किया था—यह सुना है। सर्व-दर्शि-द्वय, तुम लोग हमारे इस यज्ञ में कुश पर बैठकर तथा अभिषुत सोम-पान करके हृष्ट बनो।

ऐन्द्राग्नस्यपशोर्हविषःप्रचर्षणीत्यनुवाक्या मदानामितिखण्डेसूत्रितम्—प्रचर्षणिभ्यःपृतनाहवेष्वादेवोयातुसविताशुरत्नइति।

तामेतांसूक्तेषष्ठीमृचमाह—

प्रचर्षणिभ्यःपृतनाहवेषुप्रपृथिव्यारिरिचाथेदिवश्च ।
प्रसिन्धुभ्यःप्रगिरिभ्योमहित्वाप्रेन्द्राग्नीविश्वाभुवनात्यन्या॥ ६ ॥

प्र । चर्षणिऽभ्यः । पृतनाऽहवेषु । प्र । पृथिव्याः । रिरिचाथे इति । दिवः । च । प्र । सिन्धुऽभ्यः । प्र । गिरिऽभ्यः । महिऽत्वा । प्र । इन्द्राग्नी इति । विश्वा । भुवना । अति । अन्या ॥ ६ ॥

पृतनाहवेषु पृतनासुसङ्ग्रामेषुरक्षणार्थमाह्वानेषुसत्सु हेइन्द्राग्नीआगतवन्तौयुवांचर्षणिभ्यः सर्वेभ्योऽपिमनुष्येभ्यः महित्वामहत्त्वेनप्ररिरिचाथे अतिरिच्येथे सर्वाधिकौभवथइत्यर्थः अत्रोपसर्गवशाद्धातुःस्वाभिधेयविपरीतमर्थमाचष्टे यथाप्रस्मरणंमरस्थानमिति तथापृथिव्याःसर्वस्याभूमेश्चप्ररिरिचाथे एवंदिवः द्युप्रभृतिभ्योऽपिसिन्धवःस्यन्दनशीलाःआपः गिरयःपर्वताः अपिच हेइन्द्राग्नी विश्वाभुवना सर्वाणिभूतजातानिअन्याउक्तव्यतिरिक्तानियानिसन्ति तान्यतीत्यप्ररिरिचाथे अधिकौभवथः ॥ पृतनाहवेषु पृतनासुहवः पृतनाहवः ह्वोभावेनुपसर्गस्येत्यप् संप्रसारणंच व्यत्ययेनथाथादिस्वराभावेकृदुत्तरपदप्रकृतिस्वरत्वम् । रिरिचाथे रिचिर्विरेचने छन्दसिलुङ्लङ्लिटइतिवर्तमानेलिट् यद्वा लटयेवबहुलंछन्दसीतिविकरणस्यश्लुः । महित्वा महपूजायाम् औणादिकइन्प्रत्ययः तस्यभावोमहित्वम् सुपांसुलुगितितृतीयायाडादेशः ॥ ६ ॥

६. युद्ध के समय बुलाने पर तुम लोग आकर अपने महत्त्व-द्वारा सारे मनुष्यों में बड़े बनो। पृथिवी, आकाश, नदी और पर्वत आदि की अपेक्षा बड़े बनो। इन्द्र और अग्नि, तुम अन्य सारे भुवनों की अपेक्षा बड़े हो।

पूर्वोक्तएवपशौआभरतमित्येषापुरोडाशस्यानुवाक्या सूत्रितंच—आभरतंशिक्षतंवज्रबाहूउभावामिन्द्राग्नीआहुवध्याइतीति ।

तामेतांसप्तमीमृचमाह—

आभरतंशिक्षतंवज्रबाहूअस्माँइन्द्राग्नीअवतंशचीभिः ।
इमेनुतेरश्मयःसूर्यस्ययेभिःसपित्वंपितरोनआसन् ॥ ७ ॥

आ । भरतम् । शिक्षतम् । वज्रबाहू इति वज्रऽबाहू । अस्मान् । इन्द्राग्नी इति । अवतम् । शचीभिः । इमे । नु । ते । रश्मयः । सूर्यस्य । येभिः । सऽपित्वम् । पितरः । नः । आसन् ॥ ७ ॥

हेवज्जनाहू वज्रहस्ताविन्द्राग्नी आभरतं अस्मदर्थं धनमाहरतम् आहृत्यचशिक्षतं अस्मभ्यंदत्तं शिक्षतिर्दानकर्मा अपिचास्माननुष्ठावृ शचीभिः कर्मनामैतत् आत्मीयैः कर्मभिरवतं रक्षतं किंचसूर्यात्मनइन्द्रस्य येभिरश्मिभिः येरर्चिभिर्नोस्माकंपितरःपूर्वपुरुषाः सपित्वंसहभावमव्यंस्थानं आसन् ब्रह्मलोकमगच्छन् अर्चिरादिमार्गेणहिब्रह्मलोकमुपासकागच्छन्ति तथाचश्रूयते–तेर्चिषमभिसंभवन्त्यर्चिषोहरिति । यद्वा येभीरश्मिभिः सपित्वंसमवेतत्वमध्यगच्छन् तेरश्मयः इमेनुइदानीमस्माभिर्दृश्यमानावएवखलु सूर्यस्य सूर्यात्मनइन्द्रस्य येरश्मयस्तएवाग्नेरपि तथाचश्रूयते–अग्निंवावादित्यःसायंप्रविशतितस्मादग्निर्दूराचकंददृशेइति । तस्मात्सूर्यरश्मीनां स्तवनेन इन्द्राग्न्योरुभयोरपिस्तुतिःसिद्धा ॥ भरतम् हृग्रहोर्भश्छन्दसीति भत्वम् । शिक्षतम् शिक्षविद्योपादाने अनुपदेशाल्लसार्वधातुकानुदात्तत्वेशपःपित्त्वादनुदात्तत्वम् धातुस्वरःशिष्यते तिङःपरत्वान्निघाताभावः । सपित्वम् आप्लृव्याप्तौ अस्मात्सशब्दोपपदात् कृत्यार्थे तवैकेनित्वनप्रत्ययः पृषोदरादित्वादाकारलोपाभावः यद्वा षपसमवाये इन्सर्वधातुभ्यइतीन् सपेर्भावःसपित्वम् । आसन् असगतिदीप्त्यादानेषु लङि आडागमउदात्तः यद्वृत्तान्नित्यमितिनिघाताभावः ॥ ७ ॥

७. वज्र-हस्त इन्द्र और अग्नि, धन ले आओ, हमें दो और कार्य-द्वारा हमारी रक्षा करो । सूर्य की जिन रश्मियों के द्वारा हमारे पूर्व पुरुष इकट्ठे हुए थे, वे ये ही हैं ।

पुरन्दरा॒शिक्ष॑तंवज्रहस्ता॒स्माँइन्द्राग्नीअव॑तं॒भरे॑षु ।
तन्नो॑मि॒त्रोवरु॑णोमामहन्ता॒मदि॑ति॒ःसिन्धु॑ःपृथि॒वीउ॒तद्यौः॥८॥२९॥

पुरम्ऽदरा । शिक्षतम् । वज्रऽहस्ता । अस्मान् । इन्द्राग्नी इति । अवतम् । भरेषु । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ ८ ॥ २९ ॥

हेवज्रहस्ता हस्तेनगृहीतवज्रौ पुरन्दरा असुरपुराणांदारयितारावन्द्राग्नी शिक्षतम् अस्मदपेक्षितंधनं प्रयच्छतं अपिच भरेषुसंग्रामेषु अस्मानवतंरक्षतं यदनेनसूक्तेन प्रार्थितं तदस्मदीयंमित्रादयोममहन्तां पूजयन्तु ॥ पुरन्दरा पूःसर्वयोर्दारिसहोरितिखच् वाचंयमपुरंदरौचेतिनिपातनादम् सुपांसुलुगितिविभक्तेराकारः ॥ ८ ॥

८. वज्रहस्त[1] पुरन्दर इन्द्र और अग्नि, हमें धनदान करो । लड़ाई में हमें बचाओ । मित्र, वरुण, अदिति, सिन्धु, पृथिवी और आकाश हमारी यह प्रार्थना पूजित करें ।

॥ इतिप्रथमस्यसप्तमेएकोनत्रिंशोवर्गः ॥२९॥

---

१ छांदोग्योपनिषदि. । २ तै० ब्रा० २. १. २.

ततंमइतिनवर्चंपञ्चमंसूक्तम् कुत्सस्यार्षमार्भवदेवताकम् पञ्चमीनवम्यौत्रिष्टुभौ शिष्टाःसप्त-जगत्यः तथाचानुक्रान्तम्—ततंनवार्भवन्तुपञ्चम्यन्त्येत्रिष्टुभौइति । अभिप्लवषळहस्यचतुर्थेऽह-निवैश्वदेवशस्त्रेइदमार्भवंनिविद्धानम् सूत्रितंचतृतीयस्यैवविखण्डे—ततंमेअपइतिवैश्वदेवमिति ।

तत्रप्रथमामृचमाह—

त॒तंमे॒अप॒स्तदु॑ताय॒तेपुन॒ःस्वादि॑ष्ठाधी॒तिरु॒चथा॑यशस्यते ।
अ॒यंस॑मु॒द्रइ॒हवि॒श्वदे॑व्य॒ःस्वाहा॑कृतस्य॒समु॑तृप्णुतऋभवः ॥ १ ॥

त॒तम् । मे॒ । अपः॑ । तत् । ऊ॒ इति॑ । ता॒यते॒ । पुन॒रिति॑ । स्वादि॑ष्ठा । धी॒तिः । उ॒चथा॑य । श॒स्य॒ते॒ । अ॒यम् । स॒मु॒द्रः । इ॒ह । वि॒श्वऽदे॑व्यः । स्वाहा॑ऽकृतस्य । सम् । ऊ॒म् इति॑ । तृ॒प्णु॒त॒ । ऋ॒भ॒वः॒ ॥ १ ॥

हेऋभवः मेमयाअपः अग्निष्टोमादिरूपंकर्म ततंविस्तारितं यद्वाःपूर्वमनुष्ठितम् तदुतदेव पुनस्तायते विस्तार्यते अनुष्ठीयतइत्यर्थः तत्रस्वादिष्ठास्वादुतमा अतिशयेनप्रीतिकरीधीतिः स्तुतिः उचथायस्तुत्याय शस्यतेपठ्यते अपिचइहास्मिन्यागेसमुद्रः समुन्दनशीलोऽयंसोमरसः वि-श्वदेव्यः सर्वेभ्योदेवेभ्यःपर्याप्तोयथाभवतितथासंपादितः तस्यस्वाहाकृतस्यस्वाहाकारेणाग्नौप्र-क्षिप्तस्यसोमस्यपानेनसमुतृप्णुत सम्यगेवतृप्ताभवत ॥ ततम् तनुविस्तारे निष्ठायांयस्यविभाषेतीट्-प्रतिषेधः अनुदात्तोपदेशेत्यादिनानुनासिकलोपः । अपः आपॢव्याप्तौ आपःकर्माख्यायांह्र-स्वोनुट्चवाइत्यसुन् धातोर्ह्रस्वत्वम् । तायते तनोतेर्यकीत्यात्वम् । स्वादिष्ठा स्वादुशब्दाद-तिशायनिकइष्ठन् टेरितिटिलोपः । उचथाय वचपरिभाषणे औणादिकः अथक्प्रत्ययः वचि-स्वपीत्यादिनासंप्रसारणम् । समुद्रः उन्दीक्लेदने स्फायितञ्चीत्यादिनारक् अनिदितामितिनलो-पः । विश्वदेव्यः देवार्होभागोदेव्यः छन्दसिचेतियः विश्वेसर्वेदेव्यायस्मिन्सोमे बहुव्रीहौ-विश्वंसंज्ञायामितिविश्वस्यपूर्वपदस्यान्तोदात्तत्वम् । स्वाहाकृतस्य स्वाहाशब्दस्यकर्या-दित्वेनगतित्वाद्गतिरनन्तरइतिपूर्वपदप्रकृतिस्वरत्वम् । तृप्णुत तृपप्रीणने स्वादिभ्यःश्नुः ऋभवइत्यनेनसंहितायामृत्यकइतिप्रकृतिभावः ॥ १ ॥

१. ऋभुगण, पहले मैंने बार-बार यज्ञानुष्ठान किया है; इस समय फिर करता हूँ एवं उसमें तुम्हारी प्रशंसा के लिए अत्यन्त मधुर स्तोत्र पढ़ा जाता है। यहाँ सारे देवों के लिए यह सोम-रस प्रस्तुत हुआ है। स्वाहा शब्द के उच्चारण के साथ, अग्नि में उस रस के अर्पित होने पर, उसे पान कर तृप्त बनो।

आ॒भो॒गयं॒प्रयदि॒च्छन्त॒ऐत॒नापा॑का॒ःप्राञ्चो॒ममके॑चिदा॒पयः॑ ।
सौध॑न्वनासश्चरि॒तस्य॑भू॒मनाग॑च्छतसवि॒तुर्दा॒शुषो॑गृ॒हम् ॥ २ ॥

आऽभोगयम् । प्र । यत् । इच्छन्तः । ऐतन । अपाकाः । प्राञ्चः ।
मर्म । के । चित् । आपयः । सौधन्वनासः । चरितस्य । भूमना ।
अगच्छत । सवितुः । दाशुषः । गृहम् ॥ २ ॥

हे ऋभवः अपाकाः परिपक्वज्ञानाः प्राञ्चः पूर्वकालीनाः मम आपयः प्राप्यित्वारो मदीया-
ज्ञातयः केचित् एवंभूता ये केचन यूयं आभोगयं उपभोग्यं सोमं इच्छन्तः यद्यदा ऐतन प्रपथरितुमर-
ण्यं गतवन्तः ऋभवो हि सुधन्वन आङ्गिरसस्य पुत्राः तदुक्तं यास्केन—ऋभुर्विभ्वा वाज इति सुधन्वन-
आङ्गिरसस्य त्रयः पुत्रा बभूवुरिति । कुत्सोप्याङ्गिरसः अतस्तेन मदीया ज्ञातय इत्युक्तम् हे सौधन्वनासः
सुधन्वनः पुत्राः तदानीं चरितस्य समुपार्जितस्य तपसः भूमना भूमा बहुत्वेन दाशुषः हवींषि दत्तवतः
सवितुः सोमाभिषवं कुर्वतो यजमानस्य संबन्धि यज्ञगृहम् अगच्छत तपसा लब्धसोमाः सन्तः कृतपा-
नापूर्यं गतवन्तः यद्वा दाशुषः प्रातःसवनादिष्वग्न्यादिभिरपसारितेभ्य ऋभुभ्यः सोमपानं दत्तव-
तः सवितुर्गृहं निवासस्थानं तृतीयसवनाख्यं अगच्छत प्राप्ताः एतत्सर्वं मा भवं शंसतीत्यादौ विस्प-
ष्टमाम्नातम् ॥ आभोगयम् आसमन्तात् भोगः आभोगः तदर्हः आभोगयः छन्दसि चेति यः यस्येति
लोपाभावश्छान्दसः व्यत्ययेन प्रत्ययात्पूर्वस्योदात्तत्वम् यद्वा आङ्पूर्वाद्भुजेरौणादिकः कर्मणि अय-
प्रत्ययः कुत्वं च अपित्प्रत्ययेन गुणः । ऐतन इण् गतौ लङि मध्यमबहुवचनस्य तस्य तबादेशः तप्तन-
प्तनथनाश्चेति तस्य तनबादेशः आडागमो वृद्धिश्च । आपयः आप्नोतेरौणादिक इप्रत्ययः । भूमना
बहुशब्दात् पृथ्वादिलक्षण इमनिच् बहोर्लोपो भू च बहोः इति इकारलोपो बहोर्भूभावश्च संज्ञापूर्वकस्य विधेरनित्यत्वा-
दल्लोपाभावः ॥ २ ॥

२. ऋभुगण, तुम मेरे ज्ञाति-भ्राता हो। जिस समय तुम लोगों
का ज्ञान अपरिपक्व था, उस पूर्वतन समय में तुम लोगों ने उपभोग्य
सोमरस की इच्छा की थी। हे सुधन्वा के पुत्र, उस समय अपने कर्म
या तपस्या के महत्त्व-द्वारा तुम लोग हविर्दानशील सविता के घर
आये थे।

तृतीयामृचमाह—

तत्स॑वि॒ता वो॑ऽमृत॒त्वमासु॑वद॒गोह्यं॒ यच्छ्र॒वय॑न्त॒ ऐत॑न ।
त्यं चि॑च्चम॒सम॑सु॒रस्य॒ भक्ष॑ण॒मेकं॒ सन्त॑मकृणुता॒ चतु॑र्वयम् ॥ ३ ॥

तत् । स॒वि॒ता । वः॒ । अ॒मृ॒त॒ऽत्वम् । आ । अ॒सु॒व॒त् । अगो॑ह्यम् ।
यत् । श्र॒वय॑न्तः । ऐत॑न । त्यम् । चि॒त् । च॒म॒सम् । अ॒सु॒रस्य॑ ।
भक्ष॑णम् । एक॑म् । सन्त॑म् । अ॒कृ॒णु॒त॒ । चतुः॑ऽवयम् ॥ ३ ॥

१ नि० ११. १६. । २ ऐ० ब्रा० ३. ३०. ।

हे ऋभवः यत् इदानीं सविता सर्वस्य प्रेरको देवो वो युष्माकम् अमृतत्वं देवत्वम् आसुवत् आभिमुख्येन प्रेरितवान् दत्तवानित्यर्थः यद्यदा पूर्वम् अगोह्यं संगूहितुमशक्यं सर्वैर्दृश्यमानं सवितारं श्रवयन्तः अपेक्षितं सोमपानं विज्ञापयन्तः सन्तः ऐतन आगच्छत तदानीमिति पूर्वेणान्वयः यस्माद्यूयं देवैराशापिताः सन्तः असुरस्य त्वष्टुः संबन्धिनं तेन निर्मितमित्यर्थः भक्षणं सोमपानसाधनं त्यं तं चमसम् एकं चित् असहायमेव सन्तं चतुर्वयं चतुर्व्यूहम् अकृणुत अकुरुत तथाच सृष्ट्यादौ त्वष्ट्रा कृतं चमसं होतृचमसादिमुख्यचमसचतुष्टयरूपेण ऋभवः कृतवन्त इत्यर्थः ॥ आसुवत् षूप्रेरणे तौदादिकः । श्रवयन्तः श्रु श्रवणे छान्दसो वृद्ध्यभावः । ऐतन उङ्क्षिभ्यम बहुवचनस्य तादेशोवक्षनतनथनाश्चेति तनबादेशः भक्षणम् करणे ल्युट् । अकृणुत कृवि हिंसाकरणयोश्च उङ्क्षिभ्यम बहुवचने धिन्विकृण्व्योरच्चेत्युप्रत्ययः । चतुर्वयम् यस्य अवयवाः चत्वारः अवयवा यस्य स तथोक्तः ॥ ३ ॥

३. जिस समय तुम लोग प्रकाशमान सविता को अपने सोम-पान की इच्छा बता आये थे तथा त्वष्टा के बनाये उस एक सोम-पात्र के चार टुकड़े किये थे, उस समय सविता ने तुम्हें अमरता प्रदान की थी।

चतुर्थीमृचमाह—

विष्ट्वी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृतत्वमानशुः ।
सौधन्वना ऋभवः सूरचक्षसः संवत्सरे समपृच्यन्त धीतिभिः ॥ ४ ॥

विष्ट्वी । शमी । तरणिऽत्वेन । वाघतः । मर्तासः । सन्तः । अमृतऽत्वम् ।
आनशुः । सौधन्वनाः । ऋभवः । सूरऽचक्षसः । संवत्सरे । सम् ।
अपृच्यन्त । धीतिऽभिः ॥ ४ ॥

वाघतः ऋत्विङ्नामैतत् अत्र तत्सामर्थ्यात् तद्वन्तो लक्ष्यन्ते ऋत्विग्भिरुपेता ऋभवः शमी कर्मणामैतत् चमसदानादीनि कर्माणि अन्यान्यपि एकं चमसं चतुरः कृणोतनेत्यादिनोक्तानि कर्माणि तरणित्वेन तरणिरिति क्षिप्रनाम क्षिप्रत्वेन शैघ्र्येण विष्ट्वी व्याप्य एतत् कर्मनाम व्याप्य व्याप्तिं कृत्वेत्यर्थः एवं कर्माणि कृत्वा यद्यपि मनुष्या अपि सन्तः अमृतत्वं देवत्वम् आनशुः व्यापिरे तैः कर्मभिर्लेभिरे देवत्वं प्राप्य च सौधन्वनाः सुधन्वनः पुत्राः सूरचक्षसः सूर्यसमानप्रकाशाः सूर्यसदृशज्ञाना वा ऋभवः संवत्सरे संवत्सरावयवभूते वसन्तादिकाले अनुष्ठेयैः धीतिभिः अग्निष्टोमादिकर्मभिः समपृच्यन्त संयुक्ता अभवन् हविर्भागार्हा बभूवुरित्यर्थः अत्र निरुक्तम्—कृत्वा कर्माणि क्षिप्रत्वेन वोढारो मेधाविनो वा मर्तासः सन्तोऽमृतत्वमानशिरे सौधन्वना ऋभवः सूरख्यानाः सूरप्रज्ञा वा संवत्सरे समपृच्यन्त धीतिभिः कर्मभिः ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुरि-

---

१ ऋ० सं० २. ३. ४.

वि[1] ॥ विष्टी विषूव्याप्तौ स्त्यादयश्चेतिक्तिन्प्रत्ययस्यईकारान्तादेशः। शमी सुपांसुलुगि-तिविभक्तेर्लुक्। आनशुः अशूव्याप्तौ व्यत्ययेनपरस्मैपदम् अश्नोतेश्चेत्यभ्यासादुत्तरस्यनुडागमः। अपृच्यन्त पृचीसंपर्के कर्मणिलङ् ॥ ४ ॥

४. ऋभुओं ने शीघ्र कर्मानुष्ठान किया था एवं ऋत्विकों के साथ मिले थे; इसलिए मनुष्य होकर भी अमरत्व प्राप्त किया था। उस समय सुधन्वा के पुत्र ऋभु लोग सूर्य की तरह दीप्तिमान् होकर, सांवत्सरिक यज्ञों में, हव्याधिकारी हुए।

क्षेत्र॑मिव॒ वि म॑मु॒स्तेज॑ने॒नँ एकं॒ पात्र॑मृ॒भवो॒ जेह॑मानम्।
उप॑स्तुता उप॒मं नाध॑माना॒ अम॑र्त्येषु॒ श्रव॑ इ॒च्छमा॑नाः ॥ ५ ॥ २० ॥

क्षेत्र॑म्। इ॒व। वि। म॒मुः॒। तेज॑नेन। एक॑म्। पात्र॑म्। ऋ॒भवः॑। जेह॑मानम्।
उप॑ऽस्तुताः। उ॒प॒ऽमम्। नाध॑मानाः। अम॑र्त्येषु। श्रवः॑।
इ॒च्छमा॑नाः ॥ ५ ॥ २० ॥

उपस्तुताःसमीपस्थैर्ऋत्विग्भिःस्तुताःऋभवः जेहमानंहोमक्रियांप्रतिप्रयतमानंएकंमुख्यं पात्रंपानसाधनंत्वष्ट्रानिर्मितंचमसं मानदण्डेनक्षेत्रमिवभूमिमिवतेजनेनतीक्ष्णेनशस्त्रेणचमसंच-तुष्प्रकारेणकर्तुंविममुः विशेषेणमानंकृतवन्तः किमिच्छन्तम् उपमंसर्वेषामुपमानभूतं प्रशस्तंसोम-लक्षणमन्नं नाधमानाः याचमानाः एतदेवविवृणोति अमर्त्येषुमरणरहितेषुदेवेषुमध्ये श्रवो-हविर्लक्षणमन्नंइच्छमानाः इच्छन्तोदेवैःसहसोमपानंकामयमानाः तल्लाभायचतुरश्चमसानकार्षुरित्यर्थः ॥ ममुः माङ्मानेशब्देच व्यत्ययेनपरस्मैपदम्। तेजनेन अणोऽप्रगृह्यस्यानुनासिकइत्यनवसानेऽपिव्यत्ययेनाकारस्यानुनासिकत्वम् ईषाअक्षादित्वात्प्रकृतिभावः। जेहमानम् जेहृप्रयत्ने औणादिकः अनुदात्तेत्त्वादात्मनेपदम्। उपस्तुताः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम्. उपमम् माङ्माने आतश्चोपसर्गइतिकप्रत्ययः। इच्छमानाः व्यत्ययेनात्मनेपदम् ॥ ५ ॥

५. ऋभुगण ने पार्श्व-वर्तियों के स्तुति-पात्र होकर उत्कृष्ट सोम-रस की आकांक्षा करके, और देवों में हव्य की कामना करके उसी प्रकार तीक्ष्ण अस्त्र-द्वारा एक यज्ञ-पात्र को चार भागों में विभक्त किया था, जिस प्रकार मान-दण्ड लेकर खेत मापा जाता है।

आ म॑नी॒षाम॒न्तरि॑क्षस्य॒ नृभ्यः॑ स्रु॒चेव॑ घृ॒तं जु॑हवाम वि॒द्मना॑।
त॒र॒णि॒त्वा ये पि॒तुर॑स्य सश्चि॒र ऋ॒भवो॒ वाज॑मरुहन्दि॒वो रजः॑ ॥ ६ ॥

---

1 नि० ११. १६.

आ । मनीषाम् । अन्तरिक्षस्य । नृऽभ्यः । स्रुचाऽइव । घृतम् ।
जुहवाम । विद्मना । तरणिऽत्वा । ये । पितुः । अस्य । सश्चिरे ।
ऋभवः । वाजम् । अरुहन् । दिवः । रजः ॥ ६ ॥

अन्तरिक्षस्य अन्तरिक्षलोकस्य मध्यमस्थानस्य संबन्धिभ्यो नृभ्यः यज्ञस्य नेतृभ्यः ऋभुभ्यः ऋभवो हि यज्ञस्य नेतारः तेन हि देवत्वं प्रापाः यद्वा अन्तरिक्षस्य लोकस्य नेतृभ्यः मध्यमे स्थाने ह्येते पठ्यन्ते तादृशेभ्यः स्रुचेव यथा स्रुचा जुह्वा घृतं क्षरणशीलाज्योपेतं हविः आजुहवाम मर्यादायामाकारः यथाशास्त्रमयच्छाम एवमेव मनीषां स्तुतिं विद्मना वेदनेन ज्ञानेन कुर्म इति शेषः अपि च ये ऋभवः पितुः सर्वस्य जगतः पालकस्यास्य सूर्यस्य तरणित्वा तरणित्वानि तरणकौशलानि सश्चिरे सूर्यरश्मिभूताः सन्तः प्रापुः तदुक्तम्—आदित्यरश्मयोऽप्यृभव उच्यन्ते इति। ते ऋभवः दिवो रजः रजः शब्दो लोकवाची द्योतमानस्य स्वर्गाख्यस्य लोकस्य संबन्धिनं वाजं सोमलक्षणमन्नं अरुहन् यागदानादिभिः कर्मभिः अन्यैश्च वैदिकैश्चमसचतुष्टयकरणादिकैः प्रापुः ॥ स्रुचाइव सापेक्षत्वात्सविभक्तेरुदात्तत्वम् । जुहवाम हु दानादनयोः लोटि आडुत्तमस्य पिच्चेति आडागमः । विद्मना विद ज्ञाने औणादिको मनिः न संयोगाद्वमन्तादित्यल्लोपाभावः । तरणित्वा तॄ प्लवनतरणयोः अर्तिसृधृ- धम्यम्यश्यवितॄभ्योऽनिः इति कर्तर्यनिप्रत्ययः तस्य भावस्तरणित्वम् शेश्छन्दसि बहुलमिति शेर्लोपः। सश्चिरे सश्चतिर्गतिकर्मा इत्यस्य लिटि रूपम् अस्मिन्नेके पठन्ति व्यत्ययेनात्मनेपदम् द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यमिति वचनात् द्विर्वचनाभावः इरेच् इत्यादन्तोदात्तत्वम् यद्वृत्तान्नित्यमिति निघात- प्रतिषेधः। अरुहन् रुह बीजजन्मनि प्रादुर्भावे च लुङि कृमृदृरुहिभ्यश्छन्दसीति च्लेरङादेशः। दिवः ऊडिदमित्यादिना विभक्तेरुदात्तत्वम्।रजः रञ्ज रागे रजन्त्यस्मिन्निति रजो लोकः तदुक्तम्—लोका रजांस्युच्यन्ते इति । औणादिकोऽधिकरणेऽसुन् रजकरजनरजःसूपसंख्यानमिति नलोपः सुपांसुलुगिति विभक्तेर्लुक् ॥ ६ ॥

हम अन्तरिक्ष के नेता ऋभुओं को पात्र-स्थित घृत अर्पित करते एवं ज्ञान-द्वारा स्तुति करते हैं। ऋभुओं ने एक सूर्य की तरह क्षिप्र-कारिता और दिव्य लोक का यज्ञांश प्राप्त किया था।

सामीप्यमाह—

ऋभुर्न इन्द्रः शवसा नवीयानृभुर्वाजेभिर्वसुभिर्वसुर्ददिः ।
युष्माकं देवा अवसाहनि प्रियेऽभि तिष्ठेम पृत्सुतीरसुन्वताम् ॥ ७ ॥

---

१ नि० ११. १६. । २ नि० ४. १९. ।

ऋभुः। नः। इन्द्रः। शवसा। नवीयान्। ऋभुः। वाजेभिः। वसुऽभिः। वसुः। ददिः। युष्माकम्। देवाः। अवसा। अहनि। प्रिये। अभि। तिष्ठेम। पृत्सुतीः। असुन्वताम्॥ ७॥

ऋभुर्विभ्वावाजइतित्रयःसुधन्वनःपुत्राः तत्रऋभुःशवसाबलेननवीयान्नवतरः प्रशस्यतरःऋभुर्नोऽस्माकंइन्द्रःपरमेश्वरः अस्माकंरक्षकइत्यर्थः यद्वेन्द्रएवप्रसङ्गादुरुभातीति नैरुक्त्युत्पत्त्याऋभुरित्युच्यते अपिच वाजेभिः वाजैःअस्मभ्यंदातव्यैरन्नैःवसुभिःनिवासहेतुभिः धनैश्चऋभुर्वसुरस्माकंनिवासयिता अतएवददिःतेषामन्नानांधनानांचदाताभवतु परोक्षेचैःप्रत्यक्षकृतः हेदेवाः दानादिगुणयुक्ताःऋभुप्रभृतयः युष्माकंसंबन्धिनाअवसारक्षणेनयुक्तेप्रियेअस्माकमनुकूलेअहनिदिवसेवर्तमानावयं असुन्वतांसुन्वद्यजमानविरोधिनांशत्रूणांपृत्सुतीःसेनाःअभितिष्ठेम॥ नवीयान् नवशब्दादातिशायनिकईयसुन्। वाजेभिः बहुलंछन्दसीतिभिसऐसभावः। वसु वसनिवासे अस्मादन्तर्भावितण्यर्थादशृस्वृस्निहीत्यादिनाउप्रत्ययः निदित्यनुवृत्तेराद्युदात्तत्वम्। ददिः डुदाञ्दाने आदृगमहनजनइतिकिप्रत्ययः लिड्वच्चावाद्द्विर्भावादि आतोलोपइटिचेत्याकारलोपः॥ ७॥

७. नव-बलशाली ऋभु लोग हमारे रक्षक हैं। अन्न और वास-गृह के दाता ऋभु लोग हमारे निवास-हेतु हैं; इसलिए ऋभुगण हमें वरदान दें। ऋभु आदि देववृन्द, हम लोग तुम्हारी रक्षा प्राप्त कर, अनुकूल दिन में, अभिषव-विहीन शत्रुओं की सेना को परास्त करें।

निश्चर्मणऋभवोगामपिंशतसंवत्सेनासृजतामातरंपुनः।
सौधन्वनासःस्वपस्ययानरोजिव्रीयुवानापितराकृणोतन॥ ८॥

निः। चर्मणः। ऋभवः। गाम्। अपिंशत। सम्। वत्सेन। असृजत। मातरम्। पुनरिति। सौधन्वनासः। सुऽअपस्यया। नरः। जिव्री इति। युवाना। पितरा। अकृणोतन॥ ८॥

पुराकस्यचिदृषेर्धेनुर्मृता सऋषिस्तस्याधेनोर्वत्संदृष्ट्वाऋभूनस्तुष्टाव ऋभवस्ततस्तदीयामन्यांधेनुंकृत्वा तदीयेनचर्मणासंवीय तेनवत्सेनसमयोजयन्निति अयमर्थःपूर्वार्धेनप्रतिपाद्यते हेऋभवः यूयं चर्मणःचर्मणात्वचा तृतीयार्थेषष्ठी गांधेनुंनिरपिंशत निःशेषेणाश्लिष्टांसंयुक्तामकुरुत तदनन्तरंमातरंतांगांपुनर्वत्सेनसमसृजत संश्लिष्टामकुरुत समगमयतेतियावत् अपिच हेसौधन्वनासः सुधन्वनःआङ्गिरसस्यपुत्राः नरोयज्ञस्यनेतारऋभवः स्वपस्ययाशोभनकर्मेच्छया यागदानाद्या-

1 नि० ११. १५।

चरणेनेतियावत् जिव्रीजीर्णौवृद्धौ पितरा मातापितरौ युवानापुनर्यौवनोपेतौ अकृणोतन यूयमकुरुत ॥ आपिशलं पिशअवयवे सौदादिकः शेमुखादीनामित्विनुम् । सौधन्वनासः सुधन्वनः पुत्राः सौधन्वनाः अनितिविभक्तिविभावः आज्जसेरसुक् आमन्त्रितस्यचेत्याद्युदात्तत्वम् । स्वपस्यया शोभनमपःस्वपः तदिच्छास्वपस्या सुपआत्मनःक्यच् अप्रत्ययादितिविभावेअकारप्रत्ययः । जिव्री जृष्वयोहानौ जृसृस्तुजागृभ्यःक्विन् व्वोरूपधायारितीत्वम् रेफवकारयोःस्थानविपर्ययः बहुलवचनाद्धलिचेतिदीर्घाभावः नित्त्वादाद्युदात्तत्वम् । युवाना सुपांसुलुगितिविभक्तेराकारः । पितरा पिताचमाताचपितरौ पितामात्रेतिपिताशिष्यते पूर्ववद्विभक्तेराकारः । अकृणोतन कृविहिंसाकरणयोश्च इदित्त्वान्नुम् धिन्विकृण्व्योरचेत्युप्रत्ययः तत्सन्नियोगेनवकारस्यचाकारः अतोलोपेसतितस्यस्थानिवद्भावाल्लघूपधगुणाभावः लङःमध्यमबहुवचनस्यतशब्दस्यतप्तनप्तनथनाश्चेतितनबादेशः तस्यपित्त्वेनङित्त्वाभावाद्गुणः ॥ ८ ॥

८. ऋभुगण, तुमने चमड़े से गौ को आच्छादित किया था और उस गौ के साथ बछड़े का फिर योग कर दिया था। सुधन्वा के पुत्र और यज्ञ के नेता शोभन कर्म-द्वारा तुमने वृद्ध माता-पिता को फिर युवा कर दिया था।

नवमीमृचमाह—

वाजेभिर्नोवाजसातावविड्ढ्यृभुमाँइन्द्रचित्रमादर्षिराधः।
तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीउतद्यौः॥९॥२१॥

वाजेभिः। नः। वाजऽसातौ। अविड्ढि। ऋभुऽमान्। इन्द्र। चित्रम्।
आ। दर्षि। राधः। तत्। नः। । मित्रः। वरुणः। ममहन्ताम्।
अदितिः। सिन्धुः। पृथिवी। उत। द्यौः॥ ९ ॥ २१ ॥

हेइन्द्र ऋभुमान्ऋभुभिस्तद्वानिनयोप्यृभुशब्देनोपचारादत्रोच्यन्ते तैर्युक्तस्त्वंवाजसातौ वाजस्यान्नस्यसंभजनेनिमित्तभूतेसति वाजेभिरन्नैरविड्ढिअस्मान्रक्ष अथवा वाजसातिरितिसंग्रामनाम वाजसातौसंग्रामे वाजेभिर्वेजनयुक्तैरश्वैः अविड्ढिअस्मान्रक्ष अपिच चित्रंचायनीयंराधोधनंआदर्षि अस्मभ्यंदातुमाद्रियस्व तृतीयसवनेऋभुभिःसहेन्द्रस्यावस्थानात् प्रसङ्गादनेन्द्रस्तुतिः यदेतदस्माभिःप्रार्थितं अस्मदीयंतन्मित्रादयोममहन्तांपूजयन्तु ॥ वाजसातौ वनषणसंभक्तौ भावेक्तिन् जनसनखनांसञ्झलोरित्यात्वम् वाजानां सातिर्यस्मिन् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । अविड्ढि विष्लृव्याप्तौ लोटोहिः बहुलंछन्दसीतिशपोलुक् हुझल्भ्योहेर्धिः

हुत्वमभ्त्वे छन्दस्यपिदृश्यत इति दृशिग्रहणात् लेटोऽडाटावित्यडागमः यद्वा भववेतेर्लेटि सिब्बहुलंलेटीति बहुलवचनाद्विकरणः सिप् तस्यार्धधातुकत्वादिट् आदेशप्रत्यययोरिति षत्वम् पित्वादिपूर्वस्वरः। पाशुपात् इत्यनुदात्तयोर्मनुबिविमनुपदादात्वम्। धर्षि इङ् आदरे लोटि व्यत्ययेनपरस्मैपदम् बहुलंछन्दसीतिविकरणस्यलुक् ॥ ९ ॥

९. इन्द्र, ऋभुओं के साथ मिलकर अन्न-दान के समय हमें अन्न-दान करते हो—विचित्र धन-दान करते हो। मित्र, वरुण, अदिति, सिन्धु, पृथिवी और आकाश हमारे उस धन को पूजित करें।

॥ इतिप्रथमस्यसप्तमेएकत्रिंशोवर्गः ॥ ३१ ॥

तक्षन्नितिपञ्चर्चंषष्ठंसूक्तम् कुत्सस्यार्षमार्भवम् पञ्चमीत्रिष्टुप् शिष्टाश्चतस्रोजगत्यः तथाचानुक्रान्तम्—तक्षन्पञ्चान्त्यात्रिष्टुप्। अग्निष्टोमेवैश्वदेवशस्त्रइदंसूक्तमार्भवंनिविद्धानम् सूत्रितंच—तक्षन्रथमयंवेनश्चोदयत्पृश्निगर्भाइति।

तत्रप्रथमामृचमाह—

तक्षन्रथंसुवृतंविद्मनापसस्तक्षन्हरीइन्द्रवाहावृषण्वसू।
तक्षन्पितृभ्यामृभवोयुवद्वयस्तक्षन्वत्सायमातरंसचाभुवम् ॥ १ ॥

तक्षन्। रथम्। सुऽवृतम्। विद्मनाऽअपसः। तक्षन्। हरी इति। इन्द्रऽवाहा। वृषण्वसू इति वृषण्ऽवसू। तक्षन्। पितृऽभ्याम्। ऋभवः। युवत्। वयः। तक्षन्। वत्साय। मातरम्। सचाऽभुवम् ॥ १ ॥

विद्मनापसः उत्कृष्टेनज्ञानेननिष्पाद्यकर्माणोऽभवत्कर्माणोवाऋभवः रथमश्विनोरारोहणार्थं सुवृतं शोभनवर्तनं सुचक्रंवातक्षन्नकुर्वन् तथाइन्द्रवाहाविन्द्रस्य वाहनभूतौ हरीहरणशीलौ एवत्संज्ञकावश्वौ तक्षन्कृतवन्तः कीदृशौ वृषण्वसू सेचनसमर्थेनदृढतरेणधनेनबलेनवायुक्तौ अपिचपितृभ्यां स्वकीयाभ्यां मातापितृभ्यांवृद्धाभ्यांयुवद्यौवनोपेतंवयः आयुःऋभवस्तक्षन् कृतवन्तः तथावत्सायमातरंगां सचाभुवंसहभुवंसहवर्तमानातक्षन्नकुर्वन् ॥ तक्षन् तक्षूत्वक्षूतनूकरणे लङि बहुलंछन्दस्यमाङ्योगेपीत्यडभावः। सुवृतं शोभनंवर्तनंयस्य इति सुवृत् वृतुवर्तने क्विप्चेति क्विप्। विद्मनापसः विदज्ञाने अन्येभ्योपिदृश्यन्तइतिदृशिग्रहणात् भावेमनिन् संज्ञापूर्वकस्यविधेरनित्यत्वाद्गुणाभावः बहुलवचनाद्विभक्त्यलुक् परादिश्छन्दसीतिस्वरः यद्वा विदज्ञाने औणादिकोभावेमक् ततः पामादिलक्षणोनप्रत्ययः विद्मनं ज्ञानमपः कर्मयेषाम् बहुव्रीहौपूर्वपदमन्तोदात्तत्वम् छान्दसंपूर्वसवर्णदीर्घत्वम्। इन्द्रवाहा इन्द्रं वहतइतीन्द्रवाहौ वहश्चेतिण्विप्रत्ययः

अवतपधाया इवि तृक्षि: सुपांसुलुगिति विभक्तेराकारः। वृषण्वसू वृषसेचने कनिन्युवृषितक्षी-
त्यादिना कनिन् नित्त्वादाद्युदात्तत्वम् वृषण्वस्वश्वयोरुपसंख्यानमिति वसुशब्दे उत्तरपदे वृषण्-
भावः बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। युवत् अत्र युवन्शब्दः सामर्थ्यात्तद्वृत्तिनिमित्तं युवत्वमात्र-
माचष्टे तदस्मिन्नस्तीति युवत् छान्दसो वर्णलोपः॥ १॥

१. उत्तम-ज्ञानशाली और शिल्पी ऋभुओं ने अश्विनीकुमारों के लिए सुनिर्मित रथ प्रस्तुत किया था और इन्द्र के वाहक हरि नाम के बलवान् दोनों घोड़ों को बनाया था। ऋभुओं ने अपने माता-पिता को यौवन और बछड़े को सहचरी गौ का दान किया था।

आनो॑य॒ज्ञाय॑तक्षतऋभु॒मद्वयः॒क्रत्वे॒दक्षा॑यसुप्र॒जाव॑ती॒मिष॑म्।
यथा॒क्षया॑म॒सर्व॑वीरया॒वि॒शातन्नः॒शर्धा॑यधासथा॒स्वि॑न्द्रि॒यम्॥ २॥

आ। नः॒। य॒ज्ञाय॑। त॒क्ष॒त॒। ऋ॒भु॒ऽमत्। वयः॑। क्रत्वे॑। दक्षा॑य। सु॒ऽप्र॒जाव॑तीम्। इष॑म्। यथा॑। क्षया॑म। सर्व॑ऽवीरया। वि॒शा। तत्। नः॒। शर्धा॑य। धा॒स॒थ॒। सु। इ॒न्द्रि॒यम्॥ २॥

हे ऋभवः नोऽस्माकं यज्ञाय यज्ञार्थं ऋभुमद् उरु भासमानं युक्तं वयो हविर्लक्षणमन्नं आतक्षत आ-
समन्तादुत्पादयत एतदेव विव्रियते—क्रत्वे क्रतवे अस्मदीयाय कर्मणे दक्षाय बलाय च तादर्थ्ये चतुर्थी
एतदुभयार्थं सुप्रजावतीं शोभनाभिः पुत्रपौत्रादिलक्षणाभिः प्रजाभिर्युक्तामिषमन्नमातक्षतेति वि-
शेषः अपि च सर्ववीरया सर्वैर्वीरैः पुत्रादिभिरुपेतया विशा प्रजया सह यथा येन प्रकारेण क्षयाम सु-
खेन निवसाम तथा तादृशमिन्द्रियं धननामैतत् धनं नोऽस्मभ्यं शर्धाय बलार्थं सु धासथ सुष्ठु प्रयच्छ-
तेत्यर्थः॥ ऋभुमत् उरु भातीति नैरुक्तव्युत्पत्त्या ऋभुशब्दः प्रकाशमात्रवाची ह्रस्वनुड्भ्यां मतु-
बिति मतुप उदात्तत्वम्। क्रत्वे जसादिषु छन्दसि वावचनमिति घेर्ङितीति गुणाभावे यणादेशः। क्षयाम
क्षि निवासगत्योः व्यत्ययेन शप्। धासथ धाञो लेट्यडागमः सिब्बहुलं लेटीति सिप् अन्येषा-
मपि दृश्यत इति संहितायां दीर्घत्वम्॥ २॥

२. हमारे यज्ञ के लिए उज्ज्वल अन्न प्रस्तुत करो। हमारे यज्ञ और बल के लिए सन्तान-हेतु-भूत अन्न प्रस्तुत करो, जिससे हम सारी वीर सन्ततियों के साथ आनन्द से रहें। हमारे बल के लिए ऐसा ही अन्न दो।

आत॑क्षतसा॒तिम॒स्मभ्य॑मृभवःसा॒तिंरथा॑यसा॒तिमर्व॑तेनरः।
सा॒तिंनो॒जैत्रीं॒संम॑हेतवि॒श्वहा॑जा॒मिमजा॑मि॒पृत॑नासुस॒क्षणि॑म्॥ ३॥

आ । तक्षत । सातिम् । अस्मभ्यम् । ऋभवः । सातिम् । रथाय ।
सातिम् । अर्वते । नरः । सातिम् । नः । जैत्रीम् । सम् । महेत ।
विश्वहा । जामिम् । अजामिम् । पृतनासु । सक्षणिम् ॥ ३ ॥

हे नरो नेतारो ऋभवः अस्मभ्यमनुष्ठातृभ्यः सातिं संभजनीयं धनमावक्षत आतक्ष्णुत कुरुत तथा अस्मदीयाय रथाय रंहणशीलाय पुत्रादये रथायैव सातिं संभजनीयं धनमातक्षत तथा अर्वते अश्वाय सातिं संभजनीयमन्नं धनं वा अश्वयोग्यमातक्षतेत्येव किञ्च विश्वहा सर्वदा हे ऋभवोस्माकं जैत्रीं जयशीलामपरिमितबलेन सर्वाधिकां सातिं संभजनीयं धनं संमहेत सर्वोपि जनः सम्यक्पूजयतु वयं च पृतनासु संग्रामेषु जामिं सहजातमजामिं सहाजातं सहानुत्पन्नमपि शत्रुं सासक्षणिमस्मानभिभवन्तं युष्मत्प्रसादादभिभवेमेति शेषः ॥ सातिं ऊतियूतिजूतिसातिहेतिकीर्तयश्चेत्यादिना क्तिन्नुदात्तत्वम्। महेत महपूजायाम्। सक्षणिं सहमभिभवे औणादिकः सनिप्रत्ययः ॥ ३ ॥

३. नेता ऋभुगण, हमारे लिए अन्न प्रस्तुत करो। हमारे रथ के लिए धन तैयार करो। हमारे घोड़े के लिए अन्न प्रस्तुत करो। संसार हमारे जयशील धन की प्रतिदिन पूजा करे और हम संग्राम में, अपने बीच उत्पन्न या अनुत्पन्न, शत्रुओं को परास्त कर सकें।

ऋभुक्षणमिन्द्रमाहुवऊतयऋभून्वाजान्मरुतःसोमपीतये।
उभामित्रावरुणानूनमश्विनातेनोहिन्वन्तुसातयेधियेजिषे ॥ ४ ॥

ऋभुक्षणम् । इन्द्रम् । आ । हुवे । ऊतये । ऋभून् । वाजान् ।
मरुतः । सोमऽपीतये । उभा । मित्रावरुणा । नूनम् । अश्विना ।
ते । नः । हिन्वन्तु । सातये । धिये । जिषे ॥ ४ ॥

ऋभुक्षणं महान्तमेतत् महान्तमिन्द्रमाहुवे आह्वयामि किमर्थम् ऊतये रक्षणार्थम् तथा ऋभून् वाजान् ऋभुविभ्वावाजः इति नामधेयाः पुत्राः तत्र प्रथमोत्तमवाचकशब्दाभ्यां मध्यमोपि लक्ष्यते यतः शब्दद्वयेन त्रयोप्युच्यन्ते तदुक्तं यास्केन—प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेनेति[2]।
एवंविधानृभून्मरुतश्च सोमपीतये सोमपानाय आह्वयामि तथा उभा युगलरूपेण संहत्य वर्तमानौ द्वौ मित्रावरुणौ अश्विनौ च नूनमवश्यं सोमपानायाह्वयामीति शेषः अपि च आहूतास्ते इन्द्रादयो नोस्मान् हिन्वन्तु प्रेरयन्तु गमयन्त्वित्यर्थः किमर्थं सातये संभजनीयाय धनाय धिये धनसाध्याय कर्मणे जिषे

१ वज्रुवेत्यपिपाठः   २ नि० ११, १६,।

वेतुं रणूणांमचार्थेच ॥ ऋभुक्षणम् उरुभाशमानेस्थानेक्षियतिनिवसतीत्यृभुक्षाः उरुपूर्वात् क्षियते-र्डम्प्रत्ययश्चेतिकुप्रत्ययः आद्योऽलोपश्छान्दसः आकारलोपः पूर्वपदस्यऋभावश्च ऋभुशब्दोपपदात् क्षिनिवासगत्योरित्यस्मात् एतेस्यचेतिविधीयमानइनिप्रत्ययोबहुलवचनाद्भवति टिलोपः इ-दोत्सर्वनामस्थानेइत्यत्वमिकारस्य वाक्पूर्वस्यनिगमेइतिविकल्पनादुपधादीर्घाभावः यद्वा ऋभुं-र्भुक्षिनक् क्वित्वाद्गुणाभावः अवरसनावनृसवे । सोमपीतये पापाने स्यागापापचोभावइतिभावेक्ति-न् घुमास्थेतीत्वम् दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् । हिन्वन्तु हिगतौवृद्धौच अस्मात्-ण्यर्थावितण्यर्थात् लोटिस्वादित्वाच्छ्नुः । जिषे जिजये तुमर्थेसेसेनितिक्सेप्रत्ययः ॥ ४ ॥

४. अपनी रक्षा के लिए महान् इन्द्र को तथा ऋभु, विभु, वाज और मरुतों को, सोम-पानार्थ, हम बुलाते हैं। मित्र, वरुण और अश्विनी-कुमारों को भी बुलाते हैं। वे हमारे धन, यज्ञ, कर्म और विजय को सिद्ध कर दें।

ऋभुर्भरा॒य सं शि॑शातु सा॒तिं स॑मर्य॒जिद्वाजो॑ अ॒स्माँ अ॑विष्टु ।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥५॥३२॥

ऋ॒भुः । भरा॑य । सम् । शि॒शा॒तु॒ । सा॒तिम् । स॒म॒र्य॒ऽजित् । वाजः॑ ।
अ॒स्मान् । अ॒वि॒ष्टु॒ । तत् । नः॒ । मि॒त्रः । वरु॑णः । म॒म॒ह॒न्ता॒म् ।
अदि॑तिः । सिन्धुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ॥ ५ ॥ ३२ ॥

ऋभुः प्रथमोऽस्माकंसातिंसंभजनीयंधनंभरायसङ्ग्रामार्थंसंशिशातु सम्यक् तीक्ष्णीकरोतु सङ्ग्रामेऽपिधनमस्मभ्यंप्रयच्छत्वित्यर्थः समर्यजित् समर्यामनुष्यास्तैःसहवर्तन्तइतिसमर्याः सङ्ग्रामाः तत्रशत्रूणांजेता वाजः एतत्संज्ञस्तृतीयऋभुः अस्मान् रक्षोपूर्वमविष्टुअवतु । सङ्ग्रामात् रक्षत्वित्य-र्थः यदनेनसूक्तेनप्रार्थितं अस्मदीयंतन्मित्रादयोममहन्तांपूजयन्तु ॥ शिशातु शोतनूकरणे ब-हुलंछन्दसीतिविकरणस्यश्लुः आदेचउपदेशेऽशितीत्यात्वम् द्विर्भावः इस्वत्वेनबहुलंछन्दसीत्यभ्यासस्येत्व-म् । अविष्टु अवतेर्लोटि सिब्बहुलंलेटीतिबहुलग्रहणात्सिप् इडागमः पत्वष्टुत्वे ॥ ५॥

५. संग्राम के लिए हमें ऋभु धन दें। समर-विजयी वाज हमारी रक्षा करें। मित्र, वरुण, अदिति, सिन्धु, पृथिवी और आकाश हमारी यह प्रार्थना पूजित करें।

॥ इतिप्रथमस्यसप्तमेद्वात्रिंशोवर्गः ॥ ३२ ॥

इंळइतिपञ्चर्चंद्वितीयंसूक्तंआङ्गिरसस्यकुत्सस्यार्षम् चतुर्विंशीपञ्चर्चेत्रिष्टुभौ शिष्टाद्यपोर्विराट्जगत्यः आद्यःपादोद्यावापृथिव्यः द्वितीयआग्नेयः शिष्टंसूक्तमाश्विनम् त-थाचानुक्रान्तम्—ईळेपञ्चाधिकाश्विनमाद्योपादोऽग्निर्लिङ्गोक्तदेवताअन्त्येत्रिष्टुभाविति । प्रवर्ग्येऽभिष्ट-वेऽप्येतत्सूक्तम् सूत्रितंच—ग्रावाणेवेळेद्यावापृथिवीइतीति । प्रातरनुवाकेचाश्विनेक्रतौजागतेछन्दस्ये-

तस्सूक्तं सूत्रितं च—अगन्म महा नासत्याईळे द्यावापृथिवी इति आवसथमिति । आश्विनशस्त्रेप्येतत् प्रातर-नुवाकन्यायेनेत्यतिदेशात् । तथा सोमे सन्निचत्वार्यतिरिक्तोक्थानि तत्राच्छावाकातिरिक्तोक्थे-ऽप्येतत्सूक्तं षष्ठपञ्चकविस्तरेऽप्यत्रितम्—ईळे द्यावापृथिवी उभा उ नूनमिति ।

तत्र प्रथमामृचमाह—

ईळे॒ द्यावा॑पृथि॒वी पू॒र्वचि॑त्तये॒ऽग्निं घ॒र्मं सु॒रुचं॒ याम॑न्नि॒ष्टये॑ ।
याभि॒र्भरे॑ का॒रमंशा॑य॒ जिन्व॑थ॒स्ताभि॑रू॒ षु ऊ॒तिभि॑रश्वि॒ना ग॑तम् ॥ १ ॥

ईळे॑ । द्यावा॑पृथि॒वी इति॑ । पूर्व॑ऽचित्तये । अ॒ग्निम् । घ॒र्मम् । सु॒ऽरुच॑म् ।
याम॑न् । इ॒ष्टये॑ । याभिः॑ । भरे॑ । का॒रम् । अंशा॑य । जिन्व॑थः । ताभिः॑ ।
ऊ॒म् इति॑ । सु । ऊ॒तिऽभिः॑ । अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥ १ ॥

हे द्यावापृथिवी द्यावापृथिव्यौ ईळे स्तौमि किमर्थं पूर्वचित्तये पूर्वमेवाश्विनोः प्रज्ञापनाय यद्वाश्विनोः प्रत्यासन्ने यज्ञे द्यावापृथिवी अश्विनौ स्तौमि पूर्वचित्तये अन्यदीयात्स्तोत्रात्पूर्वमेवास्मदीयस्य स्तोत्रस्य प्रबोधनाय तथा चोक्तम्—यत्काव अश्विनौ द्यावापृथिव्यावित्येक इति । अपि च यामन् यामनि अश्विनोरागमने सति इष्टये तदीययागार्थं आहवनीयरूपेण स्थापितमग्निं स्तौमीति शेषः कीदृशमग्निं घर्मं प्रवृञ्जनेन दीप्तं सुरुचं अत एव शोभनकान्तियुक्तम् हे अश्विना अश्विनौ भरे संग्रामनामैतत् संग्रामे अंशाय युष्मदीयभागाय यज्ञमान्यार्थं याभिरूतिभिः पालनैः सहागत्य कारं कारशब्दः शंसवाची तेन समियुक्ताः संगिरन्ते कारं शब्दकारिणं शंखं जिन्वथः मुखेनापूरयथः ताभिः ताद्दशीभिः ऊतिभिः पालनैः सह उ इति समुच्चये अस्मानपि सुष्ठु आगतम् आगच्छतम् ॥ ईळे ईड स्तुतौ उत्तमैकवचनमिट् अदादित्वाच्छपो लुक् अनुदात्तेत्त्वात्सार्वधातुकानुदात्तत्वे धातुस्वरः । द्यावापृ-थिवी द्यौश्च पृथिवी च दिवो द्यावेति द्यावादेश आद्युदात्तो निपातितः पृथिवीशब्दो ङीषन्तोऽन्तोदात्तः दे-वताद्वन्द्वे चेत्युभयपदप्रकृतिस्वरत्वम् अपृथिवीति पर्युदासात् नोत्तरपदेऽनुदात्तादाविति निषेधाभावः वा छन्दसीति पूर्वसवर्णदीर्घत्वम् । पूर्वचित्तये चिती संज्ञाने अस्मादन्यभावे विषये यथा भावे क्तिन् म-न्त्रे वृषादित्वात्पूर्वपदान्तोदात्तत्वम् । सुरुचम् रुच दीप्तावभिप्रीतौ च संपदादिलक्षणो भावे क्विप् शो-भना रुक् यस्य नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । यामन् या प्रापणे आतो मनिन्क्वनिब्वनिपश्च सुपां सुलु-गिति ङेर्लुक्छन्दसि इति बहुलवचनाद्भावे मनिन् । कारं क्रियतेऽनेनेति कारः करणे घञ् कर्षात्वत इत्यन्तो-

शाचत्तम् । जिन्वथः जिविप्रीणनार्थः अनयीणलहेतुभूवमापूरणंलक्षयवे धनेनापूरितोहिपु-रुषः प्रीतोभवति इवित्वान्नुम औणादिकः शपःपित्वादनुदात्तत्वम् तिङोङुपदेशात्सार्वधातुकस्व-रेणधातुस्वरःशिष्यते यद्वृत्तान्नित्यमितिनिघातप्रतिषेधः तनहिव्यवहितेपिकार्यमिष्यवइत्युक्त-म् । कृषु इकःसुत्रीतिदीर्घत्वम् सुप्तइतिपत्वम् ईषाक्षादित्वात्सुप्रजकारस्यप्रकृतिभावः । ऊतिभिः अववेर्भावेक्तिन् ज्वरत्वरेत्यादिनावकारस्योपधायाश्चऊठ् ऊतियूतीत्यादिनानिपात-नात्क्तिनउदात्तत्वम् । गतं गमेर्लोटि बहुलंछन्दसीतिविकरणस्यलुक् अनुदात्तोपदेशेत्या-दिनानुनासिकलोपः ॥ १ ॥

१. मैं अश्विनीकुमारों को पहले बताने के लिए द्यावा-पृथिवी की स्तुति करता हूँ। अश्विद्वय के आने पर उनको पूजा के लिए प्रदीप्त और शोभन कान्ति से युक्त अग्नि की स्तुति करता हूँ। अश्वि-द्वय, तुम लोग संग्राम में अपना भाग पाने के लिए जिन सब उपायों से साथ शंख बजाते हो, उन सब उपायों के साथ आओ।

युवोर्दानायसुभरांअसश्चतोरथमातस्थुर्वचसंनमन्तवे ।
याभिर्धियोवथःकर्मन्निष्टयेताभिरूपुऊतिभिरश्विनागतम् ॥ २॥

युवोः । दानाय । सुऽभराः । असश्चतः । रथम् । आ । तस्थुः । वचसम् । न । मन्तवे । याभिः । धियः । अवथः । कर्मन् । इष्टये । ताभिः । ऊम् इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ २ ॥

सुभराः शोभनस्तोत्रभरणाः असश्चतः अन्यत्रानासक्ताः स्तोतारःहेअश्विनौ युवोर्युवयोः रथमातस्थुः आतिष्ठन्ति प्राप्नुवन्ति किमर्थं दानाय युष्मत्कर्तृकदानार्थंधनलाभायेत्यर्थः तत्र-दृष्टान्तः—वचसंन यथान्यायोपेतेनवचसावाक्येनयुक्तंविपश्चितं मन्तवेज्ञातुमिष्टार्थमभिपत्तये स्तो-तारः प्राप्नुवन्तितद्वत् अपिच कर्मन्कर्मणिइष्टयेयागार्थमप्रवृत्तान् धियःध्यातॄन्धीयिइक्ष्यानोपेतान् याभिरूतिभिः पालनैः अवथः युवांरक्षथः ताभिरित्यादिपूर्ववत् ॥ वचसं अर्शआदित्वात्म-त्वर्थीयोच् । मन्तवे मनज्ञाने कमिमनिजनीत्यादिनातुप्रत्ययः। धियः ध्यायन्तीतिधियःस्तोतारः ध्यैचिन्तायाम् क्विप्चेतिक्विप् वचन्देनदृशिग्रहणानुकर्षणात्संप्रसारणम् । कर्मन् सुपांसुलु-गितिसप्तम्यालुक् नङिसंबुध्योरितिनलोपप्रतिषेधः ॥ २ ॥

२. जैसे न्याय-वाक्यों से युक्त पण्डित के पास शिक्षा के लिए खड़े होते हैं, हे अश्वि-द्वय, वैसे ही अन्य देवों में अनासक्त स्तोता लोग, शोभन स्तुति के साथ, अनुग्रह-प्राप्ति की आशा में, तुम्हारे रथ के पास खड़े होते हैं। अश्वि-द्वय, तुम लोग जिन उपायों से यज्ञ-सम्पादन के लिए सुमति लोगों की रक्षा करते हो, उन उपायों के साथ, आओ।

युवं तासां दिव्यस्य प्रशासने विशां क्षयथो अमृतस्य मज्मना। याभिर्धेनुमस्वं पिन्वथो नरा ताभिरू षु ऊतिभिरश्विना गतम्॥ ३॥

युवम्। तासाम्। दिव्यस्य। प्रऽशासने। विशाम्। क्षयथः। अमृतस्य। मज्मना। याभिः। धेनुम्। अस्वम्। पिन्वथः। नरा। ताभिः। ऊम् इति। सु। ऊतिऽभिः। अश्विना। आ। गतम्॥ ३॥

हे नरा नेतारावश्विनौ दिव्यस्य दिवि भवस्य स्वर्गे समुत्पन्नस्य अमृतस्य सोमस्य पानेनोत्पन्नेन मज्मना बलेन युक्तौ युवं युवां तासां या स्त्रिषु लोकेषु वर्तन्ते तासां सर्वासां विशां प्रजानां प्रशासने प्रकृष्टानुशासनेन शिक्षणे क्षयथः ऐश्वर्यकर्मायम् ईशाथे समर्थौ भवथः यद्वा मज्मना अन्येषामसाधारणेन बलेन विशां प्रजानां दिवि भवस्य अमृतस्य वृष्ट्युदकस्य प्रशासने प्रदानेन क्षयथः ईश्वरौ भवथः अपि च याभिरूतिभिः रक्षाभिः अस्वं प्रसवासमर्थां धेनुं गां शयुनाम्ने ऋषये पिन्वथः सिञ्चथः पयसा पूरितवन्तावित्यर्थः ताभिरूतिभिरित्यादि पूर्ववत्॥ अस्वम् षूङ्प्राणिगर्भविमोचने सवनं सूः संपदादिलक्षणो भावे क्विप् नास्ति सूः अस्यामित्यसूः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् अमि यणादेशः उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येति परस्यानुदात्तस्य स्वरितत्वम्। पिन्वथः पिवि सेचने भौवादिकः इदित्वान्नुम्॥ ३॥

३. हे नेतृ-द्वय, तुम लोग स्वर्गीय-अमृत-लब्ध बल-द्वारा तीनों भुवनों में रहनेवाले मनुष्यों का शासन करने में समर्थ हो। जिन सब उपायों-द्वारा तुमने प्रसव-रहित शयु की गौओं को दुग्धवती किया था, अश्विद्वय, उन उपायों के साथ, आओ।

याभिः परिज्मा तनयस्य मज्मना द्विमाता तूर्षु तरणिर्विभूषति। याभिस्त्रिमन्तुरभवद्विचक्षणस्ताभिरू षु ऊतिभिरश्विना गतम्॥ ४॥

याभिः। परिऽज्मा। तनयस्य। मज्मना। द्विऽमाता। तूर्षु। तरणिः। विऽभूषति। याभिः। त्रिऽमन्तुः। अभवत्। विऽचक्षणः। ताभिः। ऊम् इति। सु। ऊतिऽभिः। अश्विना। आ। गतम्॥ ४॥

परिज्मा परितो गन्ता वायुः तनयस्य आलीयस्य पुत्रस्याग्नेः अग्निर्हि व्यानवृत्त्यात्मना वर्तमानेन वायुना मथ्यमानः सन् जायते तथा च श्रूयते—अथ यः प्राणापानयोः सन्धिः स व्यानः। अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानंस्तानि करोतीति। यद्वा सूक्ष्मपादौ वायुसकाशादुत्पन्नत्वादग्नेर्वायुपुत्रत्वम् आनायतेष—

वायोरग्नेरिति । एवंस्वपुत्रस्याग्नेर्मज्मनाबलेनयुक्तःसन् द्विमाता द्वयोर्लोकयोर्निर्मातारिः पृथिवीस्थानवायुरन्तरिक्षस्थानउभयोर्मिलितयोरुभयनिर्मातृत्वमुपपन्नम् यद्वा द्विमातेतितनयस्य विशेषणम् सुपांसुलुगितिषष्ठ्याःसुः द्विमातृकस्यद्वाभ्यामरणिभ्यांजातस्यएवंभूतोवायुः हेअश्विनौ याभिःऊतिभिर्हेतुभूतैःपालनैः तूर्षुतरीतृषुधावत्सुमध्येतरणिः अतिशयेनतरीता शीघ्रगामीविभूषतिविभवतिव्याप्तोभवति यद्वा विशेषेणसर्वमलंकरोति अपिचत्रिमन्तुः त्रयाणांमन्तानिविधेषुपाकयज्ञहविर्यज्ञसोमयज्ञेषुआसादितज्ञानः कक्षीवान्याभिर्युष्मदीयाभिरूतिभिर्विचक्षणः विशिष्टज्ञानयुक्तोभवत् ताभिःसर्वाभिरूतिभिः अस्मानागच्छतम् ॥ परिज्मा परिपूर्वादजगतिक्षेपणयोरित्यस्मात् श्वनुक्षन्नित्यादौनिपात्यते । तूर्षु तृप्लवनतरणयोः बहुलंछन्दसीत्युत्वम् हलिचेतिदीर्घः यद्वा त्वरतेः क्विप् ज्वरत्वरेत्यादिनावकारोपधयोरूठ् सावेकाचइतिविभक्तेरुदात्तत्वम् । विभूषति भवतेर्लेटयडागमः सिब्बहुलंलेटीतिसिप् यद्वा भूषअलंकारे शौवादिकः । विचक्षणः अनुदात्तेतश्चहलादेरितियुच् ॥ ४ ॥

४. चारों ओर विचरण करनेवाले वायु अपने पुत्र और द्विमातृक अग्नि के बलद्वारा युक्त होकर और शीघ्रगामियों के बीच अतीव शीघ्रगन्ता होकर जिन सारे उपायों-द्वारा सारे स्थानों में व्याप्त हुए हैं तथा जिन सब उपायों-द्वारा कक्षीवान् ऋषि विशिष्ट-ज्ञान युक्त हुए थे, उन उपायों के साथ, आओ।

याभी रेभं निवृतं सितमद्भ्य उद्वन्दनमैरयतं स्वर्दृशे ।
याभिः कण्वं प्र सिषासन्तमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥५॥२३॥

याभिः । रेभम् । निऽवृतम् । सितम् । अत्ऽभ्यः । उत् । वन्दनम् । ऐरयतम् । स्वः । दृशे । याभिः । कण्वम् । प्र । सिसासन्तम् । आवतम् । ताभिः । ऊम् इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ ५ ॥ २३ ॥

हेअश्विनौ याभिरूतिभिः रेभंएतत्संज्ञमृषिं निवृतं असुरैः कूपेमुनिवारितं सितंदीर्घैःपाशैर्बद्धम् एवंभूतमृषिंअद्भ्यःसकाशादुदैरयतं उदगमयतम् तथावन्दनंएतत्संज्ञमृषिंचतथाभूतमुदैरयतम् किमर्थं स्वः स्वरादित्यंदृशेद्रष्टुं अपिच कण्वंअसुरैरन्धकारेप्रक्षिप्तंसिषासन्तंआलोकं संभक्तुमालोकमिच्छन्तंयाभिरूतिभिः प्रावतं प्रकर्षेणरक्षतम् ताभिरित्यादिसमानम् ॥

१ है० आ० अष्टमपाठके. ।

रेभम् रेभृशब्दे रेभतेरसौवीतिरेशः पचाद्यच् । निवृतं वृञ्वरणे असमावन्यमिविषयथांवकर्म- णिनिष्ठा गतिरनन्तरइतिगतेः प्रकृतिस्वरत्वम् । सितम् षिञ्बन्धने । अङ्गाः ऋहिदमित्यादिनावि- षकेरुदात्तत्वम् । वन्दनं वदिअभिवादनस्तुत्योः वन्दतेरसौवीतिवन्दनः नन्द्यादिलक्षणोल्युः लित्स्वरेणप्रत्ययात्पूर्वस्योदात्तत्वम् । स्वरित्येतदादित्यवादित्यस्यचसाधारणनामधेयम् तदुक्तंया- स्केन—स्वरादित्योभवतिसुअरणःसुईरणइति । स्वरादिनिपातमित्यव्ययत्वात्सुपोलुक् । दृशे दृशोविर्त्येचेतिदृशिस्तुमर्थेकेप्रत्ययान्तोनिपात्यते । सिषासन्तम् वनषणसंभक्तौ सनि सनीवन्तर्धेत्यादिनाविकल्पनादिडभावः जनसनखनांसञ्झलोरित्यात्वम् द्विर्भावेभ्यासस्यह- स्वत्वम् सन्यतइतीत्वम् ॥ ५ ॥

५. जिन उपायों से तुम लोगों ने असुरों-द्वारा कूप में फेंके हुए और पाश से बाँधे हुए रेभ नामक ऋषि को जल से बचाया था एवं इसी प्रकार वन्दन नाम के ऋषि को भी जल से बचाया था तथा जिन उपायों-द्वारा असुरों-द्वारा अन्धकार में निःक्षिप्त आलोकेच्छु कण्व ऋषि की रक्षा की थी, अश्विद्वय, उन उपायों के साथ, आओ।

याभिरन्तकंजसमानमारणेभुज्युंयाभिरव्यथिभिर्जिजिन्वथुः ।
याभिःकर्कन्धुंवय्यंचजिन्वथस्ताभिरूषुऊतिभिरश्विनागतम् ॥६॥
याभिः । अन्तकम् । जसमानम् । आऽअरणे । भुज्युम् । याभिः ।
अव्यथिऽभिः । जिजिन्वथुः । याभिः । कर्कन्धुम् । वय्यम् । च ।
जिन्वथः । ताभिः । ऊम् इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥६॥

आरणमगाधंकूपादि तत्रासुरैःप्रक्षिप्तंजसमानंतैर्हिंस्यमानंअन्तकंशत्रूणामन्तकरंएतत्संज्ञंरा- जर्षि हेअश्विनौ याभिरूतिभिःअवथोरक्षथः तथा भुज्युंसर्वस्यपालकमेतत्संज्ञंसमुद्रमध्येनिम- ग्नं तुग्रपुत्रमस्यपुत्रंराजर्षि याभिरूतिभीरक्षणहेतुभूताभिः अव्यथिभिः व्यथारहिताभिः नौभिः जिजिन्वथुः युवामतर्पयतम् एतन्मन्त्रान्तरे—तुग्रोहभुज्युमश्विनोदमेघइत्यादिकेविस्पष्टयिष्यते अपिच कर्कन्धुं वय्यं चएतत्संज्ञकौचासुरैः पीड्यमानौयाभिरूतिभिः जिन्वथप्रीणयथः त- गमन्यत् ॥ जसमानम् जसिहिंसायाम् चक्रिभावेव्यत्ययेनशप् । आरणे आङ्पूर्वादर्तेर्ल्युट् । जिजिन्वथुः जिविप्रीणनार्थः लिट्युसिरूपम् ॥ ६ ॥

६. कूप में फेंककर असुर लोग जिस समय अन्तक नाम के राजर्षि की हिंसा कर रहे थे, उस समय तुम लोगों ने जिन उपायों-द्वारा उनकी रक्षा की थी, जिन सब व्यथा-शून्य नौका-रूप उपायों के द्वारा समुद्र में निमग्न तुग्र-पुत्र भुज्यु की रक्षा की थी और जिन सब उपायों-द्वारा असुरों-द्वारा पीड्यमान कर्कन्धु और वय्य नाम के मनुष्यों की रक्षा की थी, उनके साथ, आओ।

समीपुनमाह—

याभिः॒ शु॒चन्तिं॑ धन॒सां सु॑षं॒सदं॑ त॒प्तं घ॒र्मम॑ो॒म्याव॑न्त॒मत्र॑ये ।
याभिः॒ पृश्नि॑गुं पुरु॒कुत्स॒माव॑तं॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्वि॒ना ग॑तम् ॥ ७ ॥

याभिः॑ । शु॒चन्ति॑म् । ध॒न॒ऽसाम् । सु॒ऽसं॒सद॑म् । त॒प्तम् । घ॒र्मम् ।
ओ॒म्याऽव॑न्तम् । अत्र॑ये । याभिः॑ । पृश्नि॑ऽगुम् । पु॒रु॒ऽकु॒त्स॑म् ।
आव॑तम् । ताभिः॑ । ऊँ॒ इति॑ । सु । ऊ॒तिऽभिः॑ । अ॒श्वि॒ना॒ । आ ।
ग॒त॒म् ॥ ७ ॥

हे अश्विनौ धनसां धनस्य संभक्तारम् शुचन्तिं एतन्नामानं सुषंसदं सीदन्त्यस्मिन्निति संसद्गृहम् शोभनसंसदं याभिरूतिभिरकुरुतम् तथा अत्रये याभिरूतिभिस्तप्तम् अनेन संतप्तं घर्मम् महावीरम् ओम्यावन्तम् सुखयुक्तम् सुखेन स्पर्शयोग्यमकुरुतम् यद्वा शतद्वारे यन्त्रगृहे असुरैः पीड्यमाना-यात्रये दीप्तं पीडासाधनमग्निं संतापकारिणं ओम्यावन्तं सुखवन्तमकुरुतम् यथास्मै सुखं भवति तथा हिमेनोदकेन तमग्निमवारयेथाम् यास्कपक्षे तु अत्रये हविषामत्त्रेऽग्नये हविरुतत्त्यर्थं सूर्यकिरणसंतप्तं घर्मं निदाघमहः ओम्यावन्तं वृष्टिप्रदानेन उदकोपेतं कृतवन्तावित्ययमर्थः अपि च याभिरूतिभिः पृश्निगुं पुरुकुत्सं च आवतम् अरक्षतम् ताभिः सर्वाभिरूतिभिः अस्मानागच्छतम् ॥ शुचन्तिम् शुच दीप्तौ औणादिकोऽन्तिप् । धनसाम् धनसनस्तनकर्मणोषिट् विड्वनोरनुनासिकस्यादित्यात्वम् । सुषंसदम् शोभनं संसद्यस्य नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । ओम्यावन्तम् अवतेरन्येभ्योऽपि दृश्यन्त इति मनिन् ज्वरत्वरेत्यादिना वकारस्योपधायाश्चोठ् गुणः छन्दसीवेत्यहार्थे मतुप् न-स्त्वद्विवइति टिलोपः येचाभावकर्मणोरिति प्रकृतिभावः तुन्प्रत्ययेनन मत्वर्थे । पृश्निगुम् पृश्नयो नानावर्णा गावो यस्य सतथोक्तः गोस्त्रियोरुपसर्जनस्येति गोशब्दस्य ह्रस्वत्वम् ॥ ७ ॥

७. जिन उपायों-द्वारा शुचन्ति नामक व्यक्ति को धनवान् और शोभन-गृह-सम्पन्न किया था, जिन उपायों-द्वारा असुरों-द्वारा शतद्वार नाम के घर में प्रक्षिप्त और अग्नि-द्वारा दह्यमान अत्रि के गात्र-दाही उत्ताप को भी सुखकर किया था और जिन उपायों-द्वारा पृश्निगु और पुरुकुत्स नामक व्यक्तियों की रक्षा की थी, अश्विद्वय, उनके साथ, आओ।

याभिः॒ शची॑भिर्वृषणा परा॒वृजं॒ प्रान्धं श्रो॒णं चक्ष॑स॒ एत॑वे कृ॒थः ।
याभि॒र्वर्ति॑कां ग्रसि॒ताम॑मुञ्चतं॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्वि॒ना ग॑तम् ॥८॥

याभिः । शचीभिः । वृषणा । पराऽवृजम् । प्र । अन्धम् । श्रोणम् ।
चक्षसे । एतवे । कृथः । याभिः । वर्तिकाम् । ग्रसिताम् । अमुञ्चतम् ।
ताभिः । ऊम् इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ ८ ॥

हेवृषणाकामानांवर्षितारावश्विनौ याभिःशचीभिःकर्मभिः प्रज्ञाभिर्वा परावृजं एतन्नामकमृषिंप-ङ्गुंसन्तमपङ्गुमकुरुतम् तथाअन्धंदृष्टिरहितंसन्तमृज्राश्वमृषिंचक्षसेप्रकाशायसम्यक्चक्षुषादर्शना-य याभिरूतिभिःप्रणयथःप्रकर्षेणाकुरुथः याभिश्चश्रोणंविगुणजानुकमेवसन्तमृषिमेतवेगन्तुंप्रणयथः प्रकर्षेणकृतवन्तौ अपिच याभिरूतिभिः वर्तिकांचटकसदृशस्यपक्षिणःस्त्रियंप्रसितां वृकेणग्र-स्तांअमुंचतं वृकास्यान्निर्मुक्तामकुरुतम् यास्कपक्षेतु वृकेणविवृतज्योतिष्केणसूर्येणयाभिर्ग्रस्तां वर्तिकामत्यहःप्रावर्तमानामुषसंतस्मादमोचयतमितियोज्यम् ताभिःसर्वाभिरूतिभिरस्मानभ्याग-च्छतम् ॥ वृषणा वृषसेचने कनिन्युवृषीत्यादिनाकनिन् । परावृजम् वृजीवर्जने परावृणक्तिप-रापंविनाशयतीतिपरावृक् क्विप्चेतिक्विप् कृदुत्तरपदप्रकृतिस्वरत्वम् । एतवे तुमर्थेसेसेनितिए-तवेन्प्रत्ययः । कृथः डुकृञ्करणे बहुलंछन्दसीतिविकरणस्यलुक् ॥ ८ ॥

८. अभीष्ट-वर्षिद्वय, जिन सब कर्मों-द्वारा पंगु परावृज ऋषि को गमन-समर्थ किया था, अन्ध ऋजाश्व को दृष्टि समर्थ किया था और भग्नजानु श्रोण को गमन-समर्थ किया था तथा जिन कार्यों-द्वारा वृक से गृहीत वर्त्तिका नाम की स्त्री-पक्षी को मुक्त किया था, अश्विद्वय, उन उपायों से आओ।

नवमीमृचमाह—

याभिःसिन्धुंमधुमन्तमसश्चतंवसिष्ठंयाभिरजरावजिन्वतम् ।
याभिःकुत्संश्रुतर्यंनर्यमावतंताभिरूषुऊतिभिरश्विनागतम् ॥९॥

याभिः । सिन्धुम् । मधुऽमन्तम् । असश्चतम् । वसिष्ठम् । याभिः ।
अजरौ । अजिन्वतम् । याभिः । कुत्सम् । श्रुतर्यम् । नर्यम् । आवतम् ।
ताभिः । ऊम् इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ ९ ॥

---

१ नि० ५, २०।

हेअश्विनौ सिन्धुंस्यन्दनशीलांनदीं मधुमन्तंमधुसदृशेनोदकेनपूर्णां याभिरूतिभिः असश्चतं अगमयतं प्रवाहयतमित्यर्थः हेअजरौजरारहितावश्विनौ वसिष्ठमृषिं याभिरूतिभिः अजिन्वतं अप्रीणयतम् याभिश्चकुत्सादींस्त्रीनृषीनावतमरक्षतं ताभिःसर्वाभिरूतिभिः अस्मानपिसुसुष्ठुआगच्छतम् ॥ मधुमन्तम् मधुशब्दान्मतुप् लिङ्गव्यत्ययः । असश्चतम् सश्चतिर्गतिकर्मा अस्मादन्तर्भावितण्यर्थाल्लुङ् ॥ ९ ॥

९. अजर अश्विनीकुमारद्वय, जिन उपायों-द्वारा मधुमयी नदी को प्रवाहित किया था, जिन उपायों-द्वारा वसिष्ठ को प्रीत और कुत्स, श्रुतर्य तथा नर्य नाम के ऋषियों की रक्षा की थी, अश्विद्वय, उनके साथ आओ।

याभि॑र्वि॒श्पलां॑ धन॒साम॑थ॒र्व्यं॑ स॒हस्र॑मीळ्ह आ॒जावजि॑न्वतम् ।
याभि॒र्वश॑म॒श्व्यं॑ प्रे॒णिमाव॑तं॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्वि॒ना ग॑तम् ॥ १० ॥ २४ ॥

याभिः॑ । वि॒श्पला॑म् । धन॒ऽसाम् । अ॒थ॒र्व्य॑म् । स॒हस्र॑ऽमीळ्हे । आ॒जौ । अजि॑न्वतम् । याभिः॑ । वश॑म् । अ॒श्व्य॑म् । प्रे॒णिम् । आव॑तम् । ताभिः॑ । ऊ॒म् इति॑ । सु । ऊ॒तिऽभिः॑ अ॒श्वि॒ना । आ । ग॒त॒म् ॥ १० ॥ २४ ॥

हेअश्विनौ धनसां धनंसंभजमानां अथर्व्यं अगच्छन्तींछिन्नजङ्घात्वेनगन्तुमसमर्थां थर्वतिर्गतिकर्मा विश्पलामेतत्संज्ञामगस्त्यपुरोहितस्यखेलस्यसंबन्धिनींसहस्रमीळ्हे मीळ्हमितिधननाम बहुधनोपेतेआजौसंग्रामे याभिरूतिभिः अजिन्वतं गन्तुं समर्थामकुरुतम् एतच्चरित्रं हिवेरिवाच्छेदिपर्णमित्यत्रविस्पष्टयिष्यते याभिश्चअश्व्यंअश्वाख्यस्यपुत्रं प्रेणिं स्तुतेःप्रेरयितारं वशंएतत्संज्ञमृषिंआवतमरक्षतम् ताभिःसर्वाभिरूतिभिः सहास्मानभ्यागच्छतम् ॥ प्रेणिम् प्रेणृगतिप्रेरणश्लेषणेषु औणादिकइन्प्रत्ययः ॥ १० ॥

१०. जिन उपायों-द्वारा धनवती और जंघा टूटने के कारण चलने में असमर्थ, अगस्त्य-पुरोहित खेल ऋषि की पत्नी, विश्पला को बहुधन-युक्त समर में जाने में समर्थ किया था तथा जिन उपायों-द्वारा अश्व ऋषि के पुत्र और स्तोत्र-तत्पर वश ऋषि की रक्षा की थी, उनके साथ आओ।

याभिः॑ सुदानू औशि॒जाय॑ व॒णिजे॑ दी॒र्घश्र॑वसे॒ मधु॒ कोशो॒ अक्ष॑रत् ।
क॒क्षीव॑न्तं स्तो॒तारं॒ याभि॒राव॑तं॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्वि॒ना ग॑तम् ॥ ११ ॥

१ ऋ० सं० १.८.१०।

याभिः। सुदानू इति सुऽदानू। औशिजाय। वणिजे। दीर्घऽश्रवसे।
मधु। कोशः। अक्षरत्। कक्षीवन्तम्। स्तोतारम्। याभिः। आवतम्।
ताभिः। ऊम् इति। सु। ऊतिऽभिः। अश्विना। आ। गतम् ॥११॥

उशिक्संज्ञादीर्घतमसःपत्नी तस्याः पुत्रोदीर्घश्रवानामकश्चिदृषिः अनावृष्ट्यां जीवना-र्थमकरोद्वाणिज्यम् सचवर्षणार्थमश्विनौतुष्टाव तौचाश्विनौमेघंप्रेरितवन्तौ अयमर्थःपूर्वार्धे प्रतिपाद्यते हेसुदानूशोभनदानावश्विनौ औशिजायउशिक्पुत्रायवणिजे वाणिज्यंकुर्वते दीर्घश्र-वसे एतत्संज्ञायर्षयेयाभिर्युष्मदीयाभिरूतिभिः हेतुभूताभिः कोशोमेघोमधुमाधुर्योपेतं वृष्ट्यु-दकमक्षरत् असिञ्चत् युष्मत्प्रसादादपेक्षितांवृष्टिंजनितवानित्यर्थः अपिचउशिजः पुत्रं स्तोतारं कक्षी-वन्तंएतत्संज्ञमृषिंयाभिरूतिभिरावतमरक्षतम् ताभिःसर्वाभिरूतिभिःसहास्मानप्यागच्छतम् ॥ कक्षीवन्तम् कक्ष्यारज्जुरश्वस्य तयायुक्तः कक्षीवान् आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्व-दितिनिपातनान्मतुपोवत्वम् संप्रसारणम् ॥ ११ ॥

११. दानशील अश्विद्वय, जिन उपायों-द्वारा दीर्घतमा की उशिज् नामक स्त्री के पुत्र वणिक्-वृत्ति दीर्घश्रवा को मेघ से जल दिया था तथा उशिज् के पुत्र स्तोता कक्षीवान् की रक्षा की थी, उनके साथ आओ।

द्वादशीमृचमाह—

याभीरसांक्षोदसोद्नःपिपिन्वथुरनश्वंयाभीरथमावतंजिषे।
याभिस्त्रिशोकउस्रियाउदाजततांभिरूषुऊतिभिरश्विनागतम् ॥१२॥

याभिः। रसाम्। क्षोदसा। उद्नः। पिपिन्वथुः। अनश्वम्। याभिः।
रथम्। आवतम्। जिषे। याभिः। त्रिऽशोकः। उस्रियाः। उत्ऽआजत।
ताभिः। ऊम् इति। सु। ऊतिऽभिः। अश्विना। आ। गतम् ॥१२॥

रसानदीभवतिरसतेःशब्दकर्मणइतियास्कः[1]। हेअश्विनौ याभिरूतिभिःहेतुभूताभिःरसांनदीं अनावृष्ट्यामजलरहितांक्षोदसाकूलानिसंपिषताउद्नः उदकेनपिपिन्वथुः पूर्णांपूरितवन्तौ तथाअनश्वं अश्वैर्वियुक्तंआलीमंरथंजिषेजेतुंयाभिरूतिभिरावतमवगमयतम् अपिच याभिरूतिभिःकण्वपु-

१ नि० ११.२५।

त्रिशोकऋषिः उस्रियाः अपहृतागाः उदाजत उदगमयत् असुरसकाशाद्येभे याभिः सर्वाभिरू-तिभिःसहास्मानभ्यागच्छतम्॥ क्षोदसा क्षुदिर्संपेषणे औणादिकोऽसुन्। उद्नः इतीयैकवच-नस्यप्रभृत्युपोऽम्भवन्तीतिप्रसादेशः पद्दन्नित्यादिनाउदकशब्दस्योदन्नभावः भसंज्ञायां अल्लोपो-नइत्यकारलोपः। पिपिन्वथुः पिविसेचने इदित्त्वान्नुम्। जिषे जिजये तुमर्थेसेसेनिति क्सेप्रत्य-यः। ववाथवअजगतिक्षेपणयोः॥ १२॥

१२. जिन उपायों-द्वारा नदियों के तटों को जल-पूर्ण किया था, अपने अश्व-रहित रथ को, विजय के लिए, चलाया था तथा तुम्हारे जिन उपायों से कण्वपुत्र त्रिशोक नामक ऋषि ने अपनी अपहृत गौ का उद्धार किया था, अश्विद्वय, उन उपायों के साथ आओ।

याभिः सूर्यं परियाथः परावति मन्धातारं क्षैत्रपत्येष्वावतम्।
याभिर्विप्रं प्र भरद्वाजमावतं ताभिरू षु ऊतिभिरश्विना गतम्॥१३॥

याभिः। सूर्यम्। परिऽयाथः। पराऽवति। मन्धातारम्। क्षैत्रऽपत्येषु। आवतम्। याभिः। विप्रम्। प्र। भरत्ऽवाजम्। आवतम्। ताभिः। ऊम् इति। सु। ऊतिऽभिः। अश्विना। आ। गतम्॥१३॥

हेअश्विनौ परावतिदूरदेशेऽस्थितंसूर्यंतमोरूपेणस्वर्भानुनावृतमादित्यंतस्मात्तमसोमोचयितुं याभिरूतिभिः परियाथःपुनःपरितोगच्छथः तथामन्धातारमृषिं क्षैत्रपत्येषुक्षेत्राणांपतिः अधि-पतिः क्षेत्रपतिःतत्संबन्धिषुकर्मसुआवतमरक्षतम् अपिचयाभिरूतिभिर्विप्रंमेधाविनंभरद्वाजमृ-षिंअन्नप्रदानेनप्रावतंप्रकर्षेणरक्षतम् ताभिःसर्वाभिरूतिभिःसहरक्षणार्थमस्मानभ्यागच्छतम्॥ क्षैत्रपत्येषु ब्राह्मणादेराकृतिगणत्वात्कर्मण्यर्थेष्यञ्॥ १३॥

१३. जिन उपायों-द्वारा दूरवर्ती सूर्य के पास, उन्हें ग्रहण के अन्ध-कार से मुक्त करने के लिए जाते हो तथा क्षेत्रपति के कार्य में मान्धाता राजर्षि की रक्षा की थी और जिन उपायों-द्वारा अन्नदान कर भरद्वाज ऋषि की रक्षा की थी, उनके साथ आओ।

याभिर्महामतिथिग्वं कशोजुवं दिवोदासं शम्बरहत्य आवतम्।
याभिः पूर्भिद्ये त्रसदस्युमावतं ताभिरू षु ऊतिभिरश्विना गतम्॥१४॥

याभिः। महाम्। अतिथिऽग्वम्। कशःऽजुवम्। दिवःऽदासम्। शम्बरऽहत्ये। आवतम्। याभिः। पूःऽभिद्ये। त्रसदस्युम्। आवतम्। ताभिः। ऊम् इति। सु। ऊतिऽभिः। अश्विना। आ। गतम्॥१४॥

हेमीढ्वः सेक्तः कामाभिवर्षकनित्यतरुणवारुद्र क्षयद्वीरस्यक्षयितप्रतिपक्षस्यमरुद्भिर्युक्तस्यवा तवसुमतिंशोभनांकल्याणींअनुग्रहात्मिकांबुद्धिं तेतवसंबन्धिनोवयंदेवयज्ययादेवयागेन त्वद्देवत्येनयज्ञेनअश्यामव्याप्नवाम त्वंचास्माकंविशःप्रजाअभिलक्ष्यआचरआगच्छ किंकुर्वन् सुम्नायन्नित् सुम्नमितिसुखनाम तासांप्रजानांसुखमिच्छन्नेवसुखप्रदएवभवेत्यर्थः ततोवयंअरिष्टवीरा वीर्यवन्तइतिवीराःप्रजाः अरिष्टाअहिंसितावीरायेषांतथाभूताःसन्तः तेतुभ्यंहविः चरुपुरोडाशादिकंजुहवाम चोदितेआधारेप्रक्षिपाम ॥ सुमतिं मतिर्मननं शोभनंमननंयस्यां बुद्धौसासुमतिः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । देवयज्यया छन्दसिनिष्टर्क्येत्यादौयजेर्यत्प्रत्ययोनिपात्यते स्त्रीलिङ्गत्वाच । मीढ्वः मिहसेचने दाश्वान्साह्वान्मीढ्वानितिक्वसुप्रत्ययान्तो-निपातितः संबुद्धौमतुवसोरुरितिरुत्वम् । सुम्नायन् सुम्नंपरेषामिच्छति छन्दसिपरेच्छायामपीतिक्यच् नच्छन्दस्यपुत्रस्येतीत्वदीर्घयोर्निषेधः देवसुम्नयोर्यजुषिकाठकेइतिविधीयमानमात्वंव्यत्ययेनात्रापिद्रष्टव्यम् ॥ ३ ॥

३. अभीष्ट-वाता रुद्र, तुम वीरों के क्षयकारी अथवा ऐश्वर्यशाली मरुतों से युक्त हो। हम देव-यज्ञ-द्वारा तुम्हारा अनुग्रह प्राप्त करें। हमारी सन्तानों के सुख की कामना करके उनके पास आओ। हम भी प्रजा का हित देखकर तुम्हें हव्य देंगे।

त्वेषंवयंरुद्रंयज्ञसाधंवंकुंकविमवसेनिह्वयामहे।
आरेअस्मद्दैव्यंहेळोअस्यतुसुमतिमिद्वयमस्यावृणीमहे ॥ ४ ॥

त्वेषम् । वयम् । रुद्रम् । यज्ञऽसाधम् । वंकुम् । कविम् । अवसे । नि । ह्वयामहे । आरे । अस्मत् । दैव्यम् । हेळः । अस्यतु । सुऽमतिम् । इत् । वयम् । अस्य । आ । वृणीमहे ॥ ४ ॥

अवसेरक्षणाय रुद्रंमहादेवंनिह्वयामहे नितरामाह्वयामः कीदृशंत्वेषंदीप्तम् यज्ञसाधंयज्ञस्यसाधयितारं एषहियज्ञंस्विष्टंकरोति तथाचतैत्तिरीयकेदेवावैयज्ञाद्रुद्रमन्तरायन्नित्युपक्रम्याम्नातम्—स्विष्टंवैनइदंभविष्यतियदिमंराधयिष्यामइतितत्स्विष्टकृतःस्विष्टकृत्त्वमिति[1] । वंकुंकुटिलगन्तारं कविंक्रान्तदर्शिनम् सचरुद्रः दैव्यंदेवस्यद्योतमानस्य संबन्धिनंहेळः क्रोधं अस्मदारेअस्मत्तोदूरदेशेअस्यतुप्रेरयतु अस्यमहादेवस्यसुमतिमित्शोभनामनुग्रहरूपांबुद्धिमेववयमावृणीमहे आभिमुख्येनसंभजामहे ॥ यज्ञसाधं यज्ञंसाधयतीतियज्ञसाध् सिधुसंराद्धौ सिध्यतेरपारलौकिकेइत्यात्वम् यद्वा राधसाधसंसिद्धौ अस्मादण्यन्ताद्क्विप् । वंकुं वकि-

1 तै० सं० २. ६. ८. ।

कौटिल्ये औणादिकडप्रत्ययः । निह्वयामहे निसमुपविभ्यो ह्व इत्यात्मनेपदम् । दैव्यं देवाय-ज्ञादिविभ्यो दीव्यतीयोयञ् । अस्यतु अस्तुक्षेपणे दैवादिकः । वृणीमहे वृङ् संभक्तौ क्रैयादि-कः ॥ ४ ॥

४. रक्षण के लिए हम दीप्तिमान्, यज्ञ-साधक, कुटिलगति और मेधावी रुद्र का आह्वान करते हैं। वह हमारे पास से अपना क्रोध दूर करें। हम उनका अनुग्रह चाहते हैं।

दिवोवराहमरुषंकपर्दिनंत्वेषंरूपंनमसानिह्वयामहे ।
हस्तेबिभ्रद्भेषजावार्याणिशर्मवर्मच्छर्दिरस्मभ्यंयंसत् ॥५॥५॥

दिवः । वराहम् । अरुषम् । कपर्दिनम् । त्वेषम् । रूपम् । नमसा । नि । ह्वयामहे । हस्ते । बिभ्रत् । भेषजा । वार्याणि । शर्म । वर्म । छर्दिः । अस्मभ्यम् । यंसत् ॥ ५ ॥ ५ ॥

वराहं वराहारमुत्कृष्टभोजनं यद्वा वराहवद्दृढाङ्गं अरुषमारोचमानं कपर्दिनं जटा-भिर्युक्तं त्वेषं तेजसा दीप्यमानं रूपं निरूपणीयं वेदान्तैरधिगम्यं एवंभूतं रुद्रं नमसा हविर्ल-क्षणेनान्नेन नमस्कारेण वा दिवो द्युलोकसकाशान्निह्वयामहे नितरामाह्वयामः स चाहूतो रुद्रः हस्ते स्वकीये वार्याणि सर्वैर्वरणीयानि भेषजा भैषज्यानि रोगशमनहेतुभूतानि बिभ्रत् धारय-न्नस्मभ्यं स्तोतृभ्यः शर्म आरोग्यलक्षणं सुखं वर्म आयुधानां निवारकं कवचं छर्दिः गृहनामैतत् गृहं च प्रयच्छतु ॥ बिभ्रत् डुभृञ् धारणपोषणयोः जौहोत्यादिकः लटः शतृ भृञामिदित्यभ्यास-स्येत्वम् । भेषजा भिषज चिकित्सायाम् कण्ड्वादिः पचाद्यच् अतो लोपयलोपौ सुपां सुलुगिति आजा-देशः निपातनाद्रूपसिद्धिः शेश्छन्दसि बहुलमिति शेर्लोपः । वार्याणि वृङ् संभक्तौ ऋहलोर्ण्यत् ईडव-न्देत्याद्युदात्तत्वम् । छर्दिः उछृदिर् दीप्तिदेवनयोः छृद्यते दीप्यते सुवर्णादिभिर्धनैः प्रकाश्यत इति छ-र्दिः गृहं अर्चिशुचिहुसृपिछादिछर्दिभ्य इस् । यंसत् यमउपरमे लेटि अडागमः सिब्बहुलं लेटीति सिप् इतश्च लोप इति इकारलोपः ॥ ५ ॥

५. हम उन स्वर्गीय उत्कृष्ट वराह की तरह दृढाङ्ग, अरुणवर्ण, कपर्दी, दीप्तिमान् और उज्ज्वल रूप धर रुद्र को नमस्कार-द्वारा बुलाते हैं। हाथ में वरणीय भेषज धारण करके वे हमें सुख, वर्म और गृह प्रदान करें।

इदंपित्रेमरुतामुच्यतेवचःस्वादोःस्वादीयोरुद्रायवर्धनम् ।
रास्वाचनोअमृतमर्तभोजनंत्मनेतोकायतनयायमृळ ॥ ६ ॥

इदम्। पित्रे। मरुताम्। उच्यते। वचः। स्वादोः। स्वादीयः। रुद्राय। वर्धनम्। रास्व। च। नः। अमृत। मर्तऽभोजनम्। त्मने। तोकाय। तनयाय। मृळ ॥ ६ ॥

इदंस्तुतिलक्षणंवचः मरुतां एकोनपञ्चाशत्संख्यानां देवविशेषाणां पित्रे जनकाय रुद्रायेश्वरायउच्यते उच्चारयति कीदृशं स्वादोः स्वादीयः रसवतोमधुघृतादेरपिस्वादुतरं अविधानेनहर्षजनकमित्यर्थः वर्धनंस्तुत्यस्यप्रवर्धकं स्तोत्रेणहिदेवताहृष्टासतीवर्धते रुद्रस्यमरुतां पितृत्वमेवमाम्नायते—पुराकदाचिदिन्द्रोऽसुरानजैषीत् तदानींदितिरसुरमाता इन्द्रहननसमर्थंपुत्रंकामयमाना तपसाभर्तुःसकाशाद्गर्भंलेभे इमंवृत्तान्तमवगम्यइन्द्रोवज्रहस्तःसन् सूक्ष्मरूपोभूत्वातस्याउदरंप्रविश्यतंगर्भंसप्तधाबिभेद पुनरप्येकैकंसप्तखण्डमकरोत् तेसर्वेगर्भैकदेशाः योनेर्निर्गत्यारुदन् एतस्मिन्नवसरेलीलार्थंगच्छन्तौ पार्वतीपरमेश्वरौ इमान्ददृशतुः महेशंप्रति पार्वत्येवमवोचत् इमेमांसखण्डाः यथाप्रत्येकंपुत्राःसंपद्यन्तां एवंत्वयाकार्यंममपित्रेचैतीतिरस्तीति सचमहेश्वरस्तान् समानरूपान् समानवयसः समानालङ्कारान् पुत्रान्कृत्वागौर्यैप्रददौ तवेमेपुत्राः सन्त्विति अतःसर्वेपुत्राःरुद्रपुत्राःरुद्रस्यमरुतोरुद्रपुत्राइतिस्तूयन्ते रौद्रेपुत्रमरुतांपिताऽरुद्रइति अपिच हे अमृतमरणरहितरुद्र मर्तभोजनंमर्तानांमनुष्याणां भोगपर्याप्तमन्नंनोऽस्मभ्यंरास्व प्रयच्छ तथात्मने आत्मने द्वितीयार्थेचतुर्थी मां तोकायतोकं पुत्रं तनयं तत्पुत्रंचमृळ सुखय ॥ पित्रे उदात्तयणइतिविभक्तेरुदात्तत्वम्। रास्व रादाने व्यत्ययेनात्मनेपदम्। त्मने मन्त्रेष्वाङ्यादेरात्मनइत्यत्रान्येष्वापिच्छन्दसिदृश्यतइतिवचनादात्मनआकारलोपः ॥ ६ ॥

६. मधु से भी अधिक मधुर यह स्तुति-वाक्य मरुतों के पिता रुद्र के उद्देश से उच्चारित किया जाता है। इससे स्तोता की वृद्धि होती है। मरण-रहित रुद्र, मनुष्यों का भोजन-रूप अन्न हमें प्रदान करो। मुझे, मेरे पुत्र को और पौत्र को सुख दान करें।

मानोमहान्तमुतमानोअर्भकंमानउक्षन्तमुतमानउक्षितम्।
मानोवधीःपितरंमोतमातरंमानःप्रियास्तन्वोरुद्ररीरिषः ॥ ७ ॥

मा। नः। महान्तम्। उत। मा। नः। अर्भकम्। मा। नः। उक्षन्तम्। उत। मा। नः। उक्षितम्। मा। नः। वधीः। पितरम्। मा। उत। मातरम्। मा। नः। प्रियाः। तन्वः। रुद्र। रिरिषः ॥ ७ ॥

हेरुद्र नोस्माकंमध्येमहान्तंवृद्धंमावधीः माहिंसीः उतअपिच नोस्माकंअर्भकंबालंमाहिंसीः
तथानोस्माकंमध्येउक्षन्तंसेक्तारंमध्यवयस्कंयुवानंमावधीः उतअपिचनोस्माकमुक्षितंगर्भरूपे-
णसीपुनिषिक्तमपत्यंमावधीः तथानोस्माकंपितरंजनकंमावधीः उतअपिचमातरंजननींमावधीः
तथानोस्माकंप्रियाःस्नेहविषयास्तन्वः शरीराणि तनुभुवाःप्रजावा हेरुद्र मारीरिषःमाहिंसीः ॥
वधीः हन्तेर्माङि लुङिवेतिवधादेशः सचादन्तः सिचइट् अतोलोपस्यस्थानिवद्भावाद्वृद्ध्यभा-
वः। रीरिषः रिषहिंसायाम् ण्यन्ताल्लुङिचङिणिलोपोपधाह्रस्वत्वादीनि छान्दसःपदकालीनो-
भ्यासह्रस्वः ॥ ७ ॥

७. रुद्र, हममें से बूढ़े को नहीं मारना, बच्चे को नहीं मारना, सन्तानोत्पादक युवक को नहीं मारना तथा गर्भस्थ शिशु को भी नहीं मारना। हमारे पिता का वध नहीं करना, माता की हिंसा नहीं करना तथा हमारे प्रिय शरीर में आघात नहीं करना।

मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः।
वीरान्मानोरुद्रभामितोवधीर्हविष्मन्तःसदमित्त्वाहवामहे ॥ ८ ॥

मा। नः। तोके। तनये। मा। नः। आयौ। मा। नः। गोषु। मा। नः।
अश्वेषु। रिरिषः। वीरान्। मा। नः। रुद्र। भामितः। वधीः।
हविष्मन्तः। सदम्। इत्। त्वा। हवामहे ॥ ८ ॥

हेरुद्र नोस्माकंतोकादिविषयेमारीरिषः माहिंसीः तोकशब्दःपुत्रवाची तनयस्तत्पुत्रः आयु-
रित्यन्वोदात्तंमनुष्यनाम पुत्रपौत्रव्यतिरिक्तोयोस्मदीयोमनुष्यस्तस्मिन्हिंसांमाकृथाः तथा हेरुद्र
वीरान्विक्रान्तान्शौर्योपेतान्अस्मदीयान्भामितःक्रुध्यःसन्मावधीः माहिंसीः वयंचहविष्म-
न्तोहविर्भिर्युक्ताःसन्तःसदमित्सर्वदैव त्वांहवामहेआह्वयामहे ॥ आयौ इणगतौ छन्दसीणइत्यु-
ण्प्रत्ययः। भामितः भामक्रोधे कोधिकरणेचेतिकर्तरिक्तः। हवामहे ह्वेञोलटिबहुलंछन्दसी-
तिसंप्रसारणम्॥ ८ ॥

८. रुद्र, हमारे पुत्र, पौत्र, मनुष्य, गौ और अश्व को नहीं मारना। रुद्र, क्रुद्ध होकर हमारे वीरों की हिंसा नहीं करना; क्योंकि हव्य लेकर हम सदा ही तुम्हें बुलाते हैं।

देवसुवांहविष्षुरुद्रस्यपशुपतेर्यागेउपतेस्तोमानित्यादिकेयाज्यानुवाक्ये सूत्रितंच—उपते-
स्तोमान्पशुपाइवाकरमितिद्वेइति।

उपतेस्तोमान्पशुपाइवाकरंरास्वापितर्मरुतांसुम्नमस्मे।
भद्राहितेसुमतिर्मृळयत्तमाथावयमवइत्तेवृणीमहे ॥ ९ ॥

उप॑ । ते॒ । स्तोमा॑न् । प॒शु॒पाःऽइ॑व । आ । अ॒क॒र॒म् । रास्व॑ । पि॒तः॒ ।
म॒रु॒ता॒म् । सु॒म्नम् । अ॒स्मे इति॑ । भ॒द्रा । हि । ते॒ । सु॒ऽम॒तिः ।
मृ॒ळ॒य॒त्ऽत॑मा । अथ॑ । व॒यम् । अवः॑ । इत् । ते॒ । वृ॒णी॒म॒हे॒ ॥९॥

हेरुद्र स्तोमान्स्तुतिरूपाणिवचनानितेतुभ्यंउपाकरम् उपकरोमिसमर्पयामि तत्रदृष्टान्तः— यथा पशूनांपालयितागोपः प्रातःकालेस्वस्मैसमर्पितान्पशून्सायंकालेस्वामिभ्यःप्रत्यर्पयति एवंत्वत्तःकामाँल्लब्ध्वास्तुतिरूपान्मन्त्रान्स्तुतिसाधनतयातुभ्यंप्रत्यर्पयामीत्यर्थः हेमरुतांपितः मरुत्संज्ञानांदेवानामुत्पादकरुद्र नोस्मभ्यंसुम्नंसुखंरास्वदेहि अपिच तेत्वदीयासुमतिःकल्याणी बुद्धिः मृळयत्तमाअतिशयेनसुखयित्रीतथा भद्राभजनीया हियस्मादेवंतस्मात् अथान-न्तरंवयंतेत्वदीयमवोरक्षणंवृणीमहेसंभजामहे ॥ अकरं छन्दसिलुङ्लङ्लिटइतिवर्तमानेलुङ् कृमृदृरुहिभ्यइतिच्लेरङादेशः ऋदृशोऽङिगुणः । पितर्मरुतां परमपिछन्दसीतिपरस्यामन्त्रितस्यपूर्वाम-न्त्रितानुप्रवेशेसत्यामन्त्रितस्यचेतिपदद्वयमनुदात्तम् । अस्मे सुपांसुलुगितिचतुर्थीबहुवचनस्यशे आदेशः । मृळयत्तमा मृडसुखने अस्माण्ण्यन्ताल्लटःशतृ तस्य छन्दस्युभयथेत्यार्धधातुकत्वात्सा-र्वधातुकानुदात्तत्वाभावेप्रत्ययस्वरःशिष्यते॥ ९ ॥

९. जैसे चरवाहे सायंकाल अपने स्वामी के पास पशुओं को लौटा देते हैं, रुद्र, वैसे ही मैं तुम्हारा स्तोत्र तुम्हें अर्पण करता हूँ। मरुतों के पिता, हमें सुख दो। तुम्हारा अनुग्रह अत्यन्त सुखकर और कल्याण-दायी हो। हम तुम्हारा रक्षण चाहते हैं।

आ॒रे ते॑ गो॒घ्नमु॒त पू॑रुष॒घ्नं क्षय॑द्वीर सु॒म्नम॒स्मे ते॑ अस्तु ।
मृ॒ळा च॑ नो॒ अधि॑ च ब्रूहि देवाधा॑ च नः॒ शर्म॑ यच्छ द्वि॒बर्हा॑ः ॥ १० ॥

आ॒रे । ते॒ । गो॒ऽघ्नम् । उ॒त । पु॒रु॒ष॒ऽघ्नम् । क्षय॑त्ऽवीर । सु॒म्नम् ।
अ॒स्मे इति॑ । ते॒ । अ॒स्तु॒ । मृ॒ळ । च॒ । नः॒ । अधि॑ । च॒ । ब्रू॒हि॒ । दे॒व॒ ।
अध॑ । च॒ । नः॒ । शर्म॑ । य॒च्छ॒ । द्वि॒ऽबर्हा॑ः ॥ १० ॥

हेक्षयद्वीर क्षयितसर्वशत्रुजनरुद्र तेत्वदीयं गोघ्नंगोहननं यद्वा गोहननसाधनमा-युधं उतअपिच पुरुषघ्नं पुरुषहननं तत्साधनमायुधंवायद्भयं आरेदूरेअस्मत्तोविप्रकृष्टदेशेभ-वतु अस्मेअस्मासुतेत्वदीयंसुम्नं सुखंअस्तुभवतु अपिचनोस्माकंमृळसुखसिध्यर्थंप्रसन्नोभव हे देवद्योतमानरुद्र नोस्मान् अधिब्रूहिच अधिकंपक्षपातेनवचनं ब्राह्मणायाधिब्रूहीतिवत् अथच अथानन्तरंच द्विबर्हाः द्वयोःस्थानयोःपृथिव्यामन्तरिक्षेचपरिवृढः महत्त्वोपेतोरुद्र-

मार्गयोर्हननकर्मणोर्वा परिवृढः स्वामी सत्वंनोस्मभ्यंशर्मसुखंयच्छदेहि ॥ गोघ्नं हनहिंसागत्योः अस्मात्कृत्यल्युटोबहुलमिति भावेकरणेवाकप्रत्ययः गमहनेत्युपधालोपः होहन्तेरितिघत्वम् । द्विबर्हाः इहिवृहिवृद्धौ द्वयोःस्थानयोःवर्हतेप्रवर्धतेइतिद्विबर्हाः असुन् कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ १० ॥

१०. वीरों के विनाशक रुद्र, तुम्हारा गो-हनन-साधन और मनुष्य-हनन-साधन अस्त्र दूर रहे। हम तुम्हारा दिया सुख पावें। हमें सुखी करो। दीप्तिमान् रुद्र, हमारे पक्ष में कहना। तुम पृथिवी और अन्तरिक्ष के अधिपति हो। हमें सुख दो।

**अवोचामनमोअस्माअवस्यवःशृणोतुनोहवंरुद्रोमरुत्वान् ।**
**तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीउतद्यौः ॥ ११ ॥ ६ ॥**

अवोचाम । नमः । अस्मै । अवस्यवः । शृणोतु । नः । हवम् । रुद्रः । मरुत्वान् । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ ११ ॥ ६ ॥

अवस्यवःअवोरक्षणंतदिच्छन्तोवयंअवोचाम एतत्सूक्तरूपंस्तोत्रंअवादिष्म अस्मैरुद्रायनमोनमस्कारोस्तु मरुत्वान्मरुद्भिःस्वकीयैःपुत्रैर्युक्तोरुद्रश्चनोस्माकंहवमाह्वानंशृणोतुस्वीकरोतु यदस्माभिरुक्तंनोस्मदीयंवत्तत्सर्वंमित्रादयःषड्देवताःममहन्तांपूजयन्तु उतशब्दोप्यर्थे ॥ अवोचाम ब्रूञ्व्यक्तायांवाचि लुङि ब्रुवोवचिः अस्यतिवक्तिख्यातिभ्योङितिच्लेरङादेशः वचउमित्युमागमः । अवस्यवः अवरक्षणे भावेअसुन् सुपआत्मनःक्यच् क्याच्छन्दसीत्युप्रत्ययः । हवम् भावेनुपसर्गस्येत्यप्संप्रसारणंच । मरुत्वान् झयइतिमतुपोवत्वं तसौमत्वर्थेइतिभत्वेनपदत्वाभावाज्जश्त्वाभावः ॥ ११ ॥

११. हमने रक्षा-कामना करके कहा है। उन रुद्र देव को नमस्कार है। मरुतों के साथ रुद्र हमारा आह्वान सुनें। मित्र, वरुण, अदिति, सिन्धु, पृथिवी और आकाश हमारी इस प्रार्थना को पूजित करें।

चित्रमितिषड्र्चंसूक्तं कुत्सस्यार्षंत्रैष्टुभंसूर्यदेवताकं तथाचानुक्रान्तं—चित्रंषट्सौर्यमिति आश्विनशस्त्रेसूर्योदयादूर्ध्वंसौर्याणिसूक्तानिशंसनीयानि तत्रेदंसूक्तंशंसनीयं सूत्रितंच—चित्रंदेवानांनमोमित्रस्येति । आदितस्तिस्रऋचः सौर्यस्यपशोर्वपापुरोडाशहविषांक्रमेणानुवाक्याः तत्रोक्तेवपापुरोडाशयोर्याज्ये तथाचसूत्रितं—चित्रंदेवानामुदगादनीकमितिपञ्चशंनोभवचक्षसानोअह्नेति । अग्निमूर्धेत्याज्येकाहेशुनासीरीयेपर्वणिचसूर्यस्यहविषश्चित्रंदेवानामित्येषायाज्या सूत्रितंच—चरमिर्विश्वदर्शतश्चित्रंदेवानामुदगादनीकमितियाज्यानुवाक्या ।

तामेतांप्रथमामृचमाह—

चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ।
आप्राद्यावापृथिवीअन्तरिक्षंसूर्यआत्माजगतस्तस्थुषश्च॥१॥

चित्रम् । देवानाम् । उत् । अगात् । अनीकम् । चक्षुः । मित्रस्य । वरुणस्य । अग्नेः । आ । अप्राः । द्यावापृथिवी इति । अन्तरिक्षम् । सूर्यः । आत्मा । जगतः । तस्थुषः । च ॥ १ ॥

देवानां दीव्यन्तीतिदेवारश्मयः तेषांदेवजनानामेववा अनीकंतेजःसमूहरूपं चित्रंआश्चर्यकरं सूर्यमण्डलंउदगात्उदयाचलंप्रापसमासीत् कीदृशं मित्रस्यवरुणस्याग्नेश्चउपलक्षणमेतत् एतदुपलक्षितानांजगतांचक्षुःप्रकाशकं चक्षुरिन्द्रियस्थानीयंचउदयंप्राप्यचद्यावापृथिवी दिवंपृथिवींअन्तरिक्षंचआप्राः स्वकीयेनतेजसाआसमन्तादपूरयत् ईदृग्भूतमण्डलान्तर्वर्तीसूर्यः अन्तर्यामितयासर्वस्यप्रेरकःपरमात्मा जगतोजङ्गमस्यतस्थुषः स्थावरस्यचआत्मास्वरूपभूतः सहिसर्वस्य स्थावरजङ्गमात्मकस्यकार्यवर्गस्यकारणं कारणाच्चकार्यंनातिरिच्यते तथाचपारमर्षंसूत्रम्—तदनन्यत्वमारंभणशब्दादिभ्यइति यद्वा स्थावरजङ्गमात्मकस्यसर्वस्यप्राणिजातस्यजीवात्मा उदितेहिसूर्येमृतप्रायंसर्वंजगत्पुनश्चेतनयुक्तंसदुपलभ्यते तथाचश्रूयते—योसौतपन्नुदेतिससर्वेषांभूतानांप्राणानादायोदेतीति ॥ आप्राः प्रापूरणे लङिपुरुषव्यत्ययः अदादित्वाच्छपोलुक् । जगतः गमेर्द्युतिगमिजुहोतीनांद्वेचेतिक्विप् द्विर्वचनम् गमःक्वावित्यनुनासिकलोपः । तस्थुषः तिष्ठतेर्लिटःक्वसुः द्विर्वचनेशर्पूर्वाःखयः षष्ठ्येकवचने वसोःसंप्रसारणमितिसंप्रसारणं आतोलोपइटिचेत्याकारलोपः शासिवसिघसीनांचेतिषत्वम् ॥ १ ॥

१. विचित्र तेजःपुञ्ज तथा मित्र, वरुण और अग्नि के चक्षु-स्वरूप सूर्य उदित हुए हैं। उन्होंने द्यावा-पृथिवी और अन्तरिक्ष को अपनी किरणों से परिपूर्ण किया है। सूर्य जंगम और स्थावर—दोनों की आत्मा हैं।

द्वितीयामृचमाह—

सूर्योदेवीमुषसंरोचमानांमर्योनयोषामभ्येतिपश्चात् ।
यत्रानरोदेवयन्तोयुगानिवितन्वतेप्रतिभद्रायभद्रम् ॥ २ ॥

---

१ तै० आ० प्रथमाध्याये.

सूर्यः । देवीम् । उषसम् । रोचमानाम् । मर्यः । न । योषाम् ।
अभि । एति । पश्चात् । यत्र । नरः । देवऽयन्तः । युगानि ।
विऽतन्वते । प्रति । भद्राय । भद्रम् ॥ २ ॥

सूर्योदेवींदानादिगुणयुक्तांरोचमानांदीप्यमानामुषसंपश्चादभ्येति उषसःप्रादुर्भावानन्तरं तांअभिलक्ष्यगच्छति तत्रदृष्टान्तः—मर्योनयोषां यथाकश्चिन्मनुष्यःशोभनावयवांगच्छन्तींयुवतिंस्त्रियंसततंअनुगच्छति तद्वत् यत्रयस्यांउषसिजातायांदेवयन्तोदेवंद्योतमानंसूर्यंयष्टुमिच्छन्तोनरोयज्ञस्यनेतारोयजमानाः युगानि युगशब्दःकालवाची तेनचतत्कर्तव्यानिकर्माणिलक्ष्यन्ते यथादर्शपूर्णमासाविति । अग्निहोत्रादीनिकर्माणिवितन्वतेविस्तारयन्ति यद्वा देवयन्तोदेवं आत्मनइच्छन्तोयजमानपुरुषाः युगानिहलावयवभूतानिकर्षणायवितन्वतेप्रसारयन्ति तामुषसंअनुगच्छन्तीत्यर्थः एवंविधंभद्रंकल्याणंसूर्यंप्रति भद्रायकल्याणरूपायकर्मफलायस्तुमइतिशेषः यद्वा देवकामायजमानाः युगानियुग्मानिभूत्वापत्नीभिःसहिताःसन्तोभद्रंकल्याणं अग्निहोत्रादिकंकर्मभद्रायतत्फलार्थंप्रतिप्रत्येकंयस्यांउषसिप्रवृत्तायांवितन्वतेविस्तारयन्ति ॥ मर्यः मृङ्प्राणत्यागे छन्दसिनिष्टर्क्येत्यादौयत्प्रत्ययान्तोनिपात्यते यतोनावइत्याद्युदात्तत्वम् । युगानि युजेःकर्मणिघञ् युगशब्दःकालविशेषेरथाद्युपकरणेचेत्युञ्छादिषुपाठात् गुणाभावोन्तोदात्तत्वं च । वितन्वते तनुविस्तारे तनादिकृञ्भ्यउः सहेतियोगविभागादतिउपसर्गस्यसमासेसति समासस्येत्यन्तोदात्तत्वम् ॥ २ ॥

२. जैसे पुरुष स्त्री का अनुगमन करता है, वैसे ही सूर्य भी दीप्तिमती उषा के पीछे-पीछे आते हैं। इसी समय देवाभिलाषी मनुष्य बहु-युग-प्रचलित यज्ञ-कर्म का विस्तार करते हैं; सुफल के लिए कल्याण-कर्म को सम्पन्न करते हैं।

तृतीयामृचमाह—

भद्राअश्वाहरितःसूर्यस्यचित्राएतग्वाअनुमाद्यासः ।
नमस्यन्तोदिवआपृष्ठमस्थुःपरिद्यावापृथिवीयन्तिसद्यः ॥ ३ ॥

भद्राः । अश्वाः । हरितः । सूर्यस्य । चित्राः । एतऽग्वाः ।
अनुऽमाद्यासः । नमस्यन्तः । दिवः । आ । पृष्ठम् । अस्थुः । परि ।
द्यावापृथिवी इति । यन्ति । सद्यः ॥३॥

भद्राः कल्याणाअश्वाएतग्वाइत्येतदुभयमश्वनाम तत्रैकंक्रियापरंयोजनीयं अश्वाः तुरगाः व्यापनशीलावाहरितोहर्याः चित्राविचित्रावयवाः अनुमाद्यासः अनुक्रमेणसर्वैःस्तुत्यामादनीयाःएवंभूताः सूर्यस्यएतग्वाअश्वाः यद्वा एतंएतव्यंगन्तव्यंमार्गंगन्तारोश्वाः एतंशबलवर्णंनी-

छवर्णावामामुवन्तोऽश्वाः नमस्यन्तः अस्माभिर्नमस्यमानाःसन्तः दिवोन्तरिक्षस्यपृष्ठंउपरिप्रदेशं पूर्वभागलक्षणंआअस्थुः आतिष्ठन्ति प्राप्नुवन्ति यद्वा हरितोरसहरणशीलारश्मयःभद्रादिविशेषणविशिष्टाःदिवः पृष्ठंनभस्थलंआतिष्ठन्ति आस्थायच द्यावापृथिवीद्यावापृथिव्यौसद्यस्सदानीमेवएकेनाह्नापरियन्तिपरितोगच्छन्ति व्याप्नुवन्तीत्यर्थः ॥ अश्वाः अशूव्याप्तौ अशूप्रुषीत्यादिना क्वन् । एतग्वाः इण्गतौ असिहसीत्यादिनाकर्मणितन्प्रत्ययः गमेरौणादिकोभावेडुप्रत्ययः एतव्यंमवि ग्वोगमनंयेषांवितथोक्ताः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । अनुमाद्यासः मदिस्तुतौ अस्माण्ण्यन्तादचोयत् यवोनावइत्याद्युदात्तत्वम् । नमस्यन्तः नमोवरिवइतिपूजार्थेक्यच् क्यस्येनकर्मणिकर्तृप्रत्ययः । अस्थुः तिष्ठतेश्छान्दसोवर्तमानेलुङ् गातिस्थेतिसिचोलुक् आतइतिजुस् ॥ ३ ॥

३. सूर्य के कल्याण-रूप हरि नाम के विचित्र घोड़े इस पथ से जाते हैं। वे सबके स्तुति-भाजन हैं। हम उनको नमस्कार करते हैं। वे आकाश के पृष्ठ-देश में उपस्थित हुए हैं। वे घोड़े तुरत ही द्यावापृथिवी—चारों दिशाओं का परिभ्रमण कर डालते हैं।

तत्सूर्यस्यदेवत्वंतन्महित्वंमध्याकर्तोर्विततंसंजभार ।
यदेदयुक्तहरितःसधस्थादाद्रात्रीवासस्तनुतेसिमस्मै ॥ ४ ॥

तत् । सूर्यस्य । देवऽत्वम् । तत् । महिऽत्वम् । मध्या । कर्तोः ।
विऽततम् । सम् । जभार । यदा । इत् । अयुक्त । हरितः ।
सधऽस्थात् । आत् । रात्री । वासः । तनुते । सिमस्मै ॥ ४ ॥

सूर्यस्यसर्वप्रेरकादित्यस्य तद्देवत्वमीश्वरत्वम् स्वातंत्र्यमितियावत् महित्वं महत्वम् माहात्म्यं चतदेव तच्छब्दश्रुतेर्यच्छब्दाध्याहारः यत्कर्तोः कर्मनामैतत् प्रारब्धापरिसमाप्तस्य कृष्यादिलक्षणस्यकर्मणोमध्यामध्येअपरिसमाप्तेएवतस्मिन्कर्मणिविततंविस्तीर्णंस्वकीयंरश्मिजालंअस्तंगच्छन्सूर्यः संजभार अस्माल्लोकात्स्वात्मनि उपसंहरति कर्मकरश्चप्रवृत्तं अपरिसमाप्तमेवविसृजति अस्तंयन्तंसूर्यं दृष्ट्वा ईदृशं स्वातंत्र्यंमहिमाचसूर्यव्यतिरिक्तस्यकस्यास्ति नकस्यापि सूर्यस्यैवेदृशंस्वातंत्र्यंमहिमानंचावगाहते अपिच इदित्यवधारणे यदेव यस्मिन्नेवकाले हरितोरसहरणशीलान् स्वरश्मीन् हरितवर्णानश्वान्वासधस्थात्सहस्थानादस्मात्पार्थिवाल्लोकादादायअयुक्तअन्यत्र संयुक्तान्करोति यद्वा युजिःकेवलोपिविपूर्वोद्रष्टव्यः यदेवासौस्वरश्मीन् अश्वान्वा सधस्थात् सहविहरत्स्मिन्निति सधस्योरथः तस्मादयुक्त अमुञ्चत् आत्अनन्तरमेवरात्रीनिशा वासः आच्छादयितृ तमः सिमस्मै सिमशब्दःसर्वशब्दपर्यायः सप्तम्यर्थेचतुर्थी सर्वस्मिन्लोकेतनुतेविस्तारयति यद्वा वासोवासरमहस्तत्सर्वस्मादस्माल्लोकादानीयरात्री

समस्तनुते अत्रनिरुक्तम्—तत्सूर्यस्यदेवत्वंतन्महित्वंमध्येयत्कर्मणांक्रियमाणानांविततंसंह्रियते-यदासावयुङ्क्तहरणानादित्यरश्मीन्हरितोऽश्वानितिवाथरात्रीवासस्तनुतेसिमस्मैवेसरमहरवयुवती-सर्वस्मादिति[1] ॥ महित्वम् महपूजायाम् औणादिकइन्प्रत्ययः तस्यभावस्त्वतलौ । मध्या सर्वस्मादिति ॥ मध्यशब्दात्सप्तम्येकवचनस्यसुपांसुलुगितिडादेशः । कर्तोः करोतेरौणादिकस्तोसुन्प्र-त्ययः । विततं विपूर्वात्तनोतेःकर्मणिनिष्ठा उदित्त्वेन क्त्वाप्रत्ययेइटोविकल्पनात् यस्यविभाषेतीट्प्रतिषेधः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । जभार हृग्रहोर्भश्छन्दसीतिभत्वम् । अयुक्त युजेर्लुङि झलोझलीतिसिचोलोपः । सधस्थात् घञर्थेकविधानमितिअधिकरणेकप्रत्ययः सध-मादस्थयोश्छन्दसीतिसधादेशः दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् । रात्री रात्रेश्चाज-सावितिङीप् ॥ ४ ॥

४. सूर्यदेव का ऐसा ही देवत्व और माहात्म्य है कि वे मनुष्यों के कर्म समाप्त होने के पहले ही अपने विशाल किरण-जाल का उपसंहार कर डालते हैं। जिस समय सूर्य अपने रथ से हरि नाम के घोड़ों को खोलते हैं, उस समय सारे लोकों में रात्रि अन्धकार-रूप आवरण विस्तृत करती है।

तन्मित्रस्यवरुणस्याभिचक्षेसूर्योरूपंकृणुतेद्योरुपस्थे ॥
अनन्तमन्यद्रुशदस्यपाजःकृष्णमन्यद्धरितःसंभरन्ति ॥ ५ ॥

तत् । मित्रस्य । वरुणस्य । अभिऽचक्षे । सूर्यः । रूपम् । कृणुते । द्योः । उपऽस्थे । अनन्तम् । अन्यत् । रुशत् । अस्य । पाजः । कृष्णम् । अन्यत् । हरितः । सम् । भरन्ति ॥ ५ ॥

तत्तदानीमुदयसमये मित्रस्य वरुणस्य एतदुभयोपलक्षितस्य सर्वस्यजगतः अभिचक्षे आभि-मुख्येन द्योतनाय द्योरुपस्थे उपस्थानेमध्ये सूर्यःसर्वस्यप्रेरकः सवितारूपं सर्वस्यनिरूपकंप्रकाशकं तेजः कृणुतेकरोति अपिचास्यसूर्यस्य हरितोरसहरणशीलारश्मयः हरिद्वर्णाअश्वावा अनन्तं अवसानरहितं कृत्स्नस्य जगतोव्यापकं रुशद्दीप्यमानंश्वेतवर्णम् पाजः बलनामैतत् अविच्छिन्नस्यापिनैशस्यतमसोनिवारणेसमर्थं अन्यत्तमसोविलक्षणंतेजःसंभरन्ति अहनि स्वकीयगमनेनिष्पादयन्ति तथाकृष्णं कृष्णवर्णं अन्यत्तमः स्वकीयापगमनेन रात्रौअस्यरश्मयोऽप्येवंकुर्वन्ति किमुवक्तव्यं तस्यमाहात्म्यमितिसूर्यस्यस्तुतिः ॥ अभिचक्षे संपदादिलक्षणोभावेक्विप् कृदुत्तरपदप्रकृतिस्वरत्वम् । द्योः ङसिङसोश्चेतिपूर्वरूपता । उपस्थे घञर्थेकविधानमितिकप्रत्ययः

1 नि० ४. ११.१

स्वामी निष्कंटक घर में प्रवेश करता है, मैं भी वैसे ही नेत्रों से स्पष्ट देखकर और दीर्घ आयु भोगकर बुढ़ापा पाऊँ।

मध्वःसोमस्याश्विनामदायप्रत्नोहोताविवासतेवाम्।
बर्हिष्मतीरातिर्विश्रितागीरिषायातंनासत्योपवाजैः॥ १॥

मध्वः। सोमस्य। अश्विना। मदाय। प्रत्नः। होता। आ। विवासते। वाम्। बर्हिष्मती। रातिः। विऽश्रिता। गीः। इषा। यातम्। नासत्या। उप। वाजैः॥ १॥

अश्विना हेअश्विनौ मध्वोमधुनामधुरेणार्पितेनसोमस्यसोमेनमदाययुवयोर्मदार्थंप्रत्नश्चिरंतनो-होताहोमनिष्पादकोयजमानः वांयुवांआविवासते विवासतिःपरिचरणकर्मा आङ्मर्यादायाम् यथाशास्त्रंपरिचरति अपिचरातिर्दातव्यंहविः बर्हिष्मतीआस्तीर्णेनबर्हिषायुक्तंयुष्मदर्थंबर्हिष्या-सादितमित्यर्थः तथागीः स्तुतिलक्षणावाक्च विश्रिताऋत्विक्षुसमवेता यैः स्तुतिरपिक्रियतइत्य-र्थः अतोहेनासत्यावश्विनौ इषाअस्मभ्यंदातव्येनान्नेन वाजैर्बलैश्चसहयुवां उपयातंअस्मत्समीपं प्राप्नुतम्॥ मध्वः सुपांसुपोभवन्तीतितृतीयार्थेषष्ठी जसादिषुछन्दसिवावचनमितिघेर्ङितीतिगु-णाभावेयणादेशः। मदाय मदीहर्षे मदोनुपसर्गेइत्यप्। रातिः रादाने कर्मणिक्तिन् मन्त्रेवृषेष्या-दिनातस्योदात्तत्वम्। विश्रिता श्रिञ्सेवायाम् कर्मणिनिष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् ॥ १॥

१. अश्विद्वय, तुम्हारे चिरन्तन होता तुम्हारे हर्ष के लिए मधुर सोमरस के साथ तुम्हारी अर्चना करता है। कुश के ऊपर हव्य स्थापित किया हुआ है; ऋत्विकों-द्वारा स्तुत और प्रस्तुत हुआ है। नासत्यद्वय, अन्न और बल लेकर पास आओ।

द्वितीयामृचमाह—

योवामश्विनामनसोजवीयान्रथःस्वश्वोविशआजिगाति।
येनगच्छथःसुकृतोदुरोणंतेननरावर्तिरस्मभ्यंयातम्॥ २॥

यः। वाम्। अश्विना। मनसः। जवीयान्। रथः। सुऽअश्वः। विशः। आऽजिगाति। येन। गच्छथः। सुऽकृतः। दुरोणम्। तेन। नरा। वर्तिः। अस्मभ्यम्। यातम्॥ २॥

तत्रप्रथमामृचमाह—

नासत्याभ्यांबर्हिरिवप्रवृंजेस्तोमाँइयर्म्यभ्रियेववातः ।
याव॑र्भगायविमदायजायांसेनाजुवान्यूहतूरथेन ॥ १ ॥

नासत्याभ्याम् । बर्हिःऽइव । प्र । वृंजे । स्तोमान् । इयर्मि ।
अभ्रियाऽइव । वातः । यौ । अर्भगाय । विऽमदाय । जायाम् ।
सेनाऽजुवा । निऽऊहतुः । रथेन ॥ १ ॥

बर्हिरिव यथाकश्चिद्यजमानोयागार्थं बर्हिःप्रवृंजेप्रकर्षेणअन्यूनातिरिक्तंयागायपर्याप्तंदर्भं वृक्तिछिनत्ति संपादयतीतियावत् एवमहंनासत्याभ्यां अश्विभ्यांस्तोमान्स्तुतीः इयर्मिसंपादयामि एतदेवविशदीक्रियते अभ्रियेव यथाअभ्रियाणिअभ्रेषुमेघेषुअवस्थितानि उदकानिवातोवायुर्वर्षणार्थंबहुशःप्रेरयति एवमहंअश्विभ्यांस्तोत्राणिइयर्मि बहुशःप्रेरयामि कीदृशावश्विनौ अर्भगायबालायस्वयंवरलब्धभार्यायविमदायएतत्संज्ञायराजर्षये मध्येमार्गेस्वयंवरार्थमागतैस्तामलभमानैरन्यैर्नृपैः सहयोद्धुमशक्नुवतेपितस्मैसेनाजुवाशत्रुसेनायाःप्रेरकेणशत्रुभिर्दुष्प्रापेणरथेनयावश्विनौजायांभार्यांपरैरनाक्रान्तांन्यूहतुः शत्रून्निहत्यतदीयंगृहंप्रापयामासतुः ताभ्यामित्यर्थः ॥ नासत्याभ्यां सत्सुभवौसत्यौनसत्यौअसत्यौनअसत्यौनासत्यौ नभ्राण्नपादित्यादिनानञःप्रकृतिभावः अव्ययपूर्वपदप्रकृतिस्वरत्वम् । वृंजे वृजीवर्जने आदादिकः इदित्वान्नुम् लोपस्तआत्मनेपदेष्वितितलोपः । इयर्मि ऋगतौ जौहोत्यादिकः अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वम् अभ्यासस्यासवर्णइतीयङ् । अभ्रियाइव समुद्राभ्राद्घइतिभवार्थेघः घस्येयादेशः छन्दसिबहुलमितिशेर्लोपः । अर्भगाय अर्तिगृभ्यांभन्इत्यर्तेर्भन् अर्भएवार्भकः संज्ञायांकन् छान्दसोगकारः अपरआह अर्भमल्पंगायतीत्यर्भकः कैगैशब्दे गापोष्टक् आतोलोपइटिचेत्याकारलोपः तदेतत्तदकृत्स्नः शाकल्यस्याभिमतम् । सेनाजुवा जुइतिसौत्रोधातुर्गत्यर्थः अस्मादन्तर्भावितण्यर्थात् क्विब्वचिप्रच्छीत्यादिनाक्विप्दीर्घौ तन्वादित्वादुवङ् । न्यूहतुः वहप्रापणे लिट्यजादित्वात्संप्रसारणम् यद्वृत्तान्नित्यमितिनिघातप्रतिषेधः ॥ १ ॥

१. यज्ञ के लिए जिस प्रकार यजमान कुश का विस्तार करता है तथा वायु मेघ को नाना दिशाओं में प्रेरित करती है, उसी प्रकार मैं नासत्यद्वय या अश्विद्वय को प्रभूत स्तोत्र प्रेरित करता हूँ। अश्विनीकुमारों ने शत्रु-सेना-द्वारा दुष्प्राप्य रथ-द्वारा युवक विमद राजर्षि की, स्वयंवर में प्राप्त, स्त्री को विमद के पास पहुँचा दिया था।

वीळुपत्मभिराशुहेमभिर्वादेवानांवाजूतिभिःशाशदाना ।
तद्रासभोनासत्यासहस्रमाजायमस्यप्रधनेजिगाय ॥ २ ॥

वीळुपत्मऽभिः। आशुहेमऽभिः। वा। देवानाम्। वा। जूतिऽभिः।
शाशदाना। तत्। रासभः। नासत्या। सहस्रम्। आजा। यमस्य।
प्रऽधने। जिगाय ॥ २ ॥

वीळुपत्मभिः वीळुर्दृढनाम बलवद्गमनैः आशुहेमभिः शीघ्रगमनैः वाशब्दःसमुच्चये हेनासत्यावश्विनौ एवंभूतैरश्वैः देवानामिन्द्रादीनांजूतिभिः प्रेरणैश्च शाशदानाशाशद्यमानयोः अत्यर्थंप्रेर्यमाणयोर्युवयोः वाहनभूतोयोरासभःप्रजापतिनादत्तः सयमस्यैवसर्वस्यप्रीतिकरेप्रधने प्रकीर्णधनेऽप्येवे आजा आजौसंग्रामेतद्रासभोऽन्येषांसहस्रंजिगायजितवान् येमस्वतोहिनहूनांकर-णहेतुनासंग्रामेणतुष्टोभवति यद्वा येनव्यत्वेनप्रजापतिनानिष्ठितमश्वसहस्रंशीघ्रगमनयुक्तोरासभः विजगायजयेनालभत अन्येभ्योदेवेभ्यःपूर्वमेवाजिमाप्ययुवांजयंप्रापयामास यथाचास्मिन्नर्थे-प्रजापतिर्वैसोमायराज्ञेदुहितरंप्रायच्छदित्यादिकंब्राह्मणमनुसन्धेयम्[1] ॥ वीळुपत्मभिः वीळुबल-पतनन्तीतिवीळुपत्मानः। आशुहेमभिः आशुशीघ्रंहिन्वन्तिगच्छन्तीत्याशुहेमानस्तैः हिगतौवृ-द्धौच अन्येभ्योऽपिदृश्यन्तइतिमनिन् कृदुत्तरपदप्रकृतिस्वरत्वम्। जूतिभिः ऊतियूतिजूतीत्यादि-नाक्तिन्नन्तउदात्तत्वम्। शाशदाना शदॢशातने अत्रगत्यर्थः धातूनामनेकार्थत्वात् अस्माद्यङन्ताल्लटः शानच् वस्यछन्दस्युभयथेत्यार्धधातुकत्वाद्यस्यलोपः अतोलोपयलोपौ अभ्यस्तानामादि-रित्याद्युदात्तत्वम् सुपांसुलुगितिषष्ठ्याःपूर्वसवर्णदीर्घः। आजा सेनैवसूत्रेणडादेशः। जिगाय जिजये सन्लिटोर्जेरित्यभ्यासादुत्तरस्यकुत्वं गकारः ॥ २ ॥

२. नासत्यद्वय, तुम लोग बलवान् और शीघ्रगामी अश्व-द्वारा गीति और देवों के उत्साह से उत्साहित हुए थे। तुम्हारे रथ-वाहक गर्दभ ने यम के प्रिय सहस्र युद्धों में जय-लाभ किया था।

तृतीयामृचमाह—

तुग्रो ह भुज्युमश्विनोदमेघे रयिं न कश्चिन्ममृवाँ अवाहाः।
तमूहथुर्नौभिरात्मन्वतीभिरन्तरिक्षप्रुद्भिरपोदकाभिः ॥ ३ ॥

तुग्रः। ह। भुज्युम्। अश्विना। उदऽमेघे। रयिम्। न। कः। चित्।
ममृऽवान्। अव। अहाः। तम्। ऊहथुः। नौभिः। आत्मन्ऽवतीभिः।
अन्तरिक्षप्रुत्ऽभिः। अपऽउदकाभिः ॥ ३ ॥

अत्रेयमाख्यायिका तुग्रोनामअश्विनोःप्रियःकश्चिद्राजर्षिः सचद्वीपान्तरवर्तिभिःशत्रु-भिरत्यन्तमुपद्रुतःसन्तेषांजयायस्वपुत्रंभुज्युंसेनयासहनावाप्राहैषीत् सायनौर्मध्येसमुद्रमतिदू-

---

[1] ऐ० ब्रा० ४. ७.

रंगताबायुयशेनभिन्नासीत् तदानीं सभुज्युः शीघ्रमश्विनौतुष्टाव स्तुतौचतौसेनयासहितंआत्मी- यासुनौषुआरोप्यपितुस्तुग्रस्यसमीपंत्रिभिरहोरात्रैःप्रापयामासतुरिति । अयमर्थइदमादिकेनतृ- चेनप्रतिपाद्यते इत्यन्वयसिद्धौ तुग्रःखलुपूर्वंशत्रुभिःपीडितःसन्तज्जयार्थंउदमेघे उदकैर्मिह्यतेसि- च्यतइत्युदमेघःसमुद्रः तस्मिन् भुज्युंएवतसंज्ञंमियंपुत्रंअवाहाः नावागन्तुंपर्यत्याक्षीत् तत्रदृष्टा- न्तः—ममृवान्म्रियमाणःसन्धनलोभीकश्चिन्मनुष्यः रयिंन यथाधनंपरित्यजतितद्वत् हेअश्विनौ तंचभुज्युंमध्येसमुद्रंनिमग्नंनौभिःपितृसमीपंऊहथुः युवांप्रापितवन्तौ कीदृशीभिः आत्मन्वतीभिः आत्मीयाभिः युवयोःस्वभूताभिरित्यर्थः यद्वा धृतिरात्मा धारणवतीभिरित्यर्थः अन्तरिक्षप्रुद्भिः अतिस्वच्छत्वात्अन्तरिक्षेजलस्योपरिष्टादेवगच्छन्तीभिःअपोदकाभिः सुश्लिष्टत्वादपगतोदकाभिः अप्रविष्टोदकाभिरित्यर्थः ॥ उदमेघे मिहसेचने कर्मणिघञ् न्यंक्वादीनांचेतिकुत्वम् उदकस्योदः संज्ञायाम् थाथादिनोत्तरपदान्तोदात्तत्वम् । ममृवान् मृङ्प्राणत्यागे लिटःक्वसुः कादिनिय- मात्प्राप्तस्येटोवस्येकाजाद्घसामितिनियमादभावः । अहाः ओहाक्त्यागे लुङितिपि च्लेःसिच् आगमानुशासनस्यानित्यत्वात्सगिटौनक्रियेते बहुलंछन्दसीतिईडभावः हल्ङ्याब्भ्यइतिति- लोपः रुत्वविसर्गौ यद्वा मन्त्रेघसेतिच्लेर्लुक् च्लेर्लुक्त्वादिण्नक्रियते । नौभिः सावेकाचइति विभक्तेरुदात्तत्वम् । आत्मन्वतीभिः आत्मनोमतुप् मादुपधायाइतिवत्वम् अनोनुडितिनुट् नद्यो- ः इस्वनुड्भ्यांमतुबितिमतुपउदात्तत्वम् । अन्तरिक्षप्रुद्भिः प्रुङ्गतौ क्विप्चेतिक्विप् ॥ ३ ॥

३. जैसे कोई म्रियमाण मनुष्य धन का त्याग करता है, वैसे ही तुग्र नाम के राजर्षि ने बड़े कष्ट से अपने पुत्र भुज्यु को, सेना के साथ, शत्रु-जय के लिए, नौका-द्वारा समुद्र (स्थित द्वीप) में भेजा। मध्य-समुद्र में निमग्न भुज्यु को, अश्विद्वय, तुमने अपनी नौका-द्वारा उस के पास पहुँचाया था। तुम्हारी नौका जल के ऊपर अन्तरिक्ष में चलनेवाली और अप्रविष्ट जलवाली है अर्थात् तुम्हारी नौका में जल नहीं पैठता।

ति॒स्रः क्षप॒स्त्रिरहा॑ति॒व्रज॑द्भि॒र्नास॑त्या भु॒ज्युमू॑हथुः पत॒ङ्गैः ।
स॒मु॒द्रस्य॒ धन्व॑न्ना॒र्द्रस्य॑ पा॒रे त्रि॒भी रथैः॑ श॒तप॑द्भिः॒ षळ॑श्वैः ॥ ४ ॥

ति॒स्रः । क्षपः॑ । त्रिः । अहा॑ । अ॒ति॒व्रज॑त्ऽभिः । नास॑त्या । भु॒ज्युम् । ऊ॒ह॒थुः॒ । प॒त॒ङ्गैः । स॒मु॒द्रस्य॑ । धन्व॑न् । आ॒र्द्रस्य॑ । पा॒रे । त्रि॒ऽभिः । रथैः॑ । श॒तप॑त्ऽभिः । षट्ऽअ॑श्वैः ॥ ४ ॥

हेनासत्यानासत्यौ सेनयासहोदकेनिमग्नंभुज्युंतिस्रःक्षपःत्रिसंख्याकारात्रीःत्रिरहात्रिवारमा- वृत्तानित्र्यहानिचअतिव्रजद्भिः अतिक्रम्यगच्छद्भिः एतावन्तंकालंअतिव्याप्यवर्तमानैःपतङ्गैः पतद्भिःत्रिभिःत्रिसंख्याकैःरथैःऊहथुः युवामूढवन्तौ केतिचेदुच्यते समुद्रस्य अन्तरालेमध्येधन्वन् धन्वनिजलवर्जितप्रदेशे आर्द्रस्यउदकेनआर्द्रीभूतस्यसमुद्रस्यपारेतीरदेशेच कथंभूतैःरथैःशतपद्भिः

शतसंख्याकैश्चक्रलक्षणैःपादैरुपेतैः षड्भ्वैःषड्भिरश्वैर्युक्तैः॥त्रिसः त्रिचतुरोः स्त्रियामितिविशब्दस्य त्रिसृआदेशः सचान्तोदात्तः अचिरऋतइतिरेफादेशेऽउदात्तयणोहल्पूर्वादितिविभक्त्युदात्तत्वम्। श्नः विभक्त्यन्तस्यछान्दसंह्रस्वत्वं यद्वा सिभ्यावइतियोगविभागादधातोरप्याकारलोपः। अहा येऽभ्छन्दसिबहुलमितिरेफलोपः। पतंगैः पतनं गच्छति पतंगम् । पत्वत् पतिगत्यर्थः इदित्वादुम् क-निप्युवीत्यादिनाकनित् सुपांसुलुगितिसामलुक्। शतपद्भिः शतंपादायेषांति संख्यासुपूर्वस्ये-तिपादशब्दस्यान्त्यलोपःसमासान्तः अयस्मयादित्वेनभत्वात् पादःपदितिपद्भावः यद्वा पादसमा-नार्थःपच्छन्दःप्रकृत्यन्तरंद्रष्टव्यम् ॥ ४ ॥

४. नासत्यद्वय, तुमने शीघ्रगामी शतचक्र-विशिष्ट और छः अश्वों से युक्त रथ-त्रय पर भुज्यु को वहन किया था। वह रथ तीन दिन, तीन रात तक आर्द्र सागर के जल-शून्य प्रदेश में लाये थे।

अनारम्भणेतदवीरयेथामनास्थानेअग्रभणेसमुद्रे।
यदश्विनाऊहथुर्भुज्युमस्तंशतारित्रांनावमातस्थिवांसम् ॥५॥८॥

अनारम्भणे। तत्। अवीरयेथाम्। अनास्थाने।
अग्रभणे। समुद्रे। यत्। अश्विनौ। ऊहथुः। भुज्युम्। अस्तम्।
शतऽअरित्राम्। नावम्। आतस्थिऽवांसम् ॥ ५ ॥ ८ ॥

हेअश्विना अश्विनौ अनारंभणेआलंबनरहितेसमुद्रेतत्कर्मअवीरयेथां विक्रान्तवन्तव-न्तौयुवां अनारंभणत्वमेवस्पष्टीकरोति अनास्थानेआस्थीयतेस्मिन्नितिआस्थानोभूप्रदेशः तद्रहितेस्थातुमशक्येजलेइत्यर्थः अग्रभणे अग्रहणे हस्तेनग्राह्यंशाखादिकमपियत्रनास्तितस्मि-न्नित्यर्थः किंपुनस्तत्कर्म भुज्युंसमुद्रेमग्नंशतारित्रांबहुरित्रांयैःकाष्ठैःपार्श्वयोर्बद्धैर्जलाटोडनेस-तिनौःशीघ्रंगच्छति तान्यरित्राणि ईदृशांनावंआतस्थिवांसंआस्थितवन्तंआरूढवन्तंकृत्वा अस्तं गृहनामैतत् पितुस्तुग्रस्यगृहंप्रतियदूहथुः तत्प्रापणमन्यैर्दुःशक्यं युवां समुद्रमध्येकृतवन्ता-वित्यर्थः॥ अनारंभणे आरभ्यतइत्यारंभणम् कृत्यल्युटोबहुलमितिकर्मणिल्युट् नञ्सुभ्यामित्यु-त्तरपदान्तोदात्तत्वम्। अवीरयेथां शूरवीरविक्रान्तौ चुरादिरात्मनेपदी। अनास्थानाग्रभणयोः पूर्ववत्ल्युट्स्वरौ अयंतुविशेषः ह्रग्रहोर्भइतिभत्वम्। अस्तं अस्यतेअस्मिन्सर्वमित्यस्तंगृहम् असिहसीत्यादिनातन्प्रत्ययः। शतारित्रां ऋगतौ अर्तिलूधूसूखनसहचरइत्रइतिकरणेइत्रप्रत्ययः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ ५ ॥

५ अश्विद्वय, तुम लोगों ने अवलम्बन-शून्य, भूप्रदेश-रहित, ग्रहणीय शाखादि-वस्तु-रहित सागर में यह कार्य किया था। सौ डाँड़ोंवाली नौका में भुज्यु को बैठाकर तुम उनके पास लाये थे।

॥ इतिप्रथमस्याष्टमेऽष्टमोवर्गः ॥ ८ ॥

षष्ठीमृचमाह—

यमश्विनाददथुःश्वेतमश्वमघाश्वायशश्वदित्स्वस्ति ।
तद्वांदात्रंमहिकीर्तेन्यंभूत्पैद्वोवाजीसदमिद्धव्योअर्यः ॥ ६ ॥

यम् । अश्विना । ददथुः । श्वेतम् । अश्वम् । अघऽअश्वाय । शश्वत् ।
इत् । स्वस्ति । तत् । वाम् । दात्रम् । महि । कीर्तेन्यम् । भूत् ।
पैद्वः । वाजी । सदम् । इत् । हव्यः । अर्यः ॥ ६ ॥

अत्रेदमाख्यायते—पेदुर्नामकश्चित् सचाश्विनौतुष्टाव तस्मैप्रीतौकंचिच्छ्वेतवर्णं अश्वं दत्तवन्तौ सचाश्वः प्रीतोजयंचकारेति एतदत्रप्रतिपाद्यते—हेअश्विनाअश्विनौ युवांअघाश्वायअहन्तव्याश्वायपेदुनाम्ने राजर्षये यंश्वेतवर्णअश्वंददथुः दत्तवन्तौ सोऽश्वः तस्मैस्वस्तिजयलक्षणं मङ्गलं शश्वदित् नित्यमेवचकार वांयुवयोस्तद्दात्रंदानं महिमहत् अतिगभीरं अतएवकीर्तेन्यं सर्वैःकीर्तनीयंप्रशस्यं भूत्अभूत् तस्मात् पैद्वः पेदोःसंबन्धीपतनशीलः शीघ्रगामीवा अर्यः शत्रूणामीरयितायुद्धेषुप्रेरयितव्योवा वाजीवेजनवान्सोऽश्वः सदमित् सदैवहव्यः अस्माभिरप्याह्वातव्यः ॥ दात्रं ददातेरविशेषेणऔणादिकस्त्रप्रत्ययः। महि महपूजायाम् इन्सर्वधातुभ्यइतीन् । कीर्तेन्यम् कॄतसंशब्दने कृत्यार्थेतवैकेन्केन्यत्वनइतिकेन्यप्रत्ययः ऋतइद्धातोरितीत्वम् । भूत् बहुलंछन्दस्यमाङ्योगेपीत्यडभावः । पैद्वः पेदोःसंबन्धी तस्येदमित्यण्प्रत्ययः छान्दसोवर्णलोपः । हव्यः ह्वयतेरचोयदितियत् बहुलंछन्दसीतिसंप्रसारणम् गुणःधातोस्तन्निमित्तस्यैवेत्यवादेशः । अर्यः ऋगतौ अर्यादयश्चेत्यौणादिकोयत् व्यत्ययेनान्तोदात्तत्वम् ॥ ६ ॥

६. अश्विद्वय, अवध्य अश्व के पति पेदु नाम के राजर्षि को तुमने जो श्वेतवर्ण अश्व दिया था, उस अश्व ने पेदु का नित्यप्रति जय-रूप मंगल साधन किया था। तुम्हारा यह दान महान् और कीर्त्तनीय हुआ था। पेदु का यह उत्तम अश्व हमारा सदा पूजनीय है।

सप्तमीमृचमाह—

युवंनरास्तुवतेपज्रियायकक्षीवतेअरदतंपुरंन्धिम् ।
कारोतराच्छफादश्वस्यवृष्णःशतंकुंभाँअसिञ्चतंसुरायाः ॥ ७ ॥

युवम् । नरा । स्तुवते । पज्रियाय । कक्षीवते । अरदतम् । पुरम्ऽधिम् ।
कारोतरात् । शफात् । अश्वस्य । वृष्णः । शतम् । कुम्भान् ।
असिञ्चतम् । सुरायाः ॥ ७ ॥

अत्रेयमाख्यायिका—कक्षीवानृषिः पुरातमसातिरोहितज्ञानःसन् ज्ञानार्थमश्विनौतुष्टाव तस्मैअश्विनौप्रभूतांधियंदत्तवन्ताविविततदाह—हेनरा नेताराविश्विनौ युवं युवांपज्रियाय पज्राइत्यङ्गिरसामाख्या पज्रावाअङ्गिरसःकुलेजातत्वात्। तेषांकुलेजातायकक्षीवते कक्ष्यारज्जुरश्वस्य तद्वतेतत्संज्ञायस्तुवतेयुवयोःस्तुतिंकुर्वतेमहींपुरन्धिंप्रभूतांधियंबुद्धिमरदतंव्यलिखतम् यथासर्वार्थगोचराभवति तथाकृतवन्तावित्यर्थः अपिचकारोतरात् कारोतरोनामवैदलचर्मविहितोभाजनविशेषः यस्मिन्सुरायाःस्रावणंक्रियते लुप्तोपममेतत् कारोतरात् यथासुरायाःसंपादकाः तांस्रावयन्ति एवमेवयुवांवृष्णःसेचनसमर्थस्ययुष्मदीयस्याश्वस्यशफात् सुरावत्सुरायाः शतंकुम्भान् असंख्यातान् सुराघटानसिञ्चतम् अक्षारयतम् यद्वा सिञ्चतिःपूरणार्थः कारोतरस्थानीयात् युष्मदीयाश्वखुरात्सुरामवहतियया असंख्यातान् घटान् असिञ्चतंअपूरयतम् येयज्ञाः सौत्रामण्यादिकर्मणियुष्मद्यागायसुरांपाचयन्तितेषामित्यर्थः ॥ स्तुवते स्तौतेर्लटःशतृ अदादित्वाच्छपोलुक् शतुरनुमइतिविभक्तेरुदात्तत्वम्। पज्रियाय पज्रशब्दात् शैषिकोघच्। कक्षीवते आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवदितिनिपातनात्कक्ष्यशब्दस्यसंप्रसारणंवत्वंच । अरदतम् रदविलेखने। पुरन्धिम् पुरन्धिर्बहुधीरितियास्कः। पृषोदरादित्वात्पुरन्धिभावः यद्वा पुरंपूरयितव्यं सर्वविषयजातमस्यांधीयतेअवस्थाप्यतइतिपुरन्धिर्बुद्धिः कर्मण्यधिकरणेचेतिदधातेःकिःप्रत्ययः वसुरुपेक्षितिबहुलमितिवचनादलुक् इदंतुव्युत्पत्तिमात्रम् वस्तुतःपृषोदरादिरेव । असिञ्चतम् षिचिरक्षरणे तौदादिकः शेमुचादीनामितिनुम् ॥ ७ ॥

७. नेतृद्वय, तुमने अङ्गिरा के कुल में उत्पन्न कक्षीवान् को, स्तुति करने पर, प्रचुर बुद्धि दी थी। सुरापात्र के आधार से जैसे सुरा निकाली जाती है, वैसे ही तुम्हारे सेचन-समर्थ अश्व के खुर से तुमने शतकुम्भ सुरा का सिञ्चन किया था।

अष्टमीमृचमाह—

हिमेनाग्निंघ्रंसमवारयेथांपितुमतीमूर्जमस्माअधत्तम्।
ऋबीसेअत्रिमश्विनावनीतमुन्निन्यथुःसर्वगणंस्वस्ति ॥ ८ ॥

हिमेन । अग्निम् । घ्रंसम् । अवारयेथाम् । पितुऽमतीम् । ऊर्जम् ।
अस्मै । अधत्तम् । ऋबीसे । अत्रिम् । अश्विना । अवऽनीतम् ।
उत् । निन्यथुः । सर्वऽगणम् । स्वस्ति ॥ ८ ॥

१ नि० ६. १३.।

अत्रेदमाख्यानम्—अत्रिमृषिमसुराः शतद्वारेपीडायन्त्रगृहेप्रवेश्यतुषाग्निनाअदाहयन् तदा-नींतेनऋषिणास्तुतौअश्विनौअग्निमुदकेनोपशमय्यतस्मात्पीडागृहादविकलेन्द्रियवर्गंसन्तंनिरगम-यतामिति तदेतत्प्रतिपाद्यते—अश्विनाहेअश्विनौ हिमेनहिमवच्छीतोदकेनघ्रंसंदीप्यमानंअ-त्रेर्बाधनार्थंअसुरैःप्रक्षिप्तंतुषाग्निंअवारयेथांयुवांनिवारितवन्तौ शीतीकृतवन्तावित्यर्थः अपिचा-स्मैअसुरपीडयाकार्श्यंप्राप्तायात्रये पितुमतीं पितुरित्यन्ननाम अन्नयुक्तंऊर्जंबलप्रदंरसात्मकंक्षी-रादिकंअधत्तंपुष्ट्यर्थंप्रायच्छतम् ऋबीसे अपगतप्रकाशेपीडायन्त्रगृहेअवनीतंअवाङ्मुखंयथाअ-सुरैःप्रापितंअत्रिंसर्वगणं गणःसमूहः सर्वेषांइन्द्रियाणांपुत्रादीनांवागणेनोपेतं स्वस्तिअविनाशो-पेतंयथाभवतितथाउन्निन्यथुः तस्माद्गृहादुद्गमय्ययुवांस्वगृहंप्रापितवन्तौ यद्वा हिमेनशीतेनवृष्ट्युद-केन अग्निंअग्निवत्तीक्ष्णं घ्रंसंअहर्नामैतत् सामर्थ्यात्तन्निदाघकालीनंअहः अवारयेथां तस्याह्न-स्तैक्ष्ण्यंनिवारितवन्तौ अपिचास्मैअग्नयेपितुमतींचरुपुरोडाशादिलक्षणान्नोपेतंऊर्जंबलकरं रसा-त्मकंउपस्तरणाभिघारणात्मकंघृतंअधत्तम् वृष्ट्युत्पादनेनाग्नेर्योगार्थंहवींषिनिष्पादितवन्ता-वित्यर्थः ऋबीसे अपगतभेअस्केपृथिवीमध्येअवनीतंओषधीनांउत्पादनायअधस्तान्नीतंपार्थि-वाग्निनापरिपक्वाउदकेनक्लिन्नात्वोषधिवनस्पतयोविरोहन्ति अत्रिंहविषांअत्तारंओषधिवनस्-पत्यादीनांवाएवंविधंअत्रिंसर्वगणंव्रीह्याद्योषधिगणोपेतं हेअश्विनौयुवांस्वस्तिअविनाशोपेतंयथाभ-वतितथाउन्निन्यथुः व्रीह्याद्योषधिवनस्पतिरूपेणभूमेरुपरिष्टान्नीतवन्तौ कारणात्मनापार्थिवा-ग्नौवर्तमानंसर्वमोषधिवनस्पत्यादिकंअश्विनौप्रवर्षणेनव्यक्तीकृतवन्तावित्यर्थः अयंपक्षोयास्के-नंहिमेनोदकेनेत्यादिनोक्तः ॥ पितुमतीम् ह्रस्वनुड्भ्यांमतुबितिमतुपउदात्तत्वम् । ऋबीसे अ-त्रयास्कः—ऋबीसमपगतभासमपहृतभासमन्तर्हितभासंगतभासंवेति । पृषोदरा-दित्वादभिमतरूपस्वरसिद्धिः । अत्रिं अदभक्षणे अदेस्त्रिनिश्चेतिचशब्दात्त्रिप् । अवनीतम् गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । स्वस्ति असभुवि भावेक्तिन् छन्दस्युभयथेतिसार्वधातु-कत्वादस्तेर्भूभावाभावः ॥ ८ ॥

८. तुमने हिम या जल-द्वारा शतद्वार-पीड़ा-यंत्र-गृह में फँसे हुए अत्रि की, चारों ओर की, असुरों-द्वारा प्रज्वालित और दीप्यमान अग्नि का निवारण किया था तथा अग्नि को अन्नयुक्त और बल-प्रद खाद्य दिया था। अश्विनीकुमारद्वय, अत्रि जो निम्नाभिमुख होकर अन्धकारमय पीड़ा-यंत्र-गृह में प्रक्षिप्त हुए थे, उन्हें तुमने संगियों के साथ सुख से वहाँ से उठाया था।

परावतंनासत्यानुदेथामुच्चाबुध्नंचक्रथुर्जिह्मबारम् ।
क्षरन्नापोनपायनायरायेसहस्रायतृष्यतेगोतमस्य ॥ ९ ॥

---

१ नि० ६, ३६। २ नि० ६, २५।

हेनासत्यावश्विनौ युयुरुषोजीर्णाद्च्यवनाद्च्यवनाख्यादृषेःसकाशात् वव्रिंकृत्स्नंशरीरंआवृत्यावस्थितांजरांप्रामुञ्चतं प्रकर्षेणअमोचयतम् तत्रदृष्टान्तः—द्रापिमिव द्रापिरितिकवचस्याख्या यथाकश्चित्कवचं कृत्स्नशरीरव्यापकंसूत्नाप्रभावशरीरात्पृथक्करोतितद्वत् उतअपिचहेदस्राएतत्संज्ञौदर्शनीयौवाश्विनौ जहितस्यपुत्रादिभिःपरित्यक्तस्यच्यवनेःआयुर्जीवनंप्रातिरतम् प्रावर्धयतम् यपूर्वैस्तिरतिर्वर्धनार्थः आदित् अनन्तरमेवयुवानंसन्तंकनीनांकन्यानांपतिंभर्तारंअकृणुतंअकुरुतम् ॥ युयुरुषः युयुवयोहानौ लिटःक्वसुः बहुलंछन्दसीत्युत्वम् द्विर्भावः पञ्चम्येकवचनेवसोःसंप्रसारणमितिसंप्रसारणम् शासिवसिघसीनांचेतिषत्वम् । वव्रिं वृञ्वरणे आदृगमहनजनइतिकिप्रत्ययः । जहितस्य ओहाक्त्यागे कर्मणिनिष्ठा तस्यछन्दस्युभयथेतिसार्वधातुकत्वाच्छक् तस्यबहुलंछन्दसीतिश्लुः जहातेश्चेतीत्वम् । कनीनाम् स्येमैवौबहुलमितिबहुलवचनात्कन्याशब्दस्यासंप्रसारणम् ॥ १० ॥

१०. अश्विद्वय, जैसे शरीर का आवरण (कवच आदि) खोल फेंका जाता है, वैसे ही तुमने जीर्ण च्यवन ऋषि की शरीरव्यापिनी जरा खोल फेंकी थी। दस्रद्वय, तुमने पुत्रादि-द्वारा परित्यक्त ऋषि के जीवन को बढ़ाया था; अनन्तर उन्हें कन्याओं का पति बना दिया था।

॥ इतिप्रथमस्याष्टमेनवमोवर्गः ॥ ९ ॥

एकादशीमृचमाह—

**तद्वांनराशंस्यंराध्यंचाभिष्टिमन्नासत्यावरूथम् ।**
**यद्विद्वांसानिधिमिवापगूळ्हमुद्दर्शतादूपथुर्वन्दनाय ॥ ११ ॥**

तत् । वाम् । नरा । शंस्यम् । राध्यम् । च । अभिष्टिऽमत् ।
नासत्या । वरूथम् । यत् । विद्वांसा । निधिम्ऽइव । अपऽगूळ्हम् ।
उत् । दर्शतात् । ऊपथुः । वन्दनाय ॥ ११ ॥

अत्रेदमाख्यानम्—वन्दनोनामकश्चिदृषिः सचासुरैःकूपेनिखातउत्तरीतुमशक्नुवन्नश्विनावस्तौत् तमश्विनौकूपादुज्जिन्यतुरितितदाह—नराआरोग्यस्यनेताराहेनासत्यावश्विनौ वांयुवयोःसंबन्धिअभिष्टिमत्अन्वेषणयुक्तं आभिमुख्येनप्राप्तव्यम् वरूथंवरणीयंकामयितव्यंतत्कर्मशंस्यंअस्माभिःप्रशंसनीयंराध्यंआराधनीयंच किंपुनस्तत्कर्म विद्वांसाजानन्तौयुवांनिधिमिवनिक्षिप्तंधनमिवअपगूळ्हंअरण्येनिर्जनेदेशे असुरैर्निगूढं वन्दनायवन्दनंऋषिंदर्शताद्अश्वैःपिपासुभिःदृश्यात्कूपादुदूपथुः उदहार्ष्टं एवंयदेतत्कूपादुद्धरणंतदित्यर्थः ॥ शंस्यं शंसुस्तुतौ अस्माण्ण्यन्तादृचोयदितियत् यतोनावइत्याद्युदात्तत्वम् । अभिष्टिमत् अभिपूर्वादिषगतावित्यस्माज्ञ्जावेक्तिन् मन्त्रेवृषेतिक्तिनउदात्तत्वम् कृदुत्तरपदप्रकृतिस्वरत्वेनसएवशिष्यते शकन्ध्वादित्वात्पर-

रूपत्वम् वादीचेतितुगविस्वरस्यसर्वविधीनांछन्दसिविकल्पितत्वादप्रवृत्तिः ततोमतुप् अन्वोदात्तादुत्तरस्यवस्यह्रस्वनुड्भ्यामित्युदात्तत्वम्। वरूथम् जृवृञ्भ्यामूथन्। विद्वांसा शुपांसुलुगितिविभक्तेराकारः। अपगूह्रम् गुहूसंवरणे कर्मणिनिष्ठा यस्यविभाषेतीट्प्रतिषेधः ढत्वधत्वष्टुत्वढलोपदीर्घाः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम्। दर्शतात् भृमृदृशीत्यादिनाअतच्। ऋष्युः तुवप्रीपवन्तुसन्ताने लिट्यभ्यासि पचादित्वात्संप्रसारणम् द्विर्वचनादि। वन्दनाय क्रियाग्रहणंकर्तव्यमितिकर्मणःसंप्रदानत्वाच्चतुर्थी॥ ११॥

११. नेता नासत्यद्वय, तुम्हारा वह इष्ट वरणीय कार्य हमारे लिए प्रशंसनीय और आराध्य है—जो तुमने जानकर गुप्त धन की तरह छिपे उन वन्दन ऋषि को पिपासित पथिकों के द्रष्टव्य कूप से निकाला था। हावशीमृचमाह—

तद्वांनरासनयेदंसउग्रमाविष्कृणोमितन्यतुर्नवृष्टिम्।
दध्यङ्हयन्मध्वाथर्वणोवामश्वस्यशीर्ष्णाप्रयदीमुवाच॥ १२॥

तत्। वाम्। नरा। सनये। दंसः। उग्रम्। आविः। कृणोमि।
तन्यतुः। न। वृष्टिम्। दध्यङ्। ह। यत्। मधु। आथर्वणः।
वाम्। अश्वस्य। शीर्ष्णा। प्र। यत्। ईम्। उवाच॥ १२॥

अत्रेयमाख्यायिका—इन्द्रोदधीचेप्रवर्ग्यविद्यांमधुविद्यांचोपदिश्ययदिमामन्यस्मैवक्ष्यसि शिरस्तेछेत्स्यामीत्युवाच ततोश्विनावश्वस्यशिरश्छित्त्वादधीचःशिरःप्रच्छिद्यान्यत्रनिधायतत्राश्व्यंशिरःप्रत्यधत्ताम् तेनचदध्यङ् ऋचःसामानियजूंषिचप्रवर्ग्यविषयाणिमधुविद्याप्रतिपादकं ब्राह्मणंचाश्विनावध्यापयामास तदिन्द्रोज्ञात्वावज्रेणतच्छिरोच्छिनत् अथाश्विनौतस्यस्वकीयंमानुषंशिरः प्रत्यधत्तामितिशाट्यायनवाजसनेययोःप्रपञ्चेनोक्तम्—तदेतत्प्रतिपाद्यते—नराहेनरौअश्विनौवांयुवयोःसंबन्धिउग्रंउद्गूर्णंअन्यैर्दुःशकंदंसः कर्मनामैतत् युवाभ्यांपुराकृतंतत्कर्मसनयेधनलाभार्थंआविष्कृणोमिप्रकटीकरोमि तत्रदृष्टान्तः—तन्यतुर्नयथामेघस्थःशब्दोवृष्टिंपान्तर्हितांमाध्यमुदकंप्रवर्षणेनसर्वत्रप्रकटयतितद्वत् किंतत्कर्मअथर्वणःपुत्रोदध्यङ् एतत्संज्ञकऋषिःअश्वस्यशीर्ष्णायुष्मत्सामर्थ्येनप्रतिहितेशिरसावांयुवाभ्यांईमिमांमधु मधुविद्यांयद्यदाप्रतत्तुयोवाचप्रोक्तवान् तदानीं अश्वस्यशिरसःसन्धानलक्षणंपुनर्मानुषस्यशिरसःप्रतिसन्धानलक्षणंचयत्कृतवदीयंकर्मतत् आविष्कृणोमीत्यर्थः॥ सनये षणुदाने खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्चेतिइप्रत्ययः। तन्यतुः तनुविस्तारे ऋतन्यञ्जीत्यादिनायतुच् यद्वा स्तनयतेः औणादिकाधुच् छान्दसःसलोपः। वृष्टिं वृष्यतेक्तिन्नवेत्यनेनेतिवृत्तिः मन्त्रेवृषेत्यादिनाक्तिनउदात्तत्वम्। आथर्वणः अथ-

स्यार्थेऽणि अभिविभक्तविभावात् टिलोपाभावः। शीर्ष्णा शीर्षश्छन्दसीति शिरःशब्दपर्यायः शीर्षन्शब्दो ऽनुदात्तो निपात्यते अल्लोपे सति उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् ॥ १२ ॥

१२. नेतृद्वय, जैसे मेघ-गर्जन आसन्नवृष्टि प्रकटित करता है, मैं धन-प्राप्ति के लिए, तुम्हारे उस उग्र कर्म को वैसे ही प्रकटित करता हूँ—जो अथर्वा के पुत्र दधीचि ऋषि ने घोड़े का मस्तक पहनकर तुम्हें यह मधु-विद्या सिखाई थी।

**अजो॑हवीन्नासत्या क॒रा वां॑ म॒हे याम॑न्पुरुभुजा॒ पुरं॑धिः।**
**श्रु॒तं तच्छा॒सुरि॑व वध्रिम॒त्या हिर॑ण्यहस्तमश्विनावदत्तम् ॥ १३ ॥**

अजो॑हवीत्। ना॒स॒त्या॒। क॒रा॒। वा॒म्। म॒हे। याम॑न्। पु॒रु॒ऽभु॒जा॒। पुरं॑ऽधिः। श्रु॒तम्। तत्। शा॒सुःऽइ॑व। व॒ध्रि॒ऽम॒त्याः। हिर॑ण्यऽहस्तम्। अ॒श्वि॒नौ॒। अ॒द॒त्त॒म् ॥ १३ ॥

वध्रिमती नाम कस्यचिद्राजर्षेः पुत्री नपुंसकभर्तृका सा पुत्रलाभार्थमश्विनावजुहाव तदाह्वानं श्रुत्वा अश्विनावागत्य तस्यै हिरण्यहस्ताख्यं पुत्रं ददतुः तदेतदाह—पुरुभुजा बहूनां पालकौ प्रभूतहस्तौ वा हे नासत्यावश्विनौ महे महनीये पूजनीये यामन् यामनि याति गच्छतीति यामः स्तोत्रं तस्मिन्स्तोत्रे करा अभिमतफलस्य कर्तारौ वां युवां पुरन्धिर्बहुधीः वध्रिमती वध्रिः पुंस्त्वोत्पादनाशक्तः षण्ढकः तद्वती एतत्संज्ञा राजपुत्री अजोहवीत् पुनःपुनः स्तुत्या पुत्रलाभार्थमाहूतवती युवां च वध्रिमत्यास्तदाह्वानं श्रुतं अशृणुतम् तत्र दृष्टान्तः—शासुरिव यथा शास्तुराचार्यस्य वचनं शिष्यो वशहितः सन्नैकाग्र्येण शृणोति तद्वत् श्रुत्वा च हे अश्विनौ तस्यै हिरण्यहस्तं सुवर्णमयपाणिं हितरमणीयपाणिं वा एतत्संज्ञं पुत्रमदत्तं प्रायच्छतम् ॥ अजोहवीत् ह्वयतेर्यङ्लुगन्ताल्लङ् यङोवेति तिपईडागमः। करा करोतेः पचाद्यच् सुपांसुलुगिति विभक्तेराकारः। यामन् आतोमनिन्क्वनिब्वनिपश्चेति मनिन् सुपांसुलुगिति सप्तम्या लुक्। श्रुतम् लङि बहुलंछन्दसीति विकरणस्य लुक् बहुलंछन्दस्यमाङ्योगेपीत्यडभावः। शासुः शास्तुः शासु अनुशिष्टौ शंसिशसिशासीत्यादिना संज्ञायां तुन् इडभावश्छान्दसस्तलोपश्च ॥ १३ ॥

१३. बहु-लोक-पालक नासत्यद्वय, तुम अभिमत-फल-दाता हो। बुद्धिमती वध्रिमती नाम की ऋषि-पुत्री ने पूजनीय स्तोत्र-द्वारा तुम्हें बार-बार पुकारा था। जैसे शिष्य शिक्षक की कथा सुनता है, तुमने वैसे ही वध्रिमती का आह्वान सुना था। अश्विद्वय, पुत्राभिलाषिणी नपुंसक-पतिका वध्रिमती को तुमने हिरण्यहस्त नाम का पुत्र प्रदान किया था।

**आ॒स्नो वृक॑स्य॒ वर्ति॑काम॒भीके॑ यु॒वं न॑रा नासत्यामुमुक्तम्।**
**उ॒तो क॒विं पु॑रुभुजा यु॒वं ह॒ वृप॑माणमकृणुतं वि॒चक्षे॑ ॥ १४ ॥**

आस्नः । वृकस्य । वर्तिकाम् । अभीके । युवम् । नरा । नासत्या । अमुमुक्तम् । उतो इति । कविम् । पुरुऽभुजा । युवम् । ह । कृपमाणम् । अकृणुतम् । विऽचक्षे ॥ १४ ॥

वर्तिकाचटकसदृशस्यपक्षिणःस्त्री तां अरण्येवर्तमानेनवृकेणग्रस्तांपुराकिलाश्विनौअमोचयत-म् तदेवदाह—हेनरा नेतारौनासत्यावश्विनौयुवंयुवांअभीकेअभिगतेवृकवर्तिकयोःसङ्ग्रामेवृक-स्यविकर्तकस्यशुनः आस्नः आस्याद्वर्तिकांचटकसदृशींअमुमुक्तंअमोचयतम् यास्कस्त्वा-ह—पुनःपुनर्वर्ततेइमविदिवसमावर्तयइति। वर्तिकाउषाः सांवृकेणावरकेणसर्वजगत्प्रकाशेनाच्छाद-यित्रासूर्येणग्रस्ताम् उतोअपिचकविमृषिम् हेपुरुभुजाबहुपालकौ युवंहयुवांएव कृपमाणंस्तुवंतंवि-चक्षेविविधंद्रष्टुंअकृणुतम् अकुरुतम्॥आस्नः पद्दन्नित्यादिनाआस्यस्यासन्नादेशः अल्लोपोनइत्य-कारलोपे उदात्तनिवृत्तिस्वरेणविभक्तेरुदात्तत्वम् । अमुमुक्तम् मुचेरन्तर्भावितण्यर्थात् लङिब-हुलंछन्दसीतिविकरणस्यश्लुः । कृपमाणम् कृपिःस्तुतिकर्मा तुदादिभ्यःशः विकरणस्वरेमाते तृषादीनांचेत्याद्युदात्तत्वम् । विचक्षे तुमर्थेसेसेनितिसेन्प्रत्ययः स्कोःसंयोगाद्योरितिसलोपः॥१४॥

१४. नेता नासत्यद्वय, तुमने वृक अथवा सूर्य के मुख से वर्तिका नामक पक्षी अथवा उषा को छुड़ाया था। हे बहुलोक-पालक, तुमने स्तोत्र-तत्पर मेधावी को प्रकृत ज्ञान देखने दिया था।

पञ्चदशीमृचमाह—

चरित्रंहिवेरिवाच्छेदिपर्णमाजाखेलस्यपरितक्म्यायाम् ।
सद्योजंघामायसींविश्पलायैधनेहितेसर्तवेप्रत्यधत्तम् ॥ १५॥१०॥

चरित्रम् । हि । वेःऽइव । अच्छेदि । पर्णम् । आजा । खेलस्य । परिऽतक्म्यायाम् । सद्यः । जंघाम् । आयसीम् । विश्पलायै । धने । हिते । सर्तवे । प्रति । अधत्तम् ॥ १५ ॥ १० ॥

अगस्त्यपुरोहितः खेलोनामराजा तस्यसंबन्धिनी विश्पलानामस्त्री सङ्ग्रामे शत्रुभिश्छि-न्नपादासीत् पुरोहितेनागस्त्येनस्तुतौअश्विनौ रात्रावागत्य अयोमयंपादं समधत्ताम् तदेवदा-ह—आजाआजौ सङ्ग्रामे अगस्त्यपुरोहितस्य खेलस्य संबन्धिन्याविश्पलाख्यायाश्चरित्रं चरणं वेरिव वेःपक्षिणःपर्णं पतत्रमिव अच्छेदिहि पुराछिन्नमभूत्खलु हेअश्विनौ युवांअगस्त्येनस्तुतौ

सन्तौपरितक्म्यायाम् परितक्म्यारात्रिः परितएनांतकवीतिमास्कः। एतामुभयतःसूर्योगच्छतीति तस्यार्थः रात्रावागत्यसद्यस्तदानीमेवहिवेशत्रुधुनिहिवेधनेजेतव्येविषयभूतेसतिसर्तवेसर्तुंगन्तुंविश्पलायैआयसींअयोमयींजंघांजंघोपलक्षितंपादंमत्यधत्तम् सन्धानमेकीकरणंकृतवन्तावित्यर्थः॥ चरित्रम् अर्विलूधूसूखनसहचरइतिकरणेइत्रः। आजा सुपांसुलुगितिविभक्तेर्डादेशः। आयसीम् अयःशब्दाद्विकारार्थेमाणिरजतादिभ्योञ् टिड्ढाणञितिङीप्॥ १५॥

१५. खेल राजा की स्त्री विश्पला का एक पैर, युद्ध में, पक्षी की पंख की तरह, कट गया था। अश्विद्वय, तुमने रातों रात, विश्पला के जाने के लि तथा शत्रु-न्यस्त धन-लाभ के लिए, उसे लौहमय जंघा दे दी थी।

॥ इतिप्रथमस्याष्टमेदशमोवर्गः॥ १०॥

षोडशीमृचमाह—

शतंमेषान्वृक्यैचक्षदानमृज्राश्वंतंपिताम्धंचकार।
तस्माअक्षीनासत्याविचक्षआधत्तंदस्राभिषजावनर्वन्॥ १६॥

शतम्। मेषान्। वृक्यै। चक्षदानम्। ऋज्रऽअश्वम्। तम्। पिता। अन्धम्। चकार। तस्मै। अक्षी इति। नासत्या। विऽचक्षे। आ। अधत्तम्। दस्रा। भिषजौ। अनर्वन्॥ १६॥

वृषागिरःपुत्रोऋज्राश्वोनामराजर्षिः तस्यसमीपेअश्विनोर्वाहनभूतोरासभोवृकीभूत्वावस्थे सचतस्यआहारार्थंएकोत्तरशतसंख्यान् पौरजनानांस्वभूतान्मेषान् शकलीकृत्यप्रददौ ऋज्राश्वः शतमेकंचमेषानितिमन्त्रान्तरेदर्शनात्। एवंपौराणामहितेप्रवृत्तंपिताशापेननेत्रहीनमकरोत्तेनसूयमानाावश्विनौअस्मद्वाहननिमित्तमस्यान्धताजातेतिजानन्तौतस्मैअक्षिणीप्रायच्छतामिति यदेतदाह—अत्रतच्छन्दश्रुतेर्यच्छब्दाध्याहारः यमृज्राश्वः शतंशतसंख्याकान् मेषान् वृक्यैआरण्यायैवृकस्त्रियैशकलीकृत्यमाददत् तंचक्षदानं क्षदतिरत्तिकर्मा अत्रशकलीकरणार्थः शकलीकृत्यदत्तवन्तंऋज्राश्वंपिताशापेनअन्धंदृष्टिहीनंचकारकृतवान् हेनासत्यासत्यस्वभावौसत्यस्यनेतारौवाभिषजौदेवानांवैद्यभूतौ अश्विनौवैदेवानांभिषजाविविश्रुतेः। दस्रादर्शनीयौ एवंशीलौवा हेअश्विनौ अनर्वन् अनर्वणी इत्यन्यंप्रतिपित्रशापात्गमनरहितेअक्षीचक्षुषीविचक्षेविविधंद्रष्टुंसमर्थैतस्मैऋज्राश्वायआवत्तंव्यधत्तंअकुरुतम्॥ वृक्यै वृकोरण्यश्वातस्यस्त्रीवृकी जातेरस्त्रीविषयादितिङीष् असादिपुच्छन्दसिवावचनमितिचतुर्थ्येकवचनस्याडभावेयणादेशेउदात्तस्वरित-

---

१ नि० ११. २५। २ ऋ० सं० १. ८. १६। ३ तै० सं० २. ३. ११।

योर्यणइविपरस्यानुदात्तस्यस्वरितत्वम् । चक्षदानम् चक्षेर्डिदःकानच् चित्स्वरः । अक्षी इंच-द्विवचनेइतिपरत्वादक्षशब्दस्यईकारान्तादेशः सचोदात्तः यस्मिन्विधौतद्गौतौविप्रतिषेधइतिपरि-भाषयापुनर्नुमभवति । विचक्षे चक्षेः संपदादिलक्षणोभावेक्विप् । अनर्वन् ऋगतौ अस्मादन्ये-भ्योपिदृश्यन्तइतिदृशिग्रहणस्यविभ्यन्तरोपसंग्रहार्थत्वाद्भावेवनिप् अर्वगमनंविषयंप्रत्यनयो-र्नास्तीतिबहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् सुपांसुलुगितिद्विवचनस्यलुक् छान्दसोन-लोपाभावः ॥ १६ ॥

१६. जिन ऋज्राश्व राजर्षि ने अपनी वृकी (वृक की स्त्री) को खाने के लिए सौ भेड़ों को काट डाला था, उनको उनके पिता (वृषागिर) ने क्रुद्ध होकर नेत्र-हीन कर दिया था। ऋज्राश्व के दोनों नेत्र किसी भी वस्तु को देखने में असमर्थ हो गये थे। भिषक-वर नासत्यद्वय, तुमने ऋज्राश्व की आंखें अच्छी कर दीं।

आवांरथंदुहितासूर्यस्यकार्ष्मेवातिष्ठदर्वताजयन्ती ।
विश्वेदेवाअन्वमन्यन्तहृद्भिःसमुश्रियानासत्यासचेथे ॥ १७ ॥

आ । वाम् । रथम् । दुहिता । सूर्यस्य । कार्ष्मऽइव । अतिष्ठत् । अर्वता । जयन्ती । विश्वे । देवाः । अनु । अमन्यन्त । हृत्ऽभिः । सम् । ऊम् इति । श्रिया । नासत्या । सचेथे इति ॥ १७ ॥

सवितादुहितरंसूर्याख्यांसोमायराज्ञेप्रदातुमैच्छत् तांसूर्यांसर्वेदेवावरयामासुः तेअन्योन्य-मूचुः आदित्यमवधिंकृत्वाआजिंधावाम योस्माकंमध्येउज्जेष्यति तस्येयंभविष्यतीति तत्राश्विना-वुदजयताम् साचसूर्या जितवतोस्तयोरथमारुरोह अथ प्रजापतिर्वैसोमायराज्ञेदुहितरंप्रायच्छद्वि-त्यादिकंब्राह्मणमनुसन्धेयम् । इदंचाख्यानंसूर्याविवाहस्यस्तावकेनसत्येनोत्तभिताभूमिरितिदर्श-केनस्पष्टयिष्यते हेअश्विनौवांयुवयोः रथंकार्ष्मेव कार्ष्मशब्दःकाष्ठवाची यथाकाष्ठंआजिधावन-स्यअवधित्वेननिर्दिष्टंलक्ष्यंआशुगामीकश्चित्सर्वेभ्योधावद्भ्यःपूर्वंप्राप्नोति एवमेवसर्वेभ्योदेवेभ्यःपू-र्वंअर्वताशीघ्रमवधिंप्राप्नुवतायुष्मदीयेनाश्वेनकरणभूतेनयुवाभ्यांजयन्तीजीयमानासूर्यस्यसवितुः दुहिताअतिष्ठत् आरूढवती विश्वेसर्वेइतरेदेवाः एतदारोहणंस्यानंहृद्भिःहृदयैः अन्वमन्यन्त अन्वजानन् तदानीं हेनासत्यावश्विनौ श्रियाककुत्सहस्राभरूपयासंपदाकान्त्यावायुवांसंसचेथे सङ्गच्छेथे ॥ जयन्ती ब्यत्ययेनकर्मणिशतृप्रत्ययः । हृद्भिः पद्दन्नित्यादिनाहृदयशब्दस्यहृदा-देशः । सचेथे षचसमवाये स्वरितेत्त्वादात्मनेपदम् ॥ १७ ॥

१७. अश्विद्वय, सारे देवों में तुम्हारे शीघ्रगामी घोड़ों के होने से सूर्य-पुत्री सूर्या तुम्हारे द्वारा विजित हो गई और तुम्हारे रथ पर आरोहण किया। घुड़दौड़ के जितानेवाले काष्ठ-खण्ड के पास तुम्हारे घोड़ों के पहुंचने से सारे देवों ने हृदय के साथ इस कार्य का अनुमोदन किया। नासत्यद्वय, तुमने सम्पत् प्राप्त की।

१ ऐ० ब्रा० ४. ७. । २ ऋ० सं० , ८. ३. २०. ।

अष्टादशीमृचमाह—

यदयातं दिवोदासाय वर्तिर्भरद्वाजायाश्विना हयन्ता ।
रेवदुवाह सचनो रथो वां वृषभश्च शिंशुमारश्च युक्ता ॥ १८ ॥

यत् । अयातम् । दिवःऽदासाय । वर्तिः । भरत्ऽवाजाय । अश्विना । हयन्ता । रेवत् । उवाह । सचनः । रथः । वाम् । वृषभः । च । शिंशुमारः । च । युक्ता ॥ १८ ॥

हे अश्विना हयन्ता स्तुतिभिराहूयमानौ युवां भरद्वाजाय संभ्रियमाणहविर्लक्षणान्नाय यजमानाय दिवोदासाय एतत्संज्ञाय राजर्षये अभीष्टं फलं दातुं वर्तिः त्वदीयं गृहं यत् यदा आयातम् आगच्छतम् तदानीं रेवत् धनयुक्तमन्नं वां युवयोः सचनः सेवनो रथः उवाह तस्मै दिवोदासाय प्रापयामास अपि च तस्मिन् रथे वृषभो नड्वान् शिंशुमारो ग्राहश्च परस्परविरुद्धावपि स्वसामर्थ्यप्रकटनाय युक्ता वाहनतया संयुक्तावास्ताम् ॥ दिवोदासाय दिवश्च दासे षष्ठ्या अलुग्वक्तव्य इत्यलुक् दिवोदासादीनां छन्दस्युपसंख्यानमिति पूर्वपदाद्युदात्तत्वम् । भरद्वाजाय भृञ् भरणे अस्माद्व्यत्ययेन कर्मणि शतृप्रत्ययः शपश्छन्दस्युभयथेत्यार्धधातुकत्वेन लसार्वधातुकानुदात्तत्वाभावात्प्रत्ययाद्युदात्तत्वम् बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । हयन्ता ह्वेञः कर्मणि लटो व्यत्ययेन शतृ बहुलं छन्दसीति संप्रसारणम् शपि गुणे छान्दसोऽयादेशः । रेवत् रयिशब्दान्मतुप् रयेर्मतौ बहुलमिति संप्रसारणम् छन्दसीर इति मतुपो वत्वम् रयिशब्दाच्चेति मतुप उदात्तत्वम् । सचनः षच सेवने अनुदात्तेतश्च हलादेरिति युच् । युक्ता सुपां सुलुगिति विभक्तेराकारः ॥ १८ ॥

१८. अश्विद्वय, राजर्षि दिवोदास के, हव्यान्न प्रदान कर तुम्हें, बुलाने पर तुम उनके घर गये थे। उस समय तुम्हारा सेव्य-रथ धन-संयुक्त अन्न ले गया था। वृषभ और ग्राह उस रथ में युक्त हुए थे।

एकोनविंशीमृचमाह—

रयिं सुक्षत्रं स्वपत्यमायुः सुवीर्यं नासत्या वहन्ता ।
आ जह्नावीं समनसोप वाजैस्त्रिरह्नो भागं दधतीमयातम् ॥ १९ ॥

रयिम् । सुऽक्षत्रम् । सुऽअपत्यम् । आयुः । सुऽवीर्यम् । नासत्या । वहन्ता । आ । जह्नावीम् । सऽमनसा । उप । वाजैः । त्रिः । अह्नः । भागम् । दधतीम् । अयातम् ॥ १९ ॥

हेनासत्यौसुक्षत्रं शोभनबलं रयिंधनं स्वपत्यंशोभनैःपुत्रादिभिरुपेतम् सुवीर्यंशोभनवीर्योपेतम् आयुः अन्ननामैतत् एवंगुणविशिष्टमन्नंचवहन्तौधारयन्तौयुवां समनसासमानमनस्कौसन्तौजह्नावीं जह्नोर्महर्षेःसंबन्धिनीं प्रजांआयातंआभिमुख्येनागच्छतम् कीदृशीं वाजैर्हविर्लक्षणैरन्नैरुपेताम् अह्नः अत्राहःशब्देनतत्रानुष्ठेयःसोमयागोलक्ष्यते तस्यभागःसवनादिरूपेणत्रिधाविभक्तंभागंअंशंदधतींबिभ्रतीम् अनुसवनंहविर्भिर्यजमानामित्यर्थः ॥ सुक्षत्रम् बहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्। सुवीर्यम् वीरवीर्यौचेतिबहुव्रीहावुत्तरपदाद्युदात्तत्वम्। जह्नावीं जह्नुशब्दात्तस्येदमित्यण् टिड्ढाणञितिङीप् जाह्नवी ह्रस्वदीर्घयोर्विनिमयःपृषोदरादित्वात् उक्तंच—वर्णागमोवर्णविपर्ययश्चेति अतएवमध्योदात्तत्वम् ॥ १९ ॥

१९. नासत्यद्वय, तुम शोभन-बल-सम्पन्न और शोभन अपत्य और वीर्य से युक्त होकर तथा समान प्रीति-युक्त होकर महर्षि जह्नु की सन्तानों के पास आये थे। सन्तानों ने हव्यान्न प्रदान किया था तथा दैनिक सोमाभिषव के प्रातःसवन आदि तीन भाग धारण किये थे।

परिविष्टंजाहुषंविश्वतःसींसुगेभिर्नक्तमूहथूरजोभिः।
विभिन्दुनानासत्यारथेनविपर्वताँअजरयूअयातम् ॥ २० ॥११॥

परिऽविष्टम्। जाहुषम्। विश्वतः। सीम्। सुऽगेभिः। नक्तम्।
ऊहथुः। रजःऽभिः। विऽभिन्दुना। नासत्या। रथेन। वि।
पर्वतान्। अजरयू इति। अयातम् ॥ २० ॥ ११ ॥

जाहुषोनामकश्चिद्राजा विश्वतःसर्वतः परिविष्टंशत्रुभिःपरिवृतंवैरात्मानं हेनासत्यावश्विनौ अजरयूजरारहितौनित्यतरुणौयुवां विभिन्दुनाविशेषेणसर्वस्यभेदकेनात्मीयेनरथेननक्तंरात्रौ सुगेभिः सुष्ठुगन्तुंशक्यैः रजोभिःरञ्जकैर्मार्गैः ऊहथुः तस्माच्छत्रुसमूहान्निरगमयतम् सीमित्येतत्पदपूरणम् निर्गतेनतेनसहपर्वताञ्छत्रुभिरारोढुमशक्यान् विअयातंविशेषेणगच्छतम् ॥ परिविष्टम् विषपरिवेषणे कर्मणिनिष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम्। सुगेभिः सुपूर्वाद्गमेरधिकरणेडप्रत्ययः । विभिन्दुना भिदिर्विदारणे औणादिकउप्रत्ययोनुमागमश्च। अजरयू नजराअजरा तामात्मनइच्छतः सुपआत्मनःक्यच् अच्छन्दस्युत्तरस्येतिदीर्घयोर्निषेधः क्याच्छन्दसीत्युप्रत्ययः॥ २० ॥

२०. नासत्यद्वय, तुम अजर हो। जिस समय जाहुष राजा शत्रुओं-द्वारा चारों ओर से घेरे गये थे, उस समय अपने सर्व-भेदकारी रथ-द्वारा रातो-रात उन्हें सुगम्य पथ से बाहर कर ले गये थे; और शत्रुओं-द्वारा दुरारोह पर्वतों पर गये थे।

॥ इतिप्रथमस्याष्टमेएकादशोवर्गः ॥ ११ ॥

एकविंशीमृचमाह—

एकस्या वस्तोरावतं रणाय वशमश्विना सनये सहस्रा ।
निरहतं दुच्छुना इन्द्रवन्ता पृथुश्रवसो वृषणावरातीः ॥ २१ ॥

एकस्याः । वस्तोः । आवतम् । रणाय । वशम् । अश्विना ।
सनये । सहस्रा । निः । अहतम् । दुच्छुनाः । इन्द्रऽवन्ता ।
पृथुऽश्रवसः । वृषणौ । अरातीः ॥ २१ ॥

हे अश्विनौ वशमेतत्संज्ञमृषिं एकस्या वस्तोरेकस्याह्नः रणाय रमणीयाय सहस्रा सहस्र-संख्याय सनये धनलाभाय आवतं अरक्षतं स ऋषिः मत्यहं यथा सहस्रसंख्यं धनं लभते तथा रक्षित-वन्तावित्यर्थः अपि च हे वृषणौ कामानां वर्षितारौ अश्विनौ इन्द्रवन्ता इन्द्रेण संयुक्तौ युवां दुच्छुनाः दुष्टसुखान् दुःखस्य कर्तॄन् पृथुश्रवसः विस्तीर्णयशसः अरातीः शत्रून् निरहतं निःशेषेणावधिष्टम् यद्वा कानीनस्य पृथुश्रवससंज्ञकस्य राज्ञः शत्रूनिति योज्यम् ॥ सहस्रा सुपां सुलुगिति चतुर्थ्या-डादेशः । अहतम् लङि थसस्तम् अनुदात्तोपदेशेत्यादिना अनुनासिकलोपः । दुच्छुनाः शुनमि-ति सुखनाम दुष्टं सुखं यासां तास्तथोक्ताः परादिश्छन्दसि बहुलमित्युत्तरपदाद्युदात्तत्वम् ॥ २१ ॥

२१. अश्विद्वय, तुमने वश नाम के ऋषि की, एक दिन में हजार शोभन धन पाने के लिए, रक्षा की थी। अभीष्ट-वर्षक अश्विद्वय, तुमने इन्द्र के साथ मिलकर पृथुश्रवा राजा के क्लेशदायक शत्रुओं को मारा था।

द्वाविंशीमृचमाह—

शरस्य चिदार्चत्कस्यावतादा नीचादुच्चा चक्रथुः पातवे वाः ।
शयवे चिन्नासत्या शचीभिर्जसुरये स्तर्यं पिप्यथुर्गाम् ॥ २२ ॥

शरस्य । चित् । आर्चत्ऽकस्य । अवतात् । आ । नीचात् ।
उच्चा । चक्रथुः । पातवे । वारिति वाः । शयवे । चित् । नासत्या ।
शचीभिः । जसुरये । स्तर्यम् । पिप्यथुः । गाम् ॥ २२ ॥

आर्चत्कस्य ऋचत्कपुत्रस्य शरस्य चित् एतत्संज्ञस्यापि स्तोतुः पिपासितस्य पातवे पानार्थं नी-चात् नीचीनात् अवतात् कूपात् उच्चा उच्चैरुपरिष्टात् वाः उदकं हे अश्विनौ युवां आ चक्रथुः आ-भिमुख्येन कृतवन्तौ तथा हे नासत्यौ अश्विनौ शचीभिः युष्मदीयैः कर्मभिः परिचरणैः जसुरये श्रा-न्ताय शयवे चित् शयुनाम्ने ऋषये स्तर्यं निवृत्तप्रसवां गां अग्निहोत्रार्थस्य पयसो दोग्ध्रीं पिप्यथुः पय-

सायुवांआपूरितवन्तौ ॥ पातवे पानाय तुमर्थेसेसेनितितवेन्प्रत्ययः । जसुरये जसुहिंसायाम् प-
ञ्चसहोरुरिव । स्तर्यम् स्तीर्यतेआच्छाद्यतेप्रसवेसामर्थ्याभावेनेतिस्तरीः अवितृस्तृतन्त्रिभ्यई-
रितीकारप्रत्ययः वाछन्दसीत्यमिपूर्वस्यविकल्पितत्वादमावेयणादेशः उदात्तस्वरितयोर्यणइतिप-
रस्यानुदात्तस्यस्वरितत्वम् । पिप्यथुः प्यायीवृद्धौ लिटिव्यत्ययेनपरस्मैपदम् लिडयङोश्चेतिपी-
भावः ॥ २२ ॥

२२. ऋचत्क के पुत्र शर नामक स्तोता के पाने के लिए तुमने कूप के नीचे से जल को ऊपर किया था। नासत्यद्वय, शान्तशयु नामक ऋषि के लिए प्रसव-शून्य गौ को, अपने कार्य्य द्वारा, दुग्धवती बनाया था।

अवस्यतेस्तुवतेकृष्णियायऋजूयतेनासत्याशचीभिः ।
पशुंननष्टमिवदर्शनायविष्णाप्वंददथुर्विश्वकाय ॥ २३ ॥

अवस्यते । स्तुवते । कृष्णियाय । ऋजुऽयते । नासत्या ।
शचीभिः । पशुम् । न । नष्टम्ऽइव । दर्शनाय । विष्णाप्वम् ।
ददथुः । विश्वकाय ॥ २३ ॥

अवस्यतेअवनंरक्षणमात्मनइच्छतेस्तुवतेस्तुतिंकुर्वते कृष्णियाय कृष्णोनामकश्चित् तस्य
पुत्राय ऋजूयते आर्जवमिच्छते विश्वकायएतत्संज्ञायऋषये हेनासत्यौ युवांशचीभिरात्मीयैःक-
र्मभिःविष्णाप्वं विष्णाप्वंनामविनष्टंपुत्रंदर्शनायदर्शनार्थंददथुःदत्तवन्तौ तत्रदृष्टान्तः—पशुंननष्ट-
मिव एकउपमार्थीयःपूरकः यथाकश्चिद्विनष्टंपशुंस्वामिनोदृष्टिपथंप्रापयतितद्वत् ॥ अवस्यते अवस्
शब्दात्सुपआत्मनःक्यच् शतुरनुमइतिविभक्तेरुदात्तत्वम् । कृष्णियाय कृष्णशब्दादपत्यार्थे
छान्दसोघच् ॥ २३ ॥

२३. नासत्यद्वय, कृष्ण-पुत्र और ऋजुता-तत्पर विश्वकाय नामक ऋषि के तुम्हारी रक्षा की लालसा में, स्तुति करने पर अपने कार्यों-द्वारा, तुमने, नष्ट पशु की तरह, उनके विष्णापु नामक विनष्ट पुत्र को दिखा दिया था।

दशरात्रीरशिवेनानवद्यूनवनद्धंश्नथितमप्स्वन्तः ।
विप्रुतंरेभमुदनिप्रवृक्तमुन्निन्यथुःसोममिवस्रुवेण ॥ २४ ॥

दश । रात्रीः । अशिवेन । नव । द्यून् । अवऽनद्धम् । श्नथितम् ।
अप्ऽसु । अन्तरिति । विऽप्रुतम् । रेभम् । उदनि । प्रऽवृक्तम् ।
उत् । निन्यथुः । सोमम्ऽइव । स्रुवेण ॥ २४ ॥

पुरा खलु रेभमृषिं पाशैर्बद्ध्वा असुराः कूपे कस्यचिद्दिवसस्य सायंकाले प्रचिक्षिपुः स चाश्विनौ स्तुवन् दश रात्रीर्नव अहानि च कूपमध्ये तथैवावतस्थे दशमेऽहनि प्राप्ते अश्विनौ तं कूपादुदतारयतामिति तदाह—अप्सु कूपान्तर्वर्तमानासु अन्तः मध्ये असुरैः पातितं अशिवेन दुःखहेतुना दाम्ना अवनद्धम् श्नथितं शत्रुभिर्हिंसितम् दश रात्रीः दशसंख्याका निशाः नव द्यून् नवसंख्याकान्यहानि च अत्यन्तसंयोगे द्वितीया एतावन्तं कालं तत्रैव कूपे अवस्थितम् अत एव उदनि उदके विप्रुतं विप्लुतम् व्याप्तसर्वाङ्गं प्रवृक्तम् लुप्तोपममेतत् प्रवृक्तमिव अनेन संततं घर्ममिव व्यथया संतप्यमानम् एवंभूतं रेभं हे अश्विनौ युवां उत् निः अयथुः तस्मात्कूपात् उन्नीतं उत्तीर्णं कृतवन्तौ तत्र दृष्टान्तः—सोममिव यथा अग्निहोत्रहोमार्थं अभिषुतं सोमरसं कूपसदृशे अग्निहोत्रस्थालीमध्ये वर्तमानं स्रुवेण अध्वर्युः उन्नयति तद्वत् ॥ अवनद्धम् णह बन्धने कर्मणि निष्ठा नहो धः झषस्तथोर्धोऽधः इति निष्ठातकारस्य धत्वम् गतिरनन्तरः इति गतेः प्रकृतिस्वरत्वम् । श्नथितम् श्नथ हिंसार्थः निष्ठा विप्रुतम् प्रुङ् गतौ अवनद्धवदस्य स्वरौ कपिष्ठलादित्वात् षत्वविकल्पः । उदनि पद्दन्नित्यादिना उदकशब्दस्योदन्भावः ॥ २४ ॥

२४. असुरों-द्वारा पाश से बद्ध, कूप में निक्षिप्त और शत्रुओं-द्वारा आहत होकर रेभ नामक ऋषि के दस रात नौ दिन जल में पड़े रहने से व्यथा से सन्तप्त और जल से विप्लुत होने पर तुमने उन्हें उसी प्रकार कुएँ से निकाल लिया था, जिस प्रकार अध्वर्यु स्रुव से सोम निकालता है।

प्र वां॒ दंसां॑स्यश्विनाववोचम॒स्य पतिः॑ स्यां सु॒गवः॑ सु॒वीरः॑ ।
उ॒त पश्य॑न्नश्नु॒वन्दी॒र्घमायु॒रस्त॑मि॒वेज्ज॑रि॒माणं॑ जगम्याम् ॥ २५ ॥ १२

प्र । वा॒म् । दंसां॑सि । अ॒श्वि॒नौ॒ । अ॒वो॒च॒म् । अ॒स्य । पतिः॑ । स्या॒म् । सु॒ऽगवः॑ । सु॒ऽवीरः॑ । उ॒त । पश्य॑न् । अ॒श्नु॒वन् । दी॒र्घम् । आयुः॑ । अस्त॑म्ऽइव । इत् । ज॒रि॒माण॑म् । ज॒ग॒म्या॒म् ॥ २५ ॥ १२ ॥

एवमनेन सूक्तेनाश्विनोर्महिमानं प्रशस्याधुना मन्त्रद्रष्टा स्वाभीष्टं प्रार्थयते हे अश्विनौ वां युवयोः दंसांसि पुरा कृतानि कर्माणि प्रावोचं इत्थमुक्तवानस्मि सोऽहं सुगवः शोभनगोयुक्तः सुवीरः शोभनवीरश्च भूत्वा अस्य राष्ट्रस्य पतिः अधिपतिः स्यां भवेयं उत अपि च पश्यन् अक्षिभ्यां पश्यन् उपलक्षणमेतत् सर्वैरिन्द्रियैः स्वस्वविषयदर्शनसमर्थैः दीर्घं वर्षशतरूपेणायतं आयुः जीवितं चाश्नुवन् प्राप्नुवन्नहम् अस्तमिवेत् यथा गृहं स्वामी निष्कण्टकं प्रविशति एवं जरिमाणं जरां जगम्यां कण्टकराहित्येन प्राप्नुयां वृद्धः सन् चिरकालं निवसेयमित्यर्थः ॥ स्याम् अस्तेः प्रार्थनायां लिङ् यासुट् श्नसोरल्लोपः इत्यकारलोपः । अश्नुवन् अशू व्याप्तौ व्यत्ययेन शतृ । जरिमाणम् जॄष् वयोहानौ अस्मादौणादिक इमनिच्प्रत्ययः । जगम्याम् गमेः प्रार्थनायां लिङि बहुलं छन्दसीति विकरणस्य श्लुः ॥ २५ ॥

२५. अश्विद्वय, तुम्हारे पूर्व-कृत कार्यों का मैंने वर्णन किया। मैं शोभन गौ और वीर से युक्त होकर इस राष्ट्र का अधिपति बनूँ। जैसे गृह-

स्वामी निष्कंटक घर में प्रवेश करता है, मैं भी वैसे ही नेत्रों से स्पष्ट देखकर और दीर्घ आयु भोगकर बुढ़ापा पाऊँ।

मध्वःसोमस्याश्विनामदायप्रत्नोहोताविवासतेवाम्।
बर्हिष्मतीरातिर्विश्रितागीरिषायातंनासत्योपवाजैः॥ १॥

मध्वः। सोमस्य। अश्विना। मदाय। प्रत्नः। होता। आ।
विवासते। वाम्। बर्हिष्मती। रातिः। विऽश्रिता। गीः। इषा।
यातम्। नासत्या। उप। वाजैः॥ १॥

अश्विना हेअश्विनौ मध्वोमधुनामाधुर्योपेतेनसोमस्यसोमेनमदाययुवयोर्मदार्थंप्रत्नश्चिरंतनो-होताहोमनिष्पादकोयजमानः वांयुवांआविवासते विवासतिःपरिचरणकर्मा आङ्मर्यादायाम् यथाशास्त्रंपरिचरति अपिचरातिर्दीयमानंहविः बर्हिष्मतीआस्तीर्णेनबर्हिषायुक्तंयुष्मदर्थंबर्हिष्या-सादितमित्यर्थः तथागीः स्तुतिलक्षणावाक्च विश्रिताऋत्विक्षुसमवेता दैःस्तुतिरपिक्रियतइत्य-र्थः अतोहेनासत्यावश्विनौ इषाअस्मभ्यंदातव्येनान्नेन वाजैर्बलैश्चसहयुवां उपयातंअस्मत्समीपं आगतम् ॥ मध्वः सुपांसुपोभवन्तीतितृतीयार्थेषष्ठी जसादिषुछन्दसिवावचनमितिघेर्ङितीतिगु-णाभावेयणादेशः । मदाय मदीहर्षे मदोनुपसर्गेइत्यप् । रातिः रादाने कर्मणिक्तिन् मन्त्रेवृषेत्या-दिनाक्तिनउदात्तत्वम् । विश्रिता श्रिञ्सेवायाम् कर्मणिनिष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् ॥ १ ॥

१. अश्विद्वय, तुम्हारे चिरन्तन होता तुम्हारे हर्ष के लिए मधुर सोमरस के साथ तुम्हारी अर्चना करता है। कुश के ऊपर हव्य स्थापित किया हुआ है; ऋत्विकों-द्वारा स्तुत और प्रस्तुत हुआ है। नासत्यद्वय, अन्न और बल लेकर पास आओ।

द्वितीयामृचमाह—

योवामश्विनामनसोजवीयान्रथःस्वश्वोविशआजिगाति।
येनगच्छथःसुकृतोदुरोणंतेननरावर्तिरस्मभ्यंयातम्॥ २॥

यः। वाम्। अश्विना। मनसः। जवीयान्। रथः। सुऽअश्वः।
विशः। आऽजिगाति। येन। गच्छथः। सुऽकृतः। दुरोणम्।
तेन। नरा। वर्तिः। अस्मभ्यम्। यातम्॥ २॥

हेअश्विनौ वांयुवयोःस्वभूतः मनसोजवीयान् मनसोप्यतिशयेनवेगवान् स्वश्वः शोभ-नाश्वः एवंभूतोयोरथः विशः आभाः आजिगाति आभिमुख्येनगच्छति येनरथेनसुकृत्वः शो-भनंयागंकुर्वतोयजमानस्य दुरोणंदेवयजनलक्षणंगृहंगच्छथः हेनरानेतारावश्विनौ तेनरथे-नअस्मभ्यंअस्माकंवर्तिः वर्तनाधिकरणंगृहंयातंआगच्छतम् ॥ जवीयान् जवोस्यास्तीति जववान् तदस्यास्त्यस्मिन्निति मतुप् ततआतिशायनिकईयसुन् विन्मतोर्लुक् टेरितिटिलोपः । जिगाति गास्तुतौ जौहोत्यादिकः गतिकर्मसुपाठादत्रगच्छत्यर्थः बहुलंछन्दसीत्यभ्यासस्येत्वम् ॥ २ ॥

२. अश्विद्वय, मन की अपेक्षा भी वेगवान् और शोभन-अश्व-युक्त रथ सारे प्रजावर्ग के सामने जाता है और जिस रथ से तुम लोग शुभ-कर्मा लोगों के घर जाते हो, नेतृद्वय, उसी पर हमारे घर पधारो।

ऋषिंनरावंहसःपाञ्चजन्यमृबीसादत्रिंमुञ्चथोगणेन।
मिनन्तादस्योरशिवस्यमायाअनुपूर्वंवृषणाचोदयन्ता ॥ ३ ॥

ऋषिम् । नरा । अंहसः । पाञ्चऽजन्यम् । ऋबीसात् । अत्रिम् ।
मुञ्चथः । गणेन । मिनन्ता । दस्योः । अशिवस्य । मायाः ।
अनुऽपूर्वम् । वृषणा । चोदयन्ता ॥ ३ ॥

हिमेनाग्निमित्यनयोक्तएवार्थःपुनःप्रकारान्तरेणानयाप्रतिपाद्यते अत्रस्तत्रोक्तंसर्वंमवा-पितव्यम् अक्षरार्थस्तु हेनरौनेतारौवृषणौकामानांवर्षितारौअश्विनौपाञ्चजन्यंनिषादपञ्चमा-श्चत्वारोवर्णाःपञ्चजनास्तेषुभवंस्तवमानुनागृहीतमृषिमृषिंमोचयन्तभिःसर्वैर्वाहितवाचरणात् तत्रभव-इत्युच्यते ईदृशमृषिंअंहसःपापरूपादृबीसात् शतद्वारेयन्त्रगृहेअत्रेःपीडार्थमसुरैःप्रक्षिप्तात् तु-षाग्नेःसकाशात् गणेनेन्द्रियवर्गेणपुत्रपौत्रादिगणेनवासहमुञ्चथः अमोचयतम् किंकुर्वन्तौ मिन-न्ताराभूनहिंसन्तौ दस्योः उपक्षपयितुः अशिवस्यदुःखकारिणोसुरस्यसंबन्धिनीःतस्मिन्नवधीरमु-कामायाश्चअनुपूर्वंआनुपूर्व्येणचोदयन्तौप्रेरयन्तौनिवारयन्तौ ॥ पाञ्चजन्यं बहिर्देवपञ्चजनेभ्यश्च-वक्तव्यमितिभवार्थेञ्यः । मिनन्ता मीञ्हिंसायाम् क्रैयादिकः श्नःशात् मीनातेर्निगमेइतिह्रस्व-त्वम् ॥ ३ ॥

३. नेतृद्वय, अभीष्ट-वर्षकद्वय, तुमने शत्रुओं की हिंसा करके और क्लेशदायिनी दस्यु-माया का आनुपूर्विक निवारण करके पाँच श्रेणियों (चार वर्ण और पञ्चम निषाद) द्वारा पूजित अत्रि ऋषि को शतद्वार-यन्त्र-गृह के पाप-तुषानल से, सन्तानादि के साथ, मुक्त किया था।

अश्विनागूळ्हमश्विनावीरैर्ऋषिंनरावृषणारेभमप्सु ।
सन्तंरिणीथोविमुतंदंसोभिर्नवांजूर्यन्तिपूर्व्याकृतानि ॥ ४ ॥

अश्वम् । न । गूळ्हम् । अश्विना । दुःऽएवैः । ऋषिम् । नरा । वृषणा । रेभम् । अप्ऽसु । सम् । तम् । रिणीथः । विऽप्रुतम् । दंसःऽभिः । न । वाम् । जूर्यन्ति । पूर्व्या । कृतानि ॥ ४ ॥

नरानेतारौवृषणाकामानांवर्षकौ हेअश्विनौ दुरेवैर्दुष्पापैरसुरैः अप्सुकूपस्येपूदकेषुगूळ्हंनिगूढंनिखातंरेभंऋषिंकूपादुन्नीयविप्रुतंविश्लिष्टावयवमन्तंअश्वंनव्याधितमश्वमिव दंसोभिरस्मदीयैः भैषज्यरूपैःकर्मभिः संरिणीथः समधत्तम् सर्वैरवयवैरुपेतमकुरुतमित्यर्थः वांयुवयोःसंबन्धीनिपूर्व्याचिरन्तनानिकृतानिकर्माणिनजूर्यन्ति नहिजीर्णानिभवन्ति ॥ दुरेवैः दुरुपसृष्टादेवैः ईषद्दुःसुष्वितिखल् । रिणीथः रीगतिरेषणयोः क्रैयादिकः प्वादीनांह्रस्वः । जूर्यन्ति जूरवयोहानौ दैवादिकत्वाच्छ्यन् बहुलंछन्दसीत्युत्वम् हलिचेतिदीर्घः ॥ ४ ॥

४. नेतृद्वय, अभीष्ट-वर्षकद्वय, [दुर्दान्त दानवों-द्वारा जल में निगूढ़ रेभ ऋषि को तुम लोगों ने निकालकर पीड़ित अश्व की तरह, उनका विनष्ट अवयव, अपनी दवाओं से, ठीक किया था। तुम्हारे पहले के काम जीर्ण नहीं हुए।

सुषुप्वांसंननिर्ऋतेरुपस्थेसूर्यंनदस्रातमसिक्षियन्तम् ।
शुभेरुक्मंनदर्शतंनिखातमुदूपथुरश्विनावन्दनाय ॥ ५ ॥ १२ ॥

सुसुप्वांसम् । न । निःऽऋतेः । उपऽस्थे । सूर्यम् । न । दस्रा । तमसि । क्षियन्तम् । शुभे । रुक्मम् । न । दर्शतम् । निऽखातम् । उत् । ऊपथुः । अश्विना । वन्दनाय ॥ ५ ॥ १२ ॥

निर्ऋतिरितिभूनाम निर्ऋतेःपृथिव्याः उपस्थेउत्संगेसुषुप्वांसंन सुप्तवन्तंपुरुषमिव कूपमध्येशयानंसूर्यंन सूर्यमिव तमसिकूपान्तर्गतान्धकारेक्षियन्तंनिवसन्तं सूर्यमिवतेजस्विनमित्यर्थः शुभे शोभनार्थं निर्मितंरुक्मंन रोचमानंसुवर्णमयाभरणमिवदर्शतंदर्शनीयं एवंगुणविशिष्टंकूपेअसुरैर्निखातंवन्दनायवन्दनंऋषिं हेदस्रादर्शनीयावश्विनौयुवांउदूपथुः उद्धृतवन्तौ॥ सुषुप्वांसम् ञिष्वप्शये लिटःक्वसुः वचिस्वपीत्यादिनासंप्रसारणम् द्विर्वचनादि । उपस्थे उपपूर्वात्तिष्ठतेर्घञर्थेकविधानमित्यधिकरणेकप्रत्ययः गतिकारकोपपदात्कृदित्युत्तरपदान्तोदात्तत्वम् । वन्दनाय क्रियाग्रहणंकर्तव्यमितिकर्मणःसंप्रदानत्वाच्चतुर्थी ॥ ५ ॥

५. दस्र अश्विद्वय, पृथिवी के ऊपर सुषुप्त मनुष्य की तरह और अन्धकार में क्षय-प्राप्त सूर्य के शोभन दीप्तिमान् आभूषण की तरह तथा दर्शनीय उस कूप में प्रक्षिप्त वन्दन ऋषि को तुम लोगों ने निकाला था।

षष्ठीमृचमाह—

तद्वांनराशंस्यंपज्रियेणकक्षीवतानासत्यापरिज्मन् ।
शफादश्वस्यवाजिनोजनायशतंकुम्भाँअसिञ्चतंमधूनाम् ॥ ६ ॥

तत् । वाम् । नरा । शंस्यम् । पज्रियेण । कक्षीवता । नासत्या ।
परिऽज्मन् । शफात् । अश्वस्य । वाजिनः । जनाय । शतम् ।
कुम्भान् । असिञ्चतम् । मधूनाम् ॥ ६ ॥

हेनरानेतारौनासत्यावश्विनौ परिज्मन्परिगमनेअभीष्टस्यप्रापणेनिमित्तभूतेसति पज्रिये-णपज्राणामङ्गिरसांकुलेजातेनकक्षीवन्नाम्ना वांयुवयोःसंबन्धि तत्कर्मशंस्यंस्तोत्रेणशंसनीयं भवत्वितिशेषःवाक्याध्याहारः यज्जनायअपेक्षमाणायपुरुषायवाजिनोवेगवतस्त्वदीयाश्वस्यशफात् निर्गतैर्मधूनांमधुभिःशतंशतसंख्याकान्कुम्भान्असिञ्चतंअपूरयतम् सिञ्चतिरत्रपूरणार्थः यदेत-न्मधुनापूरणं तच्छंस्यमित्यर्थः ॥ ६ ॥

६. नेता नासत्यद्वय, अङ्गिरोवंशीय कक्षीवान् मैं मनोनुकूल द्रव्य की प्राप्ति की तरह तुम्हारा अनुष्ठान उद्घोषित करूँगा; क्योंकि तुमने शीघ्र-गामी घोड़ों के खुरों से निकाले हुए मधु से संसार में सैकड़ों घड़े पूरे कर दिये थे।

सप्तमीमृचमाह—

युवंनरास्तुवतेकृष्णियायविष्णाप्वंददथुर्विश्वकाय ।
घोषायैचित्पितृषदेदुरोणेपतिंजूर्यन्त्याअश्विनावदत्तम् ॥ ७ ॥

युवम् । नरा । स्तुवते । कृष्णियाय । विष्णाप्वम् । ददथुः ।
विश्वकाय । घोषायै । चित् । पितृऽसदे । दुरोणे । पतिम् ।
जूर्यन्त्यै । अश्विना । अदत्तम् ॥ ७ ॥

हेनरानेतारावश्विनौ युवंयुवांस्तुवतेस्तोत्रंकुर्वते कृष्णियाय कृष्णाख्यस्यपुत्रायविश्वका-यविष्णाप्वंददथुः विष्णाप्वंनामविनष्टंपुत्रंदत्तवन्तौ घोषानामब्रह्मवादिनीकक्षीवतोदुहिता सा-कुष्ठिनीसतीकस्मैचिद्वरायादत्तापितृगृहेनिषण्णाजीर्णासीत् साश्विनोरनुग्रहात् नष्टकुष्ठासतीप-तिलेभे यदेतदाह—हेअश्विनौ पितृषदेपित्रासंसन्नेदुरोणेस्वकीयेजनकगृहेकुष्ठरोगेणभर्तारमप्राप्य पितृषदेपितृसमीपेनिषण्णायैजूर्यन्त्यै जरांप्राप्नुवत्यैघोषायैचित्एतत्संज्ञायै ब्रह्मवादिन्यैअपिरो-गोपशमनेनपतिंभर्तारंअदत्तम् युवांदत्तवन्तौ ॥ पितृषदे सदुविशरणादिषु क्विप्चेतिक्विप् । जूर्यन्त्यै

पृश्नयोहानौ छटःपाद् दिवादित्वादल्पम् वहुलंछन्दसीत्युत्वम् इतिषेधविधौ मधुपदेगाद्य- र्थधातुकानुदात्तत्वेस्यनोनित्वादाद्युदात्तत्वम् ॥ ७ ॥

७. नेतृद्वय, कृष्ण के पुत्र विश्वकाय के, तुम लोगों की स्तुति करने पर, विनष्ट पुत्र विष्णापु को तुम लोग लाये थे। अश्विद्वय, कोढ़ होने के कारण बुढ़ापे तक पितृ-गृह में अविवाहिता रहने पर घोषा नाम की ब्रह्म-वादिनी स्त्री को, कोढ़ दूर कर, पति प्रदान किया था।

युवं श्यावाय रुशतीमदत्तं महः क्षोणस्याश्विना कण्वाय ।
प्रवाच्यं तद्वृषणा कृतं वां यन्नार्षदाय श्रवो अध्यधत्तम् ॥ ८ ॥

युवम् । श्यावाय । रुशतीम् । अदत्तम् । महः । क्षोणस्य ।
अश्विना । कण्वाय । प्रऽवाच्यम् । तत् । वृषणा । कृतम् ।
वाम् । यत् । नार्षदाय । श्रवः । अधिऽअधत्तम् ॥ ८ ॥

हेऽश्विनौ युवं युवां श्यावाय कुष्ठरोगेण श्यावर्णाय कण्वायैतदीदीप्तवर्णां स्त्रियं अदत्तम् प्रायच्छतम् अपि च क्षोणस्य क्षोणायदर्विराहित्येन गन्तुमशक्तः सन् एकस्मिन्नेव स्थाने निवस- ति तस्मै निवसते कण्वाय महःनयनेन हस्तेयः तेजः चक्षुरिन्द्रियं अदत्तमिति विशेषः वृषणौ हे वृषणा कामानां वर्षितारौ वां युवयोस्तत्कर्म प्रवाच्यं प्रकर्षेण वाचनीयं प्रशंसनीयम् नार्षदाय नृ- षदुपाख्यस्य पुत्राय कण्वाय श्रवः श्रवणेन्द्रियं यद् अध्यधत्तं दत्तवन्तौ स्थः इदमपि वक्तव्यमित्यर्थः अत्रेतिहा- सः—सा कस्य परीक्षार्थं असुराः कण्वं कारिंगृहे तमसि निदधुः अथैतस्मिन् यःअन्वेष्टुं अभिगच्छतस्मि- न्नीहि यदितम् आसनोऽहीति यमश्विनावागत्य कण्वः श्वुट्यासहम्यैस्योऽरविद्यानात्वदन्याःसा तथा- भिप्रायाः ये यानंमृत्वात्युष्टायुव संबुद्धि वदेवत्यविपायवे—हे वृषणा कामानां वर्षितारौ अश्विनौ वां युवयोस्तत्कर्म प्रवाच्यं प्रशंसनीयं यत्नार्षदाय नृषदपुत्राय कण्वाय क्षोणस्य क्षोणः शब्दकारिती- नां विशेषः महोमहः क्षोणस्य महः शब्दं श्रव्यं पदम् तमसो विज्ञानार्थं अधिकं अकुरुतम् ॥ म- हः महपूजायाम् असादौणादिकोऽसिप्रत्ययः छन्दोऽन्यत्रेऽपि महःशब्दात् एकस्मिन्नेव छान्दसोऽ- सोपः गुरुमहदोकलतस्यान्तर्विधिविशिष्टकेलोदात्तत्वम् यद्वा क्विबन्तात्छन्देकवचनम् । क्षोणस्य क्षिनिवासगत्योः कृत्यल्युटो बहुलमिति कर्तरि ल्युट् पृषोदरादित्वात्क्षोणभावः तदुक्तं यास्केन— क्षोणस्यश्रवणस्य । छन्दान्तरेषु—इगुपधेत्यसादौणादिकोनप्रत्ययः । नार्षदाय कण्वस्यके- ल्यम् ॥ ८ ॥

८. अश्विद्वय, तुमने कुष्ठरोग-ग्रस्त श्याव या श्यामवर्ण ऋषि को उज्ज्वल कर दीप्तिमती स्त्री दी थी। आँखें न रहने से कण्व नहीं चल सकते थे; तुमने उन्हें आँखें दी थीं। अभीष्ट-वर्षिद्वय, नृषद-पुत्र को तुमने कान दिये थे; ये कार्य प्रशंसनीय हैं।

१ नि० ६, ६।

नवमीमृचमाह—

पुरूवपूंस्यश्विनादधानानिपेदवऊहथुराशुमश्वम् ।
सहस्रसांवाजिनमप्रतीतमहिहनंश्रवस्यं१तरुत्रम् ॥ ९ ॥

पुरु । वपूंसि । अश्विना । दधाना । नि । पेदवे । ऊहथुः ।
आशुम् । अश्वम् । सहस्रऽसाम् । वाजिनम् । अप्रतिऽइतम् ।
अहिऽहनम् । श्रवस्यम् । तरुत्रम् ॥ ९ ॥

हे अश्विनौ पुरु पुरूणि बहूनि वपूंसि रूपनामैतत् आत्मीयैः कर्मभिः कृतानि रूपाणि दधाना धारयन्तौ युवां आशुं शीघ्रगामिनं अश्वं पेदवे पेदुनाम्ने स्तुवते न्यूहथुः नितरां प्रापितवन्तौ दत्तवन्तावित्यर्थः कीदृशमश्वं सहस्रसां सहस्रसंख्याकस्य धनस्य सनितारं दातारं वाजिनं बलवन्तं अत एव अप्रतीतं शत्रुभिरप्रतिगतम् अहिहनं अहीनामागत्य हन्तॄणां शत्रूणां शत्रून्वा हन्तारं श्रवस्यं श्रवः श्रवणीयं स्तोत्रं तदर्हं स्तुतिविषयमित्यर्थः तरुत्रं तारयितारं ॥ वपूंसि वृञ् वरणे वृञ्शीङ्भ्यां रूपस्वाङ्गयोः पुट्चेत्यसुन् पुडागमश्च। दधाना दधातेर्लटः शानच् अभ्यस्तानामादिरित्याद्युदात्तत्वम्। सहस्रसा- म् षणु दाने जनसनखनेति विट् विड्वनोरनुनासिकस्यादित्यात्वम्। श्रवस्यम् श्रवस्शब्दात् भ- वे छन्दसीति यत् तित्स्वरितः। तरुत्रम् तॄ प्लवनतरणयोः अशित्रादिभ्य इत्रोत्रावित्युत्रप्रत्ययः व्यत्य- येनाद्युदात्तत्वम् यद्वा ग्रसितस्कभितेत्यादौ निपातनात् तुमन्तात् तरुतृशब्दादपि संज्ञापूर्वकस्य विधेर- नित्यत्वाद्गुणाभावे यण् ञित्स्वरेणाद्युदात्तत्वम् ॥ ९ ॥

९. बहु-रूप-धारी अश्विद्वय, तुमने राजर्षि पेदु को शीघ्रगामी अश्व दिया था। वह घोड़ा हजारों तरह के धन देता था। वह बलवान् शत्रुओं-द्वारा अपराजेय, शत्रु-हन्ता, स्तुति-पात्र और विपद् में रक्षक था।

दशमीमृचमाह—

एतानिवांश्रवस्यासुदानूब्रह्माङ्गूषंसदनंरोदस्योः ।
यद्वांपज्रासोअश्विनाहवन्तेयातमिषाचविदुषेचवाजम् ॥ १० ॥ १४ ॥

एतानि । वाम् । श्रवस्या । सुदानू इति सुऽदानू । ब्रह्म । आङ्गूषम् ।
सदनम् । रोदस्योः । यत् । वाम् । पज्रासः । अश्विना । हवन्ते ।
यातम् । इषा । च । विदुषे । च । वाजम् ॥ १० ॥ १४ ॥

हे सुदानू शोभनदानावश्विनौ वां युवयोः संबन्धीनि एतानि समनन्दरोकानि वीर्याणि श्रवस्या श्रवणीयानि सर्वैः श्रोतव्यानि भवन्ति यद् यौ रोदस्योः द्यावापृथिव्यात्मनावर्तमानयोर्युवयोः उक्तं च यास्केन—तत्कावश्विनौ द्यावापृथिव्यावित्येक इति[1]। तथा च तैत्तिरीयकम्—इमे अश्विना संवत्सरोऽग्निर्वैश्वानर इति[2]। तयोर्युवयोः सदनं स्तोत्रसमीपे निवेशनं प्रसादनहेतुभूतं वा आङ्गूषं आघोषणीयम् मन्त्ररूपं स्तोत्रं निष्पन्नमिति शेषः पञ्चवाप्नजासः अंगिरसां गोत्रोत्पन्ना यजमानाः हे अश्विनौ वां युवां हवन्ते स्तुतिभिरात्मरक्षार्थमाह्वयन्ति तदानीं इषा अन्नेन सह आ यातं आगच्छतं च विदुषे युष्मद्विषयस्तोत्रं जानते मह्यं च वाजम् अन्नं बलं वा प्रयच्छतमिति शेषः ॥ यातम् चवायोगे प्रथमेति निघातप्रतिषेधः। विदुषे विदतां विदेः शतुर्वसुः वसोः संप्रसारणमिति संप्रसारणम् शासिवसिघसीनां चेति षत्वम् ॥ १० ॥

१०. दानवीर अश्विनीकुमारो, तुम्हारी ये वीर-कीर्तियाँ सबको जाननी चाहिए। तुम द्यावा-पृथिवी-रूप वर्तमान हो। तुम्हारा आह्लादकर घोषणीय मन्त्र निष्पन्न हुआ है। अश्विद्वय, जिस समय अङ्गिरकुल के यजमान तुम्हें बुलाते हैं, उस समय अन्न लेकर आओ तथा मुझ यजमान को बल दो।

एकादशीमृचमाह—

सूनोर्मानेनाश्विना गृणाना वाजं विप्राय भुरणा रदन्ता।
अगस्त्ये ब्रह्मणा वावृधाना सं विश्पलां नासत्यारिणीतम् ॥ ११ ॥

सूनोः। मानेन। अश्विना। गृणाना। वाजम्। विप्राय। भुरणा। रदन्ता। अगस्त्ये। ब्रह्मणा। ववृधाना। सम्। विश्पलाम्। नासत्या। अरिणीतम् ॥ ११ ॥

हे भुरणा भर्तारौ पोषकौ नासत्या सत्यस्वभावौ हे अश्विनौ सूनोः कुंभात्प्रसूतस्य अगस्त्यस्य स्तोतुः पुरोहितस्य संबन्धिना मानेन स्तुत्यस्य परिच्छेदकेन स्तोत्रेण गृणाना स्तूयमानौ विप्राय मेधाविने भरद्वाजाय वाजम् अन्नं रदन्ता विलिखन्तौ निष्पादयन्तौ युवां विश्पलां संग्रामे छिन्नजंघां खेलस्य संबन्धिनीं स्त्रियं समरिणीतम् पुनरस्या जंघया समयोजयतम् तृतीयेन पादेन प्रथमपादोक्तोऽर्थो विनियते अगस्त्ये ऋषौ नसख्या मन्त्ररूपेण स्तोत्रेण ववृधानाः प्रवर्धिताविति ॥ गृणाना गृणन्ते व्यत्ययेन कर्मणि कर्तृप्रत्ययः प्वादीनां ह्रस्वः। भुरणा भुरण धारणपोषणयोः कण्ड्वादिः पचाद्यच् अतो लोपयलोपौ सुपां सुलुगिति विभक्तेराकारः आमन्त्रितनिघातः विप्रायेत्यस्य रदन्तेत्यनेनासामर्थ्यात् पराङ्गवद्भावात्तम्। ववृधाना वृधेर्लिटः कानच् संहितायां छान्दसमभ्यासस्य दीर्घत्वम् तु-

1 नि० १२. १. । 2 तै० सं० ५. ६. ४. ।

आदित्वेहितुग्रानइतिवत्पदकालेपिस्यात्। अरिणीतम् रीगतिरेषणयोः क्रैयादिकः प्वादी-नांह्रस्वः ॥ ११ ॥

११. पोषक नासत्यद्वय, कुम्भ के पुत्र अगस्त्य ऋषि की स्तुति से स्तुत होकर और मेधावी भरद्वाज ऋषि को अन्नदान कर तथा अगस्त्य-द्वारा मंत्र-वर्द्धित होकर तुमने विश्पला को नीरोग किया था।

कुहयान्तासुष्टुतिंकाव्यस्यदिवोनपातावृषणाशयुत्रा ।
हिरण्यस्येवकलशंनिखातमुदूपथुर्दशमेअश्विनाहन् ॥ १२ ॥

कुह । यान्ता । सुऽस्तुतिम् । काव्यस्य । दिवः । नपाता ।
वृषणा । शयुऽत्रा । हिरण्यस्यऽइव । कलशम् । निऽखातम् ।
उत् । ऊपथुः । दशमे । अश्विना । अहन् ॥ १२ ॥

पुराखलुउशनसःस्तुतिंगच्छन्तावश्विनौमार्गमध्ये कूपेपतितंरेभंदृष्ट्वा तंकूपादुदवारयतां तदानींअश्विभ्यांगन्तव्यंकाव्यस्यनिवासस्थानमजानन्नृषिः अश्विनौपृच्छति हेदिवोनपाता द्योतमानस्यसूर्यस्यपुत्रौ वृषणाकामाभिवर्षकावश्विनौ कुहकुत्रशयुत्राशयनेनिवासस्थाने वर्तमानस्यकाव्यस्यभार्गवस्यसुष्टुतिंशोभनांस्तुतिंश्रोतुंयान्तागच्छन्तौ यद्वा शयुत्रेत्येतदश्विनो-र्विशेषणम् शयुनाम्नस्त्रायकौयुवांहिरण्यस्येवकलशं यथाहिरण्यपूरितंकलशंभूम्यांनिक्षिप्तंसर्वै-र्दुर्ज्ञातंकश्चिदभिज्ञउद्धरति एवमसुरैःकूपेनिखातंदशरात्रीर्नवाहानिचतत्रैवनिवसन्तंरेभमवगत्यदशा-मेहन्यहनिउदूपथुः कूपादुन्नीतवन्तौ किंचाश्विवासस्थानमितिप्रश्नोरेभस्यानुक्तावपिदशरात्री-रशिवेनेविमघान्तरेसामर्थ्यात्प्रतीतिः यद्वा काव्यस्यस्तुतिंप्रतिगच्छन्तौयुवांकुहकस्मिन्स्थाने रेभंयुवामुन्निन्यथुरितिप्रश्नः ॥ कुह वाहचच्छन्दसीतिसप्तम्यर्थेहप्रत्ययः। दिवोनपाता सुबाम-न्त्रितेपराङ्गवत्स्वरेइतिपराङ्गवद्भावेनषष्ठ्यन्तस्यामन्त्रितानुप्रवेशादामन्त्रितस्यचेतिपदद्वयसमुदाय-स्यषाष्ठिकमाद्युदात्तत्वम् पादादित्वादाष्टमिकनिघाताभावः नपादित्यपत्यनाम नपातयतीति नपात् नभ्राण्नपादितिनञःप्रकृतिभावः सुपांसुलुगितिविभक्तेराकारः। शयुत्रा अशित्रादि-भ्यश्चोत्रइतिशीङ्उत्रः यथन्तोदात्ततानस्यात् वर्त्यैवंशयुंत्रायेतेइतिशयुत्रौ त्रैङ्पालनेआदे-चइत्यात्वम् आतोनुपसर्गेकः अतएवव्युत्पत्त्यनवधारणादनवग्रहः। निखातम् खनुअवदारणे अ-स्मात्कर्मणिनिष्ठा यस्यविभाषेतीट्प्रतिषेधः जनसनखनांसञ्झलोरित्यात्वम् गतिरनन्तरइतिगतेः प्रकृतिस्वरत्वम्। अहन् सुपांसुलुगितिसप्तम्यालुक् नङिसंबुद्ध्योरितिनलोपप्रतिषेधः ॥ १२ ॥

१२. आकाश-पुत्रद्वय, अभीष्टवर्षक, काव्य (उशना) की स्तुति सुनने के लिए कहाँ उसके घर की ओर जाते हो? हिरण्यपूर्ण कलश की तरह कूप में गिरे रेभ ऋषि को तुमने दसवें दिन उबारा था।

१ ऋ० सं० १. ८. १२.

त्रयोदशीमृचमाह—

युवंच्यवा॑नमश्विना॒जर॑न्तं॒पुन॒र्युवा॑नंचक्रथु॒ःशची॑भिः ।
युवो॒रथं॑दुहि॒तासूर्य॑स्यस॒हश्रि॒यानां॑सत्यावृणीत ॥ १३ ॥

यु॒वम् । च्यवा॑नम् । अ॒श्वि॒ना॒ । जर॑न्तम् । पुन॑ः । युवा॑नम् ।
च॒क्र॒थु॒ः । शची॑भिः । यु॒वोः । रथ॑म् । दु॒हि॒ता । सूर्य॑स्य । स॒ह ।
श्रि॒या । ना॒स॒त्या॒ । अ॒वृ॒णी॒त॒ ॥ १३ ॥

हेअश्विनौ युवंयुवांशचीभिः आत्मीयैर्भैषज्यलक्षणैःकर्मभिः जरन्तं जीर्यन्तं च्यवानंसुकीनाम्न्यावभितारंएवंलक्षणंऋषिं युवानंपुनर्यौवनोपेतंचक्रथुः कृतवन्तौ अपिच हेनासत्यावश्विनौ युवोःयुवयोः रथंसूर्यस्यदुहितासूर्याख्याश्रियासह्अक्तसहसरूपयासंपदाकान्त्यावासह अवृणीतसमभजत आगत्यारूढवतीत्यर्थः ओंवांरथंदुहितेत्यत्रलिखितमाख्यानमत्रापिद्रष्टव्यम्.॥ जरन्तम् जॄष्वयोहानौ व्यत्ययेनशप् । युवोः युष्मदशब्दात्षष्ठीद्विवचनेव्यत्ययेनयोचीतियत्वाभावेसविशेषेलोपइतिदकारलोपः अतोगुणेइतिपररूपत्वम्. एकादेशउदात्तेनोदात्तः । अवृणीत वृङ्संभक्तौ क्रैयादिकः ॥ १३ ॥

१३. अश्विद्वय, भैषज्यरूप कार्य-द्वारा तुमने वृद्ध च्यवन ऋषि को युवा किया था। नासत्यद्वय, सूर्य-पुत्री सूर्या, कान्ति के साथ, तुम्हारे रथ पर चढ़ी थी।

चतुर्दशीमृचमाह—

युवंतुग्राय॑पू॒र्व्येभि॒रेवै॑ःपुनर्म॒न्याव॑भवतंयुवाना ।
युवंभु॒ज्युमर्ण॑सो॒निःस॑मु॒द्राद्विभि॑रूहथुरृ॒ज्रेभि॒रश्वै॑ः ॥ १४ ॥

यु॒वम् । तुग्रा॑य । पू॒र्व्येभि॑ः । एवै॑ः । पु॒न॒ःऽम॒न्यौ । अ॒भ॒व॒त॒म् ।
यु॒वा॒ना॒ । यु॒वम् । भु॒ज्युम् । अर्ण॑सः । निः । स॒मु॒द्रात् । विऽभि॑ः ।
ऊ॒ह॒थु॒ः । ऋ॒ज्रेभि॑ः । अश्वै॑ः ॥ १४ ॥

१ ऋ० सं० १. ८. ११. ।

हेयुवाना दुःखानांपावयितारावश्विनौ युवंयुवांपूर्व्येभिः पुराणनामैतत् पूर्वकालीनैश्चिरन्तनैः एवैः स्तुत्यंप्रतिगन्तृभिःस्तोत्रैस्तुग्रायभुज्योर्जनकस्यसंबन्धिभिः पुनर्मन्यौयथायुवंयुवांभुज्योःसमुद्रगमनात्पूर्वंयुवांस्तोतव्यौ तथापुनरपीदानीं स्तोतव्यौअभवतम् यदायुवंसमुद्रमध्ये सेनयासहनिमग्नंभुज्युंतुग्रस्यपुत्रंअर्णसः अर्णस्वतः प्रौढोदकयुक्तात्समुद्रात्अम्बुराशेःसकाशाद्विभिर्गन्तृभिर्ऋज्रेभिः शीघ्रगतियुक्तैरश्वैश्चनिरूहथुः निर्गमय्यपितृसमीपंप्रापितवन्तौ तदानीं पुनरप्यतिशयेनस्तोतव्यौजातावित्यर्थः तुग्रोहभुज्युमित्यत्रोक्तमाख्यानमत्राप्यनुसन्धेयम् ॥ एवैः इण्गतौ इण्शीङ्भ्यांवन् । पुनर्मन्यौ मनज्ञाने अत्रस्तुत्यर्थः मन्यतेस्तौतीतिमनास्तुतिः पचाद्यच् छन्दसिचेत्यर्हार्थेयः । युवाना युमिश्रणामिश्रणयोः कनिन्युवृषीत्यादिनाकनिन् सुपांसुलुगितिविभक्तेराकारः । अर्णसः अर्णस्शब्दादुत्पन्नस्यमत्वर्थीयस्यबहुलंछन्दसीतिबहुलग्रहणाल्लोपः सर्वेविधयश्छन्दसिविकल्प्यन्तइतिविभक्त्युदात्तस्यविकल्पनादभावः । ऋज्रेभिः ऋजगतिस्थानार्जनोपार्जनेषु ऋज्रेन्द्रेत्यादिनारन्प्रत्ययान्तोनिपातितः बहुलंछन्दसीतिभिसऐसभावः ॥ १४ ॥

१४. दुःख-विदारक-द्वय, तुम जैसे पहले स्तोत्र-द्वारा तुम्हारी स्तुति करते थे, अनन्तर फिर भी उसी तरह तुम लोगों की अर्चना करते थे; क्योंकि उनके पुत्र भुज्यु को तुम विक्षिप्त समुद्र से गमनशील नौका और शीघ्रगति अश्वद्वारा ले आये थे।

पञ्चदशीमृचमाह—

अजो॑हवीदश्विना॒तौ॒ग्र्योवां॒प्रोळ्हः॑समु॒द्रम॑व्य॒थिर्ज॑ग॒न्वान् ।
निष्टमू॑हथुःसु॒युजा॒रथे॑न॒मनो॑जवसावृषणास्व॒स्ति ॥ १५ ॥ १५ ॥

अजो॑हवीत् । अ॒श्वि॒ना॒ । तौ॒ग्र्यः । वा॒म् । प्रऽऊ॑ळ्हः । स॒मु॒द्रम् । अ॒व्य॒थिः । ज॒ग॒न्वान् । निः । तम् । ऊ॒ह॒थुः । सु॒ऽयुजा॑ । रथे॑न । मनः॑ऽजवसा । वृ॒ष॒णा॒ । स्व॒स्ति ॥ १५ ॥ १५ ॥

हेअश्विनौ वांयुवांतौग्र्यःतुग्रपुत्रःप्रोळ्हःपित्राप्रापितः समुद्रमभिजगन्वान्भुज्युःउदकेनिमग्नोपि अव्यथिः व्यथांपीडांअप्राप्तएवसन् अजोहवीत् स्तुतिभिराह्वयत् तमाह्वातारंहेमनोजवसामनोवद्वेगयुक्तौ वृषणाकामाभिवर्षकौअश्विनौ सुयुजासुष्ठुअश्वैर्युक्तेनरथेन स्वस्तिक्षेमंयथाभवति तथानिरूहथुः पडाचिर्निगमय्ययुवांपितृगृहंप्रापितवन्तौ ॥ जगन्वान् गमेर्लिटःक्वसुः विभाषागमहनविदविशामितिविकल्पनादिडभावः म्वोश्चेतिमकारस्यनकारः । निष्टम् युष्मत्तत्तक्षु-

१ ऋ० सं० १. ८. ९.।

ष्वन्तःपादमितिमूर्धन्यः । मनोजवसा मनसोजवइवजवोययोस्तौतथोक्तौ सुपांसुलुगितिविभक्ते-राकारः पादादित्वादामन्त्रितनिघाताभावेषाष्ठिकमाद्युदात्तत्वम् ॥१५॥

१५. अश्विद्वय, पिता तुग्र-द्वारा समुद्र में भेजे हुए और जल में डूबते हुए भुज्यु ने, सरलता से समुद्र-पार होकर, तुम्हारा आह्वान किया था। मनोवेग-सम्पन्न अभीष्ट-वर्षिद्वय, तुम लोग उत्कृष्ट-अश्व-युक्त रथ पर भुज्यु को लाये थे।

॥ इतिप्रथमस्याष्टमेपञ्चदशोवर्गः ॥ १५ ॥

षोडशीमृचमाह—

अजोहवीदश्विनावर्तिकावामास्नोयत्सीममुञ्चतंवृकस्य ।
विजयुषाययथुःसान्वद्रेर्जातंविष्वाचोअहतंविषेण ॥ १६ ॥

अजोहवीत् । अश्विना । वर्तिका । वाम् । आस्नः । यत् । सीम् ।
अमुञ्चतम् । वृकस्य । वि । जयुषा । ययथुः । सानु । अद्रेः ।
जातम् । विष्वाचः । अहतम् । विषेण ॥ १६ ॥

आस्नोवृकस्येत्यर्धर्चेनयदुक्तंतदत्रपूर्वार्धेनप्रतिपाद्यते वर्तिकाचटकसदृशस्यपक्षिणः स्त्रीवृ-केणारण्यश्वनाग्रस्तासती हेअश्विनौ वांयुवांयदाअजोहवीत् आहूतवती तदाखलुवृकस्य आस्नः आस्यात् अमुञ्चतंवर्तिकाममोचयतम् अपिच युवांजयुषा जयशीलेनरथेनअद्रेः प-र्वतस्यसानुसमुच्छ्रितप्रदेशंवियययुः शत्रुभिरावेष्टितंजाहुषाख्यंराजानंशत्रुसमूहान्निर्गमय्य तेनसह अन्यैर्गन्तुमशक्यंपर्वताग्रंगतवन्तावित्यर्थः तदुक्तंपरिविष्टंजाहुषमित्यत्र । तथाविष्वाचोविविध-गतियुक्तस्यएतत्संज्ञस्यासुरस्यजातमुत्पन्नमपत्यंविषेणक्ष्वेडेनअहतंयुवांहतवन्तौ यद्वा वर्तिम-तिदिवसमावर्तयतीतिवर्तिकाउषाः वृकइतिविवृतज्योतिष्कःसूर्यउच्यते तेनग्रस्तासतीसा हेअ-श्विनौ युवामजोहवीत् आह्वयत् तदाखलुयुवांवृकस्यसूर्यस्यआस्नःआस्यस्थानीयात्मण्ड-लात्अमुञ्चतंअमोचयतम् सूर्येणैकीभूतमुषसंपृथक्कृत्यउदयात्पूर्वंरात्रेरपरभागेस्थापितवन्तावि-त्यर्थः । तथाचयास्कः—आदित्योपिवृकउच्यतेयदावृङ्क्ते आह्वयदुषाअश्विनावादित्येनाभिग्र-स्तातामश्विनौप्रमुमुचतुरित्याख्यानमिति[3] । अपिच जयुषाजयशीलेनरथेनअद्रेर्मेघस्यसानु-समुच्छ्रितप्रदेशंवृष्टिंचिकीर्षयाविशेषेणययथुः युवांगतवन्तौ गत्वाचविष्वाचोविविधगतियुक्तस्य मेघस्यसंबन्धिनाविषेणोदकेनजातमुत्पन्नंसर्वंभूतजातमहतमगमयतं वृष्टिंकृतवन्तावित्यर्थः ॥

---

१ ऋ० सं० १. ८. १०. ।    २ ऋ० सं० १. ८. ११. ।    ३ नि० ५. २१. ।

भणोह्वोत् हुयतेर्यङ्लुगन्ताल्लिङिति पियङ्जोवेर्वीडागमः अभ्यासस्यचेविद्विर्वचनात्पूर्वमेवह्वय-तेःसंप्रसारणम् । आस्नः पद्दन्नित्यादिनाआस्यशब्दस्यासन्नादेशः अल्लोपोनइत्यकारलोपः। जगुषा जिजये औणादिकउषिप्रत्ययः। विश्वाचः विषुणाआभिमुख्येनअञ्चतीतिविग्रहः ऋत्विगित्यादिनाक्विन् अचइत्यकारलोपः चाविविदीर्घः उदात्तनिवृत्तिस्वरेणविभक्तेरुदात्तत्वेप्राप्तेचावित्यन्तोदात्तत्वम् । अहतम् हनहिंसागत्योः लङ्यदादित्वाच्छपोलुक् अनुदात्तोपदेशेत्यादिनानुनासिकलोपः ॥ १६ ॥

१६. अश्विद्वय, जिस समय तुम लोगों ने वृक के मुख से वर्तिका नाम की चिड़िया को छुड़ाया था, उस समय उसने तुम्हारा आह्वान किया था। तुम लोग जयशील रथ-द्वारा जाहुष को लेकर पर्वत-प्रदेश चले गये थे। तुमने विष्वाक् असुर के पुत्र को विषयुक्त तीर-द्वारा हत किया था।

शतंमेषान्वृक्ये॑मामहानंतमःप्रणी॑तमशिवेनपित्रा ।
आक्षीऋज्राश्वेअश्विनावधत्तंज्योति॑रन्धायचक्रथुर्वि॒चक्षे॑ ॥१७॥

शतम् । मेषान् । वृक्ये॑ । ममहानम् । तमः॑ । प्रऽनी॑तम् । अशिवेन । पित्रा । आ । अक्षी इति॑ । ऋज्रऽअश्वे । अश्विनौ । अधत्तम् । ज्योतिः॑ । अन्धाय॑ । चक्रथुः । विऽचक्षे॑ ॥ १७ ॥

शतंमेषान्वृक्येचक्षदानमित्यत्रयदाख्यानमवादिष्म तदत्राप्यनुसन्धेयम् शतंशतसंख्याकान्मेषान्वृक्ये वृकीरूपेणावस्थितायाअश्विनोर्वाहनायरासभाय ममहानं पूजितवन्तं आहारार्थंसमर्पितवन्तं अशिवेनअसुखकारिणापित्रास्वकीयेन जनकेन तमः दृष्टिराहित्येनप्रणीतं ऋजाश्वं अन्धं प्रापितं ऋज्राश्वं चक्षुष्मन्तंअश्विनावकुरुतामितिशेषः एतदेवविशदयति हेअश्विनौअक्षी पितृशापाद्नष्टेचक्षुषी ऋज्राश्वेएतत्संज्ञकेराजर्षौआधत्तं पुनर्दर्शनसमर्थेअकुरुतम्—यदेवाह अन्धाय दृष्टिहीनायज्योतिःप्रकाशकंचक्षुः विचक्षे विविधंजगद्द्रष्टुं चक्रथुः युवां कृतवन्तौ ॥ ममहानं महपूजायाम् लिटःकानच् संहितायांछान्दसमभ्यासस्यदीर्घत्वम् । प्रणीतम् प्रपूर्वान्नयतेःकर्मणिनिष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । पित्रा उदात्तयणइतिविभक्तेरुदात्तत्वम्। अक्षी अक्षिशब्दाद्द्विवचने नुमागमंप्राप्नोति ईचद्विवचनेइतीकारान्तादेशश्च परत्वादीकारादेशः तस्मिन्कृतेसकृद्गतपरिभाषयापुनर्नुम्नभवति उदात्तयणस्यनुवृत्तेरीकारस्योदात्तत्वम् ॥१७॥

१७. जब कि, ऋज्राश्व ने वृकी के लिए सौ भेड़ों का वध किया था, तब उनके क्रुद्ध पिता ने उन्हें अन्धा बना दिया था। इसके अनन्तर तुमने उन्हें नेत्र प्रदान किया था। देखने के लिए तुम लोगों ने अन्ध को चक्षु दिया था।

---

१ ऋ० सं० १. ८. ११.।

अष्टादशीमृचमाह—

शुनमन्धाय भरमह्वयत्सा वृकीरश्विना वृषणा नरेति।
जारः कनीनइव चक्षदान ऋज्राश्वः शतमेकं च मेषान्॥ १८॥

शुनम्। अन्धाय। भरम्। अह्वयत्। सा। वृकीः। अश्विना। वृषणा। नरा। इति। जारः। कनीनःऽइव। चक्षदानः। ऋज्रऽअश्वः। शतम्। एकम्। च। मेषान्॥ १८॥

शुनमिति सुखनाम भरं पोषणहेतुभूतं चक्षुरिन्द्रियेण निष्पाद्यं शुनं सुखं अन्धाय दृष्टिहीनाय तस्मै ऋज्राश्वाय इच्छन्ती सा वृकी हे अश्विनौ अश्वयुक्तौ ... हे वृषणौ कामानां वर्षितारौ इति एवं संबोध्य नरा नेतारावश्विनौ अह्वयत् आहूतवती आह्वयन्त्यास्तस्याः कोऽभिप्राय इति चेदुच्यते—कनीनइव यथा प्राप्तयौवनः कामुको जारः पारदारिकः सन् परस्त्रियै सर्वं धनं प्रयच्छति एवमृज्राश्वोऽप्यसंख्यातमेकं च एकोत्तरशतसंख्याकान् मेषान् पौरजनानां स्वभूतानपहृत्य चक्षदानः शकलीकुर्वन् प्रादात् तेनेदृशीं दुर्दशां प्राप इति॥ कनीनः युवशब्दात् ... युवाल्पयोः कनन्यतरस्यामिति युवशब्दस्य कनादेशः व्यत्ययेन इठनः स्थाने ... यद्वा कनी दीप्तिकान्तिगतिषु औणादिक ईनप्रत्ययः॥ १८॥

१८. उस अन्ध को चक्षु-द्वारा सुख देने की इच्छा से वृकी ने तुम्हें आह्वान किया था—अश्विद्वय, अभीष्ट-वर्षिद्वय, नेतृद्वय, ऋज्राश्व ने, तरुण जार की तरह, अमितव्ययी होकर एक सौ एक भेड़ों को खण्ड-खण्ड किया था।

एकोनविंशीमृचमाह—

मही वामूतिरश्विना मयोभूरुत स्रामं धिष्ण्या सं रिणीथः।
अथा युवामिदह्वयत्पुरंधिरागच्छतं सीं वृषणाववोभिः॥ १९॥

मही। वाम्। ऊतिः। अश्विना। मयःऽभूः। उत। स्रामम्। धिष्ण्या। सम्। रिणीथः। अथ। युवाम्। इत्। अह्वयत्। पुरम्ऽधिः। आ। अगच्छतम्। सीम्। वृषणौ। अवःऽभिः॥ १९॥

हे अश्विनौ वां युवयोः मही महती ऊतिः पालनं मयोभूः मयसः सुखस्य भावयित्री उत अपि च हे धिष्ण्यौ धिषणा स्तुतिलक्षणा वाक् तस्या योग्यौ स्रामं व्याधितं पुरुषं किंचिद्रोगमन्धादिकं सं रिणीथः सम्यगव्याधं कुरुथः अथ अपि च युवामित् युवामेव पुरंधीः बहुधीः घोषा विश्ववारा आह्वयत्

रोगोपशमनार्थंआहूतवती हेवृषणौकामानांवर्षितारौअश्विनौ अवोभिःरक्षणैःसहआगच्छतम् आभिमुख्येनसीमेनांआह्वयन्तौ ॥ मही महती छान्दसोवर्णलोपः यद्वा महेरौणादिकइन् कृदि-कारादक्तिनइतिङीप् । मयोभूः भववेरन्तर्भावितण्यर्थात्क्विप् । रिणीथः रीगतिरेषणयोः क्रैया-दिकः प्वादीनांह्रस्वइतिह्रस्वत्वम् ॥ १९ ॥

१९. अश्विद्वय, तुम्हारा रक्षा-कार्य सुख का कारण है; हे स्तुति-पात्र, तुमने रोगियों के अंगों को ठीक किया है; इसलिए प्रभूत-बुद्धि-शालिनी घोषा ने, तुम्हें रोग-निवृत्ति के लिए बुलाया था। अभीष्ट-दातृद्वय, अपने रक्षण-कार्यों के साथ आओ।

अधेनुंदस्रास्तर्यं१विषक्तामपिन्वतंशयवेअश्विनागाम् ।
युवंशचीभिर्विमदायजायांन्यूहथुःपुरुमित्रस्ययोषाम् ॥२०॥१६॥

अधेनुम् । दस्रा । स्तर्यम् । विऽसक्ताम् । अपिन्वतम् । शयवे ।
अश्विना । गाम् । युवम् । शचीभिः । विऽमदाय । जायाम् । नि ।
ऊहथुः । पुरुऽमित्रस्य । योषाम् ॥ २० ॥ १६ ॥

हेदस्रादर्शनीयावश्विनौ विषक्तां विशेषेणसक्तावयवांकृशावयवामित्यर्थः अतएवस्तर्यंनि-वृत्तप्रसवां अतएवाधेनुंअदोग्ध्रीं एवंभूतांगांशयवेएतत्संज्ञायऋषयेअपिन्वतं पयसाअपूरयतं अपिच पुरुमित्रस्य पुरुमित्रोनामकश्चिद्राजातस्ययोषांकुमारीं शचीभिरात्मीयैःकर्मभिर्विमदाय एतत्संज्ञायऋषयेराजभिःसहयोद्धुमशक्ताययुवंयुवांजायांन्यूहथुः विमदस्यगृहंप्रापितवन्तौ ॥स्त-र्यम् स्तृञ्आच्छादने अविस्तृस्तन्त्रिभ्यईरितिविहितईकारप्रत्ययः वाछन्दसीत्यमिपूर्वस्यविकल्पाद्-भावेयणादेशः उदात्तस्वरितयोर्यणःस्वरितःपरस्यानुदात्तस्यस्वरितत्वम् । विषक्ताम् षञ्जसङ्गे कर्म-णिनिष्ठा अनिदितामितिनलोपः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । अपिन्वतम् पिविसेचने इ-दित्वान्नुम् भौवादिकः । पुरुमित्रस्य पुरूणिमित्राणियस्य संज्ञायांमित्राजिनयोरितिबहुव्री-हौउत्तरपदस्याद्युदात्तत्वम् ॥ २० ॥

२०. दस्रद्वय, शयु ऋषि के लिए तुमने कृशा, प्रसव-शून्या और दुग्ध-रहिता गौ को दुग्ध-पूर्ण किया था। तुमने अपने कर्म-द्वारा पुरुमित्र राजा की कुमारी को विमद ऋषि की स्त्री बनाया था।

एकविंशीमृचमाह—

यवंवृकेणाश्विनावपन्तेषंदुहन्तामनुषायदस्रा ।
अभिदस्युंबकुरेणाधमन्तोरुज्योतिश्चक्रथुरार्याय ॥ २१ ॥

यवम् । वृकेण । अश्विना । वपन्ता । इषम् । दुहन्ता । मनुषाय । दस्रा । अभि । दस्युम् । बकुरेण । धमन्ता । उरु । ज्योतिः । चक्रथुः । आर्याय ॥ २१ ॥

आर्यायविदुषेमनुषशब्दोमनुशब्दपर्यायः मनुषायमनवेमनोरर्थं हेदस्रादर्शनीयावश्विनौ वृकेणलाङ्गलेनकर्षकैः कृष्टदेशेयवंयवाद्युपलक्षितंसर्वंधान्यजातंवपन्तावापयन्तौ तथा इषंअन्नना-मैतत् तत्कारणभूतंवृष्ट्युदकंचदुहन्तामेघात्क्षारयन्तौ तथा दस्युंउपक्षयकारिणंअसुरपिशाचादिकं बकुरेण बकुरोनामभासमानोवज्रः तेनअभिधमन्ता धमतिर्वधकर्मा अभिघ्नन्तौ एवंत्रिविधंकर्म-कुर्वन्तौयुवां उरुविस्तीर्णंज्योतिःस्वकीयंतेजः माहात्म्यंचक्रथुः कृतवन्तौ दर्शितवन्तावित्यर्थः यद्वा त्रिविधकर्माचरणेनआर्यायविदुषेमनवेविस्तीर्णंसूर्याख्यंज्योतिश्चक्रथुः कृतवन्तौ जीवनहे-तुर्यथास्यात् वधेगुणभूतानित्रीणिकर्माणियुवाभ्यांकृतानीतिभावः अत्रनिरुक्तम्—बकुरोभास्करो-भयङ्करोभासमानोद्रवतीतिवायवमिववृकेणाश्विनौनिवपन्तौवृकोलाङ्गलंभवतिविकर्तनात् । इत्या-दिकमनुसन्धेयम् ॥ मनुषाय मनेरौणादिकउषन्प्रत्ययः ॥ २१ ॥

२१. अश्विद्वय, तुमने विद्वान् मनु या आर्य मनुष्य के लिए हल-द्वारा खेत जुतवाकर, यव वपन कराकर, अन्न के लिए वृष्टि-वर्षण करके तथा वज्र-द्वारा दस्यु का वध करके उसके लिए विस्तीर्ण ज्योति प्रकाश की।

द्वाविंशीमृचमाह—

आथर्वणायाश्विनादधीचेऽश्व्यंशिरःप्रत्यैरयतम् ।
सवांमधुप्रवोचदृतायन्त्वाष्ट्रंयद्दस्रावपिकक्ष्यंवाम् ॥ २२ ॥

आथर्वणाय । अश्विना । दधीचे । अश्व्यम् । शिरः । प्रति । ऐरयतम् । सः । वाम् । मधु । प्र । वोचत् । ऋतऽयन् । त्वाष्ट्रम् । यत् । दस्रौ । अपिऽकक्ष्यम् । वाम् ॥ २२ ॥

तद्वांनरासनयइत्यत्रोक्तमाख्यानमिहाप्यनुसन्धेयम् हेअश्विनौ आथर्वणायअथर्वणः पुत्रा-यदधीचेदध्यङ्नाम्नेमहर्षयेअश्व्यंअश्वस्यसंबन्धिशिरः प्रत्यैरयतम् प्रत्यधत्तम् तदीयंमानुषंशि-रश्छित्त्वान्यत्रनिधायाश्व्येनशिरसातस्यशीर्षंसमयोजयतमित्यर्थः सचवांयुवाभ्यांप्रवर्ग्यविद्यांम-धुविद्यांचवक्ष्यामीतिपुराकृतांप्रतिज्ञांऋतायन्सत्यामात्मानमिच्छन्मधुमधुविद्यांत्वाष्ट्रंत्वष्टुरिन्द्राल्ल-ब्धंप्रवोचत्प्रोक्तवान् हेदस्रादर्शनीयौअश्विनौ वांयुवयोःसंबन्धितदपिकक्ष्यंछिन्नस्यअश्वशिरसः

१ नि० ६, २५ ।  २ ऋ० सं० १.८. १०. ।

कक्षप्रदेशेनपुनःसन्धानभूतं प्रवर्ग्यविद्याख्यंरहस्यंतदपिवांयुवाभ्यांप्रावोचदित्यर्थः ॥ दधीचे अ-श्वेदन्केविगित्यादिनाक्विन् अनिदितामितिनलोपः चतुर्थ्येकवचनेअचइत्यकारलोपेचावितिदी-र्घत्वम् उदात्तनिवृत्तिस्वरेणविभक्त्युदात्तत्वेप्राप्तेतस्यापवादत्वेनचावितिविभक्तेःपूर्वस्योदात्तत्वं-प्राप्तं तस्याप्ययमपवादः अञ्चेश्छन्दस्यसर्वनामस्थानमितिविभक्त्युदात्तत्वम् ॥ २२ ॥

२२. अश्विद्वय, तुमने अथर्वा ऋषि के पुत्र दधीचि ऋषि के स्कन्ध पर अश्व का मस्तक जोड़ दिया था। दधीचि ने भी सत्य-रक्षा कर त्वष्टा या इन्द्र से प्राप्त मधुविद्या तुम्हें सिखाई थी। दस्रद्वय, वही विद्या तुम लोगों में प्रवर्ग-विद्या-रहस्य हुई थी।

सदा॑कवीसुम॒तिमाच॑केवां॒विश्वा॒धियो॑अश्विना॒प्राव॑तंमे ।
अ॒स्मेर॒यिंना॑सत्याबृ॒हन्त॑मपत्य॒साचं॒श्रुत्यं॑रराथाम् ॥ २३ ॥

सदा॑ । क॒वी॒ इति॑ । सु॒ऽम॒तिम् । आ । च॒के॒ । वा॒म् । विश्वाः॑ । धियः॑ । अ॒श्वि॒ना॒ । प्र । अ॒व॒त॒म् । मे॒ । अ॒स्मे इति॑ । र॒यिम् । ना॒स॒त्या॒ । बृ॒हन्त॑म् । अ॒प॒त्य॒ऽसाच॑म् । श्रुत्य॑म् । र॒रा॒था॒म् ॥ २३ ॥

हेकवीक्रान्तदर्शिनौमेधाविनावश्विनौ वांयुवयोःसुमतिंकल्याणीमनुग्रहात्मिकांबुद्धिंस-दासर्वदाआचकेआभिमुख्येनप्रार्थये मेमदीयानि विश्वाधियःसर्वाणिकर्माणियुवांप्रावतंप्रकर्षे-णरक्षतम् अपिचास्मेअस्मभ्यंहेनासत्यावश्विनौ बृहन्तं महान्तं अपत्यसाचंअपत्यैःपुत्रादि-भिःसमवेतं श्रुत्यंप्रशंसनीयंउत्कृष्टं रयिंधनंरराथां प्रयच्छतम् ॥ चके कैगैशब्दे व्यत्ययेनात्मने-पदम् लिट्युत्तमैकवचनेरूपम् । अस्मे सुपांसुलुगितिचतुर्थीबहुवचनस्यशेआदेशः ।अपत्यसाचं अपत्यैःसहसेचवेसंगच्छतइत्यपत्यसाच् छान्दसोण्विः । श्रुत्यम् श्रुतिःस्तुतिः तत्रभवंश्रुत्यम् भवेछन्दसीतियत् यतोनावइत्याद्युदात्तत्वम्.। रराथाम् रादाने लोटिव्यत्ययेनात्मनेपदम् बहुलं-छन्दसीतिशपःश्लुः ॥ २३ ॥

२३. मेधावि-द्वय, मैं सदा तुम्हारी कृपा के लिए प्रार्थना करता हूँ। तुम मेरे सारे कार्यों की रक्षा करते हो। नासत्यद्वय, हमें विशाल, सन्तान-समेत और प्रशंसनीय धन दो।

हिर॑ण्यहस्तमश्विना॒ररा॑णापु॒त्रंन॑रावध्रिम॒त्याअ॑दत्तम् ।
त्रिधा॑ह॒श्याव॑मश्विना॒विक॑स्त॒मुज्जी॒वसऐ॑रयतंसुदानू ॥ २४ ॥

हिर॑ण्यऽहस्तम् । अ॒श्वि॒ना॒ । ररा॑णा । पु॒त्रम् । न॒रा॒ । व॒ध्रि॒ऽम॒त्याः । अ॒द॒त्त॒म् । त्रिधा॑ । ह॒ । श्याव॑म् । अ॒श्वि॒ना॒ । विऽक॑स्तम् । उत् । जी॒वसे॑ । ऐ॒र॒य॒त॒म् । सु॒दा॒नू॒ इति॑ सुऽदा॒नू॒ ॥ २४ ॥

रराणा रममाणौदातारौवानरानेतारौ हेअश्विनौ हिरण्यहस्तंनामपुत्रंवध्रिमत्याः एतत्संज्ञायै ब्रह्मवादिन्यैअदत्तंप्रायच्छतम् अपिच हेसुदानूशोभनदानावश्विनौ त्रिधात्रेधाविकर्त्तंविच्छि- न्नंश्यावाख्यमृषिंजीवसेजीवितुंउदैरयतम् असुरैस्त्रेधाखण्डितंशरीरंपुनरेकीकृत्यउद्गमयतमित्य- र्थः ॥ रराणा रमतेःशानचि बहुलंछन्दसीतिशपःश्लुः व्यत्ययेनमकारस्यालम् रातेर्वाव्यत्ययेन शानच् पूर्ववच्छ्लुः । वध्रिमत्याः चतुर्थ्यर्थेबहुलंछन्दसीतिषष्ठी । जीवसे जीवप्राणधारणे तुम- र्थेसेसेनितिअसेप्रत्ययः ॥ २४ ॥

२४. दानशील और नेता अश्विद्वय, तुमने वध्रिमती को हिरण्यहस्त नाम का पुत्र दिया था। दानशील अश्विद्वय, तुमने तीन भागों में विभक्त श्याव ऋषि को जीवित किया था।

ए॒तानि॑वाम॒श्विना॑वी॒र्या॑णि॒प्रपू॒र्व्या॑ण्या॒यवो॑ऽवोचन् ।
ब्रह्म॑कृ॒ण्वन्तो॑वृषणायु॒वभ्यां॑सु॒वीरा॑सोवि॒द॒थ॒मा व॑देम ॥२५॥ १७॥

ए॒तानि॑ । वा॒म् । अ॒श्वि॒ना॒ । वी॒र्या॑णि । प्र । पू॒र्व्या॑णि । आ॒यवः॑ । अ॒वो॒च॒न् । ब्रह्म॑ । कृ॒ण्वन्तः॑ । वृ॒ष॒णा॒ । यु॒वऽभ्या॑म् । सु॒ऽवीरा॑सः । वि॒दथ॑म् । आ । व॒दे॒म ॥ २५ ॥१७ ॥

अश्विनाहेअश्विनौ वांयुवयोःसंबन्धीनिपूर्व्याणिप्रत्नानिएतानिइदानींमयोक्तानि वीर्या- णिवीरकर्माणिआयवोमनुष्याः मदीयाःपितृप्रभृतयःप्रावोचन्प्रकर्षेणवदन्ति वयंच हेवृषणाकामाभिव- र्षकावश्विनौ युवाभ्यां ब्रह्मपर्याप्तकंस्तोत्रंकृण्वन्तः कुर्वन्तः सुवीरासः सुवीराः शोभनैर्वीरैःपु- त्रादिभिरुपेताःसन्तः विदथंयज्ञंआवदेमआभिमुख्येनस्तुतीरुच्चारयाम यद्वा विदथंवेदयन्तम- तिथिंतदपेक्षितप्रदानेनआवदेमआभिमुख्येनप्रियपूर्विकांवाचंउच्चारयाम ॥ कृण्वन्तः कृविर्हिंसा- करणयोश्च इदित्वान्नुम् लटःशतृ धिन्विकृण्व्योरचेत्युप्रत्ययः अकारान्तादेशश्च अतोलोपेसवि स्थानिवद्भावाल्लघूपधगुणाभावः । सुवीरासः शोभनावीरायेषांतेतथोक्ताः आज्जसेरसुक् वीरवी- र्यौचेत्युत्तरपदाद्युदात्तत्वम् । विदथम् विदज्ञाने रुविदिभ्यांकिदित्यथप्रत्ययः ॥ २५ ॥

२५. अश्विद्वय, तुम्हारे इन प्राचीन कार्यों को पूर्वज कह गये हैं। अभीष्ट-दातृद्वय, हम भी तुम्हारी स्तुति करके वीर पुत्र आदि से युक्त होकर यज्ञ को सम्पन्न करते हैं।

आवामित्येकादशर्चंतृतीयंसूक्तंकक्षीवतआर्षंत्रैष्टुभमाश्विनम् तथाचानुक्रान्तम्—आवा- मेकादशेति । पूर्वसूक्ताभ्यांसहमावरुणपाकाश्विनशस्त्रयोरुक्तोविनियोगः ।

तत्रप्रथमामृचमाह—

आवांरथोअश्विनाश्येनपत्वासुमृळीकःस्ववाँयात्वर्वाङ् ।
योमर्त्यस्यमनसोजवीयान्त्रिवन्धुरोवृषणावातरंहाः ॥ १ ॥

आ । वाम् । रथः । अश्विना । श्येनऽपत्वा । सुऽमृळीकः । स्वऽवान् । यातु । अर्वाङ् । यः । मर्त्यस्य । मनसः । जवीयान् । त्रिऽवन्धुरः । वृषणा । वातऽरंहाः ॥ १ ॥

हेअश्विनौ वांयुवयोःस्वभूतोरथः अर्वाङ्अस्मदभिमुखंआयातुआगच्छतु कीदृशोरथः श्येनपत्वा श्येनइत्यश्वनाम शंसनीयगमनैरश्वैःपतन्गच्छन् यद्वा श्येनःपक्षी सइवशीघ्रंपतन् सुमृळीकः शोभनसुखयुक्तः स्ववान्धनवान् हेवृषणौकामानांवर्षितारौअश्विनौयःयुष्मदीयोरथःमर्त्यस्यमनुष्यस्यमनसोजवीयान् अतिशयेनवेगवान् तद्यथावेगेनकृत्स्नंजगत्प्राप्नोति ततोप्यतिशयेनक्षणमात्रादेवसर्वंजगत्पर्यटतीत्यर्थः ॥ त्रिवन्धुरः वन्धुरंवेष्टितंसारथेःस्थानं त्रिप्रकारेणवंधुरेणयुक्तः । वातरंहाः वातस्यवायोःरंहोवेगइववेगोयस्यसतथोक्तः अनेनाश्वविहगगतित्वमुच्यतेसरथइतिपूर्वेणान्वयः । श्येनपत्वा पत्लृगतौ अन्येभ्योपिदृश्यन्तइतिवनिप् दासीभारादिः यद्वा दृशिग्रहणस्यविध्यन्तरोपसङ्ग्रहार्थत्वात्आवेशनिप् ततोबहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । जवीयान् जवोस्यास्तीतिजववान् अतिशयेनजववानितिजवीयान् आतिशायनिकईयसुन् विन्मतोर्लुक् टेरितिटिलोपः ॥ १ ॥

१. अश्विद्वय, श्येन पक्षी की तरह शीघ्रगामी, सुखकर और धन-युक्त तुम्हारा रथ हमारे सम्मुख आवे। अभीष्ट-वर्षक-द्वय, तुम्हारा वह रथ मनुष्य के मन की तरह वेगवान्, त्रिवन्धुर या त्रिवन्धनाधार-भूत और वायु-वेगी है।

त्रिवन्धुरेणत्रिवृतारथेनत्रिचक्रेणसुवृतायातमर्वाक् ।
पिन्वतंगाजिन्वतमर्वतोनोवर्धयतमश्विनावीरमस्मे ॥ २ ॥

त्रिऽवन्धुरेण । त्रिऽवृता । रथेन । त्रिऽचक्रेण । सुऽवृता । आ । यातम् । अर्वाक् । पिन्वतम् । गाः । जिन्वतम् । अर्वतः । नः । वर्धयतम् । अश्विना । वीरम् । अस्मे इति ॥ २ ॥

त्रिवन्धुरेण वन्धुरंसारथिस्थानंत्रिप्रकारवन्धुरोपेतेन त्रिवृतात्रिधावर्तमानेन त्रिचक्रेणच-क्रत्रयोपेतेन सुवृताशोभनंगच्छतारथेनअर्वाक्अस्मदभिमुखंआयातंआगच्छतम् आगत्यचा-

स्वदीयागाः पिन्वतंपयसापूरयतम् नोस्माकंअर्वतोश्वान्जिन्वतंप्रीणयतम् अपिच हेअश्विनौ अस्मेअस्माकंवीरंपुत्रादिकंवर्धयतं प्रवृद्धंकुरुतम्॥ त्रिचक्रेण त्रीणिचक्राणियस्यसतथोक्तः त्रि-चक्रादीनांछन्दस्युपसङ्ख्यानमितिवसरपदान्तोदात्तत्वम्॥ २ ॥

२. अपने त्रिवन्धुर, त्रिकोण या तीनों लोकों में वर्त्तमान, त्रिचक्र और शोभन-गति रथ पर हमारे सम्मुख आओ। अश्विद्वय, हमारी गायों को दुग्धवती करो। हमारे घोड़ों को प्रसन्न करो। हमारे वीर पुत्र आदि को वर्द्धित करो।

प्रवद्यामनासुवृतारथेनदस्राविमंशृणुतंश्लोकमद्रेः।
किमङ्गवांप्रत्यवर्तिंगमिष्ठाहुर्विप्रासोअश्विनापुराजाः ॥ ३ ॥

प्रवत्ऽयामना। सुऽवृता। रथेन। दस्रौ। इमम्। शृणुतम्। श्लोकम्। अद्रेः। किम्। अङ्ग। वाम्। प्रति। अवर्तिम्। गमिष्ठा। आहुः। विप्रासः। अश्विना। पुराऽजाः॥ ३ ॥

हेदस्रौदर्शनीयावश्विनौ प्रवद्यामनाप्रकृष्टगमनेनशीघ्रगामिना सुवृताशोभनवर्तनेनरथेनागत्यअद्रेः आदरंकुर्वतःस्तोतुः इमंश्लोकंस्तुतिलक्षणामिमांवाचंशृणुतम् अङ्गाश्विना हेअश्विनौ पुराजाः पूर्वजाताश्चिरन्तनाः विप्रासोमेधाविनः वांयुवांअवर्तिंस्तोतॄणांदारिद्र्यंप्रतिवत्सरिहर्तुंगमिष्ठागन्तृतमावाहुः कथयन्ति किंशब्दः प्रश्नफलमभेदवेदे किंनकथयन्ति कथयन्त्येवसर्वे तथासत्यागन्तव्यमिति ॥ प्रवद्यामना सोपसृष्टेधात्वर्थेप्रवंमात्पत्यम्प्रत्पावुपसर्गाच्छन्दसि-धात्वर्थेइतिवतिः यामापणे आवोमनिन्निविनिवडुलवचनात्कर्मणिमनिन् तयोस्तद्धीहोपूर्वपदप्रकृति-स्वरत्वम्। अद्रेः दङ्आदरे आङ्पूर्वादस्मादौणादिकःक्रिप्रत्ययः आतोलोपइतिच। गमिष्ठा गन्तृशब्दादिष्ठन्छन्दसीतीष्ठन् तुरिष्ठेमेयःस्वितितृलोपः सुपांसुलुगितिविभक्तेराकारः। आहुः प्र-थमस्वरः पादादित्वाभिघाताभावः॥ ३ ॥

३. दस्रद्वय, अपने शीघ्रगामी और शोभन-गति रथ-द्वारा आकर सेवा-परायण स्तोता का यह मंत्र सुनो। अश्विद्वय, क्या पहले के विद्वान् यह नहीं बोले थे कि, तुम स्तोताओं की दरिद्रता दूर करने के लिए सर्वदा जाते हो?

आवांश्येनासोअश्विनावहन्तुरथेयुक्तासआशवःपतङ्गाः।
येअप्तुरोदिव्यासोनगृध्राअभिप्रयोनासत्यावहन्ति ॥ ४ ॥

आ। वाम्। श्येनासः। अश्विना। वहन्तु। रथे। युक्तासः। आशवः। पतङ्गाः। ये। अप्ऽतुरः। दिव्यासः। न। गृध्राः। अभि। प्रयः। नासत्या। वहन्ति॥ ४ ॥

हेअश्विनौ रथेयुक्तासः युक्ताः सारथिनावहनप्रदेशेयोजिताः आशवः व्याप्नुवन्तः पतङ्गाः पतनसमर्थाः श्येनासः शंसनीयगमनाः अश्वाः वांयुवांआवहन्तु अस्मत्समीपमानय-न्तु येअश्वाः अप्तुरः आपइवत्वरोपेताः दिव्यासोनगृध्राः अन्तरिक्षेवर्तमानागृध्राख्याःपक्षिण-इवशीघ्रंगच्छन्तः हेनासत्यौ युवां प्रयोहविर्लक्षणमन्नं अभिलक्ष्य वहन्तिप्रापयन्ति वादशाव-तिपूर्वेणसंबन्धः ॥ अप्तुरः तुरत्वरणे अप्शब्दोपपदादस्मात्क्विप्चेतिक्विप् ॥ ४ ॥

४. अश्विद्वय, रथ में योजित, शीघ्रगन्ता, उछलने में बहादुर और श्येन पक्षी की तरह वेग-विशिष्ट तुम्हारे घोड़े तुम्हें लेकर आवें। नासत्यद्वय, जल की तरह शीघ्रगति अथवा आकाशचारी गृध्र की तरह शीघ्रगति वे घोड़े तुम्हें हव्यान्न के सामने ले आ रहे हैं।

आवांरथंयुवतिस्तिष्ठदत्रजुष्ट्वीनरादुहितासूर्यस्य ।
परिवामश्वावपुषःपतङ्गावयोवहन्त्वरुषाअभीके ॥ ५ ॥ १८ ॥

आ । वाम् । रथम् । युवतिः । तिष्ठत् । अत्र । जुष्ट्वी । नरा । दुहिता । सूर्यस्य । परि । वाम् । अश्वाः । वपुषः । पतङ्गाः । वयः । वहन्तु । अरुषाः । अभीके ॥ ५ ॥ १८ ॥

हेनरानेतारावश्विनौ युवतिस्तरुणीसूर्यस्यदुहिताजुष्ट्वीप्रीतासती वांयुवयोः अत्रइमं रथंआतिष्ठत् आरूढवती तयासहितौवांयुवांअश्वाः अभीकेगृहसमीपेतंरथंपरिवहन्तुपरिप्रापय-न्तु कीदृशाअश्वाः वपुषः वपुरितिरूपस्यशरीरस्यवानामधेयम् तद्वन्तः छान्दसोमत्वर्थीय-स्यलोपः पतङ्गाः उत्पतनसमर्थाः वयोगच्छन्तः अरुषाः आरोचमानाः हिंसकरहितावा ॥ अत्र इदमस्त्रल् इतिदशिग्रहणान्नपदाद्यपोगेपिइदम्शब्दात् विभक्त्यर्थेत्रल्प्रत्ययः।जुष्ट्वी जुषीप्रीतिसेवनयोः औणादिकः क्वनिप्रत्ययः वोतोगुणवचनादितिङीष् ॥ ५ ॥

५. नेतृद्वय, प्रसन्न होकर सूर्य की युवती पुत्री तुम्हारे रथ पर चढ़ी थी। तुम्हारे पुष्टाङ्ग, लम्फ-प्रदान-समर्थ, शीघ्रगामी और दीप्तिमान् घोड़े तुम्हें हमारे घर की ओर ले आवें।

उद्वन्दनमैरतंदंसनाभिरुद्रेभंदस्रावृषणाशचीभिः ।
निष्टौग्र्यंपारयथःसमुद्रात्पुनश्च्यवानंचक्रथुर्युवानम् ॥ ६ ॥

उत् । वन्दनम् । ऐरतम् । दंसनाभिः । उत् । रेभम् । दस्रा । वृषणा । शचीभिः । निः । तौग्र्यम् । पारयथः । समुद्रात् । पुनरिति । च्यवानम् । चक्रथुः । युवानम् ॥ ६ ॥

हेअश्विनौ वन्दनमेतत्संज्ञंऋषिंदंसनाभिरात्मीयैः कर्मभिः कूपादुदैरतम् उदैरयतम् उदगमयतम् हेदस्रादर्शनीयौवृषणाकामानांवर्षितारावश्विनौ शचीभिः कर्मभिःरेभंएतत्संज्ञंऋषिंदशरात्रीर्नवाहानिचकूपेनिवसन्तंतस्मादुदैरयतंउदतारयतम् तथातौग्र्यंतुग्रस्यपुत्रंभुज्युंसमुद्रेनिमग्नंआत्मीयाभिर्नौभिरश्वैश्चसमुद्रान्निष्पारयथः तीरदेशंप्रापितवन्तौ तथाच्यवानं च्यवनंऋषिंजीर्णंपुनर्युवानंयौवनोपेतंचक्रथुः कृतवन्तौ ॥ ऐरतम् ईरगतौकम्पनेच छन्दस्युभयथेतिशपआर्धधातुकत्वाण्णेरनिटीतिणिलोपः ॥ ६ ॥

६. अपने कार्य-द्वारा तुमने बन्दन ऋषि को बचाया था। कामवर्षिद्वय, अपने कार्य-द्वारा तुमने रेभ ऋषि को निकाला था तुमने तुग्र-पुत्र भुज्यु को समुद्र से पार कराया था। च्यवन ऋषि को फिर युवक बना दिया था।

युवमत्रयेवनीतायतप्तमूर्जमोमानमश्विनावधत्तम् ।
युवंकण्वायापिरिप्तायचक्षुःप्रत्यधत्तंसुष्टुतिंजुजुषाणा ॥ ७ ॥

युवम् । अत्रये । अवऽनीताय । तप्तम् । ऊर्जम् । ओमानम् ।
अश्विनौ । अधत्तम् । युवम् । कण्वाय । अपिऽरिप्ताय । चक्षुः ।
प्रति । अधत्तम् । सुऽस्तुतिम् । जुजुषाणा ॥ ७ ॥

हेअश्विनौ युवंयुवां अवनीतायशतद्वारेपीडायन्त्रगृहेअवस्तान्नीतायात्रये तस्मैपीडार्थंप्रक्षिप्तंतुषाग्निंशीतोदकेनावारयेथाम् अपिचास्मैअत्रयेओमानंसुखकरंऊर्जंरसवदन्नंअधत्तंप्रायच्छतम् तथासुष्टुतिंशोभनांस्तुतिंजुजुषाणासेवमानौ युवांअपिरिप्तायअसुरैर्ब्राह्मण्यपरीक्षार्थं इहासीनःसन्ज्युष्मानुपसंजानीहीतिअन्धकारवतिगृहेप्रवेशितायकण्वाय ऋषयेचक्षुः ज्योतिषाउपसःप्रकाशकंचक्षुंप्रत्यधत्तंकृतवन्तौ यद्वा अपिरिप्तायअपिलिप्तायपटलेनपिहितदृष्टयेएवंविधायकण्वायचक्षुरिन्द्रियंप्रत्यधत्तम् प्रत्यस्थापयतम् ॥ ओमानम् अववेरौणादिकोमनिः ज्वरत्वरेत्यादिनावकारस्योपधायाश्चऊठ् गुणः। अपिरिप्ताय लिपउपदेहे अस्मात्कर्मणिनिष्ठा कपिष्ठलादित्वात्षत्वविकल्पः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । जुजुषाणा जुषीप्रीतिसेवनयोः छान्दसोलिट् लिटःकानच् सुपांसुलुगितिविभक्तेराकारः ॥ ७ ॥

७. अश्विद्वय, तुमने रोके हुए अत्रि की प्रदीप्त अग्नि-शिखा को निवारित किया था और उन्हें रसवान् अन्न प्रदान किया था। स्तुति ग्रहण करके तुमने अन्धकार में प्रविष्ट कण्व ऋषि को चक्षुप्रदान किया था।

युवंधेनुंशयवेनाधितायापिन्वतमश्विनापूर्व्याय ।
अमुञ्चतंवर्तिकामंहसोनिःप्रतिजंघांविश्पलायाअधत्तम् ॥ ८ ॥

युवम् । धेनुम् । शयवे । नाधिताय । अपिन्वतम् । अश्विना ।
पूर्व्याय । असुञ्चतम् । वर्तिकाम् । अंहसः । निः । प्रति । जंघाम् ।
विश्पलायाः । अधत्तम् ॥ ८ ॥

अश्विनाहेअश्विनौ युवंयुवां पूर्व्यायपुरातनाय नाधिताययाचमानाय शयवे एतत्संज्ञाय ऋषयेधेनुंनिवृत्तप्रसवामदोग्ध्रीं अपिन्वतंपयसाअसिञ्चतम् सर्वदापयस्विनीमकुरुतमित्यर्थः अपिच वर्तिकांवृकेणग्रस्तांचटकसदृशींशकुनिं अंहसःवृकास्यलक्षणात्पापात्निरमुंचतम् निरमोचयतम् यद्वा पुनःपुनर्वर्ततइतिवर्तिकाउषाः तामादित्येनाभिग्रस्तांयुवाममोचयतम् तथाविश्पलायैसंग्रामेछिन्नजंघायैअगस्त्यपुरोहितस्यखेलस्यसंबन्धिन्यै एतत्संज्ञायैस्त्रियैआयसींजंघांप्रत्यधत्तम् प्रत्यस्थापयतम् समयोजयतमित्यर्थः ॥ ८ ॥

८. अश्विद्वय, प्रार्थना करने पर प्राचीन शयु ऋषि की दुग्ध-रहिता गौ को दुग्धवती किया था। तुमने वृक-रूप पाप से वर्त्तिका को छुड़ाया था। तुमने विश्पला की एक जंघा बना दी थी।

युवंश्वेतंपेदवइन्द्रजूतमहिहनमश्विनादत्तमश्वम् ।
जोहूत्रमर्योअभिभूतिमुग्रंसहस्रसांवृषणंवीड्वङ्गम् ॥ ९ ॥
युवम् । श्वेतम् । पेदवे । इन्द्रऽजूतम् । अहिऽहनम् । अश्विना ।
अदत्तम् । अश्वम् । जोहूत्रम् । अर्यः । अभिऽभूतिम् । उग्रम् ।
सहस्रऽसाम् । वृषणम् । वीळुऽअङ्गम् ॥ ९ ॥

अश्विनाहेअश्विनौ पेदवेपेदुनाम्नेराज्ञेयुवंयुवांश्वेतंश्वेतवर्णंकञ्चिदश्वंअदत्तंप्रायच्छतम् कीदृशंइन्द्रजूतं इन्द्रेणयुवाभ्यांगमितंदत्तमित्यर्थः अहिहनंशत्रूणांहन्तारम् जोहूत्रंअतिशयेनसङ्ग्रामेष्वाह्वातारम् अर्यः अरेःशत्रोःअभिभूतिंअभिभावुकंउग्रंउद्गूर्णवीर्यवन्तमित्यर्थः सहस्रसां सहस्रसंख्याकस्यधनस्यसंभक्तारंदातारंवा वृषणंसेक्तारंयुवानमित्यर्थः वीड्वङ्गम् दृढाङ्गमित्यर्थः ॥ इन्द्रजूतम् जुषतिसौत्रोधातुर्गत्यर्थः अस्मादन्यभ्योपिदृश्यतइतिक्तः कर्मणिनिष्ठा तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् । जोहूत्रम् ह्वयतेर्यङ्लुगन्तादौणादिकःत्रप्रत्ययः प्रत्ययस्यपित्त्वादनुदात्तत्वेधातुस्वरःशिष्यते । अर्यः अरिशब्दात्षष्ठ्येकवचनेजसादिषुछन्दसिवावचनमितिघेर्ङितीतिगुणस्यविकल्पितत्वादभावेयणादेशः उदात्तयणइतिविभक्तेरुदात्तत्वम् । अभिभूतिम् अभिभूयतेनेनेत्यभिभूतिः करणेक्तिन् तादौचेतिगतेःप्रकृतिस्वरत्वम् । सहस्रसाम् सनोतेःजनसनखनक्रमगमोविट् विड्वनोरनुनासिकस्यादित्यात्वम् ॥ ९ ॥

९. अश्विद्वय, तुमने पेदु राजा को श्वेतवर्ण घोड़ा दिया था। वह अश्व इन्द्र-प्रदत्त, शत्रु-हन्ता और संग्राम में शब्द करनेवाला था। वह अरि-मर्दन, उग्र और सहस्र या अनेक प्रकार के धन देनेवाला था। वह अश्व सेचन-समर्थ और दृढाङ्ग था।

दशमीमृचमाह—

तावांनरास्ववसेसुजाताहवामहेअश्विनानाधमानाः ।
आनउपवसुमतारथेनगिरोजुषाणासुवितायथातम् ॥ १० ॥

ता । वाम् । नरा । सु । अवसे । सुऽजाता । हवामहे । अश्विना । नाधमानाः । आ । नः । उप । वसुऽमता । रथेन । गिरः । जुषाणा । सुविताय । यातम् ॥ १० ॥

नरानेतारौहेअश्विनौ सुजाताशोभनजन्मानौ तावांतौयुवांनाधमानाःधनंयाचमानाः वयंस्तोतारःअवसेरक्षणार्थंसुहवामहे शोभनमाह्वयामहे गिरःस्तुतीःजुषाणासेवमानौयुवांवसुमताधनयुक्तेनरथेननोस्मानुपायातम् उपागच्छतम् किमर्थं सुवितायसुष्ठुप्राप्तव्यायधनायसुखायवा ॥ सुजाता शोभनंजातंजन्मययोस्तौसुजातौ सुपांसुलुगितिविभक्तेराकारः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । नाधमानाः नाधृयाच्ञायाम् । जुषाणा जुषीप्रीतिसेवनयोः ताच्छीलिकश्चानश् तुदादित्वाच्छः पूर्ववद्विभक्तेराकारः । सुविताय सुपूर्वादेतेःकर्मणिनिष्ठा तन्वादित्वादुवङ् सुपमानात्क्तइत्युत्तरपदान्तोदात्तत्वम् ॥ १० ॥

१०. नेतृद्वय, शोभन-जन्मा अश्विद्वय, हम धन-याचना करके रक्षा के लिए तुम्हें बुलाते हैं। हमारी स्तुति ग्रहण करके तुम लोग धनशाली रथ पर, हमें सुख देने के लिए, हमारे सम्मुख आओ।

एकादशीमृचमाह—

आश्येनस्यजवसानूतनेनास्मेयातंनासत्यासजोषाः ।
हवेहिवामश्विनारातहव्यःशश्वत्तमायाउषसोव्युष्टौ॥ ११॥ १२ ॥

आ । श्येनस्य । जवसा । नूतनेन । अस्मे इति । यातम् । नासत्या । सऽजोषाः । हवे । हि । वाम् । अश्विना । रातऽहव्यः । शश्वत्ऽतमायाः । उषसः । विऽउष्टौ ॥ ११ ॥ १२ ॥

हेनासत्यावश्विनौ सजोषाः सजोषसौसमानप्रीतियुक्तौ श्येनस्यशंसनीयंगच्छतोश्वस्यनूतनेननवतरेणअत्यर्थेणजवसावेगेनसहितौयुवामस्मेअस्मान् आयातंआगच्छतम् अश्विना हेअश्विनौ रातहव्योवांयुवाभ्यांप्रदातव्येनहविषायुक्तःसन् शश्वत्तमायाः कालात्मकतयानित्यायाउषसः व्युष्टौविवासनसमयेवांयुवांहवेआह्वयामि हिर्हेतौ हियस्मादेवंतस्मादायातमित्यर्थः॥अस्मे

सुपांसुलुगितिशसःशेआदेशः। सजोषाः तेनैवद्विवचनस्यसुआदेशः। हवे ह्वेञोलट्युत्तमैकवचने बहुलंछन्दसीतिसंप्रसारणम् शप्गुणावादेशाः। शश्वत्तमायाः उत्तमशश्वत्तमौसर्वत्रेत्युञ्छादिषुपाठादन्तोदात्तत्वम् ॥ ११ ॥

११. नासत्यद्वय समान-प्रीति-सम्पन्न होकर तथा श्येन पक्षी अथवा प्रशंसनीय गमनकारी अश्व के नूतन वेग की तरह हमारे निकट आओ। अश्विद्वय, हव्य लेकर हम नित्य उषा के उदय-काल में तुम्हें बुलाते हैं।

आवांरथमितिदशर्चंचतुर्थंसूक्तं दैर्घतमसस्यकक्षीवतआर्षंजागतमाश्विनम् तथाचानुक्रान्तम्—आवांरथंदशजागतमिति। प्रातरनुवाकस्याश्विनेक्रतौजागतेछन्दसीदंसूक्तमाश्विनशस्त्रेच तथाचसूत्रितम्—आवांरथमश्रुविदंयोवांपरिज्मेतित्रीणीति।

तत्रप्रथमामृचमाह—

**आवांरथंपुरुमायंमनोजुवंजीराश्वंयज्ञियंजीवसेहुवे ।**
**सहस्रकेतुंवनिनंशतद्वसुंश्रुष्टीवानंवरिवोधामभिप्रयः ॥ १ ॥**

आ। वाम्। रथम्। पुरुऽमायम्। मनःऽजुवम्। जीरऽअश्वम्। यज्ञियम्। जीवसे। हुवे। सहस्रऽकेतुम्। वनिनम्। शतत्ऽवसुम्। श्रुष्टीऽवानम्। वरिवःऽधाम्। अभि। प्रयः ॥ १ ॥

हेअश्विनौवांयुवयोःसंबन्धिनंरथंजीवसेजीवनार्थं प्रयोहविर्लक्षणमन्नंअभिलक्ष्यआहुवे आह्वयामि कीदृशंपुरुमायंबहुविधाश्चर्यंबहुविधकर्माणंवा मनोजुवंमनइवशीघ्रंगच्छन्तं जीराश्वं जवबदश्वोपेतम् यज्ञियंयज्ञेष्वाह्वातुमर्हं सहस्रकेतुंअनेकध्वजं सहस्रस्यधनस्यकेतयितारं ज्ञापयितारंवा वनिनं वनमित्युदकनाम तद्वन्तं शतद्वसुंशतसंख्याकैर्धनैर्युक्तं श्रुष्टीवानम् श्रुष्टीतिक्षिप्रनाम क्षिप्रंसंभजमानम् यद्वा सुखवन्तम् वरिवोधां वरिवइतिधननाम वरिवसोधनस्यदातारम् ॥ पुरुमायम् बहुव्रीहौमिचकादित्वादन्तोदात्तत्वम् यद्वा वत्पूर्वादर्शआदित्वादच्। जीराश्वम् जुवतिमत्यर्थःसौत्रोधातुः जोरीचेतिरक्ईकारान्तादेशश्च बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्। यज्ञियम् यज्ञर्त्विग्भ्यांघखञाविति अर्हार्थेघप्रत्ययः। हुवे ह्वेञोलटिबहुलंछन्दसीतिसंप्रसारणम् लुगिकरणस्यबहुलंछन्दसीतिशपोलुक् उवङ्। शतद्वसुं शतवसुं छान्दसस्तकारोपजनः ॥ १ ॥

१. अश्विद्वय, जीवन धारण के लिए, अन्न के निमित्त, मैं तुम्हारे रथ का आवाहन करता हूँ। वह रथ बहु-विधगति-विशिष्ट, मन की तरह शीघ्रगामी, वेगवान् अश्व से युक्त, यज्ञ-पात्र, सहस्रकेतु-युक्त, शतधन-युक्त, सुखकर और धनदाता है।

द्वितीयामृचमाह—

ऊर्ध्वाधीतिःप्रत्यस्यप्रयामन्यधायिशस्मन्त्समयन्तआदिशः।
स्वदामिघर्मंप्रतियन्त्यूतयआवामूर्जानीरथमश्विनारुहत्॥ २॥

ऊर्ध्वा। धीतिः। प्रति। अस्य। प्रऽयामनि। अधायि। शस्मन्। सम्। अयन्त। आ। दिशः। स्वदामि। घर्मम्। प्रति। यन्ति। ऊतयः। आ। वाम्। ऊर्जानी। रथम्। अश्विना। अरुहत्॥ २॥

अस्यरथस्यप्रयामनिप्रयाणेप्रगमनेसति शस्मन्अश्विनोःशंसनेस्तवनेधीतिःअस्मदीयाबुद्धिः ऊर्ध्वाउन्मुखा प्रत्यधायिप्रत्यस्थायि तदनन्तरंदिशः देष्ट्र्यः स्तुतयोपिसमयन्त अश्विभ्यांसङ्गच्छन्ते आकारःसमुच्चये अहंचस्वोताघर्मंमहावीरस्थं पयः क्षरणशीलमाज्यादिकंहविः स्वदामि स्वादूकरोमि ऊतयः अवितारोरक्षकाऋत्विजश्चप्रतियन्ति घर्मंप्रतिगच्छन्ति संस्कारार्थं अपिच हेअश्विनौ वांयुवयोः रथंऊर्जानीसूर्यस्यदुहिताआरुहत् आरूढवती॥ प्रयामनि यामाप्रयाणे आतोमनिन्क्विब्वनिपश्चेतिमनिन् ... दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम्। शस्मन् शंसुस्तुतौ अन्येभ्योपिदृश्यन्तइतिमनिन् दृशिग्रहणस्य विध्यन्तरोपसंग्रहार्थत्वादुपधानकारलोपः सुपांसुलुगितिसप्तम्यालुक्। अयन्त अयपयगतौ भौवादिकोनुदात्तेत्। ऊतयः क्तिच्क्तौचसंज्ञायामितिअवतेःकर्तरिक्तिच् ज्वरत्वरेत्यादिनावकारोपधयोरूठ्। अरुहत् रुहजन्मनिप्रादुर्भावेच इरितोवेतिच्लेरङादेशः॥ २॥

२. उस रथ के गमन करने पर अश्विद्वय की प्रशंसा में हमारी बुद्धि ऊपर उठ जाती है। हमारी स्तुतियाँ अश्विद्वय को प्राप्त हुई हैं। मैं हव्य को स्वादिष्ठ करता हूँ। सहायक ऋत्विक् लोग आते हैं। अश्विद्वय, सूर्य-पुत्री ऊर्जानी तुम्हारे रथ पर चढ़ी हैं।

संयन्मिथःपस्पृधानासोअग्मतशुभेमखाअमिताजायवोरणे।
युवोरहप्रवणेचेकितेरथोयदश्विनावहथःसूरिमावरम्॥ ३॥

सम्। यत्। मिथः। पस्पृधानासः। अग्मत। शुभे। मखाः। अमिताः। जायवः। रणे। युवोः। अह। प्रवणे। चेकिते। रथः। यत्। अश्विना। वहथः। सूरिम्। आ। वरम्॥ ३॥

मखाःमखवन्तोयज्ञोपेताः अमिताःअपरिमिताःजायवोजयशीलाःमनुष्याः रणेसंग्रामे शुभे शोभनायधनाययदर्थंमिथःपस्पृधानासःअन्योन्यंस्पर्धमानाःयद्यदासमग्मतसंगच्छन्ते तदानीम-श्विनाहेअश्विनौ युवोरहयुवयोरेवरथःप्रवणेप्रकर्षेणसंभजनीयेभूतलेचेकितेज्ञायते देवेषुमध्येयु-वामेवरक्षणार्थंशीघ्रंरथेनागच्छथइत्यर्थः यद्येनरथेन सूरिंस्तोतारंप्रति वरंश्रेष्ठंधनंआवहथः याप-यथः सरथइत्यर्थः॥ पस्पृधानासः स्पर्धसंघर्षे छान्दसोलिट् तस्यलिटःकानजादेशः छान्दसंरेफस्य संप्रसारणं अकारलोपः। अग्मत गमेश्छान्दसोलङ् समोगम्यृच्छीत्यादिनात्मनेपदम् बहुलं-छन्दसीतिशपोलुक् झस्यादादेशः गमहनेत्युपधालोपः।मखाः मखोयज्ञः अर्शआदित्वादच्।जा-यवः जिजये कृवापाजीत्यादिनाउण्। चेकिते कितज्ञाने अस्माद्यङन्ताच्छान्दसोवर्तमानेलिट् अतोलोपयलोपौ। यद्‌ सुपांसुलुगितितृतीयायालुक्॥ ३॥

३. जिस समय यज्ञ-परायण असंख्य जय-शील मनुष्य संग्राम में धन के लिए परस्पर स्पर्द्धा करके एकत्र होते हैं, हे अश्विद्वय, उस समय तुम्हारा रथ पृथ्वी पर आता हुआ मालूम पड़ता है। उसी रथ पर तुम लोग स्तोता के लिए श्रेष्ठ धन लाते हो।

युवंभुज्युंभुरमाणंविभिर्गतंस्वयुक्तिभिर्निवहन्तापितृभ्यआ ।
यासिष्टंवर्तिर्वृषणाविजेन्यं१दिवोदासायमहिचेतिवामवः॥ ४॥

युवम्। भुज्युम्। भुरमाणम्। विऽभिः। गतम्। स्वयुक्तिऽभिः।
निऽवहन्ता। पितृऽभ्यः। आ। यासिष्टम्। वर्तिः। वृषणा।
विऽजेन्यम्। दिवःऽदासाय। महि। चेति। वाम्। अवः॥ ४॥

वृषणा कामानांवर्षितारौहेअश्विनौ युवंयुवांभुरमाणंविभिःअश्वैःध्रियमाणंगतंसमुद्रेनि-मग्नंभुज्युंतुग्रपुत्रंस्वयुक्तिभिः स्वयमेव युज्यमानैरश्वैः नौविशेषैर्वा निवहन्ता नितरांवहन्तौ पि-तृभ्यआ आङ्मर्यादायाम् यत्रपितरस्तुग्रादयआसंस्तेवावत्पर्यन्तमित्यर्थः विजेन्यमितिदूर-स्थंदूरेवर्तमानंवर्तिःतुग्रस्यगृहंप्रतियासिष्टंअगच्छतम् अपिच दिवोदासायराज्ञेकृतंवांयुवयोःसंब-न्धिअवोरक्षणंशंबरहननरूपंमहिमहद्भूरिंचेतिअस्माभिर्ज्ञायते ॥भुरमाणं डुभृञ्धारणपोषणयोः कर्मणिलिटःशानच् व्यत्ययेनस्यः बहुलंछन्दसीत्युत्वम्। पितृभ्यआ मर्यादायामाङःकर्मप्रवचनी-यसंज्ञा पञ्चम्यपाङ्परिभिरितिपञ्चमी। यासिष्टं याप्रापणे यमरमनमातांसक्चेतिसगागमः सिच-इडागमः। विजेन्यं विजनोदूरदेशः तत्रभवंविजेन्यं भवेछन्दसीतियत् तित्स्वरितइतिस्वरित-त्वम्॥ ४॥

४. अभीष्ट वर्षकद्वय, जो भुज्यु अपने घोड़ों के द्वारा लाये जाकर समुद्र में निमज्जित हुए थे, उन्हें तुम लोग स्वयं अपने संयोजित घोड़ों के द्वारा लाकर उनके पिता के पास उनके दूरस्थ घर में पहुँचा गये थे। दिवोदास को भी जो तुम लोगों ने महान् रक्षण प्रदान किया था, वह हम जानते हैं।

पञ्चमीमृचमाह—

युवोरश्विनावपुषेयुवायुजंरथंवाणीयेमतुरस्यशर्ध्यम् ।
आवांपतित्वंसख्यायजग्मुषीयोषावृणीतजेन्यायुवांपती ॥५॥ २०॥

युवोः । अश्विना । वपुषे । युवाऽयुजम् । रथम् । वाणी इति ।
येमतुः । अस्य । शर्ध्यम् । आ । वाम् । पतिऽत्वम् । सख्याय ।
जग्मुषी । योषा । अवृणीत । जेन्या । युवाम् । पती इति ॥५॥२०॥

अश्विनाहेअश्विनौ युवोः युवयोर्वाणीवननीयौप्रशस्यौअश्वौयुवायुजंयुवाभ्यांयुज्यमानं रथंआजिधावनसमयेअस्यरथस्यप्रशर्ध्यंप्राप्यंआदित्याख्यंअवधिभूतंलक्ष्यंवपुषेशोभनार्थंच येमतुः सर्वेभ्योदेवेभ्यःपूर्वंप्रापयामासतुः तदनन्तरंचआजग्मुषीआगतवती जेन्याआजिधावनेनजीयमानायोषासूर्या सख्यायसखित्वाययुवांयुवयोः पतित्वंअवृणीत कथमिति ममयुवामेवपतीभर्तारावितिः॥ युवोः षष्ठीद्विवचनेयोचीतियत्वस्यसर्वविधीनांछन्दसिविकल्पितत्वादभावे शेषेलोपइतिदकारलोपः अतोगुणेइतिपररूपत्वम् । युवायुजम् युवावौद्विवचनेइतिद्व्यर्थाभिधायकस्य युष्मच्छब्दस्यअविभक्तावपिप्रत्ययेनयुवादेशः । शर्ध्यं शृधुप्रसहने अस्माण्ण्यन्तादचोयदितियत् यतोनावइत्याद्युदात्तत्वम् । जग्मुषी गमेर्लिटःक्वसुः उगितश्चेतिङीप् वसोःसंप्रसारणमिति संप्रसारणम् गमहनेत्युपधालोपः । जेन्या जिजये औणादिकएन्यप्रत्ययश्छिलोपश्च ॥ ५ ॥

५. अश्विद्वय, तुम्हारे प्रशंसनीय दोनों घोड़े, तुम्हारे संयोजित रथ को, उसकी सीमा—सूर्य—तक सारे देवों के पहले ही ले गये थे। कुमारी सूर्या ने, इस प्रकार विजित होकर, मैत्री-भाव के कारण, "तुम मेरे पति हो"—कहकर तुम्हें पति बना लिया था।

षष्ठीमृचमाह—

युवंरेभंपरिषूतेरुरुष्यथोहिमेनघर्मंपरितप्तमत्रये ।
युवंशयोरवसंपिप्यथुर्गविप्रदीर्घेणवन्दनस्तार्यायुषा ॥ ६ ॥

युवम् । रेभम् । परिऽसूतेः । उरुष्यथः । हिमेन । घर्मम् । परिऽतप्तम् । अत्रये । युवम् । शयोः । अवसम् । पिप्यथुः । गवि । प्र । दीर्घेण । वन्दनः । तारि । आयुषा ॥ ६ ॥

१ नि० ५, २३, ।

हेअश्विनौ युवंयुवांरेभंऋषिंपरिभूतेः परितःप्रेरकादुपद्रवाद् उपथवनाद्वाउरुष्यथःअरक्षयः उरुष्यतीरक्षाकर्मेतियास्कः। तथा अत्रयेऋषयेपरितप्तंपरितस्वर्सघर्मअसुरैःपीडार्थंप्रक्षिप्तंदीप्यमानंतुषाग्निंहिमेनशीतोदकेनअवारयेथाम् यद्वा हविषामत्त्रयेभक्षयित्रेअग्नयेपरितप्तंसूर्यकिरणैःसंतप्तंघर्मं अहर्नामैतत् अहः हिमेनवृष्ट्युदकेनहविःसंपादकनीहाद्युत्पत्त्यर्थंअवारयेथाम् अपिच शयोः एतत्संज्ञस्यऋषेः गविनिवृत्तप्रसवायांधेनौअवसंरक्षकंपयः युवंयुवांपिप्यथुः प्रवर्धितवन्तौ तथा जीर्णांगोवन्दनऋषिः दीर्घेणायुषाप्रतारिषुवाभ्यांप्रवर्धितः प्रपूर्वस्तिरतिर्वर्धनार्थः॥ अवसं अवतेरौणादिकः असच्। पिप्यथुः प्यायीवृद्धौ व्यत्ययेनपरस्मैपदम् लिड्यङोश्चेतिपीभावः॥६॥

६. तुमने रेभ ऋषि को, चारों ओर के उपद्रव से बचाया था। तुमने अत्रि के लिए हिम-द्वारा अग्नि का निवारण किया था। तुमने शयु की गौ को दुग्ध दिया था। तुमने वन्दन ऋषि को दीर्घ आयु-द्वारा वर्द्धित किया था।

युवंवन्दनंनिर्ऋतंजरण्ययारथंनदस्राकरणासमिन्वथः।
क्षेत्रादाविप्रंजनथोविपन्ययाप्रवामत्रविधतेदंसनाभुवत् ॥ ७ ॥

युवम्। वन्दनम्। निःऽऋतम्। जरण्यया। रथम्। न। दस्रा। करणा। सम्। इन्वथः। क्षेत्रात्। आ। विप्रम्। जनथः। विपन्यया। प्र। वाम्। अत्र। विधते। दंसना। भुवत् ॥७॥

हेदस्राअश्विनौ युवंयुवांजरण्ययाजरयानिर्ऋतंनिःशेषेणप्राप्तंवन्दनंऋषिंकरणाकर्मणांकर्तारौशिल्पकुशलौयुवांसमिन्वथः समधत्तं पुनर्युवानमकुरुतं तत्रदृष्टान्तः—रथंन यथाकश्चिच्छिल्पीजीर्णंरथंपुनरप्यभिनवंकरोतितद्वत् अपिच विपन्ययास्तुत्यागर्भेस्थितेनवामदेवेनस्तुतौसन्तौ क्षेत्रात्तथा आकारःसमुच्चये मातुरुदरलक्षणाज्जन्मस्थानाद् विप्रंमेधाविनंसन्तर्षिं जनथः जनयथश्च तथा वांयुवयोः दंसनारक्षणात्मकं कर्म अत्रास्मैविधतेपरिचरतेयजमानाय प्रभुवत्प्रभवतु रक्षितुंसमर्थंभवतु॥ निर्ऋतं ऋगतौ कर्मणिनिष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम्। जरण्यया जरणक्रियार्हाजरण्याअन्त्यावस्था छन्दसिचेतियः। करणा करोतेरन्येभ्योपिदृश्यतइतियुच्। इन्वथः इविव्याप्तौ इदित्त्वान्नुम् भौवादिकः। जनथः जनीप्रादुर्भावे णिच्युपधावृद्धिः जनीजृष्क्नसुरञ्जइतिमित्त्वान्मितांह्रस्वइतिह्रस्वत्वं छन्दस्युभयथेतिशपआर्धधातुकत्वाद् णेरनिटीतिणिलोपः। विपन्यया पनस्तुतौ अघ्न्यादयश्चेतिभावेयत् व्यत्ययेनान्तोदात्तत्वम्। विधते विधविधाने तौदादिकः लटःशतृ शपुरनुमइतिविभक्तेरुदात्तत्वम्। भुवत् भवतेर्लेटचडागमः बहुलंछन्दसीतिशपोलुक् भूसुवोस्तिङीतिगुणप्रतिषेधः॥ ७॥

७. जैसे पुराने रथ को शिल्पी नया कर देता है; हे निपुण दस्र-द्वय, उसी प्रकार तुमने भी वार्द्धक्य-पीड़ित वन्दन को फिर युवा कर

दिया था। गर्भस्थ वामदेव के तुम्हारी स्तुति करने पर तुमने उन मेधावी को गर्भ से जन्म दिया था। तुम्हारा यह रक्षण-कार्य इस परिचर्या-परायण यजमान के लिए परिणत हो।

अगच्छतंकृपमाणंपरावतिपितुःस्वस्यत्यजसानिबाधितम्।
स्वर्वतीरितऊतीर्युवोरहंचित्राअभीकेअभवन्नभिष्टयः ॥ ८ ॥

अगच्छतम्। कृपमाणम्। पराऽवति। पितुः। स्वस्य। त्यजसा। निऽबाधितम्। स्वःऽवतीः। इतः। ऊतीः। युवोः। अहं। चित्राः। अभीके। अभवन्। अभिष्टयः ॥ ८ ॥

हेअश्विनौ परावतिदूरदेशेसमुद्रमध्येस्वस्यपितुःतुग्रस्यत्यजसात्यागेननिबाधितंपीडितंभुज्युं कृपमाणंयुवांस्तुवन्तंअगच्छतम् युवांरक्षणार्थंगतवन्तौ यस्मादेवंतस्मात् हेअश्विनौ स्वर्वतीः स्वर्वत्यः शोभनगमनयुक्ताः इतः इतोमुखात् चित्राश्चायनीया युवोरहयुवयोरेवऊतीः ऊतयो-रक्षाः अभीकेसमीपे अभिष्टयः सर्वैःप्राणिभिःअभ्येषणीयाअभवन् भवन्ति ॥ कृपमाणं कृप-तिःस्तुतिकर्मा अयंचतुदादिर्द्रष्टव्यः । स्वर्वतीः सुपूर्वाद्र्तेर्भावेक्विप् ततोमतुप् छन्दसीरइतिम-तुपोवत्वम्। अभिष्टयः इषइच्छायाम् भावेक्तिन् शकन्ध्वादित्वात्पररूपत्वम् ॥ ८ ॥

८. भुज्यु के पिता ने उनको छोड़ दिया था। भुज्यु ने दूर देश में पीड़ित होने पर तुम्हारी कृपा के लिए प्रार्थना की। तुम उनके पास गये। फलतः तुम्हारी शोभनीय गति और विचित्र रक्षण-कार्य सब लोग सम्मुख पाने की इच्छा करते हैं।

उतस्यावांमधुमन्मक्षिकारपन्मदेसोमस्यौशिजोहुवन्यति।
युवंदधीचोमनआविवासथोऽथाशिरःप्रतिवामश्व्यंवदत् ॥ ९ ॥

उत। स्या। वाम्। मधुऽमत्। मक्षिका। अरपत्। मदे। सोमस्य। औशिजः। हुवन्यति। युवम्। दधीचः। मनः। आ। विवासथः। अथ। शिरः। प्रति। वाम्। अश्व्यम्। वदत् ॥ ९ ॥

उतअपिच हेअश्विनौ मधुमत्मधुमन्तौ वांयुवांस्यासामक्षिकासरघामधुकामासती अरप-त्अस्तौत् तथा औशिजः उशिजःपुत्रः कक्षीवान्सोमस्यपानेनयुवयोर्मदेहर्षेनिमित्तभूतेसति हुवन्यतियुवामाह्वयति युवंयुवांच तस्यैमक्षिकायैमधुदातुंमधुविद्यार्थिनोसन्तौदधीचआथर्वणस्य कर्मेणनधिषंशुश्रूषयाआविवासथः पर्यचरतम् अथानन्तरंतस्मिन् मोदेसतिअश्व्यंवांयुवाभ्यां नविहितंअश्वस्यसंबन्धियत्शिरःतत्युवांप्रति मधुविद्यांअवदत् सकृपिराश्वेनशिरसाउपदिष्-

वानित्यर्थः॥ मधुमत् सुपांसुलुगितिविभक्तेर्लुक् । अरपत् रपलपव्यक्तायांवाचि । मदे मदीहर्षे मदोनुपसर्गेइतिभावेअप् । हुवन्यति ह्वेञ्स्पर्धायांशब्देच ल्युट्चेतिभावेल्युट् बहुलंछन्दसीतिसंप्रसारणम् । हुवन्यति हवनमात्मनइच्छति सुपआत्मनःक्यच् अन्त्यलोपश्छान्दसः वर्णव्यापत्त्याउत्वम् । अश्व्यं अश्वेभवमश्व्यम् भवेछन्दसीतियत्॥ ९ ॥

९. तुम मधु-युक्त हो। मधु-कामिनी उस मक्षिका ने तुम्हारी स्तुति की है। उशिज्पुत्र मैं कक्षीवान् तुम्हें सोमपान में प्रसन्नता पाने के लिए बुलाता हूँ। तुमने दधीचि ऋषि का मन तृप्त किया था। उनके अश्व-मस्तक ने तुम्हें मधुविद्या प्रदान की थी।

युवंपेदवेपुरुवारमश्विनास्पृधांश्वेतंतरुतारंदुवस्यथः ।
शर्यैरभिद्युंपृतनासुदुष्टरंचर्कृत्यमिन्द्रमिवचर्षणीसहम् ॥१०॥२१॥

युवम् । पेदवे । पुरुऽवारम् । अश्विना । स्पृधाम् । श्वेतम् । तरुतारम् । दुवस्यथः । शर्यैः । अभिऽद्युम् । पृतनासु । दुस्तरम् । चर्कृत्यम् । इन्द्रम्ऽइव । चर्षणिऽसहम् ॥ १० ॥२१ ॥

अश्विनाहेअश्विनौ पेदवेपेदुनाम्नेराज्ञेपुरुवारंबहुभिर्वरणीयंस्पृधांसंग्रामेस्पर्धमानानांशत्रूणांतरुतारंतारकं श्वेतंशुभ्रवर्णमिन्द्राह्वमश्वंयुवंयुवांदुवस्यथः दत्तवन्तौ पुनरपिकीदृशंशर्यैः शीर्यंतइतिशर्याः योद्धारःतैःपृतनासुसंग्रामेषुदुस्तरंतरीतुमशक्यंअभिद्युंअभिगतदीप्तिं चर्कृत्यंसर्वेषुकार्येषुपुनःपुनःप्रयोज्यंइन्द्रमिवचर्षणीसहंइन्द्रोयथाशत्रूनभिभवति एवंशत्रुजनानामभिभवितारमित्यर्थः॥स्पृधां स्पर्धसङ्घर्षे क्विप्चेतिक्विप् चशब्देनदृशिग्रहणानुकर्षणात्तस्यचविध्यन्तरोपसंग्रहार्थत्वादकारस्यलोपेरेफस्यचसंप्रसारणम् सावेकाचइतिविभक्तेरुदात्तत्वम्। तरुतारं तॄप्लवनतरणयोः अस्मात्तृचिग्रसितस्कभितस्तभितेत्यादौनिपातनाद्रूपसिद्धिः । चर्कृत्यम् करोतेर्यङ्लुगन्ताद्विभाषाकृवृषोरितिक्यप् ह्रस्वस्यपिति कृतितुक्॥ १० ॥

१०. अश्विद्वय, तुमने पेदु राजा को बहुजन-वाञ्छित और शत्रु-पराजयी शुभ्रवर्ण अश्व दिया था। वह अश्व युद्ध-रत, दीप्तिमान् युद्ध में अपराजेय, सारे कार्यों में संयोज्य और इन्द्र की तरह मनुष्य-विजयी है।

काराधदितिद्वादशर्चंपञ्चमंसूक्तम्अत्रानुक्रम्यते—काराधद्द्वादशान्त्यादुःस्वप्ननाशिनी आद्यागायत्री द्वितीयाककुप् तृतीयाचतुर्थ्यौ काविराण्नष्टरूप्यौ पञ्चमीतनुशिरा षडक्षरैरुष्णिक् विष्टारबृहती कृतिर्विराड्विसोगायत्र्यइति।अस्यायमर्थः—अनुवृत्तेरौशिजोदैर्घतमसःकक्षीवानृषिः आद्यागायत्रीविद्वांसाविदित्येषाककुप् मध्यमपादस्यद्वादशाक्षरत्वात् मध्यमश्चेत्ककुबितिहिलक्षणम् तृतीया ताविद्वांसेत्येषा काविराट् नवकयोर्मध्येजागतःकाविराडित्युक्तलक्षणोपे-

त्वात् चतुर्थीविपृच्छामीत्येषा नष्टरूपी नववैराजत्रयोदशैर्नष्टरूपेत्युक्तलक्षणोपेतत्वात् प्रयाघो-षस्येषा पञ्चमी तनुशिरा एकादशिनोःपरः षट्कस्तनुशिरेत्युक्तलक्षणोपेतत्वात् श्रुतंगायत्रमित्ये-षाषष्ठी यद्यपि पादसंख्ययाउष्णिङ्नभवति तथाप्यक्षरसंख्ययोष्णिक् युवंह्यास्तमिति सप्तमी विष्टारबृह-ती अष्टिनोर्मध्येदशकौविष्टारबृहतीतिलक्षणोपेतत्वात् ताकस्माद्वस्यष्टमीकृतिः नागनावष्टकश्च-कृतिरित्युक्तलक्षणसद्भावात् दुहीयन्नितिनवमीविराट् दशम्याद्यास्तिस्रोगायत्र्यः आश्विनवैश्वति वैशब्दप्रयोगात्तुह्यादिपरिभाषयाइदमपिसूक्तमाश्विनम् अधःस्वमस्येत्यन्त्ययाद्युःस्वप्नताशनंप्रति पाद्यते अतोयातेनोच्यतेसादेवतेतिन्यायेनतद्देवदेवता सूक्तविनियोगोलैङ्गिकः घर्माभिष्टवेआदि-तोनवर्चोविनियुक्ताः सूत्र्यतेहि—काराधद्धोत्राश्विनावामितिनवाभात्यग्निरिति । काराधद्धोत्रा-श्विनावामितिनवर्चिच्छन्दसइत्यादिकंब्राह्मणमनुसंधेयम् ।

तत्रप्रथमामृचमाह—

काराधद्धोत्राश्विनावांकोवांजोषउभयोः । कथाविधात्यप्रचेताः ॥ १ ॥

का । राधत् । होत्रा । अश्विना । वाम् । कः । वाम् । जोषे । उभयोः । कथा । विधाति । अप्रऽचेताः ॥ १ ॥

अश्विनाहेअश्विनौ वांयुवांकाहोत्रा वाङ्नामैतत् कीदृशीस्तुतिलक्षणावाक् राधत्आराध-यति प्रीतीकरोति युवयोर्माहात्म्यानुरूपास्तुतिर्नास्तीत्यर्थः किञ्च वांयुवयोरुभयोर्जोषेजोषणे सेवनेप्रीणनेवासमर्थःकःस्तोताविद्यते युष्मद्गुणाभिज्ञःकश्चिदपिनास्तीत्यर्थः अप्रचेताःयुवयोर्मा-हात्म्यमजानन्अयंकथाकेनप्रकारेणविधाति युवांपरिचरति युष्मद्विषयंपरिचरणमपिनकर्तुंशक्नोतीत्यर्थः ॥ राधत् राधसाधसंसिद्धौ लेट्यडागमः । जोषे जुषीप्रीतिसेवनयोः भावेघञ् ञित्वादा-द्युदात्तत्वम् । कथा थाहेतौ चच्छन्दसीतिकिंशब्दात्प्रकारवचनेथाप्रत्ययः किमःकइतिकादेशः । विधाति विधविधाने तौदादिकःलेट्याडागमः ।अप्रचेताः प्रकृष्टंचेतोयस्यासौप्रचेताः नञ्समासे-अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ १ ॥

१. अश्विद्वय, कौन-सी स्तुति तुम्हें प्रसन्न कर सकती है? तुम दोनों को कौन परितुष्ट कर सकता है? एक अज्ञानी जीव तुम्हारी कैसे सेवा कर सकता है?

द्वितीयामृचमाह—

विद्वांसाविद्दुरःपृच्छेदविद्वानित्थापरोअचेताः । नूचिन्नुमर्तेअक्रौ ॥ २ ॥

---

१ ऐ० ब्रा० १.२१.१

विद्वांसौ । इत् । दुरः । पृच्छेत् । अविद्वान् । इत्था । अपरः ।
अचेताः । नु । चित् । नु । मर्ते । अक्रौ ॥ २ ॥

इत्था इत्थमनेनपूर्वोक्तप्रकारेणअविद्वान् अज्ञःस्तोताविद्वांसाविव सर्वज्ञावश्विनावेव दुरोहा-
णिस्तुतिपरिचरणयोरुपायभूतान्मार्गान्पृच्छेत् प्रष्टुमर्हतिअपरःअश्विभ्यामन्यःसर्वोप्यचेताः प्र-
ज्ञात् येनराज्ञानेनरहितः तस्मादश्विनावेवपृच्छेदित्यर्थः तौचाक्रौ शत्रुभिरनाक्रान्तौअश्विनौनूचित्
क्षिप्रमेवमर्तेमनुष्येस्तोतरिभक्तानुग्राहकतयासंनिधत्तइतिवाक्यशेषः॥ इत्था थाहेतौचच्छन्दसी-
तिथाप्रत्ययः इदमइश् एतेतौरथोरितिइद्भावः यदि थाहेतौचेत्यत्रइदम्शब्दस्यनानुवृत्तिः तदानीं
इदमस्थमुः एतदन्तात्परस्याःविभक्तेर्व्यत्ययेनसुपांसुलुगितिडादेशः । अक्रौ क्रमुपादविक्षे-
पे अस्मान्नन्युपपदेकृत्यल्युटोबहुलमितिबहुलवचनात्कर्मण्यपिजनसनखनक्रमगमोविडितिविट्
विड्वनोरनुनासिकस्यादित्यात्वम् नञ्समासेअव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ २ ॥

२. अनभिज्ञ प्राणी इसी प्रकार उन दोनों सर्वज्ञों की परिचर्या के उपायभूत मार्ग की जिज्ञासा करता है। अश्विनीकुमारों के सिवा सभी अज्ञ हैं। शत्रु-द्वारा आक्रमण-रहित अश्विद्वय शीघ्र ही मनुष्य पर अनुग्रह करते हैं।

ताविद्वांसाहवामहेवांतानोविद्वांसामन्मवोचेतमद्य ।
प्रार्चद्दयमानोयुवाकुः ॥ ३ ॥

ता । विद्वांसा । हवामहे । वाम् । ता । नः । विद्वांसा । मन्म ।
वोचेतम् । अद्य । प्र । आर्चत् । दयमानः । युवाकुः ॥ ३ ॥

हेअश्विनौविद्वांसासर्वज्ञौ वांवांतौयुवांहवामहे आह्वयामहे तातौआहूतौविद्वांसाअभिज्ञौ
युवांनोस्मभ्यंमन्ममननीयंशस्त्रंस्तोत्रंअद्यास्मिन्कालेवोचेतंब्रुवाणौभूयास्तं सचाहंयुवाकुर्युवां
कामयमानःस्तुत्यासंयोजयन्वादयमानःयुवाभ्यांहविःप्रयच्छन्प्रार्चत् प्रार्चंप्रकर्षेणस्तौमि ॥ ता
सुपांसुलुगितिविभक्तेराकारः । वोचेतम् ब्रूञ्व्यक्तायांवाचि ब्रुवोवचिः लिङ्याशिष्यङ् वचउमि-
त्युमागमः । आर्चत् अर्चपूजायाम् भौवादिकः तिङांतिङोभवन्तीतिमिपस्तिबादेशः । दयमानः
दयदानगतिरक्षणहिंसादानेषु शपःपित्त्वादनुदात्तत्वम् शानचोलसार्वधातुकस्वरेणधातुस्वरः
शिष्यते । युवाकुः युवांकामयतइतियुवाकुः मितद्र्वादिभ्यउपसंख्यानमितिडुप्रत्ययः अविभक्ता-
वपिव्यत्ययेनयुवावौद्विवचनेइतियुवादेशःआत्वंच यद्वा युमिश्रणे औणादिकःकाकुप्रत्ययः॥३॥

३. सर्वज्ञद्वय, हम तुम्हारा आह्वान करते हैं। तुम अभिज्ञ हो, हमें मननीय स्तोत्र बताओ। वही मैं तुम्हारी कामना करके, हव्य-प्रदान करते हुए, स्तुति करता हूँ।

चतुर्थीमृचमाह—

विपृ॑च्छामिपाक्या॒३॑नदे॒वान्वष॑ट्कृतस्याद्भु॒तस्य॑दस्रा ।
पा॒तंच॒सह्य॑सोयु॒वंच॒रभ्य॑सोनः ॥ ४ ॥

वि । पृ॒च्छा॒मि॒ । पाक्या॑ । न । दे॒वान् । वष॑ट्ऽकृतस्य । अ॒द्भु॒तस्य॑ । दस्रा॒ । पा॒तम् । च॒ । सह्य॑सः । यु॒वम् । च॒ । रभ्य॑सः । नः॒ ॥ ४ ॥

हेअश्विनौ युवांविपृच्छामिविशेषेणप्रष्टुमिच्छामि पाक्यान पक्व्यप्रज्ञानान् परिपक्वमवीनन्यान्देवान् नपृच्छामि किन्तु युवामेवसर्वंशौपृच्छामीत्यर्थः हेदस्रादर्शनीयौतौ युवंयुवांवषट्कृतस्यवषट्कारेणाग्नौहुतस्यअद्भुतस्यआश्चर्यभूतस्यमहतः सह्यसः अतिशयेनबलवतः बलोत्पादकस्यसोमस्यस्वांशलक्षणमेकदेशंपातंच नोस्मांश्चरभ्यसः अतिशयेनरभस्विनः प्रौढोद्यमान् कुरुतम् ॥ पाक्या पचेर्ण्यंहलोर्ण्यत् चजोःकुघिण्ण्यतोरितिकुत्वम् तित्स्वरः सुपांसुलुगितिविभक्तेर्डादेशः । वषट्कृतस्य वषट्शब्दस्योर्यादित्वेनगतित्वाद्गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम्। पातं पापाने बहुलंछन्दसीतिशपोलुक् । सह्यसः सहतेअभिभवत्यनेनेतिसहोबलम् असुन् तदस्यास्तीतिसहस्वी मत्वर्थीयोविनिः ततआतिशायनिकईयसुन् विन्मतोर्लुक् छान्दसईकारलोपः । रभ्यसः रभराभस्ये राभस्यंकार्योपक्रमः पूर्ववत्प्रक्रियाज्ञेया ॥ ४ ॥

४. मैं तुम्हें ही जिज्ञासा करता हूँ; अपनी पक्व बुद्धि से जिज्ञासा नहीं करता। दस्रद्वय, "वषट्" शब्द के साथ अग्नि में प्रदत्त, अद्भुत और पुष्टिकर सोम-रस पान करो। हमें प्रौढ़ बल प्रदान करो।

पञ्चमीमृचमाह—

प्रयाघोषे॒भृग॑वाणे॒नशोभे॒ययां॒वा॒चायज॑तिपज्रि॒योवा॑म् ।
प्रैष॒युर्नवि॒द्वान् ॥ ५ ॥ २२ ॥

प्र । या । घोषे॑ । भृग॑वाणे । न । शोभे॑ । यया॑ । वा॒चा । यज॑ति । प॒ज्रि॒यः । वा॒म् । प्र । इ॒ष॒ऽयुः । न । वि॒द्वान् ॥ ५ ॥ २२॥

हेअश्विनौ प्रभवतिसमर्थाभवतिसावाक् यावाक् युष्मत्स्तुतिरूपा घोषेघोषाख्यायाःपुत्रे सुहस्त्याख्येऋषौ भृगवाणेन भृगौच शोभेशोभते ययावस्तुतिलक्षणयावाचा पज्रियः पज्राअङ्गिरसः तेषांकुलोत्पन्नः कक्षीवान् युवांयजतिपूजयतिसौवि सापिशोभवत्वित्यर्थः इषयुर्न इषमन्नंआत्मनःकामयमानश्चविद्वान् स्तुत्यभिज्ञः कक्षीवानृषिः प्रभवतु युष्मदनुग्रहात् संपूर्णकामोभ-

व्रत्वित्यर्थः ॥ घोषे घोषानामकाचिद्ब्रह्मवादिनीकक्षीवतःपुत्री अत्रोपचारात्तद्वाचकंमातिपदिकं पुत्रेवर्तते । भृगवाणे चिरन्तनोभृगुरिवाचरति सर्वमातिपदिकेभ्यइतिक्विप् धातुसंज्ञायांव्यत्ययेन लटःशानच् शबादि आगमानुशासनस्यानित्यत्वान्मुगभावः वृषादिः । शोभे शुभदीप्तौ लोपस्त-आत्मनेपदेष्वितितलोपः । इषयुः इषगतौ इष्यतिगच्छतीतिइषमन्नं इगुपधलक्षणःकः यद्वा इष-इच्छायाम् इष्यतेसर्वैःप्राणिभिरितिइषमन्नम् व्यत्ययेनकर्मणिकर्तृप्रत्ययः प्रशब्देनसंहितायां माद्भूहोढोढ्येषैष्येषुवृद्धिर्वक्तव्येतिवृद्धिः ॥ ५ ॥

५. तुम्हारी जो स्तुति घोषापुत्र सुहस्ति और भृगु-द्वारा उच्चारित होकर सुशोभित हुई थी, उसी स्तुति-द्वारा वज्रवंशीयऋषि में कक्षीवान् तुम्हारी अर्चना करता हूँ। इसलिए स्तुतिज्ञ में अन्न-गामभा में सफल यत्न बनूं।

श्रुतंगा॑य॒त्रंतक॑वानस्या॒हंचि॒द्धिरि॒रेभा॑श्विनावाम् ।
आक्षीशु॑भस्पती॒दन् ॥ ६ ॥

श्रु॒तम् । गा॒य॒त्रम् । तक॑वानस्य । अ॒हम् । चि॒त् । हि । रि॒रेभ॑ ।
अ॒श्वि॒ना॒ । वा॒म् । आ । अ॒क्षी इति॑ । शु॒भः॒ । प॒ती॒ इति॑ । दन् ॥६॥

हेअश्विनौ गायत्रंगातव्यंगायत्रीयुक्तंगायत्रसाम्नानिष्पाद्यंनिष्पन्नंवास्तोत्रं तकवानस्यस्खलद्गते-रन्धस्यऋज्राश्वस्यसंबन्धिश्रुतं शृणुतम् अहंचित् अहमिववांयुवांसहिरिरेभस्तुतवान् किंकुर्वन् हेशुभस्पतीशोभनस्यकर्मणःपालयितारौ जलस्यवास्वामिनौ अक्षीयुवाभ्यांदत्तेचक्षुषीआदनआ-ददानः तस्मैइवमह्यमपिअभिमतफलंप्रयच्छतमितिभावः ॥ श्रुतम् श्रुश्रवणे लङि बहुलंछन्द-सीतिविकरणस्यलुक् । तकवानस्य तकगतौ अत्रगतिसामान्यवाचिनापिविशेषोमन्दगतिर्लक्ष्यते औणादिकउमत्ययः । भृगवाणस्येतिवत्क्रियोन्नेया । रिरेभ रेभृशब्दे । अक्षी ईचद्विवचनेइत्य-क्षिशब्दस्यईकारान्तादेशः सचोदात्तः । शुभस्पती सुनामन्त्रितेपराङ्गवत्स्वरेइतिषष्ठ्यन्तस्यपराङ्ग-वद्भावात् पदद्वयसमुदायस्याष्टमिकामन्त्रितानुदात्तत्वम् । दन् आङ्पूर्वाद्ददातेराङोदोनास्यविह-रणेइत्यात्मनेपदम् व्यत्ययेनशतृ जुहोत्यादित्वाच्छ्लुः द्विर्वचनप्रकरणे छन्दसिवेतिवक्तव्यमितिव-चनात् द्विर्वचनाभावः छन्दस्युभयथेत्युभयथाश्रयणात् शतुःसार्वधातुकत्वेनङित्त्वम् आर्धधा-तुकत्वाच्चाश्नोर्लोपइतिचेत्याकारलोपः ॥ ६ ॥

६. स्खलद्गति या गति-रहित ऋषि अर्थात् अन्ध ऋज्राश्व की स्तुति सुनो। शोभनीय कर्मों के प्रतिपालक, उसने मेरी तरह स्तुति करके चक्षुद्वय प्राप्त किया था।[1] फलतः मेरा मनोरथ भी पूर्ण करो।

---

[1] ऋ० सं० १. ८५ २९.।

सप्तमीमृचमाह–

युवंह्यास्तंमहोरन्युवंवायन्निरततंसतम् ।
तानोवसूसुगोपास्यातंपातंनोवृकादघायोः ॥ ७ ॥

युवम् । हि । आस्तम् । महः । रन् । युवम् । वा । यत् ।
निःऽअततंसतम् । ता । नः । वसू इति । सुऽगोपा । स्यातम् । पातम् ।
नः । वृकात् । अघयोः ॥ ७ ॥

हेअश्विनौ महोमहतोधनस्यरन्रातारौदातारौयुवंयुवांकस्मैनास्तम्यद्धनिरततंसतंधना- निनिरगमयतम् रक्षकौविनाशकावपियुवामेवेत्यर्थः हेवसूवासयितारावश्विनौ ता तादृशौयुवं युवांनोस्माकंसुगोपा सुष्ठुगोपायितारौरक्षितारौस्यातंभवतम् अपिचनोस्मानघायोः अघंपाप- रूपंनोस्माकमिच्छतोवृकात् स्तेनात्पातंरक्षतम् ॥ महः महतश्छान्दसोऽच्छब्दलोपः । रन् दत्तइतिवत्क्रियोक्तेपा व्यत्ययेनैकवचनम् । निरततंसतम् तसिअलङ्कारे असाणण्यन्ताल्लु- ङि णिश्रिद्रुस्रुभ्यइतिचङ् द्विर्वचनादिच गुरुसंज्ञयालघुसंज्ञायाःबाधितत्वात् सन्वद्भावाभावः। सुगोपा सुपांसुलुगितिविभक्तेर्लुक् । अघायोः अघंपरेषामिच्छति छन्दसिपरेच्छायामितिक्यच् अश्वाघस्यादित्यात्वम् क्याच्छन्दसीत्युप्रत्ययः ॥ ७ ॥

७. तुमने महान् धनदान किया है तथा उसे फिर लुप्त कर डाला है। गृह-दातृद्वय, तुम हमारे रक्षक बनो। पापी वृक या तस्कर से हमारी रक्षा करो।

अष्टमीमृचमाह–

माकस्मैधातमभ्यमित्रिणेनोमाकुत्रानोगृहेभ्योधेनवोगुः ।
स्तनाभुजोअशिश्वीः ॥ ८ ॥

मा । कस्मै । धातम् । अभि । अमित्रिणे । नः । मा । अकुत्र ।
नः । गृहेभ्यः । धेनवः । गुः । स्तनऽभुजः । अशिश्वीः ॥ ८ ॥

हेअश्विनौ अमित्रिणेअमित्रंमित्ररहितंयंतस्मैकस्मैचिदपिशत्रवेनोस्मानभिधातम् आ- भिमुख्येनमावस्थापयतम् अपिचनोस्माकंगृहेभ्यःप्रकाशात् स्तनाभुजः स्तनैर्वत्सान्मनुष्यांश्चपा-

---

१ ऋ० सं० १. ८. २३.।

त्यन्त्योधेनवोगावः अशिश्वीः शिशुनावत्सेनविरहिताः अस्मदीयेगृहेअशयानावासत्यः अकुत्रचित् अस्माभिरगम्येप्रदेशेमागुः मागच्छन्तु॥ धातम् धात्रोमाङिलुङि गातिस्थेतिसिचोलुक् नमाङ्योगेइत्यडभावः। अकुत्र परादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वम्। गुः इण्गतौ इणोगालुङीतिगादेशः गातिस्थेतिसिचोलुक् आतइतिझेर्जुस्। स्तनाभुजः भुजपालनाभ्यवहारयोः स्तनैर्भुंजन्तिपालयन्तीतिस्तनाभुजः क्विप् अन्येषामपिदृश्यतइतिसांहितिकोदीर्घः। अशिश्वीः सख्यशिश्वीतिभाषायामितिछन्दस्यपिव्यत्ययेननिपातनंद्रष्टव्यम् यद्वा शिशुरस्याःस्तीतिशिश्वी छन्दसीवनिपावितिमत्वर्थीयईकारः नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम् वाछन्दसीतिपूर्वसवर्णदीर्घः अथवा शीङ्स्वप्ने उत्सर्गश्छन्दसीतिकिप्रत्ययः द्विर्वचनह्रस्वत्वे एरनेकाचइतियण् छान्दसोवकारः पूर्ववत्समासस्वरौ॥८॥

८. किसी शत्रु के सामने हमें नहीं अर्पण करना। हमारे घर से दुग्धवती गायें, बछड़ों से अलग होकर, किसी अगम स्थान को न चली जायें।

दुहीयन्मित्रधितयेयुवाकुरायेचनोमिमीतंवाजवत्यै।
इषेचनोमिमीतंधेनुमत्यै॥ ९॥

दुहीयन्। मित्रऽधितये। युवाकु। राये। च। नः। मिमीतम्।
वाजऽवत्यै। इषे। च। नः। मिमीतम्। धेनुऽमत्यै॥ ९॥

हेअश्विनौ युवाकुयुवांकामयमानाः स्तुतिभिर्योजयितारः संयोजयितारोवास्तोतारः मित्रधितयेमित्राणांबन्धुजनानांधारणार्थं दुहीयन्युष्मत्सकाशाद्धनानिदुहन्तिप्राप्नुवन्ति अतोनोस्मानपिवाजवत्यैवाजयुक्तायचरायेधनायमिमीतंकुरुतम् तथा धेनुमत्यैधेनुभिर्युक्तायेषेन्नायचनोस्मान् मिमीतंकुरुतम् अस्मभ्यंस्तोतृभ्यः बलयुक्तंधनंगोयुक्तमन्नंचप्रयच्छतमित्यर्थः॥ दुहीयन् दुहप्रपूरणे दुहिर्दोहः इगुपधात्किदितिभावेइप्रत्ययः दुहिमात्मनइच्छतिदुहीयति सुपआत्मनःक्यच् दुहीयतेर्लेट्यडागमः इतश्चलोपइतीकारलोपः यद्वा दुहेर्लिङिझस्यरन्निति व्यत्ययेनरन्नादेशाभावेरूपमेतत् छान्दसोन्त्यलोपः यद्वा रन्नादेशेकृतेछान्दसोरेफस्ययकारः अतएवप्नुतस्यनवग्रहणाद्यावगृह्णन्ति। युवाकु सुपांसुलुगितिजसोलुक्। मिमीतम् माङ्मानेशब्देच जौहोत्यादिकः व्यत्ययेनपरस्मैपदंभृञामिदित्यभ्यासस्येत्वम् चवायोगेप्रथमेतिनिघातप्रतिषेधः॥ ९॥

९. जो तुम्हें उद्देश्य कर स्तुति करता है, वह मित्रों की रक्षा के लिए धन पाता है। हमें अन्नयुक्त धन प्रदान करो तथा धेनु-युक्त अन्न दो।

दशमीमृचमाह—

अश्विनोरसनंरथमनश्वंवाजिनीवतोः । तेनाहंभूरिचाकन ॥ १० ॥

अश्विनोः । असनम् । रथम् । अनश्वम् । वाजिनीऽवतोः ।
तेन । अहम् । भूरि । चाकन ॥ १० ॥

वाजिनीवतोः वाजोन्नंबलंवातद्वक्रियावतोरश्विनोः अनश्वंअश्वरहितंअश्वराहित्ये-ऽपिसामर्थ्यातिशयेनगच्छन्तं रथंअसनं अहंस्तोतासमभजम् तेनचरथेनभूरिप्रभूतंश्रेयश्चाकन कामये ॥ असनम् वनषणसंभक्तौ लङ् । चाकन कनोदीप्तिकान्तिगतिषु छान्दसोलिट् णलुत्तमो-वेतिणित्वस्यविकल्पनाद्वृद्ध्यभावः तुजादित्वादभ्यासदीर्घत्वम् ॥ १० ॥

१०. मैंने अन्नदाता अश्विद्वय का अश्व-रहित, परन्तु गमन-समर्थ, रथ प्राप्त किया है। उसके द्वारा मैं अनेक प्रकार के लाभ प्राप्त करने की इच्छा करता हूँ। एकादशीमृचमाह—

अयंसमहमातनूह्यातेजनाँअनु । सोमपेयंसुखोरथः ॥ ११ ॥

अयम् । समह । मा । तनु । ऊह्याते । जनान् । अनु । सोमऽपेयम् । सुऽखः । रथः ॥ ११ ॥

हेसमह धनेनसहितहेरथ अयंपुरोवर्तीत्वम् मामांतनुविस्तारय पुत्रपौत्रधनादिभिःसमृद्धंकुरु यद्वा अयंअयमानं त्वांमागच्छन्तंमामितियोज्यं सुखःसुखःशोभनावकाशःसुखहेतुर्वारथःजनान् अनुस्तोतृजनेषुसोमपेयं सोमपानंप्रतिऊह्यतेअश्विभ्यांनीयते अतोश्विभ्यांमह्यंदत्तस्त्वं रथएवददातीतिरथंसंबोध्यप्रार्थना ॥ अयं इदोयपुंसि यद्वाअयपयगतौ पचाद्यच् । समह मघमितिधननाम मघेनसहवर्ततइतिसमघः छान्दसोवर्णविकारः यद्वा महपूजायाम् महयतिपूजयतीतिमहोधनम् पचाद्यच् । ऊह्याते वहप्रापणे कर्मणिलेट्याडागमः यजादित्वात्संप्रसारणम् तस्यछान्दसोदीर्घः अदुपदेशाल्लसार्वधातुकानुदात्तत्वेयकस्वरःशिष्यते । सोमपेयम् पापाने अचोयदितिभावेयत् ईद्यतीतिईकारादेशः यतोनावइत्याद्युदात्तत्वम् कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ ११ ॥

११. धन-पूर्ण रथ, मैं सामने ही हूँ। मुझे समृद्ध करो। उस सुखकर रथ को अश्विद्वय, स्तोताओं के सोम-पान स्थान पर ले जाते हैं।

द्वादशीमृचमाह—

अधस्वप्नस्यनिर्विदेभुञ्जतश्चरेवतः । उभाताबस्रिनश्यतः॥१२॥२२॥

अर्ध। स्वमस्य। निः। विदे। अर्भुञ्जतः। च। रेवतः। उभा।
ता। बस्नि। नश्यतः॥ १२॥ २३॥

अथइदानींप्रभातसमये स्वमस्यस्वमंप्रविनिर्विदेनिर्विण्णोस्मि तथाअभुञ्जतः परान् रक्षतः रेवतोधनवतश्च पुरुषस्यएवंभूतंपुरुषंमत्यपिनिर्विण्णोस्मि यतःताउभाताबुभौ बस्निक्षिप्रंनश्यतोनाशंप्राप्नुवतः स्वमदृष्टःपदार्थः मातर्नोपलभ्यते कदर्यस्येवधनंअभुक्तंअदत्तंसत्क्षिप्रमेवनश्यति तदुभयविषयोनिर्वेदोमांबाधतइत्यर्थः अत्रस्वमभानस्यअसत्यमविपादनेनदुःस्वमस्यापिअसत्त्वावः प्रतिपादितः अतएवदुःस्वमनाशिनीतियुच्यते। स्वमस्य क्रियाग्रहणंकर्तव्यमितिकर्मणःसंप्रदानत्वाच्चतुर्थ्यर्थेषष्ठी। विदे विदॢलाभे आगमानुशासनस्यानित्यत्वान्नुमभावः। रेवतः रयिशब्दान्मतुप् रयेर्मतौबहुलमितिसंप्रसारणम् छन्दसीरइतिमतुपोवत्वम् रेशब्दाच्चमतुपउदात्तत्वमितितस्योदात्तत्वम्। उभा ता उभयत्रसुपांसुलुगित्याकारः॥ १२॥

१२. मैं प्रातःकाल के स्वप्न से घृणा करता हूँ और जो धनी दूसरे का प्रतिपालन नहीं करता, उसे भी घृणित समझता हूँ। दोनों शीघ्र नाश को प्राप्त होते हैं।

॥ इतिप्रथमस्याष्टमेत्रयोविंशोवर्गः॥२३॥

॥ इतिदाशतय्याःप्रथमेमण्डलेसप्तदशोनुवाकः॥१७॥

अष्टादशेनुवाकेषट्सूक्तानि तत्रकदित्थेतिविपञ्चदशर्चंप्रथमंसूक्तम् अत्रानुक्रम्यते—कदित्थापञ्चोनावैश्वदेवंवेति। अनुवर्तमानःकक्षीवानृषिः अनादेशपरिभाषयात्रिष्टुप् विश्वेदेवाइन्द्रोवादेवता विनियोगोलैङ्गिकः।

तत्रप्रथमामृचमाह—

कदि॒त्था नॄँः पात्रं॑ देवय॒तां श्रव॒द्गिरो॒ अङ्गि॑रसां तु॒रण्य॑न्।
प्र यदान॒ड्विश॒ आ ह॒र्म्यस्यो॒रु क्रं॑सते अध्व॒रे यज॑त्रः॥ १॥

कत्। इ॒त्था। नॄन्। पात्र॑म्। दे॒व॒ऽय॒ताम्। श्रव॑त्। गिरः॑।
अङ्गि॑रसाम्। तु॒रण्य॑न्। प्र। यत्। आन॑ट्। विशः॑। आ। ह॒र्म्यस्य॑।
उ॒रु। क्रं॒स॒ते॒। अ॒ध्व॒रे। यज॑त्रः॥ १॥

नृंःपात्रं नृन्पाता नृणां स्तोतॄणां पुरुषाणां रक्षणशील इन्द्रः तुरण्यन् गोरूपं धनं प्रेरयन् देवयतां देवं द्योतमानं दानादिगुणयुक्तं वा इन्द्रं आत्मन इच्छतां अङ्गिरसां ऋषीणां अस्माकं इत्थाइत्थं प्रयुज्यमाना गिरः स्तुतीः कत् कदा कस्मिन्काले श्रवत् शृणुयात् यद्यदा स इन्द्रः हर्म्यस्य हर्म्योपलक्षितेन गृहेण युक्तस्य यजमानस्य संबन्धिनो विशः ऋत्विग्लक्षणान्मनुष्यान् आभिमुख्येन आनट् प्राप्नोति तदानीं अध्वरे अस्मदीये यज्ञे यजत्रो यष्टव्यः सन् उरु बहुलं क्रंसते क्रमते स्वयमेवोत्सहत इत्यर्थः॥ कत् कदा। अन्यतोऽपि दृश्यत इति छान्दसः। नृंःपात्रं नृन्पे इति संहितायां नकारस्य रुत्वम् अत्रानुनासिकः पूर्वस्य तु वेत्युकारः सानुनासिकः। पात्रम् पा रक्षणे सर्वधातुभ्यष्ट्रन् व्यत्ययेन सोरमादेशः संज्ञापूर्वकस्य विधेरनित्यत्वाद्गुणाभावेयण्। देवयतां सुप आत्मनः क्यच् क्याच्छन्दसीति उः शतृ शतुरनुम इति विभक्तेरुदात्तत्वम्। श्रवत् श्रु श्रवणे लेट्यडागमः बहुलं छन्दसीति विकरणस्य लुक्। तुरण्यन् तुरण त्वरायाम् कण्ड्वादिः। आनट् अश्नोतेर्लङि व्यत्ययेन परस्मैपदम् श्नोऽभावेऽव्यत्ययेन शप् विकरणः व्रश्चादिषत्वे जश्त्वम् आडागमः। हर्म्यस्य हर्म्यशब्दाद्दर्शआदित्वाद्यत्। क्रंसते क्रमु पादविक्षेपे वृत्तिसर्गतायनेषु क्रम इत्यात्मनेपदम् लेट्यडागमः सिब्बहुलं लेटीति सिप्। यजत्रः अमिनक्षीत्यादिना यजेरत्रन्प्रत्ययः॥ १॥

१. मनुष्यों के पालन-कर्त्ता और गौ-रूप धन के दाता इन्द्र कब देवाभिलाषी अङ्गिरा लोगों की स्तुति सुनेंगे? जिस समय वे गृहपति यजमान के ऋत्विकों को सामने देखते हैं, उस समय वे यज्ञ में यजनीय होकर प्रभूत उत्साह से पूर्ण होते हैं।

स्तम्भीद्ध द्यां स धरुणं प्रुषायदृभुर्वाजाय द्रविणं नरो गोः।
अनु स्वजां महिषश्चक्षत व्रां मेनामश्वस्य परि मातरं गोः ॥ २ ॥

स्तम्भीत्। ह। द्याम्। सः। धरुणम्। प्रुषायत्। ऋभुः। वाजाय। द्रविणम्। नरः। गोः। अनु। स्वऽजाम्। महिषः। चक्षत। व्राम्। मेनाम्। अश्वस्य। परि। मातरम्। गोः॥ २॥

स इन्द्रः द्यां द्युलोकं स्तम्भीत् स्तभ्नाति स्म ह खलु यथा गोः पणिभिरपहृतस्य गोसमूहस्य वज्रस्योदकस्य किरणसमूहस्य वा नरो नेता स इन्द्रः ऋभुः उरु भासमानः विस्तीर्णभासमानः सन् द्रविणं सर्वैः प्राणिभिः अभिद्रवणीयं धरुणं उदकनामैतत् सर्वस्य धारकं वृष्ट्युदकं वाजाय अन्नार्थं बलार्थं वा प्रुषायत् प्रुष्णाति सिञ्चति प्रवर्षयतीत्यर्थः अपि च महिषः महन्नामैतत् महान् सर्वरूपी इन्द्रः स्वजां स्वः प्रकाशात् उत्पन्नां व्रां वृणोति तिरस्करोति सर्वमाच्छादयतीति व्रा रात्रिः यद्वा प्रकाशेन वृणोति तिमिरमिति व्रा उषाः ताम् अनु चक्षत चष्टिः पश्यतिकर्मा अनुपश्यात् स्वप्रकाशेन स्वयं मेनाम् अश्वस्य अपि स्वगत्या निष्पादिता-

धारा मेरुवत्सद्यः माद्रुहेतीत्यर्थः अपि चेदमपरमाश्चर्यम् यदयमश्वस्य मेनां स्त्रीनामैतत् स्त्रियं वडवां गोर्मातरं जननीं परि वि परीत्येवं विपरीतामकरोत् कदाचिदिन्द्रो वडवायामश्वायां गामुत्पादयामास तदत्र प्रतिपाद्यते मन्त्रान्तरे चेन्द्रवाक्यरूपे एतद्विस्पष्टमवगम्यते॥ धरुणं धारेर्णिलुक् चेत्युनप्रत्ययः। पुषायत् पुष पुष्प स्नेहनसेचनपूरणेषु क्रैयादिकः लेटयडागमः छन्दसि शायजपीत्यत्रापि श्नाप्रत्यय-स्य शायजादेशः। नरः नृनये बहुलवचनात्ऋकारोरविविकर्षयंप। ववृत वर्तिरुपसर्गकार्यान्वा-पि छान्दसो लङ् बहुलं छन्दसीति विकरणस्य लुगभावः ॥ २ ॥

२. उन्होंने स्थिर-रूप से आकाश को धारण किया है। वे असुरों द्वारा अपहृत गायों के नेता हैं। वे विस्तीर्ण प्रभा से युक्त होकर सारे प्राणियों के द्वारा सेवनीय हैं और खाद्य के लिए जीवन-धारक वृष्टि-जल प्रेरित करते हैं। महान् सूर्यरूप इन्द्र, अपनी पुत्री उषा के अनन्तर उदित होते हैं। उन्होंने अश्व की स्त्री को गौ की माता किया था अथवा घोड़ी से गाय उत्पन्न की थी।

नक्षद्धवमरुणीः पूर्व्यं राट् तुरो विशामङ्गिरसामनु द्यून्।
नक्षद्वज्रं नियुतं तस्तम्भद्द्यां चतुष्पदे नर्याय द्विपादे ॥ ३ ॥

नक्षत्। हवम्। अरुणीः। पूर्व्यम्। राट्। तुरः। विशाम्।
अङ्गिरसाम्। अनु। द्यून्। नक्षत्। वज्रम्। निऽयुतम्। तस्तम्भत्।
द्याम्। चतुःऽपदे। नर्याय। द्विऽपादे ॥ ३ ॥

अरुणीः अरुणवर्णा आरोचमाना उषसः राट् राजमानः प्रकाशयन् सूर्यात्मा इन्द्रः पूर्व्यं पूर्वैः ऋषिभिः प्रयुक्तम् हवम् इदानीं अस्माभिः क्रियमाणं आह्वानं नक्षत् नक्षतु शृणोतु कीदृशः अनु द्यून् अनुदिवसं विशां मनुष्याणां अङ्गिरसाम् ऋषीणां स्तोतॄणां तुरः धनस्य प्रेरयिता अपि च स इन्द्रः व-ज्रं स्वकीयं आयुधं नियुतं नियुत्वन्त्येन सह नितरां युक्तं नक्षत् अकरोत् तथा द्यां द्युलोकं तस्तम्भत् अस्तं-भयच्च यथा अधो न पतति तथा अकरोदित्यर्थः किमर्थं नर्याय नृभ्यो हिताय चतुष्पदे गवाश्वा-दये द्विपादे मनुष्याय च एतदुभयार्थमित्यर्थः ॥ नक्षत् नक्षगतौ लेटयडागमः। पूर्व्यं पूर्वैः कृत-मिनियौ चेति यप्रत्ययः। राट् राजृ दीप्तौ अस्मादन्तर्भावितण्यर्थात् क्विप्। तुरः तुर त्वरणे इगुप-धलक्षणः कः। वज्रं वज्रमूत्र्यक्षतनूकरणे बहुलं छन्दस्यमाङ्योगेपीत्यडभावः। तस्तंभत् स्तभि-स्तुम्भिस्कम्भिविभितिषन्धे अस्माण्ण्यन्ताल्लुङि चङि रूपम् चङ्यन्यतरस्यामिति उपोत्तमस्योदात्तत्वम्। पूर्वपदस्यासमानवाक्यस्थत्वान्निघाताभावः। चतुष्पदे चत्वारः पादा अस्य संख्यासुपूर्वस्येति पाद-शब्दस्यान्त्यलोपः समासान्तः चतुर्थ्येकवचने भसंज्ञायां पादः पदिति पद्भावः। द्विपादे पूर्ववत्समासा-न्तः संख्यापूर्वस्य अयस्मयादित्वेन पदत्वात् भसंज्ञाया अभावे पद्भावाभावः द्वित्रिभ्यां पाद्दन्मूर्धस्विति बहु-व्रीहावुत्तरपदान्तोदात्तत्वम् ॥ ३ ॥

३. वे अरुणवर्ण उषा को रंजित करके हमारा उच्चारित पुरातन मंत्र सुनें। वे प्रतिदिन अङ्गिरा गोत्रवालों को अन्न देते हैं। उन्होंने हननशील वज्र बनाया है। वे मनुष्यों, चतुष्पदों और द्विपदों के हित के लिए, वृढ़रूप से, आकाश धारण करते हैं।

अस्यमदेस्वर्यंदाऋतायापीवृतमुस्रियाणामनीकम्।
यध्दंप्रसर्गेत्रिककुम्निवर्तदपद्रुहोमानुषस्यदुरोवः ॥ ४ ॥

अस्य। मदे। स्वर्यम्। दाः। ऋताय। अपिऽवृतम्। उस्रियाणाम्।
अनीकम्। यत्। ह। प्रऽसर्गे। त्रिऽककुप्। निऽवर्तत्। अप। द्रुहः।
मानुषस्य। दुरः। वरिति वः ॥ ४ ॥

हेइन्द्र अस्यसोमस्यपानेनमदेहर्षेसतिऋताययज्ञार्थंस्वर्यंस्तुत्यंअपीवृतंपणिभिर्गुहायांनिगूढंउस्रियाणांगवामनीकंसंघं दाः अङ्गिरोभ्योदत्तवानसि उत्तरोर्धर्चःपरोक्षकृतः यत् यदाखलु प्रसर्गेयुद्धेत्रिककुप्त्रिषुलोकेषुउच्छ्रितइन्द्रः निवर्तत् निवरांवर्तेत तदानींसइन्द्रोद्रुहोद्रोग्धुः मानुषस्यमनोःसंबन्धिनोसुरस्यपणेःसंबन्धीनिदुरोद्वाराणिगवामनिर्गमनायपिहितानिअपवः अपवृणोति उद्घाटयति ॥ स्वर्यम् स्वृशब्दोपतापयोः ऋहलोर्ण्यत् संज्ञापूर्वकस्यविधेरनित्यत्वाद्वृद्ध्यभावः। अपीवृतम् अपिपूर्वाद्वृणोतेःकर्मणिनिष्ठा निपातस्यचेतिपूर्वपदस्यदीर्घः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम्। प्रसर्गे प्रकर्षेणसृज्यन्तेविमुच्यन्तेऽस्मिन्निषवइतिप्रसर्गः अधिकरणेघञ् कृदुत्तरपदप्रकृतिस्वरत्वम् छान्दसस्थाथादिस्वराभावः। निवर्तत् वृतुवर्तने लेटघडागमः व्यत्ययेनपरस्मैपदम्। वः वृञ्वरणे छान्दसोलुङिमन्त्रेघसेतिच्लेर्लुक् गुणेहल्ङ्यादिलोपः ॥४॥

४. इस सोमपान से हृष्ट होकर तुमने स्तुति-पात्र और पणिद्वारा छिपाई हुई गौओं को यज्ञार्थ दान किया था। जिस समय त्रिलोक-श्रेष्ठ इन्द्र युद्ध में रत होते हैं, उस समय वे मनुष्यों के क्लेश-दाता पणि असुर का द्वार, गौओं के निकलने के लिए, खोल देते हैं।

तुभ्यंपयोयत्पितरावनीतांराधःसुरेतस्तुरणेभुरण्यू।
शुचियत्तेरेक्णआयजन्तसबर्दुघायाःपयउस्रियायाः॥ ५ ॥२४॥

तुभ्यम्। पयः। यत्। पितरौ। अनीताम्। राधः। सुऽरेतः। तुरणे।
भुरण्यू इति। शुचि। यत्। ते। रेक्णः। आ। अयजन्त।
सबःऽदुघायाः। पयः। उस्रियायाः ॥ ५ ॥ २४ ॥

हेइन्द्र तुरणेक्षिप्रकारिणे तुभ्यंभुरण्यूकृत्स्नंजगत्पोषयन्त्यौपितरौउत्पादयन्त्यौद्यावापृथिव्यौयद्यदापयः सान्नाय्यलक्षणंहविः अनीतांगोभ्यनयतां न्यधिषातामित्यर्थः कीदृशंपयः राधः

राधकं सप्रथिकरं सुरेतः शोभनरेतस्कं कृत्स्नजगदुत्पादनशक्तमित्यर्थः हविषःसकाशात्क्षिप्र-गद्गुत्पद्यते अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते । आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाइति ॥ यद्वाद्यावापृथिवीभ्यांगोष्वानीतंशुचिशुद्धं सबर्दुघायाः क्षीरस्यदोग्ध्र्याउस्रियायाः गोःपयः रेक्णः धननामैतत् धनवदतिप्रियं यद्वा अतिरिक्तंप्रवृद्धमेवंविधंहविः तेतुभ्यमायजन्त आभिमुख्येनय-जमानाःप्रायच्छन् तदानींदुरोमानुषस्यद्वाराणि अपवृणोतीतिपूर्वेणासंबन्धः । अनीताम् णीञ्प्रापणे रुचि बहुलंछन्दसीतिशपोलुक् । सुरेतः सोर्मनसीअलोमोषसीइत्युत्तरपदाद्युदात्तत्वम् । तुरण्ये तुरण-त्वरायाम् कण्ड्वादिः यक् क्विप्चेतिक्विप् अतोलोपयलोपौ । भुरण्यू भुरणधारणपोषणयोः अयमपि-कण्ड्वादिः यक् औणादिकउप्रत्ययः ॥ ५ ॥

५. क्षिप्रकारी तुम्हारे लिए जगत् के पालक पिता द्यौ और माता पृथिवी समृद्धिशाली और उत्पादन-शक्ति-युक्त दुग्ध लाये थे। जिस समय उनने दुग्धवती गौओं का विशुद्ध धन-युक्त दुग्ध तुम्हारे सामने रक्खा था, उस समय तुमने पणि का द्वार खोल दिया था।

अध॒ प्र ज॑ज्ञे त॒रणि॑र्ममत्तु॒ प्र रो॑च्य॒स्या उ॒षसो॒ न सूरः॑ ।
इन्दु॒र्येभि॒राष्ट॒ स्वेदु॑हव्यैः स्रु॒वेण॑ सि॒ञ्चञ्ज॒रणा॒भि धाम॑ ॥ ६ ॥

अध॑ । प्र । ज॒ज्ञे । त॒रणिः॑ । म॒म॒त्तु॒ । प्र । रो॒चि॒ । अ॒स्याः । उ॒षसः॑ । न । सूरः॑ । इन्दुः॑ । येभिः॑ । आष्ट॑ । स्वेदु॑ऽहव्यैः । स्रु॒वेण॑ । सि॒ञ्चन् । ज॒रणा॑ । अ॒भि । धाम॑ ॥ ६ ॥

अधइदानीमयमिन्द्रःस्तुतिभिःप्रीयमाणःसन्प्रजज्ञे प्रकर्षेणप्रादुर्बभूव सतरणिःशत्रूणांतार-कःअस्मान्ममत्तुमादयतु सचप्ररोचिप्रकृष्टंरोचते तत्रदृष्टान्तः—अस्याःअस्माभिः प्रदृश्यमानायाः उषसः-समीपेवर्तमानःसूरोन सूर्यइव जरणाजरणीयःस्तोतव्यःइन्दुःसोमः धामआहवनीयलक्षणं स्थानम-भिलक्ष्यस्रुवेणसिञ्चन् सिच्यमानःसन् स्वेदुहव्यैःस्वभूतसमृद्धहविष्कैर्येभिर्यैरस्माभिः आष्टव्याप्तः-आसीत् तानस्मान्मादयत्वित्यर्थः ॥ जज्ञे जनीप्रादुर्भावे लिटि गमहनेत्युपधालोपः । ममत्तु मदी-हर्षे बहुलंछन्दसीतिविकरणस्यश्लुः । रोचि रुचदीप्तौ छान्दसोवर्तमानेलुङ् व्यत्ययेन चिण्णादेशः । आष्ट अशभोजने कर्मणिश्नविबहुलंछन्दसीतिविकरणस्यलुक् व्रश्चादिषत्वेष्टुत्वम् आडागमः बहुला-भित्यमितिनिपातप्रतिषेधः । स्वेदुहव्यैः इदिपरमैश्वर्ये औणादिकउप्रत्ययः अनित्यमागमशासन-मितिनुमभावः इदूनिप्रभूतानिचतानिहव्यानिस्वभूतानिचहव्यानियेषाम् यद्वा जिइन्धीदीप्तौस्वायत्ता-निइदूनिइद्धानिहव्यानियेषाम् अथवा स्वभूतमिदंपुरोवर्तिहव्यंहविर्येषांतेतथोक्ताः पृषोदरादित्वाद-भिमतरूपसिद्धिः । सिञ्चन् षिचिरक्षरणे व्यत्ययेनकर्मणिकर्तृप्रत्ययः शेमुचादीनामितिनुम् । जरणा जरतिःस्तुतिकर्मा अस्मात्कर्मणिल्युट् सुपांसुलुगितिविभक्तेराकारः व्यत्ययेनक्लित्स्वराभावः ॥ ६ ॥

६. इस समय इन्द्र प्रकट हुए हैं। वे उषा के समीप में विद्यमान सूर्य की तरह दीप्तिमान् हुए हैं। ये शत्रु-विजयी इन्द्र हमें मत्त

या प्रसन्न करें। हम भी हव्य अर्पण करके, स्तुति-भाजन सोम-रस को, पात्र-द्वारा, यज्ञ-स्थान में सिञ्चित करके, उसी सोम-रस का पान करें।

स्विध्मायद्वनधितिरपस्यात्सूरोअध्वरेपरिरोधनागोः।
यद्धप्रभासिकृत्व्याँअनुद्यूननर्विशेपश्विषेतुराय ॥ ७ ॥

सुऽइध्मा। यत्। वनऽधितिः। अपस्यात्। सूरः। अध्वरे। परि। रोधना। गोः। यत्। ह। प्रऽभासि। कृत्व्यान्। अनु। द्यून्। अनर्विशे। पश्वऽइषे। तुराय ॥ ७ ॥

यदा यदि स्विध्मा सुदीप्तास्य वनधितिः वने छेत्तव्ये वृक्षसमूहे निधातव्या परशुः अपस्यात् अपः विशसनात्मकं स्वकीयं कर्म कर्तुमिच्छेत् तदानीं सूरः प्रेरकोऽध्वर्युः अध्वरे यज्ञे गोः पशोः रोधना रोधनाय यूपे नियोजनाय परिभवति समर्थो भवति यद्वा स्विध्मा सूर्यकिरणैः सुदीप्ता वनधितिः वनमुदकमस्यां धीयत इति वनधितिर्मेघमाला सा यदा अपस्यात् अपः प्रवर्षणलक्षणं कर्म करोति तदानीं सूरः प्रेरक इन्द्रः अध्वरे यज्ञस्य निमित्तभूते अध्वर्तव्ये अहिंसितव्ये अन्तरिक्षे वर्तमानः सन् गोः वृष्ट्युदकस्य रोधना रोधनान्यावरणानि परि परितो निवारयतीति शेषः उत्तरोऽर्धर्चः प्रत्यक्षकृतः हे इन्द्र सूर्यात्मना वर्तमानस्त्वं कृत्व्यान् कृत्वीति कर्मनाम कर्मसु साधून् द्यून् दिवसान् अनुलक्ष्य यद्ध यदा खलु प्रभासि प्रकर्षेण दीप्यसे तदानीम् अनर्विशे अनसा शकटेन कृत्स्नाय आहरणाय अरण्यं प्रविशते यद्वा गन्तव्यं स्थलं प्रविशन्तुं अशक्ताय पुरुषाय पश्विषे पशून् प्रेरयते तुराय त्वरमाणाय गोधनपालाय च सिद्ध्यै इदमभिमतमिति वाक्यशेषः ॥ स्विध्मा शोभनं इध्मं दीप्तं भा- स्वं दीप्तिर्वा यस्याः सा तथोक्ता नञ्सुभ्याम् इत्युत्तरपदान्तोदात्तत्वम्। अपस्यात् अपस् शब्दात्सु- प आत्मनः क्यच् लेट्याडागमः। रोधना रुधिर् आवरणे ल्युट् चेति भावे ल्युट् शेश्छन्दसि बहुलम् इति शेर्लोपः। अनर्विशे अनसा विशति प्राप्नोतीत्यनर्विट् विशतेः क्विप् अहरादीनां पत्यादिषू- पसंख्यानम् इति सकारस्य रेफादेशः यद्वा अर्तेः कर्मणि विट् अरं गन्तव्यं प्रति विशति प्राप्नोतीत्य- र्विट् न अर्विट् अनर्विट् अव्ययपूर्वपदप्रकृतिस्वरत्वम् अत एव व्युत्पत्त्यनवधारणादनवग्रहः। पश्विषे इषु गतौ अस्मादन्तर्भावितण्यर्थात् क्विप् चेति क्विप् ॥ ७॥

७. जिस समय सूर्य-किरण-द्वारा प्रकाशित मेघमाला जल-वर्षण करने को तैयार होती है, उस समय प्रेरक इन्द्र, यज्ञ के लिए, वृष्टि के आवरण का निवारण करते हैं। इन्द्र, जिस समय तुम सूर्य-रूप से कर्म के दिन में किरण दान करते हो, उस समय गाड़ीवान्, पशु-रक्षक और शिघ्रगामी अपने-अपने कार्य में सिद्धि प्राप्त करते हैं।

अष्टामहोदिवआदोहरीइहद्युम्नासाहमभियोधानउत्सम्।
हरिंयत्तेमन्दिनंदुक्षन्वृधेगोरभसमद्रिभिर्वाताप्यम् ॥ ८ ॥

अष्टा । महः । दिवः । आदः । हरी इति । इह । धुम्नुसहम् ।
अभि । योधानः । उत्सम् । हरिम् । यत् । ते । मन्दिनम् ।
धुक्षन् । वृधे । गोऽरभसम् । अद्रिऽभिः । वाताप्यम् ॥ ८ ॥

हेइन्द्र महोमहतोदिवोमदकरस्य सोमस्याष्टाभोक्तारौ हरीस्वकीयावश्वौ इह अस्मिन्कर्मणिआदः पीतशेषंसोमंपायय तथा द्युम्नासाहं द्युम्नस्यास्मदीयस्यधनस्याभिभवितारम् उत्समुत्स्रावयितारम् शत्रुंयोधानः योधनशीलस्त्वमभिभव यत्यदातेतववृधेवर्धनाय हरिमनोहरं मन्दिनंमदकरंगोरभसम् अत्रगोशब्दःपयसिवर्तते पयोबलंतद्दधद्दुग्धवन्तंवीर्यवन्तमित्यर्थः वाताप्यंवातेनप्राप्तव्यं वाततुल्येनशीघ्रकारिणात्वयापातव्यमित्यर्थः एवंविधंसोममद्रिभिःग्रावभिः धुक्षन्दुहन्तिऋत्विजोभिषुण्वन्ति तदानीम् अष्टेतिपूर्वेणसंबन्धः ॥ अष्टा अशभोजने तृच् आगमानुशासनस्यानित्यत्वादिडभावः । धुक्षन् एतत्कालीनोमध्यमाधच्छान्दसः ॥ ८ ॥

८. जिस समय ऋत्विक् लोग तुम्हारे वर्द्धन के लिए मनोहर, प्रसन्नकर, बलदायक और तुम्हारे उपभोग्य सोम से, प्रस्तर-द्वारा, रस निकालें उस समय हर्ष-दायक सोम-रस के उपभोक्ता अपने हरि नाम के दोनों घोड़ों को, इस-यज्ञ में, सोमपान कराओ। तुम युद्ध-निपुण हो। हमारे धनापहारी शत्रु का दमन करो।

त्वमायसंप्रतिवर्तयोगोर्दिवोअश्मानमुपनीतमृभ्वा ।
कुत्सायुयत्रपुरुहूतवन्वञ्छुष्णमनन्तैःपरियासिवधैः ॥ ९ ॥

त्वम् । आयसम् । प्रति । वर्तयः । गोः । दिवः । अश्मानम् ।
उपऽनीतम् । ऋभ्वा । कुत्साय । यत्र । पुरुऽहूत । वन्वन् ।
शुष्णम् । अनन्तैः । परिऽयासि । वधैः ॥ ९ ॥

हेइन्द्र त्वंगोः गन्तुः शुष्णस्यासुरस्यवधार्थमायसमयोमयंवज्रंप्रतिवर्तयः आभिमुख्येनप्रेरितवानसि कीदृशंवज्रंदिवोद्युलोकात्ऋभ्वादीप्तेनत्वष्ट्राउपनीतम् आनीतमश्मानंशीघ्रंशत्रोर्व्यापकं यत्रयदा हेपुरुहूतपुरुभिर्बहुभिःस्तोतृभिराहूतेन्द्र कुत्सायएतत्संज्ञायऋषयेशुष्णंशोषकमसुरमनन्तैर्निरवधिकैर्वधैर्हननसाधनैः आयुधैर्वन्वन् हिंसन्परियासि परितोगच्छसि तदानीतद्वधार्थंवज्रंप्रत्यवर्तयइत्यर्थः ॥ अश्मानम् अशूव्याप्तौ अश्येभ्योपिदृश्यन्तइतिमनिन् । ऋभ्वा मघादिषुछन्दसिवावचनमितिनावस्यनिकल्पितत्वाद्भावेयणादेशः । वन्वन् वनुयाचने अत्रहिंसार्थः तथाचयास्कः— वनुष्यतिहन्तिकर्मानवगतसंस्कारोभवतीति । वधैः हनश्चवधइतिहन्तेःकरणेअप् तत्सन्नियोगेनवधादेशश्च स्थानत्तोन्तोदात्तः वस्मातेसकलेसति...तिस्वरेणमतत्वयस्योदात्तत्वम् ॥ ९ ॥

९. तुमने ऋभु-द्वारा आकाश से लाये गये, शीघ्रगामी और लोहमय वज्र को त्वरित-गति शुष्ण असुर के प्रति फेंका था। बहुलोक-

पूजा-पात्र, उस समय तुम, कुत्स ऋषि के लिए, शुष्ण को अनेकानेक हननशील अस्त्रों-द्वारा मारते हुए घेरते हो।

पुरायत्सूरस्तमसोअपीतेस्तमद्रिवःफलिगंहेतिमस्य।
शुष्णस्यचित्परिहितंयदोजोदिवस्परिसुग्रथितंतदादः॥१०॥२५॥

पुरा। यत्। सूरः। तमसः। अपिऽइतेः। तम्। अद्रिऽवः। फलिऽगम्। हेतिम्। अस्य। शुष्णस्य। चित्। परिऽहितम्। यत्। ओजः। दिवः। परि। सुऽग्रथितम्। तत्। आ। अदुरित्यदः॥१०॥२५॥

पुरायत्यदासूरःसूर्यः तमसः तमोरूपस्यशुष्णस्यासुरस्यापीतेः संग्रामान्मुक्तोऽभवदिति शेषः तदानीं हेअद्रिवः आदृणात्यनेनेत्यद्रिर्वज्रः तद्वन्निन्द्र त्वंफलिगंमेघनामैतद् मेघरूपेणावृण्वन्तंहेतिंहन्तारंशुष्णंअसुरंअस्यनिरसितवानसि यद्वा अस्यशुष्णस्यासुरस्यहेतिंहननसाधनं आयुधंफलिगंमेघलक्षणंमाप्राक्षीरितिशेषः तथाशुष्णस्यचिच्छोषयितुरसुरस्यचयदोजःआच्छादकंबलंदिवस्परिद्योतमानस्यसूर्यस्योपरिपरिहितंआच्छादितंसुग्रथितंसुष्ठुसंबद्धंतदोजःतस्मात्सूर्यादादः आदृणाः विश्लिष्टंकृतवानसीत्यर्थः॥ अद्रिवः छन्दसीर इति मतुपोवत्वम् मतुवसोरु- रितिनकारस्यरुत्वम्। हेतिम् कृत्यल्युटोबहुलमितिबहुलवचनाद्धन्तेःकर्तरिक्तिन् ऊतियूतीत्या- दौनिपातनाद्रूपसिद्धिरन्तोदात्तत्वंच। अस्य असुक्षेपणे लुङःसिप् वस्यव्यत्ययेनसादेशः अतोहे- रितिहेर्लुक्। दिवस्परि पञ्चम्याःपरावध्यर्थइतिविसर्जनीयस्यसत्वम्। अदः दृविदारणे लङिसि- पिबहुलंछन्दसीतिविकरणस्यलुक् गुणेहल्ङ्याब्भ्यइतिसिलोपः॥ १०॥

१०. जिस समय सूर्य अन्धकार के साथ संग्राम से मुक्त हुए, उस समय हे वज्रधारिन्, तुमने उनके मेघ-रूप शत्रु का विनाश कर दिया। उस शुष्ण का जो बल सूर्य को आच्छादित किये हुए था और सूर्य के ऊपर ग्रथित हुआ था, उसे तुमने भग्न कर दिया था।

अनुत्वामहीपाजसीअचक्रेद्यावाक्षामामदतामिन्द्रकर्मन्।
त्वंवृत्रमाशयानंसिरासुमहोवज्रेणसिष्वपोवराहुम्॥ ११॥

अनु। त्वा। मही इति। पाजसी इति। अचक्रे इति। द्यावाक्षामा। मदताम्। इन्द्र। कर्मन्। त्वम्। वृत्रम्। आऽशयानम्। सिरासु। महः। वज्रेण। सिस्वपः। वराहुम्॥ ११॥

हेइन्द्र महीमहत्यौपाजसीबलवत्यौअचक्रेअचंक्रमणेसर्वत्रव्याप्यवर्तमानेद्यावाक्षामाद्यावा- पृथिव्यौकर्मन्वृत्रवधादिलक्षणेकर्मणिप्रवृत्तंत्वात्वामनुमदतांहर्षमकुरुताम् अन्वमन्येतांवा तथा-

त्तिरीयकम्—सवाभ्यामेवप्रसूतइन्द्रोवृत्रमहन्निति' । तदनन्तरंत्वमाशयानमासमन्ताद्व्याप्यवर्तमानं-वराहुंवराहारंवृत्रमसुरंसिरासुसरणशीलास्वप्सुमहोमहतावज्रेणहत्वासिष्वपःअस्वापयः वज्रेणहत्वा-पातितवानित्यर्थः ॥ महीसुपांसुलुगितिविभक्तेःपूर्वसवर्णदीर्घः । पाजसी पाजःशब्दोबलवाचको-लक्षणयात्रतद्वतिवर्तते इयाडियाजीकाराणामुपसंख्यानमितिविभक्तेरीकारादेशः । द्यावाक्षामा द्यौश्च-क्षामाच दिवोद्यावेतिद्यावादेशः देवताद्वन्द्वेचेत्युभयपदप्रकृतिस्वरत्वम् सुपांसुलुगितिविभक्तेर्लुक् । मदतां मदीहर्षे व्यत्ययेनशप् बहुलंछन्दस्यमाङ्योगेपीत्यडभावः । महः महतः करणेशेषत्वेनवि-वक्षितेषष्ठी अचछन्दस्छोपश्छान्दसः । सिष्वपः ञिष्वप्शये अस्मात्ण्यन्तात्लुङिच्लिचङिसंज्ञापूर्वकस्य-विधेरनित्यत्वात्स्वापेश्चङीतिसम्प्रसारणंनक्रियते ॥ ११ ॥

११. इन्द्र, महान् बली और सर्व-व्यापक द्यौ और पृथिवी ने वृत्र-वध-कार्य में तुम्हें उत्साहित किया था। तुमने उस सर्वत्र व्यापक और श्रेष्ठ हार-युक्त वृत्र को महान् वज्र से, प्रवहमान जल में, फेंक दिया था।

त्वमिन्द्रनर्योयाँअवोनॄन्ति(नॄंस्ति)ष्ठावातस्यसुयुजोवहिष्ठान् ।
यंतेकाव्यउशनामन्दिनंदाद्वृत्रहणंपार्यंततक्षवज्रम् ॥ १२ ॥

त्वम् । इन्द्र । नर्यः । यान् । अवः । नॄन् । तिष्ठ । वातस्य । सुऽयुजः । वहिष्ठान् । यम् । ते । काव्यः । उशना । मन्दिनम् । दात् । वृत्रऽहनम् । पार्यम् । ततक्ष । वज्रम् ॥ १२ ॥

हेइन्द्र नर्योनृभ्योहितस्त्वंयान्नॄन्नेतॄन् अश्वान् अवः अवसिरक्षसितान्वातस्यवातस्येवानसदृश-शीघ्रंगच्छतः सुयुजः शोभनंरथेनयुज्यमानान्वहिष्ठान् अतिशयेनवोढॄन्अश्वान्तिष्ठ आतिष्ठ आरोहे-त्यर्थः काव्यः कवेःपुत्रउशनामन्दिनंमदकरंयंवज्रंतेतुभ्यंदात्ददत्वान् तंवज्रंवृत्रहणंवृत्रस्यासुरस्य-घातकंपार्यंशत्रूणांपारणेअतिक्रमणेसमर्थंच ततक्षतनूकृतवानसि ॥ अवःअवतेर्लेट्यडागमः इतश्च-लोपइतीकारलोपः । वहिष्ठान् वोढृशब्दात्तुश्छन्दसीतीष्ठन् तुरिष्ठेमेयःस्वितितृलोपः । पार्यं पारती-रकर्मसमाप्तौ अस्माण्ण्यन्तादचोयदितियत् । ततक्ष तक्षूत्वक्षूतनूकरणे पुरुषव्यत्ययः ॥ १२ ॥

१२. इन्द्र, तुम मानव-बन्धु हो। तुम जिन अश्वों की रक्षा करते हो, उन वायु-तुल्य, शोभन और वाहक अश्वों पर चढ़ो। कवि के पुत्र उशना ने जो हर्षदायक वज्र तुम्हें दिया था, तुमने उसी वृत्र-ध्वंसक और शत्रु-नाशक वज्र को तीक्ष्ण किया है।

त्वंसूरोहरितोरामयोनॄन्भरच्चक्रमेतशोनायमिन्द्र ।
प्रास्यपारंनवतिंनाव्यानामपिकर्तमवर्तयोयज्यून् ॥ १३ ॥

---

तै० सं. २. ५. २ ।

त्वम् । सूरः । हरितः । रमयः । नॄन् । भरत् । चक्रम् । एतशः ।
न । अयम् । इन्द्र । प्रऽअस्य । पारम् । नवतिम् । नाव्यानाम् ।
अपि । कर्तम् । अवर्तयः । अयज्यून् ॥ १२ ॥

हेइन्द्र सूरः सूर्यात्मनावर्तमानस्त्वं हरितोहरिद्वर्णान्नॄन्नेतॄनश्वान्यद्वा रसहरणशीलान्रश्मीन्रमयः उपरमयः अयंएतशोन एतशइतिसूर्याश्वस्याख्या तथाचश्रूयते—एतशेनसूर्योदेवतांगमयत्विति । नशब्दश्चार्थे एतशश्चरथस्यचक्रं भरत्प्रावहत् अपिच त्वंनाव्यानांनावातार्याणांनदीनां नवतिंनवतिसंख्यां अतीत्यवर्तमानंपारंतीरदेशंसप्तम्यर्थेद्वितीया तीरदेशेअयज्यूनयजमानान् यज्ञविधिहीनान् असुरादीन्प्रास्य प्रक्षिप्य तत्रकर्तमवर्तयः कर्तव्यमपिकृत्वातानयजमानानवर्तयः प्रापयः ॥ रमयः लङि बहुलंछन्दस्यमाङ्योगेपीत्यडभावः अन्येषामपिदृश्यतइतिसांहितिकोदीर्घः । प्रास्य असुक्षेपणे अस्मात्ल्यपिरूपम् । नाव्यानाम् नौवयोधर्मेत्यादिनायत् तित्स्वरितमितिस्वरितत्वम् ॥ १२ ॥

१२. सूर्य-रूप इन्द्र, हरि नामक अश्वों को रोको । इन्द्र का एतश नाम का घोड़ा रथ का चक्का खींचता है । तुम नौका-द्वारा नब्बे नदियों के पार पहुँचकर यहाँ यज्ञ-विहीन असुरों या अनार्यों से कर्त्तव्य कर्म कराओ ।

त्वंनोअस्याइन्द्रदुर्हणायाःपाहिवज्रिवोदुरितादभीके ।
प्रनोवाजान्रथ्योअश्वबुध्यानिषेयन्धिश्रवसेसूनृतायै ॥ १४ ॥

त्वम् । नः । अस्याः । इन्द्र । दुःऽहनायाः । पाहि । वज्रिऽवः ।
दुःऽइतात् । अभीके । प्र । नः । वाजान् । रथ्यः । अश्वऽबुध्यान् ।
इषे । यन्धि । श्रवसे । सूनृतायै ॥ १४ ॥

हेवज्रिवः वज्रवन्निन्द्र त्वंदुर्हणायाः दुःखेनहन्तव्यायाः अस्याः अवृत्तेर्दारिद्र्यात् नोस्मान्पाहिरक्ष तथा दुरितात्पापात् अभीकेअभिप्राप्तेसमीपवर्तिनिसङ्ग्रामे अस्मान्रक्ष अपिच नोस्मभ्यं रथ्योरथयुक्तान् अश्वबुध्यान् अश्वानांबोधकान् अश्वायावद्भिर्लभ्यन्तेतावदित्यर्थः यद्वा अश्वबुध्नान् छान्दसोवर्णविकारः अश्वमूलान् अश्वप्रमुखानित्यर्थः सर्वेहिवसं अश्वमूलंदासापवर्गं यथोक्तम् दासप्रवर्गंरयिमश्वबुध्यमिति । एवंविधान्वाजान्धनानि प्रयन्धिप्रयच्छ किमर्थमिषेअन्नार्थं श्रवसेकीर्त्यर्थं सूनृतायै सूनृताप्रियसत्यात्मिकावाक्तदर्थंच ॥ दुर्हणायाः ईषद्दुःसुष्विति हन्तेःकर्मणिखल् । पाहि पादादित्वान्निघाताभावः । वज्रिवः वज्रोस्य-

1 तै० सं० १. ६. ४. ।   2 ऋ० सं० १. ६. २५ ।

हेअश्विनौ हस्तेव हस्ताविव शक्तिसामर्थ्यंनोस्माकं अभिसंददी आभिमुख्येनसम्यक्प्रयच्छन्तौभवतं किंच क्षामइव रोदसीइव रजांसिस्थानानिउदकानिवा उदकंरजउच्यतइवियास्कः। नोस्माकंसमजतं प्रेरयतं अपिच अश्विना हेअश्विनौ इमागिरः अस्माभिःकृताःस्तुतीः युष्मयन्तीः युवामिच्छन्तीः स्वधितिमसिं क्ष्णोत्रेणेव तेजनशाणवत् संशिशीतं सम्यक् तीक्ष्णीकुरुतम् ॥ ७ ॥

७. अश्विद्वय, दोनों हाथों की तरह हमें सामर्थ्य प्रदान करो। द्यावा-पृथिवी की तरह हमें जल दो। अश्विद्वय, ये सब स्तुतियाँ तुम्हें चाहती हैं। तुम सान चढ़ाने के यंत्र के द्वारा तलवार की तरह उन्हें तीक्ष्ण करो।

एतानिवामश्विनावर्धनानिब्रह्मस्तोमंगृत्समदासोअक्रन्।
तानिनराजुजुषाणोपयातंबृहद्वदेमविदथेसुवीराः ॥ ८ ॥ ५ ॥

एतानि। वाम्। अश्विना। वर्धनानि। ब्रह्म। स्तोमम्। गृत्सऽमदासः। अक्रन्। तानि। नरा। जुजुषाणा। उप। यातम्। बृहत्। वदेम। विदथे। सुऽवीराः ॥ ८ ॥ ५ ॥

अश्विना हेअश्विनौ वांयुवयोः एतानिवर्धनानिवृद्धिसाधनानिब्रह्माणि मन्त्रान् स्तोमं स्तोत्रंच गृत्समदासोगृत्समदाअक्रन् अकुर्वन् तानिब्रह्माणि नरानेतारौ जुजुषाणाप्रीयमाणौ युवांउपयातंउपगच्छतं किंच सुवीराः शोभनपुत्रावयं विदथेयज्ञेयुवां बृहद्वदेमप्रभूतंस्तुमः॥८॥

८. अश्विद्वय, गृत्समद ऋषि ने तुम्हारी वृद्धि के लिए ये सब स्तोत्र और मंत्र बनाये हैं। तुम नेता और अतीव प्रीतिवाले हो। तुम्हारे पास ये सब स्तुतियाँ पहुँचें। हम पुत्र और पौत्रवाले होकर इस यज्ञ में प्रभूत स्तुति करें।

॥ इतिद्वितीयस्याष्टमेपञ्चमोवर्गः ॥ ५ ॥

सोमापूषणेतिषळृचमष्टमंसूक्तं गार्त्समदंत्रैष्टुभं सोमापूषदेवताकं तथाचानुक्रान्तं—सोमापूषणाषट्सोमापौष्णमन्त्योर्धर्चोऽदितेरिति अवत्वदित्यदितिरित्यस्यार्धर्चस्यादितिर्देवता सोमापौष्णेपशौवपापुरोडाशहविषामाद्यास्तिस्रःक्रमेणानुवाक्याः उत्तरास्तिस्रोयाज्याः अग्नीषोमावितिखण्डेसूत्रितं— सोमापूषणाजननारयीणामिति ।

तत्रप्रथमा—

सोमापूषणाजननारयीणांजननादिवोजननापृथिव्याः।
जातौविश्वस्यभुवनस्यगोपौदेवाअकृण्वन्नमृतस्यनाभिम् ॥ १ ॥

१ लि० ४. १९.।

सोमापूषणा । जनना । रयीणाम् । जनना । दिवः । जनना ।
पृथिव्याः । जातौ । विश्वस्य । भुवनस्य । गोपौ । देवाः ।
अकृण्वन् । अमृतस्य । नाभिम् ॥ १ ॥

सोमापूषणा हे सोमापूषणौ युवांरयीणांधनानां जनना जनयितारौ दिवः द्युलोकस्यापि जनना जनयितारौ पृथिव्याः पृथिव्याश्च जनना जनयितारौअभवतः किंच जातौजातमात्रावेव युवांविश्वस्यभुवनस्य कृत्स्नस्यजगतः गोपौ गोप्तारौ देवाअमृतस्यामरणस्यनाभिं हेतुमकृण्वन् अकार्षुः ॥ १ ॥

१. सोम और पूषा, तुम धन, द्युलोक और पृथ्वी के जनक हो। जन्म के अनन्तर ही तुम सारे संसार के रक्षक हुए हो। देवों ने तुम्हें अमरता का कारण बनाया है।

इमौदेवौजायमानौजुषन्तेमौतमांसिगूहतामजुष्टा ।
आभ्यामिन्द्रःपक्वमामास्वन्तःसोमापूषभ्यांजनदुस्रियासु ॥ २ ॥

इमौ । देवौ । जायमानौ । जुषन्त । इमौ । तमांसि । गूहताम् ।
अजुष्टा । आभ्याम् । इन्द्रः । पक्वम् । आमासु । अन्तरिति ।
सोमापूषऽभ्याम् । जनत् । उस्रियासु ॥ २ ॥

इमौ सोमापूषणौ देवौ द्योतमानौ जायमानौ उत्पद्यमानावेव जुषन्त सर्वेदेवाः अजुषन्त सेवितवन्तइतियावत् किंच इमौ सोमापूषणौ अजुष्टा असेव्यानितमांसि गूहतांनाशयतः किंच आभ्यामेवाभ्यां सोमापूषभ्यांसहइन्द्रः आमासुतरुणीषुउस्रियासुगोष्वन्तर्मध्येऊधःप्रदेशेपक्वं परिपक्वंपयोजनत्जनयति ॥ २ ॥

२. जन्मते ही द्युतिमान् सोम और पूषा की देवों ने सेवा की थी। ये दोनों अप्रिय अन्धकार का विनाश करते हैं। इनके साथ इन्द्रदेव तरुणी धेनुओं के अधःप्रदेश में पक्व दुग्ध उत्पन्न करते हैं।

सोमापूषणारजसोविमानंसप्तचक्रंरथमविश्वमिन्वम् ।
विषूवृतंमनसायुज्यमानंतंजिन्वथोवृषणापञ्चरश्मिम् ॥ ३ ॥

सोमापूषणा । रजसः । विऽमानम् । सप्तऽचक्रम् । रथम् ।
अविश्वऽमिन्वम् । विषुऽवृतम् । मनसा । युज्यमानम् । तम् ।
जिन्वथः । वृषणा । पञ्चऽरश्मिम् ॥ ३ ॥

वृषणा वृषणौ कामानांवर्षितारौ सोमापूषणा हेसोमापूषणौ रजसोलोकस्य लोकारजांस्यु-च्यन्तइतियास्कः। विमानंपरिच्छेदकंसर्वमानमित्यर्थः सप्तचक्रं सप्तर्तुचक्रं त्रयोदशोमासः सप्त-मऋतुः अस्तित्रयोदशोमासइतिश्रुतेः। अविश्वमिन्वं विश्वस्यापरिच्छेद्यं विषुवृतं विष्वक्सर्वत्र परिवर्तमानं पञ्चरश्मिंपञ्चर्तुरश्मिं हेमन्तशिशिरयोः समासेनर्तवःपञ्च यथाचश्रूयते—द्वादशवैमा-साःपञ्चर्तवोहेमन्तशिशिरयोःसमासेनेति। मनसायुज्यमानं मनोमात्रेणयुज्यमानंरथमस्मदंर्थं जिन्वथः अस्मान्प्रतिप्रेरयथः॥ ३॥

३. अभीष्टवर्षी सोम और पूषा, तुम संसार के विभाजक, सप्तचक्र (सात ऋतु, मलमास लेकर) वाले संसार के लिए अविभाज्य, सर्वत्र वर्त्तमान और पंचरश्मि (पांच ऋतु, हेमन्त और शीत को एक में करके) वाले हो। इच्छा होते ही योजित रथ हमारे सामने प्रेरित करते हो।

दि॒व्य१॒॑न्यः सद॑नं च॒क्र उ॒च्चा पृ॑थि॒व्याम॒न्यो अध्य॒न्तरि॑क्षे।
ताव॒स्मभ्यं॑ पुरु॒वारं॑ पुरु॒क्षुं रा॒यस्पोषं॒ वि ष्य॑तां॒ नाभि॑म॒स्मे॥ ४॥

दि॒वि। अ॒न्यः। सद॑नम्। च॒क्रे। उ॒च्चा। पृ॒थि॒व्याम्। अ॒न्यः। अधि॑। अ॒न्तरि॑क्षे। तौ। अ॒स्मभ्य॑म्। पु॒रु॒ऽवार॑म्। पु॒रु॒ऽक्षुम्। रा॒यः। पोष॑म्। वि। स्य॒ता॒म्। नाभि॑म्। अ॒स्मे इति॑॥ ४॥

अन्यः तयोरेकः पूषाउच्चाउच्चैः उच्छ्रितेदिविद्युलोकेसदनंस्थानंपक्षेचकार अन्यः अपरः सोमः पृथिव्यामोषधिरूपेणअध्यन्तरिक्षेचचन्द्ररूपेणसदनंचक्रे तौ सोमापूषणौयुवांपुरुवारं बहु-भिर्वरणीयं पुरुक्षुं बहुकीर्तिरायस्पोषंधनस्यपुष्टिं पश्वात्मकंधनमित्यर्थः तथाचब्राह्मणं—पशवो-वैरायस्पोषइति। अस्मेअस्माकं नाभिंविश्वस्यभोगस्यहेतुभूतमस्मभ्यंविष्यतां विमुञ्चतांप्रय-च्छतामित्यर्थः॥ ४॥

४. तुममें एक जन (पूषा) उन्नत द्युलोक में रहते हैं। दूसरे (सोम) ओषधि रूप से पृथ्वी और चन्द्र-रूप से अन्तरिक्ष में रहते हैं। तुम दोनों अनेक लोगों में वरणीय, बहुकीर्त्तिशाली हमारे भाग का कारण और पशु-रूप धन हमें दो।

विश्वा॑न्य॒न्यो भुव॑ना ज॒जान॒ विश्व॑म॒न्यो अ॑भि॒चक्षा॑ण एति।
सोमा॑पूषणा॒वव॑तं॒ धियं॑ मे यु॒वाभ्यां॒ विश्वाः॒ पृत॑ना जयेम॥ ५॥

विश्वा॑नि। अ॒न्यः। भुव॑ना। ज॒जान॑। विश्व॑म्। अ॒न्यः। अ॒भि॒ऽचक्षा॑णः। ए॒ति॒। सोमा॑पूषणौ। अव॑तम्। धिय॑म्। मे॒। यु॒वाभ्या॑म्। विश्वाः॑। पृत॑नाः। ज॒ये॒म॒॥ ५॥

१ तै० सं० ६. ५. ३.।　२ ऐ० ब्रा० १. १.।　३ तै० ब्रा० ५. ४. ६.।

हेसोमापूषणौ अन्यःयुवयोरेकः सोमःविश्वानिभुवनाभुवनानिभूतानिजजान अजनयत् तथाच मन्त्रः—सोमःपवतेजनितामतीनामिति । अन्यःअपरः पूषादित्योविश्वमभिचक्षाणः अभिपश्यन्नेतिगच्छति तौयुवांसोमापूषणौमेधियंकर्म धीःशचीतिकर्मनामसुपाठात् अवतंरक्षतं किंच वयं युवाभ्यांहितुभ्यां विश्वाः पृतनाः सर्वाः शत्रुसेनाः जयेमअभिभवेम ॥ ५ ॥

५. सोम और पूषा, तुममें से एक (सोम) ने सारे भूतों को उत्पन्न किया है। दूसरे (पूषा) सारे संसार का पर्यवेक्षण कर आते हैं। सोम और पूषा, तुम हमारे कर्म की रक्षा करो। तुम्हारे द्वारा हम सारी शत्रुसेना को जय कर डालें।

धियंपूषाजिन्वतुविश्वमिन्वोरयिंसोमोरयिपतिर्दधातु ।
अवतुदेव्यदितिरनर्वाबृहद्वदेमविदथेसुवीराः ॥ ६ ॥ ६ ॥

धियम् । पूषा । जिन्वतु । विश्वम्ऽइन्वः । रयिम् । सोमः ।
रयिऽपतिः । दधातु । अवतु । देवी । अदितिः । अनर्वा ।
बृहत् । वदेम । विदथे । सुऽवीराः ॥ ६ ॥ ६ ॥

पूषादित्योविश्वमिन्वः विश्वस्यप्रीणयिताधियमस्माकंकर्मजिन्वतुतर्पयतु रयिपतिर्धनपतिः सोमः रयिंधनंदधातु अस्मभ्यंददातु किंच देवीद्योतमाना अनर्वा अप्रत्यृताकेनापिमासिकूल्यमभाषिता अदितिःअवतु अस्मान् रक्षतु अन्यत्सिद्धम् ॥ ६ ॥

६. संसार को प्रसन्नता देनेवाले पूषा हमारे कर्म से तृप्ति प्राप्त करें। धनपति सोम हमें धन दान करें। द्युतिमती और शत्रु-रहिता अदिति हमारी रक्षा करें। हम पुत्र और पौत्रवाले होकर इस यज्ञ में प्रभूत स्तुति कर सकें।

॥ इतिद्वितीयस्याष्टमेषष्ठोवर्गः ॥ ६ ॥

वायोयेतइत्येकविंशत्यृचंनवमंसूक्तंगार्त्समदंगायत्रं अंबितमइतिषष्ठस्य तृचस्य आद्यौद्वेअनुष्टुभौ तृतीयाबृहती वायोयेतेइत्यादिकेद्वेऋचौवायव्यौ शुक्रस्यापेत्यैषैन्द्रवायवी अयंवांमित्रावरुणेतिपञ्चानांमित्रावरुणावश्विनाविन्द्रोविश्वेदेवाःसरस्वतीतिक्रमेणदेवताः प्रेतांयज्ञस्येत्यन्त्यस्तृचोब्राह्मणस्तत्रयोर्हविर्धानप्रवर्तनेद्यावापृथिव्यनिविद्धानत्वेनचविनियुक्तत्वात् द्यावापृथिव्योर्हविर्धानदेवत्योवा अग्निंचहव्यवाहनमितिपादोग्निदेवत्योवा तथाचानुक्रान्तं—वायोसैकागायत्रमृक्दैवताः प्रउगेणाधेतुदृचेन्द्रैन्द्रवायवीद्यावापृथिव्योन्त्यस्तृचोहाविर्धानोवातृतीयःपादोवाग्नेयोंबितमेनुष्टुभौबृहतीचेति पृष्ठ्याभिप्लवषडहयोर्द्वितीयेहनि प्रउगेन्यत्तृचवर्जमेतत्सूक्तं वायव्यतृचस्यवायोयेतेसहस्रिणइत्याद्येद्वेऋचौ ऐन्द्रवायवतृचस्यशुक्रस्याद्येत्येषातृतीया तथाचसूत्रितं—वायोयेतेसहस्रिणइतिद्वेतीव्राःसोमासआगहीत्येकोभादेवादि-

१ ऋ० सं० ७. ९. ६।

विस्तृतोविहितःशुक्रस्याग्रयणवाशिरइत्येकाअयंवांमित्रावरुणेतिपञ्चतृचाइति चातुर्विंशिकेहनि प्रातः सवने मैत्रावरुणशस्त्रे अयंवांमित्रावरुणेतिषळहस्तोत्रियसंज्ञकः चतुर्विंशेहोताजनिष्टेति-खण्डेसूत्रितं—अयंवांमित्रावरुणापुरूरुणाचिन्यस्तीति आभिप्लविकेष्वहस्सु प्रातःसवने मैत्राव-रुणशस्त्रे अयमेवतृचः पञ्चदशादिस्तोमनिमित्तमावापनीयः अयंवांमित्रावरुणाआनोमित्रा-वरुणेतितृचाइतिसूत्रितत्वात् आद्यामैत्रावरुणग्रहस्यानुवाक्या सूत्रितंच—मैत्रावरुणस्य अयं-वांमित्रावरुणेतिप्रातरनुवाकाश्विनशस्त्रयोर्गायत्रेछन्दसिगोमदूषुइतितृचोविनियुक्तः गोमदूषु नासत्येतितृचाइतिसूत्रितत्वात् अतिरात्रे प्रथमेपर्याये ब्राह्मणाच्छंसिशस्त्रे इन्द्रोअङ्गमहद्भय-मितितृचः अतिरात्रेपर्यायाणामितिखण्डेसूत्रितं—इन्द्रोअङ्गमहद्भयमभिन्पुषुवाचमिति आग्रय-णेवैश्वदेवस्यहविषोविश्वेदेवासइत्यनुवाक्या आग्रयणमितिखण्डेसूत्रितं—विश्वेदेवासआगत-येकेचज्मामहिनोअहिमायाइति दशरात्रेप्रथमेहनिप्रउगशस्त्रे अंबितमेनदीतमइतिसारस्वतः सप्तमस्तृचः चतुर्थेहनीतिखण्डेसूत्रितं—अंबितमेनदीतमइत्यानुष्टुभंप्रउगमिति सूत्रितंच—व्यूढे दशरात्रे प्रथमेछन्दोमेवैश्वदेवशस्त्रे प्रेतांयज्ञस्यशंभुवेतिद्यावापृथिव्यनिविद्धानीयस्तृचः अथ-छन्दोमाइतिखण्डेसूत्रितं—प्रेतांयज्ञस्यशंभुवायदेवायजन्मनइतितृचाइति हविर्धानप्रवर्तनेप्येषतृ-चोविनियुक्तः सूत्रितंच—प्रेतांयज्ञस्यशंभुवायुवामेदवयवमानेथदैवमिति।

तत्रप्रथमा—

**वायो॒ये ते॑सह॒स्रिणो॒रथा॑स॒स्तेभि॒रा ग॑हि। नि॒युत्वा॒न्त्सोम॑पीतये॥१॥**

वायो॒ इति॑। ये। ते॒। स॒ह॒स्रिण॑ः। रथा॑सः। तेभिः॑। आ।
ग॒हि॒। नि॒युत्वा॑न्। सोम॑ऽपीतये॥ १॥

हेवायो तेत्वदीयायेसहस्रिणः सहस्रसंख्याकारथासः रथाः तेभिस्तैर्नियुत्वान् नियुद्भि-र्युक्तस्त्वं सोमपीतये सोमपानार्थमागह्यागच्छ नानारूपत्वात् वायोः सर्वाभिर्विभूतिभिः सहा-गमनं प्रार्थ्यतइतिभावः॥ १॥

१- वायु, तुम्हारे पास जो हजार रथ हैं, उनके द्वारा नियुत्‌गण से युक्त होकर सोम पान के लिए आओ।

अथद्वितीया—

**नि॒युत्वा॑न्वाय॒वा ग॑ह्य॒यं शु॒क्रो अ॑यामि ते। गन्ता॑सि सुन्व॒तो गृ॒हम्॥२॥**

नि॒युत्वा॑न्। वायो॒ इति॑। आ। ग॒हि॒। अ॒यम्। शु॒क्रः।
अ॒या॒मि॒। ते॒। गन्ता॑। अ॒सि॒। सु॒न्व॒तः। गृ॒हम्॥ २॥

हेवायो नियुत्वान् नियुतोवाहनानिवायोः तैर्युक्तस्त्वं आगह्यागच्छ अयंशुक्रोदीप्यमानः सोमः तेतुभ्यं अयामिनियमोगृहीतआसीत यमेःकर्मणिलुङ् सुन्वतः सोमाभिषवं कुर्वतोयजमानस्यगृहं गन्तासियाताभवसि ॥ २ ॥

२. वायु, नियुत्गण से युक्त होकर आओ। तुमने दीप्तमान् सोम ग्रहण किया है। सोमाभिषवकारी यजमान के घर में तुम जाते हो।

शुक्रस्याद्यगवाशिरइन्द्रवायूनियुत्वतः। आयातंपिबतंनरा ॥ ३॥

शुक्रस्य। अद्य। गोऽआशिरः। इन्द्रवायू इति। नियुत्वतः।
आ। यातम्। पिबतम्। नरा ॥ ३ ॥

हेनरानेतारौ हेइन्द्रवायू अद्यास्मिन्नहनिनियुत्वतः विभक्तिव्यत्ययः नियुत्वन्तौ युवां गवाशिरः गव्यंपयः आशीराश्रयणसाधनंयस्य तस्यशुक्रस्यदीप्तस्य सोमस्य पानार्थं आयातं आगच्छतं आगत्यसोमंपिबतम् ॥ ३ ॥

३. नेता इन्द्र और वायु, तुम आज नियुत्गण से युक्त होकर और सोम के लिए आकर गव्य-मिला सोम पीओ।

अयंवांमित्रावरुणासुतःसोमऋतावृधा। ममेदिहश्रुतंहवम् ॥ ४ ॥

अयम्। वाम्। मित्रावरुणा। सुतः। सोमः। ऋतऽवृधा।
मम। इत्। इह। श्रुतम्। हवम् ॥ ४ ॥

मित्रावरुणा हेमित्रावरुणौ वांयुवाभ्यां अयंसोमः सुतः अभिषुतः ऋतावृधा हेसत्यस्य यज्ञस्यवावर्धकौ ममेत् ममैवइहास्मिन्यज्ञे हवमाह्वानं श्रुतं शृणुतम् ॥ ४ ॥

४. मित्रावरुण, तुम्हारे लिए यह सोम तैयार हुआ है। सत्यवर्द्धक तुम हमारा आह्वान सुनो।

अथपञ्चमी—

राजानावनभिद्रुहा ध्रुवेसदस्युत्तमे। सहस्रस्थूणआसाते ॥ ५ ॥ ७ ॥

राजानौ। अनभिऽद्रुहा। ध्रुवे। सदसि। उत्ऽतमे।
सहस्रऽस्थूणे। आसाते इति ॥ ५ ॥ ७ ॥

राजानौईश्वरौदीप्यमानौवा अनभिद्रुहा अनभिद्रोग्धारौयौ मित्रावरुणौ ध्रुवेस्थिरे उत्तमे उत्कृष्टे सहस्रस्थूणे बहुस्तंभे सदसिस्थाने आसाते उपविशतः तावागच्छतमितिशेषः ॥ ५ ॥

५. शत्रुता-शून्य राजा मित्रावरुण स्थिर, उत्कृष्ट और हजार स्तम्भोंवाले इस स्थान पर बैठें।

अथषष्ठी—

तासम्राजाघृतासुतीआदित्यादानुनस्पती । सचेतेअनवह्वरम् ॥६॥

ता । सम्ऽराजा । घृतासुती इति घृतऽआसुती । आदित्या ।

दानुनः । पती इति । सचेते इति । अनवऽह्वरम् ॥ ६ ॥

सम्राजौ आसम्यवसर्वेषांशास्तारौघृतासुती घृतान्नौ तद्वांमहित्वंघृतान्नावस्तिवितिमन्त्रान्तरात् आदित्या अदितेःपुत्रौ दानुनस्पती दानुनोदानस्य देवस्यवाधनस्यपतीस्वामिनौ ता तौ मित्रावरुणौ अनह्वरमकुटिलं यजमानं सचेते सेवेते ॥ ६ ॥

६. सम्राट्, घृतान्नभोजी, अदिति-पुत्र और दाता मित्रावरुण सरल-मति यजमान की सेवा करते हैं।

अथसप्तमी—

गोमदूषुनासत्याश्वावद्यातमश्विना । वर्तीरुद्रानृपाय्यम् ॥ ७ ॥

गोऽमत् । ऊँ इति । सु । नासत्या । अश्वऽवत् । यातम् ।

अश्विना । वर्तिः । रुद्रा । नृऽपाय्यम् ॥ ७ ॥

अश्विनाहेअश्विनौ हेनासत्या अनृतभाषणरहितौ हेरुद्रा रोरूयमाणौ इवन्तौयुवांवर्तिर्मार्गः तेनमार्गेणरथेनवा नृपाय्यंनृभिःनेतृभिर्देवैः पातव्यं सोमंगोमत् गोमद्यथाभवति तथा अश्ववत् अश्ववद्यथाभवति तथा यातंगच्छतं ऊषुविपूरणौ ॥ ७ ॥

७. अश्विद्वय, नासत्यद्वय, रुद्रद्वय, यज्ञ के नेता जो सोमपान करेंगे, उसी सोम को धेनु और अश्व से युक्त करके तथा रथ पर लेकर आओ।

नयत्परोनान्तरआदधर्षद्वृषण्वसू । दुःशंसोमर्त्योरिपुः ॥ ८ ॥

न । यत् । परः । न । अन्तरः । आऽदधर्षत् । वृषण्वसू इति-वृषण्ऽवसू । दुःऽशंसः । मर्त्यः । रिपुः ॥ ८ ॥

वृषण्वसू हेधनस्यवर्षितारौ यद्धनंपरोदूरस्थोदुःशंसः शंसनायोग्योमर्त्योरिपुः नाधर्षेत् नापहरेत् तथोक्तलक्षणोन्तरः अन्तरः समीपवर्ती मर्त्योरिपुरपियन्नादधर्षेत् तद्धनमावोढमितिशेषः ॥ ८ ॥

८. धनवर्षी अश्विद्वय, दूरस्थित वा समीपवर्ती मन्दभाषी मर्त्यरिपु जिस धन को नहीं चुरा सकता, उसे ही हमें दो।

अथनवमी—

तानआवोळ्हमश्विनारयिंपिशङ्गसन्दृशम् । धिष्ण्यावरिवोविदम् ॥ ९ ॥

ता । नः । आ । वोळ्हम् । अश्विना । रयिम् । पिशङ्गऽसन्दृशम् ।
धिष्ण्या । वरिवःऽविदम् ॥ ९ ॥

हेधिष्ण्या धिषणार्हौ अश्विना हेअश्विनौ ता वां युवांपिशंगसदृशं नानारूपं वरिवोविदंधनस्यलंभकंरयिंपशुंनोस्मभ्यं आवोळ्हमावहतम् ॥ ९ ॥

९. सेवनार्ह अश्विद्वय, तुम हमारे पास नानारूप और धन-प्रापक धन ले आओ।

अथदशमी—

इन्द्रोअङ्गमहद्भयमभीषदपचुच्यवत् । सहिस्थिरोविचर्षणिः ॥ १० ॥ ८ ॥

इन्द्रः । अङ्ग । महत् । भयम् । अभि । सत् । अप । चुच्यवत् ।
सः । हि । स्थिरः । विऽचर्षणिः ॥ १० ॥ ८ ॥

इन्द्रः महत् अधिकं अभीषत् अभिभवत् भयंभयकारणं अपचुच्यवत् अपच्यावयेत् हियस्मात्कारणात् सस्थिरः केनापिचालयितुमशक्यः विचर्षणिर्विश्वस्यद्रष्टा अङ्गेतिपूरणम् ॥ १० ॥

१०. इन्द्र अधिक और अभिभवकारी भय को दूर करते हैं। वे स्थिर प्रज्ञावान् हैं।

॥ इतिद्वितीयस्याष्टमेष्टमोवर्गः ॥ ८ ॥

अथैकादशी—

इन्द्रश्चमृळयातिनोनर्नःपश्चादघंनशत् । भद्रंभवातिनःपुरः ॥ ११ ॥

इन्द्रः । च । मृळयाति । नः । न । नः । पश्चात् । अघम् ।
नशत् । भद्रम् । भवाति । नः । पुरः ॥ ११ ॥

इन्द्रश्च परमैश्वर्यवानिन्द्रश्चेत् नोस्मान्मृळयातिसुखयेत् पश्चात्पृष्ठतः नोस्मान् अघंदुरितं ननशत् नप्राप्नोतिनोस्माकंपुरः पुरस्तात् भद्रंकल्याणंचभवाति भवति ॥ ११ ॥

११. यदि इन्द्र हमें सुखी करें, तो हमारे साथ पाप नहीं आयेगा; हमारे सामने कल्याण उपस्थित होगा।

अथद्वादशी—

इन्द्रआशाभ्यस्परिसर्वाभ्योअभयंकरत् ।
जेताशत्रून्विचर्षणिः ॥ १२ ॥

इन्द्रः । आशाभ्यः । परि । सर्वाभ्यः । अभयम् । करत् ।
जेता । शत्रून् । विऽचर्षणिः ॥ १२ ॥

विचर्षणिः विविधंद्रष्टा जेता शत्रूनसुरान्जेता इत्यन्नत्वाद्यप्रभावः इन्द्रः परमै-श्वर्यवान् सर्वाभ्यआशाभ्योदिग्भ्योस्माकंअभयंकरत्करोतु परीतिपञ्चमीद्योतकः ॥ १२ ॥

१२. प्रज्ञावान् और शत्रुजेता इन्द्र चारों ओर से हमें भय-शून्य करें।

अथत्रयोदशी—

विश्वेदेवासआगतशृणुतामइमंहवम् । एदंबर्हिर्निषीदत ॥ १३ ॥

विश्वे । देवासः । आ । गत । शृणुत । मे । इमम् । हवम् ।
आ । इदम् । बर्हिः । नि । सीदत ॥ १३ ॥

विश्वेदेवासः हेविश्वेदेवाः आगत इहागच्छत मे मदीयमिमंहवमाह्वानंशृणुत इदंबर्हिरस्मिन् बर्हिषिआनिषीदत उपविशत ॥ १३ ॥

१३. विश्वदेवगण, यहाँ आओ। हमारा आह्वान सुनो और कुश के ऊपर बैठो।

अथचतुर्दशी—

तीव्रोवोमधुमाँअयंशुनहोत्रेषुमत्सरः । एतंपिबतकाम्यम् ॥ १४ ॥

तीव्रः । वः । मधुऽमान् । अयम् । शुनऽहोत्रेषु । मत्सरः । एतम् ।
पिबत । काम्यम् ॥ १४ ॥

हेविश्वेदेवाः तीव्रः तीव्रमदः मधुमान् मधुररसवान् मत्सरोमदकरः सोमोयंवोयुष्मदर्थं शुनहोत्रेषुगृत्समदेष्वस्मासुस्थितः काम्यंकमनीयमेतंसोमंपिबत ॥ १४ ॥

१४. विश्वदेवगण, तीव्र मदवाला, रसशाली और हर्षकर यह सोम तुम्हारे लिए गृत्समदवंशीयों के पास है। इस शोभन सोम का पान करो।

अथपञ्चदशी—

२ इन्द्रज्येष्ठामरुद्गणादेवासःपूषरातयः । विश्वेममश्रुताहवम् ॥१५॥१॥

इन्द्रऽज्येष्ठाः । मरुत्ऽगणाः । देवासः । पूषऽरातयः । विश्वे ।
मर्म । श्रुत । हवम् ॥ १५ ॥ ९ ॥

हेइन्द्रज्येष्ठाः इंद्रपुरोगमामरुद्गणाः मरुत्समूहरूपाः पूषरातयः पूषाख्योदेवोरातिर्दाता येषांतेपूषरातयः देवासः हेद्योतमानादेवाः विश्वेसर्वेयूयं ममम‌दीयंहवमाह्वानंश्रुतशृणुत इन्द्रज्येष्ठादयः संबोधनान्ताः ॥ १५ ॥

१५. जिन मरुतों में इन्द्र श्रेष्ठ हैं, जिनके दाता पूषा हैं, वे ही मरुद्‌गण हमारा आह्वान सुनें।

॥ इतिद्वितीयस्याष्टमेनवमोवर्गः ॥ ९ ॥

अथषोडशी—

अम्बि॑तमे॒नदी॑तमे॒देवि॑तमे॒सर॑स्वति ।
अ॒प्र॒श॒स्ताइ॑वस्मसि॒प्रश॑स्तिमम्ब॒नस्कृधि ॥ १६ ॥

अम्बि॑ऽतमे । नदी॑ऽतमे । देवि॑ऽतमे । सर॑स्वति । अ॒प्र॒श॒स्ताःऽइ॑व ।
स्म॒सि॒ । प्रऽश॑स्तिम् । अम्ब॒ । नः॒ । कृधि॒ ॥ १६ ॥

अंबितमेमातृणांश्रेष्ठे नदीतमेनदीनांश्रेष्ठे देवितमेदेवीनांश्रेष्ठे हेसरस्वति अप्रशस्ताइव धनाभावादप्रख्याताइव वयंस्मसिभवामः अंब हेमातः सरस्वति नोस्मभ्यंप्रशस्तिंधनसमृद्धिंकृधि कुरुप्रयच्छेत्यर्थः ॥ १६ ॥

१६. मातृगण में श्रेष्ठ, नदियों में श्रेष्ठ और देवों में श्रेष्ठ सरस्वती, हम दरिद्र हैं; हमें धनी करो।

त्वेविश्वासरस्वतिश्रितायूंषिदेव्याम् ।
शुनहो॑त्रेषुमत्स्वप्र॒जांदे॑विदिदिड्ढिनः ॥ १७ ॥

त्वे इति॑ । विश्वा॑ । स॒र॒स्व॒ति॒ । श्रि॒ता । आयूं॑षि । दे॒व्याम् ।
शु॒नःऽहो॑त्रेषु । म॒त्स्व॒ । प्र॒ऽजाम् । दे॒वि॒ । दि॒दि॒ड्ढि॒ । नः॒ ॥ १७ ॥

हेसरस्वति देव्यांद्योतमानायांत्वयि विश्वाविश्वानि सर्वाण्यायूंषिअन्नानिआयुः इत्यन्ननामसुपाठात् श्रिताआश्रितानि सन्ति शुनहोत्रेषु गृत्समदेष्वस्मासुऋषिषुमत्स्वसोमपानेनतृप्य किंच हेदेविसरस्वति नः अस्मभ्यंप्रजां दिदिड्ढिपुत्रान्देहि ॥ १७ ॥

१७. सरस्वती, तुम द्युतिमती हो। तुम्हारे आश्रय से अन्न है। शुन-होत्रों में तुम सोम पान करके तृप्त होओ। देवी, तुम हमें पुत्र दो।

अथाष्टादशी—

इमाब्रह्मसरस्वतिजुषस्ववाजिनीवति ।
यातेमन्मगृत्समदाऋतावरिप्रियादेवेषुजुह्वति ॥ १८ ॥

इमा । ब्रह्म । सरस्वति । जुषस्व । वाजिनीऽवति । या । ते । मन्म ।
गृत्सऽमदाः । ऋतऽवरि । प्रिया । देवेषु । जुह्वति ॥ १८ ॥

वाजिनीवति अन्नवति ऋतावरि उदकवति हेसरस्वति इमाइमानिब्रह्मब्रह्माणि हवींषि जुषस्व स्वीकुरु या यानि मन्म मननीयानि देवेषुप्रिया देवानांमध्येत्वय्येवप्रियाणि देवेषुप्रिया-णिवा तेत्वदर्थंगृत्समदाजुह्वति ॥ १८ ॥

१८. अन्नवती और जलवती सरस्वती, इस हव्य को स्वीकार करो। यह माननीय और देवों के लिए प्रिय है। गृत्समद लोग इसे तुम्हें देते हैं।

प्रेतांयज्ञस्यशंभुवायुवामिदावृणीमहे । अग्निंचहव्यवाहनम् ॥ १९ ॥

प्र । इताम् । यज्ञस्य । शम्ऽभुवा । युवाम् । इत् । आ ।
वृणीमहे । अग्निम् । च । हव्यऽवाहनम् ॥ १९ ॥

यज्ञस्ययागस्यशंभुवासुखस्यसंपादकेहविर्धानेअनसी रूपेणद्यावापृथिव्यौप्रेतांउत्तरवेदेः पश्चिमभागंप्रतिगच्छतां अथप्रत्यक्षकृतः युवामित् युवामेवआवृणीमहे प्रार्थयामहे हव्यवाहन-मग्निंचआवृणीमहे अग्निरत्रनिपातभागिति ॥ १९ ॥

१९. यज्ञ के सुख-सम्पादक द्यावा-पृथिवी, तुम आओ। हम तुम्हारी प्रार्थना करते हैं। हम हव्य-वाहन अग्नि की भी प्रार्थना करते हैं।

द्यावानःपृथिवीइमंसिध्रमद्यदिविस्पृशम् । यज्ञंदेवेषुयच्छताम् ॥ २० ॥

द्यावा । नः । पृथिवी इति । इमम् । सिध्रम् । अद्य । दिविऽस्पृशम् ।
यज्ञम् । देवेषु । यच्छताम् ॥ २० ॥

द्यावापृथिवीद्यावापृथिव्यावुभे सिध्रंस्वर्गादेःसाधकं दिविस्पृशं देवान्गच्छन्तं अद्यास्मिन्नहनि अस्माकं इमंयज्ञंदेवेषुयच्छतांनियच्छताम् ॥ २० ॥

२०. द्यावा-पृथिवी स्वर्ग आदि के साधक और देवों के ओर जानेवाली हैं। हमारे इस यज्ञ को देवों के पास ले जायें।

अथैकविंशी—

आवामुपस्थमद्रुहादेवाःसीदन्तुयज्ञियाः।इहाद्यसोमपीतये॥२१॥१०॥

आ। वाम्। उपऽस्थम्। अद्रुहा। देवाः। सीदन्तु। यज्ञियाः।
इह। अद्य। सोमऽपीतये॥ २१॥ १०॥

अद्रुहाद्रोहवर्जितेहेहविर्धाने यद्वाद्यावापृथिव्यौवांयुवयोरुपस्थंसमीपं यज्ञियायज्ञार्हा देवाः इहयज्ञे अद्यास्मिन्नहनिसोमपीतये सोमपानायआसीदन्तु॥ २१॥

२१. मानुता-शून्य द्यावा-पृथिवी, सोमपान के लिए यज्ञार्ह देवगण आज तुम्हारे पास बैठें।

॥ इतिद्वितीयस्याष्टमेदशमोवर्गः॥ १०॥

कनिक्रददितित्र्यृचंदशमंसूक्तं अत्रेयमनुक्रमणिका—कनिक्रदत्तृचमिति मण्डलद्रष्टागृत्समदोस्यऋषिः त्रिष्टुप्छन्दः कपिञ्जलरूपीन्द्रोदेवता वयसामनोज्ञांवाचंश्रुत्वैतत्सूक्तंजपेत् तथाचसूत्रितं—वयसाममनोज्ञावाचःश्रुत्वाकनिक्रदज्जनुषंप्रब्रुवाणइतिसूक्तेनजपेदिति।

तत्रप्रथमा—

कनिक्रदज्जनुषंप्रब्रुवाणइयर्तिवाचमरितेवनावम्।
सुमङ्गलश्चशकुनेभवासिमात्वाकाचिदभिभाविश्व्याविदत्॥ १॥

कनिक्रदत्। जनुषम्। प्रऽब्रुवाणः। इयर्ति। वाचम्।
अरिताऽइव। नावम्। सुऽमङ्गलः। च। शकुने। भवासि। मा।
त्वा। का। चित्। अभिऽभा। विश्व्या। विदत्॥ १॥

कनिक्रदत् पुनःपुनःशब्दायमानः जनुषंजनिष्यमाणमर्थं प्रब्रुवाणः सूचयन् कपिञ्जलः अरितेव कर्णधारइवनावंवाचमियर्तिप्रेरयति अथप्रत्यक्षकृतः हेशकुनेकपिञ्जल त्वंसुमङ्गलः मङ्गलकल्याणश्चभवासिभव किञ्च काचिदभिभा कोप्यभिभवः त्वात्वां विश्व्याविश्वतः सर्वासुदिक्षुमाविदत् माप्राप्नोतु शकुनिः शक्नोत्युन्नेतुमात्मानं न्यक्रन्दीजन्मप्रब्रुवाणोयथास्यशब्दस्तथानामेरयतिवाचमीरयितेवनावंसुमङ्गलश्चशकुनेभवकल्याणमङ्गलोमङ्गलंगिरतेर्गृणात्यर्थेगिरत्यर्थानिविवेतिप्रास्कः॥ १॥

१. बारम्बार शब्दायमान और भविष्यद्वक्ता कपिञ्जल जैसे कर्णधार नौका को परिचालित करता है, वैसे ही वाक्य को प्रेरित करता है। शकुनि, तुम कल्याण-सूचक होओ। किसी ओर से किसी प्रकार की पराजय तुम्हारे पास न आये।

अथद्वितीया—

मात्वाश्येनउद्वधीन्मासुपर्णोमात्वाविददिषुमान्वीरोअस्ता।
पित्र्यामनुप्रदिशंकनिक्रदत्सुमङ्गलोभद्रवादीवदेह ॥ २ ॥

मा । त्वा । श्येनः । उत् । वधीत् । मा । सुऽपर्णः । मा । त्वा ।
विदत् । इषुऽमान् । वीरः । अस्ता । पित्र्याम् । अनु । प्रऽदिशम् ।
कनिक्रदत् । सुऽमंगलः । भद्रऽवादी । वद । इह ॥ २ ॥

हेशकुने त्वात्वां श्येनः प्रबलः पक्षिविशेषो मावधीत्माहिंसीत् उतापिच सुपर्णः गरुडः पक्षिविशेषोमावधीत् माहिंसीत् तथाइषुमान् बाणवान्वीरः अस्ता शराणांक्षेप्ता धन्वीत्वा त्वांमाविदत्माप्रापत् किञ्च पित्र्यांप्रदिशंदक्षिणांदिशमनुदक्षिणस्यांदिशीत्यर्थः कनिक्रदत् पुनःपुनःशब्दंकुर्वन् सुमङ्गलः कल्याणमङ्गलः भद्रवादीशोभनवादीसन् इहास्मद्विषये वद मङ्गलंसूचय ॥ २ ॥

२. शकुनि, तुम्हें श्येन पक्षी न मारे—गरुड़ पक्षी भी न मारे। वह बलवान्, वीर और धनुर्धारी होकर तुम्हें न प्राप्त करे। दक्षिण दिशा में बार-बार शब्द करके और सुमंगल-भाषी होकर हमारे लिए प्रियवादी बनो।

अवक्रन्ददक्षिणतोगृहाणांसुमङ्गलोभद्रवादीशकुन्ते।
मानःस्तेनईशतमाघशंसोबृहद्वदेमविदथेसुवीराः ॥ ३ ॥११॥

अव । क्रन्द । दक्षिणतः । गृहाणाम् । सुऽमङ्गलः । भद्रऽवादी ।
शकुन्ते । मा । नः । स्तेनः । ईशत । मा । अघऽशंसः ।
बृहत् । वदेम । विदथे । सुऽवीराः ॥ ३ ॥ ११ ॥

शकुन्ते हेकपिञ्जल सुमङ्गलोभद्रवादीचसन् गृहाणांदक्षिणतः दक्षिणस्यांदिशिअव-क्रन्द शब्दंकुरु दक्षिणतःशब्दायमानःशकुन्तोमङ्गलसूचकोहि नोस्माकं स्तेनस्तस्करोमाई-शतमाईशिष्ट अघशंसः अनर्थकानांशंसकोपिमेशिष्ट उत्तमःपादोव्याख्यातचरः ॥ ३ ॥

३. शकुनि, सुमंगल-सूचक और प्रियवादी होकर घर की दक्षिण दिशा में बोलो, जिससे चोर और दुष्ट व्यक्ति हमारे ऊपर प्रभुत्व न करे। पुत्र और पौत्रवाले होकर हम इस यज्ञ में प्रभूत स्तुति करें।

प्रदक्षिणिदितित्र्यृचमेकादशंसूक्तंगार्त्समदमार्षं तथाचानुक्रान्तं—प्रदक्षिणित्र्याजगतमध्ये-विराडूर्ध्वबृहतीति द्वितीयाविराड्रूपा अष्टिर्वा इतरेजगत्यौ कपिञ्जलरूपीन्द्रोदेवता तथासाममनो-शांवाधंसूत्रानुमतप्रदक्षिणिदितिसूक्तंजपेत् सूत्रंमागेवोदाहृतम्।

तत्रप्रथमा—

प्रदक्षिणिदभिगृणन्तिकारवोवयोवदन्तऋतुथाशकुन्तयः।
उभेवाचौवदतिसामगाइवगायत्रंचत्रैष्टुभंचानुराजति॥ १॥

प्रऽदक्षिणित्। अभि। गृणन्ति। कारवः। वयः। वदन्तः। ऋतुऽथा। शकुन्तयः। उभे इति। वाचौ। वदति। सामगाःऽइव। गायत्रम्। च। त्रैस्तुभम्। च। अनु राजति॥ १॥

शकुन्तयः कपिञ्जलाः ऋतुथा कालेकालेवयोन्नंवदन्तःसूचयन्तः कारवः स्तोतारइव प्रदक्षिणित् प्रदक्षिणंअभिगृणन्तिअभिवदन्तु बहुवचनंपूजार्थं किञ्च उभेवाचौ गानंच श्रौतंच सामगाइव गायत्रंच त्रैष्टुभंच सामनीवशकुन्तिर्वदति अनुराजति शृण्वतोनुरक्तान्करोतीत्यर्थः॥ १॥

१. समय-समय पर अन्न की खोज करके स्तोताओं की तरह शकुनि-गण प्रदक्षिण करके शब्द करें। जैसे सामगायक लोग गायत्री और त्रिष्टुप् (दोनों साम) का उच्चारण करते हैं, वैसे ही कपिञ्जल भी दोनों वाक्य उच्चारण करता और श्रोताओं को अनुरक्त करता है।

अथद्वितीया—

उद्गातेवशकुनेसामगायसिब्रह्मपुत्रइवसवनेषुशंससि।
वृषेववाजीशिशुमतीरपीत्यासर्वतोनःशकुनेभद्रमा
वदविश्वतोनःशकुनेपुण्यमावद॥ २॥

उद्गाताऽइव। शकुने। साम। गायसि। ब्रह्मपुत्रःऽइव। सवनेषु। शंससि। वृषाऽइव। वाजी। शिशुऽमतीः। अपिऽइत्य। सर्वतः। नः। शकुने। भद्रम्। आ। वद। विश्वतः। नः। शकुने। पुण्यम्। आ। वद॥ २॥

शकुने हे कपिञ्जल उद्गातेव साम यथोद्गाता साम गायति तथा त्वं गायसि गानस्वनं करोषि ब्रह्मपुत्र इव यथा ब्राह्मणाच्छंसी सवनेषु शस्त्राण्यभिशंसति तथा त्वं कांश्चिदुद्वदसि मौनस्वरं करोषि वृषेव वाजी सेचनसमर्थोऽश्वः शिशुमतीर्वडवा अपीत्य अभिगत्य यथा शब्दं करोति तथा त्वमपि सर्वतः शिवं सहम्॥ २ ॥

२. शकुनि, जैसे उद्गीता साम गान करते हैं, वैसे ही तुम भी गाओ। यज्ञ में ब्रह्मपुत्र ऋत्विक् की तरह तुम शब्द करो। जैसे सेचन-समर्थ अश्व अश्वी के पास जाकर शब्द करता है, वैसे ही तुम भी करो। शकुनि, तुम सर्वत्र हमारे लिए मंगल-सूचक और पुण्य-जनक शब्द करो।

अथ तृतीया—

आवदंस्त्वं शकुने भद्रमा वद तूष्णीमासीनः सुमतिं चिकिद्धि नः।
यदुत्पतन्वदसि कर्करिर्यथा बृहद्वदेम विदथे सुवीराः ॥ ३ ॥ १२ ॥

आऽवदन् । त्वम् । शकुने । भद्रम् । आ । वद । तूष्णीम् । आसीनः ।
सुऽमतिम् । चिकिद्धि । नः । यत् । उत्ऽपतन् । वदसि ।
कर्करिः । यथा । बृहत् । वदेम । विदथे । सुऽवीराः ॥ १२ ॥

शकुने हे कपिञ्जल आवदन् शब्दं कुर्वन् त्वं भद्रमावद मङ्गलं वद तूष्णीमासीनः तूष्णीं स्थितोऽपि नोऽस्माकं सुमतिं चिकिद्धि बुध्यस्व यद्यदा उत्पतन् वदसि तदा कर्करिर्यथा कर्करिर्वदति कर्करिर्वाद्यविशेषः अन्यद्व्याख्यातपरम् ॥ ३ ॥

३. शकुनि, जिस समय तुम शब्द करते हो, उस समय हमारे लिए मंगल-सूचना करते हो। जिस समय चुप रहकर तुम बैठते हो, उस समय हमारे प्रति सुप्रसन्न रहते हो। उड़ने के समय तुम कर्करि (एक बाजा) की तरह शब्द करते हो। हम पुत्र और पौत्रवाले होकर इस यज्ञ में प्रभूत स्तुति करें।

॥ इति द्वितीयस्याष्टमे द्वादशो वर्गः ॥ १२ ॥

॥ इति द्वितीये मण्डले चतुर्थोऽनुवाकः ॥ ४ ॥

॥ इति गार्त्समदं द्वितीयं मण्डलं समाप्तम् ॥ २ ॥

## ॥ अथतृतीयंमण्डलम् ॥

वैश्वामित्रेतृतीयेमण्डलेपञ्चानुवाकाः तत्रप्रथमेनुवाके द्वादशसूक्तानि तत्रसोमस्यमेतिवयो-विंशत्यृचंप्रथमंसूक्तं तथाचानुक्रान्तं—सोमस्यत्र्यधिकेति अस्यमण्डलस्यद्रष्टाविश्वामित्रऋषिः अनुक्तत्वात्त्रिष्टुप्छन्दः मण्डलादित्वादाग्नेयमितिपरिभाषयाग्निर्देवता प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभेछन्दसिविनियोगः तथाचसूत्रम्—सोमस्यमातवसंपत्यग्निरितिनीणीति ।

तत्रप्रथमा—

सोम॑स्य मा तव॒सं॑ वक्ष्य॑ग्ने॒ वह्निं॑ चकर्थ वि॒दथे॑ यज॑ध्यै ।
दे॒वाँ अच्छा॒ दीद्य॑द्यु॒ञ्जे अद्रिं॑ शमा॒ये अ॑ग्ने त॒न्वं॑ जुषस्व ॥ १ ॥

सोम॑स्य । मा॒ । त॒वस॑म् । वक्षि॑ । अ॒ग्ने॒ । वह्नि॑म् । च॒क॒र्थ॒ ।
वि॒दथे॑ । यज॑ध्यै । दे॒वान् । अच्छ॑ । दीद्य॑त् । यु॒ञ्जे । अद्रि॑म् ।
श॒म॒ऽआ॒ये । अ॒ग्ने॒ । त॒न्व॑म् । जु॒ष॒स्व॒ ॥ १ ॥

हेअग्ने त्वंविदथे यज्ञे यजध्यै यष्टुं सोमस्यवह्निंवोढारं यं मा मां चकर्थकृतवानसि तं मा तवसंतपस्विनं बलिनं वक्षि कामयस्व किञ्च हेअग्ने देवानच्छअभिलक्ष्यदीद्यद्दीप्यमानोहं अद्रिंग्रावाणं युञ्जे अभिषवणायमुनज्मिशमाये शाम्यामिच तथामन्त्रान्तरं— ऋतेनदेवःसवि-ताशमायतेति । यद्वा शमायेस्तौमि शशमानः स्तुवतीति स्तुतिकर्मसुपाठात् तथाचमन्त्रान्तरं— सोमस्तेजेशमेचमर्दहति । किञ्च हेअग्ने तन्वंशरीरं जुषस्वरक्षयैसेवस्व यद्वा कर्माणितन्व-न्तं मां सेवस्वेत्यर्थः ॥ १ ॥

१. अग्निदेव, यज्ञ करने के लिए तुमने मुझे सोम का वाहक किया है; इसलिए मुझे बलवान् करो। अग्नि, मैं प्रकाशमान होकर, देवों को लक्ष्य कर, अभिषव के लिए, प्रस्तरखंड ग्रहण और स्तव करता हूँ। अग्नि, तुम मेरे शरीर की रक्षा करो।

अथद्वितीया—

प्राञ्चं॑ य॒ज्ञं च॑कृम॒ वर्ध॑तां॒ गीः स॒मिद्भि॑र॒ग्निं नम॑सा दुवस्यन् ।
दि॒वः श॑शासुर्वि॒दथा॑ कवी॒नां गृत्सा॑य चित्त॒वसे॑ गा॒तुमी॑षुः ॥ २ ॥

प्राञ्च॑म् । य॒ज्ञम् । च॒कृ॒म॒ । वर्ध॑ताम् । गीः । स॒मित्ऽभिः॑ । अ॒ग्निम् ।
नम॑सा । दु॒व॒स्य॒न् । दि॒वः । श॒शा॒सुः॒ । वि॒दथा॑ । क॒वी॒नाम् ।
गृत्सा॑य । चि॒त् । त॒वसे॑ । गा॒तुम् । ई॒षुः॒ ॥ २ ॥

हे अग्ने वयं यज्ञं प्राञ्चं प्रकर्षेण गच्छन्तं चकृम अकार्ष्म गीः मदीया स्तुतिः वर्धतां एधतां अग्निं समिद्भिर्नमसा हविषा च दुवस्यन् अस्मदीयाः परिचरेयुः किञ्च दिवो द्युलोकादागत्य देवाः कवीनां स्तोतॄणां विदथा ज्ञानानि स्तोत्राणि शाशासुः अन्वशिषन् अपि च गृत्साय गृणातेरिदं रूपं स्तोतव्यायाग्नये तवसे वृद्धाय गातुं स्तोत्रं ईषुश्चित् स्तोतार इच्छन्ति च चिदिति चार्थे ॥ २ ॥

२. अग्नि, हमने भली भाँति यज्ञ किया है। हमारी स्तुति वर्द्धित हो। समिधा और हव्य-द्वारा लोग अग्नि की परिचर्या करें। द्युलोक से आकर देवों ने स्तोताओं को स्तोत्र सिखाया है। स्तोतागण स्तवनीय और प्रवृद्ध अग्नि की स्तुति करने की इच्छा करते हैं।

मयो॑ दधे मेधि॒रः पू॒तद॑क्षो दि॒वः सु॒बन्धु॑र्ज॒नुषा॑ पृथि॒व्याः।
अवि॑न्दन्नु दर्श॒तम॒प्स्व१॒॑न्तर्दे॒वासो॑ अ॒ग्निम॒पसि॒ स्वसॄ॑णाम् ॥ ३ ॥

मयः॑ । द॒धे॒ । मे॒धि॒रः । पू॒तऽद॑क्षः । दि॒वः । सु॒ऽबन्धुः॑ । ज॒नुषा॑ । पृ॒थि॒व्याः । अवि॑न्दन् । ऊँ इति॑ । द॒र्श॒तम् । अ॒प्ऽसु । अ॒न्तः । दे॒वासः॑ । अ॒ग्निम् । अ॒पसि॑ । स्वसॄ॑णाम् ॥ ३ ॥

मेधिरः मेधावान् प्राज्ञः पूतदक्षः शुद्धबलः जनुषा जन्ममात्रेण सुबन्धुः शोभनबन्धुः स्वत एव बन्धुरिति यावत् योऽग्निर्दिवो द्युलोकस्य पृथिव्याः भूमेश्च मयः सुखं दधे विदधाति देवानां मनुष्याणां च सुखं करोतीति यावत् तं दर्शतं दर्शनीयमग्निं देवासो देवाः स्वसॄणां सरणशीलानां नदीनामप्स्वन्तर्गूढं स्थितं अपसि यज्ञवहनरूपे कर्मणि निमित्ते उ इति पूरणः अविन्दन् लब्धवन्तः ॥ ३ ॥

३. जो मेधावी, विशुद्ध-बल-शाली और जन्म से ही उत्कृष्ट बन्धु हैं, जो द्युलोक का सुख-विधान करते हैं, उन्हीं दर्शनीय अग्नि को, देवों ने, यज्ञ-कार्य के लिए, वहनशील नदियों के जल के बीच, प्राप्त किया है।

अव॑र्धयन्त्सु॒भगं॑ स॒प्त य॒ह्वीः श्वे॒तं ज॑ज्ञा॒नम॑रु॒षं म॑हि॒त्वा।
शिशुं॒ न जा॒तम॒भ्या॑रु॒रश्वा॑ दे॒वासो॑ अ॒ग्निं जनि॑मन्वपुष्यन् ॥ ४ ॥

अव॑र्धयन् । सु॒ऽभग॑म् । स॒प्त । य॒ह्वीः । श्वे॒तम् । ज॒ज्ञा॒नम् । अ॒रु॒षम् । म॒हि॒ऽत्वा । शिशु॑म् । न । जा॒तम् । अ॒भि । आ॒रुः॒ । अश्वाः॑ । दे॒वासः॑ । अ॒ग्निम् । जनि॑मन् । व॒पु॒ष्य॒न् ॥ ४ ॥

सप्त सर्पणशीलाः यह्वीर्यह्व्यः महत्यो नद्यः शुभ्रं शोभनवर्णं श्वेतं शुभ्रं जज्ञानं जातं महित्वा महत्त्वेन अरुषमारोचमानं अप्सु स्थितमग्निमवर्धयन् स्वकार्यभूताभिरोषधीभिर्वृद्धिमप्रापयन् यथा दिव्यमग्निं अपोवर्धयन्ति अविन्धनत्वात्तस्य किञ्च शिशुं नजातं यथाजातं शिशुमश्वाः वडवाः अभ्याऽऽरुः अभिगच्छन्ति तथा नद्यः उत्पन्नमग्निं अभ्याऽऽरुः अभिजग्मुः अपि च देवासः देवाः अग्निं जनिमन् जन्मन्युदके वपुष्यन् वपुर्दीप्तिमकुर्वन् ॥ ४ ॥

४. शोभन धनवाले, शुभ्र और अपनी महिमा से दीप्तिशाली अग्नि के उत्पन्न होते ही उन्हें सात नदियों ने संवर्द्धित किया था। जैसे अश्वी नवजात शिशु के पास जाती हैं, वैसे ही नदियाँ नवजात अग्नि के पास गई थीं। उत्पत्ति के साथ ही अग्नि को देवों ने दीप्तिमान् किया।

शुक्रेभिरङ्गैरजआततन्वान्क्रतुंपुनानःकविभिःपवित्रैः।
शोचिर्वसानःपर्यायुरपांश्रियोमिमीतेबृहतीरनूनाः ॥ ५ ॥ १२ ॥

शुक्रेभिः । अङ्गैः । रजः । आऽततन्वान् । क्रतुम् । पुनानः ।
कविऽभिः । पवित्रैः । शोचिः । वसानः । परि । आयुः । अपाम् ।
श्रियः । मिमीते । बृहतीः । अनूनाः ॥ ५ ॥ १२ ॥

अग्निः शुक्रेभिः शुक्रैरङ्गैस्तेजोभिरजोऽन्तरिक्षमाततन्वान् आततन्वन् व्याप्नुवन् क्रतुं कर्मणां कर्तारं यजमानं कविभिः कान्तमद्भिः स्तोतव्यैर्वा पवित्रैः शोधकैस्तेजोभिः पुनानः शोधयन् शोचिर्दीप्तिं वस्त्रस्थानीयं परि परितो वसानः आच्छादयन् अपां अपस्यतां कर्मवतां आयुरन्नं बृहतीः प्रभूताः अनूनाः संपूर्णाः श्रियः संपदश्च मिमीते करोति ॥ ५ ॥

५. शुभ्रवर्ण तेज के द्वारा अन्तरिक्ष को व्याप्त करके अग्निदेव यजमान को स्तुति-योग्य और पवित्र तेज के द्वारा परिशोधित करते तथा दीप्ति का परिधान करके यजमान को अन्न और प्रभूत तथा सम्पूर्ण सम्पत्ति देते हैं।

वव्राजासीमनदतीरदब्धादिवोयह्वीरवसानाअनग्नाः।
सनाअत्रयुवतयःसयोनीरेकंगर्भंदधिरेसप्तवाणीः ॥ ६ ॥

वव्राज । सीम् । अनदतीः । अदब्धाः । दिवः । यह्वीः । अवसानाः ।
अनग्नाः । सनाः । अत्र । युवतयः । सऽयोनीः । एकम् । गर्भम् ।
दधिरे । सप्त । वाणीः ॥ ६ ॥

अनवृतीः अभक्षयन्तीः अदब्धाः अहिंसिताः मातृभूताः अपोभिः संवर्धयोषणाज् भवति अग्निरपांयोषकः यंथापः शमयन्ति तदुभयमिहनास्तीत्युक्तं भवति कीदृश्यस्ताः दिवो-यह्वीः अन्तरिक्षस्यापत्यभूताः अवसानाः वस्त्रमनाच्छादयन्त्यः वस्त्रस्थानीयस्य धूमस्य वि-द्यमानत्वात् अनग्ननग्नाः किञ्च शाश्वतसनाः सनातन्यः युवतयः नित्यतरुण्यः नित्ययुवत्वाद्-स्पर्धः सयोनीः समानमन्तरिक्षंयोनिस्थानंयासांताः सप्तवाणीः नद्यः एकं अग्निगर्भंगर्भत्वं दधिरेदधते ॥ ६ ॥

६. अग्नि जल के चारों ओर जाते हैं। वह जल अग्नि को नहीं बुझाता अथवा वह अग्नि-द्वारा नहीं सूखता। अन्तरिक्ष के अपत्य-भूत अग्नि वस्त्र से आच्छादित नहीं हैं; तो भी, जल से वेष्टित होने के कारण, नग्न भी नहीं हैं। सनातन, नित्य, तरुण और एक स्थान से उत्पन्न सात नदियाँ एक अग्नि का गर्भ धारण करती हैं।

स्तीर्णाअस्यसंहतोविश्वरूपाघृतस्ययोनौस्रवथेमधूनाम्।
अस्थुरत्रधेनवःपिन्वमानामहीदस्मस्यमातरासमीची ॥ ७ ॥

स्तीर्णाः । अस्य । सम्ऽहतः । विश्वऽरूपाः । घृतस्य । योनौ । स्रवथे । मधूनाम् ।अस्थुः । अत्र । धेनवः । पिन्वमानाः । मही इति । दस्मस्य । मातरा । समीची इति सम्ऽईची ॥ ७ ॥

घृतस्योदकस्य योनौस्थाने अन्तरिक्षे संहतः पुञ्जीभूताः हन्तेःक्विप् विश्वरूपाः नाना-रूपाः स्तीर्णाः सर्वतःप्रसृताः अस्याग्नेःरश्मयः मधूनामुदकानां स्रवथेस्रवणे निमित्ते अस्थु-स्तिष्ठन्ति पिन्वमानाः पूर्यमाणाः अत्रअस्मिन्नग्नौ धेनवः सर्वेषां प्रीणयित्र्यः अभवन् समी-ची समञ्चन्त्यौ शोभमाने मही महत्यौ द्यावापृथिव्यौ दस्मस्यदर्शनीयस्याग्नेर्मातरा मातरौ भवतः ॥ ७ ॥

७. जल-वर्षण के अनन्तर जल के गर्भ-स्वरूप और अन्तरिक्ष में पुञ्जी-भूत नानावर्ण अग्नि की किरणें रहती हैं। इस अग्नि में जलरूप स्थूल धेनुएँ सबकी प्रीति-दायिका होती हैं। सुन्दर और महान् द्यावा-पृथिवी दर्शनीय अग्नि के माता-पिता हैं।

बभ्राणःसूनोसहसोव्यद्यौद्दधानःशुक्रारभसावपूंषि।
श्चोतन्तिधारामधुनोघृतस्यवृषायत्रवावृधेकाव्येन ॥ ८ ॥

बभ्राणः । सूनो इति । सहसः । वि । अद्यौत् । दधानः । शुक्रा । रभसा । वपूंषि । श्चोतन्ति । धाराः । मधुनः । घृतस्य । वृषा । यत्र । वावृधे । काव्येन ॥ ८ ॥

हेसहसःसूनो सहसस्पुत्रअग्ने वध्राणः सर्वैर्धार्यमाणःत्वं शुक्राशुक्राणिभास्वराणिरभसा वेगवन्ति वपूंषि अर्चींषिदधानः धारयंस्त्वं व्यद्यौत् विद्योतसे वृषाभिः यत्रयस्मिन्यजमानेकाव्येनस्तोत्रेणवावृधेवृद्धिंप्रामोतिवदानीमधुनः अत्यन्तं मधुरस्यघृतस्यउदकस्यधाराः श्चोतन्ति क्षरन्तीयदायजमानस्तोत्रेणअग्निस्तुष्टोभवति तदानींवृष्टिर्भवतीत्यर्थः ॥ ८ ॥

८. बल के पुत्र, सबके द्वारा तुम्हें धारण करने पर तुम उज्ज्वल और वेगवान् किरण धारण करके प्रकाशित होओ। जिस समय अग्नि यजमान के स्तोत्र-द्वारा बढ़ते हैं, उस समय मधुर जलधारा गिरती है।

पितुश्चिदूधर्जनुषाविवेदव्यंस्यधाराअसृजद्विधेनाः।
गुहाचरन्तंसखिभिःशिवेभिर्दिवोयह्वीभिर्नगुहाबभूव ॥ ९ ॥

पितुः। चित्। ऊधः। जनुषा। विवेद। वि। अस्य। धाराः।
असृजत्। वि। धेनाः। गुहा। चरन्तम्। सखिऽभिः। शिवेभिः।
दिवः। यह्वीभिः। न। गुहा। बभूव ॥ ९ ॥

पितुः अन्तरिक्षस्यऊधः ऊधःस्थानीयमधस्तनप्रदेशंअयमग्निर्जनुषास्वयमेवविवेद जानाति किंचायमग्निः अस्योधसःसंबन्धिन्योधाराः पयोधाराः व्यसृजत् विसृष्टवान् धेनामाध्यमिकावाचः विसृजति शिवेभिः शिवंकरैः सखिभिः आत्मनःसखिभूतैर्वायुभिः दिवोयह्वीभिः अन्तरिक्षस्यापत्यभूताभिरद्भिश्चसह गुहागुहायांचरन्तं वर्तमानमेनमग्निंगुहाचित् गुहायांस्थितः कोपिननभूव प्राप्तुंसमर्थोनाभवत् ॥ ९ ॥

९. जन्म के साथ ही अग्नि ने पिता (अन्तरिक्ष) के अधस्तन जल-प्रदेश को जाना था और अधस्तन-सम्बन्धिनी धारा या वृष्टि और अन्तरिक्षचारी वज्र को गिराया था। अग्नि, शुभकर्त्ता वायु आदि बन्धुओं के साथ, अवस्थान करते और अन्तरिक्ष के अपत्यभूत जल के साथ गुहा में वर्तमान रहते हैं। इन अग्नि को कोई नहीं पाता।

पितुश्चगर्भंजनितुश्चबभ्रेपूर्वीरेकोअधयत्पीप्यानाः।
वृष्णेसपत्नीशुचयेसबन्धूउभेअस्मैमनुष्येनिपाहि ॥ १० ॥ १४ ॥

पितुः। च। गर्भम्। जनितुः। च। बभ्रे। पूर्वीः। एकः।
अधयत्। पीप्यानाः। वृष्णे। सपत्नी इति सऽपत्नी। शुचये।
सबन्धू इति सऽबन्धू। उभे इति। अस्मै। मनुष्येइति।
नि। पाहि ॥ १० ॥ १४ ॥

अयमग्निः पितुश्च अन्तरिक्षस्यगर्भं वृष्टिद्वारागर्भभूतं जनितुः सर्वस्यलोकस्यजनयितुश्च ग्रहणश्च लोकं बभ्रेबिभर्ति एकएवाग्निः पूर्वीर्बह्वीः पीप्यानाः प्यायमानाः वृद्धिंप्राप्ताः ओषधीः अधयत् धयतिभक्षयति सपत्नी समानपतिकः सूर्यःपतिर्ययोःते मनुष्ये मनुष्येभ्योहिते उभेद्यावापृथिव्यौ वृष्णोवर्षित्रे अस्मैशुचयेअग्नये सबन्धूभवतः अनयोः अग्निरेवबन्धुरित्यर्थः हे अग्ने तेतिद्यावापृथिव्यौ निपाहि नितरांरक्ष ॥ १० ॥

१०. अग्नि पिता (अन्तरिक्ष) और जनयिता का गर्भ धारण करते हैं। एक अग्नि बहुतर वृद्धि को प्राप्त ओषधि का भक्षण करते हैं। सपत्नी और मनुष्यों की हितकारिणी द्यावा-पृथिवी अभीष्टवर्षी अग्नि के बन्धु हैं। अग्नि, तुम द्यावा-पृथिवी को अच्छी तरह बचाओ।

उ॒रौम॒हाँअ॑निबा॒धेव॑व॒र्धापो॑अ॒ग्निंय॒शसः॒संहिपू॒र्वीः।
ऋ॒तस्य॒योना॑वशय॒द्दमू॑नाजा॒मी॒नाम॒ग्निर॒पसि॒स्वसॄ॑णाम् ॥ ११ ॥

उ॒रौ। म॒हान्। अ॒नि॒ऽबा॒धे। व॒व॒र्ध। आपः॑। अ॒ग्निम्। य॒शसः॑। सम्। हि। पू॒र्वीः। ऋ॒तस्य॑। योनौ॑। अ॒श॒य॒त्। दमू॑नाः। जा॒मी॒नाम्। अ॒ग्निः। अ॒पसि॑। स्वसॄ॑णाम् ॥ ११ ॥

महानयमग्निः अनिबाधे असंबाधे उरौविस्तीर्णेन्तरिक्षे ववर्ध वर्धते अस्यवर्धनेकारणमाह—हियस्मात्कारणात् पूर्वीर्बह्व्यः यशसः यशोन्नं तद्वत्यआपः अग्निं संवर्धयन्ति एवं अग्निर्वृद्धिंप्राप्तोग्निः ऋतस्यउदकस्ययोनौ स्थानेन्तरिक्षेस्थितः स्वसॄणांस्वयंसरन्तीनां जामीनां भगिनीस्थानीयानां नदीनांहितुपूर्वेअपसिपयसि दमूनाः दान्तमनाःसन् अशयत् शेते ॥ ११ ॥

११. महान् अग्नि असम्बाध और विस्तीर्ण अन्तरिक्ष में वर्द्धित होते हैं; क्योंकि बहु-अन्नवान् जल उनको अच्छी तरह वर्द्धित करता है। जल के जन्मस्थान अन्तरिक्ष में स्थित अग्नि भगिनी-स्थानीया नदियों के जल में प्रशान्त चित्त से शयन करते हैं।

अथद्वादशी—

अ॒क्रोन॑ब॒भ्रिः स॑मि॒थेम॒हीनां॑दिदृ॒क्षेयः॑सू॒नवे॒भाऋ॑जीकः।
उ॒दु॒स्रिया॒जनि॑ता॒योज॒जाना॒पांगर्भो॒नृत॑मोय॒ह्वोअ॒ग्निः ॥ १२ ॥

अ॒क्रः। न। ब॒भ्रिः। स॒म्ऽइ॒थे। म॒हीना॑म्। दि॒दृ॒क्षेयः॑। सू॒नवे॑। भाःऽऋ॑जीकः। उत्। उ॒स्रियाः॑। जनि॑ता। यः। ज॒जान॑। अ॒पाम्। गर्भः॑। नृऽत॑मः। य॒ह्वः। अ॒ग्निः ॥ १२ ॥

जनिता सर्वस्यलोकस्यजनयिता अपांउदकानांगर्भः गर्भरूपः नृतमः नेतृतमः अविशयेनमनुष्याणांरक्षिता यह्वः महान् योग्निः अकः परेषामाक्रमितापरैरनाक्रमणीयोवा नेविपादपूरणः समिथेसङ्ग्रामे महीनांमहतीनांस्वसेनानां बभ्रिःभर्ता दिदृक्षेयः सर्वैर्दर्शनीयः भाऋणीकः स्वदीप्त्याप्रकाशमानः सोग्निः सूनवेहविषांप्रदात्रे यजमानाय यदर्थं उस्रियाः अपः उज्जानउदजनयत् सूनवे षूप्रेरणे इत्यस्माद्धातोरौणादिकोनुप्रत्ययः ॥ १२ ॥

१२. जो अग्निदेव समस्त संसार के जनक, जल के गर्भभूत, मनुष्यों के सुरक्षक, महान्, शत्रुओं के आक्रमणकर्ता, संग्राम में अपनी महती सेना के रक्षक, सबके दर्शनीय और अपनी दीप्ति से प्रकाशमान हैं, उन्होंने ही यजमान के लिए जल उत्पन्न किया है।

अ॒पां गर्भं॑ दर्श॒तमोष॑धीनां॒ वना॑ जजान सु॒भगा॒ विरू॑पम् ।
दे॒वास॑श्चि॒न्मन॑सा॒ सं हि ज॒ग्मुः पनि॑ष्ठं जा॒तं त॒वसं॑ दुवस्यन् ॥ १३ ॥

अ॒पाम् । गर्भ॑म् । द॒र्श॒तम् । ओष॑धीनाम् । वना॑ । ज॒जा॒न॒ ।
सु॒ऽभगा॑ । विऽरू॑पम् । दे॒वासः॑ । चि॒त् । मन॑सा । सम् । हि ।
ज॒ग्मुः । पनि॑ष्ठम् । जा॒तम् । त॒वस॑म् । दु॒व॒स्य॒न् ॥ १३ ॥

सुभगा सुभाग्या वना सर्वैर्वननीया अरणिः दर्शतं दर्शनीयं विरूपं नानाविधरूपं अपां ओषधीनांचगर्भमग्निंजजान अजनयत् देवासश्चित् सर्वेदेवाअपि पनिष्ठं स्तुत्यं तवसं वृद्धं जातं जायमानं चमग्निं मनसास्तुत्यासंजग्मुः उपागच्छन् हीतिपूरणः तमेवदुवस्यन्नपर्यचरन् ॥ १३ ॥

१३. सौभाग्यशाली अरणि ने दर्शनीय, विविध रूपवान् तथा जल और ओषधियों के गर्भभूत अग्नि को उत्पन्न किया है। सारे देवता लोग भी स्तुति-योग्य, प्रवृद्ध तथा सद्योजात अग्नि के पास स्तुति-सम्पन्न होकर गये थे। उन्होंने अग्नि की परिचर्या भी की थी।

बृ॒हन्त॒ इद्भा॒नवो॒ भाऋ॑जीकम॒ग्निं स॑चन्त वि॒द्युतो॒ न शु॒क्राः ।
गुहे॑व वृ॒द्धं सद॑सि॒ स्वे अ॒न्तर॑पा॒र ऊ॒र्वे अ॒मृतं॒ दुहा॑नाः ॥ १४ ॥

बृ॒हन्तः॑ । इत् । भा॒नवः॑ । भाऽऋ॑जीकम् । अ॒ग्निम् । स॒च॒न्त॒ ।
वि॒ऽद्युतः॑ । न । शु॒क्राः । गुहा॑ऽइव । वृ॒द्धम् । सद॑सि । स्वे ।
अ॒न्तः । अ॒पा॒रे । ऊ॒र्वे । अ॒मृत॑म् । दुहा॑नाः ॥ १४ ॥

अपारेअगाधेऊर्वेसमुद्रे अन्तर्मध्ये अमृतं उदकंदुहानाः क्षरन्तः बृहन्तइव महान्तएव भानवःरश्मयः शुक्राः दीप्यमानाः विद्युतोन विद्युदइवस्वेस्वकीयेसदसिसदनेअन्तरिक्षे गुहेवगुहायामिववृद्धंमहान्तं भाऋजीकं भासयादीप्यमानं अग्निंसचन्तआश्रयन्ति ॥ १४ ॥

१४. दीप्तिशाली बिजली की तरह महान्, सूर्यगण अगाध समुद्र के बीच अमृत का दोहन करके, गुहा की तरह, अपने भवन अन्तरिक्ष में प्रवृद्ध और प्रभा-द्वारा प्रदीप्त अग्नि का आश्रय करते हैं।

ईळेचत्वायजमानोहविर्भिरीळेसखित्वंसुमतिंनिकामः।
देवैरवोमिमीहिसंजरित्रेरक्षाचनोदम्येभिरनीकैः ॥ १५ ॥ १५ ॥
ईळे । च । त्वा । यजमानः । हविःऽभिः । ईळे । सखिऽत्वम् ।
सुऽमतिम् । निःऽकामः । देवैः । अवः । मिमीहि । सम् । जरित्रे ।
रक्ष । च । नः । दम्येभिः । अनीकैः ॥ १५ ॥ १५ ॥

यजमानोऽहं हविर्भिःसाधनैः त्वां ईळे पूजयामि च पश्वादिलक्षणंधनंचयाचे सुम-तिंशोभनांमतिं धर्मविषयांबुद्धिं निकामः नितरांकामयमानः त्वयासहसखित्वं ईळेयाचे त्वंदेवैःसहजरित्रेस्तोत्रेस्तोत्रंकुर्वते मह्यं अस्मदर्थं अवः पश्वादिविषयांरक्षांसंमिमीहिकुरु दम्येभिर्दमनीयैर्नियन्तव्यैः यजमाननियन्तव्यतया उपकृतस्तोका अनीकैस्तेजोभिः नः अस्मान् रक्षच ॥ १५ ॥

१५. हव्य-द्वारा मैं यजमान तुम्हारी स्तुति करता हूँ। धर्म-क्षेत्र में बुद्धि पाने की इच्छा से तुम्हारे साथ बन्धुत्व के लिए प्रार्थना करता हूँ। देवों के साथ मुझ स्तोता के पशु आदि की ओर मेरी, दुर्दम्य तेज के द्वारा, रक्षा करो।

उपक्षेतारस्तवसुप्रणीतेऽग्नेविश्वानिधन्यादधानाः।
सुरेतसाश्रवसातुञ्जमानाअभिष्यामपृतनायूँरदेवान् ॥ १६ ॥
उपऽक्षेतारः । तव । सुऽप्रनीते । अग्ने । विश्वानि । धन्या । दधानाः ।
सुऽरेतसा । श्रवसा । तुञ्जमानाः । अभि । स्याम । पृतनाऽयून् ।
अदेवान् ॥ १६ ॥

हेसुप्रणीते शोभनप्रणयन हेअग्ने तवउपक्षेतारः उपगन्तारः आश्रिताइत्यर्थःवयंते वि-श्वानिसर्वाणिधन्याधन्यानिपश्वादिधनप्राप्तिहेतुभूतानिकर्माणि दधानाः विदधानाः कुर्व-न्तः तुञ्जमानाः हवींषिप्रयच्छन्तोवयं सुरेतसाशोभनवीर्येण श्रवसात्वद्दत्तेनान्नेनअदेवान्देवे-भ्योऽन्यान् नभिषयुक्त्यायेन राक्षसाएवयुक्तस्ते यज्ञविघ्नकारिणस्तान् पृतनायून्परराष्ट्रप्रवेश-कारिणः शत्रूंश्चअभिष्यामअभिभवेम यद्वा देवानअपूजयतः शत्रूनितिव्याख्येयम् ॥ १६ ॥

१६. सुनेता अग्नि, हम तुम्हारा आश्रय चाहते हैं। हम समस्त धन की प्राप्ति का कारणीभूत कर्म करते और हव्य प्रदान करते हैं। हम तुम्हें वीर्यशाली अन्न प्रदान करके अदेवों और अहितकारी शत्रुओं को जीत सकें।

अथसप्तदशी—

आदे॒वाना॑मभवः के॒तुर॑ग्ने म॒न्द्रो विश्वा॑नि॒ काव्या॑नि वि॒द्वान् ।
प्रति॒ मर्ताँ॑ अवास॒यो दमू॑ना॒ अनु॑ दे॒वान्र॑थि॒रो या॑सि॒ साध॑न् ॥ १७ ॥

आ । दे॒वाना॑म् । अ॒भ॒वः॒ । के॒तुः । अ॒ग्ने॒ । म॒न्द्रः । विश्वा॑नि ।
काव्या॑नि । वि॒द्वान् । प्रति॑ । मर्ता॑न् । अ॒वा॒स॒यः॒ । दमू॑नाः । अनु॑ ।
दे॒वान् । र॒थि॒रः । या॒सि॒ । साध॑न् ॥ १७ ॥

हेऽग्ने मन्द्रः स्तुत्यः केतुर्यज्ञेषुदेवानां प्रज्ञापकस्त्वं आभवः आसमन्ताद्भवसि सर्वव्यापकोभवसीत्यर्थः किंच विश्वानि सर्वाणिकाव्यानियजमानादिभिःकृतानि स्तोत्राणिविद्वान् जानन् दमूनादान्तमनाः त्वंमर्तान् मर्त्यान् स्तोतॄन् स्वाभिलषितवस्तुसंपादनेनप्रीतान् विधाय एवेगृहेप्रत्यवासयः प्रतिवासयसि रथिरः रथी त्वं साधन देवानांहितानिकर्माणिसाधयन् देवान् अनुयासिच अनुगच्छसिच ॥ १७ ॥

१७. अग्नि, तुम देवों के स्तवनीय दूत हो। तुम सारे स्तोत्रों के ज्ञाता हो। तुम मनुष्यों को उनके अपने-अपने गृह में वास देते हो। तुम रथी हो। तुम देवों का कार्य-साधन करके उनके पीछे-पीछे जाते हो।

नि दु॑रो॒णे अ॒मृतो॒ मर्त्या॑नां॒ राजा॑ ससाद वि॒दथा॑नि॒ साध॑न् ।
घृ॒तप्र॑तीक उर्वि॒या व्य॑द्यौद॒ग्निर्विश्वा॑नि॒ काव्या॑नि वि॒द्वान् ॥ १८ ॥

नि । दु॒रो॒णे । अ॒मृतः॑ । मर्त्या॑नाम् । राजा॑ । स॒सा॒द॒ । वि॒दथा॑नि ।
साध॑न् । घृ॒तऽप्र॑तीकः । उ॒र्वि॒या । वि । अ॒द्यौ॒त् । अ॒ग्निः ।
विश्वा॑नि । काव्या॑नि । वि॒द्वान् ॥ १८ ॥

अमृतः नित्यः राजा राजमानोयोऽग्निः विदथानियज्ञान् साधन् साधयन् मर्त्यानां अग्निहोत्रिणां दुरोणेगृहे निषसाद निषीदति विश्वानिकाव्यानिविद्वान् जानन् घृतप्रतीकः घृतेनसंधुक्षितावयवः उर्वियाविस्तीर्णः सोऽग्निः व्यद्यौत् विद्योतते ॥ १८ ॥

१८. नित्य राजा अग्नि यज्ञ का साधन करके मनुष्यों के गृह में बैठते हैं। अग्नि सारे स्तोत्र जानते हैं। अग्नि का अंग घी के द्वारा दीप्तियुक्त है। विशाल अग्नि प्रकाशमान होते हैं।

आ नो॑ गहि स॒ख्येभिः॑ शि॒वेभि॑र्म॒हान्म॒हीभि॑रू॒तिभिः॑ सर॒ण्यन् ।
अ॒स्मे र॒यिं ब॑हु॒लं संत॑रुत्रं सु॒वाचं॑ भा॒गं य॒शसं॑ कृधी नः ॥ १९ ॥

आ। नः। गहि। सख्येभिः। शिवेभिः। महान्। महीभिः।
ऊतिऽभिः। सरण्यन्। अस्मे इति। रयिम्। बहुलम्।
सम्ऽतरुत्रम्। सुऽवाचम्। भागम्। यशसम्। कृधि। नः॥ १९॥

सरण्यन् सर्वत्रसरणंगमनमिच्छन् महांस्त्वं शिवेभिः शिवकरैः सख्येभिः सख्यैः सखिकर्मभिः महीभिः महतीभिरूतिभीरक्षाभिश्चनोस्मान् प्रतिआगहि आगच्छ अस्मे अस्मभ्यं बहुलंविस्तीर्णं संतरुत्रं सर्वेषामुपद्रवाणां संतारकं सुवाचं शोभनवाचं भागंसर्वैर्भजनीयंयशसं यशसाकीर्त्यासंयुक्तंरयिंधनं नोस्मभ्यं कृधिदेहि अस्मभ्यमितिपुनर्वचनमादरातिशयार्थम्॥ १९॥

१९. गमनेच्छु महान् अग्नि, मंगलमयी मैत्री और महान् रक्षा के साथ हमारे पास आओ और हमें बहुल, निरुपद्रव, शोभन स्तुतिवाला और कीर्तिशाली धन दो।

एताते॑अग्ने॒जनि॑मा॒सना॑नि॒प्रपू॒र्व्याय॒नूत॑नानिवोचम्।
म॒हान्ति॒वृष्णे॒सव॑ना॒कृतेमाजन्म॑न्जन्म॒न्निहि॑तोजा॒तवे॑दाः॥ २०॥

ए॒ता। ते॒। अ॒ग्ने॒। जनि॑म। सना॑नि। प्र। पू॒र्व्याय॑। नूत॑नानि।
वो॒च॒म्। म॒हान्ति॑। वृष्णे॑। सव॑ना। कृ॒ता। इ॒मा। जन्म॑न्ऽजन्मन्।
निऽहि॑तः। जा॒तऽवे॑दाः॥ २०॥

हेअग्ने पूर्व्यायपुरातनायतेतुभ्यं सनानिसनातनानिमहद्भिःसंभजनीयानिवानूतनानि अन्येष्वविद्यमानानि अद्यतनानिवा एताएतानिजनिम जन्मानिकर्माणिस्तोत्राणिवाप्रवोचं प्रोक्तवानस्मि जातवेदाः जातप्रज्ञोजातधनोवा जन्मन्जन्मन् जायन्तइतिजन्मानः तेषुसर्वेषु मनुष्येषुनिहितोयागार्थं तस्मैवृष्णे सर्वकामवर्षिणे अग्नये इमान्येतानि महान्तिबृहन्ति सवना सवनानि कृता कृतानि॥ २०॥

२०. अग्नि, तुम पुरातन पुरुष हो। तुम्हें लक्ष्य करके इन सब सनातन और नवीन स्तोत्रों का हम पाठ करते हैं। सर्व-भूतज्ञ अग्नि मनुष्यों के बीच निहित हैं। उन अभीष्टवर्षी अग्नि को लक्ष्य करके हमने यह सब सवन किया है।

अथैकविंशी—

जन्म॑न्जन्म॒न्निहि॑तोजा॒तवे॑दावि॒श्वामि॑त्रेभिरिध्यते॒अज॑स्रः।
तस्य॑व॒यंसु॑म॒तौय॒ज्ञिय॒स्यापि॑भ॒द्रेसौ॑मन॒सेस्या॑म॥ २१॥

जन्मन्ऽजन्मन् । निऽहितः । जातऽवेदाः । विश्वामित्रेभिः ।
इध्यते । अजस्रः । तस्य । वयम् । सुऽमतौ । यज्ञियस्य ।
अपि । भद्रे । सौमनसे । स्याम ॥ २१ ॥

जन्मञ्जन्मन् सर्वेषुमनुष्येषुनिहितोजातवेदाः विश्वामित्रेभिः विश्वामित्रैः पूजायांब-हुवचनं महर्षिणा विश्वामित्रेण योजातवेदाः अजस्रः अजस्रं अनवरतं इध्यते दीप्यते सुमतौ कल्याण्यांमतौ वर्तमानावयं तस्ययज्ञियस्ययज्ञार्हस्याग्नेर्भद्रे भजनीये सौमनसे सुमनोभावे अ-नुग्रहबुद्धौ अपिस्याम अपिभवेम प्रार्थनायांलिङ् ॥ २१ ॥

२१. सारे मनुष्यों में निहित और सर्व-भूतज्ञ अग्नि विश्वामित्र-द्वारा अनवरत प्रदीप्त होते हैं। हम उनका अनुग्रह प्राप्त करके यज्ञार्ह अग्नि का अभिलषणीय अनुग्रह प्राप्त करें।

इमंयज्ञंसहसावन्त्वंनोदेवत्राधेहिसुक्रतोररांणः ।
प्रयंसिहोतर्बृहतीरिषोनोऽग्नेमहिद्रविणमायजस्व ॥ २२ ॥

इमम् । यज्ञम् । सहसाऽवन् । त्वम् । नः । देवऽत्रा । धेहि ।
सुक्रतो इति सुऽक्रतो । ररांणः । प्र । यंसि । होतः । बृहतीः ।
इषः । नः । अग्ने । महि । द्रविणम् । आ । यजस्व ॥ २२ ॥

हेसहसावन् सहस्वन् बलवन् सुक्रतोशोभनकर्मन् हेअग्ने रराणः सर्वदारममाणः शब्दं कुर्वाणोवात्वं नोस्मदीयमिमंयज्ञं देवत्रादेवेषुधेहिनिधेहि हेहोतः देवानामाह्वातः बृहतीः इषः अ-न्नानिनोस्मभ्यं प्रयंसिप्रयच्छ हेअग्नेमहिमहत् द्रविणंपश्वादिलक्षणं धनं आयजस्व प्रयच्छ अत्रयजिर्दानकर्मा ॥ २२ ॥

२२. बलवान् और शोभन कर्मवाले अग्नि, तुम सदा विहार करते-करते हमारे यज्ञ को देवों के पास ले जाओ। देवों के बुलानेवाले अग्नि, हमें अन्न दो। अग्नि, हमें महान् धन दो।

इळामग्नेपुरुदंसंसनिंगोःशश्वत्तमंहवमानायसाध ।
स्यान्नःसूनुस्तनयोविजावाग्नेसातेसुमतिर्भूत्वस्मे ॥ २३ ॥ १६ ॥

इळाम् । अग्ने । पुरुऽदंसम् । सनिम् । गोः । शश्वत्ऽतमम् ।
हवमानाय । साध । स्यात् । नः । सूनुः । तनयः । विजाऽवा ।
अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥ २३ ॥ १६ ॥

इयं सर्वेषां पशूनां पशुपुरोडाशस्य स्विष्टकृतः पुरोनुवाक्या सूच्यते हि—इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध इत्यासमिंधो दिष्टाहीवि पुरोळाशस्विष्टकृत इति । हे अग्ने पुरुदंसं बहुकर्माणं गोः गवां सनिं दात्रीं इळां भूमिं हवमानाय स्तुवते मह्यं शश्वत्तमं चिरकालं यथा भवति तथा साध साधय नोऽस्माकं सूनुः पुत्रः तनयः सन्तानस्य विस्तारयिता विजावा पुत्रपौत्रादिरूपेण स्वयं विजायमानो विविधजावा स्यात् हे अग्ने सा प्रसिद्धा ते तव सुमतिः त्वदीयानुग्रहबुद्धिः अस्मे अस्मासु भूतु भवतु ॥ २३ ॥

२३. अग्नि, स्तोता को अनेक कर्मों के हेतुभूत और धेनुप्रदात्री भूमि हमें दो। हमारे वंश का विस्तार करनेवाला और सन्तति-जनयिता एक पुत्र उत्पन्न हो। अग्नि, हमारे प्रति तुम्हारा अनुग्रह हो।

॥ इति द्वितीयस्याष्टमे षोडशो वर्गः ॥ १६ ॥

वैश्वानराय इति पञ्चदशर्चं द्वितीयं सूक्तं तथा चानुक्रान्तं—वैश्वानराय पञ्चोना वैश्वानरीयं तु जागतं त्विति विश्वामित्रऋषिः जगतीछन्दः वैश्वानरोऽग्निर्देवता पृष्ठ्याभिप्लविकयोस्तृतीयेऽहन्याग्निमारुते वैश्वानराय धिषणामिति वैश्वानरनिविद्धानीयं सूक्तं तृतीयस्येति खण्डे सूत्रितम्—वैश्वानराय धिषणां धारावरा मरुत इति ।

वैश्वानरायधिषणामृतावृधेघृतंनपूतमग्नयेजनामसि ।
द्विताहोतारंमनुषश्चवाघतोधियारथंनकुलिशःसमृण्वति ॥ १ ॥

वैश्वानराय । धिषणाम् । ऋतऽवृधे । घृतम् । न । पूतम् ।
अग्नये । जनामसि । द्विता । होतारम् । मनुषः । च । वाघतः ।
धिया । रथम् । न । कुलिशः । सम् । ऋण्वति ॥ १ ॥

ऋतवृधे ऋतस्योदकस्य यज्ञस्य वा वर्धयित्रे वैश्वानराय वैश्वानरशब्दो यास्केन व्याख्यातः—वैश्वानरः कस्माद्विश्वान्नरान्नयति विश्व एनं नरा नयन्तीति वापि वा विश्वानर एव स्यात्प्रत्यृतः सर्वाणि भूतानि तस्य वैश्वानरस्तस्यैष भवतीति । तस्मै अग्नये पूतं घृतं न घृतमिव धिषणां स्तुतिं जनामसि जनयामः यथा घृतं प्रीतिं जनयति तथा प्रीतिं करोमीत्यर्थः द्विता द्विधा गार्हपत्याहवनीयरूपाभ्यां युक्तं होतारं देवानामाह्वातारमग्निं मनुषः मनुष्याः वाघतश्च ऋत्विजश्च धिया कर्मणा कुलिशो वास्यादिः रथं न रथमिव समृण्वति संस्कुर्वन्ति ॥ १ ॥

१. हम यज्ञ-वर्द्धक वैश्वानर को लक्ष्य करके विशुद्ध घृत की तरह प्रसन्नता-दायक स्तुति करेंगे। जैसे कुठार रथ का संस्कार करता है, वैसे ही मनुष्य और ऋत्विक् लोग देवों को बुलानेवाले गार्हपत्य और आहवनीय, इन दो प्रकार के रूपोंवाले अग्नि का संस्कार करते हैं।

अथद्वितीया—

सरोचयज्जनुषारोदसीउभेसमात्रोरभवत्पुत्रईड्यः ।
हव्यवाळग्निरजरश्चनोहितोदूळभोविशामतिथिर्विभावसुः ॥ २ ॥

सः । रोचयत् । जनुषा । रोदसी इति । उभे इति । सः । मात्रोः ।
अभवत् । पुत्रः । ईड्यः । हव्यऽवाट् । अग्निः । अजरः ।
चनःऽहितः । दुःऽदभः । विशाम् । अतिथिः । विभाऽवसुः ॥ २ ॥

सोऽग्निर्जनुषा जन्मनाउभेरोदसी द्यावापृथिव्यौ रोचयत् अरोचयत् प्रकाशयति स मात्रोर्द्यावापृथिव्योः ईड्यः स्तुत्यः पुत्रोऽभवत् हव्यवाट् हव्यानां वोढा अग्निः अन्नादिगुणयुक्तः अजरः जरारहितः चनोहितः चनोऽन्नंहितंयजमानेनिहितंयेनासौचनोहितः दूळभः हिंसितुमशक्यः सोयंविभावसुः प्रभाधनः विशांमनुष्याणां अतिथिरिवपूज्योभवति ॥ २ ॥

२. जन्म के साथ ही वे द्यावा-पृथिवी को प्रकाशित करते हैं। वे माता-पिता के अनुकूल पुत्र हुए थे। हव्यवाही, जरा-रहित, अन्नदाता, अहिंसित और प्रभाधन अग्नि मनुष्यों के अतिथि के समान पूज्य हैं।

क्रत्वादक्षस्यतरुषोविधर्मणिदेवासोअग्निंजनयन्तचित्तिभिः ।
रुरुचानंभानुनाज्योतिषामहामत्यंनवाजंसनिष्यन्नुपब्रुवे ॥ ३ ॥
क्रत्वा । दक्षस्य । तरुषः । विऽधर्मणि । देवासः । अग्निम् ।
जनयन्त । चित्तिऽभिः । रुरुचानम् । भानुना । ज्योतिषा ।
महाम् । अत्यम् । न । वाजम् । सनिष्यन् । उप । ब्रुवे ॥ ३ ॥

चित्तिभिर्ज्ञानैः उपलक्षितादेवासः देवाः तरुषः व्यसनेभ्यस्तारकस्यदक्षस्यबलस्य क्रत्वाकर्मणा विधर्मणि विधारकेयज्ञे अग्निंजनयन्त अजनयन् भानुनाभासमानेन ज्योतिषारुरुचानं रोचमानं महां महान्तं अग्निंअत्यंन भारसहमश्वमिव वाजमन्नं सनिष्यन् लिप्समानोऽहं उपब्रुवे स्तौमि ॥ ३ ॥

३. ज्ञानी देवता लोग विपद् से उद्धार करनेवाले बल के द्वारा यज्ञ में अग्नि को उत्पन्न करते हैं। जैसे भारवाही अश्व की स्तुति करता हूँ, वैसे ही अन्नाभिलाषी होकर दीप्तिमान् तेज के द्वारा प्रकाशमान और महान् अग्नि की स्तुति करता हूँ।

आमन्द्रस्यसनिष्यन्तोवरेण्यंवृणीमहेअह्रयंवाजमृग्मियम् ।
रातिंभृगूणामुशिजंकविक्रतुमग्निंराजन्तंदिव्येनशोचिषा ॥ ४ ॥

आ । मन्द्रस्य । सनिष्यन्तः । वरेण्यम् । वृणीमहे । अह्रयम् ।
वाजम् । ऋग्मियम् । रातिम् । भृगूणाम् । उशिजम् ।
कविऽक्रतुम् । अग्निम् । राजन्तम् । दिव्येन । शोचिषा ॥ ४ ॥

मन्द्रस्य स्तुत्यस्य वैश्वानरस्य संबन्धिनं वरेण्यं वरणीयं अह्रयं अलज्जावहं ऋग्मियं प्रशस्यं वाजमन्नं सनिष्यन्तः लिप्समाना वयं भृगूणां ऋषीणां रातिं अभिलषितार्थप्रदातारं उशिजं अभिलष्यं तं कविक्रतुं क्रान्तप्रज्ञं दिव्येन दिवि भवेन शोचिषा रोचिषा राजन्तं भ्राजमानमग्निमा-वृणीमहे संभजामहे ॥ ४ ॥

४. मैं स्तुति-योग्य वैश्वानर के श्रेष्ठ, लज्जा-रहित और प्रशंसनीय अन्न के अभिलाषी होकर भृगु-वंशियों के अभिलाषप्रद, अभिलषणीय, प्रज्ञावान् और स्वर्गीय दीप्ति के द्वारा शोभावाले अग्नि का भजन करता हूँ।

अग्निंसुम्नायंदधिरेपुरोजनावाजश्रवसमिहवृक्तबर्हिषः ।
यतस्रुचःसुरुचंविश्वदेव्यंरुद्रंयज्ञानांसाधदिष्टिमपसाम् ॥५॥१७॥

अग्निम् । सुम्नाय । दधिरे । पुरः । जनाः । वाजऽश्रवसम् । इह ।
वृक्तऽबर्हिषः । यतऽस्रुचः । सुऽरुचम् । विश्वऽदेव्यम् । रुद्रम् ।
यज्ञानाम् । साधत्ऽइष्टिम् । अपसाम् ॥ ५ ॥ १७ ॥

वृक्तबर्हिषः स्तीर्णबर्हिषः यतस्रुचः उद्यतस्रुचः ऋत्विजः सुम्नाय सुखार्थं वाजश्रवसं मनु-ष्येभ्यः प्रेरितान्नं सुरुचं यशस्वदीप्तिमन्तं विश्वदेव्यं विश्वेभ्यो देवेभ्यो हितं रुद्रं दुःखानां द्रावकं अपसां कर्मवतां यज्ञानां भवन्ती विप्रज्ञायमानाः येषां साधदिष्टिं साधितयज्ञं तादृशमग्निं इह-यज्ञे जनाः स्तोतारः पुरो दधिरे स्तुवन्ति ॥ ५ ॥

५. सुख की प्राप्ति के लिए ऋत्विक् लोग कुश को फैलाकर और स्रुक् को उठाकर अन्नवाता, अतीव प्रकाशक, सारे देवों के हितैषी, दुःखनाशक और यज्ञमानों के यज्ञ-साधक अग्नि की स्तुति करते हैं।

॥ इति द्वितीयस्याष्टमे सप्तदशो वर्गः ॥ १७ ॥

अथषष्ठी—

पावकशोचेतवहिसमंपरिहोतर्यज्ञेषुवृक्तबर्हिषोनरः ।
अग्नेदुवइच्छमानासआप्यमुपासतेद्रविणंधेहितेभ्यः ॥ ६ ॥

पावकऽशोचे । तव॑ । हि । क्षय॑म् । परि॑ । होत॒रिति॑ । य॒ज्ञेषु॑ ।
वृक्तऽबर्हिषः । नरः॑ । अग्ने॑ । दुवः॑ । इ॒च्छमा॑नासः । आप्य॑म् ।
उप॑ । आस॑ते । द्रवि॑णम् । धे॒हि॒ । तेभ्यः॑ ॥ ६ ॥

हेपावकशोचे शोचकदीप्ते हेहोतः देवानामाह्वातः हेअग्ने यज्ञेषुपरिपरितः वृक्तबर्हिषः स्तीर्णबर्हिषः दुवःपरिचरणमिच्छमानासः इच्छन्तोनरोनेतारोयजमानाः आप्यं आप्तुंयोग्यं त्वत्संबन्धिनंक्षयं निवासं यागगृहं उपासते उपविशन्ति हियस्मात् तेभ्योद्रविणंधनंधेहि विधेहि ॥ ६ ॥

६. पवित्र दीप्तिवाले और देवों को बुलानेवाले अग्नि, तुम्हारी सेवा के अभिलाषी यजमान लोग यज्ञ में कुश फैलाकर तुम्हारे योग्य याग-गृह की सेवा करते हैं। उन्हें धन दो।

आरोद॑सीअपृणदास्व॑र्म॒हज्जा॒तंयदे॑नम॒पसो॒अधा॑रयन् ।
सोअ॑ध्व॒राय॒परि॑णीयतेक॒विरत्यो॒नवाज॑सातये॒चनो॑हितः ॥ ७ ॥

आ । रोद॑सी॒ इति॑ । अ॒पृ॒ण॒त् । आ । स्वः॑ । म॒हत् । जा॒तम् ।
यत् । ए॒न॒म् । अ॒पसः॑ । अधा॑रयन् । सः । अ॒ध्व॒राय॑ । परि॑ ।
नी॒य॒ते॒ । क॒विः । अत्यः॑ । न । वाज॑ऽसातये । चनः॑ऽहितः ॥ ७ ॥

रोदसी द्यावापृथिव्यौ आपृणत् आपूरयत् तथामहत्प्रभूतंस्वः अन्तरिक्षं आपृणच्च अपसःकर्मवन्तोयजमानाः जातंयदग्निमेनमग्निं अधारयन् अत्योन अश्वइव कविःक्रान्तः सर्वस्याद्यः चनोहितः निहितान्नः सोयमग्निः वाजसातये वाजस्य अन्नस्यकीर्तेर्वासातये लाभाय अध्वराय परिणीयते यज्ञार्थंनीयते ॥ ७ ॥

७. अग्नि ने द्यावा-पृथिवी और विशाल आकाश को भी पूर्ण किया था। यजमानों ने नवजात अग्नि को धारण किया था। सर्वत्र व्याप्त और अन्नवाला अग्नि, अश्व की तरह अन्न लाभ के लिए, लाये जाते हैं।

न॒म॒स्यत॑ह॒व्यदा॑तिंस्वध्व॒रंदु॑व॒स्यत॒दम्यं॑जा॒तवे॑दसम् ।
र॒थीरृ॒तस्य॑बृह॒तोविच॑र्षणिर॒ग्निर्दे॒वाना॑मभवत्पु॒रोहि॑तः ॥ ८ ॥

न॒म॒स्यत॑ । ह॒व्यऽदा॑तिम् । सु॒ऽअ॒ध्व॒रम् । दु॒व॒स्यत॑ । दम्य॑म् ।
जा॒तऽवे॑दसम् । र॒थीः । ऋ॒तस्य॑ । बृ॒ह॒तः । विऽच॑र्षणिः । अ॒ग्निः ।
दे॒वाना॑म् । अ॒भ॒व॒त् । पु॒रःऽहि॑तः ॥ ८ ॥

रथीर्नेतावृहतोमहतः ऋतस्ययज्ञस्यविचर्षणिःद्रष्टायोग्निःदेवानांपुरोहितः पुरस्तादव-स्थापितोऽभवत् हव्यदातिं देवेभ्योहविषांदातारं स्वध्वरं शोभनयज्ञं दम्यं दमेभ्योगृहे-भ्योहितं जातवेदसं जातप्रज्ञं तमग्निं नमस्यतपूजयत दुवस्यतपरिचरत ॥ ८ ॥

८. नेता और महान् यज्ञ के दर्शक जो अग्नि देवों के सम्मुख उपस्थित हुए थे, उन्हीं हव्यदाता, शोभन यज्ञवाले, गृह के हितैषी और सर्वभूतज्ञ अग्नि की पूजा और परिचर्या करो।

तिस्रोयह्वस्यसमिधःपरिज्मनोग्नेरपुनन्नुशिजोअमृत्यवः ।
तासामेकामदधुर्मर्त्येभुजमुलोकमुद्वेउपजामिमीयतुः ॥ ९ ॥

तिस्रः । यह्वस्य । सम्ऽइधः । परिऽज्मनः । अग्नेः । अपुनन् । उशिजः । अमृत्यवः । तासाम् । एकाम् । अदधुः । मर्त्ये । भुजम् । ऊँ इति । लोकम् । ऊँ इति । द्वे इति । उप । जामिम् । ईयुः ॥ ९ ॥

उशिजः कामयमानाः अमृत्यवोमृत्युरहिताः येदेवाः यह्वस्यमहतः अग्नेः परिज्मनः परितोगन्तुः समिधः समिन्धिकाः प्रकाशिकास्तिस्रः पार्थिववैद्युतसूर्यरूपास्तिस्रस्तनूः अपुनन् अशोधयन् तेदेवाः भुजंसर्वेषांपालयित्रीं तासांतनूनांमध्ये एकांपार्थिवींतनुं मर्त्येमर्त्यलोके अदधुः न्यदधुः उइतिपादपूरणः इतरेद्वेतनू जामिंलोकं आसन्नमन्तरिक्षं उपेयतुः गच्छतः अथ-वातिस्रःसमिधः आघारसमिधौद्वेअनूयाजसमिदेकेति तासांसमिधामेकां अनूयाजसमिधं मर्त्येइहलोके भोगहेतुमनूयाजपर्यन्तमदधुः धारयन्ति प्रयाजाअनूयाजाइति प्रयाजेनानूया-जानांसहत्वात् प्रयाजानूयाजसमिधः इतरेद्वेसमिधौ अन्तरिक्षेदिव्यभोगहेतू उपेयतुः उपगच्छतः तिस्रःपरिधींस्तिस्रःसमिधइतिहिनिगमः ॥ ९ ॥

९. अमर देवों ने अग्नि की इच्छा करके महान् और जगत्-व्यापी अग्नि की पार्थिव, वैद्युतिक और सूर्यरूप तीन मूर्तियों को शोभित किया था। उन्होंने तीनों मूर्तियों में से जगत्पालिका पार्थिव मूर्ति को मर्त्यलोक में रक्खा, शेष दो अन्तरिक्ष में गईं।

विशांकविंविश्पतिंमानुषीरिषःसंसीमकृण्वन्त्स्वधितिंनतेजसे ।
सउद्वतोनिवतोयातिवेविषत्सगर्भमेषुभुवनेषुदीधरत् ॥१०॥१८॥

विशाम् । कविम् । विश्पतिम् । मानुषीः । इषः । सम् । सीम् । अकृण्वन् । स्वऽधितिम् । न । तेजसे । सः । उत्ऽवतः । निऽवतः । याति । वेविषत् । सः । गर्भम् । एषु । भुवनेषु । दीधरत् ॥१०॥ १८॥

इषः पश्वादिलक्षणं धनमिच्छन्त्यः मानुषीः मनुष्यप्रजाः विशां प्रजानां विश्पतिं प्रभुं-विधेयाविनं सीमेनं सर्वतः अग्निं स्वधितिं न असिमिव तेजसे तैक्ष्ण्यार्थं समकृण्वत् समस्कुर्वत सोऽग्निः उद्वतः उच्छ्रायवतः निवतः नीचैर्भावयुक्तप्रदेशान् येमिषत् व्याप्नुवन् यातिगच्छति सर्वभुवनेषु गर्भं गर्भत्वेनात्मानं दीधरत् अधारयत् ॥ १० ॥

१०. धनाभिलाषी प्रजाओं ने अपने प्रभु मेधावी अग्नि को तलवार की तरह तीखी करने के लिए संस्कृत किया था। ये उन्नत और निम्न प्रदेशों को व्याप्त करके गमन करते और सारे भुवनों का गर्भ धारण करते हैं।

सजिन्वतेजठरेषुप्रजज्ञिवान्वृषाचित्रेषुनानदन्नसिंहः ।
वैश्वानरःपृथुपाजाअमर्त्योवसुरत्नादयमानोविदाशुषे ॥ ११ ॥

सः । जिन्वते । जठरेषु । प्रजज्ञिऽवान् । वृषा । चित्रेषु ।
नानदत् । न । सिंहः । वैश्वानरः । पृथुऽपाजाः । अमर्त्यः ।
वसु । रत्ना । दयमानः । वि । दाशुषे ॥ ११ ॥

प्रजज्ञिवान् जातः वृषा वर्षकः स वैश्वानरः चित्रेषु नानाप्रकारेषु जठरेषु प्राणिनां भेदात् जठराग्निः तेषु जिन्वते वर्धते चित्रेषु नानाविधेष्वरण्येषु नानदत् अत्यर्थं शब्दं कुर्वन् सिंहो न सिंह इव किंविधो वैश्वानरः पृथुपाजाः पृथुतेजाः अथवा पृथुवेगः अमर्त्यः मरणधर्मरहितः दाशुषे हवींषि दत्तवते यजमानाय रत्ना रमणीयानि वसु वसूनि धनानि वि विशेषेण दयमानः प्रयच्छन् ॥ ११ ॥

११. नवजात और अभीष्टवर्षी वैश्वानर अग्नि नाना स्थानों में सिंह की तरह गर्जन करके अनेक जठरों में वर्द्धित होते हैं। वे अत्यन्त तेजस्वी और अमर हैं। वे यजमान को रमणीय वस्तु प्रदान करते हैं।

अथ द्वादशी—

वैश्वानरःप्रत्नथानाकमारुहद्दिवस्पृष्ठंमन्दमानःसुमन्मभिः ।
सपूर्ववज्जनयञ्जन्तवेधनंसमानमज्मंपर्यैतिजागृविः ॥ १२ ॥

वैश्वानरः । प्रत्नऽथा । नाकम् । आ । अरुहत् । दिवः । पृष्ठम् ।
मन्दमानः । सुमन्मऽभिः । सः । पूर्वऽवत् । जनयन् । जन्तवे ।
धनम् । समानम् । अज्मम् । परि । एति । जागृविः ॥ १२ ॥

द्युमन्नभिः स्तोतृभिः मन्दमानः स्तूयमानः वैश्वानरः जायमानएवमन्नथा प्रत्नइव चि-रंतनइव नाकं कंसुखं अकंदुःखं नविद्यतेअकंयस्मिन्तत् नाकं दिवः अन्तरिक्षस्यपृष्ठं उपरि-तनप्रदेशं स्वशोचिभिः आरुहत् आरोहति सवैश्वानरः पूर्ववत् पूर्वेभ्यऋषिभ्यइव जन्तवे स्तोत्रेयजमानाय धनंपश्वादिलक्षणं वनयन् संपादयन् जागृविःसदाप्रबुद्धः समानं सर्वेषां देवानांसाधारणं अध्वं आकाशमार्गं पर्येति सूर्यरूपेणगच्छति ॥ १२ ॥

१२. स्तोताओं-द्वारा स्तुति किये जानेवाले वैश्वानर अग्नि चिरन्तन की तरह अन्तरिक्ष की पीठ—स्वर्ग—पर चढ़ते हैं। प्राचीन ऋषियों के सदृश यजमानों को धन देकर वे जागरूक होकर देवों के साधारण मार्ग पर, सूर्यरूप से, भ्रमण करते हैं।

ऋतावानंयज्ञियंविप्रमुक्थ्य१मायंदधेमातरिश्वादिविक्षयम् ।
तंचित्रयामंहरिकेशमीमहेसुदीतिमग्निंसुवितायनव्यसे ॥ १३ ॥

ऋतऽवानम् । यज्ञियम् । विप्रम् । उक्थ्यम् । आ । यम् । दधे ।
मातरिश्वा । दिवि । क्षयम् । तम् । चित्रऽयामम् । हरिऽकेशम् ।
ईमहे । सुऽदीतिम् । अग्निम् । सुविताय । नव्यसे ॥ १३ ॥

ऋतावानं बलवन्तं यज्ञियंयज्ञार्हं विप्रंमेधाविनं उक्थ्यं स्तुत्यं दिविद्युलोकेक्षयं निवस-न्तं यमग्निं मातरिश्वावायुः द्युलोकादाहृत्यपृथिव्यां आदधे आहितवान् चित्रयामं नानावि-धगमनं हरिकेशं पिंगलार्चिषं सुदीतिं शोभनदीप्तिंतमग्निं नव्यसेनवतराय सुविताय सुष्ठुप्राप-णीयायधनाय तदर्थंईमहेयाचामहे ॥ १३ ॥

१३. बलवान्, यज्ञार्ह, मेधावी, स्तुतियोग्य और द्युलोक-वासी जिन अग्नि को द्युलोक से लाकर वायु ने पृथ्वी पर स्थापित किया है, हम उन्हीं नाना गतिवाले, पिंगलवर्ण किरण से युक्त और प्रकाशमान अग्नि से नया धन चाहते हैं।

शुचिंनयामन्निषिरंस्वर्दृशंकेतुंदिवोरोचनस्थामुषर्बुधम् ।
अग्निंमूर्धानंदिवोअप्रतिष्कुतंतमीमहेनमसावाजिनंबृहत् ॥ १४ ॥

शुचिम् । न । यामन् । इषिरम् । स्वःऽदृशम् । केतुम् । दिवः ।
रोचनऽस्थाम् । उषःऽबुधम् । अग्निम् । मूर्धानम् । दिवः ।
अप्रतिऽस्कुतम् । तम् । ईमहे । नमसा । वाजिनम् । बृहत् ॥ १४ ॥

नेतिसंप्रत्यर्थे शुचिंदीप्तं यामन्यामनिपथे इषिरंएषणीयं स्वर्दृशंसर्वदृशंसर्वपदार्थविज्ञान-युक्तं दिवः द्युलोकस्यकेतुं प्रज्ञापकं रोचनस्थांरोचनस्थं रोचनःसूर्यः तस्मिन् स्थितं उषर्बुधं

अग्निहोत्रिकरूपेण उषसिप्रबुध्यमानं दिवःस्वर्गस्यमूर्धानंप्रधानं अप्रतिष्कुतंअप्रतिहतप्रसार्वं वाजिनमन्नवन्तं बृहद् महान्तं तमग्निं नमसास्तोत्रेण ईमहेयाचामहे ॥ १४ ॥

१४. प्रदीप्त, यज्ञ में गमनकारी, सारे पदार्थों के ज्ञानभूत, द्युलोक के पताका-स्वरूप, सूर्य में अवस्थित, उषाकाल में जागरूक, अन्नवान् और महान् अग्नि को स्तोत्र-द्वारा याचना करता हूँ।

मन्द्रंहोतारंशुचिमद्वयाविनंदमूनसमुक्थ्यंविश्वचर्षणिम्।
रथंनचित्रंवपुषायदर्शतंमनुर्हितंसदमिद्रायईमहे ॥ १५ ॥ १९ ॥

मन्द्रम्। होतारम्। शुचिम्। अद्वयाविनम्। दमूनसम्। उक्थ्यम्।
विश्वऽचर्षणिम्। रथम्। न। चित्रम्। वपुषाय। दर्शतम्।
मनुःऽहितम्। सदम्। इत्। रायः। ईमहे ॥ १५ ॥ १९ ॥

मन्द्रं स्तुत्यंहोतारंदेवानामाह्वातारं शुचिंसर्वदाशुद्धं अद्वयाविनंद्वयहीनं अकुटिलं दमूनसंदानमनसं उक्थ्यंश्रेष्ठं विश्वचर्षणिंविश्वस्यद्रष्टारं चित्रं नानाविधवर्णं रथंन रथमिव वपुषाय रूपार्थं दर्शतंदर्शनीयं सदमित् सदैवमनुर्हितं सर्वेभ्योमनुष्येभ्योहितं तमग्निंरायोधनानिईमहेयाचामहे अन्नयाआर्थत्वादस्यद्विकर्मकत्वम् ॥ १५ ॥

१५. स्तुत्य, देवाह्वानकारी, सर्वदा, शुद्ध, अकुटिल, दाता, श्रेष्ठ, विश्वदर्शक, रथ की तरह नाना वर्णवाले, दर्शनीय रूपवाले और मनुष्यों के सदा कल्याणकर्त्ता उन अग्निदेव के पास में धन की याचना करता हूँ।

॥ इतिद्वितीयस्याष्टमेएकोनविंशोवर्गः ॥ १९ ॥

वैश्वानरायेत्येकादशर्चंतृतीयंसूक्तं वैश्वामित्रं अत्रेयमनुक्रमणिका—वैश्वानरायैकादशेति। पूर्वसूक्तेवैश्वानरीयंतुजागतंत्वित्युक्तत्वादस्यापिसूक्तस्यजगतीछन्दः वैश्वानरोग्निर्देवता अस्य सूक्तस्यअग्निष्टोमेआग्निमारुतशस्त्रेविनियोगः सूत्र्यतेहि—वैश्वानरायपृथुपाजसेशंनःकरत्यर्वतइति।

तत्रप्रथमा—

वैश्वानरायपृथुपाजसेविपोरत्नाविधन्तधरुणेषुगातवे।
अग्निर्हिदेवाँअमृतोदुवस्यत्यथाधर्माणिसनतानदूदुषत् ॥ १ ॥

वैश्वानराय। पृथुऽपाजसे। विपः। रत्ना। विधन्त। धरुणेषु।
गातवे। अग्निः। हि। देवान्। अमृतः। दुवस्यति। अथ। धर्माणि।
सनता। न। दूदुषत् ॥ १ ॥

विप्रामेधाविनः स्तोतारः पृथुपाजसे बहुबलायबहुस्थायवापाजः शब्दस्यबलाज्ञनाम्नोः पाठात् वैश्वानरायाग्नये धरुणेषुधर्मेषुयज्ञेषु रत्ना रमणीयानिस्तोत्राणि मावते सन्मार्गलाभाय विपन्य परिचरन्तिकुर्वन्ति अमृतः मरणरहितोग्निः देवान्दुवस्यति हविर्षांप्रदानेनपरिचरति हिःप्रसिद्धौ अथअतःकारणात् कोपिसनता सनातनानि धर्माणि यज्ञान् नदूदुषत् न दूषयति ॥ १ ॥

१. मेधावी स्तोता लोग, सन्मार्ग की प्राप्ति के लिए, बहु-बलशाली वैश्वानर को लक्ष्य कर यज्ञ में रमणीय स्तोत्रों का पाठ करते हैं। अमर अग्नि हव्य प्रदान के द्वारा देवों की परिचर्या करते हैं। इसलिए कोई सनातन यज्ञ को दूषित नहीं कर सकता।

अन्तर्दूतोरोदसीदस्मईयतेहोतानिषत्तोमनुषःपुरोहितः।
क्षयंबृहन्तंपरिभूषतिद्युभिर्देवेभिरग्निरिषितोधियावसुः॥ २ ॥

अन्तः। दूतः। रोदसी इति। दस्मः। ईयते। होता। निऽसत्तः।
मनुषः। पुरःऽहितः। क्षयम्। बृहन्तम्। परि। भूषति। द्युऽभिः।
देवेभिः। अग्निः। इषितः। धियाऽवसुः॥ २ ॥

दस्मोदर्शनीयोहोताग्निः दूतः देवानांदूतःसन् रोदसीरोदस्योर्द्यावापृथिव्योः अन्तर्मध्ये ईयतेगच्छति मनुषः मनोर्जातस्य मनुष्यस्यपुरोहितः आहवनीयादिरूपेणपुरतःस्थापितः निषत्तोनिषण्णःसन् अग्निर्द्युभिःदीप्तिभिः बृहन्तं महान्तं क्षयं यज्ञगृहं परिभूषति अलंकुरुते देवेभिःदेवैः इषितः प्रेषितोधियावसुः प्रज्ञयाख्यातः एतेद्वे अग्निविशेषणे ॥ २ ॥

२. दर्शनीय होता अग्नि, देवों के दूत होकर, द्यावा-पृथिवी के बीच जाते हैं। देवों-द्वारा प्रेरित धीमान् अग्नि यजमान के सामने स्थापित और उपविष्ट होकर महान् यज्ञ-गृह को अलंकृत करते हैं।

केतुंयज्ञानांविदथस्यसाधनंविप्रासोअग्निंमहयन्तचित्तिभिः।
अपांसियस्मिन्नधिसन्दधुर्गिरस्तस्मिन्सुम्नानियजमानआचके॥३॥

केतुम्। यज्ञानाम्। विदथस्य। साधनम्। विप्रासः। अग्निम्।
महयन्त। चित्तिऽभिः। अपांसि। यस्मिन्। अधि। सम्ऽदधुः।
गिरः। तस्मिन्। सुम्नानि। यजमानः। आ। चक्रे॥ ३ ॥

यज्ञानांकेतुंप्रज्ञापकंविदथस्ययज्ञस्यगृहस्यवासाधनं प्राप्तिसाधनं असाधारणकारणं तम्यमग्निं विप्रासोविप्राः चित्तिभिः स्वकर्मभिः महयन्त पूजयन्ति।किंच गिरः स्तोतारः यस्मि-

यमोऽग्यपांसिस्वानुष्ठेयानिकर्माणिअपिसंदधुः संदधते यजमानः तस्मिन्नग्नौ सुम्नानिसुखानि याशु आचके कामयते ॥ ३ ॥

३. मेधावी लोग यज्ञ के केतु-स्वरूप और यज्ञ के साधनभूत अग्नि को अपने वीर कर्म-द्वारा पूजित करते हैं। जिन अग्नि में स्तोता लोग अपने-अपने करने योग्य कर्मों को अर्पण करते हैं, उन्हीं अग्नि से यजमान सुख की आशा करते हैं।

पितायज्ञानामसुरोविपश्चितांविमानमग्निर्वयुनंचवाघताम्।
आविवेशरोदसीभूरिवर्पसापुरुप्रियोभन्दतेधामभिःकविः ॥ ४ ॥

पिता। यज्ञानाम्। असुरः। विपःऽचिताम्। विऽमानम्। अग्निः।
वयुनम्। च। वाघताम्। आ। विवेश। रोदसी इति।
भूरिऽवर्पसा। पुरुऽप्रियः। भन्दते। धामऽभिः। कविः ॥ ४ ॥

यज्ञानां पितापालयिता विपश्चितां विदुषांस्तोतॄणां असुरोबलप्रदः वाघतां ऋत्विजां वयुनं ज्ञानसाधनं विमानं विमीयतेऽनेनफलमितिविमानंयज्ञादिकर्मसाधनंचसोऽग्निः भूरिवर्पसा पार्थिववैद्युतादिबहुविधरूपेण रोदसीद्यावापृथिव्यौ आविवेश प्रविशति पुरुप्रियः मनुष्येषु अधिकं प्रियः अथवापुरूणां बहूनां प्रियः धामभिस्तेजोभिर्युक्तः कविरग्निर्भन्दते यजमानेन स्तूयते ॥ ४ ॥

४. यज्ञ के पिता, स्तोताओं के बलदाता, ऋत्विकों के ज्ञानहेतु और यज्ञादि कर्मों के साधनभूत अग्नि पार्थिव और वैद्युतादि रूप के द्वारा द्यावा-पृथिवी में प्रवेश करते हैं। अत्यन्त प्रिय और तेजस्वी अग्नि यजमान-द्वारा स्तुत होते हैं।

चन्द्रमग्निंचन्द्ररथंहरिव्रतंवैश्वानरमप्सुषदंस्वर्विदम्।
विगाहंतूर्णितविषीभिरावृतंभूर्णिंदेवासइहसुश्रियंदधुः ॥ ५ ॥ २० ॥

चन्द्रम्। अग्निम्। चन्द्रऽरथम्। हरिऽव्रतम्। वैश्वानरम्।
अप्सुऽसदम्। स्वःऽविदम्। विऽगाहम्। तूर्णिम्। तविषीभिः।
आऽवृतम्। भूर्णिम्। देवासः। इह। सुऽश्रियम्। दधुः ॥ ५ ॥ २० ॥

देवासोदेवाः चन्द्रमाह्लादकरं चन्द्ररथं हिरण्मयरथं चन्द्रआह्लादकोरथोयस्येति वा तंहरिव्रतं पिङ्गलवर्णं हरित्वचंवा हरित्वचमितिवियास्कान्तरं अप्सुषदं अप्सुसीदन्तं स्वर्विदं सर्वज्ञं विगाहं विगाहमानं सर्वव्याप्तं तूर्णिं क्षिप्रगामिनं शत्रूणां हिंसितारंवा तविषीभिः बलैरावृतं भूर्णिं भर्तारं सुश्रियं शोभनदीप्तिं वैश्वानरं अग्निं इह इहलोके दधुः आदधुः ॥ ५ ॥

५. आह्लादक, आह्लादजनक रथवाले, पिङ्गलवर्ण, जल के बीच निवास करनेवाले, सर्वज्ञ, सर्वत्र व्याप्त, शीघ्रगामी, बलशाली, भर्त्ता और दीप्तिवाले वैश्वानर अग्नि को देवों ने इस लोक में स्थापित किया है।

अ॒ग्निर्दे॒वेभि॒र्मनु॑षश्चज॒न्तुभि॑स्तन्वा॒नोय॒ज्ञंपु॑रु॒पेश॑संधि॒या।
र॒थीर॒न्तरी॑यते॒साध॑दिष्टिभिर्जी॒रोदमू॑नाअभिशस्ति॒चात॑नः ॥ ६ ॥
अ॒ग्निः । दे॒वेभिः॑ । मनु॑षः । च॒ । ज॒न्तुऽभिः॑ । त॒न्वा॒नः । य॒ज्ञम् ।
पु॒रु॒ऽपेश॑सम् । धि॒या । र॒थीः । अ॒न्तः । ई॒य॒ते॒ । साध॑दिष्टिऽभिः ।
जी॒रः । दमू॑नाः । अ॒भि॒श॒स्ति॒ऽचात॑नः ॥ ६ ॥

देवेभिःदेवैः साधदिष्टिभिः साधितयज्ञैर्जन्तुभिः ऋत्विग्भिश्च धियाकर्मणा मनुषोयजमानस्य पुरुपेशसं बहुरूपं पेशइतिरूपनाम पुरोडाशपशुसोमहविर्भेदैः एकाहाहीनसत्रात्मकभेदैश्च नानाविधरूपं यज्ञं तन्वानः कुर्वन्रथीः सर्वस्यलोकस्यनेता जीरः क्षिप्रकारी दमूनाः दान्तमनाः दानमनावा अभिशस्तिचातनः अभिशस्तीनामरातीनां यज्ञविघ्नकारिणां रक्षसां चातयितानाशयिताग्निः अन्तः द्यावापृथिव्योर्मध्ये ईयतेगच्छति ॥ ६ ॥

६. जो यज्ञ-साधक देवों और ऋत्विकों के साथ कर्म-द्वारा यजमान के नानाविध यज्ञों का सम्पादन करते हैं, जो नेता, शीघ्रगामी, दानशील और शत्रुओं के नाशक हैं, वे ही अग्नि द्यावा-पृथिवी के बीच जाते हैं।

अग्ने॒जर॑स्वस्वप॒त्यआयु॑न्यू॒र्जापि॑न्वस्व॒समिषो॑दिदीहि॒नः।
वयां॑सिजिन्वबृह॒तश्च॑जागृवउ॒शिग्दे॒वाना॒मसि॑सु॒क्रतु॑र्वि॒पाम् ॥ ७ ॥
अग्ने॑ । जर॑स्व । सु॒ऽअ॒प॒त्ये । आयु॑नि । ऊ॒र्जा । पि॒न्व॒स्व॒ । सम् ।
इषः॑ । दि॒दी॒हि॒ । नः॒ । वयां॑सि । जि॒न्व॒ । बृ॒ह॒तः । च॒ । जा॒गृ॒वे॒ ।
उ॒शिक् । दे॒वाना॑म् । असि॑ । सु॒ऽक्रतुः॑ । वि॒पाम् ॥ ७ ॥

हेअग्ने स्वपत्येशोभनपुत्रे आयुनि आयुषि निमित्तसप्तम्येषा आयुर्निमित्ते जरस्व देवान्स्तुहि होतारमभिप्राय ऊर्जा रसेनअन्नेनवा पिन्वस्वदेवान् प्रीणय नोऽस्माकं इषःसस्यार्थं वृष्टीः संदिदीहि संदीपय वयांसिअन्नानिच वयः इत्यन्ननामसुपाठात् जिन्वदेहि हेजागृवेसर्वदाजागरणशील बृहतःमहतोयजमानस्य जिन्वेतिसंबन्धः सुक्रतुःशोभनकर्माशोभनप्रज्ञोवात्वं विपांमेधाविनां देवानां उशिक् कान्तोऽसि ॥ ७ ॥

७. हम सुपुत्र और दीर्घ आयु प्राप्त करेंगे; इसलिए, हे अग्नि, तुम देवों की स्तुति करो। अन्न-द्वारा उन्हें प्रीत करो। हमारे धान्य के लिए भली भाँति वृष्टि को संचालित करो। अन्न दान करो। सदा

जागरण-शील अग्नि, तुम महान् यजमान को अन्न दो; क्योंकि तुम सुकर्मा और देवों के प्रिय हो।

विश्पतिंयह्वमतिथिंनरःसदायन्तारंधीनामुशिजंचवाघताम् ।
अध्वराणांचेतनंजातवेदसंप्रशंसन्तिनमसाजूतिभिर्वृधे ॥ ८ ॥

विश्पतिम् । यह्वम् । अतिथिम् । नरः । सदा । यन्तारम् । धीनाम् ।
उशिजम् । च । वाघताम् । अध्वराणाम् । चेतनम् । जातऽवेदसम् ।
प्र । शंसन्ति । नमसा । जूतिऽभिः । वृधे ॥ ८ ॥

नरोनेतारः स्तोतारोवा विश्पतिं विशांमनुष्याणांपतिंविश्वस्यपतिमितिवायह्वंमहान्तं अ-तिथिंसर्वस्यातिथिभूतं धीनांबुद्धीनांकर्मणांवा यन्तारंनियन्तारं वाघतांचऋत्विजांच उशिजं कान्तंमनोज्ञं अध्वराणांयागानांचेतनं प्रज्ञापकं जूतिभिर्वेगैर्युक्तं जातवेदसमग्निं वृधेवृद्धयेसमृद्ध्यै नमसानमस्कारेणस्तुतिभिश्च सदासर्वकालं प्रशंसन्ति प्रशंसांकुर्वन्ति ॥ ८ ॥

८. मनुष्यों के पति, महान्, अतिथि-भूत, बुद्धि-नियन्ता, ऋत्विकों के प्रिय, यज्ञ के ज्ञापक, वेगयुक्त और सर्वभूतज्ञ अग्नि की नेता लोग समृद्धि के लिए नमस्कार और स्तुति के द्वारा प्रशंसा करते हैं।

विभावादेवःसुरणःपरिक्षितीरग्निर्बभूवशवसासुमद्रथः ।
तस्यव्रतानिभूरिपोषिणोवयमुपभूषेमदमआसुवृक्तिभिः ॥ ९ ॥

विभाऽवा । देवः । सुऽरणः । परि । क्षितीः । अग्निः । बभूव ।
शवसा । सुमत्ऽरथः । तस्य । व्रतानि । भूरिऽपोषिणः । वयम् ।
उप । भूषेम । दमे । आ । सुवृक्तिऽभिः ॥ ९ ॥

विभावादीप्तिमान् देवः स्तूयमानः सुरणः अकारवर्णलोपश्छान्दसः शोभनंरमयतीति सुरमणः सुमद्रथः शोभनरथः अग्निः शवसाबलेन क्षितीः सर्वाः प्रजाः परिबभूव परितो-गृह्णाति अत्रभवतेरुपसर्गवशात्परिग्रहार्थत्वं भूरिपोषिणः बहूनांपोषयितुः पालयितुः दमे यज्ञगृहे दमइतिगृहनामसुपाठात् निवसतः तस्याग्नेर्व्रतानिकर्माणि वयंसुवृक्तिभिः स्तोत्रैः आसर्वतःउपभूषेम उपभूषयामः प्रकाशयामः ॥ ९ ॥

९. दीप्तिमान्, स्तूयमान, कमनीय और सुन्दर रथवाले अग्नि बल के द्वारा सारी प्रजा को व्याप्त करते हैं। हम अनेक के पालक और गृह में निवासी अग्नि के सारे कर्मों को, सुन्दर स्तोत्र-द्वारा, प्रकाशित करेंगे।

वैश्वानरतवधामान्याचकेयेभिःस्वर्विदभवोविचक्षण ।
जातआपृणोभुवनानिरोदसीअग्नेताविश्वापरिभूरसित्मना ॥१०॥

वैश्वानर । तव । धामानि । आ । चके । येभिः । स्वःऽवित् ।
अभवः । विऽचक्षण । जातः । आ । अपृणः । भुवनानि । रोदसी इति ।
अग्ने । ता । विश्वा । परिऽभूः । असि । त्मना ॥ १० ॥

हेवैश्वानर तवधामानित्वत्संबन्धीनितेजांसि आचके अभिष्टौमि हेविचक्षण प्राज्ञ त्वं येभिः यैस्तेजोभिः स्वर्वित् सर्ववित् सर्वज्ञः अभवः भवसि जातः जातमात्रस्त्वं भुवनानि भूतधातानि रोदसीद्यावापृथिव्यौ आपृणः आपूरयः हेअग्ने विश्वाविश्वानिसर्वाणि ता तानि भुवनानिभूतजातानि त्मनाआत्मना परिभूरसि परिग्रहीतासि ॥ १० ॥

१०. हे वैश्वानर, तुम जिस तेज के द्वारा सर्वज्ञ हुए हो, मैं तुम्हारे उसी तेज का स्तव करता हूँ। जन्म के साथ ही तुम द्यावा-पृथिवी और सारे भुवनों को व्याप्त कर लेते हो। अग्नि, तुम अपने सारे भूतों को व्याप्त करते हो।

वैश्वानरस्यदंसनाभ्योबृहदरिणादेकःस्वपस्ययाकविः ।
उभापितरामहयन्नजायताग्निर्द्यावापृथिवीभूरिरेतसा॥ ११॥ २१॥
वैश्वानरस्य । दंसनाभ्यः । बृहत् । अरिणात् । एकः । सुऽअप-
स्यया । कविः । उभा । पितरा । महयन् । अजायत । अग्निः ।
द्यावापृथिवी इति । भूरिऽरेतसा ॥ ११ ॥ २१ ॥

वैश्वानरस्याग्नेः दंसनाभ्यः तोषकारीभ्यः क्रियाभ्यः बृहन्महद्धनंभवतीतियत् यद्विषयं यतःकारणात् एकोमुख्यः कविरग्निः स्वपस्यया शोभनयज्ञादिकर्मेच्छयायजमानाविभ्योधनमरिणात् ददातिसोयमग्निः भूरिरेतसा बहुरेतस्कौ उभाउभौ पितरापितरौ मातापितरौद्यावापृथिवी द्यावापृथिव्यौ महयन् पूजयन् अजायत ॥ ११ ॥

११. वैश्वानर के सन्तोषजनक कर्म से महान् धन होता है। क्योंकि वे सुन्दर यज्ञ आदि कर्म की इच्छा से यजमानों को धन देते हैं। वे वीर्यशाली हैं। माता-पिता द्यावा-पृथिवी की पूजा करते हुए उत्पन्न हुए हैं।

समित्समिदित्येकादशर्चंचतुर्थंसूक्तं वैश्वामित्रं त्रैष्टुभं अत्रानुक्रमणिका समित्समिदाप्रियमिति इध्मादिस्वाहाकृत्यन्ताःपूर्वोक्ताःप्रत्यृचंदेवताः परोवैश्वामित्राणामाप्रीसूक्तं दर्शपूर्णमासयोः पत्नीसंयाजेषुत्वष्टुर्याज्या तन्नस्तुरीपमिति सूत्रितंच—इहत्वष्टारमग्रियंतन्नस्तुरीपमधपोषयित्विति । त्वाष्ट्रेपशौ पुरोडाशस्यानुवाक्या सूत्रितंच—तन्नस्तुरीपमधपोषयित्नुदेवत्वष्टःसविताविश्वरूपइति ।

· सप्तमप्रथमा—

समित्संमित्सुमना बोध्यस्मे शुचाशुंचा सुमतिं रासि वस्वः ।
आ देव देवान्यजथाय वक्षि सखा सखीन्त्सुमना यक्ष्यग्ने ॥ १ ॥

सम्इत्ऽसंमित् । सुऽमनाः । बोधि । अस्मे इति । शुचाऽशुंचा ।
सुऽमतिम् । रासि । वस्वः । आ । देव । देवान् । यजथाय । वक्षि ।
सखा । सखीन् । सुऽमनाः । यक्षि । अग्ने ॥ १ ॥

समित्समित् अत्यर्थंसमिद्धस्त्वं सुमनाः बोधिबुध्यस्व शुचाशुचा अत्यर्थं प्रसर्पता ज्योतिषायुक्तः त्वं वस्वोवसुनोधनस्यप्रदित्सया सुमतिं शोभनांबुद्धिं अस्मेअस्मभ्यं रासिदेहि हे देव द्योतमान देवान् यजनीयान् यजथाययज्ञाय तदर्थं आवक्षिआवहसि हेअग्नेसखादेवानां सखात्वं सुमनाःसन् सखीन् देवान् यक्षियजस्व ॥ १ ॥

१. हे समिद्ध अग्नि, अनुकूल मन से जागो। तुम अतीव गति-शील तेज से युक्त होकर हमारे ऊपर धन के लिए अनुग्रह करो। द्योतमान अग्नि, देवों को तुम यज्ञ में ले आओ। अग्नि, तुम देवों के सखा हो। अनुकूल मन से मित्र देवों का यज्ञ करो।

यं देवासुस्त्रिरहुन्नायजन्ते दिवेदिवे वरुणो मित्रो अग्निः ।
सेमं यज्ञं मधुमन्तं कृधी नुस्तनूनपाद्घृतयोनिं विधन्तंम् ॥ २ ॥

यम् । देवासः । त्रिः । अहन् । आऽयजन्ते । दिवेऽदिवे । वरुणः ।
मित्रः । अग्निः । सः । इमम् । यज्ञम् । मधुऽमन्तम् । कृधि ।
नः । तनूऽनपात् । घृतऽयोनिम् । विधन्तम् ॥ २ ॥

वरुणःमित्रःअग्निः एतेयंदेवासोदेवाः यमग्निंदिवेदिवेप्रतिदिवसं अहन्अह्नित्रिः प्रात-र्मध्याह्नसायंसवनेषुसवनेषु त्रिवारं आयजन्ते हेतनूनपात् तनूनांशरीराणां नपात्पालयिता सत्वंघृतयोनिं घृतस्योदकस्यकारणं विधन्तंविधीयमानंक्रियमाणं नोस्मदीयमिमंयज्ञं मधुमन्तं मध्वित्युदकनाम वृष्ट्यादिफलयुक्तंकृधिकुरु ॥ २ ॥

२. वरुण, मित्र और अग्नि जिन तनूनपात नामक अग्नि का, प्रतिदिन तीन बार करके, यज्ञ करते हैं, वे ही हमारे इस जल-कारण यज्ञ को वृष्टि आदि फल दें।

प्र दीधितिर्विश्ववारा जिगाति होतारमिळः प्रथमं यजध्यै ।
अच्छा नमोभिर्वृषभं वन्दध्यै स देवान्यक्षदिषितो यजीयान् ॥ ३ ॥

प्र । दीधितिः । विश्वऽवारा । जिगाति । होतारम् । इळः ।
प्रथमम् । यजध्यै अच्छ । नमःऽभिः । वृषभम् । वन्दध्यै ।
सः । देवान् । यक्षत् । इषितः । यजीयान् ॥ ३ ॥

विश्ववाराविश्वैर्जनैर्वरणीया दीधितिः स्तुतिः दीप्तिर्वा होतारं देवानामाह्वातारमग्निंप्रजि-
गाति जिगातु प्रकर्षेणगच्छतु प्रथमंमुख्यंअच्छआभिमुख्येन वृषभंसंपदांवर्षितारंवन्दध्यैव-
न्दितुंयोग्यमितिशेषः अग्निनमोभिः नमस्कारैः सह इळः इषः हवीरूपाण्यन्नानियजध्यै यष्टुंपी-
णयितुंमजिगातु प्रकर्षेणगच्छन्तु इषितः अस्माभिःप्रेरितः यजीयान्यष्टृतमः सोग्निर्देवान्
यक्षद्यजतु ॥ ३ ॥

३. देवों के आह्वानकारी अग्नि के पास सर्वजन-प्रिय स्तुति गमन करे। इला, प्रसन्नता उत्पन्न करने के लिए, प्रधान, अतीव अभीष्टवर्षी और वन्दनीय अग्नि के पास जायें। यज्ञकर्म में कुशल अग्नि, हमारे द्वारा प्रेरित होकर यज्ञ करें।

ऊर्ध्वोवांगातुरध्वरेअकार्यूर्ध्वाशोचींषिप्रस्थितारजांसि ।
दिवोवानाभान्यसादिहोतास्तृणीमहिदेवव्यचाविबर्हिः ॥ ४ ॥

ऊर्ध्वः । वाम् । गातुः । अध्वरे । अकारि । ऊर्ध्वा । शोचींषि ।
प्रऽस्थिता । रजांसि । दिवः । वा । नाभा । नि । असादि ।
होता । स्तृणीमहि । देवऽव्यचाः । वि । बर्हिः ॥ ४ ॥

वांयुवयोः अग्निबर्हिःषडभौवामित्युच्येते समिदादिभिः सहितस्यैवाग्नेर्देवतात्वात् ऊ-
र्ध्वः उन्नतः गातुर्यज्ञमार्गः अध्वरेयज्ञे अकारि आश्रयःक्रियते शोचींषिअर्चिष्मन्तिरजां-
सिहवींषिऊर्ध्वाऊर्ध्वंप्रस्थिता प्रस्थितानिगतानिसन्तिहोतानिर्दिवः दीप्यमानस्ययागगृहस्य
नाभा नाभौ मध्यप्रदेशेन्यसादिनिषीदति देवव्यचाः देवैर्व्याप्तंबर्हिश्च चार्थेवाशब्दः विस्तृणी-
महि विशेषेणस्तृणीमः ॥ ४ ॥

४. अग्नि और बर्हिरूप अग्नि के लिए यज्ञ में एक उन्नत मार्ग किया हुआ है। दीप्तियुक्त हव्य ऊपर जाता है। दीप्तिमान् यज्ञ-गृह के नाभिप्रदेश में होता उपविष्ट हैं। हम देवों के द्वारा व्याप्त कुश को बिछायेंगे।

सप्तहोत्राणिमनसावृणानाइन्वन्तोविश्वंप्रतियन्नृतेन ।
नृपेशसोविदथेषुप्रजाताअभीईमंयज्ञंविचरन्तपूर्वीः ॥ ५ ॥२२॥

सुप्त । होत्राणि । मनसा । वृणानाः । इन्वन्तः । विश्वम् । प्रति ।
यन् । ऋतेन । नृऽपेशसः । विदथेषु । प्र । जाताः । अभि ।
इमम् । यज्ञम् । वि । चरन्त । पूर्वीः ॥ ५ ॥ २२ ॥

मनसावृणानाः प्रार्थ्यमानाः ऋतेनउदकेन विश्वंइन्वन्तः प्रीणयन्तः देवाः सप्तहोत्राणि होतॄणांवषट्कर्तॄणांकर्माणिप्रतियन्प्रतिगच्छन्ति अतःपरंद्वारांस्तुतिः नृपेशसः नररूपाः विदथेषुयागेषुजाताः उत्पन्नाः पूर्वीर्बह्व्यः विग्रहवत्योयज्ञद्वाराभिमानिन्योदेवताः इममस्मदीयंयज्ञं विचरन्त विचरन्तु ॥ ५ ॥

५. जल-द्वारा संसार के प्रसन्नकर्ता देवता लोग सप्त यज्ञ में जाते हैं। वे अकपट चित्त से याचित होकर नररूपी यज्ञजात (अग्नि-रूप यज्ञ-द्वार-द्वय) प्रत्यक्ष होकर हमारे इस यज्ञ में आयें।

आभन्दमानेउषसाउपाकेउतस्मयेतेतन्वाविरूपे ।
यथानोमित्रोवरुणोजुजोषदिन्द्रोमरुत्वाँउतवामहोभिः ॥ ६ ॥

आ । भन्दमाने इति । उषसौ । उपाके इति । उत । स्मयेते इति ।
तन्वा । विरूपे इति विऽरूपे । यथा । नः । मित्रः । वरुणः ।
जुजोषत् । इन्द्रः । मरुत्वान् । उत । वा । महःऽभिः ॥ ६ ॥

भन्दमाने स्तूयमाने उपाकेपरस्परं संगते उषसानक्ता अन्योन्यापेक्षयाद्विवचनं नक्तोषसौरात्र्यहनी आ आगच्छतां उतअपिच विरूपेपृथग्रूपे तन्वाप्रकाशरूपेणशरीरेण स्मयेते प्रकाशेते मित्रोवरुणः उतवाअपिच इन्द्रः मरुत्वांश्च नोस्मान् यथाजुजोषत् यथासेवेत तथा महोभिस्तेजोभिर्युक्तेन्द्र मेद्यावापृथिव्यौकुरुताम् ॥ ६ ॥

६. स्तूयमान अग्निरूप रात और दिन, परस्पर-संगत होकर अथवा पृथक् रूप से, सशरीर प्रकाशित होकर आयें। मित्र, वरुण अथवा इन्द्र हमें जिस रूप से अनुगृहीत करते हैं, तेजस्वी होकर, उसी रूप को धारण करें। अथसप्तमी—

दैव्याहोतारापृथमान्यृञ्जेसप्तपृक्षासःस्वधयामदन्ति ।
ऋतंशंसन्तऋतमित्तआहुरनुव्रतंव्रतपादीध्यानाः ॥ ७ ॥

दैव्या । होतारा । प्रथमा । नि । ऋञ्जे । सप्त । पृक्षासः । स्वधया ।
मदन्ति । ऋतम् । शंसन्तः । ऋतम् । इत् । ते । आहुः । अनु ।
व्रतम् । व्रतऽपाः । दीध्यानाः ॥ ७ ॥

दैव्यादिव्यौ प्रथमाप्रथमौमुख्यौ होतारा आह्वातारौ अग्नी न्यृंजे प्रसाधयामि ऋतमुद-
कं शंसन्तः आशंसमानाः सप्तपृक्षासः पृक्षमन्नं वदन्तऋत्विजः तमग्निं स्वधया सोमेन हविषा मदन्ति
मादयन्ति व्रतपाः व्रतानां कर्मणां रक्षितारः दीध्यानाः दीप्यमानाः अथवा स्वकर्मभिरग्निं दीपयन्तः
ऋत्विजः अनुव्रतं व्रते व्रते कर्मणि अग्निमेवमाहुः अग्निमेव ऋतभूतमाहुरित्यर्थः एवकारार्थे
इच्छन्दः ॥ ७ ॥

७. मैं दिव्य और प्रधान अग्निरूप दोनों होताओं को प्रसन्न करता हूँ। यज्ञाभिलाषी, सप्त और अन्नवान् ऋत्विक् लोग हव्य-द्वारा अग्नि को प्रमत्त करते हैं। व्रत के रक्षक और दीप्तिशाली ऋत्विक् लोग प्रत्येक व्रत में सत्यरूप अग्नि को यह बात बोलते हैं।

आभारतीभारतीभिःसजोषाइळादेवैर्मनुष्येभिरग्निः।
सरस्वतीसारस्वतेभिरर्वाक्तिस्रोदेवीर्बर्हिरेदंसदन्तु ॥ ८ ॥

आ। भारती। भारतीभिः। सऽजोषाः। इळा। देवैः। मनुष्येभिः।
अग्निः। सरस्वती। सारस्वतेभिः। अर्वाक्। तिस्रः। देवीः। बर्हिः।
आ। इदम्। सदन्तु ॥ ८ ॥

भारतीभिः भरतस्य सूर्यस्य संबन्धिनीभिः अद्भिः सजोषाः संगता भारती वाक् आग-
च्छतु देवैर्मनुष्येभिः मनुष्यैश्च संगता सत्यः इळा च भूमिश्च आगच्छतु अग्निश्च सारस्वतेभिः स-
रस्वतिसंबंधिभिः मध्यमस्थानैः सह सरस्वती माध्यमिका वाक् च आगच्छतु तिस्रो देवीः
देव्यः त्रामिळाभारत्यः आगच्छन्तु अर्वागाभिमुख्यं इदमेव बर्हिः आसन्तु आसीदन्तु ॥८॥

८. भारती लोगों (सूर्य-सम्बन्धियों) के साथ अग्नि-रूप भारती आयें, देवों और मनुष्यों के साथ इला आयें, अग्नि भी आयें। सारस्वतगणों (अन्तरिक्षस्थ वचनों) के साथ सरस्वती भी आयें। ये तीनों देवियाँ आकर सम्मुखस्थ कुश पर बैठें।

तन्नस्तुरीपमधपोषयित्नुदेवत्वष्टर्विरराणःस्यस्व।
यतोवीरःकर्मण्यःसुदक्षोयुक्तग्रावाजायतेदेवकामः ॥ ९ ॥

तत्। नः। तुरीपम्। अध। पोषयित्नु। देव। त्वष्टः। वि।
रराणः। स्यस्वेति स्यस्व। यतः। वीरः। कर्मण्यः। सुऽदक्षः।
युक्तऽग्रावा। जायते। देवऽकामः ॥ ९ ॥

हे देव त्वष्टः सृष्टिकर्तः विरराणः विशेषेण रममाणः त्वं अध अनन्तरं नोस्माकं तुरीपं तारकं
पोषयित्नु पोषकं तत् प्रसिद्धं रेतः विस्यस्व मोचय यतो विमोचनात् वीरः सत्त्ववान् कर्मण्यः कर्म-

सुकुशलः सुदक्षः सुबलः युक्तग्रावा अभिषवार्थंग्रावयुक्तः सोमस्तुदित्यर्थः देवकामः देवान् कामयमानः पुत्रोजायते जायेत ॥ ९ ॥

९. अग्निरूप त्वष्टा देव, जिससे वीर, कर्मकुशल, बलशाली, सोमाभिषव के लिए प्रस्तर-हस्त और देवाभिलाषी पुत्र उत्पन्न हो सके, सन्तुष्ट होकर तुम हमें वैसा ही प्राण-कुशल और पुष्टिकारी वीर्य प्रदान करो।

वन॑स्पते॒ऽव॑सृ॒जोप॑दे॒वान॒ग्निर्ह॒विः श॑मि॒ता सू॑दयाति।
सेदु॒ होता॑ स॒त्यत॑रो यजाति॒ यथा॑ दे॒वानां॒ जनि॑मानि॒ वेद॑ ॥ १० ॥

वन॑स्पते। अव॑। सृ॒ज। उप॑। दे॒वान्। अ॒ग्निः। ह॒विः। श॒मि॒ता। सू॒द॒या॒ति॒। सः। इत्। ऊँ॒ इति॑। होता॑। स॒त्यऽत॑रः। य॒जा॒ति॒। यथा॑। दे॒वाना॑म्। जनि॑मानि। वेद॑ ॥ १० ॥

हेवनस्पते देवानुपावसृज समीपेकुरु शमितापशोःसंस्कर्ता अग्निः वनस्पतिस्थहविः सूदयाति देवान् प्रतिप्रेरयतु सत्यतरः अत्यर्थंसत्यः सत्यतरः सत्यस्वरूपः सइत् सएवहोतायजातियजतु यथा यतःकारणात् सएवाग्निः देवानां जनिमानिजन्मानि वेदवेत्ति अतः सएव यजत्वित्यर्थः उःपूरणः ॥ १० ॥

१०. अग्निरूप वनस्पति, तुम देवों को पास ले आओ। पशु के संस्कारक अग्नि (वनस्पति) देवों के लिए हव्य दें। वे ही यज्ञ-रूप देवता लोगों को बुलानेवाले अग्नि यज्ञ करें; क्योंकि वे ही देवों का जन्म जानते हैं।

आ या॑ह्यग्ने समिधा॒नो अ॒र्वाङिन्द्रे॑ण दे॒वैः स॒रथं॑ तु॒रेभिः॑।
ब॒र्हिर्न॑ आस्ता॒मदि॑तिः सुपु॒त्रा स्वाहा॑ दे॒वा अ॒मृता॑ मादयन्ताम् ॥ ११ ॥ २३ ॥

आ। या॒हि॒। अ॒ग्ने॒। स॒म्ऽइ॒धा॒नः। अ॒र्वाङ्। इन्द्रे॑ण। दे॒वैः। स॒ऽरथ॑म्। तु॒रेभिः॑। ब॒र्हिः। नः॒। आ॒स्ता॒म्। अदि॑तिः। सु॒ऽपु॒त्रा। स्वाहा॑। दे॒वाः। अ॒मृताः॑। मा॒द॒य॒न्ता॒म् ॥ ११ ॥ २३ ॥

हेअग्ने अर्वाङ् अस्मदभिमुखंसमिधानः समिध्यमानः ज्वालारूपेणदीप्यमानः त्वंआयाहिदेवतारूपेणागच्छ कथमितिउच्यते—नोस्माकंयज्ञेइन्द्रेणदेवैश्चतुरेभिः त्वरमाणैःदेवैः सरथंसमानरथं यथातथा आयाहि किंच सुपुत्राअदितिरपिनोबर्हिः आस्तां अध्यास्तां स्वाहा स्वाहाकारेणयुक्ताअमृताः नित्यादेवाः मादयन्तां तृप्यन्तु ॥ ११ ॥

११. अग्नि, तुम दीप्ति-युक्त होकर इन्द्र और शीघ्रताकारी देवों के साथ एक रथ पर हमारे सामने आओ। सुपुत्र-युक्ता अदिति हमारे कुश पर बैठें। नित्य देवगण अग्निरूप स्वाहाकारवाले होकर तृप्ति प्राप्त करें।

अधा॑यि । अ॒ग्निः । मानु॑षीषु । वि॒क्षु । अ॒पाम् । गर्भः॑ । मि॒त्रः ।
ऋ॒तेन॑ । साध॑न् । आ । ह॒र्य॒तः । य॒ज॒तः । सानु॑ । अ॒स्था॒त् । अभू॑त् ।
ऊँ इति॑ । विप्रः॑ । ह॒व्यः॑ । म॒ती॒नाम् ॥ ३ ॥

मित्रः यजमानानांमित्रभूतः ऋतेनसत्येनसाधन्कामान्साधयन् अपांगर्भोऽग्निः मानुषी-षुमनोःसंबन्धिनीषुविक्षुप्रजासु अधायिदेवैराहितः किंच हर्यतः स्पृहणीयःयजतोयष्टव्यः सः सानुरुच्छ्रितंधिष्ण्यं उत्तरवेद्याख्यं आस्थात् अध्यतिष्ठत् विप्रःप्राज्ञःअग्निः मतीनांमनुष्याणांस्तो-तृणांहव्यःस्तुत्यः अभूत् उःपूरणः ॥ ३ ॥

३. यजमानों के मित्र, यज्ञ के द्वारा अभिलाषा पूरी करनेवाले और जल के पुत्र अग्नि मनुष्यों के बीच स्थापित हुए हैं। अग्नि स्पृहणीय और यजनीय हैं। ये उन्नत स्थान पर बैठे हैं। ज्ञानी अग्नि स्तोताओं की स्तुति के योग्य हुए हैं।

मि॒त्रो अ॒ग्निर्भ॑वति॒ यत्समि॑द्धो मि॒त्रो होता॒ वरु॑णो जा॒तवे॑दाः ।
मि॒त्रो अ॑ध्व॒र्युरि॑षि॒रो दमू॑ना मि॒त्रः सिन्धू॑नामु॒त पर्व॑तानाम् ॥ ४ ॥

मि॒त्रः । अ॒ग्निः । भ॒व॒ति॒ । यत् । सम्ऽइ॑द्धः । मि॒त्रः । होता॑ । वरु॑णः ।
जा॒तऽवे॑दाः । मि॒त्रः । अ॒ध्व॒र्युः । इ॒षि॒रः । दमू॑नाः । मि॒त्रः ।
सिन्धू॑नाम् । उ॒त । पर्व॑तानाम् ॥ ४ ॥

एषऋक् अग्निसर्वात्मकत्वेनस्तौति यद्यदासमिद्धोऽग्निः तदामित्रोभवतिसूर्योभवति मित्र-एवसन् होताभवति वरुणोभवति जातवेदाःजातप्रज्ञः समित्रः अध्वर्युर्भवति दमूनाःदानमनाः दान्तमनावासएवइषिरः प्रेरकोवायुर्भवति उतअपिच सिन्धूनांनदीनां पर्वतानांचामित्रः सहा-योभवति ॥ ४ ॥

४. जिस समय अग्नि समिद्ध होते हैं, उस समय मित्र बनते हैं। वे ही, मित्र होता और सर्वज्ञ वरुण हैं। वे ही, मित्र, दानशील अध्वर्यु और प्रेरक वायु हैं। वे नदियों और पर्वतों के मित्र हैं।

पाति॑ प्रि॒यं रि॒पो अग्रं॑ प॒दं वेः पाति॑ य॒ह्वश्चर॑णं॒ सूर्य॑स्य ।
पाति॑ ना॒भा स॒प्तशी॑र्षाणम॒ग्निः पाति॑ दे॒वाना॑मुप॒माद॑मृ॒ष्वः ॥ ५ ॥ २४ ॥

पाति॑ । प्रि॒यम् । रि॒पः । अग्र॑म् । प॒दम् । वेः । पाति॑ । य॒ह्वः ।
चर॑णम् । सूर्य॑स्य । पाति॑ । नाभा॑ । स॒प्तऽशी॑र्षाणम् । अ॒ग्निः ।
पाति॑ । दे॒वाना॑म् । उ॒प॒ऽमाद॑म् । ऋ॒ष्वः ॥ ५ ॥ २४ ॥

मन्द्रो दर्शनीयोऽग्निः वेर्गन्तुः सर्वव्यापकायाः रिपो भूम्याः प्रियमग्रं प्रथमं पदं स्थानं पाति रक्षति यह्वो महान् सूर्यस्य चरणं चरत्यनेनेति चरणमन्तरिक्षं पाति नाभा नाभौ अन्तरिक्षस्य मध्ये सप्तशीर्षाणं मरुद्गणं पाति देवानां उपमादं उपमादकं यज्ञं पाति रक्षति ॥५॥

५. सुन्दर अग्नि सर्वव्याप्त पृथिवी के प्रिय स्थान की रक्षा करते हैं। महान् अग्नि सूर्य के विहरण-स्थान अन्तरिक्ष की रक्षा करते हैं। अन्तरिक्ष के बीच मरुतों की रक्षा करते हैं। वे देवों के प्रसन्नता-कारक यज्ञ की रक्षा करते हैं।

ऋभुश्चक्र ईड्यं चारु नाम विश्वानि देवो वयुनानि विद्वान्।
ससस्य चर्म घृतवत्पदं वेस्तदिदग्नी रक्षत्यप्रयुच्छन् ॥ ६ ॥

ऋभुः । चक्रे । ईड्यम् । चारु । नाम । विश्वानि । देवः । वयुनानि ।
विद्वान् । ससस्य । चर्म । घृतऽवत् । पदम् । वेः । तत् । इत् ।
अग्निः । रक्षति । अप्रऽयुच्छन् ॥ ६ ॥

ऋभुर्महान् विश्वानि सर्वाणि वयुनानि ज्ञातव्यान् पदार्थान् विद्वान् जानन् देवोऽग्निः ईड्यं स्तुत्यं चारु मनोज्ञं नाम जलं चक्रे करोति नामेत्युदकनामसु पाठात् वेर्व्याप्तस्य ससस्य स्वपतः शयानस्याप्यग्नेः चर्म रूपं घृतवद्दीप्तिमद्भवति सोऽग्निः तच्चर्माप्रयुच्छन् अप्रमाद्यन् पदं स्थानं रक्षति पालयति इदिति पूरणः ॥ ६ ॥

६. महान् और सारे ज्ञातव्यों के ज्ञाता अग्नि प्रशंसनीय और सुन्दर जल उत्पन्न करते हैं। अग्नि के निद्रित रहने पर भी उनका चर्म या रूप दीप्तिमान् रहता है। वे अग्नि सावधानी से उसकी रक्षा करते हैं।

आ योनिमग्निर्घृतवन्तमस्थात्पृथुप्रगाणमुशन्तमुशानः।
दीद्यानः शुचिर्ऋष्वः पावकः पुनःपुनर्मातरा नव्यसी कः ॥ ७ ॥

आ । योनिम् । अग्निः । घृतऽवन्तम् । अस्थात् । पृथुऽप्रगानम् ।
उशन्तम् । उशानः । दीद्यानः । शुचिः । ऋष्वः । पावकः ।
पुनःऽपुनः । मातरा । नव्यसी इति । करिति कः ॥ ७ ॥

उशानः कामयमानोऽग्निः घृतवन्तं दीप्तिमन्तं पृथुप्रगाणं पृथुगीर्णं उशन्तं कामयमानं योनिं स्थानमायतनं आ अस्थात् आतिष्ठति दीद्यानो द्योतमानः शुचिर्दर्शनीयः शुद्धो वा ऋष्वो महान् पावकः अन्येषां शोधयिताऽग्निः मातरा मातरौ द्यावापृथिव्यौ पुनःपुनः नव्यसी नवतरे कः करोति ॥ ७ ॥

७. दीप्तिमान्, विशेष रूप से स्तुत और स्वस्थान-प्रिय अग्नि अधिरूढ़ हुए हैं। दीप्तिशाली, शुद्ध, महान् और पवित्र अग्नि माता-पिता द्यावापृथिवी को नवीनतर करते हैं।

अथाष्टमी—

स॒द्योजा॒तओष॑धीभिर्ववक्षे॒यदी॒वर्ध॑न्तिप्र॒स्वो॑घृ॒तेन॑ ।
आप॑इवप्र॒वता॒शुम्भ॑मानाउरु॒ष्यद॒ग्निःपि॒त्रोरु॒पस्थे॑ ॥ ८ ॥

स॒द्यः । जा॒तः । ओष॑धीभिः । व॒व॒क्षे॒ । यदि॑ । वर्ध॑न्ति । प्र॒ऽस्वः॑ ।
घृ॒तेन॑ । आपः॑ऽइव । प्र॒ऽवता॑ । शुम्भ॑मानाः । उ॒रु॒ष्यत् । अ॒ग्निः ।
पि॒त्रोः । उ॒पऽस्थे॑ ॥ ८ ॥

सद्योजातोऽग्निः यदियदाओषधीभिः ववक्षेउह्यते तदाप्रवताप्रवणेनमार्गेणगच्छन्त्यः आप-इवशुंभमानाः शोभमानास्ताओषध्यः प्रस्वःफलानिप्रसुवानाःघृतेनोदकेनवर्धन्तिवर्धयन्ति आ-त्मस्थमग्निम् पित्रोर्द्यावापृथिव्योरुपस्थेमध्यप्रदेशेवर्धमानोऽग्निः उरुष्यत् अस्मान् रक्षतु ॥ ८ ॥

८. जन्म लेते ही अग्नि ओषधियों-द्वारा धृत होते हैं। उस समय पथ-प्रवाहित जल की तरह शोभित ओषधियाँ जल-द्वारा वर्द्धित होकर फल देती हैं। माता-पिता द्यावा-पृथिवी के क्रोड़ में बढ़कर अग्नि हमारी रक्षा करें।

उदु॑ष्टु॒तःस॒मिधा॑य॒ह्वोअ॑द्यौ॒द्वर्ष्म॒न्दि॒वोअधि॒नाभा॑पृथि॒व्याः ।
मि॒त्रोअ॒ग्निरीड्यो॑मात॒रिश्वा॒दू॒तोव॑क्षद्य॒जथा॑यदे॒वान् ॥ ९ ॥

उत् । ऊँ॒ इति॑ । स्तु॒तः । स॒म्ऽइधा॑ । य॒ह्वः । अ॒द्यौ॒त् । वर्ष्म॑न् ।
दि॒वः । अधि॑ । नाभा॑ । पृ॒थि॒व्याः । मि॒त्रः । अ॒ग्निः । ईड्यः॑ ।
मा॒त॒रिश्वा॑ । आ । दू॒तः । व॒क्ष॒त् । य॒जथा॑य । दे॒वान् ॥ ९ ॥

उइतिपादपूरणः स्तुतः अस्माभिःस्तुतः समिधासमिन्धनेनयह्वोमहान् अग्निः पृथिव्या-अधि उत्तरवेद्यां नाभानाभौमध्यप्रदेशे स्थितःसन्दिवःअन्तरिक्षस्य वर्ष्मन् वर्ष्मणिरूपे उदद्यौत् द्योतते मित्रः सर्वेषांमित्रभूतः ईड्यःस्तुत्यः मातरिश्वा मातर्यन्तरिक्षे श्वसितिप्राणितिस-र्वरूपेणचेष्टते इतिमातरिश्वा अथवा मातर्यरण्यां श्वसितिनिवसतीतिमातरिश्वा यथा-स्यास्कः—मातर्यन्तरिक्षेश्वसितिमातर्याश्वनितीतिवा । दूतः देवानांदूतःसन् यजथाय यज्ञायदे-वानावक्षत् आवहतु ॥ ९ ॥

९. हमारे द्वारा स्तुति और दीप्ति-द्वारा महान् अग्नि ने पृथिवी की नाभि या उत्तर वेदी पर स्थित होकर अन्तरिक्ष को प्रकाशित किया है। सबके मित्र और स्तुति-योग्य अरणि-प्रदीप्त अग्नि देवों के दूत होकर यज्ञ में देवों को बुलायें।

अथ दशमी—

**उदस्तम्भीत्समिधानाकमृष्वो३ग्निर्भवन्नुत्तमोरोचनानाम् ।**
**यदीभृगुभ्यःपरिमातरिश्वागुहासन्तंहव्यवाहंसमीधे ॥ १० ॥**

उत् । अस्तम्भीत् । सम्ऽइधा । नाकम् । ऋष्वः । अग्निः । भवन् ।
उत्ऽतमः । रोचनानाम् । यदि । भृगुऽभ्यः । परि । मातरिश्वा ।
गुहा । सन्तम् । हव्यऽवाहम् । सम्ऽईधे ॥ १० ॥

ऋष्वोमहानग्निः समिधातेजसानाकंस्वर्गं उदस्तंभीत् उदस्तभ्नात् रोचनानांरोचमानानांवि-वस्वतांमध्ये उत्तमोभवत् उत्कृष्टतमोभवत् मातरिश्वावायुः भृगुभ्यः आदित्यस्यरश्मिभ्यः परि परितः गुहागुहायांसन्तं हव्यवाहं हव्यानांवोढारमग्निं यदियदासमीधे समैधत तदानाकंअस्त-भ्नादितिसंबन्धः ॥ १० ॥

१०. जिस समय मातरिश्वा ने भृगुओं या आदित्य-रश्मियों के लिए गुहास्थित और हव्य-वाहक अग्नि को प्रज्वलित किया था, उस समय तेजस्वियों में श्रेष्ठ महान् अग्नि ने तेज-द्वारा स्वर्ग को स्तब्ध किया था।

**इळामग्नेपुरुदंसंसनिंगोःशश्वत्तमंहवमानायसाध ।**
**स्यान्नःसूनुस्तनयोविजावाग्नेसातेसुमतिर्भूत्वस्मे ॥ ११ ॥ २५ ॥**

इळाम् । अग्ने । पुरुऽदंसम् । सनिम् । गोः । शश्वत्ऽतमम् ।
हवमानाय । साध । स्यात् । नः । सूनुः । तनयः । विजाऽवा ।
अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥ ११ ॥ २५ ॥

पूर्वंव्याख्याता ॥ ११ ॥

११. अग्नि, तुम स्तोता को अनेक कर्मों के हेतुभूत और धेनु-प्रदात्री भूमि सदा प्रदान करो। हमारे वंश का विस्तारक और सन्तति-जनयिता एक पुत्र हो। हमारे प्रति तुम्हारा अनुग्रह हो।

प्रकारवइत्येकादशर्चंषष्ठंसूक्तंवैश्वामित्रमाग्नेयं प्रकारवइत्यनुक्रान्तत्वात् प्रातरनुवाका-श्विनशस्त्रयोःसूक्तविनियोगःपूर्वसूक्तएवमत्यभिरुपसस्तीर्णीत्यनेनोक्तः आग्रायणेपशौहविषो-याज्या सूत्रितंच—प्रकारवोमननावच्यमानाएकाचेतत्सरस्वतीनदीनामिति ऐभिरग्नइतिपात्नी-वतग्रहस्ययाज्या सूत्रितंच—आग्नीध्रःपात्नीवतस्ययजत्यैभिरग्नेसरथंयाह्यर्वाङितीति ।

समपणा—

प्रकारवोमननावच्यमानादेवद्रीचींनयतदेवयन्तः।
दक्षिणावाड्वाजिनीप्राच्येतिहविर्भरन्त्यग्नयेघृताची ॥ १ ॥

प्र । कारवः । मनना । वच्यमानाः । देवऽद्रीचीम् । नयत ।
देवऽयन्तः । दक्षिणाऽवाट् । वाजिनी । प्राची । एति । हविः ।
भरन्ती । अग्नये । घृताची ॥ १ ॥

हेकारवः कर्तारः देवयन्तः देवकामाः यूयंमननामननेनमन्त्रेणवच्यमानाः प्रेर्यमाणाःसन्तः देवद्रीचीं देवानभ्यञ्चतींस्रुचंप्रणयत प्रकर्षेणनयत प्रापयत दक्षिणावाट् आहवनीयस्यदक्षिणतः उह्यमानावाजिनीअन्नवती प्राचीप्रागग्राअग्नयेअग्न्यर्थं हविर्भरन्ती हविर्धारयन्ती घृताची घृतेनाक्तास्रुक् एतिगच्छति ॥ १ ॥

१. यज्ञकर्ता लोग, तुम सोमाभिलाषी हो। मंत्र-द्वारा प्रेरित होकर तुम देवार्चन-साधक स्रुक् ले आओ। जिसे आहवनीय अग्नि की दक्षिण दिशा में ले आया जाता है, जिसके अन्न है, जिसका अग्र भाग पूर्व दिशा में है और जो अग्नि के लिए अन्न धारण करता है, वही घृत-युक्त स्रुक् जाता है।

आरोदसीअपृणाजायमानउतप्ररिक्थाअधनुप्रयज्यो।
दिवश्चिदग्नेमहिनापृथिव्यावच्यन्तांतेवह्नयःसप्तजिह्वाः ॥ २ ॥

आ । रोदसी इति । अपृणाः । जायमानः । उत । प्र । रिक्थाः ।
अध । नु । प्रयज्यो इति प्रऽयज्यो । दिवः । चित् । अग्ने । महिना ।
पृथिव्याः । वच्यन्ताम् । ते । वह्नयः । सप्तऽजिह्वाः ॥ २ ॥

हेअग्ने जायमानस्त्वं रोदसीद्यावापृथिव्यौ गुणैःआअपृणाः आपूरय उतापिच हे प्रयज्यो प्रयष्टव्य अध अनन्तरं दिवश्चित दिवश्चअन्तरिक्षात् पृथिव्याश्च महिनामहिम्ना प्ररिक्थाः अतिरिक्तोऽसि अनेनबहुरविशेषणकः एवंविधस्यतेतव वह्नयः अग्नयः अंशभूताआहवनीयादयः वच्यन्तामिर्यन्तां किंविधास्तेसप्तजिह्वाः सप्तजिह्वात्मकाः ॥ २ ॥

२. जन्म के साथ ही तुम द्यावा-पृथिवी को पूर्ण करो। याग-योग्य, महिमा-द्वारा तुम अन्तरिक्ष और पृथिवी से प्रकृष्टतर होओ और तुम्हारे अंशभूत विशिष्ट अग्नि—सप्त जिह्वायें—पूजित हों।

द्यौश्चत्वापृथिवीयज्ञियासोनिहोतारंसादयन्तेदमाय।
यदीविशोमानुषीर्देवयन्तीःप्रयस्वतीरीळतेशुक्रमर्चिः ॥ ३ ॥

द्यौः । च । त्वा । पृथिवी । यज्ञियासः । नि । होतारम् । सादयन्ते ।
दमाय । यदि । विशः । मानुषीः । देवऽयन्तीः । प्रयस्वतीः ।
ईळते । शुक्रम् । अर्चिः ॥ ३ ॥

द्यौश्चान्तरिक्षंपृथिवीच यज्ञियासः यज्ञार्हादेवाश्चहोतारं त्वांदमाय दमोयज्ञः यस्मै अर्थं निषादयन्तेउपशामयन्ति यदियदामानुषीः मनोःसंबन्धिन्यः देवयन्तीः देवकामाः प्रयस्वतीः हविष्मत्यः विशःप्रजाः होतारः शुक्रंदीप्तमर्चिः अर्चिषंईळतेस्तुवन्ति ॥ ३ ॥

३. अग्नि, तुम होता हो। जिस समय देवाभिलाषी और हव्य-युक्त मनुष्य तुम्हारे दीप्त तेज की स्तुति करते हैं, उस समय अन्तरिक्ष, पृथिवी और यज्ञार्ह देवगण, यज्ञ-सम्पादन के लिए, तुम्हारी स्तुति करते हैं।

महान्त्सधस्थेध्रुवआनिषत्तोन्तर्द्यावामाहिनेहर्यमाणः ।
आस्क्रेसपत्नीअजरेअमृक्तेसबर्दुघेउरुगायस्यधेनू ॥ ४ ॥

महान् । सधऽस्थे । ध्रुवः । आ । निऽसत्तः । अन्तः । द्यावा ।
माहिने इति । हर्यमाणः । आस्क्रे इति । सपत्नी इति सऽपत्नी ।
अजरे इति । अमृक्ते इति । सबर्दुघे इति सबःऽदुघे ।
उरुऽगायस्य । धेनू इति ॥ ४ ॥

महान्अधिकोहर्यमाणः यजमानादिभिःकाम्यमानः यद्वा यजमानायधनंकामयमानः अग्निःद्यावान्तर्भूम्योर्मध्ये माहिनेमहिमायुक्ते सधस्थेस्वकीयेस्थाने ध्रुवःअचलःसन् आनिषत्तः निषण्णोभवति आस्क्रेआक्रमणशीले सपत्नी समानःएकःसूर्यःपतिर्ययोस्तेसपत्न्यौ अजरेजरारहिते अमृक्तेअन्येनाहिंसिते सबर्दुघे सबरित्युदकनामुदकं यस्यदोग्ध्र्यौ द्यावापृथिव्यौ उरुगायस्यपृथुगमनस्य अधिकस्तुतेर्वाअग्नेः धेनूप्रीणयित्र्यौभवतः ॥ ४ ॥

४. महान् और यजमानों के प्रिय अग्नि, द्यावा-पृथिवी के बीच, महिमावाले अपने स्थान पर, बैठे हैं। आक्रमणशील, सपत्नीभूता, जरारहिता, अहिंसिता और क्षीरप्रसविनी द्यावा-पृथिवी अत्यन्त गमनशील अग्नि की गायें हैं।

व्रतातेअग्नेमहतोमहानितवक्रत्वारोदसीआततन्थ ।
त्वंदूतोअभवोजायमानस्त्वंनेतावृषभचर्षणीनाम् ॥ ५ ॥ २६ ॥

व्रता । ते । अग्ने । महतः । महानि । तव । क्रत्वा । रोदसी इति ।
आ । ततन्थ । त्वम् । दूतः । अभवः । जायमानः । त्वम् । नेता ।
वृषभ । चर्षणीनाम् ॥ ५ ॥ २६ ॥

हेअग्ने महः सर्वोत्कृष्टस्य तेतव व्रतानि त्वत्संबन्धीनिकर्माणिमहानिमहान्तिभवन्ति यज्ञकृत्ताक्रतुनाप्रकाशेनरोदसी द्यावापृथिव्यौ आततन्थ विस्तृतवानसि त्वंदूतोऽभवःभव हे वृषभ वर्षणशील त्वंजायमानःसन् चर्षणीनांयजमानानां नेतासि फलप्रापकोऽसि ॥ ५ ॥

५. अग्नि, तुम सर्वोत्कृष्ट हो। तुम्हारा कर्म महान् है। तुमने यज्ञ-द्वारा द्यावा-पृथिवी को विस्तृत किया है। तुम दूत हो। अभीष्टवर्षी अग्नि, उत्पन्न होने के साथ ही तुम यजमान के नेता बनो।

ऋतस्यवाकेशिनायोग्याभिर्घृतस्नुवारोहिताधुरिधिष्व ।
अथावहदेवान्देवविश्वान्त्स्वध्वराकृणुहिजातवेदः ॥ ६ ॥
ऋतस्य । वा । केशिना । योग्याभिः । घृतऽस्नुवा । रोहिता ।
धुरि । धिष्व । अथ । आ । वह । देवान् । देव । विश्वान् ।
सुऽअध्वरा । कृणुहि । जातऽवेदः ॥ ६ ॥

हेदेव केशिना प्रशस्तकेशवन्तौ योग्याभिः योजनसाधनभूताभीरज्जुभिर्युक्तौ घृतस्नुवा घृतमुदकं क्षरन्तौ रोहितारोहितौ अश्वौ ऋतस्ययज्ञस्य वाशब्दश्चार्थे धुरिधिष्व धेहियोजयेत्यर्थः अथानन्तरंविश्वान् सर्वान्देवान् रथेसमारोप्य आवह हेजातवेदः तान्स्वध्वरा स्वध्वरान् शोभनानध्वरान् कृणुहिकुरु ॥ ६ ॥

६. द्युतिमान् अग्नि, प्रशस्त केशवाले, रज्जुयुक्त और घृतस्रावी रोहित नामक दोनों घोड़ों को यज्ञ के सम्मुख योजित करो। अनन्तर तुम सारे देवों को बुलाओ। सर्वभूतज्ञ, तुम उन्हें सुन्दर यज्ञ-युक्त करो।

दिवश्चिदातेरुचयन्तरोकाउषोविभातीरनुभासिपूर्वीः ।
अपोयदग्नउशधग्वनेषुहोतुर्मन्द्रस्यपनयन्तदेवाः ॥ ७ ॥
दिवः । चित् । आ । ते । रुचयन्त । रोकाः । उषः । विऽभातीः ।
अनु । भासि । पूर्वीः । अपः । यत् । अग्ने । उशधक् । वनेषु ।
होतुः । मन्द्रस्य । पनयन्त । देवाः ॥ ७ ॥

हेअग्ने यद्यदा वनेषुअरण्येषु अपःउशधक् कामयमानोदहन्वर्तसे तदातेरोकाः त्व-दीयादीप्तयः दिवश्चित् सूर्यादपि आरुचयन्त आरोचन्ते विभातीः विशेषेणभातीः प्रकाशमानाः पूर्वीःपुराणीः उषःउषसः अनुभासि मन्द्रस्यस्तुत्यस्य होतुःतवरोकान् देवाःस्तोतारः पनयन्त स्तुवन्ति ॥ ७ ॥

७. अग्नि, जिस समय तुम वन में जल का शोषण करते हो, उस समय सूर्य से भी अधिक तुम्हारी दीप्ति होती है। तुम भली भाँति प्रकाशमान पुरातन उषा के पीछे शोभित होते हो। स्तोता लोग स्तुतियोग्य होता अग्नि की स्तुति करते हैं।

अथाष्टमी—

उरौवायेअन्तरिक्षेमदन्तिदिवोवायेरोचनेसन्तिदेवाः ।
ऊमावायेसुहवासोयजत्राआयेमिरेरथ्योअग्नेअश्वाः ॥ ८ ॥

उरौ । वा । ये । अन्तरिक्षे । मदन्ति । दिवः । वा । ये । रोचने ।
सन्ति । देवाः । ऊमाः । वा । ये । सुऽहवासः । यजत्राः ।
आऽयेमिरे । रथ्यः । अग्ने । अश्वाः ॥ ८ ॥

उरौविस्तीर्णे अन्तरिक्षे येदेवामदन्ति हृष्यन्ति दिवःसूर्यस्य रोचनेप्रकाशने आलोके ये देवाः सन्ति ऊमाः ऊमसंज्ञकाः पितरःसन्ति यजत्राः यष्टव्यायेदेवाः सुहवासः शोभनाह्वानाः आयेमिरे आगच्छन्ति रथ्यःरथिनःतव ये अश्वाःसन्ति हेअग्ने तैःसर्वैःसार्धं आयाहीत्युत्तर-ऋचोःसंबन्धः वाक्यपूरणाः ॥ ८ ॥

८. विस्तीर्ण अन्तरिक्ष में जो देवगण हृष्ट हैं, आकाश की दीप्ति में जो सब देवता हैं, 'ऊम' संज्ञक जो यजनीय पितर लोग भली भाँति आहूत होकर आगमन करते हैं, रथी अग्नि के जो सब अश्व हैं—

ऐभिरग्नेसरथंयाह्यर्वाङ्नानारथंवाविभवोह्यश्वाः ।
पत्नीवतस्त्रिंशतंत्रींश्चदेवाननुष्वधमावहमादयस्व ॥ ९ ॥

आ । एभिः । अग्ने । सऽरथम् । याहि । अर्वाङ् । नानाऽरथम् ।
वा । विऽभवः । हि । अश्वाः । पत्नीऽवतः । त्रिंशतम् । त्रीन् ।
च । देवान् । अनुऽस्वधम् । आ । वह । मादयस्व ॥ ९ ॥

हेअग्ने एभिः पूर्वोक्तैर्देवगणैःसार्धं सरथंसमानरथं नानारथंवा आत्मानं तन्मुखेनआरो-प्यवाअर्वाङ् अस्मदभिमुखमायाहि यतःकारणात् तेअश्वाः विभवः प्रभवः समर्थाः हिःप्र-सिद्धौ पत्नीवतः पत्नीभिःसहितान् त्रिंशतंत्रींश्च त्रयस्त्रिंशद्देवांश्च अनुष्वधं अन्नार्थं अन्वा-र्षेण आवहमादयस्व सोमेनेतिशेषः ॥ ९ ॥

९. अग्नि, उक्त सब देवों के साथ एक रथ अथवा नाना रथों पर चढ़कर हमारे सामने आओ; क्योंकि तुम्हारे अश्वगण समर्थ हैं। ३३ देवों को, उनकी स्त्रियों के साथ, अन्न के लिए, ले आओ और सोम-द्वारा हृष्ट करो।

सहोतायस्यरोदसीचिदुर्वीयज्ञंयज्ञमभिवृधेगृणीतः ।
प्राचीअध्वरेवतस्थतुःसुमेकेऋतावरीऋतजातस्यसत्ये ॥ १० ॥

सः । होता । यस्य॑ । रोद॑सी॒ इति॑ । चि॒त् । उ॒र्वी इति॑ ।
य॒ज्ञम्ऽय॑ज्ञम् । अ॒भि । वृ॒धे । गृ॒णी॒तः । प्राची॒ इति॑ ।
अ॒ध्व॒राऽइ॑व । त॒स्थ॒तुः । सु॒मेके॒ इति॑ सु॒ऽमेके॑ । ऋ॒तव॑री॒-
इत्यृ॒तऽव॑री । ऋ॒तऽजा॑तस्य । स॒त्ये इति॑ ॥ १० ॥

सएवहोताभवति उर्वीविस्तीर्णे रोदसीचिद् द्यावापृथिव्यावपि यस्याग्नेः यज्ञंसर्वं यज्ञं वृधेसमृद्धये अभिगृणीतः प्रशंसतः ऋतजातस्य जातसत्यस्य यस्यहोतुः सुमेके सुरूपे ऋता-वरी उदकवत्यौसत्ये सत्यस्वरूपे प्राचीअनुकूले तस्थतुः तिष्ठतः कथमिव अध्वराविव यज्ञा-विव ॥ १० ॥

१०. विशाल द्यावा-पृथिवी, प्रत्येक यज्ञ में, समृद्धि के लिए, जिन अग्नि की प्रशंसा करती हैं, वे ही देवों के होता, सुरूपा, जलवती और सत्यस्वरूपा द्यावा-पृथिवी, यज्ञ की तरह, सत्य से उत्पन्न होता अग्नि के अनुकूल हैं।

इळा॑मग्ने पुरु॒दंसं॑ स॒निं गोः श॑श्वत्त॒मं हव॑मानाय साध ।
स्यान्नः॑ सू॒नुस्तन॑यो विजा॒वाग्ने॒ सा ते॑ सुम॒तिर्भू॑त्व॒स्मे ॥ ११ ॥ २७ ॥

इळा॑म् । अ॒ग्ने॒ । पु॒रु॒ऽदंस॑म् । स॒निम् । गोः । श॒श्व॒त्ऽत॒मम् ।
हव॑मानाय । सा॒ध॒ । स्यात् । नः॒ । सू॒नुः । तन॑यः । वि॒जाऽवा॑ ।
अग्ने॑ । सा । ते॒ । सु॒ऽम॒तिः । भू॒तु॒ । अ॒स्मे इति॑ ॥ ११ ॥ २७ ॥

इयंपूर्वंव्याख्याता ॥ ११ ॥

११. अग्नि, तुम स्तोता को अनेक कर्मों के हेतुभूत और धेनुदात्री भूमि सदा दो। हमारे वंश का विस्तारक और सन्ततिजनयिता एक पुत्र दो। अग्नि, हमारे प्रति तुम्हारा अनुग्रह हो।

॥ इतिद्वितीयस्याष्टमेसप्तविंशोवर्गः ॥ २७ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेणसा-यणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येद्वितीयाष्टकेऽष्टमोऽध्यायः ॥८॥

द्वितीयाष्टकःसमाप्तः

# वैदिक-संहिता

- ☆ **ऋग्वेद संहिता।** मूलमात्र (गुटका)
- ☆ **ऋग्वेद संहिता।** मूलमात्र।
- ☆ **ऋग्वेद संहिता।** भाषामात्र। रामगोविन्द त्रिवेदी
- ☆ **ऋग्वेद संहिता।** सायणाचार्य कृत भाष्य एवं हिन्दी व्याख्या सहित। १-८ भागों में सम्पूर्ण
- ☆ **ऋग्वेद संहिता।** (प्रथम अध्याय, सूक्त 1-19) [illegible] अनुवाद। सम्पादक प्रो. उमाशंकर शर्मा 'ऋषि'
- ☆ **शुक्लयजुर्वेद संहिता।** मूलमात्र (गुटका)
- ☆ **शुक्लयजुर्वेद संहिता।** सम्पा. श्री दौलतराम गौड़
- ☆ **शुक्लयजुर्वेद संहिता।** मूलमात्र। (निर्णयसागर संस्करण)
- ☆ **शुक्लयजुर्वेद संहिता।** पदपाठ-उव्वट महीधरभाष्य समन्वित तत्त्वबोधिनी हिन्दी व्याख्या सहित डॉ. रामकृष्ण शास्त्री
- ☆ **सामवेद संहिता।** मूलमात्र (गुटका)
- ☆ **सामवेद संहिता।** सायणभाष्य तथा पं. रामस्वरूप शर्मा 'गौड' कृत [illegible]
- ☆ [illegible]
- ☆ **अथर्ववेद संहिता।** सायणभाष्य तथा पं. रामस्वरूप 'गौड' कृत [illegible]

**चौखम्भा विद्याभवन**

**वाराणसी**

पदपाठसहिता

# ऋग्वेद-संहिता

सायणाचार्यकृत-भाष्यसंवलिता

सैव

हिन्दीभाषामन्त्रानुवादसमन्विता

अनुवादक

पण्डित रामगोविन्द त्रिवेदी

।।श्रीः।।

विद्याभवन प्राच्यविद्या ग्रन्थमाला

३५

पदपाठसहिता

# ऋग्वेद-संहिता

सायणाचार्यकृत-भाष्यसंवलिता

सैव

हिन्दीभाषामन्त्रानुवादसमन्विता

अनुवादक

पण्डित रामगोविन्द त्रिवेदी

तृतीयो ऽष्टकः

चौखम्बा विद्याभवन

वाराणसी

प्रकाशक

**चौखम्बा विद्याभवन**

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

चौक ( बैंक ऑफ बड़ोदा भवन के पीछे )

पो. बा. नं. 1069, वाराणसी 221001

दूरभाष : 2420404

ई-मेल : cvbhawan@yahoo.co.in

पुनर्मुद्रित संस्करण २००७

१-९ भाग (सम्पूर्ण)

मूल्य : ३५००.००

अन्य प्राप्तिस्थान

**चौखम्बा पब्लिशिंग हाउस**

4697/2, भू-तल ( ग्राउण्ड फ्लोर )

गली नं. 21-ए, अंसारी रोड

दरियागंज, नई दिल्ली 110002

दूरभाष : 23286537

◆

**चौखम्बा संस्कृत प्रतिष्ठान**

38 यू. ए. बंगलो रोड, जवाहर नगर

पो. बा. नं. 2113

दिल्ली 110007

दूरभाष : 23856391

◆

**चौखम्बा सुरभारती प्रकाशन**

के. 37/117 गोपालमन्दिर लेन

पो. बा. नं. 1129, वाराणसी 221001

दूरभाष : 2335263

THE
VIDYABHAWAN PRACHYAVIDYA GRANTHAMALA
35

# ṚG-VEDA-SAṀHITĀ

Together with

**PADAPĀṬHA**

**&**

**SĀYAṆABHĀṢYA**

Hindi Translation

by

**Pt. Ram Govind Trivedi**

**THIRD AṢṬAKA**


**CHOWKHAMBA VIDYABHAWAN**

VARANASI

**CHOWKHAMBA VIDYABHAWAN**
*(Oriental Publishers & Distributors)*
Chowk (Behind Bank of Baroda Building)
Post Box No. 1069
Varanasi 221001
Tel. : 2420404
E-mail : cvbhawan@yahoo.co.in


Edition : 2007
Price : 3500.00

*Also can be had from :*
**CHAUKHAMBA PUBLISHING HOUSE**
4697/2, Ground Floor
Gali No. 21-A, Ansari Road
Daryaganj, New Delhi 110002
Tel. : 23286537

**CHAUKHAMBA SANSKRIT PRATISHTHAN**
38 U.A. Bungalow Road, Jawahar Nagar
Post Box No. 2113
Delhi 110007
Tel. : 23856391

**CHAUKHAMBA SURBHARATI PRAKASHAN**
K. 37/117, Gopal Mandir Lane
Post Box No. 1129
Varanasi 221001
Tel. : 2335263

## ॥ श्रीगणेशायनमः ॥

वागीशाद्याःसुमनसःसर्वार्थानामुपक्रमे । यंनत्वाकृतकृत्याःस्युस्तंनमामिगजाननम् ॥ १ ॥
यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत् । निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥ २ ॥

सोमस्येत्यनुवाकेद्वादशसूक्तानि तत्रप्रयआरुरितिएकादशर्चंसप्तमंसूक्तम् मण्डलद्रष्टाविश्वामित्रऋषिः अनुक्तत्वात् त्रिष्टुप्छन्दः मण्डलादिपरिभाषयाग्निर्देवता प्रातरनुवाकाश्विनशस्त्रयोःसूक्तमयस्य प्रत्यग्निरुषसश्चीणीतिविनियोगउक्तः तत्रेदंतृतीयंसूक्तम् ।

तस्मिन्नियमृक्प्रथमा—

ॐ प्रयआरुःशितिपृष्ठस्यधासेरामातराविविशुःसप्तवाणीः ।
परिक्षितापितरासंचरेतेप्रसर्स्रातेदीर्घमायुःप्रयक्षे ॥ १ ॥

प्र । ये । आरुः । शितिऽपृष्ठस्य । धासेः । आ । मातरा ।
विविशुः । सप्त । वाणीः । परिऽक्षिता । पितरा । सम् । चरेते इति ।
प्र । सर्स्राते इति । दीर्घम् । आयुः । प्रऽयक्षे ॥ १ ॥

शितिपृष्ठस्यनीलपृष्ठस्यधासेः सर्वस्यधारयितुरग्नेर्येरश्मयः प्रारुः प्रकर्षेणोद्गच्छन्ति ते रश्मयः मातरा मातरौ द्यावापृथिव्यावाविविशुः सर्वतःप्रविष्टाः सप्तसर्पणस्वभावाः वाणीः वननीया नदीश्चाविविशुः । परिक्षितापरितोवर्तमाने पितरापितरौ द्यावापृथिव्यौतेनाग्निनासंचरेते सम्यक्प्रत्यवहरतः तथाप्रयक्षे प्रकर्षेणयष्टुं दीर्घमायुरत्यन्तचिरंजीवनं प्रभूतमन्नंवा प्रसर्स्रातेप्रसारयतः संपादयतइत्यर्थः यद्वा द्यावापृथिव्यौ प्रयक्षे प्रकर्षेणसततंयष्टुंयजमानस्यदीर्घमायुःसंपादयतः ॥ प्र निपातत्वेनआद्युदात्तः तस्यछन्दसिव्यवहिताश्चेतिप्राक्प्रयोगःआरुःइत्यनेनसम्बन्धः । आरुः ऋगतौ लिट्युस्छिरूपम् यद्वृत्तयोगादनिघातः प्रत्ययस्वरः । शितिपृष्ठस्य पृष्ठशब्दस्य थक्प्रत्ययान्तोन्तोदात्तः शितेर्नित्याबह्वज्बहुव्रीहावभसदितिउत्तरपदप्रकृतिस्वरत्वम् । धासेःडुधाञ्धारणपोषणयोः धेट्पानेवा तस्मात्कर्तरिऔणादिकःसिः प्रत्ययस्वरः मातरा नप्तृनेष्टृत्वष्टृ-

तृहोतृपोतृमातृपितृजामातृदुहितृइतितृन्नन्तत्वेननिपातनादन्तोदात्तः ऋतोङीतिगुणः सुपांसुलु- गितिसुपोडादेशः । विविशुः विशप्रवेशने लिटि असंयोगाल्लिट्किदितिकिद्वद्भावाद्गुणाभावः नि- घातः । सप्त सृप्लृगतौ सप्यशूभ्यांतुट्चेतिसपेर्विधीयमानःकनिन्तुडागमश्च बाहुलकादेतस्यापि भवति ऋकारस्याकारश्च नित्त्वेपिव्यत्ययेनान्तोदात्तत्वम् । परिक्षिता क्षिनिवासगत्योःक्विप्चेति क्विप् पित्वात्तुगागमः प्रादिसमासः कृदुत्तरपदप्रकृतिस्वरत्वम् सुपांसुलुगितिसुपोडादेशः । च- रेते चरगतिभक्षणयोः संपूर्वाच्चरतेः समस्तृतीयायुक्तादित्यात्मनेपदं निघातः । सर्स्राते सृगतौ अ- यमन्तर्भावितण्यर्थः रेफश्छान्दसः ईदूदेदितिप्रगृह्यसंज्ञा निघातः । आयुः इण्गतौ उसिषित्य- नुवृत्तौएतेर्णिच्चेत्युसिन् णित्वाद्वृद्धिः नित्त्वादाद्युदात्तः । प्रयक्षे यजदेवपूजासङ्गतिकरणदानेषु इत्यस्मात्तुमर्थेसेन्प्रत्ययः प्रादिसमासः कृदुत्तरपदप्रकृतिस्वरत्वम् कृन्मेजन्तइत्यव्ययसंज्ञाया- मव्ययादाप्सुपइतिसुपोलुक् ॥ १ ॥

१. श्वेत पृष्ठवाले और सबके धारक अग्नि की जो किरणें उत्तमता के साथ उठती हैं, वे मातृ-पितृ-रूपा द्यावा-पृथिवी की चारों दिशाओं में प्रविष्ट होती हैं, सात नदियों में भी प्रविष्ट होती हैं। चारों ओर वर्त्त- मान मातृ-पितृ-भूता द्यावा पृथिवी भली भाँति फैली हैं और अच्छी तरह यज्ञ करने के लिए अग्नि को दीर्घजीवन प्रदान करती हैं।

अथद्वितीया—

दिवक्षसोधेनवोवृष्णोअश्वांदेवीरातस्थौमधुमद्वहन्तीः ।
ऋतस्यत्वासदसिक्षेमयन्तंपर्येकाचरतिवर्तनिंगौः ॥ २ ॥

दिवक्षसः । धेनवः । वृष्णः । अश्वाः । देवीः । आ । तस्थौ ।
मधुमत् । वहन्तीः । ऋतस्य । त्वा । सदसि । क्षेमयन्तम् ।
परि । एका । चरति । वर्तनिम् । गौः ॥ २ ॥

वृष्णःकामानांवर्षितुरग्नेः अश्वावाहनरूपारोहिताः दिवक्षसः दिवंव्याप्यवर्तमानाधे- नवः अग्नेः प्रीणयित्र्योभवन्ति सोयमग्निः मधुमत् माधुर्योपेतमुदकंवहन्तीः देवीः द्योतनशी- लानदीः आतस्थौआतिष्ठति प्राप्नोतीत्यर्थः गोशब्दोमाध्यमिकवाग्वाची माध्यमिकांवाच- मितिनैरुक्ताइत्यभिधानात् । एकागौः काचिदुक्तविधावाक् ऋतस्योदकस्यसदसिस्थानेन्तरिक्षे क्षेमयन्तं क्षेममाधातुमिच्छन्तंवर्तनिंव्याप्तः प्रवर्तयन्तंत्वा हेअग्नेत्वां परिचरतिसेवते ॥ दिवक्षसः वक्षव्याप्तौ दिवंव्याप्नुवन्तीतिदिवक्षसः वक्षरोषे रोषार्थोप्ययंधातुःअत्रव्याप्तौवर्तते दिवंवक्षन्ति व्याप्नु- वन्ति सर्वधातुभ्य असुन्नित्यसुन्प्रत्ययः डोपोल्योर्वशीतिवलोपः कृदुत्तरपदप्रकृतिस्वरत्वम् । धेनवः नु-

---

१ नि० २. ९. ।

रित्यनुवृत्तौ धेट्इषेतिनुप्रत्ययः इकारस्यगुणः प्रत्ययस्वरः । वृष्णः वृषसेचने कनिन्युवृषित- क्षिरामीत्यादिनाकनिन् कित्वाद्गुणाभावः नित्वादाद्युदात्तः । अश्वाः अशूव्याप्तौ अशूप्रुषिलटि- कणीत्यादिनाक्वन् नित्वादाद्युदात्तः । तस्थौ ष्ठागतिनिवृत्तौ छन्दसिलुङ्लङ्लिटइतिवर्त्तमाने लिट् आतऔणलइत्यौकारः निपातः । मधुमत् निर्दिश्यनुवृत्तौ फलिपाटिनमिमनिजनामित्यादिनामनेरुप्र- त्ययः तत्संनियोगेनककारस्यधकारः नित्वादाद्युदात्तः । त्वा युष्मच्छब्दस्यद्वितीयैकवचनान्तस्य त्वा- मावितित्वाआदेशः अनुदात्तश्च । क्षेमयन्तम् क्षिनिवासगत्योः अर्तिस्तुसुहुसृधृक्षीत्यादिनामन् क्षेम- मावासमात्मनइच्छन्तं सुपआत्मनःक्यजितिक्यच् क्यचिचेतीत्वम् अकृत्सार्वधातुकयोर्दीर्घत्वंच नच्छ- न्दस्यपुत्रस्येतिप्रतिषिध्यते क्यचश्चित्वादन्तोदात्तः तदन्ताच्छतृप्रत्ययः शप् शपःपित्वादनुदात्तत्वम् शतुश्चसार्वधातुकस्वरेणतयोःक्यचासहैकादेशेकृते एकादेशउदात्तेनोदात्तइत्येकादेशउदात्तः अम् सु- प्त्वादनुदात्तः उदात्तादनुदात्तस्येत्यमःस्वरितत्वम् । एका इणूगतौ इणूभीकापेत्यादिनाकन् तदन्ताट्टाप् नित्स्वरः । वर्तनिम् वृतुवर्तने अन्तर्भावितण्यर्थः वृतेश्चेत्यनिः गुणः न्यस्यत्येनान्तोदात्तत्वम् । गौः गम्लृगतौ गमेर्डोइतिडोप्रत्ययः डित्वाट्टिलोपः गोतोणिदिति सुपोणित्वाद्वृद्धिः प्रत्ययस्वरः ॥ २ ॥

२. द्युलोकवासी धेनु ही अभीष्टवर्षी अग्नि का अश्व है । मधुर-जल-वाहिनी और प्रकाशवती नदियों में अग्नि निवास करते हैं । अग्नि, तुम ऋत या सत्य के गृह में रहना चाहते और अपनी ज्वाला देते हो । अग्नि, एक गौ या मध्यमिका वाक् तुम्हारी सेवा करती है ।

अथतृतीया—

आसीमरोहत्सुयमाभवन्तीःपतिश्चिकित्वान्रयिविद्रयीणाम् ।
प्रनीलपृष्ठोअतसस्यधासेस्ताअवासयत्पुरुधप्रतीकः ॥ ३ ॥

आ । सीम् । अरोहत् । सुऽयमाः । भवन्तीः । पतिः । चिकित्वान् । रयिऽवित् । रयीणाम् । प्र । नीलऽपृष्ठः । अतसस्य । धासेः । ताः । अवासयत् । पुरुधऽप्रतीकः ॥ ३ ॥

रयीणां रयिवित् धनानांमध्येविशिष्टधनस्यलंभयिता चिकित्वान् ज्ञानवान्पतिः अश्वा- नांपतिरग्निः सीं सर्वतः सुयमाः सुखेननियन्तुंशक्याभवन्तीः यावदवाः आरोहत् आरोहयति स्म नीलपृष्ठः पुरुधप्रतीकः बहुधाविस्तृताङ्गः सोग्निरेवअतसस्यसततगमनस्यधासेः पोषणार्थं ताअश्वाः प्रावासयत् प्रकर्षेणवासयतिस्म निवासेनअश्वेषनीतेसततगमनंपोषयितुंशक्यमित्यर्थः ॥ सीं चावयो- रनुदात्तमित्यनुदात्तः । अरोहत् रुहबीजजन्मनिप्रादुर्भावे लङ्रूपं निपातः । सुयमाः यमउपरमे

दानोपेतं क्षियन्तमाकाशेनिवसन्तं कुणारुं गर्जन्तं वृत्रं वृणोत्याच्छादयतिनभइतिवृत्रोमेघः त-मिमंयद्देमानंमेघंहस्तपादशून्यंकृत्वासंपिणक् संपिष्टवि तथाचयास्कः—अहस्तमिन्द्रंकृत्वासंपि-ष्टिपरिक्वणनंमेघमिति ॥ सहदानुं दोअवखण्डने दामाम्यांनुरितिनुप्रत्ययः यतीसिदानुर्दानवः यद्वा दानुर्दानं बहुव्रीहौपूर्वपदप्रकृतिस्वरः । क्षियन्तं क्षिनिवासगत्योः तुदादित्वाच्छः । प्रत्ययस्व-रः । पिणक् पिष्लृसंचूर्णने रुधादित्वात्श्नम् हेर्लुक् षकारस्यककारश्छान्दसः । कुणारुं कुणश-ब्दने बाहुल्काद्रूपसिद्धिः आद्युदात्तः । अवन्य हनहिंसागत्योरित्यस्याशिटिथिछिरूपम् अभ्यासा-च्चेतिधातुहकारस्यनत्वं निघातः उपदेशेत्वतइतिइट्प्रतिषेधः ॥ ८ ॥

८. अनेक लोकों से आहूत इन्द्र, तुम दानवीर के साथ वर्तमान हो। बाधक और गर्जनशील वृत्र को हस्तहीन करके चूर्ण-विचूर्ण कर डालते हो। इन्द्र, वर्द्धमान और हिंस्र वृत्र को पाद-हीन करके तुमने बल से विनष्ट किया था।

अथनवमी—

निसामुनामिंषिरामिन्द्रभूमिंमहीमपारांसदनेससत्थ ।
अस्तभ्नाद्द्यांवृषभोअन्तरिक्षमर्षन्त्वापस्त्वयेहप्रसूताः ॥ ९ ॥

नि । सामनाम् । इषिराम् । इन्द्र । भूमिम् । महीम् । अपाराम् ।
सदने । ससत्थ । अस्तभ्नात् । द्याम् । वृषभः । अन्तरिक्षम् ।
अर्षन्तु । आपः । त्वया । इह । प्रसूताः ॥ ९ ॥

हेइन्द्र महीं महतीम् अतएवापाराम् पुरुपाराम् इषिरां स्थानाभावेनचलन्तीम् एवंविधांभू-मिं सामानां समनां तथाचमन्त्रवर्णः—गावौतेसामनावितईति । यद्वा समएवसाम श्रूतप्येभूय-ते—यदेवसमःप्लुषिणासमोमशकेनसमोनागेनसमएतैस्त्रिभिर्लोकैःतस्मादेवसामेति । तदस्यास्ती-तिसामना तां साम्यवतींकृत्वा सदने स्वेस्थानेनिषसत्थ निरैशयामाहिथ तथा वृषभः का-मितफलानांवर्षकःइन्द्रः द्यां द्युलोकम् अस्तभ्नात् यथानपतितितथाअधारयत् तथा अन्तरिक्षम् एवंद्यावापृथिव्योरवस्थितौसत्यांत्वयाप्रसूताः मेघभेदनेनप्रेरिताआपः इहभूमौ अर्षन्तु आग-च्छन्तु तथाचमन्त्रवर्णः—यःपृथिवींव्यथमानामदृंहदिति ॥ सामनां समएवसामः तदस्यास्ती-तिमतुवर्थेपामादित्वान्नप्रत्ययः प्रत्ययस्वरः । इषिराम् इषगतौ इषिमदिमुदीत्यादिनाकिरच्प्र-त्ययः कित्वाद्गुणः चित्स्वरः । ससत्थ षद्लृविशरणगत्यवसादनेषुइत्यन्तर्भावितण्यर्थस्यछि-टिथलि उपदेशेत्वतइतीट्प्रतिषेधः निघातः । अस्तभ्नात् स्तन्भुस्तम्भनेइतिसौत्रोधातुः स्तन्भु-

१ नि० ६. १. । २ ऋ० सं० ८. ३. २२ । ३ ऋ० सं० २. ६. ७. ।

स्तुन्भित्यादिनाश्नाप्रत्ययः श्नाबलोपइतिधातुनकारस्यलोपः अडागमस्वरः । अर्पन्तु ऋगतौ व्यत्ययेनशप्प्रत्ययः गुणः पादादित्वादनिघातः । आपः आप्लृव्याप्तौ क्विप् धातोर्ह्रस्वश्च ऋ-सि असृनित्यादिनादीर्घः नसःप्रत्यादन्तुदात्तत्वेधातुस्वरः । प्रसूता षूप्रेरणेइत्यस्यकर्मणि निष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् ॥ ९ ॥

९. इन्द्र, तुमने महती, अनन्ता और चला पृथिवी को समभावापन्न करके उसके स्थान में निविष्ट किया था। अभीष्टवर्षक इन्द्र ने, द्युलोक और अन्तरिक्ष जैसे पतित न हो, इस प्रकार धारण किया है। इन्द्र, तुम्हारा प्रेरित जल पृथिवी पर आवे।

अथदशमी–

अलातृणोवलइन्द्रव्रजोगोःपुराहन्तोर्भयमानोव्यार ।
सुगान्पथोअकृणोन्निरजेगाःप्रावन्वाणीःपुरुहूतंधमन्तीः ॥१०॥२॥

अलातृणः । वलः । इन्द्र । व्रजः । गोः । पुरा । हन्तोः । भयमानः ।
वि । आर । सुगान् । पथः । अकृणोत् । निःअजे । गाः ।
प्र । आवन् । वाणीः । पुरुहूतम् । धमन्तीः ॥ १० ॥ २ ॥

हेइन्द्र अलातृणः बहूदकतयाप्रभूतमत्यर्थमातृणत्तेर्हिंस्यतेइत्यलातृणः गोर्माध्यमिकायावाचोव्रजोगोष्ठभूतोवलःवृणोत्याकाशमितिवलोमेघः पुराहन्तोःतववज्रप्रहारात्प्राक्भयमानः बिभ्य-त् व्यार विश्लिष्टोबभूव अनन्तरं सइन्द्रः गाअपोनिरजेनिर्गमयितुं सुगान्सुगमनान्पथोमार्गानकृणोत् अकरोत् अतः वाणीःवननीयाःधमन्तीःशब्दायमानाः ताआपः पुरुहूतंबहुभिराहूतंपार्थिवमुदकंप्रतिप्रावन् अभ्यागच्छन् एतामृचंयास्कएवंव्याख्यत्–अलातृणोवलइन्द्रव्रजोगोः–अलातृणोऽलमातर्दनोमेघोवलोवृणोतेर्व्रजोव्रजत्यन्तरिक्षेगोरेतस्यामाध्यमिकायावाचः पुराहननाद्भयमानोव्यारसुगान्पथोअकृणोन्निरजेगाःसुगमनान्पथोकरोन्निर्गमनायगवांप्रावन्वाणीःपुरुहूतंधमन्तीःआपोवावहनाद्वाचोवावदनाद्बहुभिराहूतमुदकंभवति । धमतिर्गतिकर्मा अलातृणः तृहिहिंसायाम् अलम्पूर्वात्तृहेर्घञर्थेकविधानमितिकर्मणिकप्रत्ययः अलमोमकारस्याकारः समासस्वरः । वलः वलसंवरणे वल्यतेभाच्छाद्यतेनभोनेनेतिवलोमेघः पुंसिसंज्ञायामितिघः प्रत्ययस्वरः । व्रजः व्रजगतौ गोचरसंचरेत्यादिनाघप्रत्ययान्तत्वेननिपातनात्कुत्वाभावः व्रजत्यन्तरिक्षेइतिप्रत्ययस्वरः । भयमानः ञिभीभये व्यत्ययेनशप् । आर ऋगतावित्यस्यालिटिणलिरूपं निघातः । सुगान् गम्लृगतावित्यस्मादधिकरणेसुदुरोरधिकरणेइतिडप्रत्ययः डित्त्वाट्टिलोपः कृत्स्वरः । अकृणोत् कृविहिंसाकरणयोरित्यस्यलङिरूपम् । निरजे अजगतिक्षेपणयोरित्यस्मात्संपदादिलक्षणोभावेक्विप् कृदुत्तरपदप्रकृतिस्वरः । आवन् अवरक्षणगत्यादिष्वित्यस्यलङिरूपम् । पुरुहूतं ह्वयतेर्निष्ठायांयभा-

१ निघ० १. १।

दित्यात्संप्रसारणं हलइतिदीर्घः धाथादिस्वरः । धमन्तीः ध्माशब्दे शपि पाघ्रेत्यादिनाधमादेशः वाछन्दसीतिजसःसवर्णदीर्घः शतुर्लसार्वधातुकस्वरेकृतेधातुस्वरः ॥ १० ॥

१०. इन्द्र, अतीव हिंसक बल नाम का गोव्रज अथवा गोष्ठभूत मेघ वज्र-प्रहार के पहले ही डरकर टुकड़े-टुकड़े हो गया था। गौ के निकलने के लिए इन्द्र ने मार्ग सुगम कर दिया था। रमणीय शब्दाय-मान जल अनेक लोकों से आहूत इन्द्र के सम्मुख आया था।

एकोद्वेवसुमतीसमीचीइन्द्रआपप्रौपृथिवीमुतद्याम् ।
उतान्तरिक्षादभिनःसमीकइषोरथीःसयुजःशूरवाजान् ॥ ११ ॥

एकः । द्वे इति । वसुमती इति वसुऽमती । समीची इति सम्ऽईची । इन्द्रः । आ । पप्रौ । पृथिवीम् । उत । द्याम् । उत । अन्तरिक्षात् । अभि । नः । सम्ऽईके । इषः । रथीः । सऽयुजः । शूर । वाजान् ॥ ११ ॥

योयमिन्द्रःएकःअसहायएवसन्पृथिवीमुतापिचद्यांद्वेएतेद्यावापृथिव्यौसमीची परस्परसं-गते वसुमती धनयुक्तेसत्यौ आपप्रौ समन्तात्पूरयामास उतापिच हेशूर सामर्थ्योपेत तादृशस्त्वं रथीःरथवान् सनोऽस्माकं समीकेसमीपे इषःस्थातुमिच्छन् सयुजः संगता-न्वाजान् वजन्तिगच्छन्तीतिवाजाअश्वाः तानश्वान्अन्तरिक्षादन्तरिक्षसकाशादभिप्रेरय रथारूढ-स्त्वमस्मत्समीपंशीघ्रमागच्छेतिभावः ॥ वसुमती वाछन्दसीतिपूर्वसवर्णदीर्घः । पप्रौ प्राषूर-णेइत्यस्यलिटिणलि आतऔणलइत्यौकारः निघातः । इषः इषुइच्छायाम् अस्मादिगुपधलक्ष-णःकः कित्त्वादगुणः प्रत्ययस्वरः । रथीः रथोऽस्यास्तीतिरथीः मत्वर्थेछन्दसीवनिपाविति ईप्रत्ययः प्रत्ययस्वरः ॥ ११ ॥

११. अकेले इन्द्र ने ही पृथिवी और द्युलोक को परस्पर संगत और धनयुक्त करके परिपूर्ण किया है। शूर, तुम रथवाले हो। हमारे पास रहने के अभिलाषी होकर योजित अश्वों को अन्तरिक्ष से हमारे सामने प्रेरित करो।

दिशःसूर्योनमिनातिप्रदिष्टादिवेदिवेहर्यश्वप्रसूताः ।
संयदानळध्वनआदिदश्वैर्विमोचनंकृणुतेतत्त्वस्य ॥ १२ ॥

दिशः । सूर्यः । न । मिनाति । प्रऽदिष्टाः । दिवेऽदिवे । हर्यश्वऽप्रसूताः । सम् । यत् । आनट् । अध्वनः । आत् । इत् । अश्वैः । विऽमोचनम् । कृणुते । तत् । तु । अस्य ॥ १२ ॥

हर्यश्वप्रसूताः हरीअश्वौयस्यासावितिहर्यश्वइन्द्रः तेनप्रेरितादिशःप्रागादयः दिवेदिवे प्रतिदिवसंप्रदिष्टाःसूर्यस्यगमनायदत्ताःयादिशोविद्यन्ते ताःसूर्योनमिनाति नहिनस्ति किंतु ताभिरेवगच्छति यद्यदासूर्यः अध्वनोपन्तव्यान्प्रदेशान् अश्वैर्गमनसाधनभूतैः समानट् सम्यगश्नुते आदित्दन्तरमेव विमोचनंकृणुते अश्वानांविमोचनंकुरुते तदेतत्सर्वंकर्म अस्य तवैवखलु शुभसिद्धौ ॥ सूर्यः षूप्रेरणेइत्यस्मात्सुसूधागृधिभ्यःक्रन्तिविकल्पत्ययः सुवति प्रेरयतीतिसूःआदित्यः सूरेवसूर्यः वस्वादित्वात्स्वार्थिकोयत् यतोनावइत्याद्युदात्तत्वम् । मिनाति मीञ्हिंसायाम् मीनातेर्निगमेइतिह्रस्वः । हर्यश्वप्रसूताः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् । आनट् अशूव्याप्तावित्यस्यबहुलंछन्दसीतिशपोलुक् अश्नोतेश्चेतिनुडागमः मश्चादिनाषत्वं यद्योगादनिघातः ॥ १२ ॥

१२. सूर्य इन्द्र-द्वारा प्रेरित हैं। वे अपने गमन के लिए प्रकाशित दिशाओं का प्रतिदिन अनुसरण करते हैं। जिस समय वह अश्व के द्वारा अपना मार्ग-गमन समाप्त कर देते हैं, तब हमें छोड़ देते हैं—यह भी इन्द्र के ही लिए।

दिदृक्षन्तउषसोयामन्नक्तोर्विवस्वत्यामहिचित्रमनीकम्।
विश्वेजानन्तिमहिनायदागादिन्द्रस्यकर्मसुकृतापुरूणि ॥१३॥

दिदृक्षन्ते। उषसः। यामन्। अक्तोः। विवस्वत्याः। महि। चित्रम्। अनीकम्। विश्वे। जानन्ति। महिना। यत्। आ। अगात्। इन्द्रस्य। कर्म। सुऽकृता। पुरूणि ॥१३॥

विश्वे सर्वेजनाः विवस्वत्याः विवासनवत्याः निर्गमनपरायाः अक्तोरात्रेःसंबन्धिन्याःउषसोयामन्यामनि निर्गमनेसति महिमहत् चित्रंचायनीयम् अनीकं सौरंतेजः दिदृक्षन्ते द्रष्टुमिच्छन्ति यद्यदाआगात् उषःकालःसमन्ताद्गात् व्यपैति तदा तेजोदिदृक्षमाणाः सर्वेजनाः महिना महनीयान्यग्निहोत्रादीनिकर्माणिजानन्ति कर्तव्यतयावबुध्यन्ते हेइन्द्र पुरूणिबहूनिसुकृता सुकृतानि कर्म कर्माणि इन्द्रस्यतवैव ॥ दिदृक्षन्ते दृशिर्प्रेक्षणेइत्यस्यसनि ज्ञाश्रुस्मृदृशांसनइत्यात्मनेपदम् अभ्यस्तस्वरः विवस्वत्याः विवासतेःसंपदादिलक्षणःक्विप् व्यत्ययेनोपधाह्रस्वत्वं तस्मात्तदस्यास्तीतिमतुप् मादुपधायाइतितस्यवत्वं मतुपःपित्वादनुदात्तत्वेधातुस्वरः । जानन्ति ज्ञाअवबोधने ज्ञाजनोर्जेतिजादेशः निघातः । अगात् इणगतावित्यस्यलुङिरूपं यद्योगादनिघातः । सुकृता गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् ॥ १३ ॥

१३. गमनशील रात्रि के पश्चात् उषा के गत होने पर सब लोक महान् तथा विचित्र सूर्य-तेज का दर्शन करने की इच्छा करते हैं। जिस समय उषाकाल विगत हो जाता है, उस समय सब अग्निहोत्र आदि कर्म को कर्त्तव्य समझने लगते हैं। इन्द्र के कितने ही सत्कार्य हैं।

अथचतुर्दशी–

महिज्योतिर्निहितंवक्षणास्वामापक्वंचरतिबिभ्रतीगौः ।
विश्वंस्वाद्मसंभृतमुस्रियायांयत्सीमिन्द्रोअदधाद्भोजनाय ॥१४॥

महि । ज्योतिः । निऽहितम् । वक्षणासु । आमा । पक्वम् ।
चरति । बिभ्रती । गौः । विश्वम् । स्वाद्म । सम्ऽभृतम् ।
उस्रियायाम् । यत् । सीम् । इन्द्रः । अदधात् । भोजनाय ॥१४॥

वक्षणासु वहन्त्येतास्उदकानीतिवक्षणानद्यः तासु महि महत्ज्योतिः ज्योतिष्म-दुदकंनिहितामिन्द्रेण आमा नवसूतिकागौः पक्वंक्षीरादिकंबिभ्रती दधानासती चरति संच-रतेते यद्यस्मादुदकात्स्वाद्म स्वादुतरंसंभृतंत्वेनसंपादितंदधिघृतक्षीरादिकं सीमेतद्विश्वंसर्वम् उस्रियायांगविभोजनायेन्द्रोऽदधात्न्यधात् तस्मात्क्षीरादिकंबिभ्रतीगौश्चरतीतिपूर्वेणान्वयः ॥ व-क्षणासु वहरोषे अस्मात्करणाधिकरणयोश्चेतिकरणेल्युट् लित्स्वरः । पक्वं पचतेर्निष्ठा तकारस्यपचोवइतिवत्वं प्रत्ययस्वरः । चरति चरतिर्गत्यर्थः । बिभ्रती डुभृञ्धारणपोषणयोः जुहोत्यादिः शतुरुगित्त्वादुगितश्चेतिङीप् अभ्यस्तानामादिरित्याद्युदात्तत्वम् । उस्रियायां वस-निवासे स्फायितञ्चीत्यादिनाधिकरणेरक्प्रत्ययः यजादित्वात्संप्रसारणं शासिवसिघसीनांचे-तिषत्वाभावश्छान्दसः स्वार्थिकोघप्रत्ययः प्रत्ययस्वरः ॥ १४ ॥

१४. इन्द्र ने नदियों में महान् तेजवाला जल स्थापित किया है। इन्द्र ने जल से स्वादुतर दधि, घृत, क्षीर आदि, भोजन के लिए गौ में संस्थापित किया है। नवप्रसूता गौ दुग्ध धारण करके विचरण करती है।

अथपञ्चदशी–

इन्द्रदृह्ययामकोशाअभूवन्यज्ञायशिक्षगृणतेसखिभ्यः ।
दुर्मायवोदुरेवामर्त्यासोनिषङ्गिणोरिपवोहन्त्वासः ॥१५॥२॥

इन्द्र । दृह्य । यामऽकोशाः । अभूवन् । यज्ञाय । शिक्ष । गृणते ।
सखिऽभ्यः । दुःऽमायवः । दुःऽएवाः । मर्त्यासः । निषङ्गिणः ।
रिपवः । हन्त्वासः ॥१५॥२॥

हेइन्द्र दृढ दृढोभव यतः यामकोशाः यान्त्यस्मिन्नितियामोमार्गः तस्यकोशाः कोशवदाच्छादकाः मार्गप्रतिबन्धकाराक्षसाः अभूवन् त्वं यज्ञाय यज्ञकर्मेगृणते स्तोत्रंकुर्वते यजमानाय सखिभ्यः पुत्रादिभ्यश्चशिक्ष अपेक्षितंफलंदत्स्व दुर्मायवः दुष्टमायुधानिमि-न्वन्तिप्रक्षिपन्तीतिदुर्मायवः दुरेवाः दुष्टंगच्छन्तः मर्त्याःमारयितारः निषङ्गिणः निषङ्गिशब्देनइषु-धिरभिधीयते तद्वन्तः एवंविधसामर्थ्योपेताअपिचः शत्रवोराक्षसाः हन्त्वासः त्वयाहननीयाः ॥ दृ-ह्ह दृहदृहिवृद्धौ व्यत्ययेनश्यन् लोटिरूपं ञित्स्वरः । अभूवन् भूसत्तायाम् अस्य लुङिरूपं गातिस्थेतिसिचोलुक् भूसुवोस्तिङीतिगुणप्रतिषेधे भुवोवुग्लुङ्लिटोरितिवुगागमः निघातः । शिक्ष शिक्षविद्योपादाने अयंधातुरत्रदानेवर्तते व्यत्ययेनपरस्मैपदं निघातः । दु-र्मायवः मिनोतेः कृवापाजिमीत्यादिनाउण्प्रत्ययः कृदुत्तरपदस्वरः । दुरेवाः इणग-तौ इणशीङ्भ्यांवनितिकर्तरिवन्प्रत्ययः । रिपवः रपेरिच्चोपधायाइत्युप्रत्ययः उपधायाइत्वं प्रत्ययस्वरः । हन्त्वासः हनहिंसागत्योः कृत्यार्थेतवैकेन्केन्यत्वनइतित्वन्प्रत्ययः नित्त्वादाद्यु-दात्तः ॥ १५ ॥

१५. इन्द्र तुम दृढ़ बनो। शत्रुओं ने मार्ग बन्द किया है। यज्ञ और स्तुति करनेवाले तथा सखा लोगों को अभीष्ट फल प्रदान करो। शत्रुओं का वध करना उचित है। वे धीरे-धीरे जाते और हथियार फेंकते हैं। वे हत्यारे और तूणीरवाले हैं।

॥ इतितृतीयस्यद्वितीयेतृतीयोवर्गः ॥ ३ ॥

अथषोडशी—

सं घोषः॑ शृण्वेऽव॒मैर॒मित्रै॑र्ज॒ही न्ये॑ष्व॒शनिं॒ तपि॑ष्ठाम् ।
वृ॒श्चेम॑ध॒स्ताद्वि रु॑जा॒ सह॑स्व ज॒हि रक्षो॑ मघवन्र॒न्धय॑स्व ॥ १६ ॥

सम् । घोषः॑ । शृ॒ण्वे । अ॒व॒मैः । अ॒मित्रैः॑ । ज॒हि । नि । ए॒षु । अ॒शनि॑म् । तपि॑ष्ठाम् । वृ॒श्च । ई॒म् । अ॒धस्ता॑त् । वि । रु॒ज । सह॑स्व । ज॒हि । रक्षः॑ । म॒घ॒ऽव॒न् । र॒न्धय॑स्व ॥ १६ ॥

हेइन्द्र अवमैःसमीपेवर्तमानैरमित्रैः शत्रुभिरसुरैरुत्सृष्टोघोरःशनिर्घोषः श्रूयमाणः सं-शृण्वे सम्यगस्माभिःश्रूयते तपिष्ठामतिशयेनतापयित्रीं ताम्अशनिम् एषुशत्रुष्वेव नि निधा-य जहि मारय तैःप्रयुक्तामशनिंतानेवप्रापयेतिभावः । ईमेनान्शत्रूनधस्तान्मूलतोवृश्चछिन्धि-किंच विरुज तान्विशेषेणबाधस्व सहस्व अभिभव हेमघवन्निन्द्र रक्षःकर्मविघ्नकारीणि

रक्षांसि जहि मारय अनन्तरमिमं यज्ञं रन्धयस्व पारं नय ॥ शृणे निघातः । जहि हनहिंसागत्योरस्य लोटि रूपम् । अशनिम् अशूङ् व्याप्तौ अश्यार्तिसृभ्यो निरित्यनिप्रत्ययः प्रत्ययस्वरः । तपिष्ठं तपृशब्दादिष्ठन्प्रत्ययः निस्वरः । वृश्च ओव्रश्चू छेदने तुदादिः ग्रहिज्यादिना संप्रसारणम् । सहस्व वाक्यभेदादनिघातः । रन्धयस्व रध हिंसासंराध्योरित्यस्य ण्यन्तस्य लोटि रधिजभोरचीति नुमागमः वाक्यभेदादनिघातः ॥ १६ ॥

१६. इन्द्र, हम समीपस्थ शत्रुओं-द्वारा छोड़ा हुआ वज्र-नाद सुनते हैं। अतीव सन्ताप देनेवाली इन सब अशनियों को इन सब शत्रुओं के सामने ही रखकर इनका विनाश करो; समूल छेदन करो; विशेष रूप से बाधा दो; अभिभूत करो। इन्द्र, राक्षसों का वध करो; पीछे यज्ञ सम्पन्न करो।

उद्वृ॑ह॒ रक्षः॑ स॒हमू॑लमिन्द्र वृ॒श्चा मध्यं॒ प्रत्यग्रं॑ शृणीहि ।

आ कीव॑तः सल॒लूकं॑ चकर्थ ब्रह्म॒द्विषे॒ तपु॑षिं हे॒तिम॑स्य ॥ १७ ॥

उत् । वृ॒ह॒ । रक्षः॑ । स॒हऽमू॑लम् । इ॒न्द्र॒ । वृ॒श्च । मध्य॑म् ।

प्रति॑ । अग्र॑म् । शृ॒णी॒हि॒ । आ । कीव॑तः । स॒ल॒लूक॑म् । च॒क॒र्थ॒ ।

ब्र॒ह्म॒ऽद्विषे॑ । तपु॑षिम् । हे॒तिम् । अ॒स्य॒ ॥ १७ ॥

हे इन्द्र रक्षः कर्मविघ्नकारि रक्षःकुलं सहमूलं मूलसहितं यथा भवति तथा उद्वृह उद्धर किंच मध्यं तस्य मध्यभागं वृश्च छिन्धि प्रत्यग्रम् अग्रमग्रं प्रत्यागतं तत् शृणीहि जहि . तस्य रक्षःकुलस्य मध्ये सललूकं सरणशीलं रक्षः आकीवतः आकृत्स्नमर्यादायां कियतो निर्ज्ञायमानपरिमाणादतिदूराद्देशादाचकर्थ कुरु इत्थाच ब्रह्मद्विषे ब्राह्मणद्वेषकारिणे तस्मै रक्षसे तपुषिं तापकं हेतिं घातकमायुधमस्य क्षिप उक्तमर्थं यास्कोऽब्रवीत्—उद्धर रक्षः सहमूलमिन्द्र मूलं मोचनाद्वा मोहनाद्वा वृश्च मध्यं प्रति शृणीह्यग्रम् अग्रमागतं भवत्या कियतो देशात्सललूकं संलुब्धं भवति पापकमिति नैरुक्ताः सररूकं वास्यात्सर्तेरभ्यस्तात्तपुषिस्तपतेर्हेतिर्हन्तेरिति ॥ वृह वृहू उद्यमने इत्यस्य लोटि रूपम् । शृणीहि शॄ हिंसायाम् अस्य लोटि हौ ई हल्यघोरितीत्वं निघातः । कीवतः किंशब्दात्किंपरिमाणमस्येत्यर्थे किमिदंभ्यां वो घ इति किंशब्दाद्वतुप् असतीति ज्ञापितत्वाद्वतुप् घादेशाभावश्छान्दसः इदंकिमोरीश्की इति कीइत्यादेशः । सललूकं सृगतौ छान्दसी रूपसिद्धिः । चकर्थ डुकृञ् करणे इत्यस्य लिटि थलि रूपं क्रादित्वादिडभावः निघातः ॥ तपुषिं तप संतापे इत्यस्मादर्तिपृवपियजितनिधनितपिभ्यो नित् इत्युसिप्रत्ययः नित्त्वे अकारस्य इकारश्छान्दसः नित्स्वरः । हेतिं हनहिंसागत्योः ऊतियूतिजूतिसातीत्यादिना निपातनादन्तोदात्तः । अस्य असु क्षेपणे लोटि रूपम् ॥ १७ ॥

१७. इन्द्र, राक्षस-कुल का समूल उन्मूलन करो। उनका मध्य भाग छेदो; अग्रभाग विनष्ट करो। गमनशील राक्षस को दूर करो। यज्ञ-विद्वेषी (ब्राह्मण-शत्रु) के प्रति सन्तापप्रद अस्त्र फेंको।

अथाष्टादशी–

स्वस्तयेवाजिभिश्चप्रणेतःसंयन्महीरिषआसत्सिपूर्वीः ।
रायोवन्तारोबृहतःस्यामास्मेअस्तुभगइन्द्रप्रजावान् ॥१८॥

स्वस्तये । वाजिऽभिः । च । प्रनेतरिति प्रऽनेतः । सम् ।
यत् । महीः । इर्षः । आऽसत्सि । पूर्वीः । रायः । वन्तारः ।
बृहतः । स्याम । अस्मे इति । अस्तु । भगः । इन्द्र । प्रजाऽवान् ॥१८॥

प्रणेतः प्रकर्षेणजगतोनिर्वाहक हेइन्द्र अस्मान्वाजिभिरश्वैःसहितान्कुरु स्वस्तयेचा-विनाशायकुरु यद्यदात्वं समासत्सि अस्माकंसमीपेयज्ञनिर्वाहार्थमासीदसि तदावयंमही-महान्तिरिषोन्नानि पूर्वीःप्रभूतानिरायोधनानि वन्तारः तेषांसंभक्तारःसन्तः बृहतोमहान्तः स्याम भवेम किंच प्रजावान् अपत्योपेतोभगोधनम् अस्मे अस्मास्वस्तु भवतु ॥ आसत्सिपद्लृ-विशरणादिषु बहुलंछन्दसीतिशपोलुक् यद्योगादनिघातः । इषोरायइतिचद्वेषष्ठ्यर्थेद्वितीये । वन्तारः वनषणसंभक्तावित्यस्य तृन्निआगमानुशासनस्यानित्यत्वादिडभावः चित्स्वरः । स्याम अस्तुवीत्यस्यलिङिरूपम् । अस्मे अस्मच्छब्दस्यसप्तम्याः सुपांसुलुगितिशेइत्यादेशः ॥१८॥

१८. संसार के निर्वाहक इन्द्र, हमें अश्व से युक्त करो। हमें अवि-नाशी करो। तुम जब हमारे निकट रहोगे, तब हम महान् अन्न और प्रभूत धन का भोग करके बड़े हो सकेंगे। हमें पुत्र, पौत्र आदि से युक्त धन प्राप्त हो।

अथैकोनविंशी–

आनोभरभगमिन्द्रद्युमन्तंनितेदेष्णस्यधीमहिप्ररेके ।
ऊर्वइवपप्रथेकामोअस्मेतमापृणवसुपतेवसूनाम् ॥१९॥

आ । नः । भर । भर्गम् । इन्द्र । द्युमन्तम् । नि । ते । देष्णस्य ।
धीमहि । प्रऽरेके । ऊर्वःऽइव । पप्रथे । कामः । अस्मे इति ।
तम् । आ । पृण । वसुऽपते । वसूनाम् ॥ १९ ॥

हेइन्द्र नोऽस्मदर्थं द्युमन्तं दीप्तियुक्तं भगं धनमाभर आसमन्तात्संभर देष्णस्यदानशील-स्यतेतवसंबन्धिनोधनस्यप्ररेके प्ररेचनेदानेनिधीमहि धनदानस्यवयंपात्रभूताःस्मइत्यर्थः कुतइ-त्यतआह–अस्मे अस्माकंकामोभिलाषः ऊर्वइव अन्नवासकामोवडवानलइव पप्रथे प्रभूतोवर्तते वसूनां वसुपते धनानांपालकोधनपतिरसि हेइन्द्र तंमहान्तंकामम् आपृण बहुधनप्रदा-

नेनापूरय ॥ भर भृञ्भरणेइत्यस्यलोटिरूपम् । देष्णस्य दुदाञ्दाने गात्वाम्यामिष्णामितिदेष्ण प्रत्ययः अत्यर्थेदसतीतिदेष्णः कित्स्वरः । धीनहि दधातेर्लिङ्बहुलंछन्दसीतिशपोलुक् छन्दस्युभयथेतिमहिङ:सार्वधातुकत्वात्सीयुटःसलोपः आर्धधातुकत्वादाल्लोपः निघातः । उर्मइव पूर्वपदस्वरः । पप्रथे प्रथप्रख्यानेइत्यस्यलिटिरूपम् । पृण पृणप्रीणनेइत्यस्यलोटि सेर्हिः तुदादिः अतोहेरितिहेर्लुक् । वसूनां नित्यादाद्युदात्तः ॥ १९ ॥

१९. इन्द्र, हमारे लिए दीप्ति से युक्त धन ले आओ। तुम दान-शील हो और हम तुम्हारे दान के पात्र हैं। हमारी अभिलाषा वड़वा-नल की तरह बढ़ी हुई है। धनपति, हमारी अभिलाषा पूर्ण करो।

इ॒मंकाम॑मन्दया॒गोभि॒रश्वै॑श्च॒न्द्रव॑ता॒राध॑सापप्रथ॑श्च ।
स्व॒र्यवो॑म॒तिभि॒स्तुभ्यं॒विप्रा॒इन्द्रा॑य॒वाहः॑कुशि॒कासो॑अक्रन् ॥२०॥

इ॒मम् । काम॑म् । म॒न्द॒य॒ । गोभिः॑ । अश्वैः॑ । च॒न्द्रऽव॑ता ।
राध॑सा । प॒प्रथः॑ । च॒ । स्व॒ःऽयवः॑ । म॒तिऽभिः॑ । तुभ्य॑म् । विप्राः॑ ।
इन्द्रा॑य । वाहः॑ । कु॒शि॒कासः॑ । अ॒क्र॒न् ॥ २० ॥

हेइन्द्र इमंधनादिविषयंकाममस्मदीयमभिलाषं गोभिःअग्निहोत्रादिकर्मसाधनभूतैर्ग-वादिभिर्वाहनसाधनभूतैरश्वैश्च चन्द्रवतादीप्तियुक्तेनराधसाधनेनचमन्दय एतान्दत्त्वा इममभि-लाषंपूरय किंच एतैरस्मान्पप्रथः प्रथितान्कुरु पश्चात्स्वर्यवः स्वर्गादिसुखमात्मनइच्छन्तः विप्राःकर्मकुशलाः कुशिकासःकुशिकाः मतिभिर्मननीयैर्मन्त्रैः वाहः स्तोत्रमिन्द्रायतुभ्यमक्र-न्नकार्षुः ॥ मन्दय मदिस्तुत्यादिष्वित्यस्यलोटिरूपम् । गोभिः सावेकाचइतिविभक्तेरुदात्तत्वेप्रा-प्ते नगोश्वन्त्साववर्णेत्यादिनाप्रतिषेधः प्रकृतिस्वरः । पप्रथः प्रथप्रख्याने क्विप् छन्दस्युभ-यथेतितस्यसार्वधातुकत्वाच्छप् तस्यबहुलंछन्दसीतिश्लुः धातुस्वरः । अक्रन् करोतेर्लुङि-मन्त्रेघसेत्यादिनाच्लेर्लुक् निघातः ॥२०॥

२०. हमारी इस अभिलाषा को गौ, अश्व और दीप्तिवाले धन के द्वारा पूर्ण करो तथा उसके द्वारा हमें विख्यात करो। इन्द्र, स्वर्गादि सुखाभिलाषी और कर्मकुशल कुशिकवंशजों ने मन्त्र-द्वारा तुम्हारा स्तोत्र किया है।

आ नो॑ गो॒त्रा द॑र्दृहि गोपते॒ गाः सम॒स्मभ्यं॑ स॒नयो॑ यन्तु॒ वाजाः॑ ।
दि॒वक्षा॑ असि वृषभ स॒त्यशु॑ष्मो॒ऽस्मभ्यं॑ सु मघवन्बोधि गो॒दाः ॥२१॥

आ । नः । गोत्रा । दर्दृहि । गोऽपते । गाः । सम् । अस्मभ्यम् ।
सनयः । यन्तु । वाजाः । दिवक्षाः । असि । वृषभ । सत्यऽशुष्मः ।
अस्मभ्यम् । सु । मघऽवन् । बोधि । गोऽदाः ॥ २१ ॥

गोपते गवांपते स्वर्गाधिपते हेइन्द्र नोऽस्मदर्थंगोत्रागोत्राण्यभ्राणि गाःअपःप्रति आदर्दृहि आद्रियस्व अभ्राणिविदार्यजलानिप्रापयेत्यर्थः ततः सनयःसंभजनीयानिवाजा अन्नानि अस्मभ्यमस्मदर्थंसंयन्तु समागच्छन्तु वृषभ कामानांवर्षितः हेइन्द्र त्वं दिवक्षामसि दिवंव्या-प्यवर्तमानत्वेनमहानसि अतएवसत्यशुष्मःसत्यसामर्थ्यः मघवन् धनवन् हेइन्द्र अस्मभ्यंगोदाः गवांप्रदाताभवामीति सुबोधि सुष्ठुबुध्यस्व ॥ दर्दृहि दृङ्आदरे यङ्लुकि लोटिरूपम् अस्मभ्ये-त्यभ्यासस्यरुगागमः निपातः । गाः औतोम्शसोरित्योकारस्याकारः एकादेशस्वरः । अस्मभ्यं भ्यसोभ्यमितिचतुर्थीबहुवचनस्यभ्यमादेशः । यन्तु इणगतौ लोटिरूपम् । दिवक्षाः अक्षूव्याप्तौ असुन् दिवंव्याप्नोतीतिदिवक्षाः कृदुत्तरपदस्वरः । गोदाः डुदाञ्दाने अस्माद्विच् कृदुत्तरपदप्रकृ-तिस्वरः ॥ २१ ॥

२१. स्वर्गाधिपति इन्द्र, मेघ को विदीर्ण करके हमें जल दो। उपभोग के योग्य अन्न हमारे पास आये। अभीष्टवर्षक, तुम द्युलोक को व्याप्त करके स्थित हो। सत्यबल मघवन्, हमें गौ दो।

अथद्वाविंशी—

शुनंहुवेममघवानमिन्द्रमस्मिन्भरेनृतमंवाजसातौ ।
शृण्वन्तमुग्रमूतयेसमत्सुघ्नन्तंवृत्राणिसंजितंधनानाम् ॥२२॥४॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् ।
वाजऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु ।
घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ २२ ॥ ४ ॥

हेइन्द्र वाजसातौ वाजस्यान्नस्यसातिर्लाभोयस्मिन्सोयंवाजसातिः तस्मिन्भरे बिभर्ति जयलक्ष्मीमनेनयोद्धाइतिभरःसंग्रामः तस्मिन्संग्रामेशुनंशूनमुत्साहेनप्रवृद्धं यद्वा शुनमितिसु-खनाम सुखकरंमघवानंधनवन्तम् अतएवइन्द्रं निरतिशयैश्वर्यसंपन्नं नृतमं सर्वस्यजगतोतिशयेन नेतारं त्वां हुवेम कुशिकाःवयंपक्षार्थेआह्वयेम तथा शृण्वन्तम् अस्माभिःक्रियमाणास्तुतिंशृण्वन्त-मुग्रं शत्रूणांभयंकरं समत्सु संग्रामेषु वृत्राणिवृत्रोपलक्षितानिसर्वाणिरक्षांसिघ्नन्तंहिंसन्तं धना-नांशत्रुसंबन्धिनांसंजितंसम्यग्जेतारंत्वामूतयेरक्षणायवयमाह्वयेम । शुनं टुओश्विगतिवृद्ध्योरि-

स्यस्यनिष्ठायांयस्यविभाषेतीट्प्रतिषेधः यजादित्वात्संप्रसारणं दीर्घाभावश्छान्दसः प्रत्ययस्वरः। हुवेम ह्वयतेर्बहुलंछन्दसीतिसंप्रसारणेकृते शपोलुकिकृतेच लिङ्रूपं निपातः। भरे भृञ्भरणे घः वृषादित्वादाद्युदात्तः वाजसातौ षणुदाने भावेक्तिन् जनसनेत्यादिनानुनासिकस्यात्वं सप्तमीहोपूर्वपदस्वरः। समत्सु अदभक्षणे संपूर्वात्क्विप् संभक्षयन्तियोद्धृणमायूंषीतिसमदःसंग्रामाः कृदुत्तरपदस्वरः। घ्नन्तं हनहिंसागत्योरित्यस्यशतरि गमहनेत्यादिनोपधालोपः होहन्तेरितिकुत्वम्। संजितं जिजये क्विप् तुक् ॥ २२ ॥

२२. इन्द्र, तुम अन्न प्राप्त करो। तुम युद्ध में उत्साह के द्वारा प्रवृद्ध, धनवान्, प्रभूत ऐश्वर्यवाले, नेतृ-श्रेष्ठ, स्तुति-श्रवण-कर्त्ता, उग्र, युद्ध में शत्रु-विनाशी और धन-विजेता हो। आश्रय-प्राप्ति के लिए हम तुम्हें बुलाते हैं।

॥ इतितृतीयस्यद्वितीयेचतुर्थोवर्गः ॥ ४ ॥

शासद्वह्निरितिद्वाविंशत्यृचंद्वितीयंसूक्तम् अत्रानुक्रमणिका—शासत्कुशिकोविश्वामित्रएववाःशुंसेरिति इषीरथस्यपुत्रःकुशिकोविश्वामित्रएववाऋषिः इन्द्रोदेवता त्रिष्टुप्छन्दः चातुर्विंशिकेहनिमाध्यंदिनेसवनेच्छावाकशस्त्रे आरम्भणीयायाऊर्ध्वमहीनसूक्तसंज्ञकमेतत्सूक्तंशंसनीयं सूत्रितंच—अस्मादुमतअसेग्राउद्वहिरितीतरामहीनसूक्तेइति पृष्ठ्याभिप्लवषडहयोः प्रथमेहनिमाध्यंदिनेसवनेच्छावाकशस्त्रे अहीनसूक्तस्यस्थानेत्रीणिसंपातसूक्तानि तत्रेदंतृतीयंसंपातसूक्तं सूत्रितंच—इमामूषुप्रभृतिंसातयेधाःशासद्वह्निरितिगाताइति।

तस्मिन्सूक्तेप्रथमा—

शासद्वह्निर्दुहितुर्नप्त्यंगाद्विद्वाँऋतस्यदीधितिंसपर्यन्।
पितायत्रदुहितुःसेकमृञ्जन्त्संशग्म्येनमनसादधन्वे ॥ १ ॥

शासत्। वह्निः। दुहितुः। नप्त्यम्। गात्। विद्वान्। ऋतस्य।
दीधितिम्। सपर्यन्। पिता। यत्र। दुहितुः। सेकम्।
ऋञ्जन्। सम्। शग्म्येन। मनसा। दधन्वे ॥ १ ॥

कुशिकःप्रसङ्गात्कंचिच्छास्त्रार्थंब्रूते अपुत्रस्यपितुः पुत्रादायादपुत्रिकासतीयतः सन्तानकृत्तस्याःपुत्रइत्यनयोच्यत इति। अपुत्रोयःपिताकन्यामन्यकुलंप्रापयातिसवह्निरित्युच्यते। सपिता शासत् अभ्रातृकांभवास्यामितुभ्यंकन्यामलंकृताम्। अस्यांयोजायतेपुत्रःसमेपुत्रोभवेदितीतिस्मृत्युक्तमनुशासनंकुर्वन् दुहितुःपुत्रिकायानप्त्यंनप्तारंपौत्रं गात्गच्छति दुहितुःपुत्रत्वेनस्वीकारात् दौहित्रम् नसुभर्षपिण्डदानादिकंकर्तव्यतयागात् गच्छति किंकुर्वन् विद्वानस्यांदुहितरिजातःपुत्रोममस्वधाकरोभविष्य-

(१) अपुत्रस्य पितुः पुत्रदायादपुत्रिकासती यतः सन्तानकृत्तस्याः पुत्रइत्यनयोच्यत इति पुस्तकान्तरे न पाठान्तरंभूतस्याम्।

सीतिमानन् ऋतस्यसत्यस्यपुत्रोत्पादनसमर्थस्यरेतसः दीधितिंधर्तारंजामातरंतत्प्रतिसपर्यन् पत्राच्छादना-दिनापूजयन् पितानप्तृभावंगच्छति यत्र यस्मिन्विषयेपितापुत्रोजनकः दुहितुरप्रत्तायाः स्वकन्यायाः सेकं रेतसः सेकं तस्यां रेतःसेकमृञ्जन् प्रसाधयन् शग्म्येन सुखनिमित्तेनमनसा संदधन्वे आत्मानं संधत्ते अपुत्रत्वनिमित्तदुःखापगमात् । यस्याद्दुहितुःपितापालकः पतिर्जामातासेकं तस्यांरेतःसेकमृञ्जन् प्रसाधयन् सम्यक्शग्म्येनकेवलंसुखनिमित्तेनमनसातस्यांस्वशरीरंसंदधन्वे-संधत्ते नतुपुत्रनिमित्तेनमनसा एतमर्थंयास्कोप्याह–'प्रशास्तिवोढासंतानकर्मणेदुहितुःपुत्रभावंदुहिता दुर्हितादूरेहितादोग्धेर्वानप्तारमुपागमद्दौहित्रंपौत्रमिति विद्वान्प्रजननयज्ञस्यरेतसोऽङ्गादङ्गात्संभूतस्य हृदयादधिजातस्यमातरिप्रत्यृतस्यविधानंपूजयन्'इत्यादिना ॥ शासत् शासेःशतरिअभ्यस्तत्वान्नु-मभावः । दुहितुः दुहप्रपूरणे नप्तृनेष्टृइत्यादिनातृचिनिपातनादिडागमः चित्स्वरः । नप्त्यं नप्तरिभवं भवेछन्दसीतियत् रीङृतइतिरीङादेशः यस्येतिलोपः रेफलोपश्छान्दसः तित्स्वरितः । गात् इणोगाइत्यस्यछान्दसेलुङिरूपम् । ऋञ्जन् ऋञ्जतिःप्रसाधनकर्मा । शग्म्येन शंसुखंगच्छती-तिगमेरौणादिकः कमत्ययः कित्वाद्गमहनेत्यादिनोपधालोपः शग्मेसाधुरिति तत्रसाधुरितियत्प्रत्ययः यीरवीर्यौचेत्यत्रयतोनावइत्यस्यानित्यत्वस्यज्ञापितत्वादन्तस्वरः । दधन्वे धविर्गतौ(सौत्रो)धातुः-लिटि रूपं प्रत्ययस्वरः यद्योगादनिघातः ॥ १ ॥

१. पुत्रहीन पिता रेतोधा जामाता को सम्मानयुक्त करते हुए शास्त्र के अनुशासन के अनुसार पुत्री से उत्पन्न पौत्र (दौहित्र) के पास गया। अपुत्र पिता, पुत्री को गर्भ रहेगा, ऐसा विश्वास करके शरीर धारण करता है।

अथद्वितीया–

न जामये तान्वो रिक्थमारैक्चकार गर्भं सनितुर्निधानम् ।
यदी मातरो जनयन्त वह्निमन्यः कर्ता सुकृतोरन्य ऋन्धन् ॥२॥

न । जामये । तान्वः । रिक्थम् । अरैक् । चकार । गर्भम् ।
सनितुः । निऽधानम् । यदि । मातरः । जनयन्त । वह्निम् ।
अन्यः । कर्ता । सुऽकृतोः । अन्यः । ऋन्धन् ॥२॥

अभ्रातृकायादुहितुःपुत्रिकाकरणात्सारिक्थभागित्युक्तं भ्रातृमत्यास्तस्यारिक्थभाक्त्वं नास्तीतिब्रूते–तान्वः तनूजःऔरसःपुत्रोजामयेभगिन्यैरिक्थंपित्र्यंधनंनारैक् नप्रेचयति नप्र-यच्छति किंतर्हिसनितुरेनांसंभजमानस्यभर्तुःगर्भं गर्भधारयित्रीमेनांचकार । गर्भस्यनिधानंरेतःसेकनिधा-नीमेनांचकार पाणिग्रहणेनसंस्कृतामेनांकरोति नतुतस्यैरिक्थंददातीत्यभिप्रायःअसंस्कृता-स्तुसंस्कार्याभ्रातृभिःपूर्वसंस्कृतैः । भगिन्यश्चनिजादंशात्स्वांशात्तुरीयकामितिपाज्ञवल्क्यस्मर-णात् । स्त्रीपुंसलक्षणस्यापत्यस्यैकोत्पादनाविशेषात्पुनरपत्यस्यकोविशेषइत्याशङ्क्याविशेषंदर्श-

(१) यत्र यस्मिन्विषयेपिताजनकः दुहितुरप्रत्तायाः कन्यायाः सेकंरेतसः सेकंतस्यांरेतः–सेकमृञ्जन् सम्पादयन् शग्म्येन सुखनिमित्तेनमनसा सन्दधन्वे आत्मानं सन्धत्ते अपुत्रत्वनिमित्तदुःखापगमादिति न कश्चित्पाठभेदः । (२) नि० ३, ४.

यति–यदि यद्यपि मातरौ मातापितरौ वह्निम् अवह्निः स्त्री वह्निः पुमान् स्वभार्यायां वोढृत्वात् अवह्नि-म् अवह्निः तादृशौ स्त्रीपुंसलक्षणमपत्यं जनयन्ता ऽजनयताम् तथापि तयोर्मध्ये अन्यः पुंलक्षणः सुकृतोः शोभ-नस्य पिण्डदानादेः कर्मणः कर्ता भवति अन्यः स्त्रीलक्षणः ऋन्धन् वस्त्रालङ्कारादिना ऋध्यमान एव भव-ति पिण्डदानादिकर्तृत्वात्पुत्रो दायार्हः दुहिता तथा नेति न दायार्हा सा तु केवलं परस्मै दीयते तथा च निरुक्तं— नैतामयेमागिन्यै शामिरन्यैस्यां जनयन्ति जामपत्यं जमतेर्वास्याद्गतिकर्मणो निर्गमनप्राया भवति ता-न्वआत्मनः पुत्रो रिक्थं प्ररिक्तम्आवाबकारैनां गर्भनिधानीं सनितुर्हस्ताम्आहस्यादिह मातरो जनयन्तवह्निं पुत्र-मवह्निं च स्त्रियमन्यतरः संतानकर्ता भवति पुमान्दायादोऽन्यतरोऽर्धयित्वा जामिः प्रदीयते परस्मा इति ॥ तान्वः तन्वाः प्राणाधिष्ठितत्वात्तनूः प्राणवती तद्विकार इत्यर्थे प्राणिरजतादिभ्योऽञित्यत्र संज्ञापूर्वकस्य विधेरनित्यत्वाद्गुणाभावः । रिक्थं रिचिर् विरेचने पातृतुदिवचिरिचिसिचिभ्यस्थक् प्रत्ययस्वरः । अरैक् रिचिर् विरेचने इत्यस्य लङि सिपि वदव्रजेत्यादिना वृद्धिः बहुलं छन्दसीति इडभावः हल्ङ्यादिसंयोगा-न्तलोपौ निघातः । सनितुः षणसंभक्तावित्यस्य तृचि रूपम् । निधानं दधातेर्ल्युटि रूपं लित्स्वरः । मातरः पितामात्रेति पितुः शेषे मासे मातुः शेषश्छान्दसः द्विर्वचनस्य बहुवचनं पूजार्थम् । जनयन्त जनेर्णिचि रूपम् । वह्निं पुमांस्त्रियेति एकशेषः । सुकृतोः करोतेरौणादिकः कुप्रत्ययः । ऋधुवृद्धौ व्यत्ययेन शप् ॥ २ ॥

२. औरस पुत्र पुत्री को धन नहीं देता। वह पुत्री को उसके भर्ता (पति) के रेतःसेचन का आधार बनाता है। यदि माता-पिता पुत्र और कन्या, दोनों का ही उत्पादन करते हैं, तब उनमें से एक (पुत्र) उत्कृष्ट क्रिया-कर्म का अधिकारी होता है और दूसरा (पुत्री) सम्मानयुक्त होता है।

अग्निर्जज्ञे जुह्वा रेजमानो महस्पुत्राँ अरुषस्य प्रयक्षे ।
महान्गर्भो मह्या जातमेषां मही प्रवृद्धर्यश्वस्य यज्ञैः ॥३॥

अग्निः । जज्ञे । जुह्वा । रेजमानः । महः । पुत्रान् । अरुषस्य । प्रऽयक्षे । महान् । गर्भः । मह्या । आ । जातम् । एषाम् । मही । प्रऽवृत् । हरिऽअश्वस्य । यज्ञैः ॥३॥

हेइन्द्र अरुषस्य रोचमानस्य तव प्रयक्षे यष्टुं जुह्वा ज्वालया रेजमानः कम्पमानोऽग्निः महः प्रभूतान्पुत्रान् रश्मीन् जज्ञे उत्पादयामास एषां रश्मीनां गर्भो महात्मना क्रोडीकारः महानासीत् किंच एषां रश्मीनां मेलनम् आजातं सर्वतः ओषध्यात्मना जातं महि महदभूत् किंच एषां रश्मीनां प्रवृत् अनेन प्रकारेण प्रवृत्तिः हर्यश्वस्येन्द्रस्य यज्ञैः येन नार्हैः होमाज्याहुतिभिर्मही महती भवति ॥

---

१ नि० ३. ६.

महे मनीमादुर्गावेइत्यस्याषिटिरूपम् अंतर्भावितण्यर्थः । जुहा जुहोतेर्द्वेदीर्घश्चेतिक्विप् द्विर्वचनं दीर्घश्चधातोः उदात्तस्वरितयोरितिस्वरितत्वम् । हर्यश्वस्य हरीअश्वोयस्येतिबहुव्रीहौपूर्वपदप्रकृतिस्वरः ॥ ३ ॥

३. इन्द्र, तुम दीप्ति-युक्त हो। तुम्हारे यज्ञ के लिए ज्वाला-द्वारा कम्पमान अग्नि ने यथेष्ट-पुत्ररूप रश्मियों को उत्पन्न किया है। इन रश्मियों का जल-रूप गर्भ महान् है; ओषधि-रूप जन्म महान् है। हे हर्यश्व, तुम्हारी सोमाहुति-द्वारा प्रयुक्त इन रश्मियों की प्रवृत्ति महती है।

अभि जैत्रीरसचन्तस्पृधानंमहिज्योतिस्तमसोनिरजानन् ।
तंजानतीःप्रत्युदायन्नुषासःपतिर्गवामभवदेकइन्द्रः ॥ ४ ॥

अभि । जैत्रीः । असचन्त । स्पृधानम् । महि । ज्योतिः ।
तमसः । निः । अजानन् । तम् । जानतीः । प्रति । उत् ।
आयन् । उषसः । पतिः । गवाम् । अभवत् । एकः । इन्द्रः ॥४॥

जैत्रीःजित्वर्योविशोमरुतःस्पृधानंवृत्रेणसहस्पर्धमानमिन्द्रम् अभ्यसचन्त सर्वतःसमगच्छन् तेषमरुतः तस्मिन्वृत्रेहते महि महत्ज्योतिःसूर्याख्यंतेजः तमसस्तमोरूपाद्वृत्रान्निरजानन् निर्गतमज्ञासिषुः ततः इन्द्रंवृत्रहंतारमादित्यंसूर्यमानतीर्गोनानाउषसः तंप्रत्युत् अभिमुख्येनउदयन् प्राप्नुवन् अथ तत्रोद्भूतानांगवांरश्मीनामेकोऽद्वितीयएवेन्द्रः पतिरभवत् ॥ जैत्रीः जयतेस्तृन्निरूपं गुणस्यस्थानेव्यत्ययेनवृद्धिः नित्स्वरः । असचन्त षचसमवायेइत्यस्यलङिरूपम् । स्पृधानं स्पर्धसंघर्षे छन्दसिकानजादेशः छन्दसिद्विर्वचनस्यापिकाशिकात्वाद्द्विर्वचनाभावः चित्स्वरः । अजानन् ज्ञाअवबोधनेइत्यस्यलङिरूपं निघातः । आयन् अयगतावित्यस्यलङिरूपम् ॥ ४ ॥

४. विजेता मरुद्गण वृत्र के साथ युद्ध करनेवाले इन्द्र के साथ संगत हुए थे। सूर्य-संज्ञक महान् तेज तमोरूप वृत्र से निर्गत होता है, इस बात को मरुतों ने जाना था। उषायें, इन्द्र को सूर्य समझ करके, उनके सामने गई थीं। अकेले इन्द्र सारी रश्मियों के पति हुए थे।

वीळौसतीरभिधीरांमतृन्दन्प्राचाहिन्वन्मनसासप्तविप्राः ।
विश्वामविन्दन्पथ्यामृतस्यप्रजानन्नित्तानमसाविवेश॥५॥५॥

वीळौ । सतीः । अभि । धीराः । अतृन्दन् । प्राचा । अहिन्वन् ।
मनसा । सप्त । विप्राः । विश्वाम् । अविन्दन् । पथ्याम् । ऋतस्य ।
प्रऽजानन् । इत् । ता । नमसा । आ । विवेश ॥ ५ ॥ ५ ॥

पुराकिलाङ्गिरसांगावःपणिनामकैरसुरैरपहृत्य निगूढेकस्मिंश्चित्पर्वतेस्थापितास्ततोऽङ्गिरसस्तत्प्राप्त्यर्थमिन्द्रंतुष्टुवुः स्तुतश्चसइन्द्रोगवान्वेषणायदेवशुनींप्राहिणोत् साचगवांगवेषणपरासती तत्स्थानमलभत तयाविज्ञापितइन्द्रस्तागाआनीयाङ्गिरोभ्यःप्रादादित्यैतिहासिकीकथा । तथाचास्याऋचोयमर्थः—धीराःधीमन्तःसप्तविप्रामेधाविनःसप्तसंख्याकाअङ्गिरसः वीळौदृढेपर्वतेसतीः निगूढाःसतीर्गाअभि अभिलक्ष्यअतृन्दन् निधानमपावृण्वन् उपेक्षामकुर्वन् ततस्तेऽङ्गिरसःपर्वतबिलेगावःसन्तीतिमनसानिश्चित्यप्राचा येनमार्गेणप्रविष्टास्तेनैवप्राचीनेनमार्गेणतागाअहिन्वन् निरगमयन् यद्वा प्राचाप्रकर्षेणेन्द्रमञ्चतिप्राप्नोतीतिप्राङ् तेनेन्द्रविषयेणमनसा मन्यतइतिमनः स्तोत्रं तेनस्तोत्रेणाहिन्वन् अवर्धयन् इन्द्रंतुष्टमकुर्वन् स्तुत्वाचऋतस्यपथ्यायज्ञस्यमार्गेसाधुभूतां विश्वांसर्वामपहृतांगामविन्दन्अलभन्त ततःसइन्द्रः ता तान्यङ्गिरसांकर्माणिप्रजानन्प्रकर्षेणजानन्नेव नमसानमस्कारेणाङ्गिरसःसंभावयन्तैरधिष्ठितंपर्वतमाविवेश ॥ अतृन्दन् उतृदिर्हिंसानादरयोरित्यस्यलङि रुधादित्वात्श्नम् तस्यश्नसोरल्लोपः निघातः । प्राचा अञ्चेश्छन्दस्यसर्वनामस्थानमितिविभक्तेरुदात्तत्वम् अहिन्वन् हिगतिवर्धनयोरित्यस्यलङिरूपम् । अविन्दन् विद्लृलाभेइत्यस्यलङिमुचादित्वान्नुम् निघातः । पथ्यां पथिसाधुरित्यर्थे तत्रसाधुरितियत्प्रत्ययः पथिमथ्यृभुक्षामात् भस्यटेर्लोपः यतोनावइत्यस्यानित्यत्वात्तित्स्वरितइतिस्वरितः । विवेश विशप्रवेशनेइत्यस्यलिटिरूपम् ॥ ५ ॥

५. धीमान् और मेधावी सात अङ्गिरा लोगों ने सुदृढ़ पर्वत पर रोकी हुई गायों को खोज निकाला था। वे, पर्वत पर गायें हैं, ऐसा निश्चय करके जिस मार्ग से वहाँ गये थे, उसी मार्ग से लौट आये। उन्होंने यज्ञ-मार्ग में सारी गायों को प्राप्त किया था। यह सब जानकर इन्द्र, नमस्कार-द्वारा, अङ्गिरा लोगों की सम्भावना करके पर्वत पर गये थे।

॥ इतितृतीयस्यद्वितीयेपञ्चमोवर्गः ॥ ५ ॥

विदद्यदीसरमारुग्णमद्रेर्महिपाथःपूर्व्यंसध्र्यक्कः ।
अग्रंनयत्सुपद्यक्षराणामच्छारवंप्रथमाजानतीगात् ॥ ६ ॥

विदत् । यदि । सरमा । रुग्णम् । अद्रेः । महि । पाथः ।
पूर्व्यम् । सध्र्यक् । करिति कः । अग्रम् । नयत् । सुऽपदी ।
अक्षराणाम् । अच्छ । रवम् । प्रथमा । जानती । गात् ॥ ६ ॥

यदि यदासरमेन्द्रेणगवान्वेषणार्थंप्रेषिता सरमानामदेवशुनी अद्रेःपर्वतस्यरुग्णंभग्नं द्वारंविदत् अलभत तदानीमिन्द्रोमहि महत्पूर्व्यंपूर्वंप्रेषणकालेऽन्नादिनीं तेभक्षंकरिष्यामीति प्रतिज्ञातं सध्र्यक् इतरैरपिभोज्यैःसध्रीचीनंपायोगव्यादिलक्षणमन्नं कःअकार्षीत् तस्यैदत्त-वान् ततःसुपदी शोभनपादयुक्ता सा सरमा असुराणांक्षयरहितानांगवामग्रमग्रेअन्तःनैयत् प्रा-प्नोत् कुतइत्यतआह—यतःरवंतेषांहम्भारवंप्रथमाप्रथमंजानतीसती अच्छ शब्दाभिमुख्येनगात् जगाम ॥ विदत् विद्लृलाभेइत्यस्यलुङि लृदित्त्वात्च्लेरङादेशः तस्यस्वरः । सरमा सृगतौ औ-णादिकोमप्रत्ययः सरतीतिसरमा सरमासरणादितियास्कः । प्रत्ययस्वरः । रुग्ण रुजोभङ्गेइ-त्यस्यनिष्ठायामोदितश्चेतिनत्वं प्रत्ययस्वरः । पायः पारक्षणे अन्येभ्योऽपिदृश्यन्तइत्यसुन्प्रत्ययः युडागमः पातीतिपायोऽन्नं नित्स्वरः । सध्र्यक् अञ्चुगतिपूजनयोः ऋत्विगित्यादिनाक्विन् सहम-ञ्चतीतिसहस्यसध्रिरितिसध्र्यादेशः क्विन्प्रत्ययस्यकुरितिकुत्वम् अद्रिसध्र्योरन्तोदात्त्वनिपातनंकृत्स्वर-निवृत्त्यर्थमितिसध्रिइत्यादेशान्तोदात्तः यणादेशेकृते उदात्तस्वरितयोर्यणःस्वरितइति यणःस्व-रितत्वम् । कः करोतेर्लुङिच्लिःसिपि मन्त्रेघसह्वरेत्यादिनाच्लेर्लुक् गुणेकृते हल्ङ्याब्भ्यादिनासिलोपः वि-सर्जनीयः निघातः । नयत् नयतेर्लङिरूपम् । सुपदी पादोऽन्यतरस्यामितिङीप् । गात् इणो-लुङिरूपम् ॥ ६ ॥

६. जिस समय सरमा पर्वत के टूटे हुए द्वार पर पहुँची, उस समय इन्द्र ने अपने कहे हुए यथेष्ट अन्न को, अन्यान्य सामग्रियों के साथ, उसे दिया। अच्छे पैरोंवाली सरमा शब्द पहचानकर सामने जाते हुए असंख्य गायों के पास पहुँच गई।

भवसप्तमी—

**अगच्छदुविप्रतमः सखीयन्नसूदयत्सुकृतेगर्भमद्रिः ।**
**ससानमर्योयुवभिर्मखस्यन्नथाभवदङ्गिराःसद्योअर्चन् ॥७॥**

अगच्छत् । ऊँ इति । विप्रऽतमः । सखिऽयन् । असूदयत् । सुऽकृते । गर्भम् । अद्रिः । ससान । मर्यः । युवऽभिः । मखस्यन् । अथ । अभवत् । अङ्गिराः । सद्यः । अर्चन् ॥ ७ ॥

विप्रतमः अतिशयेनमेधावी सखीयन् अङ्गिरोभिःसाकमात्मनःसखित्वमिच्छन् इन्द्रो-गच्छदु गोभिरधिष्ठितंपर्वतमगमदेव सोऽद्रिः सखित्वमिच्छन्सुकृतेसुष्ठुसुकर्मेइन्द्राय गर्भं गवात्मकंगर्भमसूदयत् निरगमयत् युवभिर्नित्यतरुणैर्मरुद्भिःसह मखस्यन् गोधनमङ्गिरसामि-च्छन् मर्यः असुराणांमारयिताइन्द्रः ससान असुरैरपहृताः तागाभेजे अथानन्तरमङ्गिराःसद्य-

नामङ्गिरसांमध्येवरिष्ठोङ्गिराऋषिःइन्द्रासागात्कृत्वा सपत्सद्यानीमेव अर्चन् इन्द्रंपूजयन्नभवत् ॥ अगाच्छत् गमेर्लङिरूपम् । सस्रोयन् सुपआत्मनःक्यच् । असूदयत् सूदनिरासेइत्यस्यण्यंतस्यलङिरूपम् । ससान षणसंभक्तावित्यस्यलिटिणलिरूपं लित्स्वरः । मखस्यव छन्दसिपरेच्छायामपिक्यच् सर्वप्रातिपदिकेभ्योलालसायांसुग्वक्तव्यइतिसुगागमः एकादेशस्वरः । अङ्गिराः सृगतौ अङ्गारशब्देउपपदे सर्तेर्धातोरसुन्प्रत्ययः उपपदेगकारात्परस्याकारस्येत्वं अन्त्यलोपश्च धातोर्लोपश्च अङ्गिराइतिसूत्रेणनिपात्यते मृतकालेऽङ्गारेभ्यःसृतइतिअङ्गिराऋषिः अङ्गारेष्वङ्गिराइतियास्कः । नित्स्वरः ॥ ७ ॥

७. अतीव मेधावी इन्द्र अङ्गिरा लोगों की मित्रता की इच्छा से गये थे। पर्वत ने महायोद्धा के लिए अपने गर्भस्थ गोधन को बाहर कर दिया। शत्रु-हन्ता इन्द्र ने तरुण मरुतों के साथ उन्हें प्राप्त किया। अङ्गिरा ने तुरत उनकी पूजा की।

अथाष्टमी—

सुतःसंतःप्रतिमानंपुरोभूर्विश्वावेदजनिमाहन्तिशुष्णम् ।
प्रणोदिवःपदवीर्गव्युरर्चन्त्सखासखीँरमुञ्चन्निरवद्यात् ॥८॥

सुतःऽसंतः । प्रतिऽमानम् । पुरःऽभूः । विश्वा । वेद । जनिम । हन्ति । शुष्णम् । प्र । नः । दिवः । पदऽवीः । गव्युः । अर्चन् । सखा । सखीन् । अमुञ्चत् । निः । अवद्यात् ॥ ८ ॥

योयमिन्द्रः सतःसतःउत्तमस्यवस्तुनःप्रतिमानं प्रतिमीयतेउपमीयतेऽनेनसर्वमितिप्रतिमानंप्रतिनिधिः यद्वा सतःसतोजातस्यसर्वस्यप्रतिमानंस्वस्यमहत्त्वेनप्रतिमातिइयत्तयासर्वंपरिच्छिनत्तीत्यर्थः पुरोभूः युद्धेपुरतःशत्रूनभिभवतीतिपुरोभूश्च विश्वाजनिमसर्वाणिजातानिवेदजानाति शुष्णं शुष्णनामानमसुरंहन्ति पदवीःकवितमः गव्युः गोधनमङ्गिरसामिच्छन् अस्माकं सखाइन्द्रःसखीनोऽस्मान्दिवःद्युलोकादागत्यप्रार्चन् प्रकर्षेणापूजयन् अवद्यात् वृत्रबाधारूपाद्दोषान्निरमुञ्चत् नितरांमुञ्चतु ॥ प्रतिमानं मातीतिमानम् औणादिकोनन्प्रत्ययः यद्वा करणेल्युट् । पुरोभूः भूप्राप्तौ क्विप् । वेद वेत्तेर्लटिरूपम् । जनिम जनीप्रादुर्भावे जनिघसिभ्यामिमनिन्निति इमनिन्प्रत्ययःमृतकाले जातानीतिजनिम सुपांसुलुगितिसुपोलुक् नित्स्वरः । हन्ति हन्तेर्लटिरूपं वाक्यभेदादनिघातः । शुष्णं शोषयतीतिशुष्णः । प्रणः उपसर्गाद्बहुलमितिसंहितायांणत्वम् । पदवीः वीकान्त्यादिषु क्विप् पदानिवेत्तिपरस्परसंगतानिकरोतीतिपदवीः कविः । गव्युः गोशब्दात्परेच्छायांछन्दसिक्यच् वान्तोयिप्रत्ययेइतिवान्तादेशः क्याच्छन्दसीत्युप्रत्ययः प्रत्ययस्वरः ।

---

१ नि० ३. १५. ।

मर्कन् अर्चतेःशतरिरूपम्। सखीन् संहितायांनकारस्यदीर्घादटीतिरुः पूर्वस्यवर्णस्यअत्रानुनासिकेत्यनुनासिकादेशः । अमुञ्चत् मुञ्च्मोक्षणेइत्यस्यलुङि शेमुचादीनामितिनुमागमः निघातः । अवद्यात् वदव्यक्तायांवाचीत्यस्यनञ्पूर्वस्यगर्ह्यार्थे अवद्यपण्यवर्याइतिनिपातनात्यत्प्रत्ययः ॥ ८ ॥

८. जो इन्द्र उत्तम पदार्थ के प्रतिनिधि हैं, जो समर-भूमि में अग्रगामी हैं, जो सब उत्पन्न पदार्थों को जानते हैं, जिन्होंने शुष्ण का वध किया था, वे ही दूरदर्शी और गोधन के अभिलाषी इन्द्र, द्युलोक से सम्मान करते हुए, हमें पाप से बचावें।

निर्ग॑व्य॒ताम॑न॑सासेदुर॒र्कैः कृ॑ण्वा॒नासो॑अमृत॒त्वाय॑गा॒तुम् ।
इ॒दंचि॒न्नुसद॑नं॒भूर्ये॑षां॒येन॒मासाँ॒असि॑षासन्नृ॒तेन॑ ॥ ९ ॥

नि । ग॒व्य॒ता । मन॑सा । से॒दुः । अ॒र्कैः । कृ॒ण्वा॒नासः॑ । अ॒मृ॒त॒ऽत्वाय॑ ।
गा॒तुम् । इ॒दम् । चि॒त् । नु । सद॑नम् । भूरि॑ । ए॒षा॒म् । येन॑ ।
मासा॑न् । असि॑सासन् । ऋ॒तेन॑ ॥ ९ ॥

गव्यता गाइच्छतामनसायुक्ताः अर्कैरर्चनीयैःस्तोत्रैः अमृतत्वाय देवत्वप्राप्त्यर्थंगातुं गच्छन्त्यनेनेतिगातुर्मार्गः अमृतत्वप्राप्त्युपायभूतंमार्गंकृण्वानासः कुर्वाणास्तेऽङ्गिरसःनिषेदुः सत्राख्ये कर्मण्यासीदन् एषामङ्गिरसामिदंचित्सदनम् इदमेवसत्राख्यंकर्मण्यासदनंभूरिप्रभूतममृतत्वप्राप्त्यर्थंमहानुपायःखलु कुतइत्यतआह—ऋतेनसत्यभूतेनयेनसत्रकर्मणातेऽङ्गिरसोमासानभिप्लवपृष्ठ्यषळहैः कल्पितान्मासान् असिसासन् संभक्तुमैच्छन् ॥ गव्यता गोशब्दात्क्यचिरूपं वान्तोयिप्रत्ययेइतिवान्तादेशः एकादेशस्वरः । सेदुः सदेर्लिटि अतएकहल्मध्येनादेशादेर्लिटीत्येत्वाभ्यासलोपौ निघातः । कृण्वानासः कृविहिंसाकरणयोरित्यस्यताच्छील्यिकश्चानश् धिन्विकृण्व्योरच्चेत्युप्रत्ययः चित्स्वरः । गातुं गाङ्गतौ कमिमनिजनिगाभायाहिभ्यश्चेतिकर्मणेतुप्रत्ययः प्रत्ययस्वरः । असिषासन् षणसंभक्तावित्यस्य सनि जनसनखनांसञ्झलोरित्यात्वम् अभ्यासस्य सन्यतइतीत्वं स्तौतिण्योरेवषण्यभ्यासादितिषत्वाभावः संहितायांनत्वं तदन्ताल्लङिरूपम् यद्वृत्तयोगादनिघातः ॥ ९ ॥

९. भीतर ही भीतर गोधन की प्राप्ति की इच्छा करके, स्तोत्र के द्वारा अमरता प्राप्त करने की युक्ति करते हुए यज्ञ-कार्य में लगे थे। इनके इस यज्ञ में यथेष्ट उपवेशन हैं। इन्होंने इस सत्यभूत यज्ञ के द्वारा महीनों को अलग करने की इच्छा की थी।

स॒म्पश्य॑माना अमदन्न॒भि स्वं पयः॑ प्र॒त्नस्य॒ रेत॑सो॒ दुघा॑नाः ।
वि रोद॑सी अतप॒द्घोष॑ एषां जा॒ते नि॒ष्ठामद॑धु॒र्गोषु॑ वी॒रान् ॥ १० ॥ ६ ॥

स॒म्ऽपश्य॑मानाः । अ॒म॒द॒न् । अ॒भि । स्वम् । पयः॑ । प्र॒त्नस्य॑ । रेत॑सः । दु॒घा॑नाः । वि । रोद॑सी॒ इति॑ । अ॒त॒प॒त् । घोषः॑ । ए॒षा॒म् । जा॒ते । नि॒ःऽस्थाम् । अद॑धुः । गोषु॑ । वी॒रान् ॥ १० ॥ ६ ॥

स्वंस्वकीयंगोधनम् अभि अभिलक्ष्य संपश्यमानाः मदीयाएतागावइत्यात्मीयतयाजानानास्तेऽङ्गिरसः प्रत्नस्य पुरातनस्यरेतसस्तदुपलक्षितस्यपुत्रस्यधारणार्थंपयोदुघानास्तागाःपयोदुहन्तःसन्त अमदन् अहृष्यन् एषामङ्गिरसांघोषः हर्षादुत्पन्नोमहाध्वनिःस्तुतिर्वातोवा-रोदसीद्यावापृथिव्यौव्यतपत् तेऽव्याप्यातपिष्ट ततस्तेऽङ्गिरसः जातेआत्मीयतयासंपन्नेचराचरात्मकेवस्तुनिनिष्ठामदधुः यथापूर्वंस्थितिमकार्षुः तथा गोषुप्राहृतासुवीरान्रक्षाकर्मण्यतिशूरान्पुरुषानदधुः स्थापयामासुः ॥ संपश्यमानाः संपूर्वस्यदृशेः समोगमृच्छीतिषञ्चम्यमित्यात्मनेपदं शानचोलसार्वधातुकस्वरेणानुदात्तत्वेकृतेधातुस्वरः । अमदन् मदीहर्षेइत्यस्यलुङि णिच्यङिरूपं निघातः । दुघानाः दुहप्रपूरणेइत्यस्मात्शानच् अदादित्वाच्छपोलुक् चर्ष्यंछान्दसं वृषादित्वादाद्युदात्तः । अतपत् विपूर्वस्यतपतेरत्रसकर्मकत्वादात्मनेपदाभावः लङिरूपम् । घोषः घुषसंशब्दने घञन्तः ञित्स्वरः । निष्ठां ष्ठागतिनिवृत्तौ स्थःकचेतिक्विप् कृदुत्तरपदस्वरः । अदधुः दधातेर्लङि झेः श्लाभ्यस्तेतिजुसादेशः वाक्यभेदान्निघाताभावः । गोषु सावेकाचइतिविभक्तेरुदात्तत्वेप्राप्ते नगोश्वन्निति प्रतिषिद्धत्वात्प्रातिपदिकस्वरः ॥ १० ॥

१०. अङ्गिरा लोग अपने गोधन को लक्ष्य करके पहले के उत्पन्न पुत्र की रक्षा के लिए दूध दुहकर हृष्ट हुए थे। उनकी आनन्दध्वनि द्यावा-पृथिवी में व्याप्त हुई थी। पहले की ही तरह वे संसार में अवस्थित हुए थे। गायों की रक्षा के लिए वीर पुरुष को नियुक्त किया था।

॥ इतितृतीयस्यद्वितीयेषष्ठोवर्गः ॥ ६ ॥

स जा॒तेभि॑र्वृत्र॒हा सेदु॑ ह॒व्यैरुदु॒स्रिया॑ असृज॒दिन्द्रो॑ अ॒र्कैः ।
उ॒रू॒च्य॑स्मै घृ॒तव॒द्भर॑न्ती॒ मधु॒ स्वाद्म॑ दुदुहे॒ जेन्या॒ गौः ॥ ११ ॥

सः । जा॒तेभिः॑ । वृ॒त्र॒ऽहा । सः । इत् । ऊँ॒ इति॑ । ह॒व्यैः । उत् । उ॒स्रियाः॑ । अ॒सृ॒ज॒त् । इन्द्रः॑ । अ॒र्कैः । उ॒रू॒ची । अ॒स्मै॒ । घृ॒तऽव॑त् । भर॑न्ती । मधु॑ । स्वाद्म॑ । दु॒दु॒हे॒ । जेन्या॑ । गौः ॥ ११ ॥

सइन्द्रः जातेभिःसहायतयासंपन्नैर्मरुद्भिःसहितःसन् वृत्रहा वृत्रस्यासुरस्यहन्ताभवति सेदु सएवेन्द्रः अर्कैरर्चनीयैः अतएव हव्यैर्होतव्यैर्मरुद्भिःसहितःसन् उस्रियाःऊर्ध्वंसरणशीला

क्षीरादिरूपं हविरित्युस्रियागावः यद्वा उस्रं क्षीरदधिनवनीतादिक्रमेणाच्छादयतीति उस्रियेति गोनाम उस्राविणोस्यां भोगा इति यास्कः । ताभ्यो उदसृजत् यज्ञार्थं सम्यक् ससर्ज यस्मादेवं तस्मात् घृतवद्घृतोपेतं क्षीरादिकं हविः भरन्ती बिभ्राणा अतएव उरूची उरुप्रभूतमग्निहोत्रादिकं गच्छति हविः प्रदातुं प्राप्नोतीत्युरूची जेन्या जेतव्या प्रशस्ता गौरस्मै यजमानाय स्मात् स्वादुतरं मधुमधुरं क्षीरादि दुदुहे दुग्धे स्म ॥ उस्रियाः वसनिवासे इत्यस्मात् स्फायितञ्चीत्यादिना रक्प्रत्ययः उस्रशब्दात् स्वार्थे पृषोदरादित्वाद् घप्रत्ययः प्रत्ययस्वरः यद्वा सृगतौ उत्पूर्वस्य सरतेः कप्रत्ययः पूर्वपदस्यान्त्यलोपश्छान्दसः अत्रापि स्वार्थिको घप्रत्ययः । असृजत् सृज विसर्गे इत्यस्य लङि रूपम् । उरूची उरुमञ्चतीति क्विन् अञ्चतेश्चोपसंख्यानमिति ङीप् उदात्तनिवृत्तिस्वरेणान्तोदात्तः । दुदुहे दुह प्रपूरणे इत्यस्य लिटि रूपम् । जेन्या जयतेः कृत्यार्थे केन्यप्रत्ययः इकारलोपश्छान्दसः प्रत्ययस्वरः ॥ ११ ॥

११ सहायता के लिए, मरुतों के साथ, इन्द्र ने वृत्र का वध किया था। वे ही पूजनीय और होम-योग्य हैं। मरुतों के साथ गायों का, यज्ञ के लिए, दान किया था। घृत-युक्त-हव्य-धारिणी, प्रभूत-हव्य-दात्री और प्रशस्ता गौ ने इनके लिए स्वादुतर क्षीर आदि दिया था।

अथ द्वादशी—

**पि॒त्रे चि॑च्चक्रुः॒ सद॑नं॒ सम॑स्मै॒ महि॑ त्वि॒षीम॑त्सु॒कृतो॒ वि हि ख्यन् । वि॒ष्क॒भ्नन्तः॒ स्कम्भ॑नेना॒ जनि॑त्री॒ आसी॑ना ऊ॒र्ध्वं र॑भ॒सं वि मि॑न्वन् ॥ १२ ॥**

पि॒त्रे । चि॒त् । च॒क्रुः॒ । सद॑नम् । सम् । अ॒स्मै॒ । महि॑ । त्वि॒षिऽम॑त् । सु॒ऽकृतः॑ । वि । हि । ख्यन् । वि॒ऽस्क॒भ्नन्तः॑ । स्कम्भ॑नेन । जनि॑त्री॒ इति॑ । आसी॑नाः । ऊ॒र्ध्वम् । र॒भ॒सम् । वि । मि॒न्व॒न् ॥ १२ ॥

सत्रमनुतिष्ठन्तोऽङ्गिरसः पित्रे चित् पालकायास्मा इन्द्राय महि महत् त्विषीमद्दीप्तिमत् सदनमुत्तमं स्थानं संचक्रुः कथमिति तदुच्यते—यतः सुकृतः सम्यगुपार्जितकर्माणस्तेऽङ्गिरसः तादृशमिन्द्रस्योचितं स्थानं वि ख्यन् हि विशेषेणादर्शयन् खलु कुत इत्यत आह—आसीनाः सत्रमुपतिष्ठन्तः तेऽङ्गिरसः जनित्री सर्वस्य जगतो जनयित्र्यौ द्यावापृथिव्यौ स्कम्भनेन स्तम्भनसाधनेनान्तरिक्षेण विष्कभ्नन्तः यथा तयोरस्याधोन पततः तथा विष्टब्धे कुर्वन्तः सन्तः रभसं वेगवन्तं तमिन्द्रमूर्ध्वं द्युलोके विमिन्वन् हविः स्वीकरणार्थं विशेषेणास्थापयन् ॥ चक्रुः करोतेर्लिटि उसि रूपं निघातः । ख्यन् ख्या प्रकथने इत्यस्य लुङि च्लेः अस्यतिवक्तिख्यातिभ्योऽङिति अङादेशः आतो लोप इटि चेत्याकारलोपः हिचेति योगाद् अनिघातः । विष्कभ्नन्तः स्कम्भु रोधने सौत्रो धातुः तस्माच्छतरि रूपं वेः स्कभ्नातेर्नित्यम्

मितित्वं शतृप्रत्ययस्वरः । जनित्री ऋन्नेभ्योङीप् जनितामन्त्रेइतिनिपातनाण्णिलोपः वाछन्दसीतिसवर्णदीर्घः । आसीनाः आसउपवेशनेइत्यस्माच्छानच् ईदासइतीकारः शानचोऽसार्वधातुकस्वरेकृतेधातुस्वरः । भिन्वन् ऋभिमूप्रक्षेपणे इत्यस्यछान्दसंरूपं निपातः ॥ १२ ॥

१२. अङ्गिरा लोगों न पालक इन्द्र के लिए महान् और दीप्तिमान् स्थान-संस्कार किया था। सुकर्म-शाली अङ्गिरा लोगों ने इन्द्र के उपयुक्त इस स्थान को विशेष रूप से विस्तृत किया था। यज्ञ में बैठकर उन लोगों ने जनयित्री द्यावा-पृथिवी को स्तम्भ-रूप अन्तरिक्ष-द्वारा रोककर वेगवान् इन्द्र को द्युलोक में संस्थापित किया था।

महीयदिधिषणाशिश्नथेधात्सद्योवृधंविभ्वं१रोदस्योः ।
गिरोयस्मिन्ननवद्याःसमीचीर्विश्वाइन्द्रायतविषीरनुत्ताः ॥१३॥

मही । यदि । धिषणा । शिश्नथे । धात् । सद्यःऽवृधम् । विऽभ्वम् । रोदस्योः । गिरः । यस्मिन् । अनवद्याः । सम्ऽईचीः । विश्वाः । इन्द्राय । तविषीः । अनुत्ताः ॥ १३ ॥

महीमहतीधिषणाअस्माभिःक्रियमाणेन्द्रविषयास्तुतिः रोदस्योःशिश्नथे द्यावापृथिव्योरन्योन्यविश्लेषाय सद्योवृधंतदानीमेववर्धमानंविभ्वं विभुं तयोर्धारणसमर्थंसाधनंयदिधात् अकरोत् ततस्तत्रवर्तमानेयस्मिन्निन्द्रे अनवद्याः दोषरहितागिरः स्तुतिलक्षणावाचः समीचीः संगताभवन्ति इन्द्रायेतिविभक्तिव्यत्ययः तादृशस्येन्द्रस्यविश्वास्तविषीःसर्वाणिबलानि अनुत्ताः अप्रप्रेरितानिस्वभावसिद्धान्येव ॥ धिषणा ञिधृषाप्रागल्भ्ये धृषेर्धिषचसंज्ञायामितिक्युप्रत्ययः धातोर्धिषादेशः धृष्णोत्यनयेतिधिषणास्तुतिः प्रत्ययस्वरः । शिश्नथे श्नथहिंसार्थः अस्माल्लिट् छन्दस्युभयथेतितस्यसार्वधातुकत्वाच्छप् तस्य बहुलंछन्दसीतिश्लुः बहुलंछन्दसीत्यभ्यासस्येत्वं धातुस्वरः । धात् दधातेश्छान्दसेलुङिरूपं यद्योगादनिघातः । विभ्वं भवतेःक्विप् छन्दस्युभयथेतियणादेशः उदात्तस्वरितयोर्यणइतिस्वरितत्वम् । अनुत्ताः णुदप्रेरणेइत्यस्य नञ्पूर्वस्यनिष्ठायां नसत्तनिषत्तेत्यादिनानिपातनान्निष्ठातकारस्यनत्वाभावः नञ्स्वरः ॥ १३ ॥

१३. द्यावा-पृथिवी के परस्पर विश्लिष्ट होने पर यदि महान् स्तुति इन्द्रदेव को तत्क्षणात् वृद्धि-प्राप्त और धारण-क्षम करे, तो इन्द्र के प्रति दोष-रहित स्तुति सङ्गत हो। फलतः इन्द्र का सारा बल स्वभावसिद्ध है।

मह्यातेसख्यंवश्मिशक्तीरावृत्रघ्नेनियुतोयन्तिपूर्वीः ।
महिस्तोत्रमवआगन्मसूरेरस्माकंसुमघवन्बोधिगोपाः ॥१४॥

महि । आ । ते । सख्यम् । वश्मि । शक्तीः । आ । वृत्रघ्ने ।
निऽयुतः । यन्ति । पूर्वीः । महि । स्तोत्रम् । अवः । आ । अगन्म ।
सूरेः । अस्माकम् । सु । मघऽवन् । बोधि । गोपाः ॥ १४ ॥

हेइन्द्र ते तव महि महत्सख्यमावश्मि आकामये शक्तीः त्वत्संबन्धीनिदानानिचाकामये वृत्रघ्ने वृत्रासुरस्यहन्त्रेतुभ्यंपूर्वीर्बह्वयोनियुतोवडवाआयन्ति वहनार्थमागच्छन्ति सूरेःविदुषस्तवमहि महत्स्तोत्रम् अवः हविर्लक्षणमन्नंच आगन्म प्रापयामः हेमघवन्निन्द्र तादृशस्त्वम् अस्माकं सुसुष्ठुगोपाः पालयितामवामीतिबोधिबुध्यस्व ॥ सख्यं सख्युर्यइतिभावार्थेयप्रत्ययः प्रत्ययस्वरः । वश्मि वशकान्तौ लटिरूपम् । नियुतः युमिश्रणे क्विप् नितरांयुवन्तिमिश्रयन्त्यात्मानंरथेष्विितिनियुतोवडवाः । अगन्म गमेर्लङ्युत्तमपुरुषबहुवचनेबहुलंछन्दसीतिशपोलुक् म्वोश्चेतिमकारस्यनकारः निघातः । बोधि बुधेर्लोटि हेर्धिरूपं निघातः । गोपाः गुपूरक्षणे गुपूधूपेत्यादिनाआयप्रत्ययः तदन्तात्क्विप् अतोलोपयलोपौ प्रत्ययस्वरः ॥ १४ ॥

१४. इन्द्र, मैं तुम्हारी महती मित्रता के लिए प्रार्थना करता हूँ। तुम्हारी शक्ति के लिए प्रार्थना करता हूँ। तुम वृत्र-हन्ता हो। तुम्हारे पास अनेक अश्व वहन करने के लिए आते हैं। तुम विद्वान् हो। हम तुम्हें महत्सख्य, स्तोत्र और हव्य प्रदान करेंगे। इन्द्र, तुम हमारे रक्षक हो, ऐसा जानना। अथपञ्चदशी—

महिक्षेत्रंपुरुश्चन्द्रंविविद्वानादित्सखिभ्यश्चरथंसमैरत् ।
इन्द्रोनृभिरजनद्दीद्यानःसाकंसूर्यमुषसंगातुमग्निम् ॥१५॥७॥

महि । क्षेत्रम् । पुरु । चन्द्रम् । विविद्वान् । आत् । इत् । सखिऽभ्यः ।
चरथम् । सम् । ऐरत् । इन्द्रः । नृऽभिः । अजनत् । दीद्यानः ।
साकम् । सूर्यम् । उषसम् । गातुम् । अग्निम् ॥ १५ ॥ ७ ॥

योयमिन्द्रः महिमहत्क्षेत्रं केदारादि पुरुप्रभूतंचन्द्रंहिरण्यंचविविद्वानपिभ्यःसखिभ्योऽस्मभ्यंलम्भयन् आदिदनन्तरंचरथंचरात्मकंगवादिकंचसमैरत् सम्यक्प्रैरयत् दत्तवानित्यर्थः दीद्यानोदीप्यमानःसोयमिन्द्रः नृभिर्नेतृभिःकर्मसहायभूतैर्मरुद्भिःसाकंसहितःसन्सूर्यकालस्यनिर्वाहकमादित्यम् उषसम् उषःकालंगातुं गायन्तिस्तुवन्त्यस्यामिन्द्रादिदेवानितिगातुःपृथिवी ताम् अग्निमग्निहोत्रादिकर्मसाधनभूतमाहवनीयादिलक्षणमग्निंचअजनत्अजनयत् ॥ पुरुचन्द्रं संहितायांह्रस्वाच्चन्द्रोत्तरपदेमन्त्रइतिसुडागमः तस्यअसुत्वेनशकारः पदकालेनास्तिसुडागमः पुरु

कृत्प्रत्ययस्वरः चन्द्रं रक्प्रत्ययस्वरः । चरथं चरतिर्गत्यर्थः अस्मादौणादिकस्थप्रत्ययः प्रत्ययस्वरः । ऐरत् ईरगतावित्यस्यलङि आडजादीनामित्याडागमः निघातः । अमनत् कनेर्ण्यन्तस्यलङिरूपं बहुलमन्यत्रापिसंज्ञाछन्दसोरितिणिलुक् । गातुं गैशब्दे गापायाहिभ्यइतिप्रत्ययः प्रत्ययस्वरः ॥ १५ ॥

१५. भली भाँति समझकर इन्द्र ने मित्रों को महान् क्षेत्र और यथेष्ट हिरण्य दान किया है। इसके अनन्तर उन्होंने उन लोगों को गौ आदि भी दान किया है। वे दीप्तिमान् हैं। उन्होंने नेता मरुद्गणों के साथ सूर्य, उषा, पृथिवी और अग्नि को उत्पन्न किया है।

॥ इतितृतीयस्यद्वितीयेसप्तमोवर्गः ॥ ७ ॥

अपश्चिदेषविभ्वोऽदमूनाःप्रसध्रीचीरसृजद्विश्वश्चन्द्राः ।
मध्वःपुनानाःकविभिःपवित्रैर्द्युभिर्हिन्वन्त्यक्तुभिर्धनुत्रीः ॥१६॥

अपः । चित् । एषः । विऽभ्वः । दमूनाः । प्र । सध्रीचीः । असृजत् ।
विश्वऽचन्द्राः । मध्वः । पुनानाः । कविऽभिः । पवित्रैः ।
द्युऽभिः । हिन्वन्ति । अक्तुऽभिः । धनुत्रीः ॥ १६ ॥

दमूनाः दान्तंमनोयस्यासौदमूनादान्तमनाः यद्वा दाम्यतीतिदमूनाः उपरतइत्यर्थः सएषइन्द्रः विभ्वः व्याप्ताः सध्रीचीः परस्परसंगताः विश्वश्चन्द्राः विश्वस्याह्लादयित्रीः विश्वस्याह्लादोयाभ्यस्ताइतिवा एवंभूताः अपश्चित् अपोपिप्रासृजत् सृष्टवान् सृष्टाश्चताआपः मध्वः माधुर्योपेतान्सोमान्कविभिःपवित्रैः अग्निवायुसूर्यैः पुनानाः शोधयित्र्यः धनुत्रीः सर्वस्यजगतःप्रीणयित्र्यःसत्यः द्युभिर्दिवसैरक्तुभीरात्रिभिर्हिन्वन्तिरात्रिन्दिवंसर्वंप्राणिस्वस्वव्यापारप्रवणंकुर्वन्तीत्यर्थः ॥ दमूनाः दमुउपरमे दमेरूनसिरित्यूनसिप्रत्ययः दाम्यतीतिदमूनाः यद्वा दान्तशब्दस्यदमावःमनसोमकारात्परस्याकारस्यउकारश्छान्दसः । असृजत् सृजविसर्गे । हिन्वन्ति हिगतौ निघातः । धनुत्रीः धनधान्येइत्यस्मादशित्रादित्वादुत्रप्रत्ययः शार्ङ्गरवाद्यञोङीनित्यत्र्यः निस्वरः ॥ १६ ॥

१६. शान्तमना इन इन्द्र ने विस्तीर्ण, परस्पर सङ्गत और संसार के आनन्ददायक जल को उत्पन्न किया है। यह माधुर्ययुक्त सोम-समूह को पवित्र (जल-परिष्कारक) अथवा अग्नि, सूर्य और वायु के द्वारा शोधित करके और सारे संसार को प्रसन्न करके दिन-रात संसार को अपने व्यापार में प्रेरित करता है।

अनुकृष्णेवसुधितीजिहातेउभेसूर्यस्यमंहनायजंत्रे ।
परियत्तेमहिमानंवृजध्यैसखायइन्द्रकाम्याऋजिप्याः ॥१७॥

अनु । कृष्णे इति । वसुधिती इति वसुऽधिती । जिहाते इति । उभे इति । सूर्यस्य । मंहना । यजत्रे इति । परि । यत् । ते । महिमानम् । वृजध्यै । सखायः । इन्द्र । काम्याः । ऋजिप्याः ॥ १७ ॥

हेइन्द्र सूर्यस्यसर्वस्यजगतःप्रेरकस्यतव मंहना महत्त्वेनसामर्थ्येन वसुधितीवसून्यपदार्थधारणोपेते यजत्रे यजनार्हे ते उभे कृष्णे अहोरात्रे अनुजिहाते पुनःपुनरावृत्त्य वर्तेते किंच ऋजिप्याः ऋजुगतयः सखायस्तेमित्रभूताःकाम्याःकमनीयामरुतः वृजध्यैवर्जयितुंविप्रकारिणामसुराणांवर्जनायपरिभवाय यद्यस्यतेतवमहिमानंसामर्थ्यमनुसृत्य परि परितःप्रवर्तन्ति ॥ जिहाते ओहाङ्गतौ जुहोत्यादिः भृञामिदित्यभ्यासस्येत्वं निघातः । मंहना महिवृद्धौ ल्युट् लित्स्वरः । वृजध्यै वृजीवर्जने तुमर्थेकध्यैप्रत्ययः कित्त्वाद्गुणाभावः प्रत्ययस्वरः । काम्याः कमेर्ण्यन्तस्याचोयदितियत्प्रत्ययः यतोनावइत्याद्युदात्तत्वम् । ऋजिप्याः ओप्यायीवृद्धौ क्विप् लोपोव्योर्वलीतियलोपः पूर्वपदस्योकारस्येकारोव्यत्ययेन बहुवचनस्यैकवचनंछान्दसं कृदुत्तरपदप्रकृतिस्वरः ॥ १७ ॥

१७. सूर्य की महिमा से सारे पदार्थों के धारण-कर्ता और यज्ञार्ह दिन-रात क्रमानुसार घूम रहे हैं। ऋजुगति, मित्र-भूत और कमनीय मरुद्गण शत्रु को परास्त करने के लिए तुम्हारी शक्ति का अनुसरण करने योग्य होते हैं।

अथाष्टादशी—

पतिर्भववृत्रहन्सूनृतानांगिरांविश्वायुर्वृषभोवयोधाः ।
आनोगहिसख्येभिःशिवेभिर्महान्महीभिरूतिभिःसरण्यन् ॥१८॥

पतिः । भव । वृत्रऽहन् । सूनृतानाम् । गिराम् । विश्वऽआयुः । वृषभः । वयःऽधाः । आ । नः । गहि । सख्येभिः । शिवेभिः । महान् । महीभिः । ऊतिऽभिः । सरण्यन् ॥ १८ ॥

हेवृत्रहन्किंच विश्वायुः विश्वंसंपूर्णमायुर्यस्यासौविश्वायुरविनाशी वृषभःकामानांवर्षिता वयोधाः अन्नस्यदाता तादृशस्त्वं सूनृतानांगिराम् अस्माभिःक्रियमाणानां प्रियतमानांवाचांपतिःस्वामीभव तथा सरण्यन्सरणंयज्ञार्थंगमनमिच्छन् महान्महीभिर्महतीभिरूतिभिः रक्षाभिःशिवेभिः कल्याणैःसख्येभिःफलदानरूपोपकारलक्षणैःसख्यैश्चसहितस्त्वंनोऽस्मान्प्रत्यागहि यज्ञार्थमागच्छ ॥ सूनृतानां ऊनपरिहाणे सुतरामूनमस्यप्रियमितिसूनृतेतिप्रियमुच्यते तथतदृतंसत्यंचेति

तिसूत्रे परादिश्छन्दसिबहुलमितिउत्तरपदाद्युदात्तत्वम्। धियोधाः धयस्सुपपदेदधातेर्विच्। गहि गमेर्लोटि बहुलंछन्दसीतिशपोलुक् सेर्हिरादेशः अपिच तस्यङित्वादनुदात्तोपदेशेत्यादिनाम- लोपः तस्यासिद्धत्वादतोहेरितिहेर्लुङ्नभवति निघातः। सरण्यन् सरणशब्दात्क्यच्. एकादेश- स्वरः ॥ १८ ॥

१८. वज्रहस्त इन्द्र, तुम अविनाशी, अभीष्टवर्षी और अन्नदाता हो। हमारी प्रियतम स्तुति के स्वामी बनो। तुम महान् हो। यज्ञ में तुम जाने के अभिलाषी हो। महान् आश्रय और कल्याण-दायिनी मैत्री के लिए हमारे सामने आओ।

**तमङ्गिरस्वन्नमसासपर्यन्नव्यंकृणोमिसन्यसेपुराजाम्।**
**द्रुहोवियाहिबहुलाअदेवीःस्वश्चनोमघवन्त्सातयेधाः ॥१९॥**

तम्। अङ्गिरस्वत्। नमसा। सपर्यन्। नव्यम्। कृणोमि।
सन्यसे। पुराऽजाम्। द्रुहः। वि। याहि। बहुलाः। अदेवीः।
स्व१रिति स्वः। च। नः। मघऽवन्। सातये। धाः ॥ १९ ॥

हेइन्द्र अङ्गिरस्वत् अङ्गिरसइवनमसास्तोत्रेणसपर्यन्पूजयन्विश्वामित्रोहं तंत्वाहसम- हिमोपेतं पुराजां पुरातनंत्वांसन्यसे संभजनायनव्यंकृणोमि स्तोतव्यतयाभिनवंकरोमि अदेवीः तमोरूपत्वेनाद्योतमानान्बहुलाबहून्द्रुहः द्रोग्धॄन्शत्रुभूतान्राक्षसान्वियाहि विशेषेणमृ- तिंप्रापय हेमघवन्निन्द्र नोऽस्मभ्यं स्वः स्वंधनंच सातयेसंभजनार्थंधाःधेहि ॥ अङ्गिर- स्वत् अङ्गिरसइव तेनतुल्यमितिवतिप्रत्ययः नभोऽङ्गिरोमनुषांवत्युपसंख्यानमिति भसंज्ञायांस- कारस्यरुत्वाभावः। सपर्यन् सपरशब्दःकण्ड्वादिः। नव्यं णुस्तुतावित्यस्मादचोयदितियत्प्रत्ययः धातोस्तन्निमित्तस्यैवेतिवान्तादेशः यतोनावइत्याद्युदात्तत्वम्। कृणोमि कृवेर्लेटिरूपम्। संन्यसे सन- तेर्णषेक्विप् यसुप्रयत्ने अस्मात्क्विप् सनःसंभजनस्ययसेयत्नायसंभजनार्थमित्यर्थः। पुराजां जने- र्विट् आत्वेरूपम्। याहि यातेर्लोटिरूपम्। स्वः स्वरादिनिपातमव्ययमित्यव्ययसंज्ञायाम् अव्यया- दाप्सुपइतिसुपोलुक्। सातये षणसंभक्तौ भावेक्तिन् जनसनेत्यादिना आत्वम् ऊतियूतीत्यादिना निपातनादुदात्तः ॥ १९ ॥

१९. इन्द्र, तुम पुरातन हो। अङ्गिरा लोगों की तरह मैं तुम्हारी पूजा करता हूँ। मैं तुम्हारी स्तुति करने के लिए अभिनवता लाता हूँ। तुम देवरहित द्रोहियों को मार डालते हो। इन्द्र, हमें उपभोग के योग्य धन दो।

**मिहःपावकाःप्रतताअभूवन्त्स्वस्तिनःपिपृहिपारमासाम्।**
**इन्द्रत्वंरथिरःपाहिनोरिषोमक्षूमक्षूकृणुहिगोजितोनः ॥२०॥**

मिहः । पा॒व॒काः । प्रऽतताः । अ॒भू॒व॒न् । स्व॒स्ति । नः॒ । पि॒पृ॒हि॒ । पा॒रम् । आ॒सा॒म् । इन्द्र॑ । त्वम् । र॒थि॒रः । पा॒हि॒ । नः॒ । रि॒षः । म॒क्षुऽम॑क्षु । कृ॒णु॒हि॒ । गो॒ऽजितः॑ । नः॒ ॥ २० ॥

हेइन्द्र तेपावकाःपापानांशोधयित्र्यः मिहः सेचनसाधनान्यापः प्रतताः लोकेप्रकर्षेणविस्तृताअभूवन् आसामपांस्वस्तिविनाशरहितंपारंतीरंनोस्मदर्थंपिपृहिजलैःसंपूर्णंकुरु अस्मदपारीणंकुर्वित्यर्थः रथिरोरथवांस्त्वंरिषोहिंसकाच्छत्रोःसकाशान्नोस्मान्पाहिपालय अनन्तरं नोऽस्मान्मक्षुमक्षु अतिशीघ्रं गोजितः गवादिपशुलाभिनःकृणुहिकुरु सुवृष्टिप्रदानेनतडागादिष्वप्राशयान्संपूर्णान्कृत्वागवादिधनयुक्तान्कुर्वितिभावः । अभूवन् भूसत्तायामित्यस्यलुङि रूपं निघातः । पिपृहि पृपालनपूरणयोः जुहोत्यादिः अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वं हेर्ङित्त्वादगुणः निघातः । रथिरः मत्वर्थे मेधारथाभ्यामिरन्निरचावितिइरच्प्रत्ययः । रिषः रिषहिंसायां क्विप् सावेकाचइतिविभक्तेरुदात्तत्वम् । मक्षुमक्षु नित्यवीप्सयोरितिद्विर्वचनं संहितायां ऋचितुनुघमक्षुतङ्कुत्रोरुष्याणामितिदीर्घः ॥ २० ॥

२०. इन्द्र, पवित्र जल चारों ओर फैला है। हमारे लिए अविनाशी जल-समूह के तीर को जल से पूर्ण करो। तुम रथवाले हो। हमें शत्रु से बचाओ। हमें शीघ्र गायों के विजेता करो।

अथैकविंशी–

अदे॑दिष्ट वृत्र॒हा गोप॑ति॒र्गा अ॒न्तः कृ॒ष्णाँ अ॑रु॒षैर्धाम॑भिर्गात् । प्र सू॒नृता॑ दि॒शमा॑न ऋ॒तेन॒ दुर॑श्च॒ विश्वा॑ अवृणो॒दप॒ स्वाः ॥ २१ ॥

अदे॑दिष्ट । वृ॒त्र॒ऽहा । गोऽप॑तिः । गाः । अ॒न्तरिति॑ । कृ॒ष्णान् । अ॒रु॒षैः । धाम॑ऽभिः । गा॒त् । प्र । सू॒नृताः॑ । दि॒शमा॑नः । ऋ॒तेन॑ । दुरः॑ । च॒ । विश्वाः॑ । अ॒वृ॒णो॒त् । अप॑ । स्वाः ॥ २१ ॥

वृत्रहा वृत्रस्यहन्ता गोपतिर्गवांस्वामीसन् इन्द्रः गाः अदेदिष्ट अस्मभ्यंदिशतु तथा कृष्णान्कर्मविघ्नकारिणोऽसुरानरुषैरारोचमानैर्धामभिस्तेजोभिरन्तः अन्तर्धानंविनाशंगात्अगमयत् तथा सूनृताःप्रियतमाःगाः ऋतेनमतारणवर्जितेनसत्येनवाक्येनप्रदिशमानःअङ्गिरोभ्यःप्रदिशन् विश्वाःसर्वाणिदुरःगवांस्वेच्छयानिर्गमनद्वाराणि स्वाः स्वकीयाअस्थाअपावृणोत् अनेनगाः निरुद्धाःस्थापयित्वा तानिद्वाराणिआच्छादितवानित्यर्थः ॥ अदेदिष्ट दिशअतिसर्जनेइत्यस्माद्यङ्लुगन्तात् लुङि व्यत्ययेनात्मनेपदम् अडागमस्वरः । गोपतिः पत्यावैश्वर्येइतिपूर्वपदप्रकृतिस्वरः । गात् इ-

ण्यतो अन्तर्भावितण्यर्थः । दिशमानः दिशेर्व्यत्ययेनशानच् तस्यच्छसार्वधातुकस्वरेणानुदात्तत्वे धातुस्वरः । अवृणोत् वृञ्वरणेइत्यस्यलङिरूपम् ॥ २१ ॥

२१. वृत्रहन्ता और गायों के स्वामी इन्द्र हमें गौ दान करें। कृष्णों अथवा यज्ञ-विघातक असुरों को दीप्ति-युक्त तेज के द्वारा विनष्ट करें। उन्होंने सत्य-वचन से अङ्गिरा लोगों को प्रियतम गायें दान करके सारे द्वारों को बन्द कर दिया था।

शुनंहुवेममघवानमिन्द्रमस्मिन्भरेनृतमंवाजसातौ ।
शृण्वन्तमुग्रमूतयेसमत्सुघ्नन्तंवृत्राणिसंजितंधनानाम् ॥२२॥८॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ २२ ॥ ८ ॥

व्याख्यातेयमृक् ॥ २२ ॥

२२. इन्द्र, तुम अन्न-लाभकर्त्ता, युद्ध में उत्साह-द्वारा प्रवृद्ध धनवान्, प्रभूत-ऐश्वर्ययुक्त नेतृ-श्रेष्ठ स्तुति-श्रवणकर्त्ता, उग्र, संग्राम में शत्रु-विनाशकारी और धन-जेता हो। आश्रय-प्राप्ति के लिए तुम्हें बुलाता हूँ।

॥ इतितृतीयस्यद्वितीयेष्टमोवर्गः ॥८॥

इन्द्रसोमंसोमपतइतिसप्तदशर्चंतृतीयंसूक्तं वैश्वामित्रं त्रैष्टुभमैन्द्रम् अनुक्रान्तंच—इन्द्रसोमंन्यूनेति । पृष्ठ्याभिप्लवषडहयोः द्वितीयेहनिमरुत्वतीयेइन्द्रसोममितीदंसूक्तंनिविद्धानीयं द्वितीयस्येतिखण्डेसूत्रितम्—इन्द्रसोमंयातऊतिरवमेतिमध्यन्दिनइति गोआयुषोरपिमरुत्वतीयशस्त्रेएतत्सूक्तम् । सूत्रितंच—इन्द्रसोमभेतायामेतिमध्यन्दिनइति । उद्भिद्बलभिदोरपिमरुत्वतीयएतत्सूक्तम् । सूत्रितंच—इन्द्रसोममिन्द्रःपूर्भिदितिमध्यन्दिनइति ।

इन्द्रसोमंसोमपतेपिबेमंमाध्यन्दिनंसवनंचारुयत्ते ।
प्रप्रुथ्याशिप्रेमघवन्नृजीषिन्विमुच्याहरीइहमादयस्व ॥ १ ॥

इन्द्र । सोमम् । सोमऽपते । पिब । इमम् । माध्यन्दिनम् । सवनम् । चारु । यत् । ते । प्रऽपुथ्य । शिप्रे इति । मघऽवन् । ऋजीषिन् । विऽमुच्य । हरी इति । इह । मादयस्व ॥ १ ॥

विश्वामित्रोवृत्ते—सोमपते सोमस्याधिपते हेइन्द्र इममस्माभिर्माध्यन्दिनेसवनेक्रियमाणंसोमं सोमरसंपिब यद्यस्मात्तेत्वदर्थंक्रियमाणमिमंमाध्यन्दिनं मध्यदिनसंबन्धिसवनंनिष्केवल्याख्यं शस्त्रंचारुरमणीयंवर्तते मघवन्धनवन्नृजीषिन्नृजीषशब्देनगतसारंसोमद्रव्यमुच्यते तद्वन् हेइन्द्र हरी रथेयोजिताश्वौ रथाद्विमुच्य शिप्रेहनू प्रमुच्य यवसेनघासेनपूरयित्वा इह देवयजनदेशेमादयस्व तावश्वौहर्षय ॥ प्रमुच्य प्रोयुपर्यौसावित्यस्यप्यपिरूपं ह्रस्वश्छान्द-सः छित्स्वरः । ऋजीषिन् अर्जेःपर्जेअर्जेर्नेइत्यस्मादर्जेर्धऋभिषेतिकपनप्रत्ययः ऋजिइत्यादे-शश्चधातोः अर्ज्यतइत्यृजीषं तदस्यास्तीतीनिप्रत्ययः आमन्त्रितस्याष्टमिकोनिघातः । मादयस्व मदि स्तुत्यादिषु हेतुमण्णिच् निघातः ॥ १ ॥

१. सोमपति इन्द्र, इस माध्यन्दिन सवन के अवसर पर तुम सोम-पान करो; क्योंकि यह तुम्हारा प्रिय है। हे धनवान् और ऋजीष सोम से युक्त इन्द्र, दोनों घोड़ों को रथ से खोलकर और उनके जबड़ों को घास से पूर्ण करके इस यज्ञ में उन्हें प्रसन्न करो।

गवाशिरंमन्थिनमिन्द्रशुक्रंपिबासोमंररिमातेमदाय ।
ब्रह्मकृतामारुतेनागणेनसजोषारुद्रैस्तृपदावृषस्व ॥ २ ॥

गोऽआशिरम् । मन्थिनम् । इन्द्र । शुक्रम् । पिब । सोमम् ।
ररिम । ते । मदाय । ब्रह्मऽकृता । मारुतेन । गणेन ।
सऽजोषाः । रुद्रैः । तृपत् । आ । वृषस्व ॥ २ ॥

हेइन्द्र गवाशिरं गव्यस्यपयसआशीर्मिश्रणंयस्मिंस्तंसोमम् अपिच मन्थिनंमन्थसंयुक्तं शुक्रम् अभिनवं यद्वा शुक्रं शुक्रामन्थिग्रहेवर्तमानम् एवंत्रिषुसवनेषुवर्तमानमिमंसोमंपिब ते तवमदायहर्षायररिम तंसोमंवयंप्रयच्छामः मारुतेन मरुतांगणःमारुतः सचब्रह्मकृता ब्रह्म स्तोत्रंकरोतीतिब्रह्मकृत् इन्द्रविषयस्तोत्रंकुर्वाणेनमारुतेनगणेन रुद्रैरेकादशसंख्याकैरुद्रैश्चसजो-षाःसंगतस्त्वंतृपत् सोमपानेनतृप्यन् आवृषस्व तमिमंसोमंसर्वतोजठरेसिञ्च धारय ॥ गवा-शिरं शृणातेराङ्पूर्वात्क्विपि अपस्पृधेथामानृचुरित्यादिनानिपातनादाशिरादेशः बहुव्रीहौपूर्व-पदप्रकृतिस्वरः । पिब द्व्यचोतस्तिङइतिसंहितायांदीर्घः । ररिम रातेश्छान्दसेवर्तमानेलिटि रूपम् असमानवाक्यत्वान्निघाताभावः आगमाअनुदात्ताइतिइट्येनुदात्तत्वात्प्रत्ययस्वरः । तृप-त् तृपप्रीणने तुदादिः आगमानुशासनस्यानित्यत्वान्नुमभावः । वृषस्व वृषसेचने व्यत्य-येनशः ॥ २ ॥

२. इन्द्र, गव्यसंयुक्त और मन्थन-सम्पन्न नूतन सोम का पान करो। तुम्हारे हर्ष के लिए हम उसे दान करते हैं। स्तोता मरुतों और रुद्रों के साथ जब तक तृप्ति न हो, तब तक सोम-पान करो।

अथतृतीया–

येतेशुष्मंयेतविषीमवर्धन्नर्चन्तइन्द्रमरुतस्तओजः ।
माध्यन्दिनेसवनेवज्रहस्तपिबारुद्रेभिःसगणःसुशिप्र ॥ ३ ॥

ये । ते । शुष्मम् । ये । तविषीम् । अवर्धन् । अर्चन्तः । इन्द्र ।
मरुतः । ते । ओजः । माध्यन्दिने । सवने । वज्रऽहस्त । पिब ।
रुद्रेभिः । सऽगणः । सुऽशिप्र ॥ ३ ॥

हेइन्द्र येमरुतः ते तव शुष्मंशत्रूणांशोषकंतेजः येचमरुतः तविषींबलंचावर्धन् युद्धसह-कारितयाऽवर्धयन् तेमरुतः अर्चन्तस्त्वांस्तुवन्तःसन्तः तेतव ओजोयुद्धसामर्थ्यमवर्धयन् व-ज्रहस्त वज्रयुक्तौहस्तौयस्येतितादृश सुशिप्र शोभनहनो शिप्रेहनूनासिकेवेतियास्कः । हेइन्द्र रुद्रेभिःरोदयन्तिशत्रूनितिरुद्रामरुतः तैःसगणस्त्वंमाध्यन्दिनेसवनेसोमंपिब ॥ अवर्धन् वृधुवर्ध-ने अन्तर्भावितण्यर्थः यद्वृत्तयोगादनिघातः । माध्यन्दिने उत्सादित्वादञ् ञित्त्वादाद्युदात्तः ॥ ३ ॥

३. इन्द्र, जो मरुद्गण तुम्हारे शत्रु-शोषक तेज को बढ़ाते हैं, वे ही मरुद्गण तुम्हारा बल वर्द्धित करते हैं; वे ही मरुद्गण स्तुति करके तुम्हारी युद्ध-शक्ति को बढ़ाते हैं । वज्रहस्त, शोभन-शिरस्त्राण-युक्त इन्द्र, माध्यन्दिन सवन में रुद्रों के साथ सोम-पान करो ।

अथचतुर्थी–

तइन्न्वस्यमधुमद्विविप्रइन्द्रस्यशर्धोमरुतोयआसन् ।
येभिर्वृत्रस्येषितोविवेदामर्मणोमन्यमानस्यमर्म ॥ ४ ॥

ते । इत् । नु । अस्य । मधुऽमत् । विविप्रे । इन्द्रस्य । शर्धः ।
मरुतः । ये । आसन् । येभिः । वृत्रस्य । इषितः । विवेद । अमर्मणः ।
मन्यमानस्य । मर्म ॥ ४ ॥

येमरुतः इन्द्रस्यशर्धोबलभूताआसन् तइत् तएवमरुतः अस्य द्वितीयार्थेषष्ठी इममिन्द्रं मधुमत्तवसहायाःवयमास्महेत्वंयुद्धमभिगच्छेतिमाधुर्योपेतंवाक्यंयथाभवतितथा विविप्रेनु विशेषेण प्रैरयन् येभिर्यैर्युद्धसहायैर्मरुद्भिःइषितःप्रेरितःइन्द्रःअमर्मणः परैरविदितमर्मस्थानस्य अत-एवमन्यमानस्यनकोपिममहन्तेत्यभिमन्यमानस्यवृत्रस्यासुरस्यमर्मयस्मिन्स्थानेप्रहृतेसत्यां मरिष्यति तादृशंस्थानंविवेदाज्ञासीत् ॥ विविप्रे विपक्षेपणेइत्यस्यलिटि व्यत्ययेनात्मनेपदम् इरेचः इत्योरेइतिरेरादेशः निघातः । आसन् असभुवीत्यस्यलङिरूपं यद्वृत्तयोगान्निघाताभावः ।

विवेद विवक्षाने इत्यस्यलिटिरूपं लित्स्वरः । मर्म मृङ्प्राणत्यागे इत्यस्मादौणादिको मनिन् नित्स्वरः ॥ ४ ॥

४. मरुद् लोग इन्द्र के सहायक हुए थे, वृत्र समझता था कि, मेरा रहस्य कोई नहीं जानता । परन्तु मरुतों के द्वारा प्रेरित होकर इन्द्र ने वृत्र का रहस्य जाना था । ये ही मरुद्गण तुम्हारे लिए शीघ्र माधुर्य युक्त उत्साह-वाक्य बोले थे ।

मनुष्वदिन्द्र सवनं जुषाणः पिबा सोमं शश्वते वीर्याय ।
स आ ववृत्स्व हर्यश्व यज्ञैः सरण्युभिरपो अर्णा सिसर्षि ॥ ५ ॥ १ ॥

मनुष्वत् । इन्द्र । सवनम् । जुषाणः । पिब । सोमम् । शश्वते ।
वीर्याय । सः । आ । ववृत्स्व । हरिऽअश्व । यज्ञैः । सरण्युऽभिः ।
अपः । अर्णा । सिसर्षि ॥ ५ ॥ १ ॥

हे इन्द्र मनुष्वन्मनोर्यज्ञमिव ममेदं सवनं यज्ञं जुषाणः सेवमानस्त्वं शश्वते शाश्वताय वीर्याय वीर्यं परिभवलक्षणाय सामर्थ्याय इमं सोमं पिब हे हर्यश्व सतादृशस्त्वं यज्ञैर्यजनीयैर्मरुद्भिः साकं आववृत्स्व आगच्छ किंच सरण्युभिः एकश्रुतिरम्भसानात्मन इच्छाद्भिः यद्वा सरण्युभिः सरणशीलैर्मरुद्भिः सहितस्त्वम् अपोऽन्तरिक्षस्थितान्युदकानि अर्णा पार्थिवान्युदकानि ससिसर्षि प्रापय यद्वा अपः पञ्चम्यन्तमेतत्पदम् अपोऽन्यासादन्तरिक्षात्सकाशादर्णांसि प्रापय ॥ ववृत्स्व वृतु वर्तने व्यत्ययेन शपः श्लुः छान्दसम् । सरण्युभिः रणशब्दार्थः क्विप् समानो रणः ध्वनिरेषां ते सरणा मरुतः तानिच्छन्ति सुपः क्यच् क्याच्छन्दसीत्युप्रत्ययः यद्वा सृगतौ सृयुवचिभ्योऽन्युजागूजक्नुच इति अन्युच्प्रत्ययः रणाभ्यामितिणत्वं चित्त्वादन्तोदात्तः । अपः आप्लृ व्याप्तौ आप्नोतेः क्विप् ह्रस्वश्चेति क्विप्धातोर्ह्रस्वश्च सावेकाच इति विभक्तेरुदात्तत्वम् । सिसर्षि सृगतौ छान्दसो जुहोत्यादिः बहुलं छन्दसीत्यभ्यासस्येत्त्वम् ॥ ५ ॥

५. इन्द्र, मनु के यज्ञ की तरह तुम मेरे इस यज्ञ का सेवन करते हुए शाश्वत बल के लिए सोम-पान करो । हर्यश्व, यज्ञ-योग्य मरुतों के साथ तुम आओ । गमनशील मरुतों के साथ अन्तरिक्ष से जल प्रेरित करो ।

॥ इति तृतीयस्य द्वितीये नवमो वर्गः ॥ ९ ॥

त्वमपो यद्ध वृत्रं जघन्वाँ अत्याँ इव प्रासृजः सर्तवाजौ ।
शयानमिन्द्र चरता वधेन वव्रिवांसं परि देवीरदेवम् ॥ ६ ॥

त्वम् । अपः । यत् । ह । वृत्रम् । जघन्वान् । अत्यान्ऽइव ।
प्र । असृजः । सर्तवे । आजौ । शयानम् । इन्द्र । चरता ।
वधेन । वव्रिऽवांसम् । परि । देवीः । अदेवम् ॥ ६ ॥

हेइन्द्र त्वं देवीर्देवनशीलाअपः परिवव्रिवांसं परितआवृत्यवर्तमानम् अतएव अदेवं महदुदकतयास्वच्छत्वेनाप्रतिभासमानं शयानमेकत्रनिश्चलतयावर्तमानंवृत्रमेवं यच्छब्दाच्चरता तमुद्दिश्यप्रवर्तमानेनवधेनयुद्धेनजघन्वान्हतवानसि यदात्वमाजौयुद्धेसर्तवै अतिवेगगमनाय अत्यानिव यथाअश्वान्प्रेरयसि तथा त्वमपउदकानि अन्तरिक्षादाकाशात्प्रासृजोह प्रकर्षेणमेघमे-दनंकृत्वाअसृजःखलु तंयजाम इत्युत्तरेणान्वयः ॥ जघन्वान् हनहिंसागत्योरित्यस्य क्वसौ विभाषागमहनविदविशामितीडभावः अभ्यासाच्चेतिहकारस्यघत्वं प्रत्यय-स्वरः । असृजः सृजविसर्गे शविकरणो यद्योगादनिघातः । सर्तवे सृगतौ तुमर्थेतवेप्रत्ययः अन्तश्चतवैयुगपदितिघातोःप्रत्ययस्यचोदात्तत्वम् । आजौ अजगतिक्षेपणयोः अज्यतिभ्यांचे-तीण्प्रत्ययः णित्त्वादुपधावृद्धिः अजन्तिगच्छन्त्यस्मिन्निति आजिर्युद्धं प्रत्ययस्वरः । अत्यां-आदित्यत्र संहितायाम् आयादेशेकृते तस्य लोपःशाकल्यस्येतियकारलोपः सर्वविधीनांछ-न्दसिविकल्पितत्वात्सवर्णदीर्घेकर्तव्येयलोपोनासिद्धोभवति सवर्णदीर्घः । शयानं शीङ्स्वप्ने शानच् अदादित्वाच्छपोलुक् क्त्वाल्लसार्वधातुकस्वरेणशानचोनुदात्तत्वेधातुस्वरः । वधेन हन्तेर्घञर्थे हनश्चवधइत्यप्प्रत्ययोवधादेशश्च धातोरन्तोदात्तत्वम् । वव्रिवांसं वृञ्वरणे इत्यस्यक्व-सावित्यत्र छान्दसः प्रत्ययस्वरः ॥ ६ ॥

६. इन्द्र, चूँकि तुम दीप्तिमान् जल के आवरणकर्त्ता हो, दीप्ति-शून्य और सोये हुए वृत्र को, युद्ध में, निहत किया है; इसलिए तुमने युद्ध-समय में अश्व की तरह जल को छोड़ दिया है।

अथसप्तमी—

यजामहइन्नमसावृद्धमिन्द्रंबृहन्तमृष्वमजरंयुवानम् ।
यस्यप्रियेममतुर्यज्ञियस्यनरोदसीमहिमानंममाते ॥ ७ ॥

यजामः । इत् । नमसा । वृद्धम् । इन्द्रम् । बृहन्तम् । ऋष्वम् ।
अजरम् । युवानम् । यस्य । प्रिये इति । ममतुः । यज्ञियस्य ।
न । रोदसी इति । महिमानम् । ममाते इति ॥ ७ ॥

अथनवमी—

अद्रो॑घस॒त्यंतव॒तन्म॑हि॒त्वंस॒द्योयज्जा॒तोअपि॑बोहु॒सोम॑म् ।
नद्याव॑इन्द्रतव॒सस्त॒ओजो॒नाहा॒नमासा॑:श॒रदो॑वरन्त ॥ ९ ॥

अद्रो॑घ । स॒त्यम् । तव॑ । तत् । म॒हि॒ऽत्वम् । स॒द्यः । यत् । जा॒तः ।
अपि॑बः । ह॒ । सोम॑म् । न । द्याव॑: । इ॒न्द्र॒ । त॒वसः॑ । ते॒ ।
ओजः॑ । न । अहा॑ । न । मासाः॑ । श॒रदः॑ । व॒र॒न्त॒ ॥ ९ ॥

अद्रोघ द्रोहवर्जित हेइन्द्र तेतव तन्महित्वं तादृशंमाहात्म्यं सत्यंयथार्थं यद्यस्माज्जातः उत्पन्नः सद्यस्तदानीमेवसोममस्माभिर्दीयमानसोमरसमपिबः हप्रसिद्धौ किंच तवसोबलवतः तेतवओजःसामर्थ्यंद्यावः दिवोपलक्षिताःसर्वेलोकाः नवरन्त नवारयन्ति किंच अहा प्रतिपदादीन्यहानिनिवारयन्ति तथामासाश्चैत्राद्याः शरदःसंवत्सराश्च तवसामर्थ्यंनवारयन्ति किंतु तवसामर्थ्यमनुसृत्य सर्वेवर्तन्तइतिभावः ॥ अद्रोघ आमन्त्रितस्यचेतिषाष्ठिकमाद्युदात्तत्वम् । अपिबः यद्योगादनिघातः । मासाः मसीपरिमाणे मस्यतेपरिमीयतेत्रिंशतादिनैरितिमासः कर्मणिघञ् ञित्त्वादाद्युदात्तः । शरदः शॄहिंसायामित्यस्मात्दृद्भसोदिरित्यधिकरणेअदिप्रत्ययः शीर्यन्तेऽस्यांतृणगुल्मवनस्पतीनांतेमासिइतिशरत् प्रत्ययस्वरः । वरन्त वृञ्वरणे अन्तर्भावितण्यर्थोत्रातिवारणेवर्तते मौवादिकः छान्दसेलङ्रूपे निघातः ॥ ९ ॥

९. दौरात्म्य-शून्य इन्द्र, तुम्हारी महिमा ही वास्तविक महिमा है; क्योंकि तुम उत्पन्न होकर ही सोम-पान करते हो। तुम बलवान् हो। स्वर्गादि लोक तुम्हारे तेज का निवारण नहीं कर सकते; दिन, मास और वर्ष भी नहीं निवारण कर सकते।

सद्यस्क्रीनाम्न्येकाहेनिष्केवल्यशस्त्रे त्वंसद्योअपिबइतिसत्कमुखीया सूक्तिता—त्वंसद्योअपिबोजातइन्द्रानुत्वाहिघ्नेअधदेवदेवाइति ।

अथदशमी—

त्वंस॒द्योअ॑पिबोजा॒तइ॑न्द्र॒मदा॑य॒सोमं॑पर॒मेव्यो॑मन् ।
यद्ध॒द्यावा॑पृथि॒वीआवि॑वेशी॒रथा॑भवः॒पूर्व्यः॑का॒रुधा॑याः ॥ १० ॥ १० ॥

त्वम् । स॒द्यः । अ॒पि॒बः॒ । जा॒तः । इ॒न्द्र॒ । मदा॑य । सोम॑म् । प॒र॒मे ।
विऽओ॑मन् । यत् । ह॒ । द्यावा॑पृथि॒वी इति॑ । आ । अवि॑वेशीः ।
अथ॑ । अ॒भ॒वः॒ । पू॒र्व्यः॑ । का॒रुऽधा॑याः ॥ १० ॥ १० ॥

सीतीयसुन् तुरिष्ठेमेयःस्वितितृचोलोपः भसंज्ञायामोर्गुणः इकारलोपश्छान्दसः नित्स्वरः । भूत् भवतेर्लेङ्क्लिर्लुगम् । स्तिभ्या पचिममितिभसंज्ञांबाधित्वास्वादिष्वसर्वनामस्थानेइतिपदसंज्ञायांजश्त्वं तृतीयायाःपूर्वसवर्णः । क्षां क्षिनिवासगत्योः अन्येभ्योपिदृश्यतइतिनिरुपपदादपि डप्रत्ययः ततष्टाप् क्षियन्ति निवसन्त्यस्यांप्राणिनइतिक्षाभूमिः उदात्तनिवृत्तिस्वरेणान्तोदात्तः । [illegible] वसआच्छादनेइत्यस्य लङि अनुदात्तत्वादात्मनेपदं थासि अदादित्वाच्छपोलुक् यद्योगादनिघातः अडागमस्वरः ॥ ११ ॥

११. इन्द्र, तुमसे अनेक उत्पन्न हुए हैं । जो अहि अपने को बलवान् समझकर जल को परिवेष्टित किये था, उसी अहि को प्रवृद्ध होकर तुमने विनष्ट किया है । परन्तु जिस समय तुम पृथिवी को एक कटि में छिपाकर अवस्थान करते हो, उस समय स्वर्ग तुम्हारी महिमा की समानता नहीं कर सकता ।

**यज्ञोहितइन्द्रवर्धनोभूदुतप्रियःसुतसोमोमियेधः ।**
**यज्ञेनयज्ञमवयज्ञियःसन्यज्ञस्तेवज्रमहिहत्यआवत् ॥१२॥**

यज्ञः । हि । ते । इन्द्र । वर्धनः । भूत् । उत । प्रियः ।
सुतऽसोमः । मियेधः । यज्ञेन । यज्ञम् । अव । यज्ञियः । सन् ।
यज्ञः । ते । वज्रम् । अहिऽहत्ये । आवत् ॥ १२ ॥

हेइन्द्र अस्मदीयोयज्ञस्तेतववर्धनोहविष्प्रदानेनवर्धयिताभूद्धि भवतिखलु उतापिच सुतसोमः अभिषुतसोमवान्मियेधःसारभूतोयंयज्ञः तेतवप्रियः सत्वंयज्ञियःयज्ञार्हःसन् यज्ञंयज्ञस्यकर्तारंयजमानं यज्ञेनानुष्ठीयमानेनाव फलप्रदानेनरक्ष किंचायंयज्ञस्तेतववज्रमहिहत्ये वृत्रहननेकर्मण्यावत् रक्षतु ॥ वर्धनः वृधुवर्धनेइत्यस्य ण्यन्तस्य नन्द्यादित्वाल्ल्युप्रत्ययः लित्स्वरः । भूत् हियोगादनिघातः । अव अवतेर्लोटिरूपं निपातः । सन् असेःशतरिरूपं प्रत्ययस्वरः । अहिहत्ये हनहिंसागत्योरित्यस्यभावे हनस्तचेतिक्यप् तकारश्चान्तादेशः कृदुत्तरपदस्वरः । आवत् अवतेश्छान्दसेलङिरूपं निघातः ॥ १२ ॥

१२. इन्द्र, हमारा यज्ञ तुम्हारी वृद्धि करता है । जिस कार्य में सोम अभिषुत होता है, वह तुम्हारा प्रिय है । हे यज्ञ-योग्य, यज्ञ के लिए अपने यजमान की तुम रक्षा करो । अहि का विनाश करने के लिए यह यज्ञ तुम्हारे वज्र को दृढ़ करे ।

**यज्ञेनेन्द्रमवसाचक्रेअर्वागैनंसुम्नायनव्यसेववृत्याम् ।**
**यःस्तोमेभिर्वावृधेपूर्व्येभिर्योमध्यमेभिरुतनूतनेभिः ॥१३॥**

त्यादि । उभये उभशब्दात्परस्यतयपउभादुदात्तोनित्यमितिअयमादेशः वचनसामर्थ्यादाद्युदात्तत्वम् । हवन्ते ह्वयतेर्लेटिरूपम् ॥ १४ ॥

१४. जभी मैं सच-ही-मन इन्द्र की स्तुति करने की इच्छा करता हूँ, तभी स्तुति करता हूँ। मैं दूरवर्ती अशुभ दिन के पहले ही इनकी स्तुति करता हूँ। इन्द्र हमें दुःख के पार ले जायें। इसी लिए दोनों तटों के रहनेवाले लोग जैसे नौकारोही को पुकारते हैं, वैसे ही हमारे मातृ-पितृ-कुलों के लोग इन्द्र को पुकारते हैं।

माध्यन्दिनेसवनेआग्नीध्रीयस्यआपूर्णोअस्येतिप्रस्थितयाज्या सूत्रितञ्च—आपूर्णोअस्यकलशःस्वाहेतिमाध्यन्दिन्यइति ।

**आपूर्णोअस्यकलशःस्वाहासेक्तेवकोशंसिसिचेपिबध्यै ।**
**समुप्रियाआववृत्रन्मदायप्रदक्षिणिदभिसोमासइन्द्रम् ॥१५॥**

**आऽपूर्णः । अस्य । कलशः । स्वाहा । सेक्ताऽइव । कोशम् ।**
**सिसिचे । पिबध्यै । सम् । ऊँ इति । प्रियाः । आ । अववृत्रन् ।**
**मदाय । प्रऽदक्षिणित् । अभि । सोमासः । इन्द्रम् ॥ १५ ॥**

हेइन्द्र अस्य तवपानार्थं कलशः द्रोणकलशः सोमेनापूर्णःस्वाहा स्वाहाकृतोदत्तश्च सोमसहितःकलशःपिबध्यै तवपानार्थंसिसिचे तंसोमंचोदिताघारेसिञ्चामि तत्रदृष्टान्तः—कोशंसेक्तेव यथासेक्तोत्सेचकः जलपूर्णात्कोशात्तद्धेतोःसकाशाज्जलंपात्रान्तरेसिञ्चतितद्वत् प्रियाः स्वादुतमाःसोमासोदत्तास्तेसोमाः इन्द्रंत्वामभि आभिमुख्येन मदाय तवहर्षार्थं प्रदक्षिणित् प्रादक्षिण्येनसमाववृत्रन् सम्यगावृत्त्यवर्तेताम् । उःपूरणः ॥ आपूर्णः पृपालनपूरणयोरित्यस्यकर्मणिनिष्ठा रदाभ्यामितितस्यनत्वं गतिरनन्तरइतिगतिस्वरः । स्वाहा निपातत्वादाद्युदात्तः । सेक्तेवकोशं नलोकाव्ययेतिषष्ठीप्रतिषेधः । सिसिचे षिचक्षरणेइत्यस्यालिटिरूपम् । पिबध्यै पापानेइत्यस्यतुमर्थेशध्यैन्प्रत्ययः शित्त्वात्पिबादेशः नित्त्वादाद्युदात्तः । आववृत्रन् वृतुवर्तनेइत्यस्यलङिलिप् बहुलंछन्दसीतितस्यशपःश्लुः व्यत्ययेनपरस्मैपदं बहुलंछन्दसीतिरुडागमः ॥ १५ ॥

१५. इन्द्र का कलस पूर्ण हुआ है; पानार्थ स्वाहा शब्द का उच्चारण हुआ है। जैसे जल-सेक्ता जल-पात्र में जल-सेक करता है, वैसे ही मैं सोम का सेचन करता हूँ। सुस्वादु सोम प्रदक्षिण करता हुआ इन्द्र के सम्मुख, उनकी प्रसन्नता के लिए, गमन करता है।

**नत्वागभीरःपुरुहूतसिन्धुर्नाद्रयःपरिषन्तोवरन्त ।**
**इत्थासखिभ्यइषितोयदिन्द्राद्दृळ्हंचिदरुजोगव्यमूर्वम् ॥ १६ ॥**

न । त्वा । गुभीरः । पुरुऽहूत । सिन्धुः । न । अद्रयः । परि ।
सन्तः । वरन्त । इत्था । सखिऽभ्यः । इषितः । यत् । इन्द्र ।
आ । दृळ्हम् । चित् । अरुजः । गव्यम् । ऊर्वम् ॥ १६ ॥

हेपुरुहूतेन्द्र गभीरोगम्भीरः सिन्धुःसमुद्रःत्वात्वांनवारयति ततःपरि परितोवर्तमानाःसन्तो-ऽद्रयःशैलाःत्वांनवरन्त नवारयन्ति किन्तु त्वामनुसृत्यवर्तन्ते यद्यस्मादित्था इत्थमनेनप्रकारे-ण सखिभ्यः सखिभिर्देवैरिषितः प्रार्थितस्त्वं दृळ्हंचिदतिप्रबलमपि गव्यं गविभवमप्सुवर्तमान-मूर्वमूर्वानलमारुजः सम्यगभाङ्क्षीः ॥ गभीरः गाधृप्रतिष्ठालिप्सयोर्ग्रन्थेच अस्मादीरन्प्रत्ययः ध-कारस्यभकारः आकारस्येकारश्च गभीरगम्भीरावित्यनेननिपात्यते नित्स्वरः । सिन्धुः स्यन्दू-प्रस्रवणे स्यन्देःसंप्रसारणंधश्चेत्युप्रत्ययः संप्रसारणं दकारस्यधकारः नित्वित्यनुवृत्तेराद्युदात्तः परिपन्थः सन्तः अस्तेःशतरिरूपम् उपसर्गप्रादुर्भ्यामस्तिर्यच्परइतिषत्वं केचित्परेःक्रियान्वयमिच्छ-न्ति तदा षत्वमनुपपन्नम् परि निपातस्वरः । सन्तः प्रत्ययस्वरः । वरन्त वृञ्वरणे लौगादिःछ-न्दसिरूपं निघातः । आरुजः रुजोभङ्गेइत्यस्य लङिरूपम् । गव्यं गोर्विकारइत्यर्थेगोपयसोर्यदिति-यत् यतोऽनावइत्याद्युदात्तत्वम् ॥ १६ ॥

१६. बहुलोकाहूत इन्द्र, गम्भीर सिन्धु तुम्हारा निवारण नहीं कर सकता। उसके चारों ओर वर्त्तमान उपसागर तुम्हारा निवारण नहीं कर सकता; क्योंकि बन्धुओं-द्वारा इस प्रकार प्रार्थित होकर तुमने अति प्रबल गव्य उर्व (बड़वानल या अवरोधक वृत्र) का निवारण कर डाला है।

शुनंहुवेममघवानमिन्द्रमस्मिन्भरेनृतमंवाजसातौ ।
शृण्वन्तमुग्रमूतयेसमत्सुघ्नन्तंवृत्राणिसंजितंधनानाम् ॥१७॥११

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् ।
वाजऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् ।
वृत्राणि । सम्ऽजितम् । धनानाम् ॥ १७ ॥ ११ ॥

एषाऋक्पूर्वमेवव्याख्याता ॥ १७ ॥

१७. इन्द्र, तुम अन्न-प्रापक, युद्ध में उत्साह-द्वारा प्रवृद्ध, धनवान्, प्रभूत ऐश्वर्य-सम्पन्न नेतृ-श्रेष्ठ, स्तुति-श्रवणकर्त्ता, उग्र, संग्राम में शत्रुविनाशी और धनजेता हो। आश्रय-प्राप्ति के लिए हम तुम्हें बुलाते हैं।

प्रपर्वतानामितित्रयोदशर्चंचतुर्थंसूक्तम् अत्रेयमनुक्रमणिका—प्रपर्वतानांत्रयोनासंवादोन-दीभिर्विश्वामित्रस्योतितीर्षोस्तंप्रनद्यावाक्यं चतुर्थीषष्ठ्यष्टमीदशम्यः षष्ठीसमप्योस्त्विन्द्रस्तु-तिरन्त्यानुष्टुबिति । अत्रचतुर्थीषष्ठ्यष्टमीदशमीनांनदीवाक्यत्वात्तएवऋषयःशिष्टानांविश्वा-

अथद्वितीया–

इन्द्रेषितेप्रसवंभिक्षमाणेअच्छासमुद्रंरथ्येवयाथः ।
समाराणेऊर्मिभिःपिन्वमाने अन्यावामन्यामप्येतिशुभ्रे ॥ २ ॥

इन्द्रेषिते इतीन्द्रऽइषिते । प्रऽसवम् । भिक्षमाणे इति । अच्छ ।
समुद्रम् । रथ्याऽइव । याथः । समाराणे इति समऽआराणे ।
ऊर्मिऽभिः । पिन्वमाने इति । अन्या । वाम् । अन्याम् । अपि ।
एति । शुभ्रे इति ॥ २ ॥

हेनद्यौ इन्द्रेषिते इन्द्रेणप्रेषिते प्रसवंतस्येन्द्रस्यानुज्ञांभिक्षमाणेप्रार्थयमाने युवांसमुद्रमच्छाभिमुख्येनयाथोगच्छथः तत्रदृष्टान्तः—रथ्येवेति यथारथिनौउद्दिष्टंदेशमभिगच्छतःतद्वत् किंकुर्वन्त्यौ समाराणे परस्परंसंगच्छन्त्यौ तथा ऊर्मिभिस्तरङ्गैःपिन्वमानेपरिसरप्रदेशांस्तर्पयन्त्यौ शुभ्रे शोभमाने युवांसमुद्रंगच्छथइतिपूर्वेणान्वयः तथा वांयुवयोर्मध्ये अन्याएकाअन्यामपरांनदीमप्येति अपिगच्छति परस्परमैक्यमापद्यतइत्यर्थः ॥ इन्द्रेषिते इषगतावित्यस्यकर्मणिनिष्ठायास्तीषसहेत्यादिनाइडागमः तृतीयाकर्मणीतिपूर्वपदस्वरः ॥ प्रसवं षूङ्प्रेरणेइत्यस्य अप् पाद्यादिस्वरः । भिक्षमाणे भिक्षयाच्ञायाम् आत्मनेपदी शानचोलसार्वधातुकस्वरेणानुदात्तत्वेधातुस्वरः । रथ्येव रथस्येमौ तस्येदमित्यर्थे रथाद्यदितियत्प्रत्ययः तित्स्वरः इवेनसमासोविभक्त्यलोपश्चेत्यादि । याथः यातेर्लटिरूपम् । समाराणे ऋगतावित्यस्यलिटि संपूर्वस्यार्तेःसमोगम्यृच्छीत्यादिनात्मनेपदत्वात्तस्यकानजादेशः ऋच्छत्यृतामितिगुणः । पिन्वमाने पिविसेचने इदित्त्वान्नुम् लसार्वधातुकस्वरेणशानचोऽनुदात्तत्वेधातुस्वरः ॥ २ ॥

२. नदीद्वय, तुम्हें इन्द्र प्रेरित करते हैं । तुम उनकी प्रार्थना सुनती हो । दो रथियों की तरह समुद्र की ओर जाती हो । तुम एक साथ प्रवाहित होकर, तरङ्ग-द्वारा वर्द्धित होकर, परस्पर आस-पास जाती हुई सुशोभित हो रही हो ।

अथतृतीया–

अच्छासिन्धुंमातृतमामयासंविपाशमुर्वींसुभगामगन्म ।
वत्समिवमातरासंरिहाणेसमानंयोनिमनुसंचरन्ती ॥ ३ ॥

अच्छ । सिन्धुम् । मातृऽतमाम् । अयासम् । विऽपाशम् । उर्वीम् ।
सुऽभगाम् । अगन्म । वत्सम्ऽइव । मातरा । संरिहाणे इति सम्ऽरिहाणे ।
समानम् । योनिम् । अनु । संचरन्ती इति सम्ऽचरन्ती ॥ ३ ॥

हे नद्यौ मातृतमाम् अतिशयेन मातरं सिन्धुं नदीं शुतुद्रीं ताम् अच्छाभिमुख्येनायासं वि-
श्वामित्रोऽहं प्राप्तोऽभूवं तथा उर्वीं महतीं सुभगां सौभाग्यवतीं विपाशं च वयमगन्म गताः स्म किं
कुर्वन्त्यौ मातरा मातरौ द्वे धेनू वत्समिव संरिहाणे आस्वादयन्त्यौ लिहन्त्यौ मिलित्वा गन्तुमिच्छन्त्यौ
यथा वत्सम् अनुगच्छतः तद्वत् समानमेकं योनिं स्थानं समुद्रमनु अभिलक्ष्य संचरन्ती सम्यक् चरन्त्यौ
युवाम् अयासमिति पूर्वेणान्वयः ॥ अयासं यामा प्रापणे इत्यस्य रूपम् इडभावश्छान्दसः । अगन्म
गमेर्लोङि बहुलं छन्दसीति शपो लुक् म्वोश्चेति मकारस्य नकारः निघातः । संचरन्ती चरतिर्ग-
त्यर्थः तृतीयायुक्तत्वाभावादात्मनेपदाभावः शतुर्लसार्वधातुकस्वरेणानुदात्तत्वे कृते धातुस्वरः ॥ ३ ॥

३. मातृ-तुल्य सिन्धु नदी के पास उपस्थित हुआ हूँ, परम सौभाग्य-
वती विपाशा के पास उपस्थित हुआ हूँ। ये दोनों वत्स को चाटने की
इच्छावाली गायों की तरह एक स्थान की ओर जाती हैं।

अथ चतुर्थी–

एना वयं पयसा पिन्वमाना अनु योनिं देवकृतं चरन्तीः ।
न वर्तवे प्रसवः सर्गतक्तः किंयुर्विप्रो नद्यो जोहवीति ॥ ४ ॥

एना । वयम् । पयसा । पिन्वमानाः । अनु । योनिम् ।
देवऽकृतम् । चरन्तीः । न । वर्तवे । प्रऽसवः । सर्गऽतक्तः ।
किम्ऽयुः । विप्रः । नद्यः । जोहवीति ॥ ४ ॥

एवं स्तुते नद्यौ विश्वामित्रं प्रत्यूचतुः एना एनेन पयसा पिन्वमानाः संतर्पयन्त्यः देवकृतं
देवेनेन्द्रेण कृतं संदिष्टं योनिं स्थानं समुद्रमनु अनुलक्षीकृत्य चरन्तीर्गच्छन्त्यो वयमास्महे
द्वयोर्बहुवचनं पूजार्थं तासामस्माकं सर्गतक्तः सर्गाय गमनाय प्रवृत्तः प्रसव उद्योगः न वर्तवे नि-
वर्तनाय न भवति किंयुः किमिच्छन्नसौ विप्रो ब्राह्मणो नद्यो नदीरस्मान् जोहवीति भृशमाह्वय-
ति ॥ एना इदंशब्दस्य तृतीयाया एनादेशः सुपां सुलुगिति तृतीयाया आकारादेशः ऊडिदमि-
ति विभक्तेरुदात्तत्वम् । पिन्वमानाः पिवि सेचने । देवकृतं तृतीया कर्मणीति पूर्वपदप्रकृतिस्व-
रः । वर्तवे वृतु वर्तने तुमर्थे तवेन्प्रत्ययः नित्स्वरः । सर्गतक्तः क्ते चेति पूर्वपदप्रकृतिस्वरः । किं-
युः किमिच्छन् क्यचो मान्तादव्ययप्रतिषेध इति छान्दसत्वादप्रतिषेधो न भवतीति क्यच् क्या-

च्छन्दसीत्युप्रत्ययः प्रत्ययस्वरः । नद्यः छान्दसोयणादेशः । कोऽवीति ह्वयोऽभ्युपकि अभ्यस्तस्यचेतिसंप्रसारणेकृते गुणोयङ्लुकोरित्यभ्यासस्यगुणः यङोवेतितिपईडागमः गुणः निपातः ॥ ४ ॥

४. हम (दोनों नदियाँ) इस जल से पूर्ण होकर देवकृत स्थान के सामने जाती हैं। हमारे गमन का उद्योग बन्द होनेवाला नहीं है। किस लिए यह विप्र हम दोनों नदियों को पुकारता है।

रमध्वंमेवचसेसोम्यायऋतावरीरुपमुहूर्तमेवैः ।
प्रसिन्धुमच्छाबृहतीमनीषावस्युरह्वेकुशिकस्यसूनुः ॥ ५ ॥ १२ ॥

रमध्वम् । मे । वचसे । सोम्याय । ऋतऽवरीः । उप । मुहूर्तम् ।
एवैः । प्र । सिन्धुम् । अच्छ । बृहती । मनीषा । अवस्युः ।
अह्वे । कुशिकस्य । सूनुः ॥ ५ ॥ १२ ॥

विश्वामित्रोनद्यौप्रतिब्रूते—ऋतावरीः ऋतमुदकंतद्वत्योहेनद्यः यूयंमेविश्वामित्रस्यवचसेसोम्याय उत्तीर्याहंसोमंसंपादयामीत्येवंसोमसंपादिनेवचसेतदर्थम् एवैःप्राप्यैर्गतैः शीघ्रगमनेभ्यः मुहूर्तं मुहूर्तमात्रमुपरमध्वम् उपपूर्वोरमिरुपसंहारेऽवर्तते क्षणमात्रंशीघ्रगमनात्उपरतामवत सामान्येननदीपृच्छ्यमानासु समीहितं प्रयोजनमकुर्वतीं रोघोवर्तिनीं शुतुद्रीप्रतिब्रूते कुशिकस्यराज्ञःसूनुर्विश्वामित्रोऽहंबृहतीमहत्यामनीषयास्तुत्याअवस्युः आत्मनोरक्षणमिच्छन्सन् सिन्धुंशुतुद्रीमच्छाभि मुख्येनप्राह्वे प्रकर्षेणाह्वयामि अत्रनिरुक्तम्—उपरमध्वमेमवचसेसोम्यायसोमसंपादिनऋतावरीर्ऋतवत्यऋतमित्युदकनामप्रत्यृतंभवतिमुहूर्तमेवैरयनैरवनैर्वामिह्वयामिसिन्धुंबृहत्यामहत्यामनीषयामनसईषयास्तुत्याप्रज्ञयावावनायकुशिकस्यसूनुःकुशिकोराजाबभूवेति ॥ रमध्वं रमुउपरमे उपपूर्वाद्रमतेर्विभाषाकर्मकादित्यात्मनेपदम् । ऋतावरीः ऋतशब्दान्मत्वर्थेछन्दसीवनिपाविति वनिप् वनोरचेतिङीप् रेफश्चान्तादेशः वाछन्दसीतिसवर्णदीर्घः आमन्त्रितस्यपादादित्वात्षाष्ठिकमाद्युदात्तत्वम् । एवैः इण्गतौ इणशीङ्भ्यांवन् आर्धधातुकलक्षणोगुणः नित्स्वरः । बृहती मनीषा उभयत्रतृतीयायाःपूर्वसवर्णदीर्घः । अवस्युः अवोरक्षणमिच्छन् सुपआत्मनःक्यच् नःक्यइतिनकारान्तस्यपदसंज्ञायानियमितत्वादत्रसकारस्यरुर्नभवति क्याच्छन्दसीत्युप्रत्ययः । अह्वे ह्वयतेर्लङि लिङ्यात्मनेपदेऽन्यतरस्यामित्यङादेशः गुणः निपातः ॥ ५ ॥

५. जलवती नदियो, मेरे (विश्वामित्र के) सोम-सम्पादक वचन के लिए एक क्षण के लिए, गमन से विरत होओ। मैं कुशिक का पुत्र हूँ; प्रसन्नता के लिए महती स्तुति के द्वारा नदियों को, अपने उद्देश्य की सिद्धि के लिए बुलाता हूँ।

॥ इतितृतीयस्यद्वितीयेद्वादशोवर्गः ॥ १२ ॥

अथषष्ठी—

**इन्द्रोअस्माँअरदद्वज्रबाहुरपाहन्वृत्रंपरिधिंनदीनाम् ।**
**देवोनयत्सवितासुपाणिस्तस्यवयंप्रसवेयाममुर्वीः ॥ ६ ॥**

इन्द्रः । अस्मान् । अरदत् । वज्रऽबाहुः । अप । अहन् ।
वृत्रम् । परिऽधिम् । नदीनाम् । देवः । अनयत् । सविता ।
सुऽपाणिः । तस्य । वयम् । प्रऽसवे । यामः । उर्वीः ॥ ६ ॥

नद्यःप्रत्यूचुः हेविश्वामित्र वज्रबाहुः वज्रयुक्तोबाहुर्यस्यासौवज्रबाहुः तादृशोनस्त्वा-निन्द्रः नदीरस्मानरदत् रदतिःखनतिकर्मा अखनत् कथमखनत् उच्यते—नदीनांशब्दका-रिणीनामपांपरिधिं परितोनिहितमुदकमन्तःकृत्वा परितोवर्तमानमित्यर्थः तादृशंवृत्रं वृणो-त्याकाशमितिवृत्रोमेघः तंमेघमपाहन् अघान तस्मिन्हतेआपःपतिताः ताभिर्गच्छन्तीभिर्वयं स्रुताः एवंमेघहननद्वारेणाखनत् नकेवलमखनत् किंतर्हि सवितासर्वस्यजगतःप्रेरकः सु-पाणिःशोभनहस्तः उत्पत्तिस्थितिकर्तृत्वात् तादृशोदेवोद्योतमानइन्द्रः अस्मानमयत् मेघ-भेदनंकृत्वोदकप्रेरणेनसमुद्रमपूरयत् तस्यतादृशसामर्थ्योपेतस्येन्द्रस्य प्रसवेऽभ्यनुज्ञायांवयमा-नाउर्वीः उदकैःप्रभूतावयंयामोगच्छामः नतवचनादुपरमामहे उक्तार्थेयास्कोऽब्रवीति—इन्द्रो-स्मानरदद्वज्रबाहूरदतिःखनतिकर्मापाहन्वृत्रंपरिधिंनदीनामितिव्याख्यातंदेवोनयत्सवितासुपाणिःकल्याण-पाणिःपाणिःपणायतेःपूजाकर्मणःप्रगृह्यपाणीदेवान्पूजयन्तितस्यवयंप्रसवेयामउर्वीःउर्व्यइति ॥ अरदत् रदतेर्लङिरूपम् । वज्रबाहुः बहुव्रीहौपूर्वपदस्वरः । अहन् हन्तेर्लङि रूपं निपातः । परिधिं दुधाञ्धारणपोषणयोरित्यस्मात्कर्मण्युपसर्गेघोःकिरितिकिप्रत्ययःआतोलोपः कृदुत्तरपदस्वरः । अन-यत् नयतेर्लङिरूपम् । सुपाणिः पणव्यवहारेस्तुतौच अशिपणाय्योरुडायलुकौचेतीण् आयलुक् बहुव्रीहौनञ्सुभ्यामितिस्वरः । प्रसवे षूप्रेरणे ऋदोरबितिभावेऽप्प्रत्ययः थाथघञ्क्तेत्युत्तरपदान्तो-दात्तत्वम् । यामः याप्रापणेइत्यस्यलटिरूपं निपातः । उर्वीः उरुशब्दाद्वोतोगुणवचनादितिङीष् वाछन्दसीतिसवर्णदीर्घः प्रत्ययस्वरः ॥ ६ ॥

६- नदियों के परिवेष्टक वृत्र को मारकर वज्रबाहु इन्द्र ने हम दोनों नदियों को खोदा है। जगत्प्रेरक, सुहस्त और द्युतिमान् इन्द्र ने हमें प्रेरित किया है। इन्द्र की आज्ञा से हम प्रभूत होकर जाती हैं।

अथसप्तमी—

**प्रवाच्यंशश्वधावीर्यं[1]तदिन्द्रस्यकर्मयदहिंविवृश्चत् ।**
**विवज्रेणपरिषदोजघानायन्नापोयनमिच्छमानाः ॥ ७ ॥**

---

१ नि० २.२६.।

प्रुऽवाच्यम् । शश्वधा । वीर्यम् । तत् । इन्द्रस्य । कर्म । यत् ।
अहिम् । विऽवृश्चत् । वि । वज्रेण । परिऽसदः । जघान । आयन् ।
आपः । अयनम् । इच्छमानाः ॥ ७ ॥

योऽयमिन्द्रोऽहिंमेघंविवृश्चत् उदकप्रेरणार्थमवधीदितियत्कर्मच्छेदनरूपं तदिदंतस्येन्द्रस्यवीर्यं-सामर्थ्यं शश्वधासर्वदाप्रवाच्यं प्रकर्षेणवर्णनीयं तथासइन्द्रः परिषदः परितःसीदतःआसीनान्प्रतिबन्धकारिणोऽसुरान्वज्रेणविजघान अथायनंस्थानमिच्छमानाइच्छन्त्यआपआयन्यान्ति ॥ प्रवाच्यं वचपरिभाषणेइत्यस्माद्ऋहलोर्ण्यदितिण्यत् णित्वादुपधावृद्धिः वचोऽशब्दसंज्ञायामितिकुत्वाभावः व्यत्ययेनाद्युदात्तत्वं यद्वा वाच्यपतेरचोयत् यतोऽनावइतिस्वरः । शश्वधा शश्वच्छब्दात्स्वार्थेधाप्रत्ययः तकारलोपश्चद्रष्टव्यः । विवृश्चत् ओव्रश्चूछेदने तुदादिः लङि ग्रहिज्यावयीत्यादिनासंप्रसारणं सहसुपेत्यत्रसहेतियोगविभागात्समासः समासस्वरः । परिषदः क्विप् संहितायांसदिरप्रतेरितिषत्वम् । जघान हन्तेर्लिटिणलिरूपं निघातः । आयन् अयगतावित्यस्यलङिरूपं पादादित्वादनिघातः । इच्छमानाः इषुइच्छायामित्यस्यव्यत्ययेनशानच् तस्यसार्वधातुकस्वरेकृतेप्रत्ययस्वरः ॥ ७ ॥

७. इन्द्र ने जिस अहि (वृत्र) को विदीर्ण किया था, उनके उस वीर कार्य का सदा कीर्तन करना चाहिए। इन्द्र ने चारों ओर आसीन अवरोधक लोगों को वज्र से विनष्ट किया था। गमनाभिलाषी जल आया था।

अथाष्टमी—

एतद्वचोजरितर्मापिमृष्ठाआयत्तेघोषानुत्तरायुगानि ।
उक्थेषुकारोप्रतिनोजुषस्वमानोनिकःपुरुषत्रानमस्ते ॥८॥

एतत् । वचः । जरितः । मा । अपि । मृष्ठाः । आ । यत् । ते ।
घोषान् । उत्ऽतरा । युगानि । उक्थेषु । कारो इति । प्रति । नः ।
जुषस्व । मा । नः । नि । करिति कः । पुरुषऽत्रा । नमः । ते ॥८॥

नद्यःप्रसन्नादिन्द्रस्तोत्रंकृत्वाविश्वामित्रंप्रत्यूचुः—जरितः स्तोतर्हेविश्वामित्र तेत्वदीयं-संवादात्मकंवचः स्वंनोऽभीत्याघोषानुद्घोषयन्वर्तते एतद्वचोमापिमृष्ठाः माविस्मार्षीः किंकारणम् उत्तरायुगानि उत्तरेषुयाज्ञिकेषुयुगेष्वहःसुउक्थेषु कारोशस्त्राणांकर्तस्त्वं नोऽस्मान्प्रतिजुषस्व संवादात्मकेनतेनवाक्येनप्रतिसेवस्व इदानींनोऽस्मान्पुरुषत्रापुरुषेषुमानिकः उक्तिप्रत्युक्तिरूप-संवादवाक्याध्यापनेनानितरांपुंवत्प्रागल्भ्यंमाकार्षीः तेतुभ्यंनमः ॥ मृष्ठाः मृजूष्शुद्धावित्य-

स्यशकि व्यत्ययेनात्मनेपदम् अदादित्वाच्छपोलुक् क्थादिनाक्त्वं निपातः । घोषान् घुषिर्स्शब्दनेऽस्यस्यशतरि सर्वविधीनांछन्दसिविकल्पितत्वादतोगुणेइतिपररूपत्वाभावः सवर्णदीर्घः शतुर्ङसार्वधातुकस्वरेकृतेधातुस्वरः । युगानि युजिर्योगे उञ्छादिषुयन्नन्तत्वेननिपातनादगुणत्वं कालविशिष्टविषयंचानिपातनमिष्यते कालविशेषेरथाद्युपकरणेचेतितत्रपाठादेवान्तोदात्तत्वं कालाध्वनोरत्यन्तसंयोगेइतिद्वितीया । कारो करोतेः कृवापाजिमीत्यादिनाउण्प्रत्ययः आमन्त्रितत्वान्निघातः । कः करोतेर्लुङि च्लेः मन्त्रेघसेत्यादिनालुक् हल्ङ्यादिनासिचोलोपः नमांक्योगेऽस्त्यभावः । पुरुत्रा देवमनुष्यपुरुषपुरुमर्त्येभ्योद्वितीयासप्तम्योर्बहुलमितिसप्तम्यर्थेत्राप्रत्ययः प्रत्ययस्वरः ॥ ८ ॥

८. हे स्तोता, तुम यह जो वाक्य-घोषणा करते हो, उसे नहीं भूलना। भविष्यत् यज्ञ-दिन में मन्त्र-रचना करके तुम हमारी सेवा करो। हम (दोनों नदियाँ) तुम्हें नमस्कार करती हैं। हमें पुरुष की तरह प्रगल्भ नहीं करना।

अथ नवमी—

ओषुस्वसारःकारवेशृणोतययौवोदूरादनसारथेन ।
निषूनमध्वंभवतासुपाराअधोअक्षाःसिन्धवःस्रोत्याभिः ॥ ९ ॥

ओ इति । सु । स्वसारः । कारवे । शृणोत । ययौ । वः । दूरात् । अनसा । रथेन । नि । सु । नमध्वम् । भवत । सुपाराः । अधःऽअक्षाः । सिन्धवः । स्रोत्याभिः ॥ ९ ॥

विश्वामित्रोनदीःप्रत्युवाच स्वसारोभगिन्यःसिन्धवोहेनद्यः कारवे स्तोत्रंकुर्वाणस्यमम वचनं सुसुष्ठुओशृणोत शृणुतैव अनसाशकटेनरथेनचसहदूराद्विप्रकृष्टाद्देशाद्युष्मान्ययौ प्राप्तोऽस्मि यूयं सु सुष्ठुनिनमध्वम् आत्मनास्वयंप्रह्वाभवत तथासुपाराःरथादीनांतीरात्सुखेनावरोहणारोहणेयथास्यातांतथाशोभनरोधसश्चभवत किंच यूयंस्रोत्याभिः स्रवणशीलाभिरद्भिःअधोअक्षाः रथाङ्गस्याक्षस्याधस्ताद्भवत यदा आपोऽक्षस्याधस्ताद्भवन्तितदारथादीनिनेतुंशक्यन्ते तस्मात्तत्परिमाणोदकाभवतेत्यभिप्रायः ॥ ओइतिप्रगृह्यसंज्ञा । शृणोत श्रुश्रवणेऽस्यस्यलोटितप्रत्ययस्यतप्तनप्तनथनाश्चेतितबादेशः पित्त्वाद्गुणः निघातः । ययौ याप्रापणेइत्यस्य मूतमात्रेलिटियुत्तमे णलिआतऔणलइत्यौकारः एकादेशस्वरः । वः युष्मच्छब्दस्यद्वितीयाया बहुवचनस्यबहुलसावितिवसादेशः । सु निपातस्येतिसंहितायांदीर्घः । नमध्वं णमुप्रह्वत्वेशब्देऽस्यस्यकर्मकर्तरिनदुहस्नुनमांयक्चिणावितिप्रतिषेधाद्यगभावः । अधोअक्षाः अधरशब्दस्यपूर्वाधरावराणामसिपुरधवश्चैषामित्यासिप्रत्ययः अधादेशश्च अक्षशब्दोऽशूव्याप्तावित्यस्मादशो-

देवनइतिक्रप्रत्ययान्तः कृदुत्तरपदप्रकृतिस्वरः । सिन्धवः आमन्त्रितत्वान्निघातः । स्रोत्याभिः स्रोतःशब्दात्स्रोतसोविभाषाड्यड्ड्यावितिड्यप्रत्ययः छिच्चाट्टिलोपः प्रत्ययस्वरः ॥ ९ ॥

९. हे भगिनीभूत नदीद्वय, मैं (विश्वामित्र) स्तुति करता हूँ; सुनो। मैं दूर देश से रथ और शकट लेकर आता हूँ। तुम निम्नस्थ बनो, ताकि मैं पार हो जाऊँ। नदीद्वय, स्रोतवत् जल के साथ रथचक्र के अधोदेश में गमन करो।

**आतेकारोशृणवामावचांसिययाथदूरादनसारथेन ।**
**नितेनंसैपीप्यानेवयोषामर्यायेवकन्याशश्वचैते ॥ १० ॥ १२ ॥**

आ । ते । कारो इति । शृणवाम । वचांसि । ययाथ । दूरात् ।
अनसा । रथेन । नि । ते । नंसै । पीप्यानाऽइव । योषा ।
मर्यायऽइव । कन्या । शश्वचै । ते इति ते ॥ १० ॥ १२ ॥

अथ पूर्वं विश्वामित्रवाक्यं मत्वा नद्य उत्तरमाहुः कारो स्तोत्रं कुर्वाण हे विश्वामित्र ते तव वचांसि इमानि वाक्यानि आशृणवाम कार्त्स्न्येन शृणुमः तत्समीहितं प्रयोजनं कुर्म इत्यर्थः अनसा शकटेन रथेन च सह ययाथ यतो दूरादागतोसि वयं ते त्वदर्थं निनंसै नीचैर्नमाम । प्रत्येकविवक्षया एकवचनं रथेनागन्तुं गाधोदका भवाम इत्यर्थः । तत्र दृष्टान्तः—पीप्यानेव योषा पीप्याना पुत्रं स्तनं पाययन्ती योषा माता यथा नम्रीभवति दृष्टान्तान्तरं—यथा कन्या युवतिर्मर्यायेव मनुष्याय परिष्वङ्गार्थं परिष्वजनाय नम्रा भवति तद्वत् त्वदर्थं नम्रीभवाम; ते इति पुनरुक्तिरादरार्था एतामृचं यास्क एवं व्याचष्टे—आशृणवाम ते कारो वचनानि याहि दूरादनसा च रथेन च निनमाम ते पाययमानेव योषा पुत्रं मर्यायेव कन्या परिष्वजनाय निनमा इति वेति ॥ कारो सम्बुद्धौ शाकल्यस्येन्दावितिप्रगृह्यसंज्ञा । शृणवाम श्रुश्रवणे इत्यस्य लोटि आडुत्तमस्य पिच्चेत्याडागमः पित्त्वाद्गुणः निघातः । ययाथ याप्रापणे इत्यस्य भूतमात्रे लिटि थलि एकाचउपदेशेनुदात्तादितीट्प्रतिषेधः लित्स्वरः । अनसा सहार्थे तृतीया । नंसै णमुप्रह्वत्वे इत्यस्य लेटि उत्तमे सिब्बहुलमिति सिप् ऐत्वान्यत्रेतिपकारादेशः निघातः । पीप्यानेव पीप्यानेत्यस्याप्यायितव्यर्थे पाययिका नचिरूपं चित्स्वरः । योषा जुषिप्रीतिसेवनयोः वृषुयविहनीत्यादिना सप्रत्ययः यौतीतियोषा वृषादित्वादाद्युदात्तः । शश्वचै ष्वञ्जपरिष्वङ्गे इत्यस्मात्संपदादिलक्षणो भावे क्विप् पृषोदरादित्वादिष्टरूपसिद्धिः अन्तोदात्तः ॥ १० ॥

१०. स्तोता, हमने (दो नदियों ने) तुम्हारी सारी बातें सुनीं। तुम दूर से आये हो; इसलिए रथ और शकट के साथ गमन करो। जैसे पुत्र को स्तन-पान कराने के लिए माता और जैसे मनुष्य को आलिङ्गन करने के लिए युवती स्त्री, अवनत होती है, वैसे ही हम भी तुम्हारे लिए अवनत होती हैं।

अथैकादशी—

यदङ्गत्वाभरताःसंतरेयुर्गव्यन्ग्रामइषितइन्द्रजूतः ।
अर्षादहप्रसवःसर्गतक्तआवोवृणेसुमतिंयज्ञियानाम् ॥ ११ ॥

यत् । अङ्ग । त्वा । भरताः । सम्ऽतरेयुः । गव्यन् । ग्रामः ।
इषितः । इन्द्रऽजूतः । अर्षात् । अह । प्रऽसवः । सर्गऽतक्तः ।
आ । वः । वृणे । सुऽमतिम् । यज्ञियानाम् ॥ ११ ॥

विश्वामित्रोनदीःप्रत्युवाच अङ्गेत्यामन्त्रणे हेनद्यः यद्यस्माद्युष्माभिरुत्तितीर्षोर्ममोत्तरणमभ्यनुज्ञातम् तस्माद्भरताःभरतकुलजामदीयाः सर्वेत्वापरस्परमेकतामापन्नांनदींत्वांसन्तरेयुः सम्यगुत्तीर्णाभवेयुः तदेवविशिनष्टि—गव्यन्गाउदकानितरितुमिच्छन् इषितस्त्वयाऽभ्यनुज्ञात इन्द्रजूतः युष्माकंप्रवर्तकेनेन्द्रेणचप्रेरितोग्रामोभरतानांसंघः अर्षात्संतरेत् यतः सर्गतक्तः गमनायप्रवृत्तः प्रसवस्तेषांयुष्मायोगोऽहपूर्वंयुष्माभिरनुज्ञातः अहंतुयज्ञियानांयज्ञार्हाणांवोयुष्माकंसुमतिंशोभनांस्तुतिमावृणे सर्वतःसंभजे ॥ भरताः भरतशब्दादुत्सादित्वादञ् तस्ययस्कादिभ्योगोत्रइतिलुक् अतञ् प्रत्ययस्वरः । संतरेयुः तरतेर्लिङिकिदुक्तिरूपं ... धातुस्वरः लिङ्ङिचोदात्तवतीतिगतेर्निघातः । गव्यन् गाआत्मनइच्छन् सुपःक्यच् एकादेशस्वरः । ग्रामः ग्रसतेरात्वेतिमन्प्रत्ययःआकारादेशश्च नित्स्वरः । इन्द्रजूतः जूइतिसौत्रोधातुर्गत्यर्थः श्वीदितःनिष्ठायामिट्प्रतिषेधः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरः । अर्षात् ऋषीगतावित्यस्य लेटि तिपि सिब्बहुलमितिसिप् लेटोऽडाटावित्याडागमः एकाचइतीट्प्रतिषेधः गुणः प्रत्ययस्यपित्त्वादनुदात्तत्वेधातुस्वरः । वृणे वृङ्संभक्तावित्यस्यलटिरूपम् । यज्ञियानां यज्ञर्त्विग्भ्यांघखञावितिघप्रत्ययः प्रत्ययस्वरः ॥ ११ ॥

११. नदियो, चूँकि भरत-कुलोत्पन्न तुम्हें पार करेंगे, चूँकि पार जाने के इच्छुक भरतवंशीय लोग इन्द्र-द्वारा प्रेरित और तुम्हारे द्वारा अनुज्ञात होकर पार होंगे, चूँकि वे लोग पार होने की चेष्टा करते हैं और तुम्हारी अनुमति पा चुके हैं, इसलिए मैं (विश्वामित्र) सर्वत्र तुम्हारी स्तुति करूँगा। तुम यज्ञार्ह हो।

अतारिषुर्भरतागव्यवःसमभक्तविप्रःसुमतिंनदीनाम् ।
प्रपिन्वध्वमिषयन्तीःसुराधाआवक्षणाःपृणध्वंयातशीभम् ॥ १२ ॥

अतारिषुः । भरताः । गव्यवः । सम् । अभक्त । विप्रः । सुऽमतिम् ।
नदीनाम् । प्र । पिन्वध्वम् । इषयन्तीः । सुऽराधाः । आ ।
वक्षणाः । पृणध्वम् । यात । शीभम् ॥ १२ ॥

गव्यवः गा आत्मन इच्छन्तः भरताः भरतकुलजाः सर्वे अतारिषुः तां नदीं समतरन् विप्रो मेधावी विश्वामित्रो नदीनां सुमतिं शोभनां स्तुतिं सममक्त सममन्त यूयं तु यथापूर्वमिष्यन्तीः कुल्यादिद्वारा गमनं कुर्वाणा अत एव सुराधाः शोभनधनोपेताः यूयं वक्षणाः कूलनिम्नसरितः कुल्याः प्रपिन्वध्वं प्रकर्षेण तर्पयत आपृणध्वं ताः सर्वतः पूरयत च शीभं शीघ्रं यात गच्छत च । अतारिषुः तॄ प्लवनतरणयोरित्यस्य लुङि सिचि वृद्धिः परस्मैपदेष्विति वृद्धिः अडागमस्वरः । गव्यवः सुपः क्यच् क्याच्छन्दसीत्युप्रत्ययः तस्य स्वरः । अभक्त भज सेवायामित्यस्य लुङि सिचो झलो झलीति लोपः पादादित्वादनिघातः । पिन्वध्वं पिवि सेचन इत्यस्य लोटि रूपं निघातः । इषयन्तीः इषं कुर्वत्यः तत्करोतीति णिच् णाविष्ठवत्प्रातिपदिकस्येतीष्ठवद्भावाट्टेरिति टिलोपः वाछन्दसीति सवर्णदीर्घः प्रत्ययस्वरः । पृणध्वं पृण प्रीणने लोटि रूपं व्यत्ययेनात्मनेपदं वाक्यभेदादनिघातः । यात या प्रापण इत्यस्य लोटि रूपम् अत्रापि निघातः । शीभं शीभृ कत्थने श्लाघ्यतेऽनेनेति तद्दानितिकरणे घञ् ञित्स्वरः ॥ १२ ॥

१२. गोधनाभिलाषी भरतवंशीय लोग पार हो गये। ब्राह्मण लोग नदियों की सुन्दर स्तुति करते हैं। तुम अन्न-कारिणी और धन-समन्विता होकर छोटी-छोटी नदियों को तृप्त और परिपूर्ण करो तथा शीघ्र गमन करो।

अथ त्रयोदशी—

उद्व ऊर्मिः शम्या हन्त्वापो योक्त्राणि मुञ्चत ।
माऽदुष्कृतौ व्येनसाऽघ्न्यौ शूनमारताम् ॥ १३ ॥ १४ ॥

उत् । वः । ऊर्मिः । शम्याः । हन्तु । आपः । योक्त्राणि । मुञ्चत ।
मा । अदुःऽकृतौ । विऽएनसा । अघ्न्यौ । शूनम् । आ । अरताम् ॥ १३ ॥ १४ ॥

पूर्वमुत्तीर्णो विश्वामित्रो नदीः कृत्वा पुनोक्तितीर्षुः पुनराह हे आपः वो युष्माकमूर्मिस्तरङ्गः शम्याः युगकीलाः युग्यकण्ठपार्श्वाविसंस्थारज्ज्वः उदूर्ध्वं यथा भवन्ति तथा हन्तु गच्छतु सतरङ्गोरज्जूनामधो गच्छत्विति अभिप्रायः तथा हे आपः यूयं योक्त्राणि ताः रज्जूर्मुञ्चत यथा नस्पृशन्ति तथा यान्त्वित्यभिप्रायः व्येनसा विगतपापे अत एवादुष्कृतौ कल्याणकर्मकारिण्यौ अघ्न्यौ अहन्तव्यौ केनापि तिरस्करणीयौ विपाट्छुतुद्र्यौ रथानां शूनं समृद्धिमारताम् मागच्छताम् एवं विश्वामित्रो नदीः स्तुत्वा ताभिरनुज्ञातो तरदिति ॥ ऊर्मिः ऋ गतौ अर्तेरूच्चेति मिप्रत्ययः उरित्ययमादेशो धातोः अर्च्छतीत्यूर्मिः प्रत्ययस्वरः । शम्याः शमु उपशमे पोरदुपधादिति यत्प्रत्ययः यतोऽनाव इत्याद्युदात्तत्वम् । हन्तु हन हिंसागत्योरित्यस्य लोटि रूपं निघातः । योक्त्राणि युजिर् योगकरणे दाम्नीशसयुयुजेत्यादिना ष्ट्रन्प्रत्ययः नित्स्वरः । मुञ्चत मुच्लृ मोक्षणे निघातः ।

अदुष्कृतौ इसुसोःसामर्थ्येइतिविसर्जनीयस्यषत्वम् । अनेनसा बहुव्रीहौपूर्वपदस्वरः सुपो डादेशः । अघ्न्ये हनहिंसागत्योरित्यस्य नञ्पूर्वस्य अघ्न्यादयश्चेतिनिपातनाद्यक् कित्त्वादुपधा-लोपः होहन्तेरितिघत्वं सर्वविधीनांछन्दसिविकल्पितत्वाद्धत्वाभावः शीभावाभावः एकादेशस्वरः । शूनं श्वयतेर्नपुंसकेभावेक्तइतिक्तः यजादित्वात्संप्रसारणं हलइतिदीर्घत्वम् ओदितश्चेतिनि-ष्ठानत्वं निष्ठाचद्व्यजनादित्याद्युदात्तः । आरताम् ऋगतावित्यस्यलोटि सर्तिशास्त्यर्तिभ्यश्चेत्य-ङादेशः ऋदृशोऽङिगुणः नमाङ्योगेइत्यडभावः निघातः ॥ १३ ॥

१३. नदीद्वय, तुम्हारी तरङ्ग इस प्रकार प्रवाहित हो कि युगकील उसके ऊपर रहे; तुम लोग रज्जु को नहीं छूना । पाप-शून्या, कल्याण-कारिणी और अनिन्दनीया विपाशा और शुतुद्री इस समय न बढ़ें ।

॥ इतितृतीयस्यद्वितीयेचतुर्दशोवर्गः ॥ १४ ॥

इन्द्रःपूर्भिदित्येकादशर्चंपञ्चमंसूक्तम् वैश्वामित्रं त्रैष्टुभम् ऐन्द्रम् तथाचानुक्रमणिका—इन्द्रः पूर्भिदेकादशेति अग्निष्टोममाध्यंदिनेसवनेब्राह्मणाच्छंसिशस्त्रेइन्द्रःपूर्भिदितिसूक्तम् । होत्रकाणा-मितिखण्डेसूत्रितम्—इन्द्रःपूर्भिदुद्ब्रह्माणीति । पृष्ठ्याभिप्लवषडहयोःप्रथमेहनिमाध्यन्दिनसवने ब्राह्मणाच्छंसिशस्त्रेचातुर्विंशिकातिदिष्टस्याहीनस्यकल्पस्यान्येत्रीणिसंपातसूक्तानि तत्रेदंप्रथमं सूत्रि-तञ्च—इन्द्रःपूर्भिदपर्वंयदसित्वमगृभ्णा इति । उक्थ्येऽभिषेचनीयेऽप्येतत्सूक्तंनिविद्धानीयं सूत्रि-तञ्च—इन्द्रसोमंमिन्द्रःपूर्भिदितिमध्यन्दिनइति ।

तस्मिन्सूक्तेप्रथमा—

इन्द्रःपूर्भिदातिरद्दासमर्कैर्विदद्वसुर्दयमानोविशत्रून् ।
ब्रह्मजूतस्तन्वावावृधानोभूरिदात्रआपृणद्रोदसीउभे ॥ १ ॥

इन्द्रः । पूःऽभित् । आ । अतिरत् । दासम् । अर्कैः । विदत्ऽवसुः । दयमानः । वि । शत्रून् । ब्रह्मऽजूतः । तन्वा । ववृधानः । भूरिऽदात्रः । आ । अपृणत् । रोदसी इति । उभे इति ॥ १ ॥

विश्वामित्रःस्तौति—पूर्भिदसुरपुरांभेत्ता अतएवविदद्वसुः वेदयाद्भिःस्वमहिमप्रख्यापकैः स्तोत्रैर्युक्तः शत्रूनसुरान्विदयमानःविशेषेणहिंसन् तथाचयास्कः—विदद्वसुर्दयमानोविशत्रू-निति हिंसाकर्मेति । तादृशइन्द्रोदासंदस्यतेनेनतंमहतिदासोवासरस्तंमर्कैरर्चनीयैःस्तोत्रैर्भिरा-तिरत् समन्तादवर्धयत् इन्द्रस्यसूर्यात्मकत्वात् तथाचस्मृतिः—चैत्रमासेतपेदिन्द्रइति किञ्च

१ नि० ४, १७ ।

अथ तृतीया—

इन्द्रो॑ वृ॒त्रम॑वृणो॒च्छर्ध॑नीतिः॒ प्र मा॒यिना॑ममिना॒द्वर्प॑णीतिः ।
अह॒न्व्यं॑समु॒शध॒ग्वने॑ष्वा॒विर्धेना॑ अकृणोद्रा॒म्याणा॑म् ॥ ३ ॥

इन्द्रः॑ । वृ॒त्रम् । अ॒वृ॒णो॒त् । शर्ध॑ऽनीतिः । प्र । मा॒यिना॑म् ।
अ॒मि॒ना॒त् । वर्प॑ऽनीतिः । अह॑न् । विऽअं॑सम् । उ॒शध॑क् । वने॑षु ।
आ॒विः । धेनाः॑ । अ॒कृ॒णो॒त् । रा॒म्याणा॑म् ॥ ३ ॥

शर्धनीतिः शर्धनं नीतिः कर्म शर्धप्रवृद्धं नीतिः कर्म यस्य स तथोक्तः स इन्द्रो वृत्रमसुरम् अवृणोत् बलेनारुणत् तथा वर्पणीतिः युद्धे परप्रहाराणां निवारककर्मेन्द्रः मायिनां द्वितीयार्थे षष्ठी मायिनोऽसुरान् प्रामिनात् प्रकर्षेणावधीत् उशधक् शत्रुवधं कामयमान इन्द्रः वनेषु गूढचारिणमसुरं व्यंसं विगतांसं पयामभवासितयाहन् जघान अथ तस्मिन्नग्निवरेगवामपहर्तरि हते सति राम्याणां रमणं स्त्रीभिः सह क्रीडा रामः तमर्हतीति राम्या रात्रयः तासां रात्रीणामन्तःस्थिताः धेनाः गाः आविरकृणोत् प्रकटा अकरोत् रात्रीणामसुराक्रान्तत्वे तैत्तिरीयकम्— अहर्देवानामासीद्रात्रिर सुराणां तेऽसुरा यद्देवानां वित्तं वेद्यमासीत्तेन सह रात्रिं प्राविशन्निति ये दिवा स्तोतारो राम्यास्तेषां वा धेना इति ॥ अवृणोत् वृञ् वरण इत्यस्य लङि रूपं निघातः । शर्धनीतिः शर्धतिरुत्साहार्थः अस्मात् कर्मणि घञ् बहुव्रीहौ पूर्वपदस्वरः । अमिनात् मीञ् हिंसायामित्यस्य लङि मीनातेर्निगम इति ह्रस्वः निघातः । अहन् हन्तेर्लङि रूपम् । उशधक् वश कान्तौ पृषोदरादित्वाद्रूपसिद्धिः । आविः स्वरादिष्वन्तोदात्तत्वेन पठितत्वादन्तोदात्तः । धेना धेट् पाने धेट इच्चेति नप्रत्ययः इकारश्चान्तादेशः गुणः धयन्ति तामिति धेना वाक् धेना गिरेतीत्यत्र प्रत्ययस्वरेणान्तोदात्तः अत्र व्यत्ययेनाद्युदात्तत्वम् । अकृणोत् कृवि हिंसाकरणयोः निघातः । राम्याणां रमु क्रीडायां राममर्हतीत्यर्थे छन्दसि चेति यप्रत्ययः तस्य स्वरः यद्वा रमेस्तर्णौ तपर्पोदकपादयश्चेति यक् प्रत्ययः अरमयति भूतानि नक्तंचारीण्युपरमयतीति रात्रीति यास्कः । वर्णव्यत्ययः ॥ ३ ॥

३. इन्द्र, तुम्हारा कर्म प्रसिद्ध है। तुमने वृत्र को रोका था। शत्रुओं के आक्रमण-निवारक इन्द्र ने मायावियों का, विशेष रूप से, वध किया था। शत्रुवधाभिलाषी इन्द्र ने वन में छिपे स्कन्ध-हीन शत्रु का विनाश किया है। उन्होंने राम्यों या रात्रियों की गायों को आविष्कृत किया है।

अथ चतुर्थी—

इन्द्रः॑ स्व॒र्षा ज॒नय॒न्नहा॑नि जि॒गायो॒शिग्भिः॒ पृत॑ना अभि॒ष्टिः ।
प्रारो॑चय॒न्मन॑वे के॒तुमह्ना॒मवि॑न्द॒ज्ज्योति॑र्बृह॒ते रणा॑य ॥ ४ ॥

१ नि० २. १८.

इन्द्रः । स्वःऽसाः । जनयन् । अहानि । जिगाय । उशिक्ऽभिः । पृतनाः । अभिष्टिः । प्र । अरोचयत् । मनवे । केतुम् । अह्नाम् । अविन्दत् । ज्योतिः । बृहते । रणाय ॥ ४ ॥

स्वर्षाः स्वर्गप्रदः इन्द्रःअहानि स्वतेजोभिर्जनयन् उशिग्भिः युद्धंकामयमानैरङ्गिरोभिः सहपृतनाःपरकीयाःसेनाअभिष्टिरभिभावुकःसन् जिगाय शत्रूनजैषीत् शत्रुवधानन्तरंमनवेमनुष्यायकर्मकर्त्रेयजमानायतदर्थं तथा अह्नांकेतुंप्रज्ञापकंसूर्यमारोचयत् तथाचतमोरूपासुरघातकर्मणादीपयत् ततोबृहतेमहतेरणायसुद्धप्रकाशनायज्योतिःप्रकाशमविन्दत् अलभत ॥ स्वर्षाः षणुदाने क्विप् जनसनखनांसञ्झलोरित्यात्वं सनोतेरनइतिषत्वम् अहरादीनांपत्यादिषूपसंख्यानमितिविसर्जनीयस्यरुत्वम् । जिगाय जिजयेइत्यस्यलिटि सन्लिटोर्जेरित्यभ्यासादुत्तरस्य कवर्गादेशः लित्स्वरः । पृतनाः पृङ्व्यायामे कृसृभूवृ... क्विदितितनन्प्रत्ययः ज्याप्रियन्तोऽन्ययोश्चारइतिपृतनाःसेनाः नित्त्वादाद्युदात्तः । अभिष्टिः अभिगन्ता इषगतौ मन्त्रेवृषेत्यादिनाक्तिनुदात्तः सहिभावपरोऽपिभवितारंलक्षयति तितुत्रतथेत्यादिनेट्प्रतिषेधः शकन्ध्वादित्वात्पररूपत्वं कृदुत्तरपदस्वरः । अरोचयत् रुचदीप्तावित्यस्यणिरूपम् । मनवे मनज्ञाने शृस्वृस्निहीत्यादिनाउप्रत्ययः निदनुवृत्तेराद्युदात्तः । अविन्दत् विद्लृलाभेइत्यस्यशेमुचादीनामितिनुम् पादादित्वादनिघातः । रणाय क्रियाग्रहणंकर्तव्यमितिसंप्रदानसंज्ञा रणतिःशब्दार्थः घञिरप्योरुपसंख्यानमित्यप्प्रत्ययः रणन्तिशब्दंकुर्वन्ति परस्परंयोद्धारोऽत्रेतिरणःसंग्रामः प्रत्ययस्यापित्त्वादनुदात्तत्वेधातुस्वरः ॥ ४ ॥

४. स्वर्गदाता इन्द्र ने दिन को उत्पन्न करके युद्धाभिलाषी अङ्गिरा लोगों के साथ परकीय सेना का अभिभव करके परास्त किया है। मनुष्य के लिए दिन के पताका-स्वरूप सूर्य को प्रदीप्त किया था। महायुद्ध के लिए ज्योति प्रकट हुई।

अथपञ्चमी—

इन्द्रस्तुजोबर्हणाआविवेशनृवद्दधानोनर्यापुरूणि ।
अचेतयद्धियइमाजरित्रेप्रेमंवर्णमतिरच्छुक्रमासाम् ॥५॥१५॥

इन्द्रः । तुजः । बर्हणाः । आ । विवेश । नृऽवत् । दधानः । नर्या । पुरूणि । अचेतयत् । धियः । इमाः । जरित्रे । प्र । इमम् । वर्णम् । अतिरत् । शुक्रम् । आसाम् ॥ ५ ॥ १५ ॥

स तादृश इन्द्रस्तुग्रो बाधिका बर्हणाः युद्धोत्साहेन वर्धमानाः परकीयाः सेनाः नृवत् मनुष्य-वदाविवेश प्रकाशं लब्ध्वा प्राविशत् किं कुर्वन् पुरूणि बहूनि नर्या युद्धनयनकारिणां योग्यानि धनानि दधानः प्रयच्छन् आविवेश स इन्द्रो अत्रिः स्तोत्रे इमाः दृश्यमाना धियः उषसो ध्यायन्त्याः सुमनु-ष्याः इति ता धियो चेतयत् प्राज्ञापयत् अयासां मुषसामिमं शुक्रं वर्णं प्रकाशेन युक्तं अतिरत् इन्द्रस्तेजसा प्रकर्षेण अवर्धयातिस्म धांशाब्दस्योद्‌पत्त्येमवर्णः—शुक्रवर्णामुदुर्नोयंसतो वियमिति । तुग्रः तुज-हिंसायां किम् धातुस्वरः । बर्हणाः वृहि वृद्धौ अस्माद्युच्‌ बहुलमिति कर्तरि युच् व्यत्ययेनाद्युदा-त्तत्वम् । विवेश विशतेर्लिटि रूपं निघातः । नृवत् नृशब्दात्तेन तुल्यमिति वतिः प्रत्ययः तस्य स्वरः । दधानः दधातेः शानचि रूपम् अभ्यस्तानामादिरित्याद्युदात्तत्वम् । नर्या नरेषु साधुरित्यर्थे तत्र साधुरिति यत् यतोऽनाव इत्याद्युदात्तत्वम् । अचेतयत् चितीसंज्ञाने इत्यस्य ण्यन्तस्य लङि रूपम् अ-डागमस्वरः । धियः ध्यै चिन्तायाम् अन्येभ्योऽपि दृश्यत इति क्विप् ग्रहिज्येति संप्रसारणं धातु-स्वरः । इमाः दश्चेति दकारस्य मकारः एकादेशस्वरः । अतिरत् तरतेर्व्यत्ययेन शः निघातः । आसाम् इदमोऽन्वादेशेऽशिति अशादेशोऽनुदात्तश्च प्रत्ययः सुप्त्वादनुदात्तः अतः सर्वानुदात्तः ॥ ५ ॥

५. बहुत धन का ग्रहण करके बाधाशत्री और वर्द्धमान शत्रु-सेना के बीच इन्द्र बैठे। स्तोता के लिए, उन्होंने, उषा को चैतन्य प्रदान किया और उनके शुक्लवर्ण तेज को वर्द्धित किया।

॥ इति तृतीयस्य द्वितीये पञ्चदशो वर्गः ॥ १५ ॥

अथ षष्ठी—

महो महानि पनयन्त्यस्येन्द्रस्य कर्म सुकृता पुरूणि ।
वृजनेन वृजिनान्त्सं पिपेष मायाभिर्दस्यूँरभिभूत्योजाः ॥ ६ ॥

महः । महानि । पनयन्ति । अस्य । इन्द्रस्य । कर्म । सुऽकृता । पुरूणि । वृजनेन । वृजिनान् । सम् । पिपेष । मायाभिः । दस्यून् । अभिभूतिऽओजाः ॥ ६ ॥

महो महतः अस्यैतादृशसामर्थ्यस्य इन्द्रस्य महानि मंहनीयानि पुरूणि बहूनि सुकृता सुष्ठु कृतानि कर्म वृत्रहननादीनि कर्माणि पनयन्ति स्तुवन्ति इन्द्रस्य कर्म सुकृता पुरूणीत्येतत् पदकदम्बकम् अत्र अर्थभेदात् पदकाण्डेनोच्यते तादृशइन्द्रः वृजनेन वर्जयन्ति शत्रवोऽनेनेति वृजनं बलं तेन बलेन वृजिनान् पापरूपान् असुरान् संपिपेष सम्यक् चूर्णीकरोत् तथाभिभूत्योजाः अभिभूतिः शत्रुविषयोऽभि-भवः तत्समर्थः ओजो बलमस्येति अभिभूत्योजाः शत्रूणां पराभवे समर्थः तादृश इन्द्रो दस्यून् उपक्षपयितॄन् असुरान् मायाभिः कपटैः संपिपेष ॥ पनयन्ति पनतेः स्तुत्यर्थस्य गुपूधूपविच्छिपणिपनिभ्य आय इत्याय-

१ ऋ० सं० ३. ३. १२.

त्ययः ह्रस्वश्छान्दसः निपातः । वृजनेन वृजी वर्जने कृपृवृजिमन्दिनिधाञ्भ्यः क्युरिति क्युप्रत्ययः कित्त्वाद्गुणः प्रत्ययस्वरः । वृजिनान् वृजी वर्जने वृजेः किच्चेतीनच्प्रत्ययः वृजिनंपापं तद्वन्तः अर्शआदित्वादच् एकादेशस्वरः । पिपेष पिषॢसंचूर्णनेइत्यस्य लिटि णल्यन्तरूपं निपातः । अभिभूत्योजाः भूतिर्भवनं भावेक्तिन् तादौचनितीत्यभेःप्रकृतिस्वरत्वम् अभिभूतम् ओजोयस्येति सप्तम्युपमानपूर्वपदस्यबहुव्रीहिरितिसमासः बहुव्रीहौपूर्वपदप्रकृतिस्वरः ॥ ६ ॥

६. इन्द्र महान् हैं। उपासक लोग उनके प्रभूत सत्कर्मों की प्रशंसा करते हैं। बल-द्वारा वे बलवानों को चूर-चूर करते हैं। पराभव-कर्त्ता ज्यासम्पन्न इन्द्र ने, माया-द्वारा, दस्युओं को चूर्ण किया है।

युधेन्द्रोमह्नावरिवश्चकारदेवेभ्यःसत्पतिश्चर्षणिप्राः ।
विवस्वतःसदनेअस्यतानिविप्राउक्थेभिःकवयोगृणन्ति ॥ ७ ॥

युधा । इन्द्रः । मह्ना । वरिवः । चकार । देवेभ्यः । सत्ऽपतिः । चर्षणिऽप्राः । विवस्वतः । सदने । अस्य । तानि । विप्राः । उक्थेभिः । कवयः । गृणन्ति ॥ ७ ॥

सत्पतिः सतांदेवानांपतिः चर्षणिप्राः चर्षणीनांमनुष्याणाम् अपेक्षितफलप्रदानेनकामपूरकः सइन्द्रःमह्नामहतायुधायुद्धेन वरिवः वृणोतेर्वियतेर्थिभिरितिवरिवोधनं तादृशंधनंयुद्धेनलब्ध्वादेवेभ्योदेवनशीलेभ्यःस्तोतृभ्यश्चकार दत्तवान् विप्रामेधाविनः कवयःस्तोतारः विवस्वतः विशेषेणाग्निहोत्रादिकर्मार्थंवसतोयजमानस्यसदनेगृहे अस्येन्द्रस्य तानिवृत्रहननवसुप्रदानादीनिकर्माणिउक्थेभिःस्तोत्रैःगृणन्तिस्तुवन्ति ॥ युधा युधसंप्रहारे भावेसम्पदादिलक्षणःक्विप् सावेकाचस्तृतीयादिर्विभक्तिरुदात्ता । वरिवः वृञ्वरणेइत्यस्य वसुदाकि कर्त्रभ्येत्यभ्यासस्यारिगासः तदन्तादसुन् बाहुलकाद्दिलोपः नित्स्वरः । चकार करोतेर्लिटिरूपं निपातः । सत्पतिः अस्तेःशतरिरूपम् सदिति पत्यावैश्वर्यइतिपूर्वपदप्रकृतिस्वरत्वम् । चर्षणिप्राः प्राकृपूरणे विच् । विवस्वतः विपूर्वाद्वसनिवासेइत्येतस्मात्संपदादिलक्षणोभावेक्विप् तदस्यास्त्यस्मिन्निति मतुप् मादुपधायाइतितस्यवत्वम् प्रत्ययस्यापित्वादनुदात्तत्वेधातुस्वरः । गृणन्ति गॄशब्देइत्यस्यलटिरूपं निपातः ॥ ७ ॥

७. देवों के पति और मानवों के वर-प्रदाता इन्द्र ने महायुद्ध में धन प्राप्त करके स्तोताओं को दान दिया। मेधावी स्तोता लोग यजमान के घर में मन्त्र-द्वारा इन्द्र की कीर्त्ति की प्रशंसा करते हैं।

सत्रासाहंवरेण्यंसहोदांससवांसंस्वरपश्चदेवीः ।
ससानयःपृथिवींद्यामुतेमामिन्द्रंमदन्त्यनुधीरणासः ॥ ८ ॥

सत्राऽसहम् । वरेण्यम् । सहःऽदाम् । ससऽवांसम् । स्वः । अपः । च । देवीः । ससान । यः । पृथिवीम् । द्याम् । उत । इमाम् । इन्द्रम् । मदन्ति । अनु । धीऽरणासः ॥ ८ ॥

धीरणासो धियास्तुत्यारणयन्तः स्तोतारः सत्रासाहं महतोवृत्रादेरभिभवितारम् अतएववरेण्यं सर्वैर्वरणीयं सहोदां दुर्बलस्यार्थिनोबलप्रदं देवीर्देवनशीलाअपः स्वश्चस्वर्लोकञ्च ससवांसं भजमानमिन्द्रमनुमदन्ति हृष्यन्ति इन्द्रहर्षमनुस्वयंहृष्यन्तीत्यर्थः यइन्द्रः पृथिवीमुतापिचद्यांद्युलोकमिमामिममन्तरिक्षलोकंचैतांस्त्रीन्लोकान्ससान तत्तल्लोकवासिभ्योददौ तमनुमदन्तीत्यन्वयः ॥ सत्रासाहं षहमर्षणे छन्दसिसहइतिण्विः णित्वादुपधावृद्धिः । ससवांसं षणसम्भक्ताविल्यस्यक्वसौ इडभावेनकारलोपेरूपम् प्रत्ययस्वरः । ससान षणुदानेइत्यस्यलिटिरूपंनित्स्वरः । मदन्ति मदिस्तुत्यादिष्वित्यस्यव्यत्ययेन परस्मैपदं निघातः । धीरणासः रणतीतिरणावाक् धियास्तुत्यारणायेषांतेधीरणाः बहुव्रीहौ पूर्वपदप्रकृतिस्वरः ॥ ८ ॥

८. स्तोता लोग सबके जेता, वरणीय, जलप्रद, स्वर्ग और स्वर्गीय जल के स्वामी इन्द्र के आनन्द में आनन्दित होते हैं। इन्द्र ने पृथिवी, अन्तरिक्ष और स्वर्ग को दान कर दिया है।

ससानात्याँ उतसूर्यंससानेन्द्रःससानपुरुभोजसंगाम् ।
हिरण्ययमुतभोगंससानहत्वीदस्यून्प्रार्यंवर्णमावत् ॥ ९ ॥

ससान । अत्यान् । उत । सूर्यम् । ससान । इन्द्रः । ससान । पुरुऽभोजसम् । गाम् । हिरण्ययम् । उत । भोगम् । ससान । हत्वी । दस्यून् । प्र । आर्यम् । वर्णम् । आवत् ॥ ९ ॥

पूर्वमन्त्रेप्रतिपादितःसइन्द्रः अत्यानश्वान्ससान युद्धार्थमस्मभ्योददौ उतापिच सूर्यं जगत्प्रकाशकमादित्यंससान प्राणिनांव्यवहारनिर्वाहायतेभ्योददौ तथा पुरुभोजसं पुरुभिः सर्वैर्भोग्यैःक्षीरादिद्वारेणोपभुज्यतइतिपुरुभोजाः क्षीरादिरूपबहुविधान्नोपेतांगामग्निहोत्रादिसिद्ध्यर्थं ससान तेभ्योददौ उतापिच हिरण्ययं सुवर्णमयंभोगंधनंभुज्यतेऽस्मिन्नितिभोगोगृहंवाससान अर्थिभ्योददौ स्वोदस्यून्बाधकानसुरान्हत्वी हत्वाआर्यमुत्तमंवर्णंत्रैवर्णिकंप्रावत् यथाकर्मसिद्धोनमवेत्तथापालयत् ॥ ससान षणुदानेइत्यस्यलिटिणलिरूपं नित्स्वरः । हिरण्ययंहिरण्यशब्दाद्विकारार्थेमयड्वैतयोर्भाषायामितिविहितस्यछन्दसिविषयेऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानिच्छन्दसीतिनिपातनान्मयटोमकारलोपः प्रत्ययस्वरः । हत्वी हन्तेःक्त्वायांस्नात्व्यादयश्चेति निपातितः प्रत्ययस्वरः । आवत् अवतेर्लङिरूपम् ॥ ९ ॥

९. इन्द्र ने अश्व का दान किया है, सूर्य का दान किया है, अनेक लोगों के उपभोग के योग्य गोधन दान किया है, सुवर्णमय धन दान किया है तथा दस्युओं का वध करके आर्यवर्ण (ब्राह्मण, क्षत्रिय, वैश्य जातियों) की रक्षा की है।

हेशूरेन्द्र राधसेधनाय तव बाहू अपिआश्नोतु ॥ अश्नोतु अशूङ्व्याप्तावित्यस्यलेटि व्यत्यये-नपरस्मैपदं निपातः । कुक्ष्योः उदात्तयणोहल्पूर्वादितिविभक्तेरुदात्तत्वम् ॥ १२ ॥

१२. हे इन्द्र, वह सोम तुम्हारी दोनों कुक्षियों को व्याप्त करे, स्तोत्रों के साथ वह तुम्हारे शरीर को व्याप्त करे। हे शूर, धन के लिए वह तुम्हारी दोनों भुजाओं को भी व्याप्त करे।

॥ इतितृतीयस्यतृतीयेषोडशोवर्गः ॥ १६ ॥

धानावन्तमित्यष्टर्चंचतुर्दशंसूक्तंवैश्वामित्रमैन्द्रम् अत्रेयमनुक्रमणिका—धानावन्तमष्टौपूर्वो गायत्र्यंषष्ठीजगतीति । आदितश्चतस्रोगायत्र्यः तृतीयेधानाइतिषष्ठीजगती शिष्टास्त्रिष्टुभः सूक्तविनियोगोलिङ्गादवगन्तव्यः प्रातःसवनीयपुरोडाशस्यानुवाक्याधानावन्तमित्याद्या सूत्रितंच—धानावन्तंकरम्भिणमितिप्रातःसवनेनुवाक्येति ।

धानावन्तंकरम्भिणमपूपवन्तमुक्थिनम् । इन्द्रप्रातर्जुषस्वनः ॥ १ ॥

धानाऽवन्तम् । करम्भिणम् । अपूपऽवन्तम् ।
उक्थिनम् । इन्द्र । प्रातः । जुषस्व । नः ॥ १ ॥

हेइन्द्र धानावन्तं धानाभृष्टयवास्तद्वन्तं करम्भिणं करम्भोदधिमिश्राःसक्तवः तद्वन्तम् अपूपवन्तं सवनीयपुरोडाशोपेतम् उक्थिनं शस्त्रिणं नोऽस्मदीयमिमंसोमंप्रातः प्रातःसवनेजुषस्व सेवस्व ॥ प्रातः स्वरादिष्वन्तोदात्तत्वेनपठितत्वादन्तोदात्तः ॥ १ ॥

१. हे इन्द्र, भुने जौ से युक्त, दधिमिश्रित, सत्तू से युक्त, सवनीय पुरोडाश से युक्त और शस्त्रवाले हमारे सोम का प्रातःसवन में तुम सेवन करो।

पुरोळाशंपचत्यंजुषस्वेन्द्रागुरस्वच । तुभ्यंहव्यानिसिस्रते ॥ २ ॥

पुरोळाशम् । पचत्यम् । जुषस्व । इन्द्र । आ ।
गुरस्व । च । तुभ्यम् । हव्यानि । सिस्रते ॥ २ ॥

हेइन्द्र पचत्यं पचनेसाधुं पुरोळाशं पुरोदाश्यन्तइतिपुरोडाशोहविःतंजुषस्व किंच आगुरस्व पुरोडाशभक्षणार्थमुद्यमंकुरु हव्यानि हवनयोग्यानिपुरोडाशादीनिहवींषितुभ्यंत्वदर्थंसिस्रते आहवनीयंगच्छन्ति तानिसेवस्वेतिभावः ॥ पचत्यं पचनशब्दात्तत्रसाधुरितियत्प्रत्ययः नास्यपचस्यकृत्यमानावश्यतोनावइत्यस्यप्राप्तिर्नास्ति तित्स्वरितः । गुरस्व गुरीउद्यमने आशिष्करणी निपातः । सिस्रते सृगतौ छन्दसिजुहोत्यादिः व्यत्ययेनात्मनेपदम् ॥ २ ॥

२. हे इन्द्र, पक्व पुरोडाश का तुम सेवन करो। पुरोडाश के भक्षण के लिए उद्यम करो। हवन के योग्य यह पुरोडाश आदि हवि तुम्हारे लिए गमन करती है।

अथतृतीया—

पुरोळाशंचनोघसोंजोषयासेगिरश्चनः । वधूयुरिवयोषणाम् ॥ ३ ॥

पुरोळाशम् । च । नः । घसः । जोषयासे । गिरः ।
च । नः । वधूयुःऽइव । योषणाम् ॥ ३ ॥

हेइन्द्र नोऽस्मत्संबन्धिनंपुरोळाशं घसः भक्षय नोऽस्मदीयाःस्तुतिलक्षणागिरोजोषयासे सेवस्वच तत्रदृष्टान्तः—वधूयुरिवयोषणां यथा वधूयुः स्त्रीकामः योषणांभजनीयांयुवतिंसेवतेत-द्वत् ॥ घसः घस्लृअदनेइत्यस्य लेट्यडागमेरूपं चवायोगेप्रथमेतिनानिघातः । जोषयासे जुषीप्री-तिसेवनयोरित्यस्यण्यन्तस्य लेट्याडागमेरूपम् आगमस्यानुदात्तत्वेणिच्स्वरः पादादित्वादनि-घातः । वधूयुरिव सुपआत्मनःक्यच् क्याच्छन्दसीत्युप्रत्ययः प्रत्ययस्वरः । योषणां युषसेवन इतिसौत्रोधातुः कृत्यल्युटोबहुलमितिल्युट् लित्स्वरः ॥ ३ ॥

३. हे इन्द्र, हमारे इस पुरोडाश का भक्षण करो। हमारी इस स्तुतिलक्षणा वाणी का वैसे ही सेवन करो, जैसे स्त्री की भक्ति करनेवाला कामी पुरुष युवती स्त्री का सेवन करता है।

अथचतुर्थी—

पुरोळाशंसनश्रुतप्रातःसावेजुषस्वनः । इन्द्रक्रतुर्हितेबृहन् ॥ ४ ॥

पुरोळाशम् । सनश्रुत । प्रातःऽसावे । जुषस्व ।
नः । इन्द्र । क्रतुः । हि । ते । बृहन् ॥ ४ ॥

हेसनश्रुत पुराणतयाप्रसिद्ध हेइन्द्र नोऽस्मत्संबन्धिनमिमंपुरोळाशं प्रातःसावे सूयते अत्रसोमइतिसावः तस्मिन्प्रातःसवनेजुषस्व यतस्तेतवक्रतुःकर्म बृहन्महद्धि ॥ प्रातःसावे षुञ् अभिषवे कर्मणिघञ् प्रादिसमासः थाथादिस्वरेणान्तोदात्तः ॥ ४ ॥

४. हे पुराणकाल से प्रसिद्ध इन्द्र, हमारे इस पुरोडाश का प्रातःसवन में सेवन करो, जिससे तुम्हारा कर्म महान् हो।

माध्यन्दिनसवनेसवनीयपुरोडाशस्यमाध्यन्दिनस्यसवनस्यधानाइत्यनुवाक्या । सूत्रितंच—माध्यन्दिनस्यसवनस्यधानाइतिमाध्यन्दिनइति ।

माध्यंन्दिनस्यसवंनस्यधानाःपुरोळाशमिन्द्रकृष्वेहचारुम् ।
प्रयत्स्तोताजरितातूर्ण्यर्थोवृषायमाणउपगीर्भिरीट्टे ॥५॥१७॥

माध्यन्दिनस्य । सवनस्य । धानाः । पुरोळाशम् । इन्द्र ।
कृष्व । इह । चारुम् । प्र । यत् । स्तोता । जरिता । तूर्णिऽअर्थः ।
वृषऽयमाणः । उप । गीःऽभिः । ईट्टे ॥ ५ ॥ १७ ॥

हे इन्द्र माध्यन्दिनस्य मध्यन्दिने भवस्य सवनस्य संबन्धिनीर्धानाः भक्षयन् चारुं कमनीयं पुरोडाशं च इह कर्मण्यागत्य कृष्व भक्षणेन संस्कुरु यद्यदा जरिता भवत्परिचरणं कुर्वाणः तूर्ण्यर्थः त्वां स्तोतुमितस्ततः त्वरितगमनः अतएव वृषायमाणः वृषवदाचरन् स्तोता गीर्भिः स्तुतिलक्षणाभिर्वाग्भिस्त्वत्समीपे प्रईट्टे प्रकर्षेण स्तौति तदा पुरोडाशादिहवींषि भक्षयेति भावः ॥ माध्यन्दिनस्य मध्यन्दिनशब्दात्तत्रभवार्थे उत्सादित्वादञ् ञित्वादाद्युदात्तः । चारुम् चर गतिभक्षणयोः दृसनिजनिचरिचटिरहिभ्यो ञुण् ञित्त्वादुपधावृद्धिः ञित्वादाद्युदात्तः तूर्ण्यर्थः तूर्णि त्वरासंभ्रमे इत्यस्माद्वहिश्रीत्यादिना निप्रत्ययः नित्त्व अर्थः ऋगतौ उषिकुषिगार्तिभ्यस्थन्निति थन् बहुव्रीहौ पूर्वपदस्वरः । वृषायमाणः वृषइवाचरतीत्यर्थे कर्तुः क्यङ्सलोपश्चेति क्यङ् अकृत्सार्वधातुकयोर्दीर्घः ङित्त्वादनुदात्तङित आत्मनेपदं लट् शानच् तस्य लसार्वधातुकस्वरे धातुस्वरः । ईट्टे ईड स्तुतावित्यस्य छान्दसं रूपं यद्योगादनिघातः ॥ ५ ॥

५. हे इन्द्र, माध्यन्दिन-सवन-सम्बन्धी भुने जौ के कमनीय पुरोडाश का यहाँ आकर भक्षण करके संस्कृत करो। तुम्हारी परिचर्या करनेवाले, स्तुति के लिए त्वरितगमन (व्यग्र), अतएव वृष की तरह इधर-उधर दौड़नेवाले, स्तोता जब स्तुतिलक्षण वचनों से तुम्हारी स्तुति करते हैं; तभी तुम पुरोडाश आदि का भक्षण करते हो।

॥ इति तृतीयस्य तृतीये सप्तदशो वर्गः ॥ १७ ॥

तृतीयसवने सवनीयपुरोडाशस्य तृतीये धाना इत्यनुवाक्या । सूत्रितं च—तृतीये धानाः सवने पुरुष्टुतेति तृतीयसवन इति ।

तृतीये धानाः सवने पुरुष्टुत पुरोळाशमाहुतं मामहस्व नः ।
ऋभुमन्तं वाजवन्तं त्वा कवे प्रयस्वन्त उप शिक्षेम धीतिभिः ॥६॥

तृतीये । धानाः । सवने । पुरुऽस्तुत । पुरोळाशम् । आऽहुतम् ।
ममहस्व । नः । ऋभुऽमन्तम् । वाजऽवन्तम् । त्वा । कवे ।
प्रयस्वन्तः । उप । शिक्षेम । धीतिऽभिः ॥ ६ ॥

हे पुरुष्टुत पुरुभिर्बहुभिः स्तोतृभिः स्तुत हे इन्द्र तृतीये सवने नोऽस्मदीया धाना आहुताः भक्षयन् आहुतं पुरोडाशं च मामहस्व भक्षणेन महय हे कवे इन्द्र प्रयस्वन्तः संभृतहविष्कान्नाः वयम् ऋभुमन्तम् ऋभवो येके च न देवास्तद्वन्तं वाजवन्तं वाजो नाम ऋभुषु कनिष्ठः तद्वन्तं त्वां धीतिभिः

स्तुतिभिरुपशिक्षेम समीपेपरिचरेम ॥ आहुतं जुहोतेःकर्मणिक्तः गतिरनन्तरइतिगतेःस्वरः । मामहस्व महपूजायाम्इत्यस्ययङ्लुगन्तस्यलोटि व्यत्ययेनात्मनेपदं शपोलुगभावश्छान्दसः । शिक्षेम शिक्षतेराशीर्लिङि लिङ्याशिष्यङित्यङ्प्रत्ययः निपातः । धीतिभिः क्तिन्नित्स्वरः स्थितात्वान्तानामित्यन्तोदात्तत्वम् ॥ ६ ॥

६. हे बहुजनस्तुत इन्द्र, तृतीय सवन में हमारे भुने जौ का और हुत पुरोडाश का भक्षण करो। हे कवि, तुम ऋभुवाले तथा धनयुक्त पुत्रवाले हो। हम लोग हवि लेकर स्तुतियों-द्वारा तुम्हारी परिचर्या करते हैं।

पूषण्वतेतेचकृमाकरम्भंहरिवतेहर्यश्वायधानाः ॥
अपूपमंद्धिसगणोमरुद्भिःसोमंपिबवृत्रहाशूरविद्वान् ॥ ७ ॥

पूषण्ऽवते । ते । चकृम । करम्भम् । हरिऽवते । हरिऽअश्वाय । धानाः । अपूपम् । अद्धि । सऽगणः । मरुत्ऽभिः । सोमम् । पिब । वृत्रऽहा । शूर । विद्वान् ॥ ७ ॥

हेइन्द्र पूषण्वते पूषानामकोभिदेवःअवन्तकः तद्वते तेतुभ्यं करम्भं दधिमिश्रं सक्तुंभक्षणार्थंकुर्मः तथाचश्रुतिः—पूषाप्रपिष्टभागोदन्तकोहीति । हरिवते हरिनामकावश्वौ तद्वते हर्यश्वाय हरितवर्णाश्वयुक्तायेन्द्राय तुभ्यं धानाःभक्षणार्थंकुर्मः तथाचमन्त्रवर्णः—प्रसेतामश्वाविमुचेहशोणादिवेदिवेसदृशीरद्धिधानाइति । मरुद्भिःसगणस्त्वम् अपूपं पुरोडाशम् अद्धि भक्षय हेशूर अशहाय हेइन्द्र वृत्रहावृत्रस्यहन्ता विद्वान्सर्वंजानानस्त्वंसोमंपिब ॥ पूषण्वते पूषशब्दस्यमतुप् अनोनुडितिनुडागमः रषाभ्यामितिणत्वम् । चकृम करोतेश्छान्दसेवर्तमानेलिटि क्रादित्वादिड्भावः निपातः । हरिवते छन्दसीरइतिमतुपोवत्वम् ॥ ७ ॥

७. हे इन्द्र, तुम पूषा नामक देववाले हो। तुम्हारे लिए हम दही मिला सत्तू बनाते हैं। तुम हरि नामक घोड़ेवाले हो। तुम्हारे खाने के लिए हम भुना जौ तैयार करते हैं। मरुतों के साथ तुम पुरोडाश का भक्षण करो। हे शूर, तुम वृत्रहन्ता हो, विद्वान् हो, सोम पियो।

प्रतिधानाभरततूयमस्मैपुरोळाशंवीरतमायनृणाम् ।
दिवेदिवेसदृशीरिन्द्रतुभ्यंवर्धन्तुत्वासोमपेयायधृष्णो ॥ ८ ॥ १८ ॥

प्रति । धानाः । भरत । तूयम् । अस्मै । पुरोळाशम् । वीरऽतमाय । नृणाम् । दिवेऽदिवे । सऽदृशीः । इन्द्र । तुभ्यम् । वर्धन्तु । त्वा । सोमऽपेयाय । धृष्णो इति ॥ ८ ॥ १८ ॥

---

१ ऋ० सं० १. ३. १५.।

यजमानोऽध्वर्य्वादीन्प्रतिब्रूते—हे अध्वर्य्वादयः अस्माइन्द्रायधानाः तूयंक्षिप्रंप्रतिभरत संपादयत नृणांवीरतमायास्माइन्द्रायपुरोडाशंचसंपादयत अथप्रत्यक्षकृतः हेवृष्णो शत्रूणामभिभवनशील हेइन्द्र सदृशीरेकविधाः स्तुतयः तुभ्यंत्वदर्थं दिवेदिवे प्रतिदिवसमस्माभिःक्रियन्ते ताःस्तुतयः सोमपेयाय सोमपानार्थंत्वांवर्धन्तु उत्साहेनप्रवृद्धंकुर्वन्तु ॥ सदृशीः समानान्यथोः दृशेतिकञ्प्रत्ययः टिड्ढाणञित्यादिनाङीप् दृग्दृशवतुष्विति समानस्यसभावः ॥ ८ ॥

८. अध्वर्युओ, इन्द्र के लिए शीघ्र भुना जौ दो। यह नेतृतम हैं। इन्हें पुरोडाश प्रदान करो। हे शत्रुओं के अभिभवकर्ता इन्द्र, तुम्हें लक्ष्य कर प्रतिदिन की गई स्तुति तुम्हें सोमपान के लिए उत्साहित करे।

इन्द्रापर्वतेतिचतुर्विंशत्यृचंपञ्चदशंसूक्तम् अत्रेयमनुक्रमणिका—इन्द्रापर्वताचतुर्विंशतिराद्यैन्द्रापार्वती पञ्चदश्यादिद्वित्राचेससपर्येचत्वारोरथाङ्गस्तुतयोन्त्याअभिशापार्थास्ताबसिष्ठद्वेषिण्योनवसिष्ठाःशृण्वन्ति दशमीषोळश्यौजगत्यौ त्रयोदशीगायत्रीद्वादशीविंशीद्वाविंश्योनुष्टुभोऽष्टादशीबृहतीति । विश्वामित्रऋषिः दशमीषोळशीच द्वे जगत्यौ त्रयोदशीगायत्री द्वादशीविंशीद्वाविंश्यस्तिस्रोऽनुष्टुभः अष्टादशीबृहती शिष्टास्त्रिष्टुभः आद्याइन्द्रापर्वतदेवताका पञ्चदशीषोळश्यौवाग्देवत्ये तदुत्तराश्चतस्रोरथाङ्गदेवताकाः शिष्टाऐन्द्र्यः ।

इन्द्रा॑पर्वता बृह॒ता रथे॑न वा॒मीरिष॒ आ व॑हतं सु॒वीराः॑ ।
वी॒तं ह॒व्यान्य॑ध्व॒रेषु॑ देवा॒ वर्धे॑थां गी॒र्भिरिळ॑या॒ मद॑न्ता ॥ १ ॥

इन्द्रा॑पर्वता । बृ॒ह॒ता । रथे॑न । वा॒मीः । इषः॑ । आ । व॒ह॒त॒म् ।
सु॒ऽवीराः॑ । वी॒तम् । ह॒व्यानि॑ । अ॒ध्व॒रेषु॑ । दे॒वा॒ । वर्धे॑थाम् ।
गी॒ःऽभिः । इळ॑या । मद॑न्ता ॥ १ ॥

इन्द्रापर्वता इन्द्रश्चपर्वतश्च हेइन्द्रापर्वतौ बृहतारथेनागत्य वामीः वननीयाः सुवीराः शोभनपुत्रोपेताः इषोन्नानि आवहतम् अस्मदर्थंधारयतं प्रयच्छतमित्यर्थः किंच हेदेवौ द्योतमानौ अध्वरेष्वस्मत्संबन्धिषुयज्ञेषु हव्यानि हवनयोग्यानिपुरोडाशादीनिहवींषि वीतं भक्षयतं तथा इळया अस्माभिर्दत्तेनहविषा मदन्ता हृष्यन्तौ युवां गीर्भिःस्तुतिलक्षणाभिरस्मदीयाभिर्वाग्भिर्वर्धेथां समृद्धौभवतम् ॥ इन्द्रापर्वता आमन्त्रितस्यपादादित्वात्षाष्ठिकमाद्युदात्तत्वम् । सुवीराः बहुव्रीहौ वीरवीर्यौचेत्युत्तरपदाद्युदात्तत्वम् । वीतं वीकान्त्यादिष्वित्यस्यलोटि अदादित्वाच्छपोलुक् प्रत्ययस्वरः । वर्धेथां वृधुवृद्धावित्यस्यलोटि आथामोङ्सार्वधातुकस्वरेणधातुस्वरः ॥ १ ॥

१. हे इन्द्र और पर्वत, महान् रथ पर मनोहर और सुन्दर पुत्र से युक्त अन्न लाओ। हे द्योतमान, हमारे यज्ञ में तुम दोनों हव्य का भक्षण करो। हव्य-द्वारा हृष्ट होकर हमारे स्तुतिलक्षण वचनों से वर्द्धित होओ।

अहर्गणेष्वन्त्यवर्जितेष्वहःसु होतुर्यजमानस्यातिष्ठासुकमित्यनुवाक्या सूत्रितञ्च—तिष्ठासुकं मघवन्मापरागामयंयज्ञोदेवयाअयंमियेधइति ।

अथद्वितीया—

तिष्ठासुकंमघवन्मापरागाःसोमस्यनुत्वासुषुतस्ययक्षि ।
पितुर्नपुत्रःसिचमारभेतइन्द्रस्वादिष्ठयागिराशचीवः ॥ २ ॥

तिष्ठ । सु । कम् । मघऽवन् । मा । परा । गाः । सोमस्य ।
नु । त्वा । सुऽसुतस्य । यक्षि । पितुः । न । पुत्रः । सिचम् ।
आ । रभे । ते । इन्द्र । स्वादिष्ठया । गिरा । शचीऽवः ॥ २ ॥

हेमघवन् धनवन्निन्द्र कं सुखेनास्मिन्यज्ञेसुतिष्ठ सुष्ठुकिंचित्कालमत्रातिष्ठ मापरागाः अस्मदीयाद्यज्ञान्मागच्छ तत्रकारणमाह—सुषुतस्य सुष्ठु अभिषुतेनसोमस्य सोमेन नु क्षिप्रं त्वा त्वां यक्षि यजे हेशचीवः शक्तिमन्निन्द्र ते तव सिचं वस्त्रान्तंस्वादिष्ठया स्वादुतरयास्तुतिलक्षणयागिरा आरभे आलभे गृह्णामीत्यर्थः तत्रदृष्टान्तः—पितुर्न यथा पुत्रः मधुरयावाचापितुर्वस्त्रस्यैकदेशंगृह्णातितद्वत् ॥ सुकमितिनिपातद्वयम् प्रथमस्यनिपाताआद्युदात्ताइत्याद्युदात्तत्वम् द्वितीयस्यपादयोनुदात्ताइत्यनुदात्तत्वम् । सोमस्ययक्षि यजदेवपूजासङ्गतिकरणदानेषुस्वरितेत्त्वात् इत्यात्मनेपदं तस्यलुङि सिचएकाचइतीट्प्रतिषेधः व्रश्चादिनाषत्वं षढोःकःसीतिकत्वं सिचःसकारस्यषत्वं निघातः । रभे डुलभष्प्राप्तौ छन्दस्युत्तमइटिरूपं रलयोरभेदः निघातः । स्वादिष्ठया स्वादुशब्दादिष्ठनिरूपं नित्स्वरादाद्युदात्तः ॥ २ ॥

२. हे मघवन्, इस यज्ञ में कुछ काल तक तुम सुखपूर्वक ठहरो । हमारे यज्ञ से चले मत जाओ । क्योंकि, सुन्दर अभिषुत सोम-द्वारा हम शीघ्र ही तुम्हारा यजन करते हैं । हे शक्तिसम्पन्न इन्द्र, मधुर वचनों-द्वारा पुत्र जैसे पिता के वस्त्रप्रान्त का ग्रहण करता है, वैसे ही हम सुमधुर स्तुतियों-द्वारा तुम्हारे वस्त्रप्रान्त को गृहीत करते हैं ।

शंसावाध्वर्योप्रतिमेगृणीहीन्द्रायवाहःकृणवावजुष्टम् ।
एदंबर्हिर्यजमानस्यसीदाथाचभूदुक्थमिन्द्रायशस्तम् ॥ ३ ॥

शंसाव । अध्वर्यो इति । प्रति । मे । गृणीहि । इन्द्राय । वाहः ।
कृणवाव । जुष्टम् । आ । इदम् । बर्हिः । यजमानस्य ।
सीद । अथ । च । भूत । उक्थम् । इन्द्राय । शस्तम् ॥ ३ ॥

शंसिष्यन्होताध्वर्युंप्रतिब्रूते–हेअध्वर्यो आवांशंसाव होतस्त्वमेवशंससि कथमहंशंसानि अतआह प्रतिमेगृणीहीति त्वंमेप्रतिगृणीहि ओथामोदैवेत्यादिकोहोतुरुत्साहजननःप्रतिगरस्तंकुरु तथेन्द्रायजुष्टंप्रीतियुक्तंवाहःस्तोत्रंकृणवाव करवाव त्वंयजमानस्यइदंबर्हिः बर्हिष्यास्तीर्ण उपविश अथचानन्तरम् इन्द्रायेन्द्रार्थमावाभ्यांक्रियमाणमुक्थंशस्त्रं शस्तंप्रशस्तमभूत् भवतु ॥ शंसाव शंसुस्तुतावित्यस्यलेट्युत्तमद्विवचनेरूपम् आडुत्तमस्येत्याडागमः उत्तमस्य पिच्वाद्धातुस्वरः । मे अनुप्रतिगृणश्चेतिसंप्रदानसंज्ञा । जुष्टं नित्यंमन्त्रेइत्याद्युदात्तत्वम् ॥ ३ ॥

३. हे अध्वर्युओ, हम दोनों स्तुति करेंगे। तुम हमें उत्तर दो। हम दोनों इन्द्र के उद्देश्य से प्रीति-युक्त स्तुति करते हैं। तुम यजमान के कुश के ऊपर उपवेशन करो। इन्द्र के लिए, हम दोनों के द्वारा किया गया उक्थ (शस्त्र) प्रशस्त हो।

जा॒येदस्तं॑मघवन्त्सेदु॒योनि॒स्तदित्त्वा॑यु॒क्ता॒हर॑यो॒वह॑न्तु ।
य॒दाक॒दाच॑सु॒नवा॑म॒सोम॑म॒ग्निष्ट्वा॑दू॒तोध॑न्वा॒त्यच्छ॑ ॥ ४ ॥

जा॒या । इत् । अस्त॑म् । म॒घ॒ऽव॒न् । सा । इत् । ऊँ॒ इति॑ । योनिः॑ । तत् । इत् । त्वा॒ । यु॒क्ताः । हर॑यः । व॒ह॒न्तु॒ । य॒दा । क॒दा । च॒ । सु॒नवा॑म । सोम॑म् । अ॒ग्निः । त्वा॒ । दू॒तः । ध॒न्वा॒ति॒ । अच्छ॑ ॥ ४ ॥

हेमघवन् धनवन्निन्द्र अस्तम् अस्यन्तेक्षिप्यन्तेपदार्थाअत्रेत्यस्तंगृहं जायेत् जायैवगृहं भवति नगृहंगृहमित्याहुर्गृहिणीगृहमुच्यतइतिस्मृतेः तथा सेत् साजायैव योनिः पुरुषस्य मिश्रणस्थानम् उःप्रसिद्धयर्थः तस्माच्चदित् तत्रगृहेएवयुक्तारथेयोजिताहरयोऽश्वास्त्वात्वां वहन्तु वर्यंतु यदाकदाच त्वदर्थंसोमंसुनवामाभिषुतंकरवाम तदास्माभिःप्रहितोदूतोऽग्निः त्वात्वामच्छाभिमुख्येनधन्वाति गच्छेत् ॥ अस्तम् असुक्षेपणे असिहसिमृग्रिण्वामीत्यादिनातन्प्रत्ययः नित्स्वादाद्युदात्तः । सुनवाम षुञ्भभिषवेइत्यस्यलोटिरूपं यद्वृत्तयोगादनिघातः । त्वा युष्मत्तत्ततक्षुष्वन्तःपादमितिसंहितायांषत्वम् । धन्वाति धविर्गत्यर्थः लेट्याडागमेरूपं छिघातः ॥ ४ ॥

४. हे मघवन्, स्त्री ही गृह होती है और स्त्री ही पुरुषों का मिश्रण-स्थान है। रथ में युक्त होकर अश्व तुम्हें उस गृह में ले जायें। हम जब कभी तुम्हारे लिए सोम को अभिषुत करेंगे, तब हमारे-द्वारा प्रहित, दूतस्वरूप अग्नि तुम्हारे निकट गमन करें।

अहर्गणेऽन्त्यमभितिष्ठतःसुहारियोजनस्यैकल्पिकीपरायाहीत्यनुवाक्या । परायाहिमघवन्नाचयाहीतिवानुवाक्येतिसूत्रितम् ।

अथपञ्चमी—

परांयाहिमघवन्नाचयाहीन्द्रंभ्रातरुभयत्रांतेअर्थम् ।
यत्रारथस्यबृहतोनिधानंविमोचनंवाजिनोरासभस्य ॥५॥१९॥

परा । याहि । मघवन् । आ । च । याहि । इन्द्र । भ्रातः । उभयत्र । ते । अर्थम् । यत्र । रथस्य । बृहतः । निधानम् । विमोचनम् । वाजिनः । रासभस्य ॥ ५ ॥ १९ ॥

हेमघवन् धनवन्निन्द्र त्वंपरायाहि अस्माद्देवयजनात्पराङ्मुखोगृहंप्रतिगच्छच अथवा देवयजनंप्रत्यायाहि हेभ्रातः पोषक उभयत्रापितेतव अर्थम् अर्यते प्राप्यतइत्यर्थःप्रयोजनम् अस्तितत्रजाया अत्रसोमः प्रयोजनान्तरमाह—यत्रगृहंप्रतिगमनेबृहतोमहतोरथस्योपरिनिधानमवस्थानंप्रयोजनम् अत्रास्थितौरासभस्यहेषारवंकुर्वतोवाजिनोऽश्वस्यरथाद्विमोचनंप्रयोजनम् ॥ अर्थम् ऋगतौ उषिकुषिगार्तिभ्यस्थन्नितिथन् नित्स्वरः । निधानं दधातेर्भावेल्युट् लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् । रासभस्य रासृशब्दे रासिवल्लिभ्यांचेतिकर्तर्यभच्प्रत्ययःआगमादित्वादाद्युदात्तः ॥ ५ ॥

५. हे मघवन्, तुम स्वकीय गृहाभिमुख होओ अथवा हमारे इस यज्ञ में आगमन करो। हे पोषक, दोनों स्थानों में तुम्हारा प्रयोजन है; क्योंकि वहाँ गृह में स्त्री है और यहाँ सोम है। गृह-गमन के लिए तुम महान् रथ के ऊपर अधिष्ठान करो अथवा हेषारव करनेवाले घोड़ों को रथ से विमुक्त करो।

॥ इतितृतीयस्यतृतीयेएकोनविंशोवर्गः ॥ १९ ॥

अग्न्येन्द्रःसुहारियोजनस्यअपाःसोममित्यनुवाक्या सूत्रितञ्च—हारियोजनेनोपाःसोममस्तमिन्द्रप्रयाहीति ।

अपाःसोममस्तमिन्द्रप्रयाहिकल्याणीर्जायासुरणंगृहेते ।
यत्रारथस्यबृहतोनिधानंविमोचनंवाजिनोदक्षिणावत् ॥ ६ ॥

अपाः । सोमम् । अस्तम् । इन्द्र । प्र । याहि । कल्याणीः । जाया । सुरणम् । गृहे । ते । यत्र । रथस्य । बृहतः । निधानम् । विमोचनम् । वाजिनः । दक्षिणाऽवत् ॥ ६ ॥

हेइन्द्र सोममपाः अत्रैवस्थित्वासोमंपिब पीत्वा अस्तंगृहंप्रयाहि प्रकर्षेणगच्छ ते तवगृहेकल्याणीः मङ्गलकारिणी जायापत्नीविद्यते सुरणंशोभनरमणीतादिध्वनिश्चास्ति यत्र

सुरणं सुरमणीयंयथाभवतितथागृहेजायातिष्ठति यस्त्वेत्यादिगतं दक्षिणावत् अत्रस्थितौसत्यां रथेयोजितानांवाजिनांविमोचनं खादनपानादिनादक्षिणावत्त्वयोजनवद्भवति विमुक्तेभ्योवाजिभ्योखादनंपानं चोपहरन्ति ॥ अपाः पापाने लुकि गातिस्थेतिसिचोलुक् अडागमस्वरः। कल्याणीः कल्याणमस्यामस्तीतिमत्वर्थेछन्दसीवनिपाविति ईप्रत्ययः। सुरणं रणशब्दार्थः अस्मादकृच्छ्रार्थेखल् लित्स्वरः प्रत्ययस्यपित्त्वादनुदात्तत्वेधातुस्वरः समासेकृदुत्तरपदस्वरः ॥ ६ ॥

६. हे इन्द्र, यहीं ठहरकर सोम-पान करो। सोम पीकर घर जाना। तुम्हारे रमणीय गृह में मङ्गलकारिणी जाया और सुन्दर ध्वनि है। गृह-गमन के लिए तुम महान् रथ के ऊपर अवस्थान करो अथवा अश्व को रथ से विमुक्त करो—इसी यज्ञ में ठहरो।

इमेभोजाअङ्गिरसोविरूपादिवस्पुत्रासोअसुरस्यवीराः।
विश्वामित्रायददतोमघानिसहस्रसावेप्रतिरन्तआयुः ॥ ७ ॥

इमे। भोजाः। अङ्गिरसः। विऽरूपाः। दिवः। पुत्रासः। असुरस्य। वीराः। विश्वामित्राय। ददतः। मघानि। सहस्रऽसावे। प्र। तिरन्ते। आयुः ॥ ७ ॥

हेइन्द्र इमेयागंकुर्वाणाः भोजाः सौदासाः क्षत्रियाः तेषांयाजकाविरूपानानारूपामेधातिथिप्रभृतयोङ्गिरसश्च दिवोसुरस्यदेवेभ्योपिबलवतोरुद्रस्यपुत्रासःपुत्रावीराबलवन्तोमरुतःते सर्वे विश्वामित्रायमह्यंसहस्रसावे सहस्रंसूयतेऽत्रेतिसावोश्वमेधः तस्मिन्नश्वमेधे मघानिमहनीयानिधनानि ददतःप्रयच्छन्तःसन्तः आयुर्जीवनमश्वंवाप्रतिरन्ते प्रकर्षेणवर्धयन्ति ॥ दिवस्पुत्रासइतिसंहितायांषष्ठ्याःपतिपुत्रेतिविसर्जनीयस्यसत्वम्। ददतः डुदाञ्दानेइत्यस्यशतरिरूपम् अभ्यस्तानामादिरित्याद्युदात्तत्वम्। तिरन्ते तरतेर्व्यत्ययेनशः ॥ ७ ॥

७. हे इन्द्र, यज्ञ करनेवाले ये भोज सुदास राजा के याजक हैं, नाना रूप हैं अर्थात् अङ्गिरा मेधातिथि आदि हैं। देवों से भी बलवान् रुद्र के पुत्र बलवान् मरुत् मुझ विश्वामित्र के लिए, अश्वमेध में महनीय धन देते हुए, अन्न को भली भाँति वर्द्धित करें।

रूपंरूपंमघवाबोभवीतिमायाःकृण्वानस्तन्वंपरिस्वाम्।
त्रिर्यद्दिवःपरिमुहूर्तमागात्स्वैर्मन्त्रैरनृतुपाऋतावा ॥ ८ ॥

रूपम्ऽरूपम्। मघऽवा। बोभवीति। मायाः। कृण्वानः। तन्वम्। परि। स्वाम्। त्रिः। यत्। दिवः। परि। मुहूर्तम्। आ। अगात्। स्वैः। मन्त्रैः। अनृतुऽपाः। ऋतऽवा ॥ ८ ॥

मघवाघनवानिन्द्रः रूपंरूपं यद्यद्रूपंकामयतेतत्तद्रूपंबोभवीति तत्तद्रूपात्मकोभवति तत्रकारणमुच्यते——मायाः अनेकरूपग्रहणसामर्थ्योपेताःकृण्वानःकुर्वाणः स्वांतन्वंस्वकीयांतनूं परि पञ्चम्यर्थे स्वस्माच्छरीरान्नानाविधानिशरीराणिनिर्मिमीते यद्वा स्वांतनूं नानाविधरूपोपेतांकरोति तथाचमन्त्रवर्णः-इन्द्रोमायाभिःपुरुरूपईयतइति । यद्यस्मात्स्वैःस्वैःस्वकीयैःस्तुतिलक्षणैर्वाक्यैराहूतः अनृतुपाः नकेवलमृतुष्वेवपिबति किन्तु अनृतुष्वपिबहुशःसोमंपिबतीत्यर्थः ऋतावा सत्यवान्तादृशइन्द्रः दिवः स्वर्गलोकात्परिमुहूर्तमेकस्मिन्नेवमुहूर्ते नानादेशावर्तिषुयज्ञेषु तत्रापि त्रिः त्रिषुसवनेष्वागात् आगच्छति ॥ बोभवीति भवतेर्यङ्लुकि तिपि यङोवेतीडागमः निपातः । अगात् इणोलुङिरूपं यद्वृत्तयोगादनिघातः ॥ ८ ॥

८. इन्द्र जिस रूप की कामना करते हैं, उस रूप के हो जाते हैं। मायावी इन्द्र अपने शरीर को नानाविध बनाते हैं। वे ऋतवान् होकर भी अनृतु में सोमपान करते हैं। वे स्वकीय स्तुति-द्वारा आहूत होकर, स्वर्गलोक से मुहूर्त-मध्य में तीनों सवनों में गमन करते हैं।

महाँऋषिर्देवजादेवजूतोस्तभ्नात्सिन्धुमर्णवंनृचक्षाः ।
विश्वामित्रोयदवहत्सुदासमप्रियायतकुशिकेभिरिन्द्रः ॥ ९ ॥

महान् । ऋषिः । देवऽजाः । देवऽजूतः । अस्तभ्नात् । सिन्धुम् । अर्णवम् । नृऽचक्षाः । विश्वाऽमित्रः । यत् । अवहत् । सुऽदासम् । अप्रियायत । कुशिकेभिः । इन्द्रः ॥ ९ ॥

महान् तपसा अतिशयितसामर्थ्यवान् ऋषिरतीन्द्रियार्थद्रष्टा देवजाः द्योतमानानां तेजसांजनयिता देवजूतः तैस्तेजोभिराकृष्टः नृचक्षाः नृणां कर्मनेतृणामध्वर्य्वादीनामुपद्रष्टा सविश्वामित्रः अर्णवमुदकवन्तंसिन्धुंविपाट्छुतुद्र्योः संभेदमस्तभ्नात् निरुद्धवेगमकरोत् किञ्च सविश्वामित्रःसुदासंपैजवनंराजानंयथदा अवहत् अयाजयत् तदानीमिन्द्रःकुशिकेभिः कुशिकगोत्रोत्पन्नैर्ऋषिभिःसहाप्रियायत प्रियइवाचरत् ॥ अवहत वहप्रापणेइत्यस्यलङिरूपं यद्योगादनिघातः । अप्रियायत प्रियइवाचरतीत्यर्थे कर्तुःक्यङ्सलोपश्चेतिक्यङ् तदन्ताल्लङिरूपं पादादित्वादनिघातः ॥ ९ ॥

९. अतिशय सामर्थ्यवान्, अतीन्द्रियार्थद्रष्टा द्योतमान तेजों के जनयिता तेजों-द्वारा आकृष्ट और अध्वर्यु आदि के उपदेष्टा विश्वामित्र ने जलवान् सिन्धु को निरुद्धवेग किया। पिजवन के पुत्र सुदास राजा को जब विश्वामित्र ने यज्ञ कराया था, तब इन्द्र ने कुशिकगोत्रोत्पन्न ऋषियों के साथ प्रिय व्यवहार किया था।

हंसाइवकृणुथश्लोकमद्रिभिर्मदन्तोगीर्भिरध्वरेसुतेसचा ।
देवेभिर्विप्राऋषयोनृचक्षसोविपिबध्वंकुशिकाःसोम्यंमधु॥१०॥२०॥

१ ऋ० सं० ४. ७. २३. ॥

3/53/10

हंसाःइव । कृणुथ । श्लोकम् । अद्रिऽभिः । मदन्तः । गीःऽभिः । अध्वरे । सुते । सर्चा । देवेभिः । विप्राः । ऋषयः । नृऽचक्षसः । वि । पिबध्वम् । कुशिकाः । सोम्यम् । मधु ॥ १० ॥ २० ॥

हेविप्राः मेधाविनोहेऋषयोऽतीन्द्रियार्थस्यद्रष्टारोहेनृचक्षसोनृणांकर्मनेतृणांविशेषेणद्रष्टारः हेकुशिकाः कुशिकगोत्रोत्पन्नाः हेपुत्राः अध्वरेयज्ञेअद्रिभिर्ग्रावभिःसोमेसुते अभिषुतेसोमेसतिगीर्भिर्मदन्तःस्तुतिभिर्देवान्मादयन्तोयूयं श्लोकं श्लोक्यतेशस्यतेऽनेनेतिश्लोकःशब्दं कृणुथ सम्यगुच्चारयत तत्रदृष्टान्तः—हंसाइव यथाहंसाःसम्यक्शब्दंकुर्वन्तितद्वत् किंच देवेभिःसचा यष्टव्यदेवैःसहितायूयं सोम्यंसोममयं मधुमधुकररसं विपिबध्वं परस्परव्यतिहारेणपिबत ॥ श्लोकं श्लोकशब्दे करणेघञ् नित्वादाद्युदात्तः । मदन्तः मदीहर्षेहत्यस्यान्तर्भावितण्यर्थस्यव्यत्ययेनशप् । पिबध्वं पापाने कर्तरिकर्मव्यतिहारेइत्यात्मनेपदम् । सोम्यं सोमशब्दात् मयेचेतियप्रत्ययः ॥ १० ॥

१०. हे मेधावियो, हे अतीन्द्रियार्थद्रष्टाओ, हे नेतृगण के उपदेशको, हे कुशिक-गोत्रोत्पन्नो, हे पुत्रो, यज्ञ में पत्थरों-द्वारा सोम के अभिषुत होने पर तुम लोग स्तुतियों-द्वारा देवताओं को प्रसन्न करते हुए श्लोक (मन्त्र) का भली भाँति उच्चारण करो, जैसे हंस शब्दों का भली भाँति उच्चारण करते हैं। देवगण के साथ तुम लोग मधुर सोम रस का पान करो।

॥ इतितृतीयस्यतृतीयेविंशोवर्गः ॥ २० ॥

उपप्रेतकुशिकाश्चेतयध्वमश्वंरायेप्रमुंचतासुदासः ।
राजावृत्रंजंघनत्प्रागपागुदगथायजातेवरआपृथिव्याः ॥ ११ ॥

उप । प्र । इत । कुशिकाः । चेतयध्वम् । अश्वम् । राये । प्र । मुञ्चत । सुऽदासः । राजा । वृत्रम् । जङ्घनत् । प्राक् । अपाक् । उदक् । अथ । यजाते । वरे । आ । पृथिव्याः ॥ ११ ॥

हेकुशिकाः कुशिकगोत्रोत्पन्नाः हेपुत्राः उपप्रेत अश्वस्यसमीपेप्रकर्षेणगच्छत तत्रगत्वाचेतयध्वं सावधानाभवत यद्वा अश्वरक्षिणःसावधानान्कुरुत सुदासः पैजवनस्यराज्ञोश्वं राये तस्यदिग्विजयेनधनलाभायप्रमुञ्चत राजादेवानांस्वामीन्द्रः वृत्रं कर्मविघ्नकारिणमसुरंप्रागपागुदक् पूर्वपश्चिमोत्तरेषुदेशेषुजङ्घनत् भृशंजघान तस्मादश्वंविमुञ्चतेतिभावः अथानन्तरम् पृथिव्यापरेउत्तमेदेवयजनदेशेआयजाते समन्तात्सराजायजेत ॥ चेतयध्वं चितीसंज्ञानेइत्यस्यण्यन्तस्यलोटिरूपम् आमन्त्रितस्याविद्यमानत्वेन तिङउत्तरत्वाभावान्निघातः । जङ्घनत् हनहिंसागत्योरित्यस्य यङ्लुकिनुगतोनुनासिकान्तस्येत्यभ्यासस्यनुगागमः तदन्ताल्लेट्यडागमः प्राक्प्रभृतेः

किनिरूपम् अनिगन्तोञ्चतौवप्रत्ययेइतीगतेःस्वरः । यनाते यमेर्ठ्यायाडागमः निपातः । वरे वृ-ञ्वरणेइत्यस्माद्वहवृहानेश्विगमश्चेत्यप्रत्ययः तस्यपित्त्वादनुदात्तत्वेधातुस्वरः ॥ ११ ॥

११. हे कुशिकगोत्रोत्पन्नो, हे पुत्रो, तुम लोग अश्व के समीप जाओ, अश्व को उत्तेजित करो। धन के लिए सुदास के अश्व को छोड़ दो। राजा इन्द्र ने विघ्नकारक वृत्र का पूर्व, पश्चिम और उत्तर देश में वध किया है। अतएव सुदास राजा पृथिवी के उत्तम स्थान में यज्ञ करें।

य इ॒मे रोद॑सी उ॒भे अ॒हमिन्द्र॒मतु॑ष्टवम् ।
वि॒श्वामि॑त्रस्य रक्षति॒ ब्रह्मे॒दं भार॑तं॒ जन॑म् ॥ १२ ॥

यः । इ॒मे इति॑ । रोद॑सी॒ इति॑ । उ॒भे इति॑ । अ॒हम् । इन्द्र॑म् । अतु॑स्तवम् ।
वि॒श्वामि॑त्रस्य । र॒क्ष॒ति॒ । ब्रह्म॑ । इ॒दम् । भार॑तम् । जन॑म् ॥ १२ ॥

हेकुशिकाः कुशिकपुत्राःयोहंविश्वामित्रः उभेइमेरोदसीद्यावापृथिव्यौ इन्द्रमतुष्टवं स्ताव-यामि द्यावापृथिवीभ्यामिन्द्रस्यस्तोत्रंमयाकारितमित्यर्थः यद्वा उभयोरोदस्योरन्तरवस्थितमि-न्द्रंस्तौमि स्तोत्रंकुर्वाणस्यविश्वामित्रस्यममेदमिन्द्रविषयंब्रह्मस्तोत्रंभारतं भरतकुलंजनंरक्षतिपा-लयति ॥ अतुष्टवं ष्टुञ्स्तुतौ ण्यन्तस्यलुङिचङिरूपं यद्वृत्तयोगादनिघातः । भारतं भरतशब्द उत्सादिः ञित्त्वादाद्युदात्तः ॥ १२ ॥

१२. हे कुशिक पुत्रो, हम (विश्वामित्र) ने द्यावा-पृथिवी-द्वारा इन्द्र का स्तव किया है। स्तोता विश्वामित्र का यह इन्द्र-विषयक स्तोत्र भरतकुल के मनुष्य की रक्षा करे।

वि॒श्वामि॑त्रा अरासत॒ ब्रह्मेन्द्रा॑य व॒ज्रिणे॑ । कर॒दिन्नः॑ सु॒राध॑सः ॥ १३ ॥

वि॒श्वामि॑त्राः । अ॒रा॒स॒त॒ । ब्रह्म॑ । इन्द्रा॑य । व॒ज्रिणे॑ ।
कर॑त् । इत् । नः॒ । सु॒ऽराध॑सः ॥ १३ ॥

विश्वामित्राः वज्रिणे वज्रहस्तायेन्द्राय ब्रह्मस्तोत्रमरासत अकुर्वत् स्तुतःसइन्द्रः नो-स्मान्सुराधसः शोभनधनोपेतान्करदित् करोत्येव ॥ अरासत रासृशब्दे इत्यस्यलङि बहुलंछन्दसीतिशपोलुक् निघातः । करत् करोतेर्लेटि लेटोऽडाटावित्यडागमः इतश्चलोपःपरस्मैपदेष्वितीकारलोपः । सुराधसः आद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम् ॥ १३ ॥

१३. विश्वामित्र-वंशीयों ने वज्रधर इन्द्र के लिए स्तोत्र किया है। इन्द्र हम लोगों को शोभन धन से युक्त करें।

किं ते॑ कृण्वन्ति॒ कीक॑टेषु॒ गावो॒ नाशिरं॑ दु॒ह्रे न त॑पन्ति घ॒र्मम् ।
आ नो॑ भर॒ प्रम॑गन्दस्य॒ वेदो॑ नैचाशा॒खं म॑घवन्रन्धया नः ॥ १४ ॥

किम् । ते । कृण्वन्ति । कीकटेषु । गावः । न । आऽशिरम् ।
दुह्रे । न । तपन्ति । घर्मम् । आ । नः । भर । प्रऽमगन्दस्य ।
वेदः । नैचाऽशाखम् । मघऽवन् । रन्धय । नः ॥ १४ ॥

हेइन्द्र कीकटेषु अनार्यनिवासेषुजनपदेषु यद्वा कृताभिर्यागदानहोमलक्षणाभिःक्रियाभिः किंफलिष्यतीत्यश्रद्दधानाः प्रत्युत पिबतखादतायमेवलोकोनपरइतिवदन्तोनास्तिकाः कीकटास्तेषुगावस्तेतवकिंकृण्वन्ति किंकुर्वन्ति नकिंचित्तवोपयोगंकुर्वन्तीत्यर्थः अनुपयोगंदर्शयति—आशिरंसोममिश्रणयोग्यंपयः नदुह्रेनदुहन्ति किंच घर्मंप्रवर्ग्याख्यकर्मोपयुक्तंमहावीरपात्रंस्वपयःप्रदानद्वारेणनतपन्ति नदीपयन्ति एतेनयागाय्यायथर्ममपिनोपयुज्यन्तइत्यपिसूचितंभवति एवंकर्मणिवैदिकेकर्मणिअनुपयुक्तास्ताःगाःनोस्मभ्यमाभरआहर नकेवलंताएव किंतर्हि प्रमगन्दस्यद्वैगुण्यादिलक्षणपरिमाणंगतोधनंमामेवगमिष्यतीतिबुद्ध्यापरेभ्योददातीतिमगन्दोवार्धुषिकःतस्यापत्यंपुत्रादिःप्रमगन्दः प्रस्कण्वादिवदत्यार्थःप्रशब्देनद्योत्यते तस्यात्यन्तकुसीदिकुलस्यवेदोधनमाहर किंच हेमघवन्धनवन्निन्द्र नैचाशाखंनीचासुशूद्रयोनिषुउत्पादिताः शाखाः पुत्रपौत्रादिपरम्परायेनसनीचाशाखः शूद्रापत्यैश्चकेचले:शूद्रावेदीपतत्यत्रइतिचपातकहेतुत्वेनस्मरणात् तस्यसंबन्धिधनंनैचाशाखंतद्धनंनोस्मभ्यंरन्धय साधय एतेषांयद्धनंतन्नोपयुज्यतेऽस्मदायत्तंतुतद्धनंयागादिद्वारातवोपयुज्यते तस्मात्तदस्मभ्यंप्रयच्छेतिभावः एतमर्थंयास्कोप्याह—किंतेकुर्वन्तिकीकटेषुगावःकीकटानामदेशोनार्यनिवासःकीकटाः किंकृताःकिंक्रियाभिरितिप्रेप्सावानैवचाशिरंदुह्रेनतपन्तिघर्मंहरणमाहरनःप्रमगन्दस्यधनानिमगन्दःकुसीदीमांगदोमामागमिष्यतीतिचददातितदपत्यंप्रमगन्दोत्यन्तकुसीदिकुलीनःप्रमदकोवायोयमेवास्तिलोकोनपरइतिप्रेप्सुःपण्डकोवापण्डकःपण्डगःप्रार्दकोवाप्रार्दयत्याण्डावाण्डावाणीइवव्रीडयतितत्स्यंनैचाशाखंनीचाशाखोनीचैःशाखःशाखाःशक्नोतेरणिरणात्तन्नोमघवन्रन्धयेतिरध्यतिर्वशगमनेइति ॥ आशिरम् आङ्पूर्वाच्छ्रीणातेःक्विपि अपस्पृधेथामित्यादिनाशिरइत्यादेशः । दुह्रे दुहेर्लिटिझस्येरेइतिरेआदेशः द्विर्वचनस्यविकल्पितत्वाद्द्विर्वचनाभावः चादिलोपेविभाषेतिननिघातः । नैचाशाखं तस्येदमित्यण्प्रत्ययः । रन्धय रधेर्ण्यन्तस्यरधिजभोरचीतिनुमागमः ॥ १४ ॥

१४. हे इन्द्र, अनार्यों के निवासयोग्य देशों में कीकटसमूह के मध्य में गौएँ तुम्हारे लिए क्या करेंगी ? वे सोम के साथ मिश्रित होने के योग्य दुग्ध दान नहीं करती हैं । दुग्ध प्रदान-द्वारा वे पात्र को भी दीप्त नहीं करती हैं । हे धनवान् इन्द्र, उन गौओं को तुम हमारे निकट लाओ और प्रमगन्द (अत्यन्त कुसीदिकुल) के धन का भी आनयन करो । हे मेघवन्, नीच वंशवालों का धन हमें दो ।

ससर्परीवृचेप्राहुरितिहासंपुराविदः । सौदासनृपयज्ञेवैवसिष्ठात्मजशक्तिना । विश्वामित्रस्याभिभूतंबलंवाक्चसमन्ततः । वासिष्ठेनाभिभूतःसह्यवासीदथगाधिजः । तस्मैब्राह्मींतुसौरींवानाम्नावाचंससर्परीम् । सूर्यवेश्मनआहृत्यददुर्वैजमदग्नयः । कुशिकानांमतिःसावागमतिंताम्पानुदत् ।

अथपञ्चदशी—

ससर्परीरमतिंबाधमानाबृहन्मिमायजमदग्निदत्ता ।
आसूर्यस्यदुहितातततानश्रवोदेवेष्वमृतमजुर्यम् ॥ १५ ॥ २१ ॥

ससर्परीः । अमतिम् । बाधमाना । बृहत् । मिमाय ।
जमदग्निऽदत्ता । आ । सूर्यस्य । दुहिता । ततान ।
श्रवः । देवेषु । अमृतम् । अजुर्यम् ॥ १५ ॥ २१ ॥

जमदग्निदत्ताजमदग्निभिःप्रज्वलिताग्निभिर्ऋषिभिःसूर्यादाहृत्यास्मभ्यंदत्ता अमतिमज्ञानं बाधमानाससर्परीसर्वस्वरूपशब्दतयासर्पणशीलावाक् बृहत्प्रभूतंयथाभवतितथामिमायनभसिशब्दंकरोति सैषासूर्यस्यदुहितावाग्देवता देवेष्विन्द्रादिषु अजुर्यंक्षयरहितम् अमृतममृतलक्षणंश्रवोऽन्नमाततान समन्तात्स्वाहाकारवाचंतनोति ॥ जमदग्निदत्ता दाण्दानेइत्यस्यनिष्ठायांदोदद्घोरितिददादेशः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरः । अजुर्यं जृवयोहानौ ऋहलोर्ण्यत् बहुलंछन्दसीत्युत्वं नञ्सुभ्यामित्यन्तोदात्तत्वम् ॥ १६ ॥

१५. अग्नि को प्रज्वलित करनेवाले ऋषियों-द्वारा सूर्य से लाकर हम लोगों को दी गई, अज्ञान को बाधित करनेवाली, रूप, शब्द तथा सर्वत्र सर्पणशीला वाक् (वचन) आकाश में प्रभूत शब्द करती है। सूर्य की दुहिता वाग्देवता इन्द्र आदि देवताओं के निकट क्षयरहित अमृत रूप अन्न को विस्तृत करती है।

॥ इतितृतीयस्यतृतीयेएकविंशोवर्गः ॥ २१ ॥

अथषोडशी—

ससर्परीरभरत्तूयमेभ्योधिश्रवःपाञ्चजन्यासुकृष्टिषु ।
सापक्ष्यानव्यमायुर्दधानायांमेपलस्तिजमदग्नयोददुः ॥ १६ ॥

ससर्परीः । अभरत् । तूयम् । एभ्यः । अधि । श्रवः ।
पाञ्चऽजन्यासु । कृष्टिषु । सा । पक्ष्या । नव्यम् । आयुः ।
दधाना । याम् । मे । पलस्तिऽजमदग्नयः । ददुः ॥ १६ ॥

ससर्परी:सर्वत्रगद्यपद्यात्मकत्वेनसर्पणशीलावाग्देवतापाञ्चजन्यासु कृष्टिषु निषादपञ्चमा-श्चत्वारोवर्णास्तत्संबन्धिनीषुप्रजासुयत्प्रभोजंविद्यतेतदेभ्योऽस्मभ्यमभ्यधिकंयथाभवतितथात्यंक्षिप्रम-भरत् भरतु संपादयतु पक्षस्तिजमदग्नयःपक्षस्तयः पक्षिताः दीर्घायुषोजमदग्नयोमुनयःयांवाचं सूर्योदाहृत्यमेमह्यंददुः अददुः पक्ष्या पक्षस्यपक्षादिनिर्वाहकस्यसूर्यस्यदुहितासावाक् नव्यंन-वतरमायुरसंजीवनंवादधाना ममकुर्वाणाभवतु ॥ पाञ्चजन्यासु बहिर्देवपञ्चजनेभ्यश्चेतिवक्तव्य-मितिञ्यप्रत्ययः ञित्त्वादाद्युदात्तः । पक्ष्या पक्षेभवा दिगादित्वाद्यत् तित्स्वरितः । नव्यं नव-शब्दात्स्वादित्वात्स्वार्थिकोयत् । पक्षस्तिजमदग्नयः कर्मधारयसमासः समासस्वरः ॥ १६ ॥

१६. गद्य-पद्य-रूप से सर्वत्र सर्पणशीला वाग्देवता चारों वर्ण तथा निषाद में जो अन्न विद्यमान हैं, उससे अधिक अन्न हमें शीघ्र दें। दीर्घ आयुवाले जमदग्नि आदि मुनियों ने जिस वचन को सूर्य से लाकर हमें दिया है, पक्षों के निर्वाहक सूर्य की दुहिता, वह वाग्देवता हमारे लिए नूतन अन्न दान करे।

स्थि॒रौगावौ॑भवतांवी॒ळुरक्षो॒मेषाविर्व॑र्हि॒मायुगंविशा॑रि ।
इन्द्रः॑पात॒ल्ये॑ददतां॒शरी॑तो॒ररि॑ष्टनेमेअ॒भिनः॑सचस्व ॥ १७ ॥

स्थि॒रौ । गावौ॑ । भ॒वता॒म् । वी॒ळुः । अक्षः॑ । मा । ई॒षा । वि ।
व॒र्हि॒ । मा । यु॒गम् । वि । शा॒रि॒ । इन्द्रः॑ । पा॒त॒ल्ये॒३॒ इति॑ ।
द॒दता॒म् । शरी॑तोः । अरि॑ष्टऽनेमे । अ॒भि । नः॒ । स॒च॒स्व॒ ॥ १७ ॥

राज्ञ:सुदासोयज्ञेभवभृथंकृत्वायज्ञशालातोनिर्गन्तुमिच्छन् रथेष्वादिकंयुञ्जानोविश्वामि-त्रोरथाङ्गानिस्तौति गावौ गच्छतइतिगावावनड्वौ स्थिरौभवताम् अक्षश्चवीळुर्दृढोभवतु ईषादण्ड-श्चमाविवर्हि न्यूढोविनष्टोमाभवतु युगंचमाविशारि विशीर्णमाभवतु इन्द्रःपातल्येपतनशीलेकी-लकेशरीतोःविशरणात्प्राक्ददतांधारयतु हेअरिष्टनेमे अहिंसितप्रधिविशिष्ट हेरथ नोऽस्मानभि आभिमुख्येन सचस्व संगतोभव ॥ विवर्हि वृहवृद्धौ विपूर्वोवृहिर्विनाशेवर्तते अस्मात्कर्मकर्त रिलुङि चिण्भावकर्मणोरितिचिण् चिणोलुगितितप्रत्ययस्यलुक् निपातः । युगं युगशब्दउ-ञ्छादिषुपाठ्युपकरणेर्ये घञन्तत्वेननिपातनादगुणत्वं तत्रपाठादन्तोदात्तत्वम् । शारि शॄहिंसाया-मित्यस्यलुङिरूपम् । अरिष्टनेमे पादादित्वात्षाष्ठिकमाद्युदात्तत्वम् ॥ १७ ॥

१७. सुदास के यज्ञ में अवभृथ करने के उपरान्त यज्ञशाला से जाने की इच्छा करते हुए विश्वामित्र रथाङ्ग की स्तुति करते हैं—बलीवर्द्वय स्थिर होओ, अक्ष दृढ़ होओ। दण्ड जिससे विनष्ट नहीं हो, युग जिससे विनष्ट नहीं हो, युग जिससे विशीर्ण नहीं हो। पतनशील कीलकद्वय के विशीर्ण होने के पहले ही इन्द्र धारण करें। हे अहिंसित नेमिविशिष्ट रथ, तुम हम लोगों के अभिमुख आगमन करो।

बलंधेहितनूर्षुनोबलमिन्द्रानळुत्सुनः ।
बलंतोकायतनयायजीवसेत्वंहिबलदाअसि ॥ १८ ॥

बलम् । धेहि । तनूषु । नः । बलम् । इन्द्र । अनळुत्ऽसु । नः । बलम् । तोकाय । तनयाय । जीवसे । त्वम् । हि । बलऽदाः । असि ॥ १८ ॥

हेइन्द्र नोऽस्माकं तनूषु शरीरेषु बलंधेहि नोऽस्मत्संबन्धिरथवाहेष्वनडुत्स्वनडुत्सु बलं धेहि तोकाय पुत्राय तनयाय पौत्रायच जीवसे चिरंजीवनायबलमायुर्विधेहि एतादृशं दातृत्वं कुतइत्यत आह—त्वंबलदाः बलंददातीतिबलदाअसिहि सर्वेषुलोकेषुप्रसिद्धोसिखलु ॥ अनळुत्सु वहप्रापणे अनसिवहेःक्विप् अनसोडश्चेतिक्विप् अनसःसकारस्यडत्वं वहेर्यजादित्वात्संप्रसारणम् वसुस्रंसुध्वंस्वनडुहांदइतिहकारस्यदत्वं कृदुत्तरपदप्रकृतिस्वरः । असि हियोगादनिघातः सिपः पित्त्वादनुदात्तत्वेधातुस्वरः ॥ १८ ॥

१८. हे इन्द्र, तुम हम लोगों के शरीर में बलदान करो, हमारे वृषभों को बलदान करो और हमारे पुत्र-पौत्रों को चिरजीवी होने के लिए बलदान करो; क्योंकि तुम बलप्रद हो ।

अभिव्ययस्वखदिरस्यसारमोजोधेहिस्पन्दनेशिंशपायाम् ।
अक्षवीळोवीळितवीळयस्वमायामादस्मादवजीहिपोनः॥ १९॥

अभि । व्ययस्व । खदिरस्य । सारम् । ओजः । धेहि । स्पन्दने । शिंशपायाम् । अक्ष । वीळो इति । वीळित । वीळयस्व । मा । यामात् । अस्मात् । अव । जीहिपः । नः ॥ १९ ॥

हेइन्द्र खदिरस्यसारं सारेणहिअक्षःक्रियते तंखदिरस्यसारंमूलभागमभिव्ययस्व अभितस्तत्तत्स्थानेषुदार्ढ्यार्थंनिधेहि स्पन्दनेरथस्यगमनेप्राप्ते शिंशपायां शिंशपाख्यदारुनिर्मितेरथस्य फलके ओजोधेहि दार्ढ्यंकुरु हेवीळो दृढ वीळित अस्माभिर्दृढीकृत हेअक्ष वीळयस्व त्वंदृढोभव यद्वा अस्मान्दृढीकुरु यामाद्गच्छतोऽस्माद्रथान्नोऽस्मान्माअवजीहिपः मापीपतः ॥ खदिरस्य अजिरशिशिरेत्यादिनाकिरच्प्रत्ययान्तत्वेननिपातनादन्तोदात्तः । वीळित वीळयतेर्ण्यन्तस्यनिष्ठाया-मिडागमः निष्ठायांसेटीतिणेर्लुक् । वीळयस्व आमन्त्रितस्याविद्यमानत्वेनपादादित्वादनिघातः । यामात् याप्रापणेइत्यस्मात् अर्तिस्तुसुहुसृइत्यादिनामन्प्रत्ययः नित्त्वादाद्युदात्तः । जीहिपः ओहाक्त्यागे ण्यन्तस्यलुङ्यार्षंरूपम् अकारस्येकारश्छान्दसः ॥ १९ ॥

१९. हे इन्द्र, रथ के खदिर-काष्ठ के सार को दृढ़ करो, रथ के शीशम के काठ को दृढ़ करो। हे हम लोगों के द्वारा दृढ़ीकृत अक्ष, तुम दृढ़ होओ। हमारे गमनशील इस रथ से हमें फेंक नहीं देना।

अयमस्मान्वनस्पतिर्मा च हा मा च रीरिषत् ।
स्वस्त्या गृहेभ्य आवसा आविमोचनात् ॥ २० ॥ २२ ॥

अयम् । अस्मान् । वनस्पतिः । मा । च । हाः । मा । च ।
रीरिषत् । स्वस्ति । आ । गृहेभ्यः । आ । अवसै । आ ।
विऽमोचनात् ॥ २० ॥ २२ ॥

अयमस्मानात्मनःश्रेयमाशास्ते वनस्पतिः वनस्पतिनिर्मितोऽयंरथः रथारूढानस्मान्मा
जहाः मात्याक्षीत् किंच मारीरिषत् अस्मान्माविनाशयतु किंच आगृहेभ्यः यावद्गृहा-
न्प्राप्नुयामतावदस्मभ्यंस्वस्तिभवतु तथा आवसै पञ्चम्यर्थेचतुर्थी यावद्रथवेगावसानंतावत्
आविमोचनात्यावद्रथयोजिताश्वविमोचनंतावत्स्वस्तिभवतु ॥ हाः ओहाक्त्यागे लुङि मन्त्रे-
घसेत्यादिनासिचोलुक् पुरुषव्यत्ययः नमायोगेप्रथमेतिननिघातः । रीरिषत् रिषहिंसायामि-
त्यस्यण्यन्तस्यलुङिचङिरूपं द्वितीयस्यानिघातः । गृहेभ्यः ग्रहेः गेहेकइतिकः पञ्चम्याः
स्वपोभिरितिपञ्चमी । अवसै षोन्तकर्मणि क्विप् चतुर्थ्येकवचनेआतोलोपाभावश्छान्दसः वृद्धिः
एकादेशस्वरः ॥ २० ॥

२०. वनस्पतियों-द्वारा निर्मित यह रथ हम लोगों को मत
त्यक्त करे, मत विनष्ट करे। जब तक हम लोग गृह न प्राप्त करें,
जब तक रथ चलता रहे और जब तक कि, अश्व विमुक्त न हो
जायें, तब तक हम लोगों का मङ्गल हो।

॥ इतितृतीयस्यतृतीयेद्वाविंशोवर्गः ॥ २२ ॥

इन्द्रोतिभिरित्याद्याश्चतस्रोवसिष्ठद्वेषिण्यः पुराखलुविश्वामित्रशिष्यःसुदा(सो)नामाराजर्षिरासीत्
सचकेनचित्कारणेनवसिष्ठद्वेष्योऽभूत् । विश्वामित्रस्तुशिष्यस्यरक्षार्थमाभिर्ऋग्भिर्वसिष्ठमशपत् इमास्त्व-
भिशापरूपास्ताऋचोवसिष्ठानशृण्वन्ति ।

इन्द्रोतिभिर्बहुलाभिर्नो अद्य याच्छ्रेष्ठाभिर्मघवञ्छूर जिन्व ।
यो नो द्वेष्ट्यधरः सस्पदीष्ट यमु द्विष्मस्तमु प्राणो जहातु ॥ २१ ॥

इन्द्र । ऊतिऽभिः । बहुलाभिः । नः । अद्य । यात्ऽश्रेष्ठाभिः ।
मघऽवन् । शूर । जिन्व । यः । नः । द्वेष्टि । अधरः । सः ।
पदीष्ट । यम् । ऊँ इति । द्विष्मः । तम् । ऊँ इति । प्राणः ।
जहातु ॥ २१ ॥

यस्य शापंकरिष्यन्नादावात्मनोरक्षांकुर्वन्नेतामनेनार्धर्चेन—हेशूर शौर्यवन्पराभिभ-
वाक हेमघवन्धनवन्निन्द्र अद्यास्मिन्काले यात् यातयतिर्वधकर्मा यातयतीतियात् श्रेष्ठा-

मुत्तृगितिशसोत्तम् यातःशत्रून्हिंसतोनोऽस्मान्तूतिभिस्त्वदीयाभीरक्षाभिर्मिन्द्र प्रीणय कीदृ-
शीभिः बहुलाभिर्बह्वीभिःश्रेष्ठाभिःप्रशस्यतराभिः अथ शपति नोऽस्मान्यःशत्रुर्द्वेष्टि मत्स-
द्विषयामप्रीतिंकरोति सःअधरोनिकृष्टःसन्पदीष्ट पततु यंच यमुद्दिश्य तमुतंद्वेष्यंप्राणःदेहम-
ध्येवर्तमानःप्राणवृत्तिर्वायुः महातु परित्यजतु उताप्योपूरको ॥ २१ ॥

२१. हे शूर, हे धनवान् इन्द्र, हम लोग शत्रुओं के हिंसक हैं। हम लोगों को तुम प्रभूत और श्रेष्ठ आश्रय दान-द्वारा सन्तुष्ट करो। जो हम लोगों से द्वेष करता है, वह निकृष्ट होकर पतित हो। हम लोग जिससे द्वेष करते हैं, उसे प्राणवायु परित्याग करे।

प॒र॒शुं चि॒द्वि त॑पति शिम्ब॒लं चि॒द्वि वृ॑श्चति।
उ॒खा चि॑दिन्द्र॒ येष॑न्ती॒ प्रय॑स्ता॒ फेन॑मस्यति ॥ २२ ॥

प॒र॒शुम्। चि॒त्। वि। त॒प॒ति॒। शि॒म्ब॒लम्। चि॒त्। वि।
वृ॒श्च॒ति॒। उ॒खा। चि॒त्। इ॒न्द्र॒। येष॑न्ती। प्रऽय॑स्ता। फेन॑म्।
अ॒स्य॒ति॒ ॥ २२ ॥

हेइन्द्र परशुंचित् चिच्छब्दउपमार्थः यथापरशुंकुठारंप्राप्यवृक्षोवितपति विशिष्टता-
पयुक्तोभवति एवंमदीयोद्वेष्टावितपतु शिम्बलंचित् शल्मलीकुसुमंयथाऽनायासेनविवृश्चति
विच्छिद्यते एवं सद्वेष्टाविवृश्चति विच्छिन्नावयवोभवतु प्रयस्ता प्रहतायेषन्तीस्रवन्तीउखा-
चित्स्थालीव सद्वेष्टामदीयमन्त्रसामर्थ्येनप्रहतःसन्फेनमस्यति फेनंमुखादुद्गिरतु ॥ २२ ॥

२२. हे इन्द्र, जैसे कुठार को पाकर वृक्ष प्रतप्त होता है, वैसे ही हमारे शत्रु प्रतप्त हों। शाल्मली पुष्प जैसे अनायास ही वृन्तच्युत हो जाता है, वैसे ही हमारे शत्रुओं के अवयव विच्छिन्न हों। प्रहत, जल-स्रावी स्थाली (हांड़ी) पाककाल में जैसे फेनोद्‌गीर्ण करती है, वैसे ही मेरी मन्त्रसामर्थ्य से प्रहत होकर शत्रु मुख-द्वारा फेनोद्‌गीर्ण करें।

न सा॑य॒कस्य॑ चिकिते जनासो लो॒धं न॑यन्ति॒ पशु॒ मन्य॑मानाः।
नावा॑जिनं वा॒जिना॑ हासयन्ति॒ न ग॑र्द॒भं पु॒रो अश्वा॑न्नयन्ति ॥ २३ ॥

न। सा॒य॒कस्य॑। चि॒कि॒ते॒। ज॒ना॒सः॒। लो॒धम्। न॒य॒न्ति॒। पशु॑।
मन्य॑मानाः। न। अवा॑जिनम्। वा॒जिना॑। हा॒स॒य॒न्ति॒।
न। ग॒र्द॒भम्। पु॒रः। अश्वा॑त्। न॒य॒न्ति॒ ॥ २३ ॥

पुराखलु तपसःक्षयोमाभूदितिशापाभिवृत्तंमौनिनंविश्वामित्रंवसिष्ठपुत्राःबद्धानीतवन्तः
साम्प्रतिविश्वामित्रोब्रूते—हेजनासोजनाः सायकस्यावसानकारिणोविश्वामित्रस्यमन्त्रगणसाम-
र्थ्यंनचिकिते भवद्भिर्नज्ञायते अतएवक्षोभंलब्धंतपसःक्षयोमाभूदितिक्षोभेनतूष्णींस्थितंमृषिं

शुमन्यमानाः पशुइतिनिपातः पशुशब्दसमानार्थः पशुवन्मन्यमानाः एतेनयन्ति वशिष्ठस्वकीयं देशंप्रापयन्ति एवंस्वसामर्थ्यंप्रदर्श्यविसदृशोवसिष्ठोमयासहस्पर्धितुंनार्हतीतिविवृणोति नावाजि-नमिति अवाजिनं वाचाजिनोवाजिनः सर्वज्ञः तद्विलक्षणंमूर्खंजनंवाजिनाशातीशाः नहास-यन्ति हास्यास्पदंनकुर्वन्ति तेनसहनस्पर्धन्तइत्यर्थः तथागर्दभंरासभम् अश्वात्पुरः पुरस्तान्नयन्ति एवमेवविसदृशोवसिष्ठोनमयास्पर्धितुमीष्टइत्यर्थः ॥ २३ ॥

२३. वसिष्ठ के भृत्यों को विश्वामित्र कहते हैं—हे पुरुषो, अवसान करनेवाले विश्वामित्र की मन्त्र-सामर्थ्य को तुम लोग नहीं जानते हो। तपस्या का क्षय न हो जाय, इसी क्षोभ से चुपचाप बैठे हुए को पशु मानकर ले जा रहे हो। वसिष्ठ मेरे साथ स्पर्द्धा करने के योग्य नहीं हैं, क्योंकि प्राज्ञ व्यक्ति मूर्ख व्यक्ति को उपहासास्पद नहीं करते हैं; अश्व के सम्मुख गर्दभ नहीं लाया जाता है।

इमइन्द्रभरतस्यपुत्राअपपित्वंचिकितुर्नप्रपित्वम् ।
हिन्वन्त्यश्वमरणंननित्यंज्यावाजंपरिणयन्त्याजौ ॥२४॥२३॥

इमे । इन्द्र । भरतस्य । पुत्राः । अपऽपित्वम् । चिकितुः ।
न । प्रऽपित्वम् । हिन्वन्ति । अश्वम् । अरणम् । न । नित्यम् ।
ज्याऽवाजम् । परि । नयन्ति । आजौ ॥ २४ ॥ २३ ॥

हेइन्द्र भरतस्यपुत्राः भरतवंश्याइमेविश्वामित्राअपपित्वमपगमनंवसिष्ठेभ्यःचिकितुर्जा-नन्ति प्रपित्वंगमनंनजानन्ति शिष्टैःसहतेषांसंगतिर्नास्ति-- ब्राह्मणापवराइत्यर्थः अपिच आजौ संग्रामेनित्यंसहजमरणंन अरिमिववसिष्ठंप्रत्यश्वंहिन्वन्ति प्रेरयन्ति ततश्चज्यावाजंमौ-र्वीबलंधनुःपरिणयन्ति वसिष्ठान्हन्तुंशरसंधानेनव्याप्स्यन्ति ॥ २४ ॥

२४. हे इन्द्र, भरतवंशीय (वसिष्ठ के साथ) अपगमन (पार्थक्य) जानते हैं, गमन (एकता) नहीं जानते हैं अर्थात् शिष्टों के साथ उनकी संगति नहीं है। संग्राम में सहज शत्रु की तरह उन लोगों के प्रति वे अश्व प्रेरण करते हैं और धनुर्धारण करते हैं।

पञ्चमेनुवाकेनवसूक्तानि तत्रेमंमहइतिद्वाविंशत्यृचंप्रथमंसूक्तंत्रैष्टुभंवैश्वदेवं विश्वा-मित्रपुत्रस्यवाक्पुत्रस्यवाप्रजापतेरार्षम् अत्रेयमनुक्रमणिका—इमंमहेद्व्यधिकोवाग्वात्र:प्रजापतिर्हि वैश्वदेवंहेति । अस्मिन्सूक्तेआद्याग्नेयी ततःपरंसप्तचोयावापृथिव्याः ततःपराद्युदेवताका दशमी द्यावापृथिव्या एकादशीसावित्री ततःपरंशुकदितित्वाष्ट्री आर्भवीच विद्युद्रथेतिमारुती सार-स्वतीच ततःपरंतिस्रोविष्णिन्द्राग्निदेवताकाः स्वदस्वेत्याग्नेयीति एवंवैश्वदेवंसूक्तं सूक्तविनियो-गोलैङ्गिकः । अग्निप्रणयनेराजन्यस्येमंमहइतिप्रतिपत् । पञ्चम्यांपौर्णमास्यामित्यत्रसूत्रितम्—इमं महेविदथ्यायशूषमिति ।

सूक्तेप्रथमा–

इ॒मंम॒हेवि॑द॒थ्या॑यशू॒षंशश्व॒त्कृत्व॒ईड्या॑य॒प्रज॑भ्रुः ।
शृ॒णोतु॑नोद॒म्येभि॒रनी॑कैःशृ॒णोत्व॒ग्निर्दि॒व्यैरज॑स्रः ॥ १ ॥

इ॒मम् । म॒हे । वि॒द॒थ्या॑य । शू॒षम् । शश्व॑त् । कृत्वः॑ । ईड्या॑य । प्र । ज॒भ्रुः । शृ॒णोतु॑ । नः॒ । द॒म्येभिः॑ । अनी॑कैः । शृ॒णोतु॑ । अ॒ग्निः । दि॒व्यैः । अज॑स्रः ॥ १ ॥

महेमहतेविदथ्यायविदथेयज्ञेमन्थनेननिष्पाद्यमानायईड्यायसर्वैःस्तुत्यायाग्नये शूषंसुखकरमिमं स्तोमंशश्वत्कृत्वःभूयोभूयःप्रजभ्रुः प्रभरन्ति प्रकर्षेणधारयन्ति उच्चारयन्तीत्यर्थः सोऽग्निर्दम्येभिः परेषांदमनकुशलैर्दमेगृहेविद्यमानैर्वाअनीकैस्तेजोभिर्युक्तःसन् नोऽस्मदीयमिमंस्तोत्रंशृणोतु दिव्यैर्दिविभवैस्तेजोभिरजस्रोनिरन्तरंयुक्तोऽग्निःइमंस्तोत्रंशृणोतु शश्वत्कृत्वईड्यायप्रजभ्रुरितिस्वनाभेदेन तच्छ्रुत्वंगमयतीतिब्राह्मणानुसारेण । महदादिगुणविशिष्टाययजमानायेममग्निंप्रजभ्रुः प्रहरन्त्यृत्विजइतिवाव्याख्येयम् उत्तरोऽर्धर्चःसमानएव ॥ विदथ्याय तत्रभवइत्यर्थेभवेछन्दसीतियत् तित्स्वरः । ईड्याय ईडवन्देत्यादिनाऽऽद्युदात्तत्वम् । दम्येभिः तत्रसाधुरितियत् यतोनावइत्याद्युदात्तत्वम् । दिव्यैः दिवमर्हतीत्यर्थेछन्दसिचेतियप्रत्ययः । अजस्रः जसुमोक्षणे नमिकम्पीत्यादिनाताच्छीलिकोरप्रत्ययः नञ्समासेतस्यस्वरः ॥ १ ॥

१. महान् यज्ञ में मन्थन-द्वारा निष्पाद्यमान और स्तुति-योग्य अग्नि के उद्देश्य से यह सुखकर स्तोत्र बारम्बार उच्चारित होता है । अग्नि गृह में विद्यमान होकर तथा तेजोविशिष्ट होकर हमारे इस स्तोत्र को सुनें । दिव्य तेज से निरन्तर युक्त होकर अग्नि हमारे इस स्तोत्र को सुनें ।

अथद्वितीया–

म॒हिंम॒हेदि॒वेअ॑र्चापृथि॒व्यैकामो॑मइ॒च्छञ्च॑रतिप्रजा॒नन् ।
ययो॑र्ह॒स्तोमे॑वि॒दथे॑षुदे॒वाःस॑प॒र्यवो॑मा॒दय॑न्ते॒सचा॒योः ॥ २ ॥

म॒हि । म॒हे । दि॒वे । अ॒र्च॒ । पृ॒थि॒व्यै । कामः॑ । मे॒ । इ॒च्छन् । च॒र॒ति॒ । प्र॒ऽजा॒नन् । ययोः॑ । ह॒ । स्तोमे॑ । वि॒दथे॑षु । दे॒वाः । स॒प॒र्यवः॑ । मा॒दय॑न्ते । सचा॑ । आ॒योः ॥ २ ॥

१ ऐ० ब्रा० १. २८ ।

हेस्तोत: महेमहत्यैदिवेद्युलोकदेवतायैमहत्यैपृथिव्यैचमहि महत्प्रमानप्रकर्षेणदेवतासामर्थ्यं विद्वांस्त्वंस्तोत्रमर्चकुरु मेममकामोमनोरथ: सर्वान्भोगानिच्छन्चरति सर्वत्रवर्तते याद्योर्मनुष्यस्यविदथेषुयज्ञेषुयद्योर्द्यावापृथिव्यो:स्तोमैस्तोत्रैःसपर्यव:पूजाकामादेवाइन्द्रादय:स्तोतारोवासचाधादयन्तेह सहमायान्तिसत्र पृथिव्यै उदात्तयणइतिविभक्तेरुदात्तत्वम् । सपर्यव: सपर्यामिच्छन्तीत्यर्थे सुप:क्यच् ॥ १ ॥

२. हे स्तोता, महती द्यावा-पृथिवी की सामर्थ्य को जानते हुए तुम उनकी अर्चना करो। मेरा मनोरथ सम्पूर्ण भोग का इच्छुक है, सर्वत्र वर्तमान है। पूजाभिलाषी देवगण सम्पूर्ण मनुष्यों के यज्ञ में द्यावा-पृथिवी के स्तोत्र करने में मत्त होते हैं।

युवोर्ऋतंरोदसीसत्यमस्तुमहेषुणःसुवितायप्रभूतम् ।
इदंदिवेनमोअग्नेपृथिव्यैसपर्यामिप्रयसायामिरत्नम् ॥ ३ ॥

युवोः । ऋतम् । रोदसी इति । सत्यम् । अस्तु । महे । सु ।
नः । सुवितार्य । प्र । भूतम् । इदम् । दिवे । नमः । अग्ने ।
पृथिव्यै । सपर्यामि । प्रयसा । यामि । रत्नम् ॥ ३ ॥

हेरोदसी द्यावापृथिव्यौ युवोर्युवयोर्ऋतमानृशंस्यंसत्यंयथार्थमस्तु युवांनोऽस्माकंमहेमहतेसुवितायाभ्युदयाययज्ञसमाप्त्यर्थंसुष्ठुप्रभूतंप्रभवतं हेअग्ने दिवेपृथिव्यैच इदंनमोऽस्तु प्रयसा हविर्लक्षणेनान्नेनसपर्यामि परिचरामि रत्नमुत्तमधनंयामि याचे यातिर्याच्ञाकर्मा ईमहइत्यादिषुपठितत्वात् ॥ सु संहितायांसुनइतिषत्वम् । नः संहितायांनश्चधातुस्थोरुषुभ्यइतिणत्वम् । सुविताय इण्गतौ नाविकरणेक्तः शोभनंगम्यतेस्मिन्निति सुवितं उवङादेशाभावश्छान्दसः । भूतं भवतेर्लोटि बहुलंछन्दसीतिशपोलुकिरूपं यद्वा छान्दसेलुङिगातिस्थेतिसिचोलुक् निघातः । दिवे पृथिव्यै नमःस्वस्तीत्यादिनाचतुर्थी । सपर्यामि कण्ड्वादिःपरिचरणेवर्तते प्रत्ययस्वरः । यामि यातेर्लटिरूपं वाक्यभेदादनिघातः ॥ ३ ॥

३. हे द्यावा-पृथिवी, तुम्हारा ऋत (अनृशंसता) यथार्थ हो। तुम हमारे महान् यज्ञ की समाप्ति के लिए समर्थ होओ। हे अग्नि, द्युलोक और पृथिवी को नमस्कार है। हविर्लक्षण अन्न से मैं परिचर्या करता हूँ, उत्तम धन की याचना करता हूँ।

उतोहिवांपूर्व्याआविविद्रऋतावरीरोदसीसत्यवाचः ।
नरश्चिद्वांसमिथेशूरसातौववन्दिरेपृथिविवेविदानाः ॥ ४ ॥

उतो इति । हि । वाम् । पूर्व्याः । आऽविविद्रे । ऋतवरी इत्यृतऽवरी ।
रोदसी इति । सत्यऽवाचः । नरः । चित् । वाम् । समऽइथे ।
शूरऽसातौ । ववन्दिरे । पृथिवि । वेविदानाः ॥ ४ ॥

उतोअपिच हेऋतावरी ऋतंसत्यंतद्वत्यौ हेरोदसी द्यावापृथिव्यौ पूर्व्याः पूर्वभवाःपुरातनाःसत्यवाचोमहर्षयः वांयुवाभ्यामाविविद्रे हितंतमपेक्षितमर्थंलेभिरेखलु तथा हेपृथिवि शूरसातौ शूराणांसातिर्भजनंयस्मिन्तस्मिन्समीपे संगमननिमित्तेयुद्धे नरश्चिदयजमानामनुष्याः वांयुवयोर्माहात्म्यं वेविदानाजानन्तः अतः द्यावापृथिव्योर्वन्दिरेस्तुवन्ति ॥ आविविद्रे विद्लृलाभेइत्यस्यछन्दस्युभयथेति लिटि इरयोरेइतिरेइत्यादेशः सहसुपेत्यत्रसहेतियोगविभागादाङासहसमासः । समीके इण्गतौ समीणइति पक्षस्यय: प्रत्ययस्वरः ॥ ४ ॥

४. हे सत्ययुक्त द्यावा-पृथिवी, पुरातन सत्यवादी महर्षियों ने तुमसे हितकर अर्थ (अभिलषित) प्राप्त किया था। हे पृथिवी, युद्ध में जानेवाले मनुष्यगण तुम्हारे माहात्म्य को जानकर तुम्हारी वन्दना करते हैं।

कोअ॒द्धावे॑द॒कइ॒हप्रवो॑च॒द्दे॒वाँअच्छा॑प॒थ्या॒३॒॑कासमे॑ति ।
ददृ॑श्रएषामव॒मासदां॑सि॒परे॑षु॒यागुह्ये॑षुव्र॒तेषु॑ ॥ ५ ॥ २३ ॥

कः । अ॒द्धा । वे॒द॒ । कः । इ॒ह । प्र । वो॒च॒त् । दे॒वान् । अच्छ॑ । प॒थ्या॑ । का । सम् । ए॒ति॒ । ददृ॑श्रे । ए॒षा॒म् । अ॒व॒मा । सदां॑सि । परे॑षु । या । गुह्ये॑षु । व्र॒तेषु॑ ॥ ५ ॥ २४ ॥

कोवाअद्धा सत्यभूतंतादृशमर्थंवेदवेत्ति कोवा इहास्मिन्अज्ञातमर्थंप्रवोचत्प्रब्रवीति किंतदुच्यते–देवानच्छाभिलक्ष्य कापथ्या पथिसाधुःसमीचीनःकोमार्गःसमेति सम्यक्प्राप्नोतीतिकेनमार्गेणदेवतास्तर्पयितव्याइतिइममर्थंनकश्चिज्जानाति नकोपिब्रवीति किंतेदेवाविद्यन्ते नाडमित्याह–एषांदिविस्थितानांनक्षत्ररूपाणांदेवानामवमा अधोभूतानिसदांसिस्थानानिददृश्रेदृश्यन्ते तथापि परेषूत्तमेषुगुह्येषुदुर्ज्ञेयेषुव्रतेषुकर्मस्वनुष्ठितेषुच याथानिदीदेवस्थानानिक्षम्यन्ते तत्रगन्तुं कोमार्गइतिवेदमन्तरेणनकश्चिज्जानातीत्यभिप्रायः ॥ अद्धा स्वरादिष्वन्तोदात्तत्वेनपठितत्वादन्तोदात्तः । वोचत् ब्रूञ्व्यक्तायांवाचि लुङि ब्रुवोवचिरितिवच्यादेशः अस्यतिवक्तिख्यातिभ्यइति च्लेरङादेशः वचउमित्युमागमः निपातः ॥ ५ ॥

५. उस सत्यभूत अर्थ को कौन जानता है ? कौन उस जाने हुए अर्थ को बोलता है। कौन समीचीन पथ देवताओं के निकट ले जाता है। देवगण के अधःस्थान अर्थात् द्युलोकस्थित नक्षत्रादि देखे जाते हैं। वे उत्कृष्ट और दुर्ज्ञेय व्रत में अवस्थित करते हैं।

अथषष्ठी–

क॒विर्नृ॒चक्षा॑अ॒भिषी॑मचष्टऋ॒तस्य॒योना॒विघृ॑ते॒मद॑न्ती ।
नाना॑चक्राते॒सद॑नं॒यथा॒वेःस॑मा॒नेन॒क्रतु॑ना॒सं॑विदा॒ने ॥ ६ ॥

कविः । नृऽचक्षाः । अभि । सीम् । अचष्ट । ऋतस्य । योना ।
विधृते इति विऽधृते । मदन्ती इति । नाना । चक्राते इति । सदनम् ।
यथा । वेः । समानेन । क्रतुना । संविदाने इति सम्ऽविदाने ॥ ६ ॥

कविःक्रान्तदर्शी नृचक्षाः नृणांद्रष्टासूर्यः सीमिमेद्यावापृथिव्यौअभ्यचष्ट सर्वतःपश्यति ऋतस्ययोनाउदकस्यस्थानेऽन्तरिक्षेमदन्तीहर्षयन्त्यौविधृतेघृतमस्यामोषधयः मधुमयुष्याद्रसेनं- विरसोपेतेसमानेन '¹समानमेतदुदकमुच्चैत्यवचाहभिः । भूमिंपर्जन्याजिन्वन्तिदिवंजिन्वन्त्यग्न- यः'इति । परस्परप्रीणनाख्येनैकेनक्रतुनाकर्मणासंविदाने परस्परमैकमत्यंप्राप्ते ते द्यावापृथिव्यौ नानापृथग्भूतंसदनंस्थानंचक्राते तथाचश्रुतिः—²इमौवैलोकौसहास्तांतौव्यैतामिति । तत्रदृष्टान्तः— यथावेःकुलायंनानाभवतितद्वत् ॥ अचष्ट चक्षिङ्व्यक्तायांवाचीत्यस्य लङि स्कोःसंयोगाद्यो- रितिककारलोपः निघातः । संविदाने विदज्ञानइत्यस्यसमोगमीत्यादिनाआत्मनेपदेशानच् चित्त्वादन्तोदात्तः ॥ ६ ॥

६. कवि, मनुष्यों के द्रष्टा सूर्य इस द्यावा-पृथिवी को सर्वत्र देखते हैं। जल के उत्पत्ति-स्थान अन्तरिक्ष में हर्षकारिणी, रसवती और समान कर्मों-द्वारा परस्पर ऐक्यभावापन्न द्यावा-पृथिवी पक्षियों के घोसलों की तरह पृथक्-पृथक् नाना स्थान को अधिकृत करती हैं।

अथसप्तमी—

समान्याविर्युतेदूरेअन्तेध्रुवेपदेतस्थतुर्जागरूके ।
उतस्वसारायुवतीभवन्तीआदुब्रुवातेमिथुनानिनाम ॥ ७ ॥

समान्या । वियुते इतिविऽयुते । दूरेअन्ते इति दूरेऽअन्ते । ध्रुवे ।
पदे । तस्थतुः । जागरूके इति । उत । स्वसारा । युवती इति ।
भवन्ती इति । आत् । ऊँ इति । ब्रुवाते इति । मिथुनानि । नाम ॥ ७ ॥

समान्या समाने परस्परप्रीणनाख्येनकर्मणा ऐकमत्यंगते वियुते वियुज्यवर्तमानेदूरे- अन्ते दूरेन्तोवसानंययोस्तेदूरेअन्ते अविनाशिन्यौ ते द्यावापृथिव्यौ जागरूके जागरण- शीलेसत्यौ ध्रुवे अविनाशिनिपदेन्तरिक्षेतस्थतुः तिष्ठतः उतापिच युवती नित्यतरुण्यौ स्वसारा भगिन्यौ एकस्मादात्मनोजातेइतिभवन्तीतस्थतुरित्यन्वयः आदु अनन्तरम् उःपूरणः मिथु नानिद्वन्द्वानिनामउर्वीपृथ्वीबहुलेदूरेअन्तेरोदसीपुरोहितेइत्यादीनिनामानिब्रुवाते ते परस्परंकृत-

¹ ऋ० सं० १. ३. ११. । ² ऐ० ब्रा० ४. २७. ।

कर्मणिकर्तृप्रत्ययः उभ्यांनिमिर्द्वन्द्वनामभिर्द्यावापृथिव्यावुच्येतेइत्यर्थः ॥ सपान्या इ्पांसुलु-गितिविभक्तेरादेशः । दूरेअन्ते इण्गतौ दुरीणोलोपश्चेतिक्तप्रत्ययः धातोर्लोपश्च रोरीतिरे-फलोपः ढ्रलोपेपूर्वस्यदीर्घोणःइतितीर्घः अन्तशब्दोअमेरसिहसीत्यादिनातन्प्रत्ययान्तः समुपमानेबहु-व्रीहिः इगन्तादितिक्तस्यामलुक् पूर्वपदस्वरः । जागरूके जागृनिद्राक्षयेइत्यस्माच्चाच्छी-ल्येजागरूकइत्यूकप्रत्ययः प्रत्ययस्वरः । स्वसारा नपरङ्स्वस्रादिभ्यइतिङीप्प्रतिषेधः ॥ ७ ॥

७. परस्पर प्रीतियुक्त कर्म-द्वारा ऐकमत्य प्राप्त, वियुक्त होकर वर्त-मान अविनाशिनी द्यावा-पृथिवी जागरणशील होकर अनश्वर अन्तरिक्ष में नित्य तरुण भगिनीद्वय की तरह एक आत्मा से जायमान होकर ठहरी हैं । वे दोनों आपस में द्वन्द्व (मिथुन) नाम अभिहित करती हैं ।

विश्वेदेतेजनिमासंविविक्तोमहोदेवान्बिभ्रतीनव्यथेते ।
एजद्ध्रुवंपत्यतेविश्वमेकंचरत्पतत्रिविषुणंविजातम् ॥ ८ ॥

विश्वा । इत् । एते इति । जनिम । सम् । विविक्तः । महः ।
देवान् । बिभ्रती इति । न । व्यथेते इति । एजत् । ध्रुवम् । पत्यते ।
विश्वम् । एकम् । चरत् । पतत्रि । विषुणम् । वि । जातम् ॥ ८ ॥

एतेद्यावापृथिव्यौ विश्वेजनिम सर्वाण्यपिभूतजातानिसंविविक्तः अवकाशप्रदानेनसं-विभज्यकुरुतः किंच महोमहतोदेवानिन्द्रसूर्यादीन्सरित्समुद्रपर्वतादींश्चबिभ्रती बिभ्राणे अपि नव्यथेते नक्षियेते किंच एजज्जङ्गमात्मकं ध्रुवंस्थावरात्मकंच विश्वमप्येकंस्थानंपृथिवीमेव पत्यतेऽभिगच्छति तथा चरंचजङ्गमंपशुजातंच पतत्रिपक्षिजातंच विषुणंविष्वङ्नानारूपम् अन-योर्मध्येवितिष्ठते उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ॥ विविक्तः विचिरपृथग्भावे जुहोत्यादिः निपातः । बिभ्रती डुभृञ्धारणपोषणयोरित्यस्यशतरि नाभ्यस्ताच्छतुरितिनुमभावः अभ्यस्त-स्वरः । एजत् एजृकम्पने शतरिरूपम् । पत्यते पद्गतौ दिवादिरात्मनेपदी दकारस्यतकारश्छा-न्दसत्वेननिपातः ॥ ८ ॥

८. यह द्यावा-पृथिवी सम्पूर्ण भौतिक वस्तु को अवकाश-दान-द्वारा विभक्त करती है । महान् सूर्य, इन्द्र आदि अथवा सरित्, समुद्र, पर्वत आदि को धारण करके भी व्यथित नहीं होती हैं । जङ्गमात्मक और स्थावरात्मक जगत् केवल एक पृथिवी को ही प्राप्त करता है । जङ्गम पशु और पक्षिगण नाना रूप होकर द्यावा-पृथिवी के मध्य में ही अवस्थित होते हैं ।

सनापुराणमध्येम्यारान्महःपितुर्जनितुर्जामितन्नः ।
देवासोयत्रपनितारएवैरुरौपथिव्युतेतस्थुरन्तः ॥ ९ ॥

सना॑ । पु॒रा॒णम् । अधि॑ । ए॒मि॒ । आ॒रात् । म॒हः । पि॒तुः ।
ज॒नि॒तुः । जा॒मि । तत् । नः॒ । दे॒वासः॑ । यत्र॑ । प॒नि॒तारः॑ । एवैः॑ ।
उ॒रौ । प॒थि । विऽउ॑ते । त॒स्थुः । अ॒न्तरिति॑ ॥ ९ ॥

हेद्यौः महोमहत्याःपितुःसर्वस्यपालयित्र्याः जनितुर्जनयित्र्याः तव सना सनातनं पुराणं-पूर्वक्रमागतंनोऽस्माकंयदेतज्जामित्वं सर्वमेकस्माज्जातमितिद्यौर्भगिनीभवति तादृशं भगिनीत्वं तदारादधुना अध्येमि स्मरामि दिवःपितृत्वेमनयितृत्वेचमन्त्रवर्णः—द्यौर्मेपिताजनितानाभिरत्रेति । यत्रयस्यांदिव्यन्तर्मध्ये उरौविस्तीर्णेव्युते विविक्ते पथि नभसि पनितारस्त्वांस्तुवन्तोदेवासोदेवाः एवैर्गमनसाधनैःस्वैःस्वैर्वाहनैःसहिताःसन्तस्तस्थुः तत्रस्थितादेवामदीयंस्तोत्रंशृण्वन्त्वितिभावः ॥ पुराणं पुराशब्दात्सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौतुट्चेतिकार्ये सायंचिरमितिट्युप्रत्ययः पुराणप्रोक्तेषुब्राह्मणकल्पेष्वितिनिपातनात्तुडभावः निपातनादेवान्तोदात्तत्वम् । एमि इक्स्मरणे अदादिः लटिरूपं निघातः । व्युते व्येञ् तन्तुसन्ताने कर्मणिक्तः यजादित्वात्संप्रसारणं गतिरनन्तरइतिगतेःप्रकृतिस्वरः । तस्थुः तिष्ठतेर्लिटिरूपं यत्रयोगादनिघातः ॥ ९ ॥

९ः हे द्यौ, तुम महान् हो, तुम सबका जनन करती हो और पालन करती हो। तुम्हारी सनातनता, पूर्वक्रमागता और हम लोगों का बन्धुत्व सब एक से ही उत्पन्न हुआ है। द्यौ भगिनी होती है। हम अभी उसका (भगिनीत्व का) स्मरण करते हैं। द्युलोक में, विस्तीर्ण और विविक्त आकाश में तुम्हारी स्तुति करनेवाले देवता अपने वाहनों के सहित स्थित हैं। वहाँ ठहरकर वे स्तोत्र सुनते हैं।

अथदशमी—

इ॒मंस्तोमं॑रोदसी॒प्रब्र॑वीम्यृदू॒दराः॑शृण्वन्न॒ग्निजि॒ह्वाः ।
मि॒त्रःस॒म्राजो॒वरु॑णो॒युवा॑नआदि॒त्यासः॑क॒वयः॑पप्रथा॒नाः ॥ १० ॥ २५

इ॒मम् । स्तोम॑म् । रोद॒सी इति॑ । प्र । ब्र॒वी॒मि॒ । ऋ॒दू॒दराः॑ ।
शृ॒ण्व॒न् । अ॒ग्नि॒ऽजि॒ह्वाः । मि॒त्रः । स॒म्ऽराजः॑ । वरु॑णः ।
युवा॑नः । आ॒दि॒त्यासः॑ । क॒वयः॑ । प॒प्र॒था॒नाः ॥ १० ॥ २५ ॥

हेरोदसी द्यावापृथिव्यौ इमंयुष्मदीयंस्तोमंस्तोत्रंप्रब्रवीमि प्रकर्षेणवदामि ऋदूदराः ऋदुरुदरंयेषांतेऋदूदराः यद्वा मृदुरुदरेसोमोयेषांतेऋदूदराः अग्निजिह्वाः अग्निर्जिह्वास्थानीयो येषांतेतथोक्ताः सम्राजः सम्यग्दीप्यमानाः युवानोनित्यतरुणाः यद्वा यजमानानामभिमतफलैर्मिश्री-कुर्वन्तः कवयःक्रान्तदर्शिनः पप्रथानाः स्वानिस्वानिकर्माणिप्रथयन्तोआदित्यासःमित्रादयोदेवाः

[1] ऋ० सं० १. १. १०.।

शृण्वन् तदिदंस्तोत्रंशृण्वन्तु ॥ शृण्वन् श्रुश्रवणेइत्यस्यलेट्यडागमः । अग्निजिह्वाः त्रिप-क्कादित्वादन्तोदात्तत्वम् । पत्यमानाः प्रत्यस्थानेइत्यस्यशानचिरूपं चित्वादन्तोदात्तः ॥ १० ॥

१०. हे द्यावा-पृथिवी, तुम्हारे इस स्तोत्र का हम अच्छी तरह से उच्चारण करते हैं। सोम को उदर में धारण करनेवाले, अग्नि-रूपी जिह्वावाले, भली भाँति दीप्यमान, नित्य तरुण, कवि, अपने-अपने कर्म को प्रकट करनेवाले मित्र आदि देवता इस स्तोत्र को सुनें।

॥ इतितृतीयस्यतृतीयेएकविंशोवर्गः ॥ २९ ॥

हिर॑ण्यपाणिःसवि॒तासु॒जि॒ह्वस्त्रिरादि॒वोवि॒दथे॒पत्य॑मानः ।
दे॒वेषु॒चसवि॒तःश्लोकमश्रे॒राद॒स्मभ्य॒मासु॑वस॒र्वता॑तिम् ॥ ११ ॥

हिर॑ण्यऽपाणिः । स॒वि॒ता । सु॒ऽजि॒ह्वः । त्रिः । आ । दि॒वः ।
वि॒दथे॑ । पत्य॑मानः । दे॒वेषु॑ । च॒ । स॒वि॒त॒रिति॑ । श्लोक॑म् ।
अश्रेः॑ । आत् । अ॒स्मभ्य॑म् । आ । सु॒व॒ । सर्व॑ऽतातिम् ॥ ११ ॥

हिरण्यपाणिः दानार्थंहिरण्यंपाणौहस्तेयस्यसतथोक्तः यद्वा देवकर्तृकयागेसवितुर्ऋत्विग्भूतस्यहस्तेप्राशित्रंप्रकर्षणार्थम् अध्वर्यवोददुः तत्प्राशित्रंतस्यहस्तौचिच्छेद ततोऽध्वर्यवो हिरण्मयौहस्तौकृत्वासंदधुः ततोऽयंहिरण्यपाणिः तथाचकौषीतकं—सवित्रेप्राशित्रंप्रतिजहु-स्तत्तस्यपाणीप्रचिच्छेदतस्मैहिरण्मयौप्रतिदधुस्तस्माद्धिरण्यपाणिरिति । सुजिह्वः शोभनवाक् सविता विदथेयज्ञे त्रिः त्रिषुसवनेषुदिवोनभसःसकाशात्आपत्यमानःआगच्छन्भवतीतिशेषः परो-क्षेणप्रत्यक्षः हेसवितस्त्वंदेवेषुस्तोतृषुविद्यमानंचश्लोकं श्लोक्यतेऽनेनेतिश्लोकःस्तोत्रं तदश्नोः प्राप्नुहि आदनन्तरं सर्वतातिसर्वमपेक्षितंफलमस्मभ्यमासुव प्रेरय ॥ हिरण्यपाणिः हिर-ण्यशब्दंयास्कोव्युत्पादयति—हिरण्यंकस्माद्ध्रियतआयम्यमानमितिवाह्रियतेजनाज्जनमित्यादिना । पाणिशब्दंचव्युत्पादयति—पाणिःपणायतेःपूजाकर्मणइति । हर्यगतिकान्त्योः हर्यतेः कन्यन् हिरश्चेतिकन्यन् हिरइत्ययमादेशोधातोः नित्त्वादाद्युदात्तः बहुव्रीहौपूर्वपदस्वरः । पत्य-मानः पद्लृगतौ दिवादिरात्मनेपदी दकारस्यतकारश्छान्दसः । अश्रेः श्रिञ्सेवायामित्यस्यलङि बहुलंछन्दसीतिशपोलुक् छन्दस्युभयथेतिनिषातः । षुञ् प्रेरणे तुदादिः । सर्वतातिं सर्वदेवात्तातिल् स्वार्थिकोलित्स्वरः ॥ ११ ॥

११. दानार्थ हिरण्य को हाथ में रखनेवाले, शोभन वचनवाले सविता यज्ञ के तीनों सवनों में आकाश से आते हैं। हे सविता, तुम स्तोताओं के स्तोत्र को प्राप्त करो। इसके अनन्तर, सम्पूर्ण, अभिलषित फल को हम लोगों के लिए प्रेरित करो।

अथद्वादशी—

सुकृत्सुपाणिःस्ववाँऋतावादेवस्त्वष्टावसेतानिनोधात्।
पूषण्वन्तऋभवोमादयध्वमूर्ध्वग्रावाणोअध्वरमतष्ट ॥ १२ ॥

सुऽकृत् । सुऽपाणिः । स्वऽवान् । ऋतऽवा । देवः । त्वष्टा ।
अवसे । तानि । नः । धात् । पूषण्ऽवन्तः । ऋभवः ।
मादयध्वम् । ऊर्ध्वऽग्रावाणः । अध्वरम् । अतष्ट ॥ १२ ॥

सुकृत् सुष्ठु जगतःकर्ता सुपाणिःकल्याणपाणिः स्ववान्धनवान् ऋतावासत्यसंकल्पः त्वष्टादेवः तानिचास्माकमपेक्षितानि अवसेरक्षणायनोऽस्मभ्यंधात् दधातु ऋभवः उरुभान्तीत्यृभवः हेऋभवः पूषण्वन्तः पूष्णासहितायूयंमादयध्वम् अस्मान्धनप्रदानेनहृष्टान्कुरुत ऊर्ध्वग्रावाणः सोमाभिषवार्थमुद्यतग्रावाणःऋत्विजइममस्मदीयमध्वरमतष्टाकुर्वन् ॥ अतष्ट तक्षूत्वक्षूतनूकरणे उदित्वादिडभावः झलोझलीतिसिचोलोपः स्कोःसंयोगाद्योरितिककारलोपः बहुवचनस्यैकवचनंछान्दसम् ॥ १२ ॥

१२. सुन्दर जगत् के कर्त्ता, कल्याणपाणि, धनवान्, सत्यसङ्कल्प त्वष्टदेव रक्षा के लिए हम लोगों को सम्पूर्ण अपेक्षित फल प्रदान करें। हे ऋभुओ, पूषा के सहित तुम हम लोगों को धन प्रदान करके हृष्ट करो। क्योंकि, सोमाभिषेक के लिए प्रस्तर को उत्तोलन करनेवाले ऋत्विकों ने यह यज्ञ किया है।

विद्युद्रथामरुतऋष्टिमन्तोदिवोमर्याऋतजाताअयासः।
सरस्वतीशृणवन्यज्ञियासोधातारयिंसहवीरंतुरासः ॥ १३ ॥

विद्युत्ऽरथाः । मरुतः । ऋष्टिऽमन्तः । दिवः । मर्याः ।
ऋतऽजाताः । अयासः । सरस्वती । शृणवन् । यज्ञियासः ।
धात । रयिम् । सहऽवीरम् । तुरासः ॥ १३ ॥

विद्युद्रथाः विद्योतमानरथोपेताः ऋष्टिमन्तोदीप्तिमन्तः ऋष्टिरायुधविशेषः तद्वन्तोवा दिवोद्योतमानाः द्योतमानस्यपदस्यपुत्रावामर्याः शत्रूणांमारयितारः मनुष्येभ्योहितावा ऋतजाताः उदकार्थमुत्पन्नाः यद्वा ऋतमुदकंजातंयेभ्यः तेऋतजाताः अयासः सततगमनशीलाः यज्ञियासः यज्ञार्हामरुतः सरस्वती गद्यपद्यरूपेणप्रसरणमस्यास्तीतिसरस्वती वाग्देवताच एतेसर्वेदेवामदीयमिमंस्तोमंशृणवन् शृण्वन्तु तुरासः अस्माकंफलप्रदानेत्वरणयुक्ताः

हेमरुतः सहवीरं पुत्रसहितंरयिंधनंदात अस्मभ्यंदत्त ॥ धात दधातेर्लोटि बहुलंछन्दसीतिशपोलुक् तस्यतस्थस्थमिपामितितवादेशः पादादित्वादनिघातः तपःपित्त्वादनुदात्तत्वेधातुस्वरः । तुरासः तुरत्वरणे इगुपधलक्षणःकः आमन्त्रितत्वान्निघातः ॥ १३ ॥

१३. शोभमान रथवाले, आयुधवान् दीप्तिमान्, शत्रुओं के विनाशक, यज्ञोत्पन्न, सतत गमनशील, यज्ञार्ह मरुद्गण और वाग्देवता हमारे इस स्तोत्र को सुनें। हे त्वरान्वित मरुद्गण, तुम पुत्रविशिष्ट धन दान करो।

विष्णुंस्तोमासःपुरुदस्ममर्काभगस्येवकारिणोयामनिग्मन् ।
उरुक्रमःककुहोयस्यपूर्वीर्नमर्धन्तियुवतयोजनित्रीः ॥ १४ ॥

विष्णुम् । स्तोमासः । पुरुऽदस्मम् । अर्काः । भगस्यऽइव ।
कारिणः । यामनि । ग्मन् । उरुऽक्रमः । ककुहः । यस्य ।
पूर्वीः । न । मर्धन्ति । युवतयः । जनित्रीः ॥ १४ ॥

स्तोमासःस्तूयन्तेएभिरितिस्तोमाःस्तोत्राणि अर्काअर्चनीयानिशस्त्राणिभगस्येवधनस्यकारिणः कर्तृणीवस्थितानितानियामनिस्तततमतायमानेऽस्मिन्यज्ञे पुरुदस्मं बहुकर्माणं यद्वा बहून्दस्यतिउपक्षपयतीतिपुरुदस्मः तं विष्णु देवं ग्मन् गच्छन्तु पूर्वीःबह्वः जनित्रीः सर्वस्यजनयित्र्यः युवतयः परस्परमसंकीर्णाःककुहःकंस्कुवन्तिविस्तारयन्तिककुभोदिशः यद्वा ककुबुच्छ्रायः उच्छ्रिताइवहिदिशोवृक्षाग्रेषूपलभ्यमानाःसैताहन्ति एतादिशोयस्यविष्णोराज्ञां नमर्धन्ति नहिंसन्तिसविष्णुरुरुक्रमः उरुर्महान्क्रमः पादविक्षेपोयस्यसः त्रिविक्रमावतारे एकेनैवपादेनसर्वंजगदाक्रम्यातिष्ठत ॥ ग्मन् गमेर्लुङि मन्त्रेघसेत्यादिनाच्लेर्लुक् । ककुभः पृषोदरादित्वाद्रूपस्वरसिद्धिः ॥ १४ ॥

१४. धन का हेतुभूत यह स्तोत्र और अर्चनीय शास्त्र, इस विस्तृत यज्ञ में, बहुकर्मा विष्णु के निकट गमन करे। सबकी जनयित्री और परस्पर असङ्कीर्णा दिशायें, जिस विष्णु को हिंसित नहीं करती हैं, वह विष्णु उरुविक्रमी हैं। त्रिविक्रमावतार में एक ही पैर से उन्होंने सम्पूर्ण जगत् को आक्रान्त किया था।

इन्द्रोविश्वैर्वीर्यैःपत्यमानउभेआपप्रौरोदसीमहित्वा ।
पुरन्दरोवृत्रहाधृष्णुषेणःसंगृभ्यानआभराभूरिपश्वः ॥ १५ ॥ २६ ॥

इन्द्रः । विश्वैः । वीर्यैः । पत्यमानः । उभेइति । आ । पप्रौ ।
रोदसी इति । महिऽत्वा । पुरम्ऽदरः वृत्रऽहा । धृष्णुऽसेनः ।
सम्ऽगृभ्य । नः । आ । भर । भूरि । पश्वः ॥ १५ ॥ २६ ॥

विश्वैः सर्वैर्वीर्यैः सामर्थ्यैः पत्यमानः प्राप्यमाणः स इन्द्रः उभे रोदसी द्यावापृथिव्यौ महित्वा स्वकीयेन महिम्ना आ पप्रौ पूरयामास शेषः प्रत्यक्षकृतः पुरन्दरः शत्रुपुरां दारयिता वृत्रहा वृत्रस्य हन्ता धृष्णुषेणः पराभिभवनशीलसेनोपेतः समन्द्रणइत्यर्थः स त्वं पशून् संगृभ्य संगृह्य नोऽस्मभ्यं भूरि भूतं यथा भवति तथा आभर देहि यद्वा पशः पशोर्भूरि बहुत्वं बहून् पशूं प्रयच्छेति ॥ पुरन्दरः पृ विदारणे इत्यस्य पुरःशब्दे उपपदे पूःसर्वयोर्दारिसहोरिति खच्प्रत्ययः वाचंयमपुरन्दरौ चेति निपातनात् पूर्वपदस्य अमागमः चित्त्वादन्तोदात्तः । धृष्णुषेणः पूर्वपदादिति संहितायां षत्वं यदा षत्वं तदा रषाभ्यामिति णत्वम् । संगृभ्य ग्रहेर्ल्यपि स्थानिवद्भावात् संप्रसारणं हृग्रहोर्भश्छन्दसीति भत्वं क्तिन्नीति प्रत्ययात् पूर्वस्योदात्तत्वम् । पशः पशुशब्दात् शसः महादिषु छन्दसि वा वचनमिति सवर्णदीर्घाभावः ॥ १५ ॥

१५. सकल-सामर्थ्य-सम्पन्न इन्द्र ने द्यावा और पृथिवी दोनों को महिमा-द्वारा पूर्ण किया है। शत्रुपुरी को विदीर्ण करनेवाले, वृत्र को मारनेवाले और शत्रुओं को पराजित करनेवाली सेनावाले इन्द्र पशुओं का संग्रह करके हमें प्रचुर परिमाण में पशुवान करें।

**नासंत्या मे पितरा बन्धुपृच्छा सजात्यमश्विनोश्चारु नाम ।**
**युवं हि स्थो रयिदौ नो रयीणां दात्रं रक्षेथे अकवैरदब्धा ॥ १६ ॥**

नासंत्या । मे । पितरा । बन्धुऽपृच्छा । सऽजात्यम् । अश्विनोः । चारु । नाम । युवम् । हि । स्थः । रयिऽदौ । नः । रयीणाम् । दात्रम् । रक्षेथे इति । अकवैः । अदब्धा ॥ १६ ॥

हे नासत्यावश्विनौ बन्धुपृच्छा हविःप्रदातृत्वेन बन्धून् स्मान् पोषितमर्थं पृच्छत इति बन्धूनां प्रष्टारौ युवां मे पितरौ पालयितारौ भवतम् युवयोरश्विनोः सजात्यं समाने भवं संगतं चारु नाम कमनीयं खलु हे अश्विनौ युवं युवां नोऽस्मभ्यं रयीणां धनानां मध्ये रयिदौ उत्तमस्य धनस्य दातारौ स्थो हि भवथः खलु किंच अदब्धा केनाप्यतिरस्कृतौ युवां दात्रं हविषां दातारं मामकवैरकुत्सितैः शोभनैः कर्मभिः रक्षेथे पालयतम् ॥ नासत्या नभ्राण्नपादित्यादिना निपातनात् नञः प्रकृतिभावः । बन्धुपृच्छा पृच्छेः क्विप् सुपां सुलुगिति सुपो डादेशः । सजात्यं समाने भवं भवे छन्दसीति यत् तित्स्वरितः । स्थः अस्तेर्लटि रूपं हियोगादनिघातः ॥ १६ ॥

१६. हे अश्विनीकुमारो, तुम हम बन्धुओं की अभिलाषा की जिज्ञासा करनेवाले हो, हमारे पालक होओ। तुम दोनों का मिलन कमनीय है। हे अश्विन्, हमारे लिए तुम उत्तम धन के देनेवाले होओ। तुम्हारा तिरस्कार कोई भी नहीं करता है। तुम्हें हम हवि देते हैं। तुम शोभन कर्म-द्वारा हमारा पालन करो।

अथ सप्तदशी—

**म॒हत्तद्वः॑ कवय॒श्चारु॒ नाम॒ यद्ध॑ देवा॒ भव॑थ॒ विश्व॒ इन्द्रे॑ ।**
**सख॑ ऋ॒भुभिः॑ पुरुहूत प्रि॒येभि॑रि॒मां धियं॑ सा॒तये॑ तक्षता नः ॥ १७ ॥**

म॒हत् । तत् । वः॒ । क॒व॒यः॒ । चारु॑ । नाम॑ । यत् । ह॒ । दे॒वाः॒ । भव॑थ । विश्वे॑ । इन्द्रे॑ । सखा॑ । ऋ॒भुऽभिः॑ । पु॒रु॒ऽहू॒त॒ । प्रि॒येभिः॑ । इ॒माम् । धिय॑म् । सा॒तये॑ । त॒क्ष॒त॒ । नः॒ ॥ १७ ॥

हे कवयो मेधाविनो हे देवाः वो युष्माकं तत्तादृशं महत्प्रभूतं नाम कर्म नमनं वा चारु मनोहरं खलु यद्येन कर्मणा विश्वे सर्वे यूयमिन्द्रे इन्द्रोपलक्षिते लोके देवा भवथ देवत्वं प्राप्नुथ खलु हे पुरुहूत बहुभिराहूत हे इन्द्र त्वं प्रियेभिः प्रियतमैः ऋभुभिः ऋतेन भवन्ति ऋतेन भान्तीति वा ऋभुभिर्देवैः सखासि इन्द्रसहिता ऋभवो यूयम् इमामस्मदीयां धियं स्तुतिं नोऽस्माकं सातये धनादिलाभार्थं तक्षत स्वीकुरुत ॥ यत् सुपां सुलुगित्यादिना सुपो लुक् । भवथ भवतेर्लेटि रूपं यद्वृत्तयोगादनिघातः । सख ऋभुभिरित्यस्य संहितायां ऋत्यक इति प्रकृतिभावो ह्रस्वत्वं च ॥ १७ ॥

१७. हे कवि देवगण, तुम्हारा वह प्रभूत कर्म मनोहर है, जिससे तुम लोग इन्द्रलोक में देवत्व प्राप्त करते हो। हे बहुजनाहूत इन्द्र, तुम प्रियतम ऋभुओं के साथ सख्यभावापन्न हो। तुम हमारी इस स्तुति को, धनादिलाभ के लिए, स्वीकृत करो।

अथाष्टादशी—

**अ॒र्य॒मा णो॒ अदि॑तिर्य॒ज्ञिया॒सोऽद॑ब्धानि॒ वरु॑णस्य व्र॒तानि॑ ।**
**यु॒योत॑ नो अनप॒त्यानि॒ गन्तोः॑ प्र॒जावा॑न्नः पशु॒माँ अ॑स्तु गा॒तुः ॥ १८ ॥**

अ॒र्य॒मा । नः॒ । अदि॑तिः । य॒ज्ञिया॑सः । अद॑ब्धानि । वरु॑णस्य । व्र॒तानि॑ । यु॒योत॑ । नः॒ । अ॒न॒प॒त्यानि॑ । गन्तोः॑ । प्र॒जाऽवा॑न् । नः॒ । प॒शु॒ऽमान् । अ॒स्तु॒ । गा॒तुः ॥ १८ ॥

अर्यमा ऋच्छति सर्वदा गच्छतीत्यर्यमा सूर्यः अदितिर्देवमाता यज्ञियासो यज्ञार्हा देवाश्च वरुणस्य व्रतानि कर्माणि अदब्धान्यहिंसितानि भवन्ति एवंरूपः ते चार्यमादयो देवा नोऽस्मान् रक्षन्त्विति शेषः ते यूयं नोऽस्माकमनपत्यानि अपत्यानां पुत्राणामहितानि कर्माणि यद्वा पतनकारणं भवतीत्यपत्यं तदन्यान्यनपत्यानि पतनकारणानि कर्माणि गन्तोः सन्मार्गो युयोत पृथक्कुरुत यथा तान्यहितानि कर्माणि न स्पृशन्ति तथा कुरुतेत्यर्थः अथ गातुः गायन्ति स्तुवन्ती-

न्द्वावीनश्रेतिगातुर्गृहं नोऽस्मदीयंगृहं पशुमत्पश्वादियुक्तंप्रजावानपत्योपेतमस्तु ॥ अर्यमा ऋगतौ अनुयस्पीहस्नेहरमित्यादिनानिपातनाद्रूपसिद्धिः । अदितिः दोअवखण्डनेइत्यस्यक्तोरिकित् नञ्समासः अदितिरदीनेतियास्कः । छान्दसंहस्वत्वं नञःस्वरः । शृणोत यौतेरभिश्रीभावकर्मणोर्लोटिबहुलंछन्दसीतिशपःश्लुः तसनाथितितप्रत्ययस्यतबादेशः । गन्तोः गम्लृगतौ सितनिगमिमसिसच्यविधाञ्कुशिभ्यस्तुनितितुन्प्रत्ययः नित्त्वादाद्युदात्तः । गातुः गापाहिभ्यश्चेतितुप्रत्ययः ॥ १८ ॥

१८. सर्वदा गमनशील सूर्य, देवमाता अदिति, यजार्ह देवगण और अहिंसित कर्म करनेवाले वरुण हम लोगों की रक्षा करें। वे हमारे मार्ग से पुत्रों के अहित कर्म को अथवा पतनकारक कर्म को दूर करें। हमारे गृह को वे पशु आदि से तथा अपत्य से युक्त करें।

देवानांदूतःपुरुधप्रसूतोऽनागान्नोवोचतुसर्वताता ।
शृणोतुनःपृथिवीद्यौरुतापःसूर्योनक्षत्रैरुर्व१न्तरिक्षम् ॥ १९ ॥

देवानाम् । दूतः । पुरुध । प्रऽसूतः । अनागान् । नः । वोचतु । सर्वऽताता । शृणोतु । नः । पृथिवी । द्यौः । उत । आपः । सूर्यः । नक्षत्रैः । उरु । अन्तरिक्षम् ॥ १९ ॥

पुरुध पुरुषुबहुषुदेशेषुप्रसूतः अग्निहोत्रार्थंविहितः यद्वा पुरुभिर्यजमानैःप्रसूतः यष्टव्यदेवानाकर्षयितीतिदेवानांदूतः तथाचतैत्तिरीयकम्—अग्निर्देवानांदूतआसीदिति । तादृशोऽग्निः कर्मकर्तृसाधनवैगुण्येनसापराधानोऽस्मानन्गागाननागसः सर्वताता सर्वत्रवोचतुब्रवीतु किंच पृथिवीद्यौश्च उतापिचापःसूर्यश्च नक्षत्रैरुरुविस्तीर्णमन्तरिक्षंच एतेसर्वेदेवानोऽस्मदीयांस्तुतिं शृणोतु शृण्वन्तु प्रत्येकविवक्षयैकवचनम् ॥ प्रसूतः षूप्रेरणे कर्मणिक्तः गतिरनन्तरइतिगतेःप्रकृतिस्वरः । अनागान् शसि सकारलोपश्छान्दसः स्वर्णदीर्घत्वेतस्माच्छसोनइतिनत्वम् । वोचतु वचपरिभाषणे व्यत्ययोबहुलमितिशपोऽङादेशः वचउम् गुणः निघातः । नक्षत्रैः नक्षगतौ अभिनक्षियजिवन्धिपतिभ्योऽत्रन्नित्यत्रन्प्रत्ययः नित्त्वादाद्युदात्तः यद्वा नक्षरतिनक्षीयतइतिवानक्षत्रं नभ्राण्नपादितिनञःप्रकृतिभावः नञ्स्वरः ॥ १९ ॥

१९. अग्निहोत्र के लिए बहु देशों में प्रसूत या विहित और देवताओं के दूत अग्नि हैं। कर्मसाधन की विगुणता से हम सापराध हैं। हमें अग्नि सर्वत्र निरपराध कहें। द्यावा-पृथिवी, जलसमूह, सूर्य और नक्षत्रों-द्वारा पूर्ण विशाल अन्तरिक्ष हमारी स्तुति सुनें।

शृण्वन्तुनोवृषणःपर्वतासोध्रुवक्षेमासइळयामदन्तः ।
आदित्यैर्नोअदितिःशृणोतुयच्छन्तुनोमरुतःशर्मभद्रम् ॥ २० ॥

१ नि० ४. २२.

शृण्वन्तु । नः । वृषणः । पर्वतासः । ध्रुवक्षेमासः । इळया ।
मदन्तः । आदित्यैः । नः । अदितिः । शृणोतु । यच्छन्तु । नः ।
मरुतः । शर्म । भद्रम् ॥ २० ॥

वृषणः अभिमतफलसेचकाः पर्वतासः पृणन्तिपूरयन्तिअर्थिनांकामानितिपर्वतास्तदभिमानिनोदेवाः ध्रुवक्षेमासः निश्चलस्थानाः इळयाहविर्लक्षणेनान्नेनमदन्तोमाद्यन्तःसन्तः नोऽस्मदीयांस्तुतिंशृण्वन्तु किंच आदित्यैरपत्यभूतैरादित्यैरुपेतादितिर्नोऽस्मदीयांस्तुतिंशृणोतु मरुतश्चनोऽस्मभ्यंभद्रंकल्याणकरंशर्म सुखं यच्छन्तुददतु ॥ आदित्यैः अदितेरपत्यानीत्यर्थे दित्यदित्येतिण्यः प्रत्ययस्वरेणान्तोदात्तः सुपासहैकादेशेकृते एकादेशउदात्तः ॥ २० ॥

२०. अभिमत-फल-सेचक मरुद्गण, अर्थियों की कामना को पूर्ण करनेवाले निश्चल पर्वत हविरन्न से प्रसन्न होकर हमारी स्तुति सुनें। अदिति अपने पुत्रों के साथ हमारी स्तुति सुनें। मरुद्गण हमें कल्याण-कर सुख दें।

मथस्वस्त्ययनमानः सदासुगइत्यृचंमथनगच्छेत् सूत्रितश्च—सदासुगःपितुमाँअस्तुपन्थाइ-तिपन्थानमवस्थेति ।

सदासुगःपितुमाँअस्तुपन्थामध्वादेवाओषधीःसंपिपृक्त ।
भगोमेअग्नेसख्येनमृध्याउद्रायोअश्यांसदनंपुरुक्षोः ॥ २१ ॥

सदा । सुऽगः । पितुऽमान् । अस्तु । पन्थाः । मध्वा । देवाः ।
ओषधीः । सम् । पिपृक्त । भगः । मे । अग्ने । सख्ये । न ।
मृध्याः । उत् । रायः । अश्याम् । सदनम् । पुरुऽक्षोः ॥ २१ ॥

हेऽग्ने अस्माकंपन्थामार्गः सदा सर्वदा सुगःसुखेनगन्तुंशक्यः पितुमानन्नवांश्चास्तु हेदेवाःमध्वामाधुर्योपेतेन उदकेनओषधीःसंपिपृक्त संपर्चयत सेचयतेत्यर्थः हेऽग्ने त्वयासख्ये संजातेसति मेममभगोधनंनमृध्याः नविनश्यतु किंच रायोधनस्य पुरुक्षोःबहुअन्नस्य सदनंस्थान-मुदश्यामाश्नुयाम् ॥ सदा स्वरादिष्वाद्युदात्तत्वेनपाठादाद्युदात्तः । पिपृक्त पृचीसंपर्के लोटिबहुलं छन्दसीतिशपःश्लुः बहुलंछन्दसीत्यभ्यासस्येत्त्वम् । मृध्याः मृधिर्हिंसार्थः लिङि तिङांतिङो भवन्तीतितिपःसिप् ॥ २१ ॥

२१. हे अग्नि, हमारा मार्ग सदा सुख से जाने योग्य तथा अन्नवान् हो। हे देवो, मधुर जल से ओषधियों को संसिक्त करो। हे अग्नि, तुमसे मैत्री प्राप्त करने पर हमारा धन विनष्ट नहीं हो। हम जिससे धन के और प्रभूत अन्न के स्थान को प्राप्त करें।

यशोपुरोडाशस्विष्टकृतःस्वदस्वहव्येतियाज्या सूत्रितश्च—स्वदस्वहव्यासमिषोदिदीहीति पुरोडाशस्विष्टकृदिति ।

सूक्तेद्वाविंशी—

**स्वदस्वहव्यासमिषोदिदीह्यस्मद्र्यक्संमिमीहिश्रवांसि ।**
**विश्वाँअग्नेपृत्सुताञ्जेषिशत्रूनहाविश्वासुमनादीदिहीनः ॥२२॥२७॥**

स्वदस्व । हव्या । सम् । इषः । दिदीहि । अस्मद्र्यक् । सम् ।
मिमीहि । श्रवांसि । विश्वान् । अग्ने । पृत्सु । तान् । जेषि ।
शत्रून् । अहा । विश्वा । सुऽमनाः । दीदिहि । नः ॥ २२ ॥ २७ ॥

हेऽग्ने हव्या हवनयोग्यानिहवींषिस्वदस्व स्वादय अस्माकमिषोऽन्नानिसंदिदीहि सम्यक्प्रकाशय दीपितानितानिश्रवांस्यन्नानि अस्मद्र्यक् अस्मदभिमुखानिसंमिमीहि संमानय कुर्वित्यर्थः ततः पृत्सुसंग्रामेषु तान्बाधकान्विश्वान्सर्वान्शत्रून्जेषिजय अथ सुमनाः शोभनमनस्कःसन्नोऽस्माकंविश्वाहासर्वाण्यहानिदीदिहि अग्निहोत्रादिकर्मयोग्यानिप्रकाशय ॥ स्वदस्व स्वदआस्वादने लोटिरूपं पादादित्वात्सार्वधातुकस्वरेधातुस्वरः । दिदीहि दिवुक्रीडा-दावित्यस्यलोटि बहुलंछन्दसीतिविकरणस्यश्लुः परस्माद्धुझल्भ्योहेर्धिरितिदीर्घेकृते पश्चाद्धिलोपः निपातः । अस्मद्र्यक् अस्मानञ्चतीत्यञ्चतेःक्विन् विष्वग्देवयोश्चटेरद्र्यञ्चतावप्रत्यये इत्याद्र्यादेशोयणि ततःपरस्यस्वरितत्वम् । मिमीहि माङ्माने शब्देच जुहोत्यादिः तस्य लोटि व्यत्ययेनपरस्मैपदं निघातः । सुमनाः शोभनंमनोयस्येतिबहुव्रीहौ उत्तरपदाद्युदात्तत्वम् । दीदिहि दिदेर्व्यत्ययेनलुकि लोटि तुजादित्वादभ्यासस्यदीर्घः धिलोपः ॥ २२ ॥

२२. हे अग्नि, हवन-योग्य हवि का आस्वादन करो, हमारे अन्न को भली भाँति प्रकाशित करो और उन अन्नों को हमारे अभिमुख करो। तुम संग्राम में बाधा डालनेवाले सब शत्रुओं को जीतो और प्रफुल्लित मनवाले होकर तुम हमारे सम्पूर्ण दिवसों को प्रकाशित करो ।॥ इतितृतीयस्यतृतीयेऽष्टाविंशोवर्गः ॥ २७ ॥

उषसःपूर्वाइतिद्वाविंशत्यृचंद्वितीयंसूक्तंत्रैष्टुभम् उषसइत्यनुक्रमणिका प्रजापतेरार्षंवैश्व-देवं प्रजापतिर्वैश्वदेवंहीतिपूर्वसूक्तेहिशब्दप्रयोगात् सूक्तविनियोगोलैङ्गिकः । अत्राद्यपेक्षया ततःपरंनवर्चोऽग्न्यादिदेवताकाः ततःपराहोरात्रिदेवताका ततश्चतस्रोरोदस्योः पञ्चदश्याद्यास्तिस्रो षोडशीदिग्देवताका ततःसप्तऋचः पर्जन्यःइन्द्रस्यकेचिदग्नेस्त्वष्टुश्चेतिमन्यन्ते ।

तत्रप्रथमा—

**उषसःपूर्वाअधयद्व्यूषुर्महद्विजज्ञेअक्षरंपदेगोः ।**
**व्रतादेवानामुपनुप्रभूषन्महद्देवानामसुरत्वमेकम् ॥ १ ॥**

उषसः । पूर्वाः । अध । यत् । विऽऊषुः । महत् । वि । जज्ञे ।
अक्षरम् । पदे । गोः । व्रता । देवानाम् । उप । नु । प्रऽभूषन् ।
महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १ ॥

पूर्वाउदयकालात्प्राचीनाउषसोयद्यदाव्यूषुः व्युच्छन्ति अथ तदानीम् अक्षरं नक्षरतीत्यक्षरम् अविनाश्यादित्याख्यंमहत्भूतंज्योतिर्गोरुदकस्यपदेस्थानेसमुद्रेन्तरिक्षेवाविजज्ञे उत्पद्यतेअथोदितेसूर्ये प्रभूषन्अग्निहोत्रादिकर्मसुप्रभवितुमिच्छन्यजमानःव्रताकर्माणिदेवानांनुक्षिप्रम् उपसमीपंतिष्ठति योग्यक्रियाध्याहारः तदिदंदेवानामेकंमुख्यम् असुरत्वमस्यतिक्षिपतिसर्वानित्यसुरः प्रबलः तस्यभावोसुरत्वंप्राबल्यं महदैश्वर्यम् ॥ व्यूषुः उच्छविवासेइत्यस्यविपूर्वस्य लिट्युसिरूपं छन्दसीतियोगविभागात्समासः यद्वृत्तयोगादनिघातः । प्रभूषन् भवतेःशनि द्विर्वचनस्यछन्दसिविकल्पितत्वादत्रद्विर्वचनाभावः तदन्तात्शतरिरूपं गतिसमासः शतुर्लसार्वधातुकस्वरेणा-द्युदात्तः ॥ १ ॥

१. उदयकाल से प्राचीन उषा जब व्यक्त होती हैं, तब अविनाशी आदित्य समुद्र से या आकाश में उदित होते हैं। सूर्य के उदित होने पर अग्निहोत्रादि के लिए तत्पर यजमान कर्म करते हैं और शीघ्र ही देवताओं के समीप उपस्थित होते हैं। देवताओं का महान् बल एक ही है।

मोषूणोअत्रजुहुरन्तदेवामापूर्वेअग्नेपितरःपदज्ञाः ।
पुराण्योःसद्मनोःकेतुरन्तर्महद्देवानामसुरत्वमेकम् ॥ २ ॥

मो इति । सु । नः । अत्र । जुहुरन्त । देवाः । मा । पूर्वे ।
अग्ने । पितरः । पदऽज्ञाः । पुराण्योः । सद्मनोः । केतुः ।
अन्तः । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ २ ॥

हेअग्ने अत्रास्मिन्कालेदेवाः नोऽस्मान्सुसुष्ठुमोमाजुहुरन्त माहिंसिषुः तथा पदज्ञाः कर्मोपयुक्तस्यदेवपदस्यज्ञातारः पूर्वेपुरातनाःपितरः माहिंसिषुः यस्मात्केतुर्यज्ञानांप्रज्ञापकःसूर्यः पुराण्योः पुरातनयोःसद्मनोःसीदन्त्यनयोर्देवमनुष्याइतिसद्मनीरोदसी तयोरन्तर्मध्ये उदेति तस्मादस्मान्माहिंसन्नित्यर्थः महद्देवानामित्यादिपूर्ववत् ॥ जुहुरन्त ह्वृकौटिल्ये लुङि जुहोत्यादित्वात्श्लुः व्यत्ययेनात्मनेपदं बहुलंछन्दसीत्युत्वं संज्ञापूर्वकस्यविधेरनित्यत्वाद्वृद्ध्यभावः मन्त्रादेशः ॥ २ ॥

२. हे अग्नि, इस समय देवता हमें अच्छी तरह से मत हिंसित करें। देव-पदवी को प्राप्त पुरातन पुरुष (पितर) हमें मत हिंसित करें। यज्ञ के प्रकाशक, पुरातन द्यावा-पृथिवी के मध्य में उदित सूर्य हमें मत हिंसित करें। देवताओं का महान् बल एक ही है।

वि मे॑ पुरु॒त्रा प॑तयन्ति॒ कामाः॒ शम्यच्छा॑ दीद्ये पू॒र्व्याणि॑ ।
समि॑द्धे अ॒ग्नावृ॒तमिद्व॑देम म॒हद्दे॒वाना॑मसुर॒त्वमेक॑म् ॥ ३ ॥

वि । मे॒ । पु॒रु॒ऽत्रा । प॒तय॒न्ति॒ । कामाः॑ । शमि॑ । अच्छ॑ ।
दी॒द्ये॒ । पू॒र्व्याणि॑ । सम्ऽइ॑द्धे । अ॒ग्नौ । ऋ॒तम् । इत् । व॒दे॒म॒ ।
म॒हत् । दे॒वाना॑म् । अ॒सु॒र॒ऽत्वम् । एक॑म् ॥ ३ ॥

हे अग्ने मे मम पुरुत्रा बहुत्र कामा अभिलाषा: विपतयन्ति विविधं गच्छन्ति शमि अग्नि-ष्टोमादिलक्षणं कर्माच्छाभिलक्ष्य वयं पूर्व्याणि पुरातनानि स्तोत्राणि तदर्थं दीद्ये दीपयामि यज्ञा-र्थमग्नौ समिद्धे दीप्यमाने सति ऋतमित्सत्यमेव वदेम अनृतवचने हि यज्ञे वैगुण्यं स्यादिति ॥ पुरुत्रा देवमनुष्यपुरुषेत्यादिना त्राप्रत्ययः । पतयन्ति पत्लृ गतौ स्वार्थिको णिच् ॥ ३ ॥

३. हे अग्नि, हमारी बहुविध अभिलाषायें विविध दिशा में गमन करती हैं। अग्निष्टोमादि यज्ञ को लक्ष्य कर हम पुरातन स्तोत्र को दीप्त करते हैं। यज्ञार्थ अग्नि के दीप्त होने पर हम सत्य बोलेंगे। देवताओं का महान् बल एक ही है।

स॒मा॒नो राजा॒ विभृ॑तः पुरु॒त्रा शये॑ श॒यासु॒ प्रयु॑तो॒ वनानु॑ ।
अ॒न्या व॒त्सं भर॑ति॒ क्षेति॑ मा॒ता म॒हद्दे॒वाना॑मसुर॒त्वमेक॑म् ॥ ४ ॥

स॒मा॒नः । राजा॑ । विऽभृ॑तः । पु॒रु॒ऽत्रा । शये॑ । श॒यासु॑ ।
प्रऽयु॑तः । वना॑ । अनु॑ । अ॒न्या । व॒त्सम् । भर॑ति । क्षेति॑ ।
मा॒ता । म॒हत् । दे॒वाना॑म् । अ॒सु॒र॒ऽत्वम् । एक॑म् ॥ ४ ॥

समानः साधारणः सर्वेषां यद्वा एक एव राजा दीप्यमानोऽग्निः पुरुत्रा बहुषु देशेषु विभृतः अग्निहोत्रार्थं विहृतो भवति यद्वा राजाभिषुतः सोमः सर्वेषु देशेषु यज्ञार्थं विहृतो भवति स चाग्निः सोमो वा शयासु शेरते हविरादयः पदार्था अत्रेति शया वेद्यः तासु शये शेते निवसति वनानु अनुवनं वनेष्वरणिरूपेषु काष्ठेषु प्रयुतो निमग्नोऽग्निर्वर्तते सोमश्च वनेषु चमसेषु विभक्तो वर्तते तस्य मातरौ द्यावापृथिव्यौ तयोरन्या द्यौः अस्य भूमेर्गर्भभूतं तथा वत्सं भूतमग्निं सोमं वा भरति वृष्ट्या-दिरूपेण प्रतिपोषयति माता पृथिवी क्षेति केवलं निवासयति ॥ विभृतः हृञ् हरणे कर्मणि क्तः गतिर-नन्तर इति गतेः प्रकृतिस्वरत्वम् । पुरुत्रा अधिकरणे त्राप्रत्ययः । शये शीङ् स्वप्ने लोपस्त इति तकारलोपः शीङः सार्वधातुके गुणः । शयासु शीङ् स्वप्ने एरच् इत्यधिकरणे अच् । भरति हृञ् ह-रणे भ्वादिः पञ्चम्यन्त्याः समर्थाभ्यामिति पूर्वस्य निपातः । क्षेति क्षि निवासगत्योरित्यस्य बहुलं छन्दसीति विकरणस्य लुक् ॥ ४ ॥

४. सर्वसाधारण के राजा दीप्यमान अग्नि (या सोम) बहुत देशों में अग्निहोत्र के लिए स्थापित होते हैं। वे वेदी के ऊपर शयन

करते हैं। अरणि-काष्ठ या चमस के ऊपर विभक्त होते हैं। द्यावा-पृथिवी इनके माता-पिता हैं, उनमें अन्य अर्थात् द्युलोक इन्हें वृष्टि आदि के द्वारा पुष्ट करते हैं और अन्य माता वसुधा इन्हें केवल निवास देती हैं। देवताओं का महान् बल एक ही है।

आ॒क्षित्पूर्वा॒स्वप॑रा अनू॒रुत्स॒द्यो जा॒तासु॒ तरु॑णीष्व॒न्तः ।
अ॒न्तर्व॑तीः सुवते॒ अप्र॑वीता म॒हद्दे॒वाना॑मसुर॒त्वमेक॑म् ॥ ५ ॥ २८ ॥

आ॒ऽक्षित् । पूर्वा॑सु । अप॑राः । अ॒नू॒ऽरुत् । स॒द्यः । जा॒तासु॑ । तरु॑णीषु । अ॒न्तरिति॑ । अ॒न्तःऽव॑तीः । सु॒व॒ते॒ । अप्र॑ऽवीताः । म॒हत् । दे॒वाना॑म् । अ॒सु॒र॒ऽत्वम् । एक॑म् ॥ ५ ॥ २८ ॥

पूर्वासुजीर्णास्वोषधीषु आक्षित् आवर्तमानः तथा अपराः नव्या ओषधीरनूरुत् अनुरुन्धन् उपपत्त्यानुगुण्येनानुतिष्ठन् अग्निः सूर्यो वा सद्यो जातासु तदानीमुत्पन्नासु तरुणीषु पल्लवितासु ओषधीष्वन्तर्वर्तते ता ओषधयः अप्रवीताः केनापि पुरुषेणानिषिक्तरेतस्काः अनन्यरक्षा वा अन्तर्वतीः अग्निना गर्भवत्यो भूत्वा सुवते फलं पुष्पं चोत्पादयन्ति तदिदं देवानामैश्वर्यम्। आक्षित् क्षि निवासगत्योः क्विप्। अनूरुत् अनो (नौ) रुध कामे अस्मात्क्विप् अन्येषामपि दृश्यत इति अनोर्दीर्घः कृत्स्वरः। तरुणीषु नन्त्रनीकवक्त्युस्तरुणतलुनानामुपसंख्यानमिति ङीप्। अन्तर्वतीः क्षय इति मतुपो वत्वम्। सुवते षूङ् प्राणिगर्भविमोचने इत्यस्य लटि रूपं निपातः ॥ ५ ॥

५. जीर्ण ओषधियों में वर्त्तमान तथा नव्य ओषधियों में गुणानुरूप से स्थित अग्नि या सूर्य सद्योजात, पल्लवित ओषधियों के अभ्यन्तर में वर्तमान हैं। ओषधियाँ बिना किसी पुरुष के रेतः-संयोग से अग्नि के द्वारा गर्भवती होकर फल-पुष्प आदि को उत्पन्न करती हैं। यह देवों का ऐश्वर्य है। देवताओं का महान् बल एक ही है।

श॒युः प॒रस्ता॒दध॒ नु द्वि॒मा॒ता ब॑न्ध॒नश्च॑रति व॒त्स एकः॑ ।
मि॒त्रस्य॒ ता वरु॑णस्य व्र॒तानि॑ म॒हद्दे॒वाना॑मसुर॒त्वमेक॑म् ॥ ६ ॥

श॒युः । प॒रस्ता॑त् । अध॑ । नु । द्वि॒ऽमा॒ता । अ॒ब॒न्ध॒नः । च॒र॒ति॒ । व॒त्सः । एकः॑ । मि॒त्रस्य॑ । ता । वरु॑णस्य । व्र॒तानि॑ । म॒हत् । दे॒वाना॑म् । अ॒सु॒र॒ऽत्वम् । एक॑म् ॥ ६ ॥

द्विमाता द्वे द्यावापृथिव्यौ मातरौ यस्य स द्विमाता यद्वा द्वयोर्लोकयोर्निर्माता सूर्यः परस्तात् पश्चिमायां दिशि अस्तवेलायां शयुः शयानः व्याप्रियमाणो भवति अध नु अपोदयवेलायाम् एकः द्यावापृथिव्योः साधारणस्तयोः रसादानाद्वत्सः पुत्रः अबन्धनः अप्रतिबद्धगतिरनाक्रमणः

कःसन्चरति नभसिगच्छति तातानीमानिमित्रस्यवरुणस्यमित्रावरुणयोर्व्रतानिकर्माणि ॥ शयुः शयिस्कन्दे सृपृवृषीदृवरिइत्यादिनाउप्रत्ययः । द्विमाता मयूरव्यंसकादित्वात्समासः कपः समासान्तच्छन्दसीतिप्रतिषेधः ॥ ६ ॥

६. दोनों लोकों के निर्माता अथवा द्यावा-पृथिवीरूप माता-पिता-वाले सूर्य पश्चिम दिशा में, अस्तवेला में, शयन करते हैं; किन्तु उदय-वेला में वे ही द्यावा-पृथिवी के पुत्र सूर्य अप्रतिबद्ध-गति होकर आकाश में अकेले चलते हैं। यह सकल कर्म मित्र और वरुण का है। देवताओं का महान् बल एक ही है।

द्विमाताहोताविदथेषुसम्राळन्वग्रंचरतिक्षेतिबुध्नः ।
प्ररण्यानिरण्यवाचोभरन्तेमहद्देवानामसुरत्वमेकम् ॥ ७ ॥

द्विऽमाता । होता । विदथेषु । सम्ऽराट् । अनु । अग्रम् ।
चरति । क्षेति । बुध्नः । प्र । रण्यानि । रण्यऽवाचः । भरन्ते ।
महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ७ ॥

द्विमाता द्वयोर्लोकयोर्निर्माता विदथेषुयज्ञेषु होतादेवानामाह्वाता सम्राट्यज्ञेषुसम्यग्भ्राजमानोऽग्निः अग्रम् अग्रंदिविचरति सूर्यमूर्त्याप्रवर्तते बुध्नःसर्वस्यकर्मणोमूलभूतःसन् क्षेति भूमौवसति यद्वा अग्र्यंमुख्यमार्गंचरति भक्षयति क्षेति यज्ञिनांगृहेषुनिवसति यद्वा बुध्नः प्रतिष्ठा अन्तेभागी स्विष्टकृद्रूपेण प्रतिष्ठावैस्विष्टकृदितिश्रुतेः । किंच रण्यवाचः रमणीयवचःस्तोतारः रण्यानिरमणीयानिस्तोत्राणि प्रभरन्तेप्रणयन्ति प्रकर्षेणकुर्वन्ति तदिदंदेवानामैश्वर्यम् ॥ चरति चादिलोपइतिननिघातः ॥ ७ ॥

७. दोनों लोकों के निर्माता, यज्ञ के होता तथा यज्ञ में भली भाँति राजमान अग्नि, आकाश में सूर्य रूप से विचरण करते हैं। वे सब कर्मों के मूलभूत होकर भूमि में निवास करते हैं। रमणीय वचनवाले स्तोता अच्छी तरह से रमणीय स्तोत्रों को करते हैं। देवताओं का महान् बल एक ही है।

शूरस्येवयुध्यतोअन्तमस्यप्रतीचीनंददृशेविश्वमायत् ।
अन्तर्मतिश्चरतिनिष्षिधंगोर्महद्देवानामसुरत्वमेकम् ॥ ८ ॥

शूरस्यऽइव । युध्यतः । अन्तमस्य । प्रतीचीनम् । ददृशे ।
विश्वम् । आऽयत् । अन्तः । मतिः । चरति । निःऽसिधम् ।
गोः । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ८ ॥

---

१ ऐ० ब्रा० २, ४.।

अन्तमस्य समीपेवर्तमानस्याग्नेरायत् अभिमुखमागच्छत् विषंमूलमातं प्रतीचीनं पराङ्मुखं दद्दृशे दृश्यते तत्रदृष्टान्तः—युधस्येव यथायुध्यतोयुद्धंकुर्वाणस्यशूरस्यसमर्यस्य शत्रोरभिमुखमागच्छत् परबलंपराङ्मुखंदृश्यतेतद्वत् मतिःसर्वैर्ज्ञायमानःसोऽग्निर्गोरुदकस्यनिः- षिधंहिंसिकांदीप्तिमन्तश्चरति अन्तर्धारयति ॥ युध्यतः युधसंप्रहारे दिवादिरात्मनेपदीपरिगृ- प्त् अन्तमस्य अन्तःशब्दादतिशायनेतमबितिठन् अतिशयेनान्तिकइत्यर्थेतमप् तमेतादेशेति ताद्दिलोपः नित्स्वरादाद्युदात्तः । प्रतीचीनं प्रतिपूर्वस्याञ्चतेःक्विप् तस्माद्विभाषांचेरदिक्स्त्रियामि- तिखः ईनादेशः प्रत्ययस्वरः । आयत् याप्रापणेइत्यस्याङ्पूर्वस्यशतरिरूपम् आङ्पूर्वस्य लङ- पयगत्याविस्यस्यशतरिरूपंवेतिव्युत्पत्त्यनवधारणादनवग्रहः ॥ ८ ॥

८. युद्ध करनेवाले शूर व्यक्ति के अभिमुख आनेवाली शत्रु-सेना जैसे पराङ् मुख दीख पड़ती है, वैसे ही समीप में वर्त्तमान अग्नि के अभिमुख आनेवाला भूतजात पराङ् मुख होता दीख पड़ता है। सबके द्वारा ज्ञायमान अग्नि जल को हिंसित करनेवाली दीप्ति को मध्य में धारण करते हैं। देवताओं का महान् बल एक ही है।

निवेवेतिपलितोदूतआस्वन्तर्महाँश्चरतिरोचनेन ।
वपूंषिबिभ्रदभिनोविचष्टेमहद्देवानामसुरत्वमेकम् ॥ ९ ॥

नि । वेवेति । पलितः । दूतः । आसु । अन्तः । महान् । चरति । रोचनेन । वपूंषि । बिभ्रत् । अभि । नः । वि । चष्टे । महत् । देवानाम् । असुरत्वम् । एकम् ॥ ९ ॥

पलितःपालयितापूर्णोवादेवानांदूतोऽग्निःआस्वोषधीषुनिवेवेति नितरांव्याप्यवर्तते महान्सो- ऽग्निःरोचनेनसूर्येणसहव्यक्तः रोदस्योर्मध्येचरति वपूंषिनानाविधानिरूपाणिबिभ्रत्सोऽग्निः नोऽ- स्मान्अभिविचष्टे विशेषेणानुग्रहदृष्ट्यापश्यति ॥ वेवेति वीगत्यादिषु यङ्लुकि ईडभावेरूपम् । रोचनेन सहार्थेतृतीया । बिभ्रत् डुभृञ्धारणपोषणयोरित्यस्यशतरिरूपम् अभ्यस्तस्वरः ॥ ९ ॥

९. पालक और देवों के दूत अग्नि ओषधियों के मध्य में अत्यन्त व्याप्त होकर वर्त्तमान हैं। वे सूर्य के साथ द्यावा-पृथिवी के मध्य में चलते हैं। नानाविध रूपों को धारण करते हुए वे हम लोगों को विशेष अनुग्रह-दृष्टि से देखें। देवताओं का महान् बल एक ही है।

विष्णुर्गोपाःपरमंपातिपाथःप्रियाधामान्यमृतादधानः ।
अग्निष्टाविश्वाभुवनानिवेदमहद्देवानामसुरत्वमेकम् ॥ १० ॥ २९ ॥

विष्णुः । गोपाः । परमम् । पाति । पाथः । प्रिया । धामानि । अमृता । दधानः । अग्निः । ता । विश्वा । भुवनानि । वेद । महत् । देवानाम् । असुरत्वम् । एकम् ॥ १० ॥ २९ ॥

विष्णुर्व्यापः गोपाः सर्वस्यगोपायिता प्रिया प्रियतमानि अमृता क्षयरहितानि धामानि तेजांसिदधानःसोऽग्निः परमंपाथःस्थानंपाति रक्षति यद्वा धामानि लोकधारकाणि अमृता उदकानिदधानःसन् परमंपाथः उदकस्यस्थानम् अन्तरिक्षंपाति सोऽग्निःता तानि विश्वा सर्वाणिभुवनानिभूतजातानि वेद जानाति ॥ गोपाः गोपायतेःक्विपि अतोलोपयलोपौ अग्निष्टे-त्यत्रसंहितायांयुष्मत्तत्तक्षुःष्वन्तःपादमितिषत्वम् ॥ १० ॥

१०. व्याप्त, सबके रक्षक, प्रियतम और क्षयरहित तेज को धारण करनेवाले अग्नि परम स्थान की रक्षा करते हैं अथवा लोकधारक जल को धारण करते हुए जल के स्थान अन्तरिक्ष की रक्षा करते हैं। अग्नि उन सम्पूर्ण भूतजात को जानते हैं। देवताओं का महान् बल एक ही है।

नानाचक्रातेयम्या३वपूंषितयोरन्यद्रोचतेकृष्णमन्यत् ।
श्यावीचयदरुषीचस्वसारौमहद्देवानामसुरत्वमेकम् ॥ ११ ॥

नाना । चक्राते इति । यम्या । वपूंषि । तयोः । अन्यत् ।
रोचते । कृष्णम् । अन्यत् । श्यावी । च । यत् । अरुषी ।
च । स्वसारौ । महत् । देवानाम् । असुरत्वम् । एकम् ॥ ११ ॥

यम्या यमरूपेमिथुनभूतेऽहमरात्रिमिव्येते नाना नानाविधानिवपूंषि शुक्लकृष्णादीनिरू-पाणिचक्राते कुरुतः श्यावी कृष्णवर्णा अरुषीशुक्लतयारोचमाना यत्येवंस्वसारौभवतः तयोर्मध्येअन्यदर्जुनमहःरोचते किरणसंबन्धाद्दीप्यते अन्यद्रात्रिलक्षणंकृष्णंतमःसंबन्धात्कृ-ष्णवर्णंभभाति ॥ यम्या सुपोडादेशः । रोचते एकाम्याम्यांसमर्थाभ्यामितिननिघातः ॥ ११ ॥

११. मिथुनभूत अहोरात्र नानाविध रूप धारण करते हैं। कृष्णवर्णा तथा शुक्लवर्णा जो दोनों भगिनियाँ हैं, उनके मध्य में एक अर्जुनवर्णा या दीप्तिशालिनी है और दूसरी कृष्णवर्णा है। देवताओं का महान् बल एक ही है।

माताचयत्रदुहिताचधेनूसबर्दुघेधापयेतेसमीची ।
ऋतस्यतेसदसीळेअन्तर्महद्देवानामसुरत्वमेकम् ॥ १२ ॥

माता । च । यत्र । दुहिता । च । धेनू इति । सबर्दुघे इतिसबःदुघे ।
धापयेते इति । समीची इति सम्ऽईची । ऋतस्य । ते इति । सदसि ।
ईळे । अन्तः । महत् । देवानाम् । असुरत्वम् । एकम् ॥ १२ ॥

माता सर्वेषांनिर्मातृत्वान्माता पृथिवीच्दुहिता दूरेनिहितायौश्च दुहिताद्दुहिता-दूरेहितादोग्धेर्वेतियास्कः । एते सबर्दुघे सबरःक्षीयस्यक्षीररूपस्यरसस्यदोग्ध्र्यौ अत-

¹ नि० ३, । ४.।

एवं धेनू मातः प्रीणयित्र्यौ द्यावापृथिव्यौ यस्मिन्नन्तरिक्षे समीची परस्परं संगते सत्यौ धाप-
येते स्वकीयं रसमन्योन्यं पाययेते ऋतस्योदकस्य सदसि स्थानभूते तस्मिन्नन्तरिक्षेऽन्तःस्थिते
ते द्यावापृथिव्यावीळे अहं स्तौमि यद्वा वृष्टिलक्षणं रसं द्यौः पृथिवीं धापयते आहुतिलक्षणं रसं
द्यां पृथिवीति एवमन्योन्यं माता च दुहिता च भवतः ऋतस्य सदसि स्थाने यज्ञसदने स्थितोऽहम्
उभे स्तौमि ॥ सबर्दुघे सबःशब्दः क्षीरवाचीति संप्रदायविद आहुः तस्मिन्नुपपदे दुह प्रपूरणे इत्य-
स्माद्धातोः दुहः कब्घश्चेति कप्प्रत्ययः घश्चान्तादेशः प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः ।
धापयेते धेट् पाने इत्यस्य ण्यन्तस्य रूपं निगरणचलनार्थेभ्यश्चेति परस्मैपदे प्राप्ते पादिषु धेट उपसं-
ख्यानमित्यात्मनेपदं यद्वृत्तयोगादनिघातः ॥ १२ ॥

१२. माता पृथिवी और दुहिता द्युलोकस्वरूप दोनों क्षीरदायिनी
धेनु जिस अन्तरिक्ष में परस्पर सङ्गत होकर अपने रस को एक दूसरी
को पिलाती हैं, जल के स्थानभूत उस अन्तरिक्ष के मध्य में स्थित द्यावा-
पृथिवी की हम स्तुति करते हैं। देवताओं का महान् बल एक ही है।

**अ॒न्यस्या॑ व॒त्सं रि॑ह॒ती मि॑माय॒ कया॑ भु॒वा नि द॑धे धे॒नुरूधः॑ ।**
**ऋ॒तस्य॒ सा पय॑सापिन्वते॒ळा म॒हद्दे॒वाना॑मसुर॒त्वमेक॑म् ॥ १३ ॥**

अ॒न्यस्याः॑ । व॒त्सम् । रि॒ह॒ती । मि॒मा॒य॒ । कया॑ । भु॒वा । नि ।
द॒धे॒ । धे॒नुः । ऊधः॑ । ऋ॒तस्य॑ । सा । पय॑सा । पि॒न्व॒त॒ । इळा॑ ।
म॒हत् । दे॒वाना॑म् । अ॒सु॒र॒ऽत्वम् । एक॑म् ॥ १३ ॥

अन्यस्याः पृथिव्या वत्समग्निं रिहती उदकधारारूपया जिह्वया लिहन्ती द्यौः मिमाय मेघ-
द्वारा ध्वनिं करोति धेनुः प्रीणयित्री सा द्यौः कया भुवा आत्मना स्वकीयमूधो
मेघरूपं निदधे उदकेन निहितं पुष्टमकरोत् यद्वा कया भुवा कस्यां भुवि प्रदेशे ऊधःस्थानीयं
मेघं निदधे धारयति न ज्ञायते वर्षाकाल एवेमं दृश्यते मेघः सा जलवर्जिता इळा पृथिवी ऋतस्य सत्यभूतस्या-
दित्यस्य पयसा उदकेनापिन्वत वर्षाकाले सिक्ता भवति आदित्याज्जायते वृष्टिरिति स्मृतेः ॥
रिहती रिह आस्वादने इत्यस्माच्छतरि तुमद्रतिङीप्युदात्तत्वम् ॥ अपिन्वत पिवि सेचने
भुवादिरात्मनेपदी निघातः ॥ १३ ॥

१३. द्युलोक पृथिवी के पुत्र अग्नि को उदकधारारूप जिह्वा से
चाटते हैं और मेघ-द्वारा ध्वनि करते हैं। द्युरूपा धेनु पृथिवी को जल-
वर्जित करके अपने ऊधःप्रदेश को पुष्ट करती है। वह जलवर्जित पृथिवी
सत्यभूत आदित्य के जल से वर्षाकाल में सिक्त होती है। देवताओं
का महान् बल एक ही है।

**प॒द्या व॑स्ते पुरु॒रूपा॒ वपूं॑ष्यू॒र्ध्वा त॑स्थौ॒ त्र्यविं॒ रेरि॑हाणा ।**
**ऋ॒तस्य॒ सद्म॒ वि च॑रामि वि॒द्वान्म॒हद्दे॒वाना॑मसुर॒त्वमेक॑म् ॥ १४ ॥**

पद्या । वस्ते । पुरुऽरूपा । वपूंषि । ऊर्ध्वा । तस्थौ । त्रिऽअविम् ।
रेरिहाणा । ऋतस्य । सद्म । वि । चरामि । विद्वान् । महत् ।
देवानाम् । असुरऽत्वम् । एकम् ॥ १४ ॥

पद्यागम्यतेप्राप्यतेपरमेश्वरस्यपद्भ्यामाहत्वात्पद्याभूमिः तथाचमन्त्रवर्णः—पद्भ्यांभूमिरिति । यद्वा पादसंचारेसाधुःपद्याभूमिः पुरुरूपानानाविधस्वरूपाणिवपूंषिस्थावरजङ्गमात्मकानिरूपाणिवस्ते आच्छादयति सैषाभूमिरूर्ध्वाउच्छ्रयेणात्मनाउन्नतासतीस्वसारभूतेनहविषाप्यविं सार्धसंवत्सरवयस्कोवत्सःत्र्यविरुच्यते तत्प्रमाणमादित्यंत्रीन्लोकानवति व्याप्नोतीतित्र्यविरितिवा रेरिहाणालिहन्तीतस्थौ ऋतस्यसत्यभूतस्यादित्यस्यसद्मस्थानंविद्वान्जानानोऽहंविचरामि हविर्भिस्तमादित्यंपरिचरामि ॥ पद्या पादशब्दाद्भवेछन्दसीतियत् पद्यत्वतदर्थेइतिपादस्यपद्भावः यद्वा तत्रसाधुरितियत् यतोनावइत्याद्युदात्तत्वम् । त्र्यविम् अवरक्षणादिषु इगितीन्प्रत्ययः कृत्स्वरः । रेरिहाणा लिहआस्वादनेइत्यस्य यङ्लुकि शानचिरूपम् अभ्यस्तस्वरः ॥ १४ ॥

१४. पृथ्वी नानाविध शरीर को आच्छादित करती हैं । उन्नत होकर वे तीनों लोकों को व्याप्त करनेवाले अथवा डेढ़ वर्ष की अवस्था-वाले सूर्य को चाटती हुई अवस्थान करती हैं । सत्यभूत आदित्य के स्थान को जानते हुए हम उनकी परिचर्या करते हैं । देवताओं का महान् बल एक ही है ।

अथपञ्चदशी—

पदेइवनिहितेदस्मेअन्तस्तयोरन्यद्गुह्यमाविरन्यत् ।
सध्रीचीनापथ्यासाविषूचीमहद्देवानामसुरत्वमेकम् ॥ १५ ॥ ३०

पदेइवेतिपदेऽइव । निहितेइतिनिऽहिते । दस्मे । अन्तरिति । तयोः ।
अन्यत् । गुह्यम् । आविः । अन्यत् । सध्रीचीना । पथ्या । सा ।
विषूची । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १५ ॥ ३० ॥

पदेइवपद्येतेज्ञायेतेतत्तदसाधारणचिह्नेनेतिपदे अहश्चरात्रिश्चेत्येतेदस्मेसर्वैर्दर्शनीयेतेउभे अन्तर्नभसिनिहितेस्थापितेइववर्तेते तयोरहोरात्रयोरन्यद्रात्रिलक्षणंगुह्यम् अप्रकाशमानतयागूढमिवास्ते अन्यदहःआविःसूर्यप्रकाशेनप्रकटंभवति सध्रीचीनामहोरात्रयोःपरस्परमेकत्रसंगतापथ्यामार्गःकालइत्यर्थः साविषूचीपुण्यकृतोपुण्यकृतश्चप्राप्नोतीतिविषूचीभवति सर्वेजनाः अहोरात्रयोर्वर्तन्ते यद्वा पदेइव देवमनुष्यादीनांस्थानभूतेद्यावापृथिव्यौ अन्तःअन्तरिक्षे

---

[1] ऋ० सं० ८. ४. १६. ।

निहिते वर्तेते तयोरन्यत् द्यौः गुह्यमस्माभिरदृश्यमानतया गूढं वर्तते अन्यत् पृथिवी आविः सर्वैर्दृश्य-मानाप्रकाश्यम्भवति सध्रीचीनेति पूर्ववत् ॥ सध्रीचीना सहपूर्वादञ्चतेः क्विन् सहस्य सध्रिरिति सध्र्यादेशः विभाषाञ्चेरदिक्स्त्रियामिति खः ॥ १५ ॥

१५. पदद्वय की तरह दर्शनीय महोरात्र द्यावा-पृथिवी के मध्य में स्थापित हैं। उनके मध्य में एक गूढ़ और अन्य आविर्भूत हैं। अहोरात्र का परस्पर मिलन-पथ (काल) पुण्यकारी और अपुण्यकारी दोनों को ही प्राप्त होता हैं। देवताओं का महान् बल एक ही है।

**आधेनवोधुनयन्तामशिश्वीःसबर्दुघाःशशयाअप्रदुग्धाः ।**
**नव्यानव्यायुवतयोभवन्तीर्महद्देवानामसुरत्वमेकम् ॥ १६ ॥**

आ । धेनवः । धुनयन्ताम् । अशिश्वीः । सबःऽदुघाः । शशयाः । अप्रऽदुग्धाः । नव्याःऽनव्याः । युवतयः । भवन्तीः । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १६ ॥

धेनवः वृष्टिद्वारा सर्वस्य जगतः प्रीणयित्र्यः अशिश्वीः शिशुरहिताः यद्वा अशिशवः नभ-न्तीत्यशिश्वीः शशयाः नभसि शयाना वर्तमानाः केनाप्यप्रदुग्धाः अक्षीणरसाः सबर्दुघाः उद-कलक्षणस्य क्षीरस्य दोग्ध्र्यः युवतयः परस्परमिश्रणोपेताः नव्यानव्याः अतिशयेन नूतना भवन्तीः दिशो मेघा वा आधुनयन्ताम् आदुहन्तु मेघपक्षे अशिश्वीः भवन्तीरित्यत्र लिङ्गव्यत्ययः ॥ धुनयन्तां धूञ् कम्पने णिचि धूञ्प्रीञोर्नुग्वक्तव्य इति नुक् ह्रस्वश्छन्दसः । अशिश्वीः शश्यशिश्वी-ति भाषायामिति व्यत्ययेन छन्दसि भवति ॥ १६ ॥

१६. वृष्टि-द्वारा सबकी प्रीणयित्री, शिशुरहिता, आकाश में वर्त-माना, अक्षीणरसा, क्षीरप्रसविणी युवती और सर्वदा नूतनस्वरूपा दिशायें (या मेघ) कम्पित हों। देवताओं का महान् बल एक ही है।

**यदन्यासुवृषभोरोरवीतिसोअन्यस्मिन्यूथेनिदधातिरेतः ।**
**सहिक्षपावान्त्सभगःसराजामहद्देवानामसुरत्वमेकम् ॥ १७ ॥**

यत् । अन्यासु । वृषभः । रोरवीति । सः । अन्यस्मिन् । यूथे । नि । दधाति । रेतः । सः । हि । क्षपाऽवान् । सः । भगः । सः । राजा । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १७ ॥

वृषभः वर्षावर्षकः यत् यः पर्जन्यात्मेन्द्रः अन्यासु दिक्षु रोरवीति मेघद्वारा शब्दं करोति सः वर्षकस्वभावः अन्यस्मिन्यूथे दिशां वृन्दे रेतः उदकं निदधाति तत्र वर्षति लोके हि वृषभः कासुचि-

द्वौपुरेतःसेकार्थंसंकरोति अन्यस्मिन्नोषूधेरेतःसिञ्चति तद्वत् सइन्द्रःक्षपावान्क्षिपतिशत्रून्उदकंवे-तिक्षेपणवान् यद्वा क्षपारात्रिः तयारात्रिपर्यायैयागानांस्तोत्राणांमागभूतायारात्रिःसोच्यते सद्वा-न्समगः सर्वैर्भजनीयः सराजाहितत्कर्मानुरूपफलप्रदानेनसर्वेषांराजाभवतु ॥ रोरवीति रुशब्दे इत्यस्ययङ्लुगन्तस्यलटिरूपम् एकान्यान्यांसमर्थाभ्यामितिप्रथमस्यननिघातः । यूषे युमिश्रणे तिपृष्ठगूथयूपमोपाइतिथक्प्रत्ययान्तत्वेननिपातनाद्दीर्घः । रेतः रीङ्क्षरणेइत्यस्मात्सुरी-भ्यांतुट्चेत्यसुन्प्रत्ययः तुडागमश्च नित्वादाद्युदात्तः ॥ १७ ॥

१७. जल के वर्षक पर्जन्यरूप इन्द्र अन्य दिशाओं में मेघ-द्वारा प्रभूत शब्द करते हैं। वे अन्य दिशासमूह में वारिवर्षण करते हैं। वे जल या शत्रु के क्षेपनवान् हैं, सबके द्वारा भजनीय हैं और सबके राजा हैं। देवताओं का महान् बल एक ही है।

**वीरस्यनुस्वश्व्यंजनासःप्रनुवोचामविदुरस्यदेवाः ।**
**षोळ्हायुक्ताःपञ्चपञ्चावहन्तिमहद्देवानामसुरत्वमेकम् ॥ १८ ॥**

वीरस्य । नु । सुऽअश्व्यम् । जनासः । प्र । नु । वोचाम । विदुः । अस्य । देवाः । षोळ्हा । युक्ताः । पञ्चऽपञ्च । आ । वहन्ति । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १८ ॥

हेजनासोजनाः वीरस्यशूरस्येन्द्रस्य स्वश्व्यंशोभनाश्वोपेतत्वंनुक्षिप्रंप्रवोचाम प्रकर्षे-णवदाम तथा देवाअपि अस्येन्द्रस्यस्वश्वत्वंनुक्षिप्रंविदुर्जानन्ति किंतत्स्वश्वत्वंतदुच्यते षोळ्हा मासानांद्वन्द्वयोगकालेषोढाषट्प्रकाराःऋतवोषानिरूप्यन्ते तेषट्संख्याकाऋतवः हेमन्तशिशिर-योःसमासेनपञ्चपञ्चयुक्ताःसन्तः कालात्मकमिन्द्रमावहन्ति तदिदमिन्द्रस्यस्वश्वत्वं यद्वाभि-रूढत्वम् ॥ षोळ्हा षषःशब्दात्संख्यायाविधार्थेधेतिधाप्रत्ययः षषउत्वंदतृदशधासूत्तरपदादे-ष्टुत्वंचेत्युत्वंष्टुत्वंच प्रत्ययस्वरः ॥ १८ ॥

१८. हे जनो, शूर इन्द्र के शोभन अश्वों का हम शीघ्र ही प्रभूत वर्णन करते हैं। देवता भी इन्द्र के अश्वों को जानते हैं। दो-दो मासों को मिलाने पर छः ऋतुएं होती हैं; फिर हेमन्त और शिशिर को मिला देने पर पांच ही ऋतुएं होती हैं। ये ही इन्द्र के अश्व हैं। ये कालात्मक इन्द्र का वहन करती हैं। देवताओं का महान् बल एक ही है।

त्वाष्ट्रेपशौविनियोगउक्तःपावेवस्त्वष्टेत्येषा सूचितंच—देवस्त्वष्टासविताविश्वरूपोदेवत्वष्ट-पेद्यथाकल्पमानदिति।

**देवस्त्वष्टासवितावि‍श्वरूपःपुपोषप्रजाःपुरुधाजजान ।**
**इमाचविश्वाभुवनान्यस्यमहद्देवानामसुरत्वमेकम् ॥ १९ ॥**

देवः । त्वष्टा । सविता । विश्वऽरूपः । पुपोषं । प्रऽजाः । पुरुधा । जजान । इमा । च । विश्वा । भुवनानि । अस्य । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १९ ॥

सवितान्तर्यामितयासर्वस्यप्रेरकोविश्वरूपोनानाविधरूपस्त्वष्टात्वष्टृनामकोदेवः प्रजाः पुरुधा-बहुधानेकमजनयति ताश्चपुपोष पोषयति इमा इमानि विश्वा विश्वानि सर्वाणिभुवना-निभूतजातानिच अस्यत्वष्टुःसंबन्धीनि ॥ विश्वरूपः बहुव्रीहौविश्वंसंज्ञायामितिपूर्वपदा-न्तोदात्तत्वम् ॥ १९ ॥

१९. अन्तर्यामी होने के कारण सबके प्रेरक, नानाविध रूपविशिष्ट त्वष्टृदेव बहुत प्रकार से प्रजाओं को उत्पन्न करते हैं और उनका पोषण करते हैं। ये सम्पूर्ण भुवन त्वष्टा के हैं। देवताओं का महान् बल एक ही है।

महीसमैरच्चम्वासमीचीउभेतेअस्यवसुनान्यृष्टे ।
शृण्वेवीरोविन्दमानोवसूनिमहद्देवानामसुरत्वमेकम् ॥ २० ॥

मही इति । सम् । ऐरत् । चम्वा । समीची इति सम्ऽईची । उभे इति । ते इति । अस्य । वसुना । न्यृष्टेइतिनिऽऋष्टे । शृण्वे । वीरः । विन्दमानः । वसूनि । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ २० ॥

मही महत्यौ समीची परस्परंसंगते चम्वा चमन्त्यश्नन्त्यनयोर्देवमनुष्याइतिचम्वौ यद्वा चम्येते अद्येते भूतजातैरितिचम्वौद्यावापृथिव्यौ समैरत् इन्द्रःप्रजापत्यादिभिःस-म्यगयोजयत् तेउभेद्यावापृथिव्यौअस्येन्द्रस्यवसुनातेजसाधनेनवान्यृष्टे नितरांव्याप्तेभवतः वी-रःसमर्थःसइन्द्रः वसूनिशत्रूनभिभूयतदीयानिधनानिविन्दमानोलभमानःसन् शृण्वे सर्वैःश्रूयते तवेदिदमभितश्चेकितेवस्वित्यादिषुप्रसिद्धत्वात् ॥ ऐरत् ईरगतावित्यस्यलङिरूपम् । न्यृष्टे ऋषी-गतौ कर्मणिक्तः । गतिरनन्तरइतिगतेः स्वरः । शृण्वे श्रुश्रवणेइत्यस्यव्यत्ययेनकर्मणिलट् लोप-स्तआत्मनेपदेष्वितितलोपः । विन्दमानः विद्लृलाभेइत्यस्य लटि शानचि रूपं तस्यलसार्वधा-तुकस्वरः ॥ २० ॥

२०. इन्द्र ने महती और परस्पर संगत द्यावा-पृथिवी को पशु-पक्षियों से युक्त किया है। यह द्यावा-पृथिवी इन्द्र के तेज से अतिशय व्याप्त है। समर्थ इन्द्र शत्रुओं को पराजित कर उनके धन को ग्रहण करने में विख्यात हैं। देवताओं का महान् बल एक ही है।

इमांचनःपृथिवींविश्वधायाउपक्षेतिहितमित्रोनराजा ।
पुरःसदःशर्मसदोनवीरामहद्देवानामसुरत्वमेकम् ॥ २१ ॥

इमाम् । च । न । पृथिवीम् । विश्वऽधायाः । उप । क्षेति ।
हितऽमित्रः । न । राजा । पुरःऽसदः । शर्मऽसदः । न । वीराः ।
महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ २१ ॥

विश्वधायाः विश्वस्यधातासर्वेषांपोषकोऽस्माकंराजेन्द्रः इमांपृथिवीमन्तरिक्षंचउप त-
योः समीपेक्षेतिनिवसति तत्रदृष्टान्तः—हितमित्रोन यथाकस्यचिद्धितोऽप्येष्टासुहृत्समीपेनिव-
सति तद्वत् वीराःसमर्थायुद्धसहायामरुतः पुरःसदःयुद्धार्थंपुरतोनिषद्येनमन्तारः इन्द्रस्यश-
र्मसदोन शब्दार्थे शर्मणि गृहेसीदन्तश्चभवन्तियत्रयत्रासौ तत्रतत्र संनिधिंकुर्वाणाइत्यर्थः ॥
क्षेति क्षिनिवासगत्योरित्यस्य बहुलंछन्दसीतिविकरणस्यलुक् निघातः ॥ २१ ॥

२१. विश्वधाता और हम लोगों के राजा इन्द्र इस पृथ्वी तथा अन्त-
रिक्ष में हितकारी मित्र की तरह निवास करते हैं। वीर मरुद्गण संग्राम
के लिए इन्द्र के आगे जाते हैं। वे इन्द्र के गृह में निवास करते हैं।
देवताओं का महान् बल एक ही है।

निष्षिध्वरीस्तओषधीरुतापोरयिंतइन्द्रपृथिवीबिभर्ति ।
सखायस्तेवामभाजःस्याममहद्देवानामसुरत्वमेकम् ॥२२॥३१॥

निःऽसिध्वरीः । ते । ओषधीः । उत । आपः । रयिम् । ते ।
इन्द्र । पृथिवी । बिभर्ति । सखायः । ते । वामऽभाजः । स्याम ।
महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ २२ ॥ ३१ ॥

हेपर्जन्यात्मकेन्द्र ओषधीरोषधयः तेनिष्षिध्वरीः निष्षिध्वर्योभितरांत्वत्कर्तृकसिद्धि-
मत्यः उतापिच आपस्त्वत्तोनिःसृताःपृथिवीतेतवभोगायास्मभ्यंरयिंधनंबिभर्ति पुरूवसुर्हिपृ-
थिवीबिभर्तीतिनिगमः । ततस्तेतवसखायःहविष्प्रदानेनोपकारकाःस्तोतारोवयंवामभाजः स्या-
म सर्वैर्वननीयधनभागिनोभवेम तदेतद्देवानांमहदैश्वर्यम् ॥ निष्षिध्वरीः षिधुसंराद्धौ संपदा-
दिलक्षणोभावेक्विप् तदस्यास्तीत्यर्थेछन्दसीवनिपाविति वनिप् वनोरचेतिङीप्रेफश्च निःसस-
हसमासः निसःसकारंछान्दसत्वादनादृत्य उपसर्गात्सुनोतीत्यादिनाषत्वं ङीपःपित्वादनुदा-
त्तत्वेधातुस्वरः । बिभर्ति डुभृञ्धारणपोषणयोरित्यस्यश्लौ भृञामिदित्यभ्यासस्येत्वं निघातः ।
वामभाजः भजसेवायां भजोण्विरितिण्विः कृदुत्तरपदप्रकृतिस्वरः ॥ २२ ॥

२२. हे पर्जन्यात्मक इन्द्र, ओषधियों ने तुमसे सिद्धि पाई है, जल
तुमसे ही निःसृत हुआ है और पृथ्वी तुम्हारे भोग के लिए धन
को धारण करती है। हम लोग तुम्हारे सखा हैं। हम लोग तुम्हारे
धन के भागी हो सकें। देवताओं का महान् बल एक ही है।

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेणसायणाचा-
र्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येतृतीयाष्टकेतृतीयोऽध्यायः ॥ ३ ॥ ३ ॥

## ॥ श्रीगणेशायनमः ॥

यस्यनिःश्वसितंवेदायोवेदेभ्योऽखिलंजगत्। निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥ १ ॥

नतामिनन्तीत्यष्टर्चंतृतीयंसूक्तं विश्वामित्रस्यार्षं प्रजापतेरार्षंत्रैष्टुभं वैश्वदेवं तथाचानुक्रमणिका—नताष्टाविति। सूक्तविनियोगोलिङ्गादवगन्तव्यः अस्मिन्सूक्तेऽप्यार्येणादित्यैःसहसंवत्सरःस्तूयते।

तत्रप्रथमा—

ॐ नतामिनन्तिमायिनोनधीराव्रतादेवानांप्रथमाध्रुवाणि।
नरोदसीअद्रुहावेद्याभिर्नपर्वतानिनमेतस्थिवांसः॥ १ ॥

न। ता। मिनन्ति। मायिनः। न। धीराः। व्रता। देवानाम्।
प्रथमा। ध्रुवाणि। न। रोदसी इति। अद्रुहा। वेद्याभिः।
न। पर्वताः। निऽनमे। तस्थिऽवांसः॥ १ ॥

मायिनःकपटबुद्ध्युपेताः असुरादेवानामिन्द्रादीनांप्रथमानिसृष्ट्यनन्तरभावीनि ध्रुवाणि स्थिराणि केनापिचालयितुमशक्यानि ता तानि लोकेप्रसिद्धानि व्रता व्रतानि लोकपालनादि-कर्माणिनमिनन्ति नहिंसन्ति तथा धीराः विद्वांसोऽपिनहिंसन्ति तथा अद्रुहा देवमनुष्यादि-ष्वन्यस्यद्रोहवर्जिते रोदसी द्यावापृथिव्यौ वेद्याभिः स्वाश्रयतयासर्वैर्वेदनीयाभिःप्रजा-भिःसहितानिकर्माणिनमिमीतः तदेतदुपपादयति—तस्थिवांसः पृथिव्यामूर्ध्वतयास्थिताःपर्वताः ननिनमे निनमनीयानभवन्ति ॥ एतदुक्तंभवति—यद्देवमनुष्यादीनांद्यावापृथिव्योर्धारकतयाव-स्थानंयत्पर्वतादीनामुन्नततयावस्थानंतदिदंदेवानांकर्मतत्कोऽप्यन्यथयितुमर्हतीति ॥ मिनन्ति मीञ्हिंसायामित्यस्यलटि मीनातेर्निगमेइतिह्रस्वः निघातः। वेद्याभिः वेदनमर्हन्ति छन्द-सिवेतियत्प्रत्ययः। निनमे णमुप्रह्वत्वेइत्यस्यकृत्यार्थेकेन्प्रत्ययः कृत्स्वरः ॥ १ ॥

१. मायावीगण देवों की सृष्टि के अनन्तर होनेवाले, स्थिर और प्रसिद्ध कर्मों को हिंसित न करें, विद्वान् लोग भी न करें। द्रोह-रहित द्यावा-पृथिवी प्रजागण के साथ उन्हें विघ्नयुक्त नहीं करें। अचल पर्वतों को कोई अवनत नहीं कर सकता है।

अथद्वितीया—

षळ्भाराँएकोअचरन्बिभर्त्यृतंवर्षिष्ठमुपगावआगुः।
तिस्रोमहीरुपरास्तस्थुरत्यागुहाद्वेनिहितेदर्श्येका ॥ २ ॥

त्री । सुधस्थ्या । सिन्धवः । त्रिः । कुवीनाम् । उत । त्रिऽमाता ।
विदथेषु । सुम्ऽराट् । ऋतऽवरीः । योषणाः । तिस्रः । अप्याः ।
त्रिः । आ । दिवः । विदथे । पत्यमानाः ॥ ५॥

प्रजापतिःस्वविज्ञानंसिन्धूनांनिवेदयति—हेसिन्धवः आपः सर्वसाक्षिण्योयूयंमदीयंवचःशृ-णुतेतिशेषः त्रीणिसधस्था त्रयोलोकाः तेष्वत्येकंत्रिभिर्भवन्ति तथा त्रयोवाइमेत्रिवृतोलोकाइतिश्रुतिः । नथावइन्द्रमोजसानान्तरिक्षाणिवज्रिणंनविव्यचन्तभूमयइति प्रत्येकंबहुवचनश्रवणात् बहुव-चनंकपिञ्जलन्यायेनत्रित्वेपर्यवसितं तेषुलोकाःकवीनांदेवानांनिवासस्थानानिभवन्ति उतापिच त्रिमाता त्रयाणाममीषांलोकानांनिर्मातासंवत्सरःसूर्योवा विदथेषुयज्ञेषु सम्राट् सम्ननीयस्तयास-म्यग्दीप्यमानोवर्तते तथा ऋतावरीः उदकवत्यःअप्याःनभस्याअन्तरिक्षभवातिस्रोयोषणाः त्रिसं-ख्याकाःइळासरस्वतीभारतीत्येवंरूपाः परस्परमिश्रणोपेतादेवताः विदथेयज्ञे दिवःदिवसस्य त्रिः त्रिषुसवनेषु आपत्यमानाआगच्छन्त्योभवन्ति ॥ सधस्था पूर्वपदप्रकृतिस्वरः संहितायांदीर्घत्वम् । योषणाः युषइतिसौत्रोधातुःल्युटिरूपं लित्स्वरः । तिस्रः तिसृभ्योजसइत्याद्युदात्तत्वम् । अप्याः अप-इत्यन्तरिक्षनाम तत्रभवा भवेछन्दसीतियत् यतोनावइत्याद्युदात्तत्वम् ॥ ५ ॥

५. हे नदियो, त्रिगुणित त्रिसंख्यक स्थान देवों का निवासस्थान है। तीनों लोकों के निर्माता संवत्सर या सूर्य यज्ञ के सम्राट् हैं। जल-वती अन्तरिक्षचारिणी इला, सरस्वती और भारती नामक तीन योषित् यज्ञ के तीनों सवनों में आगमन करें।

अथषष्ठी—

त्रिरा दिवः सवितुर्वार्याणि दिवेदिव आ सुव त्रिर्नो अह्नः ।
त्रिधातु राय आ सुवा वसूनि भग त्रातर्धिषणे सातये धाः ॥ ६ ॥

त्रिः । आ । दिवः । सवितः । वार्याणि । दिवेऽदिवे । आ ।
सुव । त्रिः । नः । अह्नः । त्रिऽधातु । रायः । आ । सुव । वसूनि ।
भगं । त्रातः । धिषणे । सातये । धाः ॥ ६ ॥

सवितः सर्वस्यप्रेरक हेआदित्य दिवः द्युलोकादागत्य त्वंवार्याणिसर्वैःसंभजनीयानिध-नानि दिवेदिवे प्रतिदिनं त्रिरासुव त्रिवारमस्मभ्यंप्रेरय प्रयच्छेत्यर्थः तदेवोच्यते—भग सर्वैर्भज-नीय त्रातःअस्माकंरक्षक हेआदित्य त्रिधातु त्रिधातूनित्रिधाउत्कर्षभेदेनत्रिप्रकाराणिवसू-निधनानि रायःरान्तिक्षीराद्यीनीतिरायोगोधनानि तानिचनोऽस्मभ्यमहःअह्नःसवनित्रिभिःत्रिषु-

1 ऐ० ब्रा० २. १७. । 2 ऋ० सं० ५. ८. ११. ।

वनेषु आसुव प्रयच्छ धिषणे माध्यमिके वाक् सातये धनलाभाय नः अस्मान्कुरु ॥ त्रिः द्वित्रिचतुर्भ्यः सुजितिसुच् चित्स्वरः । सुव षूप्रेरणे तुदादिः लोटिरूपम् । त्रिधातु डुधाञ्धारणपोषणयोरित्यस्मादसितसिनिगमिमसीत्यादिनातुन्प्रत्ययः । धिषणे आमन्त्रितत्वान्निघातः ॥ ६ ॥

६. हे सबके प्रेरक आदित्य, द्युलोक से आकर प्रतिदिन तीन बार रमणीय धन हम लोगों को प्रदान करो। हे हम लोगों के रक्षक आदित्य, हम लोगों को दिन के मध्य में तीन बार अर्थात् तीनों सवनों में पशु, कनक, रत्न और गोधन प्रदान करो। हे धिषणा, हम लोगों को जिससे धन लाभ हो, वैसा करो।

त्रिरादिवःसवितासोषवीतिराजानामित्रावरुणासुपाणी ।
आपश्चिदस्यरोदसीचिदुर्वीरत्नंभिक्षन्तसवितुःसवाय ॥ ७ ॥

त्रिः । आ । दिवः । सविता । सोसवीति । राजाना । मित्रावरुणा ।
सुपाणी । आपः । चित् । अस्य । रोदसी इति । चित् ।
उर्वी इति । रत्नम् । भिक्षन्त । सवितुः । सवाय ॥ ७ ॥

सवितादेवः दिवोदिवसस्य त्रिः त्रिषुकालेषु आसोषवीति अस्मभ्यंधनान्यासुवतु प्रेरयतु किञ्च राजाना राजानौ सुपाणी कल्याणपाणी मित्रावरुणौ आपः आप्नोतिसर्वमादित्यापोन्तरिक्षं नित्यबहुवचनान्तत्वाद्बहुवचनं चिदपिच उर्वीविस्तीर्णेरोदसीद्यावापृथिव्यौ एतादेवताः सवितुः प्रेरकस्यास्यदेवस्य सवाय सवेनप्रेरणेनरत्नमपेक्षितमर्थंभिक्षन्त याचन्ते ॥ सोसवीति षूप्रेरणेइत्यस्य यङ्लुकिलटिरूपम् । मित्रावरुणा देवताद्वन्द्वेचेत्युभयपदप्रकृतिस्वरत्वम् । भिक्षन्त भिक्षयाच्ञायामित्यस्यलङिरूपम् । सवाय षवसवौ-इत्यन्तत्वेननिपातनादन्तोदात्तत्वम् ॥ ७ ॥

७. सविता दिन में तीन बार हम लोगों को धन प्रदान करें। कल्याणपाणि, राजा, मित्रावरुण, द्यावा-पृथिवी और अन्तरिक्ष आदि देवता सविता देव की वदान्यता से अपेक्षित अर्थ की याचना करें।

त्रिरुत्तमादूणशारोचनानित्रयोराजन्त्यसुरस्यवीराः ।
ऋतावानइषिरादूळभासस्त्रिरादिवोविदथेसन्तुदेवाः ॥ ८ ॥ १ ॥

त्रिः । उत्ऽतमा । दुःऽनशा । रोचनानि । त्रयः । राजन्ति ।
असुरस्य । वीराः । ऋतऽवानः । इषिराः । दुःऽदभासः ।
त्रिः । आ । दिवः । विदथे । सन्तु । देवाः ॥ ८ ॥ १ ॥

दूणशा दुर्नशानिकेनापिविनाशयितुमशक्यानि रोचनानिदीप्यमानानित्रिः त्रीण्युत्तमा उत्तमानि स्थानानिसन्ति एतेषु त्रिषुस्थानेषु असुरस्य अस्यतिक्षिपतिसर्वमित्यसुरः प्र-

त्मासंवत्सरः तस्य वीराःपुत्रास्त्रयोऽग्निवायुसूर्यरूपाः राजन्ति शोभन्ते तानेवविशिनष्टि ऋतावानः ऋतंसत्यमृतमग्निहोत्रादिकंकर्मतद्वन्तः इषिराः यज्ञार्थेशीघ्रगतिमन्तः दूळभासः दुर्दभासःकेनापिस्वतेजसातिरस्कर्तुमशक्यास्तेसर्वेदेवाः विदथेऽस्मदीयेयज्ञे दिवोऽह्नःसम्बन्धिषु त्रिःत्रिषुसवनेषु आसन्तुसमन्तादागमनीयतयाभवन्तु ॥ उत्तमा उत्तमशब्दस्योत्तमौत्सर्गिकेत्युञ्छादि-षुपाठादन्तोदात्तत्वम् । दूणशा नशेरदूणाशर्थेऽसन् दुरोदाशनाशदभध्येषूत्वंवक्तव्यमितिरेफस्योत्व-त्वम् उत्तरपदादेष्टुत्वं णित्स्वरः । दूळभासः पूर्ववद्दुत्वष्टुत्वे ॥ ८ ॥

८. विनाश-रहित और द्युतिमान् तीन उत्तम स्थान हैं। इन तीनों स्थानों में कालात्मक संवत्सर के अग्नि, वायु और सूर्य नामक पुत्र शोभा पाते हैं। यज्ञवान्, शीघ्रगामी और अतिरस्कृत देवगण दिन में तीन बार हमारे यज्ञ में आगमन करें।

॥ इतितृतीयस्यचतुर्थेप्रथमोवर्गः ॥ १ ॥

प्रमेविविक्वानितिपञ्चर्चंचतुर्थंसूक्तं वैश्वामित्रंत्रैष्टुभं विश्वेदेवादेवता तथानुक्रमणि-का—प्रमेपञ्चेति । सूक्तविनियोगोलैङ्गिकः ।

**प्रमेविविक्वाँअविदन्मनीषांधेनुंचरन्तींप्रयुतामगोपाम् ।**
**सद्यश्चिद्यादुदुहेभूरिधासेरिन्द्रस्तदग्निःपनितारोअस्याः ॥ १ ॥**

प्र । मे । विविक्वान् । अविदत् । मनीषाम् । धेनुम् । चरन्तीम् ।
प्रऽयुताम् । अगोपाम् । सद्यः । चित् । या । दुदुहे । भूरि ।
धासेः । इन्द्रः । तत् । अग्निः । पनितारः । अस्याः ॥ १ ॥

विविक्वान् विवेकवानिन्द्रोऽग्निर्वामेममनीषांदेवताविषयांस्तुतिंप्राविदत् प्रकर्षेणजानातु तत्र दृष्टान्तः—चरन्तींयत्रक्वेतस्ततोगच्छन्तींप्रयुतांपृथग्भूतामेकाकिनीम् अगोपांगोपृरहितांयथाकश्चि-च्चरन्तींधेनुंनष्टांप्रतिकांगामिव देवतानांप्रीणयित्रींस्तुतिमविददित्यन्वयः यास्तुतिरूपाधेनुः सद्यश्चित्तदानीमेवधासेः धारयतिभाण्यन्नीयस्तेवीयतेऽस्मिन्निति वाधासिरन्नं कर्मणिषष्ठी भूरि बहुलमपेक्षितंफलंदुदुहेदुग्धे इन्द्रोऽग्निरन्येचदेवाअस्याःस्तुतिरूपायाधेनोस्तादृश्याःप्रभूतस्यपयसः पनितारःस्तोतारोभवन्ति यद्वा इन्द्राग्नीस्तोतारोवयंचअस्याधेनोस्तत्पयःप्राप्नुमः ॥ वि-विक्वान् विचिर्पृथग्भावेक्वसुस्यकसोरूपम् । अविदत् विदज्ञानेऽस्यच्लेःबहुलंछन्दसीति ङः । दुदुहे दुहप्रपूरणेऽस्माल्लिटिरूपं यद्वृत्तयोगादनिघातः प्रत्ययस्वरः । पनितारः पनस्तुतावित्यस्मात्तृचिरूपम् ॥ १ ॥

१. विवेकवान् इन्द्र मेरी देवता-विषयक स्तुति को इतस्ततः विहा-रिणी, एकाकिनी और रक्षक-विहीना धेनु की तरह अवगत करें। जिस स्तुतिरूपा धेनु से तत्क्षण बहुल अपेक्षित फल दोहन किया जाता है, इन्द्र और अग्नि उस धेनु की प्रशंसा करें।

अथ द्वितीया—

इन्द्रः सुपूषा वृषणा सुहस्ता दिवो न प्रीताः शशयं दुदुह्रे ।
विश्वे यदस्यां रणयन्त देवाः प्र वोऽत्र वसवः सुम्नमश्याम् ॥ २ ॥

इन्द्रः । सु । पूषा । वृषणा । सुऽहस्ता । दिवः । न । प्रीताः ।
शशयम् । दुदुह्रे । विश्वे । यत् । अस्याम् । रणयन्त । देवाः ।
प्र । वः । अत्र । वसवः । सुम्नम् । अश्याम् ॥ २ ॥

वसवः सर्वस्य वासयितारो हे देवाः इन्द्रः पूषा च वृषणा अभिमतफलस्य सेक्तारौ सुहस्ता कल्याणपाणी सुहस्तौ मित्रावरुणौ वा राजाना मित्रावरुणा सुपाणी इत्यादिषु दृष्टत्वात् एते सर्वे देवाः नेति संप्रत्यर्थे इदानीं प्रीताः सन्तः शशयं नभसि शयानं मेघं दिवो नभसः सकाशात् दुदुह्रे वृष्टिद्वारा अपेक्षितफलं दुदुहन्ति यद्यस्माद्धे विश्वे देवाः अस्यां वेद्यां रणयन्त रमयन्ते यो युष्माकं संबन्धि अत्र लोके सुम्नं सुखकरमपेक्षितफलं प्राश्यां प्राप्नुयाम् । सुहस्ता इत्येतत् सिद्धसीत्यादिना तत्प्रत्ययः नित्त्वादाद्युदात्तः बहुव्रीहावाद्युदात्तं स्वाङ्गं छन्दसीत्युत्तरपदाद्युदात्तत्वम् । दुदुह्रे दुह प्रपूरणे इत्यस्य लिटि इरयोरे । रणयन्त रमु क्रीडायां ण्यन्तस्य छान्दसं रूपं वर्णव्यापत्तिः । अश्याम् अशू व्याप्तावित्यस्य लिङि बहुलं छन्दसीति विकरणस्य लुक् व्यत्ययेन परस्मैपदम् ॥ २ ॥

२. इन्द्र, पूषा एवम् अभीष्टवर्षी कल्याणपाणि मित्रावरुण प्रीत होकर सम्प्रति अन्तरिक्षशायी मेघ का अन्तरिक्ष से दोहन करते हैं। हे निवासप्रद विश्वदेवगण, तुम सब इस वेदि पर विहार करो, जिससे हम लोगों को तुम्हारे द्वारा प्रदत्त सुख प्राप्त हो।

अथ तृतीया—

या जामयो वृष्ण इच्छन्ति शक्तिं नमस्यन्तीर्जानते गर्भमस्मिन् ।
अच्छा पुत्रं धेनवो वावशाना महश्चरन्ति बिभ्रतं वपूंषि ॥ ३ ॥

याः । जामयः । वृष्णे । इच्छन्ति । शक्तिम् । नमस्यन्तीः ।
जानते । गर्भम् । अस्मिन् । अच्छ । पुत्रम् । धेनवः । वावशानाः ।
महः । चरन्ति । बिभ्रतम् । वपूंषि ॥ ३ ॥

या जामयः जमन्ति भक्षयन्ति गर्भकाले मादुर्भवन्तीति जामय ओषधयः वृष्णे अपां वर्षकायेन्द्राय शक्तिं सेचनसामर्थ्यमिच्छन्ति नमस्यन्तीः प्रह्वीभूतास्ता ओषधयोऽस्मिन्निन्द्रे गर्भं वृष्टिद्वारा पुष्पफलादिलक्षणं गर्भाधानसामर्थ्यं जानते जानन्ति वावशानाः फलं कामयमाना धेनवः सर्वस्य प्री-

नमस्यन्त्योषधयः महः महान्तिनानारूपाणिवपूंषिरूपाणिबिभ्रतं व्रीहियवनीवारादिफल-रूपंपुत्रंतनयमच्छाभिमुख्येन चरन्ति प्राप्नुवन्ति केचिदिहंमारवंकुर्वाणाधेनवःवत्समभिल-क्ष्यगच्छन्तितद्वत् यद्वा जामयः गमन्तिसर्वत्रप्रसरन्तीतिजामयःसूर्यदीप्तयः वृष्णे वर्ष-कस्यस्वरश्मिभिर्भौमान्रसानादायपुनर्वर्षतीतिवर्षकःसूर्यः आदित्याज्जायतेवृष्टिरितिस्मृतेश्च । तस्मैवर्षणशक्तिमिच्छन्ति तादृश्यः अस्मिन्नादित्ये गर्भमपांगर्भाधानसामर्थ्यंजानन्ति ॥ जा-मयः जमतेर्गतिकर्मणोजमिमसिभ्यामिणितिविधीयमानोबहुलवचनादस्मादपिभवति । नमस्य-न्तीः नमस्शब्दान्नमोवरिवश्चित्रङःक्यजितिक्यच् तदन्ताल्लटःशतरिरूपं प्रत्ययस्वरः । वावशे वा-शब्दनोपनेइत्यस्यचकिरूपम् । अच्छ निपातस्यचेतिसंहितायांदीर्घः ॥ ३ ॥

३. जो ओषधियाँ बलवर्धक इन्द्र की शक्ति की वाञ्छा करती हैं, वे ओषधियाँ नम्र होकर इन्द्र की गर्भाधान-शक्ति को जानती हैं। फलाभिलाषिणी, सबकी प्रीणयित्री ओषधियाँ नाना रूपधारी व्रीहि, यव, नीवारादि शस्यस्वरूप पुत्र के अभिमुख विचरण करती हैं।

अच्छाविवक्मिरोदसीसुमेकेग्राव्णोयुजानोअध्वरेमनीषा ।
इमाउतेमनवेभूरिवाराऊर्ध्वाभवन्तिदर्शतायजत्राः ॥ ४ ॥

अच्छ । विवक्मि । रोदसी इति । सुमेके इति सुऽमेके । ग्राव्णः । युजानः । अध्वरे । मनीषा । इमाः । ऊँ इति । ते । मनवे । भूरिऽवाराः । ऊर्ध्वाः । भवन्ति । दर्शताः । यजत्राः ॥ ४ ॥

अध्वरेयज्ञेग्राव्णः सोमाभिषवार्थंग्रावणः युजानः प्रयुञ्जानोहं सुमेकेसुरूपेरोदसीद्यावापृ-थिव्यौ मनीषा मनसईषयास्तुतिलक्षणयावाचा अच्छ विवक्मि आभिमुख्येनस्तौमि हे अग्ने ते तव भूरिवाराः बहुभिर्बहुधावरणीयाः दर्शताः कमनीयत्वाद्दर्शनीयाः यजत्राः पूज्याः इमादीप्तयः मनवे मनुष्यव्यवहारार्थम् ऊर्ध्वाः ऊर्ध्वमुखाभवन्ति ॥ विवक्मि वचप-रिभाषणे लटि बहुलंछन्दसीतिशपःश्लुःअर्तिपिपर्त्योश्च बहुलंछन्दसीत्यभ्यासस्येत्त्वं कका-रस्यकुत्वंप्रत्ययेन । युजानः युजिबुधिदृशःकिदित्यानच् कित्त्वादगुणः चित्त्वादन्तोदात्तः । मनीषा सुपोडादेशः ॥ ४ ॥

४. यज्ञ में प्रस्तर धारण करके हम सुन्दर रूप-विशिष्ट द्यावा-पृथिवी की स्तुति-लक्षण वचन-द्वारा स्तुति करते हैं। हे अग्नि, तुम्हारी अतिशय वरणीय, कमनीय और पूज्य दीप्तियाँ मनुष्यों के लिए ऊर्ध्वमुख होती हैं।

यातेजिह्वामधुमतीसुमेधाअग्नेदेवेषूच्यतउरूची ।
तयेहविश्वाँअवसेयजत्रानासादयपाययाचामधूनि ॥ ५ ॥

या । ते । जिह्वा । मधुऽमती । सुऽमेधाः । अग्ने । देवेषु । उच्यते ।
उरूची । तया । इह । विश्वान् । अवसे । यजत्रान् । आ ।
सादय । पायय । च । मधूनि ॥ ५ ॥

हे अग्ने ते तव मधुमती उदकवती सुमेधाः शोभना मेधा प्रज्ञा यस्याः सा सर्वस्य प्रज्ञापयित्री या जिह्वा ज्वाला उरूची बहुव्याप्तिः सती देवेषु मध्ये आह्वानार्थमुच्यते प्रेर्यते यद्वा मधुमती माधुर्यवती सुमेधाः शोभनप्रज्ञानोपेता उरूची महत इन्द्रादीनभिपूजयन्ती उरूची जिह्वा वाक् देवेभ्य आह्वानार्थं प्रेर्यते तया जिह्वया यजत्रान् यजनीयान्देवान् विश्वान्देवानिह कर्मणि अस्माकमवसे रक्षणाय आसादय उपवेशय किंच तान्विश्वान्देवान्मधूनि मदकरान्सोमान्पायय ॥ सुमेधाः नित्यमसिच्प्रजामेधयोरित्यसिच् । उच्यते वच परिभाषणे कर्मणि यकि रूपं यद्वृत्तयोगादनिघातः । उरूची अञ्चतेः क्विन् अञ्चतेश्चोपसंख्यानमिति ङीप् अनुदात्तस्य च यत्रोदात्तलोप इति ङीप उदात्तत्वम् । पायय पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः शाच्छासाह्वाव्यावेपां युगिति युक् तिङ उत्तरत्वादनिघातः ॥ ५ ॥

५. हे अग्नि, तुम्हारी जो मधुमती और प्रज्ञाशालिनी ज्वाला अत्यन्त व्याप्तिविशिष्ट होकर देवों के मध्य में आह्वानार्थ प्रेरित होती है, उस जिह्वा से यजनीय देवों को हमारी रक्षा के लिए इस कर्म में उपवेशित कराओ। उन देवों को हर्ष कर सोमपान कराओ।

अथ षष्ठी—

यातेअग्नेपर्वतस्येवधारासश्चन्तीपीपयद्देवचित्रा ।
तामस्मभ्यंप्रमतिंजातवेदोवसोरास्वसुमतिंविश्वजन्याम् ॥६॥२॥

या । ते । अग्ने । पर्वतस्यऽइव । धारा । असश्चन्ती । पीपयत् ।
देव । चित्रा । ताम् । अस्मभ्यम् । प्रऽमतिम् । जातऽवेदः ।
वसो इति । रास्व । सुऽमतिम् । विश्वऽजन्याम् ॥ ६ ॥ २ ॥

देव दीप्यमान हे अग्ने चित्रा नानारूपा असश्चन्ती असंगतिमकुर्वाणा या ते तव प्रमतिः प्रकृष्टा बुद्धिः पीपयत् अपेक्षितफलदानेनास्मान्वर्धयति तत्र दृष्टान्तः—पर्वतस्येव धारा, यथा पर्वतस्य मेघस्य उदकस्य धारा ओषधिवनस्पत्यादिषु संगतिं कुर्वाणा तान्वर्धयति तद्वत् वसो सर्वस्य वासयितः जातवेदः जातप्रज्ञ हे अग्ने तां प्रमतिं परिरक्षणसमर्थां बुद्धिमस्मभ्यं रास्व दत्स्व तथा विश्वजन्यां सर्वजनहितां सुमतिं शोभनां बुद्धिं च रास्व ॥ असश्चन्ती सश्चतिर्गतिकर्मा शतरि उगितश्चेति ङीप् नञ्समासे नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । पीपयत् प्यायी वृद्धौ व्यत्ययेन परस्मैपदं छान्दसे लङि रूपं बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः

पूर्वस्योदात्तत्वं यद्वृत्तयोगादनिघातः । प्रवति तादौ चनितिकृत्यताविति इतेःप्रकृतिस्वरत्वम् । रास्व रादाने व्यत्ययेनात्मनेपदं लोटि रूपम् आमन्त्रितस्याविद्यमानत्वान्निघाताभावः ॥ १ ॥

६. हे द्युतिमान् अग्नि, नानारूपा और हम लोगों को छोड़कर अन्यत्र न जानेवाली तुम्हारी जो अनुग्रह बुद्धि है, वह हम लोगों को अपेक्षित फल-प्रदान-द्वारा वर्द्धित करे, जैसे मेघ की धारा वनस्पतियों को वर्द्धित करती है। हे निवासप्रद जातवेदा, हम लोगों को उसी अनुग्रह बुद्धि का प्रदान करो और सर्वजन-हितकारिणी शोभन बुद्धि को दो।

॥ इतितृतीयस्यचतुर्थेद्वितीयोवर्गः ॥ २ ॥

धेनुःप्रत्नस्येतिनवर्चंपञ्चमंसूक्तं वैश्वामित्रंत्रैष्टुभमाश्विनं तथाचानुक्रान्तं—धेनुर्नवाश्विनमिति । प्रातरनुवाकेआश्विनेक्रतौत्रैष्टुभेछन्दस्याश्विनशस्त्रेचास्यसूक्तस्यविनियोगः सूत्रितञ्च—धेनुःप्रत्नस्यकउप्रवदितिसूक्तेइति । व्युष्टेदशरात्रेद्वितीयेछन्दोमेप्रउगशस्त्रे अयमाश्विनस्तृचस्तृचः द्वितीयस्याश्विनइतिखण्डेसूत्रितम्—धेनुःप्रत्नस्यकाम्यंदुहानाअन्तःसमानमध्ये पञ्चाहि विद्यानिति ।

**धेनुःप्रत्नस्यकाम्यंदुहानान्तःपुत्रश्चरतिदक्षिणायाः ।**
**आद्योतनिंवहतिशुभ्रयामोषसःस्तोमोअश्विनावजीगः ॥ १ ॥**

**धेनुः । प्रत्नस्य । काम्यम् । दुहाना । अन्तरिति । पुत्रः ।**
**चरति । दक्षिणायाः । आ । द्योतनिम् । वहति । शुभ्रऽयामा ।**
**उषसः । स्तोमः । अश्विनौ । अजीगरिति ॥ १ ॥**

धेनुःप्रीणयित्रीउषाः प्रत्नस्यपुरातनस्याग्नेःकाम्यंकमनीयंपयोदुहानादोग्ध्रीभवति दक्षिणायाउषसःपुत्रःसूर्यस्तस्याअन्तश्चरति उषसोनन्तरंशुभ्रयामा सूर्यकिरणसंपर्काच्छुभ्रतयागमनंयस्यासौशुभ्रयामादिवसः द्योतनिंसर्वस्यप्रकाशकंसूर्यमावहति बिभर्ति अतउषसःपुराअश्विनौस्तोतुं स्तोमःस्तोत्रकारी होत्रादिरजीगः जागर्ति उत्तिष्ठति ॥ शुभ्रयामा याप्रापणे आतोमनिन् बहुव्रीहौपूर्वपदस्वरः । अजीगः जागृनिद्राक्षये कर्तरिलिपि बहुलंछन्दसि श्लोलुक् आकारस्यईकारश्छान्दसः गुणेकृते हल्ङ्यादिनातिपोलोपः ॥ १ ॥

१. प्रीणयित्री उषा पुरातन अग्नि के लिए कमनीय दुग्ध दोहन करती है। उषापुत्र सूर्य उसके मध्य में विचरण करते हैं। शुभ्रदीप्ति दिवस सबके प्रकाशक सूर्य का वहन करता है। उसके पूर्व ही अश्विद्वय के स्तोता जागरित होते हैं।

**सुयुग्वहन्तिप्रतिवामृतेनोर्ध्वाभवन्तिपितरेवमेधाः ।**
**जरेथामस्मद्विपणेर्मनीषांयुवोरवश्चकृमायातमर्वाक् ॥ २ ॥**

सुऽयुक् । वहन्ति । प्रति । वाम् । ऋतेन । ऊर्ध्वाः । भवन्ति ।
पितराऽइव । मेधाः । जरेथाम् । अस्मत् । वि । पणेः । मनीषाम् ।
युवोः । अवः । चकृम । आ । यातम् । अर्वाक् ॥ २ ॥

हेऽश्विनौ सुयुक् सुष्ठुरथेयोजिताअश्वाऋतेनसत्यभूतेनरथेनवांयुवांप्रतिवहन्ति यज्ञंप्रत्यागमनायधारयन्ति मेधाः यज्ञाश्च ऊर्ध्वाःयुष्मदभिमुखंपूर्वंयुवांभवन्ति तत्रदृष्टान्तः—पितराइव यथापुत्राःपितरौमातापितरावभिलक्ष्यगच्छन्तितद्वत् अस्मदस्मत्सकाशात्पणेर्मनीषामासुरींबुद्धिंविजरेथां विशेषेणनाशयतं वयंच युवोर्युवयोरवः हविर्लक्षणमन्नं चकृमकुर्मः युवामर्वाक्अस्मदभिमुखेनआयातम् ॥ सुयुक् युजेःक्विप् सुपांसुलुगितिसुपोलुक् । पितरेव पितामात्रेतिपितृशेषः सुपोडादेशः । जरेथां जॄष्वयोहानौ व्यत्ययेन मनीषामित्यत्रसुपांसुलुगितिमित्यादु- दत्तत्वम् छन्दस्युभयथेतिभाषायामार्धधातुकत्वाण्णिलोपः शपःपित्त्वादनुदात्तत्वेधातुस्वरः ॥ २ ॥

२. हे अश्विद्वय, उत्तम रूप से रथ में युक्त अश्वद्वय सत्यरूप रथ-द्वारा तुम दोनों को यज्ञ में ले जाने के लिए वहन करते हैं। यज्ञ तुम्हारे लिए उन्मुख होते हैं, जैसे माता-पिता को लक्ष्य कर पुत्र जाते हैं। हम लोगों के निकट से पणियों की आसुरी बुद्धि को विशेष रूप से नष्ट करो। हम लोग तुम्हारे लिए हवि प्रस्तुत करते हैं। तुम दोनों आगमन करो।

सुयुग्भिरश्वैःसुवृतारथेनदस्राविमंशृणुतंश्लोकमद्रेः ।
किमङ्गवांप्रत्यवर्तिंगमिष्ठाहुर्विप्रासोअश्विनापुराजाः ॥ ३ ॥

सुयुक्ऽभिः । अश्वैः । सुऽवृता । रथेन । दस्रौ । इमम् । शृणुतम् ।
श्लोकम् । अद्रेः । किम् । अङ्ग । वाम् । प्रति । अवर्तिम् ।
गमिष्ठा । आहुः । विप्रासः । अश्विना । पुराऽजाः ॥ ३ ॥

हेऽश्विनौ सुयुग्भिः सुष्ठुयोजितैरश्वैःसुवृता पुनःपुनरावर्ततइतिवृत्चक्रं शोभनचक्रोपेतेनरथेनागत्य दस्रौ शत्रूणामुपक्षपयितारौ युवामद्रेःआदियतेस्तोत्रैरित्यद्रिःस्तोता तस्येमंश्लोकं स्तोत्रं शृणुतम् अङ्ग हेऽश्विनौ विप्रासोमेधाविनः पुराजाः पुरातनाऋषयः वां युवामवर्तिम् अस्माकंदुःखहानिंप्रति गमिष्ठा अतिशयेनगन्तारावितिकिमाहुः किंकथयन्तीति किं नकथय- न्तीत्यर्थः । अथवाङ्केत्यस्यपाठोसुवृतारथेनेत्याविगतम् । गमिष्ठा गन्तृशब्दादिष्ठनिरूपम् ॥ ३ ॥

३. हे अश्विद्वय, सुन्दर चक्रविशिष्ट रथ पर आरोहण करके और उत्तम रूप से योजित अश्वों-द्वारा वाहित होकर तुम दोनों स्तुतिकारियों के इस श्लोक का श्रवण करो। हे अश्विद्वय, पुरातन मेधाविगण क्या नहीं बोलते हैं, जो हमारी दुःखहानि के विरुद्ध तुम दोनों गमन करते हो।

आमन्येथामागतंकच्चिदेवैर्विश्वेजनासोअश्विनाहवन्ते ।
इमाहिवांगोऋजीकामधूनिप्रमित्रासोनददुरुस्रोअग्रे ॥ ४ ॥

आ । मन्येथाम् । आ । गतम् । कत् । चित् । एवैः । विश्वे । जनासः । अश्विना । हवन्ते । इमा । हि । वाम् । गोऽऋजीका । मधूनि । प्र । मित्रासः । न । ददुः । उस्रः । अग्रे ॥ ४ ॥

कच्चिदितिप्रश्ने हेअश्विनौ आमन्येथाम् इमांमदीयांस्तुतिंमागीतं किंच एवैर्गमनसाधनै-रश्वैरागतं यज्ञंप्रत्यागच्छतं विश्वेसर्वेजनासःस्तोतारः अश्विनाअश्विनौ वां युवांहवन्ते स्तुति-लक्षणाभिर्वाग्भिराह्वयन्ति किंच गोऋजीकागव्यपयसामिश्रणोपेतानिमधूनिमदकराणिसोमर-सरूपाणिइमाइमानिहवींषि युवाभ्यांप्रददुःस्तोतारःप्रयच्छन्ति तत्रदृष्टान्तः—मित्रासोन यथा मित्राणिमित्रेभ्योऽपेक्षितंददतितद्वत् उस्रः वसतिनभसीत्युस्रःसूर्यः अग्रे उषसोऽग्रेउदेति तस्मादाग-च्छतमितिभावः ॥ मन्येथां मनज्ञाने दिवादिः लोटिरूपम् । इमा सुपोडादेशः । गोऋजीका प्रकृ-त्यान्तःपादमितिप्रकृतिभावः । ददुः दाणूदानेइत्यस्यलिटिरूपं छन्दसि ... । उस्रः वसनिवासे स्फायितञ्चीत्यादिनारक् किच्चात्संप्रसारणं शासिवसिघसीनांचेतिषत्वाभा-वश्छान्दसः ॥ ४ ॥

४. हे अश्विद्वय, तुम दोनों हमारी स्तुति को अवगत करो और अश्वों के साथ यज्ञ में आगमन करो। सब स्तोता स्तुतिलक्षण वचनों से तुम दोनों का आह्वान करते हैं। वे मित्र की तरह दुग्धमिश्रित और हर्ष-कर हवि तुम दोनों को प्रदान करते हैं। सूर्य उषा के आगे उदित होते हैं। इसलिए आगमन करो।

तिरःपुरूचिदश्विनारजांस्याङ्गूषोवांमघवानाजनेषु ।
एहयातंपथिभिर्देवयानैर्दस्राविमेवांनिधयोमधूनाम् ॥ ५ ॥ ३ ॥

तिरः । पुरु । चित् । अश्विना । रजांसि । आङ्गूषः । वाम् । मघवाना । जनेषु । आ । इह । यातम् । पथिऽभिः । देवऽयानैः । दस्रौ । इमे । वाम् । निऽधयः । मधूनाम् ॥ ५ ॥ ३ ॥

हेअश्विनौ पुरूचित् बहून्यपिरजांसिस्थानानि तिरः स्वतेजसातिरस्कुर्वन्तौ वां युवाम् इहकर्मणि देवयानैः पथिभिर्मार्गैरायातम् आगच्छतं मघवाना धनवन्तौ हेअश्विनौ जनेषुस्तो-तृषु वां युवयोराङ्गूषः आसमन्ताद्घोषणीयंस्तोत्रंवर्तते दस्रौ शत्रूणामुपक्षपयितारौ हेअश्विनौ वांयुवयोर्मधूनांमदकराणांसोमानामिमेनिधयः निधीयतेऽत्रसोमइतिनिधयःपात्रविशेषाःसन्ति तस्मादागच्छतमितिभावः ॥ आङ्गूषः आङ्पूर्वाद्घुषेःकर्मणिघञ् आघुष्यतइत्याघोषः घोऽत्य-स्यपृषोदरादित्वाद्गइत्यादेशः आकारस्यानुनासिकश्छन्दसीत्यनच्यपि अनुनासिकश्छान्दसः यद्वा

वर्तिर्गन्तव्यं स्थानमस्माद्वृत्तेरिति स्नेनो वर्तिःप्रत्ययान्तो निपातितः । अकृतिगणकतीत्येवमनिसन्धूर्वः स्तोत्रं वादृ- पदवानृ: प्रज्ञादित्वात्स्वार्थिकोऽण्प्रत्ययस्वरः । पद्मपात्तमित्यर्थंचोऽन्ततः ॥ ५ ॥

५. हे अश्विद्वय, नाना देशों को अपने तेज से तिरस्कृत करके तुम दोनों देवयान पथ-द्वारा इस स्थल में आगमन करो। हे धनवान् अश्विद्वय, तुम दोनों के लिए स्तोताओं का स्तोत्र उद्घोषित होता है। हे शत्रुओं के क्षयकारक, तुम दोनों के लिए ये मदकारक सोम के पात्र विशेष सञ्चित हैं।

॥ इतितृतीयस्यचतुर्थेतृतीयोवर्गः ॥ ३ ॥

अत्रोर्ध्वमेतिरिक्तोऽपर्य्येवाकशस्त्रेपुराणमोकइति वास्तोष्पतिकल्पेनयाज्याः सूत्रितम्—अश्विनावी- वस्तुराणामोकःसख्यंशिवंवामितिकसतोयाज्याइति ॥

पुराणमोकः सख्यं शिवं वां युवोर्नरा द्रविणं जह्नाव्याम् ।
पुनः कृण्वानाः सख्या शिवानि मध्वा मदेम सह नू समानाः ॥ ६ ॥

पुराणम् । ओकः । सख्यम् । शिवम् । वाम् । युवोः । नरा । द्रविणम् । जह्नाव्याम् । पुनरिति । कृण्वानाः । सख्या । शिवानि । मध्वा । मदेम । सह । नु । समानाः ॥ ६ ॥

हे अश्विनौ वां युवयोः पुराणं पुरातनं सख्यं सखित्वम् ओकः सेव्यं शिवं कल्याणकरं भवति किंच हे नरा नरौ अस्मदीयस्य कर्मणो नेतारौ युवोः युवयोर्द्रविणं धनं जह्नाव्यां जह्नुकुलजायां भवति शिवानि सुखकराणि युवयोः सख्या सख्यानि पुनःपुनः कृण्वानाः कुर्वन्तः समानाः हविःप्रदानेनोपकारकत्वात्मित्रभूताः वयं मध्वा मदकरेण सोमेन युवाभ्यां सह युगपत् नु क्षिप्रं मदेम हर्षेण ॥ सख्यं सख्युर्भाव इत्यर्थे सख्युर्य इति यप्रत्ययः । जह्नाव्यां जह्नोः संबन्धिनीत्यर्थे तस्येद- मित्यण् ओर्गुणः इत्यदीर्घयोर्लोपः । मदेम मदी हर्षे इत्यस्याशीर्लिङि छान्दसाशि- व्यत्ययेन शपः प्रत्ययः निघातः ॥ ६ ॥

६. हे अश्विद्वय, तुम दोनों का पुरातन सख्य वाञ्छनीय है और कल्याणकर है। हे नेतृद्वय, तुम दोनों का धन जह्नु-कुलजा में है। तुम दोनों के सुखकर सख्य को बारम्बार प्राप्त करके हम लोग मित्रभूत (तुम्हारे समान) होते हैं। हर्षकारक सोम के द्वारा तुम दोनों के साथ हम शीघ्र ही हृष्ट होते हैं।

अश्विना वायुना युवं सुदक्षा नियुद्भिश्च सजोषसा युवाना ।
नासत्या तिरोअह्न्यं जुषाणा सोमं पिबतमस्रिधा सुदानू ॥ ७ ॥

अश्विना । वायुना । युवम् । सुदक्षा । नियुत्ऽभिः । च ।

सजोषसा । युवाना । नासत्या । तिरःऽअह्न्यम् । जुषाणा ।
सोमम् । पिबतम् । अस्रिधा । सुदानू इति सुऽदानू ॥ ७ ॥

सुदत्रा शोभनसामर्थ्योपेतौ युवाना नित्यतरुणौ नासत्या नविद्यतेऽसत्यं ययोस्तौ सुदानू शोभनफलस्यप्रदातारौ हेअश्विनौ वायुनानियुद्भिश्च सजोषसासजुषाणौ सोमविषयप्रीतियुक्तौ अस्रिधा अनुपक्षीणौ युवं युवांतिरोअह्न्यम् अहनितिरोहिते हूयमानमिमं सोमंपिबतम् ॥ नियुद्भिः यौतेःक्विप् । तिरोअह्न्यम् अहिन्यमह्न्यं भवेऽर्थ्यदीतियत् तिरोभूतमह्न्यंयस्मिन्कालेसतिरोअह्न्यः बहुव्रीहौपूर्वपदप्रकृतिस्वरः ॥ ७ ॥

७. शोभन सामर्थ्य से युक्त, नित्य तरुण, असत्यरहित एवम् शोभन फल के दाता हे अश्विद्वय, वायु और नियुद्गण के साथ मिलकर अक्षीण और सोमपायी तुम दोनों दिवस के शेष में सोम पान करो।

अश्विना परि वामिषः पुरूचीरीयुर्गीर्भिर्यतमाना अमृध्राः ।
रथो ह वामृतजा अद्रिजूतः परि द्यावापृथिवी याति सद्यः ॥ ८ ॥

अश्विना । परि । वाम् । इषः । पुरूचीः । ईयुः । गीःऽभिः ।
यतमानाः । अमृध्राः । रथः । ह । वाम् । ऋतऽजाः । अद्रिऽजूतः ।
परि । द्यावापृथिवी इति । याति । सद्यः ॥ ८ ॥

हेअश्विनौ पुरूचीः पुरुतममञ्चन्तिगच्छन्तीतिपुरूचीः बहूनि इषोहविर्लक्षणान्यन्नानि वां युवां परीयुःपरितोगच्छन्ति तथा अमृध्राः केनाप्यतिरस्कृताः यतमानाः कर्मणिप्रवर्तमानाः स्तोतारः गीर्भिःस्तुतिलक्षणाभिर्वाग्भिर्युवांपरिचरन्ति ऋतजाः ऋतस्योदकस्यजनयिता ऋते यज्ञेप्रादुर्भवतीतिवा अद्रिजूतः स्तोतृभिराकृष्टः वांयुवयोःरथः द्यावापृथिवी द्यावापृथिव्यौ सद्यस्तदानीमेवपरियातिह सर्वतःप्राप्नोतिखलु अश्विनोरथस्यवेगवत्त्वेमन्त्रवर्णः—योवामश्विनामनसोजवीयान्रथःस्वश्वोविशआजिगातीति । अतःकारणादस्मदीयंयज्ञंप्रत्यागच्छतमितिभावः ॥ ईयुः इण्गतावित्यस्य लिटि दीर्घइणःकितीत्यभ्यासस्यदीर्घः पादादित्वादनिघातः । यतमानाः यतीप्रयत्नेइत्यस्यशानचिरूपं शपःपित्त्वादनुदात्तत्वेशानचोलसार्वधातुकस्वरेणानुदात्तत्वेधातुस्वरः । ऋतजाः जनेर्विट् विड्वनोरित्यात्वम् । अद्रिजूतः जूइतिसौत्रोधातुः कर्मणिक्तः तृतीयाकर्मणीतिपूर्वपदस्वरः ॥ ८ ॥

८. हे अश्विद्वय, प्रचुर हवि तुम लोगों के निकट गमन करती है। क्षोभरहित और कर्मकुशल स्तोता लोग स्तुतिलक्षण वचनों-द्वारा तुम दोनों की परिचर्या करते हैं। स्तोताओं-द्वारा आकृष्ट जलप्रद रथ द्यावा-पृथिवी के मध्य में सद्यः गमन करता है।

अथनवमी—

अश्विनामधुषुत्तमोयुवाकुःसोमस्तंपातमागतंदुरोणे ।
रथोहवांभूरिवर्पःकरिक्रत्सुतावतोनिष्कृतमागमिष्ठः ॥ ९ ॥ ४ ॥

अश्विना । मधुसुतऽत्तमः । युवाकुः । सोमः । तम् । पातम् ।
आ । गतम् । दुरोणे । रथः । ह । वाम् । भूरि । वर्पः ।
करिक्रत् । सुतऽवतः । निःऽकृतम् । आऽगमिष्ठः ॥ ९ ॥ ४ ॥

हेअश्विनौ यःसोमः मधुषुत्तमः मधुरसमत्यन्तंप्रेरयन् युवाकुर्युवांकामयमानोवर्तते य- द्वा युवाकुर्वसतीवरीप्रभृतिभिर्मिश्रितइत्यर्थः तमिमंसोमंपातं पिबतं दुरोणेऽस्माकंगृहेआगत- मागच्छतं भूरि प्रभूतं वर्पोवारकं तेजःसर्वैर्वरणीयंधनंवा करिक्रत् पुनःपुनःकुर्वन् वांयु- वयोरथःसुतवतःसोममभिषुतवतोयजमानस्यनिष्कृतं निरित्येषसमित्येतस्यस्थानेइतियास्कः । संस्कारि यद्वा संस्कृतं गृहमागमिष्ठ ह अतिशयेनागन्ताभवतिखलु ॥ युवाकुः यौतेः क- टिकुषिभ्यांकाकुरितिकाकुर्बाहुलकादस्मादपिभवति प्रत्ययस्वरेणमध्योदात्तः । करिक्रत् करोतेर्य- ङ्लुकि शतरि दाधर्तिदर्धर्तिदर्धर्षीत्यादिनाशुत्वाभावेऽणादेशेकृतेऽजस्यानृकारान्तत्वादभ्यास- स्यरिगागमोनप्राप्नोतीतिसोपिनिपात्यते अभ्यस्तस्वरः । निष्कृतं करोतेरादिकर्मणिक्तः संस्क- र्तुंप्रवृत्तइत्यर्थः थाथादिस्वरः ॥ ९ ॥

९. हे अश्विद्वय, जो सोम अत्यन्त मधुर रस से मिश्रित हुआ है, उसका पान करो। तुम लोगों का धनदानकारी रथ सोमाभिषव करने- वाले यजमान के संस्कृत गृह में बारम्बार आगमन करता है।

॥ इतितृतीयस्यचतुर्थेचतुर्थोवर्गः ॥ ४ ॥

मित्रोजनानितिनवर्चंपञ्चमंसूक्तं वैश्वामित्रं त्रैष्टुभमैत्रं मित्रोमैत्रंषळन्त्यागायत्र्यस्तथेत्यनुक्र- मणिका । आदितःपञ्चत्रिष्टुभः शिष्टाश्चतस्रोगायत्र्यः मित्रोदेवता अग्निहोत्रार्थेपयसिदुह्यमाने- ऽभिष्टवनेमित्रोजनानित्यनयासमिधमादध्यात् । सूत्रितञ्च—मित्रोजनान्यातयतिब्रुवाणइतिसमि- धमादधानमिति ।

तत्रप्रथमा—

मित्रोजनान्यातयतिब्रुवाणोमित्रोदाधारपृथिवीमुतद्याम् ।
मित्रःकृष्टीरनिमिषाभिचष्टेमित्रायहव्यंघृतवज्जुहोत ॥ १ ॥

१ नि० १२. ५।

मित्रः । जनान् । यातयति । ब्रुवाणः । मित्रः । दाधार । पृथिवीम् । उत । द्याम् । मित्रः । कृष्टीः । अनिऽमिषा । अभि । चष्टे । मित्राय । हव्यम् । घृतऽवत् । जुहोत ॥ १ ॥

ब्रुवाणःस्तूयमानः शब्दंकुर्वाणोवा मित्रः प्रकर्षेणसर्वैर्मीयतेतथासर्वान्वृष्टिप्रदानेनत्रायतइतिवामित्रःसूर्यः जनान्कर्षकादिजनान् यातयति कृष्यादिकर्मसुप्रयत्नंकारयति तथामित्रएव पृथिवीम् उतापिचद्याम् एतावुभौलोकौवृष्टिद्वारान्नंयागांश्चजनयन् दाधारधारयति तथा स्थितो मित्रःअनिमिषाअनिमिषेणानुग्रहदृष्ट्याकृष्टीःकर्मवतोमनुष्यानभिचष्टे सर्वतःपश्यति एतत्सर्वंज्ञात्वा हेऋत्विजः घृतवदुपस्तरणाभिघारणयुक्तंहव्यं हवनयोग्यंपुरोडाशादिकं तस्मैमित्रायदेवायजुहोत जुहुत प्रयच्छतेत्यर्थः । उक्तार्थंयास्कोऽब्रवीति—मित्रोजनान्यातयति ब्रुवाणःशब्दंकुर्वन्मित्रएवधारयतिपृथिवींचदिवंचमित्रःकृष्टीरनिमिषन्नभिविपश्यतीतिकृष्टयइतिमनुष्यनाम कर्मवन्तोभवन्तिविकृष्टदेहावामित्रायहव्यंघृतवज्जुहोतेतिव्याख्यातंजुहोतिर्दानकर्मेति ॥ यातयति यतीप्रयत्नेइत्यस्यण्यन्तस्यलटिरूपम् । दाधार तुजादीनामित्यभ्यासस्यदीर्घः । जुहोत जुहोतेर्लोटि मध्यमस्यतस्यतबादेशः गुणःनिघातः ॥ १ ॥

१. स्तुत होने पर देवता सकल लोक को कृष्यादि कार्य में प्रवर्तित करते हैं। वृष्टि-द्वारा अन्न और यज्ञ को उत्पन्न करते हुए मित्र देवता पृथ्वी और द्युलोक दोनों का धारण करते हैं। कर्मवान् मनुष्यों को चारों तरफ़ से मित्र देवता अनुग्रह दृष्टि से देखते हैं। मित्र के उद्देश से घृतविशिष्ट हव्य प्रदान करो।

देवसुवांहविष्षुमित्रस्यसत्यस्यप्रसमित्रेतियाज्या एषैवप्रातर्होमस्यकालात्ययनिमित्तेमैत्रे चरौयाज्या सूत्रितंच—प्रसमित्रमर्तोअस्तुप्रयस्वांस्त्वांनष्टवान्महिमायपश्चलइति । सतइष्टिमित्रःसूर्योमियोमहिनादिवंप्रसमित्रमर्तोअस्तुप्रयस्वानितिसंस्थितायामितिच ।

सूक्तेद्वितीया—

प्रसमित्रमर्तोअस्तुप्रयस्वान्यस्तआदित्यशिक्षतिव्रतेन ।
नहन्यतेनजीयतेत्वोतोनैनमंहोअश्नोत्यन्तितोनदूरात् ॥ २ ॥

प्र । सः । मित्र । मर्तः । अस्तु । प्रयस्वान् । यः । ते । आदित्य । शिक्षति । व्रतेन । न । हन्यते । न । जीयते । त्वाऽऊतः । न । एनम् । अंहः । अश्नोति । अन्तितः । न । दूरात् ॥ २ ॥

हेआदित्यव्रतेनयज्ञेनयुक्तोयोमनुष्यःतेतुभ्यंशिक्षति हविर्लक्षणमन्नंददाति हेमित्र स-मर्तोमनुष्यः प्रयस्वानन्नवान्प्रास्तु प्रभवतु त्वोतस्त्वयारक्षितः समनुष्यः केनापिनहन्यते नबाध्यते नजीयते नाभिभूयतेच एनंतुभ्यंहविर्ददद्वन्तंपुरुषमंहःपापमन्तितःसमीपान्नाश्नोति नव्याप्नोति ।

१ नि० १०. २२.

दूरादपिनप्राप्नोति शिक्षतिर्दानकर्मा व्यत्ययेनपरस्मैपदं यद्वृत्तयोगादनिघातः । जीयते ज्यतेःकर्मणियकि अकृत्सार्वधातुकयोरितिदीर्घः । त्वोतः तृतीयाकर्मणीतिपूर्वपदस्वरः । अश्नोति अशूव्याप्तौ स्वादिः व्यत्ययेनपरस्मैपदम् ॥ २ ॥

२. हे आदित्य, मित्र, यज्ञयुक्त होकर जो मनुष्य तुम्हें हविरन्न प्रदान करता है, वह अन्नवान् हो। तुम्हारे द्वारा रक्षित होकर वह मनुष्य किसी से भी विनष्ट और अभिभूत नहीं होता है। तुम्हें जो हविः देता है, उस पुरुष को दूर अथवा निकट से पाप छू नहीं सकता है।

येनस्तुयांहविष्षुमित्रस्यसत्यस्यानुवाक्या । अनमीवासइळ्यामदन्तअसमित्रमतोंअस्तु प्रयस्वानितिसूक्तम् ।

अ॒न॒मी॒वास॒इळ॑या॒मद॑न्तो॒मि॒तज्ञ॑वो॒वरि॑म॒न्नापृ॑थि॒व्याः ।
आ॒दि॒त्यस्य॑व्र॒तमु॑पक्षि॒यन्तो॑व॒यंमि॒त्रस्य॑सुम॒तौस्या॑म ॥ ३ ॥

अ॒न॒मी॒वासः॑ । इळ॑या । मद॑न्तः । मि॒तऽज्ञ॑वः । वरि॑मन् । आ ।
पृ॒थि॒व्याः । आ॒दि॒त्यस्य॑ । व्र॒तम् । उ॒प॒ऽक्षि॒यन्तः॑ । व॒यम् ।
मि॒त्रस्य॑ । सु॒ऽम॒तौ । स्या॒म॒ ॥ ३ ॥

हेमित्र अनमीवासः रोगवर्जिताः इळ्यान्नेनमदन्तोमाद्यन्तःपृथिव्यावरिमन्विस्तीर्णेप्रदेशे मितज्ञवः मितजानुकाः आयथाकामंसर्वत्रगच्छन्तः आदित्यस्यसंबन्धिव्रतंकर्मोपक्षियन्तः तस्य कर्मणःसमीपेनिवसन्तः तदीयंकर्मकुर्वाणाइत्यर्थः तादृशावयंमित्रस्यादित्यस्यसुमतौशोभना-यामनुग्रहबुद्धयांस्यामवर्तेमहि ॥ मदन्तःमदीहर्षेइत्यस्यशतरिव्यत्ययेनशप् । मितज्ञवः जानुशब्द-स्यज्ञुश्छन्दसः । वरिमन् उरुशब्दात्पृथ्वादित्वादिमनिच् प्रियस्थिरेत्यादिनावरादेशः सुपांसुलु-गितिसप्तम्यालुक् व्यत्ययेनाद्युदात्तः ॥ ३ ॥

३. हे मित्र, रोग-वर्जित होकर अन्नलाभ से हृष्ट होकर और पृथिवी के विस्तीर्ण प्रदेश में मितजानु होकर हम सर्वत्रगामी आदित्य के व्रत (कर्म) के निकट अवस्थिति करते हैं। हम लोगों के ऊपर आदित्य अनुग्रह-बुद्धि करें।

अ॒यंमि॒त्रोन॑म॒स्यः॑सु॒शेवो॒राजा॑सुक्ष॒त्रोअ॑जनिष्टवे॒धाः ।
तस्य॑व॒यंसु॑म॒तौय॒ज्ञिय॒स्यापि॑भ॒द्रेसौ॑मन॒सेस्या॑म ॥ ४ ॥

अ॒यम् । मि॒त्रः । न॒म॒स्यः॑ । सु॒ऽशेवः॑ । राजा॑ । सु॒ऽक्ष॒त्रः ।
अ॒ज॒नि॒ष्ट॒ । वे॒धाः । तस्य॑ । व॒यम् । सु॒ऽम॒तौ । य॒ज्ञिय॑स्य ।
अपि॑ । भ॒द्रे । सौ॒म॒न॒से । स्या॒म॒ ॥ ४ ॥

अयंपूर्वमध्येप्रतिपादितोमित्रः सूर्यः नमस्यः सर्वैर्नमस्करणीयः सुशेवः शोभनसुखः सुखेनसेव्यइत्यर्थः राजा सर्वस्यजगतःप्रकाशप्रदानेनस्वामी सुक्षत्रःक्षत्रशब्देनबलमुच्यते शोभनबलोपेतः वेधाःसर्वस्यजगतोविधाता एवंगुणोपेतःसूर्यः अजनिष्ट प्रादुरभूत् तस्यएवंविधगुणोपेतस्ययज्ञियस्ययागार्हस्यसूर्यस्यसुमतौशोभनायांबुद्ध्यांभद्रेकल्याणकारिणिसौमनसे सौमनस्येपि यजमानावयं स्यामभवेम ॥ नमस्यः नमसिसाधुःतत्रसाधुरितियत् तित्स्वरितः । अजनिष्ट जनी-प्रादुर्भावेइत्यस्यलुङिचिणिरूपम् । सौमनसे सुमनसइदमित्यर्थेतस्येदमित्यण्प्रत्ययस्वरः ॥ ४ ॥

४. नमस्कारयोग्य, सुन्दर-मुख-विशिष्ट, स्वामी, अत्यन्त बल-विशिष्ट और सबके विधाता ये सूर्य प्रादुर्भूत हुए हैं। ये यज्ञार्ह हैं। इनके अनुग्रह और कल्याणकर वात्सल्य को हम यजमान प्राप्त कर सकें।

**महाँआदित्योनमसोपसद्योयातयज्जनोगृणतेसुशेवः ।**
**तस्माएतत्पन्यतमायजुष्टमग्नौमित्रायहविराजुहोत ॥५॥५॥**

महान् । आदित्यः । नमसा । उपऽसद्यः । यातयत्ऽजनः ।
गृणते । सुऽशेवः । तस्मै । एतत् । पन्यःऽतमाय ।
जुष्टम् । अग्नौ । मित्राय । हविः । आ । जुहोत ॥ ५ ॥ ५ ॥

योयमादित्योमहान् अतएवनमसानमस्कारेणोपसद्यः सर्वैरुपसदनीयः यातयज्जनः प्रातः-प्रातःस्वस्वकर्मणिप्रवर्तनीयाजनायेनेतिसतथोक्तः गृणते स्तोत्रंकुर्वतेजनायसुशेवःसुखोभवति तस्मै पन्यतमाय स्तुत्यतमाय मित्रायादित्याय जुष्टंप्रीतिविषयमेतद्धविः अग्नावाजुहोतजुहुत ॥ यातयज्जनः यतीप्रयत्नेइत्यस्यण्यन्तस्यशतरिरूपं बहुव्रीहौपूर्वपदप्रकृतिस्वरेप्राप्तेमरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम् । गृणते गृशब्दे शतुरनुमइतिविभक्तेरुदात्तत्वम् । पन्यतमाय पनस्तेरघ्न्यादित्वा-द्यतिप्रत्ययोनाद्यत्याद्युदात्तत्वम् । जुष्टं नित्यंमन्त्रेइत्याद्युदात्तत्वम् ॥ ५ ॥

५. जो आदित्य महान् हैं, जो सकल लोक के प्रवर्तक हैं, नमस्कार-द्वारा उनकी उपासना करना उचित है। वे स्तुति करनेवालों के प्रति प्रसन्नमुख होते हैं। स्तुतियोग्य मित्र के लिए प्रीतिकर हव्य अग्नि में अर्पित करो।

॥ इतितृतीयस्यचतुर्थेपञ्चमोवर्गः ॥ ५ ॥

अभिप्लवषडहेदशरात्रेचसमूढरौकविंशादिस्तोमेसतिहोत्रकशंसिनाआज्यस्थानेपञ्चसप्तादिसंख्याकाऋच आवपनीयाः तत्रमैत्रावरुणशस्त्रेमित्रस्यचर्षणीधृतइत्याद्याःप्रतसमावापार्थाः सूत्रितञ्च—मित्रस्यचर्षणीधृतइतिचतस्रोमैत्र्यइति ।

अथषष्ठी—

मित्रस्यंचर्षणीधृतोवोदेवस्यसानसि ।
द्युम्नंचित्रश्रवस्तमम् ॥ ६ ॥

मित्रस्य । चर्षणिऽधृतः । अवः । देवस्य ।
सानसि । द्युम्नम् । चित्रश्रवःऽतमम् ॥ ६ ॥

चर्षणीधृतोमनुष्याणांवृष्टिप्रदानेनधारकस्यमित्रस्यदेवस्यसंबन्धिअवोन्नं सानसि सर्वैः संभजनीयं द्युम्नं त्वदीयंधनंच चित्रश्रवस्तमम् अतिशयेनचायनीयकीर्तियुक्तम् ॥ सानसि षणोतेःसानसिवर्णसीत्यादिनाअसिप्रत्ययान्तत्वेननिपातनादुपधावृद्धिः चित्त्वादन्तोदात्तः स्वमोर्लुगितिस्वमोर्लुक् ॥ ६ ॥

६. वृष्टि-द्वारा मनुष्यों के धारक मित्रदेव का अन्न और सबके द्वारा भजनीय धन अतिशय कीर्तियुक्त है।

प्रातर्होमस्यकालात्ययेमैत्रेष्टिः तस्यामभियोमहिनेत्यनुवाक्या सूत्रितश्च—अभियोमहिनादिवं प्रसमित्रमर्तोअस्तुप्रयस्वानिति ।

सैषासप्तमी—

अभियोमहिनादिवंमित्रोबभूवसप्रथाः ।
अभिश्रवोभिःपृथिवीम् ॥ ७ ॥

अभि । यः । महिना । दिवम् । मित्रः । बभूव ।
सऽप्रथाः । अभि । श्रवःऽभिः । पृथिवीम् ॥ ७ ॥

योमित्रः महिना स्वकीयेनमहिम्ना दिवमन्तरिक्षमभिबभूवाभिभवति समित्रः सप्रथाः प्रथःप्रसिद्धिः कीर्तिः तत्सहितःश्रवोभिर्वृष्टिद्वाराउत्पादितैरन्नैः पृथिवीमप्यभिभवति बह्वन्नयुक्तांकरोतीत्यर्थः ॥ सप्रथाः प्रथप्रख्याने असुन् वोपसर्जनस्येतिसहस्यसभावः ॥ ७ ॥

७. जिस मित्रदेव ने अपनी महिमा से द्युलोक को अभिभूत किया है, उसी ने कीर्तियुक्त होकर पृथ्वी को प्रचुर अन्न-विशिष्टा किया है।

अथाष्टमी—

मित्रायपञ्चयेमिरेजनाअभिष्टिशवसे ।
सदेवान्विश्वान्बिभर्ति ॥ ८ ॥

मित्राय । पञ्च । येमिरे । जनाः । अभिष्टिऽशवसे ।
सः । देवान् । विश्वान् । बिभर्ति ॥ ८ ॥

पञ्चजनाः निषादपञ्चमाश्चत्वारोवर्णा अभिष्टिशवसेशत्रूणामभिगन्तृबलयुक्तायमित्राययेमिरे हवींषिप्रयच्छन्ति सतादृशोमित्रः विश्वान्सर्वान्देवान्बिभर्ति स्वस्वरूपतयाधारयति ॥ अभिष्टिशवसे इष्टेर्भावेकृत्येत्यादिनाक्तिन् तादौचनितीत्यन्तोदात्तत्वं शकन्ध्वादित्वात्पररूपत्वं बहुव्रीहौपूर्वपदस्वरः ॥ ८ ॥

८. निषाद को लेकर पाँचों वर्ण शत्रुजयक्षम और बलविशिष्ट मित्र के उद्देश से हव्य प्रदान करते हैं। मित्र अपने स्वरूप से समस्त देवगण को धारण करते हैं।

मित्रोदेवेष्वायुषुजनायवृक्तबर्हिषे । इषइष्टव्रताअकः ॥९॥६॥
मित्रः । देवेषु । आयुषु । जनाय । वृक्तऽबर्हिषे ।
इषः । इष्टऽव्रताः । अकरित्यकः ॥ ९ ॥ ६ ॥

मित्रोभगवानादित्योदेवेषुद्योतमानादिगुणयुक्तेषु आयुषुमनुष्येषुमध्येयोजनोवृक्तबर्हिः वृक्तंछिन्नंबर्हिर्येनसः स्वनासावनपूर्वकहविषोदाता भवतीतिशेषः तस्मैवृक्तबर्हिषे जनाय इष्टव्रताः इष्टानिकल्याणानिव्रतानिकर्माणियाभिः सिध्यन्तितादृशः तादृशान्यन्नानि अकःकरोति तस्मैददातीत्यर्थः ॥ वृक्तबर्हिषे ओव्रश्चूछेदने कर्मणिनिष्ठायां यस्यविभाषेतीट्प्रतिषेधः बहुव्रीहौ पूर्वपदस्वरः । अकः करोतेर्लुङि मन्त्रेघसेत्यादिनाच्लेर्लुक् सिपोहल्ङ्यादिलोपः निघातः ॥ ९ ॥

९. देवों और मनुष्यों के मध्य में जो व्यक्ति कुशच्छेदन करता है, उसे मित्रदेव कल्याणकर अन्न प्रदान करते हैं।

॥ इतितृतीयस्यचतुर्थेषष्ठोवर्गः ॥ ६ ॥

इहेहवइतिसप्तर्चंसप्तमंसूक्तं वैश्वामित्रंजागतमृभुदेवताकम् अन्त्यस्यऋभ्विन्द्रदेवताकम् तथाचानुक्रान्तम्—इहेहसप्तार्भवंजागतंत्वन्त्यैन्द्रार्भवेति । सूक्तविनियोगोलैङ्गिकः आश्विनशस्त्रे पृष्ठ्याभिप्लवषडहयोःप्रथमेहनिवैश्वदेवशस्त्रेआर्भवनिविद्धानीयाः सूत्रितञ्च—इहेहवइतिचतस्रइति ।

तत्र प्रथमा—

इहेहवोमनसाबन्धुतानरउशिजोजग्मुरभितानिवेदसा ।
याभिर्मायाभिःप्रतिजूतिवर्पसःसौधन्वनायज्ञियंभागमानश ॥ १ ॥

इहऽइह । वः । मनसा । बन्धुता । नरः । उशिजः । जग्मुः ।
अभि । तानि । वेदसा । याभिः । मायाभिः । प्रतिजूतिऽवर्पसः ।
सौधन्वनाः । यज्ञियम् । भागम् । आनश ॥ १ ॥

हे ऋभवः वो युष्माकं बन्धुता बध्नाति फलेन संयोजयतीति बन्धवः कर्माणि तेषां भावो बन्धुता इहेह सर्वत्र मनसा सर्वैर्ज्ञायते नरः मनुष्या ऋभवः उशिजः यज्ञभागं कामयमानाः सन्तः वेदसा यज्ञभागप्रापककर्मविषयज्ञानेन तानि तादृश्यानि कर्माणि अभिजग्मुः प्राप्नुवन्ति कानि तानि माभिः मीयन्ते ज्ञायन्ते इति मायाः कर्माणि याभिर्मायाभिः यैः कर्मभिः प्रतिजूतिवर्पसः प्रतिपक्षाभिभवनशीलतेजोयुक्ताः सौधन्वनाः सुधन्वनामाङ्गिरसः पुत्रः कश्चिदृषिस्तस्य पुत्राः सौधन्वनाः ते च त्रयः ऋभुर्विभ्वा वाज इति एतन्नामकाः यूयं यज्ञियं यज्ञार्हं भागं सोमपानादिलक्षणम् आनश व्याप्ताः स्थ तथाच ब्राह्मणं:—ऋभुर्विभ्वा वाजो देवाँ अगच्छंस्तपसा सोयाज्ञीयं भागमेतेनेति । अयमर्थो ब्राह्मणेपि—ऋभवो वै देवेषु तपसा सोमपीथमभ्यजयन्नित्यत्रोपाख्यानपूर्वकं स्पष्टमभिहितः । यद्वा नरः कर्मणां नेतारो हे ऋभवः उशिजः कामयमानाः वेदसा हविर्लक्षणेन धनेन युक्ताः स्तोतारः वो युष्माकं तानि चमसचतुष्करणादीनि कर्माणि बन्धुता बन्धुतया सख्येन मनसा जग्मुः अभिगच्छन्ति कानीत्याकाङ्क्षायामाह—येश्चमसचतुष्करणादिभिः कर्मभिर्यज्ञियं यज्ञार्हं भागं यूयमानशुत तान्यभिगच्छन्ति युष्माकं बुद्धिनैपुणानि चिन्तयन्तीत्यर्थः ॥ इहेह नित्यवीप्सयोरिति द्विर्वचनं परस्याम्रेडितत्वादनुदात्तत्वे पूर्वपदस्वरः । बन्धुता बन्ध बन्धने भृमृशीङ्‌तॄचरीत्यादिना उः प्रत्ययः समूहे इत्यर्थे ग्रामजनबन्धुसहायेभ्यस्तलिति तल् लित्स्वरः ॥ १ ॥

१. हे ऋभुगण, तुम लोगों के कर्म को सब कोई जानता है। हे मनुष्यगण, तुम सब सुधन्वा के पुत्र हो। तुम लोग जिस सकल कर्म-द्वारा शत्रुपराभवोपयुक्त और तेजोविशिष्ट होकर यज्ञीय भाग को प्राप्त करते हो, कामना-काल में उस सकल कर्म को तुम लोग जान जाते हो।

अथद्वितीया—

याभिःशचीभिश्चमसाँअपिंशतयाधियागामरिणीतचर्मणः ।
येनहरीमनसानिरतक्षततेनदेवत्वमृभवःसमानश ॥ २ ॥

याभिः । शचीभिः । चमसान् । अपिंशत । यया । धिया ।
गाम् । अरिणीत । चर्मणः । येन । हरी इति । मनसा । निःऽअतक्षत ।
तेन । देवऽत्वम् । ऋभवः । सम् । आनश ॥ २ ॥

---

१ ऋ० सं० ३. ३. ५. । २ ऐ० ब्रा० ३. ३०. ।

हेऋभवः यामिःशचीभिःशक्तिभिश्चमसान्चतुरः अपिंशत विभक्तवन्तःस्थ यथाधिया प्रज्ञयागाम्मृतामरिणीतचर्मणः चर्मणायोजनात्यापितवन्तःस्थ येनमनसाप्रज्ञानेनहरीएतन्नामका-विन्द्रस्याश्वौनिरतक्षत नितरामकुरुत तथाचमन्त्रवर्णः—यइन्द्रायवचोयुजाततक्षुर्मनसाहरीइति । तेनसर्वेणानेनकर्मणादेवत्वंयज्ञभागार्हत्वलक्षणंदेवभावंसमानश सम्यक्प्राप्ताःस्थ ॥ अपिंशत पिशअवयवे तुदादिः तस्यलङि मध्यमेरूपंयद्वृत्तयोगादनिघातः अरिणीत रीगतिरेषणयोः क्र्यादिःतस्यलङिरूपम् अत्रापिपूर्ववदनिघातः । निरतक्षत तक्षूत्वक्षूतनूकरणे लङिरूपं पूर्ववद-निघाते तिङ्ङिचोदात्तवतीतिगतेर्निघातः अनुदात्तः । आनश अश्नोतेर्लिटिरूपं निघातः ॥ १ ॥

१. हे ऋभुओ, जिस शक्ति के द्वारा तुम लोगों ने चमस को विभक्त किया था, जिस प्रज्ञाबल से गो-शरीर में चर्मयोजना की थी और जिस मनीषा के द्वारा इन्द्र के अश्वद्वय का निर्माण किया था, उन्हीं सकल कर्मों-द्वारा तुम लोगों ने यज्ञभागार्हत्व देवत्व प्राप्त किया है।

इन्द्रस्यसख्यमृभवःसमानशुर्मनोर्नपातोअपसोदधन्विरे ।
सौधन्वनासोअमृतत्वमेरिरेविष्ट्वीशमीभिःसुकृतःसुकृत्यया ॥ २

इन्द्रस्य । सख्यम् । ऋभवः । सम् । आनशुः । मनोः । नपातः ।
अपसः । दधन्विरे । सौधन्वनासः । अमृतऽत्वम् । आ । ईरिरे ।
विष्ट्वी । शमीभिः । सुऽकृतः । सुऽकृत्यया ॥ २ ॥

मनोर्नपातः मनुष्यस्याङ्गिरसःपुत्राःअपसः यागादिलक्षणकर्मवन्तः ऋभवः इन्द्रस्यसख्यं समानख्यानत्वंसमानशुः सम्यक्प्रापुः तथा इन्द्रस्यसख्यंप्राप्तास्तेऋभवःदधन्विरे पूर्वंमनुष्य-त्वेनमरणयोग्याअपिइदानीमिन्द्रस्यसख्येनप्राणान्धारयन्ति तथाचमन्त्रवर्णः—अधारयन्तवह्नय-इति । सौधन्वनासःसुधन्वनामकस्यऋषेःपुत्राऋभवःसुकृतःशोभनकर्माणः सन्तः प्रभूतेःशमीभिः देवत्वप्राप्तिप्रतिबन्धकनिवारणहेतुभिःकर्मभिःसुकृत्यया शोभनेनकर्मणाच विष्ट्वीव्याप्य अमृत-त्वमेरिरे देवत्वंप्रापुः तथाचमन्त्रान्तरमाम्नायते—मर्तासः सन्तोअमृतत्वमानशुरिति ॥ नपातः नभ्राण्नपादित्यादिनानञःप्रकृतिभावः । दधन्विरे धविर्गत्यर्थः व्यत्ययेनात्मनेपदं लिटिरूपम् । ईरिरे ईरगतौ वाक्यादादात्सकृपति निघातः । सुकृत्यया करोतेर्भावे कृञःशचेतिक्यप् प्रत्यय-स्वरत्वयेनान्तोदात्तत्वं समासेकृदुत्तरपदस्वरः ॥ २ ॥

२. मनुष्यपुत्र ऋभुगण ने यागादि कर्म करके इन्द्र के सखित्व को प्राप्त किया है। पूर्व में मरणधर्मा होकर भी वे इन्द्र के सखित्व से प्राण धारण करते हैं। सुधन्वा के पुण्य-कार्यकारी पुत्रगण कर्मबल और यज्ञादि-बल से व्याप्त होकर अमृतत्व को प्राप्त हुए हैं।

अथचतुर्थी—

इन्द्रेणयाथसरथंसुतेसचाँअथोवशानांभवथासहश्रिया ।
नवःप्रतिमैसुकृतानिवाघतःसौधन्वनाऋभवोवीर्याणिच ॥ ४ ॥

इन्द्रेण । याथ । सऽरथम् । सुते । सचा । अथो इति । वशानाम् ।
भवथ । सह । श्रिया । न । वः । प्रतिऽमै । सुऽकृतानि ।
वाघतः । सौधन्वनाः । ऋभवः । वीर्याणि । च ॥ ४ ॥

हेऋभवः यूयम् इन्द्रेणसचा सह सरथं समानमेकंरथमारुह्य सुते अभिषुतसोमवतियज्ञे याथ गच्छथ अथोअनन्तरम् इन्द्रेणसहैकरथमारूढायूयं वशानाम् उश्यतेकाम्यते यजमानेनस्वर्गादिलक्षणंफलमेभिरितिवशामनुष्याः तेषां श्रियास्तुतिहविरादिरूपयासहिताः भवथ हेसौधन्वनाः सुधन्वनःपुत्राः वाघतः अमृतत्वादिलक्षणफलस्यवोढारः मेधाविनोवेतियास्कः । यद्वाहेऋभवः वोयुष्माकंसुकृतानि देवत्वप्रापकाणिशोभनानिकर्माणिनप्रतिमै प्रतिमातुमियत्तयापरिच्छेत्तुंकेनापिशक्यानि तथा वीर्याणि युष्माकंसामर्थ्यानिच नैवप्रतिमातुंशक्यानि ॥ वशानां वशकान्तौ वशिरण्योरुपसंख्यानमितिकरणेऽप्प्रत्ययः प्रत्ययस्यापित्त्वादनुदात्तत्वेधातुस्वरः वशाशब्दोवन्ध्यावचनश्चेदन्तोदात्तोभवति वशामेषामजवशासभाहुताइति । वः युष्मच्छब्दस्यषष्ठीबहुवचनेवसादेशः निघातः । प्रतिमै माङ्माने विच् प्रतिमाप्रतिमानंतस्यचतुर्थ्येकवचनेआतोलोपश्छान्दसः एकादेशस्वरः ॥ ४ ॥

४. हे ऋभुगण, तुम लोग इन्द्र के साथ एक रथ पर आरोहण करके सोमाभिषव के स्थान में गमन करो। पीछे मनुष्यों को स्तुतियों को ग्रहण करो। हे अमृत-फलवाहक सुधन्वा के पुत्रो, तुम्हारे शोभन कर्मों की इयत्ता कोई नहीं कर सकता है। हे ऋभुओ, तुम्हारी सामर्थ्य की इयत्ता भी कोई नहीं कर सकता है।

आभिप्लविकेपञ्चमेहनिवैश्वदेवशस्त्रे इन्द्रऋभुभिरित्याद्यस्तृचः सूत्रितश्च—धृतवती भुवनानामभिश्रीरिन्द्रऋभुभिर्वाजवद्भिरितितिस्रःपाविति । आद्यातृतीयसवनेहोतुःप्रस्थितयाज्या सूत्रितश्च—इन्द्रऋभुभिर्वाजवद्भिःसमुक्षितमिन्द्रावरुणासुतपाविमंसुतमिति ।

सैषापञ्चमी—

इन्द्रऋभुभिर्वाजवद्भिःसमुक्षितंसुतंसोममावृषस्वागभस्त्योः ।
धियेषितोमघवन्दाशुषोगृहेसौधन्वनेभिःसहमत्स्वानृभिः ॥ ५ ॥

---

१ नि० ११. १६. । २ ऋ० सं० ८. ४. १९. ।

इन्द्र॑ । ऋ॒भुऽभिः॑ । वाज॑वत्ऽभिः । सम्ऽउ॑क्षितम् । सु॒तम् ।
सोम॑म् । आ । वृ॒ष॒स्व॒ । गभ॑स्त्योः । धि॒या । इ॒षि॒तः । म॒घ॒ऽव॒न् ।
दा॒शुषः॑ । गृ॒हे । सौ॒ध॒न्व॒नेभिः॑ । स॒ह । म॒त्स्व॒ । नृऽभिः॑ ॥ ५ ॥

हे इन्द्र वाजवद्भिः वाजोनामऋभूणांभ्राता यद्वा वाजोऽन्नं तत्सहितैर्ऋभुभिःसहितस्त्वं समुक्षितं सम्यगद्भिःसिक्तंग्रावभिःसुतंसोमं गभस्त्योः बाहुनामैतत्हस्ताभ्यामवसामिति गृह्णन्ति पदार्थानाभ्यामितिवागभस्ती बाहू तयोर्बाह्वोरावृषस्व आहारय महस्ताभ्यांगृहीत्वासोमंपिबेत्यर्थः हेमघवन् धनवन् हेइन्द्र धिया स्तोत्ररूपेणकर्मणा इषितः प्रेरितस्त्वं दाशुषोहविर्दत्तवतोयजमानस्यगृहे सौधन्वनेभिः सुधन्वनःपुत्रैर्नृभिर्मनुष्यैर्ऋभुभिःसह साकं मत्स्व सोमपानेनहृष्टोभव ॥ समुक्षितम् उक्षसेचने कर्मणिक्तः गतिरनन्तरइतिगतेःस्वरः । गभस्त्योः गसमर्त्सनदीस्योरित्यस्माद्भसेर्गद्चेतिसूत्रेणातिप्रत्ययोधातोर्गदागमश्च यद्वा गृह्णातेः पृषोदरादित्वादेवंरूपंनेयम् । मत्स्व मदिस्तुत्यादिषु छेटि-बहुलंछन्दसीतिविकरणस्यलुक्निपातः ॥ ५ ॥

५- हे इन्द्र, तुम वाज (अन्न या ऋभुओं के भ्राता)-विशिष्ट हो। ऋभुओं के साथ तुम अच्छी तरह से जल-द्वारा सिक्त और अभिषुत सोम को दोनों हाथों से ग्रहण करके पान करो। हे मघवन्, तुम स्तुति-द्वारा प्रेरित होकर यजमान के गृह में सुधन्वा के पुत्रों के साथ सोमपान से हृष्ट होते हो।

इन्द्र॑ऋभु॒मान्वाज॑वान्मत्स्वे॒ह नो॒ऽस्मिन्त्सव॑ने॒ शच्या॑ पुरुष्टुत ।
इ॒मानि॒ तुभ्यं॒ स्वस॑राणि येमिरे व्र॒ता दे॒वानां॒ मनु॑षश्च॒ धर्म॑भिः ॥६॥

इन्द्र॑ । ऋ॒भु॒ऽमान् । वाज॑ऽवान् । म॒त्स्व॒ । इ॒ह । नः॒ । अ॒स्मिन् । सव॑ने । शच्या॑ । पु॒रु॒ऽस्तु॒त॒ । इ॒मानि॑ । तुभ्य॑म् । स्वस॑राणि । ये॒मि॒रे॒ । व्र॒ता । दे॒वाना॑म् । मनु॑षः । च॒ । धर्म॑ऽभिः ॥ ६ ॥

पुरुष्टुत बहुभिःस्तुत हेइन्द्र ऋभुमान् ऋभुमातद्वान् वाजवान् वाजेनऋभोर्भ्रात्रायुक्तः शच्या इन्द्राण्याकर्मणावासहितःसन् नोऽस्माकमिहकर्मण्यस्मिन्तृतीयसवने मत्स्व हृष्टोभव हेइन्द्र तुभ्यं त्वदर्थमिमानि स्वसराण्यहानियेमिरे तवसोमपानार्थंत्रिषुसवनेषुनियतान्यासते किञ्च देवानामग्न्यादीनां व्रता व्रतानि कर्माणिचमनुषोमनुष्यस्यधर्मभिःकर्मभिः साकंत्वदर्थंनियतान्यासते ॥ ६ ॥

६. हे बहुस्तुत इन्द्र, ऋभु और वाज से युक्त होकर तथा इन्द्राणी के साथ होकर हमारे इस तृतीय सवन में आनन्दित होओ। हे इन्द्र, तीनों सवनों में सोमपान के लिए ये दिन तुम्हारे लिए नियत हुए हैं। किन्तु देवों के व्रत और मनुष्यों के कर्मों के साथ सकल दिन तुम्हारे लिए नियत हुए हैं।

इन्द्रऋभुभिर्वाजिभिर्वाजयन्निहस्तोमंजरितुरुपयाहियज्ञियम्।
शतंकेतेभिरिषिरेभिरायवेसहस्रणीथोअध्वरस्यहोमनि॥ ७ ॥

इन्द्र। ऋभुऽभिः। वाजिऽभिः। वाजयन्। इह। स्तोमम्।
जरितुः। उप। याहि। यज्ञियम्। शतम्। केतेभिः।
इषिरेभिः। आयवे। सहस्रऽनीथः। अध्वरस्य। होमनि॥ ७ ॥ ७ ॥

हे इन्द्र वाजिभिः वाजयुक्तैर्ऋभुभिःसहितस्त्वं वाजयन्स्तोतुर्वाजमन्नंकुर्वाणइह यज्ञे यज्ञियं यज्ञार्हं जरितुःस्तोमं स्तोत्रमुपयाहि आगच्छ पुनःकिंविशिष्टः केतेभिःकेत्यन्ते ज्ञायन्ते सर्वमेभिरितिकेताआज्ञापकाःतैः शतंशतसंख्याकैरिषिरेभिरिषिरैर्गमनकुशलैरश्वैः सहितःआयवे मनुष्याय यजमानायसहस्रनीथः बहुप्रकारनयनोपेतः अध्वरस्य नविद्यते ध्वरोहिंसायस्य तादृशस्य सोमस्य होमनि होमे आगच्छेतिशेषः॥ वाजयन् वाजंकरोतीतिणिच् णाविष्ठवदितीष्ठवद्भावात्टेरितिटिलोपः। केतेभिः कितज्ञाने घञ् नित्त्वादाद्युदात्तः॥ ७ ॥

७. हे इन्द्र, तुम स्तोताओं के अन्नों का सम्पादन करते हुए वाज-युक्त ऋभुओं के साथ इस यज्ञ में स्तोताओं के स्तोत्रों के अभिमुख आगमन करो। मरुद्गण भी शतसंख्यक गमन कुशल अश्वों के साथ यजमान के सहस्र प्रकार से प्रणीत अध्वर के अभिमुख आगमन करें।

॥ इतितृतीयस्यचतुर्थेसप्तमोवर्गः ॥ ७ ॥

उषोवाजेनेतिसप्तर्चमष्टमंसूक्तं वैश्वामित्रमुषोदेवताकं तथाचानुक्रान्तम्—उषःसौषस्यमिति प्रातरनुवाकेउषःक्रतौआश्विनशस्त्रेचत्रैष्टुभेछन्दस्येतस्यसूक्तस्यविनियोगः सूत्रितञ्च—उषो वाजेनेन्द्रमित्यदिति।

तत्रप्रथमा—

उषोवाजेनवाजिनिप्रचेताःस्तोमंजुषस्वगृणतोमघोनि।
पुराणीदेवियुवतिःपुरन्धिरनुव्रतंचरसिविश्ववारे॥ १ ॥

उषः। वाजेन। वाजिनि। प्रऽचेताः। स्तोमम्। जुषस्व।
गृणतः। मघोनि। पुराणी। देवि। युवतिः। पुरम्ऽधिः।
अनु। व्रतम्। चरसि। विश्वऽवारे॥ १ ॥

वाजेन वाजिनि अन्नेनान्नवति तथाचमन्त्रः—संवाजैर्वाजिनीवतीति। मघोनि धनवति हेउषः प्रचेताः प्रकृष्टज्ञानवतीसती गृणतस्स्तवस्तोत्रंकुर्वतस्तोतुःस्तोमंस्तोत्रंजुषस्व यद्वा वाजेन

१ ऋ० सं० १. ४. ५. ८

हविर्लक्षणेनान्नेनसह स्तोमंजुषस्वेतिसंबन्धः । विश्ववारे विश्वैःसर्वैर्वरणीये हेउषोदेवि पुराणी पुरातनी युवतीरित्युपमा तद्वत् शोभमाना सुसंकाशामातृमृष्टेवयोषेतिवत् पुरन्धिः पुरुबहुधीः स्तोत्रलक्षणंकर्मयस्याःसा बहुस्तोत्रवती पुरन्धिर्बहुधीरितियास्कः । पुरन्धिः शोभमानावाए वंविधगुणोपेतात्वम् अनुमतं यज्ञकर्माभिलक्ष्यचरसि यद्वान्यतथावर्तसे ॥ मघोनि मघशब्दा-न्मतुबर्थे छन्दसीवनिपावितिवनिप् स्त्रियाम् ऋन्नेभ्योङीप् श्वयुवमघोनामतद्धितेइतिसंप्रसार-णेकृतेगुणः संबुद्धावम्बार्थनद्योर्ह्रस्वः निघातः । पुराणी पुराणशब्दःपुराणप्रोक्तेष्वित्यन्तोदा-त्तत्वेननिपातितः टिड्ढाणञितिङीप् अनुदात्तस्यचयत्रोदात्तलोपइत्यन्तोदात्तत्वम् । पुरन्धिः पृषोदरादित्वादुकारस्यअमादेशः ईकारस्यह्रस्वश्च आद्युदात्तप्रकरणेदिवोदासादीनांछन्दस्युपसंख्या-नमित्याद्युदात्तत्वम् ॥ १ ॥

१. हे अन्नवती तथा धनवती उषा, प्रकृष्ट ज्ञानवती होकर तुम स्तोत्र करनेवाले स्तोता के स्तोत्र का ग्रहण करो। हे सबके द्वारा वरणीया, पुरातनी युवती की तरह शोभमाना और बहुस्तोत्रवती उषा, तुम यज्ञ कर्म को लक्ष्य कर आगमन करो।

उषोदेव्यमर्त्याविभाहिचन्द्ररथासूनृताईरयन्ती ।
आत्वावहन्तुसुयमासोअश्वाहिरण्यवर्णांपृथुपाजसोये ॥ २ ॥

उषः । देवि । अमर्त्या । वि । भाहि । चन्द्रऽरथा । सूनृताः ।
ईरयन्ती । आ । त्वा । वहन्तु । सुऽयमासः । अश्वाः ।
हिरण्यऽवर्णाम् । पृथुऽपाजसः । ये ॥ २ ॥

हेउषोदेवि अमर्त्या मरणधर्मरहिताचन्द्ररथासुवर्णमयरथोपेतासूनृताःप्रियसत्यरूपावाचः ईरयन्ती उच्चारयन्ती तथाचमन्त्रवर्णः—सुम्नावरीसूनृताईरयन्तीति[1] । तादृशीत्वंविभाहि सूर्यकिर-णसंबन्धाद्विशेषेणदीप्यस्व पृथुपाजसः प्रभूतबलयुक्ताअरुणवर्णायेअश्वाविद्यन्ते सुयमासः सुखे नियन्तुंशक्यारथेयोजितास्तेअश्वाः हिरण्यवर्णांत्वात्वामावहन्तु ॥ सुयमासः यमेरकृच्छ्रार्थेखल् लित्स्वरः ॥ २ ॥

२. हे मरणधर्म-रहिता, सुवर्णमय रथवाली उषा देवी, तुम प्रिय सत्यरूप वचन का उच्चारण करनेवाली हो। तुम सूर्य-किरण के सम्बन्ध से शोभमाना होओ। प्रभूतबल युक्त जो अरुण-वर्ण अश्व हैं, वे सुखपूर्वक रथ में योजित किये जा सकते हैं। वे तुम्हें आवाहन करें।

उषःप्रतीचीभुवनानिविश्वोर्ध्वातिष्ठस्यमृतस्यकेतुः ।
समानमर्थंचरणीयमानाचक्रमिवनव्यस्यावर्वृत्स्व ॥ ३ ॥

---

१ ऋ० सं० ३. ६१. ६.। २ नि० ६. १३.। ३ ऋ० सं० १. ८. ३.

उषः । प्रतीची । भुवनानि । विश्वा । ऊर्ध्वा । तिष्ठसि ।
अमृतस्य । केतुः । समानम् । अर्थम् । चरणीयमाना ।
चक्रम्ऽइव । नव्यसि । आ । ववृत्स्व ॥ ३ ॥

हेउषोदेवि विश्वासर्वाणिभुवनानिभूतजातानि प्रतीची प्रत्याभिमुख्येनाञ्चतिप्राप्नोतीतिप्रतीची अमृतस्यमरणधर्मरहितस्यसूर्यस्यकेतुःप्रज्ञापयित्रीत्वम् ऊर्ध्वोन्नतसुन्नतातिष्ठसि नव्यसि पुनःपुनर्नीयमानतयानवतरे हेउषोदेवि अर्थमर्यतेगम्यतेयस्मिन्नित्यर्थोमार्गः समानमेकंमार्गम् उदयात्प्राचीनकालक्षणंचरणीयमाना चरितुमिच्छन्तीत्वमाववृत्स्व पुनःपुनस्तस्मिन्मार्गेआवृत्तामव तत्रदृष्टान्तः—चक्रमिव यथानभसिचरितुः सूर्यस्यरथाङ्गंपुनःपुनरावर्ततेतद्वत् ॥ प्रतीची प्रतिपूर्वादञ्चतेःक्विन् अञ्चतेश्चोपसंख्यानमितिङीप् अचइत्यकारलोपे चावितिदीर्घः उदात्तनिवृत्तिस्वरेणान्तोदात्तः । केतुः चायृपूजानिशामनयोरित्यस्माच्चायःकीचेतितुःकीइत्यादेशः आर्धधातुकलक्षणोगुणः । अर्थम् अर्तेस्थन्प्रत्ययः । नव्यसि नवशब्दादीयसुनिङीपिरूपम् ईकारलोपश्छान्दसः । ववृत्स्व वृतुवर्तने बहुलंछन्दसीतिविकरणस्यश्लुः ? ॥ ३ ॥

३. हे उषादेवी, तुम निखिल भूतजात के अभिमुख आगमनशीला, मरणधर्म-रहिता और सूर्य की केतु-स्वरूपा हो। तुम आकाश में उन्नत होकर रहती हो। हे नवतरा उषा, तुम एक मार्ग में विचरण करने की इच्छा करती हुई आकाश में चलनेवाले सूर्य के रथाङ्ग की तरह पुनः-पुनः उसी मार्ग में प्रवृत्त होओ।

अथचतुर्थी—

अवस्यूमेवचिन्वतीमघोन्युषायातिस्वसरस्यपत्नी ।
स्वर्जनन्तीसुभगासुदंसाआन्ताद्दिवःपप्रथआपृथिव्याः ॥ ४ ॥

अव । स्यूमऽइव । चिन्वती । मघोनी । उषाः । याति ।
स्वसरस्य । पत्नी । स्वः । जनन्ती । सुऽभगा । सुऽदंसाः । आ ।
अन्तात् । दिवः । पप्रथे । आ । पृथिव्याः ॥ ४ ॥

येयमुषाः स्यूमेव वस्त्रमिव विस्तृतंतमोऽवचिन्वती अपचयमपक्षयंप्रापयन्ती मघोनी धनवती स्वसरस्य सुष्ठुअस्यतिक्षिपतितमइतिस्वसरःसूर्योवासरोवा तस्यपत्नीसतीयाति गच्छति स्वःस्वर्लोकंप्रतितेजः जनन्तीजनयन्ती सुभगा सुधना सौभाग्ययुक्तावा सुदंसाः शोभनाग्निहोत्रकर्मासेयमुषाः दिवोद्युलोकस्यअन्तात्पृथिव्याश्चआन्तादवसानात् पप्रथे प्रथतेप्रकाशतइत्यर्थः ॥ स्यूमेव षिवुतन्तुसंताने अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्योमन्नितिमन्प्रत्ययः च्छ्वोःशूडनुनासिकेचेत्यूठ् यणादेशः सुपांसुलुगितिविभक्तेर्लुक् नित्त्वादाद्युदात्तः । चिन्वती शतरि नुमद्विधीयङीप्युदात्त-

त्वम् । धनती धनधननेइत्यस्यण्यन्तस्य शतरिरूपं छन्दस्युभयथेतिशपआर्धधातुकत्वेन णिलोपः ॥ ४ ॥

४. जो धनवती उषा वस्त्र की तरह विस्तीर्ण अन्धकार को क्षयित करती हुई सूर्य की पत्नी होकर गमन करती है, वही सौभाग्यवती और सत्कारशालिनी उषा द्युलोक और पृथ्वी के अवसान से प्रकाशित होती है।

**अच्छा॑वो॑दे॒वीमु॒षसं॑वि॒भा॒तींप्रवो॑भरध्वं॒नम॑सासुवृ॒क्तिम् ।**
**ऊ॒र्ध्वंम॑धु॒धादि॒विपाजो॑अश्रे॒त्प्ररो॑च॒नारु॑रुचेर॒ण्वसं॑दृक् ॥ ५ ॥**

अच्छ॑ । व॒ः । दे॒वीम् । उ॒षस॑म् । वि॒ऽभा॒तीम् । प्र । व॒ः । भ॒र॒ध्व॒म् । नम॑सा । सु॒ऽवृ॒क्तिम् । ऊ॒र्ध्वम् । म॒धु॒ऽधा । दि॒वि । पाज॑ः । अ॒श्रे॒त् । प्र । रो॒च॒ना । रु॒रु॒चे॒ । र॒ण्वऽसं॑दृक् ॥ ५ ॥

हे स्तोतारः वो युष्मानच्छाभिलक्ष्य विभातीं शोभमानामुषसं देवीं प्रति वो युष्माकं संबन्धिना नमसा नमस्कारेण सह सुवृक्तिं शोभनां स्तुतिं प्रभरध्वं प्रकुरुत मधुधा मधुराणि स्तुतिलक्षणानि वाक्यानि दधातीति मधुः स्तोमः तं धारयतीति वा यद्वा मधुधा आदित्यस्य धात्री यद्वा अथ मह्ना मायाद्युलक्षणमयममलप्रदमिदं पदम् उषोनाम सेयमुषाः दिवि नभसि ऊर्ध्वम् ऊर्ध्वाभिमुखं पाजस्तेजः अश्रेत् श्रयति तथा रोचना रोचनशीला रण्वसंदृक् रमणीयदर्शनोषाः प्ररुरुचे प्रकर्षेण दीप्यते यद्वा रोचना लोकान्प्ररुरुचे प्रकर्षेणास्य तेजसा दीपयति तथा च मन्त्रवर्णः— व्युच्छन्ती हि रश्मिभिर्विश्वमाभासि रोचनमिति ॥ रण्वसंदृक् रमेर्गत्यर्थस्याच्यत्ययः इदित्त्वान्नुमागमः संपूर्वाद्दृशेः क्विन् बहुव्रीहौ पूर्वपदप्रकृतिस्वरः ॥ ५ ॥

५. हे स्तोताओ, तुम लोगों के अभिमुख उषादेवी शोभनाना होती है। तुम लोग नमस्कार-द्वारा उसकी शोभनस्तुति करो। स्तुति को धारण करनेवाली उषा आकाश में ऊर्ध्वाभिमुख तेज को आश्रित करती है। रोचनशीला और रमणीयदर्शना उषा अतिशय दीप्त होती है।

**ऋ॒ताव॑रीदि॒वो अ॒र्कैरबो॒ध्यारे॒वती॒रोद॑सीचि॒त्रम॑स्थात् ।**
**आ॒य॒तीम॑ग्नउ॒षसं॑वि॒भा॒तींवा॒मम॑षि॒द्रवि॑णं॒भिक्ष॑माणः ॥ ६ ॥**

ऋ॒तऽव॑री । दि॒वः । अ॒र्कैः । अ॒बो॒धि॒ । आ । रे॒वती॑ । रोद॑सी॒ इति॑ । चि॒त्रम् । अ॒स्था॒त् । आ॒ऽय॒तीम् । अ॒ग्ने॒ । उ॒षस॑म् । वि॒ऽभा॒तीम् । वा॒मम् । ए॒षि॒ । द्रवि॑णम् । भिक्ष॑माणः ॥ ६ ॥

१ ऋ० सं० १. ४. ६.

ऋतावरी सत्यवती येयमुषाः दिवोद्युलोकादर्कैस्तेजोभिश्चबोधि सर्वैर्ज्ञायते ततः रेवती धनवती येयं रोदसीद्यावापृथिव्यौचित्रंनानाविधरूपयुक्तंयथाभवतितथाऽस्थात् सर्वतोव्याप्यतिष्ठति हेअग्ने आयतीं त्वदभिमुखमागच्छन्तींविभातींभासमानामुषसमुषोदेवींभिक्षमाणो हवींषियाचमानस्त्वं वामं वननीयंद्रविणम् अग्निहोत्रादिलक्षणंधनम् एषिप्राप्नोषि ॥ अबोधि बुधअवगमने कर्मणिलुङि चिण्भावकर्मणोरितिचिण् चिणोलुक् । रेवती रयिशब्दान्मतुप् छन्दसीरइतिवत्वं रयेर्मतौबहुलमितिसंप्रसारणं परपूर्वत्वे गुणः उगितश्चेतिङीप् रेशब्दाच्चो-पसंख्यानमितिमतुपउदात्तत्वम् ॥ ६ ॥

६- जो उषा सत्यवती है, उसे सब कोई द्युलोक के तेजः प्रभाव से जानते हैं। धनवती उषा नानाविध रूप से युक्त होकर द्यावा-पृथिवी को व्याप्त करके रहती है। हे अग्नि, तुम्हारे अभिमुख आनेवाली, भासमाना उषा देवी से हवि की याचना करनेवाले तुम रमणीय धन को प्राप्त करते हो।

ऋतस्यबुध्नउषसामिषण्यन्वृषामहीरोदसीआविवेश ।
महीमित्रस्यवरुणस्यमायाचन्द्रेवभानुंविदधेपुरुत्रा ॥ ७ ॥ ८ ॥

ऋतस्य । बुध्ने । उषसाम् । इषण्यन् । वृषा । मही इति । रोदसी इति ।
आ । विवेश । मही । मित्रस्य । वरुणस्य । माया ।
चन्द्राऽइव । भानुम् । वि । दधे । पुरुऽत्रा ॥ ७ ॥ ८ ॥

वृषा वृष्टिद्वाराऽपांसेचकः आदित्यः ऋतस्याग्निहोत्रादिकर्मकरणेसत्यभूतस्याह्नोबुध्नेमूलेउषसामिषण्यन् प्रेरणंकुर्वन् महीमहत्यौरोदसीद्यावापृथिव्यौआविवेश सर्वतःप्रविष्टवान् यद्वा वृषा वर्षिता इष्यन्सर्वतोगच्छन् उषःसंबन्धीरश्मिसमूहोरोदसीद्यावापृथिव्यावाविष्टवानितियोजनीयं ततउषाः महीमहती मित्रस्यवरुणस्यमित्रावरुणयोर्मायाप्रभारूपासती चन्द्रेवसुवर्णमिव भानुंस्वप्रभांपुरुत्रा बहुषुदेशेषुविदधे विदधाति सर्वत्रप्रसारयति ॥ मही अल्लोपश्छन्दसः । पुरुत्रा देवमनुष्येत्यादिनाधिकरणेत्राप्रत्ययः ॥ ७ ॥

७. वृष्टि-द्वारा जल के प्रेरक आदित्य सत्यभूत दिवस के मूल में उषा का प्रेरण करके विस्तीर्ण द्यावा-पृथिवी के मध्य में प्रवेश करते हैं। तदनन्तर महती उषा मित्र और वरुण की प्रभास्वरूपा होकर सुवर्ण की तरह अपनी प्रभा को अनेक देशों में प्रसारित करती है।

इमाउवामित्यष्टादशर्चंनवमंसूक्तम् अत्रेयमनुक्रमणिका—इमाउअष्टावैन्द्रावरुणबार्हस्पत्यपौष्णसावित्रसौम्यमैत्रावरुणास्तृचाः अन्त्योऽस्यवन्त्यार्षौवा चतुर्थ्याद्यागायत्र्यइति । सूक्तस्यविश्वामित्रऋषिः अन्त्यस्यतृचस्यजमदग्निर्वा आद्यास्तिस्रस्त्रिष्टुभः शिष्टाःपञ्चदशगायत्र्यः प्रथमस्यैन्द्रावरुणौदेवता द्वितीयस्यबृहस्पतिः तृतीयस्यपूषा चतुर्थस्यसविता पञ्चमस्यसोमः षष्ठ-

स्य मित्रावरुणौ आभिप्लविकेषूक्थ्येषु तृतीयसवने स्तोमवृद्धौ सत्यां स्वस्वशस्त्रे होत्रकाअन्यसदृक्तम-थ्रोभ्यस्तोमातिशंसनार्थमृचाविसंख्यात्सभावपेयुः । तत्र मैत्रावरुणस्यापायार्थमायच्छत्रः सूत्रि-तम—इमाउवांभृमयोमन्यमानाइतितिस्रइति ।

तत्र प्रथमा—

इमाउवांभृमयोमन्यमानायुवावतेनतुज्याअभूवन् ।
क्वत्यदिन्द्रावरुणायशोवांयेनस्मासिनंभरथःसखिभ्यः ॥ १ ॥

इमाः । ऊँ इति । वाम् । भृमयः । मन्यमानाः । युवाऽवते ।
न । तुज्याः । अभूवन् । क्व । त्यत् । इन्द्रावरुणा । यशः ।
वाम् । येन । स्म । सिनम् । भरथः । सखिऽभ्यः ॥ १ ॥

हे इन्द्रावरुणौ वां युवयोः संबन्धिन्यः मन्यमानाः अन्यैः शत्रुभिरभिमन्यमानाः अतएव भृमयः भ्रमणशीलाः इमाः प्रजाः उः पूरणः युवावते तृतीयार्थे चतुर्थी यौवनवता बलिना शत्रुणा तुज्या हिंस्या नाभूवन् न भवन्तु वां युवयोः त्यत् तादृशं यशः क्व कुत्रास्ते येन यशसा सखिभ्यो-ऽस्मभ्यं सिनमन्नं भरथः स्म प्रदातुं संपादयथः तत्क्वास्तीत्यन्वयः यद्वा हे इन्द्रावरुणौ वां युवयोः संबन्धिन्यः इमाः अस्माभिः क्रियमाणा भृमयः युवां प्राप्तुं भ्रमणशीलाः मन्यमानाः मन्यति-रर्चतिकर्मा युवामर्चन्त्यः ताः स्तुतयः युवावते युवाभ्यां सदृशाय अन्यस्मै देवाय न तुज्याः तुज-तिर्दानकर्मा अदेया मा भूवन् शिष्टं समानम् ॥ भृमयः भ्रमु अनवस्थाने भ्रमेः संप्रसारणं चेति इन्प्र-त्ययः संप्रसारणं प्रत्ययस्वरेणान्तोदात्तत्वम् । युवावते युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यान-मिति वतुप् अविभक्तावपि युवादेशश्छान्दसः । तुज्याः तुज हिंसाबलादाननिकेतनेषु ऋहलोर्ण्यदे-ति ण्यत् यतोऽनाव इत्याद्युदात्तत्वम् । सिनं षिञ् बन्धने इण्षिञ्जिदीङुष्यविभ्यो नक् इति नक् व्यत्यये-नाद्युदात्तत्वम् ॥ १ ॥

१. हे मित्रावरुण, शत्रुओं-द्वारा अभिमन्यमान अतएव भ्रमणशीला तुम्हारी ये प्रजायें जिससे तरुण वयस्क शत्रुओं-द्वारा हिंसित न हों, तुम लोगों का तादृश यश और कहाँ है, जिससे तुम लोग हम बन्धुओं के लिए अन्न-सम्पादन करते हो ।

अयमुवांपुरुतमोरयीयञ्छश्वत्तममवसेजोहवीति ।
सजोषाविन्द्रावरुणामरुद्भिर्दिवापृथिव्याशृणुतंहवंमे ॥ २ ॥

अयम् । ऊँ इति । वाम् । पुरुऽतमः । रयिऽयन् । शश्वत्ऽतमम् ।
अवसे । जोहवीति । सऽजोषौ । इन्द्रावरुणा । मरुत्ऽभिः ।
दिवा । पृथिव्या । शृणुतम् । हवम् । मे ॥ २ ॥

बृहस्पते । जुषस्व । नः । हव्यानि ।
विश्वऽदेव्य । रास्व । रत्नानि । दाशुषे ॥४॥

विश्वदेव्य सर्वदेवहित हेबृहस्पते नोऽस्मत्संबन्धीनिहव्यानिहवनयोग्यानिपुरोडाशादीनि हवींषिजुषस्व सेवस्व ततस्त्वं दाशुषेहविर्दत्तवतेयजमानाय महांरत्नान्युत्तमानिधनानिरास्व देहि॥ रास्र रादाने व्यत्ययेनात्मनेपदम् ॥ ४ ॥

४. हे सब देवों के हितकर बृहस्पति, हम लोगों के पुरोडाश (हवि) आदि का सेवन करो। तदनन्तर हवि देनेवाले यजमान को तुम उत्तम धन दो।

शुचिमर्कैर्बृहस्पतिमध्वरेषुनमस्यत। अनाम्योजआचके॥५॥१॥

शुचिम् । अर्कैः । बृहस्पतिम् । अध्वरेषु ।
नमस्यत । अनामि । ओजः । आ । चके ॥ ५ ॥ १ ॥

हेऋत्विजः यूयम् अध्वरेषु शुचिं शुद्धं बृहस्पतिमर्कैरर्चनीयैःस्तोत्रैर्नमस्यत परिचरत अनामि अनमनशीलं परैरनभिभवनीयम् ओजोबलंतस्यबलमाचके सर्वतोयाचे ॥ बृहस्पतिं वनस्पत्या-दित्वादुभयपदप्रकृतिस्वरः । चके कर्मेरिंटिप्युत्तमेमकारलोपश्छान्दसः ॥ ५ ॥

५. हे ऋत्विको, तुम लोग यज्ञ-समूह में अर्चनीय स्तोत्रों-द्वारा विशुद्ध बृहस्पति की परिचर्या करो। मैं शत्रुओं-द्वारा अनभिभवनीय बल की याचना करता हूँ।

वृषभंचर्षणीनांविश्वरूपमदाभ्यम्। बृहस्पतिंवरेण्यम् ॥ ६ ॥

वृषभम् । चर्षणीनाम् । विश्वऽरूपम् । अदाभ्यम् ।
बृहस्पतिम् । वरेण्यम् ॥ ६ ॥

चर्षणीनांमनुष्याणांवृषभमभिमतफलवर्षकंविश्वरूपंव्याप्तरूपं यद्वा विश्वरूपनामकगो-वाहनोपेतं तथाचमन्त्रवर्णः—बृहस्पतिर्विश्वरूपामुपाजतेति । अदाभ्यं केनाप्यतिरस्करणीयं वरेण्यं सर्वैर्भजनीयंबृहस्पतिमाचकेइतिपूर्वेणान्वयः ॥ विश्वरूपं बहुव्रीहौविश्वंसंज्ञायामिति पूर्वपदा-न्तोदात्तत्वम् यद्वा विश्वरूपाअस्यसन्तीतिमत्वर्थीयोऽर्शआदित्वादच्प्रत्ययः मत्वर्थे वृषादित्वात्पूर्वपदान्तोदात्तत्वम्। अदाभ्यं दम्भेर्घेतिचकारण्यमिसिध्यत्प्रत्ययः ॥ ६ ॥

६. मनुष्यों के लिए अभिमतफलवर्षक, विश्वरूप नामक गोवाहन से युक्त, अतिरस्करणीय और सबके द्वारा भजनीय बृहस्पति के निकट मैं अभिमत फल की याचना करता हूँ।

अथसप्तमी—

इयंतेपूषन्नाघृणेसुष्टुतिर्देवनव्यसी । अस्माभिस्तुभ्यंशस्यते ॥७॥

इयम् । ते । पूषन् । आघृणे । सुऽस्तुतिः । देव । नव्यसी ।
अस्माभिः । तुभ्यम् । शस्यते ॥ ७ ॥

आघृणे दीप्तिमन् हेपूषन् देव नव्यसी नवतरी इयं सुष्टुतिःशोभनास्तुतिरूपावाक् ते त्वत्सं-बन्धिनीभवति सैषास्तुतिः अस्माभिः स्तोतृभिःतुभ्यंत्वदर्थंशस्यतेतांजुषस्वेत्युत्तरेणान्वयः ॥ ७ ॥

७. हे दीप्तिमान् पूषा, ये नवीनतम और शोभन स्तुतिरूप वचन तुम्हारे लिए हैं। इस स्तुति का उच्चारण हम लोग तुम्हारे लिए करते हैं।

तांजुषस्वगिरंममवाजयन्तीमवाधियम् । वधूयुरिवयोषणाम् ॥८॥

ताम् । जुषस्व । गिरम् । मम । वाजऽयन्तीम् । अव । धियम् ।
वधूयुःऽइव । योषणाम् ॥ ८ ॥

हेपूषन् स्तोत्रंकुर्वाणस्य मम तां तादृशींगिरंस्तुतिलक्षणांवाचंजुषस्व सेवस्व स्तुत्याप्री-तस्त्वं वाजयन्ती वाजमन्नमिच्छन्तीं हर्षकारिणींधियमिमांस्तुतिमवाभि अवाभिगच्छ तत्रदृष्टान्तः— वधूयुरिव यथावधूयुः स्त्रीकामः योषणांस्त्रियंप्रत्यागच्छतितद्वत् ॥ वाजयन्तीं वाजशब्दा-दिच्छतीत्यर्थेक्यच् तदन्ताच्छतरिरूपे ङीपोनुदात्तत्वेप्रत्ययस्वरः । अव अवरक्षणादिष्वित्य-स्यलोटिरूपम् ॥ ८

हे पूषा, मेरी उस स्तुति को ग्रहण करो। स्त्रीकामी व्यक्ति जैसे स्त्री के अभिमुख आगमन करता है, वैसे ही तुम इस हर्षकारिणी स्तुति के अभिमुख आगमन करो।

योविश्वाभिविपश्यतिभुवनासंचपश्यति । सनःपूषाविताभुवत् ॥९॥

यः । विश्वा । अभि । विऽपश्यति । भुवना । सम् । च ।
पश्यति । सः । नः । पूषा । अविता । भुवत् ॥ ९ ॥

यःपूषा विश्वाभुवनासर्वान्लोकानभि आभिमुख्येनविपश्यति विशेषेणपश्यति किंच तानिसंपश्यति तद्वस्तुयाथात्म्यंसम्यग्जानाति सतादृशःपूषादेवः नोऽस्माकमवितारक्षकोभुवत् भवतु ॥ विपश्यति यद्वृत्तयोगादनिघातःशपःपित्त्वादनुदात्तत्वेधातुस्वरः तिङिचोदात्तवतीतिगते-र्निघातः । पश्यति अत्रसकर्मकत्वात्परस्मैपदं पूर्ववदनिघातः । भुवत् भवतेर्लेट्यडागमः भूसुवो-स्तिङीतिगुणप्रतिषेधे उवङादेशः निघातः ॥ ९ ॥

९. जो पूषा निखिल लोक को विशेष रूप से देखते हैं और उसे देखते हैं, वे ही पूषा हम लोगों के रक्षक हों।

द्वारात्रस्यपष्ठेहनिवैश्वदेवशस्त्रेतत्सवितुरितितृचःपौमतिकत्पृचस्यद्वितीयतृतीये । सूत्रितञ्च–तत्सवितुर्वरेण्यमितितृचेदोपोआगाद्रिति । अभिप्लवषडहस्यपञ्चहयोर्द्वितीयेहनिवैश्वदेवशस्त्रे प्रतिपत्पृचस्यैतेपञ्चमस्माद्वितीये । सूत्रितञ्च–तत्सवितुर्वरेण्यमितितृचआविश्वदेवंसत्पतिमिति ।

सैषादशमी–

तत्स॑वि॒तुर्वरे॑ण्यं॒भर्गो॑दे॒वस्य॑धीमहि।धियो॒योनः॑प्रचो॒दया॑त् १०॥१०

तत् । स॒वि॒तुः । वरे॑ण्यम् । भर्गः॑ । दे॒वस्य॑ । धी॒म॒हि॒ ।
धियः॑ । यः । नः॒ । प्र॒ऽचो॒दया॑त् ॥ १० ॥ १० ॥

यःसवितादेवःनोऽस्माकंधियःकर्माणिधर्मादिविषयावाबुद्धीः प्रचोदयात् प्रेरयेत् तस्यसर्वासुश्रुतिषु प्रसिद्धस्य देवस्य द्योतमानस्य सवितुः सर्वान्तर्यामितयाप्रेरकस्यजगत्स्रष्टुः परमेश्वरस्यआत्मभूतं वरेण्यंसर्वैरुपास्यतयाज्ञेयतयाचसंभजनीयं भर्गः अविद्यातत्कार्ययोर्भर्जनाद्भर्गः स्वयंज्योतिः परब्रह्मात्मकंतेजःधीमहि तद्योऽहंसोऽसौयोऽसौसोऽहमितिवयंध्यायेम यद्वा तदितिभर्गोविशेषणं सवितुर्देवस्यतत्तादृशंभर्गःधीमहि किंतदित्यपेक्षायामाह–यइतिलिङ्गव्यत्ययः यद्भर्गोधियःप्रचोदयात् तद्ध्यायेमेतिसमन्वयः यद्वा यःसवितासूर्यः धियःकर्माणिप्रचोदयात् प्रेरयति तस्यसवितुःसर्वस्यप्रसवितुर्देवस्यद्योतमानस्यसूर्यस्यतत्सर्वैर्दृश्यमानतयाप्रसिद्धं वरेण्यं सर्वैःसंभजनीयंभर्गःपापानांतापकंतेजोमण्डलंधीमहि ध्येयतयामनसाधारयेम यद्वा भर्गः–शब्देनान्नमभिधीयते यःसवितादेवोधियःप्रचोदयति तस्यप्रसादाद्भर्गोन्नादिलक्षणंफलंधीमहि धारयामः तस्याधारभूताभवेमेत्यर्थः भर्गशब्दस्यान्नपरत्वेधीशब्दस्यकर्मपरत्वेचआथर्वणं–वेदांश्छन्दांसिसवितुर्वरेण्यंभर्गोदेवस्यकवयोन्नमाहुः कर्माणिधियस्तदुतेप्रब्रवीमिप्रचोदयन्त्सवितायाभिरेतीति ॥ भर्गः भ्रस्जपाके अञ्चुन् भ्रस्जोरोपधयोरन्यतरस्यामितिरोपधयोर्लोपः रमागमः न्यङ्क्वादित्वात् कुत्वम् । धीमहि ध्यायतेर्लिङि बहुलंछन्दसीतिसंप्रसारणं व्यत्ययेनात्मनेपदं यद्वा धीङ्आधारे लिङिबहुलंछन्दसीतिविकरणस्यलुक् । प्रचोदयात् चोदयतेर्लेटि आडागमः यद्वृत्तयोगादनिघातः आगमस्यानुदात्तत्वेणिचःस्वरः ॥ १० ॥

१०. जो सविता हम लोगों की बुद्धि को प्रेरित करता है, सम्पूर्ण श्रुतियों में प्रसिद्ध उस द्योतमान जगत्स्रष्टा परमेश्वर के संभजनीय परब्रह्मात्मक तेज का हम लोग ध्यान करते हैं।

॥ इतितृतीयस्यचतुर्थेदशमोवर्गः ॥ १० ॥

श्रीभास्करभाष्यम्–

अपसर्वदेवात्मनः सर्वशक्तेःसर्वोपमास्यकतेभोमयस्यपरमात्मनः सर्वात्मकत्वद्योतनार्थं सर्वात्मकत्वप्रतिपादकगायत्रीमहामन्त्रस्योपासना(न)प्रकारः प्रकाश्यते–तत्रगायत्र्यांप्रणवादिसमन्वाह-

स्युरेतांशिरःसमेतांसर्ववेदसारमितिवदन्ति एवंविशिष्टागायत्रीप्राणायामैरुपास्या समस्तव्या-
हृतिसमेतप्रणवान्तागायत्रीजपादिभिरुपास्या तत्रशुद्धगायत्रीप्रत्यग्ब्रह्मैक्यबोधिका धियो
योनःप्रचोदयादिति नोस्माकंधियोबुद्धीः यः प्रचोदयात् प्रेरयेदिति सर्वबुद्धिसंज्ञान्तःकरणप्रका-
शकःसर्वसाक्षीप्रत्यगात्मेत्युच्यते तस्यप्रचोदयाच्छब्दनिर्दिष्टस्यात्मनः स्वरूपभूतंपरंब्रह्म तत्सवि-
तुरित्यादिपदैर्निर्दिश्यते तत्र ॐतत्सदितिनिर्देशोब्रह्मणस्त्रिविधःस्मृतइति तच्छब्देनप्रत्यग्-
भूतःसिद्धंपरंब्रह्मोच्यते सवितुरितिसृष्टिस्थितिलयलक्षणकस्यसर्वप्रपञ्चस्यसमस्तद्वैतविभ्रम-
स्याधिष्ठानंलक्ष्यते । वरेण्यमिति सर्ववरणीयंनिरतिशयानन्दरूपम् । भर्गइत्यविद्यादिदोषभर्ज-
नात्मकज्ञानैकविषयत्वम् । देवस्येति सर्वद्योतनात्मकाखण्डचिदेकरसम् । सवितुर्देवस्येत्यत्रषष्ठय-
र्थोराहोःशिरोवदौपचारिकः बुद्ध्यादिसर्वदृश्यसाक्षिलक्षणंयन्मेस्वरूपंतत्सर्वाधिष्ठानभूतं परमा
नन्दंनिरस्तसमस्तानर्थरूपंस्वप्रकाशचिदात्मकंब्रह्मास्मीत्येवंधीमहिध्यायेम । एवंसतितस्यप्रस-
णास्याविर्ताविदमायनरज्जुसर्पन्यायेनापवादसामानाधिकरण्यरूपमेकत्वं सोयमितिन्यायेनस-
र्वसाक्षिप्रत्यगात्मनोब्रह्मणासहतादात्म्यरूपमेकत्वंभवतीतिसर्वात्मब्रह्मबोधकोयंगायत्रीमन्त्रःसंपद्यते ।
सप्तव्याहृतीनामयमर्थः—भूरितिसन्मात्रमुच्यते ॥ १ ॥ भुवइतिसर्वंभावयतिप्रकाशयती-
तिव्युत्पत्त्याचिद्रूपमुच्यते ॥ २ ॥ सुवितिसुष्ठुव्रियतइतिव्युत्पत्त्याभ्रियतइतिसुष्ठुसर्वैर्भ्रियमाणसुखस्वरूपमुच्य-
ते ॥ ३ ॥ महइतिमहीयतेपूज्यतइतिव्युत्पत्त्यासर्वातिशयत्वमुच्यते ॥ ४ ॥ जनइतिजनयती-
तिजनः सकलकारणत्वमुच्यते ॥ ५ ॥ तपइतिसर्वतेजोरूपत्वम् ॥ ६ ॥ सत्यमितिसर्वबाधाराहि-
त्यम् ॥ ७ ॥ एतदुक्तंभवति—नित्यंकेवलरूपंतदोङ्कारवाच्यंब्रह्मैव आत्मनोऽस्यसच्चिद्रूपस्यमा-
यादिति । अथभूरादयः सर्वलोकाओङ्कारवाच्यब्रह्मात्मकाः नतव्यतिरिक्तंकिंचिदस्तीति । व्या-
हृतयोऽपिसर्वात्मब्रह्मबोधिकाः ॥ गायत्रीशिरसोप्ययमेवार्थः आपइत्याप्नोतीतिव्युत्पत्त्याव्या-
प्तिरुच्यते । ज्योतिरितिप्रकाशरूपत्वं रसइतिसर्वातिशयत्वम् अमृतमितिमरणादिसंसारनिर्मु-
क्तत्वं सर्वव्यापिसर्वप्रकाशकंसर्वोत्कृष्टंनित्यमुक्तमात्मरूपंसच्चिदानन्दात्मकंयदोङ्कारवाच्यंब्रह्म
तदहमस्मीतिगायत्रीमन्त्रस्यार्थः । गुहाशयब्रह्महुताशनोऽहंकर्मैवमंत्राख्यहविर्हुतंसत् । विलीय-
तेनैवमहंभवानीत्येवंप्रकारस्तुविभियतेत्र । यदस्तियद्भातितदात्मरूपंनान्यत्ततोभातिनचान्यद-
स्ति । स्वभावसंवित्प्रतिभातिकेवलाग्राह्यंगृहीतेतिविचित्रकल्पना ॥ इतिश्रीमच्छङ्करभगवत्पादकृतौ
गायत्रीभाष्यंसमाप्तम् ॥

अथैकादशी—

देवस्यसवितुर्वयंवाजयन्तःपुरंध्या । भगस्यरातिमीमहे ॥११॥

देवस्य । सवितुः । वयम् । वाजऽयन्तः । पुरम्ऽध्या ।
भगस्य । रातिम् । ईमहे ॥ ११ ॥

वाजयन्तः वाजमन्नमात्मन इच्छन्तो वयं देवस्य द्योतमानस्य सवितुः पुरन्ध्या तद्विषयस्तुत्या प्र-सादाय भगस्य भजनीयस्य धनस्य रातिं दानम् ईमहे याचामहे ॥ रातिं मन्त्रे वृषेत्यादिना क्तिन उदात्त-त्वम् ॥ ११ ॥

११. हम लोग, धनाभिलाषी होकर स्तुति-द्वारा द्योतमान सविता से भजनीय धन के दान की याचना करते हैं।

देवंनरःसवितारंविप्रायज्ञैःसुवृक्तिभिः। नमस्यन्तिधियेषिताः॥१२

देवम् । नरः । सवितारम् । विप्राः । यज्ञैः ।
सुवृक्तिऽभिः । नमस्यन्ति । धिया । इषिताः ॥ १२ ॥

नरः कर्मणां नेतारो विप्रा मेधाविनोऽध्वर्य्वादयः धियेषिताः कर्मणा बुद्ध्या वा प्रेर्यमाणाः स-न्तः सवितारं देवं त्वां यज्ञैर्यजनीयैर्हविर्भिः सुवृक्तिभिः शोभनस्तोत्रैश्च नमस्यन्ति परिचरन्ति ॥ नमस्यन्ति नमोवरिवश्चित्रङः क्यच् ॥ १२ ॥

१२. कर्मनेता मेधावी अध्वर्युगण बुद्धि-द्वारा प्रेरित होकर यजनीय हवि और शोभन स्तोत्रों-द्वारा सविता देवता की अर्चना करते हैं।

अग्नीषोमप्रणयने सोमो जिगातीत्याद्यास्तिस्र ऋचः । सूत्रितं च—सोमो जिगाति गातुविद्दे-वानां तमस्य रास्या वरुणस्तामश्विनेत्यर्धर्चमारभेदिति ।

सैषा त्रयोदशी—

सोमोजिगातिगातुविद्देवानामेतिनिष्कृतम्। ऋतस्ययोनिमासदम्

सोमः । जिगाति । गातुऽवित् । देवानाम् । एति ।
निःऽकृतम् । ऋतस्य । योनिम् । आऽसदम् ॥ १३ ॥

गातुवित् गातुर्मार्गः तं जानानः सोमो जिगाति गच्छति गन्तव्यं स्थानं दर्शयति—देवानां निष्कृतं संस्कृतम् आसदं सर्वैरासदनीयम् ऋतस्य यज्ञस्य योनिं स्थानं हविर्धानाख्यम् एति प्राप्नोति ॥ जिगाति गा स्तुतौ जुहोत्यादिः ॥ १३ ॥

१३. पथज्ञ सोम जानेवालों को स्थान दिखाते हैं। उपवेशनकारी देवों के लिए संस्कृत यज्ञ-स्थान में गमन करते हैं।

सोमोअस्मभ्यंद्विपदेचतुष्पदेचपशवे। अनमीवाइषस्करत्॥१४॥

सोमः । अस्मभ्यम् । द्विऽपदे । चतुःऽपदे । च ।
पशवे । अनमीवाः । इषः । करत् ॥ १४ ॥

सोमः स्तोतृभ्योऽस्मभ्यं तथा द्विपद्भ्यः सर्वेभ्यो द्विपाद्भ्यः चतुष्पदे पशवे चतुष्पाद्भ्यो गवा-दिपशुभ्यश्च अनमीवा रोगवर्जितानि इषोऽन्नानि करत् करोतु ॥ चतुष्पदे गर्भसंज्ञायां पादस्य पद्भा-वः इसुसोः सामर्थ्ये इति संहितायाम् आदेशप्रत्यययोरिति षत्वं बहुव्रीहौ पूर्वपदस्वरः । कर-त् करोतेर्लेट्यडागमः । इषस्करदित्यत्र संहितायां कः करत्यादिना सत्वम् ॥ १४ ॥

१४. सोम हम स्तोताओं के लिए एवम् द्विपदों, चतुष्पदों और पशुओं के लिए रोगशून्य अन्न प्रदान करें।

**अ॒स्माक॒मायु॑र्व॒र्धय॑न्न॒भिमा॑ती॒ः सह॑मानः । सोमः॑ स॒धस्थ॒मास॑दत् ॥ १५**

अ॒स्माक॑म् । आयुः॑ । व॒र्धय॑न् । अ॒भिऽमा॑तीः । सह॑मानः ।
सोमः॑ । स॒धऽस्थ॑म् । आ । अ॒स॒द॒त् ॥ १५ ॥

स सोमो देवः अस्माकमायुरन्नं जीवनं वा वर्धयन् वृद्धिं प्रापयन् अभिमातीः कर्मविघ्न-कारिणः शत्रून् सहमानोऽभिभवन् अस्माकं सधस्थं हविर्धानाख्यं स्थानम् आसदत् आसीदतु ॥ असदत् सदेर्लेटि रूपं निपातः ॥ १५ ॥

१५. सोमदेव हम लोगों के अन्न या आयु को बढ़ाते हुए और कर्म-विघातक शत्रुओं को अभिभूत करते हुए हम लोगों के यज्ञस्थान में उप-वेशन करें।

अग्निष्टोमे प्रातःसवने मैत्रावरुणशस्त्रे आ नो मित्रावरुणेति स्तोत्रियस्तृचः सूत्रितञ्च—आ नो मित्रावरुणा नो गन्तं रिशादसेति । चतुर्विंशेऽहनि प्रातःसवने मैत्रावरुणशस्त्रे आ नो मित्रावरुणेति षळहस्तोत्रियसंज्ञकस्तृचः सूत्रितञ्च—आ नो मित्रावरुणा मित्रं वयं हवामह इति । स्तोमवृद्धावप्ये-वमेव तृचस्यावापार्थः सूत्रितञ्च—आ नो मित्रावरुणेति तृचावितीति । दाक्षायणयज्ञे दर्शस्यैकस्मि-न्ये तयोरुत्तरस्याममावास्यायां द्वितीयेऽहनि मैत्रावरुणमानो मित्रावरुणेति तस्यानुवाक्या सूत्रितञ्च—आ नो मित्रावरुणा यद्वांहिष्ठं नातिविधे सुदानू इति ।

**आ नो॑ मित्रावरुणा घृ॒तैर्गव्यू॑तिमुक्षतम् । मध्वा॒ रजां॑सि सुक्रतू ॥ १६ ॥**

आ । नः॒ । मि॒त्रा॒व॒रु॒णा॒ । घृ॒तैः । गव्यू॑तिम् । उ॒क्ष॒त॒म् ।
मध्वा॑ । रजां॑सि । सु॒क्र॒तू॒ इति॑ सुऽक्रतू ॥ १६ ॥

सुक्रतू शोभनकर्माणौ हे मित्रावरुणौ नोऽस्माकं गव्यूतिं गवां मार्गं गोनिवासस्थानं घृतैः क्षरणसाधनैः पयोभिराउक्षतं समन्तात् सिञ्चतम् अस्मभ्यं दोग्ध्रीर्गाः प्रयच्छतमिति भावः र-जांस्यस्मदावासस्थानानि मध्वा मधुरेण रसेन सिञ्चतम् ॥ गव्यूतिं गोर्यूतौ छन्दसीति वान्तादेशः । मध्वा सुपां सुलुगिति विभक्तेराकारः सर्वविधीनां छन्दसि विकल्पितत्वादनुमागमाभावः ॥ १६ ॥

१६. हे शोभन कर्मकारी मित्रावरुण, हम लोगों के गोष्ठ को दुग्ध-पूर्ण करो। हम लोगों के आवास-स्थान को मधुर रस से पूर्ण करो।

उरुशंसानमोवृधामह्नादक्षस्यराजथः । द्राघिष्ठाभिःशुचिव्रता १७

उरुऽशंसा । नमःऽवृधा । मह्ना । दक्षस्य ।
राजथः । द्राघिष्ठाभिः । शुचिऽव्रता ॥ १७ ॥

शुचिव्रता परिशुद्धकर्माणौ हेमित्रावरुणौ उरुशंसा उरुभिर्बहुभिःशंसनीयौ यद्वा उरु महत् शंसःशस्त्रं ययोस्तौ नमोवृधा नमसाहविर्लक्षणेनान्नेनस्तोत्रेणवावर्धमानौ द्राघिष्ठाभिः अत्यन्तदीर्घस्तुतिलक्षणाभिर्वाग्भिः युक्तौ युवांदक्षस्यदक्षंधनंबलंवा तस्य मह्ना महत्त्वेन राजथः ईशाथे ॥ उरुशंसा शंसुस्तुतौ कर्मणिघञ् कृत्स्वरः । द्राघिष्ठाभिः दीर्घशब्दादिष्ठनि प्रियस्थिरेत्यादिनाद्राघीत्यादेशः नित्त्वादाद्युदात्तः ॥ १७ ॥

१७. हे विशुद्धकर्मकारी मित्रावरुण, तुम दोनों बहुतों-द्वारा स्तुत हो एवम् हविरन्न या स्तोत्र-द्वारा वर्द्धमान हो। दीर्घ स्तुतियुक्त होकर तुम लोग धन या बल के महत्त्व से विराजमान होओ।

मैत्रावरुणस्याहरहस्याज्यागृणानाजमदग्निनेत्येषा सूत्रितञ्च—होतायक्षन्मित्रावरुणागृणानाजमदग्निनेति । अध्यायोपाकरणेमण्डलाद्यन्तहोमेगृणानाजमदग्निनेत्येषा ।

सूक्तेष्टादशी—

गृणानाजमदग्निनायोनावृतस्यसीदतम् । पातंसोममृतावृधा १८

गृणाना । जमत्ऽअग्निना । योनौ । ऋतस्य । सीदतम् ।
पातम् । सोमम् । ऋतऽवृधा ॥ १८ ॥ ११ ॥

हेमित्रावरुणौ जमदग्निना एतन्नामकेनमहर्षिणा गृणाना स्तूयमानौ यद्वा जमदग्निना प्रज्वलिताग्निना विश्वामित्रेणस्तूयमानौ युवाम् ऋतस्ययज्ञस्ययोनौ देवयजनाख्येदेशे सीदतम् उपविशतम् ऋतावृधा ऋतस्यकर्मफलस्यवर्धयितारौ युवां सोमंपातं पिबतम् ॥ गृणाना गृशब्दे कर्मणिशानच् चित्त्वादन्तोदात्तः । सीदतं षद्लृविशरणगत्यवसादनेषु पाघ्रेत्यादिनासीदादेशः । पातं पापाने लुकंछन्दसीतिशपोलुक् ॥ १८ ॥

१८. हे मित्रावरुण, तुम दोनों जमदग्नि नामक महर्षि-द्वारा अथवा अग्नि को प्रज्वलित करनेवाले विश्वामित्र-द्वारा स्तुत होकर यज्ञ देश में उपवेशन करो। तुम दोनों ही कर्मफल के वर्द्धयिता हो, सोमपान करो।

॥ इतितृतीयस्यचतुर्थेएकादशोवर्गः ॥ ११ ॥

॥ इतितृतीयेमण्डलेपञ्चमोऽनुवाकः ॥ ५ ॥

॥ इतितृतीयंमण्डलंसमाप्तम् ॥ ३ ॥

॥ श्रीगणेशायनमः ॥

---

# अथचतुर्थमण्डलम्.

वामदेवस्यचतुर्थेमण्डलेपञ्चानुवाकाः तत्रप्रथमेनुवाकेदशसूक्तानि तेषुत्वांह्यग्नेसदमिदिति विंशत्यृचंप्रथमंसूक्तम् । अत्रेयमनुक्रमणिका—त्वांह्यग्नेविंशतिराद्यातिजगतीधृत्यष्ट्याद्यायाम्-तस्रोवारुण्यश्चेति । मण्डलद्रष्टावामदेवऋषिः प्रथमाचतुःषष्ट्यक्षराऽष्टिः द्वितीयाद्विपञ्चाश-दक्षराऽतिजगती तृतीयाद्वासप्तत्यक्षराधृतिः चतुर्थ्याद्या अनादेशपरिभाषयाऽऽसप्तदश्यास्त्रिष्टुभः त्वमग्नेस्यसूक्तस्यमण्डलादिप्त्वाग्नेयमितिपरिभाषयाग्निर्देवता द्वितीयाद्यास्तिस्रोवरुणदेवत्याः सूक्तविनियोगोलैङ्गिकः आद्याप्र्यायोपाकरणेमण्डलादिहोमेविनियुक्ता ।

तत्रप्रथमा—

ॐ त्वांह्यग्नेसदमित्समन्यवोदेवासोदेवमरतिंन्येरिरइतिक्रत्वा-न्येरिरे । अमर्त्यंयजतमर्त्येष्वादेवमादेवंजनतप्रचेतसंवि-श्वमादेवंजनतप्रचेतसम् ॥ १ ॥

त्वाम् । हि । अग्ने । सदम् । इत् । सऽमन्यवः । देवासः । देवम् । अरतिम् । निऽएरिरे । इति । क्रत्वा । निऽएरिरे । अमर्त्यम् । यजत । मर्त्येषु । आ । देवम् । आऽदेवम् । जनत । प्रऽचेतसम् । विश्वम् । आऽदेवम् । जनत । प्रऽचेतसम् ॥ १ ॥

वामदेवःस्तौति—हेअग्ने समन्यवः मन्युःस्पर्धा तयासहवर्तमानाः स्वसमानैःस्पर्धमानाः स्पर्धः देवासोदेवनशीलाइन्द्रादयोदेवाः देवंद्योतमानमरतिंशीघ्रंगन्तारंत्वांसदमित् सर्वदैवन्येरिरे हि स्पर्धानिमित्तेषुदेवेरयन्तिखलु इतिशब्दोहेत्वर्थः यस्माद्देवास्त्वांयुद्धार्थंनितरांप्रेरयन्तितस्मा-द्यजमानाःक्रत्वास्तुतिलक्षणेनकर्मणान्येरिरे यज्ञकर्मणिदेवान्हविःप्रापयितुं देवतावाह्वातुं च त्वां नितरांप्रेरयन्तिखलु यजत यजनीय हेअग्ने अमर्त्यंमरणधर्मरहितम् आसमन्ततोदेवंद्योतमानंप्र-चेतसं प्रकृष्टंकर्मविषयंचेतोज्ञानंयस्यतादृशंत्वांमर्त्येषुयागंकुर्वाणेषुमनुष्येषुआदेवमागन्तारंजनत देवाहविःप्रापणार्थमजनयन् तथाप्रचेतसंकर्माभिज्ञमादेवंयजमानेभ्यआगन्तारं त्वां विश्वंजनत युगपन्नानादेशवर्तिषुयज्ञेषुयौगपद्येनहविरानयनार्थंव्याप्तंदेवाअकुर्वन् ॥ न्येरिरे ईरगतौ लिटि मध्यस्थादात्मपदाति सहेतियोगविभागात्समासः हियोगादनिघातः । क्रत्वा प्रसादिषुच्छन्द-सिवावचनमितिनादेशाभावः यणादेशः ॥ १ ॥

१. हे अग्नि, तुम द्योतमान और शीघ्रगामी हो। स्पर्द्धावान् देवगण तुम्हें सर्वदा ही युद्ध के लिए प्रेरित करते हैं; अतएव यजमान लोग तुम्हें स्तुति-द्वारा प्रेरित करें। हे यजनीय अग्नि, तुम अमर, द्युतिमान् और उत्कृष्ट ज्ञान-विशिष्ट हो। यज्ञ करनेवाले मनुष्यों के मध्य में आने के लिए देवों ने तुम्हें उत्पन्न किया है। तुम कर्माभिज्ञ हो। समस्त यज्ञों में उपस्थित रहने के लिए देवों ने तुम्हें उत्पन्न किया है।

सभ्रातरंवरुणमग्नआवंवृत्स्वदेवाँअच्छासुमतीयज्ञवनसं ज्येष्ठंयज्ञवनसम्। ऋतावानमादित्यंचर्षणीधृतंराजानं चर्षणीधृतम् ॥ २ ॥

सः। भ्रातरम्। वरुणम्। अग्ने। आ। ववृत्स्व। देवान्। अच्छ। सुऽमती। यज्ञऽवनसम्। ज्येष्ठम्। यज्ञऽवनसम्। ऋतऽवानम्। आदित्यम्। चर्षणिऽधृतम्। राजानम्। चर्षणिऽधृतम् ॥ २ ॥

हेअग्ने सताद्दशस्त्वं भ्रातरमेकस्थानवासेनभ्रातरंवरुणंवृणोत्युदकमितिवरुणः तंदेवं यज्ञवनसं यज्ञैर्वननीयैर्हविर्भिःसंभजनीयं यज्ञवन्तंयज्ञस्यसंभक्तारंज्येष्ठमतिशयेनप्रशस्यम् ऋतावानमपांस्वामितयोदकवन्तंसत्यवन्तंवाआदित्यमदितेःपुत्रंचर्षणीधृतं मनुष्याणामुदकप्रदानेनधारकं सुमती शोभनयाबुद्ध्या हेतुनाचर्षणीधृतं चर्षणिभिर्मनुष्यैर्धृतंराजानंराजमानमेतादृशंवरुणंदेवंदेवान्देवनशीलांस्तोतॄनच्छाभिलक्ष्य आववृत्स्व आवर्तय अभिमुखीकुरु ॥ ववृत्स्व वृतुवर्तने छोटि बहुलंछन्दसीतिविकरणस्यश्लुः निपातः। सुमती मन्क्तिन्व्याख्यानवृषेत्यादिना क्तिनुदात्तः सुपांसुलुगितितृतीयायाःपूर्वसवर्णदीर्घः एकादेशस्वरः। ज्येष्ठं प्रशस्यस्यज्य च निज्यचेतिज्यादेशः नित्त्वादाद्युदात्तः एकादेशस्वरः। यज्ञवनसं वनषणसंभक्तौ कर्मकर्तरि असुन्प्रत्ययः गतिकारकयोरपिपूर्वपदप्रकृतिस्वरत्वंचेतिपूर्वपदस्वरः ॥ २ ॥

२. हे अग्नि, तुम्हारे भ्राता वरुण हैं। वे हव्यभाजन, यज्ञभोक्ता, अतिशय प्रशंसनीय, उदकवान्, अदिति-पुत्र, जलदान-द्वारा मनुष्यों के धारक, सुबुद्धियुक्त और राजमान हैं। तुम ऐसे वरुणदेव को स्तोताओं के अभिमुख करो।

अष्टमीमृचमाह—उत्तरस्मिन्नष्टकेसखेसखायमित्येषा सूत्रितं च—सखेसखायमभ्याववृत्स्वोर्ध्व ऊषुणऊतयइति।

सखेसखायमभ्याववृत्स्वाशुंनचक्रंरथ्येवरंह्यास्मभ्यंदस्मरंह्या। अग्नेमृळीकंवरुणेसचाविदोमरुत्सुविश्वभानुषु ॥ तोकायतुजेशुशुचानशंकृध्यस्मभ्यंदस्मशंकृधि ॥ ३ ॥

सखे । सखायम् । अभि । आ । ववृत्स्व । आशुम् । न । चक्रम् ।
रथ्याऽइव । रंह्या । अस्मभ्यम् । दस्म । रंह्या । अग्ने । मृळीकम् ।
वरुणे । सचा । विदः । मरुत्ऽसु । विश्वऽभानुषु । तोकाय ।
तुजे । शुशुचान । शम् । कृधि । अस्मभ्यम् । दस्म । शम् । कृधि ॥ ३ ॥

सखे सखिभूत दस्म दर्शनीय हेऽग्ने त्वं तवसखायंवरुणमस्मभ्यम् अस्मदर्थम् आववृत्स्व अभिमुखीकुरु तत्रदृष्टान्तः—रंह्या रंहणेगमनेसाधुभूतौरथ्येव रथेयोजितावश्वौयथा आशुं शीघ्रगन्तारंचक्रंगन्तव्यदेशंप्रत्यभिमुखीकुरुतःतद्वत् हेऽग्ने यथा तवसहायेवरुणेमृळीकंसुखकरंहविः विदः लब्धवानसि तथा विश्वभानुषु सर्वतोव्याप्ततेजस्केषुमरुत्सु सुखकरंलब्धवानसि आग्नीवरुणाऽऽग्निमारुतयोःकर्मणोरिष्टवानसीत्यर्थः शुशुचान दीप्यमान हेऽग्ने तोकाय तुज्यतेपीड्यते-ऽनेनमातागर्भवासेनेतितोकंपुत्रः तस्मैतुजेतुजतिगच्छत्यनेनानृण्यंपितेतितुक् पौत्रः तस्मै शंसुखं कृधि कुरु दस्म दर्शनीय हेऽग्ने अस्मभ्यंशंकृधि सुखंकुरु ॥ रथ्येव रथस्येमावित्यर्थेरथ-यविति यत् सुपांसुलुगितिसुपोऽडादेशः । रंह्या रंहयन्त्याप्नुवन्तसाधुरितियत्प्रत्ययः यतोनावइत्याद्युदात्तत्वम् ॥ ३ ॥

३. हे सखिभूत दर्शनीय अग्नि, तुम अपने सखा वरुण को हमारे अभिमुख करो, जैसे गमनकुशल और रथ में युक्त अश्वद्वय शीघ्रगामी चक्र को लक्ष्य देश के अभिमुख ले जाते हैं। हे अग्नि, तुम्हारी सहायता से वरुण ने सुखकर हव्य लाभ किया है तथा तेजोविशिष्ट मरुतों के लिए भी सुखकर हव्य लाभ किया है। हे दीप्तिमान् अग्नि, तुम हमारे पुत्र-पौत्रों को सुखी करो। हे दर्शनीय अग्नि, तुम लोगों का कल्याण करो।

त्वंनोअग्नेइत्येतदारभ्यैवंसूक्तम् उत्तराणिसूक्तानिच्छातरनुवाकेऽध्येयानिनैमित्तिकेष्वग्निमाधि-मयाकेषविनियुक्तानि सूत्रितंच—त्वंनोअग्नेवरुणस्यविद्वानित्येतत्प्रभृतीनिकुर्यादीति । अ-पशेषश्चांस्विष्टकृदर्थेऽग्नीवरुणौयष्टव्यौ तत्र त्वंनोअग्नइतिद्वेयाज्यानुवाक्ये सूत्रितंच—अ-ग्नीवरुणौस्विष्टकृदर्थेत्वंनोअग्नेवरुणस्यविद्वानितिद्वेइति । अत्यतोयस्याग्निहोत्रंजुहुयात्तदग्निमा-रुतीष्टिः तस्यामेतेएवयाज्यानुवाक्ये तदाहुर्यमाहिताग्निरित्युपक्रम्याम्नातं तस्ययाज्यानुवाक्ये त्वंनोअग्नेवरुणस्यविद्वान्सत्वंनोअग्नेऽवमोभवोतीति ।

त्वंनोअग्नेवरुणस्यविद्वान्देवस्यहेळोऽवयासिसीष्ठाः ।
यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषांसिप्रमुमुग्ध्यस्मत् ॥ ४ ॥

त्वम् । नः । अग्ने । वरुणस्य । विद्वान् । देवस्य । हेळः । अव ।
यासिसीष्ठाः । यजिष्ठः । वह्निऽतमः । शोशुचानः । विश्वा ।
द्वेषांसि । प्र । मुमुग्धि । अस्मत् ॥ ४ ॥

हेअग्ने विद्वान्सर्वपुरुषार्थसाधनोपायज्ञस्त्वं देवस्य द्योतमानस्यवरुणस्यहेळःक्रोधान् अस्मत्संबन्धिनःवरुणकर्तृकात्पापात्प्रहणात् अवयासिसीष्ठाः अपनय किञ्च यजिष्ठोयष्टृतमः वह्नितमो हविषामतिशयेनवोढा शोशुचानोतिशयेनदीप्यमानस्त्वं विश्वा सर्वाणिद्वेषांसि पापानि द्वेष्टॄणि रक्षांसिवास्मदस्मत्तः प्रमुमुग्धि प्रकर्षेणमोचय ॥ हेळः हेडृअनादरे क्विप् धातिरूपं शसः सुप्त्वादनुदात्तत्वेधातुस्वरः । यासिसीष्ठाः यसेर्ण्यन्तादाशीर्लिङि यासिसीयुडागमः छन्दस्युभयथेतिलिङःसार्वधातुकत्वाण्णिलोपाभावः अवपूर्वोयासिर्विनाशेवर्तते । मुमुग्धि मुचतेर्लोटि रूपं बहुलंछन्दसीतिशपः श्लुः ॥ ४ ॥

४. हे अग्नि, तुम सम्पूर्ण पुरुषार्थ के साधनोपाय को जानते हो। हम लोगों के प्रति द्योतमान वरुण के क्रोध का अपनोदन करो। तुम सबकी अपेक्षा अधिक याज्ञिक, हविर्वाही और अतिशय दीप्तिमान् हो। तुम हम लोगों को सब प्रकार के पापों से विशेष रूप से विमुक्त करो।

सत्वंनोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौ ।
अवयक्ष्वनोवरुणंरराणोवीहिमृळीकंसुहवोनएधि ॥ ५ ॥ १२ ॥

सः । त्वम् । नः । अग्ने । अवमः । भव । ऊती । नेदिष्ठः । अस्याः । उषसः । विऽउष्टौ । अव । यक्ष्व । नः । वरुणम् । रराणः । वीहि । मृळीकम् । सुऽहवः । नः । एधि ॥ ५ ॥ १२ ॥

हेअग्ने सतादृशस्त्वमूती ऊत्या रक्षणेननोऽस्माकं अवमः अर्वाचीनः प्रत्यासन्नःसन् अस्याउषसोव्युष्टौव्युच्छन्त्यांप्रातःकालेअग्निहोत्रादिकर्मसिद्ध्यर्थंनेदिष्ठोभव अतिशयेनास्मदन्तिकस्थोभव यद्वा ऊत्यागमनेनास्माकमवमोरक्षकोभव किञ्च नोस्माकंवरुणं वरुणकृतंजलोदरादिरोगमुत्पादकंपापंवा अवयक्ष्व अवयज विनाशयेत्यर्थः रराणः अस्माभिर्दत्तंहविःरममाणः यद्वा यजमानेभ्योत्यन्तंफलप्रदस्त्वं मृळीकं सुखकरमिदंहविः वीहि भक्षय किञ्च नोस्माकं सुहवःशोभनाह्वानोपेतः एधिभव ॥ नेदिष्ठः अन्तिकशब्दादिष्ठनि अन्तिकबाढयोर्नेदसाधाविति नेदादेशः नित्त्वादाद्युदात्तः । रराणः रमतेःकानचि मकारलोपश्छान्दसः यद्वा रातेर्लिटिव्यत्ययेनकानच् अभ्यस्तानामादिरित्याद्युदात्तः । एधि अस्तेर्लोटि घ्वसोरेद्धावभ्यासलोपश्चेति एत्वादेशः तस्यासिद्धत्वात् हुझल्भ्योहेर्धिः निघातः ॥ ५ ॥

५. हे अग्नि, रक्षादान-द्वारा तुम हम लोगों के प्रत्यासन्न होओ। उषा के विनष्ट होने पर प्रातःकाल में अग्निहोत्रादि कार्य की सिद्धि के लिए तुम हम लोगों के अत्यन्त निकटस्थ होओ। हम लोगों के लिए जो वरुणकृत जलोदरादि रोग और पाप हैं, उनका विनाश करो। तुम यजमानों के लिए अत्यन्त फलप्रद हो। तुम इस सुखकर हवि का भक्षण करो। हम तुम्हारा उत्तम रूप से आह्वान करते हैं। हमारे निकट आगमन करो।

अस्यश्रेष्ठासुभगस्यसंदृक्देवस्यचित्रतमामर्त्येषु।
शुचिघृतंनतप्तमघ्न्यायाःस्पार्हादेवस्यमंहनेवधेनोः ॥ ६ ॥
अस्य । श्रेष्ठा । सुऽभगस्य । सम्ऽदृक् । देवस्य । चित्रऽतमा ।
मर्त्येषु । शुचि । घृतम् । न । तप्तम् । अघ्न्यायाः । स्पार्हा ।
देवस्य । मंहनाऽइव । धेनोः ॥ ६ ॥

अस्यसुभगस्य सुष्ठुभजनीयस्याग्नेर्देवस्यश्रेष्ठा अतिशयेनप्रशस्या संदृक् संदृष्टिर्मर्त्येषुचित्रतमातिशयेनचायनीयापूजनीयाभवति स्पार्हा सर्वैःस्पृहणीयाचभवति तत्रदृष्टान्तः—यथादेवस्यक्षीरंकामयमानस्यपुरुषस्यअघ्न्याः अहन्तव्यायागोः शुचितेजोयुक्तंघृतंक्षरणयुक्तंतप्तंसंभृतंक्षीरंस्पृहणीयंभवति तद्वत्दृष्टान्तान्तरं—यथा गांभिक्षमाणस्यमर्त्यस्यधेनोःदोग्ध्र्यागोर्मंहनेव मंहतिर्दानकर्मा दानंयथाप्रियकरंभवतितद्वत् ॥ सुभगस्य आद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम् । स्पार्हा कर्मण्यतोयतोऽन्तउदात्तः । देवस्य दीव्यतीतिदेवः दीव्यतेःकर्त्यर्थे पचाद्यच्कृतम् ॥ ६ ॥

६. उत्तम रूप से भजनीय अग्निदेव का प्रशंसनीय अनुग्रह मनुष्यों के लिए अत्यन्त भजनीय तथा स्पृहणीय होता है, जैसे क्षीराभिलाषी देवों के लिए गौओं का तेजोयुक्त, क्षरणशील और उष्ण दुग्ध स्पृहणीय होता है और जैसे मनुष्यों के लिए पयस्विनी गौ भजनीय होती है।

त्रिरस्यतापरमासन्तिसत्यास्पार्हादेवस्यजनिमान्यग्नेः।
अनन्तेअन्तःपरिवीतआगाच्छुचिःशुक्रोअर्योरोरुचानः ॥ ७ ॥

त्रिः । अस्य । ता । परमा । सन्ति । सत्या । स्पार्हा । देवस्य ।
जनिमानि । अग्नेः । अनन्ते । अन्तः । परिऽवीतः । आ ।
अगात् । शुचिः । शुक्रः । अर्यः । रोरुचानः ॥ ७ ॥

अग्नेरभिमानिनोऽस्यदेवस्यत्रिःत्रीणि अग्निवायुसूर्यात्मनात्रीणि तानिप्रसिद्धानि परमा उत्तमानि सत्या यथार्थभूतानि जनिमानि जन्मानि स्पार्हा सर्वैः स्पृहणीयानिसन्ति यद्वा अग्नेरेवत्रीणिजन्मानि दिवस्परिप्रथमंजज्ञेअग्निरिति त्रीणिजानापरिभूषन्त्यस्येत्येवमादिषुमन्त्रेषु प्रसिद्धानि । अनन्तेऽपर्यन्तेनभसोऽन्तर्मध्येस्वतेजसापरिवीतः परिवेष्टितः शुचिः सर्वस्य शोधकः शुक्रोदीप्तियुक्तः अतएवरोरुचानःभृशंदीप्यमानः अर्यः स्वामी तादृशोदेवः अगात् अस्मदीयंयज्ञंसमागच्छतु ॥ सत्या शेश्छन्दसिबहुलमितिशेर्लुक् । परिवीतः व्येञ्संवरणे कर्मणिक्तः यजादित्वात्संप्रसारणं गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । अर्यः ऋगतौ अर्यः स्वामिवैश्ययोरितियत्प्रत्ययान्तोनिपातितः स्वामिन्यन्तोदात्तत्वंचवक्तव्यमित्यन्तोदात्तत्वम् ॥ ७ ॥

७. अग्निदेव का प्रसिद्ध, उत्तम और यथार्थभूत अग्नि, वायु तथा सूर्यात्मक तीन जन्म सबके द्वारा स्पृहणीय हैं। अनन्त, आकाश में अपने तेज-द्वारा परिवेष्टित, सबके शोधक, दीप्तियुक्त और अत्यन्त दीप्यमान स्वामी अग्नि हमारे यज्ञ में आगमन करें।

सदूतोविश्वेदभिवष्टिसद्माहोताहिरण्यरथोरंसुजिह्वः ।
रोहिदश्वोवपुष्योविभावासदारण्वःपितुमतीवसंसत् ॥ ८ ॥

सः । दूतः । विश्वा । इत् । अभि । वष्टि । सद्म । होता ।
हिरण्यऽरथः । रम्ऽसुजिह्वः । रोहित्ऽअश्वः । वपुष्यः ।
विऽभावा । सदा । रण्वः । पितुमतीऽइव । सम्ऽसत् ॥ ८ ॥

देवानांदूतः होता देवानामाह्वाता हिरण्यरथः सुवर्णमयरथोपेतः रंसुजिह्वः रमणीयज्वालोपेतः एतादृशोऽग्निः विश्वेत्सर्वाण्येवसद्म देवयजनस्थानानि अभिवष्टि कामयते पुनश्चकीदृशः रोहिदश्वः रोहितवर्णाअश्वायस्यसतथोक्तः वपुष्यः वपुषिरूपेसाधुः विभावा कान्तियुक्तः अतएवसदासर्वदारण्वोरमणीयोभवति तत्रदृष्टान्तः–पितुमतीवसंसत् यथान्नादिना समृद्धंगृहंरमणीयंतद्वत् ॥ रंसुजिह्वः रमतेरन्येभ्योपिदृश्यतइतिविच् बहुव्रीहौपूर्वपदस्वरः । वपुष्यः तत्रसाधुरितियत् तित्स्वरितः । विभावा छन्दसीवनिपाविति वनिप् ॥ ८ ॥

८. दूत, देवों के आह्वानकारी, सुवर्णमय रथोपेत, एवम् रमणीय ज्वाला-विशिष्ट अग्नि समस्त यज्ञ की कामना करते हैं। रोहिताश्व, रूपवान् और सदा कान्तियुक्त अग्नि अन्न-द्वारा समृद्ध गृह की तरह रमणीय हैं।

सचेतयन्मनुषोयज्ञबन्धुःप्रतंमह्यारशनयानयन्ति ।
सक्षेत्यस्यदुर्यासुसाधन्देवोमर्तस्यसधनित्वमाप ॥ ९ ॥

सः । चेतयत् । मनुषः । यज्ञऽबन्धुः । प्र । तम् । मह्या । रशनया ।
नयन्ति । सः । क्षेति । अस्य । दुर्यासु । साधन् । देवः । मर्तस्य ।
सधनिऽत्वम् । आप ॥ ९ ॥

यज्ञबन्धुः यज्ञेभिर्होत्रादीनांबन्धनंविनियोजनंयस्यसतथोक्तः सोऽग्निर्मनुषः कर्मणिप्रवृत्तान्मनुष्यान्चेतयत्जानाति मह्या महत्यारशनयास्तुतिरूपयारज्ज्वायुक्तं तंतादृशमग्निंप्रणयन्ति उत्तरवेद्यादिषु अध्वर्य्वादयःप्रक्षिपन्ति मर्तस्य मनुष्यस्यास्ययजमानस्यदुर्यासु गृहेषु साधन् कर्माणिसाधयन्सोऽग्निःक्षेतिवसति सदेवोद्योतमानोऽग्निः सधनित्वं यस्यगृहेनिवसतितेनधनिनासहितत्वमाप प्राप्नोति प्रभूतंधनंधनमानायदापयित्वातेनसहितोभवतीत्यर्थः ॥ साधन् राधसाधसंसिद्धौ व्यत्ययेनशतरिरूपम् ॥ ९ ॥

९. अग्नि यज्ञ में विनियुक्त होते हैं। वे यज्ञ में प्रवृत्त मनुष्यों को जानते हैं। अध्वर्युगण महती रशना-द्वारा उत्तर वेदि में उनका प्रणयन करते हैं। यजमान के गृहों में अभीष्ट-साधन करते हुए वे निवास करते हैं। वे द्योतमान अग्नि धनियों के साथ एकत्र वास करते हैं।

स तू नो अग्निर्नयतु प्रजानन्नच्छा रत्नं देवभक्तं यदस्य।
धिया यद्विश्वे अमृता अकृण्वन्द्यौष्पिता जनिता सत्यमुक्षन्॥१०॥१२

सः। तु। नः। अग्निः। नयतु। प्रऽजानन्। अच्छ। रत्नम्।
देवऽभक्तम्। यत्। अस्य। धिया। यत्। विश्वे। अमृताः।
अकृण्वन्। द्यौः। पिता। जनिता। सत्यम्। उक्षन्॥ १० ॥१२॥

प्रजानन्सर्वं जानानः सोऽग्निः देवभक्तं देवैर्देवनशीलैः स्तोतृभिः संभजनीयम् यदस्याग्नेः संबन्धि यद्रत्नं रमणीयं धनमस्ति तद्धनमच्छाभिमुख्येन तु क्षिप्रं नोऽस्मान्नयतु प्रापयतु अमृता मरणधर्मरहिता विश्वे सर्वे देवाः धिया अनेन कर्मणा हेतुना यद्यमग्निमकृण्वन् हविषां प्रापयितारमकुर्वन् यस्याग्नेः द्यौः पिता पालयिता जनिता जनयिता च अग्ने दिवः सूनुरसि प्रचेताः इति मन्त्रणात्। यद्वा द्यौर्देवनशील आदित्यः पिता जनयिता च आदित्यादग्निरित्याम्नानात्। सत्यं यथार्थभूतं तमग्निमुक्षन् घृताद्याहुतिभिरध्वर्य्वादयः सिञ्चन्ति॥ देवभक्तं मन्त्रे पायां कर्मणि क्तः तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरः। उक्षन् उक्ष सेचने लङि रूपं बहुलं छन्दसीत्यडभावः॥ १०॥

१०. स्तोताओं-द्वारा भजनीय जो उत्कृष्ट रत्न अग्नि का है, उस रत्न को सर्वज्ञ अग्नि हमारे अभिमुख प्रेरित करें। मरण-धर्म-रहित समस्त देवों ने यज्ञ के लिए अग्नि का उत्पादन किया है। द्युलोक उनके पालक और जनक हैं। अध्वर्युगण घृतादि आहुतियों-द्वारा यथार्थभूत अग्नि को सिञ्चित करते हैं।

स जायत प्रथमः पस्त्यासु महो बुध्ने रजसो अस्य योनौ।
अपादशीर्षा गुहमानो अन्तायोयुवानो वृषभस्य नीळे॥ ११ ॥

सः। जायत। प्रथमः। पस्त्यासु। महः। बुध्ने। रजसः। अस्य।
योनौ। अपात्। अशीर्षा। गुहमानः। अन्ता। आऽयोयुवानः।
वृषभस्य। नीळे॥ ११ ॥

सोऽग्निः प्रथम आहवनीयादिरूपतया मुख्यः सन् पस्त्यासु यजमानानां गृहेषु जायत अजायत आहुत्यधिकरणतया संपद्यते तथा महो महतोऽस्य रजसोऽन्तरिक्षस्य बुध्ने मूलेऽपि योनौ स्थानेऽपि योनावुत्तरवेद्यादिस्थाने संपद्यते सोऽग्निरपात् पादवर्जितः अशीर्षा शिरोवर्जितः तदेवाह-

१ ऋ० सं० ३. १. २५।

अन्ता आवृतपादशिरसौगुहमानः अविज्ञेयपादशिरा इत्यर्थः वृषभस्य वर्षणसमर्थस्य मेघस्य नीळे निलयेनास्मिन् आयोयुवानः धूमाकारेणात्मानमायोजयन्वर्तते यद्वा सःप्रथमो वैद्युतोऽग्निः पस्त्यासु नदीषु बुध्नेऽन्तरिक्षे महो महतो रजसः उदकस्य तेजसो वा योनौ स्थाने च रति अपादशीर्षापादशिरोवर्जितः अन्ता आत्मनः पर्यन्तप्रदेशान् स्वतेजसा गुहमानः आच्छादयन् पुनश्चायोयुवानः तानि तेजांसि स्वात्मनि मिश्रीकुर्वन् वृषभस्य मेघस्य नीळे स्थानेऽन्तरिक्षे चरति सोऽग्निः पुनः कर्मयोग्य तथाभवत ॥ अपात् पादस्य लोपोऽहस्त्यादिभ्य इत्यकारलोपः समासान्तः । गुहमानः गुहू संवरणे शब्विकरणो शानचि रूपं शानचोऽसार्वधातुकस्वरे कृते प्रत्ययस्वरः । आयोयुवानः युमिश्रणे यङ्लुकि शानचि रूपम् अभ्यस्तस्वरेणाद्युदात्तः ॥ ११ ॥

११- अग्नि ही श्रेष्ठ हैं। वे यजमानों के गृहों में और महान् अन्तरिक्ष के मूल स्थान में उत्पन्न हुए हैं। अग्नि पादरहित और शिरोवर्जित हैं। वे शरीर के अन्तर्भाग का गोपन करके जलवर्षी मेघ के निलय में अपने को धूमाकार बनाते हैं।

प्रशर्धआर्तप्रथमंविपन्याँऋतस्ययोनावृषभस्यनीळे।
स्पार्होयुवावपुष्योविभावासप्तप्रियासोऽजनयन्तवृष्णे ॥ १२ ॥

प्र । शर्धः । आर्त । प्रथमम् । विपन्या । ऋतस्य । योना ।
वृषभस्य । नीळे । स्पार्हः । युवा । वपुष्यः । विभाऽवा । सप्त ।
प्रियासः । अजनयन्त । वृष्णे ॥ १२ ॥

हे अग्ने विपन्या स्तुत्या युक्तम् ऋतस्योदकस्य योनौ स्थाने वृषभस्य वर्षणसमर्थस्य मेघस्य नीळे कुलायभूतेऽन्तरिक्षे वैद्युताग्निरूपेण त्वां वर्तमानं शर्धस्तेजः प्रथमं प्रार्त प्रकर्षेण गच्छति यश्चाग्निः स्पार्हः सर्वैः स्पृहणीयः युवा नित्यतरुणः वपुष्यः कमनीयः विभावा दीप्तिमान् तस्मै वृष्णे अभिमतफलवर्षकायाग्नये प्रियासः प्रियाः सप्त होत्रकाः अजनयन्त स्तोत्रमकुर्वन् ॥ आर्त ऋ गतौ लङि व्यत्ययेनात्मनेपदं निघातः । विपन्या पन चेत्यस्य कृदिकारादक्तिन इति ङीप् प्रत्ययस्वरेणान्तोदात्तः उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वम् । विपन्याँ ऋतस्येत्यत्र संहितायामिकोऽसवर्णे शाकल्यस्य ह्रस्वश्चेत्यनिकोऽपि ह्रस्वः अनुनासिकश्च ॥ १२ ॥

१२. हे अग्नि, तुम स्तुतियुक्त उदक के उत्पत्ति-स्थान में मेघ के कुलायभूत (घोंसला) अन्तरिक्ष में वर्तमान हो। तेज तुम्हारे निकट सर्वप्रथम उपस्थित होता है। जो अग्नि स्पृहणीय, नित्य तरुण, कमनीय और दीप्तिमान् हैं, उन्हीं अग्नि के उद्देश से सप्त होता स्तुति करते हैं।

अस्माकमत्रपितरोमनुष्याअभिप्रसेदुर्ऋतमाशुषाणाः।
अश्मव्रजाःसुदुघावव्रेअन्तरुदुस्राआजन्नुषसोहुवानाः ॥ १३ ॥

अस्माकम् । अत्र । पितरः । मनुष्याः । अभि । प्र । सेदुः । ऋतम् । आशुषाणाः । अश्मऽव्रजाः । सुऽदुघाः । वव्रे । अन्तः । उत् । उस्राः । आजन् । उषसः । हुवानाः ॥ १३ ॥

अत्रलोके पूर्वेमनुष्याःअस्माकंपितरोऽङ्गिरसः ऋतंयज्ञमाशुषाणाः अश्नुवानाःसन्तः अभिप्रसेदुः अग्निमभिलक्ष्यप्रजग्मुः तेऽङ्गिरसः अग्निपरिचर्याबलात् अश्मव्रजाःपर्वतैःपरिवृताःवव्रेवृणोत्याच्छादयतीतिवव्रं पर्वतबिलान्तर्वर्तितमः तस्मिन्नन्तर्मध्येस्थिताः सुदुघाः सुष्ठुदोग्ध्रीः उस्राः पणिभिरपहृतागाः उदाजन् तस्माद्बिलाद्बहिरगमयन् किंकुर्वन्तः तमसो विध्वंसिनीरुषसोदेवीःप्रकाशार्थं हुवानाआह्वयन्तः ॥ वव्रे वृणोतेरौणादिकः कःकृञादीनांद्वेभवतइतिद्विर्वचनम् ॥ १३ ॥

१३. इस लोक में हमारे पितृपुरुषों (अङ्गिरा आदि) ने यज्ञ करने के लिए अग्नि के अभिमुख गमन किया था। प्रकाश के लिए उषादेवी का आह्वान करते हुए उन लोगों ने अग्नि-परिचर्या के बल से पर्वतबिलान्तर्वर्ती अन्धकार के मध्य से दोहवती धेनुओं को बाहर किया था।

तेमर्मृजतददृवांसोअद्रिंतदेषामन्येअभितोविवोचन् ।
पश्वयन्त्रासोअभिकारमर्चन्विदन्तज्योतिश्चकृपन्तधीभिः॥१४॥

ते । मर्मृजत । ददृऽवांसः । अद्रिम् । तत् । एषाम् । अन्ये । अभितः । वि । वोचन् । पश्वऽयन्त्रासः । अभि । कारम् । अर्चन् । विदन्त । ज्योतिः । चकृपन्त । धीभिः ॥ १४ ॥

तेऽङ्गिरसः अद्रिंपणिभिरपहृतानांगवांनिरोधकंपर्वतं ददृवांसोविदारयन्तःसन्तः मर्मृजत अग्निंपर्यचरन् एषामङ्गिरसांतत्तादृशंकर्म अन्येमहर्षयोअभितःसर्वत्रजगतिविवोचन् विशेषेण अकथयन् पश्वयन्त्रासः पशुनिर्गमनार्थानियन्त्राणिउपायायेषांतेऽङ्गिरसः कारं अभिमतस्यफलस्यकर्तारमग्निमभ्यर्चयन्नस्तुवन् अतस्तमोपहम् आदित्याख्यंज्योतिर्विदन्तालभन्त ततो धीभिर्बुद्धिभिश्चकृपन्त यज्ञानकुर्वन् ॥ मर्मृजत मृजूष्शुद्धौ यङ्लुकि लङि व्यत्ययेनात्मनेपदं निघातः । चकृपन्त कृपूसामर्थ्ये ण्यन्तस्यलुङिचङि सन्वद्भावाभावश्छान्दसः ॥ १४ ॥

१४. उन लोगों ने पर्वत को विदीर्ण करते समय अग्नि की परिचर्या की थी। अन्य ऋषियों ने उनके कर्म का कीर्त्तन सर्वत्र किया था। उन्हें पशुओं को बचाने के उपाय ज्ञात थे। अभिमत फलप्रद अग्नि का स्तवन करते हुए उन्होंने ज्योति-लाभ किया था, और बुद्धिबल से यज्ञ किया था।

तेगव्यतामनसादृध्रमुब्धंगायेमानंपरिषन्तमद्रिम् ।
दृळ्हंनरोवचसादैव्येनव्रजंगोमन्तमुशिजोविवव्रुः ॥ १५ ॥ १४ ॥

ते । गव्यता । मनसा । दृध्रम् । उब्धम् । गाः । येमानम् । परि ।
सन्तम् । अद्रिम् । दृळ्हम् । नरः । वचसा । दैव्येन । व्रजम् ।
गोऽमन्तम् । उशिजः । वि । वव्रुरितिवव्रुः ॥ १५ ॥ १४ ॥

नरः कर्मणानेतारः उशिनोऽग्निकामयमानास्तेऽङ्गिरसः गव्यतागाइच्छतामनसादृध्रं गवां निर्गमनद्वारनिरोधकमुब्धं समुब्धंसंहतं यद्वा उभिःपूरणार्थः गोभिः पूर्णगाः येमानंनियच्छन्तं परिसर्वतःसन्तंवर्तमानंदृळ्हंदृढंगोमन्तं गोभिर्युक्तंव्रजं गवांनिवासस्थानम् अद्रिंपर्वतं दैव्येनाग्निविषयेणवचसावेदात्मकेनस्तोत्रेण विवव्रुः गोनिर्गमनार्थमुद्घाटितवन्तः ॥ उब्धम् उभातिर्हिंसार्थःसमानार्थः यद्वा उम्भपूरणे कर्मणिक्तः । येमानं यमेःकानचि एत्वाभ्यासलोपौ चित्वादन्तोदात्तः । परिषन्तमित्यत्रसंहितायामुपसर्गात्सुनोतीत्यादिनाषत्वम् ॥ १५ ॥

१५. अङ्गिरा आदि कर्मों के नेता और अग्नि की कामनावाले थे। उन्होंने मन से गो-लाभ की इच्छा करके द्वारनिरोधक, दृढ़बद्ध, सुदृढ़, गौओं के अवरोधक एवम् सर्वतः व्याप्त गोपूर्ण गोष्ठ-रूप पर्वत का अग्निविषयक स्तुति-द्वारा उद्घाटन किया था।

तेमन्वतप्रथमंनामधेनोस्त्रिःसप्तमातुःपरमाणिविन्दन् ।
तज्जानतीरभ्यनूषतव्राआविर्भुवदरुणीर्यशसागोः ॥ १६ ॥

ते । मन्वत । प्रथमम् । नाम । धेनोः । त्रिः । सप्त । मातुः ।
परमाणि । विन्दन् । तत् । जानतीः । अभि । अनूषत ।
व्राः । आविः । भुवत् । अरुणीः । यशसा । गोः ॥ १६ ॥

हेअग्ने तेस्तोत्रंकुर्वाणाअङ्गिरसः मातुर्जनन्याधेनोर्वाचः संबन्धिनाम स्तुतिसाधकं शब्दमात्रं प्रथमंपूर्वमन्वत अमानत पश्चात्तस्यावाचःसंबन्धीनि त्रिःसप्त एकविंशतिसंख्याकानि स्तुतिसाधनानि छन्दांसि तानिच गायत्र्यादीनिजगत्यन्तानिसप्त अतिजगत्यादीन्यतिधृत्यन्तानिसप्तकृतिप्रभृतीन्युत्कृतिपर्यन्तानिसप्तेति एवं त्रिःसप्तच्छन्दांसि परमाण्युत्तमानिविन्दन्नलभन्त एवंविधच्छन्दोयुक्तैर्मन्त्रैरग्निमस्तुवन्नित्यर्थः ततः जानतीः सर्वंजानानाः व्राः व्राइत्युषोनाम उषसः अभ्यनूषत अस्तुवन् ततोगोःसूर्यस्ययशसा तेजसासह अरुणीः अरुणवर्णोषाः आविर्भुवत् आविरभूत् । यद्वा तेऽङ्गिरसः प्रथमंपुरातनंनाम एहि सुरभिगुग्गुलुगन्धिनीति धेनोर्नामधेयं मन्वतोच्चारयामासुः मातुर्भूम्याः स्वभूतानिपदानिपरमाणि त्रिःसप्तस्थानानिविन्दन् तदुच्चारितंनामजानन्त्योगावः अभ्यनूषत हंभारवलक्षणंशब्दमकुर्वन् तदानीमुषाःप्रादुरभूदिति ॥ जानतीः शतुरनुमोनद्यजादी

इति ङीप उदात्तत्वम् । अनूषत णुस्तुतौ लुङि रूपं कुटादित्वाद्गुणः । अरुणीः सोरत्रोपसर्जनच्छन्दसोर्गौरादिषु ईङिमायेति ङीप् ॥ १६ ॥

१६. हे अग्नि, स्तोम करनेवाले अङ्गिरा आदि ने ही पहले-पहल जननी वाक् के सम्बन्धी स्तुतिसाधक शब्दों को जाना, पश्चात् वचन-सम्बन्धी सत्ताईस छन्दों को प्राप्त किया। अनन्तर इन्हें जाननेवाली उषा का स्तवन किया एवम् सूर्य के तेज के साथ अरुणवर्णा उषा प्रादुर्भूत हुई।

नेश॒त्तमो॒ दुधि॑तं॒ रोच॑त॒ द्यौरुद्दे॒व्या उ॒षसो॑ भा॒नुरर्त॑ ।
आ सूर्यो॑ बृह॒तस्ति॑ष्ठ॒दज्राँ॑ ऋ॒जु मर्ते॑षु वृ॒जिना॑ च॒ पश्य॑न् ॥ १७ ॥

नेश॑त् । तम॑ः । दुधि॑तम् । रोच॑त । द्यौः । उत् । दे॒व्याः । उ॒षस॑ः । भा॒नुः । अर्त॑ । आ । सूर्य॑ः । बृ॒ह॒तः । ति॒ष्ठ॒त् । अज्रा॑न् । ऋ॒जु । मर्ते॑षु । वृ॒जि॒ना । च॒ । पश्य॑न् ॥ १७ ॥

तमः रात्रिकृतमन्धकारं दुधितं दुधिः प्रेरणकर्मा प्रातरग्निविहरणकाले उषसा प्रेरितं सत् नेशत् अनश्यत् ततो द्यौरन्तरिक्षं रोचत अदीप्यत ततो देव्याः देवनशीलाया उषसो भानुः प्रभा उदर्त उद्गच्छति अथ सूर्यः बृहतो महतः अज्रानजरान् पर्वतान् गमनशीलान् रश्मीन् वा आतिष्ठत् अध्यतिष्ठत् किं कुर्वन् मर्त्येषु मनुष्येषु विद्यमानम् ऋजु सत्कर्म वृजिना वृजिनानि अनृजूनि असत्कर्माणि च पश्यन् अध्यतिष्ठदिति शेषः ॥ नेशत् णश अदर्शने लुङि नशिमन्योरलिट्येत्वं वक्तव्यमित्येत्वं शपः पित्वादनुदात्तत्वे धातुस्वरः । रोचत रुच दीप्तौ लङि रूपं वाक्यभेदादनिघातः ॥ १७ ॥

१७. रात्रिकृत अन्धकार उषा-द्वारा प्रेरित होने पर विनष्ट हुआ। अन्तरिक्ष दीप्त हुआ। उषादेवी की प्रभा उद्गत हुई। मनुष्यों के सत् और असत् कर्मों का अवलोकन करते हुए सूर्यदेव महान् अजर पर्वत के ऊपर आरूढ़ हुए।

आदित्प॒श्चा बु॑बुधा॒ना व्य॑ख्य॒न्नादिद्रत्नं॑ धारयन्त॒ द्युभ॑क्तम् ।
विश्वे॒ विश्वा॑सु॒ दुर्या॑सु दे॒वा मित्र॑ धि॒ये व॑रुण स॒त्यम॑स्तु ॥ १८ ॥

आत् । इत् । प॒श्चा । बु॒बु॒धा॒नाः । वि । अ॒ख्य॒न् । आत् । इत् । रत्न॑म् । धा॒र॒य॒न्त॒ । द्युऽभ॑क्तम् । विश्वे॑ । विश्वा॑सु । दुर्या॑सु । दे॒वाः । मित्र॑ । धि॒ये । व॒रु॒ण॒ । स॒त्यम् । अ॒स्तु॒ ॥ १८ ॥

आदित् सूर्योदयानन्तरं बुबुधानाः पणिभिरपहृताः निरोधान्निर्गता गाः जानानाः अङ्गिरसः पश्चा पश्चात् गुहाया अद्रेः व्यख्यन् अशेषेण ता गाः अपश्यन् तथा आदित् अनन्तरं द्युभक्तं दीप्तियुक्तं देवैः संभक्तं वा रत्नं पणिभिरपहृतं धनं धारयन्त अधारयन् गवां शोधनानामङ्गिरसां विश्वासु दु-

येषु सर्वेषुगृहेषु विश्वेयजत्रीयाः सर्वेविश्वाआगमन्: हेमित्र मित्रभूत देवकृतोपद्रवाणांवारक हेऽग्ने प्रिये कर्मणिकार्ये स्तोत्रेण यजमानाय सत्यमस्तु यद्वेतत्त्वोपक्रमकरणसामर्थ्यंतत्सार्थ-भूतमस्तु ॥ पश्व पश्वमावच्छन्दसीतिनिपातितः । शुशुचानाः शुचेर्लिटि कानचिरूपं चित्त्वा-दन्तोदात्तः । पुप्रुचं पच्छस्तस्त्रवायां कर्मणिघञ्प्रत्ययः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरः ॥ १८ ॥

१८. सूर्योदय के अनन्तर आङ्गिरा आदि ने पणियों-द्वारा अपहृत गौओं को जानकर पीछे की ओर से उन गौओं को अच्छी तरह से देखा एवम् दीप्तियुक्त धन धारण किया। इनके समस्त गृहों में यज-नीय देवगण आये। राक्षस-जनित उपद्रवों का निवारण करनेवाले हे मित्र-भूत अग्नि, जो तुम्हारी उपासना करता है, उसे सत्य फल लाभ हो।

**अच्छावोचेयशुशुचानमग्निंहोतारंविश्वभरसंयजिष्ठम् ।**
**शुच्यूधोअतृणन्नगवामन्धोनपूतंपरिषिक्तमंशोः ॥ १९ ॥**

**अच्छ । वोचेय । शुशुचानम् । अग्निम् । होतारम् ।**
**विश्वऽभरसम् । यजिष्ठम् । शुचि । ऊधः । अतृणत् । न । गवाम् ।**
**अन्धः । न । पूतम् । परिऽसिक्तम् । अंशोः ॥ १९ ॥**

हेऽग्ने शुशुचानं भृशंदीप्यमानं होतारं देवानामाह्वातारं विश्वभरसम् आहुतिद्वारावृष्टि-प्रदानेन विश्वस्यपोषकं यजिष्ठं यष्टृतममग्निं त्वामच्छाभिलक्ष्यवोचेय स्तवानि यजमानाः ऊधःशुचि शुद्धंपयःनातृणत् तवआहुत्यर्थंयजमानोनदोग्धि अंशोः सोमलताखण्डस्यसंबन्धि अन्धोरसा-त्मकमन्नं पूतं दशापवित्रेणशोधितं नपरिषिक्तं गृहेषु न्यक्षिपत् किंत्वनेनयजमानेनकेवलंस्तु-तिरेवक्रियते ॥ वोचेय ब्रूञआशीर्लिङि ब्रुवोवचिः लिङ्याशिष्यङ् वचउमुपधायेतिसार्वधा-तुकत्वात्सीयुट्सलोपः । अतृणत् उतृदिर्हिंसानादरयोः दोहनमेवऊधसोहिंसनम् । परिषिक्तं सिञ्चतेःकर्मणिक्तः उपसर्गात्सुनोतीतिसंहितायांषत्वं गतिरनन्तरइतिगतेःस्वरः ॥ १९ ॥

१९. हे अग्नि, तुम अत्यन्त दीप्तिमान्, देवों के आह्वाता, विश्व-पोषक और सर्वापेक्षा यागशील हो। तुम्हारे उद्देश से हम स्तुति करते हैं। यजमान लोग तुम्हें आहुति देने के लिए गौओं के ऊधः-प्रदेश से शुद्ध दुग्ध का दोहन नहीं करते हैं और न सोमलता-सम्बन्धी शोधित अन्न को ही गृह में प्रक्षिप्त करते हैं। वे लोग केवल तुम्हारी स्तुति करते हैं।

**विश्वेषामदितिर्यज्ञियानांविश्वेषामतिथिर्मानुषाणाम् ।**
**अग्निर्देवानामवआवृणानःसुमृळीकोभवतुविश्ववेदाः ॥२०॥१५॥**

**विश्वेषाम् । अदितिः । यज्ञियानाम् । विश्वेषाम् । अतिथिः ।**
**मानुषाणाम् । अग्निः । देवानाम् । अवः । आऽवृणानः । सुऽमृळीकः ।**
**भवतु । विश्वऽवेदाः ॥ २० ॥ १५ ॥**

अयमग्निर्विश्वेषांसर्वेषांयज्ञियानांयज्ञार्हाणांदेवानामदितिः अदितिर्देवमाता तद्वद्देवानांपोषकइत्यर्थः यद्वा विश्वेषांदेवानामदितिः भूस्थानीयः आधारभूतइतियावत् अयंवाग्निर्वैश्वानरइति श्रुतेः । तथायमग्निर्विश्वेषांमनुषाणामतिथिरतिथिवत्पूज्योभवति देवानां देवनशीलानांस्तोतॄणामन्नोस्मदीयंहविराबृणानः संभजन् जातवेदाःजातंसर्वंवेत्तीतिजातवेदाः सोग्निस्तेषांस्तोतॄणांसुमृळीकः सुखकरो भवतु ॥ अतिथिः अतसातत्यगमने ऋतन्यञ्जीत्यादिनाइथिन्प्रत्ययः नित्त्वादाद्युदात्तः । मनुषाणां मनोरपत्यानीत्यर्थे मनोर्जातावञ्यतौषुक्चेतिअञ्प्रत्ययः षुगागमश्च ञित्त्वादाद्युदात्तः ॥ २० ॥

२०. अग्नि समस्त यज्ञार्ह देवों के पोषक हैं। अग्नि सम्पूर्ण मनुष्यों के लिए अतिथिवत् पूज्य हैं। स्तोताओं के अन्नभोजी अग्नि स्तोताओं के लिए सुखकर हों।

योमर्त्येष्विति विंशत्यृचंद्वितीयंसूक्तं वामदेवस्यार्षंत्रैष्टुभमाग्नेयं योमर्त्येष्वित्यनुक्रमणिका । अस्यसूक्तस्यप्रातरनुवाकाश्विनशस्त्रयोःपूर्वसूक्तेएवविनियोगउक्तः ।

**योमर्त्येष्वमृतऋतावादेवोदेवेष्वरतिर्निधायि ।**
**होतायजिष्ठोमह्नाशुचध्यैहव्यैरग्निर्मनुषईरयध्यै ॥ १ ॥**

यः । मर्त्येषु । अमृतः । ऋतऽवा । देवः । देवेषु । अरतिः । निऽधायि । होता । यजिष्ठः । मह्ना । शुचध्यै । हव्यैः । अग्निः । मनुषः । ईरयध्यै ॥ १ ॥

अमृतः मरणधर्मरहितः योग्निर्मर्त्येषुमनुष्येषु ऋतावा सत्यवान्निधायि निहितः यद्वा मर्त्येषुमनुष्यसंबन्धिषुवागादीन्द्रियेषुनिहितः अग्निर्वाग्भूत्वामुखंप्राविशदितिश्रुतेः । देवोदेवनशीलोयोग्निः इन्द्रादिषुदेवेषुअरतिरभिगन्ताशत्रूणां यद्वा देवलोकेगन्ता निधायि निहितः सचहोतादेवानामाह्वातायजिष्ठोयष्टृतमोग्निः मह्नास्वकीयेनमहतातेजसाशुचध्यै दीपितुमुत्तरवेद्यां निहितः किंच हव्यैर्हवनीयैराज्यपुरोडाशादिभिर्हविर्भिर्हेतुभिर्मनुषोमनुष्यस्ययजमानस्यईरयध्यै स्वर्गंप्रतिप्रेरणायनिहितः ॥ अरतिः ऋगतौ वहिवस्यर्तिभ्यश्चिदिति अतिप्रत्ययः चित्त्वादन्तोदात्तः । निधायि दधातेःकर्मणिलुङिरूपं पादादित्वाभावान्निहन्यते किन्तु छन्दसीत्युत्तरपदाद्युदात्तत्वम् । शुचध्यै शुचदीप्तौ तुमर्थेकध्यैप्रत्ययः कित्त्वाद्गुणः प्रत्ययस्वरः । ईरयध्यै ईरयतेस्तुमर्थेशध्यैप्रत्ययः शित्त्वेनसार्वधातुकत्वाण्णिलोपाभावः ॥ १ ॥

१. जो मरणधर्म-रहित अग्नि मनुष्यों के मध्य में सत्यवान् होकर निहित हैं, जो दीप्तिमान् अग्नि इन्द्रादि देवताओं के मध्य में शत्रुओं के पराभवकर्त्ता हैं, वे ही अग्नि देवों के आह्वाता और सबकी अपेक्षा अधिक यज्ञ करनेवाले हैं। वे अपनी महिमा से प्रदीप्त होने के लिए उत्तर वेदि पर स्थापित हुए हैं एवम् हवि-द्वारा यजमानों को स्वर्ग भेजने के लिए स्थापित हुए हैं।

अथ द्वितीया—

इहत्वंसूनोसहसोनोअद्यजातोजाताँउभयाँअन्तरग्ने ।
दूतईयसेयुयुजानऋष्वऋजुमुष्कान्वृषणःशुक्रांश्च ॥ २ ॥

इह । त्वम् । सूनो इति । सहसः । नः । अद्य । जातः । जातान् । उभयान् । अन्तः । अग्ने । दूतः । ईयसे । युयुजानः । ऋष्व । ऋजुऽमुष्कान् । वृषणः । शुक्रान् । च ॥ २ ॥

हे सहसः सूनो बलस्य पुत्राग्ने अद्यास्मिन्दिवसे नोऽस्मदीये इह कर्मणि जातः आधानपवमानेष्टिभिः संस्कृतस्त्वं जातानुत्पन्नानुभयान्देवमनुष्यानन्तः तेषां मध्ये दूतः हवींषि देवान्प्रापयितुमीयसे गच्छसि किं कुर्वन् हे ऋष्व दर्शनीयाग्ने ऋजुमुष्कान् मुष्कशब्देन मांसलोऽभिधीयते ऋजवः प्रसाधकाः ऋजवश्च ते मुष्काश्चेति ऋजुमुष्काः तान् वृषणः रेतःसेचनसमर्थान् शुक्रान्दीप्यमानानश्वांश्च युयुजानः स्वरथे योजयन्नीयसे यद्वा ऋष्व महन्नग्ने युयुजानः हविर्वहनेन नियुज्यमानस्त्वं वृषणः हविःसेचनसमर्थान्यजमानान्देवांश्चेयसे ॥ सूनोसहसः परमपि छन्दसीति सहसः पराङ्गवद्भावादुभयोः सर्वानुदात्तत्वम् । ईयसे ईङ् गतौ दिवादिः निघातः । युयुजानः युजेर्वर्तमाने लिटि कानचि चित्स्वरम् । ऋष्व संहितायामृत्यक इति प्रकृतिभावः । ऋजुमुष्कान् समासस्वरः ॥ २ ॥

२. हे बल पुत्र अग्नि, तुम आज हमारे इस कार्य में संस्कृत हुए हो। हे दर्शनीय अग्नि, तुम ऋजु, मांसल, दीप्तिमान् और बलवान् अश्वों को रथ में युक्त करके जन्मविशिष्ट देव और मनुष्यों के मध्य में हव्य पहुँचाने के लिए दूत बनकर जाते हो।

अथ तृतीया—

अत्यावृधस्नूरोहिताघृतस्नूऋतस्यमन्येमनसाजविष्ठा ।
अन्तरीयसेअरुषायुजानोयुष्मांश्चदेवान्विशआचमर्तान् ॥ ३ ॥

अत्या । वृधस्नू इति वृधऽस्नू । रोहिता । घृतस्नू इति घृतऽस्नू । ऋतस्य । मन्ये । मनसा । जविष्ठा । अन्तः । ईयसे । अरुषा । युजानः । युष्मान् । च । देवान् । विशः । आ । च । मर्तान् ॥ ३ ॥

हे अग्ने ऋतस्य सत्यभूतस्य यज्ञस्य संबन्धिनौ मनसा मनसोऽपि जविष्ठौ वेगवत्तमौ वृधस्नू वर्धयतीति वृधं तत्क्षरन्तौ घृतस्नू घृतमुदकं तत्स्रवन्तौ रोहितवर्णौ अत्याश्वौ मन्ये स्तौमि अरुषा आरोचमानौ तावश्वौ युजानो रथे युञ्जानस्त्वं युष्मान्देवेभ्योऽन्तर्भावायमनीयस्तेषां कीर्तने

युष्मान्यष्टव्यान्देवान्विशः परिचारकान्मर्तान्मनुष्यांश्चान्तः षष्ठ्यर्थे द्वितीया तेषांमध्ये आसमन्ताद्दीयसे हविःस्वीकर्तुं यजमानान्गच्छसि तद्धविः प्रदातुं देवानागच्छसि ॥ मन्ये मन्यतिरर्चतिकर्मा । मनसा सुपांसुलुगिति पञ्चम्या आकारः । द्युमानः द्युमिर्योगे द्युविद्युविद्ध्योःकिचेति आनच्प्रत्ययः चित्वादन्तोदात्तः ॥ ३ ॥

३. हे अग्नि, तुम सत्यभूत हो। मैं तुम्हारे रोहितवर्णवाले अश्व-द्वय की स्तुति करता हूँ। वे अश्व मन की अपेक्षा भी अधिक वेगवान् हैं, वे अन्न और जल का क्षरण करते हैं। तुम दीप्तिमान् अश्वद्वय को रथ में युक्त करके देवों और मनुष्यों के मध्य में प्रवेश करो।

अ॒र्य॒मणं॒वरु॑णं॑मि॒त्रमे॑षा॒मिन्द्रा॒विष्णू॑म॒रुतो॑अ॒श्विनो॒त ।
स्व॒श्वो॑अग्ने॒सु॒रथः॑सु॒राधा॒एदु॑वह॒सु॒ह॒विषे॒जना॑य ॥ ४ ॥

अ॒र्य॒मण॑म् । वरु॑णम् । मि॒त्रम् । ए॒षा॒म् । इन्द्रा॒विष्णू॒ इति॑ । म॒रुतः॑ । अ॒श्विना॑ । उ॒त । सु॒ऽअश्वः॑ । अ॒ग्ने॒ । सु॒ऽरथः॑ । सु॒ऽराधाः॑ । आ । इत् । ऊँ॒ इति॑ । व॒ह॒ । सु॒ऽह॒विषे॑ । जना॑य ॥ ४ ॥

हेऽग्ने स्वश्वः शोभनाश्वोपेतः सुरथः शोभनरथः सुराधाः शोभनधनोपेतस्त्वम् एषां मर्त्यानांमध्ये सुहविषे शोभनहविष्काय जनाय यजमानाय अर्यमादीनुतापि च अश्विनौ यष्टव्यान्देवानावहेदु आवहैव ॥ इन्द्राविष्णू ऋज्रेन्द्रेत्यादिना निपातनादिन्द्रशब्द आद्युदात्तः देवताद्वन्द्वे चेत्युभयपदप्रकृतिस्वरत्वम् । सुहविषे इत्यत्र नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् ॥ ४ ॥

४. हे अग्नि, तुम्हारा अश्व उत्तम है, रथ उत्तम है और धन भी उत्तम है। इन मनुष्यों के मध्य में शोभन हविवाले यजमान के लिए अर्यमा, वरुण, मित्र, इन्द्राविष्णु, मरुद्गण और अश्विद्वय का आगमन करो।

गोमाँ॑अ॒ग्नेऽवि॑माँ॑अ॒श्वी य॒ज्ञो नृ॒वत्स॑खा॒ सद॒मिद॑प्रमृ॒ष्यः ।
इळा॑वाँ॒ए॒षो अ॑सुर प्र॒जावा॑न्दी॒र्घो र॒यिः पृ॑थुबु॒ध्नः स॒भावा॑न् ॥५॥१६॥

गोऽमा॑न् । अ॒ग्ने॒ । अवि॑ऽमान् । अ॒श्वी । य॒ज्ञः । नृ॒वत्ऽस॑खा । सद॑म् । इत् । अ॒प्र॒ऽमृ॒ष्यः । इळा॑ऽवान् । ए॒षः । अ॒सु॒र॒ । प्र॒जाऽवा॑न् । दी॒र्घः । र॒यिः । पृ॒थु॒ऽबु॒ध्नः । स॒भाऽवा॑न् ॥ ५ ॥ १६ ॥

हेऽसुर बलवन् हेऽग्ने एषः मदीयोऽयं यज्ञः गोमान्गोभिस्तद्वान् अविमान् अवयः मेषास्तस्य सन्तीति तद्वान् अश्वी अश्वोपेतश्चास्तु नृवत्सखा नरः कर्मणां नेतारोऽध्वर्य्वादयस्तद्वन्तः सखायोऽनुष्ठातारो यजमानाय यस्य स तथोक्तः सदमित् सदैव अप्रमृष्यः अप्रधृष्यश्चास्तु तथा इळावान् इळा हविर्लक्षणमन्नं तद्वान् प्रजावान् पुत्रपौत्रादियुक्तश्चास्तु दीर्घः अविच्छिन्नानुष्ठानो-

पेतः रयिर्धनवान् ऋतमत्वर्वीयः पृथुबुध्नः पृथूनि बहून्यनिबुध्नानि धनादीनि कारणानि यस्य सतपोक्तः समावान् उपद्रष्टृरूपसभायुक्तश्चास्तु ॥ नृवत्सखा नरो येषां सन्तीति नृवत् मतुप् तस्य छान्दसं वत्वं ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वं बहुव्रीहौ पूर्वपदस्वरः ॥ ५ ॥

५. हे बलवान् अग्नि, हमारा यह यज्ञ गोविशिष्ट, मेषविशिष्ट और अश्वविशिष्ट हो। जो यज्ञ अध्वर्यु और यजमानविशिष्ट है, वह यज्ञ सर्वदा अप्रधृष्य, हविरन्न से युक्त तथा पुत्र-पौत्रवान् हो एवम् अविच्छिन्न अनुष्ठान से संयुक्त, धनसम्पन्न, बहुत धनों का हेतुभूत और उपदेष्टाओं से युक्त हो।

**यस्त॑ इ॒ध्मं ज॒भर॑त्सिष्विदा॒नो मू॒र्धानं॑ वा त॒तप॑ते त्वा॒या ।**

**भुव॒स्तस्य॑ स्वत॑वाँः पा॒युर॑ग्ने॒ विश्व॑स्मात्सीमघा॒यत॑ उरुष्य ॥ ६ ॥**

यः । ते॒ । इ॒ध्मम् । ज॒भर॑त् । सि॒ष्वि॒दा॒नः । मू॒र्धान॑म् । वा॒ । त॒तप॑ते । त्वा॒ऽया । भुव॑ः । तस्य॑ । स्वत॑वान् । पा॒युः । अ॒ग्ने॒ । विश्व॑स्मात् । सी॒म् । अ॒घ॒ऽय॒तः । उ॒रु॒ष्य॒ ॥ ६ ॥

हे अग्ने ते त्वदर्थं यः पुमान् सिष्विदानः स्विद्यद्गात्रः सन् इध्मं त्वत्समिन्धनार्थं काष्ठभारं जभरत् आहरति यो वा त्वाया त्वत्कामनया मूर्धानं स्वमस्तकं ततपते काष्ठभारेण तापयति तस्य तादृशस्य पुंसः स्वतवान् स्वतवा धनवानिति तत्रकारे उक्तं धनवान् भुवः भवसि पायुः पालयितासि सीम् एनं विश्वस्मात् अघायत् अघायतः आत्मनः पापमिच्छतः पुरुषादुरुष्य रक्ष ॥ जभरत् हरतेर्लेट्यडागमः छन्दस्युभयथेति च्लेः तस्यामितिचक्र्पूर्वस्योदात्तत्वम् । सिष्विदानः ञिष्विदा गात्रप्रक्षरणे कानचिरूपं संहितायामादेशप्रत्यययोरिति धातुसकारस्य षत्वम् । त्वाया त्वामात्मन इच्छतीत्यर्थे क्यच् प्रत्ययोत्तरपदयोश्चेति मपर्यन्तस्य त्वादेशः इकारस्य छान्दसमात्वं क्यजन्ताद्धातोर्भावे अप्रत्ययादित्यकारप्रत्ययः सुपांसुलुगिति तृतीयाया आकारः एकादेशस्वरः । भुवः भवतेर्लेट्यडागमे रूपं भूसुवोस्तिङीति गुणप्रतिषेधः आगमस्यानुदात्तत्वे धातुस्वरः । स्वतवाँः पायुरित्यत्र संहितायां स्वतवान्पायाविति नकारस्य रुत्वम् अत्रानुनासिकः पूर्वस्य तु वेति आकारोनुनासिकः ऐकस्य विसर्जनीयः कुप्वोः ᳲक ᳲ पौ चेति ᳲपादेशः । अघायतः अघमात्मन इच्छतीत्यर्थे सुप आत्मनः क्यच् । अश्वाघस्यादित्यात्वं तदन्ताच्छतृप्रत्ययः शतुरनुमः इति विभक्तेरुदात्तत्वम् । उरुष्य उरुष्यतिः कण्ड्वादिः लोटि रूपं निपातः ॥ ६ ॥

६. हे अग्नि, जो मनुष्य तुम्हारे लिए स्वेद (पसीने से) युक्त होकर लकड़ियों को ढोता है, जो तुम्हें प्राप्त करने की कामना से अपने मस्तक को काष्ठभार से उत्तप्त करता है, उसे तुम धनवान् बनाते हो और उसका पालन करते हो। जो कोई उसकी अनिष्ट-कामना करता है, उससे तुम उसकी रक्षा करो।

सप्तमी—

**यस्ते॒ भरा॒दन्नि॑यते चि॒दन्नं॑ नि॒शिष॑न्म॒न्द्रमति॑थिमु॒दीर॑त् ।**
**आ दे॑व॒युरि॒नध॑ते दुरो॒णे तस्मि॑न्र॒यिर्ध्रु॒वो अ॑स्तु॒ दास्वा॑न् ॥ ७ ॥**

यः । ते॒ । भरा॑त् । अन्नि॑ऽयते । चि॒त् । अन्न॑म् । नि॒ऽशिष॑त् ।
म॒न्द्रम् । अति॑थिम् । उ॒त्ऽईर॑त् । आ । दे॒व॒ऽयुः । इ॒नध॑ते ।
दु॒रो॒णे । तस्मि॑न् । र॒यिः । ध्रु॒वः । अ॒स्तु॒ । दास्वा॑न् ॥ ७ ॥

हे अग्ने यः पुमान् अन्नियते अन्नमिच्छते ते तुभ्यं हविर्लक्षणं पुरोडाशादिकमन्नं भरात् आ-हरेत् बिभृयात् चिदिति चार्थे यश्च मन्द्रं मदकरं सोमं निशिषत् नितरां प्रयच्छति यश्चातिथिमतिथि-वत्पूज्यं त्वामुदीरत् उत्तरवेद्यां प्रणयति आ मामपि यश्च देवयुः देवत्वं कामयमानः दुरोणे स्वकी-यगृहे इनधते त्वां समिद्भिः समिन्धते तस्मिन्नेतस्मिन्पुरुषे रयिः पुत्रः ध्रुवः आस्तिक्यबुद्ध्या वैदिके मार्गे निश्चलोऽस्तु तथा दास्वान् औदार्योपेतश्चास्तु ॥ भरात् डुभृञ् धारणपोषणयोरित्यस्य ले-ट्याडागमे रूपं यद्वृत्तयोगादनिघातः । अन्नियते अन्नमात्मन इच्छन् क्यच् क्यचि चेतीत्वं ह्रस्वश्छान्दसः । निशिषत् शासु अनुशिष्टौ लुङि सर्तिशास्त्यर्तिभ्यश्चेति च्लेरङादेशः शास इ-दङ्हलोरितीत्वम् । उदीरत् ईर गतौ लेटि व्यत्ययेन परस्मैपदम् अडागमः आगमस्यानुदात्तत्वेधा-तुस्वरः तिङ्ङि चोदात्तवतीति गतेर्निघातः । इनधते ञिइन्धी दीप्तौ लटि व्यत्ययेन शप् रुधादित्वात् श्नम् श्नान्नलोप इति धातुनकारस्य लोपः ङित्परत्वाभावात् श्नसोरल्लोपाभावः यद्वृत्तयोगादनिघातः श्नमः स्वरः । दास्वान् दासृ दाने संपदादिलक्षणो भावे क्विप् तदस्यास्तीति मतुप् मादुपधाया इति वत्वं प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः ॥ ७ ॥

७. हे अग्नि, अन्न की इच्छा करने पर जो कोई तुम्हें देने के लिए हविरन्न धारण करता है, जो तुम्हें हर्षकर सोम प्रदान करता है, जो अतिथि-रूप से तुम्हारा उत्तर वेदि पर प्रणयन करता है और जो व्यक्ति देवत्व की इच्छा करके तुम्हें गृह में समिद्ध करता है, उसका पुत्र धर्मपथ में निश्चल और औदार्यविशिष्ट हो।

**यस्त्वा॑ दो॒षा य उ॒षसि॑ प्र॒शंसा॑त्प्रि॒यं वा॑ त्वा कृ॒णव॑ते ह॒विष्मा॑न् ।**
**अश्वो॒ न स्वे दम॒ आ हे॒म्यावा॒न्तमंह॑सः पीपरो दा॒श्वांस॑म् ॥ ८ ॥**

यः । त्वा॒ । दो॒षा । यः । उ॒षसि॑ । प्र॒ऽशंसा॑त् । प्रि॒यम् । वा॒ ।
त्वा॒ । कृ॒णव॑ते । ह॒विष्मा॑न् । अश्वः॑ । न । स्वे । दमे॑ । आ ।
हे॒म्याऽवा॑न् । तम् । अंह॑सः । पी॒प॒रः॒ । दा॒श्वांस॑म् ॥ ८ ॥

हे अग्ने यः पुमान् दोषा दोषायां रात्रौ त्वा त्वां प्रशंसात् संस्तुयात् यश्चोषसि प्रातःकाले त्वां प्रशंसेत् हविष्मान्संभृतहविष्को यो वा यजमानः त्वा त्वां प्रियं हविर्भिः प्रीतं कृणवते कुर्यात् आ अथ दाश्वांसं हविर्दत्तवन्तं तादृशं यजमानं स्वे दमे स्वकीये गृहे हेम्यावान् सुवर्णनिर्मितकक्ष्यावानश्वोन अश्व इव संचरंस्त्वम् अंहसः पापरूपाद्दारिद्र्यात् पीपरः पारं नय तस्मै यजमानाय धनं प्रयच्छेत्यर्थः ॥ दोषा सप्तम्या आकारः । प्रशंसात् शंसु स्तुतौ लेट्याडागमे रूपम् । कृणवते कृवि हिंसाकरणयोरित्यस्य लेटि धिन्विकृण्व्योरच्चेत्युप्रत्ययः लेटोऽडाटावित्यडागमः यद्वृत्तयोगादनिघातः प्रत्ययस्वरः । हेम्यावान् हेमार्हति छन्दसि चेति यप्रत्ययः । पीपरः पृ पालनपूरणयोरित्यस्य ण्यन्तस्य लुङि चङि रूपं निपातः ॥ ८ ॥

८. हे अग्नि, जो मनुष्य रात्रिकाल में और जो व्यक्ति उषाकाल में तुम्हारी स्तुति करता है एवम् जो यजमान प्रिय हव्य से युक्त होकर तुम्हें प्रसन्न करता है, तुम अपने गृह में सुवर्ण-निर्मित सज्जा (काठी) विशिष्ट अश्व की तरह विचरण करते हुए उस यजमान को दरिद्रता से रक्षा करो।

**यस्तुभ्यमग्ने अमृताय दाशद्दुवस्त्वे कृणवते यतस्रुक् ।**

**न स राया शशमानो वि योषन्नैनमंहः परि वरदघायोः ॥ ९ ॥**

यः । तुभ्यम् । अग्ने । अमृताय । दाशत् । दुवः । त्वे इति । कृणवते । यतऽस्रुक् । न । सः । राया । शशमानः । वि । योषत् । न । एनम् । अंहः । परि । वरत् । अघऽयोः ॥ ९ ॥

हे अग्ने यो यजमानः अमृताय मरणधर्मरहिताय तुभ्यं दाशात् हवींषि प्रयच्छेत् यतस्रुक् संयतस्रुक् यजमानः त्वे त्वयि दुवः परिचर्यां कृणवते करोति शशमानः स्तोत्रं कुर्वाणः स यजमानो राया धनेन न वियोषत् न पृथग्भवेत् सदा धनसंयुक्तो भवेदित्यर्थः अघायोः पापमिच्छतो हिंसकस्य संबन्धि अंहः आहननं पापमेनं यजमानं न परिवरत् न परिवृणुयात् न स्पृशेदित्यर्थः ॥ दाशात् दाशृ दाने लेट्यडागमे रूपम् । त्वे सुपां सुलुगिति सप्तम्याः शे आदेशः । कृणवते यद्वृत्तयोगादनिघातः । योषत् यु मिश्रणे लेटि सिब्बहुलमिति सिप् अडागमः निपातः । वरत् वृञ् वरणे लेटि रूपम् ॥ ९ ॥

९. अग्नि, तुम अमर हो। जो यजमान तुम्हारे लिए हव्य प्रदान करता है, जो तुम्हारे लिए स्रुक् को संयत करता है, जो तुम्हारी परिचर्या करता है, वह स्तोत्र करनेवाला यजमान धन-शून्य न हो, हिंसकों का आहनन उसका स्पर्श न करे।

**यस्य त्वमग्ने अध्वरं जुजोषो देवो मर्तस्य सुधितं रराणः ।**

**प्रीतेदसद्धोत्रा सा यविष्ठासाम यस्य विधतो वृधासः ॥ १० ॥ १७ ॥**

यस्य॑ । त्वम् । अ॒ग्ने॒ । अ॒ध्व॒रम् । जुजो॑षः । दे॒वः । मर्त॑स्य । सुऽधि॑तम् । ररा॑णः । प्री॒ता । इ॒त् । अ॒स॒त् । होत्रा॑ । सा । य॒वि॒ष्ठ॒ । असा॑म । यस्य॑ । वि॒धतः॑ । वृ॒धासः॑ ॥ १० ॥

हेऽग्ने ररणः रममाणः देवोदीप्यमानस्त्वं यस्यमर्तस्य मनुष्यस्यसंबन्धिसुधितंत्वदर्थंसुष्ठु निहितम् अध्वरमनुपहतंहविर्लक्षणमन्नंजुजोषः सेवसे हेयविष्ठ युवतम सा होत्रा सःहोतायजमानः प्रीतेदसत्प्रीतएवभवेत् असामतस्ययजमानस्यसंबन्धिनोभवेम यस्यविधतः अग्निपरिचर्यांकुर्वतोयजमानस्यहोत्रावयो वृधासः यज्ञस्यवर्धयितारोभवन्ति ॥ जुजोषः जुषीप्रीतिसेवनयोरित्यस्यलेटि बहुलंछन्दसीतिश्लुः अडागमः अभ्यस्तस्वरः । सुधितं दधातेर्निष्ठायां सुधितवसुधितेतिनिपातनाद्ध्यादेशः गतिरनन्तरइतिगतेःस्वरः । असाम अस्तेर्लोटि आडुत्तमस्यपिच्चेत्याडागमः उत्तमस्यपिच्चात्अनुदात्तत्वेधातुस्वरः । विधतः विधविधाने तुदादिः शतुरनुमइतिविभक्तेरुदात्तत्वम् ॥ १० ॥

१०. हे अग्नि, तुम आनन्दयुक्त और दीप्तिमान् हो। तुम जिस मनुष्य का सुसम्पादित और हिंसा-रहित अन्न भक्षण करते हो, हे युवतम, वह होता निश्चय ही प्रीत होता है। अग्नि के परिचर्याकारी जो यजमान यज्ञ के वर्द्धयिता हैं, हम उन्हीं के होंगे।

॥ इतितृतीयस्यचतुर्थेसप्तदशोवर्गः ॥ १७ ॥

अथैकादशी—

चि॒त्तिम॒चित्तिं॑चिनव॒द्वि वि॒द्वान्पृ॒ष्ठेव॑वी॒ता वृ॑जि॒ना च॒ मर्ता॑न् । रा॒ये च॑ नः स्वप॒त्याय॑ देव॒ दितिं॑ च॒ रास्वादि॑तिमुरुष्य ॥ ११ ॥

चित्ति॑म् । अचि॑त्तिम् । चि॒न॒व॒त् । वि । वि॒द्वान् । पृ॒ष्ठाऽइ॑व । वी॒ता । वृ॒जि॒ना । च॒ । मर्ता॑न् । रा॒ये । च॒ । नः॒ । सु॒ऽअ॒प॒त्याय॑ । दे॒व॒ । दिति॑म् । च॒ । रास्व॑ । अदि॑तिम् । उ॒रु॒ष्य॒ ॥ ११ ॥

विद्वान्प्राणिनांपुण्यपापरूपाणिकर्माणिजानानः सोऽग्निः चित्तिं ज्ञातव्यं पुण्यम् अचित्तिम् अनुपादेयत्वेनाचेतनीयंपापं यद्वा चित्तिंज्ञानम् अचित्तिम् अज्ञानं चिनवत् विचिनोतु पृथक्करोतु तत्रदृष्टान्तः—पृष्ठेव यथाश्वपालोऽश्वानांवीता कान्तानिवृजिनादुर्वहाणिच पृष्ठा पृष्ठानि हेयोपादेयत्वेनपृथक्करोतितद्वत् किंच मर्तान्पुण्यकृतोऽपुण्यकृतश्चमनुष्यान्पृथक्करोतु हेदेवअग्ने स्वपत्याय शोभनपुत्रोपेताय रायेधनाय नोऽस्मान्कुरु दितिं दातारंचरास्वदेहि अदितिं पञ्चम्यर्थेद्वितीया अदातुःसकाशादुरुष्य रक्ष ॥ चित्तिं चितीसंज्ञाने स्त्रियांक्तिन् नित्त्वादाद्युदा-

च: । चिनवत् चिनोतेर्लेट्यडागमः । दिति दाणदाने कर्मणि क्तिन् । रास्व रादाने लोटि व्यत्ययेनात्मनेपदं चवायोगेप्रथमेतिननिघातः ॥ ११ ॥

११. अश्वपालक जिस तरह से अश्वों के कान्त एवम् दुबँह पृष्ठों को पृथक् कर सकते हैं, उसी तरह विद्वान् अग्नि पाप और पुण्य को पृथक् करें। हे अग्निदेव, हम लोगों को सुन्दर पुत्र से युक्त धन दो। तुम दाता को धन दो और अदाता के समीप से उसकी रक्षा करो।

**कविंशशासुःकवयोऽदब्धानिधारयन्तोदुर्यास्वायोः ।**
**अतस्त्वंदृश्याँअग्नएतान्पड्भिःपश्येरद्भुताँअर्यएवैः ॥ १२ ॥**

कविम् । शशासुः । कवयः । अदब्धाः । निऽधारयन्तः । दुर्यासु । आयोः । अतः । त्वम् । दृश्यान् । अग्ने । एतान् । पट्ऽभिः । पश्येः । अद्भुतान् । अर्यः । एवैः ॥ १२ ॥

हेअग्ने आयोर्मनुष्यस्यदुर्यासु गृहेषु अदब्धाः केनाप्यतिरस्कृतानिधारयन्तः निवसन्तः कवयः क्रान्तदर्शिनोदेवाः कविंमेधाविनं त्वांशशासुः होतास्त्वेतिशशंसुः अतःकारणात् अर्यः धनस्यस्वामी त्वं दृश्यान्दर्शनीयानद्भुतानाश्चर्यरूपोपेतानिन्द्रादीनेतान्देवानेवैर्गमनशीलैःपड्भिः पादैःस्वतेजोभिःपश्येः जानीयाः ॥ दृश्यान् दृशिर्प्रेक्षणे ऋदुपधाच्चाकॢपिचृतेरितिकर्मणिक्यप् कित्वाद्गुणः पित्वादनुदात्तत्वेधातुस्वरः ॥ १२ ॥

१२. हे अग्नि, मनुष्यों के गृहों में निवास करनेवाले अतिरस्कृत देवों ने तुम मेधावी को होता होने के लिए कहा है। हे अग्नि, तुम मेधावी हो, धनस्वामी हो; अतएव तुम अपने चञ्चल तेज से दर्शनीय और अद्भुत देवों को देखो।

**त्वमग्नेवाघतेसुप्रणीतिःसुतसोमायविधतेयविष्ठ ।**
**रत्नंभरशशमानायघृष्वेपृथुश्चन्द्रमवसेचर्षणिप्राः ॥ १३ ॥**

त्वम् । अग्ने । वाघते । सुऽप्रनीतिः । सुतऽसोमाय । विधते । यविष्ठ । रत्नम् । भर । शशमानाय । घृष्वे । पृथु । चन्द्रम् । अवसे । चर्षणिऽप्राः ॥ १३ ॥

हेयविष्ठ युवतम घृष्वे दीप्तियुक्त यद्वा परेषांघर्षणशील हेअग्ने चर्षणिप्राः अपेक्षितफलप्रदानेनमनुष्याणांकामपूरकः सुप्रणीतिः सुष्ठुसर्वेषांप्रणयनीयस्त्वं सुतसोमायविधतेतवपरिचरणंकुर्वतेशशमानायत्वांस्तुवतेवाघतेयज्ञनिर्वाहकाययजमानाय पृथु प्रभूतं चन्द्रमाह्लादकारिरत्नमुत्तमंधनम् अवसे रक्षणायभर आहर प्रयच्छेत्यर्थः ॥ सुप्रणीतिः णीञ्प्रापणे

कर्मणि किन्, तादौ च निति कृत्यतौ इति गतेरनन्तरः प्रशब्दस्योदात्तत्वम् । पुरुश्चन्द्रमित्यत्र संहितायां ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे इति सुडागमः श्चुत्वेन शकारः ॥ १३ ॥

१३. हे दीप्तिमान् युवतम अग्नि, तुम मनुष्यों की अभिलाषा के पूरक एवम् उत्तर वेदि पर प्रणयन के योग्य हो। जो यजमान तुम्हारे लिए सोमाभिषव करता है, तुम्हारी परिचर्या करता है और तुम्हारा स्तवन करता है, उसकी रक्षा के लिए तुम उसे प्रभूत, आह्लादकर तथा उत्तम धन दो।

**अधा ह यद्वयमग्ने त्वाया पड्भिर्हस्तेभिश्चकृमा तनूभिः ।**
**रथं न क्रन्तो अपसा भुरिजोर्ऋतं येमुः सुध्य आशुषाणाः ॥ १४ ॥**

अध । ह । यत् । वयम् । अग्ने । त्वाऽया । पद्ऽभिः । हस्तेभिः । चकृम । तनूभिः । रथम् । न । क्रन्तः । अपसा । भुरिजोः । ऋतम् । येमुः । सुऽध्यः । आशुषाणाः ॥ १४ ॥

हे अग्ने अध ह अथ खलु वयं त्वाया त्वत्कामनया पद्भिः पादैः हस्तेभिः हस्तैस्तनूभिरन्यैश्चावयवैश्चकृम यत् यस्मात्कारणात् कर्मसिद्ध्यर्थं त्वामुपपादयामः तस्मात् सुध्यः सुकर्माण आशुषाणाः कर्माणि व्याप्नुवन्तः तेऽङ्गिरसः ऋतं सत्यभूतं त्वां भुरिजोः बिभ्रतः कर्मकरणसामर्थ्यं धारयन्तीति भुरिजौ बाहू तयोः अपसा मन्थनरूपेण कर्मणा येमुः उदयच्छन्ति तत्र दृष्टान्तः— रथं न यथा क्रन्तः कारवः शिल्पिनः काष्ठस्योपकारात्मा हस्तयोर्व्यापारेण रथमुद्यच्छन्ति तद्वत् यद्वा भुरिजोः देवान्मनुष्यांश्च बिभृत इति भुरिजौ द्यावापृथिव्यौ तयोर्मध्ये अपसा परिचरणकर्मणा सत्यभूतमग्निं येमुरुद्यच्छन्ति ॥ अध संहितायां निपातस्य चेति दीर्घः । क्रन्तः करोतेः शतरि बहुलं छन्दसीति विकरणस्य लुक् प्रत्ययस्वरः । भुरिजोः डुभृञ् धारणपोषणयोः भृञ ऊच्चेति किक्प्रत्ययः धातोर्भकारस्योकारः प्रत्ययस्वरः ॥ १४ ॥

१४. हे अग्नि, जिस लिए हम लोग तुम्हारी कामना से हाथ, पैर और शरीर द्वारा कार्य करते हैं, उसी लिए यज्ञरत और शोभनकर्मा अङ्गिरा आदि ने बाहु-द्वारा काष्ठ मन्थन करके तुम सत्यभूत को उत्पन्न किया है, जैसे शिल्पिगण रथ निर्माण करते हैं।

**अधा मातुरुषसः सप्त विप्रा जायेमहि प्रथमा वेधसो नॄन् ।**
**दिवस्पुत्रा अङ्गिरसो भवेमाद्रिं रुजेम धनिनं शुचन्तः ॥ १५ ॥**

अध । मातुः । उषसः । सप्त । विप्राः । जायेमहि । प्रथमाः । वेधसः । नॄन् । दिवः । पुत्राः । अङ्गिरसः । भवेम । अद्रिम् । रुजेम । धनिनम् । शुचन्तः ॥ १५ ॥

वामदेवोऽन्यैःषड्भिरङ्गिरोभिःसहनूते अधापि च मातुरुषसःसकाशात्सप्त सप्तसंख्याकावि-
प्राःप्राज्ञावयंस्मः प्रथमाःश्रेष्ठावयंवेधसोऽग्नेःपरिचारकान्नॄन्नेतॄन्रश्मीन्जायेमहि ज-
नयामः दिवोद्योतमानस्यादित्यस्यपुत्रावयम् अङ्गिरसोभवेम भूतिमन्तःस्याम शुचन्तोदी-
प्यमानावयंधनिनमुदकवन्तमद्रिंमेघंरुजेम वर्षार्थंभिनद्याम यद्वा धनिनंपणिनामकासुरापहृत-
गोधनयुक्तमद्रिंपर्वतंरुजेम अङ्गिरसामादित्यपुत्रत्वमेवमाम्नायते—तस्ययद्रेतसःप्रथममुददीप्य-
ततदसावादित्योऽभवदित्युपक्रम्ययेऽङ्गाराआसंस्तेऽङ्गिरसोऽभवन्निति ॥ जायेमहि जनीप्रादुर्भावे
लिङि ज्ञाजनोर्जेतिजादेशः । वेधसः डुधाञ्धारणपोषणयोरित्यस्माद्विधाञोवेधचेत्यसिप्रत्य-
यः धातोर्वेधइत्यादेशः । दिवस्पुत्राइत्यत्र संहितायांषष्ठ्याःपतिपुत्रेतिविसर्जनीयस्यसत्वम् ।
रुजेम रुजोभङ्गे तुदादिः लिङ्रूपम् ॥ १५ ॥

१५. हम सात व्यक्ति (वामदेव और छः अङ्गिरा) प्रथम मेधावी हैं। हम लोगों ने माता उषा के समीप से अग्नि के परिचारकों या रश्मियों को उत्पन्न किया है। हम द्योतमान आदित्य के पुत्र अङ्गिरा हैं। हम दीप्तिमान् होकर उदक-विशिष्ट पर्वत का या मेघ का भेदन करेंगे।

**अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशुषाणाः ।**
**शुचीदयन्दीधितिमुक्थशासः क्षामा भिन्दन्तो अरुणीरप व्रन् ॥१६॥**

अधं । यथा । नः । पितरः । परासः । प्रत्नासः । अग्ने । ऋतम् ।
आशुषाणाः । शुचि । इत् । अयन् । दीधितिम् । उक्थऽशसः ।
क्षाम । भिन्दन्तः । अरुणीः । अप । व्रन् ॥ १६ ॥

हेऽग्ने अधापि च परासःश्रेष्ठाः प्रत्नासःपुराणाः ऋतंसत्यभूतं यज्ञं यथायथावदाशु-
षाणाः अश्नुवानानोऽस्माकंपितरोऽङ्गिरसः शुचिद्दीप्तंस्थानमयन् अगच्छन् तथा दीधितिं ते-
जश्चागच्छन् किंच उक्थशासः उक्थानांशस्त्राणांशंसितारः क्षाम क्षयकारणंतमःपापंवा
भिन्दन्तोविनाशयन्तोऽङ्गिरसः अरुणीः अरुणवर्णाःपणिभिरपहृतागाः उषसोवा अप
व्रन् अपावृण्वन्प्रकाशितवन्तइत्यर्थः ॥ अयन् इण्गतौ लङि इणोयणितियण् व्यत्ययेन
अडागमः । दीधिति दीधीङ्दीप्तिदेवनयोरित्यस्मात्क्तिनिछन्दस्युभयथेत्यार्धधातुकत्वात्...नित्त्वादाद्युदात्तः । उ-
क्थशासः उक्थशब्देउपपदे शंसुस्तुतावित्यस्मादन्येभ्योऽपिदृश्यतइतिविच्
नकारलोपश्छान्दसः । अरुणीः गौरादिङीषन्तः प्रत्ययस्वरः ।
व्रन् वृणोतेर्लुङि मन्त्रेघसेत्यादिनाच्लेर्लुक् निपातः ॥ ११ ॥

१६. हे अग्नि, हम लोगों के श्रेष्ठ, पुरातन और सत्यभूत यज्ञ में रत पितृपुरुषों ने दीप्तस्थान तथा तेज प्राप्त किया था। उन्होंने उक्थों का उच्चारण करके अन्धकार को विनष्ट किया था तथा पणियों-द्वारा अपहृत अरुणवर्णा गौओं को या उषा को प्रकाशित किया था।

आग्रयणे आग्नेन्द्रस्यहविषःसुकर्माणइतियाज्या सूत्रितच–सुकर्माणःसुरुचोदेवयन्तो विश्वेदेवासआगतेति ।

सैषासप्तदशी–

सुकर्माणःसुरुचोदेवयन्तोयोनदेवाजनिमाधमन्तः ।
शुचन्तोअग्निंववृधन्तइन्द्रमूर्वंगव्यंपरिषदन्तोअग्मन् ॥ १७ ॥

सुऽकर्माणः । सुऽरुचः । देवऽयन्तः । अयः । न । देवाः । जनिम । धमन्तः । शुचन्तः । अग्निम् । ववृधन्तः । इन्द्रम् । ऊर्वम् । गव्यम् । परिऽसदन्तः । अग्मन् ॥ १७ ॥

सुकर्माणः सुष्ठु अनुष्ठितयागादिकर्माणः सुरुचः शोभनदीप्तयः देवयन्तोदेवान्कामयमानाः देवाः देवनशीलाः स्तोतारः जनिम स्वकीयंमानुषंजन्म धमन्तः यागादिलक्षणेनकर्मणा निर्मलीकुर्वन्तः तत्रदृष्टान्तः–अयोन यथाकर्माराः अयोभस्त्रेणधमन्तितद्वत् तादृशाअग्निंशुचन्तोहविर्भिर्दीपयन्तइन्द्रंचवृधन्तः स्तोमैःस्तुत्यावर्धयन्तः अङ्गिरसः परिषदन्तः परितःसीदन्तः सन्तः ऊर्वं महान्तं गव्यं गोसमूहम् अग्मन् प्राप्नुवन् ॥ सुकर्माणः सोर्मनसीइत्युत्तरपदाद्युदात्तत्वम् । धमन्तः ध्माशब्दाग्निसंयोगयोः शतरिपाघ्राध्मादिनाधमेत्यादेशः शपःपित्वादनुदात्तत्वे शतुर्लसार्वधातुकस्वरः । ववृधन्तः वृधुवर्धने व्यत्ययेनपरस्मैपदं शतरिशपःश्लुः । गव्यं गवांसमूह इत्यर्थे खलगोरथादितियः । अग्मन् गमेर्लुङि च्लेर्लुकिरूपम् ॥ १७ ॥

१७. सुन्दर यज्ञादि कार्य में रत दीप्तियुक्त तथा देवाभिलाषी स्तोता धौंकनी-द्वारा निर्मल लोहे की तरह अपने मनुष्य जन्म को यागादि कार्य-द्वारा निर्मल करते हैं। वे अग्नि को दीप्त तथा इन्द्र को प्रवृद्ध करते हैं। चारों ओर उपवेशन करके उन्होंने महान् गो-समूह को प्राप्त किया था।

अथाष्टादशी–

आयूथेवक्षुमतिपश्वोअख्यद्देवानांयज्जनिमान्त्युग्र ।
मर्तानांचिदुर्वशीरकृप्रन्वृधेचिदर्यउपरस्यायोः ॥ १८ ॥

आ । यूथाऽइव । क्षुऽमति । पश्वः । अख्यत् । देवानाम् । यत् । जनिम । अन्ति । उग्र । मर्तानाम् । चित् । उर्वशीः । अकृप्रन् । वृधे । चित् । अर्यः । उपरस्य । आयोः ॥ १८ ॥

उत हे तेजस्विन् हे अग्ने देवानामङ्गिरसामस्माकं पूर्वजनिम गोसंघमन्ति पर्वतस्य समीपे आख्यत् आसमन्ताद् इन्द्रोपश्यत् तत्र दृष्टान्तः—यूथेव यथापश्वः पशूनां गवां यूथानि क्षुमति अन्नवत्यास्पदगृहे वर्तमानानि पश्यति तद्वत् यद्वा हे अग्ने तव परिचारकोऽङ्गिरोगणः देवानामिन्द्रादीनां यज्जनिम योयं जनः अन्तिमदन्तिके पश्वः पाणिभिरपहृतान्पशूनाख्यत् समन्तात्पश्यति तत्र दृष्टान्तः—यथा क्षुमति शब्दं कुर्वाणे गवां यूथानि यूथे पशवः पशून्पश्यन्ति तद्वत् मर्तानांचित् मनुष्याणामुर्वशीः उरुभ्याम् अश्नुवानाः उरुभ्यामश्नुता इति यास्कः । प्रजाः अकृप्रन् ताभिरानीताभिर्गोभिः कृपाः समर्था अभवन् किंचिदपि च अर्यः स्वामी अस्य गोधनउपरस्य उपरस्य निषिक्तस्यापत्यस्य वृधे वर्धनाय समर्थो भवति तथा आयोर्मनुष्यस्य भृत्यादेश्च पोषणे समर्थो भवति ॥ यूथेव शसः सहस्याकारादेशः । क्षुमति क्षुदित्यन्ननाम यद्वा क्षुशब्दे भावे क्विप् छान्दसस्तकारलोपः शब्दस्यास्तीति मतुप् ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वम् । अख्यत् ख्याप्रकथने लुङि अस्यतिवक्तिख्यातिभ्योऽङित्यङादेशः आतोलोपः । जनिम जनी प्रादुर्भावे इजनिभ्यामिमनजिति इमन्निन्प्रत्ययः नित्त्वादाद्युदात्तः । अकृप्रन् कृपू सामर्थ्ये बहुलं छन्दसीति विकरणस्य लुक् रुडागमः ॥ १८ ॥

१८. हे तेजस्वी अग्नि, जिस तरह अन्न-विशिष्ट गृह में पशु-समूह रहता है, वैसे ही अङ्गिरा आदि देवों के गो-समूह के निकट हैं। उनके द्वारा लाई गई गौओं से प्रजा समर्थ हुई थी। आर्य-अपत्य वर्द्धन-समर्थ और मनुष्य पोषण-समर्थ हुए थे।

**अकर्म ते स्वपसो अभूम ऋतमवस्रन्नुषसो विभातीः ।**
**अनूनमग्निं पुरुधा सुश्चन्द्रं देवस्य मर्मृजतश्चारु चक्षुः ॥ १९ ॥**

**अकर्म । ते । सुऽअपसः । अभूम । ऋतम् । अवस्रन् । उषसः । विऽभातीः । अनूनम् । अग्निम् । पुरुध । सुऽचन्द्रम् । देवस्य । मर्मृजतः । चारु । चक्षुः ॥ १९ ॥**

हे अग्ने ते तव परिचरणमकर्म अकुर्म तेन कर्मणा स्वपसः शोभनकर्माणो अभूम विभातीः व्युच्छन्त्य उषसः ऋतं तेजो वसन् आच्छादयन्ति धारयन्तीत्यर्थः । तथा तादृशाः अनूनं संपूर्णं पुरुधा बहुधा सुश्चन्द्रं सुष्ठु आह्लादकारिणं यद्वा सुहिरण्यमग्निं धारयन्ति किंच देवस्य द्योतमानस्य तव चारु मनोहरं चक्षुः तेजो मर्मृजतः परिचरन्तो वयं स्वपसो ऽभूमेति पूर्वेणान्वयः ॥ अकर्म करोतेर्लुङि बहुलं छन्दसीति विकरणस्य लुक् । मर्मृजतः मृजूष् शुद्धौ यङ्लुकि अभिको यङ्लुकीत्यभ्यासस्य रुगागमः शतरि नाभ्यस्ताच्छतुरिति नुमभावः अभ्यस्तस्वरः ॥ १९ ॥

१९. हे अग्नि, हम तुम्हारी परिचर्या करते हैं, जिससे हम शोभन कर्मवाले होते हैं। तमोनिवारिका उषा सकल तेज धारण करती है। वह पूर्ण रूप से आह्लादकर अग्नि को बहुधा धारण करती है। तुम द्योतमान हो। हम तुम्हारे मनोहर तेज की परिचर्या करते हैं।

मयर्विसी—

एतातेंअग्नउचथानिवेधोवोंचामकवयेताजुंषस्व ।
उच्छोंचस्वकृणुहिवस्यंसोनोमहोरायःपुंरुवारयंन्धि ॥२०॥११॥

एता । ते । अग्ने । उचथानि । वेधः । अवोंचाम । कवयें । ता ।
जुषस्व । उत् । शोचस्व । कृणुहि । वस्यसः । नः । महः । रायः ।
पुरुवार । प्र । यन्धि ॥ २० ॥

वेधः विधातः हेऽग्ने कवयेमेधाविने तेतुभ्यम् एता एतान्युचथानि उक्थानिशस्त्राण्यवो-
चाम त्वं तातानिजुषस्वसेवस्व किंच त्वमुच्छोचस्व उद्दीप्यस्व नोस्मान्वस्यसः अतिशयेन
वसुमतःकृणुहिकुरुसदेवोच्यते—पुरुवार पुरुभिर्बहुभिर्वरणीय महोरायोमहद्धनंप्रयन्धि प्रय-
च्छ ॥ अवोचाम वचपरिभाषणे लुङि लेरेकादेशः पादादित्वादनिघातः । कृणुहि कृ-
विहिंसाकरणयोरित्यस्यलोटिरूपं तिङउत्तरत्वादनिघातः । वस्यसः वसुमच्छब्दादीयसुनि
विन्मतोर्लुगितिमतुपोलुकिटिलोपेकृते ईकारलोपश्छान्दसः । यन्धि यमेर्लोटि बहुलंछन्दसीति
विकरणस्यलुक् वाछन्दसीतिहेर्पित्त्वेनपित्त्वादनुदात्तत्वेतिनिघातः ॥ २० ॥

२०. हे विधाता अग्नि, तुम मेधावी हो। हम तुम्हारे उद्देश्य से इस
सम्पूर्ण उक्थ का उच्चारण करते हैं, तुम इसका सेवन करो। तुम उद्दीप्त
होकर हमें विशेष रूप से धनवान् करो। तुम बहुतों-द्वारा वरणीय
हो। तुम हम लोगों को महान् धन प्रदान करो।

॥ इतितृतीयस्यचतुर्थेएकोनविंशोवर्गः ॥ १९ ॥

आवोराजानमितिदशर्चंतृतीयंसूक्तं वामदेवस्यार्षं त्रैष्टुभमाग्नेयम्आवःषोळशेत्यनुक्रा-
न्तम् । प्रातरनुवाकाश्विनशस्त्रयोर्विनियोगउक्तः ।

मथमधर्मा—

आवोराजानमध्वरस्यंरुद्रंहोतारंसत्ययजंरोदंस्योः ।
अग्निंपुरातनयित्नोरचित्ताद्धिरंण्यरूपमवंसेकृणुध्वम् ॥ १ ॥

आ । वः । राजानम् । अध्वरस्यं । रुद्रम् । होतारम् । सत्यऽयजम् ।
रोदंस्योः । अग्निम् । पुरा । तनयित्नोः । अचित्तात् । हिरंण्यऽरूपम् ।
अवंसे । कृणुध्वम् ॥ १ ॥

हे ऋत्विग्यजमानाः अध्वरस्ययज्ञस्यराजानमधिपतिं होतारं देवानामाह्वातारं रुद्रं रोदयमाणं द्रवन्तं शत्रूणांरोदयितारंवा यद्वा एतावाअग्नेस्तनूर्यद्रुद्रइति रुद्रात्मकं रोदस्योर्द्यावापृथिव्योःसत्ययजं सत्यस्ययज्ञस्यदातारं यद्वा सत्ययजंसत्येनहविषादेवान्यजन्तं यद्वा रोदस्योर्व्याप्यवर्तमानंहिरण्यरूपंसुवर्णप्रभम् एवंविधमग्निं वोयुष्माकम् अवसे रक्षणाय तनयित्नोःस्तनयित्नोरशनिःसह्याकस्मिकःतत्सदृशादचित्तात् नविद्यतेचित्तंयस्मिन्तदचित्तं चित्तोपलक्षितसर्वेन्द्रियोपसंहारोमरणमितियावत् तस्मान्मरणात्पुराप्रागेव आकृणुध्वं यूयंसमन्ताद्धविर्भिःपरिचरध्वम् ॥ रुद्रं रोदयतेरोदेर्णिलुक्चेतिरक्प्रत्ययः । तनयित्नोः तनिःशब्दार्थः चुरादिरदन्तः स्तनिहृषिपुषिगदिमदिभ्योणेरित्नुच्चितीड्नुप्रत्ययः चित्स्वरेणान्तोदात्तः सुपासहैकादेशोएकादेशस्वरः । कृणुध्वं कृविर्हिंसाकरणयोश्च लोटिरूपम् ॥ १ ॥

१. हे यजमानो, यज्ञ के अधिपति, देवों के आह्वाता, द्यावा-पृथिवी के सत्यदाता, सुवर्ण की तरह प्रभावाले और शत्रुओं को रुलाने-वाले रुद्रात्मक अग्नि की, अपनी रक्षा के लिए वज्र-रूप मृत्यु के पूर्व ही, सेवा करो।

अयंयोनिश्चकृमायंवयन्तेजायेवपत्यउशतीसुवासाः ।
अर्वाचीनःपरिवीतोनिषीदेमाउतेस्वपाकप्रतीचीः ॥ २ ॥

अयम् । योनिः । चकृम । यम् । वयम् । ते । जायाऽइव । पत्ये । उशती इति । सुऽवासाः । अर्वाचीनः । परिऽवीतः । नि । सीद । इमाः । ऊँ इति । सुऽअपाक । प्रतीचीः ॥ २ ॥

हेअग्ने त्वदर्थं यमुत्तरवेदिलक्षणंप्रदेशंवयंचकृम कुर्मः अयंयोनिः तवस्थानंभवति तत्रदृष्टान्तः—जायेव यथापत्येउशतीपतिंकामयमानासुवासाःशोभनवस्त्रोपेताजायास्वात्मसमीपेतस्यस्थानंकरोतितद्वत् हेस्वपाक स्वपत्य सुकर्मन् अग्ने त्वंपरिवीतः यष्टव्यदेवैस्तेजोभिर्वापरिवृतः अर्वाचीनोऽस्मदभिमुखःसन् निषीदोत्तरवेद्यामुपविश तत्रस्थितस्यतेतव इमाःवाचःस्तुतयोवाप्रतीचीः त्वदभिमुखाःप्रवर्तन्ते ॥ चकृम करोतेर्लिटिरूपं वाक्यभेदात्तिङ्ङतिङइतिनिघाताभावः । अर्वाचीनः विभाषाञ्चेरदिक्स्त्रियामितिखः । परिवीतः व्येञ्संवरणे कर्मणिनिष्ठा यजादित्वात्संप्रसारणं गतिरनन्तरइतिगतेःस्वरः ॥ २ ॥

२. हे अग्नि, पतिकामिनी एवम् सुवस्त्राच्छादिता जाया जिस तरह पति के लिए स्थान प्रस्तुत करती है, उसी तरह हम लोग भी उत्तर वेदिरूप प्रदेश प्रस्तुत करते हैं; यही तुम्हारा स्थान है। हे सुकर्मा अग्नि, तुम तेज-द्वारा परिवृत होकर हम लोगों के अभिमुख उपवेशन करो। यह सकल स्तुति तुम्हारे अभिमुख उपवेशन करे।

आशृण्वतेअदृपितायमन्मनृचक्षसेसुमृळीकायवेधः ।
देवायशस्तिममृतायशंसग्रावेवसोतामधुषुद्यमीळे ॥ ३ ॥

आऽशृण्वते । अदृपिताय । मन्म । नृऽचक्षसे । सुऽमृळीकाय । वेधः । देवाय । शस्तिम् । अमृताय । शंस । ग्रावाऽइव । सोता । मधुऽसुत् । यम् । ईळे ॥ ३ ॥

वेधः स्तोत्राणांकर्तः हेस्तोतः आशृण्वते स्तोत्राकर्णनपराय अदृपिताय अदृप्ताय अप्रमत्ताय नृचक्षसे नृणांद्रष्ट्रे सुमृळीकाय सुसुखाय अमृताय मरणधर्मरहितायदेवाय तस्मै अग्नये मन्म स्तोत्रं शस्तिं शस्त्रंच शंस मधुसुत् मदकरस्यसोमस्यसोता तत्रदृष्टान्तः—ग्रावेव यथाग्रावासोमस्यसोतातद्वत् सोमाभिषवंकुर्वाणोयजमानोयमग्निमीळेस्तौति तस्मैशंसेतिसम्बन्धः यद्वा मधुसुत् सोमसुत्वन्यजमानः अग्निमीळेस्तौति तत्रदृष्टान्तः—यथाग्रावासोमस्यसोताशब्दं करोति प्रैतेवदन्तुप्रवयंवदामग्रावभ्यइत्यत्रग्राव्णांकर्तृत्वंश्रुतमिति ॥ आशृण्वते शातुरुमस्तिति विभक्तेरुदात्तत्वम् । ईळे ईडस्तुतौ अदादिरनुदात्तेत्त्वादात्मनेपदे इडितितलोपः यद्वा छिदितिरान्दस्यै-शादेशोक्तेरूपम् ॥ ३ ॥

३. हे स्तोता, स्तोत्र-श्रवण-परायण, अप्रमत्त, मनुष्यों के द्रष्टा, सुखकर और अमर अग्निदेव के उद्देश्य से स्तोत्र और शस्त्र का पाठ करो। प्रस्तर की तरह सोमाभिषवकारी यजमान अग्नि की स्तुति करते हैं।

त्वं चिन्नः शम्या अग्ने अस्या ऋतस्य बोध्यृतचित्स्वाधीः ।
कदा त उक्था सधमाद्यानि कदा भवन्ति सख्या गृहे ते ॥ ४ ॥

त्वम् । चित् । नः । शम्यै । अग्ने । अस्याः । ऋतस्य । बोधि । ऋतऽचित् । सुऽआधीः । कदा । ते । उक्था । सधऽमाद्यानि । कदा । भवन्ति । सख्या । गृहे । ते ॥ ४ ॥

हेअग्ने त्वंचित् त्वमेव शम्यै शमीशब्दःकर्मनाम अस्याःशम्यै शम्याःनोऽस्माकमस्य-कर्मणःदेवताभवसि हेऋतचित् सत्यज्ञ हेअग्ने स्वाधीः सुकर्मासुध्यानोवात्वम् ऋत-स्यबोधि अस्मदीयस्तोत्रंबुध्यस्व तेतव सधमाद्यानि सहमदननिमित्तानि उक्था शस्त्राणि कदाकस्मिन्कालेभवन्ति भविष्यन्ति तथास्मदीयेगृहे तेत्वयासहसख्यासख्यानिकदाभविष्यन्ति ॥ सधमाद्यानि माद्यतेर्ण्यन्तस्याचोयदितियत् सधमादस्थयोश्छन्दसीति सहस्यसधादेशः । भवन्ति विभाषाकदाकर्ह्योरितिभविष्यदर्थेलट् ॥ ४ ॥

४. हे अग्नि, हम लोगों के इस कर्म के तुम देवता होओ। हे सत्यज्ञ अग्नि, तुम सुकर्मा हो। तुम्हें हमारा स्तोत्र अवगत हो। उन्मादकारक तुम्हारे स्तोत्र कब उच्चारित होंगे? हमारे गृह में तुम्हारे साथ कब सखाभाव होगा?

अथपञ्चमी—

कथाहतद्वरुणायुत्वमंग्नेकुथादिवेगर्हसेकन्नुआगः ।
कुथामित्रायमीळ्हुषेपृथिव्यैब्रवुःकदर्युम्णेकद्भगाय ॥ ५ ॥ २० ॥

कुथा । हु । तत् । वरुणाय । त्वम् । अग्ने । कुथा । दिवे ।
गर्हसे । कत् । नुः । आगः । कुथा । मित्राय । मीळ्हुषे । पृथिव्यै ।
ब्रवः । कत् । अर्युम्णे । कत् । भगाय ॥ ५ ॥ २० ॥

हेऽग्ने त्वंतदस्मदीयं पापं वरुणायकथागर्हसे केनहेतुनागर्हापूर्वमावेदयसि हेतिपूरणः दिवे द्युलोकायद्योतमानायसूर्यायवाकथा कथंतत्पापमावेदयसि नोऽस्माकमागस्तत्पापंकत् किमस्ति त्वत्परिचरणान्नास्तीत्यर्थः तथा मीळ्हुषेऽभिमतफलसेक्त्रेमित्राय पृथिव्यैच कथाब्रवः कथमब्रोब्रूयाः अर्यम्णेदेवायकत्कथं भगाय एतन्नामकायदेवायकत्कथंब्रूयाः ॥ कथा किंशब्दात्थाहेतौचच्छन्दसीतिथाप्रत्ययः प्राग्दिशोविभक्तिरितिविभक्तिसंज्ञायांकिमःकइतिकादेशः । मीळ्हुषे मिहसेचने क्वसौ दाश्वान्साह्वान्मीढ्वांश्चेतिनिपातितः । ब्रवः ब्रूञ्व्यक्तायांवाचि लेटि लेटोऽडाटावित्यडागमः पादादित्वान्ननिघातः आगमस्यानुदात्तत्वाद्धातुस्वरः ॥ ५ ॥

५. हे अग्नि, वरुण के निकट तुम हम लोगों की पापजन्य निन्दा क्यों करते हो ? अथवा सूर्य के निकट क्यों निन्दा करते हो ? हम लोगों का क्या अपराध है ? अभिमत फलदाता मित्र और पृथिवी को तुमने क्यों कहा ? अथवा अर्यमा और भग नामक देवों से ही तुमने क्यों कहा ?

॥ इतितृतीयस्यचतुर्थेविंशोवर्गः ॥ २० ॥

अथषष्ठी—

कद्धिष्ण्यासुवृधसानोअंग्नेकद्वातायप्रतवसेशुभंये ।
परिज्मनेनासत्यायुक्षेब्रवुःकदंग्नेरुद्रायनृघ्ने ॥ ६ ॥

कत् । धिष्ण्यासु । वृधसानः । अग्ने । कत् । वाताय । प्रऽतवसे ।
शुभम्ऽये । परिऽज्मने । नासत्याय । क्षे । ब्रवः । कत् ।
अग्ने । रुद्राय । नृऽघ्ने ॥ ६ ॥

हेऽग्ने धिष्ण्यासु आग्नीध्रीयादिधिष्ण्येषु वृधसानःघृताद्याहुतिभिर्वर्धमानस्त्वं कत्कथंब्रूयाः प्रतवसे प्रकृष्टबलाय शुभंये शुभस्यप्रापयित्रे परिज्मने परितोगन्त्रे नासत्याय सत्यस्यनेत्रे यद्वा नविद्यतेऽसत्यंयस्यतस्मै वाताय वायवे यद्वा नासत्यायेतिवचनव्यत्ययः नासत्याभ्यामश्विभ्यां क्षे क्षेतिपृथिवीनामाह क्षियन्तिनिवसन्त्यस्यांप्राणिनइतितस्यैक्षेपृथिव्यैच

कत्कथंभूयाः हेऽग्ने नृते नृणांपापकृतां हन्त्रे रुद्राय देवाय कत्कथमगोऽपि पत्न्योऽभूयाः ॥ वृधसा-नः वृधुवर्धने ऋञ्जानवृधानेत्यनुवृत्तौ ऋञ्जिवृधिमन्दिसहिभ्यः किदित्यसानच्प्रत्ययः कित्त्वादगुणः चित्त्वादन्तोदात्तः । शुभंये याप्रापणेविच् तत्पुरुषेकृतिबहुलमितिद्वितीयाया अलुक् कृत्स्वरः । क्षे क्षिनिवासगत्योः अन्येभ्योपिदृश्यतइति भावेविच् तस्याप् चतुर्थ्येकवचने आतोधातोरित्यत्रातइतियोगविभागादाकारलोपः । नृते हनहिंसागत्योः बहुलंछन्दसीति क्विप् ॥ ६ ॥

६. हे अग्नि, जब तुम यज्ञ में वर्द्धमान होते हो, तब उस कथा को क्यों कहते हो? प्रकृष्ट बलयुक्त, शुभप्रद, सर्वत्रगामी, सत्य के नेता वायु से वह कथा क्यों कहते हो? पृथिवी से क्यों कहते हो? हे अग्नि, पापी मनुष्यों को मारनेवाले रुद्रदेव से वह कथा क्यों कहते हो?

कथामहेपुष्टिम्भरायपूष्णेकद्रुद्रायसुमखायहविर्दे ।
कद्विष्णवउरुगायायरेतोब्रवःकदग्नेशरवेबृहत्यै ॥ ७ ॥

कथा । महे । पुष्टिम्ऽभराय । पूष्णे । कत् । रुद्राय ।
सुऽमखाय । हविःऽदे । कत् । विष्णवे । उरुऽगायाय ।
रेतः । ब्रवः । कत् । अग्ने । शरवे । बृहत्यै ॥ ७ ॥

हेऽग्ने मह्ने महते पुष्टिम्भराय पुष्टिधारकाय पूष्णे एतन्नामकाय देवाय कथा केनहेतुना पापंत्वंब्रवीषि सुमखाय सुपूजनीयाय सुयशाय वा हविर्दे अग्निरूपेणदेवानांहविर्दात्रे यद्वा स्विष्टकृत्त्वात् हविषोदाने रुद्राय कत्कथंभूयाः तथा उरुगायाय उरुभिर्बहुभिर्गीयमानाय यद्वा प्रभूतकीर्तयेविष्णवेरेतःपापहेतुपापंकत्कथंवदेः शरवे शृणातिपक्वाओषधीरितिशरुःशरत्संवत्सरः यद्वा हिंसिका निर्ऋतिः बृहत्यैमहत्यैशरवे निर्ऋत्यैवाकत्कथंपापंत्वं भूयाः ॥ पुष्टिम्भराय डुभृञ्धारणपोषणयोः संज्ञायांभृतॄवृजीत्यादिनाखच् अरुर्द्विषदजन्तस्यमुमितिपूर्वपदस्यमुमागमः चित्त्वादन्तोदात्तः समासेकृत्स्वरः । हविर्दे अनुदात्तस्यचयत्रोदात्तलोपइतिङ्यउदात्तत्वम् । शरवे शॄहिंसायां शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्चेत्युप्रत्ययः निदित्यनुवृत्तेराद्युदात्तः ॥ ७ ॥

७. हे अग्नि, महान् एवम् पुष्टिप्रद पूषा से वह पाप-कथा क्यों कहते हो? यज्ञभाजन, हविःप्रद रुद्र से वह क्यों कहते हो? बहुस्तुति-भाजन विष्णु से पाप की कथा क्यों कहते हो? बृहत् संवत्सर अथवा निर्ऋति से वह कथा क्यों कहते हो? अथाष्टमी—

कथाशर्धायमरुतामृतायकथासूरेबृहतेपृच्छ्यमानः ।
प्रतिब्रवोऽदितयेतुरायसाधादिवोजातवेदश्चिकित्वान् ॥ ८ ॥

अयदशपी—

ऋतेनहिष्मावृषभश्चिदक्तःपुमाँअग्निःपयसापृष्ठ्येन ।
अस्पन्दमानोअचरद्वयोधावृषाशुक्रंदुदुहेपृश्निरूधः ॥१०॥२१॥

ऋतेन । हि । स्म । वृषभः । चित् । अक्तः । पुमान् । अग्निः ।
पयसा । पृष्ठ्येन । अस्पन्दमानः । अचरत् । वयःऽधाः ।
वृषा । शुक्रम् । दुदुहे । पृश्निः । ऊधः ॥ १० ॥ २१ ॥

वृषभः अभिमतफलवर्षकःपुमान्श्रेष्ठःसोऽग्निः ऋतेनसत्यभूतेनपृष्ठ्येन धारकेणपयसा अक्तः सिक्तोभवति हिस्माचित् वयःपूरणाःवयोधाःअग्निः सोऽग्निः अस्पन्दमानः एकत्रावस्थितः सन् एवाचरत् सर्वत्रतेजसाचरति तथा वृषा अपांवर्षकः पृश्निःसूर्यः शुक्रंपयः ऊधोन्तरिक्षंमेघंवादुदुहे दोग्धि ॥ अक्तः अञ्जूव्यक्तिम्रक्षणगतिषु कर्मणिनिष्ठा । दुदुहे द्विकर्मकोयंधातुः । ऊधः अकथितंचेतिकर्मसंज्ञा ॥ १० ॥

१०. अभिमत फलवर्षक और श्रेष्ठ अग्नि सत्यभूत और पुष्टिकर दुग्ध-द्वारा सिक्त होते हैं। अतएव अग्नि एकत्र अवस्थिति करके सर्वत्र तेज-द्वारा विचरण करते हैं। जलवर्षक सूर्य अन्तरिक्ष या मेघ से पयोदोहन करते हैं।

ऋतेनाद्रिंव्यसन्भिदन्तःसमङ्गिरसोनवन्तगोभिः ।
शुनंनरःपरिषदन्नुषासमाविःस्वरभवज्जातेअग्नौ ॥ ११ ॥

ऋतेन । अद्रिम् । वि । असन् । भिदन्तः । सम् । अङ्गिरसः ।
नवन्त । गोभिः । शुनम् । नरः । परि । सदन् । उषसम् ।
आविः । स्वः । अभवत् । जाते । अग्नौ ॥ ११ ॥

अङ्गिरसः मेधातिथिप्रभृतयः ऋतेनयज्ञेनहेतुनागवांनिरोधकमद्रिंपर्वतं भिदन्तोविदारयन्तःसन्तः व्यसन् व्यक्षिपन् ततस्तेगोभिः संनवन्त समगच्छन् नरः कर्मणांनेतारः ते शुनं सुखेनउषसंपरिसदन्परितः प्राप्नुवन् ततः स्वःसूर्योऽप्याविरभवत् सर्वमेतदग्नौत्वयिजातेमन्थनेन निष्पादितेसत्यभूदिति ॥ असन् अस्यतेर्लुङि हेरस्पतिवचोऽस्यादिनाऽथकादेशः सन्निक्षमागमानुशासनमितिथुगभावः ॥ ११ ॥

११. मेधातिथि आदि ने यज्ञ-द्वारा गो-निरोधक पर्वत को विदीर्ण करके फेंक दिया था, और गौओं के साथ मिले थे। कर्मों के नेता उन अङ्गिरोगण ने सुखपूर्वक उषा को प्राप्त किया था। तदनन्तर सूर्यदेव मन्थन-द्वारा अग्नि के उत्पन्न होने पर उदित हुए।

ऋतेन॒ दे॒वीर॒मृता॒ अमृ॑क्ता॒ अर्णो॑भि॒राप्रो॒ मधु॑मद्भिरग्ने ।
वा॒जी न सर्गे॑षु प्रस्तु॒भा॒नः प्र सद॒मित्स्रवि॑तवे दधन्युः ॥ १२ ॥

ऋ॒तेन॑ । दे॒वीः । अ॒मृताः॑ । अमृ॑क्ताः । अर्णः॑ऽभिः । आपः॑ ।
मधु॑मत्ऽभिः । अ॒ग्ने॒ । वा॒जी । न । सर्गे॑षु । प्र॒ऽस्तु॒भा॒नः । प्र ।
सद॑म् । इत् । स्रवि॑तवे । द॒ध॒न्युः ॥ १२ ॥

हेऽग्ने अमृताः अमरणहेतवः अमृक्ताः रक्षःप्रभृतिभिरबाधिताः मधुमद्भिर्माधुर्योपेतैरर्णोभिरुदकैर्युक्ता देवीः देव्यो नद्यः ऋतेन सत्येन यज्ञेन वा हेतुना आपः व्याप्तव्याः सत्यः सदमित् सदैव स्रवितवे स्रवणाय दधन्युः प्रगच्छन्ति तत्र दृष्टान्तः—वाजीन यथा सर्गेषु प्रेरणेषु प्रस्तुभानः प्रोत्साह्यमानोऽश्वः प्रगच्छति तद्वत् ॥ आपः आप्लृ व्याप्तौ आप्नोतेः क्विप् ह्रस्वश्चेति कर्मणि क्विप् अप्तृन्नित्यादिना उपधादीर्घः । प्रस्तुभानः स्तोभतिरर्चतिकर्मा ॥ १२ ॥

१२. हे अग्नि, मरण-रहिता, विघ्नशून्या और मधुर जलयुक्ता देवी नदियाँ यज्ञ-द्वारा प्रेरित होकर जाने के लिए प्रोत्साहित अश्व की तरह सर्वदा प्रवाहित होती हैं।

मा कस्य॑ य॒क्षं सद॒मिद्धु॒रो गा॒ मा वे॒शस्य॑ प्रमिन॒तो मापेः ।
मा भ्रा॒तुर॑ग्ने॒ अनृ॑जोर्ऋ॒णं वे॒र्मा सख्यु॒र्दक्षं॑ रि॒पोर्भु॑जेम ॥ १३ ॥

मा । कस्य॑ । य॒क्षम् । सद॑म् । इत् । हु॒रः । गाः । मा । वे॒शस्य॑ ।
प्र॒ऽमि॒न॒तः । मा । आ॒पेः । मा । भ्रा॒तुः । अ॒ग्ने॒ । अनृ॑जोः ।
ऋ॒णम् । वेः । मा । सख्युः॑ । दक्ष॑म् । रि॒पोः । भु॒जे॒म ॥ १३ ॥

हेऽग्ने हुरोऽस्माकंहिंसकस्यकस्यचिदपिमनुष्यस्य यज्ञं सदमित्सदैवमागाः कदाचिदपिमागच्छ प्रमिनतोहिंसकस्य वेशस्य प्रातिवेश्यस्य यज्ञंमागाः तथा आपेर्बन्धोर्व्यतिरिक्तस्यबन्धोर्यज्ञंमागच्छ तथा अनृजोः कुटिलचित्तस्यभ्रातुः ऋणम् ऋणवद्देयंहविःमावेः माकामयेथाः तथा वयमपि सख्युर्मित्रस्य रिपोः शत्रोर्वादक्षंभोगसमर्थंधनंमाभुजेम माभुञ्जीमहि किन्तु त्वया दत्तंधनंभुञ्जीमहि ॥ हुरः ह्वृसंवरणे क्विप् बहुलंछन्दसीत्युत्वं सावेकाच इतिविभक्तेरुदात्तत्वम् । भुजेम भुजपालनाभ्यवहारयोः आशीर्लिङि व्यत्ययेनपरस्मैपदं लिङ्याशिष्यङित्यङ्प्रत्ययः ॥ १३ ॥

१३. हे अग्नि, जो कोई हमारी हिंसा करता है, उसके यज्ञ में तुम कभी न जाना। किसी दुष्ट बुद्धिवाले प्रतिवासी (पड़ोसी) के यज्ञ में न जाना। हमें छोड़कर दूसरे बन्धु के यज्ञ में न जाना। तुम कुटिलचित्त भ्राता के ऋण (हवि) की कामना न करना। हम लोग भी मित्र या शत्रु-द्वारा प्रदत्त धन का भोग नहीं करेंगे। केवल तुम्हारे ही द्वारा प्रदत्त धन का भोग करेंगे।

अथ चतुर्दशी—

रक्षाणोअग्नेतवरक्षणेभीरारक्षाणःसुमखप्रीणानः ।
प्रतिष्फुरविरुजवीड्वंहोजहिरक्षोमहिचिद्वावृधानम् ॥ १४ ॥

रक्ष । नः । अग्ने । तव । रक्षणेभिः । ररक्षाणः । सुऽमख । प्रीणानः ।
प्रति । स्फुर । वि । रुज । वीळु । अंहः । जहि । रक्षः ।
महि । चित् । वावृधानम् ॥ १४ ॥

सुमख सुयज्ञ सुधनेतिवा हेअग्ने ररक्षाणः भृशमस्माकंरक्षिता प्रीणानः हविर्भिःप्रीतस्त्वंतवरक्षणेभिःत्वदीयैरवनैर्नोऽस्मान्रक्षपालय प्रतिस्फुर अस्मान्प्रतिदीप्यस्व वीळुदृढमंहःपापं विरुज विशेषेणनाशय किंच महिचित् महदपि वावृधानं वर्धमानं वृद्धंवा बाधकं रक्षोजहि ॥ नः नश्चधातुस्थोरुषुभ्यइतिसंहितायांणत्वम् । ररक्षाणः रक्षेर्यङ्लुकिचानशिरूपम् । जहि हनहिंसागत्योः लोटि हन्तेर्जइतिजादेशः आभाच्छास्त्रस्यासिद्धत्वादतोहेरितिलुक्न भवति ॥ १४ ॥

१४. हे सुयज्ञ अग्नि, तुम हम लोगों के रक्षक हो। तुम हव्य-द्वारा प्रीत होकर आश्रय दान-द्वारा हमारी रक्षा करो। तुम हम लोगों को प्रदीप्त करो। हम लोगों के दृढ़ पाप का तुम विनाश करो एवम् महान् और वर्द्धमान राक्षस का विनाश करो।

एभिर्भवसुमनाअग्नेअर्कैरिमान्स्पृशमन्मभिःशूरवाजान् ।
उतब्रह्माण्यङ्गिरोजुषस्वसन्तेशस्तिर्देववाताजरेत ॥ १५ ॥

एभिः । भव । सुऽमनाः । अग्ने । अर्कैः । इमान् । स्पृश ।
मन्मऽभिः । शूर । वाजान् । उत । ब्रह्माणि । अङ्गिरः । जुषस्व ।
सम् । ते । शस्तिः । देवऽवाता । जरेत ॥ १५ ॥

हेअग्ने एभिर्मदीयैरर्कैरर्चनीयैःशस्त्रैः सुमनाः शोभनमनस्कोभव हेशूर इमानस्मदीयान्हविर्लक्षणान्वाजान्मन्मभिःस्तोत्रैःसहस्पृश प्रतिगृहाण उतापिच अङ्गिरः अङ्गतिर्हर्विषि प्राप्नोतीत्यङ्गिराअग्निः यद्वा येङ्गाराआसंस्तेङ्गिरसोभवन्नितिब्राह्मणम् । तेषामङ्गिरसांकारणत्वादग्नेरङ्गिरस्त्वं तत्कारणत्वेचमन्त्रः—येअङ्गिरसःसूनवस्तेअग्नेःपरिजज्ञिरेइति । तादृश हेअ-

१ ऐ० ब्रा० ३. ३४ ।     २ ऋ० सं० ८. ३. १. ।

मे ब्रह्माणि मन्त्रान्जुषस्व सेवस्व देववाता देवार्थंगता देवानस्तोतुप्राप्तेत्यर्थः तादृशी शस्तिः शंसनं तेत्वांसंनरेतसंवर्धयतु ॥ स्पृशा स्पृशसंस्पर्शने तुदादिः । देववाता वागतिगन्धनयोः मन्त्र-र्थोकर्मकेतिकर्तरिक्तः देवः पञ्चाद्यमेन्तः स्थेषेतिचतुर्थ्यन्तस्यपदस्यमहतीतिस्वरः ॥ १५ ॥

१५. हे अग्नि, हमारे इस अर्चनीय शास्त्र-द्वारा तुम प्रीतमना होओ। हे शूर, हमारे इस स्तोत्र-सहित अन्न का ग्रहण करो। हे हवि-रस के गृहीता अग्नि, मन्त्रों का सेवन करो। देवों के उद्देश से प्रयुक्त स्तुति तुम्हें संवर्द्धित करे।

एताविश्वाविदुषेतुभ्यंवेधोनीथान्यग्नेनिण्यावचांसि ।
निवचनाकवयेकाव्यान्यशंसिषंमतिभिर्विप्रउक्थैः ॥ १६ ॥ २२ ॥

एता । विश्वा । विदुषे । तुभ्यम् । वेधः । नीथानि । अग्ने । निण्या । वचांसि । निऽवचना । कवये । काव्यानि । अशंसिषम् । मतिऽभिः । विप्रः । उक्थैः ॥ १६ ॥ २२ ॥

वेधःविधातः हेअग्ने विदुषेकर्मविषयज्ञानवते कवये क्रान्तदर्शिने तुभ्यं नीथानि फल-प्रापकाणि निण्या गूढानि निवचनानि नितरांवक्तव्यानिकाव्यानि कविभिर्मेधाविभिःकृतानि एता विश्वा एतानि सर्वाणि वचांसि वाक्यानि मतिभिर्मननीयैःस्तोत्रैरुक्थैःशस्त्रैश्चसहितं विप्रःप्राज्ञोऽहमशंसिषमवोचं तानिसेवस्वेत्यर्थः ॥ १६ ॥

१६. हे विधाता अग्नि, तुम कर्म विषय को जानेवाले और उत्कृष्ट द्रष्टा हो। हम प्राज्ञ लोग तुम्हारे उद्देश्य से फलप्रापक, गूढ़, अतिशय वक्तव्य और हम कवियों-द्वारा रचित इस समस्त वाक्य का स्तोत्र और शास्त्रों के साथ उच्चारण करते हैं।

॥ इतितृतीयस्यचतुर्थेद्वाविंशोवर्गः ॥ २२ ॥

कृणुष्वेतिपञ्चदशर्चंचतुर्थंसूक्तम् वामदेवस्यार्षं त्रैष्टुभं रक्षोहाग्निर्देवताकं कृणुष्वपाजो-न्यारक्षोघ्नमित्यनुक्रमणिका । प्रातरनुवाकाश्विनशस्त्रयोःसूक्तविनियोगः प्रथमेपिण्डपितृयज्ञे कृणुष्व पाजइत्याद्याःपंचर्चोविनियुक्ताः सूत्रितंच—कृणुष्वपाजःप्रसितिंनपृथ्वीमितिपञ्चेति ।

कृणुष्वपाजःप्रसितिंनपृथ्वींयाहिराजेवामवाँइभेन ।
तृष्वीमनुप्रसितिंद्रूणानोस्तासिविध्यरक्षसस्तपिष्ठैः ॥ १ ॥

कृणुष्व । पाजः । प्रऽसितिम् । न । पृथ्वीम् । याहि । राजाऽइव । अमऽवान् । इभेन । तृष्वीम् । अनु । प्रऽसितिम् । द्रूणानः । अस्ता । असि । विध्य । रक्षसः । तपिष्ठैः ॥ १ ॥

हेअग्ने पाजस्तेजःस्वंकृणुष्व कुरुष्व विस्तारय तत्रदृष्टान्तः—प्रसितिंन यथामृगयुः पृ-थ्वींविस्तीर्णां प्रसितिंप्रकर्षेणसीयतेबध्यतेययाइतिप्रसितिर्वागुरा तादृशींप्रसितिं पक्षिग्रहणार्थंव-नगहनेषुप्रसारयति तद्वत् त्वमपिरक्षांसिहन्तुंमहद्बलंप्रथनस्तनुष्व इभेनगतभयेनतेजःसङ्घेनयुक्त-स्त्वंयाहि रक्षांसिहन्तुंगच्छ तत्रदृष्टान्तः—राजेव यथा अमवान् अमाराज्ञासहवर्ततइत्यमोमात्यः तद्वान् यद्वा अमो अमनंरोगः शत्रूणांकर्तव्यैरोगैस्तद्वान् शत्रूणांरोगभूतइत्यर्थः राजा इभेनगजे-नयुक्तः सन् परबलंप्रतिगच्छतितद्वत् किंच तृष्वीं तृष्वीतिक्षिप्रनाम क्षिप्रगामिनींप्रसितिं प्र-कृष्टांसेनाम् अनुद्रूणानः अनुगच्छन् यद्वा तृष्वीमितितृतीयार्थेद्वितीया तृष्व्याक्षिप्रयाप्रसित्या अनुबद्धयासेनयातथागत्वा द्रूणानःपरसेनांहिंसन् अस्ता शत्रूणांक्षेप्तासि तपिष्ठैस्तप्तृतमैस्ते-जोभिःरक्षसोराक्षसान्विध्यताडय अत्रनिरुक्तं— कृणुष्वपाजःपाजः पालनात्प्रसितिमिवपृथ्वींप्रसि-तिःप्रसयनात्तन्तुर्वाजालंवायाहिराजेवामात्यवानभ्यमनवान्स्ववान्वेरावतागणेनगतभयेनहस्तिनेतिवातृ-ष्वानुप्रसित्याद्रूणानस्तृष्वीतिक्षिप्रनामत्वरतेर्वात्वरतेर्वासितासिविध्यरक्षसस्तपिष्ठैस्तप्ततमैस्तृप्ततमैर्वाप्र-छनैरितिवेति ॥ कृणुष्व कृविहिंसाकरणयोः लोटि धिन्विकृण्व्योरच्चेत्युप्रत्ययःप्रत्ययेनात्मनेपदं विकरणस्वरः सतिशिष्टोपि लसार्वधातुकस्वरंनबाधतइतिलसार्वधातुकस्वरः ॥ १ ॥

**१. हे अग्नि, तुम अपने तेजःपुञ्ज को विस्तारित करो, जैसे व्याध अपने जाल को विस्तारित करता है। जैसे अमात्य के साथ राजा हाथी के ऊपर गमन करता है, वैसे ही तुम भयशून्य तेजःसमूह के साथ गमन करो। तुम शीघ्रगामिनी सेना का अनुगमन करके शत्रु-सैन्य को हिंसित करो और शत्रुओं को नष्ट करो। अत्यन्त तीक्ष्ण तेज-द्वारा तुम राक्षसों का भेदन करो।**

अथद्वितीया—

तवंभ्रमासंआशुयापतन्त्यनुंस्पृशधृषताशोशुंचानः ।
तपूंष्यग्नेजुह्वापतङ्गानसंन्दितोविसृंजविष्वंगुल्काः ॥ २ ॥

तवं । भ्रमासंः । आशुऽया । पतन्ति । अनुं । स्पृश । धृषता । शोशुंचानः । तपूंषि । अग्ने । जुह्वां । पतङ्गान् । असंम्ऽदितः । वि । सृज । विष्वंक् । उल्काः ॥ २ ॥

हेअग्ने तवभ्रमासः भ्राम्यन्तः आशुया शीघ्रगतयःरश्मयःपतन्ति सर्वतःप्रसरन्ति शोशु-चानः भृशंदीप्यमानस्त्वं धृषता अभिभवसमर्थेनतेजःसङ्घेन शत्रूननुक्रमेणस्पृश दह दहनो-पायंदर्शयति—असंदितःपरैरनिरुद्धस्त्वं तपूंषि तापकानितेजांसि पतङ्गान्पतनशीलान्स्फुलिङ्गा-न् उल्काः निर्गतज्वालारूपाणि जिह्वानिचेत्येतानितपंजुह्वा हूयन्तेस्यामाहुतयइतिजुहूर्ज्वाला

---

१ नि० ६. । १२. ।

तया विष्वक् सर्वतोविमृज प्रहारय ॥ आशुया आशुशब्दात् सुपांसुलुगितियाजादेशः चित्स्वरः । तृषता तृषप्रसहने चुरादिराधृषीयः शत्प्रत्ययेनशः शतुरनुमइतिविभक्तेरुदात्तत्वम् । जुह्वा जुहोतेर्हवेषेतिक्विप् द्विर्वचनं दीर्घत्वम् उदात्तयणोहल्पूर्वादितिविभक्तेरुदात्तत्वस्य नोङ्धात्वोरितिप्रतिषेधः उदात्तस्वरितयोर्यणइतिस्वरितत्वम् । असंदितः दोअवखण्डने कर्मणि निष्ठा द्यतिस्यतीतीत्वं नञ्समासेतस्यस्वरः ॥ २ ॥

२. हे अग्नि, तुम्हारी व्यापकारिणी और शीघ्रगामिनी रश्मियाँ सर्वत्र प्रवृत्त होती हैं। तुम अत्यन्त दीप्तिमान् हो। अभिभवसमर्थ तेजोराशि-द्वारा तुम शत्रुओं को दग्ध करो। शत्रु तुम्हें निरुद्ध नहीं कर सकते हैं। तुम जुहू-द्वारा तापप्रद तथा पतनशील विस्फुलिङ्ग को और उल्का (तेजःपुञ्ज) को सर्वत्र विकीर्ण करो।

प्रति॒स्पशो॒वि सृ॑ज॒तूर्णि॑तमो॒भवा॑पा॒युर्वि॒शो अ॒स्या अद॑ब्धः ।
यो नो॑ दू॒रे अ॒घशं॑सो॒ यो अन्त्यग्ने॒ माकि॑ष्टे॒ व्यथि॒रा द॑धर्षीत् ॥ ३ ॥

प्रति॑ । स्पशः॑ । वि । सृ॒ज॒ । तूर्णि॑ऽतमः । भव॑ । पा॒युः । वि॒शः । अ॒स्याः । अद॑ब्धः । यः । नः॒ । दू॒रे । अ॒घऽशं॑सः । यः । अन्ति॑ । अग्ने॑ । माकिः॑ । ते॒ । व्यथिः॑ । आ । द॒ध॒र्षी॒त् ॥ ३ ॥

हेऽग्ने तूर्णितमः त्वरिततमस्त्वं स्पशः परबाधकाज्वलरश्मीन् प्रति परान्शत्रून्प्रति विसृज शत्रून्प्रतिविशेषेणप्रेरय अदब्धः केनाप्यहिंसितस्त्वम् अस्याः त्वदीयायाविशः अस्मदीयायाः प्रजायाः पायुः पालकोभव कस्मात्तद्रक्षणमित्यपेक्षायामाह—नोऽस्माकंदूरेयोघशंसः अघंपापात्मकंशंसनमभिलाषःकीर्तनंवायस्यसोघशंसः यश्चाघशंसः अन्तिअस्माकं समीपेतिष्ठति तस्मादुभयविधाच्छत्रोः पालकोभव किंच तेत्वत्संबन्धिनोऽस्मान्माकिः नकश्चिदपिव्यथिः बाधकोराक्षसःआदधर्षीत् आधर्षयतु आस्माकंकश्चिदपिपराभवंमाकरोत्वित्यर्थः ॥ अन्ति अन्तिकस्यकादिलोपमाद्युदात्तत्वंच । अग्ने पादादित्वात्षाष्ठिकमाद्युदात्तत्वम् । माकिष्टइतिसंहितायांयुष्मत्तत्ततक्षुःष्वन्तःपादमितिषत्वम् । दधर्षीत् धृषप्रसहने अडि बहुलंछन्दसीतिशपःश्लुः बहुलंछन्दसीतितिपईडागमः निपातः ॥ ३ ॥

३. हे अग्नि, तुम अतिशय वेगवान् हो। शत्रुओं को बाधा देनेवाली रश्मियों को तुम शत्रुओं के प्रति प्रेरित करो। कोई तुम्हारी हिंसा नहीं कर सकता है। जो कोई दूर से हम लोगों की अनिष्ट-कामना करता है अथवा जो निकट से अनिष्ट करने की इच्छा करता है, तुम उसके निकट से इस सकल प्रजा की रक्षा करो। हम लोग तुम्हारे हैं। जिससे कोई शत्रु हम लोगों को पराभूत न कर सके।

उद॑ग्ने तिष्ठ॒ प्रत्या त॑नुष्व॒ न्य१॑मित्राँ॑ ओषतात्तिग्महेते ।
यो नो॒ अरा॑तिं समिधान च॒क्रे नी॒चा तं ध॑क्ष्यत॒सं न शुष्क॑म् ॥ ४ ॥

उत् । अग्ने । तिष्ठ । प्रति । आ । तनुष्व । नि । अमित्रान् ।
ओषतात् । तिग्मऽहेते । यः । नः । अरातिम् । सम्ऽइधान । चक्रे ।
नीचा । तम् । धक्षि । अतसम् । न । शुष्कम् ॥ ४ ॥

तिग्महेते तिग्मास्तीक्ष्णा हेतयो ज्वाला यस्य स तथोक्तः तादृश हे अग्ने उत्तिष्ठ रक्षोहननार्थमुद्यतो भव शत्रून्प्रति आतनुष्व ज्वालाः संविस्तारय तैस्तेजःसंघैरमित्रान् शत्रून्न्योषतात् नितरां दह हे समिधान समिद्भिर्दीप्यमानाग्ने यः पुमान् अस्माकम् अरातिं भावप्रधानो निर्देशः अरातित्वं शात्रवं चक्रे कुरुते अरातिमदानं वा कुरुते तं पुमांसं नीचा न्यग्भूतं धक्षि दह तत्र दृष्टान्तः—अतसं न यथा शुष्कमनार्द्रमतसं काष्ठं दहसि तद्वत् ॥ ओषतात् उष दाहे लोटि हेस्तुह्योरिति तातङादेशः । धक्षि दहेर्लोटि बहुलं छन्दसीति शपो लुक् होढ इति ढत्वं भष्भावः षढोः कः सीति कत्वं निघातः ॥ ४ ॥

४. हे तीक्ष्ण ज्वालाविशिष्ट अग्नि, उठो, राक्षसों को मारने के लिए प्रस्तुत होओ । शत्रुओं के ऊपर ज्वालाजाल का विस्तार करो । तेजोराशि-द्वारा शत्रुओं को भली भाँति दग्ध करो । हे समिद्ध अग्नि, जो व्यक्ति हमारे साथ शत्रुता करता है, उस व्यक्ति को शुष्क काष्ठ की तरह तुम दग्ध कर दो ।

ऊर्ध्वो भव प्रति विध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ।
अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्र मृणीहि शत्रून् ॥ ५ ॥ २३ ॥

ऊर्ध्वः । भव । प्रति । विध्य । अधि । अस्मत् । आविः ।
कृणुष्व । दैव्यानि । अग्ने । अव । स्थिरा । तनुहि । यातुऽजूनाम् ।
जामिम् । अजामिम् । प्र । मृणीहि । शत्रून् ॥ ५ ॥ २३ ॥

हे अग्ने ऊर्ध्वो भव रक्षोहननार्थमुद्युक्तो भव अस्मदस्मत्तः अधि अधिकान् राक्षसान् प्रतिविध्य प्रत्येकं ताडय दैव्यानि तेजांसि आविष्कृणुष्व आविष्कुरु प्रकटयं विधाय यातुजूनां यातयितुं प्राणिनः क्लेशयितुं ये जवं कुर्वन्ति तेषां यातुधानानां स्थिरा दृढानि धनूंषि अवतनुहि अवगतज्यानि कुरु किंच जामिं बन्धुमजामिं अबन्धुं शत्रून् प्रमृणीहि प्रजहि यद्वा जामिः पूर्वजः तं जामिं पूर्वं प्रहतमेवं भूतान्न्शत्रून् जहि प्रहृतोऽयमित्युपेक्षां माकृथाः ॥ आविष्कृणुष्वेत्यत्र संहितायामिदुदुपधस्य चाप्रत्ययस्येति षत्वम् । तनुहि तनोतेर्लोटि उतश्च प्रत्ययाच्छन्दोवावचनमिति हेर्लुगभावः । यातुजूनां जुगतौ क्विब्वचीत्यादिना क्विप् दीर्घो आमि छान्दसो नुम् । प्रमृणीहि मृङ् प्राणत्यागे अन्तर्भावितण्यर्थस्य लोटि बहुलं छन्दसीति विकरणः श्ना निघातः ॥ ५ ॥

५. हे अग्नि, तुम राक्षसों को मारने के लिए उद्यत होओ । हमसे जितने अधिक बलवान् हैं, उन सबको एक-एक करके मारो । अपने देव-सम्बन्धी तेज को आविष्कृत करो । प्राणियों को क्लेश देनेवालों

के बृद्ध धनुष को ज्या-शून्य करो और पूर्व में पराजित अथवा अपराजित शत्रुओं को विनष्ट करो।

सतेजानातिसुमतिंयविष्ठयईवतेब्रह्मणेगातुमैरत् ।
विश्वान्यस्मैसुदिनानिरायोद्युम्नान्यर्योविदुरोअभिद्यौत् ॥ ६ ॥

सः । ते । जानाति । सुऽमतिम् यविष्ठ । यः । ईवते ।
ब्रह्मणे । गातुम् । ऐरत् । विश्वानि । अस्मै । सुऽदिनानि । रायः ।
द्युम्नानि । अर्यः । वि । दुरः । अभि । द्यौत् ॥ ६ ॥

यविष्ठ युवतम यद्वा देवानांहवींषिमिश्रयितृतम हेअग्ने यःपुमान् ईवते गमनवते कल्याणहेतुभूतागमनाय ब्रह्मणे परिवृढाय तुभ्यंगातुं गीयते उच्चार्यतइतिगातुःस्तोत्रं तदैरत्प्रेरयति सपुमान् ते तव सुमतिं कल्याणकारीमनुग्रहात्मिकांबुद्धिंजानाति जानातुइत्यर्थः अस्मैस्तोत्रंकृतवतेयजमानायतदर्थंविश्वानिसुदिनानिशोभनानि दिनानिरायोधनानिद्युम्नानिद्युतिमन्तिरत्नकनकादीनि दुरः गृहान् अभिअभिलक्ष्य अर्यः यज्ञानांस्वामी त्वं विद्यौत् विशेषेणद्योतस्व केचिदत्रवाक्यभेदमङ्गीकुर्वते स्तोत्रंकृतवतेयजमानायविश्वानिसुदिनानि अभ्युदयकारीणि भवन्ति रायः रान्तिक्षीरादीनीतिरायोगोधनानिद्युम्नानि द्योतमानानिकनकादीनिचास्मैभवन्ति अर्यः कर्मणामनुष्ठाता सः यजमानःदुरःगृहानभिविद्यौत् विशेषेणद्योतते ॥ ईवते ईगतौ क्विप् तदस्यास्तीतिमतुप् छन्दसीरइतिमतुपोवत्वम् । ऐरत् ईरगतौ यद्वृत्तयोगादनिघातः । अर्यः ऋगतौ अर्यःस्वामिवैश्ययोरितियत्प्रत्ययान्तोनिपातितः स्वामिन्यन्तोदात्तत्वम् । द्यौत् द्युतदीप्तौ छान्दसे लुङिद्युद्भ्योलुङीतिपरस्मैपदं बहुलंछन्दसीत्यडभावः ॥ ६ ॥

६. युवतम अग्नि, तुम गमनशील और प्रधान हो। जो कोई तुम्हारे लिए स्तुति प्रेरित करता है, वह पुरुष तुम्हारे अनुग्रह को प्राप्त करता है। तुम यज्ञस्वामी हो। तुम उसके लिए समस्त शोभन दिनों को, धनों को और रत्नों को ग्रहण करो। तुम उसके गृह के अभिमुख द्योतित होओ।

सेदग्नेअस्तुसुभगःसुदानुर्यस्त्वानित्येनहविषायउक्थैः ।
पिप्रीषतिस्वआयुषिदुरोणेविश्वेदस्मैसुदिनासासदिष्टिः ॥ ७ ॥

सः । इत् । अग्ने । अस्तु । सुऽभगः । सुऽदानुः । यः । त्वा । नित्येन ।
हविषा । यः । उक्थैः । पिप्रीषति । स्वे । आयुषि । दुरोणे ।
विश्वा । इत् । अस्मै । सुऽदिना । सा । असत् । इष्टिः ॥ ७ ॥

हेअग्ने यःपुमानित्येन यावज्जीवं संकल्पितेनाग्निहोत्रादिसाधनभूतेनहविषा त्वा त्वां पिप्रीषति प्रीणयितुमिच्छति यश्चोक्थैःशस्त्रैः प्रीणयितुमिच्छति सेत् सएवपुमान् सुभगःशोभनधनः सौभाग्यवान्वासुदानुः शोभनदानोपेतश्चास्तु किंच दुरोणेदुरवनेकृच्छ्रलभ्येस्वेस्वकीयेवायुषिशतवर्षात्मकमायुर्जीवनेनतिष्ठतु अस्मैयजमानायविश्वा सर्वाणि सुदिना शोभनानिदिनानि भवन्तु अस्य सेदिः सयज्ञः असत् फलसाधनसमर्थोभवतु ॥ पिप्रीषति प्रीञ्तर्पणे धातोःकर्मणइतिसन् । असत् अस्तेर्लेट्यडागमः । इष्टिः मन्त्रेवृषेत्यादिनाक्तिचुदात्तः ॥ ७ ॥

७. हे अग्नि, जो व्यक्ति नित्य सङ्कल्पित हव्य-द्वारा अथवा उक्थ मन्त्र द्वारा तुम्हें प्रीत करने की इच्छा करता है, वह पुरुष सौभाग्यवान् और सुदाता हो। वह कठिनता से लाभ करने के योग्य अपनी सौ वर्षों की आयु को प्राप्त करे। उस यजमान के लिए सब दिन शोभन हों। वह यज्ञफल-साधन-समर्थ हो।

उखासंभरणीयेष्टौअग्नेःअनुवाक्यार्चामितइतियाज्या सूत्रितञ्च—अर्चामितेसुमतिंघोष्यर्वागितीदं प्रभृतिकर्मणामिति ।

अर्चांमितेसुमतिंघोष्यर्वाक्सन्तेवावाताजरतामियंगीः ।
स्वश्वास्त्वासुरथामर्जयेमास्मेक्षत्राणिधारयेरनुद्यून् ॥ ८ ॥

अर्चांमि । ते । सुऽमतिम् । घोषि । अर्वाक् । सम् । ते ।
ववातां । जरताम् । इयम् । गीः । सुऽअश्वाः । त्वा । सुऽरथाः ।
मर्जयेम । अस्मे इति । क्षत्राणि । धारयेः । अनु । द्यून् ॥ ८ ॥

हेअग्ने ते तव सुमतिम् अनुग्रहकरांशोभनांबुद्धिम् अर्चामि पूजयामि वावाता पुनःपुनस्त्वामभिगच्छन्तीयमुच्यमानागीर्वाग्घोषि घोषयुक्तंयथाभवतितथार्वाक् त्वदभिमुखं ते त्वां संजरतांस्तौतु वयमपि स्वश्वाःशोभनाश्वोपेताः सुरथाश्च उपलक्षणमेतत् पुत्रपौत्रादिभिःसहिताः सन्तस्त्वांमर्जयेम अलङ्कुर्याम परिचरेमेतियावत् त्वंद्युअनुद्यून् अन्वहमस्मेअस्मासुक्षत्राणिधना निधारयेः निधेहि ॥ घोषि घुषशब्दने औणादिकइन् नित्त्वादाद्युदात्तः । वावाता वागतिगन्धनयोरित्यस्ययङ्लुगन्तस्यरूपम् । मर्जयेम मृजूशौचालङ्कारयोः ण्यन्तस्य लिङिरूपं वृद्ध्यभावश्छान्दसः ॥ ८ ॥

हे अग्नि, हम तुम्हारी अनुग्रह-बुद्धि की पूजा करते हैं। तुम्हारे उद्देश से उच्चारित वाक्य प्रतिध्वनित होकर तुम्हारी स्तुति करें। हम लोग पुत्र-पौत्रादि के साथ उत्तम रथ और उत्तम अश्वों से युक्त होकर तुम्हारी परिचर्या करेंगे। तुम हम लोगों के लिए प्रतिदिन धन धारण करो।

इहत्वाभूर्याचरेदुपत्मन्दोषावस्तर्दीदिवांसमनुद्यून् ।
क्रीळन्तस्त्वासुमनसःसपेमाभिद्युम्नातस्थिवांसोजनानाम् ॥ ९ ॥

इह । त्वा । भूरि । आ । चरेत् । उप । त्मन् । दोषाऽवस्तः ।
दीदिऽवांसम् । अनु । द्यून् । क्रीळन्तः । त्वा । सुऽमनसः । सपेम ।
अभि । द्युम्ना । तस्थिऽवांसः । जनानाम् ॥ ९ ॥

हे अग्ने इहरक्षोहननाख्येकर्मणि यद्वा अस्मिँल्लोकेपुरुषःदोषावस्तःरात्रावहनिचदीदिवां-संदीप्यमानंत्वामनुद्यून्अन्वहं त्मन् आत्मना स्वयमेवउपसमीपे भूरि भूयिष्ठं यथाभवतितथा आचरेत् परिचरति तस्माद्वयमपिजनानांशत्रूणांद्युम्नानिधनानिअभितस्थिवांसःस्वात्मसात्कुर्वन्तः अतएवक्रीळन्तः स्वेस्वेगृहेपुत्रपौत्रादिभिःसहक्रीडन्तः तथा सुमनसःशोभनमनस्काःसन्तस्त्वांसपेम परिचरेम यद्वा दोषावस्तरितिसंबुद्धिः दोषायाःरात्रेस्तत्स्थस्यतमसो वस्तः आच्छादयितः निवारयितः ॥ त्मन् आत्मन्शब्दस्यतृतीयायाःसुपांसुलुगितिलुक् मन्त्रेष्वाङ्यादेरात्मनइत्याकारलोपः । दोषावस्तः द्वन्द्वपक्षेकार्तकौजपादयश्चेतिपूर्वपदप्रकृतिस्वरः संबुद्धिपक्षेआमन्त्रितस्यपादादित्वादाष्टमिकमाद्युदात्तत्वम् । सपेम षपसमवाये लिङिरूपं निघातः ॥ ९ ॥

९. हे अग्नि, तुम अहर्निश प्रदीप्त होते हो। इस लोक में पुरुष तुम्हारे समीप तुम्हारी परिचर्या प्रतिदिन करते हैं। हम भी शत्रुओं के धन को आत्मसात् करके अपने गृह में पुत्र-पौत्रों के साथ विहार करते हुए प्रसन्नतापूर्वक तुम्हारी परिचर्या करते हैं।

यस्त्वास्वश्वःसुहिरण्योअग्नउपयातिवसुमतारथेन ।
तस्यत्राताभवसितस्यसखायस्तआतिथ्यमानुषग्जुजोषत् ॥१०॥२४

यः । त्वा । सुऽअश्वः । सुऽहिरण्यः । अग्ने । उपऽयाति ।
वसुऽमता । रथेन । तस्य । त्राता । भवसि । तस्य । सखा ।
यः । ते । आतिथ्यम् । आनुषक् । जुजोषत् ॥ १० ॥ २४ ॥

हे अग्ने यःपुमान्स्वश्वः शोभनाश्वोपेतः सुहिरण्यः यागयोग्यधनोपेतः वसुमता व्रीह्यादिधनयुक्तेनरथेनसहितःसन् त्वात्वामुपयाति परिचरणार्थंतवसमीपंगच्छति तस्यपुंसः त्राता सर्वदुरितेभ्योरक्षकोभवसि यश्चपुमान्तेतवआतिथ्यमतिथियोग्यांपूजामानुषक् अनुक्रमेणजुजोषत् जोषयति तस्यपुंसः सखा तदुचितफलप्रदानेनोपकर्ताभवसि ॥ उपयाति सहसुपेत्यत्रसहेतियोगविभागात्समासः तिपःपित्वादनुदात्तत्वेधातुस्वरः तिङिचोदात्तवतीतिगतेर्निघातः । आतिथ्यम् अतिथिशब्दादतिथेर्ञ्यइतिञ्यप्रत्ययः प्रत्ययस्वरः । जुजोषत् जोषयतेर्लेटिबहुलंछन्दसीतिशपः श्लुः छन्दस्युभयथेतितिपआर्धधातुकत्वाण्णिलोपः अभ्यस्तानामादिरित्याद्युदात्तत्वम् ॥ १० ॥

१०. हे अग्नि, जो पुरुष सुन्दर अश्वयुक्त होकर यागयोग्य धन-विशिष्ट होकर और व्रीहि आदि धन से संयुक्त रथ के साथ तुम्हारे समीप गमन करता है। उस पुरुष के तुम रक्षक होओ। जो पुरुष अनुक्रम से अतिथियोग्य पूजा तुम्हें प्रदान करता है, उसके तुम सखा होओ।

अथैकादशी—

महोरुजामिबन्धुतावचोभिस्तन्मापितुर्गोतमादन्वियाय ।
त्वंनोअस्यवचसश्चिकिद्धिहोतर्यविष्ठसुक्रतोदमूनाः ॥ ११ ॥

महः । रुजामि । बन्धुता । वचःऽभिः । तत् । मा । पितुः ।
गोतमात् । अनु । इयाय । त्वम् । नः । अस्य । वचसः ।
चिकिद्धि । होतः । यविष्ठ । सुक्रतो इति सुऽक्रतो । दमूनाः ॥ ११ ॥

हेहोतः देवानामाह्वातः यविष्ठ युवतम सुक्रतो शोभनप्रज्ञ हे अग्ने वचोभिः त्वदुद्देशेनकृतैः स्तोत्रैःसमुपजातायेयंबन्धुताबन्धुभावः तयाबन्धुतया महोमहतोराक्षसान्रुजामि भनज्मि तत्ताद्दृशंस्तोत्रात्मकंवचः पितुरुत्पादयितुः गोतमादेतत्संज्ञकादृषेःसकाशान्मामनुइयाय दमूनादान्तमनादानमनावाशत्रूणामुपक्षपयितावाताद्दृशस्त्वंनोऽस्मदीयस्यास्यवचसःस्तोत्रात्मकमेतद्वाक्यंचिकिद्धि जानीहि ॥ चिकिद्धि कितज्ञाने लौहोत्यादिकः लेटिरूपम् । होतः पादादित्वात्षाष्ठिकमाद्युदात्तत्वम् । इतरयोस्तुनामन्त्रितेसमानाधिकरणेइतिप्रथमस्याविद्यमानवत्त्वनिषेधादपादादित्वेनिघातः ॥ ११ ॥

११. हे होता, युवतम और प्रज्ञावान् अग्नि, स्तोत्र-द्वारा जो बन्धुता उत्पन्न हुई है, उसके द्वारा हम महान् राक्षसरूप शत्रुओं को भग्न करें। यह स्तोत्रात्मक वचन पिता गोतम के निकट से हमारे समीप आया है। तुम शत्रुओं के विनाशक हो। तुम हमारे स्तुति-वचन को जानो।

अथद्वादशी—

अस्वप्नजस्तरणयःसुशेवाअतन्द्रासोऽवृकाअश्रमिष्ठाः ।
तेपायवःसध्र्यञ्चोनिषद्याग्नेतवनःपान्त्वमूर ॥ १२ ॥

अस्वप्नऽजः । तरणयः । सुऽशेवाः । अतन्द्रासः । अवृकाः ।
अश्रमिष्ठाः । ते । पायवः । सध्र्यञ्चः । निऽसद्य । अग्ने ।
तव । नः । पान्तु । अमूर ॥ १२ ॥

अमूर अमूढ सर्वज्ञ यद्वा अमूर अप्रतिहतगते हेअग्ने अस्वप्नजः अस्वपन्तः अप्रमत्ताइत्यर्थः तरणयः सततगमनस्वभावाः आपद्भ्यस्तारकावासुशेवाःसुसुखाःअतन्द्रासः अतन्द्राःअनलसाःसर्वदोद्युक्ताः अवृकाः अहिंसकाः अश्रमिष्ठाः अश्रान्ततमाःसध्र्यञ्चःपरस्परंसंगताः पायवोरक्षकास्ते तादृशास्तवरश्मयः निषद्यास्मिन्यज्ञेनिषण्णाःसन्तोनोऽस्मान्पान्तुरक्षन्तु ॥

अस्वप्नजः स्वपितृषोर्नेनिङ्प्रत्ययः मध्येवग्रहश्छान्दसः । सध्र्यञ्चः सहपूर्वादञ्चतेः क्विप् सहस्य सध्रिरिति सध्र्यादेशः सध्र्यादेशस्यान्तोदात्तत्वनिपातनाद्यणादेशे उदात्तस्वरितयोरिति स्वरितत्वम् । अमूर मुह वैचित्ये निष्ठायां कस्यरेफश्छान्दसः यद्वा मूङ् बन्धने औणादिको रक्प्रत्ययः ॥ १२ ॥

१२. हे सर्वज्ञ अग्नि, तुम्हारी रश्मियाँ सतत जागरूक, सर्वदा गमनशील सुखान्वित, आलस्य-रहित, अहिंसित, अश्रान्त, परस्पर सङ्गत और रक्षणक्षम हैं। वे इस स्थान पर उपवेशन करके हमारी रक्षा करें।

**ये पायवो मामतेयं ते अग्ने पश्यन्तो अन्धं दुरितादरक्षन् ।**
**ररक्ष तान्त्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो नाह देभुः ॥ १३ ॥**

ये । पायवः । मामतेयम् । ते । अग्ने । पश्यन्तः । अन्धम् ।
दुःऽइतात् । अरक्षन् । ररक्ष । तान् । सुऽकृतः । विश्वऽवेदाः ।
दिप्सन्तः । इत् । रिपवः । न । अह । देभुः ॥ १३ ॥

अत्रेयमैतिहासिकी कथा—उचथ्यस्य गर्भिणीं ममतानामधेयां भार्यां तदनुजो बृहस्पतिश्चकमे तस्यां रेत आसिक्तुं तं बृहस्पतिं गर्भस्थं रेतोऽब्रवीत् रेतोऽस्मा सेक्षीः अहमत्र वसामीति एवमुक्तो बृहस्पतिः निरुद्धरेतस्कः सन् रेतोरूपं गर्भं शशाप जात्यन्धत्वरूपं दीर्घं तमः प्राप्नुहीति ततस्तस्यां दीर्घतमा अजनिष्ट स चान्ध्यपरिहारायाग्निं स्तुत्वा चक्षुरलभतेति तदिदानीमाह—हे अग्ने पायवः रक्षकाः पश्यन्तः अन्धोऽयमिति कृपादृष्ट्या पश्यन्तः ते तव ये रश्मयः मामतेयं ममतायाः पुत्रमन्धं चक्षुर्हीनं दीर्घतमसं दुरितात् आन्ध्यलक्षणाच्छापात् अरक्षन् चक्षुष्प्रदानेनापालयन् विश्ववेदाः विश्वप्रज्ञो धनवान् सुकृतः शोभनचक्षुष्प्रदानादिकर्मकृतवतः तान् रश्मीन् ररक्ष आदरेण परिगृह्य पालयति तेषां परिमहसिद्धिरभिधीयते दिप्सन्त इत् दम्भितुं परिभवितुमिच्छन्त एव रिपवः शत्रवः एनं दीर्घतमसं नाह देभुः नैव परिभवन्ति खलु ॥ मामतेयं ममताया अपत्यमित्यर्थे स्त्रीभ्यो ढक् । दिप्सन्तः दम्भु दम्भे सनीवन्तर्धेत्यादिना इडभावः दम्भ इच्चेतीकारः । देभुः दम्भिमन्थिदम्भिष्वञ्जीनामुपसंख्यानमिति लिटः कित्त्वादुपधालोपः ॥ १३ ॥

१३. हे अग्नि, रक्षा करनेवाली तुम्हारी इन रश्मियों ने कृपा करके ममता के पुत्र चक्षुहीन दीर्घतमा की शाप से रक्षा की थी। तुम सर्व-प्रज्ञावान् हो। तुम आदरपूर्वक उन रश्मियों का पालन करते हो। तुम्हारे शत्रु तुम्हें विनष्ट करने की इच्छा करके भी तुम्हारा विनाश नहीं कर सकते हैं।

**त्वया वयं सधन्य१स्त्वोतास्तव प्रणीत्यश्याम वाजान् ।**
**उभा शंसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्रयाण ॥ १४ ॥**

त्वया । वयम् । सुधन्यः । त्वाऽऊताः । तव । प्रनीती ।
अश्याम । वाजान् । उभा । शंसा । सूदय । सत्यऽताते ।
अनुष्ठुया । कृणुहि । अह्रयाण ॥ १४ ॥

अह्रयाण अलज्जितगमन अह्रयाणो ह्रीतयान इति यास्कः । तादृश हेऽग्ने वयं स्तोतारः त्वया सधन्यः त्वत्प्रसादात्समानधनाः त्वोताः त्वया रक्षिता वयं तव प्रणीती प्रणीत्या तव प्रेरणेनानुष्ठया वा वाजानन्नान्यश्याम प्राप्नुयाम हे सत्यताते सत्यं तनोतीति वा सत्यं तायते यस्मिन्निति वा सत्यतातिः हे सत्यताते शंसा पापानां शंसितारौ उभा उभौ आसन्नविप्रकृष्टौ शत्रू सूदय जहि अनुष्ठुया अनुक्रमेण कृणुहि अस्मिन् सूक्ते प्रतिपादितमर्थं कुरु ॥ सधन्यः धनमेषामस्तीति छन्दसीवनिपाविति ईप्रत्ययः परनेकाच इति यण् उदात्तस्वरितयोरिति स्वरितत्वम् । अनुष्ठुया अपदुःसुषु स्थ इति विधीयमानः कुप्रत्ययः बहुलवचनादनुपूर्वस्यापि भवति सुपांसुलुगिति तृतीयाया याजादेशः । अह्रयाण ह्रीलज्जायां बहुलं छन्दसीति शपः श्लुः अभ्यासाभावः अनित्यमागमशासनमिति शुगभावः ॥ १४ ॥

१४. हे अग्नि, तुम्हारा गमन लज्जाशून्य है। हम स्तोता तुम्हारे अनुग्रह से समान धनवाले होकर तुम्हारे द्वारा रक्षित हों। तुम्हारी प्रेरणा से अन्न लाभ करें। हे सत्यविस्तारक और पाप-नाशक, निकटस्थ या दूरस्थ शत्रुओं को विनष्ट करो तथा अनुक्रम से समस्त कार्य (इस सूक्त में प्रतिपादित) करो।

अथपञ्चदशी—

अयातेअग्नेसमिधाविधेमप्रतिस्तोमंशस्यमानंगृभाय ।
दहाशसोरक्षसःपाह्य१स्मान्द्रुहोनिदोमित्रमहोअवद्यात् ॥१५॥२५

अया । ते । अग्ने । सम्ऽइधा । विधेम । प्रति । स्तोमम् ।
शस्यमानम् । गृभाय । दह । अशसः । रक्षसः । पाहि ।
अस्मान् । द्रुहः । निदः । मित्रऽमहः । अवद्यात् ॥ १५ ॥ २५ ॥

हेऽग्ने अया अनया समिधा दीप्तया स्तुत्या ते त्वां विधेम परिचरेम अस्माभिः शस्यमानमिमं स्तोमं स्तोत्रं प्रतिगृभाय प्रतिगृहाण अशसः शंसन्ति स्तुवन्तीति शसः स्तोतारः तेन भवन्तीत्यशसः अशंसाः तान् रक्षसो दह भस्मसात्कुरु हे मित्रमहः मित्रैः पूजनीय हेऽग्ने द्रुहो द्रोग्धुः निदः निन्द-

१ नि० ५. १५.

कात् अवद्यात्परिवादाच्चास्मान्पाहि रक्ष ॥ गृभाय ग्रहेर्लोटि छन्दसिशायजपीतिश्नःशायच् हृग्रहोर्भः । पाहि वाक्यभेदादनिघातः । निदः णिदिकुत्सायां क्विप् आगमानुशासनस्यानित्यत्वान्नुमभावः सावेकाच इतिविभक्तेरुदात्तत्वम् । अवद्यात् अवद्यपण्येतियत् यतोऽनावर्थेऽन्यन्तोदात्तत्वम् । मित्रमहोअवद्यादित्यत्रसंहितायामव्यादवद्यादितिएङःप्रकृतिभावः ॥ १५ ॥

१५· हे अग्नि, इस प्रदीप्त स्तुति-द्वारा हम तुम्हारी परिचर्या करें। हमारे इस स्तोत्र को प्रतिगृहीत करो। स्तुतिविहीन राक्षसों को भस्मसात् करो। हे मित्रों के पूजनीय अग्नि, शत्रु और निन्दकों के परिवाद से हमारी रक्षा करो।

॥ इतितृतीयस्यचतुर्थेपञ्चविंशोवर्गः ॥ २५ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

॥ इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेणसायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येतृतीयाष्टकेचतुर्थोऽध्यायः ॥ ३ ॥ ४ ॥

॥ श्रीगणेशायनमः ॥

यस्यनिःश्वसितंवेदायोवेदेभ्योऽखिलंजगत्॥ निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥ १ ॥

इत्थंतृतीयाष्टकस्यचतुर्थोध्याय आदरात् ॥ व्याख्यातःसायणाचार्येणपञ्चमोव्याकरिष्यते ॥ २ ॥

चतुर्थेमण्डलेऽस्मिन्ननुवाकेदशसूक्तानि वैश्वानरायेतिपञ्चदशर्चंपञ्चमंसूक्तं वामदेवस्यार्षं त्रैष्टुभंवैश्वानराग्निदेवताकम् अत्रानुक्रमणिका—वैश्वानरायवैश्वानरीयमिति विनियोगो-लैङ्गिकः ।

ॐ वैश्वानरायमीळ्हुषेसजोषाःकथादाशेमाग्नयेबृहद्भाः ।
अनूनेनबृहतावक्षथेनोपस्तभायदुपमिन्नरोधः ॥ १ ॥

वैश्वानराय । मीळ्हुषे । सऽजोषाः । कथा । दाशेम । अग्नये ।
बृहत् । भाः । अनूनेन । बृहता । वक्षथेन । उप । स्तभायत् ।
उपऽमित् । न । रोधः ॥ १ ॥

सजोषाः सजोषसःसमानप्रीतियुक्तावयमृत्विग्यजमानाः वैश्वानराय विश्वानरसंबन्धि-नएतन्नामकाय मीळ्हुषे अभिमतवृष्ट्यादिसेक्त्रेबृहत् बृहते महते भाः भासमानायाग्नयेदेवाय कथा कथं केनप्रकारेणदाशेम दद्याम सामर्थ्याद्धविरितिगम्यते अथवा बृहद्भाइत्युत्तरत्रयो-ज्यम् कथादाशेमेत्युक्तम् किंतत्रकारणमितितदुच्यते—योऽग्निः बृहन्महान्भाः भासमानश्चस अनूनेन अविकलेन संपूर्णेन अतएव बृहताप्रभूतेनवक्षथेनवोढव्येनस्वशरीरेण उपस्त-भायत् उपस्तभ्नाति सामर्थ्याद्द्यामितिशेषः द्युलोकंव्याप्नोतीत्यर्थः तत्रदृष्टान्तः—उप-मिन्नरोधः उपसमीपेमीयतेक्षिप्यतइत्युपमित् स्थूणा सा यथातृणाच्छादनादेर्निरोधकं वंशादिकमुपस्तभ्नातितद्वत् यद्वा वक्षथेन उपलक्षणेनकक्षादिदाहकेनस्तोत्रेणसहद्युलोक-मुपस्तभायत् ॥ स्तभायत् स्तन्भुस्तुन्भुइत्यादिना श्नः छन्दसिशायजपीतिव्यत्ययेनाहावपिशायज्मा-देशः बहुलंछन्दसीत्यडभावः किमिवउपमिन्नरोधः उपसमीपेमीयतइत्युपमिदुदकंकूलमिव ॥ १ ॥

१. समान रूप से प्रीतियुक्त होकर हम यजमान वैश्वानर नामक अभीष्टवर्षी, एवम् महान् दीप्तियुक्त अग्नि को किस प्रकार से हव्य प्रदान करें? स्तम्भ जिस तरह से छादन (छप्पर) को धारण करता है, उसी तरह से वे सम्पूर्ण अतएव बृहत् शरीर-द्वारा द्युलोक का धारण करते हैं।

**मानिन्दतयइमांमह्यंरातिंदेवोददौमर्त्यायस्वधावान् ।**
**पाकायगृत्सोअमृतोविचेतावैश्वानरोनृतमोयह्वोअग्निः ॥ २ ॥**

मा । निन्दत । यः । इमाम् । मह्यम् । रातिम् । देवः । ददौ । मर्त्याय । स्वधाऽवान् । पाकाय । गृत्सः । अमृतः । विऽचेताः । वैश्वानरः । नृऽतमः । यह्वः । अग्निः ॥ २ ॥

हेहोत्रादयः अमुंवैश्वानरमग्निंमानिन्दत निन्दांमाकुरुत स्तुतेत्यर्थः योदेवोदीप्यमानोऽग्निः स्वधावानन्नवान्हविर्लक्षणेनान्नेनतद्वान्सन् मर्त्यायमरणधर्मणेपाकायपरिपक्वप्रज्ञायमह्यं यजमानाय इमामिदानींदीयमानमकारांरातिंधनंददौ दत्तवान् सविशेष्यते गृत्सोमेधावी मेधाविनामेतत् अमृतः अमरणस्वभावः विचेताः विशिष्टप्रज्ञोवैश्वानरः विश्वैर्नरैराहवनीयादिरूपेणनीयमानः नृतमः नेतृतमः ऋत्विगादीनां यह्वोमहान् महन्नामैतत् अग्निः अङ्गनादिगुणविशिष्टः तादृशमग्निंस्तुतेतिभावः ॥ २ ॥

२. हे होताओ, जो अग्निदेव हव्ययुक्त होकर मरणशील और परिपक्व बुद्धिविशिष्ट हम यजमानों को धन दान करते हैं, उनकी निन्दा मत करो। वे मेधावी, अमर और प्रज्ञावान् हैं। वे वैश्वानर, नेतृश्रेष्ठ एवम् महान् हैं।

**साममद्विबर्हामहितिग्मभृष्टिःसहस्ररेतावृषभस्तुविष्मान् ।**
**पदंनगोरपगूळ्हंविविद्वानग्निर्मह्यंप्रेदुवोचन्मनीषाम् ॥ ३ ॥**

साम । द्विऽबर्हाः । महि । तिग्मऽभृष्टिः । सहस्रऽरेताः । वृषभः । तुविष्मान् । पदम् । न । गोः । अपऽगूळ्हम् । विविद्वान् । अग्निः । मह्यम् । प्र । इत् । ऊँ इति । वोचत् । मनीषाम् ॥ ३ ॥

द्विबर्हाः द्वयोर्मध्यमोत्तमयोःस्थानयोःपरिवृढः तिग्मभृष्टिः तीक्ष्णतेजाः सहस्ररेताः बहुविधहिरण्यरेतस्कः रेतःशब्दःसारवाची प्रभूतसारोवा वृषभोवर्षिताकामानां तुविष्मान्बहुधनः ईदृशोऽयमग्निः अत्यन्तगोपितंगोःपदंन नष्टंगोःपदमिव अपगूळ्हमत्यन्तरहस्यं मनीषामस्मो ज्ञानधीःसञ्ज्ञातव्येऽर्वतेते मनीषांज्ञातव्यंमहिमन्तपूज्यंसाममन्त्रस्याभिमतंस्तोत्रंविविद्वान्विशेषेणजानन्मह्यंप्रेदुवोचत् प्रब्रवीतु ॥ ३ ॥

३. मध्यम और उत्तम रूप स्थानद्वय को परिव्याप्त करनेवाले, तीक्ष्ण तेजोविशिष्ट, प्रभूत सारवान् अभीष्टवर्षी और धनवान् अग्नि अत्यन्त गुप्त गोपद की तरह रहस्य हैं। वे आदरणीय हैं। महान् स्तोत्र को विशेष रूप से जानकर विद्वान् हमें कहें।

अथ चतुर्थी—

**प्रतॉअ॒ग्निर्बॅभसत्ति॒ग्मज॑म्भ॒स्तपि॑ष्ठेन॒शोचि॑षा॒यः सु॒राधाः॑ ।**
**प्रयेमि॒नन्ति॒वरु॑णस्य॒धाम॑प्रि॒याम्मि॒त्रस्य॒चेत॑तोध्रु॒वाणि॑ ॥ ४ ॥**

प्र । तान् । अ॒ग्निः । ब॒भ॒स॒त् । ति॒ग्मऽज॑म्भः । तपि॑ष्ठेन । शो॒चिषा॑ । यः । सु॒ऽराधाः॑ । प्र । ये । मि॒नन्ति॑ । वरु॑णस्य । धाम॑ । प्रि॒या । मि॒त्रस्य॑ । चेत॑तः । ध्रु॒वाणि॑ ॥ ४ ॥

योऽग्निः सुराधाः शोभनधनः तिग्मजम्भः तीक्ष्णदंष्ट्रःसन् तपिष्ठेनशोचिषा अतिशयेनशत्रूणांतापकेनतेजसातान्वक्ष्यमाणान्द्वेष्टॄन् प्रबभसत् प्रकर्षेणभर्त्सयतु दहत्वित्यर्थः भसभर्त्सनदीप्त्योः लेटि इतश्चलोपइतीकारलोपः लेटोऽडाटावित्यडागमः तानित्युक्तंकानित्याह येद्वेष्टारः चेततः जानतः एतदुभयविशेषणंमित्रस्यवरुणस्यच प्रिया प्रियाणि ध्रुवाणि स्थिराणि धाम धामानि तेजःस्थानानि कर्माणिवा प्रमिनन्ति प्रकर्षेणहिंसन्ति मीञ्हिंसायां मी-नातेर्निगमेइतिह्रस्वत्वं विकरणस्वरः ॥ ४ ॥

४. विद्वान् मित्र और वरुण के प्रिय एवम् स्थिर तेज को जो द्वेषी हिंसित करता है, उसे सुन्दर धनविशिष्ट और तीक्ष्णदन्त अग्नि अत्यन्त सन्तापकर तेज-द्वारा दग्ध करें ।

**अ॒भ्रा॒तरो॒नयोष॑णो॒व्यन्तः॑पति॒रिपो॒नजन॑योदु॒रेवाः॑ ।**
**पा॒पासः॒सन्तो॑अनृ॒ताअ॑स॒त्याइ॒दम्प॒दम॑जनतागभी॒रम् ॥ ५ ॥ १ ॥**

अ॒भ्रा॒तरः॑ । न । योष॑णः । व्यन्तः॑ । प॒ति॒ऽरिपः॑ । न । जन॑यः । दुः॒ऽएवाः॑ । पा॒पासः॑ । सन्तः॑ । अ॒नृ॒ताः । अ॒स॒त्याः । इ॒दम् । प॒दम् । अ॒ज॒न॒त॒ । ग॒भी॒रम् ॥ ५ ॥ १ ॥

अभ्रातरः भ्रात्रादिबन्धुरहिताः योषणोन गतभर्तृकायोषितइव वायपूर्वस्यनिगमेइति विकल्पनादीर्घाभावः तायथापितृगृहान्पितृगृहंप्रत्यायन्तितद्वत् व्यन्तः गच्छन्तः यज्ञादी-नत्यक्त्वा अमार्गेवर्तमानाइत्यर्थः तथा पतिरिपोनजनयः पतिद्वेषिण्यःस्त्रियइव दुरेवाः दु-ष्टगतयः दुराचाराः अतएवपापासः पापाःसन्तः अनृताः मानससत्यरहिताः असत्याःवाचिक-सत्यरहिताः अमसाचाचाग्निमभजमानाःइयंपापिभिरनुभूयमानत्वात्प्रसिद्धंगभीरमगाधंपदंनरक-स्थानंजनत अजनयन्त उत्पादयन्ति अधिकैरेवन्तर्भावितण्यर्थोअत्रत्यपेनैकवचनम् ॥ ५ ॥

५. भ्रातृरहिता, विपथगामिनी योषित् की तरह तथा पतिविद्वेषिणी कुत्सिताचारिणी स्त्री की तरह यज्ञविहीन, अग्निविद्वेषी, सत्यरहित तथा सत्यवचनशून्य पापी नरकस्थान को उत्पन्न करता है ।

त्व जमाह नवमानरोहित् माद्रवीतेमध्यहं नवारुनवमानरोहीतिविमागरमाणरोहीतिवेतियोस्कः । अग्रेपुरस्तात्पूर्वस्यांदिशि स्यः आरोप्यतिस्वात्मनिसस्यादीनि रुपितिसूमिरुच्यते तस्याःस-काशात् ससस्यछ्रुसोपममेतत् स्वपतइव निष्वस्यपृभे: पृथुनामैतत् स्वःपृभिरितिद्युलोका-दित्ययोःसाधारणनामसुपाठात् ज्योतिरादिभिःस्पृश्यमानस्यद्युलोकस्यापिउपरिपर्मन् वर्मणे च-रणाय चरेरौणादिकोमनिन् सुपांसुलुगितिचतुर्थ्यालुक् आरुपितम् आरोपितंदेवैस्तमस्यादृ-तिपूर्वत्रान्वयः ॥ ७ ॥

७. यह सुयोग्य एवम् सबके प्रति समान शोधयित्री स्तुति उपयुक्त पूजाविधि के साथ वैश्वानर के निकट शीघ्र गमन करे। वह वैश्वानर के आरोहणकारी दीप्त मण्डल पृथ्वी के निकट से अचल द्युलोक के ऊपर विचरण करने के लिए पूर्व दिशा में आरोपित हुई है।

प्रवाच्यंवचसःकिंमेअस्यगुहाहितमुपनिणिग्वदन्ति।
यदुस्रियाणामपवारिवव्रन्पातिप्रियंरुपोअग्रंपदंवेः॥ ८ ॥

प्रऽवाच्यम्। वचसः। किम्। मे। अस्य। गुहा। हितम्। उप। निऽनिक्। वदन्ति। यत्। उस्रियाणाम्। अप। वाःऽइव। व्रन्। पाति। प्रियम्। रुपः। अग्रम्। पदम्। वेरिति वेः॥ ८॥

मेमदीयस्य अस्य वक्ष्यमाणस्यवचसोवाक्यस्य किम्प्रवाच्यमस्ति तथ्यमेवोच्यतइत्यर्थः किंतत्प्रवाच्यमुच्यते उस्रियाणां गोनामैतत् क्षीरादुत्स्राविणीनांगवांसंबन्धियत्क्षीरं वारिवदुदक-मिव तदपाक्षेकेनाविष्कुर्वन्ति तथा अपव्रन् अपवृण्वन्तिदोग्धारः निणिक् नितरांनेनेक्ति शोधयतीतिनिर्णिक् क्षीरमुच्यते तादृक्क्षीरम् अनेनवैश्वानरेण गुहागुहायाम् उपहितम् उपनि-हितं वदन्तिवेत्तारः किंचायंवेः व्याप्तायाःरुपःभूम्याःप्रियं सर्वेषामाधारत्वेनप्रियमग्रम् मग्रं श्रेष्ठंपदंस्थानंपातिरक्षति ॥ ८ ॥

८. लोग कहते हैं कि दोग्धागण जल की तरह जिस दुग्ध का दोहन करते हैं, उस दुग्ध को वैश्वानर गुहा में छिपा रखते हैं। वे विस्तीर्ण पृथिवी के प्रिय एवम् श्रेष्ठ स्थान की रक्षा करते हैं। मेरे इस वाक्य के अतिरिक्त और क्या वक्तव्य हो सकता है?

अथ नवमी—

इदमुत्यन्महिमहामनीकंयदुस्रियासचतपूर्व्यंगौः।
ऋतस्यपदेअधिदीद्यानंगुहारघुष्यद्रघुयद्विवेद ॥ ९ ॥

---

१ नि० ६. १७.

इदम् । ऊँ इति । त्यत् । महि । महाम् । अनीकम् ।
यत् । उस्रियाः । सचत । पूर्व्यम् । गौः । ऋतस्य । पदे ।
अधि । दीद्यानम् । गुहा । रघुऽस्यत् । रघुऽयत् । विवेद ॥ ९ ॥

इदमु इदमेव त्यत्प्रसिद्धं महि महत् पूज्यं महां महतां देवानामनीकं समूहरूपं सूर्यमण्डलं वैश्वानरस्यैवेति शेषः पूर्व्यं पूर्वकालीनं पूरकं वा यन्मण्डलमुस्रिया क्षीरादीनामुत्स्राविणी गौः अग्निहोत्राद्यर्थं सचते सेवते ऋतस्योदकस्य पदे स्थाने अन्तरिक्षेऽपि अधिकं महत् अधीति सप्तम्यर्थानुवादः दीद्यानं द्योतमानं गुहा गुहायां रघुष्यत् शीघ्रं स्यन्दमानं रघुयत् शीघ्रं गच्छत् सूर्यमण्डलं विवेद वैश्वानरमेवेति ज्ञातवानस्मि ॥ ९ ॥

९. क्षीरप्रसविणी गौ अग्निहोत्रादि कर्म में जिनकी सेवा करती हैं, जो अन्तरिक्ष में अत्यन्त दीप्तिमान् हैं, जो गुहा में निहित हैं, जो शीघ्र स्पन्दमान हैं और जो शीघ्र गमनकारी हैं, वे महान् और पूज्य हैं। सूर्य मण्डलात्मक वैश्वानर को हम जानते हैं।

अधद्युतानःपित्रोःसचासामनुतगुह्यंचारुपृश्नेः ।
मातुष्पदेपरमेअन्तिषद्गोर्वृष्णःशोचिषःप्रयतस्यजिह्वा ॥१०॥२॥

अध । द्युतानः । पित्रोः । सचा । आसा । अमनुत । गुह्यम् ।
चारु । पृश्नेः । मातुः । पदे । परमे । अन्ति । सत् । गोः ।
वृष्णः । शोचिषः । प्रऽयतस्य । जिह्वा ॥ १० ॥ २ ॥

अध अथ द्युतानो दीप्यमानः पित्रोर्द्यावापृथिव्योः सचा सह मध्ये व्याप्तः सन् पृश्नेर्गोः सेचनि चारु रमणीयं गुह्यं गुहासि निगूढं पयः आसा स्वकीयेनास्येन अमनुत पानायाबुध्यत उक्तमेवार्थं विवृणोति मातुः क्षीरादिनिर्मात्र्या गोः परमे पदे उत्कृष्टे स्थाने ऊधोलक्षणे अन्ति सत् समीपे विद्यमानं क्षीरं वृष्णः फलानां वर्षितुः शोचिषो दीप्तस्य प्रयतस्याहवनीयादिरूपेण नियतस्य वैश्वानरस्य जिह्वा पातुमिच्छतीति शेषः ॥ १० ॥

१०. इसके अनन्तर पिता-मातास्वरूप द्यावा-पृथिवी के मध्य में व्याप्त होकर दीप्तिमान् वैश्वानर गौ के ऊधःप्रदेश में निगूढ़ रमणीय दुग्ध को मुख-द्वारा पान करने के लिए प्रबोधित हों। अभीष्टवर्षी, दीप्त और प्रयत वैश्वानर की जिह्वा माता गौ के ऊधःप्रदेशरूप उत्कृष्ट स्थान में पान करने की इच्छा से वर्तमान है।

ऋतंवोचेनमसापृच्छ्यमानस्तवाशसाजातवेदोयदीदम् ।
त्वमस्यक्षयसियद्धविश्वंदिविमद्द्रविणंयत्पृथिव्याम् ॥ ११ ॥

ऋतम् । वाचे । नमसा । पृच्छयमानः । तव । आऽशसा ।
जातऽवेदः । यदि । इदम् । त्वम् । अस्य । क्षयसि । यत् । ह ।
विश्वम् । दिवि । यत् । ऊँ इति । द्रविणम् । यत् । पृथिव्याम् ॥ ११ ॥

अहं यजमानः नमसा नमस्कारेण सह पृच्छयमानः अन्यैरनुयुज्यमानः सन् ऋतं वोचे सत्यं ब्रवीमि किं तदित्युच्यते—हे जातवेदः जातानां वेदितः जातप्रज्ञ वाग्ने तव आशसा त्वत्स्तुत्या साधनेन यदीदं धनं अस्माभिः स्यात् अस्य धनस्य त्वं क्षयसि त्वमेवेश्वरो भवसि सत्यं धनस्य यज्ञादिद्वारा उपयोगो स्यादिति भावः अस्य इदमुक्तं यद्वा विश्वं यत् सकलं धनमस्ति तस्यापीशिषे विश्वमिति सामान्येन यदुक्तं तदेव विशदयति—दिवि द्युलोके यद् द्रविणं यच्चैव धनं यच्च पृथिव्यां धनं तस्य सर्वस्य त्वमीश्वरो भवसि यज्ञार्थं द्रव्यमुत्पन्नमिति स्मरणात् अग्नेर्व्यतिरेकेणान्यत्रासंभवादिति भावः ॥ ११ ॥

११. हम यजमान पूछे जाने पर नमस्कारपूर्वक सत्य बोलते हैं। हे जातवेदा, तुम्हारी स्तुति-द्वारा यदि हम इस धन को प्राप्त करें, तो तुम्हीं इस धन के स्वामी होओ। तुम सम्पूर्ण धन के स्वामी होओ। पृथ्वी में जितने धन हैं और द्युलोक में जितने धन हैं, उन सब धनों के तुम स्वामी हो।

किंनो॑ अ॒स्य द्रवि॑णं॒ कद्ध॒ रत्नं॒ वि नो॑ वोचो जातवेदश्चिकि॒त्वान् ।
गुहाध्व॑नः पर॒मं यन्नो॑ अ॒स्य रेकु॑ प॒दं न नि॑दा॒ना अग॑न्म ॥ १२ ॥

किम् । नः । अस्य । द्रविणम् । कत् । ह । रत्नम् । वि ।
नः । वोचः । जातऽवेदः । चिकित्वान् । गुहा । अध्वनः । परमम् ।
यत् । नः । अस्य । रेकु । पदम् । न । निदानाः । अगन्म ॥ १२ ॥

पूर्वमन्त्रेण यस्य धनस्याग्निः स्वामित्वमुक्तम् अस्य धनस्य किं द्रविणं किं साधनभूतं नोऽस्माकं दातव्यं धनमस्ति कद्ध रत्नं किं रमणीयं हितकरं धनमस्ति तद्वदं हे जातवेदः जातप्रज्ञाग्ने चिकित्वान् चेतनावान् अभिज्ञस्त्वं नोऽस्मभ्यं वि वोचः विब्रूहि यद्वा किं तत्त्वं द्रविणमस्ति अस्य द्रविणराशेः कद्ध रत्नमिति योजना अस्य अध्वनः धनप्राप्तिमार्गस्य यत् गुहा गुहायां निहितं गूढं परमम् उत्कृष्टं प्राप्यमस्ति तदपि नोऽस्मभ्यं विवोचः वयं रेकु रिक्तं पदं गन्तव्यं स्थानं गूहादिकं निदानाः अनर्थैर्निन्द्यमानाः कर्मणि कर्तृप्रत्ययः नागन्म न प्राप्नुमः ॥ १२ ॥

१२. इस धन का साधनभूत धन क्या है? इसका हितकर धन क्या है? हे जातवेदा, तुम जानते हो, हमें कहो। इस धन की प्राप्ति के लिए जो मार्ग है, उसका गूढ़ और उत्कृष्ट उपाय हमसे कहो? हम जिससे गन्तव्य स्थान को निन्दित होकर न प्राप्त करें।

कामर्यादावयुनाकद्धवाममच्छागमेमरघवोनवाजम् ।
कदानोदेवीरमृतस्यपत्नीःसूरोवर्णेनततनन्नुषासः ॥ १३ ॥

का । मर्यादा । वयुना । कत् । ह । वामम् । अच्छ । गमेम ।
रघवः । न । वाजम् । कदा । नः । देवीः । अमृतस्य । पत्नीः ।
सूरः । वर्णेन । ततनन् । उषसः ॥ १३ ॥

कामर्यादा काप्राच्यादिव्यवस्था कावयुना प्रज्ञानंपदार्थविषयम् किंवावामं वननीयपदार्थजातम् एतत्सर्वम् अच्छ गमेम अधिगच्छेम तत्रदृष्टान्तः—रघवोन यानं शीघ्रगामिनोश्वादयःसंग्राममिव तद्वत् कदाकस्मिन्कालेनोस्माकंव्यवहाराय देवीः देव्यः द्योतमानाः अमृतस्यामरणधर्मस्यादित्यस्यपत्नीः पत्न्यः पालयित्र्यः सूरः प्रसवित्र्यः उषसः वर्णेनप्रकाशेनततनन् विस्तारयेयुः एवंसूर्यसंबन्धिनःउषसःस्तुत्या सर्वात्मनोवैश्वानरस्यस्तुतिरवगन्तव्या तनोतेर्लेटि बहुलंछन्दसीतिविकरणस्यश्लुः द्विर्भावहलादिशेषौ ॥ १३ ॥

१३. पूर्व आदि सीमा क्या है ? पदार्थ ज्ञान क्या है ? और रमणीय पदार्थसमूह क्या है ? शीघ्रगामी अश्व जिस तरह से संग्राम के अभिमुख गमन करता है, उसी तरह हम इन्हें अधिगत करेंगे । द्युतिमती, मरणरहिता और आदित्य की पत्नी प्रसवित्री उषा किस समय हम लोगों के लिए प्रकाशित होकर व्याप्त होंगी ?

अनिरेणवचसाफल्ग्वेनप्रतीत्येनकृधुनातृपासः ।
अधातेअग्नेकिमिहावदन्त्यनायुधासआसतासचन्ताम् ॥ १४ ॥

अनिरेण । वचसा । फल्ग्वेन । प्रतीत्येन । कृधुना । अतृपासः ।
अध । ते । अग्ने । किम् । इह । वदन्ति । अनायुधासः ।
असता । सचन्ताम् ॥ १४ ॥

अनिरेण इरावं तद्रहितेन फल्वेन तुच्छेन प्रतीत्येनप्रतिगन्तव्येन अरोहणेनेत्यर्थः कृधुनाह्रस्वेन कृध्वितिह्रस्वनाम कृधुकःवभ्रकइतितन्नामसूक्तत्वात् एवंविधेनवचसा अतृपासः अतृप्ताः जनाःअध अधुनाइहास्मिँल्लोके हेअग्ने ते त्वाम् किंवदन्ति निर्हविष्केणवचसानकिंचिल्लभ्यतइत्यर्थः किंतुअनायुधासः आयुधशब्दःसाधनंलक्षयति हविरादिसाधनरहितास्तेअसतादुःखेनसचन्तां संगच्छन्ताम् ॥ १४ ॥

१४. हे अग्नि, अन्नरहित, तुच्छ मन्त्र और आरोपणीय अल्पाक्षर वचन-द्वारा अतृप्त मनुष्य अभी इस लोक में तुम्हें क्या कहता है ? अर्थात् हविर्विहीन वाक्य-द्वारा कुछ काम नहीं हो सकता है । हविरादि साधन से हीन जन दुःख प्राप्त करते हैं ।

अथपञ्चदशी—

अस्यश्रियेसमिधानस्यवृष्णोवसोरनीकंदमआरुरोच ।
रुशद्वसानःसुदृशीकरूपःक्षितिर्नरायापुरुवारोअद्यौत् ॥१५॥३॥

अस्य । श्रिये । सम्ऽइधानस्य । वृष्णः । वसोः । अनीकम् । दमे । आ । रुरोच । रुशत् । वसानः । सुदृशीकऽरूपः । क्षितिः । न । राया । पुरुऽवारः । अद्यौत् ॥ १५ ॥ ३ ॥

समिधानस्य समिध्यमानस्य कर्मणिकर्तृप्रत्ययः वृष्णोवर्षितुःफलस्य वसोर्वासयितुः अस्याग्नेरनीकंतेजःसंघः दमे यागगृहे आरुरोच सर्वतोदीप्यते किमर्थं श्रिये श्रेयसेयजमानानां सोग्निः रुशद्वर्णनामैतत् दीप्तंतेजोवसानःआच्छादयन् अतएवसुदृशीकरूपः सुष्ठुदर्शनीयरूपः पुरुवारः बहुभिर्ऋत्विग्भिर्यजमानैर्वरणीयःसन्नद्यौत् द्योतते किमिव राया अश्वादिधनेनक्षितिर्न राजादिरिव क्षितिरितिमनुष्यनाम ॥ १५ ॥

१५. समिद्ध, अभीष्टवर्षी और निवासप्रद अग्नि का तेजःसमूह, यज्ञगृह में, दीप्त होता है। यजमान के मङ्गल के लिए वे दीप्त तेज का परिधान करते हैं; इसलिए उनका रूप रमणीय है। वे अनेक यजमानों-द्वारा स्तुत होकर द्योतित होते हैं, जैसे अश्व आदि धन से राजा द्योतित होता है।

ऊर्ध्वऊषुणइत्येकादशर्चंषष्ठंसूक्तं वामदेवस्यार्षं त्रैष्टुभमाग्नेयम् ऊर्ध्वऊष्वेकादशेत्यनुक्रान्तम् प्रातरनुवाकाश्विनशस्त्रयोराग्नेयेक्रतौत्रैष्टुभेछन्दसीदं सूत्रितंच—ऊर्ध्वऊषुणइत्यस्यपद्धि-युतेतिपञ्चेति ।

तत्रप्रथमा—

ऊर्ध्वऊषुणोअध्वरस्यहोतरग्नेतिष्ठदेवतातायजीयान् ।
त्वंहिविश्वमभ्यसिमन्मप्रवेधसश्चित्तिरसिमनीषाम् ॥ १ ॥

ऊर्ध्वः । ऊँ इति । सु । नः । अध्वरस्य । होतः । अग्ने । तिष्ठ । देवऽताता । यजीयान् । त्वम् । हि । विश्वम् । अभि । असि । मन्म । प्र । वेधसः । चित् । तिरसि । मनीषाम् ॥ १ ॥

हेअध्वरस्यहोतः यागसंबन्धिनांदेवानामाह्वातः यद्वा होतरित्यग्निप्रकृत्यंशोनुवादः हेहोमनिष्पादकाग्ने यजीयान्यष्टृतमस्त्वंनोस्माकमूर्ध्वम्ऊषुतिष्ठ उन्नतएवतिष्ठ नित्यमुन्नतोभवेत्यर्थः कुत्रेतितदुच्यते—देवताता देवतातौ देवास्तायन्तेविस्तीर्यन्तेऽस्मिन्नितिदेवतातिर्यज्ञः तस्मिन्स्त्वंहि

त्वंखलु विश्वंसर्वमन्य मननीयंशत्रूणांधनमभ्यासि अभिभवसि किंच वेधश्चित् चित्पूजायां स्तोतुर्यजमानाद्वेर्मनीषांमतिंस्तुतिंप्रातिरसि प्रवर्धयासे प्रपूर्वस्तिरतिर्वर्धनार्थः ॥ १ ॥

१. हे यज्ञहोता अग्नि, तुम श्रेष्ठ याज्ञिक हो। तुम हम लोगों से ऊर्ध्व स्थान में अवस्थिति करो। तुम सम्पूर्ण शत्रुओं के धन को जीतो। तुम स्तोताओं की स्तुति को प्रवर्द्धित करो।

अमूरोहोतान्यसादिविक्ष्वग्निर्मन्द्रोविदथेषुप्रचेताः।
ऊर्ध्वंभानुंसवितेवाश्रेन्मेतेवधूमंस्तभायदुपद्याम् ॥ २ ॥

अमूरः। होता। नि। असादि। विक्षु। अग्निः। मन्द्रः। विदथेषु। प्रऽचेताः। ऊर्ध्वम्। भानुम्। सविताऽइव। अश्रेत्। मेताऽइव। धूमम्। स्तभायत्। उप। द्याम् ॥ २ ॥

अमूरः अमूढः प्रगल्भइत्यर्थः होता होमनिष्पादकोमन्द्रोमदनीयः मादयिता वा प्रचेताः प्रकृष्टज्ञानोग्निः देवः विक्षुऋत्विग्रूपासुप्रजासुमध्येविदथेषुयागेषुनिमित्तभूतेषुन्यसादि नितरांस्थापितः अथतथाभूतोग्निः भानुंदीप्तिंसवितेव उदितःसूर्यइव उर्ध्वमश्रेत्ऊर्ध्वमुखमाश्रयति किंच मेतेव स्थूणेव मायपास्वाधिष्ठितंवंशादिकंस्तभ्नातितद्वदयमग्निर्धूमंस्वोत्थितंद्यामुपद्युलोकस्योपरिस्तभायत् स्तभ्नाति ॥ २ ॥

प्रगल्भ, होमनिष्पादक, हर्षयिता और प्रकृष्ट ज्ञानविशिष्ट अग्निदेव यज्ञ में प्रजाओं के मध्य में स्थापित होते हैं। वे उदित सूर्य की तरह ऊर्ध्वमुख होते हैं, और स्तम्भ की तरह द्युलोक के ऊपर धूम को धारण करते हैं।

यतासुजूर्णीरातिनीघृताचीप्रदक्षिणिद्देवतातिमुराणः।
उदुस्वरुर्नवजानाक्रःपश्वोअनक्तिसुधितःसुमेकः ॥ ३ ॥

यता। सुऽजूर्णिः। रातिनी। घृताची। प्रऽदक्षिणित्। देवऽतातिम्। उराणः। उत्। ऊँ इति। स्वरुः। नवऽजाः। न। अक्रः। पश्वः। अनक्ति। सुऽधितः। सुऽमेकः ॥ ३ ॥

यता संयता सुजूर्णिः शोभनजरा सुष्ठुजीर्णापुराणीवा घृताची घृतमञ्चतीतिघृताची जुहूः रातिनी रातिर्धनं हविर्लक्षणंधनवती आज्यपूर्णाभवतीत्यर्थः देवतातियज्ञं तथा उराणउरुकुर्वाणोध्वर्युरग्निर्वा प्रदक्षिणमेतीतिप्रदक्षिणित् प्रदक्षिणगमनोभवति अकारलोपश्छान्दसः नवजाः नवजातः तदानीमेवोत्पादितः स्वरुर्न यूपशकलवाची स्वरुशब्दःयूपंलक्षयति 'घृतावन्तः स्वरवः पृथिव्याम्'इत्यादिषुस्वरुशब्देनयूपाभिधानाच नकारःसमुच्चयेयूपोपिउदुउपसर्गश्रुतेर्योग्यक्रियाध्या-

रुः उन्नतोभवति किंच शरुः आक्रमिता सुमेकः सुदीप्तः सुमितःस्वधितिरित्यर्थः सोपिपशुः पशूनभिगच्छति यद्वा सुमितः स्वरुरेवउदुत्कृष्टः पश्वःपशूनभि स्वरुणापशुमनक्तीतिश्रुतेः ॥ ३ ॥ ३. संयत और पुरातन जुहू घृतपूर्ण हुआ है। यज्ञ को दीर्घ करनेवाले अध्वर्युगण प्रदक्षिण करते हैं। नवजात यूप उन्नत होता है। आक्रमणकारी और सुदीप्त कुठार पशुओं के निकट गमन करता है।

स्तीर्णेबर्हिषिसमिधानेअग्नाऊर्ध्वोअध्वर्युर्जुजुषाणोअस्थात्।
पर्यग्निःपशुपानहोतात्रिविष्ट्येतिप्रदिवउराणः ॥ ४ ॥

स्तीर्णे। बर्हिषि। सम्ऽइधाने। अग्नौ। ऊर्ध्वः। अध्वर्युः।
जुजुषाणः। अस्थात्। परि। अग्निः। पशुऽपाः। न।
होता। त्रिऽविष्टि। एति। प्रऽदिवः। उराणः ॥ ४ ॥

बर्हिषि वेद्यां स्तीर्णेआस्तृतेसति अग्नावाहवनीयादिकेसमिधाने सम्यगिध्यमाने अध्वर्युरध्वरस्यनेताजुजुषाणोदेवान्प्रीणयन् ऊर्ध्वोऽस्थात् तिष्ठति होता होमनिष्पादकः प्रदिवः पुराणनामैतत् पुरातनः उराणः स्वल्पमपिहविर्देवेभ्योबहुत्वसंपादनेनोरुकुर्वाणः उराणउरुकुर्वाण इतिनिरुक्तम्। यद्वैदेवेभ्योऽभ्यतेहविस्तद्धिरिमात्रंपर्यतइतिश्रुतेः। कर्मेवक्करणमुचितम् ईदृशोऽग्निः पशुपान पशूनांपालकइव पशून्त्रिविष्टि त्रिरावृत्यपर्येति त्रिर्हिपर्यग्निःक्रियते ॥ ४ ॥

४. कुश के विस्तृत होने पर और अग्नि समिद्ध होने पर अध्वर्यु, देवों को प्रीत करने के लिए उत्थित होते हैं। होमनिष्पादक और पुरातन अग्नि अल्प हव्य को भी बहुत कर देते हैं तथा पशु-पालकों की तरह पशुओं के चारों तरफ तीन बार गमन करते हैं।

परित्मनामितद्रुरेतिहोताग्निर्मन्द्रोमधुवचाऋतावा।
द्रवन्त्यस्यवाजिनोनशोकाभयन्तेविश्वाभुवनायदभ्राट् ॥ ५ ॥ ४ ॥

परि। त्मना। मितऽद्रुः। एति। होता। अग्निः। मन्द्रः।
मधुऽवचाः। ऋतऽवा। द्रवन्ति। अस्य। वाजिनः। न।
शोकाः। भयन्ते। विश्वा। भुवना। यत्। अभ्राट् ॥ ५ ॥ ॥ ४ ॥

उक्तमेवार्थंस्पष्टयति—अयंहोता होमनिष्पादकोऽग्निः त्मना आत्मना स्वरूपेणैव मितद्रुः परिमितगतिःसन् पर्येति परितोगच्छतिपशुम् कीदृशोयं मन्द्रोमदनीयः मोदयितावा मधुवचाः मधुरवचनः ऋतावा यज्ञवान् वाजिनोहविष्मतोऽस्याग्नेः शोकान् दीप्तयोपि नशब्दोऽप्यर्थे द्रवन्ति

---

१ नि० ६. १७.

गच्छन्निपरितः यद्वा नकारउपमार्थीयः वाजिनोन अश्वाइव द्रवन्तीतियोज्यम् यद्यस्मादयमग्निर्भ्राजते तस्माद्विश्वाभुवना सर्वाणिभूतजातानि भयन्ते भीतानिभवन्ति ॥ ५ ॥

५. होता, हर्षदाता, मिष्टभाषी और यशवान् अग्नि परिमितगति होकर पशुओं के चारों तरफ़ गमन करते हैं। अग्नि का दीप्तिसमूह अश्व की तरह चारों तरफ़ धावित होता है। अग्नि जब प्रदीप्त होते हैं तब समस्त भूतजात भीत होते हैं।

भद्रातेअग्नेस्वनीकसंदृग्घोरस्यसतोविषुणस्यचारुः ।
नयत्तेशोचिस्तमसावरन्तनध्वस्मानस्तन्वी३रेपआधुः ॥ ६ ॥

भद्रा । ते । अग्ने । सुऽअनीक । सम्ऽदृक् । घोरस्य । सतः ।
विषुणस्य । चारुः । न । यत् । ते । शोचिः । तमसा । वरन्त ।
न । ध्वस्मानः । तन्वि । रेपः । आ । धुरिति धुः ॥ ६ ॥

हेस्वनीक शोभनज्वालाग्ने घोरस्यभीतिजनकस्यापिसतः विषुणस्य विष्वक्सर्वतोव्याप्तस्य ते तव चारुः रमणीयाभद्रास्तुत्याकल्याणीवामूर्तिः सन्दृक् सन्दृष्टिः सम्यग्दृश्याभवतीत्यर्थः यद्यस्मात्तेशोचिर्दीप्तिं तमसान्धकारेण नवरन्त नधारयन्तिनिशाः यस्माच्च ध्वस्मानोध्वंसकारा-क्षसादयः तेतन्वि तवशरीरे रेपः पापं ध्वंसनादिरूपं नाधुः नदधति नकुर्वन्ति अतःसन्दृगितिसंबन्धः ॥ ६ ॥ हे सुन्दर ज्वालाविशिष्ट अग्नि, तुम भीतिजनक हो और सर्वत्र व्याप्त हो। तुम्हारी मनोहर और कल्याणी मूर्ति अच्छी तरह से दृष्ट होती है। रात्रि अन्धकार-द्वारा तुम्हारी दीप्ति को निवारित नहीं कर सकती है। राक्षस आदि तुम्हारे शरीर में पाप को नहीं रख सकते हैं।

नयस्यसातुर्जनितोरवारिनमातरापितरानुचिदिष्टौ ।
अधामित्रोनसुधितःपावकोऽग्निर्दीदायमानुषीषुविक्षु ॥ ७ ॥

न । यस्य । सातुः । जनितोः । अवारि । न । मातरा । पितरा ।
नु । चित् । इष्टौ । अध । मित्रः । न । सुऽधितः । पावकः ।
अग्निः । दीदाय । मानुषीषु । विक्षु ॥ ७ ॥

जनितोर्जनयितुर्वृष्ट्युत्पादकस्य यस्य वैश्वानरस्य सातुः सनिः पश्वादिलक्षणं दानं दीप्तिर्वा नावारि केनापिनवार्यते किंच मातरापितरा मातापितरौ द्यावापृथिव्यौ यस्येष्टौप्रेषणेनु चिन्निश्चयमेवनअभवतः अधापिच मित्रोन सखेव सुधितः सुतृप्तः पावकः शोधकोग्निः मानुषीषु

मनोःसंबन्धिनीषुविक्षुप्रजासुवीदाय दीप्यते दीदीदेसो पकारलोपश्छान्दसः व्यत्ययेनपरस्मैपदं लिटि अभ्यासस्यदृस्वेकृते तुजादित्वाद्दीर्घत्वम् ॥ ७ ॥

७. हे वृष्टि को उत्पन्न करनेवाले वैश्वानर, तुम्हारा दान (या दीप्ति) किसी के द्वारा निवारित नहीं हो सकता। मातापिता-स्वरूप द्यावा-पृथिवी जिसे प्रेषित करने में शीघ्र समर्थ नहीं होती हैं, वे सुतृप्त और शोधक अग्नि मनुष्यों के मध्य में सखा की तरह दीप्तिमान् होते हैं।

द्विर्यंपञ्चजीजनन्त्संवसानाःस्वसारोअग्निंमानुषीषुविक्षु।
उषर्बुधमथर्यो३नदन्तंशुक्रंस्वासंपरशुंनतिग्मम् ॥ ८ ॥

द्विः । यम् । पञ्च । जीजनन् । सम्ऽवसानाः । स्वसारः । अग्निम् । मानुषीषु । विक्षु । उषःऽबुधम् । अथर्यः । न । दन्तम् । शुक्रम् । सुऽआसम् । परशुम् । न । तिग्मम् ॥ ८ ॥

मानुषीषुमनोःसंबन्धिनीषु विक्षु प्रजासु संवसानाः संगच्छमानाः द्विःपञ्च दश स्वसारः अङ्गुल्यः यमग्निंजीजनन् अन्यनेनउदपादयन् जनीप्रादुर्भावे लुङि छान्दसत्वाद्दमानः कीदृशम् अथर्योनस्त्रियइव उषर्बुधम् उषसिबुध्यमाने दन्तंहविषांभक्षकं शुक्रं रश्मिभिर्दीप्यमानं स्वासं शोभनास्यं तिग्मं तीक्ष्णं परशुंन परशुमिव रक्षसांहन्तारमितिशेषः ॥ ८ ॥

८. मनुष्यों की दसों अँगुलियाँ स्त्री की तरह जिन अग्नि को उत्पन्न करती हैं, वे अग्नि उषाकाल में बुध्यमान, हव्यभक्षी, दीप्तिमान्, सुन्दर-वदन और तीक्ष्ण कुठार की तरह शत्रुरूपी राक्षसों के हन्ता हैं।

तवत्येअग्नेहरितोघृतस्नारोहितासऋज्वंचस्वञ्चः।
अरुषासोवृषणऋजुमुष्काआदेवतातिमह्वन्तदस्माः ॥ ९ ॥

तव । त्ये । अग्ने । हरितः । घृतऽस्नाः । रोहितासः । ऋजुऽअञ्चः । सुऽअञ्चः । अरुषासः । वृषणः । ऋजुऽमुष्काः । आ । देवऽतातिम् । अह्वन्त । दस्माः ॥ ९ ॥

हेअग्ने त्ये ते प्रसिद्धाः तवहरितः त्वत्संबन्धिनोश्वाः देवतातिमस्मदीयंयागंप्रतिआह्वन्त ऋत्विग्भिराहूयन्ते ह्वयितेर्लिपिसिचिह्वश्चेत्यङादेशः कीदृशाः घृतस्नाः घृतस्नुतः बलातिशयात्कासापुष्यदिस्थानेभ्यस्तवकंक्षरन्तः रोहितासः रोहिताश्लोहितवर्णाः ऋज्वञ्चः ऋजुमकुटिलमञ्चन्ति गच्छन्तीतिऋज्वञ्चः सुष्ठुगच्छन्तः अरुषासःआरोचमानाःवृषणःयुवानःवर्षितारोवा शापूर्वस्य निगमेइतिविकल्पेनदीर्घविधानादत्रदीर्घाभावः ऋजुमुष्काः साधनमुष्काः दस्माः दर्शनीयाः ॥ ९ ॥

९. हे अग्नि, तुम्हारे वे अश्व हमारे यज्ञ के अभिमुख आहूत होते हैं। उनकी नासिका से फेन निर्गत होता है। वे लोहितवर्ण, अकुटिल, सुन्दरगामी, दीप्तिमान्, पुष्ट, सुगठित और दर्शनीय हैं।

येह॒त्येते॒सह॑माना॒अ॒यास॑स्त्वे॒षासो॑अग्ने॒अ॒र्चय॒श्चर॑न्ति ।
श्ये॒नासो॒नदु॑व॒स॒नासो॒अर्थं॑तुवि॒ष्व॒णसो॒मारु॑तं॒नशर्धः॑ ॥ १० ॥

ये । ह॒ । त्ये । ते॒ । सह॑मानाः । अ॒यासः॑ । त्वे॒षासः॑ । अ॒ग्ने॒ ।
अ॒र्चयः॑ । चर॑न्ति । श्ये॒नासः॑ । न । दु॒व॒स॒नासः॑ । अर्थ॑म् ।
तु॒वि॒ऽस्व॒नासः॑ । मारु॑तम् । न । शर्धः॑ ॥ १० ॥

हेऽग्ने येहखलु त्येतेप्रसिद्धाः सहमानाः शत्रूनभिभवन्तः अयासोगमनशीलाः त्वेषासोदीप्ताः दुवसनासः परिचरणीयाः तेत्वदीयाअर्चयोरश्मयः श्येनासोन अश्वाइव अर्थं गन्तव्यम् चरन्ति गच्छन्ति कीदृशाः मारुतंशर्धोन मरुत्संबन्धीगणइव तुविष्वणसः तुविस्वनाः अधिकध्वनयोभवन्ति ॥ १० ॥

१०. हे अग्नि, तुम्हारी वे शत्रुओं को अभिभूत करनेवाली, गमनशील, दीप्ति और पूजनीय रश्मियाँ, मरुतों की तरह अत्यन्त ध्वनि करती हैं, अश्व की तरह गन्तव्य स्थान में जाती हैं।

अका॑रि॒ब्रह्म॑समिधान॒तुभ्यं॒शंसा॑त्यु॒क्थं॑यज॑ते॒व्यू॑धाः ।
होता॑रम॒ग्निंमनु॑षो॒निषे॑दुर्नम॒स्यन्त॑उ॒शिजः॒शंस॑मा॒योः ॥ ११ ॥ ५ ॥

अका॑रि । ब्रह्म॑ । स॒म्ऽइ॒धा॒न॒ । तुभ्य॑म् । शंसा॑ति । उ॒क्थम् ।
यज॑ते । वि । ऊँ॒ इति॑ । धाः॒ । होता॑रम् । अ॒ग्निम् । मनु॑षः ।
नि । से॒दुः॒ । न॒म॒स्यन्तः॑ । उ॒शिजः॑ । शंस॑म् । आ॒योः ॥ ११ ॥ ५ ॥

हेसमिधान समिध्यमानाग्ने तुभ्यं त्वदर्थंब्रह्मस्तोत्रम् अकारि अस्माभिःकृतं होता उक्थंशस्त्ररूपंस्तोत्रंशंसाति शंसति शंसुस्तुतौ लेटोऽडाटावित्याडागमः त्वांयजमानोयजते अतःकारणादस्मभ्यं धनंविधाः विधेहि धधातेश्छान्दसेलङि बहुलंछन्दसीत्यभावः उइतिपूरणः किंच आयोर्मनुष्यस्यशंसं शंसनीयं होतारं देवानामाह्वातारम् अग्निं त्वांनमस्यन्तःपूजयन्तः उशिजः धनादिलक्षणंधनंकामयमानाःमनुषोमनुष्याऋत्विजःनिषेदुः उपाविशन् सेवन्तइत्यर्थः ॥ ११ ॥

११. हे समिद्ध अग्नि, तुम्हारे लिए हम लोगों ने स्तोत्र किया है। होता उक्थ (शस्त्ररूप स्तोत्र) का उच्चारण करते हैं। यजमान

तुम्हारा यजन करते हैं। अतएव तुम हम लोगों को धन दो। मनुष्यों के प्रशंसनीय होता अग्नि की पूजा करने के लिए ऋत्विक् आदि पशु आदि धन की कामना से उपविष्ट हुए हैं।

अयमिहेत्येकादशर्चंसप्तमंसूक्तं वामदेवस्यार्षमाग्नेयम् आद्याजगती द्वितीयाद्याःपञ्चानुष्टुभः शिष्टास्त्रिष्टुभः तथाचानुक्रान्तम्—अयमिहाद्याजगतीपञ्चानुष्टुभइति। सूक्तविनियोगोलैङ्गिकः अग्निप्रणयनेयमिहेतिवैश्यस्यप्रतिपत् तथाचसूत्रितम्—अयमिहप्रथमोधायिधातृभिरितितुराजन्यवैश्ययोरित्येइति।

अयमिहप्रथमोधायिधातृभिर्होतायजिष्ठोअध्वरेष्वीड्यः।
यमप्नवानोभृगवोविरुरुचुर्वनेषुचित्रंविभ्वंविशेविशे ॥ १ ॥

अयम्। इह। प्रथमः। धायि। धातृऽभिः। होता।
यजिष्ठः। अध्वरेषु। ईड्यः। यम्। अप्नवानः। भृगवः।
विऽरुरुचुः। वनेषु। चित्रम्। विऽभ्वम्। विशेऽविशे ॥ १ ॥

धातृभिर्यज्ञार्थंकर्मकुर्वद्भिः अध्वर्युभिरिहास्मिन्यज्ञेहोतादेवानामाह्वातायजिष्ठः अतिशयेनयष्टा अध्वरेषुयागेषु ईड्यः ऋत्विग्भिःस्तूयमानःप्रथमः सर्वेषांदेवानांमुख्यः अयमाहवनीयादिस्थानेषुप्रत्यक्षेणोपलभ्यमानोग्निः धायि अधायि निहितः दधातेःकर्मणिलुङ् बहुलंछन्दस्यमाङ्योगेप्यडभावः तिङ्ङतिङइतिनिघातः अयमग्निरित्युक्तं कोसावग्निरित्यतआह—अप्नवानः भृगुसंबन्धी कश्चिदृषिः सच अन्येभृगवश्चवनेष्वरण्येषुचित्रंदावाग्निरूपेणबहुवर्णंविशेविशे वीप्सयासर्वमनुष्यासिर्गृह्यते सर्वस्यविशः प्रजायाः विभ्वं विभुमीश्वरंयंदेवानांहविर्वोढृत्वेनप्रसिद्धमग्निंविरुरुचुर्दीप्तंचक्रुरित्यर्थः। यमिति यच्छब्दस्य अयमितीदंशब्देनसंबन्धः ॥ १ ॥

१. अप्नवान् आदि भृगुवंशीयों ने वन के मध्य में दावाग्नि-रूप से प्रशंसनीय एवम् समस्त लोक के ईश्वर अग्नि को प्रदीप्त किया था। वे होता, याज्ञिकश्रेष्ठ, स्तुतिभाजन और देवश्रेष्ठ अग्नि यज्ञकारियों-द्वारा संस्थापित हुए हैं।

अग्नेकदातइतिप्रातरनुवाकाश्विनशस्त्रयोराग्नेयेक्रतावानुष्टुभेछन्दसि अग्नेकदातइत्याद्याःपञ्चः सूत्रितंच—अग्नेकदातइतिपञ्चेति।

अग्नेकदातआनुषग्भुवद्देवस्यचेतनम्।
अधाहित्वाजगृभ्रिरेमर्तासोविक्ष्वीड्यम् ॥ २ ॥

अग्ने । कृदा । ते । आनुषक् । भुवत् । देवस्य । चेतनम् । अर्ध ।
हि । त्वा । जगृभ्रिरे । मर्तासः । विक्षु । ईड्यम् ॥ २ ॥

हेअग्ने अधातःकारणाद्देवस्यद्योतमानस्यतेतवसंबन्धि चेतनं तेजः कदा आनुषक् अनुषक्तंभुवत् भवेत् लेट्यडागमः बहुलंछन्दसीतिविकरणस्यलुक् भूसुवोस्तिङीतिगुणप्रतिषेधः अतःकारणादित्युक्तं कस्माद्धेतोरित्युच्यते हियस्मात्कारणात् मर्तासोमनुष्याः विक्षु विड्भिः प्रजाभिः ईड्यंस्तुत्यं त्वा त्वां जगृभ्रिरे जगृहिरे गृह्णन्ति ग्रहेर्धातोर्लिटिग्रहोर्भइतिभत्वं बहुलंछन्दसीतिरुडागमः ॥ २ ॥

२. हे अग्नि, तुम दीप्तिमान् और मनुष्यों-द्वारा स्तुतियोग्य हो। तुम्हारी दीप्ति कब प्रसृत होगी ? मर्त्य लोग तुम्हें ग्रहण करते हैं।

ऋतावानंविचेतसंपश्यन्तोद्यामिवस्तृभिः ।
विश्वेषामध्वराणांहस्कर्तारंदमेदमे ॥ ३ ॥

ऋतऽवानम् । विऽचेतसम् । पश्यन्तः । द्याम्ऽइव । स्तृऽभिः ।
विश्वेषाम् । अध्वराणाम् । हस्कर्तारम् । दमेऽदमे ॥ ३ ॥

ऋतावानम् अमायिनं विचेतसं विशिष्टज्ञानं स्तृभिर्नक्षत्रैःपरिवृतं द्यामिवदिस्फुलिङ्गैःक्रमैतंविश्वेषांसर्वेषामध्वराणांयज्ञानांहस्कर्तारं प्रभासकंवृद्धेःकर्तारंवाग्निंपश्यन्तः ऋत्विगादयः दमेदमेसर्वस्मिन्यज्ञगृहे जगृभ्रिरइतिपूर्वेणसंबन्धः ॥ ३ ॥

३. मायारहित, विज्ञ, नक्षत्र-परिवृत द्युलोक की तरह और समस्त यज्ञ के वृद्धिकारक अग्नि के दर्शन करके ऋत्विक् आदि प्रत्येक यज्ञगृह में उनका ग्रहण करते हैं।

अथचतुर्थी—

आशुंदूतंविवस्वतोविश्वायश्चर्षणीरभि ।
आजभ्रुःकेतुमायवोभृगवाणंविशेविशे ॥ ४ ॥

आशुम् । दूतम् । विवस्वतः । विश्वाः । यः । चर्षणीः । अभि ।
आ । जभ्रुः । केतुम् । आयवः । भृगवाणम् । विशेऽविशे ॥ ४ ॥

योग्निः विश्वाश्चर्षणीः सर्वाः प्रजाः अभिभवति आयवोमनुष्याः आयवइतिमनुष्यनाम आयवोऽयवइतिमनुष्यनामसुपाठात् आशुंक्षिप्रगामिनं विवस्वतोमनुष्यस्ययजमानस्य दूतं विवस्वतइतिमनुष्यनामैतत् केतुंप्रज्ञापकं भृगवाणं भृगुवदाचरन्तं दीप्यमानमित्यर्थः सर्वमाति-

परिकेभ्यः क्विन्नचकव्यइतीति क्विप् तदन्ताच्छ्योऽभ्यत्ययेनशानच् अदुपदेशाल्लसार्वधातुकानुदात्तत्वेप्राप्ते वृषादेराकृतिगणत्वादाद्युदात्तत्वं तमग्निंविशोविशे सर्वस्यैप्रजायै आभुवः आभुवः इत्यहोर्भेदति भत्वम् ॥ ४ ॥

४. जो अग्नि प्रजाओं को अभिभूत करते हैं, उन्हीं शीघ्रगामी, यजमान के दूत, केतु-स्वरूप और दीप्तिमान् अग्नि का आनयन समस्त प्रजाओं के लिए मनुष्यगण करते हैं।

तमींहोतारमानुषक्चिकित्वांसंनिषेदिरे ।
रण्वंपावकशोचिषंयजिष्ठंसप्तधामभिः ॥५॥६॥

तम् । ईम् । होतारम् । आनुषक् । चिकित्वांसम् । नि । सेदिरे ।
रण्वम् । पावकऽशोचिषम् । यजिष्ठम् । सप्त । धामऽभिः ॥ ५ ॥ ६ ॥

ऋत्विगादयोमनुष्याः आनुषक् आनुपूर्व्येणहोतारं देवानामाह्वातारं चिकित्वांसं ज्ञानवन्तं कितज्ञाने लिटः क्वसुः द्विर्भावहलादिशेषचुत्वदीर्घाः प्रत्ययस्वरः तमीं तमिममग्निं निषेदिरे न्यषादयन्सिस्न कीदृशं रण्वं रमणीयं पावकशोचिषं शोधकदीप्तिं यजिष्ठं यष्टृतमं सप्त सप्तभिर्धामभिस्तेजोभिर्युक्तम् ॥ ५ ॥

५. उन होता और विद्वान् अग्नि को अध्वर्यु आदि मनुष्यों ने यथास्थान पर उपविष्ट कराया है। वे रमणीय, पवित्र दीप्तिविशिष्ट, याज्ञिकश्रेष्ठ और सप्त-तेजोयुक्त हैं।

तंशश्वतीषुमातृषुवनआवीतमश्रितम् ।
चित्रंसन्तंगुहाहितंसुवेदंकूचिदर्थिनम् ॥ ६ ॥

तम् । शश्वतीषु । मातृषु । वने । आ । वीतम् । अश्रितम् । चित्रम् ।
सन्तम् । गुहा । हितम् । सुऽवेदम् । कूचित्ऽअर्थिनम् ॥ ६ ॥

शश्वतीषु बह्वीषु मातृष्वप्सु ताः सस्यादिनिर्मातृत्वान्मातरइत्युच्यन्ते वने आवृक्षसमूहेष आकारस्मार्थे सन्तं विद्यमानं वीतं कान्तम् अश्रितं प्राणिभिर्दाहभयादसेवितं दुराधर्षमित्यर्थः चित्रं चायनीयं गुहागुहायां हितं निहितं सुवेदं सुविज्ञानं सुधनंवाकूचिदर्थिनं क्वापि हविष्यर्थिनमिदाज्यपुरोडाशादिहविःस्वीकुर्वन्तं केत्यत्रचकारस्यछान्दसेसंप्रसारणेपरपूर्वत्वे चह्रइतिदीर्घत्वम् एवंभूतमग्निं निषेदिरे इतिपूर्वेणसंबन्धः ॥ ६ ॥

६. मातृ-स्वरूप जलसमूह में और वृक्षसमूह में विद्यमान, कमनीय, दाह-भय से प्राणियों द्वारा असेवित, विचित्र, गुहा में निहित, सुविज्ञ और सर्वत्र हव्यग्राही उन अग्नि को अध्वर्यु आदि मनुष्यों ने उपविष्ट कराया है।

प्रातरनुवाकाश्विनशस्त्रयोर्केतुरेकम्दसिससस्यपद्वियुतेत्याद्याःपञ्चर्चः सुप्तिंत्वं—सस्तम्यादि सुवेतिपञ्चेति ।

तत्रसप्तमी—

ससस्ययद्वियुतासस्मिन्नूधन्नृतस्यधामन्नणयन्तदेवाः ।
महाँअग्निर्नमसारातहव्योवेरध्वरायसदमिदृतावा ॥ ७ ॥

ससस्य । यत् । विऽयुता । सस्मिन् । ऊधन् । ऋतस्य । धामन् ।
रणयन्त । देवाः । महान् । अग्निः । नमसा । रातऽहव्यः । वेः ।
अध्वराय । सदम् । इत् । ऋतऽवा ॥ ७ ॥

यत् यमग्निं देवाःस्तोतारः ससस्य स्वमस्य वियुतावियुते वियोगेउषःकालेइत्यर्थः ऋत-स्योदकस्यधामन्धामनिस्थाने सस्मिन्सर्वस्मिन्नूधनूधनि यज्ञे रणयन्त रमयन्ति स्तोत्रैरि-तिशेषः महान्प्रभूतः नमसा नमस्कारेणरातहव्यः दत्तहविष्कः ऋतावा सत्यवान्सोऽग्निः सद-मित्सदैवाध्वरायाध्वरंयजमानैःकृतंयज्ञं सुपांसुपोभवन्तीतिवचनात्वचनादर्थाद्वितीयार्थेचतुर्थी वेः वेत्तिजानाति यद्वा देवाइन्द्रादयः ससस्य ऋत्विग्भिःसेव्यस्य यत्तस्याग्नेः वियुता विशिष्टेसर्वस्मिन्मननीयेऋतस्यसत्यस्यधामन्धामनिस्थाने उधनूधनियज्ञेरणयन्त रमयन्ते महान्प्रभूतः नमसाहविषा राहतव्योदत्तहविष्कः ऋतावा सत्यवान्सोऽग्निः अध्वराय यज्ञार्थं सदमित् सदैववेर्गन्तामवति अध्वरायज्ञं वेःकामयतेवा ॥ ७ ॥

७. देवगण निद्रा से विमुक्त होकर अर्थात् उषाकाल में जल के स्थान-स्वरूप सम्पूर्ण यज्ञ में जिन अग्नि को स्तोत्र आदि के द्वारा प्रसन्न करते हैं, वे महान् एवम् सत्यवान् अग्नि नमस्कारपूर्वक दत्त हव्य को ग्रहण करके सदा यजमानकृत यज्ञ को अवगत करें—जानें ।

अथाष्टमी—

वेरध्वरस्यदूत्यानिविद्वानुभेअन्तारोदसीसञ्चिकित्वान् ।
दूतईयसेप्रदिवउराणोविदुष्टरोदिवआरोधनानि ॥ ८ ॥

वेः । अध्वरस्य । दूत्यानि । विद्वान् । उभे इति । अन्तरिति ।
रोदसी इति । सम्ऽचिकित्वान् । दूतः । ईयसे । प्रऽदिवः । उराणः ।
विदुःऽतरः । दिवः । आऽरोधनानि ॥ ८ ॥

हेऽग्ने विद्वान्सर्वंजानानस्त्वम् अध्वरस्ययज्ञस्यसंबन्धीनि दूत्यानि दूतकर्माणि वेः वेत्सि कामयसेवा यद्वा वेरितियज्ञविशेषणं वेः यजमानस्याभीष्टफलजनकस्याध्वरस्ययाग-स्यसंबन्धीनि दूत्यानि दूतकर्माणि विद्वान् जानन् उभेरोदसी उभयोरोदस्योर्द्यावापृथिव्यो-रन्तर्मध्येऽस्थितमन्तरिक्षंसंचिकित्वानसम्यग्जानन्प्रदिवः पुराणः पुराणनामैतत् प्रकर्षंप्रदिव-

इतिपुराणनामसुपाठात् उराणः अल्पमपिहविः उरुबहुकुर्वाणः उराणउरुकुर्वाणोइतियास्के-मोक्तत्वात् । विदुष्टरः विद्वत्तरः देवानांदूतस्त्वं दिवःस्वर्गस्यआरोधनानि आरोहणानि आरोहणार्हाणिस्थानानीत्यर्थः देवानांहवींष्यर्पयितुमीयसेगच्छसि ॥ ८ ॥

८. हे अग्नि, तुम विद्वान् हो। तुम यज्ञ के दूत-कार्य को जानते हो। इन दोनों द्यावा-पृथिवी के मध्य में अवस्थित अन्तरिक्ष को तुम भली-भाँति जानते हो। तुम पुरातन हो। तुम अल्प हव्य को बहुत कर देते हो। तुम विद्वान्, श्रेष्ठ और देवों के दूत हो। तुम देवताओं को हवि देने के लिए स्वर्ग के आरोहणयोग्य स्थान में जाते हो।

कृष्णंतएमरुशतःपुरोभाश्चरिष्ण्वर्चिर्वपुषामिदेकम् ।
यदप्रवीतादधतेहगर्भंसद्यश्चिज्जातोभवसीदुदूतः ॥ ९ ॥

कृष्णम् । ते । एम । रुशतः । पुरः । भाः । चरिष्णु । अर्चिः । वपुषाम् । इत् । एकम् । यत् । अप्रऽवीताः । दधते । ह । गर्भम् । सद्यः चित् । जातः । भवसि । इत् । ऊँ इति । दूतः ॥ ९ ॥

हेअग्ने रुशतः रोचमानस्य ते तव संबन्धि अत्रेम एम शब्देनगमनमार्गउच्यते एमवर्त्म कृष्णं कृष्णवर्णंभवति भाः तवसंबन्धिनीदीप्तिः पुरः पुरस्ताद्भवति चरिष्णु संचरणशीलमर्चिः त्वदीयंतेजः वपुषांवपुष्मतांरूपवतांतेजस्विनामित्यर्थः एकमित् मुख्यमेवभवति यत्त्वांअप्रवीताः अनुपगतायजमानाः गर्भंत्वज्जननहेतुमरणिंदधतेह धारयन्ति खलु सत्वं सद्यश्चित् सद्यएव जातउत्पन्नःसन् दूतोभवसीदु यजमानस्यदूतोभवस्येव ॥ ९ ॥

९. हे अग्नि, तुम दीप्तिमान् हो। तुम्हारा गमनमार्ग कृष्णवर्ण है। तुम्हारी दीप्ति पुरोवर्तिनी है। तुम्हारा सञ्चरणशील तेज सम्पूर्ण तैजस पदार्थों के मध्य में श्रेष्ठ है। तुम्हें न पाकर यजमान लोग तुम्हारी उत्पत्ति के कारण-स्वरूप काष्ठ को धारण करते हैं। उत्पन्न होकर तुम तुरत ही यजमान के दूत होते हो।

सद्योजातस्यददृशानमोजोयदस्यवातोअनुवातिशोचिः ।
वृणक्तितिग्मामतसेषुजिह्वांस्थिराचिदन्नादयतेविजम्भैः ॥ १० ॥

सद्यः । जातस्य । ददृशानम् । ओजः । यत् । अस्य । वातः । अनुऽवाति । शोचिः । वृणक्ति । तिग्माम् । अतसेषु । जिह्वाम् । स्थिरा । चित् । अन्ना । दयते । वि । जम्भैः ॥ १० ॥

सद्योजातस्य अरणिनिर्मन्थनादनन्तरमेवउत्पन्नस्याग्नेःओजस्तेजः ददृशानम् ऋत्विगादिभिर्दृश्यमानंभवतीतिशेषः वातोवायुःयद्यदास्याग्नेःशोचिर्दीप्तिम् अन्वनुलक्षीकृत्यवातिगच्छति

तदासोयमग्निःअतसेषु वृक्षसंघेषु तिग्मां तीक्ष्णांजिह्वांज्वालांवृणक्तिसंयोजयति स्थिराचित् स्थिराण्यपि अन्ना अन्नरूपाणिकाष्ठादीनिमन्येस्तेजोभिः विदयते विखण्डयति भक्षयतीत्यर्थः ॥ १० ॥ अरणिमन्थन के अनन्तर उत्पन्न अग्नि का तेज ऋत्विक् आदि के द्वारा दृष्ट होता है। जब अग्नि-शिखा को लक्ष्य करके वायु बहती है तब अग्नि वृक्ष-संघ में तीक्ष्ण ज्वाला को संयुक्त कर देते हैं और स्थिर अन्नरूप काष्ठ आदि को तेज के द्वारा विखण्डित करते हैं अर्थात् भक्षण करते हैं।

तृषुयदन्नातृषुणाववक्षंतृषुंदूतंकृणुतेयह्वोअग्निः।
वातस्यमेळिंसचतेनिजूर्वन्नाशुंनवाजयतेहिन्वेअर्वा ॥११॥७॥

तृषु। यत्। अन्ना। तृषुणा। ववक्ष। तृषुम्। दूतम्। कृणुते।
यह्वः। अग्निः। वातस्य। मेळिम्। सचते। निऽजूर्वन्। आशुम्।
न। वाजयते। हिन्वे। अर्वा ॥ ११ ॥ ७ ॥

यदाग्निः तृषु क्षिप्रमेव अन्ना अन्नानि काष्ठादीनि तृषुणा क्षिप्रेण रश्मिसमूहेन ववक्ष वहति दहतीत्यर्थः यह्वः महान्सोऽग्निः तृषुमात्मानंदूतंकृणुते क्षिप्रमात्मानंदूतंकरोति नि-जूर्वन्काष्ठानिनिःशेषेणदहन्नग्निः वातस्यवायोः मेळिं बलं सचतेसेवते आशुं न अश्वसादी यथा अश्वं तथा अर्वागमनशीलोऽग्निः स्वरश्मिंवाजयते वाजिनंबलवन्तंकरोति हिन्वे प्रेरयति च ॥ ११ ॥ अग्नि क्षिप्रगामी रश्मिसमूह-द्वारा अन्नरूप काष्ठ आदि को शीघ्र दग्ध करते हैं। महान् अग्नि अपने को क्षिप्रगामी दूत बनाते हैं। वे काष्ठसमूह को विशेष रूप से दग्ध करके वायु के बल के साथ सङ्गत होते हैं। घुड़सवार जैसे अश्व को बलवान् करता है, वैसे ही गमनशील अग्नि अपनी रश्मि को बलवान् करते और प्रेरित करते हैं ॥ इतितृतीयस्यपञ्चमेसप्तमोवर्गः ॥ ७ ॥

दूतंवइत्यष्टर्चमष्टमंसूक्तं वामदेवस्यार्षं गायत्रीछन्दस्कं अग्निदेवताकम् तथाचानुक्रम्यते—दूतंवोष्टौगायत्रंत्विति । सूक्तेयराग्नेयपचेच्छन्दोभेदंवसूक्तंमातवेदस्यनिविद्धानीयं तथाच सूत्रम्—दूतंवइत्याग्निमारुतमिति । इत्यादिकेद्वेसूक्तेभ्रातरनुवाकस्याग्नेयमतौगायत्रेच्छन्दसिविनियुक्ते सजितंच—अग्नेयामकदूतंवइतिसूक्तेइति ॥

दूतंवोविश्ववेदसंहव्यवाहममर्त्यम्। यजिष्ठमृञ्जसेगिरा ॥१॥

दूतम्। वः। विश्वऽवेदसम्। हव्यऽवाहम्। अमर्त्यम्।
यजिष्ठम्। ऋञ्जसे। गिरा ॥ १ ॥

हेऽग्ने विश्ववेदसं विश्वं समस्तं वेदो धनं यस्यासौ विश्ववेदास्तं सर्वविदं वा हव्यवाहं देवेभ्यो हविषां वोढारम् अमर्त्यममरणधर्माणं यजिष्ठमतिशयेन यष्टारं दूतं देवानां वः त्वां गिरा स्तुतिरूपया वाचा ऋञ्जसे यजमानोऽहं प्रसाधयामि वर्धयामीत्यर्थः ऋञ्जतिः प्रसाधनकर्मेति यास्कः ॥ १ ॥

१. हे अग्नि, तुम सब धन के स्वामी अथवा सर्वविद्, देवताओं को हव्य पहुँचानेवाले, मरणधर्म-रहित, अतिशय यजनशील और देवदूत हो। हम स्तुति-द्वारा तुम्हें वर्द्धित करते हैं।

स हि वेदा वसुधितिं महाँ आरोधनं दिवः। स देवाँ एह वक्षति ॥२॥

सः। हि। वेद। वसुधितिम्। महान्। आऽरोधनम्।
दिवः। सः। देवान्। आ। इह। वक्षति ॥ २ ॥

स हि प्रसिद्ध एवाग्निः वसुधितिं यजमानानामीष्टफलरूपधनस्य दानं वेद वेत्ति महान् प्रभूतोऽग्निः दिव आरोधनमारोहणं देवानां स्थानं वेत्ति सोऽग्निरिहास्मिन्यज्ञे देवानिन्द्रादीनावक्षति[1] आवहतु वहेर्लेटि सिब्बहुलं लेटीति सिप् लेटोडाटावित्यडागमश्च ढोढ इति ढत्वं षत्वकत्वषत्वानि तिङ्ङतिङ इति निघातः ॥ २ ॥

२. अग्नि यजमानों के अभीष्टफल-साधक धन के दान को जानते हैं। वे महान् हैं। वे देवलोक के आरोहण-स्थान को जानते हैं। वे इन्द्रादि देवताओं को यज्ञ में बुलायें।

स वेद देव आनमं देवाँ ऋतायते दमे। दाति प्रियाणि चिद्वसु ॥३॥

सः। वेद। देवः। आऽनमम्। देवान्। ऋतऽयते।
दमे। दाति। प्रियाणि। चित्। वसु ॥ ३ ॥

देवो द्योतमानः सोऽग्निः आनमं यजमानादीनां नमयितुं नमस्कारयितुं देवानिन्द्रादीन्वेद क्रमेण वेत्ति दमे यज्ञगृहे ऋतायते ऋतं यज्ञमिच्छते यजमानाय प्रियाणि चित् अभीष्टान्यपि वसु वसूनि पश्वादीनि धनानि दाति ददाति प्रयच्छति ॥ ३ ॥

३. वे द्युतिमान् हैं। इन्द्रादि देवताओं को यजमानों-द्वारा क्रम-पूर्वक नमस्कार करना जानते हैं। वे यज्ञगृह में यज्ञाभिलाषी यजमान को अभीष्ट धन दान करते हैं।

अथ चतुर्थी—

स होता सेदु दूत्यं चिकित्वाँ अन्तरीयते। विद्वाँ आरोधनं दिवः ॥४॥

सः। होता। सः। इत्। ऊँ इति। दूत्यम्। चिकित्वान्।
अन्तः। ईयते। विद्वान्। आऽरोधनम्। दिवः ॥ ४ ॥

---

1 निरु. ६. ३१.

सोऽग्निर्होता देवानामाह्वाता भवति सेदु स एवाग्निः दूत्यं देवानां दूतकर्म चिकित्वान् जानन् दिवः स्वर्गस्य आरोधनम् आरोहणम् आरोहणार्हं देवानां स्थानं च विद्वान् जानन् अन्तः द्यावापृथिव्योर्मध्ये ईयते गच्छति ईङ् गतौ दिवादिभ्यः श्यन् तिङ्ङतिङ इति निघातः ॥ ४ ॥

४. अग्नि होता हैं। वे दूत-कर्म को जान करके और स्वर्ग के आरोहण-योग्य स्थान को जान करके द्यावा-पृथिवी के मध्य में गमन करते हैं।

तेस्यामुयेअग्नयेददाशुर्हव्यदातिभिः। यईंपुष्यन्तइन्धते ॥५॥

ते। स्याम। ये। अग्नये। ददाशुः। हव्यदातिऽभिः।
ये। ईम्। पुष्यन्तः। इन्धते ॥ ५ ॥

ते वयं यजमानाः स्याम भूयास्म ते इत्युक्तं के इत्युच्यते—ये यजमानाः अग्नये हव्यदातिभिर्हविर्दानैर्ददाशुः प्रीतिं कुर्वन्ति ईमेनमग्निं पुष्यन्तो वर्धयन्तो ये यजमाना इन्धते समिद्भिर्दीप्तिं कुर्वन्ति ॥ ५ ॥

५. जो हव्य दान देकर अग्नि को प्रसन्न करता है, जो उन्हें वर्धित करता है और जो यजमान उन्हें काष्ठ-द्वारा प्रदीप्त करता है, उसी यजमान की तरह हम भी आचरण करें।

तेरायातेसुवीर्यैःससवांसोविशृण्विरे। येअग्नादधिरेदुवः ॥६॥

ते। राया। ते। सुऽवीर्यैः। ससऽवांसः। वि।
शृण्विरे। ये। अग्ना। दधिरे। दुवः ॥ ६ ॥

ये यजमानाः अग्ना अग्नौ सुपां सुलुगित्याकारः दुवः परिचर्यां दधिरे धारयन्ति कुर्वन्तीत्यर्थः ते ससवांसः अग्निं संभजमानाः राया पश्वादिलक्षणेन धनेन विशृण्विरे विश्रूयन्ते प्रख्याप्यन्ते ते सुवीर्यैः शोभनवीर्योपेतैः पुत्रादिभिश्च विश्रूयन्ते ॥ ६ ॥

६. जो यजमान अग्नि की परिचर्या करते हैं, वे अग्नि का सम्भजन करके धन-द्वारा विख्यात होते हैं और पुत्र-पौत्र आदि के द्वारा भी विख्यात होते हैं।

अस्मेरायोदिवेदिवेसंचरन्तुपुरुस्पृहः। अस्मेवाजासईरताम् ॥७॥

अस्मे इति। रायः। दिवेऽदिवे। सम्। चरन्तु।
पुरुऽस्पृहः। अस्मे इति। वाजासः। ईरताम् ॥ ७ ॥

पुरुस्पृहः ऋत्विगादिभिरभिलष्यमाणा रायः पश्वादिधनानि अस्मे अस्मासु यजमानेषु दिवेदिवे प्रतिदिनं संचरन्तु प्रचरन्तु दिवशब्दादुत्तरस्याः सप्तम्याः सुपां सुलुगित्यादिना शे आदेशे उडिदमित्यादिना प्राप्तस्योदात्तत्वं नित्यवीप्सयोरिति द्विर्भावेऽपि उत्तरभागस्यानुदात्तं चेत्यनुदात्तत्वं वाजासः अन्नानि च अस्मे अस्मानीरतां प्रेरयन्तु ॥ ७ ॥

७. ऋत्विक् आदि के द्वारा अभिलषित धन हम यजमानों के निकट प्रतिदिन आगमन करे। अन्न हम लोगों को (यज्ञकार्य में) प्रेरित करें।

सविप्रश्चर्षणीनांशवसामानुषाणाम् । अतिक्षिप्रेवविध्यति ।८।८।

सः । विप्रः । चर्षणीनाम् । शवसा । मानुषाणाम् ।
अति । क्षिप्राऽइव । विध्यति ॥ ८ ॥ ८ ॥

विप्रः मेधावी विप्र इति मेधाविनाम विप्रो वीर इति तन्नामसु पाठात् सोऽग्निः शवसा बलेन शव इति बलनाम शवः शर्ध इति तन्नामसु पाठात् मानुषाणां मनुसंबन्धिनां चर्षणीनां प्रजानां क्षिप्रेव क्षेप्त्रा धन्वनेव विमोचयन् अंहांसि दुरितानीति शेषः अतिविध्यति अतिविध्यतु अतिशयेन नाशयतु ॥ ८ ॥

८. अग्नि मेधावी हैं। वे बल-द्वारा मनुष्यों के विनाशयोग्य पाप को विशेष रूप से विनष्ट करें।

॥ इति तृतीयस्य पञ्चमेऽष्टमो वर्गः ॥ ८ ॥

अग्ने मृळेत्यष्टर्चं नवमं सूक्तं वामदेवस्यार्षं गायत्रीछन्दस्कम् अग्निदेवताकम् तथा चानुक्रान्तं—अग्ने मृळेति। द्वितीयेऽहन्याग्नेयसूक्तमाज्यस्य निविद्धानीयं सूत्रितं च—अग्ने मृळेत्याज्यमिति।

सप्तमपञ्चमा—

अग्नेमृळमहाँअसियईमादेवयुंजनम् । इयेथबर्हिरासदम् ॥१॥

अग्ने । मृळ । महान् । असि । यः । ईम् । आ । देवऽयुम् ।
जनम् । इयेथ । बर्हिः । आऽसदम् ॥ १ ॥

हे अग्ने मृळ अस्मान् सुखय त्वं महानसि प्रवृद्धो भवसि यस्त्वमीमिमं देवयुं देवानां कामयितारं जनं यजमानं बर्हिरिमामासदयज्ञेनासत्तुम् आइयेथ आगच्छसि ॥ १ ॥

१. हे अग्नि, तुम हम लोगों को सुखी करो। तुम महान् हो। तुम देवों की कामना करनेवाले हो। तुम यजमान के निकट कुश पर बैठने के लिए आगमन करते हो।

समानुषीषुदूळभोविक्षुप्रावीरमर्त्यः । दूतोविश्वेषांभुवत् ॥ २ ॥

सः । मानुषीषु । दुःऽदभः । विक्षु । प्रऽअवीः अमर्त्यः ।
दूतः । विश्वेषाम् । भुवत् ॥ २ ॥

दूळभोदुर्दभोराक्षसादिनादुर्हिंसः मानुषीषुमनुसंबन्धिनीषु विक्षु प्रजासु प्रावीःप्रकर्षेणगन्ता अमर्त्यः अमरणधर्मासोऽग्निः विश्वेषांसर्वेषांदेवानां दूतोभुवत् भवतु ॥ २ ॥

२. राक्षसों आदि-द्वारा अहिंसनीय अग्नि मनुष्यलोक में प्रकर्ष रूप से गमन करते हैं। वे मृत्युविवर्जित हैं। वे समस्त देवों के दूत हों।

**ससद्मपरिणीयतेहोतामन्द्रोदिविष्टिषु । उतपोतानिषीदति ॥३॥**

सः । सद्म । परि । नीयते । होता । मन्द्रः ।
दिविष्टिषु । उत । पोता । नि सीदति ॥ ३ ॥

सोऽग्निः सद्मयज्ञगृहंपरिणीयते ऋत्विग्भिःपरितोनीयतेनीयमानःसन् दिविष्टिषु यागेषु मन्द्रः मदनीयःस्तुत्यः सोऽग्निर्होताचभवति उतापिच पोतासन्निषीदति यज्ञगृहेउपविशति ॥ ३ ॥

३. यज्ञगृह में ऋत्विक् आदि के द्वारा नीयमान होकर अग्नि यज्ञों में स्तुतियोग्य होते हैं। अथवा पोता होकर यज्ञ-गृह में प्रवेश करते हैं।

**उतग्नाअग्निरध्वरउतोगृहपतिर्दमे । उतब्रह्मानिषीदति ॥४॥**

उत । ग्नाः । अग्निः । अध्वरे । उतो इति । गृहऽपतिः ।
दमे । उत । ब्रह्मा । नि । सीदति ॥ ४ ॥

उतापिचाग्निः अध्वरे यागे ग्नाः देवपत्नीर्भवति यद्वाग्नावतीत्यर्थः यद्वा ग्नाः गच्छन् अध्वर्युर्भवति उतोअपिच सोऽग्निर्दमेयज्ञगृहे गृहपतिर्यजमानश्चभवति उतापिच ब्रह्मा ब्राह्मणाच्छंसीसन्निषीदति उपविशति ॥ ४ ॥

४. अथवा यज्ञ में अग्नि देवपत्नी या अध्वर्यु होते हैं। अथवा यज्ञ-गृह में वे गृहपति होते हैं। अथवा ब्रह्मा नामक ऋत्विक् होकर उपवेशन करते हैं।

अथपञ्चमी—

**वेषिह्यध्वरीयतामुपवक्ताजनानाम् । हव्याचमानुषाणाम् ॥५॥**

वेषि । हि । अध्वरिऽयताम् । उपऽवक्ता ।
जनानाम् । हव्या । च । मानुषाणाम् ॥ ५ ॥

अध्वरीयतां यज्ञमिच्छतां मानुषाणां मनुसंबन्धिनां जनानां हव्याच हव्यानिहवींषि हेअग्ने वेषिहि कामयसेखलु उपवक्ता अध्वर्युप्रभृतीनांसर्वेषांकर्मणाम् अनुज्ञार्थम् माम-णयेत्यादिरूपस्यवाक्यस्यवक्तासन् ब्रह्मासि ब्रह्मात्वोवदतिजातविद्यामितिश्रुतेः । उपवक्ता

१ ऋ० सं० ८, १, २६।

सर्वेषां कर्मणामवैकल्यार्थमुपद्रष्टा वा सदस्योऽसि सदसि सदनाः कर्मणामुपद्रष्टा भवतीत्यासस्तंबेनो-क्तत्वात् ॥ ५ ॥

५. हे अग्नि, तुम यज्ञाभिलाषी मनुष्यों के हव्य की कामना करते हो। तुम अध्वर्यु आदि के सब कर्मों को जाननेवाले ब्रह्मा हो। तुम यज्ञकर्मों के अविकल उपद्रष्टा या सदस्य हो।

**वेषीद्वस्य दूत्यं१ यस्य जुजोषो अध्वरम्। हव्यं मर्तस्य वोळ्हवे ॥ ६ ॥**

वेषि। इत्। ऊँ इति। अस्य। दूत्यम्। यस्य। जुजोषः।
अध्वरम्। हव्यम्। मर्तस्य। वोळ्हवे ॥ ६ ॥

हे अग्ने त्वं मर्तस्य मनुष्यस्य अस्य यजमानस्य अध्वरं यागं हव्यं हविः वोळ्हवे वोढुं वहेर्धातोस्तुमर्थे सेसेनसे इति तवेन्प्रत्ययः ढत्वादिर्नित्यमित्याद्युदात्तत्वं जुजोषः सेवसे। जुषी प्रीतिसेवनयोः लेट् बहुलं छन्दसीति शपः श्लुः द्विर्भावश्च लेटोऽडाटाविति अडागमः अस्य यजमानस्य दूत्यं दूतकर्म वेषीदु कामयस एव ॥ ६ ॥

६. हे अग्नि, तुम हव्य वहन करने के लिए जिस यजमान के यज्ञ की सेवा करते हो, उसके दौत्य कार्य की भी तुम कामना करते हो।

**अस्माकं जोष्यध्वरमस्माकं यज्ञमङ्गिरः। अस्माकं शृणुधी हवम् ॥ ७ ॥**

अस्माकम्। जोषि। अध्वरम्। अस्माकम्।
यज्ञम्। अङ्गिरः। अस्माकम्। शृणुधि। हवम् ॥ ७ ॥

हे अङ्गिरोऽग्ने त्वम् अस्माकमध्वरम् अस्मदीयं यागं जोषि जुषस्व सेवस्व अस्माकमस्मदीयं यज्ञं यजनसाधनं हविश्च जुषस्व अस्माकमस्मदीयं हवमाह्वानरूपम् स्तोत्रं च शृणुधि शृणु श्रु-णोतेर्लोण्मध्यमैकवचने सिप् तस्य हिरादेशो श्रुवः शृ चेति धातोः श्नुप्रत्ययः शृभावश्च श्रुशृणुपृकृ-वृभ्यश्छन्दसीति हेर्धिरादेशः ॥ ७ ॥

७. हे अङ्गिरा अग्नि, तुम हमारे यज्ञ की सेवा करो, हमारे हव्य का सेवन करो और हमारे आह्वान-कारक स्तोत्र का श्रवण करो।

**परि ते दूळभो रथोऽस्माँ अश्नोतु विश्वतः। येन रक्षसि दाशुषः ॥ ८ ॥ १ ॥**

परि। ते। दुःऽदभः। रथः। अस्मान्। अश्नोतु।
विश्वतः। येन। रक्षसि। दाशुषः ॥ ८ ॥ १ ॥

हेऽग्ने त्वं येनरथेनविश्वतोविश्वासुसर्वासुदिक्षुगच्छन् दाशुषोहविष्प्रदातॄन्यजमानानवसि विशेभ्यःपालयसि त्वदीयोवृकोदुर्दभोदुर्हिंसः सरथः अस्मान्यजमानान्परि परितः सर्वतःअश्नोतु व्याप्नोतु अश्नोतेर्व्यत्ययेनपरस्मैपदम् ॥ ८ ॥

८. हे अग्नि, तुम जिस रथ-द्वारा समस्त दिशा में गमन करके हवि देनेवाले यजमान की रक्षा करते हो, तुम्हारा वही अहिंसनीय रथ मुझ यजमान के चारों तरफ़ व्याप्त हो ।

॥ इतितृतीयस्यपञ्चमेनवमोवर्गः ॥ ९ ॥

अग्नेतमद्येत्यष्टर्चंदशमंसूक्तं वामदेवस्यार्षमाग्नेयं तथाचानुक्रमणिका—अग्नेतमद्यपदपाङ्क्तंपञ्चमीमहापदपङ्क्तिरन्त्योष्णिक् चतुर्थीषष्ठ्युपान्त्याश्च सप्तम्याःपञ्चकोमुख्योतृतीयःसप्तको नवकश्चाद्यस्याःपञ्चकःपादश्चतुष्कःसप्तकश्चैषुपदेति इदंसूक्तमपिपादपङ्क्तिच्छन्दस्कं पञ्चकाश्चत्वारःषट्कश्चैकश्चतुर्थश्चतुष्कोवापदपङ्क्तिरित्युक्तलक्षणत्वात् पञ्चमीतकस्त्वादिष्टेत्येषामहापदपङ्क्तिः पञ्चपञ्चकाःषट्कश्चैकइतिलक्षणसद्भावात् अन्त्याशिवानः सख्येत्येषोष्णिक्छन्दस्का चतुर्थीषष्ठीसप्तम्यःभामिष्टेऽद्यघृतंनपूतंकृतंचिदिद्धेत्येतास्तिस्रउष्णिहः पदपङ्क्त्योवा अत्रसप्तम्यष्टम्योःपदपङ्क्त्युष्णिहोः परिभाषोक्तपादविच्छेदापवादाय प्रकारान्तरेणविच्छेदःकृतः । दशमेऽहनीदंसूक्तमाज्यशस्त्रं सूत्रितञ्च—अग्नेतमद्याश्वंनस्तोमैरित्याज्यमिति । पिण्डपितृयज्ञेऽग्नेतमद्येत्यनयाग्निंप्रत्यागच्छेत् सूत्रितञ्च—अग्निंप्रत्येयादग्नेतमद्याश्वंनस्तोमैरिति । पौनराधेयिक्यांस्विष्टकृतिपयेयाज्या सूत्रितञ्च—अग्नेतमद्याश्वंनस्तोमैरितिसंयाज्येइति ।

**अग्नेतमद्याश्वंनस्तोमैःक्रतुंनभद्रंहृदिस्पृशम् । ऋध्यामातओहैः ।१।**

अग्ने । तम् । अद्य । अश्वम् । न । स्तोमैः । क्रतुम् ।
न । भद्रम् । हृदिऽस्पृशम् । ऋध्याम । ते । ओहैः ॥ १ ॥

हेऽग्ने अद्यास्मिन्नहनिवयमृत्विजस्तवओहैरिन्द्रादिप्रापकैःस्तोमैःस्तोत्रसमूहैः तं प्रसिद्धं त्वाम् ऋध्याम समर्धयामः कीदृशंत्वाम् अश्वंन वोढारमश्वमिव तथाहविषोवाहकं क्रतुंन कर्तारमिव उपकर्तारमित्यर्थः तथा भद्रं भजनीयं हृदिस्पृशं हृदयङ्गमम् अतिशयेनप्रियमित्यर्थः ॥ १ ॥

१. हे अग्नि, आज हम ऋत्विग्गण, इन्द्रादि-प्रापक स्तुति-द्वारा तुम्हें वर्द्धित करते हैं । अश्व जैसे सवार का वहन करता है, उसी तरह तुम हव्यवाहक हो । तुम यज्ञकर्त्ता की तरह उपकारक हो । तुम भजनीय हो और अतिशय प्रिय हो ।

पौनराधेयिक्यामिष्टौप्रधानस्याग्नेरग्नेह्यस्येत्येषानुवाक्या एभिर्नोअर्कैरितितस्याःस्विष्टकृतोनुवाक्या आमिष्टेऽद्येतिप्रधानस्ययाज्या सूत्रितञ्च—अग्नेअद्याग्नेहोतोर्वेदस्याभिष्टेऽद्यगीर्भिर्गृणन्तएभिर्नोअर्कैरिति ।

अथ द्वितीया—

**अधा ह्य॑ग्ने॒ क्रतो॑र्भ॒द्रस्य॒ दक्ष॑स्य सा॒धोः । र॒थीर्ऋ॒तस्य॑ बृह॒तो ब॒भूथ॑ ॥२॥**

अध॑ । हि । अ॒ग्ने॒ । क्रतोः॑ । भ॒द्रस्य॑ । दक्ष॑स्य ।
सा॒धोः । र॒थीः । ऋ॒तस्य॑ । बृ॒ह॒तः । ब॒भूथ॑ ॥ २ ॥

अधहि इदानीमेव हेऽग्ने त्वं क्रतोः अस्मदीयस्य यागस्य रथीर्नेता बभूथ भवसि छन्दसि लुङ्लङ्लिट इति भवतेर्वर्तमाने लिट् सिपस्थल् आर्धधातुकस्येड्वलादेरितीडागमे प्राप्ते बभूथाततन्थेति निपातनादिडभावः कीदृशस्य यागस्य भद्रस्य भजनीयस्य दक्षस्य प्रवृद्धस्य साधोः अभीष्टफलसाधकस्य ऋतस्य सत्यभूतस्य बृहतो महतः ॥ २ ॥

२. हे अग्नि, तुम इसी समय हमारे भजनीय, प्रवृद्ध, अभीष्टफल-साधक, सत्यभूत और महान् यज्ञ के नेता हो।

**ए॒भिर्नो॑ अ॒र्कैर्भवा॑ नो अ॒र्वाङ्स्व१॒र्ण ज्योतिः॑ ।**
**अग्ने॒ विश्वे॑भिः सु॒मना॒ अनी॑कैः ॥ ३ ॥**

ए॒भिः । नः॒ । अ॒र्कैः । भव॑ । नः॒ । अ॒र्वाङ् । स्वः१ । न ।
ज्योतिः॑ । अग्ने॑ । विश्वे॑भिः । सु॒ऽमनाः॑ । अनी॑कैः ॥ ३ ॥

हेऽग्ने ज्योतिर्ज्योतिष्मान् स्वर्णसूर्य इव तथाविश्वेभिर्विश्वैःसमस्तैरनीकैस्तेजोभिःसुमनाःशोभनमनस्कस्त्वं नोऽस्मदीयैरेभिरेतैःअर्कैरर्चनीयैःस्तोत्रैर्नोऽस्माकमर्वाङभिमुखोभव ॥ ३ ॥

३. हे अग्नि, तुम ज्योतिर्मान् सूर्य की तरह समस्त तेज से युक्त और शोभन अन्तःकरणवाले हो। तुम हम लोगों के अर्चनीय स्तोत्र-द्वारा नीत होओ, और हम लोगों के अभिमुख आगमन करो।

**आ॒भिष्टे॑ अ॒द्य गी॒र्भिर्गृ॒णन्तोऽग्ने॒ दाशे॑म । प्र ते॑ दि॒वो न स्त॑नयन्ति॒ शुष्माः॑ ॥४॥**

आ॒भिः । ते॒ । अ॒द्य । गी॒ःऽभिः । गृ॒णन्तः॑ । अग्ने॑ । दाशे॑म ।
प्र । ते॒ । दि॒वः । न । स्त॒न॒य॒न्ति॒ । शुष्माः॑ ॥ ४ ॥

अद्यास्मिन्दिवसे हेऽग्ने आभिर्गीर्भिःस्तुतिरूपाभिर्वाग्भिःगृणन्तस्त्वांस्तुवन्तोवयमृत्विग्यजमानाः ते तुभ्यं दाशेम हवींषिदद्या(मा)म दिवोनसूर्यस्यरश्मयइवतेत्वदीयाःशुष्माःशोषकाज्वालाः प्रस्तनयन्ति प्रकर्षेणशब्दायन्ते यद्वा दिवोन मेघाइव त्वदीयाज्वालाःशब्दायन्ते ॥ ४ ॥

४. हे अग्नि, आज हम ऋत्विक् वचनों-द्वारा स्तुति करके तुम्हें हव्य दान करेंगे। सूर्य की रश्मि की तरह तुम्हारी शोषक ज्वाला शब्द करती है। अथवा मेघ की तरह तुम्हारी ज्वाला शब्द करती है।

अथपञ्चमी—

तव॒स्वादि॑ष्ठाग्ने॒संदृ॑ष्टिरि॒दाचि॒दह्न॑इ॒दाचि॑द॒क्तोः ।
श्रि॒येरु॒क्मोनरो॑चतउपा॒के ॥ ५ ॥

तव॑ । स्वादि॑ष्ठा । अग्ने॑ । सम्ऽदृ॑ष्टिः । इ॒दा । चि॒त् । अह्नः॑ । इ॒दा ।
चि॒त् । अ॒क्तोः । श्रि॒ये । रु॒क्मः । न । रो॒च॒ते॒ । उ॒पा॒के ॥५॥

हेग्ने स्वादिष्ठास्वादुतमा प्रियतमा तव त्वदीयासंदृष्टिर्दीप्तिः अह्नइदाचित् दिवसस्ये-दानींच अक्तोरिदाचित् अक्तुरितिरात्रिनाम शर्वरीअक्तुःउर्म्येतिरात्रिनामसुपाठात् रात्रेरि-दानींच अहोरात्रेइत्यर्थः अञ्जूव्यक्तिम्रक्षणकान्तिगतिष्वित्यस्माद्धातोःक्रियेत्यौणादिकस्तुने-चतुप्रत्ययः तस्यकित्त्वादयम् तितुत्रेतीट्प्रतिषेधः अनिदितामित्युपधानकारलोपः चोःकुरि-तिकुत्वं रुक्मोन अलङ्कारइव श्रियै पदार्थमाश्रयितुमुपाके अन्तिके उपाकइत्यन्तिकनाम आकेउपाकेइतितन्नामसुपाठात् रोचते राजते ॥ ५ ॥

५. हे अग्नि, तुम्हारी प्रियतम दीप्ति अहर्निश अलङ्कार की तरह पदार्थों को आश्रयित करने के लिए उनके समीप शोभा पाती है।

घृ॒तंनपू॒तंत॒नूर॑रे॒पाःशुचि॒हिर॑ण्यम् । तत्ते॑रु॒क्मोनरो॑चतस्वधावः ॥६॥

घृ॒तम् । न । पू॒तम् । त॒नूः । अ॒रे॒पाः । शुचि॑ । हिर॑ण्यम् ।
तत् । ते॒ । रु॒क्मः । न । रो॒च॒त॒ । स्व॒धा॒ऽवः॒ ॥ ६ ॥

हेस्वधावः स्वधाशब्दोन्नवाची अन्नवन्नग्ने पूतं शोधितं घृतंन आज्यमिव तनूःत्वदी-यामूर्तिः अरेपाः पापरहिताभवति शुचिःशुद्धंहिरण्यंहितरमणीयं तेत्वदीयंतत्प्रसिद्धंतेजः रु-क्मोन भूषणमिवरोचत रोचते भासते ॥ ६ ॥

६. हे अन्नवान् अग्नि, तुम्हारी मूर्ति शोधित घृत की तरह पापरहित है। तुम्हारा शुद्ध एवं रमणीय तेज अलङ्कार की तरह दीप्त होता है।

कृ॒तंचि॒द्धिष्मा॒सने॑मि॒द्वेषोऽग्न॑इ॒नोषि॒मर्ता॑त् । इ॒त्थायज॑मानादृतावः ॥७

कृ॒तम् । चि॒त् । हि । स्म॒ । सने॑मि । द्वेषः॑ । अग्ने॑ । इ॒नोषि॑ ।
मर्ता॑त् । इ॒त्था । यज॑मानात् । ऋ॒त॒ऽवः॒ ॥ ७ ॥

हेऋतावः सत्यवन्नग्ने कृतंचित् यजमानेनकृतमपि सनेमि चिरन्तनं सनेमीतिपुराणनाम सनेमिपूर्व्यमितिपुराणनामसुपाठात् द्वेषः पापं मर्तात्मनुष्याद्यजमानात् इत्थासत्यं इत्थेतिसत्य-नामैतत् अद्धाइत्थेतितन्नामसुपाठात् इनोषिस्महि प्रेरयस्येवत्वं नाशयसीत्यर्थः ॥ ७ ॥

७. हे सत्यवान् अग्नि, तुम यजमानों-द्वारा निर्मित हो; तथापि चिरन्तन हो। तुम यजमानों के पाप को निश्चय ही दूर कर देते हो।

अथाष्टमी—

शिवानः सख्यासन्तुभ्रात्राग्नेदेवेषुयुष्मे ।
सानोनाभिः सदनेसस्मिन्नूधन् ॥ ८ ॥ १० ॥

शिवा । नः । सख्या । सन्तु । भ्रात्रा । अग्ने । देवेषु ।
युष्मे इति । सा । नः । नाभिः । सदने । सस्मिन् । ऊधन् ॥८॥१०॥

हेऽग्ने नोऽस्मदीयानिसख्या सख्यानि भ्रात्राभ्रात्राणि भ्रातृसंबन्धीनिकर्माणि देवेषुद्योतमानेषुयुष्मे युष्मासु सुपांसुलुगितिसप्तमीबहुवचनस्यशेआदेशः शिवा शिवानि सन्तु मङ्गलानिभवन्तु सा सखित्वभ्रातृकर्मसंततिः सदने देवानांस्थाने सस्मिन्नूधनि सर्वस्मिन्यज्ञेनोऽस्माकंनाभिर्बन्धनंभवति ॥ ८ ॥

८. हे अग्नि, तुम द्युतिमान् हो। तुम्हारे प्रति जो हम लोगों का सख्य और भ्रातृभाव है, वह मङ्गलजनक हो। वह सखित्व और भ्रातृकार्य देवों के स्थान में और सम्पूर्ण यज्ञ में हम लोगों का नाभिबन्धन हो ॥ इतितृतीयस्यपञ्चमेदशमोवर्गः ॥ १० ॥

द्वितीयेऽनुवाकेएकादशसूक्तानि तत्रभद्रंतइतिषडृचंप्रथमंसूक्तं वामदेवस्यार्षं त्रिष्टुप्छन्दस्कम् अग्निदेवताकं भद्रंषळित्यनुक्रमणिका । प्रातरनुवाकाश्विनशस्त्रयोराग्नेयेक्रतौत्रैष्टुभेछन्दसीदमादिकेद्वेसूक्तेविनियुक्ते सूत्रितंच—भद्रंतेअग्नइतिसूक्तेइति ।

भद्रंतेअग्नेसहसिन्ननीकमुपाकआरोचतेसूर्यस्य ।
रुशद्दृशेददृशेनक्तयाचिदरूक्षितंदृशआरूपेअन्नम् ॥ १ ॥

भद्रम् । ते । अग्ने । सहसिन् । अनीकम् । उपाके । आ ।
रोचते । सूर्यस्य । रुशत् । दृशे । ददृशे । नक्तया । चित् ।
अरूक्षितम् । दृशे । आ । रूपे । अन्नम् ॥ १ ॥

हेसहसिन् बलवन्नग्ने ते त्वदीयं भद्रं भजनीयमनीकंतेजः सूर्यस्यउपाके समीपभूतेदिवसेइत्यर्थः आरोचते समन्तादीप्यते रुशत् रोचमानं दृशेदर्शनीयंतेजः नक्तयाचिद्रात्र्यापि ददृशेदृश्यते आदित्यंवाअस्तंयन्तमग्निमनुप्रविशतीत्यर्थः अकिंच अरूक्षितं स्निग्धं दृशे दर्शनीयम् अन्नंपुरोडाशादिरूपंहविः रूपेरूपवति त्वयि ऋत्विगादिभिर्हुतंभवति ॥ १ ॥

१. हे बलवान् अग्नि, तुम्हारा भजनीय तेज सूर्य के समीपभूत दिवस में चारों तरफ़ दीप्तिमान् होता है। तुम्हारा सुन्दर और दर्शनीय तेज रात्रि में भी दिखाई देता है। तुम रूपवान् हो। तुम्हारे उद्देश से स्निग्ध और दर्शनीय अन्न बहुत होता है।

अथ द्वितीया—

विषाह्यग्ने गृणते मनीषां खं वेपसा तुविजात स्तवानः ।
विश्वेभिर्यद्वावनः शुक्र देवैस्तन्नो रास्व सुमहो भूरि मन्म ॥२॥

वि । साहि । अग्ने । गृणते । मनीषाम् । खम् । वेपसा ।
तुविऽजात । स्तवानः । विश्वेभिः । यत् । वावनः । शुक्र ।
देवैः । तत् । नः । रास्व । सुऽमहः । भूरि । मन्म ॥२॥

हे तुविजात मन्थनीयारणिद्वारा यज्ञादिकर्मसु बहुजन्मन्नग्ने स्तवानः ऋत्विगादिभिः स्तूयमानस्त्वं वेपसा यज्ञादिकर्मणा वेप इति कर्मनाम वेपः वेषः विष्टीति कर्मनामसु पाठात् मनीषां स्तुतिं गृणते कुर्वते यजमानाय खं यजमानप्राप्यस्य पुण्यलोकस्य द्वारं विषाहि विष्य विमुञ्चेत्यर्थः षोऽन्तकर्मणि इत्यस्माद्धातोः लोण्मध्यमपुरुषैकवचनं सिप् दिवादिभ्यः श्यन् तस्य बहुलं छन्दसीति लुक् आदेच उपदेशेऽशितीत्यात्वं सेर्हिरादेशः तिङ्ङतिङ इति निघातः हे शुक्र दीप्यमानाग्ने त्वं विश्वेभिर्विश्वैः सर्वैः बहुलं छन्दसीति भिस ऐस्भावः देवैरिन्द्रादिभिः सह यत्पश्वादिधनं वावनः यजमानेभ्यः प्रयच्छसि वनतेर्लेट् तस्य सिप् इतश्च लोप इतीकारलोपः बहुलं छन्दसीति विकरणस्य श्लुः श्लाविति द्विर्वचनं हलादिशेषः लेटोऽडाटावित्यडागमः यद्वृत्तान्नित्यमिति निघाताभावः हे सुमहः शोभनतेजस्काग्ने भूरि प्रभूतं मन्म मननीयं तद्धनं नोऽस्मभ्यं रास्व देहि ॥ २ ॥

२. हे बहुजन्मा अग्नि, तुम यज्ञकारियों-द्वारा स्तुत होकर स्तुतिकारी यजमान के लिए पुण्य लोक के द्वार को विमुक्त करो। हे सुन्दर तेजोविशिष्ट अग्नि, देवों के साथ यजमान को तुम जो धन देते हो, हमें भी वही प्रभूत और अभिलषित धन दो।

महाभिषेकेऽभिषिक्तोऽग्निः कल्पयानो यष्टव्यः तस्य द्वे अनुवाक्ये तत्र त्वदग्ने काव्या इति द्वितीयानुवाक्या तथा च सूत्रितम्—त्वदग्ने काव्या त्वन्मनीषाः समत्र यासु इत्था जायमान इति ।

सूक्ते तृतीया—

त्वदग्ने काव्या त्वन्मनीषास्त्वदुक्था जायन्ते राध्यानि ।
त्वदेति द्रविणं वीरपेशा इत्थाधिये दाशुषे मर्त्याय ॥ ३ ॥

त्वत् । अग्ने । काव्या । त्वत् । मनीषाः । त्वत् । उक्था ।
जायन्ते । राध्यानि । त्वत् । एति । द्रविणम् । वीरऽपेशाः ।
इत्थाऽधिये । दाशुषे । मर्त्याय ॥ ३ ॥

हे अग्ने काव्या काव्यानि हविर्वहनदेवताह्वानादीन्यभिसंकल्पीनि कर्माणि वा त्वत्त्वत्तो जायन्ते उत्पद्यन्ते मनीषाः स्तुतिरूपा वाचस्त्वत्त एव जायन्ते राध्यानि राधुंपो-

ध्यानि उक्था उक्थानिशस्त्राणित्वत्तोजायन्ते इत्थाधिये धीरितिकर्मनाम इत्थेतिसत्यनामसुपा- अत् सत्यकर्मणे दाशुषे हवींषिदत्तवतेमर्त्यायमनुष्यायपयजमानायवीरपेशाः पेशइतिरूपनाम इदंविक्रान्तंरूपम् अत्रलिङ्गव्यत्ययेनवीरपेशाइतिरूपम् द्रविणंपश्वादिधनंत्वत्तःप्रतिनिर्गच्छति उत्पद्यतइत्यर्थः ॥ ३ ॥

३. हे अग्नि, हविर्वहन और देवतानयन आदि अग्नि-सम्बन्धी कार्य तुमसे ही उत्पन्न हुए हैं, स्तुतिरूप वचन तुमसे ही उत्पन्न हुए हैं और आराधनयोग्य उक्थ तुमसे ही उत्पन्न हुए हैं। सत्यकर्मा और हव्यदाता यजमान के लिए वीर्ययुक्त रूप और धन भी तुमसे ही उत्पन्न हुए हैं।

त्वद्वाजीवाजम्भरोविहायाअभिष्टिकृज्जायतेसत्यशुष्मः ।
त्वद्रयिर्देवजूतोमयोभुस्त्वदाशुर्जूजुवाँअग्नेअर्वा ॥ ४ ॥

त्वत् । वाजी । वाजम्ऽभरः । विऽहायाः । अभिष्टिऽकृत् । जायते । सत्यऽशुष्मः । त्वत् । रयिः । देवऽजूतः । मयःऽभुः । त्वत् । आशुः । जूजुऽवान् । अग्ने । अर्वा ॥ ४ ॥

हेअग्ने वाजी बलवान् वाजम्भरः हविर्लक्षणान्नस्यवाहकः अग्नेर्वाजम्भरइत्येषावैदिकीसंज्ञा संज्ञायांभृतॄवृजीतिधारयतेकर्मण्युपपदेखच्प्रत्ययः अरुर्द्विषदजन्तस्येतिमुमागमः चितइत्य- न्तोदात्तत्वं विहायाः महान् अभिष्टिकृत् यज्ञकृत् अन्वेषणकृद्वा सत्यशुष्मः सत्यबलः पुत्रः त्वत्तोजायतेउत्पद्यते देवजूतोदेवैःप्रेरितःमयोभुःसुखप्रदःमयइतिसुखनामैतत् रयिर्धनंत्वज्जायते आशुःशीघ्रगामीअप्रतिहतगमनइत्यर्थः जूजुवान्वेगेनगच्छन्नर्वाश्वःत्वत्तोजायते ॥ ४ ॥

४. हे अग्नि, बलवान्, हव्यवाहक, महान् यज्ञकारी और सत्यबल-विशिष्ट पुत्र तुमसे ही उत्पन्न हुए हैं। देवों-द्वारा प्रेरित सुखप्रद धन तुमसे ही उत्पन्न होता है और शीघ्रगामी, गतिविशिष्ट तथा वेगवान् अश्व तुमसे ही उत्पन्न हुआ है।

त्वामग्नेप्रथमंदेवयन्तोदेवंमर्ताअमृतमन्द्रजिह्वम् ।
द्वेषोयुतमाविवासन्तिधीभिर्दमूनसंगृहपतिममूरम् ॥ ५ ॥

त्वाम् । अग्ने । प्रथमम् । देवऽयन्तः । देवम् । मर्ताः । अमृत । मन्द्रऽजिह्वम् । द्वेषःऽयुतम् । आ । विवासन्ति । धीभिः । दमूनसम् । गृहऽपतिम् । अमूरम् ॥ ५ ॥

हेअमृत अमरणशीलाग्ने देवयन्तोदेवानिच्छन्तोमर्तामनुष्यायजमानाः त्वाम् धीभिः स्तुतिभिःकर्मभिर्वा आविवासन्ति समन्तात्परिचरन्ति कीदृशंत्वां प्रथमं देवानामाद्यंदेवंद्योतमानं मन्द्रजिह्वं देवानांमादयित्रीजिह्वायस्यतं द्वेषोयुतं द्वेषसांपापानां पृथक्कर्तारं दमूनसं रक्षसांदमनकरणमनसोपेतं दमूनःशब्दस्यकथमयमर्थइतिदमूनादमनानाद्वानमनावादाःत्तमनाआपिवादमइतिगृहनामतन्मनाःस्यादितियास्केनोक्तत्वादिति । दमुउपशमने दमेरूनसिरित्यौणादिकऊनसिप्रत्ययः गृहपतिं गृहाणांपालयितारम् अमूरम् अमूढं प्रगल्भमित्यर्थः ॥ ५ ॥

५. हे अमर अग्नि, देवाभिलाषी मनुष्य स्तुति-द्वारा तुम्हारी परिचर्या करते हैं। तुम देवों में आदिदेव हो। तुम प्रकाशवान् हो। तुम्हारी जिह्वा देवों को हृष्ट करनेवाली है। तुम पापों को पृथक् करनेवाले हो और राक्षसों को दमन करने की इच्छावाले हो। तुम गृहपति और प्रगल्भ हो।

स्वस्त्ययन्याम् आरेअस्मदितिस्वस्तिमतोक्षेर्योज्या सूत्रितञ्च—आरेअस्मदमतिमारेअंहइति ।

आ॒रे अ॒स्मद॑मतिमा॒रे अंह॑ आ॒रे विश्वां॑ दुर्म॒तिं यन्नि॒पासि॑ ।
दो॒षा शि॒वः स॑हसः सूनो अग्ने॒ यं दे॒व आ चि॒त्सच॑से स्व॒स्ति ॥६॥११॥

आ॒रे । अ॒स्मत् । अम॑तिम् । आ॒रे । अंहः॑ । आ॒रे । विश्वा॑म् । दुः॒ऽम॒तिम् । यत् । नि॒ऽपासि॑ । दो॒षा । शि॒वः । स॒ह॒सः॒ । सू॒नो॒ इति॑ । अ॒ग्ने॒ । यम् । दे॒वः । आ । चि॒त् । सच॑से । स्व॒स्ति ॥ ६ ॥ ११ ॥

हेसहसःसूनो बलस्यपुत्र मथ्यमानोग्निर्मन्थनकारिणांहिबलेनजायते इत्यग्नेर्बलपुत्रत्वं हेअग्ने दोषारात्रौ शिवः शिवकरः देवोद्योतमानस्त्वं यंयानस्मान्स्वस्ति अविनाशाय आसचसे परितःसेवसे चिदितिपूरणः यद्यस्मात्कारणात् निपासि यजमानान्नितरांपालयसि तेभ्योस्मदस्मत्तः अमतिंपापरूपामशनेच्छाम् आरे दूरेकुरु अशनायावैपाप्मामतिरितिब्राह्मणम् । आरेदूरेस्मदस्मत्तःअंहःपापंकुरु आरेइतिदूरनामैतत् अस्मत्तःआरेदूरेदुर्मतिंदुर्मनस्त्वंकुरु ॥ ६ ॥

६. हे बलपुत्र अग्नि, तुम रात्रिकाल में मङ्गलजनक और द्युतिमान् होकर हमारे कल्याण के लिए सेवा करते हो। जिस कारण तुम यजमानों का विशेष रूप से पालन करते हो, उसी से तुम हम लोगों के निकट से अमति को दूर करो। हम लोगों के निकट से पाप को दूर करो और हमारे निकट से समस्त दुर्मति को दूर करो।

यस्त्वामग्नइतिषळृचंद्वितीयंसूक्तम् वामदेवऋषिस्त्रिष्टुभोग्निर्देवता । यस्त्वामित्यनुक्रान्तं । प्रातरनुवाकाश्विनशस्त्रयोःपूर्वसूक्तेनसहोक्तोविनियोगः ।

१ नि० ४, ४। २ ऐ० ब्रा० २. २।

यस्त्वामग्न इनधते यतस्रुक्त्रिस्ते अन्नं कृणवत्सस्मिन्नहन् ।
स सु द्युम्नैरभ्यस्तु प्रसक्षत्तव क्रत्वा जातवेदश्चिकित्वान् ॥ १ ॥

यः । त्वाम् । अग्ने । इनधते । यतऽस्रुक् । त्रिः । ते । अन्नम् ।
कृणवत् । सस्मिन् । अहन् । सः । सु । द्युम्नैः । अभि । अस्तु ।
प्रऽसक्षत् । तव । क्रत्वा । जातऽवेदः । चिकित्वान् ॥ १ ॥

हेऽग्ने यतस्रुक् स्रुचा संयतो यजमानः त्वामिनधते दीप्तियुक्तं कुर्यात् यः सस्मिन्नहन्सर्वस्मिन्नहनि ते तुभ्यं त्रिः त्रिवारं सवनत्रये अन्नं हविर्लक्षणमन्नं कृणवत्कुर्यात् हे जातवेदः जातानां वेदितरग्ने तव तोकेन क्रत्वा इन्धनादिहेतुना कर्मणा प्रसक्षत् प्रसहमानं त्वदीयं तेजः चिकित्वान् जानन् यजमानः द्युम्नैर्धनैर्यशोभिर्वा सु अत्यन्तमन्यस्तु शत्रूनभिभवतु ॥ १ ॥

१. हे अग्नि, जो यजमान स्रुक् को संयत करके तुम्हें प्रदीप्त करता है, जो व्यक्ति तुम्हें प्रतिदिन तीनों सवनों में हविरन्न देता है, हे जातवेदा, वह व्यक्ति तुम्हारे तृप्तिकर (इन्धन-दान आदि) कार्य-द्वारा तुम्हारे प्रसहमान तेज को जानकर धन-द्वारा शत्रुओं का पराभूत करता है।

इध्मं यस्ते जभरच्छश्रमाणो महो अग्ने अनीकमा सपर्यन् ।
स इधानः प्रति दोषामुषासं पुष्यन्रयिं सचते घ्नन्नमित्रान् ॥ २ ॥

इध्मम् । यः । ते । जभरत् । शश्रमाणः । महः । अग्ने । अनीकम् ।
आ । सपर्यन् । सः । इधानः । प्रति । दोषाम् । उषसम् ।
पुष्यन् । रयिम् । सचते । घ्नन् । अमित्रान् ॥ २ ॥

हेऽग्ने यो यजमानः ते तुभ्यम् इध्मं होमसाधनं समिज्जातं जभरत् आहरेत् हृञ् हरणे लिङ्र्थे लेट् तस्य सिप्दस्य लोपः इतीकारलोपः बहुलं छन्दसीति शपः श्लुः द्विर्वचनादिकार्यं छेदोऽत्यायितव्यस्तागमः हृग्रहोर्भ इति भत्वं शश्रमाणः इध्माद्याहरणे श्राम्यन् महो महतस्तवानीकम् आकारश्चार्थे तेजश्च सपर्यन्परिचरन्यो यजमानः दोषां प्रति रात्रिकालीकृत्य उषसं प्रति उषःकालं च लक्ष्यीकृत्य कालद्वयेऽपीत्यर्थः इधानः इन्धानस्त्वां दीप्तियुक्तं करोति पुष्यन् प्रजाभिः पशुभिश्च पुष्टः सन् स यजमानः अमित्रान् शत्रून् घ्नन् हिंसन् रयिं धनं सचते सेवते सर्वत्राप्यायितत्व समुच्चयो ध्वनीत्यर्थः ॥ २ ॥

२. हे अग्नि, जो तुम्हारे लिए होमसाधन काष्ठ का आहरण करता है, हे महान् अग्नि, जो व्यक्ति काष्ठ के अन्वेषण में श्रान्त होकर तुम्हारे तेज की परिचर्या करता है और रात्रिकाल तथा दिवाकाल में जो तुम्हें प्रदीप्त करता है, वह यजमान प्रजा और पशुओं द्वारा पुष्ट होकर शत्रुओं को विनष्ट करता है और धन लाभ करता है।

उपांसंमरणीयेष्टावग्नेःक्षत्रभृतोनुवाक्या तथाचसूत्रम्–अग्निरीशेबृहतःक्षत्रियस्याग्नेर्भिदेसुमतिंवोप्यर्यागीरिति ।

सूक्तेतृतीया–

अग्निरीशेबृहतःक्षत्रियस्याग्निर्वाजस्यपरमस्यरायः ।
दधातिरत्नंविधतेयविष्ठोव्यानुषङ्मर्त्यायस्वधावान् ॥ ३ ॥

अग्निः । ईशे । बृहतः । क्षत्रियस्य । अग्निः । वाजस्य ।
परमस्य । रायः । दधाति । रत्नम् । विधते । यविष्ठः । वि । आनुषक् ।
मर्त्याय । स्वधाऽवान् ॥ ३ ॥

अग्निः बृहतोमहतःक्षत्रियस्य बलस्य ईशे ईश्वरोभवति वर्तमानार्थेलिट् किंच अग्निःपरमस्योत्कृष्टस्यवाजस्यान्नस्यरायःपश्वादेर्धनस्यचेशे यविष्ठोयुवतमःस्वधावानन्नवान्तेजस्वीचाग्निः विधते परिचरते विधतिःपरिचरणकर्मेतियास्कः । मर्त्याय मनुष्याय यजमानाय रत्नंरमणीयंधनमानुषक् अनुषक्तं विदधाति करोति ॥ ३ ॥

३- अग्नि महान् बल के ईश्वर तथा उत्कृष्ट अन्न और पशु-स्वरूप धन के स्वामी हैं। युवतम और अन्नवान् अग्नि परिचर्या करनेवाले यजमान को रमणीय धन से संयुक्त करें।

यच्चिद्धितेपुरुषत्रायविष्ठाचित्तिभिश्चकृमाकच्चिदागः ।
कृधीष्व१स्माँअदितेरनागान्व्येनांसिशिश्रथोविष्वगग्ने ॥४॥

यत् । चित् । हि । ते । पुरुषऽत्रा । यविष्ठ । अचित्तिऽभिः ।
चकृम । कत् । चित् । आगः । कृधि । सु । अस्मान् । अदितेः ।
अनागान् । वि । एनांसि । शिश्रथः । विष्वक् । अग्ने ॥ ४ ॥

हेयविष्ठ युवतमाग्ने यच्चिद्धि यद्यपिखलु तेत्वदीयेषु पुरुषत्रा परिचारकेषु अचित्तिभिरज्ञानैः कच्चिदागः किंचिदपिपापंवयंचकृम तथापि हेअग्ने अस्मानदितेर्भूमेरनागाननागसः पापरहितान्सु अत्यन्तं कृधि कुरु हेअग्ने विष्वक् सर्वतोविद्यमानान्येनांसि अस्माभिःकृतानि पापानि विशिश्रथः विश्लथय शिथिलीकुरु ॥ ४ ॥

४- हे युवतम अग्नि, यद्यपि तुम्हारे परिचारकों के मध्य में हम अज्ञानवश कुछ पाप करते हैं; तथापि तुम पृथ्वी के निकट हमें सम्पूर्ण रूप से निष्पाप कर दो। हे अग्नि, सर्वत्र विद्यमान हमारे पापों को तुम शिथिल करो।

महश्चिदग्नएनसोअभीकऊर्वाद्देवानामुतमर्त्यानाम् ।
मातेसखायःसदमिद्रिषामयच्छातोकायतनयायशंयोः ॥ ५ ॥

महः । चित् । अग्ने । एनसः । अभीके । ऊर्वात् । देवानाम् ।
उत । मर्त्यानाम् । मा । ते । सखायः । सदम् । इत् । रिषाम ।
यच्छ । तोकाय । तनयाय । शम् । योः ॥ ५ ॥

हेअग्ने देवानामिन्द्रादीनाम् उतापिच मर्त्यानां मनुष्याणामभीके अन्तिके अभीकइ-त्यन्तिकनामैतत् अस्माभिर्यत्पापंकृतं महश्चिन्महतोप्यूर्वाद्विस्तृतादस्मादेनसःपापात् तेत्वदी-याःसखायोमित्रभूताः स्तोतारोवयंसदमित् सर्वदैवमारिषाम माहिंसिताभूम हेअग्ने त्वं तोकाय पुत्राय तनयाय पौत्राय शं पापरूपोपद्रवाणांशान्तिं योः सुकृतोत्पादितंसुखंचयच्छ देहि ॥ ५ ॥

५. हे अग्नि, हम तुम्हारे सखा हैं। हमने इन्द्रादि देवों के निकट अथवा मनुष्यों के निकट जो पाप किया है, उस महान् और विस्तृत पाप से हम कभी भी विघ्न न पावें। तुम हमारे पुत्र और पौत्र को पाप-रूप उपद्रवों से शान्ति और सुकृतजनित सुख दो।

यथाहत्यद्वसवोगौर्यंचित्पदिषिताममुञ्चतायजत्राः ।
एवोष्व१स्मन्मुञ्चताव्यंहः प्रतार्यग्नेप्रतरंनआयुः ॥६॥१२॥

यथा । ह । त्यत् । वसवः । गौर्यम् । चित् । पदि । सिताम् ।
अमुञ्चत । यजत्राः । एवो इति । सु । अस्मत् । मुञ्चत । वि । अंहः ।
प्र । तारि । अग्ने । प्रऽतरम् । नः । आयुः ॥ ६ ॥ १२ ॥

यजत्राः यजनीयाः पूजार्हाः हेवसवोनिवासयितारोग्नयः यूयं यथाह यथैव त्यत् त्यां तां पदि पादे सितां बद्धां गौर्यंचित् गौरींगामपि अमुञ्चतत्यक्तवन्तोमुक्तवन्तस्तथा एवमेव अस्मदस्मत्तः अंहःपापं सु अत्यन्तंविमुञ्चत विमुक्तंकुरुत यद्वाप्रवृद्धमवृद्धं हेअग्ने त्वया प्र-तरंप्रवृद्धंनोस्मदीयमायुः प्रतारि प्रवृद्धंक्रियताम् ॥ ६ ॥

६. हे पूजार्ह और निवासयिता अग्नि, तुमने जिस तरह पदबद्ध गौरी गौ को विमुक्त किया था, उसी तरह हम लोगों को पाप से विमुक्त करो। हे अग्नि, हमारी आयु तुम्हारे द्वारा प्रवृद्ध है, तुम इसे और प्रवृद्ध करो।

॥ इतितृतीयस्यपञ्चमेद्वादशोवर्गः ॥ १२ ॥

मत्स्यभिरितिपञ्चर्चंतृतीयंसूक्तं वामदेवस्यार्षंत्रैष्टुभमाग्नेयं तत्रअन्त्यावरुणाभिवेयोवअग्नतिर्वैतं तथाचानुक्रम्यते—मत्स्यभिःपञ्चाग्निर्न्नोत्यन्त्यस्त्वावरुणेति लैङ्गिकोविनियोगः ।

प्रत्यग्निरुषसामग्रमख्यद्विभातीनांसुमनारत्नधेयम् ।
यातमश्विनासुकृतोदुरोणमुत्सूर्योज्योतिषादेवएति ॥ १ ॥

प्रति । अग्निः । उषसाम् । अग्रम् । अख्यत् । विऽभातीनाम् ।
सुऽमनाः । रत्नऽधेयम् । यातम् । अश्विना । सुऽकृतः ।
दुरोणम् । उत् । सूर्यः । ज्योतिषा । देवः । एति ॥ १ ॥

सुमनाः शोभनमनस्कोऽग्निर्विभातीनां व्युच्छन्तीनामुषसामुषोदेवतानां रत्नधेयं रत्नानां धनप्रकाशकमित्यर्थः अग्रंप्रति पूर्वकालमभीकृत्य अख्यत्प्रबुद्धोभवति हेअश्विना अश्विनौ युवां सुकृतोयजमानस्यदुरोणंगृहं दुरोणइतिगृहनाम दुरोणेदुर्याइतिगृहनामसुपाठात् यातं गच्छतं सूर्यऋत्विगादीनां प्रेरकोदेवःज्योतिषास्वेनतेजसा उदेति उषःकालेप्रादुर्भवतीत्यर्थः ॥ १ ॥

१. शोभन मनवाले अग्नि तमोनिवारिणी उषा के धन प्रकाशकाल के पूर्व ही प्रबुद्ध होते हैं। हे अश्विद्वय, तुम यजमान के गृह में गमन करो। ऋत्विक् आदि के प्रेरक सूर्यदेव अपने तेज के साथ उषाकाल में प्रादुर्भूत होते हैं।

ऊर्ध्वंभानुंसवितादेवोअश्रेद्द्रप्संदविध्वद्गविषोनसत्वा ।
अनुव्रतंवरुणोयन्तिमित्रोयत्सूर्यंदिव्यारोहयन्ति ॥ २ ॥

ऊर्ध्वम् । भानुम् । सविता । देवः । अश्रेत् । द्रप्सम् । दविध्वत् ।
गोऽइषः । न । सत्वा । अनु । व्रतम् । वरुणः । यन्ति । मित्रः ।
यत् । सूर्यम् । दिवि । आऽरोहयन्ति ॥ २ ॥

सविताप्रेरकोदेवः ऊर्ध्वम् उन्मुखंभानुमश्रेत् आश्रयति यदारश्मयःसूर्यंदिविद्युलोके आरोहयन्तिआरोहणंकारयन्ति तदा वरुणोरात्र्यभिमानीदेवः मित्रोऽहरभिमानी अन्येदेवाश्च व्रतं तत्संबन्धिकर्मानुयन्ति अनुगच्छन्ति अनुगमनेदृष्टान्तउच्यते—द्रप्संपार्थिवंरजोदविध्वत् धुन्वन् विकिरन्नित्यर्थः गविषोगाइच्छन्सत्वाबलवान्वृषभइव तद्वत् ॥ २ ॥

२. सवितादेव उन्मुख किरण को विकासित करते हैं। रश्मियाँ जब सूर्य को द्युलोक में आरूढ़ कराती हैं तब वरुण, मित्र और अन्यान्य देवगण अपने-अपने कर्मों का अनुगमन करते हैं, जैसे बलवान् वृषभ गौओं की कामना करके धूलि विकीर्ण करता हुआ गौओं का अनुगमन करता है।

यंसीमकृण्वन्तमसेविपृचेध्रुवक्षेमाअनवस्यन्तोअर्थम् ।
तंसूर्यंहरितःसप्तयह्वीःस्पशंविश्वस्यजगतोवहन्ति ॥ ३ ॥

यम् । सीम् । अकृण्वन् । तमसे । विपृचे । ध्रुवक्षेमाः ।
अनवस्यन्तः । अर्थम् । तम् । सूर्यम् । हरितः । सप्त । यह्वीः ।
स्पशम् । विश्वस्य । जगतः । वहन्ति ॥ ३ ॥

ध्रुवक्षेमाः स्थिरनिवासाः सृष्टिकर्तारो देवाः सीम् सर्वतस्तमसे तमसः विपृचे पृथक्करणाय अर्थं जगल्लक्षणं कार्यम् अनवस्यन्तः अविमुञ्चन्तः कुर्वन्तएव यं सूर्यम् अकृण्वन् असृजन्नित्यर्थः यह्वीर्महत्यः सप्त सप्तसंख्याकाः हरितोऽश्वाः विश्वस्य समस्तस्य जगतः प्राणिसमूहस्य स्पशं प्रेरकत्वेन ज्ञातारं तं सूर्यं वहन्ति धारयन्ति ॥ ३ ॥

३. सृष्टि करनेवाले देवों ने संसार के कार्य का परित्याग न करके सर्वतोभाव से अन्धकार को दूर करने के लिए जिस सूर्य को सृष्ट किया था, उस समस्त प्राणिसमूह के विज्ञाता सूर्य का धारण महान् हरिनामक सप्ताश्व करते हैं।

वहिष्ठेभिर्विहरन्यासि तन्तुमवव्ययन्नसितं देव वस्म ।
दविध्वतो रश्मयः सूर्यस्य चर्मेवावाधुस्तमो अप्स्वन्तः ॥४॥

वहिष्ठेभिः । विऽहरन् । यासि । तन्तुम् । अवऽव्ययन् ।
असितम् । देव । वस्म । दविध्वतः । रश्मयः । सूर्यस्य । चर्मऽइव ।
अव । अधुः । तमः । अप्ऽसु । अन्तरिति ॥ ४ ॥

हे देव द्योतमान सूर्य त्वं जगन्निर्वाहात्मकस्य रसस्यादानार्थं तन्तुं रश्मिसमूहं विहरन् विस्तारयन् यासि तं कृष्णवर्णं वस्म नक्तंचराणां निवासभूतां रात्रिम् अवव्ययन् अवाचीनं यथा भवति तथा संवृण्वन् तिरस्कुर्वन्नित्यर्थः वहिष्ठेभिर्वोढृतमैरश्वैर्यासि गमनमार्गं गच्छसि अस्यामृचि पूर्वार्धे सूर्यस्य प्रत्यक्षमर्थं प्रतिपाद्य उत्तरार्धे परोक्षमर्थं प्रतिपादयितुमाह—दविध्वतो धून्वानाः सूर्यस्य संबन्धिनो रश्मयः किरणाः अप्स्वन्तरिक्षे आप इत्यन्तरिक्षनाम आकाशम् आपः पृथिवीति तन्नामसु पाठात् अन्तर्मध्ये चर्मेव चर्मवत् स्थितं तमः अन्धकारम् अवाधुः अवाचीनम् अधुः तिरस्कुर्वन्तीत्यर्थः ॥ ४ ॥

४. हे द्युतिमान् सूर्य, तुम जगन्निर्वाहक रस को ग्रहण करने के लिए तन्तुस्वरूप रश्मिसमूह को विस्तारित करते हो, कृष्णवर्णा रात्रि को तिरोहित करते हो और अत्यन्त वहनसमर्थ अश्वों-द्वारा गमन करते हो। कम्पनयुक्त सूर्य की रश्मियाँ अन्तरिक्ष के मध्य में स्थित चर्म-सदृश अन्धकार को दूर करें।

अनायतो अनिबद्धः कथायं न्यङ्ङुत्तानोऽव पद्यते न ।
कया याति स्वधया को ददर्श दिवः स्कम्भः समृतः पाति नाकम् ॥५॥

अनायतः । अनिबद्धः । कथा । अयम् । न्यङ् । उत्तानः ।
अव । पद्यते । न । कया । याति । स्वधया । कः । ददर्श । दिवः ।
स्कम्भः । सम्ऽऋतः । पाति । नाकम् ॥ ५ ॥ १२ ॥

आयतशब्दोदूरवाची तद्विपरीतोनायतः आसीनःसन्नयंप्रत्यक्षेणोपलभ्यमानोमण्डला-भिमानीसूर्यः अनिबद्धः केनापिबद्धोनक्रियते अपिचायंसूर्यः न्यङ् अवाङ्मुखःसन् केनापि त्कथा कथंनावपद्यते नहिंस्यते किंचायमुत्तानः ऊर्ध्वमुखत्वेनतिष्ठन्कयास्वधयाकेनबलेन यातिगच्छति स्वधाशब्दोबलवाची अत्रतत्कार्यंबलंलक्षयति अपिचदिवोद्युलोकस्य स्कम्भः स्तम्भः समृतः नाकेन समवेतः सूर्यः नाकंस्वर्गंपातिपालयति कोददर्श तत्त्वतःकःपश्यति नकोपिमानातीतत्वात् ॥ ५ ॥

५. अदूरवर्ती अर्थात् प्रत्यक्ष उपलभ्यमान सूर्य को कोई भी बाँध नहीं सकता । अधोमुख सूर्य किसी प्रकार भी हिंसित नहीं होते हैं । ये किस बल से ऊर्ध्वमुख भ्रमण करते हैं ? द्युलोक में समवेत स्तम्भ-स्वरूप सूर्य स्वर्ग का पालन करते हैं । इसे किसने देखा है ? अर्थात् इस तत्त्व को कोई भी नहीं जानता ।

प्रत्यग्निरुषसइतिपञ्चर्चंचतुर्थंसूक्तं वामदेवस्यार्षं त्रैष्टुभमाग्नेयं माध्वणिकदेवतंवा तथाचानुक्रान्तं प्रत्यग्निरिति । लिङ्गोक्तदेवतंत्वितितुशब्दादस्यापिसूक्तस्यलिङ्गोक्तदेवतत्वं विनियोगोलैङ्गिकः ।

प्रत्य॒ग्निरु॒षसो॑जा॒तवे॑दा॒अख्य॑द्दे॒वोरोच॑माना॒महो॑भिः ।
आना॑सत्योरुगा॒यारथे॑ने॒मंय॒ज्ञमुप॑नोया॒तमच्छ॑ ॥ १ ॥

प्रति॑ । अ॒ग्निः । उ॒षसः॑ । जा॒तऽवे॑दाः । अख्य॑त् । दे॒वः । रोच॑मानाः । महः॑ऽभिः । आ । ना॒स॒त्या॒ । उ॒रु॒ऽगा॒या॒ । रथे॑न । इ॒मम् । य॒ज्ञम् । उप॑ । नः॒ । या॒तम् । अच्छ॑ ॥ १ ॥

देवोद्योतमानः जातवेदाजातधनोग्निः महोभिस्तेजोभिः रोचमानाः दीप्यमानाः उषसःप्र-तिउषसोभिमुखीकृत्य अख्यत् प्रबुद्धोभवति उरुगाया प्रभूतगमनौ हेनासत्या अश्विनौ रथेननो-स्मदीयमिमंयज्ञम् अच्छाभिमुखमुपयातम् उपगच्छतम् ॥ १ ॥

१. जातवेदा अग्नि के तेज से दीप्यमाना उषा प्रबुद्ध हुई हैं । हे प्रभूत गमनशाली अश्विद्वय, तुम दोनों रथ-द्वारा हमारे यज्ञ के अभिमुख आगमन करो ।

अना॑यतो॒अनि॑बद्धःक॒थायंन्य॑ङ्ङु॒त्ता॒नोऽव॑पद्यते॒न ।
कया॑यातिस्व॒धया॒कोद॑दर्श॒दि॒वःस्क॒म्भःसमृ॑तःपाति॒नाक॑म् ॥५॥

ऊर्ध्वम् । केतुम् । सविता । देवः । अश्रेत् । ज्योतिः ।
विश्वस्मै । भुवनाय । कृण्वन् । आ । अप्राः । द्यावापृथिवी इति ।
अन्तरिक्षम् । वि । सूर्यः । रश्मिऽभिः । चेकितानः ॥ २ ॥

विश्वस्मैसर्वस्मैभुवनायलोकायज्योतिस्तेजःकृण्वन्कुर्वन्सविताप्रेरकोदेवः ऊर्ध्वमुन्नतंकेतुं प्रकाशकंभानुमश्रेत् आश्रयति विचेकितानःसर्वविशेषेणपश्यन्सूर्यःरश्मिभिःस्वकीयैःकिरणैर्द्यावापृथिवी द्युलोकम्भूलोकौ अन्तरिक्षंच आअप्राः समन्तादपूरयत् ॥ २ ॥

२. सविता देवता समस्त भुवन को आलोकयुक्त करके उन्नत किरण का आश्रय लेते हैं। सबको विशेष रूप से देखनेवाले सूर्य ने अपनी किरणों से द्यावा-पृथिवी और अन्तरिक्ष को परिपूर्ण किया है।

आवहंन्त्यरुणीर्ज्योतिषागांन्मही चित्रारश्मिभिश्चेकिताना ।
प्रबोधयन्ती सुविताय देव्यु१षाईयते सुयुजारथेन ॥ ३ ॥

आऽवहन्ती । अरुणीः । ज्योतिषा । आ । अगात् । मही ।
चित्रा । रश्मिऽभिः । चेकिताना । प्रऽबोधयन्ती । सुविताय ।
देवी । उषाः । ईयते । सुऽयुजा । रथेन ॥ ३ ॥

आवहन्तीधनानिधारयन्ती अरुणीररुणवर्णाः । प्रथमैकवचनेद्वितीयाबहुवचनंछान्दसं ज्योतिषा तेजसायुक्तामहीमहतीरश्मिभिः किरणैश्चित्रावर्णनीयाचेकितानाजानती उषाआगात् आगच्छत् किंच प्रबोधयन्ती सुप्तान्प्रबुद्धान्कुर्वतीदेवीद्योतमानाउषाः सुयुजाशोभनयुक्तेनरथेनसुविताय सुखप्राप्तये ईयते गच्छति ॥ ३ ॥

३. धनधारिणी, अरुणवर्णा, ज्योतिःशालिनी महती, रश्मिविचित्रिता और विदुषी उषा आई है। प्राणियों को जागृत करके उषादेवी सुयोजित रथ-द्वारा सुख-प्राप्ति के लिए गमन करती है।

आवांवहिंष्ठाइहतेवंहन्तुरथाअश्वांसउषसोव्युंष्टौ ।
इमेहिवांमधुपेयायसोमाअस्मिन्यज्ञेवृषणामादयेथाम् ॥ ४ ॥

आ । वाम् । वहिष्ठाः । इह । ते । वहन्तु । रथाः । अश्वासः ।
उषसः । विऽउष्टौ । इमे । हि । वाम् । मधुऽपेयाय । सोमाः ।
अस्मिन् । यज्ञे । वृषणा । मादयेथाम् ॥ ४ ॥

हेअश्विनौ इत्यध्ये वहिष्ठाः वोढृतमाः तेप्रसिद्धारथाः रंहणागन्तारः अश्वासः अश्वाः वांयुवामुषसः उषोदेवतायाव्युष्टौव्युच्छनकालेआवहन्तु समतामयन्तु हियस्मात्कारणात् हेवृ- षणा वृषणौ कामानांवर्षितारौ हेअश्विनौ इमेसोमाः वांयुवामनुपेयायमवोःसोमस्यपानाय अस्मिन्यज्ञेमादयेथां हर्षयेथाम् ॥ ४ ॥

४. हे अश्विद्वय, उषा के प्रकाशित होने पर अत्यन्त वहनक्षम और गमनशील अश्व तुम्हें इस यज्ञ में ले आयें। हे अभीष्टवर्षिद्वय, यह सोम तुम्हारे लिए है। इस यज्ञ में सोम पान करके हृष्ट होओ।

**अनायतोअनिबद्धःकथायंन्यङ्ङुत्तानोवपद्यतेन ।**
**कयायातिस्वधयाकोददर्शदिवःस्कम्भःसमृतःपातिनाकम्॥५॥२१**

अनायतः । अनिऽबद्धः । कथा । अयम् । न्यङ् । उत्तानः ।
अव । पद्यते । न । कया । याति । स्वधया । कः । ददर्श ।
दिवः । स्कम्भः । सम्ऽऋतः । पाति । नाकम् ॥ ५ ॥ १४ ॥

इयमृक्सूर्येव्याख्याता ॥ ५ ॥

५. अदूरवर्ती अर्थात् प्रत्यक्ष उपलभ्यमान सूर्य को कोई भी बाँध नहीं सकता है। अधोमुख सूर्य किसी प्रकार भी हिंसित नहीं होते हैं। ये किस बल से ऊर्ध्वमुख भ्रमण करते हैं? द्युलोक में समवेत स्तम्भस्वरूप सूर्य स्वर्ग का पालन करते हैं। इसे किसने देखा है? अर्थात् इस तत्त्व को कोई भी नहीं जानता।

अग्निर्होतेतिदशर्चंपञ्चमंसूक्तंवामदेवस्यार्षंगायत्रम् अत्रेयमनुक्रमणिका—अग्निर्होतादशगा- यत्रमृग्निर्बोधदितिद्वाभ्यांसोमकंसाहदेव्यमभ्यवदत्पराभ्यामश्विनावायुरयाचतेति बोधदितिमृचेनेसा- मकराजास्तूयते पञ्चामितिमृचेनाश्विनौ शिष्टाभिःषड्भिरग्निःस्तूयते अतस्ताएवदेवताः सूक्तविनियोगोलैङ्गिकः पशोःपर्यग्निकरणे अग्निर्होतानइत्याद्यामृचोनुवचनीयः तथाचसूत्रि- तम्—अग्निर्होतानइतिमृचंपर्यग्नयेन्वाहेति । प्रातरनुवाकेप्याग्नेयेक्रतौगायत्रेछन्दस्याश्विनशस्त्रे चायंमृचोविनियुक्तः तथाचसूत्रितम्—अग्निर्होतानोअध्वरइतितिस्रइति ।

तत्रप्रथमा—

**अग्निर्होतानोअध्वरेवाजीसन्परिणीयते । देवोदेवेषुयज्ञियः ॥ १ ॥**

अग्निः । होता । नः । अध्वरे । वाजी । सन् । परि । नीयते । देवः । देवेषु । यज्ञियः ॥ १ ॥

होता देवानामाह्वाता होमनिष्पादकोवा अग्निः नोस्मदीयेअध्वरे यागे वाजीत्येतच्छुतो- पमार्कं वाजीशीघ्रगामीवोढाअश्वइव तथादेवेभ्योहविर्वाहकःसन् परिणीयते परितःसमन्ता-

स्माप्यते तथाचब्राह्मणंभवति—वाजीसन्परिणीयतइतिवाश्वमिवह्येनंसन्तंपरिणयन्तीति । कीदृशोग्निः देवेषुद्योतमानेषु इन्द्रादिषुमध्ये देवोद्योतमानःयज्ञियोयज्ञार्हः ॥ १ ॥

१. होम-निष्पादक देवों के मध्य में दीप्त और यज्ञार्ह अग्नि हमारे यज्ञ में शीघ्रगामी अश्व की तरह लाये जाते हैं ।

परित्रिविष्ट्यध्वरंयात्यग्नीरथीरिव । आदेवेषुप्रयोदधत् ॥ २ ॥

परि । त्रिऽविष्टि । अध्वरम् । याति । अग्निः । रथीःऽइव । आ । देवेषु । प्रयः । दधत् ॥ २ ॥

देवेषुद्योतमानेष्विन्द्रादिषु प्रयइत्यन्ननामैतत् प्रयःयजमानैर्दत्तंहवीरूपमन्नमादधत् आसम-न्ताद्धारयन्नग्निःमन्त्रादिगुणविशिष्टोग्निः त्रिविष्टि त्रिवारंसवनत्रयेपीत्यर्थः परि परितः सम-न्तादध्वरंयजमानैःकृतयागंयातिगच्छति परिगमनेदृष्टान्तः—रथीरिव रथवान्पुरुषोयथाग्रा-मंयातितद्वत् तथाचब्राह्मणं—परित्रिविष्ट्यध्वरंयात्यग्नीरथीरिवेत्येषहिरथीरिवाध्वरंपरियाती-ति ॥ २ ॥

२. अग्नि देवों के लिए अन्न धारण करके प्रतिदिन तीन बार रथी की तरह यज्ञ में परिगमन करते हैं ।

परिवाजपतिःकविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानिदाशुषे ॥ ३ ॥

परि । वाजऽपतिः । कविः । अग्निः । हव्यानि । अक्रमीत् । दधत् । रत्नानि । दाशुषे ॥ ३ ॥

वाजपतिः वाजानामन्नानांपतिः पालकः परिवाजपतिः कविरित्येषहिवाजानांपतिरिति ब्राह्मणम् । कविःक्रान्तदर्शी मेधावीवा दाशुषेहवींषिदत्तवतेयजमानाय रत्नानिरमणीयानिधना-निदधत् प्रयच्छन्नग्निर्हव्यानिहवींषिपर्यक्रमीत् परितःक्रामति व्याप्नोति ॥ ३ ॥

३. अन्न के पालक मेधावी अग्नि हवि देनेवाले यजमान को रमणीय धन देकर हवि को चारों तरफ़ से व्याप्त करते हैं ।

अथचतुर्थी—

अयंयःसृञ्जयेपुरोदैववातेसमिध्यते । द्युमाँअमित्रदम्भनः ॥ ४ ॥

अयम् । यः । सृञ्जये । पुरः । दैवऽवाते । सम्ऽइध्यते । द्युऽमान् । अमित्रऽदम्भनः ॥ ४ ॥

---

१ ऐ० ब्रा० २. ५. । २ ऐ० ब्रा० २. ५. ।

यःप्रसिद्धोयं प्रत्यक्षेणोपलभ्यमानोग्निः दैववाते देववतस्यपुत्रःसृञ्जयोनामकश्चित्सोमयाजी तस्मिन्निमित्तभूतेसति तदर्थमित्यर्थः सृञ्जयस्ययष्टृत्वंतैत्तिरीयाआमनन्ति—वासिष्ठोहसात्यहव्योदेवभागंपप्रच्छयत्सृञ्जयान्बहुयाजिनोयीयजइति[1] । पुरःपूर्वस्यांदिशि स्थितायामुत्तरवेद्यांसमिध्यते सम्यग्दीप्यते अमित्रदम्भनः शत्रूणांहिंसकःसोग्निः सुमान्दीप्तिमान्भवतीतिशेषः ॥ ४ ॥

४. जो अग्नि देवता के पुत्र सृञ्जय के लिए पूर्व दिशा में स्थित होते हैं और उत्तर वेदी पर समिद्ध होते हैं, वे शत्रु-नाशकारी अग्नि दीप्तियुक्त हों।

अस्यघावीरईवतोग्नेरीशीतमर्त्यः । तिग्मजंभस्यमीळ्हुषः ।५।१५।

अस्य । घ । वीरः । ईवतः । अग्नेः । ईशीत । मर्त्यः ।
तिग्मऽजंभस्य । मीळ्हुषः ॥ ५ ॥ १५ ॥

वीरः स्तुतौविक्रान्तः मर्त्योमरणधर्मायजमानः तिग्मजम्भस्य तीक्ष्णतेजसः मीळ्हुषः अभिलषितफलानांसेक्तुः ईवतोगमनवतोस्याग्नेःईशीत ईश्वरोभवेत् घेतिपादपूरणः एतेनयजमानआत्माभीष्टफलंकारयितुंसमर्थोभवतीत्यर्थः ॥ ५ ॥

५. स्तुति करनेवाले धीर मनुष्य तीक्ष्ण तेजवाले, अभीष्टवर्षी और गमनशील अग्नि के ऊपर आधिपत्य का विस्तार करें।

॥ इतितृतीयस्यपञ्चमेपञ्चदशोवर्गः ॥ १५ ॥

अथषष्ठी—

तमर्वन्तंनसानसिमरुषंनदिवःशिशुम् । मर्मृज्यन्तेदिवेदिवे ॥६॥

तम् । अर्वन्तम् । न । सानसिम् । अरुषम् । न । दिवः । शिशुम् ।
मर्मृज्यन्ते । दिवेऽदिवे ॥ ६ ॥

यजमानाः अर्वन्तंन शीघ्रगामिनमश्वमिव सानसिं संभजनीयंदिवःशिशुंन द्युलोकस्यपुत्रभूतंसूर्यमिव अरुषम् आरोचमानंतमग्निंदिवेदिवेप्रतिदिनंमर्मृज्यन्ते भृशंपरिचरणंकुर्वन्ति ॥ ६ ॥

६. यजमान लोग अश्व की तरह हव्यवाही, द्युलोक के पुत्रभूत सूर्य की तरह दीप्तिमान् और सम्भजनीय अग्नि की प्रतिदिन बारम्बार परिचर्या करें।

बोधयन्माहरिभ्यांकुमारःसाहदेव्यः । अच्छानहूतउदरम् ॥ ७ ॥

---

1 तै० सं० ६ । ६ । २ ।

बोर्धत् । यत् । मा । हरिऽभ्याम् । कुमारः । साहऽदेव्यः । अच्छे ।
न । हूतः । उत् । अरम् । ॥ ७ ॥

साहदेव्यः सहदेवनाम्नोराज्ञःपुत्रःकुमारःसोमकाभिधोराजा हरिभ्याम् अश्वाभ्यामश्वौ दातुंमा मां यद्यदाबोधत् बोधयामास इमौतवाश्वाविति तदाहम् अच्छाभिमुख्येन कुमारेणहूतः सन्नोदरंतावश्वावलब्ध्वा ननिर्गतवानस्मि ॥ ७ ॥

७. सहदेव के पुत्र सोमक राजा ने जब हमें इन दोनों अश्वों को देने की बात कही थी तब हम उनके निकट जाकर अश्वों को प्राप्त करके आये हैं ।

उतत्यायजताहरींकुमारात्साहदेव्यात् । प्रयतासद्यआददे ॥८॥

उत । त्या । यजता । हरी इति । कुमारात् । साहऽदेव्यात् ।
प्रऽयता । सद्यः । आ । ददे ॥ ८ ॥

उतापिच साहदेव्यात् सहदेवस्यपुत्रात्कुमारात्सोमकाद्राज्ञः यजता पूजनीयौ प्रयता प्रयतौ त्या त्यौ तौ प्रसिद्धौ हरीअश्वौ सद्यः यस्मिन्दिनेतेनाहूतः तस्मिन्नेवदिने आददे आदत्तवानस्मि मन्त्रद्रष्टाऋषिः बोधदित्यृग्द्वयेनकुमारमश्वप्रदानायाभ्युपगम्याश्वावेतस्माल्लब्ध्वाप्रीतोऽभवदित्यर्थः ॥ ८ ॥

८. सहदेव के पुत्र सोमक राजा के निकट से उसी दिन उन पूजनीय और प्रयत अश्वों को हमने ग्रहण किया था ।

एषवांदेवावश्विनाकुमारःसाहदेव्यः । दीर्घायुरस्तुसोमकः ॥ ९ ॥

एषः । वाम् । देवौ । अश्विना । कुमारः । साहऽदेव्यः ।
दीर्घऽआयुः । अस्तु । सोमकः ॥ ९ ॥

देवौ द्योतमानौ हेअश्विनावश्विनौ वां युवयोस्तर्पकःसाहदेव्यः सहदेवस्यपुत्रःकुमारः सोमकाभिधानएषराजादीर्घायुरस्तु शतायुष्कोऽभवतु एतत्सुदेवसोमस्तुःपर्वतनारदौसोमकायेत्याविनाशं एवमहाराजानामाह्वरित्यनेनब्राह्मणेनसोमकस्यराजत्वंस्पष्टीकृतम् ॥ ९ ॥

९. हे कान्तिमान् अश्विनीकुमारो, तुम दोनों के तृप्तिकारक सहदेव के पुत्र सोमक राजा सौ वर्ष की आयुवाले हों ।

अथदशमी—

तंयुवंदेवावश्विनाकुमारंसाहदेव्यम् । दीर्घायुषंकृणोतन ॥१०॥१६॥

---

१ ऐ० ब्रा० ७. ३४.।

तम् । युवम् । देवौ । अश्विना । कुमारम् । साहऽदेव्यम् ।
दीर्घऽआयुषम् । कृणोतन ॥ १० ॥ १६ ॥

हेदेवावश्विना द्योतमानावश्विनौ युवं युवां साहदेव्यं सहदेवस्यपुत्रं कुमारं सोमकाख्यंराजानंदीर्घायुषंशतायुष्कंकृणोतन कुरुतम् अनेनर्चैनास्यकुमारस्यदीर्घमायुरश्विनौऋषिर्याचतेत्यर्थः ॥ १० ॥

१०. हे कान्तिमान् अश्विनीकुमारो, तुम दोनों सहदेव के पुत्र सोमक राजा को दीर्घायु करो ।

॥ इतितृतीयस्यपञ्चमेषोडशोवर्गः ॥ १६ ॥

आसत्योयात्वित्येकादशर्चंसप्तमंसूक्तं त्रैष्टुभमैन्द्रंवामदेव्यम् अत्रेयमनुक्रमणिका—आसत्यःसैकेन्द्रमिति । तत्रेन्द्रमित्युक्तत्वादाग्न्यधिकारोनिवृत्तइत्यवगम्यते चतुर्विंशेहनिमाध्यन्दिनसवने मैत्रावरुणशस्त्रे इदंद्वितीयमहीनसूक्तम् । तथाचसूत्रितम्—आसत्योयात्वित्यहीनसूक्तं द्वितीयं मैत्रावरुणइति समूळ्हेदशरात्रेनवमेहनिनिष्केवल्यशस्त्रेइदंसूक्तम् । सूत्रितंच—आसत्योयात्वहंभुवंत्वइन्द्रियमितिनिष्केवल्यमिति ।

आसत्योयातुमघवाँऋजीषीद्रवन्त्वस्यहरयउपनः ।
तस्माइदन्धःसुषुमासुदक्षमिहाभिपित्वंकरतेगृणानः ॥ १ ॥

आ । सत्यः । यातु । मघऽवान् । ऋजीषी । द्रवन्तु । अस्य । हरयः ।
उप । नः । तस्मै । इत् । अन्धः । सुसुम । सुऽदक्षम् । इह ।
अभिऽपित्वम् । करते । गृणानः ॥ १ ॥

ऋजीषी ऋजीषशब्देननिष्पिष्टोविगतसारःसोमोभिधीयते तद्वान् सत्यः सत्यवान् मघवान्धनवानिन्द्रोनोस्माकमुपसमीपेआयात्वागच्छतु किंचास्येन्द्रस्यहरयोश्वाःनोस्माकमुपसमीपे द्रवन्तु आगच्छन्तु वयंयजमानाइहास्मिन्यज्ञेतस्माइन्द्रायसुदक्षंशोभनबलंसारोपेतमित्यर्थः। इविदंमत्यन्तेणोपलभ्यमानमन्धः अन्नरूपंसोमंसुषुमाभिषुतंकुर्याम गृणानोस्माभिःस्तूयमानइन्द्रः अभिपित्वमस्मदभिमतप्राप्तिंकरते करोतु ॥ १ ॥

१. ऋजीषी अर्थात् सोमवान् और सत्यवान् इन्द्र हमारे निकट आगमन करें। इनके अश्व हमारे निकट आगमन करें। हम यजमान इन्द्र के उद्देश से सारविशिष्ट अन्नरूप सोम का अभिषव करेंगे। वे स्तुत होकर हम लोगों के अभीष्ट को सिद्ध करें।

अवस्यशूराध्वनोनान्तेऽस्मिन्नोअद्यसवनेमन्दध्यै ।
शंसात्युक्थमुशनेववेधाश्चिकितुषेअसुर्यायमन्म ॥ २ ॥

अव । स्य । शूर । अध्वनः । न । अन्ते । अस्मिन् । नः ।
अद्य । सवने । मन्दध्यै । शंसाति । उक्थम् । उशनाऽइव ।
वेधाः । चिकितुषे । असुर्याय । मन्म ॥ २ ॥

हेशूर शत्रूणामभिभवसमर्थेन्द्र अद्येदानीम् अस्मिन्सवने माध्यन्दिनाख्येमन्दध्यै त्वांमा-दयितुंनोऽस्मानवस्यविमुञ्च तत्रदृष्टान्तः—अध्वनोगन्तव्यस्यमार्गस्यान्तेसमीपेन अश्वान्मनुष्याः यथामुञ्चन्तितद्वत् उशनेव काव्यइव वेधाःशंसितायजमानः हेइन्द्र चिकितुषेसर्वंजानते असुर्या-यासुराणांहिंसकायतुभ्यंमन्म मननीयमुक्थंशस्त्ररूपंस्तोत्रंशंसाति शंसनंकरोति ॥ २ ॥

२. हे शत्रुओं को अभिभूत करनेवाले इन्द्र, इस माध्यन्दिन के सवन में तुम हम लोगों को विमुक्त करो, जैसे गन्तव्य मार्ग के अन्त में मनुष्य घोड़ों को छोड़ देता है। जिससे इस सवन में हम तुम्हें हृष्ट करें। हे इन्द्र, तुम सर्वविद् हो और असुरों के हिंसक हो। यजमान लोग उशना की तरह तुम्हारे लिए मनोहर उक्थ का उच्चारण करते हैं।

कविर्ननिण्यंविदथानिसाधन्वृषायत्सेकंविपिपानोअर्चात् ।
दिवइत्थाजीजनत्सप्तकारूनह्नाचिच्चक्रुर्वयुनागृणन्तः ॥ ३ ॥

कविः । न । निण्यम् । विदथानि । साधन् । वृषा । यत् । सेकम् ।
विऽपिपानः । अर्चात् । दिवः । इत्था । जीजनत् । सप्त ।
कारून् । अह्ना । चित् । चक्रुः । वयुना । गृणन्तः ॥ ३ ॥

कविर्मेधावीनिण्यंन निण्यमित्यन्तर्हितनामैतत् अन्तर्हितंगूढमर्थमिव विदथानि वेदनी-यानि कार्यजातानिसाधन्साधयन् वृषाकामानांवर्षितेन्द्रः यद्यदासेकंसेचनीयंसोमंविपिपानः अत्यर्थंपिबन्सन् अर्चात् विशेषेणार्चति सोमपानेश्रद्धांकरोतीत्यर्थः तदानीं दिवोऽमुष्माल्लोकादि-त्थाऽनेनप्रकारेणसप्तसंख्याकान्कारून्रश्मीन्जीजनत्अजीजनत् जनयति गृणन्तः स्तूयमानार-श्मयः वयुना वयुनानि मनुष्याणांज्ञानानि अह्नाचिद्दिवसेनापिचक्रुः कुर्वन्तः ॥ ३ ॥

३. कवि जिस प्रकार से गूढ़ अर्थ का सम्पादन करते हैं, उसी प्रकार अभीष्टवर्षी इन्द्र कार्यों का सम्पादन करते हैं। जब सेचन योग्य सोम का अधिक परिमाण में पान करके इन्द्र हृष्ट होते हैं तब द्युलोक से सप्त-संख्यक रश्मियों को सचमुच उत्पन्न कर देते हैं। स्तूयमान रश्मियाँ दिन में भी मनुष्यों के ज्ञान का सम्पादन करती हैं।

स्व१र्यद्वेदि॑सु॒दृशी॑कम॒र्कैर्महि॒ ज्योती॑ रुरु॒चुर्यद्ध॒ वस्तो॑: ।
अ॒न्धा तमां॑सि॒ दुधि॑ता वि॒चक्षे॒ नृभ्य॑श्चकार॒ नृत॑मो अ॒भिष्टौ॑ ॥ ४ ॥

स्व१रिति॑ । यत् । वेदि॑ । सु॒ऽदृशी॑कम् । अ॒र्कैः । महि॑ । ज्योति॑: ।
रु॒रु॒चुः । यत् । ह॒ । वस्तो॑: । अ॒न्धा । तमां॑सि । दुधि॑ता ।
वि॒ऽचक्षे॑ । नृऽभ्य॑: । च॒कार॒ । नृऽत॑मः । अ॒भिष्टौ॑ ॥ ४ ॥

यद्ध यदाखलु महि महत्प्रभूतं ज्योतिस्तेजोरूपंयत्स्वः योद्युलोकः अर्कैः रश्मिभिः सु-दृशीकं सुष्ठुदर्शनीयं वेदिभवादि ज्ञायते तदानींदेवाः तस्मिन्स्वर्गेवस्तोर्निवासार्थंरुरुचुर्दीप्तियु-क्ताबभूवुः नृतमोनेतृतमःसूर्यः अभिष्टौ अभ्यागमनेनृभ्योनृणांविचक्षेविशेषेणदर्शनाय अन्धा अन्धकाररूपाणि निबिडानितमांसि दुधिता दुधितानिनाशितानि चकार कृतवान् ॥ ४ ॥

४. जब प्रभूत एवम् ज्योतिःस्वरूप द्युलोक रश्मियों-द्वारा अच्छी तरह से दर्शनीय होता है, तब देवगण उस स्वर्ग में निवास करने के लिए दीप्तियुक्त होते हैं। नेतृश्रेष्ठ सूर्य ने आगमन करके मनुष्यों को अच्छी तरह से देखने के लिए घनीभूत अन्धकार को नष्ट कर दिया है।

व॒व॒क्ष इन्द्रो॒ अमि॑तमृजी॒ष्यु१॒भे आ प॑प्रौ॒ रोद॑सी महि॒त्वा ।
अत॑श्चिदस्य महि॒मा वि रे॑च्य॒भि यो विश्वा॒ भुव॑ना ब॒भूव॑ ॥५॥१७॥

व॒व॒क्षे । इन्द्र॑: । अमि॑तम् । ऋ॒जी॒षी । उ॒भे इति॑ । आ । प॒प्रौ॒ ।
रोद॑सी॒ इति॑ । म॒हि॒ऽत्वा । अत॑: । चि॒त् । अ॒स्य॒ । म॒हि॒मा ।
वि । रे॒चि॒ । अ॒भि । यः । विश्वा॑ । भुव॑ना । ब॒भूव॑ ॥ ५ ॥ १७ ॥

ऋजीषी ऋजीषशब्देननिष्पीडितोविगतसारः सोमोऽभिधीयते तद्वानिन्द्रः परमैश्वर्ययुक्तः अमितमियत्तारहितं महिमानंववक्षे उवाह किंच महित्वामहत्त्वेन स्वेनमहिम्ना उभेरोदसी उभेद्यावापृथिव्यौ आपप्रौ समन्तादपूरयत् यइन्द्रः विश्वा भुवना सर्वाणिभुवनानि अभिबभूव तिरश्चकार अतश्चिदेभ्योऽपि विश्वेभ्योभुवनेभ्यः अस्येन्द्रस्यमहिमाविरेचि अतिरिरिचे आधिक्येनबभूवेत्यर्थः ॥ ५ ॥

५. ऋजीषी अर्थात् सोमविशिष्ट इन्द्र अमित महिमा धारण करते हैं। वे अपनी महिमा के बल से द्यावा और पृथिवी दोनों को परिपूर्ण करते हैं। इन्द्र ने समस्त भुवनों को अभिभूत किया है। इन्द्र की महिमा समस्त भुवनों से अधिक है।

विश्वा॑नि श॒क्रो नर्या॑णि वि॒द्वान॒पो रि॑रेच॒ सखि॑भि॒र्निका॑मैः ।
अश्मा॑नं चि॒द्ये बि॑भि॒दुर्वचो॑भिर्व्र॒जं गोम॑न्तमु॒शिजो॒ वि व॑व्रुः ॥६॥

अपः । यत् । अद्रिम् । पुरुऽहूत । दर्दः । आविः । भुवत् ।
सरमा । पूर्व्यम् । ते । सः । नः । नेता । वाजम् । आ । दर्षि ।
भूरिम् । गोत्रा । रुजन् । अङ्गिरःऽभिः । गृणानः ॥ ८ ॥

हे पुरुहूत बहुभिराहूतेन्द्र यदा अपः प्रति वृष्टिलक्षणान्युदकान्यभिलक्षीकृत्य अद्रिं मेघं दर्दः विदारितवानसि सरमा देवशुनी पूर्व्यं पुरा ते तुभ्यं पणिभिरपहृतं गोधनमाविर्भुवत् प्रकाशयामास अङ्गिरोभिर्ऋषिभिः गृणानः स्तूयमानः सन् गोत्रा योग्यप्राणिकमनोऽस्मान्भूरिमह्यं वाजमन्नं नेता प्रापयिता सन् त्वमाद्दर्षि आदरं कृतवानसि ॥ ८ ॥

८. हे बहुजनाहूत इन्द्र, जब तुमने वृष्टि जल को लक्ष्य करके मेघ को विदीर्ण किया था तब तुम्हारे लिए पहले ही सरमा (देवों की कुतिया) ने पणियों-द्वारा अपहृत गौओं को प्रकाशित किया था। अङ्गिराओं-द्वारा स्तूयमान होकर तुम हम लोगों को प्रभूत अन्न प्रदान करते हो और हम लोगों का आदर करते हो।

अच्छा कविं नृमणो गा अभिष्टौ स्वर्षाता मघवन्नाधमानम् ।
ऊतिभिस्तमिषणो द्युम्नहूतौ नि मायावानब्रह्मा दस्युरर्त ॥ ९ ॥

अच्छ । कविम् । नृऽमनः । गाः । अभिष्टौ । स्वःऽसाता ।
मघऽवन् । नाधमानम् । ऊतिऽभिः । तम् । इषणः । द्युम्नऽहूतौ ।
नि । मायाऽवान् । अब्रह्मा । दस्युः । अर्त ॥ ९ ॥

हे मघवन् धनवन्निन्द्र नृमणः नृभिर्मनुष्यैर्मन्यत इति नृमणस्त्वं कविं मेधाविनं कुत्सम् अच्छ अगाः अभ्यगाः किंच स्वर्षाता स्वर्धनं तस्य साता दाने निमित्ते अभिष्टौ एवेरभिगमे सति नाधमानं युद्धार्थं त्वां याचमानं कुत्सम् ऊतिभिः शत्रुकृतोपद्रवपरिहाररूपैः रक्षणैः इषणः प्रेरितवानसि मायावान् कपटवानब्रह्मा ऋत्विग्भिः क्रियमाणं सर्वकर्म जानन्मनुष्यरूपेण अब्रह्मा ब्रह्मशब्देनोच्यते स न विद्यते यस्य सोऽब्रह्मा वेदोक्तकर्मस्वास्तिक्यरहित इत्यर्थः दस्युः कुत्सस्य शत्रुः द्युम्नहूतौ द्युम्नं धनं हूतिराह्वानं यस्यां युधि तस्यां न्यर्त विनष्टो बभूव इन्द्रः कुत्सेनाहूतः सन् तस्य शत्रुं हतवानित्यर्थः ॥ ९ ॥

९. हे धनवान् इन्द्र, मनुष्य तुम्हें सम्मानित करते हैं। तुमने धन प्रदान करने के लिए कुत्स के अभिमुख गमन किया था। याचना करने पर शत्रुओं के उपद्रवों से आश्रयदान-द्वारा तुमने उनकी रक्षा की थी। कपटी ऋत्विकों के कार्यों को अपनी प्रज्ञा से जानकर तुमने कुत्स के धन-लोभी शत्रु को युद्ध में विनष्ट किया था।

आ दस्युघ्ना मनसा याह्यस्तं भुवत्ते कुत्सः सख्ये निकामः ।
स्वे योनौ नि षदतं सरूपा वि वां चिकित्सदृतचिद्ध नारी ॥ १० ॥ १८ ॥

आ । दस्युऽघ्ना । मनसा । याहि । अस्तम् । भुवत् । ते । कुत्सः । सख्ये । निऽकामः । स्वे । योनौ । नि । सदतम् । सऽरूपा । वि । वाम् । चिकित्सत् । ऋतऽचित् । ह । नारी ॥ १० ॥ १८ ॥

अत्रकाचिदाख्यायिकाश्रूयते—रुरुनामकःकश्चिद्राजर्षिस्तस्यपुत्रःकुत्साख्योराजर्षिरासीत् सकदाचिच्छत्रुभिःसहयुयुत्सुः संग्रामेस्वयमशक्तःसन् शत्रूणांहननार्थमिन्द्रस्याह्वानं चकार तत्रेन्द्रःकुत्सस्यगृहमागत्य तदपशत्रून्जघान तदनन्तरमतिप्रीत्यातयोः सख्यमभवत् सख्यानन्तरमिन्द्रस्तमपिस्वकीयंगृहंप्रापयामास तत्रशचीइन्द्रमागतंसतीतौसमानरूपौदृष्ट्वा अयमिन्द्रः अयंकुत्सइतिविवेकाभावेनसंशयंचकारेति । अनयाख्यायिकयाप्रतीयमानोर्थोत्रप्रतिपाद्यते—हेइन्द्र दस्युघ्ना दस्यूनांशत्रूणांहन्त्रा मनसायुक्तस्त्वम् अस्तंकुत्सस्यगृहम् अस्तमितिगृहनामैतत् आयाहिआगाः कुत्सस्य ते तव संबन्धिनिसख्ये निकामः नितरांकामयमानोभुवदभवत् ततस्तौयुवांस्वेयोनौस्वकीयेस्थानेनिषदतं न्यसीदतम् उपविष्टावभूतम् ऋतचित्सत्यदर्शिनीनारीइन्द्रस्यभार्याशची सरूपा सरूपौसमानरूपौवांयुवांविचिकित्सत् संशयंचकार ॥ १० ॥

१०. हे इन्द्र, तुमने मन में शत्रुओं को मारने का संकल्प करके कुत्स के गृह में आगमन किया था। कुत्स भी तुम्हारे साथ मैत्री करने के लिए अतिशय आग्रहवान् हुआ था तब तुम दोनों अपने स्थान में उपविष्ट हुए थे। तुम्हारी सत्यदर्शिनी भार्या शची तुम दोनों का समान रूप देखकर संशयान्विता हुई थी।

॥ इतितृतीयस्यपंचमेष्टादशोवर्गः ॥ १८ ॥

अथैकादशी—

यासिकुत्सेनसरथमवस्युस्तोदोवातस्यहर्योरीशानः ।
ऋज्रावाजंनगध्यंयुयूषन्कविर्यदहन्पार्याय्भूषात् ॥ ११ ॥

यासि । कुत्सेन । सऽरथम् । अवस्युः । तोदः । वातस्य । हर्योः । ईशानः । ऋज्रा । वाजम् । न । गध्यम् । युयूषन् । कविः । यत् । अहन् । पार्याय । भूषात् ॥ ११ ॥

हेइन्द्र अवस्युः कुत्सस्यरक्षणमिच्छन् छन्दसिक्यच् परेच्छायामपिदृश्यते तोदस्तोदकः शत्रूणांहिंसकः वातस्य वायुसदृशयोर्वेगवतोर्हर्योरश्वयोरीशान ईश्वरस्त्वंकुत्सेनकुत्साख्येनराजर्षिणासरथंसमानरथंयासि गच्छसि गध्यंग्राह्यंगध्यंगृह्णातेः ऋज्रावाजंनाग्ध्यं युयूषसि स्ययिनिगमोभवतीतिनिरुक्तम् । वाजंन अन्नमिव ऋज्रा ऋजुगामिनावश्वौयुयूषन्स्वकीयेरथेयो-

भवन् कविः प्राज्ञः कुत्सः यस्मिन्नहन्यहनि दिवसे पार्याय पारणाय आपद्भिस्तरणाय भूयात्
भवते तस्मिन्नेवदिने कुत्सेन सरथं याशीति पूर्वेण संबन्धः ॥ ११ ॥

११. जिस दिन प्राज्ञ कुत्स ग्रहणीय अश्व की तरह ऋजुगामी अश्व-द्वय को अपने रथ में युक्त करके आपत्ति से निस्तीर्ण होने में समर्थ हुए थे, उस दिन हे इन्द्र, तुमने कुत्स की रक्षा करने की इच्छा से उसके साथ एक रथ पर गमन किया था। तुम शत्रुनाशक और वायु के सदृश घोड़ों के अधिपति हो।

**कुत्साय॒शुष्ण॑म॒शुषं॒निब॑र्हीःप्रपि॒त्वेअह्नः॒कुय॑वंस॒हस्रा॑ ।**
**स॒द्योदस्यू॒न्प्रमृ॑णकु॒त्स्येन॒प्रसूर॑श्च॒क्रंवृ॑हताद॒भीके॑ ॥ १२ ॥**

**कुत्सा॑य । शुष्ण॑म् । अ॒शुष॑म् । नि । ब॒र्हीः॒ । प्र॒ऽपि॒त्वे । अह्नः॑ ।**
**कुय॑वम् । स॒हस्रा॑ । स॒द्यः । दस्यू॑न् । प्र । मृ॒ण॒ । कु॒त्स्येन॑ । प्र ।**
**सूरः॑ । च॒क्रम् । वृ॒ह॒ता॒त् । अ॒भीके॑ ॥ १२ ॥**

शुष्णं पिप्रुमित्यस्यामृचि प्रतिपादितोऽर्थः कुत्सायेत्यनेनर्चाद्वयेन स्पष्टीक्रियते हे इन्द्र त्वं कुत्साय कुत्सार्थमशुषं शुषमिति सुखनामैतत् तद्रहितम् अकारोऽभावार्थः शुष्णं शुष्णनामानमसुरं निबर्हीः न्यबर्हीः अवधीः तथा अह्नः दिवसस्य प्रपित्वे प्रक्रमे पूर्वाह्णे कुयवं कुयवनामकमसुरं हतवानसि तथा त्वं सहस्रा सहस्रेण बहुभिः परिजनैः सह सद्यः यस्मिन्काले कुयवमवधीः तस्मिन्काल एव कुत्स्येन कुत्स इति वज्रनामैतत् कुत्स एव कुत्स्यं वज्रं तेन दस्यून् दासान् प्रमृण मृण हिंसार्थे लेट् हतवानसि तथा सूरः प्रेरकस्य सूर्यस्य चक्रमायुधम् अभीके समीपे संग्रामे वा प्रवृहतात् प्रकर्षेण छिन्नवानसि ॥ १२ ॥

१२. हे इन्द्र, तुमने कुत्स के लिए सुखरहित शुष्ण का वध किया था। दिवस के पूर्व भाग में तुमने कुयव नामवाले असुर को मारा था। बहुत परिजनों से आवृत होकर तुमने उसी समय वज्र-द्वारा शत्रुओं को भी विनष्ट किया था। तुमने संग्राम में सूर्य के चक्र को छिन्न कर दिया था।

**त्वंपिप्रुं॒मृग॑यंशूशु॒वांस॑मृ॒जिश्व॑नेवैदथि॒नाय॑रन्धीः ।**
**प॒ञ्चा॒शत्कृ॒ष्णानिव॑पःस॒हस्रात्कं॒नपुरो॑जरि॒मावि द॑र्दः ॥ १३ ॥**

**त्वम् । पिप्रु॑म् । मृग॑यम् । शू॒शु॒ऽवांस॑म् । ऋ॒जिश्व॑ने । वै॒द॒थि॒नाय॑ ।**
**र॒न्धीः॒ । प॒ञ्चा॒शत् । कृ॒ष्णा । नि । व॒पः॒ । स॒हस्रा॑ । अत्क॑म् ।**
**न । पुरः॑ । ज॒रि॒मा । वि । द॒र्द॒रिति॑ दर्दः ॥ १३ ॥**

हेइन्द्र त्वं पिप्रुं पिप्रुनामानमसुरं शुशुवांसं प्रवृद्धं मृगयं मृगयनामानमसुरंचहतवानसि किंच त्वं वैदथिनाय विदथिनःपुत्रायऋजिश्वने ऋजिश्वनाम्नेराजेरन्धीः वशमनयः पञ्चाशत् पञ्चाशत्संख्याकानि सहस्रा सहस्राणि कृष्णा कृष्णवर्णानि रक्षांसिनिवपः न्यवपः अवधीः तथा स त्वं जरिमा जराजरकंन- न्योविशेषंरूपमिव पुरःशम्बरनगराणि दर्दः विदारित-वानसि ॥ १३ ॥ हे इन्द्र, तुमने पिप्रु नामक असुर को तथा प्रवृद्ध मृगय नामक असुर को विनष्ट किया था। तुमने विदथि के पुत्र ऋजिश्वा को बन्दी बनाया था। तुमने पचास हजार कृष्णवर्ण राक्षसों को मारा था। जरा जिस तरह से रूप को विनष्ट करती है, उसी तरह से तुमने शम्बर के नगरों को विनष्ट किया था।

सूरउपाकेतन्वंदधानोवियत्तेचेत्यमृतस्यवर्पः ।
मृगोनहस्तीतविषीमुषाणःसिंहोनभीमआयुधानिबिभ्रत् ॥१४॥

सूरः । उपाके । तन्वम् । दधानः । वि । यत् । ते । चेति । अमृतस्य । वर्पः । मृगः । न । हस्ती । तविषीम् । उषाणः । सिंहः । न । भीमः । आयुधानि । बिभ्रत् ॥ १४ ॥

हेइन्द्र सूरः प्रेरकस्यसूर्यस्यउपाकेसमीपे तन्वंत्वदीयंशरीरं यद्यदादधानोधारकोभवः तदा अमृतस्यमरणरहितस्य ते त्वदीयं वर्पोरूपंविचेति व्यचेति हेइन्द्र ज्ञातृभिः विशेषेणज्ञा-यत सूर्यस्यसमीपेसर्वाणिरूपाणिमलिनीभवन्ति नतथेन्द्रस्यरूपं किंतु सूर्यस्यसमीपेइन्द्रस्य रूपंविशेषेणभासमानंभवतीत्यर्थः अपिच हेइन्द्र हस्तीमृगोन गजविशेषोमृगइव तविषींपरेषां बलमुषाणः दहन् आयुधानिवज्रादीनिशस्त्राणिबिभ्रत् बिभ्राणस्त्वंसिंहोन सिंहइवभीमोभयङ्करोभूः ॥ १४ ॥ हे इन्द्र, तुम मरण-रहित हो। जब तुम सूर्य के निकट अपना शरीर धारण करते हो तब तुम्हारा रूप प्रकाशित होता है। सूर्य के समीप सबका रूप मलिन हो जाता है; किन्तु इन्द्र का रूप और भासमान होता है। हे इन्द्र, तुम मृगविशेष की तरह शत्रुओं को वध करके आयुध धारण करते हो और सिंह की तरह भयंकर होते हो।

इन्द्रंकामावसूयन्तोअग्मन्त्स्वर्मीळ्हेनसवनेचकानाः ।
श्रवस्यवःशशमानासउक्थैरोकोनरण्वासुदृशीवपुष्टिः ॥१५॥११॥

इन्द्रम् । कामाः । वसुऽयन्तः । अग्मन् । स्वःऽमीळ्हे । न । सवने । चकानाः । श्रवस्यवः । शशमानासः । उक्थैः । ओकः । न । रण्वा । सुदृशीऽइव । पुष्टिः ॥ १५ ॥ ११ ॥

कामाः राक्षसादिभयनिवारणार्थम् इन्द्रंकामयमानाः वसूयन्तः धनादिकमिच्छन्तः स्तोतारइन्द्रंसर्वैश्वर्ययुक्तम् अग्मन् अगमन्गच्छन्ति वर्तमानार्थेछान्दसोलुङ् कीदृशाःस्तोतारः स्वर्मीळ्हेन युद्धेइव सवनेयज्ञेवाजकामाः याचमानाःअन्नस्यओककामाः उक्थैःस्तोत्रैःशंसमानाः शंसमानाः स्तुवन्तःतदासोयमिन्द्रः ओकोन स्तोतॄणामावासइवभवति रण्वा . रमणीयासदृशी-पुष्टिःशोभनदर्शनालक्ष्मीरिवभवति ॥ १५ ॥

१५. राक्षस-जनित भय को निवारित करने के लिए इन्द्र की कामना करनेवाले और धन की इच्छा करनेवाले स्तोता लोग युद्ध-सदृश यज्ञ में इन्द्र से अन्न की याचना करते हैं, उक्थों-द्वारा उनकी स्तुति करते हैं और उनके निकट गमन करते हैं। इन्द्र उस समय स्तोताओं के लिए आवासस्थान की तरह होते हैं और रमणीय तथा दर्शनीय लक्ष्मी की तरह होते हैं।

**तमिद्व इन्द्रंसुहवंहुवेमयस्ताचकारनर्यापुरूणि ।**
**योमावतेजरित्रेगध्यंचिन्मक्षूवाजंभरतिस्पार्हराधाः ॥ १६ ॥**

तम् । इत् । वः । इन्द्रम् । सुऽहवम् । हुवेम । यः । ता ।
चकार । नर्या । पुरूणि । यः । माऽवते । जरित्रे । गध्यम् ।
चित् । मक्षु । वाजम् । भरति । स्पार्हऽराधाः ॥ १६ ॥

यइन्द्रः नर्यानर्याणि मनुष्यहितानिपुरूणिबहूनि ता तानि प्रसिद्धानिकर्माणिचकार अकरोत् किंच स्पार्हराधाः स्पृहणीयधनोयइन्द्रः मावते मत्सदृशायजरित्रेस्तोत्रेगध्यंचित् ग्राह्यंशोभनीयमपि वाजमन्नंमक्षुशीघ्रंभरति आहरति वयंस्तोतारः हेयजमानाः वोयुष्मभ्यं तमि-तमेवेन्द्रं सुहवं शोभनाह्वानंयथाभवतितथाहुवेम आह्वयामः ॥ १६ ॥

१६. जिन इन्द्र ने मनुष्यों के हितकर बहुतेरे प्रसिद्ध कार्य किये हैं, जो स्पृहणीय धनविशिष्ट हैं, जो हमारे सदृश स्तोता के लिए ग्रहणीय अन्न को शीघ्र लाते हैं, हे यजमानो, हम स्तोता लोग उन इन्द्र का शोभन आह्वान तुम्हारे लिए करते हैं।

**तिग्मायदन्तरशनिःपतातिकस्मिंश्चिच्छूरमुहुकेजनानाम् ।**
**घोरायदर्यसमृतिर्भवात्यधस्मानस्तन्वोबोधिगोपाः ॥ १७ ॥**

तिग्मा । यत् । अन्तः । अशनिः । पताति । कस्मिन् । चित् ।
शूर । मुहुके । जनानाम् । घोरा । यत् । अर्य । सम्ऽऋतिः ।
भवाति । अध । स्म । नः । तन्वः । बोधि । गोपाः ॥ १७ ॥

हेशूर विक्रान्तेन्द्र - यदा कस्मिंश्चित्सर्वस्मिन्नपि जनानां मनुष्याणां मुहुके मोहके युद्धे अन्तः अस्माकंमध्ये तिग्मा तीक्ष्णा अशनिः पताति पतेत् हेअर्य स्वामिन्निन्द्र यदा-

स्माकंशत्रुभिःसहघोरा भीमरूपा समृतिर्युद्धंभवाति भवेत् अथ तदानींनोऽस्मदीयस्यतन्वःशरी-रस्यगोपाःरक्षकःबोधिस्म भवोपि शत्रुभ्यःसकाशादस्मान्रक्षकत्वेनबुद्धवानसिस्म ॥ १७ ॥

१७. हे शूर इन्द्र, मनुष्यों के किसी भी युद्ध में अगर हम लोगों के मध्य में तीक्ष्ण अस्त्रनिपात हो अथवा शत्रुओं के साथ अगर हम लोगों का घोरतर युद्ध हो, तब हे स्वामिन्, तुम हम लोगों के शरीर की रक्षा करना।

भुवोऽविता वामदेवस्य धीनां भुवः सखावृको वाजसातौ ।
त्वामनु प्रमतिमा जगन्मोरुशंसो जरित्रे विश्वध स्याः ॥ १८ ॥

भुवः । अविता । वामऽदेवस्य । धीनाम् । भुवः । सखा ।
अवृकः । वाजऽसातौ । त्वाम् । अनु । प्रऽमतिम् । आ । जगन्म ।
उरुऽशंसः । जरित्रे । विश्वध । स्याः ॥ १८ ॥

हेइन्द्र त्वंवामदेवस्यवामदेवाख्यस्यममऋषेः ममसंबन्धिनीनांधीनांकर्मणामवितारक्षिता भुवः भव अवृकोहिंसारहितस्त्वं वाजसातौ युद्धेसखाममसुहृद्भुवःभव हेइन्द्र वयं प्रमतिम-प्रकृष्टज्ञानंत्वामनुआनुकूल्येन आजगन्म आगच्छाम सत्त्वंविश्वध सर्वदाजरित्रेस्तोत्रे उरुशंसः महताशंसनेनयुक्तःस्याः भवेः ॥ १८ ॥

१८. हे इन्द्र, तुम वामदेव के यज्ञकार्य के रक्षक होओ। तुम हिंसा-रहित हो। तुम युद्ध में हम लोगों के सुहृद् होओ। तुम मति-मान् हो। हम लोग तुम्हारे निकट गमन करें। तुम सर्वदा स्तोत्र-कारियों के प्रशंसक होओ।

एभिर्नृभिरिन्द्र त्वायुभिष्ट्वा मघवद्भिर्मघवन्विश्व आजौ ।
द्यावो न द्युम्नैरभि सन्तो अर्यः क्षपो मदेम शरदश्च पूर्वीः ॥ १९ ॥

एभिः । नृऽभिः । इन्द्र । त्वायुऽभिः । त्वा । मघवत्ऽभिः ।
मघऽवन् । विश्वे । आजौ । द्यावः । न । द्युम्नैः । अभि । सन्तः ।
अर्यः । क्षपः । मदेम । शरदः । च । पूर्वीः ॥ १९ ॥

हेमघवन्धनवन्निन्द्र विश्वे विश्वस्मिन्नाजौसंग्रामे त्वायुभिः शत्रूनभिगन्तुंत्वां काम-यमानैर्मघवद्भिस्त्वत्प्रदीयमानहविर्लक्षणैर्धनैरुपेतैरेभिः प्रत्यक्षेणोपलभ्यमानैः नृभिः पुत्रपौ-त्राद्यैःपरिजनैःसहितास्त्वांयमाना: द्युम्नैर्धनैः द्यावोन द्योतमानाःप्रकाशमानाधनिनोवयं तथा अर्यः अरीन् शत्रून्अभिसन्तोऽभिभवन्तः क्षपः सर्वारात्रीः पूर्वीर्बह्वीः शरदश्च संवत्स-रांश्च मदेम स्तवाम यजमानाःसर्वेषुकालेषुस्तोत्रैरिन्द्रंहर्षयन्तीत्यर्थः ॥ १९ ॥

१९. हे धनवान् इन्द्र, हम शत्रुओं को जीतने के लिए समस्त युद्ध में तुम्हारी अभिलाषा करते हैं। धनी जिस तरह धन-द्वारा दीप्त होता है, हम भी उसी तरह हव्ययुक्त होकर पुत्र-पौत्रादि परिजनों के साथ दीप्त हों और शत्रुओं को अभिभूत करके रात्रि तथा सम्पूर्ण संवत्सरों में तुम्हारी स्तुति करें।

एवेदिन्द्राय वृषभाय वृष्णे ब्रह्माकर्म भृगवो न रथम्।
नू चिद्यथा नः सख्या वियोषदसन्न उग्रोऽविता तनूपाः॥ २० ॥

एव। इत्। इन्द्राय। वृषभाय। वृष्णे। ब्रह्म। अकर्म। भृगवः।
न। रथम्। नु। चित्। यथा। नः। सख्या। विऽयोषत्।
असत्। नः। उग्रः। अविता। तनूऽपाः॥ २० ॥

यथाइन्द्रः नोस्मदीयानिसख्यानिसख्यानिकर्माणिनूचित् वियोषत् नपृथक्कुर्यात् उग्रःतेजस्वी तनूपाः शरीराणांपालकइन्द्रः यथा नोस्मानविताराक्षितासत्स्यात् तथा वयंयजमानाएवेत् एवमेवोक्तप्रकारेण इन्द्रायवृषभाय कामानांवर्षित्रेवृष्णेनित्यतरुणायब्रह्मस्तोत्रमकर्म अकुर्म तत्रदृष्टान्तः—भृगवोदीप्ताः तक्षाणः रथंन रथमिव तद्वत् यजमानेभ्योयथाइन्द्रोभीप्सितफलप्रदोभवतितथेन्द्रंयजमानाःस्तुवन्तीत्यर्थः॥ २० ॥

२०. इन्द्र के साथ हम लोगों की मैत्री जिस कार्य से वियुक्त न हो, तेजस्वी और शरीर-पालक इन्द्र जिससे हम लोगों के रक्षक हों, हम लोग उसी प्रकार का आचरण करें। दीप्त रथ-निर्माता जिस तरह रथ का निर्माण करते हैं, उसी तरह हम लोग भी अभीष्टवर्षी तथा नित्य तरुण इन्द्र के लिए स्तोत्र की रचना करते हैं।

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः॥ २१॥ २०॥

नु। स्तुतः। इन्द्र। नु। गृणानः। इषम्। जरित्रे। नद्यः।
न। पीपेरितिपीपेः। अकारि। ते। हरिऽवः। ब्रह्म। नव्यम्।
धिया। स्याम। रथ्यः। सदाऽसाः॥ २१ ॥ २० ॥

हेइन्द्र नुक्षिप्रं स्तुतः पूर्वैऋषिभिःसंस्तुतः नु क्षिप्रं गृणानः अस्माभिःस्तूयमानश्च त्वमिषमन्नंजरित्रेस्तोत्रेमह्यंनद्योन अद्भिर्नदीरिव पीपेः प्यायय प्रवृद्धंकुरु हेइन्द्र हरिवः हरिवन् हरिसंज्ञकाश्वोपेतेन्द्र तेतुभ्यं नव्यंनवतरंब्रह्मस्तोत्रमकारि अस्माभिःक्रियते रथ्यः रथवन्तो वयंधियाप्रज्ञारूपयास्तुत्या सदासाः त्वांसर्वदाभजमानाः त्वदर्थंहवीरूपस्यान्नस्यदातारोभक्तारोभूयास्म॥ २१ ॥

॥ इतितृतीयस्यपञ्चमेविंशोवर्गः॥२०॥

२१. हे इन्द्र, तुम पूर्ववर्ती ऋषियों-द्वारा स्तुत होकर तथा हम लोगों-द्वारा स्तूयमान होकर जैसे जल नदी को पूर्ण करता है, उसी तरह स्तोताओं के अन्न को प्रवृद्ध करते हो। हे हरिविशिष्ट इन्द्र, हम तुम्हारे उद्देश्य से अभिनव स्तोत्र करते हैं। जिससे हम लोग रथवान् होकर स्तुति-द्वारा सदा तुम्हारी सेवा करते रहें।

त्वं महाँ इन्द्र तुभ्यमित्येकविंशत्यृचं सप्तदशं सूक्तम्　अत्रेयमनुक्रमणिका—त्वं महाँ अधिकावामेकपदेति । आसिन्नपंचमानाने न होतेत्येकपदा विराट् शिष्टा त्रिष्टुभः इन्द्रो देवता ऋषिश्च पूर्ववत् दशरात्रे षष्ठेऽहनि निष्केवल्ये इदं सूक्तं विनियुक्तं　तथा सूत्रितं—त्वं महाँ इन्द्र तुभ्यमिति निष्केवल्यमिति । इन्द्रस्य वृत्रवधे त्वं महानिति पशुपुरोडाशस्यानुवाक्या सूत्रितं च—त्वं महाँ इन्द्र तुभ्यं ह क्षाः सत्राहणमिति ।

**त्वं म॒हाँ इ॑न्द्र॒ तुभ्यं॑ ह॒ क्षा अनु॑ क्ष॒त्रं मं॒हना॑ मन्यत॒ द्यौः ।**
**त्वं वृ॒त्रं शव॑सा जघ॒न्वान्त्सृ॒जः सिन्धूँ॒रहि॑ना जग्रसा॒नान् ॥ १ ॥**

त्वम् । म॒हान् । इ॒न्द्र॒ । तुभ्य॑म् । ह॒ । क्षाः । अनु॑ । क्ष॒त्रम् । मं॒हना॑ । म॒न्य॒त॒ । द्यौः । त्वम् । वृ॒त्रम् । शव॑सा । ज॒घ॒न्वान् । सृ॒जः । सिन्धू॑न् । अहि॑ना । ज॒ग्र॒सा॒नान् ॥ १ ॥

हेइन्द्र त्वं महान्प्रभूतो भवसि क्षाः पृथिवी क्षा इति पृथिवीनामैतत् मंहना महत्त्वेन युक्ता सती तुभ्यं ह त्वदर्थमेव क्षत्रं त्वदीयं बलम् अनुमन्यत अन्वमन्यत अनुमतीचकार द्यौरप्यन्तरिक्षमप्यन्वमन्यत हे इन्द्र त्वं शवसा त्वदीयेन बलेन वृत्रं लोकानामावरकं वृत्रनामकमसुरं जघन्वान् हतवान् किंच अहिना वृत्रेण जग्रसानान् ग्रस्तान् ग्रसतेर्लिटः कानच् आदेशः सिन्धून् स्यन्दनशीला नदीः असृजः सृष्टवानसि ॥ १ ॥

१. हे इन्द्र, तुम महान् हो। महत्त्व से युक्त होकर पृथ्वी ने तुम्हारे बल का अनुमोदन किया था एवम् द्युलोक ने भी तुम्हारे बल का अनुमोदन किया था। लोकों को आवृत करनेवाले वृत्र नामक असुर को तुमने बल-द्वारा मारा था। वृत्र ने जिन नदियों को ग्रस्त किया था, तुमने उन नदियों को विमुक्त कर दिया था।

**तव॑ त्वि॒षो जनि॑मन्रेजत॒ द्यौ रेज॒द्भूमि॑र्भि॒यसा॒ स्वस्य॑ म॒न्योः ।**
**ऋ॒घा॒यन्त॑ सु॒भ्व१॒॑: पर्व॑तास॒ आर्द॒न्धन्वा॑नि स॒रय॑न्त॒ आपः॑ ॥ २ ॥**

तव॑ । त्वि॒षः । जनि॑मन् । रे॒ज॒त॒ । द्यौः । रेज॑त् । भूमिः॑ । भि॒यसा॑ । स्वस्य॑ । म॒न्योः । ऋ॒घा॒यन्त॑ । सु॒ऽभ्वः॑ । पर्व॑तासः । आर्द॑न् । धन्वा॑नि । स॒रय॑न्तः । आपः॑ ॥ २ ॥

हेइन्द्र त्विषोदीप्यमानस्यतव त्वदीयेजनिमन् जन्मनिसति द्यौरन्तरिक्षं स्वस्यत्वदीयस्यमन्योःकोपात् पक्षम्यर्थेषष्ठी भियसा भातभयेनरेजत् अरेजत् अकम्पत भूमिरपिरेजत् कम्पमानाऽभवत् अभ्वोमहान्तःपर्वतासः पर्वताः मेघाः ऋघायन्त सस्यादीनांवृष्टिप्रदानार्थंनियामकेनत्वया बध्यन्त तथा मेघाआर्दन् प्राणिनांपिपासारूपांपीडामहिंसन् तथा मेघाः धन्वानिमरुदेशान् आपः जलानि सरन्तेगमयन्ति ॥ २ ॥

२. हे इन्द्र, तुम दीप्तिमान् हो। तुम्हारे जन्म होने पर द्युलोक तुम्हारे कोप-भय से कम्पित हुआ था, पृथ्वी कम्पित हुई थी और वृष्टि प्रदान के लिए बृहत् मेघसमूह तुम्हारे द्वारा आबद्ध हुआ था। इन मेघों ने प्राणियों की पिपासा को विनष्ट करके मरुभूमि में जल-प्रेरण किया था।

भिनद्गिरिंशवसावज्रमिष्णन्नाविष्कृण्वानःसहसानओजः ।
वधीद्वृत्रंवज्रेणमन्दसानःसरन्नापोजवसाहतवृष्णीः ॥ ३ ॥

भिनत् । गिरिम् । शवसा । वज्रम् । इष्णन् । आविःऽकृण्वानः ।
सहसानः । ओजः । वधीत् । वृत्रम् । वज्रेण । मन्दसानः ।
सरन् । आपः । जवसा । हतऽवृष्णीः ॥ ३ ॥

सहसानः शत्रूणामभिभवन् ओजस्तेजः आविष्कृण्वानः आविष्कुर्वन्निन्द्रः वज्रमिष्णन्वज्रंप्रेरयन् शवसाबलेन गिरिंपर्वतमार्तंभिनत् अभिनत् बिभेद किंच मन्दसानः सोमेनमोदमानइन्द्रः वज्रेण वृत्रं वृत्रनामानमसुरंवधीदवधीत् जघान ततःआपः वृत्रेणावृतान्युदकानिहतवृष्णीः हतोवृष्णावृत्रोयासांताःहतवृष्ण्यःताः वृत्रबाधान्तरंनिवारणरहिताःसत्यः जवसावेगेनसरन् असरन्अगच्छन् ॥ ३ ॥

३. शत्रुओं के अभिभवकर्त्ता इन्द्र ने तेजःप्रकाशन करके और बलपूर्वक वज्र का प्रेरण करके पर्वतों को विदीर्ण किया था। सोमपान से हृष्ट होकर इन्द्र ने वज्र-द्वारा वृत्र को विनष्ट किया था। वृत्र के विनष्ट होने पर जल आवरणरहित होकर वेग से आने लगा था।

सुवीरस्तेजनितामन्यतद्यौरिन्द्रस्यकर्तास्वपस्तमोभूत् ।
यईंजजानस्वर्यंसुवज्रमनपच्युतंसदसोनभूम ॥ ४ ॥

सुऽवीरः । ते । जनिता । मन्यत । द्यौः । इन्द्रस्य । कर्ता ।
स्वपःऽतमः । भूत् । यः । ईम् । जजान । स्वर्यम् । सुऽवज्रम् ।
अनपऽच्युतम् । सदसः । न । भूम ॥ ४ ॥

हेइन्द्र यःप्रजापतिः स्वर्यंस्तुतिगाथादिभिःस्तुत्यं सुवज्रं शोभनवज्रोपेतं सदसःस्वकीयात्स्वर्गस्थानादनपच्युतं विनाशरहितंच नेतिसमुच्चयार्थे भूम भूमा महत्त्वेनयुक्तमीमेनंत्वामजनत् अजीजनत् अनयत्वेऽविशेषाद्यः द्यौःद्योतमानःतेतवजनिता जनयिता समन्य-

पतिः सुवीरः शोभनपुत्रवानहमस्मीति मन्यत अमन्यत किंच इन्द्रस्य कर्ता इन्द्रस्य जनयिता प्रजापतिः स्वपस्तमः अत्यन्तं शोभनकर्माभूत् ॥ ४ ॥

४. हे इन्द्र, तुम अतिशय स्तुत्य, उत्तम वज्रावाशष्ट, स्वर्गस्थान से अच्युत अर्थात् विनाशरहित और महिमावान् हो। तुम्हें जिन द्युतिमान् प्रजापति ने उत्पन्न किया था, वे अपने को सुन्दर पुत्रवान् मानते थे। इन्द्र के जनयिता प्रजापति का कर्म अत्यन्त शोभन हुआ था।

यएकइच्च्यावयतिप्रभूमाराजाकृष्टीनांपुरुहूतइन्द्रः ।
सत्यमेनमनुविश्वेमदन्तिरातिंदेवस्यगृणतोमघोनः ॥५॥२१॥

यः । एकः । इत् । च्यवयति । प्र । भूम । राजा । कृष्टीनाम् ।
पुरुऽहूतः । इन्द्रः । सत्यम् । एनम् । अनु । विश्वे । मदन्ति ।
रातिम् । देवस्य । गृणतः । मघोनः ॥ ५ ॥ २१ ॥

कृष्टीनांसर्वासांप्रजानांराजास्वामी पुरुहूतः बहुभिराहूतः एकइत् देवानांमध्येमुख्यएव यइन्द्रः भूम भूतानिष्पन्नंशत्रुभ्योभयं प्रच्यावयति प्रकर्षेणनाशयति विश्वेसर्वेयजमानाःमघोनः धनवतः हविर्लक्षणधनवतइत्यर्थः देवस्येन्द्रस्यदानार्थात् द्योतमानस्यगृणतः स्तुवतः रातिं दातुमेनमिन्द्रमनुलक्ष्य सत्यमेवमदन्ति स्तुवन्ति ॥ ५ ॥

५. सम्पूर्ण प्रजाओं के राजा, बहुजनाहूत और देवों के मध्य में एकमात्र प्रधान इन्द्र शत्रुजनित भय को विनष्ट करते हैं। द्युतिमान् और धनवान् बन्धु इन्द्र के उद्देश से सचमुच समस्त यजमान स्तुति करते हैं।

सत्रासोमाअभवन्नस्यविश्वेसत्रामदासोबृहतोमदिष्ठाः ।
सत्राभवोवसुपतिर्वसूनांदत्रेविश्वाअधिथाइन्द्रकृष्टीः ॥ ६ ॥

सत्रा । सोमाः । अभवन् । अस्य । विश्वे । सत्रा । मदासः ।
बृहतः । मदिष्ठाः । सत्रा । अभवः । वसुऽपतिः । वसूनाम् ।
दत्रे । विश्वाः । अधिथाः । इन्द्र । कृष्टीः ॥ ६ ॥

विश्वे सर्वे सोमाः अस्येन्द्रस्यसत्रा सत्रेतिसत्यनामैतत् सत्यमेवसुताअभवन् किंच मदासोमदाः मदकराः सोमाः बृहतोमहतोऽस्येन्द्रस्य मदिष्ठाः मादयितृतमाः सत्रासत्यमेवाभवन् हेइन्द्र त्वंवसुपतिर्धनपतिः नकेवलंधनपतिः किंतुवसूनांसर्वेषांपश्वादीनांधनानांपतिः सत्रासत्यमेवाभवः भवसि हेइन्द्र त्वंदत्रेधनेनिमित्तभूतेसति विश्वाःसर्वाःकृष्टीःस्तोत्रीःप्रजाः अधिथाः धारयसि ॥ ६ ॥सम्पूर्ण सोम सचमुच इन्द्र के ही हैं। ये मदकारक सोम महान् इन्द्र के लिए सचमुच हर्षकारक हैं। हे इन्द्र, तुम धनपति हो, केवल

धनपति ही नहीं; बल्कि सम्पूर्ण पशुओं के भी पति हो। हे इन्द्र, धन के लिए तुम सचमुच समस्त प्रजाओं को धारण करते हो।

त्वमध॑प्रथ॒मंजाय॑मानो॒मे॒विश्वा॑अधिथाइन्द्रकृ॒ष्टीः ।
त्वंप्रति॑प्र॒वत॑आ॒शया॑न॒मर्हिं॒वज्रे॑णमघवन्विवृ॑श्चः ॥ ७ ॥

त्वम् । अध॑ । प्र॒थ॒मम् । जाय॑मानः । अमे॑ । विश्वाः । अ॒धि॒थाः । इन्द्र॒ । कृ॒ष्टीः । त्वम् । प्रति॑ । प्र॒ऽवतः । आ॒ऽशया॑नम् । अहि॑म् । वज्रे॑ण । म॒घ॒ऽव॒न् । वि । वृ॒श्चः ॥ ७ ॥

अध अपिच प्रथममेवजायमानस्त्वम् अमे वृत्रनिमित्तेभयेसति विश्वाःसर्वाःकृष्टीः प्रजाः अधिथाः रक्षकत्वेनधारयसि हेमघवन्धनवन्निन्द्र त्वं प्रतिप्रवतः प्रतिप्रवणान् उदकवतोदेशान्लक्षी-कृत्य आशयानम् अपांनिरोधकमहिंवृत्रनामानमसुरंवज्रेण विवृश्चः छिन्नवानसि ॥ ७ ॥

७. हे धनवान् इन्द्र, पहले ही उत्पन्न होकर तुमने वृत्रभीत होकर सम्पूर्ण प्रजाओं को धारण किया था। तुमने उदकवान् देश के उद्देश्य से जलनिरोधक वृत्रासुर को छिन्न किया था।

इन्द्रस्यवृत्रघ्नःपशौसत्राहणमितिहविषोनुवाक्या सूत्रितंच–सत्राहणंदाधृषिंतुम्रमिन्द्रंसहव्यानंपु-रुहूताक्षिमन्तमिति।

स॒त्रा॒हणं॒दाधृ॑षिं॒तु॒म्रमिन्द्रं॑म॒हाम॑पा॒रंवृ॑ष॒भंसु॒वज्र॑म् ।
हन्ता॒योवृ॒त्रंसनि॑तो॒तवाजं॒दाता॑म॒घानि॑म॒घवा॑सु॒राधाः॑ ॥ ८ ॥

स॒त्रा॒ऽहन॑म् । दधृ॑षिम् । तु॒म्रम् । इन्द्र॑म् । म॒हाम् । अ॒पा॒रम् । वृ॒ष॒भम् । सु॒ऽवज्र॑म् । हन्ता॑ । यः । वृ॒त्रम् । सनि॑ता । उ॒त । वाज॑म् । दाता॑ । म॒घानि॑ । म॒घऽवा॑ । सु॒ऽराधाः॑ ॥ ८ ॥

सत्राहणं बहूनांशत्रूणांहन्तारं दाधृषिमत्यन्तंधर्षकं तुम्रं तुमिःप्रेरणकर्मा शत्रूणांप्रेरकं महां महान्तम् अपारमपरिमाणंविनाशरहितमित्यर्थः वृषभं कामानांवर्षितारं सुवज्रं शोभनेन वज्रेणोपेतम् इन्द्रं वयं स्तोतारःस्तुमइतिशेषः यइन्द्रः वृत्रं वृत्रनामकमसुरं हन्ता हिंसिताभवति उता-पिच यइन्द्रः वाजमन्नंसनिता दाताभवति सुराधाः शोभनधनयुक्तः योमघवेन्द्रः मघानि धनानि[illegible] तमिन्द्रंस्तुमइतिपूर्वेणान्वयः [illegible]लोकाव्ययेतिषष्ठीप्रतिषेधे सति द्वितीयाभवति ॥ ८ ॥

८. अनेक शत्रुओं के हन्ता, अत्यन्त दुर्द्धर्ष शत्रुओं के प्रेरक, महान्, [illegible]नाशरहित, अभीष्टवर्षी और शोभन वज्रविशिष्ट इन्द्र की स्तुति हम लोग करते हैं। जिन इन्द्र ने वृत्र नामक असुर को मारा था, जो अन्न-दाता और [illegible] हैं तथा जो धन दान करते हैं, हम उनकी स्तुति करते हैं।

अ॒यंवृत॑श्चातयते॒ समी॑चीर्यआ॒जिषु॑म॒घवा॑शृ॒ण्वए॒कः॑ ।
अ॒यंवाजं॑भरति॒यंस॒नोत्य॒स्यप्रि॒यासः॑स॒ख्येस्या॑म ॥ ९ ॥

अयम् । वृत्रः । चातयते । सम्ऽईचीः । यः । आजिषु ।
मघऽवा । शृण्वे । एकः । अयम् । वाजम् । भरति । यम् ।
सनोति । अस्य । प्रियासः । सख्ये । स्याम ॥ ९ ॥

मघवाधनवानयमिन्द्रः आजिषु संग्रामेषु एकोऽसहायएवशृण्वे श्रूयते अयमिन्द्रः समीचीः संगताः वृत्रः वृण्वन्तिआच्छादयन्तिलोकानितिवृत्राःशत्रुसेनाः ताश्चातयते नाशयति अयमिन्द्रः यंवाजमन्नंसनोतियजमानायददाति तंवाजंभरति यजमानस्यतदन्नंदातुंबिभर्ति स्तोतारोवयम् अस्य एवम्भूतस्येन्द्रस्य सख्ये सखित्वे प्रियासः प्रियाःस्याम भवेम ॥ ९ ॥

९. जो धनवान् इन्द्र संग्राम में अद्वितीय सुने जाते हैं, वे मिलित और विस्तृत शत्रु-सेना को विनष्ट करते हैं। वे जो अन्न यजमान को देते हैं, उसी अन्न को धारण भी करते हैं। इन्द्र के साथ हम लोगों की मैत्री प्रिय हो।

अयंशृण्वेअधजयन्नुतघ्नन्नयमुतप्रकृणुतेयुधागाः ।
यदासत्यंकृणुतेमन्युमिन्द्रोविश्वंदृळ्हंभयतएजदस्मात् ॥१०॥२२॥

अयम् । शृण्वे । अध । जयन् । उत । घ्नन् । अयम् । उत ।
प्र । कृणुते । युधा । गाः । यदा । सत्यम् । कृणुते । मन्युम् ।
इन्द्रः । विश्वम् । दृळ्हम् । भयते । एजत् । अस्मात् ॥ १० ॥ २२ ॥

अधापिच अयमिन्द्रोजयनशत्रूनभिभवन्शृण्वेश्रूयते सर्वत्रप्रख्यातोभवति उतापिच घ्नन्हिंसन्सर्वत्रश्रूयते उतापिच अयमिन्द्रः युधायुद्धेनगाःपशून्प्रकृणुते शत्रुसकाशादाहरति किंच इन्द्रोयदामन्युंकोपंसत्यमेवकृणुते द्विषदर्थंकरोति तदानींदृळ्हंस्थिरं स्थावररूपम् एजत्कम्पमानंजङ्गमरूपंच विश्वंसमस्तंजगदस्मादिन्द्राद्भयतेबिभेति ॥ १० ॥

१०. शत्रुविजयी और शत्रुहिंसक होकर इन्द्र सर्वत्र प्रख्यात हैं। इन्द्र शत्रुओं के समीप से पशुओं को छीन लाते हैं। इन्द्र जब सचमुच कोप करते हैं तब स्थावर और जंगम-रूप समस्त जगत् इन्द्र से डरने लगता है।

समिन्द्रोगाअजयत्संहिरण्यासमश्वियामघवायोहपूर्वीः ।
एभिर्नृभिर्नृतमोअस्यशाकैरायोविभक्तासंभरश्चवस्वः ॥११॥

सम् । इन्द्रः । गाः । अजयत् । सम् । हिरण्या । सम् । अश्विया ।
मघऽवा । यः । ह । पूर्वीः । एभिः । नृऽभिः । नृऽतमः । अस्य ।
शाकैः । रायः । विऽभक्ता । सम्ऽभरः । च । वस्वः ॥ ११ ॥

योह वःसत्त्व मघवाधनवानिन्द्रः गाअसुराणांसमजयत् सम्यग्जितवान्भवति किंच हिरण्या हिरण्यानिहितरमणीयानिशत्रुसंबन्धीनिधनानिसमजयत् तथा अश्विया अश्वियानि शत्रुसंबन्धिनोश्वसमूहान्सम्यग्जितवानसि तथा पूर्वीर्बह्वीःशत्रुसेनाःसमजयत् इन्द्रःसर्वान् शत्रून् जित्वासकलमपिधनादिधनमपहृतवानित्यर्थः शाकैःसामर्थ्यैः नृतमोनेतृतमः धनादीनामतिशयेननिर्वाहकःसइन्द्रः एभिर्नृभिर्नेतृभिःस्तोतृभिःस्तुतःसन् अस्यरायः धनादिधनस्यविभक्ता स्तोतृभ्योविभागस्यकर्ता दाताभवतीत्यर्थः किंचयस्तोमघुनोधनस्यसंभरघसंभर्ता धारकश्चभवति ॥ ११ ॥

११. जिन धनवान् इन्द्र ने असुरों को जीता था, शत्रुओं के रमणीय धन को जीता था, अश्वसमूह को जीता था तथा अनेक शत्रुसेनाओं को जीता था, वे सामर्थ्यवान् नेतृश्रेष्ठ स्तोताओं-द्वारा स्तुत होकर धनों के विभाजक तथा धन के धारक हों।

**कियत्स्विदिन्द्रोअध्येतिमातुःकियत्पितुर्जनितुर्योजजान ।**
**योअस्यशुष्मंमुहुकैरियर्तिवातोनजूतःस्तनयद्भिरभ्रैः ॥ १२ ॥**

**कियत् । स्वित् । इन्द्रः । अधि । एति । मातुः । कियत् । पितुः । जनितुः । यः । जजान । यः । अस्य । शुष्मम् । मुहुकैः । इयर्ति । वातः । न । जूतः । स्तनयत्ऽभिः । अभ्रैः ॥ १२ ॥**

यइन्द्रः मातुर्जनन्याःसकाशात्कियत्स्वित् यावद्बलमध्येति अधिगच्छति पितुःसकाशात्कियद्यावद्बलमधिगच्छति यइन्द्रः जनितुर्जनयितुर्यस्मात्प्रजापतेःसकाशात् इदंदृश्यमानं जगज्जजान अजनयत् यइन्द्रस्तस्मात्प्रजापतेःसकाशादस्यजगतःशुष्मंयावद्बलंमुहुकैःमुहुर्मुहुरियर्तिप्रेरयति स्तनयद्भिर्गर्जद्भिरभ्रैर्मेघैर्जूतःप्रेरितः वातोन वायुरिव तथासइन्द्रःस्तोतृभिर्जूतः प्रेरितःहविष्प्रदानार्थमाहूतोभवति ॥ १२ ॥

१२. इन्द्र अपनी जननी के समीप कितना बल प्राप्त करते हैं और पिता के समीप कितना बल प्राप्त करते हैं। जिन इन्द्र ने अपने पिता प्रजापति के समीप से इस दृश्यमान जगत् को उत्पन्न किया था तथा उन्हीं प्रजापति के समीप से जगत् को मुहुर्मुहुः बल प्रदान किया था, वे इन्द्र गर्जनशील मेघ-द्वारा प्रेरित वायु की तरह आहूत होते हैं।

**क्षियन्तंत्वमक्षियन्तंकृणोतीयर्तिरेणुंमघवासमोहम् ।**
**विभञ्जनुरशनिमाँइवद्यौरुतस्तोतारंमघवावसौधात् ॥ १३ ॥**

**क्षियन्तम् । त्वम् । अक्षियन्तम् । कृणोति इयर्ति । रेणुम् । मघऽवा । सम्ऽओहम् । विऽभञ्जनुः । अशनिमान्ऽइव । द्यौः । उत । स्तोतारम् । मघऽवा । वसौ । धात् ॥ १३ ॥**

मघवाधनवानिन्द्रः क्षियन्तंधनराहित्येनक्षीयमाणंतमेकंजनम् अक्षियन्तं धनेनाक्षीयमाणंकृणोति करोति अकिंचनः कश्चित्पुरुषः इन्द्रंस्तुत्वाधनसमृद्धोभवदित्यर्थः अशनिमानशनिनायुक्तःद्यौरिवान्तरिक्षमिव विभञ्जुः शत्रूणांविशेषेणभञ्जकोमघवेन्द्रः समोहंसमूहरूपंपापम् हन्ति स्तोतुःसकाशात्प्रेरयति उतापिच मघवाधनवानिन्द्रःस्तोतारंस्वीयेनधनेन अधाक्षिणुयाति ॥ १३॥ धनवान् इन्द्र किसी एक धनशून्य व्यक्ति को धनपूर्ण करते हैं अर्थात् कोई पुरुष इन्द्र की स्तुति करके धनसमृद्ध हुआ है। वज्रयुक्त अन्तरिक्ष की तरह शत्रुविनाशक इन्द्र समूह पाप को विनष्ट करते हैं और स्तोता को धन प्रदान करते हैं।

अयंचक्रमिषणत्सूर्यस्यन्येतंशंरीरमत्ससृमाणम् ।
आकृष्णईंजुहुराणोजिघर्तित्वचोबुध्नेरजसोअस्ययोनौ ॥१४॥

अयम् । चक्रम् । इषणत् । सूर्यस्य । नि । एतशम् । रीरमत् ।
ससृमाणम् । आ । कृष्णः । ईम् । जुहुराणः । जिघर्ति ।
त्वचः । बुध्ने । रजसः । अस्य । योनौ ॥ १४ ॥

प्रैतशंसूर्येपस्पृधानमित्यर्धर्चेपूर्वंकाचिदाख्यायिकासूचिता अत्राप्ययमचक्रमितिपूर्वार्धेनसासूच्यते स्वश्वनामाकश्चिद्राजा सच पुत्रार्थंसूर्यमुपास्ते सचसूर्यःपुत्ररूपेणतस्यमेवतत्रोत्पन्नःसन् एतशाख्येनमहर्षिणासार्धंयुद्धंचकार तदानीमेतशऋषिःयुद्धेजयार्थमिन्द्रंतुष्टाव सइन्द्रःतेनस्तूयमानः सन् स्वश्वपुत्रस्यसूर्यस्यतेजस्विनःसंग्रामादेनमपाकृष्यादिति । अयमिन्द्रःसूर्यस्यचक्रमायुधमिषणत् प्रेरयत् ससृमाणं युद्धार्थंसम्यग्गच्छन्तम् एतशनामानमृषिंनिरीरमत् न्यरीरमत् निवारितवान् जुहुराणः कुटिलंयथाभवतितथासंसरन् कृष्णः कृष्णवर्णोमेघः त्वचस्तेजसोबुध्ने मूलभूतेरजसोस्योदकस्ययोनौस्थानेन्तरिक्षेस्थितम् ईमेनमिन्द्रम् आजिघर्ति आसिञ्चति शत्रूणांप्रेरितायुधादेः ममताररक्षेत्यर्थः ॥ १४ ॥

१४. इन्द्र ने सूर्य के आयुध को प्रेरित किया था और युद्ध के लिए जानेवाले एतश को निवारित किया था। कुटिल-गति और कृष्णवर्ण मेघ ने तेज के मूलभूत और जल के स्थान-स्वरूप अन्तरिक्ष में स्थित इन्द्र को अभिषिक्त किया था।

असिक्न्यांयजमानोनहोता ॥ १५ ॥ २२ ॥

असिक्न्याम् । यजमानः । न । होता ॥ १५ ॥ २२ ॥

एकपदेयमृक् पूर्वयासहद्वादशाक्षरेणसंबध्यते असिक्न्यांरात्रौयजमानोन यजमानइव होतारमाह्वातारमग्निं द्वितीयार्थेप्रथमा सोमेनासिञ्चति तद्वन्मेघइन्द्रमासिञ्चतीत्यर्थः ॥ १५ ॥

१५. जैसे रात्रिकाल में यजमान सोम-द्वारा अग्नि को अभिषिक्त करते हैं।

गव्यन्तइन्द्रंसख्यायविप्राअश्वायन्तोवृषणंवाजयन्तः ।
जनीयन्तोजनिदामक्षितोतिमाच्यावयामोवतेनकोशम् ॥१६॥

गव्यन्तः । इन्द्रम् । सख्याय । विप्राः । अश्वऽयन्तः । वृषणम् ।
वाजयन्तः । जनिऽयन्तः । जनिऽदाम् । अक्षितऽऊतिम् ।
आ । च्यवयामः । अवते । न । कोशम् ॥ १६ ॥

गव्यन्तः गाइच्छन्तः अश्वायन्तः अश्वानिच्छन्तः वाजयन्तः वाजमन्नमिच्छन्तः जनीयन्तः जायामिच्छन्तः विप्रामेधाविनःस्तोतारोवयंसख्यायेन्द्रेणसहसखित्वाय वृषणं कामानां वर्षितारं जनिदां जायाप्रदम् अक्षितोतिमक्षीणरक्षंसर्वदारक्षकमित्यर्थः एवम्भूतमिन्द्रमाच्याव-यामः आगमयामः तत्रदृष्टान्तः—अवतेकूपे अवतइतिकूपनाम अवतःअवटःक्रिविरितिकू-पनामसुपाठात् कोशंन जलोद्धरणपात्रमिव पुरुषाः जलोद्धरणपात्रंजलेनपूरयितुं कूपेयथाआ-च्यावयन्ति तथा वयमाच्यावयामइत्यर्थः ॥ १६ ॥

१६. हम मेधावी स्तोता गौओं की अभिलाषा करते हैं, अश्वों की अभिलाषा करते हैं, अन्न की अभिलाषा करते हैं और स्त्री की अभि-लाषा करते हैं। हम सखिता के लिए कामना-पूरक, भार्याप्रद और सर्वदा रक्षक इन्द्र को, लोग जैसे कूप में जलपात्र को अवनमित करते हैं, उसी तरह अवनमित करेंगे।

त्रातानोबोधिदद्दशानआपिरभिख्यातामर्डितासोम्यानाम् ।
सखापितापितृतमःपितृणांकर्तेमुलोकमुशतेवयोधाः ॥ १७ ॥

त्राता । नः । बोधि । ददृशानः । आपिः । अभिऽख्याता ।
मर्डिता । सोम्यानाम् । सखा । पिता । पितृऽतमः । पितृणाम् ।
कर्ता । ईम् । ऊँ इति । लोकम् । उशते । वयःऽधाः ॥ १७ ॥

हेइन्द्र आपिः आप्तः ददृशानः सर्वपालकत्वेनपश्यंस्त्वं नोस्माकंत्रातारक्षकोबोधि भव किंच अभिख्याता अभिद्रष्टा मर्डिता सुखयिता सोम्यानांसोमार्हाणांयजमानादीनांसखा प्रजापति-नासमानख्यातिः पिता पालकः केवलं पालकोन किंतु पितृणांपालकानांमध्येपितृतमः अतिश-येनपालकःकर्ता ईमु पितृणामस्माकं लोकंस्वर्गादिलोकम् उशतेकामयमानायस्तोत्रे वयोधाः वयइत्यन्ननामैतत् अन्नप्रदोभव ॥ १७ ॥

१७. हे इन्द्र, तुम आप्त हो। रक्षक रूप से सबको देखते हुए तुम हमारे रक्षक होओ। तुम सोमयोग्य यजमानों के अभिद्रष्टा और सुखयिता हो। प्रजापति के समान तुम्हारी ख्याति है। तुम पालक हो और पालकों के मध्य में श्रेष्ठ हो। तुम

पितरों के स्रष्टा हो। तुम स्वर्गाभिलाषी स्तोताओं के लिए अन्नप्रद होओ।

सखीयतामविताबोधिसखागृणानइन्द्रस्तुवतेवयोधाः।
वयंह्यातेचकृमासबार्धआभिःशमीभिर्महयन्तइन्द्र ॥ १८ ॥

सखिऽयताम्। अविता। बोधि। सखा। गृणानः। इन्द्र।
स्तुवते। वयः। धाः। वयम्। हि। आ। ते। चकृम।
सऽबार्धः। आभिः। शमीभिः। महयन्तः। इन्द्र ॥ १८ ॥

हेइन्द्र त्वं सखीयतां सखित्वमिच्छतामस्माकम् अवितारक्षिताबोधि भव तथा गृणानः स्तूयमानस्त्वंसखाभव हेइन्द्र स्तुवतेस्तुतिंकुर्वतेमह्यंवयोन्नंधाः धेहि हेइन्द्र सबाधः बाधासहितावयंहि वयंखलु ते त्वामाचकृम आह्वयामः किंकुर्वन्तः आभिः प्रत्यक्षेणोपक्रम्यमाणैः शमीभिःस्तुतिरूपैःकर्मभिर्महयन्तः त्वांपूजयन्तः ॥ १८ ॥

१८. हे इन्द्र, हम तुम्हारी मैत्री की अभिलाषा करते हैं। तुम हमारे रक्षक होओ। तुम स्तुत होते हो, तुम हमारे सखा होओ। तुम स्तोताओं को अन्न दान करो। हे इन्द्र, हम बाधायुक्त होकर भी स्तुति-रूप कर्म-द्वारा पूजा करके तुम्हारा आह्वान करते हैं।

इन्द्रस्यपुनःपुरोडाशस्यस्तुतइन्द्रइतियाज्या सूत्रितंच—स्तुतइन्द्रोमघवायद्धवृत्रैवापस्वइन्द्रः-सत्यःसम्राळिति।

स्तुतइन्द्रोमघवायद्धवृत्राभूरीण्येकोअप्रतीनिहन्ति।
अस्यप्रियोजरितायस्यशर्मन्नकिर्देवावारयन्तेनमर्ताः ॥ १९ ॥

स्तुतः। इन्द्रः। मघऽवा। यत्। ह। वृत्रा। भूरीणि। एकः।
अप्रतीनि। हन्ति। अस्य। प्रियः। जरिता। यस्य।
शर्मन्। नकिः। देवाः। वारयन्ते। न। मर्ताः ॥ १९ ॥

यद् यदाखलु मघवाधनवानिन्द्रः स्तुतः अस्माभिःस्तुतोभवति तदा इन्द्रएकः असहाय एव भूरीणिबहूनि अप्रतीन्यप्रतिगमनानि अभिगमनरहितानीत्यर्थः वृत्रा वृत्राणि शत्रून्हन्ति हिनस्ति यस्येन्द्रस्यशर्मन् शर्मण्याश्रयेवर्तमानंस्तोतारंदेवाःनकिर्वारयन्ते निवारणंनकुर्वन्ति मर्तोमर्त्या निवारयन्ते निवारणंनकुर्वन्ति अस्येन्द्रस्यजरितास्तोताप्रियोभवति ॥ १९ ॥

१९. जब इन्द्र हम लोगों के द्वारा स्तुत होते हैं तब वे अकेले ही अनेक अभिगन्ता शत्रुओं को मार डालते हैं। जिस इन्द्र की शरण में वर्तमान स्तोता का निवारण न देवगण करते हैं और न मनुष्यगण करते हैं, उस इन्द्र का स्तोता प्रिय होता है।

आग्निमारुतशस्त्रेएवानइन्द्रइतिपरिधानीया सूत्रितंच—एवानइन्द्रोमघवाविरप्शीतिपरिदध्या-दिति।

एवानइन्द्रोमघवाविरप्शीकरत्सत्याचर्षणीधृदनर्वा।
त्वंराजाजनुषांधेह्यस्मेअधिश्रवोमाहिनंयज्जरित्रे॥ २० ॥

एव। नः। इन्द्रः। मघवा। विरप्शी। करत्। सत्या।
चर्षणिऽधृत्। अनर्वा। त्वम्। राजा। जनुषाम्। धेहि।
अस्मे इति। अधि। श्रवः। माहिनम्। यत्। जरित्रे॥ २० ॥

विरप्शी बहुविधशब्दवान् चर्षणीधृत् सर्वासांप्रजानांधारयिता अनर्वा अप्रत्यृतः केनापिप्रतिकूलेनाप्राप्तइत्यर्थः मघवाधनवानिन्द्रः एवमस्माभिःस्तुतःसन् नोस्माकंसत्या सत्यरूपाण्यभिमतानिफलानिकरत्करोतु हेइन्द्र जनुषांजन्मवतांसर्वेषांराजाप्रभुःत्वं माहिनंमहिमोपेतंयच्छ्रवःयद्यशोजरित्रेस्तोत्रेदेयं तच्छ्रवःअस्मेअस्मासु अध्यधिकत्वेनधेहि एवानइन्द्रोमघवाविरप्शी-त्यादिवाक्यम्॥ २० ॥

२०. विविध शब्दवान्, समस्त प्रजाओं के धारक, शत्रुरहित और धनवान् इन्द्र इस प्रकार स्तुत होकर हम लोगों के सत्यरूप अभिलषित को सम्पादित करें। हे इन्द्र, तुम समस्त जन्मधारियों के राजा हो। स्तोता जिस महिमायुक्त यश को प्राप्त करता है, वह यश तुम अधिक परिमाण में हम लोगों को दो।

नूष्टुतइन्द्रनूगृणानइषंजरित्रेनद्योनपीपेः।
अकारितेहरिवोब्रह्मनव्यंधियास्यामरथ्यःसदासाः॥२१॥२४॥

नु। स्तुतः। इन्द्र। नु। गृणानः। इषम्। जरित्रे। नद्यः।
न। पीपेरितिपीपेः। अकारि। ते। हरिऽवः। ब्रह्म। नव्यम्।
धिया। स्याम। रथ्यः। सदाऽसाः॥ २१ ॥ २४ ॥

व्याख्यातेयम्॥ २१ ॥

२१. हे इन्द्र, तुम पूर्ववर्ती ऋषियों-द्वारा स्तुत होकर तथा हम लोगों के द्वारा स्तूयमान होकर जैसे जल नदी को पूर्ण करता है उसी तरह स्तोताओं के अन्न को प्रवृद्ध करते हो। हे हरिविशिष्ट इन्द्र, हम तुम्हारे उद्देश्य से अभिनव स्तोत्र करते हैं, जिससे हम लोग रथवान् होकर स्तुति-द्वारा सदा तुम्हारी सेवा करते रहें।

अयंपन्थाइतित्रयोदशर्चमष्टमंसूक्तंत्रैष्टुभम् । अत्रानुक्रमणिका—अयंपन्थास्त्रयोदशसंवाद-इन्द्रादितिवामदेवानामिति । यस्यवाक्यंसऋषिर्यातेनोच्यतेसादेवतेतिपरिभाषितत्वादृषिदे-वतेतत्रतत्रज्ञातव्ये । अस्मिन्सूक्तेइन्द्रादितिवामदेवसंवादरूपिणीकाचिदाख्यायिकाश्लोकरूपेण सूच्यते—गर्भस्थोज्ञानसंपन्नोवामदेवोमहामुनिः ॥ मतिंचक्रेनमायेयंयोनिदेशाद्धिमातृतः ॥ १ ॥ किंतुपार्श्वोदितस्त्वेतिज्ञात्वातुमननीस्त्विदम् ॥ दध्यौशान्त्यैशचीदेवीमदितिंत्विन्द्रमातरम् ॥ २ ॥ अदितिस्त्विन्द्रसहितागर्भिणीमभ्यगाद्वने ॥ अदितीन्द्रवामदेवाःसंवादमथचक्रिरे ॥ ३ ॥ संवाद-इतिसूक्तेस्मिन्कथासैवात्रसूच्यते ॥ नोक्तैवकृविशेषोमस्युरस्यदेशोप्यनुचितः ॥ ४ ॥ अर्धेतस्त्वमग-न्सन्योवक्तृभेदइतीसंस्थितिः ॥ इन्द्रोदितिर्ऋषिश्चास्मिन्मिथःसूक्तेसमूचिरे ॥ ५ ॥ गर्भेशयानं ऋषिंमातुर्गर्भादनिर्गतम् ॥ वामदेवंप्रतिब्रूतेप्रथमार्धेशतक्रतुः ॥ ६ ॥ द्वितीयादिभिरर्धर्चै-र्ऋषिराहपञ्चभिः ॥ नहीन्वस्येतिसप्तम्युरर्धर्चोअदितेर्वचः ॥ ७ ॥ ममचनत्वायुवतिरित्यृषः पश्चवेमुनेः ॥ दौर्गत्यशान्तिमत्राहवामदेवस्तथान्त्यया ॥ ८ ॥ एवमर्धोद्वक्तृभेदइतिवक्तृव्यासनम् ॥ अर्धोविवेकस्पष्टत्वादुपदेशोमुनेरितः ॥ ९ ॥ ऋषिदैवतसिद्ध्यर्थंविवेकार्धर्चईरितः ॥

तत्रप्रथमा—

**अयंपन्थाअनुवित्तः पुराणोयतोदेवाउदजायन्तविश्वे ।**
**अतश्चिदाजनिषीष्टप्रवृद्धोमामातरममुयापत्तवेकः ॥ १ ॥**

अयम् । पन्थाः । अनुऽवित्तः । पुराणः । यतः । देवाः ।
उत्ऽअजायन्त । विश्वे । अतः । चित् । आ । जनिषीष्ट ।
प्रऽवृद्धः । मा । मातरम् । अमुया । पत्तवे । कः ॥ १ ॥

पुराणः अनादिः अयं प्रत्यक्षेणोपलभ्यमानः पन्थायोनिनिर्गमनरूपोमार्गः अनुक्रमानुपूर्व्येण वित्तः सर्वैर्जायमानैर्लब्धः यतोयस्माद्योनिमार्गात् विश्वेसर्वेदेवाउदजायन्त उत्कर्षेणोत्पन्नाभवन्ति तस्माद्योनिमार्गान्मनुष्याउत्पन्नाभवन्तीतिकिमुवक्तव्यम् अतश्चिदस्माद्योनिमार्गादेवप्रवृद्धः गर्भेप्रकर्षेणवृद्धिंगतोवामदेवः आजनिषीष्ट आसमन्ताज्जायताम् अमुयाममं मातरंपत्तवेपतनायमरणायेत्यर्थः माकः माकरोतु ॥ १ ॥

१. इन्द्र कहते हैं—"यह योनिनिर्गमणरूप मार्ग अनादि और पूर्वापर लब्ध है। इसी योनिमार्ग से सम्पूर्ण देव और मनुष्य उत्पन्न हुए हैं; अतएव तुम गर्भ में प्रवृद्ध होकर इसी मार्ग द्वारा उत्पन्न होओ। माता की मृत्यु के लिए मत कार्य करो।"

नाहमतो॒निरं॑या॒दु॒र्गहै॒तात्ति॑र॒श्चता॑पा॒र्श्वान्निर्ग॑मा॒णि ।
ब॒हूनि॑मे॒अकृ॑ता॒कर्त्वा॑नि॒यु॒ध्यै॑त्वेन॒सं॑त्वेन॒पृ॑च्छै ॥ २ ॥

न । अ॒हम् । अतः॑ । निः । अ॒य॒ । दुः॒ऽग्रहा॑ । ए॒तत् । ति॒र॒श्चता॑ ।
पा॒र्श्वात् । निः । ग॒मा॒नि॒ । ब॒हूनि॑ । मे॒ । अकृ॑ता । कर्त्वा॑नि ।
यु॒ध्यै॑ । त्वे॒न॒ । सम् । त्वे॒न॒ । पृ॒च्छै॒ ॥ २ ॥

वामदेवएवमुक्तवन्तमिन्द्रंप्रत्याह—अहमतोयोनिमार्गान्ननिरयाणि ननिर्गच्छानि एतद्योनिनिर्गमनरूपंकर्मदुर्गहादुर्गहंदुःखेनग्राह्यं नप्राप्यंभवतीत्यर्थः किंतु तिरश्चता तिरश्चीनात्पार्श्वात्तिर्यग्भागात्निर्गच्छानि योनिदेशादनिर्गतोहंपार्श्वंभित्त्वानिर्गच्छानीत्यर्थः अन्यैरकृतानि-दमेवमकेवलंमयाक्रियते किंतु अन्यैरकृता अकृतानिबहूनिकर्माणिमेमयाकर्तव्यानिस-न्ति त्वेन एकेनसपत्नेनविवदमानेनसहयुध्यै युद्धंकरवाणि त्वेनएकेनसुहृदानासंपृच्छै सम्य-क्पृच्छानि ॥ २ ॥

२. वामदेव कहते हैं—"हम इस योनिमार्ग द्वारा नहीं निर्गत होंगे। यह मार्ग अत्यन्त दुर्गम है। हम पार्श्वभेद करके निर्गत होंगे। दूसरों के द्वारा अकरणीय बहुतेरे कार्य हमें करने हैं। हमें एक के साथ युद्ध करना है। हमें एक के साथ वाद-विवाद करना है।

प॒रा॒यती॑मा॒तर॒मन्व॑चष्ट॒नना॒नु॑गा॒न्यनु॒नूग॑मानि ।
त्वष्टु॑र्गृ॒हे अ॑पिब॒त्सोम॒मिन्द्रः॑शत॒धन्यं॑च॒म्वोः॑ सु॒तस्य॑ ॥ ३ ॥

प॒रा॒ऽयतीम् । मा॒तर॑म् । अनु॑ । अ॒च॒ष्ट॒ । न । न । अनु॑ । गा॒नि॒ ।
अनु॑ । नु । ग॒मा॒नि॒ । त्वष्टुः॑ । गृ॒हे । अ॒पि॒ब॒त् ।
सोम॑म् । इन्द्रः॑ । श॒त॒ऽधन्य॑म् । च॒म्वोः॑ । सु॒तस्य॑ ॥ ३ ॥

मयिगर्भस्थेसति इन्द्रः मदीयांमातरंपरायतीं परेतांम्रियमाणामन्वचष्ट अन्वभवीत् ए-मपीदानींगर्भेस्थितोहं पुराणं पन्थानं ननानुगानि नानुगच्छानीतिन किंतु क्षिप्रमनुगमानि अ-नुगच्छान्येव वामदेवः स्वकीयमकृत्यकारित्वंपरिहृत्य इन्द्रस्याकृत्यकारित्वमुत्तरार्धेनप्रतिपा-दयति इन्द्रः चम्वोःसोमाभिषवफलकयोः सुतस्यसोमस्सुतवतोभिषुतवतस्त्वष्टुःसंबन्धिनिगृहे अ-नुपहूतःसन् शतधन्यं बहुधनेनक्रीतंसोममपिबत् बलात्कारेणसोमस्यपानंकृतवान् अयमर्थस्तै-त्तिरीयेस्वंष्टाहतपुत्रोवीन्द्रंसोममाहरदित्यनुवाकेमहताप्रबन्धेनप्रपञ्चितः ॥ ३ ॥

३. इन्द्र कहते हैं—"हमारी माता मर जायगी; तथापि हम पुरातन मार्ग का अनुधावन नहीं करेंगे, शीघ्र बहिर्गत होंगे।" (इन्द्र ने जो यथेच्छाचरण किया था, उसी को वामदेव कहते हैं) इन्द्र ने अभिषवकारी त्वष्टा के गृह में सोमाभिषव-फलक-द्वारा अभिषुत सोम का पान बलपूर्वक किया था, वह सोम बहुत धन-द्वारा क्रीत था।

किंसऋधक्कृणवद्यंसहस्रंमासोजभारशरदश्चपूर्वीः ।
नहीन्वस्यप्रतिमानमस्त्यन्तर्जातेषूतयेजनित्वाः ॥ ४ ॥

किम् । सः । ऋधक् । कृणवत् । यम् । सहस्रम् । मासः ।
जभार । शरदः । च । पूर्वीः । नहि । नु । अस्य । प्रतिऽमानम् ।
अस्ति । अन्तः । जातेषु । उत । ये । जनिऽत्वाः ॥ ४ ॥

अदितिर्यमिन्द्रं सहस्रं बहून्मासोमासान्पूर्वीर्बह्वीः शरदश्चसंवत्सरांश्चजभार बभार बिभर्ति रित्यर्थं गर्भेस्थितइन्द्रः बहुषुसंवत्सरेषुमदितिंक्लेशितवानित्यर्थः एवम्भूतःसइन्द्रः किंस्वित्किमपि सर्वमपीत्यर्थः ऋधक् विरुद्धंकर्मकृणवदकरोत् इन्द्रस्याक्षेपमसहमानादितिरिन्द्रमाताप्येनंप्रतिब्रूते—हेवामदेव जातेषूत्पन्नेषुअन्तर्मध्ये अस्येन्द्रस्यप्रतिमानमुपमानंनह्यस्ति नविद्यतेखलु नुइतिपूरणार्थः उतापिच येदेवादयः जनित्वाःजनयितव्याःजनयिष्यमाणाःतेषुमध्येअस्येन्द्रस्य-प्रतिमानंनास्ति ॥ ४ ॥

४. "अदिति ने इन्द्र को अनेक मासों और अनेक संवत्सरों तक धारण किया था। इन्द्र ने यह विरुद्ध कार्य क्यों किया था? अर्थात् गर्भ में बहुत दिनों तक रहकर इन्द्र ने अदिति को क्लेश दिया था।"

इन्द्र के ऊपर किये गये आक्षेप को सुनकर अदिति कहती हैं—"हे वामदेव, जो उत्पन्न हुए हैं और जो देवादि उत्पन्न होंगे, उनके साथ इन्द्र की तुलना नहीं हो सकती है।

अवद्यमिवमन्यमानागुहाकरिन्द्रंमातावीर्येणान्यृष्टम् ।
अथोदस्थात्स्वयमत्कंवसानआरोदसीअपृणाज्जायमानः॥५॥२५॥

अवद्यम्ऽइव । मन्यमाना । गुहा । अकः । इन्द्रम् । माता ।
वीर्येण । निऽऋष्टम् । अथ । उत् । अस्थात् । स्वयम् । अत्कम् ।
वसानः । आ । रोदसी इति । अपृणात् । जायमानः ॥ ५ ॥ २५ ॥

गुहा गुहायां गह्वररूपेसूतिकागृहेजातमिन्द्रम् अवद्यमिव गर्ह्यमिव मन्यमानामानती माताइन्द्रमनन्यावेदितिः वीर्येणसामर्थ्येन न्यृष्टं नितरांसामर्थ्ययुक्तं अकरोत् अथानन्तरंजायमानः उत्पद्यमानइन्द्रः स्वयमेवात्कंतेजोवसानःआच्छादकःसन् दधानइत्यर्थः उदस्थात् उत्कर्षेणा-तिष्ठत् किंच रोदसीद्यावापृथिव्यौआपृणात् समन्तात्पूरयामास ॥ ५ ॥

५. "गह्वररूप सूतिका-गृह में उत्पन्न इन्द्र को निन्दनीय मानकर माता ने उन्हें अतिशय सामर्थ्यदान किया था। अनन्तर, उत्पन्न होते ही इन्द्र अपने तेज को धारण करके उत्थित हुए थे और द्यावा-पृथिवी को परिपूर्ण किया था।

अथषष्ठी–

एताअर्षन्त्यललाभवन्तीर्ऋतावरीरिवसंक्रोशमानाः ।
एताविपृच्छकिमिदंभनन्तिकमापोअद्रिंपरिधिंरुजन्ति ॥ ६ ॥

एताः । अर्षन्ति । अललाऽभवन्तीः । ऋतवरीःऽइव ।
सम्ऽक्रोशमानाः । एताः । वि । पृच्छ । किम् । इदम् । भनन्ति ।
कम् । आपः । अद्रिम् । परिऽधिम् । रुजन्ति ॥ ६ ॥

अललाभवन्तीः अललेत्येवंरूपंशब्दंकुर्वत्यः ऋतावरीरिव उदकवत्यएवएतानद्यः सं-क्रोशमानाः इन्द्रमहत्त्वप्रतिपादकोऽयंतेनहर्षेणबहुविधंशब्दायमानाःसत्यः अर्षन्तिगच्छन्ति ए-तान्भूतानद्यः इदंकिंभनन्ति श्रोत्रग्राह्यंशब्दायमानं किंवदन्तीसमर्थं हेऋषेत्वमेताःनदीः विपृ-च्छ विशेषेणपृच्छास्व एवंसंपृच्छविचारितेसति एतच्छब्दायमानमिन्द्रमाहात्म्यस्यैववचनं भवतीत्यर्थः किंचापः उदकानि परिधिमावरकंकमद्रिं कंमेघं रुजन्ति भञ्जन्ति आपःकमपिमेघं नभञ्जन्ति किंतुइन्द्रोममपुत्रएवोदकावरकंमेघंभक्त्वाअपःप्रवर्तयतीत्यर्थः ॥ ६ ॥

६. "अ-ल-ला शब्द करती हुईं ये जलवती नदियाँ इन्द्र के महत्त्व को प्रकट करने के लिए हर्षपूर्वक बहुविध शब्द करती हुईं बहती हैं। हे ऋषि, तुम इन नदियों को पूछो कि ये क्या बोलती हैं? यह शब्द इन्द्र के माहात्म्य का सूचक है। मेरे पुत्र इन्द्र ने ही उदक के आवरक मेघ को विदीर्ण करके जल को प्रवर्तित किया था।

अथसप्तमी–

किमुष्विदस्मैनिविदोभनन्तेन्द्रस्यावद्यंदिधिषन्तआपः ।
ममैतान्पुत्रोमहताबधेनवृत्रंजघन्वाँअसृजद्विसिन्धून् ॥ ७ ॥

किम् । ऊँ इति । स्वित् । अस्मै । निऽविदः । भनन्त । इन्द्रस्य ।
अवद्यम् । दिधिषन्ते । आपः । मम । एतान् । पुत्रः । महता ।
वधेन । वृत्रम् । जघन्वान् । असृजत् । वि । सिन्धून् ॥ ७ ॥

यदाइन्द्रोवृत्रासुरंहतवान्तदाशाश्वतींब्रह्महत्यांप्राप्तवानितिवामदेवस्याभिप्रायःकुत्र्यादितिरा- ६–निविदः मरुत्वतीयशस्त्रेप्रयुज्यमानानिमरुत्तोत्रेभवद्गणइत्यादीनिइन्द्रस्तुतिप्रतिपादकानि-कानिचित्पदानिनिविच्छब्देनोच्यन्ते तानिनिविदः अस्मैइमंवृत्रवधनिमित्तंब्रह्महत्यारूपंपापंप्रा-प्नुवन्तमिन्द्रंकिमुस्विद्वदन्तभनन्ति किंवदन्तीतिचेत् तर्हि इन्द्रंपापरहितंमत्वा निविदःस्तुव-

नि कथमिन्द्रस्य पापरहितत्वम् उच्यते—आपः फेनरूपेणास्येन्द्रस्य पापं ब्रह्महत्यादिरूपं पापं बि-भ्रति धारयन्ति मम पुत्रः मदीयः पुत्र इन्द्रः महता प्रभूतेन वधेन वध इति वज्रनामैतत् वज्रेण वृ-त्रं सम्पन्नं हतवान् ततः एतान् सिन्धून् उदकानि व्यसृजत् विशेषेण स्रवत्त्वेन सृष्टवान् इन्द्रे-ण सहायभूताः तस्य पापं जगृहुरित्यर्थः ॥ ७ ॥

७. "वृत्रवध से ब्रह्महत्यारूप पाप को प्राप्त करनेवाले इन्द्र को निवित् क्या कहती हैं ? जल फेन रूप से इन्द्र के पाप को धारण करता है। मेरे पुत्र इन्द्र ने महान् वज्र से वृत्र का वध किया था। अनन्तर इन नदियों को विसृष्ट किया था।"

ममच्चन त्वा युवतिः परास ममच्चन त्वा कुषवा जगार ।
ममच्चिदापः शिशवे ममृड्युर्ममच्चिदिन्द्रः सहसोदतिष्ठत् ॥८॥

ममत् । चन । त्वा । युवतिः । पराऽआस । ममत् । चन । त्वा ।
कुषवा । जगार । ममत् । चित् । आपः । शिशवे । ममृड्युः ।
ममत् । चित् । इन्द्रः । सहसा । उत् । अतिष्ठत् ॥ ८ ॥

एकचरोपेण ऋषिरिन्द्रं स्तौति—हे इन्द्र ममच्चन माद्यन्त्येव प्रमत्तैवेत्यर्थः युवतिस्त्वदीया मा-ताऽदितिः त्वा त्वां परास चिक्षेप किंच कुषवानाम्नी राक्षसी सा ममच्चन प्रमत्तैव सती त्वां जगार गिरतिस्म हे इन्द्र ममच्चित् प्रमाद्यन्त्य एवापः शिशवे जाताय तुभ्यं ममृड्युः सुखयाञ्चक्रुः ममच्चित् माद्यन्नेवेन्द्रः सहसा स्वेन वीर्येण सह उदतिष्ठत् सूतिकागृहात् राक्षसीं बाधमानः सन् उत्कर्षेण गत-वान् ॥ ८ ॥

८. वामदेव कहते हैं—"तुम्हारी युवती माता अदिति ने प्रमत्त होकर तुम्हारा प्रसव किया था। कुषवा नाम की राक्षसी ने प्रमत्त होकर तुम्हें ग्रास बनाया था। हे इन्द्र, उत्पन्न होने पर तुम्हें जलसमूह ने प्रमत्त होकर सुखी किया था। इन्द्र प्रमत्त होकर अपने वीर्य के प्रभाव से सूतिका-गृह में राक्षसी को मारने के लिए उत्थित हुए थे।

ममच्चन ते मघवन्व्यंसो निविविध्वाँ अप हनू जघान ।
अधा निविद्ध उत्तरो बभूवाञ्छिरो दासस्य सं पिणग्वधेन ॥ ९ ॥

ममत् । चन । ते । मघऽवन् । विऽअंसः । निऽविविध्वान् । अप ।
हनू इति । जघान । अध । निऽविद्धः । उत्ऽतरः । बभूवान् ।
शिरः । दासस्य । सम् । पिणक् । वधेन ॥ ९ ॥

हे मघवन्नभिमत इन्द्र ममच्चन माद्यन्नेव व्यंसो नामासुरः निविविध्वान् प्रविध्यन् ते हनू हन्वौ अप जघान अपहतवान् अथ तथानन्तरं हे इन्द्र निविद्धः एवमेनेना-

दितस्यम् उत्तरः व्यंसाधिकबलः सन्नभूः अभवः अनन्तरंत्वम् दासस्यासुरस्य व्यंसस्य शिरोवज्रेण शिरोवधेनक्ले-शसंपिनक् पिष्टवानसि ॥ ९ ॥

९. "हे धनवान् इन्द्र, व्यंस नामक राक्षस ने प्रमत्त होकर तुम्हारे हनुद्वय (चिबुक के अधोभाग) को विद्ध करके अपहृत किया था। हे इन्द्र, इसके अनन्तर अधिक बलवान् होकर तुमने व्यंस राक्षस के सिर को वज्र-द्वारा पीस डाला था।

गृष्टिःससूवस्थविरंतवागामनाधृष्यंवृषभंतुम्रमिन्द्रम् ।
अरीळ्हंवत्संचरथायमातास्वयंगातुंतन्वइच्छमानम् ॥ १० ॥

गृष्टिः । ससूव । स्थविरम् । तवागाम् । अनाधृष्यम् । वृषभम् । तुम्रम् । इन्द्रम् । अरीळ्हम् । वत्सम् । चरथाय । माता । स्वयम् । गातुम् । तन्वे । इच्छमानम् ॥ १० ॥

गृष्टिः काचिद्गौः यसंयथासकृत् सुषुवे तथा माताइन्द्रजननी अदितिः चरथाय स्वेच्छयासंचरणाय इन्द्रंससूव सुषुवे कीदृशमिन्द्रं स्थविरं वयसाप्रवृद्धं तवागां प्रवृद्धबलम् अनाधृष्यं शत्रुभिरनभिभाव्यं वृषभंसेचनसमर्थं तुम्रंप्रेरकम् अरीळ्हं शत्रुभिरनभिभूतंस्वयंगातुम् अन्यनिरपेक्षगमनं तन्वे शरीराय इच्छमानम् इच्छन्तम् ॥ १० ॥

१०. "सकृत्प्रसूता (एक बार ब्यायी हुई) गौ जैसे वत्स प्रसव करती है, उसी तरह इन्द्र की माता अदिति अपनी इच्छा से सञ्चरण करने के लिए इन्द्र को प्रसव करती हैं। इन्द्र अवस्था में वृद्ध, प्रभूत बलशाली, अनभिभवनीय, अभीष्टवर्षी, प्रेरक, अनभिभूत, स्वयं गमनक्षम और शरीराभिलाषी हैं।

उतमातामहिषमन्ववेनदमीत्वाजहतिपुत्रदेवाः ।
अथाब्रवीद्वृत्रमिन्द्रोहनिष्यन्त्सखेविष्णोवितरंविक्रमस्व ॥ ११ ॥

उत । माता । महिषम् । अनु । अवेनत् । अमी इति । त्वा । जहति । पुत्र । देवाः । अथ । अब्रवीत् । वृत्रम् । इन्द्रः । हनिष्यन् । सखे । विष्णो इति । विऽतरम् । वि । क्रमस्व ॥ ११ ॥

उतापिच हेमहीयपुत्रेन्द्र अमी पश्चादमीदेवाः त्वा त्वांजहति त्यजन्ति इत्युक्त्वाइन्द्रस्यमाताअदितिः इन्द्रंमहिषंमहान्तं महिषइतिमहन्नामैतत् अन्ववेनत् अथानन्तरं हेविष्णो व्यापनशील हेसखे मित्रभूत हरे त्वं वृत्रंहनिष्यन् हन्तुमिच्छन् वितरं विक्रमस्व अतिशयेनक्रमीष्व इतिइन्द्रःविष्णुमब्रवीदुवाच ॥ ११ ॥

११. "इन्द्र की माता अदिति ने महान् इन्द्र से पूछा, हे मेरे पुत्र इन्द्र, अग्नि आदि देव तुम्हें त्याग रहे हैं।' इन्द्र ने विष्णु से कहा, 'हे सखा विष्णु, तुम यदि वृत्र को मारने की इच्छा करते हो, तो अत्यन्त पराक्रमशाली होओ।'

कस्तेमातरंविधवामचक्रच्छयुंकस्त्वामजिघांसच्चरन्तम् ।
कस्तेदेवोअधिमार्डीकआसीद्यत्प्राक्षिणाःपितरंपादगृह्य ॥१२॥

कः । ते । मातरम् । विधवाम् । अचक्रत् । शयुम् । कः । त्वाम् । अजिघांसत् । चरन्तम् । कः । ते । देवः अधि । मार्डीके । आसीत् । यत् । प्र । अक्षिणाः । पितरम् । पादगृह्य ॥ १२ ॥

हेइन्द्र यत्यस्मात्कारणात् पितुःसकाशाज्जनिष्यमाणाद्भीतस्त्वं त्वदीयंपितरंपादगृह्य पादेषुगृहीत्वा प्राक्षिणाः प्रकर्षेणावधीः तस्मात्कारणात्तेत्वत्तोन्यःकोदेवः मातरंस्वकीयजननीं विधवांपितृवधेनपतिरहितांअचक्रत् अकरोत् कःत्वत्तोन्यःशयुंशयानंचरन्तंगामतंवात्वाम् अजिघांसत् हन्तुमैच्छत् तेत्वत्तोन्यःकोदेवःमार्डीके प्रजानांसुखकरणे अधि अधिकआसीत् न कश्चनेत्यर्थः नमस्सामेवैदेवेभ्यइत्यनुवाकेयज्ञोदक्षिणामभ्यध्यायदित्यादिनाब्राह्मणेनतैत्तिरीयकैर्बहुधा प्रपंचितः ॥ १२ ॥

१२. 'हे इन्द्र, तुम्हारे अतिरिक्त किस देव ने माता को विधवा किया था! तुम जिस समय सो रहे थे अथवा जाग रहे थे; उस समय किसने तुम्हें मारना चाहा था? कौन देवता सुख देने में तुम्हारी अपेक्षा अधिक है? किस कारण तुमने पिता के दोनों चरणों को पकड़कर उनका वध किया था?

अवर्त्याशुनआन्त्राणिपेचेनदेवेषुविविदेमर्डितारम् ।
अपश्यंजायाममहीयमानामधामेश्येनोमध्वाजभार ।१३।२६।

अवर्त्या । शुनः । आन्त्राणि । पेचे । न । देवेषु । विविदे । मर्डितारम् । अपश्यम् । जायाम् । अमहीयमानाम् । अध । मे । श्येनः । मधु । आ । जभार ॥ १३ ॥ २६ ॥

अनयावामदेवः स्वकीयंदारिद्र्यंसूचयन् इन्द्रस्योत्कर्षमाह वामदेवोहम् अवर्त्या जीवनोपायराहित्येन शुनः श्वानसम्बन्धीनि आन्त्राणि पुरीतन्ति पेचे अपचं देवेषुद्योतमानेषु

देवेषुमध्ये इन्द्रादन्यंमर्डितारंसुखयितारंनविविदे नलेभे किंच जायांस्वकीयांभार्याम् अम-हीयमानाम् असत्करणीयामपश्यमद्राक्षम् अथअथानन्तरंश्येनःश्येनवच्छीघ्रगामी इन्द्रः मे मह्यं मधु मधुरोपेतमुदकमानमारमाजहार ॥ १३ ॥

१३- "हमने जीवनोपाय के अभाव में कुत्ते की अँतड़ी को पकाकर खाया था। हमने देवों के मध्य में इन्द्र के अतिरिक्त अन्य देव को सुखदायक नहीं पाया। हमने अपनी भार्या को अमहीयमान (असम्मानित) होते देखा। इसके अनन्तर इन्द्र हमारे लिए मधुर जल लाये।"

॥ इतितृतीयस्यपञ्चमेषड्विंशोवर्गः ॥ २६ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् ॥ पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेणसायणाचा-र्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येतृतीयाष्टकेपञ्चमोऽध्यायः ॥ ५ ॥

---

## ॥ श्रीगणेशायनमः ॥

यस्यनिःश्वसितंवेदायोवेदेभ्योऽखिलंजगत् । निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥ १ ॥
व्याख्यातःपञ्चमोऽध्यायस्तृतीयाष्टकस्यादरात् । श्रीमत्सायणाख्येनषष्ठोऽध्यायोऽथवर्ण्यते ॥ २ ॥
चतुर्थेमण्डलेद्वितीयेऽनुवाकेऽष्टसूक्तानिव्याख्यातानि एवात्वामिन्द्रेत्येकादशर्चंनवमंसूक्तम् तस्यम-ण्डलादिपरिभाषयावामदेवऋषिः अनादेशपरिभाषयात्रिष्टुप्छन्दः इन्द्रोदेवता तथाचानुक्रान्तम्-एवैकादशेति । अग्निष्टोमेमाध्यन्दिनसवनेमैत्रावरुणशस्त्रइदंसूक्तम् । सूत्यतेहि—एवात्वामिन्द्रो-ग्रामुपुणस्त्वमनाउपाकइतियाज्येति । पृष्ठ्याभिप्लवषडहयोःप्रथमेऽहनिमैत्रावरुणशस्त्रे अहीनसूक्तम् तत्स्थानेत्रीणिसंपातसूक्तानि तत्रेदंप्रथमंसूक्तम् सूत्रितञ्च—एवात्वामिन्द्रयजइन्द्रहतेति ।

अथप्रथमा—

ॐम् एवात्वामिन्द्रवज्रिन्नत्रविश्वेदेवासःसुहवासऊमाः ।
महामुभेरोदसीवृद्धमृष्वंनिरेकमिद्वृणतेवृत्रहत्ये ॥ १ ॥

एव । त्वाम् । इन्द्र । वज्रिन् । अत्र । विश्वे । देवासः । सुऽहवासः ।
ऊमाः । महाम् । उभे इति । रोदसी इति । वृद्धम् । ऋष्वम् ।
निः । एकम् । इत् । वृणते । वृत्रऽहत्ये ॥ १ ॥

अत्रास्मिन्यज्ञे वज्रिन् हेवज्रवन्निन्द्र सुहवासः सुहवाःशोभनाह्वानाः ऊमाः रक्षकाः विश्वेदेवासः सर्वेदेवाः उभेरोदसीद्यावापृथिव्यौच एव एवंप्रकारेणस्तूयमानंमहांमहान्तंम-हान्तंवृद्धंगुणैःप्रवृद्धमृष्वंदर्शनीयंत्वामेकमिद् एकमेववृत्रहत्येवृत्रहननार्थंनिर्वृणते निःशेषेणसं-भजन्ते ॥ १ ॥

१- हे वज्रवान् इन्द्र, इस यज्ञ में शोभन आह्वान से युक्त तथा रक्षक निखिल देवगण और दोनों द्यावा-पृथिवी वृत्रवध के लिए एक-मात्र तुम्हारा ही सम्भजन करती हैं। तुम स्तूयमान, महान् गुणोत्कर्ष से प्रवृद्ध और दर्शनीय हो।

अथद्वितीया—

अवासृजन्तजिव्रयोनदेवाभुवःसम्राळिन्द्रसत्ययोनिः ।
अहन्नहिंपरिशयानमर्णःप्रवर्तनीररदोविश्वधेनाः ॥ २ ॥

अवं । असृजन्त । जिव्रयः । न । देवाः । भुवः । सम्ऽराट् ।
इन्द्र । सत्यऽयोनिः । अहन् । अहिम् । परिऽशयानम् ।
अर्णः । प्र । वर्तनीः । अरदः । विश्वऽधेनाः ॥ २ ॥

हेइन्द्र देवा त्वां जिव्रयोन जीर्णाःप्रवृद्धाःपितरःसूनःपुत्रानिव अवासृजन्त असुरवधार्थंप्रैरयन् ततः हेइन्द्र सत्ययोनिः सत्यनिवासस्त्वं सम्राट् सर्वेषांलोकानाम् ईश्वरोऽभुवः अभवः अर्णः उदकंलक्ष्यीकृत्य परिशयानम् परितःसमन्तात्शयनंकुर्वन्तम् अहिं वृत्रासुरम् अहन् अवधीः विश्वधेनाः विश्वस्यप्रीणयित्रीः वर्तनीःसर्वत्रप्रवर्तिकाःनदीः प्रारदः प्रकर्षेणविलेखनंकृतवानसि इन्द्रः वृत्रंहत्वातेनावृतान्युदकानिप्रवाहरूपेणप्रवर्तयतीत्यर्थः ॥ १ ॥

२. हे इन्द्र, वृद्ध पिता जैसे युवा पुत्र को प्रेरित करते हैं, उसी तरह देवगण तुम्हें असुर-वध के लिए प्रेरित करते हैं। हे इन्द्र, तुम सत्य विकास-स्वरूप हो। तब से तुम समस्त लोकों के अधीश्वर हुए हो। जल को लक्ष्य करके परिशयन करनेवाले वृत्रासुर का तुमने वध किया था। सबको प्रसन्न करनेवाली नदियों का तुमने खनन किया था।

अतृप्णुवन्तंवियतमबुध्यमबुध्यमानंसुषुपाणमिन्द्र ।
सप्तप्रतिप्रवतआशयानमहिंवज्रेणविरिणाअपर्वन् ॥ ३ ॥

अतृप्णुवन्तम् । विऽयतम् । अबुध्यम् । अबुध्यमानम् ।
सुसुपानम् । इन्द्र । सप्त । प्रति । प्रऽवतः । आऽशयानम् ।
अहिम् । वज्रेण । वि । रिणाः । अपर्वन् ॥ ३ ॥

हेइन्द्र त्वम् अतृप्णुवन्तम् भोगेषु अतृप्यन्तं वियतं शिथिलाङ्गम् अबुध्यम् दुर्विज्ञानम् अबुध्यमानं सुषुपाणम् सुप्तम् सप्तसर्पणस्वभावाःप्रवतः अपः प्रत्याशयानमावृत्यातिष्ठन्तम् अहिंवृत्रम् अपर्वन् अपर्वणि पौर्णमास्यां वज्रेणविरिणाः व्यरिणाःविशेषेणहतवानसि पौर्णमास्यांवृत्रवधः त्वेष्टाहतपुत्रइत्यनुवाकेऽग्निवाएतंपूर्णमासआमावास्यायांप्याययन्तीतितैत्तिरीयैरप्युक्तः ॥ २ ॥

३. हे इन्द्र, तुमने भोग में अतृप्त, शिथिलाङ्ग, दुर्विज्ञान, अज्ञान-भावापन्न, सुप्त और सर्पणशील जल को आच्छादित करके सोनेवाले वृत्र को पौर्णमासी में वज्र-द्वारा मारा था।

अथचतुर्थी—

अक्षोदयच्छवसाक्षामबुध्नंवार्णवातस्तविषीभिरिन्द्रः ।
दृळ्हान्यौभ्नादुशमानओजोवाभिनत्ककुभःपर्वतानाम् ॥ ४ ॥

१ तै० सं० २. ४. ११ ।

अक्षोदयत् । शवसा । क्षाम । बुध्नम् । वाः । न । वातः ।
तविषीभिः । इन्द्रः । दृळ्हानि । औभ्नात् । उशमानः ।
ओजः । अव । अभिनत् । ककुभः । पर्वतानाम् ॥ ४ ॥

इन्द्रः परमैश्वर्ययुक्तः शवसा बलेन बुध्नमन्तरिक्षं क्षाम क्षीणोदकम् अक्षोदयत् संपिपेष तत्र दृष्टान्तः—वातो वायुः तविषीभिः बलैर्वार्ण उदकमिव तद्वत् किञ्च ओजो बलम् उशमानः कामयमानः इन्द्रः दृळ्हानि दृढानि स्थिराण्यपि अभ्राणि औभ्नात् अवाक्षीत् तथा पर्वतानां गिरीणां ककुभः पक्षान् अवाभिनत् अवकृत्तमभैत्सीत् ॥ ४ ॥

४. वायु जैसे बल-द्वारा जल को क्षोभित करती है, वैसी तरह परमैश्वर्यवान् इन्द्र बल-द्वारा अन्तरिक्ष को क्षीणजल करके पीस डालते हैं। बलाभिलाषी इन्द्र दृढ़ मेघ को भग्न करते हैं और पर्वतों के पक्षों को छिन्न करते हैं।

अभिप्रदद्रुर्जनयोनगर्भंरथाइवप्रययुःसाकमद्रयः।
अतर्पयोविसृतउब्जऊर्मीन्त्वंवृताँअरिणाइन्द्रसिन्धून् ॥५॥१॥

अभि । प्र । दद्रुः । जनयः । न । गर्भम् । रथाःइव । प्र । ययुः ।
साकम् । अद्रयः । अतर्पयः । विऽसृतः । उब्जः । ऊर्मीन् ।
त्वम् । वृतान् । अरिणाः । इन्द्र । सिन्धून् ॥ ५ ॥ १ ॥

हे इन्द्र त्वाम् अद्रयो मरुतः जनयो जनन्यः गर्भं पुत्रमिव अभिप्रदद्रुः अभिप्रजग्मुः किञ्च रथा इव रंहणशीला रथा यथा वृत्रवधार्थं त्वया साकं प्रययुः प्रकर्षेणायासिषुः हे इन्द्र त्वं विसृतः विसरणशीला नदीः अतर्पयः अद्भिरपूरयः तथा ऊर्मीन् मेघान् उब्जः अवधीः तथा त्वं वृतान् वृत्रेणावृतान् सिन्धूनपः अरिणाः प्रैरयः ॥ ५ ॥

५. हे इन्द्र, मातायें जिस तरह पुत्र के निकट गमन करती हैं, उसी तरह मरुतों ने तुम्हारे निकट गमन किया था; जैसे वृत्र को मारने के लिए तुम्हारे साथ वेगवान् रथ गया था। तुमने विसरणशील नदियों को वारिपूर्ण किया था; मेघ को भग्न किया था और वृत्र-द्वारा आवृत जल को प्रेरित किया था।

त्वंमहीमवनिंविश्वधेनांतुर्वीतयेवय्यायक्षरन्तीम्।
अरमयोनमसैजदर्णःसुतरणाँअकृणोरिन्द्रसिन्धून् ॥ ६ ॥

त्वम् । महीम् । अवनिम् । विश्वऽधेनाम् । तुर्वीतये । वय्याय ।
क्षरन्तीम् । अरमयः । नमसा । एजत् । अर्णः । सुऽतरणान् ।
अकृणोः । इन्द्र । सिन्धून् ॥ ६ ॥

हेइन्द्र त्वं महीं महतीं विश्वधेनां विश्वस्यप्रीणयित्रीं तुर्वीतये तुर्वीतिनाम्नेराज्ञे वय्याय वय्यनाम्नेच क्षरन्तीमभीष्टान्कामान्दुहन्तीम् अवनिं भूमिं नमसा अन्नेन एन्नत् ऐरयः अचलाम् अर्णः उदकमप्युदकेनान्नमयःरमयसि इन्द्रःपृथिवीमन्नोदकसमृद्धांकरोतीत्यर्थः किंच हेइन्द्र त्वंसिन्धूनमस्रानित्सुतरणानुदकतीर्णान्निमकृण्वोऽकार्षीः ॥ ६ ॥

६. हे इन्द्र, तुमने महती तथा सबको प्रीति देनेवाली और तुर्वीति तथा वय्य राजा के लिए अभीष्ट फल देनेवाली भूमि को अन्न से अचल किया था तथा जल से रमणीय किया था अर्थात् पृथ्वी को तुमने अन्न-जल से समृद्ध किया था। हे इन्द्र, तुमने जल को सुतरणीय (सुगमता से तैरने के योग्य) बना दिया था।

प्राग्रुवोनभन्वो३नवक्वाध्वस्राअपिन्वद्युवतीर्ऋतज्ञाः ।
धन्वान्यज्राँअपृणक्तृषाणाँअधोगिन्द्रःस्तर्यो३दंसुपत्नीः ॥ ७ ॥

प्र । अग्रुवः । नभन्वः । न । वक्वाः । ध्वस्राः । अपिन्वत् ।
युवतीः । ऋतऽज्ञाः । धन्वानि । अज्रान् । अपृणक् ।
तृषाणान् । अधोक् । इन्द्रः । स्तर्यः । दमूऽसुपत्नीः ॥ ७ ॥

इन्द्रः नभन्वः शत्रूणांहिंसिकाः वक्वाः सेनाइव ध्वस्राः कूलानांध्वंसिकाः युवतीरम्भिर्मिश्रिताः ऋतज्ञाः ऋतस्यान्नस्यजनयित्रीः अग्रुवः अग्रुवइतिनदीनामैतत् अग्रगामिनीर्नदीः प्रापिन्वत् प्रकर्षेणपूरयत् तथा धन्वानि निर्जलानुदकान्देशान्वृष्ट्याअपृणत् अपूरयत् तथा अज्रान् मार्गस्यगन्तॄन्तृषाणान् पिपासयायुक्तान् पुरुषान् अपृणक् अपूरयत् किंच इन्द्रः दंसुपत्नीः दमनपराअसुराः सद्धपतयोयासांताः स्तर्यः स्तरीः निवृत्तप्रसवागाः अधोक् अदुग्ध इन्द्रः राक्षसकृतनिरोधदुःखाभिरुद्धप्रसवामपिगाविमुच्य समयवामकारेत्यर्थः ॥ ७ ॥

७. इन्द्र ने शत्रुहिंसक सेना की तरह तटध्वंसिनी, जलयुक्ता तथा अन्नजनयित्री नदियों को भली-भाँति पूर्ण किया है। इन्द्र ने जलशून्य देशों को वृष्टि-द्वारा पूर्ण किया है तथा पिपासित पथिकों को पूर्ण किया है। इन्द्र ने दस्युओं की अधिकृता, प्रसव-निवृत्ता गौओं को दुहा था।

पूर्वीरुषसःशरदश्चगूर्तावृत्रंजघन्वाँअसृजद्विसिन्धून् ।
परिष्ठिताअतृणद्बद्बधानाःसीराइन्द्रःस्रवितवेपृथिव्या ॥ ८ ॥

पूर्वीः । उषसः । शरदः । च । गूर्ताः । वृत्रम् । जघन्वान् ।
असृजत् । वि । सिन्धून् । परिऽस्थिताः । अतृणत् ।
बद्बधानाः । सीराः । इन्द्रः । स्रवितवे । पृथिव्या ॥ ८ ॥

वृत्रं वृत्रासुरमसुरंमवघ्नन् हतवानिन्द्रः गूर्ताः तमिस्रयागीर्णाः पूर्वीर्बह्वीः उषसः शरदश्च संवत्सरांश्च व्यसृजत् विशेषेणासृजत् तथा सिन्धून् वृत्रेणावृतान्युदकानि व्यसृजत् किंच परिष्ठिताः मेघेषुपरितःस्थिताः बद्बधानाः वृत्रेणपरितोबध्यमानाः क्षीरा नदीः क्षीराइतिनदीनामैतत् पृथिव्याउपरिपीलरूपेणमार्गेणस्रवितवे स्रवितुंगमनार्थमतृणत् अविध्यत् ॥ ८ ॥

८. वृत्रासुर को मारकर इन्द्र ने तमिस्रा-द्वारा आच्छादित अनेक उषाओं को तथा संवत्सरों को विमुक्त किया था। एवं वृत्र-द्वारा निरुद्ध जल को भी विमुक्त किया था। इन्द्र ने मेघ के चारों तरफ़ वर्तमान तथा वृत्र-द्वारा बध्यमान नदियों को पृथ्वी के ऊपर बहने के लिए विमुक्त किया था।

वम्रीभिःपुत्रमग्रुवोअदानंनिवेशनाद्धरिवआजभर्थ ।
व्य१न्धोअख्यदहिमाददानोनिर्भूदुखच्छित्समरन्तपर्व ॥ ९ ॥

वम्रीभिः । पुत्रम् । अग्रुवः । अदानम् । निऽवेशनात् । हरिऽवः । आ । जभर्थ । वि । अन्धः । अख्यत् । अहिम् । आऽददानः । निः । भूत् । उखश्छित् । सम् । अरन्त । पर्व ॥ ९ ॥

हेहरिवः हरिसंज्ञाश्वोपेतेन्द्र त्वं वम्रीभिः उपजिह्विकाभिरदानमद्यमानम् अग्रुवः अग्रूनामकाश्चित् तस्याः पुत्रं निवेशनाद्वल्मीकाख्यात्स्थानादाजभर्थ आहृतवानसि आददानः इन्द्रेणाह्रियमाणः अग्रुवः पुत्रः अन्धः पूर्वमन्धःसन् अहिंसर्पंव्यख्यत् विशेषेणापश्यत् ततोनिर्भूत् वल्मीकान्निर्गतोऽभवत् उखच्छित् वल्मीकाख्यायाउखायाश्छेदकानिसर्वं पर्वाणि अस्यसर्वाणि अङ्गानां शिथिलानिपर्वाणिसमरन्त समगच्छन्त उपजिह्विकाभिः शिथिलीकृतानि अग्रुवः पुत्रस्य पर्वाणिइन्द्रेणसमधीयन्तेत्यर्थः ॥ ९ ॥

९. हे हरि नामक घोड़ावाले इन्द्र, तुमने उपजिह्विका-(कीटविशेष) द्वारा भक्ष्यमान अग्रू-पुत्र को वल्मीक (दीमक) के स्थान से बाहर किया था। बाहर किये जाते समय वह अग्रू-पुत्र यद्यपि अन्धा था, तथापि उसने सर्प को अच्छी तरह से देखा था। उसके उपजिह्विका-द्वारा छिन्न अङ्ग इन्द्र-द्वारा संयुक्त हुए थे।

प्रतेपूर्वाणिकरणानिविप्राविद्वाँआहविदुषेकरांसि ।
यथायथावृष्ण्यानिस्वगूर्तापांसिराजन्नर्याविवेषीः ॥ १० ॥

प्र । ते । पूर्वाणि । करणानि । विप्र । आऽविद्वान् । आह । विदुषे । करांसि । यथाऽयथा । वृष्ण्यानि । स्वऽगूर्ता । अपांसि । राजन् । नर्या । अविवेषीः ॥ १० ॥

हेराजमानेन्द्र वृष्ण्यानि वर्षणयोग्यानि स्वगूर्ता स्वगूर्तानि स्वयमुद्गूर्णानि नर्या नर्याणि मनुष्यहितानि अपांसि त्वत्संबन्धीनिकर्माणि यथायथाअविवेषीः व्याप्नोः अकार्षीरिति यावत् तथातथा हेविप्र प्राज्ञेन्द्र विदुषेविदुषःसर्वमामतस्तेत्वत्संबन्धीनिपूर्व्याणिपुरातनानिकरणानिकर्माणि आविद्वान् आसमन्ताज्जानन् वामदेवः करांसि त्वदीयानिकर्माणि प्रब्रवीणाह ब्रवीति ॥ १० ॥

१०. हे राजमान प्राज्ञ इन्द्र, तुम सर्ववेत्ता हो। वर्षणयोग्य और स्वयं सम्पन्न मनुष्यों के वृष्टि-सम्बन्धी कर्मों को तुमने जिस प्रकार से किया था, वामदेव उन सकल पुरातन कर्मों का उल्लेख करते हैं।

नूष्टुतइन्द्रनूगृणानइषंजरित्रेनद्यो३नपीपेः।
अकारितेहरिवोब्रह्मनव्यंधियास्यामरथ्यःसदासाः ॥११॥२॥

नु। स्तुतः। इन्द्र। नु। गृणानः। इषम्। जरित्रे। नद्यः।
न। पीपेरितिपीपेः। अकारि। ते। हरिऽवः। ब्रह्म। नव्यम्।
धिया। स्याम। रथ्यः। सदाऽसाः ॥ ११ ॥ २ ॥

हेइन्द्र नु क्षिप्रं स्तुतः पूर्वैर्ऋषिभिःसंस्तुतः नु क्षिप्रं गृणानः अस्माभिःस्तूयमानस्त्वम् इषमन्नं जरित्रे स्तोत्रे मह्यं नद्योन अद्भिर्नदीरिवापीपेः प्यायय प्रवृद्धंकुरु हेहरिवः हरिसंज्ञकाश्वोपेतेन्द्र तेतुभ्यंनव्यं नवतरंब्रह्मस्तोत्रम् अकारि अस्माभिःक्रियते रथ्योरथवन्तोवयं धियाप्रज्ञारूपयास्तुत्यासदासाःसर्वदाभजमानाःत्वदर्थंहवीरूपस्यान्नस्यदातारोवास्याम भूयास्म ॥ ११ ॥

११. हे इन्द्र, तुम पूर्ववर्ती ऋषियों-द्वारा स्तुत होकर तथा हम लोगों के द्वारा स्तूयमान होकर जैसे जल नदी को पूर्ण करता है, उसी तरह स्तोताओं के अन्न को प्रवृद्ध करते हो। हे हरिविशिष्ट इन्द्र, हम तुम्हारे उद्देश्य से अभिनव स्तोत्र रचते हैं, जिससे हम लोग रथवान् होकर स्तुति-द्वारा सदा तुम्हारी सेवा करते रहें।

आनइन्द्रेत्येकादशर्चंद्वादशंसूक्तंवामदेवस्यार्षंत्रैष्टुभमैन्द्रम् आनइत्यनुक्रमणिका। पृष्ठ्याभिप्लवषडहयोःप्रथमेहनिनिष्केवल्येएतन्निविद्धानीयम् सूत्रितञ्च—आनइन्द्रइतिनिष्केवल्यस्यामिति। महाव्रतेप्येतत्संपातसूक्तम् तथैवपञ्चमारण्यकेसूत्रितम्—आनइन्द्रोदूरादानआसादितिसंपात इति।

आनइन्द्रोदूरादानआसादभिष्टिकृदवसेयासदुग्रः।
ओजिष्ठेभिर्नृपतिर्वज्रबाहुःसंगेसमत्सुतुर्वणिःपृतन्यून् ॥ १ ॥

आ । नः । इन्द्रः । दूरात् । आ । नः । आसात् । अभिष्टिऽकृत् ।
अवसे । यासत् । उग्रः । ओजिष्ठेभिः । नृऽपतिः । वज्रऽबाहुः ।
सम्ऽसङ्गे । समत्ऽसु । तुर्वणिः । पृतन्यून् ॥ १ ॥

अभिष्टिकृद्यजमानसंबन्धिनाम् अभीष्टीनां कर्ता उग्रस्तेजस्वीन्द्रः नोस्माकमवसेरक्ष- णाय दूरात् आयासदायातु आगच्छतु अपिच आसादासन्नादन्तिकाच्चनोस्माकमवसेरक्षणा- यआयासदायातु कीदृशः समत्सु संग्रामेषु सङ्गेशत्रुभिःसंयोगेसति पृतन्यून् शत्रून् तुर्वणिः हिंसन् वज्रबाहुर्वज्रहस्तः नृपतिः वृष्टिद्वारानृणांमनुष्याणांपालकः ओजिष्ठेभिः अतिशयेनते- जस्विभिर्मरुद्भिर्युक्तइतिशेषः ॥ १ ॥

१. अभीष्टप्रद और तेजस्वी इन्द्र, हम लोगों को आश्रय प्रदान करने के लिए दूर से आयें; हम लोगों को आश्रय प्रदान करने के लिए निकट से आगमन करें। वे संग्राम में संगत होने पर शत्रुओं का वध करते हैं। वे वज्रबाहु, मनुष्यों के पालक और तेजस्वी मरुतों से युक्त हैं।

आनइन्द्रोहरिभिर्यात्वच्छार्वाचीनोवसेराधसेच ।
तिष्ठातिवज्रीमघवाविरप्शीमंयज्ञमनुनोवाजसातौ ॥ २ ॥

आ । नः । इन्द्रः । हरिऽभिः । यातु । अच्छ । अर्वाचीनः ।
अवसे । राधसे । च । तिष्ठाति । वज्री । मघऽवा । विऽरप्शी ।
इमम् । यज्ञम् । अनु । नः । वाजऽसातौ ॥ २ ॥

अर्वाचीन अस्मदभिमुखइन्द्रःअवसेस्मदीयायरक्षणायराधसेच धनायच नोच्छ अ- स्मानभिलक्ष्यीकृत्यहरिभिरश्वैःसहआयातुआगच्छतु किंच वज्री वज्रवान् मघवाधनवान् विर- प्शी महान् विरप्शीतिमहन्नामसुपाठात् अस्मदीयस्यकर्मणोद्वेष्टृभिरसुरादिभिःसहनोस्माकम् वाजसातौ युद्धेप्राप्तेसतिइममस्मदीयंयज्ञम् अनूद्दिश्य तिष्ठाति तिष्ठतु ॥ २ ॥

२. हम लोगों के अभिमुखवर्ती इन्द्र आश्रय और धन प्रदान करने के लिए हम लोगों के निकट अश्वों के साथ आयें। वज्रवान्, धन- शाली और महान् इन्द्र युद्ध में उपस्थित होने पर हमारे इस यज्ञ में उपस्थित हों।

इमंयज्ञंत्वमस्माकमिन्द्रपुरोदधत्सनिष्यसिक्रतुंनः ।
श्वघ्नीववज्रिन्त्सनयेधनानांत्वयावयमर्यआजिंजयेम ॥ ३ ॥

इमम् । यज्ञम् । त्वम् । अस्माकम् । इन्द्र । पुरः । दधत् ।
सनिष्यसि । क्रतुम् । नः । श्वघ्नीऽइव । वज्रिन् । सनये ।
धनानाम् । त्वया । वयम् । अर्यः । आजिम् । जयेम ॥ ३ ॥

हेइन्द्र त्वंनोस्मान् पुरोदधत् पुरस्तात्कुर्वन् अस्माकमहं क्रियमाणमिमंयज्ञम् सनिष्यसि संभजिष्यसि अपिच श्वघ्नीव मृगयुः मृगानिव हेवज्रिन्वज्रवन्निन्द्र त्वया अर्यःअरयःस्तोतारो वयंधनानांपश्वादिधनानांसनयेलाभाय आजिंशत्रुसंबन्धिनंसंग्रामंजयेम जीयास्म ॥ ३ ॥

३. हे इन्द्र, तुम हम लोगों को पुरःसर करके हमारे इस क्रियमाण यज्ञ का सम्भजन करो। हे वज्रधर, हम तुम्हारे स्तोता हैं। व्याध जिस तरह से मृगों का शिकार करता है, उसी तरह से हम तुम्हारे द्वारा धन लाभ के लिए युद्ध में जय लाभ करें।

अग्निष्टोमेमाध्यन्दिनसवनेमैत्रावरुणस्योशन्नुषुणइतिशस्त्रयाज्या, सूत्रितंच—उशन्नुषुणः सुमनाउपाकइतियाज्येति।

उशन्नुषुर्णःसुमनाउपाकेसोमस्यनुसुषुतस्यस्वधावः ।
पाइन्द्रप्रतिभृतस्यमध्वःसमन्धसाममदःपृष्ठ्येन ॥ ४ ॥

उशन् । ऊँ इति । सु । नः । सुऽमनाः । उपाके । सोमस्य । नु ।
सुऽसुतस्य । स्वधाऽवः । पाः । इन्द्र । प्रतिऽभृतस्य ।
मध्वः । सम् । अन्धसा । ममदः । पृष्ठ्येन ॥ ४ ॥

हेस्वधावः अन्नवन्निन्द्र सुमनाःशोभनमनस्कः त्वम् उपाके समीपे नोस्मानुशन्नु भत्यन्तंकामयमानःसन् सुषुतस्य सुष्ठुअभिषुतंप्रतिभृतस्य संभृतं मध्वः मादकंसोमस्यसोमंनुक्षिप्रमेवपाः पिब पृष्ठ्येन पृष्ठ्यशब्देनमाध्यन्दिनसवनेउद्गातृभिरुद्गीयमानंस्तोत्रमुच्यते तत्संबन्धिना अन्धसा पीतेनसोमेन संममदः संहृष्टोभव ॥ ४ ॥

४. हे अन्नवान् इन्द्र, तुम प्रसन्न मन से हम लोगों के समीप आगमन करो और हमारी कामना करके उत्तम रूप से अभिषुत, सम्भृत और मादक सोमरस का पान करो एवम् माध्यन्दिन सवन में उद्गीयमान स्तोत्र के साथ सोम पान करके हृष्ट होओ।

वियोररप्शऋषिभिर्नवेभिर्वृक्षोनपक्वःसृण्योनजेता ।
मर्योनयोषामभिमन्यमानोच्छाविवक्मिपुरुहूतमिन्द्रम् ॥५॥२॥

वि । यः । ररप्शे । ऋषिऽभिः । नवेभिः । वृक्षः । न । पक्वः ।
सृण्यः । न । जेता । मर्यः । न । योषाम् । अभि । मन्यमानः ।
अच्छ । विवक्मि । पुरुऽहूतम् । इन्द्रम् ॥ ५ ॥ २ ॥

पक्वः पक्वफलः वृक्षोन वृक्षइव अत्रसृणिशब्दोऽङ्कुशवाची तेनायुधमात्रंलक्ष्यते सृ-ण्यः आयुधकुशलः जेतान शत्रूणांजेतावीरपुरुषइव यः नवेभिर्नवैर्नूतनैर्ऋषिभिःविरप्शे विविधंस्तूयते स्तोतारंपुरुहूतंबहुभिराहूतं तमिन्द्रमच्छाभिलक्ष्यीकृत्य विवक्मि विशेषेणवि-च्य स्तौमि तत्रदृष्टान्तः—अभिमन्यमानःमर्यःयेयंयोषिदित्यभिजानन्मर्योमर्त्यःयोषांन स्त्रीमिव महत् ॥ ५ ॥

५. जो पके फलवाले वृक्ष की तरह एवम् आयुधकुशल विजयी व्यक्ति की तरह हैं और जो नूतन ऋषियों-द्वारा विविध प्रकार से स्तूयमान होते हैं, उन पुरुहूत इन्द्र के उद्देश से हम स्तुति करते हैं। जैसे स्त्रैण मनुष्य स्त्री की प्रशंसा करता है।

गि॒रिर्न यः स्वत॑वाँ ऋ॒ष्व इन्द्रः॑ स॒नादे॒व सह॑से जा॒त उ॒ग्रः ।
आद॑र्ता॒ वज्रं॒ स्थवि॑रं॒ न भी॒म उ॒द्नेव॒ कोशं॒ वसु॑ना॒ न्यृ॑ष्टम् ॥ ६ ॥

गि॒रिः । न । यः । स्वऽत॑वान् । ऋ॒ष्वः । इन्द्रः॑ । स॒नात् । ए॒व । सह॑से । जा॒तः । उ॒ग्रः । आऽद॑र्ता । वज्र॑म् । स्थवि॑रम् । न । भी॒मः । उ॒द्नाऽइ॑व । कोश॑म् । वसु॑ना । निऽऋ॑ष्टम् ॥ ६ ॥

गिरिर्न पर्वतइव स्वतवान्स्वयंप्रवृद्धः ऋष्वोमहान् ऋष्वइतिमहन्नाम महत् नामः ऋष्व इतितन्नामसुपाठात् उग्रः ओजस्वी यइन्द्रः सहसेशत्रोरभिभवाय सनादेव चिरादेव जातःउत्पन्नः भीमः शत्रूणांभयङ्करः सइन्द्रः उद्नेवकोशम् उदकेनजलपात्रमिव वसुना तेजसा न्यृष्टं निर्गतं स्थविरं बृहत् वज्रंन वज्रंचनेतिचार्थे आदर्ता आदरणवानासीत् ॥ ६ ॥

६. जो पर्वत की तरह प्रवृद्ध और महान् हैं, जो तेजस्वी हैं और जो शत्रुओं को अभिभूत करने के लिए सनातन काल में उत्पन्न हुए हैं, वे इन्द्रजल-द्वारा पूर्ण जलपात्र की तरह तेजःपूर्ण बृहत् वज्र का आदर करते हैं।

प्रथमसप्तमी—

न यस्य॑ व॒र्ता ज॒नुषा॒ न्वस्ति॒ न राध॑स आमरी॒ता म॒घस्य॑ ।
उ॒द्वा॒वृ॒षा॒णस्त॑विषीव उग्रा॒स्मभ्यं॑ दद्धि पुरुहूत रा॒यः ॥ ७ ॥

न । यस्य॑ । व॒र्ता । ज॒नुषा॑ । नु । अस्ति॑ । न । राध॑सः । आ॒ऽम॒री॒ता । म॒घस्य॑ । उ॒त्ऽव॒वृ॒षा॒णः । त॒वि॒षी॒ऽवः॒ । उ॒ग्र॒ । अ॒स्मभ्य॑म् । द॒द्धि । पु॒रु॒ऽहू॒त॒ । रा॒यः ॥ ७ ॥

हेइन्द्र यस्यतव कश्चिज्जनुषाजन्मनास्वतएवनुसत्यंवर्ता वारयितानास्ति रायसः यज्ञादिकर्मणांसाधकस्यमघस्यत्वयादीयमानस्य धनस्यमामरीता कश्चिदपिनाशयितानास्ति हेतविषीवः बलवन्नुग्र तेजस्विन् हेपुरुहूत बहुभिराहूतेन्द्र उक्षावृषणः अभीष्टान्कामान्वर्षकस्त्वं रायः पश्वादिधनानि अस्मभ्यंस्तोतृभ्यःदधि देहि ॥ ७ ॥

७. हे इन्द्र, तुम्हारे जन्म से (उत्पन्न-मात्र से) ही कोई निवारक नहीं रहा, यज्ञादि कर्म के लिए तुम्हारे द्वारा प्रदत्त धन का नाशक कोई नहीं रहा। हे बलशाली, तेजस्वी, पुरुहूत, तुम अभीष्टवर्षी हो। तुम हम लोगों को धन दो।

ईक्षेरायःक्षयस्यचर्षणीनामुतव्रजमपवर्तासिगोनाम् ।
शिक्षानरःसमिथेषुप्रहावान्वस्वोराशिमभिनेतासि भूरिम् ॥८॥

ईक्षे । रायः । क्षयस्य । चर्षणीनाम् । उत । व्रजम् । अपवर्ता ।
असि । गोनाम् । शिक्षाऽनरः । समिथेषु । प्रहाऽवान् ।
वस्वः । राशिम् । अभिऽनेता । असि । भूरिम् ॥ ८ ॥

हेइन्द्र त्वं चर्षणीनां प्रजानां रायोधनस्यक्षयस्य गृहस्यच ईक्षे ईक्षसे उतापिच गोनांगवां व्रजंसमूहम् अपवर्ता अपवारकोसि निरोधकेभ्योऽसुरेभ्यःगवांमोचयितास्यसीत्यर्थः किंच हेइन्द्र शिक्षानरः शिक्षयानेताप्रजानांशासकः समिथेषु युद्धेषु प्रहावान्प्रहरणवांस्त्वंभूरिं प्रभूतं वस्वोधनस्य राशिसमूहमभिनेतासि प्रापयिताचभवसि ॥ ८ ॥

८. हे इन्द्र, तुम प्रजाओं के धन और गृह का पर्यवेक्षण करते हो और निरोधक असुरों से गौओं के समूह को उन्मुक्त करते हो। हे इन्द्र, तुम शिक्षा के विषय में प्रजाओं के नेता या शासक हो और युद्ध में प्रहार करनेवाले हो। तुम प्रभूत धनराशि के प्रापक होओ।

कयातच्छृण्वेशच्याशचिष्ठोययाकृणोतिमुहुकाचिदृष्वः ।
पुरुदाशुषेविचयिष्ठोअंहोथादधातिद्रविणंजरित्रे ॥ ९ ॥

कया । तत् । शृण्वे । शच्या । शचिष्ठः । यया । कृणोति ।
मुहु । का । चित् । ऋष्वः । पुरु । दाशुषे । विचयिष्ठः ।
अंहः । अथ । दधाति । द्रविणम् । जरित्रे ॥ ९ ॥

शचिष्ठः अतिशयेनप्राज्ञः तदितिलिङ्गव्यत्ययः तत्सइन्द्रः कयाशच्या कयाप्रज्ञया शचीतिप्रज्ञानामैतत् शृण्वे श्रूयते ऋष्वोमहानिन्द्रः मुहुर्मुहुः ययाप्रज्ञयाकानिचित्कानिचित् कर्माणि कृणोति करोति सइन्द्रः दाशुषेहविर्दत्तवतेयजमानायपुरुभूयिष्ठमंहः पापम् विचयिष्ठः अतिशयेननाशकोभवति अथापिच जरित्रेस्तोत्रेद्रविणंपश्वादिधनंदधातिददाति ॥ ९ ॥

९. अतिशय प्राज्ञ इन्द्र किस प्रज्ञाबल से विश्रुत होते हैं ? महान् इन्द्र जिस प्रज्ञाबल से मुहुर्मुहुः कर्मसमूह का सम्पादन करते हैं (उसी के द्वारा विश्रुत हैं) । वे यजमानों के बहुल पाप को विनष्ट करते हैं और स्तोताओं को धन दान करते हैं ।

मानोमर्धीराभरादद्धितन्नःप्रदाशुषेदातवेभूरियत्ते ।
नव्येदेष्णेशस्तेअस्मिन्तउक्थेप्रब्रवामवयमिन्द्रस्तुवन्तः ॥१०॥

मा । नः । मर्धीः । आ । भर । दद्धि । तत् । नः । प्र । दाशुषे । दातवे । भूरि । यत् । ते । नव्ये । देष्णे । शस्ते । अस्मिन् । ते । उक्थे । प्र । ब्रवाम । वयम् । इन्द्र । स्तुवन्तः ॥ १० ॥

हेइन्द्र त्वंनोस्मान्मामर्धीर्माहिंसीः किंतु त्वम्आभर पोषकोभव हेइन्द्र तेत्वदीयं भूरि यदपि धनं दाशुषेहविर्दत्तवतेयजमानायदातवे दातुंप्रभवतीतिशेषः नोस्मभ्यंतद्धनमाहृत्य दद्धि देहि हेइन्द्रत्वांस्तुवन्तोवयम् अस्मिन्नुक्थे अस्मिन्निष्केवल्याख्यशस्त्रे तेत्वदर्थे नव्ये नूतने शस्ते प्रशस्ते देष्णे दातव्येहविर्निमित्तभूतेसति प्रब्रवाम प्रकर्षेणत्वांवदाम ॥ १० ॥

१०. हे इन्द्र, तुम हम लोगों की हिंसा मत करो; बल्कि हम लोगों के पोषक होओ । हे इन्द्र, तुम्हारा जो प्रभूत धन हव्यदाता को दान देने के लिए है, वह धन लाकर हमें दो । हम तुम्हारा स्तव करते हैं । इस नूतन दानयोग्य और प्रशस्त उक्थ में हम तुम्हारा विशेष रूप से कीर्तन करते हैं ।

नूष्टुतइन्द्रनूगृणानइषंजरित्रेनद्योनपीपेः ।
अकारितेहरिवोब्रह्मनव्यंधियास्यामरथ्यःसदासाः ॥११॥४॥

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरितिपीपेः । अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥ ११ ॥ ४ ॥

पूर्वव्याख्याता ॥ ११ ॥

११. हे इन्द्र, तुम पूर्ववर्ती ऋषियों-द्वारा स्तुत होकर तथा हम लोगों के द्वारा स्तूयमान होकर जैसे जल नदी को पूर्ण करता है, उसी तरह स्तोताओं के अन्न को प्रवृद्ध करते हो । हे हरिविशिष्ट इन्द्र, हम तुम्हारे उद्देश से अभिनव स्तोत्र करते हैं, जिससे हम लोग रथवान् होकर स्तुतिद्वारा सेवा तुम्हारी सेवा करते रहें ।

आयात्विन्द्रइत्येकादशर्चमेकादशंसूक्तंवामदेवस्यार्षंत्रैष्टुभमैन्द्रम् आयात्विलनुक्रान्तम् । पृ-
ष्ठ्याभिप्लवषडहयोःप्रथमेऽहनिपतत्सिविनियोगः । सूत्रितंच—आयात्विन्द्रोवसइतिमरुत्वतीयमिति ॥

आयात्विन्द्रोवसउपनइहस्तुतःसधमादस्तुशूरः ।
वावृधानस्तविषीर्यस्यपूर्वीर्द्यौर्नक्षत्रमभिभूतिपुष्यात् ॥ १ ॥

आ । यातु । इन्द्रः । अवसे । उप । नः । इह । स्तुतः ।
सधऽमात् । अस्तु । शूरः । ववृधानः । तविषीः । यस्य ।
पूर्वीः । द्यौः । न । क्षत्रम् । अभिऽभूति । पुष्यात् ॥ १ ॥

सइन्द्रः नोस्माकमवसेरक्षणायउपायातु उपागच्छतु यइन्द्रः इहास्मिन्यज्ञेस्तुतःशूरोविक्रान्तो
ववृधानःप्रवृद्धःअयमिन्द्रःसधमादस्तु अस्माभिःसहमादयन्भवतु यस्येन्द्रस्यतविषीः ताविष्यः बलानिपू-
र्वीःपूर्व्योबह्व्यस्सन्तीतिशेषः यश्चेन्द्रः द्यौर्न द्योतमानःसूर्यइव अभिभूति परकीयंबलमभिभावुकंक्षत्रं
स्वकीयंबलं तेजोवापुष्यात् पुष्यतु सइन्द्रः उपायात्वितिपूर्वेणसंबन्धः ॥ १ ॥

१. जिनका बल प्रभूत है। जो सूर्य की तरह अभिभवसमर्थ बल का
पोषण करते हैं, वे हम लोगों के समीप रक्षा के लिए आएँ। परा-
क्रमवान् और प्रवृद्ध इन्द्र हमारे साथ हृष्ट हों।

तस्येदिहस्तवथवृष्ण्यानितुविद्युम्नस्यतुविराधसोनॄन् ।
यस्यक्रतुर्विदथ्योनसम्राट्साह्वान्तरुत्रोअभ्यस्तिकृष्टीः ॥२॥

तस्य । इत् । इह । स्तवथ । वृष्ण्यानि । तुविऽद्युम्नस्य ।
तुविऽराधसः । नॄन् । यस्य । क्रतुः । विदथ्यः । न । सम्ऽराट् ।
सह्वान् । तरुत्रः । अभि । अस्ति । कृष्टीः ॥ २ ॥

तुविद्युम्नस्यबहुकीर्तेः तुविराधसः बहुधनस्य तस्येत्तस्येन्द्रस्यैव वृष्ण्यानि बलभूतान्नॄन्नेतॄ-
न्मरुतः हेस्तोतारोयूयमिहास्मिन्यज्ञेस्तवथ स्तुत साह्वान्शत्रूनभिभवुकः तरुत्रः अस्माना-
पद्भ्यस्तारकः यस्येन्द्रस्यक्रतुः कर्मकृष्टीः शत्रुसंबन्धिनीःप्रजाःअभ्यस्ति अभिभवति तत्रदृ-
ष्टान्तः—विदथ्योन सम्राट्विदथार्हेन यज्ञार्हःसम्राट्सकललोकानामधिपतिरिव तद्वत्तस्यवृष्ण्यानीति
पूर्वेणसंबन्धः ॥२॰ हे स्तोताओ, यज्ञार्ह सम्राट् की तरह जिनका अभिभवकारक
तथा त्राणकारक कर्म शत्रु-सम्बन्धिनी प्रजाओं को अभिभूत करता है, उन
प्रभूतयशा तथा अतिशय धनशाली इन्द्र के बलभूत नेता मरुतों की
तुम लोग इस यज्ञ में स्तुति करो।

आयात्विन्द्रोदिवआपृथिव्यामक्षूसमुद्रादुतवापुरीषात् ।
स्वर्णरादवसेनोमरुत्वान्परावतोवासदनादृतस्य ॥ ३ ॥

आ । यातु । इन्द्रः । दिवः । आ । पृथिव्याः । मक्षु । समुद्रात् ।
उत । वा । पुरीषात् । स्वःऽनरात् । अवसे । नः । मरुत्वान् ।
पराऽवतः । वा । सदनात् । ऋतस्य ॥ ३ ॥

मरुद्भिरस्मदादिभिःसहितइन्द्रः नोस्माकमवसेरक्षणायदिवः स्वर्गलोकादायातु आगच्छतु पृथिव्याः भूलोकाच्चमक्षुशीघ्रमायातु उतवा अथवा समुद्रादन्तरिक्षलोकादायातु समुद्रइत्यन्तरिक्षनाम सगरः समुद्रः अध्वरइतितन्नामसुपाठात् अथवा पुरीषादुदकात् आयातु पुरीषमित्युदकनाम मधुपुरीषंपिप्पलमितितन्नामसुपाठात् स्वर्णरात् स्वरादित्यः नरोनेतायस्यतस्माल्लोकाद्वाआयातु परावतोवादूराद्वाआयातु ऋतस्योदकस्यसदनात्स्थानात्मेघलोकाद्वाआयातु ॥ ३ ॥ ३. इन्द्र हम लोगों को आश्रय देने के लिए मरुतों के साथ स्वर्गलोक से, भूलोक से, अन्तरिक्ष लोक से, जल से, आदित्यलोक से, दूर देश से और जल के स्थानभूत मेघलोक से यहाँ आयें।

स्थूरस्यरायोबृहतोयईशेतमुष्टवामविदथेष्विन्द्रम् ।
योवायुनाजयतिगोमतीषुप्रधृष्णुयानयतिवस्योअच्छ ॥ ४ ॥

स्थूरस्य । रायः । बृहतः । यः । ईशे । तम् । ऊँ इति ।
स्तवाम । विदथेषु । इन्द्रम् । यः । वायुना । जयति ।
गोऽमतीषु । प्र । धृष्णुऽया । नयति । वस्यः । अच्छ ॥ ४ ॥

यइन्द्रः स्थूरस्य स्थूलस्य बृहतोमहतः रायोधनस्य ईशे ईष्टे विदथेषुयज्ञेषु विदथइति यज्ञनामैतत् तमु तमिन्द्रमेववयंस्तोतारःस्तवाम यइन्द्रः वायुनाप्राणरूपेण बलेन गोमतीषु सेनासुजयतिशत्रून्निर्जयते धृष्णुया धृष्णुः प्रगल्भः यइन्द्रः स्तोतृभ्यस्यः वसीयः श्रेष्ठंपश्वादिधनम् अच्छाभिप्रणयति प्रापयति तमेवेन्द्रंस्तवामेतिपूर्वेणसंबन्धः ॥ ४ ॥

४. जो स्थूल एवम् महान् धन के अधिपति हैं, जो प्राणरूप बल-द्वारा शत्रु-सेना को जीतते हैं, जो प्रगल्भ हैं और जो स्तोताओं को श्रेष्ठ धन दान करते हैं, यज्ञ-स्थल में हम उन इन्द्र के उद्देश्य से स्तुति करते हैं।

उपयोनमोनमसिस्तभायन्नियर्तिवाचंजनयन्यजध्यै ।
ऋञ्जसानःपुरुवारउक्थैरेन्द्रंकृण्वीतसदनेषुहोता ॥ ५ ॥ ५ ॥

उप । यः । नमः । नमसि । स्तभायन् । इयर्ति । वाचम् ।
जनयन् । यजध्यै । ऋञ्जसानः । पुरुऽवारः । उक्थैः । आ ।
इन्द्रम् । कृण्वीत । सदनेषु । होता ॥ ५ ॥ ५ ॥

अत्रैषः श्लोकः पठ्यते—श्येनभावंसमास्थायगर्भाद्योगेननिःसृतः । ऋषिर्गर्भेशयानःसन् ब्रूते गर्भेनुसन्निति ॥ १ ॥ गर्भेनु गर्भेएवसन् विद्यमानोऽहंवामदेवः एषामिन्द्रादीनांदेवानां विश्वा विश्वानि सर्वाणि जनिमानि जन्मानि अन्ववेदम् आनुपूर्व्येणाज्ञासिषं परमात्मनः सकाशात्सर्वेदेवाजाताइत्यवेदिषमित्यर्थः इतःपूर्वंशतंबहूनि आयसी अयोमयान्यभेद्यानि पुरःशरीराणि मामामरक्षन् अपालयन् यथाऽहंशरीराद्व्यतिरिक्तमात्मानंनजानीयां तथामामरक्षन्नित्यर्थः अध अधुना श्येनः श्येनवत्स्थितोऽहम् जवसावेगेननिरदीयं शरीरान्निरगमम् अनावरणमात्मानंजानन्निर्गतोस्मीत्यर्थः पुरुषेहवाअयमादितोगर्भोभवतीत्यादिनोपक्रम्यगर्भएवैतच्छयानोवामदेवएवमुवाचेत्यादिनाअयमर्थःसम्यक्श्रुतिप्रदर्शितः ॥ १ ॥

१. गर्भ में विद्यमान होकर ही हम (वामदेव) ने इन्द्र आदि समस्त देवों के जन्म को यथाक्रम से जाना था । अर्थात् परमात्मा के समीप से सब देव उत्पन्न हुए हैं । बहुतेरे लौहमय शरीरों ने हमारा पालन किया था । अभी हम श्येन की तरह स्थित होकर आवरण-रहित आत्मा को जानते हुए शरीर से निर्गत होते हैं ।

नघासमामपजोषंजभाराभीमासत्वक्षसावीर्येण ।
ईर्मापुरंधिरजहादरातीरुतवाताँअतरच्छूशुवानः ॥ २ ॥

न । घ । सः । माम् । अप । जोषम् । जभार । अभि । ईम् । आस । त्वक्षसा । वीर्येण । ईर्मा । पुरम्ऽधिः । अजहात् । अरातीः । उत । वातान् । अतरत् । शूशुवानः ॥ २ ॥

सगर्भः मां वामदेवं जोषं पर्याप्तं नघ नैवापजभार अपजहार गर्भेपिवसतोमेमोहोनाभूदित्यर्थः अहंतु ईम् इदंगर्भस्थंदुःखं त्वक्षसा तीक्ष्णेनवीर्येण ज्ञानसामर्थ्येन अभ्यास अभ्यभवं ईर्मा सर्वस्यप्रेरकः पुरंधिः पुरंधारकः परमात्मा अरातीः गर्भसंस्थितान्शत्रूनजहात् अत्यजत् अवधीत् उतापिच शूशुवानः वर्धमानः परिपूर्णः परमात्मावा तान्गर्भेक्लेशकरान्वायूनतरत् अतारीत् ॥ २ ॥

२. उस गर्भ ने हमारा पर्याप्तरूप से अपहरण नहीं किया था अर्थात् गर्भ में निवास करते समय हमें मोह नहीं हुआ था । हमने गर्भस्थ दुःख को तीक्ष्ण वीर्य-द्वारा अर्थात् ज्ञानसामर्थ्य से पराभूत किया था । सबके प्रेरक परमात्मा ने गर्भस्थित शत्रुओं का वध किया था और वर्द्धमान होकर गर्भ में क्लेशकारक वायु को अतिक्रान्त किया था ।

अवयच्छ्येनोअस्वनीदधद्योर्वियद्यदिवातऊहुःपुरंधिम् ।
सृजद्यदस्माअवहक्षिपज्ज्यांकृशानुरस्तामनसाभुरण्यन् ॥ ३ ॥

---

१ ऐतरेयोपनिषद् ।

अध । यत् । श्येनः । अस्वनीत् । अर्ध । द्योः । वि । यत् । यदि ।
वा । अतः । ऊहुः । पुरम्ऽधिम् । सृजत् । यत् । अस्मै । अर्व ।
ह । क्षिपत् । ज्याम् । कृशानुः । अस्ता । मनसा । भुरण्यन् ॥ ३ ॥

अध तदानीं सोमाहरणकाले यद्यदा श्येनः द्योः द्युलोकादवास्वनीत् अवाङ्मुखः शब्दमकरोत् यदि वा यदा च वेतिचार्थे यदा पुरन्धिं सोमम् अतोऽस्माच्छ्येनात् ऊहुः सोमपालाः विक्षिपन्तः यद्यदा अस्ता शराणां क्षेप्ता मनसा मनोवेगेन भुरण्यन् गन्तुमिच्छन् कृशानुः एतन्नामकः सोमपालः ज्यां धनुषः कोटौ मौर्वीं क्षिपत् विक्षेपत् अस्मै श्येनाय शरमवासृजत् यत्कृशानुः तथा च ब्राह्मणम्—तस्या अनुविसृज्य कृशानुः सोमपालः सव्यस्य पदो नखमच्छिनदित्यादि। यदा यदा सोमपालाः इत्थमित्थं चक्रुः तदा श्येनः सोममाजहारेत्यर्थः तस्य संबन्धः ॥ ३ ॥

३. सोमाहरणकाल में जब श्येन ने द्युलोक से अधोमुख होकर शब्द किया था, जब सोमपालों ने श्येन के निकट से सोम छीन लिया था, जब शरप्रक्षेपक सोमपाल कृशानु ने मनोवेग से जाने की इच्छा करके धनुष की कोटि पर प्रत्यञ्चा चढ़ाई थी और श्येन के प्रति शरक्षेपण किया था तब श्येन ने सोम का आनयन किया था।

ऋजिप्य ईमिन्द्रावतो न भुज्युं श्येनो जभार बृहतो अधि ष्णोः ।
अन्तः पतत्पतत्र्यस्य पर्णमध यामनि प्रसितस्य तद्वेः ॥ ४ ॥

ऋजिप्यः । ईम् । इन्द्रऽवतः । न । भुज्युम् । श्येनः । जभार ।
बृहतः । अधि । स्नोः । अन्तः । पतत् । पतत्रि । अस्य । पर्णम् ।
अध । यामनि । प्रऽसितस्य । तत् । वेरिति वेः ॥ ४ ॥

ऋजिप्यः ऋजुगामी श्येनः इन्द्रावतः इन्द्रो रक्षको यस्य तस्माद् बृहतो महतोऽपि उपरि द्योः स्थितात् द्युलोकात् ईमेनं सोमं जभार आजहार तत्र दृष्टान्तः—इन्द्रावतः इन्द्रः समर्थः तद्वतो देशात् भुज्युं भुज्युनामकं राजानं यथा अश्विनावाजह्रतुः तद्वत् अध तदानीं यामनि युद्धे प्रसितस्य कृशानोरस्त्रैर्बद्धस्य वेर्गन्तुरस्यान्तर्मध्ये स्थितं पतत्रि पतनशीलं तत्पर्णं पतत् अपतत् ॥ ४ ॥

४. अश्विद्वय ने जिस प्रकार सामर्थ्यवान् इन्द्रविशिष्ट देश से भुज्युनामक राजा[1] का अपहरण किया था, उसी प्रकार ऋजुगामी श्येन ने इन्द्ररक्षित महान् द्युलोक से सोम का आहरण किया था। उस समय युद्ध में कृशानु के अस्त्रों से विद्ध होने पर उस गमनशील पक्षी का एक मध्यस्थित तथा पतनशील पक्ष गिर पड़ा था।

अध श्वेतं कलशं गोभिरक्तमापिप्यानं मघवा शुक्रमन्धः ।
अध्वर्युभिः प्रयतं मध्वो अग्रमिन्द्रो मदाय प्रति धत्पिबध्यै शूरो मदाय प्रति धत्पिबध्यै ॥ ५ ॥ १६ ॥

---

१ ऋ० मं० १, ११६।

अधं । श्वेतम् । कलशम् । गोभिः । अक्तम् । आऽपिप्यानम् ।
मघऽवा । शुक्रम् । अन्धः । अध्वर्युऽभिः । प्रऽयतम् । मध्वः ।
अग्रम् । इन्द्रः । मदाय । प्रति । धत् । पिबध्यै । शूरः । मदाय ।
प्रति । धत् । पिबध्यै ॥ ५ ॥ १६ ॥

अथाधुना शूरो विक्रान्तः मघवा धनवानिन्द्रः श्वेतं शुभ्रं कलशं कलशोपात्रेस्थितम् गोभिर्गव्येनपयसा अक्तं सिक्तं आपिप्यानमाप्याययन्तं शुक्रं सारोपेतमध्वर्युभिःप्रयतंदत्तम् अन्धः सोमलक्षणमन्नं मध्वोमधुरस्यसोमरसस्यअग्रमग्रेमदायमदार्थंपिबध्यै पातुंप्रतिधत् प्रतिदधातु पुनरुक्तिरादरार्था ॥ ५ ॥

५. इस समय विक्रमवान् इन्द्र शुभ पात्रस्थित, गव्यमिश्रित, तृप्तिकर, सारसमन्वित एवम् अध्वर्युओं-द्वारा प्रदत्त सोम लक्षण अन्न का और मधुर सोमरस का हर्ष के लिए पहले ही पान करें।

त्वायुजेतिपञ्चर्चंसप्तमंसूक्तंवामदेवस्यार्षं त्रैष्टुभमैन्द्रासोमदेवताकम् अनुक्रान्तंच—त्वायुजैन्द्रासोमाभिति । विनियोगोलैङ्गिकः ।

तत्रप्रथमा—

त्वायुजा॒ तव॒ तत्सो॑म स॒ख्य इन्द्रो॑ अ॒पो मन॑वे स॒स्रुत॑स्कः ।
अह॒न्नहि॒मरि॑णात्स॒प्त सिन्धू॒नपा॑वृणो॒दपि॑हितेव॒ खानि॑ ॥ १ ॥

त्वा । युजा । तव । तत् । सोम । सख्यम् । इन्द्रः । अपः । मनवे ।
सऽस्रुतः । करिति कः । अहन् । अहिम् । अरिणात् । सप्त । सिन्धून् ।
अप । अवृणोत् । अपिहिताऽइव । खानि ॥ १ ॥

हेसोम तव त्वदीये तत्तस्मिन्सख्ये सखित्वे सति त्वा त्वया युजासहायेन इन्द्रः सस्रुतः सरणशीलाअपोवृष्टिलक्षणान्युदकानिमनवेमनुष्येभ्यः कः अकरोत् किंच अहिं वृत्रमसुरमहन् हतवान् सप्तसर्पणशीलाः सिन्धूनपः अरिणात् प्रैरयत् अपिहितेवअपिहितानीव वृत्रेणतिरोहितानिच अत्रेवशब्दमार्थे खानि स्रोतसांद्वाराणिअपावृणोदुद्घाटितवान् ॥ १ ॥

१. हे सोम, इन्द्र के साथ तुम्हारी मैत्री होने पर इन्द्र ने तुम्हारी सहायता से मनुष्यों के लिए सरणशील जल को प्रवाहित किया था, वृत्र का वध किया था, सर्पणशील जल को प्रेरित किया था और वृत्र-द्वारा तिरोहित जल-द्वार को उद्घाटित किया था।

त्वायु॒जा नि खि॑द॒त्सूर्य॒स्येन्द्र॑श्च॒क्रं सह॑सा स॒द्य इ॑न्दो ।
अधि॒ ष्णुना॑ बृह॒ता वर्त॑मानं म॒हो द्रु॒हो अप॑ वि॒श्वायु॑ धायि ॥ २ ॥

त्वा । युजा । नि । खिदत् । सूर्यस्य । इन्द्रः । चक्रम् । सहसा ।
सद्यः । इन्दो इति । अधि । स्नुना । बृहता । वर्तमानम् ।
महः । द्रुहः । अप । विश्वऽआयु । धायि ॥ २ ॥

हेइन्दो सोम इन्द्रःसद्यःसपदि त्वा त्वया युजा सहायेन सूर्यस्यप्रेरकस्यसवितुः संबन्धिनःपूर्वोद्विचक्रस्यरथस्यएकंचक्रंसहसाअभिभावुकेनबलेननिखिदत् आच्छिनत् कीदृशम् अधि उपरि स्नुना स्थितेन बृहतामहतान्तरिक्षेणवर्तमाने किंच महोमहतःप्रभूतस्य द्रुहोद्रोग्धुः सूर्यस्य संबन्धिविश्वायु सर्वतोगन्तृचक्रम् अपधायि इन्द्रेणापहारि ॥ २ ॥

२. हे सोम, इन्द्र ने तुम्हारी सहायता से क्षण-भर में प्रेरक सूर्य के रथ के ऊपर स्थित बृहत् अन्तरिक्ष में वर्तमान द्विचक्र रथ के एक चक्र को बलपूर्वक तोड़ डाला था। प्रभूत द्रोहकारी सूर्य के सर्वतोगामी चक्र को इन्द्र ने अपहृत किया था।

अहन्निन्द्रोअदहदग्निरिन्दोपुरादस्यून्मध्यन्दिनादभीके ।
दुर्गेदुरोणेक्रत्वानयातांपुरूसहस्राशर्वानिबर्हीत् ॥ ३ ॥

अहन् । इन्द्रः । अदहत् । अग्निः । इन्दो इति । पुरा ।
दस्यून् । मध्यन्दिनात् । अभीके । दुःऽगे । दुरोणे । क्रत्वा । न ।
याताम् । पुरु । सहस्रा । शर्वा । नि । बर्हीत् ॥ ३ ॥

हेइन्दो सोम अभीके संग्रामे दस्यून् शत्रूनिन्द्रः अहनअवधीत् अग्निः कांश्चिच्छत्रून्स्वदहदाह कीदृशाविन्द्राग्नी मध्यन्दिनान्मध्याह्नात्पुरापुरस्तात्पूर्वाह्णे तवपानाद्धक्ष्यमाणावितिशेषः यातांगच्छतामसुराणां पुरु पुरूणि बहूनि सर्वाणि निरवशेषाणि सहस्रा सहस्राण्यपरिमितानि सैन्यानि निबर्हीत् इन्द्रःअवधीत् तत्रदृष्टान्तः—दुरोणे दुरवने रक्षितुमशक्ये दुर्गे दुरवगाहेदेशेक्रत्वान कर्मणास्वकीयंकार्यमुद्दिश्यगच्छतःपथिकान्यथावनलोलुपश्चोरोहन्तितद्वत् ॥ ३ ॥

३. हे सोम, तुम्हारे पान से बलवान् इन्द्र ने मध्याह्नकाल के पहले ही संग्राम में शत्रुओं को मार डाला था और अग्नि ने भी कितने शत्रुओं को जला डाला था। किसी कार्य से रक्षाशून्य दुर्गम स्थान से जानेवाले व्यक्ति को जैसे चोर मार डालता है, उसी तरह इन्द्र ने बहु सहस्र सेनाओं का वध किया है।

विश्वस्मात्सीमधमाँइन्द्रदस्यून्विशोदासीरकृणोरप्रशस्ताः ।
अबाधेथाममृणतंनिशत्रूनविन्देथामपचितिंवधत्रैः ॥ ४ ॥

विश्वस्मात् । सीम् । अधमान् । इन्द्र । दस्यून् । विशः । दासीः ।
अकृणोः । अप्रऽशस्ताः । आबाधेथाम् । अमृणतम् । नि ।
शत्रून् । अविन्देथाम् । अपऽचितिम् । वधत्रैः ॥ ४ ॥

हेइन्द्र त्वं सोमेनामून्दस्यून् विश्वस्मात्सर्वस्मात् गुणादवमान्हीनानकृणोः अकरोः किंच दासीः कर्महीनाविशः मानुषीःप्रजाः अधराअप्रशस्ताःगर्हिताअकृणोः हेइन्द्रासोमौ युवांशत्रू-नबाधेथां न्यस्तृणतं नितरांहिंसितवन्तौ अपिच वधत्रैः तेषांशत्रूणांप्रहारैः अपचितिं पूजां जनेभ्यः अविन्देथाम् अलभेथाम् ॥ ४ ॥

४. हे इन्द्र, तुम इन दस्युओं को सकल सद्गुणों से रहित करते हो। तुम कर्महीन मनुष्यों (दासों) को गर्हित (निन्दित) बनाते हो। हे इन्द्र और सोम, तुम दोनों शत्रुओं को बाधा दो और उनका वध करो। उन्हें मारने के लिए लोगों से पूजा ग्रहण करो।

एवासत्यंमघवानायुवंतदिन्द्रंश्चसोमोर्वमश्व्यंगोः ।
आदर्दृतमपिहितान्यश्नारिरिचथुःक्षाश्चित्ततृदाना ॥५॥१७॥

एव । सत्यम् । मघऽवाना । युवम् । तत् । इन्द्रः । च । सोम । ऊर्वम् । अश्व्यम् । गोः । आ । अदर्दृतम् । अपिऽहितानि । अश्ना । रिरिचथुः । क्षाः । चित् । ततृदाना ॥ ५ ॥ १७ ॥

हेसोम त्वंचेन्द्रश्चेति युवामुभौ ऊर्वं महान्तमश्व्यम् अश्वसमूहं गोः गवांसमूहंच आदर्दृतम् आदरयतम् अपिहितानि पणिभिराच्छादितानिगवांवृन्दानि क्षाश्चित्पणीनांभूमीश्च अश्ना अश्न-नपरेणबलेनारिरिचथुः रेचितवन्तौ हेमघवानौ धनवन्ताविन्द्रासोमौ ततृदाना शत्रूणांहिंसकौ युवं युवाम् एव एवम् उक्तप्रकारेणयत्कृतवन्तौ तत्सर्वंसत्यमेव ॥ ५ ॥

५. हे सोम, तुम और इन्द्र ने महान् अश्वसमूह और गोसमूह को दान किया था एवम् पणियों-द्वारा आच्छादित गोवृन्द और भूमि को बल-द्वारा विमुक्त किया था। हे धनयुक्त इन्द्र और सोम, तुम दोनों शत्रुओं के हिंसक हो। तुम दोनों ने इस प्रकार से जो कुछ किया है, वह सत्य है।

आनःस्तुतइतिपञ्चर्चमष्टमंसूक्तंवामदेवस्यार्षंत्रैष्टुभमैन्द्रम् आनःस्तुतइत्यनुक्रान्तम्। विनियोगोलैङ्गिकः ।

आनःस्तुतउपवाजेभिरूतीइन्द्रंयाहिहरिभिर्मन्दसानः ।
तिरश्चिदर्यःसवनापुरूण्याङ्गूषेभिर्गृणानःसत्यराधाः ॥ १ ॥

आ । नः । स्तुतः । उप । वाजेभिः । ऊती । इन्द्र । याहि । हरिऽभिः । मन्दसानः । तिरः । चित् । अर्यः । सवना । पुरूणि । आङ्गूषेभिः । गृणानः । सत्यऽराधाः ॥ १ ॥

हेइन्द्र स्तुतस्त्वंवाजेभिर्वाजैरश्वैःसह तिरश्चित्मासानि तिरःसतइतिप्राप्तस्येतिपोक्तः । पुरूणि पूर्णानि सवना सवनानि नोस्मदीयान्यज्ञान् उपयातिऊती ऊत्या नोस्माकंरक्षणार्थं हरिभिरश्वैरायाहि आगच्छ कीदृशः मन्दसानोमोदमानः अर्यः स्वामी आङ्गूषेभिःस्तोत्रैर्गृणानः स्तूयमानःसत्यराधाःसत्यधनः ॥ १ ॥

१. हे इन्द्र, तुम स्तुत होकर हम लोगों को रक्षित करने के लिए हम लोगों के असयुक्त अनेक यज्ञों में अश्वों के साथ आगमन करो। तुम मोदमान, स्वामी, स्तोत्रों-द्वारा स्तूयमान और सत्य-धन हो।

आहिष्मायातिनर्यश्चिकित्वान्हूयमानःसोतृभिरुपयज्ञम् ।
स्वश्वोयोअभीरुर्मन्यमानःसुष्वाणेभिर्मदतिसंहवीरैः ॥ २ ॥

आ । हि । स्म । याति । नर्यः । चिकित्वान् । हूयमानः ।
सोतृऽभिः । उप । यज्ञम् । सुऽअश्वः । यः । अभीरुः । मन्यमानः ।
सुस्वानेभिः । मदति । सम् । ह । वीरैः ॥ २ ॥

नर्योनृभ्योहितः चिकित्वान्सर्वज्ञश्च सोतृभिः सोमममिषुण्वद्भिः ऋत्विग्भिर्हूयमानआहूयमानइन्द्रः अस्मदीयंयज्ञमुपप्रतियायाति आगच्छतु हिष्मेतिपूरणौ स्वश्वः शोभनाश्वोपेतः अभीरुर्निर्भयशीलः सुस्वानेभिः सुन्वद्भिर्यजमानैर्मन्यमानःस्तूयमानोयइन्द्रः वीरैःशूरैर्मरुद्भिःसह संमदतिहसहमदत्येव सइन्द्रः आगच्छत्वितिपूर्वेणसंबन्धः ॥ २ ॥

२. मनुष्यों के हितकारी तथा सर्ववित्ता इन्द्र सोमाभिषवकारियों-द्वारा आहूत होकर यज्ञ के उद्देश से आगमन करें। वे सुन्दर अश्वों से युक्त हैं, वे निर्भय हैं, वे सोमाभिषवकारियों-द्वारा स्तुत होते हैं एवम् वीर मरुतों के साथ हृष्ट होते हैं।

श्रावयेदस्यकर्णावाजयध्यैजुष्टामनुप्रदिशंमन्दयध्यै ।
उद्वावृषाणोराधसेतुविष्मान्करन्नइन्द्रःसुतीर्थाभयंच ॥ ३ ॥

श्रवय । इत् । अस्य । कर्णा । वाजयध्यै । जुष्टाम् । अनु ।
प्र । दिशम् । मन्दयध्यै । उत्ऽववृषाणः । राधसे । तुविशुष्मान् ।
करत् । नः । इन्द्रः । सुऽतीर्था । अभयम् । च ॥ ३ ॥

हेस्तोतः त्वमस्येन्द्रस्यसंबन्धिनौ कर्णा कर्णौ वाजयध्यै इन्द्रंबाजिनं कर्तुंजुष्टामनुदिशंसेवितासुसर्वासुदिक्षु प्रमन्दयध्यै प्रकर्षेणेन्द्रंमादयितुंचश्रवय स्तोत्राणिश्रावय इ-

---

[1] नि० २. १०।

क्षितिपूरणः उरुवृषाणः सोमेनोत्सिच्यमानः तुविशुष्मान्बलवानिन्द्रः नोस्माकंराधसेधनार्थं सुतीर्था शोभनानितीर्थानि अभयंच भयराहित्यंच कृत्करोतु ॥ ३ ॥

३. हे स्तोता, तुम इन्द्र के कर्णद्वय में इन्द्र को बली करने के लिए और सब दिशाओं में अतिशय हृष्ट करने के लिए स्तोत्रों को सुनाओ। सोमरस से सिक्त बलवान् इन्द्र हम लोगों के धन के लिए शोभन तीर्थों को भयरहित करें।

अच्छायोगन्तानाधमानमूतीइत्थाविप्रंहवमानंगृणन्तम् ।
उपत्मनिदधानोधुर्याशून्सहस्राणिशतानिवज्रबाहुः ॥ ४ ॥

अच्छ । यः । गन्ता । नाधमानम् । ऊती । इत्था । विप्रम् । हवमानम् । गृणन्तम् । उप । त्मनि । दधानः । धुरि । आशून् । सहस्राणि । शतानि । वज्रऽबाहुः ॥ ४ ॥

वज्रबाहुर्वज्रहस्तोयइन्द्रः त्मनि आत्मनि स्थितानात्मवश्यान् सहस्राणि सहस्रसंख्यान् शतानि शतसंख्याकान् आशून्शीघ्रगामिनोश्वान्धुरि रथवहनप्रदेशेउपदधानः संस्थापयन् ऊतीरक्षणार्थं नाधमानं याचमानं विप्रंमेधाविनं हवमानमाह्वयन्तम् इत्था इत्थमनेनप्रकारेण गृणन्तं स्तुवन्तं यजमानम् अच्छाभिमुख्येन गन्तागमनशीलोभवतीतिशेषः सइन्द्रः सुतीर्थान्यभयंच करोत्वितिपूर्वेणसंबन्धः ॥ ४ ॥

४. वज्रबाहु इन्द्र अपने वशीभूत सहस्रसंख्यक तथा शतसंख्यक शीघ्रगामी अश्वों को रथवहन प्रदेश में संस्थापित करते हैं एवम् रक्षा करने के लिए याचक, मेधावी आह्लादकारी और स्तवकारी यजमान के निकट गमन करते हैं।

त्वोतासोमघवन्निन्द्रविप्रावयन्तेस्यामसूरयोगृणन्तः ।
भेजानासोबृहद्दिवस्यरायआकाय्यस्यदावनेपुरुक्षोः ॥५॥१८॥

त्वाऽऊतासः । मघऽवन् । इन्द्र । विप्राः । वयम् । ते । स्याम । सूरयः । गृणन्तः । भेजानासः । बृहत्ऽदिवस्य । रायः । आऽकाय्यस्य । दावने । पुरुऽक्षोः ॥ ५ ॥ १८ ॥

हेमघवन्धनवन्निन्द्र त्वोतासः त्वयारक्षिताः विप्रामेधाविनः गृणन्तः त्वां स्तुवन्तः सूरयः स्तोतारोवयं बृहद्दिवस्य महादीप्तेः आकाय्यस्य आसमन्तात्स्तुत्यस्य पुरुक्षोर्बहुन्नस्य बहुकीर्तेर्वा ते त्वदीयस्य रायोधनस्य दावने निदाने निमित्तेसति भेजानासः त्वांभजमानाः स्याम भवेम ॥ ५ ॥

॥ इतितृतीयस्यषष्ठेष्टादशोवर्गः ॥ १८ ॥

५. हे धनवान् इन्द्र, हम लोग तुम्हारे स्तोता हैं। हम लोग तुम्हारे द्वारा रक्षित हैं, मेधावी और स्तुतिकारी हैं। तुम दीप्तिविशिष्ट, स्तुतियोग्य और अन्नविशिष्ट हो। धनदान-काल में हम लोग तुम्हारा सम्भजन कर सकें।

नकिरिन्द्रेतिचतुर्विंशत्यृचंनवमंसूक्तं वामदेवस्यार्षंगायत्रम् अष्टमीचतुर्विंशीचाद्येअनुष्टुभौ इन्द्रोदेवता दिवश्चिदेत्ययंतृचउषोदेवताकइन्द्रदेवताकश्च तथाचानुक्रान्तं—नकिश्चतुर्विंशतिर्दिवश्चित्तृचउषस्यश्चगायत्रंह्यष्टम्यन्त्येचानुष्टुभाविति । अतिरात्रेतृतीयेपर्यायेमैत्रावरुणशस्त्रेउत्तमापर्येमिदंसूक्तं तथाचसूत्रितम्—नकिरिन्द्रत्वदुत्तरइत्युचमाश्रुद्दरेदिति।

नकिरिन्द्रत्वदुत्तरोनज्यायाँअस्तिवृत्रहन्। नकिरेवायथात्वम् ॥१॥

नकिः। इन्द्र। त्वत्। उत्ऽतरः। न। ज्यायान्। अस्ति। वृत्रऽहन्। नकिः। एव यथा। त्वम् ॥ १ ॥

हेवृत्रहन्निन्द्र वृत्रस्यनाशकेन्द्र लोकेएकोपीतिशेषः त्वत्त्वत्तःउत्तरःउत्कृष्टतरोनकिरस्ति नभवति त्वत्तः ज्यायान्प्रशस्यतरःएकोपिनास्ति हेइन्द्र त्वंलोकेयथाप्रसिद्धोभवसि तथाविधएकोपिनकिरेवास्ति नैवभवति कश्चिदपिलोकेइन्द्रसदृशोनास्तीत्यर्थः ॥ १ ॥

१. हे वृत्रनाशक इन्द्र, लोक में तुम्हारी अपेक्षा कोई भी उत्कृष्टतर नहीं है, तुम्हारी अपेक्षा कोई भी प्रशस्यतर नहीं है। हे इन्द्र, तुम जिस तरह लोक में प्रसिद्ध हो, उस तरह कोई भी नहीं है।

सत्रातेअनुकृष्टयोविश्वाचक्रेववावृतुः। सत्रामहाँअसिश्रुतः ॥ २ ॥

सत्रा। ते। अनु। कृष्टयः। विश्वाः। चक्राऽइव। वावृतुः। सत्रा। महान्। असि। श्रुतः ॥ २ ॥

हेइन्द्र कृष्टयःप्रजाःतेत्वामनुलक्षीकृत्य सत्रा सत्यमेववावृतुः वर्तन्ते तत्रदृष्टान्तः—विश्वा विश्वानिव्यापकानिचक्रेव चक्राणीव यथाचक्राणिशकटमनुवर्तन्तेतद्वत् हेइन्द्र महांस्त्वंसत्रा सत्यमेवश्रुतोविश्रुतोसि गुणैःप्रख्यातोभवसि ॥ २ ॥

२. सर्वत्र व्याप्त चक्र जिस तरह शकट का अनुवर्तन करता है, उसी तरह प्रजागण तुम्हारा अनुवर्तन करते हैं। हे इन्द्र, तुम सचमुच महान् और गुण-द्वारा प्रख्यात हो।

विश्वेचनेदनात्वादेवासइन्द्रयुयुधुः। यदहानक्तमातिरः ॥ ३ ॥

विश्वे। चन। इत्। अना। त्वा। देवासः। इन्द्र। युयुधुः। यत्। अहा। नक्तम्। आ। अतिरः ॥ ३ ॥

हेइन्द्र विवेचनेत् सर्वएवदेवतासोऽसुरान्विजिगीषवोदेवाः अनाप्राणरूपेणबलेन त्वा त्वां सहायंकृत्वायुयुधुः असुरैःसहयुद्धंचक्रुः यद्यस्मात्कारणात् अहा अहःसु नक्तंरात्रिषुच भातिरः आसमन्ताच्छत्रून्वधीः अतःकरणात् युयुधुरितिपूर्वेणसंबन्धः ॥ ३ ॥

३. जयाभिलाषी सब देवों ने बलरूप से तुम्हारी सहायता प्राप्त करके असुरों के साथ युद्ध किया था। जिस लिए कि तुमने अहर्निश शत्रुओं का वध किया था।

**यत्रो॒तबा॑धि॒तेभ्य॑श्च॒क्रंकुत्सा॑ययुध्य॑ते। मु॒षा॒यइ॑न्द्र॒सूर्य॑म् ॥ ४ ॥**

यत्र॑। उ॒त। बा॒धि॒तेभ्य॑ः। च॒क्रम्। कुत्सा॑य। युध्य॑ते।

मु॒षा॒यः। इ॒न्द्र॒। सूर्य॑म् ॥ ४ ॥

यत्रयस्मिन्युद्धे उतापिच हेइन्द्र त्वं बाधितेभ्यःकुत्ससहायेभ्यः युध्यते युद्धंकुर्वते कुत्सायच सूर्यं सूर्यसंबन्धिचक्रं मुषायः अमुष्णाः अपहृतवानसीत्यर्थः तस्मिन्युद्धेप्रावःशची-भिरेतशमितिपरेणसंबन्धः ॥ ४ ॥

४. हे इन्द्र, जिस युद्ध में तुमने युद्धकारी कुत्स एवम् उसके सहा-यकों के लिए सूर्य के रथचक्र को अपहृत किया था।

**यत्र॑दे॒वाँऋ॑घाय॒तोविश्वाँ॒अयु॑ध्य॒एक॒इत्। त्वमि॑न्द्र॒व॒नूँरहन् ॥५॥११॥**

यत्र॑। दे॒वान्। ऋ॒घा॒य॒तः। विश्वा॑न्। अयु॑ध्यः। एकः॑।

इत्। त्वम्। इ॒न्द्र॒। व॒नून्। अह॑न् ॥ ५ ॥ ११ ॥

हेइन्द्र त्वमेकइत् असहायएव यत्रयस्मिन्संग्रामेदेवानिन्द्रादीन्ऋघायतोबाधमानान्वि-श्वान्सर्वान्राक्षसादीन् अयुध्यःयुद्धमकरोः तथावनून्हिंसकान् अहन्अवधीः ॥ ५ ॥

५. हे इन्द्र, जिस युद्ध में तुमने एकाकी होकर देवों के बाधक सकल राक्षसों के साथ युद्ध किया था तथा उन हिंसकों का वध किया था।

अथषष्ठी—

**यत्रो॒तमर्त्या॑य॒कमरि॑णाइन्द्र॒सूर्य॑म्। प्राव॒ःशची॑भि॒रेत॑शम् ॥६॥**

यत्र॑। उ॒त। मर्त्या॑य। कम्। अरि॑णाः। इ॒न्द्र॒।

सूर्य॑म्। प्र। आ॒वः॒। शची॑भिः। एत॑शम् ॥ ६ ॥

यत्रयस्मिन्संग्रामे उतापिच हेइन्द्र त्वंमर्त्याय मनुष्याय एतशाख्याय ऋषये सूर्यम-रिणाः अहिंसीः कमितिपूरणः तदानींशचीभिः युद्धकर्मभिःएतशमेतत्संज्ञकमृषिमावः प्रक-र्षेणारक्षः ॥ ६ ॥

६. हे इन्द्र, जिस संग्राम में तुमने एतश ऋषि के लिए सूर्य की हिंसा की थी, उस समय युद्ध कर्म-द्वारा तुमने एतश की रक्षा की थी।

अथसप्तमी—

किमादुतासिंवृत्रहन्मघवन्मन्युमत्तमः । अत्राहदानुमातिरः ॥७॥

किम् । आत् । उत । असि । वृत्रऽहन् । मघऽवन् । मन्युमत्ऽतमः ।
अत्र । अह । दानुम् । आ । अतिरः ॥ ७ ॥

हेवृत्रहन् वृत्राणामावरकाणांतमसांहन्तः मघवन्धनवन्निन्द्र त्वमादनन्तरमेव उतापिच किमितिप्रश्ने मन्युमत्तमोसिकिम् अत्यन्तंक्रोधवानभवसि अत्रास्मिन्नन्तरिक्षेअहदपर्यंवदानुं दनोःपुत्रं वृत्रमातिरःआसमन्तादहिंसीः ॥ ७ ॥

७. हे आवरक अन्धकार के हननकर्त्ता धनवान् इन्द्र, उसके बाद क्या तुम अत्यन्त क्रोधवान् हुए थे ? इस अन्तरिक्ष में और दिवस में तुमने दानु पुत्र वृत्र का वध किया था।

एतद्घेदुतवीर्यं१मिन्द्रचकर्थपौंस्यम् ।
स्त्रियंयद्दुर्हणायुवंवधीर्दुहितरंदिवः ॥ ८ ॥

एतत् । घ । इत् । उत । वीर्यम् । इन्द्र । चकर्थ । पौंस्यम् ।
स्त्रियम् । यत् । दुःऽहनायुवम् । वधीः । दुहितरम् । दिवः ॥ ८ ॥

हेइन्द्र उतापिच यत् त्वमेतदुपलक्षितंपौंस्यंबलंवीर्यंसामर्थ्योपतंचकर्थ कृतवानसि घइदितिपूरणौ किंच दुर्हणायुवं दुष्टहननमिच्छन्तींदिवोदुहितरंद्युलोकस्यकाशादुत्पन्नांस्त्रियमुषसं वधीरवधीः ॥ ८ ॥

८. हे इन्द्र, तुमने बल को इस प्रकार से सामर्थ्ययुक्त किया था। तुमने हननाभिलाषिणी तथा द्युलोक की दुहिता उषा का वध किया।

दिवश्चिद्घादुहितरंमहान्महीयमानाम् । उषासमिन्द्रसंपिणक् ॥९॥

दिवः । चित् । घ । दुहितरम् । महान् । महीयमानाम् ।
उषसम् । इन्द्र । सम् । पिणक् ॥ ९ ॥

हेइन्द्र महांस्त्वं दिवोदुहितरंद्युलोकस्यपुत्रीं महीयमानांपूज्यमानाम् उषसम् उषोदेवीं संपिणक्चिद संपिष्टवानसिखलु ॥ ९ ॥

९. हे महान् इन्द्र, तुमने द्युलोक की दुहिता तथा पूजनीया उषा को सम्पिष्ट किया था।

अथदशमी—

अपोषाअनसःसरत्संपिष्टादहबिभ्युषी ।
नियत्सींशिश्नथद्वृषा ॥ १० ॥ २० ॥

अप । उषाः । अनसः । सरत् । सम्ऽपिष्टात् । अह । बिभ्युषी ।
नि । यत् । सीम् । शिश्नथत् । वृषा ॥ १० ॥ २० ॥

वृषा कामानांवर्षितेन्द्रः यद्यदासीमेतत् उषःसंबन्धिशकटंनिशिश्नथत् न्यवधीत् तदा उषाः उषोदेवता बिभ्युषी इन्द्रसकाशाद्भीतासतीसंपिष्टात् इन्द्रेणसंचूर्णितादनसःशकटात् अपसरत्अपगमत् अहेतिपूरणः ॥ १० ॥

१०. अभीष्टवर्षी इन्द्र ने जब उषा के शकट को भग्न किया था तब उषा भीत हो करके इन्द्र-द्वारा भग्न शकट के ऊपर से अवतीर्ण हुई थी।

एतदस्या अनः शये सुसंपिष्टं विपाश्या। ससार सीं परावतः ॥११॥

एतत् । अस्याः । अनः । शये । सुसम्ऽपिष्टम् । विऽपाशि ।
आ । ससार । सीम् । पराऽवतः ॥ ११ ॥

सुसंपिष्टमिन्द्रेणसुष्ठुसंचूर्णितमस्याउषसःसंबन्धि एतदनःशकटं विपाशि विपाडाख्यानदी तस्यां तत्तीरेआशये आसमन्ताच्छेते अशेत सीमियमुषोदेवताशकटेभग्नेसति परावतोदूरदेशात् ससार अपससार ॥ ११ ॥

११. इन्द्र-द्वारा विचूर्णित उषा देवी का शकट विपाशा नदी के तीर पर गिर पड़ा। शकट के टूट जाने पर उषादेवी दूर देश से अपसृत हो गई।

उत सिन्धुं विबाल्यं वितस्थानामधि क्षमि। परि ष्ठा इन्द्र मायया ॥१२॥

उत । सिन्धुम् । विऽबाल्यम् । विऽतस्थानाम् । अधि । क्षमि ।
परि । स्थाः । इन्द्र । मायया ॥ १२ ॥

हेइन्द्र उतापिच विबाल्यं विगतबाल्यावस्थांसंपूर्णजलां वितस्थानांवितिष्ठमानांसिन्धुं नदीम् अधिक्षमि क्षमायांभूम्यामनयापरिष्ठाः पर्यस्थाः सर्वतःस्थापनंकृतवानसि ॥ १२ ॥

१२. हे इन्द्र, तुमने सम्पूर्ण जलों तथा तिष्ठमाना नदी को पृथ्वी के ऊपर बुद्धिबल से सर्वत्र संस्थापित किया था।

अथ त्रयोदशी—

उत शुष्णस्य धृष्णुया प्र मृक्षो अभि वेदनम्। पुरो यदस्य संपिणक् ॥१३॥

उत । शुष्णस्य । धृष्णुऽया । प्र । मृक्षः । अभि । वेदनम् ।
पुरः । यत् । अस्य । सम्ऽपिणक् ॥ १३ ॥

उतापिच हेइन्द्र धृष्णुया धर्षकस्त्वं शुष्णस्यशुष्णनामोऽसुरस्यसंबन्धिवेदनं वित्तम् अपि अभितःसर्वतः प्रमुषः प्रकर्षेणामुष्णाः यद्वा अस्यशुष्णस्यपुरःपुराणिनगराणिसंपिनक् संपिष्टवानसि तदाप्रमुषइतिसंबन्धः ॥ १३ ॥

१३. हे इन्द्र, तुम वर्षणकारी हो। जिस समय तुमने शुष्ण के नगरों को सम्पिष्ट किया था, उस समय तुमने उसके धन को लूटा था।

उतदासंकौलितरंबृहतःपर्वतादधि। अवाहन्निन्द्रशम्बरम् ॥ १४ ॥

उत। दासम्। कौलिऽतरम्। बृहतः। पर्वतात्। अधि। अव। अहन्। इन्द्र। शम्बरम् ॥ १४ ॥

उतापिच हेइन्द्र त्वं दासमुपक्षपयितारंकौलितरं कुलितरनाम्नोपत्यं शम्बरमसुरं बृहतोमहतःपर्वतादद्रेरधिउपरि अव अवाचीनंकृत्वा अहन् हतवानसि ॥ १४ ॥

१४. हे इन्द्र, तुमने कुलितर के पुत्र दास सम्बर को बृहत् पर्वत के ऊपर निम्नमुख करके मारा था।

उतदासस्यवर्चिनःसहस्राणिशतावधीः। अधिपञ्चप्रधीँरिव ॥ १५ ॥ २१

उत। दासस्य। वर्चिनः। सहस्राणि। शता। अवधीः। अधि। पञ्च। प्रधीन्ऽइव ॥ १५ ॥ २१ ॥

उतापिच हेइन्द्र त्वं प्रधीनिव चक्रस्यपरितःस्थितान्शङ्कूनिव हिंसकान् पञ्चशता पञ्चशतानि पञ्चशतसंख्याकान् सहस्राणि सहस्रसंख्याकान् दासस्यलोकानामुपक्षपयितुः वर्चिनः वर्चिनामकस्यासुरस्यसंबन्धिनोनुचरान्पुरुषानपि अधिकम् अवधीर्हतवानसि ॥ १५ ॥

१५. हे इन्द्र, चक्र के चतुर्दिक् स्थित शंकु (हिंसक) की तरह वर्चि नामक दास के चतुर्दिक् स्थित पञ्चशत-संख्यक और सहस्र-संख्यक अनुचरों को तुमने विशेष रूप से मारा था।

॥ इतितृतीयस्यपञ्चमेएकविंशोवर्गः ॥ २१ ॥

अथषोडशी—

उतत्यंपुत्रमग्रुवःपरावृक्तंशतक्रतुः। उक्थेष्विन्द्रआभजत् ॥ १६ ॥

उत। त्यम्। पुत्रम्। अग्रुवः। पराऽवृक्तम्। शतऽक्रतुः। उक्थेषु। इन्द्रः। आ। अभजत् ॥ १६ ॥

उतापि च शतक्रतुः शतकर्मेन्द्रः त्वं तं प्रसिद्धम् अश्नः एतन्नाम्न्याः पुत्रं परावृक्-मेतन्नामकम् उक्थेषु स्तोत्रेष्वाभजत् भागिनमकरोत् अयमर्थोऽस्माभिः पुनःपुनरस्यामृचि प्रतिपादित इति ॥ १६ ॥

१६. शतकर्मा इन्द्र ने अश्नु के पुत्र परावृक्त को स्तोत्र-भागी किया था।

उत त्या तुर्वशायदू अस्नातारा शचीपतिः । इन्द्रो विद्वाँ अपारयत् ॥ १७ ॥

उत । त्या । तुर्वशायदू इति । अस्नातारा । शचीऽपतिः ।
इन्द्रः । विद्वान् । अपारयत् ॥ १७ ॥

उतापि च अस्नातारावस्नातारौ ययातिशापादनभिषिक्तौ त्या त्यौ तौ प्रसिद्धौ तुर्वशायदू तुर्वशनामानं यदुनामकं च राजानौ शचीपतिः कर्मणां पालकः यद्वा शचीन्द्रस्य भार्या तस्याः पतिर्भर्ता वि-द्वान्कर्माभिज्ञानमिन्द्रः अपारयदभिषेकार्हावकरोत् ॥ १७ ॥

१७. ययाति के शाप से अनभिषिक्त प्रसिद्ध राजा यदु और तुर्वश को शचीपति विद्वान् इन्द्र ने अभिषेक-योग्य बनाया था।

उत त्या सद्य आर्या सरयोरिन्द्र पारतः । अर्णाचित्ररथावधीः ॥ १८ ॥

उत । त्या । सद्यः । आर्या । सरयोः । इन्द्र । पारतः ।
अर्णाचित्ररथा । अवधीः ॥ १८ ॥

उतापि च सद्यः सद्यः हे इन्द्र त्वं त्या त्यौ तौ आर्या आर्यौ आर्यत्वाभिमानिनौ सन्तावपि इन्द्रविषयभक्तिश्रद्धारहितावित्यर्थः सरयोः सरय्वा नद्याः पारतः परतीरे वसन्तौ अर्णाचित्ररथा अर्णनामकं चित्ररथनामकं च राजानौ अवधीः अहिंसीः ॥ १८ ॥

१८. हे इन्द्र, तुमने तत्क्षण सरयू नदी के पार में रहनेवाले, आर्य-स्वाभिमानी अर्ण और चित्ररथ नामक राजा का वध किया था।

अथैकोनविंशी—

अनु द्वा जहिता नयोऽन्धं श्रोणं च वृत्रहन् । न तत्ते सुम्नमष्टवे ॥ १९ ॥

अनु । द्वा । जहिता । नयः । अन्धम् । श्रोणम् । च । वृत्रऽहन् ।
न । तत् । ते । सुम्नम् । अष्टवे ॥ १९ ॥

---

१ ऋ० सं० १. ६. ९ ।

हेवृत्रहन् वृत्रस्यहिंसकेन्द्र त्वं जहिता जहितौ सर्वैर्बन्धुभिःत्यक्तौअन्धंचक्षुर्हीनमेकंश्रोणं पादहीनमपरंचद्वाद्वावेतौअनुनयः अन्धपङ्गुत्वपरिहारेणानुनीतवानसि हेइन्द्र ते त्वयादत्तं तत्सुम्नं सुखम् अष्टवे व्याप्तुंकोपिनभवतीतिशेषः ॥ १९ ॥

१९. हे वृत्रहन्ता, तुमने बन्धुओं-द्वारा त्यक्त अन्ध और पंगु को अनुनीत किया था अर्थात् उनके अन्धत्व और पंगुत्व को विनष्ट किया था। तुम्हारे द्वारा प्रदत्त सुख को अतिक्रमण करने में कोई भी समर्थ नहीं हो सकता है।

**शतमश्मन्मयीनांपुरामिन्द्रोव्यास्यत्।दिवोदासायदाशुषे॥२०॥२२**

शतम् । अश्मन्ऽमयीनाम् । पुराम् । इन्द्रः । वि । आस्यत् ।
दिवःऽदासाय । दाशुषे ॥ २० ॥ २२ ॥

इन्द्रः अश्मन्मयीनां पाषाणैर्निर्मितानां पुरां शम्बरस्यसंबन्धिनांनगराणां शतं शतसंख्याकं दिवोदासायैतन्नामकायदाशुषेहविर्दत्तवतेयजमानायव्यास्यत् व्यक्षिपत् ॥ २० ॥

२०. इन्द्र ने हव्यदाता यजमान दिवोदास को शम्बर के पाषाण-निर्मित शतसंख्यक नगर दिये।

**अस्वापयद्दभीतयेसहस्रात्रिंशतंहथैः।दासानामिन्द्रोमायया॥२१॥**

अस्वापयत् । दभीतये । सहस्रा । त्रिंशतम् । हथैः । दासानाम् ।
इन्द्रः । मायया ॥ २१ ॥

इन्द्रोमायया स्वकीययाशक्त्या दासानांलोकानामुपक्षपयितॄणांराक्षसादीनांत्रिंशतं त्रिंशत्संख्याकानिसहस्राणिसहस्राणि दभीतयेदभीतिनामकायर्षये हथैर्हननसाधनैरायुधैरस्वापय-दवधीत् ॥ २१ ॥ इन्द्र ने दभीति के लिए अपनी शक्ति से त्रिंशत्-सहस्र-संख्यक राक्षसों को हनन-साधन आयुधों के द्वारा सुला दिया था।

**सघेदुतासिवृत्रहन्त्समानइन्द्रगोपतिः।यस्ताविश्वानिचिच्युषे॥२२॥**

सः । घ । इत् । उत । असि । वृत्रऽहन् । समानः । इन्द्र ।
गोःऽपतिः । यः । ता । विश्वानि । चिच्युषे ॥ २२ ॥

उतापिच हेइन्द्र यस्त्वं ता तानि विश्वानि समस्तान्शत्रून्चिच्युषे प्राच्यावयः हेवृत्रहन् वृत्राणांशत्रूणांहिंसकेन्द्र गोपतिर्गवांपालकः सत्वंसमानःसर्वेषांयजमानानांसमःसन् प्रख्यातोसि घेदितिपूरणौ ॥ २२ ॥

२२. हे इन्द्र, तुमने इन समस्त शत्रुओं को प्रच्युत किया है। हे शत्रुओं के हिंसक इन्द्र, तुम गौओं के पालक हो। तुम सम्पूर्ण यजमानों के लिए समान रूप से प्रख्यात हो।

अथत्रयोविंशी–

उतनूनंयदिन्द्रियंकरिष्याइन्द्रपौंस्यम् । अद्यानकिष्टदामिनत् ।२३।

उत । नूनम् । यत् । इन्द्रियम् । करिष्याः । इन्द्र । पौंस्यम् ।
अद्य । नकिः । तत् । आ । मिनत् ॥ २३ ॥

उतापिच हेइन्द्र यत्पौंस्यंत्वदीयंबलम् इन्द्रियं सामर्थ्योपेतं नूनंकरिष्याः कृतवानसितत् अद्य अधुनातनः कश्चित्तद्बलंनकिरामिनत् नहिंस्यात् ॥ २३ ॥

२३. हे इन्द्र, जिस लिए तुमने अपने बल को सामर्थ्योपेत किया है; उसी लिए आज भी कोई व्यक्ति उसकी हिंसा नहीं कर सकता है।

वामंवामंतआदुरेदेवोददात्वर्यमा ।
वामंपूषावामंभगोवामंदेवःकरूळती ।।२४।।२३।।

वामम्ऽवामम् । ते । आऽदुरे । देवः । ददातु । अर्यमा । वामम् ।
पूषा । वामम् । भगः । वामम् । देवः । करूळती ॥ २४ ॥ २३ ॥

हेआदुरे शत्रूणांदारयितरिन्द्र ते तव वामंवामं वननीयंसंभजनीयंधनमस्ति लोकेतत्सर्वंवसुअर्यमाअरीणांनियमयिता एतन्नामकोदेवःददातु प्रयच्छतु तथा करूळती कृत्तदन्तः पूषापोषकोदेवः वामंधनंददातु भगोपिधनंददातु अत्रकरूळतीत्येतत्संनिहितत्वाद्भगस्येत्यनेनसंबन्धनीयम् अथवा अर्यमादीनांत्रयाणामपिविशेषणत्वेनभाव्यं कथंपूष्णोविशेषणंस्यादिति साकांक्षत्वात् न सांनिध्याकांक्षयोःसद्भावेपियोग्यतामन्तरेणान्वयायोगात् तस्मात्पूषाप्रपिष्टभागोदन्तकोहीत्यादिश्रुतिषुपूष्णएवादन्तकत्वेनप्रसिद्धेर्व्यवहितस्यापितस्यैवविशेषणत्वंयुक्तं वामं वननीयंभवतीत्यादिनिरुक्तमत्रद्रष्टव्यम् ॥ २४ ॥

२४. हे शत्रुविनाशक इन्द्र, अर्यमादेव तुम्हें वह मनोहर धन दान करें, दन्तहीन पूषा वह मनोहर धन दान करें और भग वह मनोहर धन दान करें।

॥ इतितृतीयस्यषष्ठेत्रयोविंशोवर्गः ॥ २३ ॥

कयानइतिपञ्चदशर्चंदशमंसूक्तंवामदेवस्यार्षमैन्द्रं गायत्रम् अभीषुणइत्येषापादनिचृन्नामगायत्री त्रयःसप्तकाःपादनिचृदितितल्लक्षणयुक्तत्वात् तथाचानुक्रमणिका—कयापञ्चोनाभीषुपादनिचृदिति । सूक्तविनियोगोलैङ्गिकः अग्निष्टोमेषाळ्हेपृष्ठ्याहनिमाध्यन्दिनेसवनेमैत्रावरुणस्यकयानश्चित्रइत्यृचःस्तोत्रियः सूत्रितंच—होत्रकाणांकयानश्चित्रआभुवदिति । वरुणप्रघासेषुकायस्यहविषोनुवाक्याकयानइत्येषा तथाचसूत्रं—कयानश्चित्रआभुवद्धिरण्यगर्भःसमवर्तताग्रइति ।

१ नि० ६. ३१.।

तत्रप्रथमा—

कयानश्चित्रआभुवदूतीसदावृधःसखा । कयाशचिष्ठयावृता ॥१॥

कया । नः । चित्रः । आ । भुवत् । ऊती । सदाऽवृधः । सखा ।
कया । शचिष्ठया । वृता ॥ १ ॥

सदावृधः सदावर्धमानः चित्रश्चायनीयः पूजनीयः सखा मित्रभूतइन्द्रः कया ऊती ऊत्या तर्पणेननोस्मान् आभुवदाभिमुख्येनभवेत् शचिष्ठया प्रज्ञावत्तमया प्रज्ञासहितमनुष्ठीयमानेन कयावृताकेनवर्तनेनकर्मणाच आभिमुखोभवेत् ॥ १ ॥

१. सर्वदा वर्द्धमान, पूजनीय और मित्रभूत इन्द्र किस तर्पण-द्वारा हमारे अभिमुख आगमन करेंगे ? किस प्रज्ञायुक्त श्रेष्ठ कर्म-द्वारा हम लोगों के अभिमुख आगमन करेंगे ।

कस्त्वासत्योमदानांमंहिष्ठोमत्सदन्धसः । दृळ्हाचिदारुजेवसु ॥२॥

कः । त्वा । सत्यः । मदानाम् । मंहिष्ठः । मत्सत् । अन्धसः ।
दृळ्हा । चित् । आऽरुजे । वसु ॥ २ ॥

मंहिष्ठःपूजनीयः सत्यः सत्यभूतः मदानांमादयितॄणांमध्येकोमदकरः अन्धसः सोमस्य रसः दृळ्हाचिद्दृढान्यपि वसु वसूनि शत्रूणांधनानि आरुजे आसमन्ताद्रुजं हेइन्द्र त्वा त्वां मत्सत् मादयेत् ॥ २ ॥

२. हे इन्द्र, पूजनीय, सत्यभूत और हर्षकर सोमरसों के मध्य में कौन सोमरस शत्रुओं के धन को विनष्ट करने के लिए तुम्हें हृष्ट करेगा ?

अभीषुणःसखीनामविताजरितॄणाम् । शतंभवास्यूतिभिः ॥ ३ ॥

अभि । सु । नः । सखीनाम् । अविता । जरितॄणाम् । शतम् ।
भवासि । ऊतिऽभिः ॥ ३ ॥

हेइन्द्र त्वं सखीनांसमानख्यातीनां जरितॄणां स्तोतॄणाम् अवितारक्षिता त्वं शतं शतेन बह्वीभिरूतिभीरक्षाभिःसह नोस्माकं सु सुष्ठु अभिभवासि अभिमुखोभव ॥ ३ ॥

३. हे इन्द्र, तुम सखा-स्वरूप स्तोताओं के रक्षक हो । तुम बहुत प्रकार की रक्षा के साथ हमारे अभिमुख आगमन करो ।

अभीनआववृत्स्वचक्रंनवृत्तमर्वतः । नियुद्भिश्चर्षणीनाम् ॥ ४ ॥

अभि । नः । आ । ववृत्स्व । चक्रम् । न । वृत्तम् । अर्वतः ।
नियुत्ऽभिः । चर्षणीनाम् ॥ ४ ॥

हेइन्द्र त्वं वृत्तं वर्तमानंचक्रमिव अर्वतः उपगन्तॄनस्मान् चर्षणीनाम् अस्मदीयानांमनुष्याणां नियुद्भिः स्तुतिभिः अभ्याववृत्स्व अभ्यावर्तस्व ॥ ४ ॥

४. हे इन्द्र, हम लोग तुम्हारे उपगन्ता हैं। तुम हम मनुष्यों की स्तुति से प्रसन्न होकर हमारे निकट वृत्ताकार चक्र की तरह प्रत्यागत होओ।

प्रवताहिक्रतूनामाहापदेवगच्छसि । अभक्षिसूर्येसचा ॥ ५॥२४ ॥

प्रऽवता । हि । क्रतूनाम् । आ । ह । पदाऽइव । गच्छसि । अभक्षि ।
सूर्ये । सचा ॥ ५ ॥ २४ ॥

हेइन्द्र त्वं क्रतूनां कर्मणां यजमानानांसंबन्धिनः प्रवता प्रवतः प्रवणान्प्रदेशान्प्रत्येव पदानिस्वकीयानिस्थानानीव आगच्छसिहि आगतोभवसिखलु हेतिपूरणः हेइन्द्र त्वाम् अहम् सूर्ये सूर्येणसचासह अभक्षिभजे ॥ ५ ॥

५. हे इन्द्र, तुम यज्ञ के प्रवण-प्रदेश में अपने स्थान को जानकर आगमन करते हो। हे इन्द्र, हम सूर्य के साथ तुम्हारा सम्भजन करते हैं।

अथषष्ठी–

संयत्तइन्द्रमन्यवःसंचक्राणिदधन्विरे । अधत्वेअधसूर्ये ॥ ६ ॥

सम् । यत् । ते । इन्द्र । मन्यवः । सम् । चक्राणि । दधन्विरे ।
अर्ध । त्वे इति । अर्ध । सूर्ये ॥ ६ ॥

हेइन्द्र ते त्वदर्थं मन्यवः स्तुतयः यद्यदासंदधन्विरे अस्माभिरनुमन्यन्ते चक्राणि चक्रमाणानिकर्माणिचसंदधन्विरे अध तदानीं ताः स्तुतयः तानिकर्माणिच त्वे त्वयि भवन्ति अध तदनन्तरंसूर्येचभवन्ति ॥ ६ ॥

६. हे इन्द्र, तुम्हारे लिए सम्पादित स्तुति और कर्म जब हम लोगों के द्वारा अनुमन्यमान होते हैं तब वे पहले तुम्हारे होते हैं और उसके बाद सूर्य के होते हैं।

उतस्माहित्वामाहुरिन्मघवानंशचीपते । दातारमविदीधयुम् ॥७॥

उत । स्म । हि । त्वाम् । आहुः । इत् । मघऽवानम् । शचीऽपते ।
दातारम् । अविऽदीधयुम् ॥ ७ ॥

हेशचीपते कर्मपालकेन्द्र उतापिच मघवानं धनवन्तं दातारं स्तोतृभ्योभीष्टप्रदं त्वा त्वामविदीधयुं विदीधयुरदीप्यमानः नविदीधयुरविदीधयुःतंदीप्यमानमाहुःस्म प्रवदन्तिखलु हीदिति पूरणार्थम् ॥ ७ ॥

७. हे कर्मपालक इन्द्र, तुम्हें लोग धनवान्, स्तोताओं के अभीष्ट-प्रद और दीप्तिमान् कहते हैं।

उतस्मासद्यइत्परिंशशमानायसुन्वते । पुरूचिन्मंहसेवसु ॥ ८ ॥

उत । स्म । सद्यः । इत् । परिं । शशमानायं । सुन्वते । पुरु । चित् । मंहसे । वसु ॥ ८ ॥

उतापिच हेइन्द्र त्वं सद्यइत् सद्यएव शशमानाय स्तुतिंकुर्वते शशमानःशंसमानइतियास्केनोक्तत्वात् । सुन्वते सोमाभिषवंकुर्वतेयजमानाय पुरुचित् पुरूणिबहून्यपिवसुवसूनि धनानिपरि परितोमंहसेस्म प्रयच्छसिखलु ॥ ८ ॥

८. हे इन्द्र, तुम क्षणभर में ही स्तुतिकारी तथा सोमाभिषवकारी यजमान को बहुत धन प्रदान करते हो।

नहिष्मातेशतंचनराधोवरन्तआमुरः । नच्यौत्नानिकरिष्यतः ॥ ९ ॥

नहि । स्म । ते । शतम् । चन । राधः । वरन्ते । आऽमुरः । न । च्यौत्नानि । करिष्यतः ॥ ९ ॥

हेइन्द्र आमुरः बाधकाराक्षसादयः ते त्वदीयं शतंचन शतपरिमितमपि राधोधनं नहिवरन्तेस्म नवारयन्तिखलु किंच शत्रूणांहिंसनंकरिष्यतः तव च्यौत्नानि बलानि नवारयन्ति ॥ ९ ॥

९. हे इन्द्र, बाधक राक्षस आदि तुम्हारे शतपरिमित धन का निवारण नहीं कर सकते हैं। शत्रुओं की हिंसा करनेवाले तुम्हारे बल का निवारण वे नहीं कर सकते हैं।

अथदशमी—

अस्माँअवन्तुतेशतमस्मान्त्सहस्रंमूतयः ।
अस्मान्विश्वाअभिष्टयः ॥ १० ॥ २५ ॥

अस्मान् । अवन्तु । ते । शतम् । अस्मान् । सहस्रम् । ऊतयः । अस्मान् । विश्वाः । अभिष्टयः ॥ १० ॥ २५ ॥

१ नि० ६. ८.

हेइन्द्र ते त्वदीयाः शतं शतसंख्याकाः ऊतयोरक्षाः अस्मानवन्तु रक्षन्तु सहस्रं सहस्रसंख्याकास्त्वदीयारक्षाः अस्मानवन्तु विश्वासर्वाण्यभीष्टयस्त्वदीयान्यभिगमनानिअस्मानवन्तु ॥ १० ॥ हे इन्द्र, तुम्हारी शतसंख्यक रक्षा हम लोगों की रक्षा करे। तुम्हारी सहस्रसंख्यक रक्षा हम लोगों की रक्षा करे। तुम्हारा समस्त अभिगमन हम लोगों की रक्षा करे।

अस्माँइहावृणीष्वसख्यायस्वस्तये। महोरायेदिवित्मते ॥११॥

अस्मान् । इह । वृणीष्व । सख्याय । स्वस्तये । महः । राये । दिवित्मते ॥ ११ ॥

हेइन्द्र त्वम् इहास्मिन्यज्ञे अस्मान्यजमानान्सख्याय सखित्वाय स्वस्तये अविनाशायच महोमहते दिवित्मते दीप्तिमते राये धनायच वृणीष्व संभजस्व ॥ ११ ॥

११. हे इन्द्र, इस यज्ञ में तुम हम यजमानों को सखा, अविनाशी तथा दीप्तियुक्त धन का भागी बनाओ।

अस्माँअविड्ढिविश्वहेन्द्रराया परीणसा ।
अस्मान्विश्वाभिरूतिभिः ॥ १२ ॥

अस्मान् । अविड्ढि । विश्वहा । इन्द्र । राया । परीणसा । अस्मान् । विश्वाभिः । ऊतिऽभिः ॥ १२ ॥

हेइन्द्र त्वं विश्वहा सर्वेष्वहःसुपरीणसा महताराया धनेन अस्मान्यजमानानविड्ढि रक्ष किंच विश्वाभिःसर्वाभिरूतिभीरक्षाभिः अस्मानविड्ढि ॥ १२ ॥

१२. हे इन्द्र, तुम प्रतिदिन हम लोगों की महान् धन-द्वारा रक्षा करो और समस्त रक्षा-द्वारा रक्षा करो।

अस्मभ्यंताँअपावृधिव्रजाँअस्तेवगोमतः ।
नवाभिरिन्द्रोतिभिः ॥ १३ ॥

अस्मभ्यम् । तान् । अप । वृधि । व्रजान् । अस्ताऽइव । गोऽमतः । नवाभिः । इन्द्र । ऊतिऽभिः ॥ १३ ॥

हेइन्द्र त्वं नवाभिर्नूतनाभिः ऊतिभीरक्षाभिः अस्तेव क्षेप्ताशूरइव गोमतोगोभिर्युक्तान्तान् प्रसिद्धान्व्रजान्गोनिवासानस्मभ्यमपावृधि उद्घाटय ॥ १३ ॥

१३. हे इन्द्र, तुम शूर की तरह नूतन रक्षा-द्वारा हम लोगों के लिए गोविशिष्ट गोव्रज (गौओं के निवासस्थान) का उद्धार करो।

अथचतुर्दशी—

अस्माकंधृष्णुयारथोद्युमाँइन्द्रानपच्युतः । गव्युरश्वयुरीयते ॥१४॥

अस्माकम् । धृष्णुऽया । रथः । द्युऽमान् । इन्द्र । अनपऽच्युतः ।
गव्युः । अश्वऽयुः । ईयते ॥ १४ ॥

हेइन्द्र धृष्णुया धृष्णुःशत्रूणांधर्षकः द्युमान्दीप्तिमाननपच्युतः विनाशरहितः गव्युर्गोमान् अश्वयुरश्ववान् अस्माकमस्मत्संबन्धीरथईयते सर्वत्रगच्छतु तेनरथेनास्मात्रक्षेत्यर्थः ॥ १४ ॥

१४. हे इन्द्र, हम लोगों का शत्रुधर्षक, दीप्तिमान्, विनाशरहित, गायुक्त और अश्वयुक्त रथ सर्वत्र गमन करे। उस रथ के साथ हम लोगों की रक्षा करो।

अस्माकमुत्तमंकृधीत्यनयाप्यादित्यंदष्ट्वारथादवरोहेत् तथाचसूत्रितम्—अस्माकमुत्तमंकृधीत्यादित्यमीक्षमाणोऽपित्याअवरोहेदिति ।

सैषापञ्चदशी—

अस्माकमुत्तमंकृधिश्रवोदेवेषुसूर्य । वर्षिष्ठन्द्यामिवोपरि ॥१५॥२६॥

अस्माकम् । उत्ऽतमम् । कृधि । श्रवः । देवेषु । सूर्य । वर्षिष्ठम् ।
द्याम्ऽइव । उपरि ॥ १५ ॥ २६ ॥

हेसूर्य सर्वस्यप्रेरकेन्द्र हेआदित्यवा त्वंदेवेषुद्योतमानेषुयज्ञ्यादिषुमध्ये अस्माकमस्मत्संबन्धिश्रवोयशःउत्तममुत्कृष्टंकृधि कुरु तत्रदृष्टान्तः—वर्षिष्ठमतिशयेनमहद्वंसेचनसमर्थवाद्यामिव द्युलोकं यथासर्वेषांलोकानामुपरिस्थितमुत्कृष्टमकरोस्तद्वत् ॥ १५ ॥

१५. हे सबके प्रेरक आदित्य, तुमने जिस प्रकार से सेचन-समर्थ द्युलोक को ऊपर में स्थापित किया है, उसी प्रकार से देवों के मध्य में हम लोगों के यश को उत्कृष्ट करो।

॥ इतितृतीयस्यषष्ठेषड्विंशोवर्गः ॥ २६ ॥

आतूनइन्द्रेतिचतुर्विंशत्यृचमेकादशंसूक्तं वामदेवस्यार्षंगायत्रमैन्द्रम् अन्त्येकनीनकेत्याद्येके इन्द्रस्याश्वदेवताके तथाचानुक्रान्तम्—आतूनश्चतुर्विंशतिरन्त्याभ्यामैन्द्राश्वौस्तुताविति । गतोविनियोगः ।

आतूनइन्द्रवृत्रहन्नस्माकमर्धमागहि । महान्महीभिरूतिभिः ॥१॥

आ । तु । नः । इन्द्र । वृत्रऽहन् । अस्माकम् । अर्धम् । आ ।
गहि । महान् । महीभिः । ऊतिऽभिः ॥ १ ॥

हे वृत्रहन् वृत्र ॥ शत्रूणां हिंसकेन्द्र त्वं नोस्मान्प्रति तु क्षिप्रमागच्छ हे इन्द्र महान्प्रभूतस्त्वं महीभिर्महतीभिरूतिभीरक्षाभिःसह अस्माकमर्धं समीपे आगहि आगच्छ ॥ १ ॥

१. हे शत्रुहिंसक इन्द्र, तुम शीघ्र ही हम लोगों के निकट आगमन करो। तुम महान् हो। महान् रक्षा के साथ तुम हमारे निकट आगमन करो।

भृमिश्चिद्घासि तूतुजिरा चित्र चित्रिणीष्वा। चित्रं कृणोष्यूतये ॥ २ ॥

भृमिः। चित्। घ। असि। तूतुजिः। आ। चित्र। चित्रिणीषु। आ। चित्रम्। कृणोषि। ऊतये ॥ २ ॥

हे चित्र चायनीय पूजनीयेन्द्र त्वं भृमिश्चित् भ्रमणशीलोपि तूतुजिः घासि अस्मदभीष्टप्रदाताचभवसि आकारश्चार्थे चित्रिणीषु चित्रकर्मयुक्तासु अस्मदूपासु प्रजासु चित्रं चायनीयं धनम् ऊतये रक्षणाय आकृणोषि आसमन्तात्करोषि ॥ २ ॥

२. हे पूजनीय इन्द्र, तुम भ्रमणशील और हम लोगों के अभीष्ट-दाता हो। चित्रकर्मयुक्त प्रजा को तुम रक्षा के लिए धन दान करते हो।

दभ्रेभिश्चिच्छशीयांसं हंसि व्राधन्तमोजसा। सखिभिर्ये त्वे सचा ॥ ३ ॥

दभ्रेभिः। चित्। शशीयांसम्। हंसि। व्राधन्तम्। ओजसा। सखिऽभिः। ये। त्वे इति। सचा ॥ ३ ॥

हे इन्द्र त्वं दभ्रेभिश्चित् अल्पैरपि सखिभिर्यजमानैःसह शशीयांसं शशाप्लुतगतो उत्प्लवमानं व्राधन्तं महान्तमपि शत्रुमोजसा बलेनहंसि नाशयसि ये यजमानाः त्वे त्वयि सचा संगताः तैरिति पूर्वेणसंबन्धः ॥ ३ ॥

३. हे इन्द्र, जो यजमान तुम्हारे साथ संगत होते हैं, उन थोड़े से भी यजमानों के साथ तुम उत्प्लवमान तथा वर्द्धमान शत्रुओं को अपने बल से विनष्ट करते हो।

वयमिन्द्र त्वे सचा वयं त्वाभि नोनुमः। अस्माँ अस्माँ इदुदव ॥ ४ ॥

वयम्। इन्द्र। त्वे इति। सचा। वयम्। त्वा। अभि। नोनुमः। अस्मान्ऽअस्मान्। इत्। उत्। अव ॥ ४ ॥

हे इन्द्र वयं यजमानास्त्वे त्वयि सचा संगताः स्मः वयं त्वा त्वाम् अभिनोनुमः अतिशयेनाभिष्टुमः हे इन्द्र त्वमपि अस्मानस्मानित् सर्वानस्मानेव उदव उत्कर्षेणरक्ष ॥ ४ ॥

४. हे इन्द्र, हम यजमान तुमसे संगत हुए हैं। हम अधिक परिमाण में तुम्हारी स्तुति करते हैं। तुम हम सबकी विशेष रूप से रक्षा करो।

अथपञ्चमी—

सनंश्चित्राभिरद्रिवोनवद्याभिरूतिभिः। अनाधृष्टाभिरागहि॥५॥२७॥

सः । नः । चित्राभिः । अद्रिऽवः । अनवद्याभिः । ऊतिऽभिः ।
अनाधृष्टाभिः । आ । गहि ॥ ५ ॥ २७ ॥

हेअद्रिवः वज्रवन्निन्द्र सत्वं चित्राभिश्चायनीयाभिरनवद्याभिरनिन्दिताभिः अनाधृष्टाभिः शत्रुभिरप्रधर्षितैः ऊतिभिःरक्षणैःसहितःसन नोस्मानागहि आगच्छ ॥ ५ ॥

५. हे वज्रधर, तुम मनोहर, अनिन्दित और शत्रुओं के द्वारा अप्रहर्षित अर्थात् अनाक्रमणीय रक्षाओं के साथ हमारे निकट आगमन करो। ॥ इतितृतीयस्यपष्ठेसप्तविंशोवर्गः ॥ २७ ॥

अथषष्ठी—

भूयामोषुत्वावतःसखायइन्द्रगोमतः। युजोवाजायघृष्वये ॥ ६ ॥

भूयामो इति । सु । त्वाऽवतः । सखायः । इन्द्र । गोऽमतः ।
युजः । वाजाय । घृष्वये ॥ ६ ॥

हेइन्द्र त्वावतः त्वत्सदृशस्यगोमतोगोभिर्युक्तस्यदेवस्यसंबन्धिनःसखायः स्तोतारोवयं घृष्वये महते वाजायान्नाययुजः संयुक्ताः सु सुष्ठु भूयामोभवामेव ॥ ६ ॥

६. हे इन्द्र, हम तुम्हारे सदृश गोयुक्त देवता के सखा हैं। प्रभूत अन्न के लिए तुम्हारे साथ संयुक्त होते हैं।

त्वंह्येकईशिषइन्द्रवाजस्यगोमतः। सनोयन्धिमहीमिषम् ॥७॥

त्वम् । हि । एकः । ईशिषे । इन्द्र । वाजस्य । गोऽमतः । सः ।
नः । यन्धि । महीम् । इषम् ॥ ७ ॥

हेइन्द्र हियस्मात्कारणात् त्वम् एकएव गोमतोगोभिर्युक्तस्यवाजस्यान्नस्य ईशिषे प्रभवसि अतःकारणात्सत्वंनोस्मभ्यंमहींमहतीमिषमन्नं यन्धि प्रयच्छ ॥ ७ ॥

७. हे इन्द्र, जिस कारण तुम ही एक गोयुक्त अन्न के स्वामी हो; इसलिए तुम हमें प्रभूत अन्न दान करो।

नत्वावरन्तेअन्यथायद्दित्ससिस्तुतोमघम्। स्तोतृभ्यइन्द्रगिर्वणः॥८॥

न । त्वा । वरन्ते । अन्यथा । यत् । दित्ससि । स्तुतः । मघम् ।
स्तोतृऽभ्यः । इन्द्र । गिर्वणः ॥ ८ ॥

हेइन्द्र गिर्वणः गिरांसंभक्तः स्तुतोस्माभिःसंस्तुतः यद्यदा स्तोतृभ्योस्मभ्यंमघंधनंदित्सासि दातुमिच्छासि तदा त्वा त्वामन्यथा प्रकारांतरेणनवरन्ते ननिवारयन्ति किन्तुसर्वेप्यनुकूलाएव भवन्ति ॥ ८ ॥ हे स्तुतियोग्य इन्द्र, जब तुम स्तुत होकर स्तोताओं को धन दान करने की इच्छा करते हो तब कोई भी उसे अन्यथा नहीं कर सकता है।

अभित्वागोतमागिरानूषतप्रदावने। इन्द्रवाजायघृष्वये ॥ ९ ॥

अभि। त्वा। गोतमाः। गिरा। अनूषत। प्र। दावने। युजः। वाजाय। घृष्वये ॥ ९ ॥

हेइन्द्र त्वा त्वामभिलक्षीकृत्य गोतमाएतन्नामकाःऋषयः गिरा स्तुतिरूपयावाचा दावने धनदानार्थंप्रानूषत प्रकर्षेणस्तुवन्ति घृष्वयेमहतेवाजायान्नायप्रस्तुवन्ति ॥ ९ ॥

९. हे इन्द्र, तुम्हें लक्ष्य करके गोतम नामवाले ऋषि धन और प्रभूत अन्न के लिए स्तुति वाक्य-द्वारा तुम्हारी स्तुति करते हैं।

प्रतेवोचामवीर्याइयामन्दसानआरुजः। पुरोदासीरभीत्य ॥ १० ॥ २८ ॥

प्र। ते। वोचाम। वीर्या। याः। मन्दसानः। आ। अरुजः। पुरः। दासीः। अभिऽइत्य ॥ १० ॥ २८ ॥

हेइन्द्र मन्दसानः सोमेनमोदमानस्त्वं दासीःक्षेपकस्यासुरस्यसम्भूताःयाःपुरःयानिपुराणि नगराणि अभीत्याभिगम्य आरुजः आसमन्तादभाङ्क्षीः हेइन्द्र तेत्वदीयानितत्र्यानिवीर्याणि वयंस्तोतारःप्रवोचाम प्रकर्षेणवदाम ॥ १० ॥

१०. हे इन्द्र, सोमपान से हृष्ट होकरके तुम क्षेपक असुरों के सम्पूर्ण नगरों में अभिगमन करके उन्हें भग्न कर देते हो। हे इन्द्र, हम स्तोता तुम्हारे उसी वीर्य का कीर्तन करते हैं।

तातेगृणन्तिवेधसोयानिचकर्थपौंस्या। सुतेष्विन्द्रगिर्वणः ॥ ११ ॥

ता। ते। गृणन्ति। वेधसः। यानि। चकर्थ। पौंस्या। सुतेषु। इन्द्र। गिर्वणः ॥ ११ ॥

हेइन्द्र गिर्वणः गिरांस्तुतिरूपाणांवाचांसंभक्त त्वं यानि पौंस्या पौंस्यानि बलानि चकर्थ कृतवानसि हेइन्द्र वेधसः प्राज्ञाः सुतेष्वभिषुतेषुसोमेषु तेत्वदीयानिता तानि बलानि गृणन्तिकीर्तयन्ति ॥ ११ ॥ हे इन्द्र, तुम स्तुतियोग्य हो। तुमने जिन बलों को प्रदर्शित किया है, हे इन्द्र, प्राज्ञगण सोमाभिषव होने पर तुम्हारे उन्हीं बल का संकीर्तन करते हैं।

अथद्वादशी—

अवींवृधन्तगोतंमाइन्द्रत्वेस्तोमंवाहसः।ऐषुधावीरवद्यशः ॥१२॥

अवींवृधन्त । गोतंमाः । इन्द्रं । त्वे इति । स्तोमंऽवाहसः । आ ।

एषु । धाः । वीरऽवंत् । यशः ॥ १२ ॥

स्तोमवाहसः स्तोमानांस्तोत्राणांवोढारः गोतमाऋषयः हेइन्द्र त्वे त्वामवीवृधन्त स्तोत्रैर्वर्धयन्ति त्वमेषुगोतमेषु वीरवत्पुत्रपौत्रादियुक्तंयशोन्नमाधाः निधेहि ॥ १२ ॥

१२. हे इन्द्र, स्तोत्रवाहक गोतमगण तुम्हें स्तोत्र-द्वारा वर्द्धित करते हैं। तुम इन्हें पुत्र पौत्रयुक्त अन्न दान करो।

यच्चिद्धिशश्वंतामसीन्द्रसाधारणस्त्वम्।तंत्वावयंहवामहे ॥ १३ ॥

यत् । चित् । हि । शश्वंताम् । असि । इन्द्रं । साधारणः ।

त्वम् । तम् । त्वा । वयम् । हवामहे ॥ १३ ॥

हेइन्द्र त्वं यच्चिद्धि यद्यपिखलु शश्वतां बहूनां सर्वेषांयजमानानांसाधारणोसि सामान्योभवसि तथापि तमेव त्वा त्वांवयंस्तोतारः हवामहे आह्वयामः ॥ १३ ॥

१३. हे इन्द्र, यद्यपि तुम सब यजमानों के साधारण देवता हो, तथापि हम स्तोता तुम्हारा आह्वान करते हैं।

अर्वाचीनोवसोभवास्मेसुमत्स्वान्धंसः।सोमांनामिन्द्रसोमपाः॥१४

अर्वाचीनः । वसो इतिं । भव । अस्मे इतिं । सु । मत्स्व ।

अन्धंसः । सोमांनाम् । इन्द्र । सोमऽपाः ॥ १४ ॥

हेवसोयज्ञेनिवासकेन्द्र त्वमस्मे अस्मासुयजमानेषु अर्वाचीनोभिमुखोभव तथा हेसोमपाः सोमानांपातरिन्द्र सोमानामन्धसोऽन्नेन सु सुष्ठु मत्स्व माद्य ॥ १४ ॥

१४. हे निवासप्रद इन्द्र, तुम हम यजमानों के अभिमुख आगमन करो। हे सोमपा, तुम सोमरूप अन्न-द्वारा हृष्ट होओ।

अथपञ्चदशी—

अस्माकंत्वामतीनामास्तोमंइन्द्रयच्छतु।अर्वागावर्तयाहरी॥१५॥

अस्माकम् । त्वा । मतीनाम् । आ । स्तोमः । इन्द्र । यच्छतु ।

अर्वाक् । आ । वर्तय । हरी इतिं ॥ १५ ॥

मतीनां स्तोतॄणां मन्यते: कर्तरि क्तिन् अस्माकं संबन्धिस्तोमः स्तोत्रं हे इन्द्र त्वा त्वामायच्छतु अस्मासु नियच्छतु त्वमपि हरी त्वदीयावश्वौ अर्वागस्मदभिमुखं यथा भवति तथा वर्तय परिवर्तनं कुरु ॥ १५ ॥ १५. हे इन्द्र, हम तुम्हारे स्तोता हैं। हमारा स्तोत्र तुम्हें हमारे निकट ले आये। तुम अश्वद्वय को हमारे अभिमुख परिवर्तित करो।

**पुरोळाशं च नो घसो जोषयासे गिरश्च नः। वधूयुरिव योषणाम् ॥१६॥२९**

पुरोळाशम्। च। नः। घसः। जोषयासे। गिरः। च। नः।
वधूयुःऽइव। योषणाम् ॥ १६ ॥ २९ ॥

हे इन्द्र त्वं नोऽस्मदीयं पुरोळाशं च पुरोडाशरूपमन्नं च घसः अद्धि तथा नोऽस्मदीया गिरश्च स्तुतिरूपाः वाचश्च जोषयासे सेवस्व तत्र दृष्टान्तः—वधूयुरिव स्त्रीकामो यथा योषणां स्त्रीणां गिरः सेवते तद्वत् ॥ १६ ॥

१६. हे इन्द्र, तुम हमारे पुरोडाश रूप अन्न का भक्षण करो। स्त्री-कामी पुरुष जैसे स्त्रियों के वचन की सेवा करता है, उसी तरह तुम हमारे स्तुतिवाक्य का सेवन करो।

**सहस्रं व्यतीनां युक्तानामिन्द्रमीमहे। शतं सोमस्य खार्यः ॥ १७ ॥**

सहस्रम्। व्यतीनाम्। युक्तानाम्। इन्द्रम्। ईमहे।
शतम्। सोमस्य। खार्यः ॥ १७ ॥

वयं स्तोतारः इन्द्रं परमैश्वर्ययुक्तं युक्तानां शिक्षितानां व्यतीनां गमनवतामश्वानां सहस्रं सहस्र-संख्याकम् ईमहे याचामहे तथा सोमस्याभिषुतसोमस्य शतं शतसंख्याकाः खार्यः खारीर्महे अत्र-मानविशेषवाचिना खारीशब्देन द्रोणकलशा उपलक्ष्यन्ते अपरिमितद्रोणकलशान्बहून्यज्ञान्याचामहे इत्यर्थः ॥१७॥

१७. हम स्तोता इन्द्र के निकट शिक्षित, शीघ्रगामी तथा सहस्रसंख्यक अश्वों की याचना करते हैं एवम् शतसंख्यक सोम-कलश की याचना करते हैं अर्थात् अपरिमित कलशवाले यज्ञ की याचना करते हैं।

**सहस्रा ते शता वयं गवामा च्यावयामसि। अस्मत्रा राध एतु ते ॥१८॥**

सहस्रा। ते। शता। वयम्। गवाम्। आ। च्यवयामसि।
अस्मऽत्रा। राधः। एतु। ते ॥ १८ ॥

हे इन्द्र ते त्वदीयानि गवां सहस्रा सहस्रसंख्याकानि शता शतसंख्याकानि च च्यावयामसि आच्यावयामः अस्मदभिमुखं कुर्मः तथा अस्मत्रा अस्मदीयं राधो धनं ते त्वत्तः एतु आगच्छतु ॥ १८ ॥

१८. हे इन्द्र, हम तुम्हारी शतसंख्यक और सहस्रसंख्यक गौओं को अपने अभिमुख करते हैं। हम लोगों का धन तुम्हारे निकट से आये।

**दश ते कलशानां हिरण्यानामधीमहि। भूरिदा असि वृत्रहन् ॥ १९ ॥**

दर्श । ते । कलशानाम् । हिरण्यानाम् । अधीमहि । भूरिऽदाः ।
असि । वृत्रऽहन् ॥ १९ ॥

हेइन्द्र ते त्वत्तः कलशानांकुम्भानां कुम्भपरिमितानामित्यर्थः हिरण्यानां हितरमणीया-नांधनानां दशसंख्याकानि अधीमहि धारयामः हेवृत्रहन् वृत्राणांशत्रूणांहिंसकेन्द्र त्वं भूरिदाअसि॰ बहुप्रदोभवसि ॥ १९ ॥

१९. हे इन्द्र, हम तुम्हारे समीप से दश कुम्भ-परिमित सुवर्ण धारण करते हैं। हे शत्रु-हिंसक इन्द्र, तुम सहस्रप्रद होते हो।

भूरिदाभूरिदेहिनोमादभ्रंभूर्याभर । भूरिघेदिन्द्रदित्ससि ॥ २० ॥
भूरिऽदाः । भूरि । देहि । नः । मा । दभ्रम् । भूरि । आ । भर ।
भूरि । घ । इत् । इन्द्र । दित्ससि ॥ २० ॥

हेइन्द्र भूरिदाः बहुप्रदस्त्वं भूरि बहुधनं नोस्मभ्यंदेहि प्रयच्छ किन्तु दभ्रमल्पधनंमाप्रयच्छ भूरिबहुकंधनमस्मभ्यमाभरआहर किंच भूरिइत् बहुलमेवधनंदित्ससिच अस्मभ्यंदातुमिच्छ-सिखलु ॥ २० ॥ हे इन्द्र, तुम बहुप्रद हो। तुम हम लोगों को बहुत धन दान करो। अल्प धन मत दो। तुम बहुत धन हम लोगों के लिए लाओ; क्योंकि तुम हम लोगों को प्रभूत धन देने की इच्छा करते हो।

भूरिदाह्यसिश्रुतःपुरुत्राशूरवृत्रहन् । आनोभजस्वराधसि ॥२१॥
भूरिऽदाः । हि । असि । श्रुतः । पुरुऽत्रा । शूर । वृत्रऽहन् ।
आ । नः । भजस्व । राधसि ॥ २१ ॥

हेवृत्रहन् वृत्रस्यहिंसक शूर विक्रान्तेन्द्र भूरिदाः बहुप्रदस्त्वं पुरुत्रा पुरुषुबहुषुयजमानेषुश्रु-तोसिहि विख्यातोभवसिखलु राधसि धनेनोस्मानाभजस्व आसमन्ताद्भागिनःकुरु ॥ २१ ॥

२१. हे वृत्रहिंसक विक्रान्त इन्द्र, तुम बहुप्रद रूप से बहुतेरे यज-मानों के निकट विख्यात हो। तुम हम लोगों को धन का भागी करो।

प्रतेबभ्रूविचक्षणशंसामिगोषणोनपात् । माभ्यांगाअनुशिश्रथः ॥ २२ ॥
प्र । ते । बभ्रू इति । विऽचक्षण । शंसामि । गोऽसनः ।
नपात् । मा । आभ्याम् । गाः । अनु । शिश्रथः ॥ २२ ॥

हेविचक्षण प्राज्ञेन्द्र ते त्वदीयौ बभ्रू बभ्रुवर्णावश्वौ प्रशंसामि प्रकर्षेणस्तौमि हेगोषणः गवां सनितः हेनपात् नपातयितः स्तोतॄनविनाशयितः किंतुपालयितरित्यर्थः हेइन्द्र त्वम् आभ्या त्वदी-याभ्यामश्वाभ्यांगाः अनु अस्मदीयागाःलक्षीकृत्य माशिश्रथः विनष्टामाकार्षीः गावोश्वदर्शनाद्वि-शीर्यन्ते तन्माभूदित्यर्थः ॥ २२ ॥

२२. हे प्राज्ञ इन्द्र, हम तुम्हारे पिङ्गलवर्ण अश्वद्वय की प्रशंसा करते हैं। हे गोप्रद, तुम स्तोताओं का विनाश नहीं करते हो। तुम इस अश्व-द्वय-द्वारा हमारी गौओं को विनष्ट न करना।

कनीनकेवविद्रधेनवैद्रुपदेअर्भके। बभ्रूयामेषुशोभेते ॥ २३ ॥

कनीनका इव। विद्रधे। नवे। द्रुपदे। अर्भके। बभ्रू इति। यामेषु। शोभेते इति ॥ २३ ॥

विद्रधे विद्धे व्यूढे नवे नवजाते अर्भके अल्पके द्रुपदे द्रुमाख्यस्थानेस्थिते कनीनकेइव कमनीयेशालभञ्जिकेइव हेइन्द्र बभ्रू बभ्रुवर्णौ त्वदीयावश्वौ यामेषु यज्ञेषु शोभेते कान्तियुक्तौभवतः कनीनकेकन्यकेकन्याकमनीयाभवतिक्वेयंनेतव्येतिवाकमनेनानीयतइतिवाकनतेर्वास्यात्कान्तिकर्मणइत्यस्य-निरुक्तम् ॥ २३ ॥

२३. हे इन्द्र, दृढ़, नव और क्षुद्र द्रुमाख्य स्थान में स्थित कमनीय शाल-भञ्जिका-द्वय (पुत्तलिका) की तरह तुम्हारे पिङ्गलवर्ण दोनों घोड़े यज्ञ में शोभा पाते हैं।[1]

अरंमउस्रयाम्णेरमनुस्रयाम्णे। बभ्रूयामेष्वस्रिधा ॥ २४ ॥ ३० ॥

अरम्। मे। उस्रऽयाम्ने। अरम्। अनुस्रऽयाम्ने। बभ्रू इति। यामेषु। अस्रिधा ॥ २४ ॥ ३० ॥

हेइन्द्र अस्रिधा अस्रिधौ अहिंसकौ बभ्रूबभ्रुवर्णौ त्वदीयावश्वौ यामेषु यज्ञेषु गमनेषु प्राप्तेषुसत्सु उस्रयाम्णे उस्राभ्यामनडुद्भ्यांयुक्तेनरथेनयातीत्युस्रयामा तस्मै मे मह्यम् अरमलं पर्याप्तकारिणौभवताम् अनुस्रयाम्णे पद्भ्यामेवगच्छते मह्यम् अरंपर्याप्तकारिणौभवताम् ॥ २४ ॥

२४. हे इन्द्र, हम जब वृषभयुक्त रथ-द्वारा गमन करें अथवा जब पद-द्वारा गमन करें, तब तुम्हारे अहिंसक तथा पिङ्गलवर्ण अश्वद्वय हमारे मंगलकारी हों।

॥ इतितृतीयस्यषष्ठेत्रिंशोवर्गः ॥ ३० ॥

॥ इतिचतुर्थेमण्डलेतृतीयोनुवाकः ॥ ३ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् ॥ पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

॥ इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेणसायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेतृतीयाष्टकेषष्ठोध्यायः ॥ ६ ॥

१ नि० ४, १५।

## ॥ श्रीगणेशायनमः ॥

यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत् ॥ निर्ममेतमहंवंदेविद्यातीर्थमहेश्वरम् ॥ १ ॥

चतुर्थेऽनुवाके त्रयोदश सूक्तानि तत्र प्रऋभुभ्यइत्येकादशर्चंप्रथमंसूक्तं वामदेवस्यार्षंत्रैष्टुभं तुह्यादिपरिभाषया इदमादिसूक्तपञ्चकमृभुदेवताकम् तथानुक्रमणिका—प्रऋभुभ्यएकादशार्भवंवाइति [1] व्यूढेद्वादशाहेचतुर्थेहनिवैश्वदेवशस्त्रेआर्भवनिविद्धानीयमिदं तथाचसूत्रितं—प्रऋभुभ्यःप्रऋभवोस्थितिवैश्वदेवमिति ।

तत्रप्रथमा—

ॐम् प्रऋ॒भुभ्यो॑दू॒तमि॑ववा॒चमि॑ष्यउप॒स्तिरे॒श्वैत॑रींधे॒नुमी॑ळे ।
येवात॑जूता॒स्तर॒णि॑भि॒रेवैः॒परि॒द्यांस॒द्योअ॒पसो॑बभू॒वुः ॥ १ ॥

प्र । ऋ॒भुऽभ्यः॑ । दू॒तम्ऽइ॑व । वाच॑म् । इ॒ष्ये॒ । उ॒प॒ऽस्तिरे॑ । श्वैत॑रीम् । धे॒नुम् । ई॒ळे॒ । ये । वात॑ऽजूताः । त॒रणि॑ऽभिः । एवैः॑ । परि॑ । द्याम् । स॒द्यः । अ॒पसः॑ । ब॒भू॒वुः ॥ १ ॥

तत्र ऋभूणांपूर्वंमनुष्याणामेवसतां तपसादेवत्वप्राप्तिः आर्भवंशंसत्यृभवोवैदेवेषुइत्यत्र ब्राह्मणे स्पष्टमाम्नाता । केचनऋभवोनामसूर्यरश्मयइत्याचक्षते । अहंयजमानः ऋभुभ्यउरुभासमानेभ्यएतन्नामकेभ्योदेवेभ्योवाचंस्तुतिरूपांप्रेष्ये प्रेरयामि किमिव दूतमिव यथादूतंस्वकार्यं प्रतिप्रेषयतितद्वत् किञ्च उपस्तिरे सोमोपस्तरणायश्वैतरींपयोयुक्तांश्वेततरांवाधेनुम् ईळे याचामि ऋभून् येऋभवोवातजूताः वातसमानगतयः अपसः जगदुपकारिकर्माणःसन्तः तरणिभिस्तारकैः एवैर्गमनशीलैरश्वैः द्याम् अन्तरिक्षं सद्यः तदानीमेव परिबभूवुः परिभवन्ति सर्वतोव्याप्नुवन्ति अथ एतस्यपद ऋभवस्युक्तत्वादित्थंसर्वस्यपरितोव्याप्नुवन्ति ॥ १ ॥

१. हम यजमान ऋभुओं के निकट दूत की तरह स्तुतिवाक्य प्रेरित करते हैं। हम उनके निकट सोम-उपस्तरण के लिए पयोयुक्त धेनु की याचना करते हैं। ऋभुगण वायु के समान गमन करनेवाले हैं। वे जगत् के उपकार-जनक कर्म को करनेवाले हैं। वे वेग से जानेवाले घोड़ों-द्वारा अन्तरिक्ष को क्षणमात्र में परिव्याप्त करते हैं।

अथद्वितीया—

यदा॒रम॑क्रन्नृ॒भवः॑पि॒तृभ्यां॒परि॑विष्टीवे॒षणा॑दं॒सना॑भिः ।
आदिद्दे॒वाना॒मुप॑स॒ख्यमा॑य॒न्धीरा॑सःपु॒ष्टिम॑वहन्म॒नायै॑ ॥ २ ॥

---

[1] ऐ० ब्रा० ३. ३०।

यदा । अरम् । अक्रन् । ऋभवः पितृऽभ्याम् । परिंऽविष्टी ।
वेषणा । दंसनाभिः । आत् । इत् । देवानाम् । उप । सख्यम् ।
आयन् । धीरासः । पुष्टिम् । अवहन् । मनायै ॥ २ ॥

यदा यस्मिन्काले ऋभवः पितृभ्यां मातापितृभ्यां परिविष्टी परिवेषणेन परिचर्यया वेषणा वेषणेन व्याप्त्या यद्वा वेषणमनयोर्युवत्वकरणेन दंसनाभिरन्यैश्चमसनिर्माणादिकर्मभिः अरम् अत्यर्थमक्रन् आदिदनन्तरमेव देवानामिन्द्रादीनां सख्यं सखित्वं समानख्यानत्वं देवतात्वमुपायन् आगमन् युवत्वाकरणेतिदेवत्वप्राप्तेरेकान्तत्वेनदेवैकरूपत्वादितिभावः किंच धीरासोधीराबुद्धिमन्तस्तेपांपुष्टि गणाविविधयांमनायै कतेन यजमानायावहन् वहन्ति धारयन्ति यद्वा सविपयांपुष्टिं मनायै मनसे प्रकृष्टमनस्कत्वायावहन् ॥ २ ॥

२. जब ऋभुओं ने माता-पिता को परिचर्या-द्वारा युवा किया था एवम् चमस-निर्माणादि अन्य कार्य करके वे अलंकृत हुए थे तब इन्द्रादि देवों के साथ उन्होंने उसी समय सख्य लाभ किया था। धीर ऋभुगण प्रकृष्ट मनस्वी हैं। वे यजमानों के लिए पुष्टि धारण करते हैं।

पुनर्येचक्रुःपितरायुवानासनायूपेवजरणाशयाना ।
तेवाजोविभ्वाँऋभुरिन्द्रवन्तोमधुप्सरसोनोवन्तुयज्ञम् ॥ ३ ॥

पुनः । ये । चक्रुः । पितरा । युवाना । सना । यूपाऽइव ।
जरणा । शयाना । ते । वाजः । विऽभ्वा । ऋभुः । इन्द्रऽवन्तः ।
मधुऽप्सरसः । नः । अवन्तु । यज्ञम् ॥ ३ ॥

येऋभवः पितरा मातापितरौ यूपेव छिन्नस्थाणुद्वय जरणा जीर्णौ शयाना शयानौ पुनः सना सनायुवाना युवानौ चक्रुः नित्यतरुणावकुर्वन् ते वाजोविभ्वाऋभुश्चएतन्नामकास्त्रयः सुधन्वनः आङ्गिरसस्यपुत्राऋभवः इन्द्रवन्तः अनुग्राहकेणेन्द्रेणयुक्ताः मधुप्सरसः मधुरस्यसोमरसस्यभक्षयितारोमनोहररूपावानोस्मदीयंयज्ञम् अवन्तु रक्षन्तु गच्छन्तुवा ॥ ३ ॥

३. ऋभुओं ने यूपकाष्ठ की तरह जीर्ण और शयनशील माता-पिता को नित्य तरुण किया था। वाज विभु और ऋभु इन्द्र के साथ सोम पान करके हम लोगों के यज्ञ की रक्षा करें।

अथचतुर्थी–

यत्संवत्समृभवोगामरक्षन्यत्संवत्समृभवोमाअपिंशन् ।
यत्संवत्समभरन्भासोअस्यास्ताभिःशमीभिरमृतत्वमाशुः ॥ ४ ॥

१ ऋ० सं० ९. १. ४.।

यत् । सम्ऽवत्सम् । ऋभवः । गाम् । अरक्षन् । यत् । सम्ऽवत्सम् ।
ऋभवः । माः । अपिंशन् । यत् । सम्ऽवत्सम् । अभरन् । भासः ।
अस्याः । ताभिः । शमीभिः । अमृतऽत्वम् । आशुः ॥ ४ ॥

संवत्सं संवसन्तिभूतान्यस्मिन्निति संवत्सः संवत्सरः संवत्सरपर्यन्तम् ऋभवो गांमृतामरक्षन् अपालयन् स्वसामर्थ्यादितियत् यदेतत्कर्मास्ति तथा संवत्सं संवत्सरम् ऋभवोमास्तस्याएवगोर्मांसमपिंशन् अवयवानकुर्वन्नितियत् किंच मृतायागोः त्वचापुच्छाद्यंसस्यामांसं समयोमपिंशन्नित्यर्थः किंच संवत्सं संवत्सरपर्यन्तमस्याःभासः अभरन् दीप्तीरवयवशोभाश्च कुर्वन् इतियत् ताभिःशमीभिः मृतायागोर्नवीकरणविषयैःकर्मभिरमृतत्वमाशुः देवत्वंप्राप्ताः देवैःकर्त्वैतिदेवत्वप्राप्तिसाधनत्वेनदेवैःप्रतिश्रुतत्वात् यद्वाग्रसंवत्समित्येतद्वत्सेनसहेतिव्याख्येयम् ॥ ४ ॥

४. ऋभुओं ने संवत्सर-पर्यन्त मृतक गौ का पालन किया था। ऋभुओं ने उस गौ के मांस को संवत्सर-पर्यन्त अवयवयुक्त किया था एवम् संवत्सर-पर्यन्त उसके शरीर के सौन्दर्य की रक्षा की थी। इन सकल-कार्यों-द्वारा उन्होंने देवत्व प्राप्त किया था।

ज्येष्ठआहचमसाद्वाकरेतिकनीयान्त्रीन्कृणवामेत्याह ।
कनिष्ठआहचतुरस्करेतित्वष्टऋभवस्तत्पनयद्वचोवः ॥५॥१॥

ज्येष्ठः । आह । चमसा । द्वा । कर । इति । कनीयान् । त्रीन् ।
कृणवाम । इति । आह । कनिष्ठः । आह । चतुरः । कर । इति ।
त्वष्टा । ऋभवः । तत् । पनयत् । वचः । वः ॥ ५ ॥ १ ॥

एकंचमसंचतुरःकृणोतनेतिश्यादेवदूतोग्निः ऋभूनाह देवत्वप्राप्त्युपायत्वेन तदा ते-षुमध्ये देवत्वप्राप्त्यैउत्कर्षकोज्येष्ठऋभुरितरानाह किमिति उच्यते—चमसाद्वाकरेति । एकंचमसंसन्तंद्वौकृणवामेतिकनीयान्तदनन्तरोविभ्वा त्रीनकृणवामकरवामेत्याह तत्कनिष्ठस्ततोपिकनीयान्वाजः चतुरस्कर चतुर्धाकरवामेत्याह तदेवचतुःकरणरूपं हेऋभवः त्वष्टा युष्मद्गुरुः वः वचः युष्मद्वचनं पनयदस्तौत् अङ्गीचकारेत्यर्थः ॥ १ ॥

५. ज्येष्ठ ऋभु ने कहा, "एक चमस को दो करेंगे।" उसके अवरज विभु ने कहा, "तीन करेंगे।" उसके कनिष्ठ वाज ने कहा, "चार प्रकार से करेंगे।" हे ऋभुओ, तुम्हारे गुरु त्वष्टा ने इस चतुष्करण-रूप तुम्हारे वचन को अङ्गीकार किया था।

सत्यमूचुर्नर एवा हि चक्रुरनु स्वधामृभवो जग्मुरेताम् ।
विभ्राजमानाँश्चमसाँ अहेवावेनत्त्वष्टा चतुरो ददृश्वान् ॥ ६ ॥

सत्यम् । ऊचुः । नरः । एव । हि । चक्रुः । अनु । स्वधाम् ।
ऋभवः । जग्मुः । एताम् । विभ्राजमानान् । चमसान् ।
अहाऽइव । अवेनत् । त्वष्टा । चतुरः । ददृश्वान् ॥ ६ ॥

नरो मनुष्यरूपा ऋभवः सत्यमूचुः सत्यमेवाब्रुवन् हि यस्मादेत एवैवं चक्रुः चतुरोऽकुर्वन् यथोक्तं तथैव कृतत्वादित्यभिप्रायः अनु चमसचतुष्करणानन्तरमेतां तृतीयसवनगतां स्वधां सोमात्मकमन्नमृभवो जग्मुः एकं चमसं चतुरः कृणोतन साकं देवैर्यज्ञियासो भविष्यथेति श्रुतत्वात् । अथ त्वष्टा देवो विभ्राजमानानहेव अहानीव दीप्यमानांश्चमसांश्चतुरो ददृश्वान् दृष्टवान्सन् अवेनत् अकामयत अङ्गीचकारेत्यर्थः ॥ ६ ॥

६. मनुष्य-रूप ऋभुओं ने सत्य कहा था; क्योंकि उन्होंने जैसा कहा, वैसा किया था। इसके अनन्तर वे ऋभुगण तृतीय सवनगत स्वधा के भागी हुए थे। दिवस की तरह दीप्तिमान् चार चमसों को देखकर त्वष्टा ने उसकी कामना की थी—उसे अङ्गीकार किया था।

द्वादश द्यून्यदगोह्यस्यातिथ्ये रणन्नृभवः ससन्तः ।
सुक्षेत्राकृण्वन्ननयन्त सिन्धून्धन्वातिष्ठन्नोषधीर्निम्नमापः ॥ ७ ॥

द्वादश । द्यून् । यत् । अगोह्यस्य । आतिथ्ये । रणन् । ऋभवः ।
ससन्तः । सुऽक्षेत्रा । अकृण्वन् । अनयन्त । सिन्धून् । धन्व । आ ।
अतिष्ठन् । ओषधीः । निम्नम् । आपः ॥ ७ ॥

संवत्सरमयत ऋभव इत्युक्तत्वात्तद्रूपेणस्तूयन्ते—यत् यदा द्वादश द्यून् दिवसान् आर्द्रादिद्वादशवृष्टिनक्षत्राणीत्यर्थः अगोह्यस्यागोप्यस्यादित्यस्य गृहे आतिथ्ये सततमागतोऽतिथिः तदुचितं सत्काररूपं कर्मातिथ्यं तदर्थं ससन्तः स्वपन्तः सुखेन निवसन्त ऋभवः रणन् अरमन्त अगोह्यस्य यस्य [illegible] तदानीं सुक्षेत्राकृण्वन् अकृष्टानि सस्यानि क्षेत्राणि वृष्ट्या सस्यादिसमृद्धानि अकुर्वन् सिन्धून् नदीरनयन्त प्रेरयन् तस्मिन्काले ओषधीः ओषधयो धन्व निरुदकस्थानमाश्रित्यातिष्ठन् निम्नं नीचस्थानमापोऽतिष्ठन् [illegible] ॥ ७ ॥

७. अगोपनीय सूर्य के गृह में जब ऋभुगण आर्द्रा से लेकर वृष्टि-कारक बारह नक्षत्रों तक अतिथिरूप से (सत्कृत होकर) सुखपूर्वक निवास करते हैं तब वे वृष्टि-द्वारा खेतों को शस्य-सम्पन्न करते और नदियों को प्रेरित करते हैं। जलविहीन स्थान में ओषधियाँ उत्पन्न होती हैं; और नीचे की तरफ़ जल जमा होता है।

रथंयेचक्रुःसुवृतंनरेष्ठांयेधेनुंविश्वजुवंविश्वरूपाम् ।
तआतक्षन्त्वृभवोरयिंनःस्ववसःस्वपसःसुहस्ताः ॥ ८ ॥

रथम् । ये । चक्रुः । सुऽवृतम् । नरेऽस्थाम् । ये । धेनुम् ।
विश्वऽजुवम् । विश्वऽरूपाम् । ते । आ । तक्षन्तु । ऋभवः । रयिम् ।
नः । सुऽअवसः । सुऽअपसः । सुऽहस्ताः ॥ ८ ॥

येऋभवः सुवृतंसुचक्रं सुष्ठुवर्तमानंवा नरेष्ठां नेतरिचक्रेवर्तमानंरथंचक्रुः येच विश्वजुवं विश्वस्य प्रेरयित्रीं विश्वरूपां बहुरूपाम् सर्वगामिकांवाधेनुं गां चक्रुरकुर्वन् बृहस्पतिर्विश्वरूपामुपाजतेतिश्रुतम् । तेमहान्तऋभवोनोऽस्माकंरयिंधनमातक्षन्तु सर्वतोनिष्पादयन्तु कीदृशास्तेऋभवः स्वपसः सुकर्माणः स्ववसः शोभनान्नोपेताः सुहस्ताः शोभनहस्ताः ॥ ८ ॥

८. हे ऋभुओ, जिन्होंने सुचक्र और चक्रविशिष्ट रथ का निर्माण किया था, जिन्होंने विश्व की प्रेरयित्री और बहुरूपा धेनु को उत्पन्न किया था, वे सुकर्मा, सुन्दर, अन्नयुक्त और सुहस्त ऋभु हम लोगों के धन का निष्पादन करें।

अपोह्येषामजुषन्तदेवाअभिक्रत्वामनसादीध्यानाः ।
वाजोदेवानामभवत्सुकर्मेन्द्रस्यऋभुक्षावरुणस्यविभ्वा ॥ ९ ॥

अपः । हि । एषाम् । अजुषन्त । देवाः । अभि । क्रत्वा । मनसा ।
दीध्यानाः । वाजः । देवानाम् । अभवत् । सुऽकर्मा । इन्द्रस्य ।
ऋभुक्षाः । वरुणस्य । विऽभ्वा ॥ ९ ॥

एषामृभूणामपोरथनिर्माणादिरूपंकर्मदेवाइन्द्रादयोऽजुषन्तासेवन्त इन्द्रोहरीयुयुजेअश्विनारथमित्यादिमंत्रोक्तप्रकारेणस्वीकृतवन्तइत्यर्थः । कीदृशास्ते क्रत्वा वरप्रदानरूपेणकर्मणामनसाशोभनेनचित्तेनानुग्रहयुक्तेनाभिदीध्यानाः दीप्यमानाः देवानामनुग्रहेणकिंलब्धमित्याह—सुकर्माशोभनव्यापारोवाजःकनीयान्देवानांसर्वेषांसंबन्ध्यभवत् तथेन्द्रस्यसंबन्धी ऋभुक्षाः ऋभुर्ज्येष्ठःविभ्वामध्यमोवरुणस्यसंबन्ध्यभवत् विपूरणः ॥ ९ ॥

९. इन्द्र आदि देवों ने वरप्रदान-रूप कर्म-द्वारा एवम् प्रसन्न अन्तःकरण-द्वारा देदीप्यमान होकर इन ऋभुओं के अश्व, रथ आदि निर्माण रूप कर्म को स्वीकार किया था। शोभन व्यापारवाले कनिष्ठ वाज सब देवों के सम्बन्धी हुए, ज्येष्ठ ऋभु इन्द्र के सम्बन्धी हुए और मध्यम विभु वरुण के सम्बन्धी हुए।

येहरीमेधयोक्थामदन्तइन्द्रायचक्रुःसुयुजायेअश्वा ।
तेरायस्पोषंद्रविणान्यस्मेधत्तऋभवःक्षेमयन्तोनमित्रम् ॥१०॥

ये । हरी इति । मेधया । उक्था । मदन्तः । इन्द्राय । चक्रुः ।
सुऽयुजा । ये । अश्वा । ते । रायः । पोषम् । द्रविणानि । अस्मे इति ।
धत्त । ऋभवः । क्षेमऽयन्तः । न । मित्रम् ॥ १० ॥

येऋभवः हरी अश्वौ मेधयाप्रज्ञया उक्था उक्थैःस्तुतिभिःमदन्तोहर्षयन्तोऽचक्रुः येच तौ सुयुजा सुयुजौ सुयोजमानौ अश्वा अश्वौ इन्द्रायेन्द्रार्थंचक्रुरकुर्वन् हेऋभवस्तेयूयंरायस्पोषं धनपुष्टिं द्रविणानिगवादिधनानिधसुखानिवाअस्मेअस्मासुधत्त धारयत किमिव क्षेमयन्तः क्षेममिच्छन्तोमित्रंन मित्रमिव अत्र यद्यप्येकएवऋभुनामाततसंबन्धादितरेप्यृभवउच्यन्ते प्राणभ-न्यायेन ॥ १० ॥

१०. हे ऋभुओ, जिन्होंने अश्वद्वय को प्रज्ञा तथा स्तुति-द्वारा हृष्ट किया था, जिन्होंने उस अश्वद्वय को इन्द्र के लिए सुयोजमान किया था, वही ऋभुगण हम लोगों को मंगलाकांक्षी मित्र की तरह धन, पुष्टि-गौ आदि धन तथा सुख दान करें।

इदाह्नःपीतिमुतवोमदंधुर्नऋतेश्रान्तस्यसख्यायदेवाः ।
तेनूनमस्मेऋभवोवसूनितृतीयेअस्मिन्त्सवनेदधात ।११।२।

इदा । अह्नः । पीतिम् । उत । वः । मदम् । धुः । न । ऋते ।
श्रान्तस्य । सख्याय । देवाः । ते । नूनम् । अस्मे इति । ऋभवः ।
वसूनि । तृतीये । अस्मिन् । सवने । दधात ॥ ११ ॥ २ ॥

इदा इदानीं चमसादिनिर्माणानन्तरम् अह्नः सुत्यासंबन्धिनस्तृतीयेसवनेपीतिं सोमपानम् उतापिच मदंतज्जनितं मदंयुष्माकं धुः ददुः देवाःश्रान्तस्यश्रान्तात्तपोयुक्तादृतेसख्याय सखित्वाय नभवन्ति देवाः यतस्तेश्रान्ताः अतोददुरित्यर्थः हेऋभवः तेमहान्तो यूयं नूनं निश्चयमस्मे अस्मासु अस्मिन्तृतीयसवने वसूनि धनानि दधात धारयत ॥ ११ ॥

११. चमस आदि निर्माण के अनन्तर तृतीय सवन में देवों ने तुम लोगों को सोमपान तथा तदुत्पन्न हर्ष प्रदान किया था। तपोयुक्त व्यक्ति को छोड़कर दूसरे के सखा देवगण नहीं होते हैं। हे ऋभुओ, इस तृतीय सवन में तुम निश्चय ही हम लोगों को धन प्रदान करो।

ऋभुर्विभ्वेत्येकादशर्चंद्वितीयंसूक्तं वामदेवस्यार्षंत्रैष्टुभमार्भवम् ऋभुर्विभ्वेत्यनुक्रमणिका । व्यूढेदशरात्रेपञ्चमेहनिवैश्वदेवशस्त्रे आर्भवनिविद्धानीयमिदम् ऋभुर्विभ्वास्तुषेभनामितिसूत्रितत्वात् ।

ऋभुर्विभ्वावाजइन्द्रोनोअच्छेमंयज्ञंरत्नधेयोपयात ।
इदाहिवोधिषणादेव्यह्नामधात्पीतिंसंमदाअग्मतावः ॥ १ ॥

ऋभुः । विऽभ्वा । वाजः । इन्द्रः । नः । अच्छ । इमम् । यज्ञम् । रत्नऽधेया । उप । यात । इदा । हि । वः । धिषणा । देवी । अह्नाम् । अधात् । पीतिम् । सम् । मदाः । अग्मत । वः ॥ १ ॥

ऋभुर्विभ्वावाजइन्द्रइत्येतेदेवाः नोस्मदीयमिमंयज्ञमच्छाभिमुखंरत्नधेयाऽस्मभ्यंरत्नदानाय उपयातोपगच्छत ननु इन्द्रःसोमस्वामित्वादागच्छतु कथमेतेषांयज्ञप्राप्तिरितिचेदुच्यते—इदाहि इदानींखलु वोयुष्माकंधिषणा वाक् देवी प्रजापतेःसम्बन्धिनी अह्नां सोमाभिषवसम्बन्धिनां पीतिं सोमपानमधात् प्रजापतिरब्रवीत्सवितारंतवहाइमेन्तेवासास्त्वमेवैभिःसम्पिबस्वेतिब्राह्मणम् । यस्मादेवंतस्मात्मदाश्चवोयुष्मान्समग्मत सङ्गताः यद्वासोमवाद्देवैः सङ्गताः ॥ १ ॥

१. हे ऋभु, विभु, वाज और इन्द्र, रत्न दान करने के लिए तुम लोग हमारे इस यज्ञ में आओ; क्योंकि अभी दिन में वाक्देवी तुम लोगों को सोमाभिषव-सम्बन्धी प्रीति दान करती हैं। इसलिए सोमजनित हर्ष तुम लोगों के साथ संगत हो।

विदानासोजन्मनोवाजरत्नाउतऋतुभिर्ऋभवोमादयध्वम् ।
संवोमदाअग्मतसंपुरंधिःसुवीरामस्मेरयिमेरयध्वम् ॥ २ ॥

विदानासः । जन्मनः । वाजऽरत्नाः । उत । ऋतुऽभिः । ऋभवः । मादयध्वम् । सम् । वः । मदाः । अग्मत । सम् । पुरम्ऽधिः । सुऽवीराम् । अस्मे इति । रयिम् । आ । ईरयध्वम् ॥ २ ॥

हेवाजरत्नाः शोभनलक्षणेनान्नेनरत्नमानाः ऋभवोयूयं जन्मनोजननस्य देवत्वलक्षणस्य देवत्वप्राप्तिंविदानासोजानन्तः यद्वा विदानासः सोमप्राप्तिंजानन्तः जन्मनःपूर्वंमनुष्यजन्मनः ऊर्ध्वंसन्तः उतशब्दश्चार्थे ऋतुभिर्देवैःसहमादयध्वं वोयुष्मान्मदाःसोमपानजनिताःसमग्मत सङ्गताः पुरन्धिः स्तुतिरपि समग्मत तेयूयम् अस्मे अस्माकं सुवीरां शोभनैर्वीरैरुपेतांरयिमेरयध्वं प्रेरयत ॥ २ ॥

२. हे अन्न-द्वारा शोभमान ऋभुगण, पहले तुम लोगों का जन्म मनुष्यों में हुआ था, अब देवत्वप्राप्ति को जान करके तुम लोग देवों के साथ हृष्ट होओ। हर्षकर सोम और स्तुति तुम लोगों के लिए एकत्र हुए हैं। तुम लोग हमारे लिए पुत्र-पौत्र-विशिष्ट धन प्रेरित करो।

अयंवोयज्ञऋभवोकारियमामनुष्वत्प्रदिवोदधिध्वे ।
प्रवोच्छाजुजुषाणासोअस्थुरभूतविश्वेअग्रियोतवाजाः ॥ ३ ॥

अयम् । वः । यज्ञम् । ऋभवः । अकारि । यम् । आ । मनुष्वत् ।
प्रऽदिवः । दधिध्वे । प्र । वः । अच्छ । जुजुषाणासः । अस्थुः ।
अभूत । विश्वे । अग्रिया । उत । वाजाः ॥ ३ ॥

हेऋभवोवोयुष्मदर्थम् अयंयज्ञोकारि यंयज्ञंमनुष्वत् मनुष्यवत्प्रदिवःप्रकर्षेणद्योतमानाः सन्तः आदधिध्वे धारयतमत्करे तदर्थंवोयुष्मान् अच्छाभिमुख्येनजुजुषाणासः सेवमानाःसोमाः अस्थुः प्रतिष्ठन्ते उतापिच धारयित्वाच हेवाजाऋभवोविश्वेयूयमग्रियाअग्रार्हाःअमर्त्वसम्पा-दिनोवा अभूत भवथ ॥ ३ ॥

३. हे ऋभुओ, तुम लोगों के लिए यह यज्ञ किया गया है। मनुष्य की तरह दीप्तिशाली होकर तुम लोग इसे धारण करो। सेवमान सोम तुम लोगों के निकट रहता है। हे वाजगण, तुम लोग ही प्रथम उपास्य हो।

अभूदुवोविधतेरत्नधेयमिदानरोदाशुषेमर्त्याय ।
पिबतवाजाऋभवोददेवोमहितृतीयंसवनंमदाय ॥ ४ ॥

अभूत् । ऊँ इति । वः । विधते । रत्नऽधेयम् । इदा । नरः ।
दाशुषे । मर्त्याय । पिबत । वाजाः । ऋभवः । ददे । वः । महि ।
तृतीयम् । सवनम् । मदाय ॥ ४ ॥

हेनरोनेतारऋभवः वोयुष्माकमनुग्रहात् इदाइदानीं तृतीयेसवने रत्नधेयंदातव्यंरत्नंवि-धते विधतिःपरिचरणकर्मा स्तुत्यापरिचरते दाशुषेहविर्दत्तवतेमर्त्यायमनुष्याययजमानायमह्यमभूदभवत् उइतिपूरणः तदर्थं हेवाजाः हेऋभवः यतद्यूयंविभ्वनामकस्याप्युपलक्षणं इतरापेक्षयाप्रत्येकं बहुवचनं यूयंपिबत तदर्थंवोददे किंमाहिमहत्प्रभूतंतृतीयंसवनंतत्सम्बन्धिनंसोममित्यर्थः किमर्थं मदाय हर्षाय तृप्तयेवा ॥ ४ ॥

४. हे नेतृगण, तुम्हारे अनुग्रह से अभी इस तृतीय सवन में रत्न-योग्य रत्न परिचर्याकारी, हव्यदाता यजमान के लिए हो। हे वाजगण, हे ऋभुगण, तुम लोग पान करो। तृतीय सवन में हर्ष के लिए प्रभूत सोम हम तुम लोगों के लिए दान करते हैं।

अथपञ्चमी—

आवाजायातोपंनऋभुक्षामहोनरोद्रविंणसोगृणानाः ।
आवंःपीतयोंभिपित्वेअह्नांमिमाअस्तंनवस्वंइवग्मन् ॥५॥ २॥

आ । वाजाः । यात । उपं । नः । ऋभुक्षाः । महः । नरः ।
द्रविंणसः । गृणानाः । आ । वः । पीतयंः । अभिऽपित्वे ।
अह्नाम् । इमाः । अस्तम् । नवस्वंःऽइव । ग्मन् ॥ ५ ॥ २ ॥

हेवाजाः ऋभुक्षाः नरोनेतारोयूयं नः उपयात किंकुर्वन्तः महोमहतः द्रविणसोधनस्य कर्मणिषष्ठ्यौ महद्द्रविणंगृणानाःस्तुवन्तः किंच अह्नामभिपित्वेऽभिपतनेसमाप्तौ तृतीयसवनेइत्यर्थः वोयुष्मानिमाःपीतयः पानान्याग्मन् आगच्छन्ति तत्रदृष्टान्तः—अस्तं गृहनामैतत् गृहंन यस्वइव नवप्रसवागावइव ॥ ५ ॥

५. हे वाजो, हे ऋभुक्षाओ, तुम लोग नेता हो। महान् धन की स्तुति करते हुए तुम लोग हमारे निकट आगमन करो। दिवस की समाप्ति में अर्थात् तृतीय सवन में जैसे नव प्रसवा गौएँ गृह के प्रति आगमन करती हैं, उसी तरह यह सोम रस का पान तुम लोगों के निकट आगमन करता है।

आनंपातःशवसोयातनोपेमंयज्ञंनमंसाहूयमानाः।
सजोषसःसूरयोयस्यंचस्थमध्वंःपातरत्नधाइन्द्रंवन्तः ॥ ६ ॥

आ । नपातः । शवसः । यातन । उपं । इमम् । यज्ञम् । नमंसा ।
हूयमानाः सऽजोषसः । सूरयः । यस्यं । च । स्थ । मध्वंः ।
पात । रत्नऽधाः । इन्द्रंऽवन्तः ॥ ६ ॥

हेशवसोनपातः बलस्यनपातयितारः तस्यपुत्रावा बलवन्तइत्यर्थः यूयं नमसास्तोत्रेण हूयमानाआकारिताःसन्तः इमंयज्ञमुपायातन उपागच्छत कीदृशायूयं सजोषसः इन्द्रेणसहप्रीताः सूरयोमेधाविनः इन्द्रस्यचैषांचकःप्रसङ्गइत्युच्यते यस्यचस्थ चेतिप्रसिद्धौ यस्येन्द्रस्य सम्बन्धिनोयूयंस्थ तदुक्तिाश्वनिर्माणादित्यभिप्रायः यस्मादेवंतस्मादिन्द्रवन्तः प्रीतेनेन्द्रेण तद्वन्तोरत्नधाः रमणीयधनानांदातारोयूयं मध्वः मधुरंसोमंपात पिबत ॥ ६ ॥

६. हे बलपुत्रो या बलवानो, स्तोत्र-द्वारा आहूत होकर तुम लोग इस यज्ञ में आगमन करो। तुम लोग इन्द्र के साथ प्रीत होते हो और मेधावी हो; क्योंकि तुम लोग इन्द्र के सम्बन्धी हो। तुम लोग इन्द्र के साथ रत्न दान करते हुए मधुर सोमरस का पान करो।

अथसप्तमी—

सजोषाइन्द्रवरुणेनसोमंसजोषाःपाहिगिर्वणोमरुद्भिः ।
अग्रेपाभिर्ऋतुपाभिःसजोषाग्नास्पत्नीभीरत्नधाभिःसजोषाः ॥ ७ ॥

सऽजोषाः । इन्द्र । वरुणेन । सोमम् । सऽजोषाः । पाहि । गिर्वणः ।
मरुत्ऽभिः । अग्रेऽपाभिः । ऋतुऽपाभिः । सऽजोषाः । ग्नाःपत्नीभिः ।
रत्नऽधाभिः । सऽजोषाः ॥ ७ ॥

हेइन्द्र त्वंवरुणेन राज्यभिमानिदेवेन सजोषाः समानप्रीतिःसन् सोमंपाहि पिब हेगिर्वणः गीर्भिर्वननीय संभजनीयेन्द्र त्वंमरुद्भिः सजोषाः संगतःसन् सोमंपाहि पिब किंच अग्रेपाभिः प्रथमपातृभिः ऋतुपाभिः ऋतुपान्देवैश्च ग्नाः पत्नीभिः स्त्रीणांपात्र्यश्च्योग्नाःपत्न्यः ताभिः मेनाग्नाइतिस्त्रीणामितिनिरुक्तम्[1] । रत्नधाभिःरमणीयधनदातृभिःऋतुभिःसहपिब यद्वैतत् ग्नाःपत्नीभिरित्यस्यविशेषणं ताभिर्वासजोषाःसोमंपिब ॥ ७ ॥

७. हे इन्द्र, तुम रात्र्यभिमानी वरुणदेव के साथ समान-प्रीति-युक्त होकर सोम पान करो । हे स्तुतियोग्य इन्द्र, तुम मरुतों के साथ संगत होकर सोमपान करो । प्रथम पानकारी ऋतुओं के साथ, देव-पत्नियों के साथ और रत्न देनेवाले ऋतुओं के साथ सोम पान करो ।

सजोषसआदित्यैर्मादयध्वंसजोषसऋभवःपर्वतेभिः ।
सजोषसोदैव्येनासवित्रासजोषसःसिन्धुभीरत्नधेभिः ॥ ८ ॥

सऽजोषसः । आदित्यैः । मादयध्वम् । सऽजोषसः । ऋभवः ।
पर्वतेभिः । सऽजोषसः । दैव्येन । सवित्रा । सऽजोषसः ।
सिन्धुऽभिः । रत्नऽधेभिः ॥ ८ ॥

हेऋभवः आदित्यैः सजोषसःसंगताः यूयं मादयध्वं तथा पर्वतेभिः पर्ववद्भिः पर्वण्यर्चमानैर्देवविशेषैः सजोषसोमादयध्वं तथाच दैव्येन देवेभ्योहितेनसवित्रासजोषसःरत्नधेभिः रत्नानांदातृभिः सिन्धुभिः स्यन्दनस्वभावैः नद्यभिमानिदेवैःसजोषसोमादयध्वम् ॥ ८ ॥

८. हे ऋभुओ, आदित्यों के साथ संगत होकर तुम हृष्ट होओ, पर्व में अर्चमान देवविशेष के साथ संगत होकर तुम हृष्ट होओ, देवों के हितकर सविता देव के साथ संगत होकर हृष्ट होओ और रत्न-दाता नद्यभिमानी देवों के साथ संगत होकर हृष्ट होओ ।

येअश्विनायेपितरायऊतीधेनुंततक्षुर्ऋभवोयेअश्वा ।
येअंसत्रायऋधग्रोदसीयेविभ्वोनरःस्वपत्यानिचक्रुः ॥ ९ ॥

---

[1] नि० ३. २१।

ये । अश्विना । ये । पितरा । ये । ऊती । धेनुम् । ततक्षुः । ऋभवः ।
ये । अश्वा । ये । अंसत्रा । ये । ऋधक् । रोदसी इति । ये । विभ्वः ।
नरः । सुऽअपत्यानि । चक्रुः ॥ ९ ॥

येऋभवः अश्विना अश्विनौ ऊती ऊत्या क्रियया रथनिर्माणरूपया अप्रीणयन् येच पितरा पितरौ ततक्षुः तक्षणेनसमपादयन् जीर्णौसन्तौ ऊती ऊत्या युवानौचक्रुः येचधेनुंततक्षुः मृतायाःपुनर्नवीकरणे येचाश्वांततक्षुः निश्चर्मणोगाम्परिणीतयीतिभिर्योनरन्तायुवधातातृणोतनेत्याद्युक्तम् । येचांसत्रा अंसत्राणि कवचानिदेवेभ्यश्चक्रुः येच रोदसी द्यावापृथिव्यौ ऋधक् पृथक्चक्रुः एवमुक्तप्रकारेण येविभ्वोव्याप्ताः ऋभवोनरोनेतारः स्वपत्यानि स्वपत्यसाधनानि तत्प्राप्तिसाधनानिवा कर्माणि चक्रुः ते अस्मेपात्वित्युत्तरत्रसंबन्धः ॥ ९ ॥

९. हे ऋभुओ, जिन्होंने अश्विद्वय को रथनिर्माणादि कार्य-द्वारा प्रीत किया था, जिन्होंने जीर्ण माता-पिता को युवा किया था, जिन्होंने धेनु और अश्व का निर्माण किया था, जिन्होंने देवों के लिए अंसत्रा कवच निर्माण किया था, जिन्होंने द्यावा-पृथिवी को पृथक् किया था, जो व्याप्त एवम् नेता हैं और जिन्होंने सुन्दर अपत्य-प्राप्ति-साधन रूप कार्य किया था, वे प्रथम पानकारी हैं।

येगोमन्तंवाजवन्तंसुवीरंरयिंधत्थवसुमन्तंपुरुक्षुम् ।
तेअंग्रेपाऋभवोमन्दसानाअस्मेधत्तयेचंरातिंगृणन्ति ॥ १० ॥

ये । गोऽमन्तम् । वाजऽवन्तम् । सुऽवीरम् । रयिम् । धत्थ ।
वसुऽमन्तम् । पुरुऽक्षुम् । ते । अग्रेऽपाः । ऋभवः । मन्दसानाः ।
अस्मे इति । धत्त । ये । च । रातिम् । गृणन्ति ॥ १० ॥

हेऋभवः येयूयं गोमन्तं गोसहितं वाजवन्तम् अन्नवन्तं सुवीरं शोभनपुत्रोपेतं वसुमन्तं निवासयोग्यगृहादिधनोपेतं पुरुक्षुंबहुलं रयिं धनं धत्थ धारयथ महांदातुं हेऋभवः तेयूयम् अग्रेपाः प्रथमंपातारःमन्दसानाः माद्यन्तःसन्तः अस्मे अस्मभ्यंचधत्त रयिम् येच यूयं रातिंदाने स्तुवन्ति गृणन्तिस्तुवन्तितेभ्यश्च यद्वा येच रातिंगृणन्ति यजमानास्तेभ्योपिधत्त ॥ १० ॥ हे ऋभुओ, जो गोविशिष्ट, अन्नविशिष्ट, पुत्रपौत्रादिविशिष्ट निवासयोग्य गृह आदि धनों से युक्त तथा बहुत अन्नवाले धन को धारण करते हैं एवम् जो धन की प्रशंसा करते हैं, वे प्रथम पानकारी ऋभुगण हृष्ट होकर हम लोगों को धन दान करें।

नापाभूतनवोतितृषामानिःशस्ताऋभवोयज्ञेअस्मिन् ।
समिन्द्रेणमदथसंमरुद्भिःसंराजभीरत्नधेयायदेवाः ॥ ११ ॥४ ॥

१ ऋ० ४. १. १. ५ ।

न । अपं । अभूत । न । वः । अतीतृषाम । आनिःशस्ताः ।
ऋभवः । यज्ञे । अस्मिन् । सम् । इन्द्रेण । मदथ । सम् ।
मरुत्ऽभिः । सम् । राजऽभिः । रत्नऽधेयाय । देवाः ॥ ११ ॥ ४ ॥

हेऋभवः यूयं नापाभूत नापागच्छत अपरक्तानभवत वयंचवोयुष्मान् नातीतृषाम अत्यन्तंतृषितान्नाकरवाम अतोहेऋभवोदेवाः अनिःशस्ताः अनिन्दिताःसन्तोऽस्मिन्यज्ञे इन्द्रेणसंमदथ मरुद्भिःसंमदथ राजभिः राजमानैरन्यैर्देवैःसंमदथ तृप्ताभवथ किमर्थं रत्नधेयाय रमणीयधनदानाय ॥ ११ ॥

११. हे ऋभुओ, तुम लोग चले न जाना। हम तुम लोगों को अत्यन्त तृषित नहीं करेंगे। हे देवो (ऋभुओ), तुम लोग अनिन्दित होकर रमणीय धन दान करने के लिए इस यज्ञ में इन्द्र के साथ हृष्ट होओ, मरुतों के साथ हृष्ट होओ और अन्यान्य दीप्तिमान् देवों के साथ हृष्ट होओ।

इहोपयातेतितृतीयंनवर्चंसूक्तं वामदेवस्यार्षंत्रैष्टुभमार्भवम् इहोपनवेत्यनुक्रमणिका । तृतीयसवनेमैत्रावरुणस्येदमुक्थीयमानसूक्तम् सूत्रितंच—आत्वावहन्त्वसावि देवमिहोपयातेत्यनुक्रमणमिति ॥

इहोपयातशवसोनपातःसौधन्वनाऋभवोमापभूत ।
अस्मिन्हिवःसवनेरत्नधेयंगमन्त्विन्द्रमनुवोमदासः ॥ १ ॥

इह । उप । यात । शवसः । नपातः । सौधन्वनाः । ऋभवः ।
मा । अप । भूत । अस्मिन् । हि । वः । सवने । रत्नऽधेयम् ।
गमन्तु । इन्द्रम् । अनु । वः । मदासः ॥ १ ॥

हेशवसोनपातोबलस्यपुत्राः नस्यनपातयितारोवा हेसौधन्वनाः सुधन्वनःपुत्राः हेऋभवः योयूयं इहोपयात अस्मिन्तृतीयसवनेउपगच्छत मापभूत अपगतानभवत अस्मिन्सवनेरत्नधेयंरमणीयधनस्यदातारमिन्द्रम् अनुअनुसृत्य वोयुष्मान्मदासोमदकराःसोमाः गमन्तु गच्छन्तु अपितिशब्दयथार्थःसम्पद्यते इन्द्रंयुष्मांश्चान्वागच्छन्त्वित्यर्थः सिद्धणः ॥ १ ॥

१. हे बल के पुत्र, सुधन्वा के पुत्र, ऋभुओ, तुम सब इस तृतीय सवन में आओ, अपगत मत होओ। इस सवन में मदकर सोम रत्न-दाता इन्द्र के अनन्तर तुम लोगों के निकट गमन करे।

आगंनृभूणामिहरत्नधेयमभूत्सोमस्यसुषुतस्यपीतिः ।
सुकृत्ययायत्स्वपस्ययाचँएकंविचक्रचमसंचतुर्धा ॥ २ ॥

आ । अगन् । ऋभूणाम् । इह । रत्नऽधेयम् । अभूत् । सोमस्य ।
सुऽसुतस्य । पीतिः । सुऽकृत्यया । यत् । सुऽअपस्यया । च ।
एकम् । विऽचक्र । चमसम् । चतुःऽधा ॥ २ ॥

ऋभूणां युष्माकमिहतृतीयसवनेरत्नधेयं रत्नदानमागमत्आगच्छतुमह्यं यद्वा युष्माकमेव सोमाख्यंरत्नमागात् यस्मात्सोमस्यसुषुतस्यपीतिःपानमभूत् प्रजापतिनालब्धमित्यर्थः तदपिकुतइतिचेदुच्यते—यद्यस्मात्सुकृत्ययाशोभनहस्तव्यापारेण स्वपस्यया शोभनरथनिर्माणादिकर्मेच्छयाच एकंसन्तं चमसं चतुर्धाविचक्र कृतवन्तः ॥ २ ॥

२. ऋभुओं का रत्नदान इस तृतीय सवन में मेरे निकट आये; क्योंकि तुम लोगों ने शोभन हस्त-व्यापार-द्वारा और कर्म की इच्छा-द्वारा एक चमस को चतुर्धा किया था एवम् अभिषुत सोमपान किया था।

**व्यकृणोतचमसंचतुर्धासखेविशिक्षेत्यब्रवीत ।**
**अथैतवाजाअमृतस्यपन्थांगणंदेवानामृभवःसुहस्ताः ॥ ३ ॥**

वि । अकृणोत । चमसम् । चतुःऽधा । सखे । वि । शिक्ष । इति । अब्रवीत । अथ । ऐत । वाजाः । अमृतस्य । पन्थाम् । गणम् । देवानाम् । ऋभवः । सुऽहस्ताः ॥ ३ ॥

हेऋभवः यूयंचमसंचतुर्धाव्यकृणोत व्यकुरुत कृत्वाच हेसखे सखिभूताग्ने विशिक्ष अनुगृहाण सोमपानमित्यब्रवीत अवदतयूयम् अथसोऽग्निर्युष्मान् अवादीत्खलु किमिति हेवाजाः ऋभवः सुहस्ताः शोभनहस्तोपेतायूयममृतस्यामरणधर्मकस्य स्वर्गस्य पन्थां पन्थानमैत गच्छत कियदमृतमितिदेवानामिन्द्रादीनांगणंसंघातमैत ॥ ३ ॥

३. हे ऋभुओ, तुम लोगों ने चमस को चतुर्धा किया था एवम् कहा था कि, "हे सखा अग्नि, अनुग्रह करो।" अग्नि ने तुम लोगों से कहा—"हे वाजगण, हे ऋभुगण, तुम लोग कुशलहस्त हो। तुम लोग अमरत्वपथ में अर्थात् स्वर्ग मार्ग में गमन करो।"

**किंमयःस्विच्चमसएषआसयंकाव्येनचतुरोविचक्र ।**
**अथासुनुध्वंसवनंमदायपातऋभवोमधुनःसोम्यस्य ॥ ४ ॥**

किम्ऽमयः । स्वित् । चमसः । एषः । आस । यम् । काव्येन । चतुरः । विऽचक्र । अथ । सुनुध्वम् । सवनम् । मदाय । पात । ऋभवः । मधुनः । सोम्यस्य ॥ ४ ॥

किंमयः स्वित् किमात्मक एव चमसः आस स्वित् अभवत् यं चमसमेकं सन्तं काव्येन कवीनां सम्बन्धिना कर्मणा कौशलेन चतुरो विचक्र कृतवन्तः अथाधुनासवनं सुषत इतिसवनः सोमः तं मदाय हर्षायसुनुध्वं हे ऋत्विजः हे ऋभवो यूयंच सोम्यस्य सोमसम्बन्धिनं मधुनो मधुरं रसं पात पिबत ॥ ४ ॥ जिस चमस को कौशल-पूर्वक चार किया था, वह चमस किस प्रकार का था ? हे ऋत्विको, तुम लोग हर्ष के लिए सोमाभिषव करो। हे ऋभुओ, तुम लोग मधुर सोमरस का पान करो।

**शच्याकर्तपितरायुवानाशच्याकर्तचमसंदेवपानम् ।**
**शच्याहरीधनुतरावतष्टेन्द्रवाहावृभवोवाजरत्नाः ॥ ५ ॥ ५ ॥**

शच्या । अकर्त । पितरा । युवाना । शच्या । अकर्त । चमसम् । देवऽपानम् । शच्या । हरी इति । धनुःऽतरौ । अतष्ट । इन्द्रऽवाहौ । ऋभवः । वाजऽरत्नाः ॥ ५ ॥ ५ ॥

हे वाजरत्नाः रमणीयसोमाः हे ऋभवः यूयं शच्या कर्मणा पितरा मातापितरौ युवाना युवानौ अकर्त अकुरुत तथा शच्या चमसं देवपानं देवपानार्हमकर्त चतुर्धाकुरुतेत्यर्थः शच्या हरी अतष्ट तक्षणेनसम्पादितवन्तः कीदृशौ हरी धनुतरौ शीघ्रगन्तृतरौ इन्द्रवाहौ इन्द्रवोढारौ ॥ ५ ॥ हे रमणीय सोमवाले ऋभुओ, तुम लोगों ने कर्म-द्वारा माता-पिता को युवा किया था, कर्म-द्वारा चमस को देवपान के योग्य चतुर्धा किया था और कर्म-द्वारा शीघ्रगामी इन्द्र के वाहक अश्वद्वय को सम्पादित किया था।

**योवःसुनोत्यभिपित्वेअह्नांतीव्रंवाजासःसवनंमदाय ।**
**तस्मैरयिमृभवःसर्ववीरमातक्षतवृषणोमन्दसानाः ॥ ६ ॥**

यः । वः । सुनोति । अभिऽपित्वे । अह्नाम् । तीव्रम् । वाजासः । सवनम् । मदाय । तस्मै । रयिम् । ऋभवः । सर्वऽवीरम् । आ । तक्षत । वृषणः । मन्दसानाः ॥ ६ ॥

हे ऋभवो वाजाः सोमवन्तो वो युष्मभ्यं यो यजमानः अह्नामभिपित्वे अभिपतने तृतीयसवने इत्यर्थः तस्मिन् तीव्रं रसवत्तरं सवनं सूयत इति सवनः सोमस्तं मदाय सुनोति तस्मै सर्ववीरं बहुपुत्रोपेतं रयिं धनं हे वृषणः फलवर्षितारः मन्दसानाः मोदमानाः सन्तः आतक्षत सम्पादयतेत्यर्थः ॥ ६ ॥

६. हे ऋभुओ, तुम लोग अन्नवान् हो। जो यजमान तुम लोगों के उद्देश से हर्ष के लिए दिवावसान में तीव्र सोम का अभिषव करता है, हे फलवर्षी ऋभुओ, तुम लोग हृष्ट होकर उस यजमान के लिए बहु-पुत्रयुक्त धन का सम्पादन करो।

अथसप्तमी–

प्रातःसुतमपिबोहर्यश्वमाध्यन्दिनंसवनंकेवलंते ।
समृभुभिःपिबस्वरत्नधेभिःसखीँर्याँइन्द्रचकृषेसुकृत्या ॥ ७ ॥

प्रातरिति । सुतम् । अपिबः । हरिऽअश्व । माध्यन्दिनम् । सवनम् । केवलम् । ते । सम् । ऋभुऽभिः । पिबस्व । रत्नऽधेभिः । सखीन् । यान् । इन्द्र । चकृषे । सुऽकृत्या ॥ ७ ॥

हेहर्यश्व हरितवर्णाश्वोपेत इन्द्र प्रातः प्रातःसवने सुतमभिषुतंसोममपिबः पिबस्व माध्यन्दिनंसवनंकेवलंते त्वदीयमेव नान्येषां सवनद्वयस्यपृथगभिधानात्तृतीयसवनंपरिशिष्यते तृतीय-सवनेरत्नधेभिः रमणीयदानैः ऋभुभिः संपिबस्व हेइन्द्र यानृभून्सुकृत्याशोभनकर्मणासखीन् चकृषे अकरोः ॥ ७ ॥

७. हे हरिविशिष्ट इन्द्र, तुम प्रातःसवन में अभिषुत सोमपान करो। माध्यन्दिन सवन केवल तुम्हारा ही है। हे इन्द्र, तुमने शोभन कर्म-द्वारा जिसके साथ मैत्री की है, उस रत्नदाता ऋभुओं के साथ तुम तृतीय सवन में पान करो।

येदेवासोअभवतासुकृत्याश्येनाइवेदधिदिविनिषेद ।
तेरत्नंधातशवसोनपातःसौधन्वनाअभवतामृतासः ॥ ८ ॥

ये । देवासः । अभवत । सुऽकृत्या । श्येनाःऽइव । इत् । अधि । दिवि । निऽसेद । ते । रत्नम् । धात । शवसः । नपातः । सौधन्वनाः । अभवत । अमृतासः ॥ ८ ॥

हेऋभवः येयूयं सुकृत्या शोभनकर्मणा देवासोदेवाः अभवत अभूत श्येनाइवेत् शंसनीय-गमनागृध्रविशेषाइव दिविद्युलोकेअधिनिषेद अधिनिषण्णाः हेशवसोनपातः बलस्यनप्तारोयूयंरत्नंधनंधात प्रयच्छत हेसौधन्वनाः अमृतासोऽमृतादेवाअभवत ॥ ८ ॥

८. हे ऋभुओ, तुम लोग सुकर्म-द्वारा देवता हुए थे। हे बल के पुत्रो, तुम लोग श्येन (गृद्ध-विशेष) की तरह द्युलोक में निषण्ण हो। तुम लोग धनदान करो। हे सुधन्वा के पुत्रो, तुम लोग अमर हुए थे।

यत्तृतीयंसवनंरत्नधेयमकृणुध्वंस्वपस्यासुहस्ताः ।
तदृभवःपरिषिक्तंवएतत्संमदेभिरिन्द्रियेभिःपिबध्वम् ॥ ९ ॥ ६ ॥

यत् । तृतीयम् । सवनम् । रत्नऽधेयम् । अकृणुध्वम् । सुऽअपस्या । सुऽहस्ताः । तत् । ऋभवः । परिऽसिक्तम् । वः । एतत् । सम् । मदेभिः । इन्द्रियेभिः । पिबध्वम् ॥ ९ ॥ ६ ॥

हेसुहस्ताः शोभनहस्ताः ऋभवः रत्नधेयं रमणीयसोमदानवत् यत्तृतीयंसवनमकृणुध्वं प्रसाधितवन्तः स्वपस्या शोभनकर्मेच्छया तदेतत्सवनं सवनगतं सोमद्रव्यं परिषिक्तं परिषेचनवत् वोयुष्माकंसम्बन्धिभिर्मदेभिर्मादयद्भिरिन्द्रियेभिरिन्द्रियैःसंपिबध्वं यद्यपि श्रवनमेवपानसाधनं तथापि चक्षुःश्रोत्रादीनामपिदर्शनश्रवणादिनातृप्तिसद्भावात्सर्वेषुपचर्यते ॥ ९ ॥

९. हे सुहस्त ऋभुओ, तुम लोग रमणीय सोमदानयुक्त तृतीय सवन को शोभन कर्म की इच्छा से प्रयुक्त और प्रसाधित करते हो, इसलिए तुम लोग हृष्ट इन्द्रियों के साथ अभिषुत सोमपान करो।

॥ इतितृतीयस्यसप्तमेषष्ठोवर्गः ॥ ६ ॥

अनश्वोजातइतिनवर्चंचतुर्थंसूक्तम् आर्भवम् ऋषिर्वामदेवः अन्त्यात्रिष्टुप् शिष्टास्त्रिष्टुबन्तप- रिभाषयाजगत्यः अनश्वोन्त्यात्रिष्टुबित्यनुक्रमणिका । आभिप्लविकेतृतीयेहनिवैश्वदेवशस्त्रे आर्भव- निविद्धानीयमिदं तथाचसूत्रितम्—अनश्वोजातःपरावतोयइतिवैश्वदेवमिति ।

अनश्वोजातोअनभीशुरुक्थ्योऽरथस्त्रिचक्रःपरिवर्ततेरजः ।
महत्तद्वोदेव्यस्यप्रवाचनंद्यामृभवःपृथिवींयच्चपुष्यथ ॥ १ ॥

अनश्वः । जातः । अनभीशुः । उक्थ्यः । रथः । त्रिऽचक्रः । परि । वर्तते । रजः । महत् । तत् । वः । देव्यस्य । प्रऽवाचनम् । द्याम् । ऋभवः । पृथिवीम् । यत् । च । पुष्यथ ॥ १ ॥

हेऋभवः अश्विनोःसम्बन्धी युष्मद्दत्तोरथः अनश्वोजातः वाहनाश्वानिरपेक्षःसम्पन्नः तथा अनभीशुः प्रग्रहरहितः उक्थ्यः स्तुत्यः त्रिचक्रःचक्रत्रययुक्तःसन् रजोन्तरिक्षंपरिवर्ततेपरिभ्रमति महत्प्रभूतंतद्रथनिर्माणरूपंकर्म वोयुष्माकं देव्यस्यदेवत्वस्यप्रवाचनंप्रवक्तृप्रख्यापकं यच्च येनकर्मणा द्यां पृथिवींच पुष्यथ पुष्टांकुरुथ ॥ १ ॥

१. हे ऋभुओ, तुम लोगों का कर्म स्तुतियोग्य है। तुम लोगों-द्वारा प्रदत्त अश्विनीकुमार का त्रिचक्र रथ अश्व के बिना और प्रग्रह के बिना अन्तरिक्ष में परिभ्रमण करता है। जिसके द्वारा तुम लोग द्यावा-पृथिवी का पोषण करते हो, वह रथनिर्माण-रूप महान् कर्म तुम लोगों के देवत्व को प्रख्यात करता है।

रथंयेचक्रुःसुवृतंसुचेतसोविह्वरन्तंमनसस्परिध्यया ।
ताँऊन्वस्यसवनस्यपीतयआवोवाजाऋभवोवेदयामसि ॥२॥

रथम् । ये । चक्रुः । सुऽवृतम् । सुऽचेतसः । अविऽह्वरन्तम् । मनसः । परि । ध्यया । तान् । ऊँ इति । नु । अस्य । सवनस्य । पीतये । आ । वः । वाजाः । ऋभवः । वेदयामसि ॥ २ ॥

सुचेतसः शोभनचित्ता येऋभवः सुवृतं सुवर्तनचक्रं अविह्वरन्तम् अकुटिलं रथं मनसः परि ध्यया मनसो ध्यानेनाप्रयत्नेन तु क्षिप्रं चक्रुः तान् उ उशब्द एवार्थे तानेवास्य सवनस्य पीतये पातुं सोमं पातुं हे वाजाः हे ऋभवः वो युष्मानावेदयामसि आवेदयामः ॥ २ ॥

२. हे सुन्दरान्तःकरण ऋभुओ, तुम लोगों ने मानसिक ध्यान-द्वारा सुवर्तन चक्रवाला अकुटिल रथ निर्माण किया था । हे वाजगण और हे ऋभुगण, हम सोमपान के लिए तुम लोगों को आवेदित करते हैं ।

तद्वो॑वाजाऋभवःसुप्रवाच॒नंदे॒वेषु॑विभ्वोअभवन्महित्व॒नम् । जिव्री॒यत्सन्ता॑पि॒तरा॑सना॒जुरा॒पुन॒र्युवा॑ना॒च॒रथा॑य॒तक्ष॑थ ॥ ३ ॥

तत् । वः । वाजाः । ऋभवः । सुऽप्रवाचनम् । देवेषु । विऽभ्वः । अभवत् । महिऽत्वनम् । जिव्री इति । यत् । सन्ता । पितरा । सनाऽजुरा । पुनः । युवाना । चरथाय । तक्षथ ॥ ३ ॥

हे वाजाः ऋभवः हे विभ्वः विभवः इतरापेक्षया परस्परं बहुवचनमित्युक्तं वो युष्माकं तन्महित्वनं महत्त्वं माहात्म्यं देवेषु मध्ये सुप्रवाच्यं प्रवाच्यमभवत् तदित्युक्तं यदित्याह—जिव्री वृद्धौ सन्तौ सनाजुरा सदा जीर्णौ सन्तौ पितरा पितरौ पुनर्युवाना नित्यतरुणौ चरथाय यथेच्छं सञ्चरणाय तक्षथ सम्पादितवन्तः ॥ ३ ॥

३. हे वाजगण, हे ऋभुगण और हे विभुगण, तुम लोगों ने जो वृद्ध और जीर्ण माता-पिता को नित्य तरुण और सर्वदा विचरणक्षम किया था, तुम लोगों का वही माहात्म्य देवों के मध्य में प्रख्यात है ।

एकं॒विच॑क्रच॒म॒सं॒चतु॑र्वयं॒निश्चर्म॑णो॒गाम॑रिणीतधी॒तिभिः॑ । अथा॑दे॒वेष्व॑मृत॒त्वमा॑नशश्रु॒ष्टीवा॑जाऋभवस्तद्व॑उ॒क्थ्य॑म् ॥ ४ ॥

एकम् । वि । चक्र । चमसम् । चतुःऽवयम् । निः । चर्मणः । गाम् । अरिणीत । धीतिऽभिः । अथ । देवेषु । अमृतऽत्वम् । आनश । श्रुष्टी । वाजाः । ऋभवः । तत् । वः । उक्थ्यम् ॥ ४ ॥

हेऋभवः एकंचमसम् एकमेवसन्तंपानसाधनंचमसंचतुर्वयं वयाः शाखाश्चतुःशाखं चतुरव-यवंविचक्र व्यकुरुत तथा धीतिभिः कर्मभिः चर्मणा गांनिरपिंशत संस्कुरुत निरित्येषसमि-त्येतस्यस्थाने अथातःकारणाद्देवेषुमध्ये अमृतत्वमानश प्राप्नुत हेवाजाः ऋभवः तत्तादृशं वोयुष्माकं कर्म ऋग्मियंप्रशस्यमेतत् विप्रमुख्यंस्तुत्यंभवति ॥ ४ ॥

४. हे ऋभुओ, तुम लोगों ने एक चमस को चार भागों में विभक्त किया था, कर्म-द्वारा गौ को चर्म से परिवृत किया था; अतएव तुम लोगों ने देवों के बीच अमरत्व पाया है। हे वाजगण, ऋभुगण, तुम लोगों का यह कर्म प्रशंसा के योग्य है।

ऋभुतोर॒यिःप्र॑थ॒मश्र॑वस्तमो॒वाज॑श्रुतासो॒यमजी॑जन॒न्नरः॑ ।
वि॒भ्व॒त॒ष्टोवि॒दथे॑षुप्र॒वाच्यो॒यंदे॑वा॒सोऽव॑था॒सविच॑र्षणिः ॥ ५ ॥ ७ ॥

ऋ॒भुतः॑ । र॒यिः । प्र॒थमश्र॑वःऽतमः । वाज॑ऽश्रुतासः । यम् ।
अजी॑जनन् । नरः॑ । वि॒भ्व॒ऽत॒ष्टः । वि॒दथे॑षु । प्र॒ऽवाच्यः॑ ।
यम् । दे॒वा॒सः॒ । अव॑थ । सः । विऽच॑र्षणिः ॥ ५ ॥ ७ ॥

ऋभुतः ऋभूणांसकाशात्प्रथमश्रवस्तमः प्रथमंमुख्यमतिशयितंश्रवोऽन्नंयस्मात्सोयंप्रथमश्रवस्तमोधन-स्यतद्रयिर्धनमस्माकंभवत्विितिशेषः वाजश्रुतासः वाजैःसहविख्याताः नरोनेतारोऋभवः यंर-यिमजीजनन्नुत्पादितवन्तः विभ्वतष्टः विभ्वभिर्ऋभुभिस्तष्टस्तक्षणसम्पन्नः चमसोऽश्विनोरथोवा विदथेषुयज्ञेषुप्रवाच्यः प्रकर्षेणस्तुत्यः हेदेवासोद्योतमानायूयंयंरथं चमसंवा अवथ रक्षथ सवि-चर्षणिः विविधंद्रष्टाभवति द्रष्टव्योभवतीत्यर्थः ॥ ५ ॥

५. वाजों के साथ विख्यात नेता ऋभुओं ने जिस धन को उत्पन्न किया था, प्रधान और प्रभूत वह अन्नविशिष्ट धन ऋभुओं के निकट से हमारे निकट आवे। यज्ञ में ऋभुओं-द्वारा सम्पन्न रथ विशेषरूप से प्रशंसा के योग्य है। हे दीप्तिविशिष्ट ऋभुओ, तुम लोग जिसकी रक्षा करते हो, वह दर्शन-योग्य होता है।

सवा॒ज्यर्वा॒सऋषि॑र्व॒चस्यया॒सशूरो॒अस्ता॒पृत॑नासुदु॒ष्टरः॑ ।
सरा॒यस्पोषं॒ससु॒वीर्यं॑दधे॒यंवाजो॒विभ्वाँ॑ऋ॒भवो॒यमावि॑षुः ॥ ६ ॥

सः । वा॒जी । अर्वा॑ । सः । ऋषिः॑ । व॒च॒स्यया॑ । सः । शूरः॑ ।
अस्ता॑ । पृत॑नासु । दु॒स्तरः॑ । सः । रा॒यः । पोष॑म् । सः । सु॒ऽवीर्य॑म् ।
द॒धे॒ । यम् । वाजः॑ । विऽभ्वा॑ । ऋ॒भवः॑ । यम् । आवि॑षुः ॥ ६ ॥

सवाजी वेगवानश्वःसअर्वा अरणकुशलोभवति सऋषिरतीन्द्रियज्ञानीसन्वच-स्यया स्तुत्यायुक्तोभवति सशूरोविक्रान्तःसअस्ताक्षेप्ताशत्रूणांभवति स्वयंपृतनासुसंग्रामे-

षु दुष्टरोनाभिभाव्योभवति सएवरायस्पोषंधनपुष्टिं दधे धत्ते सुवीर्यंसुवीरत्वं दधे धत्ते यं मनुष्यं वाजोयंच विभ्वा ऋभवश्चाविषुररक्षन् सएवमेवंभवतीति अन्त्यस्यबहुवन्निर्देशस्त्रयाणामृभुत्वव्यपदेशमाश्रित्येत्यभिप्रायः ॥ ६ ॥

६. वाजि, विभु और ऋभु जिस पुरुष की रक्षा करते हैं, वह बलवान् होकर रणकुशल होता है, वह ऋषि होकर स्तुतियुक्त होता है, वह शूर होकर शत्रुओं का प्रक्षेपक होता है, वह युद्ध में उद्धर्ष होता है और वह धन, पुष्टि तथा पुत्र-पौत्रादि धारण करता है।

**श्रेष्ठं॑वः॒पेशो॒अधि॑धायिदर्॒श॒तंस्तोमो॑वाजाऋभव॒स्तंजु॑जुष्टन ।**
**धीरा॑सो॒हिष्ठाक॒वयो॑विप॒श्चित॒स्तान्व॑ए॒नाब्रह्म॒णावे॑दयामसि ॥ ७ ॥**

श्रेष्ठ॑म् । व॒ः । पेश॑ः । अधि॑ । धा॒यि॒ । द॒र्श॒तम् । स्तोम॑ः । वा॒जा॒ः ।
ऋ॒भ॒व॒ः । तम् । जु॒जु॒ष्ट॒न॒ । धीरा॑सः । हि । स्थ । क॒वय॑ः ।
वि॒प॒ःऽचित॑ः । तान् । व॒ः । ए॒ना । ब्रह्म॑णा । आ । वे॒द॒या॒म॒सि॒ ॥ ७ ॥

श्रेष्ठम् अत्युत्कृष्टमतएव दर्शतं दर्शनीयं वोयुष्माकं पेशोरूपम् अधिधायि अधिनिहितम् अतस्तद्युक्तोयःस्तोमः स्तोत्रमस्मत्कृतमस्ति हेवाजाऋभवः तंस्तोमंस्तोत्रंजुजुष्टन सेवध्वं ये यूयंधीरासोहि धीमन्तःप्रसिद्धाःकवयोमेधाविनोविपश्चितोज्ञानवन्तःस्थभवथ तान्वोयुष्मानेना एतेन ब्रह्मणामन्त्रेणस्मत्कृतेनावेदयामसि अपयोक्तब्रह्मणाविपश्चितःस्तोतारोयान्स्तुवन्तीतिशेषः तान्ब्रह्मणा आवेदयामः प्रज्ञापयामः ॥ ७ ॥

७. हे वाजगण, हे ऋभुगण, तुम लोग अत्युत्कृष्ट और दर्शनीय रूप धारण करते हो। हम लोगों ने तुम्हारे लिए यह उचित स्तोत्र रचा है। तुम लोग इसका सेवन करो। तुम लोग धीमान्, कवि और ज्ञानवान् हो। स्तोत्र-द्वारा हम तुम लोगों को आवेदित करते हैं।

**यू॒यम॒स्मभ्यं॑धि॒षणा॑भ्य॒स्परि॑वि॒द्वांसो॒विश्वा॒नर्या॑णि॒भोज॑ना ।**
**द्यु॒मन्तं॒वाजं॒वृष॑शुष्ममुत्त॒ममानो॑र॒यिमृ॑भवस्तक्ष॒तावयः॑ ॥ ८ ॥**

यू॒यम् । अ॒स्मभ्य॑म् । धि॒षणा॑भ्यः । परि॑ । वि॒द्वांस॑ः । विश्वा॑ ।
नर्या॑णि । भोज॑ना । द्यु॒ऽमन्त॑म् । वाज॑म् । वृष॑ऽशुष्मम् ।
उ॒त्ऽत॒मम् । आ । न॒ः । र॒यिम् । ऋ॒भ॒व॒ः । त॒क्ष॒त॒ । आ । वय॑ः ॥ ८ ॥

हेऋभवः यूयमस्मभ्यं धिषणाभ्यस्परि स्तुतिभ्योनिमित्तभूताभ्यः परीतिपञ्चम्यर्थानुवादी यद्वा अस्मत्स्तुतिभ्योधिकान्नर्याणि नृभ्योहितानि विश्वा सर्वाणि भोजना-

मोग्यानि विद्वांसोनानन्तःस्त्रः आतक्षत सम्पादयत किञ्च द्युमन्तं दीप्तिमन्तं हिरण्यादिरूपंवाजंबलवन्तं वृषशुष्मं सेक्तृणाबलवतां शोषकशुष्मंरयिं नोस्माकंयथोषंब आतक्षत हेऋभवः ॥ ८ ॥

८. हे ऋभुओ, हमारी स्तुति के लिए मनुष्यों को हितकारिणी समस्त भोग्य वस्तुओं को जानकर तुम उनकी समाप्ति करो एवम् हमारे लिए दीप्तिमान्, बलकारक और बलवान् शत्रुओं के शोषक धन और अन्न का सम्पादन करो।

**इहप्रजामिहरयिंरराणाइहश्रवोवीरवत्तक्षतानः ।**
**येनवयंचितयेमात्यन्यान्तंवाजंचित्रमृभवोददानः ॥ ९ ॥ ८ ॥**

इह । प्रऽजाम् । इह । रयिम् । रराणाः । इह । श्रवः । वीरऽवत् । तक्षत । नः । येन । वयम् । चितयेम । अति । अन्यान् । तम् । वाजम् । चित्रम् । ऋभवः । दद । नः ॥ ९ ॥ ८ ॥

नोस्माकमिहयज्ञे रराणाः रममाणाः प्रजां पुत्रपौत्रादिरूपां तक्षत सम्पादयत इहैवरराणाः रयिंचतक्षत इहैवयज्ञेश्रवोयशः वीरवद्वीरैः भृत्यादिभिरुपेतंतक्षत किञ्च वयं येनवाजेनान्यानस्मत्समानतिचितयेम अतिक्रम्यप्रज्ञायेमहि तंचित्रंचायनीयंवाजमन्नं हेऋभवः नोदत्तसम्प्रयच्छत ॥ ९ ॥

९. हे ऋभुओ, तुम लोग हमारे इस यज्ञ में प्रीत होकर पुत्र-पौत्रादि का सम्पादन करो, इस यज्ञ में धन-सम्पादन करो और इस यज्ञ में भृत्यादि-युक्त यश-सम्पादन करो। हम लोग जिस अन्न के द्वारा दूसरों का अतिक्रमण कर सकें, उस तरह का रमणीय अन्न हम लोगों को दो।

उपनोवाजाइत्यष्टर्चंपञ्चमंसूक्तं वामदेवस्यार्षमार्भवंत्रैष्टुभं पञ्चम्याद्यास्तिस्रोनुष्टुभः तथाचानुक्रान्तम्—उपनोऽष्टौचतस्रोनुष्टुबन्तामिति । व्यूळ्हेदशरात्रेषष्ठेहनिवैश्वदेवशस्त्रेआद्यास्तिस्रः शस्याः । उपनोवाजाइतित्रयोदशार्भवंचतस्रोवेतीतिहसूत्रितम् ।

**उपनोवाजाअध्वरमृभुक्षादेवायातपथिभिर्देवयानैः ।**
**यथायज्ञंमनुषोविक्ष्वाऽऽसुदधिध्वेरण्वाःसुदिनेष्वह्नाम् ॥ १ ॥**

उप । नः । वाजाः । अध्वरम् । ऋभुक्षाः । देवाः । यात । पथिऽभिः । देवऽयानैः । यथा । यज्ञम् । मनुषः । विक्षु । आसु । दधिध्वे । रण्वाः । सुऽदिनेषु । अह्नाम् ॥ १ ॥

हेवाजाः हेऋभुक्षाः ऋभवःहेदेवाः नोऽस्मदीयंयागमुपयात उपगच्छत देवयानैःदेवैर्गन्तव्यैः पथिभिर्मार्गैः यथायेनप्रकारेण मनुषोमनोःसम्बन्धिनीष्वासुविक्षुप्रजासु यजमाने- षुमध्ये हेरण्वाः रमणीयाऋभवः अह्नांसुदिनेषु सुदिनत्वनिमित्तेषुयज्ञमस्मदीयंदधिध्वे धारयथ यथा येनप्रकारेण यज्ञमागत्यसुदिनत्वंकुरुथ तथा यज्ञमायातेति ॥ १ ॥

१. हे रमणीय ऋभुओ, तुम लोग जिस तरह से दिवसों को सुदिन करने के लिए मनुष्यों के यज्ञ को धारण करते हो, हे वाजगण, हे ऋभुगण, उसी तरह से तुम लोग देवमार्ग-द्वारा हमारे यज्ञ में आगमन करो ।

तेवोहृदेमनसेसन्तुयज्ञाजुष्टासोअद्यघृतनिर्णिजोगुः
प्रवःसुतासोहरयन्तपूर्णाःक्रत्वेदक्षायहर्षयन्तपीताः ॥ २ ॥

ते । वः । हृदे । मनसे । सन्तु । यज्ञाः । जुष्टासः । अद्य । घृतऽनिर्निजः । गुः । प्र । वः । सुतासः । हरयन्त । पूर्णाः । क्रत्वे । दक्षाय । हर्षयन्त । पीताः ॥ २ ॥

अद्यास्मिन्यागदिने ते एते यज्ञाः यागसाधनाः सोमाः वोयुष्माकं हृदे हृदयाय मनसे तत्प्रीतये सन्तु भवन्तु अद्यास्मिन्दिनेजुष्टासः पर्याप्ताः सोमाः घृतनिर्णिजः मिश्रणद्रव्येणदीप्तरूपाः गुः गच्छन्तु युष्मद्धृदयं सुतासोभिषुताःसोमाश्चमसेषुपूर्णाः वोयुष्मत्प्रहरयन्त प्रहियन्ते प्रकर्षेणवोयुष्मान्कामयन्ते क्रत्वे क्रतवे कर्मणे दक्षायोत्साहाय पीताः हर्षयन्त हर्षयन्तु ॥ २ ॥

२. आज यह सारे यज्ञ तुम्हारे हृदय और मन में प्रीतिदायक हों, घृतमिश्रित पर्याप्त सोमरस तुम्हारे हृदय में गमन करे । चमसपूर्ण अभिषुत सोमरस तुम्हारी कामना करता है । वह पीत होकर तुम्हें सुकर्म के लिए हृष्ट करे ।

त्र्युदायन्देवहितंयथावःस्तोमोवाजाऋभुक्षणोददेवः ।
जुह्वेमनुष्वदुपरासुविक्षुयुष्मेसचाबृहद्दिवेषुसोमम् ॥ ३ ॥

त्रिऽउदायम् । देवऽहितम् । यथा । वः । स्तोमः । वाजाः । ऋभुक्षणः । ददे । वः । जुह्वे । मनुष्वत् । उपरासु । विक्षु । युष्मे इति । सचा । बृहत्ऽदिवेषु । सोमम् ॥ ३ ॥

त्र्युदायं त्र्युदयं सवनत्रयगमनोपेतं देवहितं सोमाख्यमन्नं देवेभ्योहितं देवैर्वाविहितं यथास्तोमः तृतीयसवनस्थमित्यर्थः तद्यथावोयुष्मान्ददे धारयति हेवाजाः हेऋभुक्षणऋभवः

स्तोत्रंवोदवे धारयति उपराद्दु उपदेवधमनसमीपेरमन्तइत्युपरास्तासु विशु प्रजासु बृहद्दि-
वेषु प्रभूतदीप्तेषु देवेषुमध्ये मनुष्वत् मनुरिवयुष्मे युष्मदर्थं सचा सहानेकमहेषु प्रस्थितं
शुद्धे जुहोमिसोमम् ॥ ३ ॥

३. हे वाजिगण, हे ऋभुगण, जो लोग सवनत्रयोपेत देवों के हितकर सोम को तुम लोगों के उद्देश से धारण करते हैं अथवा सोम को तुम लोगों के उद्देश से धारण करते हैं, उन समवेत प्रजाओं के मध्य में हम मनु की तरह प्रभूत-दीप्तियुक्त होकर तुम्हारे उद्देश से सोम प्रदान करते हैं।

**पीवोअश्वाःशुचद्रथाहिभूतायःशिप्रावाजिनःसुनिष्काः ।**
**इन्द्रस्यसूनोशवसोनपातोनुवश्चेत्यग्रियंमदाय ॥ ४ ॥**

पीवःऽअश्वाः । शुचत्ऽरथाः । हि । भूत । अयःऽशिप्राः । वाजिनः ।
सुऽनिष्काः । इन्द्रस्य । सूनो इति । शवसः नपातः । अनु । वः ।
चेति । अग्रियम् । मदाय ॥ ४ ॥

हेवाजिनऋभवः पीवोअश्वाः पीवानोश्वायेषांतेतादृशाः तथा शुचद्रथाः दीप्तरथाः
अयःशिप्राः शिप्रेहनूनासिकेवा अयोवत्सारवच्छिप्राः सुनिष्काः शोभननिष्काश्च भूत भवत हे
इन्द्रस्यसूनो सूनवः पुत्रवद्रक्षणीयाः हेशवसोनपातः बलस्यपुत्राः वाजिनः वोयुष्मभ्यमग्रिया-
नुचेति अनुजानाति देवेभ्यश्रेयमभिमतंतृतीयसवनं हिपूर्णः ॥ ४ ॥

४. हे ऋभुओ, तुम्हारे अश्व मोटे हैं, तुम्हारे रथ दीप्तिशाली हैं, तुम्हारा हनुद्वय लोहे की तरह सारवान् है। तुम अन्नवान् और शोभन निष्क (दान) वाले हो। हे इन्द्र के पुत्रो और बल के पुत्रो, तुम लोगों के हर्ष के लिए यह प्रथम सवन अनुष्ठित हुआ है।

**ऋभुमृभुक्षणोरयिंवाजेवाजिन्तमंयुजम् ।**
**इन्द्रस्वन्तंहवामहेसदासातममश्विनम् ॥ ५ ॥ १ ॥**

ऋभुम् । ऋभुक्षणः । रयिम् । वाजे । वाजिन्ऽतमम् ।
युजम् । इन्द्रस्वन्तम् । हवामहे । सदाऽसातमम् । अश्विनम् ॥ ५ ॥ १ ॥

हे ऋभुक्षणः ऋभवः ऋभुम् उरुभासमानं रयिं धनरूपं ऋभुम् युष्मत्संबन्धिनं वाजेसंग्रा-
मेवाजिन्तममतिशयेनबलवन्तं युजं सहायभूतमुपेतम् इन्द्रस्वन्तमिन्द्रवन्तमिन्द्रियवन्तं सदासातमं
सर्वदादातृतममश्विनमश्ववन्तं भवद्गणं हवामहे आह्वयामि ॥ ५ ॥

५. हे ऋभुओ, हम अत्यन्त वृद्धिशील धन का आह्वान करते हैं, संग्राम में अत्यन्त बलवान् रक्षक का आह्वान करते हैं और सर्वदा दानशील, अश्ववान् तथा इन्द्रवान् या इन्द्रियवान् आपके गण का आह्वान करते हैं।

अथषष्ठी–

सेदृभवोयमवंथयूयमिन्द्रश्चमर्त्यम् ।
सधीभिरस्तुसनितामेधसातासोअर्वता ॥ ६ ॥

सः । इत् । ऋभवः । यम् । अवंथ । यूयम् । इन्द्रः । च । मर्त्यम् ।
सः । धीभिः । अस्तु । सनिता । मेधसाता । सः । अर्वता ॥ ६ ॥

हेऋभवः यूयम् इन्द्रश्च यंमर्त्यमवथ रक्षथ सेत् सएवास्तु भवतु नान्यःश्रेष्ठोभवतीत्यर्थः सएव धीभिः कर्मभिः सनिता संभक्ताभवतु मेधसाता मेधसातौ यज्ञे सएवार्वता रणसाधेनसुक्तोभवतु ॥ ६ ॥

६. ऋभुओ, तुम और इन्द्र जिस मनुष्य की रक्षा करते हो, वही श्रेष्ठ होता है। वह कर्म-द्वारा धनभागी हो। वह यज्ञ में अश्वयुक्त हो।

विनोवाजाऋभुक्षणःपथश्चितनयष्टवे ।
अस्मभ्यंसूरयस्तुताविश्वाआशास्तरीषणि ॥ ७ ॥

वि । नः । वाजाः । ऋभुक्षणः । पथः । चितन । यष्टवे ।
अस्मभ्यम् । सूरयः । स्तुताः । विश्वाः । आशाः । तरीषणि ॥ ७ ॥

हेवाजाः हेऋभुक्षणः हेऋभवोनोस्माकंपथोमार्गान्यष्टवे यष्टुं यज्ञमार्गान्विचितन विचेतयत प्रज्ञापयतेत्यर्थः अस्मभ्यं हेसूरयोमेधाविनः यूयंस्तुताःसन्तः विश्वाआशाः सर्वादिशः तरीषणि तरीतुंसामर्थ्यंवितरतेतिशेषः ॥ ७ ॥

७. हे वाजिगण, हे ऋभुगण, हम लोगों को यज्ञमार्ग प्रज्ञापित करो। हे मेधावियो, तुम लोग स्तुत होने पर समस्त दिशाओं को उत्तीर्ण करने की सामर्थ्य को वितरित करो।

तंनोवाजाऋभुक्षणइन्द्रनासत्यारयिम् ।
समश्वंचर्षणिभ्यआपुरुशस्तमघत्तये ॥ ८ ॥ १० ॥

तम् । नः । वाजाः । ऋभुक्षणः । इन्द्र । नासत्या । रयिम् ।
सम् । अश्वम् । चर्षणिभ्यः । आ । पुरु । शस्त । मघत्तये ॥ ८ ॥ १० ॥

अनयास्तुतिमुपलक्ष्याभिमतमाशास्ते हेवाजाः हेऋभुक्षणः ऋभवः हेइन्द्र हेनासत्या-श्विनौ ते यूयं नोस्मभ्यं चर्षणिभ्योमनुष्येभ्यःस्तोतृभ्यः तंपुरुप्रभूतं रयिं धनमश्वंच पुरुप्रभूतं मघत्तयेधनदानाय समाशस्त सम्यगाशासनंकुरुत ॥ ८ ॥

८. हे वाजगण हे ऋभुगण, हे इन्द्र, हे अश्विद्वय, तुम लोग हम स्तुति करनेवाले मनुष्यों के लिए धन-दानार्थं प्रभूत धन और अश्व के दान की आज्ञा करो ।

॥ इतितृतीयस्यसप्तमेदशमोवर्गः ॥ १० ॥

उतोहिवामितिदशर्चंषष्ठंसूक्तं वामदेवस्यार्षं त्रिष्टुप्छन्दः दधिक्रादेवता आद्याद्यावापृ-थिव्या । अत्रानुक्रमणिका—उतोहिदशद्याभिकंद्यावापृथिव्याद्येति । विनियोगोलैङ्गिकः ।

तत्रप्रथमा—

उ॒तो हि वां॑ दा॒त्रा सन्ति॒ पूर्वा॒ या पू॒रुभ्य॑स्त्र॒सद॑स्युर्नितो॒शे ।
क्षे॒त्रा॒सां द॑दथुरुर्वरा॒सां घ॒नं दस्यु॑भ्यो अ॒भिभू॑तिमु॒ग्रम् ॥ १ ॥

उ॒तो इति॑ । हि । वा॒म् । दा॒त्रा । सन्ति॑ । पूर्वा॑ । या । पू॒रुऽभ्यः॑ । त्र॒सद॑स्युः । नि॒ऽतो॒शे । क्षे॒त्र॒ऽसाम् । द॒द॒थुः॒ । उ॒र्व॒रा॒ऽसाम् । घ॒नम् । दस्यु॑ऽभ्यः । अ॒भिऽभू॑तिम् । उ॒ग्रम् ॥ १ ॥

उतोइतिपूरणः अस्माथावापृथिव्यस्यादत्रतद्वाचकशब्दाभावेपितेएवसंबोद्धव्ये हेद्यावा-पृथिव्यौ वां युवाभ्यां सकाशाद्दात्रा दानकर्त्रा पौरुकुत्स्येन त्रसदस्युनालब्धानिपूर्वा पूर्वाणि पुराणानि पूरकाणिवाधनानिसन्ति या यानिधनानि पूरुभ्योर्थिभ्योमनुष्येभ्यः त्रसदस्युः राजा नितोशे न्यतोषत दत्तवान् क्षेत्रसां क्षेत्राणि सर्वाभूमीः सनोतीतिक्षेत्रसाःअ-श्वःतंददथुः तथा उर्वरासाम् उर्वराःसर्वसस्याढ्याभूः तांसनोतीति उर्वरासाः पुत्रःतंददथुः घनं हननार्हमग्रुधं दस्युभ्योदस्यूनांवधार्थंच ददथुः कीदृशमायुधमभिभूतिमभिभवित्ता-रमुग्रमुद्गूर्णबलं यद्वा उत्तरार्धमेकंवाक्यं दातव्यानिधनानि उक्तलक्षणंपुत्रंचददथुः दत्तवत्यौस्थः तानिमह्यमपिदद्यातामित्यर्थः हिपूरणः ॥ १ ॥

१. हे द्यावा-पृथिवी, दाता त्रसदस्यु राजा ने तुम्हारे समीप से बहुत धन पा करके याचक मनुष्यों को दिया था, तुमने उन्हें अश्व और पुत्र दिया था एवम् दस्युओं को मारने के लिए अभिभव-समर्थ उग्र अस्त्र दिया था ।

उ॒त वा॒जिनं॑ पुरुनि॒ष्षिध्वा॑नं दधि॒क्रामु॑ ददथुर्वि॒श्वकृ॑ष्टिम् ।
ऋ॒जि॒प्यं श्ये॒नं प्रु॑षि॒तप्सु॑मा॒शुं च॒र्कृत्य॑म॒र्यो नृ॒पतिं॒ न शूर॑म् ॥ २ ॥

उत । वाजिनम् । पुरुनिःऽसिध्वानम् । दधिऽक्राम् । ऊँ इति ।
दुदथुः । विश्वऽकृष्टिम् । ऋजिप्यम् । श्येनम् । प्रुषितऽप्सुम् ।
आशुम् । चर्कृत्यम् । अर्यः । नृऽपतिम् । न । शूरम् ॥ २ ॥

उतापि च वाजिनंगमनवन्तमश्वरूपंवादेवम् अग्नेरश्वरूपस्यैवदधिक्राख्यत्वादग्निस्तद्रूपत्वंब्राह्मणेषुसमाम्नातम्—तोनम्निरश्वोभूत्वाम्यत्यदवदिति । पुरुनिष्षिध्वानं पुरूणांबहूनांशत्रूणांनिषेद्धारं दधिक्रांदधत्पंधारयन्क्रामतीतिदधिक्राः तमेतन्नामकंदेवम् उःपूरणः विश्वकृष्टिं विश्वाःकृष्टयोरक्षणीयाःयस्यतम् ऋजिप्यं ऋजुमाप्नोतिगच्छतीतिऋजिप्यस्तं श्येनं शंसनीयगमनं प्रुषितप्सुं दीप्तरूपमाशुं व्याप्तं शीघ्रगमनंवा अर्यः अरेरर्यस्य चर्कृत्यं कर्तनशीलं शूरं नृपतिंन राजानमिव स्थितंदेवंद्यावापृथिव्यौदुदथुः धारयतः ॥ २ ॥

२. गमनशील, अनेक शत्रुओं के निषेधक, समस्त मनुष्यों के रक्षक, सुन्दर गामी, दीप्ति-विशिष्ट, शीघ्रगामी एवम् बलवान् राजा की तरह शत्रु-विनाशक दधिक्रा (अश्वरूपी अग्नि) देव को तुम दोनों (द्यावा-पृथिवी) धारण करती हो।

यंसीमनुप्रवतेवद्रवन्तंविश्वःपूरुर्मदतिहर्षमाणः ।
पद्भिर्गृध्यन्तंमेधयुंनशूरंरथतुरंवातमिवध्रजन्तम् ॥ ३ ॥

यम् । सीम् । अनु । प्रवताऽइव । द्रवन्तम् । विश्वः । पूरुः । मदति ।
हर्षमाणः । पत्ऽभिः । गृध्यन्तम् । मेधऽयुम् । न । शूरम् । रथऽतुरम् ।
वातम्ऽइव । ध्रजन्तम् ॥ ३ ॥

यं दधिक्रां विश्वःपूरुःसर्वोपिमनुष्योहर्षमाणःहृष्यन्हर्षयन्वामदतिस्तौति तं देवं द्यावापृथिव्यौदधथुरितिसंबन्धः सदेवोविशेष्यते सीसर्वतःप्रवताप्रवणवतानिम्नेनमार्गेणोदकमिव अनुक्रमेण द्रवन्तंगच्छन्तं पद्भिः पादैः गृध्यन्तमभिकाङ्क्षन्तंदिशोलङ्घितुं तत्रदृष्टान्तः—मेधयुंनशूरं संग्रामेच्छुंशूरमिव यद्वा यज्ञक्रमणेच्छुमध्वर्य्वादिकमिव रथतुरं रथेनगच्छन्तंवातमिव भ्रमन्तंशीघ्रगंवायुमिव उक्तविशेषणविशिष्टानुवकयद्यथापूर्व्यथासर्वोमनःस्तौति तथा यंदेवंस्तौतितंदधथुरित्यर्थः ॥ ३ ॥

३. सब मनुष्य हृष्ट होकर जिस दधिक्रा देव की स्तुति करते हैं, वे निम्नगामी जल की तरह गमनशील संग्रामाभिलाषी शूर की तरह पैर-द्वारा दिशाओं के लङ्घनाभिलाषी, रथगामी और वायु की तरह शीघ्रगामी हैं।

अथचतुर्थी—

यःस्मारुन्धानोगध्यासमत्सुसनुतरश्चरतिगोषुगच्छन् ।
आविर्ऋजीकोविदथानिचिक्यत्तिरोअरतिंपर्यापआयोः ॥४॥

यः । स्म । आऽरुन्धानः । गध्या । समत्ऽसु । सनुऽतरः । चरति ।
गोषु । गच्छन् । आविःऽऋजीकः । विदथा । निऽचिक्यत् । तिरः ।
अरतिम् । परि । आपः । आयोः ॥ ४ ॥

यःस्म यःखलु देवोगध्यागध्यानि गध्यतिर्मिश्रीभावकर्मेतिनिरुक्तम् । मिश्रयितव्यानिफलानिसमत्सुसंग्रामेष्वारुन्धानःसर्वतोनिरोधयन्सनुतरः संभक्ततरोगोषुसर्वासुदिक्षु गोषुनिमित्तभूतेषुगच्छन्नाविर्ऋजीकः आविर्भूतसाधनः आविर्भूततेजस्कोवा विदथानि ज्ञातव्यानि निचिक्यत् पश्यतिकर्मैतत् जानन् अरतिमरमणंदुःखमभिगन्तारम् अरिंवापरिसर्वतस्तिरश्चति तिरस्करोति कस्यारातिमिति आपोआपः स्तोतुरायोर्मनुष्यस्ययजमानस्य ॥ ४ ॥

४. जो संग्राम में एकत्रीभूत पदार्थों को निरुद्ध करते हुए अत्यन्त भोगवासना से समस्त दिशाओं में गमन करते और वेग से विचरण करते हैं, जिनकी शक्ति आविर्भूत रहती है, वे ज्ञातव्य कर्मों को जानते हुए स्तुतिकारी यजमानों के शत्रुओं को तिरस्कृत करते हैं ।

उतस्मैनंवस्त्रमथिंनतायुमनुक्रोशन्तिक्षितयोभरेषु ।
नीचायमानंजसुरिंनश्येनंश्रवश्चाच्छापशुमच्चयूथम् ॥५॥११॥

उत । स्म । एनम् । वस्त्रऽमथिम् । न । तायुम् । अनु । क्रोशन्ति ।
क्षितयः । भरेषु । नीचा । अयमानम् । जसुरिम् । न । श्येनम् ।
श्रवः । च । अच्छ । पशुऽमत् । च । यूथम् ॥ ५ ॥ ११ ॥

उतस्म अपिखलु एनंदधिक्रांभरेषुसंग्रामेषु वस्त्रमथिंतायुंन वस्त्रमाथिनंतस्करमिव तं क्षितयोमनुष्यायथाक्रोशन्तितद्वद्वैरिणोनुक्रोशन्ति किंच नीचा नीचैरयमानंगच्छन्तंजसुरिं श्येनंक्षुधितंश्येनपक्षिणमिव तंयथादृष्ट्वापक्षिणःपलायन्तेतद्वत् श्रवोन्नंकीर्तिंवापशुमद्यूथं अच्छाभिलक्ष्यगच्छन्तमेनमनुक्रोशन्तीतिसंबन्धः चपूरणः अपिस्मैनंवस्त्रमथिमिवतस्करापिमित्यादिनिरुक्तमत्रानुसन्धेयम् ॥ ५ ॥

५. मनुष्य जैसे वस्त्रापहारक तस्कर को देखकर चीत्कार करता है, वैसे ही संग्राम में शत्रुगण दधिक्रा देव को देखकर चीत्कार करते हैं । पक्षिगण जिस प्रकार नीचे की ओर आनेवाले क्षुधार्त्त श्येन पक्षी को देखकर पलायन करते हैं, उसी प्रकार मनुष्य अन्न और पशु-यूथ के उद्देश से गमन करनेवाले दधिक्रा देव को देखकर चीत्कार करते हैं ।

उतस्मासुप्रथमःसंरिष्यन्निवेंवेतिश्रेणिभीरथानाम् ।
स्रजंकृण्वानोजन्योनशुभ्वारेणुंरेरिहत्किरणंददश्वान् ॥ ६ ॥

उत । स्म । आसु । प्रथमः । सरिष्यन् । नि । वेवेति । श्रेणिऽभिः ।
रथानाम् । स्रजम् । कृण्वानः । जन्यः । न । शुभ्वा ।
रेणुम् । रेरिहत् । किरणम् । ददश्वान् ॥ ६ ॥

उतस्म अपिचखलु आस्वसुरसेनासुसरिष्यन्सर्तुमिच्छन् प्रथमः प्रतमः उत्कृष्टतमोमुख्यः सन् रथानांश्रेणिभीराजिभिर्युक्तःसन्निवेवेति नितरांगच्छति इतस्ततोधावति कक्ष्येसुच्यते स्रजंसृज्यते उत्पाद्यतेरूपमनयेतिस्रगलंकृतिस्तां कृण्वानः जन्योन जनेभ्योहितोऽश्वइव शुभ्वा सुष्ठुभवतीतिशुभ्वाशोभमानः किरणम् आस्यगतंखलीनंददश्वान्दशन् रेणुं स्वपादघातजनितं रेरिहद्भृशंलेढि ॥ ६ ॥

६. वे असुर-सेनाओं में जाने की अभिलाषा करके रथपंक्तियों से युक्त होकर गमन करते हैं। वे अलंकृत हैं। वे मनुष्यों के हितकर अश्व की तरह शोभायमान हैं। वे मुखस्थित लौह-चण्ड या लगाम का दंशन करते और अपने पदाघात से उद्भूत धूलि का लेहन करते हैं।

उतस्यवाजीसहुरिर्ऋतावाशुश्रूषमाणस्तन्वासमर्ये ।
तुरंयतीषुतुरयन्नृजिप्योधिभ्रुवोःकिरतेरेणुमृञ्जन् ॥ ७ ॥

उत । स्यः । वाजी । सहुरिः । ऋतऽवा । शुश्रूषमाणः । तन्वा ।
सऽमर्ये । तुरम् । यतीषु । तुरयन् । ऋजिप्यः । अधि ।
भ्रुवोः । किरते । रेणुम् । ऋञ्जन् ॥ ७ ॥

उतापिच स्यः सउक्तलक्षणोवाजी वेगवान् गमनवान् समर्येसमरणेसहुरिःसहनशीलः शत्रूणाम् ऋतावाअन्नवान् तन्वास्वस्यावयवेनखुरादिनास्वतनुंशुश्रूषमाणः तुरंयतीषु त्वरगामिनीष्वसुरसेनासु तुरयन् त्वरयन् ऋजिप्यः ऋजुगामी रेणुं धूलिमृञ्जन् प्रसाधयन्नात्मने रेणुंभ्रुवोरपि उपरि किरते विक्षिपति ॥ ७ ॥

७. इस प्रकार का वह अश्व सहनशील, अन्नवान्, स्व-शरीर-द्वारा समर में कार्य-साधन करता है। वह ऋजुगामी और वेगगामी है। शत्रु-सेनाओं के मध्य में वह वेग से गमन करता है। वह धूलि को उठाकरके भ्रूदेश के ऊपर विक्षिप्त करता है।

उतस्मास्यतन्यतोरिवद्योर्ऋघायतोअभियुजोभयन्ते ।
यदासहस्रमभिषीमयोधीद्दुर्वर्तुःस्माभवतिभीमऋञ्जन् ॥ ८ ॥

उत । स्म । अस्य । तन्यतोःऽइव । द्योः । ऋघायतः । अभिऽयुजः ।
भयन्ते । यदा । सहस्रम् । अभि । सीम् । अयोधीत् ।
दुःऽवर्तुः । स्म । भवति । भीमः । ऋञ्जन् ॥ ८ ॥

उतस्म अपिचखलु द्योर्दीप्यमानात्तन्यतोःशब्दायितुरशनेरिव ऋघायतोहिंसतोऽस्य अस्माद्दधिक्राव्णोदेवादभियुजोऽभियोक्तारोऽसुराःभयन्तेबिभ्यति किंचायं यदा सीसर्वतः सहस्रमभ्ययोधीत्संप्रहरेत् तदा ऋञ्जन्प्रसाधयन्नात्मानंभीमोभयहेतुर्दुर्वर्तुर्दुर्वारश्चभवति ॥ ८ ॥

८. युद्धाभिलाषी लोग दीप्तिमान् शब्दकारी वज्र की तरह हिंसाकारी दधिक्रा देव से भीत होते हैं। जब वे चारों तरफ हजारों के ऊपर प्रहार करते हैं तब वे उत्तेजित होकर भीम और दुर्वार हो जाते हैं।

उतस्मास्यपनयन्तिजनाजूतिंकृष्टिप्रोअभिभूतिमाशोः
उतैनमाहुःसमिथेवियन्तःपरादधिक्राअसरत्सहस्रैः ॥ ९ ॥

उत । स्म । अस्य । पनयन्ति । जनाः । जूतिम् । कृष्टिऽप्रः ।
अभिऽभूतिम् । आशोः । उत । एनम् । आहुः । सम्ऽइथे ।
विऽयन्तः । परा । दधिऽक्राः । असरत् । सहस्रैः ॥ ९ ॥

उतस्मापिचखलु अस्यदधिक्राव्णोभिभूतिमभिभवित्रीं जूतिं पराभिभूतिमित्युमर्थ कामनाः पनयन्ति स्तुवन्ति कीदृशस्यास्यकृष्टिप्रः कृष्टयोमनुष्यास्तेषांपूरकस्याशोर्व्याप्तस्य वेगवतोवा उतापिचैनं समिथे संग्रामेवियन्तोविविधंगच्छन्तोजनाः अयंदधिक्रादेवः सहस्रैरनुचरैः परिवृतः परासरदितिअस्मान्विहायान्यान्हन्तुंगतइत्याहुः यद्वा एनमेवाहुः वियन्तःशत्रवः पराभवन्तीतिशेषः दधिक्राःसहस्रैरसरत्गच्छन्तीति ॥ ९ ॥

९. मनुष्यों की अभिलाषा के पूरक एवम् वेगवान् दधिक्रा देव के अभिभवकारक वेग की स्तुति मनुष्यगण करते और कहते हैं कि शत्रुगण पराभूत होंगे। दधिक्रा देव सहस्र सेना के साथ गमन करते हैं।

पञ्चिसेतौमादधिक्राइतिदधिक्राव्णोयाज्या तथाचसूत्रितम्—दधिक्राव्णोअकारिषमादधिक्राःशवसापञ्चकृष्टीरिति।

आदधिक्राःशवसापञ्चकृष्टीःसूर्यइवज्योतिषापस्ततान।
सहस्रसाःशतसावाज्यर्वापृणक्तुमध्वासमिमावचांसि ॥१०॥१२॥

आ । दधिऽक्राः । शवसा । पञ्च । कृष्टीः । सूर्यःऽइव ।
ज्योतिषा । अपः । ततान । सहस्रऽसाः । शतऽसाः । वाजी ।
अर्वा । पृणक्तु । मध्वा । सम् । इमा । वचांसि ॥ १० ॥ १२ ॥

योदधिक्रादेवः शवसाबलेन पञ्चकृष्टीः पञ्चजनान्देवमनुष्यासुररक्षःपितृसंज्ञकान्निषाद-पञ्चमांश्चतुरोवर्णान्वासूर्योज्योतिषातेजसायथाजगदावृणोतितद्वदपः उदकानि आततान आतनोति सहस्रसाःशतसाःशतानांसहस्राणांचदाता वाजी वेगवानर्वाऽरणकुशलः सदेवोमध्वा मधुनामधुरे-णफलेनइमान्युक्तानिस्तुतिवचांसिसंपृणक्तु संयोजयतु ॥ १० ॥

१०. सूर्य जिस प्रकार से तेज-द्वारा जल दान करते हैं, उसी तरह से दधिका देव बल-द्वारा पञ्चकृष्टि (देव, मनुष्य, असुर, राक्षस और पितृगण अथवा चारों वर्ण और निषाद) को विस्तृत करते हैं। शत-सहस्रदाता, वेगवान् (दधिका देव) हमारे स्तुतिवाक्य को मधुर फल-द्वारा संयोजित करें।

आशुंदधिक्रामितिषळृचंसप्तमंसूक्तम् आदितःपञ्चत्रिष्टुभः षष्ठ्यनुष्टुप् ऋषिर्वामदेवः पूर्वसूक्तेदधीत्युक्तत्वादेतदपिदाधिक्रम् तथाचानुक्रान्तम्—आशुंषळन्त्यानुष्टुबिति । सूक्तविनियो-गोलैङ्गिकः ।

आशुंदधिक्रांतमुनुष्टवामदिवस्पृथिव्याउतचर्किराम ।
उच्छन्तीर्मामुषसःसूदयन्त्वतिविश्वानिदुरितानिपर्षन् ॥ १ ॥

आशुम् । दधिऽक्राम् । तम् । ऊँ इति । नु । स्तवाम । दिवः ।
पृथिव्याः । उत । चर्किराम । उच्छन्तीः । माम् । उषसः । सूदयन्तु ।
अति । विश्वानि । दुःऽइतानि । पर्षन् ॥ १ ॥

आशुं शीघ्रगामिनं तमु तमेव दधिक्रां देवं नु क्षिप्रं स्तवाम उतापिच दिवःपृथिव्याश्चसकाशादस्यग्रासंचर्किराम विक्षिपाम उच्छन्तीस्तमोविवासयन्तीः उषसोमांप्रति सूदयन्तु रक्षन्तु विश्वानिदुरितानि अतिपर्षन्अतिपारयन्तुच अन्यदेवताकेषुमन्त्रेष्वन्यदेवतास्तुतिःसां-निपातिकत्वाच्चाविरुध्यते ॥ १ ॥

१. हम लोग शीघ्रगामी उसी दधिका देव की शीघ्र स्तुति करेंगे। द्यावा-पृथिवी के समीप से उसके सम्मुख ग्रास विक्षेप करेंगे। तमो-निवारिणी उषा देवी हमारी रक्षा करें एवम् समस्त दुरितों से हमें पार करें।

महश्चर्कर्म्यर्वतःक्रतुप्रादधिक्राव्णःपुरुवारस्यवृष्णः ।
यंपूरुभ्योदीदिवांसंनाग्निंददथुर्मित्रावरुणाततुरिम् ॥ २ ॥

म॒हः । च॒र्कृ॒र्मि॒ । अर्व॑तः । क्र॒तु॒ऽप्राः । द॒धि॒ऽक्राव्णः॑ । पु॒रु॒ऽवार॑स्य । वृष्णः॑ । यम् । पू॒रुऽभ्यः॑ । दी॒दि॒ऽवांस॑म् । न । अ॒ग्निम् । द॒दथुः॑ । मि॒त्रा॒व॒रु॒णा॒ । ततु॑रिम् ॥ २ ॥

क्रतुप्राः कर्मणांपूरकोहं महोमहतोर्वतःअरणवतः पुरुवारस्यबहुभिर्वरणीयस्यवृष्णो-वर्षकस्यदधिक्राव्णःस्तुतिंचर्कृमि अत्यर्थंकरोमि हेमित्रावरुणा मित्रावरुणौ युवांततुरिं ता-रकं यं दीदिवांसं नाग्निं दीप्यमानमग्निमिव स्थितं पूरुभ्योमनुष्येभ्यस्तेषामुपकारायधत्थः धारयथः ॥ २ ॥ हम यज्ञ के सम्पादक हैं। हम बहुतों-द्वारा वरणीय, महान् और अभीष्टवर्षी दधिक्रा देव की स्तुति करेंगे। हे मित्रावरुण, तुम दोनों दीप्तिमान् अग्नि की तरह स्थित तथा त्राणकर्त्ता दधिक्रा देव को मनुष्यों के उपकार के लिए धारण करते हो।

योअश्व॑स्यदधि॒क्राव्णो॒अका॑रीत्समि॑द्धे॒अ॒ग्नाउ॒षसो॒व्यु॑ष्टौ ।
अना॑गसन्तमदि॑तिःकृणोतु॒समि॒त्रेण॒वरु॑णेनास॒जोषाः॑ ॥ ३ ॥

यः । अश्व॑स्य । द॒धि॒ऽक्राव्णः॑ । अका॑रीत् । सम्ऽइ॑द्धे । अ॒ग्नौ । उ॒षसः॑ । विऽउ॑ष्टौ । अना॑गसम् । तम् । अदि॑तिः । कृ॒णो॒तु॒ । सः । मि॒त्रेण॑ । वरु॑णेन । स॒ऽजोषाः॑ ॥ ३ ॥

योयजमानोस्याश्वरूपस्याश्वभूतस्यदधिक्राव्णःस्तुतिमुषसोव्युष्टौ प्रभातेसति अग्नौ समिद्धेसति अकारीदकार्षीत् मित्रेणवरुणेनचाहोरात्राभिमानिदेवाभ्यांसजोषाःसमानप्रीतिरदितिरख-ण्डनीयोदधिक्रास्तंयजमानमनागसंपापरहितंकृणोतुकरोतु ॥ ३ ॥

३. जो यजमान उषा के प्रकाशित होने पर अर्थात् प्रभात होने पर और अग्नि के समिद्ध होने पर अश्वरूप दधिक्रा की स्तुति करते हैं, मित्र, वरुण और अदिति के साथ दधिक्रा देव उस यजमान को निष्पाप करें।

अथचतुर्थी–

द॒धि॒क्राव्ण॑इ॒षऊ॒र्जोम॒होयदम॑न्महिम॒रुतां॒नाम॑भ॒द्रम् ।
स्व॒स्तये॒वरु॑णंमि॒त्रम॒ग्निंहवा॑मह॒इन्द्रं॒वज्र॑बाहुम् ॥ ४ ॥

द॒धि॒ऽक्राव्णः॑ । इ॒षः । ऊ॒र्जः । म॒हः । यत् । अम॑न्महि । म॒रुता॑म् । नाम॑ । भ॒द्रम् । स्व॒स्तये॑ । वरु॑णम् । मि॒त्रम् । अ॒ग्निम् । ह॒वा॒म॒हे॒ । इन्द्र॑म् । वज्र॑ऽबाहुम् ॥ ४ ॥

इषोन्नसाधकस्योर्जोबलसाधकस्यमहोमहतोदधिक्राव्णोदेवस्यमरुतांस्तोतॄणांस्वभूतंभद्रं कल्याणंनामनमनरूपमस्ति यत्तदस्यमहिस्तुमः किञ्चात्रनिपातमात्रोवरुणादीनस्वस्तयेस्मा-आह्वयामहे ॥ ४ ॥

४. हम अन्नसाधक, बलसाधक, महान् और स्तोताओं के कल्याण-कारक दधिक्रा के नाम की स्तुति करते हैं। कल्याण के लिए हम वरुण, मित्र, अग्नि और वज्रबाहु इन्द्र का आह्वान करते हैं।

इन्द्रमिवेदुभयेविह्वयन्तउदीराणायज्ञमुपप्रयन्तः ।
दधिक्रामुसूदनंमर्त्यायददथुर्मित्रावरुणानोअश्वम् ॥ ५ ॥

इन्द्रम्ऽइव । इत् । उभये । वि । ह्वयन्ते । उत्ऽईराणाः । यज्ञम् ।
उपऽप्रयन्तः । दधिऽक्राम् । ऊँ इति । सुऽदनम् । मर्त्याय । ददथुः ।
मित्रावरुणा । नः । अश्वम् ॥ ५ ॥

इन्द्रमिवैनंदधिक्रामुदीराणाःयुद्धायोद्योगंकुर्वन्तोयज्ञमुपप्रयन्तः यज्ञमुपक्रम्यवर्तमानाश्चो-भयेविह्वयन्ते आह्वयन्ति यंमर्त्यायमर्त्येभ्यस्सूदनंप्रेरकमश्वमश्वरूपंदधिक्रांदेवं हेमित्रावरुणा नोस्माकमर्थायददथुः धारयथः तंविह्वयन्ते उभयइत्यत्रस्तोतृशंसितृभेदेनवोभयविधत्वमवग-न्तव्यम् उद्धृतम् ॥ ५ ॥

५. जो युद्ध के लिए उद्योग करते हैं और जो यज्ञ आरम्भ करते हैं वे दोनों ही इन्द्र की तरह दधिक्रा का आह्वान करते हैं। हे मित्रा-वरुण, तुम मनुष्यों के प्रेरक अश्वस्वरूप दधिक्रा को हमारे लिए धारण करो।

दधिक्राव्णोअकारिषमितिषष्ठीपापेनेष्ट्याअनुवाक्या सूत्रितञ्च—दधिक्राव्णोअकारिष-मादधिक्राःशवसापञ्चकृष्टीरिति । दधिद्रप्सभक्षणेप्येषादधिक्राव्णोअकारिषमित्याभीर्यंदधि-द्रप्सान्भक्षयन्तीतिसूत्रितत्वात् ।

अथषष्ठी—

दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः ।
सुरभिनोमुखाकरत्प्रणआयूंषितारिषत् ॥ ६ ॥ १२ ॥

दधिऽक्राव्णः । अकारिषम् । जिष्णोः । अश्वस्य । वाजिनः ।
सुरभि । नः । मुखा । करत् । प्र । नः । आयूंषि । तारिषत् ॥ ६ ॥ १२ ॥

दधिक्राव्णोदेवस्यस्तुतिमकारिषंकरवाणि जिष्णोर्जयशीलस्याश्वस्यव्यापकस्यवाजिनोवेगवतः सदेवोस्माकंमुखामुखानिचक्षुरादीन्द्रियाणि सुरभि सुरभीणि करत्करोतु नोस्मभ्यमायूंषिप्रवारिषत् प्रवर्धयतु प्रपूर्वस्तिरतिर्वर्धनार्थः ॥ ६ ॥

६. हम जयशील, व्यापक और वेगवान् दधिक्रा देव की स्तुति करते हैं। वे हमारी चक्षु आदि इन्द्रियों को सुगन्ध-विशिष्ट करें। वे हमारी आयु को वर्द्धित करें।

॥ इतितृतीयस्यसप्तमेत्रयोदशोवर्गः ॥ १३ ॥

दधिक्राव्णइदितिपञ्चर्चमष्टमंसूक्तं वामदेवस्यार्षं दाधिक्रम् आद्यात्रिष्टुप् शिष्टाजगत्यः हंसः शुचिषदित्येकासूर्यदेवत्या तथाचानुक्रमणिका—दधिक्राव्णःपञ्चान्त्यासौर्यन्त्यामगत्योन्त्यासौ-रीति। सूक्तविनियोगोलैङ्गिकः।

तत्रप्रथमा—

दधिक्राव्णइदुनुचर्किराम्विश्वाइन्मामुषसःसूदयन्तु ।
अपामग्नेरुषसःसूर्यस्यबृहस्पतेराङ्गिरसस्यजिष्णोः ॥ १ ॥

दधिऽक्राव्णः । इत् । ऊँ इति । नु । चर्किराम । विश्वाः । इत् । माम् । उषसः । सूदयन्तु । अपाम् । अग्नेः । उषसः । सूर्यस्य । बृहस्पतेः । आङ्गिरसस्य । जिष्णोः ॥ १ ॥

दधिक्राव्णइदुएतन्नामकस्यदेवस्यैवस्तुतिं नु क्षिप्रं चर्किराम भृशंकरवाम मां विश्वा इदुषसःसर्वामपि ताः सूदयन्तु कर्मसुप्रेरयन्तु अपामग्नेरुषसःसूर्यस्यबृहस्पतेराङ्गिरसस्यजिष्णो-रेतेषामहमप्यवादि देवतानांस्तुतिंकरवाणीतिशेषः तासामपिनिपातभाक्त्वात्स्तुतिरविरुद्धा ॥ १ ॥

१. हम बारम्बार दधिक्रा देव की स्तुति करेंगे। सम्पूर्ण उषा हमें कर्म में प्रेरित करें। हम जल, अग्नि, उषा, सूर्य, बृहस्पति और अङ्गिरा-गोत्रोत्पन्न जिष्णु की स्तुति करेंगे।

सत्वाभरिषोगविषोदुवन्यसच्छ्रवस्यादिषउषसस्तुरण्यसत् ।
सत्योद्रवोद्रवरःपतङ्गरोदधिक्रावेषमूर्जंस्वर्जनत् ॥ २ ॥

सत्वा । भरिषः । गोऽइषः । दुवन्यऽसत् । श्रवस्यात् । इषः । उषसः । तुरण्यऽसत् । सत्यः । द्रवः । द्रवरः । पतङ्गरः । दधिऽक्रावा । इषम् । ऊर्जम् । स्वः । जनत् ॥ २ ॥

सत्वा गन्ता भरिषो भरणकुशलः गविषो गवां प्रेरकः एवंभूतो दुवन्यसत् दुवः परिचरणमिच्छन्तो दुवन्याः तेषु सीदतीति दुवन्यसत् इषः इष्यमाणाया उषसः सम्बन्धिनि काले इत्यर्थः यद्वा इषः एषणीयो अन्नस्य श्रवस्यात् अन्नस्येदन्नमिच्छेत् किंच तुरण्यसत् त्वरया सीदतीति तुरण्यसत् सत्यः सत्सु ताय्यमानः द्रवो गन्ता द्रवरः प्रकृष्टवेगवान् पतङ्गरः पतनेनोत्प्लवनेन पतनं पतङ्गस्तद्वान् पतङ्गरः उक्तलक्षणो दधिक्रावा देवः इषमन्नमूर्जं बलं स्वः स्वर्गं च जनत् जनयेत् उत्पादयेत् ॥ २ ॥

२. गमनशील, भरणकुशल, गौओं के प्रेरक और परिचारकों के साथ निवास करनेवाले दधिक्रा देव अभिलषणीय उषाकाल में अन्न की इच्छा करें। शीघ्रगामी, सत्यगमनशील, वेगवान् और उत्प्लवन-द्वारा गमनशील दधिक्रा देव अन्न, बल और स्वर्ग उत्पादन करें।

उ॒त स्मा॑स्य॒ द्रव॑तस्तुर॒ण्य॒तः प॒र्णं न वेरनु॑ वाति प्रग॒र्धिनः॑ ।
श्ये॒नस्ये॑व॒ ध्रज॑तो अङ्क॒सं परि॑ द॒धि॒क्राव्णः॑ स॒होर्जा तरि॑त्रतः ॥ ३ ॥

उ॒त । स्म॒ । अ॒स्य॒ । द्रव॑तः । तु॒र॒ण्य॒तः । प॒र्णम् । न । वेः । अनु॑ । वा॒ति॒ । प्र॒ऽग॒र्धिनः॑ । श्ये॒नस्य॑ऽइव । ध्रज॑तः । अ॒ङ्क॒सम् । परि॑ । द॒धि॒ऽक्राव्णः॑ । स॒ह । ऊ॒र्जा । तरि॑त्रतः ॥ ३ ॥

उत स्म अपि च खलु द्रवतो गच्छतस्तुरण्यतस्त्वरमाणस्य प्रगर्धिनः प्रकर्षेणाभिकाङ्क्षतोऽस्य देवस्य गतिं वेः पक्षिणः पर्णं न गमनं पत्रं वानुसृत्य यथा वा श्येनमन्ये पक्षिणस्तद्वदनुवाति सर्वो वेगवान् जनः सर्वेषामपि शीघ्रगामीत्यर्थः किंच ध्रजतो गच्छतः तरित्रतस्तारयतोऽन्यान् अन्तर्भावितण्यर्थोऽयं श्येनस्येवाङ्कसं पादाधारमुरःप्रदेशं वा परि परितः ऊर्जा बलेन निमित्तेन अन्नार्थं वा सह एकीभूय सङ्घेन गच्छन्तीति शेषः ॥ ३ ॥

३. पक्षिगण जिस तरह से पक्षियों की गति का अनुसरण करते हैं, उसी तरह से सब वेगवान् लोग त्वरायुक्त और आकांक्षावान् दधिक्रा देव की गति का अनुसरण करते हैं। श्येन पक्षी की तरह द्रुतगामी और त्राणकारी दधिक्रा के उस प्रदेश के चारों तरफ़ एकत्र होकर अन्न के लिए सब गमन करते हैं।

उ॒त स्य वा॒जी क्षि॒प॒णिं तु॑रण्यति ग्री॒वायां॑ ब॒द्धो अ॑पिक॒क्ष आ॒सनि॑ ।
क्रतुं॑ दधि॒क्रा अनु॑ सं॒तवी॑त्वत् प॒थामङ्कां॒स्यन्वा॒पनी॑फणत् ॥ ४ ॥

उ॒त । स्यः । वा॒जी । क्षि॒प॒णिम् । तु॒र॒ण्य॒ति॒ । ग्री॒वाया॑म् । ब॒द्धः । अ॒पि॒ऽक॒क्षे । आ॒सनि॑ । क्रतु॑म् । द॒धि॒ऽक्राः । अनु॑ । स॒म्ऽतवी॑त्वत् । प॒थाम् । अङ्कां॑सि । अनु॑ । आ॒ऽपनी॑फणत् ॥ ४ ॥

उतापि च स्यः स्वाजी वेगवान् अश्वरूपोदेवोग्रीवायांगमनसाधनायांकण्ठेबद्धो-पिकक्षे कक्षप्रदेशे आसनि आस्येचबद्धः बद्धपदस्यचकारस्योक्तेषुस्थानेषुपाशबन्धाःसम्भवन्ति एवंबद्धःसन् क्षिपणि क्षेपणमनुतुरण्यतित्वरयतिगन्तुं किञ्चायंदधिक्रादेवः क्रतुं कर्मप्रज्ञांवा अनु अनुसृत्य सन्तवीत्वत् प्रवृद्धबलःसन्पथांमार्गाणामङ्कांसिकुटिलानिअनुसृत्य आपनीफणत् सर्वतोभृशंगच्छति फणतेर्गत्यर्थस्ययङ्लुकीदंरूपम् अपिकक्षासनीत्यादिनि-रुक्तमनुसंधेयम् ॥ ४ ॥

४. यह अश्व-रूप देव कण्ठप्रदेश में, कक्षप्रदेश में और मुखप्रदेश में बद्ध होते हैं एवम् बद्ध होकर पैदल शीघ्र गमन करते हैं । दधिक्रा देव अधिक बलवान् होकर यज्ञाभिमुख कुटिल मार्गों का अनुसरण करके सर्वत्र गमन करते हैं ।

दशरात्रेषष्ठेहनितृतीयसवनेमैत्रावरुणशस्त्रेहंसःशुचिषदित्येषाआह्वयदूरोहणंरोहेद्धंसःशुचिषदि-तिपच्छोऽर्धर्चशइतिसूत्रितम् । स्मार्तविनियोगमाहशौनकः—हंसःशुचिषदित्यृचाशुचिरीक्षेद्दिवाकरम् । अन्तकालेमुच्यतेतिमरणःपदशाश्वतमिति ॥

**हंसःशुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ।**
**नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋतम् ॥५॥१४॥**

हंसः । शुचिऽसत् । वसुः । अन्तरिक्षऽसत् । होता । वेदिऽसत् ।
अतिथिः । दुरोणऽसत् । नृऽसत् । वरऽसत् । ऋतऽसत् । व्योमऽसत् ।
अप्ऽजाः । गोऽजाः । ऋतऽजाः । अद्रिऽजाः । ऋतम् ॥ ५ ॥ १४ ॥

अनयासौर्यर्चा यएषोन्तरादित्येहिरण्मयःपुरुषोदृश्यते हिरण्यश्मश्रुरित्यादिश्रुत्यो-क्तोमण्डलाभिमानीदेवोस्ति यश्चसर्वप्राणिहृदिचिद्रूपःस्थितःपरमात्मा यश्चनिरस्तसमस्तोपा-धिकपरब्रह्म तत्सर्वमेकमेवेतिप्रतिपाद्यते हंसः हन्तिर्गत्यर्थः सर्वत्रसर्वदागन्तायोहंसोऽसावि-त्यादिश्रुत्युक्तप्रकारेणैकीकृत्योपास्यः परमात्मत्वप्रतिपाद्यआदित्यःसचद्युलोकेसीद-तीतिशुचिषत् अथयदतःपरोदिवोज्योतिर्दीप्यतइत्यादिश्रुतेः । अनेनद्युस्थानआदित्यःप्रतिपा-दितः सएवमध्यस्थानोवायुरित्याह वसुःसर्वस्यवासयितावायुः सचान्तरिक्षसत् अन्तरिक्ष-संचारी . अथ तस्यैवक्षितिस्थानवैदिकाग्निरूपतामाह होता देवानामाह्वाता होमनिष्पाद-कोवा वेदिषत् वेद्यांगार्हपत्यादिरूपेणस्थितः अतिथिरतिथिवत्सर्वैःपूज्योऽग्निः दुरोणसत् दुरोणंगृहनाम तत्र पाकादिसाधनत्वेनस्थितः अनेनलौकिकाग्न्यात्मकत्वमुक्तं नृषत् नृषुमनुष्ये-षुचैतन्यरूपेणसीदतीतिनृषत् अनेनपरमात्मरूपत्वमुक्तं पुनरप्यादित्यात्मतामाह—वरसत् वरे वरणीयेमण्डलेसीदतीतिवरसत् आदित्यः परंवाएतत्सत्यंयस्मिन्नेषआस्तेतपतीतिश्रु-तेः ऋतंसत्यंयज्ञोवातत्रसीदतीत्यृतसत् अग्निः व्योमान्तरिक्षं तत्रसीदतीतिव्योमसद्वायुः

इदानीमादित्यस्तोच्यते अब्जाः उदकेषुजातः उदकमध्येसूर्यरूपेणजायते गोजाः गोषु रश्मिषुजातः ऋतंसत्यंसर्वैर्द्रष्टव्यत्वेनसत्याज्जातः यद्वासाविन्द्रादिवत्परोक्षोभवति यद्वोदकेषुवैद्युतरू- पेणवा वाडवरूपेणवाजातः अद्रिजाः अद्रावुदयाचलेजातः एवंमहानुभावआदित्यः ऋतं सत्यमबाध्यंसर्वोपद्रवरहितंभवतत्त्वं तद्रूपोह्यसावेवादित्यस्योक्तरूपत्वं हंसः शुचिषदित्येषवैहंसः शुचिषदित्यादिनाब्राह्मणेसमाम्नातम् ॥ ५ ॥

५. हंस (आदित्य) दीप्त आकाश में अवस्थित रहते हैं। वसु (वायु) अन्तरिक्ष में अवस्थिति करते हैं। होता (वैदिकाग्नि) वेदीस्थल पर गार्हपत्यादि रूप से अवस्थिति करते हैं एवम् अतिथिवत् पूज्य होकर गृह में (पाकादिसाधन रूप से) अवस्थिति करते हैं। ऋत (सत्य, ब्रह्म, यज्ञ) मनुष्यों के मध्य में अवस्थान करते हैं, वरणीय स्थान में अवस्थान करते हैं, यज्ञस्थल में अवस्थान करते हैं एवम् अन्तरिक्ष-स्थल में अवस्थान करते हैं। वे जल में उत्पन्न हुए हैं, रश्मियों में उत्पन्न हुए हैं, सत्य में उत्पन्न हुए हैं और पर्वतों में उत्पन्न हुए हैं।

इन्द्रा कोवामित्येकादशर्चंनवमंसूक्तं वामदेवस्यार्षं त्रैष्टुभमैन्द्रावरुणम् अत्रानुक्रमणि- का—इन्द्रा कोवामेकादशैन्द्रावरुणंत्विति । आभिप्लविकेषूक्थ्येषुतृतीयसवनेमैत्रावरुणशस्त्रेषुस्तो- मवृद्धावावापार्थमेतदादिसूक्तद्वयम् इन्द्राकोवामितिसूक्तेइतिसूत्रितत्वात् ।

**इन्द्रा को वां वरुणा सुम्नमाप स्तोमो हविष्माँ अमृतो न होता ।**
**यो वां हृदि क्रतुमाँ अस्मदुक्तः पस्पर्शदिन्द्रावरुणा नमस्वान् ॥१॥**

इन्द्रा । कः । वाम् । वरुणा । सुम्नम् । आप । स्तोमः । हविष्मान् । अमृतः । न । होता । यः । वाम् । हृदि । क्रतुऽमान् । अस्मत् । उक्तः । पस्पर्शत् । इन्द्रावरुणा । नमस्वान् ॥ १ ॥

हेइन्द्रा हेवरुणा हेइन्द्रावरुणौ परस्परापेक्षयाद्विवचनं वां युवयोः सुम्नं सुखं कः स्तोमोहविष्मान्हविर्भिरुपेतःसोमाज्यादिभिःपेयद्रव्योपेतो ऽनुभवस्तोमःसुम्नमाप फलत्वेनप्राप्नु- यादित्यर्थः यद्वा हविष्मानित्येतदुत्तरत्रयोज्यं हविष्मान् हविर्युक्तोऽमृतोऽमरणधर्मा स्वर्ग- साधनोहोताग्निरिव यथा तथा यःस्तोमोहेइन्द्रावरुणौ वां युवयोर्हृदि हृदये क्रतुमान्प्र- ज्ञोपेतोऽस्मदस्मत्सकाशादुक्तोऽभिहितः नमस्वान्हविष्मान् नमस्कारोपेतोवापस्पर्शत् स्पृशेत् हृदयङ्गमोभवेत् कस्तादृशस्तोमप्रशंसा ॥ १ ॥

१. हे इन्द्र, हे वरुण, अमरहोता अग्नि की तरह कौन हविर्युक्त स्तोम (स्तोत्र) तुम दोनों का अनुग्रह लाभ करेगा? हे इन्द्र, हे वरुण, वह स्तोम (प्रशंसा) हम लोगों के द्वारा अभिहित होकर एवम् प्रज्ञो- पेत और हविर्युक्त होकर तुम दोनों के हृदयङ्गम हो।

अथद्वितीया—

इन्द्रा॑वरु॒णा य॑ आ॒पी दे॒वौ मर्तः॑ स॒ख्याय॒ प्रय॑स्वान् ।
स ह॑न्ति वृ॒त्रा स॑मि॒थेषु॒ शत्रू॒नवो॑भिर्वा म॒हद्भिः॒ स प्र शृ॑ण्वे ॥ २ ॥

इन्द्रा॑ । ह॒ । यः । वरु॑णा । च॒क्रे । आ॒पी इति॑ । दे॒वौ । मर्तः॑ । स॒ख्याय॑ । प्रय॑स्वान् । सः । ह॒न्ति॒ । वृ॒त्रा । स॒म्ऽइ॒थेषु॑ । शत्रू॑न् । अवः॑ऽभिः । वा॒ । म॒हत्ऽभिः॑ । सः । प्र । शृ॒ण्वे॒ ॥ २ ॥

हेइन्द्रावरुणा इन्द्रावरुणौदेवौ हशब्दःपूरणः प्रसिद्धौवा योमर्तोमरणधर्माप्रयस्वान्हविर्लक्षणान्नवान्सन् सख्याय सखित्वाय आपी बन्धूचक्रे करोति समर्तोवृत्रा आवरकाणिपापानिहन्ति तथा समिथेषुसंग्रामेषुशत्रून्हन्ति वाशब्दश्चार्थे महद्भिरवोभीरक्षणैःसनरःप्रशृण्वे प्रकर्षंश्रूयते विख्यातोभवति ॥ २ ॥

२. हे प्रसिद्ध इन्द्र और वरुणदेव, जो मनुष्य हविलक्षण अन्नवान् होकर सख्या के लिए तुम दोनों से बन्धुत्व करता है, वह मनुष्य पाप-नाश करता है, संग्राम में शत्रु का विनाश करता है और महती रक्षा-द्वारा प्रख्यात होता है।

इन्द्रा॑ ह॒ रत्नं॒ वरु॑णा॒ धेष्ठे॒त्था नृभ्यः॑ शशमा॒नेभ्य॒स्ता ।
यदी॒ सखा॑या स॒ख्याय॒ सोमैः॑ सु॒तेभिः॑ सुप्र॒यसा॑ मा॒दयै॑ते ॥ ३ ॥

इन्द्रा॑ । ह॒ । रत्न॑म् । वरु॑णा । धेष्ठा॑ । इ॒त्था । नृऽभ्यः॑ । श॒श॒मा॒नेभ्यः॑ । ता । यदि॑ । सखा॑या । स॒ख्याय॑ । सोमैः॑ । सु॒तेभिः॑ । सु॒ऽप्र॒यसा॑ । मा॒दयै॑ते॒ इति॑ ॥ ३ ॥

हेइन्द्रावरुणौ ता हेतिप्रसिद्धौ तौखलु देवौ इत्था इत्थं नृभ्योमनुष्येभ्यः शशमानेभ्यः शंसमानेभ्यः स्तोतृभ्योस्मभ्यंरत्नंरमणीयंधनंधेष्ठा दातृतमौभवतइतिशेषः यदि सखायापरस्परंयजमानस्यवासखिभूतौसख्यायसखिकर्मणेसखित्वायसुतेभिरभिषुतैःसोमैःसुप्रयसा शोभनप्रोमाणवन्तौमादयैते माद्येताम् तर्हिरत्नानांदातारौभवतः ॥ ३ ॥

३. हे प्रसिद्ध इन्द्र और वरुण, तुम दोनों देव हम स्तोत्र करनेवाले मनुष्यों के लिए रमणीय धन देनेवाले होओ। यदि तुम दोनों परस्पर (यजमान के) सखा हो और सख्य-कर्म के लिए अभिषुत सोम-द्वारा अन्नवान् और हृष्ट हो, तो धन देनेवाले होओ।

इन्द्रा॑ यु॒वं व॑रुणा दि॒द्युम॑स्मि॒न्नोजि॑ष्ठमुग्रा॒ नि व॑धिष्टं॒ वज्र॑म् ।
यो नो॑ दु॒रेवो॑ वृ॒कति॑र्द॒भीति॒स्तस्मि॑न्मिमाथाम॒भिभू॒त्योजः॑ ॥ ४ ॥

इन्द्रा । युवम् । वरुणा । दिद्युम् । अस्मिन् । ओजिष्ठम् । उग्रा ।
नि । वधिष्टम् । वज्रम् । यः । नः । दुःऽएवः । वृकतिः । दभीतिः ।
तस्मिन् । मिमाथाम् । अभिऽभूति । ओजः ॥ ४ ॥

इन्द्रा इन्द्रौ वरुणा वरुणौ हेउग्रा उग्रौ अत्रसर्वत्रपरस्परापेक्षयाद्विवचनं प्रेमित्रयोर्वरुणयोरितिवत् यद्वा छान्दसत्वाद्व्यवहितस्याप्यानङ् अस्मिन्शत्रौ दिद्युं दीप्तमोजिष्ठमतिशयेनतेजोवत् वज्रमायुधंनिवधिष्टं प्रक्षिपतमित्यर्थः यःशत्रुर्नोस्माकंदुरेवोदुष्प्रापः वृकतिरतिशयेनादातादभीतिर्हिंसकःशत्रूणां तस्मिन्शत्रावभिभूत्यभिभावुकमोजोबलं युवं युवां मिमाथां कुरुतमित्यर्थः ॥ ४ ॥

४. हे उग्र इन्द्र और वरुण, तुम दोनों इस शत्रु के ऊपर दीप्त और अतिशय तेजोविशिष्ट वज्र प्रक्षेप करो। जो शत्रु हम लोगों के द्वारा दुर्दमनीय, अत्यन्त अदाता और हिंसक है, उस शत्रु के विरुद्ध तुम दोनों अभिभवकर बल का प्रयोग करो।

इन्द्रायुवंवरुणाभूतमस्याधियःप्रेतारावृषभेवधेनोः ।
सानोदुहीयद्यवसेवगत्वीसहस्रधारापयसामहीगौः ॥५॥१५॥

इन्द्रा । युवम् । वरुणा । भूतम् । अस्याः । धियः । प्रेतारा ।
वृषभाऽइव । धेनोः । सा । नः । दुहीयत् । यवसाऽइव । गत्वी ।
सहस्रऽधारा । पयसा । मही । गौः ॥ ५ ॥ १५ ॥

हेइन्द्रावरुणा इन्द्रावरुणौ युवं युवामस्याधियःस्तुत्याः प्रेतारा प्रीणयितारौभूतंभवतं वृषभाविव वृषभासेक्तारौ वृषभोधेनोरिव सास्तुतिरूपाधेनुः नोस्माकंदुहीयत् दुह्येत् कामान्पूरयेत् यवसातृणादिघासेननिमित्तेन गत्वी गत्वा पयसासहस्रधारामही महतीगौरिव ॥ ५ ॥

५. हे इन्द्र और वरुण, वृषभ जिस तरह से धेनु को प्रीत करता है, उसी तरह से तुम दोनों स्तुतियों के प्रीणयिता होओ। तृणादि का भक्षण करके सहस्रधारा महती गौ जिस तरह से दुग्ध दोहन करती है, उसी तरह से स्तुतिरूपा धेनु हम लोगों की अभिलाषा का दोहन करे।

॥ इतितृतीयस्यसप्तमेपञ्चदशोवर्गः ॥ १५ ॥

अथषष्ठी—

तोकेहितेतनयउर्वरासुसूरोदृशीकेवृषणश्चपौंस्ये ।
इन्द्रानोअत्रवरुणास्यातामवोभिर्दस्मापरितक्म्यायाम् ॥ ६ ॥

१ ऋ० सं० ५. ६. ८.।

तोके । हिते । तनये । उर्वरासु । सूरः । दृशीके । वृषणः ।
च । पौंस्ये । इन्द्रा । नः । अत्र । वरुणा । स्याताम् ।
अवःऽभिः । दस्मा । परिऽतक्म्यायाम् ॥ ६ ॥

इन्द्रावरुणौदेवौ नोहिते तोके पुत्रे तनये तत्पुत्रेण उर्वरासु सस्याढ्यासुभूमिषुनिमित्तभूता- सुसूरःप्रेरकस्यसूर्यस्यदृशीकेचिरकालदर्शनाय चिरजीवनायेत्यर्थः तथा वृषणः सेक्तुर्मेमपौंस्येच पुंस्त्वायच पुनरपि प्रजननसामर्थ्यायच दस्मा शत्रूणांहिंसकौसन्तौ नोस्माकमर्वोभीरक्षणैः सह परितक्म्यायां परितक्मनेनिमित्तभूतेसति यद्वा रात्रिनामैतत् रात्रौहिंसकानांवधायस्यातां भवेताम् ॥ ६ ॥

६. हे इन्द्र और वरुण, तुम दोनों रात्रि में रक्षायुक्त होकर शत्रुओं की हिंसा करने के लिए अवस्थान करो, जिससे हम लोग पुत्र, पौत्र और उर्वरा भूमि लाभ कर सकें एवम् चिर कालपर्यन्त सूर्य को देख सकें अर्थात् चिरजीवी हों तथा सन्तानोत्पादन शक्ति प्राप्त कर सकें ।

युवामिद्ध्यवसेपूर्व्यायपरिप्रभूतीगविषःस्वापी ।
वृणीमहेसख्यायप्रियायशूरामंहिष्ठापितरेवशम्भू ॥ ७ ॥

युवाम् । इत् । हि । अवसे । पूर्व्याय । परि । प्रभूती इति प्रऽभूती ।
गोऽइषः । स्वापी इति सुऽआपी । वृणीमहे । सख्याय ।
प्रियाय । शूरा । मंहिष्ठा । पितराऽइव । शम्भू इति शम्ऽभू ॥ ७ ॥

हेइन्द्रावरुणौ गविषोगाइच्छन्तोवयं युवामिद्धि ईतिपूरणः युवामेवपूर्व्यायपुरातनाययु- वाभ्यांकृतायावसेरक्षणायवृणीमहेइतिसम्बन्धः प्रभूती प्रभवन्तौ स्वापी शोभनबन्धुभूतौआपि- रितिबन्धुनाम यद्वा सुष्ठुव्यापनशीलौशूरावतिक्रान्तौमंहिष्ठातिशयेनपूज्यौयुवांसख्यायसमान- ख्यानायप्रियायच परिवृणीमहे परितःप्रार्थयामहे शम्भुसुखस्यभावयितारौ पितरेव पितरौ पुत्राय तद्वत् ॥ ७ ॥

७. हे इन्द्र और वरुण, हम लोग धेनु-लाभ की अभिलाषा से तुम लोगों के निकट प्राचीन रक्षा की प्रार्थना करते हैं । तुम दोनों क्षमताशाली, बन्धुस्वरूप, शूर एवम् अतिशय पूज्य हो । हम लोग तुम दोनों के निकट सुखदायक पिता की तरह सख्य और स्नेह की प्रार्थना करते हैं ।

तावांधियोवसेवाजयन्तीराजिंनजग्मुर्युवयूः सुदानू ।
श्रियेनगावउपसोममस्थुरिन्द्रंगिरोवरुणंमेमनीषाः ॥ ८ ॥

ताः । वाम् । धियः । अवसे । वाजऽयन्तीः । आजिम् । न । जग्मुः ।

युवस्यूः । सुदानू इति सुऽदानू । श्रिये । न । गावः । उप । सोमम् ।
अस्थुः । इन्द्रम् । गिरः । वरुणम् । मे । मनीषाः ॥ ८ ॥

सुदानू शोभनफलदातारौ हेदेवौ वां युवां कामयन्तीरत्नमिच्छन्त्योधियः स्तुतयो युवामुपगच्छन्ति युवयूर्युवांकामयमाना:पत्तयः अवसेरक्षणाय आर्जिन संग्राममिव । किंच श्रियेदध्यादिश्रयणायगाव:सोमंन सोममिवेन्द्रंवरुणंचमेमदीयामनीषामनसईषागिर:स्तुतयः उपास्थुस्तिष्ठन्ति प्रीणयन्तीत्यर्थः ॥ ८ ॥

८. हे शोभन फल के देनेवाले देवद्वय, योद्धा जिस तरह से संग्राम की कामना करता है, उसी तरह से हम लोगों की रत्नाभिलाषिणी स्तुतियाँ तुम दोनों की कामना करती हुई रक्षा-लाभ के लिए तुम दोनों के निकट गमन करती हैं। दध्यादि-द्वारा शोभन करने के लिए जैसे गौएँ सोम के निकट रहती हैं, वैसे ही हमारी आन्तरिक स्तुतियाँ इन्द्र और वरुण के निकट गमन करती हैं।

इमाइन्द्रंवरुणंमेमनीषाअग्मन्नुपद्रविणमिच्छमानाः ।
उपेमस्युर्जोष्टारइववस्वोरघ्वीरिवश्रवसोभिक्षमाणाः ॥ ९ ॥

इमाः । इन्द्रम् । वरुणम् । मे । मनीषाः । अग्मन् । उप । द्रविणम् ।
इच्छमानाः । उप । ईम् । अस्थुः । जोष्टारःऽइव । वस्वः ।
रघ्वीःऽइव । श्रवसः । भिक्षमाणाः ॥ ९ ॥

इन्द्रंवरुणंच मे मम मनीषाः स्तुतयोद्रविणमिच्छमाना:सत्यः उपाग्मन्नुपगच्छन्ति जोष्टार:सेवकाः वस्वइव धनस्यलाभायधनिकंस्वामिनामिव रघ्वीरिव लघ्व्यइव शीघ्रगामिन्यइव श्रवसोन्नस्यान्नंभिक्षमाणाः एनमिन्द्रंवरुणंचोपास्थु:उपतिष्ठन्ते ॥ ९ ॥

९. धन-लाभ के लिए जैसे सेवक धनियों के निकट गमन करते हैं, उसी तरह हमारी स्तुतियाँ सम्पत्ति-लाभ की इच्छा से इन्द्र और वरुण के निकट गमन करें। भिक्षुक स्त्रियों की तरह अन्न की भिक्षा माँगते हुए इन्द्र के निकट गमन करें।

अश्व्यस्यत्मनारथ्यस्यपुष्टेर्नित्यस्यरायःपतयःस्याम ।
ताचक्राणाऊतिभिर्नव्यसीभिरस्मत्रारायोनियुतःसचन्ताम् ॥ १० ॥

अश्व्यस्य । त्मना । रथ्यस्य । पुष्टेः । नित्यस्य । रायः । पतयः
स्याम । ता । चक्राणौ । ऊतिऽभिः । नव्यसीभिः । अस्मऽत्रा ।
रायः । निऽयुतः । सचन्ताम् ॥ १० ॥

अश्व्यस्याश्वसमूहस्य रथ्यस्यरथसमूहरूपस्य रथार्हस्य वा पुष्टे:पोषस्य नित्यस्याविचलितस्यरायोधनस्य त्मना आत्मना स्वयमेवाप्रयत्नेनपतय:स्याम ता तौ देवौ चक्राणा

चक्रमभमाणौगन्तारौभवतमितिशेषः नव्यसीभिर्नूतनाभिरूतिभीरक्षाभिरस्मत्राऽस्मासुनियुतोश्वाः रायो-धनानिचक्षकर्त्ता सेवन्ताम् ॥ १० ॥

१०. हम लोग बिना प्रयत्न के अश्वसमूह, रथ-समूह, पुष्टि एवम् अविचल धन के स्वामी होंगे। वे दोनों देव गमन-शील हों एवम् नूतन रक्षा के साथ हम लोगों के अभिमुख अश्व और धन नियुक्त करें।

आनोबृहन्ताबृहतीभिरूतीइन्द्रयातंवरुणवाजसातौ ।
यद्दिद्यवःपृतनासुप्रक्रीळान्तस्यवांस्यामसनितारआजेः ॥११॥१६॥

आ । नः । बृहन्ता । बृहतीभिः । ऊती । इन्द्र । यातम् । वरुण । वाजऽसातौ । यत् । दिद्यवः । पृतनासु । प्रऽक्रीळान् । तस्य । वाम् । स्याम । सनितारः । आजेः ॥ ११ ॥ १६ ॥

हेबृहन्ता महान्तौ हेइन्द्र हेवरुण बृहतीभिर्महतीभिरूतीऊतिभीरक्षाभिःसहायात-मागच्छतं वाजसातौ संग्रामेअन्नलाभनिमित्तमूतेवा यद्यस्मिन्वाजौसंग्रामेपृतनासुसेनासुदिद्य-वः आयुधनामैतत् आयुधानिशत्रुसम्बन्धीनिप्रक्रीळान्प्रक्रीडन्ति तस्यताद्दशस्याजेः सनितारः संभक्तारः स्याम भवेम वांयुवयोरनुग्रहात् ॥ ११ ॥

११. हे महान् इन्द्र और वरुण, तुम दोनों महान्, रक्षा के साथ आगमन करो। जिस अन्नप्रापक युद्ध में शत्रुसेना के आयुध क्रीड़ा करते हैं, उस युद्ध में हम लोग तुम दोनों के अनुग्रह से जय-लाभ कर सकें।

ममद्वितेतिदशर्चंदशमंसूक्तं पुरुकुत्सस्यपुत्रस्त्रसदस्यूराम्नाऋषिः आद्यासुचतसृष्वात्मनःस्तु-त्यत्वादात्मादेवता अवशिष्टानांचतसृणामिन्द्रावरुणौदेवते छन्दस्त्रिष्टुप् अत्रानुक्रमणिका—मम द्विताद्दशत्रसदस्युःपौरुकुत्स्यःचतस्रआत्मस्तवइति । उक्तोविनियोगःपूर्वसूक्ते ।

ममद्वितााष्ट्रंक्षत्रियस्यविश्वायोर्विश्वेअमृतायथानः ।
क्रतुंसचन्तेवरुणस्यदेवाराजामिकृष्टेरुपमस्यवव्रेः ॥ १ ॥

मम । द्विता । राष्ट्रम् । क्षत्रियस्य । विश्वऽआयोः । विश्वे । अमृताः । यथा । नः । क्रतुम् । सचन्ते । वरुणस्य । देवाः । राजामि । कृष्टेः । उपऽमस्य । वव्रेः ॥ १ ॥

क्षत्रियस्य क्षत्रियजातेरुत्पन्नस्यविश्वायोः कृत्स्नमनुष्याधीशस्य ममेत्यात्मनोनिर्देशः द्विताद्वित्वस्वर्गेभेदेनद्वित्वापन्नंराष्ट्रंमम त्रसदस्योर्विश्वेसर्वेऽमृतादेवायथानोस्माकंभवन्ति तथा राष्ट्रंममाप्येत्यर्थः वरुणस्यवारकस्यवरुणात्मनोवाकृष्टेर्मनुष्यस्यतद्वतोवा उपमस्यान्तिकनामैतत्

सर्वेषामन्तिकतमस्यवव्रेः रूपनामैतत् रूपवतोममक्रतुंकर्मसचन्ते सेवन्ते देवाः सर्वेपिमहंच राज्यामि राजतिरैश्वर्यकर्मा सर्वस्येश्वरोस्वामि यद्वोपमस्यवव्रेःकृष्टेराजामीतियोज्यम् ॥ १ ॥

१. हम क्षत्रिय-जात्युत्पन्न (अतिशय बलवान्) और सम्पूर्ण मनुष्यों के अधीश हैं। हमारा राज्य दो प्रकार का है। सम्पूर्ण देवगण जैसे हमारे हैं, वैसे ही सारी प्रजा भी हमारी ही है। हम रूपवान् और अन्तिकस्थ वरुण हैं। देवगण हमारे यज्ञ की सेवा करते हैं। हम मनुष्य के भी राजा हैं।

अहंराजावरुणोमह्यंतान्यसुर्याणिप्रथमाधारयन्त ।
क्रतुंसचन्तेवरुणस्यदेवाराजामिकृष्टेरुपमस्यवव्रेः ॥ २ ॥

अहम् । राजा । वरुणः । मह्यम् । तानि । असुर्याणि । प्रथमा । धारयन्त । क्रतुम् । सचन्ते । वरुणस्य । देवाः । राजामि । कृष्टेः । उपमस्य । वव्रेः ॥ २ ॥

अहमेववरुणोराजास्वामि मह्यंमदर्थमेवप्रथमा मुख्यानि तानि प्रसिद्धानिअसुर्याण्यसुरविघातकानिबलानिधारयन्त अधारयन्देवाः शिष्टंगतम् ॥ २ ॥

२. हम राजा वरुण हैं। देवगण हमारे लिए ही असुर-विघातक श्रेष्ठ बल धारण करते हैं। हम रूपवान् और अन्तिकस्थ वरुण हैं। देवगण हमारे यज्ञ की सेवा करते हैं हम मनुष्य के भी राजा हैं।

अहमिन्द्रोवरुणस्तेमहित्वोर्वीगभीरेरजसीसुमेके ।
त्वष्टेवविश्वाभुवनानिविद्वान्त्समैरयंरोदसीधारयंच ॥ ३ ॥

अहम् । इन्द्रः । वरुणः । ते इति । महिऽत्वा । उर्वी इति । गभीरे इति । रजसी इति । सुमेके इति सुऽमेके । त्वष्टाऽइव । विश्वा । भुवनानि । विद्वान् । सम् । ऐरयम् । रोदसी इति । धारयम् । च ॥ ३ ॥

अहंवरुणस्सन्निन्द्रः इन्द्रोप्यस्मि अहं वरुणश्च तेमहित्वा महत्त्वेनोर्वीविस्तीर्णेगभीरेदुरवगाहेअवकाशवत्यौवा सुमेकेसुरूपे रजसीद्यावापृथिव्यौ तेअप्यहमेव विद्वान् जानन्नहं त्वष्टेव प्रजापतिरिव विश्वा भुवनानि सर्वाणि भूता समैरयं समैरयं रोदसीद्यावापृथिव्यौ धारयंच धृतवानस्मि ॥ ३ ॥

३. हम इन्द्र और वरुण हैं। महत्ता के कारण विस्तीर्ण, दुरवगाहा, सुरूपा, द्यावा-पृथिवी हम ही हैं। हम विद्वान् हैं। हम सकल भूतजात को प्रजापति की तरह प्रेरित करते हैं। हम द्यावा-पृथिवी को धारण करते हैं।

अहमपोअपिन्वमुक्षमाणाधारयंदिवंसदनऋतस्य ।
ऋतेनपुत्रोअदितेर्ऋतावोतत्रिधातुप्रथयद्विभूम ॥ ४ ॥

अहम् । अपः । अपिन्वम् । उक्षमाणाः । धारयम् । दिवम् । सदने ।
ऋतस्य । ऋतेन । पुत्रः । अदितेः । ऋतऽवा । उत । त्रिऽधातु ।
प्रथयत् । वि । भूम ॥ ४ ॥

अहमेवोक्षमाणाः सिञ्चन्तीरपोपिन्वमसेचयम् तथा ऋतस्योदकस्यादित्यस्यवासद-नेस्थानेनिमित्तभूतेसति दिवं द्युलोकंधारयं यद्वोदकाधारेस्थानेदिवमादित्यंधारयम् अहमेव-ऋतेनोदकेननिमित्तेनादितेःपुत्रऋतावायज्ञवानभूवम् उतापिच भूमव्याप्तमाकाशंत्रिधातु त्रिःप्रकारं वि विशेषेणप्रथयत् मदर्थमेवक्षित्यादिलोकत्रयमकार्षीत्परमेश्वरः ॥ ४॥

४. हमने ही सिञ्चमान जल का सेचन किया है, उदक या आदित्य के स्थानभूत द्युलोक का धारण किया है अथवा आकाश में आदित्य का धारण किया है। जल के निमित्त से हम अदिति-पुत्र ऋतावा (यज्ञ-वान्) हुए हैं। हमने व्याप्त आकाश को तीन प्रकार से प्रथित किया है अर्थात् परमेश्वर ने हमारे लिए ही क्षिति आदि तीन लोकों को बनाया है।

मांनरःस्वश्वावाजयन्तोमांवृताःसमरणेहवन्ते ।
कृणोम्याजिंमघवाहमिन्द्रइयर्मिरेणुमभिभूत्योजाः ॥५॥१७॥

माम् । नरः । सुऽअश्वाः । वाजयन्तः । माम् । वृताः । सम्ऽअरणे ।
हवन्ते । कृणोमि । आजिम् । मघऽवा । अहम् । इन्द्रः । इयर्मि ।
रेणुम् । अभिभूतिऽओजाः ॥ ५ ॥ १७ ॥

मां मामेव स्वश्वाः शोभनाश्वाः वाजयन्तः संग्राममिच्छन्तोनरोनेतारोभटाः अनुगच्छ-न्तीतिशेषः मामेववृताःसन्तः समरणेसंग्रामेहवन्ते आह्वयन्तियुद्धार्थं मघवाधनवानहमिन्द्रःसन्ना-जिंकृणोमि करोमि अभिभूत्योजाः परेषामभिभावियबलोहंरेणुमियर्मि प्रेरयामि ॥ ५ ॥

५. सुन्दर अश्ववाले और संग्रामेच्छु नेता हमारा ही अनुगमन करते हैं। वे सब वृत होकर युद्ध के लिए संग्राम में हमारा ही आह्वान करते हैं। हम धनवान् इन्द्र होकर युद्ध करते हैं। हम अभिभव करने-वाले बल से युक्त हैं। हम संग्राम में धूलि उत्थित करते हैं।

अहंताविश्वाचकरंनकिर्मादैव्यंसहोवरतेअप्रतीतम् ।
यन्मासोमासोममदन्यदुक्थोभेभयेतेरजसीअपारे ॥ ६ ॥

अहम् । ता । विश्वा । चकरम् । नकिः । मा । दैव्यम् । सहः ।

चरते । अप्रतिऽइतम् । यत् । मा । सोमासः । ममदन् । यत् । उक्था । उभे इति । भयेते इति । रजसी इति । अपारे इति ॥ ६ ॥

अहं वरुणः ता तानि प्रसिद्धानि विश्वा सर्वाणि कर्माणि चकरम् अकार्षम् अप्रतीतम् अप्रतिगतं मां दैव्यं देवसम्बन्धि सहो बलं न किञ्चन वरते नैव वारयति यद् यस्मात् सोमासः सोमा मां ममदन् अमादयन् यत् उक्था शस्त्राण्यपि ममदन् तस्मात् मत्तः अपारे दूरपारे उभे रजसी द्यावापृथिव्यौ भयेते बिभ्यतः ॥ ६ ॥

६. हमने उन सकल कार्यों को किया है। हम अप्रतिहत-दैवबल से युक्त हैं। कोई भी हमारा निवारण नहीं कर सकता। जब सोमरस हमें हृष्ट करता है एवम् उक्थ-समूह हमें हृष्ट करता है, तब अपार और उभय द्यावा-पृथिवी चलित हो जाती है।

विदुष्टे विश्वा भुवनानि तस्य ता प्र ब्रवीषि वरुणाय वेधः ।
त्वं वृत्राणि शृण्विषे जघन्वान् त्वं वृताँ अरिणा इन्द्र सिन्धून् ॥ ७ ॥

विदुः । ते । विश्वा । भुवनानि । तस्य । ता । प्र । ब्रवीषि । वरुणाय । वेधः । त्वम् । वृत्राणि । शृण्विषे । जघन्वान् । त्वम् । वृतान् । अरिणाः । इन्द्र । सिन्धून् ॥ ७ ॥

इतः परम् इन्द्रावरुणयोः स्तुतिः हे वरुण तस्य ते कर्मणि षष्ठी तत्वां विश्वा सर्वाणि ता तानि भुवनानि भूतजातानि विदुः जानन्ति हे वेधः स्तोतॄणामेतत् हे स्तोतः वरुणाय प्र ब्रवीषि वरुणं स्तौषि हे इन्द्र त्वं वृत्राणि वैरिणो जघन्वान् हतवान् इति शृण्विषे श्रूयसे किञ्च हे इन्द्र त्वं वृतान् आच्छन्नान् सिन्धून् स्यन्दनस्वभावान् सप्त नदीः अरिणाः अगमयः ॥ ७ ॥

७. हे वरुण, तुम्हारे कर्म को सकल भूतजात जानता है। हे स्तोता, वरुण के लिए बोलो अर्थात् वरुण की स्तुति करो। हे इन्द्र, तुमने वैरियों का वध किया है—यह तुम्हारी प्रसिद्धि है। हे इन्द्र, तुमने आच्छन्न नदियों को उन्मुक्त किया है।

अस्माकमत्र पितरस्त आसन्त्सप्त ऋषयो दौर्गहे बध्यमाने ।
त आयजन्त त्रसदस्युमस्या इन्द्रं न वृत्रतुरमर्धदेवम् ॥ ८ ॥

अस्माकम् । अत्र । पितरः । ते । आसन् । सप्त । ऋषयः । दौःऽगहे । बध्यमाने । ते । आ । अयजन्त । त्रसदस्युम् । अस्याः । इन्द्रम् । न । वृत्रऽतुरम् । अर्धऽदेवम् ॥ ८ ॥

पुरुकुत्सस्य महिषी दौर्गहे बन्धने स्थिते ॥ पत्यावराम कं ह्यस्याः पुत्रस्य लिप्सया ॥ १ ॥
यदृच्छयास्मान् आयातान् सप्तर्षीन् पर्यपूजयत् ॥ ते च प्रीताः पुनः प्रोचुर्यजेन्द्रावरुणौ स्तवम् ॥ २ ॥

साचेन्द्रावरुणाविष्ट्वात्रसदस्युमजीजनत् ॥ इतिहासमिमंजानन्नृषिर्नूतेत्यृचाविह ॥ २ ॥ अथा-स्माकमत्राभिजनमिदंदेशोऽस्यापृथिव्यांवा पितारःपालयितारःउत्पादकास्तेभासन्नभवन् एते-सप्तर्षयःप्रसिद्धाः दौर्गहे दुर्गहस्यपुत्रे पुरुकुत्से बध्यमाने सप्तर्षयः यस्मादस्याअस्यैपुरु-कुत्सान्यै त्रसदस्युंनामानमयजन्त प्राप्नुरिन्द्रावरुणयोरनुग्रहात् कीदृशंतं वृत्रतुरं वृत्रस्यशत्रो-र्हन्तारमर्धदेवं देवानामर्धेसमीपेवर्तमानं यद्वा देवानामर्धभूतमिन्द्रंन इन्द्रमिव स्थितंपुत्रंयस्तवन्तः यत्सर्वेषामर्धमिन्द्रःप्रतितस्मादिन्द्रोदेवतानांभूयिष्ठभाक्तमइतिहितैत्तिरीयकम् ॥ ८ ॥

८. दुर्गह के पुत्र पुरुकुत्स के बन्दी होने पर इस देश या पृथिवी के पालयिता सप्तर्षि हुए थे। उन्होंने इन्द्र और वरुण के अनुग्रह से पुरुकुत्स की स्त्री के लिए यज्ञ करके त्रसदस्यु को लाभ किया था। त्रसदस्यु इन्द्र की तरह शत्रु-विनाशक और अर्द्धदेव देवताओं के समीप में वर्तमान या देवताओं के अर्द्धभूत इन्द्र की तरह थे।

पुरुकुत्सानीहिवामदाशद्धव्येभिरिन्द्रावरुणानमोभिः ।
अथाराजानंत्रसदस्युमस्यावृत्रहणंददथुरर्धदेवम् ॥ ९ ॥

पुरुऽकुत्सानी । हि । वाम् । अदाशत् । हव्येभिः । इन्द्रावरुणा । नमःऽभिः । अथ । राजानम् । त्रसदस्युम् । अस्याः । वृत्रऽहनम् । ददथुः । अर्धऽदेवम् ॥ ९ ॥

हेइन्द्रावरुणौ पुरुकुत्सानीपुरुकुत्सस्यपत्नी ऋषिप्रेरिता वांयुवाम् अदाशद्धि अप्रीणयत्खलु हव्येभिर्हविर्भिर्नमोभिःस्तुतिभिश्च अथ त्रसदस्युंराजानं वृत्रहणमर्धदेवमुरुकक्ष्यणंपुत्रमस्यामस्यै पुरुकुत्सान्यैददथुर्दत्तवन्ताविति ॥ ९ ॥

९. हे इन्द्र और वरुण, ऋषि-द्वारा प्रेरित होने पर पुरुकुत्स की पत्नी ने तुम दोनों को हव्य और स्तुति-द्वारा प्रसन्न किया था। अनन्तर तुम दोनों ने उसे शत्रुनाशक अर्द्ध देव राजा त्रसदस्यु को दान दिया था।

अथदशमी—

रायावयंससवांसोमदेमहव्येनदेवायवसेनगावः ।
तांधेनुमिन्द्रावरुणायुवंनोविश्वाहाधत्तमनपस्फुरन्तीम् ॥१०॥१८॥

राया । वयम् । ससऽवांसः । मदेम । हव्येन । देवाः । यवसेन । गावः । ताम् । धेनुम् । इन्द्रावरुणा । युवम् । नः । विश्वाहा । धत्तम् । अनपऽस्फुरन्तीम् ॥ १० ॥ १८ ॥

१ तै० सं० ५. ५. ८।

रायायनेन मदेम सस्यामोमुर्धांमंस्कारोवयंहव्येनदेवामोदन्तुयवसेनगावः यमिनुं प्रीणयित्रीरयि हेइन्द्रावरुणौ विधाहा विश्वस्यहन्तारौ युवं युवां नोस्माकंयचंदत्तं कीदृशीमन्न-पस्फुरन्तीमनभिहिंसितां सदा विधाहेत्यस्मयं सर्वदेवत्यैः ॥ १० ॥

१०. हम लोग तुम दोनों की स्तुति करके धन-द्वारा परितृप्त होवें। देवगण हव्य-द्वारा तृप्त हों और गौएँ तृणादि-द्वारा परितृप्त हों। हे इन्द्र और वरुण, तुम दोनों विश्व के हन्ता हो। तुम दोनों हम लोगों को सदा अहिंसित धन दान करो।

॥ इतितृतीयस्यसप्तमेऽष्टादशोवर्गः ॥ १८ ॥

कउअवदितिसप्तर्चमेकादशंसूक्तं सुहोत्रपुत्रौपुरुमीळ्हाजमीळ्हावृषी त्रिष्टुप्छन्दः अश्विनौदेवता । अत्रानुक्रमणिका—कउअवत्सप्तपुरुमीळ्हाजमीळ्हौसौहोत्रावाश्विनंहीति । प्रातरनुवाकाश्विनशस्त्रयोराश्विनेक्रतौत्रैष्टुभेछन्दसिइदमादिकेसूक्ते नेनुःप्रतस्यकउअवदितिसूक्ते इतिसूत्रितत्वात् ।

**कउँश्रवत्कतमोयज्ञियानांवन्दारुदेवःकतमोजुषाते ।**
**कस्येमांदेवीममृतेषुप्रेष्ठांहृदिश्रेषामसुष्टुतिंसुहव्याम् ॥ १ ॥**

**कः । ऊँ इति । श्रवत् । कतमः । यज्ञियानाम् । वन्दारु । देवः । कतमः । जुषाते । कस्य । इमाम् । देवीम् । अमृतेषु । प्रेष्ठाम् । हृदि । श्रेषाम । सुस्तुतिम् । सुहव्याम् ॥ १ ॥**

यज्ञियानां यज्ञार्हाणां देवानांमध्ये कउदेवःश्रवत् शृणुयात्स्तुतिं कतमोदेवोवन्दारु वन्दनशीलंस्तोत्रंकतमोदेवोजुषाते सेवते अमृतेषुदेवेषुमध्येकस्यापि इमांप्रेष्ठांप्रियतरांदेवींद्यो-तमानांसुहव्यांशोभनहव्योपेतां शोभनैर्हविर्भिर्युक्तांवा सुष्टुतिं शोभनांस्तुतिं श्रेषामश्लेषयेम आश्रयेमवा अश्विनावन्तरेणस्तुतेःकोदेवःस्वामीभवेदिति ॥ १ ॥

१. यज्ञार्ह देवों के मध्य में कौन देव इसे सुनेंगे ? कौन देव इस वन्दनशील स्तोत्र का सेवन करेंगे ? देवताओं के मध्य किस देव के हृदय में हम इस प्रियतरा, द्योतमाना, हव्ययुक्ता शोभन स्तुति को सुनावें अर्थात् अश्विद्वय के अतिरिक्त स्तुति के स्वामी कौन देव होंगे ?

**कोमृळातिकतमआगमिष्ठोदेवानामुकतमःशम्भविष्ठः ।**
**रथंकमाहुर्द्रवदश्वमाशुंयंसूर्यस्यदुहितावृणीत ॥ २ ॥**

कः । मृळाति । कतमः । आऽगमिष्ठः । देवानाम् । ऊँ इति । कतमः । शम्ऽभविष्ठः । रथम् । कम् । आहुः । द्रवत्ऽअश्वम् । आशुम् । यम् । सूर्यस्य । दुहिता । अवृणीत ॥ २ ॥

कोमृळाति कोदेवोमृळाति सुखयेदस्मान् कतमोदेवआगमिष्ठः आगन्तृतमोऽस्मद्यज्ञंप्रति देवानाम् देवानांमध्येकतमोदेवः शम्भविष्ठः सुखस्यभावयितृतमः एवमुक्तगुणविशिष्टः कोभवेत् अश्विनावन्तरेणेतिभावः कंरथंद्रवदश्वमाशुमाहुर्ब्रुवते यंरथंसूर्यस्यदुहितासूर्यस्यपुत्री अवृणीत समभजत् तंकंरथंवेगवन्तमाहुः ॥ २ ॥

२. कौन देवता हम लोगों को सुखी करेंगे ? कौन देवता हमारे यज्ञ में सबकी अपेक्षा अधिक आगमन करते हैं ? देवों के मध्य में कौन देवता हम लोगों को सबकी अपेक्षा अधिक सुखी करते हैं ? इस तरह उपर्युक्त गुणों से विशिष्ट अश्विद्वय ही हैं। कौन रथ वेगवान् अश्वयुक्त और शीघ्रगामी है, जिसका सूर्य की पुत्री ने सम्भजन किया था ?

मक्षूहिष्मागच्छथईवतोद्यूनिन्द्रोनशक्तिंपरितक्म्यायाम् ।
दिवआजातादिव्यासुपर्णाकयाशचीनांभवथःशचिष्ठा ॥ ३ ॥

मक्षु । हि । स्म । गच्छथः । ईवतः । द्यून् । इन्द्रः । न । शक्तिम् । परिऽतक्म्यायाम् । दिवः । आऽजाता । दिव्या । सुऽपर्णा । कया । शचीनाम् । भवथः । शचिष्ठा ॥ ३ ॥

मक्षु शीघ्रं हिस्मेतिपूरणौ ईवतोगमनवतः आगामिनोद्यून्दिवसान्सुत्यासंबन्धिनः प्रतिगच्छथः इन्द्रःशक्तिंन स्वकीयांशक्तिंयथापरितक्म्यायां रात्रावतीतायां प्रदर्शयतीति शेषः सुत्याहेउषःकालइन्द्रोयथागच्छतितद्वत् युवामपिगच्छतमित्यर्थः दिवोद्युलोकादाजाता आगतौ दिव्या दिविभवौ सुपर्णा शोभनगमनौ युवां शचीनां युष्मत्सम्बन्धिनां कर्मणां शक्तीनांवामध्येकयाशच्या शचिष्ठाशक्तिमत्तरौशोभनकर्मवन्तौवाभवथः ॥ ३ ॥

३. रात्रि के व्यतीत होने पर इन्द्र जिस तरह से अपनी शक्ति प्रदर्शित करते हैं, हे गमनशील अश्विद्वय तुम दोनों भी उसी तरह से अभिषवण-काल में गमन करो। तुम दोनों ने द्युलोक से आगमन किया है। तुम दोनों दिव्य और शोभन गति से विशिष्ट हो। तुम दोनों के कर्मों के मध्य में कौन कर्म सर्वापेक्षा श्रेष्ठ है ?

कावांभूदुपमातिःकयानआश्विनागमथोहूयमाना ।
कोवांमहश्चित्त्यजसोअभीकउरुष्यतंमाध्वीदस्रानऊती ॥ ४ ॥

का । वाम् । भूत् । उपऽमातिः । कया । नः । आ । अश्विना ।

गमथः । हूयमाना । कः । वाम् । महः । चित् । त्यजसः । अभीके ।
उरुष्यतम् । माध्वी इति । दस्रा । नः । ऊती ॥ ४ ॥

वांयुवयोःकाउपमातिः उपसमीपेमातिर्मानंगुणानांपरिच्छित्तिर्यस्यांसास्तुतिःकाभवेत् कयास्तुत्याहूयमाना आहूयमानौसन्तौ नोऽस्मानागमथः आगच्छथः वांयुवयोरभीकेआगमनेसे महश्चित् महतस्त्यजसः त्यज्यतेपरित्यज्यतेसर्वैरितित्यजःक्रोधस्तस्यसोढाकोभवेत् हेमाध्वी मधुररसस्योदकस्यस्रष्टारौ हेदस्रा शत्रूणामुपक्षपयितारावश्विनौ नोऽस्मानूतीऊत्या रक्षणयाउरुष्यतं रक्षाकर्मैतत् रक्षतम् ॥ ४ ॥

४. कौन स्तुति तुम दोनों के समान हो सकती है ? किस स्तुति-द्वारा आहूयमान होने पर तुम दोनों हमारे निकट आगमन करोगे ? कौन तुम दोनों के महान् क्रोध का सहन कर सकता है ? हे मधुर जल के सृष्टिकर्त्ता एवम् शत्रु-विनाशक अश्विद्वय, तुम दोनों हम लोगों को आश्रय-दान-द्वारा रक्षित करो।

उरुवांरथःपरिनक्षतिद्यामायत्समुद्रादभिवर्ततेवाम् ।
मध्वामाध्वीमधुवांप्रुषायन्यत्सींवांपृक्षोभुरजन्तपक्वाः ॥ ५ ॥

उरु । वाम् । रथः । परि । नक्षति । द्याम् । आ । यत् ।
समुद्रात् । अभि । वर्तते । वाम् । मध्वा । माध्वी इति । मधु ।
वाम् । प्रुषायन् । यत् । सीम् । वाम् । पृक्षः । भुरजन्त । पक्वाः ॥५॥

हेअश्विनौ वांयुवयोरथःपरि द्युलोकस्यपरितः उरु प्रभूतं नक्षति गच्छति यद्यस्मात्स समुद्रात्समुद्रवणसाधनादन्तरिक्षाद्वांप्रत्यभिवर्तते आभिमुख्येनागच्छति हेमाध्वी उदकस्रष्टारौ मध्वा मधुरेणपयसा मधुमधुरंसोमरसंप्रुषायन् सिञ्चन्त्यध्वर्यवः यद्यस्माद्वांसीं सर्वतोवांपृक्षः युवयोःसोमंपक्वाः पक्वायव भुरजन्त प्राप्नुवन्ति स्थितास्सन्ति तस्मादभिवर्ततेइत्यर्थ-मिति ॥ ५ ॥

हे अश्विद्वय, तुम दोनों का रथ द्युलोक के चारों तरफ़ विस्तृत भाव से गमन करता है। वह समुद्र से तुम दोनों के अभिमुख गमन करता है। तुम दोनों के लिए पके जौ के साथ सोमरस संयोजित हुआ है। हे मधुर जल के सृष्टिकर्त्ता, शत्रु-विनाशक अश्विद्वय, अध्वर्युगण मधुर दुग्ध के साथ सोमरस को मिश्रित कर रहे हैं।

सिन्धुर्हवांरसयासिञ्चदश्वान्घृणावयोरुषासःपरिग्मन् ।
तदूषुवामजिरंचेतियानंयेनपतीभवथःसूर्यायाः ॥ ६ ॥

सिन्धुः । ह । वाम् । रसया । सिञ्चत् । अश्वान् । घृणा । वयः ।
अरुषासः । परि । ग्मन् । तत् । ऊं इति । सु । वाम् । अजिरम् ।
चेति । यानम् । येन । पती इति । भवथः । सूर्यायाः ॥ ६ ॥

वांयुवयोरश्वान्सिन्धुः स्यन्दमानोमेघउदकंवा रसेनसिञ्चदसेचयत् घृणादीप्त्यावयः पक्षिसदृशाएतारोवाअश्वाअरुषासः आरोचमानाःअश्वाः परि परितोग्मन् गच्छन्ति योवां-युवयोर्गमनसाधनत्वेनप्रसिद्धोरथः अजिरं क्षिप्रनामैतत् क्षिप्रं सुसुभुचेतिज्ञायते येनरथेनसूर्यायाः पती पालयितारौ वोढारौभवथः सरथश्चेतीति ॥ ६ ॥

६. मेघ या उदक रस-द्वारा तुम दोनों के अश्वों का सेचन हुआ है। पक्षिसदृश अश्वगण दीप्ति-द्वारा दीप्यमान होकर गमन करते हैं। जिस रथ-द्वारा तुम दोनों सूर्या के पालयिता हुए थे, तुम दोनों का वह शीघ्रगामी रथ प्रसिद्ध है।

**इहेहयद्वांसमनापपृक्षेसेयमस्मेसुमतिर्वाजरत्ना ।**
**उरुष्यतंजरितारंयुवंहश्रितःकामोनासत्यायुवद्रिक् ॥ ७॥१९ ॥**

इहऽइह । वाम् । समना । पपृक्षे । सा । इयम् । अस्मे इति । सुऽमतिः । वाजऽरत्ना । उरुष्यतम् । जरितारम् । युवम् । ह । श्रितः । कामः । नासत्या । युवद्रिक् ॥ ७ ॥ १९ ॥

हेअश्विनौ यद्यस्मात् यद्वावांसुमत्या इहेह अस्मिन्नेवयज्ञेसमना समानमनस्कौसदृशावित्यर्थः तौ वां युवां सुमत्या पपृक्षे स्तुत्यासंयोजयामि सेयमिदानींक्रियमाणा सुमतिः शोभनस्तुतिः अस्मे अस्माकमेव फलवतीभवत्वितिशेषः हेवाजरत्ना रमणीयान्नौ अन्नवैवाजइतिश्रुतेः । युवं युवां जरितारं गरितारं स्तोतारं माम् उरुष्यतं रक्षतं हेनासत्यावश्विनौ कामोस्मदीयः युवद्रिक्ह युवामेवगच्छन्श्रितःप्राप्तः ॥ ७ ॥

७. हे अश्विद्वय, इस यज्ञ में तुम दोनों समान मनवाले अर्थात् सदृश हो। हम स्तुति-द्वारा तुम दोनों को संयुक्त करते हैं। यह शोभन स्तुति हम लोगों के लिए फलवती हो। हे रमणीय अन्नवाले अश्विद्वय, तुम दोनों स्तोता की रक्षा करो। हे नासत्यद्वय, हमारी अभिलाषा तुम दोनों के निकट जाने से पूर्ण होती है।

तंवांरथमितिसप्तर्चंद्वादशंसूक्तं पुरुमीळ्हाजमीळ्हावेवऋषी त्रिष्टुप्छन्दः अश्विनौदेवता तंवामित्यनुक्रान्तं प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः ॥

तत्रप्रथमा—

**तंवांरथंवयमद्याहुवेमपृथुज्रयमश्विनासङ्गतिंगोः ।**
**नःसूर्यांवहतिवन्धुरायुर्गिर्वाहसंपुरुतमंवसूयुम् ॥ १ ॥**

---

१ ऐ० ब्रा० १. ३. ६.

तम्। वाम्। रथम्। वयम्। अद्य। हुवेम। पृथुऽज्रयम्।
अश्विना। सम्ऽगतिम्। गोः। यः। सूर्याम्। वहति। वन्धुरऽयुः।
गिर्वाहसम्। पुरुऽतमम्। वसुऽयुम्॥ १॥

हेअश्विनौ वां युवयोस्तं रथंवयंस्तोतारोऽद्यास्मिन्नहनिहुवेम आह्वयामः कीदृशं पृथुज्रयं प्रथितवेगं गोःस्तुत्याःसंगतिं संगमयितारं योरथः सूर्यांवहतिधारयति वन्धुरायुः रथेनिवासाधारभूतः काष्ठोवन्धुरं तद्वान् गिर्वाहसं गिरांस्तुतीनांवोढारं पुरुतमं प्रभूततमं वसूयुं वसुमन्तम्॥ १॥ अश्विनीकुमारो, हम आज तुम्हारे विख्यात वेगवाले और गोसंगत या गोप्रद रथ का आह्वान करते हैं। वह रथ सूर्या को धारण करता है। उसके निवासाधारभूत (बैठने की जगह का) काष्ठ बंधुर है। वह रथ स्तुतिवाहक, प्रभूत और धनवान् है।

युवंश्रियमश्विनादेवतातांदिवोनपातावनथःशचीभिः।
युवोर्वपुरभिपृक्षःसचन्तेवहन्तियत्ककुहासोरथेवाम्॥ २॥

युवम्। श्रियम्। अश्विना। देवता। ताम्। दिवः। नपाता।
वनथः। शचीभिः। युवोः। वपुः। अभि। पृक्षः। सचन्ते।
वहन्ति। यत्। ककुहासः। रथे। वाम्॥ २॥

हेदिवोनपाता आदित्यस्यपुत्रस्थानीयौ द्युलोकस्यवानपातयितारौ हेअश्विना अश्विनौ युवं युवां देवता देवते विभक्तिव्यत्ययः तांप्रसिद्धां श्रियं शचीभिःकर्मभिःशक्तिभिर्वा वनथः संभजेथे यद्वा वनतिर्दानार्थः युवोः युवयोर्वपुःशरीरं पृक्षोऽन्नानि सोमलक्षणानि अभिसचन्ते प्राप्नुवन्ति यद्वा रथेवांवहन्ति ककुहासोमहान्तोऽश्वाः यद्वा स्तुतयोवा युवांरथे वहन्ति॥ २॥ हे आदित्य या द्युलोक के पुत्रस्थानीय अश्विनीकुमारो, तुम दोनों देवता हो। तुम दोनों कर्म-द्वारा प्रसिद्ध शोभा का सम्भोग करते हो। तुम दोनों के शरीर को सोमरस प्राप्त करता है। महान् अश्व (या स्तुतियाँ) तुम दोनों के रथ का वहन करते हैं।

अथतृतीया—

कोवामद्याकरतेरातहव्यऊतयेवासुतपेयायवार्कैः।
ऋतस्यवावनुषेपूर्व्यायनमोयेमानोअश्विनाववर्तत्॥ ३॥

कः। वाम्। अद्य। करते। रातऽहव्यः। ऊतये। वा।
सुतऽपेयाय। वा। अर्कैः। ऋतस्य। वा। वनुषे। पूर्व्याय।
नमः। येमानः। अश्विना। आ। ववर्तत्॥ ३॥

कोयजमानोद्य वां युवयोःकरते कुर्यात्स्तुतिम् अर्कैर्मन्त्रैःरातहव्योदत्तसोमः ऊतयेवा रक्षणायवा सुतपेयायसोमपानायवा ऋतस्योदकस्ययज्ञस्यवा पूर्व्याय पुराणाय वनुषेसंभजनाय हेअश्विना नमोयेमानः नमस्कारंकुर्वाणः कआववर्तत् आवर्तयेद्यज्ञंप्रति ॥ ३ ॥

३. कौन सोमदाता यजमान, आज, रक्षा के लिए, सोमपान के लिए, यज्ञ की पूर्ति के लिए अथवा सम्भजन के लिए तुम दोनों की स्तुति करता है ? हे अश्विद्वय, कौन नमस्कार करनेवाला तुम दोनों को यज्ञ के प्रति आवर्तित करता है ।

हिरण्ययेनपुरुभूरथेनेमंयज्ञंनासत्योपयातम् ।
पिबाथइन्मधुनःसोम्यस्यदधथोरत्नंविधतेजनाय ॥ ४ ॥

हिरण्ययेन । पुरुभू इति पुरुऽभू । रथेन । इमम् । यज्ञम् । नासत्या । उप । यातम् । पिबाथः । इत् । मधुनः । सोम्यस्य । दधथः । रत्नम् । विधते । जनाय ॥ ४ ॥

हेपुरुभू बहुभवन्तौ नासत्यौ इमंयज्ञंहिरण्ययेनरथेनोपयातं सोम्यस्य सोमसम्बन्धिनोमधुनोमधुररसस्य कर्मणिषष्ठ्यौ सोमरसंपिबाथः पिबथः विधतेपरिचरते जनाय मह्यं रत्नं रमणीयंधनंदधथोधारयथः दधतेर्धारणार्थस्यलेटिरूपम् ॥ ४ ॥

४. हे नासत्यद्वय, तुम दोनों बहुविध हो । इस यज्ञ में हिरण्मय रथ-द्वारा तुम दोनों आओ । मधुर सोमरस का पान करो एवम् परिचर्या करनेवाले को अर्थात् हमें रमणीय धन दान करो ।

आनोयातंदिवोअच्छापृथिव्याहिरण्ययेनसुवृतारथेन ।
मावामन्येनियमन्देवयन्तःसंयद्ददेनाभिःपूर्व्यावाम् ॥ ५ ॥

आ । नः । यातम् । दिवः । अच्छ । पृथिव्याः । हिरण्ययेन । सुऽवृता । रथेन । मा । वाम् । अन्ये । नि । यमन् । देवऽयन्तः । सम् । यत् । ददे । नाभिः । पूर्व्या । वाम् ॥ ५ ॥

नोस्मानच्छाभिमुखं दिवोद्युलोकात्पृथिव्याःसकाशाद्वा आयातं केनसाधनेन हिरण्ययेनहितरमणीयेन सुवृता शोभनावर्तनेनरथेन वां युवाम् अन्येदेवयन्तोदेवौयुवामिच्छन्तोयजमानाः मानियमन्नियमनंमाकुर्वन् यद्यस्मात्पूर्व्या पूर्वाहा इतरयजमानेभ्यःपूर्वभाविनीनाभिः बन्धिका स्तुतिः सन्ददे संबध्नाति तस्मादायातम् ॥ ५ ॥

५. शोभन आवर्तनवाले हिरण्मय रथ-द्वारा तुम दोनों द्युलोक या पृथिवी से हमारे अभिमुख आगमन करते हो । तुम दोनों की इच्छा करनेवाले दूसरे यजमान तुम दोनों को नहीं रोक रखें; अतएव हमने पूर्व में ही स्तुति अर्पित की है ।

नूनोरयिंपुरुवीरंबृहन्तंदस्रामिमाथामुभयेष्वस्मे ।
नरोयद्वामश्विनास्तोममावन्त्सधस्तुतिमाजमीळ्हासोअग्मन् ॥६॥

नु । नः । रयिम् । पुरुऽवीरम् । बृहन्तम् । दस्रा । मिमाथाम् ।
उभयेषु । अस्मे इति । नरः । यत् । वाम् । अश्विना । स्तोमम् ।
आवन् । सधऽस्तुतिम् । आजऽमीळ्हासः । अग्मन् ॥ ६ ॥

नु क्षिप्रं नोऽस्माकं रयिं धनं पुरुवीरं बहुपुत्रोपेतं बृहन्तं महान्तं धनं हे दस्रावश्विनौ मिमाथां कुरुतम् उभयेषु पुरुमीळ्हाजमीळ्हेष्वस्मे अस्मासु यद्यस्मात् नरो नेतारः ऋत्विजः पुरुमीळ्हसम्बन्धिनो वां युवयोः स्तोमं स्तोत्रम् आवन् अगमन्प्राप्ताः तथा सधस्तुतिं सहस्तुतिमाजमीळ्हा अजमीळ्हसम्बन्धिनोपेतैः सहाभ्यगमन् ॥ ६ ॥

६. हे दस्रद्वय, तुम लोग हम दोनों (पुरुमीळ्ह और अजमीळ्ह) को शीघ्र ही बहुपुत्रयुक्त प्रभूत धन दान करो। हे अश्विद्वय, पुरुमीळ्ह के ऋत्विकों ने तुम दोनों को स्तोत्र-द्वारा प्राप्त किया है एवम् अजमीळ्ह के ऋत्विकों की स्तुति भी उसी के साथ संगत हुई है।

इहेहयद्वांसमनापपृक्षेसेयमस्मेसुमतिर्वाजरत्ना ।
उरुष्यतंजरितारंयुवंहश्रितःकामोनासत्यायुवद्रिक् ॥७॥२०॥

इहऽइह । यत् । वाम् । समना । पपृक्षे । सा । इयम् । अस्मे इति ।
सुऽमतिः । वाजऽरत्ना । उरुष्यतम् । जरितारम् । युवम् । ह ।
श्रितः । कामः । नासत्या । युवद्रिक् ॥ ७ ॥ २० ॥

व्याख्यातेयम् ॥ ७ ॥

७. अश्विद्वय, इस यज्ञ में तुम दोनों समान मनवाले हो अर्थात् सदृश हो। हम जिस स्तुति-द्वारा तुम दोनों को संयुक्त करते हैं, वह शोभन स्तुति हम लोगों के लिए फलवती हो। हे रमणीय अन्नवाले अश्विद्वय, तुम दोनों स्तोता की रक्षा करो। हे नासत्यद्वय, हमारी अभिलाषा तुम दोनों के निकट जाने से पूर्ण होती है।

एषस्यभानुरितिसप्तर्चंपञ्चमंसूक्तम् आदितःषड्जगत्यः सप्तमीत्रिष्टुप् मन्त्रद्रष्टावामदेव ऋषिः अश्विनौदेवता एषस्यत्रिष्टुबन्तमित्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोर्जागते छन्दसीदंसूक्तं तथाचसूत्रितम्—अबोध्यग्निर्ज्मएषस्यभानुरिति ।

एषस्यभानुरुदियर्तियुज्यतेरथःपरिज्मादिवोअस्यसानवि ।
पृक्षासोअस्मिन्मिथुनाअधित्रयोदृतिस्तुरीयोमधुनोविरप्शते ॥१॥

एषः । स्यः । भानुः । उत् । इयर्ति । युज्यते । रथः । परिऽज्मा ।
दिवः । अस्य । सानवि । पृक्षासः । अस्मिन् । मिथुनाः । अधि ।
त्रयः । दृतिः । तुरीयः । मधुनः । वि । रप्शते ॥ १ ॥

एषःपुरतोदृश्यमानःस्यः सभानुर्दीप्तिमानादित्यः उदियर्ति ऊर्ध्वंगच्छति पुरस्ताद्युवयोःसंबन्धीपरिज्मा परितोगन्ता अस्यदिवोद्योतमानस्यादित्यस्यसानवि सानौ समुच्छ्रितप्रदेशे उदियर्तीतिवा रप्शतेइतिवासंबन्धनीयम् अस्मिन्रथे मध्यपरिभागे मिथुना मिथुनीभूतास्त्रयस्त्रिविधाः पृक्षासोन्नानित्रेधाविहितंयानम् इदमन्नमशनंपानंखाद्यमितित्रिषुतम् । मिथुनपिशब्दोर्थेषुमिथुनशब्दस्तैत्तिरीयेदृश्यते मातापितापुत्रस्तदेतन्मिथुनमिति । दृतिस्तुरीयः रसद्रव्याधारःपदार्थश्चर्ममयोदृतिरित्युच्यते मधुनःसोमरसस्यसंबन्धीमधुपूर्णस्तुरीयोविरप्शते विविधं राजते ॥ १ ॥ दीप्तिमान् आदित्य उदित होते हैं। हे अश्विद्वय, तुम दोनों का रथ चारों तरफ़ गमन करता है। यह द्युतिमान् आदित्य के साथ समुच्छ्रत प्रदेश में मिलित होता है। इस रथ के ऊपरी भाग में मिथुनीभूत त्रिविध (अशन, पान, खाद) अन्न हैं एवम् सोमरसपूर्ण चर्ममय पात्र चतुर्थ रूप में शोभा पाता है।

उद्वांपृक्षासोमधुमन्तईरतेरथाअश्वासउषसोव्युष्टिषु ।
अपोर्णुवन्तस्तमआपरीवृतंस्व१र्णशुक्रंतन्वन्तआरजः ॥ २ ॥

उत् । वाम् । पृक्षासः । मधुऽमन्तः । ईरते । रथाः । अश्वासः ।
उषसः । विऽउष्टिषु । अपऽऊर्णुवन्तः । तमः । आ । परिऽवृतम् ।
स्वः । न । शुक्रम् । तन्वन्तः । आ । रजः ॥ २ ॥

पृक्षासः अन्नात्रिविधान्नवन्तोमधुमन्तः सोमरसोपेताअश्वासोश्वयुक्ताः वां युवयोरथाः यद्वा मधुमन्तः पृक्षारथाअश्वासोश्वाः उषसोव्युष्टिषुव्युच्छनेषुसत्सूदीरते उन्मुखंगच्छन्ति किंकुर्वन्तः परीवृतं परितोव्याप्तंतमः आसर्वतः अपोर्णुवन्तः अपाकुर्वन्तः स्वर्णआदित्यइव शुक्रंदीप्तंरजस्तेजआतन्वन्तः आकारश्चार्थे यद्वा रजोन्तरिक्षंशुक्रंदीप्तंतन्वन्तः ॥ २ ॥

२. उषा के आरम्भ-काल में तुम दोनों का त्रिविधान्नवान्, सोम-रसोपेत, अश्वयुक्त रथ चारों तरफ़ व्याप्त अन्धकार को दूर करता हुआ और सूर्य की तरह दीप्त तेज को विस्तारित करता हुआ उन्मुख होकर गमन करता है।

अथतृतीया—

मध्वःपिबतंमधुपेभिरासभिरुतप्रियंमधुनेयुञ्जाथांरथम् ।
आवर्तनिंमधुनाजिन्वथस्पथोदृतिंवहेथेमधुमन्तमश्विना ॥ ३ ॥

१ तै० ब्रा० १. ६. २.।

मध्वः । पिबतम् । मधुऽपेभिः । आसऽभिः । उत । प्रियम् । मधुने । युञ्जाथाम् । रथम् । आ । वर्तनिम् । मधुना । जिन्वथः । पथः । दृतिम् । वहेथे इति । मधुऽमन्तम् । अश्विना ॥ ३ ॥

मध्वोमधुरंसोमरसं मधुपेभिः सोमपानार्हैरास्यैःपिबतम् उतापिच प्रियंरथं मधुने मधुकामाय युञ्जाथाम् अश्वैर्युक्तंकुरुतं वर्तनिं यजमानगृहम् आगच्छतमितिशेषः पथोगमनमार्गात् मधुनाजिन्वथः प्रीणयतं वहेथंवाक्यं पथोवर्तनिमाकाशंजिन्वथः दृतिमधुमन्तं हेअश्विनाश्विनौ वहेथे धारयथ ॥ ३ ॥

३. सोमपान करने योग्य मुख-द्वारा तुम दोनों सोमरस का पान करो। सोमरस के लाभ के लिए प्रिय रथ की योजना करो एवम् यजमान के गृह में आगमन करो। गमनमार्ग को सोम-द्वारा प्रीत करो। तुम दोनों सोमपूर्ण चर्ममय पात्र धारण करो।

हंसासोयेवांमधुमन्तोअस्रिधोहिरण्यपर्णाउहुवउषर्बुधः ।
उदप्रुतोमन्दिनोमन्दिनिस्पृशोमध्वोनमक्षःसवनानिगच्छथः ॥४॥

हंसासः । ये । वाम् । मधुऽमन्तः । अस्रिधः । हिरण्यऽपर्णाः । उहुवः । उषःऽबुधः । उदऽप्रुतः । मन्दिनः । मन्दिनिऽस्पृशः । मध्वः । न । मक्षः । मक्षः । सवनानि । गच्छथः ॥ ४ ॥

हंसासोध्वनिशीघ्रगन्तारः मधुमन्तोमाधुर्योपेताअस्रिधः अद्रोग्धारः हिरण्यपर्णाः हितरमणीयपर्णाः उहुवःवोढारःउषर्बुधः उषसिबुध्यमानाः उदप्रुतः उदकस्यप्लावयितारः मन्दिनोहर्षयितारः मन्दिनिस्पृशः मन्दिनंसोमंस्पृशन्तः उक्तलक्षणायेषांअश्वाः सन्ति तैरश्वैर्मध्वोन मधुनिवमक्षोमक्षिकाः सवनान्यस्मदीयानिगच्छथः ॥ ४ ॥

४. तुम दोनों के पास शीघ्रगामी, माधुर्ययुक्त, द्रोहरहित, हिरण्मय, (रमणीय) पक्षविशिष्ट, वहनशील, उषाकाल में जागरणकारी, जलप्रेरक, हर्षयुक्त, एवम् सोमस्पर्शी अश्व हैं, जिनके द्वारा तुम लोग हम लोगों के सवनों में आगमन करते हो, जैसे मधुमक्खियाँ मधु के समीप गमन करती हैं।

स्वध्वरासोमधुमन्तोअग्नयउस्राजरन्तेप्रतिवस्तोरश्विना ।
यन्निक्तहस्तस्तरणिर्विचक्षणःसोमंसुषावमधुमन्तमद्रिभिः ॥५॥

सुऽअध्वरासः । मधुऽमन्तः । अग्नयः । उस्रा । जरन्ते । प्रति । वस्तोः । अश्विना । यत् । निक्तऽहस्तः । तरणिः । विऽचक्षणः । सोमम् । सुसाव । मधुऽमन्तम् । अद्रिऽभिः ॥ ५ ॥

स्वध्वरासः शोभनयागसाधनाः मधुमन्तो मधुमत्सोमवन्तः अग्नयो गार्हपत्यादयः उषासहनिवसन्तौ अश्विनौ प्रतिवस्तोः अन्वहमुषःकाले ईरते स्तुवन्ति यदा निक्तहस्तः समन्त्रेणोदकेन शोधितहस्तः तरणिः कर्मणस्तारयिता विचक्षणो विविधं द्रष्टाध्वर्युः सोमं मधुमन्तमद्रिभिर्ग्रावभिः सुषाव अभिषुतवान् तदा ते अग्नयः स्तुवन्ति तस्मादागच्छतमित्यर्थः ॥ ५ ॥

५. जब कर्म करनेवाले अध्वर्युगण अभिमंत्रित जल से हस्त शोधन करते हुए, प्रस्तर-खण्ड-द्वारा मधुयुक्त सोम अभिषव करते हैं, तब यज्ञ के साधनभूत सोमवान् गार्हपत्यादि अग्नि एकत्र निवासकारी अश्विद्वय की प्रत्यह स्तुति करते हैं।

आ॒के॒नि॒पासो॒ अह॑भि॒र्दवि॑ध्वतः॒ स्व१॒॑र्ण शु॒क्रं त॒न्वन्त॒ आ रजः॑ ।
सूर॑श्चि॒दश्वा॑न्युयुजा॒न ई॑यते॒ विश्वाँ॒ अनु॑ स्व॒धया॑ चेतथस्प॒थः ॥ ६ ॥

आ॒के॒ऽनि॒पासः॑ । अहः॑ऽभिः । दवि॑ध्वतः । स्वः॑ । न । शु॒क्रम् । त॒न्वन्तः॑ । आ । रजः॑ । सूरः॑ । चि॒त् । अश्वा॑न् । यु॒यु॒जा॒नः । ई॒यते॒ । विश्वा॑न् । अनु॑ । स्व॒धया॑ । चे॒त॒थः॒ । प॒थः ॥ ६ ॥

आकेनिपासः अन्तिके निपतन्तीत्याकेनिपा रश्मयः तेऽहभिरहोभिर्दविध्वतः कम्पयन्तो ध्वंसयन्तोऽन्धतमांसि स्वर्णमादित्यमिव शुक्रं दीप्तं रजः आतन्वन्तो भवन्ति अश्विनोरश्वाः सूरश्चित् सूर्योऽपि अश्वान्युयुजानो योजयन्नीयते गच्छति हे अश्विनौ युवां विश्वान्पथः आगमनमार्गाननु क्रमेण स्वधया अनेन सोमलक्षणेनान्नेन चेतथः प्रज्ञापयथः ॥ ६ ॥

६. समीप में निपतित होनेवाली रश्मियाँ दिवस-द्वारा अन्धकार को ध्वंस करती हुई सूर्य की तरह दीप्त तेज को विस्तारित करती हैं। सूर्य अश्वयोजना करके गमन करते हैं। हे अश्विद्वय, तुम दोनों सोम-रस के साथ उनका अनुगमन करके समस्त पथ प्रकाशित करो।

प्र वा॑मवोचमश्विना धियं॒धा रथः॒ स्वश्वो॑ अ॒जरो॒ यो अस्ति॑ ।
येन॑ स॒द्यः परि॒ रजां॑सि या॒थो ह॒विष्म॑न्तं त॒रणिं॑ भो॒जमच्छ॑ ॥ ७ ॥ २१ ॥

प्र । वा॒म् । अ॒वो॒च॒म् । अ॒श्वि॒ना॒ । धि॒य॒म्ऽधाः । रथः॑ । सु॒ऽअश्वः॑ । अ॒जरः॑ । यः । अस्ति॑ । येन॑ । स॒द्यः । परि॑ । रजां॑सि । या॒थः । ह॒विष्म॑न्तम् । त॒रणि॑म् । भो॒जम् । अच्छ॑ ॥ ७ ॥ २१ ॥

धियंधाः कर्मणां धारकोऽहं हे अश्विनावश्विनौ वां युवां प्रावोचं प्रब्रवीमि स्तौमि स्वश्वः शोभनाश्वः अजरो जरारहितो यो रथोऽस्ति येन रथेन सद्यस्तदानीमेव रजांसि लोकान्परियाथः स रथः हविष्मन्तं सोमादिहविर्युक्तं तरणिं तारकं भोजं भोक्तारमस्मदीयं यागमच्छ प्राप्तुमागच्छतमिति शेषः ॥ ७ ॥

७. हे अश्विनीकुमारो, यज्ञ करनेवाले हम तुम दोनों की स्तुति करते हैं। तुम दोनों का सुन्दर अश्वयुक्त, नित्य तरुण जो रथ है एवम् जिस रथ-द्वारा तुम दोनों क्षण मात्र में लोकत्रय का परिभ्रमण करते हो, उसी रथ-द्वारा तुम दोनों हव्य-युक्त, शीघ्र अतिवाही एवम् भोग-प्रद यज्ञ में आगमन करो।

पञ्चमेऽनुवाके नव सूक्तानि तत्राग्रं पिबेति सप्तर्चं प्रथमं सूक्तं वामदेवस्यार्षं गायत्रं कृत्स्नं सूक्तमिन्द्रवायुदेवताकम् आद्या केवलवायव्या तथा चानुक्रान्तम्—अग्रं वायव्याद्यैन्द्रवायवं त्वनुक्तगोत्रमिति । सूक्तविनियोगो लैङ्गिकः प्रातरनुवाके ऐन्द्रवायवग्रहस्य याज्ये तथा च सूत्रम्—अग्रं पिबा मधूनामिति याज्ये अन्वपानमिति ।

**अ॒ग्रं पि॑बा॒ मधू॑नां सु॒तं वा॑यो॒ दिवि॑ष्टिषु । त्वं हि पू॑र्व॒पा असि॑ ॥ १ ॥**

अग्र॑म् । पि॒ब॒ । मधू॑नाम् । सु॒तम् । वा॒यो॒ इति॑ । दिवि॑ष्टिषु ।
त्वम् । हि । पू॒र्व॒ऽपाः । असि॑ ॥ १ ॥

हे वायो त्वमग्रम् इन्द्रादिभ्यः पूर्वं मधूनां मधुररसानां सोमानां संबन्धिनं सुतमभिषुतं रसं पिब कुत्रेति तदुच्यते—दिविष्टिषु दिवः स्वर्गस्य प्रापकेषु यज्ञेषु यद्वास्माकं दिवः स्वर्गस्यैषणेषु निमित्तेषु त्वं हि त्वं खलु पूर्वपा असि हि शब्दो हेत्वर्थः पूर्वपेयमित्यादि ब्राह्मणान्तरप्रसिद्धि द्योतनार्थः वायोः प्रथमं देवानां वै सोमस्य राज्ञोऽग्रपेयेन समपाद्यत ... प्रथमः पिबेयमित्यादि ब्राह्मणे स्पष्टमाम्नातम्—तस्माद्वायुराग्निप्रथमं पा ... प्रथमं भक्षयति ॥ १ ॥

१. हे वायु, स्वर्ग-प्रापक यज्ञ में तुम सर्वप्रथम अभिषुत सोमरस का पान करो; क्योंकि तुम पूर्वपा हो।

**श॒तेना॑ नो अ॒भिष्टि॑भिर्नि॒युत्वाँ॒ इन्द्र॑सारथिः । वायो॑ सु॒तस्य॑ तृम्पतम् ॥ २ ॥**

श॒तेन॑ । नः॒ । अ॒भिष्टि॑ऽभिः । नि॒युत्वा॑न् । इन्द्र॑ऽसारथिः ।
वायो॒ इति॑ । सु॒तस्य॑ । तृ॒म्प॒त॒म् ॥ २ ॥

हे वायो नियुत्वान् नियुद्भिस्तद्वानिन्द्रसारथिरिन्द्रसहायः सन् त्वं शतेनापरिमितैरभिष्टिभिरभितः एषणीयैः कामैर्निमित्तभूतैरागच्छेति शेषः आगत्य च सुतस्य सुतमभिषुतं नोऽस्मदीयं सोमं तृम्पतं पिबतं त्वमिन्द्रश्च इन्द्रस्य साहित्यं ब्राह्मणे प्रोक्तम्—स तुरीयभागिन्द्रोऽभवत् ... इन्द्रवायुरिति तुरीये हैव संग्रहीतारो ... इन्द्रः सारथिरिव भूत्वोदभ्यैदिति च ॥ २ ॥

२. हे वायु, तुम नियुत्वान् हो और इन्द्र तुम्हारे सारथि हैं। तुम अपरिमित कामना को पूर्ण करने के लिए आगमन करो। तुम अभिषुत सोम का पान करो।

**आ वां॑ स॒हस्रं॒ हर॑य॒ इन्द्र॑वायू अ॒भि प्रयः॑ । वह॑न्तु॒ सोम॑पीतये ॥ ३ ॥**

---

१ ऐ० ब्रा० २. २५ ।　　२ ऐ० ब्रा० २. २५ ।

आ । वाम् । सहस्रम् । हरयः । इन्द्रवायू इति । अभि । प्रयः ।
वहन्तु । सोमऽपीतये ॥ ३ ॥

हेइन्द्रवायू वां युवां सहस्रंहरयः सहस्रसंख्याकाअश्वाः प्रयोऽन्नंप्रतित्वरयन्तःअभि अत्रहरिशब्दोऽश्वसामान्यवचनः तेसोमपीतयेआवहन्तु ॥ ३ ॥

३. हे इन्द्र और वायु, तुम दोनों को सहस्रसंख्यक अश्व त्वरायुक्त होकर सोमपान के लिए ले आयें।

**रथंहिरण्यवन्धुरमिन्द्रवायूस्वध्वरम् । आहिस्थाथोदिविस्पृशम् ।४।**

रथम् । हिरण्यऽवन्धुरम् । इन्द्रवायू इति । सुऽअध्वरम् । आ ।
हि । स्थाथः । दिविऽस्पृशम् ॥ ४ ॥

हेइन्द्रवायू हिरण्यवन्धुरं हिरण्मयनिवासाधारकाष्ठोपेतंदिविस्पृशं द्युलोकस्पर्शिनंस्वध्वरं शोभनाध्वरवन्तंरथमास्थाथोहि आस्थितौस्थः यस्मादेवंतस्मादागच्छतमित्यर्थः स्वध्वरं अत्यास्थाथइतिव्याख्येयम् ॥ ४ ॥

४. हे इन्द्र और वायु, तुम दोनों हिरण्मय निवासाधार काष्ठ से युक्त द्युलोकस्पर्शी और शोभन यज्ञशाली रथ पर आरोहण करो।

रथेनपृथ्वित्यादिकस्तृचोदशरात्रेपञ्चमेहनिप्रउगशस्त्रऐन्द्रवायवोद्वितीयः सूत्रितंच—रथेनपृथुपाजसाबहवःसूरचक्षसइति ।

अथचेयमा सूक्तेपञ्चमी–

**रथेनपृथुपाजसादाश्वांसमुपगच्छतम् । इन्द्रवायूइहागतम् ॥ ५ ॥**

रथेन । पृथुऽपाजसा । दाश्वांसम् । उप । गच्छतम् ।
इन्द्रवायू इति । इह । आ । गतम् ॥ ५ ॥

हेइन्द्रवायू पृथुपाजसा प्रभूतबलेनरथेन दाश्वांसं दातारं यजमानमुपगच्छतं तदर्थमि-हास्मिन्यज्ञेआगतमागच्छतम् ॥ ५ ॥

५. हे इन्द्र और वायु, तुम दोनों प्रभूत बलसम्पन्न रथ-द्वारा हव्य-दाता यजमान के निकट आगमन करो एवम् उसी लिए इस यज्ञ में आगमन करो।

**इन्द्रवायूअयंसुतस्तंदेवेभिःसजोषसा । पिबतंदाशुषोगृहे ॥ ६ ॥**

इन्द्रवायू इति । अयम् । सुतः । तम् । देवेभिः । सऽजोषसा ।
पिबतम् । दाशुषः । गृहे ॥ ६ ॥

हे इन्द्रवायू अयंसोमः सुतोभिषुतः तंसोमंदेवेभिःदेवैःसजोषसा समानप्रीतौसन्तौ दाशुषो हविर्दातुर्गृहे यागशालायांपिबतम् ॥ ६ ॥

६. हे इन्द्र और वायु, यह सोम अभिषुत हुआ है, तुम दोनों देवों के साथ समान प्रीतियुक्त होकर हव्यदाता यजमान की यज्ञशाला में उसका पान करो।

इहप्रयाणमस्तुवामिन्द्रवायूविमोचनम्। इहवांसोमपीतये।७।२२।

इह। प्रऽयानम्। अस्तु। वाम्। इन्द्रवायू इति। विऽमोचनम्।
इह। वाम्। सोमऽपीतये ॥ ७ ॥ २२ ॥

हेइन्द्रवायू वांयुवयोः इहास्मिन्यज्ञेप्रयाणंगमनमस्तु इहास्मिन्नेवयज्ञे वां सोमपीतये विमोचनमश्वानामस्तु इहशब्दस्यपर्यवसानएकार्थत्वेपिआदरार्थत्वादविरोधः ॥ ७ ॥

७. हे इन्द्र और वायु, इस यज्ञ में तुम दोनों का आगमन हो। इस यज्ञ में तुम लोगों के सोमपान के लिए अश्व विमुक्त हों।

वायोशुक्रइतिपञ्चर्चंद्वितीयंसूक्तं वामदेवस्यार्षमानुष्टुभमैन्द्रवायवम् आद्यावायव्या अत्रानुक्रमणिका—वायोचतुष्कमानुष्टुभमाद्यावायव्येति । सूक्तविनियोगोलैङ्गिकः । आद्यादशरात्रे चतुर्थेहनिप्रउगशस्त्रेवायव्येऽनुचेमयमा वायोशुक्रोअयामितेविहितोआमधीताइति सूत्रितम् ।

वायोशुक्रोअयामितेमध्वोअग्रंदिविष्टिषु।
आयाहिसोमपीतयेस्पार्होदेवनियुत्वता ॥ १ ॥

वायो इति। शुक्रः। अयामि। ते। मध्वः। अग्रम्। दिविष्टिषु।
आ। याहि। सोमऽपीतये। स्पार्हः। देव। नियुत्वता ॥ १ ॥

हेवायो ते तुभ्यं शुक्रोव्रतचर्यादिनादीप्तोहं मध्वः मधुरंसोमरसं कर्मणिषष्ठी अग्रमितरेभ्यःपूर्वमयामि प्रापयामि अयतिरन्तर्भावितण्यर्थः किमर्थं दिविष्टिषु दिवोद्युलोकस्यैषणेषुसत्सु हेदेव वायो स्पार्हःस्पृहणीयस्त्वंनियुत्वतानियुत्वत् वायोःप्रतिनियुतोश्वस्तेनसाधनेनायाहि सोमपीतये सोमपानाय ॥ १ ॥

१. हे वायु, व्रतचर्यादि के द्वारा दीप्त (पवित्र) होकर हम द्युलोक जाने की अभिलाषा से तुम्हारे लिए मधुर सोमरस का प्रथम आनयन करते हैं। हे वायुदेव, तुम स्पृहणीय हो। तुम अपने नियुत् (अश्व) वाहन-द्वारा सोमपान के लिए आगमन करो।

इन्द्रश्चेत्यादिस्तृचोदशरात्रेचतुर्थेहन्यैन्द्रवायवोद्वितीयः सूत्रंच—इन्द्रश्चवायवेषांसोमानामाधितिंवितानसूक्तइति ।

इन्द्रश्चवायवेषांसोमानांपीतिमर्हथः ।
युवांहियन्तीन्दवोनिम्नमापोनसध्र्यक् ॥ २ ॥

इन्द्रः । च । वायो इति । एषाम् । सोमानाम् । पीतिम् । अर्हथः ।
युवाम् । हि । यन्ति । इन्दवः । निम्नम् । आपः । न । सध्र्यक् ॥ २ ॥

हेवायो त्वमिन्द्रश्चैषांगृहीतानांसोमानांपीतिंपानमर्हथः युवांहिखलु इन्दवः सोमाः यन्तिग-च्छन्ति निम्नंखातप्रदेशम् आपोनसध्र्यक् उदकानियथासहैवगच्छन्तितद्वत्सर्वेसोमायुवांहियन्ति ॥२॥

२. हे वायु, तुम और इन्द्र इस गृहीत सोम के पानयोग्य हो, तुम दोनों ही सोम को प्राप्त करते हो; क्योंकि जल जिस तरह से गर्त की ओर गमन करता है, उसी तरह से सकल सोमरस तुम दोनों के अभि-मुख गमन करते हैं।

वायविन्द्रश्चशुष्मिणासरथंशवसस्पती ।
नियुत्वन्तानऊतयआयातंसोमपीतये ॥ ३ ॥

वायो इति । इन्द्रः । च । शुष्मिणा । सऽरथम् । शवसः । पती इति ।
नियुत्वन्ता । नः । ऊतये । आ । यातम् । सोमऽपीतये ॥ ३ ॥

हेवायो त्वमिन्द्रश्च हेशवसस्पती बलस्यपती शुष्मिणावलवन्तौ नियुत्वन्ता नियुत्संज्ञा-श्वयुक्तौ युवां सरथं समानमेकंरथमारुह्येतिशेषः नः ऊतयेरक्षणाय सोमपीतये सोमपानाया-यातमागच्छतं यद्वा सरथमधितिष्ठतमारुह्यायातमितिवाक्यद्वयम् ॥ ३ ॥

३. हे वायु, तुम इन्द्र हो। तुम दोनों बल के स्वामी हो। तुम दोनों पराक्रमशाली और नियुद्गण से युक्त हो। तुम दोनों एक ही रथ पर आरोहण करके हम लोगों को आश्रय प्रदान करने के लिए और सोमपान करने के लिए यहाँ आओ।

यावांसन्तिपुरुस्पृहोनियुतोदाशुषेनरा ।
अस्मेतायज्ञवाहसेन्द्रवायूनियच्छतम् ॥ ४ ॥ २३ ॥

याः । वाम् । सन्ति । पुरुऽस्पृहः । निऽयुतः । दाशुषे । नरा । अस्मे इति ।
ताः । यज्ञऽवाहसा । इन्द्रवायू इति । नि । यच्छतम् ॥ ४ ॥ २३ ॥

हेनरा नेतारौ हेयज्ञवाहसा यज्ञवाहकाविन्द्रवायू याः पुरुस्पृहोबहुभिःस्पृहणीयाः नियुतः सन्ति ताअस्मेअस्मभ्यंदाशुषेहविर्दत्तवतेयजमानायमह्यंतानियुतोनियच्छतम् ॥ ४ ॥

४. हे नेता तथा यज्ञवाहक इन्द्र और वायु, तुम दोनों के पास जो बहुतेरे लोगों-द्वारा स्पृहणीय नियुद्गण हैं, वे हमें दे दो। हम तुम दोनों को हवि देनेवाले यजमान हैं।

विहिहोत्राइतिपञ्चर्चंतृतीयंसूक्तं वामदेवस्यार्षंवायव्यम् अत्रानुक्रमणिका—विहिपञ्चवायव्य-मिति । सूक्तविनियोगोलैङ्गिकः आग्रायणस्यरात्रेश्चतुर्थेऽहनिप्रउगशस्त्रेवायव्यस्तृचस्यद्वितीया तथा-चसूत्रितं—विहिहोत्राअवीतावायोशतंहरीणामिति ।

सैषाप्रथमा—

विहिहोत्राअवीताविपोनरायोअर्यः ।
वायवाचन्द्रेणरथेनयाहिसुतस्यपीतये ॥ १ ॥

विहि । होत्राः । अवीताः । विपः । न । रायः । अर्यः ।
वायो इति । आ । चन्द्रेण । रथेन । याहि । सुतस्य । पीतये ॥ १ ॥

हेवायो विहि वीहि भक्षय होत्राः होमसाधिकाःसोमाहुतीरवीताअन्यैःपूर्वमभक्षिताः विपोन शत्रूणांवेपयितारांमेव किञ्चार्यःस्तोतुर्मेरायोधनानिसंपादयेतिशेषः हेवायो चन्द्रे-णाह्लादकेनरथेनायाहि सुतस्यसोमस्यपीतयेपानाय ॥ १ ॥

१. हे वायु, शत्रुओं के प्रकम्पक राजा की तरह तुम पूर्व में ही दूसरे के द्वारा अपीत सोम का पान करो एवम् स्तोताओं के धन का सम्पादन करो । हे वायु, तुम सोमपान के लिए आह्लादकर रथ-द्वारा आगमन करो ।

निर्युवाणोअशस्तीर्नियुत्वाँइन्द्रसारथिः ।
वायवाचन्द्रेणरथेनयाहिसुतस्यपीतये ॥ २ ॥

निःऽयुवानः । अशस्तीः । नियुत्वान् । इन्द्रऽसारथिः । वायो इति ।
आ । चन्द्रेण । रथेन । याहि । सुतस्य । पीतये ॥ २ ॥

हेवायो त्वमशस्तीरभिशस्तीःनिर्युवाणःनिःशेषेणनियोजयन् नियुत्वान्नियुत्संज्ञका-श्वावान्इन्द्रसारथिरिन्द्रसहायःसन्आयाहि ॥ २ ॥

२. हे वायु तुम अभिशस्ति का निःशेष नियोग करते हो । तुम नियुद्गण से युक्त हो और इन्द्र तुम्हारे सारथि हैं । हे वायु, तुम सोमपान के लिए आह्लादकर रथ-द्वारा आगमन करो ।

अनुकृष्णेवसुधितीयेमातेविश्वपेशसा ।
वायवाचन्द्रेणरथेनयाहिसुतस्यपीतये ॥ ३ ॥

अनु । कृष्णे इति । वसुधिती इति वसुऽधिती । येमाते इति ।
विश्वऽपेशसा । वायो इति । आ । चन्द्रेण । रथेन । याहि । सुतस्य ।
पीतये ॥ ३ ॥

कृष्णे कृष्णवर्णे वसुधिती वसूनांधात्र्यौ विश्वपेशसा बहुरूपेद्यावापृथिव्यौ त्वाम-नुसचाते अनुगच्छतः ॥ ३ ॥

३. हे वायु, कृष्णवर्ण, वसुओं की धात्री, विश्वरूपा द्यावा-पृथिवी तुम्हारा अनुगमन करती हैं। हे वायु, तुम सोमपान के लिए आह्लादकर रथ-द्वारा आगमन करो।

वहन्तुत्वामनोयुजोयुक्तासोनवतिर्नव ।
वायवाचन्द्रेणरथेनयाहिसुतस्यपीतये ॥ ४ ॥

वहन्तु । त्वा । मनःऽयुजः । युक्तासः । नवतिः । नव । वायो इति । आ । चन्द्रेण । रथेन । याहि । सुतस्य । पीतये ॥ ४ ॥

हेवायो त्वात्वांमनोयुजोमनःसमानगतयोयुक्तासः परस्परंसंयुक्ताः नवतिर्नवनवोत्तर-नवतिसंख्याकाः अश्वावहन्तु धारयन्तु ॥ ४ ॥

४. हे वायु, मन की तरह वेगवान्, परस्पर संयुक्त, नव-नवति-संख्यक (९९) अश्व तुम्हारा आनयन करते हैं। हे वायु, तुम सोमपान के लिए आह्लादकर रथ-द्वारा आगमन करो।

वायोशतमितिपञ्चमीपूर्वोक्तएवम्पूक्तेतीया सूत्रंतुपूर्वमेवोक्तम् ।

अथपञ्चमी—

वायोशतंहरीणांयुवस्वपोष्याणाम् ।
उतवातेसहस्रिणोरथआयातुपाजसा ॥ ५ ॥ २४ ॥

वायोइति । शतम् । हरीणाम् । युवस्व । पोष्याणाम् ।
उत । वा । ते । सहस्रिणः । रथः । आ । यातु । पाजसा ॥ ५॥२४॥

हेवायो त्वं पोष्याणां पोषणीयानां हरीणां शतं युवस्व योजय रथे उतवाथवा ते सहस्रिणः सहस्रसंख्यापूरकाअश्वाःतैर्युक्तोरथः पाजसाबलेनायात्वागच्छतु ॥ ५ ॥

५. हे वायु, तुम शतसंख्यक पोषणीय अश्वों को रथ में योजित करो अथवा सहस्रसंख्यक अश्वों को रथ में योजित करो। उनसे युक्त होकर तुम्हारा रथ वेगपूर्वक आये।

इदंवामास्यइतिषड्ऋचंचतुर्थंसूक्तं वामदेवस्यार्षंगायत्रमैन्द्राबार्हस्पत्यम् अत्रानुक्रमणिका-इदं षळैन्द्राबार्हस्पत्यंगायत्रमिति । सूक्तविनियोगोलैङ्गिकः ।

इदंवामास्येहविःप्रियमिन्द्राबृहस्पती । उक्थंमदश्चशस्यते ॥ १ ॥

इदम् । वाम् । आस्ये । हविः । प्रियम् । इन्द्राबृहस्पती इति । उक्थम् । मदः । च । शस्यते ॥ १ ॥

हेइन्द्राबृहस्पती वामास्ये इदंप्रियंहविःसोमरूपं प्रक्षिपामीतिशेषः उक्थंशस्त्रंच मदोमदजनकंप्रास्यते ॥ १ ॥

१. हे इन्द्र और बृहस्पति, तुम दोनों के मुंह में हम इस प्रिय सोम-रूप हवि का प्रक्षेप करते हैं। हम तुम दोनों को उक्थ (शस्त्र) और मदजनक सोमरस प्रदान करते हैं।

अयंवांपरिषिच्यतेसोमइन्द्राबृहस्पती। चारुर्मदायपीतये ॥२॥

अयम्। वाम्। परि। सिच्यते। सोमः। इन्द्राबृहस्पती इति। चारुः। मदाय। पीतये ॥ २ ॥

हेइन्द्राबृहस्पती वामास्ये चारुः शोभनः अयंसोमः परिषिच्यते परितोदीयते मदाय हर्षाय पीतयेपानायच ॥ २ ॥

२. हे इन्द्र और बृहस्पति, तुम दोनों के मुंह में पान के लिए और हर्ष के लिए यह मनोहर सोम भली भाँति से दिया जाता है।

ऐन्द्राबार्हस्पत्यायामिष्टौप्रधानस्यानइन्द्रेतितृतीयानुवाक्या उत्तरायाज्या सूत्रितंच—आनइन्द्राबृहस्पतीअस्मेइन्द्राबृहस्पतीइति।

सैषातृतीया—

आनइन्द्राबृहस्पतीगृहमिन्द्रश्चगच्छतम्। सोमपासोमपीतये ॥३॥

आ। नः। इन्द्राबृहस्पती इति। गृहम्। इन्द्रः। च। गच्छतम्। सोमऽपा। सोमऽपीतये ॥ ३ ॥

हेइन्द्राबृहस्पती अथ विविच्योच्यते हेबृहस्पते त्वंचेन्द्रश्चसोमपा सोमपौ युवांसोमपीतये सोमपानाय नोस्माकंगृहम् यज्ञसदनं आगच्छतम् ॥ ३ ॥

३. हे सोमपा इन्द्र और बृहस्पति, तुम दोनों सोमपान के लिए हमारे यज्ञ-गृह में आगमन करो।

अस्मेइन्द्राबृहस्पतीरयिंधत्तंशतग्विनम्। अश्वावन्तंसहस्रिणम् ॥४॥

अस्मे इति। इन्द्राबृहस्पती इति। रयिम्। धत्तम्। शतऽग्विनम्। अश्वऽवन्तम्। सहस्रिणम् ॥ ४ ॥

अस्याविनियोगःपूर्वमन्त्रेणसहोक्तः हेइन्द्राबृहस्पती अस्मेअस्मभ्यंरयिंधनंधत्तं कीदृशं शतग्विनं शतसंख्याकाभिर्गोभिर्युक्तम् अश्वावन्तमश्ववन्तं सहस्रिणं सहस्रसंख्यायुक्तम् ॥ ४ ॥

४. हे इन्द्र और बृहस्पति, तुम दोनों हमें शतसंख्यक गोयुक्त और सहस्रसंख्यक अश्वयुक्त धन दान करो।

अथपञ्चमी–

इन्द्राबृहस्पतीवयंसुतेगीर्भिर्हवामहे । अस्यसोमस्यपीतये ॥५॥

इन्द्राबृहस्पती इति । वयम् । सुते । गीःऽभिः । हवामहे ।
अस्य । सोमस्य । पीतये ॥ ५ ॥

सुतेअभिषुतेसोमेगीर्भिःस्तुतिभिः । शिष्टंस्पष्टम् ॥ ५ ॥

५. हे इन्द्र और बृहस्पति, सोम के अभिषुत होने पर हम स्तुति-द्वारा तुम दोनों का सोमपान के लिए आह्वान करते हैं ।

अथषष्ठी–

सोममिन्द्राबृहस्पतीपिबतंदाशुषोगृहे ।
मादयेथांतदोकसा ॥ ६ ॥ २५ ॥

सोमम् । इन्द्राबृहस्पती इति । पिबतम् । दाशुषः । गृहे ।
मादयेथाम् । तत्ऽओकसा ॥ ६ ॥ २५ ॥

हेइन्द्राबृहस्पती युवां दाशुषोहविर्दातुर्यजमानस्यगृहे तदोकसा तदेवयजमानगृहम् ओको निवासस्थानंययोस्तौ तादृशौसन्तौ सोमंपिबतं पीत्वाचमादयेथामिति ॥ ६ ॥

६. हे इन्द्र और बृहस्पति, तुम दोनों हव्यदाता यजमान के गृह में सोमपान करो और उसके गृह में निवास करके हृष्ट होओ ।

यस्तस्तम्भेत्येकादशर्चंपञ्चमंसूक्तं वामदेवस्यार्षंत्रैष्टुभं दशमीजगती दशम्येकादश्यावैन्द्राबृहस्पतिदेवताके शिष्टाबार्हस्पत्याः अत्रानुक्रमणिका–यस्तस्तम्भैकादशबार्हस्पत्यमन्त्येऐन्द्र्यौचोपान्त्याजगतीति । आभिप्लविकेषूक्थ्येषुतृतीयसवनेब्राह्मणाच्छंसिनःस्तोमवृद्धाविदं सूक्तमावापार्थं तथाचसूत्रं–यस्तस्तम्भयोअद्रिभिदिति । अग्निष्टोमेबृहस्पतिसवेमरुत्वतीयनिष्केवल्ययोःसूक्तमुखीये सूत्रितंच–यस्तस्तम्भसुनीतयइतिसूक्तमुखीयेइति ।

तत्रप्रथमा–

यस्तस्तम्भसहसाविज्मोअन्तान्बृहस्पतिस्त्रिषधस्थोरवेण ।
तंप्रत्नासऋषयोदीध्यानाःपुरोविप्रादधिरेमन्द्रजिह्वम् ॥ १ ॥

यः । तुस्तम्भं । सहसा । वि । ज्मः । अन्तान् । बृहस्पतिः ।
त्रिसुधस्थः । रवेण । तम् । प्रत्नासः । ऋषयः । दीध्यानाः ।
पुरः । विप्राः । दुधिरे । मुन्द्रऽजिह्वम् ॥ १ ॥

योबृहस्पतिः बृहतोवेदस्ययज्ञस्यवापालयितादेवः सहसाबलेनज्मः पृथिव्याः अन्तान्दशदिशइत्यर्थः तान्वितस्तम्भ विविधंस्तम्भितवान् नियमितवान् कीदृशःसः त्रिषधस्थः त्रिषु स्थानेषुवर्तमानः केनसाधनेन रवेण एवंतिष्ठत्वित्यनेनशब्देन तंदेवंप्रत्नासःपुराणाऋषयोतीन्द्रियद्रष्टारोदीध्यानादीप्यमानाविप्रामेधाविनोयजमानादयःपुरोदधिरे पुरस्तात्स्थापितवन्तः कीदृशंनस्तुत्यादिना मन्द्रजिह्वंमन्द्राजिह्वायस्यासौमन्द्रजिह्वः तंमन्दनजिह्वंमोदनजिह्वंतम् ॥ १ ॥

१. वेद या यज्ञ के पालयिता बृहस्पति देव ने बलपूर्वक पृथिवी की दसों दिशाओं को स्तम्भित किया था। वे शब्द-द्वारा तीनों स्थानों में वर्तमान हैं। उन आह्लादक जिह्वाविशिष्ट बृहस्पति देव को पुरातन, द्युतिमान् मेधावियों ने पुरोभाग में स्थापित किया है।

धुनेतयःसुप्रकेतंमदन्तोबृहस्पतेअभियेनस्ततस्रे ।
पृषन्तंसृप्रमदब्धमूर्वंबृहस्पतेरक्षतादस्ययोनिम् ॥ २ ॥

धुनऽइतयः । सुऽप्रकेतम् । मदन्तः । बृहस्पते । अभि । ये । नः ।
ततस्रे । पृषन्तम् । सृप्रम् । अदब्धम् । ऊर्वम् । बृहस्पते ।
रक्षतात् । अस्य । योनिम् ॥ २ ॥

हेबृहस्पते धुनेतयः धुनाशत्रूणांकम्पयित्रीइतिर्गतिर्येषांतेतादृशाः सुप्रकेतं शोभनप्रज्ञं त्वां मदन्तोमादयन्तोनोस्मत्संबन्धिनोयेऋत्विजोअभिततस्रे आत्मानमुपक्षिपन्ति स्तुवन्तिवा अस्यएषांयोनिंकारणंयज्ञंयजमानंवा त्वं रक्षतात् योनिर्विशेष्यते पृषन्तंफलंनिषिञ्चन्तं सृप्रं सर्पणस्वभावम् अदब्धमहिंसितमूर्वंबहुलम् ॥ २ ॥

२. हे प्रभूत प्रज्ञावान् बृहस्पति, जिनकी गति शत्रुओं को कँपानेवाली है, जो तुम्हें हृष्ट करते हैं और जो तुम्हारी स्तुति करते हैं, उनके लिए तुम फलप्रद, वर्द्धनशील और अहिंसित होते हो एवम् तुम उनके विस्तीर्ण यज्ञ की रक्षा करते हो।

बृहस्पतेयेत्यादिकेद्वेबार्हस्पत्येपशौवपापुरोडाशयोरनुवाक्ये बृहस्पतेयापरमापरावदितिद्वे इतिहिसूत्रितम्।

बृहस्पतेयापरमापरावदतआतंऋतस्पृशोनिषेदुः ।
तुभ्यंखाताअवताअद्रिदुग्धामध्वश्चोतन्त्यभितोविरप्शम् ॥३॥

बृहस्पते । या । परमा । पराऽवत् । अतः । आ । ते । ऋतऽस्पृशः ।
नि । सेदुः । तुभ्यम् । खाताः । अवताः । अद्रिऽदुग्धाः । मध्वः ।
श्चोतन्ति । अभितः । विऽरप्शम् ॥ ३ ॥

हेबृहस्पते या प्रसिद्धा परमोत्कृष्टा परावदत्यन्तंदूरभूतावसतिः स्वर्गाख्यास्ति यद्वा लिङ्गव्यत्ययः परमंस्थानमस्ति अतःअस्माद्देशाद्वा आङित्यर्वागर्थे अधस्तात्तेतवसंबन्धिनः ऋतस्पृशः यज्ञंस्पृशन्तोश्वाः निषेदुर्निषण्णाभवन्ति तुभ्यंखाताअवताअवटाः लुप्तोपमैषा यथाखाताःकूपा अभितः श्चोतन्तितद्वत् अद्रिदुग्धाः ग्रावभिरभिषुताःसोमाः विरप्शं विशेषेणशब्देन स्तोत्रंयथाभवतितथामध्वोमधुररसाश्चोतन्तिस्रवन्ति ॥ ३ ॥

३. हे बृहस्पति, जो अत्यन्त दूरवर्ती स्वर्गनामक उत्कृष्ट स्थान है, उस स्थान से तुम्हारे अश्व यज्ञ में आगमन करके निषण्ण होते हैं। खात कूप के चारों तरफ़ से जैसे जलस्राव होता है, उसी तरह से तुम्हारे चारों तरफ़ स्तुतियों के साथ प्रस्तर-द्वारा अभिषुत सोम मधुर रस का सिञ्चन करता है।

बृहस्पतिःप्रथमंजायमानोमहोज्योतिषःपरमेव्योमन् ।
सप्तास्यस्तुविजातोरवेणविसप्तरश्मिरधमत्तमांसि ॥ ४ ॥

बृहस्पतिः । प्रथमम् । जायमानः । महः । ज्योतिषः । परमे ।
विऽओमन् । सप्तऽआस्यः । तुविऽजातः । रवेण । वि ।
सप्तऽरश्मिः । अधमत् । तमांसि ॥ ४ ॥

अयंबृहस्पतिर्मन्त्राभिमानीदेवः महोमहतोज्योतिषोदीप्तस्यादित्यस्यपरमेनिरतिशयेव्योमन्व्योमनि प्रथमंजायमानः प्रादुर्भवन् सप्तास्यः सप्तच्छन्दोमयमुखः तुविजातः बहुप्रकारंसंभूतोरवेणशब्देनसप्तरश्मिःसर्पणस्वभावतेजोयुक्तस्तमांसिव्यधमत् धमतिर्गतिकर्मेतिनिरुक्तम् । विविधंगच्छतिनाशयतीत्यर्थः ॥ ४ ॥

४. मन्त्राभिमानी बृहस्पतिदेव जब महान् आदित्य के निरतिशय आकाश में प्रथम जायमान हुए थे तब सप्त छन्दोमय मुख-विशिष्ट होकर और बहुप्रकार से सम्भूत होकर तथा शब्दयुक्त एवम् गमनशील तेजोविशिष्ट होकर उन्होंने अन्धकार का नाश किया था।

ससुष्टुभासऋक्वतागणेनवलंरुरोजफलिगंरवेण ।
बृहस्पतिरुस्रियाहव्यसूदःकनिक्रदद्वावशतीरुदाजत् ॥५।२६॥

---

१ नि० ६. २.।

सः । सुऽस्तुभा । सः । ऋक्वता । गणेन । वलम् । रुरोज । फलिऽगम् । रवेण । बृहस्पतिः । उस्रियाः । हव्यऽसूदः । कनिक्रदत् । वावशतीः । उत् । आजत् ॥ ५ ॥ २६ ॥

सबृहस्पतिः सुष्टुभा शोभनस्तुतिमता ऋक्वता दीप्तिमतागणेनाङ्गिरसांरवेणशब्देनसह फलिगं निष्फलाविदारणेफलिर्भेदस्तेनगच्छतीतिफलिगं वलं वलनामानमसुरंरुरोजबभञ्ज द्वितीयःसशब्दःपूरणः सएवदेवः उस्रियाः भोगानामुत्स्राविणीर्हव्यसूदः क्षीरादिहविःप्रेरिकाः वावशतीर्वावश्यमानागाः कनिक्रदच्छब्दंकुर्वन् उदाजदुदाटयतिस्म ॥ ५ ॥

५. बृहस्पति ने दीप्तियुक्त और स्तुतिशाली अङ्गिरागण के साथ शब्द-द्वारा बल नामक असुर को विनष्ट किया था। उन्होंने शब्द करके भोगप्रदाश्रो और हव्यप्रेरिका गौओं को बाहर किया था।

॥ इतितृतीयस्यपञ्चमेषड्विंशोवर्गः ॥ २६ ॥

एवापित्रइतिषार्हस्पत्येपशौहविषोयाज्या एवापित्रेविश्वदेवायवृष्णेविधेमयमरुतोविश्वसत्रीइतिसूत्रितत्वात् । अग्निष्टोमेवैश्वदेवग्रहेपयैवयाज्या तथाचसूत्रम्—एवापित्रेविश्वदेवायवृष्णेआनोभद्राःक्रतवोयन्तुविश्वतइतिवैश्वदेवमिति ॥

एवापित्रेविश्वदेवायवृष्णेयज्ञैर्विधेमनमसाहविर्भिः ।
बृहस्पतेसुप्रजावीरवन्तोवयंस्यामपतयोरयीणाम् ॥ ६ ॥

एव । पित्रे । विश्वऽदेवाय । वृष्णे । यज्ञैः । विधेम । नमसा । हविःऽभिः । बृहस्पते । सुऽप्रजाः । वीरऽवन्तः । वयम् । स्याम । पतयः । रयीणाम् ॥ ६ ॥

पित्रेपालकायविश्वदेवाय सर्वदेवतारूपाय देवानांमन्त्रप्रतिपाद्यत्वादस्यचमन्त्रा‌‌मितानि-त्याद्वैश्वदेवत्वं यद्वा अत्रदेवशब्दःस्तुत्यर्थः सर्वैःस्तुत्यायवृष्णेवर्षकायबृहस्पतयेदेवाय एव मुक्तप्रकारेण यज्ञैस्तत्साधनैर्हविर्भिराज्यचर्वादिलक्षणैर्नमसास्तुत्याचविधेम परिचरेम हेबृहस्पते सुप्रजाः शोभनप्रजाः वीरवन्तोवीर्योपेताश्चवयं रयीणांधनानांपतयःस्याम ॥ ६ ॥

६. हम लोग इस प्रकार से पालक, सर्वदेवता स्वरूप और अभीष्टवर्षी बृहस्पति की यज्ञ-द्वारा, हव्य-द्वारा और स्तुति-द्वारा, परिचर्या करेंगे। हे बृहस्पति, हम लोग जिससे सुपुत्रवान्, वीर्यशाली और धन के स्वामी हो सकें।

सइद्राजाप्रतिजन्यानिविश्वाशुष्मेणतस्थावभिवीर्येण ।
बृहस्पतिंयःसुभृतंबिभर्तिवल्गूयतिवन्दतेपूर्वभाजम् ॥ ७ ॥

सः । इत् । राजा । प्रतिऽजन्यानि । विश्वा । शुष्मेण । तस्थौ ।
अभि । वीर्येण । बृहस्पतिम् । यः । सुऽभृतम् । बिभर्ति । वल्गुऽयति ।
वन्दते । पूर्वऽभाजम् ॥ ७ ॥

इदमाद्यृक्त्रयंपुरोहितप्रशंसेतिब्राह्मणम् अथवासूक्तस्यऋग्द्वयवर्जितस्यबार्हस्पत्यत्वाद्बृहस्पतेरेवस्तुतिः सइत् सएव राजा मूर्धाभिषिक्तोन्योवाराजमानः प्रतिजन्यानि जन्यंयुद्धं प्रतिपक्षानीत्यर्थः प्रत्यर्थिजनपदानिवा तानि विश्वा सर्वाणि शुष्मेणबलेन वीर्येणशारीरसामर्थ्येनवा अभि अभिगम्याक्रम्य तस्थौ तिष्ठति सइत्युक्तंकइत्याह—योबृहस्पतिंबृहतांमहतांमन्त्राणांपालयितारमेवमुक्तलक्षणंपुरोहितंवा सुभृतं सुष्ठुहविःस्तोत्रादिनावाच्छादनादिनावाबिभर्ति भरति वल्गूयति स्तौति वन्दते नमस्करोतिच पूर्वभाजमितरेभ्यःप्रथमसंभक्तारंकृत्वापूजयंकरोतिसएवतस्थाविति ॥ ७ ॥

७. जो बृहस्पति (पुरोहित) को सुन्दर रूप से पोषण करता है एवम् उन्हें प्रथम हव्यग्राही कहकर उनकी स्तुति करता है और नमस्कार करता है, वह राजा अपने वीर्य-द्वारा शत्रुओं के बल को अभिभूत करके अवस्थित करता है।

सइत्क्षेतिसुधितओकसिस्वेतस्माइळापिन्वतेविश्वदानीम् ।
तस्मैविशःस्वयमेवानमन्तेयस्मिन्ब्रह्माराजनिपूर्वएति ॥ ८ ॥

सः । इत् । क्षेति । सुऽधितः । ओकसि । स्वे । तस्मै । इळा ।
पिन्वते । विश्वऽदानीम् । तस्मै । विशः । स्वयम् । एव । नमन्ते ।
यस्मिन् । ब्रह्मा । राजनि । पूर्वः । एति ॥ ८ ॥

सइत्सएवक्षेति निवसति सुधितः सुष्ठुतृप्तःसन् कुत्र स्वेस्वकीयेएव ओकसि सदने सएवसमृद्धोनिर्बाधः सन् सुखेनास्ते तस्मैइळाभूमिर्विश्वदानीं सर्वकालंपिन्वते वर्धतेफलैः तस्मै विशःप्रजाः स्वयमेवनमन्ते प्रणताभवन्ति दण्डनमन्तरेणस्वयमेवदत्तकराभवन्ति यस्मिन्राजनि ब्रह्मापूर्वःप्रथमंपूज्यःसन्नेति गच्छति वर्ततइत्यर्थः ॥ ८ ॥

८. जिस राजा के निकट ब्रह्मा (ब्रह्मणस्पति) प्रथम गमन करते हैं, वह सुतृप्त होकर अपने गृह में निवास करता है। पृथिवी उसके लिए सब काल में फल प्रसव करती है। प्रजागण स्वयम् उसके निकट अवनत रहते हैं।

अप्रतीतोजयतिसंधनानिप्रतिजन्यान्युतयासजन्या ।
अवस्यवेयोवरिवःकृणोतिब्रह्मणेराजातमवन्तिदेवाः ॥ ९ ॥

अप्रतिऽइतः । जयति । सम् । धनानि । प्रतिऽजन्यानि । उत । या ।
सऽजन्या । अवस्यवे । यः । वरिवः । कृणोति । ब्रह्मणे । राजा ।
तम् । अवन्ति । देवाः ॥ ९ ॥

सएवाप्रतीतोन्यैरप्रतिगतःसन्धनानिप्रतिजन्यानिप्रतिस्पर्धिजनसंबन्धीनि । उतापिच सजन्याजनसंबन्धीनिधनानिसंजयति योराजाअवस्यवेरक्षणमिच्छतेब्रह्मणेब्राह्मणायप्रीणनमिच्छते बृहस्पतयेवावरिवोधनंकृणोति करोति ददाति सउक्तप्रकारेणमहान्भवति तमेवदेवाअवन्ति रक्षन्ति ॥ ९ ॥

९. जो राजा रक्षणकुशल और धनरहित ब्राह्मण या बृहस्पति को धन दान करता है, वह अप्रतिहत रूप से शत्रुओं और प्रजाओं का धन जीतता है एवम् महान् होता है। देवगण उसी की रक्षा करते हैं।

इन्द्रश्चसोममितिदशमीतृतीयसवनेब्राह्मणाच्छंसिनःप्रस्थितयाज्या　सूत्रितंच—इन्द्रश्चसोमंपिबतंबृहस्पतआवोवहन्तुसप्तयोरघुष्यदइति ।

अथदशमी—

**इन्द्रश्चसोमंपिबतंबृहस्पतेऽस्मिन्यज्ञेमन्दसानावृषण्वसू ।**
**आवांविशन्त्विन्दवःस्वाभुवोऽस्मेरयिंसर्ववीरंनियच्छतम् ॥ १० ॥**

इन्द्रः । च । सोमम् । पिबतम् । बृहस्पते । अस्मिन् । यज्ञे ।
मन्दसाना । वृषण्वसू इति वृषण्ऽवसू । आ । वाम् । विशन्तु । इन्दवः ।
सुऽआभुवः । अस्मे इति । रयिम् । सर्वऽवीरम् । नि । यच्छतम् ॥ १० ॥

हेबृहस्पते त्वमिन्द्रश्च सोमंपिबतं कीदृशौयुवाम् अस्मिन्यज्ञेमन्दसानाहृष्यन्तौ वृषण्वसू वर्षितृधनौ यजमानेभ्योदीयमानधनावित्यर्थः वां युवां स्वाभुवः सुष्ठु सर्वतोभवन्तःकृत्स्नशरीरव्यापनसमर्थाइत्यर्थः तादृशाइन्दवः सोमाः आविशन्तु युवयोःशरीरंप्रविशन्तु अस्मेअस्मभ्यं रयिंधनंसर्ववीरं सर्वपुत्राद्युपेतंनियच्छतं दत्तम् ॥ १० ॥

१०. हे बृहस्पति, तुम और इन्द्र इस यज्ञ में हृष्ट होकर यजमानों को धन दान करो। सर्वव्यापक सोम तुम दोनों के शरीर में प्रवेश करे। तुम दोनों हम लोगों को पुत्र-पौत्रादियुक्त धन दान करो।

**बृहस्पतइन्द्रवर्धतंनःसचासावांसुमतिर्भूत्वस्मे ।**
**अविष्टंधियोजिगृतंपुरंधीर्जजस्तमर्योवनुषामरातीः ॥ ११ ॥ २७ ॥**

बृह॑स्पते । इन्द्र॑ । वर्ध॑तम् । नः॒ । सचा॑ । सा । वा॒म् । सु॒ऽम॒तिः ।
भू॒तु॒ । अ॒स्मे इति॑ । अ॒वि॒ष्टम् । धियः॑ । जि॒गृ॒तम् । पु॒र॒म्ऽधीः ।
ज॒ज॒स्तम् । अ॒र्यः । व॒नु॒षाम् । अरा॑तीः ॥ ११ ॥ २७ ॥

हेबृहस्पते हेइन्द्र युवां नोस्मान्वर्धतं वर्धयतं प्रवृद्धान्कुरुतं सासुमतिःयुवयोरनुग्रहबु-
द्धिरस्मेअस्मासु सचा सह प्रभवतु धियःकर्माण्यविष्टंरक्षतं पारंनयतं पुरंधीः पुरंशरीरंधी-
यतेस्थाप्यतेयाभिर्भीतिभिस्ताःस्तुतीर्जिगृतं प्रबुध्यतं वनुषांसंभक्तृणामस्माकमर्योगन्तॄनरातीः
शत्रूनित्यर्थः जजस्तं युध्यतं क्षपयतमित्यर्थः छन्दस्यरातिशब्दःस्त्रीलिङ्गः एवंस्तुतिं निगमय्या-
भीष्टंप्रार्थितवान् ॥ ११ ॥

११. हे बृहस्पति और इन्द्र, तुम दोनों हम लोगों को वर्द्धित करो। हम लोगों के प्रति तुम दोनों का अनुग्रह एक समय में ही प्रयुक्त हो। तुम दोनों हम लोगों के यज्ञ की रक्षा करो, हमारी स्तुति से जागरित होओ और स्तोताओं के शत्रुओं के साथ युद्ध करो।

॥ इतितृतीयस्यसप्तमेसप्तविंशोवर्गः ॥ २७ ॥

॥ वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् ॥ पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥
श्रीमत्सायणमाधवार्योदाज्ञतव्यास्तृतीयके ॥ अष्टकेसप्तमाध्यायंव्याकार्षीदतिपेशलम् ॥ २ ॥
॥ इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेणसायणा-
चार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येतृतीयाष्टकेसप्तमोध्यायःसंपूर्णः ॥ ७ ॥

---

## ॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ॥ निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथाष्टमं व्याख्यातुमारभते इदमु त्यदित्येकादशर्चं षष्ठं सूक्तं वामदेवस्यार्षं त्रैष्टुभमुषोदेवताकम् इदमु त्यन्त्वित्यनुक्रान्तम् । प्रातरनुवाके उषस्ये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्रितं च—उषो वाजेनेदमु त्यदिति ।

तत्र प्रथमा—

ॐम् इदमुत्यत्पुरुतमंपुरस्ताज्ज्योतिस्तमसोवयुनावदस्थात् ।
नूनंदिवोदुहितरोविभातीर्गातुंकृणवन्नुषसोजनाय ॥ १ ॥

इदम् । ऊँ इति । त्यत् । पुरुऽतमम् । पुरस्तात् । ज्योतिः । तमसः । वयुनऽवत् । अस्थात् । नूनम् । दिवः । दुहितरः । विऽभातीः । गातुम् । कृणवन् । उषसः । जनाय ॥ १ ॥

इदमु पुरतो दृश्यमानमिदं त्यत्तत् अस्माभिः स्तुत्यं सर्वप्रसिद्धं पुरुतममत्यन्तप्रभूतं ज्योतिस्तमसो वयुनावत् वेतेः कान्तिकर्मण इदं प्रकृष्टकान्तिमत् अथवा वयुनमिति प्रज्ञानाम प्रज्ञोपेतं सर्वस्य प्रज्ञापकमित्यर्थः कीदृक् तेजः पुरस्तात्पूर्वस्यां दिशि तमसोऽन्धकारादस्थात् उदतिष्ठत् एवं सति नूनं सत्यं दिवआदित्यस्य दुहितरो दुहितृस्थानीया विभातीर्विभानं कुर्वतीरुषसो जनाय यजमानानां गातुं गमनं गमनादिव्यापारसामर्थ्यं कृणवन्नकुर्वन् ॥ १ ॥

१. हम लोगों के द्वारा स्तुति, सर्वप्रसिद्ध, अत्यन्त प्रभूत और कान्तिशाली तेज पूर्व दिशा से अन्धकार के मध्य से उत्थित होता है। आदित्य-दुहिता और दीप्तिमती उषा यजमानों के गमन-कार्य में सच-मुच सामर्थ्ययुक्त हों।

अथ द्वितीया—

अस्थुरुचित्राउषसःपुरस्तान्मिताइवस्वरवोध्वरेषु ।
व्यूव्रजस्यतमसोद्वारोच्छन्तीरव्रञ्छुचयःपावकाः ॥ २ ॥

अस्थुः । ऊँ इति । चित्राः । उषसः । पुरस्तात् । मिताःऽइव । स्वरवः । अध्वरेषु । वि । ऊँ इति । व्रजस्य । तमसः । द्वारा । उच्छन्तीः । अव्रन् । शुचयः । पावकाः ॥ २ ॥

चित्राश्चायनीयाउषसःपुरस्तात्पूर्वस्यांदिश्यस्थुः तिष्ठन्ति व्याप्ताइत्यर्थः तत्रदृष्टान्तः—अध्वरेषुमिताःकृताःस्वरवोयूपाइव तेयथावेद्याःपुरतोभासन्तेतद्वत् यद्यपिस्वरुशब्दोयूपच्छेदपतितप्रथमशकलवाची यःप्रथमःशकलःपरापतेत् सस्वरुःकार्यइत्युक्तत्वात्तथाप्यत्रमितशब्दश्रवणाद्वेद्यावन्तःस्वरवइत्यादौतथादर्शनाच्चात्रयूपवचनः ताःअन्धस्यबाधकस्यतमसोद्वारा द्वाराणि व्यूर्ण्वतीः शुचयोदीप्ताःपावकाः शोधिकाअभवन् व्यवृण्वन् ॥ २ ॥

२. यज्ञ-स्थल के यूपकाष्ठ की तरह शोभमाना होकर विचित्रा उषा पूर्व दिशा को व्याप्त कर अवस्थिति करती हैं। वे बाधाजनक अन्धकार के द्वार का उद्घाटन करके एवम् दीप्त और पवित्र हो करके प्रकाशित होती हैं।

उच्छन्तीरुद्यचितयन्तभोजान्राधोदेयायोषसोमघोनीः ।
अचित्रेअन्तःपणयःससन्त्वबुध्यमानास्तमसोविमध्ये ॥ ३ ॥

उच्छन्तीः । अद्य । चितयन्त । भोजान् । राधःऽदेयाय ।
उषसः । मघोनीः । अचित्रे । अन्तरिति । पणयः । ससन्तु ।
अबुध्यमानाः । तमसः । विऽमध्ये ॥ ३ ॥

अद्यास्मिन्दिने उच्छन्तीस्तमोविवासयन्त्योमघोनीर्धनवत्यउषसोभोजान्भोजयितॄन्यजमानान्तेभ्योराधोदेयाय सोमादिधनदानाय चितयन्त प्रज्ञापयन्ति अचित्रे अचायनीये तमसोविमध्ये अत्यन्तगाढान्धकारेइत्यर्थः अन्तःतत्रपणयोवणिजइवादातारःअबुध्यमानाः ससन्तु स्वपन्तु ॥ ३ ॥

३. आज तमोनिवारिका और धनवती उषा भोज्यदाता यजमान को सोमादि धन प्रदान करने के लिए उत्साहित करती हैं। अत्यन्त गाढ़ अंधकार के मध्य में बनियों की तरह अदातृगण अप्रबुद्धभाव से निद्रित हों।

कुविस्सदेवीःसनयोनवोवायामोबभूयादुषसोवोअद्य ।
येनानवग्वेअङ्गिरेदशग्वेसप्तास्येरेवतीरेवदूष ॥ ४ ॥

कुवित् । सः । देवीः । सनयः । नवः । वा । यामः । बभूयात् ।
उषसः । वः । अद्य । येन । नवऽग्वे । अङ्गिरे । दशऽग्वे ।
सप्तऽआस्ये । रेवतीः । रेवत् । ऊष ॥ ४ ॥

---

१ ऋ० सं० १. १. ४.।

हेदेवीर्द्योतमानाउषसः वोयुष्माकंसरथः पुराणोनवोवायामोगमनसाधनः सरथः अद्यास्मिन्यागदिने कुविद्बहुवारंभूयात् भवेद्गच्छेदित्यर्थः येनरथेन हेरेवतीर्धनवत्योयूयंनवग्वेद-शग्वे सप्तास्ये सप्तच्छन्दोयुक्तमुखे अङ्गिरस्यङ्गिरोगणे यद्वैतेत्रयोप्यङ्गिरसः तेषांगणेतथाप्यत्र नवग्वोनुवग्वोअङ्गिरसोनइति । रेवद्धनवद्यथाभवतितथाउषा विभातंव्यभातंउषसः वसेर्व्युच्छनक-र्मणोलिट्येमध्यमबहुवचनस्येदंरूपम् ॥ ४ ॥

४. हे द्योतमान उषाओ, जिस रथ-द्वारा तुम लोगों ने सप्तछन्दो-युक्त मुखवाले नवग्व और दशग्व अङ्गिराओं को धनशाली रूप से प्रदीप्त किया था, हे धनवती उषाओ, तुम लोगों का वही पुरातन अथवा नूतन रथ आज इस यज्ञ-गृह में बहु बार आगमन करे।

**यूयंहिदेवीर्ऋतयुग्भिरश्वैःपरिप्रयाथभुवनानिसद्यः ।**
**प्रबोधयन्तीरुषसःससन्तंद्विपाच्चतुष्पाच्चरथायजीवम् ॥५॥१॥**

यूयम् । हि । देवीः । ऋतयुक्ऽभिः । अश्वैः । परिऽप्रयाथ । भुवनानि । सद्यः । प्रऽबोधयन्तीः । उषसः । ससन्तम् । द्विऽपात् । चतुःऽपात् । चरथाय । जीवम् ॥ ५ ॥ १ ॥

हेदेवीर्द्योतमानाउषसोयूयंहिखलु । ऋतयुग्भिर्यज्ञगामिभिरश्वैःभुवनानिसद्यःपरिप्रयाथ परितःप्रकृष्टंगच्छथ किंकुर्वत्यः ससन्तंस्वपन्तं द्विपाच्चतुष्पान्मनुष्यगवादिलक्षणंजीवंचरथायचरणाय गमनादिव्यवहाराय प्रबोधयन्तीः प्रबोधयन्त्यःसत्यः परिप्रयाथ ॥ ५ ॥

५. हे द्युतिमती उषाओ, तुम लोग निद्रित द्विपदों और चतुष्पदों को अर्थात् मनुष्यों और गौओं आदि को अपने-अपने गमन आदि कार्यों में प्रबोधित करके यज्ञ में गमनकारी अश्वों के द्वारा भवनों का क्षण-मात्र में परिभ्रमण करो।

अथषष्ठी—

**क्वस्विदासांकतमापुराणीययाविधानाविदधुर्ऋभूणाम् ।**
**शुभंयच्छुभ्राउषसश्चरन्तिनविज्ञायन्तेसदृशीरजुर्याः ॥ ६ ॥**

क्व । स्वित् । आसाम् । कतमा । पुराणी । यया । विऽधाना । विऽदधुः । ऋभूणाम् । शुभम् । यत् । शुभ्राः । उषसः । चरन्ति । न । वि । ज्ञायन्ते । सऽदृशीः । अजुर्याः ॥ ६ ॥

१ ऋ० सं० ८, १, ८ ११

आसामुषसांमध्ये कस्विदभूत्कतमापुराणीपुरातनी यस्या ऋभूणांसंबन्धीनिविधाना चमसादिनिर्माणानि विदधुरकुर्वन्नृभवः यत् यासूषसः शुभ्रादीप्ताः शुभंचरन्ति शोभांदीप्तिं कुर्वन्ति तास्वजुर्योअक्षीर्णानित्यनूतनानविज्ञायन्ते यतःसध्रीःसदृश्यः सर्वेष्वपिदिवसेषुएकरूपाः अतोयतन्यपताःपताःपुराण्यइतिनज्ञायन्ते उषसांसादृश्यं सदेशांस्थसध्रीरित्युक्तस्यप्रतिपादितम् ॥ ६ ॥

६. जिन उषा के लिए ऋभुओं ने चमस आदि का निर्माण किया था, वे पुरातन उषा कहाँ हैं? दीप्त, नित्य नूतन, समान रूपविशिष्ट उषायें जब दीप्ति प्रकाश करती हैं तब वे विज्ञात नहीं होती हैं अर्थात् वे सब दिनों में एक रूप-सदृश रहती हैं, इसलिए ये पुरातन और ये नूतन उषा हैं, इस तरह से वे पहचानी नहीं जा सकती हैं।

ताघाताभद्राउषसःपुरासुरभिष्टिद्युम्नाऋतजातसत्याः ।
यास्वीजानःशशमानउक्थैःस्तुवञ्छंसन्द्रविणंसद्यआप ॥७॥

ताः । घ । ताः । भद्राः । उषसः । पुरा । आसुः । अभिष्टिऽद्युम्नाः ।
ऋतजातऽसत्याः । यासु । ईजानः । शशमानः । उक्थैः । स्तुवन् ।
शंसन् । द्रविणम् । सद्यः । आप ॥ ७ ॥

ताघ घेतिप्रसिद्धौ ताःखलु उपकारिण्यः ताभद्राः कल्याण्यः स्तुत्यावा उषसःपुरापूर्वमासुरभवन् अभिष्टिद्युम्नाः अभिगमनमात्रेणद्युम्नंधनंयासांताः ऋतजातसत्याः ऋतार्थयज्ञार्थजाताऋताः सत्याः सत्यफलाश्चताद्दृश्यः यासूषःसु ईजानोयागंकुर्वाणः उक्थैः शस्त्रैः शशमानः शंसमानः स्तुवन्सामभिःस्तोत्रंनिष्पादयन् शंसन्शस्त्राण्यभिकुर्वन् द्रविणंधनं सद्यःआप प्राप्नोति ताभद्राइतिसंबन्धः ॥ ७ ॥

७. यज्ञकर्त्तागण जिन उषाओं का उक्थों-द्वारा स्तुति करके एवम् स्तोत्रों और शस्त्रों-द्वारा उच्चारण करके शीघ्र धन-लाभ करते हैं, वे ही कल्याणकारिणी उषायें पुरातन काल से ही अभिगमन करके धन दान करें। वे यज्ञ के लिए उत्पन्न हुई हैं और सत्य फल प्रदान करती हैं।

ताआचरन्तिसमनापुरस्तात्समानतःसमनापप्रथानाः ।
ऋतस्यदेवीःसदसोबुधानागवांनसर्गाउषसोजरन्ते ॥ ८ ॥

ताः । आ । चरन्ति । समना । पुरस्तात् । समानतः । समना ।
पप्रथानाः । ऋतस्य । देवीः । सदसः । बुधानाः । गवाम् ।
न । सर्गाः । उषसः । जरन्ते ॥ ८ ॥

---

१ ऋ० मं० १. १. ५ ।

ता उषसः आ सर्वतश्चरन्ति समना समेताः पुरस्तात्पूर्वस्यां दिशि समानतः समानाद्देशादेकस्मादन्तरिक्षात्समना सर्वतः पप्रथानाः प्रथमाना ऋतस्य यज्ञस्य सदसः सदः तत्रस्थमृत्विग्यजमानादिकमित्यर्थः बुधाना बोधयन्त्यः अन्तर्णीतण्यर्थोऽयम् एवं महानुभावा उषसः स्तूयन्ते गवांसर्गा न उदकानां सृष्टय इव गवां सर्गा नरश्मय इति हि श्रुतिः । तासामपि सर्वत्र प्रसरणादुपमा-एकत्वान्वस्तूयन्तेतद्वत् ॥ ८ ॥

८. एकरूप-विशिष्ट और समान विख्यात उषायें पूर्व दिशा में एक-मात्र अन्तरिक्ष देश से सर्वत्र विचरण करती हैं। द्युतिमती उषायें यज्ञ-गृह को प्रबोधित करके जलसृष्टिकारिणी रश्मियों की तरह स्तुत होती हैं।

**ता इन्न्वे३व समना समानीरमीतवर्णा उषसश्चरन्ति ।**
**गूहन्तीरभ्वमसितं रुशद्भिः शुक्रास्तनूभिः शुचयो रुचानाः ॥९॥**

ताः । इत् । नु । एव । समना । समानीः । अमीतऽवर्णाः ।
उषसः । चरन्ति । गूहन्तीः । अभ्वम् । असितम् । रुशत्ऽभिः ।
शुक्राः । तनूभिः । शुचयः । रुचानाः ॥ ९ ॥

ता एवोषसः इदिति पूरणः नु अद्य समना समानाः एकधेत्यर्थः समानीरेकरूपाः अमीतवर्णाः अहिंसितवर्णा अपरिमितवर्णा वा उषसश्चरन्ति सर्वतः किं कुर्वत्यः अभ्वं महन्नामैतत् अतिमहदसितं कृष्णरूपं गूहन्तीः गोपयन्त्यः रुशद्भिः रोचमानैः तनूभिः स्वशरीरैः शुक्रा दीप्ताः शुचयः शुद्धाः रुचानाः रोचमानाः रोचयन्त्यो वा ॥ ९ ॥

९. उषायें समान, एकरूपविशिष्ट, अपरिमित वर्णयुक्त, दीप्त, शुद्ध और कान्तिपूर्ण शरीर-द्वारा दीप्तियुक्त हैं। ये अत्यन्त महान् अन्ध-कार का गोपन करके विचरण करती हैं।

अयदश्मी—

**रयिं दिवो दुहितरो विभातीः प्रजावन्तं यच्छतास्मासु देवीः ।**
**स्योनादा वः प्रतिबुध्यमानाः सुवीर्यस्य पतयः स्याम ॥ १० ॥**

रयिम् । दिवः । दुहितरः । विऽभातीः । प्रजाऽवन्तम् । यच्छत ।
अस्मासु । देवीः । स्योनात् । आ । वः । प्रतिऽबुध्यमानाः ।
सुऽवीर्यस्य । पतयः । स्याम ॥ १० ॥

---

१ ऋ० सं० १. ८. २.

हेदिवोदुहितरः द्योतमानस्यादित्यस्यदुहितृस्थानीयाः विभातीः विभात्यः विशेषेण भानंकुर्वत्यः अस्मासु प्रजावन्तंरयिंपुत्राद्युपेतंधनंयच्छत यूयं हेदेवीर्देव्यः स्योनात्सुखात् निमित्तभूताद्वोयुष्मान्प्रतिबुध्यमानाः प्रतिबोधयन्तोवयं सुवीर्यस्यपतयःस्याम पुत्रादिसहित-स्यधनस्यपालकाभवेम आपूरणः ॥ १० ॥

१०. हे द्योतमान आदित्य की दुहिताओ, तुम हम लोगों को पुत्र-पौत्रादि से युक्त धन दान करो। हे देवियो, हम लोग सुख लाभ के लिए तुम लोगों को प्रतिबोधित करते हैं, जिससे हम लोग पुत्र-पौत्रादि से युक्त धन के पति हो सकें।

**तद्वोदिवोदुहितरोविभातीरुपब्रुवउषसोयज्ञकेतुः ।**
**वयंस्यामयशसोजनेषुतद्द्यौश्चधत्तांपृथिवीचदेवी ॥ ११ ॥ २ ॥**

तत् । वः । दिवः । दुहितरः । विऽभातीः । उप । ब्रुवे । उषसः ।
यज्ञऽकेतुः । वयम् । स्याम । यशसः । जनेषु । तत् । द्यौः ।
च । धत्ताम् । पृथिवी । च । देवी ॥ ११ ॥ २ ॥

हेदिवोदुहितरः हेउषसः विभातीः विविधंभासमानाः वोयुष्मान् तद्वक्ष्यमाणमभ्यर्थनेन वक्ष्यमाणफलं यज्ञकेतुः यज्ञस्यकेतुःप्रज्ञापकोयस्यताद्वशोऽहमुपब्रुवे उपेत्यब्रवीमि अथ यदुक्तंतदुच्यते वयं स्तुवन्तोजनेषु अस्मत्समानेषुमध्येयशसःकीर्तेरन्नस्यवास्वामिनःस्याम तद्यशः द्यौः पृथिवीचदेवी धत्तां धारयताम् तद्वोदिवइतिसुखार्थामभ्येत् ॥ ११ ॥

११. हे द्योतमान आदित्य की दुहिताओ, हम लोग यज्ञ के प्रज्ञापक हैं। तुम्हारे निकट हम लोग प्रार्थना करते हैं, जिससे लोगों के मध्य में हम लोग कीर्त्ति और अन्न के स्वामी हो सकें। द्युलोक और द्युतिमती पृथिवी वह यश धारण करें।

॥ इतितृतीयस्याष्टमेद्वितीयोवर्गः ॥ २ ॥

प्रतिष्येतितृचंसप्तमंसूक्तं गायत्रमुषोदेवताकं प्रतिष्यासप्तगायत्रमित्यनुक्रान्तत्वात् प्रातरनु-वाकेउषस्येक्रतौगायत्रेछन्दस्याश्विनशस्त्रेचेदंशस्यम् अथोषस्यःप्रतिष्यासूनरीतितिसृणाम् ।

**प्रतिष्यासूनरीजनीव्युच्छन्तीपरिस्वसुः । दिवोअदर्शिदुहिता ॥ १ ॥**

प्रति । स्या । सूनरी । जनी । विऽउच्छन्ती । परि । स्वसुः ।
दिवः । अदर्शि । दुहिता ॥ १ ॥

स्या सा प्रस्तूयमाना सूनरी सुष्ठुप्राणिनांनेत्री जनी जनयित्री फलानां स्वसुः स्वस्थानीयाया रात्रेःपरि उपरिभागे रात्रिपर्यवसानकाले व्युच्छन्ती तमोविवासयन्ती स्वभासा सर्वेषां प्राणिनामनुग्रहाय दिवोद्योतमानस्यादित्यस्यदुहितोषाः प्रत्यदर्शि प्रतिदृश्यतेसर्वैः ॥ १ ॥

१. वह आदित्य-दुहिता उषा दृष्ट होती है। वह स्तुत है और प्राणियों की नेत्री है एवम् सुन्दर फलों की उत्पादयित्री है। वह भगिनी-स्वरूपा रात्रि के पर्यवसानकाल में अन्धकार का विनाश करती है।

अश्वेवचित्रारुषीमातागवामृतावरी। सखाभूदश्विनोरुषाः ॥ २ ॥

अश्वाऽइव। चित्रा। अरुषी। माता। गवाम्। ऋतऽवरी। सखा। अभूत्। अश्विनोः। उषाः ॥ २ ॥

अश्वेवचित्रा चायनीया अरुषी आरोचमाना गवांरश्मीनांमाता निर्मात्री ऋता-वरीयज्ञवत्युषाः अश्विनोः सखा समानख्याना सहस्तूयमानाभूत् भवति अश्विनोरुषसा सहस्तूयमानत्वात्सखित्वंपरस्परम् ॥ २ ॥

२. अश्व की तरह मनोहरा, दीप्तिमती, रश्मियों की माता और यज्ञवती उषा अश्विद्वय के साथ स्तूयमाना हो अर्थात् अश्विद्वय से बन्धुत्व करे।

उतसखास्यश्विनोरुतमातागवामसि। उतोषोवस्वईशिषे ॥ ३ ॥

उत। सखा। असि। अश्विनोः। उत। माता। गवाम्। असि। उत। उषः। वस्वः। ईशिषे ॥ ३ ॥

उतापिचाश्विनोः सखा सख्यसि उतापिच गवांरश्मीनांमातामसि उतापिच हेउषः वस्वोधनस्येशिषे ईश्वरीभवसि ॥ ३ ॥

३. तुम अश्विद्वय की बन्धु और रश्मियों की माता हो। हे उषा, तुम धन की ईश्वरी हो।

अथचतुर्थी—

यावयद्द्वेषसन्त्वाचिकित्वित्सूनृतावरि। प्रतिस्तोमैरभुत्स्महि ॥ ४ ॥

यवयत्ऽद्वेषसम्। त्वा। चिकित्वित्। सूनृताऽवरि। प्रति। स्तोमैः। अभुत्स्महि ॥ ४ ॥

---

१ ऋ० सं० २. १. ८.।

यवयद्द्वेषसं यवयन्तो वियुज्यमाना द्वेषांसि द्वेष्टारो यस्यास्तादृशीं पृथक्क्रियन्ते द्वेषांस्यने येति वा राक्षोहननायोद्युक्ता द्वेषिण उषःकाले हि पलायन्ते तादृशीं चिकित्वित् ज्ञापयन्तीं त्वा त्वां सूनृतावरि सूनृतेति वाङ्नाम तद्वति देवि स्तोमैः स्तुतिभिः प्रत्यबुत्स्महि प्रतिबोधयामः स्तुम इत्यर्थः ॥ ४ ॥

४. हे सुनृता (सत्यवचन) उषा, तुम शत्रुओं को पृथक् कर दो, तुम संज्ञा दान करो। हम स्तुतियों-द्वारा तुम्हें प्रबोधित करते हैं।

**प्रतिभद्राअदृक्षतगवांसर्गानरश्मयः। ओषाअप्राउरुज्रयः ॥५॥**

प्रति। भद्राः। अदृक्षत। गवाम्। सर्गाः। न। रश्मयः। आ।
उषाः। अप्राः। उरु। ज्रयः ॥ ५ ॥

भद्राः स्तुत्या रश्मयः प्रत्यदृक्षत प्रतिदृश्यन्ते गवामुदकानां सर्गा न धारा इव उषा उरु महज्ज्रयो महत्तेजः आप्राः आपूरयत् ॥ ५ ॥

५. स्तुतियोग्य रश्मियाँ दृष्ट होती हैं। उषा ने जगत् को वर्षा की धारा की तरह महान् तेज से परिपूर्ण किया है।

**आपप्रुषीविभावरिव्यावर्ज्योतिषातमः। उषोअनुस्वधामव ॥ ६ ॥**

आऽपप्रुषी। विभाऽवरि। वि। आवः। ज्योतिषा। तमः। उषः।
अनु। स्वधाम्। अव ॥ ६ ॥

हे विभावरि विभावत्युषः त्वमापप्रुषी आपूरयन्ती तेजसा जगज्ज्योतिषा तेजसा तमोऽन्धकारं व्यावः व्यावृणोः किंच स्वधां हविर्लक्षणमन्नम् अनुक्रमेणाव रक्ष ॥ ६ ॥

६. हे कान्तिमती उषा, तुम जगत् को तेज-द्वारा परिपूर्ण करो, तेज-द्वारा अन्धकार को दूर करो उसके अनन्तर नियमानुसार हवि-र्लक्षण अन्न की रक्षा करो।

आ द्यां तनोषीत्येषा देवानां हविष्मृणोनुवाक्या । सूत्रितं—आ द्यां तनोषि रश्मिभिरावहन्ती पोष्या वार्याणीति ।

**आद्यांतनोषिरश्मिभिरान्तरिक्षमुरुप्रियम्।**
**उषःशुक्रेणशोचिषा ॥ ७ ॥ २ ॥**

आ। द्याम्। तनोषि। रश्मिऽभिः। आ। अन्तरिक्षम्। उरु। प्रियम्।
उषः। शुक्रेण। शोचिषा ॥ ७ ॥ २ ॥

हे उषः रश्मिभिर्द्यां दिवमातनोषि उरु विस्तीर्णं प्रियमन्तरिक्षं रश्मिभिरातनोषि शुक्रेण दीप्तेन शोचिषा प्रकाशेन युक्ता सत्येवं करोषि ॥ ७ ॥

७. हे उषा, तुम दीप्त तेजोयुक्त होकर रश्मि-द्वारा द्युलोक को एवम् विस्तीर्ण और प्रिय अन्तरिक्ष को व्याप्त करो।

तद्देवस्येतिषळृचंपञ्चमंसूक्तं वामदेवस्यार्षं जागतं सावित्रं तथाचानुक्रम्यते तद्देवस्यसा-वित्रंतुजागतमिति । आग्निमारुतिकेतृतीयेऽहनिवैश्वदेवशस्त्रेसावित्रनिविद्धानं तथाचसूत्रितं—त-द्देवस्यघृतेनद्यावापृथिवीइतितिस्रइति ।

तद्देवस्यसवितुर्वार्यंमहद्वृणीमहेअसुरस्यप्रचेतसः ।
छर्दिर्येनदाशुषेयच्छतित्मनातन्नोमहाँउदयान्देवोअक्तुभिः ॥१॥

तत् । देवस्य । सवितुः । वार्यम् । महत् । वृणीमहे । असुरस्य ।
प्रऽचेतसः । छर्दिः । येन । दाशुषे । यच्छति । त्मना । तत् । नः ।
महान् । उत् । अयान् । देवः । अक्तुऽभिः ॥ १ ॥

सवितुः प्रेरकस्यदेवस्यवार्यंवरणीयंमहत्पूज्यंतद्धनंवृणीमहे प्रार्थयामः असुरस्य असु-र्बलं तद्वतःप्रचेतसःप्रकृष्टमतेः देवस्येतिसंबन्धः येनधनेनयुक्तःसन् छर्दिः गृहनामैतत् गृहोपलक्षितंधनम्यत् दाशुषे हविर्दत्तवते यजमानाय त्मनाआत्मनैवयच्छति तच्छर्दिः महान्देवः सविता अक्तुभीरात्रिभिः एतदह्नामप्युपलक्षणं सर्वैर्दिवसैः सर्वेषुदिवसेषुनोऽस्माक-मुदयान् उपगच्छतु करोत्वित्यर्थः यद्वा छर्दिरितितेजोनाम तत्तेजःउपगच्छत्विति ॥ १ ॥

१. हम लोग असुर (बलवान्) और बुद्धिमान् प्रेरक सविता देव के उस वरणीय एवम् पूज्य धन की प्रार्थना करते हैं, जिसे वे यज-मान हव्यदाता को स्वेच्छापूर्वक देते हैं। महान् सविता हम लोगों को वह धन सब दिनों में दें।

दिवोधर्ताभुवनस्यप्रजापतिःपिशङ्गंद्रापिंप्रतिमुञ्चतेकविः ।
विचक्षणःप्रथयन्नापृणन्नुर्वजीजनत्सवितासुम्नमुक्थ्यम् ॥ २ ॥

दिवः । धर्ता । भुवनस्य । प्रजाऽपतिः । पिशङ्गम् । द्रापिम् । प्रति ।
मुञ्चते । कविः । विऽचक्षणः । प्रथयन् । आऽपृणन् । उरु ।
अजीजनत् । सविता । सुम्नम् । उक्थ्यम् ॥ २ ॥

दिवोद्युलोकस्यधर्ता धारकः नकेवलंदिवएव अपितु भुवनस्यकृत्स्नस्यापिलोकस्य धर्ता प्रजापतिः प्रजानांप्रकाशवृष्ट्यादिनापालयिता कविः प्राज्ञोदेवः पिशङ्गं द्रापिं हिर-ण्मयंकवचं प्रतिमुञ्चते आच्छादयति प्रमुञ्चते विचक्षणः विविधंद्रष्टा सएवदेवःप्रथयन् प्रख्यापयन्तेजःआपृणन्आपूरयन्परितः उरु . प्रभूतंसुम्नंसुखमुक्थ्यंस्तुत्यमजीजनदुत्पादयति ॥ २ ॥

२. द्युलोक एवम् समस्त लोक के धारक, प्रजाओं को प्रकाश, वृष्टि, आदि के द्वारा पालन करनेवाले कवि सविता देव हिरण्मय कवच परिधान करते हैं। विचक्षण सविता प्रख्यात होकर भी जगत् को तेज-द्वारा परिपूर्ण करते हैं और स्तुतियोग्य प्रभूत सुख उत्पादन करते हैं।

आप्रारजांसिदिव्यानिपार्थिवाश्लोकंदेवःकृणुतेस्वायधर्मणे।
प्रबाहूअस्राक्सवितासवीमनिनिवेशयन्प्रसुवन्नक्तुभिर्जगत्॥३॥

आ। अप्राः। रजांसि। दिव्यानि। पार्थिवा। श्लोकम्। देवः।
कृणुते। स्वाय। धर्मणे। प्र। बाहू इति। अस्राक्। सविता।
सवीमनि। निऽवेशयन्। प्रऽसुवन्। अक्तुऽभिः। जगत्॥ ३॥

अयंदेवः सविता दिव्यानि द्युसंबन्धीनिपार्थिवा पृथिवीसंबन्धीमिरजांसि लोकान् तिस्रःखलु द्यावःपृथिव्यश्च तिस्रोभूमीर्धारयंत्रीरुतद्यूनितिहिश्रुतम्। आप्राः आपूरयति स्वाभिर्भाभिर्देवः स्वायधर्मणेस्वकीयायधारणाय श्लोकं प्रशस्तिकृणुते करोति सविता सवीमनिप्रसवेअनुज्ञायांनिमित्तायां बाहूस्वीयौप्रास्राक्प्रसृजति प्रसारयतीत्यर्थः किंकुर्वन्नक्तुभिःकान्तिभिर्जगन्निवेशयन्स्वस्वकार्येस्थापयन्प्रसुवन्प्रेरयन् अथवा अक्तुभिरितिरात्रिनाम तदुपलक्षितैःसर्वेष्वपिदिनेष्वेवंकरोतीत्यर्थः॥ ३॥

३. सवितादेव तेज-द्वारा द्युलोक और पृथिवीलोक को परिपूर्ण करते हैं एवम् अपने कार्य की प्रशंसा करते हैं। वे प्रतिदिन जगत् को अपने-अपने कार्य में स्थापन करते हैं और प्रेरण करते हैं। वे सृजनकार्य के लिए बाहु को प्रसारित करते हैं।

अदाभ्योभुवनानिप्रचाकशद्व्रतानिदेवःसवितामिरक्षते।
प्रास्राग्बाहूभुवनस्यप्रजाभ्योधृतव्रतोमहोअज्मस्यराजति॥४॥

अदाभ्यः। भुवनानि। प्रऽचाकशत्। व्रतानि। देवः। सविता।
अभि। रक्षते। प्र। अस्राक्। बाहू इति। भुवनस्य। प्रऽजाभ्यः।
धृतऽव्रतः। महः। अज्मस्य। राजति॥ ४॥

सवितादेवः अदाभ्योन्यैरहिंसितःसन्भुवनानि प्रचाकशत्दीपयन् व्रतानि कर्माणि प्राणिनामभिरक्षते भुवनस्यलोकस्यप्रजाभ्यस्तदर्थाभ्योबाहूस्वीयौप्रास्राक्प्रसारयति स्वस्वकर्मणेनुमानातीत्यर्थः सर्वव्यापाराणांसूर्याधीनत्वात् सवितावैप्रसवानामीशेइतिहिश्रुतिः। धृतव्रतोधृतकर्मासतथाकुर्वन्महोमहतः अज्मस्य जगतोराजति ईश्वरोभवति॥ ४॥

४. सवितादेव अहिंसित होकर भुवनों को प्रदीप्त करते हैं और व्रतों की रक्षा करते हैं। वे भुवनस्थ प्रजाओं के लिए बाहु प्रसारण करते हैं। धृतव्रत सवितादेव महान् जगत् के ईश्वर हैं।

त्रिर॒न्तरि॑क्षंसवि॒तामहित्व॒नात्रीरजां॑सिपरि॒भूस्त्रीणि॑रोच॒ना ।
ति॒स्रोदिवः॑पृथि॒वीस्ति॒स्रइन्व॑तित्रि॒भिर्व्र॒तैर॒भिनो॑रक्षतित्मना॑॥५॥

त्रिः । अ॒न्तरि॑क्षम् । स॒वि॒ता । म॒हि॒ऽत्व॒ना । त्री । रजां॑सि । प॒रि॒ऽभूः । त्रीणि॑ । रो॒च॒ना । ति॒स्रः । दिवः॑ । पृ॒थि॒वीः । ति॒स्रः । इ॒न्व॒ति॒ । त्रि॒ऽभिः । व्र॒तैः । अ॒भि । नः॒ । र॒क्ष॒ति॒ । त्मना॑ ॥ ५ ॥

अयंसविता त्रिः त्रिभेदमन्तरिक्षम् अन्तराक्षान्तंभवति इत्यन्तरिक्षं परिभूः परिभवितासन् महित्वना महत्त्वेनइन्वतिव्याप्नोति वायुविद्युद्वरुणाख्यास्त्रयोलोकाअन्तरिक्षभेदाः सवायुर्लोकंसवरुणलोकमित्यादिश्रुतेः । त्रीरजांसि रञ्जनात्मकानि त्रीणिक्षित्यन्तरिक्षद्युलक्षणान्त्रीन्लोकानिन्वति पूर्वमन्तरिक्षस्यैवावान्तरभेदउक्तः इहतु सामान्याकारेणेतिनपुनरुक्तिः त्रीणिरोचनारोचनानिरोचमानानग्निवाय्वादित्याख्यानिन्वति पूर्वमन्तरिक्षस्यावान्तरभेदउक्तः अथ द्यावापृथिव्योरवान्तरभेदउच्यते—तिस्रोदिवः इन्द्रप्रजापतिसत्याख्यांस्त्रीन्लोकानिन्वति तथा तिस्रःपृथिवीरिन्वति क्षित्यवान्तरभेदान्लोकानिन्वति एवंसर्वंव्याप्तोदेवः त्रिभिर्व्रतैःकर्मभिरुष्णवर्षहिमाख्यैर्नोस्मान् त्मना आत्मनैव स्वीयानुग्रहबुद्ध्याभिरक्षति अभिरक्षतु परिपालयतु ॥ ५ ॥

५. सवितादेव महिमा-द्वारा परिभव करते हुए अन्तरिक्षत्रय (वायु, विद्युत् और वरुण नामक लोकत्रय अन्तरिक्ष के भेद हैं) को व्याप्त करते हैं। वे लोकत्रय को व्याप्त करते हैं। वे दीप्तिमान् अग्नि, वायु और आदित्य को व्याप्त करते हैं। वे तीन द्युलोक (इन्द्र, प्रजापति और सत्य नामक लोकत्रय) को व्याप्त करते हैं। वे तीन पृथिवियों को व्याप्त करते हैं। वे तीन व्रतों-(ग्रीष्म, वर्षा और हिम) द्वारा हम लोगों का अनुग्रहपूर्वक पालन करें।

बृ॒हत्सु॑म्नःप्रसवि॒तानि॒वेश॑नो॒जग॑तःस्था॒तुरु॒भय॑स्य॒योव॒शी ।
सनो॑दे॒वःस॑वि॒ताशर्म॑यच्छत्व॒स्मेक्षया॑यत्रि॒वरू॑थ॒मंह॑सः ॥ ६ ॥

बृ॒हत्ऽसु॑म्नः । प्र॒ऽस॒वि॒ता । नि॒ऽवेश॑नः । जग॑तः । स्था॒तुः । उ॒भय॑स्य । यः । व॒शी । सः । नः॒ । दे॒वः । स॒वि॒ता । शर्म॑ । य॒च्छ॒तु॒ । अ॒स्मे इति॑ । क्षया॑य । त्रि॒ऽवरू॑थम् । अंह॑सः ॥ ६ ॥

योबृहत्सुम्नः प्रभूतधनः प्रभूतसुखोवा प्रसविताप्रकर्षेणानुज्ञाताकर्मणां निवेशनः सर्वेषांस्थापयिता जगतोजङ्गमस्य स्थातुःस्थावरस्योभयस्य योवशी सम्हान्सवितादेवोस्मभ्यंशर्मसुखंयच्छतुददातु कीदृशं शर्म त्रिवरूथं त्रीणिवरूथानिगृहाणिस्थानानि क्षित्यादीनियस्यतत्क्षयायअस्मे अस्माकमंहसःपापस्यक्षयायअपगत्यैतिरोधाय ॥ ६ ॥

६. जिनके पास प्रभूत धन है, जो कर्मों का प्रसव करते हैं, जो सबके लिए यन्तव्य हैं एवम् जो स्थावर और जंगम दोनों को वश में रखते हैं, वे सवितादेव हम लोगों के पापक्षय के लिए हम लोगों को लोकत्रयस्थित सुख दान करें।

राजसूये आगन्देवइत्येषानुवचनीया सूत्रितंच—आगन्देवऋतुभिर्वर्धतुक्षयमित्यर्धर्चेमा-रमेदिति ।

**आगन्देवऋतुभिर्वर्धतुक्षयंदधातुनःसवितासुप्रजामिषम् ।**
**सनःक्षपाभिरहभिश्चजिन्वतुप्रजावन्तंरयिमस्मेसमिन्वतु ॥७॥४॥**

आ । अगन् । देवः । ऋतुऽभिः । वर्धतु । क्षयम् । दधातु । नः । सविता । सुऽप्रजाम् । इषम् । सः । नः । क्षपाभिः । अहऽभिः । च । जिन्वतु । प्रजाऽवन्तम् । रयिम् । अस्मे इति । सम् । इन्वतु ॥७॥४॥

देवः सविता ऋतुभिःसह आगन्आगच्छतु गमेर्लेङिरूपं किंच क्षयं गृहं वर्धतु वर्धयतु नोस्माकंसुप्रजांशोभनपुत्राद्युपेतमिषमन्नंदधातु ददातु सएवनोस्मान्क्षपाभीरात्रिभिः अहभिश्च सर्वेष्वपिदिनेष्वित्यर्थः जिन्वतु प्रीणयतु धनान्यस्मेअस्मासु प्रजावन्तंरयिंसमिन्वतु व्याप्नोतु प्रापयत्वित्यर्थः ॥ ७ ॥

७. सवितादेव ऋतुओं के साथ आगमन करें। हम लोगों के गृह को वर्द्धित करें। हम लोगों को पुत्र-पौत्रादि युक्त अन्न दान करें। वे दिन और रात्रि दोनों में हम लोगों के प्रति प्रीत हों। वे हम लोगों को अपत्ययुक्त धन दान करें।

अभूद्देवइतिषळृचंनवमंसूक्तं वामदेवस्यार्षसावित्रम् अन्त्यात्रिष्टुप् शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः तथाचानुक्रमणिका—अभूद्देवःषट्त्रिष्टुबन्तामिति । अग्निष्टोमेवैश्वदेवशस्त्रेसावित्रनिविद्धानमि-दं तथाचसूत्रम् अभूद्देवएकयाचदशभिश्चस्वभूतइति । आग्रायणसावित्रग्रहस्यानुवाक्या तथाचसू-त्रं—सावित्रेणग्रहेणचरन्त्यभूद्देवःसवितावन्द्योनुनइति ।

सैषाप्रथमा—

**अभूद्देवःसवितावन्द्योनुनइदानीमह्नउपवाच्योनृभिः ।**
**वियोरत्नाभजतिमानवेभ्यःश्रेष्ठंनोअत्रद्रविणंयथादधत् ॥ १ ॥**

अभूत् । देवः । सविता । वन्द्यः । नु । नः । इदानीम् । अह्नः । उपऽवाच्यः । नृऽभिः । वि । यः । रत्ना । भजति । मानवेभ्यः । श्रेष्ठम् । नः । अत्र । द्रविणम् । यथा । दधत् ॥ १ ॥

ससवितादेवः अभूत्प्रादुरासीत् अतोनुक्षिप्रमेवनोस्माकं वन्द्योवन्दनीयोभवति इदानीं यागकाले अह्नःतृतीयसवनेनृभिरस्मदीयैर्होतृभिस्तवाच्यःस्तुत्योभवति योदेवोमानवेभ्योम- नोरपत्येभ्योयजमानेभ्यःतेषामर्थायरत्नारमणीयानिधनानिविभजति सदेवः श्रेष्ठंप्रशस्यंद्रवि- णंधनंगवादिलक्षणंधनंनोस्मभ्यमत्रास्मिन्कर्मणि यथा दधद्दध्यादित्यर्थः तथा वयःउपवा- च्यआभूदिति ॥१॰ सवितादेव प्रादुर्भूत हुए हैं। हम शीघ्र ही उनकी वन्दना करेंगे। वे इस समय और तृतीय सवन में होताओं-द्वारा स्तुत हों। जो मानवों को रत्न दान करते हैं, वे सवितादेव हम लोगों को इस यज्ञ में श्रेष्ठ धन दान करें।

देवेभ्योहिप्रथमंयज्ञियेभ्योमृतत्वंसुवसिभागमुत्तमम्।
आदिद्दामानंसवित॒र्व्यूर्णुषेनूचीनाजीविता॒मानुषेभ्यः ॥ २ ॥

देवेभ्यः। हि। प्रथमम्। यज्ञियेभ्यः। अमृतऽत्वम्। सुवसि। भागम्। उत्ऽतमम्। आत्। इत्। दामानम्। सवितः। वि। ऊर्णुषे। अनूचीना। जीविता। मानुषेभ्यः ॥ २ ॥

प्रथमंदेवेभ्योहि हिशब्दःप्रसिद्धौ देवेभ्योयज्ञियेभ्योयज्ञार्हेभ्योमृतत्वंतत्साधनमुत्तममु- त्कृष्टतमंभागं सोमाख्यादिलक्षणं सुवसि अनुजानासि आदिदनन्तरमेव दामानं हविषांदातारं हेसवितःव्यूर्णुषे प्रकाशयसि मानुषेभ्योयजमानेभ्योजीवितानि अनूचीना आनुक्रम- युक्तानि पितृपुत्रपौत्राइत्यनुक्रमः ईदृशानिजीवितानिचव्यूर्णुषे ॥ २ ॥

२॰ तुम पहले यज्ञार्ह देवों के लिए अमरत्व के साधनभूत सोम के उत्कृष्टतम भाग को उत्पन्न करो। हे सविता, उसके अनन्तर तुम हव्य-दाता को प्रकाशित करो एवम् पिता, पुत्र और पौत्रादि क्रम से मनुष्यों को जीवन दान करो।

अचित्तीयच्चकृमादैव्येजनेदीनैर्दक्षैःप्रभूतीपूरुषत्वता।
देवेषुचसवितर्मानुषेषुचत्वंनोअत्रसुवतादनागसः ॥ ३ ॥

अचित्ती। यत्। चकृम। दैव्ये। जने। दीनैः। दक्षैः। प्रऽभूती। पुरुषत्वता। देवेषु। च। सवितः। मानुषेषु। च। त्वम्। नः। अत्र। सुवतात्। अनागसः ॥ ३ ॥

हेसवितः वयमचित्ती अप्रज्ञयादैव्येजनेदेवेषयद्दीनैर्दुर्बलैःपुत्रादिभिर्ज्ञातिभिर्वा तथा दक्षैः प्रवृद्धैर्ज्ञातिभिः प्रभूती प्रभूत्या ऐश्वर्यमदेनेतियावत् पुरुषत्वता पुरुषस्वभावेन यदागश्च- कृम नकेवलंतत्रैवकृतम् अपितुदेवेष्वन्येषुमानुषेषुचाज्ञानादिभिर्यच्चकृम नःकृतवतोस्मान्त्वमत्रा- स्मिन्कर्मणिअनागसःअपापान्सुवतात् अनुजानीहि ॥ ३ ॥

३. हे सवितादेव, अज्ञानतावश अथवा दुर्बल या बलशाली लोगों के प्रमादवश अथवा ऐश्वर्य के गर्व से या परिजन के गर्व से तुम्हारे प्रति अथवा देव या मनुष्यों के प्रति हमने जो अपराध किया है, इस यज्ञ में तुम हमें उससे निष्पाप करो।

देवसुवांहविष्षुसवितुःसत्यप्रसवस्यनप्रमियइतियाज्या तथाचसूत्रं—नप्रमियेसवितुर्दैव्य-स्यतद्बृहस्तेप्रथमामिति ।

**नप्रमियेसवितुर्दैव्यस्यतद्यथाविश्वंभुवनंधारयिष्यति ।**
**यत्पृथिव्यावरिमन्नास्वङ्गुरिर्वर्ष्मन्दिवःसुवतिसत्यमस्यतत् ॥४॥**

न । प्रऽमिये । सवितुः । दैव्यस्य । तत् । यथा । विश्वम् । भुवनम् । धारयिष्यति । यत् । पृथिव्याः । वरिमन् । आ । सुऽअङ्गुरिः । वर्ष्मन् । दिवः । सुवति । सत्यम् । अस्य । तत् ॥४॥

सवितुर्दैव्यस्य देवस्य तत्कर्म नप्रमिये नप्रमीयेत नहिंस्येत हिंसार्हंनभवतीत्यर्थः कृत्यार्थे केन्प्रत्ययः यद्वा दैव्यस्येत्यधिकरणेषष्ठी शाचकर्मार्था दैव्यंकर्मेत्यर्थः कथमहिंस्यमित्यतआह-यथाविश्वंभुवनंधारयिष्यतिधारयति विश्वधारणरूपंयत्कर्मास्तितन्नप्रमिये तथास्वङ्गुरिःशोभ-नाङ्गुल्युपलक्षितहस्तोयथः पृथिव्याः वरिमणाकारणार्थे भूम्याउरुत्वेचसुवतिप्रेरयति तथा दिवोद्युलोकस्यवर्ष्मन्नुरुत्वेचसुवति अस्यदेवस्यतदुक्तंकर्मसत्यमनाप्यमिति ॥ ४ ॥

४. सवितादेव का वह कर्म हिंसायोग्य नहीं है; क्योंकि वे विश्व भुवन धारण करते हैं। वे सुन्दर अंगुलिविशिष्ट होकर पृथिवी को विस्तीर्ण होने के लिए प्रेरित करते हैं एवम् द्युलोक को भी विस्तीर्ण होने के लिए प्रेरित करते हैं। सवितादेव का यह कर्म सचमुच अवध्य है।

**इन्द्रज्येष्ठान्बृहद्भ्यःपर्वतेभ्यःक्षयाँएभ्यःसुवसिपस्त्यावतः ।**
**यथायथापतयन्तोवियेमिरएवैवतस्थुःसवितःसवायते ॥ ५ ॥**

इन्द्रऽज्येष्ठान् । बृहत्ऽभ्यः । पर्वतेभ्यः । क्षयान् । एभ्यः । सुवसि । पस्त्यऽवतः । यथाऽयथा । पतयन्तः । विऽयेमिरे । एव । एव । तस्थुः । सवितरिति । सवाय । ते ॥ ५ ॥

हेसवितः इन्द्रज्येष्ठान् इन्द्रःपरमैश्वर्ययुक्तः त्वमेवेन्द्रोवात्वेज्येष्ठोज्यायान् पूज्योयेषांतेता-दृशाः तान्बृहद्भ्योमहद्भ्यः पर्वतेभ्योऽप्यधिकान्सुवसिप्रेरयसि किंचेभ्योयजमानेभ्यः पस्त्याव-तोगृहवतः क्षयान्निवासान्ग्रामनगरादीन्सुवसि प्रेरयसि यथायथा पतयन्तोगच्छन्तस्त्वां वियेमिरे विनियम्यन्ते त्वया तेतवसवायानुज्ञायै एवैव एवमेव नियमनमनतिक्रम्यतस्थुस्ति-ष्ठन्ति ॥ ५ ॥

५. हे सविता, परमैश्वर्यवान् इन्द्र हम लोगों के मध्य में पूजनीय हैं। तुम हम लोगों को महान् पर्वतों की अपेक्षा भी उन्नत करो। इन सम्पूर्ण यजमानों को गृहविशिष्ट निवास (ग्राम, नगर आदि) प्रदान करो। ये सब गमनकाल में जिससे तुम्हारे द्वारा नियत हों और तुम्हारी आज्ञा के अनुसार अवस्थिति करें।

येतेत्रिरह॑न्त्सवितःसुवासो॑दि॒वेदि॑वे॒सौभ॑गमासु॒वन्ति॑ ।
इन्द्रो॒द्यावा॑पृथि॒वीसिन्धु॑र॒द्भिरा॑दि॒त्यैर्नो॒अदि॑तिः॒शर्म॑यंसत् ॥ ६ ॥५॥

ये । ते॒ । त्रिः । अह॑न् । स॒वि॒त॒रिति॑ । स॒वासः॑ । दि॒वेऽदि॑वे । सौभ॑गम् । आ॒ऽसु॒वन्ति॑ । इन्द्रः॑ । द्यावा॑पृथि॒वी इति॑ । सिन्धुः॑ । अ॒त्ऽभिः॑ । आ॒दि॒त्यैः । नः॒ । अदि॑तिः । शर्म॑ । यं॒स॒त् ॥ ६ ॥ ५ ॥

ये यजमानाः हे सवितः ते त्वदर्थं सवासः सवाः सोमाः द्वितीयार्थे प्रथमा सोमान् यद्वा सवासः सवनानि प्रातरादीनि प्रतित्रिरहन् अभिषुण्वन्ति न केवलमेकस्मिन्नेवाहनि सवनत्रयेषु अपितु दिवेदिवे प्रतिदिनं सौभगं सौभाग्यजनकमासुवन्ति अभिषुण्वन्ति तेभ्यो नोऽस्मभ्यमिन्द्रः शर्म यंसत् यच्छतु द्यावापृथिव्यौ च अद्भिर्विशिष्टा सिन्धुः सिन्ध्वभिमानिदेवता च आदित्यैः सहिताऽदितिश्च शर्म यंसत् सावित्रे सूक्ते इन्द्रादीनां निपातभाक्त्वात्तेषां प्रार्थनानविरुध्यते ॥ ६ ॥

६. हे सविता, जो यजमान तुम्हारे उद्देश से प्रतिदिन तीन बार सौभाग्यजनक सोम का अभिषव करता है, इन्द्र, द्यावा-पृथिवी, जलविशिष्ट सिन्धु, देवता और आदित्यों के साथ अदिति, उस यजमान को और हमें सुख दान करें।

को वस्त्रातेति दशर्चं दशमं सूक्तं वामदेवस्यार्षं वैश्वदेवं देवताकम् अष्टम्याद्यास्तिस्रो गायत्र्यः शिष्टास्त्वनादेशपरिभाषया त्रिष्टुभः तथा चानुक्रम्यते—को वो दश वैश्वदेवं त्रिगायत्र्यन्तां त्विति । विनियोगो लैङ्गिकः ।

कोव॑स्त्रा॒ता॑वसवः॒कोव॑रू॒ता॑द्यावा॑भूमीअदिते॒त्रासी॑थांनः ।
सही॑यसोवरुणमित्र॒मर्ता॒त्कोवो॑ऽध्व॒रेवरि॑वोधाति॒देवाः ॥ १ ॥

कः । वः॒ । त्रा॒ता । व॒स॒वः॒ । कः । व॒रू॒ता । द्यावा॑भू॒मी॒ इति॑ । अ॒दि॒ते॒ । त्रासी॑थाम् । नः॒ । सही॑यसः । व॒रु॒ण॒ । मि॒त्र॒ । मर्ता॑त् । कः । वः॒ । अ॒ध्व॒रे । वरि॑वः । धा॒ति॒ । दे॒वाः॒ ॥ १ ॥

हे वसवः सर्वस्य वासयितारो देवाः वो युष्माकं कस्त्राताऽसि कः पालको यूयं सर्वेषां त्रातार इत्यभिप्रायः कश्च वरूता संभक्ताऽस्ति यद्वा वो युष्माकं मध्ये कस्त्राता कश्च को देवः कश्च वरूता वारयिता दुःखानां

रणीयो भवति हे द्यावाभूमी नोऽस्मान्त्रासीथां रक्षतं हे अदिते अखण्डनीये एतदपि द्यावापृथि-व्योर्विशेषणं संख्याव्यत्ययः यदीदं पृथग्देवतामन्त्रणं स्यात्तर्हि निघातो न स्यात् आमन्त्रितं पूर्वमवि-द्यमानवदिति पूर्वस्याविद्यमानत्वेनास्यैव पादादित्वात् अदितेर्मित्रं वरुणोत मृळ आदित्यो रुद्रा-वसवः सुदानव इतिवत् । तस्यैव विशेषणत्वेनामन्त्रिते समानाधिकरणे इत्यविद्यमानवत्त्वप्रतिषेधा-दग्ने पावक रोचिषेतिवदस्य निघातः सिध्यति तस्मात् द्यावाभूमी इत्येतस्य विशेषणं हे वरुण हे मित्र युवां सहीयसो मर्तात् अभिभवितुर्मनुष्यात् नः त्रासीथां हे देवा वो युष्माकं मध्ये यागे को व-रिवो धनं धाति ददाति यद्वा वो युष्माकं मध्ये को वरिवो धाति धारयति तं रक्षतम् ॥ १ ॥

१. हे वसुओ, तुम लोगों के मध्य में कौन त्राणकर्त्ता है ? कौन दुःखों का निवारक है ? हे अखण्डनीया द्यावा-पृथिवी हम लोगों की रक्षा करो। हे वरुण, हे मित्र, तुम दोनों अभिभवकर मनुष्यों से हम लोगों की रक्षा करो। हे देवो, यज्ञ में, तुम लोगों के मध्य में कौन देव धन दान करता है ?

प्रयेधामा॑निपू॒र्व्याण्यर्चा॒न्वियदु॒च्छान्वि॑यो॒तारो॒अमू॑राः ।
वि॒धा॒तारो॒वि॑तेद॑धु॒रज॑स्रा॒ऋ॒तधी॑तयोरुरुचन्तद॒स्माः ॥ २ ॥

प्र । ये । धामा॑नि । पू॒र्व्याणि॑ । अर्चा॑न् । वि । यत् । उ॒च्छान् ।
वि॒ऽयो॒तारः॑ । अमू॑राः । वि॒ऽधा॒तारः॑ । वि । ते । द॒धुः । अज॑स्राः ।
ऋ॒तऽधी॑तयः । रु॒रु॒च॒न्त॒ । द॒स्माः ॥ २ ॥

येदेवाः पूर्व्याणिपुरातनानिधामानिस्थानानि प्रआर्चन्प्रयच्छन्तिस्तोतृभ्यः यद्येच वियोतारोदुःखानामभिश्रयितारः अमूराअमूढाःव्युच्छान्व्युच्छन्ति तमोविवासयन्ति देवाः ते विधातारः फलानांकर्तारः अजस्रानित्याः विदधुः कुर्वन्त्यभिमतम् किंच ऋतधीतयः सत्य-कर्माणोदस्माः दर्शनीयास्ते रुरुचन्त रोचन्ते ॥ २ ॥

२. जो देव स्तोताओं को पुरातन स्थान प्रदान करते हैं, जो दुःखों के अभिश्रयिता हैं, जो अमूढ़ हैं और जो अन्धकार का विनाश करते हैं, वही देव विधाता (सम्पूर्ण फल के कर्त्ता) हैं और नित्य अभीष्टफल प्रदान करते हैं। वे सत्यकर्मविशिष्ट और दर्शनीय होकर शोभा पाते हैं।

प्रप॒स्त्या॒३॒॑मदि॑तिं॒सिन्धु॑म॒र्कैःस्व॒स्तिमी॑ळेस॒ख्याय॑दे॒वीम् ।
उ॒भेयथा॑नो॒अह॑नीनि॒पात॑उ॒षसा॒नक्ता॑कर॒ता॒मद॑ब्धे ॥ ३ ॥

प्र । प॒स्त्या॑म् । अदि॑तिम् । सिन्धु॑म् । अ॒र्कैः । स्व॒स्तिम् । ई॒ळे॒ ।
स॒ख्याय॑ । दे॒वीम् । उ॒भे इति॑ । यथा॑ । नः॒ । अह॑नी॒ इति॑ ।
नि॒ऽपातः॑ । उ॒षसा॒नक्ता॑ । क॒र॒ता॒म् । अद॑ब्धे॒ इति॑ ॥ ३ ॥

१ ऋ० सं० १. ७. ८. । २ ऋ० सं० ८. ३. १४. । ३ ऋ० सं० ४. १. १५.

पस्त्यां सर्वैर्गन्तव्यामदितिमदीनां देवमातरं तांदेवीं सिन्धुं स्यन्दनशीलां नद्यभिमानिदेवीं स्वस्तिं सुखनिवासामेतन्नामिकांदेवीं सख्यायानुकूल्यायार्कैःमन्त्रैरीळेस्तौमि उभे अहनी द्यावापृथिव्यौ तथा नोस्मान्निपातः नितरांपातः तथास्तौमि उषासानक्ताहोरात्राभिमानिदेवते अदब्धे अदम्भनीयेकरतां कुरुताम् अभिमतमितिशेषः ॥ ३ ॥

३. सबके द्वारा गन्तव्य देवमाता अदिति, सिन्धु और स्वस्ति (सुख से निवास करनेवाली) देवी की हम मन्त्र-द्वारा सखिता के लिए स्तुति करते हैं, जिससे द्यावा-पृथिवी हम लोगों को विशेष रूप से पालन करें, उसी के लिए स्तुति करते हैं। उषा और अहोरात्राभिमानी देव हम लोगों के अभिमत का सम्पादन करें।

**व्यर्यमावरुणश्चेतिपन्थामिषस्पतिःसुवितंगातुमग्निः ।**
**इन्द्राविष्णूनृवदुषुस्तवानाशर्मनोयन्तममवद्वरूथम् ॥ ४ ॥**

वि । अर्यमा । वरुणः । चेति । पन्थाम् । इषः । पतिः । सुवितम् । गातुम् । अग्निः । इन्द्राविष्णू इति । नृवत् । ऊँ इति । सु । स्तवाना । शर्म । नः । यन्तम् । अमऽवत् । वरूथम् ॥ ४ ॥

अर्यमादेवोनोस्माकंपन्थां यज्ञादिमार्गंविचेति ज्ञापयति तथा वरुणश्चविचेति इषोन्नस्यहविर्लक्षणस्यपतिःपालकोग्निः सुवितंसुखकरं गातुं गमनंमार्गं वा स्वर्गादेर्विचेति इन्द्राविष्णू सु सुष्ठुस्तवानास्तूयमानौ नृवन्मनुष्यवन्मनुष्योपेतं वरूथं वरणीयम् अमवद्बलोपेतं शर्म एवं सुखं नोस्माकं यन्त यच्छताम् ॥ ४ ॥

४. अर्यमा और वरुणदेव ने यज्ञमार्ग ज्ञापित कर दिया है। हविर्लक्षण अन्न के पति अग्नि ने सुखकर मार्ग दिखा दिया है। इन्द्र और विष्णु सुन्दर रूप से स्तुत होकर हम लोगों को पुत्र-पौत्रादि युक्त और बलयुक्त रमणीय सुख दान करें।

**आपर्वतस्यमरुतामवांसिदेवस्यत्रातुरव्रिभगस्य ।**
**पात्पतिर्जन्यादंहसोनोमित्रोमित्रियादुतनउरुष्येत् ॥ ५॥६ ॥**

आ । पर्वतस्य । मरुताम् । अवांसि । देवस्य । त्रातुः । अव्रि । भगस्य । पात् । पतिः । जन्यात् । अंहसः । नः । मित्रः । मित्रियात् । उत । नः । उरुष्येत् ॥ ५ ॥ ६ ॥

पर्वतस्येन्द्रसखस्यैतन्नामकस्य देवस्य मरुतांचत्रातुःरक्षकस्य भगस्यदेवस्यचावांसिरक्षणानि आ अभि आवृणे किंच पतिर्वरुणोदेवः जन्याज्जनसंबन्धादंहसःपापान्नोस्मान्पातु रक्षतु उतापिच मित्रश्चमित्रियान्मित्रभावेननोस्मानुरुष्येद्रक्षतु ॥ ५ ॥

॥ इतितृतीयस्याष्टमेषष्ठोवर्गः ॥ ६ ॥

५. इन्द्र के सखा पर्वत, मरुद्‍गण तथा भगदेव से हम रक्षा की याञ्चा करते हैं। स्वामी वरुणदेव जन-सम्बन्धियों के पाप से हमारी रक्षा करें और मित्रदेव मित्रभाव से हम लोगों की रक्षा करें।

नूरोदसीअहिनाबुध्न्येनस्तुवीतदेवीअप्येभिरिष्टैः ।
समुद्रंनसंचरणेसनिष्यवोघर्मस्वरसोनद्योअपव्रन् ॥ ६ ॥

नु । रोदसी इति । अहिना । बुध्न्येन । स्तुवीत । देवी इति । अप्येभिः । इष्टैः । समुद्रम् । न । सम्ऽचरणे । सनिष्यवः । घर्मऽस्वरसः । नद्यः । अप । व्रन् ॥ ६ ॥

हेरोदसी द्यावापृथिव्यौ युवाम् अहिनाबुध्न्येनअहिर्बुध्न्यनामकेनदेवेनसह नु क्षिप्रमप्येभि-रापणीयैरिष्टैः कामैर्निमित्तभूतैःस्तुवीत स्तुवे सनिष्यवोधनानांसंभक्तुमिच्छन्तः संचरणेसंचाराय समुद्रमभ्यगमनाय समुद्रंन समुद्रमिव तंयथास्तुवन्तितद्वत् यस्मादेतेदेवाः घर्मस्वरसोदीप्तस्वन-योनद्योनदीरपव्रन् अपवृण्वन्तीति परोक्षवद् अथवा तेदेवानदीरपवृण्वन्त्वित्याशीः तस्मा-त्स्तुवइतिसंबन्धः ॥ ६ ॥

६. हे द्यावा-पृथिवीरूप देवीद्वय, जैसे धनाभिलाषी व्यक्ति समुद्र के मध्य में जाने के लिए समुद्र की स्तुति करता है, उसी तरह हम भी अभिलषित कार्यलाभ के लिए अहिर्बुध्न्य नामक देवता के साथ तुम दोनों की स्तुति करते हैं। वे देवगण दीप्त ध्वनियुक्त नदियों को अपावृत करें।

देवैर्नोदेव्यदितिर्निपातुदेवस्त्रातात्रायतामप्रयुच्छन् ।
नहिमित्रस्यवरुणस्यधासिमर्हामसिप्रमियंसान्वग्नेः ॥ ७ ॥

देवैः । नः । देवी । अदितिः । नि । पातु । देवः । त्राता । त्रायताम् । अप्रऽयुच्छन् । नहि । मित्रस्य । वरुणस्य । धासिम् । अर्हामसि । प्रऽमियम् । सानु । अग्नेः ॥ ७ ॥

अदितिर्देवी अदीनादेवमाता देवैरन्यैर्मित्रादिभिःसहनोस्मान्निपातु पालयतु तथा त्रातापालकोदेवइन्द्रइत्यर्थः सोप्यप्रयुच्छन् अप्रमाद्यन् त्रायतां वयंच मित्रस्यवरुणस्याग्नेश्च सानुं समुच्छ्रितं धासिम् अन्नं सोमादिलक्षणं प्रमियं हिंसितुंनह्यर्हामसि नार्हामः समर्थाभवामः किंत्वनुष्ठानेनसंबन्धितुमर्हामेत्यर्थः ॥ ७ ॥

७. देवमाता अदिति देवी अन्य देवों के साथ हम लोगों का पालन करें। त्राता इन्द्र अप्रमत्त होकर हम लोगों का पालन करें। मित्र,

वरुण और अग्नि के सोमादिरूप समुच्छ्रित अन्न की हम लोग हिंसा नहीं कर सकते हैं; किन्तु अनुष्ठानों के द्वारा संवर्द्धित कर सकते हैं।

अग्निरीशेवसव्यस्याग्निर्महःसौभगस्य । तान्यस्मभ्यंरासते ॥ ८॥

अग्निः । ईशे । वसव्यस्य । अग्निः । महः । सौभगस्य । तानि । अस्मभ्यम् । रासते ॥ ८ ॥

अग्निर्देवोवसव्यस्य धनसमूहस्येशेईष्टेदातुं तथाग्निर्महोमहतः सौभगस्य सुभगत्वस्याधीशे अतस्तानिधनानिसौभाग्यंचास्मभ्यं रासते ददातु ॥ ८ ॥

८. अग्नि धन के ईश्वर हैं और महान् सौभाग्य के ईश्वर हैं; अतएव वे हम लोगों को धन और सौभाग्य प्रदान करें।

उषोमघोन्यावहसूनृतेवार्यापुरु । अस्मभ्यंवाजिनीवति ॥ ९ ॥

उषः । मघोनि । आ । वह । सूनृते । वार्या । पुरु । अस्मभ्यम् । वाजिनीऽवति ॥ ९ ॥

हेउषः हेमघोनि धनवति हेसूनृते प्रियसत्यरूपवागभिमानिनि हेवाजिनीवति अन्नवति देवि अस्मभ्यं वार्या वरणीयानि पुरु बहूनि धनानि आवह प्रापय ॥ ९ ॥

९. हे धनवती, हे प्रिय सत्यरूप वचन की अभिमानिनी और हे अन्नवती उषा, हम लोगों को तुम बहुत रमणीय धन दान करो।

तत्सुनःसवितामगोवरुणोमित्रोअर्यमा ।
इन्द्रोनोराधसागमत् ॥ १० ॥ ७ ॥

तत् । सु । नः । सविता । भगः । वरुणः । मित्रः । अर्यमा । इन्द्रः । नः । राधसा । आ । गमत् ॥ १० ॥ ७ ॥

येनराधसा धनेनसह सवितामगोवरुणोमित्रोअर्यमेन्द्रः प्रत्येकमागमदागच्छन्तियज्ञं तद्राधोधनं तेदेवानोस्मभ्यं सु सुष्ठु प्रयच्छन्तु इतिशेषः ॥ १० ॥

१०. जिस धन के साथ सविता, भग, वरुण, मित्र, अर्यमा और इन्द्र आगमन करते हैं, उस धन को वे सब हमें दें।

॥ इतितृतीयस्याष्टमेसप्तमोवर्गः ॥ ७ ॥

महीद्यावापृथिवीइतिसप्तर्चमेकादशंसूक्तं वामदेवस्यार्षं द्यावापृथिव्यं पूर्वत्रिगायत्र्यन्त्यास्तिस्रस्तुगायत्र्यःआसितस्तोगायत्र्यः शिष्टाश्चिष्टुभः महीसप्तद्यावापृथिव्यमित्यनुक्रमणिका । ऋभुदेवतानेषुप्रथमेऽहीतस्मिन्नेवान्नगतेनावितमस्तुमेषुचं द्यावापृथिव्यनिविद्धानीयं तथाचसूत्रं—महीद्यावापृथिवीइतिचतस्त्रऋषिर्विश्वेति ।

तत्रप्रथमा—

महीद्यावापृथिवीइहज्येष्ठेरुचाभवतांशुचयद्भिरर्कैः ।
यत्सींवरिष्ठेबृहतीविमिन्वन्रुवद्धोक्षापप्रथानेभिरेवैः ॥ १ ॥

म॒ही इति॑ । द्यावा॑पृथि॒वी इति॑ । इ॒ह । ज्येष्ठे॒ इति॑ । रु॒चा ।
भ॒व॒ता॒म् । शु॒च॒यत्ऽभिः॑ । अ॒र्कैः । यत् । सी॒म् । वरि॑ष्ठे॒ इति॑ ।
बृ॒ह॒ती इति॑ । वि॒ऽमि॒न्वन् । रु॒वत् । ह॒ । उ॒क्षा । प॒प्र॒थाने॑भिः । एवैः॑ ॥ १ ॥

इहयज्ञे मही महत्यौ ज्येष्ठे प्रशस्ये द्यावापृथिवी द्यावापृथिव्यौ रुचादीप्त्यायुक्ते शुचयद्भिर्दीपयद्भिरर्कैर्मंत्रैःसोमादिहविर्भिर्वायुक्तेभवतां यद्यस्मात्सींसर्वतोवरिष्ठेउरुतरेबृहती महत्यौद्यावापृथिव्यौ विमिन्वन्परिच्छिन्दन् स्थापयन्नुक्षा सेक्ता पर्जन्यः पप्रथानेभिः प्रथमानैरेवैर्गमनशीलैर्मरुद्भिर्मेघैर्वासह रुवत् रौतिशब्दंकरोति हेतिपूरणः तस्माद्युक्तेभवतामितिसंबन्धः ॥ १ ॥

१. महती और श्रेष्ठा द्यावा-पृथिवी इस यज्ञ में दीप्तिकर मन्त्र और सोमादि से युक्त होकर दीप्तिविशिष्ट हों। जिस लिए कि सेचन-कारी पर्जन्य विस्तीर्ण और महती द्यावा-पृथिवी को स्थापित करते हुए प्रथमान और गमनशील मरुतों के साथ सर्वत्र शब्द करते हैं।

दे॒वी दे॒वेभि॑र्यज॒ते यज॑त्रै॒रमि॑नती तस्थतुरु॒क्षमा॑णे ।
ऋ॒ताव॑री अ॒द्रुहा॑ दे॒वपु॑त्रे य॒ज्ञस्य॑ ने॒त्री शु॒च॒यद्भि॑र॒र्कैः ॥ २ ॥

दे॒वी इति॑ । दे॒वेभिः॑ । य॒ज॒ते इति॑ । यज॑त्रैः । अमि॑नती॒ इति॑ ।
त॒स्थ॒तुः॒ । उ॒क्षमा॑णे॒ इति॑ । ऋ॒तव॑री॒इत्यृ॒तऽव॑री । अ॒द्रुहा॑ ।
दे॒वपु॑त्रे॒ इति॑ दे॒वऽपु॑त्रे । य॒ज्ञस्य॑ । ने॒त्री इति॑ । शु॒च॒यत्ऽभिः॑ । अ॒र्कैः ॥ २ ॥

देवी देव्यौ यजते यष्टव्यौ अमिनती प्रजाअहिंसत्यौ उक्षमाणेसिंचत्यौ ऋतावरी ऋतवत्यौ अद्रुहा अद्रोग्ध्र्यौ द्रोहमकुर्वत्यौ देवपुत्रे देवोत्पादिके यज्ञस्यनेत्री निर्वाहयित्र्यौ द्यावापृथिव्यौ देवेभिर्देवैःयजत्रैःयष्टव्यैःसहिते शुचयद्भिः शोचयद्भिरर्कैः मंत्रैर्हविर्भिर्वायुक्तेतस्थतुः तिष्ठतः स्यातामित्यर्थः ॥ २ ॥

२. यजनयोग्य, अहिंसक, अभीष्टवर्षी, सत्यशील, द्रोहरहित, देवों के उत्पादक और यज्ञों के निर्वाहक द्यावा-पृथिवी रूप देवीद्वय यष्टव्य देवों के साथ दीप्तिकर मन्त्रों या हविर्लक्षण अन्नों से युक्त हों।

स इत्स्व॒पा भुव॑नेष्वास॒ य इ॒मे द्यावा॑पृथि॒वी ज॒जान॑ ।
उ॒र्वी ग॑भी॒रे रज॑सी सु॒मेके॑ अवं॒शे धीरः॒ शच्या॒ समै॑रत् ॥ ३ ॥

सः॒ । इत् । सु॒ऽअपाः॑ । भुव॑नेषु । आ॒स॒ । यः । इ॒मे इति॑ ।
द्यावा॑पृथि॒वी इति॑ । ज॒जान॑ । उ॒र्वी इति॑ । ग॒भी॒रे इति॑ । रज॑सी॒ इति॑ ।
सु॒मेके॒ इति॑ सु॒ऽमेके॑ । अ॒वं॒शे । धीरः॑ । शच्या॑ । सम् । ऐ॒र॒त् ॥ ३ ॥

सहस्सएव स्वपाः शोभनकर्मोसन्भुवनेष्वास आसते यइमेद्यावापृथिवी द्यावापृथिव्यौ जनानोत्पादितवान् यश्चप्रजापतिः उर्वी उर्व्यौ विस्तीर्णे गभीरे अविच्छे सुमेके शोभन रूपे अवंशे उत्पत्तिरहिते अनाधारेवान्तरिक्षेधीरोधीमान् शच्या कुशलकर्मणाख्मैमेत् सम्यक्मेरितवान् सएवस्वपाइति ॥ ३ ॥

३. जिन्होंने इस द्यावा-पृथिवी को उत्पन्न किया है; जिन धीमान् ने विस्तीर्ण, अविचला सुरूपा और आधाररहिता द्यावा-पृथिवी को सम्यग्रूप से कुशल कर्म-द्वारा परिचालित किया है, वे ही भुवनों के मध्य में शोभनकर्मा हैं।

नूरो॑दसीबृ॒हद्भि॑र्नो॒वरू॑थैः॒पत्नी॑वद्भिरि॒षय॑न्तीस॒जोषाः॑ ।
उ॒रू॒ची॒विश्वे॑यज॒तेनिपा॑तंधि॒यास्या॑मर॒थ्यः॑सदा॒साः ॥ ४ ॥

नु । रोद॒सी इति॑ । बृ॒हत्ऽभिः॑ । नः॒ । वरू॑थैः । पत्नी॑वत्ऽभिः ।
इ॒षय॑न्ती इति॑ । स॒ऽजोषाः॑ । उ॒रू॒ची इति॑ । विश्वे॒ इति॑ । य॒ज॒ते इति॑ ।
नि । पा॒त॒म् । धि॒या । स्या॒म॒ । र॒थ्यः॑ । स॒दा॒ऽसाः ॥ ४ ॥

हेरोदसी द्यावापृथिव्यौ नु क्षिप्रं पत्नीवद्भिःपत्नीसहितैः बृहद्भिर्महद्भिः वरूथैर्गृहैर्धनैर्वा सहइषयन्ती अस्माकमन्नमिच्छन्त्यौ सजोषाः परस्परसङ्गते उरूची उर्वञ्चने विश्वे व्याप्ते यजते यष्टव्ये सत्यौ नोस्मान्निपातं नितरांरक्षतं धियेत्यादिगतम् ॥ ४ ॥

४. हे द्यावा-पृथिवी, तुम दोनों हम लोगों के लिए अन्न दान की अभिलाषिणी और परस्पर सङ्गता हो। विस्तीर्णा, व्याप्ता एवम् यागयोग्या होकर तुम दोनों हमें पत्नीयुक्त महान् गृह दो एवम् हम लोगों की रक्षा करो। हम लोग कर्मबल-द्वारा रथ और दास लाभ करें।

प्रवामित्यादिगायत्र्यृचोन्यूदेदशरात्रेवैश्वदेवशस्त्रेद्यावापृथिव्यानिविद्धानीयत्वेनप्रक्षेप्याः तथा-चसूत्रं-प्रवांमहिद्यवीइतिन्यृचाविति ।

प्रवां॑म॒हिद्यवी॑अ॒भ्युप॑स्तुतिंभरामहे।शुची॒उप॒प्रश॑स्तये ॥ ५ ॥

प्र । वा॒म् । म॒हि । द्यवी॒ इति॑ । अ॒भि । उप॑ऽस्तुतिम् । भ॒रा॒म॒हे॒ ।
शुची॒ इति॑ । उप॑ । प्रऽश॑स्तये ॥ ५ ॥

हेद्यावापृथिव्यौ द्यवी द्योतमाने वां युवाभ्यामुपस्तुतिं स्तोत्रं महि महत्प्रभूतम् अभि-प्रभरामहे प्रकर्षेणसंपादयामः शुचीशुद्धेयुवां प्रशस्तये प्रशंसितुम् उप उपसर्गश्रुतेर्योग्य-क्रियाध्याहारः उपगच्छामइतिशेषः ॥ ५ ॥

५. हे द्युतिमती द्यावा-पृथिवी, हम लोग तुम दोनों के उद्देश से महान् स्तोत्र का सम्पादन करेंगे। तुम दोनों विशुद्ध हो। हम लोग प्रशंसा करने के लिए तुम्हारे निकट गमन करते हैं।

पुनानेतन्वामिथःस्वेनदक्षेणराजथः। ऊह्याथेसनादृतम् ॥ ६ ॥

पुनाने इति। तन्वा। मिथः। स्वेन। दक्षेण। राजथः।
ऊह्याथे इति। सनात्। ऋतम् ॥ ६ ॥

हेदेव्यौ तन्वा स्वकीययामूर्त्या स्वेनदक्षेणबलेनच मिथःप्रत्येकंपुनाने शोधयन्त्यौ यज्ञं यजमानंवा युवांराजथः ईशानेभवथः यद्वा तन्वा स्वस्वशरीरैकदेशेन मिथःपरस्परं पुनाने शोधयन्त्यौयोःस्वीयेनासारेणसुवं साच स्वकीयेनकार्येण चन्द्रमसिस्थितेन दिवमितिविवेकः सनात्सदाकालम् ऋतंयज्ञमूह्याथेवहथः ॥ ६ ॥

६. हे देवियो, तुम दोनों अपनी मूर्तियों और बल-द्वारा परस्पर प्रत्येक को शोधित करके शोभमाना होओ एवम् सर्वदा यज्ञ वहन करो।

महीमित्रस्यसाधथस्तरन्तीपिप्रतीऋतम्। परियज्ञंनिषेदथुः ॥७॥८॥

मही इति। मित्रस्य। साधथः। तरन्ती इति। पिप्रती इति।
ऋतम्। परि। यज्ञम्। नि। सेदथुः ॥ ७ ॥ ८ ॥

मही महत्यौ द्यावापृथिव्यौ मित्रस्य मित्रभूतस्य स्तोतुरभिमतंसाधथः साधयथः ऋतमन्नंतरन्ती तारयन्त्यौ पिप्रती पूरयन्त्यौ यज्ञंपरिपरितोनिषेदथुरासाथे ॥ ७ ॥

७. हे महती द्यावा-पृथिवी, तुम दोनों मित्रभूत स्तोता के अभिमत का साधन करो एवम् अन्न को विभक्त और पूर्ण करके यज्ञ के चतुर्दिक् उपविष्ट होओ।

॥ इतितृतीयस्याष्टमेऽष्टमोवर्गः ॥ ८ ॥

क्षेत्रस्यपतिनेत्यष्टर्चंसप्तमंसूक्तंवामदेवस्यार्षम् आद्याचतुर्थीषष्ठीसप्तम्योनुष्टुभः पञ्चमीपुरउष्णिक् आद्यक्षेत्पुरउष्णिगितिहितलक्षणं शिष्टास्तिस्रस्त्रिष्टुभः आद्यास्तिस्रः क्षेत्रपतिदेवताकाः चतुर्थीशुनास्यदेवताका पञ्चम्यष्टम्यौशुनासीरदेवताके षष्ठीसप्तम्यौसीतादेवताके तथाचानुक्रमणिका—क्षेत्रस्याष्टौतिस्रःक्षैत्रपत्याःशुनायैकापरापुरउष्णिक्शान्त्यांचशुनासीराभ्यांशुनासीरीयाद्वेसीतायैद्वे चानुष्टुभाद्याचतुर्थीचेति। क्षेत्रकर्मणे अनेनसूक्तेनप्रत्यृचंजुहुयाज्जपेद्वा तथाचसूत्रितं—क्षेत्रस्यपतिनावयमितिप्रत्यृचंजुहुयाज्जपेद्वेति। अप्तोर्यामेहोतुरतिरिक्तोक्थे आश्विनशस्त्रादूर्ध्वमत्रार्थेतिरिक्तोक्थ्यानि तत्राद्यापरिधानीया सूत्रितंच—क्षेत्रस्यपतिनावयमितिपरिधानीयेति।

तत्रप्रथमा—

क्षेत्रस्यपतिनावयंहितेनेवजयामसि।
गामश्वंपोषयित्न्वासनोमृळातीदृशे ॥ १ ॥

क्षेत्रस्य । पतिना । वयम् । हितेनऽइव । जयामसि । गाम् ।
अश्वम् । पोषयित्नु । आ । सः । नः । मृळाति । ईदृशे ॥ १ ॥

वयंयजमानाः क्षेत्रस्यपतिना देवेन एवं क्षेत्रपतिमूचुःप्राहुः केचिदग्निम् अपरेत्वन्यत्र एववाक्यशेषःक्षेत्रस्यपतिरुच्यतेइति हितेनेव इवशब्दएवार्थे सर्वप्राणिहितेनैवतेन अथवा मित्रेणेव यथासख्युःसाहाय्येसन्स्वकार्यंसाधयतितद्वत् जयामसि जयामः क्षेत्रं सदेवोगामश्वंचपोषयित्नु पोषयितृ गवाश्वलक्षणंधनम् आहरत्वितिशेषः उपसर्गश्रुतेर्योग्यक्रियाध्याहारः सएवदेवोनोस्मानीदृशे उक्तलक्षणेधने दातव्येइति मृळाति सुखयति अत्रक्षेत्रस्य पतिनेत्यादिनिर्देशंजानीयात् ॥ १ ॥

१. हम यजमान बन्धुसदृश क्षेत्रपति देव के साथ क्षेत्र जय करेंगे। वे हम लोगों की गौओं और अश्वों को पुष्टि प्रदान करें। वे देव हम लोगों को उक्त प्रकार से दातव्य धन देकर सुखी करें।

अस्योर्योमेमेशयन्त्यातिरिक्तोक्त्येपरिधानीया सूत्रितंच—क्षेत्रस्यपतेमधुमन्तमूर्मिमितिपरिधानीयेति।

सैषाद्वितीया—

क्षेत्र॑स्यपते॒मधु॑मन्तमू॒र्मिंधे॒नुरि॑व॒पयो॑अ॒स्मासु॑धुक्ष्व ।
म॒धु॒श्चुतं॑घृ॒तमि॑व॒सुपू॑तमृ॒तस्य॑नः॒पत॑योमृळयन्तु ॥ २ ॥

क्षेत्र॑स्य । प॒ते॒ । मधु॑ऽमन्तम् । ऊ॒र्मिम् । धे॒नुःऽइ॑व । पयः॑ ।
अ॒स्मासु॑ । धु॒क्ष्व॒ । म॒धु॒ऽश्चुत॑म् । घृ॒तम्ऽइ॑व । सुऽपू॑तम् ।
ऋ॒तस्य॑ । नः॒ । पत॑यः । मृ॒ळ॒यन्तु ॥ २ ॥

हेक्षेत्रस्यपते त्वं मधुमन्तं माधुर्योपेतम् ऊर्मिं प्रभूतमुदकं धेनुःपयइव सायथादुग्धे तथास्मासुधुक्ष्व मधुश्चुतं मधुस्राविसुपूतंघृतमिवेत्सुपना तादृशमुदकमित्यर्थः ऋतस्ययज्ञस्योदकस्य वापतयः स्वामिनोनोस्मान्मृळयन्तु सुखयन्तु यद्वा ऋतस्यैतत्कर्मणिषष्ठी ऋतंमृळयन्तुनपच्छन्तु सुखतिरत्रदानकर्मा ॥ २ ॥

२. हे क्षेत्रपति, धेनु जिस तरह से दुग्धदान करती है, उसी तरह से तुम मधुस्रावी, सुपवित्र, घृततुल्य और माधुर्ययुक्त प्रभूत जल दान करो। यज्ञ के या उदक के स्वामी हम लोगों को सुखी करें।

प्रातरनुवाकेआश्विनेनोतिरिक्तोक्त्येपरिधानीयैषा मधुमतीरोषधीर्द्यावआपइतिपरिधानीयेतिदनिसत्वात्।

---

१ नि० १०. १५।

सैषा तृतीया—

मधुमतीरोषधीर्द्यावआपोमधुमन्नोभवत्वन्तरिक्षम् ।
क्षेत्रस्यपतिर्मधुमान्नोअस्त्वरिष्यन्तोअन्वेनंचरेम ॥ ३ ॥

मधुऽमतीः । ओषधीः । द्यावः । आपः । मधुऽमत् । नः ।
भवतु । अन्तरिक्षम् । क्षेत्रस्य । पतिः । मधुऽमान् । नः ।
अस्तु । अरिष्यन्तः । अनु । एनम् । चरेम ॥ ३ ॥

ओषधीरोषध्यः व्रीहिप्रियङ्ग्वादयोनोस्मभ्यं मधुमतीर्मधुमत्योभवन्तु तथा द्यावः तिस्रो-दिवइत्युक्तत्वाद्बहुवचनंयुक्तं तथाआपः अन्तरिक्षंच नोमधुमद्भवतु किंच क्षेत्रस्यपतिरस्मिन्मधु-मान्नोअस्तु अरिष्यन्तः अन्यैरहिंसिष्यन्तः वयम् एनं क्षेत्रपतिमन्वनुसृत्यचरेम संचरेम सुखेन ॥ ३ ॥

३. व्रीहि और प्रियंगु आदि ओषधियाँ हम लोगों के लिए मधुयुक्त हों। तीनों द्युलोक, जलसमूह और अन्तरिक्ष हम लोगों के लिए मधुयुक्त हों। क्षेत्रपति हम लोगों के लिए मधुयुक्त हों। हम लोग शत्रुओं-द्वारा अहिंसित होकर उनका अनुसरण करें।

शुनंवाहाःशुनंनरःशुनंकृषतुलाङ्गलम् ।
शुनंवरत्राबध्यन्तांशुनमष्ट्रामुदिङ्गय ॥ ४ ॥

शुनम् । वाहाः । शुनम् । नरः । शुनम् । कृषतु । लाङ्गलम् । शुनम् ।
वरत्राः । बध्यन्ताम् । शुनम् । अष्ट्राम् । उत् । इङ्गय ॥ ४ ॥

वाहाः बलीवर्दाः शुनं सुखनामैतत् सुखंयथाभवतितथावहन्त्वितिशेषः तथा नरो नेतारोमनुष्याः कर्षकाः शुनंकुर्वन्तु तथालाङ्गलमपिशुनंकृषतु वरत्राः वर्त्रेणत्रायमाणाःप्र-ग्रहाः शुनंबध्यन्ताम् अष्ट्रां प्रतोदं शुनमुदिङ्गय प्रेरय शुनासीरयोर्वायविन्द्रयोरन्यतमः सुखकृते-नच्छनुकारेतत्सर्वंभवत्विति तस्यस्तुतिसामान्येनस्तुतिः ॥ ४ ॥

४. बलीवर्दगण सुख का वहन करें। मनुष्यगण सुखपूर्वक कृषि-कार्य करें। लाङ्गल सुखपूर्वक कर्षण करे। प्रग्रहसमूह सुखपूर्वक बद्ध हों। प्रतोद सुख प्रेरण करें।

शुनासीरीयेपर्वणि शुनासीरदेवताकस्य हविषोनुवाक्यैषा अन्त्याप्रस्थाप्या सूत्रितञ्च— शुनासीराविमांवाचंजुषेथांशुनंनः फालाविकृषन्तुभूमिमिति ।

शुनासीराविमांवाचंजुषेथांयद्दिविचक्रथुःपयः ।
तेनेमामुपसिञ्चतम् ॥ ५ ॥

शुनासीरौ । इमाम् । वाचम् । जुषेथाम् । यत् । दिवि ।
चक्रथुः । पयः । तेन । इमाम् । उप । सिञ्चतम् ॥ ५ ॥

शुनदेवाःशुनदेवतेतिशौनकः अतःशुनइन्द्रःसीरोवायुः यद्वा शुनोवायुःशुशिप्रंशुनतिपतत्यन्त-रिक्षेसीरआदित्यःसरणादितियास्कः । हे शुनासीरौ तौ युवां इमांमद्यमागांमदीयांवाचंजुषेथां सेवेथां यत्पयोदिविचक्रथुः तेनेमांभूमिमुपसिञ्चतम् ॥ ५ ॥

५. हे शुन, हे सीर, तुम दोनों हमारी इस स्तुति का सेवन करो। तुम दोनों ने द्युलोक में जिस जल को सृष्ट किया है, उसी के द्वारा इस पृथिवी को सिक्त करो।

अर्वाचीसुभगेभवसीतेवन्दामहेत्वा ।
यथानःसुभगासिसियथानःसुफलासिसि ॥ ६ ॥

अर्वाची । सुऽभगे । भव । सीते । वन्दामहे त्वा । यथा । नः ।
सुऽभगा । असंसि । यथा । नः । सुऽफला । असंसि ॥ ६ ॥

हेसुभगे सीते त्वमर्वाची अर्वागञ्चनाभव त्वा त्वां वन्दामहे स्तुमीमहि यथानःसुभ-गासिसि शोभनधनाभवसि यथानःसुफलासिसितथावन्दामहे ॥ ६ ॥

६. हे सौभाग्यवती सीता, तुम अभिमुखी होओ। हम तुम्हारी स्तुति करते हैं। तुम हम लोगों को सुन्दर धन प्रदान करो और सुन्दर फल दो। इसी से हम तुम्हारी वन्दना करते हैं।

इन्द्रःसीतांनिगृह्णातुतांपूषानुयच्छतु ।
सानःपयस्वतीदुहामुत्तरामुत्तरांसमाम् ॥ ७ ॥

इन्द्रः । सीताम् । नि । गृह्णातु । ताम् । पूषा । अनु । यच्छतु ।
सा । नः । पयस्वती । दुहाम् । उत्तराम्ऽउत्तराम् । समाम् ॥ ७ ॥

इन्द्रोदेवः सीतांसीराधारकाष्ठंनिगृह्णातु तांसीतांपूषादेवोनियच्छतु नियमयतु सा द्यौःपयस्वतीउदकवतीदुहांदुह्यात् कदेतितदुच्यते उत्तरामुत्तरांसमामुत्तरमुत्तरंसंवत्सरम् ॥ ७ ॥

७. इन्द्रदेव सीताधार काष्ठ को ग्रहण करें। पूषा उस सीता को नियमित करें। वे उदकवती द्यौ संवत्सर के उत्तर संवत्सर में सस्य दोहन करें।

अस्यामष्टम्याविनियोगः शुनासीराविमावित्यत्रोक्तः ।

अथाष्टमी—

शुनंनःफालाविकृषन्तुभूमिंशुनंकीनाशाअभियन्तुवाहैः ।
शुनंपर्जन्योमधुनापयोभिःशुनासीराशुनमस्मासुधत्तम् ॥८॥१॥

१ नि० ९.४०.।

शुनम् । नः । फालाः । वि । कृषन्तु । भूमिम् । शुनम् । कीनाशाः ।
अभि । यन्तु । वाहैः । शुनम् । पर्जन्यः । मधुना । पयःऽभिः ।
शुनासीरा । शुनम् । अस्मासु । धत्तम् ॥ ८ ॥ ९ ॥

नोभूमिंफालाः भूमिविदारककाष्ठाः शुनंविकृषन्तु शुनंयथाभवतितथाकीनाशाबलीवर्दरक्षकाः वाहैर्बलीवर्दैरभियन्तु अभिगच्छन्तु शुनंयथाभवतितथापर्जन्योमधुनामधुरैःपयोभिरुदकैःसिंचतु हेशुनासीरा इन्द्रवायू वाय्वादित्यौवा शुनंसुखमस्मासुधत्तंधारयतम् ॥ ८ ॥

८. फाल (भूमिविदारक काष्ठ) सुख-पूर्वक भूमिकर्षण करें। रक्षकगण बलीवर्दों के साथ अभिगमन करें। पर्जन्य मधुर जल-द्वारा पृथिवी को सिक्त करें। हे शुन, सीर (इन्द्र-वायु या वायु-आदित्य), हम लोगों को सुख प्रदान करो।

॥ इतितृतीयस्याष्टमेनवमोवर्गः ॥ ९ ॥

समुद्रादूर्मिरित्येकादशर्चंत्रयोदशंसूक्तम् अन्त्याजगती शिष्टास्त्रिष्टुभः अग्निसूर्याबगोघृतानामन्यतमादेवता वामदेवऋषिः अत्रानुक्रमणिका—समुद्रादेकादशाग्नेयंवागत्यन्तंसौर्यंवापंवागव्यंवाघृतस्तुतिर्वेति । विषुवतीदंसूक्तमाज्यं तथाचसूत्रं—समुद्रादूर्मिरित्याज्यंतत्सूमेषमिति ? । व्यूढेदशरात्रेसप्तमेऽहनिइदमेवसूक्तमाज्यं सूत्रितंच—अयंछन्दोमाः ? समुद्रादूर्मिरित्याज्यमिति ।

तत्रप्रथमा—

समुद्रादूर्मिर्मधुमाँउदारदुपांशुनासममृतत्वमानट् ।
घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः ॥ १ ॥

समुद्रात् । ऊर्मिः । मधुऽमान् । उत् । आरत् । उप । अंशुना । सम् ।
अमृतऽत्वम् । आनट् । घृतस्य । नाम । गुह्यम् । यत् । अस्ति ।
जिह्वा । देवानाम् । अमृतस्य । नाभिः ॥ १ ॥

संमोदन्तेऽस्मिन्नपमानाइतिसमुद्रोऽग्निःपार्थिवः अथवा समुद्रवन्त्यापोऽस्मादितिव्युत्पत्त्या वैद्युतोऽग्निः तस्मादूर्मिः ऊर्मिवदुपर्युपर्युद्गतोमधुमान्माधुर्योपेतफलसमूहः उदारत् उद्गच्छति अथवा वैद्युतदूर्म्युत्पादकोरसउदारदुद्गतः अथवा समुद्रात्समुद्रवणसाधनादादित्यादूर्मीरसउदकलक्षणउदारत् आदित्याज्जायतेवृष्टिरितिश्रुतेः । यद्वा समुद्रादुदकस्योत्पत्तेरन्तरिक्षादूर्मिरुदकमुदारत् अथवा समुद्रादुदकलक्षणाद्गवामूधसःसकाशादूर्मिरुज्ज्वलःक्षीररसः एतद्घृतपक्षेऽपि समानं यद्यपिघृतंक्षीराज्जायते तथापि तस्योधसउत्पत्तेरेवमुपचर्यते शिष्टंवाक्यमग्न्यादिपक्षेऽप्यपिसमानम् अंशुनादीप्त्यांशेनवा अमृतत्वंमोक्षमुपसमानट् उपेतिपूर्णः प्राप्नोतिनरः घृतस्यदीप्तस्यपरब्रह्मरूपस्यवा गुह्यंनाम गोपनीयं नमनसाधनंयदस्तितद्ब्रवीमि तद्देवानांजि-

वा आस्वादकजिह्वास्थानीयंभवति तदेवामृतस्यनाभिर्बन्धकंभवति तदुभयंघृतस्यनामेत्यर्थः एवंसर्वमप्येतद्यत्पक्षानुसारेणयोज्यम् ॥ १ ॥

१. समुद्र (अग्नि, अन्तरिक्ष, आदित्य अथवा गौओं के ऊधःप्रदेश) से मधुमान् ऊर्मि उद्भूत होती है। मनुष्य किरण-द्वारा अमृतत्व प्राप्त करते हैं। घृत का जो गोपनीय नाम है, वह देवों की जिह्वा और अमृत की नाभि है।

**वयंनामप्रब्रवामाघृतस्यास्मिन्यज्ञेधारयामानमोभिः।**
**उपब्रह्माशृणवच्छस्यमानंचतुःशृङ्गोवमीद्गौरएतत् ॥ २ ॥**

वयम्। नाम। प्र। ब्रवाम। घृतस्य। अस्मिन्। यज्ञे। धारयाम। नमःऽभिः। उप। ब्रह्मा। शृणवत्। शस्यमानम्। चतुःऽशृङ्गः। अवमीत्। गौरः। एतत् ॥ २ ॥

वयंयजमानाः घृतस्यनाम प्रब्रवाम स्तुमः अस्मिन्यज्ञेनमोभिर्नमस्कारैर्हविर्भिर्वाधा-रयामच ब्रह्मापरिवृढोदेवःशस्यमानंस्तूयमानमिदमुपसमीपेशृणुयात् चतुःशृङ्गः चत्वारिशृङ्गा-णिवेदचतुष्टयरूपाणियस्यसः आदित्याग्निपक्षेएवमितरेष्वपियास्कोक्तनुसरत्याशृङ्गशब्दोव्याख्येयः गौ-रोगौरवर्णः सदेवोदेवएतत्सर्वंजगत् अवमीदुद्गिरति निर्वहतीत्यर्थः ॥ २ ॥

२. हम यजमान घृत की प्रशंसा करते हैं। इस यज्ञ में नमस्कार-द्वारा उसे धारण करते हैं। परिवृढ देव इस स्तव का श्रवण करें। वेदचतुष्टय रूप शृङ्गविशिष्ट गौरवर्ण देव इस जगत् का निर्वाह करते हैं।

**चत्वारिशृङ्गात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य।**
**त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँआविवेश ॥ ३ ॥**

चत्वारि। शृङ्गा। त्रयः। अस्य। पादाः। द्वे इति। शीर्षे इति। सप्त। हस्तासः। अस्य। त्रिधा। बद्धः। वृषभः। रोरवीति। महः। देवः। मर्त्यान्। आ। विवेश ॥ ३ ॥

यद्यपिसूक्तस्याग्निसूर्यादिपक्षेदेवतात्मकत्वात्सर्वपायंमन्त्रोव्याख्येयः तथापि निरुक्तानुसारीत्या यज्ञात्मकोऽग्निः सूर्यस्यचप्रकाशकत्वेनतत्परतयाव्याख्यायते—अस्ययज्ञात्मकस्याग्नेःचत्वारिशृङ्गा-श्चत्वारोवेदाःशृङ्गस्थानीयाः एतच्चापस्तम्बेनयज्ञंव्याख्यास्यामः त्रिभिर्वेदैर्विधीयतइत्युक्तत्वा-त्तदपेक्षयाचत्वारिशृङ्गा-ण्याथर्वणस्येतरानपेक्ष्यैवैकाग्निसाध्यानांकृत्स्नकर्मणामभिधायकत्वात् तदपेक्षयाचत्वारिशृङ्गे-त्युक्तं त्रयोअस्यपादाः सवनानित्रीण्यस्यपादाः प्रवृत्तिसाधनत्वात्पादाइत्युच्यन्ते द्वेशीर्षे ब्रह्मौद-नप्रवर्ग्यमहाहविःसोमप्रावण्येनेत्युक्तं सप्तहस्तासः सप्तच्छन्दांसिहस्तास्थानीयानि छन्दांस्यपिदे-

फलप्रीणनस्य मुख्यसाधनमिति हस्तत्वव्यवहारः त्रिधाबद्धः मन्त्रब्राह्मणैस्त्रिप्रकारं बद्धः मन्त्रब्राह्मणस्य तन्निष्पाद्यत्वात् वृषभः फलानां वर्षिता रोरवीति भृशं शब्दायते ऋग्यजुःसामोक्तैः शास्त्रयागस्तुतिरूपैः होत्राद्युत्पादितैर्ध्वनिभिः असौ रौति एवं महोदेवः एष यज्ञात्मा महानुभावो देवः मर्त्यानाविवेश मर्त्यैर्यजमानैर्निष्पाद्यत्वात् प्रवेश उपचर्यते अत्र यास्कः—चत्वारि शृङ्गेति वेदा वा एत उक्ता इत्यादिना निरवोचत्तदत्रानुसंधेयम् । अथ सूर्यपक्षे व्याख्यायते—अस्यादित्यस्य चत्वारि शृङ्गाणि चतस्रो दिश एताः श्रयणार्हत्वाच्छृङ्गाणीत्युपचर्यन्ते त्रयो अस्य पादाः त्रयो वेदाः पादस्थानीया भवन्ति गमनसाधनत्वात् तथाहि ऋग्भिः पूर्वाह्णे दिवि देव ईयत इत्युपक्रम्य वेदैरशून्यस्त्रिभिरेति सूर्यः इति हि वेदत्रयेण गतिराम्नाता द्वे शीर्षे अहश्च रात्रिश्चेति द्वे शिरसी सप्त हस्तासो अस्य सप्त रश्मयः षड्विधलक्षणानृतव एकः साधारण इति सप्त हस्ता भवन्ति त्रिधा बद्धः त्रिषु स्थानेषु क्षित्यादिषु अग्न्याद्यात्मकत्वेन संबद्धः ग्रीष्मवर्षाहेमन्ताख्यैस्त्रिभिर्वा बद्धो वा वृषभो वर्षिता रोरवीति शब्दं करोति वृष्ट्यादिद्वारा स महो महान्देवो मर्त्यानाविवेश तन्नियन्तृतया सूर्य आत्मा जगतस्तस्थुषश्चेति हि श्रुतम् । एवमन्यादिपक्षेऽपि योज्यम् । शाब्दिकास्तु शब्दब्रह्मपरतया चत्वारि शृङ्गेति चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्चेत्यादिना व्याचक्षते । अपरे त्वन्यपरतया । तत्सर्वं भाष्यद्रष्टव्यम् ॥ ३ ॥

इस यज्ञात्मक अग्नि के चार शृङ्ग हैं अर्थात् शृङ्गस्थानीय चार देव हैं। इसे सवनस्वरूप तीन पाद हैं। ब्रह्मोदन एवम् प्रवर्ग्य-स्वरूप दो मस्तक हैं। छन्दःस्वरूप सात हाथ हैं। ये अभीष्टवर्षी हैं। ये मंत्र, कल्प एवम् ब्राह्मण-द्वारा तीन प्रकार से बद्ध हैं। ये अत्यन्त शब्द करते हैं। वे महान् देव मर्त्यों के मध्य में प्रवेश करते हैं।

त्रिधा हि॒तं प॒णिभि॑र्गु॒ह्यमा॑नं॒ गवि॑ दे॒वासो॑ घृ॒तमन्व॑विन्दन् ।
इन्द्र॒ एकं॒ सूर्य॒ एकं॑ जजान वे॒नादेकं॑ स्व॒धया॒ निष्ट॑तक्षुः ॥ ४ ॥

त्रिधा॑ । हि॒तम् । प॒णिऽभिः॑ । गु॒ह्यमा॑नम् । गवि॑ । दे॒वासः॑ । घृ॒तम् । अनु॑ । अ॒वि॒न्द॒न् । इन्द्रः॑ । एक॑म् । सूर्यः॑ । एक॑म् । ज॒जा॒न॒ । वे॒नात् । एक॑म् । स्व॒धया॑ । निः । त॒त॒क्षुः॒ ॥ ४ ॥

पणिभिरसुरैर्गवि गोषु त्रिधा क्षीरदध्याज्यभेदेन त्रिप्रकारं हितं निहितं गुह्यमानं गोपितं घृतं दीप्तं रसरूपं वा द्रव्यं देवासो देवा अन्वविन्दन्नलभन्त तत्रेन्द्र एकं क्षीरं भानोदपादयत् सूर्य एकं भमानवेनात्कान्तिमतोऽग्नेर्गमनवतो वायोर्वैकं घृतं स्वधयाऽन्नेन निमित्तेन द्रव्येण वा सामर्थ्येन निष्टतक्षुः निरपादयन्देवाः ॥ ४ ॥

४. प्राणियों ने गौओं के मध्य में तीन प्रकार के दीप्त पदार्थों (क्षीर, दधि और घृत) को छिपाकर रखा था। देवों ने उन्हें प्राप्त किया था। इन्द्र ने एक क्षीर को उत्पन्न किया

था। सूर्य ने भी एक को उत्पन्न किया था। देवों ने कान्तिमान अग्नि या गमनशील वायु को निकट से अन्न-द्वारा और एक पदार्थ घृत को निष्पन्न किया था।

**एताअर्षन्तिहृद्यात्समुद्राच्छतव्रजारिपुणानावचक्षे।**
**घृतस्यधाराअभिचाकशीमिहिरण्ययोवेतसोमध्यआसाम् ॥५॥१०**

एताः। अर्षन्ति। हृद्यात्। समुद्रात्। शतऽव्रजाः। रिपुणा। न। अवऽचक्षे। घृतस्य। धाराः। अभि। चाकशीमि। हिरण्ययः। वेतसः। मध्ये। आसाम् ॥५॥१०॥

एताआपोघृतधारावा अर्षन्त्यधःपतन्ति शतव्रजाः अपरिमितगतयः सत्यः हृद्यात् हृदयङ्गमात्समुद्रादन्तरिक्षात् रिपुणावकाशप्रतिबन्धकारिणाशत्रुणास्तेनेननावचक्षे नावदर्शनायया अहमधःपतिताअर्षन्ति ताघृतस्यधाराः अभिचाकशीमिअभिपश्यामि कुत्रेतितदुच्यते हिरण्ययोहिरण्मयोवेतसः अप्सुसंभवोऽग्निर्वैद्युतः आसामपांमध्येवर्ततइतिशेषः अत्रघृतस्यधारा अभिचाकशीमीत्यनेनचरमपादेनहोमाधारोऽग्निर्वैद्युतोऽभिराजितस्योवोच्यते ॥५॥

५. अपरिमित गतिविशिष्ट यह जल हृदयङ्गम अन्तरिक्ष से अधोदेश में निपतित होता है। प्रतिबन्धकारी शत्रु उसे नहीं देख सकता है। उस सकल घृतधारा को हम देख सकते हैं। इसके मध्य में अग्नि को भी देख सकते हैं।

**सम्यक्स्रवन्तिसरितोनधेनाअन्तर्हृदामनसापूयमानाः।**
**एतेअर्षन्त्यूर्मयोघृतस्यमृगाइवक्षिपणोरीषमाणाः ॥६॥**

सम्यक्। स्रवन्ति। सरितः। न। धेनाः। अन्तः। हृदा। मनसा। पूयमानाः। एते। अर्षन्ति। ऊर्मयः। घृतस्य। मृगाःऽइव। क्षिपणोः। ईषमाणाः ॥६॥

सम्यगभितःपरितःस्रवन्ति क्षरन्ति घृतधाराः किमिव सरितोनधेनाः प्रीणयित्र्यो नद्यइव किंच अन्तर्हृदामनसा हृदयमध्यगतेनचित्तेन भावनासहितेनेतियावत् तेनपूयमानाः शुद्धाःकृताः किंतदेवोच्यते—एतेघृतस्योर्मयोऽर्षन्तिगच्छन्ति शुद्धाःअवकाशादधःपरिपतन्ति किमिव क्षिपणोःक्षेपकाद्व्याधादीषमाणाः पलायमानामृगाइव तेयथा कक्षंप्रविशन्ति तद्वत् अनेनशोभनमुक्तंभवति ॥६॥

६. घृत की धारा प्रीतिप्रद नदी की तरह क्षरित होती है। यह सकल जल हृदयमध्यगत चित्त के द्वारा पूत होता है। घृत की ऊर्मि प्रवाहित होती है। जैसे व्याधा के निकट से मृग पलायित होता है।

सिन्धोरिवप्राध्वनेशूघनासोवातप्रमियःपतयन्तियह्वाः ।
घृतस्यधाराअरुषोनवाजीकाष्ठाभिन्दन्नूर्मिभिःपिन्वमानः ॥ ७ ॥

सिन्धोःऽइव । प्रऽअध्वने । शूघनासः । वातऽप्रमियः । पतयन्ति ।
यह्वाः । घृतस्य । धाराः । अरुषः । न । वाजी । काष्ठाः । भिन्दन् ।
ऊर्मिऽभिः । पिन्वमानः ॥ ७ ॥

सिन्धोःस्यन्दमानायानद्याःसकाशादिव उदकानीव प्राध्वनेप्रवणप्रदेशे शूघनासः आशुगन्त्र्यः आशुइतिशुइतिचक्षिप्रनामनीभवतइतिनिरुक्तम् । वातप्रमियः वायुवत्प्रकृष्टवेगाः यह्वाःमहत्योघृतस्यधाराःपतयन्ति गच्छन्ति अग्नेरुपरि घृतमुदकमितिपक्षेसिन्धोरिवेस्यन्देवपाब्दोनर्थकः स्यन्दनसाधनादन्तरिक्षादुदकलक्षणाघृतधाराउदकधाराःपतयन्ति गच्छन्ति भूमौ किंच घृतसंस्त्यायाःकाष्ठाः मर्यादाभूताःपरिधीन्भिन्दन्नूर्मिभीरसैःपिन्वमानोवर्धमानोभवति उदकमितिपक्षेकाष्ठाःक्रान्त्वास्थितादिशोभिन्दन्नूर्मिभिस्तरङ्गैःपिन्वमानोभवति तत्रदृष्टान्तः—अरुषोनवाजी आरोचमानोगर्वेणगमनशीलोऽश्वइव सयथाकाष्ठाभिन्दन्पिन्वमानश्चभवतितद्वत् ॥ ७ ॥

७. नदी का जल जैसे निम्नदेश की तरफ़ शीघ्र गमन करता है, वैसे ही वायु की तरह वेगशालिनी होकर महती घृत-धारा द्रुत वेग से गमन करती है। यह घृत-राशि परिधि भेद करके ऊर्मि-द्वारा वद्धित होती है, जैसे गर्ववान् अश्व गमन करता है।

अभिप्रवन्तसमनेवयोषाःकल्याण्यःस्मयमानासोअग्निम् ।
घृतस्यधाराःसमिधोनसन्तताजुषाणोहर्यतिजातवेदाः ॥ ८ ॥

अभि । प्रवन्त । समनाऽइव । योषाः । कल्याण्यः । स्मयमानासः ।
अग्निम् । घृतस्य । धाराः । सम्ऽइधः । नसन्त । ताः । जुषाणः ।
हर्यति । जातऽवेदाः ॥ ८ ॥

घृतस्यधाराः अग्निमभिसमनेव समानमनस्कायोषायोषितःपतिमिवाभिप्रवन्त अभिनमन्ति निम्नंकुर्वन्ति कीदृश्यस्ताः कल्याण्योभद्ररूपाः स्मयमानासोहसन्त्यः किंच ताः समिधःसम्यग्दीपयित्र्यःसत्योनसन्त व्याप्नुवन्ति ताश्चधाराजुषाणःप्रीयमाणःसेवमानोवाऽयं जातवेदाः हर्यति कामयते घृतशब्दस्योदकमितिपक्षे अभिभासनेदःशब्दाम्यावैद्युतोऽग्निरभिलक्ष्योगृह्यते तंवैद्युतमुदकधाराअभिप्रवन्त नसन्त च अनताःहर्यतीति ॥ ८ ॥

८. कल्याणी और हास्यवदना स्त्री जैसे एकचित्त होकर पति के प्रति आसक्त होती है, उसी तरह घृतधारा अग्नि के प्रति गमन करती है वह सम्यग्रूप से दीप्तिप्रद होकर सर्वत्र व्याप्त होती है। जातवेदा प्रीत होकर इस सकल धारा की कामना करते हैं।

कुन्याइववहतुमेतवाउअञ्ज्यञ्जानाअभिचाकशीमि ।
यत्रसोमःसूयतेयत्रयज्ञोघृतस्यधाराअभितत्पवन्ते ॥ ९ ॥

कुन्याःऽइव । वहतुम् । एतवै । ऊँ इति । अञ्जि । अञ्जानाः ।
अभि । चाकशीमि । यत्र । सोमः । सूयते । यत्र । यज्ञः । घृतस्य ।
धाराः । अभि । तत् । पवन्ते ॥ ९ ॥

कन्याइव अनूढाबालिकाः तायथावहतुमुद्वाहंप्राप्तुम् एतवै उँ एतुंपतिंगन्तुम् अञ्जि अञ्जक-
माभरणंतेनोपाञ्जानाव्यञ्जयन्त्यःएवंकुर्वन्त्यः कन्याइव स्वभर्तृसूलमध्वरेषुतंवाक्तिमावि-
र्वहंतुमेतुमञ्जिव्यञ्जकंतदीयंरूपमञ्जानाः व्यञ्जयन्तीःताव्दीर्घृतस्यधाराः अभिचाकशी-
म्यभिपश्यामि घृतेनोदकेनवसोमस्यवेघृतस्यधाराअभ्यक्तमसिदं किंच ताधाराः यत्रसोमः
सूयते यत्रचेतरोयज्ञस्तायतेतत्तंयज्ञमभिलक्ष्यपवन्ते उपगच्छन्तिस्तु ॥ ९ ॥

९. कन्या (अनूढ़ा बालिका) जिस तरह से पति के निकट जाने के लिए वेश-विन्यास करती है, हम देखते हैं, यह सकल घृतधारा उसी तरह से करती है। जिस स्थल में सोम अभिषुत होता है अथवा जिसके स्थल में यज्ञ विस्तीर्ण होता है, उसी को लक्ष्य कर वह धारा गमन करती है।

अभ्यर्षतसुष्टुतिंगव्यमाजिमस्मासुभद्राद्रविणानिधत्त ।
इमंयज्ञंनयतदेवतानोघृतस्यधारामधुमत्पवन्ते ॥ १० ॥

अभि । अर्षत । सुऽस्तुतिम् । गव्यम् । आजिम् । अस्मासु ।
भद्रा । द्रविणानि । धत्त । इमम् । यज्ञम् । नयत । देवता ।
नः । घृतस्य । धाराः । मधुऽमत् । पवन्ते ॥ १० ॥

हेमदीयाऋत्विजः गव्यं गोसमूहरूपं गोसंबन्धिनंवा आजिं संग्राममभ्यर्षत अभिगच्छत
यद्वागिमयतना सुष्टुतिंशोभनांस्तुतिम् अत्रगोशब्देन उदकानिगावोवोच्यन्ते तत्संघातोभि-
मेतः अस्मासुयजमानेषु भद्रा स्तुत्यानि द्रविणानि धत्त धारयत स्तुत्याख्यफलंकल्प्यते किंच
नोऽस्मदीयमिमंयज्ञंदेवता अत्रपहृद्यान्देवानस्त प्रापयत घृतस्यधाराः मधुमद्यथातथाप-
वन्तेगच्छन्ति ॥ १० ॥

१०. हे हमारे ऋत्विको, गौओं के निकट गमन करो, उनकी शोभन स्तुति करो। हम यजमानों के लिए यह स्तुति योग्य धन धारण करें। हमारे इस यज्ञ को देवों के निकट ले जायें। घृत की धारा मधुर भाव से गमन करती है।

धामन्तइत्येषाउत्तरसूक्तस्यायावाध्यायोत्सर्जनेनोपाकरणयोर्विनियुक्ते धामन्तेविश्वमितिप्रती- कमुक्त्वातदन्तेइतियुवाइतिसूत्रितत्वात् ।

सैषैकादशी–

**धामन्तेविश्वंभुवनमधिश्रितमन्तःसमुद्रेहृद्य१न्तरायुषि । अपामनीकेसमिथेयआभृतस्तमश्याममधुमन्तंतऊर्मिम् ॥ ११ ॥ ११ ॥**

धामन् । ते । विश्वम् । भुवनम् । अधि । श्रितम् । अन्तरिति । समुद्रे । हृदि । अन्तः । आयुषि । अपाम् । अनीके । सम्ऽइथे । यः । आऽभृतः । तम् । अश्याम । मधुऽमन्तम् । ते । ऊर्मिम् ॥ ११ ॥ ११ ॥

तेत्वदीयेधामन्धामनि तेजःस्थाने विश्वंभुवनं कृत्स्नंभूतजातमधिश्रितं तदपिचधामकु- त्रकुत्रास्तइत्युच्यते अन्तःसमुद्रे वडवाग्नित्वेनान्तरिक्षस्यमध्ये सूर्यमण्डलत्वेन हृद्यन्तः सर्वप्रा- णिनांहृदयेवैश्वानरत्वेनायुष्यन्नेसर्वप्राण्याहारत्वेन यद्वा आयुषीत्येतत्हृद्विशेषणं जठराग्नि- नास्त्यायुर्भ्रियते अपामनीके उदकसंस्त्यायेवैद्युताग्नित्वेनसमिथेसंग्रामेच शौर्याग्निरूपेण एवं सर्वेषुस्थानेषु वर्तमानं धाम तस्मिन्धामनि यऊर्मिः घृतरूपउदकरूपोवारसआभृतः आहृतः स्थापितः तेत्वदीयंतं रसंमधुमन्तं माधुर्योपेतम्अश्याम व्याप्नुयाम ॥ ११ ॥

११. तुम्हारा तेज समुद्र के मध्य में वड़वाग्नि रूप से, अन्तरिक्ष के मध्य में सूर्यमण्डल रूप से हृदय-मध्य में वैश्वानर रूप से, अन्न में आहार रूप से, जलसमूह में विद्युत रूप से और संग्राम में शौर्याग्नि रूप से अवस्थित है। समस्त भूतजात उसके अधिश्रित हैं। उसमें जो घृत रूप रस स्थापित हुआ है, उस मधुर रस को हम प्राप्त करते हैं।

॥ इतितृतीयस्याष्टमेएकादशोवर्गः ॥ ११ ॥

॥ इतिचतुर्थेमण्डलेपञ्चमोनुवाकः ॥ ५ ॥

॥ इत्थंश्रीबुक्कभूपालसाम्राज्यैकधुरन्धरः ॥ विद्यातीर्थगुरोर्दृष्ट्याप्राप्तसर्वेष्टवैभवः ॥ १ ॥
श्रीमत्सायणमन्त्रीशःसकलागमतत्त्ववित् ॥ वाशतप्यांमाधवीयवेदार्थस्यप्रकाशने ॥ २ ॥
चतुर्थंमण्डलंसम्यग्वामदेवेनवीक्षितम् ॥ अष्टोत्तरेस्तुपञ्चाशत्सूक्तैःपञ्चशतैरपि ॥ ३ ॥
एकोनपानवत्याश्चऋचैर्मैत्र्यसंमितम् ॥ व्याकार्षीत्सुस्वभोपार्थपश्यतैताद्विमत्सराः ॥ ४ ॥

**॥ इतिवामदेवंचतुर्थमण्डलंसमाप्तम् ॥ ४ ॥**

## ॥ श्रीगणेशायनमः ॥

आत्रेये पञ्चमे मण्डले षडनुवाकाः तत्र प्रथमेऽनुवाके चतुर्दश सूक्तानि तत्राबोध्यग्निरिति द्वादशर्चं प्रथमं सूक्तम् अत्रेयमनुक्रमणिका—अबोधि द्वादश बुधगविष्ठिरावि[ति] । पञ्चमे मण्डलेऽनुक्तगोत्रमात्रेयं विद्यादिति परिभाषितत्वादात्रेयौ बुधगविष्ठिरावृषी अनादेशपरिभाषया त्रिष्टुप् मण्डलादिपरिभाषया अग्निर्देवता प्रातरनुवाके आग्नेये क्रतौ त्रैष्टुभे छन्दसि आश्विनशस्त्रे चैतदादि चत्वारि सूक्तानि तथा च सूत्रितम्—अबोध्यग्निः समिधेति चत्वारीति । अध्यायोत्सर्जनोपाकरणयोर्होमे अबोध्यग्निरित्यृक्त्वे- नविनियोग उक्तः ।

तत्र प्रथमा—

ॐ अबो॑ध्य॒ग्निः स॒मिधा॒ जना॑नां॒ प्रति॑ धे॒नुमि॑वाय॒तीमु॒षास॑म् ।
य॒ह्वाइ॑व॒ प्र व॒यामु॒ज्जिहा॑नाः॒ प्र भा॒नवः॑ सिस्रते॒ नाक॒मच्छ॑ ॥ १ ॥

अबो॑धि । अ॒ग्निः । स॒मऽइ॑धा । जना॑नाम् । प्रति॑ । धे॒नुम्ऽइ॑व ।
आ॒ऽय॒तीम् । उ॒षस॑म् । य॒ह्वाःऽइ॑व । प्र । व॒याम् । उ॒त्ऽजिहा॑नाः ।
प्र । भा॒नवः॑ । सि॒स्र॒ते॒ । नाक॑म् । अच्छ॑ ॥ १ ॥

अयमग्निर्जनानामध्वर्य्वादीनां समिधा समिद्भिरबोधि प्रबुद्धोऽभूत् धेनुमिव अग्निहोत्रार्थं धेनुं प्रति यथा प्रातर्बुध्यते तद्वत् आयतीमागच्छन्तीमुषसं प्रति उषःकाले इत्यर्थः अथ अनु- अस्याग्नेर्भानवो ज्वालाः यह्वाः महान्तो वयां शाखां प्रोज्जिहानाः प्रोद्गमयन्तो वृक्षा इव प्रोज्जिहा- नाः स्वां विज्ञानं स्यन्तो नाकमन्तरिक्षम् अच्छाभिमुख्येन प्रसिस्रते प्रसरन्ति ॥ १ ॥

१. धेनु की तरह आगमनकारिणी उषा के उपस्थित होने पर अग्नि अध्वर्युओं के काष्ठ-द्वारा प्रबुद्ध होते हैं । उनका शिखासमूह महान् है एवम् शाखा-विस्तारकारी वृक्ष की तरह वह अन्तरिक्षाभिमुख प्रसृत होता है ।

अथ द्वितीया—

अबो॑धि॒ होता॑ य॒जथा॑य दे॒वानू॒र्ध्वो अ॒ग्निः सु॒मनाः॑ प्रा॒तर॑स्थात् ।
समि॑द्धस्य॒ रुश॑ददर्शि॒ पाजो॑ म॒हान्दे॒वस्तम॑सो॒ निर॑मोचि ॥ २ ॥

अबोधि । होता । युजथाय । देवान् । ऊर्ध्वः । अग्निः ।
सुऽमनाः । प्रातः । अस्थात् । सम्ऽइद्धस्य । रुशत् । अदर्शि ।
पाजः । महान् । देवः । तमसः । निः । अमोचि ॥ २ ॥

अयंहोताहोमनिष्पादकोऽग्निः देवान्यष्टव्यान्यजथाय यष्टुमबोधि बुध्यते सोऽग्निःप्रातःकालेसुमनाःशोभनमनस्कःयजमानानुग्रहबुद्धिःसन् ऊर्ध्वोऽस्थात् उत्तिष्ठति समिद्धस्याग्नेरुशद्दीप्यमानंपाजोबलंज्वालालक्षणमदर्शि दृश्यते अथ तथाभूतोमहान्देवस्तमसान्धकारान्निरमोचि निर्मुक्तोभूत् ॥ २ ॥

२. होता अग्नि देवों के यजन के लिए प्रबुद्ध होते हैं। अग्नि प्रातःकाल में प्रसन्न मन से ऊर्ध्वाभिमुख उत्थित होते हैं। समिद्ध अग्नि का दीप्तिमान् बल दृष्ट होता है। इस तरह के महान् देव अन्धकार से मुक्त होते हैं।

यदींगुणस्यरशनामजीगःशुचिरङ्क्तेशुचिभिर्गोभिरग्निः ।
आद्दक्षिणायुज्यतेवाजयन्त्युत्तानामूर्ध्वोअधयज्जुहूभिः ॥ ३ ॥

यत् । ईम् । गणस्य । रशनाम् । अजीगरिति । शुचिः । अङ्क्ते ।
शुचिऽभिः । गोभिः । अग्निः । आत् । दक्षिणा । युज्यते ।
वाजऽयन्ती । उत्तानाम् । ऊर्ध्वः । अधयत् । जुहूभिः ॥ ३ ॥

यदा ईमयमग्निर्गणस्यसंघात्मकस्यजगतः रशनांरज्जुरिव व्यापारप्रतिबन्धकंतमः अजीगः गिरति गृह्णातितदा समिद्धोऽग्निर्भवतीत्यर्थः तदा शुचिर्दीप्तोऽग्निः शुचिभिर्गोभिर्दीप्तैरश्मिभिः अङ्क्ते व्यनक्ति विश्वंजगत् आदनन्तरमेवदक्षिणाप्रवृद्धावाजयन्ती अन्नमिच्छन्ती आज्यधारायुज्यतेयुक्ताभवति अथवा दक्षिणाप्रवृद्धाज्यधारायुज्यते तांचधारामुत्तानाम् ऊर्ध्वतानाम्उपरिविस्तृताम् ऊर्ध्वउन्नतःसन् जुहूभिरधयत् पिबति ॥ ३ ॥

३. जब अग्नि संघात्मक जगत् के रज्जुरूप अन्धकार को ग्रहण करते हैं, तब वे प्रदीप्त हो करके दीप्त रश्मि-द्वारा जगत् को प्रकाशित करते हैं। इसके अनन्तर वे प्रवृद्ध और अन्नाभिलाषिणी घृत-धारा के साथ युक्त होते हैं एवम् उन्नत होकर ऊपरी भाग में विस्तृत उस घृतधारा को जुहू-द्वारा पीते हैं।

अग्निमच्छादेवयतांमनांसिचक्षूंषीवसूर्येसंचरन्ति ।
यदींसुवातेउषसाविरूपेश्वेतोवाजीजायतेअग्रेअह्नाम् ॥ ४ ॥

अग्निम् । अच्छ । देवऽयताम् । मनांसि । चक्षूंषिऽइव । सूर्ये । सम् ।
चरन्ति । यत् । ईम् । सुवाते इति । उषसा । विरूपेइतिविऽरूपे ।
श्वेतः । वाजी । जायते । अग्रे । अह्नाम् ॥ ४ ॥

अग्निमच्छ अभिवेषम् आभिमुख्येन देवयतदेवानात्मन इच्छतां यजमानानां मनांसि संचरन्ति देवायष्टव्यास्तदर्थं कदायं वर्षिष्यतीतिध्यायन्तीत्यर्थः चक्षूंषीव सर्वेषां प्राणिनां यथा सूर्ये संचरन्ति तद्वत् यथदा इमेनमग्निमुषसासह विरूपे द्यावापृथिव्यौ सुवाते जनयतः तदानीं श्वेतः प्रकृष्टवर्णोपेतो वाजी वेजनवानग्निरह्नामग्रे प्रातःकाले जायते उत्पद्यते प्रवर्धत इत्यर्थः ॥ ४ ॥

४. प्राणियों का चक्षु जिस तरह से सूर्य के अभिमुख सञ्चरण करता है, उसी तरह से यजमानों का मानस अग्नि के अभिमुख सञ्चरण करता है। जब विरूपा द्यावा-पृथिवी उषा के साथ अग्नि को उत्पन्न करती है, तब प्रकृष्ट वर्ण (श्वेत) से युक्त होकर वाजी स्वरूप अग्नि प्रातःकाल में उत्पन्न होते हैं।

जनिष्टहिजेन्योअग्रेअह्नांहितोहितेष्वरुषोवनेषु ।
दमेदमेसप्तरत्नादधानोग्निर्होतानिषसादायजीयान् ॥ ५ ॥

जनिष्ट । हि । जेन्यः । अग्रे । अह्नाम् । हितः । हितेषु । अरुषः । वनेषु । दमेऽदमे । सप्त । रत्ना । दधानः । अग्निः । होता । नि । ससाद । यजीयान् ॥ ५ ॥

अयमग्निर्जेन्यः उत्पादनीयः अह्नामग्रे उदयकाले जनिष्ट प्रादुरभूत् पश्चात् हि तेषु हितेषु वनेषु वनोत्थेषु काष्ठेषु अरुषः आरोचमानः सन् हितः स्थापितः पश्चाद् इमे दमे प्रत्येक यागगृहे सप्त रत्नानि रमणीयाः सप्त ज्वालाः दधानो धारयमाणः अथवा यजमानेभ्यः सप्तविधानि रत्नानि दधानो अग्निर्होता होमनिष्पादकः सन् यजीयान् यष्टव्यः सन् निषसाद निषण्णोभवति ॥ ५ ॥

५. उत्पादनीय अग्नि उदय काल में प्रादुर्भूत होते हैं और दीप्ति-युक्त होकर वन्य भूत वनसमूह में स्थापित होते हैं। इसके अनन्तर वे रमणीय सात ज्वाला (शिखा) धारण करके होता और यागयोग्य होकर प्रत्येक गृह में उपवेशन करते हैं।

जीवसि यजमाने मृत इति शब्दो यदि स्यात् इदानीं सुरभिमतीष्टिः कार्या तत्रेयमनुवाक्या सूत्रितं च—अग्निर्होता न्यसीदद्यजीयानग्ने वीभिर्देववीतिं नो अद्येति ।

अग्निर्होतान्यसीदद्यजीयानुपस्थेमातुःसुरभाउलोके ।
युवाकविःपुरुनिःष्ठऋतावाधर्ताकृष्टीनामुतमध्यइद्धः ॥६॥१२॥

अग्निः । होता । नि । असीदत् । यजीयान् । उपऽस्थे । मातुः । सुरभौ । ऊँ इति । लोके । युवा । कविः । पुरुनिःऽस्थः । ऋतऽवा । धर्ता । कृष्टीनाम् । उत । मध्ये । इद्धः ॥ ६ ॥ १२ ॥

अयमग्निर्होताहोमनिष्पादकः यवीयान्यष्टव्यश्चसन् न्यसीदत् निषसाद कुत्रेतितदु-च्यते—मातुःसर्वस्यनिर्मातुर्भूम्याउपस्थेउत्सङ्गेतत्रापिसुरभौ आज्यादिसौरभ्ययुक्तेलोकेसर्वैर्द्रष्टव्ये स्थाने वेदिलक्षणे उतापिच युवा नित्यतरुणः सर्वत्रमिश्रितोवा कविर्मेधावी पुरुनिष्ठः बहुस्थानः ऋतावा यज्ञवान् भर्ता सर्वस्यधारकः एवंभूतःकृष्टीनामृत्विग्यजमानानांमध्ये इद्धः दीप्तः सन्वर्ततइतिशेषः ॥ ६ ॥

६. होता और यष्टव्य हो करके अग्नि माता पृथिवी की गोद में आज्य आदि से सुगन्धयुक्त वेदीरूप स्थान पर उपविष्ट होते हैं। वे युवा, कवि, बहुस्थान-विशिष्ट यज्ञवान् और सबके धारक हैं। यजमानों के मध्य में समिद्ध होकर रहते हैं।

प्रणुत्यंविप्रमध्वरेषुसाधुमग्निंहोतारमीळतेनमोभिः।
आयस्ततानरोदसीऋतेननित्यंमृजन्तिवाजिनंघृतेन ॥ ७ ॥

प्र। नु। त्यम्। विप्रम्। अध्वरेषु। साधुम्। अग्निम्। होतारम्। ईळते। नमःऽभिः। आ। यः। ततान। रोदसी इति। ऋतेन। नित्यम्। मृजन्ति। वाजिनम्। घृतेन ॥ ७ ॥

त्यंतमग्निंनमोभिःस्तुतिभिर्नुक्षिप्रम् ईळते स्तुवन्ति कीदृशंतं विप्रं मेधाविनमध्वरेषुसाधुं फलसाधकं होतारं होमनिष्पादकं योदेवोरोदसीद्यावापृथिव्यौ ऋतेनोदकेन आततान विस्तारितवान् अग्नौप्रास्ताहुतेरादित्यद्वारावृष्ट्युत्पादकत्वात् अथवा ऋतेनसत्यभूतेनहविषा दिवं तथाभूतेनवृष्ट्यादिफलेनभुवंचाततान वाजिनमन्नवन्तंदेवंयजमानाः नित्यंघृतेनोदकेना-ज्येनवामृजन्ति परिचरन्ति ॥ ७ ॥

७. जो द्यावा-पृथिवी को उदक-द्वारा विस्तारित करते हैं, उन मेधावी, यज्ञफलसाधक और होता अग्नि को स्तुति-द्वारा यजमानगण शीघ्र स्तुति करते हैं। यजमानगण अन्नवान् अग्नि की, घृत-द्वारा, नित्य परिचर्या करते हैं।

मार्जाल्योमृज्यतेस्वेदमूनाःकविप्रशस्तोअतिथिःशिवोनः।
सहस्रशृङ्गोवृषभस्तदोजाविश्वाँअग्नेसहसाप्रास्यन्यान् ॥ ८ ॥

मार्जाल्यः। मृज्यते। स्वे। दमूनाः। कविऽप्रशस्तः। अतिथिः। शिवः। नः। सहस्रऽशृङ्गः। वृषभः। तत्ऽओजाः। विश्वान्। अग्ने। सहसा। प्र। असि। अन्यान् ॥ ८ ॥

मार्जाल्यः संमार्जनीयोऽयमग्निः सूज्यतेपरिचर्यतेस्वेस्वकीयेस्थाने कीदृशोयं प्रमूलाप्र-ज्ञमनलप्रशान्तमनावाक्कविप्रशस्तः कविभिर्मेधाविभिःप्रशस्तः प्रकर्षेणस्तुत्यः नोस्माकमतिथिरिति-थिवत्पूज्यः शिवः सुखकरश्च सहस्रशृङ्गोपरिमितज्वालः वृषभोवर्षिताफलानां तवोगाः बल-मिन्द्रवद्धेनोपासिततवेयोजोपस्यतादृशः सर्वबलस्वरूपस्त्यर्थः अथप्रत्यक्षवादः हेअग्ने विश्वा-नन्यान्स्वव्यतिरिक्तान्सर्वान्सहसाबलेनमासि प्रेतिपरेत्यर्थे पराभवसि स्वाधुंप्रभवसि ॥ ८ ॥

८. संमार्जनीय अग्नि अपने स्थान में पूजित होते हैं। वेदान्त (प्रशान्त) मना हैं। कविगण उनकी स्तुति करते हैं। वे हम लोगों के लिए अतिथि की तरह पूज्य और सुखकर हैं। उनकी अपरिमित शिखायें हैं। वे अभीष्टवर्षी और प्रसिद्ध बलशाली हैं। हे अग्नि, तुम अपने से अतिरिक्त अन्य सब लोगों को बलद्वारा परिभूत करते हो।

प्रसुद्योअग्नेअत्येष्यन्यानाविर्यस्मैचारुतमोबभूथ।
ईळेन्योवपुष्योविभावाप्रियोविशामतिथिर्मानुषीणाम् ॥ ९ ॥

प्र। सुद्यः। अग्ने। अति। एषि। अन्यान्। आविः। यस्मै।
चारुऽतमः। बभूथ। ईळेन्यः। वपुष्यः। विभाऽवा। प्रियः।
विशाम्। अतिथिः। मानुषीणाम् ॥ ९ ॥

हेअग्ने त्वंयज्ञमाप्राय सद्यस्तदानीमेवान्यानस्वसमानान् अत्येषि अतिक्रामसि यस्मै चारुतमःसन् आविर्बभूथ किंच त्वमीळेन्यःस्तुत्योवपुष्योवपुष्करोदीप्तिकरोवा विभावा विशिष्टदीप्तिमान्प्रियः प्रियभूतोविशांसर्वेषांप्राणिनां तथाऽतिथिः पूज्योमानुषीणांप्रजानां भवसि ॥ ९ ॥

९. हे अग्नि, तुम यज्ञ को प्राप्त कर जिसके निकट चारुतम रूप से आविर्भूत होते हो, उसके निकट से तुम शीघ्र ही दूसरों को अतिक्रान्त करके गमन करते हो। तुम स्तुतियोग्य, दीप्तिकर एवम् विशिष्ट दीप्तिमान् हो। तुम प्राणियों के प्रिय और मनुष्यों के अतिथि (पूज्य) हो।

तुभ्यंभरन्तिक्षितयोयविष्ठबलिमग्नेअन्तितओतदूरात्।
आभन्दिष्ठस्यसुमतिंचिकिद्धिबृहत्तेअग्नेमहिशर्मभद्रम् ॥१०॥

तुभ्यम्। भरन्ति। क्षितयः। यविष्ठ। बलिम्। अग्ने। अन्तितः।
आ। उत। दूरात्। आ। भन्दिष्ठस्य। सुऽमतिम्। चिकिद्धि।
बृहत्। ते। अग्ने। महि। शर्म। भद्रम् ॥ १० ॥

हेयविष्ठ युवतमाग्ने तुभ्यं क्षितयोमनुष्याभरन्ति संपादयन्ति किंबलिंपूजांहविर्लक्षणाम् अन्तितोऽन्तिकात् उतापिच दूरात् आइतिचार्थे किंच भन्दिष्ठस्य अतिशयेनस्तोतुः सुमतिंस्तुतिमाचिकिद्धि आजानीहि हेअग्ने ते तव शर्मसुखमस्मभ्यंदातव्यंबृहन्महद्भद्रंस्तुत्यंच ॥ १० ॥

१०. हे युवतम अग्नि, मनुष्यगण निकट से और दूर से तुम्हारी पूजा करते हैं। जो तुम्हारी अधिक स्तुति करता है, तुम उसी की स्तुति ग्रहण करते हो। हे अग्नि, तुम्हारे द्वारा प्रदत्त सुख वृहत्, महान् और स्तुतियोग्य है।

आद्यरथंभानुमोभानुमन्तमग्नेतिष्ठयजतेभिःसमंन्तम् ।
विद्वान्पथीनामुर्वन्तरिक्षमेहदेवान्हविरद्यायवक्षि ॥ ११ ॥

आ । अद्य । रथम् । भानुऽमः । भानुऽमन्तम् । अग्ने । तिष्ठ । यजतेभिः । सम्ऽअन्तम् । विद्वान् । पथीनाम् । उरु । अन्तरिक्षम् । आ । इह । देवान् । हविःऽअद्याय । वक्षि ॥ ११ ॥

हेभानुमोदीप्तिमन्नग्ने अद्यास्मिन्यागदिने भानुमन्तं दीप्तिमन्तं सम्यन्तं समीचीनम्या-न्त्योपेतं रथं यजतेभिर्यष्टव्यैर्देवैःसहातिष्ठारोह विद्वान्यष्टव्यदेवपरिज्ञानवांस्त्वं पथीनां देव-यजनमार्गान्प्रति द्वितीयार्थेषष्ठी उर्वन्तरिक्षंप्रभूतेन्तरिक्षे देवान्हव्यान्हविरद्याय हविर्भक्ष-णायेहवाक्षि आवहसि ॥ ११ ॥

११. हे दीप्तिमान् अग्नि, तुम आज दीप्तिमान् और समीचीन प्रान्तयुक्त रथ पर देवों के साथ आरोहण करो। तुम्हें पथ अवगत है। प्रभूत अन्तरिक्ष प्रदेश से होकर तुम देवों को हव्य भक्षण के लिए इस स्थान में ले आते हो।

अवोचामकवयेमेध्यायवचोवन्दारुवृषभायवृष्णे ।
गविष्ठिरोनमसास्तोममग्नौदिवीवरुक्ममुरुव्यञ्चमश्रेत् ॥१२॥१३॥

अवोचाम । कवये । मेध्याय । वचः । वन्दारु । वृषभाय । वृष्णे । गविष्ठिरः । नमसा । स्तोमम् । अग्नौ । दिविऽइव । रुक्मम् । उरुऽव्यञ्चम् । अश्रेत् ॥ १२ ॥ १३ ॥

वयमात्रेयाः कवये मेधाविने मेध्याय मेधार्हाय वृषभाय वर्षकाय फलानां वृष्णे सेक्त्रे यूने वन्दारु वन्दनशीलं वचः स्तोत्रम् अवोचाम कथयाम ऋषिरात्मानं परोक्षेणैव निर्दिश्य स्तुति-मुपसंहरति गविष्ठिरोनामर्षिर्नमसानमस्कारेणहविषावायुक्तंस्तोमंस्तोत्रमग्नौ अश्रेत् श्रयतिस्म दिवीवरुक्मंरोचमानमुरुव्यञ्चम् उरुगमनमादित्यमिव ॥ १२ ॥

१२. हम अत्रिवंशी लोग मेधावी, पवित्र, अभीष्टवर्षी और युवा अग्नि के उद्देश से वन्दनायोग्य स्तोत्र का उच्चारण करते हैं। गविष्ठिर ऋषि आकाश में दीप्यमान, विस्तीर्ण गतिविशिष्ट, आदित्य के अग्नि के उद्देश से नमस्कारयुक्त स्तोत्र का उच्चारण करते हैं।

॥ इतितृतीयस्यषष्ठेत्रयोदशोवर्गः ॥ १३ ॥

कुमारंमातेतिद्वादशर्चंद्वितीयंसूक्तम् अत्रेःपुत्रःकुमारऋषिःजरनाम्नःपुत्रोवृशोवा उभौवाऋषी । कमेतंकिज्योतिषेत्यनयोस्तुवृशएवजनोमौ नकुमारः अन्त्याषट्पञ्चाशदक्षराशक्वरी शिष्टास्त्रिष्टुभः अग्निर्देवता तथानुक्रमणिका—कुमारंकुमारोवृशोवाजानस्त्रमौवाशाक्वर्यन्तंकंचीत्यृषोस्तु वृशएवेति । प्रातरनुवाकाश्विनशस्त्रयोरस्यापिसूक्तस्यविनियोगउक्तःपूर्वसूक्तेनसह ।

कुमा॒रंमा॒तायु॑व॒तिःसमु॑ब्धं॒गुहा॑बिभर्ति॒नद॑दातिपि॒त्रे ।
अनी॑कमस्य॒नमि॒नज्जना॑सःपु॒रःप॑श्यन्ति॒निहि॑तमर॒तौ ॥ १ ॥

कु॒मा॒रम् । मा॒ता । यु॒व॒तिः । सम्ऽउ॑ब्धम् । गुहा॑ । बि॒भ॒र्ति॒ ।
न । द॒दा॒ति॒ । पि॒त्रे । अनी॑कम् । अ॒स्य॒ । न । मि॒नत् । जना॑सः ।
पु॒रः । प॒श्य॒न्ति॒ । निऽहि॑तम् । अ॒र॒तौ ॥ १ ॥

शाट्यायनब्राह्मणोक्तइतिहासइहोच्यते ॥ राजात्रैवृष्णइक्ष्वाकुस्त्र्यरुणोमहारथः ॥ १ ॥ पुरोहितोवृशोजारऋषिरासीत्तदाखलु ॥ संगृह्णन्रश्मीनश्वानांरक्षणायपुरोहितः ॥ २ ॥ त्र्यरुणस्यवृशोरश्मिसंग्रमाहपुरोहितः ॥ कुमारोवर्त्मनिक्रीडन्रथचक्रेणघातितः ॥ ३ ॥ छिन्नःकुमारश्चक्रेणममारापपुरोहितः ॥ त्वंहन्तास्येतिराजानंराजाचापिपुरोहितम् ॥ ४ ॥ त्वंहन्तास्यकुमारस्यनाहमित्यब्रवीत्तदा ॥ यतस्त्वंरथवेगस्यनियन्तातस्त्वघातकः ॥ ५ ॥ रथस्वामीयतोराजन्तस्मात्त्वंतस्यघातकः ॥ एवंविवदमानौताविक्ष्वाकून्प्रत्युपागतौ ॥ ६ ॥ तौपप्रच्छतुरिक्ष्वाकून्केनासौनिहतोद्विजाः ॥ तेब्रुवन्प्रत्ययन्तारंहन्तारंवृशसंज्ञकम् ॥ ७ ॥ सवृशोवार्शसाम्नातंकुमारंसमजीवयत् ॥ एवमाख्यायतत्रैवपुनरन्यदुदीरितम् ॥ ८ ॥ यतइक्ष्वाकवोराजहन्तारमृषिमब्रुवन् ॥ तस्मात्तेषांगृहेभ्योऽग्निस्तेजोनिर्गतमेवच ॥ ९ ॥ गृहेपाकादयोनासन्तत्कारणमचिन्तयन् ॥ इतिनूनंकुमारहन्तारंयद्वोचामतेननः ॥ १० ॥ अपक्रामद्दरोविहेराद्ययामनृशंसयम् ॥ इतिविनिश्चित्यतमृषिमाह्वयामासुरादरात् ॥ ११ ॥ सच्चागत्यनतःशीघ्रंतेषामग्नेर्हरोमयेत् ॥ इतिषाऽर्वैनसाम्नासावकामयतपूर्ववत् ॥ १२ ॥ एवंगायन्सऋषिर्वेक्षहस्यांभार्यांजातांत्रसदस्योर्नृपस्य ॥ पिशाचवेषांहरभादायचाग्नेर्गृहाज्जीत्वाकशिपौस्थापयन्तीम् ॥ १३ ॥ ददर्शसप्रचकाशस्तोऽपित्वासाकापश्चाद्योनयामासचाग्निम् ॥ ततःस्तेभाःसंभातोभवत्पाकादिपूर्ववत् ॥ एवंशाट्यायनेनोक्तस्ताण्ड्कोक्तमथोच्यते ॥ १४ ॥ वृशःपुरोधाअभवत्त्रसदस्योर्महीपतेः ॥ सरथंधावयन्पापनेनोक्तस्तथाऽनाहत्स्यकुमारकम् ॥ १५ ॥ चिच्छेदरथचक्रेणप्रमादात्सोऽब्रवीद्वृशम् ॥ पुरोहितेवर्तमानेत्वयिमोहन्तिरागता ॥ १६ ॥ एवात्वयापनेतव्याऽऋषिमित्यब्रवीन्नृपः ॥ सऋषिर्वार्शसाम्नातंकुमारमुदजीवयत् ॥ १७ ॥ माताकुमारस्योत्पादयित्रीयुवतिर्यौवनोपेताकुमारंपपिसंवरन्तंसमुब्धंकेनाहतं गुहा गुहायां बिभर्तिधारयति नप्रदातिपित्रेतस्यजनकाय यद्वा मातासर्वस्यनिर्मात्री पृथिवी समुब्धं सम्यङ्निगूढं गुहाबिभर्तिनददातिपित्रे अस्यकुमारस्यानीकरूपं मिनत्

हिंसितं जनासो जनाः नपश्यन्ति किन्तु अरतौ अरमणे देशे निहितं स्थितं पुरः पुरोदेशे पश्यन्ति अथवा अयं वृशेन पुनरुज्जीवितः कुमारः आत्मानमपरोक्षतया व्यक्तीकरोति कुमारो वा संजीवयित्वा वक्ति अथवा सूक्तस्याग्नेयत्वात्कुमार इत्यग्निरुच्यते तंमाता अरणिर्युवतिर्भिन्नयन्ती संवृत्य निगूढं गुहायांबिभर्ति पित्रे उत्पादकाय यजमानाय नददाति अस्याग्नेर्मिनत् हिंसत् दाहकमनीकं तेजो जनानपश्यन्ति किंतु अरतावरण्यांहितंपश्यन्ति ॥ १ ॥

१. कुमार को उत्पन्न करनेवाली यौवनवती माता ने मार्ग में सञ्चरण करनेवाले कुमार को रथचक्र-द्वारा निहत देखकर गुहामध्य में धारण किया उसके जनक को नहीं दिया। लोग उसे हिंसित रूप में नहीं देख सके; किन्तु अरणिस्थान में स्थापित होने पर उसे फिर देख सके।

कमे॒तं त्वं यु॑वते कुमा॒रं पेषी॑ बिभर्षि॒ महि॑षी जजान।
पू॒र्वीर्हि गर्भः॑ श॒रदो॑ व॒वर्धाप॑श्यं जा॒तं यदसू॑त मा॒ता ॥ २ ॥

कम्। ए॒तम्। त्वम्। यु॒व॒ते॒। कु॒मा॒रम्। पेषी॑। बि॒भ॒र्षि॒। महि॑षी। ज॒जा॒न॒। पू॒र्वीः। हि। गर्भः॑। श॒रदः॑। व॒वर्ध॑। अप॑श्यम्। जा॒तम्। यत्। असू॑त। मा॒ता ॥ २ ॥

अत्राग्नेरुत्पाद्यमानत्वात्कुमारशब्देनव्यवहारः हे युवते त्वं कमेतं कुमारं पेषी हिंसिका पिशाचिका सती बिभर्षि एवं वृशाख्यो महर्षिः कशिपुनाच्छन्नमग्निं ईदृशो नूते त्वया अनुत्पादितत्वाद्धारणमनुचितमित्यर्थः महिषी महती पूजनीया अरणिरेनं जमानाजनयत् तदेवाह गर्भः शिशोर्गर्भ्रोहकः अरण्याः संबन्धी गर्भो हि यस्मात्पूर्वीः शरदः गताननेकान्संवत्सरान्ववर्ध अवृधे अहं च ततो जातम् अपश्यम् यद्यस्मान्माता अरणिरसूत उदपादयत् तं कुमारमथो हे युवते भूदेवि कमेतं कुमारं पेषी सती बिभर्षि अवशिष्टं कुमारजननपरतया योज्यम्। एवमुत्तरत्रापि कुमाराग्निहरसोःपरत्वेन यथोचितं व्याख्येयम् ॥ २ ॥

२. (उत्पाद्यमान होने के कारण यहाँ कुमार शब्द से अग्नि का व्यवहार है) हे युवती, तुम पिशाची होकर किस कुमार को धारण करती हो? पूजनीय अरणि ने इसे उत्पन्न किया है। अनेक संवत्सर-पर्यन्त अरणि-सम्बन्धी गर्भ वर्द्धित हुआ था। इसके अनन्तर माता अरणि ने जिस पुत्र को उत्पन्न किया था, उसे हमने देखा था।

हिर॑ण्यदन्तं॒ शुचि॑वर्णमा॒रात्क्षेत्रा॑दपश्य॒मायु॑धा॒ मिमा॑नम्।
द॒दा॒नो अ॑स्मा अ॒मृतं॑ वि॒पृक्व॒त्किं मामनि॒न्द्राः कृ॑णवन्ननु॒क्थाः ॥ ३ ॥

हिर॑ण्यऽदन्तम्। शुचि॑ऽवर्णम्। आ॒रात्। क्षेत्रा॑त्। अप॑श्यम्। आयु॑धा। मिमा॑नम्। द॒दा॒नः। अ॒स्मै॒। अ॒मृत॑म्। वि॒पृक्व॑त्। किम्। माम्। अ॒नि॒न्द्राः। कृ॒ण॒व॒न्। अ॒नु॒क्थाः ॥ ३ ॥

हिरण्यदन्तं हिरण्यसदृशदन्तस्थानीयज्वालोपेतं शुचिवर्णंप्रदीप्तवर्णम् आयुधा आयुधानि आयुधस्थानीयान्विस्फुलिङ्गान् ज्वालावामिमानंनिर्मिमाणम् अग्निमाराःसमीपे क्षेत्रात् क्षेत्रे देशे अपश्यं पश्येयम् एवंवृशःकामयते अहमस्माअग्नयेअमृतमविनाश्यमृतत्वसाधनंवाविपृक्वत् सर्वतोव्याप्तं हविःस्तोत्रंवाददानोदातास्मि मामनिन्द्राः इन्द्रःपरमैश्वर्योऽग्निः तद्रहिताअनिन्द्राः इन्द्रमयमन्तइत्यर्थः अनुक्थाः अस्तुतयः इन्द्रमस्तुवन्तश्च किंकृणवन् किंकुर्युः ॥ ३ ॥

३. हमने समीपवर्ती प्रदेश से हिरण्यदन्त (हिरण्य सदृश ज्वाला-युक्त), प्रदीप्त वर्ण और आयुधस्थानीय ज्वाला निर्माण करनेवाले अग्नि को देखा था। हम (वृश) ने उन्हें सर्वतोव्याप्त और अविनाशी स्तोत्र प्रदान किया है। जो इन्द्र (परमैश्वर्ययुक्त अग्नि) को नहीं मानते हैं और जो उनकी स्तुति नहीं करते हैं, वे हमारा क्या कर लेंगे?

क्षेत्रादपश्यंसनुतश्चरन्तंसुमद्यूथंनपुरुशोभमानम् ।
नताअगृभ्रन्नजनिष्टहिषःपलिक्नीरिद्युवतयोभवन्ति ॥ ४ ॥

क्षेत्रात् । अपश्यम् । सनुतरिति । चरन्तम् । सुमत् । यूथम् । न । पुरु । शोभमानम् । न । ताः । अगृभ्रन् । अजनिष्ट । हि । सः । पलिक्नीः । इत् । युवतयः । भवन्ति ॥ ४ ॥

अहंवृशः इदानींक्षेत्रात्क्षेत्रे सनुतः अन्तर्हितनामैतत् निगूढंचरन्तम् आरण्यं यूथंन गवांसमूहमिव सुमत्स्वयमेव पुरुबहु शोभमानमपश्यं पश्यामि पुराहरसः पिशाच्यःक्रमणकाले ताज्वालानिर्वीर्यानागृभ्नन्नागृह्णन्नरः इदानींसोऽग्निरजनिष्टहि हरसामादुरभूत्खलु अतएवहेतोः पलिक्नीरित् पलिक्न्यः पलिताःज्वालाएवेदानींयुवतयोभवन्ति ॥ ४ ॥

४. हम (वृश) ने गोसमूह की तरह क्षेत्र में निगूढ़भाव से सञ्चरण करनेवाले एवम् अनेक प्रकार से स्वयम् शोभमान अग्नि को देखा है। पिशाचों के आक्रमण-कालवाली निर्वीर्य ज्वाला को वे ग्रहण नहीं करते हैं। अग्नि पुनर्वार प्रादुर्भूत होते हैं एवम् उनकी वृद्धा ज्वाला युवती होती है।

केमेमर्यकंवियवन्तगोभिर्नयेषांगोपाअरणश्चिदास ।
यईंजगृभुरवतेसृजन्त्वाजातिपश्वउपनश्चिकित्वान् ॥ ५ ॥

के । मे । मर्यकम् । वि । यवन्त । गोभिः । न । येषाम् । गोपाः । अरणः । चित् । आस । ये । ईम् । जगृभुः । अव । ते । सृजन्तु । आ । अजाति । पश्वः । उप । नः । चिकित्वान् ॥ ५ ॥

के मे मदीयं मर्यकं मर्त्यसंघं राष्ट्रं गोभिःसहवियवन्त वियुक्तमकुर्वन् गाःभृत्यांश्च वियोजयन् येषांगोपाः अस्माकंगोपयिता अरणश्चिद्भिगन्तानासनभूत् सोयमग्निः येऽग्निषणः

ईमेनंजनसङ्घंराष्ट्रंभगृह्णः गृह्णन्ति तेअवसृजन्तु नश्यन्तु किंच चिकित्वांश्चेतनावानस्माद्विषयज्ञा-नवानग्निर्नोस्माकंपश्वःपशूनुप आजगाति उपागच्छति ॥ ५ ॥

५. कौन हमारे राष्ट्र को गौओं के साथ नियुक्त करता है ? उनके साथ क्या रक्षक नहीं था ? जो हमारे राष्ट्रसमूह पर आक्रमण करता है, वह विनष्ट हो। अग्नि हम लोगों की अभिलाषा को जानते हैं, वे हम लोगों के पशुओं के निकट गमन करते हैं।

**वसांराजानंवसतिंजनानामरातयोनिदधुर्मर्त्येषु ।**
**ब्रह्माण्यत्रेरवतंसृजन्तुनिन्दितारोनिन्द्यासोभवन्तु ॥ ६ ॥ १४ ॥**

वसाम् । राजानम् । वसतिम् । जनानाम् । अरातयः । नि । दधुः । मर्त्येषु । ब्रह्माणि । अत्रेः । अव । तम् । सृजन्तु । निन्दितारः । निन्द्यासः । भवन्तु ॥ ६ ॥ १४ ॥

वसां वसतां प्राणिनां राजानंस्वामिनं जनानांप्राणिनां वसतिम् आवासभूतम् एवंगुणम् उक्तलक्षणमग्निंवा अरातयोनिदधुरगोपयन् मर्त्येषुलोकेषुमध्ये अत्रेरत्रिगोत्रस्यवृशस्य ब्रह्माणि मन्त्राःस्तोत्राणिवा तंकुमारमग्निंवा अवसृजन्तु यद्वा वृशस्यब्रह्माणि अत्रेःअत्रिगोत्रं कर्मणिषष्ठी तंकुमारमवसृजन्तु विसृजन्तु निन्दितारोस्मभिन्द्यासोस्माभिर्निन्द्याभवन्तु अत्रेर्ब्रह्माणीत्येतदुपजीव्य वृशमप्यात्रेयंवदन्ति आत्रेयःकुमारइतिपक्षे सएवब्राह्मणमयमात्मानमवसृजन्त्वित्याशास्ते ॥ ६ ॥

६. प्राणियों के स्वामी और लोगों के आवासभूत अग्नि को शत्रुगण मर्त्यों के मध्य में छिपाकर रखते हैं। अत्रिगोत्रोत्पन्न वृश का स्तोत्र उन्हें मुक्त करे। निन्दक लोग निन्दनीय हों।

॥ इतितृतीयस्याष्टमेचतुर्दशोवर्गः ॥ १४ ॥

अग्नःप्रवआहवनीयोपस्थानेशुनश्चिच्छेपमित्येषा[1] अग्निमाहवनीयमुपस्थापयांचकार शुन-श्चिच्छेपंनिदितंसहस्रादितिब्राह्मणम् ।

सैषासप्तमी—

**शुनश्चिच्छेपंनिदितंसहस्राद्यूपादमुञ्चोअशमिष्टहिषः ।**
**एवास्मदग्नेविमुमुग्धिपाशान्होतश्चिकित्वइहतूनिषद्य ॥ ७ ॥**

शुनःशेपम् । चित् । निऽदितम् । सहस्रात् । यूपात् । अमुञ्चः । अशमिष्ट । हि । सः । एव । अस्मत् । अग्ने । वि । मुमुग्धि । पाशान् । होतरिति । चिकित्वः । इह । तु । निऽसद्य ॥ ७ ॥

---

1 ऐ० ब्रा० ७. १७.

हेऽग्ने निदितं नितरां बद्धं शुनःशेपमृषिं सहस्रादनेकरूपाद्यूपादमुञ्चः अमोचयः चिदिति पूरणः शुनःशेपमितिपदस्यमध्येऽपदान्तरस्यसंहितायांव्यत्ययेनावस्थितिः सञ्चरिरशमिष्टहि शान्तवान्खलु यद्वा सहियस्मादशमिष्ट स्तुतिकर्मैतत् अस्तावीत् तस्मादमुञ्च इतिसंबन्धः एव एवमस्मदस्मत्तः पाशान्विमुमुग्धि विमोचय हेहोतर्हेचिकित्वः चेतनावन्नग्ने इह वेद्यांनिषद्यावस्थाय ॥ ७ ॥

७. हे अग्नि, तुमने अत्यन्त बद्ध शुनःशेप ऋषि को सहस्र यूप से मुक्त किया था; क्योंकि उन्होंने तुम्हारा स्तव किया था। हे होता और विद्वान् अग्नि, तुम इस वेदी पर उपवेशन करो। इस तरह हम लोगों को सकल पाश से मुक्त करो।

हृणीयमानोअपहिमदैयेःप्रमेदेवानांव्रतपाउवाच ।
इन्द्रोविद्वाँअनुहित्वाचचक्षतेनाहमग्नेअनुशिष्टआगाम् ॥ ८ ॥

हृणीयमानः । अप । हि । मत् । ऐयेः । प्र । मे । देवानाम् । व्रतऽपाः । उवाच । इन्द्रः । विद्वान् । अनु । हि । त्वा । चचक्ष । तेन । अहम् । अग्ने । अनुऽशिष्टः । आ । अगाम् ॥ ८ ॥

हेऽग्ने हृणीयमानः क्रुध्यंस्त्वं मत् मत्तः अपैयेर्हि अपागाः खलु ईङ्गताविन्यस्मात्स्वव्विकरणाच्छान्दसेपरस्मैपदे मध्यमेऽडागमेवृद्धौ व्यत्ययेनश्यनोकारस्यएकारेणकृतेरूपम् मेमह्यंदेवानां व्रतपाः कर्मणःपालकः इन्द्रःप्रोवाचहि सएवविद्वान्त्वामनुचचक्ष त्वांदर्शी तेनानुशिष्टोहं हेऽग्ने त्वामागामिति एवंवृत्राहाह ॥ ८ ॥

८. हे अग्नि, तुम जब क्रुद्ध होते हो तब हमारे निकट से अपगत होते हो। देवों के व्रतपालक इन्द्र ने हमसे यह कहा था। वे विद्वान् हैं, उन्होंने तुम्हें देखा है। हे अग्नि, उनके द्वारा अनुशिष्ट होकर हम तुम्हारे निकट आगमन करते हैं।

विज्योतिषाबृहताभात्यग्निराविर्विश्वानिकृणुतेमहित्वा ।
प्रादेवीर्मायाःसहतेदुरेवाःशिशीतेशृङ्गेरक्षसेविनिक्षे ॥ ९ ॥

वि । ज्योतिषा । बृहता । भाति । अग्निः । आविः । विश्वानि । कृणुते । महिऽत्वा । प्र । अदेवीः । मायाः । सहते । दुःऽएवाः । शिशीते । शृङ्गे इति । रक्षसे । विऽनिक्षे ॥ ९ ॥

अयमग्निर्ज्योतिषातेजसाबृहतामहताविभाति विशेषेणदीप्यते अथ तथाभूतःसन्महित्वा स्वमहत्त्वेन विश्वानिसर्वाणिपदार्थजातानि आविष्कृणुते प्रकटीकरोति एवमयमग्निः किंच अदेवीः अदेवनशीलाः आसुरीर्मायाः दुरेवाः दुःखगमनाः प्रसहते अभिभवति

शिशीति तीक्ष्णीकरोति शृङ्गे शृङ्गाणि शृङ्गसदृशीः हिंसिकाज्वालाः शिशीते तीक्ष्णीकरोति किमर्थं रक्षसे विनिक्षे रक्षसोनाशाय निश्यति शृङ्गे रक्षसोविनिक्षणनायेतियास्कः ॥ ९ ॥

९. अग्नि महान् तेज-द्वारा विशेष रीति से दीप्त होते हैं। वे अपनी महिमा के बल से सकल पदार्थों को प्रकट (प्रकाशित) करते हैं। अग्निदेव प्रवृद्ध होकर दुःखजनक आसुरी माया को पराभूत करते हैं। राक्षसों को विनष्ट करने के लिए वे शृङ्ग (ज्वाला) को तीक्ष्ण करते हैं।

उतस्वानासोदिविषन्त्वग्नेस्तिग्मायुधारक्षसेहन्तवाउ ।
मदेचिदस्यप्ररुजन्तिभामानवरन्तेपरिबाधोअदेवीः ॥ १० ॥

उत । स्वानासः । दिवि । सन्तु । अग्नेः । तिग्मऽआयुधाः । रक्षसे । हन्तवै । ऊँ इति । मदे । चित् । अस्य । प्र । रुजन्ति । भामाः । न । वरन्ते । परिऽबाधः । अदेवीः ॥ १० ॥

उतापिचाग्नेःस्वानासः शब्दंकुर्वाणाःज्वालादिविसन्तु द्युलोकेप्रादुर्भवन्तु किमर्थं तिग्मायुधाः तीक्ष्णायुधस्थानीयाज्वालाः रक्षसेहन्तवाउ रक्षसोहननाय उइतिपूरणः मदेचिद्धर्षेसति अस्याग्नेर्भामाः क्रोधादीप्तयोवा प्ररुजन्ति प्रकर्षेणभङ्गंगच्छन्ति पीडयन्तिवारक्षांसि परिबाधः परितोबाधिकाः अदेवीरदेवनाः आसुर्यः सेनानवरन्ते नवारयन्त्येनम् ॥ १० ॥

१०. अग्नि की शब्द करनेवाली ज्वाला तीक्ष्ण आयुध की तरह राक्षसों को विनष्ट करने के लिए द्युलोक में प्रादुर्भूत होती है। हर्ष के उत्पन्न होने पर अग्नि का क्रोध या दीप्तिसमूह राक्षसों को पीड़ा देता है। बाधा देनेवाली आसुरी सेना उन्हें बाधा नहीं दे सकती।

एतंतेस्तोमंतुविजातविप्रोरथंनधीरःस्वपाअतक्षम् ।
यदीदग्नेप्रतित्वंदेवहर्याःस्वर्वतीरपएनाजयेम ॥ ११ ॥

एतम् । ते । स्तोमम् । तुविऽजात । विप्रः । रथम् । न । धीरः । सुऽअपाः । अतक्षम् । यदि । इत् । अग्ने । प्रति । त्वम् । देव । हर्याः । स्वःऽवतीः । अपः । एन । जयेम ॥ ११ ॥

हेतुविजात बहुभावमापन्नाग्ने तेत्वदर्थमेतंस्तोमम् एतत्स्तोत्रं विप्रोमेधावी स्तोतारथं न रथमिव धीरःस्वपाः शोभनकर्माहम् अतक्षं समपादयं हेअग्ने देव त्वं यदीत् यदीव एनंस्तोमंप्रतिहर्याः प्रतिकामयेथाः तर्हिस्वर्वतीः स्वरणवतीर्व्याप्तिमतीरपएनाएनेनस्तोत्रेणप्राप्नुयाम ॥ ११ ॥

---

१ नि० ४, १४.।

११. हे बहुभाव-प्राप्त अग्नि, हम तुम्हारे स्तोता हैं। धीर और कर्मकुशल व्यक्ति जिस तरह से रथ निर्माण करता है, उसी तरह से हम तुम्हारे लिए इस स्तोत्र का निर्माण करते हैं। हे अग्निदेव, यदि तुम इस स्तोम को ग्रहण करो तो हम बहु व्याप्त जय-लाभ करें।

तुविग्रीवो वृषभो वावृधानोऽशत्र्व१र्यः समजाति वेदः।
इतीममग्निममृता अवोचन्बर्हिष्मते मनवे शर्म यंसद्धविष्मते मनवे शर्म यंसत् ॥ १२ ॥ १५ ॥

तुविऽग्रीवः। वृषभः। ववृधानः। अशत्रु। अर्यः। सम्। अजाति। वेदः। इति। इमम्। अग्निम्। अमृताः। अवोचन्। बर्हिष्मते। मनवे। शर्म। यंसत्। हविष्मते। मनवे। शर्म। यंसत् ॥ १२ ॥ १५ ॥

तुविग्रीवोबहुज्वालः प्रभूतग्रीवोवा वृषभोवर्षिताकामानां ववृधानोवर्धमानोग्निरर्यः अरेर्वैरिणोधनम् अशत्रु अकण्टकं सममाति संयोनयति इतीममर्थमग्निम् अमृताअन्येदेवाअवोचन् यस्मादेवंतस्माद्बर्हिष्मते यागवते मनवे मनुष्याय यजमानाय शर्म सुखं यंसत् यच्छतु हविष्मतेचशर्मयंसत् ॥ १२ ॥

१२. बहु ज्वाला विशिष्ट, अभीष्टवर्षी तथा वर्द्धमान अग्नि निष्कण्टक भाव से शत्रुओं के धन का संग्रह करते हैं। इस बात को देवों ने अग्नि से कहा था कि वे यज्ञ करनेवाले मनुष्यों को सुख दान करें एवम् हव्य देनेवाले मनुष्यों (यजमानों) को भी सुख दान करें ?

त्वमग्नेवरुणइति द्वादशर्चंतृतीयंसूक्तम् आत्रेयस्यवसुश्रुतस्यार्षं त्रैष्टुभमाग्नेयं त्वमग्नेवसुश्रुतइत्यनुक्रान्तं प्रातरनुवाकाश्विनशस्त्रयोर्विनियोगः उक्तोग्निरित्यग्रोक्तः।

त्वमग्ने वरुणो जायसे यत्त्वं मित्रो भवसि यत्समिद्धः।
त्वे विश्वे सहसस्पुत्र देवास्त्वमिन्द्रो दाशुषे मर्त्याय ॥ १ ॥

त्वम्। अग्ने। वरुणः। जायसे। यत्। त्वम्। मित्रः। भवसि। यत्। सम्ऽइद्धः। त्वे इति। विश्वे। सहसः। पुत्र। देवाः। त्वम्। इन्द्रः। दाशुषे। मर्त्याय ॥ १ ॥

हेअग्ने त्वं वरुणस्तमसांवारकोरात्र्यभिमानिदेवोपित्वमेव यद्यदाजायसे किंच त्वंमित्रोऽहरभिमानीदेवःप्रमीतेस्त्राता यद्यदा समिद्धस्त्वम् उत्पन्नमात्रःसन्तमोनिवारयसि प्रबुद्धःसन्दित-

कारीभवसीत्यर्थः तदा त्वे त्वयि विश्वेसर्वेपिदेवावर्तन्ते स्वहुतेनहविषातेषांजीवनात् तेदेवाः विम्यतोऽग्निंप्राविशन्नितिहिश्रुतेः । हेसहसस्पुत्र बलेनमथ्यमानत्वात् किंच त्वमिन्द्रःस्वामी दाशुषे हविर्दात्रेमर्त्याय यजमानायभवसि ॥ १ ॥

१. हे अग्नि, तुम उत्पन्न होते ही वरुण (अन्धकार के निवारक शत्रुपभिमानी देव) होते हो। समिद्ध होकर तुम मित्र (हितकारी) होते हो। समस्त देवगण तब तुम्हारा अनुवर्तन करते हैं। हे बल-पुत्र, तुम हव्यदाता यजमान के इन्द्र हो।

विवाहेचतुर्थ्यामाज्याहुतौत्वमर्यमेत्येषा सूत्रितंच–त्वमर्यमाभवसियत्कनीनामितिविवाहे चतुर्थीमिति ।

त्वमर्य॒मा भ॑वसि॒ यत्क॒नीनां॒ नाम॑ स्वधाव॒न्गुह्यं॑ बिभर्षि ।
अ॒ञ्जन्ति॑ मि॒त्रं सुधि॑तं॒ न गोभि॒र्यद्दम्प॑ती॒ सम॑नसा कृ॒णोषि॑ ॥ २ ॥

त्वम् । अ॒र्य॒मा । भ॒व॒सि॒ । यत् । क॒नीना॑म् । नाम॑ । स्व॒धा॒ऽव॒न् । गुह्य॑म् । बि॒भ॒र्षि॒ । अ॒ञ्जन्ति॑ । मि॒त्रम् । सुऽधि॑तम् । न । गोभिः॑ । यत् । दम्प॑ती॒ इति॒ दम्ऽप॑ती । सऽम॑नसा । कृ॒णोषि॑ ॥ २ ॥

हेअग्ने त्वम्अर्यमाभवसि सर्वेषांनियमितासि यद्यदा कनीनांकन्यकानांसंबन्ध्यसि किंच हेस्वधावन् हविर्लक्षणान्नवन् गुह्यंगोपनीयंनामाबिभर्षि वैश्वानरइति तन्नाम सुधितं सुष्ठुनिहितं मित्रंन मित्रमिवगोभिः विकारेप्रकृतिशब्दः गोविकारैःक्षीरादिभिःअञ्जन्ति अनक्ति यद्यस्माद्दम्पती जायापती समनसा समानमनस्कौ कृणोषि करोषि ॥ २ ॥

२. हे अग्नि, तुम कन्याओं के सम्बन्ध में अर्यमा (सबके नियामक) होते हो। हे हव्यवान् अग्नि, तुम गोपनीय नाम (वैश्वानर) धारण करते हो। जब तुम दम्पती को एक मनवाले बना देते हो तब वे तुम्हें बन्धु की तरह गव्य-द्वारा सिक्त करते हैं।

अथतृतीया–

तव॑ श्रि॒ये म॒रुतो॑ मर्जयन्त॒ रुद्र॒ यत्ते॒ जनि॑म॒ चारु॑ चि॒त्रम् ।
प॒दं यद्विष्णो॑रुप॒मं नि॒धायि॒ तेन॑ पासि॒ गुह्यं॒ नाम॒ गोना॑म् ॥ ३ ॥

तव॑ । श्रि॒ये । म॒रुतः॑ । म॒र्ज॒य॒न्त॒ । रुद्र॑ । यत् । ते॒ । जनि॑म । चारु॑ । चि॒त्रम् । प॒दम् । यत् । विष्णोः॑ । उ॒प॒ऽमम् । नि॒ऽधायि॑ । तेन॑ । पा॒सि॒ । गुह्य॑म् । नाम॑ । गोना॑म् ॥ ३ ॥

---

१ तै० सं० ६. १. २ ।

अनयाऽग्नेर्माध्यमिकीमूर्तिःस्तूयते हेअग्ने तवश्रिये श्रयणाय मरुतःअपोन्तरिक्षमार्मृजन्त मार्जयन्ति हेरुद्र वृष्ट्यारुद्रवद्धर्षितरग्ने ते तव यज्जनिम जन्म वैद्युतलक्षणं चारु चरणीयं चित्रं चायनीयंच तत्कथमितिचेदुच्यते- विष्णोर्व्यापनशीलस्यदेवस्योपमम् उपमेयं गुह्यम् अगम्यं यत्पदंनिधायि अनेनान्तरिक्षमुक्तं उपमेयमिवविष्णोर्मध्यमंपदं तस्मादान्तरिक्षंप- श्यन्तीतिब्राह्मणम् । तेनगोनामुदकानांगुह्यंनामनामानिपासि रक्षसि ॥ ३ ॥

३. हे अग्नि, तुम्हारे आश्रय के लिए मरुद्गण अन्तरिक्ष का मार्जन करते हैं। हे रुद्र, तुम्हारे लिए वैद्युत लक्षण, अति विचित्र और मनोहर जो विष्णु (व्यापनशील देव) का अगम्य पद (अन्तरिक्ष) है, वह स्थापित हुआ है। उसके द्वारा तुम उदक के गुह्य नाम का पालन करो।

तवश्रियासुदृशोदेवदेवाःपुरूदधानाअमृतंसपन्त ।
होतारमग्निंमनुषोनिषेदुर्दशस्यन्तउशिजःशंसमायोः ॥ ४ ॥

तव । श्रिया । सुऽदृशः । देव । देवाः । पुरु । दधानाः । अमृतम् । सपन्त । होतारम् । अग्निम् । मनुषः । नि । सेदुः । दशस्यन्तः । उशिजः । शंसम् । आयोः ॥ ४ ॥

हेदेवाग्ने सुदृशः तवश्रिया समृद्ध्यादेवाः इन्द्रादयः पुरु अत्यधिकं दधानाः त्वयिप्री- तिंधारयन्तः अमृतंसपन्त स्पृशन्ति होतारंहोमनिष्पादकमग्निं मनुषोमनुष्यानिषेदुः परिचरन्तिऋ- त्विजः किंकुर्वन्तः दशस्यन्तः हविर्वितरन्तः शंसं फलमुशिजःकामयमानस्यायोर्मनुष्यस्ययज- मानस्यार्थम् ॥ ४ ॥

४. हे अग्निदेव, तुम्हारी समृद्धि के द्वारा इन्द्रादि देवगण दर्शनीय होते हैं। वे देवगण तुम्हारे प्रति अत्यन्त प्रीति धारण करके अमृत का स्पर्श करते हैं। ऋत्विगण फलाभिलाषी यजमान के लिए हव्य वितरण करते हुए होता अग्नि की परिचर्या करते हैं।

नत्वद्धोतापूर्वोअग्नेयजीयान्नकाव्यैःपरोअस्तिस्वधावः ।
विशश्चयस्याअतिथिर्भवासिसयज्ञेनवनवद्देवमर्तान् ॥ ५ ॥

न । त्वत् । होता । पूर्वः । अग्ने । यजीयान् । न । काव्यैः । परः । अस्ति । स्वधाऽवः । विशः । च । यस्याः । अतिथिः । भवासि । सः । यज्ञेन । वनवत् । देव । मर्तान् ॥ ५ ॥

हेअग्ने त्वत्त्वत्तोऽन्योनास्ति होता पूर्वःपूर्वकः पुराणोवा यजीयानतिशयेनपूज्यः यष्टा वा काव्यैःस्तोत्रैःस्तुत्यः परः परस्तात्परस्मिन्नधिकोऽन्योनास्ति हेदेव हेस्वधावः अन्नवन्

१ ऐ० ब्रा० ५. ६. ८. ।

यस्याविशःप्रजायाऋत्विग्रूपायाअतिथिर्भवासि अतिथिवत्पूज्योभवासि सयज्ञेन मर्तानरवेद्धून् वनवत् वृश्चति हिनस्ति यद्वा मर्तान्परिचारकान्वनवत्संभजेत् ॥ ५ ॥

५. हे अग्नि, तुमसे भिन्न कोई अन्य होता नहीं है, यज्ञकारी नहीं है और कोई पुरातन भी नहीं है। हे अन्नवान्, भविष्यत्काल में भी तुम्हारी अपेक्षा कोई स्तुतियोग्य नहीं होगा। हे देव, तुम जिस ऋत्विक् के अतिथि होते हो, वह यज्ञ-द्वारा शत्रु मनुष्यों को विनष्ट करता है।

वयमग्नेवनुयामत्वोतावसूयवोहविषाबुध्यमानाः ।
वयंसमर्येविदथेष्वह्नांवयंरायासहसस्पुत्रमर्तान् ॥ ६ ॥ १६ ॥

वयम् । अग्ने । वनुयाम । त्वाऽऊताः । वसुऽयवः । हविषा । बुध्यमानाः । वयम् । सऽमर्ये । विदथेषु । अह्नाम् । वयम् । राया । सहसः । पुत्र । मर्तान् ॥ ६ ॥ १६ ॥

हेअग्ने वयंयजमानाः त्वोताः त्वयारक्षिताःसन्तः वनुयाम शत्रून्पीडयाम संभजेमहि याधनं कीदृशावयं वसूयवोवसुकामाः हविषा त्वां बुध्यमानाबोधयन्तः वयंसमर्ये समरणे अयेम शत्रूनितिशेषः विदथेषुयागेषुअह्नांवलं यद्वा वनुयामेत्येतदनुवर्त्यते अह्नांसर्वेष्वहःसु किंचवयं हेसहसस्पुत्र बलस्यपुत्र पालकवाग्ने रायाधनेनसहमर्तान्पुत्रभृत्यादीन्लभेमहि ॥ ६ ॥

६. हे अग्नि, हम तुम्हारे द्वारा रक्षित होकर शत्रुओं को पीड़ा-दान करेंगे। हम धनाभिलाषी हैं। हम लोग तुम्हें हव्य-द्वारा प्रबुद्ध करते हैं। हम लोग युद्ध में जय-लाभ करें और प्रतिदिन यज्ञ में बल प्राप्त करें। हे बलपुत्र, हम लोग धन के साथ पुत्र-लाभ करें।

योनआगोअभ्येनोभरात्यधीदघमघशंसेदधात ।
जहीचिकित्वोअभिशस्तिमेतामग्नेयोनोमर्चयतिद्वयेन ॥ ७ ॥

यः । नः । आगः । अभि । एनः । भराति । अधि । इत् । अघम् । अघऽशंसे । दधात । जहि । चिकित्वः । अभिऽशस्तिम् । एताम् । अग्ने । यः । नः । मर्चयति । द्वयेन ॥ ७ ॥

योमर्त्यः आगः अपराधम् एनःपापंचनोस्मभ्यमभिभराति अभितःकरोति तस्मिन्नघशंसे अघंपापम् अधिदधात दधात्वग्निः इत्पूरणः आगोपराधंयोनस्मिदंकरोतितिस्मात्वाग्निस्तत्करोतित्यर्थः अथप्रत्यक्षेणोच्यते—हेअग्ने एतामभिशस्तिमहि उत्तरत्रयच्छब्दश्रवणात् तदानुगुण्येनेनमभिशंसकमितिन्याख्येयं योमिशस्ता नोस्मान्द्वयेनोर्केनागसेनसावामर्चयतिबाधतेत-मिति ॥ ७ ॥

७. जो मनुष्य हम लोगों के प्रति अपराध या पाप करता है, उस पापकारी व्यक्ति के प्रति अग्नि पापाचरण करें—उसे पापी बनायें। हे विद्वान् अग्नि, जो हम लोगों को अपराध और पाप-द्वारा बाधा देता है, उस पापकारी को विनष्ट करो।

त्वामस्याव्युषिदेवपूर्वेदूतंकृण्वानाअयजन्तहव्यैः।
संस्थेयदग्नईयसेरयीणांदेवोमर्तैर्वसुभिरिध्यमानः ॥ ८ ॥

त्वाम्। अस्याः। विऽउषि। देव। पूर्वे। दूतम्। कृण्वानाः। अयजन्त। हव्यैः। सम्ऽस्थे। अग्ने। यत्। ईयसे। रयीणाम्। देवः। मर्तैः। वसुऽभिः। इध्यमानः ॥ ८ ॥

हेअग्ने त्वामस्यारात्रेः व्युषि व्युष्टायाम् उषसीत्यर्थः पूर्वे, पुरातनायजमानाः दूतंदेवानांमेकं कृण्वानाः कुर्वाणाः अयजन्तहव्यैर्हविर्भिःसाधनैः रयीणां हविर्लक्षणानां संस्थे संस्थाने आसादनेसति हेअग्ने यद्यदाईयसे गच्छसि देवोद्योतमानोमर्तैर्मनुष्यैर्ऋत्विग्भिर्वसुभिर्वासकैरिध्यमानःसमिध्यमानःसन् ॥ ८ ॥

८. हे देव, पुरातन यजमान तुम्हें देवों का दूत बनाकर उषा-काल में यज्ञ करते हैं। हे अग्नि, हव्य संग्रह होने के अनन्तर तुम द्युतिमान् होकर भी निवासप्रद मनुष्यों-द्वारा समिद्ध होकर गमन करते हो।

अवस्पृधिपितरंयोधिविद्वान्पुत्रोयस्तेसहसःसूनऊहे।
कदाचिकित्वोअभिचक्षसेनोग्नेकदाँऋतचिद्यातयासे ॥ ९ ॥

अव। स्पृधि। पितरम्। योधि। विद्वान्। पुत्रः। यः। ते। सहसः। सूनो इति। ऊहे। कदा। चिकित्वः। अभि। चक्षसे। नः। अग्ने। कदा। ऋतऽचित्। यातयासे ॥ ९ ॥

हेसहसःसूनो बलस्यपुत्राग्ने त्वमवस्पृधि पारय योधि पृथक्कुरुपापात् यःपुत्रः पुत्रस्थानीयः तव योयजमानः ते त्वांपितरंपालकं पितृभूतं विद्वान् जानन्नूहे वहतेहवींषि समेवंकुर्विति ऋषिरात्मानंपरोक्षेणाह हव्यवाळग्निरस्माकंपितानइतिहिवक्ष्यति। यद्वा पितृपुत्रः माथोन्यत्यस्तः पितरंपितृवद्रक्षकं यजमानमवस्पृधि योधिच यस्त्वंपुत्रः पुत्रवत्सदारक्षणीयः स्वंपुत्रोभवसियस्तेपिपर्तीतिहिश्रुतिः। हेचिकित्वः चेतनावन्नग्ने कदानोस्मानभिचक्षसे ॥ ९ ॥
अभिपश्यसि कदाचऋतचित् यज्ञस्योदकस्यवाचेतयिता यातयासे प्रेरयसिसन्मार्गेण

९. हे बलपुत्र, तुम पिता हो। जो विद्वान् पुत्र तुम्हारे लिए हव्य वहन करता है, तुम उसे पार कर देते हो और उसे पाप से पृथक् करते हो। हे विद्वान् अग्नि, कब तुम हम लोगों को देखोगे? हे यज्ञ के प्रेरक कब तुम हम लोगों को सन्मार्ग में प्रेरित करोगे?

भूरि॒नाम॒वन्द॑मानोदधाति॒पि॒तावसो॒यदि॒तज्जो॒षया॑से ।
कु॒विद्दे॒वस्य॒सह॑साचका॒नःसु॒म्नम॒ग्निर्व॑नतेवावृधा॒नः ॥ १० ॥

भूरि॑ । नाम॑ । वन्द॑मानः । द॒धा॒ति॒ । पि॒ता । व॒सो॒ इति॑ । यदि॑ । तत् । जो॒षया॑से । कु॒वित् । दे॒वस्य॑ । सह॑सा । च॒का॒नः । सु॒म्नम् । अ॒ग्निः । व॒न॒ते॒ । व॒वृ॒धा॒नः ॥ १० ॥

भूरिप्रभूतंनामत्वदीयंनामवन्दमानःसंदधाति धारयति सामर्थ्याद्धविः अथवा नाम हविः प्रभूतंधारयतिदातुं पितापालकस्त्वं हेवसोवासकाग्ने यदितद्धविःजोषयासे सेवसे देवस्यान्यस्यहर्तुर्येममानस्यकुविद्बहुहविःसहसाबलेनयुक्तःसन्चकानःकामयमानः यद्वा कर्मणिषष्ठी देवंयजमानंकामयमानोऽग्निर्वावृधानोवर्धमानोयजमानंवर्धयन्वा सुम्नं सुखं वनते प्रयच्छति ॥ १० ॥

१०. हे निवासप्रद अग्नि, तुम पालक हो। तुम उस हवि का सेवन करते हो जो तुम्हारे नाम की वन्दना करके दिया गया है। यजमान उससे पुत्र धारण करता है। यजमान के बहुत हव्य की अभिलाषा करनेवाले और वर्द्धमान अग्नि बलयुक्त होकर सुख-दान करते हैं।

त्वम॑ङ्ग जरि॒तारं॑यविष्ठ॒विश्वा॑न्यग्ने दु॒रि॒ताति॑पर्षि ।
स्ते॒ना अ॑दृश्रन्नि॒पवो॒जना॒सोऽज्ञा॑तकेता वृ॒जि॒ना अ॑भूवन् ॥ ११ ॥

त्वम् । अ॒ङ्ग । ज॒रि॒तार॑म् । य॒वि॒ष्ठ॒ । विश्वा॑नि । अ॒ग्ने॒ । दुः॒ऽइ॒ता । अति॑ । प॒र्षि॒ । स्ते॒नाः । अ॒दृ॒श्र॒न् । रि॒पवः॑ । जना॑सः । अज्ञा॑तऽकेताः । वृ॒जि॒नाः । अ॒भू॒व॒न् ॥ ११ ॥

अङ्ग हेस्वामिन् यविष्ठ युवतमाग्ने जरितारंस्तोतारमनुग्रहीतुं विश्वानिदुरिता दुरितानि अतिपर्षि अतिपारयसि स्तेनास्तस्कराअदृश्रन् दृश्यन्ते रिपवोजनासः शत्रुभूतामनुष्याः अज्ञातकेताःअज्ञातचिह्नाः वृजिनाअस्माभिर्वर्जिताअभूवन्भवन्ति ॥ ११ ॥

११. हे स्वामी, हे युवतम अग्नि, तुम स्तोता को अनुगृहीत करने के लिए समस्त दुरितों (विघ्न) से पार कर देते हो। तस्करगण दिखाई देने लगते हैं। अपरिज्ञात चिह्नवाले शत्रुभूत मनुष्य हमारे द्वारा वर्जित किये जाते हैं।

इ॒मे या॒मास॑स्त्व॒द्रिग॑भूव॒न्वस॑वे वा॒तदि॑दा॒गो अ॑वाचि ।
नाह॒ायम॒ग्निर॒भिश॑स्तये नो॒न रीष॑ते वावृधा॒नः परा॑दात् ॥ १२।१७ ॥

इमे। यामासः। त्वद्रिक्। अभूवन्। वसवे। वा। तत्। इत्।
आगः। अवाचि। न। अहं। अयम्। अग्निः। अभिऽशस्तये।
नः। न। रिषते। ववृधानः। परा। दात् ॥ १२ ॥ १७ ॥

इमेयामासोगन्तारः स्तोमाः त्वद्रिक् त्वदभिमुखाअभूवन्भवन्ति वा अथवा वसवे वासकाय तदागोपराधमाशासनरूपमवाचि उच्यतानहमग्निमिदंदेहीतियाचनमेनापराधः इदितिपूरणः यद्वा तदिदंवक्ष्यमाणंशत्रुभिःकृतमागः किंचायमग्निर्ववृधानः स्तुत्यावर्धमानःस-न्नाह नैवाभिशस्तयेनिन्दकायनोस्मान्परादात्परादद्यात् तथा रिषतेहिंसकायनैवपरादात् ॥ १२ ॥

१२. ये स्तोम तुम्हारे अभिमुख गमन करते हैं अथवा हम निवासप्रद अग्नि के निकट उस याचमान अपराध का उच्चारण करते हैं। अग्नि हमारी स्तुति-द्वारा वर्द्धित होकर हमें निन्दकों अथवा हिंसकों के हाथ में न सौंपें।

॥ इतितृतीयस्याष्टमेसप्तदशोवर्गः ॥ १७ ॥

त्वामग्नइत्येकादशर्चंचतुर्थसूक्तम् आत्रेयस्यवसुश्रुतस्यार्षं त्रैष्टुभमाग्नेयम् अनुक्रान्तंच—त्वाम-ग्नएकादशेति। प्रातरनुवाकाश्विनशस्त्रयोर्विनियोगोऽबोध्यग्निरित्युक्तः।

त्वामग्नेवसुपतिंवसूनामभिप्रमन्देअध्वरेषुराजन्।
त्वयावाजंवाजयन्तोजयेमाभिष्यामपृत्सुतीर्मर्त्यानाम् ॥ १ ॥

त्वाम्। अग्ने। वसुऽपतिम्। वसूनाम्। अभि। प्र। मन्दे।
अध्वरेषु। राजन्। त्वया। वाजम्। वाजऽयन्तः। जयेम।
अभि। स्याम। पृत्सुतीः। मर्त्यानाम् ॥ १ ॥

हेअग्ने वसूनांवसुपतिंवृत्त्यवृत्तिभ्यांवसूनांबाहुल्यं सत्स्वामित्वंचोक्तं बहूनांधनानांस्वामि-नंत्वामध्वरेषुयागेषु अभिप्रमन्दे आभिमुख्येनस्तौमि हेराजन् किंच त्वया अनुकूलेनवाजयन्तो-ऽन्नमिच्छन्तोवयंवाजंजयेम किंच मर्त्यानांमरणधर्मकाणां पृत्सुतीः सेनाअभिष्याम अभिभ-वेम ॥ १ ॥

१. हे धनसमूह के स्वामी अग्नि, हम तुम्हारे उद्देश से यज्ञ में स्तुति करते हैं। हे राजा, हम अन्नाभिलाषी हैं। तुम्हारी अनुकूलता से हम अन्न लाभ करें और मनुष्य-सेना को अभिभूत करें।

दर्शपूर्णमासेपत्नीसंयाजेगृहपतेर्याज्यैषा सूत्रितंच—हव्यवाळग्निरजरःपितानइतिपत्नीसं-याजाइति। देवसुवांहविःष्वप्यग्नेर्गृहपतेरेषैवयाज्या सूत्रितंच—हव्यवाळग्निरजरःपितानस्त्वंयशो-मनोषदइति।

हव्यवाळग्निरजरःपितानोविभुर्विभावासुदृशीकोअस्मे ।
सुगार्हपत्याःसमिषोदिदीह्यस्मद्र्यक्सम्मिमीहिश्रवांसि ॥ २ ॥

हव्यऽवाट् । अग्निः । अजरः । पिता । नः । विऽभुः । विभाऽवा ।
सुऽदृशीकः । अस्मे इति । सुऽगार्हपत्याः । सम् । इषः । दिदीहि ।
अस्मद्र्यक् । सम् । मिमीहि । श्रवांसि ॥ २ ॥

अयंहव्यवाळग्निरजरः अजीर्णःसन् नःपिताभवत्वितिशेषः किंच विभुर्व्याप्तः विभावा दीप्तिमान् सुदृशीकः शोभनदर्शनः अस्मे अस्माकंभवतु अथप्रत्यक्षकृतः सुगार्हपत्याः शोभनगार्हपत्ययुक्तानि इषोन्नानिसन्दिदीहि सम्यक्प्रकाशय प्रदत्स्व वा अस्मद्र्यक् अस्मदभिमुखंश्रवांस्यन्नानिसंमिमीहि सम्यक्प्रयच्छ ॥ २ ॥

२. हव्यवाहक अग्नि जरारहित होकर हम लोगों के पालक हों। हम लोगों के निकट वे सर्वव्याप्त दीप्यमान और दर्शनीय हों। हे अग्नि, तुम शोभन गार्हपत्ययुक्त अन्न को भली भाँति से प्रकाशित करो अथवा प्रदान करो। तुम हम लोगों को प्रचुर परिमाण में अन्न-प्रदान करो।

विशांकविंविश्पतिंमानुषीणांशुचिंपावकंघृतपृष्ठमग्निम् ।
निहोतारंविश्वविदंदधिध्वेसदेवेषुवनतेवार्याणि ॥ ३ ॥

विशाम् । कविम् । विश्पतिम् । मानुषीणाम् । शुचिम् । पावकम् ।
घृतऽपृष्ठम् । अग्निम् । नि । होतारम् । विश्वऽविदम् । दधिध्वे ।
सः । देवेषु । वनते । वार्याणि ॥ ३ ॥

मानुषीणांविशां विश्पतिं सर्वासांमनुष्यरूपाणांप्रजानांपालकं स्वामिनंवा कविं मेधाविनं शुचिं विशुद्धं दीप्तंवा पावकमन्येषांशोधकं घृतपृष्ठं प्रदीप्तपृष्ठोपलक्षितशरीरम् अथवा उपरितनभागआज्योपेतंहोतारंहोमनिष्पादकं विश्वविदं विश्वस्यवेत्तारम् अग्निंनिदधिध्वे धारयथ हेऋत्विजः सदेवोदेवेषुमध्येवार्याणिवरणीयानिधनानि वनते संभजतेस्मदर्थं स्वयंवा वार्याणिहवींषिवनते ॥ ३ ॥

३. हे ऋत्विको, तुम लोग मनुष्यों के स्वामी, मेधावी, विशुद्ध, दूसरों को शुद्ध करनेवाले, घृतपृष्ठ, होमनिष्पादक और सर्ववित् अग्नि को धारण करो। अग्निदेव देवों के मध्य में संग्रहणीय धन को हम लोगों के लिए सम्भक्त करते हैं।

जुषस्वाग्नइळयासजोषायतमानोरश्मिभिःसूर्यस्य ।
जुषस्वनःसमिधंजातवेदआचदेवान्हविरद्यायवक्षि ॥ ४ ॥

जुषस्वं । अग्ने । इळंया । सऽजोषाः । यतमानः । रश्मिऽभिः ।
सूर्यस्य । जुषस्वं । नः । सम्ऽइधंम् । जातऽवेदः । आ । च ।
देवान् । हविःऽअद्याय । वक्षि ॥ ४ ॥

हेअग्ने जुषस्व सेवस्व स्तुतिं इळयावेदिलक्षणयाभूम्यावाचावासजोषाःसमानप्रीतिः तयासूर्यस्यरश्मिभिः यतमानः प्रयतमानःकाष्ठेकुर्वन् किंच हेजातवेदः जातस्येवेदितरग्ने नोस्मदीयांसमिधंजुषस्व सेवस्व आवहच देवान्हविरद्यायहविरदनाय आवाह्यवक्षिवहसि सद्धविः ॥ ४ ॥

४. हे अग्नि, इला (वेदीभूमि) के साथ समान प्रीतियुक्त होकर और सूर्य की रश्मियों-द्वारा यतमान होकर तुम (स्तुति की) सेवा करो। हे जातवेदा, हम लोगों के काष्ठ (समिध्) की सेवा करो। हव्य भोजन करने के लिए देवों का आह्वान करो और हव्य वहन करो।

अथपवित्रेष्ट्यांस्विष्टकृतोनुवाक्यैषा सूत्रितंच—जुष्टोदमूनाअग्नेशर्धमहतेसौभगायेतिसं-याज्येइति । मरुद्भ्यःपुरोडाशंसप्तकपालमित्यत्रापिस्विष्टकृतोनुवाक्या अत्यासोनयेमरुतःस्वञ्चो जुष्टोदमूनाइतिसूत्रितम् ।

सैषापञ्चमी—

**जुष्टोदमूनाअतिथिर्दुरोणइमंनोयज्ञमुपयाहिविद्वान् ।**
**विश्वाअग्नेअभियुजोविहत्याशत्रूयतामाभराभोजनानि ॥५॥१८॥**

जुष्टः । दमूनाः । अतिथिः । दुरोणे । इमम् । नः । यज्ञम् ।
उप । याहि । विद्वान् । विश्वाः । अग्ने । अभिऽयुजः ।
विऽहत्यं । शत्रुऽयुताम् । आ । भर । भोजनानि ॥ ५ ॥ १८ ॥

जुष्टःपर्याप्तोदमूनादानमनादान्तमनावा अतिथिस्तद्वत्पूज्यःसन् इमंनोस्मदीयंयज्ञमुप-याहि उपगच्छ विद्वान्जानन् हेअग्ने विश्वाअभियुजः सर्वानभियोक्तॄन् विहत्य शत्रूयतां तेषांभोजनानि अन्नानि धनान्याभर आहर अतिथिरभ्यतितोगृहान्भवतीत्यादिनिरुक्तंद्र-ष्टव्यम् ॥ ५ ॥

५. तुम पर्याप्त, दान्तमना और गृहागत अतिथि की तरह पूज्य होकर हम लोगों के इस यज्ञ में आगमन करो। हे विद्वान् अग्नि, तुम समस्त शत्रुओं को विनष्ट करो और शत्रुताचरण करनेवालों का धन अपहरण करो।

वृधेनदस्युंप्रहिचातयस्ववयःकृण्वानस्तन्वेऽस्वायै ।
पिपर्षियत्सहसस्पुत्रदेवान्त्सोअग्नेपाहिनृतमवाजेअस्मान् ॥६॥

वृधेन । दस्युम् । प्र । हि । चातयस्व । वयः । कृण्वानः ।
तन्वे । स्वायै । पिपर्षि । यत् । सहसः । पुत्र । देवान् । सः ।
अग्ने । पाहि । नृऽतम । वाजे । अस्मान् ॥ ६ ॥

हेऽग्ने वधेनायुधेन दस्युमुपक्षपयितारं प्रहिचातयस्व प्रणाशय हिःपूरणः वयःकृण्वानः तन्वेशरीराय स्वायै स्वीयाय अथवा स्वायैतन्वे यजमानादिरूपाय पुत्राय वयोऽन्नंकुर्वाणः यद्यस्मात्सहसस्पुत्राग्ने देवान्पिपर्षि तर्पयसि हेनृतम नेतृतमाग्ने सत्वंवाजेसंग्रामे अस्मान्पाहिरक्ष ॥ ६ ॥

६. हे अग्नि, तुम अपने यजमानादिरूप पुत्र को अन्न-दान करते हो और आयुध-द्वारा दस्युओं को विनष्ट करते हो । हे बलपुत्र, जिस कारण तुम देवों को तृप्त करते हो, उसी कारण से हे नेतृश्रेष्ठ अग्नि, तुम हम लोगों की संग्राम में रक्षा करो ।

वयंतेअग्नउक्थैर्विधेमवयंहव्यैःपावकभद्रशोचे ।
अस्मेरयिंविश्ववारंसमिन्वास्मेविश्वानिद्रविणानिधेहि ॥ ७ ॥

वयम् । ते । अग्ने । उक्थैः । विधेम । वयम् । हव्यैः । पावक ।
भद्रऽशोचे । अस्मे इति । रयिम् । विश्वऽवारम् । सम् । इन्व ।
अस्मे इति । विश्वानि । द्रविणानि । धेहि ॥ ७ ॥

हेऽग्ने ते त्वां वयं उक्थैःशस्त्रैर्विधेम परिचरेम वयंहव्यैर्हविर्भिर्विधेम हेपावक शोधक हेभद्रशोचे कल्याणदीप्ते अग्ने अस्मे अस्मभ्यंविश्ववारं विश्वैर्वरणीयंरयिंधनंसमिन्व प्रापय अस्मे अस्मभ्यंविश्वानि द्रविणानि धेहि स्थापय ॥ ७ ॥

७. हे अग्नि, हम लोग शस्त्र-द्वारा तुम्हारी परिचर्या करेंगे । हम लोग हव्य-द्वारा तुम्हारी परिचर्या करेंगे । हे शोधक, तथा हे कल्याणकर-दीप्तिविशिष्ट अग्नि, तुम हम लोगों को सबके द्वारा वरणीय धन दो । हम लोगों को समस्त धन प्रदान करो ।

अस्माकमग्नेअध्वरंजुषस्वसहसःसूनोत्रिषधस्थहव्यम् ।
वयंदेवेषुसुकृतःस्यामशर्मणानस्त्रिवरूथेनपाहि ॥ ८ ॥

अस्माकम् । अग्ने । अध्वरम् । जुषस्व । सहसः । सूनो इति ।
त्रिसधस्थ । हव्यम् । वयम् । देवेषु । सुकृतः । स्याम ।
शर्मणा । नः । त्रिवरूथेन । पाहि ॥ ८ ॥

हेअग्ने अस्माकमध्वरंजुषस्व सेवस्व हेसहसःसूनो बलस्यपुत्र त्रिषधस्थ त्रिषुक्षित्यादिषुस्थानेषुस्थित हव्यंहविर्जुषस्व यद्वा अध्वरंहविरितियोज्यम् अहिंसितंहविरित्यर्थः येयजमानादेवेषुमध्ये सुकृतः शोभनापूर्वकर्तारःस्याम भवेम त्रिवरूथेन वाचिकादिभेदेन त्रिधावरणीयेन शर्मणासुखेन त्रिच्छदिष्केण गृहेण वा नः पाहि रक्ष ॥ ८ ॥

८. हे अग्नि, हम लोगों के यज्ञ की सेवा करो। हे बलपुत्र, हे क्षिति आदि तीनों स्थानों में रहनेवाले अग्नि, तुम हव्य की सेवा करो। हम लोग देवों के मध्य में सुकर्मकारी होंगे। तुम हम लोगों को वाचिकादि भेद से तीन प्रकार के सर्ववरणीय सुख-द्वारा अथवा त्रितल-विशिष्ट गृह-द्वारा रक्षा करो।

विश्वानिनोदुर्गहाजातवेदःसिन्धुंननावादुरितातिपर्षि ।
अग्नेअत्रिवन्नमसागृणानो३स्माकंबोध्यविता तनूनाम् ॥ ९ ॥

विश्वानि । नः । दुःगहा । जातऽवेदः । सिन्धुम् । न । नावा ।
दुःइता । अति । पर्षि । अग्ने । अत्रिऽवत् । नमसा । गृणानः ।
अस्माकम् । बोधि । अविता । तनूनाम् ॥ ९ ॥

हेजातवेदः नोस्माकं दुर्गहा दुःखेगाह्यानि दुःखेनभोग्यानि विश्वानिदुरितान्यतिपर्षि अतिपारय सिन्धुंननावा नदीं नाविकोयथा तद्वत् हेअग्ने अत्रिवत् अत्रेर्यथा तथानोस्माकं नमसास्तोत्रेणगृणानः स्तूयमानःसन्नोस्माकं तनूनामविता रक्षकोनोपि बुध्यस्व ॥ ९ ॥

९. हे जातवेदा, नाविक नौका-द्वारा जिस तरह से नदी पार करता है, उसी तरह से तुम हम लोगों को समस्त दुःसह दुरितों से पार करो। हे अग्नि, अत्रि की तरह हम लोगों के स्तोत्रों-द्वारा स्तुत होकर तुम हम लोगों के शरीररक्षक रूप से अवगत होओ।

पुत्रकामेष्ट्यांयस्त्वेत्येषाप्रधानस्ययाज्या सूत्रितंच—यस्त्वाहृदाकीरिणामन्यमानोभित्त्वाविभ्रयस्तममिति ।

यस्त्वांहृदाकीरिणामन्यमानोमर्त्यंमर्त्योजोहवीमि ।
जातवेदोयशोअस्मासुधेहिप्रजाभिरग्नेअमृतत्वमश्याम् ॥ १० ॥

यः । त्वा । हृदा । कीरिणा । मन्यमानः । अमर्त्यम् । मर्त्यः ।
जोहवीमि । जातऽवेदः । यशः । अस्मासु । धेहि । प्रऽजाभिः ।
अग्ने । अमृतऽत्वम् । अश्याम् ॥ १० ॥

योमर्त्योमरणधर्माहम् अमर्त्यममरं त्वा त्वां कीरिणा स्तुत्यादिगुणविशिष्टेनहृदा हृदयेन युक्तोमन्यमानःस्तुवन् जोहवीमि अत्यर्थमाह्वयामि यद्वा स्तोतृवाचकेनकीरिणा शब्देन स्तुतिरुपलक्ष्यते स्तुतियुक्तेनमनसात्वामप्रमदंमन्यमानोजोहवीमि हेजातवेदोयशोधनं प्रजांवास्मासुधेहि प्रजाभिस्त्वहमग्नेभिः हेअग्ने अहममृतत्वं सन्तत्यविच्छेदलक्षणमश्यां प्राप्नुयां प्रजामनुप्रजायसेतदुतेमर्त्यामृतमितिहिश्रुतिः ॥ १० ॥

१०. हे अग्नि, हम मरणशील हैं और तुम अमर हो। हम स्तुति-युक्त हृदय से स्तव करके तुम्हारा पुनः-पुनः आह्वान करते हैं। हे जातवेदा, हम लोगों को सन्तानदान करो। हम जिससे सन्ततियों के अविच्छेद से अमरत्व लाभ कर सकें।

तस्यामेवपुत्रकामेष्ट्यांयस्मैत्वमित्येषाग्नेःपुत्रवतोनुवाक्या यस्मैत्वंसुकृतेजातवेदोयस्त्वा हृदाकीरिणामन्यमानइतिहिसूत्रितम्।

यस्मै॒त्वंसु॒कृते॑जातवेद॒उलो॒कम॑ग्ने कृ॒णव॑ःस्यो॒नम्।
अ॒श्विनं॒सपु॒त्रिणं॑वी॒रव॑न्तं॒गोम॑न्तंर॒यिंन॑शतेस्व॒स्ति ॥ ११ ॥ १९ ॥

यस्मै॑। त्वम्। सु॒ऽकृते॑। जा॒त॒ऽवे॒दः। ऊँ इति॑। लो॒कम्। अ॒ग्ने॒। कृ॒णवः॑। स्यो॒नम्। अ॒श्विन॑म्। सः। पु॒त्रिण॑म्। वी॒रऽव॑न्तम्। गोऽम॑न्तम्। र॒यिम्। न॒श॒ते॒। स्व॒स्ति ॥ ११ ॥ १९ ॥

हेजातवेदोऽग्ने त्वं यस्मैसुकृते सुकर्मणे यजमानाय उइतिपूरणः लोकंस्योनं सुखकरं कृणवोऽकरोः यद्वा लोकमालोकेनस्योनंकृणवः अनुग्रहेणकुर्वित्यर्थः सयजमानोऽश्विनंबह्वश्वोपेतं पुत्रिणं बहुपुत्रोपेतं वीरवन्तं वीरैर्वीर्येणवोपेतं गोमन्तं रयिं धनं नशते प्राप्नोति स्वस्त्यविनश्वरम् ॥ ११ ॥

११. हे जातवेदा अग्नि, तुम जिस सुकर्मकृत यजमान के प्रति सुखकर अनुग्रह करते हो, वह यजमान अश्वयुक्त, पुत्रयुक्त, वीर्ययुक्त और गोयुक्त होकर अक्षय धन-लाभ करता है।

॥ इतितृतीयस्याष्टमेएकोनविंशोवर्गः ॥ १९ ॥

सुसमिद्धायेत्येकादशर्चंपञ्चमंसूक्तम् आत्रेयस्यवसुश्रुतस्यार्षंगायत्रम् इध्माद्युक्तदेवताकम् आप्रमित्युक्तत्वात्तनूनपाद्वर्जितं सुसमिद्धायार्षंगायत्रमित्यनुक्रमणिका। अत्रीणामिदमाप्रीसूक्तं समिद्धोअग्नेतिपाशवेंपांयथर्षित्युक्तत्वात्।

सु॒सम्॑इद्धायशो॒चिषे॑घृ॒तंती॒व्रंजु॑होतन। अ॒ग्नये॑जा॒तवे॑दसे ॥ १ ॥

---

१ तै० ब्रा० १. ५. ५.।

सुऽसंमिद्धाय । शोचिषे । घृतम् । तीव्रम् । जुहोतन । अग्नये । जातऽवेदसे ॥ १ ॥

सुसमिद्धाय सुसमिद्धायैतन्नामकायाग्नये शोचिषे दीप्तिमते घृतमाज्यं तीव्रं प्रभूतं जुहोतन हे ऋत्विजः अग्नये ज्ञानादिगुणयुक्ताय जातवेदसे जातधनाय ॥ १ ॥

१. हे ऋत्विको, जातवेदा, दीप्तिमान् और सुसमिद्ध नामक अग्नि के लिए तुम प्रभूत घृत से हवन करो।

नराशंसःसुषूदतीमंयज्ञमदाभ्यः । कविर्हिमधुहस्त्यः ॥ २ ॥

नराशंसः । सुसूदति । इमम् । यज्ञम् । अदाभ्यः । कविः । हि । मधुऽहस्त्यः ॥ २ ॥

नराशंसः नरैःशंसनीयोयमग्निरिमंयज्ञमिदंहविर्वा सुषूदति सुष्ठुप्रेरयति सदेवः अदाभ्यः अहिंस्यःकेनापि कविर्मेधावी मधुहस्त्यः मधुरहस्त्यः ॥ २ ॥

२. नराशंस (मनुष्यों के द्वारा शंसनीय) नामक अग्नि इस यज्ञ को प्रदीप्त करें। वे अहिंसनीय, मेधावी एवम् हस्त-विशिष्ट हैं।

ईळितोअग्नआवहेन्द्रंचित्रमिहप्रियम् । सुखैरथेभिरूतये ॥ ३ ॥

ईळितः । अग्ने । आ । वह । इन्द्रम् । चित्रम् । इह । प्रियम् । सुखैः । रथेभिः । ऊतये ॥ ३ ॥

हेअग्ने ईळितः स्तुतःसन्नावहेन्द्रं चित्रंचायनीयं प्रियमिहास्मिन्यज्ञसुखैरथैरस्माकमूतयेस्मद्रक्षणाय ॥ ३ ॥

३. हे अग्नि, तुम स्तुत हो। हम लोगों की रक्षा के लिए विचित्र एवम् प्रिय इन्द्र को सुखकर रथ-द्वारा इस यज्ञ में लाओ।

ऊर्णम्रदाविप्रथस्वाभ्य१र्काअनूषत । भवानःशुभ्रसातये ॥ ४ ॥

ऊर्णऽम्रदाः । वि । प्रथस्व । अभि । अर्काः । अनूषत । भव । नः । शुभ्र । सातये ॥ ४ ॥

हेऊर्णम्रदाः ऊर्णाकम्बलवन्मृदो हेबर्हिर्विप्रथस्व प्रथय अर्काःस्तोतारोभ्यनूषत स्तुवन्ति हेशुभ्र दीप्त सातये धनाय तद्दानायभवा नोस्माकंभव ॥ ४ ॥

४. हे बर्हि, तुम कम्बल की तरह मृदुभाव से विस्तृत होओ। स्तोता लोग स्तुति करते हैं। हे दीप्त, तुम हम लोगों के लिए धन-प्रद होओ।

अथपञ्चमी—

देवीर्द्वारोविश्रयध्वंसुप्रायणानऊतये । प्रप्रंयज्ञंपृणीतन ॥५।२०॥

देवीः । द्वारः । वि । श्रयध्वम् । सुप्रऽअयनाः । नः । ऊतये ।
प्रऽप्र । यज्ञम् । पृणीतन ॥ ५ ॥ २० ॥

हेद्वारोयज्ञस्यद्वाराभिमानिन्योहेदेवीर्देव्यः विश्रयध्वं वियुक्ताभवत सुप्रायणाः शोभनगमनसाधनाः नोस्माकमूतयेरक्षायै यज्ञं यजमानं प्रप्रपृणीतन पूरयतकामैः यज्ञमेव्याकुरुते ॥ ५ ॥

५. हे सुगमन-साधिका यज्ञद्वार की अभिमानिनी देवियो, तुम सब विमुक्त होओ और हम लोगों की रक्षा के लिए यज्ञ को सम्पूर्ण करो।

॥ इतितृतीयस्याष्टमेविंशोवर्गः ॥ २० ॥

सुप्रतीकेवयोवृधायह्वीऋतस्यमातरा । दोषामुषासमीमहे ॥६॥

सुप्रतीके इति सुऽप्रतीके । वयःऽवृधा । यह्वी इति । ऋतस्य ।
मातरा । दोषाम् । उषसम् । ईमहे ॥ ६ ॥

हेमहोरात्रेभ्याभिमानिदेव्यौ सुप्रतीके सुरूपे शोभनाङ्गेवा वयोवृधा अन्नस्यवर्धयित्र्यौ यह्वी महत्यौ ऋतस्ययज्ञस्योदकस्यवामातरा निर्मात्र्यौ तयोर्मध्ये प्रत्येकं दोषां रात्रिदेवीमुषसमहर्देवीम् ईमहे स्तुमः ॥ ६ ॥

६. सुरूपा, अन्नवर्द्धयित्री, महती और यज्ञ या उदक की निर्मात्री रात्रि तथा उषा देवी की हम लोग स्तुति करते हैं।

वातस्यपत्मन्नीळितादैव्याहोतारामनुषः । इमंनोयज्ञमागतम् ॥७॥

वातस्य । पत्मन् । ईळिता । दैव्या । होतारा । मनुषः । इमम् ।
नः । यज्ञम् । आ । गतम् ॥ ७ ॥

वातस्यपत्मन् लुप्तोपमैषा वायुगमनसदृशगमनार्थमीळिता ईळितौ अस्माभिःस्तुतौ यद्वा वातस्य पतनसाधनेन्तरिक्षेगच्छन्तौ दैव्या देवावग्नेरादित्याच्चसमुद्भूतौ होतारा देवानामाह्वातारौ युवां मनुषोमनुष्यस्य इमंनोस्माकंयज्ञमागतमागच्छतं नोमनुषोयज्ञमितिव्यधिकरणे षष्ठ्यौ अस्माकंयजमानस्ययज्ञमित्यर्थः ॥ ७ ॥

७. हे अग्नि-आदित्य से समुद्भूत होतृद्वय, तुम दोनों स्तुत होकर वायुपथ से गमन करते हो। हम यजमानों के इस यज्ञ में आगमन करो।

अयाष्टमी—

इळासरस्वतीमहीतिस्रोदेवीर्मयोभुवः । बर्हिःसींदन्त्वस्रिधः ॥८॥

इळा । सरस्वती । मही । तिस्रः । देवीः । मयःऽभुवः । बर्हिः । सीदन्तु । अस्रिधः ॥ ८ ॥

इळापृथिवी सरस्वती सरउदकं तद्वान्सरस्वान्वायुः तस्यस्त्रीसरस्वती मही महती भारती भरतस्यादित्यस्यपत्नी अत्र यद्यप्येषानोक्ता तथापि सर्वत्रसहदृष्टत्वात् त्रिसं-ख्याश्रवणाच्च सा गृह्यते अथवैताः क्षित्यन्तरिक्षद्युस्थानाभ्यान्देव्यः एतामयोभुवः सुखस्यभा-वयित्र्यः अस्रिधोहिंसिकाः सत्योबर्हिर्बर्हिषिसीदन्तु उपविशन्तु ॥ ८ ॥

८. इला, सरस्वती और मही नामक तीनों देवियाँ सुख उत्पन्न करें। वे हिंसाशून्य होकर हम यजमानों के इस यज्ञ में आगमन करें।

शिवस्त्वंष्टरिहागंहिविभुःपोषंउतत्मना । यज्ञेयंज्ञेनउदव ॥९॥

शिवः । त्वष्टः । इह । आ । गहि । विऽभुः । पोषे । उत । त्मना । यज्ञेऽयंज्ञे । नः । उत् । अव ॥ ९ ॥

हेत्वष्टर्देव शिवः सुखकरःसन्निहागहि अस्मद्यज्ञमागच्छ विभुर्व्याप्तस्त्वं पोषे पोषकरणे उत आगत्यच त्मना आत्मना स्वयमेव यज्ञेयज्ञे सर्वेषुयज्ञेषुनोस्मानुदवोत्कृष्टंरक्ष ॥ ९ ॥

९. हे त्वष्टृदेव, तुम सुखकर होकर इस यज्ञ में आगमन करो। तुम पोषक रूप में व्याप्त हो। सब यज्ञों में तुम हम लोगों की उत्कृष्ट रूप से रक्षा करो।

अग्निहोत्रउत्तराहुतिस्कन्दने यत्रवेत्थेत्यनयासमिधमादध्यात् सूत्रितंच—यत्रवेत्थवन-स्पतइत्युत्तरस्याआहुत्यास्कन्दनइति ।

यत्रवेत्थवनस्पतेदेवानांगुह्यानामांनि । तत्रंहव्यानिंगामय ॥१०॥

यत्रं । वेत्थं । वनस्पते । देवानाम् । गुह्या । नामानि । तत्रं । हव्यानिं । गामय ॥ १० ॥

हेवनस्पते यूपाभिमानिदेव यत्रयस्मिन्स्थानेवेत्थ देवानांगुह्या गुह्यानि नामानि गुह्यं नामकानि रूपाणि तत्र हव्यानि गमय प्रापय ॥ १० ॥

१०. हे वनस्पति (यूपाभिमानी देव), तुम जिस स्थान में देवों के गुप्त नाम को जानते हो, उस स्थान में हव्य प्रेरित करो।

अथैकादशी—

स्वाहाग्नयेवरुणायस्वाहेन्द्रायमरुद्भ्यः ।
स्वाहादेवेभ्योहविः ॥ ११ ॥ २१ ॥

स्वाहा । अग्नये । वरुणाय । स्वाहा । इन्द्राय । मरुत्ऽभ्यः ।
स्वाहा । देवेभ्यः । हविः ॥ ११ ॥ २१ ॥

येअग्न्यादयोविश्वेदेवाः तेभ्योदेवेभ्यः इदंहविः स्वाहाकरोमीतिशेषः स्वाहुतंकरोमीत्यर्थः एवंस्वाहाकृतेःस्तुतिः ॥ ११ ॥

११. यह हव्य अग्नि और वरुण को स्वाहा (आहुत) रूप से प्रदत्त है, इन्द्र और मरुतों को स्वाहा रूप से प्रदत्त है तथा देवों को स्वाहा रूप से प्रदत्त है।

॥ इतितृतीयस्याष्टमेएकविंशोवर्गः ॥ २१ ॥

अग्निंतमन्यइतिदशर्चंषष्ठंसूक्तं वसुश्रुतस्यार्षम् आग्नेयं पाङ्क्तम् अग्निंतंदशापाङ्क्तमित्यनुक्रमणिका । प्रातरनुवाकेआग्नेयेक्रतौपाङ्क्तेछन्दस्याश्विनशस्त्रेचेदंसूक्तम् अग्निंतंमन्यइतिपाङ्क्तमितिहि सूत्रितम् । आश्वमेधिकेमध्यमेहनीदमेवाज्यशस्त्रं सूत्रितंच—अग्निंतंमन्यइत्याज्यंतस्यैकाहिकमुपरिष्टादिति । आग्नेआमिप्लविकेषूक्थ्येषुमैत्रावरुणस्यानुरूपस्तृचः सूत्रितंच—अग्निंतं मन्येयोवसुराग्नेस्थूरंरयिंभरेति ।

अग्निंतंमन्येयोवसुरस्तंयंयन्तिधेनवः ।
अस्तमर्वन्तआशवोस्तंनित्यासोवाजिनइषंस्तोतृभ्यआभर ॥ १ ॥

अग्निम् । तम् । मन्ये । यः । वसुः । अस्तम् । यम् । यन्ति ।
धेनवः । अस्तम् । अर्वन्तः । आशवः । अस्तम् । नित्यासः ।
वाजिनः । इषम् । स्तोतृऽभ्यः । आ । भर ॥ १ ॥

तमग्निंमन्ये स्तौमि योग्निर्वसुर्वासकः यमस्तंसर्वेषां गृहवदाश्रयभूतं धेनवोयन्ति गच्छन्ति प्रीणयितुम् अस्तमुक्तलक्षणमर्वन्तोरणवन्तोश्वाः आशवः शीघ्रगामिनोयन्ति तथा नित्यासःनित्यप्रवृत्तयः वाजिनोहविर्लक्षणान्नवन्तोयजमानायमस्तंयन्ति तंमन्ये इषमन्नंस्तोतृभ्योस्मभ्यमाभराग्ने ॥ १ ॥

१. जो निवासप्रद हैं, जो सबके लिए गृह की तरह आश्रयभूत हैं और जिन्हें गौएँ, शीघ्रगामी घोड़े तथा नित्य प्रवृत्त हव्य देनेवाले यजमान प्रसन्न करते हैं; हम उन अग्नि की स्तुति करते हैं। हे अग्नि, स्तोताओं के लिए अन्न आहरण करो।

सोअग्निर्योवसुर्गृणेसंयमायन्तिधेनवः ।

समर्वन्तोरघुद्रुवःसंसुजातासःसूरयइषंस्तोतृभ्यआभर ॥ २ ॥

सः । अग्निः । यः । वसुः । गृणे । सम् । यम् । आऽयन्ति ।
धेनवः । सम् । अर्वन्तः । रघुऽद्रुवः । सम् । सुऽजातासः । सूरयः ।
इषम् । स्तोतृऽभ्यः । आ । भर ॥ २ ॥

सः अग्निः सखल्वग्निः योवसुर्वासकोगृणे स्तूयते यंधेनवःसमायन्तिहोमार्थम् अर्वन्तो-रघुद्रुवः लघुगमनाःसमायन्ति सुजातासः सुकुलोत्पन्नाः सूरयोमेधाविनश्च समायन्ति सखल्वग्निरिति ॥ २ ॥

२. जो अग्नि निवासप्रद रूप से स्तुत होते हैं, जिनके निकट गौएँ होमार्थ समागत होती हैं, द्रुतगामी घोड़े समागत होते हैं और सत्कु-लोत्पन्न मेधावी समागत होते हैं, वे ही अग्नि हैं। हे अग्नि, स्तोताओं के लिए अन्न आहरण करो।

अग्निर्हिवाजिनंविशेददातिविश्वचर्षणिः ।

अग्नीरायेस्वाभुवंसप्रीतोयातिवार्यमिषंस्तोतृभ्यआभर ॥ ३ ॥

अग्निः । हि । वाजिनम् । विशे । ददाति । विश्वऽचर्षणिः ।
अग्निः । राये । सुऽआभुवम् । सः । प्रीतः । याति । वार्यम् ।
इषम् । स्तोतृऽभ्यः । आ । भर ॥ ३ ॥

अग्निर्हि अयमग्निःखलु विशे यजमानाय वाजिनमन्नवन्तंपुत्रमन्नवन्तंवाददाति विश्वचर्षणिः विश्वेचर्षणयोमनुष्यारक्षणीयायस्यसर्वकार्यपश्यत्यतोष्टः यद्वा पश्यतिकर्माणीति सर्वेभ्यःप्रदाअग्नीरायेधनार्थिने अथवा द्वितीयार्थेचतुर्थी धनं स्वाभुवं सुष्ठुसर्वेष्वभ्यासं वार्यं सर्वैर्वरणीयं प्रीतःसन्याति गमयति दातुंवागच्छति इषमित्यादिगतम् ॥ ३ ॥

३. सबके कर्मों के दर्शक अग्नि यजमानों को अन्नयुक्त पुत्र प्रदान करते हैं। अग्नि प्रीत होकर सर्वत्र व्याप्त और सबके द्वारा वरणीय धन देने के लिए गमन करते हैं। हे अग्नि, स्तोताओं के लिए अन्न आहरण करो।

आग्निष्टोमिकेतृतीयसवनेस्तोमातिशयेऋच्याआतेअग्नइधीमहीत्यस्यविकल्पेनभाद्वितीये सवि-संपत्ति—आतेअग्नइधीमहीमन्येइन्द्रसर्पिरितिद्वेपकाचेति ।

समभ्युचेमथया सूक्तेचतुर्थी—

आतेंअग्नइधीमहिद्युमन्तंदेवाजरंम् ।
यद्धस्यातेपनींयसीसुमिद्दीदयंतिद्यवीषंस्तोतृभ्यआभंर ॥ ४ ॥

आ । ते । अग्ने । इधीमहि । द्युमन्तंम् । देव । अजरंम् । यत् ।
ह । स्या । ते । पनींयसी । सम्ऽइत् । दीदयंति । द्यवि ।
इषंम् । स्तोतृऽभ्यंः । आ । भर ॥ ४ ॥

हेअग्ने देव द्युमन्तं दीप्तिमन्तमजरमजीर्णं तेत्वाम् आसर्वतइधीमहि दीपयामः यद्ध स्यद्ध ते तव स्या सा पनीयसी स्तुत्यासमिद्दीप्तिर्दीदयतिदीप्यते द्यवि द्युलोके ॥ ४ ॥

४. हे अग्निदेव, तुम दीप्तिमान् और जरारहित हो। तुम्हें हम सर्वतोभाव से प्रदीप्त करते हैं। तुम्हारी वह स्तुतियोग्य दीप्ति द्युलोक में दीप्त होती है। हे अग्नि, स्तोताओं के लिए अन्न आहरण करो।

आतेंअग्नऋचाहविःशुक्रस्यशोचिषस्पते ।
सुश्चंन्द्रदस्मविश्पतेहव्यंवाट्तुभ्यंहूयतइषंस्तोतृभ्यआभंर ।५।२२।

आ । ते । अग्ने । ऋचा । हविः । शुक्रस्य । शोचिषः । पते ।
सुऽचंन्द्र । दस्मं । विश्पते । हव्यऽवाट् । तुभ्यंम् । हूयते ।
इषंम् । स्तोतृऽभ्यंः । आ । भर ॥ ५ ॥ २२ ॥

हेशोचिषोदीप्तेःपते स्वामिन्नग्ने शुक्रस्य दीप्तस्य ते तुभ्यमृचामन्त्रेणसहहविर्हूयते हे सुश्चन्द्र सुष्ठुआह्लादक शोभनहिरण्यवा हेदस्म शत्रूणामुपक्षपयितः विश्पते विशांप्रजानांपालक हव्यावाट् हविषोवोढः आपूरणः इषंगतम् ॥ ५ ॥

५. हे दीप्ति-समूह के स्वामी, आह्लादक, शत्रुओं के विनाशक, प्रजापालक और हव्यवाहक अग्नि, तुम दीप्त हो। तुम्हारे उद्देश से मन्त्रों के साथ हव्य हुत होता है। हे अग्नि, स्तोताओं के लिए अन्न आहरण करो। ॥ इतितृतीयस्याष्टमेद्वाविंशोवर्गः ॥ २२ ॥

अथषष्ठी—

प्रोत्येअग्नयोग्निषुविश्वंपुष्यन्तिवार्यम् ।
तेहिंन्विरेतइन्विरेतइषंयन्त्यानुषगिषंस्तोतृभ्यआभंर ॥ ६ ॥

प्रो इति । त्ये । अग्नयः । अग्निषु । विश्वम् । पुष्यन्ति ।
वार्यम् । ते । हिन्विरे । ते । इन्विरे । ते । इषण्यन्ति । आनुषक् ।
इषम् । स्तोतृऽभ्यः । आ । भर ॥ ६ ॥

प्रोप्रैवपुष्यन्तित्येतेग्नयोधिष्ण्याअग्निषुगार्हपत्यादिषु यद्वालौकिकाअग्नयस्तेजःपदार्थभूताअग्निषुवैदिकेषुविश्वंसर्वं वार्यं वरणीयम् अपेक्षितंधनंपुष्यन्ति तेग्नयोहिन्विरे प्रीणयन्ति इन्विरेप्रीणयितुंव्याप्नुवन्तिच तेइषण्यन्ति अन्नमिच्छन्ति आनुषक् सर्वत्रानुषक्तं सततमित्याभिप्रायेणैकवचनम् ॥ ६ ॥

६. ये लौकिकाग्नि गार्हपत्यादि अग्नि में समस्त वरणीय या अपेक्षित धन का पोषण करते हैं। ये प्रीतिदान करते हैं, ये चारों तरफ व्याप्त होते हैं और ये अनवरत अन्न की इच्छा करते हैं। हे अग्नि, स्तोताओं के लिए अन्न आहरण करो।

तवत्येअग्नेअर्चयोमहिंव्राधन्तवाजिनः ।
येपत्वभिःशफानांव्रजाभुरन्तगोनामिषंस्तोतृभ्यआभर ॥७॥

तव । त्ये । अग्ने । अर्चयः । महि । व्राधन्त । वाजिनः ।
ये । पत्वऽभिः । शफानाम् । व्रजा । भुरन्त । गोनाम् ।
इषम् । स्तोतृऽभ्यः । आ । भर ॥ ७ ॥

हेअग्ने तव त्वदीयाः त्ये ते अर्चयोरश्मयोमहि महदत्यधिकंवाजिनोवेगवन्तोव्राधन्त वर्धन्ते यद्वा हस्तोपमा वाजिनोश्वाइव ये रश्मयः पत्वभिः पतनैः शफानांखुरवतां गोनांगवायूथानि भुरन्त इच्छन्ति आयतात्माकाहोमायकाङ्क्षन्तइत्यर्थः तेवर्धन्ते ॥ ७ ॥

७. हे अग्नि, तुम्हारी वे रश्मियाँ अत्यन्त अधिक अन्नयुक्त होकर वर्द्धित हों। वे रश्मियाँ पतन के द्वारा खुरयुक्त गोसमूह की इच्छा करें अर्थात् होम की आकांक्षा करें। हे अग्नि, स्तोताओं के लिए अन्न आहरण करो।

नवानोअग्नआभरस्तोतृभ्यःसुक्षितीरिषः ।
तेस्यामयआनृचुस्त्वादूतासोदमेदमइषंस्तोतृभ्यआभर ॥ ८ ॥

नवाः । नः । अग्ने । आ । भर । स्तोतृऽभ्यः । सुऽक्षितीः ।
इषः । ते । स्याम । ये । आनृचुः । त्वाऽदूतासः । दमेऽदमे ।
इषम् । स्तोतृऽभ्यः । आ । भर ॥ ८ ॥

हेअग्ने स्तोतृभ्योनोस्मभ्यं नवाः स्तुत्याः नूत्नावास्तुक्षितीः सुनिवासाः सुप्रजावाइ-षःउरुक्षणाव्यन्नानि आभर प्रयच्छ येनवयंदमेदमे सर्वेषुयागगृहेषु त्वामानृचुरर्चयन्ति ते वयं त्वादूतासः त्वांदूतंकस्पुत्रकंरुस्वन्तःसन्तः स्याम समृद्धाभूयास्म दमेदमेस्यामेतिवा योज्यम् ॥८॥

८. हे अग्नि, हम सब तुम्हारे स्तोता हैं। तुम हम लोगों को नूतन गृहयुक्त अन्न दान करो। हम लोग जिससे तुम्हारी प्रत्येक यज्ञ-गृह में अर्चना करके तुम्हें दूत रूप से लाभ कर सकें। हे अग्नि, स्तोताओं के लिए अन्न आहरण करो।

आभिप्लविकेषूक्थ्येषुतृतीयसवनेवैकल्पिकस्तोत्रियस्तृचे उमेसुश्चन्द्रेत्येषातृतीया सूत्रमुक्तम्।

सैषानवमी—

उभेसुंश्चन्द्रसर्पिषोदर्वीश्रीणीषआसनिं।
उतोनउत्पुपूर्याउक्थेषुशवसस्पतइषंस्तोतृभ्यआभर ॥ ९ ॥

उभे इति। सुऽचन्द्र। सुर्पिषः। दर्वी इति। श्रीणीषे। आ। सनि।
उतो इति। नः। उत। पुपूर्याः। उक्थेषु। शवसः।
पते। इषम्। स्तोतृऽभ्यः। आ। भर ॥ ९ ॥

हेसुश्चन्द्र शोभनाह्लादक शोभनहिरण्यवाग्ने उभे सर्पिषःपूर्णे दर्वी जुहूपभृतावा-सन्यास्ये श्रीणीषे श्रयसि पचसिवा उतोअपिच नोस्मानुक्थेषु यागेषूत्पुपूर्याः उत्पूरयफलैः हेशवसस्पतेबलस्यपालयितः ॥ ९ ॥

९. हे आह्लादक अग्नि, तुम घृतपूर्ण दर्वीद्वय को मुख में ग्रहण करते हो। हे बल के पालयिता, तुम यज्ञ में हम लोगों को फल-द्वारा पूर्ण करो। हे अग्नि, स्तोताओं के लिए अन्न आहरण करो।

एवाँअग्निमजुर्यमुर्गीर्भिर्यज्ञेभिरानुषक्।
दधदस्मेसुवीर्यमुतत्यदाश्वश्व्यमिषंस्तोतृभ्यआभर ॥१०॥२३॥

एव। अग्निम्। अजुर्यमुः। गीःऽभिः। यज्ञेभिः। आनुषक्।
दधत्। अस्मे इति। सुऽवीर्यम्। उत। त्यत्। आशुऽअश्व्यम्।
इषम्। स्तोतृऽभ्यः। आ। भर ॥ १० ॥ २३ ॥

एवैवम् उक्तरीत्या अग्निं गीर्भिःस्तुतिभिःयज्ञेभिर्यज्ञैस्तत्साधनैर्हविर्भिर्वा अनुषगनुषक्तं संबद्धम् अजुः गच्छन्ति तथाकृत्वा यमुः यमयन्ति स्थापयन्ति हविर्भिर्यजन्तीत्यर्थः एवमात्रे-याःस्वात्परोक्षतयानिर्दिशन्ति। अजुर्यमुरित्यत्राख्यातमाख्यातेनान्नित्यासातत्यइतिसमासः किं

पास्मे अस्मासु सुवीर्यंशोभनपुत्रादिकम् उतापिच स्वतदाश्व्यम् आशव: अश्वायस्यम- 'वन्तिसआश्वः तस्यभाव:आश्वव्यं तदपिदधत धारयति ॥ १० ॥

१०. इस प्रकार से लोग अनुपयत अग्नि के निकट स्तुति और यज्ञ के साथ गमन करते हैं और उन्हें स्थापित करते हैं। ये हम लोगों को शोभन पुत्र-पौत्रादि और वेगवान् अश्व दान करें। हे अग्नि, स्तोताओं के लिए अन्न आहरण करो।

सखाय:संवइतिदशर्चंसप्तमंसूक्तम् आत्रेयइषऋषिः अन्त्यापङ्क्तिः शिष्टा:पङ्क्त्यन्तपरिभाषया- नुष्टुभः तथाचानुक्रान्तम्—सखायइष:पङ्क्त्यन्तामिति । प्रातरनुवाकेआग्नेयेक्रतावानुष्टुभेछन्दस्या- श्विनशस्त्रेचोत्तमावर्जमिदंसूक्तं सूत्रितंच—सखाय:संवस्त्वामग्नेहविष्मन्तइतिसूक्तेइति ।

सखाय:संवःसम्यञ्चमिषंस्तोमंचाग्नये ।
वर्षिष्ठायक्षितीनामूर्जोनप्त्रेसहस्वते ॥ १ ॥

सखायः । सम् । वः । सम्यञ्चम् । इषम् । स्तोमम् । च ।
अग्नये । वर्षिष्ठाय । क्षितीनाम् । ऊर्जः । नप्त्रे । सहस्वते ॥ १ ॥

हेसखाय: सखिभूताऋत्विज:वोयूयं संस्कुरुत उपसर्गश्रुतेर्योग्यक्रियाध्याहारः किंच सम्यञ्चमिषमन्नंस्तोमंस्तोत्रंचाग्नयेवर्षिष्ठायातिशयेन प्रवृद्धाय क्षितीनां यजमानानामर्थाय वर्षि- ष्ठाय प्रवृद्धतमाय ऊर्जोनप्त्रे बलस्यनपातयित्रे तत्पुत्रायवा सहस्वते बलवते संस्कुरुतेति ॥ १ ॥

१. हे सखिभूत ऋत्विको, तुम यजमानों के लिए अत्यन्त प्रवृद्ध, बल के पुत्र और बलशाली अग्नि के उद्देश से अर्चना योग्य अन्न और स्तुति प्रदान करो।

कुत्राचिद्यस्यसमृतौरण्वानरोनृषदने ।
अर्हन्तश्चिद्यमिन्धतेसंजनयन्तिजन्तवः ॥ २ ॥

कुत्र । चित् । यस्य । सम्ऽऋतौ । रण्वाः । नरः । नृऽसदने ।
अर्हन्तः । चित् । यम् । इन्धते । सम्ऽजनयन्ति । जन्तवः ॥ २ ॥

सोग्निः कुत्रचिद्वर्ततइतिशेषः कुत्रास्ते यस्याग्नेःसमृतौ संगतौ रण्वाः रममाणानरोनेता- रऋत्विजः नृषदने यागगृहे अर्हन्तश्चित् चिदितिपूजायाम् अर्हन्त:पूज्याः पूजयन्तोवासन्तः यमिन्धतेदीपयन्ति तदर्थंसंजनयन्तिचारण्यांजन्तवःप्राणिनःसकुत्रेतिसंबन्धः ॥ २ ॥

२. जिन्हें प्राप्त करके ऋत्विग्गण प्रीत होते हैं, यज्ञगृह में पूजा करके जिन्हें प्रदीप्त करते हैं एवम् जिनके लिए जन्तुओं का उत्पादन करते हैं वे अग्नि कहाँ हैं ?

अथतृतीया—

संयदिषोवनामहेसंहव्यामानुषाणाम् ।
उतद्युम्नस्यशवसऋतस्यरश्मिमाददे ॥ ३ ॥

सम् । यत् । इषः । वनामहे । सम् । हव्या । मानुषाणाम् ।
उत । द्युम्नस्य । शवसा । ऋतस्य । रश्मिम् । आ । ददे ॥ ३ ॥

यद्यदाइषोऽन्नानि संवनामहे संभजामहे यदाच मानुषाणां मनुष्याणामस्माकंहव्या हवींषि अग्निःसंसेवते उत तदानींद्युम्नस्यद्योतमानस्यान्नस्य शवसाबलेन सामर्थ्येन ऋतस्योदकस्य ग्राहकं रश्मिमाददे आदत्तेऽग्निः फलमन्नकर्तृन:स्वीकृतवानित्यर्थः यद्वा ऋतस्ययज्ञस्य रश्मिं रश्मिवद्ग्राहकं स्तवमाददे स्वीकरोति ॥ ३ ॥

३. जब हम अग्नि को अन्न प्रदान करते हैं और जब वे हम मनुष्यों के हव्य की सेवा करते हैं, तब वे द्योतमान अन्न की सामर्थ्य से उदक-ग्राहक रश्मि को ग्रहण करते हैं।

सस्माकृणोतिकेतुमानक्तंचिद्दूरआसते ।
पावकोयद्वनस्पतीन्प्रस्मामिनात्यजरः ॥ ४ ॥

सः । स्म । कृणोति । केतुम् । आ । नक्तम् । चित् । दूरे । आ ।
सते । पावकः । यत् । वनस्पतीन् । प्र । स्म । मिनाति । अजरः ॥ ४ ॥

सस्म सखल्वग्निः कृणोति करोति केतुंप्रज्ञानंमासर्वतः कस्येत्युच्यते चिदप्यर्थे नक्तंचिद्रात्रावपि दूरे आसते आङितिचार्थे दूरेऽपिस्थितमानायमनुष्याय कदा यद्यदापाव-कोऽग्निरजरोजीर्णोनमिमात्यःसन् वनस्पतीन्वृक्षांसि प्रमिनाति प्रकर्षेणदहति स्मेतिपूरणः ॥ ४ ॥

४. जब पावक और जरारहित अग्नि वनस्पतियों को दग्ध करते हैं, तब वे रात्रिकाल में भी दूर स्थित व्यक्ति को प्रज्ञापित करते हैं।

अथपञ्चमी—

अवस्मयस्यवेषणेस्वेदंपथिषुजुह्वति ।
अभीमहस्वजेन्यंभूमापृष्ठेवरुरुहुः ॥ ५ ॥ २४ ॥

अव । स्म । यस्य । वेषणे । स्वेदम् । पथिषु । जुह्वति । अभि ।
ईम् । अह । स्वऽजेन्यम् । भूम । पृष्ठाऽइव । रुरुहुः ॥ ५ ॥ २४ ॥

यस्याग्नेर्वेवेषो परिचर्यायां पथिषु होममार्गेषुरस्मिषु स्वेद स्वदाज्यमपायोगुसंजुहृत्यध्व- र्यवः तदानीमीमेनमग्निमभिरुरुहुरह अभ्यारोहन्त्येवाज्यधाराः अहइतिविनिग्रहार्थीयः स्वमेन्यं स्वोत्पन्नमूम बहुभवतीतिभूमापत्यम् तत्पृष्ठेव पितुःपृष्ठदेशानिव पुत्रायथापितुरङ्क- मारोहन्तितद्वत् ॥ ५ ॥

५. अग्नि की परिचर्या के कार्य में क्षरित घृतों को अध्वर्यु आदि ज्वालाओं के मध्य में प्रक्षिप्त करते हैं। पुत्र जिस तरह से पिता के अंक में आरोहण करता है, उसी तरह से घृतधारा इन अग्नि के ऊपर आरो- हण करती है।

यंमर्त्यः॑पुरुस्पृहं॑वि॒दद्विश्व॑स्य॒धाय॑से ।
प्रस्वाद॑नंपितू॒नामस्त॑ताति॑चिदा॒यवे॑ ॥ ६ ॥

यम् । मर्त्यः॑ । पु॒रु॒ऽस्पृह॑म् । वि॒दत् । विश्व॑स्य । धाय॑से । प्र ।
स्वाद॑नम् । पि॒तू॒नाम् । अस्त॑ऽतातिम् । चि॒त् । आ॒यवे॑ ॥ ६ ॥

यमग्निं पुरुस्पृहं बहुभिःस्पृहणीयमग्निं विदत् वेत्ति मर्त्यो यजमानो विश्वस्य धायसे सर्व- व्यापारार्थं पितूनामन्नानां प्रस्वादनं प्रकर्षेणस्वादूकर्तारम् अस्ततातिम् अस्तेगृहेनिवासकर्ता- रमायवे अन्नार्थंयजमानार्थंवा ॥ ६ ॥

६. यजमान अग्नि को जानते हैं। अग्नि अनेक द्वारा स्पृहणीय, सबके धारक अन्नों के आस्वादक और यजमानों के निवासप्रद हैं।

सहि॒ष्मा॒धन्वाक्षि॑तं॒दाता॒नदात्या॒प॒शुः ।
हिरि॑श्मश्रुःशुचि॒दन्नृ॒भुरनि॑भृष्टतविषिः ॥ ७ ॥

सः । हि । स्म॒ । धन्व॑ । आऽक्षि॑तम् । दाता॑ । न । दाति॑ । आ ।
प॒शुः । हिरि॑ऽश्मश्रुः । शुचि॑ऽदन् । ऋ॒भुः । अनि॑भृष्टऽतविषिः ॥ ७ ॥

सहिस्म खल्वग्निः धन्वनिरुदकदेशम् आक्षितं तृणकाष्ठादिभिराक्षिप्तम् आदाति सर्व- तःखण्डयति दहतीत्यर्थः दातातृणादिखण्डयिता पशुर्न पशुरिव पशुर्यथातृणमात्मक्रमेण खण्डयतितद्वत् हिरिश्मश्रुः हिरण्यश्मश्रुः शुचिदन्दीप्तदन्तः ऋभुरुरुभवन्महानित्यर्थः अनिभृष्टत- विषिः अपीडितबलः ॥ ७ ॥

७. अग्नि तृणच्छेदक पशुओं की तरह निर्जल एवम् तृणकाष्ठपूर्ण प्रदेश को छिन्न करते हैं। वे सुवर्णश्मश्रु विशिष्ट, उज्ज्वलदन्त, महान् और अप्रतिहत बल-सम्पन्न हैं।

अथाष्टमी—

शुचिःष्मयस्मा अत्रिवत्प्रस्वधितीवरीयते ।
सुषूरसूतमाताक्राणायदानशेभगम् ॥ ८ ॥

शुचिः । स्म । यस्मै । अत्रिऽवत् । प्र । स्वधितिःऽइव । रीयते ।
सुऽसूः । असूत । माता । क्राणा । यत् । आनशे । भगम् ॥ ८ ॥

अयमग्निः शुचिष्म दीप्तःखलु यस्मैअग्नये अत्रिवदत्रिरिवयजमानः हविर्दातुं प्ररीयते प्रगच्छति यद्वास्मैइतिपूरणः शुचिर्यस्मै प्रथमार्थेचतुर्थी दीप्तोयोग्निवत् अत्तितृणानीतिअत्रिः पशुः सइव सयथातृणानिखादमानोगच्छतितद्वद्गच्छतीत्यर्थः स्वधितिरिव परशुरिव छिन्दन्सुषूःसुप्रसवामातारणिरसूत क्राणाकुर्वाणाजगदुपकारं यद्यस्माद्यद्वेतिवा योऽग्निर्भगमन्नमानशे अश्नुते ॥ ८ ॥

८. जिनके निकट लोग अत्रि की तरह गमन करते हैं; जो कुठार की तरह वृक्षादि का विनाश करते हैं, वे अग्नि दीप्त हैं। जो अन्न ग्रहण करते हैं और जो जगत् के उपकारक हैं, माता अरणि ने उन्हीं अग्नि का प्रसव किया था।

आयस्तेसर्पिरासुतेऽग्नेशमस्तिधायसे ।
ऐषुद्युम्नमुतश्रवआचित्तंमर्त्येषुधाः ॥ ९ ॥

आ । यः । ते । सर्पिःऽआसुते । अग्ने । शम् । अस्ति । धायसे । आ ।
एषु । द्युम्नम् । उत । श्रवः । आ । चित्तम् । मर्त्येषु । धाः ॥ ९ ॥

हेसर्पिरासुते घृतान्नाग्ने यस्त्वमासर्वतोभवसि तादृशआयधायसे सर्वस्यधात्रे ते तुभ्यं शमस्ति सुखमस्ति स्तुतेःसकाशात् तथाचेत् एषुमर्त्येषु स्तोतृष्वात्रेयेषु द्युम्नं यशआधाः आधेहि उतापिच श्रवोऽन्नमाधाः चित्तंत्वदीयानुग्रहबुद्धिमप्याधाः ॥ ९ ॥

९. हे हव्यभोजी अग्नि, तुम सबके धारक हो। हम लोगों की स्तुतियों से तुम्हें सुख हो। तुम स्तोताओं को धन दान करो, अन्न दान करो और अन्तःकरण दान करो।

इतिचिन्मन्युमध्रिजस्त्वादातमापशुंददे ।
आदग्नेअपृणतोऽत्रिःसासह्याद्दस्यूनिषःसासह्यान्नॄन् ॥ १० ॥ २५ ॥

इति । चित् । मन्युम् । अध्रिजः । त्वाऽदातम् । आ । पशुम् । ददे ।
आत् । अग्ने । अपृणतः । अत्रिः । ससह्यात् । दस्यून् । इषः ।
ससह्यात् । नॄन् ॥ १० ॥ २५ ॥

इतिचिदित्थंभूतप्रकारेण मन्युं मननसाधनं स्तोत्रम् अध्रिजः अधृतमन्यैरग्निव्यतिरिक्तैः अधृष्यं वा मनयिता ऋषिस्त्वाष्टातं त्वयादातव्यं पशुमाददे आदत्ते आददीत वा आदनन्तरमेवाग्नेरपृणतोऽददतः दस्यून् अत्रिः तद्द्रोहिणः सासह्यात् भृशमभिभवेत् इषः एषकाननु-न्विरोधिनः सासह्यात् पुनरुक्तिरादरार्था ॥ १० ॥

१०. हे अग्नि, इसी प्रकार से दूसरों के द्वारा अक्षय स्तोत्रों के उच्चारणकारी ऋषि तुमसे पशु ग्रहण करते हैं। जो अग्नि को हव्य दान नहीं करता है, उस दस्यु को अत्रि पुनः-पुनः अभिभूत करें और विरोधियों को पुनः-पुन अभिभूत करें।

॥ इतितृतीयस्याष्टमेपञ्चविंशोवर्गः ॥ २५ ॥

त्वामग्नइतिसप्तर्चमष्टमंसूक्तम् आत्रेयस्येषस्यार्षं जागतमाग्नेयं त्वामग्नेसप्तजागतमित्यनुक्रमणिका प्रातरनुवाकेआग्नेयेक्रतौजागतेछन्दस्याश्विनशस्त्रेचेदंसूक्तं तथाचसूत्रं—मन्त्रस्यगोपास्त्वामग्नऋतायवइति ।

तत्रप्रथमा—

त्वामग्नऋतायवःसमीधिरेप्रत्नंप्रत्नासऊतयेसहस्कृत ।
पुरुश्चन्द्रंयजतंविश्वधायसंदमूनसंगृहपतिंवरेण्यम् ॥ १ ॥

त्वाम् । अग्ने । ऋतऽयवः । सम् । ईधिरे । प्रत्नम् । प्रत्नासः ।
ऊतये । सहःऽकृत । पुरुऽचन्द्रम् । यजतम् । विश्वऽधायसम् ।
दमूनसम् । गृहऽपतिम् । वरेण्यम् ॥ १ ॥

हेसहस्कृत बलस्यकर्तरग्ने प्रत्नं पुरातनं त्वां प्रत्नासः पुरातनाः ऋतायवोयज्ञकामाऋत्विजः ऊतये स्वरक्षणाय समीधिरे सम्यग्दीपितवन्तः कीदृशंत्वां पुरुश्चन्द्रं बहुधनमतिशयेनाह्लादकं वा यजतं यष्टव्यं विश्वधायसं बहुसं दमूनसं दानमनसं गृहपतिं यजमानगृहस्यपालकं वरेण्यं वरणीयम् ॥ १ ॥

१. हे बलकर्त्ता अग्नि, तुम पुरातन हो। पुरातन यज्ञकारी आश्रय लाभ के लिए तुम्हें भली भाँति से प्रदीप्त करते हैं। तुम अत्यन्त प्रीतिदायक, यागयोग्य, बहु अन्न-विशिष्ट, गृहपति और वरणीय हो।

त्वामग्नेअतिथिंपूर्व्यंविशःशोचिष्केशंगृहपतिंनिषेदिरे ।
बृहत्केतुंपुरुरूपंधनस्पृतंसुशर्माणंस्ववसंजरद्विषम् ॥ २ ॥

त्वाम् । अग्ने । अतिथिम् । पूर्व्यम् । विशः । शोचिःऽकेशम् ।
गृहऽपतिम् । नि । सेदिरे । बृहत्ऽकेतुम् । पुरुऽरूपम् । धनऽस्पृतम् ।
सुऽशर्माणम् । सुऽअवसम् । जरत्ऽविषम् ॥ २ ॥

हेऽग्ने त्वांविशोयजमानाः गृहपतिं गृहस्वामिनं निषेदिरे गार्हपत्यरूपेणस्थापितवन्त-इत्यर्थःकीदृशंत्वाम् अतिथिमतिथिवत्पूज्यं पूर्व्यं पुरातनं शोचिष्केशं दीप्तज्वालं बृहत्केतुं प्रभूतप्रज्ञानं पुरुरूपमाहवनीयादिरूपेणबहुरूपं धनस्पृतं धनानांस्पर्तारं सुशर्माणं शोभनसुखं स्ववसं सुरक्षणं जरद्विषं जरतांवृक्षाणांव्यापकं जीर्णोदकंवा ॥ २ ॥

२. हे अग्नि, यजमानों ने तुम्हें गृहस्वामी के रूप से स्थापित किया है। तुम अतिथि की तरह पूज्य हो। तुम पुरातन, दीप्तशिखाविशिष्ट, प्रभूत केतुविशिष्ट, बहुरूप, धनदाता, सुखप्रद, सुरक्षक और जीर्ण वृक्षों के ध्वंसकारी हो।

अग्नीनांपरस्परसंसर्गे विविचयेऽग्नयेक्षामवत इष्टिः तत्रत्वामग्नेमानुषीरितियाज्या सूत्रितंच—त्वामग्नेमानुषीरीळतेविशोऽग्नआयाहिवीतयइति ।

सैषातृतीया—

त्वामग्नेमानुषीरीळतेविशोहोत्राविदंविविचिंरत्नधातमम् ।
गुहासन्तंसुभगविश्वदर्शतंतुविष्वणसंसुयजंघृतश्रियम् ॥ ३ ॥

त्वाम् । अग्ने । मानुषीः । ईळते । विशः । होत्राऽविदम् । विविचिम् ।
रत्नऽधातमम् । गुहा । सन्तम् । सुऽभग । विश्वऽदर्शतम् ।
तुविऽस्वनसम् । सुऽयजम् । घृतऽश्रियम् ॥ ३ ॥

हेऽग्ने सुभग शोभनधन त्वां मानुषीर्विशः मानुषसंबन्धिन्यः सर्वाःप्रजाः ईळते स्तुवन्ति कीदृशं त्वां होत्राविदं होमानां सप्तहोत्रकाणांवावेत्तारं विविचिं विवेचकं सदसतोः रत्नधातमं रमणीयानांधनानांदातृतमं गुहा गुहायाम् अरण्यां हृदयेषु वा सन्तं सर्वदावर्तमानं विश्वदर्शतं विश्वैर्द्रष्टव्यं तुविष्वणसं प्रभूतध्वनिं सुयजं सुष्ठुयष्टारं घृतश्रियं घृतंश्रयन्तम् ॥ ३ ॥

३. हे सुन्दर धनविशिष्ट अग्नि, मनुष्यगण तुम्हारी स्तुति करते हैं। तुम होमविद्, विवेचक, रत्नदाताओं के मध्य में श्रेष्ठ, गुहास्थित, सबके दर्शन योग्य, प्रभूत ध्वनियुक्त यज्ञकारी और घृतग्राहक हो।

त्वामग्नेधर्णसिंविश्वधावयंगीर्भिर्गृणन्तोनमसोपसेदिम ।
सनोजुषस्वसमिधानोअङ्गिरोदेवोमर्तस्ययशसासुदीतिभिः ॥ ४ ॥

त्वाम् । अग्ने । धर्णसिम् । विश्वधा । वयम् । गीःऽभिः । गृणन्तः ।
नमसा । उप । सेदिम । सः । नः । जुषस्व । सम्ऽइधानः । अङ्गिरः ।
देवः । मर्तस्य । यशसा । सुदीतिऽभिः ॥ ४ ॥

हेअग्ने धर्णसिं सर्वस्यधारकंत्वां वयमात्रेयाः विश्वधा बहुप्रकारेण गीर्भिर्गृणन्तस्तुवन्तोनमसानमस्कारेणोपसेदिमोपसन्नाभवेम सत्वंनोस्मान् जुषस्व सेवस्व धनादिभिःसमिधानःसम्यग्दीप्तःदीप्यमानोस्माभिः हेअङ्गिरः सर्वत्रगन्तरङ्गिरसःपुत्रवा देवोदीप्यमानस्त्वं मर्तस्य यजमानस्य यशसासुदीतिभिः ज्वालाभिःसह जुषस्व ॥ ४ ॥

४. हे अग्नि, तुम सबके धारक हो। हम लोग बहुत प्रकार के स्तोत्र और नमस्कार-द्वारा स्तुति करके तुम्हारे निकट उपस्थित होतें हैं। तुम हम लोगों को धन प्रदान करके प्रीत करो। हे अङ्गिरा के पुत्र अग्निदेव, तुम भली भाँति से प्रदीप्त होकर शिखाओं के साथ यजमानों के अन्न-द्वारा प्रीत होओ।

त्वमग्नेपुरुरूपोविशेविशेवयोदधासिप्रत्नथापुरुष्टुत।
पुरूण्यन्नासहसाविराजसित्विषिःसातेतित्विषाणस्यनाधृषे ।५।

त्वम् । अग्ने । पुरुऽरूपः । विशेऽविशे । वयः । दधासि । प्रत्नऽथा ।
पुरुऽस्तुत । पुरूणि । अन्ना । सहसा । वि । राजसि । त्विषिः ।
सा । ते । तित्विषाणस्य । न । आऽधृषे ॥ ५ ॥

हेअग्ने त्वंपुरुरूपःसन् विशेविशे सर्वस्मैयजमानाय प्रत्नथा पुराणइव वयोन्नंदधासि धारयसि हेपुरुष्टुत बहुभिःस्तुत्य पुरूणिबहून्यन्नानिचरुपुरोडाशादीनि सहसा बलेन विराजसि ईश्वरोभवसि स्वीकर्तुं तित्विषाणस्यदीप्तस्य ते तव सा प्रसिद्धात्विषिर्दीप्तिर्नाधृषे अन्यैरधृष्याभवति ॥ ५. हे अग्नि, तुम बहुरूपयुक्त होकर समस्त यजमानों को पुराकाल की तरह अन्न दान करते हो। हे बहुस्तुत, तुम अपने बल से ही बहुत अन्नों के स्वामी होते हो। तुम दीप्तिमान् हो। तुम्हारी दीप्ति दूसरों के द्वारा अधृष्य है।

त्वामग्नेसमिधानंयविष्ठ्यदेवादूतंचक्रिरेहव्यवाहनम्।
उरुज्रयसंघृतयोनिमाहुतंत्वेषंचक्षुर्दधिरेचोदयन्मति ॥ ६ ॥

त्वाम् । अग्ने । सम्ऽइधानम् । यविष्ठ्य । देवाः । दूतम् । चक्रिरे ।
हव्यऽवाहनम् । उरुऽज्रयसम् । घृतऽयोनिम् । आऽहुतम् ।
त्वेषम् । चक्षुः । दधिरे । चोदयत्ऽमति ॥ ६ ॥

हेयविष्ठयुवतमाग्ने समिधानं सम्यगिध्यमानं त्वां देवाः हव्यवाहनं हविषांवोढारं दूतं चक्रिरे कृतवन्तः त्रयाणामग्नीनांमध्ये हव्यवाहनःखलु पूर्वेदेवैर्हविर्वहनायदूतःकृतः हव्यवाहनोदेवानामितिहिश्रुतिः । किंच उरुज्रयसं प्रभूतवेगं घृतयोनिं घृतमेवयोनिःकारणं यस्यतम् आहुतं त्वां चोदयन्मति चोदयन्तीमतिर्यस्यतच्चोदयन्मति त्वेषं दीप्तं चक्षुः उपलक्षणं सर्वप्रकाशकं चक्षुःस्थानीयंकृत्वा दधिरे देवामनुष्याश्च मत्याहिचक्षुश्चोच्यते ॥ ६ ॥

६. हे युवतम अग्नि, तुम सम्यग्रूप से प्रदीप्त हो। देवों ने तुम्हें हव्यवाहक किया था। देवों और मनुष्यों ने प्रभूत वेगशाली, घृत-योनि और आहूत अग्नि को बुद्धिप्रेरक, दीप्त और चक्षुः स्थानीय बनाकर धारण किया था।

त्वाम॑ग्ने॒प्रदिव॒आहु॑तंघृ॒तैःसु॑म्ना॒यवः॑सुष॒मिधा॒सम॑धिरे ।
सवा॑वृधा॒नओष॑धीभिरु॒क्षि॒तो॒३॑भिज्रयां॑सि॒पार्थि॑वा॒वितिष्ठसे ।७।२६

त्वाम् । अ॒ग्ने॒ । प्र॒ऽदिवः॑ । आऽहु॑तम् । घृ॒तैः । सु॒म्न॒ऽयवः॑ । सु॒ऽस॒मिधा॑ । सम् । ई॒धि॒रे॒ । सः । व॒वृ॒धा॒नः । ओष॑धीभिः । उ॒क्षि॒तः । अ॒भि । ज्रयां॑सि । पार्थि॑वा । वि । ति॒ष्ठ॒से ॥ ७ ॥ २६ ॥ ॐ ॥

हेअग्ने घृतैराहुतं त्वां प्रदिवः पुरातनाः सुम्नायवः सुखमिच्छन्तोयजमानाः सुषमिधा शोभनेनेध्मेन समीधिरे सम्यग्दीपितवन्तः सत्वं वावृधानः वर्धमानः ओषधीभिरुक्षितः सिक्तः ज्रयांस्यन्नानि पार्थिवा पार्थिवान्वृक्षान् यद्वा पार्थिवेतिज्रयोविशेषणं पार्थिवानि पृथुरोधादिकान्यभिवितिष्ठसे अभिव्यज्यवर्तसे ॥ ७ ॥

७. हे अग्नि, घृत-द्वारा आहूत करके पुरातन तथा सुखाभिलाषी यजमान तुम्हें सुन्दर काष्ठों-द्वारा प्रदीप्त करते हैं। तुम वर्द्धित होकर ओषधियों द्वारा सिक्त होकर और पार्थिव अन्नों को व्यक्त करके अव-स्थिति करते हो।

॥ इतितृतीयस्याष्टमेषड्विंशोवर्गः ॥ २६ ॥

॥ वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

॥ इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेणसायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येतृतीयाष्टकेऽष्टमोऽध्यायः ॥ ३ ॥ ८ ॥

**॥ इतितृतीयाष्टकःसमाप्तः ॥ ३ ॥**

पदपाठसहिता

# ऋग्वेद-संहिता

सायणाचार्यकृत-भाष्यसंवलिता

सैव

हिन्दीभाषामन्त्रानुवादसमन्विता

अनुवादक

पण्डित रामगोविन्द त्रिवेदी

॥श्रीः॥

विद्याभवन प्राच्यविद्या ग्रन्थमाला

३५

पदपाठसहिता

# ऋग्वेद-संहिता

सायणाचार्यकृत-भाष्यसंवलिता

सैव

हिन्दीभाषामन्त्रानुवादसमन्विता

चतुर्थोऽष्टकः


चौखम्बा विद्याभवन

वाराणसी

प्रकाशक
**चौखम्बा विद्याभवन**
( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )
चौक ( बैंक ऑफ बड़ोदा भवन के पीछे )
पो. बा. नं. 1069, वाराणसी 221001
दूरभाष : 2420404
ई-मेल : cvbhawan@yahoo.co.in

पुनर्मुद्रित संस्करण २००७
१-९ भाग (सम्पूर्ण)
मूल्य : ३५००.००

अन्य प्राप्तिस्थान
**चौखम्बा पब्लिशिंग हाउस**
4697/2, भू-तल ( ग्राउण्ड फ्लोर )
गली नं. 21-ए, अंसारी रोड
दरियागंज, नई दिल्ली 110002
दूरभाष : 23286537

❖

**चौखम्बा संस्कृत प्रतिष्ठान**
38 यू. ए. बंगलो रोड, जवाहर नगर
पो. बा. नं. 2113
दिल्ली 110007
दूरभाष : 23856391

❖

**चौखम्बा सुरभारती प्रकाशन**
के. 37/117 गोपालमन्दिर लेन
पो. बा. नं. 1129, वाराणसी 221001
दूरभाष : 2335263

THE

VIDYABHAWAN PRACHYAVIDYA GRANTHAMALA

35

# ṚG-VEDA-SAṀHITĀ

Together with

## PADAPĀṬHA

&

## SĀYAṆABHĀṢYA

## FOURTH AṢṬAKA


CHOWKHAMBA VIDYABHAWAN

VARANASI

प्रकाशक
**चौखम्बा विद्याभवन**
( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )
चौक ( बैंक ऑफ बड़ोदा भवन के पीछे )
पो. बा. नं. 1069, वाराणसी 221001
दूरभाष : 2420404
ई-मेल : cvbhawan@yahoo.co.in

पुनर्मुद्रित संस्करण २००७
१-९ भाग (सम्पूर्ण)
मूल्य : ३५००.००

अन्य प्राप्तिस्थान
**चौखम्बा पब्लिशिंग हाउस**
4697/2, भू-तल ( ग्राउण्ड फ्लोर )
गली नं. 21-ए, अंसारी रोड
दरियागंज, नई दिल्ली 110002
दूरभाष : 23286537

❖

**चौखम्बा संस्कृत प्रतिष्ठान**
38 यू. ए. बंगलो रोड, जवाहर नगर
पो. बा. नं. 2113
दिल्ली 110007
दूरभाष : 23856391

❖

**चौखम्बा सुरभारती प्रकाशन**
के. 37/117 गोपालमन्दिर लेन
पो. बा. नं. 1129, वाराणसी 221001
दूरभाष : 2335263

THE

VIDYABHAWAN PRACHYAVIDYA GRANTHAMALA

35

# ṚG-VEDA-SAṀHITĀ

Together with

## PADAPĀṬHA

&

## SĀYAṆABHĀṢYA

## FOURTH AṢṬAKA

CHOWKHAMBA VIDYABHAWAN

VARANASI

*Publishers :*
**CHOWKHAMBA VIDYABHAWAN**
*(Oriental Publishers & Distributors)*
Chowk (Behind Bank of Baroda Building)
Post Box No. 1069
Varanasi 221001
Tel. : 2420404
E-mail : cvbhawan@yahoo.co.in


Edition : 2007
Price : 3500.00

*Also can be had from .*
**CHAUKHAMBA PUBLISHING HOUSE**
4697/2, Ground Floor
Gali No. 21-A, Ansari Road
Daryaganj, New Delhi 110002
Tel. : 23286537

**CHAUKHAMBA SANSKRIT PRATISHTHAN**
38 U A. Bungalow Road. Jawahar Nagar
Post Box No. 2113
Delhi 110007
Tel. : 23856391

**CHAUKHAMBA SURBHARATI PRAKASHAN**
K. 37/117, Gopal Mandir Lane
Post Box No. 1129
Varanasi 221001
Tel. : 2335263

[१०. १६१] ८५०. २१ [३] सहस्राक्षेण। सहस्रमिति—त१.२.३.७-म१.२.४.८-मु। सहस्रमिति--म७-मॅ ॥

[१०. १६१] ८५३. १० [१] उद्धारयामि—*मॅ। उद्धरयामि--त१.२.३.६.७.८-म-मु। उद्धरयामि--त४.५ ॥ १२. छुबुकाच्चुबुकात्—म२.८-*मॅ-मु। छुबुकात् चुबुकात्--त१.२.३.४.५.७.८; छुबुकात्--त६; चुबुकात्--म१; छुकात्--म४; छबुकात्--म७ ॥ १७ उद्धारयामि—*मॅ। उद्धारयामि—त४.५; उद्धरयामि--त१.२.३.६.७.८-म१.२.७.८-मु ॥ ८५४. १६ [४] जघनाभ्यां—त१.२.३.६.७.८-म१.२.४.७। जंघनाभ्यां--म८-मॅ-मु ॥

[१०. १६४] ८५६. ४ [४] अभितो द्रोहकं—त१.२.६.७.८-म१.२.४.७। अभिद्रोहकं--त४.५; अभितो द्राह अभितो द्रोहकं-त३। अभितो द्रोह--मॅ-मु ॥

[१०. १६५] ८५६. ११ प्रायश्चित्तं—ग१.२-त१.२.३.६.७-*मॅ। प्रायश्चित्त--त४.५; प्रायश्चित्तं मद--म१.४; प्रायश्चित्तं महद--म५। प्रायश्चित्तमिदं--मु मनु ॥ ८५७. ५ [२] इषितो गतः—ग१.२-त४.५-म२। इषितः--त१.२.३.६.७.८-म१.४.७.८-मॅ-मु ॥ ८५८. ७ [५] विश्वानि सर्वाणि—ग१.२-त४.५-म२। सर्वाणि विश्वानि--त१.३.६.७.८-म८। सर्वाणि--मॅ-मु ॥

[१०.१६६] ८५८.१३. प्रयाणसमये ‒ ‒ ‒ जपेत्—मॅ। प्रयाणसमये निर्गमनार्थं जपेत्--त१; प्रयाणसमये निर्गमनार्थं जपेत्—त२.३.६.८-म१.४; प्रयाणसमये निर्गमनार्थं जपेत्—त७; प्रयाणसमये निर्गच्छमानार्थं जपेत्—म२; प्रयाणसमये निर्गमनाद्वं जपेत्—म५; प्रयाणसमये निर्गमनार्थं जपेत्—म८; प्रयाणसमये निर्गच्छतार्थं जपेत्—ग१; प्रयाणसमये निर्गच्छन्मार्गे जपेत्—त४.५। प्रयाणसमये निर्गमनार्थमेतज्जपेत्--मु। 'प्रयाणसमये ग्रहमाभिगच्छन्नेतज्जपेत्' इति मॅक्समुल्लरमहाशयाः संभावयन्ति। 'प्रयाणसमये' इति वचनात् लिखितपुस्तकपाठेभ्यश्चानुमातुं शक्यं यद्भाष्यकारैरेतत्सूक्तमन्यथा विनियुक्तम् ॥ ८५९. १. [३] उभे आर्त्नीइव—ग१.२-त४.५-म२। आर्त्नी इव—त३.६.७.८-म८-मॅ-मु ॥ २८ [५] वृद्धाञ्जलात्—त१.२.३.६.७-म। वृद्धाञ्जलात्—त८; निष्कृष्टाञ्जलात्—त४.५। वृद्धिजलात्—मॅ-मु ॥

[१०. १६७] ८६०. १३ [१] न केवल°—त-म-मु। नः केवल° (!)—मॅ ॥ १९. [२] स्वर्जितम् उक्°—त-म-मु। उक्°—मॅ ॥ २२ देशे—त-म-मु। यशे—मॅ ॥

[१०. १६८] ८६१. २१ [२] स्वधुक्—ऋ-मॅ। स्वधुक्—मु। 'स्वधुक्' इति संहितापाठः ॥ ८६२. ११ [३] सत्यवान् यक्षवान्वा—म२। सत्यवान्वा—त१.२.३.६.७.८-म१.४.५.८। सत्यवान्—मॅ-मु ॥ २० [४] शनैर्गच्छन्ति—त१.२.३.६.७.८-म-मु। शनैर्गतिः—त४.५-मॅ ॥

[१०. १६९] ८६३. ३ [१] प्राणयित्रीः—त६ म२.७। प्राणयित्रीः—त१.४.५.७.८-म८-मॅ-मु। ऋ. सं. १०. ३०. १४; १. ८०. ४ द्रष्टव्यम् ॥ १५ [३] या देवेष्वधि द्याभ्यां—त-म-मु। द्याभ्यां—मॅ ॥

[१०. १७०] ८६५. १२ [४] रोचनं रोचमानं स्थानम्—म२। रोचमानस्थानं—त१; रोचनमानस्थानं—त२.३.६.७.८; रोचमान स्थानं-म१.४.८। रोचनं स्थानं—त४.५-म७-मॅ। रोचनं—मु ॥

[ १०, १७१ ] ८६१. ८ [ ४ ] सायंसमये—ग१.२-त४.५ । समये–त१.२.६.८-म १.४; अस्तमये–म७ । अस्तसमये–मॅ-मु ॥ प्रातःकाले—ग१.२-त४.५ । काले–त१.२.६.८-म १.४ । उदयकाले–म७-मॅ-मु ॥

[ १०, १७२ ] ८६६. १५ सुमितम् आ याहि वनसा सहेति नव समाम्नाता इति । आ याहि वनसा सहेति नव ( वन–त१; नेव-त७ ) समाम्नाता ( समाम्ना–त२.६-मु ) ( इति–त७ )–त१.२.६.७-मु । सुमितं इमा नु कं भुवना सीषधामा याहि वनसा सहेति–ग१.२ । त३-म १.२.४-पुस्तकेष्ववकाश उत्सृष्टः । सुमितं–त४.५-मॅ ॥ १८ [ १ ] घनेन वा—ग१.२-घनेन–त-म-मॅ-मु ॥

[ १०, १७३ ] ८६७. १८. [ १ ] त्वा त्वां—ग१.२-त४-म । त्वा–त१.२.५.६.७ । त्वां–त३.८-मॅ-मु ॥

[ १०, १७४ ] ८६९. १७–२१ [ २ ] हे राजन् ... ... °त्रापि संबोध्यः—त१.२.३.६.७-मु । ( शपत्नाम–त१.२.३.६; ' या ' इत्यस्य स्थाने याभ्य–त१.२.३.६; ' अपि ' नास्ति–त७; पृतना–त७, आत्मानमिच्छंतं–त१.२.३.६.७; ईर्ष्येति–त१.२.३.६; ' ईर्ष्येति ' नास्ति–त७; ' तिरस् ' नास्ति–त७-मु; ईर्ष्यान्या–त१.३.६; ईर्ष्याया–त७ ) । इतर-पुस्तकेषु मॅ-पुस्तके च द्वितीयमन्त्रभाष्यं नास्ति । मॅक्समूलरमहाशयैः मु-पुस्तकस्थं भाष्यं स्वकीय-टिप्पण्यामुद्धृतं तस्य प्रामाण्यं चाक्षिप्तम् । परं त्विदं भाष्यं लिखितपुस्तकेषु केषुचिदुपलब्धं, न कपोल-कल्पितमिति व्यक्तमेव । मॅ-संपादितलिखितपुस्तकसंग्रहापेक्षया मु-पुस्तक-संपादकैरस्माभिश्च संपादितः पुस्तकसंग्रहः समृद्धतर इत्यप्येतेन स्पष्टं भवति ॥ २८. [ ३ ] असासि—त१.२.३.७-म१-मु । इति असि–म८ । असि–म१-४.७-मॅ ॥

[ १०, १७५ ] ८७१. ८. [ ४ ] सुवतु—*मॅ-मु । प्रस्वतु–ग१.२; प्रसुवतु–त१.२.३.६.७.८; प्रसवतु–त४.५; प्रसुवतु–म ॥

[ १०, १७६. ] ८७२. १८. [४] देवादेव°—त१.२.३.६.७.८-म१.२-मु । देवदेव°–त४.५; देवादेव°–म४; अमृतदेवतादेव°–म७ । देव°–म८-मॅ ॥ मनुष्यात् मनुष्य°—त-म १.२.४.८ । मनुष्य°-म७-मॅ-मु ॥

[ १०, १७७. ] ८७३. २. [ १ ] हृदा हृत्स्थेन । तत्स्थ्यासाच्छब्दम्—*-मॅ-मु ॥ लिखितपुस्तकेष्ववद्धाः पाठाः । मॅक्समूलरमहाशयानामभ्यूहो युक्त एव[1] ॥

[ १०, १७८ ] ८७४. २४. [ १ ] तार्क्ष्यं...गर्गादिः—*मॅ-मु । अत्रापि लिखित-पुस्तकपाठानामवद्धत्वान्मॅ-अभ्यूहो युक्तः[2] ॥ ग१.२-पुस्तकद्वयमत्र समाप्तम् ॥ ८७५. ६. सप्रत्ययः–*मॅ-मु । हृत्प्रत्ययः–त१.२.३.६.७.८-म; हृद्मस्थपः–त४.५ ॥

[ १०, १७९ ] ८७६. १ शिबिर्नाम—त४.५.६.७-म-मु । शिबि°–त१.२.३.८-मॅ ॥ २. रौहिदश्वपुत्रो । रुचादश्वपुत्रो इति अनुक्रमणीभाष्यपाठः ॥ ३. शिबि°—त१.२.३.५.६–म-मु-अनु । शिबि°–त४-७.८-मॅ ॥ ४. हविधर्मे—त४.५.७-म२-*मॅ । हविधर्मे–त१.२.३.८-म८-मु॥

1. Preface to the Sixth Volume of the first edition, Vol. IV, p. cxli, 2nd edn.
2. Ibid. p. cxl.

[ १०. १८० ] ८७७. १४ हविःषु । हविषु--त४.५ । हविषि--त१.६.७.८-म२.८-मॅ-मु ॥ २५ [ १ ] रैराध्याय—त१.२.३.६.७.८-म । रैराम्ध्याय--त४.५-मॅ-मु । ऋ.सं. १.१८.२; ७१.५; १२.१४; १५.११; ११६.१८ द्रष्टव्यम् ॥

[ १०. १८१ ] ८७९. २४ [ १ ] क्षिपत् क्षिपतु—त४.५-म१.२.४ । क्षिपतु--त१.२.३.८-म८-मु; क्षिपंतु—त६ । क्षिपत्--त७-म७-मॅ ॥

[ १०. १८३ ] ८८०. ११ ऋत्वः——०मॅ-मु । अंस्याः ऋत्वः--त१.२.३.६.७.८-म१.२.४.८; इत्यादय--त४.५; अन्नषः— म७ ॥ ८८१. १२ [ ३ ] सर्वजननहेतुः—म७ । सर्वजन-हेतुः–त१.४.५.६.७.८-म२.८-मॅ-मु ॥

[ १०. १८४ ] ८८१. १३ गर्भाणां कर्ता—त४.५-म७ । गर्भाणा--त३.६.७.८-म२.८-मॅ-मु । २३ [ १ ] विसृजतित्यर्थः—त१.२.३.६.७.८-म२.४.८ मु । सृजति०--त४-५-मॅ ॥ २४. स्रावपातापप्रसवा—त३-म१.४.८-०मॅ । स्रावपाताप०--त१.२.६.८; स्रावपाताप्रसवा--त४.५.७; स्रावपाताप०--म२; स्रावपातप्रसवा--म७ । गर्भपातापप्रसवा--मु ॥

[ १०. १८५ ] ८८२. १३ [ १ ] त्रीणामित्यपि छन्दसि दृश्यते । '०छन्दसीष्यते' इति काशिकावचनम् ॥

[ १०. १८७ ] ८८३. २६ [ २ ] धन्वान्तरिक्षम् । धन्वन्यन्तरिक्षे—म२ । धन्वांत-रिक्ष धन्वंतरिक्षे--त१.२.३.६.८; महांतरिक्षं ग्वनांतरिक्षे--त४.५; धन्वांतरिक्षं धन्वंतरिक्षे--त७; धन्वन्यंतरिक्षे--म१.७; धन्वान्यंतरिक्षे--म४; धन्वांतरिक्षे--म८ । धन्वान्तरिक्षं--मु । धन्वांतरिक्षं धन्वांतरिक्षं--मॅ ॥ २७. प्रकाशते—म७ । प्रकाशयते--मॅ-मु इतरेषु च ॥ ८८४. १ [ ४ ] अभि अभिमुखं—म । अभिमुखं--त-मॅ-मु ॥

[ १०. १८९ ] ८८५. २९ [ ३ ] स्तुतिरूपा—त-म । श्रुतिरूपा (?)—मॅ-मु ॥ ३१ [३] सूर्यं सेवत इत्यर्थः—म२.४.८ । स्तूयते सूर्यं सवते इत्यर्थः--त१.२.३.६.८; सेवत इत्यर्थः--त४.५; स्तूयते सूर्यं सेवत इत्यर्थः--त७ । स्तूयते सूर्यः सर्वत इत्यर्थः--०मॅ-मु । सर्वत इत्यनर्थकोऽप्यूहः ॥

[ १०. १९० ] ८८६. ४ ०त्वात्ताद्दमूप—०मॅ-मु । ०त्वाद्दमूप--त१.२.३.६.७.८-म२.४.८; ०त्वाद्दप०--त४; ०त्वाकम्याद्दरूप०--त५.॥ १४ [ १ ] ०रूपादुपादानभूतात्—मु । ०रूपा-दानभूतात्--त१.२.३.६.७.८-म४.८; ०भूतात्--त४; ०भूतत्--त५ । ०रूपापादानभूतात्--०मॅ ॥ २४ [ २ ] भूतजातानि—त१.३.६.७-मु । भूतानि--त४.५.८-म-मॅ ॥ ८८७. ३ [ ३ ] कल्पे —म२ । काले--म७-मॅ-मु ॥

[ १०. १९१ ] ८८८. १६ [ ४ ] समाना समानानि—त१.२.३.७-म२ । समानानि —म१.४.७.८-मॅ-मु ॥

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 10 | 19 | Mss. | Ms. |
| ११ | ११ | महोदयैः । | महोदयैः |
| ५० | ९ | ०द्भिकित्सं | ०द्भिकित्सं |
| ६० | २१ | वार्मीधावेत | वार्मीधावेन |
| ६८ | १२ | स्तोपुन् | स्तोपुन् |

## प्रथमद्वितीयतृतीयभागसंबन्धिपाठभेदादिविषयकविचारस्य

## परिशिष्टम्

### प्रथमो भागः

१. १७. कार्यर्हिंदं पूर्वम्—(पा. सू. २.१.३४.४)॥

२. २. तदेतदृचाभ्युक्तम्—(गो. ब्रा. १. १. १)॥

२. ३. बहव। 'बहव' इति पठनीयम्। हैद्राबादनगरस्थलिखितपुस्तके ( ३१/१ कमाङ्कुले ) तथोपलभ्यते॥

२. २४. वृत्रे सन्तं 'हन्तुं शक्नोत्याभिर्न्हेग्मिरित्येषा व्युत्पत्तिः कस्मिंश्चिद्ब्राह्मणे विज्ञायते। शां. ब्रा. २३.२ द्रष्टव्यम्।

२. २६. प्रणयनादि°। 'अप्रणयनादि°' इति हैद्राबादपुस्तकानुसारेण पठनीयम्॥

३६. १० [ १. १. २ ] तनप्रत्ययः। 'तनप्रत्ययः' इति भाष्यम्॥

३८. ८ [ १. १. ६ ] शाट्यायनब्राह्मणपाठेन साम्यमादधानो जैमिनीयब्राह्मणपाठो बटकृष्णघोषमहोदयैः प्रकाशितः[1]॥

२१३. ११ [ १. २१. ७ ] सहस्रेषु इति पदम्। सहस्रेषु इत्यशुद्धम्॥

३६१. २० [ १. ५१. ११ ] जैमिनीयब्राह्मणेऽपि शाट्यायनब्राह्मणसमानः पाठः[2]॥

३६२. ९ [ १. ५१. १४ ] शाट्यायनब्राह्मणसदृशो जैमिनीयब्राह्मणपाठः ( ३. १५ ) बटकृष्णघोषमहोदयानां पुस्तके[3] द्रष्टव्यः॥

४१४. ८ [ १. ६२. ३ ] 'अन्नादिनीं ते' एतस्मादारभ्य 'स इन्द्रोऽन्वभवेति' एतावत्पर्यन्तं शाट्यायनकवचनम्। जैमिनीयब्राह्मणे 'अन्नादिनीमरे ते सरमे प्रजां करोमि या नो गा अन्वविद इति' इत्यनेनोक्तः। शाट्यायनकजैमिनीयवचनानुसारेण गवामन्वेषणानन्तरं सरमायाः प्रजाया अन्नं प्रदातुमिन्द्रः प्रतिज्ञातवान्। सायणभाष्ये तु सारूप्येणोद्धृतायां कथायां सरमा गवामन्वेषणात्पूर्वमेव प्रजाया अन्नप्रदानार्थमिन्द्रेण सह समयं चक्र इति लिखितम्[4]॥

४४०. २७ [ १. ६४. ८ ] पृषत्यः श्वेतबिन्दुाङ्किता मृग्य इत्यैतिहासिकाः (?)॥

४५१. २०. [ १. ६९. ४ ] ष्यादीनां...ह्रस्वत्वम्। शुद्धेयं व्याकरणप्रक्रिया। 'मीनातेर्निगमे' इति सूत्रेण ह्रस्वत्वम्॥

४६१. १७ [ १. ७१. १० ] ष्यादीनां...ह्रस्वत्वम्। प्राग्वत् 'मीनातेर्निगमे' इति सूत्रेण ह्रस्वत्वम्॥

५२३. ३ [ १. ८४. १३ ] सायणाचार्यैः सारूप्येणोद्धृतः शाट्यायनपाठो वेङ्कटमाधवभाष्ये साक्षादुपलभ्यत इति प्रायस्तत्समानेन जैमिनीयब्राह्मणपाठेनानुमातुं शक्यम्[5]। वेङ्कटमाधवभाष्यगतः चतुर्दशमन्त्रस्थः पाठोऽत्र दीयते—

---

1. *Collection of the Fragments of Lost Brāhmaṇas*, Batakrishna Ghosh, Calcutta 1935, p. 1
2. Ibid. p. 6.
3. Ibid. pp. 7–12.
4. Ibid. p. 13.
5. Ibid. pp. 13–18.

' दध्यङ् ह वा आथर्वणस्तेजस्वी ब्रह्मवर्चस्यास । तं ह स्म यावन्तोऽसुराः परापश्यन्ति ते ह स्म तदेव विशीर्षाणः शेरते । स ह स्वर्गं लोकमुच्चक्राम । स हेन्द्रोऽसुरैरभिवाढ उवाच क नु स दध्यङ्ङभवदिति । तस्मै होचुः स्वर्गं वै भगवः स लोकमुदक्रामदिति । स होवाच न ह्यस्येह किंचित् परिशिष्टमस्तीति । तस्मै होचुरासीदेतदाश्वं शीर्षं येनाश्विभ्यां देवमेवं प्राब्रवीत् । तत्तु न विद्म यत्राभवदिति । तद्वा अन्विच्छतेति । तद्धान्वेषिषुः । इच्छन्नश्वस्येत्यादिकमुक्त्वाह । शर्यणावद्ध नाम कुरुक्षेत्रस्य जघनार्धे सरः स्यन्दते । तदनुविद्याजह्रुः तदस्मै प्रायच्छन् । तद्ध स्मासुराणां प्रकाशेऽधारयन् तद्ध स्म यावन्तोऽसुराः परापश्यन्ति ते ह स्म तदेव विशीर्षाणः शेरते । स ह तैरेवास्थिभिर्नव नवतीर्जघानासुराणामिति ' ॥

५२६. ७ [ १. ८६. ४ ] मरुतो देवाः सोमस्य मत्सन् । (निविदध्यायः, खिल. ५. ५. १)॥

५४२. १७ [ १. ८८. १ ] तथा चाहुः—सर्वो वा मध्यमस्थाना पुमांश्चायुश्च सर्वगः । गणाश्च सर्वे मरुत इति वृद्धानुशासनम् ॥ क एते वृद्धाः ?

५४२. १८ पौराणिकास्त्वाचक्षते—मारीचात्कश्यपात्सप्तगणात्मका एकोनपञ्चाशत्संख्याका मरुतो जज्ञिरे इति । ब्रह्मपु. १२४. ७१, १०२ द्रष्टव्यम् ॥

६२७. २१ [ १. १०२. ६ ] तथा च शाट्यायनकं—सिम इति वै श्रेष्ठमाचक्षते । तृतीयभागे ५४७. १४ [ ८. ४. १ ] टिप्पणी द्रष्टव्या ॥

६४०. ६ [ १. १०५ ] अत्र सायणभाष्ये शाट्यायनब्राह्मणगता त्रितस्य कथा सारूप्येणोद्धृतास्ति । वेङ्कटमाधवभाष्ये स्वयं शाट्यायनपाठ उद्धृतोऽस्ति । स यथा —

' आप्त्यान् वा तं नयतोऽरण्ये पिपासाविन्दत् । ते धन्वन् कूपमविन्दन् । तत्र त्रितोऽवरोढुमकामयत नैकतद्वितोऽवारोहत् । तौ यदापिबतामतृप्यतामथ हैनं तदेव रथचक्रेणापिधाय गोभिः प्रैताम् । सोऽकामयतोदित इयां गातुं नाथं विन्देयेति ' । जैमिनीयब्राह्मणपाठः प्राय एतत्समान एव[1] ।

६४५. १४ [ १. १०५. १० ] शाट्यायनपाठेन साम्यमादधानो जैमिनीयब्राह्मणपाठोऽत्रो दीयते[2]—' अथो हैषामेतान्येव पञ्च ज्योतींषि यान्येषु लोकेषु दीप्यन्तेऽग्निः पृथिव्यां वायुरन्तरिक्ष आदित्यो दिवि चन्द्रमा नक्षत्रेषु विद्युदप्सु ' ॥

७१९. २७ [ १. ११६. १२ ] इयं दधीच आथर्वणस्य कथा भाष्यकारैः शाट्यायनकवाजसनेयकाभ्यामुद्धृता ॥ अस्मिन् विषये श. ब्रा. १४. १. १. १८-२४ द्रष्टव्यम् । वेङ्कटमाधवाचार्यैरपि स्वकीय ऋग्भाष्य इयं कथा ताभ्यामेवोद्धृत्य दत्ता । वेङ्कटमाधवभाष्यगतः शाट्यायनकपाठः जैमिनीयब्राह्मणपाठाद्भिन्नः । वेङ्कटमाधवभाष्य[3] ( ऋ. सं. १. ११६. १२ ) द्रष्टव्यम् ॥

७२४. ५ [ १. ११६. १८ ] रयिशब्दार्थ । ' रेवान्धनवान् ' इति भाष्यम् । ऋ. सं. १. १८. २; ७९. ५; ९२. १४; ९५. ११; १०. १८०. १ द्रष्टव्यम् ॥

७३६. १६ [ १. १२२. १४ ] ' मणिग्रीवम् ' इति पदं स्वररहितमिति वेङ्कटमाधवाचार्यैः स्वकीय ऋग्वेदभाष्ये लिखितम्[4] ॥

---

1. Ibid. pp. 19-21. 2. Ibid. pp. 22-24. 3. Ṛgveda Saṁhitā with Veṅkata Mādhava's *Ṛgarthadīpikā*, edited by Dr. L. Sarup, Lahore. 4. Cf. Ṛgvedānukramaṇī by Mādhava Bhaṭṭa, edited by Dr. C Kunhan Raja, Madras 1932, preface p. xxv.

८१८. २१ [ १. १२१. ४ ] पृत्सु । 'पृत्सुषु' इति संहिता ॥
१११३. २५ [ १. १९१. १२ ] 'पुष्पम्' इति संहिता । 'पुष्यम्' इति भाष्यकारः ॥

## द्वितीयो भागः

१. १० [ २. १ ] त्वमग्ने इति... ..आङ्गिरस उच्यते । इति ऋग्यजुरनुक्रमणे शौनकस्य वचनम् ॥

१८. ८ [ २. ३. १० ] अग्निर्वै देवानां शमिता इति श्रुतेर्मूलमन्वेषणीयम् ॥

२८. १८ [ २. ७. ६ ] हुतः । 'हुतः' इति शुद्धम् । एवमेव भाष्येऽपि ॥

४५. ८ [ २. १२ ] तान्दृष्ट्वा निर्जगामेन्द्रो यज्ञादुग्रत्समदाकृतिः ॥ अस्य मूलं नोपलब्धम् ॥

४७. १९ [ २. १२. ५ ] मीङ् हिंसायाम् । 'मीञ्' इति भाष्यम् ॥

१०२. १६ [ २. २४. ११ ] मीङ् हिंसायाम् । पूर्ववत् 'मीञ्' इति शुद्धम् ॥

११५. २७ [ २. २८ ] इदमेकादशार्चं......चेति शुश्रुम । अस्य मूलमन्वेषणीयम् ॥

१२९. २ [ २. ३१. ४ ] छन्दांसि वै ग्नाः ( तै. सं. ५.१.७.२ ) ॥

१४४. ५ [ २. ३४. ८ ] प्रस्नुवस्तनी । ऋ. सं. १.३८.८ भाष्यं द्रष्टव्यम् ॥

१६२. ११ [ २. ३८. १० ] छन्दांसि वै ग्नाः ( तै. सं. ५.१.७.२ ) ॥

१६२. १२ [ २. ३८. १० ] पशवो वै रयिः ( तै. ब्रा. १.४.४.९ ) ॥

१८८. २० [ ३. २. ९ ] प्रजा वा अनूयाजाः इति श्रुतिः कुत्रत्येति न ज्ञायते ॥

१८८. २२ [ ३. २. ९ ] त्रीन् परिधींस्तिस्रः समिधः इति निगमस्य मूलमन्वेषणीयम् ॥

२५०. ९ [ ३. १५. ४ ] एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः । ताण्ड्य म. ब्रा. १६. १. २ अत्र 'एष वाव प्रथमो यज्ञानाम्' इति ॥

२५८. १ [ ३. १७. ३ ] प्रजामेका रक्षत्यूर्जमेका राष्ट्रमेका रक्षति । अस्याः श्रुतेर्मूलं नोपलब्धम् ॥

३५५. २५ [ ३. ३४. २ ] चैत्रमासे तपेदिन्द्रः इति स्मृतिवचनं कस्यम् ? ऋ. सं. १०. १०७. २ भाष्ये 'चैत्रमासे तपेदिन्द्रः' इति ॥

४२३. १२ [ ३. ५१. ७ ] इन्द्रः शार्यातस्य यज्ञे सोमरसानपिबदित्येषोऽर्थः कौषीतके स्पष्टमुक्तः । शाट्यायनब्राह्मणे न स उपलब्धः ॥

४६४. ३ [ ३. ५६. ४ ] मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चान्द्रः चैत्राद्यः स ज्ञेयः । कस्यमिदम् ? ॥

४६४. १८ [ ३. ५६. ५ ] त्रयो वा इमे त्रिवृतो लोकाः ( ऐ. ब्रा. १.२.२ ) ॥

४८६. १२ [ ३. ६२. ३ ] पशवो वै रयिः ( तै. ब्रा. १.४.४.९ ) ॥

४८६. १४ [ ३. ६२. ३ ] वाचि हि प्राणं जुहुमः प्राणे वा वाचम् । कत्येयं श्रुतिः ? ॥

५००. १३ [ ४. १. १६ ] जानन्त्यो । 'जानत्यो' इति भाष्यम् ॥

५२६. ४ [ ४. ५. ४ ] यद्धि देवेभ्यो दीयते हविस्तद्रिरिमात्रं वर्धते । एषं श्रुतिरन्वेषणीया ॥

५४६. ११ [ ४. १. ५ ] स हि समदृशः कर्मणामुपद्रष्टा भवति इत्युक्तिरपलम्भे प्रख्या ॥

६०८. २० [ ४. २४. १ ] अस्य यः परिगृह्णाति......चक्रमित्ययम्' एते श्लोकाः संप्रदायविद्भिः (?) पठ्यन्ते ॥

६१६. १० [ ४. २७. १ ] श्येनमार्य......गर्भे नु सन्निति । अस्य श्लोकस्य मूलस्थानं नोपलभ्यम् ॥

६५६. १४ [ ४. ३८. २ ] तानग्निरश्वो भूत्वाभ्यद्रवत् इति कस्मिंश्चिद्ब्राह्मणे समाम्नातम् ॥

६७१. २ [ ४. ४५. १ ] इदमन्नमशनं पानं स्वादय इति कुत्र श्रुतम् ? ॥

६७१. ३ [ ४. ४५. १ ] माता पिता पुत्रस्तदेव तन्मिथुनम् ( तै. सं. ६.५.६.१ )॥

७१५. २ [ ४. ५८. ३ ] शाब्दिकास्तु......( पा. म. १.१.१ ) ॥

७२४. ५ [ ५. २. १ ] जैमिनीयब्राह्मणगतस्त्रैवृष्णकथाभागोऽत्र दीयते—

'वृशो वै जानस्त्रैवृष्णस्यैक्ष्वाकस्य राज्ञः पुरोहित आसाथ ह स्म ततः पुरा राजभ्यः पुरोहिता एव रथान् संगृह्णन्त्यौपद्रष्ट्याय नेदयं पापं करवदिति । तौ हाधावयन्तौ ब्राह्मणकुमारं पथि क्रीळन्तं रथचक्रेण विचिच्छिदतुरितरो हाधावयदभियुवाहा अपेतर आययाम स हापि न शशाकापयन्तुम् । तं ह तदेव विचिच्छिदतुस्तस्मिन्होदाते, त्वं हन्तासि त्वं हन्तासीति......नेति हेतर उवाचाथ वा अहमायासं स त्वमभिप्रायौषीस्त्वमेव हन्तासीति । तौ वै पृच्छावहा इति । तौ हैक्ष्वाकूनेव प्रश्नमेयतुस्ते हैक्ष्वाकव ऊचुर्यो वाव रथं संगृह्णाति स रथस्येष्टे त्वमेव हन्तासीति वृशमेव पराब्रुवन् । सोऽकामयतोदितं इमां गाथां नाथं विन्देय समयं कुमारो जीवेदिति । स एतत्सामापश्यत्तेनैनं समैरयत् ......स क्रुद्धो जनमगच्छदनृतं मा व्यवोचन्निति । तेषां हैक्ष्वाकूणामग्नेर्हरोऽपचक्राम यं सायमोदनमभ्यदधुः प्रातः सोऽश्यत यः प्रातः सायं स ब्राह्मणं वा अनार्षमपाराम तेषां नोऽग्नेर्हरोऽपाक्रमीदेतैनमनुमन्त्रयामहा इति । तमन्वमन्त्रयन्त । स आगच्छद्यथा राजा ब्राह्मणोऽनुमन्त्र्यमाण आगच्छेदेवम् । स आगत्याकामयत पश्येयमिदमग्नेर्हर इति । स एतत्सामापश्यत्तदभ्यगायत । तदपश्यत्पिशाची वा इयं त्र्यरुणस्य जाया सैनत्कशिपुनाच्छादयित्वाध्यास्त इति तदभिव्याहरत्'[1]।

वेङ्कटमाधवस्य ऋग्वेदभाष्येऽपि शाट्यायनोक्त इतिहासः श्लोकैर्वद्धोद्धृतः स प्रबन्धः । सायणभाष्यापेक्षया वेङ्कटमाधवभाष्यगतः कथाभागो जैमिनीयब्राह्मणपाठेनाधिकतरं सादृश्यमावहति । वेङ्कटमाधवभाष्ये शाट्यायनब्राह्मणभागोऽप्यत उद्धृतोऽस्ति सोऽत्र दीयते—

'स आगच्छद्यथा राजा ब्राह्मणोऽनुमन्त्र्यमाण आगच्छेदेवम् । स एतत्सामापश्यत्तदभ्यगायत तदपश्यत्पिशाची वा इयं त्र्यरुणस्य जाया सैनत्कशिपुनाच्छादयित्वाध्यास्त इति'[2] ॥

८२२. १७ [ ५. ३४. ४ ] इन्द्रो यतीन् ......प्रायच्छत् । ताण्ड्यमहाब्राह्मणे 'इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत्' इतीयानंशो बहुवारमागतः ( ८.१.४.; १३.४. १७ इ. ) ॥

८३८. २ [ ५. ४०. ८ ] स्वर्भानुरासुर......'वपाहरन्तम् इति श्रुतिः हारिद्रविकब्राह्मणादुद्धृता । हारिद्रविकब्राह्मणं नोपलभ्यते । 'यदरोदीत्तद्रुद्रस्य रुद्रत्वमिति हारिद्रविकम्' इति निरु. १०. ५ । तै. सं. १.५.१.१; श. ब्रा. ६.१.३.६ अपि द्रष्टव्यम् । पातञ्जलमहाभाष्ये (पा. सू. ४.३.१०४, १९) हारिद्रविणो निर्दिष्टाः ! 'हरिद्रुणा प्रोक्तमधीयते हारिद्रविणः' इति च काशिका ( पा. सू. ४. ३. २. १०४ )। चरणव्यूहे हारिद्रवीया इति यजुर्वेदस्य शाखा[2] ॥

---

1. Batakrishna Ghosh, Lost Brāhmaṇas, pp. 41–6.   2. Ibid., p. 114.

८४१. १२ [५. ४१. ७] ईषिः प्रापणकर्मा स्यादुपप्राप्तिः समन्वितः। अयं श्लोकार्धः कुत उद्धृतः ? ऋ. वे. १. १३ टिप्पणी द्रष्टव्या ॥

८१४. १२ [५. ५२. १७] अदितिगर्भे... अभवन्निति पुराणेषु (?) प्रसिद्धम् ॥

९२९. १२ [५. ६१. ८] अर्धं शरीरस्य भार्या इति कस्याः स्मृतेः ? ॥

९३१. १६ [५. ६१. १७] संपन्नऋषिभावस्य ...... वनं जगामेति। नीतिमञ्जरी (८६) द्रष्टव्या ॥

९६५. १७ [५. ७६] °तिरिह्णोक्य्ये। '°तिरिह्णोक्ये' इति पठनीयम् ॥

९६८. १७ [५. ७७. २] पूर्वाह्णो वै देवानाम् इति श्रुतिः कस्या ? ॥

९८९. २१ [५. ८५. २] वनेषु हीदृमेषु...व्यन्तरिक्षं ततान इति काजकनेयकम् (?) ॥

९९२. १४ [५. ८५. ६] एष महान्। कुत्रेयं श्रुतिः ? ॥

## तृतीयो भागः

२८. २१. [६. १. २] एतच्च संप्रदायविद्भिरुक्तं (?) ॥

२८. २३. आत्मविदः (?) ॥

११५. २१. [६. ४२. २] अन्य आह (?) ॥

१४६. ५. [६. ४४. २४] चक्षुश्च श्रोत्रं च ...... (खिल २. १२) ॥

१६५. २७. [६. ४७. २०] अगव्यूती......स्तुतः। बृहद्देवतापाठस्तु 'अगव्यूति स्तौति देवान् पादो भूमिमयोत्तरः। बृहस्पतिं तृतीयस्तु इन्द्रमेवोत्तमं पदम्' (बृहद्दे. ५. १११)। अनु. भा. ६. ४७. द्रष्टव्यम् ॥

१७२. २७. [६. ४८. ७] महत्ऽवाजे इति शुद्धः पदपाठः ॥

२७०. २४. [७. २ प्रस्ता.] पशाविष्टाविदम्। 'पशौ वसिष्ठानामिदम्' इति युक्तमिति टिप्पण्यां सूचितम्। ऋ. सं. १०. ११० प्रस्तावनायां 'पशौ जामदग्न्यानामिदमाप्रीसूक्तम्' इति पाठानुसारेण सूचितपाठो युक्ततरः प्रतिभाति ॥

३५०. २७. [७. ३३. ७] कृणोति। करोति–शाट्या. आ., जै. आ. ॥

३५०. २८. तासां ज्योतिः। तेषां तज्ज्योतिः–शाट्या आ.; तेषामेति (तेषामेतत्) ज्योतिः–जै. आ. ॥

४०४. १. [७. ५७. ३] कश्चिदेकवाक्यतामाह (?) ॥

४५८. ३१. [७. ८२. १] सूरस्य मदे...°पिन्वदर्पितः। खिलसूक्ते (५. ५) '°जिन्वदश्वोऽपिन्वदजितः' इति पाठः ॥

४७१. १५. [७. ८७. ४] अपर आह (?) ॥

४७२. ३१. [७. ८८. २] स्वर्दृशे॰ इति शुद्धः संहितापाठः ॥

४८०. ११. [७. ९१. ५] महशब्दस्य नपुंसकलिङ्गप्रयोगश्चिन्त्यः ॥

४९६. २२. [७. ९८. ६] न केवलमेकस्या एव गोः पतिः। अयमभ्यूहितः पाठः ऋ. सं. १०. १०८. ३; १६६. १ आम्नातसमानपाठेन समर्थितः ॥

५१२. २१. [ ७. १०४. १२ ] अत्र केचिदाहुः ( ? ) ॥

५४७. १४. [ ८. ४. १ ] सिम इति वै मेहनमाचक्षते । जैमिनीयब्राह्मणेऽप्यवं पाठ उपलभ्यते । वाजसनेयकस्थोऽयमिति सायणाचार्यैर्लिखितं किंतु शतपथब्राह्मणेऽयं नास्ति । भाष्य-काराणामयं प्रमाद इति वक्तुं न शक्यते यतो वाजसनेयकपाठत्वेनोद्धृताः केचनान्येऽपि पाठा वाजसनेयके नोपलभ्यन्ते[1] ॥

५५५. १४ [ ८. ५. २ ] छान्दसत्वम् । 'छान्दसं मत्वम्' इति युक्तः पाठः । ब२-पुस्तके तथोपलभ्यते ॥

६१६. १८ [ ८. २१. २ ] 'अग्नये गृहपतये' इति श्रुतेर्मूलं नोपलभ्यम् ॥

६१७. ६ [ ८. २१. ५ ] प्रथमो दैव्यो भिषक्—तै. सं. ४.५.१.२ ॥

७. ११. २२ [ ८. ३३. ६ ] श्मश्रु युक्तमिति वृद्धा (?) वदन्ति ॥

७१४. १६ [ ८. ३३.१७ ] प्लायोगिश्चासङ्गो......दाने दत्त्वा । अस्य मूलं नोपलभ्यम् ॥

७७९. १४-८०५.११ [ ८. ४९-५८ ] वालखिल्यसूक्तपाठभेदाः खिलेषु प्रथमाध्याये ४, ६ सूक्तयोः, तृतीयाध्याये १-८, १८ सूक्तेषु च द्रष्टव्याः ॥

९०४. १० [ ८. ९१. १ ] अभ्यवयन्ती । अभ्यवयती[2]—जै. ब्रा. ॥

९०४. ११ सा तमभिव्याजहार । साभिव्याहरत्[2]—शाट्या. ब्रा., जै. ब्रा. ॥

९०४. ११ अस्यै त इदं । अस्यै वा इदं[2]—शाट्या. ब्रा., जै. ब्रा. ॥

९०५. ८ [ ८. ९१. २ ] सोमपीथ इह वा अस्य । सोमपीथी ह वा अस्य उ[2]—शाट्या. ब्रा., जै. ब्रा. ॥

९०५. १० [ ८. ९१. ५ ] किं कामयसीति । किं कामासीति[2]—शाट्या. ब्रा., जै. ब्रा. ॥

९०५. २१ पिता स । 'पिताह' ( = पिता + आह ) इति पठनीयम् । जैमिनीयब्राह्मणेऽप्येवमेव पाठः[2] ॥

९०६. १८ [ ८. ९१. ७ ] तां त्रेऽनसोऽस्यचर्मत्वसा संश्लिष्टकामवत् । तां त्रेऽनसोऽस्यसूहत्वा कुक्कास्यभक्त्वा श्वे युगस्यास्यसूहत्वा संश्लिष्टकाभवत्—शाट्या. ब्रा., जै. ब्रा. ॥

९२८. २ [ ८. ९५. ७ ] वासुरान् । वा असुरान्—शाट्या. ब्रा. ॥

९२८. २ तत ऋषयः । त एत ऋषयः—वेंकटमाधवभाष्ये ॥

९३५. १ [ ८. ९६. १४ ] केचित् (?) इष्यामि वो मरुत इति पठन्ति ॥

1. Ibid. p. 19. 2. Ibid. pp. 57–60.

# ॥ ऋग्वेदसंहिता ॥

## श्रीमत्सायणाचार्यविरचितभाष्यसमेता

### ९—१० मण्डले

ॐ

# ऋग्वेदसंहिता

## श्रीमत्सायणाचार्यविरचितभाष्यसमेता

## ॥ अथ नवमं मण्डलम् ॥

नवमे[1] मण्डले[1] सप्तानुवाकाः। तत्र प्रथमेऽनुवाके चतुर्विंशतिसंख्याकानि सूक्तानि। तत्र 'स्वादिष्ठया' इति दशर्चं प्रथमं सूक्तम्। अत्रानुक्रम्यते—'स्वादिष्ठया दश मधुच्छन्दाः' इति। वैश्वामित्रो मधुच्छन्दा ऋषिः। प्रागुक्तसमीपपरिभाषया गायत्री छन्दः। 'नवमे मण्डले पावमानं सौम्यम्' (अनु.) इति वचनात् पवमानगुणविशिष्टः सोमो देवता। ग्रावस्तोत्रेऽर्बुदसूक्तस्य प्रागुत्तमाया इदमादिकं सर्वं पावमानं विकल्पेनावपनीयम्। सूत्रितं च—'प्रैते वदन्त्वित्यर्बुदं प्रागुत्तमाया[2] आ व ऋञ्जसे प्र वो ग्रावाण इति सूक्तयोरन्तरोपरिष्टाद्वा स्वस्तोत्राः पावमानीरोप्य यथार्थमा[3] वा ग्रहणग्रहणात्[3]' (आश्व. श्रौ. ५. १२) इति। उपाकर्मणि मण्डलादिग्रहण आद्या। सूत्रं पूर्वमेवोदाहृतम्॥

**स्वादिष्ठया मदिष्ठया पवस्व सोम धारया। इन्द्राय पातवे सुतः॥ १॥**

स्वादिष्ठया। मदिष्ठया। पवस्व। सोम। धारया। इन्द्राय। पातवे। सुतः॥ १॥

हे सोम इन्द्राय पातवे पातुं सुतः अभिषुतः त्वं स्वादिष्ठया स्वादुतमया मदिष्ठया अतिशयेन मादयित्र्या धारया पवस्व क्षर॥

**रक्षोहा विश्वचर्षणिरभि योनिमयोहतम्। द्रुणा सधस्थमासदत्॥ २॥**

रक्षःऽहा। विश्वऽचर्षणिः। अभि। योनिम्। अयःऽहतम्।
द्रुणा। सधऽस्थम्। आ। असदत्॥ २॥

रक्षोहा रक्षसां हन्ता विश्वचर्षणिः विश्वस्य द्रष्टा सोमः अयोहतं हिरण्येन हतम्। तथा च ब्राह्मणं—'हिरण्यपाणिरभिषुणोति' इति। द्रुणा द्रोणकलशेनाभिषवणफलकाभ्यां[4] वा सधस्थं सहस्थानं योनिम् अभिषवस्थानम् अभि आसदत् अभ्यासीदति॥

**वरिवोधातमो भव मंहिष्ठो वृत्रहन्तमः। पर्षि राधो मघोनाम्॥ ३॥**

वरिवःऽधातमः। भव। मंहिष्ठः। वृत्रहन्ऽतमः। पर्षि। राधः। मघोनाम्॥ ३॥

हे सोम त्वं वरिवोधातमः अतिशयेन धनानां दाता भव। 'वेदो वरिवः' इति धननामसु पाठात्। मंहिष्ठः दातृतमश्च भव। सर्वदातृत्वसत्त्वेऽप्यत्र पुनरुक्तिः। वृत्रहन्तमः अतिशयेन शत्रूणां हन्ता भव। किंच मघोनां धनवतां शत्रूणां राधः धनं च पर्षि अस्मभ्यं प्रयच्छ॥

१. ग-त-भ-तत्र। २. ग-प्रागुपेततमाया। ३. ग-यथार्थमात्रमग्रहणात्; त१-यथार्थमात्राग्रहणात्; त४,६-भ१-यथार्थमात्रायमग्रहणात्; भ४-यथार्थमतापग्रहणात्। ४. भ१-'फलकेऽभिषवण'; भ४-'फलको-भिषवण'।

अभ्यर्ष महानां देवानां वीतिमन्धसा । अभि वाजमुत श्रवः ॥ ४ ॥

अभि । अर्ष । महानाम् । देवानाम् । वीतिम् । अन्धसा । अभि । वाजम् । उत । श्रवः ॥४॥

हे सोम त्वं महानां महतां देवानां वीतिं यज्ञम् अन्धसा धानाद्यन्नेन सह अभ्यर्ष अभिगच्छ । उत अपि चाभिगच्छेस्त्वं[1] वाजं बलं श्रवः अन्नं चाभिगमयास्मानित्यर्थः ॥

त्वामच्छा चरामसि तदिदर्थं दिवेदिवे । इन्दो त्वे न आशसः ॥ ५ ॥

त्वाम् । अच्छ । चरामसि । तत् । इत् । अर्थम् । दिवेऽदिवे ।
इन्दो इति । त्वे इति । नः । आऽशसः ॥ ५ ॥

हे इन्दो यागेषु क्लिद्यमान सोम त्वामच्छ त्वां प्रति चरामसि वयं चरामः । दिवेदिवे प्रतिदिनमस्माकं तदित् तदेव त्वत्परिचरणमेव अर्थं कार्यं नान्यत्कार्यमस्ति । नः अस्माकम् आशसः आशंसनान्यपि त्वे त्वय्येव नान्यत्र ॥ ॥ १६ ॥

पुनाति ते परिस्रुतं सोमं सूर्यस्य दुहिता । वारेण शश्वता तना ॥ ६ ॥

पुनाति । ते । परिऽस्रुतम् । सोमम् । सूर्यस्य । दुहिता । वारेण । शश्वता । तना ॥ ६ ॥

हे सोम ते तव परिस्रुतं क्षरन्तं सोमं सोमरसं सूर्यस्य दुहिता श्रद्धा देवी वारेण[2] वालेन शश्वता शाश्वतेन तना विस्तृतेन पुनाति[3] । तथा च वाजसनेयिन आमनन्ति— 'श्रद्धा वै सूर्यस्य दुहिता श्रद्धा सोमं पुनाति' इति ॥

तमीमण्वीः समर्य आ गृभ्णन्ति योषणो दश । स्वसारः पार्ये दिवि ॥ ७ ॥

तम् । ईम् । अण्वीः । सऽमर्ये । आ । गृभ्णन्ति । योषणः । दश । स्वसारः । पार्ये । दिवि ॥७॥

समर्ये समनुष्ये यज्ञे पार्ये दिवि सौत्येऽहनि योषणः स्त्रियः स्वसारः स्वयं सरन्त्यो दशसंख्याकाः अण्वीः[4] अण्व्योऽङ्गुलयः । 'अण्वः अण्व्यः' इत्यङ्गुलिनामसु पाठात् । तमीं तमेनं सोमम् आ गृभ्णन्ति आगृह्णन्ति ॥

तमीं हिन्वन्त्यग्रुवो धमन्ति बाकुरं दृतिम् । त्रिधातु वारणं मधु ॥ ८ ॥

तम् । ईम् । हिन्वन्ति । अग्रुवः । धमन्ति । बाकुरम् । दृतिम् । त्रिऽधातु । वारणम् । मधु ॥८॥

तमीम् एनं सोमम् अग्रुवः अङ्गुलयः हिन्वन्ति अभिषवदेशं प्रति प्रेरयन्ति । प्रेरयित्वा च बाकुरं भासमानं दृतिं दृतिसदृशांशुमेनं[5] सोमं धमन्ति अभिषुण्वन्ति[6] । यद्यपि धमतिरभिषवकर्मा न भवति तथाप्यर्थाक्षिप्तत्वात्राभिषवपरो भविष्यति । यदेतत् सोमात्मकं मधु वस्तु त्रिधातु त्रिस्थानम् । द्रोणकलश आधवनीयः पूतभृदिति त्रिधातवः । वारणं शत्रूणां वारकं च भवति ॥

अभीममघ्न्या उत श्रीणन्ति धेनवः शिशुम् । सोममिन्द्राय पातवे ॥ ९ ॥

अभि । इमम् । अघ्न्याः । उत । श्रीणन्ति । धेनवः । शिशुम् । सोमम् । इन्द्राय । पातवे ॥९॥

१. ख१.५.६-भ१—चाभि° । २. ग-भ—' वारेण......पुनाति ' नास्ति । ३. ग—पुनतीति । सा वारेण वालमयेन शश्वता दृढेन पवित्रेण पुनाति शोधयति । यजुर्ब्राह्मणं वारेण शश्वता तनेत्याह वारेणा हि सोमं पुनन्तीति; ख-भ१.२.४ पुनतीति । ४. ग-ख५—अण्वीरेता । ५. ग—°सदृशमंशुमेनं; क—°सदृशं मधु । ६. ग-ख१.२.५.६.७—भ—अभिषुण्वंति च ।

उत अपि च इमम् एनं शिशुं बालं सोमम् अघ्न्याः अहन्तव्याः धेनवः गावः इन्द्राय पातवे पातुम् अभि श्रीणन्ति । स्वकीयेन पयसा संस्कुर्वन्तीत्यर्थः ॥

**अस्येदिन्द्रो मदेष्वा विश्वा वृत्राणि जिघ्नते । शूरो मघा च मंहते ॥ १० ॥**

अस्य । इत् । इन्द्रः । मदेषु । आ । विश्वा । वृत्राणि । जिघ्नते । शूरः । मघा । च । मंहते ॥ १० ॥

शूरः वीरः इन्द्रः अस्य इत् अस्य सोमस्यैव मदेषु विश्वा विश्वानि वृत्राणि शत्रून् आ जिघ्नते आहन्ति । मघा मघानि धनानि च मंहते यजमानेभ्यः प्रयच्छति ॥ ॥ १७ ॥

'पवस्व' इति दशर्चं द्वितीयं सूक्तं काण्वस्य मेधातिथेरार्षं[1] गायत्रं पवमानसोमदेवताकम् । तथा चानुक्रान्तं– 'पवस्व मेधातिथिः[2]' इति । उक्तो विनियोगः ॥

**पवस्व देववीरति पवित्रं सोम रंह्या । इन्द्रमिन्दो वृषा विश ॥ १ ॥**

पवस्व । देवऽवीः । अति । पवित्रम् । सोम । रंह्या । इन्द्रम् । इन्दो इति । वृषा । आ । विश ॥ १ ॥

हे सोम देववीः देवकामस्त्वं रंह्या वेगेन पवित्रं यथा भवति तथा अति पवस्व अतिक्षर । किंच हे इन्दो वृषा सेचकस्त्वम् इन्द्रम् आ विश प्रविश ॥

**आ वच्यस्व महि प्सरो वृषेन्दो द्युम्नवत्तमः । आ योनिं धर्णसिः सदः ॥ २ ॥**

आ । वच्यस्व । महि । प्सरः । वृषा । इन्दो इति । द्युम्नवत्ऽतमः ।
आ । योनिम् । धर्णसिः । सदः ॥ २ ॥

हे इन्दो सोम महि महान् वृषा कामानां वर्षकः द्युम्नवत्तमः यशस्वितमः धर्णसिः धर्ता त्वं प्सरः पानीयमन्धः आ वच्यस्व अस्मान् प्रत्यागमय । योनिं स्वकीयं स्थानम् आ सदः आसीद च ॥

**अधुक्षत प्रियं मधु धारा सुतस्य वेधसः । अपो वसिष्ट सुक्रतुः ॥ ३ ॥**

अधुक्षत । प्रियम् । मधु । धारा । सुतस्य । वेधसः । अपः । वसिष्ट । सुऽक्रतुः ॥ ३ ॥

सुतस्य अभिषुतस्य वेधसः अभिलषितस्य विधातुर्वा सोमस्य धारा प्रियं प्रीतिकरं मधु मधुरम् अधुक्षत दुग्धे सः सुक्रतुः सुकर्मा[3] सोमः अपः वसतीवरीः वसिष्ट आच्छादयति ॥

**महान्तं त्वा महीरन्वापो अर्षन्ति सिन्धवः । यद्गोभिर्वासयिष्यसे ॥ ४ ॥**

महान्तम् । त्वा । महीः । अनु । आपः । अर्षन्ति । सिन्धवः । यत् । गोभिः । वासयिष्यसे ॥ ४ ॥

हे सोम त्वं यत् यदा यदा गोभिः गोविकारैः पयोभिः वासयिष्यसे आच्छादयिष्यसे तदा महान्तं त्वाम् अनु प्रति सिन्धवः स्यन्दमानाः महीः महत्यः आपः अर्षन्ति गच्छन्ति ॥

**समुद्रो अप्सु मामृजे विष्टम्भो धरुणो दिवः । सोमः पवित्रे अस्मयुः ॥ ५ ॥**

समुद्रः । अप्ऽसु । ममृजे । विष्टम्भः । धरुणः । दिवः । सोमः । पवित्रे । अस्मऽयुः ॥ ५ ॥

---

१. ग-त१.२.६–मेध्यातिथे° । २. ग-त१.२.६-मु–मेध्यातिथि° । ३. ग-त४.५-मु–शोभनकर्मा; घ-त६–भीमकर्मा; त१.२.७–भामकर्मा; म४–शोकर्मा ।

समुद्रः । समुद्रवन्त्यस्माद्रसा इति समुद्रः । विष्टम्भः दिवः स्वर्गस्य धरुणः धारकश्च अस्मयुः अस्मत्कामः सोमः अप्सु उदकेषु मर्मृजे मृज्यते पवित्रे अभिषिच्यत इत्यर्थः ॥ ॥१८॥

**अचिक्रदुद्वृषा हरिर्महान्मित्रो न दर्शतः । सं सूर्येण रोचते ॥ ६ ॥**

अचिक्रदत् । वृषा । हरिः । महान् । मित्रः । न । दर्शतः । सम् । सूर्येण । रोचते ॥ ६ ॥

वृषा कामानां वर्षकः हरिः हरितवर्णः महान् सर्वोत्तमः मित्रो न यथा सखा तद्वत् दर्शतः[1] दर्शनीयो योऽयं सोमः अचिक्रदत् शब्दं करोति सोऽयं सोमः सूर्येण सह रोचते[2] दिवि प्रकाशते ॥

**गिरस्त इन्दु ओजसा मर्मृज्यन्ते अपस्युवः । याभिर्मदाय शुम्भसे ॥ ७ ॥**

गिरः । ते । इन्दो इति । ओजसा । मर्मृज्यन्ते । अपस्युवः । याभिः । मदाय । शुम्भसे ॥ ७ ॥

हे इन्दो ते तव ओजसा बलेन अपस्युवः कर्मेच्छासंबन्धिन्यः ताः गिरः स्तुतयः मर्मृज्यन्ते शोध्यन्ते याभिः गीर्भिस्त्वं मदाय हर्षाय शुम्भसे अलंक्रियसे ॥

**तं त्वा मदाय घृष्वय उ लोककृत्नुमीमहे । तव प्रशस्तयो महीः ॥ ८ ॥**

तम् । त्वा । मदाय । घृष्वये । ऊँ इति । लोकऽकृत्नुम् । ईमहे । तव । प्रऽशस्तयः । महीः ॥ ८ ॥

हे सोम अस्य तव प्रशस्तयः प्रशंसाः महीः महत्यः घृष्वये उ त्वत्प्रसादाच्छत्रूणां घर्षणशीलाय यजमानायैव लोककृत्नुम् उत्तमस्य लोकस्य कर्तारं तं त्वां सोमं मदाय ईमहे वयं याचामहे ॥

**अस्मभ्यमिन्दविन्द्रयुर्मध्वः पवस्व धारया । पर्जन्यो वृष्टिमाँइव ॥ ९ ॥**

अस्मभ्यम् । इन्दो इति । इन्द्रऽयुः । मध्वः । पवस्व । धारया । पर्जन्यः । वृष्टिमान्ऽइव ॥ ९ ॥

हे इन्दो सोम इन्द्रयुः इन्द्रकामस्त्वं मध्वः मदकरस्यामृतस्य[3] धारया पर्जन्यो वृष्टिमानिव यथा वर्षवान् पर्जन्यो मेघस्तथा[4] अस्मभ्यं मेधातिथिभ्यः पवस्व क्षर ॥

**गोषा इन्दो नृषा अस्यश्वसा वाजसा उत । आत्मा यज्ञस्य पूर्व्यः ॥ १० ॥**

गोऽसाः । इन्दो इति । नृऽसाः । असि । अश्वऽसाः । वाजऽसाः । उत ।

आत्मा । यज्ञस्य । पूर्व्यः ॥ १० ॥

हे इन्दो यज्ञस्य पूर्व्यः प्रत्नः आत्मा आत्मभूतस्त्वं गोषाः अस्मभ्यं गवां दाता असि भवसि । नृषाः पुत्राणां दाता चासि । अश्वसाः अश्वानां दाता चासि । उत अपि च वाजसाः अन्नानां दाता चासि ॥ ॥ १९ ॥

' एष देवः ' इति दशर्चं तृतीयं सूक्तमाजीगर्तेः शुनःशेपस्यार्षं गायत्रं पवमानसोमदेवताकम् । अनुक्रान्तं च– ' एषः शुनःशेपः ' इति । उक्तो विनियोगः ॥

१. त–दर्शतो कं; भ१.४–दर्शतो क । २. भ–मु–सं रोचते । ३. म–मदकरस्य रसस्य; भ–त७–मदकरस्य सोमस्य, त४–मदकरस्यांशमस्य; त५–मदकरस्यामृतस्य । ४. ग–मेघः क्षरति तथा ।

एष देवो अमर्त्यः पर्णवीरिव दीयति । अभि द्रोणान्यासदम् ॥ १ ॥

एषः । देवः । अमर्त्यः । पर्णवीःऽइव । दीयति । अभि । द्रोणानि । आऽसदम् ॥ १ ॥

देवः द्योतमानः अमर्त्यः मरणरहितः एषः सोमः द्रोणानि द्रोणकलशान् अभि अभिलक्ष्य आसदम् आसदनार्थं पर्णवीरिव यथा पक्षी तथा वेगेन दीयति गच्छति ॥

एष देवो विपा कृतोऽति ह्वरांसि धावति । पवमानो अदाभ्यः ॥ २ ॥

एषः । देवः । विपा । कृतः । अति । ह्वरांसि । धावति । पवमानः । अदाभ्यः ॥ २ ॥

विपा अङ्गुल्या । 'अथर्यो विपः' इत्यङ्गुलिनामसु पाठात् । कृतः अभिषुतः[1] एषः सोमः देवः पवमानः क्षरन् अदाभ्यः केनाप्यहिंसितश्च सन् ह्वरांसि शत्रून् अति धावति हन्तुमभिगच्छति ॥

एष देवो विपन्युभिः पवमान ऋतायुभिः । हरिर्वाजाय मृज्यते ॥ ३ ॥

एषः । देवः । विपन्युऽभिः । पवमानः । ऋतयुऽभिः । हरिः । वाजाय । मृज्यते ॥ ३ ॥

पवमानः क्षरन् एषः सोमः देवः विपन्युभिः स्तोतृभिः ऋतायुभिः यज्ञकामैः[2] हरिः अश्व इव वाजाय संग्रामार्थं मृज्यते स्तुतिभिरलंक्रियते ॥

एष विश्वानि वार्या शूरो यन्निव सत्वभिः । पवमानः सिषासति ॥ ४ ॥

एषः । विश्वानि । वार्या । शूरः । यन्ऽइव । सत्वऽभिः । पवमानः । सिसासति ॥ ४ ॥

पवमानः क्षरन् शूरः वीरः एषः सोमो देवः विश्वानि सर्वाणि वार्या वरणीयानि धनानि सत्वभिः बलैः यन्निव गच्छन्निव सिषासति अस्मदर्थं संभक्तुमिच्छति ॥

एष देवो रथर्यति पवमानो दशस्यति । आविष्कृणोति वग्वनुम् ॥ ५ ॥

एषः । देवः । रथर्यति । पवमानः । दशस्यति । आविः । कृणोति । वग्वनुम् ॥ ५ ॥

पवमानः[3] क्षरन् एषः सोमः देवः रथर्यति अस्मदीयं यागं प्रत्यागमनाय रथं कामयते । दशस्यति आगत्य चास्मभ्यमभिलषितं प्रयच्छति[4] । वग्वनुं शब्दम् आविष्कृणोति । अभिषूयमाणः प्रकटयति ॥ ॥ २० ॥

एष विप्रैरभिष्टुतोऽपो देवो वि गाहते । दधद्रत्नानि दाशुषे ॥ ६ ॥

एषः । विप्रैः । अभिऽस्तुतः । अपः । देवः । वि । गाहते । दधत् । रत्नानि । दाशुषे ॥ ६ ॥

विप्रैः मेधाविभिः स्तोतृभिः अभिष्टुतः परितः स्तुतः एषः सोमः देवः दाशुषे हविर्दत्तवते यजमानाय रत्नानि रमणीयानि धनानि दधत् धारयन् प्रयच्छन् अपः वसतीवरीः वि गाहते प्रविशति ॥

एष दिवं वि धावति तिरो रजांसि धारया । पवमानः कनिक्रदत् ॥ ७ ॥

एषः । दिवम् । वि । धावति । तिरः । रजांसि । धारया । पवमानः । कनिक्रदत् ॥ ७ ॥

---

१. ग—सुतोभिषुतः । २. ग-त-अ-मु—यज्ञकामैर्वा । ३. च—पवमानः पूयमानः । ४. ग-घ-त-अ—प्रयच्छति च ।

धारया पवमानः क्षरन् एषः सोमः कनिक्रदत् अभिषूयमाणः शब्दं कुर्वन् रजांसि लोकान् तिरः तिरस्कुर्वन् यागात् दिवं स्वर्गं वि धावति गच्छति ॥

**एष दिवं व्यासरत्तिरो रजांस्यस्पृतः । पवमानः स्वध्वरः ॥ ८ ॥**

एषः । दिवम् । वि । आ । असरत् । तिरः । रजांसि । अस्पृतः । पवमानः । सुऽअध्वरः ॥ ८ ॥

पवमानः क्षरन् एषः सोमः स्वध्वरः सुयज्ञः अस्पृतः केनाप्यहिंसितश्च सन् रजांसि लोकान् तिरः[1] तिरस्कुर्वन् यज्ञात् दिवं प्रति व्यासरत् विसरति गच्छति ॥

**एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः । हरिः पवित्रे अर्षति ॥ ९ ॥**

एषः । प्रत्नेन । जन्मना । देवः । देवेभ्यः । सुतः । हरिः । पवित्रे । अर्षति ॥ ९ ॥

हरिः हरितवर्णः देवः द्योतमानः एषः सोमः प्रत्नेन पुराणेन जन्मना जननेन देवेभ्यः देवार्थं सुतः अभिषुतः सन् पवित्रे दशापवित्रे अर्षति गच्छति ॥

**एष उ स्य पुरुव्रतो जज्ञानो जनयन्निषः । धारया पवते सुतः ॥ १० ॥**

एषः । ऊँ इति । स्यः । पुरुऽव्रतः । जज्ञानः । जनयन् । इषः । धारया । पवते । सुतः ॥ १० ॥

स्यः एष उ[2] सोम एव पुरुव्रतः बहुकर्मा जज्ञानः जायमान एव इषः अन्नानि जनयन् उत्पादयन् सुतः अभिषुतः सन् धारया पवते क्षरति ॥ ॥ २१ ॥

'सना च' इति दशर्चं चतुर्थं सूक्तमाङ्गिरसकुलस्य हिरण्यस्तूपस्यार्षं गायत्रं पवमानसोमदेवताकम्। अनुक्रान्तं च—'सना हिरण्यस्तूपः' इति । उक्तो विनियोगः ॥

**सना च सोम जेषि च पवमान महि श्रवः । अथा नो वस्यसस्कृधि ॥ १ ॥**

सनं । च । सोम । जेषि । च । पवमान । महि । श्रवः । अथ । नः । वस्यसः । कृधि ॥ १ ॥

हे महि श्रवः महद्यश पवमान सोम सन[3]। अस्मद्यागे यजनीयान् देवान् भज । जेषि च । यागविध्वंसकारिणो राक्षसांश्च जय । अथ देवान् प्राप्य राक्षसांश्च जित्वानन्तरं नः अस्मान् वस्यसः श्रेयसः[4] कृधि कुरु । श्रेयोऽस्मभ्यं देहीत्यर्थः ॥

**सना ज्योतिः सना स्व१र्विश्वा च सोम सौभगा । अथा नो वस्यसस्कृधि ॥ २ ॥**

सन । ज्योतिः । सन । स्वः । विश्वा । च । सोम । सौभगा । अथ । नः । वस्यसः । कृधि ॥ २ ॥

हे सोम त्वं ज्योतिः तेजः सन अस्मभ्यं प्रयच्छ । अपि च स्वः[5] स्वर्गं सन अस्मभ्यं देहि । विश्वा विश्वानि सौभगा सौभाग्यानि च सन । सिद्धमन्यत् ॥

**सना दक्षमुत क्रतुमप सोम मृधो जहि । अथा नो वस्यसस्कृधि ॥ ३ ॥**

सन । दक्षम् । उत । क्रतुम् । अप । सोम । मृधः । जहि । अथ । नः । वस्यसः । कृधि ॥ ३ ॥

हे सोम त्वं दक्षं बलं सन अस्मभ्यं देहि । उत अपि च क्रतुं प्रज्ञानं सन । मृधः हिंसकान् शत्रूंश्च अप जहि मारय । सिद्धमन्यत् ॥

१. ग-त-म—'तिरः' नास्ति । २. ग-घ-ङ-म—'उ' नास्ति । ३. ग—सना । ४. ङ-म२.४—श्रेयः । ५. ग-ङ-म—'स्वः' नास्ति ।

पवीतारः पुनीतन सोममिन्द्राय पातवे। अथा नो वस्यसस्कृधि ॥ ४ ॥

पवीतारः। पुनीतन। सोमम्। इन्द्राय। पातवे। अथ। नः। वस्यसः। कृधि ॥ ४ ॥

हे पवीतारः[1] सोमाभिषवकर्तारः यूयम् इन्द्राय पातवे पातुं सोमं पुनीतन अभिषुणुत। सिद्धमन्यत् ॥

त्वं सूर्ये न आ भज तव क्रत्वा तवोतिभिः। अथा नो वस्यसस्कृधि ॥ ५ ॥

त्वम्। सूर्ये। नः। आ। भज। तव। क्रत्वा। तव। ऊतिऽभिः। अथ। नः। वस्यसः। कृधि ॥५॥

हे सोम त्वं तव क्रत्वा तव ऊतिभिः त्वत्कर्तृकेण कर्मणा त्वत्कर्तृकाभी रक्षाभिश्च नः अस्मान् सूर्ये आ भज प्रापय। सिद्धमन्यत् ॥ ॥ २२ ॥

तव क्रत्वा तवोतिभिर्ज्योक्पश्येम सूर्यम्। अथा नो वस्यसस्कृधि ॥ ६ ॥

तव। क्रत्वा। तव। ऊतिऽभिः। ज्योक्। पश्येम। सूर्यम्। अथ। नः। वस्यसः। कृधि ॥६॥

हे सोम तव क्रत्वा प्रज्ञानेन तव ऊतिभिः रक्षाभिश्च ज्योक् चिरं पश्येम सूर्यम्। पश्याम[2] दृश्यामः[3]। सिद्धमन्यत् ॥

अभ्यर्ष स्वायुध सोम द्विबर्हसं रयिम्। अथा नो वस्यसस्कृधि ॥ ७ ॥

अभि। अर्ष। सुऽआयुध। सोम। द्विऽबर्हसम्। रयिम्। अथ। नः। वस्यसः। कृधि ॥७॥

हे स्वायुध शोभनायुध सोम त्वं द्विबर्हसं द्वयोर्द्यावापृथिव्योः स्थानयोः परिवृढं रयिं धनम् अभ्यर्ष अस्मानभिगमय। सिद्धमन्यत् ॥

अभ्यर्षानपच्युतो रयिं समत्सु सासहिः। अथा नो वस्यसस्कृधि ॥ ८ ॥

अभि। अर्ष। अनपऽच्युतः। रयिम्। समत्ऽसु। ससहिः। अथ। नः। वस्यसः। कृधि ॥८॥

हे सोम समत्सु संग्रामेषु अनपच्युतः शत्रुभिरनाहतः[4] सासहिः शत्रूणामभिभविता त्वं रयिं धनम् अभ्यर्ष अस्मानभिगमय। सिद्धमन्यत् ॥

त्वां यज्ञैरवीवृधन्पवमान विधर्मणि। अथा नो वस्यसस्कृधि ॥ ९ ॥

त्वाम्। यज्ञैः। अवीवृधन्। पवमान। विऽधर्मणि। अथ। नः। वस्यसः। कृधि ॥ ९ ॥

हे पवमान सोम यजमानानां विधारणाय प्रवृत्तं त्वां यज्ञैः विधर्मणि आत्मनो विधारणार्थम् अवीवृधन् यजमाना वर्धयन्ति। सिद्धमन्यत् ॥

रयिं नश्चित्रमश्विनमिन्दो विश्वायुमा भर। अथा नो वस्यसस्कृधि ॥ १० ॥

रयिम्। नः। चित्रम्। अश्विनम्। इन्दो इति। विश्वऽआयुम्। आ। भर।
अथ। नः। वस्यसः। कृधि ॥ १० ॥

---

१. ग-म१.३–पवितारः। २. ग-तर–अश्यामः; त६–पश्येम। ३. त२–'दृश्यामः' नास्ति।
४. ग–°रनभिद्रुतः; म१.३–°रनाभिहतः; म२–°रनभिहतः; म४–°रनभिहितः।

हे इन्दो यागेषु क्रियमाण सोम त्वं[1] चित्रं नानाविधम् अश्विनम् अश्ववन्तं च विभ्वायुं सर्वगामिनं रयिं नः अस्मभ्यम् आ भर आहर। सिद्धमन्यत्॥ ॥ २३ ॥

‘समिद्धः’ इत्येकादशर्चं पञ्चमं सूक्तं कश्यपस्यासितस्य[2] देवलस्य वार्षम्। अन्त्याश्चतस्रोऽनुष्टुभः शिष्टाः सप्त गायत्र्यः। नराशंसवर्जिता[3] आप्रियः क्रमेण अस्य देवताः। तथा चानुक्रान्तं—‘समिद्ध एकादश काश्यपोऽसितो देवलो वा विंशतिः सूक्तान्याप्यमाप्रियमन्त्याश्चतस्रोऽनुष्टुभम्’ इति। कश्यपस्य[4] पावमानमिदमाप्रीसूक्तम्। सूत्रितं च—‘समिद्धो अग्नेति सर्वेषां यथर्षि वा’ (आश्व. श्रौ. ३. २) इति॥

**समिद्धो विश्वतस्पतिः पवमानो वि राजति। प्रीणन्वृषा कनिक्रदत् ॥ १ ॥**

सम्ऽइद्धः। विश्वतः। पतिः। पवमानः। वि। राजति। प्रीणन्। वृषा। कनिक्रदत् ॥ १ ॥

आप्रीरूपसोमस्तुतिरत्र[5]। समिद्धः सम्यग्दीप्तः विश्वतस्पतिः सर्वतः स्वामी वृषा कामानां वर्षिता पवमानः सोमः कनिक्रदत् अभिशब्दयमानः शब्दं कुर्वन् प्रीणन् देवान् प्रीणयन् वि राजति यागेषु प्रकाशते॥

**तनूनपात्पवमानः शृङ्गे शिशानो अर्षति। अन्तरिक्षेण रारजत् ॥ २ ॥**

तनूऽनपात्। पवमानः। शृङ्गे इति। शिशानः। अर्षति। अन्तरिक्षेण। रारजत् ॥ २ ॥

तनूनपात्[6] पवमानः सोमः। तनूनपादत्र सोमो भवति। तथा च श्रूयते—‘अङ्गेभ्योऽङ्गाद्यो आयन्ते ततः सोमो जायते’ इति। शृङ्गे दीप्ते उन्नतप्रदेशे[7]। ‘हरिः शृङ्गाणि’ इति ज्वलन्नामसु पाठात्। शिशानः तीक्ष्णीकुर्वन् अन्तरिक्षेण रारजत् अर्षति। द्रोणकलशं प्रति गच्छति। तथा चाम्नायते—‘द्वाभ्यां धाराभ्यामाग्रयणं[8] गृह्णाति[9]’ इति॥

**ईळेन्यः पवमानो रयिर्वि राजति द्युमान्। मधोर्धाराभिरोजसा ॥ ३ ॥**

ईळेन्यः। पवमानः। रयिः। वि। राजति। द्युऽमान्। मधोः। धाराभिः। ओजसा ॥ ३ ॥

ईळेन्यः स्तुत्यः पवमानः सोमः रयिः अभीष्टस्य दाता द्युमान् दीप्तिमांश्च सन् मधोः उदकस्य धाराभिः सह क्षरन् ओजसा बलेन वि राजति प्रकाशते॥

**बर्हिः प्राचीनमोजसा पवमानः स्तृणन्हरिः। देवेषु देव ईयते ॥ ४ ॥**

बर्हिः। प्राचीनम्। ओजसा। पवमानः। स्तृणन्। हरिः। देवेषु। देवः। ईयते ॥ ४ ॥

हरिः हरितवर्णः देवः द्योतमानः सोमः पवमानः देवेषु[10] यागेषु बर्हिः प्राचीनं प्राचीनाग्रं स्तृणन् स्तारयन् ओजसा बलेन ईयते गच्छति॥

१. ग-त४-भ२—स त्वं; भ १.४—" " स त्वं। २. ग-त-भ४-मु—काश्यपासितस्य। ३. ग-भ१.२.३—नाराशंस°। ४. ग—शौनकस्य पवमानसोममिद°; त-भ४—शौनकस्य पावमानमिद°। ५. त-भ४—आप्रीतसोम°; मु—आप्रीमसोम°। ६. ग—तनूनपादेवः। ७. त—°प्रदेशे। ८. ग—धाराभ्यामग्रयणं; त६—आराभ्यामाग्रयणं; भ२.३—आग्रयणं। ९. ग-त१.२.६.७—गृह्णामीति; त४.५—गृह्णामिति; भ३—गृह्णातीति। १०. ग-त-भ४—‘देवेषु’ नास्ति।

उदातैर्जिहते बृहद्द्वारो देवीर्हिरण्ययीः । पवमानेन सुष्टुताः ॥ ५ ॥

उत् । आतैः । जिहते । बृहत् । द्वारः । देवीः । हिरण्ययीः । पवमानेन । सुऽस्तुताः ॥ ५ ॥

हिरण्ययीः हिरण्मय्यः द्वारो देवीः द्वारो देव्यः पवमानेन सोमेन सह सुष्टुताः स्तोतृभिः सम्यक् स्तुताः सत्यः बृहत् बृहतीभ्यो महतीभ्यः आतैः आततेभ्यो दिग्भ्यः । 'आता आशाः' इति दिङ्नामसु पाठात् । उत् जिहते उद्गच्छन्ति ॥ ॥ २१ ॥

सुशिल्पे बृहती मही पवमानो वृषण्यति । नक्तोषासा न दर्शते ॥ ६ ॥

सुशिल्पे इति सुऽशिल्पे । बृहती इति । मही इति । पवमानः । वृषण्यति ।
नक्तोषसा । न । दर्शते इति ॥ ६ ॥

सुशिल्पे सुरूपे बृहती परिवृढे मही महत्यौ न संप्रति दर्शते दर्शनीये नक्तोषासा नक्तोषासौ[1] पवमानः सोमः वृषण्यति कामयते ॥

उभा देवा नृचक्षसा होतारा दैव्या हुवे । पवमान इन्द्रो वृषा ॥ ७ ॥

उभा । देवा । नृऽचक्षसा । होतारा । दैव्या । हुवे । पवमानः । इन्द्रः । वृषा ॥ ७ ॥

नृचक्षसा मनुष्याणां द्रष्टारौ दैव्या दैव्यौ देवसंबन्धिनौ होतारा होतारौ उभा उभौ देवा देवौ हुवे आह्वयामि यज्ञे । पवमानः सोमः इन्द्रः ईशः । तथा च यास्कः—'इन्द्र इरां दृणातीति वेरां दारयत इति वेरां धारयतीति वेन्दवे द्रवतीति वेन्दौ रमत इति वेन्धे भूतानीति वा तद्यदेनं प्राणैः समैन्धन्[2] तदिन्द्रस्येन्द्रत्वमिति विज्ञायते' ( निरु. १०. ८ ) इति । वृषा कामानां वर्षिता च भवतीति ॥

भारती पवमानस्य सरस्वतीळा मही । इमं नो यज्ञमा गमन्तिस्रो देवीः सुपेशसः ॥ ८ ॥

भारती । पवमानस्य । सरस्वती । इळा । मही ।

इमम् । नः । यज्ञम् । आ । गमन् । तिस्रः । देवीः । सुऽपेशसः ॥ ८ ॥

भारती भारत्याख्या सरस्वती सरस्वत्याख्या च मही महती इळाख्या[3] च तिस्रः सुपेशसः सुरूपाः देवीः देव्यः नः अस्माकं पवमानस्य सोमस्य संबन्धिनम् इमं[4] यज्ञं प्रति आ गमन् आगच्छन्तु ॥

त्वष्टारमग्रजां गोपां पुरोयावानमा हुवे ।
इन्दुरिन्द्रो वृषा हरिः पवमानः प्रजापतिः ॥ ९ ॥

त्वष्टारम् । अग्रऽजाम् । गोपाम् । पुरःऽयावानम् । आ । हुवे ।
इन्दुः । इन्द्रः । वृषा । हरिः । पवमानः । प्रजाऽपतिः ॥ ९ ॥

अग्रजाम् अग्रे जातं गोपां प्रजानां पालयितारं पुरोयावानं देवानां पुरस्तागन्तारं त्वष्टारं देवम् आ हुवे अहमाह्वयामि यज्ञे । हरिः[5] हरितवर्णः पवमानः इन्दुः सोमः[6] इन्द्रः देवानामीश्वरः वृषा कामानां वर्षिता च प्रजापतिः प्रजानां पालयिता च भवतीति ॥

---

१. ग-मु—नक्तोषसौ । २. ख१.२.६.७-मु—समैन्धन् ; ख४.५-अ१—समैन्धन; अ४—समैन्धत । ३. अ१.२.३—इळा इळाख्या । ४. त-अ—'इमं' नास्ति । ५. ग-त-अ२.३.४—'हरिः' नास्ति । ६. त-अ—'सोमः' नास्ति ।

वनस्पतिं पवमान मध्वा समङ्ग्धि धारया।
सहस्रवल्शं हरितं भ्राजमानं हिरण्ययम् ॥ १० ॥

वनस्पतिम्। पवमान। मध्वा। सम्। अङ्ग्धि। धारया।
सहस्रऽवल्शम्। हरितम्। भ्राजमानम्। हिरण्ययम् ॥ १० ॥

हे पवमान सोम हरितं हरितवर्णं हिरण्ययं कदाचिद्धिरण्मयवर्णं च भ्राजमानं दीप्यमानं सहस्रवल्शं सहस्रशाखं वनस्पतिं देवं धारया धारामयेण मध्वा मधुना समङ्ग्धि अङ्ग्धि। संस्कुर्वित्यर्थः ॥

विश्वे देवाः स्वाहाकृतिं पवमानस्या गत।
वायुर्बृहस्पतिः सूर्योऽग्निरिन्द्रः सजोषसः ॥ ११ ॥

विश्वे। देवाः। स्वाहाऽकृतिम्। पवमानस्य। आ। गत।
वायुः। बृहस्पतिः। सूर्यः। अग्निः। इन्द्रः। सऽजोषसः ॥ ११ ॥

हे विश्वे देवाः वायुः बृहस्पतिश्च सूर्यश्च अग्निश्च इन्द्रश्च सर्वे यूयं सजोषसः संगताः सन्तः पवमानस्य सोमस्य स्वाहाकृतिं स्वाहाकारं प्रति[1] आ गत[1] आगच्छत ॥ ॥२५॥

'मन्द्रया' इति नवर्चं षष्ठं सूक्तं काश्यपस्यासितस्य देवलस्य आर्षं गायत्रं पवमानसोमदेवताकम्[2] ॥

मन्द्रया सोम धारया वृषा पवस्व देवयुः। अव्यो वारेष्वस्मयुः ॥ १ ॥

मन्द्रया। सोम। धारया। वृषा। पवस्व। देवऽयुः। अव्यः। वारेषु। अस्मऽयुः ॥ १ ॥

हे सोम वृषा कामानां वर्षिता देवयुः देवकामः अस्मयुः अस्मत्कामश्च अव्यः अवेः वारेषु वालेषु दशापवित्रे मन्द्रया मदकरया धारया पवस्व क्षर ॥

अभि त्यं मद्यं मदमिन्दविन्द्र इति क्षर। अभि वाजिनो अर्वतः ॥ २ ॥

अभि। त्यम्। मद्यम्। मदम्। इन्दो इति। इन्द्रः। इति। क्षर। अभि। वाजिनः। अर्वतः ॥२॥

हे इन्दो सोम त्वम् इन्द्रः ईश्वरः इति कृत्वा[3] त्यं[3] तं मद्यं मदकरं[4] मदं रसम् अभि[5] क्षर वर्ष। वाजिनः बलवतः अर्वतः अश्वांश्च अस्मदर्थम् अभि क्षरेत्यर्थः ॥

अभि त्यं पूर्व्यं मदं सुवानो अर्ष पवित्र आ। अभि वाजमुत श्रवः ॥ ३ ॥

अभि। त्यम्। पूर्व्यम्। मदम्। सुवानः। अर्ष। पवित्रे। आ। अभि। वाजम्। उत। श्रवः ॥३॥

हे सोम सुवानः अभिषूयमाणस्त्वं पूर्व्यं प्रत्नं त्यं तं प्रसिद्धं मदं मदकरं रसं पवित्रे आ समन्तात् अभि अर्ष अभिगमय। वाजं बलमस्माकम् अभि अर्ष। उत अपि च श्रवः अश्वमप्यर्ष ॥

१. ग-त४.५—' प्रति आ गत ' नास्ति; त१.२.३.७-मु—आगत। २. ग—'देवताकं अनुक्रांतं मंद्रया नवेति; च—'देवताकं मंद्रया नवेति अनुक्रांतं च। ३. ग-त-भ—'त्यं तं' नास्ति। ४. त-भ—मदकरमस्तीति। ५. त-भ—' अभि ' नास्ति।

अनु द्रप्सास इन्दव आपो न प्रवतासरन् । पुनाना इन्द्रमाशत ॥ ४ ॥

अनु । द्रप्सासः । इन्दवः । आपः । न । प्रऽवता । असरन् । पुनानाः । इन्द्रम् । आशत ॥ ४ ॥

द्रप्सासः द्रुतगतयः[1] पुनानाः क्षरन्तः इन्दवः सोमाः प्रवता प्रवणेन मार्गेण आपो न आप इव इन्द्रम् अनु असरन् अनुगच्छन्ति । आशत व्याप्नुवन्ति च ॥

यमत्यमिव वाजिनं मृजन्ति योषणो दश । वने क्रीळन्तमत्यविम् ॥ ५ ॥

यम् । अत्यम्ऽइव । वाजिनम् । मृजन्ति । योषणः । दश । वने । क्रीळन्तम् । अतिऽअविम् ॥ ५ ॥

अत्यविं दशापवित्रमतिक्रम्य वने अरण्ये क्रीळन्तं वर्तमानं यं सोमं दश[2] दशसंख्याकाः योषणः स्त्रियः । अङ्गुलय इत्यर्थः । तथा च निगमान्तरं— 'तमीमण्वीः समर्ये आ गृभ्णन्ति योषणो दश' (ऋ. सं. ९.१.७) इति । वाजिनं बलिनम् अत्यमिव[3] अश्वमिव मृजन्ति परिचरन्ति । उत्तरया सहान्वयः ॥ ॥ २६ ॥

तं गोभिर्वृषणं रसं मदाय देववीतये । सुतं भराय सं सृज ॥ ६ ॥

तम् । गोभिः । वृषणम् । रसम् । मदाय । देवऽवीतये । सुतम् । भराय । सम् । सृज ॥ ६ ॥

वृषणं कामानां वर्षितारं देववीतये देवानां पानाय मदाय सुतम् अभिषुतं तं रसं भराय संग्रामाय गोभिः[4] पयोभिः[4] सं सृज संयोजय ॥

देवो देवाय धारयेन्द्राय पवते सुतः । पयो यदस्य पीपयत् ॥ ७ ॥

देवः । देवाय । धारया । इन्द्राय । पवते । सुतः । पयः । यत् । अस्य । पीपयत् ॥ ७ ॥

देवाय द्योतमानाय इन्द्राय सुतः अभिषुतः देवः द्योतमानः सोमः धारया पवते क्षरति । यत् यस्मात् अस्य सोमस्य पयः पीपयत् इन्द्रमाप्यायितवत् । तस्माद्धारया पवत इत्यर्थः ॥

आत्मा यज्ञस्य रंह्या सुष्वाणः पवते सुतः । प्रत्नं नि पाति काव्यम् ॥ ८ ॥

आत्मा । यज्ञस्य । रंह्या । सुस्वानः । पवते । सुतः । प्रत्नम् । नि । पाति । काव्यम् ॥ ८ ॥

यज्ञस्य आत्मा आत्मभूतः सुतः अभिषुतः सोमः सुष्वाणः यजमानेभ्यः कामान् प्रेरयन् रंह्या वेगेन पवते क्षरति । प्रत्नं पुरातनं काव्यम् आत्मनः कवित्वं च नि पाति अभिरक्षति ॥

एवा पुनान इन्द्रयुर्मदं मदिष्ठ वीतये । गुहा चिद्दधिषे गिरः ॥ ९ ॥

एव । पुनानः । इन्द्रऽयुः । मदम् । मदिष्ठ । वीतये । गुहा । चित् । दधिषे । गिरः ॥ ९ ॥

हे मदिष्ठ अतिशयेन मदकर सोम इन्द्रयुः इन्द्रकामस्त्वं वीतये इन्द्रस्य पानाय एव एवं मदं पुनानः क्षरन् गुहा गुहायाम् । यज्ञशालायामित्यर्थः । गिरः चित् शब्दानपि दधिषे । अभिषववेलायामुपरवेषु धारयसि । करोषीत्यर्थः ॥ ॥ २७ ॥

१. त-द्रुतगतयः । २. त-भ४-'दश' नास्ति । ३. ग-अ-अश्वं न । ४. म-त४.५-अ-'गोभिः पयोभिः' नास्ति; च-गोभिः ।

'असृग्रम्' इति नवर्चं सप्तमं सूक्तम्। 'असृग्रम्' इत्यनुक्रान्तम्। असितो देवलो ऋषिः। तौ च कश्यपगोत्रजौ[1]। गायत्रं[2] छन्दः[2]। सोमः पवमानो देवता। उक्तो विनियोगः॥

असृग्रमिन्दवः पथा धर्मन्नृतस्य सुश्रियः। विदाना अस्य योजनम्॥ १ ॥

असृग्रम्। इन्दवः। पथा। धर्मन्। ऋतस्य। सुऽश्रियः। विदानाः। अस्य। योजनम्॥१॥

सुश्रियः शोभनश्रयणाः[3] अस्य इन्द्रस्य योजनं संबन्धं विदानाः जानन्तः इन्दवः सोमाः धर्मन् कर्माणि ऋतस्य यज्ञस्य पथा मार्गेण असृग्रम् सृज्यन्ते॥

प्र धारा मध्वो अग्रियो महीरपो वि गाहते। हविर्हविष्षु वन्द्यः॥ २ ॥

प्र। धारा। मध्वः। अग्रियः। महीः। अपः। वि। गाहते। हविः। हविःऽसु। वन्द्यः॥२॥

हविष्षु हविषां मध्ये वन्द्यः स्तुत्यः हविः हविरात्मको यः सोमः महीः महतीः अपः वसतीवरीः वि गाहते तस्य मध्वः सोमस्य अग्रियः मुख्याः धाराः प्र गच्छन्तीत्यर्थः॥

प्र युजो वाचो अग्रियो वृषाव चक्रदद्वने। सद्माभि सत्यो अध्वरः॥ ३ ॥

प्र। युजः। वाचः। अग्रियः। वृषा। अव। चक्रदत्। वने। सद्म। अभि। सत्यः। अध्वरः॥३॥

पुनरेव दर्शयति। वृषा कामानां वर्षकः सत्यः सत्यभूतः अध्वरः हिंसावर्जितः अग्रियः मुख्यः सोमः सद्म यज्ञगृहम् अभि प्रति वने उदके युजः युक्ताः वाचः प्र अव चक्रदत् अवक्रन्दति। शब्दान् करोतीत्यर्थः॥

परि यत्काव्या कविर्नृम्णा वसानो अर्षति। स्वर्वाजी सिषासति॥ ४ ॥

परि। यत्। काव्या। कविः। नृम्णा। वसानः। अर्षति। स्वः। वाजी। सिसासति॥ ४ ॥

कविः क्रान्तकर्मा सोमः नृम्णा नृम्णानि[4] धनानि वसानः आच्छादयन् स्तोतॄणां काव्या[5] काव्यानि कविकर्माणि स्तोत्राणि यत् यदा परि अर्षति परिगच्छति तदा स्वः स्वर्गे[6] वाजी बलवानन्नवान् वा इन्द्रः सिषासति। यागं प्रत्यागन्तुं स्वकीयं भागं संभक्तुमिच्छति॥

पवमानो अभि स्पृधो विशो राजेव सीदति। यदीमृण्वन्ति वेधसः॥ ५ ॥

पवमानः। अभि। स्पृधः। विशः। राजाऽइव। सीदति। यत्। ईम्। ऋण्वन्ति। वेधसः॥५॥

यत् यदा ईम् एनं सोमं वेधसः कर्मणां कर्तारः[7] ऋण्वन्ति प्रेरयन्ति तदा पवमानः क्षरन् सोमः स्पृधः स्पर्धमानान् यागविघ्नकारिणो राक्षसान् विशः स्पर्धमानान् मनुष्यान् राजेव[8] यथा राजा[9] शत्रून् अभि सीदति[10] बाधितुमभिगच्छति॥ ॥ २८ ॥

अव्यो वारे परि प्रियो हरिर्वनेषु सीदति। रेभो वनुष्यते मती॥ ६ ॥

अव्यः। वारे। परि। प्रियः। हरिः। वनेषु। सीदति। रेभः। वनुष्यते। मती॥ ६ ॥

१. ग-त-७–काश्यपगोत्रजौ, म१.३–कश्यपगोत्रौ। २. म१.२.३–गायत्रछंदसे। ३. त-म–*अवण्णा। ४. ग-त-म–'नृम्णानि' नास्ति। ५. ग-त-म–'काव्या' नास्ति। ६. ग–स्वर्गात्। ७. त-म–कर्तारः। ८. त-म४–राजसेव। ९. म१.२.१.४–राजाभिषीदति। १०. त-म१.२.४–विसीदति।

हरिः हरितवर्णः प्रियः देवानां प्रियतम एष सोमः वनेषु उदकेषु संपृक्तः अत्यः अवेः वारे वालोत्थे परि षीदति । किंच रेभः अभिषववेलायामुपरवेषु शब्दं कुर्वन् मती मत्या स्तुत्या वनुष्यते सेव्यते ॥

स वायुमिन्द्रमश्विना साकं मदेन गच्छति । रणा यो अस्य धर्मभिः ॥ ७ ॥

सः । वायुम् । इन्द्रम् । अश्विना । साकम् । मदेन । गच्छति । रण । यः । अस्य । धर्मऽभिः ॥ ७ ॥

यः यजमानः अस्य सोमस्य धर्मभिः कर्मभिः श्रवणाभिषवादिभिः रण रमते सः यजमानः वायुमिन्द्रं च अश्विना अश्विनौ[1] च मदेन साकं सह गच्छति प्राप्नोति ॥

आ मित्रावरुणा भगं मध्वः पवन्त ऊर्मयः । विदाना अस्य शक्मभिः ॥ ८ ॥

आ । मित्रावरुणा । भगम् । मध्वः । पवन्ते । ऊर्मयः । विदानाः । अस्य । शक्मऽभिः ॥ ८ ॥

येषां यजमानानां मध्वः सोमस्य ऊर्मयः तरङ्गाः मित्रावरुणा मित्रावरुणौ देवौ भगं भगाख्यं देवं च प्रति पवन्ते क्षरन्ति, ते यजमानाः अस्य सोमस्येमं सोमं विदानाः जानन्तः शक्मभिः सुखैः संगच्छन्त[2] इति शेषः ॥

अस्मभ्यं रोदसी रयिं मध्वो वाजस्य सातये । श्रवो वसूनि सं जितम् ॥ ९ ॥

अस्मभ्यम् । रोदसी इति । रयिम् । मध्वः । वाजस्य । सातये । श्रवः । वसूनि । सम् । जितम् ॥ ९ ॥

हे रोदसी द्यावापृथिव्यौ युवां मध्वः देवानां मोदयितुः[3] वाजस्य सोमात्मकस्यान्नस्य सातये लाभाय अस्मभ्यं काश्यपासितेभ्यः कश्यपदेवलेभ्यो वा रयिं धनं श्रवः अन्नं च वसूनि वास्तव्यान्यन्यान्यपि पश्वादीनि धनानि सं जितं संजयतम् । प्रयच्छतमित्यर्थः ॥ ॥ २९ ॥

'एते सोमाः' इति नवर्चमष्टमं सूक्तम् । ऋष्याद्याः पूर्ववत् । अनुक्रान्तं च – 'एते सोमाः' इति । उक्तः सूक्तविनियोगः । ग्रावस्तोत्रे गाणगारिमतेनाभिरूपकरणे सोमे सृज्यमाने 'सृजन्ति रथा' इत्येषा । सूत्रितं च – 'अथापरमभिरूपं कुर्यादिति गाणगारिरा प्यायस्व समेतु त इति तिस्रो सृजन्ति रथा इव प्रियाः' ( आश्व. श्रौ. ५.१२ ) इति ॥

एते सोमा अभि प्रियमिन्द्रस्य काममक्षरन् । वर्धन्तो अस्य वीर्यम् ॥ १ ॥

एते । सोमाः । अभि । प्रियम् । इन्द्रस्य । कामम् । अक्षरन् । वर्धन्तः । अस्य । वीर्यम् ॥ १ ॥

एते अभिषुता इमे सोमाः अस्य इन्द्रस्य वीर्यं [illegible] वर्धन्तः वर्धयन्तः इन्द्रस्य कामं काम्यं प्रियं प्रीतिकरं रसम् अभि अक्षरन् अभिक्षरन्तो अभ्यवर्षन् ॥

पुनानासश्चमूषदो गच्छन्तो वायुमश्विना । ते नो धान्तु सुवीर्यम् ॥ २ ॥

पुनानासः । चमूऽसदः । गच्छन्तः । वायुम् । अश्विना । ते । नः । धान्तु । सुऽवीर्यम् ॥ २ ॥

ते प्रसिद्धाः सोमाः पुनानासः पूयमाना अभिपूयमानाः चमूषदः चमसेषु सीदन्तः वायुम् अश्विना अश्विनौ च गच्छन्तः प्राप्नुवन्तः नः अस्मभ्यं सुवीर्यं शोभनवीर्यं धान्तु धारयन्तु । प्रयच्छन्त्वित्यर्थः ॥

१. ग-त-भ– 'अश्विनौ' नास्ति । २. घ– आसंगच्छन्त । ३. ग– मादयितुः ।

इन्द्रस्य सोम राधसे पुनानो हार्दि चोदय । ऋतस्य योनिमासदम् ॥ ३ ॥

इन्द्रस्य । सोम । राधसे । पुनानः । हार्दि । चोदय । ऋतस्य । योनिम् । आऽसदम् ॥ ३ ॥

हे सोम पुनानः अभिषूयमाणः हार्दि अभिलषितस्वम् इन्द्रस्य राधसे संराधनाय ऋतस्य यज्ञस्य योनिं स्थानम् आसदं यथेन्द्र आसीदति तथेन्द्रं चोदय प्रेरय ॥

मृजन्ति त्वा दश क्षिपो हिन्वन्ति सप्त धीतयः । अनु विप्रा अमादिषुः ॥ ४ ॥

मृजन्ति । त्वा । दश । क्षिपः । हिन्वन्ति । सप्त । धीतयः । अनु । विप्राः । अमादिषुः ॥ ४ ॥

हे सोम त्वा त्वां दश दशसंख्याकाः क्षिपः अङ्गुलयः । 'क्षिपः[1] क्षिपः' इत्यङ्गुलिनामसु पाठात् । मृजन्ति परिचरन्ति । सप्त सप्तसंख्याकाः धीतयः होत्रकाश्च त्वा त्वां हिन्वन्ति स्वस्वव्यापारैः प्रीणयन्ति । विप्राः मेधाविनश्च त्वाम् अनु अमादिषुः अनुमादयन्ति ॥

देवेभ्यस्त्वा मदाय कं सृजानमति मेष्यः । सं गोभिर्वासयामसि ॥ ५ ॥

देवेभ्यः । त्वा । मदाय । कम् । सृजानम् । अति । मेष्यः । सम् । गोभिः । वासयामसि ॥ ५ ॥

हे सोम मेष्यः अवेर्लोमानि कम्[2] उदकं च अति अभि[2] सृजानं त्वा त्वां देवेभ्यः देवानाम् । विभक्तिव्यत्ययः । मदाय मदार्थं गोभिः गोविकारैः पयोभिः सं वासयामसि संवासयामः ॥ ॥ १० ॥

पुनानः कलशेष्वा वस्त्राण्यरुषो हरिः । परि गव्यान्यव्यत ॥ ६ ॥

पुनानः । कलशेषु । आ । वस्त्राणि । अरुषः । हरिः । परि । गव्यानि । अव्यत ॥ ६ ॥

पुनानः पूयमानः कलशेषु कुम्भेषु निषिच्यमानः अरुषः आरोचमानः हरिः हरितवर्णः सोमः गव्यानि दुग्धादीनि वस्त्राणि वासांसीव परि अव्यत पर्याच्छादयति ॥

मघोन आ पवस्व नो जहि विश्वा अप द्विषः । इन्दो सखायमा विश ॥ ७ ॥

मघोनः । आ । पवस्व । नः । जहि । विश्वाः । अप । द्विषः ।

इन्दो इति । सखायम् । आ । विश ॥ ७ ॥

हे इन्दो सोम मघोनः धनवतः नः अस्मान् प्रति पवस्व क्षर । विश्वाः विश्वान् द्विषः द्वेष्टॄन् अप जहि मारय च । सखायं प्रियमिन्द्रम् आ विश आप्नुहि च ॥

वृष्टिं दिवः परि स्रव द्युम्नं पृथिव्या अधि । सहो नः सोम पृत्सु धाः ॥ ८ ॥

वृष्टिम् । दिवः । परि । स्रव । द्युम्नम् । पृथिव्याः । अधि ।

सहः । नः । सोम । पृत्ऽसु । धाः ॥ ८ ॥

१. ग-स१.२.४.७-म४-क्षिपः; स६-भ१.३-'क्षिपः' नास्ति । २. ग-इत्यर्थः अति; घ-कमुदकं चात्यभि; स१-कं उदकं चात्यभि; भ२.६-कं उदकं त्वभि; स४.५- - - - द अभि; स७-कमुदकं त्वदभ्यभि; म१.२-द अति; भ३-दशापवित्रमति; म४-अभि; मु-कमुदकं चाति ।

हे सोम त्वं दिवः द्युलोकात् वृष्टिं वर्ष परि सर्वतः वर्ष। पृथिव्याः अधि पृथिव्याम्। अधिः सप्तम्यर्थानुवादः। द्युम्नम् अन्नं चोत्पादयेति शेषः। नः अस्माकं सहः बलं च पृत्सु संग्रामेषु धाः धेहि॥

नृचक्षसं त्वा वयमिन्द्रपीतं स्वर्विदम्। भक्षीमहि प्रजामिषम्॥ ९॥

नृऽचक्षसम्। त्वा। वयम्। इन्द्रऽपीतम्। स्वःऽविदम्। भक्षीमहि। प्रऽजाम्। इषम्॥ ९॥

हे सोम नृचक्षसं नृणां द्रष्टारं स्वर्विदं सर्वज्ञम् इन्द्रपीतम् इन्द्रेण[1] पीतं त्वा त्वां पिबन्तः वयं काश्यपासिताः काश्यपदेवला[2] वा प्रजां पुत्रादिकम् इषम् अन्नं च भक्षीमहि भजेमहि॥ ॥ ३१॥

'परि प्रिया' इति नवर्चं नवमं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'परि प्रिया' इत्यनुक्रान्तम्। उक्तो विनियोगः॥

परि प्रिया दिवः कविर्वयांसि नप्त्योर्हितः। सुवानो याति कविक्रतुः॥ १॥

परि। प्रिया। दिवः। कविः। वयांसि। नप्त्योः। हितः। सुवानः। याति। कविऽक्रतुः॥ १॥

कविः मेधावी कविक्रतुः क्रान्तप्रज्ञः क्रान्तकर्मा वा सोमः नप्त्योः अधिषवणफलकयोः हितः निहितः सुवानः अभिषूयमाणः दिवः द्युलोकस्य परि प्रिया अतिप्रियाणि वयांसि सरणाः। तथा च मन्त्रवर्णः— 'वयांसि[3] इयेना अतिपथः पर्वतानां ककुभः' इति। याति गच्छति॥

प्रप्र क्षयाय पन्यसे जनाय जुष्टो अद्रुहे। वीत्यर्ष चनिष्ठया॥ २॥

प्रऽप्र। क्षयाय। पन्यसे। जनाय। जुष्टः। अद्रुहे। वीती। अर्ष। चनिष्ठया॥ २॥

हे सोम प्रप्र अत्यन्तं क्षयाय तव निवासभूताय अद्रुहे अद्रोग्धे च पन्यसे स्तोत्रे जनाय मनुष्याय वीती वीत्यै भक्षणाय जुष्टः पर्याप्तस्त्वं चनिष्ठया अन्नवत्तमया धारया अर्ष पात्रं प्रति गच्छ॥

स सूनुर्मातरा शुचिर्जातो जाते अरोचयत्। महान्मही ऋतावृधा॥ ३॥

सः। सूनुः। मातरा। शुचिः। जातः। जाते इति। अरोचयत्।
महान्। मही इति। ऋतऽवृधा॥ ३॥

जातः उत्पन्नः शुचिः दीप्तः महान् हविष्ट्वेन सः सोमाख्यः सूनुः पुत्रः मही महत्यौ ऋतावृधा यज्ञस्य वर्धयित्र्यौ जाते विश्वस्य जनयित्र्यौ मातरा आत्मनो मातरौ द्यावा-भूमी अरोचयत् रोचयति दीपयति॥

स सप्त धीतिभिर्हितो नद्यो अजिन्वदद्रुहः। या एकमक्षि वावृधुः॥ ४॥

सः। सप्त। धीतिऽभिः। हितः। नद्यः। अजिन्वत्। अद्रुहः। याः। एकम्। अक्षि। ववृधुः॥ ४॥

---

१. ग-त-भ— 'इन्द्रेण पीतं त्वा' नास्ति। २. त—कश्यप°। ३. ग-भ— 'वयांसि' नास्ति।

याः नद्यः यम् एकं मुख्यं सोमम् अक्षि आश्रीणं अवृधुः वर्धयन्ति सः सोमः धीतिभिः[1] अङ्गुलिभिः। 'दशवा धीतयः' इत्यङ्गुलिनामसु पाठात्। हितः निहितः सन् अद्रुहः द्रोहवर्जिताः सप्त सप्तसंख्याकाः यह्वीः नदीः[2] अजिन्वत् प्रीणयति ॥

ता अभि सन्तमस्तृतं महे युवानमा दधुः। इन्दुमिन्द्र तव व्रते ॥ ५ ॥

ताः। अभि। सन्तम्। अस्तृतम्। महे। युवानम्। आ। दधुः। इन्दुम्। इन्द्र। तव। व्रते ॥५॥

हे इन्द्र तव त्वदीये व्रते कर्मणि ताः अङ्गुल्यः। पूर्वत्र धीतिभिः इत्यङ्गुलीनामुपात्तत्वात् तच्छब्देन परामर्शः। सन्तं विद्यमानम् अस्तृतम् अहिंसितं युवानं नित्यतरुणम् इन्दुं सोमं महे महतेऽभिषवादिलक्षणाय कर्मणे अभि आ दधुः ॥ ॥ ३२ ॥

अभि वह्निरमर्त्यः सप्त पश्यति वावहिः। क्रिविर्देवीरतर्पयत् ॥ ६ ॥

अभि। वह्निः। अमर्त्यः। सप्त। पश्यति। वावहिः। क्रिविः। देवीः। अतर्पयत् ॥ ६ ॥

यः वह्निः यज्ञस्य धुरो वोढा अमर्त्यः मरणरहितः वावहिः देवानां स्तुतेरत्यन्तं वोढा च सोमः सप्त नदीः पश्यति सोऽयं क्रिविः कूपरूपेण[3] पूर्णोऽवस्थितः सन् देवीः नदीः अतर्पयत् तर्पयति ॥

अवा कल्पेषु नः पुमस्तमांसि सोम योध्या। तानि पुनान जङ्घनः ॥ ७ ॥

अव। कल्पेषु। नः। पुमः। तमांसि। सोम। योध्या। तानि। पुनान। जङ्घनः ॥ ७ ॥

हे पुमः पुमन् सोम कल्पेषु कल्पनीयेष्वहःसु नः अस्मान् अव रक्ष। अपि च पुनान हे पवमान सोम त्वं योध्या योधनीयानि तमांसि रक्षांसि यानि तानि जङ्घनः नाशय ॥

नू नव्यसे नवीयसे सूक्ताय साधया पथः। प्रत्नवद्रोचया रुचः ॥ ८ ॥

नु। नव्यसे। नवीयसे। सुऽउक्ताय। साधय। पथः। प्रत्नऽवत्। रोचय। रुचः ॥ ८ ॥

हे सोम नव्यसे नव्याय नूतनाय नवीयसे स्तुत्यायास्माकं सूक्ताय पथः मार्गान् नु क्षिप्रं साधय अभिगमय। अपि च प्रत्नवत् यथापूर्वं रुचः स्वदीप्तीः रोचय प्रकाशय ॥

पवमान महि श्रवो गामश्वं रासि वीरवत्। सना मेधां सना स्वः ॥ ९ ॥

पवमान। महि। श्रवः। गाम्। अश्वम्। रासि। वीरऽवत्।

सन। मेधाम्। सन। स्व१रिति स्वः ॥ ९ ॥

हे पवमान सोम यस्त्वं वीरवत् पुत्रवत् महि महत् श्रवः अन्नं गां च अश्वं च रासि अस्मभ्यं प्रयच्छसि स त्वं मेधां सन अस्मभ्यं प्रयच्छ। अपि च स्वः यदस्माभिरभिलषितं तत् सर्वं सन देहि ॥ ॥ ३३ ॥

'प्र स्वानासः' इति नवर्चं दशमं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'प्र स्वानासः' इत्यनुक्रान्तम्। उक्तो विनियोगः ॥

१. गन्तअ४—धीतयः। २. त१.४.५.६.७-अ४—नदीभिः; त२—नदीव। ३. गी—कूपवत्।

प्र स्वा॒नासो॒ रथा॑इ॒वार्व॑न्तो॒ न श्र॑व॒स्यवः॑ । सोमा॑सो रा॒ये अ॑क्रमुः ॥ १ ॥
प्र । स्वा॒नासः॑ । रथाः॑ऽइव । अर्व॑न्तः । न । श्र॒व॒स्यवः॑ । सोमा॑सः । रा॒ये । अ॒क्र॒मुः॒ ॥ १ ॥

प्र स्वानासः अभिषववेलायामुपरवेषु शब्दं कुर्वन्तः सोमासः सोमाः रथाइव यथा शब्दं कुर्वन्तो रथाः, अर्वन्तो न यथा शब्दं कुर्वन्तोऽश्वाः तथा अवस्यवः शत्रुभ्योऽन्नमिच्छन्तः राये यजमानानां धनाय अक्रमुः आगच्छन् ॥

हि॒न्वा॒नासो॒ रथा॑इव दधन्वि॒रे गभ॑स्त्योः । भरा॑सः का॒रिणा॑मिव ॥ २ ॥
हि॒न्वा॒नासः॑ । रथाः॑ऽइव । द॒ध॒न्वि॒रे । गभ॑स्त्योः । भरा॑सः । का॒रिणा॑म्ऽइव ॥ २ ॥

सोमाः रथाइव यथा रथास्तथा हिन्वानासः हिन्वाना यागदेशं प्रति गच्छन्तः भरासः भराः कारिणामिव यथा भारवाहिनां[1] बाह्वोर्धार्यन्ते तथा गभस्त्योः ऋत्विजां बाह्वोः । 'गभस्ती बाहू' इति बाहुनामसु पाठात् । दधन्विरे धीयन्ते ॥

राजा॑नो॒ न प्रश॑स्तिभिः॒ सोमा॑सो॒ गोभि॑रञ्जते । य॒ज्ञो न स॒प्त धा॒तृभिः॑ ॥ ३ ॥
राजा॑नः । न । प्रश॑स्तिऽभिः । सोमा॑सः । गोभिः॑ । अ॒ञ्ज॒ते॒ । य॒ज्ञः । न । स॒प्त । धा॒तृऽभिः॑ ॥ ३ ॥

सोमासः सोमाः प्रशस्तिभिः प्रशस्ताभिः[2] स्तुतिरूपाभिर्वाग्भिः राजानो न यथा राजानः सप्त धातृभिः सप्त होतृभिः यज्ञो न यथा च यज्ञस्तथा गोभिः गोविकारैः पयोभिः अञ्जते अज्यन्ते । संस्क्रियन्त इत्यर्थः ॥

परि॑ सुवा॒नास॒ इन्द॑वो॒ मदा॑य ब॒र्हणा॑ गि॒रा । सु॒ता अ॑र्षन्ति॒ धार॑या ॥ ४ ॥
परि॑ । सु॒वा॒नासः॑ । इन्द॑वः । मदा॑य । ब॒र्हणा॑ । गि॒रा । सु॒ताः । अ॒र्ष॒न्ति॒ । धार॑या ॥ ४ ॥

सुवानासः सुवाना अभिषूयमाणाः इन्दवः सोमाः बर्हणा महत्या गिरा स्तुतिरूपया वाचा सुताः अभिषुताः सन्तः मदाय मदार्थं धारया परि अर्षन्ति परितो गच्छन्ति ॥

आ॒पा॒नासो॑ वि॒वस्व॑तो॒ जन॑न्त उ॒षसो॒ भग॑म् । सू॒रा अण्वं॒ वि त॑न्वते ॥ ५ ॥
आ॒पा॒नासः॑ । वि॒वस्व॑तः । जन॑न्तः । उ॒षसः॑ । भग॑म् । सू॒राः । अण्व॑म् । वि । त॒न्व॒ते॒ ॥ ५ ॥

विवस्वतः इन्द्रस्य आपानासः आपानभूताः उषसः भगं जनन्तः जनयन्तः सूराः सरन्तः सोमाः अण्वं वि तन्वते अभिषववेलायामुपरवेषु शब्दं कुर्वन्ति ॥　　　　॥ ३४ ॥

अप॒ द्वारा॑ मती॒नां प्र॒त्ना ऋ॑ण्वन्ति का॒रवः॑ । वृष्णो॒ हर॑स आ॒यवः॑ ॥ ६ ॥
अप॑ । द्वारा॑ । म॒ती॒नाम् । प्र॒त्नाः । ऋ॒ण्व॒न्ति॒ । का॒रवः॑ । वृष्णः॑ । हर॑से । आ॒यवः॑ ॥ ६ ॥

मतीनां स्तुतीनां कारवः कर्तार ऋत्विजः प्रत्नाः पुराणाः वृष्णः सेचकस्य सोमस्य[3] हरसे आहरणाय आहर्तारश्च आयवः मनुष्याः द्वारा यज्ञस्य द्वाराणि अप ऋण्वन्ति ॥

स॒मी॒ची॒नास॑ आसते॒ होता॑रः स॒प्तजा॑मयः । प॒दमेक॑स्य॒ पिप्र॑तः ॥ ७ ॥
स॒म्ऽई॒ची॒नासः॑ । आ॒स॒ते॒ । होता॑रः । स॒प्तऽजा॑मयः । प॒दम् । एक॑स्य । पिप्र॑तः ॥ ७ ॥

---

1. ख-भ-मु–भारवाहानां । 2. ग-भ–'प्रशस्ताभिः' नास्ति; घ–शस्ताभिः । 3. ग-घ-ग–'सोमस्य' नास्ति ।

समीचीनासः समीचीनाः आयवः आभिसरन्तः एकस्य सोमस्य पदं स्थानं पिप्रतः पूरयन्तः सप्त होतारः सप्त होत्रकाः आसते यज्ञ उपविशन्ति ॥

नाभा नाभिं न आ ददे चक्षुश्चित्सूर्ये सचा । कवेरपत्यमा दुहे ॥ ८ ॥

नाभा । नाभिम् । नः । आ । ददे । चक्षुः । चित् । सूर्ये । सचा । कवेः । अपत्यम् । आ । दुहे ॥ ८ ॥

नाभिं यज्ञस्य नाभिभूतं सोमं नः अस्माकं नाभा नाभौ अहम् आ ददे । पिबामीत्यर्थः । पीतसोमानामस्माकं चक्षुश्चित् चक्षुरपि सूर्ये सचा संगतं भवति । किंच कवेः क्रान्तकर्मणः सोमस्य अपत्यम्[1] अंशुम् आ दुहे आपूरयामि ॥

अभि प्रिया दिवस्पदमध्वर्युभिर्गुहा हितम् । सूरः पश्यति चक्षसा ॥ ९ ॥

अभि । प्रिया । दिवः । पदम् । अध्वर्युऽभिः । गुहा । हितम् । सूरः । पश्यति । चक्षसा ॥ ९ ॥

सूरः सुवीर्य इन्द्रः चक्षसा चक्षुषा दिवः दीप्तस्यात्मनः[2] प्रिया प्रियं पदम् अध्वर्युभिः गुहा गुहायां हृदये हितं निहितं[3] पीतं सोममपि अभि[4] पश्यति ॥ ॥ ३५ ॥

'उपास्मै' इति नवर्चमेकादशं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'उपास्मै' इत्यनुक्रान्तम् । उक्तः सूक्तविनियोगः । अभिष्टवे घर्मदुघावत्सेऽपनीयमाने[5] 'नमसेदुप' इत्येषा । सूत्रितं च—'नमसेदुप सीदत संजानाना उप सीदन्नभिज्ञु' ( आश्व. श्रौ. ४.७ ) इति ॥

उपास्मै गायता नरः पवमानायेन्दवे । अभि देवाँ इयक्षते ॥ १ ॥

उप । अस्मै । गायत । नरः । पवमानाय । इन्दवे । अभि । देवान् । इयक्षते ॥ १ ॥

हे नरः नेतार ऋत्विजः[6] यज्ञस्य देवान् इन्द्रादीन् अभि इयक्षते आभिमुख्येन यष्टुमिच्छते[7] पवमानाय क्षरते अस्मै अभिषूयमाणाय इन्दवे सोमाय उप गायत उपगानं कुरुत ॥

अभि ते मधुना पयोऽथर्वाणो अशिश्रयुः । देवं देवाय देवयु ॥ २ ॥

अभि । ते । मधुना । पयः । अथर्वाणः । अशिश्रयुः । देवम् । देवाय । देवऽयु ॥ २ ॥

हे सोम ते तव देवं देवनशीलं देवयु देवयुं देवकामं रसं देवाय देवनशीलायेन्द्राय मधुना पयः गव्येन पयसा अथर्वाणः ऋषयः अभि अशिश्रयुः अभ्यश्रीणन् । सम्यक्कुर्वन्नित्यर्थः ॥

स नः पवस्व शं गवे शं जनाय शमर्वते । शं राजन्नोषधीभ्यः ॥ ३ ॥

सः । नः । पवस्व । शम् । गवे । शम् । जनाय । शम् । अर्वते । शम् । राजन् । ओषधीभ्यः ॥ ३ ॥

हे राजन् दीप्यमान सोम सः प्रसिद्धस्त्वं नः अस्माकं गवे शं सुखं पवस्व क्षर । जनाय पुत्रादये च शं पवस्व । अर्वते अश्वाय च शं पवस्व । ओषधीभ्यः च शं पवस्व ॥

१. ग–अपत्यमपत्यभूतं । २. घ-त-७– दीप्तस्य स्वर्गस्यात्मनः । ३. ग-घ-त–'निहितं' नास्ति । ४. त-अ४–'अभि' नास्ति । ५. ग–घर्मदुघावत्से उपनीयमाने; त-मु–घर्मदुघोवत्सो पयनीयमाने; अ१.२.३ घर्मदुघोवत्से पनीयमाने; अ४–घर्मदुघोवत्से पकनीयमाने । ६. घ-त-म–'ऋत्विजः' नास्ति । ७. त-म–°मिच्छति ।

ब॒भ्रवे॒ नु स्वत॑वसेऽरु॒णाय॑ दिवि॒स्पृशे॑ । सोमा॑य गा॒थम॑र्चत ॥ ४ ॥

ब॒भ्रवे॑ । नु । स्वऽत॑वसे । अ॒रु॒णाय॑ । दि॒वि॒ऽस्पृशे॑ । सोमा॑य । गा॒थम् । अ॒र्च॒त ॥ ४ ॥

हे स्तोतारः बभ्रवे बभ्रुवर्णाय स्वतवसे स्वबलाय अरुणाय कदाचिदरुणवर्णाय दिविस्पृशे दिवं स्पृशते सोमाय नु[1] क्षिप्रं[1] गाथं स्तुतिरूपां गाथाम् अर्चत । उच्चारयतेत्यर्थः ॥

हस्त॑च्युतेभि॒रद्रि॑भिः सु॒तं सोमं॑ पुनीतन । मधा॒वा धा॑वता॒ मधु॑ ॥ ५ ॥

हस्त॑ऽच्युतेभिः । अद्रि॑ऽभिः । सु॒तम् । सोम॑म् । पु॒नी॒त॒न॒ । मधौ॑ । आ । धा॒व॒त॒ । मधु॑ ॥ ५ ॥

हे ऋत्विजः हस्तच्युतेभिः हस्तप्रच्युतैः अद्रिभिः अभिषवग्रावभिः सुतम् अभिषुतं सोमं पुनीतन पवित्रे पावयत । अपि च मधौ मदकरे सोमे मधु गव्यं पयः आ धावत प्रक्षिपत ॥ ॥२६॥

नम॒सेदुप॑ सीदत द॒ध्नेद॒भि श्री॑णीतन । इन्दु॒मिन्द्रे॑ दधातन ॥ ६ ॥

नम॑सा । इत् । उप॑ । सी॒द॒त॒ । द॒ध्ना । इत् । अ॒भि । श्री॒णी॒त॒न॒ । इन्दु॑म् । इन्द्रे॑ । द॒धा॒त॒न॒ ॥ ६ ॥

हे ऋत्विजः नमसेत् नमस्कारेणैव उप सीदत सोममुपगच्छत । दध्नेत् दध्नैव अभि श्रीणीतन अभिश्रीणीत च । इन्द्रे इन्दुं सोमं दधातन धत्त च ॥

अ॒मि॒त्र॒हा विच॑र्षणिः॒ पव॑स्व सोम॒ शं गवे॑ । दे॒वेभ्यो॑ अनुकाम॒कृत् ॥ ७ ॥

अ॒मि॒त्र॒ऽहा । विऽच॑र्षणिः । पव॑स्व । सो॒म॒ । शम् । गवे॑ । दे॒वेभ्यः॑ । अ॒नु॒का॒म॒ऽकृत् ॥ ७ ॥

हे सोम अमित्रहा अमित्राणां हन्ता विचर्षणिः विद्रष्टा देवेभ्यः अनुकामकृत् अभीष्टस्य कर्ता त्वं गवे अस्माकं गवे शं सुखं पवस्व क्षर ॥

इन्द्रा॑य सोम॒ पात॑वे॒ मदा॑य॒ परि॑ षिच्यसे । म॒न॒श्चिन्मन॑स॒स्पतिः॑ ॥ ८ ॥

इन्द्रा॑य । सो॒म॒ । पात॑वे । मदा॑य । परि॑ । सि॒च्य॒से॒ । म॒नः॒ऽचित् । मन॑सः । पतिः॑ ॥ ८ ॥

हे सोम मनश्चित् मनसो ज्ञाता मनसस्पतिः ईश्वरस्त्वम् इन्द्राय इन्द्रस्य पातवे पानाय मदाय च परि षिच्यसे परितः पात्रेषु सिच्यसे ॥

पव॑मान सु॒वीर्यं॑ र॒यिं सो॑म रिरीहि नः । इन्द॒विन्द्रे॑ण नो यु॒जा ॥ ९ ॥

पव॑मान । सु॒ऽवीर्य॑म् । र॒यिम् । सो॒म॒ । रि॒री॒हि॒ । नः॒ । इन्दो॒ इति॑ । इन्द्रे॑ण । नः॒ । यु॒जा ॥ ९ ॥

हे इन्दो क्लिद्यमान पवमान सोम त्वं सुवीर्यं शोभनवीर्योपेतं रयिं धनं नः अस्माकं संबन्धिना इन्द्रेण युजा सहायेन नः अस्मभ्यं रिरीहि देहि ॥ ॥२७॥

‘सोमा असृग्रम्’ इति नवर्चं द्वादशं सूक्तम् । ऋष्याद्याः पूर्ववत् । ‘सोमा असृग्रम्’ इत्यनुक्रान्तम् । उक्तो विनियोगः ॥

सोमा॑ असृग्र॒मिन्द॑वः सु॒ता ऋ॒तस्य॒ साद॑ने । इन्द्रा॑य॒ मधु॑मत्तमाः ॥ १ ॥

सोमाः॑ । अ॒सृ॒ग्र॒म् । इन्द॑वः । सु॒ताः । ऋ॒तस्य॑ । सद॑ने । इन्द्रा॑य । मधु॑मत्ऽतमाः ॥ १ ॥

---

१. म-त-भ-‘ नु क्षिप्रं ’ नास्ति ।

सुताः अभिषुताः मधुमत्तमाः अतिशयेन मधुमन्तः[1] इन्दवः सोमाः ऋतस्य यज्ञस्य सादने गृहे[2] इन्द्राय इन्द्रार्थम् असृग्रं सृज्यन्ते ॥

अभि विप्रा॑ अनूषत॒ गावो॑ व॒त्सं न मा॒तरः॑ । इन्द्रं॒ सोम॑स्य पी॒तये॑ ॥ २ ॥

अभि । विप्राः॑ । अ॒नू॒ष॒त॒ । गावः॑ । व॒त्सम् । न । मा॒तरः॑ । इन्द्र॑म् । सोम॑स्य । पी॒तये॑ ॥२॥

विप्राः मेधाविनः सोमस्य पीतये पानाय इन्द्रं मातरः जननिभ्यः गावः वत्सं न यथा वत्सं प्रति शब्दं अभि अनूषत अभिष्टुवन्ति ॥

म॒द॒च्युत्क्षे॑ति॒ साद॑ने॒ सिन्धो॑रू॒र्मा वि॑प॒श्चित् । सोमो॑ गौ॒री अधि॑ श्रि॒तः ॥ ३ ॥

म॒द॒ऽच्युत् । क्षे॒ति॒ । साद॑ने । सिन्धोः॑ । ऊ॒र्मा । वि॒पः॒ऽचित् ।
सोमः॑ । गौ॒री इति॑ । अधि॑ । श्रि॒तः ॥ ३ ॥

मदच्युत् मदकरस्य रसस्य च्यावयिता सोमः सादने[3] । संहितायां दीर्घश्छान्दसः । स्थाने क्षेति निवसति । एतदेव विवृणोति । सिन्धोः नद्याः ऊर्मा ऊर्मौ तरङ्गे । वसतीवरीष्वित्यर्थः । विपश्चित् विद्वान् सोमः गौरी अधि गौर्यामधि । अधीति सप्तम्यर्थानुवादः । माध्यमिकायां वाचि । 'गौरी गान्धर्वी' इति वाङ्नामसु पाठात् । श्रितः निवसति ॥

दि॒वो नाभा॑ विचक्ष॒णोऽव्यो॒ वारे॑ महीयते । सोमो॒ यः सु॒क्रतुः॑ क॒विः ॥ ४ ॥

दि॒वः । नाभा॑ । वि॒ऽच॒क्ष॒णः । अव्यः॑ । वारे॑ । म॒ही॒य॒ते॒ । सोमः॑ । यः । सु॒ऽक्रतुः॑ । क॒विः ॥४॥

यः सुक्रतुः सुप्रज्ञः कविः क्रान्तकर्मा विचक्षणः विद्रष्टा सः सोमः दिवः अन्तरिक्षस्य नाभा नाभौ नाभिभूते अव्यः अवेः वारे वाले महीयते पूज्यते । पूयमानः स्तूयत इत्यर्थः ॥

यः सोमः॑ क॒लशे॒ष्वाँ अ॒न्तः प॒वित्र॒ आहि॑तः । तमिन्दुः॒ परि॑ षस्वजे ॥ ५ ॥

यः । सोमः॑ । क॒लशे॑षु । आ । अ॒न्तः । प॒वित्रे॑ । आऽहि॑तः । तम् । इन्दुः॑ । परि॑ । स॒स्व॒जे॒ ॥५॥

यः सोमः कलशेषु कुम्भेषु आ आस्ते यश्च पवित्रे पवित्रस्य अन्तः मध्ये आहितः निहितः तं स्वांशभूतं सोमम् इन्दुः सोमो देवः परि षस्वजे प्रविशति ॥　　॥ ३८ ॥

प्र वाच॒मिन्दु॑रिष्यति समु॒द्रस्याधि॑ वि॒ष्टपि॑ । जिन्व॒न्कोशं॑ मधु॒श्चुत॑म् ॥ ६ ॥

प्र । वाच॑म् । इन्दुः॑ । इ॒ष्य॒ति॒ । स॒मु॒द्रस्य॑ । अधि॑ । वि॒ष्टपि॑ । जिन्व॑न् । कोश॑म् । म॒धु॒ऽश्चुत॑म् ॥६॥

इन्दुः सोमः मधुश्चुतं मधुनःश्चावकं कोशं मेघम् । 'असुरः कोशः' इति मेघनामसु पाठात् । जिन्वन् प्रीणयन् समुद्रस्य अन्तरिक्षस्य अधि विष्टपि विष्टपे स्थाने वाचं प्र इष्यति प्रेरयति । पवित्रे पूयमानः शब्दं करोतीत्यर्थः ॥

नित्य॑स्तोत्रो॒ वन॒स्पति॑र्धी॒नाम॒न्तः स॑ब॒र्दुघः॑ । हि॒न्वा॒नो मानु॑षा यु॒गा ॥ ७ ॥

नित्य॑ऽस्तोत्रः । वन॒स्पतिः॑ । धी॒नाम् । अ॒न्तः । स॒ब॒ऽदुघः॑ । हि॒न्वा॒नः । मानु॑षा । यु॒गा ॥७॥

१. ग—मधुराः । २. ग-त-भ४—सदने; भ१ २.३—'गृहे' नास्ति । ३. ग-त-भ—सदने, घ—सदन । ४. त-भ—ईडे ।

नित्यस्तोत्रः संततस्तोत्रः सबर्दुघः अमृतस्य दोग्धा वनस्पतिः वनानां पालयिता सोमः मानुषा मानुषाणि युगा युगानि अहीनैकाहात्मकानि हिन्वानः प्रीणयन् धीनां कर्मणाम् अन्तः मध्ये निवसतीत्यर्थः ॥

**अभि प्रिया दिवस्पदा सोमो हिन्वानो अर्षति । विप्रस्य धारया कविः ॥ ८ ॥**

अभि । प्रिया । दिवः । पदा । सोमः । हिन्वानः । अर्षति । विप्रस्य । धारया । कविः ॥ ८ ॥

कविः क्रान्तकर्मा सोमः दिवः[1] अन्तरिक्षात् हिन्वानः प्रेर्यमाणः विप्रस्य मेधाविनः स्वस्य धारया प्रिया प्रियाणि पदा पदानि स्थानानि अभि अर्षति अभिगच्छति ॥

**आ पवमान धारय रयिं सहस्रवर्चसम् । अस्मे इन्दो स्वाभुवम् ॥ ९ ॥**

आ । पवमान । धारय । रयिम् । सहस्रऽवर्चसम् । अस्मे इति । इन्दो इति । सुऽआभुवम् ॥ ९ ॥

हे पवमान इन्दो सोम त्वं सहस्रवर्चसं बहुदीप्तिं स्वाभुवं शोभनभवनं रयिं धनम् अस्मे अस्मासु धारय[2] । प्रक्षिपेत्यर्थः ॥ ॥ ३९ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपाल-
साम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थ-
प्रकाशे ऋक्संहिताभाष्ये षष्ठाष्टके सप्तमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
षष्ठस्य सप्तमोऽध्यायः संग्रहस्संप्रदर्शितः ।
अथाष्टमः सुमतिना संक्षेपेण[3] प्रवर्त्यते ॥

तत्र 'सोमः पुनानः' इति नवर्चं त्रयोदशं सूक्तम् । असितो देवलो वर्षिः । सोमो देवता । 'पवमानगणः सोऽन्त्यो विज्ञेयः काश्यपादृचे' इति विधानादनुक्तेऽपि गायत्री छन्दः ' ॥ 'सोमः' इत्यनुक्रान्तम् । गतो विनियोगः ॥

**सोमः पुनानो अर्षति सहस्रधारो अत्यविः । वायोरिन्द्रस्य निष्कृतम् ॥ १ ॥**

सोमः । पुनानः । अर्षति । सहस्रऽधारः । अतिऽअविः । वायोः । इन्द्रस्य । निःऽकृतम् ॥ १ ॥

अयं पुनानः पावकः सोमः अर्षति गच्छति । कीदृशोऽयं पवमानः । सहस्रधारः अपरिमितधारः अत्यविः । अत्राविशब्देन तल्लोमान्युच्यन्ते । अविलोमनिर्मितं दशापवित्रमित्यर्थः । तदतिक्रम्य गच्छतीत्यत्यविः । किमर्थम् । वायोरिन्द्रस्य च पानायेति शेषः । किं प्रति । निष्कृतम् । निरित्येष सतित्येतस्मिन्नर्थे । संस्कृतं पात्रं प्रति ॥

---

१. ख-ग-घ—देवः । २. ख—आधारय । ३. ग—संग्रहेण ।

पवमानमवस्यवो विप्रमभि प्र गायत । सुष्वाणं देववीतये ॥ २ ॥

पवमानम् । अवस्यवः । विप्रम् । अभि । प्र । गायत । सुस्वानम् । देवऽवीतये ॥ २ ॥

हे अवस्यवः रक्षणकामा उद्गात्रादयः यूयं पवमानं सोमं विप्रं विशेषेण देवानां प्रीणयितारं विप्रवत्स्तुत्यं वा । अथवा विप्र इति मेधाविनाम । मेधाविनम् । देववीतये देवपानाय सुष्वाणं सूयमानम् अभि प्र गायत आभिमुख्येन प्रकर्षेण स्तुत ॥

पवन्ते वाजसातये सोमाः सहस्रपाजसः । गृणाना देववीतये ॥ ३ ॥

पवन्ते । वाजऽसातये । सोमाः । सहस्रऽपाजसः । गृणानाः । देवऽवीतये ॥ ३ ॥

पवन्ते क्षरन्ति सोमाः । किमर्थम् । वाजसातये अन्नस्य लाभाय । कीदृशाः । सहस्रपाजसः बहुबलाः[1] । दातृणां बलप्रदा इत्यर्थः । गृणानाः । कर्मणि कर्तृप्रत्ययः । स्तूयमानाः । पुनः किमर्थम् । देववीतये । देवानां वीतिर्गतिः प्राप्तिर्भक्षणं वा यस्मिन् स देववीतिर्यज्ञः[2] । तदर्थम् । यज्ञसिद्धिः साक्षात् प्रयोजनं तद्द्वारा अन्नलाभ इत्यर्थः ॥

उत नो वाजसातये पवस्व बृहतीरिषः । द्युमदिन्दो सुवीर्यम् ॥ ४ ॥

उत । नः । वाजऽसातये । पवस्व । बृहतीः । इषः । द्युऽमत् । इन्दो इति । सुऽवीर्यम् ॥४॥

उत अपि च नः अस्माकं वाजसातये अन्नलाभाय हे इन्दो सोम बृहतीरिषः महतीः रसधाराः द्युमत् दीप्तिमत् सुवीर्यं शोभनसामर्थ्यं च पवस्व क्षर । शोभनसामर्थ्योपेता धाराः पवस्वेत्यर्थः । अथवा । वाजसातये संग्रामाय बृहतीरिषो द्युमत् सुवीर्यं संपादयितुं पवस्वेति योज्यम् ॥

ते नः सहस्रिणं रयिं पवन्तामा सुवीर्यम् । सुवाना देवास इन्दवः ॥ ५ ॥

ते । नः । सहस्रिणम् । रयिम् । पवन्ताम् । आ । सुऽवीर्यम् । सुवानाः । देवासः । इन्दवः ॥५॥

ते इन्दवः सोमाः नः अस्माकं सहस्रिणं सहस्रसंख्योपेतं रयिं धनं सुवीर्यं च[3] आ पवन्ताम् । कीदृशास्ते । सुवानाः सूयमानाः देवासः द्योतमानादिगुणयुक्ताः[4] ॥ ॥ १ ॥

अत्या हियाना न हेतृभिरसृग्रं वाजसातये । वि वारमव्यमाशवः ॥ ६ ॥

अत्याः । हियानाः । न । हेतृऽभिः । असृग्रम् । वाजऽसातये । वि । वारम् । अव्यम् । आशवः ॥६॥

वाजसातये संग्रामाय हियानाः प्रेर्यमाणाः अत्याः न अश्वा इव ते यथा प्रेरकैः प्रेर्यमाणाः संग्रामाय शीघ्रं धावन्ति तद्वत् हेतृभिः प्रेरकैः प्रेर्यमाणाः आशवः शीघ्रगामिनः सोमाः वाजसातये[5] अन्नलाभाय[5] अव्यं वारं दशापवित्रं वि असृग्रं व्यतिसृज्यन्ते[6] ॥

वाश्रा अर्षन्तीन्दवोऽभि वत्सं न धेनवः । दधन्विरे गभस्त्योः ॥ ७ ॥

वाश्राः । अर्षन्ति । इन्दवः । अभि । वत्सम् । न । धेनवः । दधन्विरे । गभस्त्योः ॥ ७ ॥

१. ख-म४–बहुलाः । २. ख-म४–देवतातिर्यज्ञः । ३. ग-ख-म४–वा । ४. ग-ख-म१.२.४–°गुणकाः; म५–°गुणकराः । ५. म–' वाजसातये अन्नलाभाय ' नास्ति । ६. ख१.२.६–व्यतिसृज्यंते किं प्रति अव्यं अविमयं वारं वालं दशापवित्रं प्रतीत्यर्थः; ख२.५-म४–पुस्तकेषु ' व्यतिसृज्यंते ' इत्यस्यानन्तरं क्रियाविशेषणाभावो विद्यते; ख७–व्यतिसृज्यंते किं प्रति अव्यं वारं वालं दशापवित्रं प्रतीत्यर्थः ।

वाश्राः शब्दयन्तः इन्दवः सोमाः अभि अर्षन्ति अभिगच्छन्ति पात्रं प्रति वाश्राः शब्दकारिण्यः धेनवः वत्सं न । ता यथा शब्दयन्त्यः वत्सं प्रत्यागच्छन्ति तद्वत् । त एव गभस्त्योः बाह्वोः दधन्विरे ध्रियन्ते च ॥

जुष्ट इन्द्राय मत्सरः पवमान कनिक्रदत् । विश्वा अप द्विषो जहि ॥ ८ ॥

जुष्टः । इन्द्राय । मत्सरः । पवमान । कनिक्रदत् । विश्वाः । अप । द्विषः । जहि ॥ ८ ॥

इन्द्राय जुष्टः प्रियः[1] पर्याप्तः मत्सरः सोमो भवतीति शेषः । 'मत्सरः सोमो मन्दतेस्तृप्तिकर्मणः' ( निरु. २.५ ) इति निरुक्तम् । हे पवमान त्वं कनिक्रदत् शब्दयन् विश्वाः द्विषः सर्वानस्माकं द्वेष्टॄन् अप जहि ॥

अपघ्नन्तो अराव्णः पवमानाः स्वर्दृशः । योनावृतस्य सीदत ॥ ९ ॥

अपऽघ्नन्तः । अराव्णः । पवमानाः । स्वःऽदृशः । योनौ । ऋतस्य । सीदत ॥ ९ ॥

हे पवमानाः अराव्णः अदातॄनयजमानान् अपघ्नन्तः हिंसन्तः स्वर्दृशः सर्वस्य[2] द्रष्टारश्च यूयम् ऋतस्य योनौ यज्ञस्य स्थाने सीदत । अथवा । सोमपानार्थमुपकल्पिता देवा ऋतस्य योनौ सीदतेति योज्यम् ॥ ॥ २ ॥

'परि प्र' इत्यष्टर्चं चतुर्दशं सूक्तम् । ऋष्यादि पूर्ववत् । 'परि प्रासी' इत्यनुक्रान्तम् । गतो विनियोगः ॥

परि प्रासिष्यदत्कविः सिन्धोरूर्मावधि श्रितः । कारं बिभ्रत्पुरुस्पृहम् ॥ १ ॥

परि । प्र । असिस्यदत् । कविः । सिन्धोः । ऊर्मौ । अधि । श्रितः ।
कारम् । बिभ्रत् । पुरुऽस्पृहम् ॥ १ ॥

परि प्रासिष्यदत् परिप्रस्यन्दते कविः मेधावी सोमः[3] सिन्धोः ऊर्मौ तरङ्गे[4] वसतीवरीरूपे उदकरसे[4] अधि श्रितः आश्रितः । पुरुस्पृहं बहुभिः स्पृहणीयं कारं शब्दं बिभ्रत् धारयन् परिस्यन्दत इति संबन्धः ॥

गिरा यदी सबन्धवः पञ्च व्राता अपस्यवः । परिष्कृण्वन्ति धर्णसिम् ॥ २ ॥

गिरा । यदि । सऽबन्धवः । पञ्च । व्राताः । अपस्यवः । परिऽकृण्वन्ति । धर्णसिम् ॥ २ ॥

सबन्धवः समानबन्धनाः पञ्च व्राताः पञ्च जना मनुष्या[5] यजमानाः[5] अपस्यवः कर्मेच्छवः यदा ईमेनं धर्णसिं धारकं सोमं गिरा[6] स्तुत्या[6] परिष्कृण्वन्ति अलंकुर्वन्ति । अस्योत्तरत्रान्वयः ॥

आदस्य शुष्मिणो रसे विश्वे देवा अमत्सत । यदी गोभिर्वसायते ॥ ३ ॥

आत् । अस्य । शुष्मिणः । रसे । विश्वे । देवाः । अमत्सत । यदि । गोभिः । वसायते ॥ ३ ॥

---

१. ग-त-भ-मु-'प्रियः' नास्ति । २. भ१.३-सर्वे । ३. ग-त-भ-'सोमः' नास्ति । ४. ग-त-भ-'तरङ्गे...°रसे' नास्ति । ५. ग-त-भ-'मनुष्या यजमानाः' नास्ति । ६. ग-त-भ-'गिरा स्तुत्या' नास्ति ।

आत् परिष्करणानन्तरमेव शुष्मिणः बलवतः अस्य सोमस्य रसे विश्वे देवाः अमत्सत अमाद्यन्[1] । यदि यदा गोभिः गोविकारैः । विकारे प्रकृतिशब्दः । क्षीरादिभिः वसायते आच्छाद्यते ॥

निरिणानो वि धावति जहच्छर्याणि तान्वा । अत्रा सं जिघ्रते युजा ॥ ४ ॥

निऽरिणानः । वि । धावति । जहत् । शर्याणि । तान्वा । अत्र । सम् । जिघ्रते । युजा ॥ ४ ॥

अयं सोमः निरिणानः दशापवित्रादधो गच्छन् वि धावति विविधं धावति - - - यदा तान्वा । तनु दशापवित्रवस्त्रम् । तत्संबन्धीनि शर्याणि ह्वराणि जहत्[2] अधः सरति । अत्र अस्मिन् यज्ञे युजा सखिभूतेनेन्द्रेण सह सं जिघ्रते संगतो भवति । पवित्रसुषिरादिनिर्गत्य दशापवित्रादधः सन्[3] पात्रं विविधं गच्छन् होमद्वारेणेन्द्रेण संगतो भवतीत्यर्थः ॥

नप्तीभिर्यो विवस्वतः शुभ्रो न मामृजे युवा । गाः कृण्वानो न निर्णिजम् ॥ ५ ॥

नप्तीभिः । यः । विवस्वतः । शुभ्रः । न । ममृजे । युवा । गाः । कृण्वानः । न । निःऽनिजम् ॥ ५ ॥

यः सोमः विवस्वतः परिचरणवतो यजमानस्य नप्तीभिः पौत्रस्थानीयाभिः । तस्य हस्तः पुत्रोऽङ्गुलयः पौत्रस्थानीया इत्यभिप्रायः । मामृजे[4] मृज्यते शुभ्रो न दीप्तोऽश्वः युवा इव । यथाप्रवृद्धोऽश्वो[5] मृज्यते स्वपरिचारकैस्तद्वत् स एव युवा मिश्रणशीलः सोमः निर्णिजम् । 'निर्णिक्' इति रूपनाम । स्वकीयं रूपं गाः न[6] कृण्वानः गोविकारांश्च कुर्वाणो भवतीति शेषः ॥ ॥ ३ ॥

अति श्रिती तिरश्चता गव्या जिगात्यण्व्या । वग्नुमियर्ति यं विदे ॥ ६ ॥

अति । श्रिती । तिरश्चता । गव्या । जिगाति । अण्व्या । वग्नुम् । इयर्ति । यम् । विदे ॥ ६ ॥

अण्व्या अङ्गुल्याभिपूयमानः सोमः गव्या गव्यानि श्रिती श्रितं श्रयणार्थं तिरश्चता तिरश्चीनम् अति जिगाति । अंशुमतिक्रम्य गच्छति । तथाङ्गुल्याभिपूयमानः वग्नुं शब्दम् इयर्ति प्रेरयति[7] ॥

अभि क्षिपः समग्मत मर्जयन्तीरिषस्पतिम् । पृष्ठा गृभ्णत वाजिनः ॥ ७ ॥

अभि । क्षिपः । सम् । अग्मत । मर्जयन्तीः । इषः । पतिम् । पृष्ठा । गृभ्णत । वाजिनः ॥ ७ ॥

क्षिपः अङ्गुलयः मर्जयन्तीः[8] अभिमृजन्त्यः इषस्पतिम् अन्नानां स्वामिनं सोमम् अभि समग्मत अभिसंगच्छन्ते । संगत्य च वाजिनः बलवतः सोमस्य पृष्ठा पृष्ठानि गृभ्णत गृह्णन्त्य-भिषवाङ्गुलयः ॥

परि दिव्यानि मर्मृशद्विश्वानि सोम पार्थिवा । वसूनि याह्यस्मयुः ॥ ८ ॥

परि । दिव्यानि । मर्मृशत् । विश्वानि । सोम । पार्थिवा । वसूनि । याहि । अस्मऽयुः ॥ ८ ॥

---

१. ग-माद्यंति; भ१.२.३-अमाद्यं । २. त-भ-'जहत्' नास्ति । ३. ग-भ१.२.३-नु-सन्; त-भ४-सन् । ४. ग-ममृजे । ५. भ-यथातिप्रयत्नात् युवाश्वो । ६. ग-त-भ-'न' नास्ति । ७. ग-प्रेरयति यं शब्दं जानाति; घ-प्रेरयति विदे जानते गमनाय । ८. भ१-४-पुस्तकयोः 'मर्जयन्तीः' इत्यस्यानन्तरं क्रियाविशेषणको विद्यते ।

हे सोम दिव्यानि पार्थिवानि च विश्वानि[1] सर्वाणि वसूनि धनानि[1] परि सर्वतः परिगृह्णन् परिगृह्णन् अस्मयुः अस्मान् कामयमानः याहि आगच्छ । एवमभिषुण्वन्[2] सर्वे[2] संबोध्य ब्रूते ॥　　॥ ४ ॥

'एष धिया' इत्यष्टर्चं पञ्चदशं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'एष धिया' इत्यनुक्रान्तम् । गतो विनियोगः ॥

एष धिया यात्यण्व्या शूरो रथेभिराशुभिः । गच्छन्निन्द्रस्य निष्कृतम् ॥ १ ॥

एषः । धिया । याति । अण्व्या । शूरः । रथेभिः । आशुऽभिः ।
गच्छन् । इन्द्रस्य । निःऽकृतम् ॥ १ ॥

एषः सोमः शूरः विक्रान्तः अण्व्या अङ्गुल्याभिषुतः धिया कर्मणा याति गच्छति । कं देशं प्रति । उच्यते । इन्द्रस्य निष्कृतं स्थानं दिवं प्रति रथेभिः रथैः आशुभिः शीघ्रगामिभिः गच्छन् इन्द्रेण रथेऽवस्थाप्य स्वस्थानं नयनाय । अङ्गुल्याभिषूयमाणः सन् होमद्वाराग्निं निष्पीडन-द्वारा[3] पात्रं वा गच्छतीत्यर्थः[3] ॥

एष पुरू धियायते बृहते देवतातये । यत्रामृतास आसते ॥ २ ॥

एषः । पुरु । धियाऽयते । बृहते । देवऽतातये । यत्र । अमृतासः । आसते ॥ २ ॥

एषः सोमः पुरु बहुलं धियायते धियं कर्मेच्छति । धीशब्दात्क्यचि यकारोपजनः । यद्वा । द्वितीयार्थे तृतीया छान्दसत्वादलुक् । कस्मै । बृहते महते देवतातये यज्ञाय । यत्र यस्मिन् यज्ञे अमृतासः अमृता देवाः आसते वसन्ति तदर्थम् ॥

एष हितो वि नीयतेऽन्तः शुभ्रावता पथा । यदी तुञ्जन्ति भूर्णयः ॥ ३ ॥

एषः । हितः । वि । नीयते । अन्तरिति । शुभ्रऽवता । पथा । यदि । तुञ्जन्ति । भूर्णयः ॥ ३ ॥

एषः सोमः हितः निहितः हविर्धाने वि नीयते तस्मात् स्थानादाहवनीयं प्रति । अन्तः तयोर्मध्यदेशे शुभ्रावता शोभावता पथा मार्गेण यदि यदा तुञ्जन्ति प्रयच्छन्ति देवेभ्यः भूर्णयः भरणशीला अध्वर्य्वादयः । तदा वि नीयत इति समन्वयः ॥

एष शृङ्गाणि दोधुवच्छिशीते यूथ्यो३ वृषा । नृम्णा दधान ओजसा ॥ ४ ॥

एषः । शृङ्गाणि । दोधुवत् । शिशीते । यूथ्यः । वृषा । नृम्णा । दधानः । ओजसा ॥ ४ ॥

एषः सोमः शृङ्गाणि शृङ्गवदुन्नतानंशूनभिषवकाले दोधुवत् धूनोति[4] । यूथ्यः यूथार्हो यूथपतिः वृषा वृषभो यथा शिशीते तीक्ष्णे शृङ्गे धूनोति[5] तद्वत् । कीदृश एषः । ओजसा बलेन नृम्णा नृम्णानि धनानि दधानः अस्मदर्थं धारयन् ॥

१. ग-त३.४.५-म४—वसूनि; त७—वसूनि धनानि विश्वानि सर्वाणि; म१.२.३—विश्वानि वसूनि । २. ग—एवमभिषवानंतरं; म१.३—एवमभिषुण्वन् । ३. ग—निपातनद्वारा च तथैवागच्छतीत्यर्थः; त—निष्पीडनद्वारा पात्रे वा गच्छतीत्यर्थः; म१.३—वा पात्रं गच्छतीत्यर्थः; म४—निष्पीडनद्वारा पात्रं गच्छतीत्यर्थः । ४. च-त१.६.७-म१.३—धुनोति । ५. घ-त७—धुनोति; त१.२.३.६-म१.४—धूनोति ।

एष रुक्मिभिरीयते वाजी शुभ्रेभिरंशुभिः । पतिः सिन्धूनां भवन् ॥ ५ ॥

एषः । रुक्मिऽभिः । ईयते । वाजी । शुभ्रेभिः । अंशुऽभिः । पतिः । सिन्धूनाम् । भवन् ॥ ५ ॥

एषः सोमः रुक्मिभिः अध्वर्य्वादिभिः सह ईयते गच्छति । कीदृशः एषः । वाजी वेजनवान्[1] शुभ्रेभिः शुभ्रैर्दीप्तैः अंशुभिः विशिष्टः । अथवा रुक्मिभिरित्येतदप्यंशुविशेषणम् । सिन्धूनां स्यन्दमानानां रसानां पतिः भवन् च[1] ईयत इति ॥

एष वसूनि पिब्दना परुषा ययिवाँ अति । अव शादेषु गच्छति ॥ ६ ॥

एषः । वसूनि । पिब्दना । परुषा । ययिऽवान् । अति । अव । शादेषु । गच्छति ॥ ६ ॥

एषः सोमः वसूनि आच्छादकानि पिब्दना पिब्दनानि[2] पीडितानि रक्षांसि परुषा पर्वणा अति अतिक्रम्य ययिवान् गच्छन् शादेषु शातनीयेषु रक्षःसु अव गच्छति ॥

एतं मृजन्ति मर्ज्यमुप द्रोणेष्वायवः । प्रचक्राणं महीरिषः ॥ ७ ॥

एतम् । मृजन्ति । मर्ज्यम् । उप । द्रोणेषु । आयवः । प्रऽचक्राणम् । महीः । इषः ॥ ७ ॥

आयवः मनुष्या ऋत्विजः एतं सोमं मर्ज्यं मार्जनीयम् उप मृजन्ति । निष्पीडयन्तीत्यर्थः । कुत्र । द्रोणेषु द्रोणकलशेषु । कीदृशम् । महीः इषः महान्त्यन्नानि प्रचक्राणं कुर्वाणम् । प्रभूतरसस्राविणमित्यर्थः ॥

प्रातःसवनेऽग्निष्टोमे अत्यग्निष्टोमे उक्थ्ये वा अग्निरूपकरणे मृज्यमाने सोमे ' एतमु त्यम् ' इत्येषा । सूत्रितं च- ' एतमु त्यं दश क्षिपो मृज्यमानः सुहस्त्या ' ( आश्व. श्रौ. ५ . १२) इति ॥

एतमु त्यं दश क्षिपो मृजन्ति सप्त धीतयः । स्वायुधं मदिन्तमम् ॥ ८ ॥

एतम् । ऊँ इति । त्यम् । दश । क्षिपः । मृजन्ति । सप्त । धीतयः ।
सुऽआयुधम् । मदिन्ऽतमम् ॥ ८ ॥

त्यं तम् एतमु एतमेव सोमं दश क्षिपः दशाङ्गुलयः मृजन्ति परिचरन्ति । सप्त धीतयः सप्त ऋत्विजश्च । ऋत्विजोऽङ्गुलिभिर्मृजन्तीत्यर्थः । कीदृशमेतम्[4] । स्वायुधं शोभनायुधं मदिन्तमं मादयितृतमम् । रक्षोहननसामर्थ्यप्रदर्शनाय स्वायुधत्ववचनम् ॥ ॥ ५ ॥

' प्र ते सोतारः ' इत्यष्टर्चं षोडशं सूक्तम् । अत्याद्याः पूर्ववत् । ' प्र ते ' इत्यनुक्रान्तम् । गतो विनियोगः ॥

प्र ते सोतार ओण्यो रसं मदाय घृष्वये । सर्गो न तक्त्येतशः ॥ १ ॥

प्र । ते । सोतारः । ओण्योः । रसम् । मदाय । घृष्वये । सर्गः । न । तक्ति । एतशः ॥ १ ॥

हे सोम ते तव रसं सोतारः सोमाभिषवकर्तारः ओण्योः रसम् । लुप्तोपममेतत् । द्यावापृथिव्योः रसमुदकमिव । अथवौण्योर्द्यावापृथिव्योर्मध्ये तयोः संबन्धिनं वा रसम् । प्र सावयन्तीति

1. ग—वाजनवान् ; च—वेगवान । 2. ग—अर्थ; घ—वे । 3. ग—१.२.३.४.५-म२.३—' पिब्दनानि ' नास्ति । 4. ग-ख-म४ -कीदृशमेनं ।

शेषः । किमर्थम् । घृष्वये शत्रुघर्षणशीलाय[1] मदाय इन्द्रस्य मदाय । अभिषवकाले सोमः सर्गः सृष्टः एतशः न अश्व इव तक्ति गच्छति पात्रं प्रति ॥

**क्रत्वा दक्षस्य रथ्यमपो वसानमन्धसा । गोषामण्वेषु सश्चिम ॥ २ ॥**

क्रत्वा । दक्षस्य । रथ्यम् । अपः । वसानम् । अन्धसा । गोऽसाम् । अण्वेषु । सश्चिम ॥२॥

वयमभिषोतारः दक्षस्य बलस्य रथ्यं नेतारम् अपः उदकानि रसान् वसानम् आच्छादयन्तम् अन्धसा अन्नभागेन सहितं गोषां गवां दातारमेवंगुणलक्षणं[2] सोमं क्रत्वा कर्मणा अण्वेषु अङ्गुलीषु सश्चिम संयोजयामः[3] ॥

**अनप्तमप्सु दुष्टरं सोमं पवित्र आ सृज । पुनीहीन्द्राय पातवे ॥ ३ ॥**

अनप्तम् । अप्ऽसु । दुस्तरम् । सोमम् । पवित्रे । आ । सृज । पुनीहि । इन्द्राय । पातवे ॥३॥

अनप्तं शत्रुभिरनाप्तम् अप्सु[4] आन्तरिक्ष्यासु । वर्तमानमिति शेषः । दुष्टरम् अन्यैरनभिभाव्यम् । न हि सोमं कश्चिदप्यतितरति । ईदृशं सोमं पवित्रे दशापवित्रे आ सृज प्रक्षिप हे अध्वर्यो । तथोच्यते[5] । इन्द्राय इन्द्रस्य पातवे पातुं पुनीहि ॥

**प्र पुनानस्य चेतसा सोमः पवित्रे अर्षति । क्रत्वा सधस्थमासदत् ॥ ४ ॥**

प्र । पुनानस्य । चेतसा । सोमः । पवित्रे । अर्षति । क्रत्वा । सधऽस्थम् । आ । असदत् ॥४॥

चेतसा स्तुत्या पुनानस्य पूयमानस्याभिभूतः सोमः पवित्रे दशापवित्रे प्र अर्षति गच्छति[6] । अथ पश्चात् क्रत्वा कर्मणा प्रज्ञानेन वा सधस्थं सहस्थानं द्रोणकलशं[7] आसदत् आसीदति ॥

**प्र त्वा नमोभिरिन्दव इन्द्र सोमा असृक्षत । महे भराय कारिणः ॥ ५ ॥**

प्र । त्वा । नमःऽभिः । इन्दवः । इन्द्र । सोमाः । असृक्षत । महे । भराय । कारिणः ॥ ५ ॥

हे इन्द्र त्वा त्वां नमोभिः नमस्कारोपलक्षितैः स्तोत्रैरथवान्नैः सह इन्दवः सोमाः प्र असृक्षत[8] प्राप्नुवन्ति । किमर्थम् । महे महते भराय संग्रामाय । कीदृशाः । कारिणः मदकरणशीलाः ॥

**पुनानो रूपे अव्यये विश्वा अर्षन्नभि श्रियः । शूरो न गोषु तिष्ठति ॥ ६ ॥**

पुनानः । रूपे । अव्यये । विश्वाः । अर्षन् । अभि । श्रियः । शूरः । न । गोषु । तिष्ठति ॥६॥

अव्यये अविमये रूपे रूप्यमाणे पवे पुनानः पूयमानः विश्वाः सर्वाः श्रियः सोमाः अभि अर्षन् अभिगच्छन् गोषु निमित्तासु शूरो न शूर इव स यथा संग्रामे तिष्ठति तद्वत्सो तिष्ठति पात्रे ॥

१. क–घर्षणशीलाय; भ–शत्रूणां घर्षणशीलाय । २. ग–दातारमेव*। ३. त–संयोजमानः । ४. त-भ–अप्सु अप्सु । ५. ध–तदेवोच्यते; त-भ४–तथोच्यते । ६. भ१.२–प्रगच्छति । ७. ग–द्रोणकलशं । ८. ध–असृक्षत; त-भ–प्रासृजन् ।

**दिवो न सानुं पिप्युषी धारा सुतस्यं वेधसः । वृथा पवित्रे अर्षति ॥ ७ ॥**

दिवः । न । सानुं । पिप्युषी । धारा । सुतस्यं । वेधसः । वृथा । पवित्रे । अर्षति ॥ ७ ॥

दिवो न द्युलोकादन्तरिक्षादिव सानु समुच्छ्रितमुदकं यथाधो निपतति तद्वत् वेधसः विधातुर्यज्ञस्य कर्तुः सुतस्य अभिषुतस्य सोमस्य पिप्युषी आप्याययन्ती धारा वृथा अनायासेनैव पवित्रे दशापवित्रे अर्षति गच्छति ॥

**त्वं सोम विपश्चितं तना पुनान आयुषुं । अव्यो वारं वि धावसि ॥ ८ ॥**

त्वम् । सोम । विपःऽचितम् । तना । पुनानः । आयुषुं । अव्यः । वारम् । वि । धावसि ॥ ८ ॥

हे सोम त्वं विपश्चितं[1] स्तोतारम् आयुषु मनुष्येषु[2] मध्ये रक्षसि । अथवा । तृतीयार्थे द्वितीया । विपश्चिताध्वर्युणा । तना धनेन पुनानः पूयमानः । अथवा । विपश्चितमिन्द्रं प्रीणयितुं तना पुनानः सन् । अव्यो वारम् अवेर्वालं वि धावसि विविधं गच्छसि ॥ ॥ ७ ॥

'प्र निम्नेनेव' इत्यष्टर्चं सप्तदशं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'प्र निम्नेनेव' इत्यनुक्रान्तम् । गतो विनियोगः ॥

**प्र निम्नेनैव सिन्धवो घ्नन्तो वृत्राणि भूर्णयः । सोमा असृग्रमाशवः ॥ १ ॥**

प्र । निम्नेनऽइव । सिन्धवः । घ्नन्तः । वृत्राणि । भूर्णयः । सोमाः । असृग्रम् । आशवः ॥ १ ॥

निम्नेन प्रवणेन देशेन सिन्धवः नद्यः इव तथा वृत्राणि शत्रून् घ्नन्तः भूर्णयः क्षिप्रगमनाः आशवः व्याप्ताः सोमाः प्र असृग्रं प्रगच्छन्ति द्रोणकलशं प्रति ॥

**अभि सुवानास इन्दवो वृष्टयः पृथिवीमिव । इन्द्रं सोमासो अक्षरन् ॥ २ ॥**

अभि । सुवानासः । इन्दवः । वृष्टयः । पृथिवीम्ऽइव । इन्द्रम् । सोमासः । अक्षरन् ॥ २ ॥

सुवानासः सूयमानाः इन्दवः द्रवरूपाः सोमासः सोमाः इन्द्रं प्रीणयितुम् अभि अक्षरन् । किमिव । वृष्टयः पृथिवीमिव ॥

**अत्यूर्मिर्मत्सरो मदः सोमः पवित्रे अर्षति । विघ्नन्रक्षांसि देवयुः ॥ ३ ॥**

अतिऽऊर्मिः । मत्सरः । मदः । सोमः । पवित्रे । अर्षति । विऽघ्नन् । रक्षांसि । देवऽयुः ॥ ३ ॥

अत्यूर्मिः । अतिक्रान्ता ऊर्मयो यस्मात् सोऽत्यूर्मिः । अतिप्रवृद्ध इत्यर्थः । मत्सरः मादनशीलः मदः मदात्मकः सोमः पवित्रे अर्षति गच्छति । किं कुर्वन् । रक्षांसि विघ्नन् घातयन् देवयुः देवान् कामयमानोऽर्षतीति संबन्धः ॥

पवित्रे ह्रियमाणे द्वितीयाऽन्वारम्भणीयस्य 'आ कलशेषु' इति याज्या । सूत्रितं च—'आ कलशेषु धावति पवित्रे परिषिच्यत इत्येका' ( आश्व. श्रौ. ५. १२ ) इति[3] ॥

**आ कलशेषु धावति पवित्रे परि षिच्यते । उक्थैर्यज्ञेषु वर्धते ॥ ४ ॥**

आ । कलशेषु । धावति । पवित्रे । परि । सिच्यते । उक्थैः । यज्ञेषु । वर्धते ॥ ४ ॥

---

१. अ–विपश्चितं स्तोतॄणामेतत् । २. अ–इतरेषु मनुष्येषु । ३. त-म-मु–इत्येके ।

अयं सोमः कलशेषु आ धावति। तथायं पवित्रे परि षिच्यते अध्वर्युभिः। उक्थैः स्तोत्रैः यज्ञेषु निमित्तेषु वर्धते प्रवृद्धो भवति॥

**अति त्री सोम रोचना रोहन्न भ्राजसे दिवम्। इष्णन्त्सूर्यं न चोदयः॥ ५॥**

अति। त्री। सोम। रोचना। रोहन्। न। भ्राजसे। दिवम्। इष्णन्। सूर्यम्। न। चोदयः॥५॥

हे सोम त्वं त्री रोचना[1] त्रीणि[1] रोचमानानि त्रीँल्लोकान् अति अतिक्रम्य रोहन् उपरिस्थं दिवं द्युलोकं भ्राजसे प्रकाशयसि। तथा इष्णन् गच्छन् सूर्यं न सूर्यं च चोदयः चोदयसि प्रेरयसि। नकारश्चार्थे॥

**अभि विप्रा अनूषत मूर्धन्यज्ञस्य कारवः। दधानाश्चक्षसि प्रियम्॥ ६॥**

अभि। विप्राः। अनूषत। मूर्धन्। यज्ञस्य। कारवः। दधानाः। चक्षसि। प्रियम्॥ ६॥

अभि[2] अनूषत[2] अभिष्टुवन्ति विप्राः मेधाविनः स्तोतारः। कुत्र[3]। यज्ञस्य मूर्धन् मूर्धनि। शिरोवदुत्तमेऽभिषवदिवसे इत्यर्थः। कीदृशास्ते। कारवः कर्तारः परिचर्याया यागानुष्ठातारो वा। चक्षसि द्रष्टरि सोमे प्रियं दधानाः अभ्यनूषतेति समन्वयः॥

**तमु त्वा वाजिनं नरो धीभिर्विप्रा अवस्यवः। मृजन्ति देववीतये॥ ७॥**

तम्। ऊँ इति। त्वा। वाजिनम्। नरः। धीभिः। विप्राः। अवस्यवः। मृजन्ति। देवऽवीतये॥७॥

हे सोम तमु तमेव त्वा[4] त्वां वाजिनम् अन्नवन्तं गमनवन्तं वा नरः नेतारः विप्राः मेधाविनोऽध्वर्य्वादयः धीभिः[5] कर्मभिः मृजन्ति शोधयन्ति देववीतये यज्ञार्थम्। कीदृशाः। अवस्यवः अन्नमिच्छवः[5]॥

**मधोर्धारामनु क्षर तीव्रः सधस्थमासदः। चारुर्ऋताय पीतये॥ ८॥**

मधोः। धाराम्। अनु। क्षर। तीव्रः। सधऽस्थम्। आ। असदः। चारुः। ऋताय। पीतये॥८॥

हे सोम त्वं मधोः मधुररसस्य धारामनु क्षर प्रवह[6]। तीव्रः तीव्ररसः सन् सधस्थं सहस्थानमभिषवस्थानं पवित्रं वा आ असदः सीद। चारुः कल्याणशीलः सन् ऋताय यज्ञार्थं पीतये देवानां पानाय॥ ॥७॥

'परि सुवानः' इति सप्तर्चमष्टादशं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'परि सुवानः सप्त' इत्यनुक्रान्तम्। गतो विनियोगः॥

**परि सुवानो गिरिष्ठाः पवित्रे सोमो अक्षाः। मदेषु सर्वधा असि॥ १॥**

परि। सुवानः। गिरिऽस्थाः। पवित्रे। सोमः। अक्षारिति। मदेषु। सर्वऽधाः। असि॥१॥

१. त१.२.६–रोचना; त३.४.५.७-अ३–'रोचना त्रीणि' नास्ति। २. म–हे सोम त्वां अभ्यनूषत। ३. ग–क्र; त-अ४–क्रतु। ४. ग-त–'त्वा' नास्ति। ५. ग–अवस्यवः रक्षणेच्छवः देवतातये यज्ञाय तथा धीभिः कर्मभिः मृजंति। ६. ग-अ१.३–प्रवह।

अयं सोमः पवित्रे परि अक्षाः परिक्षरति। सुवानः सूयमानः गिरिष्ठाः गिरिस्थायी। ग्रावसु वर्तमान इत्यर्थः। स त्वं मदेषु मादकेषु सोमेषु सर्वधा[1] असि सर्वस्य धाता दाता वा भवसि[1] ॥

त्वं विप्रस्त्वं कविर्मधु प्र जातमन्धसः। मदेषु सर्वधा असि ॥ २ ॥

त्वम्। विप्रः। त्वम्। कविः। मधु। प्र। जातम्। अन्धसः। मदेषु। सर्वऽधाः। असि ॥२॥

हे सोम त्वं विप्रः विविधं प्रीणयिता विप्रसदृशो वा त्वं च कविः मेधावी। अतस्त्वम् अन्धसः अन्नात् जातं मधु मधुररसं प्र यच्छसीति शेषः ॥

तव विश्वे सजोषसो देवासः पीतिमाशत। मदेषु सर्वधा असि ॥ ३ ॥

तव। विश्वे। सऽजोषसः। देवासः। पीतिम्। आशत। मदेषु। सर्वऽधाः। असि ॥ ३ ॥

हे सोम तव पीतिं पानं विश्वे देवासः देवाः[2] सजोषसः समानप्रीतयः सन्तः आशत प्राप्नुवन् ॥

आ यो विश्वानि वार्या वसूनि हस्तयोर्दधे। मदेषु सर्वधा असि ॥ ४ ॥

आ। यः। विश्वानि। वार्या। वसूनि। हस्तयोः। दधे। मदेषु। सर्वऽधाः। असि ॥४॥

यः सोमः विश्वानि वार्या वरणीयानि वसूनि धनानि[3] स्तोतुः हस्तयोः आ दधे करोति। प्रयच्छतीत्यर्थः। मदेषु सर्वधा असि इति। अथवा[4] स शुष्मी इत्युत्तरत्र संबन्धः ॥

य इमे रोदसी मही सं मातरेव दोहते। मदेषु सर्वधा असि ॥ ५ ॥

यः। इमे इति। रोदसी इति। मही इति। सम्। मातराऽइव। दोहते।
मदेषु। सर्वऽधाः। असि ॥ ५ ॥

यः सोमः इमे मही महत्यौ रोदसी द्यावापृथिव्यौ सं दोहते। उभयोः सारं परिगृह्णातीत्यर्थः। मातरेव यथा द्वे मातरावेको वत्सो दोहते तद्वत् ॥

परि यो रोदसी उभे सद्यो वाजेभिरर्षति। मदेषु सर्वधा असि ॥ ६ ॥

परि। यः। रोदसी इति। उभे इति। सद्यः। वाजेभिः। अर्षति। मदेषु। सर्वऽधाः। असि ॥६॥

यः सोमः उभे रोदसी द्यावापृथिव्यौ सद्यः तत्कालमेव वाजेभिः अन्नैः परि अर्षति परिगच्छति[5]। सोमाहुत्या[6] द्यावापृथिव्यावन्नवत्यौ करोतीत्यर्थः ॥

स शुष्मी कलशेष्वा पुनानो अचिक्रदत्। मदेषु सर्वधा असि ॥ ७ ॥

सः। शुष्मी। कलशेषु। आ। पुनानः। अचिक्रदत्। मदेषु। सर्वऽधाः। असि ॥ ७ ॥

---

१. ग–सर्वधाता दाता चासि भवसि; त१.६–सर्वधा सर्वदा असि सर्वस्य धाता दाता वा भवति; त३.४.५–सर्वधाता दाता वा भवति; त७–सर्वस्य दाता दाता वा भवति; अ४–सर्वधा असि सर्वस्य धाता दाता भवसि; मु–सर्वधा सर्वदा असि सर्वस्य धाता दाता वा भवसि। २. त–सर्वे देवाः। ३. ग-त-म–' धनानि ' नास्ति। ४. ग-त-मु–' अथवा ' नास्ति। ५. त-अ४–परिगच्छति परिगच्छ; मु–परिगच्छति परिगत्य। ६. त–आहुत्या।

उच्चरीत्वा[1] महान् सः सोमः शुष्मी बलवान् पुनानः पूयमानः सन् आ[2] अचिक्रदत् शब्दं[3] करोति । अत्र सर्वत्र यथोचितमुत्तरपादो शेषः ॥  ॥ ८ ॥

' यत् सोम ' इति सप्तर्चमेकोनविंशं सूक्तम् । ऋष्याद्याः पूर्ववत् । ' यत् सोम ' इत्यनुक्रान्तम् । गतो विनियोगः ॥

**यत्सो॑म चि॒त्रमु॒क्थ्यं॑ दि॒व्यं पार्थि॑वं॒ वसु॑ । तन्नः॑ पुना॒न आ भ॑र ॥ १ ॥**

यत् । सो॒म॒ । चि॒त्रम् । उ॒क्थ्य॑म् । दि॒व्यम् । पार्थि॑वम् । वसु॑ । तत् । नः॒ । पु॒ना॒नः । आ । भ॒र॒ ॥ १ ॥

हे सोम यत् चित्रं चायनीयम् उक्थ्यं स्तुत्यं दिव्यं दिवि भवं पार्थिवं पृथिवीसंबद्धं[4] च वसु धनमस्ति तत् नः अस्मभ्यं पुनानः पूयमानः सन् आ भर आहर ॥

**यु॒वं हि स्थः स्व॑र्पती॒ इन्द्र॑श्च सोम॒ गोप॑ती । ई॒शा॒ना पि॑प्यतं॒ धियः॑ ॥ २ ॥**

यु॒वम् । हि । स्थः । स्वः॑पती॒ इति॒ स्वः॑ऽपती । इन्द्रः॑ । च॒ । सो॒म॒ । गोप॑ती॒ इति॒ गोऽप॑ती । ई॒शा॒ना । पि॒प्य॒त॒म् । धियः॑ ॥ २ ॥

हे सोम त्वम् इन्द्रश्च युवं हि युवां खलु स्वर्पती सर्वस्य[5] स्वामिनौ स्थः भवथः । तथा गोपती गवां पालकौ ईशाना ईश्वरौ सन्तौ धियः अस्मदीयानि कर्माणि पिप्यतं प्यापयतम् ॥

**वृषा॑ पुना॒न आ॒युषु॑ स्त॒नय॒न्नधि॑ ब॒र्हिषि॑ । हरिः॒ सन्योनि॒मास॑दत् ॥ ३ ॥**

वृषा॑ । पु॒ना॒नः । आ॒युषु॑ । स्त॒नय॑न् । अधि॑ । ब॒र्हिषि॑ । हरिः॑ । सन् । योनि॑म् । आ । अ॒स॒द॒त् ॥ ३ ॥

वृषा[6] कामानां वर्षकः सोमः[6] आयुषु मनुष्येष्वध्वर्य्वादिषु पुनानः पूयमानः सन् स्तनयन् शब्दं कुर्वन् अधि बर्हिषि । अधीति सप्तम्यर्थानुवादी । आस्तीर्णे दर्भे हरिः[7] हरितवर्णः सन् योनिं स्वकीयं स्थानम् आसदत् आसीदति ॥

**अवा॑वशन्त धी॒तयो॑ वृष॒भस्याधि॒ रेत॑सि । सू॒नोर्व॒त्सस्य॑ मा॒तरः॑ ॥ ४ ॥**

अवा॑वशन्त । धी॒तयः॑ । वृ॒ष॒भस्य॑ । अधि॑ । रेत॑सि । सू॒नोः । व॒त्सस्य॑ । मा॒तरः॑ ॥ ४ ॥

धीतयः ध्रीयमानाः सोमात्मेन वत्सेन पीयमाना वसतीवर्यः । लिङ्‌ व्यत्ययेनात्मनेपदम् । अधि रेतसि रसरूपे सारे वृषभस्य वर्षकस्य सोमस्य । सोममित्यर्थः । अवावशन्त पुनः[8] कामयन्ते[8] । सोममाप्याययितुं कामयन्त इत्यर्थः । तदेवाह । सूनोः स्वपुत्रस्थानीयस्य वत्सस्य सोमस्य मातरः निर्माण्यः प्रवृद्धिकारा मातृस्थानीया अवावशन्तेति सम्बन्धः ॥

**कु॒विद्वृ॑ष॒ण्यन्ती॑भ्यः पुना॒नो गर्भ॑मा॒दध॑त् । याः शु॒क्रं दु॑ह॒ते पयः॑ ॥ ५ ॥**

कु॒वित् । वृ॒ष॒ण्यन्ती॑भ्यः । पु॒ना॒नः । गर्भ॑म् । आ॒ऽदध॑त् । याः । शु॒क्रम् । दु॒ह॒ते । पयः॑ ॥ ५ ॥

१. अ—स उच्चरीत्वा । २. ग-त-अ—'आ' नास्ति । ३. घ—कल्लोषु शब्दं । ४. ग—°संबंधि वसु । ५. ग—स्व; त१.२.६.७-मु—स्वर्गस्य । ६. ग-त-मु—' वृषा . . . सोमः ' नास्ति । ७. ग-त—' हरिः ' नास्ति; म—हरिः सन् । ८. घ—मीलितवंतः; अ१.२—पुनःपुनः कामयंते ।

वृषण्यन्तीभ्यः वृषणं सोममात्मन इच्छन्तीभ्यो वसतीवरीभ्यः पुनानः पूयमानः क्षियमाणः गर्भं स्वगर्भस्थानीयं रसं कुवित् बहु प्रभूतम् आदधत् करोति। याः आपः शुक्रं दीप्तं पयः दुहते स्वरसत्वाय सोमाय ताभ्यो गर्भमादधत्॥

**उप शिक्षापतस्थुषो भियसमा धेहि शत्रुषु। पवमान विदा रयिम्॥ ६॥**

उप। शिक्ष। अपऽतस्थुषः। भियसम्। आ। धेहि। शत्रुषु। पवमान। विदाः। रयिम्॥६॥

हे पवमान सोम उप शिक्ष त्वं समीपे कुरु। कान्। अपतस्थुषः अपक्रम्य स्थितान्। अस्मदभिमतानित्यर्थः। शत्रुषु अस्मद्विरोधिषु भियसं भयम् आ धेहि कुरु जनय। अस्माकं तेषां शत्रूणां रयिं धनं विदाः विन्दसि॥

**नि शत्रोः सोम वृष्ण्यं नि शुष्मं नि वयस्तिर। दूरे वा सतो अन्ति वा॥ ७॥**

नि। शत्रोः। सोम। वृष्ण्यम्। नि। शुष्मम्। नि। वयः। तिर।
दूरे। वा। सतः। अन्ति। वा॥७॥

हे अभिषूयमाण सोम त्वं शत्रोः वृष्ण्यं वर्षकं बलं नि तिर। निपूर्वस्तिरतिर्नाशनार्थः। नाशय। तथा शत्रोः शुष्मं शोषकं तेजः नि तिर। तस्यैव[1] वयः अन्नं च नि तिर। कीदृशस्य शत्रोः। दूरे वा सतः अस्मत्तो दूरे वर्तमानस्य अन्ति वा सतोऽन्तिके वर्तमानस्य वा॥ ॥९॥

'प्र कविः' इति सप्तर्चं विंशं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'प्र कविः' इत्यनुक्रान्तम्। गतो विनियोगः॥

**प्र कविर्देववीतयेऽव्यो वारेभिरर्षति। साह्वान्विश्वा अभि स्पृधः॥ १॥**

प्र। कविः। देवऽवीतये। अव्यः। वारेभिः। अर्षति। सह्वान्। विश्वाः। अभि। स्पृधः॥१॥

कविः मेधावी सोमः देववीतये देवानां पानाय अव्यः अवेः वारेभिः वारैः[2] दशापवित्रेण प्र अर्षति प्रकर्षेण गच्छति। साह्वान् शत्रूणां सोढा सोमः विश्वाः स्पृधः सर्वान् संग्रामान् हिंसकान् वा अभि भवतीति शेषः॥

**स हि ष्मा जरितृभ्य आ वाजं गोमन्तमिन्वति। पवमानः सहस्रिणम्॥ २॥**

सः। हि। स्म। जरितृऽभ्यः। आ। वाजम्। गोऽमन्तम्। इन्वति।
पवमानः। सहस्रिणम्॥ २॥

सः हि स्म स खलु पवमानः सोमः जरितृभ्यः स्तोतृभ्यः गोमन्तं बहुभिर्गोभिर्युक्तं सहस्रिणं सहस्रसंख्याकं वाजम् अन्नम्[3] आ अभिमुखम् इन्वति व्याप्नोति। प्रयच्छतीत्यर्थः॥

**परि विश्वानि चेतसा मृशसे पवसे मती। स नः सोम श्रवो विदः॥ ३॥**

परि। विश्वानि। चेतसा। मृशसे। पवसे। मती। सः। नः। सोम। श्रवः। विदः॥३॥

हे सोम त्वं चेतसा स्वकीयेनास्मदनुकूलेन चित्तेन विश्वानि सर्वाणि धनानि परि मृशसे। प्रयच्छसीत्यर्थः। मती मत्याऽस्मत्स्तुत्या पवसे क्षरसि रसम्। सः त्वं हे सोम नः अस्मभ्यं श्रवः अन्नं विदः देहि॥

१. ख–तथैव। २. ख–वारैर्वालैः। ३. ग-ङ-च–अन्नं वा।

अभ्यर्ष बृहद्यशो मघवद्भ्यो ध्रुवं रयिम् । इषं स्तोतृभ्य आ भर ॥ ४ ॥

अभि । अर्ष । बृहत् । यशः । मघवत्ऽभ्यः । ध्रुवम् । रयिम् ।
इषम् । स्तोतृऽभ्यः । आ । भर ॥ ४ ॥

हे सोम बृहद्यशः महतीं कीर्तिम् अभ्यर्ष अभिगमय । मघवद्भ्यः हविष्मद्भ्यः[1] अस्मभ्यं ध्रुवं रयिं धनं चाभ्यर्ष । किंच इषम् अन्नं स्तोतृभ्यः अस्मभ्यम् आ भर आहर ॥

त्वं राजेव सुव्रतो गिरः सोमा विवेशिथ । पुनानो वह्ने अद्भुत ॥ ५ ॥

त्वम् । राजाऽइव । सुऽव्रतः । गिरः । सोम । आ । विवेशिथ । पुनानः । वह्ने । अद्भुत ॥५॥

हे सोम सुव्रतः सुकर्मा पुनानः त्वं राजेव गिरः अस्मदीयाः स्तुतीः आ विवेशिथ आविशसि । हे वह्ने वोढः अद्भुत महन् सोम ॥

स वह्निरप्सु दुष्टरो मृज्यमानो गभस्त्योः । सोमश्चमूषु सीदति ॥ ६ ॥

सः । वह्निः । अप्ऽसु । दुस्तरः । मृज्यमानः । गभस्त्योः । सोमः । चमूषु । सीदति ॥६॥

सः सोमः वह्निः वोढा यज्ञादेः अप्सु अन्तरिक्षे वर्तमानः दुष्टरः दुःखेनाभितरणीयः मृज्यमानः शोध्यमानः गभस्त्योः हस्तयोरेवंभूतः सन् सः चमूषु पात्रेषु सीदति ॥

क्रीळुर्मखो न मंहयुः पवित्रं सोम गच्छसि । दधत्स्तोत्रे सुवीर्यम् ॥ ७ ॥

क्रीळुः । मखः । न । मंहयुः । पवित्रम् । सोम । गच्छसि । दधत् । स्तोत्रे । सुऽवीर्यम् ॥७॥

हे सोम क्रीळुः क्रीडनशीलस्त्वं मंहयुः । मंहतिर्दानकर्मा । दानेच्छुः मखो न यागमिव पवित्रं गच्छसि । किं कुर्वन् । स्तोत्रे स्तुतिकर्त्रे सुवीर्यं शोभनवीर्यं दधत् प्रयच्छन् ॥ ॥१०॥

'एते धावन्ति' इति सप्तर्चमेकविंशं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'एते धावन्ति' इत्यनुक्रान्तम् । गतो विनियोगः ॥

एते धावन्तीन्दवः सोमा इन्द्राय घृष्वयः । मत्सरासः स्वर्विदः ॥ १ ॥

एते । धावन्ति । इन्दवः । सोमाः । इन्द्राय । घृष्वयः । मत्सरासः । स्वःऽविदः ॥ १ ॥

एते सोमाः इन्द्राय धावन्ति गच्छन्ति । कीदृशा एते । इन्दवः क्लेदयितारो दीप्ता वा घृष्वयः घर्षणशीलाः मत्सरासः मादयितारः स्वर्विदः स्वर्लोकस्य लम्भयितारः ॥

प्रवृण्वन्तो अभियुजः सुष्वये वरिवोविदः । स्वयं स्तोत्रे वयस्कृतः ॥ २ ॥

प्रऽवृण्वन्तः । अभिऽयुजः । सुष्वये । वरिवःऽविदः । स्वयम् । स्तोत्रे । वयःऽकृतः ॥ २ ॥

प्रवृण्वन्तः सुवाने प्रकर्षेण संभजन्तः तथा अभियुजः अभियोजयितारः सुष्वये सुष्ठु अभिषवकर्त्रे वरिवोविदः । 'वरिवः' इति धननाम । तस्य लम्भयितारः स्वयं स्तोत्रे[2] वयस्कृतः अन्नस्य कर्तारः । एते धावन्तीति संबन्धः ॥

१. म-ध-स२-५– 'हविष्मद्भ्यः' नास्ति । २. म– स्तोत्रे च ।

वृथा क्रीळन्त इन्दवः सधस्थमभ्येकमित् । सिन्धोरूर्मा व्यक्षरन् ॥ ३ ॥

वृथा । क्रीळन्तः । इन्दवः । सधऽस्थम् । अभि । एकम् । इत् । सिन्धोः । ऊर्मा । वि । अक्षरन् ॥ ३ ॥

वृथा अनायासेन क्रीळन्तः इन्दवः सोमाः एकमित् एकमेव सधस्थं सहस्थानं द्रोणकलशं वा अभि अक्षरन्निति शेषः । सिन्धोरूर्मा वसतीवरीषु व्यक्षरन् ॥

एते विश्वानि वार्या पवमानास आशत । हिता न सप्तयो रथे ॥ ४ ॥

एते । विश्वानि । वार्या । पवमानासः । आशत । हिताः । न । सप्तयः । रथे ॥ ४ ॥

एते सोमाः पवमानासः पूयमानाः विश्वानि वार्या[1] वार्याणि वरणीयानि धनानि आशत व्याप्नुवन् । रथे हिताः स्थापिताः[2] न सप्तयः अश्वा इव । ते यथा रथमभिमतं देशं प्राप्नुवन्ति तद्वद्धनमस्माकं प्रयच्छन्तीत्यर्थः ॥

आस्मिन्पिशङ्गमिन्दवो दधाता वेनमादिशे । यो अस्मभ्यमरावा ॥ ५ ॥

आ । अस्मिन् । पिशङ्गम् । इन्दवः । दधात । वेनम् । आऽदिशे ।
यः । अस्मभ्यम् । अरावा ॥ ५ ॥

हे इन्दवः सोमाः अस्मिन् यजमाने पिशङ्गं बहुरूपं मणिमुक्ताहिरण्यादिभेदेन नानारूपं वेनं कामयन्तं बहुविधं कामम् आदिशे अस्मभ्यमादेशनाय आ दधात आयच्छत[3] । यः यजमानः अस्मभ्यम् अरावा ... प्रयच्छति प्राप्तकाम एव खलु ऋत्विग्भ्यः प्रयच्छति ॥

ऋभुर्न रथ्यं नवं दधाता केतमादिशे । शुक्राः पवध्वमर्णसा ॥ ६ ॥

ऋभुः । न । रथ्यम् । नवम् । दधात । केतम् । आऽदिशे । शुक्राः । पवध्वम् । अर्णसा ॥ ६ ॥

ऋभुर्न उरु भासमानो रथस्वामीव स यथा रथ्यं रथस्य नेतारं नवं स्तुत्यं कुशलं सारथिमनम आधत्ते तद्वदस्मदादेशेऽस्मिन् आदिशे स्वामिनि[4] केतं प्रज्ञानं दधात स्थापयत । हे सोमाः योऽस्मभ्यं प्रयच्छति तस्मिन्नित्यर्थः । हे सोमाः अर्णसा उदकेन शुक्राः दीप्ताः सन्तः पवध्वं क्षरध्वम् ॥

एत उ त्ये अवीवशन्काष्ठां वाजिनो अक्रत । सतः प्रासाविषुर्मतिम् ॥ ७ ॥

एते । ऊँ इति । त्ये । अवीवशन् । काष्ठाम् । वाजिनः । अक्रत ।
सतः । प्र । असाविषुः । मतिम् ॥ ७ ॥

त्ये ते एत उ एत एव सोमाः अवीवशन् कामयन्ते यज्ञम् । कामयाः च वाजिनः बलवन्तोऽन्नवन्तो वा सोमाः काष्ठाम् अक्रत निवासस्थानमकुर्वन् । द्रोणकलशाद्दूरता[5] प्रकाशनि-त्यर्थः । सतः यजमानस्य स्तोतुर्वा मतिं बुद्धिं स्तुतिं वा प्रासाविषुः प्रेरयन् ॥ ॥ ११ ॥

'एते सोमासः' इति सप्तर्चं द्वाविंशं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'एते सोमासः' इत्यनु-क्रान्तम् । गतो विनियोगः ॥

1. ग-म-भ 'वार्या' नास्ति । 2. ग-युक्ताः । 3. भ-स्थापयत । 4. ग-मदेशाय स्वामिनि, ग-भ-से स्वामिनि । 5. ग-द्रोणकलशानित्यर्थः ।

**एते सोमास आशवो रथाइव प्र वाजिनः । सर्गाः सृष्टा अहेषत ॥ १ ॥**

एते । सोमासः । आशवः । रथाःऽइव । प्र । वाजिनः । सर्गाः । सृष्टाः । अहेषत ॥ १ ॥

एते पूयमानाः सोमासः सोमाः सृष्टाः अध्वर्युणा आशवः शुद्धाः पवित्रादधोगमने शीघ्राः प्र अहेषत प्रहेषन्ते । शीघ्रगमने हष्टाव्ययम् । आजौ सृष्टाः शीघ्राः रथाइव तथोत्कलक्षणाः वाजिनः इव वेगवन्तोऽश्वा इव[1] ॥

**एते वाताइवोरवः पर्जन्यस्येव वृष्टयः । अग्नेरिव भ्रमा वृथा ॥ २ ॥**

एते । वाताःऽइव । उरवः । पर्जन्यस्यऽइव । वृष्टयः । अग्नेःऽइव । भ्रमाः । वृथा ॥ २ ॥

एते सोमाः उरवः महान्तः वाताइव[2] वायव इव[3] वृथा अनायासेन व्याप्नुः इत्युत्तरेण संबन्धनीयम् । अथवाध्याहारेण निःसरन्तीति योज्यम् । तथा पर्जन्यस्य वृष्टयः इव वर्षा यथा तथैव । किंच अग्नेः भ्रमा भ्रमणा ज्वालासंचाराः इव ॥

**एते पूता विपश्चितः सोमासो दध्याशिरः । विपा व्यानशुर्धियः ॥ ३ ॥**

एते । पूताः । विपःऽचितः । सोमासः । दधिऽआशिरः । विपा । वि । आनशुः । धियः ॥ ३ ॥

एते सोमासः सोमाः पूताः शुद्धाः विपश्चितः प्राज्ञाः दध्याशिरः दध्याश्रयणाः विपा प्रज्ञानेन धियः अस्मदीयानि कर्माणि व्यानशुः व्याप्नुवन्ति ॥

**एते मृष्टा अमर्त्याः ससृवांसो न शश्रमुः । इयक्षन्तः पथो रजः ॥ ४ ॥**

एते । मृष्टाः । अमर्त्याः । ससृऽवांसः । न । शश्रमुः । इयक्षन्तः । पथः । रजः ॥ ४ ॥

एते सोमाः मृष्टाः दशापवित्रेण शोधिताः अमर्त्याः अमरणधर्माणः ससृवांसः हविर्धानात् सरन्तः पथः मार्गान् रजः लोकांश्च इयक्षन्तः गन्तुमिच्छन्तः न शश्रमुः न श्राम्यन्ति ॥

**एते पृष्ठानि रोदसोर्विप्रयन्तो व्यानशुः । उतेदमुत्तमं रजः ॥ ५ ॥**

एते । पृष्ठानि । रोदसोः । विऽप्रयन्तः । वि । आनशुः । उत । इदम् । उत्ऽतमम् । रजः ॥ ५ ॥

एते सोमाः रोदस्योः[4] द्यावापृथिव्योः पृष्ठानि विप्रयन्तः विविधं गच्छन्तः व्यानशुः व्याप्नुवन्ति । उत अपि च इदमुत्तमं रजः द्युलोकं व्यानशुः । आहुतिद्वारेणेति भावः । रोदसोरित्यत्रान्तरिक्षोऽभिप्रेतः ॥

**तन्तुं तन्वानमुत्तममनु प्रवत आशत । उतेदमुत्तमाय्यम् ॥ ६ ॥**

तन्तुम् । तन्वानम् । उत्ऽतमम् । अनु । प्रऽवतः । आशत । उत । इदम् । उत्ऽतमाय्यम् ॥ ६ ॥

तन्तुं यज्ञं तन्वानम् उत्तमम् उत्कृष्टं सोमम् अनु आशत प्रवतः नद्यः । उत अपि च इदं कर्म अनेन सोमेन उत्तमाय्यम् उत्तमीकृतम्[5] । अथवा तन्तुं तन्वानं सोमं प्रवतोऽधःस्थिताः

१. ग–तथोत्कलक्षणसर्गा वाजिन इव सृष्टा अश्वा इव; त१.२.६.७-मु–उत्कलक्षणसर्गा वाजिन इव वेगवतोऽश्वा इव । २. ग-त३.४.५-अ४–वाता । ३. त-अ२.४–' इव ' नास्ति । ४. ग–रौदस्योः । ५. त१.२.६–*कृतं ।

सर्वा अभ्यासत। इतोऽमुमभावं रजः। द्युलोक इत्यर्थः। सोऽप्यस्मभ्युते पृथिव्या अन्तरिक्षेण च। चतुर्भिरुपसुमाख्यम्॥

**त्वं सोम पणिभ्य आ वसु गव्यानि धारयः। ततं तन्तुमचिक्रदः॥ ७॥**

त्वम्। सोम। पणिऽभ्यः। आ। वसु। गव्यानि। धारयः। ततम्। तन्तुम्। अचिक्रदः॥७॥

हे सोम त्वं पणिभ्यः असुरेभ्यो वणिग्भ्यो वा सकाशात् गव्यानि गोहितानि वसु वसूनि गोयूथानि वसूनि वेति[1] वा आ आहृत्य धारयः[2] धारयसि। तथा तन्तुं यज्ञं प्रति ततं विस्तृतं यथा भवति तथा अचिक्रदः शब्दमकार्षीः॥ ॥ १२ ॥

'सोमा असृग्रम्' इति सप्तर्चं सप्तमं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'सोमा असृग्रम्' इत्यनुक्रान्तम्। गतो विनियोगः॥

**सोमा असृग्रमाशवो मधोर्मदस्य धारया। अभि विश्वानि काव्या॥ १॥**

सोमाः। असृग्रम्। आशवः। मधोः। मदस्य। धारया। अभि। विश्वानि। काव्या॥ १॥

आशवः शीघ्राः सोमाः असृग्रम् असृजन् सृज्यन्ते। मधोः मधुरस्य[3] मदस्य[3] मदकरस्य धारया असृग्रमिति संबन्धः। किं प्रति इत्युच्यते। अभि लक्षीकृत्य विश्वानि सर्वाणि काव्या काव्यानि स्तोत्राणि प्रति। स्तोत्रसमय इत्यर्थः॥

**अनु प्रत्नास आयवः पदं नवीयो अक्रमुः। रुचे जनन्त सूर्यम्॥ २॥**

अनु। प्रत्नासः। आयवः। पदम्। नवीयः। अक्रमुः। रुचे। जनन्त। सूर्यम्॥ २॥

प्रत्नासः पुराणाः केचित् आयवः शीघ्रगमना अश्वाः नवीयः नवतरं पदम् अनु आक्रमुः अनुक्रमन्ते। रूपकव्याहारेण सोमाः स्तूयन्ते। रुचे[4] दीप्त्यै[4] सूर्यं जनन्त कुर्वन्ति। दीप्तं कुर्वन्तीत्यर्थः। सोमप्रदानेन हि चन्द्रो रोचते॥

**आ पवमान नो भरार्यो अदाशुषो गयम्। कृधि प्रजावतीरिषः॥ ३॥**

आ। पवमान। नः। भर। अर्यः। अदाशुषः। गयम्। कृधि। प्रजाऽवतीः। इषः॥ ३॥

हे पवमान सोम त्वं नः अस्मभ्यम् अर्यः अरेः अदाशुषः अयजमानस्य[5] गयं गृहं गृहोपलक्षितं धनम् आ भर आहर। तथास्मभ्यं प्रजावतीरिषः सं[6] कृधि कुरु॥

**अभि सोमास आयवः पवन्ते मद्यं मदम्। अभि कोशं मधुश्चुतम्॥ ४॥**

अभि। सोमासः। आयवः। पवन्ते। मद्यम्। मदम्। अभि। कोशम्। मधुऽश्चुतम्॥४॥

आयवः गन्तारः सोमासः सोमाः मद्यं मदकरं रसम् अभि पवन्ते क्षरन्ति। तथा मधुश्चुतं मधुस्राविणं कोशम्। रसाधारेण कोशशब्देन तत्राभिषुतो रसो लक्ष्यते। तम् अभि पवन्त इति शेषः[7]॥

---

१. म१,९.२-वेति। २. म-म१.२.१-आधारयः। '३. त-म-' मधुरस्य मदस्य ' नास्ति। ४. म-एनैः सोमैः रुचे दीप्तौ- न-म-रुचे दीप्तौ। ५. त-म-पवस्कतः। ६. म-भजानि च। ७. म-शेषः विमर्दे मदे मदं मदाय हर्षाय।

सोमो अर्षति धर्णसिर्दधान इन्द्रियं रसम् । सुवीरो अभिशस्तिपाः ॥ ५ ॥

सोमः । अर्षति । धर्णसिः । दधानः । इन्द्रियम् । रसम् । सुऽवीरः । अभिशस्तिऽपाः ॥५॥

सोमः अर्षति गच्छति । कीदृशः सः । धर्णसिः धारको जगतां तथा इन्द्रियम् इन्द्रियवर्धकं रसं दधानः धारयन् सुवीरः सुवीर्यः अभिशस्तिपाः अभिशस्तेः पाता । अभिशस्तिर्हिंसा ततो रक्षक इत्यर्थः । सोमपानं ब्रह्महत्यादिभिरिन्द्रमनुमार्ष्टीति प्रसिद्धम् ॥

इन्द्राय सोम पवसे देवेभ्यः सधमाद्यः । इन्दो वाजं सिषाससि ॥ ६ ॥

इन्द्राय । सोम । पवसे । देवेभ्यः । सधऽमाद्यः । इन्दो इति । वाजम् । सिसाससि ॥६॥

हे सोम सधमाद्यः सधमादो यज्ञः । तदर्हस्त्वम् इन्द्राय देवेभ्यः चान्येभ्यः[1] पवसे क्षरसि । हे तादृश इन्दो सोम अस्मभ्यं वाजम् अन्नं सिषाससि दातुमिच्छसि ॥

अस्य पीत्वा मदानामिन्द्रो वृत्राण्यप्रति । जघान जघनच्च नु ॥ ७ ॥

अस्य । पीत्वा । मदानाम् । इन्द्रः । वृत्राणि । अप्रति । जघान । जघनत् । च । नु ॥७॥

मदानां मदकराणां मध्येऽतिशयेन मदकरम् अस्य अमुं सोमं पीत्वा वृत्राणि शत्रून् अप्रतिगतः[2] सन् इन्द्रः जघान हतवान् । नु क्षिप्रं जघनत् च । हन्तु चेदानीमपि[3] ॥ ॥१३॥

'प्र सोमासः' इति सप्तर्चं चतुर्विंशं सूक्तम् । असितो देवलो वर्षिर्गायत्री छन्दः सोमो देवता । 'प्र सोमासः' इत्यनुक्रान्तम् । गतो विनियोगः ॥

प्र सोमासो अधन्विषुः पवमानास इन्दवः । श्रीणाना अप्सु मृञ्जत ॥ १ ॥

प्र । सोमासः । अधन्विषुः । पवमानासः । इन्दवः । श्रीणानाः । अप्ऽसु । मृञ्जत ॥ १ ॥

सोमासः सोमाः पवमानासः[4] पूयमानाः इन्दवः दीप्ताः[5] प्र अधन्विषुः । धन्वतिर्गतिकर्मा । प्रगच्छन्ति । किंच श्रीणानाः गोभिः श्रयमाणाः अप्सु वसतीवरीषु च मृञ्जत मृज्यन्ते ॥

अभि गावो अधन्विषुरापो न प्रवता यतीः । पुनाना इन्द्रमाशत ॥ २ ॥

अभि । गावः । अधन्विषुः । आपः । न । प्रऽवता । यतीः । पुनानाः । इन्द्रम् । आशत ॥२॥

गावः गमनशीला इन्दवः[6] अभि अधन्विषुः अभिगच्छन्ति पवमानपवित्रम् । किमिव । प्रवता प्रवणवता देशेन यतीः गच्छन्त्यः आपः न आप इव । पश्चात् पुनानाः इन्द्रं प्रीणयितुम् आशत व्याप्नुवन् । आहुतिप्रणाड्येन्द्रमेव वा व्याप्नुवन् ॥

प्र पवमान धन्वसि सोमेन्द्राय पातवे । नृभिर्यतो वि नीयसे ॥ ३ ॥

प्र । पवमान । धन्वसि । सोम । इन्द्राय । पातवे । नृऽभिः । यतः । वि । नीयसे ॥ ३ ॥

हे पवमान सोम इन्द्राय इन्द्रस्य पातवे पानाय प्र धन्वसि प्रगच्छस्याहवनीयं प्रति हविर्धानात् । तदेवाह । नृभिः नेतृभिर्ऋत्विग्भिः यतः नियतः[7] वि नीयसे हविर्धानात् । अथवा । पवमान प्र धन्वसि पात्रं प्रतीन्द्रपानाय तदर्थं हविर्धानाद्वि नीयसे ॥

---

१. अ१.२.३–' चान्येभ्यः ' नास्ति । २. ल-म–प्रतिगतः । ३. ग-न-ल-भ२–चेदानीमिति । ४. ल१.५-अ–पवमानाः । ५. ल-म–दीप्ताः सोमाः । ६. क–इन्दवः सोमाः । ७. ग–नियन्तारो ।

अत्यविम् अतिक्रान्तो दशापवित्रं वने उदके क्रीळन्तं संक्रीडमानम् ईम् एनम् इन्दुं सोमं सखायः प्रियस्तोतारः सम् अस्वरन् संस्तुवन्ति। वाणाः वाणोऽपि अनूषत अस्तुवन्। 'गौरवरम्' इति बाहूनामसु पठितम्॥

**तया पवस्व धारया यया पीतो विचक्षसे। इन्दो स्तोत्रे सुवीर्यम्॥ ६॥**

तया। पवस्व। धारया। यया। पीतः। विऽचक्षसे। इन्दो इति। स्तोत्रे। सुऽवीर्यम्॥ ६॥

हे इन्दो त्वं यया धारया पीतः सन् विचक्षसे विचक्षणाय स्तोत्रे स्तोतॄणां कर्त्रे पुरुषाय सुवीर्यं शोभनवीर्यं प्रयच्छन्नासि शेषः। तया धारया पवस्व क्षर॥ ॥ २ ॥

'असृग्रन्' इति षळृचं द्वाविंशं सूक्तम्। अस्यार्षाद्याः पूर्ववत्। 'असृग्रन्' इत्यनुक्रान्तम्। गतो विनियोगः॥

**असृग्रन्देववीतयेऽत्यासः कृत्व्याइव। क्षरन्तः पर्वतावृधः॥ १॥**

असृग्रन्। देवऽवीतये। अत्यासः। कृत्व्याःऽइव। क्षरन्तः। पर्वतऽवृधः॥ १॥

पर्वतावृधः पर्ववद्भिरभिषवग्रावभिर्वृद्धाः पर्वतेषु जाता वा क्षरन्तः सोमाः देववीतये यज्ञाय अत्यासः अश्वाः कृत्व्याइव यथा कर्मण्या अश्वाः तद्वत् असृग्रन् सृज्यन्ते॥

**परिष्कृतास इन्दवो योषेव पित्र्यावती। वायुं सोमा असृक्षत॥ २॥**

परिऽकृतासः। इन्दवः। योषाऽइव। पित्र्यऽवती। वायुम्। सोमाः। असृक्षत॥ २॥

इन्दवः यागेषु क्रियमाणाः सोमाः परिष्कृतासः परिष्कृता अलंकृताः[1] सन्तः पित्र्यावती पितृमती योषेव अलंकृता कन्यका यथा वरं प्रति गच्छति तद्वत् वायुं प्रति असृक्षत गच्छन्ति॥

**एते सोमास इन्दवः प्रयस्वन्तश्चमू सुताः। इन्द्रं वर्धन्ति कर्मभिः॥ ३॥**

एते। सोमासः। इन्दवः। प्रयस्वन्तः। चमू इति। सुताः। इन्द्रम्। वर्धन्ति। कर्मऽभिः॥ ३॥

इन्दवः दीप्ताः प्रयस्वन्तः अन्नवन्तः एते अस्मिन् कर्मणि वर्तमाना अमी सोमासः सोमाः चमू चम्वोरधिषवणफलकयोः सुताः अभिषुताः सन्तः कर्मभिः यागैः इन्द्रं वर्धन्ति वर्धयन्ति प्रीणयन्तीत्यर्थः॥

**आ धावता सुहस्त्यः शुक्रा गृभ्णीत मन्थिना। गोभिः श्रीणीत मत्सरम्॥ ४॥**

आ। धावत। सुऽहस्त्यः। शुक्रा। गृभ्णीत। मन्थिना। गोभिः। श्रीणीत। मत्सरम्॥ ४॥

हे सुहस्त्यः शोभनहस्ता ऋत्विजः आ धावत। मां संप्रति आगच्छत। मन्थिना सह शुक्रा शुक्रं च गृभ्णीत गृह्णीत सोमम्। मत्सरं सोमं गोभिः गोविकारैः पयोभिः श्रीणीत संस्कुरुत च॥

**स पवस्व धनंजय प्रयन्ता राधसो महः। अस्मभ्यं सोम गातुवित्॥ ५॥**

सः। पवस्व। धनम्ऽजय। प्रऽयन्ता। राधसः। महः। अस्मभ्यम्। सोम। गातुऽवित्॥ ५॥

१. त१ २.६.७-भ६.७-'अलंकृताः' नास्ति।

हे धनंजय शत्रुसंबन्धिनां धनानां जेतः सोम गातुवित् अभीष्टमार्गस्य लम्भकः अस्मभ्यं महः महतः राधसः धनस्य प्रयन्ता प्रदाता च यः[1] सः त्वं[1] पवस्व क्षर ॥

एतं मृजन्ति मर्ज्यं पवमानं दश क्षिपः । इन्द्राय मत्सरं मदम् ॥ ६ ॥

एतम् । मृजन्ति । मर्ज्यम् । पवमानम् । दश । क्षिपः । इन्द्राय । मत्सरम् । मदम् ॥ ६ ॥

मर्ज्यं मर्जनीयं शोध्यं पवमानं क्षरन्तं मत्सरं मदकरम् एतम् इमं मदं सोमं दशसंख्याकाः क्षिपः अङ्गुलयः । 'विशः क्षिपः' इत्यङ्गुलिनामसु पाठात् । इन्द्रार्थं[2] मृजन्ति पवित्रे[3] शोधयन्ति ॥ ॥ २ ॥

'अया सोमः' इति पञ्चर्चं त्रयोविंशं सूक्तं भृगुपुत्रस्य कवेरार्षं गायत्रं पवमानसोमदेवताकम् । तथा चानुक्रान्तम्—'अया सोमः पञ्च कविर्भार्गवः' इति । उक्तो विनियोगः ॥

अया सोमः सुकृत्यया महश्चिदभ्यवर्धत । मन्दान उद्वृषायते ॥ १ ॥

अया । सोमः । सुऽकृत्यया । महः । चित् । अभि । अवर्धत । मन्दानः । उत् । वृषऽयते ॥ १ ॥

सोमः अया अनया सुकृत्यया शोभनयाभिषवादिलक्षणया क्रियया महश्चित् महतो देवान् प्रति अभ्यवर्धत प्रवृद्धोऽभूत् । मन्दानः मोदमानः उद्वृषायते वृषवदाचरति । यथा मोदमानो वृषभः शब्दं करोति तथाभिषववेलायामुपरवेषु शब्दं करोतीत्यर्थः ॥

कृतानीदस्य कर्त्वा चेतन्ते दस्युतर्हणा । ऋणा च धृष्णुश्चयते ॥ २ ॥

कृतानि । इत् । अस्य । कर्त्वा । चेतन्ते । दस्युऽतर्हणा । ऋणा । च । धृष्णुः । चयते ॥ २ ॥

अस्य यस्य एतस्य सोमस्य दस्युतर्हणा दस्यूनामसुराणां नाशकानि कर्त्वा कर्माणि स इत् अस्माभिरेव सोऽयं धृष्णुः धृष्टः सोमो यजमानानाम् ऋणा च ऋणान्यपि चयते कामप्रदानेन नाशयति ॥

आत्सोम इन्द्रियो रसो वज्रः सहस्रसा भुवत् । उक्थं यदस्य जायते ॥ ३ ॥

आत् । सोमः । इन्द्रियः । रसः । वज्रः । सहस्रऽसाः । भुवत् । उक्थम् । यत् । अस्य । जायते ॥ ३ ॥

यत् यदा अस्य इन्द्रस्य उक्थं शस्त्रं जायते प्रादुर्भवति तत आत् अनन्तरमेव इन्द्रियः इन्द्रस्य प्रियकरः रसः बलवान् वज्रः वज्रसदृशः केनाप्यहिंस्यः सोमः सहस्रसाः अस्मभ्यमपरिमितस्य[4] धनस्य दाता भवति ॥

स्वयं कविर्विधर्तरि विप्राय रत्नमिच्छति । यदी मर्मृज्यते धियः ॥ ४ ॥

स्वयम् । कविः । विऽधर्तरि । विप्राय । रत्नम् । इच्छति । यदि । मर्मृज्यते । धियः ॥ ४ ॥

यदि कविः क्रान्तकर्मा अयं सोमः धियः धीभिः[5] । विभक्तिव्यत्ययः । धीतिभिः[6] अङ्गुलीभिरित्यर्थः । मर्मृज्यते शोध्यते तर्हि स्वयं[7] स्वयमेव विप्राय मेधाविने विधर्तरि कामानां विधातरीन्द्रे रत्नं रमणीयं धनम् इच्छति । इन्द्रेण धनं दापयितुमिच्छतीत्यर्थः ॥

१. ग-त१.१.३-म२-स त्वं; त६-म७- सः; म१- सद्य । २. ग—इंद्रस्य पानाय; त१.२.३.७-म२.५—'इंद्रार्थं' नास्ति, म४—इंद्राय इंद्रार्थं । ३. ग—पवित्रैः । ४. ग—सहस्रपरिमितस्य । ५. त६-म१.७—धीतिभिः, म४—धीतिः । ६. त१.२.७—धीभिः; म१—धीतिः । ७. ग-त६-म१.७—'स्वयं' नास्ति ।

**सिषासतू रयीणां वाजेष्वर्वतामिव । भरेषु जिग्युषामसि ॥ ५ ॥**

सिसासतुः । रयीणाम् । वाजेषु । अर्वताम्ऽइव । भरेषु । जिग्युषाम् । असि ॥ ५ ॥

हे सोम त्वं भरेषु संग्रामेषु जिग्युषां शत्रून् जयतां रयीणां धनानां सिषासतुः संभक्तुमिच्छुः असि भवसि । शत्रून्[1] जयद्भ्यो धनानि प्रयच्छसीत्यर्थः । तत्र दृष्टान्तः । वाजेषु संग्रामेषु अर्वतामिव अश्वानामिव । यथा संग्रामं प्रविशद्भ्योऽश्वेभ्यो घासं प्रयच्छन्ति तद्वदित्यर्थः[1]॥ ॥ ४ ॥

'तं त्वा' इति पञ्चर्चं चतुर्थं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'तं त्वा' इत्यनुक्रान्तम् । गतो विनियोगः ॥

**तं त्वा नृम्णानि बिभ्रतं सधस्थेषु महो दिवः । चारुं सुकृत्ययेमहे ॥ १ ॥**

तम् । त्वा । नृम्णानि । बिभ्रतम् । सधऽस्थेषु । महः । दिवः । चारुम् । सुऽकृत्यया । ईमहे ॥ १ ॥

महः[2] दिवः महतो द्युलोकस्य सधस्थेषु सहस्थानेषु स्थितं नृम्णानि धनानि बिभ्रतम् अस्मदर्थं[3] धारयन्तं चारुं कल्याणं तं पवमानं त्वा त्वां सुकृत्यया शोभनया क्रियया ईमहे धनानि याचामहे ॥

**संवृक्तधृष्णुमुक्थ्यं महामहिव्रतं मदम् । शतं पुरो रुरुक्षणिम् ॥ २ ॥**

संवृक्तऽधृष्णुम् । उक्थ्यम् । महाऽमहिव्रतम् । मदम् । शतम् । पुरः । रुरुक्षणिम् ॥ २ ॥

हे सोम संवृक्तधृष्णुम् । संवृक्ताः संछिन्नाः धृष्णवो धर्षणशीलाः[4] शत्रवो येनासौ संवृक्तधृष्णुः । तम् उक्थ्यम् उक्थार्हं प्रशस्यं महामहिव्रतं महनीयबहुकर्माणं मदं मदकरं शतं बहूनि पुरः शत्रूणां पुराणि रुरुक्षणिं विनाशयन्तं त्वां धनानीमहे इति संबन्धः ॥

**अतस्त्वा रयिमभि राजानं सुक्रतो दिवः । सुपर्णो अव्यथिर्भरत् ॥ ३ ॥**

अतः । त्वा । रयिम् । अभि । राजानम् । सुक्रतो इति सुऽक्रतो । दिवः ।
सुऽपर्णः । अव्यथिः । भरत् ॥ ३ ॥

हे सोम रयिमभि धनं प्रति राजानं त्वा त्वाम् अतः[5] दिवः अमुष्मात् द्युलोकात् सुक्रतुः सुप्रज्ञः अव्यथिः व्यथारहितः सुपर्णः श्येनः भरत् आहरत् । तथा च निगमान्तरम्— 'आदाय श्येनो अभरत्सोमं सहस्रं सवाँ' ( ऋ. सं. ४.२६.७ ) इति ॥

**विश्वस्मा इत्स्वर्दृशे साधारणं रजस्तुरम् । गोपामृतस्य विर्भरत् ॥ ४ ॥**

विश्वस्मै । इत् । स्वः । दृशे । साधारणम् । रजःऽतुरम् । गोपाम् । ऋतस्य । विः । भरत् ॥४॥

रजस्तुरम् उदकस्य प्रेरकम् ऋतस्य यज्ञस्य गोपां गोपायितारं विश्वस्मै सर्वस्मै स्वर्दृशे सर्वदृशे देवाय साधारणम् इत् समानमेव सन्तं सोमं विः पक्षी श्येनः भरत् स्वर्गादाहरत् ॥

---

१. ग-सिषासन् वाजेषु संग्रामेषु अश्वानां घासं प्रयच्छति तद्वत् जयद्भ्यो धनानि प्रयच्छसीत्यर्थः ।
२. त१-भ१.२.३.७-महो महतः; भ४-महो महसः । ३. ग-त६-भ१.७- अस्मदर्थे । ४. त१.६-भ१.९.७-धृष्णवः; भ४-धृष्टाः धर्षणशीलाः । ५ त१ २-महतो; त५-अतोपि ।

अधा॑ हिन्वा॒न इ॑न्द्रि॒यं ज्यायो॑ महि॒त्वमा॑नशे । अ॒भि॒ष्टि॒कृद्विच॑र्षणिः ॥ ५ ॥

अध॑ । हि॒न्वा॒नः । इ॒न्द्रि॒यम् । ज्याय॑ । म॒हि॒ऽत्वम् । आ॒न॒शे॒ । अ॒भि॒ष्टि॒ऽकृत् । विऽच॑र्षणिः ॥५॥

अध अथ विचर्षणिः कर्मणां विद्रष्टा अभिष्टिकृत् यजमानानामभीष्टस्य फलस्य कर्ता सोमः इन्द्रियं स्वकीयं बलं हिन्वानः प्रेरयन् ज्यायः प्रशस्यतरं महित्वं महत्त्वम् आनशे प्राप्नोति ॥ ॥ ५ ॥

' पवस्व ' इति पञ्चर्चं पञ्चविंशं सूक्तम् । ऋष्याद्याः पूर्ववत् । ' पवस्व ' इत्यनुक्रान्तम् । गतो विनियोगः ॥

पव॑स्व वृ॒ष्टिमा सु नो॒ऽपामू॒र्मिं दि॒वस्परि॑ । अ॒य॒क्ष्मा बृ॑ह॒तीरिषः॑ ॥ १ ॥

पव॑स्व । वृ॒ष्टिम् । आ । सु । नः॒ । अ॒पाम् । ऊ॒र्मिम् । दि॒वः । परि॑ । अ॒य॒क्ष्माः । बृ॒ह॒तीः । इषः॑ ॥१॥

हे सोम त्वं दिवः द्युलोकात् वृष्टिं नः अस्माकम् आ पवस्व समन्तात् क्षर । एतदेव दर्शयति । अपाम् उदकानाम् ऊर्मिं तरङ्गं दिवः परि आ पवस्व । अपि च अयक्ष्माः यक्ष्मरहितानि[1] अनामयानि बृहतीः महान्ति[2] इषः अन्नानि आ पवस्व ॥

तया॑ पवस्व॒ धार॑या॒ यया॒ गाव॑ इ॒हाग॑मन् । जन्या॑स॒ उप॑ नो गृ॒हम् ॥ २ ॥

तया॑ । प॒व॒स्व॒ । धार॑या । यया॑ । गावः॑ । इ॒ह । आ॒ऽगम॑न् । जन्या॑सः । उप॑ । नः॒ । गृ॒हम् ॥ २ ॥

हे सोम त्वं तया तादृश्या धारया पवस्व क्षर । कीदृश्येत्यत्राह[3] । यया यादृश्या त्वदीयया धारया जन्यासः जन्याः शत्रुजनपदभवाः गावः इह अस्मिँल्लोके नः अस्माकं संबन्धि गृहम् उप आगमन् उपागच्छन्ति ॥

घृ॒तं प॑वस्व॒ धार॑या य॒ज्ञेषु॑ देव॒वीत॑मः । अ॒स्मभ्यं॑ वृ॒ष्टिमा प॑व ॥ ३ ॥

घृ॒तम् । प॒व॒स्व॒ । धार॑या । य॒ज्ञेषु॑ । दे॒व॒ऽवीत॑मः । अ॒स्मभ्य॑म् । वृ॒ष्टिम् । आ । प॒व॒ ॥ ३ ॥

हे सोम यज्ञेषु देववीतमः अत्यन्तं देवकामस्त्वम् अस्मभ्यं भार्गवेभ्यः[4] कविभ्यः घृतम् उदकम् । ' घृतं घृतम् ' इत्युदकनामसु पाठात् । धारया संपातेन पवस्व क्षर । वृष्टिं वर्षं च आ पव पवस्व ॥

स न॑ ऊ॒र्जे व्य१॒॑व्ययं॑ प॒वित्रं॑ धाव॒ धार॑या । दे॒वासः॑ शृ॒णव॒न्हि क॑म् ॥ ४ ॥

सः । नः॒ । ऊ॒र्जे । वि । अ॒व्यय॑म् । प॒वित्र॑म् । धा॒व॒ । धार॑या । दे॒वासः॑ । शृ॒णव॑न् । हि । क॒म् ॥४॥

हे सोम सुतः अभिषुतस्त्वं नः अस्माकम् ऊर्जे अन्नाय अव्ययम् अविमयं पवित्रं धारया संपातेन वि धाव प्राप्नुहि । देवासः देवा अपि हि कं शृणवन् गमनवेलायामुत्पन्नं तव शब्दं शृण्वन्तु ॥

पव॑मानो असिष्यद॒द्रक्षां॑स्यप॒जङ्घ॑नत् । प्र॒त्न॒वद्रो॒चय॒न्रुचः॑ ॥ ५ ॥

पव॑मानः । अ॒सि॒ष्य॒द॒त् । रक्षां॑सि । अ॒प॒ऽजङ्घ॑नत् । प्र॒त्न॒ऽवत् । रो॒चय॑न् । रुचः॑ ॥ ५ ॥

१. म–यक्ष्मरहिताः; त१-म१.७–रहितानि । २. ग–महत्यः । ३. ग–°त्यत आह । ४. ग–होत्रच्छावाकादिभ्यो ।

रक्षांसि राक्षसान् अपजङ्घनत् अपघ्नन् रुचः आत्मीया दीप्तीः प्रत्नवत् पुराणवत्[1] रोचयन् दीपयन् पवमानः सोमः असिष्यदत् स्यन्दते ॥  ॥ ६ ॥

'उत्ते' इति पञ्चर्चं पञ्चाशं सूक्तमाङ्गिरसस्योचथ्यस्यार्षं गायत्रं पवमानसोमदेवताकम्। तथा चानुक्रान्तम्—'उत्ते शुष्मास उचथ्यः' इति। उक्तो विनियोगः ॥

**उत्ते शुष्मास ईरते सिन्धोरूर्मेरिव स्वनः। वाणस्य चोदया पविम् ॥ १ ॥**

उत्। ते। शुष्मासः। ईरते। सिन्धोः। ऊर्मेःऽइव। स्वनः। वाणस्य। चोदय। पविम् ॥ १ ॥

हे सोम ते तव शुष्मासः शुष्मा वेगाः उत् ईरते उद्गच्छन्ति। तत्र दृष्टान्तः। सिन्धोः समुद्रस्य ऊर्मेरिव यथा तरङ्गात् स्वनः ध्वनिरुद्गच्छति तद्वदित्यर्थः। सः त्वं वाणस्य विसृष्टस्य बाणस्य नालस्य[2] वा वादित्रविशेषस्य[2] पविं शब्दम्। 'पविः भारती' इति वाङ्नामसु पाठात्। चोदय प्रेरय। वेगेन स्यन्दमानस्त्वं विसृष्टबाणशब्दसदृशं शब्दं कुर्वित्यर्थः ॥

**प्रसवे त उदीरते तिस्रो वाचो मखस्युवः। यदव्य एषि सानवि ॥ २ ॥**

प्रऽसवे। ते। उत्। ईरते। तिस्रः। वाचः। मखस्युवः। यत्। अव्ये। एषि। सानवि ॥ २ ॥

हे सोम ते तव प्रसवे सति मखस्युवः मखमिच्छतो यजमानस्य तिस्रः वाचः ऋग्यजुःसामात्मकानि त्रीणि वाक्यानि उदीरते उद्गच्छन्ति। कदेत्यत आह। यत् यदा सानवि समुच्छ्रिते अव्ये अविमये पवित्रे एषि त्वं गच्छसि ॥

**अव्यो वारे परि प्रियं हरिं हिन्वन्त्यद्रिभिः। पवमानं मधुश्चुतम् ॥ ३ ॥**

अव्यः। वारे। परि। प्रियम्। हरिम्। हिन्वन्ति। अद्रिऽभिः। पवमानम्। मधुऽश्चुतम् ॥ ३ ॥

प्रियं देवानां प्रीतिकरं हरिं हरितवर्णम् अद्रिभिः ग्रावभिरभिषुतं मधुश्चुतं मधुनो रसस्य स्रावयितारं पवमानं सोमम् अव्यः अवेः वारे वाले परि हिन्वन्ति ऋत्विजः परिप्रेरयन्ति ॥

**आ पवस्व मदिन्तम पवित्रं धारया कवे। अर्कस्य योनिमासदम् ॥ ४ ॥**

आ। पवस्व। मदिन्ऽतम। पवित्रम्। धारया। कवे। अर्कस्य। योनिम्। आऽसदम् ॥ ४ ॥

हे मदिन्तम मादयितृतम कवे क्रान्तकर्मन् सोम अर्कस्य अर्चनीयस्येन्द्रस्य योनिं स्थानम् आसदं प्राप्तुं पवित्रम् अतीत्य धारया संपातेन आ पवस्व आभिमुख्येन क्षर। यद्यप्येषा पूर्वस्मिन्नध्याये (ऋ. सं. ९.२५.६) व्याकृता तथापि मन्दमतीनां विस्मरणशङ्कया पुनर्व्याख्याता ॥

**स पवस्व मदिन्तम गोभिरञ्जानो अक्तुभिः। इन्दविन्द्राय पीतये ॥ ५ ॥**

सः। पवस्व। मदिन्ऽतम। गोभिः। अञ्जानः। अक्तुऽभिः। इन्दो इति। इन्द्राय। पीतये ॥ ५ ॥

हे मदिन्तम मादयितृतम इन्दो सोम अक्तुभिः अञ्जनसाधनभूतैः गोभिः गोविकारैः पयोभिः अञ्जानः अज्यमानः संसिच्यमानः सः त्वम् इन्द्राय इन्द्रस्य पीतये पानाय[3] पवस्व क्षर ॥  ॥ ७ ॥

१. ग-त७-भ७—'पुराणवत्' नास्ति। २. ग-त६-भ१.७—'नालस्य...विशेषस्य' नास्ति। ३. ग—पानार्थं; त१.२.४.५.७—पानाय।

‘अध्वर्यो’ इति पञ्चर्चं सप्तदशं सूक्तमाङ्गिरसस्योचथ्यस्यार्षं गायत्रं पवमानसोमदेवताकम् । तथा चानुक्रम्यते—‘अध्वर्यो’ इति । गतः सूक्तविनियोगः ॥

अध्व॑र्यो॒ अद्रि॑भिः सु॒तं सोमं॑ प॒वित्र॒ आ सृ॑ज । पु॒नी॒हीन्द्रा॑य॒ पात॑वे ॥ १ ॥

अध्व॑र्यो॒ इति॑ । अद्रि॑ऽभिः । सु॒तम् । सोम॑म् । प॒वित्रे॑ । आ । सृ॒ज॒ । पु॒नी॒हि । इन्द्रा॑य । पात॑वे ॥ १ ॥

हे अध्वर्यो अद्रिभिः ग्रावभिः सुतम् अभिषुतं सोमं पवित्रे आ सृज । पूतदेव वर्धापति । इन्द्राय इन्द्रस्य पातवे पानाय पुनीहि शोधय ॥

दि॒वः पी॒यूष॑मुत्त॒मं सोम॒मिन्द्रा॑य व॒ज्रिणे॑ । सु॒नोता॒ मधु॑मत्तमम् ॥ २ ॥

दि॒वः । पी॒यूष॑म् । उ॒त्ऽत॒मम् । सोम॑म् । इन्द्रा॑य । व॒ज्रिणे॑ । सु॒नोत॑ । मधु॑मत्ऽतमम् ॥ २ ॥

हे अध्वर्यवः यूयं मधुमत्तमम् अतिशयेन मधुमन्तं दिवः द्युलोकस्य पीयूषम् अमृतम् उत्तमं श्रेष्ठं सोमं वज्रिणे वज्रवते इन्द्राय सुनोत अभिषुणुत ॥

तव॒ त्य इ॑न्दो॒ अन्ध॑सो दे॒वा मधो॒र्व्य॑श्नते । पव॑मानस्य म॒रुतः॑ ॥ ३ ॥

तव॑ । त्ये । इन्दो॒ इति॑ । अन्ध॑सः । दे॒वाः । मधोः॑ । वि । अ॒श्न॒ते॒ । पव॑मानस्य । म॒रुतः॑ ॥ ३ ॥

हे इन्दो सोम तव संबन्धिनं मधोः मदकरस्य[1] पवमानस्य[2] पूयमानम् अन्धसः अन्नम् । कर्मणि षष्ठी । त्ये त इमे देवाः इन्द्रादयः मरुतः च व्यश्नते व्याप्नुवन्ति प्राप्नुवन्तीत्यर्थः ॥

त्वं हि सो॑म व॒र्धय॑न्त्सु॒तो मदा॑य॒ भूर्ण॑ये । वृष॑न्स्तो॒तार॑मू॒तये॑ ॥ ४ ॥

त्वम् । हि । सो॒म॒ । व॒र्धय॑न् । सु॒तः । मदा॑य । भूर्ण॑ये । वृष॑न् । स्तो॒तार॑म् । ऊ॒तये॑ ॥ ४ ॥

हे सोम सुतः अभिषुतः त्वं वर्धयन् देवान् प्रवृद्धान् कुर्वन् वृषन् कामानाम् वर्षन् भूर्णये क्षिप्राय मदाय ऊतये रक्षणाय च स्तोतारम् अभिगच्छसीत्यर्थः[3] ॥

अ॒भ्य॑र्ष विचक्षण प॒वित्रं॒ धार॑या सु॒तः । अ॒भि वाज॑मु॒त श्रवः॑ ॥ ५ ॥

अ॒भि । अ॒र्ष॒ । वि॒ऽच॒क्ष॒ण॒ । प॒वित्र॑म् । धार॑या । सु॒तः । अ॒भि । वाज॑म् । उ॒त । श्रवः॑ ॥ ५ ॥

हे विचक्षण सोम सुतः अभिषुतस्त्वं पवित्रम् अभि प्रति धारया अर्ष गच्छ । उत अपि चास्माकं वाजम् अन्नं श्रवः कीर्तिं च अभि अर्षेत्यर्थः[4] ॥ ॥ ८ ॥

‘परि द्युक्षः’ इति पञ्चर्चमष्टादशं सूक्तम् । ऋष्याद्याः पूर्ववत् । ‘परि द्युक्षः’ इत्यनुक्रान्तम् । उक्तो विनियोगः ॥

परि॑ द्यु॒क्षः स॒नद्र॑यि॒र्भर॒द्वाजं॑ नो॒ अन्ध॑सा । सु॒वा॒नो अ॑र्ष प॒वित्र॒ आ ॥ १ ॥

परि॑ । द्यु॒क्षः । स॒नत्ऽर॑यिः । भर॑त् । वाज॑म् । नः॒ । अन्ध॑सा । सु॒वा॒नः । अ॒र्ष॒ । प॒वित्रे॑ । आ ॥ १ ॥

द्युक्षः दीप्तः सनद्रयिः दीयमानधनः सोमः नः अस्माकं वाजं बलम् अन्धसा अन्नेन सह परि भरत् परिभरतु[5] प्रयच्छतु[6] । अथ प्रत्यक्षस्तुतिः । हे सोम सुवानः अभिषूयमाणस्त्वं पवित्रे आ अर्ष क्षर ॥

---

१. ग-मधुरस्य । २. ग-पूयमानस्य । ३. ग-अभ्यगाति उत्तरत्र संबंधः । ४. त१.४.५.६-भ१.७-मु-रक्षेत्यर्थः; त३-रक्षेति शेषः । ५. ग-संपादयतु, त३.६-भ१.२.७-भरतु । ६. ग-'प्रयच्छतु...सोम' नास्ति ।

तव प्रत्नेभिरध्वभिरव्यो वारे परि प्रियः । सहस्रधारो यात्तना ॥ २ ॥

तव । प्रत्नेभिः । अध्वऽभिः । अव्यः । वारे । परि । प्रियः । सहस्रऽधारः । यात् । तना ॥२॥

हे सोम तव संबन्धी प्रियः देवानां प्रीतिकरः सहस्रधारः बहुधारः तना विस्तृतसारो[1] रसः प्रत्नेभिः पुराणैः अध्वभिः मार्गैः अव्यः अवेः वारे वाले दशापवित्रे परि यात् परिगच्छति ॥

चरुर्न यस्तमीङ्खयेन्दो न दानमीङ्खय । वधैर्वधस्नवीङ्खय ॥ ३ ॥

चरुः । न । यः । तम् । ईङ्खय । इन्दो इति । न । दानम् । ईङ्खय ।
वधैः । वधस्नो इति वधऽस्नो । ईङ्खय ॥ ३ ॥

हे सोम चरुर्न चरुरिव यः पूर्णोदरो[2] भवति तमीङ्खय अस्मान् प्रापय । अपि च हे इन्दो न इदानीं दानं देयम् ईङ्खय । हे वधस्नो प्रहारेण प्रस्रवणशील सोम वधैः प्राप्तैः प्रहारैः ईङ्खय ॥

नि शुष्ममिन्दवेषां पुरुहूत जनानाम् । यो अस्माँ आदिदेशति ॥ ४ ॥

नि । शुष्मम् । इन्दो इति । एषाम् । पुरुऽहूत । जनानाम् । यः । अस्मान् । आऽदिदेशति ॥४॥

हे पुरुहूत बहुभिराहूत इन्दो सोम त्वं यः शुष्मो येषां शत्रुजनानां बलम् अस्मान् आदिदेशति बाधार्थमाह्वयति एषां शत्रुजनानां तं शुष्मं बलं नि न्यक् कुर्विति शेषः ॥

शतं न इन्द ऊतिभिः सहस्रं वा शुचीनाम् । पवस्व मंहयद्रयिः ॥ ५ ॥

शतम् । नः । इन्दो इति । ऊतिऽभिः । सहस्रम् । वा । शुचीनाम् । पवस्व । मंहयत्ऽरयिः ॥५॥

हे इन्दो सोम मंहयद्रयिः प्रदीयमानधनस्त्वं नः अस्माकम् ऊतिभिः ऊतिभ्यः । विभक्तिव्यत्ययः । रक्षार्थं शुचीनां शुद्धानां तव अंशभूतानां सोमानां शतं सहस्रं वा पवस्व क्षर ॥ ॥ १ ॥

'उत्ते' इति चतुर्ऋचमेकोनत्रिंशं सूक्तं काश्यपस्यावत्सारस्यार्षं गायत्रं पवमानसोमदेवताकम् । तथा चानुक्रान्तम्—'उत्ते चतुष्कमवत्सारः' इति । उक्तो विनियोगः ॥

उत्ते शुष्मासो अस्थू रक्षो भिन्दन्तो अद्रिवः । नुदस्व याः परिस्पृधः ॥ १ ॥

उत् । ते । शुष्मासः । अस्थुः । रक्षः । भिन्दन्तः । अद्रिऽवः । नुदस्व । याः । परिऽस्पृधः ॥१॥

हे अद्रिवः ग्राववन् सोम ते तव शुष्मासः शुष्मा वेगाः रक्षः राक्षसान् भिन्दन्तः विदारयन्तः उत् अस्थुः उत्तिष्ठन्ति । याः स्पृधः स्पर्धमानाः शत्रुसेनाः अस्मान् प्रतिबाधन्ते ताः सर्वाः नुदस्व प्रेरय । बाधस्वेत्यर्थः ॥

अया निजघ्निरोजसा रथसङ्गे धने हिते । स्तवा अबिभ्युषा हृदा ॥ २ ॥

अया । निऽजघ्निः । ओजसा । रथऽसङ्गे । धने । हिते । स्तवै । अबिभ्युषा । हृदा ॥२॥

---

१. ग–विस्तृतस्सारो; त६-म१.७–विस्तृतसारो । २. ग-त१.२.३.४.५-म१.२–पूर्णोदनो; त६-म७–पूर्णोदिरी; अ७–पूर्णोदनो ।

हे सोम त्वम् अया अनेन स्तोत्रेण ओजसा बलेन निजघ्निः शत्रून् हन्तुं शीलवान्। तं त्वाम् अबिभ्युषा अभीतेन हृदा मनसा युक्तोऽहं रथसङ्गे अस्माकं रथानां सङ्गे हिते शत्रुषु निहिते धने च निमित्ते स्तवै स्तौमि ॥

अस्य व्रतानि नाधृषे पवमानस्य दूढ्या । रुज यस्त्वा पृतन्यति ॥ ३ ॥

अस्य । व्रतानि । न । आऽधृषे । पवमानस्य । दुःऽध्या । रुज । यः । त्वा । पृतन्यति ॥३॥

हे सोम पवमानस्य क्षरतो यस्य अस्य तव व्रतानि कर्माणि दूढ्या दुर्बुद्धिना राक्षसेन नाधृषे आधर्षयितुमशक्यानि स त्वं त्वां यः दुर्बुद्धिः शत्रुः पृतन्यति योद्धुमिच्छति तं रुज बाधस्व ॥

तं हिन्वन्ति मदच्युतं हरिं नदीषु वाजिनम् । इन्दुमिन्द्राय मत्सरम् ॥ ४ ॥

तम् । हिन्वन्ति । मदऽच्युतम् । हरिम् । नदीषु । वाजिनम् । इन्दुम् । इन्द्राय । मत्सरम् ॥४॥

मदच्युतं मदस्य च्यावयितारं हरिं हरितवर्णं वाजिनं बलिनं मत्सरं मदकरं तम् इन्दुं सोमं नदीषु वसतीवरीषु इन्द्राय इन्द्रार्थं हिन्वन्ति ऋत्विजः प्रेरयन्ति ॥ ॥ १० ॥

'अस्य प्रत्नाम्' इति चतुर्ऋचं त्रिंशं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'अस्य प्रत्नाम्' इत्यनुक्रान्तम्। उक्तो विनियोगः ॥

अस्य प्रत्नामनु द्युतं शुक्रं दुदुह्रे अह्रयः । पयः सहस्रसामृषिम् ॥ १ ॥

अस्य । प्रत्नाम् । अनु । द्युतम् । शुक्रम् । दुदुह्रे । अह्रयः । पयः । सहस्रऽसाम् । ऋषिम् ॥१॥

अस्य सोमस्य प्रत्नां पुराणां द्युतं[2] द्योतमानां तनुम् अनु[2] शुक्रं दीप्तं सहस्रसाम् अभिलषितस्यापरिमितस्य दातारम् ऋषिम् अतीन्द्रियस्य कर्मफलस्य द्रष्टारं पयः पातव्यं रसम् अह्रयः कवयः दुदुह्रे दुहन्ति ॥

अयं सूर्य इवोपदृगयं सरांसि धावति । सप्त प्रवत आ दिवम् ॥ २ ॥

अयम् । सूर्यःऽइव । उपऽदृक् । अयम् । सरांसि । धावति । सप्त । प्रऽवतः । आ । दिवम् ॥२॥

अयं सोमः सूर्य इव यथा सूर्यः सर्वस्य लोकस्योपद्रष्टा तद्वत् कर्मणाम् उपदृक् उपद्रष्टा। अपि च अयं सोमः सरांसि। त्रिंशदुक्थपात्राणीति केचिद्वर्णयन्ति। अपरे तु त्रिंशदहोरात्राणि सरांसीति। तानि धावति[3] गच्छति[3]। तथा च यास्कः—'तत्रैतद्याज्ञिका वेदयन्ते त्रिंशदुक्थपात्राणि माध्यंदिने सवन एकदेवतानि तान्येतस्मिन्काल एकेन प्रतिधानेन पिबन्ति तान्यत्र सरांस्युच्यन्ते। त्रिंशदपरपक्षस्याहोरात्रास्त्रिंशत्पूर्वपक्षस्येति नैरुक्ताः' (निरु. ५.११) इति। अपि चायं सोमः दिवम् अधिकृत्य सप्त प्रवतः सप्त नदीः आ तिष्ठति ॥

अयं विश्वानि तिष्ठति पुनानो भुवनोपरि । सोमो देवो न सूर्यः ॥ ३ ॥

अयम् । विश्वानि । तिष्ठति । पुनानः । भुवना । उपरि । सोमः । देवः । न । सूर्यः ॥३॥

पुनानः पूयमानः अयं सोमः विश्वानि सर्वाणि भुवना भुवनानि सर्वेषां भुवनानाम् उपरि तिष्ठति। तत्र दृष्टान्तमाह। देवो न सूर्यः। यथा सूर्यो देवः सर्वेषां भुवनानामुपरि तिष्ठति तद्वदयं सोमोऽपीत्यर्थः ॥

---

१. त६-म७-प्रकृतेन। २. ग-द्योतमानां तनु; त१-म२-द्योतमानां तनुमनु; त६-म७-द्योतमन्तनु; म१-द्योततनुमनु। ३. ग-तावति; त२.६-म१.२.७-धावति।

परि णो देववीतये वाजाँ अर्षसि गोमतः । पुनान इन्दविन्द्रयुः ॥ ४ ॥

परि । नः । देवऽवीतये । वाजान् । अर्षसि । गोऽमतः । पुनानः । इन्दो इति । इन्द्रऽयुः ॥४॥

हे इन्दो सोम इन्द्रयुः इन्द्रकामः पुनानः पूयमानस्त्वं नः अस्माकं देववीतये यज्ञाय गोमतः गोयुक्तानि वाजान् अन्नानि परि अर्षसि परितः प्रेरयसि ॥ ॥ ११ ॥

'यवंयवं नः' इति चतुर्ऋचमेकविंशं सूक्तं काश्यपस्यावत्सारस्यार्षं गायत्रं पवमानसोमदेवताकम् । 'यवंयवम्' इत्यनुक्रान्तम् । गतो विनियोगः ॥

यवंयवं नो अन्धसा पुष्टम्पुष्टं परि स्रव । सोम विश्वा च सौभगा ॥ १ ॥

यवम्ऽयवम् । नः । अन्धसा । पुष्टम्ऽपुष्टम् । परि । स्रव । सोम । विश्वा । च । सौभगा ॥१॥

हे सोम त्वं नः अस्माकं पुष्टंपुष्टं प्रवृद्धं यवंयवं पुनःपुनर्युतं रसम् अन्धसा अन्नात्मना परि स्रव धारया क्षर ॥ अत्र सार्वविभक्तिकस्याप्यन्ते पीडितत्वात् 'आबाधे च' (पा. सू. ८.१.१०) इति द्विर्भावः[1] । पीडा प्रयोक्तृधर्मो नाभिधेयधर्म इत्युक्तम् ॥ अपि च विश्वा विश्वानि सौभगा सौभगानि धनानि परि स्रव ॥

इन्दो यथा तव स्तवो यथा ते जातमन्धसः । नि बर्हिषि प्रिये सदः ॥ २ ॥

इन्दो इति । यथा । तव । स्तवः । यथा । ते । जातम् । अन्धसः । नि । बर्हिषि । प्रिये । सदः ॥२॥

हे[2] इन्दो सोम अन्धसः अन्नरूपस्य तव संबन्धी स्तवः स्तवनं स्तोत्रं यथा ते तव जातं जन्म यथा प्रादुर्भूतमस्ति तथा त्वं प्रिये प्रीणयितरि बर्हिषि अस्मदीये नि सदः निषण्णो भव ॥

उत नो गोविदश्ववित्पवस्व सोमान्धसा । मक्षूतमेभिरहभिः ॥ ३ ॥

उत । नः । गोऽवित् । अश्वऽवित् । पवस्व । सोम । अन्धसा । मक्षुऽतमेभिः । अहऽभिः ॥३॥

उत अपि च हे सोम नः अस्माकं गोवित् गोप्रदः अश्ववित् अश्वप्रदश्च त्वं मक्षूतमेभिः मक्षूतमैरतिशयेन शीघ्रैः अहभिः अहोभिर्दिनैः अन्धसा अन्नेन पवस्व धारया क्षर ॥

यो जिनाति न जीयते हन्ति शत्रुमभीत्य । स पवस्व सहस्रजित् ॥ ४ ॥

यः । जिनाति । न । जीयते । हन्ति । शत्रुम् । अभिऽइत्य । सः । पवस्व । सहस्रऽजित् ॥४॥

हे सहस्रजित् असंख्यातानां[3] शत्रूणां जेतः सोम यः भवान्[4] जिनाति शत्रून् हन्ति न जीयते स्वयं शत्रुभिर्न जीयते । न हन्यत इत्यर्थः । शत्रुमभीत्य शत्रुं स्वयमभ्येत्य हन्ति न च स्वयं शत्रुभिरभिभूयते सः त्वं पवस्व क्षर ॥ ॥ १२ ॥

'परि सोमः' इति चतुर्ऋचं द्वाविंशं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'परि सोमः' इत्यनुक्रान्तम् । उक्तो विनियोगः ॥

परि सोम ऋतं बृहदाशुः पवित्रे अर्षति । विघ्नन्रक्षांसि देवयुः ॥ १ ॥

परि । सोमः । ऋतम् । बृहत् । आशुः । पवित्रे । अर्षति । विऽघ्नन् । रक्षांसि । देवऽयुः ॥१॥

---

1. ग–द्विर्भावः । आबाधनमाबाधः; त३-अ२.५–द्विर्भावः । अबाधमाबाधः, अ१.७–द्विर्भावः । आबाधे चेति । 2. ग–हे इंदो यथा तव स्तवो भवति यथा वा ते तुभ्यं अंधसो जातं अदनं प्रियार्थं तादृशः त्वं बर्हिषि निषीद । 3. अ४–सहस्रसंख्यानां । 4. ग-त१.६-अ१.२.७–'भवान्' नास्ति ।

आशुः क्षिप्रकारी देवयुः देवकामः सोमः पवित्रे स्थित्वा रक्षांसि राक्षसान् विघ्नन् निघ्नन् बृहत् महत् ऋतम् अन्नं परि अर्षति परिगमयति । अस्मभ्यं प्रयच्छतीत्यर्थः ॥

यत्सोमो॒ वाज॒मर्ष॑ति श॒तं धारा॑ अप॒स्युवः॑ । इन्द्र॑स्य स॒ख्यमा॑वि॒शन् ॥ २ ॥

यत् । सोमः॑ । वाज॑म् । अर्ष॑ति । श॒तम् । धाराः॑ । अ॒प॒स्युवः॑ । इन्द्र॑स्य । स॒ख्यम् । आ॒ऽवि॒शन् ॥२॥

यत् यदा अपस्युवः कर्मकामाः शतं शतसंख्याकाः धाराः सोमस्य धाराः इन्द्रस्य सख्यं सखित्वम् आविशन् प्राप्नुवन्ति तदा सोमः वाजम् अन्नम् अर्षति गमयति । अस्मभ्यं प्रयच्छतीत्यर्थः ॥

अ॒भि त्वा॒ योष॑णो॒ दश॑ जा॒रं न क॒न्या॑नूषत । मृ॒ज्यसे॑ सोम सा॒तये॑ ॥ ३ ॥

अ॒भि । त्वा॒ । योष॑णः । दश॑ । जा॒रम् । न । क॒न्या॑ । अ॒नू॒ष॒त॒ । मृ॒ज्यसे॑ । सो॒म॒ । सा॒तये॑ ॥३॥

हे सोम त्वा त्वां याः दश दशसंख्याकाः योषणः अङ्गुलयः कन्या पितृमती[1] कन्यका जारं न यथा प्रियमभिशब्दायते तद्वत् अभि अनूषत अभिशब्दायन्ते ताभिः सातये अस्माकं धनस्य लाभाय मृज्यसे इन्द्रार्थं शोध्यसे[2] ॥

त्वमिन्द्रा॑य॒ विष्ण॑वे स्वा॒दुरि॑न्दो॒ परि॑ स्रव । नॄन्स्तो॒तॄन्पा॒ह्यंह॑सः ॥ ४ ॥

त्वम् । इन्द्रा॑य । विष्ण॑वे । स्वा॒दुः । इन्दो॒ इति॑ । परि॑ । स्र॒व॒ । नॄन् । स्तो॒तॄन् । पा॒हि॒ । अंह॑सः ॥४॥

हे इन्दो सोम स्वादुः प्रियरसस्त्वम् इन्द्राय इन्द्रार्थं विष्णवे विष्ण्वर्थं च परि स्रव परिक्षर । नॄन् कर्मणां नेतॄन् स्तोतॄन् त्वद्विषयाणां स्तुतीनां कर्तॄन् अंहसः दुरितात् पाहि रक्ष च ॥ ॥ १३ ॥

'प्र ते धाराः' इति चतुर्ऋचं नवमं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'प्र ते धाराः' इत्यनुक्रान्तम् । उक्तो विनियोगः ॥

प्र ते॒ धारा॑ अस॒श्चतो॑ दि॒वो न य॑न्ति वृ॒ष्टयः॑ । अच्छा॑ वाजं॑ सह॒स्रिण॑म् ॥ १ ॥

प्र । ते॒ । धाराः॑ । अ॒स॒श्चतः॑ । दि॒वः । न । य॒न्ति॒ । वृ॒ष्टयः॑ । अच्छ॑ । वाज॑म् । स॒ह॒स्रिण॑म् ॥१॥

हे सोम ते तव असश्चतः सङ्गरहिताः धाराः सहस्रिणम् अपरिमितसंख्याकं वाजम् अन्नम् अच्छ अस्मदर्थं प्र यन्ति प्रगच्छन्ति । तत्र दृष्टान्तः । दिवः न वृष्टयः । यथा द्युलोकात् वर्षधारा निःसङ्गाः प्रजानामपरिमितमन्नं[3] प्रयच्छन्ति[4] तद्वदित्यर्थः ॥

अ॒भि प्रि॒याणि॒ काव्या॒ विश्वा॒ चक्षा॑णो अर्षति । हरि॑स्तुञ्जा॒न आयु॑धा ॥ २ ॥

अ॒भि । प्रि॒याणि॑ । काव्या॑ । विश्वा॑ । चक्षा॑णः । अ॒र्ष॒ति॒ । हरिः॑ । तु॒ञ्जा॒नः । आयु॑धा ॥ २ ॥

हरिः हरितवर्णः सोमः विश्वा विश्वानि प्रियाणि देवानां प्रीतिकराणि काव्या काव्यानि कर्माणि चक्षाणः पश्यन् आयुधा स्वकीयान्यायुधानि तुञ्जानः राक्षसान् प्रति प्रेरयन् अभि अर्षति यागं प्रति गच्छति ॥

---

१. ग–ऋतुमती । २. ग–त१-भ५–तं शोध्यसे । ३. ग–प्रजानाम° । ४. ग–त१-भ४.५–प्रति यांति; त–प्रयंति; भ१.२–प्रयाति ।

**स मर्मृजान आयुभिरिभो राजेव सुव्रतः । श्येनो न वंसु षीदति ॥ ३ ॥**

सः । मर्मृजानः । आयुऽभिः । इभः । राजाऽइव । सुऽव्रतः । श्येनः । न । वंसु । सीदति ॥३॥

सुव्रतः सुकर्मा सः सोमः आयुभिः मनुष्यैर्ऋत्विग्भिः मर्मृजानः शोध्यमानः इभः गतभयः राजेव यथा राजा श्येनो न यथा च श्येनस्तथा वंसु उदकेषु वसतीवरीषु सीदति ॥

**स नो विश्वा दिवो वसूतो पृथिव्या अधि । पुनान इन्दवा भर ॥ ४ ॥**

सः । नः । विश्वा । दिवः । वसु । उतो इति । पृथिव्याः । अधि । पुनानः । इन्दो इति । आ । भर ॥४॥

हे इन्दो सोम सः अभिषुतः पुनानः पवमानस्त्वं दिवः अधि दिवि स्थितानि उतो अपि च पृथिव्या अधि पृथिव्यां स्थितानि । अधीति सप्तम्यर्थानुवादः । विश्वा विश्वानि वसु वसूनि नः अस्मभ्यम् आ भर आहर ॥ ॥ १७ ॥

'तरत्सः' इति चतुर्ऋचं चतुर्दशं सूक्तम् । कण्वस्याद्यं पूर्ववत् । 'तरत्सः' इत्यनुक्रान्तम् । उक्तो विनियोगः ॥

**तरत्स मन्दी धावति धारा सुतस्यान्धसः । तरत्स मन्दी धावति ॥ १ ॥**

तरत् । सः । मन्दी । धावति । धारा । सुतस्य । अन्धसः । तरत् । सः । मन्दी । धावति ॥१॥

मन्दी देवानां हर्षकरः सः सोमः तरत् स्तोतॄन् पाप्मनः सकाशात् तारयन् धावति पवते । तदेव दर्शयति । सुतस्य अभिषुतस्य अन्धसः देवानामन्नभूतस्य सोमस्य धारा धावतीति । पुनरपि तदेवाह अत्यन्तादरार्थं तरत्स मन्दी धावति इति । यद्वा । अस्या ऋचो यास्केनोक्तोऽर्थो द्रष्टव्यः । तद्यथा—'तरति स पापं सर्वं मन्दी यः स्तौति धावति गच्छत्यूर्ध्वां गतिम् । धारा सुतस्यान्धसो धारयाभिषुतस्य[1] सोमस्य मन्त्रपूतस्य वाचा स्तुतस्य' ( निरु. १३.६ ) इति ॥

**उस्रा वेद वसूनां मर्तस्य देव्यवसः । तरत्स मन्दी धावति ॥ २ ॥**

उस्रा । वेद । वसूनाम् । मर्तस्य । देवी । अवसः । तरत् । सः । मन्दी । धावति ॥ २ ॥

वसूनां धनानाम् उस्रा उत्सरणशीला प्रदात्री देवी द्योतमाना स्तूयमाना वा यस्य[2] सोमस्य धारा मर्तस्य मनुष्यं यजमानम् अवसः रक्षितुं वेद जानाति । सिद्धमन्यत् ॥

**ध्वस्रयोः पुरुषन्त्योरा सहस्राणि दद्महे । तरत्स मन्दी धावति ॥ ३ ॥**

ध्वस्रयोः । पुरुऽसन्त्योः । आ । सहस्राणि । दद्महे । तरत् । सः । मन्दी । धावति ॥ ३ ॥

ध्वस्रयोः पुरुषन्त्योः । ध्वस्रः कश्चिद्राजा पुरुषन्तिः कश्चित् । तयोरुभयोः । अत्र इतरेतरयोगविवक्षया द्विवचनं द्रष्टव्यम् । सहस्राणि धनानां सहस्राणि आ दद्महे वयं प्रतिगृह्णीमः । तदस्माभिः प्रतिगृहीतं धनमुत्तममस्त्विति ऋषिः सोमं प्रार्थयत इति सोमस्य स्तुतिः । सिद्धमन्यत् । यथावत्सार एतयोर्धनानि प्रतिजग्राह एवं तरन्तपुरुमीळ्हौ प्रतिजगृहतुः । तथा च शाट्यायनकम्—'अथ ह वै तरन्तपुरुमीळ्हौ वैददश्वी ध्वस्रयोः पुरुषन्त्योर्वसु प्रतिगृह्य गरगिराविव मेनाते तौ ह स्माहतुर्वा सार्धं प्रतिमन्त्रयाते तावकामयेतामसातं नावितेवं सातं स्यादसातमिवैव च प्रतिगृहीतमिति

१. त१.२.५–धाराभिरभि°; त२.३.४ म२–धाराभि° । २. त३-म–'यस्य' नास्ति ।

तावेतच्चतुर्थमन्वपश्यतां तेन प्रत्यैतां ततो वै तयोरेतत् सहस्रमध्यात्ममिवैव स प्रतिगृहीतं स यः प्रतिगृह्य कामयेत ' इत्यादि ॥

**आ ययोस्त्रिंशतं तना सहस्राणि च दद्महे । तरत्स मन्दी धावति ॥ ४ ॥**

आ । ययोः । त्रिंशतम् । तना । सहस्राणि । च । दद्महे । तरत् । सः । मन्दी । धावति ॥४॥

ययोः ध्वस्रपुरुषन्त्योः त्रिंशतं त्रिंशतानि सहस्राणि तना धनानि आ दद्महे वयं प्रतिगृह्णीमः तयोरस्माभिः प्रतिगृहीतं तत्सर्वमप्रतिगृहीतमस्त्विति सोमस्तुतिः प्रार्थयत इति सोमस्यैव स्तुतिः । सिद्धमन्यत् ॥ ॥ १५ ॥

' पवस्व ' इति चतुर्ऋचं पञ्चाशं सूक्तम् । ऋष्याद्याः पूर्ववत् । ' पवस्व ' इत्यनुक्रान्तम् । गतो विनियोगः ॥

**पवस्व गोजिदश्वजिद्विश्वजित्सोम रण्यजित् । प्रजावद्रत्नमा भर ॥ १ ॥**

पवस्व । गोऽजित् । अश्वऽजित् । विश्वऽजित् । सोम । रण्यऽजित् ।
प्रजाऽवत् । रत्नम् । आ । भर ॥ १ ॥

हे सोम गोजित् शत्रूणां गवां जेता अश्वजित् अश्वानामपि जेता विश्वजित् विश्वस्य जगतो जेता रण्यजित् रमणीयस्य धनस्यापि जेता त्वं पवस्व धारया क्षर । अपि चास्मभ्यं प्रजावत् पुत्राद्युपेतं रत्नं रमणीयं धनम् आ भर आहर ॥

**पवस्वाद्भ्यो अदाभ्यः पवस्वौषधीभ्यः । पवस्व धिषणाभ्यः ॥ २ ॥**

पवस्व । अत्ऽभ्यः । अदाभ्यः । पवस्व । ओषधीभ्यः । पवस्व । धिषणाभ्यः ॥ २ ॥

हे सोम त्वम् अद्भ्यः वसतीवरीभ्यः अदाभ्यः केनाप्यहिंस्यः पवस्व क्षर । अपि च ओषधीभ्यः पवस्व क्षर । किंच धिषणाभ्यः ग्रावभ्यः पवस्व क्षर ॥

**त्वं सोम पवमानो विश्वानि दुरिता तर । कविः सीद नि बर्हिषि ॥ ३ ॥**

त्वम् । सोम । पवमानः । विश्वानि । दुःऽइता । तर । कविः । सीद । नि । बर्हिषि ॥ ३ ॥

हे सोम पवमानः पूयमानः कविः क्रान्तकर्मा त्वं विश्वानि सर्वाणि दुरितानि राक्षसैः कृतान्युपद्रवाणि तर निराकुरु । अस्मिन् बर्हिषि नि षीद च ॥

**पवमान स्वर्विदो जायमानोऽभवो महान् । इन्दो विश्वाँ अभीदसि ॥ ४ ॥**

पवमान । स्वः । विदः । जायमानः । अभवः । महान् । इन्दो इति । विश्वान् । अभि । इत् । असि ॥४॥

हे पवमान सोम त्वं स्वः सर्वं विदः यजमानाय प्रयच्छ । अपि च जायमानः प्रादुर्भवन्नेव महान् पूजनीयः अभवः[1] असि । किंच हे इन्दो सोम त्वं विश्वानित् सर्वानेव शत्रून् अभि असि तेजसाभिभवसि ॥ ॥ १६ ॥

' प्र गायत्रेण ' इति चतुर्ऋचं षष्टितमं सूक्तं काश्यपस्यावत्सारस्यार्षम् । तृतीया पुरउष्णिगाद्या द्वादशका अष्टका । शिष्टा गायत्र्यः । पवमानः सोमो देवता । तथा चानुक्रान्तं—' प्र गायत्रेणोपान्त्या पुरउष्णिक् ' इति । उक्तो विनियोगः ॥

1. क-ख-ग-म–' अभवः ' नास्ति ।

प्र गा॑य॒त्रेण॑ गायत॒ पव॑मानं॒ विच॑र्षणिम् । इन्दुं॑ स॒हस्र॑चक्षसम् ॥ १ ॥

प्र । गा॒य॒त्रेण॑ । गा॒य॒त॒ । पव॑मानम् । विऽच॑र्षणिम् । इन्दु॑म् । स॒हस्र॑ऽचक्षसम् ॥ १ ॥

विचर्षणिं विद्रष्टारं सहस्रचक्षसं बहुदर्शनं पवमानं पूयमानम् इन्दुं सोमं गायत्रेण गायत्रनामधेयेन साम्ना प्र गायत हे स्तोतारः गानं कुरुत । स्तुतेत्यर्थः ॥

तं त्वा॑ स॒हस्र॑चक्षसम॒थो स॒हस्र॑भर्णसम् । अति॒ वार॑मपाविषुः ॥ २ ॥

तम् । त्वा॒ । स॒हस्र॑ऽचक्षसम् । अथो॒ इति॑ । स॒हस्र॑ऽभर्णसम् । अति॑ । वार॑म् । अ॒पा॒वि॒षुः॒ ॥ २ ॥

हे सोम सहस्रचक्षसं बहुदर्शनम् अथो अपि च सहस्रभर्णसं बहुभरणं तम् अभिषुतं त्वा त्वां वारं वालं दशापवित्रम् अति अपाविषुः ऋत्विजः पावयन्ति ॥

अति॒ वारा॒न्पव॑मानो असिष्यदत्क॒लशाँ॑ अ॒भि धा॑वति । इन्द्र॑स्य॒ हार्द्या॑वि॒शन् ॥ ३ ॥

अति॑ । वारा॑न् । पव॑मानः । अ॒सि॒स्य॒द॒त् । क॒लशा॑न् । अ॒भि । धा॒व॒ति॒ । इन्द्र॑स्य । हार्दि॑ । आ॒ऽवि॒शन् ॥ ३ ॥

पवमानः पूयमानः सोमः वारान् अवेर्वालान् अति अतिक्रम्य असिष्यदत् स्यन्दते । अपि च इन्द्रस्य हार्दि हृदयम् आविशन् कलशान् द्रोणान् अभि धावति अभिगच्छति ॥

इन्द्र॑स्य सोम॒ राध॑से॒ शं प॑वस्व॒ विच॑र्षणे । प्र॒जाव॒द्रेत॒ आ भ॑र ॥ ४ ॥

इन्द्र॑स्य । सो॒म॒ । राध॑से । शम् । प॒व॒स्व॒ । वि॒ऽच॒र्ष॒णे॒ । प्र॒जाऽव॑त् । रेतः॑ । आ । भ॒र॒ ॥ ४ ॥

हे विचर्षणे विद्रष्टः त्वम् इन्द्रस्य राधसे राधनाय संसिद्धयै शं सुखकरं रसं पवस्व क्षर । अपि चास्मभ्यं प्रजावत् पुत्राद्युपेतं रेतः उदकमन्नं वा आ भर आहर । प्रयच्छेत्यर्थः ॥ ॥१७॥ ॥२॥

तृतीयेऽनुवाके सप्त सूक्तानि । तत्र 'अया वीती' इति त्रिंशदृचं प्रथमं सूक्तम् । अमहीयुराङ्गिरस ऋषिः । गायत्री छन्दः । पवमानः सोमो देवता । तथा चानुक्रान्तम्—'अया वीती त्रिंशदमहीयुः' इति । उक्तो विनियोगः ॥

अ॒या वी॒ती परि॑ स्रव॒ यस्त॑ इन्दो॒ मदे॒ष्वा । अ॒वाह॑न्नव॒तीर्नव॑ ॥ १ ॥

अ॒या । वी॒ती । परि॑ । स्र॒व॒ । यः । ते॒ । इ॒न्दो॒ इति॑ । मदे॑षु । आ । अ॒व॒ऽअह॑न् । न॒व॒तीः । नव॑ ॥ १ ॥

हे इन्दो सोम अया अनेन रसेन वीती वीत्या इन्द्रस्य भक्षणाय परि स्रव परिक्षर । कीदृशेन रसेनेत्यत आह । ते तव यः रसः मदेषु संग्रामेषु नवतीर्नव इति नवनवतिसंख्याकाश्च शत्रुपुरीः अवाहन् जघान । अमुं सोमरसं पीत्वा मत्तः सन्निन्द्र उक्तलक्षणाः शत्रुपुरीर्जघानेति कृत्वा रसो जघानेत्युपचारः ॥

पुरः॑ स॒द्य इ॒त्थाधि॑ये॒ दिवो॑दासाय॒ शम्ब॑रम् । अध॒ त्यं तु॒र्वशं॒ यदु॑म् ॥ २ ॥

पुरः॑ । स॒द्यः । इ॒त्थाऽधि॑ये । दिवः॑ऽदासाय । शम्ब॑रम् । अध॑ । त्यम् । तु॒र्वश॑म् । यदु॑म् ॥ २ ॥

सद्यः एकस्मिन्नेवाह्नि पुरः शत्रूणां पुराणि सोमरसोऽवाहन् । इत्थाधिये सत्यकर्मणे दिवोदासाय राज्ञे शम्बरं शत्रुपुराणां स्वामिनम् अध अथ त्यं तं तुर्वशं तुर्वशनामकं राजानं दिवोदासशत्रुं यदुं यदुनामकं राजानं च[1] वशमानयत्[1] । अत्रापि सोमरसं पीत्वा मत्तः सन्निन्द्रः सर्वमेतदकार्षीदिति सोमरसे कर्तृत्वमुपचर्यते ॥

1. ग–स्ववशमनयत्; मै१.७–च वशमनयत् ।

परि णो अश्वमश्वविद्गोमदिन्दो हिरण्यवत् । क्षरा सहस्रिणीरिषः ॥ ३ ॥

परि । नः । अश्वम् । अश्वऽवित् । गोऽमत् । इन्दो इति । हिरण्यऽवत् । क्षर । सहस्रिणीः । इषः ॥ ३ ॥

हे इन्दो सोम अश्वावित् अश्वस्य लम्भकस्त्वं नः अस्माकम् अश्वं गोमत् गोयुक्तं हिरण्यवत् हिरण्योपेतं धनं च परि क्षर । अपि च सहस्रिणीः बहूनि इषः अन्नानि क्षर ॥

पवमानस्य ते वयं पवित्रमभ्युन्दतः । सखित्वमा वृणीमहे ॥ ४ ॥

पवमानस्य । ते । वयम् । पवित्रम् । अभिऽउन्दतः । सखिऽत्वम् । आ । वृणीमहे ॥ ४ ॥

हे सोम पवित्रमभ्युन्दतः पवित्रमभिक्लेदयतः पवमानस्य क्षरतश्च ते तव सखित्वे सख्यं वयम् अमहीयव आङ्गिरसाः आ वृणीमहे प्रार्थयामहे ॥

ये ते पवित्रमूर्मयोऽभिक्षरन्ति धारया । तेभिर्नः सोम मृळय ॥ ५ ॥

ये । ते । पवित्रम् । ऊर्मयः । अभिऽक्षरन्ति । धारया । तेभिः । नः । सोम । मृळय ॥ ५ ॥

हे सोम ते तव ये[1] ऊर्मयः तरङ्गाः पवित्रं धारया क्षरन्ति तेभिः तैरूर्मिभिः नः अस्मान् मृळय सुखय ॥ ॥ १८ ॥

स नः पुनान आ भर रयिं वीरवतीमिषम् । ईशानः सोम विश्वतः ॥ ६ ॥

सः । नः । पुनानः । आ । भर । रयिम् । वीरऽवतीम् । इषम् । ईशानः । सोम । विश्वतः ॥ ६ ॥

हे सोम विश्वतः सर्वस्य जगतः ईशानः ईश्वरः सः अभिषुतः पुनानः पूयमानस्त्वं नः अस्मभ्यं रयिं धनं वीरवतीं पुत्राद्युपेतम् इषम् अन्नं च आ भर आहर ॥

एतमु त्यं दश क्षिपो मृजन्ति सिन्धुमातरम् । समादित्येभिरख्यत ॥ ७ ॥

एतम् । ऊँ इति । त्यम् । दश । क्षिपः । मृजन्ति । सिन्धुऽमातरम् । सम् । आदित्येभिः । अख्यत ॥ ७ ॥

सिन्धुमातरं यस्य सोमस्य सिन्धवो नद्यो मातरो भवन्ति एवं तम् एतम् इमं सोमं दश क्षिपः दशसंख्याका अङ्गुलयः मृजन्ति शोधयन्ति । अपि च सोऽयं सोमः आदित्येभिः आदित्यैः सम् अख्यत संगच्छते ॥

समिन्द्रेणोत वायुना सुत एति पवित्र आ । सं सूर्यस्य रश्मिभिः ॥ ८ ॥

सम् । इन्द्रेण । उत । वायुना । सुतः । एति । पवित्रे । आ । सम् । सूर्यस्य । रश्मिऽभिः ॥ ८ ॥

सुतः अभिषुतः सोमः पवित्रे इन्द्रेण सम् एति संगच्छते । उत अपि च वायुना समेति । सूर्यस्य रश्मिभिः मयूखैरपि सम् एति ॥

स नो भगाय वायवे पूष्णे पवस्व मधुमान् । चारुर्मित्रे वरुणे च ॥ ९ ॥

सः । नः । भगाय । वायवे । पूष्णे । पवस्व । मधुऽमान् । चारुः । मित्रे । वरुणे । च ॥ ९ ॥

हे सोम मधुमान् मधुररसः चारुः कल्याणस्वरूपश्च सः अभिषुतस्त्वं नः अस्माकं यज्ञे भगाय भगाख्याय देवाय वायवे च पूष्णे[2] च मित्रे मित्राय देवाय वरुणे वरुणाय च पवस्व क्षर ॥

---

१ त-म२—'ये' नास्ति । २. म१.२.६ ७—पूष्णे रयवे; त४—पूष्णे सेद ।

**उच्चा ते जातमन्धसो दिवि षद्भूम्या ददे । उग्रं शर्म महि श्रवः ॥ १० ॥**

उच्चा । ते । जातम् । अन्धसः । दिवि । सत् । भूमिः । आ । ददे ।
उग्रम् । शर्म । महि । श्रवः ॥ १० ॥

हे सोम ते तव संबन्धिनः अन्धसः रसस्य उच्चा उपरि जातं जन्म अपि च दिवि द्युलोके सत् विद्यमानं त्वत्तत्त्व संबन्धि उग्रम् उद्गूर्णं शर्म सुखं महि महत् श्रवः अन्नं च भूमिः आ ददे । भूम्या ददे इति पदत्रयमाम्नातम् । विसर्जनीयलोपः सांहितिकः । भूमिर्भौमा जना मानवाः । भूमिष्ठैराश्रित इत्यर्थः ॥ ॥ १९ ॥

**एना विश्वान्यर्य आ द्युम्नानि मानुषाणाम् । सिषासन्तो वनामहे ॥ ११ ॥**

एना । विश्वानि । अर्यः । आ । द्युम्नानि । मानुषाणाम् । सिसासन्तः । वनामहे ॥ ११ ॥

एना एतेनानेन सोमेन मानुषाणां मनुष्याणां विश्वा विश्वानि द्युम्नानि अन्नानि आ[1] अर्यः अभिगच्छन्तः सिषासन्तः संभक्तुमिच्छन्तश्च वयं वनामहे संभजामहे ॥

**स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः । वरिवोवित्परि स्रव ॥ १२ ॥**

सः । नः । इन्द्राय । यज्यवे । वरुणाय । मरुत्ऽभ्यः । वरिवःऽवित् । परि । स्रव ॥ १२ ॥

हे सोम वरिवोवित् धनस्य लम्भकः पवमानस्त्वं नः अस्माकं यज्यवे यष्टव्याय इन्द्राय वरुणाय च मरुद्भ्यः च परि स्रव धारया क्षर ॥

**उपो षु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम् । इन्दुं देवा अयासिषुः ॥ १३ ॥**

उपो इति । सु । जातम् । अप्ऽतुरम् । गोभिः । भङ्गम् । परिऽकृतम् ।
इन्दुम् । देवाः । अयासिषुः ॥ १३ ॥

सु जातं सम्यक्प्रादुर्भूतम् अप्तुरं वसतीवरीभिः प्रेरितं भङ्गं शत्रूणां भञ्जकं गोभिः गोविकारैः पयोभिः परिष्कृतम् अलंकृतं संस्कृतम् इन्दुं सोमं देवाः इन्द्रादयः उप अयासिषुः उपागच्छन्ति ॥

**तमिद्वर्धन्तु नो गिरो वत्सं संशिश्वरीरिव । य इन्द्रस्य हृदंसनिः ॥ १४ ॥**

तम् । इत् । वर्धन्तु । नः । गिरः । वत्सम् । संशिश्वरीःऽइव । यः । इन्द्रस्य । हृदम्ऽसनिः ॥ १४ ॥

यः सोमः इन्द्रस्य हृदंसनिः हृदयस्य संभक्ता भवति तमित् तमेव सोमं नः अस्माकं गिरः स्तुतिरूपा वाचः वत्सं वर्धन्तु सम्यग्वर्धयन्तु । तत्र दृष्टान्तः । वत्सं बालं संशिश्वरीरिव । यथा शिश्वर्यो बद्धपयस्का[2] मातरो वत्सं वर्धयन्ति तद्वदित्यर्थः ॥

**अर्षा णः सोम शं गवे धुक्षस्व पिप्युषीमिषम् । वर्धा समुद्रमुक्थ्यम् ॥ १५ ॥**

अर्ष । नः । सोम । शम् । गवे । धुक्षस्व । पिप्युषीम् । इषम् । वर्ध । समुद्रम् । उक्थ्यम् ॥ १५ ॥

हे सोम त्वं नः अस्माकं गवे शं सुखम् अर्ष क्षर । अपि च पिप्युषीं प्रवृद्धाम्[3] इषम् अन्नं धुक्षस्व पूरय । किंच उक्थ्यं प्रशस्यं समुद्रम् उदकं वर्ध वर्धय ॥ ॥ २० ॥

१. ग-त१.२.६-भ२.४–' आ ' नास्ति । २. ग–बद्धपयस्का; त१.६–बद्धपयस्काः; त२–बद्धस्न्यस्का; त४–बद्धपयस्का । ३. ग-त-भ४–प्रवृद्धां ।

पव॑मानो अजीजनद्दि॒वश्चि॒त्रं न त॑न्य॒तुम् । ज्योति॑र्वैश्वान॒रं बृ॒हत् ॥ १६ ॥

पव॑मानः । अ॒जी॒ज॒न॒त् । दि॒वः । चि॒त्रम् । न । त॒न्य॒तुम् । ज्योतिः॑ । वै॒श्वा॒न॒रम् । बृ॒हत् ॥ १६ ॥

पवमानः सोमः बृहत् महत् वैश्वानरं वैश्वानराख्यं ज्योतिः तेजः दिवः द्युलोकस्य चित्रं विचित्रं तन्यतुं न अशनिमिव अजीजनत् अजनयत् ॥

पव॑मानस्य ते॒ रसो॒ मदो॑ राजन्नदुच्छु॒नः । वि वार॒मव्य॑मर्षति ॥ १७ ॥

पव॑मानस्य । ते॒ । रसः॑ । मदः॑ । रा॒ज॒न् । अ॒दु॒च्छु॒नः । वि । वार॑म् । अव्य॑म् । अ॒र्ष॒ति॒ ॥ १७ ॥

हे राजन् दीप्यमान सोम पवमानस्य क्षरतः ते तव अदुच्छुनः रक्षोवर्जितः मदः मदकरः रसः अव्यम् अविमयं वारं वालं दशापवित्रम् व्यर्षति अभिगच्छति ॥

पव॑मान॒ रस॒स्तव॒ दक्षो॒ वि रा॑जति द्यु॒मान् । ज्योति॒र्विश्वं॒ स्व॑र्दृ॒शे ॥ १८ ॥

पव॑मान । रसः॑ । तव॑ । दक्षः॑ । वि । रा॒ज॒ति॒ । द्यु॒ऽमान् । ज्योतिः॑ । विश्व॑म् । स्वः॑ । दृ॒शे ॥ १८ ॥

हे पवमान सोम तव त्वदीयः दक्षः मूलः द्युमान् दीप्तिमान् रसः वि राजति प्रकाशते । न केवलं स्वयमेव प्रकाशते किंतु विश्वं व्याप्तं स्वः सर्वं ज्योतिः तेजश्च दृशे द्रष्टुं करोतीति शेषः ॥

यस्ते॒ मदो॒ वरे॑ण्य॒स्तेना॑ पव॒स्वान्ध॑सा । दे॒वा॒वीर॑घशंस॒हा ॥ १९ ॥

यः । ते॒ । मदः॑ । वरे॑ण्यः । तेन॑ । प॒व॒स्व॒ । अन्ध॑सा । दे॒व॒ऽअवीः॑ । अ॒घ॒शं॒स॒ऽहा ॥ १९ ॥

हे सोम ते तव देवावीः देवकामः अघशंसहा राक्षसानां हन्ता वरेण्यः सर्वैर्वरणीयः मदः मदकरः यः रसो विद्यते तेन रसेन अन्धसा अदनीयेन पवस्व क्षर ॥

जघ्नि॑र्वृ॒त्रम॑मि॒त्रियं॒ सस्नि॒र्वाजं॑ दि॒वेदि॑वे । गो॒षा उ॑ अश्व॒सा अ॑सि ॥ २० ॥

जघ्निः॑ । वृ॒त्रम् । अ॒मि॒त्रिय॑म् । सस्निः॑ । वाज॑म् । दि॒वेऽदि॑वे ।
गो॒ऽसाः । ऊं॒ इति॑ । अ॒श्व॒ऽसाः । अ॒सि॒ ॥ २० ॥

हे सोम त्वम् अमित्रियम् अमित्रभवं वृत्रं शत्रुं जघ्निः हन्ता असि भवसि । किंच दिवेदिवे प्रतिदिनं वाजं संग्रामं सस्निः संभक्तासि । किंच गोषाः गवां दातासि । अश्वसाः अश्वानां दाता चासि ॥ ॥ २१ ॥

संमि॑श्लो अरु॒षो भ॑व सूप॒स्थाभि॒र्न धे॒नुभिः॑ । सीद॑ञ्छ्ये॒नो न योनि॒मा ॥ २१ ॥

सम्ऽमि॑श्लः । अ॒रु॒षः । भ॒व॒ । सु॒ऽउ॒प॒स्थाभिः॑ । न । धे॒नुऽभिः॑ ।
सीद॑न् । श्ये॒नः । न । योनि॑म् । आ ॥ २१ ॥

हे सोम त्वं सूपस्थाभिः सोमस्योपस्थानाभिः धेनुभिः गोभिः । गोविकारैः पयोभिरित्यर्थः । संमिश्लः संमिश्रितः श्येनो न यथा श्येनः शीघ्रमागत्य स्थानमासीदति तद्वत् योनिं स्वकीयं स्थानम् आ सीदन् । न संप्रत्यर्थे । इदानीम् अरुषः आरोचमानः भव ॥

स प॑वस्व॒ य आवि॒थेन्द्रं॑ वृ॒त्राय॒ हन्त॑वे । व॒व्रि॒वांसं॑ म॒हीर॒पः ॥ २२ ॥

सः । प॒व॒स्व॒ । यः । आवि॑थ । इन्द्र॑म् । वृ॒त्राय॑ । हन्त॑वे । व॒व्रि॒ऽवांस॑म् । म॒हीः । अ॒पः ॥ २२ ॥

हे सोम यः त्वं महीः महतीः अपः महान्त्युदकानि अविवासं निरुन्धानं वृत्राय वृत्रं हन्तवे हन्तुम् इन्द्रम् आविथ अरक्षः सः त्वं पवस्व धारया क्षर। सोमं पीत्वा मत्तः सन्निन्द्रो महान्त्युदकानि निरुन्धानं वृत्रं अवधीदित्यर्थः ॥

**सुवीरासो वयं धना जयेम सोम मीढ्वः। पुनानो वर्ध नो गिरः ॥ २३ ॥**

सुऽवीरासः । वयम् । धना । जयेम । सोम । मीढ्वः । पुनानः । वर्ध । नः । गिरः ॥२३॥

सुवीरासः सुवीराः कल्याणपुत्राः वयम् अमहीयव आङ्गिरसाः धना शत्रूणां धनानि जयेम। शत्रून् जित्वा तदीयानि धनानि स्वीकुर्यामेत्यर्थः। हे मीढ्वः सेक्तः सोम पुनानः पूयमानस्त्वं नः अस्माकं गिरः स्तुतिरूपा वाचश्च वर्ध वर्धय ॥

**त्वोतासस्तवावसा स्याम वन्वन्त आमुरः। सोम व्रतेषु जागृहि ॥ २४ ॥**

त्वाऽऊतासः । तव । अवसा । स्याम । वन्वन्तः । आऽमुरः । सोम । व्रतेषु । जागृहि ॥२४॥

हे सोम तव त्वदीयेन अवसा रक्षणेन त्वोतासः त्वया रक्षिताः सन्तः वन्वन्तः शत्रून् भजमानाः आमुरः तेषामभिमारकाः स्याम भवेम। व्रतेषु अस्मदीयेषु कर्मसु जागृहि प्रबुद्धो भव ॥

**अपघ्नन्पवते मृधोऽप सोमो अराव्णः। गच्छन्निन्द्रस्य निष्कृतम् ॥ २५ ॥**

अपऽघ्नन् । पवते । मृधः । अप । सोमः । अराव्णः । गच्छन् । इन्द्रस्य । निःऽकृतम् ॥२५॥

सोमः मृधः हिंसकाञ्छत्रून् अपघ्नन् मारयन् अराव्णः सर्वान् सर्वथा धनानामदातॄंश्च अप घ्नन् इन्द्रस्य निष्कृतं स्थानं गच्छन् प्राप्नुवन् पवते धारया क्षरति ॥ ॥ १२ ॥

**महो नो राय आ भर पवमान जही मृधः। रास्वेन्दो वीरवद्यशः ॥ २६ ॥**

महः । नः । रायः । आ । भर । पवमान । जहि । मृधः ।

रास्व । इन्दो इति । वीरऽवत् । यशः ॥ २६ ॥

हे पवमान इन्दो सोम नः अस्माकं महः महान्ति रायः धनानि आ भर आहर। मृधः हिंसकाञ्छत्रूंश्च जहि मारय। वीरवत् पुत्राद्युपेतां[1] यशः कीर्तिं च रास्व अस्मभ्यं देहि ॥

**न त्वा शतं चन ह्रुतो राधो दित्सन्तमा मिनन्। यत्पुनानो मखस्यसे ॥२७॥**

न । त्वा । शतम् । चन । ह्रुतः । राधः । दित्सन्तम् । आ । मिनन् ।

यत् । पुनानः । मखस्यसे ॥ २७ ॥

हे सोम राधः धनम् आ दित्सन्तम् आदातुमिच्छन्तं त्वा त्वां शतं चन बहवोऽपि ह्रुतः हिंसकाः शत्रवः न मिनन् न[2] हिंसन्ति। कदेत्यत आह। यत् यदा पुनानः पूयमानस्त्वं मखस्यसे अस्मभ्यं धनं दातुमिच्छसि ॥

**पवस्वेन्दो वृषा सुतः कृधी नो यशसो जने। विश्वा अप द्विषो जहि ॥२८॥**

पवस्व । इन्दो इति । वृषा । सुतः । कृधि । नः । यशसः । जने । विश्वाः । अप । द्विषः । जहि ॥२८॥

१. ग-त-म४-'द्युपेतं'। २. त-म२-'न' नास्ति।

हे इन्दो सोम सुतः अभिषुतः[1] वृषा सेक्ता त्वं पवस्व धारया क्षर। जने जनपदेषु नः अस्मान् यशसः यशस्विनः कृधि कुरु। विश्वाः सर्वान् द्विषः द्वेष्टॄन् शत्रून् अप जहि मारय च॥

**अस्य ते सख्ये वयं तवेन्दो द्युम्न उत्तमे। सासह्याम पृतन्यतः॥ २९॥**

अस्य। ते। सख्ये। वयम्। तव। इन्दो इति। द्युम्ने। उत्ऽतमे। ससह्याम। पृतन्यतः॥२९॥

हे इन्दो सोम अस्य अस्मिन् यागे वर्तमानस्य ते तव सख्ये सखित्वे सति वयम् अमहीयव आङ्गिरसाः तव त्वदीये उत्तमे श्रेष्ठे द्युम्ने अन्ने तृप्तिं[2] प्राप्ताः[2]। तथा च यास्कः—'द्युम्नं द्योततेर्यशो वान्नं वा' (निरु. ५.५) इति। पृतन्यतः युद्धमिच्छतः शत्रून् ससह्याम अभिभवेम॥

**या ते भीमान्यायुधा तिग्मानि सन्ति धूर्वणे। रक्षा समस्य नो निदः॥३०॥**

या। ते। भीमानि। आयुधा। तिग्मानि। सन्ति। धूर्वणे। रक्ष। समस्य। नः। निदः॥३०॥

हे सोम ते तव या यानि भीमानि शत्रूणां भयंकराणि तिग्मानि तीक्ष्णानि आयुधा आयुधानि धूर्वणे[3] शत्रुवधार्थं सन्ति तैरायुधैः समस्य सर्वस्य शत्रोः निदः निन्दायाः नः अस्मान् रक्ष पालय॥ ॥२३॥

'एते असृग्रम्' इति त्रिंशदृचं द्वितीयं सूक्तं भार्गवस्य जमदग्नेरार्षं गायत्रं पवमानसोमदेवताकम्। तथा चानुक्रान्तम्—'एते असृग्रं जमदग्निः' इति। गतो विनियोगः॥

**एते असृग्रमिन्दवस्तिरः पवित्रमाशवः। विश्वान्यभि सौभगा॥ १॥**

एते। असृग्रम्। इन्दवः। तिरः। पवित्रम्। आशवः। विश्वानि। अभि। सौभगा॥ १॥

आशवः शीघ्राः एते पवमानाः इन्दवः सोमाः विश्वानि सर्वाणि सौभगा सौभगानि धनान्यभिलक्ष्य पवित्रं तिरः असृग्रम् ऋत्विग्भिः सृज्यन्ते॥

**विघ्नन्तो दुरिता पुरु सुगा तोकाय वाजिनः। तना कृण्वन्तो अर्वते॥ २॥**

विऽघ्नन्तः। दुःऽइता। पुरु। सुऽगा। तोकाय। वाजिनः। तना। कृण्वन्तः। अर्वते॥२॥

वाजिनः बलवन्तः सोमाः पुरु बहूनि दुरिता दुरितानि विघ्नन्तः विशेषेण नाशयन्तः तोकाय अस्माकं पुत्राय अर्वते अश्वाय च सुगा सुखानि तना धनानि च कृण्वन्तः कुर्वन्तः तिरः पवित्रं सृज्यन्त इति संबन्धः॥

**कृण्वन्तो वरिवो गवेऽभ्यर्षन्ति सुष्टुतिम्। इळामस्मभ्यं संयतम्॥ ३॥**

कृण्वन्तः। वरिवः। गवे। अभि। अर्षन्ति। सुऽस्तुतिम्। इळाम्। अस्मभ्यम्। सम्ऽयतम्॥३॥

अस्माकं गवे अस्मभ्यं च संयतं यदस्मान् संगच्छति तत् वरिवः धनम् इळाम् अन्नं च कृण्वन्तः कुर्वन्तः सोमाः सुष्टुतिम् अस्मदीयां शोभनां स्तुतिम् अभ्यर्षन्ति आभिमुख्येन गच्छन्ति॥

---

१. ग-त३.६-म१.२.७—'अभिषुतः' नास्ति। २. ग-त३-म१.५.७—'तृप्तिं प्राप्ताः' नास्ति।
३. ड१.२.६—सूर्वणे, न४.५—पूर्वणे।

असा॑व्यं॒शुर्मदा॑या॒प्सु दक्षो॑ गिरि॒ष्ठाः । श्ये॒नो न योनि॒मास॑दत् ॥ ४ ॥

असा॑वि । अं॒शुः । मदा॑य । अ॒प्ऽसु । दक्षः॑ । गि॒रि॒ऽस्थाः । श्ये॒नः । न । योनि॑म् । आ । अ॒स॒द॒त् ॥ ४ ॥

गिरिष्ठाः पर्वते जातः अंशुः सोमः मदाय मदार्थम् असावि अभिषुतः । अप्सु वसतीवरीषु दक्षः प्रवृद्धश्च भवति । किंच श्येनो न यथा श्येनो वेगेनागत्य स्थानमासीदति तद्वदयं सोमो योनिं स्वकीयं स्थानम् आसदत् आसीदति ॥

शु॒भ्रमन्धो॑ देववा॒तम॒प्सु धू॒तो नृभिः॑ सु॒तः । स्वद॑न्ति॒ गावः॒ पयो॑भिः ॥ ५ ॥

शु॒भ्रम् । अन्धः॑ । दे॒व॒ऽवा॒तम् । अ॒प्ऽसु । धू॒तः । नृऽभिः॑ । सु॒तः ।
स्वद॑न्ति । गावः॑ । पयः॑ऽभिः ॥ ५ ॥

यत् देववाते देवैः प्रार्थितं शुभ्रं शोभनम् अन्धः अन्नं गावः पयोभिः आशिरैः स्वदन्ति स्वादयन्ति[1] सोऽयं सोमः नृभिः नेतृभिर्ऋत्विग्भिः सुतः अभिषुतः सन् अप्सु वसतीवरीषु धूतः शोधितो भवति ॥　　॥ २४ ॥

आदी॒मश्वं॒ न हेता॒रोऽशू॑शुभन्न॒मृता॑य । मध्वो॒ रसं॑ सध॒मादे॑ ॥ ६ ॥

आत् । ई॒म् । अश्व॑म् । न । हेता॑रः । अशू॑शुभन् । अ॒मृता॑य । मध्वः॑ । रस॑म् । स॒ध॒ऽमादे॑ ॥ ६ ॥

आत् अनन्तरं हेतारः प्रेरका ऋत्विजः सधमादे यज्ञे ईम् एनं मध्वः मदकरस्य सोमस्य रसम् अमृताय अमरणाय अश्वं न अश्वमिव अशूशुभन् शोभयन्ति ॥

यास्ते॒ धारा॑ मधु॒श्चुतोऽसृ॑ग्रमिन्द ऊ॒तये॑ । ताभिः॑ प॒वित्र॒मास॑दः ॥ ७ ॥

याः । ते॒ । धाराः॑ । म॒धु॒ऽश्चुतः॑ । असृ॑ग्रम् । इ॒न्दो॒ इति॑ । ऊ॒तये॑ ।
ताभिः॑ । प॒वित्र॑म् । आ । अ॒स॒दः॒ ॥ ७ ॥

हे इन्दो सोम ते तव मधुश्चुतः[2] मधुररसस्य श्चोतयित्र्यः याः धाराः ऊतये रक्षणाय असृग्रं सृज्यन्ते ताभिः धाराभिस्त्वं पवित्रम् आसदः आसीद ॥

सो अ॒र्षेन्द्रा॑य पी॒तये॑ ति॒रो रोमा॑ण्य॒व्यया॑ । सीद॒न् योना॒ वने॒ष्वा ॥ ८ ॥

सः । अ॒र्ष॒ । इन्द्रा॑य । पी॒तये॑ । ति॒रः । रोमा॑णि । अ॒व्यया॑ । सीद॑न् । योना॑ । वने॑षु । आ ॥ ८ ॥

हे सोम सः अभिषुतस्त्वम् अव्यया अव्ययानि अविमयानि रोमाणि वालानि तिरः तिरस्कुर्वन् वनेषु पात्रेषु योना योनौ स्थाने आ सीदन् इन्द्राय इन्द्रस्य पीतये पानाय अर्ष क्षर ॥

त्वमि॑न्दो॒ परि॑ स्रव॒ स्वादि॑ष्ठो॒ अङ्गि॑रोभ्यः । व॒रि॒वो॒विद् घृ॒तं पयः॑ ॥ ९ ॥

त्वम् । इ॒न्दो॒ इति॑ । परि॑ । स्र॒व॒ । स्वादि॑ष्ठः । अङ्गि॑रःऽभ्यः । व॒रि॒वः॒ऽवित् । घृ॒तम् । पयः॑ ॥ ९ ॥

हे इन्दो सोम स्वादिष्ठः स्वादुतमः वरिवोवित् अस्मदभिलषितस्य धनस्य लम्भक[2] त्वम् अङ्गिरोभ्यः अङ्गिरसामर्थाय घृतम् आज्यं पयः च परि स्रव परिक्षर ॥

---

१. ग-ल-भ१-२-४—स्वदयंति, भ७—' स्वादयंति ' नास्ति । २. ग—लंभक ।

अयं विचर्षणिर्हितः पवमानः स चेतति । हिन्वान आप्यं बृहत् ॥ १० ॥

अयम् । विऽचर्षणिः । हितः । पवमानः । सः । चेतति । हिन्वानः । आप्यम् । बृहत् ॥ १० ॥

विचर्षणिः विद्रष्टा हितः पात्रेषु निहितः पवमानः अयं सोमः आप्यम् अप्सु भवं बृहत् महदन्नं हिन्वानः प्रेरयन् चेतति सर्वैः ज्ञायते ॥ ॥ २५ ॥

एष वृषा वृषव्रतः पवमानो अशस्तिहा । करद्वसूनि दाशुषे ॥ ११ ॥

एषः । वृषा । वृषऽव्रतः । पवमानः । अशस्तिऽहा । करत् । वसूनि । दाशुषे ॥ ११ ॥

वृषा कामानां सेक्ता वृषव्रतः वृषकर्मा अशस्तिहा राक्षसानां हन्ता पवमानः एषः सोमः दाशुषे हविषां दात्रे यजमानाय वसूनि धनानि करत् करोति । प्रयच्छतीत्यर्थः ॥

आ पवस्व सहस्रिणं रयिं गोमन्तमश्विनम् । पुरुश्चन्द्रं पुरुस्पृहम् ॥ १२ ॥

आ । पवस्व । सहस्रिणम् । रयिम् । गोऽमन्तम् । अश्विनम् । पुरुऽचन्द्रम् । पुरुऽस्पृहम् ॥ १२ ॥

हे सोम त्वं सहस्रिणं बहुसंख्याकं गोमन्तं गोभिर्युक्तम् अश्विनम् अश्वयुक्तं पुरुश्चन्द्रं बहूनां हर्षकं पुरुस्पृहं बहुस्पृहणीयं रयिं धनम् आ पवस्व परिक्षर ॥

एष स्य परि षिच्यते मर्मृज्यमान आयुभिः । उरुगायः कविक्रतुः ॥ १३ ॥

एषः । स्यः । परि । सिच्यते । मर्मृज्यमानः । आयुऽभिः । उरुऽगायः । कविऽक्रतुः ॥ १३ ॥

उरुगायः बहुस्तुतिः कविक्रतुः क्रान्तप्रज्ञः क्रान्तकर्मा वा स्यः सः एषः अयं सोमः आयुभिः मनुष्यैः मर्मृज्यमानः शोध्यमानः परि षिच्यते ॥

सहस्रोतिः शतामघो विमानो रजसः कविः । इन्द्राय पवते मदः ॥ १४ ॥

सहस्रऽऊतिः । शतऽमघः । विऽमानः । रजसः । कविः । इन्द्राय । पवते । मदः ॥ १४ ॥

सहस्रोतिः अपरिमितरक्षणः शतामघः बहुधनः रजसः लोकस्य विमानः निर्माता कविः क्रान्तकर्मा मदः मदकरः सोमः इन्द्राय इन्द्रार्थं पवते धारया क्षरति ॥

गिरा जात इह स्तुत इन्दुरिन्द्राय धीयते । विर्योना वसताविव ॥ १५ ॥

गिरा । जातः । इह । स्तुतः । इन्दुः । इन्द्राय । धीयते । विः । योना । वसतौऽइव ॥ १५ ॥

जातः प्रादुर्भूतः गिरा स्तुत्या स्तुतः च इन्दुः सोमः इह अस्मिन् यज्ञे योना योनौ स्वस्थाने इन्द्राय इन्द्रार्थं वसताविव विः यथा स्ववासे पक्षी तथा धीयते निधीयते ॥ ॥ २६ ॥

पवमानः सुतो नृभिः सोमो वाजमिवासरत् । चमूषु शक्मनासदम् ॥ १६ ॥

पवमानः । सुतः । नृऽभिः । सोमः । वाजम्ऽइव । असरत् । चमूषु । शक्मना । आऽसदम् ॥ १६ ॥

नृभिः नेतृभिर्ऋत्विग्भिः सुतः अभिषुतः सोमः चमूषु चमसेषु शक्मना बलेन आसदम् उपवेष्टुं वाजमिव युद्धमिव[1] स्यन्दम् असरत् सरति ॥

तं त्रिपृष्ठे त्रिवन्धुरे रथे युञ्जन्ति यातवे । ऋषीणां सप्त धीतिभिः ॥ १७ ॥

तम् । त्रिऽपृष्ठे । त्रिऽवन्धुरे । रथे । युञ्जन्ति । यातवे । ऋषीणाम् । सप्त । धीतिऽभिः ॥ १७ ॥

1. भ–'युद्धमिव' नास्ति ।

त्रिपृष्ठे त्रिषवणपृष्ठे त्रिवन्धुरे त्रिवेदबन्धुरे परीणां रथे यज्ञरथे तं सोमं सप्त सप्तभिः धीतिभिः छन्दोभिः यातवे देवान् प्रति गन्तुं युञ्जन्ति ऋत्विजो योजयन्ति ॥

तं सोतारो धनस्पृतमाशुं वाजाय यातवे । हरिं हिनोत वाजिनम् ॥ १८ ॥

तम् । सोतारः । धनऽस्पृतम् । आशुम् । वाजाय । यातवे । हरिम् । हिनोत । वाजिनम् ॥ १८ ॥

हे सोतारः अभिषवकर्तारः ऋत्विजः धनस्पृतं धनानां स्पर्शयितारं वाजिनं बलिनम् आशुं वेगवन्तं तं सोमात्मकं हरिम् अश्वं वाजाय यज्ञाख्यं संग्रामं यातवे गन्तुं हिनोत प्रेरयत । यथा योद्धारो युद्धं गन्तुं बलिनं वेगवन्तमश्वं प्रेरयन्ति तद्वत् यज्ञमभिगन्तुं बलवन्तं सोमं प्रेरयतेति भावः ॥

आविशन्कलशं सुतो विश्वा अर्षन्नभि श्रियः । शूरो न गोषु तिष्ठति ॥ १९ ॥

आऽविशन् । कलशम् । सुतः । विश्वाः । अर्षन् । अभि । श्रियः । शूरः । न । गोषु । तिष्ठति ॥ १९ ॥

सुतः अभिषुतः सोमः कलशं द्रोणम् आविशन् विश्वाः सर्वाः श्रियः संपदः अभि अर्षन् अस्मानभिगमयन् गोषु शत्रूणां पशुषु शूरो न यथा शूरो निःशङ्कः तिष्ठति तद्वद्गोषु निःशङ्कस्तिष्ठति ॥

आ त इन्दो मदाय कं पयो दुहन्त्यायवः । देवा देवेभ्यो मधु ॥ २० ॥

आ । ते । इन्दो इति । मदाय । कम् । पयः । दुहन्ति । आयवः । देवाः । देवेभ्यः । मधु ॥ २० ॥

हे इन्दो सोम ते तव मधु मधुभूतं पयः पेयं रसं देवाः स्तोतारः आयवः मनुष्याः मदाय कं मदार्थं देवेभ्यः इन्द्रादिभ्यः आ दुहन्ति ॥          ॥ २० ॥

आ नः सोमं पवित्र आ सृजता मधुमत्तमम् । देवेभ्यो देवश्रुत्तमम् ॥ २१ ॥

आ । नः । सोमम् । पवित्रे । आ । सृजत । मधुमत्ऽतमम् । देवेभ्यः । देवश्रुत्ऽतमम् ॥ २१ ॥

हे ऋत्विजः नः अस्माकं देवश्रुत्तमम् अत्यन्तं देवैः श्रूयमाणं मधुमत्तमम् अतिशयेन मधुमन्तं सोमं देवेभ्यः इन्द्रार्थं[1] पवित्रे दशापवित्रे आ सृजत साधयत[2] ॥

एते सोमा असृक्षत गृणानाः श्रवसे महे । मदिन्तमस्य धारया ॥ २२ ॥

एते । सोमाः । असृक्षत । गृणानाः । श्रवसे । महे । मदिन्ऽतमस्य । धारया ॥ २२ ॥

गृणानाः स्तूयमानाः एते इमे सोमाः महे महते श्रवसे अन्नाय मदिन्तमस्य मादयितृतमस्य रसस्य धारया असृक्षत ऋत्विग्भिः सृज्यन्ते ॥

अभि गव्यानि वीतये नृम्णा पुनानो अर्षसि । सनद्वाजः परि स्रव ॥ २३ ॥

अभि । गव्यानि । वीतये । नृम्णा । पुनानः । अर्षसि । सनत्ऽवाजः । परि । स्रव ॥ २३ ॥

हे सोम पुनानः पूयमानो यस्त्वं वीतये भक्षणाय गव्यानि गोसंबन्धीनि नृम्णा[3] नृम्णानि धनानि क्षीरादीनि अभि अर्षसि अभिगच्छसि स त्वं सनद्वाजः दीयमानान्नः सन् परि स्रव परिक्षर ॥

उत नो गोमतीरिषो विश्वा अर्ष परिष्टुभः । गृणानो जमदग्निना ॥ २४ ॥

उत । नः । गोऽमतीः । इषः । विश्वाः । अर्ष । परिऽस्तुभः । गृणानः । जमत्ऽअग्निना ॥ २४ ॥

१. ग-त३-भ-देवार्थं ।     २. त३-भ१.२.५.७-प्रक्षिपात; त७-प्रक्षिपत साधयत, भ४-प्रक्षिपत ।
३. त-' नृम्णा ' नास्ति ।

श्रौ. ९.२-४ ) इति । चौलादिकर्मसु चतस्र आज्याहुतयो होतव्यास्तत्रैव तिस्रः । सूत्रितं च—' तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयादग्न आयूंषि पवस इति तिसृभिः ' ( आश्व. गृ. १.४.३-४ ) इति । आधाने पवमानेष्टावग्नेः पवमानस्य ' अग्न आयूंषि ' इत्येषानुवाक्या । ' अग्ने पवस्व ' इत्येषा याज्या । सूत्रितं च—' प्रथमायामग्निरग्निः पवमानोऽग्न आयूंषि पवसेऽग्ने पवस्व स्वपाः' ( आश्व. श्रौ. २.१ ) इति । पुनराधेये द्वितीयाज्यभागस्य ' अग्न आयूंषि ' इत्येषा वैकल्पिकानुवाक्या । सूत्रितं च— ' नित्यं पूर्वमनुवाक्याग्निर्वोऽग्न आयूंषि पवस इत्युत्तरम्' ( आश्व. श्रौ. २.८ ) इति ॥

अग्न आयूंषि पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥ १९ ॥

अग्ने । आयूंषि । पवसे । आ । सुव । ऊर्जम् । इषम् । च । नः ।

आरे । बाधस्व । दुच्छुनाम् ॥ १९ ॥

हे अग्ने पवमानरूप त्वमस्माकम् आयूंषि जीवनानि[1] पवसे रक्षसि[2] । नः अस्माकम् ऊर्जम् अन्नरसम् इषम् अन्नं च आ सुव आभिमुख्येन प्रेरय । किंच दुच्छुनाम् । रक्षोनामैतत् । रक्षांसि आरे अस्मत्तो दूरे एव बाधस्व संपीडय ॥

अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम् ॥ २० ॥

अग्निः । ऋषिः । पवमानः । पाञ्चऽजन्यः । पुरःऽहितः । तम् । ईमहे । महाऽगयम् ॥ २० ॥

पाञ्चजन्यः । निषादपञ्चमाश्चत्वारो वर्णाः पञ्चजनाः । यद्वा । गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येते पञ्चजनाः । अथवा देवमनुष्या गन्धर्वाप्सरसः सर्पाः पितर इति अ[illegible]ऽभिहिताः पञ्चजनाः । 'गम्भीराञ्ञ्यः' इत्यत्र 'बहिर्देवपञ्चजनेभ्यश्च इति वक्तव्यम्' ( का. ४. ३. ५८. १ ) इति वचनात् भवार्थे ञ्यप्रत्ययः । तेषां तत्तत्कर्मोक्तप्रदानेन स्वभूतः ऋषिः सर्वस्य द्रष्टा पवमानस्वरूपोऽग्निः[3] पुरोहितः कर्मार्थमृत्विग्भिः पुरो निहितः । तं पूर्वोक्तलक्षणं महागयं महद्भिर्देवादिभिरपि गीर्भिः[4] गातव्यम् । महान्ति प्रभूतानि यज्ञगृहाणि वा यस्य स तथोक्तः । तं पवमानगुणविशिष्टमग्निम् ईमहे धनादीनि याचामहे ॥ ॥ १० ॥

अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधद्रयिं मयि पोषम् ॥ २१ ॥

अग्ने । पवस्व । सुऽअपाः । अस्मे इति । वर्चः । सुऽवीर्यम् ।

दधत् । रयिम् । मयि । पोषम् ॥ २१ ॥

हे अग्ने स्वपाः । 'सोमनसी' इत्युत्तरपदाद्युदात्तत्वम् । शोभनकर्मा त्वम् अस्मे अस्मासु सुवीर्यं शोभनवीर्योपेतं वर्चः । 'वर्च दीप्तौ' । तेजः पवस्व आगमय । तथा भवान् रयिं धनं पुत्रं वा पोषम् । भावे कर्मणि घञ् । गवां पुष्टिं यद्वा गवादिकं मयि अस्मासु दधत् दधातु । करोत्वित्यर्थः । दधातेर्लेट्यडागमः । 'धोर्लोपो लेटि वा' ( पा. सू. ७. ३. ७० ) इत्याकारलोपः ॥

पवमानो अति स्रिधोऽभ्यर्षति सुष्टुतिम् । सूरो न विश्वदर्शतः ॥ २२ ॥

पवमानः । अति । स्रिधः । अभि । अर्षति । सुऽस्तुतिम् । सूरः । न । विश्वऽदर्शतः ॥२२॥

१. ग-अ-' जीवनानि ' नास्ति; त३–जीवनानि । २. ग-अ-' रक्षसि ' नास्ति । ३. ग-त२-अ- ' तद्रूपोऽग्निः' नास्ति । ४. त३,७-अ२-' गीर्भिः' नास्ति ।

पवमानः सोमः स्रिधः हिंसकान् शत्रूनतिक्रम्य गच्छति । तथा सुष्टुतिं स्तोतॄणां शोभनां स्तुतिम् अभ्यर्षति आभिमुख्येन गच्छति । 'ऋषी गतौ' । तौदादिकः । 'बहुलं छन्दसि' इति शप् । गुणः । किंच सूरो न सूर्य इव विश्वदर्शतः सर्वस्य द्रष्टा सर्वैर्वा दर्शनीयो भवति ॥

स मर्मृजान आयुभिः प्रयस्वान्प्रयसे हितः । इन्दुरत्यो विचक्षणः ॥ २३ ॥

सः । मर्मृजानः । आयुऽभिः । प्रयस्वान् । प्रयसे । हितः । इन्दुः । अत्यः । विऽचक्षणः ॥ २३ ॥

आयुभिः कर्मनेतृभिर्मनुष्यैः मर्मृजानः पुनःपुनर्मृज्यमानः शोध्यमानः सः इन्दुः स सोमः अत्यः देवान् संततं गन्ता भवति । कीदृशः । प्रयस्वान् प्रीणनशीलान्नवान् । यद्वा । स्तोतृभ्यो देयरत्नेनान्नेन युक्तः । अत एव प्रयसे हवीरूपायान्नाय हितः विचक्षणः सर्वस्य प्रदर्शनकारी सर्वस्य विद्रष्टा वा सोमो देवानभिगन्ता भवति । 'चक्षिङ् व्यक्तायां वाचि' । 'अनुदात्तेतश्च हलादेः' इति युच् ॥

पवमान ऋतं बृहच्छुक्रं ज्योतिरजीजनत् । कृष्णा तमांसि जङ्घनत् ॥ २४ ॥

पवमानः । ऋतम् । बृहत् । शुक्रम् । ज्योतिः । अजीजनत् । कृष्णा । तमांसि । जङ्घनत् ॥ २४ ॥

पवमानः ऋतं सत्यं यथार्थभूतं बृहत् प्रभूतं सर्वदेशेषु व्यापकं शुक्रं दीप्यमानं श्वेतवर्णं ज्योतिः तेजः अजीजनत् द्युलोके उदपादयत् । किं कुर्वन् । कृष्णा कृष्णवर्णानि तमांसि जङ्घनत् भृशं विनाशयन् । हन्तेर्यङ्लुकि शतरि रूपम् । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ॥

पवमानस्य जङ्घ्नतो हरेश्चन्द्रा असृक्षत । जीरा अजिरशोचिषः ॥ २५ ॥

पवमानस्य । जङ्घ्नतः । हरेः । चन्द्राः । असृक्षत । जीराः । अजिरऽशोचिषः ॥ २५ ॥

जङ्घ्नतः पुनःपुनस्तमांसि विनाशयतः हरेः हरितवर्णस्य अजिरशोचिषः सर्वत्र गमनशील-तेजसः पवमानस्य सोमस्य चन्द्राः । 'चदि आह्लादने' । देवानामाह्लादयित्र्यः जीराः क्षिप्र-क्षरणशीला धाराः असृक्षत सृज्यन्ते । पवित्राद्विनिर्गच्छन्तीत्यर्थः ॥ ॥ ११ ॥

पवमानो रथीतमः शुभ्रेभिः शुभ्रशस्तमः । हरिश्चन्द्रो मरुद्गणः ॥ २६ ॥

पवमानः । रथिऽतमः । शुभ्रेभिः । शुभ्रशस्ऽतमः । हरिऽचन्द्रः । मरुत्ऽगणः ॥ २६ ॥

पवमानः देवः रथीतमः अतिशयेन रथवान् । 'ईद्रथिनः' (पा. सू. ८. २. १७. १) इति ईकारः । तथा शुभ्रेभिः शोभायुक्तेभ्यस्तेजोभ्योऽपि शुभ्रशस्तमः अत्यन्तदीप्यमानश्च । यद्वा । निर्मलेभ्योऽपि निर्मलतमयशोयुक्तः हरिश्चन्द्रः । 'ह्रस्वाच्चन्द्रोत्तरपदे' इति सांहितिकः सुट् । हरित-वर्णदीप्तिर्हरितधारावान् वा मरुद्गणः । मरुतो यस्य गणः सहायभूताः स तथोक्तः । तादृशः सर्वांल्लोकान् रश्मिभिः स्वदीप्तिभिः व्यश्नवत् व्याप्नोत्वित्युत्तरेणान्वयः ॥

पवमानो व्यश्नवद्रश्मिभिर्वाजसातमः । दधत्स्तोत्रे सुवीर्यम् ॥ २७ ॥

पवमानः । वि । अश्नवत् । रश्मिऽभिः । वाजऽसातमः । दधत् । स्तोत्रे । सुऽवीर्यम् ॥ २७ ॥

१. स-स१-स४--सोमः सर्वान् ; तत्र--सर्वान् ।

पवमानः सोमः[1] रश्मिभिः स्वदीप्तिभिः व्यश्नवत् सर्वं जगद्व्याप्नोतु। कीदृशः। वाजसातमः अतिशयेनान्नस्य दाता बलस्य संभक्ता वा। तथा स्तोत्रे पवमानस्तोत्रं कुर्वते मनवे सुवीर्यं सुवीर्योपेतं पुत्रं धनं वा दधत् विदधत् प्रयच्छन्[2] व्याप्नोतु। अश्नोतेर्लेट्यडागमः॥

**प्र सुवान इन्दुरक्षाः पवित्रमत्यव्ययम्। पुनान इन्दुरिन्द्रमा ॥ २८ ॥**

प्र। सुवानः। इन्दुः। अक्षारिति। पवित्रम्। अति। अव्ययम्।
पुनानः। इन्दुः। इन्द्रम्। आ ॥ २८ ॥

सुवानः अभिषूयमाणः इन्दुः सोमः अव्ययम् अविमयमूर्णास्तुकेन निर्मितं दशापवित्रम् अतीत्य प्र[3] अक्षाः[3] कलशं प्रति प्रकर्षेण क्षरति। क्षरतेर्लुङि तिपि सिचि छान्दस इडागमाभावः। 'अतो लान्तस्य[4]' (पा. सू. ७. २. २) इति वृद्धिः। 'रात्सस्य' इति सिचो लोपः। रेफान्तं स्पष्टयितुमितिकारः। 'बहुलं छन्दसि' (पा. सू. ७.३.९७) इति ईडभावः। हल्ङ्याब्भ्य इति तिलोपः। ततः पुनानः पवित्रेण शुद्धः इन्दुः सोमः इन्द्रमा विशति। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः॥

**एष सोमो अधि त्वचि गवां क्रीळत्यद्रिभिः। इन्द्रं मदाय जोहुवत् ॥ २९ ॥**

एषः। सोमः। अधि। त्वचि। गवाम्। क्रीळति। अद्रिऽभिः। इन्द्रम्। मदाय। जोहुवत् ॥ २९ ॥

एषः अंशुरूपः सोमः गवां त्वचि आनडुहचर्मणि। अधिशब्द उपर्यर्थद्योतकः। चर्मण्युपरि अद्रिभिः ग्रावभिः सह क्रीळति अभिषवाय संक्रीडते। किं कुर्वन्। मदाय सोमपानेन मादयितुम् इन्द्रं जोहुवत् भृशमाह्वयन्। एतेन तत्काल इन्द्रविषयां स्तुतिं कुर्वन्नित्यवगम्यते॥

**यस्य ते द्युम्नवत्पयः पवमानाभृतं दिवः। तेन नो मृळ जीवसे ॥ ३० ॥**

यस्य। ते। द्युम्नऽवत्। पयः। पवमान। आऽभृतम्। दिवः। तेन। नः। मृळ। जीवसे ॥ ३० ॥

हे पवमान पूयमान हे सोम दिवः द्युलोकात् आभृतं श्येनरूपया गायत्र्याहृतं द्युम्नवत् अन्नवत् यशोयुक्तं वा पयः सोमलक्षणमन्नं यस्य ते तव स्वभूतं विद्यते तस्मात्त्वं तेन अन्नेन नः अस्मान् जीवसे चिरजीवनाय मृळ[5] सुखय सुखय॥ ॥ १२ ॥

'त्वं सोमासि' इति द्वात्रिंशदृचं सप्तमं सूक्तम्। आद्यतृचस्य बार्हस्पत्यो भरद्वाज ऋषिः। द्वितीयस्य मारीचः कश्यपः। तृतीयस्य राहूगणो गोतमः। चतुर्थस्य भौमोऽत्रिः। पञ्चमस्य गाथिनो विश्वामित्रः। षष्ठस्य भार्गवो जमदग्निः। सप्तमस्य मैत्रावरुणिर्वसिष्ठः। शुनःशेपस्याङ्गिरसः पवित्रो वसिष्ठो वोभौ वा समुदितावृषी। 'पवस्व सोम मन्दयन्' इत्याद्यास्तिस्रो द्विपदा गायत्र्यः। 'मन्द्रयस्व' इत्येषा त्रिपदी पुरउष्णिक् आद्यद्वादशकाष्टकवती सप्तविंश्येकत्रिंशीद्वात्रिंश्यस्ति-स्रोऽनुष्टुभः। शिष्टा गायत्र्यः। 'अविता नो अजाश्वः' इत्याद्यास्तिस्रः पवमानपूषदेवत्याः पवमानसोमदेवताका वा। 'यत्ते पवित्रमर्चिषि' इत्याद्याः पञ्चर्चः पवमानाग्निदेवत्याः। आसां पञ्चानां मध्ये 'उभाभ्यां देव सवितः' इति तृतीया पवमानसवितृदेवताका[6] वा। चतुर्थी 'त्रिभिष्ट्वं देव सवितः'

१. ग-त२-भ५-पुनानः एतन्नामको देवः। २. ग-प्रयच्छतु; त२-प्रयन्; भ१.७-प्रयच्छतो ३. ग-क्षीण*। ४. ग-त१.२-लूतस्य; त४-लान्तस्य; त५-लतिस्य; त६-लातस्य; भ४-लतिस्य; भ१(२)-मु-पा. सू.-लान्तस्य। ५. ग-त-भ२.४-'मृळ' नास्ति। ६. त-भ२.५-पवमानसोमदेवताका; भ१-पवमानसवितृमदेवताका; भ४-पवमानसवितृसोमदेवताका।

इत्येषा विकल्पेन पवमानाग्निसवितृदेवताका । 'पुनन्तु माम्' इत्येषा विकल्पेन वैश्वदेवी । 'यः पावमानीरध्येति' इत्याद्यिके द्वे पवमानाध्ययनाध्येतृस्तुतिप्रतिपादिके । अतः सैव देवता । शिष्टाः सर्वाः पवमानसोमदेवताकाः । तथा चानुक्रम्यते–'त्वं सोमासि द्वात्रिंशद्भरद्वाजः कश्यपो गोतमोऽत्रिर्विश्वामित्रो जमदग्निर्वसिष्ठ इति ह[1] तृचाः सप्त ऋषयः शेषे पवित्रो वसिष्ठो वोभौ वा पवस्व सोम तिस्रो निचृद्द्विपदा गायत्र्योऽन्त्या नास्तिकः पौष्णी वा यत्ते पवित्रं पञ्चाग्नेय्यः सावित्र्यग्निसावित्री वैश्वदेवी वान्त्याश्चान्त्यास्तिस्रः पुनन्त्विन्द्र सततिश्चानुष्टुभस्त्वे च ते पावमान्यध्येतृस्तुती' इति । गतः सूक्तविनियोगः ॥

**त्वं सो॑मासि धार॒युर्म॒न्द्र ओजि॑ष्ठो अध्व॒रे । पव॑स्व मंह॒यद्र॑यिः ॥ १ ॥**

त्वम् । सो॒म॒ । असि । धा॒र॒युः । म॒न्द्रः । ओजि॑ष्ठः । अ॒ध्व॒रे । पव॑स्व । मं॒ह॒यत्ऽर॑यिः ॥ १ ॥

हे सोम अभिषूयमाण पवमान मन्द्रः मादयितृतमः ओजिष्ठः ओजस्वितमः त्वम् अध्वरे हिंसारहितेऽस्मदीये यज्ञे धारयुः अभिषवणधाराकामः असि भवसि । ततस्त्वं मंहयद्रयिः स्तोतृभ्यः प्रदीयमानधनः सन् पवस्व द्रोणकलशे प्रधारिषु दशापवित्रेण पूतो भव । यद्वा । धारयुः । 'सहस्र्ये भज्यते' इति मत्वर्थीयो युः । स हे सोम त्वं धारावानसि ततः पवस्वेति संबन्धः ॥

**त्वं सु॒तो नृ॒माद॑नो दध॒न्वान्म॑त्स॒रिन्त॑मः । इन्द्रा॑य सू॒रिरन्ध॑सा ॥ २ ॥**

त्वम् । सु॒तः । नृ॒ऽमाद॑नः । द॒ध॒न्वान् । म॒त्स॒रिन्ऽत॑मः । इन्द्रा॑य । सू॒रिः । अन्ध॑सा ॥ २ ॥

हे सोम नृमादनः नृणां कर्मणो नेतॄणामृत्विजां मादयिता अत एव दधन्वान् तेभ्यो धनानि धारयन् प्रयच्छन् यद्वा यज्ञस्य धारकः सूरिः प्राज्ञः सुतः अस्माभिरभिषुतः त्वम् अन्धसा हविरूपेणान्नेन सह इन्द्राय मत्सरिन्तमः तस्यातिशयेन मदकारी भव । 'मादस्य' इति मकारः ॥

**त्वं सु॑ष्वा॒णो अद्रि॑भिर॒भ्य॑र्ष॒ कनि॑क्रदत् । द्यु॒मन्तं॒ शुष्म॑मुत्त॒मम् ॥ ३ ॥**

त्वम् । सु॒स्वा॒नः । अद्रि॑ऽभिः । अ॒भि । अ॒र्ष॒ । कनि॑क्रदत् । द्यु॒ऽमन्त॑म् । शुष्म॑म् । उ॒त्ऽत॒मम् ॥ ३ ॥

हे पवमान सोम[2] अद्रिभिः ग्रावभिः सुष्वाणः सुष्वाणोऽभिषूयमाणः त्वं कनिक्रदत् भृशं शब्दं कुर्वन् अभ्यर्ष कलशं पात्राणि वा[3] अभिगच्छ[3] । तथा द्युमन्तं दीप्तियुक्तम् उत्तमं शुष्मं शत्रूणां शोषकं बलं च प्रापय । यद्वा । एकवाक्यतया योजनीयः । शुष्ममस्मभ्यमभिगच्छेति । 'कदि क्रदि' आह्वाने । क्रदेर्यङ्लुकि चलोपोऽभ्यासस्य निगागमश्च 'दाधर्तिदर्धर्ति॰' इति सूत्रेण सर्वं निपात्यते । तस्माच्छतृप्रत्ययः । 'अभ्यस्तानामादिः' इति स्वरः ॥

**इन्दु॑र्हिन्वा॒नो अ॑र्षति ति॒रो वारा॑ण्य॒व्यया॑ । हरि॒र्वाज॑मचिक्रदत् ॥ ४ ॥**

इन्दुः॑ । हि॒न्वा॒नः । अ॒र्ष॒ति॒ । ति॒रः । वारा॑णि । अ॒व्यया॑ । हरिः॑ । वाज॑म् । अ॒चि॒क्र॒द॒त् ॥ ४ ॥

हिन्वानः ग्रावभिः प्रेर्यमाणोऽभिषूयमाणः इन्दुः सोमः अव्यया अविमयान्यवीनां स्वभूतानि वाराणि वालानि । पवित्राणीत्यर्थः । तानि तिरः तिरस्कृत्य व्यवधाय अर्षति गच्छति । प्रभूतं निर्गच्छतीत्यर्थः । सोऽयं हरिः हरितवर्णः सोमः वाजम् अन्नम् अचिक्रदत् शब्दयति । त्वया सह इन्द्रमहमाह्वयामीत्यर्थः[4] ॥

१. ग-त-म१.७-मु–'ह' नास्ति । २. ग-त३-म१.२.७ 'सोम' नास्ति । ३. ग-त-म-मु–चाभिगच्छ । ४. त–इन्द्रमहं मादयामीति वाजसाह्वयामीत्यर्थः; त३-म९.५–इन्द्रमहं मादयामीति वाजसाह्वयामीत्यर्थः ।

इन्दो व्यव्यमर्षसि वि श्रवांसि वि सौभगा । वि वाजान्त्सोम गोमतः ॥ ५ ॥

इन्दो इति । वि । अव्यम् । अर्षसि । वि । श्रवांसि । वि । सौभगा ।
वि । वाजान् । सोम । गोऽमतः ॥ ५ ॥

हे इन्दो सोम अव्यम् अविमयं पवित्रं वि अर्षसि विविधं धाराभिर्गच्छसि । किंच श्रवांसि हवींष्यन्नानि च वि गच्छसि । तथा सौभगा । सुभगस्य भावः सौभगम् । सुभगशब्द उद्गात्रादिषु पठ्यते । तस्योभयपदवृद्धिर्नेष्यते । सौभगानि[1] धनानि विविधं प्राप्नोषि । तथा हे सोम गोमतः पशुमन्ति वाजान् बलानि च विविधं प्राप्नुहि । तानि सर्वाण्यस्माकं प्रापयेत्यभिप्रायः ॥ ॥ १३ ॥

आ न इन्दो शतग्विनं रयिं गोमन्तमश्विनम् । भरा सोम सहस्रिणम् ॥ ६ ॥

आ । नः । इन्दो इति । शतऽग्विनम् । रयिम् । गोऽमन्तम् । अश्विनम् ।
भर । सोम । सहस्रिणम् ॥ ६ ॥

हे इन्दो पात्रेषु क्षरन् हे सोम नः अस्मभ्यम् आ भर संपाद्य देहि । किमिति उच्यते । शतग्विनम् । शतं गावो यस्य स शतगुः । तद्वन्तं गोमन्तं प्रशस्तपशुमन्तम् अश्विनम् अश्वयुक्तं सहस्रिणं सहस्रसंख्याकं रयिं धनं पुत्रं वा आ भर ॥

पवमानास इन्दवस्तिरः पवित्रमाशवः । इन्द्रं यामेभिराशत ॥ ७ ॥

पवमानासः । इन्दवः । तिरः । पवित्रम् । आशवः । इन्द्रम् । यामेभिः । आशत ॥ ७ ॥

पवित्रम् ऊर्णास्तुकेन निर्मितं दशापवित्रं तिरः तिरस्कृत्य व्यवधायकं कृत्वा पवमानासः कलशं प्रति बहुधाराः क्षरन्तः आशवः क्षिप्रं मदकारिणश्च ममादीन् व्याप्नुवन्तो वा इन्दवः सोमाः यामेभिः स्वीयैर्गमनैः इन्द्रम् आशत व्याप्नुवन्ति ॥

ककुहः सोम्यो रस इन्दुरिन्द्राय पूर्व्यः । आयुः पवत आयवे ॥ ८ ॥

ककुहः । सोम्यः । रसः । इन्दुः । इन्द्राय । पूर्व्यः । आयुः । पवते । आयवे ॥ ८ ॥

ककुहः । सोमः[2] सर्वकर्मकारयितृत्वेन सर्वेषां समुच्छ्रितोऽतिशयितो भवति । सोऽयं पूर्व्यः पूर्वैः कृतोऽभिषुतः पूर्वं प्रातःकाले कृतो वा आयुः इन्द्रमभिगन्ता[3] इन्दुः पात्रेषु क्षरन् सोम्यः । 'मये च' ( पा. सू. ४. ४. १३८ ) इति यप्रत्ययः । सोममयः रसः आयवे सर्वत्र गन्त्रे इन्द्राय पवते कलशेषु पवित्रेण पूतो भवति । यद्वा । इन्द्रार्थमभिमुखं गच्छति । पवतिर्गतिकर्मा ॥

हिन्वन्ति सूरमुस्रयः पवमानं मधुश्चुतम् । अभि गिरा समस्वरन् ॥ ९ ॥

हिन्वन्ति । सूरम् । उस्रयः । पवमानम् । मधुऽश्चुतम् । अभि । गिरा । सम् । अस्वरन् ॥ ९ ॥

उस्रयः कर्मकरणार्थमितस्ततः संचरन्त्योऽङ्गुलयः मधुश्चुतं मदकरस्य रसस्य क्षारयितारं सूरं सुवीर्यं सर्वस्य यागादिकर्मणि प्रेरकं पवमानं सोमं हिन्वन्ति अभिषवार्थं प्रेरयन्ति । ततः स्तोतारः गिरा स्तुत्या तमेनम् अभि समस्वरन् सम्यगभिष्टुवन्ति ॥

१. म-सं३-मर.५—सौभाग्यानि । २. त३—यः सोमः । ३. त—इंद्र तैर्भिगंता ।

अविता नो अजाश्वः पूषा यामनियामनि । आ भक्षत्कन्यासु नः ॥ १० ॥

अविता । नः । अजऽअश्वः । पूषा । यामनिऽयामनि । आ । भक्षत् । कन्यासु । नः ॥ १० ॥

अजाश्वः । 'अजाः पूष्णः' इत्युक्तत्वादजा एवाश्वा वाहनानि यस्य स तथोक्तः । सः पूषा पुष्टात्मको देवः यामनियामनि सर्वस्मिन् गमने ... नः अस्माकम् अविता पालयिता भवतु । किंच कन्यासु कमनीयास्वभिमतासु स्त्रीषु नः अस्मान् आ भक्षत् आभजतु । अस्माकं कन्याः प्रयच्छत्वित्यर्थः । भज सेवायां लेटि सिप्यडागमे रूपम् । यद्वा । अजाश्वोऽजवाहनः पूषा सर्वस्य पोषयिता सोमः यामनियामनि । याम्यते प्राप्यते देवैरनेनेति याम यज्ञः । तत्र यज्ञे नोऽस्माकमविता रक्षिता भवतु । तथा कन्यासु स्त्रीष्वस्माना भक्षत्[1] प्रापयतु ॥ ॥ १४ ॥

अयं सोमः कपर्दिने घृतं न पवते मधु । आ भक्षत्कन्यासु नः ॥ ११ ॥

अयम् । सोमः । कपर्दिने । घृतम् । न । पवते । मधु । आ । भक्षत् । कन्यासु । नः ॥ ११ ॥

कपर्दिने कल्याणमुकुटवते सोमाय पूष्णे वा तदर्थम् अयं मादयिताभिषुतोऽस्मदीयः सोमः पवते च गच्छति । तं प्राप्नोति । तत्र दृष्टान्तः । घृतं न मधु मादकं हवीरूपं घृतं यथा सोमं पूषणं वा गच्छति तद्वत् । ततः सः कन्यासु[1] अस्मानागमयत्[2] ॥

अयं त आघृणे सुतो घृतं न पवते शुचि । आ भक्षत्कन्यासु नः ॥ १२ ॥

अयम् । ते । आघृणे । सुतः । घृतम् । न । पवते । शुचि । आ । भक्षत् । कन्यासु । नः ॥ १२ ॥

हे आघृणे । 'घृ क्षरणदीप्त्योः' । सर्वतो दीप्यमान पवमान पूषन् वा ते तवार्थं सुतः अभिषुतः अयं सोमः पवते त्वदभिमुखमागच्छति । यद्वा । त्वदर्थं पात्रेषु पवित्रेण पूतो भवति क्षरति वा । तत्र दृष्टान्तः । घृतं न शुचि । शुद्धं घृतं यथा त्वां प्राप्नोति तद्वत् । ततस्त्वमभिलषितान्यस्माकं देहीति ॥

वाचो जन्तुः कवीनां पवस्व सोम धारया । देवेषु रत्नधा असि ॥ १३ ॥

वाचः । जन्तुः । कवीनाम् । पवस्व । सोम । धारया । देवेषु । रत्नऽधाः । असि ॥ १३ ॥

हे सोम कवीनां क्रान्तप्रज्ञानां स्तोतॄणां वाचो जन्तुः स्तुतेर्जनयिता । यद्वा । मेधाविनां मध्ये त्वमेव[3] वाचं जनयसि । ईदृशस्त्वं धारया पवस्व द्रोणकलशं प्रति प्राप्नुहि । तत इन्द्रादिदेवेषु रत्नधाः रमणशीलस्य सोमस्य निधाता असि भवसि । अथवा । देवेषु स्तोत्रकारिषु कर्म कुर्वाणेषु वास्मासु रत्नस्य कनकादेर्दाता भवसि ॥

ग्रावस्तोत्रे गाणगारिमतेनाभिरूपकरणे कलशेषु सोम आसिच्यमाने पवमानस्य तृचस्य 'आ कलशेषु' इत्यादिके द्वितीयातृचीये । सूत्रितं च—'आ कलशेषु धावति श्येनो वर्म वि गाहत इति द्वे' (आश्व. श्रौ. ५. १२) इति ॥

आ कलशेषु धावति श्येनो वर्म वि गाहते । अभि द्रोणा कनिक्रदत् ॥ १४ ॥

आ । कलशेषु । धावति । श्येनः । वर्म । वि । गाहते । अभि । द्रोणा । कनिक्रदत् ॥ १४ ॥

१. ग-ख-भ१.२.४–'भक्षत्' नास्ति । २. ग–कन्याः अस्मानागमयत्; त१–कन्यास्तस्मानागमयत्; त२–कन्यास्वस्मानागमयत्, भ१–कन्यास्मानागमयत्; भ४–कन्याभयत्, भ७–कन्यासु नोऽस्मानागमयत् । ३. ख–'त्वमेव' नास्ति ।

ऋत्विग्भिरभिषिच्यमानः कश्चित्सोमः कलशेषु सोमाधारेषु द्रोणकलशेषु आ धावति सर्वतो गच्छति। श्येनः। लुप्तोपममेतत्। यथा श्येनः वंसं वननीयं कुलायं वि गाहते प्रविशति तद्वत्। कनिक्रदत् अत्यन्तं शब्दं कुर्वन् द्रोणा द्रोणकलशमभिगच्छति च। यद्वा। द्रोणाधवनीयपूतभृत्संज्ञकाभिप्रायम्। एकः सिच्यमानः सोमो द्रोणं प्रति शब्दायमानः प्रथमं गच्छति। ततः पश्चात् पात्रत्रयमिति ॥

परि प्र सोम ते रसोऽसर्जि कलशे सुतः । श्येनो न तक्तो अर्षति ॥ १५ ॥

परि । प्र । सोम । ते । रसः । असर्जि । कलशे । सुतः । श्येनः । न । तक्तः । अर्षति ॥ १५ ॥

हे सोम कलशेषु द्रोणाभिधानेषु सुतः अभिषुतः ते तव रसः परि प्र असर्जि[1] परितो ग्रहेषु चमसेषु च प्रसृष्टो विभक्तो[2] भवति[2]। कथमिव। श्येनो न तक्तः। तकिर्गतिकर्मा। गमनशीलः श्येनः पक्षी यथा सर्वत्र अर्षति गच्छति तद्वत्। यद्वा। यथा श्येनः सर्वतो गत्वा तद्वत्तः पात्रेषु गतः सोमोऽर्षति इन्द्रादिदेवानागच्छतु। अर्तेर्लेटि सिपि वा रूपम्। पूर्वम् 'ऋषी गतौ' इत्यस्माल्लटि वापि रूपम् ॥ १५ ॥

पवस्व सोम मन्दयन्निन्द्राय मधुमत्तमः ॥ १६ ॥

पवस्व । सोम । मन्दयन् । इन्द्राय । मधुमत्ऽतमः ॥ १६ ॥

हे सोम मधुमत्तमः अतिशयेन मधुररसवांस्त्वं मन्दयन् मादयिता भवन्। यद्वा। इन्द्राय। 'क्रियाग्रहणं कर्तव्यम्' इति संप्रदानम्। इन्द्रं मोदयमानः सन् पवस्व इन्द्रार्थमागच्छ ॥

असृग्रन्देववीतये वाजयन्तो रथाइव ॥ १७ ॥

असृग्रन् । देवऽवीतये । वाजऽयन्तः । रथाःऽइव ॥ १७ ॥

एतेऽभिषुताः सोमाः वाजयन्तः सन्तः[3] देववीतये देवानां पानाय असृग्रन् विसृज्यन्ते ऋत्विग्भिः प्रदीयन्ते। तत्र दृष्टान्तः। रथाइव। वाजयन्तः अन्नधनानि बलानि वा स्वामिन इच्छन्तो रथा देववीतये देवानां गमनाय यथा विसृज्यन्ते तद्वत् ॥

ते सुतासो मदिन्तमाः शुक्रा वायुमसृक्षत ॥ १८ ॥

ते । सुतासः । मदिन्ऽतमाः । शुक्राः । वायुम् । असृक्षत ॥ १८ ॥

मदिन्तमाः अतिशयेन मादयितारः शुक्राः दीप्यमानाः सुताः[4] अभिषुताः ते सोमाः वायुं देवम् असृक्षत असृजन् अकार्षुः। यद्वा वायुमेव सोमपानार्थमसृजन्। सोमेषु सुतेषु[5] सत्सु[6] वायुस्तत्पानार्थमागच्छति खलु ॥

ग्राव्णा तुन्नो अभिष्टुतः पवित्रं सोम गच्छसि । दधत्स्तोत्रे सुवीर्यम् ॥ १९ ॥

ग्राव्णा । तुन्नः । अभिऽस्तुतः । पवित्रम् । सोम । गच्छसि । दधत् । स्तोत्रे । सुऽवीर्यम् ॥ १९ ॥

१. ग-भ४–सृज्यते; ल-भ१.२.७–प्रसृज्यते; मु–प्रासर्जि परिप्रसृज्यते। २. त३-भ१.४.७–विभक्तोऽभवत्। ३. ग भ५–यजमानानामन्नमिच्छन्तः; त३-भ२.४–यजमानस्यान्नमिच्छन्तः सन्तः। ४. भ१(२)–सुतासः। ५. ल–'सुतेषु' नास्ति। ६. ग-त३-भ१.७–'सत्सु' नास्ति।

हे सोम ग्राव्णा सुतः अभिषीडितोऽभिषुतस्त्वं स्तोतृभिः अभिष्टुतः सन् पवित्रं[1] गच्छसि प्राप्नोषि। किं कुर्वन्। स्तोत्रे स्तोत्रकारिणे जनाय सुवीर्यं शोभनवीर्योपेतं धनादिकं दधत् विदधत् प्रयच्छन् ॥

एष तुम्रो अभिष्टुतः पवित्रमति गाहते । रक्षोहा वारमव्ययम् ॥ २० ॥

एषः । तुम्रः । अभिऽस्तुतः । पवित्रम् । अति । गाहते । रक्षःऽहा । वारम् । अव्ययम् ॥ २० ॥

तुम्रः । 'तुम्र व्यथने' । ग्रावभिरभिव्यथितः सुतः अत एव सर्वैः अभिष्टुतः एषः अस्मदीयः सोमः रक्षोहा कर्मविघ्नकारिणां रक्षसां पापानां वा[2] हन्ताभवत् । अव्ययम् अविमयमव्ययवयवभूतं वारं वालं तेन कृतं पवित्रं दशापवित्रम् अति अतिक्रम्य गाहते द्रोणकलशं प्रविशति ॥ ॥१६॥

यदन्ति यच्च दूरके भयं विन्दति मामिह । पवमान वि तज्जहि ॥ २१ ॥

यत् । अन्ति । यत् । च । दूरके । भयम् । विन्दति । माम् । इह । पवमान । वि । तत् । जहि ॥ २१ ॥

हे पवमान पूयमान पुनान वा सोम यत् भयम् अन्ति अन्तिके तथा यच्च भयं दूरके अतिदूरे देशे अथवा इह अस्मिन् प्रदेशेऽपि भयं मां विन्दति लभते प्राप्नोति तत् भयं त्वं वि जहि विशेषेण नाशय । यद्वा । इहेति यज्ञोऽयं लोको वा । अस्मिन् क्रियमाणे यज्ञेऽस्मिँल्लोके वा यद्भयं व्याप्नोति तन्नाशयेत्यर्थः ॥

पवमानः सो अद्य नः पवित्रेण विचर्षणिः । यः पोता स पुनातु नः ॥ २२ ॥

पवमानः । सः । अद्य । नः । पवित्रेण । विऽचर्षणिः । यः । पोता । सः । पुनातु । नः ॥ २२ ॥

सः तादृशः प्रसिद्धः विचर्षणिः सर्वस्य द्रष्टा पवमानः अद्य इदानीमेव पवित्रेण पापशोधकेन तेजसा[3] नः अस्मान् पुनातु पापरहितान् करोतु ॥

पवित्रेष्ट्यां प्रथमाज्यभागस्य याज्या 'यत्ते पवित्रम्' इत्येषा । सूत्रितं च—'यत्ते पवित्रमर्चिष्या कलशेषु धावतीति पवित्र इष्टेते[4]' ( आश्व. श्रौ. २. १२ ) इति ॥

यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनीहि नः ॥ २३ ॥

यत् । ते । पवित्रम् । अर्चिषि । अग्ने । विऽततम् । अन्तः । आ । ब्रह्म । तेन । पुनीहि । नः ॥ २३ ॥

हे पवमानगुणविशिष्ट अग्ने ते त्वदीयं पवित्रं शोधकं यत् स्वतेजः अर्चिषि तीव्रैस्तद्वद्दीप्ति-तेजसि अन्तः मध्ये आ विततम् आविस्तृतं विद्यते । यद्वा । हे अग्ने ते तव स्वभूतेऽर्चिषि तेजस्यन्तर्मध्ये यत्पवित्रं शुद्धत्वापादकं सामर्थ्यमस्ति । तेन तादृशेन[5] तेजसा ब्रह्म पुत्रादिवर्धन-कारि नः शरीरं पुनीहि पापरहितं पूतं कुरु ॥

यत्ते पवित्रमर्चिवदग्ने तेन पुनीहि नः । ब्रह्मसवैः पुनीहि नः ॥ २४ ॥

यत् । ते । पवित्रम् । अर्चिऽवत् । अग्ने । तेन । पुनीहि । नः । ब्रह्मऽसवैः । पुनीहि । नः ॥ २४ ॥

१. क-त३-अ९—पवित्रं दशापवित्रं । २. त१.५-अ७—च; त४—चा । ३. द७—तेजसा पोता स्वयं पवित्रः सन् ; मु—तेजसा यः पोता स्वयं पवित्रः सन् । ४. ग—इत्येका; त-अ-मु—इत्येक । ५. ग—तत्तादृशेन ।

हे अग्ने पवित्रं शोधकम् अर्चिवत् अर्चिष्मत् । 'छन्दसीरः' इति मतुपो वत्वम् । सौरादि-तेजोयुक्तं ते त्वदीयं यत् तेजो विततं तेन त्वदीयेनैव तेजसा नः अस्मान् पुनीहि पूतान् कुरु । किंच ब्रह्मसवैः ब्राह्मणकर्तृकसोमाभिषवैः । यद्वा । ब्रह्म सोमः । तस्याभिषवैः नोऽस्मान् पुनीहि ॥

**उभाभ्यां देव सवितः पवित्रेण सवेन च । मां पुनीहि विश्वतः ॥ २५ ॥**

उभाभ्याम् । देव । सवितरिति । पवित्रेण । सवेन । च । माम् । पुनीहि । विश्वतः ॥ २५ ॥

हे सवितः सर्वस्य प्रेरक हे देव द्योतमान सोम त्वं पवित्रेण पापशोधकेन त्वदीयेन तेजसा सवेन सोमाभिषवेण च एताभ्याम् उभाभ्यां विश्वतः सर्वतः मां पुनीहि पूतं कुरु ॥ ॥१७॥

**त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोम धामभिः । अग्ने दक्षैः पुनीहि नः ॥ २६ ॥**

त्रिऽभिः । त्वम् । देव । सवितः । वर्षिष्ठैः । सोम । धामऽभिः । अग्ने । दक्षैः । पुनीहि । नः ॥ २६ ॥

हे देव स्तुत्य दीप्यमान वा हे सवितः सर्वस्य स्वस्वकर्मणि चोदयितः सोम पवमान-गुणविशिष्ट हे अग्ने त्वं वर्षिष्ठैः वृद्धतमैः अत एव दक्षैः सामर्थ्यवद्भिः त्रिभिः धामभिः शरीरैः अग्निवायुसूर्यात्मकैस्त्रिभिः शरीरैः नः अस्मान् पुनीहि परिशुद्धान् कुरु ॥

**पुनन्तु मां देवजनाः पुनन्तु वसवो धिया ।**
**विश्वे देवाः पुनीत मा जातवेदः पुनीहि मा ॥ २७ ॥**

पुनन्तु । माम् । देवऽजनाः । पुनन्तु । वसवः । धिया ।
विश्वे । देवाः । पुनीत । मा । जातऽवेदः । पुनीहि । मा ॥ २७ ॥

देवजनाः । देवानां जनः प्रादुर्भावो येषां यज्ञेष्विति देवजना यजमानाः । यद्वा इन्द्रादि-देवगणाः । मां पुनन्तु परिपूतं कुर्वन्तु । तथा वसवः वासका[1] देवाः[2] धिया आत्मीयेन कर्मणा मां पुनन्तु । अथ प्रत्यक्षः । हे विश्वे देवाः सर्वे देवाः मा मां पुनीत पूतं कुरुत । हे जातवेदः जातानि भूतजातानि वेत्तीति यद्वा जातप्रज्ञ हे अग्ने मा मां पुनीहि ॥

**प्र प्यायस्व प्र स्यन्दस्व सोम विश्वेभिरंशुभिः । देवेभ्य उत्तमं हविः ॥ २८ ॥**

प्र । प्यायस्व । प्र । स्यन्दस्व । सोम । विश्वेभिः । अंशुऽभिः । देवेभ्यः । उत्ऽतमम् । हविः ॥ २८ ॥

हे सोम प्र प्यायस्व अस्मान् प्रकर्षेण वर्धय । यद्वा देवान् सोमेन वर्धय । किंच विश्वेभिरंशुभिः सर्वैस्त्वदीयैरंशुभिः देवेभ्यः देवार्थम् उत्तमं प्रशस्ततमं हविः सोमरूपं प्र स्यन्दस्व कलशादीन् प्रति प्रस्रव । प्रयच्छेति यावत् ॥

अग्नीषोमप्रणयने 'उप प्रियम्' इत्येषा । सूत्रितं च—'उप प्रियं पनिप्नतमित्यर्धर्चे आरमेत्' (आश्व. श्रौ. ४. १०) इति ॥

**उप प्रियं पनिप्नतं युवानमाहुतीवृधम् । अगन्म बिभ्रतो नमः ॥ २९ ॥**

उप । प्रियम् । पनिप्नतम् । युवानम् । आहुतिऽवृधम् । अगन्म । बिभ्रतः । नमः ॥ २९ ॥

प्रियं सर्वस्य प्रीणयितारं पनिप्नतम् अत्यर्थं शब्दायमानं युवानं तरुणम् आहुतिवृधम् आहुतिभिर्वर्धनीयं पवमानं वयं नमः[3] हविर्नमस्कारं वा बिभ्रतः धारयन्तः सन्तः उप अगन्म

१. ग–अपि । २. ग-ता१-भ१.२.४.५–प्रवर्धय । ३. ग–विप्राः ।

उपगच्छेम । गमेर्लुङि 'मन्त्रे घस' इति च्लेर्लुकि सति 'म्वोश्च' इति नकारः । पनिप्नतम् । पनेः स्तुत्यर्थस्य यङ्लुकि रूपम् । 'दाधर्ति दर्धर्ति' इति सूत्रे इतिकरणस्य प्रदर्शनार्थत्वादभ्यासस्य निगागम उपधालोपश्च निपात्यते ॥

अलाय्यस्य परशुर्ननाश तमा पवस्व देव सोम । आखुं चिदेव देव सोम ॥२०॥

अलाय्यस्य । परशुः । ननाश । तम् । आ । पवस्व । देव । सोम ।

आखुम् । चित् । एव । देव । सोम ॥ २० ॥

अलाय्यस्य । अलेरौणादिक आय्यप्रत्ययः । कपिलकादित्वाल्लत्वम् । अभिगमनशीलस्य शत्रोः परशुः छेदकः पवमानः तम् एव शत्रुं ननाश नाशयतु नास्मानपापान् । ततो हे देव दीप्यमान सोम आ पवस्व अस्मदभिमुख्येन गच्छ । किंच हे देव द्योतमान स्तूयमान वा हे सोम आखुं चित् । 'खनु अवदारणे' । सर्वस्याहन्तारमपि तं शत्रुम् एव नाशय नास्मानपापानिति ॥

यः पावमानीरध्येत्यृषिभिः संभृतं रसम् ।

सर्वं स पूतमश्नाति स्वदितं मातरिश्वना ॥ २१ ॥

यः । पावमानीः । अधिऽएति । ऋषिऽभिः । सम्ऽभृतम् । रसम् ।

सर्वम् । सः । पूतम् । अश्नाति । स्वदितम् । मातरिश्वना ॥ २१ ॥

यः जनः[1] पावमानीः पवमानदेवताकाः सर्वा ऋचः तद्रूपम् ऋषिभिः सूक्तद्रष्टृभिर्मधुच्छन्दःप्रभृतिभिः संभृतं संपादितं रसं वेदरसभूतं सारं सूक्तसंघम् अध्येति अधीते सः जनः सर्वं भोज्यजातं पूतं परिशुद्धमेव अश्नाति । परिपूतं पापरहितमन्नं भक्षयति । कथमस्य पूतत्वं तत्राह । स्वदितं [illegible] मातरिश्वना । मातर्यन्तरिक्षे श्वसितीति मातरिश्वा वायुः । स च वायुः पवित्रमेव । पवित्रेण वायुना स्वदितं स्वादूकृतं परिपूतमेवान्नं पश्चात् स नरोऽश्नाति ॥

पावमानीर्यो अध्येत्यृषिभिः संभृतं रसम् ।

तस्मै सरस्वती दुहे क्षीरं सर्पिर्मधूदकम् ॥ २२ ॥

पावमानीः । यः । अधिऽएति । ऋषिऽभिः । सम्ऽभृतम् । रसम् ।

तस्मै । सरस्वती । दुहे । क्षीरम् । सर्पिः । मधु । उदकम् ॥ २२ ॥

यः ब्राह्मणः पावमानीः पवमानदेवताका ऋचः सहस्रात्मकम् ऋषिभिः मधुच्छन्दआदिभिः संभृतं रसं वेदसारं सूक्तसंघम् अध्येति अधीते तस्मै पवमानाध्ययनं कुर्वते जनाय सरस्वती सर्वत्र सरणवती वाग्देवता क्षीरं वत्ससाधनभूतं पयः सर्पिः तादृशं घृतं मधु मधुकरम् उदकं सोमं दुहे स्वयमेव दोग्धि । एवं नाहं यागादिपरं देवताश्रयिणं करोमीत्यर्थः । 'दुह प्रपूरणे' । कर्मकर्तरि 'न दुहस्नुनमां यक्चिणौ' इति यकः प्रतिषेधः । 'लोपस्त आत्मनेपदेषु' इति तलोपः ॥ ॥१८॥ ॥२॥

चतुर्थेऽनुवाकेऽष्टादश सूक्तानि । तत्र 'प्र देवम्' इति षडृचं प्रथमं सूक्तं भलन्दनपुत्रस्य वत्सप्रेरार्षं पवमानसोमदेवताकम् । द्वादशी त्रिष्टुप् शिष्टा जगत्यः । तथा चानुक्रान्तं— 'प्र देवं दश वत्सप्रिर्भालन्दनस्त्रिष्टुबन्तं ह' इति । गतो विनियोगः ॥

१. ग-त३-म२.५—यजमानः ।

प्र दे॒वमच्छा॒ मधु॑मन्त॒ इन्द॒वोऽसि॑ष्यदन्त॒ गाव॒ आ न धे॒नवः॑ ।
ब॒र्हि॒षदो॑ वच॒नाव॑न्त॒ ऊध॑भिः परि॒स्रुत॑मु॒स्रिया॑ नि॒र्णिजं॑ धिरे ॥ १ ॥

प्र । दे॒वम् । अच्छ॑ । मधु॑ऽमन्तः । इन्द॑वः । असि॑स्यदन्त । गावः॑ । आ । न । धे॒नवः॑ ।
ब॒र्हि॒ऽसदः॑ । व॒च॒नाऽव॑न्तः । ऊध॑ऽभिः । प॒रि॒ऽस्रुत॑म् । उ॒स्रियाः॑ । निः॒ऽनिज॑म् । धि॒रे ॥ १ ॥

मधुमन्तः मादकरससंयुक्ताः[1] इन्दवः सोमाः देवं द्योतमानं सोमात्मकमिन्द्रम् अच्छ प्रति प्र असिष्यदन्त प्रस्यन्दन्ते । ग्रहादिषु प्रक्षरन्ति । स्यन्दतेर्ण्यन्तस्य लुङि चङि रूपम् । तत्र दृष्टान्तः । गाव आ न धेनवः । पयस्विन्यः प्रीणयित्र्यो गावो यथा वत्सं प्रति पयांसि प्रस्रवन्ति तद्वत् । किंच बर्हिषदः बर्हिषि सीदन्तः वचनावन्तः हम्भारवादिशब्दवन्तः उस्रियाः । गोनामैतत् । तादृश्यो गावः ऊधभिः पयोधारकैः स्वैः स्वैरूधभिः परिस्रुतं[2] परितः स्रवणशीलं निर्णिजं शुद्धं पयोभूतं सोमरसं धिरे दधिरे । इन्द्रार्थं धारयन्ति ॥

स रोरु॑वद॒भि पूर्वा॑ अचिक्रद॒दु॒पा॒रुहः॑ श्र॒थय॑न्त्स्वादते॒ हरिः॑ ।
ति॒रः प॒वित्रं॑ परि॒यन्नु॒रु ज्रयो॒ नि शर्या॑णि दधते दे॒व आ वर॑म् ॥ २ ॥

सः । रोरु॑वत् । अ॒भि । पूर्वाः॑ । अ॒चि॒क्र॒द॒त् । उ॒प॒ऽआ॒रुहः॑ । श्र॒थय॑न् । स्वा॒द॒ते॒ । हरिः॑ ।
ति॒रः । प॒वित्र॑म् । प॒रि॒ऽयन् । उ॒रु । ज्रयः॑ । निः । शर्या॑णि । द॒ध॒ते॒ । दे॒वः । आ । वर॑म् ॥ २ ॥

रोरुवत् कलशादिकं प्रति अत्यन्तं शब्दं कुर्वन् सः सोमः पूर्वाः मुख्याः स्तोतॄणां स्तुतीः अभि अचिक्रदत् अभिमुखमध्वनयत् । स्तुतयः माध्यीयस्य इति प्रतिध्वनिमङ्गीकारमकार्षी- दित्यर्थः । किंच हरिः हरितवर्णः उपारुहः । रोहतेस्ताच्छीलिकः क्विप् । उपरोहणशीला ऊर्ध्वं प्रादुर्भवनशीला ओषधीः श्रथयन् अग्रे विश्लेषयन् स्वादते स्वानुकरोति । ताः फलिनीः कुर्वन् स्वादुयुक्ता विदधातीत्यर्थः । तथा पवित्रम् अविवालात्मकं दशापवित्रं तिरः तिरस्कृत्य पात्राणि प्रत्यात्मनः क्षरणकाले पवित्रं व्यवधायकं कृत्वा परियन् परितो गच्छन् सोमः उरु महान्तं ज्रयः वेगं करोति । ततः शर्याणि । ‘ शॄ हिंसायाम् ’ । हिंसितव्यानि महता शरेण हन्तव्यानि रक्षांसि नि दधते निक्षिपति न्यक्करोति । हिनस्तीति यावत् । पश्चात् देवः दीप्यमानः सोमः वरं वरणीयं धनं सोमदातृभ्यो यजमानेभ्यः आ दधते आधारयति । प्रयच्छतीत्यर्थः । दधातेः लेट्यडागमे[3] ‘ लोपस्त आत्मनेपदेषु ’ इति तलोपः । ‘ लोपो वेटि वा ’ इत्याकारलोपः ॥

वि यो म॒मे य॒म्या॑ संय॒ती मदः॑ साकं॒वृधा॒ पय॑सा पिन्वद॒क्षिता॑ ।
म॒ही अ॑पा॒रे रज॑सी वि॒वेवि॑दद॒भिव्र॒जन्नक्षि॑तं॒ पाज॒ आ द॑दे ॥ ३ ॥

वि । यः । म॒मे । य॒म्या॑ । संय॒ती इति॑ स॒म्ऽय॒ती । मदः॑ । सा॒क॒म्ऽवृधा॑ । पय॑सा । पि॒न्व॒त् । अक्षि॑ता ।
म॒ही इति॑ । अ॒पा॒रे इति॑ । रज॑सी इति॑ । वि॒ऽवेवि॑दत् । अ॒भि॒ऽव्र॒जन् । अक्षि॑तम् । पाजः॑ । आ । द॒दे॒ ॥ ३ ॥

यः मदः । मादयत्यनेनेति मदः सोमरसः । यम्या युगलभूते संयती परस्परं संगच्छमाने द्यावापृथिव्यौ वि ममे विशेषेण निर्मितवान् ततः ते साकंवृधा सहैव वर्धनशीले तथा अक्षिता

1. ग—मधुररसयुक्ताः; त३-म२—मदकररसयुक्ताः । 2. त-मु—ताभ्यः परिस्रुतं । 3. त३-म१. ५.७—लेट्याडागमे ।

भक्षीणे सामर्थ्यवती यथा भविष्यतः तथा स सोमः पयसा पयोरूपेण स्वीयरसेन पिन्वत् असिञ्चत्। अवर्धयदिति यावत्। किंच मही महत्यौ अत एव अपारे पर्यन्तरहिते रजसी। द्यावापृथिव्यावित्येतत्। ते द्यावापृथिव्यौ विवेविदत्। 'विद ज्ञाने'। यङ्लुकि लटि रूपम्। अभ्यासस्वरः[1]। इयं पृथिवीयं द्यौरिति सर्वेषां विविच्य तेजसा प्रज्ञापयन् अभिव्रजन् अभितः सर्वतो गच्छन् स सोमः अक्षितम् अक्षीणमविनश्वरं पाजः बलम् आ ददे स्वीकृतवान्। अत्यन्तं बलवानभवदित्यर्थः॥

स मातरा विचरन्वाजयन्नपः प्र मेधिरः स्वधया पिन्वते पदम्।
अंशुर्यवेन पिपिशे यतो नृभिः सं जामिभिर्नसते रक्षते शिरः॥ ४॥

सः। मातरा। विऽचरन्। वाजयन्। अपः। प्र। मेधिरः। स्वधया। पिन्वते। पदम्।
अंशुः। यवेन। पिपिशे। यतः। नृऽभिः। सम्। जामिऽभिः। नसते। रक्षते। शिरः॥४॥

मेधिरः। 'मेधारथाभ्यामिरन्निरचौ' (पा. सू. ५.२.१०९.३) इतीरन्प्रत्ययो मत्वर्थीयः। मेधावान् प्राज्ञः सः सोमः मातरा मातरौ जगतो निर्मात्र्यौ द्यावापृथिव्यौ विचरन् अन्तरेणाभ्यन्तं चरन् तथा अपः अन्तरिक्षस्थितान्युदकानि वाजयन् प्रेरयन्। वजेर्ण्यन्तस्य[2] लटि रूपम्। तादृशः स्वधया सक्तुलक्षणेनान्नेन सह पदं स्वस्थानमुत्तरवेदिरूपं प्र पिन्वते प्रकर्षेणाप्याययति। ततः नृभिः कर्मनेतृभिर्ऋत्विग्भिः यतः संयतः अंशुः सोमः यवेन पिपिशे। 'पिश अवयवे'। अवयवत्वेन कृतः। मिश्रित इत्यर्थः। सोमस्तु यवसक्तुभिः श्रीयते खलु। सोऽयं जामिभिः एकस्मात्प्राणेरुत्पन्नाभिरङ्गुलीभिः सं नसते संगच्छते च। शिरः शीर्णं भूतजातं रक्षते च[3]। स्वीयरसेन रक्षति पोषयति। नसतिर्गतिकर्मा। 'चादिलोपे विभाषा' इति न निघातः॥

सं दक्षेण मनसा जायते कविर्ऋतस्य गर्भो निहितो यमा परः।
यूना ह सन्ता प्रथमं वि जज्ञतुर्गुहा हितं जनिम नेममुद्यतम्॥ ५॥

सम्। दक्षेण। मनसा। जायते। कविः। ऋतस्य। गर्भः। निऽहितः। यमा। परः।
यूना। ह। सन्ता। प्रथमम्। वि। जज्ञतुः। गुहा। हितम्। जनिम। नेमम्। उत्ऽयतम्॥५॥

प्रसङ्गात् सोमसूर्ययोराविर्भावमाह। दक्षेण प्रवृद्धेन मनसा सह सं जायते पृथिव्याः[4] सम्यग्जायते। तथा ऋतस्य उदकस्यैव गर्भः गर्भवद्धारयिता। यद्वा। सत्यस्य यज्ञस्य मध्ये गर्भः शब्दनीयः स्तुत्यः। स एव सोमः परः परस्तादन्तरिक्षे यमा यमेन नियमेन देवैः निहितः सः। सूर्योऽपि सृष्टिर्भवति। अस्मात्सोमः सूर्यात्मकतयावस्थित इत्यर्थः। एवं यूना। ह इत्यवधारणे। युवाभावेन सन्तौ तौ प्रथमं जननकाले वि जज्ञतुः। अयं सोमोऽयं सूर्य इति विशेषेण ज्ञायते। तयोरर्धं जनिम जन्म गुहा गुहायां हितं निहितं भवति। तयोः नेमम् अर्धं च[5] उद्यतं प्रकाशितं भवति। दिवा सूर्यः प्रादुर्भवति रात्रौ चन्द्रमा इति॥ ॥ १९ ॥

मन्द्रस्य रूपं विविदुर्मनीषिणः श्येनो यदन्धो अभरत्परावतः।
तं मर्जयन्त सुवृधं नदीष्वाँ उशन्तमंशुं परियन्तमृग्मियम्॥ ६॥

१. ग-त३-भ-अभ्यस्तस्वरः; त४.५—अभ्यस्वरः। २. त४-भ१.७—वाजेर्ण्यन्तस्य। ३. भ६—'च' नास्ति। ४. ग—पृथिव्यां। ५. त१.२.५.६—चोद्यतमुद्यत; त४—चोद्यतमुद्यत; भ६—चोद्यतमुद्यतं; भ७—चोद्यत।

मन्द्रस्य । रूपम् । विविदुः । मनीषिणः । श्येनः । यत् । अन्धः । अभरत् । पराऽवतः ।
तम् । मर्जयन्त । सुऽवृधम् । नदीषु । आ । उशन्तम् । अंशुम् । परिऽयन्तम् । ऋग्मियम् ॥६॥

मनीषिणः प्राज्ञा यष्टारः मन्द्रस्य मदकरस्य तस्य सोमस्य रूपं विविदुः जानन्ति । यत् अन्धः यत् सोमलक्षणमन्नं श्येनः गायत्र्याख्यः पक्षी परावतः दूरात् द्युलोकात् आभरत् आजहार । 'हृग्रहोर्भश्छन्दसि' इति भकारः । तं तादृशं सुवृधं सुष्ठु वर्धमानं सुवर्धयितारं वा अंशुं सोमं नदीषु नदमानासु[1] वसतीवर्याख्यास्वप्सु आ मर्जयन्त ऋत्विज आशोधयन्ति । अलंकुर्वन्ति वा । कीदृशम् । उशन्तं[2] देवान् कामयमानं परियन्तं परितो गच्छन्तम् ऋग्मियम् ऋगर्हं स्तुत्यं सोममामर्जयन्तीति ॥

त्वां मृजन्ति दश योषणः सुतं सोम ऋषिभिर्मतिभिर्धीतिभिर्हितम् ।
अव्यो वारेभिरुत देवहूतिभिर्नृभिर्यतो वाजमा दर्षि सातये ॥ ७ ॥

त्वाम् । मृजन्ति । दश । योषणः । सुतम् । सोम । ऋषिऽभिः । मतिऽभिः । धीतिऽभिः । हितम् ।
अव्यः । वारेभिः । उत । देवहूतिऽभिः । नृऽभिः । यतः । वाजम् । आ । दर्षि । सातये ॥७॥

हे सोम योषणः द्वाभ्यां पाणिभ्यां विभज्योषणाः दश दशसंख्याका अङ्गुलयः ऋषिभिः मधुच्छन्दःप्रभृतिभिः सुतम् अभिषुतं हितं पात्रेषु निहितं त्वां मतिभिः स्तुतिभिः धीतिभिः कर्मभिश्च अव्यः वारेभिः[3] अविवालैः[3] पवित्रैः मृजन्ति शोधयन्ति । उत अपि च देवहूतिभिः देवाह्वानयुक्तैः नृभिः कर्मनेतृभिर्ऋत्विग्भिः यतः ग्रहेषु संयमितः संगृहीतस्त्वं सातये[4] दानाय वाजम् अन्नम्[4] आ दर्षि आविदारयसि । विवृतं करोषि । स्तोतृभ्योऽन्नादिकं प्रयच्छसीति भावः ॥

परिप्रयन्तं वय्यं सुषंसदं सोमं मनीषा अभ्यनूषत स्तुभः ।
यो धारया मधुमाँ ऊर्मिणा दिव इयर्ति वाचं रयिषाळमर्त्यः ॥ ८ ॥

परिऽप्रयन्तम् । वय्यम् । सुऽसंसदम् । सोमम् । मनीषाः । अभि । अनूषत । स्तुभः ।
यः । धारया । मधुऽमान् । ऊर्मिणा । दिवः । इयर्ति । वाचम् । रयिषाट् । अमर्त्यः ॥ ८ ॥

परिप्रयन्तं पात्राणि परितः प्रगच्छन्तं वय्यं देवैः काम्यमानं सुसंसदं शोभनसंसदनं सोमं मनीषाः मनस ईशित्र्यः स्तुभः स्तुतयः अभ्यनूषत अभिष्टुवन्ति । वय्यम् । 'वी गत्यादिषु' इत्यस्माद्धातोः 'भव्यप्रवय्ये च छन्दसि' ( पा. सू. ६. १. ८३ ) इति निपातितः । अत्राङुपसर्गस्यापि निपातनं भवति । मधुमान् मदकररसवान् यः सोमः धारया स्वीयया ऊर्मिणा वसतीवर्याख्येनोदकेन सह दिवः आकाशात् द्रोणकलशं आपतति[5] रयिषाट् शत्रुधनानामभिभविता अमर्त्यः मनुष्यधर्मरहितः स सोमः वाचम् इयर्ति प्रेरयति । तदा हि स्तोतारः स्तुवन्ति[6] ॥

अयं दिव इयर्ति विश्वमा रजः सोमः पुनानः कलशेषु सीदति ।
अद्भिर्गोभिर्मृज्यते अद्रिभिः सुतः पुनान इन्दुर्वरिवो विदत्प्रियम् ॥ ९ ॥

१. ग-अ६—नदनासु । २. त१.३.४.५.६.७-अ१.२.४.६—उशंतं तं । ३. ग-अ१.७—वालैः । ४. त१—वाजमन्नं; त२.३.४.५.६-अ२.६—वाजमन्नं सातये दानाय वाजमन्नं । ५. ग—आपतते । ६. ग-त३—स्तुवंति तदुच्यते; त१.२.६.७-अ१.२.४.७—स्तुवंति उच्यते ।

अ॒यम् । दि॒वः । इ॒य॒र्ति॒ । विश्व॑म् । आ । रजः॑ । सोमः॑ । पु॒ना॒नः । क॒लशे॑षु । सी॒द॒ति॒ ।
अ॒त्ऽभिः॑ । गोभिः॑ । मृ॒ज्य॒ते॒ । अद्रि॑ऽभिः । सु॒तः । पु॒ना॒नः । इन्दुः॑ । वरि॑वः । वि॒द॒त् । प्रि॒यम् ॥ ९ ॥

अयं सोमः दिवः द्युलोकात् विश्वं रजः । उदकनामैतत् । सर्वमुदकम् इयर्ति[1] अभिप्रापयति । किंच पुनानः दशापवित्रेण पूयमानः सोमः कलशेषु द्रोणकलशेषु सीदति । तथा अद्भिः ग्राविभिः अद्भिः वसतीवर्याख्याभिः गोभिः गोविकारैः क्षीरदध्यादिभिश्च मृज्यते शोध्यते अलंक्रियते । ततः पुनानः सुतः इन्दुः सोमः प्रियं प्रियतरं प्रीणनकारि वा वरिवः वरणीयं धनं विदत् स्तोतृभ्यो लम्भयति । प्रयच्छतीति यावत् ॥

ए॒वा नः॑ सोम परिषि॒च्यमा॑नो॒ वयो॒ दध॑च्चि॒त्रत॑मं पवस्व ।
अ॒द्वे॒षे द्यावा॑पृथि॒वी हु॑वेम॒ देवा॑ ध॒त्त र॒यिम॒स्मे सु॒वीर॑म् ॥ १० ॥

ए॒व । नः॒ । सो॒म॒ । प॒रि॒ऽसि॒च्यमा॑नः । वयः॑ । दध॑त् । चि॒त्रऽत॑मम् । प॒व॒स्व॒ ।
अ॒द्वे॒षे इति॑ । द्यावा॑पृथि॒वी इति॑ । हु॒वे॒म॒ । देवाः॑ । ध॒त्त॒ । र॒यिम् । अ॒स्मे इति॑ । सु॒ऽवीर॑म् ॥ १० ॥

अयं प्रत्यक्षकृतः । हे सोम दधत् प्रयच्छंस्त्वं परिषिच्यमानः परितोऽद्भिर्गोभिर्वा सिच्यमानः एव[2] चित्रतमं[3] चित्रं नानाविधं चायनीयतमं वा वयः अन्नं नः अस्मभ्यं पवस्व प्रापय । प्रयच्छेति यावत् । किंच अद्वेषे द्वेषरहिते द्यावापृथिवी द्यावापृथिव्यौ हुवेम हविष्प्रदानार्थं वयमाह्वयेम । हे देवाः यूयं च सुवीरम् । वीरः कर्मणि समर्थः पुत्रः । तादृक्पुत्रोपेतं रयिं धनम् अस्मे अस्मासु धत्त निधत्त ॥ ॥ २० ॥

‘ इषुर्न ’ इति दशर्चं द्वितीयं सूक्तमाङ्गिरसस्य हिरण्यस्तूपस्यार्षं पवमानसोमदेवताकम् । नवमीदशम्यौ त्रिष्टुभौ । शिष्टा जगत्यः । तथा चानुक्रान्तम्—‘ इषुर्न हिरण्यस्तूपोऽन्त्ये[4] त्रिष्टुभौ ’ इति । गतो विनियोगः ।

इषु॒र्न धन्व॒न् प्रति॑ धीयते म॒तिर्व॒त्सो न मा॒तुरुप॑ स॒र्ज्यूध॑नि ।
उ॒रुधा॑रेव दुहे॒ अग्र॑ आय॒त्यस्य॑ व्र॒तेष्वपि॒ सोम॑ इष्यते ॥ १ ॥

इषुः॑ । न । धन्व॑न् । प्रति॑ । धी॒य॒ते॒ । म॒तिः । व॒त्सः । न । मा॒तुः । उप॑ । स॒र्जि॒ । ऊध॑नि ।
उ॒रुधा॑राऽइव । दु॒हे॒ । अग्रे॑ । आ॒ऽय॒ती । अस्य॑ । व्र॒तेषु॑ । अपि॑ । सोमः॑ । इ॒ष्य॒ते॒ ॥ १ ॥

अस्मिन् पवमानस्य इन्द्रे मतिः मननीयास्मदीया स्तुतिः प्रति धीयते अस्माभिर्निधीयते वा । इषाति रूपम् । तत्र दृष्टान्तः । इषुर्न यथेषुः शरः धन्वन् धनुषि प्रति धीयते तद्वत् । किंच ऊधनि सर्वस्य पोषयितृत्वेनोधःस्थानीये इन्द्रे सोमो मदार्थमस्माभिः उप सर्जि उपसृज्यते । कथमिव । मातुः गोः ऊधनि पयोधारके वत्सो न वत्सो यथा पयःपानार्थं सृज्यते तद्वत् । उरुधारेव बहुविधपयोधारा गौरिव अग्रे वत्सस्य पुरतः आयती गच्छन्ती सती पयः दुहे दुग्धे तथा सोऽयमिन्द्रो वत्सभूतेभ्यः स्तोतृभ्यः पुरतो गच्छन् बहुविधान् कामान् दुग्धे । किंच अस्य एतादृशस्य व्रतेष्वपि सोम इष्यते यष्टृभिः प्रेर्यते खलु ॥

---

1. म५–आ इयर्ति । 2. ग-त-म–एवं; मु–एव एवं । 3. ग-त१.२.५.६-म१.४.६–‘ चित्रतमं ’ नास्ति । 4. त१.२.४.५.६–हिरण्यस्तूपोंऽते ।

उपो मतिः पृच्यते सिच्यते मधु मन्द्राजनी चोदते अन्तरासनि ।
पवमानः संतनिः प्रघ्नतामिव मधुमान्द्रप्सः परि वारमर्षति ॥ २ ॥

उपो इति । मतिः । पृच्यते । सिच्यते । मधु । मन्द्रऽअजनी । चोदते । अन्तः । आसनि ।
पवमानः । सम्ऽतनिः । प्रघ्नताम्ऽइव । मधुऽमान् । द्रप्सः । परि । वारम् । अर्षति ॥ २ ॥

अस्मिन् पवमानरूपे[1] इन्द्रे मतिः स्तुतिः उपो उपपृच्यते उपपृच्यते स्तोतृभिः संयोज्यते । 'पृची संपर्के' । तथा मधु मदकरः सोमः इन्द्रार्थं सिच्यते अद्भिः वसतीवरीभिश्च सिक्तो भवति । ततश्च मन्द्राजनी । 'अज गतिक्षेपणयोः' इत्यस्य ल्युटि ङीपि रूपम् । मदकरस्य रसस्य प्रेरयित्री सोमधारा तस्येन्द्रस्य आसनि आस्ये अन्तः मध्ये चोदते ऋत्विग्भिः प्रेर्यते । आस्यशब्दस्य 'पद्दन्नोमास्' इत्यादिना आसन्नित्यादेशः । किंच संतनिः महादिषु सम्यग्विस्तृतः मधुमान् मदकररसवान् पवमानः पूयमानः सोमः द्रप्सः द्रुतगमनशीलो यद्वा क्षिप्रंद्रवणशीलः[2] सन् वारम् अविवालमयं पवित्रं परितः अर्षति आगच्छति । तत्र दृष्टान्तः । प्रघ्नतामिव । प्रकर्षेण हन्तॄणां योद्धॄणां संतनिः सम्यग्विसृष्टः शरो यथा क्षिप्रं प्राप्यमभितो गच्छति तद्वत् ॥

अव्ये वधूयुः पवते परि त्वचि श्रथ्नीते नप्तीरदितेर्ऋतं यते ।
हरिरक्रान्यजतः संयतो मदो नृम्णा शिशानो महिषो न शोभते ॥ ३ ॥

अव्ये । वधूऽयुः । पवते । परि । त्वचि । श्रथ्नीते । नप्तीः । अदितेः । ऋतम् । यते ।
हरिः । अक्रान् । यजतः । सम्ऽयतः । मदः । नृम्णा । शिशानः । महिषः । न । शोभते ॥ ३ ॥

वधूयुः । वधूभूता वसतीवर्य एकधनासहिता आपः । तद्वान् सोमः अव्ये अवेः स्वभूते त्वचि चर्मणि परि पवते परितो वर्तते पूतो भवति वा । किंच नप्तीः नप्त्रीः । नप्तृशब्दश्चतुर्थापत्यवाची । सोमस्य नप्त्रीः । सोमो ह्योषधीनामग्रे[3] रेतो निषिञ्चति । 'प्रजापते रेतो देवा देवानां रेतो वर्षं वर्षस्य रेत ओषधयः' (ऐ. आ. २.१.३) इति श्रुतेः । यद्वा । नप्तृशब्दोऽपत्यवाची । तस्यापत्यानि । सोमः सुधामयैः स्वकिरणैरोषधीर्वर्धयति । तस्मादपत्यभूताः । अदितेः । पृथिव्या नामैतत् । अदीनायाः पृथिव्या उत्पन्ना ओषधीः ऋतं सत्यरूपं यज्ञं यते गच्छते यजमानाय श्रथ्नीते श्रथ्नमानो फलिनीः कर्तुं विश्लेषयति । किंच हरिः हरितवर्णः यजतः सर्वैर्यष्टव्यः अत एव संयतः ग्रहादिषु संगृहीतः मदः माद्यत्यनेनेति मदः सोमः । तादृशः अक्रान् क्रामति । पात्रेष्ववतिष्ठते । यद्वा । शत्रूनतिक्रामति । क्रमेर्लुङि तिपि 'बहुलं छन्दसि' इति इडागमाभावाद्वृद्धौ कृतायां सिज्लोपे सति हल्ङ्यादिना तिपो लोपे 'मो नो धातोः' इति नत्वे कृते रूपम् । अत एव सोमः नृम्णा धनान्यपि शिशानः तीक्ष्णीकुर्वन् । अथवा शत्रुबलानि तनूकुर्वन् । महिषो न[4] । महन्नामैतत् । महानिव सर्वत्र व्याप्त इव शोभते स्वतेजसा सर्वत्र दीप्यते । यद्वा । नः संप्रत्यर्थे । इदानीमेवंगुणयुक्तो महान् सोमः शोभत इति ॥

१. त-म१-पवमानरूपे स्तोत्रे । २. ग-क्षिप्रंपवन°; त-म१.२.४.७-क्षिप्रंपवन°; म६-क्षिप्रं-प्रपवन° । ३. त१.३.५.७-ह्योषधीनामग्रे; त४-म६-ह्योषधीनामग्री; म७-ह्योषधीनामग्रे । ४. ग-त-म-'न' नास्ति ।

उक्षा मिमाति प्रति यन्ति धेनवो देवस्य देवीरुप यन्ति निष्कृतम् ।
अत्यक्रमीदर्जुनं वारमव्ययमत्कं न निक्तं परि सोमो अव्यत ॥ ४ ॥

उक्षा । मिमाति । प्रति । यन्ति । धेनवः । देवस्य । देवीः । उप । यन्ति । निःऽकृतम् ।
अति । अक्रमीत् । अर्जुनम् । वारम् । अव्ययम् । अत्कम् । न । निक्तम् । परि । सोमः । अव्यत ॥ ४ ॥

उक्षा रेतसः सेक्ता वृषभः पुरतः मिमाति शब्दायते । 'माङ् माने शब्दे च[1]' । तं वृषभं धेनवः गावः प्रति यन्ति अनुगच्छन्ति । तथा देवस्य द्योतमानस्य निष्कृतं[2] संस्कृतं स्थानं[2] देवीः देव्यः उप यन्ति उपगच्छन्ति । अनेनार्थेन सोमस्तुतिरभिधीयते । सोमः[3] सन् द्रोणकलशाभिगमनकाले शब्दं करोति । तमनु धेनवः प्रीणयित्र्यः स्तुतयः परियन्ति देवस्य स्थानं स्तुत्योऽभिगच्छन्ति । तथा सोऽयं सोमः अर्जुनं श्वेतवर्णम् अव्ययम् अविमयमविसम्भूतं[4] वारं वालं पवित्रम् अत्यक्रमीत् अतिक्रामति । अतिक्रम्य पात्राणि गच्छतीत्यर्थः । किंच सोमः अत्कं न आत्मीयं कवचमिव निक्तम् उज्ज्वलं श्रयणद्रव्यं[5] परि अव्यत परितः संवृणोति ॥

अमृक्तेन रुशता वाससा हरिरमर्त्यो निर्णिजानः परि व्यत ।
दिवस्पृष्ठं बर्हणा निर्णिजे कृतोपस्तरणं चम्वोर्नभस्मयम् ॥ ५ ॥

अमृक्तेन । रुशता । वाससा । हरिः । अमर्त्यः । निःऽनिजानः । परि । व्यत ।
दिवः । पृष्ठम् । बर्हणा । निःऽनिजे । कृत । उपऽस्तरणम् । चम्वोः । नभस्मयम् ॥ ५ ॥

अमर्त्यः मनुष्यधर्मरहितः हरिः हरितवर्णः सोमः निर्णिजानः उदकेन शोध्यमानः सन् अमृक्तेन । 'मृजूष् शौचालंकारयोः' । अनिर्णिक्तेनापि रुशता रुचता शुक्लवर्णेन पयोरूपेण वाससा परि व्यत परित आच्छादयति । सोमे परिपूते गव्येन पयसा मिश्रीकुर्वन्ति खलु । तदुच्यते । ततः सोऽयं सोमः दिवः द्युलोकस्य पृष्ठं पृष्ठभागे तिष्ठन्तमादित्यं बर्हणा बर्हणाय पापानामुद्यमनकारिणे पापनाशिने निर्णिजे निर्णेजनाय परिपवनाय[6] कृत द्युलोकेऽकार्षीत् । स हि स्वदीप्त्या सर्वं निर्णेक्ति । कृत । कृणोतेर्लुङि '[illegible]' इति सिचो लोपः । तदेवाह । चम्वोः । द्यावापृथिव्योर्नामैतत् । चमन्ति भक्षयन्त्यत्र देवा मनुष्या इति । तयोः उपस्तरणम् आच्छादनशीलं नभस्मयम् आदित्यमयमादित्यस्य स्वभूतं तेजश्च सर्वेषां निर्णेजनाय[7] अकार्षीत् ॥ ॥ २१ ॥

सूर्यस्येव रश्मयो द्रावयित्नवो मत्सरासः प्रसुपः साकमीरते ।
तन्तुं ततं परि सर्गास आशवो नेन्द्रादृते पवते धाम किं चन ॥ ६ ॥

सूर्यस्यऽइव । रश्मयः । द्रवयित्नवः । मत्सरासः । प्रऽसुपः । साकम् । ईरते ।
तन्तुम् । ततम् । परि । सर्गासः । आशवः । न । इन्द्रात् । ऋते । पवते । धाम । किम् । चन ॥ ६ ॥

१. भ६—वा । २. त-भ१.४.६.७—स्थानं निष्कृतं संस्कृतं स्थानं; भ२—स्थानं निष्कृतं निष्कृतस्थानं; मु—निःकृते संस्कृते स्थाने । ३. ग—सोमः कामसेक्ता । ४. ग—अविसंभूते । ५. ग-भ४—श्रयणद्रव्यं; त४—श्रयणद्रव्यं; त५—श्रयणद्रव्यं; भ६—श्रपणद्रव्यं । ६. त-भ१.२.४.७—परिपक्वमानाय । ७. त३-भ२—निर्णिजनाय; त७—निर्णिजेजनाय; भ१.७—निर्णिज्यमानाय ।

सूर्यस्य रश्मयः सर्वस्य प्रेरकस्य सुवीर्यस्य आदित्यस्य रश्मयः सर्वतो व्यापकाः किरणाः इव द्रावयित्नवः सर्वत्र द्रवणशीलाः मत्सरासः मदकराः प्रसुपः शत्रूणां प्रस्वापका हन्तारः आशवः ग्रहेषु चमसेषु च व्याप्ताः सर्गासः सृज्यमानाः सोमाः ततं विस्तृतं तन्तुं तन्तुभिः कृतं पवित्रं साकं सह युगपत् परि ईरते परितो गच्छन्ति । ते सोमाः इन्द्रादृते इन्द्रं वर्जयित्वा अन्यत् किं चन धाम देवशरीरं कञ्चिदपि न पवते न गच्छति[1] । एकवचनं छान्दसम् । न गच्छन्ति । किंत्विन्द्रस्यैव धाम प्रति गच्छन्ति । इन्द्रस्य धाम्नो बहुत्वं च 'अयाडिन्द्रस्य प्रिया धामानि' ( वा. सं. २१.४७ ) इति मन्त्रवर्णादवगम्यते ॥

सिन्धोरिव प्रवणे निम्न आशवो वृषच्युता मदासो गातुमाशत ।
शं नो निवेशे द्विपदे चतुष्पदेऽस्मे वाजाः सोम तिष्ठन्तु कृष्टयः ॥ ७ ॥

सिन्धोःऽइव । प्रवणे । निम्ने । आशवः । वृषऽच्युताः । मदासः । गातुम् । आशत ।
शम् । नः । निऽवेशे । द्विऽपदे । चतुःऽपदे । अस्मे इति । वाजाः । सोम । तिष्ठन्तु । कृष्टयः ॥७॥

वृषच्युताः । वृष हिंसासंक्लेशनयोरित्यपि । वृषभिः सोमस्य दातृभिर्ऋत्विग्भिश्च्युताः परिस्रुताः मदासः मदकारिणः सोमाः स्तुतिभिः प्राप्तव्यं[2] इन्द्रं गातुं गमनम् आशत प्राप्नुवन्ति । तत्र दृष्टान्तः । सिन्धोरिव प्रवणे । प्रवणन्त्युदकानि यत्रेति तत्प्रवणम् । तस्मिन् निम्ने स्थले सिन्धोर्नद्याः आशवः व्याप्ता आपो यथा गच्छन्ति तद्वत् । अथ प्रत्यक्षः । हे सोम नः अस्माकं निवेशे स्वगृहं प्रति प्रवेशने निर्गमने वा द्विपदे पुत्रादिकाय[3] चतुष्पदे गवादिकाय पशवे[4] शं सुखं कुरु । किंच हे सोम अस्मे अस्मासु वाजाः अन्नानि कृष्टयः पुत्रादिकाः प्रजाश्च तिष्ठन्तु । अन्नादिकं[5] देहीत्यर्थः ॥

आ नः पवस्व वसुमद्धिरण्यवदश्वावद्गोमद्यवमत्सुवीर्यम् ।
यूयं हि सोम पितरो मम स्थन दिवो मूर्धानः प्रस्थिता वयस्कृतः ॥ ८ ॥

आ । नः । पवस्व । वसुऽमत् । हिरण्यऽवत् । अश्वऽवत् । गोऽमत् । यवऽमत् । सुऽवीर्यम् ।
यूयम् । हि । सोम । पितरः । मम । स्थन । दिवः । मूर्धानः । प्रऽस्थिताः । वयःऽकृतः ॥८॥

हे सोम त्वं वसुमत् वसुयुक्तं हिरण्यवत् कनकादिसहितम् अश्ववत् गोमत् गवाश्वसहितं[6] यवमत् । यवो नाम धान्यविशेषः । धान्यविशिष्टं सुवीर्यं शोभनवीर्योपेतं धनं नः अस्मभ्यम् आ पवस्व आप्रापय । प्रयच्छेति यावत् । किंच हे सोम यतस्त्वं मम पितॄणामङ्गिरसामपि[7] पितासि[7] ततो यूयम् एव मम पितरः स्थन भवथ । पितृबहुत्वमत्र सोमस्याभिधीयते । कीदृशाः । दिवः द्युलोकस्य मूर्धानः मूर्धवदुच्छ्रिताः । कर्मभिः स्वर्गादिफलप्रापका इत्यर्थः । प्रस्थिताः सर्वदा कर्मकरणार्थं स्थिताः वयस्कृतः हवोलक्षणस्यान्नस्य कर्तारः । तादृशो मम पितरस्त्वं भवसि ॥

१. त१.९.३.४.५.६-म१.२.६—गच्छतीति । २. त—प्राप्यन्तेन्दु° । ३. त३-म१.७—पुत्राय । ४. ग-त२-म२.४.५—पशवे च । ५. ग—अन्नादिकं पश्वादिकं च । ६. ग-त३-म२.४.५—गवाश्वयुक्तं; म१.७—गवाश्वयुक्तं । ७. ग-त-म१.४.६- 'अङ्गिरसामधिपतिरसि ।

एते सोमाः पर्वमानास इन्द्रं रथाइव प्र ययुः सातिमच्छ ।
सुताः पुवित्रमति युन्त्यव्यं हित्वी वुव्रिं हुरितो वृष्टिमच्छ ॥ ९ ॥

एते । सोमाः । पर्वमानासः । इन्द्रम् । रथाःऽइव । प्र । युयुः । सातिम् । अच्छ ।
सुताः । पुवित्रम् । अति । युन्ति । अव्यम् । हित्वी । वुव्रिम् । हुरितः । वृष्टिम् । अच्छ ॥९॥

पवमानासः पवित्रेण पूयमानाः एते अस्मदीयाः सोमाः सातिम् । 'षण संभक्तौ'। कर्मणि क्तिन् । सर्वैः संभजनीयम् इन्द्रम् अच्छ प्र ययुः प्रकर्षेण गच्छन्ति । तत्र दृष्टान्तः । रथाइव । इन्द्रस्य रथा यथा सातिम् । 'षो अन्तकर्मणि'। 'ऊतियूति' इत्यादिना निपातितः । सीयते क्षिप्यतेऽस्मिन्निति सातिः संग्रामः । तमच्छ तं प्रति प्रगच्छन्ति तद्वत् । किंच सुताः ग्रावभिरभिषुताः सोमाः अव्यम् अविवालभवं पवित्रम् अति यन्ति अतीत्य गच्छन्ति । तेऽमी हरितः[1] हरितवर्णा अश्वाः । यद्वा । हरितस्त आदित्यवाहनरूपा[2] अश्वा भूत्वा । वव्रिम् । वृणोति शरीरमिति वव्रिर्जरा । 'आदृगमहन' इति किप्रत्ययः । सर्वाङ्गव्यापिनीं जरां हित्वी हित्वा तरुणाः सन्तः वृष्टिमच्छ वृष्टिं गमयितुं गच्छन्ति । हित्वी । 'जहातेश्च क्त्वि' (पा. सू.७.४. ४३) इति ह्यादेशः । 'स्नात्व्यादयश्च' इति छन्दसि निपातितम्[3] ॥

इन्दुविन्द्राय बृहते पवस्व सुमृळीको अनवद्यो रिशादाः ।
भरा चन्द्राणि गृणते वसूनि देवैर्द्यावापृथिवी प्रावतं नः ॥ १० ॥

इन्दो इति । इन्द्राय । बृहते । पवस्व । सुऽमृळीकः । अनवद्यः । रिशादाः ।
भर । चन्द्राणि । गृणते । वसूनि । देवैः । द्यावापृथिवी इति । प्र । अवतम् । नः ॥१०॥

हे इन्दो सोम त्वं बृहते महते इन्द्राय तदर्थं पवस्व पात्रेषु क्षर । इन्द्रं प्रत्यागच्छ वा । कीदृशः । सुमृळीकः इन्द्रस्य सुष्ठु सुखयिता अत एव अनवद्यः गर्हारहितः रिशादाः रिशतां बाधकानामसिता । एतादृशस्त्वमिन्द्राय पवस्व । किंच गृणते स्तुवते मह्यं चन्द्राणि आह्लादकानि वसूनि धनानि भर प्रयच्छ । किंच हे द्यावापृथिवी युवां च पवमानेन परिप्लुते सत्यौ देवैः सुभगैर्धनैः सह नः अस्मान् प्रावतं प्ररक्षतम् ॥ ॥ २२ ॥

'त्रिरस्मै' इति दशर्चं तृतीयं सूक्तं वैश्वामित्रस्य रेणोरार्षम् । दशमी त्रिष्टुप् शिष्टा जगत्यः । पवमानः सोमो देवता । 'त्रिरस्मै रेणुः' इत्यनुक्रान्तम् । गतो विनियोगः ॥

त्रिरस्मै सप्त धेनवो दुदुह्रे सुत्यामाशिरं पूर्व्ये व्योमनि ।
चुत्वार्यन्या भुवनानि निर्णिजे चारूणि चक्रे यदृतैरवर्धत ॥ १ ॥

त्रिः । अस्मै । सप्त । धेनवः । दुदुह्रे । सत्याम् । आऽशिरम् । पूर्व्ये । विऽओमनि ।
चत्वारि । अन्या । भुवनानि । निःऽनिजे । चारूणि । चक्रे । यत् । ऋतैः । अवर्धत ॥१॥

अस्मै पवमानाय पूर्व्ये पूर्वैः कृते व्योमनि । विविधमोमावनं गमनं देवानामत्रेति व्योम यज्ञः । तस्मिन् स्थिताय । यद्वा । अस्मै व्योमन्यन्तरिक्षे वर्तमानाय । त्रिः सप्त एकविंशतिसंख्याकाः

1. ङ-अ६–'हरितः' नास्ति । 2. ग-त१-अ२.४–आदित्यस्य वाहनरूपा । 3. ग-त१-अ१.२.४.५.७–निपातितः ।

येभ्यः श्रीणन्त्येभ्यो गावः सत्यां यथार्थभूताम्[1] आशिरम् आश्रयणसाधनं क्षीरादि दुदुह्रे दुहन्ति । यद्वा । त्रिः सप्त ' द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः ' (तै. सं. ५.४.१२.२) इत्येतैः सर्वैः सह गोषु पय उपाप्यते तद्गावो दुहन्त इति । किंचायं सोमः अन्या अन्यानि चत्वारि भुवनानि उदकानि वसतीवरीकलशैकधना इति तानि चतुःसंख्याकानि चारूणि कल्याणान्युदकानि निर्णिजे निर्णेजनाय परिशोधनाय परिपोषणाय[2] वा[2] चक्रे । कदा करोति । यत् यदा अयम् ऋतैः यज्ञैः अवर्धत वर्धितवान् तदा करोति ॥

**स भिक्षमाणो अमृतस्य चारुण उभे द्यावा काव्येना वि शश्रथे ।**
**तेजिष्ठा अपो मंहना परि व्यत यदी देवस्य श्रवसा सदो विदुः ॥ २ ॥**

सः । भिक्षमाणः । अमृतस्य । चारुणः । उभे इति । द्यावा । काव्येन । वि । शश्रथे ।
तेजिष्ठाः । अपः । मंहना । परि । व्यत । यदि । देवस्य । श्रवसा । सदः । विदुः ॥ २ ॥

सः पवमानः चारुणः कल्याणस्य अमृतस्य उदकस्य । ' क्रियाग्रहणं कर्तव्यम् ' इति कर्मणः संप्रदानसंज्ञा । ' चतुर्थ्यर्थे बहुलम्° ' (पा. सू. २.३.६२) इति षष्ठी । उदकं भिक्षमाणः यजमानैः प्रार्थ्यमानः सन् उभे । द्यावादेशस्य द्वंद्वे विहितत्वादन्योत्तरपदाभावे द्वंद्वः प्रतीयते । उभे द्यावापृथिव्यौ काव्येन कविकर्मणा वि शश्रथे विसृते[3] करोति । यज्ञनिमित्तेन[4] उदकेन[5] संपूरयतीत्यर्थः । किंच तेजिष्ठाः अतिशयेन दीप्तानि[6] अपः उदकानि मंहना महत्त्वेन परि व्यत वरणार्थं परित आच्छादयति । यदि यदा ऋत्विजः देवस्य द्योतमानस्य सोमस्य सदः स्थानं श्रवसा हविषा युक्ताः सन्तः विदुः याचार्थं जानन्ति लभन्ते तदा परित आप्नोतीति । ' विद ज्ञाने ' । ' सिजभ्यस्त° ' इति झेर्जुसादेशः[7] ॥

**ते अस्य सन्तु केतवोऽमृत्यवोऽदाभ्यासो जनुषी उभे अनु ।**
**येभिर्नृम्णा च देव्या च पुनत आदिद्राजानं मनना अगृभ्णत ॥ ३ ॥**

ते । अस्य । सन्तु । केतवः । अमृत्यवः । अदाभ्यासः । जनुषी इति । उभे इति । अनु ।
येभिः । नृम्णा । च । देव्या । च । पुनते । आत् । इत् । राजानम् । मननाः । अगृभ्णत ॥ ३ ॥

अस्य पूयमानस्य सोमस्य केतवः प्रज्ञापकाः सर्वैर्ज्ञायमानाः अमृत्यवः मरणधर्मरहिता अत एव अदाभ्यासः । ' दम्भेश्चेति वक्तव्यम् ' (पा. सू. ३. १. १२४. ३) इति ण्यत् । परैरहिंस्याः ते तादृशाः अस्य रश्मयः उभे जनुषी जन्मनी स्थावरजङ्गमात्मके द्वे अनु लक्षीकृत्य सन्तु रक्षन्तु । ओषधीनामयं[8] सोमो रेतो निषिञ्चति यतो मनुष्याणां च धाराः स्रवन्ति खलु । सोऽयं येभिः यैः केतुभिः नृम्णा नृम्णानि बलानि देव्या देवार्हाणि[9] च अन्नानि पुनते प्रेरयति आदित् अभिषवानन्तरमेव राजानं सोमं मननाः मननीयाः स्तुतयः अगृभ्णत परिगृह्णन्ति । प्राप्नुवन्तीत्यर्थः । ' हृग्रहोः° ' इति भकारः ॥

१. त३-म२.६–यथार्थभूतं; म१.७–यथार्थं भूतं । २. ग-त३-म१.७–' परिपोषणाय वा ' नास्ति । ३. त३-म१.२.५.७–विसृते । ४. ग-त-म२.४.६-मु–यज्ञेन निमित्तेन; म१–यज्ञे निमित्तेन । ५. ग–अमृतेनोदकेन; त-म२.४.६–प्रलेपोदकेन । ६. म६–दीप्ता । ७. त१.४–जुसादेशः; त२.६–कर्जुसादेशः; त५–कर्जुसादेशः; म६–अजुसादेशः । ८. ग-त-म१.२.४.६–ओषधीनामयमे । ९. त-म६–देव्यावार्हाणि ।

स मृज्यमानो दशभिः सुकर्मभिः प्र मध्यमासु मातृषु प्रमे सचा ।
व्रतानि पानो अमृतस्य चारुण उभे नृचक्षा अनु पश्यते विशौ ॥ ४ ॥

सः । मृज्यमानः । दशऽभिः । सुकर्मऽभिः । प्र । मध्यमासु । मातृषु । प्रऽमे । सचा ।
व्रतानि । पानः । अमृतस्य । चारुणः । उभे इति । नृऽचक्षाः । अनु । पश्यते । विशौ ॥ ४ ॥

सः पवमानः सुकर्मभिः शोभनकर्मयुक्ताभिः दशभिः दशसंख्याकाभिरङ्गुलीभिः मृज्यमानः[1] सः सचा 'असौ भास्ताद्रुतिः' इत्यादिक्रमेणापां सहायः प्रमे लोकान् प्रमातुं मध्यमासु अन्तरिक्षस्थितासु अवसिच्यते ॥ प्रमे । मपूर्वान्माङः क्विपि कथि 'आतः' इति योगविभागादाकारलोपः ॥ किंच नृचक्षाः नृणां द्रष्टा पवमानः चारुणः कल्याणस्य अमृतस्य उदकस्य वृष्ट्यर्थं व्रतानि यागादिकर्माणि पानः रक्षन् उभे विशौ मनुष्यान् देवांश्चान्तरिक्षेण गच्छन् अनु पश्यते[2] अनुपश्यति । मनुष्यानभिमतदानेन देवान् हविष्प्रदानेनेति ॥

स मर्मृजान इन्द्रियाय धायस ओभे अन्ता रोदसी हर्षते हितः ।
वृषा शुष्मेण बाधते वि दुर्मतीरादेदिशानः शर्यहेव शुरुधः ॥ ५ ॥

सः । मर्मृजानः । इन्द्रियाय । धायसे । आ । उभे इति । अन्तरिति । रोदसी इति । हर्षते । हितः ।
वृषा । शुष्मेण । बाधते । वि । दुःऽमतीः । आऽदेदिशानः । शर्यहाऽइव । शुरुधः ॥ ५ ॥

मर्मृजानः पवित्रेण मृज्यमानः सः पवमानः धायसे जगतो धारकाय इन्द्रियाय इन्द्रस्य पर्याप्ताय बलाय तदर्थम् उभे रोदसी । 'कालाध्वनोः' इति द्वितीया । उभयोः द्यावापृथिव्योः अन्तः हितः मध्ये वर्तमानः सन् आ[3] हर्षते[3] सर्वतो गच्छति । इन्द्रस्य हि सोमेन बलं भवति । वृषा कामानामुदकानां वा वर्षकः सोऽयं शुष्मेण शोषकेण बलेन दुर्मतीः दुष्टबुद्धीनसुरान् वि बाधते विशेषेण पीडयति । किं कुर्वन् । शुरुधः । शुचा रुन्धन्ति परानिति । पृषोदरादिः । दुःखकारिणोऽसुरान् आदेदिशानः पुनःपुनराह्वयन् हन्ति । तत्र दृष्टान्तः । शर्यहेव । हननसाधनैः इषुभिर्हन्ता वीरः प्रतिभटान् यथा हिनस्ति तद्वत् ॥ ॥ २३ ॥

स मातरा न ददृशान उस्रियो नानददेति मरुतामिव स्वनः ।
जानन्नृतं प्रथमं यत्स्वर्णरं प्रशस्तये कमवृणीत सुक्रतुः ॥ ६ ॥

सः । मातरा । न । ददृशानः । उस्रियः । नानदत् । एति । मरुताम्ऽइव । स्वनः ।
जानन् । ऋतम् । प्रथमम् । यत् । स्वःऽनरम् । प्रऽशस्तये । कम् । अवृणीत । सुऽक्रतुः ॥ ६ ॥

सः पवमानः मातरा मातरौ द्यावापृथिव्यौ ददृशानः पुनःपुनः पश्यन् सन् नानदत् भृशं शब्दं कुर्वन् एति सर्वत्र गच्छति । तत्र दृष्टान्तः । उस्रियः न । उस्रियेति गोनाम । तस्य स्वभूतो वत्सो यथा मातरं गां पश्यन् शब्दं करोति तद्वत् । किंच मरुतामिव । यथा मरुतां गणः स्वनः । पचाद्यजन्तः । स्वनं कुर्वन् सर्वतो गच्छति तद्वत् । यत् उदकं स्वर्णरम् । स्वरिति

1. ग-त३.४-म५.६—मृज्यमानः शोध्यमानः । २. त-म६—पश्यन् । ३. त-म२.६—आ हर्षति; म१.७—आर्षति ।

सर्वपर्यायः। सर्वमनुष्यहिते भवति। सर्वे हि मनुष्या उदके सेवमाने तत्कार्यत्वात्। तादृशं प्रथमं मुख्यम् ऋतम् उदकं जानन् विद्वान् सुक्रतुः शोभनकर्मा सुप्रज्ञो वा स पवमानः प्रशस्तये प्रशंसनायात्मस्तोत्रकरणाय ईं मनुष्यम् अवृणीत समभजत। नान्यमस्मद्व्यतिरिक्तमित्यर्थः॥

रुवति भीमो वृषभस्तविष्यया शृङ्गे शिशानो हरिणी विचक्षणः।
आ योनिं सोमः सुकृतं नि षीदति गव्ययी त्वग्भवति निर्णिगव्ययी॥७॥

रुवति। भीमः। वृषभः। तविष्यया। शृङ्गे इति। शिशानः। हरिणी इति। विऽचक्षणः।
आ। योनिम्। सोमः। सुऽकृतम्। नि। सीदति।
गव्ययी। त्वक्। भवति। निःऽनिक्। अव्ययी॥ ७॥

भीमः शत्रूणां भयंकरः वृषभः कामानामुत्पादनो वा वर्षकः विचक्षणः सर्वस्य विद्रष्टा-शीलः स पवमानः तविष्यया। तु इति वृद्ध्यर्थः। अस्मात् ‘ भव इः ’ ( उ. सू. ४ १२८ ) इति इप्रत्ययः। तस्मादिच्छायामर्थे क्यच्। ‘ सर्वप्रातिपदिकेभ्यः०’ ( का. ७.१.५१.२ ) इति सुगागमः। आत्मनो बलेच्छया हरिणी हरितवर्णे द्वे शृङ्गे शिशानः तीक्ष्णीकुर्वन् द्रोणकलशं प्रति द्वाभ्यां धाराभ्यां स्वात्मानमधस्तात् गृह्णाति। तदुच्यते। द्वे धाराख्ये शृङ्गे तीक्ष्णीकुर्वन् रुवति शब्दायते। ‘ रु शब्दे ’। ‘ बहुलं छन्दसि ’ इति शः। ततः सः सोमः सुकृतं सुष्ठु कृतं योनिं स्वस्थानं द्रोणकलशम् आ नि षीदति सम्यगासीदति। तस्य सोमस्य निर्णिक् निर्णेक्त्री परिशोधयित्री गव्ययी गोमयी त्वग्भवति। आनडुहे हि चर्मणि सोमाभिषवः। एवम् अव्ययी अविमयी त्वक् च निर्णेक्त्री भवति। तदिदं दशापवित्रापेक्षयाभिहितम्॥

शुचिः पुनानस्तन्वमरेपसमव्ये हरिर्न्यधाविष्ट सानवि।
जुष्टो मित्राय वरुणाय वायवे त्रिधातु मधु क्रियते सुकर्मभिः॥ ८॥

शुचिः। पुनानः। तन्वम्। अरेपसम्। अव्ये। हरिः। नि। अधाविष्ट। सानवि।
जुष्टः। मित्राय। वरुणाय। वायवे। त्रिऽधातु। मधु। क्रियते। सुकर्मऽभिः॥ ८॥

अरेपसं पापरहितम्। यद्वा। ‘ रिपि गतौ ’। गतिरहितम्। पात्रे स्थितमित्यर्थः। तादृशं तन्वम् आत्मीयं शरीरं पुनानः शोधयन् अत एव शुचिः पूतो दीप्यमानो वा हरिः हरितवर्णः सोमः सानवि सानुनि समुच्छ्रिते अव्ये अविवालकृते दशापवित्रे न्यधाविष्ट ऋत्विग्भिर्निधीयते। ‘ धूञ् कम्पने ’। ‘ स्यसिच्सीयुट्तासिषु०’ ( पा. सू. ६. ४. ६२ ) इति कर्मणि लुङि चिण्वदिट्। चिण्वाद्वृद्धिः। तथा मित्राय वरुणाय वायवे एतेभ्यः जुष्टः पर्याप्तः त्रिधातु त्रिस्थानो वसतीवरीभिर्दध्ना पयसा संसृष्टः सोमः त्रिधातु तादृशं मधु मदकरः सोमः सुकर्मभिः शोभनकर्मयुक्तैर्ऋत्विग्भिः क्रियते मित्रादिदेवार्थं प्रदीयते॥

पवस्व सोम देववीतये वृषेन्द्रस्य हार्दि सोमधानमा विश।
पुरा नो बाधाद्दुरिताति पारय क्षेत्रविद्धि दिश आहा विपृच्छते॥ ९॥

पवस्व। सोम। देवऽवीतये। वृषा। इन्द्रस्य। हार्दि। सोमऽधानम्। आ। विश।
पुरा। नः। बाधात्। दुःऽइता। अति। पारय। क्षेत्रऽवित्। हि। दिशः। आह। विऽपृच्छते॥ ९॥

हे सोम वृषा कामानामुदकानां वा सेक्ता त्वं देववीतये देवानां पानाय पवस्व कलशादिषु क्षर। अथ हे सोम त्वम् इन्द्रस्य हार्दि हृदयंगमं प्रियं सोमधानम्। सोमो निधीयतेऽस्मिन्निति सोमधानं पात्रम्। तत् आ विश प्रविश। किंच नः अस्माकं बाधात् बाधनात् पीडनात् पुरा पूर्वमेव दुरितानि दुर्गमनानि रक्षांसि अति पारय अतीत्य पारं गमय। अपि च क्षेत्रवित् मार्गज्ञः पुरुषः विपृच्छते विविधं पन्थानं पृच्छते जनाय दिशः मार्गान् आह हि ब्रूते खलु। तद्वत् त्वं यथा रक्षति तथा यज्ञमार्गवेत्ता त्वमस्मभ्यं यज्ञपथ उक्त्वास्मान् पालयेति ॥

हि॒तो न सप्ति॑र॒भि वाज॑म॒र्षेन्द्र॒स्येन्दो ज॒ठर॒मा प॑वस्व ।
ना॒वा न सिन्धु॒मति॑ पर्षि वि॒द्वाञ्छूरो॒ न युध्य॒न्नव॑ नो नि॒दः स्पः ॥ १० ॥

हि॒तः । न । सप्तिः॑ । अ॒भि । वाज॑म् । अ॒र्ष॒ । इन्द्र॑स्य । इ॒न्दो॒ इति॑ । ज॒ठर॑म् । आ । प॒व॒स्व॒ ।
ना॒वा । न । सिन्धु॑म् । अति॑ । प॒र्षि॒ । वि॒द्वान् ।
शूरः॑ । न । यु॒ध्यन् । अव॑ । नः॒ । नि॒दः । स्प॒रिति॑ स्पः ॥ १० ॥

हे सोम ऋत्विग्भिः प्रेर्यमाणः सन् वाजं सोमनिधानं द्रोणकलशम् अभि अर्ष अभिगच्छ। तत्र दृष्टान्तः। हितो न सप्तिः। अश्वो हितः प्रेर्यमाणः सन् वाजं संग्राममभिलक्ष्य यथा याति तद्वत्। ततो हे इन्दो इन्द्रस्य जठरं जठरभूतं द्रोणकलशं वा आ पवस्व आभिमुख्येन प्रविश। किंच विद्वान् सर्वं जानंस्त्वमस्मान् अति पर्षि दुरितान्यतीत्य पारय। तत्र दृष्टान्तः। नावा न। यथा नाविकः सिन्धुं नदीं नावा मनुष्यान् पारयन्ति तद्वत्। किंच हे सोम त्वं शूरो न शूरो वीर इव युध्यन् शत्रून् संप्रहरन् निदः निन्दकाच्छत्रोः नः अस्मान् अव स्पः अवपारय। बाधां विनाश्य पालय। यद्वा। योऽस्माकं निदो निन्दकाञ्छत्रून् स्पः अवाङ्मुखं जहि। ‘स्पृ हिंसायाम्’। ‘बहुलं छन्दसि’ इति श्नाप्रत्ययस्य लुक्। तिपि गुणे हल्ङ्यादिना तिपो लोपः ॥ ॥ २५ ॥

‘आ दक्षिणा’ इति नवर्चं चतुर्थं सूक्तं वैश्वामित्रस्यर्षभस्यार्षं पवमानसोमदेवताकम्। नवमी त्रिष्टुप् शिष्टा जगत्यः। तथा चानुक्रान्तम्— ‘आ दक्षिणा नव ऋषभस्तौ वैश्वामित्रौ’ इति। ‘तौ’ इत्यनेन प्रकृतौ रेणुर्ऋषभश्चोभे परामृश्येते। श्रूयते हि— ‘अथ ह विश्वामित्रः पुत्रानामन्त्रयामास मधुच्छन्दाः शृणोतन ऋषभो रेणुरष्टकः’ ( ऐ. ब्रा. ७, १७ ) इति। गतः सूक्तविनियोगः ॥

आ दक्षि॑णा सृज्यते शु॒ष्म्या॒३॒॑सदं॒ वेति॑ द्रु॒हो र॒क्षसः॑ पाति॒ जागृ॑विः ।
हरि॑रोप॒शं कृ॑णुते॒ नभ॒स्पय॑ उप॒स्तिरे॑ च॒म्वो॒३॒॑र्ब्रह्म॑ नि॒र्णिजे॑ ॥ १ ॥

आ । दक्षि॑णा । सृ॒ज्य॒ते॒ । शु॒ष्मी । आ॒ऽसद॑म् । वेति॑ । द्रु॒हः । र॒क्षसः॑ । पा॒ति॒ । जागृ॑विः ।
हरिः॑ । ओ॒प॒शम् । कृ॒णु॒ते॒ । नभः॑ । पयः॑ । उ॒प॒ऽस्तिरे॑ । च॒म्वोः॑ । ब्रह्म॑ । निः॒ऽनिजे॑ ॥ १ ॥

सोमस्य स्वभूते यज्ञे ऋत्विग्भ्यः दक्षिणा आ सृज्यते अस्माभिः प्रदीयते। शुष्मी बलवान् सोमः आसदम् आस्थानं द्रोणाख्यं वेति प्रविशति। किंच जागृविः जागरणशीलः सोमः द्रुहः द्रोहकारिणः रक्षसः राक्षसान् पाति स्तोतॄन् रक्षति। अपि च हरिः हरितवर्णः सोमः ओपशम्। आ समन्तादुपशेत इत्योपशः। सर्वस्य धारकं नभः नभस आदित्यस्य स्वभूतं पयः उदकं कृणुते सर्वत्र करोति। ‘अग्नौ प्रास्ताहुतिः’ इत्यादिक्रमेण करोतीत्यर्थः। यद्वा। नभोऽन्तरिक्षे पयः पयसो

धारकं करोतीति। किंचायं सोमः चम्वोः। द्यावापृथिव्योरित्येतत्। चमन्ति अश्नन्ति मनुष्यदेवा अनयोरिति। तयोः उपस्तिरे उपस्तरणायाच्छादनाय महः महत् दुघानं तमांसि विनाशयन्तं यद्वा परिवृढं सूर्यं द्युलोके करोति। तथा तमेव सूर्यं निर्णिजे पदार्थानां निर्णेजनाय परिशोधनाय च करोति। आदित्यो हि द्यावापृथिव्यौ स्वतेजसोपस्तृणाति। स हि स्वभासा सर्वं निर्णेनेक्ति च॥

प्र कृष्टिहेव शूष एति रोरुवदसुर्यं वर्णं नि रिणीते अस्य तम्।
जहाति वव्रिं पितुरेति निष्कृतमुपप्रुतं कृणुते निर्णिजं तना॥ २॥

प्र। कृष्टिहाऽइव। शूषः। एति। रोरुवत्। असुर्यम्। वर्णम्। नि। रिणीते। अस्य। तम्।
जहाति। वव्रिम्। पितुः। एति। निःऽकृतम्। उपऽप्रुतम्। कृणुते। निःऽनिजम्। तना॥२॥

शूषः शत्रूणां शोषको बलवान् सोमः रोरुवत् अत्यन्तं शब्दं कुर्वन् कृष्टिहेव मनुष्याणां हन्ता योद्धेव प्र एति प्रगच्छति। किंच असुर्यम् असुराणां बाधकम् अस्य आत्मनो वर्णं हरितमावारकं वर्णं वा नि रिणीते निर्गमयति। ततः स सोमः वव्रिम्। वृणोतीति शरीरमिति यास्केनोक्तः। जहाति त्यजति। कथमिति चेत् तदुच्यते। पितुः अन्नं सोमः निष्कृतं संस्कृतं द्रोणकलशं दिवं वा इदानीम् एति गच्छति। किंच सोमः तना अविवालेन तते विस्तृते दशापवित्रे निर्णिजम्। निर्णिगिति रूपनाम। आत्मीयं रूपम् उपप्रुतम् उपगमनशीलं कृणुते करोति। तस्माज्जहाति त्वचमिति॥

अद्रिभिः सुतः पवते गभस्त्योर्वृषायते नभसा वेपते मती।
स मोदते नसते साधते गिरा नेनिक्ते अप्सु यजते परीमणि॥ ३॥

अद्रिऽभिः। सुतः। पवते। गभस्त्योः। वृषऽयते। नभसा। वेपते। मती।
सः। मोदते। नसते। साधते। गिरा। नेनिक्ते। अप्ऽसु। यजते। परीमणि॥ ३॥

अद्रिभिः ग्रावभिः गभस्त्योः बाह्वोः बाहुभ्यां च सुतः अभिषुतः स सोमः पवते पात्राणि प्रति गच्छति। सः[2] सोमः वृषायते वृषवदाचरति। किंच सः मती स्तुत्याभिष्टुतः सन् नभसा अन्तरिक्षेण वेपते सर्वत्र गच्छति[2] सः सोमः मोदते हृष्टो भवति। तथा नसते ग्रहादिषु संश्लिष्टो भवति। किंच गिरा स्तुत्या स्तुतः सन् साधते स्तोतॄणां धनादिकं साधयति। अपि च अप्सु वसतीवरीषु नेनिक्ते शुद्धो भवति। तथा परीमणि देवैः ह्रयमाणे यज्ञे देवानां हविष्प्रदानेन पोषके वा यज्ञे यजते पूजितो भवति॥

परि द्युक्षं सहसः पर्वतावृधं मध्वः सिञ्चन्ति हर्म्यस्य सक्षणिम्।
आ यस्मिन्गावः सुहुताद ऊधनि मूर्धञ्छ्रीणन्त्यग्रियं वरीमभिः॥ ४॥

परि। द्युक्षम्। सहसः। पर्वतऽवृधम्। मध्वः। सिञ्चन्ति। हर्म्यस्य। सक्षणिम्।
आ। यस्मिन्। गावः। सुहुतऽअदः। ऊधनि। मूर्धन्। श्रीणन्ति। अग्रियम्। वरीमऽभिः॥४॥

सहसः सहस्विनः मध्वः मदकराः सोमाः द्युक्षं दीप्यमाने[3] द्युलोके क्षियन्तं निवसन्तं पर्वतावृधं मेघानां पर्वतानां वा वर्धयितारं हर्म्यस्य शत्रुपुरस्य सक्षणिम् अभिभवितारमिन्द्रं परि

१. ङ-भ६-तिरस्कृतं। २. ग-नभसान्तरिक्षेण इत्यादि वेपते नर्तते मत्या स्तुत्यस्थानात् कंपते। ३. ग-ङ-भ२.६-दीप्यमाने।

विभ्रमित। तथा सुहुतादः सुहुतानां हविषां भक्षयितारः गावः मूर्धन् मूर्धनि समुच्छ्रिते ककुभि पयोधारके स्थाने स्थितम् अघ्नियं मुख्यं पयः वरीमभिः उरुत्वैर्महत्त्वैः अस्मिन् पवमानगुणविशिष्ट इन्दौ आ श्रीणन्ति आमिश्रयन्ति। गवां पयसा च सोमं श्रीणन्ति खलु। तदुच्यते॥

समी रथं न भुरिजोरहेषत दश स्वसारो अदितेरुपस्थ आ।
जिगादुप ज्रयति गोरपीच्यं पदं यदस्य मतुथा अजीजनन्॥५॥

सम्। ईमिति। रथम्। न। भुरिजोः। अहेषत। दश। स्वसारः। अदितेः। उपऽस्थे। आ।
जिगात्। उप। ज्रयति। गोः। अपीच्यम्। पदम्। यत्। अस्य। मतुथाः। अजीजनन्॥५॥

भुरिजोः। बाहुनामैतत्। बिभ्रति पदार्थानाभ्यामिति। तयोर्बाह्वोः दश दशसंख्याकाः स्वसारः सर्वत्रसरणशीला अङ्गुलयः अदितेः भूमेः उपस्थे समीपे देवयजनदेशे ईम् एनं सोमम् आ आभिमुख्येन सम् अहेषत संप्रेरयन्ति। 'हि वर्धनगत्योः'। लुङि रूपम्। कथमिव। रथं न। रथं यथाङ्गुलयः प्रेरयन्ति तद्वत्। स सोमः जिगात् पात्राणि गच्छति। किंच गोः धेनोः अपीच्यम् अन्तर्हितं पयः उप ज्रयति तदानीमुपगच्छति। यत् यदा मतुथाः मननीयगायन्तः स्तोतारः अस्य सोमस्य पदं स्थानम् अजीजनन् जनयन्ति तदानीमित्यर्थः॥ ॥२५॥

अभिषवे[1] 'श्येनो न योनिम्' इत्येषा। सूत्रितं च—'संप्रेषितः श्येनो न योनिं सदनं धिया कृतम्' (आश्व. श्रौ. ४. ७) इति। अग्नीषोमप्रणयनेऽप्येषा। सूत्रितं च-'अन्तश्च प्रागा अदितिर्भवासि श्येनो न योनिं सदनं धिया कृतम्' (आश्व. श्रौ. ४. १०) इति॥

श्येनो न योनिं सदनं धिया कृतं हिरण्ययमासदं देव एषति।
ए रिणन्ति बर्हिषि प्रियं गिराश्वो न देवाँ अप्येति यज्ञियः॥६॥

श्येनः। न। योनिम्। सदनम्। धिया। कृतम्। हिरण्ययम्। आऽसदम्। देवः। आ। ईषति।
आ। ईमिति। रिणन्ति। बर्हिषि। प्रियम्। गिरा।
अश्वः। न। देवान्। अपि। एति। यज्ञियः॥६॥

देवः द्योतमानः पवमानः धिया स्वकर्मणा कृतं संपादितं हिरण्ययं हिरण्मयम् आसदम् आसदनाभिधानम् एषति अभिमुखं गच्छति। ईषतेर्गत्यर्थस्य व्यत्ययेन परस्मैपदम्। तत्र दृष्टान्तः। श्येनो न योनिम्। कुलायं यथा श्येनः पक्षी प्रविशति तद्वत्। ततः ईम् एनं प्रियं प्रीणयितारं सोमं गिरा स्तुत्या बर्हिषि यज्ञे आ रिणन्ति स्तोतारोऽभिमुखं प्रेरयन्ति। स्तुवन्तीत्यर्थः। अनन्तरं यज्ञियः यज्ञार्हः यज्ञाह्योऽयं सोमः अश्वो न अश्व इव त्वरया देवान् अप्येति अभिगच्छति॥

परा व्यक्तो अरुषो दिवः कविर्वृषा त्रिपृष्ठो अनविष्ट गा अभि।
सहस्रणीतिर्यतिः परायती रेभो न पूर्वीरुषसो वि राजति॥७॥

परा। विऽअक्तः। अरुषः। दिवः। कविः। वृषा। त्रिऽपृष्ठः। अनविष्ट। गाः। अभि।
सहस्रऽनीतिः। यतिः। पराऽयतिः। रेभः। न। पूर्वीः। उषसः। वि। राजति॥७॥

१. ग–अभितावप्रवर्षे।

ᵛव्यक्तः आरोचमानः ᵛकविः क्रान्तप्रज्ञः सोमः ᵛव्यक्तः विस्पष्टधारायुक्तः। यद्वा। वसतीवरीभिर्विशेषेणाक्तः सिक्तः सन् ᵛदिवः अन्तरिक्षात् ᵛपरा पराङ्मुखम् आगच्छति। पवित्रात् द्रोणकलशं परागच्छतीत्यर्थः। ᵛवृषा वृषभः ᵛत्रिपृष्ठः। त्रीणि सवनानि पृष्ठान्यस्येति त्रिपृष्ठः सोमस्य सर्वेषु विद्यमानत्वात्। तस्मात् त्रिपृष्ठः सोमः ᵛगाः स्तोतृभिः क्रियमाणाः स्तुतीरभिलक्ष्य ᵛअनविष्ट शब्दायते। 'णु शब्दे'। किंच ᵛसहस्रणीतिः सहस्रनयनः। प्रयोगबाहुल्यापेक्षं ग्रहेषु चमसेषु च सहस्रविधनयनत्वम्। अत एव ᵛयतिः पात्राणि प्रत्यागन्ता ᵛपरायतिः कलशात् प्रति परागन्ता भवति। सोऽयं ᵛपूर्वीः बह्वीः ᵛउषसः। 'कालाध्वनोः' इति द्वितीया। बहुषूषःकालेषु ᵛरेभो ᵛन। 'रेभृ शब्दे'। शब्दायमानः स्तोतेव ᵛवि ᵛराजति विशेषेण दीप्यते। तेषु सोमस्याभिषूयमाणत्वात्। स्तोता खलु देवानां स्तुतिकरणेन राजति[1]॥

त्वेषं रूपं कृणुते वर्णो अस्य स यत्राशयत्समृता सेधति स्रिधः।
अप्सा याति स्वधया दैव्यं जनं सं सुष्टुती नसते सं गोअग्रया॥ ८॥

त्वेषम्। रूपम्। कृणुते। वर्णः। अस्य। सः। यत्र। अशयत्। समऽऋता। सेधति। स्रिधः।
अप्साः। याति। स्वधया। दैव्यम्। जनम्। सम्। सुऽस्तुती। नसते। सम्। गोऽअग्रया॥८॥

ᵛअस्य। अन्वादेशे अशादेशः। अस्य सोमस्य स्वभूतः ᵛवर्णः शत्रूणां निवारको रश्मिः ᵛत्वेषं दीप्यमानं ᵛरूपं ᵛकृणुते करोति। ᵛसः रश्मिः ᵛयत्र ᵛसमृता। अर्तेः क्तिनि रूपम्। सम्यक् प्राप्यते योद्धृभिरत्रेति संग्रामः। अस्मिन् समृतौ युद्धे ᵛअशयत् शेते तिष्ठति। शीङो लङि 'बहुलं छन्दसि' इति शपो लुगभावः। तत्र युद्धे स रश्मिः ᵛस्रिधः शोषकाञ्छत्रून् ᵛसेधति निषेधति। हिनस्तीति यावत्। वाक्यभेदादनिघातः। किंच ᵛअप्साः। सनोतेः विटि आत्वे कृते रूपम्। अपामुदकानां दाता। यद्वा वसतीवर्याख्यानामपां संभक्ता। सोऽयं ᵛस्वधया हविर्लक्षणेनान्नेन सह ᵛदैव्यं देवानां संबन्धिनं ᵛजनं[2] प्रति ᵛयाति गच्छति। अपि च सोऽयं ᵛसुष्टुती सुस्तुत्या ᵛसं संगच्छते। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः। किंच स सोमः ᵛगोअग्रया गवादिमुख्यया यया वाचा स्तोतारः पशून् याचन्ते तया वाचा ᵛसं ᵛनसते संगतो भवति। नसतिर्गत्यर्थः। भिन्नवाक्यत्वादनिघातः॥

उक्षेव यूथा परियन्नरावीदधि त्विषीरधित सूर्यस्य।
दिव्यः सुपर्णोऽव चक्षत क्षां सोमः परि क्रतुना पश्यते जाः॥ ९॥

उक्षाऽइव। यूथा। परिऽयन्। अरावीत्। अधि। त्विषीः। अधित। सूर्यस्य।
दिव्यः। सुऽपर्णः। अव। चक्षत। क्षाम्। सोमः। परि। क्रतुना। पश्यते। जाः॥९॥

ᵛउक्षेव वृषभ इव ᵛयूथा गोयूथानि प्रत्यागच्छञ्छब्दं करोति तद्वदयं सोमः स्तुतीः ᵛपरियन् परिगच्छन् ᵛअरावीत् शब्दायते। ततः ᵛसूर्यस्य सर्वस्य प्रेरकस्यादित्यस्य[3] ᵛत्विषीः दीप्तीः ᵛअधि ᵛअधित अधिदधाति। सूर्यात्मना द्युलोकेऽवतिष्ठत इत्यर्थः। दधातेर्लुङि 'स्थाघ्वोरिच्च' इति इत्वकित्त्वे। किंच ᵛदिव्यः दिवि भवः ᵛसुपर्णः सुपतनः श्येनरूपया[4] गायत्र्याहृतत्वाच्छोभनगमनः सोमः ᵛक्षाम्। पृथिवीनामैतत्। क्षियन्ति निवसन्त्यत्रेति। क्षां पृथिवीम् ᵛअव ᵛचक्षत अवपश्यति।

---

१. अ६—विराजति। २. त१.२.५.६-अ६—'जनं' नास्ति। ३. त-अ—प्रेरकादित्यस्य। ४. त१.२.६.७-अ६—शोभन°; त५ शोन°।

घटेलोके ' बहुलं छन्दसि ' इति शपो लुगभावः । ततः सोमः जाः[1] जाताः[1] प्रजाः क्रतुना प्रज्ञानेन परि पश्यते परितः पश्यति । व्यत्ययेनात्मनेपदम् ॥ ॥ २६ ॥

' हरिं मृजन्ति ' इति नवर्चं पञ्चमं सूक्तमाङ्गिरसस्य हरिमन्तस्यार्षं पवमानसोमदेवताकम् । ' जागतमूर्ध्वं प्रागुत्तमात्' ( अनु. ९.६० ) इति परिभाषया जागतम् । तथा चानुक्रान्तं— ' हरिं मृजन्ति हरिमन्तः ' इति । गतो विनियोगः ॥

हरिं मृजन्त्यरुषो न युज्यते सं धेनुभिः कलशे सोमो अज्यते ।
उद्वाचमीरयति हिन्वते मती पुरुष्टुतस्य कति चित्परिप्रियः ॥ १ ॥

हरिम् । मृजन्ति । अरुषः । न । युज्यते । सम् । धेनुऽभिः । कलशे । सोमः । अज्यते ।
उत् । वाचम् । ईरयति । हिन्वते । मती । पुरुऽस्तुतस्य । कति । चित् । परिऽप्रियः ॥ १ ॥

हरिं हरितवर्णं सोममृत्विजो मृजन्ति मार्जयन्ति । ' मृजेरजादौ संक्रमे विभाषा वृद्धिरिष्यते ' ( पा. म. १ १.३.३०; का. १.१.५ ) इति तत्र वृद्धेरभावः । सोऽयम् अरुषः । अर्तेरुषप्रत्ययः । गमनशीलोऽश्व इव युज्यते इन्द्रादिभिः संयुज्यते । किंच कलशे द्रोणाभिधाने स्थितः सोमः धेनुभिः गोविकारैः दध्यादिभिः सम् अज्यते समक्तः सिक्तो भवति । अपि च सोमो यदा वाचं शब्दम् उत् ईरयति उद्गमयति । शब्दं करोतीत्यर्थः । तदा स्तोतारश्च मती । ' सुपां सुलुक् ' इति द्वितीयायाः पूर्वसवर्णदीर्घः । स्तुतिं हिन्वते प्रेरयन्ति । ' हि गतौ वृद्धौ च ' इति स्वादिः आत्मनेपदी । ततः स्तोत्राभिष्टुतः सः पुरुष्टुतस्य बहुस्तोत्रयुक्तस्य स्तोतुः परिप्रियः । ' प्रीङ् तर्पणे ' । क्विप् । वासि इयङादेशः । कृदुत्तरपदप्रकृतिस्वरत्वम् । परितः प्रीणयितॄणि कति चित् कियन्ति धनानि प्रयच्छति ॥

साकं वदन्ति बहवो मनीषिण इन्द्रस्य सोमं जठरे यदादुहुः ।
यदी मृजन्ति सुगभस्तयो नरः सनीळाभिर्दशभिः काम्यं मधु ॥ २ ॥

साकम् । वदन्ति । बहवः । मनीषिणः । इन्द्रस्य । सोमम् । जठरे । यत् । आऽदुहुः ।
यदि । मृजन्ति । सुऽगभस्तयः । नरः । सऽनीळाभिः । दशऽभिः । काम्यम् । मधु ॥ २ ॥

मनीषिणः मनस ईशितारः प्राज्ञाः बहवः स्तोतारः साकं सहैव युगपत् मन्त्रान् वदन्ति । तदा स्तुवन्ति । यदा[2] इन्द्रस्य जठरे द्रोणकलशे सोमम् आदुहुः ऋत्विजो दुदुहुः तदाभिष्टुवन्तीति । दुहेर्लिटि रूपम् । द्विर्वचनस्य छन्दसि विकल्पितत्वादत्र द्विर्वचनाभावः । किंच यदि यदा सुगभस्तयः शोभनबाहुकाः नरः कर्मनेतारो मनुष्याः काम्यं काम्यमानं मधु मदकरं सोमं सनीळाभिः दशभिः दशसंख्याकाभिरङ्गुलीभिः मृजन्ति सोममभिषुण्वन्ति तदा बहवः स्तुवन्तीत्यन्वयः ॥

अरममाणो अत्येति गा अभि सूर्यस्य प्रियं दुहितुस्तिरो रवम् ।
अन्वस्मै जोषमभरद्विनंगृसः सं द्वयीभिः स्वसृभिः क्षेति जामिभिः ॥ ३ ॥

अरममाणः । अति । एति । गाः । अभि । सूर्यस्य । प्रियम् । दुहितुः । तिरः । रवम् ।
अनु । अस्मै । जोषम् । अभरत् । विनम्ऽगृसः ।
सम् । द्वयीभिः । स्वसृऽभिः । क्षेति । जामिऽभिः ॥ ३ ॥

१. ग—जाः प्रजानामेतत् जाताः; त१.२.६.७—जाः, त३.४.५-म२.६.७—जाताः । २. त—यदा ।

स सोमः अजसमानः अनुपरतः सन् । पुनःपुनर्देवानां प्रीणनाय ग्रहादीनि प्रविशन्नित्यर्थः । गाः गोविकाराणां श्रयणानामभिमुखम् अत्येति अतिक्रम्य गच्छति । ततः शब्दायमानः सोमः सूर्यस्य आदित्यस्य दुहितुः उषसः प्रियं रवं शब्दं तिरः तिरस्करोति । तस्मिन्काले सोमाभिषवध्वनिर्महान् भवतीत्यर्थः । विनंगृसः । विनं कमनीयं स्तोत्रं गृह्णातीति विनंगृसः स्तोता । जोषम् । जुषेर्णमि रूपम् । पर्याप्तं स्तोत्रं तस्मै सोमाय अनु अभरत् अनुभरति । करोतीति यावत् । सोऽयं सोमः द्वयाभिः द्वाभ्यां पाणिभ्यामुत्पन्नाभिः जामिभिः परस्परं बन्धुभिः स्वसृभिः कर्मकरणार्थमितस्ततो गच्छन्तीभिरङ्गुलीभिः सं क्षेति संगच्छते । 'क्षि निवासगत्योः' । छान्दसो विकरणस्य लुक् ॥

नृधूतो अद्रिषुतो बर्हिषि प्रियः पतिर्गवां प्रदिव इन्दुर्ऋत्वियः ।
पुरंधिवान्मनुषो यज्ञसाधनः शुचिर्धिया पवते सोम इन्द्र ते ॥ ४ ॥

नृऽधूतः । अद्रिऽसुतः । बर्हिषि । प्रियः । पतिः । गवाम् । प्रऽदिवः । इन्दुः । ऋत्वियः ।
पुरंधिऽवान् । मनुषः । यज्ञऽसाधनः । शुचिः । धिया । पवते । सोमः । इन्द्र । ते ॥ ४ ॥

हे इन्द्र पवमानगुणविशिष्टेन्द्र ते त्वदर्थं बर्हिषि यज्ञेऽयं सोमः धिया स्वेन कर्मणा धारया वा पवते पात्रेषु स्यन्दते । कीदृशः । नृधूतः कर्मनेतृभिर्मनुष्यैः शोधितः अद्रिषुतः ग्रावभिरभिषुतः प्रियः देवानां प्रीणयिता गवां पतिः स्वामी । इन्द्रो गा अलभत तस्माद्गवां स्वामी । प्रदिवः । पुराणनामैतत् । पुराणः इन्दुः पात्रेषु क्षरन् ऋत्वियः ऋतौ जातः । 'कर्मोरञ्' 'छन्दसि घस्' ( पा. सू. ५. १. १०५–१०६ ) इति घस् । सित्त्वेन पदसंज्ञायां भसंज्ञानिमित्त[1] ओर्गुणो[1] न भवति । पुरंधिवान् । 'पुरंधिर्बहुधीः' ( निरु. ६. १२ ) इति यास्कः । बहुकर्मवान् मनुषः मनुष्यस्य यज्ञसाधनः शुचिः दीप्यमानः । यद्वा । दशापवित्रेण शुद्धः । एवंगुणः सोमः इन्द्रार्थं पवत इति संबन्धः ॥

नृबाहुभ्यां चोदितो धारया सुतोऽनुष्वधं पवते सोम इन्द्र ते ।
आप्राः क्रतून्त्समजैरध्वरे मतीर्वेर्न द्रुषच्चम्वोरासदद्धरिः ॥ ५ ॥

नृबाहुऽभ्याम् । चोदितः । धारया । सुतः । अनुऽस्वधम् । पवते । सोमः । इन्द्र । ते ।
आ । अप्राः । क्रतून् । सम् । अजैः । अध्वरे । मतीः ।
वेः । न । द्रुऽसत् । चम्वोः । आ । असदत् । हरिः ॥ ५ ॥

हे इन्द्र पवमानगुणविशिष्ट नृबाहुभ्यां कर्मनेतॄणामृत्विजां बाहुभ्यां चोदितः प्रेरितः धारया सुतः अभिषुतः । यथा धारा भवति तथाभिषुत इत्यर्थः । तादृशः सोमः ते तव अनुष्वधं स्वधामनु बलार्थम् । यद्वा । स्वधेत्यन्ननाम । अन्नार्थं पवते[2] आगच्छति । ततः स त्वं सोमपानेन क्रतून् कर्माणि आप्राः आपूरयसि । किंच अध्वरे यज्ञे मतीः अभिमन्यमानान् शत्रून् समजैः सम्यग्जितवानसि । 'जि जये' । लुङि सिपि सिचो 'बहुलं छन्दसि' इति इडभावः । 'सिचि वृद्धिः०' इति वृद्धिः । सोऽयं हरिः हरितवर्णः सोमः चम्वोः अधिषवणफलकयोः आसदत् आसीदति । तत्र दृष्टान्तः । वेर्न । वी गत्यादिषु । 'अन्येभ्योऽपि दृश्यन्ते' इति क्विप् । 'सार्व-

१. ग—भसंज्ञानिमित्तोर्गुणः । २. ग-त१.२.३.४.५.६-भ—विपवते; त७—वेः पवते ।

धातुकार्धधातुकयोः' इति गुणः । यथा विः पक्षी द्रुषद् द्रुमे सीदतीति द्रुषत् । द्रुषद्[1] । 'पूर्वपदात्' इति षत्वम् ॥ ॥ २७ ॥

अंशुं दुहन्ति स्तनयन्तमक्षितं कविं कवयोऽपसो मनीषिणः ।
समी गावो मतयो यन्ति संयत ऋतस्य योना सदने पुनर्भुवः ॥ ६ ॥

अंशुम् । दुहन्ति । स्तनयन्तम् । अक्षितम् । कविम् । कवयः । अपसः । मनीषिणः ।
सम् । ईम् । गावः । मतयः । यन्ति । सम्ऽयतः । ऋतस्य । योना । सदने । पुनःऽभुवः ॥ ६ ॥

कवयः क्रान्तप्रज्ञाः अपसः कर्मवन्तः मनीषिणः । मनस ईशा मनीषा बुद्धिः । तद्वन्त ऋत्विजः स्तनयन्तं शब्दायमानम् अक्षितम् अक्षीणं कविं क्रान्तदर्शिनम् अंशुं सोमं दुहन्ति अभिषुण्वन्ति । ततः पुनर्भुवः पुनर्भवनशीलाः गावः पयांसि मतयः मननीयाः स्तुतयश्च संयतः परस्परं संगताः सत्यः ऋतस्य सत्यभूतस्य यज्ञस्य योना योनौ योनिस्थानीये उत्पत्तिभूते सदने उत्तरवेद्याख्ये ईम् एनं सोमं सं यन्ति संगच्छन्ति ॥

नाभा पृथिव्या धरुणो महो दिवो३ऽपामूर्मौ सिन्धुष्वन्तरुक्षितः ।
इन्द्रस्य वज्रो वृषभो विभूवसुः सोमो हृदे पवते चारु मत्सरः ॥ ७ ॥

नाभा । पृथिव्याः । धरुणः । महः । दिवः । अपाम् । ऊर्मौ । सिन्धुषु । अन्तः । उक्षितः ।
इन्द्रस्य । वज्रः । वृषभः । विभुऽवसुः । सोमः । हृदे । पवते । चारु । मत्सरः ॥ ७ ॥

महः महतः दिवः द्युलोकस्य धरुणः धारकोऽयं सोमः पृथिव्याः विस्तीर्णाया भूमेः नाभा नाभौ नाभिस्थानीये उच्छ्रिते पदे 'यदुत्तरवेदीनाभिः' ( ऐ. ब्रा. १, २८ ) इत्याम्नानात् उत्तरवेदिस्थाने ऋत्विग्भिर्निहितः सिन्धुषु स्यन्दमानासु नदीषु अपाम् उदकानाम् ऊर्मौ संघे अन्तः मध्ये उक्षितः सिक्तः । अन्तरिक्षस्थानमध्ये वर्तमान इत्यर्थः । तादृश- इन्द्रस्य वज्रः वज्रस्थानीयः वृषभः कामानां वर्षिता अत एव विभूवसुः व्याप्तधनः सोमः चारु कल्याणं यथा भवति तथा इन्द्रस्य मत्सरः मादयिता सन् हृदे मनसे सुखाय पवते आगच्छति ॥

स तू पवस्व परि पार्थिवं रजः स्तोत्रे शिक्षन्नाधून्वते च सुक्रतो ।
मा नो निर्भाग्वसुनः सादनस्पृशो रयिं पिशङ्गं बहुलं वसीमहि ॥ ८ ॥

सः । तु । पवस्व । परि । पार्थिवम् । रजः । स्तोत्रे । शिक्षन् । आऽधून्वते । च । सुक्रतो इति सुऽक्रतो ॥ मा । नः । निः । भाक् । वसुनः । सादनऽस्पृशः ।
रयिम् । पिशङ्गम् । बहुलम् । वसीमहि ॥ ८ ॥

हे सुक्रतो शोभनकर्मन् सुप्रज्ञ वा सोम तादृशस्त्वं पार्थिवं रजः लोकं लक्ष्यीकृत्य तु क्षिप्रं परि पवस्व परितः सर्वतः क्षर । किं कुर्वन् । आधून्वते अदाभ्यग्रहे ग्रावभिरंशुभिराधावनं कुर्वते । तथा भगवता आपस्तम्बेन सूत्रितम्—'तैरेनं चतुराधुनोति पञ्चकृत्वः सप्तकृत्वो वा' इति । तस्मै धनादिकं शिक्षन् प्रयच्छन् परि पवस्वेति समन्वयः । ततस्त्वं नः अस्मान् वसुनः धनात् मा

१. ग-स१.२.३-भ१.२.४.६—द्रुपदिति, भ१(२)-द्रुपदित्यत्र ।

॰नि भाक् मा नि भाक्षीः मा वियोजीः। कीदृशात्। ॰सदनस्पृशः। येन[1] भूतेन[1] वसुना सदनानि गृहान् पुत्रादीन् स्पृशन्ति तादृशात् गृहादिकस्य प्रदातुः धनान्मा[2] वियुजः। भाक्। 'भज सेवायाम्'। लुङि सिपि सिचि 'बहुलं छन्दसि' इति ईडागमस्याभावः। 'एकाचः॰' इति इट्प्रतिषेधः। हलन्तलक्षणा वृद्धिः (पा. सू. ७. २. ३)। सिचो[3] लोपः। यस्मादेवं तस्मादृयं ॰चित्रम् नानारूपं कनकादिना अत एव ॰बहुलं प्रभूतं ॰रयिं धनं ॰वसीमहि आच्छादयेम। बहुधनवन्तो भवेमेत्यर्थः। 'वस आच्छादने'। आदादिकः। लिङि रूपम् ॥

आ तू न इन्दो शतदात्वश्व्यं सहस्रदातु पशुमद्धिरण्यवत्।
उप मास्व बृहती रेवतीरिषोऽधि स्तोत्रस्य पवमान नो गहि ॥ ९ ॥

आ। तु। नः। इन्दो इति। शतऽदातु। अश्व्यम्। सहस्रऽदातु। पशुऽमत्। हिरण्यऽवत्।
उप। मास्व। बृहतीः। रेवतीः। इषः। अधि। स्तोत्रस्य। पवमान। नः। गहि ॥ ९ ॥

हे ॰इन्दो पवमान ॰नः अस्मभ्यं ॰तु क्षिप्रं धनम् ॰आ आभर। कीदृशम्। ॰शतदातु। दातु दानम्। बहुदानम् ॰अश्व्यम् अश्वसहितं ॰सहस्रदातु सहस्रदानोपेतं ॰पशुमत् पश्वादियुक्तं ॰हिरण्यवत् हिरण्ययुक्तं च धनं देहि। तथा हे सोम ॰बृहतीः प्रभूतानि ॰रेवतीः धनवन्ति[4]। यद्वा पयसो दातारः पशवः। तद्वन्ति ॰इषः अन्नानि चास्मभ्यम् ॰उप ॰मास्व उपनिर्मिमीष्व। कुर्विति यावत्। किंच हे ॰पवमान ॰नः[5] अस्माकं स्वभूतस्य ॰स्तोत्रस्य श्रवणाय ॰अधि ॰गहि आगच्छ। 'क्रियार्थोपपदस्य॰' (पा. सू. २. ३. १४) इति चतुर्थी। 'चतुर्थ्यर्थे बहुलं छन्दसि' इति षष्ठी ॥　॥ २८ ॥

'स्रक्के' इति नवर्चं षष्ठं सूक्तमाङ्गिरसस्य पवित्रस्यार्षं जागतं पवमानसोमदेवताकम्। तथा चानुक्रम्यते—'स्रक्के पवित्रः' इति। प्रवर्ग्येऽभिष्टव एतत्सूक्तम्। सूत्रितं च—'स्रक्के द्रप्सस्यार्धं येन श्रोत्रमक्षिण्गर्भाः' (आश्व. श्रौ. ४. ६) इति ॥

स्रक्के द्रप्सस्य धमतः समस्वरन्नृतस्य योना समरन्त नाभयः।
त्रीन्त्स मूर्ध्नो असुरश्चक्र आरभे सत्यस्य नावः सुकृतमपीपरन् ॥ १ ॥

स्रक्के। द्रप्सस्य। धमतः। सम्। अस्वरन्। ऋतस्य। योना। सम्। अरन्त। नाभयः।
त्रीन्। सः। मूर्ध्नः। असुरः। चक्रे। आऽरभे। सत्यस्य। नावः। सुऽकृतम्। अपीपरन् ॥ १ ॥

॰स्रक्के यज्ञस्य[6] हनुस्थानीये। स्रक्कौ ओष्ठप्रान्तौ हनुरुच्यते। 'हनुरधिषवणफलकः' इत्याम्नानात् हनुस्थानीये अधिषवणफलके ॰धमतः अभिषूयमाणस्य ॰द्रप्सस्य सोमस्यांशवः ॰समस्वरन् संगच्छन्ते। समशब्दयन् वा। ॰ऋतस्य सत्यभूतस्य यज्ञस्य ॰योना योनावुत्पत्तिस्थाने ॰नाभयः सोमरसाः ॰समरन्त संगच्छन्ते। अर्तेः 'समो गमि॰' इत्यादिनात्मनेपदम्। 'सर्तिशास्त्यर्तिभ्यश्च' इति च्लेरङ्। अथ ॰असुरः बलवान् सर्वेषां प्रीणनात् प्राणदाता वा ॰सः सोमः ॰मूर्ध्नः समुच्छ्रितान् ॰त्रीन् लोकान् ॰आरभे आरम्भणाय मनुष्यदेवादीनां संचरणाय[7] करोति। किंच ॰सत्यस्य सत्यभूतस्य सोमस्य ॰नावः नौका इव स्थिताश्चतस्रः स्थाल्यः[8]। आदित्याग्रयणोक्थ्यध्रुवस्थाल्य इति। ताः

1. ग-त३.४-भ५—येन प्रभूतेन; त१.२.५.६.७-भ४—ये भूतेन, भ१.७—यत्ते नव। 2. ग—यस्मात्स्मान्मा; त-भ२.४.६—यस्मात्मा; भ१.७—यस्मा। 3. ग—सिचो। 4. ग—धनवती', त७—धनवती। 5. भ६—सोम। 6. ग—यज्ञवक्त्रस्य। 7. ग-त-भ५.६—संचरणाय च; भ१.७—संचरणाय। 8. त—स्थाल्या स्थानि; भ१.४—स्थाल्यः स्थानि; भ६—स्थाल्य स्थानि।

रश्मयः सुकृतं सुष्ठु कर्माणि कुर्वन्तं यजमानम् अपीपरन् अभिमतदानेन पूरयन्ति[1] वा। पारयतेर्लुङि चङि सन्वद्भावाभ्यासेत्वदीर्घाः ॥

सम्यक् सम्यञ्चो महिषा अहेषत सिन्धोरूर्मावधि वेना अवीविपन्।
मधोर्धाराभिर्जनयन्तो अर्कमित्प्रियामिन्द्रस्य तन्वमवीवृधन् ॥ २ ॥

सम्यक् । सम्यञ्चः । महिषाः । अहेषत । सिन्धोः । ऊर्मौ । अधि । वेनाः । अवीविपन् ।
मधोः । धाराभिः । जनयन्तः । अर्कम् । इत् । प्रियाम् । इन्द्रस्य । तन्वम् । अवीवृधन् ॥२॥

महिषाः पूज्या महान्तो ऋत्विजः सम्यञ्चः परस्परं संगताः सन्तः सम्यक् अहेषत सोमं सम्यक् प्रेरयन्ति अभिषुण्वन्तीति यावत्। 'हि गतौ वृद्धौ च'। लुङि सिचि रूपम्। ततः वेनाः। 'वेनतेः कान्तिकर्मणः' (निरु. १०. ३८) इति यास्कः। स्वर्गादिफलं कामयमाना ऋत्विजः सिन्धोः स्यन्दमानस्योदकस्य ऊर्मौ अधि संघे वसतीवर्यादिषु जलेषु सोमम् अवीविपन् कम्पयन्ति। तत्र प्रेरयन्तीत्यर्थः। वपतेर्ण्यन्तस्य[2] लुङि चङि 'णौ चङ्युपधाया ह्रस्वः' इति ह्रस्वः। किंच अर्कम् अर्चनीयं स्तोत्रं जनयन्तः कुर्वन्तस्ते प्रियां प्रियतमाम् इन्द्रस्य तन्वं धाम च मधोः मदकरस्य सोमस्य धाराभिः अवीवृधन् वर्धितवन्तः। वर्धतेर्लुङि चङि रूपम् ॥

पवित्रवन्तः परि वाचमासते पितैषां प्रत्नो अभि रक्षति व्रतम्।
महः समुद्रं वरुणस्तिरो दधे धीरा इच्छेकुर्धरुणेष्वारभम् ॥ ३ ॥

पवित्रऽवन्तः । परि । वाचम् । आसते । पिता । एषाम् । प्रत्नः । अभि । रक्षति । व्रतम् ।
महः । समुद्रम् । वरुणः । तिरः । दधे । धीराः । इत् । शेकुः । धरुणेषु । आऽरभम् ॥३॥

पवित्रवन्तः पवित्रेण शोधकेन सामर्थ्येन युक्ताः सोमस्य रश्मयः वाचं सोमस्थितां माध्यमिकां वाचं परि आसते पर्युपविशन्ति। सोमोऽन्तरिक्षे तिष्ठति खलु 'सोमो वै राजा गन्धर्वेष्वासीत्' (ऐ. ब्रा. १.२७), इत्याम्नानात्। ततः प्रत्नः पुराणः एषां रश्मीनां[3] पिता अयं सोमश्च व्रतं प्रकाशनात्मकं कर्म अभि रक्षति अधितं करोति। किंच वरुणः सर्वस्य स्वतेजसाच्छादकः सोऽयं सोमः महः महत् समुद्रम्। अन्तरिक्षनामैतत्। महदन्तरिक्षं तैः[4] रश्मिभिः तिरो दधे अन्तर्हितमकरोत्। सर्वं व्याप्नोदिति यावत्। तमिमं सोमं धीराः। इत् अवधारणे। कर्मणि कुशलाः प्राज्ञा ऋत्विजः धरुणेषु सर्वस्य धारकेषु वसतीवर्यादिष्वुदकेषु आरभम् आरब्धुं शेकुः समर्थयन्ति च। रभेस्तुमर्थे 'शकि णमुल्कमुलौ' (पा. सू. ३. ४. १२) इति कमुल्। नित्स्वरेण मध्योदात्तः ॥

सहस्रधारेऽव ते समस्वरन्दिवो नाके मधुजिह्वा असश्चतः।
अस्य स्पशो न नि मिषन्ति भूर्णयः पदेपदे पाशिनः सन्ति सेतवः ॥४॥

सहस्रऽधारे । अव । ते । सम् । अस्वरन् । दिवः । नाके । मधुऽजिह्वाः । असश्चतः ।
अस्य । स्पशः । न । नि । मिषन्ति । भूर्णयः । पदेऽपदे । पाशिनः । सन्ति । सेतवः ॥४॥

---

१. ग–पूरयन्ति। २. ग–वेपते; त-म४.६–पसते; म२–कंपते; म७–वतपते। ३. ग–अंशूनां। ४. ग–स्वे।

सहस्रधारे । बहूदकधारा यस्माद्भवन्ति तत्तथोक्तमन्तरिक्षम् । तस्मिन् वर्तमानाः ते सोमरश्मयः अव अवस्तात् स्थिताः समस्वरन् । पृथिवीं वृष्ट्या संयोजयन्तीत्यर्थः । किंच दिवः द्युलोकस्य नाके सुखस्थिते देशे वर्तमानाः मधुजिह्वाः मध्वग्राः । सोमतेजसाग्रेभ्यो[1] हि मधूत्पन्नं भवति । अतो मधुजिह्वाः । असश्चतः संगतवर्जिताः[2] पृथक्पृथग्विद्यमानस्थिताः अस्य सोमस्य स्पशः चारभूता रश्मयः भूर्णयः क्षिप्रगामिनः सन्तः न नि मिषन्ति निमेषं न कुर्वन्ति । किंतु पापिनः सुकृतिनश्च ज्ञातुं सर्वदा जाग्रतीत्यर्थः । अथवा । राजभृत्या यथा दुष्टान् विचारयितुं सर्वदा जागरणं कुर्वन्ति तद्वदेते रश्मयः पदेपदे स्थाने स्थाने सेतवः संबद्धाः सन्तः पाशिनः पापकृतां बाधकाः सन्ति भवन्ति ॥

पितुर्मातुरध्या ये समस्वरन्नृचा शोचन्तः संदहन्तो अव्रतान् ।
इन्द्रद्विष्टामप धमन्ति मायया त्वचमसिक्नीं भूमनो दिवस्परि ॥ ५ ॥

पितुः । मातुः । अधि । आ । ये । सम्ऽअस्वरन् । ऋचा । शोचन्तः । सम्ऽदहन्तः । अव्रतान् । इन्द्रऽद्विष्टाम् । अप । धमन्ति । मायया । त्वचम् । असिक्नीम् । भूमनः । दिवः । परि ॥५॥

पितुर्मातुः द्यावापृथिव्योः । 'द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम्' (ऋ. सं. १.१६४.३३) इत्यादिषु द्यावापृथिव्योर्मातापितृत्वाम्नानात् । द्यावापृथिवीभ्यां ये सोमरश्मयः अध्या समस्वरन् अधिकं प्रादुर्भूता अभवन् ते ऋचा ऋत्विग्भिः क्रियमाणया स्तुत्या शोचन्तः दीप्यमानाः अव्रतान् कर्मरहितान् यजमानान् संदहन्तः सम्यग्विनाशयन्तस्ते रश्मयः इन्द्रद्विष्टाम् इन्द्राय द्वेष्यकारिणीम् । 'क्ते च' (पा. सू. ६. २. ४५) इति पूर्वपदप्रकृतिस्वरः । इन्द्रेण द्विष्टां वा । असिक्नीम् । रात्रिनामैतत् । रात्रिवत्कृष्णरूपां त्वचम् । राक्षसमित्यर्थः[3] । मायया कर्मणा प्रज्ञया वा भूम्नः विस्तृताद्भूलोकात् दिवस्परि द्युलोकाच्च अप धमन्ति अपगतं कुर्वन्ति । अपघ्नन्तीत्यर्थः ॥ ॥ २९ ॥

प्रत्नान्मानादध्या ये समस्वरञ्छ्लोकयन्त्रासो रभसस्य मन्तवः ।
अपानक्षासो बधिरा अहासत ऋतस्य पन्थां न तरन्ति दुष्कृतः ॥ ६ ॥

प्रत्नात् । मानात् । अधि । आ । ये । सम्ऽअस्वरन् । श्लोकऽयन्त्रासः । रभसस्य । मन्तवः । अप । अनक्षासः । बधिराः । अहासत । ऋतस्य । पन्थाम् । न । तरन्ति । दुःऽकृतः ॥६॥

श्लोकयन्त्रासः । श्लोकाः स्तुतयः । स्तुतिनियमनाः रभसस्य मन्तवः वेगमभिमन्यमानाः एतादृशाः ये सोमरश्मयः प्रत्नात् पुरातनात्[4] मानात् अन्तरिक्षात् अध्या समस्वरन् सह प्रादुर्भूता अभवन् तानक्ष्णीन् अनक्षासः चक्षुर्वर्जिताः साधु पदार्थानामद्रष्टारो नराः बधिराः देवतास्तुतिश्रवणवर्जिताः पापकृतो[5] नराश्च अप अहासत तान् परित्यजन्ति । दर्शिनः श्रवणवन्तो मेधाविनस्तु न परिजहति किंतु स्तुवन्ति । तदेवाह । ऋतस्य सत्यस्य पन्थां मार्गभूतमेषां गणं दुष्कृतः पापकृतो नराः न तरन्ति नोत्तारयन्ति । सुकृतस्तु तरन्तीत्यभिप्रायः ॥

सहस्रधारे वितते पवित्र आ वाचं पुनन्ति कवयो मनीषिणः ।
रुद्रास एषामिषिरासो अद्रुहः स्पशः स्वञ्चः सुदृशो नृचक्षसः ॥ ७ ॥

१. ग–सोमतेजसासाग्रेभ्यो । २. ग-त४-म६–संगमवर्जिताः; म७–संगतावर्जिताः । ३. म१(२)–राक्षसी॰ । ४. म६–पुरातनात् । ५. म१(२)–दुष्कृतः पापकृतः ।

सहस्रऽधारे । विऽतते । पवित्रे । आ । वाचम् । पुनन्ति । कवयः । मनीषिणः ।
रुद्रासः । एषाम् । इषिरासः । अद्रुहः । स्पशः । सुऽअञ्चः । सुऽदृशः । नृऽचक्षसः ॥ ७ ॥

कवयः क्रान्तकर्माणः अत एव मनीषिणः प्राज्ञा ऋत्विजः सहस्रधारे अनेकधारोपेते वितते कर्मणि विस्तृते पवित्रे शुद्धत्वोत्पादके सोमे वर्तमानां वाचं माध्यमिकाम्। सोमः खलु विश्वावसुप्रभृतिगन्धर्वेष्वन्तरिक्षेऽवतिष्ठते 'सोमो वै राजा गन्धर्वेष्वासीत्' (ऐ. ब्रा. १.२७) इति श्रवणात्। तत्र वर्तमानं सोमं देवा गोरूपया वाचा क्रीतवन्तः। तदा सोमे वागस्थादिति शक्यते वक्तुम्। तस्मात्सोमे स्थितां माध्यमिकां वाचम् आ पुनन्ति संस्कुर्वन्ति। स्तुवन्तीति यावत्। च उपसुना मरुतां मातरं माध्यमिकां वाचं स्तुवन्ति तेषां रुद्रासः रुद्रपुत्रा मरुतः स्पशः मध्यमया वाचा वशिनो भवन्ति। ईदृशाः। इषिराः गमनशीलाः अद्रुहः स्तोतॄणामद्रोग्धारः। यद्वा। द्रुहेः कर्मणि क्विबौणादिकः। परैरहिंस्याः। स्वञ्चः शोभनाञ्चनाः अत एव सुदृशः सुदर्शनाः नृचक्षसः नृणां कर्मनेतॄणां द्रष्टारः ॥

ऋतस्य गोपा न दभाय सुक्रतुस्त्री ष पवित्रा हृद्य१न्तरा दधे ।
विद्वान्त्स विश्वा भुवनाभि पश्यत्यवाजुष्टान् विध्यति कर्ते अव्रतान् ॥ ८ ॥

ऋतस्य । गोपाः । न । दभाय । सुऽक्रतुः । त्री । सः । पवित्रा । हृदि । अन्तः । आ । दधे ।
विद्वान् । सः । विश्वा । भुवना । अभि । पश्यति । अव । अजुष्टान् । विध्यति । कर्ते । अव्रतान् ॥८॥

ऋतस्य सत्यभूतस्य यज्ञस्य गोपाः गोपायिता अत एव सुक्रतुः शोभनकर्मा सोमः न दभाय दम्भाय[1] स्तम्भनाय न भवति। परैर्दम्भयितुं न शक्यत इत्यर्थः। किंच सः सोमः त्री। 'शेश्छन्दसि बहुलम्' इति लुक्। त्रीणि पवित्रा अग्निवायुसूर्यात्मकानि त्रीणि पवित्राणि हृद्यन्तः हृदयस्यान्तः आ दधे आदधाति। स्वस्मिन् संगमयतीत्यर्थः। अपि च विद्वान् सर्वं जानानः सः सोमः विश्वा भुवना सर्वाणि भुवनानि अभि पश्यति। ततः कर्ते। करोतेरौणादिकः तप्रत्ययः। कर्माणि अजुष्टान् अप्रियान् अत एव अव्रतान् अयजमानान् अव विध्यति अधःकृष्टान् कृत्वा ताडयति। हिनस्तीति यावत् ॥

ऋतस्य तन्तुर्विततः पवित्र आ जिह्वाया अग्रे वरुणस्य मायया ।
धीराश्चित्तत्समिनक्षन्त आशतात्रा कर्तमव पदात्यप्रभुः ॥ ९ ॥

ऋतस्य । तन्तुः । विऽततः । पवित्रे । आ । जिह्वायाः । अग्रे । वरुणस्य । मायया ।
धीराः । चित् । तत् । सम्ऽइनक्षन्तः । आशत । अत्र । कर्तम् । अव । पदाति । अप्रऽभुः ॥९॥

ऋतस्य सत्यभूतस्य यज्ञस्य तन्तुः तनिता[2] पवित्रे अविवालमये दशापवित्रे विततः विस्तृतः। यद्वा। पवित्रेऽन्तरिक्षे विस्तृतः सोमः वरुणस्य जिह्वायाः अग्रे मायया कर्मणा आ[3] आस्थितः[3]। यस्याजिह्वाग्र आपस्तिष्ठन्ति। तासु[4] सोमो वसतीति वसतीवर्याख्येषु[5] स्थित इत्यर्थः।

१. ग-न दंभाय। २. ग-तनिता अर्थ। ३. ग-त३-म७-दुरास्थितः, त१-दरास्थित; त२.४.५.६ दुरास्थित; त७-दूरास्थित; म१.२-दुरा दुरास्थितः; म४ दुरस्थितः; म६-दुरस्थित। ४. त-म६-तेषु। ५. त-म९-'पुरके।

ततः धीराश्चित् कर्मणि प्राज्ञा एव तत् वरुणजिह्वाप्रस्थानं समिनक्षन्तः। इनक्षतिर्गतिकर्मा। संव्याप्नुवन्तः सन्तः आरभ स्तुतिभिर्हविर्भिर्वा प्राप्नुवन्। यः पुनः कर्तम्। 'कालाध्वनोः०' इति द्वितीया। कर्मणि अप्रभुः समर्थो न भवति सोऽयम् अत्र अस्मिन्नेव लोके अव पदाति अवस्तान्नरके पतति नोपरि गच्छति। 'पद गतौ'। लेट्याडागमः। तस्मात्सर्वैरग्निष्टोमादिकर्म कर्तव्यमित्येषोऽर्थोऽभिहितो भवति॥ ॥ ३० ॥

'शिशुर्न' इति नवर्चं सप्तमं सूक्तं दैर्घतमसस्य कक्षीवत आर्षं पवमानसोमदेवताकम्। अष्टमी त्रिष्टुप् शिष्टा जगत्यः। तथा चानुक्रम्यते—'शिशुर्न कक्षीवांस्त्रिष्टुबष्टमी' इति। गतः सूक्तविनियोगः॥

शिशुर्न जातोऽव चक्रदद्वने स्व१र्यद्वाज्यरुषः सिषासति।
दिवो रेतसा सचते पयोवृधा तमीमहे सुमती शर्म सप्रथः॥ १ ॥

शिशुः। न। जातः। अव। चक्रदत्। वने। स्वः। यत्। वाजी। अरुषः। सिसासति।
दिवः। रेतसा। सचते। पयःऽवृधा। तम्। ईमहे। सुऽमती। शर्म। सऽप्रथः॥ १ ॥

स पवमानः सोमः वने वननीये वसतीवर्याख्ये उदके जातः उत्पन्नः शिशुर्न शिशुरिव अव चक्रदत् अवाङ्मुखं क्रन्दति। तदोदकमध्ये पतञ्छब्दं करोति खलु। यत् यदा वाजी बलवानश्ववान् वा अरुषः आरोचमानः। यद्वा। वाज्यश्व इव अरुषः। अर्तेरुषन्। गमनशीलः सोमः स्वः स्वर्गलोकं सिषासति संभक्तुमिच्छति। सनोतेः सनीडभाव आत्वम्। 'सनोतेः०' इति सांहितिकं षत्वम्। सोऽयं पयोवृधा गवामोषधीनां च क्षीरस्य वर्धकेन[1] रेतसा उदकेन सह दिवः द्युलोकात् सचते पार्थिवं लोकं समवैति। तं तादृशं प्रसिद्धं सोमं सप्रथः सर्वतः पृथुतरं[2] धनादिना युक्तं शर्म गृहं तदर्थं सुमती। 'सुपां सुलुक्०' इति तृतीयायाः पूर्वसवर्णदीर्घः। सुमत्या शोभनया स्तुत्या ईमहे याचामहे। ईमहे इति याच्ञाकर्मा। 'ईङ् गतौ'। दैवादिकः। छान्दसः श्यनो लुक्॥

दिवो यः स्कम्भो धरुणः स्वातत आपूर्णो अंशुः पर्येति विश्वतः।
सेमे मही रोदसी यक्षदावृता समीचीने दाधार समिषः कविः॥ २ ॥

दिवः। यः। स्कम्भः। धरुणः। सुऽआततः। आऽपूर्णः। अंशुः। परिऽएति। विश्वतः।
सः। इमे इति। मही इति। रोदसी इति। यक्षत्। आऽवृता।
समीचीने इति सम्ऽईचीने। दाधार। सम्। इषः। कविः॥ २ ॥

दिवः द्युलोकस्य स्कम्भः विष्कम्भयिता संरोद्धा धरुणः सर्वस्य धारकः। यद्वा। पृथिव्या धारकः। 'विष्कम्भो दिवो धरुणः पृथिव्याः' (ऋ. सं. ९.८९.६) इत्याम्नानात्। तादृशः स्वाततः सुष्ठु सर्वत्र विततः विस्तृतः अत एव आपूर्णः[3] पात्रेषु संपूर्णः यः अंशुः सोमात्मकः विश्वतः सर्वतः पर्येति परिगच्छति। 'तिङि चोदात्तवति' इति गतेर्निघातः। सः सोमः इमे रोदसी द्यावापृथिव्यौ आवृता संभजनीयेन कर्मणा यक्षत् यजतु। स्वबलेन संयोजयत्वित्यर्थः। ततः सोऽयं समीचीने परस्परं संगते द्यावापृथिव्यौ दाधार धारयाञ्चकार। 'तुजादीनाम्०' इत्यभ्यासस्य दीर्घः। अनन्तरं कविः क्रान्तकर्मा इषः अन्नानि स्तोतृभ्यः सं प्रयच्छतु। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः॥

१. त१.२.५.६.७-म६-'वर्धकेन' नास्ति। २. ग-त३-म-पृथुतमं। ३. म१.१.७-पूर्णः।

महि प्सरः सुकृतं सोम्यं मधूर्वी गव्यूतिरदितेर्ऋतं यते ।
ईशे यो वृष्टेरित उस्रियो वृषापां नेता य इतऊतिर्ऋग्मियः ॥ ३ ॥

महि । प्सरः । सुऽकृतम् । सोम्यम् । मधु । उर्वी । गव्यूतिः । अदितेः । ऋतम् । यते ।
ईशे । यः । वृष्टेः । इतः । उस्रियः । वृषा । अपाम् । नेता । यः । इतःऽऊतिः । ऋग्मियः ॥ ३ ॥

ऋतं सत्यभूतं यज्ञं यते गच्छते तस्मा इन्द्राय सुकृतं सुष्ठु संस्कृतं सोम्यं सोममयं महि महत् प्रभूतं मधु मधुररसं प्सरः भक्षणं[1] पानीयं भवति । 'प्सा भक्षणे' । किंच अस्मयज्ञं प्रत्यागच्छतामिन्द्रादीनाम् अदितेः[2] पृथिव्याः गव्यूतिः मार्गश्च उर्वी विस्तीर्णा भवति । इन्द्रस्य शतसहस्रसंख्याकैर्हरिभिः सह गन्तुं मार्गो विस्तीर्णोऽभवदित्यर्थः । यः इन्द्रः इतः इमं लोकं प्रत्यापतन्त्याः वृष्टेः ईशे ईश्वरो भवति । तथा उस्रियः । उस्रेति गोनाम । गोभ्यो हितः अपाम् उदकानां वृषा वर्षकः यज्ञस्य[3] नेता नायकः[4] इतऊतिः इममस्मदीयं यज्ञं प्रत्यूतिर्गमनं यस्य स तथोक्तः । इतो गन्तव्यम् यः इन्द्रः ऋग्मियः ऋगर्हः स्तोतव्यो भवति । तस्मा अयं सोमः पातव्यो[5] भवतीति ॥

प्रवर्ग्येऽभिष्टवे 'आत्मन्वन्नभः' इत्येषा । सूत्रितं च – 'तन्नु प्रयक्षतममस्य कर्मात्मन्वन्नभो दुह्यते घृतं पयः' ( आश्व. श्रौ. ४. ७ ) इति ॥

आत्मन्वन्नभो दुह्यते घृतं पय ऋतस्य नाभिरमृतं वि जायते ।
समीचीनाः सुदानवः प्रीणन्ति तं नरो हितमव मेहन्ति पेरवः ॥ ४ ॥

आत्मन्ऽवत् । नभः । दुह्यते । घृतम् । पयः । ऋतस्य । नाभिः । अमृतम् । वि । जायते ।
सम्ऽईचीनाः । सुऽदानवः । प्रीणन्ति । तम् । नरः । हितम् । अव । मेहन्ति । पेरवः ॥ ४ ॥

आत्मन्वत् । 'अनो नुट्' इति नुडागमः । आत्मवत् सारवत् घृतं पयः च नभः नभस आदित्यरूपात्सोमः दुह्यते । किंच ऋतस्य यज्ञस्य नाभिः । 'णह बन्धने' । 'स्वमोर्नपुंसकात्' ( पा. सू. ७. १. २३ ) इति सोर्लुग्न भवति सर्वविधीनां छन्दसि विकल्पितत्वात् । नाभि[6] यज्ञस्य बन्धकम् अमृतम् उदकं च वि जायते तस्मादेव प्रादुर्भवति । ततः सुदानवः शोभनस्तुतिहविर्दानवन्तो यजमानाः समीचीनाः परस्परं संगताः सन्तः तम् इमं सोमं प्रीणयन्ति[7] स्तुतिभिस्तर्पयन्ति । अथ नरः नेतारः पेरवः । 'पा रक्षणे' । 'आपोरिवे रुन्' इति रुप्रत्ययः । सर्वस्य रक्षकाः सोमरश्मयः हितं निहितम् अव अवस्तात् वर्तमानं पार्थिवमुदकं मेहन्ति वर्षन्ति । 'मिह सेचने' । भौवादिकः । यद्वा । हितमुदकं पृथिवीं प्रति मेहन्ति ॥

अरावीदंशुः सचमान ऊर्मिणा देवाव्यं मनुषे पिन्वति त्वचम् ।
दधाति गर्भमदितेरुपस्थ आ येन तोकं च तनयं च धामहे ॥ ५ ॥

अरावीत् । अंशुः । सचमानः । ऊर्मिणा । देवऽअव्यम् । मनुषे । पिन्वति । त्वचम् ।
दधाति । गर्भम् । अदितेः । उपऽस्थे । आ । येन । तोकम् । च । तनयम् । च । धामहे ॥ ५ ॥

१. ग-ख३-भ१.२.४.७–भक्षणीयं । २. ख-भ२–धी; भ६–या माता; ग–अदितेः अदीनायाः । ३. ग-ख३-भ१.२.४.५.७–नेता सर्वस्य । ४. ग–अगतः । ५. भ–पातव्यो । ६. ग-भ१.६.७–नाभिः; ख४–नाभि । ७. भ१(२)–स्तुतिभिः प्रीणंति प्रीणयति स्तुतिभिः प्रीणयति ।

अर्ध । श्वेनम् । कुलशम् । गोभिः । अक्तम् । कार्ष्मन् । आ । वाजी । अक्रमीत् । सुसुऽवान् ।
आ । हिन्विरे । मनसा । देवऽयन्तः । कुक्षीवते । शतऽहिमाय । गोनाम् ॥ ८ ॥

अध अथानन्तरं श्वेतं संप्रति सोमसंसर्गात् श्वेतवर्णं गोभिः उदकैः अक्तं संपृक्तं द्रोणकलशं ससवान् संभजन् सोमः[1] आ अक्रमीत् आक्रमते । कार्ष्मन्[2] । कार्ष्मशब्दः काष्ठावचनः । आजिं धावन्तो योद्धारो यां गन्तुमिच्छन्ति तस्यां काष्ठायां वाजी कश्चिदश्वो युद्धं भजमान आक्रमीत् आक्रमते । सोमः काष्ठायां द्रोणकलशे पततीत्यर्थः । ततस्तस्मै सोमाय देवयन्तः देवानिच्छन्त ऋत्विजः मनसा आ हिन्विरे स्तुतीराभिमुख्येन प्रेरयन्ति । तत्र शतहिमाय बहुगमनाय कक्षीवते स्तोत्रकारिण एतन्नामकायर्षये सोमः गोनां गाः पशून् प्रेरयति । ' गोः पादान्ते ' ( पा. सू. ७. १. ५७ ) इति नुडागमः । ' क्रियाग्रहणं कर्तव्यम् ' इति संप्रदानसंज्ञा । चतुर्थ्यर्थे षष्ठी ॥

अद्भिः सोम पपृचानस्य ते रसोऽव्यो वारं वि पवमान धावति ।
स मृज्यमानः कविभिर्मदिन्तम स्वदस्वेन्द्राय पवमान पीतये ॥ ९ ॥

अत्ऽभिः । सोम । पपृचानस्य । ते । रसः । अव्यः । वारम् । वि । पवमान । धावति ।
सः । मृज्यमानः । कविऽभिः । मदिन्ऽतम । स्वदस्व । इन्द्राय । पवमान । पीतये ॥ ९ ॥

हे पवमान पवित्रेण पूयमान हे सोम अद्भिः वसतीवर्यादिभिरुदकैः पपृचानस्य संपृच्यमानस्य ते तव रसः अव्यः अवेः वारं वालं दशापवित्रं वि धावति विविधं प्राप्नोति । ततो हे मदिन्तम मादयितृतम हे पवमान सोम त्वं कविभिः क्रान्तकर्मभिर्ऋत्विग्भिः मृज्यमानः पूयमानः सन् इन्द्राय पीतये इन्द्रस्य पानार्थं स्वदस्व प्रियरसो[3] भव ॥ ॥ ३२ ॥

' अभि प्रियाणि ' इति पञ्चर्चमष्टमं सूक्तं भार्गवस्य कवेरार्षं जागतं पवमानसोमदेवताकम् । तथानुक्रम्यते—' अभि प्रियाणि पञ्च कविः ' इति । गतो विनियोगः ॥

अभि प्रियाणि पवते चनोहितो नामानि यह्वो अधि येषु वर्धते ।
आ सूर्यस्य बृहतो बृहन्नधि रथं विष्वञ्चमरुहद्विचक्षणः ॥ १ ॥

अभि । प्रियाणि । पवते । चनःऽहितः । नामानि । यह्वः । अधि । येषु । वर्धते ।
आ । सूर्यस्य । बृहतः । बृहन् । अधि । रथम् । विष्वञ्चम् । अरुहत् । विऽचक्षणः ॥ १ ॥

चनोहितः । चन इत्यन्ननाम । चायतेरसुनि चन इत्यौणादिकसूत्रेण निपातितः । चनसेऽन्नाय हितः यद्वा हितान्नः सोमः प्रियाणि जगतः प्रीणयितॄणि नामानि नमनशीलानि तान्युदकानि अभि पवते अभितः करोति । येषु अन्तरिक्षस्थितेषूदकेषु यह्वः महान्सोमः अधि वर्धते अधिकं प्रवृद्धो भवति । अपां मध्ये सोमो वसति । ततः बृहन् महान् सोमः बृहतः महतः परिवृढस्य सूर्यस्य विष्वञ्चं विष्वग्गमनम्[4] अधि उपरि रथं विचक्षणः सर्वस्य विद्रष्टा सन् आ अरुहत् आरोहति । ' असौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ' इति ॥

१. भ१(२)—सोमः कार्ष्मन् । २. त२-भ१-५—' कार्ष्मन् ' नास्ति । ३. भ६—प्रियतमो । ४. ग-भ२—विष्वग्गामिनं रथं; त४-भ१—विष्वग्गामनरथं; भ७—विष्वगंचनं वृथ; भ१(२)—गमनसाधनं रथं ।

ऋतस्य जिह्वा पवते मधु प्रियं वक्ता पतिर्धियो अस्या अदाभ्यः ।
दधाति पुत्रः पित्रोरपीच्यं नाम तृतीयमधि रोचने दिवः ॥ २ ॥

ऋतस्य । जिह्वा । पवते । मधु । प्रियम् । वक्ता । पतिः । धियः । अस्याः । अदाभ्यः । दधाति । पुत्रः । पित्रोः । अपीच्यम् । नाम । तृतीयम् । अधि । रोचने । दिवः ॥ २ ॥

ऋतस्य सत्यभूतस्य यज्ञस्य जिह्वा मुख्यत्वेन जिह्वास्थानीयः सोमः प्रियं प्रियकरं मधु मदकरं रसं पवते क्षरति । कीदृशः । वक्ता शब्दकृत् । यद्वा । स्तोतृभिः क्रियमाणाः स्तुतयः[1] साधीयस्व इति प्रतिश्रवणस्य कर्ता । अस्याः धियः एतस्य कर्मणः पतिः पालयिता अदाभ्यः रक्षोभिर्हिंसितुमशक्यः पुत्रः यजमानः पित्रोः मातापित्रोः अपीच्यम् अन्तर्हितं यत् नाम । तौ न जानीतो नामकरणवेलायाम् । तस्मात्तयोरपरिज्ञायमानं तत् तृतीयं नाम दिवः द्युलोकस्य रोचने दीप्यमाने सोमेऽभिषूयमाणे सति अधि दधाति अत्यन्तं धारयति । नक्षत्रव्यावहारिकमाद्यौ प्रभाष्य सोमयाजीति तृतीयमस्य नाम इति भगवता बौधायनेनोक्तम् ( बौ. गृह्यशेष. १.११.१-७ )॥

अव द्युतानः कलशाँ अचिक्रदन्नृभिर्येमानः कोश आ हिरण्यये ।
अभीमृतस्य दोहना अनूषताधि त्रिपृष्ठ उषसो वि राजति ॥ ३ ॥

अव । द्युतानः । कलशान् । अचिक्रदत् । नृऽभिः । येमानः । कोशे । आ । हिरण्यये । अभि । ईम् । ऋतस्य । दोहनाः । अनूषत । अधि । त्रिऽपृष्ठः । उषसः । वि । राजति ॥ ३ ॥

द्युतानः । 'द्युत दीप्तौ' । दीप्यमानः नृभिः कर्मनेतृभिर्ऋत्विग्भिः हिरण्यये हिरण्मये कोशे अभिषवणचर्मणि[2] । तस्य हिरण्मयत्वं 'हिरण्यपाणिरभिषुणोति' इति हिरण्यसंबन्धात् । तादृशे कोशे येमानः । छान्दसे कर्मणि लिटि कानचि रूपम् । नियम्यमानः सोमः । ततः[3] ऋतस्य सत्यभूतस्य यज्ञस्य दोहनाः दोग्धारः ऋत्विजः ईम् एनं सोमम् अभि अनूषत अभिष्टुवन्ति । 'ग्रावाणो वत्सा ऋत्विजो दुहन्ति' ( तै. सं. ६.२.११.४ ) इति तैत्तिरीयब्राह्मणे एषां दोग्धृत्वमभिहितम् । सोमः कलशान् द्रोणाभिधानान्[4] प्रति अव अचिक्रदत् अवक्रन्दति शब्दायते । ततः त्रिपृष्ठः । त्रीणि सवनान्येव पृष्ठानि यस्य स तथोक्तः त्रिषु सवनेषु सोमस्य विद्यमानत्वात् । त्रिचक्रादित्वादुत्तरपदान्तोदात्तत्वम् । तादृक् सोमः उषसः अधि आगतानि वि राजति । 'अधिरीश्वरे' ( पा. सू. १. ४. ९७ ) इति द्वितीया । तेष्वहःसु विशेषेण दीप्यते । यद्वा । राजतिरन्तर्णीतण्यर्थः । अहानि प्रकाशयति ॥

अद्रिभिः सुतो मतिभिश्चनोहितः प्ररोचयन्रोदसी मातरा शुचिः ।
रोमाण्यव्या समया वि धावति मधोर्धारा पिन्वमाना दिवेदिवे ॥ ४ ॥

अद्रिऽभिः । सुतः । मतिऽभिः । चनःऽहितः । प्रऽरोचयन् । रोदसी इति । मातरा । शुचिः । रोमाणि । अव्याः । समया । वि । धावति । मधोः । धारा । पिन्वमाना । दिवेऽदिवे ॥ ४ ॥

१. त१ २.५.७—स्तुतः, त३.४-म१.५.७—स्तुतीः; म६—स्तुतिः । २. ग—अभिषव°; त३-म१.२—अधिषव° । ३. ग—पवमानः, त३ म१.२.६.७—ते तवं, त४—तेनाथ; म१(२)—तेन च । ४. त६.४—द्रोणानभिधानात्; म६—द्रोणकलशाभिधानात् ।

मतिभिः । 'मन ज्ञाने' । 'मन्त्रे वृषेषपचमन०' इति क्तिनुदात्तः । स्तुतिभिः अद्रिभिः ग्रावभिश्च सुतः अभिषुतः चनोहितः चनसे अन्नाय हितः हितावहो वा मातरा मातरौ जगतो निर्मात्र्यौ रोदसी द्यावापृथिव्यौ अरोचयत् स्वतेजसा प्रकाशयत् अत एव शुचिः दीप्यमानः एवंविधः सोमः अव्यानि[1] अविमयानि रोमाणि तैः कृतानि पवित्राणि समया अभितः समीपे वि धावति विशेषेण क्षरति । किंच पिन्वमाना अद्भिः सिच्यमाना मधोः मदकरस्य सोमस्य धारा दिवेदिवे अन्वहं दीर्घसत्त्रेषु पवित्राण्युभयतः पवते ॥

परि सोम प्र धन्वा स्वस्तये नृभिः पुनानो अभि वासयाशिरम् ।
ये ते मदा आहनसो विहायसस्तेभिरिन्द्रं चोदय दातवे मघम् ॥ ५ ॥

परि । सोम । प्र । धन्व । स्वस्तये । नृऽभिः । पुनानः । अभि । वासय । आऽशिरम् ।
ये । ते । मदाः । आहनसः । विऽहायसः । तेभिः । इन्द्रम् । चोदय । दातवे । मघम् ॥ ५ ॥

हे सोम स्वस्तये अविनाशाय परि प्र धन्व पात्राणि परितः प्रगच्छ[2] । धन्वतिर्गत्यर्थः । किंच नृभिः कर्मनेतृभिर्ऋत्विग्भिः पुनानः पूयमानस्त्वम् आशिरम् आश्रयणं क्षीरादिकम् अभि वासय आच्छादय । संयोजयेति यावत् । आहनसः । 'आहनसवन्तो वचनवन्तः' (निरु. ४.१५) इति यास्कः । शत्रूणामाभिमुख्येन हन्तारोऽभिहन्यमाना अभिषूयमाणाः स्तुतिमन्तः शब्दवन्तो वा विहायसः । महन्नामैतत् । महान्तः ते त्वदीयाः ये मदाः मदहेतवो रसाः सन्ति तेभिः तैः सोमैरस्माभिर्दीयमानैः[3] मघं मंहनीयं धनमस्मभ्यं दातवे दातुम् इन्द्रं चोदय प्रेरय ॥ ॥ ३३ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये सप्तमाष्टके द्वितीयोऽध्यायः संपूर्णः ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
व्याख्याय द्वितीयमध्यायं सप्तमस्य द्वितीयकम् ।
अध्यायं सायणाचार्यस्तृतीयं व्याकरोत्यथ ॥

तत्र 'धर्ता' इति पञ्चर्चं नवमं सूक्तं भार्गवस्य कवेरार्षं जागतं पवमानसोमदेवताकम् । 'धर्ता' इत्यनुक्रान्तम् । गतो विनियोगः ॥

धर्ता दिवः पवते कृत्व्यो रसो दक्षो देवानामनुमाद्यो नृभिः ।
हरिः सृजानो अत्यो न सत्वभिर्वृथा पाजांसि कृणुते नदीष्वा ॥ १ ॥

धर्ता । दिवः । पवते । कृत्व्यः । रसः । दक्षः । देवानाम् । अनुऽमाद्यः । नृऽभिः ।
हरिः । सृजानः । अत्यः । न । सत्वऽभिः । वृथा । पाजांसि । कृणुते । नदीषु । आ ॥ १ ॥

१. त०-अव्या । २. म१.७-आगच्छ । ३. त-म२.६-सोमैरस्मभिर्दीयमानैः ।

धर्ता सर्वस्य धारकः सोमः दिवः अन्तरिक्षात् अन्तरिक्षस्थिताद्दशापवित्रात् पवते क्षरति । कीदृशः सोमः । कृत्व्यः कर्तव्यः । शोध्य इत्यर्थः । रसः रसात्मको देवानां दक्षः बलप्रदः । यद्वा । दक्षः प्रवर्धनीयो देवानामर्थाय । तथा नृभिः नेतृभिर्ऋत्विग्भिः अनुमाद्यः अनुमदनीयः स्तुत्यो वा हरिः हरितवर्णः सत्वभिः प्राणिभिः सादिभिः सृजानः सृज्यमानः अत्यो न अश्व इव स यथा शिक्षितो वृथा अनायासेन गच्छति तद्वत् वृथा अप्रयत्नेन पाजांसि बलानि स्वीयान् वेगान् कृणुते कुरुते । नदीषु वसतीवरीषु । ताभिरित्यर्थः । आ सिञ्च इति शेषः । अथवा अभिषवसमयाभिप्रायः ॥

शूरो न धत्त आयुधा गभस्त्योः स्वः सिषासन्रथिरो गविष्टिषु ।
इन्द्रस्य शुष्ममीरयन्नपस्युभिरिन्दुर्हिन्वानो अज्यते मनीषिभिः ॥ २ ॥

शूरः । न । धत्ते । आयुधा । गभस्त्योः । स्वरिति स्वः । सिसासन् । रथिरः । गोऽइष्टिषु ।
इन्द्रस्य । शुष्मम् । ईरयन् । अपस्युऽभिः । इन्दुः । हिन्वानः । अज्यते । मनीषिऽभिः ॥२॥

अयं सोमः गभस्त्योः हस्तयोः आयुधा आयुधानि शूरो न शूर इव धत्ते धारयति । स्वः स्वर्गसुखसाधनं यज्ञं वा सिषासन् संभक्तुमिच्छन् रथिरः रथवान् । रथादिरच्प्रत्ययः । गविष्टिषु यजमानस्य गवामेषणेषु सत्सु । यजमानार्थं गोसंभजनाय रथवानित्यर्थः । इन्द्रस्य शुष्मं बलम् ईरयन् प्रेरयन् इन्दुः सोमो देवः अपस्युभिः कर्मेच्छुभिः मनीषिभिः मेधाविभिर्ऋत्विग्भिः हिन्वानः प्रेर्यमाणः अज्यते गोभिः ॥

इन्द्रस्य सोम पवमान ऊर्मिणा तविष्यमाणो जठरेष्वा विश ।
प्र णः पिन्व विद्युदभ्रेव रोदसी धिया न वाजाँ उप मासि शश्वतः ॥ ३ ॥

इन्द्रस्य । सोम । पवमानः । ऊर्मिणा । तविष्यमाणः । जठरेषु । आ । विश ।
प्र । नः । पिन्व । विऽद्युत् । अभ्राऽइव । रोदसी इति ।
धिया । न । वाजान् । उप । मासि । शश्वतः ॥ ३ ॥

हे सोम पवमानः पूयमानस्त्वं तविष्यमाणः वर्धयिष्यमाणः सन् इन्द्रस्य जठरेषु ऊर्मिणा स्वभूतया धारया आ विश । अत्र प्रदेशस्य बाहुल्याद्बहुवचनम् । नः अस्मदर्थं विद्युदभ्रेव अभ्राणीव सा यथा दोग्ध्यभ्राणि तद्वत् प्र पिन्व पूरय रोदसी द्यावापृथिव्यौ । किंच धिया कर्मणा न इदानीम् । नेति संप्रत्यर्थे । शश्वतः । बहुनामैतत् । बहून् वाजान् अन्नानि उप समीपे मासि निर्मासि[1] ॥

विश्वस्य राजा पवते स्वर्दृश ऋतस्य धीतिमृषिषाळवीवशत् ।
यः सूर्यस्यासिरेण मृज्यते पिता मतीनामसमष्टकाव्यः ॥ ४ ॥

विश्वस्य । राजा । पवते । स्वःऽदृशः । ऋतस्य । धीतिम् । ऋषिषाट् । अवीवशत् ।
यः । सूर्यस्य । असिरेण । मृज्यते । पिता । मतीनाम् । असमष्टऽकाव्यः ॥ ४ ॥

१. ग—ददासि ।

विश्वस्य जगतः राजा स्वामी सोमः स्वर्दृशः स्वर्गद्रष्टुः सर्वद्रष्टुर्वा ऋतस्य सत्यभूतस्येन्द्रस्य। मनुष्यवाच्यनृतशब्दप्रतियोगिकस्य ऋतशब्दस्य[1] देवार्थः[1]। तत्रापि औचित्येनेन्द्रः परिगृह्यते[2]। तस्य धीतिं मतिं कर्म वा ऋषिषाट् ऋषीणामतीन्द्रियद्रष्टॄणामभिभविता। महत्त्वेन स्वयमपि[1] ऋषिश्रेष्ठत्वादिति[3] भावः। तथा च मन्त्रान्तरं—‘ब्रह्मा देवानां पदवीः कवीनामृषिः’ (ऋ. सं. ९.९६.६) इति। ईदृशः सोमः अवीवशत् अकामयत[4] इन्द्रस्य[4] कर्म। यः सोमः सूर्यस्य देवस्य असितेन क्षेपकेण रश्मिना मृज्यते। असमष्टकाव्यः अन्यैः कविभिरव्याप्तकर्मा सोमः मतीनाम् अस्मदीयानां स्तुतीनां पिता पालकः स्वामी भवतीति शेषः। यद्वा। यो मतीनां पिता असमष्टकाव्यश्च सन् मृज्यते सः पवते इति संबन्धः ॥

**वृषे॑व यू॒था परि॒ कोश॒मर्ष॑स्य॒पामु॒पस्थे॑ वृष॒भः कनि॑क्रदत् ।**
**स इन्द्रा॑य पवसे मत्स॒रिन्त॑मो॒ यथा॒ जेषा॑म समि॒थे त्वोत॑यः ॥ ५ ॥**

वृषाऽइव । यूथा । परि । कोश॑म् । अर्षसि । अपाम् । उपऽस्थे । वृषभः । कनिक्रदत् ।
सः । इन्द्राय । पवसे । मत्सरिन्ऽतमः । यथा । जेषाम । समऽइथे । त्वाऽऊतयः ॥ ५ ॥

हे सोम त्वं वृषेव यूथा[5] यूथानि वृषभ इव स यथा तानि प्रविशति तद्वत् कोशं कोशवत् रसधारकं[6] कलशं परि अर्षसि परिगच्छसि। कुत्रस्थः सन्। अपामुपस्थे अन्तरिक्षे। कीदृशः सन्। वृषभः वर्षिता कनिक्रदत् शब्दं कुर्वन्। सः त्वं हे सोम इन्द्राय इन्द्रार्थं पवसे पूयसे। मत्सरिन्तमः मादयितृतमस्त्वम्। यथा वयं जेषाम जयेम समिथे संग्रामे त्वोतयः त्वया रक्षिताः सन्तः ॥ ॥ १ ॥

‘एष प्र कोशे’ इति पञ्चर्चं दशमं सूक्तम्। ऋष्याद्याः पूर्ववत्। ‘एषः’ इत्यनुक्रान्तम्। गतो विनियोगः ॥

**ए॒ष प्र कोशे॒ मधु॑माँ अचिक्रद॒दिन्द्र॑स्य॒ वज्रो॒ वपु॑षो॒ वपु॑ष्टरः ।**
**अ॒भीमृ॒तस्य॑ सु॒दुघा॑ घृत॒श्चुतो॑ वा॒श्रा अ॑र्षन्ति॒ पय॑सेव धे॒नवः॑ ॥ १ ॥**

एषः । प्र । कोशे । मधुऽमान् । अचिक्रदत् । इन्द्रस्य । वज्रः । वपुषः । वपुःऽतरः ।
अभि । ईम् । ऋतस्य । सुऽदुघाः । घृतऽश्चुतः । वाश्राः । अर्षन्ति । पयसाऽइव । धेनवः ॥ १ ॥

एषः अयं सोमः मधुमान् मधुररसः कोशे द्रोणकलशे प्र अचिक्रदत् प्रकर्षेण शब्दायते। कीदृश एषः। इन्द्रस्य वज्रः वज्रस्थानीयः। मारकत्वेन वज्रवत् प्रहरणसाधकत्वात् वज्रत्वोपचारः। एष एव हि सोमो वज्रे इन्द्रस्य साधनं। तथा वपुषः बीजानां वप्तुः अन्यस्मात् वपुष्टरः अतिशयेन वप्ता। बीजावापस्य सोमकर्तृकत्वात् ‘सोमो वै रेतोधाः’ (तै. सं. २. १. १. ६) इति श्रुतेः। ईम् अस्य ऋतस्य सत्यफलस्य सोमस्य। धारा इति शेषः। ताः अभि अर्षन्ति अभिगच्छन्ति। कीदृश्यस्ताः। सुदुघाः सुष्ठु दोग्ध्र्यः फलानां घृतश्चुतः उदकस्य रसस्य वा क्षारयित्र्यः वाश्राः शब्दयन्त्यः। किमिव। पयसा युक्ता वाश्राः धेनवः इव इति ॥

१. ठ३.म७–°शब्दस्य देवोऽर्थः; म६–°शब्दस्येवार्थः। २. त-मु–प्रतिगृह्यते। ३. ग–स्वयं ऋषिष्वपि श्रेष्ठत्वादिति। ४. ग–कामयते। ५. ग-त१.५.७-म१ २.७–‘यूथा’ नास्ति। ६. ग–हविषः संधारकं, त-म६–रसं धारकं, म१.७–रसधारकं।

स पूर्व्यः पवते यं दिवस्परि श्येनो मथायदिषितस्तिरो रजः ।
स मध्व आ युवते वेविजान इत्कृशानोरस्तुर्मनसाह बिभ्युषा ॥ २ ॥

सः । पूर्व्यः । पवते । यम् । दिवः । परि । श्येनः । मथायत् । इषितः । तिरः । रजः ।
सः । मध्वः । आ । युवते । वेविजानः । इत् । कृशानोः । अस्तुः । मनसा । अह । बिभ्युषा ॥२॥

सः सोमः पूर्व्यः प्रत्नः पवते पूयते। अभिषूयत इत्यर्थः। यं सोमं दिवः द्युलोकात् श्येनः इषितः स्वमात्रा प्रेषितः[1] सन् परि मथायत् पर्यमथ्नात् तिरः तीर्णं तिरस्कुर्वन्। किम्। रजः तृतीयं लोकम्। सः एव सोमः मध्वः मधुररसं सोमम् आ युवते यौति पृथक्करोति द्युलोकात्। स्वयं वेविजान इत् चलन् अधो गच्छन् कृशानोः सोमपालस्य अस्तुः शरक्षेप्तुः सकाशात् बिभ्युषा भीतेन मनसाह[2]। मध्व आ युवत इति संबन्धः। कृशानोः सोमपालत्वं ब्राह्मणे स्पष्टमुक्तं—'कृशानुः सोमपालः सव्यस्य पदः' (ऐ. ब्रा. ३ २६) ॥

ते नः पूर्वास उपरास इन्दवो महे वाजाय धन्वन्तु गोमते ।
ईक्षेण्यासो अह्यो न चारवो ब्रह्मब्रह्म ये जुजुषुर्हविर्हविः ॥ ३ ॥

ते । नः । पूर्वासः । उपरासः । इन्दवः । महे । वाजाय । धन्वन्तु । गोऽमते ।
ईक्षेण्यासः । अह्यः । न । चारवः । ब्रह्मऽब्रह्म । ये । जुजुषुः । हविःऽहविः ॥ ३ ॥

ते वक्ष्यमाणाः पूर्वासः पूर्वे उपरासः। उपरता अन्येऽप्युपराः। तादृशाः इन्दवः सोमाः महे महते गोमते नः मह्यं वाजाय अन्नाय अन्नलाभार्थं धन्वन्तु गच्छन्तु प्राप्नुवन्तु। कीदृशा इन्दवः। ईक्षेण्यासः ईक्षणीयाः[3] संदर्शनीयाः अह्यः न। अह्यः स्त्रिय आहननात्। ता इव सुवेषाः स्त्रिय इव चारवः रमणीयाः। स[4] इत्युक्तं क इत्याह। ये इन्दवः ब्रह्मब्रह्म सर्वमपि स्तोत्रमन्त्रजातं हविर्हविः सर्वमपि हविर्जातं च जुजुषुः सेवन्ते ॥

अयं नो विद्वान्वनवद्वनुष्यत इन्दुः सत्राचा मनसा पुरुष्टुतः ।
इनस्य यः सदने गर्भमादधे गवामुरुब्जमभ्यर्षति व्रजम् ॥ ४ ॥

अयम् । नः । विद्वान् । वनवत् । वनुष्यतः । इन्दुः । सत्राचा । मनसा । पुरुऽस्तुतः ।
इनस्य । यः । सदने । गर्भम् । आऽदधे । गवाम् । उरुब्जम् । अभि । अर्षति । व्रजम् ॥४॥

अयम् इन्दुः सोमः नः अस्मान् वनुष्यतः हन्तुमिच्छतः शत्रून् विद्वान् जानन् हन्तुं वनवत् हन्तु तान्। केन साधनेन। सत्राचा सहाञ्चता मनसा। कीदृशः। पुरुष्टुतः बहुभिः स्तुतः। यः सोमः इनस्य ईश्वरस्याग्नेः सदने स्थाने भूमौ वेद्यां वा वर्तमानः गर्भम् आदधे धारयत्योषधीषु। अथ गवाम् अस्मदीयानां पशुभिरपहृतानाम् उरुब्जं प्रभूतानामपां पयसो जनकं व्रजम् अभ्यर्षति गच्छति। स वनवदिति ॥

चक्रिर्दिवः पवते कृत्व्यो रसो महाँ अदब्धो वरुणो हुरुग्यते ।
असावि मित्रो वृजनेषु यज्ञियोऽत्यो न यूथे वृषयुः कनिक्रदत् ॥ ५ ॥

१. ख-अ१.७—प्रेरितः। २. त—नमसा सह; त३-म२.७—मनसा सह; भ६—नमसा सह, मु—मनसा अह सह। ३. ग-त१.३.४.७-भ१.४.७—'ईक्षणीयाः' नास्ति। ४. त१.२.४.५—यत।

देवाव्यो॑ नः परिषि॒च्यमा॑नाः॒ क्षयं॑ सु॒वीरं॑ धन्वन्तु॒ सोमाः॑ ।
आ॒य॒ज्यवः॑ सुम॒तिं वि॒श्ववा॑रा॒ होता॑रो॒ न दि॑वि॒यजो॑ म॒न्द्रत॑माः ॥ २६ ॥

दे॒व॒ऽअव्यः॑ । नः॒ । प॒रि॒ऽसि॒च्यमा॑नाः । क्षय॑म् । सु॒ऽवीर॑म् । ध॒न्व॒न्तु॒ । सोमाः॑ ।
आ॒ऽय॒ज्यवः॑ । सु॒ऽम॒तिम् । वि॒श्वऽवा॑राः । होता॑रः । न । दि॒वि॒ऽयजः॑ । म॒न्द्रऽत॑माः ॥ २६ ॥

देवाव्यः। अवतेस्तर्पणार्थस्य ‘अवितृस्तृतन्त्रिभ्य ईः’ इतीप्रत्ययः। ‘उदात्तस्वरितयोर्यणः’ इति जसः स्वरितत्वम्। देवानां तर्पयितारः परिषिच्यमानाः परितः पात्रेषु सिच्यमानाः सोमाः नः अस्माकं सुवीरं शोभनपुत्रं क्षयं गृहं धन्वन्तु प्रेरयन्तु। तथा आयज्यवः आभिमुख्येन यष्टव्या आभिमुख्येन प्रयच्छन्तो वा अत एव विश्ववाराः सर्वैर्वरणीयाः सुमतिम् अनुग्रहबुद्धिं च प्रेरयन्तु। कीदृशाः। होतारो न होतारो यथा देवानिन्द्रादीन् स्तुवन्ति एवं दिवियजः दिवि द्युलोके[1] स्थितानिन्द्रादीन् देवान् यजन्तः। दिविशब्दे ‘तत्पुरुषे कृति बहुलम्’ इति सप्तम्या अलुक्। मन्द्रतमाः अत्यन्तं मदकराः ॥

ए॒वा दे॑व दे॒वता॑ते पवस्व म॒हे सो॑म॒ प्सर॑से देव॒पानः॑ ।
म॒हश्चि॒द्धि ष्मसि॑ हि॒ताः स॑म॒र्ये कृ॒धि सु॑ष्था॒ने रोद॑सी पुना॒नः ॥ २७ ॥

ए॒व । दे॒व॒ । दे॒वऽता॑ते । प॒व॒स्व॒ । म॒हे । सो॒म॒ । प्सर॑से । दे॒वऽपानः॑ ।
म॒हः । चि॒त् । हि । स्मसि॑ । हि॒ताः । स॒ऽम॒र्ये ।
कृ॒धि । सु॒स्था॒ने इति॑ सु॒ऽस्था॒ने । रोद॑सी॒ इति॑ । पु॒ना॒नः ॥ २७ ॥

हे देव द्योतमान स्तोतव्य वा हे सोम देवपानः देवैः पातव्यस्त्वं देवताते देवैस्तते विस्तृते यज्ञे महे महते प्सरसे भक्षणाय देवानां पानाय एव एवं पवस्व क्षर। ततो वयं हिताः त्वया प्रेरिताः सन्तः समर्ये मरणधर्मसहिते संग्रामे महश्चित् महतो बलाधिकानपि शत्रून् स्मसि हि अभिभवेम खलु। किंच पुनानः पूयमानस्त्वं रोदसी द्यावापृथिव्यौ सुष्ठाने अस्माकं शोभनावासस्थाने सत्यौ कृधि कुरु ॥

अश्वो॒ न क्र॑दो॒ वृष॑भि॒र्युजा॒नः सिं॒हो न भी॒मो मन॑सो॒ जवी॑यान् ।
अ॒र्वा॒चीनैः॑ प॒थिभि॒र्ये रजि॑ष्ठा॒ आ प॑वस्व सौमन॒सं न॑ इन्दो ॥ २८ ॥

अश्वः॑ । न । क्र॒दः॒ । वृष॑ऽभिः । यु॒जा॒नः । सिं॒हः । न । भी॒मः । मन॑सः । जवी॑यान् ।
अ॒र्वा॒चीनैः॑ । प॒थिऽभिः॑ । ये । रजि॑ष्ठाः । आ । प॒व॒स्व॒ । सौ॒म॒न॒सम् । नः॒ । इ॒न्दो॒ इति॑ ॥ २८ ॥

हे सोम वृषभिः ऋत्विग्भिः सोममभिषुण्वद्भिः युजानः योज्यमानस्त्वम् अश्वो न अश्व इव क्रदः क्रन्दसि शब्दायसे। कीदृशः। सिंहो न सिंह इव भीमः शत्रूणां भयंकरः तथा मनसः अपि जवीयान् वेगवत्तरः। अर्वाचीनैः अभिमुखैः पथिभिः मार्गैः ये मार्गाः रजिष्ठाः अत्यन्तमृजवो भवन्ति। ‘विभाषर्जोश्छन्दसि’ इत्यृकारस्य रादेशः। हे इन्दो दीप्यमान सोम तैर्मार्गैः नः अस्माकं सौमनसं सौमनस्यम् आ पवस्व आगमय ॥

1. न-भ६-मु-द्युलोके’ ।

शतं धारा देवजाता असृग्रन्त्सहस्रमेनाः कवयो मृजन्ति ।
इन्दो सनित्रं दिव आ पवस्व पुरएतासि महतो धनस्य ॥ २९ ॥

शतम् । धाराः । देवऽजाताः । असृग्रन् । सहस्रम् । एनाः । कवयः । मृजन्ति ।
इन्दो इति । सनित्रम् । दिवः । आ । पवस्व । पुरःऽएता । असि । महतः । धनस्य ॥ २९ ॥

हे सोम देवजाताः देवार्थं प्रादुर्भूताः शतं शतसंख्याकास्त्वदीयाः धाराः असृग्रन् सृज्यन्ते । ततः कवयः क्रान्तदर्शिन ऋत्विजः सहस्रं बहुविधाः एनाः त्वदीया धाराः मृजन्ति अलंकुर्वन्ति । यद्वा । सहस्रमनेकधा मृजन्ति शोधयन्ति । हे इन्दो सनित्रं भजनसाधनं धनं दिवः द्युलोकादस्माकं पुत्रादीनां च आ पवस्व आप्रापय । कुतोऽस्य धनमिति चेत् तत्राह । महतः प्रभूतस्य[1] धनस्य पुरएता पुरतो गन्ता असि भवसि । तस्मादिहेति ॥

दिवो न सर्गा असससृग्रमह्नां राजा न मित्रं प्र मिनाति धीरः ।
पितुर्न पुत्रः क्रतुभिर्यतान आ पवस्व विशे अस्या अजीतिम् ॥ ३० ॥

दिवः । न । सर्गाः । अससृग्रम् । अह्नाम् । राजा । न । मित्रम् । प्र । मिनाति । धीरः ।
पितुः । न । पुत्रः । क्रतुऽभिः । यतानः । आ । पवस्व । विशे । अस्यै । अजीतिम् ॥ ३० ॥

दिवो न यथा दिवो द्योतमानस्यादित्यस्य[2] अह्नां संबन्धिनः सर्गाः रश्मयः अससृग्रं विसृज्यन्ते तद्वत् सोमस्य सर्गाः । सृज्यन्त इति सर्गा धाराः । विसृज्यन्ते । सृजेर्व्यत्ययेन कर्मणि लङि ‘ बहुलं छन्दसि ’ इति रुडागमः । धीरः प्राज्ञः राजा अयं सोमः मित्रं सखायं न प्र मिनाति न हिनस्ति । क्रतुभिः कर्मभिः यतानः यतमानः पुत्रः पितुर्न पितुर्यथापराभवं[3] करोति तद्वत् कर्मभिर्यतमानस्त्वम् अस्यै विशे प्रजायै अजीतिम्* अपराभवम् आ पवस्व आप्रापय । यथा न पराजिता भवन्ति तथा कुर्वित्यर्थः[3] ॥  ॥ १६ ॥

प्र ते धारा मधुमतीरसृग्रन्वारान्यत्पूतो अत्येष्यव्यान् ।
पवमान पवसे धाम गोनां जज्ञानः सूर्यमपिन्वो अर्कैः ॥ ३१ ॥

प्र । ते । धाराः । मधुऽमतीः । असृग्रन् । वारान् । यत् । पूतः । अतिऽएषि । अव्यान् ।
पवमान । पवसे । धाम । गोनाम् । जज्ञानः । सूर्यम् । अपिन्वः । अर्कैः ॥ ३१ ॥

ते तव स्वभूताः मधुमतीः मधुमत्यः धाराः प्र असृग्रन् सदा प्रसृज्यन्ते यत् यदा पूतः पवित्रैरभिषुतस्त्वम् अव्यान् अविमयान् वारान् वालान् पवित्राणि अत्येषि अतीत्य गच्छसि । किंच हे पवमान धाम धारकं गोनां गवां पयो लक्षीकृत्य पवसे । ततः जज्ञानः जायमानस्त्वम् अर्कैः अर्चनीयैः स्वतेजोभिः सूर्यम् आदित्यम् अपिन्वः पूरयसि ॥

---

१. त-भ१ मु-प्रभूत° ।  २. त-म६-द्योतमानस्यमादित्यस्य ।  ३. म-पितुर्यथा पुत्रः पराभवं न करोति तथा अस्यै विशे यथा न पराजयो भवति तथा त्वमापवस्व रक्षणं कुर्वितीत्यर्थः ।  *त-म१.२.४.५-मु-अजीतिमपराजितिं ।

कनिक्रदुदनु पन्थामृतस्य शुक्रो वि भास्यमृतस्य धाम ।
स इन्द्राय पवसे मत्सरवान्हिन्वानो वाचं मतिभिः कवीनाम् ॥ ३२ ॥

कनिक्रदत् । अनु । पन्थाम् । ऋतस्य । शुक्रः । वि । भासि । अमृतस्य । धाम ।
सः । इन्द्राय । पवसे । मत्सरऽवान् । हिन्वानः । वाचम् । मतिऽभिः । कवीनाम् ॥ ३२ ॥

अभिषूयमाणः स सोमः ऋतस्य सत्यभूतस्य यज्ञस्य पन्थानं मार्गमभि कनिक्रदत् पुनः-पुनः शब्दायते । अथ प्रत्यक्षः । अमृतस्य अमरणधर्मस्य धाम स्थानभूतः । मरणरहित इत्यर्थः । तादृशः शुक्रः शुक्लवर्णस्त्वं वि भासि विशेषेण राजसि । मत्सरवान् मदकररसयुक्तः सः त्वम् इन्द्राय इन्द्रार्थं पवसे क्षरसि । कीदृशः । कवीनां स्तोतॄणां मतिभिः[1] सह वाचं शब्दं हिन्वानः प्रेरयन् पवसे ॥

दिव्यः सुपर्णोऽव चक्षि सोम पिन्वन्धाराः कर्मणा देववीतौ ।
एन्दो विश कलशं सोमधानं क्रन्दन्निहि सूर्यस्योप रश्मिम् ॥ ३३ ॥

दिव्यः । सुऽपर्णः । अव । चक्षि । सोम । पिन्वन् । धाराः । कर्मणा । देवऽवीतौ ।
आ । इन्दो इति । विश । कलशम् । सोमऽधानम् । क्रन्दन् । इहि । सूर्यस्य । उप । रश्मिम् ॥ ३३ ॥

हे सोम दिव्यः दिवि भवः सुपर्णः सुपतनस्त्वम् अव चक्षि अवस्तात् पश्य[2] । चष्टेर्लेटि सिपि व्यत्ययेन परस्मैपदम् । किं कुर्वन् । देववीतौ देवानां हविर्भक्षणस्थाने यज्ञे कर्मणा धाराः पिन्वन् क्षरन् । किंच हे इन्दो सोमधानं कलशम् आ विश । क्रन्दन् शब्दायमानस्त्वं सूर्यस्य[3] प्रेरकस्यादित्यस्य रश्मिं कान्तिम् उप इहि उपगच्छ ॥

तिस्रो वाच ईरयति प्र वह्निर्ऋतस्य धीतिं ब्रह्मणो मनीषाम् ।
गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः ॥ ३४ ॥

तिस्रः । वाचः । ईरयति । प्र । वह्निः । ऋतस्य । धीतिम् । ब्रह्मणः । मनीषाम् ।
गावः । यन्ति । गोऽपतिम् । पृच्छमानाः । सोमम् । यन्ति । मतयः । वावशानाः ॥ ३४ ॥

वह्निः वोढा यजमानः तिस्रो वाचः ऋग्यजुःसामात्मिकाः स्तुतीः प्रेरयति । तथा ऋतस्य यज्ञस्य धीतिं धारयित्रीं ब्रह्मणः परिवृढस्य सोमस्य मनीषां मनस ईशित्रीं कल्याणीं वाचं च प्रेरयति । किंच गोपतिं वृषभं यथा गावोऽभिगच्छन्ति तद्वद्गवां स्वामिनं सोमं गावः पृच्छमानाः पृच्छन्त्यः सत्यः यन्ति । स्वपयसा मिश्रयितुमभिगच्छन्ति । तथा वावशानाः कामयमानाः मतयः स्तोतारः सोमं यन्ति स्तोतुमभिगच्छन्ति ॥

सोमं गावो धेनवो वावशानाः सोमं विप्रा मतिभिः पृच्छमानाः ।
सोमः सुतः पूयते अज्यमानः सोमे अर्कास्त्रिष्टुभः सं नवन्ते ॥ ३५ ॥

सोमम् । गावः । धेनवः । वावशानाः । सोमम् । विप्राः । मतिऽभिः । पृच्छमानाः ।
सोमः । सुतः । पूयते । अज्यमानः । सोमे । अर्काः । त्रिऽस्तुभः । सम् । नवन्ते ॥ ३५ ॥

---

१. भ१(२)-मतिभिः स्तुतिभिः । २. द-भ६-मु-पश्य च । ३. ग-ता१-भ५-सूर्यस्य सर्वस्य ।

धेनवः प्रीणयित्र्यः गावः सोमं वावशानाः कामयमाना भवन्ति। विप्राः मेधाविनः स्तोतारः मतिभिः[1] पृच्छमानाः पृच्छन्तो भवन्ति। अज्यमानः गोभिः सिच्यमानः सुतः अभिषुतः सोमः ऋत्विग्भिः परिपूयते। तथा त्रिष्टुभः त्रिष्टुप्छन्दस्काः अर्काः अस्माभिः क्रियमाणा एते मन्त्राः सोमे सं नवन्ते संगच्छन्ते ॥ ॥ १७ ॥

एवा नः सोम परिषिच्यमान आ पवस्व पूयमानः स्वस्ति ।
इन्द्रमा विश बृहता रवेण वर्धया वाचं जनया पुरंधिम् ॥ ३६ ॥

एव । नः । सोम । परिऽसिच्यमानः । आ । पवस्व । पूयमानः । स्वस्ति ।
इन्द्रम् । आ । विश । बृहता । रवेण । वर्धय । वाचम् । जनय । पुरम्ऽधिम् ॥ ३६ ॥

हे सोम परिषिच्यमानः परितः पात्रेषु सिच्यमानः पूयमानः त्वं नः अस्माकम् एव स्वस्ति अविनाशम् आ पवस्व आप्रापय। किंच बृहता महता रवेण शब्देन सह इन्द्रम् आ विश प्रविश। तथा[2] वाचं स्तुतिलक्षणां वर्धय। किंच पुरंधिं बहुधियं प्रज्ञां जनय अस्मभ्यमुत्पादय। वाक्यभेदादनिघातः ॥

आ जागृविर्विप्र ऋता मतीनां सोमः पुनानो असदच्चमूषु ।
सपन्ति यं मिथुनासो निकामा अध्वर्यवो रथिरासः सुहस्ताः ॥ ३७ ॥

आ । जागृविः । विप्रः । ऋता । मतीनाम् । सोमः । पुनानः । असदत् । चमूषु ।
सपन्ति । यम् । मिथुनासः । निऽकामाः । अध्वर्यवः । रथिरासः । सुऽहस्ताः ॥ ३७ ॥

जागृविः जागरणशीलः ऋता। 'सुपां सुलुक्' इति षष्ठ्या आकारः। ऋतानां सत्यानां मतीनां स्तुतीनां विप्रः ज्ञाता सः सोमः पुनानः पूयमानः सन् चमूषु चमसेषु आ असदत् आसीददिति। मिथुनासः परस्परं संगताः निकामाः नितरां कामयमानाः रथिरासः यज्ञस्य नेतारः सुहस्ताः कल्याणपाणयः अध्वर्यवः पवित्रे यं सोमं सपन्ति स्पृशन्ति। 'षप समवाये'। 'सपतिः स्पृशतिकर्मा' (निरु. ५.१६) इति नैरुक्ताः ॥

स पुनान उप सूरे न धातोभे अप्रा रोदसी वि ष आवः ।
प्रिया चिद्यस्य प्रियसास ऊती स तू धनं कारिणे न प्र यंसत् ॥ ३८ ॥

सः । पुनानः । उप । सूरे । न । धाता ।
आ । उभे इति । अप्राः । रोदसी इति । वि । सः । आवरित्यावः ।
प्रियाः । चित् । यस्य । प्रियसासः । ऊती । सः । तु । धनम् । कारिणे । न । प्र । यंसत् ॥ ३८ ॥

पुनानः पूयमानः सः सोमः इन्द्रम् उप गच्छति। तत्र दृष्टान्तः। सूरे न यथा सूर्यं धाता संवत्सरः उपगच्छति। 'संवत्सरो वै धाता संवत्सरेणैवास्मै प्रजाः प्रजनयति' (तै. ब्रा. १.७.२.१) इत्याम्नानात्। किंच उभे रोदसी द्यावापृथिव्यौ आ अप्राः स्वमहिम्ना आपूरयति। तथा सः सोमः वि आवः स्वतेजसा तमांसि विवृणोति। वृणोतेः 'मन्त्रे घस' इति

१. म१(२)—मतिभिः स्तुतिभिः। २. ग-त३.४.६-म१.६.७—तथा वर्धया; त१.२.७-अ१—तथा वर्धय।

च्छेर्लुङ् । 'छन्दस्यपि दृश्यते' इत्याडागमः[1] । 'पूर्वपदात्' इति स इत्यस्य सांहितिकं षत्वम् । °प्रिया । सहृया आकारः । प्रियस्य °यस्य सोमस्य यद्वा[2] प्रिया प्रियाणि प्रयच्छतो यस्य सोमस्य[2] °प्रियसासः अत्यन्तं प्रियतमा धाराः °ऊती ऊत्यै रक्षणाय भवन्ति । °सः °नु क्षिप्रमस्मभ्यं °धनं °प्र °यंसत् प्रयच्छतु । यच्छतेर्लेटि सिप्यडागमः । तत्र दृष्टान्तः । °कारिणे °न भुतकाय स्तुतिं यथा प्रयच्छन्ति तद्वत् ॥

स वर्धिता वर्धनः पूयमानः सोमो मीढ्वाँ अभि नो ज्योतिषावीत् ।
येना नः पूर्वे पितरः पदज्ञाः स्वर्विदो अभि गा अद्रिमुष्णन् ॥ ३९ ॥

सः । वर्धिता । वर्धनः । पूयमानः । सोमः । मीढ्वान् । अभि । नः । ज्योतिषा । आवीत् ।
येन । नः । पूर्वे । पितरः । पदऽज्ञाः । स्वःऽविदः । अभि । गाः । अद्रिम् । उष्णन् ॥ ३९ ॥

°वर्धिता देवानां स्वकलाप्रदानेन वर्धयिता °वर्धनः स्वयं वर्धमानः °पवित्रेण °पूयमानः °मीढ्वान् कामानां सेक्ता °सः °सोमः °नः अस्मान् °ज्योतिषा स्वतेजसा °अभि °आवीत् अभिरक्षतु । °येन सोमेन °पदज्ञाः पणिभिरपहृतानां गवां पदानि जानन्तः °स्वर्विदः सर्वज्ञाः[3] सूर्यं जानन्तो वा[3] °नः अस्माकं °पूर्वे चिरंतनाः °पितरः अङ्गिरसः °गाः पशूनभिलक्ष्य °अद्रिमुष्णन् शिलोच्चयमुष्णन् । सोमतेजसान्धकारावृतं शिलोच्चयं गत्वा पशूनाहरन्नित्यर्थः । उषिरिह मुष्णातिसमानकर्मा । यद्वा । मुष्णातेर्लङि वर्णलोपः ॥

अक्रान्त्समुद्रः प्रथमे विधर्मञ्जनयन्प्रजा भुवनस्य राजा ।
वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे सुवान इन्दुः ॥ ४० ॥

अक्रान् । समुद्रः । प्रथमे । विऽधर्मन् । जनयन् । प्रऽजाः । भुवनस्य । राजा ।
वृषा । पवित्रे । अधि । सानौ । अव्ये । बृहत् । सोमः । ववृधे । सुवानः । इन्दुः ॥ ४० ॥

°समुद्रः । यस्मादापः[4] समुद्द्रवन्ति स समुद्रः । अपां वर्षकः[4] °राजा सोमः °प्रथमे विस्तृते °भुवनस्य उदकस्य °विधर्मन् विधारकेऽन्तरिक्षे °प्रजाः °जनयन् उत्पादयन् °अक्रान् सर्वमतिक्रामति । क्रमतेर्लुङि तिपीडभावे वृद्धौ च कृतायां सिच्लोपे मकारस्य 'मो नो धातोः' इति नकारे रूपम् । °वृषा कामानां वर्षिता °सुवानः अभिषूयमाणः °इन्दुः दीप्तः सः °सोमः °अधि आधिक्ये °सानौ समुच्छ्रिते °अव्ये अविमये[5] °पवित्रे °बृहत् प्रभूतं °ववृधे वर्धते ॥ ॥ १८ ॥

महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान् ।
अदधादिन्द्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिन्दुः ॥ ४१ ॥

महत् । तत् । सोमः । महिषः । चकार । अपाम् । यत् । गर्भः । अवृणीत । देवान् ।
अदधात् । इन्द्रे । पवमानः । ओजः । अजनयत् । सूर्ये । ज्योतिः । इन्दुः ॥ ४१ ॥

---

१. त-भ६-मु-इत्यडागमः । २. त१.२.५.६.७-'यद्वा ...सोमस्य' नास्ति । ३. त-सर्वं जानतो वा; भ६-सर्वं जानतो । ४. ग-समुद्रवत्यस्मादाप इति । ५. त१.२.५.६.७-अविमये; त७-अविमये ।

महिषः महान् पूज्यो वा सोमः महत् प्रभूतं तत् कर्म चकार अकरोत्। किं तत्। अपां गर्भः उदकानां गर्भभूतो जलाभिवृद्धिहेतुत्वात् स सोमः देवान् अवृणीत समभजतेति यत् तत् कृतवानिति। किञ्च पवमानः पूयमानः सोमः ओजः सोमपानेन[1] जन्यं बलम् इन्द्रे अदधात् व्यदधात्। तथा इन्दुः सोमः सूर्ये ज्योतिः तेजः अजनयत्॥

मत्सि वायुमिष्टये राधसे च मत्सि मित्रावरुणा पूयमानः।
मत्सि शर्धो मारुतं मत्सि देवान्मत्सि द्यावापृथिवी देव सोम॥ ४२॥

मत्सि। वायुम्। इष्टये। राधसे। च। मत्सि। मित्रावरुणा। पूयमानः।
मत्सि। शर्धः। मारुतम्। मत्सि। देवान्। मत्सि। द्यावापृथिवी इति। देव। सोम॥ ४२॥

हे सोम त्वं वायुं मत्सि मादय[2]। किमर्थम्। इष्टये अस्माकमेषणायाभाय[3] राधसे धनाय च। तथा पूयमानः पवित्रेण त्वं मित्रावरुणा मित्रावरुणौ च मत्सि तर्पयसि। किञ्च मारुतं मरुतां स्वभूतं शर्धः बलं च मत्सि। तथा देवान् इन्द्रादीन् मत्सि हर्षयसि। हे देव स्तोतव्य[4] हे सोम द्यावापृथिवी द्यावापृथिव्यौ च मत्सि मादय। एतान् हर्षयुक्तान् कृत्वास्मभ्यं धनं प्रयच्छेत्यर्थः॥

ऋजुः पवस्व वृजिनस्य हन्तापामीवां बाधमानो मृधश्च।
अभिश्रीणन्पयः पयसाभि गोनामिन्द्रस्य त्वं तव वयं सखायः॥ ४३॥

ऋजुः। पवस्व। वृजिनस्य। हन्ता। अप। अमीवाम्। बाधमानः। मृधः। च।
अभिऽश्रीणन्। पयः। पयसा। अभि। गोनाम्। इन्द्रस्य। त्वम्। तव। वयम्। सखायः॥ ४३॥

हे सोम ऋजुः ऋजुगमनः[5] सन् पवस्व क्षर। किं कुर्वन्। वृजिनस्य उपद्रवस्य हन्ता। अमीवां रोगरूपं राक्षसम् अप बाधमानः। तथा अस्मदीयान् मृधः हिंसकान् शत्रून् च बाधमानः सन् पवस्व। ततः पयः क्षीरमयं रसं गोनां गवां पयसा क्षीरेण अभिश्रीणन् अभि-संयोजयन् पात्राणि अभि गच्छसि। अपि च त्वम् इन्द्रस्य सखासि हे सोम तव वयं सखायः स्तुत्यस्तोतृत्वमधुपाहर्यत्वलक्षणेन सखिभूताः स्मः॥

मध्वः सूदं पवस्व वस्व उत्सं वीरं च न आ पवस्वा भगं च।
स्वदस्वेन्द्राय पवमान इन्दो रयिं च न आ पवस्वा समुद्रात्॥ ४४॥

मध्वः। सूदम्। पवस्व। वस्वः। उत्सम्। वीरम्। च। नः। आ। पवस्व। भगम्। च।
स्वदस्व। इन्द्राय। पवमान। इन्दो इति। रयिम्। च। नः। आ। पवस्व। समुद्रात्॥ ४४॥

हे सोम मध्वः माधुर्यस्य सूदं क्षारयितारं घनीभूतं वा वस्वः वसुनो धनस्य उत्सम् उत्सवत्कं रसं पवस्व। किञ्च नः अस्मभ्यं वीरं पुत्रम् आ पवस्व आमावय। तथा भगं भजनीयं धनं च देहि। हे इन्दो पवमानः पूयमानः सन् इन्द्राय स्वदस्व रुचितो भव।

---

१. म६—सोमपान*। २. म१(२) मादयसि। ३. म१(२)—*मैषणीयायाभाय। ४. म—द्योतमान। ५. त४—ऋजुगमनः।

महत्त्वं नः अस्मभ्यं समुद्रात् अन्तरिक्षात् रयिं धनं पुत्रं वा। राति ददाति क्षीरमिति रयिर्गौर्वा। गौ[1] वा आ[1] पवस्व देहि ॥

**सोमः सुतो धारयात्यो न हित्वा सिन्धुर्न निम्नमभि वाज्यक्षाः ।**
**आ योनिं वन्यमसदत्पुनानः समिन्दुर्गोभिरसरत्समद्भिः ॥ ४५ ॥**

सोमः । सुतः । धारया । अत्यः । न । हित्वा । सिन्धुः । न । निम्नम् । अभि । वाजी । अक्षारिति ।
आ । योनिम् । वन्यम् । असदत् । पुनानः । सम् । इन्दुः । गोभिः । असरत् । सम् । अत्ऽभिः ॥ ४५ ॥

सुतः अभिषुतः सोमः धारया स्वीयया अत्यो न अतनशीलोऽश्व इव हित्वा गत्वा। हिनोतेः क्त्विचि[2] रूपम्। किंच वाजी बलवान् सोमः सिन्धुर्न यथा सिन्धुः स्यन्दमाना नदी निम्नं प्रदेशमभिगच्छति तद्वन्निम्नमधरभाविनं कलशम् अभि अक्षाः अभिक्षरति। ततः पुनानः पूयमानः सोमः वन्यं वृक्षमयं योनिं स्थानं कलशम् आ असदत् आसीददिति। सोऽयम् इन्दुः सोमः गोभिः गोविकारैः क्षीरादिभिः श्रयणैः सम् असरत संसरति। तथा अद्भिः वसतीवरीभिश्च संगच्छते ॥ ॥ १९ ॥

**एष स्य ते पवत इन्द्र सोमश्चमूषु धीर उशते तवस्वान् ।**
**स्वर्चक्षा रथिरः सत्यशुष्मः कामो न यो देवयतामसर्जि ॥ ४६ ॥**

एषः । स्यः । ते । पवते । इन्द्र । सोमः । चमूषु । धीरः । उशते । तवस्वान् ।
स्वःऽचक्षाः । रथिरः । सत्यऽशुष्मः । कामः । न । यः । देवऽयताम् । असर्जि ॥ ४६ ॥

हे इन्द्र उशते कामयमानाय ते तुभ्यं त्वदर्थं धीरः प्राज्ञः तवस्वान् वेगवान् स्यः सः एषः सोमः चमूषु चमसेषु पवते क्षरति। स्वर्चक्षाः सर्वदर्शनः रथिरः रथवान् सत्यशुष्मः यथार्थबलः यः सोमः देवयतां देवानिच्छतां यजमानानां कामो न काम इव असर्जि असृज्यत। अभीप्सितेत्यर्थः ॥

**एष प्रत्नेन वयसा पुनानस्तिरो वर्पांसि दुहितुर्दधानः ।**
**वसानः शर्म त्रिवरूथमप्सु होतेव याति समनेषु रेभन् ॥ ४७ ॥**

एषः । प्रत्नेन । वयसा । पुनानः । तिरः । वर्पांसि । दुहितुः । दधानः ।
वसानः । शर्म । त्रिऽवरूथम् । अप्ऽसु । होताऽइव । याति । समनेषु । रेभन् ॥ ४७ ॥

प्रत्नेन पूर्वकालीनेन वयसा अन्नेन पुनानः पूयमानः। अन्तरिक्षया धारया क्षरन्नित्यर्थः। तादृशः दुहितुः सर्वस्य दोग्ध्र्याः पृथिव्याः वर्पांसि। वर्प इति रूपनाम वृणोति शरीरमिति। रूपाणि तिरः दधानः स्वतेजसा तिरस्कुर्वन्नाच्छादयन् तथा त्रिवरूथं त्रिभूमिकोपेतम्। यद्वा। त्रयः शीतातपवर्षाः। तेषां निवारकम्। शर्म यज्ञगृहं वसानः आच्छादयन् अप्सु वसतीवरीषु स्थितः एषः सोमः होतेव यथा होता स्तुतिशब्दं कुर्वन् यज्ञेषु याति तद्वत् रेभन् शब्दायमानः सन् समनेषु। सम्यगनित कर्माणि एषु प्रगल्भा भवन्तीति समना यज्ञाः। तेषु याति गच्छति ॥

---

१. त१.२.३ ५.६.७-मर.६-नी आ; त४—नौ आ। २. त१.२.५.६.७-म६—क्विपि; त४—क्विमिपि।

नू नुस्त्वं रथिरो देव सोम परि स्रव चुम्वोः पूयमानः ।
अप्सु स्वादिष्ठो मधुमाँ ऋतावा देवो न यः सविता सत्यमन्मा ॥ ४८ ॥

नु । नः । त्वम् । रथिरः । देव । सोम । परि । स्रव । चम्वोः । पूयमानः ।
अप्ऽसु । स्वादिष्ठः । मधुऽमान् । ऋतऽवा । देवः । न । यः । सविता । सत्यऽमन्मा ॥ ४८ ॥

हे देव काम्यमान हे सोम रथिरः रथवान् त्वं नः अस्माकं स्वभूते यज्ञे चम्वोः अधिषवणफलकयोः पूयमानः सन् अप्सु वसतीवरीषु नु क्षिप्रं परि स्रव परितः क्षर। स्वादिष्ठः स्वादुतमोऽत एव मधुमान् माधुर्ययुक्तः ऋतावा यज्ञवान् सविता सर्वस्य प्रेरकः यः त्वं देवो न देव इव सत्यमन्मा सत्यस्तुतिको भवसि स त्वं परिस्रवेति ॥

अभि वायुं वीत्यर्षा गृणानोऽभि मित्रावरुणा पूयमानः ।
अभी नरं धीजवनं रथेष्ठामभीन्द्रं वृषणं वज्रबाहुम् ॥ ४९ ॥

अभि । वायुम् । वीती । अर्ष । गृणानः । अभि । मित्रावरुणा । पूयमानः ।
अभि । नरम् । धीऽजवनम् । रथेऽस्थाम् । अभि । इन्द्रम् । वृषणम् । वज्रऽबाहुम् ॥ ४९ ॥

हे सोम गृणानः स्तूयमानस्त्वं वीती। 'सुपां सुलुक्' इति चतुर्थ्याः पूर्वसवर्णदीर्घः। वीत्यै पानाय वायुम् अभि अर्ष अभिगच्छ। तथा पवित्रेण[1] पूयमानः त्वं मित्रावरुणा मित्रावरुणौ च पानायाभिगच्छ। किंच नरं सर्वस्य नेतारं धीजवनं बुद्ध्या समं वेगं कुर्वाणं रथेष्ठां रथेस्थां रथे तिष्ठन्तम्। अनेनाश्विनावभिधीयेते। एकवचनं प्रत्येकविवक्षया समुदायविवक्षया[2] वा। एतादृशावश्विनौ च अभि गच्छ। तथा वृषणं कामानां वर्षकं वज्रबाहुं वज्रयुक्तबाहुम् इन्द्रं च त्वं पानाय अभि गच्छ ॥

अभि वस्त्रा सुवसनान्यर्षाभि धेनूः सुदुघाः पूयमानः ।
अभि चन्द्रा भर्तवे नो हिरण्याभ्यश्वान्रथिनो देव सोम ॥ ५० ॥

अभि । वस्त्रा । सुऽवसनानि । अर्ष । अभि । धेनूः । सुऽदुघाः । पूयमानः ।
अभि । चन्द्रा । भर्तवे । नः । हिरण्या । अभि । अश्वान् । रथिनः । देव । सोम ॥ ५० ॥

हे सोम त्वमस्माकं[3] सुवसनानि सुपरिधानानि वस्त्रा वस्त्राणि अभि अर्ष अभिगमय। यद्वा। सुवसनानि शोभनवसनसहितानि वस्त्रा आच्छादकानि धनान्यभिगमय। किंच पूयमानः पवित्रेण त्वं सुदुघाः सुष्ठु पयसो दोग्ध्रीः धेनूः नवप्रसूतिका गाः अभि प्रापय। अपि च चन्द्रा चन्द्राण्याह्लादकानि हिरण्या हिरण्यानि भर्तवे भरणाय पोषणाय नः अस्माकम् अभि गमय। तथा हे देव स्तोतव्य हे सोम रथिनः रथवतः अश्वान् अस्माकम् अभि प्रापय ॥ ॥ २० ॥

अभी नो अर्ष दिव्या वसून्यभि विश्वा पार्थिवा पूयमानः ।
अभि येन द्रविणमश्नवामाभ्यार्षेयं जमदग्निवन्नः ॥ ५१ ॥

१. त-म६-पवित्रे । २. त-'समुदायविवक्षया' नास्ति । ३. ग-त-म१ २.४.६-अस्माकं ।

अभि । नः । अर्ष । दिव्या । वसूनि । अभि । विश्वा । पार्थिवा । पूयमानः ।
अभि । येन । द्रविणम् । अश्नवाम । अभि । आर्षेयम् । जमदग्निऽवत् । नः ॥ ५१ ॥

हे सोम पवित्रेण पूयमानः त्वं दिव्या दिव्यानि दिवि भवानि वसूनि धनानि नः अस्माकम् अभि अर्ष अभिगमय । तथा पार्थिवा पार्थिवानि पृथिव्यां भवानि विश्वा सर्वाणि धनानि अभि गमय । तथा येन त्वदीयेन सामर्थ्येन द्रविणं धनं वयम् अभि अश्नवाम अभिव्याप्नुयाम तत् सामर्थ्यमभिगमय । किंच आर्षेयम् आर्षाणामृषिपुत्राणां योग्यं धनं जमदग्निवत् जमदग्नेर्यथा त्वं प्रापयः एवं नः अस्माकमपि अभि अर्ष । यद्वा । आर्षेयमार्षाणां योग्यं सम्भं जमदग्नेः स्वभूतं सम्भं यथा स्वादुतममकार्षीः एवमस्माकं तादृशं सम्भं स्वादुतमं कुर्विति कुत्सो नामर्षिः प्रार्थयते ॥

**अया पवा पवस्वैना वसूनि माँश्चत्व इन्दो सरसि प्र धन्व ।**
**ब्रध्नश्चिदत्र वातो न जूतः पुरुमेधश्चित्तकवे नरं दात् ॥ ५२ ॥**

अया । पवा । पवस्व । एना । वसूनि । माँश्चत्वे । इन्दो इति । सरसि । प्र । धन्व ।
ब्रध्नः । चित् । अत्र । वातः । न । जूतः । पुरुऽमेधः । चित् । तकवे । नरम् । दात् ॥ ५२ ॥

हे सोम अया अनया पवा पवमानया धारया सह एना एनानि वसूनि धनानि पवस्व क्षर । पवा । ' पूङ् पवने ' । ' अन्येभ्योऽपि दृश्यन्ते ' इति क्विप्प्रत्ययः । आर्धधातुकलक्षणो गुणः । ' सावेकाचः० ' इति तृतीयाया उदात्तत्वम् । तथा हे इन्दो त्वं माँश्चत्वे मन्यमानानां चातके सरसि उदके वसतीवरीलक्षणे प्र धन्व प्रगच्छ । ततः अत्र अस्मिन् सोमे पूयमाने सति ब्रध्नश्चित् सर्वेषां प्रज्ञापको मूलभूतो आदित्योऽपि वातो न वात इव जूतः वेगितः सन् किंच पुरुमेधश्चित् बहुविधयज्ञ इन्द्रश्चिदिन्द्रोऽपि तकवे । तकतिर्गतिकर्मसु पठितः । आस्माकायाध्वर्यवे गम्यमानाय । सोममभिगच्छते स्तुतिभिर्मह्यं नरं कर्मनेतारं पुत्रं दात प्रयच्छतु । हे सोम त्वया तर्पितौ सन्ताविन्द्रादित्यौ* मह्यं पुत्रं प्रयच्छतामित्यर्थः[३] ॥

**उत न एना पवया पवस्वाधि श्रुते श्रवाय्यस्य तीर्थे ।**
**षष्टिं सहस्रा नैगुतो वसूनि वृक्षं न पक्वं धूनवद्रणाय ॥ ५३ ॥**

उत । नः । एना । पवया । पवस्व । अधि । श्रुते । श्रवाय्यस्य । तीर्थे ।
षष्टिम् । सहस्रा । नैगुतः । वसूनि । वृक्षम् । न । पक्वम् । धूनवत् । रणाय ॥ ५३ ॥

हे सोम उत अपि च श्रवाय्यस्य सर्वैः श्रवणीयस्य सोमस्य तव श्रुते प्रसिद्धे । यद्वा । षष्ठ्यर्थे चतुर्थी । श्रुतस्य[४] शब्दस्य तीर्थे स्थाने नः अस्माकं स्वभूते यज्ञे एना अनया पवया पूयमानया धारया अधि[५] अधिकं पवस्व क्षर । नैगुतः । नीचीनं गच्छन्ति[६] शत्रवो यस्मा इति निगुतः शत्रवः । तेषां हन्तृत्वेन संबन्धी सोऽयं सोमः षष्टिं सहस्रा षष्टिसंख्याकानि सहस्राणि

१. भ७–सर्वाणि वसूनि । २. त-भ६–वर्तमानानां । ३. ग-त१-म१.५.७–' हे...*मित्यर्थः ' नास्ति । * त–संतौ चंद्रादित्यौ । ४. ग-त-भ-मु–श्रुतः । ५. ग-त-भ–' अधि ' नास्ति । ६. त१.२.४.५–गंतारा; त६–यंता; त७–गच्छन्; म६–गच्छंते ।

वसूनि धनानि रणाय शत्रूणां जयार्थं धूनुहि अस्माकमकम्पयत्। प्राप्यच्छदिति यावत्। कम्पमिव। वृक्षं न पक्वं फलं वृक्षे यथा कम्पयति फलार्थी तद्वत् ॥

मही इमे अस्य वृषनाम शूषे मांश्चत्वे वा पृशने वा वधत्रे ।
अस्वापयन्निगुतः स्नेहयच्चापामित्राँ अपाचितो अचेतः ॥ ५४ ॥

महि । इमे इति । अस्य । वृषनाम । शूषे इति । मांश्चत्वे । वा । पृशने । वा । वधत्रे इति ।
अस्वापयत् । निऽगुतः । स्नेहयत् । च । अप । अमित्रान् । अप । अचितः । अच । इतः ॥ ५४ ॥

महि महती[1] प्रभूते वृषनाम। 'सुपां सुलुक्' इति सुपो लुक्। वृषनामनी वर्षणनमने। सवनानां वर्षणं शत्रूणां नमनम्। इमे एते द्वे कर्मणी अस्य सोमस्य शूषे सुखकरे भवतः। ये च कर्मणी मांश्चत्वे। अश्वनामैतत्, मक्षु चरतीति। अश्वैः क्रियमाणे युद्धे। [illegible]मिह गृह्यते। वा अपि वा पृशने स्पर्शनसाध्ये बाहुयुद्धे वधत्रे शत्रूणां हिंसनशीले भवतः। सोऽयं निगुतः नीचैः शब्दायमानान् शत्रून् अस्वापयत् सम्यगसूषुपत्। अवधीदित्यर्थः। किंच स्नेहयत् प्राद्रावयत् संग्रामात्। अथ प्रत्यक्षकृतः। हे सोम स त्वम् अमित्रान् शत्रून् अप अच अपगमय। तथा अचितः अग्निचयनमकुर्वतो नास्तिकांश्च इतः अस्मत्सकाशात् अप अच अपगमय। अचतिर्गतिकर्मा ॥

सं त्री पवित्रा वितातान्येष्यन्वेकं धावसि पूयमानः ।
असि भगो असि दात्रस्य दातासि मघवा मघवद्भ्य इन्दो ॥ ५५ ॥

सम् । त्री । पवित्रा । विऽततानि । एषि । अनु । एकम् । धावसि । पूयमानः ।
असि । भगः । असि । दात्रस्य । दाता । असि । मघऽवा । मघवत्ऽभ्यः । इन्दो इति ॥ ५५ ॥

हे सोम विततानि विस्तृतानि त्री त्रीणि पवित्राणि[2] अग्निवायुसूर्यात्मकानि पवित्राणि सम् एषि सम्यक् प्राप्नोषि। किंच पूयमानः त्वम् एकम् अविवालकृतं पवित्रम् अनु धावसि अनुगच्छसि। किंच त्वं भगः भजनीयः असि। तथा दात्रस्य देयस्य धनस्य दाता असि। कथमस्य[3] धनदत्वमिति[4] चेत् तदुच्यते। हे इन्दो सोम[3] मघवद्भ्यः धनवद्भ्योऽन्येभ्योऽपि त्वं मघवा असि अतिशयेन धनवान् भवसि ॥   ॥ ३१ ॥

एष विश्ववित्पवते मनीषी सोमो विश्वस्य भुवनस्य राजा ।
द्रप्साँ ईरयन्विदथेष्विन्दुर्वि वारमव्यं समयाति याति ॥ ५६ ॥

एषः । विश्वऽवित् । पवते । मनीषी । सोमः । विश्वस्य । भुवनस्य । राजा ।
द्रप्सान् । ईरयन् । विदथेषु । इन्दुः । वि । वारम् । अव्यम् । समया । अति । याति ॥ ५६ ॥

विश्ववित् सर्वस्य वेत्ता अत एव मनीषी मेधावी विश्वस्य भुवनस्य सर्वस्य लोकस्य राजा स्वामी एषः सोमः पवते क्षरति। एतदेव विवृणोति। विदथेषु। विदन्ति आगच्छन्त

१. त-म-महते। २. भ१(२)-पवित्रा पवित्राणि; मु-पवित्रा। ३. ग-भवति; किंच। ४. त१ भ१.४-धनत्वमिति; त२.३.४.५.६.७ भ२.५.६-धनदत्वमिति।

वेषाणीति यज्ञा विशन्ति लभन्त इति विवधा यज्ञाः । तेषु द्रप्सान् रसकणान् ईरयन् प्रेरयन् इन्दुः सोमः अव्ययम् अविमयं वारं वालं पवित्रं समया उभयतः वि अति याति व्यतीत्य गच्छति ॥

इन्दुं रिहन्ति महिषा अदब्धाः पदे रेभन्ति कवयो न गृध्राः ।
हिन्वन्ति धीरा दशभिः क्षिपाभिः समञ्जते रूपमपां रसेन ॥ ५७ ॥

इन्दुम् । रिहन्ति । महिषाः । अदब्धाः । पदे । रेभन्ति । कवयः । न । गृध्राः ।
हिन्वन्ति । धीराः । दशऽभिः । क्षिपाभिः । सम् । अञ्जते । रूपम् । अपाम् । रसेन ॥ ५७ ॥

महिषाः महान्तः पूज्या वा अत एव अदब्धाः कैश्चिदप्यहिंसिता देवाः इन्दुं सोमं रिहन्ति लिहन्ति आस्वादयन्ति । किंच देवाः सोममुशन्तः सन्तः पदे तस्यास्य सोमस्य धारास्थाने रेभन्ति शब्दायन्ते । तत्र दृष्टान्तः । कवयो न गृध्राः । धनमभिकाङ्क्षमाणाः कवयः स्तोतारो यथा स्तुवन्तः शब्दायन्ते[1] तद्वत् । धीराः कर्मणि कुशला ऋत्विजः दशभिः एतत्संख्याकाभिः क्षिपाभिः अङ्गुलीभिस्तमिमं सोमं हिन्वन्ति अभिषवार्थं प्रेरयन्ति । अपि च रूपं सोमस्य[2] रूपम्[2] अंशुम् अपां वसतीवर्याख्यानां रसेन समञ्जते सम्यक् सेचयन्ति ॥

त्वया वयं पवमानेन सोम भरे कृतं वि चिनुयाम शश्वत् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ५८ ॥

त्वया । वयम् । पवमानेन । सोम । भरे । कृतम् । वि । चिनुयाम । शश्वत् ।
तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ ५८ ॥

हे सोम पवमानेन पवित्रेण पूयमानेन त्वया सहायेन भरे । संग्रामनाम । संग्रामे शश्वत् बहु कृतं कर्तव्यं वयं वि चिनुयाम विशेषेण कुर्याम । यस्मात्तव साहाय्येन कर्माणि कुर्मः तत् तस्मात् नः अस्मान् मित्रः वरुणः अदितिः एतन्नामिका सिन्धुः एतदभिधाना च पृथिवी उत अपि च द्यौः एते मित्रादयो ऽस्मान् मामहन्तां पूजयन्तु धनादिदानेन ॥ ॥ २२ ॥

'अभि नः' इति द्वादशर्चं द्वितीयं सूक्तम् । वृषागिरो राज्ञः पुत्रोऽम्बरीषो भरद्वाजपुत्र ऋजिश्वोभौ सहितावस्यर्षी । इदमुत्तराणि च त्रीण्यानुष्टुभानि । अत्र त्वेकादशी बृहती । पवमानः सोमो देवता । तथा चानुक्रम्यते—'अभि नो द्वादशाम्बरीष ऋजिश्वा चानुष्टुभं तु बृहत्युपान्त्या' इति । गतो विनियोगः ॥

अभि नो वाजसातमं रयिमर्ष पुरुस्पृहम् ।
इन्दो सहस्रभर्णसं तुविद्युम्नं विभ्वासहम् ॥ १ ॥

अभि । नः । वाजऽसातमम् । रयिम् । अर्ष । पुरुऽस्पृहम् ।
इन्दो इति । सहस्रऽभर्णसम् । तुविऽद्युम्नम् । विभ्वऽसहम् ॥ १ ॥

हे इन्दो दीप्त[3] वाजसातमम् अत्यन्तं बलप्रदमन्नप्रदं वा रयिं धनं पुत्रं वा नः अस्माकम् अभि अर्ष अभिगमय । कीदृशम् । पुरुस्पृहं बहुभिः स्पृहणीयं सहस्रभर्णसं

१. त–शब्दायति; म६–शब्दयति । २. न१.२.५.६.७–'सोमस्य रूपं' नास्ति; म६–सोमस्य ।
३. ग–त३–म१.२.६.७–'दीप्त' नास्ति ।

बहुविधभरणम् । अनेकपोषणयुक्तमित्यर्थः । तुविद्युम्नम् । 'द्युम्नं द्योततेर्यशो वान्नं वा' (निरु. ५.५) इति यास्कः । बहुलं बहुयशोयुक्तं वा विभ्वसहम् । विभ्व इति महन्नाम । महतोऽभिभवितारम् ॥

परि ष्य सुवानो अव्ययं रथे न वर्माव्यत ।
इन्दुरभि द्रुणा हितो हियानो धाराभिरक्षाः ॥ २ ॥

परि । स्य । सुवानः । अव्ययम् । रथे । न । वर्म । अव्यत ।
इन्दुः । अभि । द्रुणा । हितः । हियानः । धाराभिः । अक्षारिति ॥ २ ॥

सुवानः सूयमानः[1] स्यः स सोमः अव्ययम् अविमयं पवित्रं परि पवते । तत्र दृष्टान्तः । रथे न यथा रथे स्थितः[2] पुरुषः वर्म कवचम् अव्यत परिव्ययति । व्ययतेर्लुङि वर्णलोपश्छान्दसः । अभि हितः अभितः प्रेरितः यद्वा स्तोतृभिरभिष्टुतः सः इन्दुः सोमः द्रुणा द्रुममयेन द्रोणकलशेन हियानः । 'हि गतौ वृद्धौ च' । तेन पूर्यमाणः सन् धाराभिः अक्षाः क्षरति । क्षरतेर्लुङि रूपम् ॥

परि ष्य सुवानो अक्षा इन्दुरव्ये मदच्युतः ।
धारा य ऊर्ध्वो अध्वरे भ्राजा नैति गव्ययुः ॥ ३ ॥

परि । स्यः । सुवानः । अक्षारिति । इन्दुः । अव्ये । मदऽच्युतः ।
धारा । यः । ऊर्ध्वः । अध्वरे । भ्राजा । न । एति । गव्यऽयुः ॥ ३ ॥

सुवानः सूयमानः स्यः सः इन्दुः सोमः मदच्युतः मदार्थं देवैः प्रेरितः सन् अव्ये अविमये पवित्रे परि अक्षाः परितः क्षरति । अध्वरे ऊर्ध्वः समुच्छ्रितः सर्वेषां मुख्यः यः सोमः गव्ययुः गोकामः यद्वा क्षीरादिकं कामयमानः सन् धारा धारया सह एति गच्छति । भ्राजा न भ्राजमानया दीप्त्या यथान्तरिक्षे गच्छति तद्वत् ॥

स हि त्वं देव शश्वते वसु मर्ताय दाशुषे ।
इन्दो सहस्रिणं रयिं शतात्मानं विवाससि ॥ ४ ॥

सः । हि । त्वम् । देव । शश्वते । वसु । मर्ताय । दाशुषे ।
इन्दो इति । सहस्रिणम् । रयिम् । शतऽआत्मानम् । विवाससि ॥ ४ ॥

हे देव सोम सः त्वं शश्वते पुत्रादिरूपत्वेन बहवे मर्ताय मनुष्याय दाशुषे हविर्दत्तवते यजमानाय वसु धनं[3] मह्यं च विवाससि प्रेरयसि । एकवाक्यतापक्षे हि तिङन्तस्य हियोगादनिघातः स्यात् ॥

वयं ते अस्य वृत्रहन्वसो वस्वः पुरुस्पृहः ।
नि नेदिष्ठतमा इषः स्याम सुम्नस्याध्रिगो ॥ ५ ॥

१. त१.२.५–पूयमानः; त४–पूयमानः । २. म१.२.४–अवस्थितः । ३. म–धनं प्रयच्छति तथा मति हे इंदो सहस्रसंख्याकं बहुरूपं धनं ।

वयम् । ते । अस्य । वृत्रऽहन् । वसो इति । वस्वः । पुरुऽस्पृहः ।
नि । नेदिष्ठऽतमाः । इषः । स्याम । सुम्नस्य । अध्रिगो इत्यध्रिऽगो ॥ ५ ॥

हे वृत्रहन् शत्रूणां हन्तः सोम अस्य पूतावस्थस्य ते तव स्वभूताः वयं स्मः । ततो हे वसो वासयितः पुरुस्पृहः बहुभिः स्पृहणीयस्य वस्वः वसुनः धनस्य त्वया दीयमानस्य वयं नि नितरां नेदिष्ठतमाः अत्यन्तमन्तिकतमाः स्याम । तथा इषः अन्नस्य किंच हे अध्रिगो अधृतगमन सोम सुम्नस्य सुखस्य वयमन्तिकतमाः स्याम भवेम ॥

द्विर्यं पञ्च स्वयशसं स्वसारो अद्रिसंहतम् ।
प्रियमिन्द्रस्य काम्यं प्रस्नापयन्त्यूर्मिणम् ॥ ६ ॥

द्विः । यम् । पञ्च । स्वऽयशसम् । स्वसारः । अद्रिऽसंहतम् ।
प्रियम् । इन्द्रस्य । काम्यम् । प्रऽस्नापयन्ति । ऊर्मिणम् ॥ ६ ॥

द्विः पञ्च दशसंख्याकाः स्वसारः कर्मकरणार्थमितस्ततो गच्छन्त्योऽङ्गुलयः स्वयशसं स्वभूतयशस्कम् अद्रिसंहतं ग्रावभिरभिषुतम् इन्द्रस्य प्रियं काम्यं सर्वैः काम्यमानम् ऊर्मिणं धाराभिस्तद्वन्तं यं सोमं प्रस्नापयन्ति वसतीवरीभिः प्रकर्षेण लेपयन्ति यजमानाः तं पुनन्तीत्युत्तरत्र संबन्धः ॥ ॥ २३ ॥

परि त्यं हर्यतं हरिं बभ्रुं पुनन्ति वारेण ।
यो देवान्विश्वाँ इत्परि मदेन सह गच्छति ॥ ७ ॥

परि । त्यम् । हर्यतम् । हरिम् । बभ्रुम् । पुनन्ति । वारेण ।
यः । देवान् । विश्वान् । इत् । परि । मदेन । सह । गच्छति ॥ ७ ॥

हर्यतं सर्वैः स्पृहणीयं हरिं हरितवर्णं बभ्रुं बभ्रुवर्णं च त्यं तं सोमं वारेण वालेन पवित्रेण परि पुनन्ति परिशोधयन्ति । यः सोमः विश्वान् सर्वानिन्द्रादीन् देवान् इत् देवानेव मदेन मादकेन रसेन सह परि गच्छति ॥

अस्य वो ह्यवसा पान्तो दक्षसाधनम् । यः सूरिषु श्रवो बृहद्दधे स्वर्ण हर्यतः ॥ ८ ॥

अस्य । वः । हि । अवसा । पान्तः । दक्षऽसाधनम् ।
यः । सूरिषु । श्रवः । बृहत् । दधे । स्वः । न । हर्यतः ॥ ८ ॥

वः । छान्दसो वचनव्यत्ययः । हिरवधारणे । यो यूयम् अस्य सोमस्य अवसा रक्षणेन दक्षसाधनं बलस्य साधनं रसं पान्तः पिबन्तो भवथ । स्वर्ण आदित्य इव हर्यतः सर्वैः काम्यमानः यः अयं सोमः सूरिषु स्तोत्राणि प्रेरयत्सु स्तोतृषु बृहत् महत् प्रभूतं श्रवः अन्नं दधे विदधे । स्थापयतीति यावत् ॥

स वां यज्ञेषु मानवी इन्दुर्जनिष्ट रोदसी ।
देवो देवी गिरिष्ठा अस्रेधन्तं तुविष्वणि ॥ ९ ॥

सः । वाम् । यज्ञेषु । मानवी इति । इन्दुः । जनिष्ट । रोदसी इति ।
देवः । देवी इति । गिरिऽस्थाः । अस्रेधन् । तम् । तुविऽस्वनि ॥ ९ ॥

हे मानवी मानव्यौ मनोः स्वभूते हे देवी द्योतमाने हे रोदसी द्यावापृथिव्यौ वां युवयोः यज्ञेषु सः इन्दुः सोमः अजनिष्ट अजनि अन्तरिक्षे देवः स्वतेजसा सर्वं प्रकाशयन् पृथिव्यां गिरिष्ठाः ग्रावसु स्थितः । तं जातं सोमं तुविष्वणि बहुस्वने उपरे यज्ञे वा अस्रेधन् ऋत्विजो ग्रावभिरघ्नन् । अभ्यषुण्वन्निति यावत् ॥

**इन्द्राय सोम पातवे वृत्रघ्ने परि षिच्यसे ।**
**नरे च दक्षिणावते देवाय सदनासदे ॥ १० ॥**

इन्द्राय । सोम । पातवे । वृत्रऽघ्ने । परि । सिच्यसे ।
नरे । च । दक्षिणाऽवते । देवाय । सदनऽसदे ॥ १० ॥

हे सोम वृत्रघ्ने वृत्रस्य हन्त्रे इन्द्राय । षष्ठ्यर्थे चतुर्थी । इन्द्रस्य पातवे पानार्थं परि षिच्यसे ऋत्विग्भिः पात्रेषु सिच्यसे । दशापवित्राभिर्वा । किंच दक्षिणावते ऋत्विग्भ्यो दक्षिणाप्रदानेन तद्वते देवाय देवार्थं हवींषि ददते सदनासदे यज्ञगृहे सीदते नरे मनुष्याय यजमानाय सर्वं फलप्रदानार्थं परिषिच्यसे ॥

**ते प्रत्नासो व्युष्टिषु सोमाः पवित्रे अक्षरन् ।**
**अपप्रोथन्तः सनुतर्हुरश्चितः प्रातस्ताँ अप्रचेतसः ॥ ११ ॥**

ते । प्रत्नासः । विऽउष्टिषु । सोमाः । पवित्रे । अक्षरन् ।
अपऽप्रोथन्तः । सनुतः । हुरःऽचितः । प्रातः । तान् । अप्रऽचेतसः ॥ ११ ॥

व्युष्टिषु उषसां व्युच्छनेषु प्रकाशनेषु प्रत्नासः प्रत्नाः ते सोमाः पवित्रे अक्षरन् क्षरन्ति । ये सोमाः सनुतः अन्तर्हितान् अप्रचेतसः प्रज्ञानरहितान्[1] हुरश्चितः । स्तेननामैतत् । कौटिल्येन चिन्वन्तीति । तान् मायाविनः स्तेनान् प्रातः प्रातःकाल एव अपप्रोथन्तः । अपप्रोथनं व्यापप्रेरणम् । अपप्रेरयन्तः स्थानात् निराकुर्वन्तो भवन्ति । ते क्षरन्तीति सम्बन्धः ॥

**तं सखायः पुरोरुचं यूयं वयं च सूरयः ।**
**अश्याम वाजगन्ध्यं सनेम वाजपस्त्यम् ॥ १२ ॥**

तम् । सखायः । पुरःऽरुचम् । यूयम् । वयम् । च । सूरयः ।
अश्याम । वाजऽगन्ध्यम् । सनेम । वाजऽपस्त्यम् ॥ १२ ॥

हे सखायः स्तोतारः सूरयः प्राज्ञाः यूयं वयं च यजमानाः पुरोरुचं पुरतो रोचमानं वाजगन्ध्यं बलकरसाधुगन्धोपेतं सोमम् अश्याम अश्नीयाम पिबेम । किंच वाजपस्त्यम् अन्नयुक्तगृहसहितं यद्वा बलकरं सोमं सनेम संभजेमहि । सोमेन बलान्नगृहादीनि भवन्तीत्यर्थः ॥ ॥२५॥

१. स-भ६-मु-प्रज्ञारहितान् ।

'आ हर्यताय' इत्यष्टर्चं तृतीयं सूक्तम् । कश्यपगोत्रौ रेभसूनू एतत्संज्ञौ ऋषी । आद्या बृहती सतोबृहत्यः । पवमानसोमो देवता । तथा चानुक्रान्तम्—'आ हर्यतायाष्टौ रेभसूनू काश्यपौ बृहत्याद्या' इति । गतो विनियोगः ॥

आ हर्यताय धृष्णवे धनुस्तन्वन्ति पौंस्यम् ।
शुक्रां वयन्त्यसुराय निर्णिजं विपामग्रे महीयुवः ॥ १ ॥

आ । हर्यताय । धृष्णवे । धनुः । तन्वन्ति । पौंस्यम् ।
शुक्राम् । वयन्ति । असुराय । निःऽनिजम् । विपाम् । अग्रे । महीयुवः ॥ १ ॥

हर्यताय सर्वैः स्पृहणीयाय धृष्णवे शत्रूणां धर्षणशीलाय सोमाय पौंस्यं पुंस्त्वस्याभिव्यञ्जकं धनुः आ तन्वन्ति । धनुषि ज्यां कुर्वन्तीति । सोमस्य धाराविसर्गार्थं वितायमानं पवित्रमभिधीयते । तदेव[1] विवृणोति[2] । महीयुवः पूजाकामा ऋत्विजः विपां मेधाविनां देवानाम् अग्रे पुरस्तात् शुक्रां शुक्लवर्णां निर्णिजं यया सोमो निर्णिज्यते ताम् असुराय बलवते[3] वयन्ति वितन्वन्ति । दशापवित्रं विस्तारयन्तीत्यर्थः । वयतिर्गतिकर्मा ॥

अध क्षपा परिष्कृतो वाजाँ अभि प्र गाहते ।
यदी विवस्वतो धियो हरिं हिन्वन्ति यातवे ॥ २ ॥

अध । क्षपा । परिऽकृतः । वाजान् । अभि । प्र । गाहते ।
यदि । विवस्वतः । धियः । हरिम् । हिन्वन्ति । यातवे ॥ २ ॥

क्षपा । 'सुपां सुलुक्' इति पञ्चम्या आकारः । क्षपायाः रात्रेः अध अनन्तरं प्रातःकाले परिष्कृतः । भूषणार्थे 'संपर्युपेभ्यः' इति करोतेः सुडागमः । अद्भिरलंकृतः । यद्वा । क्षपयित्र्यां सेनायामलंकृतः । सोमः[4] वाजान् अन्नानि बलानि वाभिलक्ष्य प्र गाहते प्रगच्छति । विवस्वतः परिचरणवतो यजमानस्य धियः कर्मसाधनभूता अङ्गुलयः हरिं हरितवर्णमेतमंशुं यातवे पात्राण्यभिगमनाय यदि हिन्वन्ति प्रेरयन्ति तर्हि भवनानि गच्छतीति ॥

तमस्य मर्जयामसि मदो य इन्द्रपातमः ।
यं गाव आसभिर्दधुः पुरा नूनं च सूरयः ॥ ३ ॥

तम् । अस्य । मर्जयामसि । मदः । यः । इन्द्रऽपातमः ।
यम् । गावः । आसऽभिः । दधुः । पुरा । नूनम् । च । सूरयः ॥ ३ ॥

अस्य सोमस्य तं रसं मर्जयामसि मर्जयामः शोधयामः । अलंकुर्मो वा । यः मदः मदकरो रसः इन्द्रपातमः इन्द्रेणात्यन्तं पातव्यो भवति । किंच गावः गन्तारः सूरयः स्तोतारः पुरा च नूनम् इदानीं च यं सोमरसम् आसभिः आस्यैः दधुः धारयन्ति । पिबन्तीति यावत् । यद्वा । गावो धेनवो यं सोमं तृणाद्यवस्थितमाभिरास्यैर्दधुर्धारयन्ति तृणरूपेण भक्षयन्ति ॥

१. त१.२–तादृश च; त४-भ६–तादृक् । २. त१.२.३.४.५.६-भ१.२.४.६–विवृणोतीति । ३. भ-त३-भ५.६–बलवते सोमाय । ४. ग–तदनंतरं प्रातःसवने ।

तं गाथया पुराण्या पुनानमभ्यनूषत ।
उतो कृपन्त धीतयो देवानां नाम बिभ्रतीः ॥ ४ ॥

तम् । गाथया । पुराण्या । पुनानम् । अभि । अनूषत ।
उतो इति । कृपन्त । धीतयः । देवानाम् । नाम । बिभ्रतीः ॥ ४ ॥

पुनानं पूयमानं तं सोमं पुराण्या पुरा कृतया गाथया स्तुत्या अभ्यनूषत स्तोतारः अभिष्टुवन्ति । 'णू स्तवने' । लुङि रूपम् । उतो अपि च नाम कर्मार्थं नमनं बिभ्रतीः बिभ्राणाः धीतयः अङ्गुलयः देवानां सोमरूपहविष्प्रदानाय कृपन्त कल्पयन्ति समर्था भवन्ति । 'कृपू सामर्थ्ये' ॥

तमुक्षमाणमव्यये वारे पुनन्ति धर्णसिम् ।
दूतं न पूर्वचित्तय आ शासते मनीषिणः ॥ ५ ॥

तम् । उक्षमाणम् । अव्यये । वारे । पुनन्ति । धर्णसिम् ।
दूतम् । न । पूर्वऽचित्तये । आ । शासते । मनीषिणः ॥ ५ ॥

उक्षमाणम् अद्भिः सिच्यमानं धर्णसिं सर्वस्य धारकं तं सोमम् अव्यये अविमये वारे वाले पवित्रे पुनन्ति शोधयन्ति । ततः मनीषिणः मेधाविनो यजमानाः तमिमं सोमं दूतं न दूतमिव पूर्वचित्तये देवानां पूर्वमेव प्रज्ञापनाय आ शासते प्रार्थयन्ते ॥    ॥ २५ ॥

स पुनानो मदिन्तमः सोमश्चमूषु सीदति ।
पशौ न रेत आदधत्पतिर्वचस्यते धियः ॥ ६ ॥

सः । पुनानः । मदिन्ऽतमः । सोमः । चमूषु । सीदति ।
पशौ । न । रेतः । आऽदधत् । पतिः । वचस्यते । धियः ॥ ६ ॥

मदिन्तमः अत्यन्तं मादयिता[1] सः सोमः पुनानः पूयमानः सन् चमूषु चमसेषु सीदति । ततः पशौ न यथा पशौ कश्चिद्वृषभो रेत आदधाति तद्वच्चमसादिषु रेतः स्वीयं रसम् आदधत् आदधानः धियः कर्मणः पतिः पालयितायं सोमः वचस्यते अभिष्टूयते[2] ॥

स मृज्यते सुकर्मभिर्देवो देवेभ्यः सुतः ।
विदे यदासु संददिर्महीरपो वि गाहते ॥ ७ ॥

सः । मृज्यते । सुकर्मऽभिः । देवः । देवेभ्यः । सुतः ।
विदे । यत् । आसु । सम्ऽददिः । महीः । अपः । वि । गाहते ॥ ७ ॥

देवेभ्यः देवार्थं सुतः अभिषुतः देवः द्योतमानः स्तोतव्यो वा सः सोमः सुकर्मभिः ऋत्विग्भिः मृज्यते परिमृज्यते । यत् यदायं सोमः आसु प्रजासु संददिः सम्यग्धनदानशील इति विदे ज्ञायते तदानीं महीः महतीः अपः वसतीवरीः वि गाहते विशेषेणाभिगच्छति । यदा सोममभिषुण्वन्ति तदा तेभ्यो धनं प्रयच्छतीत्यर्थः ॥

---

१. स१.२.३.४.५.६-म–मदयिता । २. स-म२.४.६-मु–अभिषूयते; म१.७–अभिष्यूयते ।

सुत इन्दो पवित्र आ नृभिर्यतो वि नीयसे ।
इन्द्राय मत्सरिन्तमश्चमूष्वा नि षीदसि ॥ ८ ॥

सुतः । इन्दो इति । पवित्रे । आ । नृऽभिः । यतः । वि । नीयसे ।
इन्द्राय । मत्सरिन्ऽतमः । चमूषु । आ । नि । सीदसि ॥ ८ ॥

हे इन्दो सुतः अभिषुतः यतः आयतः सर्वतो विस्तृतस्त्वं नृभिः कर्मनेतृभिर्ऋत्विग्भिः पवित्रे वि नीयसे विशेषेण नीयमानो भवसि । ततः मत्सरिन्तमः अतिशयेन मादयिता त्वम् इन्द्राय इन्द्रार्थं चमूषु चमसेषु आ नि षीदसि[1] ॥ ॥ २६ ॥

'अभी नवन्ते' इति नवर्चं चतुर्थं सूक्तम् । पूर्ववदृषिदेवते । सर्वा अनुष्टुभः । तथा चानुक्रम्यते— 'अभी नवन्ते नव' इति । गतो विनियोगः ॥

अभी नवन्ते अद्रुहः प्रियमिन्द्रस्य काम्यम् ।
वत्सं न पूर्व आयुनि जातं रिहन्ति मातरः ॥ १ ॥

अभि । नवन्ते । अद्रुहः । प्रियम् । इन्द्रस्य । काम्यम् ।
वत्सम् । न । पूर्वे । आयुनि । जातम् । रिहन्ति । मातरः ॥ १ ॥

यथा मातरः गावः पूर्वे प्रथमे आयुनि वयसि जातं वत्सं रिहन्ति लिहन्ति तथा अद्रुहः अद्रोग्ध्र्यो वसतीवर्याख्या आपः इन्द्रस्य प्रियं काम्यं सर्वैः काम्यमानं सोमम् अभि नवन्ते अभिगच्छन्ति ॥

पुनान इन्दवा भर सोम द्विबर्हसं रयिम् ।
त्वं वसूनि पुष्यसि विश्वानि दाशुषो गृहे ॥ २ ॥

पुनानः । इन्दो इति । आ । भर । सोम । द्विऽबर्हसम् । रयिम् ।
त्वम् । वसूनि । पुष्यसि । विश्वानि । दाशुषः । गृहे ॥ २ ॥

हे इन्दो दीप्यमान हे सोम पुनानः पूयमानस्त्वं द्विबर्हसं द्वयोः स्थानयोः परिबृंहणशीलं रयिं धनमस्मभ्यम् आ भर आहर देहि । त्वं हि दाशुषः हविर्दत्तवतो यजमानस्य गृहे स्थित्वा विश्वानि सर्वाणि वसूनि धनानि पुष्यसि पोषयसि ॥

त्वं धियं मनोयुजं सृजा वृष्टिं न तन्यतुः ।
त्वं वसूनि पार्थिवा दिव्या च सोम पुष्यसि ॥ ३ ॥

त्वम् । धियम् । मनःऽयुजम् । सृज । वृष्टिम् । न । तन्यतुः ।
त्वम् । वसूनि । पार्थिवा । दिव्या । च । सोम । पुष्यसि ॥ ३ ॥

हे सोम त्वं मनोयुजं मनसा युज्यमानां मनोवेगां धियं ध्यातव्यां धारां सृज पात्रेषु विसृज । अत्र दृष्टान्तः । वृष्टिं न तन्यतुः । 'तनु विस्तारे' । 'ऋतन्यञ्जि॰' इत्यादिना यतुच्प्रत्ययः । तनोति विस्तारयतीति तन्यतुर्मेघः । यथा मेघो वृष्टिं सृजति तद्वत् । ततो हे सोम त्वं

१. मै १ २.५—षीदति ।

पार्थिवा पृथिव्यां भवानि भूमिं धनानि तथा दिव्यानि दिवि भवानि धनानि च पुष्यसि अस्मभ्यं पोषयसि । प्रयच्छसीत्यर्थः ॥

परि ते जिग्युषो यथा धारा सुतस्य धावति ।
रंहमाणा व्य१व्ययं वारं वाजीव सानसिः ॥ ४ ॥

परि । ते । जिग्युषः । यथा । धारा । सुतस्य । धावति ।
रंहमाणा । वि । अव्ययम् । वारम् । वाजीऽइव । सानसिः ॥ ४ ॥

सुतस्य ते त्वदीया सानसिः संभजनशीला यद्वा स्तोतृभिः संभजनीया रंहमाणा वेगं कुर्वाणा धारा अव्ययम् अविमयं वारं वालं पवित्रं वि परि धावति विशेषेण परितो गच्छति । तत्र दृष्टान्तः । जिग्युषः शत्रूणां जेतुर्वीरस्य वाजीव अश्वो यथा युद्धं परितो धावति तद्वत् । जयतेः क्वसौ ‘ सन्लिटोर्जेः ’ इति कुत्वम् । यथा इति पूरकः ॥

क्रत्वे दक्षाय नः कवे पवस्व सोम धारया ।
इन्द्राय पातवे सुतो मित्राय वरुणाय च ॥ ५ ॥

क्रत्वे । दक्षाय । नः । कवे । पवस्व । सोम । धारया ।
इन्द्राय । पातवे । सुतः । मित्राय । वरुणाय । च ॥ ५ ॥

हे कवे क्रान्तदर्शिन् हे सोम नः अस्माकं क्रत्वे प्रज्ञानाय दक्षाय बलाय च त्वं धारया पवस्व क्षर । कीदृशः । इन्द्राय पातवे पानार्थं तथा मित्राय वरुणाय च सुतः अभिषुतः खलु ॥ ॥ २७ ॥

पवस्व वाजसातमः पवित्रे धारया सुतः ।
इन्द्राय सोम विष्णवे देवेभ्यो मधुमत्तमः ॥ ६ ॥

पवस्व । वाजऽसातमः । पवित्रे । धारया । सुतः ।
इन्द्राय । सोम । विष्णवे । देवेभ्यः । मधुमत्ऽतमः ॥ ६ ॥

हे सोम वाजसातमः अतिशयेनान्नस्य दाता सुतः अभिषुतस्त्वं पवित्रे धारया सह[1] पवस्व क्षर । ततो हे सोम त्वम् इन्द्राय विष्णवे चान्येभ्यो मित्रादिभ्यः देवेभ्यः च मधुमत्तमः अतिशयेन माधुर्योपेतो भव ॥

त्वां रिहन्ति मातरो हरिं पवित्रे अद्रुहः ।
वत्सं जातं न धेनवः पवमान विधर्मणि ॥ ७ ॥

त्वाम् । रिहन्ति । मातरः । हरिम् । पवित्रे । अद्रुहः ।
वत्सम् । जातम् । न । धेनवः । पवमान । विऽधर्मणि ॥ ७ ॥

1. ग-त्वसंस्था ।

हे पवमान सोम विधर्मणि विविधं हविषां धारके यज्ञे अद्रुहः द्रोहवर्जिताः मातरः मातृभूता वसतीवर्यः हरिं हरितवर्णं त्वां पवित्रे[1] स्थितं रिहन्ति लिहन्ति आस्वादयन्ति। कथमिव। यथा धेनवः जातं वत्सं लिहन्ति तथा॥

पव॑मान म॒हि श्रव॑श्चि॒त्रेभि॑र्यासि र॒श्मिभिः॑।
शर्ध॒न् तमां॑सि जिघ्नसे॒ विश्वा॑नि दा॒शुषो॑ गृ॒हे॥ ८॥

पव॑मान। म॒हि। श्रवः॑। चि॒त्रेभिः॑। या॒सि॒। र॒श्मिऽभिः॑।
शर्ध॑न्। तमां॑सि। जि॒घ्न॒से॒। विश्वा॑नि। दा॒शुषः॑। गृ॒हे॥ ८॥

हे पवमान महि महत् श्रवः श्रवणीयमन्तरिक्षं चित्रेभिः चित्रैर्नानाविधैश्चायनीयैर्वा रश्मिभिः परि यासि परिगच्छसि। तथा शर्धन् वेगं कुर्वंस्त्वं दाशुषः हविर्दत्तवतो यजमानस्य गृहे स्थित्वा विश्वानि सर्वाणि तमांसि तमोरूपाणि रक्षांसि जिघ्नसे हंसि। एवं द्यावापृथिव्योः वर्तसे इत्यर्थः॥

त्वं द्यां च॑ महिव्रत पृ॒थि॒वीं चाति॑ जभ्रिषे।
प्रति॑ द्रा॒पिम॑मुञ्चथाः॒ पव॑मान महित्व॒ना॥ ९॥

त्वम्। द्याम्। च॒। म॒हि॒ऽव्र॒त॒। पृ॒थि॒वीम्। च॒। अति॑। ज॒भ्रि॒षे॒।
प्रति॑। द्रा॒पिम्। अ॒मु॒ञ्च॒थाः॒। पव॑मान। म॒हि॒ऽत्व॒ना॥ ९॥

हे महिव्रत महाकर्मन् बहुविधकर्मन् सोम त्वं द्यां द्युलोकं च पृथिवीं च अति अभिषे अत्यन्तं बिभर्षि। ‘डुभृञ् धारणपोषणयोः’। तस्य छान्दसे लिटि सर्वविधीनां छन्दसि विकल्पितत्वादिडागमः। अन्तरिक्षे सोमात्मनेति पृथिव्यां लतारूपेणेत्येवं लोकद्वयवर्तित्वम्। हे पवमान क्षरन् सोम त्वं महित्वना महत्त्वेन युक्तः सन् द्रापिं कवचं प्रति अमुञ्चथाः प्रतिमुञ्चसि संवृणोषि॥ ॥ २८ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपाल-
साम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये
वेदार्थप्रकाशे ऋक्संहिताभाष्ये सप्तमाष्टके
चतुर्थोऽध्यायः समाप्तः॥

---

१. ता१.२.५.७-मं६-एतापवित्रे

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
विज्ञातवेदगाम्भीर्यस्तुर्यं व्याख्याय सत्तमे ।
सायणार्यस्ततोऽध्यायं पञ्चमं व्याचिकीर्षति ॥

तत्र ' पुरोजिती वः ' इति षोडशर्चमनुवाकापेक्षया पञ्चमं सूक्तम् । आद्यस्य तृचस्य श्यावाश्वपुत्रोऽन्धीगुर्नामर्षिः । द्वितीयस्य नहुषस्य राज्ञः पुत्रो ययातिर्नाम । तृतीयस्य मनोः पुत्रो नहुषो नाम राजर्षिः । चतुर्थस्य संवरणाख्यस्य राज्ञः पुत्रो मनुः । एवं द्वादश गताः । शिष्टस्य चतुर्ऋचस्य वाचः पुत्रो वैश्वामित्रो वा प्रजापतिर्ऋषिः । द्वितीयातृतीये गायत्र्यौ शिष्टा अनुष्टुभः । तथा चानुक्रम्यते– ' पुरोजिती षोळश श्यावाश्विरन्धीगुर्ययातिर्नाहुषो नहुषो' मानवो मनुः सांवरण इति तृचाः शेषे प्रजापतिर्वाच्यो गायत्र्यौ ' इति । गतः सूक्तविनियोगः ॥

पुरोजिती वो अन्धसः सुताय मादयित्नवे ।
अप श्वानं श्नथिष्टन सखायो दीर्घजिह्व्यम् ॥ १ ॥
पुरःऽजिती । वः । अन्धसः । सुताय । मादयित्नवे ।
अप । श्वानम् । श्नथिष्टन । सखायः । दीर्घऽजिह्व्यम् ॥ १ ॥

हे सखायः सखिभूताः समानख्याना वा हे स्तोतारः वः यूयं पुरोजिती । षष्ठ्याः पूर्वसवर्णदीर्घः । पुरःस्थितजयस्य अन्धसः अदनीयस्य सोमस्य स्वभूताय सुताय अभिषुताय मादयित्नवे अत्यन्तं मदकराय रसाय दीर्घजिह्व्यम् । दीर्घा जिह्वा यस्य[2] सः । 'दीर्घजिह्वी च च्छन्दसि ' ( पा. सू. ४. १. ५९ ) इति ङीबन्तत्वेन निपातितः । तादृशं श्वानम्[3] अप श्नथिष्टन अपश्नथयत अपघातयत । यथा श्वा राक्षसा वा सुतं सोमं न लिहन्ति तथा कुरुतेत्यर्थः ॥

पवित्रेष्टौ द्वितीयस्याज्यभागस्य ' यो धारया ' इत्येषानुवाक्या । सूत्रितं च—' पावकवन्तावाज्यभागावग्नी रक्षांसि सेधति यो धारया पावकया ' ( आश्व. श्रौ. २. १२ ) इति ॥

यो धारया पावकया परिप्रस्यन्दते सुतः । इन्दुरश्वो न कृत्व्यः ॥ २ ॥
यः । धारया । पावकया । परिऽप्रस्यन्दते । सुतः । इन्दुः । अश्वः । न । कृत्व्यः ॥ २ ॥

सुतः अभिषुतः कृत्व्यः । कृत्वीति कर्मनाम । कर्मणि साधुः यः इन्दुः सोमः पावकया पापानां शोधयित्र्या[4] धारया परिप्रस्यन्दते परितः प्रक्षरति । कथमिव । अश्वो न अश्वो यथा वेगेन प्रगच्छति तद्वत् ॥

तं दुरोषमभी नरः सोमं विश्वाच्या धिया । यज्ञं हिन्वन्त्यद्रिभिः ॥ ३ ॥
तम् । दुरोषम् । अभि । नरः । सोमम् । विश्वाच्या । धिया । यज्ञम् । हिन्वन्ति । अद्रिऽभिः ॥ ३ ॥

नरः कर्मनेतार ऋत्विजः दुरोषम् । रोषतेर्हिंसार्थस्य रेफलोपे दीर्घाभाव ओषतेर्दाहार्थस्य[5] वा सति[5] रूपमिति संदेहादनवग्रहः । तं दुर्दहं दुर्वधं वा यज्ञं यष्टव्यं तं[6] सोमं विश्वाच्या

---

१. त१.२.४.५-मु-नहुषो नाम । २. त-अ१.४.५.६-अस्य । ३. त१.२.४.५.७-अ६-मु-श्वानं च ।
५. ग-अषतेर्वा दुष्पूर्वस्य वा णत्सुलि । ६. त१.२.४.५.७-अ६-मु-तं वा ।

सर्वान् कामानश्नुवाना ³धिया सुक्ता ⁴अद्रिभिः ग्रावभिः ⁵अभि ⁶हिन्वन्ति अभिप्रेरयन्ति । अभिषुण्वन्तीति यावत् ॥

पृष्ठ्यस्य षष्ठेऽहनि माध्यंदिने ' सुतासः ' इति तिस्रः । सूत्रितं च– ' इतिकाण्वोऽकारिषमित्यनुष्टुप् सुतासो मधुमत्तमा इति च तिस्रः ' ( आश्व. श्रौ. ८. ३ ) इति ॥

सुतासो मधुमत्तमाः सोमा इन्द्राय मन्दिनः ।
पवित्रवन्तो अक्षरन्देवान्गच्छन्तु वो मदाः ॥ ४ ॥

सुतासः । मधुमत्ऽतमाः । सोमाः । इन्द्राय । मन्दिनः ।
पवित्रऽवन्तः । अक्षरन् । देवान् । गच्छन्तु । वः । मदाः ॥ ४ ॥

²मधुमत्तमाः अतिशयेन माधुर्योपेता अत एव ⁵मन्दिनः मदकराः ¹सुतासः अभिषुताः ³सोमाः ⁶पवित्रवन्तः पवित्रे वर्तमानाः सन्तः ⁴इन्द्राय इन्द्रार्थम् ⁷अक्षरन् पात्रेषु क्षरन्ति । अथ प्रत्यक्षकृतः । ¹¹वः युष्माकं ¹²मदाः मदहेतवो¹ रसाः ⁹देवान् इन्द्रादीन् ¹⁰गच्छन्तु ॥

इन्दुरिन्द्राय पवत इति देवासो अब्रुवन् ।
वाचस्पतिर्मखस्यते विश्वस्येशान ओजसा ॥ ५ ॥

इन्दुः । इन्द्राय । पवते । इति । देवासः । अब्रुवन् ।
वाचः । पतिः । मखस्यते । विश्वस्य । ईशानः । ओजसा ॥ ५ ॥

¹इन्दुः सोमः ²इन्द्राय इन्द्रार्थं ³पवते कलशे क्षरति ⁴इति ⁵देवासः स्तुतिकारिणः स्तोतारः ⁶अब्रुवन् वदन्ति । यदा स्तोतार एवं वदन्ति तदानीं ⁷वाचः स्तुतेः ⁸पतिः पालयिता । यद्वा । शब्दस्य स्वामी अत्यन्तं शब्दायमान इत्यर्थः । तादृशः सोमः ⁹मखस्यते स्तुतिभिः पूजामिच्छति । लालसायां सुगागमः । कीदृशः । ¹²ओजसा बलेन² ¹⁰विश्वस्य सर्वस्य ¹¹ईशानः प्रभुः ॥ ॥ १ ॥

सहस्रधारः पवते समुद्रो वाचमीङ्खयः ।
सोमः पती रयीणां सखेन्द्रस्य दिवेदिवे ॥ ६ ॥

सहस्रऽधारः । पवते । समुद्रः । वाचमऽईङ्खयः ।
सोमः । पतिः । रयीणाम् । सखा । इन्द्रस्य । दिवेऽदिवे ॥ ६ ॥

¹सहस्रधारः बहुविधधाराभिः ⁵सोमः ²पवते क्षरति । कीदृशः । ³समुद्रः । यस्मात्समुद्रवन्ति रसाः । मदःस्थानीयः³ ⁴वाचमीङ्खयः । ईङ्खतेर्ण्यन्तस्य सुप्युपपदे खश्प्रत्ययः । स्तुतीनां प्रेरयिता ⁷रयीणां धनानां ⁶पतिः प्रभुः । यद्वा । रयीणां हविषो दातॄणां यजमानानां पतिः पालयिता । ¹⁰दिवेदिवे प्रत्यहम् ⁹इन्द्रस्य ⁸सखा मित्रभूतः सोमः पवते ॥

अयं पूषा रयिर्भगः सोमः पुनानो अर्षति ।
पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे ॥ ७ ॥

१. त१.२.४.५.७-म६-मु–मदकराः । २. म-त३-म२.४–स्वबलेन; त६-म७–स्वबलात् ; म१–स्वबलात् । ३. म-त३.६-म-मु–रसस्थानीयः; त१.२.४.५–मरस्थानीयः ।

अयम् । पूषा । रयिः । भगः । सोमः । पुनानः । अर्षति ।

पतिः । विश्वस्य । भूमनः । वि । अख्यत् । रोदसी इति । उभे इति ॥ ७ ॥

पूषा पोषकः सर्वेषां भगः भजनीयः रयिः धनहेतुः अयं सोमः पुनानः पवित्रेण पूयमानः सन् अर्षति कलशमभिगच्छति[1] । तथा विश्वस्य सर्वस्य भूमनः भूतजातस्य पतिः पालयिता सोमः उभे रोदसी द्यावापृथिव्यौ व्यख्यत् स्वतेजसा प्रकाशयति । अनेन लोकद्वयवर्तित्वं सूचितम् ॥

**समु प्रिया अनूषत गावो मदाय घृष्वयः ।**

**सोमासः कृण्वते पथः पवमानास इन्दवः ॥ ८ ॥**

सम् । ऊँ इति । प्रियाः । अनूषत । गावः । मदाय । घृष्वयः ।

सोमासः । कृण्वते । पथः । पवमानासः । इन्दवः ॥ ८ ॥

प्रियाः प्रियतमाः घृष्वयः अन्योन्यं घर्षिताः । यद्वा । अहं प्रथमतः स्तौमि अहं पुरस्तात् स्तौमीति परस्परं स्पर्धमानाः । गावः स्तुतिलक्षणा वाचः सोमस्य मदार्थं सम् अनूषत संस्तुवन्ति । उः प्रसिद्धौ । यद्वा । गावो धेनवः सोमस्य मदाय शब्दायन्ते । ततः पवमानासः पूयमानाः इन्दवः दीप्ताः सोमासः सोमाः पथः मार्गान् कृण्वते क्षरणार्थं कुर्वन्ति ॥

**य ओजिष्ठस्तमा भर पवमान श्रवाय्यम् ।**

**यः पञ्च चर्षणीरभि रयिं येन वनामहे ॥ ९ ॥**

यः । ओजिष्ठः । तम् । आ । भर । पवमान । श्रवाय्यम् ।

यः । पञ्च । चर्षणीः । अभि । रयिम् । येन । वनामहे ॥ ९ ॥

हे पवमान पूयमान सोम ओजिष्ठः ओजस्वितमः यः त्वदीयो रसोऽस्ति तं श्रवाय्यं श्रवणीयं रसम् आ भर अस्मभ्यमाहर । किंच यः रसः पञ्च चर्षणीः पञ्च जनान् निषादपञ्चमांश्चतुरो वर्णान् अभि तिष्ठति[2] । अपि च येन रसेन वयं रयिं धनं च वनामहे संभजामहे । यद्वा । येन त्वां रयिं याचामहे तमा भर ॥

**सोमाः पवन्त इन्दवोऽस्मभ्यं गातुवित्तमाः ।**

**मित्राः सुवाना अरेपसः स्वाध्यः स्वर्विदः ॥ १० ॥**

सोमाः । पवन्ते । इन्दवः । अस्मभ्यम् । गातुवित्ऽतमाः ।

मित्राः । सुवानाः । अरेपसः । सुऽआध्यः । स्वःऽविदः ॥ १० ॥

गातुवित्तमाः अतिशयेन मार्गस्य लम्भकाः इन्दवः दीप्ताः सोमाः पवन्ते अस्मभ्यम् अस्मदर्थं क्षरन्त्यागच्छन्ति वा । कीदृशाः । मित्राः देवानां सखिभूताः सुवानाः अभिषूयमाणाः अरेपसः पापरहिताः अत एव स्वाध्यः शोभनध्यानाः[3][4] स्वर्विदः सर्वज्ञाः स्वर्गप्रापका वा ॥ ॥२॥

१. त१ २.४.७–कलशैभि°; त२–कलशमभि°; मै६–कलशानभि° । २. ग–गच्छति । ३. ग–त३. ४–शोभनाध्यानाः ।

सुष्वाणासो व्यद्रिभिश्चिताना गोरधि त्वचि ।
इषमस्मभ्यमभितः समस्वरन्वसुविदः ॥ ११ ॥

सुस्वानासः । वि । अद्रिऽभिः । चिताना । गोः । अधि । त्वचि ।
इषम् । अस्मभ्यम् । अभितः । सम् । अस्वरन् । वसुऽविदः ॥ ११ ॥

गोः अनडुहः अधि त्वचि अधिषवणचर्मणि चिताना ज्ञायमानाः अद्रिभिः ग्रावभिर्विविधं सुष्वाणासः सूयमानाः वसुविदः वसुनो लम्भका एते सोमाः अस्मभ्यम् इषम् अन्नम् अभितः समस्वरन् सम्यक् शब्दयन्ति । प्रयच्छन्तीति यावत् ॥

एते पूता विपश्चितः सोमासो दध्याशिरः ।
सूर्यासो न दर्शतासो जिगत्नवो ध्रुवा घृते ॥ १२ ॥

एते । पूताः । विपःऽचितः । सोमासः । दधिऽआशिरः ।
सूर्यासः । न । दर्शतासः । जिगत्नवः । ध्रुवाः । घृते ॥ १२ ॥

पूताः पवित्रेण परिपूताः विपश्चितः मेधाविनः दध्याशिरः दध्यामिश्रणाः घृते वसतीवर्याख्ये उदके जिगत्नवः गमनशीलाः ध्रुवाः नित्यं स्थैर्येण वर्तमानाः एते सोमासः सोमाः सूर्यासो न सूर्या इव दर्शतासः पात्रेषु सर्वैर्दर्शनीया भवन्ति ॥

प्र सुन्वानस्यान्धसो मर्तो न वृत तद्वचः ।
अप श्वानमराधसं हता मखं न भृगवः ॥ १३ ॥

प्र । सुन्वानस्य । अन्धसः । मर्तः । न । वृत । तत् । वचः ।
अप । श्वानम् । अराधसम् । हत । मखम् । न । भृगवः ॥ १३ ॥

सुन्वानस्य अभिषूयमाणस्य अन्धसः अदनीयस्य सोमस्य तत् प्रसिद्धं वचः वचनं घोषं मर्तः मारकः कर्मविघ्नकारी श्वा न प्र वृत न भजताम् । न शृणोत्विति यावत् । तथा हे स्तोतारः अराधसं संसाधककर्मरहितं तं श्वानम् अप हत । तत्र दृष्टान्तः । मखं न । यथा पुरापराद्धं मखसंज्ञितमात्मानं भृगवः अपहतवन्तः तथापहतेत्यर्थः ॥

आ जामिरत्के अव्यत भुजे न पुत्र ओण्योः ।
सरज्जारो न योषणां वरो न योनिमासदम् ॥ १४ ॥

आ । जामिः । अत्के । अव्यत । भुजे । न । पुत्रः । ओण्योः ।
सरत् । जारः । न । योषणाम् । वरः । न । योनिम् । आऽसदम् ॥ १४ ॥

जामिः बन्धुभूतो[1] देवानां[1] सोमः अत्के आच्छादके पवित्रे आ अव्यत आवृणोति । संवृतो भवति । तत्र दृष्टान्तः । भुजे न यथा ओण्योः रक्षकयोर्मातापित्रोः भुजे पुत्रः आवृणोति तद्वत् । ततः सोऽयं सोमः योनिं स्वस्थानभूतं कलशम् आसदम् आसत्तुं सरत् सरति ।

१. ग—बन्धुर्यजमानानां ।

तत्र दृष्टान्तद्वयम् । जारो न यथा जारः योषणाम् असतीं स्त्रियं प्राप्तुं सरति । यथा वा वरः कन्यां प्राप्तुं गच्छति तद्वत् ॥

स वीरो दक्षसाधनो वि यस्तस्तम्भ रोदसी ।
हरिः पवित्रे अव्यत वेधा न योनिमासदम् ॥ १५ ॥

सः । वीरः । दक्षऽसाधनः । वि । यः । तस्तम्भ । रोदसी इति ।
हरिः । पवित्रे । अव्यत । वेधाः । न । योनिम् । आऽसदम् ॥ १५ ॥

दक्षसाधनः बलसाधनः सः सोमः वीरः समर्थो भवति । यः सोमः रोदसी द्यावापृथिव्यौ वि तस्तम्भ स्वतेजसा व्यस्तभ्नात् । आच्छादयतीत्यर्थः । किंच हरिः हरितवर्णः सोमः वेधा न विधाता यजमानो यथा स्वगृहमासीदति तद्वत् योनिं स्वस्थानं कलशम् आसदम् आसत्तुं पवित्रे अव्यत आवृणोति । संबद्धो भवति ॥

अव्यो वारेभिः पवते सोमो गव्ये अधि त्वचि ।
कनिक्रदद्वृषा हरिरिन्द्रस्याभ्येति निष्कृतम् ॥ १६ ॥

अव्यः । वारेभिः । पवते । सोमः । गव्ये । अधि । त्वचि ।
कनिक्रदत् । वृषा । हरिः । इन्द्रस्य । अभि । एति । निःऽकृतम् ॥ १६ ॥

अयं सोमः अव्यः अवेः वारेभिः वालैः पवित्रैः तेभ्यः पवते कलशं प्रति क्षरति । किंच गव्ये आनडुहे अधि त्वचि चर्मणि कनिक्रदत् शब्दायमानः वृषा कामानां वर्षकः हरिः हरितवर्णः सोमः इन्द्रस्य स्वभूतं निष्कृतं संस्कृतं स्थानम् अभ्येति अभिगच्छति ॥  ॥ ३ ॥

' क्राणा शिशुः ' इत्यष्टर्चं षष्ठं सूक्तमाप्त्यस्य त्रितस्यार्षम् । इदमुत्तराणि चत्वारि सूक्तान्यौष्णिहानि । पवमानः सोमो देवता । तथा चानुक्रम्यते—' क्राणाष्टौ त्रित औष्णिहं त्वे ' इति । गतो विनियोगः ॥

क्राणा शिशुर्महीनां हिन्वन्नृतस्य दीधितिम् । विश्वा परि प्रिया भुवदध द्विता ॥ १ ॥

क्राणा । शिशुः । महीनाम् । हिन्वन् । ऋतस्य । दीधितिम् ।
विश्वा । परि । प्रिया । भुवत् । अध । द्विता ॥ १ ॥

क्राणा । करोतेः शानचि ' बहुलं छन्दसि ' इति विकरणस्य लुक् । ' सुपां सुलुक् ' इति सुप आकारादेशः । यज्ञं कुर्वाणः महीनां महतीनां मंहनीयानां वा अपां शिशुः पुत्रस्थानीयः सोमः ऋतस्य यज्ञस्य दीधितिं प्रकाशकं धारकं वा स्वीयं रसं हिन्वन् प्रेरयन् विश्वा सर्वाणि प्रिया प्रियाणि हवींषि परि भुवत् परिभवति व्याप्नोति । अध अपि च द्विता द्विधा भवति । दिवि च पृथिव्यां च वर्तत इत्यर्थः ॥

उप त्रितस्य पाष्योरभक्त यद्गुहा पदम् । यज्ञस्य सप्त धामभिरध प्रियम् ॥ २ ॥

उप । त्रितस्य । पाष्योः । अभक्त । यत् । गुहा । पदम् ।
यज्ञस्य । सप्त । धामऽभिः । अध । प्रियम् ॥ २ ॥

त्रितस्य मम यज्ञे गुहा गुहायां हविर्धाने वर्तमानयोः पाष्योः पाषाणवदृढयोरधिषवणफलकयोः पदं स्थानं सोमः यत् यदा उप अभक्त समभजत अध अनन्तरं यज्ञस्य धामभिः धारकैः सप्त सप्तभिश्छन्दोभिर्गायत्र्यादिभिः प्रियं प्रीणयितारं सोममभिष्टुवन्ति ऋत्विजः[1]। अपि वा। सप्त सर्पणशीलैर्वसतीवर्यादिभिरुदकैः सोममभिपुण्वन्ति॥

त्रीणि त्रितस्य धारया पृष्ठेष्वेरया रयिम्। मिमीते अस्य योजना वि सुक्रतुः॥३॥

त्रीणि। त्रितस्य। धारया। पृष्ठेषु। आ। ईरय। रयिम्।

मिमीते। अस्य। योजना। वि। सुऽक्रतुः॥३॥

हे सोम त्रितस्य मम यज्ञस्य स्वभूतानि त्रीणि सवनानि धारया आत्मीयया विधारय। किंच पृष्ठेषु सामसु रयिं दातारमिन्द्रम् आ ईरय आगमय। सुक्रतुः सुप्रज्ञः स्तोता अस्य इन्द्रस्य योजना योजनानि योजनकारीणि[2] स्तोत्राणि वि मिमीते करोति। यस्मादेवं तस्मादिन्द्रं सामसु प्रेरयेत्यर्थः॥

जज्ञानं सप्त मातरो वेधामशासत श्रिये। अयं ध्रुवो रयीणां चिकेत यत्॥४॥

जज्ञानम्। सप्त। मातरः। वेधाम्। अशासत। श्रिये। अयम्। ध्रुवः। रयीणाम्। चिकेत। यत्॥४॥

जज्ञानं प्रादुर्भूतं वेधां कर्मणो विधातारं सोमं सप्त सप्तसंख्याकाः मातरः गङ्गाद्या नद्यः सप्त छन्दांसि वा श्रिये यजमानानामैश्वर्यार्थम् अशासत अनुशासति अनुशासनं कुर्वन्ति। शास्तेर्लङि व्यत्ययेनात्मनेपदम्। यत् यस्मात् ध्रुवः अयं सोमः[3] रयीणां धनानि चिकेत जानाति तस्मादस्यानुशासने कृते यजमानानां धनादिसमृद्धिर्भवति॥

अस्य व्रते सजोषसो विश्वे देवासो अद्रुहः। स्पार्हा भवन्ति रन्तयो जुषन्त यत्॥५॥

अस्य। व्रते। सऽजोषसः। विश्वे। देवासः। अद्रुहः। स्पार्हाः। भवन्ति। रन्तयः। जुषन्त। यत्॥५॥

अद्रुहः द्रोहवर्जिताः विश्वे सर्वे देवासः देवाः अस्य सोमस्य व्रते कर्मणि सजोषसः संगताः सन्तः स्पार्हाः स्पृहणीयाः भवन्ति। रन्तयः रमणशीला देवाः सुतमेनं सोमं यत् यदि जुषन्त सेवन्ते तर्हि स्पृहणीया भवन्ति॥ ॥५॥

यमी गर्भमृतावृधो दृशे चारुमजीजनन्। कविं मंहिष्ठमध्वरे पुरुस्पृहम्॥६॥

यम्। ईम्। इति। गर्भम्। ऋतऽवृधः। दृशे। चारुम्। अजीजनन्।

कविम्। मंहिष्ठम्। अध्वरे। पुरुऽस्पृहम्॥६॥

ऋतावृधः यज्ञस्य वर्धयित्र्यो वसतीवर्याख्या आपः गर्भं गर्भस्थानीयम् ईम् एनं यं सोमम् अध्वरे यज्ञे दृशे दर्शनाय अजीजनन् उदपादयन्। कीदृशम्। चारुं सर्वेषां कल्याणरूपं कविं क्रान्तप्रज्ञं मंहिष्ठं पूज्यतमं दातृतमं वा अत एव पुरुस्पृहं बहुभिः स्पृहणीयं सोमं देवाः सेवन्त इति पूर्वेण समन्वयः॥

१. ग-स१.६-म१.२.७—'ऋत्विजः' नास्ति। २. ग-स३-म४.५—'संयोजन'। ३. ग-स१.२.१.४.५.७-म१.२.४.६—सोमं सोमः।

समीचीने अभि त्मना यह्वी ऋतस्य मातरा । तन्वाना यज्ञमानुषग्यदञ्जते ॥७॥

समीचीने इति सम्ऽईचीने । अभि । त्मना । यह्वी इति । ऋतस्य । मातरा ।

तन्वानाः । यज्ञम् । आनुषक् । यत् । अञ्जते ॥ ७ ॥

स सोमः समीचीने परस्परं संगते यह्वी महत्यौ ऋतस्य यज्ञस्य मातरा निर्मात्र्यौ द्यावापृथिव्यौ त्मना आत्मना स्वयमेव तदा अभि गच्छति । यत् यदा यज्ञं तन्वानाः अध्वर्यवः आनुषक् अनुषक्तं[1] वसतीवरीभिः अञ्जते सोमं मिश्रयन्ति तदा स्वयमभिगच्छति ॥

क्रत्वा शुक्रेभिरक्षभिर्ऋणोरप व्रजं दिवः । हिन्वन्नृतस्य दीधितिं प्राध्वरे ॥ ८ ॥

क्रत्वा । शुक्रेभिः । अक्षऽभिः । ऋणोः । अप । व्रजम् । दिवः ।

हिन्वन् । ऋतस्य । दीधितिम् । प्र । अध्वरे ॥ ८ ॥

हे सोम त्वं क्रत्वा कर्मणा ज्ञानेन वा शुक्रेभिः शुक्रैर्दीप्यमानैः अक्षभिः अक्षैरिन्द्रियैरिवाभुवानैः स्वतेजोभिः व्रजम् अन्धकारसमूहं दिवः अन्तरिक्षात् अप ऋणोः अपगमय विनाशय । 'ऋणु गतौ' । तानादिकः । किं कुर्वन् । अध्वरे हिंसारहिते यज्ञे ऋतस्य यज्ञस्य दीधितिं धारकं स्वीयं रसं प्र हिन्वन् प्रेरयन्[2] । अनेन लोकद्वयवर्तित्वमभिहितम् ॥ ॥ ५ ॥

'प्र पुनानाय' इति षड़्चं सप्तमं सूक्तमाप्त्यस्य द्वितस्यार्षम् । पूर्ववच्छन्दोदेवते । तथा चानुक्रम्यते—'प्र पुनानाय षड् द्वित आप्त्यः' इति । गतो विनियोगः ॥

प्र पुनानाय वेधसे सोमाय वच उद्यतम् । भृतिं न भरा मतिभिर्जुजोषते ॥ १ ॥

प्र । पुनानाय । वेधसे । सोमाय । वचः । उत्ऽयतम् ।

भृतिम् । न । भर । मतिऽभिः । जुजोषते ॥ १ ॥

द्वितो नामर्षिः स्वात्मानं प्रत्याह । पुनानाय पवित्रेण पूयमानाय वेधसे कर्मणो विधात्रे मतिभिः स्तुतिभिः जुजोषते प्रीयमाणाय । यद्वा मतिभिः स्तोतृभिः सह जुजोषते प्रीणयित्रे । सोमाय उद्यतम् उद्युक्तं वचः प्र भर प्रकर्षेण संपादय । अभिष्टुहीत्यर्थः । तत्र दृष्टान्तः । भृतिं न । यथा भृतका भृतिं संपादयन्ति तद्वत् ॥

परि वाराण्यव्यया गोभिरञ्जानो अर्षति । त्री षधस्था पुनानः कृणुते हरिः ॥२॥

परि । वाराणि । अव्यया । गोभिः । अञ्जानः । अर्षति ।

त्री । सधऽस्था । पुनानः । कृणुते । हरिः ॥ २ ॥

गोभिः गोविकारैः क्षीरादिभिः अञ्जानः अज्यमानः सोमः अव्यया अविमयानि वाराणि वालानि पवित्राणि परि अर्षति परिगच्छति । अपि च हरिः हरितवर्णः सोमः पुनानः पूयमानः सन् त्री त्रीणि सधस्था । सह तिष्ठन्त्यत्रेति सधस्थं स्थानम् । द्रोणकलशाधवनीयपूतभृदात्मकानि त्रीणि स्थानानि कृणुते करोति ॥

१. त१.२.४.५.७-मद-मु—अनुषक्तं च । २. ग-त६-म१ ४.७—प्रेरयन् अपगमयन्; त१.२.३.४.५.७-म२.६—प्रेरयन् अपगमय ।

परि कोशं मधुश्चुतमव्यये वारे अर्षति । अभि वाणीरृषीणां सप्त नूषत ॥ ३ ॥

परि । कोशम् । मधुऽश्चुतम् । अव्यये । वारे । अर्षति ।
अभि । वाणीः । ऋषीणाम् । सप्त । नूषत ॥ ३ ॥

स सोमः अव्यये अविमये वारे वाले पवित्रे मधुश्चुतं मधुररसस्य च्यावयितारं[1] द्रोणकलशं प्रत्यग्नीयं रसं परि अर्षति गमयति । तमिमं सोमं ऋषीणां सप्त वाणीः छन्दांसि अभि नूषत अभिष्टुवन्ति । 'नू स्तवने' । कुटादिः ॥

परि णेता मतीनां विश्वदेवो अदाभ्यः । सोमः पुनानश्चम्वोर्विशद्धरिः ॥ ४ ॥

परि । नेता । मतीनाम् । विश्वऽदेवः । अदाभ्यः । सोमः । पुनानः । चम्वोः । विशत् । हरिः ॥ ४ ॥

हरिः हरितवर्णः सः सोमः पुनानः पूयमानः सन् चम्वोः अधिषवणफलकयोः परि विशत् परिविशति । कीदृशः । मतीनां स्तुतीनां नेता यद्वा मतीनां स्तोतॄणां स्वकर्मण्युपनेता विश्वदेवः सर्वदेवः । सोमेऽभिपूयमाणे सतीन्द्रादयः सर्वे देवाः सोमं प्रत्यागच्छन्ति खलु । तस्मात् सर्वदेवोपेतः अत एव अदाभ्यः अहिंसितः कैश्चिदपि ॥

परि दैवीरनु स्वधा इन्द्रेण याहि सरथम् । पुनानो वाघद्वाघद्भिरमर्त्यः ॥ ५ ॥

परि । दैवीः । अनु । स्वधाः । इन्द्रेण । याहि । सऽरथम् । पुनानः । वाघत् । वाघत्ऽभिः । अमर्त्यः ॥ ५ ॥

हे सोम त्वम् इन्द्रेण सरथं समानं रथमारुह्य दैवीः देवानां संबन्धीनि[2] स्वधाः अन्नानि अनु देवसेनाः परि याहि परिगच्छ । कीदृशः । पुनानः पूयमानः वाघद्भिः । वाघत इति ऋत्विङ्नाम । हविषां प्रेरकैर्ऋत्विग्भिः वाघत् उह्यमानः अमर्त्यः मनुष्यधर्मरहितः । यद्वा । वाघद्भिर्ऋत्विग्भिः पुनानः पूयमानो वाघत् स्तोतॄभ्यो यष्टॄणां धनादीनि प्रापयन् परिगच्छ ॥

परि सप्तिर्न वाजयुर्देवो देवेभ्यः सुतः । व्यानशिः पवमानो वि धावति ॥ ६ ॥

परि । सप्तिः । न । वाजऽयुः । देवः । देवेभ्यः । सुतः । विऽआनशिः । पवमानः । वि । धावति ॥ ६ ॥

सप्तिर्न अश्व इव वाजयुः युद्धमिच्छन् देवः दीप्यमानः देवेभ्यः देवार्थं सुतः अभिषुतः व्यानशिः पात्रेषु व्यापी पवमानः पवित्रेण पूयमानः एतादृशः सोमः परि धावति परितः पात्राण्यभिगच्छति ॥ व्यानशिः । 'अशू व्याप्तौ' । 'आदृगमहन०' इत्यत्र 'तत्सर्वेभ्यश्छन्दसि सदादिभ्यो दर्शनात्' इति किप्रत्ययः । 'अश्नोतेश्च' इति नुडागमः ॥ ॥ ७ ॥ ॥ ५ ॥

सप्तमेऽनुवाके एकादश सूक्तानि । तत्र 'सखायः' इति षळृचं प्रथमं सूक्तम् । काण्वौ पर्वत-नारदावृषी । अथवा कश्यपस्य पुत्र्यौ शिखण्डिन्याख्ये द्वे अप्सरसावस्य सूक्तस्य द्रष्ट्र्यौ । पूर्ववच्छन्दो-देवते । तथा चानुक्रम्यते—'सखायः पर्वतनारदौ काश्यप्यौ द्वे शिखण्डिन्यौ वाप्सरसौ' इति । गतः सूक्तविनियोगः ॥

सखाय आ नि षीदत पुनानाय प्र गायत । शिशुं न यज्ञैः परि भूषत श्रिये ॥ १ ॥

सखायः । आ । नि । सीदत । पुनानाय । प्र । गायत ।
शिशुम् । न । यज्ञैः । परि । भूषत । श्रिये ॥ १ ॥

---

१. अ-ल-३.६-अ१.२.४.७—च्यावयितारं । २. ग—संबंधिनीः ।

हे सखायः सखिभूताः स्तोतार ऋत्विजः आ नि षीदत स्तोतुमुपविशत। अथ पुनानाय पूयमानाय सोमाय प्र गायत प्रकर्षेण गायत। तमभिष्टुत। ततोऽभिषुते सोमे यज्ञैः यजनीयैः हविर्भिः मिश्रणैश्च श्रिये शोभार्थं परि भूषत परितोऽलंकुरुत। तत्र दृष्टान्तः। शिशुं न यथा शिशुं बालं पुत्रं पितर आभरणैरलंकुर्वन्ति तद्वत्॥

प्रवर्ग्येऽभिष्टवे 'समी वत्सम्' इत्येका। सूत्रितं च—'समी वत्सं न मातृभिः सं वत्स इव मातृभिः' (आश्व. श्रौ. ४. ७) इति॥

**समीं वत्सं न मातृभिः सृजता गयसाधनम्। देवाव्यं मदमभि द्विशवसम्॥२॥**

सम्। ईमिति। वत्सम्। न। मातृऽभिः। सृजत। गयऽसाधनम्।
देवऽअव्यम्। मदम्। अभि। द्विऽशवसम्॥ २ ॥

हे ऋत्विजः गयसाधनं गृहस्य साधनम् ईम् एनं सोमं मातृभिः[1] मातृभूताभिर्वसतीवरीभिः सं सृजत संमिश्रयत। कथमिव। वत्सं न यथा वत्सं मातृभिः गोभिः संयोजयन्ति तद्वत्। कीदृशम्। देवाव्यं देवानां रक्षकं मदं मदकरम् द्विशवसं द्विगुणेनातिशयितबलं वा। यद्वा द्वयोर्लोकयोस्तत्र स्थिता देवमनुष्या इत्यर्थः। तेषां हविर्धनप्रदानेन वर्धयितारम्। तं सोमम् अभि सं सृजत॥

**पुनाता दक्षसाधनं यथा शर्धाय वीतये। यथा मित्राय वरुणाय शंतमः॥ ३ ॥**

पुनात। दक्षऽसाधनम्। यथा। शर्धाय। वीतये। यथा। मित्राय। वरुणाय। शम्ऽतमः॥३॥

दक्षसाधनं बलस्य साधनं धनादिप्रदेर्वा साधकं सोमं पुनात पवित्रेण पुनीत॥ 'पूञ् पवने' क्र्यादिः। तस्माल्लोटि 'तप्तनप्तनथनाश्च' इति तस्य तबादेशः। पित्त्वाद्ध्रस्वाभावः। असौ सोमः शर्धाय वेगार्थं वीतये देवानां पानार्थं यथा भवति यथा वा मित्राय वरुणाय च शंतमः अतिशयेन सुखं करोति तथा पुनीतेत्यर्थः॥

**अस्मभ्यं त्वा वसुविदमभि वाणीरनूषत। गोभिष्टे वर्णमभि वासयामसि॥ ४ ॥**

अस्मभ्यम्। त्वा। वसुऽविदम्। अभि। वाणीः। अनूषत।
गोभिः। ते। वर्णम्। अभि। वासयामसि॥ ४ ॥

हे सोम वसुविदं धनस्य दातारं त्वा त्वाम् अस्मभ्यं धनादिप्रदानार्थं वाणीः अस्मदीया वाचः अभि अनूषत अभिष्टुवन्ति। 'णु स्तवने'। वयं ते तव वर्णम् आवरकं रसं गोभिः गोविकारैः क्षीरादिभिः अभि वासयामसि अभिवासयामः। अभित आच्छादयामः॥

**स नो मदानां पत इन्दो देवप्सरा असि। सखेव सख्ये गातुवित्तमो भव॥५॥**

सः। नः। मदानाम्। पते। इन्दो इति। देवऽप्सराः। असि।
सखाऽइव। सख्ये। गातुवित्ऽतमः। भव॥ ५ ॥

१. ग-स-भ—'मातृभिः' नास्ति।

नः अस्मदीयानां मद्वानां[1] मदकानां पते स्वामिन् हे इन्दो सोम सः त्वं देवप्सराः असि। प्सर इति रूपनाम। दीप्तरूपो भवसि। स त्वं सखेव यथा सखा सुहृत् सख्ये मित्राय सत्यं मार्गं ज्ञापयति तद्वदस्माकमपि गातुवित्तमः अत्यन्तं मार्गस्य लम्भकः भव ज्ञापको भव॥

**सनेमि कृध्य१स्मदा रक्षसं कं चिदत्रिणम्। अपादेवं द्वयुमंहो युयोधि नः ॥६॥**

सनेमि। कृधि। अस्मत्। आ। रक्षसम्। कम्। चित्। अत्रिणम्।
अप। अदेवम्। द्वयुम्। अंहः। युयोधि। नः॥ ६॥

हे सोम अस्मत् अस्मासु सनेमि। पुराणनामैतत्। पुराणं सख्यं कृधि कुरु। आ अपि च अत्रिणम् अदनशीलं कं चित् रक्षसम् अप युध्यस्व। कीदृशम्। अदेवम् अदेवनशीलं द्वयुं द्वयवन्तं सत्यानृतयुक्तं बाह्याभ्यन्तरमायायुक्तं वा। किंच नः अस्माकम् अंहः पापं पाप युयोधि संग्रहर। युध्यतेः 'बहुलं छन्दसि' इति शपः श्लुः। 'वा छन्दसि' इति हेर्ङित्वाभावाद्गुणः[2]। धलोपश्छान्दसः। यौतेर्वा श्लौ पूर्ववद्रूपम्॥ ॥७॥

'तं वः' इति षडृचं द्वितीयं सूक्तं पर्वतनारदयोरार्षम्। अन्यत् पूर्ववत्। 'तं वः' इत्यनुक्रान्तम्। गतः सूक्तविनियोगः॥

**तं वः सखायो मदाय पुनानमभि गायत। शिशुं न यज्ञैः स्वदयन्त गूर्तिभिः ॥१॥**

तम्। वः। सखायः। मदाय। पुनानम्। अभि। गायत।
शिशुम्। न। यज्ञैः। स्वदयन्त। गूर्तिऽभिः॥ १॥

हे सखायः ऋत्विजः वः यूयं मदाय देवानां मदार्थं पुनानं पूयमानं तं सोमम् अभि गायत अभिष्टुत। तमिमं सोमं शिशुं न शिशुमिवालंकारैः क्षीरादिभिश्च यथा[3] स्वादूकुर्वन्ति तद्वत् यज्ञैः हविर्भिर्मिश्रणैः गूर्तिभिः स्तुतिभिश्च स्वदयन्त स्वादूकुर्वन्ति॥

प्रवर्ग्येऽभिष्टवे 'सं वत्स इव मातृभिः' इत्येका[4]। सूत्रं च 'सखी वत्सम्' इत्यनया सहैकम्॥

**सं वत्स इव मातृभिरिन्दुर्हिन्वानो अज्यते। देवावीर्मदो मतिभिः परिष्कृतः ॥२॥**

सम्। वत्सःऽइव। मातृऽभिः। इन्दुः। हिन्वानः। अज्यते।
देवऽअवीः। मदः। मतिऽभिः। परिऽकृतः॥ २॥

हिन्वानः प्रेर्यमाणः इन्दुः सोमो वसतीवरीभिः सम् अज्यते। सम्यक् सिक्तो भवति। तत्र दृष्टान्तः। वत्सइव वत्सो यथा मातृभिः गोभिः समक्तो भवति तद्वत्। कीदृशः। देवावीः देवानां रक्षकः मदः मदकरः मतिभिः स्तुतिभिः परिष्कृतः अलंकृतः। भूषणार्थे 'संपर्युपेभ्यः०' इति सुडागमः। 'परिनिविभ्यः०' (पा. सू. ८. ३. ७०) इति सुटः षत्वम्॥

**अयं दक्षाय साधनोऽयं शर्धाय वीतये। अयं देवेभ्यो मधुमत्तमः सुतः ॥ ३॥**

अयम्। दक्षाय। साधनः। अयम्। शर्धाय। वीतये। अयम्। देवेभ्यः। मधुमत्ऽतमः। सुतः॥३॥

१. अ६–मादकानां; अ७–मदानां। २. त१.२.३.४.५.७–भ१.२.४.५.६–सु–हेर्ङित्वाद्गुणः। ३. त–भ–'यथा' नास्ति। ४. अ६–इत्येषा। ५. अ६–अर्को।

अयं सोमः दक्षाय बलाय वर्धनाय वा साधनः साधयिता भवति । तथा अयं सोमः शर्धाय वेगार्थं वीतये देवानां भक्षणार्थं च भवति । सुतः अभिषुतः अयं सोमः देवेभ्यः इन्द्रादिभ्यः मधुमत्तमः अतिशयेन माधुर्ययुक्तो भवति । अत्यन्तं मदकरो भवतीति वा ॥

**गोमन्न इन्दो अश्ववत्सुतः सुदक्ष धन्व । शुचिं ते वर्णमधि गोषु दीधरम् ॥४॥**

गोऽमत् । नः । इन्दो इति । अश्वऽवत् । सुतः । सुऽदक्ष । धन्व ।
शुचिम् । ते । वर्णम् । अधि । गोषु । दीधरम् ॥ ४ ॥

हे सुदक्ष सुबल हे इन्दो सोम सुतः अभिषुतस्त्वं नः अस्माकं गोमत् बहुसाधन-गोयुक्तम् अश्ववत् अश्वयुक्तं धनं धन्व गमय । धविर्गत्यर्थो भ्वादिः । ततोऽहं शुचिं शुभ्रं दीप्यमानं वा ते तव वर्णं रसं गोषु गव्येषु क्षीरादिषु अधि दीधरम् अधिधारयामि मिश्रयामि ॥

**स नो हरीणां पत इन्दो देवप्सरस्तमः । सखेव सख्ये नर्यो रुचे भव ॥ ५ ॥**

सः । नः । हरीणाम् । पते । इन्दो इति । देवप्सरःऽतमः ।
सखाऽइव । सख्ये । नर्यः । रुचे । भव ॥ ५ ॥

हे हरीणां पते नः अस्मदीयानां हरितवर्णानां पशूनां[1] स्वामिन् हे इन्दो सोम देवप्सरस्तमः अतिशयेन दीप्तरूपोपेतः सः त्वं नर्यः कर्मनेतृभ्य ऋत्विग्भ्यो हितः स त्वं नः अस्माकं रुचे भव दीप्तिकरो भव । किमिव । सखेव यथा सखा सख्ये मित्राय दीप्तिकरो भवति तद्वत् ॥

**सनेमि त्वमस्मदाँ अदेवं कं चिदत्रिणम् । साह्वाँ इन्दो परि बाधो अप द्वयुम् ॥६॥**

सनेमि । त्वम् । अस्मत् । आ । अदेवम् । कम् । चित् । अत्रिणम् ।
सह्वान् । इन्दो इति । परि । बाधः । अप । द्वयुम् ॥ ६ ॥

हे सोम त्वं सनेमि पुराणं सख्यम् अस्मत् अस्मासु कुरु । आ अपि च अदेवम् अदेवनशीलं कं चित् अपि अत्रिणम् अदनशीलं राक्षसमस्मदस्मत्तोऽपगमय । किंच हे इन्दो साह्वान् शत्रूनभिभवन् बाधः बाधमानान् परि जहि । तथा द्वयुं द्वयवन्तं सत्यानृतयुक्तं बाह्याभ्यन्तरमायाद्वयोपेतं वा राक्षसमस्मत्तोऽपगमय ॥ ॥ ८ ॥

'इन्द्रमच्छ' इति चतुर्दशर्चं तृतीयं सूक्तमौष्णिहं पवमानसोमदेवताकम् । प्रथमस्य तृचस्य चाक्षुराप्सवपुत्रोऽग्निर्ऋषिः । द्वितीयस्य मनुपुत्रश्चक्षुर्नाम । अप्सुनामकः पुत्रो मनुस्तृतीयस्य । एवं नवर्चो गताः । शिष्टानामपि पञ्चानां चाक्षुषोऽग्निः । तथा चानुक्रम्यते—'इन्द्रमच्छ पञ्चोनाग्निश्चाक्षुषश्चक्षु-र्मानवो मनुराप्सवश्च इति तृचाः पञ्चाग्निः' इति । गतो विनियोगः ॥

**इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः । श्रुष्टी जातास इन्दवः स्वर्विदः ॥ १ ॥**

इन्द्रम् । अच्छ । सुताः । इमे । वृषणम् । यन्तु । हरयः ।
श्रुष्टी । जातासः । इन्दवः । स्वःऽविदः ॥ १ ॥

श्रुष्टी । श्रुष्टीति क्षिप्रनाम । क्षिप्रं जातासः जाताः इन्दवः पात्रेषु क्षरन्तः स्वर्विदः सर्वज्ञाः हरयः हरितवर्णाः सुताः अभिषुताः इमे सोमाः वृषणं कामानां सेक्तारम् इन्द्रमच्छ यन्तु अभिगच्छन्तु ॥

१. ट६-म७—पते पशूनां; म६—पशूनां पते ।

अयं भराय सानसिरिन्द्राय पवते सुतः । सोमो जैत्रस्य चेतति यथा विदे ॥२॥

अयम् । भराय । सानसिः । इन्द्राय । पवते । सुतः । सोमः । जैत्रस्य । चेतति । यथा । विदे ॥२॥

भराय संग्रामाय तदर्थं सानसिः भजनीयः सुतः अभिषुतः अयं सोमः इन्द्राय इन्द्रार्थं पवते ग्रहादिषु क्षरति । ततः सोमः जैत्रस्य । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानसंज्ञा । 'चतुर्थ्यर्थे बहुलम्०' इति षष्ठी । जयशीलमिन्द्रं चेतति जानाति । यथा इन्द्रः विदे लोकैर्ज्ञायते तथा जानाति ॥

अस्येदिन्द्रो मदेष्वा ग्राभं गृभ्णीत सानसिम् । वज्रं च वृषणं भरत्समप्सुजित् ॥३॥

अस्य । इत् । इन्द्रः । मदेषु । आ । ग्राभम् । गृभ्णीत । सानसिम् ।

वज्रम् । च । वृषणम् । भरत् । सम् । अप्सुऽजित् ॥ ३ ॥

आ अनन्तरम् इन्द्रः अस्येत् अस्य सोमस्यैव मदेषु संजातेषु सानसिं सर्वैः संभजनीयं ग्राभं ग्राहं ग्रहीतव्यं धनुः गृभ्णीत गृह्णाति । 'हृग्रहोर्भः०' इति भत्वम् । किंच अप्सुजित् उदकार्थं वृत्रस्य जेता । यद्वा आप इत्यन्तरिक्षनाम । अन्तरिक्षेऽहिनामकस्य जेता । इन्द्रः वृषणं वर्षितारं वज्रं च सं भरत् संबिभर्तु । बिभर्तेर्लिङ्यडागमः ॥

प्र धन्वा सोम जागृविरिन्द्रायेन्दो परि स्रव । द्युमन्तं शुष्ममा भरा स्वर्विदम् ॥४॥

प्र । धन्व । सोम । जागृविः । इन्द्राय । इन्दो इति । परि । स्रव ।

द्युऽमन्तम् । शुष्मम् । आ । भर । स्वःऽविदम् ॥ ४ ॥

हे सोम जागृविः जागरणशीलस्त्वं प्र धन्व प्रक्षर । हे इन्दो सोम इन्द्राय परि स्रव परितः पात्रेषु क्षर । किंच द्युमन्तं दीप्तियुक्तं स्वर्विदं सर्वस्य लम्भकं शुष्मं शत्रूणां शोषकं बलम् आ भर आहर ॥

इन्द्राय वृषणं मदं पवस्व विश्वदर्शतः । सहस्रयामा पथिकृद्विचक्षणः ॥ ५ ॥

इन्द्राय । वृषणम् । मदम् । पवस्व । विश्वऽदर्शतः । सहस्रऽयामा । पथिऽकृत् । विऽचक्षणः ॥५॥

हे सोम त्वं वृषणं वर्षितारं मदं मदहेतुं रसम् इन्द्राय इन्द्रार्थं पवस्व क्षर । कीदृशः । विश्वदर्शतः सर्वदर्शनीयः सहस्रयामा बहुमार्गः पथिकृत् यजमानानां सन्मार्गकरणशीलः विचक्षणः सर्वस्य विद्रष्टा ॥ ॥ १ ॥

अस्मभ्यं गातुवित्तमो देवेभ्यो मधुमत्तमः । सहस्रं याहि पथिभिः कनिक्रदत् ॥६॥

अस्मभ्यम् । गातुवित्ऽतमः । देवेभ्यः । मधुमत्ऽतमः ।

सहस्रम् । याहि । पथिऽभिः । कनिक्रदत् ॥ ६ ॥

हे सोम अस्मभ्यं गातुवित्तमः अत्यन्तं मार्गस्य लम्भकः तथा देवेभ्यः च मधुमत्तमः अत्यन्तं स्वादुकारी त्वं कनिक्रदत् शब्दं कुर्वन् सहस्रं पथिभिः बहुभिर्मार्गैः याहि कलशमागच्छ ॥

पवस्व देववीतय इन्दो धाराभिरोजसा । आ कलशं मधुमान्त्सोम नः सदः ॥७॥

पव॑स्व । दे॒व॒ऽवी॑तये । इन्दो॒ इति॑ । धारा॑भिः । ओज॑सा ।

आ । क॒लश॑म् । मधु॑ऽमान् । सो॒म॒ । नः॒ । स॒दः॒ ॥ ७ ॥

हे इन्दो सोम देववीतये देवानां भक्षणाय ओजसा बलेन धाराभिः आत्मीयाभिः पवस्व क्षर। हे सोम मधुमान् मदकररसवांस्त्वं नः अस्मदीयं कलशं द्रोणाभिधानम् आ सदः। सदेर्लुङि रूपम्। आसीद॥

तव॑ द्र॒प्सा उ॑द॒प्रुत॒ इन्द्रं॒ मदा॑य वावृधुः । त्वां दे॒वासो॑ अ॒मृता॑य॒ कं प॑पुः ॥ ८ ॥

तव॑ । द्र॒प्साः । उ॒द॒ऽप्रुतः॑ । इन्द्र॑म् । मदा॑य । वा॒वृ॒धुः॒ । त्वाम् । दे॒वासः॑ । अ॒मृता॑य । कम् । प॒पुः॒ ॥ ८ ॥

उदप्रुतः वसतीवर्याख्यमुदकं प्रति गच्छन्तः। यद्वा। उदकस्य निर्गमयितारः। तव स्वभूताः द्रप्साः द्रुतगामिनो रसाः मदाय मदार्थम् इन्द्रं वावृधुः वर्धयन्ति। ततः देवासः देवा इन्द्रादयः कं सुखकरं त्वाम् अमृताय अमरणार्थं पपुः पिबन्ति॥

आ नः॑ सुतास इन्दवः पुना॒ना धा॑वता र॒यिम् । वृ॒ष्टिद्या॑वो रीत्यापः स्व॒र्विदः॑ ॥ ९ ॥

आ । नः॒ । सु॒तासः॑ । इ॒न्द॒वः॒ । पु॒ना॒नाः । धा॒व॒त॒ । र॒यिम् ।

वृ॒ष्टिऽद्या॑वः । री॒ति॒ऽआ॒पः॒ । स्वः॒ऽविदः॑ ॥ ९ ॥

हे सुतासः अभिषूयमाणा हे इन्दवः दीप्ताः पात्रेषु क्षरन्तो वा हे रीत्यापः रीः पृथिवीं प्रति गमनशीला आपः कृताः यैस्ते तादृशा हे सोमाः पुनानाः पूयमाना यूयं नः अस्मभ्यं रयिम् आ धावत आगमयत। कीदृशाः। वृष्टिद्यावः। वृष्टिमभि द्यौर्यैः क्रियते। वृष्ट्यभिमुखद्युलोकवन्तः स्वर्विदः सर्वस्य लम्भकाः॥

सोमः॑ पुना॒न ऊ॒र्मिणाव्यो॒ वारं॒ वि धा॑वति । अग्रे॑ वा॒चः पव॑मानः॒ कनि॑क्रदत् ॥ १० ॥

सोमः॑ । पु॒ना॒नः । ऊ॒र्मिणा॑ । अव्यः॑ । वार॑म् । वि । धा॒व॒ति॒ ।

अग्रे॑ । वा॒चः । पव॑मानः । कनि॑क्रदत् ॥ १० ॥

पुनानः पूयमानः सोमः ऊर्मिणा स्वकीयया धारया अव्यः अवेः वारं वालं पवित्रं वि धावति विविधं गच्छति। कीदृशः सोमः[1]। पवमानः पूतः वाचः स्तोत्रस्य अग्रे कनिक्रदत् पुनःपुनः शब्दं कुर्वन् वि धावति॥ ॥ १० ॥

धी॒भिर्हि॑न्वन्ति वा॒जिनं॒ वने॒ क्रीळ॑न्त॒मत्य॑विम् ।

अ॒भि त्रि॑पृ॒ष्ठं म॒तयः॒ सम॑स्वरन् ॥ ११ ॥

धी॒भिः । हि॒न्व॒न्ति॒ । वा॒जिन॑म् । वने॑ । क्रीळ॑न्तम् । अति॑ऽअविम् ।

अ॒भि । त्रि॒ऽपृ॒ष्ठम् । म॒तयः॑ । सम् । अ॒स्व॒र॒न् ॥ ११ ॥

वाजिनं बलवन्तं वने वननीये वसतीवर्याख्ये उदके क्रीळन्तं संक्रीडमानम् अत्यविम्। अविशब्देन तद्रोमकृतं पवित्रमभिधीयते। अतिक्रान्तपवित्रं सोमम् ऋत्विजः धीभिः स्तुतिभिः

१. स१.२.३.४.५.७भ२.६-मु-'सोमः' नास्ति।

हिन्वन्ति वर्धयन्ति। यद्वा। धीभिः। वर्णलोपश्छान्दसः। धीतिभिरङ्गुलीभिर्हिन्वन्ति प्रेरयन्ति। 'हि गतौ वृद्धौ च' स्वादिः। किंच त्रिपृष्ठम्। त्रीणि पवित्राणि द्रोणकलशाधवनीयपूतभृदाख्यानि¹ पृष्ठानि स्थानानीति त्रीणि सवनानि वा स्थानानीति स तथोक्तः। तं सोमं मतयः स्तुतयः अभि समस्वरन् अभितः संस्तुवन्ति॥

असर्जि कुलशाँ अभि मीळ्हे सप्तिर्न वाजयुः। पुनानो वाचं जनयन्नसिष्यदत् ॥१२॥

असर्जि। कलशान्। अभि। मीळ्हे। सप्तिः। न। वाजऽयुः।

पुनानः। वाचम्। जनयन्। असिस्यदत् ॥ १२ ॥

वाजयुः यजमानानामन्नमिच्छन् स सोमः कलशान् अभिलक्ष्य कलशेषु असर्जि सृज्यते। तत्र दृष्टान्तः। सप्तिर्न यथाश्वः मीळ्हे। संग्रामनामैतत्। संग्रामे सृज्यते तद्वत्। ततः पुनानः पूयमानः सोमः वाचं शब्दं जनयन् उत्पादयन् असिष्यदत् पात्रेषु स्यन्दते॥

पवते हर्यतो हरिरति ह्वरांसि रंह्या। अभ्यर्षन्स्तोतृभ्यो वीरवद्यशः ॥ १३ ॥

पवते। हर्यतः। हरिः। अति। ह्वरांसि। रंह्या। अभिऽअर्षन्। स्तोतृऽभ्यः। वीरऽवत्। यशः ॥ १३ ॥

हर्यतः स्पृहणीयः हरिः हरितवर्णः सोमः रंह्या। तृतीयार्थ आकारः। साधुवेगेन ह्वरांसि कुटिलान्यूर्णानि पवित्राणि अति पवते अतीत्य गच्छति। किं कुर्वन्। स्तोतृभ्यो वीरवत् पुत्रयुक्तं यशः अभ्यर्षन् अभिगमयन् पवते॥

अया पवस्व देवयुर्मधोर्धारा असृक्षत। रेभन्पवित्रं पर्येषि विश्वतः ॥ १४ ॥

अया। पवस्व। देवऽयुः। मधोः। धाराः। असृक्षत। रेभन्। पवित्रम्। परि। एषि। विश्वतः ॥ १४ ॥

हे सोम देवयुः देवान् कामयमानस्त्वम् अया अनया धारया पवस्व क्षर। ततः मधोः मदकरस्य तव धाराः आत्मीयाः असृक्षत सृज्यन्ते। अनन्तरं रेभन् शब्दायमानः पवित्रं विश्वतः पर्येषि सर्वतः परिगच्छसि॥ ॥ ११ ॥

'परीतः' इति षड्विंशत्यृचं चतुर्थं सूक्तम्। 'त्वं सोमासि' (ऋ. सं. ९. ६७) इत्यत्रोक्ता भरद्वाजकश्यपाद्याः सप्तर्षयः। आद्या बृहती द्वितीया सतोबृहती। अथैकः प्रगाथः। 'परि सुवानः' इत्येषा तृतीयैकविंशत्यक्षरा भुरिग्विराड् द्विपदा। 'नृभिर्येमाणः' इति षोडशी विंशत्यक्षरा द्विपदा विराट्। चतुर्थ्यादिद्वौ प्रगाथौ। पञ्चम्यादित्रयः सप्तदश्यादिपञ्च प्रगाथाः। पवमानः सोमो देवता। तथा चानुक्रम्यते— 'परीतः षड्विंशतिः सप्तर्षयः प्रगाथं तृतीयाषोडश्यौ द्विपदे अष्टम्याद्ये बृहत्यौ' इति। गतः सूक्तविनियोगः॥

परीतो षिञ्चता सुतं सोमो य उत्तमं हविः।
दधन्वाँ यो नर्यो अप्स्व१न्तरा सुषाव सोममद्रिभिः ॥ १ ॥

परि। इतः। सिञ्चत। सुतम्। सोमः। यः। उत्ऽतमम्। हविः।
दधन्वान्। यः। नर्यः। अप्ऽसु। अन्तः। आ। सुसाव। सोमम्। अद्रिऽभिः ॥ १ ॥

१. स-१.२.३.४.५.७-भ१.२.४.६—°पूतभृदाख्यानि।

हे ऋत्विजः सुतम् अभिषुतं सोमम् इतः अस्मात् कर्मण ऊर्ध्वमध्वान्तात्प्रदेशादूर्ध्वं परि षिञ्चत वसतीवरीभिः ॥ 'इतो षिञ्चत' इत्यत्र संहितायां 'छन्दसि' इति दीर्घत्वम्। 'आदेशप्रत्यययोः' इति षत्वम् ॥ यः सोमः देवानाम् उत्तमं प्रशस्यं हविः भवति यः अपि च नर्यः मनुष्यहितः यः च सोमः अप्सु वसतीवरीष्वन्तरिक्षे वा अन्तः मध्ये गच्छन् भवति तं सोममद्रिभिः ग्रावभिरध्वर्युः सुषाव अभिषुतं चकार। तं परि षिञ्चतेति समन्वयः ॥

नूनं पुनानोऽविभिः परि स्रवादब्धः सुरभिंतरः ।
सुते चित्त्वाप्सु मदामो अन्धसा श्रीणन्तो गोभिरुत्तरम् ॥ २ ॥

नूनम् । पुनानः । अविऽभिः । परि । स्रव । अदब्धः । सुरभिम्ऽतरः ।
सुते । चित् । त्वा । अप्ऽसु । मदामः । अन्धसा । श्रीणन्तः । गोभिः । उत्ऽतरम् ॥ २ ॥

हे सोम अदब्धः कैश्चिदप्यहिंसितः सुरभिंतरः अत्यन्तं सुगन्धिस्त्वं नूनम् इदानीं पुनानः पूयमानः सन् अविभिः अविवालकृतैः पवित्रैस्तेभ्यः परि स्रव परितः क्षर। सुते चित् अभिषुते सति अन्धसा सक्तुलक्षणेनान्नेन गोभिः गोविकारैः क्षीरैः क्षीरादिभिः श्रीणन्तः मिश्रयन्तो वयम् उत्तरम् उद्गततरम् अप्सु वसतीवरीषु संस्थितं त्वां मदामः मन्दामहे स्तुमः ॥

परि सुवानश्चक्षसे देवमादनः क्रतुरिन्दुर्विचक्षणः ॥ ३ ॥

परि । सुवानः । चक्षसे । देवऽमादनः । क्रतुः । इन्दुः । विऽचक्षणः ॥ ३ ॥

सुवानः अभिषूयमाणः सोमः चक्षसे सर्वेषां दर्शनाय परि स्रवति। कीदृशः। देवमादनः देवानां तर्पयिता क्रतुः कर्ता इन्दुः पात्रेषु क्षरन्दीप्तो दीप्तो वा विचक्षणः सर्वस्य विद्रष्टा ॥

पुनानः सोम धारयापो वसानो अर्षसि ।
आ रत्नधा योनिमृतस्य सीदस्युत्सो देव हिरण्ययः ॥ ४ ॥

पुनानः । सोम । धारया । अपः । वसानः । अर्षसि ।
आ । रत्नऽधाः । योनिम् । ऋतस्य । सीदसि । उत्सः । देव । हिरण्ययः ॥ ४ ॥

हे सोम पुनानः पूयमानस्त्वम् अपः उदकानि वसतीवर्याख्यानि वसानः आच्छादयन् धारया अर्षसि पवित्रं गच्छसि। ततः रत्नधाः रत्नानां दाता त्वम् ऋतस्य सत्यभूतस्य यज्ञस्य योनिं स्थानम् आ सीदसि। हे देव द्योतमान सोम उत्सः प्रस्यन्दनशीलस्त्वं हिरण्ययः हिरण्मयो हिरण्यस्योत्पत्तिस्थानं खलु। यद्वा देवानां हितरमणीयो भवसि ॥

दुहान ऊधर्दिव्यं मधु प्रियं प्रत्नं सधस्थमासदत् ।
आपृच्छ्यं धरुणं वाज्यर्षति नृभिर्धूतो विचक्षणः ॥ ५ ॥

दुहानः । ऊधः । दिव्यम् । मधु । प्रियम् । प्रत्नम् । सधऽस्थम् । आ । असदत् ।
आऽपृच्छ्यम् । धरुणम् । वाजी । अर्षति । नृऽभिः । धूतः । विऽचक्षणः ॥ ५ ॥

---

१. तै१.६–भा१.२.४.७–छांदसं।

ᵛमधु मदकरं ᵛप्रियं प्रीतिकारि ᵛदिव्यं दिवि भवम् ᵛऊधः सोमवल्लीलक्षणं[1] ᵛदुदुहानः सोमः ᵛप्रत्नं पुरातनं ᵛसधस्थम्। सह तिष्ठन्त्यत्रेति सधस्थं स्थानम्। अन्तरिक्षम् ᵛआसदत् आसीददिति। सदेर्लुङि रूपम्। ततः ᵛआपृच्छ्यं कर्मभ्य आप्रष्टव्यं ᵛधरुणं कर्मणो धारयितारं यज्ञमार्गं ᵛवाजी अन्नवान् सोमः ᵛअर्षति। तस्मा अन्नं दातुमभिगच्छति। कीदृशः। ᵛनृभिः कर्मनेतृभिर्ऋत्विग्भिः ᵛधूतः अवाभ्यगृहे परिशोधितः। 'हैरिकं चतुरामूनोति पञ्चहृत्यः सप्तहृत्यो वा' इत्यापस्तम्बेन सूत्रितम्। ᵛविचक्षणः सर्वस्य विद्रष्टा॥ ॥ १२ ॥

**पुनानः सोम जागृविरव्यो वारे परि प्रियः।**
**त्वं विप्रो अभवोऽङ्गिरस्तमो मध्वा यज्ञं मिमिक्ष नः॥ ६॥**

पुनानः। सोम। जागृविः। अव्यः। वारे। परि। प्रियः।
त्वम्। विप्रः। अभवः। अङ्गिरःऽतमः। मध्वा। यज्ञम्। मिमिक्ष। नः॥ ६॥

हे ᵛसोम ᵛजागृविः जागरणशीलः ᵛप्रियः प्रीणयिता त्वं ᵛपुनानः पूयमानः सन् ᵛअव्यः अवेः ᵛवारे वाले पवित्रे ᵛपरि क्षरसि। किंच ᵛविप्रः मेधावी ᵛत्वम् ᵛअङ्गिरस्तमः अङ्गिरसां वरिष्ठः पितॄणां नेता ᵛअभवः[2] भवसि। स त्वं ᵛनः अस्मदीयं ᵛयज्ञं ᵛमध्वा मधुनात्मीयेन रसेन ᵛमिमिक्ष सिञ्च। मिहेः सेचनार्थस्य सनि रूपम्॥

**सोमो मीढ्वान्पवते गातुवित्तम ऋषिर्विप्रो विचक्षणः।**
**त्वं कविरभवो देववीतम आ सूर्यं रोहयो दिवि॥ ७॥**

सोमः। मीढ्वान्। पवते। गातुवित्ऽतमः। ऋषिः। विप्रः। विऽचक्षणः।
त्वम्। कविः। अभवः। देवऽवीतमः। आ। सूर्यम्। रोहयः। दिवि॥ ७॥

ᵛमीढ्वान् कामानां सेक्ता ᵛसोमः ᵛपवते क्षरति। कीदृशः। ᵛगातुवित्तमः अत्यन्तं मार्गस्य लम्भकः ᵛऋषिः सर्वस्य प्रदर्शकः ᵛविप्रः मेधावी ᵛविचक्षणः विद्रष्टा। किंच ᵛकविः क्रान्तप्रज्ञः ᵛत्वं ᵛदेववीतमः अत्यन्तं देवकामः ᵛअभवः भवसि। अपि च ᵛदिवि द्युलोके ᵛसूर्यम् ᵛआ ᵛरोहयः प्रादुर्भावयसि॥

**सोम उ षुवाणः सोतृभिरधि ष्णुभिरवीनाम्।**
**अश्वयेव हरिता याति धारया मन्द्रया याति धारया॥ ८॥**

सोमः। ऊँ इति। सुवानः। सोतृऽभिः। अधि। स्नुऽभिः। अवीनाम्।
अश्वयाऽइव। हरिता। याति। धारया। मन्द्रया। याति। धारया॥ ८॥

ᵛसोतृभिः अभिषवकर्तृभिर्ऋत्विग्भिः ᵛसुवानः अभिषूयमाणः ᵛसोमः ᵛअवीनां ᵛस्नुभिः। 'मांसपृत्स्नूनामुपसंख्यानम्' (पा. सू. ६. १. ६३. १) इति सानुशब्दस्य स्नुभावः। सानुभिरूर्णा-वालैः पवित्रैः ᵛअधि ᵛयाति अधिकं गच्छति। ᵛउ इति प्रसिद्धौ। ᵛअश्वयेव वडवयेव ᵛहरिता हरितवर्णया ᵛधारया ᵛयाति। ᵛमन्द्रया मदकारिण्या ᵛधारया प्रीणयितव्यमभिगच्छति[3]॥

---

१. ग-त३.६-म१.७—सोमलक्षणं। २. ट६-म१.२.७—वा। ३. ट१.२.३-४.५.७-म२.६-मु-*मभिगच्छति।

अनूपे गोमान्गोभिरक्षाः सोमो दुग्धाभिरक्षाः ।
समुद्रं न संवरणान्यग्मन्मन्दी मदाय तोशते ॥ ९ ॥

अनूपे । गोऽमान् । गोभिः । अक्षारिति । सोमः । दुग्धाभिः । अक्षारिति ।
समुद्रम् । न । सम्ऽवरणानि । अग्मन् । मन्दी । मदाय । तोशते ॥ ९ ॥

गोमान् गोयुक्तः सोमः अनूपे सिक्ते देशे कलशे गोभिः गोविकारैः क्षीरादिभिः सह अक्षाः क्षरति । तदेवोच्यते । सः सोमः आत्मनो मिश्रणार्थं दुग्धाभिः गोभिः सह अक्षाः क्षरति । क्षरतेर्लुङि रूपम् । किंच समुद्रं न यथा समुद्रमुदकानि गच्छन्ति तद्वत् संवरणानि संभजनीयानि रसरूपाण्यन्नानि द्रोणकलशम् अग्मन् गच्छन्ति । गमेर्लुङि च्लेर्लुकि रूपम् । किंच मन्दी मदकरः सोमः मदाय मदार्थं तोशते हन्यतेऽभिषूयते । तोशतिर्वधकर्मा ॥

आ सोम सुवानो अद्रिभिस्तिरो वाराण्यव्यया ।
जनो न पुरि चम्वोर्विशद्धरिः सदो वनेषु दधिषे ॥ १० ॥

आ । सोम । सुवानः । अद्रिऽभिः । तिरः । वाराणि । अव्यया ।
जनः । न । पुरि । चम्वोः । विशत् । हरिः । सदः । वनेषु । दधिषे ॥ १० ॥

हे सोम अद्रिभिः ग्रावभिः सुवानः अभिषूयमाणस्त्वम् अव्यया अविमयानि वाराणि वालानि पवित्राणि तिरः कुर्वन् व्यवधायकानि कुर्वाणः सन् आ पवस्व[1] इति शेषः । हरिः हरितवर्णः स सोमः चम्वोः अधिषवणफलकयोः उपरि[2] स्थिते कलशे[2] विशत् प्रविशति । तत्र दृष्टान्तः । जनो न यथा जनः पुरि पुरे प्रविशति । स त्वं वनेषु काष्ठनिर्मितेषु पात्रेषु सदः स्थानं दधिषे करोषि ॥  ॥ १३ ॥

स मामृजे तिरो अण्वानि मेष्यो मीळ्हे सप्तिर्न वाजयुः ।
अनुमाद्यः पवमानो मनीषिभिः सोमो विप्रेभिर्ऋक्वभिः ॥ ११ ॥

सः । ममृजे । तिरः । अण्वानि । मेष्यः । मीळ्हे । सप्तिः । न । वाजऽयुः ।
अनुऽमाद्यः । पवमानः । मनीषिऽभिः । सोमः । विप्रेभिः । ऋक्वऽभिः ॥ ११ ॥

वाजयुः अन्नकामः अण्वानि अणूनि सूक्ष्माणि मेष्यः मेष्या अवे रोमाणि पवित्राणि तिरः कुर्वन् सः सोमः मामृजे परिशोध्यते । अलंक्रियते वा । तत्र दृष्टान्तः । सप्तिर्न यथा जयकामैरश्वो मीळ्हे संग्रामेऽलंक्रियते तद्वत् । कीदृशः । अनुमाद्यः अनुमोदनीयः सर्वैः पवमानो मनीषिभिः ऋत्विग्भिः पूयमानः तथा ऋक्वभिः । 'छन्दसीवनिपौ' इति वनिप् । स्तुतिमद्भिर्विप्रैर्मेधाविभिः अभिष्टुतो स्तूयते ॥

प्र सोम देववीतये सिन्धुर्न पिप्ये अर्णसा ।
अंशोः पयसा मदिरो न जागृविरच्छा कोशं मधुश्चुतम् ॥ १२ ॥

१. ख६-भ१.७—पवस्व । २. ग-ख३.६-भ१.७—'उपरि स्थिते कलशे' नास्ति ।

उताहं नक्तमुत सोम ते दिवा सख्याय बभ्र ऊधनि ।
घृणा तपन्तमति सूर्यं परः शकुनाइव पप्तिम ॥ २० ॥

उत । अहम् । नक्तम् । उत । सोम । ते । दिवा । सख्याय । बभ्रो इति । ऊधनि ।
घृणा । तपन्तम् । अति । सूर्यम् । परः । शकुनाःऽइव । पप्तिम ॥ २० ॥

हे बभ्रो बभ्रुवर्ण हे सोम उत अपि च नक्तम् उत अपि च दिवा अहोरात्रयोः सख्याय सख्यार्थं तव ऊधनि समीपे अहं रम इति[1] शेषः[1] । ते वयं घृणा दीप्त्या तपन्तं ज्वलन्तं परः परमस्थानस्थितं[2] सूर्यं तदात्मकं त्वाम् अति पप्तिम । तत्र स्थितं त्वां प्राप्नुमति-पेतिम[3] । कथमिव । शकुनाइव । यथा सुपर्णादयः पक्षिणः सूर्यमतिगच्छन्ति तद्वत् ॥ 'पत्लृ गतौ' । अस्माच्छान्दसे लिटि 'तनिपत्योश्छन्दसि' इत्युपधालोपः ॥ ॥ १५ ॥

प्रातस्तोत्रेऽभिरूपकरणे सोमे मृज्यमान इत्यूचः । तत्र 'मृज्यमानः' इत्येषा तृतीया । सूत्रितं च—'मृज्यमानः सुहस्त्या दशभिर्दिवस्वतः' ( आश्व. श्रौ. ५. १२ ) इति ॥

मृज्यमानः सुहस्त्य समुद्रे वाचमिन्वसि ।
रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥ २१ ॥

मृज्यमानः । सुऽहस्त्य । समुद्रे । वाचम् । इन्वसि ।
रयिम् । पिशङ्गम् । बहुलम् । पुरुऽस्पृहम् । पवमान । अभि । अर्षसि ॥ २१ ॥

हे सुहस्त्य । हस्ते भवा हस्त्या अङ्गुलयः । शोभनाङ्गुलिक सोम मृज्यमानः शोध्यमानस्त्वं समुद्रे अन्तरिक्षे कलशे वा वाचं शब्दम् इन्वसि प्रेरयसि । किंच हे पवमान पूयमान सोम पिशङ्गं हिरण्यैः पिशङ्गवर्णं बहुलं प्रभूतं पुरुस्पृहं बहुभिः स्पृहणीयं रयिं धनम् अभ्यर्षसि स्तोतॄणामभिक्षरसि प्रयच्छसि ॥

मृजानो वारे पवमानो अव्यये वृषाव चक्रदो वने ।
देवानां सोम पवमान निष्कृतं गोभिरञ्जानो अर्षसि ॥ २२ ॥

मृजानः । वारे । पवमानः । अव्यये । वृषा । अव । चक्रदः । वने ।
देवानाम् । सोम । पवमान । निःऽकृतम् । गोभिः । अञ्जानः । अर्षसि ॥ २२ ॥

हे सोम वृषा वर्षिता त्वं मृजानः वसतीवरीभिर्मृज्यमानोऽलंक्रियमाणः अव्यये अविमये वारे वाले पवित्रे पवमानः पूयमानः सन् वने वननीये उदके काष्ठे कलशे वा अव चक्रदः अवक्रन्दसि शब्दायसे । ततो हे सोम हे पवमान त्वं गोभिः गव्यैः क्षीरादिभिः अञ्जानः अज्यमानः सन् निष्कृतं संस्कृतं देवानां स्थानम् अर्षसि गच्छसि ॥

पवस्व वाजसातयेऽभि विश्वानि काव्या ।
त्वं समुद्रं प्रथमो वि धारयो देवेभ्यः सोम मत्सरः ॥ २३ ॥

१. ग-त३.६-म१.७–' इति शेषः ' नास्ति । २. त-भ१–परस्थान° । ३. त६–°मतिपेतिम अतिगच्छेम; म१.२–°मतिपेतिम इति शेषः ।

पर्वस्व । वाजऽसातये । अभि । विश्वानि । काव्या ।

त्वम् । समुद्रम् । प्रथमः । वि । धारयः । देवेभ्यः । सोम । मत्सरः ॥ २३ ॥

हे सोम विश्वानि सर्वाणि काव्या कविकर्माणि स्तोत्राण्यभिलक्ष्य वाजसातये अन्नलाभाय पवस्व क्षर । हे सोम देवेभ्यः देवानां मत्सरः मदकरः प्रथमः सर्वदेवानां मुख्यः त्वं समुद्रम् अन्तरिक्षं कलशं वा वि धारयः विशेषेण धारयसि ॥

स तू पवस्व परि पार्थिवं रजो दिव्या च सोम धर्मभिः ।

त्वां विप्रासो मतिभिर्विचक्षण शुभ्रं हिन्वन्ति धीतिभिः ॥ २४ ॥

सः । तु । पवस्व । परि । पार्थिवम् । रजः । दिव्या । च । सोम । धर्मऽभिः ।

त्वाम् । विप्रासः । मतिऽभिः । विऽचक्षण । शुभ्रम् । हिन्वन्ति । धीतिऽभिः ॥ २४ ॥

हे सोम सः तादृशस्त्वं पार्थिवं रजः लोकं प्रति दिव्यानि च रजांसि[6] प्रति धर्मभिः धारकैः[7] सह तु क्षिप्रं परि पवस्व परितः क्षर । हे विचक्षण विद्रष्टः सोम विप्रासः विप्रा मेधाविनः मतिभिः स्तुतिभिः धीतिभिः अङ्गुलीभिश्च शुभ्रं श्वेतवर्णं त्वां हिन्वन्ति प्रेरयन्ति ॥

पर्वमाना असृक्षत पवित्रमति धारया ।

मरुत्वन्तो मत्सरा इन्द्रिया हया मेधामभि प्रयांसि च ॥ २५ ॥

पवमानाः । असृक्षत । पवित्रम् । अति । धारया ।

मरुत्वन्तः । मत्सराः । इन्द्रियाः । हयाः । मेधाम् । अभि । प्रयांसि । च ॥ २५ ॥

पवमानाः पूयमानाः सोमाः धारया आत्मीयया पवित्रम् अतीत्य असृक्षत सृज्यन्ते । कीदृशाः । मरुत्वन्तः मरुद्भिर्युक्ताः मत्सराः मदकराः इन्द्रियाः इन्द्रयुक्ताः । मेधां स्तुतिं प्रयांसि अन्नानि च अभिलक्ष्य स्तोतृभ्यः अभयं[8] कर्तुं वा हयाः गन्तारः एते सृज्यन्ते ॥

अपो वसानः परि कोशमर्षतीन्दुर्हियानः सोतृभिः ।

जनयञ्ज्योतिर्मन्दना अवीवशद्गाः कृण्वानो न निर्णिजम् ॥ २६ ॥

अपः । वसानः । परि । कोशम् । अर्षति । इन्दुः । हियानः । सोतृऽभिः ।

जनयन् । ज्योतिः । मन्दनाः । अवीवशत् । गाः । कृण्वानः । न । निःऽनिजम् ॥ २६ ॥

अपः वसतीवरीः वसानः आच्छादयन् सोतृभिः अभिषुण्वद्भिः हियानः प्रेर्यमाणः इन्दुः सोमः कोशं कलशं परि अर्षति प्रति गच्छति । किंच ज्योतिः दीप्तिं जनयन् उत्पादयन् गाः गव्यानि क्षीरादीनि निर्णिजम् आत्मनो रूपं कृण्वानः कुर्वन् मिश्रयन् सोऽयं सोमः । नः संप्रत्यर्थे । इदानीं मन्दनाः स्तुतीः अवीवशत् कामयते । 'वश कान्तौ' । लुङि चङि रूपम् ॥ ॥१६॥

'पवस्व' इति षोडशर्चं पञ्चमं सूक्तम् । आद्यतृचस्य गौरिवीतिर्नाम शक्तिपुत्र ऋषिः । तृतीयायाः शक्तिर्नाम वासिष्ठः । ततः पञ्चानां द्व्यानामुरुर्नामाङ्गिरस ऋजिश्वा नाम आरद्वाज

---

६. त-म-मु—रजांसि । ७. म-रा३-म५.६—धारकैस्तकैः । ८. भ६—अभयं ।

ऊर्ध्वसद्मा नामाङ्गिरसः कृतयशा नाम कश्चित् सोऽप्याङ्गिरस ऋणंचयो नाम राजर्षिरित्येते क्रमेणर्षयः। एवं त्रयोदश गताः। ततस्तिसृणां वासिष्ठः शक्तिः। प्रथमातृतीयाद्या अयुजः ककुभः। द्वितीयाचतुर्थ्याद्या युजः सतोबृहत्यः। 'स सुन्वे यो वसूनाम्' इत्येषा तु यवमध्या गायत्री। पवमानः सोमो देवता। तथा चानुक्रम्यते—'पवस्व षोळश गौरिवीतिर्द्वे शक्तिरेकामूरुर्ऋजिश्वोर्ध्वसद्मा कृतयशा ऋणंचय इत्यृषयो द्व्यृचास्तिस्रः शक्तिः काकुभाः प्रगाथाः स सुन्वे गायत्री यवमध्या' इति। गतो विनियोगः॥

**पव॑स्व॒ मधु॑मत्तम॒ इन्द्रा॑य सोम क्रतु॒वित्त॑मो॒ मदः॑। महि॑ द्यु॒क्षत॑मो॒ मदः॑॥ १॥**

पव॑स्व। मधु॑मत्ऽतमः। इन्द्रा॑य। सोम॒। क्र॒तु॒वित्ऽत॑मः। मदः॑। महि॑। द्यु॒क्षऽत॑मः। मदः॑॥ १॥

हे सोम मधुमत्तमः अतिशयेन माधुर्योपेतस्त्वम् इन्द्राय इन्द्रार्थं मदः मदकरः सन् पवस्व क्षर। कीदृशः। क्रतुवित्तमः अत्यन्तं प्रज्ञायाः कर्मणो वा लम्भकः महि महान् मंहनीयो वा द्युक्षतमः अत्यन्तं दीप्तः मदः मदहेतुः॥

**यस्य॑ ते पी॒त्वा वृ॑ष॒भो वृ॑षा॒यते॒ऽस्य पी॒ता स्व॒र्विदः॑।**
**स सु॒प्रके॑तो अ॒भ्य॑क्रमी॒दिषो॒ऽच्छा॒ वाजं॒ नैत॑शः॥ २॥**

यस्य॑। ते॒। पी॒त्वा। वृ॒ष॒भः। वृ॒ष॒ऽयते॑। अ॒स्य। पी॒ता। स्वः॒ऽविदः॑।
सः। सु॒ऽप्रके॑तः। अ॒भि। अ॒क्र॒मी॒त्। इषः॑। अच्छ॑। वाज॑म्। न। एत॑शः॥ २॥

वृषभः कामानां वर्षक इन्द्रः यस्य यं ते त्वां पीत्वा वृषायते वृषभ इवाचरति। किंच स्वर्विदः सर्वस्य दर्शकस्य अस्य ते तव पीता पाने सति सुप्रकेतः सुप्रज्ञः सः इन्द्रः इषः शत्रूणामन्नानि अभ्यक्रमीत् अभिक्रामति। तत्र दृष्टान्तः। वाजं[1] नैतशः। एतश इत्यश्वनाम। यथाश्वो वाजं संग्राममभिगच्छति तद्वत्॥

**त्वं ह्य१ङ्ग दैव्या॒ पव॑मान॒ जनि॑मानि द्यु॒मत्त॑मः। अ॒मृ॒त॒त्वाय॑ घो॒षयः॑॥ ३॥**

त्वम्। हि। अ॒ङ्ग। दैव्या॑। पव॑मान। जनि॑मानि। द्यु॒मत्ऽत॑मः। अ॒मृ॒त॒ऽत्वाय॑। घो॒षयः॑॥ ३॥

हे पवमान पूयमान सोम द्युमत्तमः अतिशयेन दीप्तिमान् त्वं हि त्वमेव दैव्या देवसंबन्धीनि जनिमानि जन्मानि। देवानित्यर्थः[2]। तानभिलक्ष्य अमृतत्वाय तेषाममरणाय अङ्ग क्षिप्रं घोषयः शब्दायसे॥ 'घुषिर् विशब्दने'। ण्यन्तस्य लेटि रूपम्। हिचेत्यादिना निघातः॥

**येना॒ नव॑ग्वो द॒ध्यङ्ङ॑पोर्णु॒ते येन॒ विप्रा॑स आपि॒रे।**
**दे॒वानां॑ सु॒म्ने अ॒मृत॑स्य॒ चारु॑णो॒ येन॒ श्रवां॑स्यान॒शुः॥ ४॥**

येन॑। नव॑ऽग्वः। द॒ध्यङ्। अ॒प॒ऽऊ॒र्णु॒ते। येन॑। विप्रा॑सः। आ॒पि॒रे।
दे॒वाना॑म्। सु॒म्ने। अ॒मृत॑स्य। चारु॑णः। येन॑। श्रवां॑सि। आ॒न॒शुः॥ ४॥

नवग्वः नवनीयगतिः यद्वा नवभिर्मासैः सत्रस्यानुष्ठाता दध्यङ् एतन्नामकोऽङ्गिराः येन सोमेन पणिभिरपहृतानां गवां द्वारम् अपोर्णुते अपाच्छादयति विवृतमकार्षीत्। विप्रासः स्तुवन्तः

---

1. ख-ग-'वाजं' नास्ति। २. छ१.२.४.५.७-ग२.६–देवानित्यर्थः जानासीत्यर्थः।

सर्वे मेधाविनोऽङ्गिरसः येन च[1] सोमेन आपिरे पणिभिरपहृता गा आप्नुवन् । किंच देवानाम् इन्द्रादीनां सुम्ने सुखे यज्ञेन संजाते सति चारुणः कल्याणस्य अमृतस्य उदकस्य संबन्धीनि श्रवांसि अन्नानि येन च सोमेन यजमानाः आनशुः व्याप्नुवन् अलभन्त । स त्वं देवानाममृतत्वाय शब्दायस इति पूर्वेण समन्वयः ॥

**एष स्य धारया सुतोऽव्यो वारेभिः पवते मदिन्तमः । क्रीळन्नूर्मिरपामिव ॥५॥**

एषः । स्यः । धारया । सुतः । अव्यः । वारेभिः । पवते । मदिन्ऽतमः ।
क्रीळन् । ऊर्मिः । अपाम्ऽइव ॥ ५ ॥

स्यः सः एषः सुतः अभिषुतः सोमः अव्यः अवेः वारेभिः वालेभ्यः पवित्रेभ्यः धारया आत्मीयया पवते कलशमभिलक्ष्य क्षरति । कीदृशः । मदिन्तमः मादयितृतमः अपामिव उदकानाम् ऊर्मिः संघात इव क्रीळन् इतस्ततः संक्रीडमानः पवते ॥　　॥ १० ॥

**य उस्रिया अप्या अन्तरश्मनो निर्गा अकृन्तदोजसा ।**
**अभि व्रजं तत्निषे गव्यमश्व्यं वर्मीव धृष्णवा रुज ॥ ६ ॥**

यः । उस्रियाः । अप्याः । अन्तः । अश्मनः । निः । गाः । अकृन्तत् । ओजसा ।
अभि । व्रजम् । तत्निषे । गव्यम् । अश्व्यम् । वर्मीऽइव । धृष्णो इति । आ । रुज ॥ ६ ॥

यः सोमः उस्रियाः उत्सरणशीलाः अप्याः । अप इत्यन्तरिक्षनाम । तस्मात् 'भवे छन्दसि' इति यत् । अन्तरिक्षस्था अहिप्रभृतिभिरसुरैरपहृत्य निहिताः गाः अपः अश्मनः । मेघनामैतत् । मेघात् अन्तः ओजसा बलेन निः अकृन्तत् निरच्छिनत् निरगमयत् । अन्तरिक्षात् वृष्टिमकार्षीदित्यर्थः । स त्वमसुरैरपहृतं गव्यं गोसंबन्धिनम् अश्व्यम् अश्वेषु भवं व्रजं समूहम् अभि तत्निषे अभितो व्याप्नोषि ॥ 'तनु विस्तारे' । छान्दसे लिटि 'तनिपत्योश्छन्दसि' इत्युपधालोपः । किंच हे धृष्णो शत्रुधर्षणशील सोम स त्वं वर्मीव कवचीव शूरः आ रुज असुरानाजहि ॥

**आ सोता परि षिञ्चताश्वं न स्तोममप्तुरं रजस्तुरम् । वनक्रक्षमुदप्रुतम् ॥ ७ ॥**

आ । सोत । परि । सिञ्चत । अश्वम् । न । स्तोमम् । अप्ऽतुरम् । रजःऽतुरम् ।
वनऽक्रक्षम् । उदऽप्रुतम् ॥ ७ ॥

हे ऋत्विजः आ सोत सोममभिषुणुत ॥ 'षुञ् अभिषवे' । लोटि छान्दसो विकरणस्य लुक् । 'तप्तनप्तनथनाश्च' इति तस्य तबादेशः ॥ किंच परि षिञ्चत परितस्तं वसतीवर्यादिभिः सिञ्चत । कीदृशम् । अश्वं न अश्वमिव वेगिनं स्तोमं स्तोतव्यम् अप्तुरम् अन्तरिक्षस्थितानामुदकानां प्रेरकं रजस्तुरं तेजसां च प्रेरकम् । वनक्रक्षम् उदकानां कर्षकम् । यद्वा । काष्ठेषु पात्रेषु विप्रकीर्णम् । उदप्रुतम् उदके गच्छन्तं प्लवमानं सोममभिषुणुताभिषिञ्चत च[2] ॥

**सहस्रधारं वृषभं पयोवृधं प्रियं देवाय जन्मने ।**
**ऋतेन य ऋतजातो विवावृधे राजा देव ऋतं बृहत् ॥ ८ ॥**

१. त१.२.४.५.७-अ६-सु-वा । २. त१.२.३.६.७-अ२.६.७-'च' नास्ति ।

सहस्रऽधारम्। वृषभम्। पयःऽवृधम्। प्रियम्। देवाय। जन्मने।
ऋतेन। यः। ऋतऽजातः। विऽववृधे। राजा। देवः। ऋतम्। बृहत्॥ ८॥

सहस्रधारं बहुधारोपेतं वृषभं कामानां वर्षकं पयोवृधम् उदकानां वर्धकं प्रियं प्रीतिविषयं तं सोमं देवाय देवसंबन्धिने जन्मने देवेभ्यस्तदर्थमभिषुणुत। ऋतजातः उदकाज्जातः यः राजा सोमः ऋतेन सततगामिना वसतीवर्याख्येनोदकेन विवावृधे विशेषेण वर्धते। कीदृशः। देवः द्योतमानः स्तोतव्यो वा[1] ऋतं सत्यभूतः सन् बृहत् महान्। तमासुनुतेति पूर्वेण समन्वयः॥

अभि द्युम्नं बृहद्यश इषस्पते दिदीहि देव देवयुः। वि कोशं मध्यमं युव॥ ९॥

अभि। द्युम्नम्। बृहत्। यशः। इषः। पते। दिदीहि। देव। देवऽयुः।
वि। कोशम्। मध्यमम्। युव॥ ९॥

हे इषस्पते अन्नस्य पते हे देव स्तोतव्य सोम देवयुः देवकामस्त्वं द्युम्नं द्योतमानं बृहत् प्रभूतं यशः अन्नमस्मभ्यम् अभि दिदीहि आभिमुख्येन प्रकाशय। प्रयच्छेत्यर्थः। आमन्त्रितस्याविद्यमानवत्त्वेन[2] पादादित्वादनिघातः। किंच मध्यमम् अन्तरिक्षस्थितं कोशं मेघं वि युव वृष्ट्यर्थं विगमय विश्लेषय॥

आ वच्यस्व सुदक्ष चम्वोः सुतो विशां वह्निर्न विश्पतिः।
वृष्टिं दिवः पवस्व रीतिमपां जिन्वा गविष्टये धियः॥ १०॥

आ। वच्यस्व। सुऽदक्ष। चम्वोः। सुतः। विशाम्। वह्निः। न। विश्पतिः।
वृष्टिम्। दिवः। पवस्व। रीतिम्। अपाम्। जिन्व। गोऽइष्टये। धियः॥ १०॥

हे सुदक्ष सुबल सोम चम्वोः अधिषवणफलकयोः सुतः अभिषुतः विशां प्रजानां वह्निर्न वोढा विश्पतिः राजेव सर्वासां प्रजानां वोढा त्वम् आ वच्यस्व आगच्छ। कलशमापवस्व। वचेर्गत्यर्थस्य व्यत्ययेन श्यनि रूपम्। किंच त्वं वृष्टिं वृष्यमाणाम् अपाम् उदकानां रीतिं गतिं दिवः द्युलोकात् पवस्व कुरु। त्वमः गविष्टये गामात्मन इच्छते यजमानाय धियः कर्माणि जिन्व आपूरय[3]॥ ॥ १८ ॥

एतमु त्यं मदच्युतं सहस्रधारं वृषभं दिवो दुहुः। विश्वा वसूनि बिभ्रतम्॥ ११॥

एतम्। ऊँ इति। त्यम्। मदऽच्युतम्। सहस्रऽधारम्। वृषभम्। दिवः। दुहुः।
विश्वा। वसूनि। बिभ्रतम्॥ ११॥

दिवः देवान् कामयमाना ऋत्विजः एतम् त्यं तमिमं सोममेव दुहुः दुदुहुः दुहन्ति। 'ब्राह्मणो वत्सः ऋत्विजो दुहन्ति' (तै. सं. ६. २ ११. ४) इति तैत्तिरीयकब्राह्मणम्। कीदृशं सोमम्। मदच्युतं मदस्य प्रेरकं सहस्रधारं बहुधारं वृषभं कामानां वर्षकं विश्वा सर्वाणि वसूनि धनानि बिभ्रतं धारयन्तं सोमं दुहन्ति॥

१. त१.२.४.५.७-म६–'वा' नास्ति। २. त१.२.३.४.५.७-अ-मु–'विद्यमानत्वेन। ३. त१.२.४.५.७-म६–पूरय।

वृषा वि जज्ञे जनयन्नमर्त्यः प्रतपञ्ज्योतिषा तमः ।
स सुष्टुतः कविभिर्निर्णिजं दधे त्रिधात्वस्य दंससा ॥ १२ ॥

वृषा । वि । जज्ञे । जनयन् । अमर्त्यः । प्रऽतपन् । ज्योतिषा । तमः ।
सः । सुऽस्तुतः । कविऽभिः । निःऽनिजम् । दधे । त्रिऽधातु । अस्य । दंससा ॥ १२ ॥

वृषा कामानां वर्षकः अमर्त्यः मनुष्यधर्मरहितः सोमः वि जज्ञे विजायते । किं कुर्वन् । जनयन् सर्वं ज्योतिर्वोत्पादयन् ज्योतिषा स्वीयेन तमः प्रतपन् प्रत्यक्षयन् विनाशयन् प्रादुर्भवति । ततः कविभिः मेधाविभिः स्तोतृभिः सुष्टुतः सः सोमः निर्णिजं निर्णेजनहेतुं मिश्रणं गव्यं दधे धारयति । अथ त्रिधातु त्रिषु सवनेषु देवानां पोषकम् । यद्वा । त्रयः सोमधारका द्रोणकलशादयो यस्मिन् । तदग्रशार्थं कर्म अस्य सोमस्य दंससा कर्मणा क्रियते खलु ॥

स सुन्वे यो वसूनां यो रायामानेता य इळानाम् । सोमो यः सुक्षितीनाम् ॥ १३ ॥

सः । सुन्वे । यः । वसूनाम् । यः । रायाम् । आऽनेता । यः । इळानाम् ।
सोमः । यः । सुऽक्षितीनाम् ॥ १३ ॥

सः सोमः सुन्वे अभिषुतः[1] ऋत्विग्भिः । यः सोमः वसूनां धनानाम् आनेता यः च रायाम् । रान्ति प्रयच्छन्ति क्षीरादिकमिति रायो गावः । तेषामानेता यः च इळानाम् अन्नानां च यः च सोमः सुक्षितीनां सुनिवासानां शोभनमनुष्ययुक्तानां गृहाणामानेता विद्यते सोऽभिषुतोऽभूदिति ॥

यस्य न इन्द्रः पिबाद्यस्य मरुतो यस्य वार्यमणा भगः ।
आ येन मित्रावरुणा करामह एन्द्रमवसे महे ॥ १४ ॥

यस्य । नः । इन्द्रः । पिबात् । यस्य । मरुतः । यस्य । वा । अर्यमणा । भगः ।
आ । येन । मित्रावरुणा । करामहे । आ । इन्द्रम् । अवसे । महे ॥ १४ ॥

नः अस्मदीयं यस्य यं सोमम् इन्द्रः पिबात् पिबति । 'पा पाने' । लेट्याडागमः । यं च सोमं मरुतः पिबन्ति वा अपि च अर्यमणा एतन्नामकेन देवेन सह भगः देवः यं सोमं पिबति येन सोमेन मित्रावरुणा मित्रावरुणौ वयम् आ करामहे अभिमुखीकुर्महे तथा महे महते अवसे रक्षणाय येन च सोमेन इन्द्रम् अभिमुखीकुर्महे स सोमोऽभिषूयते[2] ॥

इन्द्राय सोम पातवे नृभिर्यतः स्वायुधो मदिन्तमः । पवस्व मधुमत्तमः ॥ १५ ॥

इन्द्राय । सोम । पातवे । नृऽभिः । यतः । सुऽआयुधः । मदिन्ऽतमः ।
पवस्व । मधुमत्ऽतमः ॥ १५ ॥

हे सोम मधुमत्तमः अतिशयेन माधुर्योपेतस्त्वम् इन्द्राय पातवे पानार्थं पवस्व क्षर । कीदृशः । नृभिः कर्मनेतृभिर्ऋत्विग्भिः यतः संयतः स्वायुधः शोभनस्वकपालाद्यायुधोपेतः मदिन्तमः मादयितृतमः ॥

१. ग–अभिषूयते । २. ग–सोमोऽभिषुतः ।

इन्द्र॑स्य॒ हार्दि॑ सोम॒धान॒मा वि॑श समु॒द्रमि॑व॒ सिन्ध॑वः ।
जुष्टो॑ मि॒त्राय॒ वरु॑णाय वा॒यवे॑ दि॒वो वि॑ष्ट॒म्भ उ॑त्त॒मः ॥ १६ ॥

इन्द्र॑स्य । हार्दि॑ । सो॒म॒ऽधान॑म् । आ । वि॒श॒ । स॒मु॒द्रम्ऽइ॑व । सिन्ध॑वः ।
जुष्टः॑ । मि॒त्राय॑ । वरु॑णाय । वा॒यवे॑ । दि॒वः । वि॒ष्ट॒म्भः । उ॒त्ऽत॒मः ॥ १६ ॥

हे सोम त्वम् इन्द्रस्य हार्दि हृदयंगमं हृदयभूतं वा सोमधानम्। सोमो निधीयते अस्मिन्निति[1] सोमधानः कलशः। तम् आ विश प्रविश[2]। तत्र दृष्टान्तः। समुद्रमिव यथा समुद्रं सिन्धवः नद्यः प्रविशन्ति तद्वत्। कीदृशस्त्वम्। मित्राय वरुणाय वायवे एतेभ्यः जुष्टः पर्याप्तः दिवः द्युलोकस्य विष्टम्भः विष्टम्भयिता स्थापयिता उत्तमः सर्वेषामुत्कृष्टतमस्त्वं कलशमाविश ॥ ॥ १९ ॥

'परि प्र' इति द्वाविंशत्यृचं द्वैपदं षष्ठं सूक्तम्। षष्ठे सहस्रवत्सरीयसत्रहोत्रीयादिधिष्ण्योपेता अग्नयो धामेश्वरपुत्रा ऋषयः। विंशतिका द्विपदा विराजः। पवमानः सोमो देवता। तथा चानुक्रान्तं- 'परि प्र अधिकाग्नयो धिष्ण्या ऐश्वरा द्वैपदम्' इति। गतो विनियोगः ॥

परि॒ प्र ध॒न्वेन्द्रा॑य सोम स्वा॒दुर्मि॒त्राय॑ पू॒ष्णे भगा॑य ॥ १ ॥

परि॑ । प्र । ध॒न्व॒ । इन्द्रा॑य । सो॒म॒ । स्वा॒दुः । मि॒त्राय॑ । पू॒ष्णे । भगा॑य ॥ १ ॥

हे सोम स्वादुः स्वादुरसस्त्वम् इन्द्राय मित्राय पूष्णे भगाय एतेभ्यो देवेभ्यः परि प्र धन्व परितः पात्रेषु प्रक्षर[3] ॥

इन्द्र॑स्ते सोम सु॒तस्य॑ पेयाः॒ क्रत्वे॒ दक्षा॑य॒ विश्वे॑ च दे॒वाः ॥ २ ॥

इन्द्रः॑ । ते॒ । सो॒म॒ । सु॒तस्य॑ । पे॒याः॒ । क्रत्वे॑ । दक्षा॑य । विश्वे॑ । च॒ । दे॒वाः ॥ २ ॥

हे सोम सुतस्य अभिषुतस्य ते तव रसं भागम् इन्द्रः पेयाः पेयात् पिबतु ॥ पातेराशीर्लिङि रूपम्। पुरुषव्यत्ययः ॥ किमर्थम्। क्रत्वे क्रतवे प्रज्ञानाय दक्षाय बलाय च। किंच अमी विश्वे सर्वे देवाः च त्वदीयमंशं पिबन्तु ॥

ए॒वामृता॑य म॒हे क्षया॑य॒ स शु॒क्रो अ॑र्ष दि॒व्यः पी॒यूषः॑ ॥ ३ ॥

ए॒व । अ॒मृता॑य । म॒हे । क्षया॑य । सः । शु॒क्रः । अ॒र्ष॒ । दि॒व्यः । पी॒यूषः॑ ॥ ३ ॥

हे सोम शुक्रः दीप्तः दिव्यः दिवि भवः पीयूषः देवैः पातव्यः सः त्वम् अमृताय अमरणाय महे महते क्षयाय निवासाय च एव अर्ष एवं पवस्व क्षर ॥

पव॑स्व सोम म॒हान्त्स॑मु॒द्रः पि॒ता दे॒वानां॒ विश्वा॒भि धाम॑ ॥ ४ ॥

पव॑स्व । सो॒म॒ । म॒हान् । स॒मु॒द्रः । पि॒ता । दे॒वाना॑म् । विश्वा॑ । अ॒भि । धाम॑ ॥ ४ ॥

हे सोम महान् देवेभ्यो दीयमानत्वेन महत्त्वयुक्तः समुद्रः समुन्दनः। यस्मात् समुद्रवन्ति रसास्तादृशः। पिता सर्वेषां पालयिता त्वं देवानां विश्वा विश्वानि सर्वाणि धाम धामानि शरीराण्यभिलक्ष्य पवस्व ॥

१. ग-त३.६.म१.२.४.७—निधीय अत्रेति। २. ग—प्रविशेति; त१.२.४.५—प्रविशते। ३. म-त३.४.७-म१.४.७—क्षर।

शुक्रः पवस्व देवेभ्यः सोम दिवे पृथिव्यै शं च प्रजायै ॥ ५ ॥

शुक्रः । पवस्व । देवेभ्यः । सोम । दिवे । पृथिव्यै । शम् । च । प्रऽजायै ॥ ५ ॥

हे सोम शुक्रः दीप्तस्त्वं देवेभ्यः देवार्थं पवस्व क्षर । किंच दिवे पृथिव्यै च द्यावापृथिवीभ्यां च ततः प्रजायै प्रजाभ्यश्च शं सुखं च कुरु ॥

दिवो धर्तासि शुक्रः पीयूषः सत्ये विधर्मन्वाजी पवस्व ॥ ६ ॥

दिवः । धर्ता । असि । शुक्रः । पीयूषः । सत्ये । विऽधर्मन् । वाजी । पवस्व ॥ ६ ॥

हे सोम शुक्रः दीप्तः पीयूषः पानव्यस्त्वं दिवः द्युलोकस्य धर्ता धारकः असि । वाजी बलवान् स त्वं सत्ये सत्यभूते विधर्मन् विधर्मणि । विविधकर्माणो[1] ऋत्विजो यस्मिन् । यद्वा । विविधसोमादिहविषां धारके । अस्मिन् यज्ञे पवस्व क्षर ॥

पवस्व सोम द्युम्नी सुधारो महामवीनामनु पूर्व्यः ॥ ७ ॥

पवस्व । सोम । द्युम्नी । सुऽधारः । महाम् । अवीनाम् । अनु । पूर्व्यः ॥ ७ ॥

हे सोम द्युम्नी । ‘ द्युम्नं द्योततेर्यशो वान्नं वा ’ इति यास्कः । अन्नवान् यशस्वी वा सुधारः शोभनधारायुक्तः पूर्व्यः पुरातनस्त्वं महां महताम् अवीनां रोम्णां रोमभ्यः[2] सकाशादनुक्रमेण पवस्व क्षर ॥

नृभिर्येमानो जज्ञानः पूतः क्षरद्विश्वानि मन्द्रः स्वर्वित् ॥ ८ ॥

नृऽभिः । येमानः । जज्ञानः । पूतः । क्षरत् । विश्वानि । मन्द्रः । स्वःऽवित् ॥ ८ ॥

नृभिः कर्मनेतृभिर्ऋत्विग्भिः येमानः नियम्यमानः जज्ञानः जायमानः पूतः पवित्रेण शोधितः मन्द्रः मोदमानः स्वर्वित् सर्वज्ञः एतादृशः सोमः विश्वानि सर्वाणि धनान्यस्मभ्यं क्षरत् क्षरतु ददातु ॥

इन्दुः पुनानः प्रजामुराणः करद्विश्वानि द्रविणानि नः ॥ ९ ॥

इन्दुः । पुनानः । प्रऽजाम् । उराणः । करत् । विश्वानि । द्रविणानि । नः ॥ ९ ॥

पुनानः पूयमानः उराणः । ‘ उराण उरु कुर्वाणः ’ ( निरु. ६. १७ ) इति यास्कः । देवान् बहु कुर्वाणः इन्दुः सोमः नः अस्माकं प्रजाम् अपत्यादिकां विश्वानि व्याप्तानि द्रविणानि धनानि च करत् करोतु । करोतेर्लेटि रूपम् ॥

पवस्व सोम क्रत्वे दक्षायाश्वो न निक्तो वाजी धनाय ॥ १० ॥

पवस्व । सोम । क्रत्वे । दक्षाय । अश्वः । न । निक्तः । वाजी । धनाय ॥ १० ॥

हे सोम अश्वः न अश्व इव निक्तः वसतीवरीभिरद्भिर्निक्तः[3] वाजी वेगवांस्त्वं क्रत्वे क्रतवे प्रज्ञानाय दक्षाय बलाय धनाय धनार्थं च पवस्व क्षर ॥　　॥ २० ॥

तं ते सोतारो रसं मदाय पुनन्ति सोमं महे द्युम्नाय ॥ ११ ॥

तम् । ते । सोतारः । रसम् । मदाय । पुनन्ति । सोमम् । महे । द्युम्नाय ॥ ११ ॥

---

१. त१.२.३.४.५-अ२—विविधाः कर्मण; त६-अ७—विधाः कर्म; त७—विविधः कर्मणा; अ६ विविधकर्माणो । २. मन्त२.६-अ१.७—‘ रोमभ्यः ’ नास्ति । ३. मन्त१—°र्निर्निक्तः ।

सोतारः अभिषोतार ऋत्विजो हे सोम ते तव स्वभूतं रसं मदाय मदार्थं पुनन्ति । तद्देवोच्यते । महे महते श्रवाय । ' श्रवं श्रोतनेर्यशो वान्नं वा ' । अन्नाय यशसे वा सोमं पुनन्ति शोधयन्ति । यद्वा । सोममभिषूयमाणं तं रसं पुनन्तीत्येकवाक्यतया योजनीयम् ॥

शिशुं जज्ञानं हरिं मृजन्ति पवित्रे सोमं देवेभ्य इन्दुम् ॥ १२ ॥

शिशुम् । जज्ञानम् । हरिम् । मृजन्ति । पवित्रे । सोमम् । देवेभ्यः । इन्दुम् ॥ १२ ॥

शिशुम् भवो पुत्रभूतं जज्ञानं जायमानं हरिं हरितवर्णम् इन्दुं दीप्तं सोमं देवेभ्यः देवार्थं पवित्रे मृजन्ति ऋत्विजो मार्जयन्ति ॥

इन्दुः पविष्ट चारुर्मदायापामुपस्थे कविर्भगाय ॥ १३ ॥

इन्दुः । पविष्ट । चारुः । मदाय । अपाम् । उपऽस्थे । कविः । भगाय ॥ १३ ॥

चारुः कल्याणरूपः कविः क्रान्तप्रज्ञः इन्दुः सोमः अपाम् उदकानाम् उपस्थे उपस्थानेऽन्तरिक्षे पवित्रे वा मदाय मदार्थं भगाय भजनीयधनार्थं च पविष्ट पवते ॥

बिभर्ति चार्विन्द्रस्य नाम येन विश्वानि वृत्रा जघान ॥ १४ ॥

बिभर्ति । चारु । इन्द्रस्य । नाम । येन । विश्वानि । वृत्रा । जघान ॥ १४ ॥

स सोमः चारु कल्याणम् इन्द्रस्य नाम शरीरं बिभर्ति धारयति पोषयति । येन शरीरेणेन्द्रः विश्वानि सर्वाणि वृत्राणि पापरूपाणि रक्षांसि जघान हतवान् ॥

पिबन्त्यस्य विश्वे देवासो गोभिः श्रीतस्य नृभिः सुतस्य ॥ १५ ॥

पिबन्ति । अस्य । विश्वे । देवासः । गोभिः । श्रीतस्य । नृऽभिः । सुतस्य ॥ १५ ॥

विश्वे सर्वे देवासः देवाः गोभिः गोविकारैः श्रीतस्य मिश्रितं नृभिः कर्मनेतृभिर्ऋत्विग्भिः सुतस्य अभिषुतम् अस्य अमुं सोमं पिबन्ति । द्वितीयार्थे षष्ठ्यः[1] ॥

प्र सुवानो अक्षाः सहस्रधारस्तिरः पवित्रं वि वारमव्यम् ॥ १६ ॥

प्र । सुवानः । अक्षाः इति । सहस्रऽधारः । तिरः । पवित्रम् । वि । वारम् । अव्यम् ॥ १६ ॥

सुवानः अभिषूयमाणः अत एव सहस्रधारः बहुधारायुक्तः सोमः अव्यम् अविमयं वारं वालं पवित्रं तिरः व्यवधायकं कुर्वन् प्र अक्षाः विविध प्रक्षरति । क्षरतेर्लुङि रूपम् ॥

स वाज्यक्षाः सहस्ररेता अद्भिर्मृजानो गोभिः श्रीणानः ॥ १७ ॥

सः । वाजी । अक्षाः इति । सहस्रऽरेताः । अत्ऽभिः । मृजानः । गोभिः । श्रीणानः ॥ १७ ॥

वाजी वेगवान् बलवान् वा सः सोमः अक्षाः क्षरति । कीदृशः । सहस्ररेताः बहुरेतस्को बहूदकः अद्भिः वसतीवरीभिः मृजानः मृज्यमानः गोभिः गोविकारैः क्षीरादिभिः श्रीणानः श्रीयमाणः ॥

प्र सोम याहीन्द्रस्य कुक्षा नृभिर्येमानो अद्रिभिः सुतः ॥ १८ ॥

प्र । सोम । याहि । इन्द्रस्य । कुक्षा । नृऽभिः । येमानः । अद्रिऽभिः । सुतः ॥ १८ ॥

---
१. पा.२.३.६३-षष्ठी ।

हे सोम नृभिः ऋत्विग्भिः येमानः[1] नियम्यमानः अद्रिभिः ग्रावभिः सुतः अभिषुतः त्वम् इन्द्रस्य कुक्षा॥ सप्तम्या आदेशः॥ कुक्षावुदरभूते कलशे वा प्र याहि प्रकर्षेण गच्छ॥

असर्जि वाजी तिरः पवित्रमिन्द्राय सोमः सहस्रधारः॥ १९॥

असर्जि। वाजी। तिरः। पवित्रम्। इन्द्राय। सोमः। सहस्रऽधारः॥ १९॥

वाजी बलवान् वेगवान् वा पवित्रं तिरस्कुर्वन् सहस्रधारः बहुधारः सोमः इन्द्राय इन्द्रार्थम् असर्जि सृज्यते॥

अञ्जन्त्येनं मध्वो रसेनेन्द्राय वृष्ण इन्दुं मदाय॥ २०॥

अञ्जन्ति। एनम्। मध्वः। रसेन। इन्द्राय। वृष्णे। इन्दुम्। मदाय॥ २०॥

वृष्णे कामानां वर्षित्रे इन्द्राय इन्द्रस्य मदाय मदार्थं मध्वः मधुनः रसेन गव्येन एनम् इन्दुं सोमम् ऋत्विजः अञ्जन्ति संयोजयन्ति॥

देवेभ्यस्त्वा वृथा पाजसेऽपो वसानं हरिं मृजन्ति॥ २१॥

देवेभ्यः। त्वा। वृथा। पाजसे। अपः। वसानम्। हरिम्। मृजन्ति॥ २१॥

हे सोम अपः उदकानि वसानम् आच्छादयन्तं हरिं हरितवर्णं त्वा त्वां वृथा अनायासेन ऋत्विजः मृजन्ति शोधयन्ति। किमर्थम्। देवेभ्यः देवानां पानार्थं पाजसे तेषां बलार्थम्॥

इन्दुरिन्द्राय तोशते नि तोशते श्रीणन्नुग्रो रिणन्नपः॥ २२॥

इन्दुः। इन्द्राय। तोशते। नि। तोशते। श्रीणन्। उग्रः। रिणन्। अपः॥ २२॥

इन्दुः सोमः इन्द्राय इन्द्रार्थं तोशते हन्यते अभिषूयते। नि तोशते नितरामभिषूयते। तोशतिर्वधकर्मा। कीदृशः। श्रीणन् गव्यैः क्षीरादिभिः श्रीयमाणः तानि मिश्रयन् वा उग्रः उद्गूर्णबलः अपः उदकानि वसतीवरीः रिणन् प्रेरयन् सोमोऽभिषूयते॥ ॥ २१॥

'पर्यू षु' इति द्वादशर्चं सप्तमं सूक्तम्। त्र्यरुणत्रसदस्यू राजर्षी अस्य सूक्तस्य द्रष्टारौ।[2] आदितस्तिस्रः पिपीलिकमध्या अनुष्टुभो द्वादशकाष्टकद्वादशकवत्यः। ततः ऊर्ध्वबृहत्यो द्वादशकत्रयवत्यः। अथ दशम्याद्यास्तिस्रो विराजः। पवमानः सोमो देवता। तथा चानुक्रान्तं—'पर्यू षु द्वादश त्र्यरुणत्रसदस्यू[2] तिस्रोऽनुष्टुभः पिपीलिकमध्याः ऊर्ध्वबृहत्यस्तिस्रश्च विराजः' इति। गतो विनियोगः॥

पर्यू षु प्र धन्व वाजसातये परि वृत्राणि सक्षणिः।
द्विषस्तरध्या ऋणया न ईयसे॥ १॥

परि। ऊँ इति। सु। प्र। धन्व। वाजऽसातये। परि। वृत्राणि। सक्षणिः।

द्विषः। तरध्यै। ऋणऽयाः। नः। ईयसे॥ १॥

हे सोम सु[3] सुष्ठु वाजसातये अन्नस्य संभजनायैव परि प्र धन्व परितः प्रगच्छ। यद्वा। वाजसातयेऽन्नलाभाय संग्रामं प्रगच्छ। किंच सक्षणिः सहनशीलस्त्वं वृत्राणि शत्रून् परि

१. त१.२.४.५.७-म६—यममानो। २. त७-म६-अनु.—'त्रसदस्यू राजानौ'। ३. त—'सु' नास्ति।

गच्छ । तद्वेवोच्यते । नः अस्माकम् ऋणयाः ऋणानां यापयिता विनाशयिता त्वं द्विषः शत्रून् सत्र्यं नरांनु हन्तुम् ईयसे परिगच्छसि[1] ॥

अनु हि त्वा सुतं सोम मदामसि महे समर्यराज्ये ।
वाजाँ अभि पवमान प्र गाहसे ॥ २ ॥

अनु । हि । त्वा । सुतम् । सोम । मदामसि । महे । समर्यऽराज्ये ।
वाजान् । अभि । पवमान । प्र । गाहसे ॥ २ ॥

हे सोम सुतम् अभिषुतं त्वा त्वां वयम् अनु मदामसि हि अनुमदामः । अनुक्रमेणाभिष्टुमः खलु । हे पवमान सोम स त्वं महे महति समर्यराज्ये महत् समनुष्यं स्वर्गीयं राज्यमनुपालयितुं वाजान् शत्रुबलान्यभिलक्ष्य[2] प्र गाहसे प्रगच्छसि ॥

अजीजनो हि पवमान सूर्यं विधारे शक्मना पयः ।
गोजीरया रंहमाणः पुरंध्या ॥ ३ ॥

अजीजनः । हि । पवमान । सूर्यम् । विऽधारे । शक्मना । पयः ।
गोऽजीरया । रंहमाणः । पुरम्ऽध्या ॥ ३ ॥

हे पवमान सोम त्वं पयः पयसः उदकस्य विधारे विधारकेऽन्तरिक्षे शक्मना समर्थेन बलेन सूर्यम् अजीजनो हि उत्पादितवान् भवसि खलु । कीदृशः । गोजीरया स्तोतृभ्यो गवां प्रेरकेण । स्तोतृणां प्रेरितपशुकेनेत्यर्थः । तादृशेन पुरंध्या बहुविधप्रज्ञानेन युक्तः रंहमाणः वेगं कुर्वाणस्त्वं सूर्यमजीजनः ॥

अजीजनो अमृत मर्त्येष्वाँ ऋतस्य धर्मन्नमृतस्य चारुणः ।
सदासरो वाजमच्छा सनिष्यदत् ॥ ४ ॥

अजीजनः । अमृत । मर्त्येषु । आ । ऋतस्य । धर्मन् । अमृतस्य । चारुणः ।
सदा । असरः । वाजम् । अच्छ । सनिस्यदत् ॥ ४ ॥

हे अमृत मरणधर्मरहित सोम त्वम् ऋतस्य सत्यभूतस्य चारुणः कल्याणस्य अमृतस्य उदकस्य धर्मन् धारकेऽन्तरिक्षे सूर्यम् अजीजनः । किमर्थम् । मर्त्येषु मनुष्येष्वभिमुखीभवनाय । किंच सनिष्यदत् संभजन् स त्वं वाजमच्छ संग्राममभिलक्ष्य सदा असरः सरसि गच्छसि ॥

अभ्यभि हि श्रवसा ततर्दिथोत्सं न कं चिज्जनपानमक्षितम् ।
शर्याभिर्न भरमाणो गभस्त्योः ॥ ५ ॥

अभिऽअभि । हि । श्रवसा । ततर्दिथ । उत्सम् । न । कम् । चित् । जनऽपानम् । अक्षितम् ।
शर्याभिः । न । भरमाणः । गभस्त्योः ॥ ५ ॥

१. मूक–परिगच्छ । २. त१.२.५.७-मूक–शत्रुबलान्य°; त६–बलान्य° ।

हे सोम त्वं श्रवसा अन्नेन हेतुना अभ्यर्षसि तातृदानः पवित्रमभिगच्छन्नासि छिन्नमासि । तत्र दृष्टान्तद्वयम्[1] । उत्सं न यथा कश्चित् जनपानम् । अस्मिन् जना उदकं पिबन्ति । तम् अक्षितम् अक्षीणं कं चित् कंचन उत्समुत्स्रवणशीलं प्राप्यादिकमभिमृशन्ति । अथवा कश्चित् गभस्त्योः बाह्वोः शर्याभिः अङ्गुलीभिः भरमाणः उदकं संभरन् कंचिदभिमृशति तद्वत् ॥

आदीं के चित्पश्यमानास आप्यं वसुरुचो दिव्या अभ्यनूषत ।
वारं न देवः सविता व्यूर्णुते ॥ ६ ॥

आत् । ईम् । के । चित् । पश्यमानासः । आप्यम् । वसुऽरुचः । दिव्याः । अभि । अनूषत ।
वारम् । न । देवः । सविता । वि । ऊर्णुते ॥ ६ ॥

आत् अनन्तरं पश्यमानासः एनं पश्यन्तः दिव्याः दिवि भवाः वसुरुचः नाम के चित् आप्यं बन्धुं साधुम् ईम् एनं सोमम् अभ्यनूषत अभ्यस्तुवन् । कस्मादनन्तरमिति उच्यते । देवः द्योतमानः सविता सर्वस्य प्रेरकः सूर्यः वारम् आवरकमन्धकारं न व्यूर्णुते नापगमयति तदैनमस्तुवन् । सूर्योदयात् प्रागेव हि सोमं स्तुवन्ति खलु ॥ ॥ २२ ॥

त्वे सोम प्रथमा वृक्तबर्हिषो महे वाजाय श्रवसे धियं दधुः ।
स त्वं नो वीर वीर्याय चोदय ॥ ७ ॥

त्वे इति । सोम । प्रथमाः । वृक्तऽबर्हिषः । महे । वाजाय । श्रवसे । धियम् । दधुः ।
सः । त्वम् । नः । वीर । वीर्याय । चोदय ॥ ७ ॥

हे सोम प्रथमाः पुरातनाः । यद्वा । मुख्यत्वेन सर्वेषां जनानां मुख्याः । वृक्तबर्हिषः । वृक्तं छिन्नं बर्हिर्यैर्यज्ञार्थमिति वृक्तबर्हिषो यजमानाः । महे महते वाजाय बलाय[2] श्रवसे अन्नाय च धियं बुद्धिं त्वे त्वयि दधुः निहितवन्तः । तस्मात् हे वीर समर्थ सोम सः तादृशः त्वं नः अस्मानपि संग्रामे वीर्याय सामर्थ्याय चोदय प्रेरय । यद्वा । वीर्याय वीरे पुत्रे भवाय सुखायास्मान् प्रेरय ॥

दिवः पीयूषं पूर्व्यं यदुक्थ्यं महो गाहाद्दिव आ निरधुक्षत ।
इन्द्रमभि जायमानं समस्वरन् ॥ ८ ॥

दिवः । पीयूषम् । पूर्व्यम् । यत् । उक्थ्यम् । महः । गाहात् । दिवः । आ । निः । अधुक्षत ।
इन्द्रम् । अभि । जायमानम् । सम् । अस्वरन् ॥ ८ ॥

दिवः द्युलोकात् तत्र स्थितैर्देवैः पीयूषं पातव्यं पूर्व्यं मुख्यं यत् सोमरूपमन्नम् उक्थ्यं प्रशस्यमस्ति तं सोमं महः महतः गाहात् गहनात् दिवः द्युलोकात् निरधुक्षत आभिमुख्येन[4] निर्दुहन्ति[5] । ततो दुग्धम् इन्द्रम् अभिलक्ष्य जायमानं तं सोमं समस्वरन् स्तोतारः संस्तुवन्ति ॥

1. त१.६-म१.२.४.७-दृष्टान्तः । २. ग-अन्नाय । ३. ग-कीर्त्यै । ४. ग-धारया आभिमुख्येन, त१-म५-वायव आभिमुख्येन; म६-धारया आभिमुख्येन । ५. त१.२.४.५- हविर्दुहन्ति; म१-हविर्निर्दुहन्ति ।

अध यदिमे पवमान रोदसी इमा च विश्वा भुवनाभि मज्मना ।
यूथे न निःष्ठा वृषभो वि तिष्ठसे ॥ ९ ॥

अध । यत् । इमे इति । पवमान । रोदसी इति । इमा । च । विश्वा । भुवना । अभि । मज्मना ।
यूथे । न । निःऽस्थाः । वृषभः । वि । तिष्ठसे ॥ ९ ॥

हे पवमान सोम अध अनन्तरं यत् यथा इमे रोदसी द्यावापृथिव्यौ इमा इमानि विश्वा विश्वानि भुवना भूतजातानि च मज्मना बलेन अभि तिष्ठसि स त्वं तथा कुर्वन् भुवनेषु वि तिष्ठसे । तत्र दृष्टान्तः । यूथे न यथा कश्चित् वृषभः गवां[1] यूथे[1] वृन्दे निःष्ठाः निःस्थितो वर्तते तद्वद्युष्मदस्मदीयेषु भूतजातेषु निःस्थितो भवसि ॥

सोमः पुनानो अव्यये वारे शिशुर्न क्रीळन्पवमानो अक्षाः ।
सहस्रधारः शतवाज इन्दुः ॥ १० ॥

सोमः । पुनानः । अव्यये । वारे । शिशुः । न । क्रीळन् । पवमानः । अक्षारिति ।
सहस्रऽधारः । शतऽवाजः । इन्दुः ॥ १० ॥

पुनानः पूयमानः पवमानः पूतः सोमः अव्यये अविमये वारे वाले पवित्रे शिशुर्न शिशुरिव क्रीळन् इतस्ततः संक्रीडमानः सन् अक्षाः क्षरति । कीदृशः । सहस्रधारः बहुधारायुक्तः शतवाजः बहुबलः इन्दुः दीप्तः ॥

एष पुनानो मधुमाँ ऋतावेन्द्रायेन्दुः पवते स्वादुरूर्मिः ।
वाजसनिर्वरिवोविद्वयोधाः ॥ ११ ॥

एषः । पुनानः । मधुऽमान् । ऋतऽवा । इन्द्राय । इन्दुः । पवते । स्वादुः । ऊर्मिः ।
वाजऽसनिः । वरिवःऽवित् । वयःऽधाः ॥ ११ ॥

पुनानः पूयमानः मधुमान् माधुर्योपेतः ऋतावा[2] ऋतवान् यज्ञवान्[3] इन्दुः क्षरणशीलः स्वादुः स्वादुकरः ऊर्मिः एषः रसधारासंघः इन्द्राय इन्द्रार्थं पवते क्षरति । कीदृशः । वाजसनिः अन्नस्य दाता वरिवोवित् धनस्य लम्भकः वयोधाः आयुषो दाता ॥

स पवस्व सहमानः पृतन्यून्त्सेधन्रक्षांस्यप दुर्गहाणि ।
स्वायुधः सासह्वान्त्सोम शत्रून् ॥ १२ ॥

सः । पवस्व । सहमानः । पृतन्यून् । सेधन् । रक्षांसि । अप । दुःऽगहानि ।
सुऽआयुधः । ससह्वान् । सोम । शत्रून् ॥ १२ ॥

हे सोम सः तादृशस्त्वं पवस्व । किं कुर्वन् । पृतन्यून् ॥ 'कव्यध्वरपृतनस्यर्चि लोपः' इति क्यचि परतोऽकारलोपः ॥ संग्रामकामान् शत्रून् सहमानः अभिभवन् तथा दुर्गहाणि

१. ग-त१.६-अ१.२.४.७—यूथे गवां; त१.२.४.५-भ६—गवां यूथेन । २. भ२.६—ऋतावा । ३. त-भ—यजमानः ।

केचिदपि दुर्गमाणि रक्षांसि अप सेधन् अपगमयन् हिंसन् । किंच स्वायुधः शोभनायुधः सन् सत्वा सासह्वान् अभिभवन्नभिमतम् पवस्व ॥　　॥ २३ ॥

'अया रुचा' इति नवमर्चं सूक्तं परुच्छेपपुत्रस्यानानतस्यार्षमत्यष्टिच्छन्दस्कं पवमानसोमदेवताकम् । तथा चानुक्रम्यते—'अया रुचा तृचमनानतः पारुच्छेपिरात्यष्टम्' इति । गतो विनियोगः ॥

**अया रुचा हरिण्या पुनानो विश्वा द्वेषांसि तरति स्वयुग्वभिः सूरो न स्वयुग्वभिः ।**
**धारा सुतस्य रोचते पुनानो अरुषो हरिः ।**
**विश्वा यद्रूपा परियात्यृक्वभिः सप्तास्येभिर्ऋक्वभिः ॥ १ ॥**

अया । रुचा । हरिण्या । पुनानः । विश्वा । द्वेषांसि । तरति । स्वयुग्वऽभिः । सूरः । न । स्वयुग्वऽभिः ।
धारा । सुतस्य । रोचते । पुनानः । अरुषः । हरिः ।
विश्वा । यत् । रूपा । परिऽयाति । ऋक्वऽभिः । सप्तऽआस्येभिः । ऋक्वऽभिः ॥ १ ॥

पुनानः पूयमानः सोमः हरिण्या हरितवर्णया अया अनया रुचा रोचमानया धारया विश्वा सर्वाणि द्वेषांसि द्वेष्टॄणि रक्षांसि तरति विनाशयति । अत्र दृष्टान्तः । सूरो न यथा सूर्यः स्वयुग्वभिः स्वयं युक्तैः रश्मिभिस्तमांसि हिनस्ति तद्वत् । स्वयुग्वभिः इति द्विरुक्तिरादरार्था । यद्वा । धारया युक्तः सोमः स्वीयैर्युक्तैस्तेजोभी रक्षांसि तरति । तस्य सुतस्य[1] अभिषुतस्य सोमस्य धारा[2] रोचते दीप्यते । पुनानः पूयमानः हरिः हरितवर्णः सोमः अरुषः आरोचमानो भवति । यत्[3] यः[3] सोमः सप्तास्येभिः रसहरणशीलैरास्यैः ऋक्वभिः स्तुतिमद्भिः ऋक्वभिः तेजोभिः विश्वा विश्वानि स्थानानि रूपा रूपाणि नक्षत्राणि परियाति गच्छति व्याप्नोति ॥

**त्वं त्यत्पणीनां विदो वसु सं मातृभिर्मर्जयसि स्व आ दम ऋतस्य धीतिभिर्दमे ।**
**परावतो न साम तद्यत्रा रणन्ति धीतयः ।**
**त्रिधातुभिररुषीभिर्वयो दधे रोचमानो वयो दधे ॥ २ ॥**

त्वम् । त्यत् । पणीनाम् । विदः । वसु । सम् । मातृऽभिः । मर्जयसि । स्वे । आ । दमे ।
ऋतस्य । धीतिऽभिः । दमे । पराऽवतः । न । साम । तत् । यत्र । रणन्ति । धीतयः ।
त्रिधातुऽभिः । अरुषीभिः । वयः । दधे । रोचमानः । वयः । दधे ॥ २ ॥

हे सोम त्वं त्यत् पणीनां वसु पणिभिरपहृतं गवात्मकं धनं विदः अलभथाः । अत्र अपि च ऋतस्य यज्ञस्य धीतिभिः धात्रीभिः मातृभिः वसतीवरीभिः स्वे आत्मीये दमे गृहभूते दमे यज्ञे सं मर्जयसि सम्यक् शुद्धो भवसि । परावतो न दूरस्थाद्देशाद्यथा साम सामध्वनिः श्रूयते तथा तव तत् सामध्वनिः सर्वैः श्रूयते । असौ सोमाभिषवाभिप्रायेणोक्तः । यत्र यस्मिन् शब्दे धीतयः कर्मणो धर्तारो यजमानाः रणन्ति रमन्ते । रोचमानः सोमः त्रिधातुभिः त्रयाणां लोकानां धारयित्रीभिर्मातृभिर्वसतीवरीभिः अरुषीभिः आरोचमानाभिर्दीप्तिभिः वयः अन्नं दधे स्तोतृभ्यः प्रयच्छति । पुनः वयो दधे इत्यादरार्थम् ॥

१. त४.५—तेसुतस्य; म६—तत्सुतस्य । २. त५-म२.६—धारा पवंति । ३. त१.२.४.७—यतयः, म६—यतः यः ।

पूर्वामनु प्रदिशं याति चेकितत्सं रश्मिभिर्यतते दर्शतो रथो दैव्यो दर्शतो रथः।
अग्मन्नुक्थानि पौंस्येन्द्रं जैत्राय हर्षयन्।
वज्रश्च यद्भवथो अनपच्युता समत्स्वनपच्युता ॥ ३ ॥

पूर्वाम्। अनु। प्रऽदिशम्। याति। चेकितत्। सम्। रश्मिऽभिः। यतते। दर्शतः। रथः।
दैव्यः। दर्शतः। रथः। अग्मन्। उक्थानि। पौंस्या। इन्द्रम्। जैत्राय। हर्षयन्।
वज्रः। च। यत्। भवथः। अनपऽच्युता। समत्ऽसु। अनपऽच्युता ॥ ३ ॥

चेकितत् जानानः सोमः पूर्वां प्राचीं प्रदिशं प्रकृष्टां दिशम् अनु याति अनुगच्छति। किंच दर्शनः सर्वैर्दर्शनीयः दैव्यः देवेषु भवस्तस्य रथः सूर्यरश्मिभिः सं यतते संगच्छते। पुनः दर्शतो रथः इत्यादरार्थम्। ततः पौंस्या पुंस्त्वावहानि उक्थानि स्तोत्राणि अग्मन् इन्द्रं गच्छन्ति। तथा जैत्राय जयार्थं तानि स्तोत्राणि इन्द्रं हर्षयन् हर्षयन्ति। तथा तस्य वज्रश्च तमिन्द्रं गच्छति। यत् यदा समत्सु संग्रामेषु अनपच्युता अनपच्युतौ शत्रुभिरपराजितौ सोम त्वं इन्द्रश्च युवां[1] सह भवथः तदा स्तोत्रागमनादीनि भवन्ति। पुनः अनपच्युता इत्यादरार्थम् ॥ ॥ २७ ॥

‘नानानम्’ इति चतुर्ऋचं नवमं सूक्तमाङ्गिरसस्य शिशुनाम्न आर्षम्। पञ्चपदा पङ्क्तिश्छन्दः। पवमानः सोमो देवता। तथा चानुक्रान्तं—‘नानानं चतुष्कं शिशुः पाङ्क्तं हि’ इति। गतो विनियोगः ॥

नानानं वा उ नो धियो वि व्रतानि जनानाम्।
तक्षा रिष्टं रुतं भिषग्ब्रह्मा सुन्वन्तमिच्छतीन्द्रायेन्दो परि स्रव ॥ १ ॥

नानानम्। वै। ऊँ इति। नः। धियः। वि। व्रतानि। जनानाम्।
तक्षा। रिष्टम्। रुतम्। भिषक्। ब्रह्मा। सुन्वन्तम्। इच्छति। इन्द्राय। इन्दो इति। परि। स्रव ॥ १ ॥

ऋषिरेतदादिभिस्त्रिभिः सूक्तैः अपरिस्रवतः[2] सोमस्याजामित्वाय मनसो निर्वेदं कुर्वन्नाह। हे सोम नः अस्माकं धियः कर्माणि नानानं नानाजातीयकानि बहूनि भवन्ति। वैशब्दः प्रसिद्ध्यर्थसंस्मरणार्थः। उ इति पूरणः। तथान्येषामपि जनानां व्रतानि कर्माणि विविधानि भवन्ति। तक्षा त्वष्टा रिष्टं दारुतक्षणम् इच्छति। तथा भिषक् वैद्यश्चिकित्सकः रुतं रोगमिच्छति। ब्रह्मा ब्राह्मणः सुन्वन्तं सोमाभिषवं कुर्वन्तं यजमानमिच्छति। तथाहं त्वत्परिस्रवणमिच्छामि। तस्मात् इन्दो सोम इन्द्राय इन्द्रार्थं परि स्रव परितः स्रव ॥

जरतीभिरोषधीभिः पर्णेभिः शकुनानाम्।
कार्मारो अश्मभिर्द्युभिर्हिरण्यवन्तमिच्छतीन्द्रायेन्दो परि स्रव ॥ २ ॥

जरतीभिः। ओषधीभिः। पर्णेभिः। शकुनानाम्।
कार्मारः। अश्मऽभिः। द्युऽभिः। हिरण्यऽवन्तम्। इच्छति। इन्द्राय। इन्दो इति। परि। स्रव ॥ २ ॥

१. ग-त-भ—युवां रणत्सु संग्रामेषु। २. ग-त३—परिस्रवतः; म२—आपरिस्रवतः।

जरतीभिः जीर्णाभिः[1] ओषधीभिः इषवः क्रियन्ते। तथा शकुनानां पर्णेभिः इषूणां पक्षभूतैः पर्णैश्च क्रियन्ते। तथा द्युभिः दीप्ताभिरिषूणां तेजनार्थाभिः[2] अश्मभिः[3] शिलाभिश्च क्रियन्ते। एतैः कार्मारः शरकारः हिरण्यवन्तम् आढ्यं पुरुषम् इच्छति। तथाहं त्वत्परिचरणमिच्छामि। तस्मात् इन्दो इन्द्राय परि स्रव॥

**कारुरहं ततो भिषगुपलप्रक्षिणी नना।**
**नानाधियो वसूयवोऽनु गाइव तस्थिमेन्द्रायेन्दो परि स्रव॥ ३॥**

कारुः। अहम्। ततः। भिषक्। उपलऽप्रक्षिणी। नना।
नानाऽधियः। वसुऽयवः। अनु। गाःऽइव। तस्थिम। इन्द्राय। इन्दो इति। परि। स्रव॥३॥

ऋषिः प्रभूतसोमभागः सन् दशापवित्रात् सोमे क्षरति प्रतिबन्धकपापापनुत्तये पुत्रपित्रादिकीर्तनपुरःसरमध्येषणां चकार। तावत् अहं कारुः स्तोत्राणां कर्तास्मि। ततः इति संतानाम। तन्यतेऽस्मादिति ततः पिता। तन्यतेऽसाविति वा ततः पुत्रः। भिषक् भेषजकृत्। यज्ञस्य भेषजकर्ता। 'सर्वं[4] वा एतया भिषज्यति' इति श्रुतेः। तथा उपलप्रक्षिणी। उपलेषु वालुकासु[5] प्रक्षिणोति यवान् हिनस्ति भृज्जतीति। यद्वा। दृषदादिषूपलेषु भृष्टान् यवान् हिनस्ति चूर्णयतीति। अथवा धानासक्तुकरम्भादीनां कारिका वा। असौ नना माता दुहिता वा। नमनक्रियायोग्यत्वात्। माता खल्वपत्यं प्रति स्तनपानादिना नमनशीला भवति। दुहिता वा शुश्रूषार्थम्। एवं सर्वेषां परिचरणेन नानाधियः नानाकर्माणः वसूयवः धनकामा वयम् अनु तस्थिम लोकमन्वास्थिताः स्मः। तत्र दृष्टान्तः। गाइव। छान्दसो जसः शसादेशः। गावो यथा गोष्ठमनुतिष्ठन्ति स्वपयःप्रदानेन परिचरन्ति वा एवं वयमपि परिचरामः। एतज्ज्ञात्वा हे इन्दो सोम इन्द्राय परि स्रव दशापवित्रात् क्षर। एवमेषाध्येषणा सत्कारपूर्विका व्यापारणा। अत्र निरुक्तम्—'उपलप्रक्षिण्युपलेषु प्रक्षिणात्युपलप्रक्षेपिणी[5] वा। कारुरहमस्मि कर्ता स्तोमानां ततो भिषक्। तत इति संतानाम पितुर्वा पुत्रस्य वा। उपलप्रक्षिणी[6] सक्तुकारिका नना नमतेर्माता वा[7] दुहिता वा। नानाधियो नानाकर्माणो वसूयवो वसुकामा अन्वास्थिताः स्मो गाव इव लोकम्' (निरु. ६. ५-६) इति॥

**अश्वो वोळ्हा सुखं रथं हसनामुपमन्त्रिणः।**
**शेपो रोमण्वन्तौ भेदौ वारिन्मण्डूक इच्छतीन्द्रायेन्दो परि स्रव॥ ४॥**

अश्वः। वोळ्हा। सुऽखम्। रथम्। हसनाम्। उपऽमन्त्रिणः।
शेपः। रोमण्ऽवन्तौ। भेदौ। वाः। इत्। मण्डूकः। इच्छति। इन्द्राय। इन्दो इति। परि। स्रव॥४॥

वोळ्हा सर्वं[8] देशं[8] प्रापयन् अश्वः सुखं कल्याणं रथम् इच्छति। उपमन्त्रिणः उपमन्त्रयन्तो नर्मसचिवाः हसनाम् उपहसनं वाञ्छन्ति। तथा शेपः। 'शेपो वैतस इति पुंस्प्रजननस्य' (निरु. ३.२१) इति यास्कः। यथा शेपः रोमण्वन्तौ भेदौ इच्छति। मण्डूकः

१. त१.२.३.४.५.७-म६—जीर्णाभिर्याभिः। २. त-म२.६—तेजनार्थाभि रश्मिभिः। ३. त्रु१.३.७-म९—स च। ४. म६—उदूखलासु। ५. त—प्रक्षिणोत्युपलेषु प्रक्षेपणा; म१.७—प्रक्षिणात्यपलेषु प्रक्षिणा, म९—प्रक्षिणात्युपलेषु प्रक्षेपणि; म६—प्रक्षिणोत्युपलेषु प्रक्षपणा। ६. त१.२.४.५.७-म२.६.७—भिषगुपलप्रक्षेपिणी; त३—भिषगुपलमक्षिणी। ७. त१.३.४.५-म६—च। ८. ग—रथं स्वदेशं, त१.२.४.५.७—सर्वं देशं; त३-म१.९.४—स्वर्गं देशं; म६—रथं देशं; मु—सर्वं देशं।

आशिरः[1] । इत्यवधारणे[2] । उदकमेवेच्छति । तथाहं स्वत्परिस्रवणमिच्छामि । तस्मात् इन्द्रायेन्दो परि स्रव इति ॥ ॥ २५ ॥

'शर्यणावति' इत्येकादशर्चं दशमं सूक्तं मारीचस्य कश्यपस्यार्षम् । पूर्वत्र 'हि' इत्युक्तत्वादिदमुत्तरं च पाङ्क्तम् । पवमानसोमदेवताकम् । तथा चानुक्रम्यते—'शर्यणावत्येकादश कश्यपः' इति । गतो विनियोगः ॥

शर्यणावति सोममिन्द्रः पिबतु वृत्रहा ।
बलं दधान आत्मनि करिष्यन्वीर्यं महदिन्द्रायेन्दो परि स्रव ॥ १ ॥

शर्यणाऽवति । सोमम् । इन्द्रः । पिबतु । वृत्रऽहा ।
बलम् । दधानः । आत्मनि । करिष्यन् । वीर्यम् । महत् । इन्द्राय । इन्दो इति । परि । स्रव ॥ १ ॥

शर्यणावति । शर्यणावन्नाम कुरुक्षेत्रस्य जघनार्धे सरः । तत्र स्थितं सोमं वृत्रहा इन्द्रः पिबतु । कीदृशः । आत्मनि बलं दधानः बलं निदधानः अत एव महत् वीर्यं करिष्यन् शत्रून् प्रति । तस्मात् इन्द्रायेन्दो परि स्रव ॥

आ पवस्व दिशां पत आर्जीकात्सोम मीढ्वः ।
ऋतवाकेन सत्येन श्रद्धया तपसा सुत इन्द्रायेन्दो परि स्रव ॥ २ ॥

आ । पवस्व । दिशाम् । पते । आर्जीकात् । सोम । मीढ्वः ।
ऋतऽवाकेन । सत्येन । श्रद्धया । तपसा । सुतः । इन्द्राय । इन्दो इति । परि । स्रव ॥ २ ॥

हे दिशां पते प्राच्यादीनां दिशां प्रकाशकत्वेन स्वामिन् हे मीढ्वः कामानां सेक्तः सोम आर्जीकात् । ऋजीकानामदूरभवः आर्जीको जनपदः । तस्मात् आ पवस्व अस्मद्यज्ञं प्रत्यागच्छ । यद्वा । आर्जीकादृजीरकुटिलात् पवित्रात् क्षर । कीदृशः । ऋतवाकेन ऋतस्य वचनेन सत्येन । सत्यर्तयोरल्पो भेदो द्रष्टव्यः । श्रद्धया तपसा सुकृतैर्दीक्षितैः सुतः अभिषुतस्त्वं पवस्व ॥

पर्जन्यवृद्धं महिषं तं सूर्यस्य दुहिताभरत् ।
तं गन्धर्वाः प्रत्यगृभ्णन्तं सोमे रसमादधुरिन्द्रायेन्दो परि स्रव ॥ ३ ॥

पर्जन्यऽवृद्धम् । महिषम् । तम् । सूर्यस्य । दुहिता । आ । अभरत् ।
तम् । गन्धर्वाः । प्रति । अगृभ्णन् । तम् । सोमे । रसम् । आ । अदधुः ।
इन्द्राय । इन्दो इति । परि । स्रव ॥ ३ ॥

सूर्यस्य दुहिता श्रद्धा नाम । 'श्रद्धा वै सूर्यस्य दुहिता' (श. ब्रा. १२. ७. ३. ११) इति वाजसनेयकम् । सा पर्जन्यवृद्धं पर्जन्यवत् समर्थम् । यद्वा । पर्जन्येन तत्कार्येणोदकेन प्रवृद्धम् । महिषं महान्तं पूज्यं वा तं सोमम् आभरत् आहरत् । द्युलोकादाहृतवती । तम् आह्रियमाणं सोमं गन्धर्वाः विश्वावसुप्रभृतयः प्रत्यगृभ्णन् प्रत्यगृह्णन् । प्रतिगृहीतवन्तः । ग्रहोर्भः । ततो गन्धर्वाः प्रतिगृहीतं रसं सोमे प्रत्यक्षम् आदधुः । इत्यर्थः । तस्मात् परि स्रव ॥

---

1. त४.५.७—शरि; त३.६-म१.२.४.७—शाः; म६—शाशिर । 2. त२-म६—इव धारणे ।

ऋतं वद॑न्नृतद्युम्न स॒त्यं वद॑न्त्सत्यकर्मन् ।
श्र॒द्धां वद॑न्त्सोम राजन्धा॒त्रा सो॑म॒ परि॑ष्कृत॒ इन्द्रा॑येन्दो॒ परि॑ स्रव ॥ ४ ॥

ऋ॒तम् । वद॑न् । ऋ॒त॒ऽद्यु॒म्न॒ । स॒त्यम् । वद॑न् । स॒त्य॒ऽक॒र्म॒न् ।
श्र॒द्धाम् । वद॑न् । सो॒म॒ । रा॒ज॒न् । धा॒त्रा । सो॒म॒ । परि॑ऽकृतः । इन्द्रा॑य । इ॒न्दो॒ इति॑ । परि॑ । स्र॒व॒ ॥ ४ ॥

हे ऋतद्युम्न ऋतेन द्योतमान सत्ययशस्क वा सत्यकर्मन् यथार्थकर्मन्[1] हे सोम अभिषूयमाण राजन् सर्वेषां यज्ञनिष्पादकत्वेन स्वामिन् हे सोम ऋतं यज्ञं वदन् सत्यं वदन् उच्चारयन् श्रद्धां यजमानानामात्मनोपेक्षितां वदन् धात्रा कर्मणां धारकेण देवानां पोषकेण वा यजमानेन परिष्कृतः अलंकृतस्त्वम् इन्द्राय परि स्रव। 'संपर्युपेभ्यः' इति भूषणार्थे करोतेः सुट् ॥

स॒त्यमु॑ग्रस्य बृह॒तः सं स्र॑वन्ति संस्र॒वाः ।
सं य॑न्ति र॒सिनो॒ रसाः॑ पुना॒नो ब्रह्म॑णा हर॒ इन्द्रा॑येन्दो॒ परि॑ स्रव ॥ ५ ॥

स॒त्यम्ऽउ॑ग्रस्य । बृ॒ह॒तः । सम् । स्र॒व॒न्ति॒ । स॒म्ऽस्र॒वाः ।
सम् । य॒न्ति॒ । र॒सिनः॑ । रसाः॑ । पु॒ना॒नः । ब्रह्म॑णा । ह॒रे॒ । इन्द्रा॑य । इ॒न्दो॒ इति॑ । परि॑ । स्र॒व॒ ॥ ५ ॥

सत्यमुग्रस्य संग्रामे सत्येन शत्रूणामुद्गूरयितुः। यद्वा उद्गूर्णसत्यस्य। यद्वा। यथार्थभूतमुद्गूर्णं बलं यस्य तस्य। पृषोदरादित्वाद्रूपसिद्धिः। बृहतः महतः सोमस्य तव संस्रवाः सम्यक्स्रवणशीला[2] धाराः सं स्रवन्ति सम्यक् गच्छन्ति। किंच रसिनः रसवतस्तव स्वभूताः रसाः सं यन्ति संगच्छन्ते। तस्मात् हरे हरितवर्ण सोम ब्रह्मणा ब्राह्मणेन मन्त्रेण वा पुनानः पूयमानः स त्वमिन्द्रार्थं परि स्रव ॥     ॥ २६ ॥

यत्र॑ ब्र॒ह्मा प॑वमान छन्द॒स्यां॒३॑ वाचं॒ वद॑न् ।
ग्राव्णा॒ सोमे॑ मही॒यते॒ सोमे॑नान॒न्दं ज॒नय॒न्निन्द्रा॑येन्दो॒ परि॑ स्रव ॥ ६ ॥

यत्र॑ । ब्र॒ह्मा । प॒व॒मा॒न॒ । छ॒न्द॒स्याम् । वाच॑म् । वद॑न् ।
ग्राव्णा॑ । सोमे॑ । म॒ही॒यते॑ । सोमे॑न । आ॒ऽन॒न्दम् । ज॒नय॑न् । इन्द्रा॑य । इन्दो॒ इति॑ । परि॑ । स्र॒व॒ ॥ ६ ॥

हे पवमान पूयमान सोम छन्दस्यां छन्दोभिः कृतां तेषु भवां वाचं स्तुतिं वदन् उच्चारयन् सोमे सोमाभिषवार्थं ग्राव्णा अभिषवं कुर्वता युक्तस्तेनाभिषुतेन सोमेन देवानाम् आनन्दं संतोषं जनयन् उत्पादयन् ब्रह्मा ब्राह्मणः यत्र यस्मिन् देशे महीयते देवैः पूज्यते तत्र हे सोम त्वं परि स्रव ॥

यत्र॒ ज्योति॒रज॑स्रं॒ यस्मि॑ँल्लो॒के स्व॑र्हि॒तम् ।
तस्मि॒न्मां धे॑हि पवमाना॒मृते॑ लो॒के अक्षि॑त॒ इन्द्रा॑येन्दो॒ परि॑ स्रव ॥ ७ ॥

यत्र॑ । ज्योतिः॑ । अज॑स्रम् । यस्मि॑न् । लो॒के । स्वः॑ । हि॒तम् ।
तस्मि॑न् । माम् । धे॒हि॒ । प॒व॒मा॒न॒ । अ॒मृते॑ । लो॒के । अक्षि॑ते । इन्द्रा॑य । इ॒न्दो॒ इति॑ । परि॑ । स्र॒व॒ ॥ ७ ॥

१. क-ख–' यथार्थकर्मन् ' नास्ति। २. ख१.२.४.५.७-म६- °स्रवणशीला।

हे पवमान यत्र यस्मिँल्लोके ज्योतिः सर्वं तेजः अजस्रं सर्वदाविनश्वरं वर्तते । यस्मिन् च लोके स्वः आदित्याख्यं ज्योतिः हितं निहितमस्ति । तस्मिन् अमृते मरणधर्मरहिते अत एव अक्षिते अक्षीणे लोके मां सोमाभिषवं कुर्वन्तं धेहि निधेहि[1] । तस्मात् मामुत्तमलोकं प्रापयितुं त्वम् इन्द्राय परि स्रव ॥

यत्र राजा वैवस्वतो यत्रावरोधनं दिवः ।
यत्रामूर्यह्वतीरापस्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥ ८ ॥

यत्र । राजा । वैवस्वतः । यत्र । अवऽरोधनम् । दिवः ।
यत्र । अमूः । यह्वतीः । आपः । तत्र । माम् । अमृतम् । कृधि । इन्द्राय । इन्दो इति । परि । स्रव ॥ ८ ॥

यत्र यस्मिँल्लोके वैवस्वतः विवस्वत्पुत्रः राजा भवति । यत्र च लोके दिवः आदित्यस्य अवरोधनं भूतानां प्रवेशनम् । किंच यत्र लोके यह्वतीः महत्यः अमूः इमा गङ्गाद्याः आपः तिष्ठन्ति । तत्र तादृशे लोके माममृतं मरणधर्मरहितं कृधि कुरु । अत्र देवत्वं प्राप्येत्यर्थः । ततः कारणात्[2] परि स्रव ॥

यत्रानुकामं चरणं त्रिनाके त्रिदिवे दिवः ।
लोका यत्र ज्योतिष्मन्तस्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥ ९ ॥

यत्र । अनुऽकामम् । चरणम् । त्रिऽनाके । त्रिऽदिवे । दिवः ।
लोकाः । यत्र । ज्योतिष्मन्तः । तत्र । माम् । अमृतम् । कृधि । इन्द्राय । इन्दो इति । परि । स्रव ॥ ९ ॥

यत्र त्रिदिवे तृतीयस्यां दिवि द्युलोके त्रिनाके । तत्राधममध्यमोत्तमभावेन त्रीणि स्थानानि सन्ति । तत्र तृतीये नाके उत्तमे स्थाने दिवः आदित्यस्य अनुकामं कामानुगुणं चरणम् अस्ति । किंच यत्र यस्मिँल्लोके लोकाः ज्योतिष्मन्तः ज्योतिर्युक्तास्तिष्ठन्ति । तत्र तादृशे लोके माममृतं कृधि । यथा ममोत्तमलोको भवति तथा त्वम् इन्द्राय परि स्रव ॥

यत्र कामा निकामाश्च यत्र ब्रध्नस्य विष्टपम् ।
स्वधा च यत्र तृप्तिश्च तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥ १० ॥

यत्र । कामाः । निऽकामाः । च । यत्र । ब्रध्नस्य । विष्टपम् ।
स्वधा । च । यत्र । तृप्तिः । च । तत्र । माम् । अमृतम् । कृधि । इन्द्राय । इन्दो इति । परि । स्रव ॥ १० ॥

यत्र यस्मिँल्लोके कामाः काम्यमाना देवाः निकामाः नितरामवश्यं प्रार्थ्यमाना इन्द्रादयः च विद्यन्ते । यद्वा कामा निकामा अभिलाषा निकामाश्च यत्र विद्यन्ते । यत्र लोके ब्रध्नस्य सर्वेषां प्रबन्धकस्य । यद्वा । सूर्येण विना कर्माणि[3] न घटन्ते[4] इति सर्वेषां कर्मणां मूलभूतस्यादित्यस्य विष्टपं सहस्थानं यत्र विद्यते तत्र लोके । स्वधा अन्नं स्वधाकारेण वा दत्तमन्नं तृप्तिः तर्पणं हर्षणं हर्षः च यत्र विद्यते तत्र लोके माममृतं कृधि ॥

१. त३.४-विधेहि । २. ग-त३-४५-कारणात्त्वं । ३. ग-कर्माणि न प्रवर्तते ।

**यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते।**
**कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥ ११ ॥**

यत्र। आऽनन्दाः। च। मोदाः। च। मुदः। प्रऽमुदः। आसते।
कामस्य। यत्र। आप्ताः। कामाः। तत्र। माम्। अमृतम्। कृधि।
इन्द्राय। इन्दो इति। परि। स्रव ॥ ११ ॥

˚यत्र यस्मिँल्लोके आनन्दादयः ˚आसते। तेषामल्पो भेदो द्रष्टव्यः। ˚यत्र च लोके ˚कामस्य काम्यमानस्य देवस्य सर्वे ˚कामाः ˚आप्ताः प्राप्ता भवन्ति ˚तत्र ˚माममृतं ˚कृधि। एतत्तु त्वया विना न घटत इति हे सोम त्वं ˚परि ˚स्रव ॥ ॥ २६ ॥

'य इन्दोः' इति चतुर्ऋचमेकादशं सूक्तम्। ऋष्याद्याः पूर्ववत्। तथा चानुक्रम्यते—'य इन्दोश्चतुष्कम्' इति। गतः सूक्तविनियोगः॥

**य इन्दोः पवमानस्यानु धामान्यक्रमीत्।**
**तमाहुः सुप्रजा इति यस्ते सोमाविधन्मन इन्द्रायेन्दो परि स्रव ॥ १ ॥**

यः। इन्दोः। पवमानस्य। अनु। धामानि। अक्रमीत्। तम्। आहुः। सुऽप्रजाः।
इति। यः। ते। सोम। अविधत्। मनः। इन्द्राय। इन्दो इति। परि। स्रव ॥ १ ॥

˚पवमानस्य पूयमानस्य ˚इन्दोः सोमस्य ˚धामानि स्थानानि द्रोणकलशादीनि यद्वा धामानि तेजांसि ˚यः ब्राह्मणः ˚अनु ˚अक्रमीत् अनुक्रामति अनुगच्छति ˚तं जनं ˚सुप्रजाः शोभनप्रजननः[1] कल्याणपुत्रादिप्रजायुक्त इत्याहुः। 'नित्यमसिच् प्रजामेधयोः' इत्यसिच् समासान्तः। यः सोममभिषुणोति स पुत्रादियुक्तो भवतीत्यर्थः। किंच हे ˚सोम ˚यः मनुष्यः ˚ते त्वदर्थं ˚मनः ˚अविधत् करोति। यद्वा। ते त्वदीयं मनोऽविधत् परिचरति। विधतिः परिचरणकर्मा। तमपि कल्याणजननमित्याहुः[2]। तस्मात्त्वं ˚परि ˚स्रव॥

**ऋषे मन्त्रकृतां स्तोमैः कश्यपोद्वर्धयन्गिरः।**
**सोमं नमस्य राजानं यो जज्ञे वीरुधां पतिरिन्द्रायेन्दो परि स्रव ॥ २ ॥**

ऋषे। मन्त्रऽकृताम्। स्तोमैः। कश्यप। उत्ऽवर्धयन्। गिरः।
सोमम्। नमस्य। राजानम्। यः। जज्ञे। वीरुधाम्। पतिः।
इन्द्राय। इन्दो इति। परि। स्रव ॥ २ ॥

ऋषिः स्वात्मानं प्रत्याह। हे ˚ऋषे सूक्तद्रष्टः ˚कश्यप आत्मन् त्वं ˚मन्त्रकृतां ऋषीणां ˚स्तोमैः स्तोत्रैः ˚गिरः स्तुतिरूपा वाचः ˚उद्वर्धयन् उपर्युपरि वर्धयन् ˚राजानं सर्वेषां स्वामिनं तं ˚सोमं ˚नमस्य पूजय[3]। नमसः पूजायां 'नमोवरिव°' इति क्यच्। ˚यः सोमः ˚वीरुधां वनस्पतीनां ˚पतिः पालकः ˚जज्ञे जातः तं नमस्य। हे सोम यथात्मना स्तुतो भवसि तथा ˚परि ˚स्रव॥

---

१. ल-भ२—°प्रजनः। २. त२.३-भ४—°जनमित्याहुः; भ१.२—°जनयित्याहुः; भ६—°जनमित्यर्थ। ३. त१.२.५.६.७-भ६-मु—मनसा पूजय; भ७—नमसा पूजय।

सप्त दिशो नानासूर्याः सप्त होतार ऋत्विजः ।
देवा आदित्या ये सप्त तेभिः सोमाभि रक्ष न इन्द्रायेन्दो परि स्रव ॥ ३ ॥

सप्त । दिशः । नानाऽसूर्याः । सप्त । होतारः । ऋत्विजः ।
देवाः । आदित्याः । ये । सप्त । तेभिः । सोम । अभि । रक्ष । नः ।
इन्द्राय । इन्दो इति । परि । स्रव ॥ ३ ॥

सप्त दिशः । सोमो यस्यां दिशि वर्तते तद्व्यतिरिक्ताः सप्त भवन्ति । नानासूर्याः नानाविधैः सूर्यैरधिष्ठिता ऋतवो भवन्ति । 'नानालिङ्गत्वादृतूनां नानासूर्यत्वम्' (तै. आ. १.७) इत्याम्नानात् । यद्वा । नानासूर्या इति दिग्विशेषणम् । तथा होतारः वषट्कर्तारो होत्रादयः सप्त ऋत्विजः भवन्ति । किंच आदित्याः अदितेः पुत्रा धात्रादयो मार्ताण्डवर्जिताः ये सप्त देवाः सन्ति । एतत्तु 'अष्टौ पुत्रासो अदितेः' (ऋ. सं. १०. ७२. ८) इत्यत्र प्रपञ्चयिष्यते । हे सोम तेभिः तैर्दिगादिभिः सर्वैः नः अस्मान् अभि रक्ष । एतत्तु त्वया विना न घटत इति तस्मात् इन्द्राय इन्दो परि स्रव ॥

उपाकरणोत्सर्जनयोर्मण्डलाद्यन्तहोमे 'यत्ते राजन्' इत्येषा । सूत्रितं च— 'यत्ते राजञ्छृतं[1] हविरिति[1] द्वाभ्यां समानी व आकूतिरित्येका' (आश्व. गृ. ३. ५. ७-८) इति ॥

यत्ते राजञ्छृतं हविस्तेन सोमाभि रक्ष नः ।
अरातीवा मा नस्तारीन्मो च नः किं चनाममदिन्द्रायेन्दो परि स्रव ॥ ४ ॥

यत् । ते । राजन् । शृतम् । हविः । तेन । सोम । अभि । रक्ष । नः ।
अरातिऽवा । मा । नः । तारीत् । मो इति । च । नः । किम् । चन । आममत् ।
इन्द्राय । इन्दो इति । परि । स्रव ॥ ४ ॥

हे राजन् सर्वेषां कर्मसाधनत्वेन स्वामिन् हे सोम ते त्वदर्थं शृतं पक्वं यत् हविः अस्ति । 'शृतं[2] पाके' (पा. सू. ६. १. २७) इति निष्ठायां निपातितः । तेन हविषा नः अस्मान् अभि रक्ष । अभिपालय । तस्मात्त्वदभिरक्षितानस्मान् अरातीवा अरातित्ववान्शत्रुः नः अस्मान् मा तारीत् मा वधीत् । किंच नः अस्माकं किं चन किंचिदपि धनादिकं शत्रुः मो आममत् मा हिंसीत् । यथैतदेतैः सूक्तमुक्तं तथास्माकं भवति तथा हे इन्दो इन्द्राय परि स्रव । एवं 'स्वादिष्ठया' इत्यादिभिरेतदन्तैः सूक्तैर्बहुविधं सोममाहात्म्यमभ्यधायि तस्मादैहिकामुष्मिकफलसिद्धये सोमयागः कर्तव्य इत्युक्तं भवति ॥ ॥ २८ ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे दाशतय्या नवमे मण्डले
सप्तमोऽनुवाकः समाप्तं च नवमं मण्डलम् ॥

१. त-भ-मु—राजञ्छृतमिति । २. ती१.२.४.५.७—शृतं श्रतं ।

॥ श्रीः ॥

# ॥ अथ दशमं मण्डलम् ॥

दशमे मण्डले द्वादशानुवाकाः। तत्र प्रथमानुवाके षोडश सूक्तानि। तत्र 'अग्ने बृहन्' इति सप्तर्चं प्रथमं सूक्तमाप्त्यस्य त्रितस्यार्षम्। अनादेशपरिभाषया त्रिष्टुप्। मण्डलादिपरिभाषयाग्निर्देवता। तथा चानुक्रम्यते—'अग्ने सप्त त्रितः' इति। प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ त्रैष्टुभे छन्दसीदमादीन्यष्ट सूक्तान्यष्टमस्यान्त्यास्तिस्रो वर्जयित्वा। सूत्र्यते हि—'अग्ने नयाग्ने बृहन्निति चाष्टानामुत्तमामुत्तमास्तिस्र[1] उद्धरेदिति त्रैष्टुभम्' (आश्व. श्रौ. ४. १३) इति। 'प्रातरनुवाकन्यायेन तस्यैव समाम्नायस्य सहस्रमनोदितः शंसेत्' (आश्व. श्रौ. ६. ५) इति च। होमार्थं प्रणीत आहवनीये प्राग्घोमादुपस्थाने ज्योतिष्मद्गुणकाग्निदेवताका काचिदिष्टिः। तस्याः याज्या। सूत्रितं च—'हविरग्निर्ज्योतिष्मान् वरुण उदग्ने शुचयस्तवाग्ने बृहन्नुषसामूर्ध्वो अस्थात्' (आश्व. श्रौ. ३. १२) इति। उपाकरणोत्सर्जनयोर्मण्डलादिहोमेऽप्येषा। सूत्रमुदाहृतम्॥

अग्ने बृहन्नुषसामूर्ध्वो अस्थान्निर्जगन्वान्तमसो ज्योतिषागात्।

अग्निर्भानुना रुशता स्वङ्ग आ जातो विश्वा सद्मान्यप्राः॥ १॥

अग्ने। बृहन्। उषसाम्। ऊर्ध्वः। अस्थात्।

निःऽजगन्वान्। तमसः। ज्योतिषा। आ। अगात्। अग्निः। भानुना। रुशता। सुऽअङ्गः।

आ। जातः। विश्वा। सद्मानि। अप्राः॥ १॥

बृहन् महानेषोऽग्निः उषसाम् अग्रे उषसामुपर्युषःकाले ऊर्ध्वः प्रज्वलितः सन् ज्वालारूपेण अस्थात् तिष्ठति। सः तमसः। रात्रिनामैतत्। रात्रेः निर्जगन्वान् निर्गतः॥ गमेः क्वसाविडभावे रूपम्॥ निर्गतो निष्क्रान्तवान् सोऽग्निः ज्योतिषा स्वीयेन तेजसा लक्षितः सन् आगात्। गार्हपत्यादुद्ध्रियमाण आहवनीयं प्रत्यागच्छति। अनन्तरं स्वङ्गः शोभनज्वालावयवः[2] जातः कर्मार्थं समुत्पन्न एषः अग्निः रुशता। रोचतेऽर्चतिकर्मण इदं रूपम्। आरोचमानेन। यद्वा। रुशतिर्हिंसार्थः। तमसो हिंसकेन। भानुना तेजसा विश्वा सद्मानि सर्वांल्लोकान् यद्वा सदनानि यज्ञगृहाणि आ अप्राः आपूरयति। 'प्रा पूरणे'। 'तिङां तिङो भवन्ति' इति तिपः सिबादेशः। अत्र वाजसनेयकम्—'अग्ने बृहन्नुषसामूर्ध्वो अस्थादित्यग्ने ह्येष बृहन्नुषसामूर्ध्वस्तिष्ठति। निर्जगन्वान्तमसो ज्योतिषागादिति निर्जगन्वान् रात्रेस्तमसो ज्योतिषैति। अग्निर्भानुना रुशता स्वङ्ग इत्यग्निर्वा एष भानुना रुशता स्वङ्ग आ जातो विश्वा सद्मान्यप्रा इतीमे वै लोका विश्वा सद्मानि तानेष जात आपूरयति' (श. ब्रा. ६. ७. ३. १०) इति॥

स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु।

चित्रः शिशुः परि तमांस्यक्तून्प्र मातृभ्यो अधि कनिक्रदद्गाः॥ २॥

१. ग-त६-भ१.७-'मुत्तमास्तिस्र; त१.२.३.४.५-अ२.४.६-'मुत्तमोत्तमास्तिस्र। २. ग-शोभमानावयवः।

सः । जातः । गर्भः । असि । रोदस्योः । अग्ने । चारुः । विऽभृतः । ओषधीषु ।
चित्रः । शिशुः । परि । तमांसि । अक्तून् । प्र । मातृऽभ्यः । अधि । कनिक्रदत् । गाः ॥२॥

हे अग्ने जातः उत्पन्नः चारुः कल्याणरूपः ओषधीषु ओषधिविकारेष्वरणीषु विभृतः विशेषेण मथितो यद्वा विभृतः आहवनीयाद्यात्मना विविधं ह्रियमाण ओषधीषु वर्तमानः सः त्वं रोदस्योः द्यावापृथिव्योः गर्भोऽसि गर्भो भवसि। अग्निरूप आदित्यरूपश्चेति। किंच चित्रः चित्रवर्णः 'काली कराली च मनोजवा' (मु. उ. १. २. ४) इत्यादिसप्तजिह्वाभिः[1] नानारूपः यद्वा चित्रश्चायनीयः शिशुः ओषधीनां शिशुरसि तमांसि अक्तून् रात्रिवत् कृष्णानि सर्वाणि परि भवसि। स्वतेजसाभिभवसि। स त्वं मातृभ्यः मातृभूताभ्य ओषधीभ्यः। अधिः पञ्चम्यर्थद्योतकः। गाम्यः कनिक्रदत् पुनःपुनः शब्दं कुर्वन् प्र गाः प्रगच्छसि प्रजायसे॥

विष्णुरित्था परममस्य विद्वाञ्जातो बृहन्नभि पाति तृतीयम्।
आसा यदस्य पयो अक्रत स्वं सचेतसो अभ्यर्चन्त्यत्र॥ ३॥

विष्णुः । इत्था । परमम् । अस्य । विद्वान् । जातः । बृहन् । अभि । पाति । तृतीयम् ।
आसा । यत् । अस्य । पयः । अक्रत । स्वम् । सऽचेतसः । अभि । अर्चन्ति । अत्र ॥ ३ ॥

विद्वान् जानानः जातः प्रादुर्भूतः बृहन् महान् विष्णुः[2] इत्था इत्थमनेन प्रकारेण विष्णुः व्यापनशीलो ज्ञानादिगुणयुक्तोऽग्निः अस्य इमं तृतीयं त्रयाणां पूरकं स्थितं धाम अभि पाति अभिरक्षतु। 'एकतो द्वितस्त्रित इति त्रयो बभूवुः' (निरु. ४. ६) इति यास्केनोक्तम्। किंच अस्य अग्नेः स्वम् आत्मीयं पयः उदकम् आसा आस्येन यत् यदा अक्रत कुर्वन्ति यजमाना याचन्ते तदानीम् अत्र अस्मिंल्लोके स्थिताः स्तोतारः सचेतसः समानमनस्का भूत्वैनम् अभ्यर्चन्ति अभिष्टुवन्ति॥

अत उ त्वा पितुभृतो जनित्रीरन्नावृधं प्रति चरन्त्यन्नैः।
ता ईं प्रत्येषि पुनरन्यरूपा असि त्वं विक्षु मानुषीषु होता॥ ४॥

अतः । ऊँ इति । त्वा । पितुऽभृतः । जनित्रीः । अन्नऽवृधम् । प्रति । चरन्ति । अन्नैः ।
ताः । ईम् । प्रति । एषि । पुनः । अन्यऽरूपाः । असि । त्वम् । विक्षु । मानुषीषु । होता ॥४॥

हे अग्ने अतः। उ इत्यवधारणे। अस्मादेव कारणात्[3] पितुभृतः पितुनान्नेन सर्वस्य जगतो धारयित्र्यः पोषयित्र्यो वा जनित्रीः जनयित्र्य ओषधयः अन्नावृधम् अन्नस्य वर्धकं त्वा त्वाम् अन्नैः हेतुभिः प्रति चरन्ति परिचरन्ति अभिगच्छन्ति। ततस्त्वम् ईम् एनाः ताः ओषधीः प्रत्येषि प्रतिगच्छसि। पुनरपि अन्यरूपाः जीर्णा ओषधीर्दावभूतस्त्वं गच्छसि। किंच मानुषीषु मनुष्यजातिषु विक्षु प्रजासु। यद्वा। विक्षु अग्निहोत्रादिक्रियास्वभिनिविशन्तीषु मानुषीषु मनुष्यजातिषु। होता देवानामाह्वाता होमनिष्पादको वा असि भवसि। मनुष्येषु स्थित इत्यर्थे ब्राह्मणं— 'देवो ह्येष मर्त्येषु' (तै. सं. ६. १. ४. ६-७) इति॥

१. त१.९.५.७-अ६—°जिह्वादिभिः। २. ग-त३-अ५.६—विष्णुः इत्था अमुष्य लोके स्थितस्याग्नेः स्वभूतं परममुत्तमं तृतीयं दिविस्थमंशं अभिपाति अभिरक्षति यद्वा। ३. त१.२.५.७—कारात्।

आतिथ्यायां स्विष्टकृतोऽनुवाक्या 'होतारम्' इत्येषा। सूत्रितं च—'होतारं चित्ररथमध्वरस्य प्रप्रायमग्निर्भरतस्य शृण्वे इति संयाज्ये' (आश्व. श्रौ. ४. ५) इति॥

होतारं चित्ररथमध्वरस्य यज्ञस्ययज्ञस्य केतुं रुशन्तम्।
प्रत्यर्धिं देवस्यदेवस्य मह्ना श्रिया न्वग्निमतिथिं जनानाम्॥ ५॥

होतारम्। चित्रऽरथम्। अध्वरस्य। यज्ञस्यऽयज्ञस्य। केतुम्। रुशन्तम्।
प्रतिऽअर्धिम्। देवस्यऽदेवस्य। मह्ना। श्रिया। नु। अग्निम्। अतिथिम्। जनानाम्॥ ५॥

अध्वरस्य यज्ञस्य होतारम् एतन्नामानमृत्विजं यद्वा होतारं देवानामाह्वातारं चित्ररथं नानारूपरथमध्वरस्य रक्षोभिरहिंसितस्य यज्ञस्य सर्वस्य यज्ञस्य केतुं प्रज्ञापकं पताकास्थानीयं वा रुशन्तं श्वेतवर्णं मह्ना महत्त्वेन देवस्यदेवस्य[1] सर्वेषां देवानाम् अर्धिम् इन्द्रं प्रति समर्धयन्तम्। 'यत्सर्वेषामर्धमिन्द्रः प्रति' इति ब्राह्मणम्। तादृशं जनानां यजमानानाम् अतिथिम् अतिथिवत् पूज्यम् अग्निं नु क्षिप्रं श्रिया श्रियोऽर्थं[2] वयं स्तुमः॥

स तु वस्त्राण्यध पेशनानि वसानो अग्निर्नाभा पृथिव्याः।
अरुषो जातः पद इळायाः पुरोहितो राजन्यक्षीह देवान्॥ ६॥

सः। तु। वस्त्राणि। अध। पेशनानि। वसानः। अग्निः। नाभा। पृथिव्याः।
अरुषः। जातः। पदे। इळायाः। पुरःऽहितः। राजन्। यक्षि। इह। देवान्॥ ६॥

हे राजन् दीप्यमानाग्ने वस्त्राणि आच्छादकानि तेजांसि अध अपि च पेशनानि तेषां तेजसां कार्ष्ण्यशौक्ल्यादीनि[3] रूपाणि। यद्वा। अथानन्तरं पेशनानि। पेश इति हिरण्यनाम। हिरण्यवत् हिरण्यसदृशानि भास्वराणि तेजांसि। वसानः आच्छादयन् पृथिव्याः नाभा नाभौ नाभिस्थानीये इळायाः पदे उत्तरवेद्याम्। 'एतद्वा इळायास्पदं यदुत्तरवेदीनाभिः' (ऐ. ब्रा. १. २८) इत्याम्नानात्। तस्यां जातः समुत्पन्नः अरुषः आरोचमानो यः अग्निः एवंविधोऽसि स त्वं पुरोहितः पुरतो निहितः पूर्वस्यां दिशि आहवनीयायतने[4] स्थापितः सन् इह अस्मिन् यज्ञे देवान् इन्द्रादीन् यक्षि यज पूजय॥

आ हि द्यावापृथिवी अग्न उभे सदा पुत्रो न मातरा ततन्थ।
प्र याह्यच्छोशतो यविष्ठाथा वह सहस्येह देवान्॥ ७॥

आ। हि। द्यावापृथिवी इति। अग्ने। उभे इति। सदा। पुत्रः। न। मातरा। ततन्थ।
प्र। याहि। अच्छ। उशतः। यविष्ठ। अथ। आ। वह। सहस्य। इह। देवान्॥ ७॥

हे अग्ने त्वम् उभे द्यावापृथिवी द्यावापृथिव्यौ सदा सर्वदा आ ततन्थ आतेनिथ। स्वतेजोभिर्विस्तारयसि खलु॥ 'बभूथा ततन्थ' इति थलि निपातितः॥ तत्र दृष्टान्तः। पुत्रो न यथा पुत्रः मातरा मातापितरौ कर्मभिः स्वैस्तनोति तद्वत्। किंच हे यविष्ठ युवतम स[5] त्वम्

1. त-म२.४.६—देवस्य। 2. त-म१.४.६.७—श्रियेथं। 3. त१.२.३.५.७-म१—°शौक्ल्यादीनि, त४—°शौक्तादीनि; म२—°शौल्कादीनि। 4. ग-त१.२.३.७-म१.२.४—आहवनीयायतना; त४—आहवनीयायतनो; त५—आहवनीयातने। 5. ग—स तादृश; त१.२.४.५.७—तत्त्वं; मु—त्वं।

ᵛउशतः कामयमानान् ᵛअच्छ अभिलक्ष्य ᵛआ ᵛयाहि प्रकर्षेणागच्छ[1] । ᵛअथ अनन्तरं हे ᵛसहस्य सहसो बलस्य पुत्र हे अग्ने त्वम् ᵛइह अस्मदीये यज्ञे ᵛदेवान् इन्द्रादीन् ᵛआ ᵛवह प्रापय ॥ ॥२९॥

'पिप्रीहि' इति सप्तर्चं द्वितीयं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'पिप्रीहि' इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोरुक्तः सूक्तविनियोगः । दर्शपूर्णमासयोराद्या स्विष्टकृतोऽनुवाक्या । सूत्रितं च—'अथ स्विष्टकृतः पिप्रीहि देवाँ उशतो यविष्ठेत्यनुवाक्या' ( आश्व. श्रौ. १. ६ ) इति ॥

पि॒प्री॒हि दे॒वाँ उ॑श॒तो य॑विष्ठ वि॒द्वाँ ऋ॒तूँरृ॑तुपते यजे॒ह ।
ये दैव्या॑ ऋ॒त्विज॒स्तेभि॑रग्ने॒ त्वं होतॄ॑णाम॒स्याय॑जिष्ठः ॥ १ ॥

पि॒प्री॒हि । दे॒वान् । उ॒श॒तः । य॒वि॒ष्ठ॒ । वि॒द्वान् । ऋ॒तून् । ऋ॒तु॒ऽप॒ते॒ । य॒ज॒ । इ॒ह ।
ये । दैव्याः॑ । ऋ॒त्विजः॑ । तेभिः॑ । अ॒ग्ने॒ । त्वम् । होतॄ॑णाम् । अ॒सि॒ । आऽय॑जिष्ठः ॥ १ ॥

हे ᵛयविष्ठ युवतमाग्ने ᵛउशतः स्तुतीः श्रोतुं[2] कामयमानान् ᵛदेवान् ᵛपिप्रीहि हविर्भिः प्रीणय । हे ᵛऋतुपते ऋतूनां देवयागकालानां स्वामिन्नग्ने ᵛऋतून् यागकालान् ᵛविद्वान् जानानस्त्वम् ᵛइह अस्मिन्[3] यज्ञे तान् ᵛयज पूजय । किंच हे ᵛअग्ने ᵛदैव्याः देवेषु भवाः 'अग्निर्होताश्विनावध्वर्यू त्वष्टाग्नीन्मित्र उपवक्ता' ( तै. आ. ३. ५ ) इत्यत्रोक्ताः ᵛये ᵛऋत्विजः सन्ति ᵛतेभिः तैः सह देवान् यज । यद्वा । दैव्या देवेषु भवा ऋत्विज आश्वलायनेनोक्ताः 'चन्द्रमा ब्रह्मादित्योऽध्वर्युः पर्जन्य उद्गाता' ( आश्व. गृ. १. २३. ८-९ ) इति । तैः सह यज । यस्मात् ᵛत्वं ᵛहोतॄणां मध्ये ᵛआयजिष्ठः आभिमुख्येन देवानां यष्टृतमः ᵛअसि भवसि ॥

वेषि॑ हो॒त्रमु॒त पो॒त्रं जना॑नां मन्धा॒तासि॑ द्रविणो॒दा ऋ॒ताव॑ा ।
स्वाहा॑ व॒यं कृ॒णवा॑मा ह॒वींषि॑ दे॒वो दे॒वान्य॑जत्व॒ग्निरर्ह॑न् ॥ २ ॥

वेषि॑ । हो॒त्रम् । उ॒त । पो॒त्रम् । जना॑नाम् । म॒न्धा॒ता । अ॒सि॒ । द्र॒वि॒णः॒ऽदाः । ऋ॒तऽवा॑ ।
स्वाहा॑ । व॒यम् । कृ॒णवा॑म । ह॒वींषि॑ । दे॒वः । दे॒वान् । य॒ज॒तु॒ । अ॒ग्निः । अर्ह॑न् ॥ २ ॥

हे अग्ने ᵛजनानां यजमानानां ᵛहोत्रं होतुः कर्म तेन क्रियमाणं स्तोत्रं ᵛवेषि कामयसे । ᵛउत अपि च ᵛपोत्रं पोतुः कर्म तेन क्रियमाणां स्तुतिं कामयसे । किंच ᵛमन्धाता मेधावी ᵛऋतावा[4] सत्यवांस्त्वं ᵛद्रविणोदाः ᵛअसि धनस्य प्रदाता भवसि । अथ परोक्षकृता । ᵛवयं देवेभ्यः ᵛहवींषि ᵛस्वाहा ᵛकृणवाम स्वाहा करवाम । प्रयच्छाम । ततः ᵛदेवः दीप्यमानः ᵛअर्हन् प्रशस्यो[5] यजमान-योग्यो वा ᵛअग्निः ᵛदेवान् ᵛयजतु । तैर्हविर्भिः पूजयतु ॥

दर्शपूर्णमासातिपत्त्यादौ निमित्ते पथिकृतीष्टिः कर्तव्या । तत्र 'आ देवानाम्' इत्येषा याज्या । सूत्रितं च—'वेत्था हि वेधो अध्वन आ देवानामपि पन्थामगन्म' ( आश्व. श्रौ. ३. १० ) इति । प्रायणीयायामाग्नेयस्यैव याज्योदयनीयायां सैवानुवाक्या । सूत्रितं च—'अग्ने नय सुपथा राये अस्मान् आ देवानामपि पन्थामगन्म' ( आश्व. श्रौ. ४. ३ ) इति । विपरीतास्य याज्यानुवाक्या इति ॥

१. ग-त१.२.४.५-भ६—प्रकर्षेण गच्छ । २. ग-त३-भ१.४.५.६.७—श्रोतुं हवींषि चात्तुं । ३. ग-त३-भ२.४.७—अस्मदीये । ४. ग-ऋतावा; त१.२.४.५.७-भ६—ऋतवान् । ५. ग—नमस्यो; त-भ४.६-मु—प्रशस्यो ।

आ देवानामपि पन्थामगन्म यच्छक्नवाम तदनु प्रवोळ्हुम्।
अग्निर्विद्वान्त्स यजात्सेदु होता सो अध्वरान्त्स ऋतून्कल्पयाति ॥ ३ ॥

आ। देवानाम्। अपि। पन्थाम्। अगन्म। यत्। शक्नवाम। तत्। अनु। प्रऽवोळ्हुम्।
अग्निः। विद्वान्। सः। यजात्। सः। इत्। ऊँ इति। होता।
सः। अध्वरान्। सः। ऋतून्। कल्पयाति ॥ ३ ॥

देवानां देवलोकादिगमनसाधनं देवानां स्वभूतं पन्थां पन्थानं तम् अपि वैदिकमार्गं वयम् आ अगन्म आगतवन्तो भवेम येन देवान् प्राप्नुमः। तथा वयं यत् कर्म अनुष्ठातुं शक्नवाम शक्नुमः समर्था भवामः तत्[1] कर्म अनुक्रमेण प्रवोळ्हुं प्रकर्षेण वोढुं समाप्तिं प्रापयितुं समर्था भवेम[2]। अनन्तरं विद्वान् तं पन्थानं जानानः सः अग्निः यजात् देवान् यजतु। सेदु स एव खलु होता मनुष्याणां होमनिष्पादकः। ततः सः एवाग्निः अध्वरान् यज्ञान् किंच ऋतून् कालान्[3] कल्पयाति कल्पयतु करोतु॥

व्रतातिपत्तौ व्रतपतीष्टिः कर्तव्या। तत्र 'यद्वो वयम्' इत्येषा याज्या। सूत्रितं च—'त्वमग्ने व्रतपा असि यद्वो वयं प्रमिनाम व्रतानि' ( आश्व. श्रौ. ३. १३ ) इति॥

यद्वो वयं प्रमिनाम व्रतानि विदुषां देवा अविदुष्टरासः।
अग्निष्टद्विश्वमा पृणाति विद्वान्येभिर्देवाँ ऋतुभिः कल्पयाति ॥ ४ ॥

यत्। वः। वयम्। प्रऽमिनाम। व्रतानि। विदुषाम्। देवाः। अविदुःऽतरासः।
अग्निः। तत्। विश्वम्। आ। पृणाति। विद्वान्। येभिः। देवान्। ऋतुऽभिः। कल्पयाति ॥४॥

हे देवाः अविदुष्टरासः अविद्वत्तरा अत्यन्तमजानन्तः वयं वः युष्माकं यत् यत्किंचित् व्रतानि कर्माणि विदुषां भवतां जानतामेव प्रमिनाम प्रहिंसितवन्तः। भवत्सु जानत्सु नित्यनैमित्तिककर्माणि विलोपितवन्त इत्यर्थः। विद्वान् एतत् सर्वं जानानः अग्निः स्विष्टकृत् तत् एतत् विश्वं सर्वं कर्मजातम् आ पृणाति आपूरयतु। फलसहितं करोत्वित्यर्थः। केनापूरयतु तदाह। येभिः ऋतुभिः यागयोग्यैः कालैः देवान् कल्पयाति कल्पयति कर्माङ्गभावाय[4] समर्थयति तैरापूरयतु॥

यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्त्यासः।
अग्निष्टद्धोता क्रतुविद्विजानन्यजिष्ठो देवाँ ऋतुशो यजाति ॥ ५ ॥

यत्। पाकऽत्रा। मनसा। दीनऽदक्षाः। न। यज्ञस्य। मन्वते। मर्त्यासः।
अग्निः। तत्। होता। क्रतुऽवित्। विऽजानन्। यजिष्ठः। देवान्। ऋतुऽशः। यजाति ॥५॥

दीनदक्षाः ज्ञातृत्वाभावेन दीनबला दीनोत्साहा वा मर्त्यासः मर्त्या मनुष्या ऋत्विजः पाकत्रा पाकेन। बहुलग्रहणादस्मादपि तृतीयार्थे त्राप्रत्ययः। पाकेन पक्तव्येन[5] विशिष्टज्ञानरहिते-

१. ख-भ६—यत्। २. ग-त५.६-मु—भवामः; त१.२.३.४.७-भ१.२.४.६—भवाम। ३. ग-स१-भ५—यज्ञकालान्। ४. त१.२.४.५.७-भ६—कर्माङ्गभावेन। ५. ख-भ६—पोषकेन।

मानसेन वा मनसा शुक्रः सम्यो यज्ञसंयमिव यत् कर्म न मन्यते न जानाति तत् कर्म विजानन् होता देवानामाह्वाता होमनिष्पादको वा ऋतुवित् कर्मवित् यजिष्ठः देवानामतिशयेन यष्टा सः अग्निः स्विष्टकृत् ऋतुशः ऋतावृत्तौ स्वे स्वे यागयोग्ये काले देवान् यजाति यजतु हविर्भिः पूजयतु ॥

विश्वे॑षां ह्य॑ध्व॒राणा॒मनी॑कं चि॒त्रं के॒तुं जनि॑ता त्वा ज॒जान॑ ।
स आ य॑जस्व नृ॒वती॒रनु॒ क्षाः स्पा॒र्हा इषः॑ क्षु॒मती॑र्वि॒श्वज॑न्याः ॥ ६ ॥

विश्वे॑षाम् । हि । अ॒ध्व॒राणा॑म् । अनी॑कम् । चि॒त्रम् । के॒तुम् । जनि॑ता । त्वा॒ । ज॒जान॑ ।
सः । आ । य॒ज॒स्व॒ । नृ॒ऽवतीः॑ । अनु॑ । क्षाः । स्पा॒र्हाः । इषः॑ । क्षु॒ऽमतीः॑ । वि॒श्वऽज॑न्याः ॥ ६ ॥

हे अग्ने विश्वेषां सर्वेषाम् अध्वराणां यज्ञानाम् अनीकं मुखं[1] प्रधानं चित्रं चायनीयं नानारूपं वा केतुं प्रज्ञापकं त्वा त्वां जनिता जनयिता प्रजापतिर्यजमानो वा जजान जनयामास । उत्पादितः सः त्वं नृवतीः ऋत्विगादियुक्ताः क्षाः । पृथिवीनामैतत् । क्षियन्त्यस्यामिति क्षा[2] भूमिः । अनु क्षा यजस्व अनुप्रयच्छ । यद्वा । नृवतीर्नृभिः संस्कृतानि क्षा अनु पृथिवीं वेदिलक्षणामनुगतानि वेद्यामासादितानि स्पार्हाः स्पृहणीयानि क्षुमतीः स्तुतिमन्त्रलक्षणशब्दवन्ति विश्वजन्याः सर्वजनहितानि पुष्ट्यादिहेतुत्वात् तानि इषः अन्नानि हविर्लक्षणानि यजस्व[3] देवेभ्यः प्रयच्छ ॥

यं त्वा॒ द्यावा॑पृथि॒वी यं त्वाप॒स्त्वष्टा॒ यं त्वा॑ सु॒जनि॑मा ज॒जान॑ ।
पन्था॒मनु॑ प्रवि॒द्वान्पि॑तृ॒याणं॑ द्यु॒मद॑ग्ने समिधा॒नो वि भा॑हि ॥ ७ ॥

यम् । त्वा॒ । द्यावा॑पृथि॒वी इति॑ । यम् । त्वा॒ । आपः॑ । त्वष्टा॑ । यम् । त्वा॒ । सु॒ऽजनि॑मा । ज॒जान॑ ।
पन्था॑म् । अनु॑ । प्र॒ऽवि॒द्वान् । पि॒तृ॒ऽयान॑म् । द्यु॒ऽमत् । अ॒ग्ने॒ । स॒म्ऽइ॒धा॒नः । वि । भा॒हि॒ ॥ ७ ॥

हे अग्ने यं त्वा त्वां द्यावापृथिवी जनितवत्यौ आदित्यात्मनाग्न्यात्मना वा[4] । तथा यं त्वाम् आपः मेघोदरगताः विद्युदात्मना स्थितं जनितवत्यः । यद्वा । आप इत्यन्तरिक्षनाम । द्यावा- पृथिवी अन्तरिक्षं चेमे त्रयो लोका यं त्वामजीजनन् । किंच सुजनिमा शोभनजननः त्वष्टा प्रजापतिः यं त्वां जजान जनयामास हे अग्ने पितृयाणं पितरो येन मार्गेण गच्छन्ति तं पन्थां हविर्वहन- मार्गम् अनु प्रविद्वान् प्रजानंस्त्वं समिधानः समिध्यमानः सन् द्युमत् दीप्तियुक्तं यथा भवति तथा वि भाहि विशेषेण दीप्यस्व ॥ ॥ १० ॥

'इनो राजन्' इति सप्तर्चं तृतीयं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'इनः' इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

इ॒नो रा॑जन्नर॒तिः समि॑द्धो॒ रौद्रो॒ दक्षा॑य सुषु॒माँ अ॑दर्शि ।
चि॒कि॒द्वि भा॑ति भा॒सा बृ॑ह॒तासि॑क्नीमेति॒ रुश॑तीम॒पाज॑न् ॥ १ ॥

इ॒नः । रा॒ज॒न् । अ॒र॒तिः । सम्ऽइ॑द्धः । रौद्रः॑ । दक्षा॑य । सु॒सु॒ऽमान् । अ॒द॒र्शि॒ ।
चि॒कि॒त् । वि । भा॒ति॒ । भा॒सा । बृ॒ह॒ता । असि॑क्नीम् । ए॒ति॒ । रुश॑तीम् । अ॒प॒ऽअज॑न् ॥ १ ॥

१. त१.२.४.५-म४.६—मुखं; त६-म७—मुख्यं । २. न१.२.४.५-म१.४.६—ता भूमीः; त३. ७—ता भूमिः । ३. त१.१.७—आयजस्व । ४. त-म-मु- च ।

हे राजन् दीप्यमानाग्ने त्वम् इनः ईश्वरः सर्वस्य भवसि। अथ परोक्षः। अरतिः हवि-र्वहनाय देवान् प्रति गन्ता[1] समिद्धः संदीप्तः रौद्रः शत्रूणां भयंकरः सुषुमान्। ओषध्यात्मना स्थितोऽग्निः[2] सुषु सूयत इति सुषुः सोमः। तेन तद्वान् सोमसमस्तो वा सोऽग्निः दक्षाय यज-मानानां धनादिवृद्ध्यर्थम्[3] अदर्शि सर्वैर्दृश्यते। किंच चिकित् सर्वं जानानोऽग्निः वि भाति विशेषेण दीप्यते। तथा बृहता महता भासा तेजसा ज्वालालक्षणेन असिक्नीं रात्रिम् एति। सायंहोमसिद्ध्यर्थमेव[4] गच्छति। किं कुर्वन्। रुशतीं श्वेतवर्णां दीप्तिम् अपाजन् अपगमयन्[5] रात्रिं गच्छति। सामर्थ्याद्रात्रिं परित्यजन्नुषसं प्रातर्होमसिद्ध्यर्थं गच्छतीत्यर्थो लभ्यते॥

कृष्णां यदेनीमभि वर्पसा भूज्जनयन्योषां बृहतः पितुर्जाम्।
ऊर्ध्वं भानुं सूर्यस्य स्तभायन्दिवो वसुभिररतिर्वि भाति॥ २॥

कृष्णाम्। यत्। एनीम्। अभि। वर्पसा। भूत्। जनयन्। योषाम्। बृहतः। पितुः। जाम्।
ऊर्ध्वम्। भानुम्। सूर्यस्य। स्तभायन्। दिवः। वसुऽभिः। अरतिः। वि। भाति॥ २॥

योऽग्निः यत् यदा कृष्णां कृष्णवर्णाम् एनीं गच्छन्तीं रात्रिं वर्पसा आत्मीयेन ज्वाला-लक्षणेन रूपेण अभि भूत् अभिभवति। किं कुर्वन्। बृहतः महतः पितुः सर्वस्य जगतः पालयितुः पितृभूतादादित्यात् जां जायमानां योषाम् उषसं जनयन् अभिव्यञ्जयन्[6]। तदानीम् अरतिः गमनशीलोऽग्निः दिवः द्युलोकस्य वसुभिः वासयितृभिराच्छादकैः संस्तम्भनसमर्थैरात्मीयै-स्तेजोभिः सूर्यस्य भानुं दीप्तिम् ऊर्ध्वम् उपरिष्टात् स्तभायन् स्तम्भयन् वि भाति विशेषेण दीप्यते॥

भद्रो भद्रया सचमान आगात्स्वसारं जारो अभ्येति पश्चात्।
सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्रुशद्भिर्वर्णैरभि राममस्थात्॥ ३॥

भद्रः। भद्रया। सचमानः। आ। अगात्। स्वसारम्। जारः। अभि। एति। पश्चात्।
सुऽप्रकेतैः। द्युऽभिः। अग्निः। विऽतिष्ठन्। रुशत्ऽभिः। वर्णैः। अभि। रामम्। अस्थात्॥ ३॥

भद्रः भजनीयः कल्याणः भद्रया भजनीयया दीप्त्योषसा वा सचमानः सेव्यमानः संगच्छमानो वाग्निः आगात् आजगाम। गार्हपत्यादाहवनीयमागच्छति। ततः पश्चात् जारः जरयिता शत्रूणां सः अग्निः स्वसारं स्वयंसारिणीं भगिनीं वा, आगतामुषसम्[7] अभ्येति अभि-गच्छति। तथा सुप्रकेतैः सुप्रज्ञानैः द्युभिः दीप्तैस्तेजोभिः सह वितिष्ठन् सर्वतो वर्तमानः सः अग्निः रुशद्भिः श्वेतैः[8] वर्णैः[8] वारकैरात्मीयैस्तेजोभिः रामं कृष्णं शार्वरं तमः अभि अस्थात् सायंहोमकालेऽभिभूय तिष्ठति॥

१. त४.५–हन्ता; त६.७–गतः। २. त-भ१.२.६.७–स्थितेरंशुः। ३. ग-त३-भ२.५.६–'वृद्ध्यर्थं कर्मवृद्ध्यर्थं वा; त-मु–°वृद्ध्यर्थं वा। ४. त-भ१.२ ४.६-मु–°सिद्ध्यर्थमेति; त३–°सिद्ध्यर्थं येन। ५. ग-त१-भ–अपगमयन् सर्वतो विकिरन् यद्वा रुशतीं दीप्तामुषसं अपाजन् अपक्षिपन् परित्यजन् (भ–'परित्यजन्' नास्ति); त–अपागमयन्। ६. ग-त-भ-मु–अभिव्यञ्जयन् रात्रिमभ्यभूत्। ७. त४-अगात्य उषसं; त५–अगात्यमुषसं; त७–आ अगात् आगतामुषसं; भ६–आगात् स्वमुषसं। ८. त-भ६-मु–श्वेतवर्णैः।

अस्य यामासो बृहतो न वग्नूनिन्धाना अग्नेः सख्युः शिवस्य ।
ईड्यस्य वृष्णो बृहतः स्वासो भामासो यामन्नक्तवश्चिकित्रे ॥ ४ ॥

अस्य । यामासः । बृहतः । न । वग्नून् । इन्धानाः । अग्नेः । सख्युः । शिवस्य ।
ईड्यस्य । वृष्णः । बृहतः । सुऽआसः । भामासः । यामन् । अक्तवः । चिकित्रे ॥ ४ ॥

बृहतः महतः अस्य अग्नेः संबन्धिनः इन्धानाः दीप्यमानाः यामासः । यान्ति गच्छन्तीति यामा रश्मयः । वग्नून् स्तुतिकारिणो जनान् न बाधन्ते । किंच सख्युः समानख्यानस्य हविःप्रदानसमर्थत्वलक्षणेन सख्येन सखिभूतस्य शिवस्य कल्याणस्य भक्तानां सुखकरस्य ईड्यस्य स्तोतव्यस्य वृष्णः कामानां वर्षितुः बृहतः महतः स्वासः शोभनास्यस्य अस्याग्नेः स्वभूताः अक्तवः सर्वांस्तमसोऽपगमयन्त आहुतिभिः संगता वा भामासः । 'भाम क्रोधे' । तीक्ष्णा अमसहा रश्मयः यामन् । याति देवान् प्रति तर्पणाय यान्ति वा देवा एतं प्रत्यक्षभावायेति यामा यज्ञः । तस्मिन् चिकित्रे सर्वतो ज्ञायन्ते । प्रथिता अभूवन् ॥

स्वना न यस्य भामासः पवन्ते रोचमानस्य बृहतः सुदिवः ।
ज्येष्ठेभिर्यस्तेजिष्ठैः क्रीळुमद्भिर्वर्षिष्ठेभिर्भानुभिर्नक्षति द्याम् ॥ ५ ॥

स्वनाः । न । यस्य । भामासः । पवन्ते । रोचमानस्य । बृहतः । सुऽदिवः ।
ज्येष्ठेभिः । यः । तेजिष्ठैः । क्रीळुमत्ऽभिः । वर्षिष्ठेभिः । भानुऽभिः । नक्षति । द्याम् ॥ ५ ॥

रोचमानस्य दीप्यमानस्य बृहतः महतः सुदिवः शोभनदीप्तेर्वा[1] यस्य अग्नेः स्वभूताः भामासः । 'भा दीप्तौ' । दीप्ता रश्मयः स्वनाः न स्वनन्तो मरुत इव पवन्ते सर्वतः शब्दं कुर्वन्तो गच्छन्ति । किंच यः अग्निः ज्येष्ठेभिः अत्यन्तं प्रशस्तैः तेजिष्ठैः तेजस्वितमैः क्रीळुमद्भिः क्रीडनवद्भिः वर्षिष्ठेभिः वृद्धतमैः भानुभिः[2] आत्मीयैस्तेजोभिः द्यां द्युलोकं नक्षति व्याप्नोतीति । स एवं देवानावहत्वित्युत्तरेण संबन्धः ॥

अस्य शुष्मासो ददृशानपवेर्जेहमानस्य स्वनयन्नियुद्भिः ।
प्रत्नेभिर्यो रुशद्भिर्देवतमो वि रेभद्भिररतिर्भाति विभ्वा ॥ ६ ॥

अस्य । शुष्मासः । ददृशानऽपवेः । जेहमानस्य । स्वनयन् । नियुत्ऽभिः ।
प्रत्नेभिः । यः । रुशत्ऽभिः । देवऽतमः । वि । रेभत्ऽभिः । अरतिः । भाति । विऽभ्वा ॥ ६ ॥

ददृशानपवेः दर्शनीयज्वालाग्रेः । यद्वा । पविर्वज्रं आयुधम् । दृश्यमानायुधस्य । जेहमानस्य । जेहतिर्गतिकर्मा । हविरादाय देवान् प्रति गच्छतः अस्य अग्नेः स्वभूताः शुष्मासः शोषकाः नियुद्भिः । 'नियुतो वायोः' इति वायोरश्वा नियुतः । तद्युक्तैः वायुभिः[3] संयुक्ता रश्मयः स्वनयन् शब्दायन्ते । किंच देवतमः देवानां मुख्यः अरतिः गन्ता विभ्वा विभववत्तीको महान् यः[4] अग्निः[4] प्रत्नेभिः पुराणैः रुशद्भिः श्वेतवर्णैः रेभद्भिः शब्दायमानैस्तेजोभिः वि भाति विविधं दीप्यते ॥

१. ग—शोभनदीप्तेः । २. त-म-मु—भानुमद्भिः । ३. ग-मर—वा नियुद्भिः; त३-म१—वायुद्भिः । त-म६—वा द्युभिः । ४. त१.२.५—स्वाभिः; त४—शोभिः ।

स आ व॑क्षि॒ महि॑ न॒ आ च॑ सत्सि दि॒वस्पृ॑थि॒व्योर॑र॒तिर्यु॑व॒त्योः ।
अ॒ग्निः सु॒तुकः॑ सु॒तुके॑भि॒रश्वै॒ रभ॑स्वद्भी॒ रभ॑स्वाँ॒ एह ग॑म्याः ॥ ७ ॥

सः । आ । व॒क्षि॒ । महि॑ । नः॒ । आ । च॒ । स॒त्सि॒ । दि॒वःपृ॑थि॒व्योः । अ॒र॒तिः । यु॒व॒त्योः ।
अ॒ग्निः । सु॒ऽतुकः॑ । सु॒ऽतुके॑भिः । अश्वैः॑ । रभ॑स्वत्ऽभिः । रभ॑स्वान् । आ । इ॒ह । ग॒म्याः॒ ॥७॥

हे अग्ने सः तादृशस्त्वं नः अस्मदीये यज्ञे महि महान्तं[1] देवान् आ वक्षि आवह प्रापय। किंच युवत्योः परस्परं मिश्रितयोः तरुण्योर्वा[2] दिवस्पृथिव्योः द्यावापृथिव्योर्मध्ये अरतिः अग्निः सूर्यात्मना गन्ता त्वम् आ[3] सत्सि अस्माकं यज्ञमासीद। तथा सुतुकः। तुकिर्गत्यर्थः। सुगमः स्तोतृभिः यष्टृभिश्च सुखेन प्राप्तव्यः रभस्वान् वेगवान् अग्निः अङ्कनादिगुणयुक्तस्त्वं सुतुकेभिः सुगमैः रभस्वद्भिः वेगवद्भिः अश्वैः रोहिदाख्यैः सह इह अस्मदीये यज्ञे आ गम्याः आगच्छ ॥　　॥ ३१ ॥

'प्र ते' इति सप्तर्चं चतुर्थं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'प्र ते' इत्यनुक्रान्तम्। प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

प्र ते॑ यक्षि॒ प्र त॑ इयर्मि॒ मन्म॒ भुवो॒ यथा॒ वन्द्यो॑ नो॒ हवे॑षु ।
धन्व॑न्निव प्र॒पा अ॑सि॒ त्वम॑ग्न इय॒क्षवे॑ पू॒रवे॑ प्रत्न राजन् ॥ १ ॥

प्र । ते॒ । य॒क्षि॒ । प्र । ते॒ । इ॒य॒र्मि॒ । मन्म॑ । भुवः॑ । यथा॑ । वन्द्यः॑ । नः॒ । हवे॑षु ।
धन्व॑न्ऽइव । प्र॒ऽपा । अ॒सि॒ । त्वम् । अ॒ग्ने॒ । इ॒य॒क्षवे॑ । पू॒रवे॑ । प्र॒त्न॒ । रा॒ज॒न् ॥ १ ॥

हे अग्ने ते तुभ्यं हविः प्र यक्षि प्रयच्छामि। यजिर्दानार्थः। तथा मन्म मननीयां स्तुतिं ते त्वदर्थं प्र इयर्मि प्रेरयामि प्रोच्चारयामि। वन्द्यः सर्वैर्वन्दनीयस्त्वं नः अस्मदीयेषु हवेषु देवाह्वानेषु यथा[4] त्वं संनिहितः भुवः भवसि तथा हविः प्रयच्छामि स्तौमि च। हे प्रत्न पुराण राजन् सर्वस्य जगतः स्वामिन् हे अग्ने सः त्वम् इयक्षवे यष्टुमिच्छते पूरवे। पूरुरिति मनुष्यनाम[5]। मनुष्याय यजमानाय हविर्भिर्देवान् पूरयित्रे जनाय धन्वन्निव प्रपा असि। यथा धन्वन् धन्वनि मरौ निरुदकप्रदेशे प्रपा। प्रपिबन्त्यस्यामिति प्रपा। सा यथोदकप्रदानेन जनेभ्यः सुखदा भवति एवं त्वं फलप्रदानेन तस्मै सुखदाता भवसि ॥

यं त्वा॒ जना॑सो अ॒भि सं॒चर॑न्ति॒ गाव॑ उ॒ष्णमि॑व व्र॒जं य॑विष्ठ ।
दू॒तो दे॒वाना॑मसि॒ मर्त्या॑नाम॒न्तर्म॒हाँश्च॑रसि रोच॒नेन॑ ॥ २ ॥

यम् । त्वा॒ । जना॑सः । अ॒भि । स॒म्ऽचर॑न्ति । गावः॑ । उ॒ष्णम्ऽइ॑व । व्र॒जम् । य॒वि॒ष्ठ॒ ।
दू॒तः । दे॒वाना॑म् । अ॒सि॒ । मर्त्या॑नाम् । अ॒न्तः । म॒हान् । च॒र॒सि॒ । रो॒च॒नेन॑ ॥ २ ॥

हे यविष्ठ युवतम अग्ने यं[6] त्वा त्वां जनासः जना यजमानाः फलप्राप्त्यर्थम् अभि संचरन्ति अभितः[7] परिचरन्ति[7] सेवन्ते। तत्र दृष्टान्तः। गावः उष्णमिव यथा गावः शीतार्ता उष्णं शीतजनितदुःखापनोदनार्थमुष्णं व्रजं गोष्ठमभिगच्छन्ति तद्वत्[8]। स त्वं देवानाम् इन्द्रादीनां

---

१. म२.६-ष-महतो। २. त-तरुण्योर्वा। ३. त४-आ च। ४. त-म६-तथा। ५. त-'मनुष्यनाम' नास्ति। ६. त-'यं' नास्ति। ७. त-'अभितः परिचरन्ति' नास्ति। ८. त-म६-मु-'तद्वत्' नास्ति।

मर्त्यानां मनुष्याणां च दूतः असि हविष्प्रापणद्वारा। ततः महान् त्वम् अन्तः द्यावापृथिव्यो-र्मध्ये हविर्दानाय रोचनेन अन्तरिक्षेण लोकेन चरसि गच्छसि। तं त्वां स्तुम इति शेषः॥

शिशुं न त्वा जेन्यं वर्धयन्ती माता बिभर्ति सचनस्यमाना।
धनोरधि प्रवता यासि हर्यञ्जिगीषसे पशुरिवावसृष्टः॥ ३॥

शिशुम्। न। त्वा। जेन्यम्। वर्धयन्ती। माता। बिभर्ति। सचनस्यमाना।
धनोः। अधि। प्रऽवता। यासि। हर्यन्। जिगीषसे। पशुःऽइव। अवऽसृष्टः॥ ३॥

हे अग्ने जेन्यं जयशीलं त्वा त्वां शिशुं न पुत्रमिव वर्धयन्ती[1] पोषयन्ती माता पृथिवी सचनस्यमाना संपर्कमिच्छन्ती सती बिभर्ति धारयति। स त्वं हर्यन् कामयमानः[2] सन्नस्मिँल्लोके धनोरधि। अधिः सप्तम्यर्थद्योतकः। अन्तरिक्षात् प्रवता प्रवणेन मार्गेण यासि यज्ञं प्रत्यागच्छसि। किंच त्वम् अवसृष्टः ऋत्विग्भिर्हविर्दानाय जिगीषसे देवान् प्रति गन्तुमिच्छसि। कथमिव। पशुरिव। यथा विमुक्तः पशुर्गोष्ठं प्रत्यागच्छति तद्वत्॥

मूरा अमूर न वयं चिकित्वो महित्वमग्ने त्वमङ्ग वित्से।
शये वव्रिश्चरति जिह्वयादन्रेरिह्यते युवतिं विश्पतिः सन्॥ ४॥

मूराः। अमूर। न। वयम्। चिकित्वः। महिऽत्वम्। अग्ने। त्वम्। अङ्ग। वित्से।
शये। वव्रिः। चरति। जिह्वया। अदन्। रेरिह्यते। युवतिम्। विश्पतिः। सन्॥ ४॥

हे अमूर अमूढ अत एव चिकित्वः चेतनवन् हे अग्ने मूराः मूढाः वयं तव माहात्म्यं न जानीमः। किंतु हे अग्ने त्वमङ्ग। अङ्गेति निपात एवार्थे। त्वमेव तव महित्वं माहात्म्यं वित्से जानासि। त्वत्तः कोऽन्यो वेदितुमर्हति। किंच वव्रिः जीर्णः ओषधीसङ्घः शये शेते तिष्ठति। यद्वा। वव्रिरिति रूपनाम सामर्थ्याद्वान्तर्णीतमत्वर्थं द्रष्टव्यम्। आहवनीयाख्येन रूपेण रूपवान् शये चरति। अथ जिह्वया[3] ज्वालारूपया अदन् हवींषि भक्षयन् चरति। वाक्यभेदा-द्द्विर्निघातः। किंच विश्पतिः विशां स्वामी सन् अग्निः युवतिम् आत्मनो मिश्रयित्रीमाहुतिं दीर्घ-प्रसृतया[4] ज्वालया जिह्वया रेरिह्यते अत्यर्थं लेढि आस्वादयति॥ 'लिह आस्वादने'। यङि रूपम्। यद्वा। सोऽग्निर्युवतिं तरुणीं जीर्णौषधिकां[5] पृथिवीमास्वादयति॥

कूचिज्जायते सनयासु नव्यो वने तस्थौ पलितो धूमकेतुः।
अस्नातापो वृषभो न प्र वेति सचेतसो यं प्रणयन्त मर्ताः॥ ५॥

कूऽचित्। जायते। सनयासु। नव्यः। वने। तस्थौ। पलितः। धूमऽकेतुः।
अस्नाता। आपः। वृषभः। न। प्र। वेति। सऽचेतसः। यम्। प्रऽनयन्त। मर्ताः॥५॥

नव्यः नवतरः स्तुत्यो वाग्निः कूचित् कस्मिंश्चित् प्रदेशे जायते। कुत्र। सनयासु पुराणीषु जीर्णास्वोषधीष्वरण्योः। तथा पलितः पालयिता श्वेतवर्णः धूमकेतुः धूमप्रज्ञानोऽग्निः वने सर्व-

---

१. त-अ६—'वर्धयंती' नास्ति। २. त-अ६—कामानान्। ३. त१.४.५-अ६—जिह्वा; त२.४.७-मु—जिह्वया जिह्वा। ४. त—°प्रसृतया। ५. त१.२.६.७-अ६—जीर्णास्वधिकां; त४.५—जीर्णौस्वाधिकां

स्मिन्नरण्ये तस्थौ तिष्ठति। यद्वा। मम उदके मेघगते विद्युद्रूपस्तथा तिष्ठति च। अस्नाता स्नान-मकुर्वन्ननपेक्षितस्नानः सर्वदा शुद्धः सोऽग्निः आपः। शुद्धप्रत्ययवः। अप उदकानि स्वार्थं प्र वेति प्रगच्छति। तत्र दृष्टान्तः। वृषभो न। यथा वृषभस्तृष्णोपशमनार्थमरण्यमध्यस्थान्युदकानि प्रगच्छति तद्वत्। मर्ताः मनुष्या ऋत्विजः सचेतसः समानमनस्काः समानप्रज्ञाना: सन्तः ईम् अग्निं शमयन्त हविर्भिः प्रीणयन्ति॥

तनूत्यजेव तस्करा वनर्गू रशनाभिर्दशभिरभ्यधीताम्।
इयं ते अग्ने नव्यसी मनीषा युक्ष्वा रथं न शुचयद्भिरङ्गैः॥ ६॥

तनूत्यजाऽइव। तस्करा। वनर्गू इति। रशनाभिः। दशऽभिः। अभि। अधीताम्।
इयम्। ते। अग्ने। नव्यसी। मनीषा। युक्ष्व। रथम्। न। शुचयत्ऽभिः। अङ्गैः॥ ६॥

हे अग्ने वनर्गू वनगामिनौ तनूत्यजा[1] धनार्थं मर्तुं कृतनिश्चयौ एतौ तस्करा तस्करौ यथा पथिकं मोषणार्थं रज्ज्वा बद्ध्वाकृष्य च क्वचित् प्रदेशे स्थापयतः तद्वत्[2]। तथा यास्कः—'तनूत्यजा तनूत्यक्तारौ वनर्गू वनगामिनावग्निमन्थनौ बाहू तस्कराभ्यामुपमिमीते' (निरु. ३. १४) इत्यादि[3]। अधीताम्॥ दधातेर्लुङि सिचो लुकि 'छन्दस्युभयथा' इति तस्य आर्धधातुकत्वेन ङित्वात् 'घुमास्था॰' इतीकारः। ततो हे अग्ने ते त्वदर्थं नव्यसी नवतरा इयं मनीषा स्तुतिर्मया क्रियते। एतज्ज्ञात्वा शुचयद्भिः सर्वं प्रकाशयद्भिरात्मीयैः अङ्गैः तेजोभिः आत्मानं मदीयं यज्ञं प्रति युक्ष्व योजय। कथमिव। रथं न। यथा[4] रथमश्वैः संयोजयन्ति तद्वत्॥

उक्तासंसरणेष्टावग्नेर्मन्त्रहतो याज्या 'ब्रह्म च ते' इत्येषा। सूत्रितं च—'ब्रह्म च ते जातवेदो नमश्च पुरूण्यग्ने पुरुधा त्वाया' (आश्व. श्रौ. ४. १) इति॥

ब्रह्म च ते जातवेदो नमश्चेयं च गीः सदमिद्वर्धनी भूत्।
रक्षा णो अग्ने तनयानि तोका रक्षोत नस्तन्वो अप्रयुच्छन्॥ ७॥

ब्रह्म। च। ते। जातऽवेदः। नमः। च। इयम्। च। गीः। सदम्। इत्। वर्धनी। भूत्।
रक्ष। नः। अग्ने। तनयानि। तोका। रक्ष। उत। नः। तन्वः। अप्रऽयुच्छन्॥ ७॥

हे जातवेदः जातप्रज्ञाग्ने ते त्वदर्थं ब्रह्म अस्माभिर्दीयमानं हवीरूपमन्नं[5] वर्धनी वर्धकं भूत् भवतु। तथा नमः नमस्कारश्च। किंच इयम् इदानीं क्रियमाणैषा स्तुतिः सदमित् सर्वदैव वर्धनी वर्धयित्री भूत् भवतु। तस्माद्धे अग्ने नः अस्माकं तनयानि पुत्रान् तोका पौत्रांश्च रक्ष पालय। उत अपि च अप्रयुच्छन् अप्रमाद्यंस्त्वं नः अस्माकं तन्वः अङ्गानि रक्ष॥ ॥ ३२॥

'एकः समुद्रः' इति सप्तर्चं पञ्चमं सूक्तम्। अन्याद्याः पूर्ववत्। विनियोगश्च। 'एकः' इत्यनुक्रान्तम्॥

१. त१.२.६–तनूत्यजेव; म६–तनूत्यजे। २. ग–तद्वत् अंगुलिभिर्दशभिः मम बाहू त्वामभ्यधीतां। ३. त१.२.६.७-मु–इत्यादि रशनाभिर्दशभिरंगुलिभिः कृत्वा रज्जुभिः अभ्यधीतां अभ्यधानि। ४. त१.२.६.७–यथा रथिकः रथं अश्वैर्योजयति तद्वत् यज्ञं प्रति त्वं योजय। कथमिव रथं न यथा। ५. त१.२.७-म६–हवीरूपमन्नलक्षणं।

एकः समुद्रो धरुणो रयीणामस्मद्धृदो भूरिजन्मा वि चष्टे ।
सिषक्त्यूधर्निण्योरुपस्थ उत्सस्य मध्ये निहितं पदं वेः ॥ १ ॥

एकः । समुद्रः । धरुणः । रयीणाम् । अस्मत् । हृदः । भूरिऽजन्मा । वि । चष्टे ।
सिसक्ति । ऊधः । निण्योः । उपऽस्थे । उत्सस्य । मध्ये । निऽहितम् । पदम् । वेरिति वेः ॥ १ ॥

समुद्रः यस्मात्समुद्द्रवन्त्युदकानि स समुद्रयन्तीति वा रयीणां धनानां धरुणः धारयिता एकः असहायः भूरिजन्मा बहुविधजन्मा गार्हपत्याहवनीयादिभावेन बहुजन्मा सोऽग्निः अस्मत्। 'सुपां सुलुक्' इति षष्ठ्या लुक्। अस्माकं हृदः हृदयान्यभिलषितानि वि चष्टे विपश्यति[1] आजानाति। उक्तं च—'मनो वै देवा मनुष्यस्य आजानन्ति[2]' इति। किंच निण्योः। अन्तर्हितनामैतत्। अन्तर्हितयोर्ज्योतिस्तमोभ्यामाच्छादितयोः प्रातःसायंकालयोः उपस्थे उपस्थाने समीपे वर्तमानम् ऊधः रात्रिं सिषक्ति सेवते उपजीवति। यद्वा। निण्योरन्तर्हितस्यान्तरिक्षस्य समीपे वर्तमानमूधो मेघं सेवते। अथ प्रत्यक्षः। हे अग्ने उत्सस्य उदकधारकस्य[3] लोकस्य मध्ये पदम् अपां स्थानं निहितम्। तत् माध्यमिकं स्थानं वेः गच्छ। यद्वा। उत्सस्य मेघस्य मध्ये निहितं पदं विद्युदाख्यं तत् स्वात्मतया[4] गच्छ ॥ वेः। वी गत्यादिषु। लङि सिपि रूपम्। [illegible] ॥

समानं नीळं वृषणो वसानाः सं जग्मिरे महिषा अर्वतीभिः ।
ऋतस्य पदं कवयो नि पान्ति गुहा नामानि दधिरे पराणि ॥ २ ॥

समानम् । नीळम् । वृषणः । वसानाः । सम् । जग्मिरे । महिषाः । अर्वतीभिः ।
ऋतस्य । पदम् । कवयः । नि । पान्ति । गुहा । नामानि । दधिरे । पराणि ॥ २ ॥

वृषणः आहुतीनां सेक्तारः समानम् एकं नीळं स्थानमग्निं वसानाः सम्यक् आच्छादयन्तः महिषाः महान्तो यजमानाः अर्वतीभिः वडवाभिः सं जग्मिरे समगच्छन्त। धनवन्तोऽभूवन्। यद्वा। अग्निमेवाभीप्सन्तो मरुतः प्रत्यागन्तुं रोहिदाख्याभिर्वडवाभिः संयोजितवन्तः। तथा कवयः मेधाविनः ऋतस्य उदकस्य पदम् आवासस्थानमग्निं नि पान्ति नितरां रक्षन्ति। हविर्भिः स्तुतिभिश्च आराधयन्तीत्यर्थः[5]। ततः गुहा गुहायामन्तरिक्षे स्थितानि विश्वानि नामानि उदकानि दधिरे धारयन्ति। यद्वा। गुहा गुहे संवृते हृदये पराणि प्रधानान्यग्निर्जातवेदा वैश्वानर इत्यादीनि नामानि दधिरे कुर्वन्ति। स्तुवन्तीत्यर्थः ॥

ऋतायिनी मायिनी सं दधाते मित्वा शिशुं जज्ञतुर्वर्धयन्ती ।
विश्वस्य नाभिं चरतो ध्रुवस्य कवेश्चित्तन्तुं मनसा वियन्तः ॥ ३ ॥

ऋतयिनी इत्यृतऽयिनी । मायिनी इति । सम् । दधाते इति ।
मित्वा । शिशुम् । जज्ञतुः । वर्धयन्ती इति ।
विश्वस्य । नाभिम् । चरतः । ध्रुवस्य । कवेः । चित् । तन्तुम् । मनसा । विऽयन्तः ॥ ३ ॥

---

१. त–विपश्यति। २. त–मर–आजानाति। ३. त३–मर–उदकधारस्य; म१.४.७–उदकाधारस्य लोकधारस्य; म६–उदकाधारकस्य। ४. ग–स्वात्मनोप; त१.२.५.७–स्वान्यतया; त४–स्वात्मतया; म२–स्वात्मन्यतया। ५. त–म१.४.६–रोधयन्तीत्यर्थः।

ऋतायिनी ऋतवत्यौ सत्यवत्यौ अत एव मायिनी प्रज्ञावत्यौ कर्मयुक्ते वा[1] द्यावापृथिव्यौ यज्ञसाधनभूते[2] अरणी वा इममग्निं सं दधाते सम्यक् धारयतः । अग्निसूर्यात्मना केवलाग्न्यात्मना वा संदधाते । मित्वा कालपरिमाणं कृत्वा यद्वा संपरिच्छिद्य शिशुं शंसनीयं बालमग्निं जज्ञतुः जनयतः । वर्धयन्ती वर्धयन्त्यौ द्यावापृथिव्यौ लोके यथा परिच्छेदाय पुत्रं पितरौ जनयतस्तद्वत् । ततः विश्वस्य सर्वस्य चरतः जङ्गमस्य ध्रुवस्य स्थावरस्य च जगतः नाभिं नाभिभूतं मध्यं प्रधानभूतं वा कवेः मेधाविनोऽग्नेः तन्तुं तनितारं वैश्वानराख्यमेवाग्निं मनसा वियन्तः विविधं गच्छन्तो मनुष्याः सुखेन पूजयन्त इति शेषः । तं वयं यजाम इति[3] ॥

ऋतस्य हि वर्तनयः सुजातमिषो वाजाय प्रदिवः सचन्ते ।
अधीवासं रोदसी वावसाने घृतैरन्नैर्वावृधाते मधूनाम् ॥ ४ ॥

ऋतस्य । हि । वर्तनयः । सुऽजातम् । इषः । वाजाय । प्रऽदिवः । सचन्ते ।
अधीवासम् । रोदसी इति । वावसाने इति । घृतैः । अन्नैः । ववृधाते इति । मधूनाम् ॥ ४ ॥

ऋतस्य यज्ञस्य वर्तनयः प्रवर्तकाः[4] इषः अभिलषितान्यन्नानि प्रदिवः पुरातना ऋत्विग्यजमानाः सुजातम् आधानकाले सुष्ठूत्पन्नमग्निं वाजाय बलार्थमन्नार्थं वा सचन्ते हि सेवन्ते खलु । अपि च वावसाने सर्वस्य जगत आच्छादयित्र्यौ रोदसी द्यावापृथिव्यौ अधीवासम् ओषधिवनस्पत्यात्मना निवसन्तम् । यद्वा । अधिरुपर्यर्थे । उपर्यपि लोकानामुपर्यग्निं विद्युदादित्यात्मना निवसन्तम् । अग्निं मधूनाम् उदकानां सम्बन्धेन संबन्धिभिः घृतैरन्नैः पुरोडाशादिभिश्च वावृधाते वर्धयां चक्रतुः । वर्धयतः । तस्माद्वयमपि तमग्निमिडुम इत्यभिप्रायः ॥

सप्त स्वसॄररुषीर्वावशानो विद्वान्मध्व उज्जभारा दृशे कम् ।
अन्तर्येमे अन्तरिक्षे पुराजा इच्छन्वव्रिमविदत्पूषणस्य ॥ ५ ॥

सप्त । स्वसॄः । अरुषीः । वावशानः । विद्वान् । मध्वः । उत् । जभार । दृशे । कम् ।
अन्तरिति । येमे । अन्तरिक्षे । पुराऽजाः । इच्छन् । वव्रिम् । अविदत् । पूषणस्य ॥ ५ ॥

वावशानः कामयमानो वाश्यमानः[5] स्तोतृभिः स्तूयमानो वा विद्वान् सर्वं जानानः सोऽग्निः अरुषीः आरोचमानाः सप्त सप्तसंख्याकाः स्वसॄः स्वयंसारिणीः 'काली कराली च' (मु. उ. १. २. ४) इत्यादिकाः सप्त जिह्वाः मध्वः मदकरात् यज्ञात् उज्जभार उज्जहार । ऊर्ध्वं हृतवान् । यज्ञे स्वतेजसा प्रादुर्भूत इत्यर्थः । किमर्थम् । कं सुखेन दृशे सर्वेषामेव पदार्थानां दर्शनार्थम् । किंच पुराजाः पुरातनः सोऽग्निर्द्यावापृथिव्योः अन्तः मध्ये अन्तरिक्षे स्थितः[6] ता जिह्वाः येमे नियमितवान् । सर्वत्र तेजोयुक्तो वर्तत इत्यर्थः । अपि च इच्छन् यजमानात् कामयमानोऽग्निः पूषणस्य । पूषेति पृथिवीनाम । पार्थिवस्य लोकस्य वव्रिं रूपं शुभ्रवर्णम् अविदत् प्राप्नोत् । यद्वा । 'मूर्धा भुवो भवति नक्तमग्निस्ततः सूर्यो जायते प्रातरुद्यन्' (ऋ. सं. १०.८८.६) इति मन्त्रान्तरे दर्शनादादित्यात्मनाग्निः स्तूयते । कामयमानः सूर्यात्मनाग्निः सप्तसंख्याकान् स्वसॄः रश्मीन् मध्वः समुद्रोदकादुज्जहार । ततोऽन्तरिक्षे विद्युदात्मना स्थित्वा वृष्टिलक्षणं रूपं पृथिव्याः प्राप्नुवदिति ॥

१. त-अ६-'वा' नास्ति । २. त-°भूतौ । ३. त-म१.२.४-६-मु-इति वा । ४. त-म२. ४.६-प्रवर्तकाः । ५. म-शाम्यमानः; त-अ३.६-मु-वास्यमानः वेष्टयमानः; अ५-शाम्यमानः । ६. त-म२. ६-मु-तस्मिन्; म१.४-यस्मिन्; म७-न स्थितः ।

स॒प्त म॒र्यादाः॑ क॒वय॑स्ततक्षु॒स्तासा॒मेका॒मिद॒भ्यं॑हु॒रो गा॑त् ।
आ॒योर्ह॑ स्क॒म्भ उ॑प॒मस्य॑ नी॒ळे प॒थां वि॑स॒र्गे ध॒रुणे॑षु तस्थौ ॥ ६ ॥

स॒प्त । म॒र्यादाः॑ । क॒वयः॑ । त॒त॒क्षुः॒ । तासा॑म् । एका॑म् । इत् । अ॒भि । अं॒हु॒रः । गा॒त् ।
आ॒योः । ह॒ । स्क॒म्भः । उ॒प॒ऽमस्य॑ । नी॒ळे । प॒थाम् । वि॒ऽस॒र्गे । ध॒रुणे॑षु । त॒स्थौ॒ ॥ ६ ॥

कवयः मेधाविन ऋषयः सप्त मर्यादाः । कामजेभ्यः क्रोधजेभ्यश्चोद्धृताः पानमक्षाः स्त्रियो मृगया दण्डः पारुष्यमन्यदूषणमिति सप्त मर्यादाः । यद्वा । 'स्तेयं गुरुतल्पारोहणं ब्रह्महत्यां सुरापानं दुष्कृतकर्मणः पुनःपुनः सेवां पातकेऽनृतोद्यम्' (निरु. ६. २७) इति निरुक्ते निर्दिष्टाः सप्त मर्यादाः । अवस्थिताः ततक्षुः । तक्षतिः करोतिकर्मा । सुष्ठु तक्षणीया अकुः । त्यक्तवन्त इत्यर्थः । तासां मर्यादानाम् एकामित् एकामेव अंहुरः पापवान् पुरुषः अभि गात् अभिगच्छति । यस्त्वेवं करोति स पापवान् भवतीत्यर्थः । किंच आयोः तस्य मनुष्यस्य स्कम्भः स्कम्भयिता निरोधकोऽग्निः उपमस्य समीपभूतस्यायोः नीळे स्थाने पथाम् आदित्यरूपस्य स्वस्य रश्मीनां विसर्गे विसर्जनस्थानेऽन्तरिक्षमध्ये वर्तमानेषु धरुणेषु उदकेषु तस्थौ विद्युदात्मना तिष्ठति । अनेन लोकत्रयवर्तित्वमिति ॥

अस॑च्च॒ सच्च॑ पर॒मे व्यो॑म॒न्दक्ष॑स्य॒ जन्म॒न्नदि॑तेरु॒पस्थे॑ ।
अ॒ग्निर्ह॑ नः प्रथम॒जा ऋ॒तस्य॒ पूर्व॒ आयु॑नि वृष॒भश्च॑ धे॒नुः ॥ ७ ॥

अस॑त् । च॒ । सत् । च॒ । प॒र॒मे । विऽओ॑मन् । दक्ष॑स्य । जन्म॑न् । अदि॑तेः । उ॒पऽस्थे॑ ।
अ॒ग्निः । ह॒ । नः॒ । प्र॒थ॒म॒ऽजाः । ऋ॒तस्य॑ । पूर्वे॑ । आयु॑नि । वृ॒ष॒भः । च॒ । धे॒नुः ॥ ७ ॥

असत् अव्याकृतं सच्च व्याकृतम् । 'असदेवेदमग्र आसीत् तत्सदासीत् तत्समभवत्' (छा. उ. ३. १९. १) इति श्रुतेः । सदसदात्मकं जगत् सर्वं परमे उत्तमे ज्ञानसहिते व्योमन् व्योमनि कारणात्मनि जातमभूत् सदा । अदितेः पृथिव्याः उपस्थे उपस्थाने समीपे दक्षस्य प्रजापतेः । यद्वा दक्षस्य । 'स त्रेधात्मानं व्यभजतादित्यं तृतीयं वायुं तृतीयम्' (श. ब्रा. १०. ६. ५. ३) इति श्रुतेः तृतीयस्य द्युलोकस्याधिष्ठातृत्वादादित्यस्य । जन्मन् जन्मनि । तत्र एवं सति मनुष्यस्य सृष्टिक्रमात् पूर्वम् अग्निः अग्निरेव ऋतस्य[1] कर्मफलस्य भोक्तृणां नः अस्माकं प्रथमजाः प्रथममेव जातः समुत्पन्नः । 'तेजो रसो निरवर्ततासिः' (श. ब्रा. १०. ६. ५. २, बृ. उ. १. २. २) इति श्रवणात् । पश्चात् तत्प्रकरणे 'ततो मनुष्या अजायन्त' इति प्रथमत एव मनुष्यसृष्टेरभिहितत्वात् अनन्तरं पूर्वे उत्तरसृष्टिमपेक्ष्य पूर्वस्मिन् आयुनि कालेऽयमग्निरेव वृषभश्च आसीत् । धेनुः च अभवत् । स्त्रीपुंसवत् स्त्रीपुंसात्मकोऽभवदित्यर्थः ॥ ॥ ३३ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपाल-
साम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये
वेदार्थप्रकाशे ऋक्संहिताभाष्ये सप्तमाष्टके पञ्चमोऽध्यायः ॥

---

१. ग–ऋतस्य सत्यभूतस्य; त१–ऋतस्य भूतस्य ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
सप्तमस्याष्टकस्यैवं व्याकार्षीत् पञ्चमं सुधीः ।
सायणाचार्यः षष्ठमध्यायं व्याचिकीर्षति ॥

दशमे मण्डले प्रथमेऽनुवाके षोडश सूक्तानि । तत्र 'अयं स यस्य' इति सप्तर्चं षष्ठं सूक्तमाप्त्यस्य त्रितस्यार्षं त्रैष्टुभमाग्नेयम् । 'अयम्' इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

अ॒यं स यस्य॒ शर्म॒न्नवो॑भिर॒ग्नेरेध॑ते जरि॒ताभि॑ष्टौ ।
ज्येष्ठे॑भि॒र्यो भा॒नुभि॑रृषू॒णां प॒र्येति॒ परि॑वीतो वि॒भावा॑ ॥ १ ॥

अ॒यम् । सः । यस्य॑ । शर्म॑न् । अवः॑ऽभिः । अ॒ग्नेः । एध॑ते । ज॒रि॒ता । अ॒भिष्टौ॑ ।
ज्येष्ठे॑भिः । यः । भा॒नुऽभिः॑ । ऋ॒षू॒णाम् । प॒रि॒ऽएति॑ । परि॑ऽवीतः । वि॒भाऽवा॑ ॥ १ ॥

जरिता स्तोता अभिष्टौ यागे कृते[1] यस्य अग्नेः अवोभिः पालनैः[2] शर्मन् शर्मणि स्वगृहे एधते वर्धते सः अयम् अग्निर्यागार्थमस्माभिराहूत इति शेषः । विभावा दीप्तिमान् यः अग्निः ऋषूणां सूर्यरश्मीनां ज्येष्ठेभिः प्रशस्तैः भानुभिः तेजोभिः परिवीतः परिवृतः पर्येति सर्वतो गच्छति । यत्र यत्र गन्तव्यं तत्र तत्राप्रतिहतगतिर्गच्छतीत्यर्थः ॥

यो भा॒नुभि॑र्वि॒भावा॑ वि॒भात्य॒ग्निर्दे॒वेभि॑रृ॒तावाज॑स्रः ।
आ यो वि॒वाय॑ स॒ख्या सखि॑भ्योऽपरिह्वृ॒तो अत्यो॒ न सप्तिः॑ ॥ २ ॥

यः । भा॒नुऽभिः॑ । वि॒भाऽवा॑ । वि॒ऽभाति॑ । अ॒ग्निः । दे॒वेभिः॑ । ऋ॒तऽवा॑ । अज॑स्रः ।
आ । यः । वि॒वाय॑ । स॒ख्या । सखि॑ऽभ्यः । अप॑रिऽह्वृतः । अत्यः॑ । न । सप्तिः॑ ॥ २ ॥

ऋतवा सत्यवाक्यवान्[3] यज्ञवान् वा अजस्रः अनुपक्षीणोऽहिंसितो वा । केनचिदनभिभूत इत्यर्थः । विभावा दीप्तिमान् यः अग्निर्देवेभिः देवैर्द्योतमानैः भानुभिः तेजोभिः विभाति विविधं दीप्यते किंच यः अग्निः सख्या सख्यानि सखिभिः कर्तव्यानि कर्माणि हविरादीनि । कर्तुमिति शेषः । सखिभ्यः सखिभूतानां यजमानानामर्थाय अपरिह्वृतः अपरिहिंसितः । अपरिश्रान्त इत्यर्थः । आ विवाय आभिमुख्येन गच्छति । तत्र दृष्टान्तः । सप्तिः । सदासर्पण[4] इत्यर्थः । अत्यः न यथा सततगमनसमर्थोऽश्वोऽपरिश्रान्तो गच्छति तद्वत् । सोऽयमग्निरस्माभि-र्यागार्थमाहूत इति पूर्वेणान्वयः ॥

ईशे॒ यो विश्व॑स्या दे॒ववी॑ते॒रीशे॑ वि॒श्वायु॑रु॒षसो॒ व्यु॑ष्टौ ।
आ यस्मि॑न्म॒ना ह॒वींष्य॒ग्नावरि॑ष्टरथः स्क॒भ्नाति॑ शू॒षैः ॥ ३ ॥

1. ग-त३भ-कृते सति । 2. त-पालकैः । 3. त१.२.५.६-भ६-सत्यवाकवान्; त४-सत्य-वाक्यवान्; त७-सत्यवाकवान्; मु-सत्यवान् । 4. ग-सदासर्पणशील; त२.४.६.७-सदासर्पण; त५-सदासर्पण; भ१.४-सदासर्पण ।

ईशे । यः । विश्वस्याः । देवऽवीतेः । ईशे । विश्वऽआयुः । उषसः । विऽउष्टौ ।
आ । यस्मिन् । मना । हवींषि । अग्नौ । अरिष्टऽरथः । स्कम्नाति । शूषैः ॥ ३ ॥

यः अग्निः विश्वस्याः देववीतेः सर्वस्य यज्ञस्य ईशे ईष्टे । अपि च विश्वायुः सर्वत्रा-प्रतिहतगमनः उषसो व्युष्टौ विवासने उदयकाले[1] होमार्थं यजमानानाम् ईशे ईष्टे । शूषैः सुखकरैः अरिष्टरथः अहिंसितमहारथः सर्व एव यजमानः यस्मिन् अग्नौ मना मननीयानि हवींषि आ स्कम्नाति आदरेण प्रतिबध्नाति प्रक्षिपति । सोऽयमग्निरस्माभिर्यागार्थमाहूत इत्यर्थः ॥

शूषेभिर्वृधो जुषाणो अर्कैर्देवाँ अच्छा रघुपत्वा जिगाति ।
मन्द्रो होता स जुह्वा३ यजिष्ठः संमिश्लो अग्निरा जिघर्ति देवान् ॥ ४ ॥

शूषेभिः । वृधः । जुषाणः । अर्कैः । देवान् । अच्छ । रघुऽपत्वा । जिगाति ।
मन्द्रः । होता । सः । जुह्वा । यजिष्ठः । सम्ऽमिश्लः । अग्निः । आ । जिघर्ति । देवान् ॥ ४ ॥

वृधः वर्धितोऽग्निः[2] शूषेभिः हविर्लक्षणैर्बलैः[3] । बलनिमित्तैर्हविर्भिरित्यर्थः । अर्कैः स्तोत्रैश्च जुषाणः सेव्यमानः सन् देवान् इन्द्रादीन् अच्छ आप्तुं रघुपत्वा लघुपतनः शीघ्रगामी जिगाति गच्छति[4] । गत्वा च मन्द्रः स्तुत्यः होता देवानामाह्वाता[5] होमनिष्पादको वा यजिष्ठः यष्टृतमः संमिश्लः स्वगुणैर्देवैर्वा संप्रयुक्तः सः अग्निः देवान् प्रति हविः आ जिघर्ति आहारयति । देवेभ्यो हविर्ददातीत्यर्थः[1] ॥

तमुस्रामिन्द्रं न रेजमानमग्निं गीर्भिर्नमोभिरा कृणुध्वम् ।
आ यं विप्रासो मतिभिर्गृणन्ति जातवेदसं जुह्वं सहानाम् ॥ ५ ॥

तम् । उस्राम् । इन्द्रम् । न । रेजमानम् । अग्निम् । गीःऽभिः । नमःऽभिः । आ । कृणुध्वम् ।
आ । यम् । विप्रासः । मतिऽभिः । गृणन्ति । जातऽवेदसम् । जुह्वम् । सहानाम् ॥ ५ ॥

हे ऋत्विजो यूयम् उस्रां भोगानामुत्स्राविणं दातारं रेजमानं ज्वालात्मना कम्पमानं तम् अग्निम् इन्द्रं न इन्द्रमिव गीर्भिः स्तुतिभिः नमोभिः हविर्भिश्च आ कृणुध्वम् । अस्मदभि-मुखं कुरुत[6] । विप्रासः मेधाविनः स्तोतारः सहानां शत्रुबलानामभिभवितॄणां देवानां जुह्वम् आह्वातारं जातवेदसं जातधनं जातप्रज्ञं वा यम् अग्निम् आ गृणन्ति आदरेण स्तुवन्ति । तमा कृणुध्वमिति पूर्वेण संबन्धः ॥

सं यस्मिन्विश्वा वसूनि जग्मुर्वाजे नाश्वाः सप्तीवन्त एवैः ।
अस्मे ऊतीरिन्द्रवाततमा अर्वाचीना अग्न आ कृणुष्व ॥ ६ ॥

सम् । यस्मिन् । विश्वा । वसूनि । जग्मुः । वाजे । न । अश्वाः । सप्तिऽवन्तः । एवैः ।
अस्मे इति । ऊतीः । इन्द्रवातऽतमाः । अर्वाचीनाः । अग्ने । आ । कृणुष्व ॥ ६ ॥

१. भ२–उषःकाले । २. त-भ२.६–वर्धितोऽग्निः; भ१–पिच्छितोऽग्निः । ३. त-भ१–हविर्युक्तैर्बलैः ।
४. त-मु–'गच्छति' नास्ति । ५. ग–यष्टृतमः होमसाधनज्वालया संगतः अग्निः देवानिन्द्रादीनाजुहोति ।
६. त-भ६–कुरुध्वं ।

हे अग्ने यस्मिन् त्वयि विश्वानि[1] वसूनि धनानि सं जग्मुः स्वत्वेन संगतानि भवन्ति। तत्र दृष्टान्तः। एवैः[2] गमनैः सप्तीवन्तः सर्पणवन्तः शीघ्रगमनसमर्थाः[3] अश्वाः वाजे न यथा संग्रामे संगतास्तद्वत्। हे अग्ने स त्वम् इन्द्रवाततमाः इन्द्रेणाभिगताः ऊतीः रक्षाः अस्मे अस्मासु अर्वाचीनाः अभिमुखीः आ कृणुष्व आदरेण कुरु॥

**अधा ह्यग्ने मह्ना निषद्या सद्यो जज्ञानो हव्यो बभूथ।**
**तं ते देवासो अनु केतमायन्नधावर्धन्त प्रथमास ऊमाः॥ ७॥**

अध। हि। अग्ने। मह्ना। निऽसद्य। सद्यः। जज्ञानः। हव्यः। बभूथ।
तम्। ते। देवासः। अनु। केतम्। आयन्। अध। अवर्धन्त। प्रथमासः। ऊमाः॥ ७॥

अध[4] अनन्तरं हि यस्माद्धे अग्ने त्वं मह्ना महत्त्वेन जज्ञानः जायमानो ज्वलन् निषद्य उपविश्य सद्यः तस्मिन् प्रजननकाल एव हव्यः हवनार्ह आहुतिप्रक्षेपार्हः बभूथ भवसि तस्मात् कारणात् देवासः हविषो दातारः ऋत्विग्यजमानाः ते तव स्वभूतं तं तादृशं केतं प्रज्ञानलक्षणम् अनु आयन् अनुगच्छन्ति। दीप्ते त्वयि हवींषि जुह्वतीत्यर्थः। अध[5] अनन्तरमृत्विगादयः प्रथमासः क्रियाभिजनविद्यागुणैरुत्कृष्टाः ऊमाः त्वया रक्षिताः सन्तः अवर्धन्त वर्धन्ते॥ ॥१॥

'स्वस्ति नः' इति सप्तर्चं सप्तमं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'स्वस्ति' इत्यनुक्रान्तम्। उक्तः सूक्तविनियोगः। स्वस्त्ययन्यां प्रधानस्य 'स्वस्ति नः' इत्येषानुवाक्या। सूत्रितं च— 'अग्निः स्वस्तिमान् स्वस्ति नो दिवो अग्ने पृथिव्याः' (आश्व. श्रौ. २. १०) इति॥

**स्वस्ति नो दिवो अग्ने पृथिव्या विश्वायुर्धेहि यजथाय देव।**
**सचेमहि तव दस्म प्रकेतैरुरुष्या ण उरुभिर्देव शंसैः॥ १॥**

स्वस्ति। नः। दिवः। अग्ने। पृथिव्याः। विश्वऽआयुः। धेहि। यजथाय। देव।
सचेमहि। तव। दस्म। प्रऽकेतैः। उरुष्य। नः। उरुऽभिः। देव। शंसैः॥ १॥

हे देव दानादिगुणविशिष्ट अग्ने त्वं दिवः पृथिव्याः द्यावापृथिव्योः सकाशात् नः अस्मभ्यं विश्वायुः सर्वायुः स्वस्ति पुत्रादि[6] यजथाय देवयागार्थं धेहि प्रयच्छ। सर्वोपद्रवरहिताः सर्वायुपुत्रयुक्ताश्च[7] सन्तो वयं यथा यजमाना भवेम तथास्मान् कुर्विति वाक्यशेषः। अपि च वयं सचेमहि[8]। हे दस्म दर्शनीय देव अग्ने उरुभिः बहुभिः शंसैः शंसनीयैः तव संबन्धिभिः प्रकेतैः पालनोपायप्रज्ञानैः नः अस्मान् उरुष्य रक्ष॥

**इमा अग्ने मतयस्तुभ्यं जाता गोभिरश्वैरभि गृणन्ति राधः।**
**यदा ते मर्तो अनु भोगमानड्वसो दधानो मतिभिः सुजात॥ २॥**

१. ग-त३.७-म५.६-मु—विश्वा विश्वानि; त१—विश्वा। २. त—एतैः। ३. त-म६-मु—शीघ्रगमनशीलाः समर्थाः। ४. त२—अथ; म१.४.७—अधाय; म६—अधा। ५. त१.२.५.७-म६—अथ; त३-म१.२.४.७—अधाय। ६. ग—पुत्राद्यविनाशाय; त—पुत्रा; त२-म५.६—पुत्राद्यविनाशं। ७. त-म२.६—सर्वायुर्युक्ताश्च; त२-म१.४.७—सर्वायुपुत्राश्च। ८. म५-सचेमहि त्वां सेवेमहि।

इमाः । अग्ने । मतयः । तुभ्यम् । जाताः । गोभिः । अश्वैः । अभि । गृणन्ति । राधः ।
यदा । ते । मर्तः । अनु । भोगम् । आनट् । वसो इति । दधानः । मतिऽभिः । सुऽजात ॥ २ ॥

हे अग्ने इमाः इदानीं मतयः स्तुतयः तुभ्यं त्वदर्थं जाताः अस्मदादिस्तोतृमुखादुत्पन्नाः[1] । उच्चारिता इत्यर्थः । गोभिरश्वैः च सहितं राधः त्वया दीयमानं हिरण्यादिकं धनम् अभि गृणन्ति अभिष्टुवन्ति । अस्मत्स्तुत्यनुरूपाणामस्मभ्यं त्वया दत्तमिति प्रशंसन्ति । यदा मर्तः अस्मदादिको मनुष्यः ते त्वया दीयमानं भोगं भोगार्हं धनम् अनु आनट् प्राप्नोति लभते तदा हे वसो प्रशस्यमभूमन् । यद्वा । स्वेन तेजसा सर्वस्याच्छादयितः । हे सुजात शोभनकर्मार्थमुत्पन्नाग्ने[2] त्वं दधानः अस्मभ्यं धनं प्रयच्छन् मतिभिः अस्मदीयाभिः स्तूयस इति शेषः ॥

**अग्निं मन्ये पितरमग्निमापिमग्निं भ्रातरं सदमित्सखायम् ।**
**अग्नेरनीकं बृहतः सपर्यं दिवि शुक्रं यजतं सूर्यस्य ॥ ३ ॥**

अग्निम् । मन्ये । पितरम् । अग्निम् । आपिम् । अग्निम् । भ्रातरम् । सदम् । इत् । सखायम् ।
अग्नेः । अनीकम् । बृहतः । सपर्यम् । दिवि । शुक्रम् । यजतम् । सूर्यस्य ॥ ३ ॥

अहं स्तोता पितरम् अग्निम् एव मन्ये जाने । आपिं बन्धुम् अग्निम् एव मन्ये । भ्रातरम् अग्निम् एव मन्ये । सदमित् सर्वदाविशेषाद्विनं सखायम् अग्निमेव जानामि । बृहतः महतः अग्नेः अनीकम् आहवनीयाख्यं मुखं सपर्यं परिचरामि । तत्र लुप्तोपममेतत् । दिवि द्युलोके स्थितं यजतं यष्टव्यं पूजनीयं सूर्यस्य संबन्धि शुक्रं दीप्तिमत् मण्डलं यथा कश्चिदभिप्रेतार्थसिद्धये आराधयति तद्वत् ॥

**सिध्रा अग्ने धियो अस्मे सनुत्रीर्यं त्रायसे दम आ नित्यहोता ।**
**ऋतावा स रोहिदश्वः पुरुक्षुर्द्युभिरस्मा अहभिर्वाममस्तु ॥ ४ ॥**

सिध्राः । अग्ने । धियः । अस्मे इति । सनुत्रीः । यम् । त्रायसे । दमे । आ । नित्यऽहोता ।
ऋतऽवा । सः । रोहित्ऽअश्वः । पुरुऽक्षुः । द्युऽभिः । अस्मै । अहऽभिः । वामम् । अस्तु ॥ ४ ॥

हे अग्ने सनुत्रीः संभक्त्र्यः अस्मे अस्माकं संबन्धिन्यः धियः स्तुतयः सिध्राः सिद्धा निष्पन्नाः । त्वदर्थमस्माभिः कृता इत्यर्थः । दमे आ अस्मदीयगृहे मर्यादयावस्थितस्त्वं नित्यहोता सततं होमनिष्पादको देवानामाह्वाता वा सन् यं मां त्रायसे कर्मवैगुण्यात् रक्षसि सः अहं त्वत्प्रसादात् त्वत्सायुज्यं गतः सन् ऋतवा यज्ञवान् सत्यवान् वा स्यामिति शेषः । रोहिदश्वः रोहित्संज्ञकाश्वः पुरुक्षुः बह्वन्नश्च स्याम् । किंच अस्मै ईदृग्भूताय तुभ्यं द्युभिः दीप्तेषु अहभिः अहःसु दिवसेषु वामं वननीयं हविः अस्तु ॥

१. त१.२.४.५—'स्तोत्रमुखोपदुत्पन्नाः; म२—'स्तोत्रे मुखादुत्पन्नाः; त६-७—'स्तोत्रमुखादुत्पन्नाः; म६—'स्तोत्रमयोऽस्मन्मुखादुत्पन्नाः । २. ग—'कर्मणोत्पन्नाग्ने; त२.४.५—'कर्मार्थमुत्पन्नाग्ने; त३.७-म—'कर्मार्थमुत्पन्नाग्ने; त६—'कर्मोत्पन्नाग्ने ।

शुभिर्हितं मित्रमिव प्रयोगं प्रत्नमृत्विजमध्वरस्य जारम्।
बाहुभ्यामग्निमायवोऽजनन्त विक्षु होतारं न्यसादयन्त ॥ ५ ॥

शुऽभिः। हितम्। मित्रम्ऽइव। प्रऽयोगम्। प्रत्नम्। ऋत्विजम्। अध्वरस्य। जारम्।
बाहुऽभ्याम्। अग्निम्। आयवः। अजनन्त। विक्षु। होतारम्। नि। असादयन्त ॥ ५ ॥

शुभिर्हितं दीप्तिभिर्हितं मित्रमिव स्निग्धमिव प्रयोगं प्रयोक्तव्यं प्रत्नं पुराणम् ऋत्विजं होतृसंज्ञकम्। 'अग्निर्वै देवानां होतासीत्' (ऐ. ब्रा. २. ७; ३. १४) इति श्रुतेः। अध्वरस्य यज्ञस्य जारं समापयितारम् एवंभूतम् अग्निमायवः यजमाना मनुष्याः बाहुभ्याम् अजनन्त जनितवन्तः। किंच विक्षु मनुष्येषु[1]। तदाकारेषु वेदिष्वित्यर्थः। होतारम् आह्वातारं न्यसादयन्त नियमेन सादितवन्तः। देवानां यागार्थं निरूपितवन्त इत्यर्थः॥

स्वयं यजस्व दिवि देव देवान् किं ते पाकः कृणवदप्रचेताः।
यथायज ऋतुभिर्देव देवानेवा यजस्व तन्वं सुजात ॥ ६ ॥

स्वयम्। यजस्व। दिवि। देव। देवान्। किम्। ते। पाकः। कृणवत्। अप्रऽचेताः।
यथा। अयजः। ऋतुऽभिः। देव। देवान्। एव। यजस्व। तन्वम्। सुऽजात ॥ ६ ॥

हे देव द्योतमानाग्ने त्वं दिवि द्युलोके स्थितान् देवान् इन्द्रादीन् स्वयम् आत्मनैव यजस्व। पाकः पक्तव्यप्रज्ञः अप्रचेताः अप्रकृष्टज्ञानो[2] मनुष्यः ते तव किं कृणवत् किं करोति। त्वयानधिष्ठितः[3] किंचिदपि न जानातीत्यर्थः। किंच हे देव त्वम् ऋतुभिः कालविशेषैः देवान् यथायजः इष्टवानसि एव एवं हे सुजात शोभनजन्मन्नग्ने तन्वम् आत्मानमपि यजस्व॥

भवा नो अग्नेऽवितोत गोपा भवा वयस्कृदुत नो वयोधाः।
रास्वा च नः सुमहो हव्यदातिं त्रास्वोत नस्तन्वो अप्रयुच्छन् ॥ ७ ॥

भव। नः। अग्ने। अविता। उत। गोपाः। भव। वयःऽकृत्। उत। नः। वयःऽधाः।
रास्व। च। नः। सुऽमहः। हव्यऽदातिम्। त्रास्व। उत। नः। तन्वः। अप्रऽयुच्छन् ॥ ७ ॥

हे अग्ने त्वं नः अस्माकम् अविता दृष्टभयेभ्यो रक्षकः भव भूयाः। उत अपि च गोपाः अदृष्टभयेभ्यो गोप्ता रक्षको भव। उत अपि च वयस्कृत् अन्नस्य कर्ता भव। वयोधाः अन्नस्य दाता भव। हे सुमहः सुष्ठु पूजनीयाग्ने त्वं स्वभूतां हव्यदातिं हविषो दातिं नः अस्मभ्यं रास्व च प्रयच्छ। उत अपि च नः अस्माकं स्वभूता तन्वः शरीराणि अप्रयुच्छन् अप्रमाद्यन् त्रास्व पालय॥ ॥२॥

'प्र केतुना' इति नवर्चमष्टमं सूक्तं त्रैष्टुभम्। त्वष्टुपुत्रस्त्रिशिरा नामर्षिः। आदितः षडाग्नेय्यस्ततस्तिस्र ऐन्द्र्यः। तथा चानुक्रान्तं—'प्र केतुना नव त्रिशिरास्त्वाष्ट्रस्तृचोऽन्त्य ऐन्द्रः' इति। आदितः षण्णां प्रातरनुवाकाश्विनशस्त्रयोराग्नेयक्रतावुक्तो विनियोगः॥

१. ग-त३-भ२.५-मु–विशो मनुष्याः; त१.२.६-अ१.४–विशो मनु, त७-भ७–विशो मनुः; भ६–विशेषो मनुष्याः। २. त–प्रकृष्टज्ञानो। ३. ग-त३-भ–°धिष्ठितः सन्।

प्र केतुना बृहता यात्यग्निरा रोदसी वृषभो रोरवीति ।
दिवश्चिदन्ताँ उपमाँ उदानळपामुपस्थे महिषो ववर्ध ॥ १ ॥

प्र । केतुना । बृहता । याति । अग्निः । आ । रोदसी इति । वृषभः । रोरवीति ।
दिवः । चित् । अन्तान् । उपऽमान् । उत् । आनट् । अपाम् । उपऽस्थे । महिषः । ववर्ध ॥ १ ॥

अग्निः बृहता महता केतुना प्रज्ञानेन युक्तः सन् आ इदानीं रोदसी द्यावापृथिव्यौ प्र याति प्रकर्षेण गच्छति । किंच देवानामाह्वानकाले वृषभः इव रोरवीति अत्यर्थं शब्दं करोति । दिवश्चित् द्युलोकस्यापि अन्तान् अवसानान् उपमान् समीपांश्च प्रदेशान् ज्वलनात्मनादित्यात्मना वा स्थितः उदानट् ऊर्ध्वं व्याप्नोति । अपां वृष्टिलक्षणानामुदकानाम् उपस्थे उपस्थानेऽन्तरिक्षे वैद्युतात्मना महिषः महान् ववर्ध वर्धते ॥

मुमोद गर्भो वृषभः ककुद्मानस्रेमा वत्सः शिमीवाँ अरावीत् ।
स देवतात्युद्यतानि कृण्वन्स्वेषु क्षयेषु प्रथमो जिगाति ॥ २ ॥

मुमोद । गर्भः । वृषभः । ककुत्ऽमान् । अस्रेमा । वत्सः । शिमीऽवान् । अरावीत् ।
सः । देवऽताति । उत्ऽयतानि । कृण्वन् । स्वेषु । क्षयेषु । प्रथमः । जिगाति ॥ २ ॥

गर्भः द्यावापृथिव्योरन्तर्गतः वृषभः कामानां वर्षिताग्निः ककुद्मान् उन्नततेजस्कः मुमोद मोदते । किंच अस्रेमा । प्रशस्यनामैतत् । प्रशस्तः वत्सः दम्पत्योर्वत्सभूतः सायंप्रातराहुत्युपजीवनात् शिमीवान्[1] हविर्वहनदेवाह्वानादिकर्मवानग्निः[1] अरावीत् देवाह्वानादिशब्दं करोति । सः अग्निः देवताति यज्ञे उद्यतानि उद्यमान्युत्साहकर्माणि कृण्वन् कुर्वन् स्वेषु क्षयेषु आत्मीयेष्वाहवनीयादिस्थानेषु स्थितः प्रथमः देवानां स्थानेषु मुख्यः जिगाति गच्छति ॥

आ यो मूर्धानं पित्रोररब्ध न्यध्वरे दधिरे सूरो अर्णः ।
अस्य पत्मन्नरुषीरश्वबुध्ना ऋतस्य योनौ तन्वो जुषन्त ॥ ३ ॥

आ । यः । मूर्धानम् । पित्रोः । अरब्ध । नि । अध्वरे । दधिरे । सूरः । अर्णः ।
अस्य । पत्मन् । अरुषीः । अश्वऽबुध्नाः । ऋतस्य । योनौ । तन्वः । जुषन्त ॥ ३ ॥

यः अग्निः पित्रोः मातापितृभूतयोर्द्यावापृथिव्योः मूर्धानम् आ अरब्ध स्वतेजोभिरारभते । यद्वा । मातापितृभूतयोररण्योर्मूर्धानं शिरोवत् प्रधानभूतं मन्थनप्रदेशम् । आङीषदर्थे । आरब्ध ईषत्स्पृशति । निर्मन्थनकालेऽपि दाहेन दग्धुं समर्थः । सूरः सुवीर्यस्याग्नेः अर्णः गमनशीलं तेजः अध्वरे यज्ञे नि दधिरे । स्तोतारो नियमेन धारयन्ति । अस्य अग्नेः पत्मन् पतने अरुषीः आरोचमानाः ऋतस्य यज्ञस्य योनौ स्थाने अश्वबुध्नाः व्याप्तमूला अश्वनिबन्धना वा । हविराहाराश्रिता इत्यर्थः । तन्वः तदीयास्तनूः जुषन्त ऋत्विजः सेवन्ते ॥

उषउषो हि वसो अग्रमेषि त्वं यमयोरभवो विभावा ।
ऋताय सप्त दधिषे पदानि जनयन्मित्रं तन्वे३ स्वायै ॥ ४ ॥

१. ग-हविर्वहनात् देवानां आह्वानादिकर्मवेगत्वात् शिमीवानग्निः ।

उषःऽउषः । हि । वसो इति । अग्रम् । एषि । त्वम् । यमयोः । अभवः । विभाऽवा ।
ऋताय । सप्त । दधिषे । पदानि । जनयन् । मित्रम् । तन्वे । स्वायै ॥ ४ ॥

हे वसो स्वेन तेजसा सर्वस्याच्छादयितर्वसुमन् वा प्रशस्य वा अग्ने त्वम् उषउषः सर्वस्या उषसः अग्रं पूर्वम् एषि प्राप्नोषि । अपि च यमयोः युग्मयोः परस्परमवियुक्तयोरहोरात्रयोः विभावा दीप्तिमान् अभवः भवसि । तन्वे स्वायै आत्मीयायच्छरीराय मित्रम् आदित्यं जनयन् उत्पादयन् सप्त पदानि सप्तसंख्याकानि धिष्ण्यादिस्थानानि ऋताय यज्ञार्थं दधिषे धारयसि ॥

भुव॒श्चक्षु॑र्म॒ह ऋ॒तस्य॑ गो॒पा भुवो॒ वरु॑णो॒ यदृ॒ताय॒ वेषि॑ ।
भुवो॑ अ॒पां नपा॑ज्जातवेदो॒ भुवो॑ दू॒तो यस्य॑ ह॒व्यं जुजो॑षः ॥ ५ ॥

भुवः । चक्षुः । महः । ऋतस्य । गोपाः । भुवः । वरुणः । यत् । ऋताय । वेषि ।
भुवः । अपाम् । नपात् । जातऽवेदः । भुवः । दूतः । यस्य । हव्यम् । जुजोषः ॥ ५ ॥

महः महतः ऋतस्य यज्ञस्य हे अग्ने त्वं चक्षुः इव प्रकाशकः भुवः भवसि । गोपाः यज्ञस्य रक्षकस्त्वमेव भवसि । यत् यदा ऋताय सोमरसलक्षणस्योदकस्यादानार्थं वरुणः आदित्यः वेषि गच्छसि तदा त्वमेव भुवः भवसि । हे जातवेदः जातप्रज्ञाग्ने अपां वृष्टिलक्षणानामुदकानां नपात् पौत्रस्त्वमेव भुवः भवसि । अग्नेर्हि मेघो जायते मेघादग्निर्विद्युद्रूपो जायत इत्यपां पौत्रत्वमुच्यते । यस्य[1] यजमानस्य हव्यं हविः जुजोषः सेवसे तस्य दूतः भुवः भवसि ॥ ॥ २५ ॥

दर्शपूर्णमासयोराग्नेयस्य याज्या ‘ भुवो यज्ञस्य ’ इत्येषा । सूत्रितं च — ‘ सतो याज्यानुवाक्या अग्निर्मूर्धा भुवो यज्ञस्य ’ (आश्व. श्रौ. १.६ ) इति । आग्नेयी काचित् काम्येष्टिः । तस्यामेषैव याज्या । सूत्रितं च—‘ आग्नेय्या उत्तरे निर्य्ये मूर्धन्वतः ’ ( आश्व. श्रौ. २. १० ) इति ॥

भुवो॑ य॒ज्ञस्य॒ रज॑सश्च ने॒ता यत्रा॑ नि॒युद्भिः॒ सच॑से शि॒वाभिः॑ ।
दि॒वि मू॒र्धानं॑ दधिषे स्व॒र्षां जि॒ह्वाम॑ग्ने चकृषे हव्य॒वाह॑म् ॥ ६ ॥

भुवः । यज्ञस्य । रजसः । च । नेता । यत्र । नियुत्ऽभिः । सचसे । शिवाभिः ।
दिवि । मूर्धानम् । दधिषे । स्वःऽसाम् । जिह्वाम् । अग्ने । चकृषे । हव्यऽवाहम् ॥ ६ ॥

हे अग्ने त्वं यत्र यस्मिन्नन्तरिक्षे शिवाभिः कल्याणीभिः नियुद्भिः नियुत्संज्ञकाभिरश्वजातिभिः संयतं वायुं सचसे संगच्छसे तस्मिन्नन्तरिक्षे यज्ञस्य रजसश्च उदकस्य च नेता प्रापयिता भुवः भवसि । ‘ अग्निर्वा इतो वृष्टिं समीरयति[2] ’ ( निरु. ७. २४ ) इति श्रुतेः । किंच दिवि द्युलोके मूर्धानं शिरोवत्प्रधानभूतं स्वर्षां सर्वस्य संभक्तारमादित्यं दधिषे हविर्वहनद्वारेण धारयसि । हे अग्ने त्वं जिह्वां ज्वालां हव्यवाहं हविषां वोढ्रीं चकृषे करोषि ॥

अ॒स्य त्रि॒तः क्रतु॑ना व॒व्रे अ॒न्तरि॒च्छन्धी॒तिं पि॒तुरेवैः॒ पर॑स्य ।
स॒च॒स्यमा॑नः पि॒त्रोरु॒पस्थे॑ जा॒मि ब्रु॑वा॒ण आयु॑धानि वेति ॥ ७ ॥

१. ग–यज्ञस्य । २. ग-मुद्रितै.सं.२.४.१०.२; का. सं. ११. १०–उदीरयति, मै.सं.२.४.८ द्रष्टव्यम् ।

अस्य । त्रितः । क्रतुना । वव्रे । अन्तः । इच्छन् । धीतिम् । पितुः । एवैः । परस्य ।
सचस्यमानः । पित्रोः । उपऽस्थे । जामि । ब्रुवाणः । आयुधानि । वेति ॥ ७॥

अस्मिन्नृच इममर्थं ब्रवीति । हे त्रित सर्वेषामायुधानि वेत्ता त्वं त्वष्टृपुत्रस्य त्रिशिरसो वधार्थं मम साहाय्यं कुर्वितीन्द्रेणैवं प्रार्थितः स्ववीर्यवृद्ध्यर्थं यज्ञभागं वव्रे । स चेन्द्रस्तस्मै पाणिप्रक्षालनार्थं च जले यज्ञभागं च दत्तवान् । अनेन यज्ञभागेन वृद्धवीर्यः त्रितः एतत्संज्ञक ऋषिः एवैः आत्मनो रक्षणैर्युक्तः अन्तः यज्ञस्य मध्ये धीतिं भागम् इच्छन् परस्य उत्कृष्टस्य पितुः सर्वस्य जगतः पालयितुः अस्य इन्द्रस्य क्रतुना त्रिशिरसो मम वधार्थं साहाय्यभूतेन कर्मणा निमित्तेन वव्रे सखायं वृतवान् । किंच पित्रोः मातापितृभूतयोर्द्यावापृथिव्योः उपस्थे समीपस्थे यज्ञे सचस्यमानः ऋत्विग्भिः सेव्यमानस्त्रितः जामि योग्यमिन्द्रस्यानुरूपं स्तोत्रं ब्रुवाणः इन्द्रस्य बलवृद्ध्यर्थमुच्चारयन् आयुधानि स्वभूतानि वेति । त्वष्टृपुत्रस्य मम वधार्थमागच्छति ॥

स पित्र्याण्यायुधानि विद्वानिन्द्रेषित आप्त्यो अभ्ययुध्यत् ।
त्रिशीर्षाणं सप्तरश्मिं जघन्वान्त्वाष्ट्रस्य चिन्निः ससृजे त्रितो गाः ॥ ८ ॥

सः । पित्र्याणि । आयुधानि । विद्वान् । इन्द्रऽइषितः । आप्त्यः । अभि । अयुध्यत् ।
त्रिऽशीर्षाणम् । सप्तऽरश्मिम् । जघन्वान् । त्वाष्ट्रस्य । चित् । निः । ससृजे । त्रितः । गाः ॥८॥

आप्त्यः आप्त्यस्य पुत्रोऽपां पुत्रो वा । तकारोपजनश्छान्दसः । सः त्रितः पित्र्याणि स्वपितृसंबन्धीनि आयुधानि विद्वान् जानन् इन्द्रेषितः त्रिशिरसा मया सह युद्धार्थमिन्द्रेण प्रेषितः सन् अभ्ययुध्यत् आभिमुख्येन युद्धवान् । तदनन्तरं सप्तरश्मिं शत्रुनियमनार्थं सप्तप्रग्रहहस्तम् । यद्वा । सप्तरश्मिरादित्यः । तत्सदृशम् । त्रिशीर्षाणं त्रिशिरस्कं मां जघन्वान् हतवान् । मूर्छितं कृतवानित्यर्थः । किंच त्रितः त्वाष्ट्रस्य चित् त्वष्टृपुत्रस्य ममापि गाः पशून् निः ससृजे विसृष्टवान् । अपहृतवानित्यर्थः ॥

भूरीदिन्द्र उदिनक्षन्तमोजोऽवाभिनत् सत्पतिर्मन्यमानम् ।
त्वाष्ट्रस्य चिद्विश्वरूपस्य गोनामाचक्राणस्त्रीणि शीर्षा परा वर्क् ॥ ९ ॥

भूरि । इत् । इन्द्रः । उत्ऽइनक्षन्तम् । ओजः । अव । अभिनत् । सत्ऽपतिः । मन्यमानम् ।
त्वाष्ट्रस्य । चित् । विश्वऽरूपस्य । गोनाम् ।
आऽचक्राणः । त्रीणि । शीर्षा । परा । वर्गिति वर्क् ॥ ९ ॥

सत्पतिः सतां पालकः इन्द्रः भूरीत् बह्वेव पूर्वतुल्यमतिरिक्तं वा ओजः बलम् उदिनक्षन्तं व्याप्नुवन्तं मन्यमानं शूरमित्यात्मानं चिन्तयन्तम् । यद्वा । मन्यतिर्दीप्तिकर्मा क्रोधकर्मा वा । दीप्यमानं क्रुध्यन्तं वा । त्वष्टृपुत्रं माम् अवाभिनत् वज्रेण विदारितवान् । विदार्य त्वाष्ट्रस्य चित् त्वष्टृपुत्रस्यापि गोनां गवाम् । स्वामिन इति शेषः । विश्वरूपस्य मम त्रीणि शीर्षा शीर्षाणि आचक्राणः आ समन्ताच्छब्दं कुर्वन् परा वर्क् पराङ्मुखस्य वृक्णवान्[1] छिन्नवानित्यर्थः । ईदृशं मामपि वस्तु विश्वरूपः स्वभ्रान्तोऽनेन वृत्तेन दृष्टवान् ॥ ॥ ४ ॥

१. त-म—वृणीतवान् ।

‘आपो हि’ इति नवर्चं नवमं सूक्तम्। अम्बरीषस्य राज्ञः पुत्रः सिन्धुद्वीप ऋषिस्त्वष्टृपुत्रस्त्रिशिरा वा। ‘इदमापः’ इत्यादिके द्वे अनुष्टुभौ। ‘ईशाना[1]’ इति वर्धमाना। ‘आपः पृणीत’ इति प्रतिष्ठा[1]। शिष्टा गायत्र्यः। आपो देवता। तथा चानुक्रान्तम्— ‘आपो हि सिन्धुद्वीप आम्बरीष आपं गायत्रं ह्यनुष्टुबन्ते पञ्चमी[2] वर्धमाना सप्तमी प्रतिष्ठा’ इति[2]। गतः सूक्तविनियोगः। आग्निमारुते ‘आपो हि ष्ठा’ इत्याद्यास्तिस्रः। सूत्रितं च— ‘आपो हि ष्ठेति तिस्रो विच्छन्दा उपस्पृशन्’ (आश्व. श्रौ. ५. २०) इति॥

**आपो॒ हि ष्ठा म॑यो॒भुव॒स्ता न॑ ऊ॒र्जे द॑धातन। म॒हे रणा॑य॒ चक्ष॑से॥ १॥**

आपः॑। हि। स्थ। म॒यः॒ऽभुवः॑। ताः। नः॒। ऊ॒र्जे। द॒धा॒त॒न॒। म॒हे। रणा॑य। चक्ष॑से॥१॥

हि यस्मात् कारणात् आपः या यूयं मयोभुवः सुखस्य भावयित्र्यः स्थ भवथ ताः तादृश्यो यूयं नः अस्मान् ऊर्जे अन्नाय दधातन धत्त। अन्नप्राप्तियोग्यानस्मान् कुरुत। अन्नमस्मभ्यं दत्तेत्यर्थः। महे महते रणाय रमणीयाय[3] चक्षसे दर्शनाय सम्यग्ज्ञानाय च धत्त। अस्मान् सम्यग्ज्ञानं प्रति योग्यान् कुरुतेत्यर्थः॥

**यो वः॑ शि॒वत॑मो॒ रस॒स्तस्य॑ भाजयते॒ह नः॑। उ॒श॒तीरि॑व मा॒तरः॑॥ २॥**

यः। वः॒। शि॒वऽत॑मः। रसः॑। तस्य॑। भा॒ज॒य॒त॒। इ॒ह। नः॒। उ॒श॒तीःऽइ॑व। मा॒तरः॑॥२॥

हे आपः वः युष्माकं स्वभूतः यः रसः शिवतमः सुखतमः इह अस्मिँल्लोके तस्य तं रसं नः अस्मान् भाजयत सेवयत। उपभोजयतेत्यर्थः। तत्र दृष्टान्तः। उशतीरिव उशत्य इव पुत्रसमृद्धिं कामयमानाः मातरः स्तन्यरसं यथा भाजयन्ति प्रापयन्ति तद्वत्।

**तस्मा॒ अरं॑ गमाम वो॒ यस्य॒ क्षया॑य॒ जिन्व॑थ। आपो॑ ज॒नय॑था च नः॥ ३॥**

तस्मै॑। अर॑म्। ग॒मा॒म॒। वः॒। यस्य॑। क्षया॑य। जिन्व॑थ। आपः॑। ज॒नय॑थ। च॒। नः॒॥३॥

हे आपः यूयं यस्य पापस्य क्षयाय विनाशाय अस्मान् जिन्वथ प्रीणयथ तस्मै तादृशाय पापक्षयाय अरं क्षिप्रं वः युष्मान् गमाम गमयाम। वयं शिरसि प्रक्षिपामेत्यर्थः। यद्वा। यस्यान्नस्य क्षयाय निवासार्थं यूयमोषधीर्जिन्वथ तर्पयथ तस्मै तदन्नमुद्दिश्य अरमलं पर्याप्तं यथा भवति तथा वो युष्मान् गमाम गच्छाम। किंच हे आपः नः अस्मान् जनयथ च। पुत्रपौत्रादिरूपेण प्रजनयतेत्यर्थः॥

**शं नो॑ दे॒वीर॒भिष्ट॑य॒ आपो॑ भवन्तु पी॒तये॑। शं योर॒भि स्र॑वन्तु नः॥ ४॥**

शम्। नः॒। दे॒वीः। अ॒भिष्ट॑ये। आपः॑। भ॒व॒न्तु॒। पी॒तये॑। शम्। योः। अ॒भि। स्र॒व॒न्तु॒। नः॒॥४॥

नः अस्माकं पापापनोदद्वारेण शं सुखं भवन्तु देवीः देव्यः आपः[4]। अभिष्टये अस्मद्यज्ञाय भवन्तु। यज्ञाङ्गस्नानाय च भवन्त्वित्यर्थः। पीतये पानाय च भवन्तु। तथा शम् उत्पन्नानां रोगाणां शमनं योः भयानामनुत्पन्नानां पृथक्करणं च कुर्वन्तु। अपि च नः अस्माकम् अभि उपरि स्रवन्तु सुखार्थं सिञ्चन्तु॥

१. ग-ता-म—‘ईशाना...प्रतिष्ठा’ नास्ति।　२. म-ता१.२.३.४.५.६-म१.४.६.७—‘पञ्चमी... प्रतिष्ठेति’ नास्ति।　३. ग—संभजनाय।　४. ता—‘आपः’ नास्ति।

ईशा॑ना॒ वार्या॑णां॒ क्षय॑न्तीश्चर्षणी॒नाम् । अ॒पो या॑चामि भेष॒जम् ॥ ५ ॥

ईशा॑नाः । वार्या॑णाम् । क्षय॑न्तीः । च॒र्ष॒णी॒नाम् । अ॒पः । या॒चा॒मि॒ । भे॒ष॒जम् ॥ ५ ॥

वार्याणां वारिप्रभवानां व्रीहियवादीनां यद्वा वरणीयानां धनानाम् ईशानाः ईश्वराः चर्षणीनां मनुष्याणां क्षयन्तीः निवासयित्रीः अपः उदकानि भेषजम्। सुखनामैतत्। पापापनोदनं[1] सुखं याचामि अहं प्रार्थये ॥

अ॒प्सु मे॒ सोमो॑ अब्रवीद॒न्तर्विश्वा॑नि भेष॒जा । अ॒ग्निं च॑ वि॒श्वश॑म्भुवम् ॥ ६ ॥

अ॒प्ऽसु । मे॒ । सोमः॑ । अ॒ब्र॒वी॒त् । अ॒न्तः । विश्वा॑नि । भे॒ष॒जा । अ॒ग्निम् । च॒ । वि॒श्वऽश॑म्भुवम् ॥ ६ ॥

आपः॑ पृणी॒त भे॑ष॒जं वरू॑थं त॒न्वे॒३॒॑ मम॑ । ज्योक् च॒ सूर्यं॑ दृ॒शे ॥ ७ ॥

आपः॑ । पृ॒णी॒त । भे॒ष॒जम् । वरू॑थम् । त॒न्वे॑ । मम॑ । ज्योक् । च॒ । सूर्य॑म् । दृ॒शे ॥ ७ ॥

इ॒दमा॑पः॒ प्र व॑हत॒ यत्किं च॑ दुरि॒तं मयि॑ । यद्वा॒हम॑भिदु॒द्रोह॒ यद्वा॑ शे॒प उ॒तानृ॑तम् ॥ ८ ॥

इ॒दम् । आ॒पः॒ । प्र । व॒ह॒त॒ । यत् । किम् । च॒ । दुः॒ऽइ॒तम् । मयि॑ ।

यत् । वा॒ । अ॒हम् । अ॒भि॒ऽदु॒द्रोह॑ । यत् । वा॒ । शे॒पे । उ॒त । अनृ॑तम् ॥ ८ ॥

आपो॑ अ॒द्यान्व॑चारिषं॒ रसे॑न॒ सम॑गस्महि ।
पय॑स्वानग्न॒ आ ग॑हि॒ तं मा॒ सं सृ॑ज॒ वर्च॑सा ॥ ९ ॥

आपः॑ । अ॒द्य । अनु॑ । अ॒चा॒रि॒ष॒म् । रसे॑न । सम् । अ॒ग॒स्म॒हि॒ ।

पय॑स्वान् । अ॒ग्ने॒ । आ । ग॒हि॒ । तम् । मा॒ । सम् । सृ॒ज॒ । वर्च॑सा ॥ ९ ॥

'अप्सु मे सोमो अब्रवीत्' इत्यादिकाश्चतस्र ऋचः प्रथमाष्टके द्वितीयाध्याये विनियोगपुरःसरं व्याख्याताः ( ऋ. सं. १. २३. २०–२३ )[2] ॥ ॥ ५ ॥

'ओ चित्' इति चतुर्दशर्चं दशमं सूक्तम्। अत्रानुक्रम्यते—'ओ चित् पञ्चोना वैवस्वतयोर्यमयम्योः संवादः षड्युग्भिर्यमी मिथुनार्थं यमं प्रोवाच स तां नवमीयुग्भिरनिच्छन् प्रत्याचष्टे' इति। अतः षष्ठ्यां प्रथमातृतीयाद्ययुक्षु विवस्वतः पुत्री यम्यृषिर्यमो देवता। 'यस्य वाक्यं स ऋषिर्या तेनोच्यते सा देवता' इति न्यायात्। तथा नवम्यां द्वितीयाचतुर्थीप्रभृतिषु युक्षु वैवस्वतो यम ऋषिर्यमी देवता। अनादेशपरिभाषया त्रिष्टुप्। गतो विनियोगः ॥

ओ चि॒त्सखा॑यं स॒ख्या व॑वृत्यां ति॒रः पु॒रू चि॑दर्ण॒वं ज॑ग॒न्वान् ।
पि॒तुर्नपा॑त॒मा द॑धीत वे॒धा अधि॒ क्षमि॑ प्रत॒रं दीध्या॑नः ॥ १ ॥

ओ इति॑ । चि॒त् । सखा॑यम् । स॒ख्या । व॒वृ॒त्या॒म् । ति॒रः । पु॒रु । चि॒त् । अ॒र्ण॒वम् । ज॒ग॒न्वान् ।

पि॒तुः । नपा॑तम् । आ । द॒धी॒त॒ । वे॒धाः । अधि॑ । क्षमि॑ । प्र॒ऽत॒रम् । दीध्या॑नः ॥ १ ॥

१. ग–पापापनोदनात्मकं; भ–पापापनोदकं। २. त७–पुस्तके ऋ. सं. १.२१.२०–२३ मन्त्राणां भाष्यं व्याकरणप्रक्रियां वर्जयित्वा षष्ठसप्तमाष्टमनवममन्त्रभाष्यत्वेनोद्धृतम्। उद्गीथाचार्येणापि स्वकीय ऋग्भाष्ये एते मन्त्रा न व्याख्याताः।

अत्रास्मिन् सूक्ते वैवस्वतयोर्यमयम्योः संवाद उच्यते। अस्यामृचि यमं प्रति यमी प्रोवाच। तिरः अन्तर्हितमप्रकाशमानम्। निर्जनप्रदेशमित्यर्थः। पुरु चित् बह्वपि विस्तीर्णं च अर्णवं समुद्रैकदेशमवान्तरद्वीपं आ जगन्वान् गतवती यमी। चित् इति पूजार्थे। पूजितमिदम्। श्रेष्ठमित्यर्थः। सखायं गर्भवासादारभ्य सखीभूतं यमं सख्या सख्याय स्त्रीपुरुषसंपर्कजनितमित्रत्वाय ओ ववृत्याम् आवर्तयामि। आभिमुख्येन स्थित्वा लज्जां परित्यज्य रहःसंभोगं करोमीत्यर्थः। 'कामस्य त्वरिता गतिः' इति न्यायेन कामस्य त्वरितत्वात्। अपि च पितुः आवयोर्भविष्यतः पुत्रस्य पितृभूतस्य तवार्थाय अधि क्षमि अधि पृथिव्याम्। पृथिवीस्थानीये ममोदर इत्यर्थः। प्रतरं प्रकृष्टम्। सर्वगुणोपेतमित्यर्थः। नपातं गर्भलक्षणमपत्यं वेधाः विधाता प्रजापतिः दीध्यानः आवयोरनुरूपस्य पुत्रस्य जननार्थमावां ध्यायन् आ दधीत[1]। 'प्रजापतिर्धाता गर्भं दधातु ते' (ऋ. सं. १०. १८४. १) इत्युक्तत्वात्॥

न ते॒ सखा॑ स॒ख्यं व॑ष्ट्ये॒तत्सल॑क्ष्मा॒ यद्विषु॑रूपा॒ भवा॑ति ।
म॒हस्पु॒त्रासो॒ असु॑रस्य वी॒रा दि॒वो ध॒र्तार॑ उर्वि॒या परि॑ ख्यन् ॥ २ ॥

न । ते॒ । सखा॑ । स॒ख्यम् । व॒ष्टि॒ । ए॒तत् । सऽल॑क्ष्मा । यत् । विषु॑ऽरूपा । भवा॑ति ।
म॒हः । पु॒त्रासः॑ । असु॑रस्य । वी॒राः । दि॒वः । ध॒र्तारः॑ । उ॒र्वि॒या । परि॑ । ख्य॒न् ॥ २ ॥

यम आत्मानं परोक्षीकृत्य यमीं प्रत्युवाच। हे यमि ते तव सखा गर्भवासलक्षणेन सखिभूतो यमः एतत् ईदृशं त्वयोक्तं स्त्रीपुरुषलक्षणं सख्यं न वष्टि न कामयते। यत् यस्मात् कारणात् यमी सलक्ष्मा समानयोनित्वलक्षणा विषुरूपा भगिनीत्वाद्विषमरूपा भवाति भवति। तस्मान्न वष्टीत्यर्थः। इदानीं 'तिरः पुरु चिदर्णवं जगन्वान्' इत्यस्य प्रतिवचनमुच्यते। महः महतः असुरस्य प्राणवतः प्रज्ञावतो वा प्रजापतेः पुत्रासः पुत्रभूताः वीराः। 'वीरो वीरयत्यमित्रान् वेतेर्वा स्याद्गतिकर्मणो वीरयतेर्वा' (निरु. १. ७) इति निरुक्तम्। शत्रूणां विविधमीरयितारः[2] धर्तारः धारयितारः[2] दिवः द्युलोकस्य। प्रदर्शनमेतत्। द्युप्रभृतीनां लोकानामित्यर्थः[3]। — — —॥

उ॒शन्ति॑ घा॒ ते अ॒मृता॑स ए॒तदेक॑स्य चित्त्य॒जसं॒ मर्त्य॑स्य ।
नि ते॒ मनो॒ मन॑सि धाय्य॒स्मे जन्युः॒ पति॑स्त॒न्व१॒॑मा वि॑विश्याः ॥ ३ ॥

उ॒शन्ति॑ । घ॒ । ते । अ॒मृता॑सः । ए॒तत् । एक॑स्य । चि॒त् । त्य॒जस॑म् । मर्त्य॑स्य ।
नि । ते॒ । मनः॑ । मन॑सि । धा॒यि॒ । अ॒स्मे इति॑ । जन्युः॑ । पतिः॑ । त॒न्व॑म् । आ । वि॒वि॒श्याः॒ ॥ ३ ॥

पुनरपि यमी यमं प्रत्युवाच। घ इति निपातोऽप्यर्थे। हे यम ते प्रसिद्धाः अमृतासः प्रजापत्यादयो[4] देवा अपि एतत् ईदृशं शास्त्रेणागम्यत्वेनोक्तं त्यजसम्। त्यज्यते परस्मै प्रदीयत इति त्यजसं दुहितृभगिन्यादिकं जातम्। उशन्ति कामयन्ते। एकस्य चित् सर्वस्य जगतः मुख्यस्यापि प्रजापत्यादेः स्वदुहितृभगिन्यादिभिः संबन्धोऽस्तीति शेषः। अतः कारणात् ते तव मनः चित्तम्

---

१. ग–दधीत आदधातु; त-म६–दधीत आदधाव; म१.२–दधीत अदधात; म४–दधीत आदधात। २. त१–विविधारयितारो; त२.४.५.६.७–विविधमाधारयितारो; म–विविधमीरयितारो। ३. ग–०मित्यर्थः धर्तारः उर्विया उरवः मां परिचक्षते न कर्तव्यमिति वदंति। ४. त-म६–प्राजापत्यादयो।

अस्मे अस्माकम्। ममेत्यर्थः। मनांसि चित्ते नि धायि निधीयताम्। अहं त्वां कामये त्वं मामपि कामयस्वेत्यर्थः। अपि च। जन्युः इति लुप्तोपममेतत्। जन्युरिव यथा जनयिता प्रजापतिः पतिः भर्ता भूत्वा स्वदुहितुः शरीरं संभोगेनाविशत्तथा त्वमपि मम पतिर्भूत्वा तन्वं मदीयं शरीरम् आ विविश्याः संभोगेनाविश। स्त्री प्रजननप्रक्षेपोपगूहनचुम्बनादिना मां संभुङ्क्ष्वेत्यर्थः॥

न यत्पुरा चकृमा कद्ध नूनमृता वदन्तो अनृतं रपेम।
गन्धर्वो अप्स्वप्या च योषा सा नो नाभिः परमं जामि तन्नौ॥ ४॥

न। यत्। पुरा। चकृम। कत्। ह। नूनम्। ऋता। वदन्तः। अनृतम्। रपेम।
गन्धर्वः। अप्ऽसु। अप्या। च। योषा। सा। नः। नाभिः। परमम्। जामि। तत्। नौ॥४॥

यमो यमीं पुनराह। पुरा पूर्वं प्रजापतिः यत् अगम्यागमनमपरिमितसामर्थ्योपेतत्वात् कृतवान् तथा वयं न चकृम नाकुर्म। वयम् ऋता ऋतानि सत्यानि वदन्तः ब्रुवन्तः अनृतम् असत्यं कद्ध कदा खलु नूनं[1] निश्चितं रपेम वदेम। न कदाचिदपीत्यर्थः। अगम्यागमनं न कुर्म इति भावः। अपि च अप्सु। अन्तरिक्षनामैतत्। अन्तरिक्षे स्थितः गन्धर्वः[2] गवां रश्मीनामुदकानां वा धारयिता[3] आदित्यः अप्या अन्तरिक्षस्था सा प्रसिद्धा योषा आदित्यस्य भार्या सरण्यूः च नः आवयोः नाभिः उत्पत्तिस्थानम्। मातापितरावित्यर्थः। तत् तस्मात् कारणात् नौ आवयोः जामि बान्धवमुत्कृष्टम्[4]। एवं सत्यावयोरगम्यागमनरूपत्वात् कर्तुमयुक्तं तस्मादेतन्न करोमीत्यभिप्रायः॥

गर्भे नु नौ जनिता दंपती कर्देवस्त्वष्टा सविता विश्वरूपः।
नकिरस्य प्र मिनन्ति व्रतानि वेद नावस्य पृथिवी उत द्यौः॥ ५॥

गर्भे। नु। नौ। जनिता। दंपती इति दम्ऽपती। कः। देवः। त्वष्टा। सविता। विश्वऽरूपः।
नकिः। अस्य। प्र। मिनन्ति। व्रतानि। वेद। नौ। अस्य। पृथिवी। उत। द्यौः॥५॥

त्वष्टा रूपाणां कर्ता सविता सर्वेषां शुभाशुभस्य प्रेरकः विश्वरूपः सर्वात्मकः देवः दानादिगुणयुक्तः जनिता जनयिता प्रजापतिः गर्भे नु गर्भावस्थायामेव नौ आवां दंपती जायापती कः कृतवान् एकोदरे सहवासित्वात्। अस्य प्रजापतेः व्रतानि कर्माणि नकिः प्र मिनन्ति न केचन प्रहिंसन्ति। न लोपयन्तीत्यर्थः। अतः कारणाद्गर्भावस्थायामेवावयोः प्रजापतिकृते दंपतित्वे सति संभोगं कुर्वित्यर्थः। अपि च नौ आवयोः अस्य इदं मातुरुदरे सहवासजनितं दंपतित्वं पृथिवी भूमिः वेद जानाति। उत अपि च द्यौः द्युलोकोऽपि जानाति॥ ॥ ६॥

को अस्य वेद प्रथमस्याह्नः क ईं ददर्श क इह प्र वोचत्।
बृहन्मित्रस्य वरुणस्य धाम कदु ब्रव आहनो वीच्या नॄन्॥ ६॥

कः। अस्य। वेद। प्रथमस्य। अह्नः। कः। ईम्। ददर्श। कः। इह। प्र। वोचत्।
बृहत्। मित्रस्य। वरुणस्य। धाम। कत्। ऊँ इति। ब्रवः। आहनः। वीच्या। नॄन्॥६॥

१. ग-त-भ-'नूनं' नास्ति। २. त-भ१.२.४.६-'गन्धर्वः' नास्ति। ३. त-भ६-धारयिता गौर्णः। ४. ग-बांधवं परमसुत्कृष्टं।

प्रथमस्याह्नः संबन्धि अस्य युवयोरन्योन्यसंगमनं कः वेद जानाति । प्रथमेऽहनि यत्क्रियते तदनुमानमाश्रित्य न कश्चिदपि ज्ञातुं शक्नोतीत्यर्थः । इह अस्मिन् प्रदेशे प्रत्यक्षतः कः ईम् इदं संगमनं ददर्श पश्यति कः प्र वोचत् प्रख्यापयति । न कोऽपीत्यर्थः । मित्रस्य वरुणस्य मित्रावरुणयोः बृहत् महत् धाम स्थानमहोरात्रं भवति तत्र नॄन्[1] मनुष्यान् वीच्या नरकेण हे आहनः आहन्तर्मर्यादया हिंसितः । स्वकृतशुभाशुभकर्मापेक्षया मनुष्यादिप्राणिनां नरकपातेन स्वर्गप्रापणेन निग्रहानुग्रहयोः कर्तेरित्यर्थः । एवंभूत हे यम त्वं कत् उ ब्रवः किं वा ब्रवीषि ॥

**य॒मस्य॑ मा य॒म्यं१॒॑ काम॒ आग॑न्त्समा॒ने योनौ॑ सह॒शेय्या॑य ।**
**जा॒येव॒ पत्ये॑ त॒न्वं॑ रिरिच्यां॒ वि चि॑द्वृहेव॒ रथ्ये॑व च॒क्रा ॥ ७ ॥**

य॒मस्य॑ । मा॒ । य॒म्य॑म् । काम॑ः । आ । अ॒ग॒न् । स॒मा॒ने । योनौ॑ । स॒ह॒ऽशेय्या॑य ।
जा॒याऽइ॑व । पत्ये॑ । त॒न्व॑म् । रि॒रि॒च्या॒म् । वि । चि॒त् । वृ॒हे॒व॒ । रथ्या॑ऽइव । च॒क्रा ॥ ७ ॥

यमस्य तव कामः अभिलाषः यम्यं यमीं मा मां प्रति आगन् आगच्छतु । ममोपरि तव यमस्य संभोगेच्छा जायतामित्यर्थः । किमर्थम् । समाने योनौ एकस्मिन् स्थाने शय्याख्ये सहशेय्याय सहशयनार्थम् । तदनन्तरं पूर्णमनोरथा सती जायेव पत्ये यथा भार्या पत्युरर्थाय तस्मै प्रीत्या विश्वस्ता सती रतिकामा स्वशरीरं प्रकाशयति एवं तन्वम् आत्मीयं शरीरं रिरिच्यां विविच्याम् । त्वदर्थं प्रकाशयेयमित्यर्थः । किंच । चित् इति पूरणः । वि वृहेव । 'वृहू उद्यमने' । धर्मार्थकामान् विविधमुद्यच्छाव । तत्र दृष्टान्तः । रथ्येव चक्रा । रथस्यावयवभूते चक्रे यथा रथमुद्यच्छतस्तद्वत्[2] ॥

**न ति॑ष्ठन्ति॒ न नि मि॑षन्त्ये॒ते दे॒वानां॒ स्पश॑ इ॒ह ये चर॑न्ति ।**
**अ॒न्येन॒ मदा॑हनो याहि॒ तूयं॒ तेन॒ वि वृ॑ह॒ रथ्ये॑व च॒क्रा ॥ ८ ॥**

न । ति॒ष्ठ॒न्ति॒ । न । नि । मि॒ष॒न्ति॒ । ए॒ते । दे॒वाना॑म् । स्पश॑ः । इ॒ह । ये । चर॑न्ति ।
अ॒न्येन॑ । मत् । आ॒ह॒न॒ । या॒हि॒ । तूय॑म् । तेन॑ । वि । वृ॒ह॒ । रथ्या॑ऽइव । च॒क्रा ॥ ८ ॥

यम्या प्रत्युक्तो यमः पुनराह । इह अस्मिँल्लोके देवानां संबन्धिनः ये स्पशः अहोरात्रा-ख्यचाराः चरन्ति सर्वेषां शुभाशुभकर्तृणां कर्मप्रत्यवेक्षणार्थं परिभ्रमन्ति[2] एते चाराः क्षणमात्रमपि चलनव्यापाररहिताः न तिष्ठन्ति । न नि मिषन्ति निमेषं[3] न कुर्वन्ति । शुभमशुभं वा यः करोति तं निरीक्षन्ते चेत्यर्थः । हे आहनः ममापहन्त्रि बलवद्भाषणेन दुःखयित्रि त्वं मत् मत्तः अन्येन स्वसदृशेन सह तूयं क्षिप्रं याहि संगच्छ । गत्वा च तेन वि वृह धर्मार्थकामानुद्यच्छ । तत्र दृष्टान्तः । रथ्येव चक्रा । यथा रथावयवभूते चक्रे रथमुद्यच्छतस्तद्वत् ॥

**रात्री॑भिरस्मा॒ अह॑भिर्दशस्ये॒त्सूर्य॑स्य॒ चक्षु॒र्मुहु॒रुन्मि॑मीयात् ।**
**दि॒वा पृ॑थि॒व्या मि॑थु॒ना सब॑न्धू य॒मीर्य॒मस्य॑ बिभृया॒दजा॑मि ॥ ९ ॥**

रात्री॑भिः । अ॒स्मै॒ । अह॑ऽभिः । द॒श॒स्ये॒त् । सूर्य॑स्य । चक्षु॑ः । मुहु॑ः । उत् । मि॒मी॒या॒त् ।
दि॒वा । पृ॒थि॒व्या । मि॒थु॒ना । सब॑न्धू॒ इति॒ सऽब॑न्धू । य॒मीः । य॒मस्य॑ । बि॒भृ॒या॒त् । अजा॑मि ॥ ९ ॥

१. ग-नव-नॄन् । २. ग-म६-°मुद्यतस्तद्वत् । ३. ग-ख४-म६-निमेषणं ।

रात्रिभिः अहभिः अहोरात्रयोः अस्मै यमाय कल्पितं भागं सर्वो यजमानः दशस्येत् प्रयच्छतु । सूर्यस्य संबन्धि चक्षुः तेजः मुहुः मुहुः अस्मै यमाय उन्मिमीयात् उदेतु । दिवा पृथिव्या द्यावापृथिवीभ्यां सह मिथुना मिथुनौ सबन्धू समानबन्धू अहोरात्रे अस्मै यमाय[1] । एतज्ज्ञात्वा इयं यमीः यमस्य अजामि अभ्रातरं बिभृयात् धारयतु । यत्नेन परिगृह्णात्वित्यर्थः ॥

आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामि ।
उप बर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत् ॥ १० ॥

आ । घ । ता । गच्छान् । उत्ऽतरा । युगानि । यत्र । जामयः । कृणवन् । अजामि ।
उप । बर्बृहि । वृषभाय । बाहुम् । अन्यम् । इच्छस्व । सुऽभगे । पतिम् । मत् ॥ १० ॥

यत्र येषु कालेषु जामयः भगिन्यः अजामि अभ्रातरं पतिं कृणवन् करिष्यन्ति ता तानि उत्तरा उत्तराणि युगानि कालविशेषाः आ गच्छान् आगमिष्यन्ति । घ इति पूरणः । यस्मादेवं तस्मात्हे सुभगे त्वमिदानीं मत् मत्तः अन्यं पतिं भर्तारम् इच्छस्व कामयस्व । तदनन्तरं वृषभाय तव योनौ रेतः सेक्त्रे पुरुषाय आत्मीयं बाहुम् उप बर्बृहि । शयनकाल उपबर्हणं कुरु ॥ ॥ ७ ॥

किं भ्रातासद्यदनाथं भवाति किमु स्वसा यन्निर्ऋतिर्निगच्छात् ।
काममूता बह्वेतद्रपामि तन्वा मे तन्वं सं पिपृग्धि ॥ ११ ॥

किम् । भ्राता । असत् । यत् । अनाथम् । भवाति ।
किम् । ऊँ इति । स्वसा । यत् । निःऽऋतिः । निऽगच्छात् ।
कामऽमूता । बहु । एतत् । रपामि । तन्वा । मे । तन्वम् । सम् । पिपृग्धि ॥ ११ ॥

यमी यमेन प्रत्याख्याता पुनराह । यत् यस्मिन् भ्रातरि सति स्वस्रादिकम् अनाथं नाथरहितं भवति सः भ्राता किम् असत् किं भवति । न भवतीत्यर्थः । किंच यस्यां भगिन्यां सत्यां भ्रातरं निर्ऋतिः दुःखं निगच्छात् नियमेन गच्छति प्राप्नोति सा स्वसा किमु किं वा भवति । भ्रातृभगिन्योश्च परस्परं प्रीतिर्येन केनचिदुपायेनावश्यं कार्येत्यभिप्रायः । साहं काममूता कामेन मूर्छिता सती बहु नानाप्रकारम् एतत् ईदृशमुक्तं वक्ष्यमाणं च रपामि प्रलपामि । एतज्ज्ञात्वा मे मम तन्वा शरीरेण तन्वं शरीरं सं पिपृग्धि संपर्चय । संभोगेन संश्लेषय । मां सम्यग्भुङ्क्ष्वेत्यर्थः ॥

न वा उ ते तन्वा तन्वं सं पपृच्यां पापमाहुर्यः स्वसारं निगच्छात् ।
अन्येन मत्प्रमुदः कल्पयस्व न ते भ्राता सुभगे वष्ट्येतत् ॥ १२ ॥

न । वै । ऊँ इति । ते । तन्वा । तन्वम् । सम् । पपृच्याम् । पापम् । आहुः । यः । स्वसारम् । निऽगच्छात् ।
अन्येन । मत् । प्रऽमुदः । कल्पयस्व । न । ते । भ्राता । सुऽभगे । वष्टि । एतत् ॥ १२ ॥

यमो यमीं प्रत्युक्तवान् । हे यमि ते तव तन्वा शरीरेण तन्वम् आत्मीयं शरीरं न वै सं पपृच्यां नैव संपर्चयामि । नैवाहं त्वां संभोक्तुमिच्छामीत्यर्थः । यः भ्राता स्वसारं भगिनीं

1. ग-ट४-म१.४—यमाय वहेतां; अ२—यमाय वहतां ।

निगच्छात् नियमेनोपगच्छति। संमुञ्चेत् इत्यर्थः। तं पापं पापकारिणम् आहुः। शिष्टा वदन्ति। एतज्ज्ञात्वा हे सुभगे सुष्ठु भजनीये हे यमि त्वं मत् मत्तः अन्येन त्वद्योग्येन पुरुषेण सह प्रमुदः संभोगलक्षणान् प्रहर्षान् कल्पयस्व समर्थय। ते तव भ्राता यमः एतत् ईदृशं त्वया सह मैथुनं कर्तुं न वष्टि न कामयते। नेच्छति॥

बतो बतासि यम नैव ते मनो हृदयं चाविदाम।
अन्या किल त्वां कक्ष्येव युक्तं परि ष्वजाते लिबुजेव वृक्षम्॥ १३॥

बतः। बत। असि। यम। न। एव। ते। मनः। हृदयम्। च। अविदाम।
अन्या। किल। त्वाम्। कक्ष्याऽइव। युक्तम्। परि। स्वजाते। लिबुजाऽइव। वृक्षम्॥ १३॥

यमी प्रत्युवाच। हे यम त्वं बतः दुर्बलः असि। बत इति निपातः खेदानुकम्पयोः। अनुकम्प्यश्चासि। ते त्वदीयं मनः मनोगतं संकल्पं हृदयं च बुद्धिगतमध्यवसायं च नैव अविदाम वयं न जानीम एव। अतः अन्या काचित् स्त्री त्वां परि ष्वजाते किल। तत्र दृष्टान्तद्वयमुच्यते। कक्ष्येव युक्तम्। यथा कक्ष्या रज्जुर्युक्तमात्मना संबद्धमश्वं परिष्वजते[1] तद्वत्। लिबुजेव वृक्षम्। यथा लिबुजा वल्लिर्गाढं वृक्षं परिष्वजते तद्वत्। अन्यस्यां स्त्रियामासक्तत्वं मां परिष्वक्तुं[2] नेच्छसीत्यर्थः॥

अन्यमू षु त्वं यम्यन्य उ त्वां परि ष्वजाते लिबुजेव वृक्षम्।
तस्य वा त्वं मन इच्छा स वा तवाधा कृणुष्व संविदं सुभद्राम्॥ १४॥

अन्यम्। ऊँ इति। सु। त्वम्। यमि। अन्यः। ऊँ इति। त्वाम्। परि। स्वजाते। लिबुजाऽइव। वृक्षम्।
तस्य। वा। त्वम्। मनः। इच्छ। सः। वा। तव। अध। कृणुष्व। सम्ऽविदम्। सुऽभद्राम्॥ १४॥

यमः पुनरप्याह। हे यमि त्वम् अन्यमु अन्यं पुरुषमेव सु सुष्ठु परिष्वज। अन्य उ अन्योऽपि पुरुषः त्वां परि ष्वजाते। तत्र दृष्टान्तः। लिबुजेव वृक्षम्। यथा वल्ली गाढं वृक्षं परिष्वजते तद्वत्। तथा सति। वाशब्दः समुच्चये। त्वं तस्य च पुरुषस्य मनः इच्छ कामय। तस्य त्वं वशवर्तिनी भवेत्यर्थः। सः च पुरुषः तव मन इच्छतु। अध अथ परस्परवशवर्तित्वानन्तरं त्वं तेन सह सुभद्रां सुकल्याणीं संविदं परस्परसंभोगसुखसंवित्तिं कृणुष्व कुरुष्व॥ ॥८॥

'वृषा' इति नवर्चमेकादशं सूक्तमाङ्गिर्हविर्धानस्यार्षमाग्नेयम्[3]। सप्तम्याद्यास्तिस्रस्त्रिष्टुभः शिष्टा जगत्यः। तथा चानुक्रान्तं— 'वृषा नवाङ्गिर्हविर्धान आग्नेयं तु त्रिष्टुबन्तम्' इति। गतः सूक्तविनियोगः॥

वृषा वृष्णे दुदुहे दोहसा दिवः पयांसि यह्वो अदितेरदाभ्यः।
विश्वं स वेद वरुणो यथा धिया स यज्ञियो यजतु यज्ञियाँ ऋतून्॥ १॥

वृषा। वृष्णे। दुदुहे। दोहसा। दिवः। पयांसि। यह्वः। अदितेः। अदाभ्यः।
विश्वम्। सः। वेद। वरुणः। यथा। धिया। सः। यज्ञियः। यजतु। यज्ञियान्। ऋतून्॥ १॥

१. ग-परिष्वजाते। २. ग-म-मु-परिष्वक्तुं। ३. ग-ख-अ-सूक्तमाङ्गिर्हविर्धान'।

वृषा आहुतिद्वारेण वृष्टेर्वर्षिता[1] यह्वः महान् अदाभ्यः केनाप्यहिंस्योऽग्निः अदितेः अक्षीणयागक्रियस्य वृष्णः यज्ञद्वारेण स्तुतीनां हविषां वा वर्षितुर्यजमानस्यार्थाय दोहसा दोहनेन महता प्रकारेण दिवः सकाशात् पयांसि वृष्टिलक्षणान्युदकानि दुदुहे दोग्धि प्रक्षारयति । किंच यथा वरुणः आदित्यः धिया आत्मानुरूपया प्रज्ञया विश्वं सर्वं वेद जानाति तथा सः अयमग्निः जानातीत्यर्थः । यज्ञियः यज्ञार्हः सः अग्निः यज्ञियान् यज्ञार्हान् ऋतून् यजतु पूजयतु ॥

रपद्गन्धर्वीरप्या च योषणा नदस्य नादे परि पातु मे मनः ।
इष्टस्य मध्ये अदितिर्नि धातु नो भ्राता नो ज्येष्ठः प्रथमो वि वोचति ॥२॥

रपत् । गन्धर्वीः । अप्या । च । योषणा । नदस्य । नादे । परि । पातु । मे । मनः ।
इष्टस्य । मध्ये । अदितिः । नि । धातु । नः । भ्राता । नः । ज्येष्ठः । प्रथमः । वि । वोचति ॥२॥

रपत् रपितवत्यग्निगुणाननुकथती गन्धर्वीः गन्धर्वस्य स्त्री अप्या अद्भिः संस्कृता योषणा आहुतिलक्षणा स्त्री च । अग्निं तर्पितवतीति शेषः । नदस्य । स्तोतृनामैतत् । स्तोतुः मे मम स्वभूतं मनः नादे स्तुतिलक्षणे शब्दे परि पातु अग्निः सम्यग्रक्षतु । अहं समाहितमना भूत्वा सम्यक् स्तुतिं करोमीत्यर्थः । किंच अदितिः अखण्डनीयोऽग्निः नः अस्मान् इष्टस्य यागस्य मध्ये नि धातु निदधातु नितरां स्थापयतु । प्रथमः सर्वेषां यजमानानां मुख्यः नः अस्माकं ज्येष्ठः भ्राता वि वोचति विशेषेण ब्रवीति । स्तौतीत्यर्थः । नाहमेव केवलो यजनशीलः किंतु सर्वं एवास्मत्कुलीनो देवयागमिव इत्यर्थः ॥

सो चिन्नु भद्रा क्षुमती यशस्वत्युषा उवास मनवे स्वर्वती ।
यदीमुशन्तमुशतामनु क्रतुमग्निं होतारं विदथाय जीजनन् ॥ ३ ॥

सो इति । चित् । नु । भद्रा । क्षुऽमती । यशस्वती । उषाः । उवास । मनवे । स्वःऽवती ।
यत् । ईम् । उशन्तम् । उशताम् । अनु । क्रतुम् । अग्निम् । होतारम् । विदथाय । जीजनन् ॥३॥

भद्रा भजनीया क्षुमती शब्दवती यशस्वती अन्नवती कीर्तिमती वा सो चित् सैव प्रसिद्धा उषाः मनवे मनुष्याय यजमानाय स्वर्वती आदित्यवती सती नु क्षिप्रम् उवास उषितवती[2] । उदितवतीत्यर्थः । कदोदितवती इत्युच्यते । यत् यदा उशन्तं स्तुतिं इच्छन्तं काम्यमानम् उशतां यष्टुं[3] कामयमानानां[4] संबन्धिनं होतारं देवानामाह्वातारं होमनिष्पादकं वा ईम् एनम् अग्निम् अनु क्रतुं स्तुतिकर्मणः पश्चात् विदथाय यजनीयाय यज्ञार्थं जीजनन्[5] । ऋत्विग्यजमाना जनयन्तीत्यर्थः । तदोदितवतीति संबन्धः ॥

अध त्यं द्रप्सं विभ्वं विचक्षणं विराभरदिषितः श्येनो अध्वरे ।
यदी विशो वृणते दस्ममार्या अग्निं होतारमध धीरजायत ॥ ४ ॥

अध । त्यम् । द्रप्सम् । विऽभ्वम् । विऽचक्षणम् । विः । आ । अभरत् । इषितः । श्येनः । अध्वरे ।
यदि । विशः । वृणते । दस्मम् । आर्याः । अग्निम् । होतारम् । अध । धीः । अजायत ॥४॥

---

१. त-म६-वर्षिता । २. त-म६-उषितवतीत्यर्थः । ३. त-म६-शब्दं । ४. त१-म१.५-कामयमानानां यजमानानां । ५. ग-त३-म५-जीजनत् अजीजनन् ।

अध अनन्तरं श्येनः शंसनीयगमनः वीः[1] पक्षी अध्वरे यागे इषितः अभिप्रेषितः विभ्वं महान्तं विचक्षणं सर्वस्य विशेषेण द्रष्टारं यं तं प्रसिद्धं द्रप्सं नास्यन्तं नातिबहुलं सोमम् आभरत् आहृतवान्। अपि च यदि यदा आर्याः अभिगमनीयं तं भजन्तः विशः यजमाना मनुष्याः दस्मं दर्शनीयं शत्रूणामुपक्षपयितारं वा होतारम् अग्निं वृणते प्रार्थयन्ते अध तदा धीः यागादिक्रिया अजायत। यज्वभिः प्रतायत इत्यर्थः॥

**सदासि रण्वो यवसेव पुष्यते होत्राभिरग्ने मनुषः स्वध्वरः।**

**विप्रस्य वा यच्छशमान उक्थ्यं१ वाजं ससवाँ उपयासि भूरिभिः॥ ५॥**

सदा। असि। रण्वः। यवसाऽइव। पुष्यते। होत्राभिः। अग्ने। मनुषः। सुऽअध्वरः।
विप्रस्य। वा। यत्। शशमानः। उक्थ्यम्। वाजम्। ससऽवान्। उपऽयासि। भूरिऽभिः॥५॥

हे अग्ने त्वं[2] सदा सततं रण्वः असि रमणीयो भवसि[3]। तत्र दृष्टान्तः। यवसेव पुष्यते। यथा यवसानि तृणानि स्वपुष्टिं कुर्वते इच्छते गोमहिष्यादिचतुष्पदाय सर्वदा रमणीयानि भवन्ति तद्वत्। अपि च हे अग्ने मनुषः मनुष्यस्य स्वभूतैः होत्राभिः। होत्रेति यज्ञनामैतत्। यज्ञैः स्वध्वरः शोभनयज्ञो भवेति शेषः। विप्रस्य वा स्तोतुर्वा यत् यस्य यजमानस्य वा स्वभूतम् उक्थ्यं स्तोत्रं शशमानः प्रशंसन् वाजं हविर्लक्षणमन्नं ससवान् संभजमानश्च भूरिभिः[4] बहुभिर्देवैः सह उपयासि उपगच्छसि॥ ॥ ९ ॥

**उदीरय पितरा जार आ भगमियक्षति हर्यतो हृत्त इष्यति।**

**विवक्ति वह्निः स्वपस्यते मखस्तविष्यते असुरो वेपते मती॥ ६॥**

उत्। ईरय। पितरा। जारः। आ। भगम्। इयक्षति। हर्यतः। हृत्तः। इष्यति।
विवक्ति। वह्निः। सुऽअपस्यते। मखः। तविष्यते। असुरः। वेपते। मती॥ ६॥

हे अग्ने स्वकीयं ज्योतिः पितरा पितरौ सर्वप्राणिनां मातापितृभूते द्यावापृथिव्यौ प्रति उदीरय उद्गमय। तत्र दृष्टान्तः। आकार उपमार्थे। रात्रेर्नक्षत्रादिदीप्तीनां च जरयितृत्वात् जारः आदित्यः। स यथा द्यावापृथिव्यौ प्रति भगं भजनीयं स्वीयं ज्योतिरुद्गमयति तद्वत्। हर्यतः यागं कामयमानान् प्रति इयक्षति यजमानो यष्टुमिच्छति। हृत्तः हृदयेन[5] च इष्यति। इषिरयं गत्यर्थः शुद्धोऽप्युपसर्गपूर्वो द्रष्टव्यः। अधीष्यति देवान् यष्टुमधिगच्छति। विवक्ति विवक्षति। शास्त्रलक्षणाः स्तुतीर्वक्तुमिच्छति च। वह्निः वोढा स्तुतीनां देवान् प्रति प्रापयिता होता च स्वपस्यते शोभनमात्मीयं कर्म कर्तुमिच्छति। मखः। यज्ञनामैतत्। अत्र तत्संयोगादध्वर्युरुच्यते। स च तविष्यते। तविषिर्वृद्ध्यर्थः। स धातुरन्तर्णीतसन्नर्थश्च द्रष्टव्यः। तुतुविषसि स्तोत्रलक्षणाः स्तुतीर्वर्धयितुमिच्छतीत्यर्थः। असुरः प्राणवान् प्रज्ञावान् वा। भवेति शेषः। मती मत्या बुद्ध्या वेपते। कर्मवैगुण्यात् बिभ्यत् कम्पते। हे अग्ने यतो यजमानः सर्वर्त्विग्युक्ताश्च स्वस्वकर्म[6] कर्तुं त्वामागच्छन्ति अतस्त्वं शीघ्रमुद्गमयेत्यर्थः॥

**यस्ते अग्ने सुमतिं मर्तो अक्षत्सहसः सूनो अति स प्र शृण्वे।**

**इषं दधानो वहमानो अश्वैरा स द्युमाँ अमवान्भूषति द्यून्॥ ७॥**

१. ग–कश्चित्। २. त-भ६–'त्वं' नास्ति। ३. त-भ६–असि। ४. ग–त्वं भूरिभिः। ५. त-भ६-गु–हृदयेनेव। ६. त-गु–स्वकर्म।

यः । अग्निः । क्रव्यऽवाहनः । पितॄन् । यक्षत् । ऋतऽवृधः ।
प्र । इत् । ऊँ इति । हव्यानि । वोचति । देवेभ्यः । च । पितृऽभ्यः । आ ॥ ११ ॥

क्रव्यवाहनः[1] क्रव्यस्य[1] हविषो वोढा योऽग्निः पितॄन् ऋतावृधः ऋतस्य यज्ञस्योदकस्य वा वर्धयितॄन् सत्येन वृद्धान् वा देवान्। एतत्पितृविशेषणं वास्तु। तान् यक्षत् यजति। यजेर्लेटि सिब्बहुलमिति सिप्। सोऽग्निः हव्यानि हवींषि प्र वोचतु पितृयज्ञे प्रब्रवीतु। युष्मदर्थं मयानीतानीति। इदु पूरणौ। केभ्यः। देवेभ्यश्च पितृभ्यश्च। आकारः समुच्चये॥

महापितृयज्ञे ‘उशन्तस्त्वा’ इत्येषा सामिधेनी। सूत्र्यते हि—‘उशन्तस्त्वा नि धीमहीत्येतां त्रिरनवानं ताः सामिधेन्यः’ (आश्व. श्रौ. २. १९) इति॥

उशन्तस्त्वा नि धीमह्युशन्तः समिधीमहि।
उशन्नुशत आ वह पितॄन्हविषे अत्तवे॥ १२॥

उशन्तः । त्वा । नि । धीमहि । उशन्तः । सम् । इधीमहि ।
उशन् । उशतः । आ । वह । पितॄन् । हविषे । अत्तवे ॥ १२ ॥

हे अग्ने उशन्तः कामयमाना वयं त्वा त्वां नि धीमहि[2] कर्मार्थं स्थापितवन्तः। उशन्तः वयं समिधीमहि संदीपयामः। त्वमपि उशन् कामयमानः हविरादिकम् उशतः आगन्तुकामान् पितॄन् अस्मिन् यज्ञे आ वह। किमर्थम्। हविषे अस्माभिः दत्तं हविः अत्तवे अत्तुम्। अदेस्तुमर्थे तवेन्प्रत्ययः। ‘क्रियाग्रहणं कर्तव्यम्’ इति कर्मणः संप्रदानसंज्ञा॥

यं त्वमग्ने समदहस्तमु निर्वापया पुनः।
कियाम्ब्वत्र रोहतु पाकदूर्वा व्यल्कशा॥ १३॥

यम् । त्वम् । अग्ने । सम्ऽअदहः । तम् । ऊँ इति । निः । वापय । पुनरिति ।
कियाम्बु । अत्र । रोहतु । पाकऽदूर्वा । विऽअल्कशा ॥ १३ ॥

हे अग्ने त्वं पितृदहनकाले यं देशं समदहः पुरा सम्यग्दग्धवानसि। ‘तिङि चोदात्तवति’ इति समो निघातः। तमु तमेव पुनः निर्वापय। अत्र अस्मिन् देशे कियाम्बु क्रियमाण-मुदकं यस्मिन् तत् पुष्करिण्यादिकं[3] रोहतु उत्पद्यताम्। किंच व्यल्कशा विविधशाखा पाकदूर्वा परिपक्वदूर्वा चोत्पद्यताम्॥

अस्थिसंचयने क्षीरोदकेन शमीशाखया त्रिः प्रसव्यं श्मशानमायतनं प्रोक्षति ‘शीतिके शीतिकावति’ इत्यनया। सूत्रितं च—‘क्षीरोदकेन[4] शमीशाखया त्रिः प्रसव्यं परिव्रजन् प्रोक्षति शीतिके शीतिकावतीति’ (आश्व. गृ. ४. ५. ३) इति[4]॥

शीतिके शीतिकावति ह्लादिके ह्लादिकावति।
मण्डूक्या३ सु सं गम इमं स्व१ग्निं हर्षय॥ १४॥

१. त१.२.७-मु-उद्वांश—कव्यवाहनः कव्यस्य। २. ग-त४-म१.२.८.९—धीमहि निदधीमहि; त५ धीमहि निधीमहि। ३. त१-मु—पुष्करिण्यादि। ४. ग-त-म—‘क्षीरोदकेन...इति’ नास्ति।

शीर्तिके । शीतिकाऽवति । ह्लादिके । ह्लादिकाऽवति ।

मण्डूक्या । सु । सम् । गमः । इमम् । सु । अग्निम् । हर्षय ॥ १४ ॥

हे शीतिके शैत्ययुक्ते हे शीतिकावति । शीतिकाः शैत्ययुक्ता ओषधयः । ताभिस्तद्वति हे ह्लादिके आह्लादयित्रि हे ह्लादिकावति आह्लादककाल्युक्तैर्वृक्षैस्तद्वति हे पृथिवि मण्डूक्या मण्डूकस्त्रिया वृष्टिप्रियया सु सुष्ठु सं गमः संगच्छस्व । गमेर्लुङि व्यत्ययेन परस्मैपदम् । ततः इमम् अग्निं सु सुष्ठु हर्षय ॥ ॥ २२ ॥ ॥ १ ॥

द्वितीयेऽनुवाके त्रयोदश सूक्तानि । तत्र 'त्वष्टा दुहित्रे' इत्येतच्चतुर्दशर्चं प्रथमं सूक्तम् । यमपुत्रो देवश्रवा नामर्षिः । आदितो द्वादश त्रिष्टुभः । त्रयोदशीचतुर्दश्यावनुष्टुभौ । यद्वा । त्रयोदशी पुरस्ताद्बृहती । आदितो द्वयोः सरण्यूर्देवता । 'पूषा त्वेतः' इत्याद्याश्चतस्रः पूषदेवत्याः । 'सरस्वतीं देवयन्तः' इत्याद्यास्तिस्रः सरस्वतीदेवताकाः । 'आपो अस्मान्' इत्याद्याः पञ्चर्चोऽब्देवताकाः । तत्र 'द्रप्सश्चस्कन्द' इत्याद्यास्तिस्रः सोमदेवत्या वा । तथा चानुक्रान्तं—'त्वष्टा देवश्रवा द्वे सरण्यूदेवते पौष्ण्यश्चतस्रः सारस्वत्यस्तिस्रः पञ्चाप्यो द्रप्सास्तिस्रः सौम्यो वान्त्ये अनुष्टुभावुपान्त्या पुरस्ताद्बृहती वा' इति । गतः सूक्तविनियोगः ॥ अत्रेतिहासमाचक्षते—त्वष्टृनामकस्य देवस्य सरण्यूस्त्रिशिराश्चेति स्त्रीपुंसात्मकमपत्यद्वयमभूत् । ततस्त्वष्टा सरण्यूनामिकां पुत्रीं विवस्वते प्रायच्छत् । ततस्तस्यां विवस्वतश्च सकाशात् यमयम्यौ विजज्ञाते । ततः कदाचित् आत्मसदृश्या[1] देवनिर्मितायाः स्त्रियः समीपे तदपत्यद्वयं निधाय स्वयमाश्वं रूपं कृत्वोत्तरान् कुरून् प्रतिजगाम । अथ विवस्वानेतां स्त्रियं सरण्यूमिति मत्वा तामगंसीत् । तस्यां मनुर्नाम राजर्षिरजायत । ततो विवस्वानेषा सरण्यूर्न भवतीति विज्ञाय स्वयमप्यश्वो भूत्वा तामश्वरूपिणीं प्रापासीत् । ततः संक्रीडमानयोस्तयोः स्वभूतं रेतः पृथिव्यां पपात । अथ सा गर्भकामनया तत् पतितं रेत आजघ्रौ । ततस्तस्याः सकाशान्नासत्यो दस्रश्चे-त्युभावश्विनावजायेतामिति ॥

त्वष्टा॑ दुहि॒त्रे व॑ह॒तुं कृ॑णो॒तीती॒दं विश्वं॒ भुव॑नं॒ समे॑ति ।

य॒मस्य॑ मा॒ता प॑र्यु॒ह्यमा॑ना म॒हो जा॒या विव॑स्वतो ननाश ॥ १ ॥

त्वष्टा॑ । दु॒हि॒त्रे । व॒ह॒तुम् । कृ॒णो॒ति॒ । इति॑ । इ॒दम् । विश्व॑म् । भुव॑नम् । सम् । ए॒ति॒ ।

य॒मस्य॑ । मा॒ता । प॒रि॒ऽउ॒ह्यमा॑ना । म॒हः । जा॒या । विव॑स्वतः । न॒ना॒श॒ ॥ १ ॥

त्वष्टा एतन्नामको देवः दुहित्रे । षष्ठ्यर्थे चतुर्थी । दुहितुः सरण्यूनामिकायाः वहतुं वहनं विवाहम् । 'वहिवक्ष्योश्चतुः' ( उ. सू. १. ७९ ) इति वहेश्चतुप्रत्ययः । तं कृणोति करोति । इति एतेन हेतुना इदं विश्वं सर्वं भुवनं भूतजातं समेति सं विवाहं समागमत् । पर्युह्यमाना विवस्वतोढोढव्या यमस्य यम्याश्च माता महः महतः विवस्वतः जाया भार्या सरण्यूः ननाश । उत्तरान् कुरून् प्रति गता । अगच्छदित्यर्थः[2] ॥

अपा॑गूहन्न॒मृतां॒ मर्त्ये॑भ्यः कृ॒त्वी सव॑र्णामददु॒र्विव॑स्वते ।

उ॒ताश्विना॑वभर॒द्यत्तदासी॒दज॑हादु॒ द्वा मि॑थु॒ना स॑र॒ण्यूः ॥ २ ॥

अप॑ । अ॒गू॒ह॒न् । अ॒मृता॑म् । मर्त्ये॑भ्यः । कृ॒त्वी । सऽव॑र्णाम् । अ॒द॒दुः॒ । विव॑स्वते ।

उ॒त । अ॒श्विनौ॑ । अ॒भ॒र॒त् । यत् । तत् । आसी॑त् । अज॑हात् । ऊँ इति॑ । द्वा । मि॒थु॒ना । स॒र॒ण्यूः ॥ २ ॥

१. त१.२.५.६.७-म६—आत्मसदृश्या; त४—आत्मसादृश्यात् । २. त-म६—आगच्छ° ।

अमृतां मरणधर्मरहितामेतां सरण्यूं मर्त्येभ्यः मनुष्येभ्यस्तत्सकाशात् अपागूहन् अपगूहितवन्तः संवृतवन्तः । देवा उपनीतवन्त इत्यर्थः । किंच सवर्णां सरण्यूसदृशीमन्यां[1] स्त्रियं कृत्वी कृत्वा तस्मै विवस्वते देवाः अददुः प्रायच्छन् । उत अपि च साश्वरूपिणी सरण्यूस्तदा अश्विनौ अभरत् । स्वोदरे गर्भभूतौ धारितवती । यत् यदा तत् आश्वरूपाभ्यामश्वरूपस्य संभोगकाले रेतः[2] पतितम् आसीत् तदाश्विनौ जनयामासेत्यर्थः । तथा सरण्यूः सरणवत्येतन्नामिका द्वा मिथुना द्वौ मिथुनौ यमयम्यौ अजहात् त्यक्तवती । जनितवतीत्यर्थः । यद्वा । सरण्यूरेतन्नामिका मध्यमस्थाना देवता मध्यममग्निं माध्यमिकां वाचं चोत्पादितवती ॥

दीक्षितमरणे 'पूषा त्वेतः' इत्याद्यास्तिस्रः शंसनीयाः । सूत्रितं च— 'पूषा त्वेतश्च्यावयतु प्र विद्वानिति तिस्रः' (आश्व. श्रौ. ६. १०) इति ॥

**पूषा त्वेतश्च्यावयतु प्र विद्वाननष्टपशुर्भुवनस्य गोपाः ।**
**स त्वैतेभ्यः परि ददत्पितृभ्योऽग्निर्देवेभ्यः सुविदत्रियेभ्यः ॥ ३ ॥**

पूषा । त्वा । इतः । च्यवयतु । प्र । विद्वान् । अनष्टऽपशुः । भुवनस्य । गोपाः ।
सः । त्वा । एतेभ्यः । परि । ददत् । पितृऽभ्यः । अग्निः । देवेभ्यः । सुऽविदत्रियेभ्यः ॥३॥

पूषा पोषयितैतन्नामको देवः त्वा त्वाम् इतः अस्माद्देशाल्लोकात् प्र च्यावयतु प्रकर्षेणोत्तमलोकं गमयतु । कीदृशः । विद्वान् अस्मत्कृतं विजानानः अनष्टपशुः अविनश्वरपशुयुक्तः । यस्मिन्[3] सर्वे पशवस्तिष्ठन्ति न तु नश्यन्तीत्यर्थः । भुवनस्य भूतजातस्य[4] गोपाः गोपायिता । किंच प्रकृतस्य सः पूषा एतेभ्यः पितृभ्यः त्वा त्वां परि ददत् परिप्रयच्छतु । तथा अग्निः च सुविदत्रियेभ्यः । सुविदत्रं ज्ञानं धनं वा । तदर्हाः सुविदत्रियाः । छान्दसो घप्रत्ययः । शोभनज्ञानेभ्यः सुधनेभ्यो वा देवेभ्यः त्वां प्रयच्छतु । तेषां लोके स्थापयत्वित्यर्थः ॥

**आयुर्विश्वायुः परि पासति त्वा पूषा त्वा पातु प्रपथे पुरस्तात् ।**
**यत्रासते सुकृतो यत्र ते ययुस्तत्र त्वा देवः सविता दधातु ॥ ४ ॥**

आयुः । विश्वऽआयुः । परि । पासति । त्वा । पूषा । त्वा । पातु । प्रऽपथे । पुरस्तात् ।
यत्र । आसते । सुऽकृतः । यत्र । ते । ययुः । तत्र । त्वा । देवः । सविता । दधातु ॥ ४ ॥

विश्वायुः सर्वाङ्गः सर्वत्र गमनशीलो वा आयुः । वकारलोपश्छान्दसः । वायुः । यद्वा । 'छन्दसीणः'[5] इत्युण्प्रत्यये वृद्धौ च कृतायां रूपम् । गन्ता वायुः । त्वा त्वां परि पासति परिपातु । पूषानुज्ञया परितो रक्षतु । 'पा रक्षणे' । लेटि सिप्यडागमः । प्रपथे प्रकृष्टे मार्गे स्वर्गे पुरस्तात् सर्वेषां प्रथममेव[6] वर्तमानः पूषा स्वयमेव त्वा त्वां प्रमितं यजमानं पातु रक्षतु । सुकृतः पुण्यकर्माणः यत्र यस्मिन् देशे आसते तिष्ठन्ति यत्र वा ते सुकृतः ययुः प्राप्ताः तत्र[7] तस्मिन्[7] स्थाने देवः दीप्यमानः सविता सर्वस्य स्वस्वकर्मणि प्रेरक एतन्नामको देवः त्वा त्वां दधातु निदधातु ॥

एकादशिनस्य पौष्णस्य पशोर्हविषः 'पूषेमाः' इत्यनुवाक्या । 'पूषेमा आशा अनु वेद सर्वाः शुक्रं ते अन्यद्यजतं ते अन्यत्' (आश्व. श्रौ. ३. ७) इति हि सूत्रितम् ॥

१. त-भ-सु-सदृशामन्यां । २. त-भ-'रेतः' नास्ति । ३. ध-अस्मिन् । ४. त३-४-भ१-२-४-सर्वस्य भूतजातस्य । ५. त-भ६-छान्दसीणः । ६. ग-त१-२-४-प्रथमत एव; त३-प्रथम एव । ७. त-तस्मिंस्तस्मिन् ।

पूषेमा आशा अनु वेद सर्वाः सो अस्माँ अभयतमेन नेषत् ।
स्वस्तिदा आघृणिः सर्ववीरोऽप्रयुच्छन्पुर एतु प्रजानन् ॥ ५ ॥

पूषा । इमाः । आशाः । अनु । वेद । सर्वाः । सः । अस्मान् । अभयऽतमेन । नेषत् ।
स्वस्तिऽदाः । आघृणिः । सर्वऽवीरः । अप्रऽयुच्छन् । पुरः । एतु । प्रऽजानन् ॥ ५ ॥

पूषा देवः इमाः सर्वाः आशाः प्राच्याद्या दिशः अनु वेद आनुपूर्व्येण जानाति । इमाः सुखेन गन्तव्या असुखेनेति चैवमनुक्रमेण जानातीत्यर्थः । एवं सति अस्मान् प्रमिते यजमाने मर्तीति पुत्रमुखेन याजकमुखेन वा । अस्मान्[1] अभयतमेन अत्यन्तं भयरहितेन मार्गेण नेषत् नयतु । कथम् । स्वस्तिदाः कल्याणस्य दाता आघृणिः आगतदीप्तियुक्तः सर्ववीरः सर्वैर्वीरैः कर्मणि समर्थैर्ऋत्विग्भिरुपेतः अप्रयुच्छन् अप्रमाद्यन् प्रजानन् अस्माकं फलाफले विजानानः सन् पुरः एतु अस्माकं पुरस्ताद्गच्छतु । यथास्माकं भयं न[2] भवति तथा गच्छत्वित्यर्थः ॥   ॥ २३ ॥

एकादशिनस्य पौष्णस्य पशोः पुरोडाशस्य ‘ प्रपथे पथाम् ’ इति याज्या । सूत्रितं च—‘ प्रपथे पथामजनिष्ट पूषा पथस्पथः परिपतिं वचस्या ’ ( आश्व. श्रौ. ३. ७ ) इति ॥

प्रपथे पथामजनिष्ट पूषा प्रपथे दिवः प्रपथे पृथिव्याः ।
उभे अभि प्रियतमे सधस्थे आ च परा च चरति प्रजानन् ॥ ६ ॥

प्रऽपथे । पथाम् । अजनिष्ट । पूषा । प्रऽपथे । दिवः । प्रऽपथे । पृथिव्याः ।
उभे इति । अभि । प्रियतमे इति प्रियऽतमे । सधस्थे इति सधऽस्थे ।
आ । च । परा । च । चरति । प्रऽजानन् ॥ ६ ॥

पथाम् अन्तरिक्षगमनहेतुभूतानां मार्गाणां मध्ये प्रपथे यः प्रकृष्टः पन्था अस्ति तत्र पूषा अजनिष्ट प्रादुरभूत् । पुण्यकर्मणां सुगतिप्रापणार्थमवस्थित इति भावः । तथा दिवः द्युलोकस्य च मार्गाणां मध्ये प्रपथे प्रकृष्टे मार्गे जातः । तथा पृथिव्याः प्रपथे प्रकृष्टे मार्गे मनुष्याणां तत्तत्कर्माणि प्रवर्तनार्थं प्रादुर्भूत इत्यर्थः । सोऽयं पूषा प्रियतमे सर्वस्येष्टतमे सधस्थे सर्वेषां सहावस्थानभूते उभे द्यावापृथिव्यावभिलक्ष्य आ चरति आभिमुख्येन चरति । सुकृतिनां सुकृतफलप्रदानायाभिमुख्यं चरतीत्यर्थः । तथा परा चरति । दुष्कर्मणां प्रतिकूलं गच्छति । किं कुर्वन् । प्रजानन् अनेनेदं कर्म कृतमस्य कर्मण इदं फलमित्येवंविशेषेण जानानः ॥

व्यूळ्हस्य दशरात्रस्य तृतीये छन्दोमे प्रउगशस्त्रे[3] सारस्वततृचस्य ‘सरस्वतीं देवयन्तः’ इत्येषाद्या । सूत्र्यते हि—‘ प्र क्षोदसा धायसा सस्र एषा सरस्वतीं देवयन्तो हवन्ते ’ (आश्व. श्रौ. ८. ११) इति ॥

सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने ।
सरस्वतीं सुकृतो अह्वयन्त सरस्वती दाशुषे वार्यं दात् ॥ ७ ॥

सरस्वतीम् । देवऽयन्तः । हवन्ते । सरस्वतीम् । अध्वरे । तायमाने ।
सरस्वतीम् । सुऽकृतः । अह्वयन्त । सरस्वती । दाशुषे । वार्यम् । दात् ॥ ७ ॥

---

१. ग-स१.४—अस्मान् स पूषा; म६—अस्मान् पूषा । २. त—नर्य । ३. त-म१.२.४.६-मु—मध्ये ।

देवयन्तः देवान्[1] यष्टुं स्तोतुं वा[1] कामयमाना यजमानाः सरस्वतीम् एतन्नामिकां मध्यमस्थानदेवतां हवन्ते कर्मावयवत्वाय आह्वयन्ति । तथा तायमाने स्तुतिभिर्हविर्भिश्च विस्तीर्यमाणे[2] अध्वरे यज्ञे सरस्वतीं यजन्तीति शेषः । सुकृतः पुण्यकर्माणः सरस्वतीम् अह्वयन्त फलप्रदानाय हूयन्ते । यत एवमतः कारणात् सरस्वती देवी दाशुषे हवींषि दत्तवते यजमानाय वार्यं वरणीयं कर्मफलं दात् प्रयच्छतु ॥

सरस्वति या सरथं ययाथ स्वधाभिर्देवि पितृभिर्मदन्ती ।
आसद्यास्मिन्बर्हिषि मादयस्वानमीवा इष आ धेह्यस्मे ॥ ८ ॥

सरस्वति । या । सऽरथम् । ययाथ । स्वधाभिः । देवि । पितृऽभिः । मदन्ती ।
आऽसद्य । अस्मिन् । बर्हिषि । मादयस्व । अनमीवाः । इषः । आ । धेहि । अस्मे इति ॥ ८ ॥

हे सरस्वति हे देवि या त्वं सरथं पितृभिः सह समानेन रथेन युक्तं यथा भवति तथा ययाथ । अस्मदीयं यज्ञं प्राप्तासि । किं कुर्वती[3] । पितृभिः सह स्वधाभिः हविर्लक्षणैरन्नैः मदन्ती माद्यन्ती यज्ञं गच्छसीति संबन्धः । सा त्वं बर्हिषि अस्मिन् वेदिस्तरणे यज्ञे आसद्य उपविश्य मादयस्व हविर्भिस्तृप्ता भव । आत्मानं तर्पय वा । ततस्तृप्ता सती त्वम् अनमीवाः । अमीवा रोगः । तद्वर्जितान्यारोग्यकराणि इषः अन्नानि अस्मे अस्मभ्यम् आ धेहि पर्याप्तं प्रयच्छ ॥

सरस्वतीं यां पितरो हवन्ते दक्षिणा यज्ञमभिनक्षमाणाः ।
सहस्रार्घमिळो अत्र भागं रायस्पोषं यजमानेषु धेहि ॥ ९ ॥

सरस्वतीम् । याम् । पितरः । हवन्ते । दक्षिणा । यज्ञम् । अभिऽनक्षमाणाः ।
सहस्रऽअर्घम् । इळः । अत्र । भागम् । रायः । पोषम् । यजमानेषु । धेहि ॥ ९ ॥

यां त्वां सरस्वतीं पितरो हवन्ते आह्वयन्ति । कीदृशाः । दक्षिणा । 'दक्षिणादाच्' (पा. सू. ५. ३. ३६) इत्याच्प्रत्ययः । दक्षिणत आगत्य यज्ञमभिनक्षमाणाः अभितो गच्छन्तो व्याप्नुवन्तः । अत्र अस्मिन् यज्ञे सहस्रार्घं बहुभिः पूजनीयमुपभोज्यम् इळः[4] अन्नस्य भागं रायः धनस्य पोषं पुष्टिं च यजमानेषु त्वं धेहि स्थापय ॥

अवभृथस्नाने 'आपो अस्मान्' इत्येषा । सूत्रितं[5] च— 'तत आचम्याप्लवन्त आपो अस्मान् मातरः शुन्धयन्तु' (आश्व. श्रौ. ६. १३) इति । दशमेऽहनि वपामार्जनेऽप्येषा[5] । सूत्रितं च— 'इदमापः प्र वहतेत्येतयापः स्पृष्ट्वा आपो अस्मान्मातरः शुन्धयन्तु' (आश्व. श्रौ. ८. १२) इति ॥

आपो अस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु ।
विश्वं हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरा पूत एमि ॥ १० ॥

आपः । अस्मान् । मातरः । शुन्धयन्तु । घृतेन । नः । घृतऽप्वः । पुनन्तु ।
विश्वम् । हि । रिप्रम् । प्रऽवहन्ति । देवीः । उत् । इत् । आभ्यः । शुचिः । आ । पूतः । एमि ॥ १० ॥

१. ग–देवानेव यष्टुं स्तोतुं वा । २. ग-त भ२.४-मु–विस्तार्यमाणे । ३. भ–कुर्वती । ४. स–इषः । ५. स-भ६–' सूत्रितं. ..प्येषा ' नास्ति ।

मातरः जगतो मातृस्थानीयाः आपः अस्मान् शुन्धयन्तु शोधनेन शोधयन्तु। तथा घृतप्वः घृतमुदकम्। तेनाप्वात् पुनन्तीति। तास्तथोक्ता आपः। यद्वा घृतप्वः। घृतं गव्यम्। तेन पुनन्ति। तथा ब्राह्मणं— 'घृतेन नो घृतप्वः पुनन्त्विति तद्धि सुपूतं यद्घृतेन पूयते' (श. ब्रा. ३.१.२.११) इति। ता आपः घृतेन प्रस्रवणोपेतेन नः अस्मान् पुनन्तु। हि यस्मात् देवीः देव्यो देवनशीला आपः विश्वं सर्वं रिप्रं पापं प्रवहन्ति[1] पुरुषसकाशात्[2] प्रणाशयन्ति। अपगमयन्तीति यावत्। अनन्तरम् आभ्यः अद्भ्यः आ पूतः आभिमुख्येन शुद्धः सन् स्तोताहम् उत् एमि उद्गच्छामि। ऊर्ध्वं स्वर्गं गच्छामीत्यर्थः॥ ॥ २४ ॥

सुत्येऽहनि 'द्रप्सश्चस्कन्द' इत्यादिके द्वे विप्रुड्ढोमार्थे। सूत्रितं च— 'द्रप्सश्चस्कन्देति द्वाभ्यां विप्रुड्ढोमौ हुत्वा' (आश्व. श्रौ. ५. २) इति। स्कन्नहविरभिमर्शनेऽपि 'द्रप्सः' इत्येषा। आहुतिर्बहिष्परिधि यदि स्कन्देत् तदानीमाग्नीध्रोऽनया जुहुयात्। स्कन्नमभिमृशेदिति प्रकृत्य सूत्रितं— 'द्रप्सश्चस्कन्देत्याहुतिश्चेद्बहिष्परिध्याग्नीध्र एनां जुहुयात्' (आश्व. श्रौ. ३. १३) इति॥

द्रप्सश्चस्कन्द प्रथमाँ अनु द्यूनिमं च योनिमनु यश्च पूर्वः।
समानं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः॥ ११ ॥

द्रप्सः। चस्कन्द। प्रथमान्। अनु। द्यून्। इमम्। च। योनिम्। अनु। यः। च। पूर्वः। समानम्। योनिम्। अनु। सम्ऽचरन्तम्। द्रप्सम्। जुहोमि। अनु। सप्त। होत्राः॥ ११ ॥

द्रप्सः अभिषूयमाणस्य सोमस्य रसः प्रथमान् पूर्वभाविनः पार्थिवाल्लोकात् द्यून् दीप्यमानान् द्युलोकांश्च अनु लक्षीकृत्य चस्कन्द स्कन्नवान् गतवान्। सर्वत्र। इमं परिदृश्यमानं योनिं स्थानभूतं लोकं च यश्च अस्मात् पूर्वः अस्ति तम् अनु गतवान्। समानं साधारणं योनिं द्यावापृथिवीलक्षणं स्थानम् अनु संचरन्तं सम्यगागच्छन्तं द्रप्सं सोमरसं विप्रुड्लक्षणं सप्त होत्राः सप्तसंख्याका विप्रुड्ढोमस्य कर्तारो होतृप्रभृतयो वयम् अनु आनुपूर्व्येण जुहोमि जुहुमः। यद्वा। होत्राः। सप्तहोतृभिः क्रियमाणा यागक्रिया होत्राः। ता अनु पश्चादध्वर्युरहं जुहोमि। यद्वा। द्रप्सः। द्रुतगामित्वाद्द्रप्स आदित्य उच्यते। स[3] आदित्यः पृथिवीं च दिवं च गच्छति समानं योनिमन्तरिक्षं लक्षीकृत्य। सञ्चरन्तं तं द्रप्समादित्यमुद्दिश्य सप्त होत्राः सप्तसंख्याका दिशः। यस्यां दिशि सूर्यो वर्तते तद्व्यतिरिक्ताः सप्तसंख्याका दिशः[4]। अनु पश्चाज्जुहोमि। यत्र यत्र वर्तते तां तां दिशं द्रप्सरूपेण प्रयच्छामि। प्रतिष्ठापयामीत्यर्थः। अत्र वाजसनेयकम्— 'असौ वा आदित्यो द्रप्सः स दिवं च पृथिवीं च स्कन्दतीमं च योनिमनु यश्च पूर्व इतीमं च लोकममुं चेत्येतत् समानं योनिमनु संचरन्तमिति समानं ह्येष एतं योनिमनु संचरति[5] द्रप्सं जुहोम्यनु सप्त होत्रा इत्यसौ वा आदित्यो द्रप्सो दिशः सप्त होत्रा अमुं तदादित्यं दिक्षु प्रतिष्ठापयति' (श. ब्रा. ७. ४. १. २०) इति॥

यस्ते द्रप्सः स्कन्दति यस्ते अंशुर्बाहुच्युतो धिषणाया उपस्थात्।
अध्वर्योर्वा परि वा यः पवित्रात्तं ते जुहोमि मनसा वषट्कृतम्॥ १२ ॥

यः। ते। द्रप्सः। स्कन्दति। यः। ते। अंशुः। बाहुऽच्युतः। धिषणायाः। उपऽस्थात्। अध्वर्योः। वा। परि। वा। यः। पवित्रात्। तम्। ते। जुहोमि। मनसा। वषट्ऽकृतम्॥ १२ ॥

---

१. त-म६—वहति। २. त-म—पुरुषसकाशात्। ३. त-अ६—'स' नास्ति। ४. त-अ६—दिशः सप्त।
५. त-म१.२.४.६—संचरति।

हे सोम ते त्वदीयः यः द्रप्सः रसः स्कन्दति अभिषवणचर्मणोऽन्यत्र गच्छति । यः च ते त्वदीयः अंशुः रसाद्भिन्नः सन् स्कन्दति । बाहुच्युतः अध्वर्योर्बाहुभ्यां प्रच्युतः सन् स्कन्दति । यद्वा । बाहुवत्साधनभूता ग्रावाणः । तैः प्रच्युतोऽभिषुतः सन् धिषणायाः । धिषणेत्यभिषवणफलकनाम । प्रत्येकविवक्षयैकवचनम् । अभिषवणफलकयोः उपस्थात् समीपस्थात् प्रदेशादन्यत्र गच्छति । यथा अध्वर्योर्वा अभिषुण्वतोऽध्वर्योर्हस्तात् स्कन्दति । यः वा अपि[1] वा[1] पवित्रात् दशापवित्रात् परि स्कन्दति । तं सर्वं द्रप्सं ते त्वदीयं रसं मनसा अन्तःकरणेन स्तोत्रेण वा सह वषट्कृतं वषट्कारेण स्वाहाकारेण कृतं जुहोमि अग्नौ प्रक्षिपामि ॥

यस्ते॑ द्र॒प्सः स्क॒न्नो यस्ते॑ अं॒शुर॒वश्च॒ यः प॒रः स्रु॒चा ।
अ॒यं दे॒वो बृह॒स्पति॒ः सं तं सि॑ञ्चतु॒ राध॑से ॥ १३ ॥

यः । ते॒ । द्र॒प्सः । स्क॒न्नः । यः । ते॒ । अं॒शुः । अवः॑ । च॒ । यः । प॒रः । स्रु॒चा ।
अ॒यम् । दे॒वः । बृह॒स्पतिः॑ । सम् । तम् । सि॒ञ्च॒तु॒ । राध॑से ॥ १३ ॥

हे सोम ते त्वदीयः यः द्रप्सः रसोऽन्यत्र स्कन्नः गतः यः च त्वदीयस्तस्य कारणभूतः अंशुः लताखण्डो रसाद्भिन्नो भवति स्रुचा पात्रविशेषेण गृहीतः सोमः अवः अवस्तात् स्कन्दते परः परस्ताद्वातिरिक्तो भवति तम् इमं सोमम् अयं बृहस्पतिः एतन्नामकः देवः सं सिञ्चतु सम्यक् प्रक्षारयतु । किमर्थम् । राधसे अस्माकं धनार्थम् । स्कन्ने हि सोमे प्रजापश्वादिकमपस्कन्नं भवति खलु ॥

पय॑स्वती॒रोष॑धय॒ः पय॑स्वन्माम॒कं वचः॑ ।
अ॒पां पय॑स्व॒दित्पय॒स्तेन॑ मा स॒ह शु॑न्धत ॥ १४ ॥

पय॑स्वतीः । ओष॑धयः । पय॑स्वत् । मा॒म॒कम् । वचः॑ ।
अ॒पाम् । पय॑स्वत् । इत् । पयः॑ । तेन॑ । मा॒ । स॒ह । शु॒न्ध॒त॒ ॥ १४ ॥

इयं प्रत्यक्षकृता । हे आपः ओषधयः पयस्वतीः पयस्वत्यो वृष्टिलक्षणेनोदकेन सारवत्यो भवन्ति । मामकं मदीयं वचः वचनं वृष्टिप्रार्थनवचनं पयस्वत् सारवत् भवति । किं बहुना । यत् इत् किंचित् अपाम् उदकानां पयः क्षीरवत् सारभूतं[2] भवति[2] तत्सर्वं पयस्वत् सारवदेव । तेन उदकसारेण सह मा मां शुन्धत यूयं शोधयत । 'आपो अद्यान्वचारिषं रसेन समगस्महि' (ऋ. सं. १. २३. २३) इति निगमान्तरम् ॥ ॥ २५ ॥

'परं मृत्यो' इति चतुर्दशर्चं द्वितीयं सूक्तं यमपुत्रस्य संकुसुकस्यार्षम् । एकादशी प्रस्तारपङ्क्तिः । आद्यौ जागतौ ततो द्वौ गायत्रौ । 'प्रस्तारपङ्क्तिः पुरतः' (पि. सू. ३. ४१) इति । त्रयोदशी जगती चतुर्दश्यनुष्टुप् । शिष्टास्त्रिष्टुभः । तत्राद्याश्चतस्रो मृत्युदेवत्याः । पञ्चमी धातृदेवताका । षष्ठी त्वष्टृदेवत्या । सप्तम्याद्याः शिष्टाः पितृमेधाभिधायिन्यः । अतस्तद्देवताकाः । अथवा लिङ्गोक्तदेवताः प्राजापत्या वा । तथा चानुक्रान्तं—'परं मृत्यो संकुसुको यामायनो मृत्युदेवताः परा धात्री परा त्वाष्ट्री पराः पितृमेधा एकादशी प्रस्तारपङ्क्तिर्जगत्युपान्त्यान्त्यानुष्टुप् प्राजापत्या वा लिङ्गोक्ता' इति ॥

१. त१.५.६.७-भ१.२.४–'अपि वा' नास्ति; त२–वा; त३.४–अपि च; स६–अथवा ।
२. ग-त-भ–सारभूतो भवति ।

परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात्।
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान्॥ १॥

परम्। मृत्यो इति। अनु। परा। इहि। पन्थाम्। यः। ते। स्वः। इतरः। देवऽयानात्।
चक्षुष्मते। शृण्वते। ते। ब्रवीमि। मा। नः। प्रऽजाम्। रिरिषः। मा। उत। वीरान्॥१॥

हे मृत्यो सर्वेषां मारकैतन्नामक देव परम् अन्यं पन्थां पन्थानम् अनु आनुपूर्व्येण परेहि पराङ्मुखो गच्छ। यजमानादिति शेषः। कोऽसौ पन्थाः। यः ते तव स्वः स्वभूतः देवयानात्। देवा अनेन मार्गेण गच्छन्तीति देवयानो देवमार्गः। तस्मात् इतरः यः पन्थाः तं प्रगच्छ। न केवलमत्र परागच्छ अपि तु चक्षुष्मते दर्शनवते शृण्वते सर्वम्। अप्रतिहतसर्वेन्द्रियविज्ञानायेत्यर्थः। ते तुभ्यं ब्रवीमि कथयामि। नः अस्माकं प्रजां दुहितृदौहित्रात्मिकां मा रिरिषः मा हिंसीः। उत अपि च वीरान् पुत्रपौत्रादीन् मा हिंसीः। तत्परागमनेन रक्षेत्यर्थः॥

मृत्योः पदं योपयन्तो यदैत द्राघीय आयुः प्रतरं दधानाः।
आप्यायमानाः प्रजया धनेन शुद्धाः पूता भवत यज्ञियासः॥ २॥

मृत्योः। पदम्। योपयन्तः। यत्। ऐत। द्राघीयः। आयुः। प्रऽतरम्। दधानाः।
आऽप्यायमानाः। प्रऽजया। धनेन। शुद्धाः। पूताः। भवत। यज्ञियासः॥ २॥

हे मृतस्य ज्ञातयः मृत्योः पराङ्मुखाः तस्य पदम्। पद्यतेऽस्मिन्निति पदं पितृयाणः। तं योपयन्तः विमोहयन्तः परिवर्जयन्तः यत् यस्मात् ऐत देवयानीयपथा गतवन्तः तस्मात् द्राघीयः दीर्घतरम् आयुः जीवनं प्रतरं प्रकृष्टतरमत्यर्थं दधानाः धारयन्तो भवथ। किंच हे यज्ञियासः यज्ञार्हा यज्ञसंपादिनो यजमानाः प्रजया पुत्रपौत्रादिकया धनेन गवाश्वादिकेन च आप्यायमानाः वर्धमानाः[1] सन्तः शुद्धाः जन्मान्तरसंचितदुरितक्षयात् शुद्धा भवत। पूताः वर्तमानजन्मोपचितदुरितक्षयाच्च पूता भवत॥

पितृमेधिके कर्मणि अमात्याः 'इमे जीवा वि मृतैः' इति सव्यावृतो व्रजन्ति। सूत्रितं च— 'इमे जीवा वि मृतैरिति सव्यावृतो व्रजन्ति' (आश्व. गृ. ४. ४. ५) इति॥

इमे जीवा वि मृतैराववृत्रन्नभूद्भद्रा देवहूतिर्नो अद्य।
प्राञ्चो अगाम नृतये हसाय द्राघीय आयुः प्रतरं दधानाः॥ ३॥

इमे। जीवाः। वि। मृतैः। आ। अववृत्रन्। अभूत्। भद्रा। देवऽहूतिः। नः। अद्य।
प्राञ्चः। अगाम। नृतये। हसाय। द्राघीयः। आयुः। प्रऽतरम्। दधानाः॥ ३॥

इमे जीवाः जीवन्तः पुरुषाः मृतैः पित्रादिभिः। सेन्य इत्यर्थः। वि आ अववृत्रन् व्यावृत्ता भवन्तु। एते न म्रियन्तामिति भावः। किंच अद्य अस्मिन् दिने नः अस्माकमशौचे विसृष्टे देवहूतिः देवानामाह्वानं यत्र स देवहूतिः पितृमेधाख्यो यज्ञः भद्रा कल्याणः अभूत्

1. म-भ-प्रवर्तमानाः; त-शु-वर्तमानाः; उद्गीथ-प्रवर्धमानाः।

भवतु । तत ऊर्ध्वं वयं प्राञ्चः प्राङ्मुखाः सन्तः अगाम[1] गच्छेम । प्रव्रजाम इति भावः । नृतये नर्तनाय कर्मणि गात्रविक्षेपाय । स्वकर्मानुष्ठानायेति भावः । हसाय हसनाय पुत्रादिभिः सह क्रीडनाय । कीदृशा वयम् । द्राघीयः आयुः प्रतरं दधानाः ॥

इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो अर्थमेतम् ।
शतं जीवन्तु शरदः पुरूचीरन्तर्मृत्युं दधतां पर्वतेन ॥ ४ ॥

इमम् । जीवेभ्यः । परिऽधिम् । दधामि । मा । एषाम् । नु । गात् । अपरः । अर्थम् । एतम् ।
शतम् । जीवन्तु । शरदः । पुरूचीः । अन्तः । मृत्युम् । दधताम् । पर्वतेन ॥ ४ ॥

अनया जीवरक्षार्थं पाषाणं परिधिरूपेण स्थापयन्ति । जीवेभ्यः जीवद्भ्यः पुत्रपौत्रादिभ्यस्तेषां रक्षणार्थमेवं परिधिं मृत्योः परिधानभूतं पाषाणं दधामि निदधामि[2] । ततः एषां जीवतां मध्ये अपरः अन्यः एतम् इमम् अर्थम् । अर्तेरिदं रूपम् । गन्तव्यं मरणाख्यं मार्गं नु क्षिप्रं मा गात् मा गच्छतु । एतदर्थं परिधिं स्थापयामीति संबन्धः । किंच पुरूचीः बहुक्षमा बहुगमनाः शतं शरदः शतसंख्याकान् वर्षान् जीवन्तु स्वस्वप्राणान् धारयन्तु । तथा पर्वतेन शिलोच्चयेन मृत्युं सर्वेषां मारकमेतन्नामकम् अन्तः दधताम् अन्तर्हितं कुर्वन्तु । यथा नागच्छति[3] तथा कुर्वतामित्यर्थः ॥

यथाहान्यनुपूर्वं भवन्ति यथ ऋतव ऋतुभिर्यन्ति साधु ।
यथा न पूर्वमपरो जहात्येवा धातरायूंषि कल्पयैषाम् ॥ ५ ॥

यथा । अहानि । अनुऽपूर्वम् । भवन्ति । यथा । ऋतवः । ऋतुऽभिः । यन्ति । साधु ।
यथा । न । पूर्वम् । अपरः । जहाति । एव । धातः । आयूंषि । कल्पय । एषाम् ॥ ५ ॥

यथा येन प्रकारेण अहानि अहोरात्रात्मकानि दिनानि अनुपूर्वं पूर्वंपूर्वमनुक्रमेण भवन्ति परिवर्तन्ते । यथा च ऋतवः वसन्तादयः ऋतुभिः सह साधु शोभनमविपर्यासेन यन्ति गच्छन्ति । यथा च पूर्वं पूर्वकालीनं पितरम् अपरः अर्वाक्कालीनः पुत्रः न जहाति न परित्यजति पूर्वंमरणेन । एव एवं[4] तेनैवोक्तप्रकारेण हे धातः सर्वेषां धारयितरेतन्नामक देव एषाम् अस्मत्कुलीनानां जीवानाम् आयूंषि जीवनानि कल्पय समर्थय । कुर्वित्यर्थः ॥ ॥ २६ ॥

आ रोहतायुर्जरसं वृणाना अनुपूर्वं यतमाना यति ष्ठ ।
इह त्वष्टा सुजनिमा सजोषा दीर्घमायुः करति जीवसे वः ॥ ६ ॥

आ । रोहत । आयुः । जरसम् । वृणानाः । अनुऽपूर्वम् । यतमानाः । यति । स्थ ।
इह । त्वष्टा । सुऽजनिमा । सऽजोषाः । दीर्घम् । आयुः । करति । जीवसे । वः ॥ ६ ॥

हे मृतस्य स्वजनाः पुत्रपौत्रादयः जरसं जरां वृणानाः संभजमाना यूयम् आयुः जीवनम् आ रोहत अधितिष्ठत । अनुपूर्वम् आनुपूर्व्येण । अव्ययीभावः । पूर्वो ज्येष्ठः । ज्येष्ठानुपूर्व्या यतमानाः प्रयत्नं कुर्वन्तो यूयं[5] यति स्थ यत्संख्याका भवथ । यच्छब्दाच्छान्दसो डतिः ।

१. त१.२.५–जनाम; त३.४-भ–जगाम, मु–अयाम । २. त१.४-भ६.७–'निदधामि' नास्ति; त२.५–दधामि; त७–स्थापयामि । ३. भ-त१.३.४.५.६-भ–गच्छति । ४. त–एवं एवमु; भ१.४–एवं एवमु । ५. त-भ–वयं ।

सुजनिमा शोभनजननः त्वष्टा एतन्नामको देवः सजोषाः अस्माभिः संगतः सन् इह अस्मिन् कर्मणि प्रवृत्तानां वः युष्माकं जीवसे जीवनाय दीर्घं प्रभूतम् आयुः करति करोतु ॥

इमा नारीरविधवाः सुपत्नीराञ्जनेन सर्पिषा सं विशन्तु ।
अनश्रवोऽनमीवाः सुरत्ना आ रोहन्तु जनयो योनिमग्रे ॥ ७ ॥

इमाः । नारीः । अविधवाः । सुऽपत्नीः । आऽअञ्जनेन । सर्पिषा । सम् । विशन्तु ।
अनश्रवः । अनमीवाः । सुऽरत्नाः । आ । रोहन्तु । जनयः । योनिम् । अग्रे ॥ ७ ॥

अविधवाः । धवः पतिः । अविगतपतिकाः । जीवद्भर्तृका इत्यर्थः । सुपत्नीः शोभनपतिकाः इमाः नारीः नार्यः आञ्जनेन सर्वतोऽञ्जनसाधनेन सर्पिषा घृतेन अक्तनेत्राः सत्यः सं विशन्तु स्वगृहान् प्रविशन्तु । तथा अनश्रवः अश्रुवर्जिता अरुदत्यः अनमीवाः । अमीवा रोगः । तद्वर्जिताः । मानसदुःखवर्जिता इत्यर्थः । सुरत्नाः शोभनधनसहिताः जनयः । जनयन्त्यपत्यमिति जनयो भार्याः । ताः अग्रे सर्वेषां प्रथमत एव योनिं गृहम् आ रोहन्तु आगच्छन्तु ॥

देवरादिकः प्रेतपत्नीम् ‘ उदीर्ष्व नारि ’ इत्यनया भर्तृसकाशादुत्थापयेत् । सूत्रितं च— ‘ तामुत्थापयेद्देवरः[1] पतिस्थानीयोऽन्तेवासी जरद्दासो वोदीर्ष्व नार्यभि जीवलोकम् ’ ( आश्व. गृ. ४. २. १८ ) इति[1] ॥

उदीर्ष्व नार्यभि जीवलोकं गतासुमेतमुप शेष एहि ।
हस्तग्राभस्य दिधिषोस्तवेदं पत्युर्जनित्वमभि सं बभूथ ॥ ८ ॥

उत् । ईर्ष्व । नारि । अभि । जीवऽलोकम् । गतऽअसुम् । एतम् । उप । शेषे । आ । इहि ।
हस्तऽग्राभस्य । दिधिषोः । तव । इदम् । पत्युः । जनिऽत्वम् । अभि । सम् । बभूथ ॥ ८ ॥

हे नारि मृतस्य पत्नि जीवलोकं जीवानां पुत्रपौत्रादीनां[2] लोकं स्थानं गृहमभिलक्ष्य उदीर्ष्व अस्मात् स्थानादुत्तिष्ठ । ‘ ईर गतौ ’ आदादिकः । गतासुम् अपक्रान्तप्राणम्[3] एतं पतिम् उप शेषे तस्य समीपे स्वपिषि । तस्मात्त्वम् एहि आगच्छ यस्मात्त्वं हस्तग्राभस्य पाणिग्राहं कुर्वतः दिधिषोः गर्भस्य निधातुः तव अस्य पत्युः संबन्धादागतम् इदं जनित्वं जायात्वमभिलक्ष्य सं बभूथ संभूतासि अनुमरणनिश्चयमकार्षीः तस्मादागच्छ ॥

क्षत्रियस्य ‘ धनुर्हस्तात् ’ इत्यनया धनुः प्रहरेत् । सूत्रितं च—‘ धनुर्हस्तादाददानो[4] मृतस्येति धनुः ’ ( आश्व. गृ. ४. २. २० ) इति[4] ॥

धनुर्हस्तादाददानो मृतस्यास्मे क्षत्राय वर्चसे बलाय ।
अत्रैव त्वमिह वयं सुवीरा विश्वाः स्पृधो अभिमातीर्जयेम ॥ ९ ॥

धनुः । हस्तात् । आऽददानः । मृतस्य । अस्मे इति । क्षत्राय । वर्चसे । बलाय ।
अत्र । एव । त्वम् । इह । वयम् । सुऽवीराः । विश्वाः । स्पृधः । अभिऽमातीः । जयेम ॥ ९ ॥

१. ग-त-भ२.४.७—‘ तामुत्थापयेद्देवर. .इति ’ नास्ति; भ६—उदीर्ष्व नार्यभि जीवलोकमिति कर्ता सूक्ते जपेत् । २. छ—‘ पुत्रपौत्रादीनां ’ नास्ति । ३. ट-भ—अपक्रान्त°; उद्वीष—उत्क्रान्त° । ४. ग-त-भ१.२.४.५.७—‘ धनुर्हस्ता°...इति ’ नास्ति ।

मृतस्य क्षत्रियस्य हस्तात् धनुः आददानः । किमर्थम् । अस्मे अस्माकं क्षत्राय प्रजापालनसमर्थाय बलाय वर्चसे तेजसे बलाय सेनालक्षणाय च धनुरादददानोऽहं गच्छामीति शेषः । किमिति । त्वम् अत्रैव अस्मिन् स्थान एव भव वयं च इह अस्मिँल्लोके सुवीराः सुपुत्रयुक्ता भवन्तः विश्वाः सर्वान् अभिमातीः अभिमन्यमानान् स्पृधः संघर्षयितॄन् बाधकान् शत्रून् जयेम महेमहि ॥

दीक्षितमरणे ' उप सर्प मातरम् ' इत्याद्याश्चतस्रः शंसनीयाः । सूत्रितं च – ' उप सर्प मातरं भूमिमेतामिति चतस्रः सोम एकेभ्यः ' ( आश्व. श्रौ. ६. १० ) इति । ' उप सर्प ' इत्यनया संचितान्यस्थीनि गर्ते निदध्युः ( आश्व. गृ. ४. ५. ५ ) ॥

उप॑ सर्प मा॒तरं॒ भूमि॑मे॒तामु॑रु॒व्यच॑सं पृथि॒वीं सु॒शेवा॑म् ।
ऊर्ण॑म्रदा युव॒तिर्दक्षि॑णावत ए॒षा त्वा॑ पातु॒ निर्ऋ॑तेरु॒पस्था॑त् ॥ १० ॥

उप॑ । स॒र्प॒ । मा॒तर॑म् । भूमि॑म् । ए॒ताम् । उ॒रु॒ऽव्यच॑सम् । पृ॒थि॒वीम् । सु॒ऽशेवा॑म् ।
ऊर्ण॑ऽम्रदाः । यु॒व॒तिः । दक्षि॑णाऽवते । ए॒षा । त्वा॒ । पा॒तु॒ । निः॒ऽऋ॑तेः । उ॒पऽस्था॑त् ॥ १० ॥

मातरं मातृभूतां भूमिम् अस्माभिर्भूमौ निधीयमानस्त्वम् उप सर्प उपगच्छ । अनुप्रविशेत्यर्थः । कीदृशीम् । उरुव्यचसं बहुव्याप्तिकां पृथिवीं विस्तीर्णां सुशेवां सुसुखाम् । सर्वेषां सुखदात्रीमित्यर्थः[1] । तामुपगच्छ । युवतिः यौवनान्विता स्त्रीरूपेयं भूमिः दक्षिणावते ऋत्विग्भ्यो देयत्वेन धनवते यजमानाय ऊर्णम्रदाः । ऊर्णेव ऊर्णास्तुक इव मृद्वी भवति । सुकुमारा भवसि । न बाधयित्रीत्यर्थः । सा एषा पृथिवी निर्ऋतेः मृत्युदेवतायाः उपस्थात् समीपस्थानात् त्वा त्वामस्थिरूपं यजमानं पातु रक्षतु ॥ ॥ २७ ॥

' उच्छ्वञ्चस्व ' इत्येतया पांसूनवकिरेत् । सूत्र्यते हि—' उत्तरया[3] पांसूनवकिरेत् ' ( आश्व. गृ. ४. ५. ६ ) इति[3] ॥

उच्छ्व॑ञ्चस्व पृथिवि॒ मा नि बा॑धथाः सूपाय॒नास्मै॑ भव सूपवञ्च॒ना ।
मा॒ता पु॒त्रं यथा॑ सि॒चाभ्ये॑नं भूम ऊर्णुहि ॥ ११ ॥

उत् । श्व॒ञ्च॒स्व॒ । पृ॒थि॒वि॒ । मा । नि । बा॒ध॒थाः॒ । सु॒ऽउ॒पा॒य॒ना । अ॒स्मै॒ । भ॒व॒ । सु॒ऽउ॒प॒व॒ञ्च॒ना ।
मा॒ता । पु॒त्रम् । यथा॑ । सि॒चा । अ॒भि । ए॒न॒म् । भू॒मे॒ । ऊ॒र्णु॒हि॒ ॥ ११ ॥

हे पृथिवि उच्छ्वञ्चस्व । ऊर्ध्वंगतोच्छ्वाससमेतं कुरु । अधस्तान्मा कृथा इत्यर्थः । किंच मा नि बाधथाः मा संपीडय । तथा अस्मै यजमानार्थं सूपायना शोभनोपगमना सूपचारिका भवेत्यर्थः । सूपवञ्चना । उपवञ्चनं प्रलम्भनम् । शोभनप्रलम्भा सुप्रतिष्ठा भव । अपि च माता पुत्रम् आत्मीयं बालकं सिचा वस्त्रान्तेन यथा आच्छादयति तद्वत् भूमि एनम् अस्थिरूपं यजमानं त्वम् अभि ऊर्णुहि आभिमुख्येनाच्छादय ॥

उ॒च्छ्वञ्च॑माना पृथि॒वी सु ति॑ष्ठतु स॒हस्रं॒ मित॒ उप॒ हि श्रय॑न्ताम् ।
ते गृ॒हासो॑ घृत॒श्चुतो॑ भवन्तु वि॒श्वाहा॑स्मै शर॒णाः स॒न्त्वत्र॑ ॥ १२ ॥

---

१. ग–एतां भूमिं । २. त–सुखदायिनीमित्यर्थः । ३. ग-त-अ१.२.४.५.६–' उत्तरया... इति ' नास्ति ।

उत्ऽश्वञ्चमाना । पृथिवी । सु । तिष्ठतु । सहस्रम् । मितः । उप । हि । श्रयन्ताम् ।
ते । गृहासः । घृतऽश्चुतः । भवन्तु । विश्वाहा । अस्मै । शरणाः । सन्तु । अत्र ॥ १२ ॥

पांसुभिः प्रच्छाद्यैनां पठन्ति । उच्छ्वञ्चमाना अस्थिकुम्भमवष्टभ्योर्ध्वं गच्छन्ती पृथिवी सु तिष्ठतु प्रतिष्ठिता भवतु । किंच सहस्रं सहस्रसंख्याकाः मितः प्रक्षिप्ताः ॥ मिनोतेरौणादिके कर्मणि क्विपि तुगागमः । ततो जस् । बहुला । सहस्रम् । तृतीयार्थे प्रथमा । मित इति निष्ठान्तं रूपम् । व्यत्ययेन बहुवचनस्यैकवचनम् । स्वरो कृदुत्तरपदप्रकृतिस्वरत्वः ॥ सहस्रेण संमिता बहुसंख्याकाः । पार्थिवाः पांसवः उप श्रयन्ताम् । एनमुपसेवन्ताम् । संपरिग्रहार्थे तिष्ठन्त्वित्यर्थः । हिरवधारणे । तथा ते पांसवोऽस्मै गृहासः गृहा भवन्तः घृतश्चुतः घृतस्योदकस्य सर्पिषो वा क्षारयितारः भवन्तु । अत्र अस्मिँल्लोके विश्वाहा सर्वेष्वहःसु सर्वदा अस्मै अस्य शरणाः सन्तु आश्रयभूता भवन्तु ॥

' उत्ते स्तभ्नामि ' इति कपालेनास्थीन्यपिदध्यात् । सूत्रितं च— ' उत्ते[1] स्तभ्नामीति कपालेनापिधाय ' ( आश्व. गृ. ४. ५. ८ ) इति[1] ॥

**उत्ते स्तभ्नामि पृथिवीं त्वत्परीमं लोगं निदधन्मो अहं रिषम् ।**
**एतां स्थूणां पितरो धारयन्तु तेऽत्रा यमः सादना ते मिनोतु ॥ १३ ॥**

उत् । ते । स्तभ्नामि । पृथिवीम् । त्वत् । परि । इमम् । लोगम् । निऽदधत् । मो इति । अहम् । रिषम् ।
एताम् । स्थूणाम् । पितरः । धारयन्तु । ते । अत्र । यमः । सदना । ते । मिनोतु ॥ १३ ॥

हे अस्थिकुम्भ त्वत्परि । परिणाऽध्ययोगे पञ्चमी । तवोपरि ते त्वदीयेन कपालेन पृथिवीम् उत् स्तभ्नामि प्रतिबध्नामि । यथा पृथिवी तवोपरि मा गच्छति तथापिदधामीत्यर्थः । इमं लोगं[2] कपाललक्षणं लोष्टं निदधत् उपरि[3] स्थापयन् अहं मो रिषं मा हिंसिषम् । किंच एतां मया निहितां स्थूणां ते त्वदीयां पृथिव्याः[4] धारयित्रीं कपाललक्षणां पितरः धारयन्तु निश्चलां कुर्वन्तु । ततः ते त्वदीये अस्मिन् स्थाने यमः पितृपतिः सदनानि स्थानानि मिनोतु परिच्छिनत्तु । करोत्वित्यर्थः ॥

**प्रतीचीने मामहनीष्वाः पर्णमिवा दधुः ।**
**प्रतीचीं जग्रभा वाचमश्वं रशनया यथा ॥ १४ ॥**

प्रतीचीने । माम् । अहनि । इष्वाः । पर्णम्ऽइव । आ । दधुः ।
प्रतीचीम् । जग्रभ । वाचम् । अश्वम् । रशनया । यथा ॥ १४ ॥* ॥ २८ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये सप्तमाष्टके षष्ठोऽध्यायः ॥

---

१. त-भ१.४–' उत्ते ..इति ' नास्ति । २. त-भ६–लोष्टं । ३. ट१.२.६–उपस्थे उपरि । ४. त-भ१.४–पृथिव्याः । * त७-मु–अनया प्रजापतिः प्रार्थ्यते । हे प्रजापते प्रतीचीने प्रतिपूज्ये अहनि तदुपलक्षिते संवत्सरात्मके मां संकुसुकमृषिं आ दधुः निहितवन्तः सर्वे देवाः । किमिव । इष्वाः बाणस्य पर्णमिव पक्षमिव । पर्णं यथा बाणस्य मूले स्थापयन्ति तद्वत्कालमूले त्वयि मां स्थापितवन्तः । अतो मदीयां प्रतीचीं प्रतिपूज्यां ( मु–पूज्यां ) वाचं स्तुतिरूपां जग्रभ गृहाण । कथमित्युच्यते । अश्वं आशुगामिनं हयं रशनया रज्ज्वा यथा गृह्णन्ति तद्वत्कर्माभ्यां मत्कृतां स्तुतिं गृहाणेत्यर्थः ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
अष्टके सप्तमे षष्ठं व्याख्याय श्रुतिकोविदः ।
सायणार्यस्ततोऽध्यायं सप्तमं व्याचिकीर्षति ॥

अथ द्वादशानुवाकात्मकस्य दशममण्डलस्य द्वितीयेऽनुवाके त्रयोदश सूक्तानि । तत्र 'नि वर्तध्वम्' इत्यष्टर्चं तृतीयं सूक्तम् । अस्य यमपुत्रो मथिताख्य ऋषिर्वरुणपुत्रो भृगुर्वाथवा भार्गवश्च्यवनः । षष्ठी गायत्री शिष्टा अनुष्टुभः । इदमब्देवताकं गोदेवताकं वा । 'अग्नीषोमा पुनर्वसू' इत्यर्धर्चोऽग्नीषोमदेवताकः । तथा चानुक्रान्तं—'नि वर्तध्वमष्टौ मथितो भृगुर्वा वारुणिर्भार्गवश्च्यवनो वाप्यं गव्यं वानुष्टुभमग्नीषोमीयो द्वितीयोऽर्धर्चः षष्ठी गायत्री' इति । गतो विनियोगः ॥

**नि वर्तध्वं मानु गातास्मान्त्सिषक्त रेवतीः ।**
**अग्नीषोमा पुनर्वसू अस्मे धारयतं रयिम् ॥ १ ॥**

नि । वर्तध्वम् । मा । अनु । गात । अस्मान् । सिसक्त । रेवतीः ।
अग्नीषोमा । पुनर्वसू इति पुनःऽवसू । अस्मे इति । धारयतम् । रयिम् ॥ १ ॥

हे गावो हे आपो वा यूयं नि वर्तध्वम् अस्मान् प्रत्यागच्छत । मानु गात अस्मद्व्यतिरिक्तं यजमानं मा गच्छत । आगत्य च हे रेवतीः रेवत्यो धनवत्यो यूयम् अस्मान् सिषक्त सेवध्वम् । अस्मद्गृहसमीपे हननस्नानपानादिद्वारेण सेवध्वमित्यर्थः । हे पुनर्वसू पुनःपुनर्वसयितारौ स्तोतॄणां वसूनामाच्छादयितारौ हे अग्नीषोमा अग्नीषोमौ एतन्नामकौ देवौ युवाम् अस्मे अस्मासु रयिं गवादिलक्षणं धनं धारयतं स्थापयतम् ॥

**पुनरेना नि वर्तय पुनरेना न्या कुरु ।**
**इन्द्र एणा नि यच्छत्वग्निरेना उपाजतु ॥ २ ॥**

पुनः । एनाः । नि । वर्तय । पुनः । एनाः । नि । आ । कुरु ।
इन्द्रः । एनाः । नि । यच्छतु । अग्निः । एनाः । उपऽआजतु ॥ २ ॥

अत्र मन्त्रद्रष्टा स्वात्मानं प्रति ब्रूते । हे मदीयात्मन् त्वम् एनाः एताः अन्यतोऽभिगन्त्रीर्गा अपो वा पुनः नि वर्तय पुनःपुनरस्मदभिमुखीकुरु । तदनन्तरम् एनाः एताः पुनः भूयो भूयो न्या कुरु नियता आत्मायत्ताः कुरु । किंच इन्द्रः अपि तव सहायभूतः सन् एनाः एताः नि यच्छतु स्वायत्ताः करोतु । अग्निः च एनाः एताः गा अपो वा उपाजतु उपगमयतु उपक्षिपतु वा । उपक्षेप्याः करोत्वित्यर्थः ॥

**पुनरेता नि वर्तन्तामस्मिन्पुष्यन्तु गोपतौ ।**
**इहैवाग्ने नि धारयेह तिष्ठतु या रयिः ॥ ३ ॥**

पुनः । एताः । नि । वर्तन्ताम् । अस्मिन् । पुष्यन्तु । गोऽपतौ ।

इह । एव । अग्ने । नि । धारय । इह । तिष्ठतु । या । रयिः ॥ ३ ॥

एता एता ईदृश्यो गाव आपो वा पुनः नि वर्तन्तां भूयो भूयो मां प्रत्यागच्छन्तु । आगत्य च गोपतौ सास्नादिमतीनां धेनूनां वृष्टिलक्षणानामपां पालके[1] अस्मिन् ईदृशे मयि पुष्यन्तु आत्माधत्तत्वेन स्थित्वा पुष्टा भवन्तु । पुष्टाः सतीस्ता हे अग्ने त्वम् इहैव अस्मिन्नेव मयि नि धारय नियमेन स्थापय । या रयिः यदपि व्रीह्यादिकं धनमस्ति तदपि धनं गोसहितम् इह अस्मिन्नेव गोपतौ मयि तिष्ठतु निवसतु ॥

**यन्नियानं न्ययनं संज्ञानं यत्परायणम् ।**
**आवर्तनं निवर्तनं यो गोपा अपि तं हुवे ॥ ४ ॥**

यत् । निऽयानम् । निऽअयनम् । सम्ऽज्ञानम् । यत् । पराऽअयनम् ।

आऽवर्तनम् । निऽवर्तनम् । यः । गोपाः । अपि । तम् । हुवे ॥ ४ ॥

नियानम् । अधिकरणे ल्युट् । नियमेन यान्त्यागच्छन्ति गावोऽत्रेति नियानं गोष्ठाख्यं स्थानम् । यत् अस्तीति शेषः । यच्छब्दयोगात्तच्छब्दोऽध्याहर्तव्यः । हुव इति क्रियापदं सर्वत्रानुषज्यते । तत्स्थानं हुवे आह्वयामि । आह्वानमभिमुखीकरणं तेन चात्र तत्पूर्विका प्रार्थना लक्ष्यते । गोसहितं गोष्ठं प्रार्थय इत्यर्थः । न्ययनम् । भावे ल्युट् । नियमेन गृहं प्रति प्राप्तिलक्षणं गमनं यदस्ति तदपि प्रार्थये[2] । निवर्तनं वने चरित्वा गृहं प्रति यदागमनमस्ति तदपि प्रार्थये । यः अपि गोपाः गवां पालकोऽस्ति तम् अपि हुवे प्रार्थये । सर्वगुणोपेता गाः प्रार्थय इत्यर्थः ॥

**य उदानड् व्ययनं य उदानट् परायणम् ।**
**आवर्तनं निवर्तनमपि गोपा नि वर्तताम् ॥ ५ ॥**

यः । उत्ऽआनट् । विऽअयनम् । यः । उत्ऽआनट् । पराऽअयनम् ।

आऽवर्तनम् । निऽवर्तनम् । अपि । गोपाः । नि । वर्तताम् ॥ ५ ॥

यः गोपाः गोपालः व्ययनं नष्टानां गवामन्वेषणार्थं विविधं गमनम् उदानट् व्याप्नोति अनुभवति । यः परायणं परागमनम् उदानट् व्याप्नोति । वनं प्रति गवां चरणाय गमनमित्यर्थः । यश्च आवर्तनं वनचारिणीभिर्गोभिः सह प्रवर्तनमनुभवति । यः अपि गोपाः निवर्तनं गोभिः सह वनाद्गृहं प्रति निर्गमनमनुभवति । सोऽपि गोपालः नि वर्ततां गोभिः सह वनाद्गृहं प्रति क्षेमेणागच्छतु ॥

**आ निवर्त नि वर्तय पुनर्न इन्द्र गा देहि । जीवाभिर्भुनजामहै ॥ ६ ॥**

आ । निऽवर्त । नि । वर्तय । पुनः । नः । इन्द्र । गाः । देहि । जीवाभिः । भुनजामहै ॥ ६ ॥

१. त१.२.३.७-म-मु- च पालके । २. म–प्रार्थये । यत्र सेवन्ते इतरेतरं जानतस्तत् संज्ञानं । अथ ततश्चरणार्थं पराचीना यत्र यंति तत्परायणं । चरित्वाथ आवर्तते तदावर्तनं; मु-प्रार्थये । संज्ञानं गोभिः सह ऐकमत्यं यदस्ति तदपि प्रार्थये । परायणं परागमनं वनं प्रति गवां चरणाय गमनं यदस्ति तदपि प्रार्थये । आवर्तनं वनचारिणीभिर्गोभिः सह प्रवर्तनं यदस्ति तदपि प्रार्थये ।

हे इन्द्र त्वम् आ निवर्त आनिवर्तस्व अस्मदभिमुखो भव। ततोऽन्यतो गच्छन्तीर्गाः नि वर्तय अस्मदभिमुखीः कुरु। एवं कृत्वा च हे इन्द्र त्वं पुनः पश्चात् नः अस्मभ्यं गाः देहि प्रयच्छ। त्वया दत्ताभिः जीवाभिः चिरं जीवन्तीभिः सर्वस्य जीवयित्रीभिर्वा गोभिः भुनजामहै वयं भुञ्जीमहि। यद्वा। भुजिरत्रान्तर्भावितण्यर्थः। देवपितॄन्[1] संभोजयेमहि॥

परि॑ वो वि॒श्वतो॑ दध ऊ॒र्जा घृ॒तेन॒ पय॑सा।

ये दे॒वाः के च॑ य॒ज्ञिया॒स्ते र॒य्या सं सृ॑जन्तु नः॥ ७॥

परि॑। व॒। वि॒श्वतः॑। द॒धे॒। ऊ॒र्जा। घृ॒तेन॑। पय॑सा।

ये। दे॒वाः। के। च॒। य॒ज्ञियाः॑। ते। र॒य्या। सम्। सृ॒ज॒न्तु॒। नः॒॥ ७॥

हे देवाः विश्वतः सर्वतः स्थितान् वः युष्मान् ऊर्जा गोसंबन्धिना हविर्लक्षणेनान्नेन घृतेन आज्येन[2] पयसा क्षीरेण च परि दधे संधारयामि। युष्मभ्यं हविर्द्वारेण प्रयच्छामि। न केवलमात्मानं पुष्णामीत्यर्थः। एतज्ज्ञात्वा ये के च देवाः यज्ञियाः यज्ञार्हाः सन्ति ते देवाः नः अस्मान् रय्या गोलक्षणेन धनेन सं सृजन्तु संयोजयन्तु॥

आ नि॑वर्तन वर्तय॒ नि नि॑वर्तन वर्तय।

भूम्या॒श्चत॑स्रः प्र॒दिश॒स्ताभ्य॑ एना॒ नि व॑र्तय॥ ८॥

आ। नि॒ऽव॒र्त॒न॒। व॒र्त॒य॒। नि। नि॒ऽव॒र्त॒न॒। व॒र्त॒य॒।

भूम्याः॑। चत॑स्रः। प्र॒ऽदिशः॑। ताभ्यः॑। ए॒नाः॒। नि। व॒र्त॒य॒॥ ८॥

मन्त्रद्रष्टर्षिः स्वात्मानं गाश्च संबोध्याह। हे मदीयात्मन् त्वं गाः आ वर्तय। आकारोऽन्येनापि संबध्यते। मदभिमुखीः[3] कुरु। स्तुत्या यज्ञेन च ताः प्रसादोपनमयेत्यर्थः। हे गावः यूयमपि प्रसाद्यमानाः आ निवर्तन आनिवर्तध्वम्। आभिमुख्येनागच्छत। पुनरप्याह। हे मदीयात्मन् त्वं नि वर्तय गोसंचरणस्थानादपगच्छन्तीर्गा इतोऽभिगामिनीः कुरु। यूयमपि हे गावो निवर्त्यमानाः सत्यः निवर्तन निवर्तध्वम्। इदानीं स्वात्मा गावश्चापि प्रति ब्रूयते। हे ऋषे अहं कुतो गा निवर्तयामीति कुतो वयं निवर्तयामहे इत्यात्मना गोभिश्च पृष्टः सन्नाह। भूम्याः पृथिव्याः चतस्रः प्रदिशः चतुःसंख्यायुक्ताः प्रकृष्टा या दिशः सन्ति ताभ्यः दिग्भ्यः एनाः गाः नि वर्तय हे आत्मन् मदभिमुखीः कुरु। हे गावो यूयमपि ताभ्यो दिग्भ्यो निवर्तध्वमिति सामर्थ्याल्लभ्यम्। यद्वा। अग्निदैवतपक्षेऽपि सूक्तार्थो यथा घटते तथा योजना कर्तव्या॥ ॥ १॥

'अग्नम्' इति दशर्चं चतुर्थं सूक्तम्। आद्यैकपदा दशाक्षरा विराट्। 'अग्निमीळे भुजाम्' इत्येषानुष्टुप्। नवमी विराट् दशमी त्रिष्टुप् मध्ये षड् गायत्र्यः। इदमादीनां सप्तसूक्तानामिन्द्रपुत्रः प्रजापतिपुत्रो वा विमद ऋषिर्वसुक्रपुत्रो वसुकृदाख्यो वा। इदमुत्तरं चाग्नेयम्। तथा चानुक्रान्तं— 'सप्तोत्तराण्यैन्द्रो विमदः प्राजापत्यो वा वासुक्रो वसुकृद्वा भद्रं दशाग्नेयं तु गायत्रमाद्यैकपदा पाद एव वा शान्त्यर्थः परानुष्टुबन्त्ये विराट्त्रिष्टुभौ' इति। गतो विनियोगः॥

---

१. ग-त३-भ५.६—देवपितृसंघान्। २. ल-भ-मु—आज्येन च। ३. त१.२.६.७-भ२.६-मदभिमुखी; त४.५-मु—मदभिमुखी; ग-त३-भ१.४.५—मदभिमुखं।

भुद्रं नो॒ अपि॑ वातय॒ मनः॑ ॥ १ ॥

भुद्रं नो॒ अपि॑ वातय॒ मनः॑ ॥ १ ॥

हे अग्ने त्वं नः अस्माकं मनः भद्रं शुभयुक्तम् अपि वातय। अपिरत्र धात्वर्थानुवादी। गमय। त्वत्संबन्धिस्तोत्रकरणे प्रेरयेत्यर्थः ॥

अ॒ग्निमी॑ळे भु॒जां यवि॑ष्ठं शा॒सा मि॒त्रं दु॒र्धरी॑तुम् ।

यस्य॒ धर्म॒न्त्स्व१॒॑रेनीः॑ सप॒र्यन्ति॑ मा॒तुरूधः॑ ॥ २ ॥

अ॒ग्निम् । ई॒ळे॒ । भु॒जाम् । यवि॑ष्ठम् । शा॒सा । मि॒त्रम् । दुः॒ऽधरी॑तुम् ।

यस्य॑ । धर्म॑न् । स्वः॑ । एनीः॑ । स॒पर्य॑न्ति । मा॒तुः । ऊधः॑ ॥ २ ॥

भुजां हविर्भुजां देवानां मध्ये यविष्ठम् अहन्यहन्यग्निहोत्रादिकर्मार्थं जायमानत्वादतिशयेन युवानं शासा अनुशासनेन मित्रम्। यस्मादिदं कर्तव्यमिदं न[1] कर्तव्यमिति[1] सर्वमनुशास्ति तस्मात्सर्वस्य मित्रभूतमित्यर्थः। दुर्धरीतुं दुर्धरणीयं संग्रामे शत्रुभिर्दुर्निवारणीयमेवंभूतम् अग्निम् ईळे स्तौमि। अपि च यस्य अग्नेः धर्मन् धर्मण्यग्निहोत्रादिके कर्मणि स्वः द्युलोकमाश्रित्यं सर्वं देवजातं वा एनीः एन्यः प्रतिगन्त्र्य आहुतयः स्तुतयश्च सपर्यन्ति परिचरन्ति सेवन्ते। यद्वा। स्वः सपर्यन्तीत्यनयोः सामानाधिकरण्यम्। अत्र स्वरित्ययं सर्वशब्दो निपातः। स्वः सर्वे देवाः एनीरागता प्रतिगन्त्रीराहुतीः स्तुतीश्च सपर्यन्ति सेवन्ते। उपजीवन्तीत्यर्थः। तत्र दृष्टान्तः। लुप्तोपममेतत्। मातुः गोः ऊधः क्षीरोपलेहारस्थानं प्रति यथा वत्सा उपजीवन्ति तद्वत्। तमग्निमीळ इति पूर्वेण संबन्धः ॥

यमा॒सा कृ॒पनी॑ळं भा॒साके॑तुं व॒र्धय॑न्ति । भ्राज॑ते॒ श्रेणि॑दन् ॥ ३ ॥

यम् । आ॒सा । कृ॒पऽनी॑ळम् । भा॒साऽके॑तुम् । व॒र्धय॑न्ति । भ्राज॑ते । श्रेणि॑ऽदन् ॥ ३ ॥

स्तोतारो यष्टारश्च आसा स्तुतिहविर्लक्षणेनोपासनेन यम् अग्निं वर्धयन्ति। कीदृशम्। कृपनीळं कर्मस्थानम्। कर्माधारमित्यर्थः। भासाकेतुं ज्वालालक्षणज्ञापकं दीप्तेः कर्तारं वा। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। सोऽग्निः श्रेणिदन् स्तोतृभ्यो यष्टृभ्योऽभीष्टफलसमूहप्रदः शत्रुभ्यो ज्वालापङ्क्तिप्रदो वा एवंभूतः सन् भ्राजते भासते ॥

अ॒र्यो वि॒शां गा॒तुरे॑ति॒ प्र यदान॑ड् दि॒वो अन्ता॑न् । क॒विर॒भ्रं दीद्या॑नः ॥ ४ ॥

अ॒र्यः । वि॒शाम् । गा॒तुः । ए॒ति॒ । प्र । यत् । आन॑ट् । दि॒वः । अन्ता॑न् ।

क॒विः । अ॒भ्रम् । दीद्या॑नः ॥ ४ ॥

विशां यजमानमनुष्याणाम् अर्यः गन्तव्यः गातुः गमयिताग्निः सोऽग्निः दीद्यानः दीप्यमानः यत् यदा एति ऊर्ध्वं गच्छति तदा दिवः द्युलोकस्य अन्तान् पर्यन्तान् कविः मेधावी सोऽग्निः प्र आनट् प्रकर्षेण व्याप्नोति। अभ्रं मेघोपलक्षितमन्तरिक्षं च व्याप्नोति ॥

---

1. ग-अकर्तव्यमिति; ख-कर्तव्यमिति।

जुषद्धव्या मानुषस्योर्ध्वस्तस्थावृभ्वा यज्ञे। मिन्वन्त्सद्म पुर एति ॥ ५ ॥

जुषत्। हव्या। मानुषस्य। ऊर्ध्वः। तस्थौ। ऋभ्वा। यज्ञे। मिन्वन्। सद्म। पुरः। एति ॥५॥

मानुषस्य यजमानस्य यज्ञे यजनीये यागे हव्या हव्यानि हवींषि जुषत् सेवमानोऽग्निः[1] ऋभ्वा उरुभूतो बहुज्वालोपेतः ऊर्ध्वस्तस्थौ उत्तिष्ठति। ऊर्ध्वं ज्वलतीत्यर्थः। अपि चायमग्निः प्राग्वंशादारभ्य सद्म सदनं सौमिकीं वेदिं मिन्वन् परिच्छिन्दन् पुरः पुरस्तादुत्तरवेदिशालामुखीयात् प्रणीयमानः सन् एति गच्छति ॥

स हि क्षेमो हविर्यज्ञः श्रुष्टीदस्य गातुरेति। अग्निं देवा वाशीमन्तम् ॥ ६ ॥

सः। हि। क्षेमः। हविः। यज्ञः। श्रुष्टी। इत्। अस्य। गातुः। एति।
अग्निम्। देवाः। वाशीऽमन्तम् ॥ ६ ॥

स उक्तगुणविशिष्टोऽग्निः। हि इत्येतदवधारणे। सः एवाग्निः क्षेमः कुशलहेतुः। सर्वस्य परिपालनहेतुरित्यर्थः। हविः पुरोडाशादिकं च स एव हविषस्तन्निमित्तत्वात्। यज्ञः यागोऽपि स एव तस्यापि तद्धेतुत्वात्। किंच श्रुष्टी क्षिप्रमेव अस्य अग्नेः गातुः गमनशीलोऽधिष्ठात्रात्मा एति देवानामाह्वानार्थं गच्छति। गत्वा च प्रत्यागच्छन्तं वाशीमन्तं स्तुतिलक्षणया वाचोपेतम् अग्निं प्रति देवाः अपि गच्छन्तीति[2] शेषः ॥ ॥ २ ॥

यज्ञासाहं दुव इषेऽग्निं पूर्वस्य शेवस्य। अद्रेः सूनुमायुमाहुः ॥ ७ ॥

यज्ञऽसहम्। दुवः। इषे। अग्निम्। पूर्वस्य। शेवस्य। अद्रेः। सूनुम्। आयुम्। आहुः ॥७॥

अत्रैकवाक्यतायै यच्छब्दतच्छब्दावध्याहार्यौ। अपरार्धर्चः पूर्वं व्याख्येयः। आयुं देवानामाह्वानार्थं सूक्तेन गन्तारं यम् अग्निम् अद्रेः सूनुम् अश्मनः पुत्रम् आहुः 'त्वमद्भ्यस्त्वमश्मनस्परि' (ऋ. सं. २. १. १) इत्येवमादयो मन्त्रा वदन्ति। यज्ञसाहं यागस्य सोढारम्। धारयितारमित्यर्थः। तमग्निमभिलक्ष्य दुवः परिचरणम् इषे इच्छामि। किमर्थम्। पूर्वस्य। अत्र पूर्वशब्द उत्कृष्टवाची। उत्कृष्टस्य शेवस्य स्वर्गापवर्गलक्षणसुखस्य प्राप्त्यर्थमिति शेषः ॥

नरो ये के चास्मदा विश्वेत्ते वाम आ स्युः। अग्निं हविषा वर्धन्तः ॥ ८ ॥

नरः। ये। के। च। अस्मत्। आ। विश्वा। इत्। ते। वामे। आ। स्युरिति स्युः।
अग्निम्। हविषा। वर्धन्तः ॥ ८ ॥

नरः नेतारः ये के च ये केचित् पुत्रपौत्रादयः अस्मत् अस्माकं सन्ति। आकारः पूरकः। ते पुत्रपौत्रादयः वामे वननीये संभजनीये विश्वेत् विश्वस्मिन्नेव यज्ञादिफले आ स्युः आ समन्तात्सन्तु। उपविशेयुरित्याशास्महे। किं कुर्वन्तः। अग्निम् प्रज्ञानादिगुणविशिष्टं देवं हविषा पुरोडाशादिकेन वर्धन्तः[3] वर्धयन्तः ॥

कृष्णः श्वेतोऽरुषो यामो अस्य ब्रध्न ऋज्र उत शोणो यशस्वान्।
हिरण्यरूपं जनिता जजान ॥ ९ ॥

---

१. स–यजमानोऽग्निः। २. ग-स३-भ५.६–आगच्छन्तीति। ३. स१.२.३.४.५.६-भ–'वर्धन्तः' नास्ति।

कृष्णः । श्वेतः । अरुषः । यामः । अस्य । ब्रध्नः । ऋज्रः । उत । शोणः । यशस्वान् ।
हिरण्यऽरूपम् । जनिता । जजान ॥ ९ ॥

अत्र यच्छब्दमध्याहृत्य योज्यम्। यामः। याति गच्छत्यस्मिन्निति यामो रथः प्रजापतिना निर्मितः। कीदृशः। कृष्णः असितवर्णः श्वेतः सितवर्णः अरुषः आरोचमानः ब्रध्नः महान् ऋज्रः ऋजुगामी उत अपि च शोणः एकवर्णः यशस्वान् कीर्तिमान्। यद्वा। यश इति धननाम। हविर्लक्षणेन धनेन युक्तः। हिरण्यरूपं सुवर्णसदृशं तं रथम् अस्य अग्नेरर्थाय जनिता सर्वस्य जगतो जनयिता प्रजापतिः जजान जनयामास। अस्मै दत्तवानित्यर्थः। कथमेकस्यैव रथस्य कृष्णादिनानारूपत्वं संभवतीति चेत् अग्नेः सामर्थ्यातिशयेन संभवतीत्यर्थः। यद्वा। हिरण्यरूपमिति रथवाचिना शब्देन सह सामानाधिकरण्यात् कृष्णादिशब्दा द्वितीयान्तत्वेन योज्याः। अत्र सर्वगुणोपेतरथवत्त्वाग्निः स्तूयत इत्यर्थः॥

एवा ते अग्ने विमदो मनीषामूर्जो नपादमृतेभिः सजोषाः ।
गिर आ वक्षत्सुमतीरियान इषमूर्जं सुक्षितिं विश्वमाभाः ॥ १० ॥

एव । ते । अग्ने । विऽमदः । मनीषाम् । ऊर्जः । नपात् । अमृतेभिः । सऽजोषाः ।
गिरः । आ । वक्षत् । सुऽमतीः । इयानः ।
इषम् । ऊर्जम् । सुऽक्षितिम् । विश्वम् । आ । अभाः ॥ १० ॥

एवमुक्तप्रकारेण हे ऊर्जो नपात् अपांधिवनस्पतिनिमित्तभूतस्यान्नस्य पौत्र हे अग्ने अमृतेभिः अमृतैर्हविर्लक्षणैरन्नैः सजोषाः संगतः विमदः नामर्षिः मनीषां प्रकृष्टां बुद्धिं कामयमानः सन् ते तुभ्यं गिरः स्तुतिलक्षणा वाचः आ वक्षत् आभिमुख्येनोक्तवान्। वचेश्छन्दसि लेटि रूपम्। ततस्त्वमेतज्ज्ञात्वा सुमतीरियानः शोभनलक्षणा बुद्धीः[1] संगमयन्[1] इषम् अन्नम् ऊर्जं क्षीरादिकं रसं च सुक्षितिं शोभननिवासम्। यद्वा। क्षितयो मनुष्याः। शोभनपुत्रपौत्रादिकं यत्किंचित् देयमस्ति तत् विश्वं सर्वं च आभाः तस्मै विमदायाहर देहि॥    ॥ ३ ॥

'अग्निं न' इत्यष्टर्चं पञ्चमं सूक्तमास्तारपङ्क्तिच्छन्दस्कम्। आद्यौ गायत्रौ पादौ ततो द्वौ जागतौ सा आस्तारपङ्क्तिः। ऋषिर्देवते पूर्ववत्। तथा चानुक्रान्तम् —'अग्निं नाष्टावास्तारपाङ्क्तम्' इति। पृष्ठ्यस्य चतुर्थेऽहनि 'अग्निं न स्ववृक्तिभिरित्याज्यम्' (आश्व. श्रौ. ७. ११) इति। महाव्रते आग्निमारुते यावतीष्वृक्ष्विवकान्दं साम स्तुवीरन् तदानीमाग्निमारुतस्यावाप ऋचोऽनुरूपार्थाः। सूत्रितं च—'यदिकामयेत भूयसीषु चेत् स्तुवीरन्नग्निं न स्ववृक्तिभिरिति तावतीरनुरूपः' (ऐ. आ. ५. ३. २) इति॥

अग्निं न स्ववृक्तिभिर्होतारं त्वा वृणीमहे ।
यज्ञाय स्तीर्णबर्हिषे वि वो मदे शीरं पावकशोचिषं विवक्षसे ॥ १ ॥

आ । अग्निम् । न । स्ववृक्तिऽभिः । होतारम् । त्वा । वृणीमहे ।
यज्ञाय । स्तीर्णऽबर्हिषे । वि । वः । मदे । शीरम् । पावकऽशोचिषम् । विवक्षसे ॥ १ ॥

१. त१.२-बुद्धीः स्तागमयन्; त३-बुद्धोस्तीगमन; त५-बुद्धीः स्तगमयन्; त७-बुद्धीः स्तागमयन्; म१.२.४.७-बुद्धीस्ताः गमयन्; म६-बुद्धिः अगमयत्।

हे अग्ने वः[1] तव स्वभूते विमदे एतदाख्य ऋषौ मदीयं स्तुतिः प्रवृत्तास्ति । व इति संप्रत्यर्थे । अतो वयमिदानीं स्ववृक्तिभिः स्वयंकृताभिर्दोषवर्जिताभिः स्तुतिभिः होतारं देवानामाह्वातारं होमनिष्पादकं वा अग्निं त्वा त्वाम् आ वृणीमहे आभिमुख्येन संभजामहे । किमर्थम् । स्तीर्णबर्हिषे यज्ञाय । तादर्थ्ये चतुर्थी । यज्ञार्थम् । कीदृशम् । पीवम् ओषध्यादिषु सर्वत्रानुगामिनं पावकशोचिषं शोधकदीप्तिम् । विवक्षसे । व्याख्यातमेतत्[2] । हे अग्ने त्वमपि महान् भवसि । यद्वा । विमदे यज्ञस्य संबन्धिनः सोमस्य पानजन्यविविधमदार्थं त्वामावृणीमह इति योज्यम् ॥

त्वामु ते स्वाभुवः शुम्भन्त्यश्वराधसः ।
वेति त्वामुपसेचनी वि वो मद ऋजीतिरग्न आहुतिर्विवक्षसे ॥ २ ॥

त्वाम् । ऊँ इति । ते । सुऽआभुवः । शुम्भन्ति । अश्वऽराधसः ।
वेति । त्वाम् । उपऽसेचनी । वि । वः । मदे । ऋजीतिः । अग्ने । आऽहुतिः । विवक्षसे ॥ २ ॥

स्वाभुवः स्वप्रकाशेन दीप्यमानाः अश्वराधसः व्याप्तधनाः[3] ते यजमानाः हे अग्ने त्वामु त्वामेव शुम्भन्ति शोभयन्ति । यज्ञे हविर्भिर्दीपयन्तीत्यर्थः । किंच उपसेचनी तवोपरि क्षरणशीला ऋजीतिः ऋजुगामिनी हूयमाना आहुतिः हे अग्ने त्वां वेति गच्छति । किमर्थम् । वः तव मदे मदनिमित्तं । तृप्त्यर्थमित्यर्थः । किंच त्वमपि विवक्षसे महान् भवसि ॥

त्वे धर्माण आसते जुहूभिः सिञ्चतीरिव ।
कृष्णा रूपाण्यर्जुना वि वो मदे विश्वा अधि श्रियो धिषे विवक्षसे ॥ ३ ॥

त्वे इति । धर्माणः । आसते । जुहूभिः । सिञ्चतीःऽइव ।
कृष्णा । रूपाणि । अर्जुना । वि । वः । मदे । विश्वाः । अधि । श्रियः । धिषे । विवक्षसे ॥ ३ ॥

धर्माणः यज्ञस्य धारयितार ऋत्विजः जुहूभिः संपूर्णाहुतिभिर्होमपात्रैः त्वे त्वामेव आसते उपासते सेवन्ते । तत्र दृष्टान्तः । सिञ्चतीरिव । वृष्टिलक्षणाः पृथिवीं सिञ्चन्त्य[5] आपोऽग्निं[6] यथा स्वपितृत्वेन सेवन्ते तद्वत् । 'अग्नेरापः' ( तै. आ. ८.१ ) इति श्रुतेस्तस्यापां पितृत्वम् । यद्वा । जुहूभिः सिञ्चतीरिव सिच्यमाना आहुतय इव धर्माणस्त्वया धार्यमाणा रश्मयस्त्वे त्वय्यासते निवसन्ति । हे अग्ने त्वं कृष्णा कृष्णवर्णानि अर्जुना अर्जुनानि श्वेतवर्णानि ज्वालालक्षणानि रूपाणि च विश्वाः सर्वाः श्रियः शोभा अधि धिषे अधिकं यथा भवति तथा धारयसि । किमर्थम् । वः युष्माकं सर्वेषां देवानां विमदे विविधसोमपानजन्यमदार्थम् । अत एवमतः विवक्षसे त्वं महान् भवसि ॥

यमग्ने मन्यसे रयिं सहसावन्नमर्त्य ।
तमा नो वाजसातये वि वो मदे यज्ञेषु चित्रमा भरा विवक्षसे ॥ ४ ॥

यम् । अग्ने । मन्यसे । रयिम् । सहसाऽवन् । अमर्त्य ।
तम् । आ । नः । वाजऽसातये । वि । वः । मदे । यज्ञेषु । चित्रम् । आ । भर । विवक्षसे ॥ ४ ॥

१. त- 'वः ' नास्ति । २. त१.२.४.५–विवक्षते । ३. त–अग्नेरामैतत् । ४. त.म–दीप्तधनाः । ५. त–सिंचति । ६. त३.४.५.म१.२–आपः अग्नीन् ; त१.२.६.७–आप इष्टयुक्तं पृथिवीं अग्नीन् ; म७–आप इव अग्नीन् ।

हे अमर्त्य अमरणधर्मन् सहसावन् बलवन् एवंभूत हे अग्ने त्वं यं रयिं मन्यसे सर्वेषु धनेषु यद्धनं वरिष्ठमिति जानासि चित्रं चायनीयं तं रयिं नः अस्माकं वाजसातये अन्नलाभाय आ भर आहर प्रयच्छ। किमर्थम्। वः युष्माकं सर्वेषां देवानां यज्ञेषु विमदे विविधसोमादिहविर्जन्यमदनिमित्ते। यागेषु नानाप्रकारैर्हविर्भिर्युष्माकं तर्पणायेत्यर्थः। त्वमपि विवक्षसे महान् भवसि॥

अ॒ग्निर्जा॒तो अथ॑र्वणा वि॒दद्विश्वा॑नि॒ काव्या॑।

भुव॑द्दू॒तो वि॒वस्व॑तो॒ वि वो॒ मदे॑ प्रि॒यो य॒मस्य॒ काम्यो॒ विव॑क्षसे ॥ ५ ॥

अ॒ग्निः। जा॒तः। अथ॑र्वणा। वि॒दत्। विश्वा॑नि। काव्या॑।

भुव॑त्। दू॒तः। वि॒वस्व॑तः। वि। वः॒। मदे॑। प्रि॒यः। य॒मस्य॑। काम्यः॑। विव॑क्षसे ॥ ५ ॥

अथर्वणा एतन्नामकर्षिणा जातः जनितः अग्निः। कथमवगम्यते। 'त्वामग्ने पुष्कराद्ध्यथर्वा निरमन्थत' (ऋ. सं. ६. १६. १३) इति मन्त्रान्तरात्। विश्वानि समस्तानि काव्या काव्यानि स्तोतृकर्माणि विदत् वेत्ति। विवस्वतः यजमानस्य दूतः देवानामाह्वानार्थं भुवत् भवति। किंच यमस्य संयन्तुर्यजमानस्य प्रियः इष्टः सन् काम्यः कमनीयः प्रार्थनीयो भवतीत्यर्थः। शिष्टं स्पष्टम्॥ ॥ ७ ॥

त्वां य॒ज्ञेष्वी॑ळ॒तेऽग्ने॑ प्रय॒त्य॑ध्व॒रे।

त्वं वसू॑नि॒ काम्या॒ वि वो॒ मदे॒ विश्वा॑ दधासि दा॒शुषे॒ विव॑क्षसे ॥ ६ ॥

त्वाम्। य॒ज्ञेषु॑। ईळ॑ते। अग्ने॑। प्र॒ऽय॒ति। अ॒ध्व॒रे।

त्वम्। वसू॑नि। काम्या॑। वि। वः॒। मदे॑। विश्वा॑। द॒धा॒सि॒। दा॒शुषे॑। विव॑क्षसे ॥ ६ ॥

हे अग्ने त्वां प्रयति प्रकर्षेण गच्छति प्रवर्तमाने अध्वरे यागे यज्ञेषु यजनीयेषु हविःप्रदानेषु सत्सु ईळते ऋत्विग्यजमानाः स्तुवन्ति। अपि च हे अग्ने त्वं विश्वा विश्वानि काम्या काम्यानि कमनीयानि वसूनि धनानि दाशुषे हविर्दत्तवते यजमानाय विमदे सोमादिहविर्जन्यतृप्तौ सत्यां दधासि प्रयच्छसि। अतः कारणात् विवक्षसे त्वं महान् भवसि॥

त्वां य॒ज्ञेष्वृ॒त्विज॒ं चारु॑मग्ने॒ नि षे॑दिरे।

घृ॒तप्र॑तीकं॒ मनु॑षो॒ वि वो॒ मदे॑ शु॒क्रं चेति॑ष्ठम॒क्षभि॒र्विव॑क्षसे ॥ ७ ॥

त्वाम्। य॒ज्ञेषु॑। ऋ॒त्विज॑म्। चारु॑म्। अ॒ग्ने॒। नि। से॒दि॒रे॒।

घृ॒तऽप्र॑तीकम्। मनु॑षः। वि। वः॒। मदे॑। शु॒क्रम्। चेति॑ष्ठम्। अ॒क्षऽभिः॑। विव॑क्षसे ॥ ७ ॥

हे अग्ने त्वां मनुष्या यजमानाः यज्ञेषु यागेषु नि षेदिरे नियमेन स्थापयन्ति। कीदृशम्। ऋत्विजं होतृनामकं[1] चारुं रमणीयं घृतप्रतीकम् आज्याहुतिपूर्णमुखं शुक्रं ज्वलन्तम् अक्षभिः व्याप्तैस्तेजोभिः चेतिष्ठम् अतिशयेन ज्ञातारम्। किमर्थम्। वि वो मदे तव सोमादिहविर्जन्यविविधतृप्त्यर्थम्। यस्मादेवं तस्मात् विवक्षसे महान्[2] भवसि[3]॥

१. त-होम॰। २. ग-स१.७-म-त्वं महान्। ३. त-भवति।

अग्ने॑ शु॒क्रेण॑ शो॒चिषो॒रु प्र॑थयसे बृ॒हत् ।
अ॒भि॒क्रन्द॑न्वृषायसे॒ वि वो॒ मदे॒ गर्भं॑ दधासि जा॒मिषु॒ विव॑क्षसे ॥ ८ ॥

अग्ने॑ । शु॒क्रेण॑ । शो॒चिषा॑ । उ॒रु । प्र॒थ॒य॒से॒ । बृ॒हत् ।
अ॒भि॒ऽक्रन्द॑न् । वृ॒ष॒ऽय॒से॒ । वि । वः॒ । मदे॑ । गर्भ॑म् । द॒धा॒सि॒ । जा॒मिषु॑ । विव॑क्षसे ॥ ८ ॥

हे अग्ने बृहत् महांस्त्वं शुक्रेण दीप्तेन शोचिषा तेजसा उरु प्रथयसे विस्तीर्णं यथा भवति तथा प्रख्यातो भवसि । किंच अभिक्रन्दन् आभिमुख्येन युद्धार्थं शत्रूनाह्वयन् वृषायसे वृष इवाचरसि । युद्धकाले दर्पितवृष इव रोरूयमाणस्त्वमित्यर्थः । एवं[1] माध्यमिकः सन् जामिषु भगिनीभूतास्वोषधीषु गर्भं बीजलक्षणं दधासि वृष्टिद्वारेण धारयसि । एकस्मात् प्रजापतेः सकाशा-दुद्भूतत्वादस्माकमोषध्योर्जामित्वमुपपद्यते । कस्मिन् सति । वि वो मदे तव विविधसोमादिहवि-र्जन्यमदे संजाते सति । यस्मादेवं कृतवानसि तस्मात्त्वं विवक्षसे महान् भवसि । विवक्षस इति महन्नाम वक्षेर्वा वहतेर्वा सनन्तस्य रूपमिति ॥ ॥ ५ ॥

' कुह ' इति पञ्चदशर्चं षष्ठं सूक्तमैन्द्रम् । पञ्चदशी त्रिष्टुप् पञ्चमीसप्तमीवर्जम्‌य्वशिष्टा अनुष्टुभः शिष्टाः पुरस्ताद्बृहत्यः । आद्यन्द्वादशाकृत्यएकादशी पुरस्ताद्बृहती । पूर्ववदृषिः । तथा चानुक्रान्तं— ' कुह पञ्चोना पुरस्ताद्बार्हतं त्रिष्टुबन्तं त्वं त्या चिदश्वस्यं नोऽनुष्टुभः ' इति । चतुर्थेऽहनि निष्केवल्य एतत्सूक्तम् । सूत्रितं च— ' कुह श्रुत इन्द्रो युध्मस्य त इति निष्केवल्यम् ' ( आश्व. श्रौ. ७. ११ ) इति ॥

कुह॑ श्रु॒त इन्द्रः॒ कस्मि॑न्न॒द्य जने॑ मि॒त्रो न श्रू॑यते ।
ऋषी॑णां वा॒ यः क्षये॒ गुहा॑ वा॒ चर्कृ॑षे॒ गि॒रा ॥ १ ॥

कुह॑ । श्रु॒तः । इन्द्रः॑ । कस्मि॑न् । अ॒द्य । जने॑ । मि॒त्रः । न । श्रू॒यते॑ ।
ऋषी॑णाम् । वा॒ । यः । क्षये॑ । गुहा॑ । वा॒ । चर्कृ॑षे । गि॒रा ॥ १ ॥

अद्य अस्मिन् दिने इन्द्रः कुह कुत्र स्थाने श्रुतः विश्रुतः प्रख्यातः । कस्मिन् जने यजमाने इज्यत्वेन स्तुत्यत्वेनावस्थितः श्रूयते प्रख्याप्यते । तत्र दृष्टान्तः । मित्रो न सूर्य इव सखेव वा महत् । यः इन्द्रः ऋषीणां भृग्वादीनां क्षये निवास आश्रमे गुहा वा गुहायामरण्ये वा गिरा स्तुतिलक्षणया वाचा चर्कृषे अत्यर्थमाकृष्यते । अत्यर्थं स्तूयत इत्यर्थः । स इन्द्रः कुह श्रुत इति पूर्वेण संबन्धः ॥

इ॒ह श्रु॒त इन्द्रो॑ अ॒स्मे अ॒द्य स्तवे॑ व॒ज्र्यृची॑षमः ।
मि॒त्रो न यो जने॒ष्वा यश॑श्च॒क्रे असा॒म्या ॥ २ ॥

इ॒ह । श्रु॒तः । इन्द्रः॑ । अ॒स्मे इति॑ । अ॒द्य । स्तवे॑ । व॒ज्री । ऋची॑षमः ।
मि॒त्रः । न । यः । जने॑षु । आ । यशः॑ । च॒क्रे । असा॑मि । आ ॥ २ ॥

इह अस्मिन् यज्ञे इन्द्रः श्रुतः प्रख्यातः । अद्य अस्मिन्दिवसे अस्मे अस्माभिः स्तवे स्तूयते । कीदृशः । वज्री वज्रवान् ऋचीषमः । ' यदूचाय इन्द्र ते सतं सतं भूमीरुत स्युः न त्वा

1. त—त्वं माध्यमिकः ।

वज्रिन्' (ऋ. सं. ८. ७०. ५) इत्यादिकया स्तुत्या समानगुण इत्यर्थः । यः इन्द्रः मित्रो न सूर्य इव स्निग्ध इव वा जनेषु स्तोतृजनेषु श्रवः अन्नं कीर्तिं वा धाके करोति । कीदृशम् । असामि असाधारणम् । स इन्द्रोऽस्माभिः स्तूयत इति पूर्वेण संबन्धः ॥

महो यस्पतिः शवसो असाम्या महो नृम्णस्य तूतुजिः ।
भर्ता वज्रस्य धृष्णोः पिता पुत्रमिव प्रियम् ॥ ३ ॥

महः । यः । पतिः । शवसः । असामि । आ । महः । नृम्णस्य । तूतुजिः ।
भर्ता । वज्रस्य । धृष्णोः । पिता । पुत्रम्ऽइव । प्रियम् ॥ ३ ॥

यः इन्द्रः महः महतः शवसः बलस्य पतिः ईश्वरः असाम्या । आङ् मर्यादायाम् । आ समाप्तेः । अनन्तगुण इत्यर्थः । महः महतः नृम्णस्य धनस्य च तूतुजिः स्तोतृभ्यः प्रेरकः । किंच धृष्णोः शत्रूणां धर्षकस्य वज्रस्य स्वकीयस्यायुधस्य भर्ता य इन्द्रो धारयिता । स इन्द्रोऽस्मान् पालयत्विति शेषः। तत्र दृष्टान्तः । पिता पुत्रमिव प्रियम् । यथा पितेप्सितं सुतं पाति तद्वत् ॥

युजानो अश्वा वातस्य धुनी देवो देवस्य वज्रिवः ।
स्यन्ता पथा विरुक्मता सृजानः स्तोष्यध्वनः ॥ ४ ॥

युजानः । अश्वा । वातस्य । धुनी इति । देवः । देवस्य । वज्रिऽवः ।
स्यन्ता । पथा । विरुक्मता । सृजानः । स्तोषि । अध्वनः ॥ ४ ॥

हे वज्रिवः वज्रवन्निन्द्र । एको मत्वर्थीयोऽनुवादकः । देव द्योतमानस्त्वं देवस्य द्योतमानस्य वातस्य वायोः धुनी प्रेरकौ । वायोरपि शीघ्रगामिनावित्यर्थः । अश्वा अश्वौ त्वदीयौ हरिनामकौ युजानः स्वरथे संयोजयन् । कीदृशौ । विरुक्मता विरोचनवता पथा मार्गेण स्यन्ता स्यन्तौ गच्छन्तौ । अध्वनः युद्धे गमनमार्गान् सृजानः उत्पादयन् स्तोषि सतत स्तूयसे ॥

त्वं त्या चिद्वातस्याश्वागा ऋज्रा त्मना वहध्यै ।
ययोर्देवो न मर्त्यो यन्ता नकिर्विदाय्यः ॥ ५ ॥

त्वम् । त्या । चित् । वातस्य । अश्वा । आ । अगाः । ऋज्रा । त्मना । वहध्यै ।
ययोः । देवः । न । मर्त्यः । यन्ता । नकिः । विदाय्यः ॥ ५ ॥

पश्चार्धसंबन्धादुत्तरोऽर्धर्चः पूर्वं व्याख्यायते । ययोः त्वदीययोः यन्ता नियन्ता निवारयिता देवो न देवानां मध्ये कश्चिदपि देवो नास्ति मर्त्यः मनुष्याणां मध्ये कश्चिदपि नास्ति नकिः न कश्चिदपि विदाय्यः वेत्ता । जवस्य बलस्येति वा शेषः । हे इन्द्र त्वं वातस्य वायोर्वेगेन जवेन च युक्तौ ऋज्रा ऋजुगामिनौ त्या चित् तावपि अश्वा त्वदीयावश्वौ त्मना आत्मनैव । सारथि-निरपेक्षेणेत्यर्थः । वहध्यै वहनार्थम् । अभिमतदेशप्रापणायेत्यर्थः । आ अगाः आभिमुख्येन गच्छसि[1] ॥ ॥ ६ ॥

१. त-म६—गच्छति ।

अध॒ ग्मन्तो॒शना॑ पृच्छते वां॒ कद॑र्था न॒ आ गृ॒हम्।
आ ज॑ग्मथुः परा॒काद्दि॒वश्च॒ ग्मश्च॒ मर्त्य॑म् ॥ ६ ॥

अध॑। ग्मन्ता॑। उ॒शना॑। पृ॒च्छ॒ते॒। वा॒म्। कत्ऽअ॑र्था। न॒। आ। गृ॒हम्।
आ। ज॒ग्म॒थुः॒। प॒रा॒कात्। दि॒वः। च॒। ग्मः। च॒। मर्त्य॑म् ॥ ६ ॥

अध अथ यज्ञसमाप्त्यनन्तरम् उशना भार्गव ऋषिः हे इन्द्राग्नी ग्मन्ता स्वस्थानं प्रति गच्छन्तौ वां युवां पृच्छते पृच्छति स्म। यद्वा। उशनेति विभक्तिव्यत्ययः। उशनसमिन्द्रस्य सखिभूतं भार्गवमिन्द्रं च युवां सर्वो यजमानः पृच्छति। किं पृष्टवानिति उच्यते। युवां कदर्था कदर्थौ किंप्रयोजनवन्तौ सन्तौ नः अस्मदीयम्। आकारः प्रतीत्यस्यार्थे। गृहं प्रति पराकात्। दूरनामैतत्। दूरात् आ जग्मथुः आगतवन्तौ स्थः। तदेवोक्तम्। दिवश्च द्युलोकाच्च ग्मश्च भूलोकाच्च मर्त्यं मनुष्यं मां प्रत्यागतवन्तौ। युवयोः कृतार्थत्वाद्यागमनमस्मदनुग्रहार्थमेव न स्वार्थमिति युवमनुग्रहतीत्यर्थः ॥

आ न॑ इन्द्र पृक्षसे॒ऽस्माकं॒ ब्रह्मोद्य॑तम्।
तत्त्वा॑ याचामहे॒ऽवः शुष्णं॒ यद्धन्नमा॑नुषम् ॥ ७ ॥

आ। न॒। इन्द्र॑। पृ॒क्ष॒से॒। अ॒स्माक॑म्। ब्रह्म॑। उत्ऽय॑तम्।
तत्। त्वा॒। या॒चा॒म॒हे॒। अवः॑। शुष्ण॑म्। यत्। हन्। अमा॑नुषम् ॥ ७ ॥

हे इन्द्र त्वम्। न इति तृतीयार्थे षष्ठी। नः अस्माभिः उद्यतम् उत्क्षिप्तम्। दत्तमित्यर्थः। अस्माकम् अस्मदीयं ब्रह्म हविर्लक्षणमन्नम्। आङ् मर्यादायाम्। आ तृप्तेरित्यर्थः। पृक्षसे आत्मना संपर्चय। 'पृची संपर्के' इति धातो रूपम्। आभक्षयेत्यर्थः। किंच वयमपि त्वा एवंभूतं त्वां[1] तत्[1]। यदुत्कृष्टमस्तीति शेषः। तत्तादृशमन्नम् अवः तद्रक्षणं च याचामहे प्रार्थयामहे। तथा यत् शुष्णं बलम् अमानुषं मनुष्यादन्यं राक्षसादिकं हन् हन्ति तदुत्कृष्टं बलं च याचामहे। यद्वा। हे इन्द्र त्वं शुष्णमेतन्नामानममानुषं मनुष्यव्यतिरिक्तमसुरं हन् हतवानसि। हत्वा च यथेन रक्षणेन त्रैलोक्यं पालितवानसि तथैव पालनमस्माकमपि भवेदिति त्वां याचामह इति वाक्यार्थः ॥

अ॒क॒र्मा दस्यु॑र॒भि नो॑ अम॒न्तुर॒न्यव्र॑तो॒ अमा॑नुषः।
त्वं तस्या॑मित्रह॒न्वध॑र्दा॒सस्य॑ दम्भय ॥ ८ ॥

अ॒क॒र्मा। दस्युः॑। अ॒भि। नः॒। अ॒म॒न्तुः। अ॒न्यऽव्र॑तः। अमा॑नुषः।
त्वम्। तस्य॑। अ॒मि॒त्र॒ऽह॒न्। वधः॑। दा॒सस्य॑। द॒म्भ॒य॒ ॥ ८ ॥

अकर्मा अविद्यमानयागादिकर्मा दस्युः उपक्षपयिता अभि आभिमुख्येन स्वरूपतः नः अस्मान् अमन्तुः अज्ञाता। यद्वा। अत्र अवेरुपसर्गस्य अकारलोपो द्रष्टव्यः। अवमन्तुरवमन्ताभिभविता। अन्यव्रतः श्रुतिस्मृतिव्यतिरिक्तकर्मा अमानुषः मनुष्यसंव्यवहाराद्बाह्यः। असुरप्रकृतिरित्यर्थः। य[2] एवंभूतोऽस्ति हे अमित्रहन् शत्रूणां हन्तरिन्द्र त्वं दासस्य उपक्षपयितव्यस्य वधः हन्ता सन् दम्भय तं शत्रुं हिन्धि ॥

---

१. त-म१.२.४.७-त्वा मां; म६-त्वां। २. त-म६-'य' नास्ति।

त्वं न इन्द्र शूर शूरैरुत त्वोतासो बर्हणा ।
पुरुत्रा ते वि पूर्तयो नवन्त क्षोणयो यथा ॥ ९ ॥

त्वम् । नः । इन्द्र । शूर । शूरैः । उत । त्वाऽऊतासः । बर्हणा ।
पुरुऽत्रा । ते । वि । पूर्तयः । नवन्त । क्षोणयः । यथा ॥ ९ ॥

हे शूर विक्रान्त इन्द्र त्वं शूरैः भटैः मरुद्भिः सहितः सन् नः अस्मान् पाहीति शेषः । उत अपि च त्वोतासः त्वया रक्षिता वयं बर्हणा परिवर्हणायां शत्रूणां हिंसायां समर्था भवेम । किंच ते त्वदीयाः पूर्तयः कामानां पूरणानीप्सितार्थप्रदानानि पुरुत्रा बहून् स्तोतॄन् वि नवन्त विविधं व्याप्नुवन्ति । क्षोणयः । मनुष्यनामैतत् । मनुष्याः स्वकीयं स्वामिनं सेवार्थं यथा व्याप्नुवन्ति तद्वत् ॥

त्वं तान्वृत्रहत्ये चोदयो नॄन्कार्पाणे शूर वज्रिवः ।
गुहा यदी कवीनां विशां नक्षत्रशवसाम् ॥ १० ॥

त्वम् । तान् । वृत्रऽहत्ये । चोदयः । नॄन् । कार्पाणे । शूर । वज्रिऽवः ।
गुहा । यदि । कवीनाम् । विशाम् । नक्षत्रऽशवसाम् ॥ १० ॥

हे वज्रिवः वज्रधर शूर इन्द्र त्वं कार्पाणे । असिः कृपाणः । तेन साध्यं[1] युद्धं कार्पाणम् । तस्मिन् वृत्रहत्ये शत्रुहननार्थं नॄन् नरान् तान् प्रसिद्धान् मरुद्गणान् चोदयः चोदयसि प्रेरयसि । यदि यदा त्वं कवीनां मेधाविनां नक्षत्रशवसां देवान् प्रतिगच्छद्बलानां विशां स्तोतृजनानां संबन्धीनि गुहा गूढानि गुणैः संवृतानि स्तोत्राणि शृणोषीति शेषः । तदा प्रेरयसीति पूर्वेणान्वयः ॥ ॥७॥

मक्षू ता त इन्द्र दानाप्नस आक्षाणे शूर वज्रिवः ।
यद्ध शुष्णस्य दम्भयो जातं विश्वं सयावभिः ॥ ११ ॥

मक्षु । ता । ते । इन्द्र । दानऽअप्नसः । आक्षाणे । शूर । वज्रिऽवः ।
यत् । ह । शुष्णस्य । दम्भयः । जातम् । विश्वम् । सयावऽभिः ॥ ११ ॥

हे शूर विक्रान्त वज्रिवः वज्रोपेत इन्द्र दानाप्नसः दानकर्मणः । स्तोतृभ्यः सततमभीष्टफलप्रदस्येत्यर्थः । ते तव स्वभूतानि मक्षु क्षिप्राणि अविलम्बितानि । क्षिप्रकरणयुक्तानीत्यर्थः । आक्षाणे स्तोतृभिर्व्याप्यमाने त्वय्यवस्थितानि ता तानि कर्माणि स्तोतारः स्तुवन्तीति शेषः । सयावभिः सहयातृभिर्मरुद्भिः सहितस्त्वं शुष्णस्य असुरस्य विश्वं जातं सर्वमपत्यजातं दम्भयः अदम्भयः । हिंसितवानसि । यद्ध । एवमादीनि यानि खलु कर्माणि सन्ति तानि स्तुवन्तीति पूर्वेण संबन्धः ॥

माकुध्र्यगिन्द्र शूर वस्वीरस्मे भूवन्नभिष्टयः ।
वयंवयं त आसां सुम्ने स्याम वज्रिवः ॥ १२ ॥

मा । अकुध्र्यक् । इन्द्र । शूर । वस्वीः । अस्मे इति । भुवन् । अभिष्टयः ।
वयम्ऽवयम् । ते । आसाम् । सुम्ने । स्याम । वज्रिऽवः ॥ १२ ॥

१. त-कार्यं ।

हे शूर विक्रान्त इन्द्र अस्मे अस्माकं स्वभूताः वस्वीः महत्यः अभिष्टयः आभिमुख्येनैष्टव्या इच्छाः । यद्वा । आभिमुख्येच्छा अभीप्सितप्रार्थनाः । कुध्र्यक् कुत्सिताः । विफला इत्यर्थः । मा भूवन् । किं तर्हि हे वज्रिवः वज्रिन्निन्द्र ते तव प्रसादात् वयंवयम् केचिद्यजमानाः । द्विर्वचनमतित्वराप्रदर्शनार्थम् । आसाम् इच्छानामिच्छन्तो वा संबन्धिनि सुम्ने सुखे अवस्थिताः स्याम भवेम । वयमभिप्रियान्येन स्तोतृप्रसुखेन युक्ताः शीघ्रं भवेमेत्याशास्महे इत्यर्थः ॥

अस्मे ता त इन्द्र सन्तु सत्याहिंसन्तीरुपस्पृशः ।
विद्याम यासां भुजो धेनूनां न वज्रिवः ॥ १३ ॥

अस्मे इति । ता । ते । इन्द्र । सन्तु । सत्या । अहिंसन्तीः । उपऽस्पृशः ।
विद्याम । यासाम् । भुजः । धेनूनाम् । न । वज्रिऽवः ॥ १३ ॥

हे इन्द्र अस्मे अस्माकं स्वभूताः । ता सत्या इत्युभयत्र प्रथमाबहुवचनस्य छान्दस आकारः सम्भवति निर्देशविशेषणत्वात् । ताः तास्ता स्तुतयः उपस्पृशः । त्वामुपगम्य स्पृशन्तीत्युपस्पृशः स्तुतयः । ते तव प्रसादात् सत्या सत्याः सन्तु यथार्था भवन्तु । तव सद्गुणग्राहिण्य इत्यर्थः । अपि च अहिंसन्तीः त्वामहिंसन्त्यश्च भवन्तु । सत्स्तुतित्वादनुद्वेजयन्त्यश्च भवन्त्वित्यर्थः । हे वज्रिवः इन्द्र यासां स्तुतीनां संबन्धिनः[1] भुजः इष्टानिष्टान् भोगान् विद्याम वयं लभेमहि । तत्र दृष्टान्तः । धेनूनां न । गवां क्षीरादिभोगान् यथा गोस्वामी लभते तद्वत् । ताः सत्या भवन्त्विति पूर्वेणान्वयः ॥

अहस्ता यदपदी वर्धत क्षाः शचीभिर्वेद्यानाम् ।
शुष्णं परि प्रदक्षिणिद्विश्वायवे नि शिश्नथः ॥ १४ ॥

अहस्ता । यत् । अपदी । वर्धत । क्षाः । शचीभिः । वेद्यानाम् ।
शुष्णम् । परि । प्रऽदक्षिणित् । विश्वऽआयवे । नि । शिश्नथः ॥ १४ ॥

हे इन्द्र यत् यदा क्षाः भूमिः अहस्ता पाणिरहिता अपदी चरणवर्जिता च । अमनुष्यकर्मेत्यर्थः । वेद्यानां स्तोत्रयोग्यानां त्वत्प्रभृतीनां देवानां संबन्धिभिः शचीभिः कर्मभिः वर्धत अवर्धत । धनधान्यादिभिः समृद्धेत्यर्थः । तदा त्वं परि प्रदक्षिणित् पूर्वभूतां पृथिवीं परिवेष्ट्य प्रदक्षिणं यथा भवति तथा स्थितं शुष्णम् असुरं विश्वायवे । तादर्थ्ये[2] चतुर्थी । सर्वेषामस्तित्वशासिन एतदाख्यस्यैर्वयोस्तरासोऽर्थाय नि शिश्नथः नितरां ताडितवानसि । यद्वा । यदा शुष्णस्याच्छादनार्थं हस्तपादवर्जिता काचित्पृथिवी वेदितव्यानामसुराणां मायारूपैः कर्मभिः शुष्णमसुरं परिवेष्ट्य प्रदक्षिणं यथा भवति तथावस्थितावर्धत तदानीं तां मायोत्पादितां पृथिवीं विश्वायवे[2] सर्वव्यापकस्य मरुद्गणस्य प्रवेशनार्थं नि शिश्नथः ॥

पिबापिबेदिन्द्र शूर सोमं मा रिषण्यो वसवान वसुः सन् ।
उत त्रायस्व गृणतो मघोनो महश्च रायो रेवतस्कृधी नः ॥ १५ ॥

पिबऽपिब । इत् । इन्द्र । शूर । सोमम् । मा । रिषण्यः । वसवान । वसुः । सन् ।
उत । त्रायस्व । गृणतः । मघोनः । महः । च । रायः । रेवतः । कृधि । नः ॥ १५ ॥

१. त–भवेत । २. त–'तादर्थ्ये ... विश्वायवे' नास्ति ।

पिबपिब इति वीप्सातिशयप्रदर्शनार्था। हे शूर वीर इन्द्र त्वमभिषुतं सोमं शीघ्रं पिब। यागकालातिपत्तौ यावन्न भवति तावच्छीघ्रं सोमं पिबेत्यर्थः। इदु इति पूरणः। हे वसवान वसूनां धनानामानेतः त्वं वसुः प्रशस्तः सन् मा रिषण्यः यागकालातिक्रमजातेन दोषेणास्मान्मा हिंसीः। प्रशस्तस्य तव कर्मवैगुण्यकरणेन[1] हिंसितुमयुक्तमित्यर्थः। उत अपि च हे इन्द्र त्वं गृणतः त्वां स्तुवतः स्तोतॄन् मघोनः हविर्लक्षणधनवतो यजमानांश्च त्रायस्व प्रमादजनितकर्मवैगुण्यदोषात् पालयस्व। किंच महश्च राय इत्युभयत्र तृतीयार्थे षष्ठी। महः महता रायः धनेन च[2] नः अस्मान् रेवतः कृधि धनवतः कुरु॥ ॥ ८ ॥

'यजामहे' इति सप्तर्चं सप्तमं सूक्तम्। प्रथमासप्तम्यौ त्रिष्टुभौ। पञ्चम्यभिसारिणी। द्विरंशकत्रिर्द्वादशकवतीत्वभिसारिणीत्युच्यते। शिष्टाश्चतस्रो जगत्यः। पूर्ववदृषिदेवते। तथा चानुक्रान्तं— 'यजामहे सप्ताद्यन्त्ये त्रिष्टुभौ पञ्चम्यभिसारिणी' इति। चतुर्थेऽहनि माध्यंदिनसवने तृतीयपञ्चम्योरावर्तनेन त्रींस्तृचान् होत्रका एकैकं तृचमावपेरन्। सूत्रितं च— 'यजामह इन्द्रं वज्रदक्षिणमिति द्वितीयावेवमेव' ( आश्व. श्रौ. ७. ११ ) इति॥

यजा॑मह॒ इन्द्रं॒ वज्र॑दक्षिणं॒ हरी॑णां र॒थ्यं१॒॑ विव्र॑तानाम्।
प्र श्मश्रु॒ दोधु॑वदू॒र्ध्वथा॑ भू॒द्वि सेना॑भि॒र्दय॑मानो॒ वि राध॑सा॥ १॥

यजा॑महे। इन्द्र॑म्। वज्र॑ऽदक्षिणम्। हरी॑णाम्। र॒थ्य॑म्। विऽव्र॑तानाम्।
प्र। श्मश्रु॑। दोधु॑वत्। ऊ॒र्ध्वऽथा॑। भू॒त्। वि। सेना॑भिः। दय॑मानः। वि। राध॑सा॥ १॥

वयम् इन्द्रं यजामहे सोमलक्षणैर्हविर्भिः पूजयामः। कीदृशम्। वज्रदक्षिणं शत्रुवधाय सततं वज्रो दक्षिणे हस्ते यस्य तं विव्रतानां रथवहनादिविविधकर्मणां हरीणाम् एतत्संज्ञकानामश्वानां रथ्यम् आनेतारम्। स इन्द्रः सोमपानानन्तरं श्मश्रु स्वकीयानि श्मश्रूणि दोधुवत् पुनःपुनः धुन्वानः सन् ऊर्ध्वथा ऊर्ध्वं प्र भूत् प्रादुरभूत्। किंच सेनाभिः मरुदादिस्वकीयैः सैन्यैः वि दयमानः विविधं शत्रून् हिंसन् राधसा। द्वितीयार्थे तृतीया। राधो धनम्। वीत्युपसर्गश्रुतेर्योग्यक्रियाध्याहारः। विविधं स्तोतृभ्यो ददाति॥

हरी॒ न्व॑स्य॒ या वने॑ वि॒दे वस्विन्द्रो॑ म॒घैर्म॒घवा॑ वृत्र॒हा भु॑वत्।
ऋ॒भुर्वाज॑ ऋभु॒क्षाः प॑त्यते॒ शवोऽव॑ क्ष्णौमि॒ दास॑स्य॒ नाम॑ चि॒त्॥ २॥

हरी॒ इति॑। नु। अ॒स्य॒। या। वने॑। वि॒दे। वसु॑। इन्द्रः॑। म॒घैः। म॒घऽवा॑। वृ॒त्र॒ऽहा। भु॒व॒त्।
ऋ॒भुः। वाजः॑। ऋ॒भु॒क्षाः। प॒त्य॒ते॒। शवः॑। अव॑। क्ष्णौ॒मि॒। दास॑स्य। नाम॑। चि॒त्॥ २॥

अस्य इन्द्रस्य संबन्धिनौ या यौ हरी अश्वौ वने। वन्यन्ते संभजन्तेऽस्मिन्[3] देवा इति वनं यज्ञोऽरण्यं वा। तस्मिन् वसु ऋजीषलक्षणं[4] धनं यवसलक्षणं वा नु क्षिप्रं विदे विन्देते लभेते। यद्वा। यौ हरी अस्येन्द्रस्य वने संभजनार्थं वसु[5] वसुनो लाभाय क्षिप्रं भवत इति शेषः। ताभ्यां हरिभ्यां मघैः धनैः मघवा धनवान् इन्द्रः वृत्रहा वृत्राख्यस्यासुरस्य मेघस्य वा हन्ता भुवत् भवति। अपि च ऋभुः दीप्तः वाजः बलवान् ऋभुक्षाः महानिन्द्रः शवः शवसो

१. त–कर्मवैगुण्येन। २. त–'च' नास्ति। ३. त-भ–संभजंतेस्मिन्। ४. त-मु–ऋजीकलक्षणं।
५. त-भ१,२,४–'वसु' नास्ति।

बलस्य धनस्य वा पत्यते ईष्टे। यद्वा। शत्रूणां बलं प्रति पत्यते प्रतिपद्यते[1] गच्छति। अहमपि तस्य प्रसादात् दासस्य उपक्षपयितव्यस्य शत्रोः नाम चित्। नम्यतेऽनेनेति नाम शिरः। तदपि अव वर्णामि अव हन्मि। किमुतान्यदङ्गम्। अथवा नामधेयमपि नाशयामि किमुत शत्रुम्॥

यदा वज्रं हिरण्यमिदथा रथं हरी यमस्य वहतो वि सूरिभिः।
आ तिष्ठति मघवा सनश्रुत इन्द्रो वाजस्य दीर्घश्रवसस्पतिः॥ ३॥

यदा। वज्रम्। हिरण्यम्। इत्। अथ। रथम्। हरी इति। यम्। अस्य। वहतः। वि। सूरिऽभिः।
आ। तिष्ठति। मघऽवा। सनऽश्रुतः। इन्द्रः। वाजस्य। दीर्घऽश्रवसः। पतिः॥ ३॥

यदा इन्द्रः हिरण्यं हितरमणीयं वज्रं स्वकीयमायुधं शत्रुहननाय गृह्णातीति शेषः। इत् इति पूरणः। अथ तदानीम् अस्य इन्द्रस्य हरी अश्वौ यं रथं वहतः गन्तृप्रदेशं[2] विशेषेण प्रापयतः मघवा धनवान् इन्द्रः सूरिभिः स्तोतृभिः कुत्सादिभिः सह तं रथम् आ तिष्ठति आरोहति। कीदृशः। सनश्रुतः चिरप्रख्यातः। जगति स्वभावत एव विख्यात इत्यर्थः। दीर्घश्रवसः बहुकीर्तेः वाजस्य अन्नस्य पतिः स्वामी। एवंभूत इन्द्रस्तं रथमारोहतीत्यर्थः॥

सो चिन्नु वृष्टिर्यूथ्या स्वा सचाँ इन्द्रः श्मश्रूणि हरिताभि प्रुष्णुते।
अव वेति सुक्षयं सुते मधूदिद्धूनोति वातो यथा वनम्॥ ४॥

सो इति। चित्। नु। वृष्टिः। यूथ्या। स्वा। सचा। इन्द्रः। श्मश्रूणि। हरिता। अभि। प्रुष्णुते।
अव। वेति। सुऽक्षयम्। सुते। मधु। उत्। इत्। धूनोति। वातः। यथा। वनम्॥ ४॥

तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः। या महती वृष्टिरस्ति सो सा वृष्टिः नु क्षिप्रम्। चित् इत्युपमार्थे। यथा सर्वं सिञ्चति तथा इन्द्रः स्वा स्वानि यूथ्या यूथानि मरुदादिगणलक्षणानि सचा सह स्थापि श्मश्रूणि च हरिता हरितवर्णेन सोमेन[3] अभि प्रुष्णुते। "प्रुष स्नेहन-सेचनपूरणेषु[4]" इति धातुः। आभिमुख्येन स्थिरया क्षिप्रं सिञ्चति। सोमं पाययति पिबति चेत्यर्थः। अपि च सुक्षयं शोभनं यज्ञगृहम् अव वेति अभिगच्छति। गत्वा च सुते सोमे अभिषुते सति मधु मधुररसोपेतं सोमं पीत्वा। मधु मध्विति शेषः। उदिद्धूनोति स्वशरीरमुत्कम्पयति। तत्र दृष्टान्तः। वातः वायुः यथा वनं वृक्षसमूहमुत्कम्पयति तद्वत्॥

यो वाचा विवाचो मृध्रवाचः पुरू सहस्राशिवा जघान।
तत्तदिदस्य पौंस्यं गृणीमसि पितेव यस्तविषीं वावृधे शवः॥ ५॥

यः। वाचा। विऽवाचः। मृध्रऽवाचः। पुरु। सहस्रा। अशिवा। जघान।
तत्ऽतत्। इत्। अस्य। पौंस्यम्। गृणीमसि। पिताऽइव। यः। तविषीम्। ववृधे। शवः॥ ५॥

यः इन्द्रः वाचा वाङ्मात्रेणैव विवाचः विविधवाचः स्वशत्रून् मृध्रवाचः हिंसितवाचः करोतीति शेषः। पुरु पुरूणि बहूनि अशिवा अशिवान्यसुखकराणि। दुःखकराणीत्यर्थः। सहस्रा शत्रूणां सहस्राणि जघान हन्ति। अपि च यः च इन्द्रः पितेव यथा पिता पुत्रस्य तविषीं

१. स-अ-सु—पद्यते। २. ग—गंतव्यप्रदेशं। ३. त-अ६—सोमेन च। ४. स-अ२—स्नेहनसेवन"।

बलप्रदानैः वर्धयति तथा वृष्टिद्वारेण सर्वस्य जगतः पाजः बलं वक्षणे वर्धयति अस्य इन्द्रस्य तत्त्वित् तत्तदेव पौंस्यं बलं गृणीमसि वयं स्तुमः । इन्द्रो येन येन बलेन शत्रून् हन्ति तस्य तत्तद्बलं वयं स्तुम इत्यर्थः ॥

स्तोमं त इन्द्र विमदा अजीजनन्नपूर्व्यं पुरुतमं सुदानवे ।
विद्मा ह्यस्य भोजनमिनस्य यदा पशुं न गोपाः करामहे ॥ ६ ॥

स्तोमम् । ते । इन्द्र । विऽमदाः । अजीजनन् । अपूर्व्यम् । पुरुऽतमम् । सुऽदानवे ।
विद्म । हि । अस्य । भोजनम् । इनस्य । यत् । आ । पशुम् । न । गोपाः । करामहे ॥६॥

हे इन्द्र ते तुभ्यं सुदानवे शोभनदानायार्थाय विमदाः विमदनामानो वयं स्तोमं स्तोत्रविशेषम् अजीजनन् जनितवन्तः । कृतवन्त इत्यर्थः । अत्र पूर्वोत्तरयोरेकवाक्यत्वात् पुरुषव्यत्ययः । कीदृशम् । अपूर्व्यम् अपूर्वमन्यैः पूर्वमकृतम् । उत्कृष्टमित्यर्थः । पुरुतमं बहुतमम् । नानाप्रकारोपेतमित्यर्थः । हि यस्मात्कारणात् हे इन्द्र इनस्य ईश्वरस्य अस्य ईदृशस्य तव यत् भोजनं धनमस्तीति विद्म वयं जानीमः तस्मात् कारणात् त्वदीयं तद्धनम् आ करामहे वयमस्मदभिमुखं कुर्महे । तत्र दृष्टान्तः । पशुं न गोपाः । यथा गोपालो धेनुमाह्वयन् स्वस्याभिमुखीं करोति तद्वत् ॥

माकिर्न एना सख्या वि यौषुस्तव चेन्द्र विमदस्य च ऋषेः ।
विद्मा हि ते प्रमतिं देव जामिवदस्मे ते सन्तु सख्या शिवानि ॥ ७ ॥

माकिः । नः । एना । सख्या । वि । यौषुः । तव । च । इन्द्र । विऽमदस्य । च । ऋषेः ।
विद्म । हि । ते । प्रऽमतिम् । देव । जामिऽवत् । अस्मे इति । ते । सन्तु । सख्या । शिवानि ॥७॥

हे इन्द्र तव च विमदस्य ऋषेः मम च नः । 'अस्मदो द्वयोश्च' (पा. सू. १. २. ५२) इति द्वयोर्बहुवचनम् । आवयोः एना एतानि सख्या[1] सख्यानि स्तुत्यस्तोतृत्वेज्ययष्टृत्वलक्षणानि सखिकर्माणि माकिः न वि यौषुः केचिदपि न विश्लथयेयुः । अपि च हि यस्मात् कारणात् हे देव द्योतमानेन्द्र ते तव प्रमतिं प्रकृष्टां मतिमनुग्राहिकां बुद्धिं विद्म वयं जानीमः । तत्र दृष्टान्तः । जामिवत् । यथा भ्राता स्वभगिन्यां स्नेहयुक्तां मतिं जानाति तद्वत् । तस्मात्कारणात् अस्मे अस्माकं ते तव च[1] सख्या सख्यानि शिवानि सन्तु मङ्गलानि भवन्तु । अनपायानीत्यर्थः ॥ ॥ ९ ॥

'इन्द्र सोमम्' इति षडृचमष्टमं सूक्तम् । चतुर्थ्याद्यास्तिस्रोऽनुष्टुभोऽश्विदेवत्याः । आद्यास्तिस्र ऐन्द्र्य आस्तारपङ्क्तिच्छन्दस्काः । आदितो द्वौ गायत्रौ ततो द्वौ जागतौ आस्तारपङ्क्तिः । ऋषिः पूर्ववत् । तथा चानुक्रान्तम्—'इन्द्र सोमं षळास्तारपङ्क्त्यन्तं त्वाश्विन्योऽन्त्यास्तिस्रोऽनुष्टुभः' इति । गतो विनियोगः ॥

इन्द्र सोममिमं पिब मधुमन्तं चमू सुतम् ।
अस्मे रयिं नि धारय वि वो मदे सहस्रिणं पुरूवसो विवक्षसे ॥ १ ॥

१. स५—' सख्या...च ' नास्ति ।

इन्द्र॑ । सोम॑म् । इ॒मम् । पि॒ब॒ । मधु॑ऽमन्तम् । च॒मू इति॑ । सु॒तम् ।

अ॒स्मे इति॑ । र॒यिम् । नि । धा॒र॒य॒ । वि । वः॒ । मदे॑ ।

स॒ह॒स्रिण॑म् । पु॒रु॒व॒सो॒ इति॑ पुरुऽवसो । वि॒व॒क्ष॒से ॥ १ ॥

हे इन्द्र त्वम् इमम् ईदृशं सोमं पिब । कीदृशम् । मधुमन्तं मधुररसोपेतं चम्वोः चम्वोः अधिषवणफलकयोः सुतम् अभिषुतम् । तदनन्तरं पुरुवसो बहुधन हे इन्द्र वः तव विमदे विशेषेण सोमजन्यमदे सति अस्मे अस्मासु रयिं धनं नि धारय नितरां स्थापय । कीदृशम् । सहस्रिणं सहस्रसंख्यायुक्तम् । प्रभूतमित्यर्थः । त्वया दत्तेन धनेन यस्माद्वयं पुनरपि त्वदर्थं यागं कुर्मः तस्मादस्मासु धनं निधेहीत्यर्थः । अतः कारणात् विवक्षसे । महन्नामैतत् । त्वं महान् भवसि ॥

त्वां य॒ज्ञेभि॑रु॒क्थैरुप॑ ह॒व्येभि॑रीमहे ।

शची॑पते शचीना॒ं वि वो॒ मदे॒ श्रेष्ठं॑ नो धेहि॒ वार्यं॒ विव॑क्षसे ॥ २ ॥

त्वाम् । य॒ज्ञेभिः॑ । उ॒क्थैः । उप॑ । ह॒व्येभिः॑ । ई॒म॒हे॒ ।

शची॑ऽपते । श॒ची॒नाम् । वि । वः॒ । मदे॑ । श्रेष्ठ॑म् । नः॒ । धे॒हि॒ । वार्य॑म् । वि॒व॒क्ष॒से ॥ २ ॥

हे इन्द्र वयं यज्ञेभिः यज्ञैः सोमयागादिभिः उक्थैः शस्त्रलक्षणैः[1] स्तोत्रैः हव्येभिः हव्यैः पुरोडाशादिभिश्च । उपेत्युपसर्गश्रुतेर्योग्यपदाध्याहारः । त्वाम् उपेत्य ईमहे अभिलषितं धनं याचामहे । अतो हे शचीपते कर्मणां पालयितः त्वं केषांचित्कर्मणां पालको न भवसीति न किंतु शचीनां सर्वेषां कर्मणां पालको भवसीत्यर्थः । एवं याचितस्त्वं नः अस्मभ्यं वार्यं वरणीयं श्रेष्ठं प्रशस्ततमं[2] पश्वादिधनं धेहि देहि । शिष्टं स्पष्टम् ॥

यस्पति॒र्वार्या॑णा॒मसि॑ र॒ध्रस्य॑ चोदि॒ता ।

इन्द्र॑ स्तोतॄ॒णाम॑वि॒ता वि वो॒ मदे॑ द्वि॒षो नः॑ पा॒ह्यंह॑सो॒ विव॑क्षसे ॥ ३ ॥

यः । पतिः॑ । वार्या॑णाम् । असि॑ । र॒ध्रस्य॑ । चो॒दि॒ता ।

इन्द्र॑ । स्तो॒तॄ॒णाम् । अ॒वि॒ता । वि । वः॒ । मदे॑ । द्वि॒षः । नः॒ । पा॒हि । अंह॑सः । वि॒व॒क्ष॒से ॥ ३ ॥

हे इन्द्र यः त्वं वार्याणां वरणीयानां धनानां पतिः असि स्वामी भवसि । रध्रस्य राधकस्य स्तोतुश्च चोदिता धनदानेन कर्मसु नियोक्ता च भवसि । किंच हे इन्द्र यस्त्वं स्तोतॄणामविता रक्षकोऽसि स त्वं वि वो मदे तव विविधे सोमजन्यमदे सति द्विषः द्वेष्टुः सकाशात् नः अस्मान् पाहि रक्ष । अंहसः पापाच्च रक्ष । कस्मादेवमुच्यसे । यस्मात्त्वं विवक्षसे महान् भवसि ॥

यु॒वं श॑क्रा मायावि॒ना स॑मी॒ची निर॑मन्थतम् ।

वि॒म॒देन॒ यदी॑ळि॒ता नास॑त्या नि॒रम॑न्थतम् ॥ ४ ॥

यु॒वम् । श॒क्रा॒ । मा॒या॒ऽवि॒ना॒ । स॒मी॒ची इति॑ स॒म्ऽई॒ची । निः । अ॒म॒न्थ॒त॒म् ।

वि॒ऽम॒देन॑ । यत् । ई॒ळि॒ता । नास॑त्या । निः॒ऽअम॑न्थतम् ॥ ४ ॥

१. स—शास्त्रलक्षणैः । २. स१.७-म६—प्रशस्यतमं; स५—प्रशस्यतमं ।

हे शक्रा शक्तौ शत्रुवधादिकर्मसु समर्थौ हे अश्विनौ मायाविना मायाविनौ प्रज्ञावन्तौ शत्रुवञ्चनकुशलौ वा युवं युवां समीची परस्परं संगतौ निरमन्थतम् अग्निं निरमथितम्। 'अश्विनावध्वर्यू' (ऐ. ब्रा. १. १८) इति ब्राह्मणोक्तत्वादग्निमन्थनमप्यश्विनोरुपपन्नमिति। कदाचिन्नौ निर्मथितवन्तौ उच्यते। यत् यदा नासत्या नासत्यौ युवां विमदेन मया ईळिता ईळितौ स्तुतौ निरमन्थतं निरमथितं तदानीं युवां परस्परं संगतौ निर्मथितवन्तौ[1] स्थ इत्यर्थः॥

विश्वे देवा अकृपन्त समीच्योर्निष्पतन्त्योः।
नासत्यावब्रुवन्देवाः पुनरा वहतादिति॥ ५॥

विश्वे। देवाः। अकृपन्त। सम्ऽईच्योः। निःऽपतन्त्योः।
नासत्यौ। अब्रुवन्। देवाः। पुनरिति। आ। वहतात्। इति॥ ५॥

हे अश्विनौ युवाभ्यामग्निमन्थनकाले[2] प्रेर्यमाणयोः समीच्योः परस्परेण संयुक्तयोररण्योः निष्पतन्त्योः विस्फुलिङ्गान् निर्गमयन्त्योः सत्योः विश्वे सर्वे इन्द्रादयो देवाः अकृपन्त युवामस्तुवन्। किंच देवाः नासत्यौ अश्विनौ युवाम् अब्रुवन् अवोचन्। किमिति। पुनरा वहतादिति। पुनःपुनरीदृशानि जगत्स्थितिहेतुभूतानि कर्माणि युवामाभिमुख्येन स्थित्वावहतम्[3]। यद्वा। युवाभ्यामुत्पाद्यमानः पुनरप्ययमग्निरस्मदीयानि[4] हवींष्यावहत्विति देवा नासत्यावब्रुवन्॥

मधुमन्मे परायणं मधुमत्पुनरायनम्।
ता नो देवा देवतया युवं मधुमतस्कृतम्॥ ६॥

मधुऽमत्। मे। पराऽअयनम्। मधुऽमत्। पुनरिति। आऽअयनम्।
ता। नः। देवा। देवतया। युवम्। मधुऽमतः। कृतम्॥ ६॥

हे अश्विनौ मे मदीयं परायणं गृहात्परागमनं मधुमत्। अत्र रसविशेषवाचिना मधुशब्देन तद्वता प्रीतिर्लक्ष्यते। युवयोः प्रसादात् प्रीतियुक्तं भवत्विति शेषः। पुनरायनं गृहं प्रत्यागमनं मधुमत् प्रीतियुक्तं भवतु। अपि च हे देवा देवौ द्योतमानौ ता तौ युवं युवां नः अस्मान् मधुमतः प्रीतियुक्तान् कृतं कुरुतम्। केनेति उच्यते। देवतया देवत्वेन। अणिमादिदेवतैश्वर्ययोगेनेत्यर्थः॥ ॥ १०॥

'भद्रम्' इत्येकादशर्चं नवमं सूक्तम्। तुह्यादिपरिभाषयेदमप्यास्तारपाङ्क्तम्। सोमदेवताकम्। 'ऋषिश्चान्यस्मात्' इति परिभाषया प्राजापत्य ऐन्द्रो वा विमदो वा वासुक्रो वसुकृदृषिः। तथा चानुक्रान्तं—'भद्रमेकादश सौम्यम्' इति। गतो विनियोगः॥

भद्रं नो अपि वातय मनो दक्षमुत क्रतुम्।
अधा ते सख्ये अन्धसो वि वो मदे रणन्गावो न यवसे विवक्षसे॥ १॥

भद्रम्। नः। अपि। वातय। मनः। दक्षम्। उत। क्रतुम्।
अध। ते। सख्ये। अन्धसः। वि। वः। मदे। रणन्। गावः। न। यवसे। विवक्षसे॥१॥

१. त-निर्मथितौ। २. त-युवाभ्यामग्नि°; म-युवामग्नि°। ३. त-मु-स्थित्वावहतं। ४. त-°मग्निरस्मदीयानि।

हे सोम त्वं नः अस्मदीयं मनः भद्रं कल्याणं वातय गमय । अस्माकं मनः शुभसंकल्पं कुर्वित्यर्थः । तथा दक्षमुत दक्षमपि । 'दक्ष वृद्धौ' । वृद्धं सर्वव्यापिनमन्तरात्मानमपि भद्रं शुभकारित्वलक्षणं[1] प्रापय । अस्माकमन्तरात्मानं शुभकारिणं कुर्वित्यर्थः । क्रतुमपि च क्रतुं प्रज्ञानं भद्रं शुभाध्यवसायलक्षणं प्रापय । शुभाध्यवसायिनं कुर्वित्यर्थः । अध अथ स्तोतारः ते तव सख्ये स्तुत्यस्तोतृत्वेऽयमुत्वलक्षणे सखिकर्मणि रणन् रमन्ताम् । तत्र दृष्टान्तः । गावो न यवसे । यथा धेनवो घासे रमन्ते प्रीतिं कुर्वन्ति तद्वत् । कस्मिन् सति । अन्धसः सोमाख्यस्यान्नस्य मदेषु वः तव विमदे विविधसोमजन्यमदनिमित्ते सति । कस्मादेवम् । यस्मात् विवक्षसे महान् भवसि ॥

हृदिस्पृशस्त आसते विश्वेषु सोम धामसु ।
अधा कामा इमे मम वि वो मदे वि तिष्ठन्ते वसूयवो विवक्षसे ॥ २ ॥

हृदिऽस्पृशः । ते । आसते । विश्वेषु । सोम । धामऽसु ।
अध । कामाः । इमे । मम । वि । वः । मदे । वि । तिष्ठन्ते । वसुऽयवः । विवक्षसे ॥ २ ॥

हे सोम ते तव हृदिस्पृशः स्तुतिभिर्हृदयं स्पृशन्त ऋत्विजो विश्वेषु धामसु सर्वेषु स्थानेषु आसते त्वां स्तुवन्तस्तिष्ठन्ति । अध अथ इमे भूताः[2] कामाः अभिलाषाः वि वो मदे तव सोमपानजन्यविविधमदनिमित्ते सति । सोमयागार्थमित्यर्थः । वसूयवः वसुकामाः धनमिच्छन्तः मम । भवन्तीति शेषः । वि तिष्ठन्ते उत्तिष्ठन्ति । कस्मादेवम् । यस्मात् विवक्षसे महान् भवसि ॥

उत व्रतानि सोम ते प्राहं मिनामि पाक्या ।
अधा पितेव सूनवे वि वो मदे मृळा नो अभि चिद्वधाद्विवक्षसे ॥ ३ ॥

उत । व्रतानि । सोम । ते । प्र । अहम् । मिनामि । पाक्या ।
अध । पिताऽइव । सूनवे । वि । वः । मदे । मृळ । नः । अभि । चित् । वधात् । विवक्षसे ॥ ३ ॥

उत अपि च हे सोम अहं ते तुभ्यं व्रतानि यागादिकर्माणि पाक्या परिपक्वया सर्वार्थदर्शिन्या प्रज्ञया । यद्वा । पाक्येति व्रतविशेषणमेतत् । पाक्यानि परिपक्वानि परिनिष्ठितानीत्यर्थः । प्र मिनामि प्रहिनस्मि । प्रकर्षेण करोमीत्यर्थः । अध अथ यागानन्तरं वि वो मदे तव विविधे मदे सति नः अस्मान् मृळ सुखय । अभि चिद्वधात् आभिमुख्येन स्थितात् शत्र्वादिवधादस्मान् पालयेति शेषः । तत्र दृष्टान्तः । पितेव सूनवे । यथा पिता पुत्रार्थं सुखयति सर्वस्मात्पुत्रमेव पालयति तद्वत् । यस्मात् सुखयमानः पालयमानश्चाहं युष्मदर्थं पुनःपुनः सोमयागं करोमि तस्मान्मां सुखय पालय चेत्यर्थः । कस्मादेवमुच्यते । यस्मात्त्वं विवक्षसे महान् भवसि । महान्तश्च भक्तान् सुखयन्ति पालयन्ति चेति भावः ॥

समु प्र यन्ति धीतयः सर्गासोऽवताँइव ।
क्रतुं नः सोम जीवसे वि वो मदे धारया चमसाँइव विवक्षसे ॥ ४ ॥

सम् । ऊँ इति । प्र । यन्ति । धीतयः । सर्गासः । अवतान्ऽइव ।
क्रतुम् । नः । सोम । जीवसे । वि । वः । मदे । धारय । चमसान्ऽइव । विवक्षसे ॥ ४ ॥

१. तं-सु-शुभकारिलक्षणं । २. ग-इमे ।

हे सोम धीतयः देवतासुखान् दधति पुष्णन्तीति धीतयः स्तुतयोऽस्मदीयाः सस्रु संभूयैव प्र यन्ति प्रकृष्टया गत्या त्वां गच्छन्ति । तत्र दृष्टान्तः । सर्गासोऽवतामिव । विसृज्यन्त उदकपानार्थमिति सर्गा गोसंघा अश्वसंघा वा । ते यथोदकपानार्थमादानार्थं वा अवतान् । कूपनामैतत् । कूपान् प्रति गच्छन्ति तद्वत् । त्वमप्येनमस्माकं क्रतुं यागादिकं कर्म प्रज्ञां वा नः अस्माकं जीवसे चिरंजीवनाय धारय महतादरेण स्थापय । तत्र दृष्टान्तः । चमसानिव । यथा नः तव विमदे विविधसोमजन्यमदे कर्तव्यत्वेन निमित्तभूते सत्यध्वर्युर्हविर्धाने महता यत्नेन चमसान् सोमपात्राणि स्थापयति तद्वत् । कस्मादेवमुच्यते । यस्मात्त्वं विवक्षसे महान्भवसि । यद्वा । धीतयः । अङ्गुलिनामैतत् । धमन्ति पिबन्त्याभिरिति धीतयोऽङ्गुलयः । हे सोम त्वां सस्रु प्र यन्ति सदैव प्रकर्षेण त्वां प्राप्नुवन्ति । किमिव । अवतानिव । जलोद्धरणार्थं विसृज्यन्त इति सर्गा रज्जवः । यथा कूपान् प्रति गच्छन्ति तद्वत् । तत्सर्वं नोऽस्माकं जीवसे चिरंजीवनाय क्रतुं कर्म धारय । यथा संपूर्णं भवति तथा पूरय । किमिव । यथा चमसान् स्वर्णं पूरयसि[1] तद्वत् ॥

तव॒ त्ये सो॑म॒ शक्ति॑भि॒र्निका॑मासो॒ व्यृ॑ण्विरे ।

गृत्स॑स्य॒ धीरा॑स्त॒वसो॒ वि वो॒ मदे॑ व्र॒जं गोम॑न्तम॒श्विनं॒ विव॑क्षसे ॥ ५ ॥

तव॑ । त्ये । सो॒म॒ । शक्ति॑ऽभिः । निऽका॑मासः । वि । ऋ॒ण्वि॒रे॒ ।

गृत्स॑स्य । धीराः॑ । त॒वसः॑ । वि । वः॒ । मदे॑ । व्र॒जम् । गोऽम॑न्तम् । अ॒श्विन॑म् । विव॑क्षसे ॥५॥

निकामासः[2] दृष्टादृष्टफले नियतकामाः एते ते प्रसिद्धाः धीराः मेधाविन ऋत्विजः शक्तिभिः यागादिकर्मभिः सह हे सोम गृत्सस्य मेधाविनः तवसः महतः तव व्यृण्विरे विविधाः स्तुतीर्गमयन्ति[3] प्राप्नुवन्ति । कुर्वन्तीत्यर्थः । अतः कारणात् वि वो मदे तव सोमपानजन्यविविधमदनिमित्तभूते सत्यस्मभ्यं गोमन्तं गोमहितम् अश्विनम् अश्वसहितं व्रजं गोष्ठम् । सामर्थ्यात् मन्दुरा लभ्यते । मन्दुरां च देहीति शेषः । कस्मादेवमुच्यते । यस्मात् विवक्षसे महान्भवसि ॥ ११ ॥

प॒शुं नः॑ सोम रक्षसि पुरु॒त्रा विष्ठि॑तं॒ जग॑त् ।

स॒माकृ॑णोषि जी॒वसे॒ वि वो॒ मदे॒ विश्वा॑ सं॒पश्य॒न्भुव॑ना॒ विव॑क्षसे ॥ ६ ॥

प॒शुम् । नः॒ । सोम॑ । र॒क्ष॒सि॒ । पु॒रु॒ऽत्रा । विऽस्थि॑तम् । जग॑त् ।

स॒म्ऽआकृ॑णोषि । जी॒वसे॑ । वि । वः॒ । मदे॑ । विश्वा॑ । स॒म्ऽपश्य॑न् । भुव॑ना । विव॑क्षसे ॥६॥

हे सोम त्वं नः अस्मदीयं पशुं देवयागार्थमुपाहृतं रक्षसि पालयसि । न केवलं पशुं किंतु पुरुत्रा बहुधा विष्ठितं सुरनरतिर्यग्योन्यादिभावेनावस्थितं जगत् च रक्षसि । किंच स त्वं समाकृणोषि जगतो वृत्तिं सम्यगाकरोषीत्यर्थः । किमर्थम् । जीवसे जीवनार्थम् । किं कुर्वन् । विश्वा भुवना विश्वानि भुवनानि भूतजातानि संपश्यन् । किमर्थमेतदादिकं सर्वं करोषि उच्यते । वि वो मदे युष्माकं सर्वेषां देवानां विविधहविर्जन्यतृप्त्यर्थम् । उक्तं हि— 'इतः प्रदानमुत देवा उप जीवन्ति अमुतः प्रदानं मनुष्या उप जीवन्ति' (तै. सं. ३. २. ९. ७) इति । अत एव त्वं विवक्षसे महान् भवसि । महतामेतत्सर्वमुचितमित्यर्थः ॥

१. स१.२.६.७–पूरयति ।  २. ग-भ–निकामासो निकामाः ।  ३. त–स्तुतीर्गमयति ।

त्वं नः सोम विश्वतो गोपा अदाभ्यो भव ।
सेध राजन्नप स्रिधो वि वो मदे मा नो दुःशंस ईशता विवक्षसे ॥ ७ ॥

त्वम् । नः । सोम । विश्वतः । गोपाः । अदाभ्यः । भव ।
सेध । राजन् । अप । स्रिधः । वि । वः । मदे । मा । नः । दुःऽशंसः । ईशत । विवक्षसे ॥७॥

हे सोम अदाभ्यः केनाप्यहिंस्यः त्वं विश्वतः सर्वतः नः अस्माकं गोपाः रक्षिता भव । अपि च हे राजन् राजमान सोम त्वं स्रिधः अस्मदुपक्षपयितॄन् अप सेध अस्मत्तोऽपगमय अपजहि वा[1] । नः अस्माकं दुःशंसः विद्यमानानामविद्यमानानां कर्मणां शंसिता प्रख्यापयिता मा ईशत ईशिता मा भूत् । तव प्रसादादस्माकमपवक्ता कश्चिदपि मा भूदित्यर्थः । किमर्थमेतत्सर्वं प्रार्थ्यसे । वि वो मदे तव विविधसोमादिहविर्भिर्मदनार्थम् । अतो विवक्षसे त्वं महान्भवसि ॥

त्वं नः सोम सुक्रतुर्वयोधेयाय जागृहि ।
क्षेत्रवित्तरो मनुषो वि वो मदे द्रुहो नः पाह्यंहसो विवक्षसे ॥ ८ ॥

त्वम् । नः । सोम । सुऽक्रतुः । वयःऽधेयाय । जागृहि ।
क्षेत्रवित्ऽतरः । मनुषः । वि । वः । मदे । द्रुहः । नः । पाहि । अंहसः । विवक्षसे ॥८॥

हे सोम सुक्रतुः शोभनप्रज्ञः क्षेत्रवित्तरः क्षेत्रस्यातिशयेन लम्भकः त्वं नः अस्माकं वयोधेयाय अन्नदानाय जागृहि । किंच द्रुहः द्रोग्धुः मनुषः मनुष्याच्छत्रोः सकाशात् नः अस्मान् पाहि रक्ष । अंहसः पापाच्च मोऽस्मान् पाहि । किमर्थम् । वि वो मदे । तव सोमादिहविर्भिर्मदनार्थमित्यर्थः । विवक्षसे त्वं महान्भवसि ॥

त्वं नो वृत्रहन्तमेन्द्रस्येन्दो शिवः सखा ।
यत्सीं हवन्ते समिथे वि वो मदे युध्यमानास्तोकसातौ विवक्षसे ॥ ९ ॥

त्वम् । नः । वृत्रहन्ऽतम । इन्द्रस्य । इन्दो इति । शिवः । सखा ।
यत् । सीम् । हवन्ते । सम्ऽइथे । वि । वः । मदे । युध्यमानाः । तोकऽसातौ । विवक्षसे ॥९॥

हे वृत्रहन्तम शत्रूणामतिशयेन हन्तर्हे इन्दो हे सोम यः त्वम् इन्द्रस्य शिवः सुखकरः सखा मित्रभूतोऽसि स त्वं नः अस्मान् पाहीति शेषः । कदेति उच्यते । तोकसातौ । तोक इत्यपत्यनाम । सातिः । 'षणु दाने' इत्यस्माद्धातोः क्तिन् । दीयतेऽस्मिन्नपत्यमिति तोकसातिः संग्रामविशेषणम् । तस्मिन् । अतिमहतीत्यर्थः । समिथे संग्रामे[1] युध्यमानाः युद्धं कुर्वाणाः शत्रुजनाः सीं सर्वतः यत्[2] यदा[2] हवन्ते युद्धार्थमस्मानाह्वयन्ति । तदास्माकं रक्षिता भवेत्यर्थः । कस्मिन् निमित्ते । वि वो मदे तव विविधहविर्भिर्मदनार्थनिमित्ते । विवक्षसे त्वं महान्भवसि । महतो हि पालनं युक्तमेवेति ॥

अयं घ स तुरो मद इन्द्रस्य वर्धत प्रियः ।
अयं कक्षीवतो महो वि वो मदे मतिं विप्रस्य वर्धयद्विवक्षसे ॥ १० ॥

१. स-भ६-ष । २. ग-क-भ-'यत् यदा' नास्ति ।

अयम् । घ । सः । तुरः । मदः । इन्द्रस्य । वर्धत । प्रियः ।

अयम् । कक्षीवतः । महः । वि । वः । मदे । मतिम् । विप्रस्य । वर्धयत् । विवक्षसे ॥ १० ॥

अयं घ इत्थं खलु सः प्रसिद्धः अस्माभिरभिषुतः सोमः तुरः सर्वकार्येषु त्वरणशील[1] मदः मदकरः प्रियः इन्द्रस्य तर्पयिता वर्धत अस्मदीयां मतिमवर्धयत् । अयं सोमः कक्षीवतः एतदाख्यस्यर्षेः । कीदृशस्य । महः महतः विप्रस्य मेधाविनः मतिं प्रज्ञां वर्धयत् अवर्धयत् । तद्वदस्माकमपि मतिं वर्धयेदित्यर्थः । शिष्टं गतम् ॥

अयं विप्राय दाशुषे वाजाँ इयर्ति गोमतः ।
अयं सप्तभ्य आ वरं वि वो मदे प्रान्धं श्रोणं च तारिषद्विवक्षसे ॥ ११ ॥

अयम् । विप्राय । दाशुषे । वाजान् । इयर्ति । गोऽमतः ।

अयम् । सप्तऽभ्यः । आ । वरम् । वि । वः । मदे ।

प्र । अन्धम् । श्रोणम् । च । तारिषत् । विवक्षसे ॥ ११ ॥

अयं सोमः विप्राय मेधाविने दाशुषे हविर्दत्तवते यजमानाय गोमतः पशुयुक्तानि वाजान्[2] अन्नानि इयर्ति प्रेरयति । प्रयच्छतीत्यर्थः । किंच अयम् एव सोमः सप्तभ्यः होतृभ्यः वरं वरणीयं धनम् आ प्रयच्छति । अन्धं नेत्रहीनं दीर्घतमसमृषिं चक्षुष्प्रदानेन श्रोणं च पङ्गुं पराघृजमृषिं चरणप्रदानेन एवमुभावृषी प्र तारिषत् प्रकर्षेण वर्धितवान् । शिष्टं स्पष्टम् ॥ ॥१२॥

'प्र हि' इति नवर्चं दशमं सूक्तमानुष्टुभं पूषदेवताकम् । आद्यानुष्ट्यावुष्णिहौ । ऋषिः पूर्ववत् । तथा चानुक्रान्तं—'प्र हि नव पौष्णमानुष्टुभमाद्याचतुर्थ्यौ उष्णिहौ' इति । गतो विनियोगः ॥

प्र ह्यच्छा मनीषाः स्पार्हा यन्ति नियुतः ।
प्र दस्रा नियुद्रथः पूषा अविष्टु माहिनः ॥ १ ॥

प्र । हि । अच्छ । मनीषाः । स्पार्हाः । यन्ति । निऽयुतः ।

प्र । दस्रा । नियुत्ऽरथः । पूषा । अविष्टु । माहिनः ॥ १ ॥

हि यस्मात्कारणात् मनीषाः अस्मदीयाः स्तुतिलक्षणा वाचः अच्छ गुणग्रहणद्वारेण पूषण-मभिप्राप्तुं प्र यन्ति प्रकर्षेण गच्छन्ति । कीदृश्यः । स्पार्हाः सर्वगुणोपेतत्वात्स्पृहणीयाः नियुतः । नियमनाद्वा नियोजनाद्वैतद्रूपम् । अस्माभिर्नियमिता वा नियुक्ता वा । उच्चारिता इत्यर्थः । एतत् स्तोत्रोपकारस्य प्रत्युपकारं कर्तुं दस्रा दर्शनीयः नियुद्रथः गमनाय सर्वदा नियतरथो[3] नियुक्तरथो वा माहिनः महान् पूषा देवः प्राविष्टु अस्मान् प्रकर्षेण रक्षतु । यद्वा । दस्रा दंसयितारौ कर्मणा-मुपक्षपयितारौ । परिसमापयितारावित्यर्थः । एवंभूतौ पत्नीयजमानौ पूषा रक्षत्विति योज्यम् ॥

यस्य त्यन्महित्वं वाताप्यमयं जनः ।
विप्र आ वंसद्धीतिभिश्चिकेत सुष्टुतीनाम् ॥ २ ॥

१. त—त्वरणशीलः; म१.२.४—त्वरत्वरणशीलः । २. त-म६—वाजानि । ३. म६-सु—नियुतरथो ।

यस्य । त्यत् । महिऽत्वम् । वाताप्यम् । अयम् । जनः ।

विप्रः । आ । वंसत् । धीतिऽभिः । चिकेत । सुऽस्तुतीनाम् ॥ २ ॥

विप्रः मेधावी[1] अयं जनः यजमानः[2] यस्य पूष्णः संबन्धि त्यत् तत् प्रसिद्धं महित्वं महत्त्वं वाताप्यं सम्बके संभूतं परिपक्वमुदकं धीतिभिः यागादिकर्मभिः[3] आ वंसत् संभजते स देवः सुष्टुतीनां तदीयाः शोभनाः स्तुतीः चिकेत जानातु ॥

**स वेद सुष्टुतीनामिन्दुर्न पूषा वृषा ।**

**अभि प्सुरः प्रुषायति व्रजं न आ प्रुषायति ॥ ३ ॥**

सः । वेद । सुऽस्तुतीनाम् । इन्दुः । न । पूषा । वृषा ।

अभि । प्सुरः । प्रुषायति । व्रजम् । नः । आ । प्रुषायति ॥ ३ ॥

स उक्तगुणः सः पूषा सुष्टुतीनां शोभनस्तोत्राणाम् । स्वरूपमिति शेषः । वेद जानाति । अपि च इन्दुर्न सोम इव तथायं पूषा वृषा कामानां वर्षिता भवति । प्सुरः रूपवान् सः अभि अस्मानभिलक्ष्य प्रुषायति सिञ्चति । तथा नः अस्माकं व्रजं गोष्ठं च आ प्रुषायति आभिमुख्येन सिञ्चति । अस्मभ्यं हिरण्यपश्वादिकं ददातीत्यर्थः ॥

**मंसीमहि त्वा वयमस्माकं देव पूषन् ।**

**मतीनां च साधनं विप्राणां चाधवम् ॥ ४ ॥**

मंसीमहि । त्वा । वयम् । अस्माकम् । देव । पूषन् ।

मतीनाम् । च । साधनम् । विप्राणाम् । च । आऽधवम् ॥ ४ ॥

हे देव द्योतमान पूषन् वयं स्तोतारः त्वा त्वां मंसीमहि स्तुमः । कीदृशम् । अस्माकम् अस्मदीयानां मतीनां च अभिलषितानां च साधनं साधयितारं विप्राणां च मेधाविनामपि आधवं परिचर्यान्तरेण कम्पयितारम् ॥

**प्रत्यर्धिर्यज्ञानामश्वहयो रथानाम् ।**

**ऋषिः स यो मनुर्हितो विप्रस्य यावयत्सखः ॥ ५ ॥**

प्रतिऽअर्धिः । यज्ञानाम् । अश्वऽहयः । रथानाम् ।

ऋषिः । सः । यः । मनुःऽहितः । विप्रस्य । यवयत्ऽसखः ॥ ५ ॥

ऋषिः सर्वस्य द्रष्टा सः पूषा यज्ञानां प्रत्यर्धिः अर्धभाक् रथानां अश्वहयः । हयतिर्गतिकर्मा । रथानां संबन्धिभिरश्वैर्गमनशीलो भवति । अश्वयुक्तेन रथेन सदा गन्तेत्यर्थः । मनुर्हितः मनुष्यहितः यः विप्रस्य मेधाविनः स्तोतुः यावयत्सखः शत्रूणां पृथक्कर्ता सखा भवति स इति पूर्वेण संबन्धः ॥ ॥ १२ ॥

---

१. स–मेधावीयं यजमानजनः; त१-म१.२.४–मेधावी अयं यजमानः; म६-मु–मेधावी अयं यजमानजनः । २. त१.२-म७–य तत् , त३.४.५.६.७-म२-यत् ; म१.४.६–यत् तत् । ३. स-म१.२.४–यागादिकर्म ।

आधीषमाणायाः पतिः शुचायाश्च शुचस्य च ।
वासोवायोऽवीनामा वासांसि मर्मृजत् ॥ ६ ॥

आऽधीषमाणायाः । पतिः । शुचायाः । च । शुचस्य । च ।
वासःऽवायः । अवीनाम् । आ । वासांसि । मर्मृजत् ॥ ६ ॥

आधीषमाणायाः आसमन्तात् धीयमानायाः शुचायाश्च दीप्तायाः अजायाश्च पतिः स्वामी । न केवलं स्त्रीमात्रस्य किंतु शुचस्य दीप्तस्य पुंपशोः च पतिरित्यर्थः । एवंभूतः पूषा देवः अवीनाम् ऊर्णानां संबन्धिभी रोमभिः वासोवायः कृतापविशुद्धानि वस्त्राणि प्रेरयन् वासांसि रजकस्थानीयानि तानि वस्त्राणि आ मर्मृजत् आ समन्तात् प्रक्षालनाभ्यां शोधयन् भवति ॥

इनो वाजानां पतिरिनः पुष्टीनां सखा ।
प्र श्मश्रु हर्यतो दूधोद्वि वृथा यो अदाभ्यः ॥ ७ ॥

इनः । वाजानाम् । पतिः । इनः । पुष्टीनाम् । सखा ।
प्र । श्मश्रु । हर्यतः । दूधोत् । वि । वृथा । यः । अदाभ्यः ॥ ७ ॥

इनः ईश्वरः पूषा वाजानां हविरादीनां सर्वेषामन्नानां पतिः स्वामी इनः प्रभुः पुष्टीनां सर्वेषां प्राणिनां स्वभूतानां पोषणानां[1] करणं[1] सखा मित्रभूतः । सर्वस्योपकारित्वात् । किंच हर्यतः कामयमानस्य यजमानस्य स्वभूतं सोमं पिबन्निति शेषः । श्मश्रु श्मश्रूणि वृथा अनायासेनाप्रयत्नेन प्र वि अदूधोत् प्रकर्षेण विविधं कम्पयति यः पूषा अदाभ्यः शत्रुभिरहिंस्यः स इति पूर्वेण संबन्धः ॥

आ ते रथस्य पूषन्नजा धुरं ववृत्युः ।
विश्वस्यार्थिनः सखा सनोजा अनपच्युतः ॥ ८ ॥

आ । ते । रथस्य । पूषन् । अजाः । धुरम् । ववृत्युः ।
विश्वस्य । अर्थिनः । सखा । सनःऽजाः । अनपऽच्युतः ॥ ८ ॥

हे पूषन् देव ते त्वदीयस्य रथस्य धुरम् अजाः वाहनत्वेन आ ववृत्युः आवर्तयन्ति । आवहन्तीत्यर्थः । यस्त्वं विश्वस्य सर्वस्य अर्थिनः याचकस्य अभिलषितार्थप्रदानात् सखा सखिभूतः सनोजाः चिरं जातः अनपच्युतः स्वाधिकारादनपगतः[2] तस्य[2] ते रथमिति संबन्धः ॥

अस्माकमूर्जा रथं पूषा अविष्टु माहिनः ।
भुवद्वाजानां वृध इमं नः शृणवद्धवम् ॥ ९ ॥

अस्माकम् । ऊर्जा । रथम् । पूषा । अविष्टु । माहिनः ।
भुवत् । वाजानाम् । वृधः । इमम् । नः । शृणवत् । हवम् ॥ ९ ॥

माहिनः महान् पूषा अस्माकं स्वभूतं रथम्[3] ऊर्जा बलेन[3] अन्नेन वा अविष्टु अवतु रक्षतु । किंच वाजानाम् अन्नानां वृधः वर्धकः भुवत् भवतु । नः अस्मदीयम् इमम् ईदृग्भूतं हवम् आह्वानं शृणवत् शृणोतु ॥ ॥ १४ ॥

१. ग-पोषकानां रक्षणे; त-मु-पोषकाणां करणे । २. त-भर-॰दनपगतस्य; म१.२.७-॰दनपच्युतश्च तस्य । ३. त-रसं ऊर्जा बलेन; म-रसं ऊर्जा बलेन ।

'असत्सु मे' इति चतुर्विंशत्यृचमेकादशं सूक्तमिन्द्रपुत्रस्य वसुक्रस्यार्षं त्रैष्टुभमैन्द्रम्। तथा चानुक्रान्तम्—'असत्सु चतुर्विंशतिरैन्द्रो वसुक्रः' इति। महाव्रते मरुत्वतीयशस्त्र एतत्सूक्तम्। तथैव पञ्चमारण्यके सूत्रितं च—'असत्सु मे जरितः साभिवेगः पिबा सोममभि यमुग्र तर्दः' (ऐ. आ. ५. १. १) इति॥

असत्सु मे जरितः साभिवेगो यत्सुन्वते यजमानाय शिक्षम्।
अनाशीर्दामहमस्मि प्रहन्ता सत्यध्वृतं वृजिनायन्तमाभुम्॥ १॥

असत्। सु। मे। जरितरिति। सः। अभिऽवेगः। यत्। सुन्वते। यजमानाय। शिक्षम्।
अनाशीःऽदाम्। अहम्। अस्मि। प्रऽहन्ता। सत्यऽध्वृतम्। वृजिनऽयन्तम्। आभुम्॥ १॥

वासुक्रेषु सूक्तेषु बाहुल्येनेन्द्रः स्तूयते। इदानीमिन्द्रो वसुक्रं स्तोतुमुद्यतं पुत्रं संबोध्य स्वसामर्थ्यं कथयति येन विज्ञातदेवतारूपः सन् सुखेन स्तोष्यतीति। यद्वा। कार्यकारणयोरेकत्वोपचारात् 'आत्मा वै पुत्रनामासि' (आश्व. गृ. १.१५.११) इति वचनादिन्द्ररूपेणावस्थितो वसुक्र आत्मानं स्तौति। कश्चित् कश्चिदिन्द्र चेति। हे जरितः स्तोतः मे मम सु शोभनः सः तादृशः अभिवेगः अभिगमनं मनसां वृत्तिविशेषः असत् अस्ति विद्यते। यत् येन अभिवेगेन सुन्वते मह्यं सोमाभिषवं कुर्वते यजमानाय यज्वने शिक्षम् अभिलषितमर्थं ददामि। किंच अहम् अनाशीर्दाम्। आशीरित्यत्र प्रार्थना इह तु[1] सामर्थ्यात् प्रार्थितं[2] हविरुच्यते। तन्मह्यमददतं जनम्। यद्वा। आशीरिति सोमाश्रयणं दध्युच्यते। तस्यादातारम्। असोमयाजिनमित्यर्थः। प्रहन्ता अस्मि प्रकर्षेण हिंसिता भवामि। कीदृशम्। सत्यध्वृतं सत्यस्य हिंसकम्। अनृतवादिनं चेत्यर्थः। वृजिनायन्तं पापं कर्तुमिच्छन्तम् आभुं व्याप्नुवन्तम्॥

यदीदहं युधये संनयान्यदेवयून्तन्वा शूशुजानान्।
अमा ते तुम्रं वृषभं पचानि तीव्रं सुतं पञ्चदशं नि षिञ्चम्॥ २॥

यदि। इत्। अहम्। युधये। सम्ऽनयानि। अदेवऽयून्। तन्वा। शूशुजानान्।
अमा। ते। तुम्रम्। वृषभम्। पचानि। तीव्रम्। सुतम्। पञ्चऽदशम्। नि। सिञ्चम्॥ २॥

यत् यदा अहमित् अहमेव युधये युद्धार्थम् अदेवयून् देवान् यष्टुमनिच्छतोऽयज्वनः[3] संनयानि संगमयामि। कीदृशान्। तन्वा स्वशरीरेण शूशुजानान् आत्मंभरित्वात्पुष्टिलक्षणया दीप्त्या शुक्लान्। पुष्टानित्यर्थः। तदा हे इन्द्र अहम् अमा ऋत्विगादिभिः सहितः ते तुभ्यं तुम्रं प्रेरकं बलिनम्। पीवानमित्यर्थः। वृषभं सेचनसमर्थं पुंपशुं पचानि। किंच तीव्रं मदकरसं सुतम् अभिषुतं पञ्चदशम्। प्रतिपत्प्रभृति[4] पञ्चदशसंख्याकासु तिथिषु शुक्लपक्ष एकोत्तरवृद्ध्या पर्वाणि जायन्ते। कृष्णपक्षे तु तद्विहीयन्ते। एवंभूतपञ्चदशः सोम उच्यते। तम्। यद्वा। त्रिवृत्पञ्चदश-स्तोमोपेतं माध्यंदिनसवनकमित्यर्थः। नि षिञ्चं दशापवित्रे द्रोणकलशे चमसपात्रेऽग्नौ[5] वा[6] सिञ्चामि प्रक्षिपामीत्यर्थः॥

१. ल–'सु' नास्ति। २. त–प्रार्थ्यमानं। ३. त–*मिच्छतः अयजनः। ४. म-त३-अ१.२.४.५–*प्रभृतिषु। ५. त१.२.६ ७–चमसपात्रेणाग्नौ च; त४.५–चमसपात्रे अग्नौ च; त३-अ-मु–चमसपात्रे अग्नौ च।

नाहं तं वे॑द॒ य इति॒ ब्रवी॒त्यदे॑वयून्त्स॒मर॑णे जघ॒न्वान् ।
य॒दावाख्य॑त्स॒मर॑ण॒मृघा॑व॒दादिद्ध॑ मे वृष॒भा प्र ब्रु॑वन्ति ॥ ३ ॥

न । अ॒हम् । तम् । वे॒द॒ । यः । इति॑ । ब्रवी॑ति । अदे॑वऽयून् । स॒म्ऽअर॑णे । ज॒घ॒न्वान् ।
य॒दा । अव॑ऽअख्यत् । स॒म्ऽअर॑णम् । ऋघा॑वत् । आत् । इत् । ह॒ । मे॒ । वृ॒ष॒भाः । प्र । ब्रु॒व॒न्ति॒ ॥ ३ ॥

यः जनः अदेवयून् देवानकामयमानान्[1] देवद्विषो राक्षसादीन् समरणे संग्रामे जघन्वान् अहं हतवान् इति ब्रवीति वदति तं तादृशं मद्व्यतिरिक्तं जनम् अहं न वेद न जानामि। मत्तोऽन्यः संग्रामे शत्रूणां हन्ता नास्तीत्यर्थः। किंच यदा यस्मिन्काले समरणं संग्रामम् अवाख्यत् अवाक्तं व्यक्तकृतमहं पश्यामि। कीदृशम्। ऋघावत् ऋघावन्तं परस्परं हिंसायुक्तम्। अत्यन्तक्रूरमित्यर्थः। आत् तदानीं मे मम स्वभूतानि वृषभा वृषभकर्माणि दर्पितवृषभस्येव विक्रान्तकर्माणि प्र[2] ब्रुवन्ति[2]। विद्वज्जना इति शेषः। इत् ह इतीमौ पदपूरणौ॥

यद॒ज्ञाते॑षु वृ॒जने॒ष्वासं॒ विश्वे॑ स॒तो म॒घवा॑नो म आसन् ।
जि॒नामि॒ वेत्क्षेम॒ आ सन्त॑मा॒भुं प्र तं क्षि॑णां॒ पर्व॑ते पाद॒गृह्य॑ ॥ ४ ॥

यत् । अ॒ज्ञाते॑षु । वृ॒जने॑षु । आस॑म् । विश्वे॑ । स॒तः । म॒घऽवा॑नः । मे॒ । आ॒स॒न् ।
जि॒नामि॑ । वा॒ । इत् । क्षेमे॑ । आ । सन्त॑म् । आ॒भुम् ।
प्र । तम् । क्षि॒णा॒म् । पर्व॑ते । पा॒द॒ऽगृह्य॑ ॥ ४ ॥

यत् यदा अज्ञातेषु शरीरशस्त्रास्त्रबलादिभिरपरिज्ञातेषु वृजनेषु[3] संग्रामेषु आसम् अहं युद्धार्थमुपविशामि तदा विश्वे सर्वे मघवानः हविर्लक्षणतपोलक्षणधनवन्त ऋषयः सतः एवं वर्तमानस्य मे ममेन्द्रस्य समीपे आसन् उपविशन्ति। मम वीर्यवृत्तान्तं मां स्तुवन्तस्तिष्ठन्तीत्यर्थः। अपि च क्षेमे जगत्पालने निमित्ते आ सन्तम्। आकारोऽभिव्यस्यार्थे वर्तते। सर्वमभिभवन्तम् आभुं महान्तं शत्रुं जिनामि वा विनाशयाम्येव। नात्र विनाशे संशयः। इत् इति पूरणः। तं महान्तं शत्रुं पादगृह्य पादौ गृहीत्वा पर्वते गिरौ प्र क्षिणां प्रहिनस्मि प्रक्षिपामि॥

न वा उ॒ मां वृ॒जने॑ वारयन्ते॒ न पर्व॑तासो॒ यद॒हं म॑न॒स्ये ।
मम॑ स्व॒नात्कृ॑धु॒कर्णो॑ भयात ए॒वेदनु॒ द्यून्कि॒रणः॒ समे॑जात् ॥ ५ ॥

न । वै । ऊँ इति॑ । माम् । वृ॒जने॑ । वा॒रय॑न्ते । न । पर्व॑तासः । यत् । अ॒हम् । म॒न॒स्ये ।
मम॑ । स्व॒नात् । कृ॒धु॒ऽकर्णः॑ । भ॒या॒ते॒ । ए॒व । इत् । अनु॑ । द्यून् । कि॒रणः॑ । सम् । ए॒जा॒त् ॥ ५ ॥

वै उ इत्येवैव। वृजने संग्रामे मां युद्धार्थमुपस्थितं सन्तं न वारयन्ते केचिन्निवारयितुं समर्था न भवन्ति। अहं यत् कर्म मनस्ये मनसा कर्तुमिच्छामि पर्वतासः अवितरणक्षमा[4] हिमवदादयो गिरयस्तत्कर्म मनसा मोढुं न शक्नुवन्तीत्यर्थः। किंच मम इन्द्रस्य स्वनात् शब्दादेव कृधुकर्णः नामासुरः यद्वा कृधुकर्णो ह्रस्वकर्णो मन्दश्रवणेन्द्रियो बधिरः स्थावरपिपीलिकादिरपि

१. स-भ२-मु—देवान् कामयमानान्। २. ग-भ५—प्रकथयंति; स३-भ६—प्रब्रुवंति प्रकथयंति। ३. स—'वृजनेषु' नास्ति। ४. स-भ-मु—अवितरणक्षमा; उद्योध—अतिभाक्षमाः।

भयते बिभेति । अपि च एषेत् एवमेव कृतकर्मणस् अनु द्यून् प्रतिदिनमित्यर्थः । किरणः । अन्तर्णीतमत्वर्थमेतत् । किरणवान् रश्मिवानादित्यः समेजान् सम्यक्कम्पमानश्चलति । नियमेन भयादित्यर्थः ॥　　॥ १५ ॥

दर्शन्वत्र शृतपाँ अनिन्द्रान्बाहुक्षदः शरवे पत्यमानान् ।
घृषुं वा ये निनिदुः सखायमध्यू न्वेषु पवयो ववृत्युः ॥ ६ ॥

दर्शन् । नु । अत्र । शृतऽपान् । अनिन्द्रान् । बाहुऽक्षदः । शरवे । पत्यमानान् ।
घृषुम् । वा । ये । निऽनिदुः । सखायम् । अधि । ऊँ इति । नु । एषु । पवयः । ववृत्युः ॥ ६ ॥

अत्र अस्मिञ्जगति शृतपान् शृतानि पक्वानि सोमादिहवींष्यपहृत्य पिबतः अनिन्द्रान् इन्द्रेण मया वर्जितान् बाहुक्षदः बाहुभिर्यजमानान्क्षलीकुर्वतः शरवे हिंसार्थं पत्यमानान् अभिपततोऽसुरादीन् नु क्षिप्रं दर्शन् अहमिन्द्रः पश्यामि । एवंभूतेषु एषु अधि उपरि पवयः मदीयान्यायुधानि ववृत्युः वर्तन्ते । वाशब्दः समुच्चये । घृषुं महान्तं च सखायं सखिवत्प्रियं हितस्य कर्तारं मां ये निनिदुः निन्दन्ति । उ इति समुच्चये । एषु चोपरि मदीयान्यायुधानि क्षिप्रं वर्तन्ते ॥

अभूर्वौक्षीर्व्यु१ आयुरानड्दर्षन्नु पूर्वो अपरो नु दर्षत् ।
द्वे पवस्ते परि तं न भूतो यो अस्य पारे रजसो विवेष ॥ ७ ॥

अभूः । ऊँ इति । औक्षीः । वि । ऊँ इति । आयुः । आनट् । दर्षत् । नु । पूर्वः । अपरः । नु । दर्षत् ।
द्वे इति । पवस्ते इति । परि । तम् । न । भूतः । यः । अस्य । पारे । रजसः । विवेष ॥ ७ ॥

अत्र मध्यमपुरुषेणेन्द्रस्योन्मत्तत्वादुक्त इन्द्रं स्तौति । उ इत्यवधारणे । हे इन्द्र अभूः त्वमेव प्रादुर्भवसि । औक्षीः काले काले त्वमेव पृथिवीं सिञ्चसि नान्य इत्यर्थः । आनडित्यादौ सर्वत्र परोक्षनिर्देशे प्रत्यक्षीकरणार्थं मध्यमपुरुषेण प्रकृतत्वादेकवाक्यतायै युष्मच्छब्दसमानार्थो भवच्छब्दोऽध्याहर्तव्यः । वि इति वैविध्ये । उ इति चार्थे । आयुर्जीवितमुच्यते । इन्द्रो भवान् विविधम् आयुः च आनट् व्याप्नोति । आ[1] भूतसंप्लवाज्जीवतीत्यर्थः[1] । किंच पूर्वः पुरातनो भवानिन्द्रः नु क्षिप्रं दर्षत् । 'दॄ विदारणे' । 'सिब्बहुलं लेटि' । वज्रेण शत्रून् विदारयति । अपरः अन्यः शत्रुः नु दर्षत् । नु इति निषेधार्थे । भवन्तमिन्द्रं न विदारयति । भवानेव सर्वं शत्रुजातं हिनस्तीत्यर्थः । अपि च यः भवानिन्द्रः अस्य दृश्यमानस्य रजसः लोकस्य । त्रैलोक्यस्येत्यर्थः । पारे परतः । परमसूक्ष्मवायुरूपेण सृष्टिकारणात्मना स्थितोऽस्तीति शेषः । विवेष सर्वतो व्याप्नोति तं[2] भवन्तमिन्द्रं[2] द्वे इति सामर्थ्यात् द्यावापृथिव्यौ न परि भूतः न परिभवतः । अभिभवितुं न शक्नुत इत्यर्थः । कीदृश्यौ । पवस्ते । पवतिर्गतिकर्मा । अस्मादौणादिकोऽसन्प्रत्ययः । अतः 'अजाद्यतष्टाप्' ( पा. सू. ४. १. ४ ) इति टापि कृते प्रथमाद्विवचने चैतद्रूपं भवति । महत्त्वेन सर्वस्याभिभवमाप गच्छन्त्यौ ।

१. ग–आभूतसंप्लवं°; त–अभूतसंप्लवा°; म१.४–आभूतसंप्ल°; म१(१)-उद्गीथ–आमहाभूतसंप्लवा°; भ२–अभूतसंपूर्ण°; भ६–अभूतसंप्लवा°; भ७–आभूतं संप्लवं° । २. त१.२.६-मु–त्वमिन्द्रं; त४–तं भद्रं ।

गावो यवं प्रयुता अर्यो अक्षन् ता अपश्यं सहगोपाश्चरन्तीः ।
हवा इदर्यो अभितः समायन्कियदासु स्वपतिश्छन्दयाते ॥ ८ ॥

गावः । यवम् । प्रऽयुताः । अर्यः । अक्षन् । ताः । अपश्यम् । सहऽगोपाः । चरन्तीः ।
हवाः । इत् । अर्यः । अभितः । सम् । आयन् । कियत् । आसु । स्वऽपतिः । छन्दयाते ॥८॥

गावः धेनवः प्रयुताः प्रकर्षेण मिश्रिताः परस्परेण सह भूताः यवं मद्दृष्टिजनितयवादिघासम् अक्षन् अदन्ति भक्षयन्ति । अर्यः सर्वस्य स्वाम्यहं ताः गाः अपश्यं पश्यामि । कीदृशीः । सहगोपाः पशुपालकेन सहिताः चरन्तीः घासं भक्षयन्तीः । एवंभूतास्ताः परया प्रीत्या पश्यामीत्यर्थः । किंच हवाः वाहनदोहनार्थमाह्वानार्हा गावः अर्यः । द्वितीयार्थे प्रथमा । अर्यं स्वामिनं प्रति अभितः सर्वतः[1] समायन् । समित्येकीभावे । एकीभूयागच्छन्ति । इदिति पूरणः । आगतासु आसु गोषु स्वपतिः स्वानां गवां स्वामी कियत् क्षीरं छन्दयाते दोग्धुं कामयते । महती दोग्धीत्यर्थः[2] । ' गाव आशिरं दुदुहे ' ( ऋ. सं. ८. ६९. ६ ) इति वचनात् ॥

सं यद्वयं यवसादो जनानामहं यवाद उर्वज्रे अन्तः ।
अत्रा युक्तोऽवसातारमिच्छादथो अयुक्तं युनजद्ववन्वान् ॥ ९ ॥

सम् । यत् । वयम् । यवसऽअदः । जनानाम् । अहम् । यवऽअदः । उरुऽअज्रे । अन्तरिति ।
अत्र । युक्तः । अवऽसातारम् । इच्छात् । अथो इति । अयुक्तम् । युनजत् । ववन्वान् ॥ ९ ॥*

अत्रेदु मे मंससे सत्यमुक्तं द्विपाच्च यच्चतुष्पात्संसृजानि ।
स्त्रीभिर्यो अत्र वृषणं पृतन्यादयुद्धो अस्य वि भजानि वेदः ॥ १० ॥

अत्र । इत् । ऊँ इति । मे । मंससे । सत्यम् । उक्तम् । द्विऽपात् । च । यत् । चतुःऽपात् । सम्ऽसृजानि ।
स्त्रीभिः । यः । अत्र । वृषणम् । पृतन्यात् । अयुद्धः । अस्य । वि । भजानि । वेदः ॥१०॥

मे मम अत्र अस्मिन् स्तोत्रे उक्तं मया कथितं सत्यमित् यथाभूतमेव मंससे त्वं जानीहि । अर्थवादरूपेण वैलक्ष्यारोपितगुणमित्यर्थः । उ इति पूरणः । किंच द्विपाच्च मनुष्यादिकं च चतुष्पात् च पश्वादिकं च यत् स्थावरजङ्गमात्मकं जगत् संसृजानि अहमुत्पादयानीति त्वं जानीहि । अत्र अस्मिञ्जगति स्त्रीभिः स्त्रीसदृशैः बलाद्विहीनैः पुरुषैः सह यः शूरंमन्यो जनः वृषणम् अभिलषितस्य वर्षितारं माम् । परित्यज्येति शेषः । पृतन्यात् युद्धं कर्तुमिच्छति अहम् अस्य ईदृशस्य

१. त-' सर्वतः ' नास्ति । २. तृ-भ१.२.४.६-मु-दोग्ध्रीरित्यर्थः । *. त७-मु-अनया ऋषिरिन्द्रप्रसादलब्धं स्वस्य सार्वात्म्यं प्रकाशयति । जनानां लोकानां मध्ये ये यवसादः तृणस्यात्तारः पशवः ते वयमिति त्वं सम्यक् जानीहि । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । ये च यवादः यवोपलक्षितस्यान्नस्य अत्तारो मनुष्यास्तेपि वयमिति संजानीहि । वस्तुतस्तु उर्वज्रे विस्तीर्णे अविर्भवणे हार्दाकाशरूपे यत् अंतः अंतर्यामिरूपं ब्रह्म तदहमस्मि । अत्रास्मिन् हार्दाकाशे युक्तः समाहितो भक्तोऽयं अवसातारं आत्मनः सेवकारं इच्छात् इच्छति आत्मसाक्षात्कर्तुं । अथो अपि च अयुक्तं अयोगिनं ववन्वान् । द्वितीयार्थे प्रथमा । वन्वांतं अतिशयेन विषयान् सेवमानं पुरुषं युनजत् युनक्ति संसारे । शापानुग्रहसमर्थो भवद्रूपो-ऽहमेवास्मीति भावः ।

स्वभूतं वेदः धनम् अयुवः तेन पुरुषेणायोद्धा सन् बलादपहृत्य वि भजामि स्तोतृभ्यो यष्टृभ्यश्च ददामीत्यर्थः ॥ ॥ १६ ॥

यस्यानक्षा दुहिता जात्वास कस्तां विद्वाँ अभि मन्याते अन्धाम् ।
कतरो मेनिं प्रति तं मुचाते य ईं वहाते य ईं वा वरेयात् ॥ ११ ॥

यस्य । अनक्षा । दुहिता । जातु । आस । कः । ताम् । विद्वान् । अभि । मन्याते । अन्धाम् ।
कतरः । मेनिम् । प्रति । तम् । मुचाते । यः । ईम् । वहाते । यः । ईम् । वा । वरेऽयात् ॥ ११ ॥

यस्य दृश्यस्य मम कारणरूपेणावस्थितस्य अनक्षा अक्षिवर्जिता दर्शनहीना । अचेतनेत्यर्थः । दुहिता प्रकृत्यात्मा जातु कदाचित् आस । असतेर्गत्यर्थस्य[1] लिटि[1] रूपम् । सामर्थ्यात् महाप्रलये मय्येव लीना सती सर्वत्र वर्तते तां प्रकृतिं विद्वान् मय्येव लीनां जानन् मत्तोऽन्यो देवः कः भवति । न कोऽपीत्यर्थः । अपि च अन्धां दर्शनहीनामचेतनां ताम् अभि मन्याते आत्मन्याश्रय-प्रदानेन को देवोऽभिपूजयति । यद्वा । क्षीरोदकवत् घटाकाशवच्च मया सहैकीभूतां तामाभिमुख्येन को जानाति । अहमेव सर्वज्ञः स्वात्मन्याश्रयप्रदानेनाभिपूजयामि । मया सहैकीभूतां तां तत्त्वतोऽहमेव जानामि नान्य इति । किंच कतरः देवः मेनिं वज्रं तं प्रसिद्धं वृत्रादिशत्रुं प्रति मुचाते मुञ्चति । स्वयमेव मत्प्रमुखाध्येदानीं प्रतिमुक्ते । यः देवः ईम् एनं शत्रुं वहाते वहति । अपि वा यः ईम् एनं वरेयात् वारयितुमिच्छति[2] । स चाहमेव नान्यो मत्सदृशोऽस्तीत्यर्थः ॥

कियती योषा मर्यतो वधूयोः परिप्रीता पन्यसा वार्येण ।
भद्रा वधूर्भवति यत्सुपेशाः स्वयं सा मित्रं वनुते जने चित् ॥ १२ ॥

कियती । योषा । मर्यतः । वधूऽयोः । परिऽप्रीता । पन्यसा । वार्येण ।
भद्रा । वधूः । भवति । यत् । सुऽपेशाः । स्वयम् । सा । मित्रम् । वनुते । जने । चित् ॥ १२ ॥

कियती किंपरिमाणा योषा स्त्रीजातिः मर्यतः मनुष्यसंबन्धिनो भोगाभावरतः वधूयोः स्त्रीकामस्य सर्वात्मकस्यान्तर्यामिरूपेणावस्थितस्येन्द्रस्य परिप्रीता अनुरक्ता । वशवर्तिनीत्यर्थः । कीदृशस्य । वार्येण वरणीयेन पन्यसा स्तोत्रेण स्तुतस्य सत इति शेषः । अपि च यत् या वधूः भद्रा कल्याणी सुपेशाः शोभनरूपा च भवति सा द्रौपदीदमयन्त्यादिका वधूः स्वयम् आत्मनैव जने चित् जनसंघेऽवस्थितमिति मित्रं प्रियमर्जुननलादिकं पतिं वनुते याचते । स्वयंवरधर्मेण प्रार्थयते । स च प्रीयमाणो वरजनोऽहमेवेत्यभिप्रायः । 'रूपंरूपं प्रतिरूपो बभूव' ( ऋ. सं. ६. ४७. १८ ) इति मन्त्रलिङ्गात्सर्वात्मकत्वादिति ॥

पत्तो जगार प्रत्यञ्चमत्ति शीर्ष्णा शिरः प्रति दधौ वरूथम् ।
आसीन ऊर्ध्वामुपसि क्षिणाति न्यङ्ङुत्तानामन्वेति भूमिम् ॥ १३ ॥

पत्तः । जगार । प्रत्यञ्चम् । अत्ति । शीर्ष्णा । शिरः । प्रति । दधौ । वरूथम् ।
आसीनः । ऊर्ध्वाम् । उपसि । क्षिणाति । न्यङ् । उत्तानाम् । अनु । एति । भूमिम् ॥ १३ ॥

१. त-म४-६–आसतेर्गत्यर्थस्य लेटि । २. त-म५,६-मु–वारयितुमिच्छति ।

अत्रादित्यात्मनेन्द्रः स्तूयते सर्वात्मत्वात्। आदित्यरूपीन्द्रः पत्सः रश्म्याख्यैः पादैः जगार वृष्टिलक्षणमुदकं गिरति[1] गृह्णाति[2] वा। गृहीत्वा च प्रत्यञ्चम् आत्मानं प्रतिगतमुदकम् अत्ति भक्षयति। मण्डलेऽवस्थापयतीत्यर्थः। तदनन्तरं वस्थं वरणीयं वृष्टिलक्षणमुदकं[3] शीर्ष्णा शिरःस्थानीयेन रश्मिजालेन शिरः सर्वस्य लोकस्य मस्तके प्रति दधौ दधाति। प्रतिक्षिपतीत्यर्थः। किंच उपसि उपस्थे स्वसमीपस्थाने मण्डले आसीनः उपविष्टः सन् ऊर्ध्वाम् उन्नतां स्वदीप्तिं क्षिणाति हिनस्ति। आलोककरणाय प्रक्षिपतीत्यर्थः। न्यङ् रश्मिसमूहरूपेण नीचैरञ्चिता गन्ता सन् उत्तानां विस्तृतां भूमिम् अन्वेति अनुगच्छति॥

बृहन्नच्छायो अपलाशो अर्वा तस्थौ माता विषितो अत्ति गर्भः।
अन्यस्या वत्सं रिहती मिमाय कया भुवा नि दधे धेनुरूधः॥ १४॥

बृहन्। अच्छायः। अपलाशः। अर्वा। तस्थौ। माता। विऽसितः। अत्ति। गर्भः।
अन्यस्याः। वत्सम्। रिहती। मिमाय। कया। भुवा। नि। दधे। धेनुः। ऊधः॥ १४॥

वसुक्रोऽनयादित्यात्मानमिन्द्रं स्तौति[3]। बृहन् महानादित्यः अच्छायः छायावर्जितः। तमोरहित इत्यर्थः। अपलाशः पर्णरहितः पराशदनधर्मितः*। विनाशरहित इत्यर्थः[3]। अर्वा सततगामी तस्थौ तिष्ठति। किंच माता वृष्टिप्रदानद्वारेण सर्वस्य जगतो निर्माता विषितः विमुक्तः। निरालम्बन इत्यर्थः। गर्भः त्रैलोक्यस्य गर्भभूत आदित्यात्मेन्द्रः अत्ति हवींषि भक्षयति। यद्वा। अनेन[4] विनाशनं[5] लक्ष्यते। पापानि नाशयति। किंच[6] अन्यस्याः अदित्याख्याया देवमातुः वत्सम् अपत्यभूतमादित्यं रिहती आस्वादयन्ती उपजीवन्ती[7] वर्धयन्ती मिमाय निर्मिमीते। पूर्वस्यां दिवसहन्यहन्युत्पादयन्तीत्यर्थः। कया भुवा केन भावेनाभिप्रायेण। अवस्था भवेन वेत्यर्थः। धेनुः द्यौरुदकस्याधारत्वात् क्षरितृत्वाच्च ऊधःस्थानीयमादित्यं[8] नि दधे स्थापयति[9]। यद्वा। धेनुर्गौरूधो यथा तद्वदादित्यं धारयति॥

सप्त वीरासो अधरादुदायन्नष्टोत्तरात्तात्समजग्मिरन् ते।
नव पश्चातात्स्थिविमन्त आयन्दश प्राक्सानु वि तिरन्त्यश्नः॥ १५॥

सप्त। वीरासः। अधरात्। उत्। आयन्। अष्ट। उत्तरात्तात्। सम्। अजग्मिरन्। ते।
नव। पश्चातात्। स्थिविऽमन्तः। आयन्। दश। प्राक्। सानु। वि। तिरन्ति। अश्नः॥ १५॥

अनयेन्द्रः प्रजापतिरूपेण स्तूयते। सप्त सप्तसंख्याकाः वीरासः प्रजापतेः पुत्रा विश्वामित्रादयः अधरात् प्रजापतेरधःकायात् उदायन् उत्पन्ना बभूवुः। अष्ट अष्टसंख्याकाः ते प्रसिद्धा वालखिल्यादयः उत्तरात्तात् उत्तरात्कायप्रदेशात् समजग्मिरन् संजज्ञिरे। स्थिविमन्तः स्थानवन्तः नव नवसंख्याका भृगवः पश्चातात् पृष्ठतः आयन् आगताः। उत्पन्ना इत्यर्थः। तथा दश दशसंख्याका अङ्गिरसः प्राक् प्रमत उत्पन्नाः सन्तः अश्नः अशनवतो द्युलोकस्य सानु उन्नतप्रदेशं

१. त–'गिरति' नास्ति; भ–जिगर्ति। २. त–'गृह्णाति...'मुदकं' नास्ति। ३. ग–सुष्टाव अयमादित्यः बृहन् महान् अच्छायः अपलाशः छायारहितपलाशरहितः। * त५–पराशदनवर्जितः; म१.४–परासदनवर्जितः; म६–पलाशदनवर्जितः। ४. उद्गीथ–अदनेन। ५. त१.२.७–विनाशं; त३-५-भ-उद्गीथ–विनाशं; मु–विनाशः। ६. त–किं। ७. म१(२)–उपजीवयंती। ८. म१(२)ऊधः ऊधःस्थानीय*। ९. म१(२)स्वोदरे स्थापयति; उद्गीथ–स्वोदरे निदधाति।

वि निरन्ति वर्धयन्ति। अपर आह। सप्तसंख्योपेता वीरा मरुतोऽधरादिन्द्रस्य दक्षिणभागादुदगमन्। अष्टसंख्याकास्ते मरुत उत्तरभागात् संगच्छन्ते। श्यामवन्तो नवसंख्याकास्ते मरुतः पृष्ठभागादागच्छन्ति। दशसंख्याकास्तेऽर्भेऽसनवन्त इन्द्रस्य प्राक्प्रदेशे स्थिताः मधुच्छिन्तमुदकं तेजो वा वि निरन्ति। मरुतः प्रतिदिशमवस्थायेन्द्रस्य साहाय्यं कुर्वन्तीत्यर्थः॥ ॥ १७ ॥

दशानामेकं कपिलं समानं तं हिन्वन्ति क्रतवे पार्याय।
गर्भं माता सुधितं वक्षणास्ववेनन्तं तुषयन्ती बिभर्ति॥ १६॥

दशानाम्। एकम्। कपिलम्। समानम्। तम्। हिन्वन्ति। क्रतवे। पार्याय।
गर्भम्। माता। सुऽधितम्। वक्षणासु। अवेनन्तम्। तुषयन्ती। बिभर्ति॥ १६॥

दशानां दशसंख्याकानां पूर्वोक्तानामेषामङ्गिरसां मध्ये एकं मुख्यं कपिलम् एतन्नामानं ऋषिं प्रसिद्धरूपिणम्। कीदृशम्। समानं सदृशम्। केन। सामर्थ्येन प्रजापतिना। हिन्वन्ति अवशिष्टा अङ्गिरसः प्रेरयन्ति। किमर्थम्। क्रतवे यज्ञादिजगत्प्रवर्तनकर्मणे। यद्वा। सम्यग्ज्ञानलक्षणप्रज्ञानाय। कीदृशाय। पार्याय[1] पश्चिमभाविपतत्वाय प्रणेतव्याय वा। यज्ञादिकर्मोपदेशनायेत्यर्थः। माता प्रकृत्याख्या च वक्षणासु। वक्षणा इति नद्य उच्यन्ते। ताभिश्चात्रापो लक्ष्यन्ते। प्रकृतिस्थासु सूक्ष्मास्वप्सु सुधितं सुहितम्। प्रजापतिना स्थापितमित्यर्थः। अवेनन्तम्। वेनतिः कान्तिकर्मा। तत्र निवासमकामयमानं तादृशं प्रजापतेः गर्भं तुषयन्ती तुष्यन्ती सम्यग्ज्ञानमनुपदेष्टुं[2] योग्योऽयमिति प्रीता सती बिभर्ति प्रजापतेर्नियोगाद्धारयति॥

पीवानं मेषमपचन्त वीरा न्युप्ता अक्षा अनु दीव आसन्।
द्वा धनुं बृहतीमप्स्व१न्तः पवित्रवन्ता चरतः पुनन्ता॥ १७॥

पीवानम्। मेषम्। अपचन्त। वीराः। निऽउप्ताः। अक्षाः। अनु। दीवे। आसन्।
द्वा। धनुम्। बृहतीम्। अप्ऽसु। अन्तः। पवित्रऽवन्ता। चरतः। पुनन्ता॥ १७॥

वीराः प्रजापतेः पुत्रा अङ्गिरसः पीवानं स्थूलम्। मेदोमांसादियुक्तमित्यर्थः। मेषम् अजम् अपचन्त प्रजापतिरूपस्येन्द्रस्यार्थाय पक्ववन्तोऽभवन्। पशुयागं कुर्वन्त इत्यर्थः। किंच। द्यूतोपममेतत्। यथा देवानाम् अक्षाः दीवे देवने रमणस्थाने न्युप्ताः निक्षिप्ताः सन्तः अनु आसन् संक्रीडमानयोर्द्वयोरेकतरस्यानुगता भवन्ति तथा सर्वेऽङ्गिरसः प्रजापतेरनुगता भवन्ति। द्वा[3] अङ्गिरसां[3] मध्ये द्वावाङ्गिरसौ धनुम्। धनुशब्दोऽत्र[4] धनुःशब्दपर्यायो धनशब्दपर्यायो वा। धनुर्यथा वधसाधनं तथाज्ञानादिविध्वंसाधनं धनवत्प्रीतिकरं वा। ज्ञानमित्यर्थः। बृहतीं प्रजापतेराज्ञया वर्धयित्रीं प्रकृतिम् अप्सु अन्तः प्रकृतिस्थानां सूक्ष्माणामुदकानां मध्ये चरतः प्रजापत्यादेशाद्धारयतः। कीदृशौ। पवित्रवन्ता पवित्रवन्तौ। मन्त्रः पवित्रमुच्यते। ध्यानसाधनप्रणवमन्त्रवन्तौ पुनन्ता शुद्धौ। प्रणवध्यानेनात्मानं संस्कुर्वन्तावित्यर्थः॥

वि क्रोशनासो विष्वञ्च आयन् पचाति नेमो नहि पक्षदर्धः।
अयं मे देवः सविता तदाह द्र्वन्न इद्वनवत्सर्पिरन्नः॥ १८॥

१. ग-ल२-अ५.६—पार्याय प्रापणीयाय। २. ग-ल-अ-मु—सम्यग्ज्ञानान्युपदेष्टुं। ३. ल-अ१.४.६.७—यद्वा अंगिरसौ। ४. ल-अ६—धनुःशब्देन।

वि । क्रोशनासः । विष्वञ्चः । आयन् । पचाति । नेमः । नहि । पक्षत् । अर्धः ।
अयम् । मे । देवः । सविता । तत् । आह । द्रुऽअन्नः । इत् । वनवत् । सर्पिःऽअन्नः ॥१८॥

वि क्रोशनासः विविधं प्रजापतिं पितरमाह्वयमानाः विष्वञ्चः नानागतयो नानापूजना वा सर्वेऽङ्गिरसः आयन् आगच्छन् । प्रजापतेः सकाशादुत्पन्ना इत्यर्थः । उत्पद्यमानः नेमः अर्धोऽङ्गिरसां मध्य एको भागः पचाति प्रजापत्यर्थं हवींषि पचति । अर्धः अपरो भागः नहि पक्षत् नाह पचति । एतत्सर्वं कथमज्ञायि इत्यत्र । अयम् ईदृशः देवः द्योतमानः सविता सर्वस्य प्रेरक आदित्यो वा प्रजापतिर्वा मे मह्यं तत् सर्वं यथोक्तम् आह । किंच सर्पिरन्नः घृतादनः द्रुअन्नः इत् काष्ठादनः अग्निरपि वनवत् हविर्द्वारेण प्रजापतिं मनसि संभजते ॥

**अपश्यं ग्रामं वहमानमारादचक्रया स्वधया वर्तमानम् ।**
**सिषक्त्यर्यः प्र युगा जनानां सद्यः शिश्ना प्रमिनानो नवीयान् ॥ १९ ॥**

अपश्यम् । ग्रामम् । वहमानम् । आरात् । अचक्रया । स्वधया । वर्तमानम् ।
सिसक्ति । अर्यः । प्र । युगा । जनानाम् । सद्यः । शिश्ना । प्रऽमिनानः । नवीयान् ॥१९॥

अपश्यं वसुक्रोऽहं प्रजापतिरूपमिन्द्रं सम्यग्ज्ञानेन दृष्टवानस्मि । कीदृशम् । ग्रामं भूतसंघं वहमानं वाहयन्तम् । सृजन्तमित्यर्थः । कुतः । आरात् दूरात् । उपादानकारणप्रकृतित इत्यर्थः । अचक्रया चक्रवर्जितया रथहीनया स्वधया स्वयमात्मानं धारयन्त्या सेनया वर्तमानम् आगच्छन्तम् । एवंभूतमपश्यमित्यर्थः । किंच अर्यः सर्वस्य स्वामीन्द्रः जनानां यजमानानां कार्यत्वेन संबन्धिनः युगा युगानि यज्ञकालविशेषान् प्र सिषक्ति प्रकर्षेण सेवते । कीदृशः । सद्यः तदानीमेव शिश्ना शिश्नानि । 'शिश्नं श्नथतेः' (निरु. ४. १९) इति निर्वचनात् अथितॄणि ताडयितॄणि राक्षसादिशत्रुभूतानि प्रमिनानः प्रकर्षेण हिंसन् नवीयान् शरीरेण च बलवीर्यपराक्रमादिभिश्च[1] नवतरः ॥

**एतौ मे गावौ प्रमरस्य युक्तौ मो षु प्र सेधीर्मुहुरिन्ममन्धि ।**
**आपश्चिदस्य वि नशन्त्यर्थं सूरश्च मर्क उपरो बभूवान् ॥ २० ॥**

एतौ । मे । गावौ । प्रऽमरस्य । युक्तौ । मो इति । सु । प्र । सेधीः । मुहुः । इत् । ममन्धि ।
आपः । चित् । अस्य । वि । नशन्ति । अर्थम् । सूरः । च । मर्कः । उपरः । बभूवान् ॥२०॥

कार्यकारणयोरभेदोपचारात् 'आत्मा वै पुत्रनामासि' (आश्व. गृ. १.१५.११) इति वचनादिन्द्ररूपेणावस्थितस्य प्रमरस्य प्रकर्षेण शत्रूणां मारयितुः मे मम स्वभूतौ एतौ एतादृशौ युक्तौ रथे नियुक्तौ सु सुष्ठु पूजितौ गावौ शत्रून् यज्ञं प्रति गन्तारौ हरी मो प्र सेधीः । स्तुत्युपसंहारकरणेनास्मद्यज्ञान्मापगमय । किं तर्हि मुहुरित् मुहुर्मुहुः ममन्धि पुनःपुनः स्तुहि अस्मानित्यर्थः । आपश्चित् वृष्टिलक्षणान्युदकान्यपि अस्य इन्द्रस्य अर्थं गतिं वि नशन्ति । विनशतिर्व्याप्तिकर्मा । व्याप्नुवन्ति । तथा सूरश्च सूर्यश्च व्याप्नोति । कीदृशः । मर्कः मार्जयिता सर्वस्य शोधयिता उपरः मेघसदृशः बभूवान् भवन् । मेघवच्छीघ्रगतिः सन्नित्यर्थः ॥     ॥ १८ ॥

१. त—बलयुध°, म१—बलायुध° ।

अयं यो वज्रः पुरुधा विवृत्तोऽवः सूर्यस्य बृहतः पुरीषात् ।
श्रव इदेना परो अन्यदस्ति तदव्यथी जरिमाणस्तरन्ति ॥ २१ ॥

अयम् । यः । वज्रः । पुरुऽधा । विऽवृत्तः । अवः । सूर्यस्य । बृहतः । पुरीषात् ।
श्रवः । इत् । एना । परः । अन्यत् । अस्ति । तत् । अव्यथी । जरिमाणः । तरन्ति ॥ २१ ॥

यः अयं वज्रः इन्द्रस्य स्वभूतः सूर्यस्य आदित्यस्य बृहतः महतः पुरीषात् पूरकात् मण्डलात् अवः अवस्तादधोभागे स्थितेषु[1] विवृत्तः वृष्ट्यर्थं प्रवृत्तः पतितः । इच्छब्दोऽप्यर्थे । तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । परः परस्तादन्तरिक्षलोकस्योपरि स्थिते सूर्यमण्डले स्थितम् एना एनत् । श्रवः इत्यन्ननाम । तद्धेतुत्वादुदकं श्रव इत्युच्यते । यदप्युदकं मेघोदरगतादुदकात् अन्यत् अपि अस्ति अव्यथी व्यथारहिताः जरिमाणः स्तोतारो मरुदादयः तत् तादृशमुदकं तरन्ति अन्तरिक्षलोकं प्रत्यवतारयन्ति ॥

वृक्षेवृक्षे नियता मीमयद्गौस्ततो वयः प्र पतान्पूरुषादः ।
अथेदं विश्वं भुवनं भयात इन्द्राय सुन्वदृषये च शिक्षत् ॥ २२ ॥

वृक्षेऽवृक्षे । निऽयता । मीमयत् । गौः । ततः । वयः । प्र । पतान् । पुरुषऽअदः ।
अथ । इदम् । विश्वम् । भुवनम् । भयाते । इन्द्राय । सुन्वत् । ऋषये । च । शिक्षत् ॥ २२ ॥

वृक्षेवृक्षे सर्वस्मिन् वृक्षमये धनुषि नियता संयता गौः गोमांसग्रथिनी स्नायुमयी मौर्वी मीमयत् । मीमयतिः शब्दकर्मा । आकृष्यमाणा सती शब्दं करोति । ततः तस्माद्धनुषः पुरुषादः शत्रुजनानामत्तारः । मनुष्यविदार इत्यर्थः । वयः पक्षिसदृशा गन्तारो बाणाः प्र पतान् शत्रून् प्रति प्रपतन्ति । अथ तदानीम् इन्द्राय इन्द्रार्थं सुन्वत् सोमयागं कुर्वत्[2] ऋषये च शिक्षत् कर्मणां सह करित्रे च संपूर्णां दक्षिणां ददत् अपि इदम् इदं विश्वं समस्तं भुवनं भूतजातं भयाते इन्द्राद्बिभेति । अभ्यासिकसुनेत्यर्थः ॥

देवानां माने प्रथमा अतिष्ठन्कृन्तत्रादेषामुपरा उदायन् ।
त्रयस्तपन्ति पृथिवीमनूपा द्वा बृबूकं वहतः पुरीषम् ॥ २३ ॥

देवानाम् । माने । प्रथमाः । अतिष्ठन् । कृन्तत्रात् । एषाम् । उपराः । उत् । आयन् ।
त्रयः । तपन्ति । पृथिवीम् । अनूपाः । द्वा । बृबूकम् । वहतः । पुरीषम् ॥ २३ ॥

देवानां सर्वेषां माने निर्माणे । सृष्टिकाल इत्यर्थः । जगत्स्थितिहेतुभूतरसानुप्रदानकर्मणि साहचर्येण प्रथमाः अतिष्ठन् इन्द्रादेशादेते पूर्वं स्थिताः । के[3] एते । मेघाः । कुत एतदवगम्यते । परस्मिन् पादे तेषामनुकथनात् । उक्तं हि मेघा एव माध्यमिका देवगणा इति ( निरु. ९. २१ ) । एषाम् एवंभूतानां मेघानां कृन्तत्रात् छेदनात् उपराः । मेघनामैतत् । तत्रस्था[4] आप उच्यन्ते । मेघस्था अतः उदायन्[5] उद्गताः । वृष्टिभावेन भूमौ निपातिता[6] इत्यर्थः । पातितास्त्वग्निवन्द्रस्याज्ञया पर्जन्यो वायुरादित्य इत्येते त्रयः देवाः पृथिवीं भूमिम् । तत्रस्था ओषधीरित्यर्थः । तपन्ति

१. ग-त३.४-भ६—स्थितेषु मेघेषु । २. त-म कुर्वन् । ३. त—एका । ४. ग—अतः तत्रस्था; त—तत्र तत्रस्था; त२-भ५—अत्र तत्रस्था । ५. त-भ६—उदास्यन् । ६. ग-त१-भ६—निपतिता ।

पृथिवीतोऽपि संतापयन्ति । पाचयन्तीत्यर्थः । कीदृशाः । अमूराः वर्षादीनामानुपूर्व्येण प्रहाराः प्रभावयितारः । प्रक्षेप्तार इत्यर्थः । द्वा द्वौ वाय्वादित्यौ पार्थिवात्स्वोषधीषु स्थितं पुरीषं सर्वस्य प्रीणयितृ पूरयितृ वा बृबूकम् उदकमादित्यमण्डलं प्रति वहतः । वायुः शोषयत्यादित्यो रश्मिभि-राददान इत्यर्थः ॥

सा ते जीवातुरुत तस्य विद्धि मा स्मैतादृगप गूहः समर्ये ।
आविः स्वः कृणुते गूहते बुसं स पादुरस्य निर्णिजो न मुच्यते ॥ २४ ॥

सा । ते । जीवातुः । उत । तस्य । विद्धि । मा । स्म । एतादृक् । अप । गूहः । सऽमर्ये ।
आविः । स्व१रिति स्वः । कृणुते । गूहते । बुसम् ।
सः । पादुः । अस्य । निःऽनिजः । न । मुच्यते ॥ २४ ॥

अत्रान्तरात्मनेन्द्रः स्तूयते । हे अन्तरात्मन् ते तव सा तादृश्यादित्यात्मिका देवता जीवातुः जीविका जीवनहेतुः । उत अपि च तस्य आदित्यस्य एतादृक् ईदृशं स्वरूपं समर्ये । संग्रामवाची समर्यशब्दोऽत्र यज्ञवाची । यज्ञे विद्धि जानीहि । स्तुत्यत्वेनेति शेषः । मा स्म अप गूहः मा स्वल्पपवृणोः । किंच निर्णिजः सर्वस्य शोधयितुरादित्यस्य सः पादुः तस्य पादनं गमनं रश्मिद्वारेण गत्वा स्वः सर्वं त्रैलोक्यम् आविः कृणुते प्रकाशीकरोति । बुसम् उदकं गूहते संवृणोति । आदत्त इत्यर्थः । अस्मै प्रयोजनरूपायादित्येन निर्वेदनारूपेण वा गमनं न मुच्यते । न कदाचित्परित्यज्यत इत्यर्थः ॥ ॥ १९ ॥

'विश्वो हि' इति द्वादशर्चं द्वादशं सूक्तं त्रैष्टुभम् । इन्द्रवसुक्रयोः पितापुत्रयोः संवादोऽत्र क्रियते । पुरा वसुक्रे यज्ञं कुर्वाणे सति इन्द्रः प्रच्छन्नरूप आजगाम । तं वसुक्रपत्नीन्द्रागमनाकाङ्क्षिणी विप्रकृष्टमिवाध्यवास्तौत् । अतस्तस्याः सर्षिः इन्द्रो देवता । अथ तस्याः प्रीत्यै वसुक्रेण सहेन्द्रः संवादमकरोत् । द्वितीयादियुजश्चतुर्थीरहिताः पञ्चर्च इन्द्रवाक्यानि । अतस्तासां स ऋषिः । यद्यप्यासु वसुक्रः संबोध्यत्वाद्देवता तथापि ता ऋच ऐन्द्रे कर्मणि विनियोक्तव्याः इन्द्रलिङ्गसद्भावात् । चतुर्थीसहिताः शिष्टास्तृतीयाद्या वसुक्रवाक्यानि । अतः स ऋषिस्तासामिन्द्रो देवता । तथा चानुक्रान्तं — 'विश्वो हि द्वादशेन्द्रवसुक्रयोः संवाद ऐन्द्रः सूक्तस्य प्रथमयेन्द्रस्य स्नुषा परोक्षवदिन्द्रमाहेन्द्रस्य युजः शेषा ऋषेश्चतुर्थी च' इति । गतो विनियोगः ॥

विश्वो ह्य१न्यो अरिराजगाम ममेदह श्वशुरो ना जगाम ।
जक्षीयाद्धाना उत सोमं पपीयात्स्वाशितः पुनरस्तं जगायात् ॥ १ ॥

विश्वः । हि । अन्यः । अरिः । आऽजगाम । मम । इत् । अह । श्वशुरः । न । आ । जगाम ।
जक्षीयात् । धानाः । उत । सोमम् । पपीयात् । सुऽआशितः । पुनः । अस्तम् । जगायात् ॥ १ ॥

अनया वसुक्रपत्नीन्द्रं स्तौति । अन्यः इन्द्रव्यतिरिक्तः अरिः अर्यः ईश्वरः विश्वो हि सर्व एव देवगणः आजगाम अस्मद्यज्ञं प्रत्यागमत् । इत् इत्यवधारणे । अह इत्यद्भुते । सर्वदेवगण आगते सति मम एव श्वशुरः इन्द्रः ना आ जगाम । स इन्द्रो यद्यागच्छेत् तर्हि धानाः भृष्टयवान् जक्षीयात् भक्षयेत् । उत अपि च सोमम् अभिषुतं पपीयात् पिबेत्[1] । ततः स्वाशितः सुष्ठु भुक्तस्तृप्तः सन् पुनः भूयः अस्तं स्वगृहं प्रति जगायात् गच्छेत् ॥

१. ट-भ६—' पिबेत् ' नास्ति ।

स रोरुवद्वृषभस्तिग्मशृङ्गो वर्ष्मन्तस्थौ वरिमन्ना पृथिव्याः ।
विश्वेष्वेनं वृजनेषु पामि यो मे कुक्षी सुतसोमः पृणाति ॥ २ ॥

सः । रोरुवत् । वृषभः । तिग्मऽशृङ्गः । वर्ष्मन् । तस्थौ । वरिमन् । आ । पृथिव्याः ।
विश्वेषु । एनम् । वृजनेषु । पामि । यः । मे । कुक्षी इति । सुतऽसोमः । पृणाति ॥ २ ॥

वृषभः कामानां वर्षिता तिग्मशृङ्गः तीक्ष्णरश्मिः सः इन्द्रोऽहं पृथिव्याः अन्तरिक्षस्य वर्ष्मन् वर्ष्मणि । वर्ष्मन्शब्द उन्नतवचनः स्थिरवचनो वा । एवंभूते वरिमन् विस्तीर्णे प्रदेशे रोरुवत् भृशं शब्दायमानः सन् आ तस्थौ आतिष्ठामि । एवंभूतोऽहं विश्वेषु सर्वेषु वृजनेषु संग्रामेषु एनम् ईदृशं वक्ष्यमाणं यजमानं पामि रक्षामि । यः यजमानः सुतसोमः अभिषुतसोमः मे मम कुक्षी उभौ पार्श्वौ पृणाति सोमरसपुरोडाशादिहविर्भिः पूरयति । ईदृशं रक्षामीति संबन्धः ॥

अद्रिणा ते मन्दिन इन्द्र तूयान्त्सुन्वन्ति सोमान्पिबसि त्वमेषाम् ।
पचन्ति ते वृषभाँ अत्सि तेषां पृक्षेण यन्मघवन्हूयमानः ॥ ३ ॥

अद्रिणा । ते । मन्दिनः । इन्द्र । तूयान् । सुन्वन्ति । सोमान् । पिबसि । त्वम् । एषाम् ।
पचन्ति । ते । वृषभान् । अत्सि । तेषाम् । पृक्षेण । यत् । मघऽवन् । हूयमानः ॥ ३ ॥

हे इन्द्र ते त्वदर्थं मन्दिनः मादयितॄन् तूयान् अविलम्बितान् सोमान्[1] अद्रिणा अभिषवग्राव्णा सुन्वन्ति यजमाना अभिषुण्वन्ति । एषाम् अस्मदादियजमानानां संबन्धिनः[2] सोमान् त्वं पिबसि । किंच त्वदर्थं[3] वृषभान् पशून् ये च यजमानाः पचन्ति तेषां संबन्धिनो[4] हविर्भूतान् पशून् अत्सि भक्षयसि । हे मघवन् धनवन्निन्द्र त्वं यदा पृक्षेण हविर्भूतेनान्नेन निमित्तेन हूयमानः यजमानैर्हूयसे तदेति पूर्वेण संबन्धः ॥

इदं सु मे जरितरा चिकिद्धि प्रतीपं शापं नद्यो वहन्ति ।
लोपाशः सिंहं प्रत्यञ्चमत्साः क्रोष्टा वराहं निरतक्त कक्षात् ॥ ४ ॥

इदम् । सु । मे । जरितः । आ । चिकिद्धि । प्रतिऽईपम् । शापम् । नद्यः । वहन्ति ।
लोपाशः । सिंहम् । प्रत्यञ्चम् । अत्साः । क्रोष्टा । वराहम् । निः । अतक्त । कक्षात् ॥ ४ ॥

हे जरितः शत्रूणां जरयितरिन्द्र त्वं मे मम सु शोभनमपि इदम् ईदृशं रूपं सामर्थ्यम् आ चिकिद्धि आ समन्ताज्जानीहि । कीदृशम् । नद्यः गङ्गाद्याः सरितः प्रतीपं प्रतिकूलं शापम् उदकं वहन्ति । अपि च लोपाशः । लुप्यमानं तृणमश्नातीति लोपाशो मृगः । मया प्रेषितः सन् प्रत्यञ्चम् आत्मानं प्रति गच्छन्तं सिंहम् अत्साः अत्सारीत् । आभिमुख्येन गच्छति । तथा क्रोष्टा शृगालः वराहं बलवन्तमपि सूकरं कक्षात् अतिगहनप्रदेशात् निरतक्त निर्गमयति । एतदपि सर्वं सामर्थ्यं त्वत्पुत्रे मयि त्वत्प्रसादाद्भवत्यपि जानीहीत्यर्थः ॥

१. त-म६—'सोमान्' नास्ति । २. त-म१.२.४.६—संबन्धान् । ३. ग-म२—ते त्वदर्थं । ४. त-म२.६—संबन्धान् ।

कुथा त एतदहमा चिकेतं गृत्सस्य पाकस्तवसो मनीषाम् ।
त्वं नो विद्वाँ ऋतुथा वि वोचो यमर्धं ते मघवन् क्षेम्या धूः ॥ ५ ॥

कुथा । ते । एतत् । अहम् । आ । चिकेतम् । गृत्सस्य । पाकः । तवसः । मनीषाम् ।
त्वम् । नः । विद्वान् । ऋतुऽथा । वि । वोचः । यम् । अर्धम् । ते । मघऽवन् । क्षेम्या । धूः ॥५॥

हे इन्द्र पाकः पक्तव्यप्रज्ञः अहं गृत्सस्य मेधाविनः तवसः वृद्धस्य ते तव मनीषां स्तुतिम् । कर्तुमिति शेषः । एतत् ईदृशं त्वदीयं सामर्थ्यं कुथा कथं केन प्रकारेण आ चिकेतम् आ समन्तात् जानामि । त्वदुपदेशं विना न जानामीत्यर्थः । तस्मात्कारणात् विद्वान् सर्वज्ञः त्वम् एव नः अस्मभ्यम् ऋतुथा कालेकाले[1] वि वोचः विशेषेण ब्रूहि । हे मघवन् धनवन्निन्द्र ते तव अर्धं यं स्तुत्यवयवं कुर्मः[2] सा स्तुतिः धूः क्षेम्या क्षेमे भवा क्लेशरहिता वोढुं शक्यास्ति । यस्मात्तव[3] स्तुत्यवयवमेव वयमक्लेशेन कर्तुं न[4] शक्नुमोऽस्माकं मन्दबुद्धित्वात् तस्मात्त्वमेवास्मभ्यं स्वसामर्थ्यं स्तुतिप्रकारं च पुनरपि कथयेत्यर्थः ॥

एवा हि मां तवसं वर्धयन्ति दिवश्चिन्मे बृहत उत्तरा धूः ।
पुरू सहस्रा नि शिशामि साकमशत्रुं हि मा जनिता जजान ॥ ६ ॥

एव । हि । माम् । तवसम् । वर्धयन्ति । दिवः । चित् । मे । बृहतः । उत्ऽतरा । धूः ।
पुरु । सहस्रा । नि । शिशामि । साकम् । अशत्रुम् । हि । मा । जनिता । जजान ॥ ६ ॥

हि यस्मात्कारणात् एव एवमुक्तप्रकारेण तवसं महान्तं मां स्तोतारः स्तुतिभिः स्तुवन्तो वीर्येण वर्धयन्ति तस्मात्कारणात् बृहतः महतः मे मम इन्द्रस्य दिवश्चित् द्युलोकादपि धूः स्तुतिः उत्तरा उद्गततराधिकतरा । किंच पुरु पुरूणि बहूनि[5] सहस्रा शत्रूणां सहस्राणि साकं युगपत् नि शिशामि तनूकरोमि । हिनस्मीत्यर्थः[6] । हि यस्मात्कारणात् जनिता सर्वस्य जनयिता प्रजापतिः मा मामिन्द्रम् अशत्रुम् अविद्यमानशत्रुं[7] जजान जनितवान् ॥　　॥ २० ॥

एवा हि मां तवसं जज्ञुरुग्रं कर्मन्कर्मन्वृषणमिन्द्र देवाः ।
वधीं वृत्रं वज्रेण मन्दसानोऽप व्रजं महिना दाशुषे वम् ॥ ७ ॥

एव । हि । माम् । तवसम् । जज्ञुः । उग्रम् । कर्मन्ऽकर्मन् । वृषणम् । इन्द्र । देवाः ।
वधीम् । वृत्रम् । वज्रेण । मन्दसानः । अप । व्रजम् । महिना । दाशुषे । वम् ॥ ७ ॥

हि यस्मात्कारणात् एव एवमनेनोक्तप्रकारेण हे इन्द्र देवाः मरुदादयः ऋत्विग्यजमाना वा तवसं महान्तं त्वत्पुत्रं स्वरूपेणावस्थितं[8] सन्तं वसुकं मां कर्मन्कर्मन् यज्ञयागाग्निहोत्रादौ सर्वस्मिन् कर्मणि उग्रं शूरमसह्यं वा वृषणं वर्षितारं हविषां दातारं जज्ञुः जानन्ति अतः मन्दसानः मोदमानोऽहं वज्रेण आयुधेन वृत्रं मेघमसुरं वा वधीं अवधिषम् । किंच दाशुषे हविर्दत्तवते यजमानाय वृष्टिप्रदानार्थं महिना महत्त्वेन व्रजं मेघसमूहम् अप वम् अपावृणम् अपवृणोमि ॥

१. त-काले । २. त-म-वयं कुर्मः । ३. त-यस्मात्त्व; म६-यस्मादतः । ४. त-म-'न' नास्ति । ५. त१.२.६-म६-मु-बहूनि मे; त५-बहूनि से । ६. त-हिनस्तीत्यर्थः । ७. त-म६-'अविद्यमानशत्रुं' नास्ति । ८. त-म-मु-स्वरूपनिरूपणावस्थितं ।

देवास आयन्परशूँरबिभ्रन्वना वृश्चन्तो अभि विड्भिरायन् ।
नि सुद्र्वं दधतो वक्षणासु यत्रा कृपीटमनु तद्दहन्ति ॥ ८ ॥

देवासः । आयन् । परशून् । अबिभ्रन् । वना । वृश्चन्तः । अभि । विट्ऽभिः । आयन् ।
नि । सुऽद्र्वम् । दधतः । वक्षणासु । यत्र । कृपीटम् । अनु । तत् । दहन्ति ॥ ८ ॥

देवासः देवाः इन्द्रेण चोदिताः मरुतः आयन् गच्छन्ति । मेघवधार्थं परशून् वज्रान् अबिभ्रन् धारयन्ति च । तदनन्तरं विड्भिः मरुदादिप्रजाभिः सहिताः वृश्चन्तः मेघान्छिन्दन्तः वना वनानि वृष्टिलक्षणान्युदकानि अभि आयन् आभिमुख्येन गच्छन्ति । ततः सुद्र्वं शोभनद्रवणं वृष्ट्युदकं वक्षणासु नदीषु नि दधतः नियमेन स्थापयन्तः यत्र यस्मिन्मेघजाते कृपीटम् । उदकनामैतत् । निगूढमुदकं तिष्ठति तत् इमे देवाः तत् मेघजातम् अनु लक्षीकृत्य दहन्ति उदकनिर्गमनार्थं शोषयन्ति ॥

शशः क्षुरं प्रत्यञ्चं जगाराद्रिं लोगेन व्यभेदमारात् ।
बृहन्तं चिदृहते रन्धयानि वयद्वत्सो वृषभं शूशुवानः ॥ ९ ॥

शशः । क्षुरम् । प्रत्यञ्चम् । जगार । अद्रिम् । लोगेन । वि । अभेदम् । आरात् ।
बृहन्तम् । चित् । ऋहते । रन्धयानि । वयत् । वत्सः । वृषभम् । शूशुवानः ॥ ९ ॥

वसुक इन्द्रं प्रतिब्रूते । शशः एतत्संज्ञितो मया प्रेरितो मृगविशेषः प्रत्यञ्चं प्रत्यगात्मानं प्रति गच्छन्तं क्षुरं क्षुरवन्तं खरदीर्घतीक्ष्णनखं सिंहव्याघ्रादिकम् । बलवत्क्रूरमृगमित्यर्थः । जगार गिरति गृह्णाति वा । किंच लोगेन लोष्टेन अद्रिं हिमवदादिकं पर्वतम् आरात् दूरे स्थितमपि वि अभेदम् अहं भिनद्मि । बृहन्तं चित् महान्तमपि हस्त्यादिकम् ऋहते ह्रस्वकायाल्पाय शशकादिकाय रन्धयानि वशं गमयामि । शूशुवानः वीर्येण वर्धमानः वत्सः वृषभं महोक्षं वयत् युद्धाय गच्छति । हे इन्द्र एतदपि सर्वं त्वत्प्रसादादहं करोमीत्यर्थः ॥

सुपर्ण इत्था नखमा सिषायावरुद्धः परिपदं न सिंहः ।
निरुद्धश्चिन्महिषस्तर्ष्यावान्गोधा तस्मा अयथं कर्षदेतत् ॥ १० ॥

सुऽपर्णः । इत्था । नखम् । आ । सिसाय । अवऽरुद्धः । परिऽपदम् । न । सिंहः ।
निऽरुद्धः । चित् । महिषः । तर्ष्याऽवान् । गोधा । तस्मै । अयथम् । कर्षत् । एतत् ॥ १० ॥

सुपर्णः पक्षिरूपा गायत्री इत्था अमुत्र द्युलोके नखम् आत्मीयम् आ सिषाय सोमाहरणकाले इन्द्रार्थमाबबन्ध । इन्द्रस्य प्रसादादहमपि एवं न्यस्तवानित्यर्थः । तत्र दृष्टान्तः । अवरुद्धः पञ्जरेणावृतः परिवेष्टितः सिंहः परिपदं न यथा करस्योपरि सर्वतः पादमवबध्नाति । किंच । चित् इत्युपमार्थे । यथा केनापि बद्धपादो निरुद्धः महिषः तर्ष्यावान् उदकाभावे तृषावान्भवति एवमिन्द्रः सोमाहरणात्पूर्वं सोमाभावे तृषितवानभूदिति शेषः । तस्मै । तादर्थ्ये चतुर्थी । तादृशस्य तृषितस्येन्द्रस्यार्थं गोधा । गमयति वर्णानिति गौर्वाक् तत्र निधीयमानत्वात्[1] गायत्री[2] गोधा ।

१. अ—निधीयमानात् । २. स—गा; अ६—गो.।

यद्वा । सुपिर्निष्कर्षणार्थः । निष्कृष्य सोमाहरणाद्गोधा गायत्री । ᵛअयथम् अयत्नेन । छान्दसोऽयमर्थः । ᵛएतत् सोमजातं ᵛकर्षत् आहृतवती । दिवः सकाशादाहृतवतीत्यर्थः ॥

तेभ्यो॑ गो॒धा अ॒यथं॑ कर्षदे॒तद्ये ब्र॒ह्मणः॑ प्रति॒पीय॒न्त्यन्नैः॑ ।
सि॒म उ॒क्ष्णो॑ऽवसृ॒ष्टाँ अ॑दन्ति स्व॒यं बला॑नि त॒न्वः॑ शृणा॒नाः ॥ ११ ॥

तेभ्यः॑ । गो॒धाः । अ॒यथ॑म् । क॒र्ष॒त् । ए॒तत् । ये । ब्र॒ह्मणः॑ । प्र॒ति॒ऽपीय॑न्ति । अन्नैः॑ ।
सि॒मः । उ॒क्ष्णः॑ । अ॒व॒ऽसृ॒ष्टान् । अ॒द॒न्ति॒ । स्व॒यम् । बला॑नि । त॒न्वः॑ । शृ॒णा॒नाः ॥ ११ ॥

ᵛये मरुदादिदेवगणाः ᵛब्रह्मणः परिवृढस्येन्द्रस्य स्वभूतैः ᵛअन्नैः सोमलक्षणैः । तृप्ताः सन्त इति शेषः । ᵛप्रतिपीयन्ति । पीयतिर्हिंसाकर्मा । इन्द्रादेशाद्धिंसकान् प्रतिहिंसन्ति ᵛतेभ्यः तेषां देवगणाना- मर्थाय ᵛगोधाः पूर्वोक्ता गायत्री ᵛअयथम् अनायासेन ᵛएतत् सोमजातं ᵛकर्षत् आहृतवती । किंच ᵛसिमः सिमाच्छ्रेष्ठान् । यद्वा । सिमशब्दः सर्वशब्दपर्यायः । सर्वान् । ᵛउक्ष्णः सिञ्चतः[1] ᵛअवसृष्टान् इन्द्रेण विसृष्टाननुज्ञातान् हविर्भूतान् सोमान् यज्ञेषु ᵛअदन्ति भक्षयन्ति[2] । किं कुर्वन्तः[3] । ᵛस्वयम् आत्मनैव ᵛबलानि शत्रूणां सैन्यानि ᵛतन्वः शरीराणि च ᵛशृणानाः हिंसन्तः । गायत्री इन्द्रा- देशाद्देवेभ्यः सोममाहृतवतीत्यर्थः ॥

ए॒ते शमी॑भिः सु॒शमी॑ अभूव॒न्ये हि॑न्वि॒रे त॒न्वः१॒॑ सोम॑ उ॒क्थैः ।
नृ॒वद्वद॒न्नुप॑ नो माहि॒ वाजा॑न्दि॒वि श्रवो॑ दधिषे॒ नाम॑ वी॒रः ॥ १२ ॥

ए॒ते । शमी॑भिः । सु॒ऽशमी॑ । अ॒भू॒व॒न् । ये । हि॒न्वि॒रे । त॒न्वः॑ । सोमे॑ । उ॒क्थैः ।
नृ॒ऽवत् । वद॑न् । उप॑ । नः॒ । मा॒हि॒ । वाजा॑न् । दि॒वि । श्रवः॑ । द॒धि॒षे॒ । नाम॑ । वी॒रः ॥ १२ ॥

ᵛये देवर्ष्यादयः ᵛतन्वः शरीराणि ᵛसोमे सोमयागे ᵛउक्थैः शस्त्रैः ᵛहिन्विरे वर्धयन्ति ᵛएते देवादय इन्द्रादेशात् सोमे आहृते सति ᵛशमीभिः सोमयागकर्मभिः ᵛसुशमी सुकर्माणः ᵛअभूवन् । ᵛनृवत् मनुष्यवत् ᵛवदन् इदं युष्मभ्यं मया दत्तमिति स्वकीयं वाक्यमुच्चारयन् ᵛनः अस्मभ्यम् ᵛउप ᵛमाहि उपगम्य ᵛवाजान् अन्नानि बलानि वा हे इन्द्र त्वं देहीति शेषः । अतः कारणात् ᵛवीरः दानशूरस्त्वं ᵛदिवि द्युलोके ᵛश्रवः अन्नपतिरिति कीर्तितं ᵛनाम नामधेयं ᵛदधिषे धारयसि ॥ ॥११॥

‘ वने न वा ’ इत्यष्टर्चं त्रयोदशं सूक्तं वसुक्रस्यार्षं त्रैष्टुभमैन्द्रम् । अनुक्रान्तं च—‘ वने नाष्टौ ’ इति । चतुर्थेऽहनि स्तोमवृद्धौ ब्राह्मणाच्छंसिन एतत्सूक्तमावापार्थम् । सूत्रितं च—‘ स्तोमे वर्धमाने को अद्य नर्यो वने न वा यः ’ ( आश्व. श्रौ. ७. १२ ) इति । महाव्रते निष्केवल्य एतत्सूक्तम् । सूत्रितं च—‘ प्र वो महे मन्दमानायान्धस इति निविद्धानं वने न वा यो न्यधायि चाकन् ’ ( ऐ. आ. ५. २. १ ) इति ॥

वने॒ न वा॒ यो न्य॑धायि चा॒कञ्छुचि॑र्वां॒ स्तोमो॑ भुरणावजीगः ।
यस्ये॒दिन्द्रः॑ पुरु॒दिने॑षु॒ होता॑ नृ॒णां नर्यो॒ नृत॑मः क्ष॒पावा॑न् ॥ १ ॥

वने॑ । न । वा॒ । यः । नि । अ॒धा॒यि॒ । चा॒कन् । शुचिः॑ । वा॒म् । स्तोमः॑ । भु॒र॒णौ॒ । अ॒जी॒ग॒रिति॑ ।
यस्य॑ । इत् । इन्द्रः॑ । पु॒रु॒ऽदिने॑षु । होता॑ । नृ॒णाम् । नर्यः॑ । नृऽत॑मः । क्ष॒पाऽवा॑न् ॥ १ ॥

१. ल-अ६—‘ सिञ्चतः ’ नास्ति ।  २. ल-अ४-मु—‘ भक्षयन्ति ’ नास्ति ।  ३. भ—कुर्वतः ।

वने न वा यो न्यधायीति । ᵛवने ᵛन वन इव वृक्ष इव शकुनिः स्वे नीडे चायमास्मीयं पुत्रं ᵛन्यधायि निदधाति शिशुकमजातपक्षम् । स यथा तत्र निहितः ᵛचाकन् पश्यन्[1] भक्षादिको निरीक्षमाण आसीत् । अथवा कामयमानस्तदुन्मुक्तमना आसीत् । एवमयमस्मासु पुत्रस्य नीडभूतेषु शकुनिपुत्रभूतः ᵛशुचिः व्यपगतसर्वदोषो युवयोः स्वभूतः ᵛस्तोमः हे ᵛभुरणी भर्तारावश्विनौ सोमो वा । भुरण्युरिति क्षिप्रनामेति । किंच ᵛयस्य स्तोमस्य ᵛपुरुदिनेषु बहुष्वहःसु ᵛइन्द्रः ᵛहोता इन्द्रोऽस्याह्वाता भवति ममायं स्तोमः स्यादिति । किंलक्षणः[2] पुनरिन्द्र आह्वाता । यः ᵛनृणां मनुष्याणां ᵛनृतमः मनुष्याणामपि मनुष्यतमः । शूराणामपि मध्ये शूरतम इत्यर्थः । ᵛनर्यः च नृभ्यो हितो यः ᵛअपावान् च रात्रिपर्यायेषु सोमभागः । एवंगुणयुक्तेन यः स्तोम इन्द्रेणापि प्रार्थ्यतेऽस्मासु वर्तमानः स युवां प्रति ᵛअजीगः नित्यकालमेव गच्छतीत्यर्थः । एवं तावदेनामृचमाश्विनीमिति कृत्वा व्याचक्षते । तदसाधु । ऐन्द्रं हि सूक्तं प्रथममेव भवति । तथा पुनः पृष्ठ्यस्य षष्ठेऽहनि स्तोत्रे वर्धमाने माध्यंदिने सवने ब्राह्मणाच्छंसिनः शस्त्रे विनियुज्यते । हे भुरण्यो भर्तारौ द्यावाभूमी पत्नी वा एष स्तोमोऽस्मासु निहितः शुचिर्व्यपगतदोषः शकुनिपुत्र इव वने वनावयवे वृक्षे चाकन् पश्यन्निव कामयमान इव वेन्यमास्ते । यस्य स्तोमस्य किमिति । यस्येन्द्रः पुरुदिनेषु बहुष्वहःस्वाह्वाताभूत् अपि नाम मामनेन स्तोमेन स्तुयुरिति । किंलक्षणः पुनराह्वाता । यस्येदिन्द्र इति नृणां नृतमो नर्यश्च अपावांश्च समस्तेनापूर्वेणार्थेन । यमेवमिन्द्रः प्रार्थयते स एष स्तोमस्तं प्रत्यजीगः गच्छतीत्यर्थः । अथवा स एष स्तोमोऽस्माभिरुदीर्यमाणस्तस्येन्द्रस्य गुणानुद्गृणातीति स्यात् । 'जिगर्तिर्गृणातिकर्मा' (निरु.१.८) इति युक्तम् । एवमत्र चाकन्निरवस्य चायतिनि वा कामयमान इति योगेन विपरिणामायुपपद्येते शब्दसारूप्यादर्थाविरोधाच्च । एतस्मिन्निगमे पदविभागतः कश्चिद्विचारोऽस्ति । तमाह भाष्यकारः—'वेति च य इति च चकार शाकल्यः' ( निरु. ६. २८ ) इति । वेति च इति च पदे चकार शाकल्यः पदकारः । तदेतद्विचार्यमाणं न साधु भवति । किं कारणम् । 'उदात्तं त्वेवमाख्यातमभविष्यत्' । एवमेतस्मिन् पदद्वये सति यदेतदाख्यातं न्यधायीति तदुदात्तमभविष्यत् । यद्वृत्तात्परस्य निघाताख्यातस्य निघातो न भवतीति लक्षणविदो मन्यन्ते । न चेदमुदात्तम् । तस्माद्य इति नेदं यद्वृत्तं किं तर्हि वाय इत्येकमेव पदम् । किंच । 'असुसमाप्तश्चार्थः' । अपुष्कलः । एवमेव तस्मिन्पदद्वये सति मन्त्रस्यार्थोऽसुसमाप्तो भवति ॥[3]

प्र ते॑ अ॒स्या उ॒षसः॒ प्राप॑रस्या नृ॒तौ स्या॑म॒ नृत॑मस्य नृ॒णाम् ।
अनु॑ त्रि॒शोकः॑ श॒तमाव॑ह॒न्नॄन्कुत्से॑न॒ रथो॒ यो अस॑त्सस॒वान् ॥ २ ॥

प्र । ते॒ । अ॒स्याः । उ॒षसः॑ । प्र । अप॑रस्याः । नृ॒तौ । स्या॒म॒ । नृऽत॑मस्य । नृ॒णाम् ।
अनु॑ । त्रि॒ऽशोकः॑ । श॒तम् । आ । अ॒व॒ह॒त् । नॄन् । कुत्से॑न । रथः॑ । यः । अस॑त् । स॒स॒ऽवान् ॥ २ ॥

ᵛअस्याः वर्तमानाया इदानींतन्याः ᵛउषसः ᵛनृतौ । 'नृ नये' नयने प्रापणे । उदयकाल इत्यर्थः । ᵛनृणां नेतॄणां मध्ये ᵛनृतमस्य अतिशयेन नेतुः ᵛते तव इन्द्रस्य स्तुत्या यागेन च ᵛप्र ᵛस्याम वयं प्रकृष्टा भवेम । तथा हे इन्द्र ᵛअपरस्याः आगामिन्याश्चोषसो नृतौ प्रापणे तव स्तुत्या यागेन च वयं प्रकृष्टा भवेमेत्याशास्महे । किंच ᵛत्रिशोकः नामर्षिः हे इन्द्र त्वामाराध्य त्वत्प्रसादात् ᵛशतं बहून् ᵛअनु

१. ग१.२.६.७-मु-'पश्यन्' नास्ति । २ त-भ-किंच लक्षणः । ३. ग-पुस्तकस्थमेतन्मन्त्रभाष्यं वने न वृक्ष इव यो यः पक्षनिहितः कामयमानः शुचिः सोमः तथा स्तोमः भुरणाविदकुतौ वा युवामजीगः निर्गमयति । यस्येन् यस्यैव पातेन्द्रः पुरुदिनेषु बहुदिनेषु सनृणामाह्वाता नृणां मध्ये नृतमः श्रेष्ठः नर्यः नरहितः अपावान् शत्रुक्षपणशील'; भ१.४.७-पुस्तकेषु अस्य मन्त्रस्य भाष्यं नास्ति ।

अनुचरभूतान् नॄन् मनुष्यान् आवहत् प्रापितवान् । रक्षितवानित्यर्थः । तथा तव कुत्सस्य च ससवान्[1] सनिता युगपदेव संभक्ता यः रथः असत् अस्ति स रथः कुत्सेन कुत्सो रक्षितवानिति शेषः । तथा च मन्त्रान्तरे श्रूयते—' यासि कुत्सेन सरथमवस्युः ' ( ऋ. सं. ४. १६. ११ ) इति । यस्मादेवं तस्मात्त्वत्प्रसादादहमपि प्रकृष्टा भवेमेत्यर्थः ॥

कस्ते मद॑ इन्द्र॒ रन्त्यो॑ भूद्दुरो॒ गिरो॑ अ॒भ्यु१॒॑ग्रो वि धा॑व ।

कद्वाहो॑ अ॒र्वागुप॑ मा मनी॒षा आ त्वा॑ शक्यामुप॒मं राधो॒ अन्नैः॑ ॥ ३ ॥

कः । ते॒ । मदः॑ । इ॒न्द्र॒ । रन्त्यः॑ । भू॒त् । दुरः॑ । गिरः॑ । अ॒भि । उ॒ग्रः । वि । धा॒व॒ ।

कत् । वाहः॑ । अ॒र्वाक् । उप॑ । मा॒ । म॒नी॒षा । आ । त्वा॒ । श॒क्या॒म् । उ॒प॒ऽमम् । राधः॑ । अन्नैः॑ ॥ ३ ॥

हे इन्द्र ते तवेषत्प्रमध्यमोत्तमानां सोमजन्यानां मदानां मध्ये कः मदः रन्त्यः रमयिता प्रीतिकरः भूत् भवति । स्वकीयनिकरमदयोग्यसोमदानाभिप्रायेणायं प्रश्नः । उग्रः ओजस्वी त्वं दुरः यज्ञगृहद्वाराणि गिरः स्तुतिलक्षणा वाचश्च अभि वि धाव अभ्यागच्छ । किंच कत् कदा वाहः । इन्द्रं प्रत्युह्यत इति वाहः सोम उच्यते । एवंभूतः[2] अर्वाक् त्वत्प्रसादात्फलदानायास्मदभिमुखो भविष्यतीति शेषः । अपि[3] च कदा मनीषा सर्वार्थदर्शिनी प्रज्ञा सर्वगुणग्राहिणी स्तुतिर्वा मा मां त्वत्प्रसादात् उप गमिष्यतीति शेषः[3] । कदा हे इन्द्र त्वा त्वाम् । आ इत्युपसर्गश्रुतेर्योग्यपदाध्याहारः । आराध्य वयम् अन्नैः सह राधः धनम् उपमं सन्निकर्षं शक्याम् । शकिरत्र गत्यर्थोऽस्माभिरितिण्यर्थः । संगमयेयम् ॥

कदु॑ द्यु॒म्नमि॑न्द्र॒ त्वाव॑तो॒ नॄन्कया॑ धि॒या क॑रसे॒ कन्न॒ आग॑न् ।

मि॒त्रो न स॒त्य उ॑रुगाय भृ॒त्या अन्ने॑ सम॒स्य यदस॑न्मनी॒षाः ॥ ४ ॥

कत् । ऊँ इति॑ । द्यु॒म्नम् । इ॒न्द्र॒ । त्वाऽव॑तः । नॄन् । कया॑ । धि॒या । क॒र॒से॒ । कत् । नः॒ । आ । अ॒ग॒न् ।

मि॒त्रः । न । स॒त्यः । उ॒रु॒ऽगा॒य॒ । भृ॒त्यै । अन्ने॑ । स॒म॒स्य । यत् । अस॑न् । म॒नी॒षाः ॥ ४ ॥

हे इन्द्र त्वं कदु कदा वा द्युम्नं हविर्लक्षणमस्मदीयमन्नं भुङ्क्ष्वेति शेषः । कया धिया केन कर्मणा नॄन् नेतॄनस्मान् त्वावतः त्वत्सदृशान् करसे करिष्यसि । कत् कदा नः अस्मान् प्रति आगन् आगमिष्यसि । सत्यः अनघस्त्व इत्यर्थः । मित्रो न सखेव तथा । हे उरुगाय बहुकीर्ते इन्द्र त्वं भृत्यै भरणाय पोषणाय भवसीति शेषः । यत् यदा समस्य अस्मदादिकस्य सर्वस्य जगतः अन्ने जगत्स्थितिनिमित्त आहारे मनीषाः अन्नाभिलक्षणा बुद्धयः असन् भवेयुः । तदा सर्वस्य पोषणाय त्वं भवसीत्यर्थः ॥

प्रेर॑य॒ सूरो॒ अर्थं॒ न पा॒रं ये अ॑स्य॒ कामं॑ जनि॒धाइ॑व॒ ग्मन् ।

गिर॑श्च॒ ये ते॑ तुविजात पू॒र्वीर्नर॑ इन्द्र प्रति॒शिक्ष॒न्त्यन्नैः॑ ॥ ५ ॥

प्र । ई॒र॒य॒ । सूरः॑ । अर्थ॑म् । न । पा॒रम् । ये । अ॒स्य॒ । काम॑म् । ज॒नि॒धाःऽइ॑व । ग्मन् ।

गिरः॑ । च॒ । ये । ते॒ । तु॒वि॒ऽजा॒त॒ । पू॒र्वीः । नरः॑ । इ॒न्द्र॒ । प्र॒ति॒ऽशिक्ष॑न्ति । अन्नैः॑ ॥ ५ ॥

---

१. त-म—' ससवान् ' नास्ति ।　२. ग-म१.२.४.७—एवंभूतः सोमः; त१.२.४.५.६—एवंभूतः ।
३. त-म६—' अपि च ... शेषः ' नास्ति ।

सूरः सूर्यः अर्यं न यथा तारं गन्तारं योगिनमनुगृह्णन् पारं संसारस्यान्तमपवर्गं गमयति तथा हे इन्द्र त्वं यजमानान् संसारस्यान्तं प्रेरय गमय। ये अस्मदादयो यजमानाः अस्य तवेन्द्रस्य कामं सोमपानेच्छां गमन्। गमिरत्र विपूर्वोऽन्तर्भावितण्यर्थश्च द्रष्टव्यः। विगमयन्ति महता सोमपानेनापनयन्ति। तत्र दृष्टान्तः। जनिधा इव। जनीनां जायानां संभोगकाले गर्भस्य धारयितारः पतयो यथा प्रभूतसंभोगप्रदानेन मैथुनेच्छामपनयन्ति तद्वत्। किंच नरः नेतारोऽस्मदादयः ये यजमानाः हे तुविजात बहुरूप। 'रूपंरूपं प्रतिरूपो बभूव' (ऋ. सं. ६.४७.१८) इति वचनात्। तथाविधम् इन्द्र ते तुभ्यं पूर्वीः अनादिकालप्रवृत्ताः गिरश्च स्तुतिलक्षणा वाचश्च अश्वैः पुरोडाशादिहविर्भिः सह प्रतिशिक्षन्ति प्रतिकालं प्रयच्छन्ति तानस्मदीयान् यजमानान् पारं गमयेति पूर्वेण संबन्धः॥ ॥२२॥

मात्रे नु ते सुमिते इन्द्र पूर्वी द्यौर्मज्मना पृथिवी काव्येन।
वराय ते घृतवन्तः सुतासः स्वाद्मन्भवन्तु पीतये मधूनि॥६॥

मात्रे इति। नु। ते। सुमिते इति सुऽमिते। इन्द्र। पूर्वी इति। द्यौः। मज्मना। पृथिवी। काव्येन। वराय। ते। घृतऽवन्तः। सुतासः। स्वाद्मन्। भवन्तु। पीतये। मधूनि॥६॥

हे इन्द्र ते तव स्वभूतेन मज्मना बलेन महत्त्वेन काव्येन कर्मणा द्यौः पृथिवी द्यावापृथिव्यौ नु क्षिप्रं सुमिते निर्मिते। कीदृश्यौ। मात्रे निर्मात्र्यौ पूर्वी पूर्व्यौ महत्यौ। अस्मादीदृशेन महत्त्वेन युक्तः तस्मात् घृतवन्तः अग्निमुखत्वात् रसं क्षरन्तो दीप्तिमन्तो वा सुसंस्कृतत्वात् घृताज्यसंयुक्ताः सुतासः अभिषुताः सोमाः वराय श्रेष्ठाय तुभ्यमिन्द्राय स्वाद्मन् भवन्तु। अस्माभिर्दत्ताः सन्तु। किमर्थम्। पीतये पानाय। मधूनि मधुररसात्मकानि पुरोडाशादीन्यन्नानि हवींषि भक्षणार्थं दत्तानि भवन्तु॥

आ मध्वो अस्मा असिचन्नमत्रमिन्द्राय पूर्णं स हि सत्यराधाः।
स वावृधे वरिमन्ना पृथिव्या अभि क्रत्वा नर्यः पौंस्यैश्च॥७॥

आ। मध्वः। अस्मै। असिचन्। अमत्रम्। इन्द्राय। पूर्णम्। सः। हि। सत्यऽराधाः। सः। ववृधे। वरिमन्। आ। पृथिव्याः। अभि। क्रत्वा। नर्यः। पौंस्यैः। च॥७॥

अस्मै इन्द्राय अस्येन्द्रस्यार्थे मध्वः मधुररसस्य सोमस्य पूर्णम् अमत्रं चमसादिकं पात्रम् आ असिचन् आभिमुख्येन सिक्तवन्तः परया श्रद्धयास्मदीया ऋत्विजः सिक्तवन्तः अग्नौ प्रक्षिप्तवन्तः। हि यस्मात्कारणात् सः इन्द्रः सत्यराधाः सत्यधनः। यजमानेभ्यो दातव्यत्वेनाविसंवादिधन[1] इत्यर्थः। तस्मादसिञ्चन्निति[2] संबन्धः। अथाप्यासिक्तेन तेन पानेन तृप्तः सः इन्द्रः पृथिव्याः अन्तरिक्षस्य वरिमन् अतिशयेन विस्तीर्णे स्थाने आसमन्तात् अभि ववृधे अभिवर्धते। कीदृश इन्द्रः। नर्यः नृभ्यो हितः। क्रत्वा वृत्रवधादिकर्मणा प्रज्ञानेन वा पौंस्यैश्च[3] युक्त इति शेषः॥

व्यानळिन्द्रः पृतनाः स्वोजा आस्मै यतन्ते सख्याय पूर्वीः।
आ स्मा रथं न पृतनासु तिष्ठ यं भद्रया सुमत्या चोदयासे॥८॥

---

१. त-म-मु-दातव्येना°। २. त-म१.२.४.६-मु-तस्मादसिंचन्निति। ३. ग-र४-पौंस्यैश्च वीर्यैश्च।

वि । आनट् । इन्द्रः । पृतनाः । सुऽओजाः । आ । अस्मै । यतन्ते । सख्याय । पूर्वीः ।
आ । स्म । रथम् । न । पृतनासु । तिष्ठ । यम् । भद्रया । सुऽमत्या । चोदयासे ॥ ८ ॥

स्वोजाः शोभनबलः इन्द्रः पृतनाः शत्रुसेनाः व्यानट् व्याप्नोति । इन्द्रः संग्रामेषु केनाप्यप्रतिहन्यमानः सन् शत्रून् जयतीत्यर्थः । किंच पूर्वीः । अत्र पूर्वशब्द उत्कृष्टवाची । उत्कृष्टाः शत्रुसेना अप्रभवन्त्यः सत्यः अस्मै अस्येन्द्रस्य सख्याय संधिलक्षणाय[1] सखित्वाय आ यतन्ते । संधिं कर्तुमिच्छन्तीत्यर्थः । अपरोऽर्धर्चः प्रत्यक्षकृतः । आत्मिने वाक्यम् । हे इन्द्र त्वं यं स्वीयं रथं भद्रया कल्याण्या सुमत्या शोभनया परानुग्रहया बुद्ध्या चोदयासे यज्ञान् प्रति प्रेरयसि तं रथम् अस्मदयज्ञं प्रत्यागन्तुं महतादरेण आ तिष्ठ आरोह । तत्र दृष्टान्तः । पृतनासु संग्रामेषु रथं न यथा[2] स्वरथं महतादरेणातिष्ठसि[3] तद्वत् । स्म इति पदपूरणः ॥ ॥२३॥ ॥२॥

तृतीयेऽनुवाके त्रयोदश सूक्तानि । तत्र 'प्र देवत्रा' इति पञ्चदशर्चं प्रथमं सूक्तम् । इलूष-पुत्रस्य कवषस्यार्षं त्रैष्टुभमब्देवत्यमपोनपाद्देवताकं वा । तथा चानुक्रान्तं—'प्र देवत्रा पञ्चोना कवष ऐलूष आपमपोनप्त्रीयं वा' इति । 'अप इष्य होतः' इत्युक्तः सन् होता 'प्र देवत्रा' इत्याद्या नवर्चोऽनुब्रूयात् । सूत्रितं च—'प्र देवत्रा ब्रह्मणे गातुरेत्विति नव हिनोता नो अध्वरं देवयज्येति दशमीम्' ( आश्व. श्रौ. ५. १ ) इति ॥

**प्र दे॒व॒त्रा ब्रह्म॑णे गा॒तुरे॑त्व॒पो अच्छा॒ मन॑सो॒ न प्रयु॑क्ति ।**
**म॒हीं मि॒त्रस्य॒ वरु॑णस्य धा॒सिं पृ॑थु॒ज्रय॑से रीरधा सुवृ॒क्तिम् ॥ १ ॥**

प्र । दे॒व॒ऽत्रा । ब्रह्म॑णे । गा॒तुः । ए॒तु॒ । अ॒पः । अच्छ॑ । मन॑सः । न । प्रऽयु॑क्ति ।
म॒हीम् । मि॒त्रस्य॑ । वरु॑णस्य । धा॒सिम् । पृ॒थु॒ऽज्रय॑से । री॒र॒ध॒ । सु॒ऽवृ॒क्तिम् ॥ १ ॥

ब्रह्मणे । तृतीयार्थे चतुर्थी । ब्रह्मणा स्तोत्रेण । स्तूयमान इति शेषः । गातुः देवान्गन्ता वा प्रतिगमनशीलः सोमः देवत्रा देवीर्द्योतमानाः अपः वसतीवरीरेकधनालक्षणान्युदकानि अच्छ अभि प्र एतु प्रकर्षेण गच्छतु । तत्र दृष्टान्तः । मनसो न प्रयुक्ति । यथा मनसः प्रयुक्तिः प्रयोग उद्योगः क्षिप्रं गच्छति तद्वत् । एवं सोमेऽपः प्रतिगते सति हे मदीयात्मन् अध्वर्यो वा महीं धासिं महत्सोम-लक्षणमन्नं मित्रस्य वरुणस्य चार्थाय पृथुज्रयसे विस्तीर्णवेगाय । महागतेरिन्द्रस्य[4] चार्था-येत्यर्थः[5] । रीरध संसाधय संस्कुरु । दानयोग्यं कुरु । सुवृक्तिं सुष्ठु दोषैर्वर्जितां स्तुतिं च कुरु ॥

**अध्व॑र्यवो ह॒विष्म॑न्तो॒ हि भू॒ताच्छा॒प इ॑तोश॒तीरु॑शन्तः ।**
**अव॒ याश्चष्टे॑ अरु॒णः सु॑प॒र्णस्तमास्य॑ध्वमू॒र्मिम॒द्या सु॑हस्ताः ॥ २ ॥**

अध्व॑र्यवः । ह॒विष्म॑न्तः । हि । भू॒त । अच्छ॑ । अ॒पः । इ॒त॒ । उ॒श॒तीः । उ॒श॒न्तः ।
अव॑ । याः । चष्टे॑ । अ॒रु॒णः । सु॒ऽप॒र्णः । तम् । आ । अ॒स्य॒ध्व॒म् । ऊ॒र्मिम् । अ॒द्य । सु॒ऽह॒स्ताः ॥ २ ॥

हे अध्वर्यवः यूयं हविष्मन्तो हि अभिषोतव्येन सोमलक्षणेन हविषा युक्ताः खलु भूत भवत । किंच हे उशन्तः सोमाभिषवं कर्तुं कामयमाना अध्वर्यवो यूयम् उशतीः सोमाभिषवा-

१. ग–सखित्वलक्षणाय; ठ-म२.६-मु–संबंधित्वलक्षणाय ; उद्गीथ–सख्याय सखिभावाय सखित्व-लक्षणाय । २. ग–यथा रथी । ३. ग–महतादरेणातिष्ठति । ४. त-म६–महतेरिंद्रस्य । ५. त–चार्थायेत्यर्थः; म६–वीर्यायेत्यर्थः ।

कृष्णायसमिश्रपल्वलैकवनालक्षणाः अपः अच्छ आभिमुख्येन इत गच्छत । अरुणः रक्तवर्णः सुपर्णः सुपतनः सोमः अव अधस्तात् अन्तरिक्षे याः मेघोदरगता अपः पश्यति हे सुहस्ताः सोमाभिषवादिशोभनकर्मकारित्वात् सुवर्णमयपवित्राद्यलंकृताः । यद्वा सोमग्रहस्ताः । एतेऽध्वर्यवः यूयम् अद्य इदानीं तं तादृशम् ऊर्मिं सोमसंघातं ताभिरद्भिः सह अस्यध्वम् आभिमुख्येन स्थित्वा महताद्रेण दशापवित्रे शोधनार्थं प्रक्षिपत ॥

अध्वर्यवोऽप इता समुद्रमपां नपातं हविषा यजध्वम् ।
स वो ददद्रूर्मिमद्या सुपूतं तस्मै सोमं मधुमन्तं सुनोत ॥ ३ ॥

अध्वर्यवः । अपः । इत । समुद्रम् । अपाम् । नपातम् । हविषा । यजध्वम् ।
सः । वः । ददत् । ऊर्मिम् । अद्य । सुऽपूतम् । तस्मै । सोमम् । मधुऽमन्तम् । सुनोत ॥ ३ ॥

हे अध्वर्यवः यूयम् अपः एकधनालक्षणान्युदकानि । आहर्तुमिति शेषः । समुद्रम् उदधिस्थानीयं जलाशयम् इत गच्छत । इदानीमुत्तरोऽर्धर्चो व्याख्यायते पश्चात् द्वितीयः पादः । आर्थिकोऽयं क्रमः । अद्य इदानीं सः अपां नपात् वः जलार्थं प्रतिगतेभ्यो युष्मभ्यं सुपूतं सुष्ठुतम् ऊर्मिं जलसमूहं ददत् ददातु । यूयमपि तेन समूहेन तस्मै अपां नपात्रे मधुमन्तं मधुरस्वादूपेतं सोमं सुनोत अभिषुणुत । अभिषुतेन सोमरूपेण हविषा अपां नपातं वृष्टिकर्मण्यधिकृतं[1] देवं यजध्वम् ॥

यो अनिध्मो दीदयदप्स्वन्तर्यं विप्रास ईळते अध्वरेषु ।
अपां नपान्मधुमतीरपो दा याभिरिन्द्रो वावृधे वीर्याय ॥ ४ ॥

यः । अनिध्मः । दीदयत् । अप्ऽसु । अन्तः । यम् । विप्रासः । ईळते । अध्वरेषु ।
अपाम् । नपात् । मधुऽमतीः । अपः । दाः । याभिः । इन्द्रः । वावृधे । वीर्याय ॥ ४ ॥

उत्तरार्धस्य प्रत्यक्षकृतत्वादेकवाक्यतायै युष्मच्छब्देन समानार्थो भवच्छब्दः प्रथमार्धेऽध्याहार्यः । यः भवान् अपां नपात् अप्सु अन्तः अपां मध्ये मेघस्थाने अनिध्मः काष्ठवर्जितः सन् दीदयत् दीप्यते । विप्रासः मेधाविन ऋत्विग्यजमानाः अध्वरेषु यागेषु यं भवन्तम् ईळते स्तुवन्ति हे अपां नपात् स त्वं मधुमतीः मधुररसयुक्ताः अपः वृष्टिलक्षणाः दाः अस्मभ्यं देहि । याभिः वसतीवर्येकधनाख्याभिः सोमेन मिश्रिताभिरद्भिः[2] इन्द्रः वीर्याय वृत्रवधादिवीरकर्मणे वावृधे वर्धते ता अपो देहीति संबन्धः ॥

याभिः सोमो मोदते हर्षते च कल्याणीभिर्युवतिभिर्न मर्यः ।
ता अध्वर्यो अपो अच्छा परेहि यदासिञ्चा ओषधीभिः पुनीतात् ॥ ५ ॥

याभिः । सोमः । मोदते । हर्षते । च । कल्याणीभिः । युवतिऽभिः । न । मर्यः ।
ताः । अध्वर्यो इति । अपः । अच्छ । परा । इहि । यत् । आऽसिञ्चाः । ओषधीभिः । पुनीतात् ॥ ५ ॥

अभिषुतः सोमः याभिः वसतीवर्येकधनाख्याभिरद्भिः सह मोदते मुदितो भवति हर्षते च । पुनरुक्तिरादरार्था । अत्यर्थं हृष्यतीत्यर्थः । तत्र दृष्टान्तः । कल्याणीभिः कमनीयाभिः युवतिभिः तरुणीभिः स्त्रीभिः[3] सह मर्यः न यथा मनुष्यो मोदते तद्वत् । हे अध्वर्यो त्वं ताः तादृशीः अपः

1. त-वृष्टिकर्मणाधिकृतं । 2. त-गु-रसाभिरद्भिः । 3. त-म१-'स्त्रीभिः' नास्ति ।

अच्छ अभिप्राप्तुं परेहि जलाशयं प्रतिगच्छ । किंच यत् यदा आहुताभिस्ताभिरद्भिः[1] आसिक्ताः आ समन्तात्सोमाशासिक्तासि तदा ओषधीभिः सोमैः सहापस्त्वं पुनीतात् दशापवित्रेण पुनीहि ॥ ५ ॥

एवेद्यूने युवतयो नमन्त यदीमुशन्नुशतीरेत्यच्छ ।

सं जानते मनसा सं चिकित्रेऽध्वर्यवो धिषणापश्च देवीः ॥ ६ ॥

एव । इत् । यूने । युवतयः । नमन्त । यत् । ईम् । उशन् । उशतीः । एति । अच्छ ।

सम् । जानते । मनसा । सम् । चिकित्रे । अध्वर्यवः । धिषणा । आपः । च । देवीः ॥ ६ ॥

युवतयः तरुण्यः स्त्रियः यूने तरुणाय नमन्त यथा प्रह्वीभवन्ति एव[2] एवं वसतीवर्येक-धनाख्या आपः सोमाय प्रह्वीभवन्ति[2] । यद्वा । युवतयः सोमेन सह मिश्रयिष्य आपो यूने अभिष-वादिकर्मणामागमना सह मिश्रयित्रे कर्मेऽध्वर्यवे नमन्त प्रह्वीभवन्त्येव । इत् इति पूरणः । कदा । यत् यदा उशन् अभिषवार्थं वसतीवरीः कामयमानः सोमः सोमाभिषवं कर्तुं कामयमानः अध्वर्युर्वा उशतीः सोमेन सह मिश्रीभावमभिषवादिकर्माङ्गभावं च कामयमानाः ईम् एना अपः अच्छ प्राप्तुम् एति गच्छति तदोपनमन्ते । अध्वर्यवो धिषणा तदीया स्तुतिलक्षणा वाक् च देवीः देव्यः आपश्च मनसा विशिष्टया बुद्ध्या सं जानते सम्यग्जानन्ति सं चिकित्रे स्वं स्वमधिकारं परस्परोपकारं च चक्षुषा सम्यक् पश्यन्ति ॥

यो वो वृताभ्यो अकृणोदु लोकं यो वो मह्या अभिशस्तेरमुञ्चत् ।

तस्मा इन्द्राय मधुमन्तमूर्मिं देवमादनं प्र हिणोतनापः ॥ ७ ॥

यः । वः । वृताभ्यः । अकृणोत् । ऊँ इति । लोकम् । यः । वः । मह्याः । अभिऽशस्तेः । अमुञ्चत् ।

तस्मै । इन्द्राय । मधुऽमन्तम् । ऊर्मिम् । देवऽमादनम् । प्र । हिनोतन । आपः ॥ ७ ॥

यः इन्द्रः वृताभ्यः मेघेनावृताभ्यः परिवेष्टिताभ्यः वः युष्मभ्यमप्सुयः लोकं मेघोदराभि-र्निर्गममार्गम् अकृणोत् अकरोत् । उ इति पूरणः । किंच यो वः युष्मानपः मह्याः महत्याः अभिशस्तेः मेघपरिवेष्टनाभिहिंसनात् अमुञ्चत् मोचितवान् । हे आपः यूयं तस्मै तादृशाय इन्द्राय मधुमन्तं मधुरस्वादुयुक्तं देवमादनम् इन्द्रादिदेवानां सोमेन सह मिश्रीभूय तर्पयितारम् ऊर्मिम् अप्संघातं प्र हिणोतन अस्मद्यज्ञं प्रति गमयत । सोमाभिषवकर्माङ्गभावाय प्रस्थापयत ॥

प्रास्मै हिनोत मधुमन्तमूर्मिं गर्भो यो वः सिन्धवो मध्व उत्सः ।

घृतपृष्ठमीड्यमध्वरेष्वापो रेवतीः शृणुता हवं मे ॥ ८ ॥

प्र । अस्मै । हिनोत । मधुऽमन्तम् । ऊर्मिम् । गर्भः । यः । वः । सिन्धवः । मध्वः । उत्सः ।

घृतऽपृष्ठम् । ईड्यम् । अध्वरेषु । आपः । रेवतीः । शृणुत । हवम् । मे ॥ ८ ॥

अत्र यच्छब्दसंबन्धाद्द्वितीयः पादः[3] पूर्वं व्याख्येयः । हे सिन्धवः स्यन्दनशीला आपः वः युष्माकं यः गर्भः मध्वः मधुररसस्य उत्सः उत्पत्स्यन्दनः प्रस्रवणः । यच्छब्दयोगात्तच्छब्दोऽ-ध्याहार्यः । तं मधुमन्तं मधुररसोपेतम् ऊर्मिम् अप्संघातम् । सारमित्यर्थः । अस्मै अस्येन्द्रस्यार्थाय

1. त—आहुताभिस्ताभिः । 2. त—' एव...प्रह्वीभवन्ति ' नास्ति । 3. त—' पादः ' नास्ति ।

प्र हिनोत प्रहिणुत। प्रगमयत। कीदृशम्। अध्वरेषु यज्ञेषु घृतपृष्ठं घृतमाज्यं पृष्ठे यस्य तम्। पश्चाद्घृतपातिनमित्यर्थः। ईड्यं स्तुत्यम्। किंच हे आपः यूयं रेवतीः रेवत्यः अस्मभ्यं यानि धनानि दातव्यानि तैर्धनवत्यः मे मदीयं हवम् आह्वानं शृणुत॥

तं सिन्ध॑वो मत्स॒रमि॑न्द्र॒पान॑मू॒र्मिं प्र हे॑त॒ य उ॒भे इय॑र्ति ।
म॒द॒च्युत॑मौशा॒नं न॑भो॒जां परि॑ त्रि॒तन्तुं॑ वि॒चर॑न्त॒मुत्स॑म् ॥ ९ ॥

तम्। सि॒न्ध॒वः॒। म॒त्स॒रम्। इ॒न्द्र॒ऽपान॑म्। ऊ॒र्मिम्। प्र। हे॒त॒। यः। उ॒भे इति॑। इय॑र्ति।
म॒द॒ऽच्युत॑म्। औ॒शा॒नम्। न॒भः॒ऽजाम्। परि॑। त्रि॒ऽत॒न्तुम्। वि॒ऽचर॑न्तम्। उत्स॑म् ॥ ९ ॥

हे सिन्धवः स्यन्दनशीला आपः यः युष्मदीयः सारभूतः समूहः उभे अस्मभ्यं इहलोकपरलोके दाता सन् इयर्ति कर्माङ्गभावं प्रतिपद्यते मत्सरं मादयितारमिन्द्रादिदेवानां तर्पयितारम् इन्द्रपानं देवानां प्रमुखेनेन्द्रेण पानीयं तं तादृशम् ऊर्मिम् उदकसमूहं प्र हेत प्रगमयत अस्मद्यज्ञं प्रति प्रेरयत। कीदृशम्। मदच्युतं मदस्य च्यावकम् औशानं सोमेन सह मिश्रीभावं कामयमानं नभोजां नभस्यन्तरिक्षे वृष्टिरूपेण[1] जातं परि सर्वतः त्रितन्तुं त्रयाणां लोकानां तनितारं विस्तारयितारं[2] विचरन्तं यज्ञपात्रेषु गच्छन्तम् उत्सम् उत्स्यन्दनम्। तर्पयितारं देवान् प्रत्यूर्ध्वं गन्तारमित्यर्थः॥

अपोनप्त्रीये एकधनास्वावृत्तासु 'आवर्वृततीः' इत्येषा। सूत्रितं च—'आवर्वृततीरध नु द्विधारा इत्यावृत्तास्वेकधनासु' (आश्व. श्रौ. ५. १) इति। तत्रैव 'हिनोता नः' इत्येषा। सूत्रं पूर्वमुदाहृतम्॥

आ॒व॒र्वृत॑ती॒रध॒ नु द्वि॒धारा॑ गोषु॒युधो॒ न नि॑य॒वं चर॑न्तीः ।
ऋषे॒ जनि॑त्री॒र्भुव॑नस्य॒ पत्नी॑र॒पो व॑न्दस्व स॒वृधः॒ सयो॑नीः ॥ १० ॥

आ॒ऽव॒र्वृत॑तीः। अध॑। नु। द्वि॒ऽधाराः॑। गो॒षु॒ऽयुधः॑। न। नि॒ऽय॒वम्। चर॑न्तीः।
ऋषे॑। जनि॑त्रीः। भुव॑नस्य। पत्नीः॑। अ॒पः। व॒न्द॒स्व॒। स॒ऽवृधः॑। स॒ऽयो॑नीः ॥ १० ॥

अध अथानन्तरं गोषुयुधो न। गोष्वप्सु निमित्तभूतासु मेघैः सह युध्यत इति गोषुयुदिन्द्रः। तस्य यथा वृष्टिलक्षणा अपः द्विधाराः। द्विशब्दोऽत्रानेकत्ववाची[3]। अनेकधाराः। अपर्यन्तधारा इत्यर्थः। अस्माकमप्येवंविधाः आवर्वृततीः आवृत्ताः नियवं सोमं प्रति निश्चयेन मिश्रीभावं चरन्तीः गच्छन्तीः भुवनस्य लोकस्य जनित्रीः जनयित्रीः पत्नीः पालयित्रीः सवृधः सह सोमस्य वर्धयित्रीः सयोनीः सोमेन सह समानस्थानाः हे ऋषे मदीयान्तरात्मन् अध्वर्यो वा स्वमेवंभूताः अपः नु क्षिप्रं वन्दस्व स्तुहीत्यर्थः॥ ॥ २५ ॥

हि॒नोता॑ नो अध्व॒रं दे॑वय॒ज्या हि॒नोत॒ ब्रह्म॑ स॒नये॒ धना॑नाम् ।
ऋ॒तस्य॒ योगे॒ वि ष्य॑ध्व॒मूधः॑ श्रु॒ष्टी॒वरी॑र्भूतना॒स्मभ्य॑मापः ॥ ११ ॥

हि॒नोत॑। नः॒। अ॒ध्व॒रम्। दे॒व॒ऽय॒ज्या। हि॒नोत॑। ब्रह्म॑। स॒नये॑। धना॑नाम्।
ऋ॒तस्य॑। योगे॑। वि। स्य॒ध्व॒म्। ऊधः॑। श्रु॒ष्टी॒ऽवरीः॑। भू॒त॒न॒। अ॒स्मभ्य॑म्। आ॒पः॒ ॥ ११ ॥

---

१. त१.२.५.७–विग्रहरूपेण। २. त१.२.७–तारयितारं विस्तारयितारं। ३. त–म६–द्विशब्दो-नेकत्ववाची।

हे ऋत्विजः हिनोत प्रहिणुत गमयत प्रोत्सर्पयतेत्यर्थः नः अध्वरं यज्ञं देवयज्या[1] देवयज्यायै देवयजनार्थम्। किंच प्रहिणुत ब्रह्म स्तुत्यात्मकं यथाशास्त्रक्रमेण सनये लब्धये नः अस्माकं धनानाम्। किंच ऋतस्य यज्ञस्य योगे संयोगे यदेतदूधरिव सोमपूर्णमधिषवणचर्म वर्तते। अथवा योगसंबन्धाच्छकटं योगः। तद्धि[2] तत्रैव[2] युज्यते। तेनाधिषवणचर्मणा ऊधसोऽधस्तादवस्थितेनेति मन्यमानो निरुक्तकारो ब्रवीति[3]—'यागे शकट इति[3] वा' (निरु. ६. २२) इति। यदेतद्यज्ञशकटस्याधस्तादुपरि चाधिषवणचर्म एतत् वि ष्यध्वं विमुञ्चध्वम्। अधिषवणचर्मस्थानीयेषु यो निषेकः सोमस्यैतद्विमोचनमधिषवणचर्मोधसः। तद्धि सोमं उत्सिच्यमाने क्षुधीभवति यथैतदूधोरूधो दुह्यमानानां गवि। एषस्तृत्विज उदकधारेण सोमसंमिश्रा अपो नयति। यूयमपि हे आपः एभिः ऋत्विग्भिरुत्सिच्यमानाः श्रुष्टीवरीः सुखवत्यः भूतन भवत अस्मभ्यम्। एवमत्र प्रकाशेनार्थस्य सुतरां प्रकटता भवतीति भाष्यकारेण प्रशब्दोऽध्याहृतः। प्रहिणुतेति। अध्वरमित्यनेन संबन्धाद्धिनोतेः गत्यर्थत्वमुपपद्यते। एतस्या ऋचो व्याख्यानं निरुक्तटीकाया उद्धृतम्॥[4]

प्रातरनुवाकस्य 'आपो रेवतीः' इत्येषा प्रतिपत्। सूत्रितं च—'आपो रेवतीः क्षयथा हि वस्व उप प्रयन्त इति सूक्ते' (आश्व. श्रौ. ४. ११) इति॥

आपो॑ रे॒वतीः॒ क्षय॑था॒ हि वस्वः॒ क्रतुं॑ च भ॒द्रं बि॑भृ॒थामृतं॑ च।
रा॒यश्च॒ स्थ स्व॑प॒त्यस्य॒ पत्नीः॒ सर॑स्वती॒ तद्गृ॑ण॒ते वयो॑ धात्॥ १२॥

आपः॑। रे॒वतीः॑। क्षय॑थ। हि। वस्वः॑। क्रतु॑म्। च। भ॒द्रम्। बि॒भृ॒थ। अ॒मृत॑म्। च।
रा॒यः॑। च। स्थ। सु॒ऽअ॒प॒त्यस्य॑। पत्नीः॑। सर॑स्वती। तत्। गृ॒ण॒ते। वयः॑। धा॒त्॥ १२॥

हे आपो रेवतीः रेवत्यो धनवत्यः यूयं वस्वः वसुनः धनस्य क्षयथ हि ईशिध्वे खलु। किंच भद्रं भजनीयं क्रतुं च सोमयागादिलक्षणं कर्म च अमृतं च अमरणरूपं तज्जन्यफलं च बिभृथ धारयथ। पुष्णीथ वा। तथा रायश्च धनस्य च स्वपत्यस्य शोभनपुत्रस्य च पत्नीः पत्न्यः पालयित्र्यः स्थ भवथ। तथा सरस्वती तदभिमानिनी देवता गृणते स्तुवते मह्यं तत् इदं सर्वं वयः अन्नलक्षणं धनं धात् दधातु[5]॥

अपोनप्त्रीये 'प्रति यदापः' इत्येषा। सूत्रितं च—'प्रति यदापो अदृश्रमायतीरिति प्रतिदृश्यमानासु' (आश्व. श्रौ. ५. १) इति॥

प्रति॒ यदापो॒ अदृ॑श्रमाय॒तीर्घृ॒तं पयां॑सि॒ बिभ्र॑ती॒र्मधू॑नि।
अ॒ध्व॒र्युभि॒र्मन॑सा संविदा॒ना इन्द्रा॑य॒ सोमं॒ सुषु॑तं॒ भर॑न्तीः॥ १३॥

प्रति॑। यत्। आपः॑। अदृ॑श्रम्। आ॒ऽय॒तीः। घृ॒तम्। पयां॑सि। बिभ्र॑तीः। मधू॑नि।
अ॒ध्व॒र्युऽभिः॑। मन॑सा। स॒म्ऽवि॒दा॒नाः। इन्द्रा॑य। सोम॑म्। सुऽसु॑तम्। भर॑न्तीः॥ १३॥

हे आपः आयतीः अस्मद्यज्ञं प्रत्यागच्छन्तीः यत्। 'सुपां सुलुक्' इति विभक्तेर्लुक्। याः युष्मान् प्रति अदृश्रं प्रतिपश्यामि घृतं सोमसंसृष्टमाज्यं मधूनि मधुरस्वादूनि सुष्ठुरसानि

1. त-भ-'देवयज्या' नास्ति। 2. स—तद्धि तर्हि; भ-मु—तद्धि तर्हि। 3. त-भ—ब्रवीति शकट इति। 4. ग-पुस्तकस्थमेकादशमन्त्रभाष्यं—नोऽस्माकं अध्वरं यज्ञं देवयागार्थं हिनोत प्रेरयत। अप्सु हि यज्ञाश्रितः ब्रह्मकर्मधनानां लाभाय हिनोत यज्ञस्य योगार्थं ऊधः आत्मीयं वि ष्यध्वं विमुक्तं कुरुत। हे आपः यूयं श्रुष्टीवरीः सुखवत्यो भूतन भवतास्मभ्यं। 5. त-भ६—दधातु।

ᵛपयांसि उदकानि च¹ संभृत्य ᵛबिभ्रतीः यागकाले धारयन्तीः तथा² ᵛअध्वर्युभिः ᵛमनसा अन्तःकरणेन ᵛसंविदानाः संभाष्यमाणाः किंच ᵛइन्द्राय इन्द्रार्थं ᵛसुषुतं सुष्ठु सुतं ᵛसोमं ᵛभरन्तीः धारयन्तीः* एवंभूतास्ता युष्मान्सोमीरिति शेषः³ ॥

अपोनप्त्रीये ' एमा अग्मन् ' इति द्वे । सूत्रितं च—' एमा अग्मन्रेवतीर्जीवधन्या इति द्वे सखासूतरया परिधाय ' ( आश्व. श्रौ. ५ · १ ) इति ॥

**एमा अ॑ग्मन्रे॒वती॑र्जी॒वध॑न्या॒ अध्व॑र्यवः सा॒दय॑ता सखायः ।**
**नि ब॒र्हिषि॑ धत्तन सो॒म्यासो॒ऽपां नप्त्रा॑ संविदा॒नास॑ एनाः ॥ १४ ॥**

आ । इ॒माः । अ॒ग्म॒न् । रे॒वतीः॑ । जी॒वऽध॑न्याः । अध्व॑र्यवः । सा॒दय॑त । स॒खा॒यः॒ ।
नि । ब॒र्हिषि॑ । ध॒त्त॒न॒ । सो॒म्या॒सः॒ । अ॒पाम् । नप्त्रा॑ । स॒म्ऽवि॒दा॒नासः॑ । ए॒नाः॒ ॥ १४ ॥

ᵛरेवतीः रेवत्यः धनवत्यः ᵛजीवधन्याः जीवानां पालयित्र्यः³ प्रीणयित्र्यो वा ᵛइमाः ईदृग्भूता आपः ᵛआ ᵛअग्मन् अस्मद्यज्ञं प्रत्यागच्छन् । एतज्ज्ञात्वा हे ᵛसखायः सखिभूता हे ᵛअध्वर्यवः यूयम् ᵛअपां ᵛनप्त्रा वृष्टिकर्मस्वधिकृतेन⁴ देवेन सह ᵛसंविदानाः संमन्त्रयमाणाः ᵛएनाः एता अपः ᵛसादयत स्थापयत । कुत्र सादयाम इति उच्यते । ᵛसोम्यासः सोमसंपादिनोऽध्वर्यवः यूयं ᵛबर्हिषि वेद्यामास्तीर्णे कुशमये ᵛनि ᵛधत्तन नियमेन स्थापयत ॥

**आग्म॒न्नाप॑ उश॒तीर्ब॒र्हिरेदं न्य॑ध्व॒रे अ॑सदन्देव॒यन्तीः॑ ।**
**अध्व॑र्यवः सुनु॒तेन्द्रा॑य॒ सोम॒मभू॑दु वः सु॒शका॑ देवय॒ज्या ॥ १५ ॥**

आ । अ॒ग्म॒न् । आपः॑ । उ॒श॒तीः । ब॒र्हिः । आ । इ॒दम् । नि । अ॒ध्व॒रे । अ॒स॒द॒न् । दे॒व॒ऽयन्तीः॑ ।
अध्व॑र्यवः । सु॒नु॒त । इन्द्रा॑य । सोम॑म् । अभू॑त् । ऊँ॒ इति॑ । वः॒ । सु॒ऽशका॑ । दे॒व॒ऽय॒ज्या ॥ १५ ॥

ᵛआपः वसतीवर्येकधनाख्याः ᵛइदम् ईदृशं ᵛबर्हिः वेदिस्तरणम् ᵛउशतीः उशत्यः कामयमानाः ᵛआग्मन्⁵ आगच्छन् । अस्मद्यज्ञं प्रति ᵛआ आगत्य च ᵛअध्वरे अस्मदीये यज्ञे ᵛदेवयन्तीः देवान् कामयमानाः । तर्पयितुमिच्छन्त्य इत्यर्थः । ᵛनि ᵛअसदन् न्यसीदन्⁶ । एतज्ज्ञात्वा हे ᵛअध्वर्यवः यूयम् ᵛइन्द्राय इन्द्रार्थं ᵛसोमं ᵛसुनुत अभिषुणुत । इदानीमपां प्रसादात् ᵛवः युष्माकं ᵛदेवयज्या देवानिन्द्रादीनुद्दिश्य क्रियमाणा यागक्रिया ᵛसुशका सुष्ठु कर्तुं शक्या ᵛअभूदु आसीदेव ॥ ॥ २६ ॥

' आ नः ' इत्येकादशर्चं द्वितीयं सूक्तं कवषस्यार्षं त्रैष्टुभं वैश्वदेवम् । अनुक्रान्तं च—' आ न एकादश वैश्वदेवम् ' इति । गतः सूक्तविनियोगः । एकादशिनस्य वैश्वदेवस्य पशोः पुरोडाशस्य ' आ नः ' इत्येषानुवाक्या । सूत्रितं च—' विश्वे अद्य मरुतो विश्व ऊत्या नो देवानामुप वेतु शंसः ' ( आश्व. श्रौ. ३. ७ ) इति ॥

१. त-' च ' नास्ति । २. ग-एतद्धि सर्वं सरस्वत्या विद्यते । तदुक्तं घृतं पयो दुदुहे नाहुषायेति । तथा अध्वर्युभिः मनसा ऐकमत्यं गता इन्द्रार्थं सुष्ठुभिषुतं सोमं भरंतीः । एवंभूताः मत्स्यपस्यमिति संबंधः । *. त-अ६-' धारयन्तीः ' नास्ति । ३. त१.२.३.४.५.६-भ६-मु-पालयित्र्यः; अ१.४-पायित्र्यः; उद्गीथ-सर्वयित्र्यः । ४. ग-भ५.६-वृष्टिकर्मण्यधिकृतेन । ५. त५.७-भ-उद्गीथ-अग्मन् । ६. ग-न्यषीदन्; त-अ-मु-निषीदन् ।

आ नो देवानामुप वेतु शंसो विश्वेभिस्तुरैरवसे यजत्रः ।
तेभिर्वयं सुषखायो भवेम तरन्तो विश्वा दुरिता स्याम ॥ १ ॥

आ । नः । देवानाम् । उप । वेतु । शंसः । विश्वेभिः । तुरैः । अवसे । यजत्रः ।
तेभिः । वयम् । सुऽसखायः । भवेम । तरन्तः । विश्वा । दुःऽइता । स्याम ॥ १ ॥

देवानां स्तोतॄणां नः अस्माकं शंसः स्तोतव्यः यजत्रः यष्टव्यः एवंभूत इन्द्रः तुरैः त्वरणशीलैः विश्वेभिः सर्वैः मरुद्भिः सह अवसे अस्मदादिरक्षणार्थम् आ उप वेतु उपागच्छतु । वयम् अपि तेभिः तैः सह सुसखायः शोभनसखायः भवेम स्याम । किंच विश्वा दुरिता[1] विश्वानि[2] दुरितानि पापानि तरन्तः स्याम ॥

परि चिन्मर्तो द्रविणं ममन्यादृतस्य पथा नमसा विवासेत् ।
उत स्वेन क्रतुना सं वदेत श्रेयांसं दक्षं मनसा जगृभ्यात् ॥ २ ॥

परि । चित् । मर्तः । द्रविणम् । ममन्यात् । ऋतस्य । पथा । नमसा । आ । विवासेत् ।
उत । स्वेन । क्रतुना । सम् । वदेत । श्रेयांसम् । दक्षम् । मनसा । जगृभ्यात् ॥ २ ॥

मर्तः मनुष्यः यजमानः परि चित् सर्वतः द्रविणं विश्वेषां देवानां यागार्थं धनं ममन्यात् । मन्यतिः कान्तिकर्मा । कामयेत लब्धुमिच्छेत् । धनं लब्ध्वा च ऋतस्य यज्ञस्य पथा मार्गेण नमसा हविरादिलक्षणेनान्नेन आ विवासेत् परिचरेत् । उत अपि च स्वेन आत्मीयेन क्रतुना[3] प्रज्ञानेन[3] । मनसेत्यर्थः । सं वदेत । संवादोऽत्र समाध्यानमुच्यते । हविर्गृहीत्वा वषट्करिष्यन् विश्वान् देवान् मनसाध्यायेदित्यर्थः । विश्वेषां देवानां यागानन्तरं च तत्प्रसादात् श्रेयांसम् अतिशयेन प्रशस्यमात्मानं दक्षं[4] प्रवृद्धं सर्वव्यापिनं मनसा ध्यानसाधनेनान्तःकरणेन जगृभ्यात् गृह्णीयात् ॥

अधायि धीतिरससृग्रमंशास्तीर्थे न दस्ममुप यन्त्यूमाः ।
अभ्यानश्म सुवितस्य शूषं नवेदसो अमृतानामभूम ॥ ३ ॥

अधायि । धीतिः । अससृग्रम् । अंशाः । तीर्थे । न । दस्मम् । उप । यन्ति । ऊमाः ।
अभि । आनश्म । सुवितस्य । शूषम् । नवेदसः । अमृतानाम् । अभूम ॥ ३ ॥

धीतिः देवयागक्रिया अधायि निहिता स्थापिता । अस्माभिः प्रवर्तितेत्यर्थः । तदनन्तरम् ऊमाः अवितारस्तर्पयितारः अंशाः अस्माभिर्दत्ता हविर्भागाः दस्मं दर्शनीयं शत्रूणामुपक्षपयितारं वा अससृग्रम् असमानसृष्टिम् । उत्कृष्टजन्मानमित्यर्थः[5] । एवंभूतं देवसंघम् उप यन्ति उपगच्छन्ति । तत्र दृष्टान्तः । तीर्थे न । यथा गङ्गादितीर्थे तर्पणमुखे विसृष्टा अपामंशाः देवसंघमुपगच्छन्ति तद्वत् । तदनन्तरं वयं सुवितस्य सु इतस्य सुष्ठु प्राप्तस्य स्वर्गादिकस्य शूषं सुखम् अभ्यानश्म अभिप्राप्नवाम । किंच वयम् अमृतानां देवानां नवेदसः । न वेदेत्येतस्मिन्नर्थे नवेदः-

१. त–दुरितानि । २. भ–'विश्वानि' नास्ति । ३. त–'क्रतुना प्रज्ञानेन' नास्ति । ४. त–'दक्षं' नास्ति । ५. त सु–उग्रजन्मान' ।

शब्दो "मव्यात्स्वपाश्रवेदा" इति निपातितः । व च वेताराे वेतार एव । स्वरूपतो ज्ञातार एकैकर्थे । ᵛअभूम भवेमेत्याशास्महे ॥

निरयश्चाकन्यात्स्वपतिर्दमूना यस्मा उ देवः सविता जजान ।
भगो वा गोभिरर्यमेमनज्यात्सो अस्मै चारुश्छदयदुत स्यात् ॥ ४ ॥

निः । च । आकन्यात् । स्वऽपतिः । दमूनाः । यस्मै । ऊँ इति । देवः । सविता । जजान ।
भगः । वा । गोभिः । अर्यमा । ईम् । अनज्यात् । सः । अस्मै । चारुः । छदयत् । उत । स्यात् ॥ ४ ॥

ᵛनिश्च कल्पावस्थायी प्रजापतिः ᵛचाकन्यात् । तस्मै दृष्टादृष्टफलं दातुं कामयताम् । कीदृशः । ᵛस्वपतिः स्वीयानां प्रजानां स्वामी धनपतिर्वा ᵛदमूनाः दानमनाः । कस्मै कामयतामिति उच्यते । ᵛउ उत अपि च ᵛयस्मै यजमानाय मह्यं ᵛसविता सर्वस्य प्रेरको ᵛदेवः ᵛजजान जनितवान् । दृष्टादृष्टफलं दत्तवानित्यर्थः । वाशब्दः समुच्चये । तथा ᵛभगः देवश्च ᵛगोभिः अस्मदीयाभिः स्तुतिरूपाभिः वाग्भिः स्तुतः ᵛअर्यमा देवश्च ᵛईम् इदमभुं दृष्टादृष्टफलम् ᵛअनज्यात् व्यक्तीकुर्यात् । दद्यादित्यर्थः । ᵛउत अपि च ᵛस्यात् अन्योऽपि ᵛयो देवगणोऽस्ति ᵛचारुः रमणीयः ᵛसः अपि देवगणः ᵛअस्मै यजमानाय मह्यं ᵛछदयत् दृष्टादृष्टफलं दातुं कामयतामित्येतदाशास्महे ॥

इयं सा भूया उषसामिव क्षा यद्ध क्षुमन्तः शवसा समायन् ।
अस्य स्तुतिं जरितुर्भिक्षमाणा आ नः शग्मास उप यन्तु वाजाः ॥ ५ ॥

इयम् । सा । भूयाः । उषसाम्ऽइव । क्षाः । यत् । ह । क्षुऽमन्तः । शवसा । सम्ऽआयन् ।
अस्य । स्तुतिम् । जरितुः । भिक्षमाणाः । आ । नः । शग्मासः । उप । यन्तु । वाजाः ॥ ५ ॥

ᵛक्षुमन्तः । क्षुशब्दोऽन्नवाची शब्दवाची वा । अन्नवन्तः स्तुतिमन्तः कीर्तिमन्तो वेत्यर्थः । एवंभूता देवाः ᵛशवसा बलेन ᵛयत् यामस्मदीयां स्तुतिं प्रति ᵛसमायन् समागच्छन् संप्राप्ताः ᵛसा ᵛइयं स्तुतिर्देवानां प्राप्त्या ᵛभूयाः भूयात् भवतु । ᵛउषसामिव ᵛक्षाः । यथा पृथिवी उषसां व्याप्त्या सर्वेषां प्राप्या भवति तद्वत् । किंच ᵛजरितुः स्तोतुः ᵛअस्य मम ᵛस्तुतिं ᵛभिक्षमाणाः याचमानाः ᵛशग्मासः । शग्ममिति सुखनाम । सुखाः सुखकराः ᵛवाजाः सुधन्वनः पुत्राश्चयोऽप्यृभुर्विभ्वा वाज इत्येते ᵛनः अस्मानाभिमुख्येन ᵛउप ᵛयन्तु उपगच्छन्तु ॥ ॥ २७ ॥

अस्येदेषा सुमतिः पप्रथानाभवत्पूर्व्या भूमना गौः ।
अस्य सनीळा असुरस्य योनौ समान आ भरणे बिभ्रमाणाः ॥ ६ ॥

अस्य । इत् । एषा । सुऽमतिः । पप्रथाना । अभवत् । पूर्व्या । भूमना । गौः ।
अस्य । सऽनीळाः । असुरस्य । योनौ । समाने । आ । भरणे । बिभ्रमाणाः ॥ ६ ॥

ᵛइत् इदानीम् ᵛअस्य देवगणसंबन्धिनी ᵛएषा ᵛसुमतिः सुष्टुतिः ᵛपप्रथानाभवत् विस्तीर्यमाणाभूत् । अस्माभिः क्रियमाणेत्यर्थः । कीदृशी । ᵛपूर्व्या पूर्वकालीना ᵛभूमना भूम्ना बहुत्वेन युक्तेति शेषः । सर्वदेवसंबन्धित्वाद्बहुत्वं जातेत्यर्थः । ᵛगौः देवान्प्रति गन्त्री । एतज्ज्ञात्वा सर्वे देवाः ᵛअसुरस्य प्रज्ञारूपबलवतः ᵛअस्य मम संबन्धिनि ᵛसमाने सर्वदेवसाधारणे ᵛभरणे सर्वेषां देवानां पुष्टिकरे ᵛयोनौ यज्ञाख्ये स्थाने ᵛसनीळाः समानस्थानाः ᵛबिभ्रमाणाः अस्मभ्यं दृष्टादृष्टफलं धारयन्तः ᵛआ गच्छन्त्विति शेषः ॥

किं स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः।
संतस्थाने अजरे इतऊती अहानि पूर्वीरुषसो जरन्त ॥ ७ ॥

किम्। स्वित्। वनम्। कः। ऊँ इति। सः। वृक्षः। आस। यतः। द्यावापृथिवी इति। निःऽततक्षुः ॥ संतस्थाने इति सम्ऽतस्थाने। अजरे इति। इतऊती इतीतःऽऊती। अहानि। पूर्वीः। उषसः। जरन्त ॥ ७ ॥

यतः यस्माद्वृक्षात् द्यावापृथिवी द्यावापृथिव्यौ निष्टतक्षुः देवाः निःशेषेण कृतवन्तः सः तादृशः वृक्षः क उ आस कीदृग्वा बभूव। तदुत्पादकं वनम् अरण्यं किं स्वित्। संतस्थाने सम्यक्स्थितवत्यौ अजरे जरावर्जिते इतऊती इत एतेभ्यो देवेभ्यो रक्षणं ययोस्ते। किंच अहानि सर्वाणि दिनानि पूर्वीः बह्वीः उषसः च देवा निष्टतक्षुः। पूर्वभूतान् देवान् जरन्त स्तोतारः स्तुवन्ति ॥

नैतावदेना परो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति।
त्वचं पवित्रं कृणुत स्वधावान्यदीं सूर्यं न हरितो वहन्ति ॥ ८ ॥

न। एतावत्। एना। परः। अन्यत्। अस्ति। उक्षा। सः। द्यावापृथिवी इति। बिभर्ति। त्वचम्। पवित्रम्। कृणुत। स्वधाऽवान्। यत्। ईम्। सूर्यम्। न। हरितः। वहन्ति ॥ ८ ॥

द्यावापृथिव्योर्निर्माणरूपम् एतावत् देवजातं सामर्थ्येन युक्तमिति न अपि तु एना एतेभ्यो देवेभ्यः परः उत्कृष्टः अन्यत् अन्यो हिरण्यगर्भः अस्ति। उक्षा सेक्ता। प्रजानां स्रष्टेत्यर्थः। हिरण्यगर्भः परमसूक्ष्मो वायुरूपो लिङ्गात्मा अपः प्रविश्य द्यावापृथिवी द्यावापृथिव्यौ बिभर्ति धारयति। किंच स्वधावान् बलवानन्नवान् वा स हिरण्यगर्भः पवित्रं पवित्रमयं त्वचम् आत्मीयं शरीरं दीप्तं मन्त्रं वा कृणुत करोति। कदेति उच्यते। यत् यदा ईम् इमां त्वचं हरितः अश्वाः सूर्यं न वहन्ति न प्रापयन्ति तदेति। सृष्टेः प्रागित्यर्थः ॥

स्तेगो न क्षामत्येति पृथ्वीं मिहं न वातो वि ह वाति भूम।
मित्रो यत्र वरुणो अज्यमानोऽग्निर्वने न व्यसृष्ट शोकम् ॥ ९ ॥

स्तेगः। न। क्षाम्। अति। एति। पृथ्वीम्। मिहम्। न। वातः। वि। ह। वाति। भूम। मित्रः। यत्र। वरुणः। अज्यमानः। अग्निः। वने। न। वि। असृष्ट। शोकम् ॥ ९ ॥

स्तेगः। 'स्त्यै ष्ट्यै शब्दसंघातयोः'। रश्मिसंघात आदित्यः पृथ्वीं विस्तीर्णां क्षां भूमिं तेजसा न अत्येति नातिगच्छति। मर्यादया स्थितस्येवमादित्यः स्तूयते। वातः वायुरपि खलु भूम भूमिं मिहं वृष्टिं न वि वाति समर्थोऽपि सन् विविधं न गमयति। भूमिं प्रति स्वा-सेच्छयैव वर्षयतीति[1] वातः स्तूयते। यत्र यस्मिन् प्रजापतौ मित्रः देवः अज्यमानः व्यज्यमानः व्यक्तीभवन्। उत्पाद्यमान[2] इत्यर्थः। शोकं स्वीयां दीप्तिं व्यसृष्ट विसृजति सर्वतो विक्षिपति तथा वरुणः च व्यक्तीभवन्[2] स्वदीप्तिं विक्षिपति। तत्र दृष्टान्तः। अग्निः देवः वने न यथा वृक्षसंघाते स्वदीप्तिं सर्वतो विसृजति तद्वत्। तादृशं प्रजापतिं स्तौमीति शेषः ॥

---

१. त१.२.६.७—न वर्षतीति; त२.४.५-म१-मु-उद्दीप—वर्षन्तीति; म१.२.४—वर्षमति। २. त—'उत्पाद्यमान...व्यक्तीभवन्' नास्ति।

स्तरीर्यत्सूत सद्यो अज्यमाना व्यथिरव्यथीः कृणुत स्वगोपा ।
पुत्रो यत्पूर्वः पित्रोर्जनिष्ट शम्यां गौर्जगार यद्ध पृच्छान् ॥ १० ॥

स्तरीः । यत् । सूत । सद्यः । अज्यमाना । व्यथिः । अव्यथीः । कृणुत । स्वऽगोपा ।
पुत्रः । यत् । पूर्वः । पित्रोः । जनिष्ट । शम्याम् । गौः । जगार । यत् । ह । पृच्छान् ॥ १० ॥

अरण्योः कारणभूतां शमीं गोत्वेन रूपयति । स्तरीः निवृत्तप्रसवा गौः सद्यः क्षिप्रम् अज्यमाना निर्मथ्यमानारणिरूपा सती यत् यदा सूत वत्सं प्रसूते तदा व्यथिः दुःखानां व्यथयित्री स्वगोपा स्वात्मनो गोपायित्री स्वभूतरक्षणा वा सती सा गौः अव्यथीः व्यथारहिताः प्रजाः कृणुत करोति । यदा शमी पुत्रस्थानीयमश्वत्थं प्रसूते तदानीमरण्याहरणाय तादृशमश्वत्थमन्विष्यतामृत्विग्गणस्य जनयित्री शमी सुखहेतुर्भवतीत्यर्थः । शमीगर्भादश्वत्थादरणी आहर्तव्ये । श्रूयते हि—'शमीगर्भादग्निं मन्थन्ति' ( तै. ब्रा. १.१.९ ) इति । अपि च पूर्वः पुरातनः पुत्रः । पुन्नाम्नो नरकात् त्राता । यद्वा । पुत्रस्थानीयोऽग्निः । पित्रोः जनयित्र्योररण्योः सकाशात् यत् यदा अजनिष्ट मथनेन प्रादुर्भवति तदानीं गौः पृथिवी तयोररण्योर्मातृभूतां शम्याम् अश्वत्थगर्भां तां शमीम् । 'सुपां सुलुक्' इति सुपो ड्यादेशः । जगार उद्गिरति । यद्ध यां खलु शमीं पृच्छान् ऋत्विजः पृच्छन्ति ईप्सन्ति गवेषयन्ति ॥

उत कण्वं नृषदः पुत्रमाहुरुत श्यावो धनमादत्त वाजी ।
प्र कृष्णाय रुशदपिन्वतोधर्ऋतमत्र नकिरस्मा अपीपेत् ॥ ११ ॥

उत । कण्वम् । नृऽसदः । पुत्रम् । आहुः । उत । श्यावः । धनम् । आ । अदत्त । वाजी ।
प्र । कृष्णाय । रुशत् । अपिन्वत । ऊधः । ऋतम् । अत्र । नकिः । अस्मै । अपीपेत् ॥ ११ ॥

उत अपि च कण्वम् ऋषिं नृषदः पुत्रमाहुः वेदवादिनो वदन्ति । उत अपि च वाजी हविर्लक्षणान्नवान् कण्वः श्यावः श्यामवर्णः सन् समस्ताग्नेः सकाशात् धनमादत्त अगृह्णात् । कृष्णाय श्यामवर्णाय नार्षदाय कण्वायाग्नेः ऊधः रुशत् रोचमानरूपं प्र अपिन्वत प्रासिञ्चत् । अत्र इत्थमग्निव्यतिरिक्तः कश्चिदपि देवः अस्मै कण्वाय ऋतं यज्ञं नकिः अपीपेत् नावर्धयत् । 'युवं श्यावाय रुशतीमदत्तम्' ( ऋ. सं. १. ११७. ८ ) इत्युक्तम् ॥ ॥ २८ ॥

'प्र सु ग्मन्ता' इति नवर्चं तृतीयं सूक्तम् । आदितः पञ्च जगत्यः । अथ चतस्रस्त्रिष्टुभः । पूर्ववदृषिदेवते । तथा च नुक्रान्तं—'प्र सु ग्मन्ता नव पञ्चाद्या जगत्यः' इति । गतो विनियोगः ॥

प्र सु ग्मन्ता धियसानस्य सक्षणि वरेभिर्वराँ अभि षु प्रसीदतः ।
अस्माकमिन्द्र उभयं जुजोषति यत्सोम्यस्यान्धसो बुबोधति ॥ १ ॥

प्र । सु । ग्मन्ता । धियसानस्य । सक्षणि । वरेभिः । वरान् । अभि । सु । प्रऽसीदतः ।
अस्माकम् । इन्द्रः । उभयम् । जुजोषति । यत् । सोम्यस्य । अन्धसः । बुबोधति ॥ १ ॥

इन्द्रः स्वभूतौ हरी धियसानस्य इन्द्रागमनं चिन्तयतो यजमानस्य मम संबन्धिनि सक्षणि सेवायां सद्गुणके[1] सेव्ये यज्ञे निमित्ते ग्मन्ता आगच्छन्तौ सु सुष्ठु प्रेरयति । ततः स इन्द्रः

१. त-भ१-मु—महुणके; त१—सहुणके ।

चरेभिः चरणीयैर्मार्गैः प्रसीदतः हविरासादयतो यजमानस्य परात् उत्कृष्टात् हविर्विशेषात् स्तुतिविशेषाच्च अभि लक्षीकृत्य सु[1] सुष्ठु आगच्छतु । इन्द्रः आगतः सन् अस्माकं स्वभूतम् अभयं हविश्च स्तुतिश्चेत्येतद्द्वयं जुजोषति सेवताम् । अक्षयतु शृणोतु चेत्यर्थः । यत् यदा सोम्यस्य सोमसंपादिनो मम अन्धसः अन्नरूपस्य सोमस्य । रसमिति शेषः । जुजोषति जुष्यते जिह्वया जिघ्रति । सोमं पिबतीत्यर्थः । तदा जुजोषतीति पूर्वेण संबन्धः ॥

वीन्द्र यासि दिव्यानि रोचना वि पार्थिवानि रजसा पुरुष्टुत ।
ये त्वा वहन्ति मुहुरध्वराँ उप ते सु वन्वन्तु वग्वनाँ अराधसः ॥ २ ॥

वि । इन्द्र । यासि । दिव्यानि । रोचना । वि । पार्थिवानि । रजसा । पुरुऽस्तुत ।
ये । त्वा । वहन्ति । मुहुः । अध्वरान् । उप । ते । सु । वन्वन्तु । वग्वनान् । अराधसः ॥ २ ॥

हे इन्द्र दिव्यानि दिवि भवानि रोचना रोचनानि दीप्तिस्वभावकानि ज्योतींषि यद्वा दिव्याँल्लोकान् वि यासि व्याप्नोषि । हे पुरुष्टुत बहुभिः स्तुतेन्द्र पार्थिवानि पृथिव्यां भवानि रजसा सामीप्येन ज्योतिषा विद्युल्लक्षणेन । यद्वा । रजःशब्दश्छद्म आकारः । पार्थिवाँल्लोकान् । व्याप्नोषि । ये त्वदीया अश्वाः मुहुः पुनःपुनः अध्वरान् अस्मदीयान् यज्ञान् प्रति त्वा त्वाम् उप[2] वहन्ति समीपे प्रापयन्ति ते अश्वाः वग्वनान् वचनेन स्तुत्या संभक्तॄन् अराधसः धनरहितानस्मान् सु[3] सुष्ठु वन्वन्तु धनप्रदानार्थं संभजन्ताम् ॥

तदिन्मे छन्त्सद्वपुषो वपुष्टरं पुत्रो यज्जानं पित्रोरधीयति ।
जाया पतिं वहति वग्नुना सुमत्पुंस इद्भद्रो वहतुः परिष्कृतः ॥ ३ ॥

तत् । इत् । मे । छन्त्सत् । वपुषः । वपुःऽतरम् । पुत्रः । यत् । जानम् । पित्रोः । अधिऽइयति ।
जाया । पतिम् । वहति । वग्नुना । सुऽमत् । पुंसः । इत् । भद्रः । वहतुः । परिऽकृतः ॥ ३ ॥

वपुषः । वपुः रूपम् । तद्वल्लिक्ष्यते । वपुष्मतोऽपि वपुष्टरं रूपवत्तरमत्यन्तं सुरूपं तत् यज्ञकर्म मे मह्यं छन्त्सत् इन्द्रः कामयताम् । यत् यदा पुत्रः जानं जन्म आत्मन उत्पत्तिं पित्रोः मातापित्रोः सकाशात् अधीयति संकीर्तनद्वारेणाधिगच्छति । सुयज्ञस्याह्वानकालेऽमुकसगोत्रः पुत्रो यजत इत्यात्मनो जन्म संकीर्तयति । यद्वा । यजमानाद्यागतं धनं पित्रोः सकाशात्पुत्रोऽधिगच्छति तदेव मह्यमिच्छतु । जाया पत्नी पतिं यजमानं सुमत् कल्याणेन वग्नुना वाग्रूपेण शब्देन वहति आत्मसमीपं प्रापयति । भद्रः भजनीयः परिष्कृतः सुसंस्कृतः[4] पुंसः इत्[5] । पत्युरेवेत्यर्थः । वहतुः जायायै प्रदातव्यः । तदुक्तं—'सुभद्रमर्थं भोजनं बिभर्षि' (ऋ. सं. ८. १. ३४) इति । यद्वा । पुंसोऽतिशूरस्येन्द्रस्यार्थाय भद्रो भजनीयो वहतुर्वहनशीलो देवान् प्रति स सोमः परिष्कृतः संस्कृतो भवति । तदेन्द्रः कामयतामित्यर्थः ॥

तदित्सधस्थमभि चारु दीधय गावो यच्छासन्वहतुं न धेनवः ।
माता यन्मन्तुर्यूथस्य पूर्व्याभि वाणस्य सप्तधातुरिज्जनः ॥ ४ ॥

1. ख-म१.२.४-मु-'सु' नास्ति । 2. ख-म-मु-उपा । 3. ख-म१.२.४-मु-'सु' नास्ति ।
4. ग-ख-म२.५.६-मु-संस्कृतः । 5. ग ख-म१.२.४.७-मु-इत् पुंसः ।

तत् । इत् । सधऽस्थम् । अभि । चारु । दीधय । गावः । यत् । शासन् । वहतुम् । न । धेनवः ।
माता । यत् । मन्तुः । यूथस्य । पूर्व्या । अभि । वाणस्य । सप्तऽधातुः । इत् । जनः ॥ ४ ॥

°तदित् तदेव °सधस्थम् । सह तिष्ठन्त्यत्रेति सधस्थं स्थानं यज्ञाख्यम् । °चारु शोभनम् °अभि °दीधय हे इन्द्र अभितो दीप्यस्व । °यत् यत्र °गावः स्तुतिलक्षणा वाचः इमम् आगच्छ इहेव आगच्छ इत्येवमाद्याः °शासन् अस्मद्यज्ञं प्रति त्वदागमनमाशासते । तत्र दृष्टान्तः । °वहतुं °न °धेनवः[1] । यथा धेनवो नवप्रसूता गावः प्रापणसाधनं गृहमाशासते तद्वत् । यत आगत्य प्रकाशयेत्यत्र कारणमाह । °यत् यस्मात् °मन्तुः । मन्यतिरर्चतिकर्मा । अर्चकस्य मम स्वभूता[2] °माता देवतागुणानां[2] निर्मात्री स्तुतिः °यूथस्य महतो गणस्य °पूर्व्या प्रथमभाविनी खलु । यस्माच्च °सप्तधातुः । धार्यन्ते क्रियन्ते कर्माण्येभिरिति धातवश्छन्दांसि ऋत्विजो वा । सप्तच्छन्दस्कः सप्तर्त्विक्को होत्रात्मको वाचो °जनः °वाणस्य स्तुतिशब्दस्य °अभि कर्ता खलु । तस्मात्क्षिप्रमागच्छेति भावः । यद्वा । यत्कल्याणं[3] तदेव स्थानमस्माकमभिधारय प्रयच्छ । यस्मिन् स्थाने धेनवः पयःप्रदानेन प्रीणयित्र्यो गावो वहतुम् । उह्यते पुरुषोऽनेनेति वहतुरन्नम् । पयोभूतामन्नमाशासति । न संप्रत्यर्थे । इदानीं प्रयच्छन्ति । तथा यस्मिन् मन्तुर्मन्तव्या पूजनीया पुत्रसमूहस्य माताभिगच्छति वाणस्य शब्दस्य सप्तधातुर्निषादादिसप्तस्वरोपेतो जनोऽभिगच्छति तद्गुणोपेतं प्रयच्छेति[4] भावः ॥

प्र वोऽच्छा रिरिचे देवयुष्पदमेको रुद्रेभिर्याति तुर्वणिः ।
जरा वा येष्वमृतेषु दावने परि व ऊमेभ्यः सिञ्चता मधु ॥ ५ ॥

प्र । वः । अच्छ । रिरिचे । देवऽयुः । पदम् । एकः । रुद्रेभिः । याति । तुर्वणिः ।
जरा । वा । येषु । अमृतेषु । दावने । परि । वः । ऊमेभ्यः । सिञ्चत । मधु ॥ ५ ॥

हे यजमानाः °देवयुः देवान् कामयमानो होता °वः युष्माकं °पदम् °अच्छ स्थानं प्रति °प्र °रिरिचे प्ररिक्तोऽभूत् । अथ[5] होतृभ्यः[6] सकाशात् °एकः मुख्य इन्द्रः °रुद्रेभिः रुद्रपुत्रैः मरुद्भिः सह °तुर्वणिः क्षिप्रगामी सन् °याति गच्छति युष्मदीयं यज्ञम् । °जरा °वा । वाशब्दोऽप्यर्थे । स्तुतिरपि °येष्वमृतेषु मरणधर्मरहितेषु देवेषु °दावने धनप्रदानाय समर्था भवति । तस्मात् °वः यूयम् । छान्दसो वर्णव्यत्ययः । °ऊमेभ्यः रक्षितृभ्यो देवेभ्यः °मधु मदकरं सोममद्भिः °परि °षिञ्चत ॥ ॥ २९ ॥

निधीयमानमपगूळ्हमप्सु प्र मे देवानां व्रतपा उवाच ।
इन्द्रो विद्वाँ अनु हि त्वा चचक्ष तेनाहमग्ने अनुशिष्ट आगाम् ॥ ६ ॥

निऽधीयमानम् । अपऽगूळ्हम् । अप्ऽसु । प्र । मे । देवानाम् । व्रतऽपाः । उवाच ।
इन्द्रः । विद्वान् । अनु । हि । त्वा । चचक्ष । तेन । अहम् । अग्ने । अनुऽशिष्टः । आ । अगाम् ॥ ६ ॥

१. ग-त-भ-मु–'धेनवः' नास्ति । २. ग–स्वभूतानां माता देवतागुणानां; त१.२.५.६.७-भ६–स्वभूता नानादेवतागणानां; त३.४–स्वभूता नानादेवतागुणानां; भ१.२.४.७–स्वभूतानां देवतागुणानां । ३. त-भ१.२.४.६–कल्याणं । ४. ग-त३-भ५.६–गृहं प्रयच्छेति । ५. त–प्रतिरिक्तोऽभूत् । ६. त-भ३.४.६–अन्यहोतृभ्यः; भ१.४–अन्यहोतृभ्यः ।

कुरुश्रवणस्य यज्ञे विधीयमानोऽग्निरभिधीयते । निधीयमानम् अध्वर्युणाहवनीयेऽग्नौ अप्सु मातृभूतासु अपगूळ्हम् अन्तर्हितं त्वां देवानां व्रतपाः कर्मणो रक्षक इन्द्रः मे मह्यं प्र उवाच । प्रावादीत् । हे अग्ने विद्वान् जानानः इन्द्रः त्वाविष्कारमस्मत्कृतो वा एमि त्वाम् अनु हि चचक्ष अनुगतः पश्चाद्दर्श । तेन इन्द्रेण अनुशिष्टः अहम् अनेन पथा त्वया स्वर्गो गन्तव्य इत्येवमुपदिष्टः सन् आगाम् आभिमुख्येन स्वर्गं[1] गच्छेयम् ॥

अक्षेत्रवित्क्षेत्रविदं ह्यप्राट् स प्रैति क्षेत्रविदानुशिष्टः ।
एतद्वै भद्रमनुशासनस्योत स्रुतिं विन्दत्यञ्जसीनाम् ॥ ७ ॥

अक्षेत्रऽवित् । क्षेत्रऽविदम् । हि । अप्राट् । सः । प्र । एति । क्षेत्रऽविदा । अनुऽशिष्टः ।
एतत् । वै । भद्रम् । अनुऽशासनस्य । उत । स्रुतिम् । विन्दति । अञ्जसीनाम् ॥ ७ ॥

सेयमनुशासनस्तुतिः प्रासङ्गिकी । अक्षेत्रवित् । 'क्षि निवासगत्योः' । क्षीयते गम्यतेऽनेनेति क्षेत्रं पन्थाः । पन्थानमजानन् पुरुषः क्षेत्रविदं क्षेत्रज्ञं[2] पुरुषम् अप्राट् पृष्टवान् । सः[2] क्षेत्रविदा पथिज्ञेन तेन अनुशिष्टः प्रदर्शितमार्गः सन् प्रैति स्वाभिलषितं देशं गच्छति । अनुशासनस्य मार्गोपदेशरूपस्य[3] एतद्वै एतत्खलु भद्रं भजनीयं कल्याणकरम् । किं तत् । उत अपि च अञ्जसीनाम् ऋजुना मार्गेण गन्तव्यामागम्यां स्रुतिं मार्गं पिपासितः सन् विन्दति लभते । यद्वा । अञ्जसीनामिति स्रुतेर्विशेषणम् । ऋजुमकुटिलमप्रयासेन गन्तव्यं मार्गं लभते खलु ॥

अद्येदु प्राणीदममन्निमाहापीवृतो अधयन्मातुरूधः ।
एमेनमाप जरिमा युवानमहेळन्वसुः सुमना बभूव ॥ ८ ॥

अद्य । इत् । ऊँ इति । प्र । आनीत् । अममन् । इमा । अहा । अपिऽवृतः । अधयत् । मातुः । ऊधः ।
आ । ईम् । एनम् । आप । जरिमा । युवानम् । अहेळन् । वसुः । सुऽमनाः । बभूव ॥ ८ ॥

अयमग्निः अद्येत् अद्यैवारण्यामेव प्राणीत् मथनेन संहितोऽभवत् । 'अन प्राणने भन च' इति धातुः । तदानीमेव इमा इमानि अहा अहानि सौमिकानि अममन् केतुमसम्बन्धन । 'मन ज्ञाने' । व्यत्ययेन लुङ् । तिङ् उत्तरत्वादनिघातः । अपि च अपीवृतः तेजोभिः परिवृतः सन् मातुः पृथिव्याः ऊधः सारभूतं सोमादिकं हविः अधयत् पिबति । तथा युवानं मिश्रयितारं देवानां हविषा मिश्रयन्तं वा एनम् अग्निं जरिमा । जरतिः स्तुतिकर्मा । तस्मादौणादिक इमनिच् । स्तोतृभिः क्रियमाणा स्तुतिः आप आभिमुख्येन व्याप्नोति । ईम् इति पूरणः । ततः अहेळन् अक्रुध्यन् स्तोतृभ्यति वसुः वासयिता सर्वेषां धनप्रापणेनाच्छादयिता तेजोभिः शत्रूणां वा वसुमान् वासिभिः सुमनाः शोभनमनस्को बभूव ॥

१. त–'स्वर्गं' नास्ति । २. ग–पथिज्ञं हि यस्मात् अप्राट् पृच्छति । प्रच्छ ज्ञीप्सायां । स च पृष्टोऽभिगंतव्यमनेन मार्गेणेति वदति ततः पुरुषः, त–क्षेत्रज्ञं पुरुषमप्राट् पृष्टवान् ; त३-म५.६–पथिज्ञं हि यस्मात् अप्राट् पृच्छति । प्रच्छ ज्ञीप्सायां । स च कदाभिगंतव्यमनेन मार्गेण इति ततः स पुरुषः; म१.२.४.७–'क्षेत्रज्ञं...सः' नास्ति । ३. त–सर्गोपदेशरूपस्य ।

एतानि भद्रा कलश क्रियाम कुरुश्रवण ददतो मघानि।
दान इद्वो मघवानः सो अस्त्वयं च सोमो हृदि यं बिभर्मि॥९॥

एतानि। भद्रा। कलश। क्रियाम। कुरुऽश्रवण। ददतः। मघानि।
दानः। इत्। वः। मघऽवानः। सः। अस्तु। अयम्। च। सोमः। हृदि। यम्। बिभर्मि॥९॥

हे कलश कलावन् सर्वकलापरिपूर्ण। यद्वा। लुप्तमत्वर्थीयः। द्रोणकलशवन् हे कुरुश्रवण। कुरव ऋत्विजः। तेषां स्वभूतानां स्तुतीनां श्रोतर्हे इन्द्र मघानि धनानि स्तोतृभ्यो यष्टृभ्यश्च ददतः प्रयच्छतस्तवेन्द्रस्यार्थम् एतानि भद्रा भजनीयानि हवींषि स्तोत्राणि च क्रियाम विधेयास्म। करोतेराशीर्लिङि 'रिङ् शयग्लिङ्क्षु' (पा. सू. ७. ४. २८) इति रिङादेशः। अथ स्तोतॄन्प्रत्याह। हे मघवानः महनीयस्तोत्ररूपधनवन्तः वः युष्माकं सः इन्द्रः दान इत् धनादेर्दातैव अस्तु भवतु। अयं च यज्ञे स्थितः सोमः दातास्तु हृदय आत्मीये यं पीतं सोमं बिभर्मि धारयामि। 'डुभृञ् धारणपोषणयोः'। जौहोत्यादिकः। 'भृञामित्' इत्यभ्यासस्येत्वम्। यद्वा। हे कलश कुलजात हे कुरुश्रवणेतन्नामक त्रसदस्योः पुत्र राजन् ऋत्विग्भ्यो धनानि प्रयच्छतः तवार्थं वयं कर्माणि क्रियाम। मघवानः[1] कुरुश्रवणाः। पूजायां बहुवचनम्। एवं यागकर्म कुर्वाणस्य तवेन्द्रो दाता भवतु। अयं सोमश्च धनानि प्रयच्छतु॥ ॥ १० ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥
इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये सप्तमाष्टके सप्तमोऽध्यायः॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥

अथाष्टमोऽध्याय आरभ्यते। तत्र 'प्र मा' इति नवर्चं चतुर्थं सूक्तमैलूषस्य कवषस्यार्षम्। आद्या त्रिष्टुप् सा च वैश्वदेवी। द्वितीयातृतीये बृहतीसतोबृहत्यौ ऐन्द्र्यौ। पराः षड्गायत्र्यः। 'कुरुश्रवणमावृणि' इति द्वाभ्यां त्रसदस्युपुत्रस्य कुरुश्रवणनाम्नो राज्ञो दानं तुष्टाव। अतस्तद्देवताके। अथ 'यस्य मस्यादसः' इत्यादिभिश्चतसृभिर्मित्रातिथिनाम्नि राज्ञि परलोकं गते शोकाभिभूतं तस्य पुत्रमुपमश्रवोनामानं कवष ऋषिः स्नेहवशादभिगम्य विगतशोकमकरोत्। अतस्तासां तद्देवतात्वम्। तथा चानुक्रान्तं—'प्र माद्या वैश्वदेव्यैन्द्रः प्रगाथः परा गायत्र्यो द्वे कुरुश्रवणस्य त्रासदस्यवस्य दानस्तुतिः पराभिर्मृते मित्रातिथौ राज्ञि तत्स्नेहादृषिरुपमश्रवसं पुत्रमस्य व्यशोकयत्' इति। गतो विनियोगः॥

प्र मा युयुज्रे प्रयुजो जनानां वहामि स्म पूषणमन्तरेण।
विश्वे देवासो अध मामरक्षन् दुःशासुरागादिति घोष आसीत्॥१॥

१. ख–'मघवानः' नास्ति।

प्र । मा । युयुज्रे । प्रऽयुजः । जनानाम् । वहामि । स्म । पूषणम् । अन्तरेण ।
विश्वे । देवासः । अध । माम् । अरक्षन् । दुःऽशासुः । आ । अगात् । इति । घोषः । आसीत् ॥ १ ॥

जनानां यजमानानां प्रयुजः प्रयोक्तारो देवाः मा मां कवषमृषिं प्र युयुज्रे कुरुश्रवणं प्रति युक्तवन्तः । अन्तरेण मार्गे पूषणं देवम् अध्वनां पतिं सखायमहं वहामि स्म वहन्नस्मि । तथा श्रूयते— 'ऐन्द्राग्नमेकादशकपालं निर्वपेज्जनमाप्स्यन्' इत्युपक्रम्य 'पौष्णं चरुमनु निर्वपेत्' ( तै. सं. २.२.१.४ ) इति । अध[1] अथ मार्गे विश्वे देवाः मां कवषम् अरक्षन् रक्षितवन्तः । दुःशासुः केनापि दुःशासनोऽयमृषिः आगात् आगच्छति इति घोषः शब्दश्च मार्गे आसीत् अभूत् ॥

सं मा॑ तपन्त्य॒भितः॑ स॒पत्नी॑रिव॒ पर्श॑वः ।
नि बा॑धते॒ अम॑तिर्न॒ग्नता॒ जसु॒र्वेर्न वे॑वीयते म॒तिः ॥ २ ॥

सम् । मा । तपन्ति । अभितः । सपत्नीःऽइव । पर्शवः ।
नि । बाधते । अमतिः । नग्नता । जसुः । वेः । न । वेवीयते । मतिः ॥ २ ॥

मा मां देवताप्रसादरहितं कवषं पर्शवः पार्श्वास्थीनि अन्नाभावादीर्ष्यात् कुशायमानाः[2] सपत्नीरिव यथा सपत्न्यस्तद्वत् अभितः उभयतः सं तपन्ति दुःखयन्तीत्यर्थः । किंच अमतिः दारिद्र्यादागता दुर्मतिः सर्वार्थविषया सा[3] मां[3] नि बाधते मां पीडयति । वस्त्राभावादागता नग्नता च मां नि बाधते । जसु अशनाभावादागत उपक्षयोऽपि मां नि बाधते । किंच वेर्न यथा पक्षिणः मतिः शाकुनिकव्याधभयात्[4] कम्पयते तथा मे मतिः मनः वेवीयते भृशं कम्पयते ॥

मूषो॒ न शि॒श्ना व्य॑दन्ति मा॒ध्यः॑ स्तो॒तारं॑ ते शतक्रतो ।
स॒कृत्सु नो॑ मघवन्निन्द्र मृळ॒याधा॑ पि॒तेव॑ नो भव ॥ ३ ॥

मूषः । न । शिश्ना । वि । अदन्ति । मा । आऽध्यः । स्तोतारम् । ते । शतक्रतो इति शतऽक्रतो ।
सकृत् । सु । नः । मघऽवन् । इन्द्र । मृळय । अध । पिताऽइव । नः । भव ॥ ३ ॥

हे शतक्रतो बहुकर्मन् मघवन् धनवन्[5] इन्द्र ते तव स्तोतारं मा मां कवषम् आध्यः आधयः मूषो न यथा मूषिकाः शिश्ना आस्नातानि सूत्राणि भक्षयन्ति तथा व्यदन्ति विविधमदन्ति । तथा च यास्कः—'संतपन्ति मामभितः सपत्न्य इवेमाः पर्शवः कूपपर्शवो मूषिका इवास्नातानि सूत्राणि भक्षयन्ति । स्वाङ्गाभिधानं वा[6] स्याच्छिश्नानि व्यदन्तीति[7] । संतपन्ति आध्यः कामाः' ( निरु. ४. ६ ) इति । तथा च सति नः अस्मान् सकृत् सु मृळय अभीष्टप्रदानेन सम्यक् सुखय । अध अथ नः अस्माकं पितेव यथा पिता तद्वद्रक्षिता भव ॥

कु॒रु॒श्रव॑णमावृणि॒ राजा॑नं॒ त्रास॑दस्यवम् । मंहि॑ष्ठं वा॒घता॒मृषिः॑ ॥ ४ ॥

कुरुऽश्रवणम् । अवृणि । राजानम् । त्रासदस्यवम् । मंहिष्ठम् । वाघताम् । ऋषिः ॥ ४ ॥

१. त-म६–' अध ' नास्ति । २. उद्गीथ–कुशायमानाः । ३. त-म६–रसा; म१.१.७–सं मा; म२–सरसा । ४. त१.२.५.६.७–'व्याधि'; उद्गीथ–'व्याधादि' । ५. त–' धनवन् ' नास्ति; म१.४.६–धनवन् । ६. त–' वा ' नास्ति । ७. त-म–व्यदन्तीति वा ।

ऋषिः अतिथिग्वपुत्रः कवषोऽहं त्रासदस्यवं त्रसदस्योः पुत्रं मंहिष्ठं धनानामतिशयेन दातारं कुरुश्रवणम्। कुरव ऋत्विजः। तदीयानां स्तुतीनां श्रोतारं कुरुश्रवणं मन्नामकं राजानं वाघताम् ऋत्विजामर्थाय ऋभूणि धनानि प्रार्थये ॥

यस्य॑ मा हु॒रितो॒ रथे॑ ति॒स्रो वह॑न्ति साधु॒या। स्तवै॑ स॒हस्र॑दक्षिणे ॥ ५ ॥

यस्य॑। मा॒। ह॒रित॑ः। रथे॑। ति॒स्रः। वह॑न्ति। सा॒धु॒ऽया। स्तवै॑। स॒हस्र॑ऽदक्षिणे ॥ ५ ॥

यस्य कुरुश्रवणाख्यस्य राज्ञः स्वभूताः तिस्रः हरितः त्रयोऽश्वाः रथे अवस्थिताः मा मां कवषं साधुया साधु वहन्ति कुरुश्रवणं राजानमहं सहस्रदक्षिणे अस्मिन् यागे स्तवै स्तौमि। प्रष्टिवाहिनं रथं परिगृह्य ऋषिरास्ते ॥　　॥ १ ॥

अतः परं ' यस्य ' इत्यादिकेन सूक्तशेषेण मित्रातिथौ राज्ञि मृते तत्पुत्रस्योपमश्रवसः[1] समीपमागत्य कवषः स्नेहाच्छोकं निवारयति ॥

यस्य॑ प्र॒स्वाद॑सो॒ गिर॑ उप॒मश्र॑वसः पि॒तुः। क्षेत्रं॒ न र॒ण्वमू॒चुषे॑ ॥ ६ ॥

यस्य॑। प्र॒ऽस्वाद॑सः। गिर॑ः। उ॒प॒मऽश्र॑वसः। पि॒तुः। क्षेत्र॑म्। न। र॒ण्वम्। ऊ॒चुषे॑ ॥ ६ ॥

हे राजन् उपमश्रवसः[2] तव पितुः यस्य मित्रातिथेः गिरः वाचः प्रस्वादसः प्रकर्षेण स्वादयित्र्यः। तत्र दृष्टान्तः। ऊचुषे सेवमानाय दरिद्राय दानार्थं प्रकल्पितं रण्वं रमणीयं क्षेत्रं न यथा क्षेत्रं स्वादयितृ[3] तद्वदित्यर्थः। अस्तीत्यत्र संबन्धः ॥

अधि॑ पु॒त्रोप॑मश्रवो॒ नपा॑न्मित्रातिथेरिहि। पि॒तुष्टे॑ अस्मि वन्दि॒ता ॥ ७ ॥

अधि॑। पु॒त्र॒। उ॒प॒म॒ऽश्र॒वः॒। नपा॑त्। मि॒त्र॒ऽअ॒ति॒थेः॒। इ॒हि॒। पि॒तुः। ते॒। अ॒स्मि॒। व॒न्दि॒ता ॥ ७ ॥

हे पुत्र उपमश्रवः मित्रातिथेः नपात् पुत्र त्वम् अधि इहि मत्समीपमागच्छ। ते तव पितुः तस्य मित्रातिथेरहं वन्दिता स्तोता अस्मि। एतज्ज्ञात्वा शोकं मा कुरु। यद्येवं मृग्यमस्ति तत्सर्वं मह्यं देहि ॥

यदीशी॑या॒मृता॑नामु॒त वा॒ मर्त्या॑नाम्। जीवे॒दिन्म॒घवा॒ मम॑ ॥ ८ ॥

यत्। ईशी॑य। अ॒मृता॑नाम्। उ॒त। वा॒। मर्त्या॑नाम्। जीवे॑त्। इत्। म॒घऽवा॑। मम॑ ॥ ८ ॥

उत अपि च यत् यदि अमृतानां देवानां मर्त्यानां मनुष्याणां वा मरणहेतूनाम् ईशीय अहमीश्वरः स्यां तर्हि[4] मम कवषस्य याज्यः मघवा धनवान् मित्रातिथिर्नाम राजा जीवेत् प्राणान् धारयेत्। तथा च नाहं मरणहेतोरीश्वरः तस्मात्त्वं राजा मृत इत्यर्थः ॥

न दे॒वाना॒मति॑ व्र॒तं श॒तात्मा॑ च॒न जी॑वति। तथा॑ यु॒जा वि वा॑वृते ॥ ९ ॥

न। दे॒वाना॑म्। अति॑। व्र॒तम्। श॒तऽआ॑त्मा। च॒न। जी॒व॒ति॒। तथा॑। यु॒जा। वि। व॒वृ॒ते॒ ॥ ९ ॥

देवानां महतामपि व्रतं मर्यादालक्षणं कर्म अति[5] अतिक्रम्य शतात्मा चन शतसंवत्सरः कश्चन न जीवति। तथा युजा सहायादिना वि ववृते विवर्तते वियुक्तो भवतीति ज्ञात्वा शोकं मा कुर्वित्यर्थः ॥　　॥ २ ॥

---

१. ल-अ६-°स्योपश्रवसः। २. ल-उपश्रवसः। ३. ल-मु-स्वदयितृ। ४. ल-तह्य। ५. ल-अ६-मु-' अति ' नास्ति।

'प्रावेपाः' इति चतुर्दशर्चं पञ्चमं सूक्तमैलूषस्य कवषस्यार्षं मौजवतः पुत्रस्याक्षाख्यस्य वा। सप्तमी जगती शिष्टास्त्रयोदश त्रिष्टुभः। अत्र द्वादशी अक्षान् स्तौति नवम्याद्या च सप्तमी। अतस्ता अक्षदेवत्याः। त्रयोदशी कृषिं स्तौति। अतस्तस्याः सा देवता। एवं पञ्च गताः। शिष्टाभिर्नवभिः कितवोऽक्षाश्च निन्द्यन्ते। अतस्ता अपि तद्देवत्याः। तथा चानुक्रान्तं—'प्रावेपाः पञ्चोना मौजवानक्षोऽक्षकृषिप्रशंसा चाक्षकितवनिन्दा च सप्तमी जगती' इति। गतो विनियोगः॥

**प्रा॒वे॒पा मा॑ बृह॒तो मा॑दयन्ति प्रवाते॒जा इरि॑णे॒ वर्वृ॑तानाः।**
**सोम॑स्येव मौजव॒तस्य॑ भ॒क्षो वि॒भीद॑को॒ जागृ॑वि॒र्मह्य॑मच्छान्॥ १॥**

प्रा॒वे॒पाः। मा॒। बृ॒ह॒तः। मा॒द॒य॒न्ति॒। प्र॒वा॒ते॒ऽजाः। इरि॑णे। वर्वृ॑तानाः।
सोम॑स्यऽइव। मौ॒ज॒ऽव॒तस्य॑। भ॒क्षः। वि॒ऽभीद॑कः। जागृ॑विः। मह्य॑म्। अ॒च्छा॒न्॥ १॥

बृहतः महतो विभीतकस्य फलत्वेन संबन्धिनः प्रवातेजाः प्रवणे देशे जाताः इरिणे आस्फारे वर्वृतानाः प्रवर्तमानाः प्रावेपाः प्रवेपिणः कम्पनशीला अक्षाः मा मां मादयन्ति हर्षयन्ति। किंच जागृविः जयपराजययोर्हर्षशोकाभ्यां कितवानां जागरणस्य कर्ता विभीदकः विभीतकविकारोऽक्षो मह्यं माम् अच्छान् अचच्छदत् अत्यर्थं मादयति। तत्र दृष्टान्तः। सोमस्येव यथा सोमस्य मौजवतस्य। मुजवति पर्वते जातो मौजवतः। तस्य। तत्र ह्युत्तमः सोमो जायते। भक्षः पानं यजमानान् देवांश्च मादयति तद्वदित्यर्थः। तथा च यास्कः—'प्रवेपिणो मा महतो विभीतकस्य फलानि मादयन्ति। प्रवातेजाः प्रवणेजा इरिणे वर्तमाना इरिणं निर्ऋणमृणातेरपार्णं भवत्यपरता अस्मादोषधय इति वा। सोमस्येव मौजवतस्य भक्षो मौजवतो मुजवति जातो मुजवान् पर्वतो मुञ्जवान् मुञ्जो विमुच्यत[1] इषीकयेषीकेषतेर्गतिकर्मण[1] इयमपीतरेषीकैतस्मादेव विभीतको विभेदनाज्जागृविर्जागरणान्मह्यमचच्छदत्' (निरु. ९. ८) इति॥

**न मा॑ मिमेथ॒ न जि॑हीळ ए॒षा शि॒वा सखि॑भ्य उ॒त मह्य॑मासीत्।**
**अ॒क्षस्या॒हमे॑कप॒रस्य॑ हे॒तोरनु॑व्रता॒मप॑ जा॒याम॑रोधम्॥ २॥**

न। मा॒। मि॒मे॒थ॒। न। जि॒ही॒ळे॒। ए॒षा। शि॒वा। सखि॑ऽभ्यः। उ॒त। मह्य॑म्। आ॒सी॒त्।
अ॒क्षस्य॑। अ॒हम्। ए॒क॒ऽप॒रस्य॑। हे॒तोः। अनु॑ऽव्रताम्। अप॑। जा॒याम्। अ॒रो॒ध॒म्॥ २॥

एषा अस्मदीया जाया[2] मा मां कितवं न मिमेथ न च चुक्रोध न जिहीळे न च लज्जितवती। सखिभ्यः अस्मदीयेभ्यः कितवेभ्यः शिवा सुखकरी आसीत् अभूत्। उत अपि च मह्यं शिवासीत्। इत्थम् अनुव्रताम् अनुकूलां जायाम् एकपरस्य एकः परः प्रधानं यस्य तस्य अक्षस्य हेतोः कारणात् अहम् अप अरोधं परित्यक्तवानस्मीत्यर्थः॥

**द्वेष्टि॑ श्व॒श्रूरप॑ जा॒या रु॑णद्धि॒ न ना॑थि॒तो वि॑न्दते मर्डि॒तार॑म्।**
**अश्व॑स्येव॒ जर॑तो॒ वस्न्य॑स्य॒ नाहं वि॑न्दामि कित॒वस्य॒ भोग॑म्॥ ३॥**

द्वेष्टि॑। श्व॒श्रूः। अप॑। जा॒या। रु॒ण॒द्धि॒। न। ना॒थि॒तः। वि॒न्द॒ते॒। म॒र्डि॒तार॑म्।
अश्व॑स्यऽइव। जर॑तः। वस्न्य॑स्य। न। अ॒हम्। वि॒न्दा॒मि॒। कि॒त॒वस्य॑। भोग॑म्॥ ३॥

१. ह-मु—विमुञ्चतीषीकामिषीकेषते*; भ—विमुच्यतेषीकयेषीकेषते*। २. ह—'जाया' नास्ति।

श्वश्रूः जायाया माता गृहगतं कितवं द्वेष्टि निन्दतीत्यर्थः । किंच जाया भार्या अप रुणद्धि निरुणद्धि । अपि च नाथितः याचमानः कितवो[1] धनं मर्डितारं धनदानेन सुखयितारं न विन्दते न लभते । इत्थं पुनरपि जरतः वृद्धस्य वस्न्यस्य । वस्नं मूल्यम् । तदर्हस्य अश्वस्येव कितवस्य भोगं न विन्दामि न लभे ॥

अन्ये जायां परि मृशन्त्यस्य यस्यागृधद्वेदने वाज्य१क्षः ।
पिता माता भ्रातर एनमाहुर्न जानीमो नयता बद्धमेतम् ॥ ४ ॥

अन्ये । जायाम् । परि । मृशन्ति । अस्य । यस्य । अगृधत् । वेदने । वाजी । अक्षः ।
पिता । माता । भ्रातरः । एनम् । आहुः । न । जानीमः । नयत । बद्धम् । एतम् ॥ ४ ॥

यस्य कितवस्य वेदने धने वाजी बलवान् अक्षः देवः अगृधत् अभिकाङ्क्षां करोति तस्य अस्य कितवस्य जायां भार्याम् अन्ये प्रतिकितवाः परि मृशन्ति[2] वस्त्रकेशाद्याकर्षणेन संस्पृशन्ति । किंच पिता[3] जननी च भ्रातरः सहोदराश्च एनं कितवम् आहुः वदन्ति । न वयमस्मदीयमेनं जानीमः । रज्ज्वा बद्धमेतं कितवं हे कितवाः यूयं नयत यथेष्टदेशं प्रापयतेति ॥

यदादीध्ये न दविषाण्येभिः परायद्भ्योऽव हीये सखिभ्यः ।
न्युप्ताश्च बभ्रवो वाचमक्रतँ एमीदेषां निष्कृतं जारिणीव ॥ ५ ॥

यत् । आऽदीध्ये । न । दविषाणि । एभिः । परायत्ऽभ्यः । अव । हीये । सखिऽभ्यः ।
निऽउप्ताः । च । बभ्रवः । वाचम् । अक्रत । एमि । इत् । एषाम् । निःऽकृतम् । जारिणीऽइव ॥५॥

यत् यदा अहम् आदीध्ये ध्यायामि तदानीम् एभिः अक्षैः न दविषाणि न दूये न परितपामि । यद्वा । न दविषाणि न देविष्यामीत्यर्थः । परायद्भ्यः स्वयमेव परागच्छद्भ्यः सखिभ्यः[4] सखिभूतेभ्यः कितवेभ्यः अव हीये अवहितो भवामि । नाहं प्रथममक्षान् विसृजामीति । किंच बभ्रवः बभ्रुवर्णा अक्षाः न्युप्ताः कितवैरवक्षिप्ताः सन्तः वाचम् अक्रत शब्दं कुर्वन्ति । तदा संकल्पं परित्यज्य अक्षव्यसनेनाभिभूयमानोऽहम् एषाम् अक्षाणां निष्कृतं स्थानं जारिणीव यथा कामव्यसनेनाभिभूयमाना स्वैरिणी संकेतस्थानं याति तद्वत् एमीत् गच्छाम्येव ॥ ॥ ३ ॥

सभामेति कितवः पृच्छमानो जेष्यामीति तन्वा३ शूशुजानः ।
अक्षासो अस्य वि तिरन्ति कामं प्रतिदीव्ने दधत आ कृतानि ॥ ६ ॥

सभाम् । एति । कितवः । पृच्छमानः । जेष्यामि । इति । तन्वा । शूशुजानः ।
अक्षासः । अस्य । वि । तिरन्ति । कामम् । प्रतिऽदीव्ने । दधतः । आ । कृतानि ॥ ६ ॥

तन्वा शरीरेण शूशुजानः शोशुचानो दीप्यमानः कितवः कोऽत्रास्ति धनिकस्तं जेष्यामीति पृच्छमानः पृच्छन् सभां कितवसंबन्धिनीम् एति गच्छति । तत्र प्रतिदीव्ने प्रतिदेविने कितवाय कृतानि देवनोपयुक्तानि कर्माणि आ दधतः जयार्थमाभिमुख्येन मर्यादया वा दधतः अस्य कितवस्य कामम् इच्छाम् अक्षासः अक्षाः वि तिरन्ति वर्धयन्ति ॥

---

१. ग-त-भ–' कितवो ' नास्ति । २. त-भ६–मृशंति । ३. ग–पिता जनको माता । ४. त-भ६–' सखिभ्यः ' नास्ति ।

अक्षास इदंङ्कुशिनो निनोदिनो निकृत्वानस्तपनास्तापयिष्णवः।
कुमारदेष्णा जयतः पुनर्हणो मध्वा संपृक्ताः कितवस्य बर्हणा ॥ ७ ॥

अक्षासः । इत् । अङ्कुशिनः । निऽनोदिनः । निऽकृत्वानः । तपनाः । तापयिष्णवः ।
कुमारऽदेष्णाः । जयतः । पुनःऽहनः । मध्वा । सम्ऽपृक्ताः । कितवस्य । बर्हणा ॥ ७ ॥

अक्षास इत् अक्षा एव अङ्कुशिनः अङ्कुशवन्तः निनोदिनः निनोदितवन्तश्च निकृत्वानः पराजये निकर्तनशीलाश्छेत्तारो वा तपनाः पराजये कितवस्य संतापकाः तापयिष्णवः सर्वस्वहारकत्वेन कुटुम्बस्य संतापनशीलाश्च भवन्ति । किंच जयतः कितवस्य कुमारदेष्णाः धनदानेन धान्यतो लम्भयन्तः कुमाराणां दातारो भवन्ति । अपि च मध्वा मधुना संपृक्ताः प्रतिकितवेन बर्हणा परिबृढेन सर्वस्वहरणेन कितवस्य पुनर्हणः पुनर्हन्तारो भवन्ति ॥

त्रिपञ्चाशः क्रीळति व्रात एषां देवइव सविता सत्यधर्मा ।
उग्रस्य चिन्मन्यवे ना नमन्ते राजा चिदेभ्यो नम इत्कृणोति ॥ ८ ॥

त्रिऽपञ्चाशः । क्रीळति । व्रातः । एषाम् । देवःऽइव । सविता । सत्यऽधर्मा ।
उग्रस्य । चित् । मन्यवे । न । नमन्ते । राजा । चित् । एभ्यः । नमः । इत् । कृणोति ॥ ८ ॥

एषाम् अक्षाणां त्रिपञ्चाशः त्र्यधिकपञ्चाशत्संख्याकः व्रातः संघः[1] क्रीळति आस्फारे विहरति । आक्षिकाः प्रायेण सार्धत्रिपञ्चाशदीव्यन्ति हि । तत्र दृष्टान्तः । सत्यधर्मा सविता सर्वस्य जगतः प्रेरकः सूर्यो देवइव । यथा सविता देवो जगति विहरति तद्वदक्षाणां संघ आस्फारे विहरतीत्यर्थः । किंच उग्रस्य चित् क्रूरस्यापि मन्यवे क्रोधाय एते अक्षाः न नमन्ते न प्रह्वीभवन्ति । न वशे वर्तन्ते । तं[2] नमयन्तीत्यर्थः[3] । राजा चित् जगत ईश्वरोऽपि एभ्यः[3] नम इत् नमस्कारमेव देवनवेलायां कृणोति[4] । नावज्ञां करोतीत्यर्थः ॥

नीचा वर्तन्त उपरि स्फुरन्त्यहस्तासो हस्तवन्तं सहन्ते ।
दिव्या अङ्गारा इरिणे न्युप्ताः शीताः सन्तो हृदयं निर्दहन्ति ॥ ९ ॥

नीचा । वर्तन्ते । उपरि । स्फुरन्ति । अहस्तासः । हस्तऽवन्तम् । सहन्ते ।
दिव्याः । अङ्गाराः । इरिणे । निऽउप्ताः । शीताः । सन्तः । हृदयम् । निः । दहन्ति ॥ ९ ॥

अपि चैतेऽक्षाः नीचा नीचीनस्थले वर्तन्ते । तथापि उपरि पराजयात् भीतानां द्यूतकराणां कितवानां हृदयस्योपरि स्फुरन्ति । अहस्तासः हस्तरहिता अप्यक्षाः हस्तवन्तं द्यूतकरं कितवं सहन्ते पराजयकरणेनाभिभवन्ति । दिव्याः दिवि भवा अपकृताः अङ्गाराः अङ्गारसदृशा अक्षाः इरिणे इन्धनरहिते आस्फारे न्युप्ताः शीताः शीतस्पर्शाः सन्तः अपि हृदयं कितवानामन्तःकरणं निर्दहन्ति पराजयजनितसंतापेन भस्मीकुर्वन्ति ॥

१. स–' संघः ' नास्ति । २. ग–तमपि वर्ततीत्यर्थः; ट१.२.५.६–तमयंतीत्यर्थः; स७–म१.२.४.७–तमपि यंतीत्यर्थः; त७–न नमयंतीत्यर्थः; भ६–नमयंतीत्यर्थः । ३. ग–ठ७–म२.४–एभ्यः अक्षेभ्यः । ४. ग–म२.४–कृणोति करोति ।

**जाया तप्यते कितवस्य हीना माता पुत्रस्य चरतः क्व स्वित्।**
**ऋणावा बिभ्यद्धनमिच्छमानोऽन्येषामस्तमुप नक्तमेति ॥ १० ॥**

जाया । तप्यते । कितवस्य । हीना । माता । पुत्रस्य । चरतः । क्व । स्वित् ।
ऋणऽवा । बिभ्यत् । धनम् । इच्छमानः । अन्येषाम् । अस्तम् । उप । नक्तम् । एति ॥ १० ॥

क्व स्वित् क्वापि चरतः निर्वेदाद्गच्छतः कितवस्य जाया भार्या हीना परित्यक्ता सती तप्यते वियोगजसंतापेन[1] संतप्ता भवति। माता जनन्यपि पुत्रस्य[2] क्वापि चरतः कितवस्य संबन्धाद्धीना[3] तप्यते। पुत्रशोकेन संतप्ता भवति। ऋणावा अक्षपराजयकारणवान् कितवः सर्वतो बिभ्यद्धनं स्तेयजनितम् इच्छमानः कामयमानः अन्येषां ब्राह्मणादीनाम् अस्तं गृहम्। 'अस्तं पस्त्यम्' इति गृहनामसु पाठात्। नक्तं रात्रौ उप एति चौर्यार्थमुपगच्छति ॥ ॥ ४ ॥

**स्त्रियं दृष्ट्वाय कितवं ततापान्येषां जायां सुकृतं च योनिम्।**
**पूर्वाह्णे अश्वान्युयुजे हि बभ्रून्त्सो अग्नेरन्ते वृषलः पपाद ॥ ११ ॥**

स्त्रियम् । दृष्ट्वाय । कितवम् । ततापृ । अन्येषाम् । जायाम् । सुऽकृतम् । च । योनिम् ।
पूर्वाह्णे । अश्वान् । युयुजे । हि । बभ्रून् । सः । अग्नेः । अन्ते । वृषलः । पपाद ॥ ११ ॥

कितवं कितवः। विभक्तिव्यत्ययः। अन्येषां स्वव्यतिरिक्तानां पुरुषाणां जायां जायाभूतां स्त्रियं नारीं सुखेन वर्तमानां सुकृतं सुष्ठु कृतं योनिं गृहं च[4] दृष्ट्वाय मजाया दुःखिता गृहं चासंस्कृतमिति ज्ञात्वा ततापं तप्यते। पुनः[5] पूर्वाह्णे प्रातःकाले बभ्रून् बभ्रुवर्णान् अश्वान् व्यापकानक्षान् युयुजे युनक्ति। पुनश्च वृषलः वृषलकर्मा सः कितवो रात्रौ अग्नेरन्ते समीपे पपाद शीतार्तः सन् शेते ॥

**यो वः सेनानीर्महतो गणस्य राजा व्रातस्य प्रथमो बभूव।**
**तस्मै कृणोमि न धना रुणध्मि दशाहं प्राचीस्तदृतं वदामि ॥ १२ ॥**

यः । वः । सेनाऽनीः । महतः । गणस्य । राजा । व्रातस्य । प्रथमः । बभूव ।
तस्मै । कृणोमि । न । धना । रुणध्मि । दश । अहम् । प्राचीः । तत् । ऋतम् । वदामि ॥ १२ ॥

हे अक्षाः वः युष्माकं महतो गणस्य संघस्य यः अक्षः सेनानीः नेता बभूव भवति व्रातस्य च। गणव्रातयोरल्पो भेदः। राजा ईश्वरः प्रथमः मुख्यो बभूव तस्मै अक्षाय कृणोमि अहमञ्जलिं करोमि। अतः परं धना धनानि अक्षार्थमहं न रुणध्मि न संपादयामीत्यर्थः। एतदेव दर्शयति। अहं दश दशसंख्याका अङ्गुलीः प्राचीः प्राङ्मुखीः करोमि। तत् एतत् अहम् ऋतं सत्यमेव वदामि। नानृतं मयोक्तमित्यर्थः ॥

**अक्षैर्मा दीव्यः कृषिमित्कृषस्व वित्ते रमस्व बहु मन्यमानः।**
**तत्र गावः कितव तत्र जाया तन्मे वि चष्टे सवितायमर्यः ॥ १३ ॥**

१. त-म६-मु—वियोगसंतापेन। २. त-म-मु—पुत्रस्यापि। ३. ण-त—संबंधिनी; म—संबंधीनी।
४. त-अ६-मु—'च' नास्ति। ५. त१.२.५.६.७—तिः; त४-म६—ततः।

अक्षैः । मा । दीव्यः । कृषिम् । इत् । कृषस्व । वित्ते । रमस्व । बहु । मन्यमानः ।
तत्र । गावः । कितव । तत्र । जाया । तत् । मे । वि । चष्टे । सविता । अयम् । अर्यः ॥ १३ ॥

हे कितव बहु मन्यमानः मद्वचने विश्वासं कुर्वंस्त्वम् अक्षैर्मा दीव्यः द्यूते मा कुरु । कृषिमित् कृषिमेव कृषस्व कुरु । वित्ते कृष्या संपादिते धने रमस्व रतिं कुरु । तत्र कृषौ गावः भवन्ति । तत्र जाया भवति । तत् एव धर्मरहस्यं श्रुतिस्मृतिकर्ता सविता सर्वस्य प्रेरकः अयं दृष्टिगोचरः अर्यः ईश्वरः वि चष्टे विविधमाख्यातवान् ॥

**मित्रं कृणुध्वं खलु मूळता नो मा नो घोरेण चरताभि धृष्णु ।**
**नि वो नु मन्युर्विशतामरातिरन्यो बभ्रूणां प्रसितौ न्वस्तु ॥ १४ ॥**

मित्रम् । कृणुध्वम् । खलु । मूळत । नः । मा । नः । घोरेण । चरत । अभि । धृष्णु ।
नि । वः । नु । मन्युः । विशताम् । अरातिः । अन्यः । बभ्रूणाम् । प्रऽसितौ । नु । अस्तु ॥ १४ ॥

हे अक्षाः यूयं मित्रं कृणुध्वम् अस्मासु मैत्रीं कुरुत । खलु इति पूरणः । नः अस्मान् मृळत सुखयत च । नः अस्मान् धृष्णु धृष्णुना । तृतीयार्थे प्रथमा । घोरेण असह्येन मा अभि[1] चरत मा गच्छत । किंच वः युष्माकं मन्युः क्रोधः अरातिः अस्माकं शत्रुः नि विशताम् अस्मच्छत्रुषु निविशतु । अन्यः[2] अस्माकं[3] शत्रुः कश्चित् बभ्रूणां बभ्रुवर्णानां युष्माकं प्रसितौ प्रबन्धने नु क्षिप्रम् अस्तु भवतु ॥ ॥ ५ ॥

'अबुध्रम्' इति चतुर्दशर्चं षष्ठं सूक्तं धानाकपुत्रस्य लुशस्यार्षम् । इदमुत्तरं च वैश्वदेवम् । त्रयोदशीचतुर्दश्यौ त्रिष्टुभौ शिष्टा द्वादश जगत्यः । तथा चानुक्रान्तम्—'अबुध्रं लुशो धानाको वैश्वदेवं तु द्वित्रिष्टुबन्तं तु' इति । गतः सूक्तविनियोगः । एकादशिनस्य वैश्वदेवस्य पशोर्वपायागस्यानुवाक्या 'विश्वे अद्य' इत्येषा । सूत्रितं च—'विश्वे अद्य मरुतो विश्व ऊत्या नो देवानामुप वेतु शंसः' ( आश्व. श्रौ. ३. ७ ) इति ॥

**अबुध्रमु त्य इन्द्रवन्तो अग्नयो ज्योतिर्भरन्त उषसो व्युष्टिषु ।**
**मही द्यावापृथिवी चेततामपोऽद्या देवानामव आ वृणीमहे ॥ १ ॥**

अबुध्रम् । ऊँ इति । त्ये । इन्द्रऽवन्तः । अग्नयः । ज्योतिः । भरन्तः । उषसः । विऽउष्टिषु ।
मही इति । द्यावापृथिवी इति । चेतताम् । अपः । अद्य । देवानाम् । अवः । आ । वृणीमहे ॥ १ ॥

इन्द्रवन्तः बहुव्यक्तेरिन्द्रसंबन्धिनः त्ये ते अमी आहवनीयादयः[3] अग्नयः उषसो व्युष्टिषु व्युच्छनेषु तमसां विवासनकालेषु ज्योतिः तेजः भरन्तः धारयन्तः अबुध्रं प्रबुद्धा आसन् । मही महत्यौ द्यावापृथिवी द्यावापृथिव्यौ अपः कर्म । 'अपोऽप्नः' इति कर्मनामसु पाठात् । चेततां जानीताम् । अद्य अस्मिन्नहनि देवानाम् इन्द्रादीनाम् अवः रक्षणं वयम् आ वृणीमहे ॥

**दिवस्पृथिव्योरव आ वृणीमहे मातॄन्त्सिन्धून्पर्वताञ्छर्यणावतः ।**
**अनागास्त्वं सूर्यमुषासमीमहे भद्रं सोमः सुवानो अद्या कृणोतु नः ॥ २ ॥**

१. त-भ—'अभि' नास्ति । २. सं१-२-६-मु—नोऽस्माकमन्यः; सं४-५-७-भ६—नोऽस्माकं । ३. त—वाहव°।

दि॒वः॒पृ॒थि॒व्योः । अवः॑ । आ । वृ॒णी॒म॒हे॒ । मा॒तॄन् । सिन्धू॑न् । पर्व॑तान् । श॒र्य॒णा॒ऽवतः॑ ।
अ॒ना॒गाः॒ऽत्वम् । सूर्य॑म् । उ॒षस॑म् । ई॒म॒हे॒ । भ॒द्रम् । सोमः॑ । सु॒वा॒नः । अ॒द्य । कृ॒णो॒तु॒ । नः॒ ॥ २ ॥

दिवःपृथिव्योः द्यावापृथिव्योः कार्यरक्षेण[1] संबन्धि अवः रक्षणं वयम् आ वृणीमहे । किंच मातॄन् लोकस्य निर्मातॄन् सिन्धून् शर्यणावतः सरसः संबन्धिनः पर्वतान् शिलोच्चयांश्च तथा सूर्यमुषसं च अनागास्त्वं कर्मवैगुण्यजनितपापराहित्यम् ईमहे वयं याचामहे । किंच अद्य अस्मिन्नहनि नः अस्माकं सुवानः अभिषूयमाणः सोमः भद्रं कल्याणं कृणोतु करोतु ॥

द्यावा॑ नो अ॒द्य पृ॑थि॒वी अना॑गसो म॒ही त्रा॑येतां सुवि॒ताय॑ मा॒तरा॑ ।
उ॒षा उ॒च्छन्त्यप॑ बाधताम॒घं स्व॒स्त्य१॒॑ग्निं स॑मिधा॒नमी॑महे ॥ ३ ॥

द्यावा॑ । नः॒ । अ॒द्य । पृ॒थि॒वी इति॑ । अना॑गसः । म॒ही इति॑ । त्रा॒ये॒ता॒म् । सु॒वि॒ताय॑ । मा॒तरा॑ ।
उ॒षाः । उ॒च्छन्ती॑ । अप॑ । बा॒ध॒ता॒म् । अ॒घम् । स्व॒स्ति । अ॒ग्निम् । स॒म्ऽइ॒धा॒नम् । ई॒म॒हे॒ ॥ ३ ॥

मही महत्यौ मातरा मातरौ सर्वस्य मातृभूते[2] द्यावा पृथिवी द्यावापृथिव्यौ अद्य अस्मिन्नहनि अनागसः अपराधरहितान् नः अस्मान् सुविताय सुखाय त्रायेतां रक्षेताम्[3] । किंच उच्छन्ती तमांसि विवासयन्ती उषाः अस्माकम् अघं पापम् अप बाधताम् अपनयतु । अपि च समिधानं सम्यग्दीप्यमानं अग्निं स्वस्ति सर्वप्रकाराविनाशम् ईमहे वयं याचामहे ॥

इ॒यं न॑ उ॒स्रा प्र॑थ॒मा सु॑दे॒व्यं॑ रे॒वत्स॒निभ्यो॑ रे॒वती॒ व्यु॑च्छतु ।
आ॒रे म॒न्युं दु॑र्वि॒दत्र॑स्य धीमहि स्व॒स्त्य१॒॑ग्निं स॑मिधा॒नमी॑महे ॥ ४ ॥

इ॒यम् । नः॒ । उ॒स्रा । प्र॒थ॒मा । सु॒ऽदे॒व्य॑म् । रे॒वत् । स॒निऽभ्यः॑ । रे॒वती॑ । वि । उ॒च्छ॒तु॒ ।
आ॒रे । म॒न्युम् । दुः॒ऽवि॒दत्र॑स्य । धी॒म॒हि॒ । स्व॒स्ति । अ॒ग्निम् । स॒म्ऽइ॒धा॒नम् । ई॒म॒हे॒ ॥ ४ ॥

रेवती धनवती प्रथमा मुख्या इयम् उस्रा पापानामुत्सारिणी उषाः सुदेव्यं शोभनदेवार्हं रेवत् धनवत् यथा यागकालस्तं सनिभ्यः भजमानेभ्यः नः अस्मभ्यं प्रयच्छन्ती व्युच्छतु तमांसि विवासयतु । किंच दुर्विदत्रस्य दुर्धनस्य पुरुषस्य मन्युं क्रोधम् आरे दूरे धीमहि निदधीमहि । सिद्धमन्यत् ॥

प्र याः सिस्र॑ते॒ सूर्य॑स्य र॒श्मिभि॒र्ज्योति॒र्भर॑न्तीरु॒षसो॒ व्यु॑ष्टिषु ।
भ॒द्रा नो॑ अ॒द्य श्रव॑से॒ व्यु॑च्छत स्व॒स्त्य१॒॑ग्निं स॑मिधा॒नमी॑महे ॥ ५ ॥

प्र । याः । सिस्र॑ते । सूर्य॑स्य । र॒श्मिऽभिः॑ । ज्योतिः॑ । भर॑न्तीः । उ॒षसः॑ । वि॒ऽउ॑ष्टिषु ।
भ॒द्राः । नः॒ । अ॒द्य । श्रव॑से । वि । उ॒च्छ॒त॒ । स्व॒स्ति । अ॒ग्निम् । स॒म्ऽइ॒धा॒नम् । ई॒म॒हे॒ ॥ ५ ॥

याः उषसः सूर्यस्य रश्मिभिः किरणैः प्र सिस्रते संगच्छन्ते व्युष्टिषु व्युच्छनेषु तमसां[4] विवासनकालेषु ज्योतिः आत्मीयं तेजः भरन्तीः भरन्ति च ता यूयं नः अस्माकम् अद्य अस्मिन्नहनि श्रवसे अन्नाय भद्राः भजनीया भवत व्युच्छत तमांसि विवासयत च । सिद्धमन्यत् ॥ ॥६॥

1. त-बु—कार्येण । 2. त३-म—मातृभूतौ । 3. त-म६-मु—रक्षतां । 4. त—तमांसि; म६—तमस ।

अनमीवा उषस आ चरन्तु न उदग्नयो जिहतां ज्योतिषा बृहत्।
आयुक्षातामश्विना तूतुजिं रथं स्वस्त्यग्निं समिधानमीमहे ॥ ६ ॥

अनमीवाः। उषसः। आ। चरन्तु। नः। उत्। अग्नयः। जिहताम्। ज्योतिषा। बृहत्।
अयुक्षाताम्। अश्विना। तूतुजिम्। रथम्। स्वस्ति। अग्निम्। समऽइधानम्। ईमहे ॥ ६ ॥

अनमीवाः रोगरहिताः उषसः नः अस्मान् आ चरन्तु आगच्छन्तु। बृहत् बृहता महता ज्योतिषा तेजसा युक्ताः अग्नयः अपि उत् जिहताम् उद्गच्छन्तु। अश्विना अश्विनावपि तूतुजिं क्षिप्रगामिनं रथम् आयुक्षाताम्। अस्मान् प्रत्यागन्तुं रासभाभ्यां युङ्क्ताम्। 'हरित आदित्यस्य रासभावश्विनोः' (नि. १. १५. ३.४) इति पाठात्। सिद्धमन्यत्॥

श्रेष्ठं नो अद्य सवितर्वरेण्यं भागमा सुव स हि रत्नधा असि।
रायो जनित्रीं धिषणामुप ब्रुवे स्वस्त्यग्निं समिधानमीमहे ॥ ७ ॥

श्रेष्ठम्। नः। अद्य। सवितः। वरेण्यम्। भागम्। आ। सुव। सः। हि। रत्नऽधाः। असि।
रायः। जनित्रीम्। धिषणाम्। उप। ब्रुवे। स्वस्ति। अग्निम्। समऽइधानम्। ईमहे ॥ ७ ॥

हे सवितः त्वम् अद्य अस्मिन्नहनि नः अस्मभ्यं वरेण्यं वरणीयं श्रेष्ठं प्रशस्यतमं भागं भजनीयं धनम् आ सुव प्रेरय। देहीत्यर्थः। हि यस्मात् सः प्रार्थितस्त्वं रत्नधाः श्रेष्ठानां धनानां संविभक्ता असि भवसि। तथा च निगमान्तरं— 'विभक्तारं हवामहे वसोश्चित्रस्य राधसः सवितारं नृचक्षसम्' (ऋ. सं. १.२२.७) इति। रायः धनस्य जनित्रीं धिषणां सर्वदेवस्तुतिरूपां वाचम् उप ब्रुवे अहमुपब्रवीमि। यद्वा। धिषणां वेदीमुप ब्रुवे उपस्तौमीत्यर्थः। सिद्धमन्यत्॥

पिपर्तु मा तदृतस्य प्रवाचनं देवानां यन्मनुष्या३ अमन्महि।
विश्वा इदुस्राः स्पळुदेति सूर्यः स्वस्त्यग्निं समिधानमीमहे ॥ ८ ॥

पिपर्तु। मा। तत्। ऋतस्य। प्रऽवाचनम्। देवानाम्। यत्। मनुष्याः। अमन्महि।
विश्वाः। इत्। उस्राः। स्पट्। उत्। एति। सूर्यः। स्वस्ति। अग्निम्। समऽइधानम्। ईमहे ॥८॥

यत् ऋतस्य यज्ञस्य सत्यस्य वा संबन्धि देवानां प्रवाचनं प्रकर्षेण गुणानां कथनं स्तोत्रं मनुष्याः वयम् अमन्महि कर्तुं जानीमः तत् प्रवाचनं मा मां पिपर्तु पालयतु। किंच सूर्यः विश्वाः सर्वाः उस्राः उषसः स्पट् स्पृशन्नवगच्छन्[1] वा[2] उदेति। सिद्धमन्यत्॥

अद्वेषो अद्य बर्हिषः स्तरीमणि ग्राव्णां योगे मन्मनः साध ईमहे।
आदित्यानां शर्मणि स्था भुरण्यसि स्वस्त्यग्निं समिधानमीमहे ॥ ९ ॥

अद्वेषः। अद्य। बर्हिषः। स्तरीमणि। ग्राव्णाम्। योगे। मन्मनः। साधे। ईमहे।
आदित्यानाम्। शर्मणि। स्थाः। भुरण्यसि। स्वस्ति। अग्निम्। समऽइधानम्। ईमहे ॥ ९ ॥

१. स-स्पर्शयन°; अ-स्पशयन°। २. त१.२.६.७-अ६-मु-'वा' नास्ति; त४.५- सा।

अद्य अस्मिन्नहनि बर्हिषः स्तरीमणि वेद्यां स्तरणे अध्मनः सम्मीयस्यामीहस्य कलशस्य माधे साधके ग्राव्णाम् अभिषवपाषाणानां योगे सोमेन सह संयोगे च सति अद्वेषः द्वेषवर्जितानादित्यान् ईमहे धनमभीष्टं याचामहे । हे स्तोतः त्वं तेषाम् आदित्यानां देवानां शर्मणि सुखे स्थाने वा[1] स्थाः तिष्ठ । भुरण्यसि कर्तव्यानि कर्माणि बिभर्षि गच्छसि वा । सिद्धमन्यत् ॥

आ नो॑ ब॒र्हिः स॑ध॒मादे॑ बृ॒हद्दि॒वि दे॒वाँ ई॑ळे सा॒दया॑ स॒प्त होतॄ॑न् ।
इन्द्रं॑ मि॒त्रं वरु॑णं सा॒तये॒ भगं॑ स्व॒स्त्य१॒॑ग्निं स॑मिधा॒नमी॑महे ॥ १० ॥

आ । नः॒ । ब॒र्हिः । स॒ध॒ऽमादे॑ । बृ॒हत् । दि॒वि । दे॒वान् । ई॒ळे॒ । सा॒दय॑ । स॒प्त । होतॄ॑न् ।
इन्द्र॑म् । मि॒त्रम् । वरु॑णम् । सा॒तये॑ । भग॑म् । स्व॒स्ति । अ॒ग्निम् । स॒म्ऽइ॒धा॒नम् । ई॒म॒हे॒ ॥ १० ॥

नः अस्माकं बृहत् बृहति महति दिवि दीप्ते सधमादे । सह माद्यन्ति देवा यत्र तस्मिन् । बर्हिः बर्हिषि यज्ञे सप्त सप्तसंख्याकान् होतॄन् वषट्कर्तॄन् इन्द्रं मित्रं च वरुणं च भगं च देवान् इतरानपि यष्टव्यान् देवान् हे अग्ने त्वम् आ सादय । अग्नेराभिमुख्यकरणम् ' इळाय दैव्यं जनं बर्हिरा सादया वसो ' ( ऋ. सं. १. ४५. ९ ) इत्येवमादिमन्त्रैरवगम्यते । तत्र स्थिता आम्नातिसोऽस्मिन्नहाईन् देवानहं सातये धनलाभाय ईळे स्तौमि । सिद्धमन्यत् ॥ ॥ ७ ॥

त आ॑दि॒त्या आ ग॑ता स॒र्वता॑तये वृ॒धे नो॑ य॒ज्ञम॑वता सजोषसः ।
बृह॒स्पतिं॑ पू॒षण॑म॒श्विना॒ भगं॑ स्व॒स्त्य१॒॑ग्निं स॑मिधा॒नमी॑महे ॥ ११ ॥

ते । आ॒दि॒त्याः॒ । आ । ग॒त॒ । स॒र्वऽता॑तये । वृ॒धे । नः॒ । य॒ज्ञम् । अ॒व॒त॒ । स॒ऽजो॒ष॒सः॒ ।
बृह॒स्पति॑म् । पू॒षण॑म् । अ॒श्विना॑ । भग॑म् । स्व॒स्ति । अ॒ग्निम् । स॒म्ऽइ॒धा॒नम् । ई॒म॒हे॒ ॥ ११ ॥

हे आदित्याः येऽस्माभिराहूताः ते यूयं सर्वतातये यज्ञार्थम् आ गत आगच्छत । आगत्य च हे सजोषसः संगता यूयं नः अस्माकं वृधे वर्धनाय यज्ञं प्रति अवत गच्छत । वयं च बृहस्पतिं पूषणं च अश्विना अश्विनौ च भगं भगाख्यं देवं च समिधानं सम्यग्दीप्तम् अग्निं च स्वस्ति सर्वप्रकाराविनाशम् ईमहे याचामहे ॥

तन्नो॑ देवा यच्छत सुप्रवाच॒नं छ॒र्दिरा॑दित्याः सु॒भरं॑ नृ॒पाय्य॑म् ।
पश्वे॑ तो॒काय॒ तन॑याय जी॒वसे॑ स्व॒स्त्य१॒॑ग्निं स॑मिधा॒नमी॑महे ॥ १२ ॥

तत् । नः॒ । दे॒वाः॒ । य॒च्छ॒त॒ । सु॒ऽप्र॒वा॒च॒नम् । छ॒र्दिः । आ॒दि॒त्याः॒ । सु॒ऽभर॑म् । नृ॒ऽपाय्य॑म् ।
पश्वे॑ । तो॒काय॑ । तन॑याय । जी॒वसे॑ । स्व॒स्ति । अ॒ग्निम् । स॒म्ऽइ॒धा॒नम् । ई॒म॒हे॒ ॥ १२ ॥

हे आदित्याः देवाः यूयं सुप्रवाचनम् अत्यन्तं प्रशस्तं सुभरं सुसमृद्धं नृपाय्यं नृणां रक्षकं तत् अस्मदभिलषितं छर्दिः गृहं नः अस्माकं पश्वे पशवे तोकाय[1] पुत्राय तनयाय पौत्राय च जीवसे जीवनार्थं यच्छत दत्त । सिद्धमन्यत् ॥

विश्वे॑ अ॒द्य म॒रुतो॒ विश्व॑ ऊ॒ती विश्वे॑ भवन्त्व॒ग्नयः॒ समि॑द्धाः ।
विश्वे॑ नो दे॒वा अव॒सा ग॑मन्तु॒ विश्व॑मस्तु॒ द्रवि॑णं॒ वाजो॑ अ॒स्मे ॥ १३ ॥

1. त–' तोकाय ' नास्ति ।

विश्वे । अद्य । मरुतः । विश्वे । ऊती । विश्वे । भवन्तु । अग्नयः । सम्ऽइद्धाः ।
विश्वे । नः । देवाः । अवसा । आ । गमन्तु । विश्वम् । अस्तु । द्रविणम् । वाजः । अस्मे इति ॥ १३ ॥

अद्य अस्मिन्नहनि प्रधानयागदिवसे विश्वे सर्वे मरुतः विश्वे सर्वे मरुद्भिः सहचरिता[1] रुद्रादयो देवाश्च ऊती ऊत्यै रक्षणाय भवन्तु । अपि च विश्वे सर्वे अग्नयः आहवनीयादयः समिद्धाः संदीप्ताः भवन्तु । अपि च विश्वे सर्वे इन्द्रादयः देवाः नः अस्माकम् अवसा रक्षणेन आ गमन्तु आगच्छन्तु । किंच अस्मे अस्मासु विश्वं सर्वं द्रविणं धनं वाजः अन्नं च अस्तु भवतु[2] ॥

यं देवासोऽवथ वाजसातौ यं त्रायध्वे यं पिपृथात्यंहः ।
यो वो गोपीथे न भयस्य वेद ते स्याम देववीतये तुरासः ॥ १४ ॥

यम् । देवासः । अवथ । वाजऽसातौ । यम् । त्रायध्वे । यम् । पिपृथ । अति । अंहः ।
यः । वः । गोऽपीथे । न । भयस्य । वेद । ते । स्याम । देवऽवीतये । तुरासः ॥ १४ ॥

हे तुरासः अभीष्टप्रदाने क्षिप्राः देवासः देवा यूयं वाजसातौ संग्रामे यं मनुष्यम् अवथ रक्षथ यं च त्रायध्वे शत्रोः पालयथ यं च अंहः पापम् अति अतिनीय पिपृथ कामैः पूरयथ यः चापि मनुष्यः वः युष्माकं कार्यत्वेन संबन्धिनि गोपीथे रक्षणे भयस्य भयं न वेद न जानाति ते[3] सर्वे वयं देववीतये यज्ञार्थं स्याम भवेम ॥　　॥ ८ ॥

'उषासानक्ता' इति चतुर्दशर्चं सप्तमं सूक्तं धानाकस्य लुशस्यार्षम् । आदितो द्वादश जगत्यन्त्ये द्वे त्रिष्टुभौ । विश्वे देवा देवता । पूर्वसूक्ते 'वैश्वदेवं तु द्विस्त्रिष्टुबन्तं तु' इत्युक्तत्वात् । 'उषासानक्ता' इत्यनुक्रान्तम् । आभिप्लविके षष्ठेऽहनि वैश्वदेव इदं वैश्वदेवनिविद्धानम् । सूत्रितं च— 'उत्तरा पूर्वोषासानक्तेति वैश्वदेवम्' ( आश्व. श्रौ. ७. ७ ) इति ॥

उषासानक्ता बृहती सुपेशसा द्यावाक्षामा वरुणो मित्रो अर्यमा ।
इन्द्रं हुवे मरुतः पर्वताँ अप आदित्यान्द्यावापृथिवी अपः स्वः ॥ १ ॥

उषसानक्ता । बृहती इति । सुऽपेशसा । द्यावाक्षामा । वरुणः । मित्रः । अर्यमा ।
इन्द्रम् । हुवे । मरुतः । पर्वतान् । अपः । आदित्यान् । द्यावापृथिवी इति । अपः । स्वरिति स्वः ॥ १ ॥

बृहती बृहत्यौ महत्यौ सुपेशसा सुरूपे उषासानक्ता रात्र्युषसौ द्यावाक्षामा[4] द्यावापृथिव्यौ च वरुणो मित्रः मित्रावरुणौ च अर्यमा च येऽत्र विहिता देवाः तानेतान् इन्द्रं मरुतः च पर्वतान् च अपः[5] उदकानि च आदित्यान् च द्यावापृथिवी द्यावापृथिव्यौ च । पुनर्द्यावापृथिव्योर्ग्रहणमादरार्थम् । अपः अन्तरिक्षं च स्वः सर्वं च यष्टव्यं देवजातं हुवे ह्वयामि ॥

द्यौश्च नः पृथिवी च प्रचेतस ऋतावरी रक्षतामंहसो रिषः ।
मा दुर्विदत्रा निर्ऋतिर्न ईशत तद्देवानामवो अद्या वृणीमहे ॥ २ ॥

---

१. ग—'सहचरा । २. त—भवतु । ३. त—'ते' नास्ति । ४. त—'द्यावाक्षामा' नास्ति ।
५. ग-त३.४-अ—नोऽस्माकमपः ।

द्यौः । च । नः । पृथिवी । च । प्रऽचैतसा । ऋतवरी इत्यृतऽवरी । रक्षताम् । अंहसः । रिषः ।
मा । दुःऽविदत्रा । निःऽऋतिः । नः । ईशत । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ २ ॥

प्रचेतसा सुबुद्धी ऋतावरी यज्ञवन्तौ सत्यवन्तौ[1] द्यौश्च पृथिवी च द्यावापृथिव्यावुभे नः अस्मान् रिषः हिंसकात्[2] अंहसः पापाच्च[3] रक्षताम् । किंच दुर्विदत्रा कुत्सितज्ञाना निर्ऋतिः मृत्युदेवता नः अस्माकं मा ईशत ईश्वरी मा भूत् । किंच वयं देवानां संबन्धि तत् असाधारणम् अवः रक्षणम् अद्य अस्मिन्नहनि प्रधानयागदिवसे वृणीमहे प्रार्थयामहे ॥

विश्वस्मान्नो अदितिः पात्वंहसो माता मित्रस्य वरुणस्य रेवतः ।
स्वर्वज्ज्योतिरवृकं नशीमहि तद्देवानामवो अद्या वृणीमहे ॥ ३ ॥

विश्वस्मात् । नः । अदितिः । पातु । अंहसः । माता । मित्रस्य । वरुणस्य । रेवतः ।
स्वः ऽवत् । ज्योतिः । अवृकम् । नशीमहि । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ ३ ॥

रेवतः धनवतः मित्रस्य वरुणस्य च धनवतोर्मित्रावरुणयोः माता जननी अदितिः देवी नः अस्मान् विश्वस्मात् सर्वस्मात् अंहसः पापात् पातु रक्षतु । किंच वयम् अवृकं बाधकरहितं स्वर्वत् सर्वं ज्योतिः तेजः नशीमहि । नशिः पलायनकर्मा । पलायनं च शीघ्रगमनम् । शीघ्रं प्राप्नुम इत्यर्थः । सिद्धमन्यत् ॥

ग्रावा वदन्नप रक्षांसि सेधतु दुःष्वप्न्यं निर्ऋतिं विश्वमत्रिणम् ।
आदित्यं शर्म मरुतामशीमहि तद्देवानामवो अद्या वृणीमहे ॥ ४ ॥

ग्रावा । वदन् । अप । रक्षांसि । सेधतु । दुःऽस्वप्न्यम् । निःऽऋतिम् । विश्वम् । अत्रिणम् ।
आदित्यम् । शर्म । मरुताम् । अशीमहि । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ ४ ॥

ग्रावा अभिषवपाषाणः वदन् अभिषववेलायां शब्दं कुर्वन् रक्षांसि यागविघ्नकारीणि अप सेधतु विनिवारयतु । दुःष्वप्न्यं दुःस्वप्नप्रभवमस्मदीयमनिष्टं चाप सेधतु । निर्ऋतिं मृत्युदेवतां चाप सेधतु । अत्रिणम् अदनशीलं विश्वं सर्वं पिशाचादिकं चाप सेधतु । एवं निर्विघ्नत्वेन[4] निष्पन्ने यागे वयम् आदित्यम् आदित्यानां संबन्धि मरुतां च संबन्धि शर्म सुखम् अशीमहि प्राप्नुयाम । सिद्धमन्यत् ॥

एन्द्रो बर्हिः सीदतु पिन्वतामिळा बृहस्पतिः सामभिर्ऋक्वो अर्चतु ।
सुप्रकेतं जीवसे मन्म धीमहि तद्देवानामवो अद्या वृणीमहे ॥ ५ ॥

आ । इन्द्रः । बर्हिः । सीदतु । पिन्वताम् । इळा । बृहस्पतिः । सामऽभिः । ऋक्वः । अर्चतु ।
सुऽप्रकेतम् । जीवसे । मन्म । धीमहि । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ ५ ॥

इन्द्रः बर्हिः आ सीदतु । इळा माध्यमिका स्तनयित्नुलक्षणा वागपि पिन्वतां सिञ्चतु । सामभिः गीयमानः[5] ऋक्वा स्तुतिमान् बृहस्पतिः अपि अर्चतु अस्मान् पूजयतु ।

१. त-भ-मु—सत्यवन्तौ च । २. त२.६—हिंसकमकात्; त५—हिंसकसकाशात् । ३. ग-त३-भ—पापात् ।
४. ग—चाविघ्नेन; त-भ-मु—निर्विघ्नेन । ५. त१.२.३.४.५.७-भ—गीयमाने; त६-मु—गायमाने ।

किंच वयं सुश्रवसे सुयशसे भक्ष्य मध्यमीयं धनं स्तोत्रं वा धीमहि निदधीमहि धीयते जीवनाय । सिद्धमन्यत् ॥ ॥ ९ ॥

दिविस्पृशं यज्ञमस्माकमश्विना जीराध्वरं कृणुतं सुम्नमिष्टये ।
प्राचीनरश्मिमाहुतं घृतेन तद्देवानामवो अद्या वृणीमहे ॥ ६ ॥

दिविऽस्पृशम् । यज्ञम् । अस्माकम् । अश्विना । जीरऽअध्वरम् । कृणुतम् । सुम्नम् । इष्टये ।
प्राचीनऽरश्मिम् । आऽहुतम् । घृतेन । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ ६ ॥

हे अश्विनौ युवां नोऽस्माकं यज्ञं दिविस्पृशं दिवि स्प्रष्टारं गन्तारं कृणुतं कुरुतम्[1] । तथा जीराध्वरं क्षिप्रं हिंसारहितं च यज्ञमस्माकं कृणुतं कुरुतम् । इष्टये अभिलषितसिद्ध्यर्थं सुम्नं सुखं च कुरुतम् । किंच घृतेन आज्येन आहुतम् अग्निं प्राचीनरश्मिं देवाभिमुखं कुरुतमित्यर्थः । सिद्धमन्यत् ॥

उप ह्वये सुहवं मारुतं गणं पावकमृष्वं सख्याय शंभुवम् ।
रायस्पोषं सौश्रवसाय धीमहि तद्देवानामवो अद्या वृणीमहे ॥ ७ ॥

उप । ह्वये । सुऽहवम् । मारुतम् । गणम् । पावकम् । ऋष्वम् । सख्याय । शम्ऽभुवम् ।
रायः । पोषम् । सौश्रवसाय । धीमहि । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ ७ ॥

सुहवं स्वाह्वानं पावकं शोधकम् ऋष्वं दर्शनीयं शंभुवं सुखस्य भावयितारं रायः धनस्य पोषं पोषकं मारुतं मरुतां संबन्धिनं गणं संघं सख्याय सखित्वाय उप ह्वये उपगम्य ह्वयामि । अपि च सौश्रवसाय शोभनान्नत्वाय सुयशस्त्वाय[2] वा वयं धीमहि सुखं निदधीमहि । सिद्धमन्यत् ॥

अपां पेरुं जीवधन्यं भरामहे देवाव्यं सुहवमध्वरश्रियम् ।
सुरश्मिं सोममिन्द्रियं यमीमहि तद्देवानामवो अद्या वृणीमहे ॥ ८ ॥

अपाम् । पेरुम् । जीवऽधन्यम् । भरामहे । देवऽअव्यम् । सुऽहवम् । अध्वरऽश्रियम् ।
सुऽरश्मिम् । सोमम् । इन्द्रियम् । यमीमहि । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥८॥

अपाम् उदकानां पेरुं पालकं जीवधन्यम् । धन्या जीवा यस्मिन्नसौ जीवधन्यः । तं देवाव्यं देवानां तर्पकं सुहवं शोभनाह्वानं शोभनस्तुतिं वा अध्वरश्रियं सुरश्मिं शोभनांशुं सोमं भरामहे धारयामः । पत्नीशालातो हविर्धानं प्रति प्रापयामो वा । सुतं तं सोमम् इन्द्रियं वीर्यं[3] यमीमहि वयं याचामहे । सिद्धमन्यत् ॥

सनेम तत्सुसनिता सनित्वभिर्वयं जीवा जीवपुत्रा अनागसः ।
ब्रह्मद्विषो विष्वगेनो भरेरत तद्देवानामवो अद्या वृणीमहे ॥ ९ ॥

सनेम । तत् । सुऽसनिता । सनित्वऽभिः । वयम् । जीवाः । जीवऽपुत्राः । अनागसः ।
ब्रह्मऽद्विषः । विष्वक् । एनः । भरेरत । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ ९ ॥

१. त-भ६ मु-' कुरुतं ' नास्ति । २. त-शास्त्वाय । ३. त१.२.६.७-वीर्यं सत् ।

अच्छ। मे। इन्द्रम्। मतयः। स्वःऽविदः। सध्रीचीः। विश्वाः। उशतीः। अनूषत।
परि। स्वजन्ते। जनयः। यथा। पतिम्। मर्यम्। न। शुन्ध्युम्। मघऽवानम्। ऊतये॥ १॥

आङ्गिरसस्य[1] कृष्णस्य मे मम स्वर्विदः सर्वस्य लम्भयित्र्यः सध्रीचीः संगताः विश्वाः व्याप्ताः उशतीः कामयमानाः मतयः स्तुतयः इन्द्रम् अच्छ अनूषत अभिष्टुवन्ति। किंच जनयः जायाः यथा पतिं भर्तारं मर्यं न यथा च मनुष्यं शुन्ध्युं शुद्धं दोषरहितं मघवानं धनवन्तम् ऊतये रक्षणार्थं परि ष्वजन्ते आलिङ्गन्ति तद्वदिन्द्रं मे स्तुतयः परि ष्वजन्ते॥

न घा त्वद्रिगप वेति मे मनस्त्वे इत्कामं पुरुहूत शिश्रय।
राजेव दस्म नि षदोऽधि बर्हिष्यस्मिन्त्सु सोमेऽवपानमस्तु ते॥ २॥

न। घ। त्वद्रिक्। अप। वेति। मे। मनः। त्वे इति। इत्। कामम्। पुरुऽहूत। शिश्रय।
राजाऽइव। दस्म। नि। सदः। अधि। बर्हिषि। अस्मिन्। सु। सोमे। अवऽपानम्। अस्तु। ते॥२॥

हे पुरुहूत बहुभिराहूत दस्म दर्शनीयेन्द्र त्वद्रिक् त्वदभिमुखं मे मदीयं मनः न घ न खलु अप वेति त्वत्तोऽपगच्छति। किंच त्वे इत् त्वय्येव कामम् अभिलाषं शिश्रय स्थापयामि। किंच राजेव ईश्वर इव बर्हिषि अधि नि षदः निषीद। किंच ते तव अस्मिन् सोमे अवपानमस्तु भवतु॥

विषूवृदिन्द्रो अमतेरुत क्षुधः स इद्रायो मघवा वस्व ईशते।
तस्येदिमे प्रवणे सप्त सिन्धवो वयो वर्धन्ति वृषभस्य शुष्मिणः॥ ३॥

विषुऽवृत्। इन्द्रः। अमतेः। उत। क्षुधः। सः। इत्। रायः। मघऽवा। वस्वः। ईशते।
तस्य। इत्। इमे। प्रवणे। सप्त। सिन्धवः। वयः। वर्धन्ति। वृषभस्य। शुष्मिणः॥ ३॥

इन्द्रः अमतेः अस्माकं दुर्बुद्धेः प्रज्ञापहारिण्याः पिपासाया वा विषूवृत् विपरावर्तको भवतु। उत अपि च क्षुधः बुभुक्षायाः विषूवृत् भवतु। किंच सः इत् स एव मघवा धनवानिन्द्रः वस्वः वासयितुः रायः धनस्य ईशते ईष्टे। किंच वृषभस्य वर्षितुः तस्येत् इन्द्रस्यैव इमे प्रसिद्धाः सप्त सप्तसंख्याकाः सिन्धवः नद्यः प्रवणे देशे वयः अन्नं वर्धन्ति वर्धयन्ति॥

वयो न वृक्षं सुपलाशमासदन्त्सोमास इन्द्रं मन्दिनश्चमूषदः।
प्रैषामनीकं शवसा दविद्युतद्विदत्स्वर्मनवे ज्योतिरार्यम्॥ ४॥

वयः। न। वृक्षम्। सुऽपलाशम्। आ। असदन्। सोमासः। इन्द्रम्। मन्दिनः। चमूऽसदः।
प्र। एषाम्। अनीकम्। शवसा। दविद्युतत्। विदत्। स्वः। मनवे। ज्योतिः। आर्यम्॥४॥

वयो न यथा पक्षिणः सुपलाशं शोभनपर्णं वृक्षम् आसीदन्ति[2] तद्वत् मन्दिनः मदकराः चमूषदः चमसपात्रेषु स्थातारः सोमासः सोमाः इन्द्रम् आ असदन् आसीदन्ति। अधिसिहन्ती-स्पर्धः। एषाम् इन्द्रमधितिष्ठतां सोमानां शवसा वेगेन युक्तम् अनीकम् अग्रं प्र दविद्युतत्

१. ग–हे इंद्र यस्य सुहस्त्यस; त३–मै१.४.५.७–हे सोमे यस्य सुहस्त्यस्य। २. त१.२.६.७–आसदन् आसीदेति।

प्रद्योतते । किंचायमिन्द्रः स्वः स्वात्मना आर्यं श्रेष्ठं ज्योतिः आदित्याख्यं तेजः मनवे मनुष्येभ्यः विदत् प्रयच्छतु ॥

कृतं न श्वघ्नी वि चिनोति देवने संवर्गं यन्मघवा सूर्यं जयत् ।
न तत्ते अन्यो अनु वीर्यं शकन्न पुराणो मघवन्नोत नूतनः ॥ ५ ॥

कृतम् । न । श्वऽघ्नी । वि । चिनोति । देवने । सम्ऽवर्गम् । यत् । मघऽवा । सूर्यम् । जयत् ।
न । तत् । ते । अन्यः । अनु । वीर्यम् । शकत् । न । पुराणः । मघऽवन् । न । उत । नूतनः ॥ ५ ॥

श्वघ्नी परस्वानां हन्ता कितवः देवने द्यूते कृतं न यथा कृतं वि चिनोति तद्वदिन्द्रः सूर्यं मृगयते । कदेत्यत आह । यत् यदा मघवा धनवानिन्द्रः संवर्गं सम्यग्वृक्तं वर्जयितारं सूर्यम् आदित्यं जयत् तदीयरथापहरणद्वारेण जयति । अथ प्रत्यक्षस्तुतिः । हे मघवन् धनवन्निन्द्र ते[1] तव तत्[1] सूर्यजयलक्षणं वीर्यं वीरत्वम् अन्यः त्वत्तोऽन्यो भविष्यत्कालीनः पुमान् अनु अनुकर्तुं न शकत् न शक्नोति । पुराणः पूर्वोऽपि त्वद्वीर्यमनुकर्तुं न[2] शकत्[2] न शक्नोति[3] । उत अपि च नूतनः वर्तमानकालीनोऽपि त्वदीयं वीर्यमनुकर्तुं न शक्नोति ॥ ॥ २५ ॥

विशंविशं मघवा पर्यशायत जनानां धेना अवचाकशद्वृषा ।
यस्याह शक्रः सवनेषु रण्यति स तीव्रैः सोमैः सहते पृतन्यतः ॥ ६ ॥

विशम्ऽविशम् । मघऽवा । परि । अशायत । जनानाम् । धेनाः । अवऽचाकशत् । वृषा ।
यस्य । अह । शक्रः । सवनेषु । रण्यति । सः । तीव्रैः । सोमैः । सहते । पृतन्यतः ॥ ६ ॥

वृषा कामानां वर्षिता मघवा धनवानिन्द्रः विशंविशं सर्वान् मनुष्यान् पर्यशायत परिशेते । किंच जनानां स्तोतॄजनानां धेनाः स्तुतीः अवचाकशत् अभिपश्यति । किंच शक्रः इन्द्रः यस्याह यस्यैव यजमानस्य सवनेषु रण्यति रमते सः यजमानः तीव्रैः तीव्रकरैः प्रवीय-माणैः सोमैः पृतन्यतः संग्राममिच्छतः शत्रून् सहते अभिभवति ॥

आपो न सिन्धुमभि यत्समक्षरन्त्सोमास इन्द्रं कुल्याइव ह्रदम् ।
वर्धन्ति विप्रा महो अस्य सादने यवं न वृष्टिर्दिव्येन दानुना ॥ ७ ॥

आपः । न । सिन्धुम् । अभि । यत् । सम्ऽअक्षरन् । सोमासः । इन्द्रम् । कुल्याःऽइव । ह्रदम् ।
वर्धन्ति । विप्राः । महः । अस्य । सदने । यवम् । न । वृष्टिः । दिव्येन । दानुना ॥ ७ ॥

यत् यदा सोमासः सोमाः इन्द्रम् अभि समक्षरन् अभिक्षरन्ति । अभिगच्छन्तीत्यर्थः । तत्र दृष्टान्तौ दर्शयति । आपो न यथा आपः सिन्धुं समुद्रमभिसंक्षरन्ति । कुल्याइव यथा च कुल्याः ह्रदम् अभिसंक्षरन्ति तद्वदित्यर्थः । तदानीम् अस्य इन्द्रस्य महः महत्त्वं सदने यज्ञगृहे[4] विप्राः मेधाविनः वर्धन्ति । तत्र दृष्टान्तमाह । यवं न यथा यवं यवसस्यं वृष्टिः । कर्तरि क्तिन् । वर्षिता पर्जन्यः दिव्येन दिवि भवेन दानुना दानेन वर्षणेन वर्धयति[5] तद्वदित्यर्थः ॥

१. ग-त्वमकृतं; त-भ-हे तव । २. त-'न शकत्' नास्ति । ३. त-भ२-शक्नोति कर्त् । ४. त-भ-गृहे । ५. त-भ-वर्धयति ।

वृषा न क्रुद्धः पतयद्रजःस्वा यो अर्यपत्नीरकृणोदिमा अपः ।
स सुन्वते मघवा जीरदानवेऽविन्दज्ज्योतिर्मनवे हविष्मते ॥ ८ ॥

वृषा । न । क्रुद्धः । पतयत् । रजःऽसु । आ । यः । अर्यऽपत्नीः । अकृणोत् । इमाः । अपः ।
सः । सुन्वते । मघऽवा । जीरऽदानवे । अविन्दत् । ज्योतिः । मनवे । हविष्मते ॥ ८ ॥

रजःसु लोकेषु वृषा न यथा वृषभः क्रुद्धः सन् प्रतिवृषभवधाय पतयत् गच्छति तद्वत् यः इन्द्रः क्रुद्धः सन् मेघवधाय पतयति हत्वा च मेघम् अर्यपत्नीः सर्वस्य जगतः स्वामिन इन्द्रस्य पालयितव्याः इमाः प्रसिद्धाः अपः वृष्ट्युदकानि आ अकृणोत् आकृणोति अस्मदभिमुखं करोति सः मघवा[1] धनवानिन्द्रः[1] सुन्वते सोमाभिषवं कुर्वते जीरदानवे क्षिप्रदानाय हविष्मते मनवे मनुष्याय । यजमानायेत्यर्थः । ज्योतिः तेजः अविन्दत् प्रायच्छत् ॥

उज्जायतां परशुर्ज्योतिषा सह भूया ऋतस्य सुदुघा पुराणवत् ।
वि रोचतामरुषो भानुना शुचिः स्वर्ण शुक्रं शुशुचीत सत्पतिः ॥ ९ ॥

उत् । जायताम् । परशुः । ज्योतिषा । सह । भूयाः । ऋतस्य । सुऽदुघा । पुराणऽवत् ।
वि । रोचताम् । अरुषः । भानुना । शुचिः । स्वः । न । शुक्रम् । शुशुचीत । सत्ऽपतिः ॥ ९ ॥

परशुः इन्द्रस्य वज्रः ज्योतिषा तेजसा सह उज्जायताम् । अस्मच्छत्रुवधे मेघवधे च व्याप्रियतामित्यर्थः । किंच ऋतस्य सत्यस्य सुदुघा माध्यमिका वाक् पुराणवत् प्रत्नवत् काले भूयाः भूयात् । पुरुषव्यत्ययः । किंच इन्द्रः अरुषः आरोचमानः भानुना दीप्त्या शुचिः ज्वलन् वि रोचतां प्रकाशताम् । किंच सत्पतिः सतां पतिरिन्द्रः स्वर्न आदित्य इव शुक्रं ज्वलन् शुशुचीत अत्यन्तं दीप्यताम् ॥

गोभिष्टरेमामतिं दुरेवां यवेन क्षुधं पुरुहूत विश्वाम् ।
वयं राजभिः प्रथमा धनान्यस्माकेन वृजनेना जयेम ॥ १० ॥

गोभिः । तरेम । अमतिम् । दुःऽएवाम् । यवेन । क्षुधम् । पुरुऽहूत । विश्वाम् ।
वयम् । राजऽभिः । प्रथमाः । धनानि । अस्माकेन । वृजनेन । जयेम ॥ १० ॥

बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः ।
इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु ॥ ११ ॥

बृहस्पतिः । नः । परि । पातु । पश्चात् । उत । उत्ऽतरस्मात् । अधरात् । अघऽयोः ।
इन्द्रः । पुरस्तात् । उत । मध्यतः । नः । सखा । सखिऽभ्यः । वरिवः । कृणोतु ॥ ११ ॥

एतदृग्द्वयं प्रागेव व्याख्यातम् ॥ ॥ २५ ॥

'आ यातु' इत्येकादशर्चं द्वितीयं सूक्तमाङ्गिरसस्य कृष्णस्यार्षमैन्द्रम् । आदितस्तिस्रस्त्रिष्टुभः । ततः षड् जगत्यः । ततो द्वे त्रिष्टुभौ । तथा चानुक्रान्तम्—'आ यातु त्रिस्त्रिष्टुबादि' इति । आभि-

१. तं—मघवानिन्द्रः ।

प्रथमिके पृष्ठ्ये ब्राह्मणाच्छंसिनः स्तोमवृद्धाविदमावापार्थम् । सूत्रितं च—' आ यात्विन्द्रः स्वपतिरिमां धियमिति ब्राह्मणाच्छंसी ' ( आश्व. श्रौ. ७. ९ ) इति ॥

आ या॒त्विन्द्र॒ः स्वप॑ति॒र्मदा॑य॒ यो धर्म॑णा तूतुजा॒नस्तुवि॑ष्मान् ।
प्र॒त्व॒क्षा॒णो अति॒ विश्वा॒ सहां॑स्यपा॒रेण॑ मह॒ता वृष्ण्ये॑न ॥ १ ॥

आ । या॒तु॒ । इन्द्रः॑ । स्वऽप॑तिः । मदा॑य । यः । धर्म॑णा । तू॒तु॒जा॒नः । तुवि॑ष्मान् ।
प्र॒ऽत्व॒क्षा॒णः । अति॑ । विश्वा॑ । सहां॑सि । अ॒पा॒रेण॑ । म॒ह॒ता । वृष्ण्ये॑न ॥ १ ॥

यः इन्द्रः तूतुजानः त्वरमाणः तुविष्मान् वृद्धिमान् विश्वा विश्वानि सहांसि शत्रुबलानि अपारेण महता अधिकेन वृष्ण्येन बलेन प्रत्वक्षाणः प्रकर्षेण तनूकुर्वन् अति गच्छतीति शेषः । स्वपतिः धनपतिः इन्द्रः मदाय मदार्थं धर्मणा धारकेण रथेन आ यातु अस्मदभिमुखं प्रत्यागच्छतु ॥

सु॒ष्ठामा॒ रथ॑ः सु॒यमा॒ हरी॑ ते मि॒म्यक्ष॒ वज्रो॑ नृपते॒ गभ॑स्तौ ।
शीभं॑ राजन्त्सु॒पथा या॑ह्य॒र्वाङ् वर्धा॑म ते प॒पुषो॒ वृष्ण्या॑नि ॥ २ ॥

सु॒ऽस्थामा॑ । रथ॑ः । सु॒ऽयमा॑ । हरी॒ इति॑ । ते॒ । मि॒म्यक्ष॑ । वज्र॑ः । नृ॒ऽप॒ते॒ । गभ॑स्तौ ।
शीभ॑म् । रा॒ज॒न् । सु॒ऽपथा॑ । आ । या॒हि॒ । अ॒र्वाङ् । वर्धा॑म । ते॒ । प॒पुष॑ः । वृष्ण्या॑नि ॥ २ ॥

हे नृपते नृणां पालकेन्द्र ते तव रथः सुष्ठामा शोभनावस्थानः हरी अश्वावपि सुयमा सुयमौ । सुयन्तव्यावित्यर्थः । किंच तव गभस्तौ बाहौ वज्रः मिम्यक्ष संहतो भवति । तथा सति हे राजन् सर्वस्येश्वरेन्द्र शीभं[1] शीघ्रं सुपथा शोभनेन मार्गेण अर्वाङ् अस्मदभिमुखम् आ याहि आगच्छ । आगत्य पपुषः सोमं पीतवतः ते तव वृष्ण्यानि बलानि वर्धाम वयं वर्धयामः ॥

एन्द्र॑वाहो नृ॒पतिं॒ वज्र॑बाहुमु॒ग्रमु॒ग्रास॑स्तवि॒षास॑ एनम् ।
प्रत्व॑क्षसं वृष॒भं स॒त्यशु॑ष्मम॒मेम॑स्म॒त्रा स॑ध॒मादो॑ वहन्तु ॥ ३ ॥

आ । इ॒न्द्र॒ऽवाहः॑ । नृ॒ऽपति॑म् । वज्र॑ऽबाहुम् । उ॒ग्रम् । उ॒ग्रासः॑ । त॒वि॒षासः॑ । ए॒न॒म् ।
प्रऽत्व॑क्षसम् । वृ॒ष॒भम् । स॒त्यऽशु॑ष्मम् । आ । ई॒म् । अ॒स्म॒ऽत्रा । स॒ध॒ऽमादः॑ । व॒ह॒न्तु॒ ॥ ३ ॥

नृपतिं नृणां पालकं वज्रबाहुं वज्रहस्तम् उग्रम् उद्गूर्णं प्रत्वक्षसं शत्रुबलानां प्रकर्षेण तनूकर्तारं वृषभं कामानां वर्षितारं सत्यशुष्मम् अविसंवादिबलम् एनम् इन्द्रम् । आ, ईम् इति पूरणौ । उग्रासः उद्गूर्णाः तविषासः प्रवृद्धाः सधमादः सह माद्यन्तः इन्द्रवाहः इन्द्रस्य वोढारः अस्मत्रा अस्मासु आ वहन्तु ॥

ए॒वा पतिं॑ द्रोण॒साचं॒ सचे॑तसमू॒र्जः स्क॒म्भं ध॒रुण॒ आ वृ॑षायसे ।
ओजः॑ कृष्व॒ सं गृ॑भाय॒ त्वे अप्यसो॒ यथा॑ केनि॒पाना॑मि॒नो वृ॒धे ॥ ४ ॥

१. ख-अ१.७—' शीभं ' नास्ति ।

एव। पतिम्। द्रोणऽसाचम्। सऽचेतसम्। ऊर्जः। स्कम्भम्। धरुणे। आ। वृषऽयसे।
ओजः। कृष्व। सम्। गृभाय। त्वे इति। अपि। असः। यथा। केऽनिपानाम्। इनः। वृधे॥ ४॥

हे इन्द्र त्वम् एव एवं पतिं पालकं द्रोणसाचं द्रोणकलशस्य सेवितारं सचेतसं समज्ञानम् ऊर्जः स्कम्भं बलस्य धारकं सोमं धरुणे धारके जठरे आ वृषायसे आसिञ्चसे। धारयसीत्यर्थः। किंच मह्यम् ओजः बलं कृष्व कुरुष्व। त्वे त्वयि अस्मान् अपि सं गृभाय संगृहाण च। किंच केनिपानां मेधाविनामस्माकम्। 'केनिप ऋत्विजः' इति मेधाविनामसु पाठात्। वृधे वर्धनाय यथा यथावत् सर्वथा[1] इनः स्वामी असः भवसि॥

गमन्नस्मे वसून्या हि शंसिषं स्वाशिषं भरमा याहि सोमिनः।
त्वमीशिषे सास्मिन्ना सत्सि बर्हिष्यनाधृष्या तव पात्राणि धर्मणा॥ ५॥

गमन्। अस्मे इति। वसूनि। आ। हि। शंसिषम्। सुऽआशिषम्। भरम्। आ। याहि। सोमिनः।
त्वम्। ईशिषे। सः। अस्मिन्। आ। सत्सि। बर्हिषि।
अनाधृष्या। तव। पात्राणि। धर्मणा॥ ५॥

हे इन्द्र वसूनि त्वद्देयानि धनानि अस्मे मयि[2] आ[3] गमन् आगच्छन्तु। हि यस्मात् त्वामहं शंसिषं स्तौमि। किंच सोमिनः सोमवतो मम स्वाशिषं शोभना आशिषो यस्मिंस्तं भरं यज्ञम् आ याहि त्वमागच्छ। किंच त्वम् ईशिषे धनस्येश्वरोऽसि। एवंविधः सः त्वम् अस्मिन् अस्मदीये वेद्यास्तृते बर्हिषि आ सत्सि आसीद। किंच तव सोमपात्राणि धर्मणा राक्षसानां कर्मणा अनाधृष्याणि धर्षयितुमशक्यानि[3]॥   ॥ २६ ॥

पृथक् प्रायन् प्रथमा देवहूतयोऽकृण्वत श्रवस्यानि दुष्टरा।
न ये शेकुर्यज्ञियां नावमारुहमीर्मैव ते न्यविशन्त केपयः॥ ६॥

पृथक्। प्र। आयन्। प्रथमाः। देवऽहूतयः। अकृण्वत। श्रवस्यानि। दुस्तरा।
न। ये। शेकुः। यज्ञियाम्। नावम्। आऽरुहम्। ईर्मा। एव। ते। नि। अविशन्त। केपयः॥ ६॥

हे इन्द्र तव प्रसादात् ते पृथक् प्र आयन् देवलोकान् पृथग्गच्छन्ति ये प्रथमाः पूर्वे मुख्या वा देवहूतयः देवानामाह्वातारः। कर्तरि क्तिन्। किंच दुष्टरा अन्यैर्दुस्तराणि श्रवस्यानि श्रवणीयानि यशांसि अकृण्वत[4] अकुर्वत। किंच ये त्वत्प्रसादरहिता जनाः यज्ञियां यज्ञसंबन्धिनीम्। यज्ञमयीमित्यर्थः। नावम् आरुहम् आरोढुं न शेकुः न शक्नुवन्ति ते केपयः कुत्सितपूयकर्माणः पापकर्माणो जनाः ईर्मा एव ऋणेनैव न्यविशन्त नीचैरविशन्त। अधोगतिं प्राप्ता इत्यर्थः। तथा च यास्कः—'पृथक् प्रायन् पृथक् प्रथतेः प्रथमा देवहूतयो ये देवानाह्वयन्ताकुर्वत श्रवणीयानि यशांसि दुरनुकराण्यन्यैर्येऽशक्नुवन्यज्ञियां नावमारोढुमथ ये नाशक्नुवन्यज्ञियां नावमारोढुमीर्मैव ते न्यविशन्त ऋणेनैव ते न्यविशन्तास्मिन्नेव लोक इति वा' (निरु. ५. २५) इति॥

---

१. स-'सर्वथा' नास्ति। २. B1.2.6.7–अस्मासु। ३. B1.2.6.7–असक्यानि भवति शेषः।
४. स–कृण्वत।

एवैवापागपरे सन्तु दूढ्योऽश्वा येषां दुर्युज आयुयुज्रे ।
इत्था ये प्रागुपरे सन्ति दावने पुरूणि यत्र वयुनानि भोजना ॥ ७ ॥

एव । एव । अपाक् । अपरे । सन्तु । दुःऽध्यः । अश्वाः । येषाम् । दुःऽयुजः । आऽयुयुज्रे ।
इत्था । ये । प्राक् । उपरे । सन्ति । दावने । पुरूणि । यत्र । वयुनानि । भोजना ॥ ७ ॥

एवैव एवमेव दूढ्यः दुर्बुद्धयः अपरे अन्ये । अयज्वान इत्यर्थः । अपाक् अपाचीना अधोगन्तारः सन्तु भवन्तु येषां यज्ञमकुर्वताम्[1] अश्वाः दुर्युजः दुर्योजाः प्रबलाः अश्वाः आयुयुज्रे रथेषु युज्यन्ते । ये सत्यपि सामर्थ्ये न यजन्ति ते नरकं गच्छन्तीति भावः । किंच इत्था इत्थं ते स्वर्गगामिनो भवन्ति[2] ये उपरे यजमानाः प्राक् मरणात्पूर्वमेव दावने देवानां हविर्दानाय सन्ति[3] भवन्ति[3] । यत्र येषु च यज्ञकारिषु वयुनानि प्रज्ञानानि कान्तानि वा भोजना भोग्यानि धनानि पुरूणि बहूनि देवेभ्यो दानाय सन्ति ॥

गिरीँरज्रान्रेजमानाँ अधारयद्द्यौः क्रन्ददन्तरिक्षाणि कोपयत् ।
समीचीने धिषणे वि ष्कभायति वृष्णः पीत्वा मद उक्थानि शंसति ॥८॥

गिरीन् । अज्रान् । रेजमानान् । अधारयत् । द्यौः । क्रन्दत् । अन्तरिक्षाणि । कोपयत् ।
समीचीने इति सम्ऽईचीने । धिषणे इति । वि । स्कभायति ।
वृष्णः । पीत्वा । मदे । उक्थानि । शंसति ॥ ८ ॥

गिरीन् मेघान् अज्रान् गमनशीलान् रेजमानान् कम्पमानान् अधारयत् इन्द्रो[4] धारितवान्[4] । निश्चलान्[5] कृतवानित्यर्थः । किंच द्यौः द्युलोकस्तन्निवासी वा जनोऽसुरराक्षसेभ्यो भीतः सन् क्रन्दत् क्रन्दति । इन्द्रमाह्वयत्यात्मनः परित्राणार्थम् । किंचेन्द्रः अन्तरिक्षाणि कोपयत् कोपयति । संक्षोभयतीत्यर्थः । किंचेन्द्रः समीचीने परस्परं संगते धिषणे द्यावापृथिव्यौ वि ष्कभायति अन्तरिक्षेण स्तभ्नाति । स्तम्भयतीत्यर्थः । किंचेन्द्रः वृष्णः स्वोदरस्यासेक्तॄन् सोमान् पीत्वा मदे सति उक्थानि प्रशस्यानि वचनानि शंसति प्रब्रवीति ॥

इमं बिभर्मि सुकृतं ते अङ्कुशं येनारुजासि मघवञ्छफारुजः ।
अस्मिन्त्सु ते सवने अस्त्वोक्यं सुत इष्टौ मघवन्बोध्याभगः ॥ ९ ॥

इमम् । बिभर्मि । सुऽकृतम् । ते । अङ्कुशम् । येन । आऽरुजासि । मघऽवन् । शफऽआरुजः ।
अस्मिन् । सु । ते । सवने । अस्तु । ओक्यम् । सुते । इष्टौ । मघऽवन् । बोधि । आऽभगः ॥९॥

हे मघवन् धनवन्निन्द्र ते तव सुकृतं संस्कृतम् इमम् अङ्कुशं बिभर्मि धारयामि । अत्राङ्कुशशब्देन प्रेरकत्वगुणयोगात् स्तुतिरुच्यते । स्तुतिं धारयामीत्यर्थः । येन स्तुतिलक्षणा-ङ्कुशेन[6] ,स्तुतः सन् त्वं शफारुजः आभिमुख्येन परबलानां हन्तॄनैरावतादीन् गजान् आरुजासि

१. त१.२.६.७-म१.२.४–यज्ञकुर्वतां; त४.५–यज्ञं कुर्वतां । २. त–'भवन्ति' नास्ति । ३. त-म६– संस्कर्ता । ४. त–'इन्द्रो धारितवान्' नास्ति । ५. त-म६–निश्चितान् । ६. ग-स३-म१.४.५.७– स्तुतिरूपेणाङ्कुशेन ।

आभिमुख्येन रक्षसि । पीडयसीत्यर्थः । किंच ते तव अस्मिन् अस्मदीये सवने ओक्यम् ओको निवासः अस्तु भवतु । किंच हे मघवन् धनवन्निन्द्र आगमः आभजनीयस्त्वं सुते सुतसोमे यज्ञे बोधि अस्मदीयाः स्तुतीर्बुध्यस्व ॥

गोभिष्टरेमामतिं दुरेवां यवेन क्षुधं पुरुहूत विश्वाम् ।
वयं राजभिः प्रथमा धनान्यस्माकेन वृजनेना जयेम ॥ १० ॥

गोभिः । तरेम । अमतिम् । दुःऽएवाम् । यवेन । क्षुधम् । पुरुऽहूत । विश्वाम् ।
वयम् । राजऽभिः । प्रथमाः । धनानि । अस्माकेन । वृजनेन । जयेम ॥ १० ॥

बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः ।
इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु ॥ ११ ॥

बृहस्पतिः । नः । परि । पातु । पश्चात् । उत । उत्ऽतरस्मात् । अधरात् । अघऽयोः ।
इन्द्रः । पुरस्तात् । उत । मध्यतः । नः । सखा । सखिऽभ्यः । वरिवः । कृणोतु ॥ ११ ॥

इदमृग्द्वयं व्याख्यातचरम् ॥ ॥ २७ ॥

'दिवस्परि' इति द्वादशर्चं तृतीयं सूक्तं भालन्दनस्य वत्सप्रेरार्षं त्रैष्टुभमाग्नेयम् । तथा चानुक्रान्तं —'दिवस्परि द्वादश वत्सप्रिराग्नेयं नु' इति । प्रातरनुवाकाश्विनशस्त्रयोरिदमादिके द्वे सूक्ते अस्य सूक्तस्यान्त्यां वर्जयित्वा । सूत्रितं च—'दिवस्परीति सूक्तयोः पूर्वस्योत्तमामुद्धरेत्' (आश्व. श्रौ. ४. १३) इति । क्षामवत्याम् 'अक्रन्ददग्निः' इत्येषा याज्या । सूत्रितं च—'अग्ने त्वमस्मद्युयोध्यमीवा अक्रन्ददग्निः स्तनयन्निव द्यौः' (आश्व. श्रौ. ३. १३) इति ॥

दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः ।
तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः ॥ १ ॥

दिवः । परि । प्रथमम् । जज्ञे । अग्निः । अस्मत् । द्वितीयम् । परि । जातऽवेदाः ।
तृतीयम् । अप्ऽसु । नृऽमनाः । अजस्रम् । इन्धानः । एनम् । जरते । सुऽआधीः ॥ १ ॥

अग्निः प्रथमं पूर्वं दिवः द्युलोकस्य परि उपरि आदित्यात्मना जज्ञे जातः । जातवेदाः जातप्रज्ञो जातधनो वाग्निः द्वितीयम् अस्मत् अस्माकं परि उपरि पार्थिवात्मना जज्ञे । नृमणाः नृषु मनुष्येष्वनुग्राहकतयासक्तचित्तोऽग्निः तृतीयमप्सु अन्तरिक्षे वैद्युतात्मना जज्ञे । एवंविधम् एनम् अग्निं स्वाधीः सुप्रज्ञाता[1] अजस्रम् अनवरतम् इन्धानः दीपयन् जरते स्तौति । यद्वा । वाजसनेयकोक्तप्रकारेणास्य मन्त्रस्यार्थो द्रष्टव्यः । तथा—'दिवस्परि प्रथमं जज्ञे अग्निरिति । प्राणो वै द्यौः प्राणाद्वा एष प्रथममजायतास्मद्द्वितीयं परि जातवेदा इति यदेनमदो द्वितीयं पुरुषविधोऽजनयत्तृतीयमप्स्विति यदेनमदस्तृतीयमद्भ्योऽजनयन्नृमणा अजस्रमिति प्रजापतिर्वै नृमणा अग्निरजस्रमिन्धान एनं जरते स्वाधीरिति यो[2] वा एनमिन्धे स एनं जनयते स्वाधीः' (श. ब्रा. ६. ७. ४. ३) इति[2] ॥

विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते धाम विभृता पुरुत्रा ।
विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत आजगन्थ ॥ २ ॥

१. त-भ६-मु-सुप्रज्ञो नेता; म१.२.४.७-सुप्रज्ञो नेता । २. त–'यो वा...इति' नास्ति ।

विद्म । ते । अग्ने । त्रेधा । त्रयाणि । विद्म । ते । धाम । विऽभृता । पुरुऽत्रा ।
विद्म । ते । नाम । परमम् । गुहा । यत् । विद्म । तम् । उत्सम् । यतः । आऽजगन्थ ॥२॥

हे अग्ने ते तव त्रेधा त्रिषु स्थानेषु पृथिव्यन्तरिक्षद्युलोकेषु स्थितानि त्रयाणि अग्निवाय्वादित्याख्यानि त्रीणि रूपाणि विद्म वयं जानीमः । किंच हे अग्ने ते तव धाम[1] धामानि स्थानानि विभृता विसृतानि पुरुत्रा बहुधा बहूनि वा गार्हपत्याहवनीयान्वाहार्यपचनादीनि विद्म । किंच ते तव गुहा गूढम् अवेदविद्भिरविज्ञातं[2] परमम् उत्कृष्टं वेदे प्रसिद्धं यत् नाम अस्ति तत् विद्म वेदविदो वयं विजानीमः । किंच त्वं यतः यस्मात् आजगन्थ आगतवानसि । उत्पन्नवानित्यर्थः । तम् उत्सम् उत्स्यन्दयितारमुत्पादयितारं कारणात्मानं विद्म जानीमः ॥

समुद्रे त्वा नृमणा अप्स्व१न्तर्नृचक्षा ईधे दिवो अग्न ऊधन् ।
तृतीये त्वा रजसि तस्थिवांसमपामुपस्थे महिषा अवर्धन् ॥ ३ ॥

समुद्रे । त्वा । नृऽमनाः । अप्ऽसु । अन्तः । नृऽचक्षाः । ईधे । दिवः । अग्ने । ऊधन् ।
तृतीये । त्वा । रजसि । तस्थिऽवांसम् । अपाम् । उपऽस्थे । महिषाः । अवर्धन् ॥ ३ ॥

हे अग्ने समुद्रे महोदधौ जायमानम् अप्स्वन्तः अपां मध्ये वडवात्मना स्थितं त्वा त्वां नृमणाः नृषु मनुष्येष्वनुग्राहकतयासक्तचित्तो वरुणः ईधे संदीपितवान् । किंच नृचक्षाः नृणां प्रत्यक्षेण द्रष्टादित्यः दिवः द्युलोकस्य संबन्धिनि ऊधन् ऊधसि ऊधःस्थानीय आदित्यमण्डले पक्षे वा ईधे संदीपितवान् । किंच तृतीये अधमानां पूरके अपां वृष्ट्युदकानाम् उपस्थे स्थाने रजसि अन्तरिक्षलोके तस्थिवांसं विद्युद्रूपेणावस्थितं त्वा त्वां महिषाः महान्तो माध्यमिका देवगणा मरुदादयः स्तोतारः अवर्धन् स्तुतिभिरवर्धयन् । यद्वा । वाजसनेयकोक्तप्रकारेणार्थो द्रष्टव्यः । तद्यथा—'[1] समुद्रे त्वा नृमणा अप्स्वन्तरिति । प्रजापतिर्वै नृमणा अप्सु त्वा[2] प्रजापतिरित्येतन्नृचक्षा ईधे दिवो अग्न ऊधन्निति प्रजापतिर्वै नृचक्षा आपो[4] दिव[5] ऊधस्तृतीये त्वा रजसि तस्थिवांसमिति द्यौर्वै तृतीयं रजोऽपामुपस्थे[1] महिषा अवर्धन्निति प्राणा वै महिषा दिवि त्वा प्राणा अवर्धन्नित्येतत्' ( श. ब्रा. ६. ७. ४. ५ ) इति ॥

अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥ ४ ॥

अक्रन्दत् । अग्निः । स्तनयन्ऽइव । द्यौः । क्षाम । रेरिहत् । वीरुधः । सम्ऽअञ्जन् ।
सद्यः । जज्ञानः । वि । हि । ईम् । इद्धः । अख्यत् ।
आ । रोदसी इति । भानुना । भाति । अन्तरिति ॥ ४ ॥

दावरूपोऽग्निः स्तूयते[6] । अग्निः दावाग्निः स्तनयन्निव द्यौः यथा दीप्तो विद्युद्रूपः पर्जन्यो महान्तं शब्दं करोति तद्वत् अक्रन्दत् महान्तं शब्दं करोति । किं कुर्वन्नित्यत आह । क्षाम क्षामां

१. ता१-अ-सप । २. त-भ-मु—अवेदविद्भिः* । ३. त-भ-मु—तदा । ४. त-भ-मु—आप इव ।
५. ता१.३.७-भ२—रजो द्यामुपस्थे । ६. ग-ता३-भ५.६—अत्र स्तूयते ।

पृथिवीं रेरिहत् आस्वादयन् वीरुधः ओषधीश्च समञ्जन् व्यञ्जयन् । संतापयन्नित्यर्थः । किंच सद्यः तत्क्षणे[1] समाने काले जज्ञानः जायमानः इद्धः दीप्तः ईम् इदं स्वेन प्रकाशेन सर्वं वस्तुजातं वि अख्यत् विविधं पश्यति । हि इति पादपूरणः । किंच रोदसी द्यावापृथिव्यौ अन्तः अन्तरेण भानुना स्वदीप्त्या भाति प्रकाशते । यद्वा । वाजसनेयकोक्तार्थो द्रष्टव्यः । तथथा—' अक्रन्ददग्निः स्तनयन्निव द्यौरिति । क्रन्दतीव हि पर्जन्यः स्तनयन्[2] क्षामा[2] रेरिहद्वीरुधः समञ्जन्निति क्षामा वै रेरिह्यमाणो वीरुधः समनक्ति[3] सद्यो जज्ञानो वि हीमिद्धो अख्यदिति सद्यो वा[4] एष जज्ञान इदं सर्वं विख्यापयत्या[5] रोदसी भानुना भात्यन्तरितीमे वै द्यावापृथिवी रोदसी ते एष भानुना भात्यन्तः ' ( श. ब्रा. ६. ७. ३. २ ) इति वैद्युतस्य स्तुतिः[6] । यद्वा । इयं[6] दावाग्नेः स्तुतिरिति ॥

श्रीणामु॑दा॒रो ध॒रुणो॑ र॒यी॒णां म॑नी॒षाणां॒ प्रार्प॑णः॒ सोम॑गोपाः ।
वसुः॑ सू॒नुः सह॑सो अ॒प्सु राजा॒ वि भा॒त्यग्र॑ उ॒षसा॑मिधा॒नः ॥ ५ ॥

श्रीणाम् । उ॒त्ऽआ॒रः । ध॒रुणः॑ । र॒यी॒णाम् । म॒नी॒षाणा॑म् । प्र॒ऽअर्प॑णः । सोम॑ऽगोपाः ।
वसुः॑ । सू॒नुः । सह॑सः । अ॒प्ऽसु । राजा॑ । वि । भा॒ति॒ । अग्रे॑ । उ॒षसा॑म् । इ॒धा॒नः ॥ ५ ॥

श्रीणां विभूतीनाम् उदारः उद्गमयिता दाता रयीणां धनानां धरुणः धारकः मनीषाणाम् ईप्सितार्थानां प्रार्पणः प्रापयिता सोमगोपाः सोमस्य गोपा वसुः सर्वस्य लोकस्य वासकः सहसः बलस्य सूनुः अप्सु उदकेषु स्थितः राजा सर्वस्येश्वरः[7] उषसाम् अग्रे प्रभातकाले इधानः अग्निहोत्रार्थं समिध्यमानोऽग्निः वि भाति प्रकाशते ॥

विश्व॑स्य के॒तुर्भुव॑नस्य॒ गर्भ॒ आ रोद॑सी अपृणा॒ज्जाय॑मानः ।
वी॒ळुं चि॒दद्रि॑मभिनत्परा॒यञ्जना॒ यद॒ग्निमय॑जन्त॒ पञ्च॑ ॥ ६ ॥

विश्व॑स्य । के॒तुः । भुव॑नस्य । गर्भः॑ । आ । रोद॑सी॒ इति॑ । अ॒पृ॒णा॒त् । जाय॑मानः ।
वी॒ळुम् । चि॒त् । अद्रि॑म् । अ॒भि॒न॒त् । प॒रा॒ऽयन् । जनाः॑ । यत् । अ॒ग्निम् । अय॑जन्त । पञ्च॑ ॥ ६ ॥

विश्वस्य सर्वस्य केतुः प्रज्ञापकः भुवनस्य उदकस्य गर्भः गर्भभूतोऽग्निः जायमानः प्रादुर्भवन्नेव रोदसी द्यावापृथिव्यौ आ अपृणात् आपूरयति । परायन् परागच्छन् वीळुं चित् दृढमपि अद्रिं मेघम् अभिनत् भिनत्ति च । कदेत्यत्राह । यत् यदा पञ्च जनाः मनुष्याः अग्निम् अयजन्त अयजन्त ॥          ॥ २८ ॥

उ॒शिक्पा॑व॒को अ॑र॒तिः सु॑मे॒धा मर्ते॑ष्व॒ग्निर॒मृतो॒ नि धा॑यि ।
इय॑र्ति धू॒मम॑रु॒षं भरि॑भ्र॒दुच्छु॒क्रेण॑ शो॒चिषा॒ द्यामिन॑क्षन् ॥ ७ ॥

उ॒शिक् । पा॒व॒कः । अ॒र॒तिः । सु॒ऽमे॒धाः । मर्ते॑षु । अ॒ग्निः । अ॒मृतः॑ । नि । धा॒यि॒ ।
इय॑र्ति । धू॒मम् । अ॒रु॒षम् । भरि॑भ्रत् । उत् । शु॒क्रेण॑ । शो॒चिषा॑ । द्याम् । इन॑क्षन् ॥ ७ ॥

१. ग-स-भ१.२.४.५.६–ईक्षणेन; भ७–तत्क्षणेन । २. त-भ-मु–स्तनयन्निव द्यौः क्षामा । ३. ग–शब्दंतत्कथा; त-भ–शम्यं व्यनक्ति; मु–सम्यग्व्यनक्ति । ४. त–इषा; भ–इवा । ५. त-भ–विज्ञापयत्या । ६. त-भ२.६–स्तुतिभिर्येद्वेयं; भ१.४.७–स्तुतिमिरिति यद्वा यद्वयं । ७. त–सर्वस्येश्वरस्य ।

उशिक् हवींषि कामयमानः पावकः सर्वस्य लोकस्य शोधकः अरतिः गन्ता भूतानामीरयिता[1] वा सुमेधाः सुमनाः अमृतः मरणधर्मरहितः अग्निः मर्तेषु मनुष्येषु नि धायि निहितः । सोऽयमग्निः धूमम् इयर्ति प्रेरयति । किंच अरुषम् आरोचमानं रूपं भरिभ्रत् धारयन् शुक्रेण शुक्लेन शोचिषा रोचिषा द्याम् दिवम् इनक्षन् व्याप्नुवन् गच्छतीति शेषः ॥

दृशानो रुक्म उर्विया व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः ।
अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौर्जनयत्सुरेताः ॥ ८ ॥

दृशानः । रुक्मः । उर्विया । वि । अद्यौत् । दुःऽमर्षम् । आयुः । श्रिये । रुचानः ।
अग्निः । अमृतः । अभवत् । वयःऽभिः । यत् । एनम् । द्यौः । जनयत् । सुऽरेताः ॥८॥

दृशानः प्रत्यक्षेण दृश्यमानः रुक्मः रोचमानोऽग्निः उर्विया उरु अत्यन्तं व्यद्यौत् विद्योतते । किंच आयुः गन्ता स सर्वतोऽयमग्निः श्रिये विभूत्यै दुर्मर्षं दुरभिभवं यथा भवति तथा रुचानः रोचमानो भवति । सोऽयम् अग्निः वयोभिः अन्नैर्वनस्पतिभिः अमृतः मरणरहितः अभवत् । यत् यस्मात् कारणात् एनम् अग्निं सुरेताः शोभनरेतस्कः द्यौः प्राण आदित्यो वा जनयत् जनयति ॥

यस्ते अद्य कृणवद्भद्रशोचेऽपूपं देव घृतवन्तमग्ने ।
प्र तं नय प्रतरं वस्यो अच्छाभि सुम्नं देवभक्तं यविष्ठ ॥ ९ ॥

यः । ते । अद्य । कृणवत् । भद्रऽशोचे । अपूपम् । देव । घृतऽवन्तम् । अग्ने ।
प्र । तम् । नय । प्रऽतरम् । वस्यः । अच्छ । अभि । सुम्नम् । देवऽभक्तम् । यविष्ठ ॥ ९ ॥

हे भद्रशोचे कल्याणदीप्ते हे देव द्योतमान यविष्ठ युवतम अग्ने ते तुभ्यं यः यजमानः अद्य अस्मिन्नहनि घृतवन्तं घृतेन युक्तम् अपूपं पुरोडाशं कृणवत् करोति प्रतरं प्रकृष्टतरं यजमानं वस्यः वसीयः अच्छ प्रति प्र नय अत्यर्थं प्रापय । तथा देवभक्तं स्तुतिभिर्हविर्भिश्च देवानां संभक्तारं सेवितारं तं यजमानं सुम्नं सुखम् अभि प्रति प्र नय ॥

आ तं भज सौश्रवसेष्वग्न उक्थउक्थ आ भज शस्यमाने ।
प्रियः सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनददुज्जनित्वैः ॥ १० ॥

आ । तम् । भज । सौश्रवसेषु । अग्ने । उक्थेऽउक्थे । आ । भज । शस्यमाने ।
प्रियः । सूर्ये । प्रियः । अग्ना । भवाति । उत् । जातेन । भिनदत् । उत् । जनिऽत्वैः ॥१०॥

हे अग्ने त्वं सौश्रवसेषु । शोभनानि श्रवांसि अन्नानि हवींषि येषु कर्मसु तानि सौश्रवसानि । तेषु क्रियमाणेषु तं यजमानं स्तोतारं वा आ भज अभीष्टफलप्रदानेन[2] सेवस्व । किंच उक्थे[3] शस्त्रे[3] शस्यमाने पठ्यमाने सति तम् आ भज अभीष्टफलप्रदानेनैव सेवस्व । सोऽयं यजमानः स्तोता

१. ग-भूतानामीरयिता; त१.२.६-म१.४.७—भूतानां मारयिता । २. त-म१.२.४—अभीष्टप्रदानेन । ३. ग-त३—उक्थे उक्थे शस्त्रे शस्त्रे; त१.२.६-म६—उक्थे उक्थे शस्त्रे; म२—उक्थे शस्त्रे शस्त्रे ।

या सूर्ये प्रियो भवाति भवतु। तथा अश्मा अश्मावपि प्रियो भवाति[1]। किंच सोऽयं जातेन उत्पन्नेन पुत्रेण वत् अभिभवन् शत्रून् विदारयतु। तथा जनित्वैः जनिष्यमाणैश्च पुत्रैः शत्रून् उत् भिनत्तु॥

त्वाम॑ग्ने॒ यज॑माना॒ अनु॒ द्यून्विश्वा॒ वसु॑ दधिरे॒ वार्या॑णि।
त्वया॑ स॒ह द्रवि॑णमि॒च्छमा॑ना व्र॒जं गोम॑न्तमु॒शिजो॒ वि व॑व्रुः॥ ११॥

त्वाम्। अ॒ग्ने॒। यज॑मानाः। अनु॑। द्यून्। विश्वा॑। वसु॑। द॒धि॒रे॒। वार्या॑णि।
त्वया॑। स॒ह। द्रवि॑णम्। इ॒च्छमा॑नाः। व्र॒जम्। गोऽम॑न्तम्। उ॒शिजः॑। वि। व॒व्रुः॥ ११॥

हे अग्ने त्वां प्रति यजमानाः अनु द्यून् प्रत्यहं विश्वा विश्वानि वार्याणि वरणीयानि वसु वसूनि धनानि दधिरे धारयन्ति। किंच त्वया सह द्रविणम् असुरैरपहृतं गोरूपं धनम् इच्छमानाः कामयमानाः उशिजः मेधाविनो देवाः गोमन्तं पशुमन्तं व्रजं वि वव्रुः विवृत-द्वारं कृतवन्तः॥

अस्ता॑व्य॒ग्निर्न॒रां सु॒शेवो॑ वैश्वान॒र ऋषि॑भिः॒ सोम॑गोपाः।
अ॒द्वे॒षे द्यावा॑पृथि॒वी हु॑वेम॒ देवा॑ ध॒त्त र॒यिम॒स्मे सु॒वीर॑म्॥ १२॥

अस्ता॑वि। अ॒ग्निः। न॒राम्। सु॒ऽशेवः॑। वै॒श्वा॒न॒रः। ऋषि॑ऽभिः। सोम॑ऽगोपाः।
अ॒द्वे॒षे इति॑। द्यावा॑पृथि॒वी इति॑। हु॒वे॒म॒। देवाः॑। ध॒त्त। र॒यिम्। अ॒स्मे इति॑। सु॒ऽवीर॑म्॥ १२॥

अद्वेषे द्यावापृथिवी द्यावापृथिव्यौ हुवेम वयं ह्वयेम। किंच हे देवाः यूयं सुवीरं शोभनपुत्राद्युपेतं रयिं धनम् अस्मे अस्मासु धत्त धारयत[2]॥　　　॥ २९॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये सप्तमाष्टकेऽष्टमोऽध्यायः समाप्तः॥

१. तर.३.४.६-भ१ २.८.७—भवति। २. ग. अग्निरस्तावि स्तुतः ऋषिभिरस्माभिः। कीदृशः। नरां मनुष्याणां सुशेवः सुसुखः वैश्वानरः विश्वनरहितः सोमगोपाः सोमेनारक्ष्यमाणः। अद्वेषे द्वेषरहिते द्यावा-पृथिवी हुवेमाह्वयामः। देवा यूयं सुवीरं शोभनपुत्रयुतं रयिं धनमस्मासु धत्त धारयत इत्येतदर्थः; त७—ऋषिभिर्मन्त्रैः अग्निर्दानादिगुणयुक्तो देवः अस्तावि स्तुतः। कीदृशोऽग्निः। नरां नृणां सुशेवः सुतरां सुखरूपः। शेवमिति सुखनाम शेवं शिवमिति तन्नामसु पाठात्। पुनः कीदृशः। वैश्वानरः विश्वेषु सर्वेषु नरेषु वर्तमानः। अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रित इति स्मृतः। पुनः के भूतः। सोमगोपाः सोमस्य रक्षकः। अतः अद्वेषे द्वेषरहिते द्यावापृथिवी अन्याधारभूते द्यावापृथिव्यौ हुवेम आह्वयेम। तयोरन्याधारभूतत्वं तु द्यावापृथिवीभ्यामेतं जातं देवा इत्यस्मिन् ब्राह्मणवाक्ये स्फुटमुक्तं। हे देवा अग्निप्रमुखा यूयं सर्वे सुवीरं शोभनपुत्राद्युपेतं रयिं धनं अस्मे अस्मासु स्तोतृषु धत्तं धारयतं; मु—नरां कर्मनेतॄणां पुंसां सुशेवः सुखसेव्यो वैश्वानरोऽग्निः ऋषिभिः मन्त्रैः अस्तावि स्तुतः। कीदृशः। सोमगोपाः सोमस्य गोप्ता रक्षिता अद्वेषे द्यावापृथिवी द्यावापृथिव्यौ हुवेम वयं ह्वयेम। किंच हे देवाः यूयं सुवीरं शोभनपुत्राद्युपेतं रयिं धनमस्मे अस्मासु धत्त धारयत।

ॐ

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
सप्तमेऽष्टममध्यायं व्याख्यायाचार्यवंशजः ।
अष्टमे सायणाचार्य आदिमं व्याकरोत्यथ ॥

'अच्छा म' इति चतुर्थेऽनुवाकेऽष्टादश सूक्तानि । तत्र 'प्र होता' इति दशर्चं चतुर्थं सूक्तम् । 'प्र होता दश' इत्यनुक्रान्तम् । अनुवर्तनाद्भालन्दनस्य वत्सप्रेरार्षम् । अनादेशपरिभाषया त्रैष्टुभमाग्नेयम्[1] । पूर्वसूक्तेन सहोक्तो विनियोगः ॥

**प्र होता॑ जा॒तो म॒हान्न॑भो॒विन्नृ॒षद्वा॑ सीददु॒पामु॒पस्थे॑ ।**
**दधि॒र्यो धायि॒ स ते॒ वयां॑सि य॒न्ता वसू॑नि विध॒ते त॑नू॒पाः ॥ १ ॥**

प्र । होता॑ । जा॒तः । म॒हान् । न॒भः॒ऽवित् । नृ॒ऽसद्वा॑ । सीद॑त् । अ॒पाम् । उ॒पऽस्थे॑ ।
दधिः॑ । यः । धायि॑ । सः । ते॒ । वयां॑सि । य॒न्ता । वसू॑नि । वि॒ध॒ते । त॒नू॒ऽपाः ॥ १ ॥

यः नृषद्वा अग्निः अपाम् । अन्तरिक्षनामैतत् । अन्तरिक्षस्य उपस्थे उत्सङ्गे वैद्युतरूपेण निषण्णोऽभूत् स इदानीं होता यजमानानां होमनिष्पादकः जातः प्रादुर्भूतः महान् गुणैः पूज्यः नभोवित् अन्तरिक्षस्य वेत्ता । यतस्तत्रोत्पन्नः अतस्तस्य ज्ञाता । नृषद्वा नृषु सीदन् । सदेः क्वनिप् कृत्स्वरः । प्र सीदत् वेद्यां प्रसीदति । 'अपामुपस्थे महिषा अगृभ्णत' (ऋ. सं. ६. ८. ४) इति हि निगमः । यद्वा । अपाम् । अपसामित्यर्थः । कर्मणामुपस्थ उपस्थाने समीपे वेद्यामुक्तलक्षणः सन् । अथवा । अपामुदकानामुपस्थे मध्ये योऽग्निर्हविर्वोढुमसहमानो निगूढः स देवैः पुनः प्रार्थितः उक्तविधः सन् वेद्यां प्रसीदति । यः अग्निः दधिः धाता यज्ञस्य धारकः सन् धायि वेद्यां निहितोऽभूत् सः अग्निः हे यजमान विधते परिचरते ते तुभ्यं वयांसि अन्नानि वसूनि धनानि च यन्ता नियमिता भवतु । किंच तनूपाः ते तन्वः पाता च भवत्विति शेषः ॥

**इ॒मं वि॒धन्तो॑ अ॒पां स॒धस्थे॑ प॒शुं न न॒ष्टं प॒दैरनु॑ ग्मन् ।**
**गुहा॒ चत॑न्तमु॒शिजो॒ नमो॑भिरि॒च्छन्तो॒ धीरा॒ भृग॑वोऽविन्दन् ॥ २ ॥**

इ॒मम् । वि॒धन्तः॑ । अ॒पाम् । स॒धऽस्थे॑ । प॒शुम् । न । न॒ष्टम् । प॒दैः । अनु॑ । ग्म॒न् ।
गुहा॑ । चत॑न्तम् । उ॒शिजः॑ । नमः॑ऽभिः । इ॒च्छन्तः॑ । धीराः॑ । भृग॑वः । अ॒वि॒न्द॒न् ॥ २ ॥

इमम् अग्निम् अपाम् उदकानां सधस्थे[2] सहस्थाने मध्ये निगूढं विधन्तः[2] परिचरन्त उपचारं वदन्तो वा ऋषयश्च पदैः पलायमानगोपदाङ्कैः नष्टं चोरादिभिरपहृतं पशुम् इव अनु ग्मन् अनुजग्मुः । गमेर्लुङि 'मन्त्रे घस॰' इति च्लेर्लुक् । तेषु मध्ये गुहा गुहायां चतन्तम् ।

---

१. ग४-त४.६.८-म१.२.४.५.६—°माग्नेयं त्रिष्टुप्त्वादाग्नेयं । २. त१.२.३.७-मु—मध्ये निगूढे विधंतः; म—मध्ये निधंतः ।

पततिर्गतिकर्मा। अप्सु विलीनमित्यर्थः। उशिजः कामयमानाः नमोभिः नमस्कारैः स्तोत्रैर्वा इच्छन्तः आत्मन इच्छन्तः धीराः धीमन्तः भृगवः अविन्दन् लब्धवन्तः। अग्नेर्हविर्वोढुमसहमानस्य पलाय्यस्य प्रवेशो देवानामन्वेषणं च ' अग्नेस्त्रयो ज्यायांसः ' ( तै. सं. २. ६. ६ ) इत्यत्र स्पष्टमाम्नातम्। अन्वेषणं कुर्वतां मध्ये भृगूणामग्निलाभः ' इमं विधन्तो अपां सधस्थे द्वितादधुर्भृगवः ' ( ऋ. सं. २. ४. २ ) इत्यत्रोक्तम् ॥

इमं त्रितो भूर्यविन्ददिच्छन्वैभूवसो मूर्धन्यघ्न्यायाः।
स शेवृधो जात आ हर्म्येषु नाभिर्युवा भवति रोचनस्य ॥ ३ ॥

इमम्। त्रितः। भूरि। अविन्दत्। इच्छन्। वैभुऽवसः। मूर्धनि। अघ्न्यायाः।
सः। शेऽवृधः। जातः। आ। हर्म्येषु। नाभिः। युवा। भवति। रोचनस्य ॥ ३ ॥

इमं भूरि महान्तमग्निं वैभूवसः विभूवसोः[1] पुत्रः त्रितः ऋषिः इच्छन् लब्धुमिच्छन् अघ्न्यायाः। अघ्न्याः[2] भूमिः। तस्याः[3] भूम्याः[3] मूर्धनि[4]। भूम्यामित्यर्थः। तत्र अविन्दत् लब्धवान्[4]। सः अग्निः शेवृधः सुखस्य[5] वर्धयिता सन्[6] हर्म्येषु यजमानगृहेषु आ सर्वतः जातः प्रादुर्भूतः सन्[6] रोचनस्य[7] रोचमानस्य स्वर्गाख्यस्य फलस्योपलक्षणस्य यज्ञस्य आदित्यस्य[8] वा नाभिः बन्धकः भवति ॥

मन्द्रं होतारमुशिजो नमोभिः प्राञ्चं यज्ञं नेतारमध्वराणाम्।
विशामकृण्वन्नरतिं पावकं हव्यवाहं दधतो मानुषेषु ॥ ४ ॥

मन्द्रम्। होतारम्। उशिजः। नमःऽभिः। प्राञ्चम्। यज्ञम्। नेतारम्। अध्वराणाम्।
विशाम्। अकृण्वन्। अरतिम्। पावकम्। हव्यऽवाहम्। दधतः। मानुषेषु ॥ ४ ॥

उशिजः कामयमाना ऋत्विजः मन्द्रं मादनीयं होतारं होमनिष्पादकं प्राञ्चं गार्हपत्यादाहवनीयं प्रति प्रागञ्चन्तं[9] यज्ञं यजनीयम् अध्वराणां यागानां नेतारं प्रापयितारम् अरतिं गन्तारं सर्वदा यागगृहे वर्तमानं पावकं शोधकं हव्यवाहं हविषो वोढारं मानुषेषु मनुष्येषु मध्ये दधतः दधाना ऋत्विजः विशां यजमानानामर्थाय। यद्वा। विशां प्रजानामरतिमधिपम्। स्वामिनमित्यर्थः। नमोभिः नमस्कारैः। स्तुतिभिरित्यर्थः। अकृण्वन् अकुर्वन्। सुप्रीतं कृतवन्तः ॥

प्र भूर्जयन्तं महां विपोधां मूरा अमूरं पुरां दर्माणम्।
नयन्तो गर्भं वनां धियं धुर्हिरिश्मश्रुं नार्वाणं धनर्चम् ॥ ५ ॥

प्र। भूः। जयन्तम्। महाम्। विपःऽधाम्। मूराः। अमूरम्। पुराम्। दर्माणम्।
नयन्तः। गर्भम्। वनाम्। धियम्। धुः। हिरिऽश्मश्रुम्। न। अर्वाणम्। धनऽअर्चम् ॥ ५ ॥

हे स्तोतः[10] त्वं जयन्तं जेतव्यान्शत्रूञ्जयन्तं महां महान्तं विपोधां मेधाविनो धर्तारमग्निं प्र भूः प्रभव समर्थो भव। स्तोतुमिति शेषः। उद्गीथस्तु भूर्जयन्तमित्येकपदं मत्वा भूरादींल्लोका-

---

१. त-मु-विभुवस्य। २. ग-म२.८-अगन्त्याः; त१.२.३-अंत्या; त७ मु-अहंतव्याया। ३. म१.४.७-नामूर्धनि। ४. म१.६.७-प्राप ततः। ५. म१.४.७-सुखरूपः। ६. त-म-स च। ७. ग-त४-युवा तेजसा मिश्रयिता अग्निः रोचनस्य। ८. म-आदित्यस्य यज्ञस्य। ९. ग-कामंतो। १०. म-होतः।

अयमस्मिन्निति व्याचकार । न केवलं त्वमेक एव अपि तु मूराः मूढाः सर्वेऽपि[1] पुरुषाः अमूरम् अमूढं पुरो दर्माणं दारकम् । औणादिको मनिः । प्रत्ययस्वरः । गर्भम् अरण्योर्गर्भभूतं वग्नुं कमनीयम् । 'वा छन्दसि' ( पा. सू. ६. १. १०६, १०७ ) इति वचनादमि पूर्वाभावः । हरिश्मश्रुं श्यावांणम् । नैस्तुपमार्थीयः । श्मश्रुशब्दोऽत्र रोमसामान्यवचनः । हरिभिरोमोपेतमर्वाणमरणशीलमश्वमिव । उज्वलक्षणाद्यवन्दुरितकेशस्थानीयज्वालोपेतं अमर्वं प्रीत्यभस्तुतिम् । शकन्ध्वादित्वात् पररूपस्वरः । ईदृशमग्निं अयन्तः हविर्भिः प्रापयन्तः[2] धियं कर्म स्तोत्रं वा पुः प्रापयन्ति । 'गातिस्था॰' इति सिचो लुक् ॥ ॥ १ ॥

नि प॒स्त्या॑सु त्रि॒तः स्त॑भू॒यन्परि॑वीतो॒ योनौ॑ सीद॒दन्तः॑ ।
अतः॑ सं॒गृभ्या॑ वि॒शां दमू॑ना॒ विध॑र्मणाय॒न्त्रैरी॑यते॒ नॄन् ॥ ६ ॥

नि । प॒स्त्या॑सु । त्रि॒तः । स्त॒भु॒ऽयन् । परि॑ऽवीतः । योनौ॑ । सी॒द॒त् । अ॒न्तरिति॑ ।
अतः॑ । स॒म्ऽगृभ्य॑ । वि॒शाम् । दमू॑नाः । विऽध॑र्मणा । अ॒य॒न्त्रैः । ई॒य॒ते॒ । नॄन् ॥ ६ ॥

त्रितः त्रिषु स्थानेषु गार्हपत्यादिषु वर्तमानः स्तभूयन् यजमानगृहान् स्तम्भयितुमिच्छन् । इच्छार्थे क्यचि तदन्ताच्छतरि रूपम् । परिवीतः परितो ज्वालाभिर्व्याप्तः सन् पस्त्यासु यागगृहेषु योनौ अन्तः स्वीये वेद्यात्मके स्थाने नि षीदत् निषीदति । अतः अस्मात्स्थानात् विशां प्रजानां संबन्धीनि हवींषि संगृभ्य[3] संगृह्य इन्द्रादीनुद्दिश्य प्रत्तानि[4] चरुपुरोडाशादीनि स्वीकृत्य दमूनाः देवेभ्यो दानमनाः यजमानेभ्यो वाभिमतप्रदानमनाः[5] विधर्मणा तासां विविधेन कर्मणा[6] निमित्तेन दानमना देवेभ्यो दानपक्षे विविधगमनरूपेण कर्मणा अयन्त्रैः शत्रूणां नियमनैः सह नॄन्[7] देवान् ईयते गच्छति ॥

अ॒स्याजरा॑सो द॒माम॒रित्रा॑ अ॒र्चद्धू॑मासो अ॒ग्नयः॑ पाव॒काः ।
श्वि॒ती॒चयः॑ श्वा॒त्रासो॑ भुर॒ण्यवो॑ वन॒र्षदो॑ वा॒यवो॒ न सोमाः॑ ॥ ७ ॥

अ॒स्य । अ॒जरा॑सः । द॒माम् । अ॒रित्राः॑ । अ॒र्चत्ऽधू॑मासः । अ॒ग्नयः॑ । पा॒व॒काः ।
श्वि॒ती॒चयः॑ । श्वा॒त्रासः॑ । भु॒र॒ण्यवः॑ । व॒न॒ऽसदः॑ । वा॒यवः॑ । न । सोमाः॑ ॥ ७ ॥

अत्र बहुत्वेन स्तूयते । अस्य[8] यजमानस्य संबन्धिनः अजरासः जरारहिताः दमां दमनीयानां रक्षःप्रभृतीनाम् । दमेः क्विपि 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । तेषाम् अरित्राः तारकाः अर्चद्धूमासः अर्चनः अर्चनीया धूमाः धूमोपलक्षिता ज्वाला वा येषां ते तथोक्ताः पावकाः शोधकाः श्वितीचयः श्वेतिमानमञ्चन्तः । श्वितिः श्वेतम् । औणादिक इः । श्वात्रासः । क्षिप्रनामैतत् । क्षिप्रकर्माणः भुरण्यवः भरणशीलाः वनर्षदः वनेषु सीदन्तः । संहितायां छान्दसं रूपम् । वायवो न सोमाः गन्तारः सोमा इव । हविर्दानुर्यजमानस्य क्षीप्रा भवन्तीति ॥

1. ग-भ—पूर्वेपि । 2. भ१.४.७—पुष्टिं प्रापयंतः । 3. ग-भ—'संगृभ्य' नास्ति । 4. भ२. ५.६.८—प्रत्ता प्रत्तानि । 5. स६—वाभिमतफल' । 6. भ२—कर्मणा अकारोऽभिवाचकः तेनायमर्थः आवां शत्रूणां यंत्राः नियमनानि तैः सह शत्रुनिग्रहं कुर्वन् इत्यर्थः । 7. ग-भ१.६.८-मु—नृन नेतॄन् ; त—नेतॄन् ; भ१—नृणां नेतॄन् । 8. भ—यस्य ।

प्र जि॒ह्वया॑ भरते॒ वेपो॑ अ॒ग्निः प्र व॒युना॑नि॒ चेत॑सा पृथि॒व्याः ।
तमा॒यवः॑ शु॒चय॑न्तं पाव॒कं म॒न्द्रं होता॑रं दधिरे॒ यजि॑ष्ठम् ॥ ८ ॥

प्र । जि॒ह्वया॑ । भ॒र॒ते॒ । वेपः॑ । अ॒ग्निः । प्र । व॒युना॑नि । चेत॑सा । पृ॒थि॒व्याः ।
तम् । आ॒यवः॑ । शु॒चय॑न्तम् । पा॒व॒कम् । म॒न्द्रम् । होता॑रम् । द॒धि॒रे॒ । यजि॑ष्ठम् ॥ ८ ॥

यः अग्निः जिह्वया ज्वालया वेपः । कर्मनामैतत् । कर्म प्र भरते तथा योऽग्निः वयुनानि प्रज्ञानानि स्तोत्राणि पृथिव्याः रक्षणाय चेतसा अनुग्रहयुक्तेन मनसा प्र भरते तम् अग्निम् आयवः गन्तारो मनुष्याः शुचयन्तं दीप्यमानं पावकं शोधकं मन्द्रं स्तुत्यं[1] होतारम् आह्वातारं होमनिष्पादकं वा यजिष्ठम् अतिशयेन यष्टव्यं[1] यष्टृतमं वा[1] दधिरे धारयन्ति ॥

द्यावा॒ यम॒ग्निं पृ॑थि॒वी जनि॑ष्टा॒मापु॒स्त्वष्टा॒ भृग॑वो॒ यं सहो॑भिः ।
ई॒ळेन्यं॑ प्रथ॒मं मा॑त॒रिश्वा॑ दे॒वास्त॑तक्षु॒र्मन॑वे॒ यज॑त्रम् ॥ ९ ॥

द्यावा॑ । यम् । अ॒ग्निम् । पृ॒थि॒वी इति॑ । जनि॑ष्टाम् । आपः॑ । त्वष्टा॑ । भृग॑वः । यम् । सहः॑ऽभिः ।
ई॒ळेन्य॑म् । प्र॒थ॒मम् । मा॒त॒रिश्वा॑ । दे॒वाः । त॒त॒क्षुः॒ । मन॑वे । यज॑त्रम् ॥ ९ ॥

यमग्निं द्यावापृथिवी द्यावापृथिव्यौ अजनिष्टाम् अजनयताम् । जनेर्लुङि व्यत्ययेन परस्मैपदम् । आपः च यम् उदपादयन् वैद्युतरूपेण त्वष्टा च यमजनयत् भृगवः च यं सहोभिः बलैः स्तोत्रादिसाधनैर्जनयन्तः । 'भृगवोऽविन्दन्' ( ऋ. सं. १०. ४६. २ ) इति ह्युक्तम् । किंच ईळेन्यं स्तुत्यं यं प्रथमं मातरिश्वा वायुरुदपादयत् अन्ये देवाः च मनवे राज्ञे मनोरथाय यजत्रं यष्टव्यं यमग्निं ततक्षुः निष्पादितवन्तः ॥

यं त्वा॑ दे॒वा द॑धि॒रे ह॑व्य॒वाहं॑ पुरु॒स्पृहो॒ मानु॑षासो॒ यज॑त्रम् ।
स याम॑न्नग्ने स्तुव॒ते वयो॑ धाः॒ प्र दे॑व॒यन् य॒शसः॒ सं हि पू॒र्वीः ॥ १० ॥

यम् । त्वा॒ । दे॒वाः । द॒धि॒रे । ह॒व्य॒ऽवाह॑म् । पु॒रु॒ऽस्पृहः॑ । मानु॑षासः । यज॑त्रम् ।
सः । याम॑न् । अ॒ग्ने॒ । स्तु॒व॒ते । वयः॑ । धाः॒ । प्र । दे॒व॒ऽयन् । य॒शसः॑ । सम् । हि । पू॒र्वीः ॥ १० ॥

हे अग्ने हव्यवाहं यं त्वा त्वां देवा दधिरे धारितवन्तः मानुषासः मनुष्याश्च पुरुस्पृहः बहुकामान् स्पृहयन्तः यजत्रं यष्टव्यं दधिरे धारितवन्तः हे अग्ने सः त्वं यामन् यामनि यज्ञे स्तुवते मह्यं वयः अन्नं धाः देहि । हे अग्ने त्वत्तः देवयन् देवकामो यजमानः पूर्वीः बह्वीः बहूनि यशसः यशांसि । सं हि इत्युपसर्गश्रुतेर्योग्यक्रियाध्याहारः । संप्राप्नोति खलु ॥ ॥ २ ॥

'जगृभ्मा ते' इत्येकादशर्चं पञ्चमं सूक्तमाङ्गिरसस्य सप्तगुनाम्न आर्षं त्रैष्टुभम् । विकुण्ठा नाम असुरस्त्री । सा चेन्द्रसदृशं पुत्रं कामयमाना कृच्छ्रचान्द्रायणादिकं तपस्तेपे । मत्सदृशोऽन्यः कश्चिन्मा जनिष्टेति बुद्ध्येन्द्र एव तस्याः पुत्रोऽजायत[2] । तादृशो वैकुण्ठ इन्द्रो देवता । तथा चानुक्रान्तं— 'जगृभ्माष्टौ सप्तगुर्वैकुण्ठमिन्द्रं तुष्टाव' इत्यादि । गतो विनियोगः ॥

---

1. भ१.४.७–मादनीयं । 2. स–यष्टव्यं यजमाना धातुमिषा । 3. स–पुत्रो जातः ।

जगृम्भा ते दक्षिणमिन्द्र हस्तं वसूयवो वसुपते वसूनाम्।
विद्मा हि त्वा गोपतिं शूर गोनामस्मभ्यं चित्रं वृषणं रयिं दाः ॥ १ ॥

जगृम्भ। ते। दक्षिणम्। इन्द्र। हस्तम्। वसुऽयवः। वसुऽपते। वसूनाम्।
विद्म। हि। त्वा। गोऽपतिम्। शूर। गोनाम्। अस्मभ्यम्। चित्रम्। वृषणम्। रयिम्। दाः ॥१॥

वसूनां वसुपते बहूनां धनानां[1] स्वामिन् हे इन्द्र ते तव दक्षिणं हस्तं वसूयवः वसुकामा वयं जगृम्भ गृहीमः। यथा बहुप्रदस्यार्थिनो[2] मामदत्त्वा न गन्तव्यमिति हस्तं गृह्णन्ति तद्वत्। हे शूर विक्रान्तेन्द्र त्वा त्वां गोनां गोपतिम्। अत्र शब्दवृत्तिभ्यां स्वामित्वं बहुत्वं च प्रतिपाद्यते। बहूनां गवां गोपतिं विद्म जानीमः। अतः अस्मभ्यं चित्रं चायनीयं वृषणं वर्षकं रयिं धनं दाः देहि॥

स्वायुधं स्ववसं सुनीथं चतुःसमुद्रं धरुणं रयीणाम्।
चर्कृत्यं शंस्यं भूरिवारमस्मभ्यं चित्रं वृषणं रयिं दाः ॥ २ ॥

सुऽआयुधम्। सुऽअवसम्। सुऽनीथम्। चतुःऽसमुद्रम्। धरुणम्। रयीणाम्।
चर्कृत्यम्। शंस्यम्। भूरिऽवारम्। अस्मभ्यम्। चित्रम्। वृषणम्। रयिम्। दाः ॥ २ ॥

स्वायुधं शोभनवज्राद्यायुधं स्ववसं शोभनरक्षणं सुगमनं वा सुनीथं सुनयनं चतुःसमुद्रं चतुरः[3] समुद्रान्[3] यो यशसा व्याप्नोति तं धरुणं धारकम्। केषाम्[4]। रयीणां धनानाम्। चर्कृत्यं पुनःपुनः कर्तव्यं शंस्यं स्तुत्यं भूरिवारं भूरीणां दुःखानां वारकं बहुभिर्वरणीयं वा त्वां विद्मेति शेषः। तादृशोऽस्मभ्यमित्यादि[5] पूर्ववत्। यद्वा। हे इन्द्र उक्तगुणविशिष्टं पुत्राख्यं रयिं दाः देहि॥

सुब्रह्माणं देववन्तं बृहन्तमुरुं गभीरं पृथुबुध्नमिन्द्र।
श्रुतऋषिमुग्रमभिमातिषाहमस्मभ्यं चित्रं वृषणं रयिं दाः ॥ ३ ॥

सुऽब्रह्माणम्। देवऽवन्तम्। बृहन्तम्। उरुम्। गभीरम्। पृथुऽबुध्नम्। इन्द्र।
श्रुतऽऋषिम्। उग्रम्। अभिमातिऽसहम्। अस्मभ्यम्। चित्रम्। वृषणम्। रयिम्। दाः ॥ ३ ॥

हे इन्द्र त्वं सुब्रह्माणम्। ब्रह्म परिवृढं स्तुतिलक्षणं कर्म। शोभनस्तुतिकमित्यर्थः। देववन्तं बृहन्तं महान्तम् उरुं विस्तीर्णं गभीरम् असुरादिभिरगम्यं पृथुबुध्नं विस्तृतमूलं[6] श्रुतऋषिं श्रुता ऋषयो येन तादृशमृषीणां श्रावयितारं प्रथितऋषिं वा उग्रम् उद्गूर्णबलमत एव अभिमातिषाहम् अभिमातीनां शत्रूणामभिभवितारं हन्तारम् अस्मभ्यं चित्रं पूज्यं वृषणं वर्षकं पुत्रं रयिं धनं च दाः देहि[7]। अथवा विशेषणविशेष्यभावः। उक्तलक्षणं पुत्राख्यं रयिं दाः॥

---

१. त२.८–धनानां पते। २. त१.२.३–बहुवेदयमर्थितो; त७–बहुवदान्यस्यार्थिनो; भ१.२.४.८–बहुपदस्यार्थिनो; भ६.७–बहुप्रदमर्थिनो। ३. ग-भ–चतुःसमुद्रान्। ४. त-मु–तेषां। ५. ग-त४–तादृशात्वमस्मभ्य°; भ–तादृशायास्मभ्य°। ६. त-मु–विततमूलं। ७. ग-त१.२.३-भ–'देहि' नास्ति।

सनद्वाजं विप्रवीरं तरुत्रं धनस्पृतं शूशुवांसं सुदक्षम् ।
दस्युहनं पूर्भिदमिन्द्र सत्यमस्मभ्यं चित्रं वृषणं रयिं दाः ॥ ४ ॥

सनत्ऽवाजम् । विप्रऽवीरम् । तरुत्रम् । धनऽस्पृतम् । शूशुऽवांसम् । सुऽदक्षम् ।
दस्युऽहनम् । पूःऽभिदम् । इन्द्र । सत्यम् । अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥४॥

सनद्वाजं[1] लब्धान्नं विप्रवीरं मेधाविनं पुत्रं तरुत्रं तारकं धनस्पृतं धनानां पूरकं स्पर्शकं वा । स्पृणातेः स्पृशतेर्वा [illegible] । शूशुवांसं वर्धमानं सुदक्षं शोभनबलं दस्युहनं शत्रूणां हन्तारं पूर्भिदं शत्रूणां पुरां भेत्तारं सत्यं सत्यकर्माणम् । शिष्टमुक्तम् ॥

अश्वावन्तं रथिनं वीरवन्तं सहस्रिणं शतिनं वाजमिन्द्र ।
भद्रव्रातं विप्रवीरं स्वर्षामस्मभ्यं चित्रं वृषणं रयिं दाः ॥ ५ ॥

अश्वऽवन्तम् । रथिनम् । वीरऽवन्तम् । सहस्रिणम् । शतिनम् । वाजम् । इन्द्र ।
भद्रऽव्रातम् । विप्रऽवीरम् । स्वःऽसाम् । अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥ ५ ॥

अश्वावन्तं बहुभिरश्वैरुपेतं रथिनं रथवन्तं वीरवन्तं वीरैः पुत्रैरुपेतं सहस्रिणं सहस्रवन्तं शतिनं शतवन्तम्[2] । असंख्यातगवादियुक्तमित्यर्थः । भद्रव्रातं भद्रगणं कल्याणसेवकैः परिवृतं विप्रवीरं विप्रैर्वीरैश्चोपेतं स्वर्षां सर्वस्य संभक्तारं वाजं बलवन्तं हे इन्द्र[3] । शिष्टमुक्तम् ॥ ॥४॥

प्र सप्तगुमृतधीतिं सुमेधां बृहस्पतिं मतिरच्छा जिगाति ।
य आङ्गिरसो नमसोपसद्योऽस्मभ्यं चित्रं वृषणं रयिं दाः ॥ ६ ॥

प्र । सप्तऽगुम् । ऋतऽधीतिम् । सुऽमेधाम् । बृहस्पतिम् । मतिः । अच्छ । जिगाति ।
यः । आङ्गिरसः । नमसा । उपऽसद्यः । अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥ ६ ॥

सप्तगुं मां मतिः स्तुतिर्देवविषया अच्छा जिगाति अभिगच्छति । कीदृशं सप्तगुम् । ऋतधीतिं सत्यकर्माणं सुमेधां शोभनप्रज्ञं बृहस्पतिं बृहतो मन्त्रस्य स्वामिनम् । यः सप्तगुः आङ्गिरसः अङ्गिरोगोत्रोत्पन्नोऽहं नमसा नमस्कारेण देवान् उपसद्यः उपगन्ता[4] । यद्वा । नमसा स्तोत्रेण उपसदनीयः । देवैरनुग्राह्य इत्यर्थः । तादृशाय अस्मभ्यं मह्यं चित्रं वृषणं रयिं दाः ॥

वनीवानो मम दूतास इन्द्रं स्तोमाश्चरन्ति सुमतीरियानाः ।
हृदिस्पृशो मनसा वच्यमाना अस्मभ्यं चित्रं वृषणं रयिं दाः ॥ ७ ॥

वनीवानः । मम । दूतासः । इन्द्रम् । स्तोमाः । चरन्ति । सुऽमतीः । इयानाः ।
हृदिऽस्पृशः । मनसा । वच्यमानाः । अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥ ७ ॥

१. ग-त-भ-मु—हे इंद्र सनद्वाजं । २. भ—'शतिनं शतवन्तं' नास्ति । ३. ग४-त३-मु—'वाजं... हे इन्द्र' नास्ति । ४. त१.२.३.७—उपगंतव्यः ।

वनीवानः वननवन्तः[1]। 'छन्दसीवनिपौ' इति मत्वर्थीयो वनिप्। मम सखायः सुतासः सुतलक्षणा कृता यथा भर्तुरभिमतार्थं प्रापणीयं प्रापयन्ति तद्वत्तत्तुल्यान् गुणान्[2] प्रापयन्तः स्तोमाः स्तवाः सुमतीः तस्येन्द्रस्यास्मद्विषया अनुकूला बुद्धीः इयानाः याचमानाः इन्द्रं यन्ति प्राप्नुवन्ति। पुनश्च त एव विशेष्यन्ते। हृदिस्पृशः हृदये स्पृशन्तः। तत्तुल्यस्य प्रियभूता इत्यर्थः। 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक्। मनसा सत्त्वोद्रिक्तेन वच्यमानाः उच्यमानाः। अस्मभ्यमित्यादि गतम्॥

यत्त्वा यामि दद्धि तन्न इन्द्र बृहन्तं क्षयमसमं जनानाम्।
अभि तद्द्यावापृथिवी गृणीतामस्मभ्यं चित्रं वृषणं रयिं दाः॥ ८॥

यत्। त्वा। यामि। दद्धि। तत्। नः। इन्द्र। बृहन्तम्। क्षयम्। असमम्। जनानाम्।
अभि। तत्। द्यावापृथिवी इति। गृणीताम्। अस्मभ्यम्। चित्रम्। वृषणम्। रयिम्। दाः॥८॥

हे इन्द्र त्वा त्वां यत् वक्ष्यमाणं यामि याचामि। वर्णलोपश्छान्दसः। याच्यमानं तत् दद्धि देहि। 'ददु दाने'। लोटि व्यत्ययेन परस्मैपदम्। 'बहुलं छन्दसि' इति शपो लुक्। तदिति सामान्येन निर्दिष्टं विशेषयति। बृहन्तं महान्तं क्षयं निवासं जनानाम् अन्येषाम् असमम् असाधारणं देहि। तथा दातव्यं द्यावापृथिवी अभि गृणीताम्। अस्मभ्यमित्यादि[3] गतम्[4]॥४॥

'अहं भुवम्' इत्येकादशर्चं षष्ठं सूक्तम्। पूर्वसूक्तेन सप्तगुना स्तुतो इन्द्रः सप्तिवदात्मानमस्तौत्। तस्माद्वैकुण्ठस्येन्द्रस्य वाक्यत्वात् 'यस्य वाक्यं स ऋषिः' इति परिभाषया इन्द्र ऋषिः। वैकुण्ठस्येन्द्रस्य[5] च स्तूयमानत्वात् 'या तेनोच्यते सा[6] देवता' इति परिभाषया इन्द्र एव देवता। दशम्येकादश्यौ त्रिष्टुभौ। शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः। तथा चानुक्रान्तं—'स[7] सप्तगुस्तुतिमेहत्य आत्मानमुत्तराभिरस्तुष्टाचाहं भुवमेकादशान्त्ये त्रिष्टुभौ सप्तमी च' इति। अतिरात्रे द्वितीयपर्याये होतुः शस्त्र एतत्सूक्तम्। सूत्रितं च—'अहं भुवमपाः पूर्वेषामो मद्यामिति याज्या' (आश्व. श्रौ. ६. ४) इति। समूळहस्य दशरात्रस्य तृतीये छन्दोमे निष्केवल्येऽप्येतत्सूक्तम्। 'अहं भुवं नव इन्द्रियमिति निष्केवल्यम्' (आश्व. श्रौ. ८.७) इति हि सूत्रितम्॥

अहं भुवं वसुनः पूर्व्यस्पतिरहं धनानि सं जयामि शश्वतः।
मां हवन्ते पितरं न जन्तवोऽहं दाशुषे वि भजामि भोजनम्॥ १॥

अहम्। भुवम्। वसुनः। पूर्व्यः। पतिः। अहम्। धनानि। सम्। जयामि। शश्वतः।
माम्। हवन्ते। पितरम्। न। जन्तवः। अहम्। दाशुषे। वि। भजामि। भोजनम्॥ १॥

अहम् इन्द्रः वसुनः धनस्य पूर्व्यः मुख्योऽसाधारणः पतिः स्वामी भुवम् अभवम्। भवतेर्लङि 'बहुलं छन्दसि' इति शपो लुक्। 'अचि श्नुधातुभ्रुवाम्' इत्यादिना उवङादेशः। अडभावश्छान्दसः। तथा अहं शश्वतः। बहुनामैतत्। बहोः शत्रोः संबन्धीनि धनानि। सम्

1. ग-म४—वननवंतः वननं वनिः; त१.२.३.५—वननवंतः वननं वनिः; भ१.२.८—वननवंतः वननं विः; भ७—वननवंतः वनतेश्छंदसि क्वनिब्वनिपाविति। 2. त-मु—गुणेन। 3. ग-न१.२.३.६.७.८-भ-मु—अभिमन्येतां; त४—अनुमन्येतां। 4. त-मु—वैकुण्ठाख्यस्येन्द्रस्य। 5. ग-त-भ—'सा देवता' नास्ति। 6. ग-त-मु—'स' नास्ति।

इत्येकीभावे । मह जयामि । किंच मामेव जन्तवः प्राणिनो यजमानाः हवन्ते आह्वयन्ति । पितरं न पितरमिव पुत्राः । अहं दाशुषे हविषो दात्रे यजमानाय भोजनम् अन्नं वि भजामि ददामि ॥

अहमिन्द्रो रोधो वक्षो अथर्वणस्त्रिताय गा अजनयमहेरधि ।
अहं दस्युभ्यः परि नृम्णमा ददे गोत्रा शिक्षन्दधीचे मातरिश्वने ॥ २ ॥

अहम् । इन्द्रः । रोधः । वक्षः । अथर्वणः । त्रिताय । गाः । अजनयम् । अहेः । अधि ।
अहम् । दस्युऽभ्यः । परि । नृम्णम् । आ । ददे । गोत्रा । शिक्षन् । दधीचे । मातरिश्वने ॥ २ ॥

अत्रेतिहासमाहुः । आथर्वणं दध्यञ्चं मधुविद्यावन्तमिन्द्र आगत्य मधुविद्यां कस्यचिन्मा ब्रूया इति नियमितवान् । यदि ब्रूयास्ते शिरो हरामीत्युक्तवान् । स आथर्वणोऽश्विभ्यामुवाच । ‘इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच’ (श. ब्रा. १४.१.५.१६) ‘अश्वस्य शीर्ष्णा प्र यदीमुवाच’ (ऋ. सं. १. ११६. १२) इति हि श्रुतिः । स चेन्द्र आगत्य दधीचः शिरोऽहरदिति तदत्रोच्यते । इन्द्रः अहम् अथर्वणः अथर्वणः पुत्रस्य दधीचः वक्षः । तदुपलक्षितं शिर इत्यर्थः । तस्य रोधः रोधको हर्तास्मि । तथा त्रिताय एतन्नामकायाप्त्याय कूपपतिताय तदुद्धरणार्थम्[1] अहेः मेघस्य अधि उपरि गाः उदकानि अजनयम् उदपादयम् । त्रितस्य कूपपतितस्येन्द्रं प्रत्युद्धरणप्रार्थनं ‘सं मा तपन्त्यभितः’ (ऋ. सं. १०.३३.२) इत्यत्र प्रतिपादितम् । तथा अहं दस्युभ्यः उपक्षपयितृभ्यः[2] शत्रुभ्यः सकाशात् नृम्णं धनम् आ ददे आहृतवानस्मि । किं कुर्वन् । गोत्रा गवामुदकानां रक्षकान् मेघान् शिक्षन् विनयन् । किमर्थम् । मातरिश्वने मातरिश्वनः पुत्राय दधीचे एतन्नामकायर्षये वर्षकामाय प्रवर्षयितुमिच्छन् ॥

मह्यं त्वष्टा वज्रमतक्षदायसं मयि देवासोऽवृजन्नपि क्रतुम् ।
ममानीकं सूर्यस्येव दुष्टरं मामार्यन्ति कृतेन कर्त्वेन च ॥ ३ ॥

मह्यम् । त्वष्टा । वज्रम् । अतक्षत् । आयसम् । मयि । देवासः । अवृजन् । अपि । क्रतुम् ।
मम । अनीकम् । सूर्यस्यऽइव । दुस्तरम् । माम् । आर्यन्ति । कृतेन । कर्त्वेन । च ॥ ३ ॥

मह्यं मदर्थं त्वष्टा देवः आयसम् अयोमयं वज्रम् आयुधम् अतक्षत्[3] संपादितवान्[4] । देवाः मयि विषये क्रतुं स्वविरोधिहननरूपं कर्म अपि अवृजन् समपादयन् । मम अनीकं सेनासमूहं सूर्यानीकमिव दुष्टरम् अन्येन तरीतुमशक्यम् । माम् एव कृतेन कर्मणा कर्त्वेन इतः परं कर्तव्येन वृत्रवधादिरूपेण[4] आर्यन्ति[5] गच्छन्ति । आर्यन्तिर्गतिकर्मा । यद्वा । अर्चन्तीमिमं कुर्वन्ति ॥

१. ग-स-सु—कूपपतिताय तदुद्धरणार्थं । २. ग-म—उपक्षयितृभ्यः; त—उपलक्षयितृभ्यः । ३. ग-त१. २.४.६.७.८-म—अतक्षत् साधु । ४. त२.३.५-संपादितवान् । देवा मयि विषये कर्तुं यज्ञं कुर्वंति । मम अनीकं अश्वादि सूर्यस्य रवेरिव दुस्तरं दुरवगाहं वृत्रादिवधादिरूपेण; त७—संपादितवान् । अवृजन् कुर्वंति । मम अनीकं अश्वादि सूर्यस्येव रवेरिव दुष्टरं दुरवगाहं वृत्रादिवधादिरूपेण; म७—संपादितवान् । उतापि च देवासो देवाः मयि विषये क्रतुं यज्ञं अवृजन् कुर्वंति । मम अनीकं अश्वादि च सूर्यस्येव रवेरिव दुष्टरं दुरवगाहं वृत्रादिशत्रूणां दारयितेति निरुक्तं । ईदृशं मां वर्जितं वृत्रादिवधादिरूपेण; ग-त४—वृत्रवधाय मयि देवासो देवाः क्रतुं स्वविरोधिहननरूपं कर्मापिवृजन् मम तेजसानीकं सेनासमूहं वा सूर्यस्येव सूर्यानीकमिव दुष्टरमन्येन तरीतुमशक्यं मामेव कृतेन कर्मणा परं कर्तव्येन वृत्रवधादिरूपेण ५. त-म—कर्मणा आर्यंति ।

अहमेतं गव्ययमश्व्यं पशुं पुरीषिणं सायकेना हिरण्ययम्।
पुरू सहस्रा नि शिशामि दाशुषे यन्मा सोमास उक्थिनो अमन्दिषुः ॥४॥

अहम्। एतम्। गव्ययम्। अश्व्यम्। पशुम्। पुरीषिणम्। सायकेन। हिरण्ययम्।
पुरु। सहस्रा। नि। शिशामि। दाशुषे। यत्। मा। सोमासः। उक्थिनः। अमन्दिषुः॥४॥

अहमेतं गव्ययं गोमयम् अश्व्यम् अश्वमयं[1] हिरण्ययं[2] हिरण्यालंकारोपेतं पुरीषिणम्। पुरीषमुदकं क्षीररूपम्। तद्वन्तं पशुं पशुसंबन्धिनम्। जात्येकवचनम्। पशुसंघमित्यर्थः। तं सायकेन आयुधेन अजयम्। तथा पुरु पुरूणि सहस्रा सहस्राणि शस्त्राणि नि शिशामि संस्करोमि दाशुषे हविर्दत्तवते[3] यजमानाय। वैरिविनाशायेत्यर्थः। कदेति उच्यते। यत् यदा मा मां सोमासः सोमाः उक्थिनः शस्त्रोपेताः सन्तः अथवा[4] सोमेन शस्त्रैश्चोपेता यजमानाः अमन्दिषुः तर्पयन्ति॥

अहमिन्द्रो न परा जिग्य इद्धनं न मृत्यवेऽव तस्थे कदा चन।
सोममिन्मा सुन्वन्तो याचता वसु न मे पूरवः सख्ये रिषाथन ॥ ५ ॥

अहम्। इन्द्रः। न। परा। जिग्ये। इत्। धनम्। न। मृत्यवे। अव। तस्थे। कदा। चन।
सोमम्। इत्। मा। सुन्वन्तः। याचत। वसु। न। मे। पूरवः। सख्ये। रिषाथन॥ ५ ॥

इन्द्रः सर्वस्य धनस्य स्वामी अहं धनम् आत्मीयं न परा जिग्य इत् नैव पराभावयामि। मदीयं धनं न पराभूयत इत्यर्थः। किंचाहं मृत्यवे सर्वेषां मारकाय कदा चन कदापि न अव तस्थे नावस्थितो भवामि। इन्द्रभक्ता न मृत्युभाजो भवन्ति किल किंतु वक्तव्यमिन्द्रस्य मृत्युविरहं। यस्मादेवं तस्मात् सोमं सुन्वन्तः हे यजमानाः वसु युष्मदपेक्षितं धनं मा इत् मामेव याचत। हे पूरवः मनुष्याः मे सख्ये न रिषाथन मा रिष्टा भवथ। मत्सख्यं मा विनाशयत॥ ॥ ५ ॥

अहमेताञ्छाश्वसतो द्वाद्वेन्द्रं ये वज्रं युधयेऽकृण्वत।
आह्वयमानाँ अव हन्मनाहनं दृळ्हा वदन्ननमस्युर्नमस्विनः ॥ ६ ॥

अहम्। एतान्। शाश्वसतः। द्वाऽद्वा। इन्द्रम्। ये। वज्रम्। युधये। अकृण्वत।
आऽह्वयमानान्। अव। हन्मना। अहनम्। दृळ्हा। वदन्। अनमस्युः। नमस्विनः॥ ६ ॥

अहम् इन्द्रः एतान् वक्ष्यमाणान् शाश्वसतः भृशं प्राणतः[5] प्रवृद्धबलान् शत्रून् द्वाद्वा द्वौ द्वौ। युग्मभूतानित्यर्थः[6]। तानहमसिति[7] संबन्धः। एतानित्युक्तं कानित्याह। ये शत्रवः इन्द्रं शत्रूणां दारकम्। इन्द्रः शत्रूणां दारयिता इति निरुक्तम् (निरु. १०. ८)। ईदृशं वज्रं वलिनं वज्रवन्तं[8] युधये युद्धाय अकृण्वत अकुर्वत तानेतानित्यर्थः। पुनः कीदृशान्। आह्वयमानान् एहि

१. स–एतद्रोलक्षणकर्मायमश्वमयं। २. त६.८-म४.५.६–हिरण्ययं हिरण्मयं। ३. त–दत्तवते। ४. स–महामथवा। ५. त-म१.४.६.७–प्रीणतः। ६. स–युग्मभूतानित्यर्थः। ७. त–तानेतानिति। ८. ग–वज्रवंतं मां।

युध्यस्वेत्याह्वयतः शत्रून् नमस्विनः नमनवतो बलात्कारिणः अनमस्युः अप्रणतिशीलः सन् एका दृढानि भयजनकानि स्थिराणि वचनानि वदन् अहम् हतवानस्मि ॥

**अभीऽ३दमेकमेको अस्मि निष्षाळभी द्वा किमु त्रयः करन्ति ।**
**खले न पर्षान् प्रति हन्मि भूरि किं मा निन्दन्ति शत्रवोऽनिन्द्राः ॥ ७ ॥**

अभि । इदम् । एकम् । एकः । अस्मि । निष्षाट् । अभि । द्वा । किम् । ऊँ इति । त्रयः । करन्ति ।
खले । न । पर्षान् । प्रति । हन्मि । भूरि । किम् । मा । निन्दन्ति । शत्रवः । अनिन्द्राः ॥ ७ ॥

अहम् इदम् इदानीम् एकं शत्रुम् एकः असहाय एव सन् अभि अस्मि अभिभवामि । किंच निष्षाट्[1] सपत्नानां सहमानोऽहं द्वा द्वावप्यसहायौ शत्रू अभि अस्मि । किमु किं वा त्रयः शत्रवः करन्ति कुर्वन्ति । तानप्यभिभवामीत्यर्थः । किं बहुना । खले न खलनिष्पादने यथा जीर्णशीर्णादिरनल्पानल्पायासेन प्रतिहन्ति कर्षकः तद्वत् पर्षान् निष्ठुरान् भूरि बहून् शत्रून् प्रति हन्मि । मा माम् अनिन्द्राः इन्द्ररहिता इन्द्रमजानन्त इन्द्रविरोधिनः शत्रवः मामिन्द्रं किं निन्दन्ति । निन्दितुमशक्ता इत्यर्थः । अत्र 'अभिभवामि' ( निरु. ३. १० ) इत्यादि निरुक्तं द्रष्टव्यम् ॥

**अहं गुङ्गुभ्यो अतिथिग्वमिष्करमिषं न वृत्रतुरं विक्षु धारयम् ।**
**यत्पर्णयघ्न उत वा करञ्जहे प्राहं महे वृत्रहत्ये अशुश्रवि ॥ ८ ॥**

अहम् । गुङ्गुऽभ्यः । अतिथिऽग्वम् । इष्करम् । इषम् । न । वृत्रऽतुरम् । विक्षु । धारयम् ।
यत् । पर्णयऽघ्ने । उत । वा । करञ्जऽहे । प्र । अहम् । महे । वृत्रऽहत्ये । अशुश्रवि ॥ ८ ॥

अहम् इन्द्रः गुङ्गुभ्यः एतन्नामकेभ्यो जनपदेभ्यो रक्षणाय अतिथिग्वम् अतिथिगोः पुत्रं दिवोदासनृपतिम् इष्करं निष्कर्तारं वृत्रतुरं शत्रूणां हिंसकं विक्षु प्रजासु मध्ये इषं न अन्नमिव तासामेवं यथा भोगाय भवति तद्वत्तस्यानीय धारयं धारितवानस्मि । कदेति उच्यते । यत् यदा पर्णयघ्ने पर्णयनामकस्यासुरस्य हननवति उत वा अपि च करञ्जहे एतन्नामकस्य हननोपेते महे महति वृत्रहत्ये संग्रामे अशुश्रवि श्रुतोऽभवम्[2] ॥

**प्र मे नमी साप्य इषे भुजे भूद्गवामेषे सख्या कृणुत द्विता ।**
**दिद्युं यदस्य समिथेषु मंहयमादिदेनं शंस्यमुक्थ्यं करम् ॥ ९ ॥**

प्र । मे । नमी । साप्यः । इषे । भुजे । भूत् । गवाम् । एषे । सख्या । कृणुत । द्विता ।
दिद्युम् । यत् । अस्य । सम्ऽइथेषु । मंहयम् । आत् । इत् । एनम् । शंस्यम् । उक्थ्यम् । करम् ॥ ९ ॥

मे मम मत्संबन्धी नमी । नामकस्तवनमः स्तोत्रम् । तदस्यास्तीति नमी स्तोता साप्यः सर्वैराश्रयणीयः सन् इषे अन्नाय भुजे भोगाय प्र भूत् प्रभवति । तं मत्स्तोतारं मनुष्याः गवामेषे अन्वेषणाय सख्या सख्याय च द्विता द्विविधं द्विप्रकाराय कृणुत कुर्वन्ति । गवां

1. त-भ-स निष्षाट् । 2. ग१-त-भ१.४.६.७-विश्रुतोभवं ।

दातारं[1] सखायं च[1] कुर्वन्तीत्यर्थः । यद्वा । गवामेव पृष्ठे स्थिता ऐधाय सख्याय शारीराय[2] लैङ्गिकाय च सख्याय कुर्वन्ति । कवेति उच्यते । ^यत् यदा ^अस्य मत्संबन्धिनः स्तोतुर्लब्धार्थं ^समिथेषु संग्रामेषु ^दिद्युम् आयुधं ^भरिय स्वीकुर्यामित्यर्थः । ^आदित् अनन्तरमेव ^नूनं स्तोतारं ^शंस्यं स्तुत्यम् ^उक्थ्यम् उक्थार्हं ^करम् प्रकर्षं करोमि ॥

प्र नेमस्मिन्ददृशे सोमो अन्तर्गोपा नेममाविरस्था कृणोति ।

स तिग्मशृङ्गं वृषभं युयुत्सन्द्रुहस्तस्थौ बहुले बद्धो अन्तः ॥ १० ॥

प्र । नेमस्मिन् । ददृशे । सोमः । अन्तः । गोपाः । नेमम् । आविः । अस्था । कृणोति ।

सः । तिग्मऽशृङ्गम् । वृषभम् । युयुत्सन् । द्रुहः । तस्थौ । बहुले । बद्धः । अन्तरिति ॥ १० ॥

^नेमस्मिन् । नेमशब्दोऽर्धपर्यायः[3] । यष्टा अयष्टा च द्वौ पुरुषौ युध्यन्तौ । तयोरेकस्मिन् यष्टरीत्यर्थः । तस्मिन् ^अन्तः ^सोमः ^ददृशे दृश्यते । तं ^नेमम् अर्धमेकं[4] ^गोपाः गोपायितेन्द्रः ^अस्था क्षेपणसाधनेन वज्रेण ^आविः ^कृणोति प्रकटयति । शत्रुभिरनभिभूतं करोतीत्यर्थः । ^सः यत्र सोमो न दृश्यते सः ^तिग्मशृङ्ग तीक्ष्णायुधे ^वृषभं बाणान् वर्षयन्तमिन्द्रेणानुगृहीतं प्रति ^युयुत्सन् योद्धुमिच्छन् ^द्रुहः द्रोग्धा ^बद्धः सन् ^बहुले अन्धकारे ^अन्तः तस्य मध्ये ^तस्थौ तिष्ठति । यद्वा एवं व्याख्येयम् । नेमस्मिन्निन्द्रभक्तेऽन्तः सोमो ददृशे । नेममन्यं गोपा स्वभक्तरक्षक इन्द्रोऽस्था अस्त्रा वज्रेणाविष्कृणोति । आविष्करोति । वज्रेण पीडयतीत्यर्थः । स नेमो द्रुहस्तिग्मशृङ्गं वृषभमिन्द्रं युयुत्सन् । शिष्टं समानम् ॥

आदित्यानां वसूनां रुद्रियाणां देवो देवानां न मिनामि धाम ।

ते मा भद्राय शवसे ततक्षुरपराजितमस्तृतमषाळ्हम् ॥ ११ ॥

आदित्यानाम् । वसूनाम् । रुद्रियाणाम् । देवः । देवानाम् । न । मिनामि । धाम ।

ते । मा । भद्राय । शवसे । ततक्षुः । अपराऽजितम् । अस्तृतम् । अषाळ्हम् ॥ ११ ॥

^आदित्यानां ^वसूनां ^रुद्रियाणां रुद्राणां यद्वा रुद्रपुत्राणां मरुतां च ^देवानां ^धाम स्थानं ^देवः इन्द्रः ^न ^मिनाति न हिनस्ति । ^ते[5] आदित्यादयः ^मा मां ^भद्राय ^शवसे ^ततक्षुः अनुगृह्णन्तु । ^अपराजितमस्तृतम् अहिंसितम् ^अषाळ्हम् अनभिभूतम् ॥ ॥ ६ ॥

'अहं दाम्' इत्येकादशर्चं सप्तमं सूक्तम् । वैकुण्ठ[6] ऋषिर्देवता च । द्वितीयैकादश्यौ[7] त्रिष्टुभौ । शिष्टा जगत्यः । अनुक्रान्तं च—'अहं दामन्त्योपान्त्ये च' इति । द्वितीये[8] रात्रिपर्याये[8] मैत्रावरुणस्येदं सूक्तम् । सूत्रितं च—'अहं दां पाता सुतमिन्द्रो अस्तु सोमम्' (आश्व. श्रौ. ६. ४) इति ॥

अहं दां गृणते पूर्व्यं वस्वहं ब्रह्म कृणवं मह्यं वर्धनम् ।

अहं भुवं यजमानस्य चोदितायज्वनः साक्षि विश्वस्मिन्भरे ॥ १ ॥

---

१. त-म—दातारः सखायश्च । २. ग-त-म-मु—शरीराय । ३. म—नेमशब्दोऽर्धशब्दपर्यायः । ४. ग—अर्धमेव; त१.२.७.८-म—अर्धमेकः । ५. त—'ते' नास्ति । ६. ग-त१.२.६.७.८-म—वैकुण्ठ इन्द्र । ७. ग-त-म—तृतीयैकादश्यौ । ८. ग—अतिरात्रे द्वितीयपर्याये; त-मु—द्वितीये पर्याये; म—द्वितीये ।

अहम्। दाम्। गृणते। पूर्व्यम्। वसु। अहम्। ब्रह्म। कृणवम्। मह्यम्। वर्धनम्।
अहम्। भुवम्। यजमानस्य। चोदिता। अयज्वनः। साक्षि। विश्वस्मिन्। भरे॥ १॥

अहम् इन्द्रः गृणते स्तुवते पूर्व्यं मुख्यं वसु धनं दाम् अदाम्। अहम् एव ब्रह्म परिवृढं कर्म स्तुतिलक्षणं मह्यं वर्धनं कृणवं करोमि। स्तोतुः संबन्धि स्तोत्रं तस्मै धनं प्रयच्छन् मह्यमेव वर्धनं करोमीत्यर्थः। तथा अहं यजमानस्य मामुद्दिश्य यष्टुर्धनस्य चोदिता प्रेरकः भुवं भवामि। अयज्वनः अयष्टुः। अयष्टारमित्यर्थः। तं विश्वस्मिन् भरे सर्वस्मिन्नपि संग्रामे साक्षि अभिभवामि॥

मां धुरिन्द्रं नाम देवता दिवश्च ग्मश्चापां च जन्तवः।
अहं हरी वृषणा विव्रता रघू अहं वज्रं शवसे धृष्ण्वा ददे॥ २॥

माम्। धुः। इन्द्रम्। नाम। देवता। दिवः। च। ग्मः। च। अपाम्। च। जन्तवः।
अहम्। हरी इति। वृषणा। विऽव्रता। रघू इति। अहम्। वज्रम्। शवसे। धृष्णु। आ। ददे॥२॥

इन्द्रं नाम इन्द्रनामानं मां देवता देवानां मध्ये दिवः द्युलोकस्य। ग्मः पृथिव्या अपोऽन्तरिक्षम्। एतेषु लोकेषु जन्तवः जाताः मा मामेव धुः दधुः[1] धारयन्ति हविर्भिः स्तुतिभिश्च। अहं यज्ञगमनाय संग्रामगमनाय वा हरी हरितवर्णौ वृषणा पुंस्त्वोपेतौ विव्रता विविधकर्माणौ रघू लघू शीघ्रगामी अश्वौ नियोजयामि रथे। तथा अहं धृष्णु धर्षकं वज्रम् आयुधं शवसे बलाय आ ददे स्वीकरोमि[2]॥

अहमत्कं कवये शिश्नथं हथैरहं कुत्समावमाभिरूतिभिः।
अहं शुष्णस्य श्नथिता वधर्यमं न यो रर आर्यं नाम दस्यवे॥ ३॥

अहम्। अत्कम्। कवये। शिश्नथम्। हथैः। अहम्। कुत्सम्। आवम्। आभिः। ऊतिऽभिः।
अहम्। शुष्णस्य। श्नथिता। वधः। यमम्। न। यः। ररे। आर्यम्। नाम। दस्यवे॥३॥

अहम् इन्द्रः अत्कम् आच्छादकं शत्रुपुत्रं कवये उशनसः ऋषये तस्य सुखवासाय हथैः बहुप्रकारैः प्रहारैः[3] तस्याधनैरायुधैर्वा शिश्नथं ताडितवानस्मि। अथातिर्वधकर्मा। किंच अहं कुत्सम् एतन्नामकमृषिम् आभिः ऊतिभिः वधादिरूपैः[4]। 'कुत्साय शुष्णमशुषं नि बर्हीः' (ऋ. सं. ४. १६. १२) इत्यादि मन्त्रान्तरम्। रक्षणैः आवम् अरक्षम्। एवमेव कृतान्यपि रक्षणानीदानीमिव कृतानीत्यनुवदति। कुत्सार्थं शुष्णस्य एतन्नामकस्यासुरस्य श्नथिता हिंसिता। तस्य हननायेत्यर्थः। वधः वज्रं यमं प्रहरणाय नियमितवानस्मि। अपि च[5] अहम् आर्यम् आर्यसंबन्धि। आर्याणां देयमित्यर्थः। तादृशं नाम। उदकनामैतत्। नामकमुदकं दस्यवे शत्रवे उपक्षपयित्रे न ररे न दत्तवानस्मि। यद्वा। आर्यं पूज्यमित्यसाधारणं नाम दस्यवे न दत्तवानस्मि। अत्रेन्द्रस्यात्मस्तुतौ कुत्सरक्षणशुष्णवधादिकम् 'आवः कुत्समिन्द्र यस्मिञ्चाकन्' (ऋ. सं. १. ३३. १४) 'शुष्णं पिप्रुं कुयवं वृत्रमिन्द्र' (ऋ. सं. १. १०३. ८) इत्यादिषु बहुधा प्रपञ्चितम्। अतोऽत्र ग्रन्थविस्तरभयान्न वक्ष्यते॥

१. ग-त-भ५.६.८-मु–अधुः; भ१.२.४.७–'दधुः' नास्ति। २. भ१.२.७–स्वीकरिष्ये। ३. ग-भ४.६.७–'प्रहारैः' नास्ति। ४. ग-त-भ–कुत्सवधादिरूपैः। ५. त-भ२.८–'अपि च' नास्ति।

अहं पितेव वेतसूँरभिष्टये तुग्रं कुत्साय स्मदिभं च रन्धयम्।
अहं भुवं यजमानस्य राजनि प्र यद्भरे तुजये न प्रियाधृषे ॥ ४ ॥

अहम्। पिताऽइव। वेतसून्। अभिष्टये। तुग्रम्। कुत्साय। स्मत्ऽइभम्। च। रन्धयम्।
अहम्। भुवम्। यजमानस्य। राजनि। प्र। यत्। भरे। तुजये। न। प्रिया। आऽधृषे ॥ ४ ॥

अहम् इन्द्रः पितेव पिता पुत्रायेव स यथा तस्मै निर्वोढा धनमभिमतं देयं प्रयच्छति तद्वत् वेतसून् एतन्नामकान् जनपदान्[1] अभिष्टये अभीप्सते कुत्साय महर्षये तुग्रं स्मदिभं च रन्धयं वशमनयम्। अहं यजमानस्य राजनि राजनार्थं भुवम् अभवम्। समर्थ इति शेषः। यत् यस्मात् तुजये न पुत्रायेव पिता तस्मै यजमानाय आधृषे शत्रूणां धर्षणाय प्रिया प्रियाणि प्र भरे प्रभरामि[2] तस्माद्यजमानस्य राजनि भुवमिति संबन्धः ॥

अहं रन्धयं मृगयं श्रुतर्वणे यन्माजिहीत वयुना चनानुषक्।
अहं वेशं नम्रमायवेऽकरमहं सव्याय पड्गृभिमरन्धयम् ॥ ५ ॥

अहम्। रन्धयम्। मृगयम्। श्रुतर्वणे। यत्। मा। अजिहीत। वयुना। चन। आनुषक्।
अहम्। वेशम्। नम्रम्। आयवे। अकरम्। अहम्। सव्याय। पड्गृभिम्। अरन्धयम् ॥ ५ ॥

अहम् इन्द्रः मृगयम् एतन्नामकमसुरं श्रुतर्वणे एतन्नामकाय महर्षये रन्धयम्। रध्यतिर्वशगमने। वशमनयम्। यत् यस्मात् श्रुतर्वा मा माम् अजिहीत। 'ओहाङ् गतौ'। आगच्छत्। तद्वोच्यते। वयुना प्रज्ञानेन स्तोत्रेण आनुषक् अनुषक्तोऽभूत्। चन इति पूरणः। अहं वेशम् एतन्नामानं नम्रं प्रह्वं अकरम्[3] अकार्षम्। करोतेर्लुङि 'कृमृदृरुहिभ्यः' इति च्लेरङ्। अडभावश्छान्दसः। अहं सव्याय एतन्नामकाय पड्गृभिम् एतन्नामकम् अरन्धयं वशमनयम् ॥ ॥ ७ ॥

अहं स यो नववास्त्वं बृहद्रथं सं वृत्रेव दासं वृत्रहारुजम्।
यद्वर्धयन्तं प्रथयन्तमानुषग्दूरे पारे रजसो रोचनाकरम् ॥ ६ ॥

अहम्। सः। यः। नवऽवास्त्वम्। बृहत्ऽरथम्। सम्। वृत्राऽइव। दासम्। वृत्रऽहा। अरुजम्।
यत्। वर्धयन्तम्। प्रथयन्तम्। आनुषक्। दूरे। पारे। रजसः। रोचना। अकरम् ॥ ६ ॥

अहम् इन्द्रः सः[4] अस्मि[4] यः अहं नववास्त्वं बृहद्रथं च वृत्रेव वृत्रमिव दासम् उपक्षपयितारमिव नववास्त्वं बृहद्रथं च अरुजम् अहं भग्नमकरवम्। 'रुजो भङ्गे'। यत् यदा वर्धयन्तं वर्धमानं प्रथयन्तं प्रथमानं चोभौ शत्रू आनुषक् अनुषक्तः सन् रोचना रोचनस्य रजसः लोकस्य दूरे पारे अकरं कृतवानस्मि ॥

अहं सूर्यस्य परि याम्याशुभिः प्रैतशेभिर्वहमान ओजसा।
यन्मा सावो मनुष आह निर्णिज ऋधक्कृषे दासं कृत्व्यं हथैः ॥ ७ ॥

१. भ–'जनपदान्' नास्ति। २. भ–प्रभराणि। ३. त-भ१.४–अकरं। ४. त१.२.७-भ–'सः अस्मि' नास्ति।

अहम् । सूर्यस्य । परि । यामि । आशुऽभिः । प्र । एतशेभिः । वहमानः । ओजसा ।
यत् । मा । सावः । मनुषः । आह । निःऽनिजे । ऋधक् । कृषे । दासम् । कृत्व्यम् । हथैः ॥७॥

अहं सूर्यस्य देवस्य आशुभिः शीघ्रगामिभिः एतशेभिः[1] एतशवर्णैरश्वैः वहमानः उह्यमानः ओजसा आत्मीयेन बलेन प्रकर्षेण परि यामि परिगच्छामि सूर्यात्मना । किंच यत् यदा मा मां मनुषः मनुष्यस्य सावः सोमाभिषवः आह ब्रूते । आह्वयतीत्यर्थः । किमर्थमाह । निर्णिजे । निर्णिगिति रूपनाम । यज्ञस्वरूपायेत्यर्थः । तदानीं कृत्व्यं कर्तव्यम् । हन्तव्यमित्यर्थः । दासम् उपक्षपयितारं शत्रुं हथैः हननसाधनैः[2] ऋधक्कृषे पृथक्करोमि । ऋधगित्ययं पृथग्भावे ॥

अहं सप्तहा नहुषो नहुष्टरः प्राश्रावयं शवसा तुर्वशं यदुम् ।
अहं न्य१न्यं सहसा सहस्करं नव व्राधतो नवतिं च वक्षयम् ॥ ८ ॥

अहम् । सप्तऽहा । नहुषः । नहुःऽतरः । प्र । अश्रवयम् । शवसा । तुर्वशम् । यदुम् ।
अहम् । नि । अन्यम् । सहसा । सहः । करम् । नव । व्राधतः । नवतिम् । च । वक्षयम् ॥८॥

अहं सप्तहा सप्तसंख्याकानां शत्रुपुरां हन्ता । 'सप्त यत्पुरः शर्म शारदीः' (ऋ. सं. १. १७४. २) इत्युक्तम् । यद्वा । सप्त नमुच्यादीन् हतवान् । किंच नहुषः बन्धकस्यापि नहुष्टरः बन्धकतरोऽहं शवसा बलेन तुर्वशं यदुं च प्राश्रावयं शत्रुसंबन्धिविजयादिप्रदानेन प्रख्यापितवानस्मि । तौ यथा लोके श्रुतौ भवतः तथाकार्षमित्यर्थः । किंच अहम् अन्यं चास्मत्स्तोतारं सहसा बलेन सहः बलिनं करम् अकार्षम् । करोतेर्लुङि 'कृमृदृरुहिभ्यः' इति च्लेरङ् । अडभावः । किंच नव नवसंख्याकाः नवतिं च नवतिसंख्याकाश्च । नवोत्तरनवतिमित्यर्थः । कथंभूताः । व्राधतः वर्धमानाः वक्षयम् अवाहम् । व्यनाशयमित्यर्थः ॥

अहं सप्त स्रवतो धारयं वृषा द्रवित्न्वः पृथिव्यां सीरा अधि ।
अहमर्णांसि वि तिरामि सुक्रतुर्युधा विदं मनवे गातुमिष्टये ॥ ९ ॥

अहम् । सप्त । स्रवतः । धारयम् । वृषा । द्रवित्न्वः । पृथिव्याम् । सीराः । अधि ।
अहम् । अर्णांसि । वि । तिरामि । सुऽक्रतुः । युधा । विदम् । मनवे । गातुम् । इष्टये ॥ ९ ॥

वृषा वर्षकः अहं सप्त स्रवतः स्रवन्तीर्नदीः धारयम् अधारयम् । [illegible] । द्रवित्न्वः द्रवणशीलाः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घाभावः । सीराः सरणशीलाः । कुत्र । पृथिव्याम् । सुक्रतुः शोभनकर्मा अहम् अर्णांसि उदकानि वि तिरामि प्रयच्छामि । किंच मनवे मनुष्याय इष्टये तस्य गमनाय गातुं मार्गं युधा संप्रहारेण । निरोधपरिहारेणेत्यर्थः । विदम् अलम्भयम् । प्रापयमित्यर्थः । विदेर्लाभार्थस्य 'पुषादि' (पा. सू. ३. १. ५५) इत्यादिना च्लेरङ् ॥

अहं तदासु धारयं यदासु न देवश्चन त्वष्टाधारयद्रुशत् ।
स्पार्हं गवामूधःसु वक्षणास्वा मधोर्मधु श्वात्र्यं सोममाशिरम् ॥ १० ॥

अहम् । तत् । आसु । धारयम् । यत् । आसु । न । देवः । चन । त्वष्टा । अधारयत् । रुशत् ।
स्पार्हम् । गवाम् । ऊधःऽसु । वक्षणासु । आ । मधोः । मधु । श्वात्र्यम् । सोमम् । आऽशिरम् ॥१०॥

१. त१.२.३-म-प्रैतशेभिः । २. त२.४.६.७-म-हननैः ।

अहं तत् प्रसिद्धं पयः आसु गोषु धारयं कृतवानस्मि । 'धृञ्[1] धारणे' । अस्यैतद् रूपम् । यत् पयः आसु गोषु देवः त्वष्टा देवशिल्पी सूर्यो वा देवः न नकिः धारयत् धर्तुं नाशकोत् । कीदृक् पयोऽधारयमिति चेत् उच्यते । ईड्यात् ईड्यं स्पार्हं स्पृहणीयम् । केषु प्रदेशेष्विति उच्यते । गवामूधःसु उन्नततरेषु गवां पयोधारणप्रदेशेषु । किंच मधु[2] उदकं वक्षणासु । नदीनामैतत् । वहनशीलासु नदीषु धारयामित्यनुषज्यते । नद्युदकधारणस्याप्यधिकृत्यते । आ अग्नेः आ उदकोत्पत्तेः । आगामिवर्षासमयपर्यन्तमित्यर्थः । कीदृशं मधिवासि तदुच्यते । आश्यम् । आश्वमिति क्षिप्रनाम । क्षिप्रगमनार्हम् । यद्वा । आश्यमित्युत्तरत्र संबध्यते । आश्यं सुखावहं सोमं प्रति आशिरं धारयम् ॥

एवा देवाँ इन्द्रो विव्ये नॄन् प्र च्यौत्नेन मघवा सत्यराधाः ।
विश्वेत्ता ते हरिवः शचीवोऽभि तुरासः स्वयशो गृणन्ति ॥ ११ ॥

एव । देवान् । इन्द्रः । विव्ये । नॄन् । प्र । च्यौत्नेन । मघऽवा । सत्यऽराधाः ।
विश्वा । इत् । ता । ते । हरिऽवः । शचीऽवः । अभि । तुरासः । स्वऽयशः । गृणन्ति ॥ ११ ॥

अथान्त्येन्द्र इन्द्रभावं परित्यज्य ऋषिभावेनाह । एव एवमुक्तप्रकारेण देवान् नॄन् च इन्द्रः देवः प्र विव्ये प्रकर्षेण गमयति । 'तस्मात्पराचीः प्रजाः प्र वीयन्ते प्रतीचीर्जायन्ते' ( तै. सं. २. ३. १. ४ ) इति ब्राह्मणम् । किमन्यसहायेन नेत्याह । च्यौत्नेन स्वकीयेन बलेन । कीदृश इन्द्रः । मघवा धनवान् सत्यराधाः सत्यधनः । अथ प्रत्यक्षेणाह । हे हरिवः हरिभ्यां तद्वन् शचीवः कर्मवन् हे स्वयशः स्वायत्तकीर्तेऽसवन् चेन्द्र ता तानि विश्वा सर्वाणि कर्माणि ते तव संबन्धीनि येषु कर्मसु तुरासः त्वरमाणा ऋत्विजः अभि गृणन्ति अभिष्टुवन्ति ॥ ॥ ८ ॥

'प्र वो महे' इति सप्तर्चमष्टमं सूक्तम् । आदितो द्वे जगत्यौ । 'कं ते नरः' इत्यादिके द्वे अभिसारिण्यौ । आदितो द्वौ दशाक्षरौ ततो द्वौ द्वादशकौ साभिसारिणी । तदुक्तं—'वैराजौ जागतौ चाभिसारिणी' ( अनु ९. ४ ) इति । ततस्त्रिष्टुबेका । ततो द्वे जगत्यौ । पूर्ववदनुवर्तते । तथा चानुक्रान्तं—'प्र वो महे सप्त द्विजगत्याद्यन्ते कं तेऽभिसारिण्यौ' इति । महाव्रते निष्केवल्य एतत्सूक्तं निविद्धानम् । सूत्रितं च—'प्र वो महे मन्दमानायान्धस इति निविद्धानम्' ( ऐ. आ. ५. ३. १ ) इति ॥

प्र वो महे मन्दमानायान्धसोऽर्चा विश्वानराय विश्वाभुवे ।
इन्द्रस्य यस्य सुमखं सहो महि श्रवो नृम्णं च रोदसी सपर्यतः ॥ १ ॥

प्र । वः । महे । मन्दमानाय । अन्धसः । अर्च । विश्वानराय । विश्वऽभुवे ।
इन्द्रस्य । यस्य । सुऽमखम् । सहः । महि । श्रवः । नृम्णम् । च । रोदसी इति । सपर्यतः ॥ १ ॥

हे स्तोतः वः त्वम्[3] । पूजार्थं बहुवचनम् । महे महते अन्धसः । अन्धसेत्यर्थः । सोमेन मन्दमानाय मोदमानाय विश्वानराय सर्वस्य नेत्रे[4] । 'नरे संज्ञायाम्' इति सांहितिको दीर्घः । विश्वाभुवे सर्वस्य भावयित्रे मह्यमिन्द्राय प्र अर्च । अर्चतिः स्तुतिकर्मा । प्रोच्चारय । यस्य मम

१. ग-त-भ-मु-धृ । २. ग-मधुरसं; त-भ-मधु मधुरं । ३. त-भ१ मु-त्वमित्यर्थः; भ१.४-त्वर्थः; भ२-त्वदर्थः । ४. त१.२.३-भ-नेत्रे विश्वाभुवे ।

इन्द्रस्य द्युम्नं सुष्ठु मंहनीयं सहः बलं महि महत् श्रवः अन्नं नृम्णं सुखं[1] च रोदसी द्यावापृथिव्यौ सपर्यतः पूजयतः । तस्मा इन्द्राय प्रार्चेति समन्वयः ॥

सो चिन्नु सख्या नर्य इनः स्तुतश्चर्कृत्य इन्द्रो मावते नरे ।
विश्वासु धूर्षु वाजकृत्येषु सत्पते वृत्रे वाप्स्व१भि शूर मन्दसे ॥ २ ॥

सः । चित् । नु । सख्या । नर्यः । इनः । स्तुतः । चर्कृत्यः । इन्द्रः । माऽवते । नरे ।
विश्वासु । धूःऽसु । वाजऽकृत्येषु । सत्ऽपते । वृत्रे । वा । अप्ऽसु । अभि । शूर । मन्दसे ॥ २ ॥

सो चिन्नु स खलु इन्द्रः सख्या सखिभूतेन निमित्तेन नर्यः नृभ्यो हितः इनः सर्वस्येश्वरः स्तुतः सर्वैरभिष्टुतः । सख्या स्तुत इति वा संबन्धः । मावते मत्सदृशाय नरे नराय[2] चर्कृत्यः[3] पुनःपुनः कर्तव्यः । परिचरणीय इत्यर्थः । अथ प्रत्यक्षवादः । हे सत्पते सतां पालकेन्द्र स त्वं विश्वासु सर्वासु धूर्षु वोढव्येषु[4] कार्यभारेषु वाजकृत्येषु च बलकृत्येषु च वृत्रे वाप्सु मेघे वर्तमानेषूदकेषु च निमित्तेषु हे शूर त्वम् अभि मन्दसे अभिष्टूयसे ॥

के ते नर इन्द्र ये त इषे ये ते सुम्नं सधन्य१मियक्षान् ।
के ते वाजायासुर्याय हिन्विरे के अप्सु स्वासूर्वरासु पौंस्ये ॥ ३ ॥

के । ते । नरः । इन्द्र । ये । ते । इषे । ये । ते । सुम्नम् । सऽधन्यम् । इयक्षान् ।
के । ते । वाजाय । असुर्याय । हिन्विरे । के । अप्ऽसु । स्वासु । उर्वरासु । पौंस्ये ॥ ३ ॥

हे इन्द्र ते के नरः के मनुष्या इति प्रश्नः । ते महान्तो मया ज्ञातव्या इत्यभिप्रायः । प्रष्टव्यानाह । ये नराः ते तव इषे अन्नाय प्रभवन्तीति शेषः । ये च ते सुम्नं सुखं त्वदीयं सधन्यं धनयुक्तम् इयक्षान् गच्छन्ति । इयक्षतिर्गतिकर्मा । त्वदीयमर्थं सुखं धनं च ये लभन्ते ते के महात्मान इति । किंच के[5] ते तव असुर्याय असुरसंबन्धिने तेषां वधनिमित्ताय वाजाय बलाय हिन्विरे[6] प्रेरयन्ति सोमादि हविः । के वा अप्सु स्वासु स्वापेक्षितेषूदकेषु उर्वरासु सर्वसस्याढ्यासु भूमिषु पौंस्ये पुंस्त्वे चेति तेषु[7] निमित्तभूतेषु हविः प्रेरयन्तीत्यनुवर्तते । उक्तविधा महान्तो दुर्लभा इति भावः ॥

'भुवस्त्वमिन्द्र' इति दर्शपूर्णमासयोर्माहेन्द्रस्य हविषो याज्या । सूत्रितं च—'महाँ इन्द्रो य ओजसा भुवस्त्वमिन्द्र ब्रह्मणा महान्' ( आश्व. श्रौ. १. ६ ) इति । देवसुवां हविःष्विन्द्रस्य ज्येष्ठस्यैषैव[8] याज्या । 'भुवस्त्वमिन्द्र ब्रह्मणा महाननमीवास इळया' ( आश्व. श्रौ. ४. ११ ) इति हि सूत्रितम् । एषैव भूताख्येकाहे निष्केवल्ये सूक्तमुखीया । सूत्रितं च—'शास्यमुक्थं बृहस्पतिसवेन त्वं भुवः प्रतिमानं पृथिव्या भुवस्त्वमिन्द्र ब्रह्मणा महान्' ( आश्व. श्रौ. ९. ५ ) इति ॥

भुवस्त्वमिन्द्र ब्रह्मणा महान्भुवो विश्वेषु सवनेषु यज्ञियः ।
भुवो नॄँश्च्यौत्नो विश्वस्मिन्भरे ज्येष्ठश्च मन्त्रो विश्वचर्षणे ॥ ४ ॥

१. त-अ—'सुखं' नास्ति, मु—धनं । २. ग—अंकमाय; त-अ-मु—नराय । ३. ग-त-अ२.५.६.८-मु—चर्कृत्यः कर्तव्यः । ४. त-अ—वोढव्येषु । ५. ग-त-अ-मु—'के' नास्ति । ६. ग-त-अ—के हिन्विरे । ७. ग-त४.६.अ६-मु- च एतेषु; त१.२.३.७-अ४.८—चेतिषु । ८ ग-त१.२-अ—ज्येष्ठस्यैवमेव ।

भुवः । त्वम् । इन्द्र । ब्रह्मणा । महान् । भुवः । विश्वेषु । सवनेषु । यज्ञियः ।
भुवः । नॄन् । च्यौत्नः । विश्वस्मिन् । भरे । ज्येष्ठः । च । मन्त्रः । विश्वऽचर्षणे ॥ ४ ॥

हे इन्द्र त्वं ब्रह्मणा अस्मत्कृतेन परिवृढेन स्तोत्रेण महान् भुवः अभवः । भवतेर्लेटि 'भूसुवोस्तिङि' इति गुणप्रतिषेधे उवङादेशः । तथा विश्वेषु सर्वेषु सवनेषु यज्ञियः यज्ञार्हः भुवः अभवः । तथा विश्वस्मिन् सर्वस्मिन् भरे संग्रामे नॄन् नेतॄणां शत्रूणां च्यौत्नः च्यावयिता भुवः । हे विश्वचर्षणे सर्वस्य द्रष्टरिन्द्र मन्त्रः मन्त्रयितव्यस्त्वं ज्येष्ठश्च अभवः सर्वेषां मध्ये ॥

अवा नु कं ज्यायान्यज्ञवनसो महीं त ओमात्रां कृष्टयो विदुः ।
असो नु कमजरो वर्धाश्च विश्वेदेता सवना तूतुमा कृषे ॥ ५ ॥

अव । नु । कम् । ज्यायान् । यज्ञऽवनसः । महीम् । ते । ओमात्राम् । कृष्टयः । विदुः ।
असः । नु । कम् । अजरः । वर्धाः । च । विश्वा । इत् । एता । सवना । तूतुमा । कृषे ॥ ५ ॥

हे इन्द्र त्वं ज्यायान् प्रशस्यतरस्त्वं यज्ञवनसः संभक्तयज्ञान् स्तोतॄन् नु कं क्षिप्रम् अव रक्ष । अध्येतारो नु कमिति पदद्वयं कुर्वन्ति तथापि हिकं नुकमित्यादीनि नवोत्तराणि पदान्युक्त-वान् यास्काचार्यः ( नि. ३. १२ )। अतः केवलानां हिकं[1] नुकमित्येवमादीनां[2] यावानर्थः स एव[3] विशिष्टानामपि । तैत्तिरीया ( तै. सं. १.२.१३ २ ) अप्येकमेव पदं कुर्वन्ति । भवेद्युक्तम् । इन्द्रस्या-वनप्रसिद्धिं दर्शयति । हे इन्द्र ते तव ओमात्रां[3] रक्षणं महीं महत् विदुः कृष्टयः मनुष्या ऋषयः । ओमात्राम् । अम गत्यादिषु । औणादिक आत्रन्प्रत्ययः । छान्दस उमादेशः । किंच त्वम् अजरः जरारहितः असः भव । नु कं क्षिप्रं वर्धाश्च वर्धस्व च हविराज्यादिना[4] । किंच विश्वेत् सर्वाण्यपि एता एतानि सवना सवनानि तूतुमा तूर्णानि कृषे करोषि ॥ कृषे । छान्दसे लिटि 'छन्दसि वा' इति द्विर्वचनाभावः ॥

एता विश्वा सवना तूतुमा कृषे स्वयं सूनो सहसो यानि दधिषे ।
वराय ते पात्रं धर्मणे तना यज्ञो मन्त्रो ब्रह्मोद्यतं वचः ॥ ६ ॥

एता । विश्वा । सवना । तूतुमा । कृषे । स्वयम् । सूनो इति । सहसः । यानि । दधिषे ।
वराय । ते । पात्रम् । धर्मणे । तना । यज्ञः । मन्त्रः । ब्रह्म । उत्ऽयतम् । वचः ॥ ६ ॥

हे इन्द्र एता एतानि विश्वा सर्वाणि सवना[5] सवनानि तूतुमा तूर्णानि कृषे करोषि । एतानीत्युक्तं कानीति तत्राह । हे सहसः बलस्य सूनो पुत्र । बलवन्नित्यर्थः । स्वयं यानि[6] दधिषे धारयसि । हे इन्द्र ते तव वराय शत्रूणां वारकाय ते तव स्वभूतं पात्रं रक्षणं भवत्व-स्माकम् । किंच धर्मणे धारणाय तना धनं भवत्विति शेषः । किंच तुभ्यं[7] यज्ञो मन्त्रः । इज्यते-ऽनेनेति यज्ञकरणसाधनभूतो मन्त्रः । यजुरित्यर्थः । ब्रह्म परिवृढम् । शस्त्रमित्यर्थः । तदुभयात्मकं वचः उद्यतं भवतीति शेषः ॥

१. त-भ४.६.८–हितुसु इत्येवमादीनां । २. त३.४.५.६-भ–च । ३. ग-त-भ१.२.४.६.८– 'ओमात्रां' नास्ति । ४. ग–°राज्यादिना । वृधु वृद्धौ । लेटिरूपं; त३-भ१.२-पुस्तकेषु '°राज्यादिना' इत्यस्यानंतरं कियांश्चिदवकाशोऽस्ति । ५. ग-भ–'सवना' नास्ति । ६. त-भ-मु–यानि सवनानि । ७. त१.२.६.८-भ१.२.६.७.८–'तुभ्यं' नास्ति ।

ये ते विप्र ब्रह्मकृतः सुते सचा वसूनां च वसुनश्च दावने ।
प्र ते सुम्नस्य मनसा पथा भुवन्मदे सुतस्य सोम्यस्यान्धसः ॥ ७ ॥

ये । ते । विप्र । ब्रह्मऽकृतः । सुते । सचा । वसूनाम् । च । वसुनः । च । दावने ।
प्र । ते । सुम्नस्य । मनसा । पथा । भुवन् । मदे । सुतस्य । सोम्यस्य । अन्धसः ॥ ७ ॥

हे विप्र मेधाविन्निन्द्र ते तुभ्यं ये ब्रह्मकृतः स्तोत्रकर्तारो हविष्कर्तारो वा स्तोतारः सचा संघीभूताः सुते सोमेऽभिषुते वसूनां बहूनां धनानां वसुनश्च एकस्य निवासयोग्यस्य धनस्य च दावने दानाय परिचरन्तीति शेषः । अत्र वसूनामिति बहुवचनेन ऐहिकभोगसाधनानि[1] धनानि[2] अभिप्रेतानि । एकवचनान्तेन च निवासयोग्यं स्वर्गाख्यं धनमभिप्रेतमित्यवगन्तव्यम् । ते अनुष्ठातारः सुम्नस्य सुखस्य लाभाय मनसा पथा मनोमार्गेण । स्तोत्रकर्मणेत्यर्थः । प्र भुवन् प्रभवन्तु । उक्तसुखलाभाय योग्या भवन्त्वित्यर्थः । कदेति उच्यते । सुतस्य अभिषुतस्य सोम्यस्य सोमसंबन्धिनः अन्धसः अन्नस्य मदे सति ॥ ॥ ९ ॥

‘ महत्तत् ’ इति नवर्चं नवमं सूक्तम् । वज्रभूतेन वषट्कारेण देवानां हविर्वहनेन च हतेषु भ्रातृषु कनिष्ठः सौचीको नामाग्निर्वषट्कारहविर्वहनाभ्यां भीतो देवेभ्यो निर्गत्यापः प्राविशत् । स च मत्स्यैः प्रदर्शितः सन्नन्वेष्टुमागतैर्देवैः सहेदमादिसूक्तत्रयेण संवादं कृतवान् । अस्य सूक्तस्य द्वितीयादियुग्मतस्तो ‘ विश्वे देवाः शास्तन ’ इति षडृचमुत्तरसूक्तं चेति दशर्चोऽग्निवाक्यम् । अयुजः प्रथमाद्याः पञ्चर्चो ‘ यमैच्छाम मनसा ’ इत्येकादशर्चमुत्तरसूक्तं च देवानां वाक्यम् । तत्र ‘ तदस्य चक्षुः प्रथमं मसीय ’ इति द्व्यृचमग्नेर्वाक्यम् । अतोऽग्निवाक्येषु देवा देवताग्निर्ऋषिः । देवोक्तिष्वग्निर्देवता देवा ऋषयः । अनादेशपरिभाषयेदमुत्तरे च द्वे त्रैष्टुभे विशेषानभिधानात्[3] । तथा चानुक्रान्तं—‘ वषट्कारेण वृक्णेषु भ्रातृषु सौचीकोऽग्निरपः प्रविश्य देवैः समवदत्तुत्तरैस्त्रिभिर्महत्सवाद तत्र[4] युजोऽग्निवाक्यं विश्व इत्युत्तरं षट्कमयुजः देवानां यमैच्छामेत्युत्तरं चैकादशकं तदन्तेन तु द्व्यृचोऽग्नेः[5] ’ इति । गतो विनियोगः । सूक्तत्रयोक्तार्थे तैत्तिरीयब्राह्मणम्—‘ अग्नेस्त्रयो ज्यायांसो भ्रातर आसन् ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त सोऽग्निरबिभेदित्थं वाव स्य आर्तिमारिष्यतीति स निलायत सोऽपः प्राविशत् देवताः[6] प्रैषमैच्छन् ’ ( तै. सं. २. ६. ६ ) इत्यादि । तत्राग्निं देवा अभिमाहुः ॥

महत्तदुल्बं स्थविरं तदासीद्येनाविष्टितः प्रविवेशिथापः ।
विश्वा अपश्यद्बहुधा ते अग्ने जातवेदस्तन्वो देव एकः ॥ १ ॥

महत् । तत् । उल्बम् । स्थविरम् । तत् । आसीत् । येन । आऽविष्टितः । प्रऽविवेशिथ । अपः ।
विश्वाः । अपश्यत् । बहुधा । ते । अग्ने । जातऽवेद । तन्वः । देवः । एकः ॥ १ ॥

तत् उल्बं वक्ष्यमाणं तत् प्रावरणं महत् स्थविरम् अत्यन्तं स्थूलं च तत् तत् आसीत् येन उल्बेन आविष्टितः आवेष्टितः सन् हे अग्ने प्रविवेशिथापः उदकानि प्रविष्टवानसि । हे अग्ने

१. ग-त१.२.३.६.७.८-म१.२.४ ७–भोगसाधनधनानि; त४.५-म६ भोगसाधनानि । २. ग-त-म-मु–स्तोत्रेण कर्मणेत्यर्थः । ३. ग–°भिधानात् उत्तरसूक्त अष्टमीवर्जं चतस्रः पञ्चमी जगत्यः । ४. ग-त७-अनु–अत्र । ५. ग–द्व्यृचोऽग्नेस्तत्तुमाद्य जगत्याष्टमीवर्जं; अनु–द्व्यृचोऽग्नेस्तत्तुमाद्या जगत्योऽष्टमीवर्जम् । ६. त१.२.३.७-म१.२.४.८–देवा ।

जातवेदः जातप्रज्ञ ते विश्वाः सर्वाः तन्वः तनूः सर्वाण्यङ्गानि बहुधा बहुप्रकारम् एकः देवः अपश्यत् दृष्टवान् ॥

को मा ददर्श कतमः स देवो यो मे तन्वो बहुधा पर्यपश्यत् ।
क्वाह मित्रावरुणा क्षियन्त्यग्नेर्विश्वाः समिधो देवयानीः ॥ २ ॥

कः । मा । ददर्श । कतमः । सः । देवः । यः । मे । तन्वः । बहुधा । परिऽअपश्यत् ।
क्व । अह । मित्रावरुणा । क्षियन्ति । अग्नेः । विश्वाः । सम्ऽइधः । देवऽयानीः ॥ २ ॥

इदमग्नेर्वाक्यम् । एको देवोऽपश्यदित्युक्ते पृच्छति । को मा मां ददर्श दृष्टवान् । स देवः कतमः यो मे मम तन्वः तनूः बहुधा बहुप्रकारं स्थिताः पर्यपश्यत् परिदृष्टवान् । हे मित्रावरुणा मित्रावरुणौ अग्नेः मम विश्वाः सर्वाः समिधः दीप्ताः देवयानीः देवयानसाधनभूताः तन्वो दृष्टा इत्युक्तं यदि दृष्टास्तर्हि क्व क्षियन्ति क निवसन्तीत्येवं देवानां पुरतो वर्तमानौ मित्रावरुणावाहाग्निः ॥

ऐच्छाम त्वा बहुधा जातवेदः प्रविष्टमग्ने अप्स्वोषधीषु ।
तं त्वा यमो अचिकेच्चित्रभानो दशान्तरुष्यादतिरोचमानम् ॥ ३ ॥

ऐच्छाम । त्वा । बहुधा । जातऽवेदः । प्रऽविष्टम् । अग्ने । अप्ऽसु । ओषधीषु ।
तम् । त्वा । यमः । अचिकेत् । चित्रभानो इति चित्रऽभानो ।
दशऽअन्तरुष्यात् । अतिऽरोचमानम् ॥ ३ ॥

एवमग्निना पृष्टा देवा अग्निं ब्रुवन्ति । हे जातवेदः जातप्रज्ञ अग्ने त्वा त्वाम् अनु ऐच्छाम । कीदृशं त्वाम् अप्सु उदकेषु ओषधीषु च बहुधा प्रविष्टम् । अन्विष्य च तं तादृशमप्सुविष्टं त्वा त्वां यमः देवः अचिकेत् ज्ञातवान् हे चित्रभानो चायनीयरश्मे । कुत्र स्थितं ज्ञातवानिति तदुच्यते । दशान्तरुष्यात् । अन्तरुष्यं गूढमन्तर्वासस्थानं तच्च स्थानं दशसंख्योपेतम् । तादृशं स्थानम् अतिरोचमानम् अतीव प्रकाशमानम् । अग्नेर्हि गूढानि दश स्थानानि भवन्ति । पृथिव्यादयस्त्रयो लोका अग्निवाय्वादित्यात्मको देवा आप ओषधयो वनस्पतयः प्राणिशरीरमिति दश स्थानानि ॥

होत्रादहं वरुण बिभ्यदायं नेदेव मा युनजन्नत्र देवाः ।
तस्य मे तन्वो बहुधा निविष्टा एतमर्थं न चिकेताहमग्निः ॥ ४ ॥

होत्रात् । अहम् । वरुण । बिभ्यत् । आयम् । न । इत् । एव । मा । युनजन् । अत्र । देवाः ।
तस्य । मे । तन्वः । बहुधा । निऽविष्टाः । एतम् । अर्थम् । न । चिकेत । अहम् । अग्निः ॥ ४ ॥

अथवा देवा मां ज्ञातवन्त इति निश्चित्य गूहनस्य प्रयोजनमाह । हे वरुण देव अहं होत्रात् होतृत्वात्[1] । हविर्वहनादित्यर्थः । तस्मात् बिभ्यत् आयम् आगतवानस्मि । अतः मा माम् एव एवं पूर्वप्रकारेण अत्र अस्मिन् हविर्वहने नेत् युनजन् नैव योजयन्तु देवाः । तस्य

१. तन.५,६.८–भ४.५,६.८—इत्यात् ।

ताभ्यामस्य बिभ्यतः मे तन्वो बहुधा निविष्टाः अप्सु । एतमर्थम् एतद्धविर्वहनकार्यम् अग्निः अहं न चिकेत न बुध्ये नाङ्गीकरोमि ॥

एहि मनुर्देवयुर्यज्ञकामोऽरंकृत्या तमसि क्षेष्यग्ने ।
सुगान्पथः कृणुहि देवयानान् वह हव्यानि सुमनस्यमानः ॥ ५ ॥

आ । इहि । मनुः । देवऽयुः । यज्ञऽकामः । अरम्ऽकृत्य । तमसि । क्षेषि । अग्ने ।
सुऽगान् । पथः । कृणुहि । देवऽयानान् । वह । हव्यानि । सुऽमनस्यमानः ॥ ५ ॥

अग्निनैवमुक्ता देवाः पुनरग्निमाह्वयन्ति । हे अग्ने एहि आगच्छ । मनुः मनुष्यो यष्टा मननीयो मनु राजा वा देवयुः देवान् यष्टुमिच्छन् यज्ञकामश्च भवति । अत एहि । किं कुर्वन् यज्ञकामो भवतीति चेदुच्यते । अरंकृत्य केवलं तेजःपुञ्जमेवालंकुर्वन् । यद्वेदमुत्तरत्र संबध्यते । त्वं तु अलंकृत्यात्मानमलंकुर्वन् तमसि अन्यैर्ज्ञातुमशक्येऽन्धकारे क्षेषि निवससि । हे अग्ने आगत्य च देवयानान् देवान् प्रति यैर्मनुष्या गच्छन्ति तान् पथः मार्गान् सुगान् कृणुहि कुरु । 'कृवि हिंसाकरणयोश्च' । 'धिन्विकृण्व्योरच' इत्युप्रत्ययः । संमत्या नो यज्ञनिष्पत्तेर्देवयानाः सुपथा भवन्ति । वह च हव्यानि अस्मदीयानि सुमनस्यमानः सौमनस्यमाचरंस्त्वम् ॥ ॥ १० ॥

अग्नेः पूर्वे भ्रातरो अर्थमेतं रथीवाध्वानमन्वावरीवुः ।
तस्माद्भिया वरुण दूरमायं गौरो न क्षेप्नोरविजे ज्यायाः ॥ ६ ॥

अग्नेः । पूर्वे । भ्रातरः । अर्थम् । एतम् । रथीऽइव । अध्वानम् । अनु । आ । अवरीवुरिति ।
तस्मात् । भिया । वरुण । दूरम् । आयम् । गौरः । न । क्षेप्नोः । अविजे । ज्यायाः ॥ ६ ॥

अनयाग्निः स्वपलायननिमित्तमाह । हे देवाः अग्नेः मम पूर्वे पूर्वमुत्पन्नाः भ्रातरः भूपति-र्भुवनपतिर्भूतानां पतिरिति त्रयोऽग्रजाः एतम् अर्थं हविर्वहनाख्यमर्थम् अन्वावरीवुः अनुक्रमेण वृतवन्तः[1] । तत्र वृणोतेर्यङ्लुगन्ताल्लुङि च्लेश्छान्दसो लुक् । 'बहुलं छन्दसि' इत्युत्वम् । आवरणे दृष्टान्तः । रथीवाध्वानम् । अध्वानं यथा रथी वृणोति तद्वत् । ते भ्रातरस्तथा कुर्वन्तो हताः । तस्मात् मरणात् भिया भीत्या हे वरुण दूरं देशम् आयम् । किंच क्षेप्नोः इषुक्षेप्तुः धनुषः ज्यायाः सकाशात् गौरो न गौरमृग इव स यथा बिभेति चलति वा तद्वत् अविजे अकम्पे । 'ओविजी भयचलनयोः' । अनुदात्तेत्तौदादिकः । तस्य लङ्युत्तमे रूपम् ॥

कुर्मस्त आयुरजरं यदग्ने यथा युक्तो जातवेदो न रिष्याः ।
अथा वहासि सुमनस्यमानो भागं देवेभ्यो हविषः सुजात ॥ ७ ॥

कुर्मः । ते । आयुः । अजरम् । यत् । अग्ने । यथा । युक्तः । जातऽवेदः । न । रिष्याः ।
अथ । वहासि । सुऽमनस्यमानः । भागम् । देवेभ्यः । हविषः । सुऽजात ॥ ७ ॥

इदं देवानां वाक्यम् । हे अग्ने यत् आयुः आयुष्यम् अजरं जरारहितमस्ति तत् ते कुर्मः । युक्तः तेनायुषा संयुक्तस्त्वं हे जातवेदः जातप्रज्ञ यथा न रिष्याः न हिंससे तथा

१. तै१.५.१.७–आहुतयः, तै४.६.८–अ४.५.८–आहुतयः ।

एतत्सूक्तं दृष्टमाग्नेयम् । हे विश्वे देवाः यूयं मा मां शास्तन अनुशास्तं कुरुत । यथेह यज्ञे होता देवानामाहूता सन् पुनः होतृत्वेन वृतोऽहं मनवै स्तौमि मथतः । यत् यस्मात् निषद्य स्तौमि तस्माच्छास्तन । मे मम भागधेयं प्र ब्रूत यथा वः यूयं भागं कल्पितवन्तः तथा[1] तं भागं प्र ब्रूत । येन च पथा वः हव्यमा वहानि वहनं करोमि ॥

अहं होता न्यसीदं यजीयान् विश्वे देवा मरुतो मा जुनन्ति ।
अहरहरश्विनाध्वर्यवं वां ब्रह्मा समिद्भवति साहुतिर्वाम् ॥ २ ॥

अहम् । होता । नि । असीदम् । यजीयान् । विश्वे । देवाः । मरुतः । मा । जुनन्ति ।
अहःऽअहः । अश्विना । आध्वर्यवम् । वाम् ।
ब्रह्मा । सम्ऽइत् । भवति । सा । आऽहुतिः । वाम् ॥ २ ॥

यजीयान् यष्टृतमः अहं होता सन् न्यसीदं निषण्णोऽस्मि । निषद्ने तं निषण्णं विश्वे व्यापकाः मरुतः देवाः जुनन्ति प्रेरयन्ति हविर्वहनाय । हे अश्विना[2] वां युवयोः आध्वर्यवम् अहरहः प्रतिदिनं कर्तव्यमिति शेषः । आध्वर्यवं भवद्भ्यामनुज्ञातव्यमित्यर्थः । ब्रह्मा भवति भवतु । कः । समित् समिद्धश्चन्द्रमाः । चन्द्रमा ब्रह्मा भवतु । किंच सा[3] । सः[3] इत्यर्थः । स च समित् समिद्धश्चन्द्रमाः वां युवयोर्होमार्थं वां[4] युवाभ्यां क्रियमाणायाध्वर्यवकर्मणे आहुतिः भवति भवत्वित्यर्थः । सोमात्मको हि चन्द्रमा दृश्यते । ‘ एष वै सोमो राजा ’ इत्युपक्रम्य ‘ तदन्नोमयं भवति ’ इति हि छन्दोगब्राह्मणम् । अथवैवं योजना । याहुतिराध्वर्यवमनुष्ठितवद्भ्यां होतव्या सा वां युवयोः युवाभ्यां भवति भवतु । आध्वर्यवं वामित्यस्यैव विवरणमेतत् ॥

अयं यो होता किरु स यमस्य कमप्यूहे यत्समञ्जन्ति देवाः ।
अहरहर्जायते मासिमास्यथा देवा दधिरे हव्यवाहम् ॥ ३ ॥

अयम् । यः । होता । किः । ऊँ इति । सः । यमस्य ।
कम् । अपि । ऊहे । यत् । सम्ऽअञ्जन्ति । देवाः ।
अहःऽअहः । जायते । मासिऽमासि । अथ । देवाः । दधिरे । हव्यऽवाहम् ॥ ३ ॥

यः अयं होता सः किः को भवसि । कीदृशो भवति । तस्य को व्यापार इत्यर्थः । तस्योत्तरमुच्यते । यमस्य मृत्योः[5] भीतः सन्निति शेषः । कमपि हुतम् ऊहे वहति । यद्वा सर्वं भूतजातं नियमयतीति यमो यजमानः । तस्य कमपि हुतमूहे वहति देवान्प्रति । यत् समञ्जन्ति यद्भिः प्राप्नुवन्ति देवाः । किंचाग्निः अहरहः प्रतिदिनमग्निहोत्रार्थं[6] जायते प्रादुर्भवति । तथा मासिमासि प्रतिमासं जायते पितृयज्ञार्थम्[7] । एतत्कालद्वयमृतुलक्षणं पक्षचातुर्मास्यषण्माससंवत्सरादीनाम् । अपरे पुनरेवमाहुः । अहरहः[8] सूर्यात्मना जायते मासिमासि चन्द्रात्मनेति । अथ तमिममग्निं देवाः[9] दधिरे हव्यवाहं हविषां वोढारम् । एवमग्निः स्वात्मानं स्वयमेवोक्तवान् ॥

---

१. ग-त-भ—‘ तथा ’ नास्ति । २. त१.१.७-मु—अश्विनाश्विनौ । ३. ग१-भ६—सोम; ग४-त१.२.३.७—साम; मु—सा स सोम । ४. त१.२.३ ६.७.८-भ१.२.६.८—‘ वां ’ नास्ति । ५. ग-त-भ-मु—मृतेः । ६. ग-त४.५-भ४—°होत्रार्थं । ७. ग-त४.५-भ४—°यज्ञार्थं । ८. त१.२.३.७-भ—‘अहरहः’ नास्ति । ९. त-भ—‘ देवा ’ नास्ति ।

मां देवा दधिरे हव्यवाहमपम्लुक्तं बहु कृच्छ्रा चरन्तम्।
अग्निर्विद्वान्यज्ञं नः कल्पयाति पञ्चयामं त्रिवृतं सप्ततन्तुम्॥ ४॥

माम्। देवाः। दधिरे। हव्यऽवाहम्। अपऽम्लुक्तम्। बहु। कृच्छ्रा। चरन्तम्।
अग्निः। विद्वान्। यज्ञम्। नः। कल्पयाति। पञ्चऽयामम्। त्रिऽवृतम्। सप्तऽतन्तुम्॥४॥

माम् अग्निं देवाः हव्यवाहं हविर्वोढारं दधिरे कृतवन्तः। कीदृशं माम्। अपम्लुक्तम् अपक्रम्यागतं बहु कृच्छ्रा बहूनि कृच्छ्राणि दुःखकराणि चरन्तं गच्छन्तम्। कया मनीषया दधिर इत्युच्यते। अयम् अग्निर्विद्वान् सर्वं जानन् नः अस्माकं यज्ञं कल्पयाति कल्पयति। कीदृशं यज्ञम्। पञ्चयामं पञ्चविधगमनम्। पाङ्क्तो हि यज्ञः। त्रिवृतं सवनत्रयभेदेन त्रिप्रकारं सप्ततन्तुं सप्तभिश्छन्दोमयैः स्तुतिभिर्विस्तृतम्॥

आ वो यक्ष्यमृतत्वं सुवीरं यथा वो देवा वरिवः कराणि।
आ बाह्वोर्वज्रमिन्द्रस्य धेयामथेमा विश्वाः पृतना जयाति॥ ५॥

आ। वः। यक्षि। अमृतऽत्वम्। सुऽवीरम्। यथा। वः। देवाः। वरिवः। कराणि।
आ। बाह्वोः। वज्रम्। इन्द्रस्य। धेयाम्। अथ। इमाः। विश्वाः। पृतनाः। जयाति॥५॥

हे देवाः वः युष्मान् आ यक्षि आयाजे। किम्। अमृतत्वम् अविनाशित्वं सुवीरं सुपुत्रं च। हे देवाः वः युष्माकं वरिवः परिचर्यां हवीरूपं धनं वा यथा कराणि करवाणि तदर्थमित्यर्थः। किंच इन्द्रस्य बाह्वोः वज्रम् आ धेयाम्। प्रापयामीत्यर्थः। अग्नेर्होत्राभावे इन्द्रस्य सोमाद्यभावाद्दुर्बलत्वेन वज्रधारणं नोपपद्यते। अतस्तत्कृत्वा वज्रं प्रापयामीत्यर्थः। अथ एवं सति इमाः विश्वाः सर्वाः पृतनाः शत्रुसेनाः जयाति जयति। जयतु वा॥

त्रीणि शता त्री सहस्राण्यग्निं त्रिंशच्च देवा नव चासपर्यन्।
औक्षन्घृतैरस्तृणन्बर्हिरस्मा आदिद्धोतारं न्यसादयन्त॥ ६॥

त्रीणि। शता। त्री। सहस्राणि। अग्निम्। त्रिंशत्। च। देवाः। नव। च। असपर्यन्।
औक्षन्। घृतैः। अस्तृणन्। बर्हिः। अस्मै। आत्। इत्। होतारम्। नि। असादयन्त॥६॥

त्रीणि शता शतानि त्रीणि सहस्राणि त्रिंशच्च नव च एतत्संख्याकाः देवाः अग्निं माम् असपर्यन् पर्यचरन्। परिचर्याप्रकार[1] उच्यते। घृतैः क्षरद्भिराज्यैः औक्षन् सिक्तवन्तः। अस्मै अग्नये मह्यं बर्हिः अस्तृणन् आस्तृतवन्तः। आदित् आस्तरणानन्तरं होतारम् आह्वातारं न्यसादयन्त नियमेनासादितवन्तः॥ ॥ १२ ॥

'यमैच्छाम' इत्येकादशर्चमेकादशं सूक्तम्। देवानां वाक्यत्वाद्देवा ऋषयः। 'तदद्य' इति द्वयस्य सौचीकोऽग्निर्ऋषिः। 'तन्तुं तन्वन्' इत्याद्या अष्टमीवर्जिता जगत्यः। अष्टमी शिष्टाश्च त्रिष्टुभः। तथा चानुक्रान्तं—'तन्त्वाद्या जगत्योऽष्टमीवर्जम्' इति। सिद्धमुक्तम्। गतः सूक्तविनियोगः॥

१. ग–ग१.२.३.७.८–म१.२.५.६.७.८–मु–परिस्कार°; म४–परिचरण°।

यमैच्छाम मनसा सो३॒॑ऽयमागाद्य॒ज्ञस्य॑ वि॒द्वान्प॑रु॒षश्चि॑कि॒त्वान् ।
स नो॑ यक्षद्दे॒वता॑ता॒ यजी॑यान्नि॒ हि षत्स॒दन्त॑रः॒ पूर्वो॑ अ॒स्मत् ॥ १ ॥

यम् । ऐच्छा॑म । मन॑सा । सः । अ॒यम् । आ । अ॒गा॒त् । य॒ज्ञस्य॑ । वि॒द्वान् । परु॑षः । चि॒कि॒त्वान् ।
सः । नः॒ । य॒क्ष॒त् । दे॒वऽता॑ता । यजी॑यान् । नि । हि । सत्स॑त् । अन्त॑रः । पूर्वः॑ । अ॒स्मत् ॥ १ ॥

यम् अग्निम् ऐच्छाम अन्विष्यन्तो वयं मनसा हविष्प्रापणबुद्ध्या सर्वं हविः प्रापयत्विति बुद्ध्येत्यर्थः । सोऽयम् अग्निः आगात् आजगाम । कीदृशोऽग्निः । यज्ञस्य सर्वं विद्वान् जानंस्तथा परुषः पर्वाणि संधानस्थानान्यङ्गानि चिकित्वान् अभिगच्छन् । सः अग्निः यजीयान् यष्टृतमः नः अस्माकं देवताता देवतातौ यज्ञे यक्षत् यजतु । नि सत्सत् हि न्यषीदत् खलु वेद्यामिति शेषः । कीदृशः सन् । अन्तरः ऋत्विजां यष्टव्यानां देवानां च मध्ये संचरन् अस्मत् पूर्वः अस्मत्तो देवेभ्यः पूर्वभावी सन् । अग्निं समिध्य पश्चाद्धि देवा आहूयन्ते ॥

दर्शपूर्णमासयोः पुरा ‘ अराधि ’ इत्येषा जप्या । सूत्रमुदाहृतम् ॥

अरा॑धि॒ होता॑ नि॒षदा॒ यजी॑यान॒भि प्रयां॑सि॒ सुधि॑तानि॒ हि ख्यत् ।
यजा॑महै य॒ज्ञिया॒न्हन्त॑ दे॒वाँ ईळा॑महा॒ ईड्याँ॒ आज्ये॑न ॥ २ ॥

अरा॑धि । होता॑ । नि॒ऽसदा॑ । यजी॑यान् । अ॒भि । प्रयां॑सि । सुऽधि॑तानि । हि । ख्यत् ।
यजा॑महै । य॒ज्ञिया॑न् । हन्त॑ । दे॒वान् । ईळा॑महै । ईड्या॑न् । आज्ये॑न ॥ २ ॥

अयमग्निः होता होमनिष्पादकः यजीयान् यष्टृतमश्च सन् निषदा वेद्यां निषदनेन अराधि सिद्धोऽभूत् । आहुतियोग्योऽभूदित्यर्थः । तथाभूतोऽयं सुधितानि सुष्ठु निहितानि प्रयांसि चरुपुरोडाशात्मकानि अभि हि ख्यत् अभिख्यति सर्वतः पश्यति । हीति पूरणः । त्वरा कुर्मेति । यज्ञियान् यष्टव्यान् आहुतिभाजः देवान् हन्त क्षिप्रम् आज्येन यजामहै[1] तथा ईड्यान् स्तुतिभाजो देवान् स्तुत्या ईळामहै इति कुर्मेति शेषः ॥

यस्मिन्यजमाने जीवति मृतशब्दो जायते तस्य सुरभिमतीष्टिः कर्तव्या । ‘ साध्वीमकः ’ इत्येषा तत्र याज्या । सूत्रितं च—‘ अग्निर्होता न्यसीदद्यजीयान् साध्वीमकर्देववीतिं नो अद्य ’ ( आश्व. श्रौ. ३. १३ ) इति ॥

सा॒ध्वीम॑कर्दे॒ववी॑तिं नो अ॒द्य य॒ज्ञस्य॑ जि॒ह्वाम॑विदाम॒ गुह्या॑म् ।
स आयु॒रागा॑त्सुर॒भिर्वसा॑नो भ॒द्राम॑कर्दे॒वहू॑तिं नो अ॒द्य ॥ ३ ॥

सा॒ध्वीम् । अ॒क॒रिति॑ । दे॒वऽवी॑तिम् । नः॒ । अ॒द्य । य॒ज्ञस्य॑ । जि॒ह्वाम् । अ॒वि॒दा॒म॒ । गुह्या॑म् ।
सः । आयुः॑ । आ । अ॒गा॒त् । सु॒र॒भिः । वसा॑नः । भ॒द्राम् । अ॒कः॒ । दे॒वऽहू॑तिम् । नः॒ । अ॒द्य ॥ ३ ॥

अयमग्निः अद्य नः अस्माकं देववीतिं देवानामागमनवन्तं देवानां हविर्भक्षणोपेतं वा यज्ञं साध्वीमकः साधुमकार्षीत् । वयं च यज्ञस्य गुह्यां गूढतरां जिह्वामविदाम लब्धवन्तः स्म । अग्निर्हि यज्ञस्य जिह्वा तेन देवानां पानाज्जिह्वात्वेनोपचारः । सः शाश्वतोऽग्निः सुरभिः सुगन्धः

1. ग-ख१.२.३.६.७.८-अ-मु—यजामहै इति ।

आयुः देवैः दत्तमायुष्यं वसानः आच्छादयन् आगात् आगच्छति । आगत्य च नः अस्मदर्थं देवहूतिं देवानामाह्वानवन्तं[1] यज्ञं मद्रामकः कल्याणं कृतवान् अद्य इदानीम् ॥

दर्शपूर्णमासयोः सामिधेन्यर्थं प्रेषितेन होत्रा 'तदद्य वाचः' इत्येषा जप्या । सुगावापनात् पूर्वमपि[2] जप्या । सूत्रितं च—'तदद्य वाचः प्रथमं मसीयेति समाप्य' (आश्व.श्रौ. १.२) इति ॥

> तद॒द्य वा॒चः प्र॑थ॒मं म॑सीय॒ येनासु॑राँ अ॒भि दे॒वा असा॑म ।
> ऊर्जा॑द उ॒त य॑ज्ञियास॒ः पञ्च॑ जना॒ मम॑ हो॒त्रं जु॑षध्वम् ॥ ४ ॥

तत् । अ॒द्य । वा॒चः । प्र॒थ॒मम् । म॒सी॒य॒ । येन॑ । असु॑रान् । अ॒भि । दे॒वाः । असा॑म ।
ऊर्ज॑ऽअद । उ॒त । य॒ज्ञि॒या॒सः॒ । पञ्च॑ । जनाः॑ । मम॑ । हो॒त्रम् । जु॒ष॒ध्व॒म् ॥ ४ ॥

इदमुत्तरं वाक्यमित्युक्तम् । अद्य इदानीं प्रथमम् । मुख्यनामैतत् । वाचो मुख्यं तत् वाचः वचः वचनं मसीय मंसीय उच्चारयामि । येन वचसा अहं देवाः च वयम् असुरान् अभि असाम अभिभवेम । किं तत् प्रथमं वचनमिति उच्यते । ऊर्जादः हे अन्नादः उत अपि च यज्ञियासः यज्ञार्हा हे पञ्च जनाः देवमनुष्यादयः यूयं मम होत्रं जुषध्वं सेवध्वमिति । एवं बहूच्यमानेऽग्निमनुगम्य सर्वे देवा इत्यभिप्रायः । अत्र 'तदद्य वाचः' (निरु. ३. ८) इत्यादि निरुक्तं द्रष्टव्यम् ॥

> पञ्च॒ जना॒ मम॑ हो॒त्रं जु॑षन्तां॒ गोजा॑ता उ॒त ये य॒ज्ञिया॑सः ।
> पृ॒थि॒वी नः॒ पार्थि॑वात्पा॒त्वंह॑सो॒ऽन्तरि॑क्षं दि॒व्यात्पा॑त्व॒स्मान् ॥ ५ ॥

पञ्च॑ । जनाः॑ । मम॑ । हो॒त्रम् । जु॒ष॒न्ता॒म् । गोऽजा॑ताः । उ॒त । ये । य॒ज्ञिया॑सः ।
पृ॒थि॒वी । नः॒ । पार्थि॑वात् । पा॒तु॒ । अंह॑सः । अ॒न्तरि॑क्षम् । दि॒व्यात् । पा॒तु॒ । अ॒स्मान् ॥ ५ ॥

पञ्च जनाः देवादयः मम होत्रं हवमाह्वानं जुषन्तां सेवन्ताम् । अपि च गोजाताः भूम्यामुत्पन्नाः । बहूत । गोशब्देन तत्र पय आदिकमुच्यते । हविरर्थं प्रादुर्भूता इत्यर्थः । तादृशा ये सन्ति । उत अपि च ये यज्ञियासः यज्ञार्हाः[3] सन्ति ते मम होत्रं[4] जुषन्ताम्[4] । किंच पृथिवी पृथिवीदेवता पार्थिवात् पृथिवीसंबन्धात् नः अस्मान् अंहसः पापात् पातु रक्षतु । तथा अन्तरिक्षम् अन्तरिक्षदेवता दिव्यात् आन्तरिक्षादंहसः पापसकाशात्[5] अस्मान् पातु ॥ ॥१३॥

गार्हपत्यादारभ्याहवनीयाद्वेदि वेदतृणैरास्तृणाति 'तन्तुम्' इत्यनया । सूत्रितं च—'अविच्छिन्दन् संततं स्तृणन् सव्येन गार्हपत्यादाहवनीयमेति तन्तुं तन्वन्रजसो भानुमन्विहि' (आश्व. श्रौ. १. ११) इति । अग्निहोत्रहोमेऽप्यनयोदकधारा आनयनीया । सूत्रितं च—'गार्हपत्यादविच्छिन्नामुदकधारां हरेत्तन्तुं तन्वन्रजसो भानुमन्विहि' (आश्व. श्रौ. २. २) इति । अनन्वस्तरणे वातिक्रमणेऽप्यरा गार्हपत्याहवनीययोर्मध्यमुदकेन भस्मना च पूरयेत् । सूत्रितं च—'गार्हपत्याहवनीययोरन्तरं भस्मराज्योदकराज्या च संतनुयात्' (आश्व. श्रौ. ३.१०) इति । आग्रिमारुतेऽप्येषा शंस्या । सूत्रितं च—'तन्तुं तन्वन्रजसो भानुमन्विह्येवा न इन्द्रो मघवा विरप्शी' (आश्व. श्रौ.५.२०) इति ॥

१ म-स१.२.८-भ६—देवानां हवनवंतं, भ७—देवानां आह्वातारं । २ ग४—पूर्वमेव । ३. ग-त-भ४. मु—यज्ञार्हा देवाः । ४. त३-भ८—होत्रं हवमाह्वानं जुषंतां सेवंतां । ५. ग-त४.५-भ४—सकाशात्; त१.२.६.७.८-भ१.६.७-मु—पापात् सकाशात् ।

तन्तुं तन्वन्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् ।
अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनम् ॥ ६ ॥

तन्तुम् । तन्वन् । रजसः । भानुम् । अनु । इहि । ज्योतिष्मतः । पथः । रक्ष । धिया । कृतान् ।
अनुल्बणम् । वयत । जोगुवाम् । अपः । मनुः । भव । जनय । दैव्यम् । जनम् ॥ ६ ॥

हे अग्ने तन्तुं यज्ञं तन्वन् विस्तारयन् रजसः रञ्जनात्मकस्य लोकस्य भानुं भासकमादित्यम् अन्विहि अनुगच्छ। रश्मिद्वारा सूर्यमण्डलं प्रविशेत्यर्थः। किंच ज्योतिष्मतः प्रकाशवतो यज्ञस्य पथः गमनमार्गान्। अथवा ज्योतिष्मतो दीप्तिमतः स्वर्गस्य पथो मार्गान् देवयानान्। रक्ष पालय। कीदृशान्मार्गान्। धिया कर्मणा कृतान् संपादितान्। किंच सोऽग्निः जोगुवां स्तोतॄणाम् अपः। कर्मनामैतत्। क्रियया व्याप्यं कर्म अनुल्बणम् अनतिरिक्तं वयत करोतु। 'यदेव यज्ञ उल्बणं क्रियते तस्यैवैषा शान्तिः' (तै. सं. ३. ४. ३. ७) इति हि ब्राह्मणम्। स त्वं मनुर्भव मननवान् भव। स्तुत्यो भवेत्यर्थः। किंच दैव्यं जनं देवसंघं जनय उत्पादय। यज्ञाभिगमनवन्तं कुर्वित्यर्थः॥

अक्षानहो नह्यतनोत सोम्या इष्कृणुध्वं रशना ओत पिंशत ।
अष्टावन्धुरं वहताभितो रथं येन देवासो अनयन्नभि प्रियम् ॥ ७ ॥

अक्षऽनहः । नह्यतन । उत । सोम्याः । इष्कृणुध्वम् । रशनाः । आ । उत । पिंशत ।
अष्टाऽवन्धुरम् । वहत । अभितः । रथम् । येन । देवासः । अनयन् । अभि । प्रियम् ॥ ७ ॥

अत्र यज्ञजिगमिषवो देवाः परस्परं ब्रुवते। हे सोम्याः सोमार्हा देवाः यूयम् अक्षानहः अक्षेषु नद्धान् बन्धनीयानश्वान् नह्यतन नह्यत बध्नीत[1] रथे। उत अपि च रशनाः अश्वबन्धनप्रग्रहान् इष्कृणुध्वं निष्कुरुत सम्यक् संस्कुरुत। नकारलोपश्छान्दसः। उत अपि च आ पिंशत। 'पिश अवयवे'। अश्वानलंकुरुतेत्यर्थः। अष्टावन्धुरम्। वन्धुरं सारथिनिवासस्थानम्। अष्टसंख्याकबन्धुरोपेतं रथं सूर्यसंबन्धिनम् अभितः सर्वतः वहत। सूर्यरथेन साकं युष्मदीयान्रथान् यज्ञं प्रति गमयतेत्यर्थः। येन देवासः देवाः प्रियम् अस्मान्[2] अनयन् अभिगमयन्ति तं रथमभितो वहतेति संबन्धः। यद्वा। तं यज्ञं प्रति वहतेति योज्यम्॥

वैवाहिके प्रयाणे यदि नावा तार्या नदी स्यात् तदानीम् 'अश्मन्वती' इत्यर्धर्चेन वधूं नावमारोहयेत्। उत्तरेणार्धर्चेन नदीमुत्क्रमयेत्। सूत्रितं च— 'अश्मन्वती रीयते सं रभध्वमित्यर्धर्चेन नावमारोहयेदुत्तरेणोत्क्रमयेत्' (आश्व. गृ. १. ८. २-३) इति॥

अश्मन्वती रीयते सं रभध्वमुत्तिष्ठत प्र तरता सखायः ।
अत्रा जहाम ये असन्नशेवाः शिवान्वयमुत्तरेमाभि वाजान् ॥ ८ ॥

अश्मन्ऽवती । रीयते । सम् । रभध्वम् । उत् । तिष्ठत । प्र । तरत । सखायः ।
अत्र । जहाम । ये । असन् । अशेवाः । शिवान् । वयम् । उत् । तरेम । अभि । वाजान् ॥ ८ ॥

---

१. त-अ-म-मु—बध्नीत। २. म-त-अ-मु—आत्मानं।

अत्रापि देवा यज्ञनिर्गमविषयं परस्परं ब्रुवते। अश्मन्वती नाम नदी रीयते गच्छति। 'री गतिरेषणयोः'। तां यज्ञगमनायोत्तरितुम् उत्तिष्ठत उद्युक्ता भवत। तथा कृत्वा प्र तरत तां नदीमुल्लङ्घयत। हे सखायः यजमानस्य सखिभूता इति देवानां संबोधनम्। अत्र अस्यां नद्यां जहाम परित्यजाम। कानिति उच्यते। ये अशेवाः। शेवमिति सुखनाम। येऽसुखभूताः असन् अभवन् अस्मानाश्रित्य वर्तन्ते तान् जहाम। तथा कृत्वा शिवान् सुखकराणि[1] वाजान् अन्नानि हवींषि अभि प्राप्तुम् उत्तरेम॥

त्वष्टा माया वेदपसामपस्तमो बिभ्रत्पात्रा देवपानानि शंतमा।
शिशीते नूनं परशुं स्वायसं येन वृश्चादेतशो ब्रह्मणस्पतिः॥ ९॥

त्वष्टा। मायाः। वेत्। अपसाम्। अपःऽतमः। बिभ्रत्। पात्रा। देवऽपानानि। शम्ऽतमा।
शिशीते। नूनम्। परशुम्। सुऽआयसम्। येन। वृश्चात्। एतशः। ब्रह्मणः। पतिः॥९॥

अयं त्वष्टा देवशिल्पी मायाः। कर्मनामैतत्। कर्माणि पात्रनिर्माणविषयाणि वेत् वेत्ति जानाति। स च[2] त्वष्टा अपसां शोभनकर्मवतां मध्ये अपस्तमः अतिशयेन शोभनकर्मा देवपानानि देवाः पिबन्ति येषु तानि पात्रा सोमपात्राणि बिभ्रत् धारयन् वर्तत इति शेषः। स च त्वष्टा नूनम् इदानीमग्नौ हविर्वहनायाङ्गीकृते सति स्वायसं शोभनायःसारभूतं परशुं शिशीते तीक्ष्णयति। त्वष्टा पात्रसंपादनार्थं येन परशुना एतशः एतवर्णः ब्रह्मणस्पतिः ब्रह्मणो मन्त्रस्य पाता पात्रादिसंपादनरूपस्य कर्मणः स्वामी वा वृश्चात् वृश्चति[3]॥

सतो नूनं कवयः सं शिशीत वाशीभिर्याभिरमृताय तक्षथ।
विद्वांसः पदा गुह्यानि कर्तन येन देवासो अमृतत्वमानशुः॥ १०॥

सतः। नूनम्। कवयः। सम्। शिशीत। वाशीभिः। याभिः। अमृताय। तक्षथ।
विद्वांसः। पदा। गुह्यानि। कर्तन। येन। देवासः। अमृतऽत्वम्। आनशुः॥ १०॥

हे कवयः मेधाविनस्त्वष्टुर्मम शिष्या ऋभवः सतः। सन्त इत्यर्थः। प्रशस्ता यूयं नूनम् इदानीं सं शिशीत अत्यर्थं तीक्ष्णीकुरुत वाशीः[4]। याभिः[5] वाशीभिः पात्राणि अमृताय सोमाय। तत्पानायेत्यर्थः। यद्वा युष्माकममृतत्वाय। तदर्थं तक्षथ संपादयथ। हे कवयः विद्वांसः यूयं गुह्यानि गोपनीयानि पदा पदानि निवासस्थानानि कर्तन कुरुत। येन स्थानकरणेन देवासः देवा यूयम् अमृतत्वमानशुः प्राप्ता यूयम्। एवं स्वशिष्यानाह॥

गर्भे योषामदधुर्वत्समासन्यपीच्येन मनसोत जिह्वया।
स विश्वाहा सुमना योग्या अभि सिषासनिर्वनते कार इज्जितिम्॥ ११॥

गर्भे। योषाम्। अदधुः। वत्सम्। आसनि। अपीच्येन। मनसा। उत। जिह्वया।
सः। विश्वाहा। सुऽमनाः। योग्याः। अभि। सिसासनिः। वनते। कारः। इत्। जितिम्॥ ११॥

१. क-त-भ-मु—सुखकरान्। २. ग-त-भ-मु—'च' नास्ति। ३. ग-त-भ४-मु—वृश्चति पात्राणि। ४. त१.२.६.७.८-भ—'वाशीः' नास्ति। ५. त१.२.६.७.८-भ१.२.६.७.८-वाशीभिर्याभिः।

ते[1] मरुतः[1] गर्भे सूतायाः गोर्मध्ये प्राहके वर्णान्ति सूतायाः गोः संबन्धिनि योषां काञ्चिद्गाम् अदधुः धारितवन्तः । 'निश्चर्मणो गामरिणीत धीतिभिः ( ऋ. सं. १. १६१. ७ ) इत्युक्तम् । तथा आसनि सूताया आस्ये वत्सम् अदधुः । केन साधनेन अपीच्येन[2] मनसा देवत्वमाकाङ्क्षता उत अपि च जिह्वया । साहचर्यप्रधानोऽयं निर्देशः । जिह्वावद्वाचमया वाचेत्यर्थः । यद्वा[3] । जिह्वया युक्तां योषामिति संबन्धः । सिषासनिः संभजनशीलः सः ऋभुसंघः विश्वाहा सर्वेष्वहःसु[4] सर्वदा योग्याः स्तोत्रोचिताः सुमनसः[5] स्तुतीः अभि वनते । स च संघः जितिं शत्रुजयं कामं कारः इत् कर्तेव शत्रुजयकर्तेव ॥ ॥ १४ ॥

'तां सु ते' इति षडृचं द्वादशं सूक्तं वामदेवगोत्रस्य बृहदुक्थस्यार्षं त्रैष्टुभमैन्द्रम् । तथा चानुक्रान्तं—'तां सु षड् बृहदुक्थो वामदेव्यः' इति । समूळ्हस्य दशरात्रस्य द्वितीये छन्दोम एतत्सूक्तम् । सूत्रितं च—'अपूर्व्या पुरुतमानि तां सु ते कीर्तिं त्वं महाँ इन्द्र' ( आश्व. श्रौ. ८. ७ ) इति । महाव्रते निष्केवल्य एतत्सूक्तम् । सूत्रितं च—'तां सु ते कीर्तिं मघवन्महित्वा भूय इद्वावृधे वीर्याय' ( ऐ. आ. ५. १. ६ ) इति ॥

तां सु ते॑ कीर्तिं म॑घवन्महि॒त्वा यत्त्वा॑ भी॒ते रोद॑सी॒ अह्व॑येताम् ।
प्रावो॑ दे॒वाँ आति॑रो॒ दास॒मोजः॑ प्र॒जायै॑ त्व॒स्यै॒ यदशि॑क्ष इन्द्र ॥ १ ॥

ताम् । सु । ते । की॒र्तिम् । म॒घ॒ऽव॒न् । म॒हि॒ऽत्वा । यत् । त्वा॒ । भी॒ते इति॑ । रोद॑सी॒ इति॑ । अह्व॑येताम् ।
प्र । आवः॑ । दे॒वान् । आ । अ॒ति॒रः॒ । दास॑म् । ओजः॑ ।
प्र॒ऽजायै॑ । त्व॒स्यै॒ । यत् । अशि॑क्षः । इ॒न्द्र॒ ॥ १ ॥

हे इन्द्र मघवन् धनवन् ते तव संबन्धिनीं महित्वा महत्त्वेनागतां कीर्तिं सु सुष्ठु कीर्तयामीति शेषः । किंच यत् यदा त्वा त्वां प्रति भीते असुरैर्भयं प्राप्ते रोदसी द्यावापृथिव्यौ अह्वयेतां अवेत्यभूतां[6] तदानीं देवान् प्र आवः प्रारक्षः । तथा दासं देवानामुपक्षयकर्तारमसुरम् आ अतिरः अवसादयः । असुरान् हत्वा देवानां रक्षणेन द्यावापृथिव्योः भीतिं[7] पर्यहर इति यदस्ति किंच त्वस्यै एकस्यै प्रजायै यजमानरूपायै यत्[8] बलम्[8] अशिक्षः प्रायच्छः । तां कीर्तिं कीर्तयामीत्यर्थः ॥

यदच॑रस्त॒न्वा॑ वावृधा॒नो बला॑नीन्द्र प्रब्रुवा॒णो जने॑षु ।
मा॒येत्सा ते॒ यानि॑ यु॒द्धान्या॒हुर्नाद्य शत्रुं॒ न॒नु पु॒रा वि॑वि॒त्से ॥ २ ॥

यत् । अच॑रः । त॒न्वा॑ । व॒वृ॒धा॒नः । बला॑नि । इ॒न्द्र॒ । प्र॒ऽब्रु॒वा॒णः । जने॑षु ।
मा॒या । इत् । सा । ते॒ । यानि॑ । यु॒द्धानि॑ । आ॒हुः । न । अ॒द्य । शत्रु॑म् । न॒नु । पु॒रा । वि॒वि॒त्से॒ ॥ २ ॥

हे इन्द्र तन्वा शरीरेण स्तोत्रेण वा वावृधानः वर्धमानः जनेषु प्राणिषु बलानि प्रब्रुवाणः वृत्रवधादिरूपाणि सामर्थ्यानि प्रकर्षेण कथयन् अचरः इति यत् संचारं कृतवानिति वदन्ति ते तव सा गतिः माया इत् मायैव । वृथेत्यर्थः[9] । किंच यानि युद्धानि शत्रुविषयाणि आहुः कुर्वते

१. ग-त—सोमी मरुतो । २. ग-त-अ२—'अपीच्येन' नास्ति । ३. त-अ४.५.६.८—यद्वा अपि च । ४. त१.१.३.७-मु—सर्वेष्वप्यहःसु । ५. त१.२.३.७—सुमनाः सम्भजमाना । ६. ग-त४.५—रक्षेत्यभूतां; त१.२.३.८-अ२.४.६.८—अहेत्यभूतां । ७. त१.२.३.७-मु—भारं । ८. त१.२.७-अ—तद्बलं; त३—तदनं । ९. त-मु—मृषेत्यर्थः ।

पुराविद[1] ऋषयः तान्यपि मायैव । कुत इति आह । अद्य इदानीं शत्रुं हन्तव्यं न विविदसे न लभसे । अद्य मा भूत् पूर्वं हतवानस्मीति यत्[2] ब्रूषे तदपि नेत्याह । ननु इति प्रश्ने । किं पुरा शत्रुमलभथाः । तदपि नेत्यर्थः ॥

क उ नु ते महिमनः समस्यास्मत्पूर्व ऋषयोऽन्तमापुः ।
यन्मातरं च पितरं च साकमजनयथास्तन्वः स्वायाः ॥ ३ ॥

के । ऊँ इति । नु । ते । महिमनः । समस्य । अस्मत् । पूर्वे । ऋषयः । अन्तम् । आपुः ।
यत् । मातरम् । च । पितरम् । च । साकम् । अजनयथाः । तन्वः । स्वायाः ॥ ३ ॥

हे इन्द्र ते तव महिमनः महिम्नः समस्य सर्वस्यापि अन्तं पारम् अस्मत्[3] अस्मत्तः पूर्वे ऋषयः[4] के[5] आपुः प्राप्नुवन् । न केऽपीत्यर्थः । यद्यपि महत्त्वं प्रख्यापयन्ति तथापि न कार्त्स्न्येनेति । तत्र कारणमाह । यत् यस्मात् मातरं च पितरं च । 'द्यौः पिता पृथिवी माता' ( तै. ब्रा. ३.७.५.४-५ ) इति हि श्रुतम् । अतो द्यावापृथिव्यावित्यर्थः । ते उभे अपि साकं सहैव स्वायाः तन्वः स्वकीयाच्छरीरात् अजनयथाः उदपादयः । अतो नापुरिति संबन्धः ॥

चत्वारि ते असुर्याणि नामादाभ्यानि महिषस्य सन्ति ।
त्वमङ्ग तानि विश्वानि वित्से येभिः कर्माणि मघवञ्चकर्थ ॥ ४ ॥

चत्वारि । ते । असुर्याणि । नाम । अदाभ्यानि । महिषस्य । सन्ति ।
त्वम् । अङ्ग । तानि । विश्वानि । वित्से । येभिः । कर्माणि । मघऽवन् । चकर्थ ॥ ४ ॥

हे इन्द्र महिषस्य महतः पूज्यस्य ते तव चत्वारि असुर्याणि असुरविघातीनि अदाभ्यानि अन्यैरहिंस्यानि उत्तरसूक्ते उपान्त्यवर्जिते 'दूरे तन्नाम' इत्यादिषु प्रतिपादितानि यानि नाम नामकानि शरीराणि सन्ति अङ्ग सखे त्वं तानि विश्वानि सर्वाणि वित्से वेत्सि जानासि । येभिः यैः नामभिः कर्माणि वृत्रवधादिरूपाणि चकर्थ कुरुषे हे मघवन् तानि वेत्सीति ॥

त्वं विश्वा दधिषे केवलानि यान्याविर्या च गुहा वसूनि ।
काममिन्मे मघवन्मा वि तारीस्त्वमाज्ञाता त्वमिन्द्रासि दाता ॥ ५ ॥

त्वम् । विश्वा । दधिषे । केवलानि । यानि । आविः । या । च । गुहा । वसूनि ।
कामम् । इत् । मे । मघऽवन् । मा । वि । तारीः ।
त्वम् । आऽज्ञाता । त्वम् । इन्द्र । असि । दाता ॥ ५ ॥

हे इन्द्र त्वं विश्वा सर्वाणि केवलानि अन्येषामसाधारणानि वसूनि धनानि दधिषे धारयसि । विश्वानीत्युक्तं कथं विश्वत्वमित्यत आह । यानि आविः आविर्भूतानि[5] सर्वैः प्रसिद्धानि वसूनि वासयोग्यानि[6] धनानि सन्ति या च गुहा गुहायां निगूढे प्रदेशे वर्तमानानि वसूनि

१. त१.२.६.७.८-अ-सु—पुराणविदः । २. त-अ-सु—'यत्' नास्ति । ३. ग—अस्मद् । ४. ग२-अ१.२.४.६—के ऋषयः; ग४-स-अ७—ऋषयः । ५. त२.६.७.८-अ२.५.६—आविर्भूतानि तानि । ६. ग-स-सु—निवास° ।

सन्ति तानि विश्वानि वृधिष इति । यस्मादेवं तस्मात् मे मम कामं काङ्क्षितं हे मघवन् धनव-न्निन्द्र मा वि तारीः मा हिंसीः । इत् इति पूरणः । वर्धयेति शेषः । हे इन्द्र त्वमाज्ञाता असि प्रायच्छितासि[1] अभिलषितं धनम् । तथा हे इन्द्र त्वं दाता असि ॥

यो अदधाज्ज्योतिषि ज्योतिरन्तर्यो असृजन्मधुना सं मधूनि ।
अध प्रियं शूषमिन्द्राय मन्म ब्रह्मकृतो बृहदुक्थादवाचि ॥ ६ ॥

यः । अदधात् । ज्योतिषि । ज्योतिः । अन्तः । यः । असृजत् । मधुना । सम् । मधूनि ।
अध । प्रियम् । शूषम् । इन्द्राय । मन्म । ब्रह्मऽकृतः । बृहत्ऽउक्थात् । अवाचि ॥ ६ ॥

यः इन्द्रः ज्योतिषि द्योतमाने आदित्याग्निके तेजसि अन्तः ज्योतिः तेजः अदधात् धारितवान् । यदादित्याग्न्यादिषु तेजोऽस्ति तदिन्द्रकृतमित्यर्थः । यः च मधुना मधुरेण रसेन[2] मधूनि सोमादिमधुरद्रव्याणि सम् असृजत् समयोजयत् । यद्वा । मधुना । अत्र मधु-शब्देन सर्वैः सेव्यमान आदित्य उच्यते । तेन सह मधूनि उदकानि समसृजत् । अध संप्रति तस्मै इन्द्राय प्रियं प्रीतिजनकं[3] शूषं बलं शत्रूणां शोषकत्वात्सुखकरं मन्म मननीयं स्तोत्रं ब्रह्मकृतः मन्त्रकृतः बृहदुक्थात् प्रभूतशस्त्रयुक्तादेतन्नामकादृषेः सकाशात् अवाचि उक्तमभूत् ॥ ॥ १५ ॥

'दूरे तत्' इत्यष्टर्चं त्रयोदशं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'दूरे' इत्यनुक्रान्तम् । गतः सूक्तविनियोगः ॥

दूरे तन्नाम गुह्यं पराचैर्यत्त्वा भीते अह्वयेतां वयोधै ।
उदस्तभ्नाः पृथिवीं द्यामभीके भ्रातुः पुत्रान्मघवन्तित्विषाणः ॥ १ ॥

दूरे । तत् । नाम । गुह्यम् । पराचैः । यत् । त्वा । भीते इति । अह्वयेताम् । वयःऽधै ।
उत् । अस्तभ्नाः । पृथिवीम् । द्याम् । अभीके । भ्रातुः । पुत्रान् । मघऽवन् । तित्विषाणः ॥ १ ॥

अनया 'चत्वारि ते असुर्याणि[4] नाम' इत्युक्तस्य माहात्म्यं नाम स्तूयते । हे इन्द्र ते तव तत् वक्ष्यमाणं नाम सर्वेषां नामकं शरीरं पराचैः पराङ्मुखैर्मनुष्यैः । मनुष्याणामित्यर्थः । गुह्यं गोपनीयमप्रकाशितं सत् दूरे इतो विप्रकृष्टे दूरदेशे वर्तत इति शेषः । यत् यदा त्वा त्वां रोदसी द्यावापृथिव्यौ भीते सती अह्वयेताम् अकेवयताम् । किमर्थम् । वयोधै अन्नस्य निधानार्थम् । जगतोऽन्नस्य साधनायेत्यर्थः । तदानीं तेन शरीरेण अभीके । अन्तिकनामैतत् । एव समीप एव पृथिवीं द्यां च उत् ऊर्ध्वं परस्परवियुक्तं यथा भवति तथा अस्तभ्नाः स्तम्भितवानसि । किं कुर्वन् । हे मघवन् इन्द्र भ्रातुः पर्जन्यस्य पुत्रान् पुत्रस्थानीयानुदकसंस्त्यायान् तित्विषाणः दीपयन्[5] ॥

महत्तन्नाम गुह्यं पुरुस्पृग्येन भूतं जनयो येन भव्यम् ।
प्रत्नं जातं ज्योतिर्यदस्य प्रियं प्रियाः समविशन्त पञ्च ॥ २ ॥

१. द६.८-भ-नियमितासि । २. ग-त-मु-रसेन निमित्तेन । ३. ग-त-भ-मु-प्रियजनकं । ४. ग-त-भ-'असुर्याणि' नास्ति । ५. ग-त१.२.३.७-मु-दीपयन्निति (त७-भूवन्निति) विद्युद्रूपमिन्द्रमाह । विद्युदेवन्द्र (त१.२.७-मु-विद्युद्रूपेन्द्र) इति च वाजसनेयकं । यद्वा पर्जन्यरूपमाह । तदानीं वायुरस्येन्द्रस्य भ्राताभिप्रेतः ।

महत् । तत् । नाम॑ । गुह्य॑म् । पुरुऽस्पृक् । येन॑ । भूतम् । जनय॑: । येन॑ । भव्य॑म् ।
प्रत्नम् । जातम् । ज्योति॑: । यत् । अस्य । प्रियम् । प्रियाः । सम् । अविशन्त । पञ्च॑ ॥२॥

हे इन्द्र तव तत् गुह्यं गोपनीयमन्यैरविज्ञातं पुरुस्पृक् बहुभिर्बहुधर्मिभिः स्पृहणीयमाकाशात्मकं नाम शरीरं महत् अत्यन्तं प्रवृद्धं येन नाम्ना भूतं भव्यं च पूर्वं जनयः उत्पादितवानसि । भूतभव्योभयात्मकत्वाच्च येनेत्यस्यावृत्तिः[1] स्यात् । आकाशात्मकाद्धि परमेश्वरस्वरूपात् भूतभव्यात्मकं जगदुत्पद्यते । 'आकाशाद्वायुः' ( तै. आ. ८. १ ) इत्यादिश्रुतेः । किंच प्रत्नं पुराणं पूर्वकालीनं यत् ज्योतिः लोकसाधनमादित्याख्यमुदकाख्यं वा अस्य इन्द्रस्य प्रियं प्रियभूतं तत्त्वं जातम् उत्पन्नं[2] प्रियाः प्रीयमाणाः पञ्च । पञ्च जना इति शेषः । भीमसेनो भीम इतिवदेकदेशलक्षणा । निषादपञ्चमाश्चत्वारो वर्णाः समविशन्त संविशन्ते । स्वनिर्वाहार्थं भजन्त इत्यर्थः ॥

आ रोद॑सी अपृणा॒दोत मध्यं॒ पञ्च॑ दे॒वाँ ऋ॑तु॒शः स॒प्तस॑प्त ।
चतु॑स्त्रिंशता पुरु॒धा वि च॑ष्टे॒ सरू॑पेण॒ ज्योति॑षा॒ विव्र॑तेन ॥ ३ ॥

आ । रोद॑सी इति॑ । अ॒पृणा॒त् । आ । उ॒त । मध्य॑म् । पञ्च॑ । दे॒वान् । ऋ॒तु॒ऽशः । स॒प्तऽस॑प्त ।
चतु॑:ऽत्रिंशता । पु॒रु॒धा । वि । च॒ष्टे॒ । सऽरू॑पेण । ज्योति॑षा । विऽव्र॑तेन ॥ ३ ॥

अयमिन्द्र आत्मीयेन शारीरेण तेजसा वा रोदसी द्यावापृथिव्यौ आ सर्वतः अपृणात् पूरयति । उत अपि च मध्यं द्युभूम्यपेक्षया मध्यभूतमन्तरिक्षमापृणादिति[3] वर्तते । तदपि स्वशरीरेण तेजसा वा पूरयति । किंच पञ्च देवान् देवमनुष्यपितृसुररक्षःसंज्ञकान् तथा[4] सप्तसप्त । द्विरुक्त्या सप्तसंख्याकानि तत्त्वानि लोके यानि सन्ति तानि परिगृह्यन्ते । कानि तानीति । सप्त मरुद्गणान् सप्तादित्यरश्मीन् सप्तचेन्द्रियाणि सप्त लोकानन्यानपि सप्तसंख्योपेतान् ऋतुशः काले काले चतुस्त्रिंशता चतुस्त्रिंशत्संख्याकेन[5] देवगणेन[5] सह पुरुधा बहुप्रकारं वि चष्टे विपश्यति सर्वदेक्षते । अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च विराट् चेति चतुस्त्रिंशत्संख्या देवानाम् । केनेति तदुच्यते । सरूपेण समानरूपेण ज्योतिषा प्रकाशकेन विव्रतेन विविधेन कर्मणा ॥

यदु॑ष॒ औच्छः॑ प्रथ॒मा वि॒भाना॒मज॑नयो॒ येन॑ पु॒ष्टस्य॑ पु॒ष्टम् ।
यत्ते॑ जामि॒त्वमव॑रं॒ पर॑स्या म॒हन्म॑ह॒त्या अ॑सुर॒त्वमेक॑म् ॥ ४ ॥

यत् । उ॒षः॒ । औच्छ॑: । प्र॒थ॒मा । वि॒ऽभाना॑म् । अज॑नयः । येन॑ । पु॒ष्टस्य॑ । पु॒ष्टम् ।
यत् । ते॒ । जा॒मि॒ऽत्वम् । अव॑रम् । पर॑स्याः । म॒हत् । म॒ह॒त्याः । अ॒सु॒र॒ऽत्वम् । एक॑म् ॥४॥

अत्र प्रसङ्गात्सूर्यात्मकेन्द्रसंबन्धिन्युषाः स्तूयते । हे उषः उषोदेवते विभानां विभासकानां ग्रहनक्षत्रादीनां प्रथमा प्रथमभूता सती औच्छः विभासनमकरोः[6] । अग्रे ह्युषसः प्रादुर्भवन्ति पश्चादन्यानि तेजांसि । येन च तेजसा पुष्टस्य पोषयुक्तस्यापि पदार्थस्य पुष्टम् अतिशयेन पोषयुक्तमादित्यम् अजनयः उदपादयः । यत् यच्च ते तव जामित्वं बान्धवम् अवरम् अर्वाङ्मुखम् । अस्मदभिमुखमित्यर्थः । कीदृश्यास्तवेति उच्यते । परस्याः । उपरि स्थितायाः इत्यर्थः ।

---

१. त१.८-अ—येनेत्यर्थस्यावृत्तिः । २. ग-ड-भ२.५.६.८—उत्पन्नं तत्त्वं; मु—उत्पन्नं तत् तत्त्वं । ३. ग-स-अ-मु—मध्यमभूत° । ४. त-भ१ २.४.६.८—ते तथा । ५. त-भ-मु—°संख्याकेनैवगणेन । ६. ग—विभासनमकरोः; त-मु—विभातमकरोः ।

तदिदं ^V^महत्वाः तव ^V^महत् अतिप्रवृद्धम् ^V^एकम् असाधारणमेकमेव वा ^V^असुरत्वं महद्बलवत्त्वम् । तच्च बलेन कृतमित्यर्थः ॥

महाव्रते निष्केवल्ये ' विधुं दद्राणम् ' इत्येषा । सूत्रितं च—' आ शाक्मना शाको विधुं दद्राणम् ' ( ऐ. आ. ५. ३. १ ) इति ॥

**वि॒धुं द॒द्रा॒णं सम॑ने ब॒हू॒नां युवा॑नं॒ सन्तं॑ पलि॒तो ज॑गार ।**

**दे॒वस्य॑ पश्य॒ काव्यं॑ महि॒त्वाद्या म॒मार॒ स ह्यः समा॑न ॥ ५ ॥**

वि॒ऽधुम् । द॒द्रा॒णम् । सम॑ने । ब॒हू॒नाम् । युवा॑नम् । सन्त॑म् । प॒लि॒तः । ज॒गा॒र॒ ।

दे॒वस्य॑ । प॒श्य॒ । काव्य॑म् । म॒हि॒ऽत्वा । अ॒द्य । म॒मार॑ । सः । ह्यः । सम् । आ॒न॒ ॥ ५ ॥

अनया कालात्मक इन्द्रः स्तूयते । ^V^विधुं विधातारं सर्वस्य युद्धादेः कर्तारम् । विधूर्विधातेः[1] करोत्यर्थे । तथा ^V^समने । अननमनः प्राणनम् । सम्यगननोपेते संग्रामे ^V^बहूनां शत्रूणां ^V^दद्राणं प्रत्येकं द्वैरूप्यमभ्योपेतं ^V^युवानं ^V^सन्तं पुरुषं ^V^पलितः जरा[2] ^V^जगार निगिरतीत्याश्चर्यम् । एवंभूतलक्षणं वक्ष्यमाणलक्षणं च ^V^देवस्य कालात्मकस्येन्द्रस्य ^V^महित्वा महत्त्वेनोपेतं ^V^काव्यं सामर्थ्यं ^V^पश्य पश्यत हे जनाः । तथा जरसा प्राप्तः ^V^अद्य ^V^ममार म्रियते । ^V^स ^V^ह्यः परेद्युः ^V^समान सम्यक् चेष्टते । पुनर्जन्मान्तरे प्रादुर्भवतीत्यर्थः । तदेवं त्वत्कारि कामानि शरीराण्युक्तानि ॥ ॥ १६ ॥

**शा॒क्मना॑ शा॒को अ॑रु॒णः सु॑प॒र्ण आ यो म॒हः शूरः॑ स॒नादनी॑ळः ।**

**यच्चि॒केत॑ स॒त्यमित्तन्न मोघं॒ वसु॑ स्पा॒र्हमु॒त जेतो॒त दाता॑ ॥ ६ ॥**

शा॒क्मना॑ । शा॒कः । अ॒रु॒णः । सु॒ऽप॒र्णः । आ । यः । म॒हः । शूरः॑ । स॒नात् । अनी॑ळः ।

यत् । चि॒केत॑ । स॒त्यम् । इत् । तत् । न । मोघ॑म् । वसु॑ । स्पा॒र्हम् । उ॒त । जेता॑ । उ॒त । दाता॑ ॥ ६ ॥

^V^शाक्मना । शक्मैव शाक्म । शाक्मना बलेन ^V^शाकः शक्तः । ' शक्लृ[3] शक्तौ[3] ' । स्वशक्त्यैव सर्वं कर्तुं शक्तः इत्यर्थः । न हीन्द्रस्य सहायान्तरापेक्षास्तीन्द्रत्वादेव । ^V^अरुणः अरुणवर्णः ^V^सुपर्णः कश्चिच्छोभनपर्णः पक्षी ^V^आ गच्छतीत्यध्याहारः । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । ^V^यः ^V^महः महान् ^V^शूरः विक्रान्तः ^V^सनात् पुराणः ^V^अनीळः अनीडो नीडस्याकर्ता । तद्वदिन्द्रोऽप्यविद्यत् क्वचिदपि गृहे निकेतनं करोति । एवं सुपर्णरूपकेणेन्द्रमाह । स पक्षीन्द्रः ^V^यच्चिकेत कर्तव्यत्वेन जानाति ^V^तत् ^V^सत्यमित् सत्यमेव । ^V^न तु ^V^मोघं व्यर्थं भवति । यः ^V^स्पार्हं स्पृहणीयं ^V^वसु ^V^उत[4] ^V^जेता जयति शत्रुभ्यः सकाशात् ^V^उत अपि[5] ^V^दाता प्रयच्छति च स्तोतृभ्यः । ' न लोकाव्यय ' इत्यादिना षष्ठीप्रतिषेधः ॥

**ऐभि॑र्ददे॒ वृष्ण्या॒ पौंस्या॑नि॒ येभि॒रौक्ष॑द्वृत्र॒हत्या॑य व॒ज्री ।**

**ये कर्म॑णः क्रि॒यमा॑णस्य म॒ह्न ऋ॑तेक॒र्ममु॒दजा॑यन्त दे॒वाः ॥ ७ ॥**

आ । ए॒भिः॒ । द॒दे॒ । वृष्ण्या॑ । पौंस्या॑नि । येभिः॑ । औक्ष॑त् । वृ॒त्र॒ऽहत्या॑य । व॒ज्री ।

ये । कर्म॑णः । क्रि॒यमा॑णस्य । म॒ह्ना । ऋ॒ते॒ऽक॒र्मम् । उ॒त्ऽअजा॑यन्त । दे॒वाः ॥ ७ ॥

१. म–विदधातिः । २. ग-भ–' जरा ' नास्ति । ३. त-भ-मु–' शक्लृ शक्तौ ' नास्ति । ४. ग-त-भ–' उत ' नास्ति । ५. ग-त-भ-मु–अपि च ।

स्वस्मिन्सूर्ये संविश्य चारुरेधि कल्याणो भव । कीदृशस्त्वम् । प्रियः तेन सह प्रीयमाणः । कीदृशे तस्मिन् । देवानां परमे उत्तमे जनित्रे जनके । 'देवानां ह्येतत्परमं जनित्रं यत्सूर्यः' इति हि श्रुतिः ॥

तनूष्टे वाजिन्तन्वं१ नयन्ती वाममस्मभ्यं धातु शर्म तुभ्यम् ।
अह्रुतो महो धरुणाय देवान्दिवीव ज्योतिः स्वमा मिमीयाः ॥ २ ॥

तनूः । ते । वाजिन् । तन्वम् । नयन्ती । वामम् । अस्मभ्यम् । धातु । शर्म । तुभ्यम् ।
अह्रुतः । महः । धरुणाय । देवान् । दिविऽइव । ज्योतिः । स्वम् । आ । मिमीयाः ॥ २ ॥

हे वाजिन् गतवामक पुत्र ते तव तन्वं शरीरं नयन्ती स्वशरीरं प्रापयन्ती तनूः इयं पृथिवी । उभयोरपि पार्थिवत्वात्तव शरीरस्य पृथिवीप्राप्ती मत्या तस्यास्तव शरीरनयनं सुकरम् । तादृशी पृथिवी वामं वननीयं धनम् अस्मभ्यं धातु दधातु शर्म च सुखं तुभ्यं धातु दधातु । स त्वम् अह्रुतः अनवपतितः सन् महः महतः देवान् तव कारणभूतान् दिवीव ज्योतिः द्युलोके वर्तमानं सूर्यं च । इवशब्दश्चार्थे निपातानामनेकार्थत्वात् । तं च स्वं तव स्वभूतम् आ मिमीयाः आश्रिय ॥

वाज्यसि वाजिनेना सुवेनीः सुवितः स्तोमं सुवितो दिवं गाः ।
सुवितो धर्म प्रथमानु सत्या सुवितो देवान्सुवितोऽनु पत्म ॥ ३ ॥

वाजी । असि । वाजिनेन । सुऽवेनीः । सुवितः । स्तोमम् । सुवितः । दिवम् । गाः ।
सुवितः । धर्म । प्रथमा । अनु । सत्या । सुवितः । देवान् । सुवितः । अनु । पत्म ॥ ३ ॥

हे पुत्र त्वं वाजिनेन अन्नरसेन बलेन वा वाज्यसि तद्वान् भवसि । कीदृशस्त्वम् । सुवेनीः सुष्ठु काम्यः । वी गत्यादिषु । तादृशस्त्वं सुवितः सुष्ठु प्रेरितस्त्वं स्तोमं पूर्वं त्वया कृतं स्तोत्रं तदभिमानिदेवम् अनु गाः अन्वगाः अनुगच्छ[1] । तथा सुवितो दिवं गाः । तथा सुवितो धर्म त्वया संपादितानि धर्माण्यनुगच्छ[2] । कीदृशानि । प्रथमा मुख्यानि सत्या सत्यफलानि । तथा सुवितो देवान् इन्द्रादीन् । तथा सुवितः पत्म पतज्ज्योतिरादित्याख्यम् अनु गाः ॥

महिम्न एषां पितरश्चनेशिरे देवा देवेष्वदधुरपि क्रतुम् ।
समविव्यचुरुत यान्यत्विषुरैषां तनूषु नि विविशुः पुनः ॥ ४ ॥

महिम्नः । एषाम् । पितरः । चन । ईशिरे । देवाः । देवेषु । अदधुः । अपि । क्रतुम् ।
सम् । अविव्यचुः । उत । यानि । अत्विषुः ।
आ । एषाम् । तनूषु । नि । विविशुः । पुनरिति ॥ ४ ॥

पितरश्चन अस्मत्पितरोऽप्यङ्गिरसः एषां देवानां महिम्नः महत्त्वस्य ईशिरे ईश्वरा अभवन् । ते देवाः अपि देवत्वं प्राप्ता अङ्गिरसः देवेषु इन्द्रादिषु क्रतुं संकल्पम् अदधुः धृतवन्तः । उत अपि च यानि तेजांसि अत्विषुः दीप्यन्ते तानि समविव्यचुः संगता आसन् । एषां देवानां तनूषु शरीरेषु[3] नि विविशुः निविशन्ति पितरोऽङ्गिरसः । अस्मत्पुत्रमपि तथा कुर्वित्यर्थः ॥

1. त-भ-मु गच्छ । 2. त भ-°गच्छन् । 3. ग-त४.५-मु-शरीरेषु पुनः; त३.७-शरीरेषु न ।

सहोभिर्विश्वं परि चक्रमू रजः पूर्वा धामान्यमिता मिमानाः ।
तनूषु विश्वा भुवना नि येमिरे प्रासारयन्त पुरुध प्रजा अनु ॥ ५ ॥

सहःऽभिः । विश्वम् । परि । चक्रमुः । रजः । पूर्वा । धामानि । अमिता । मिमानाः ।
तनूषु । विश्वा । भुवना । नि । येमिरे । प्र । असारयन्त । पुरुध । प्रऽजाः । अनु ॥ ५ ॥

मदीयाः पितरः सहोभिः बलैः स्वीयैः विश्वं सर्वं रजः लोकम् । 'लोका रजांस्युच्यन्ते' इति निरुक्तम् । पूर्वा पूर्वाणि धामानि स्थानानि अमिता अन्यैरमितानि मिमानाः परिच्छिन्दन्तः परि चक्रमुः पर्यक्रामन् । किंच तथा कुर्वन्तः विश्वा सर्वाणि भुवना भूतजातानि नि येमिरे नियमितवन्तः । किंच पुरुध पुरुधा बहुप्रकारं प्रजाः अनु ज्योतींष्युदकानि वा प्रासारयन्त प्रसारितवन्तः । अस्मत्पितरः पूर्वेऽङ्गिरसः स्वबलेनैव सर्वं लोकं व्याप्य पुरातनानि महनक्षत्रादीनि परिच्छिद्य सर्वभूतानि नियम्य प्रजा अनूदकानि तेजांसि वा प्रसारितवन्त इत्यर्थः । अतस्त्वमप्येवं कुर्विति भावः ॥

द्विधा सूनवोऽसुरं स्वर्विदमास्थापयन्त तृतीयेन कर्मणा ।
स्वां प्रजां पितरः पित्र्यं सह आवरेष्वदधुस्तन्तुमाततम् ॥ ६ ॥

द्विधा । सूनवः । असुरम् । स्वःऽविदम् । आ । अस्थापयन्त । तृतीयेन । कर्मणा ।
स्वाम् । प्रऽजाम् । पितरः । पित्र्यम् । सहः । आ । अवरेषु । अदधुः । तन्तुम् । आऽततम् ॥ ६ ॥

सूनवः आदित्यस्य पुत्रा देवा अङ्गिरसः । 'देवानां क्षेत्रमपरमं ज्योतिर्यत्सूर्यः' इति प्रदर्शितत्वादादित्यस्य[1] सूनव इति गम्यते । असुरं बलवन्तं स्वर्विदं सर्वज्ञं स्वर्गस्य लम्भकं वादित्यं तृतीयेन कर्मणा प्रजोत्पादनलक्षणेन । 'ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' (तै. सं. ६. ३. १०. ५) इति श्रुतेः प्रजोत्पादनस्य तृतीयकर्मत्वम् । तेन आदित्यं द्विधा आस्थापयन्त द्विप्रकारमास्थापयन्ति । उदितं चास्तमितं च कुर्वन्ति । 'उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन्' (तै. सं. १. १. १३. १) इति मन्त्रस्य ब्राह्मणे 'असौ वा आदित्य उद्ग्राभ एष निग्राभः' (तै. सं. ५. ४. ६. ६) इति श्रुतत्वाद्देवानामादित्यस्य द्विःस्थापनमुदयास्तमयकरणमिति गम्यते । किंच पितरः मदीया अङ्गिरसः स्वां प्रजाम् । उत्पाद्येति[2] शेषः । पित्र्यं सहः पितुरादित्यस्य संबन्धिनमपराभिभवक्षमं बलम् अवरेषु आ अदधुः निकृष्टेषु स्वप्रजाभूतेषु[3] मनुष्येषु स्थापितवन्तः । यथा पिता धनं सम्यक् परिरक्ष्य स्वपुत्रेभ्यः प्रयच्छति तद्वत्पितुरादित्यस्य प्रकाशादिबलं मनुष्येषु न्यदधुरित्यर्थः । किंच तन्तुं प्रजाम् आततं विततं कृतवन्त इति शेषः । पुत्रपौत्रादिरूपेणानवच्छिन्नां प्रजामित्यर्थः । 'अथ आततन्तुर्मत्प्रजाः' इति ब्राह्मणं 'प्रजातन्तुं मा व्यवच्छेत्सीः' (तै. आ. ७. ११. १) इति च । 'तन्तुं तन्वन्' (ऋ. सं. १०. ५३. ६) इत्यस्य ब्राह्मणं 'प्रजा वै तन्तुः' (ऐ. ब्रा. ३. ३८) इति ॥

नावा न क्षोदः प्रदिशः पृथिव्याः स्वस्तिभिरति दुर्गाणि विश्वा ।
स्वां प्रजां बृहदुक्थो महित्वावरेष्वदधादा परेषु ॥ ७ ॥

१. त१.२.३.६.७.८-म-मु—°दादित्यसूनव । २. त१.२.३.७-म४.६.८—उत्पाद्येति । ३. त-म—स्वप्रजाभूतासु ।

नावा । न । क्षोदः । प्रऽदिशः । पृथिव्याः । स्वस्तिऽभिः । अति । दुःऽगानि । विश्वा ।
स्वाम् । प्रऽजाम् । बृहत्ऽउक्थः । महिऽत्वा । आ । अवरेषु । अदधात् । आ । परेषु ॥ ७ ॥

ᵛनावा ᵛन उदकोत्तरणसाधनेनेव ᵛक्षोदः उदकं यथा मनुष्या नावोदकमतितरन्ति यथा वा ᵛस्वस्तिभिः क्षेमैः ᵛविश्वा सर्वाणि ᵛदुर्गाणि दुःखेन गन्तव्यान्यतितरन्ति तद्वत् ᵛबृहदुक्थः ᵛस्वां ᵛप्रजां वाजिनं सूनुं पुत्रं ᵛमहित्वा स्वमहत्त्वेन ᵛअवरेषु अस्मदादिषु ᵛआ ᵛअदधात् कृतवान्। तथा ᵛपरेषु दिव्येषु सूर्यादिष्वादधात्। एवमृषिर्मृते स्वपुत्रमेव वा स्वात्मानं परोक्षेणाह ॥ ॥ १८ ॥

' मा प्र गाम ' इति षडृचं पञ्चदशं सूक्तं गायत्रं वैश्वदेवम्। ऐक्ष्वाकोऽसमातिर्नाम राजा। तस्य बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुश्चेति चत्वारः पुरोहिता आसन्। ते च गौपायनाः। स च राजा तांस्त्यक्त्वान्यौ मायाविनावृत्तमौ पुरोहितत्वेनावृणीत। ततो बन्ध्वादयः क्रुद्धाः सन्त इमं राजानमभिचरितवन्तः। एतज्ज्ञात्वा मायाविनौ पुरोहितावेषामन्यतमं सुबन्धुं प्राणैर्वियोजितवन्तौ। मृतस्यास्य भ्रातरो बन्धुः श्रुतबन्धुर्विप्रबन्धुरित्येतेऽविनाशाय शिवभूतमिदं¹ दृष्ट्वा जपन्ति स्म। अतस्तेऽस्य सूक्तस्यर्षयः। प्रतिपाद्यमानार्थसंबन्धं मनो देवता। तथा चानुक्रान्तम्—' अथ हैक्ष्वाको राजासमातिर्गौपायनान्बन्ध्वादीन्पुरोहितांस्त्यक्त्वान्यौ मायाविनौ श्रेष्ठतमौ मत्वा पुरोदधे। तमितरे क्रुद्धा अभिचेरुः। अथ तौ मायाविनौ सुबन्धोः प्राणानाचिक्षिपतुस्तस्य हास्य भ्रातरस्त्रयः। मा प्र गामेति षड्कं गायत्रं स्वस्त्ययनं जप्त्वा ' इति। अभिमर्शमपादिशाम्बरगमनसमय इदं सूक्तं जप्यम्। सूत्रितं च—' प्रस्त्रेदनपेक्षमाणो मा प्र गामेति सूक्तं जपन् ' ( आश्व. श्रौ. २. ५ ) इति। महापितृयज्ञेऽप्येतदस्त्विभिमर्शनम्। सूत्रितं च—' मा प्र गामत्रो त्वं न इति जपन्तः ' ( आश्व. श्रौ. २. १९ ) इति। निविद् स्थानातिपत्तावपीदं सूक्तं शस्त्वा सूक्तान्तरे निविद्धक्षेतव्या। सूत्रितं च—' स्थानं चेन्निविद्धोऽतिहरेन्मा प्र गामेति पुरस्तात्सूक्तं शस्त्वा ' ( आश्व. श्रौ. ६. ६ ) इति ॥

**मा प्र गाम पथो वयं मा यज्ञादिन्द्र सोमिनः। मान्तः स्थुर्नो अरातयः ॥ १ ॥**

मा । प्र । गाम । पथः । वयम् । मा । यज्ञात् । इन्द्र । सोमिनः ।
मा । अन्तः । स्थुः । नः । अरातयः ॥ १ ॥

अत्रोत्पाख्याने शाट्यायनकम्—' असमातिं राथप्रौष्ठं गौपायना अभ्यगमंस्ते खाण्डवे सत्रमासत। अथ हासमाती राथप्रौष्ठौ किलाताकुली असुरमायाविनौ तं ह स्माजग्मतुः निधायौदनं पचतोऽग्नौ मांसमथासुराश्च दम्भेष्वाकव्यः परावभूवुः। समसमातिं राथप्रौष्ठं गौपायना नामाहुतयोऽभ्यतपन् सोऽब्रवीदिमौ किलाताकुली इमा वै मा गौपायनानामाहुतयोऽभितपन्तीति तावब्रूतां तस्य वा आवामेव भिषजौ स्व आवां प्रायश्चित्तिरावां तथा करिष्यावो यथा नैता नाभितपस्यन्तीति। तौ परेत्य सुबन्धोर्गौपायनस्य स्वपतः प्रमत्तस्यासुमसुरयान्तःपरिधि न्यधत्ताम् ' इत्यादि। तं सुबन्धोरसुमावर्तुं खाण्डवादसमातिं प्रतिगच्छन्तो गौपायना वदन्ति। हे ᵛइन्द्र ᵛवयं गौपायनाः ᵛपथः समीचीनान्मार्गात् ᵛमा ᵛप्र ᵛगाम मा परागच्छाम। असमातिगृहमेव गच्छाम। ᵛमा च ᵛसोमिनः असमातेः ᵛयज्ञात् मा प्र गाम। ᵛमा ᵛस्थुः मा तिष्ठन्तु ᵛनः अस्माकम् ᵛअन्तः मार्गमध्ये ᵛअरातयः शत्रवः। यद्वा। सोमिनः सोमवतो यागान्मा प्र गाम ॥

**यो यज्ञस्य प्रसाधनस्तन्तुर्देवेष्वाततः। तमाहुतं नशीमहि ॥ २ ॥**

यः । यज्ञस्य । प्रऽसाधनः । तन्तुः । देवेषु । आऽततः । तम् । आऽहुतम् । नशीमहि ॥ २ ॥

1. तऐ-म—'भूतमिमं।

यः अयमस्मत्प्रयुक्तः तन्तुः आहवनीयादिरूपेण विस्तृतः यज्ञस्य प्रसाधनः प्रकर्षेण साधयिता देवेष्वाततः देवैः स्तोतृभिर्ऋत्विग्भिर्विस्तारितो वर्तते तेषां तमाहुतं सर्वतो हूयमानं नशीमहि प्राप्नुयाम[1] । नशतिर्व्याप्तिकर्मा ॥

पिण्डपितृयज्ञे 'मनो न्वा हुवामहे' इति तृचेन पिण्डाभिमानिनः पितर उपस्थेयाः । सूत्रितं च—'मनो न्वा हुवामह इति च तिसृभिरपैनानप्याह्वयेत्' (आश्व. श्रौ. २. ७) इति ॥

**मनो॒ न्वा हु॑वामहे नाराशं॒सेन॒ सोमे॑न । पि॒तॄ॒णां च॒ मन्म॑भिः ॥ ३ ॥**

मनः॑ । नु । आ । हु॒वा॒म॒हे॒ । ना॒रा॒शं॒सेन॑ । सोमे॑न । पि॒तॄ॒णाम् । च॒ । मन्म॑ऽभिः ॥ ३ ॥

वयं बन्धुश्रुतबन्ध्वादयः मनः सुबन्धोः मनश्च मायाविभिरपहृतं नु क्षिप्रम् आ हुवामहे आह्वयामहे । केन साधनेनेति तदुच्यते । नाराशंसेन नराशंसपात्रगतेन सोमेन । नरैः शस्यन्त इति नराशंसाः पितरः । तेषां चमसानां कल्पनमेव होमः । तथाविधेन सोमेन पितॄणाम् अङ्गिरसां मन्मभिः च मननीयैः स्तोत्रैश्च ॥

**आ त॑ एतु॒ मनः॒ पुनः॒ क्रत्वे॒ दक्षा॑य जी॒वसे॑ । ज्योक् च॒ सूर्यं॑ दृ॒शे ॥ ४ ॥**

आ । ते॒ । ए॒तु॒ । मनः॑ । पुन॒रिति॑ । क्रत्वे॑ । दक्षा॑य । जी॒वसे॑ । ज्योक् । च॒ । सूर्य॑म् । दृ॒शे ॥ ४ ॥

हे सुबन्धो ते मनः पुनः आ एतु अभिचरतः सकाशात् पुनरागच्छतु । किमर्थमिति तदुच्यते । क्रत्वे कर्मणे लौकिकवैदिककर्मार्थाय दक्षाय बलाय च । यद्वा । क्रत्वे अपानाय दक्षाय प्राणाय । 'प्राणो वै दक्षोऽपानः क्रतुः' इति हि श्रुतिः । जीवसे जीवनाय च ज्योक् चिरकालं सूर्यं च दृशे सूर्यं द्रष्टुम् । अत्यन्तं चिरजीवनायेत्यर्थः ॥

**पुन॑र्नः पि॒तरो॒ मनो॒ ददा॑तु॒ दैव्यो॒ जनः॑ । जी॒वं व्रातं॑ सचेमहि ॥ ५ ॥**

पुनः॑ । नः॒ । पि॒तरः॑ । मनः॑ । ददा॑तु । दैव्यः॑ । जनः॑ । जी॒वम् । व्रात॑म् । स॒चे॒म॒हि॒ ॥ ५ ॥

नः अस्माकं पितरः पितृभूता अङ्गिरसः जनः । तेषां संघ इत्यर्थः । स च जीवं व्रातं प्राणादीन्द्रियसंघातं पुनः ददातु । तथा दैव्यो जनः । जनशब्दः संघवचनः । देवानां संघोऽपि जीवं व्रातं च ददातु । वयं च तदुभयं सचेमहि प्राप्नुयाम[1] ॥

**व॒यं सो॑म व्र॒ते तव॒ मन॑स्त॒नूषु॒ बिभ्र॑तः । प्र॒जाव॑न्तः सचेमहि ॥ ६ ॥**

व॒यम् । सो॒म॒ । व्र॒ते । तव॑ । मनः॑ । त॒नूषु॑ । बिभ्र॑तः । प्र॒जाऽव॑न्तः । स॒चे॒म॒हि॒ ॥ ६ ॥

हे सोम देव वयं बन्ध्वादयः तव व्रते त्वदीये कर्मणि । व्रतमिति कर्मनाम । तव तनूषु त्वदीयेष्वङ्गेषु च मनः[2] बिभ्रतः तात्पर्ययुक्तां बुद्धिं धारयन्तः प्रजावन्तः प्रजाभिः पुत्रपौत्रादिभिर्युक्ताः सन्तः सचेमहि संगच्छेमहि । जीवं व्रातं चेति शेषः ॥    ॥ १९ ॥

'यत्ते यमम्' इति द्वादशर्चं षोडशं सूक्तमानुष्टुभम् । बन्ध्वादय ऋषयः[3] सुबन्धुदेहान्निर्गतस्येन्द्रियवर्गसहितस्य मनसः पुनस्तस्मिन्प्रवेशनार्थमिदं सूक्तं दृष्ट्वाजपन्[4] । अतस्तेऽस्यर्षयः । प्रतिपाद्यत्वादावर्तमानं मन[5] एव देवता । तथा चानुक्रान्तं—'यत्त इति द्वादशर्चमानुष्टुभं मनआवर्तनं जेपुः' इति । गतो विनियोगः ॥

---

१. ग-त१.२.३.४.५.७.८-म१.२.४.६.८—प्राप्नुमः; त६—प्राप्नुयाः; म७-मु—प्राप्नुयामः । २. त-म-मु—मनः मनो । ३. म—'ऋषयः' नास्ति । ४. म—दृष्ट्वा जपेत् । ५. त-म—मनो ।

यत्ते॑ य॒मं वै॑वस्व॒तं मनो॑ ज॒गाम॑ दूर॒कम् । तत्त॒ आ व॑र्तयामसी॒ह क्षया॑य जी॒वसे॑ ॥१॥

यत् । ते॒ । य॒मम् । वै॒व॒स्व॒तम् । मनः॑ । ज॒गाम॑ । दू॒र॒कम् ।

तत् । ते॒ । आ । व॒र्त॒या॒म॒सि॒ । इ॒ह । क्षया॑य । जी॒वसे॑ ॥ १ ॥

पुरुषस्य म्रियमाणस्य मनो नाम महद्भूतं बहुधा विशीर्णं भवति[1] । तस्य पुनःसंभरणमत्रोच्यते । हे म्रियमाण पुरुष यत्[2] ते तव मनः वैवस्वतं विवस्वतः पुत्रं यमं दूरकम् अत्यन्तं दूरं यथा भवति तथा जगाम ते तव तत् मनः आ वर्तयामसि आवर्तयामः । किमर्थम् । इह क्षयाय इह लोके निवासाय जीवसे चिरकालजीवनाय ॥

यत्ते॒ दिवं॒ यत्पृ॑थि॒वीं मनो॑ ज॒गाम॑ दूर॒कम् । तत्त॒ आ व॑र्तयामसी॒ह क्षया॑य जी॒वसे॑ ॥२॥

यत् । ते॒ । दिव॑म् । यत् । पृ॒थि॒वीम् । मनः॑ । ज॒गाम॑ । दू॒र॒कम् ।

तत् । ते॒ । आ । व॒र्त॒या॒म॒सि॒ । इ॒ह । क्षया॑य । जी॒वसे॑ ॥ २ ॥

हे सुबन्धो यत् मनः दिवं जगाम यत् च पृथिवीं दूरकम् । दूरकमिति क्रियाविशेषणम् । तत् इह निवासाय जीवनाय चावर्तयामः ॥

यत्ते॒ भूमिं॒ चतु॑र्भृष्टिं॒ मनो॑ ज॒गाम॑ दूर॒कम् ।
तत्त॒ आ व॑र्तयामसी॒ह क्षया॑य जी॒वसे॑ ॥ ३ ॥

यत् । ते॒ । भूमि॑म् । चतुः॑ऽभृष्टिम् । मनः॑ । ज॒गाम॑ । दू॒र॒कम् ।

तत् । ते॒ । आ । व॒र्त॒या॒म॒सि॒ । इ॒ह । क्षया॑य । जी॒वसे॑ ॥ ३ ॥

हे सुबन्धो यत् मनः भूमिं चतुर्भृष्टिम् । चतुर्दिक्षु भ्रंशो यस्याः सा । तां जगाम तत् आवर्तयामः ॥

यत्ते॒ चत॑स्रः प्र॒दिशो॒ मनो॑ ज॒गाम॑ दूर॒कम् ।
तत्त॒ आ व॑र्तयामसी॒ह क्षया॑य जी॒वसे॑ ॥ ४ ॥

यत् । ते॒ । चत॑स्रः । प्र॒ऽदिशः॑ । मनः॑ । ज॒गाम॑ । दू॒र॒कम् ।

तत् । ते॒ । आ । व॒र्त॒या॒म॒सि॒ । इ॒ह । क्षया॑य । जी॒वसे॑ ॥ ४ ॥

हे सुबन्धो यत्ते मनः प्रदिशः प्रकृष्टा महादिशः चतस्रः जगाम तत् आवर्तयामः ॥

यत्ते॑ समु॒द्रम॑र्ण॒वं मनो॑ ज॒गाम॑ दूर॒कम् ।
तत्त॒ आ व॑र्तयामसी॒ह क्षया॑य जी॒वसे॑ ॥ ५ ॥

यत् । ते॒ । स॒मु॒द्रम् । अ॒र्ण॒वम् । मनः॑ । ज॒गाम॑ । दू॒र॒कम् ।

तत् । ते॒ । आ । व॒र्त॒या॒म॒सि॒ । इ॒ह । क्षया॑य । जी॒वसे॑ ॥ ५ ॥

---

१. त१.२.३.७-अ-भवतः । २. ग-स-भ४.६.८-मु-' यत् ' नास्ति ।

हे सुबन्धो यत्ते मनः अर्णवम्[1] अर्णांस्युदकानि[1] तद्वन्तं समुद्रं मेघं वा जगाम तत् इति गतम् ॥

यत्ते मरीचीः प्रवतो मनो जगाम दूरकम् ।
तत्त आ वर्तयामसीह क्षयाय जीवसे ॥ ६ ॥

यत् । ते । मरीचीः । प्रऽवतः । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ ६ ॥

हे सुबन्धो यत्ते मनः प्रवतः प्रगच्छन्तीः[2] मरीचीः दीप्तीः जगाम तत् इति गतम् ॥　　॥ २० ॥

यत्ते अपो यदोषधीर्मनो जगाम दूरकम् ।
तत्त आ वर्तयामसीह क्षयाय जीवसे ॥ ७ ॥

यत् । ते । अपः । यत् । ओषधीः । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ ७ ॥

यत्ते सूर्यं यदुषसं मनो जगाम दूरकम् ।
तत्त आ वर्तयामसीह क्षयाय जीवसे ॥ ८ ॥

यत् । ते । सूर्यम् । यत् । उषसम् । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ ८ ॥

यत्ते पर्वतान्बृहतो मनो जगाम दूरकम् ।
तत्त आ वर्तयामसीह क्षयाय जीवसे ॥ ९ ॥

यत् । ते । पर्वतान् । बृहतः । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ ९ ॥

यत्ते विश्वमिदं जगन्मनो जगाम दूरकम् ।
तत्त आ वर्तयामसीह क्षयाय जीवसे ॥ १० ॥

यत् । ते । विश्वम् । इदम् । जगत् । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ १० ॥

चतस्र ऋचो निगदसिद्धाः ॥

यत्ते पराः परावतो मनो जगाम दूरकम् ।
तत्त आ वर्तयामसीह क्षयाय जीवसे ॥ ११ ॥

---

१. पाठ-म१.७-मु—अर्णवमुदकं, स-भ२.४.१.८—अर्णवः उदकं । २. ग-स-भ—प्रगच्छन्त्यौ ।

यत् । ते॒ । परा॑ः । प॒रा॒ऽवतः॑ । मनः॑ । ज॒गाम॑ । दू॒र॒कम् ।
तत् । ते॒ । आ । व॒र्त॒या॒म॒सि॒ । इ॒ह । क्षया॑य । जी॒वसे॑ ॥ ११ ॥

हे सुबन्धो यत्ते मनः पराः परावतः अत्यन्तं दूरदेशान् जगाम तत् इति गतम् ॥

**यत्ते॑ भू॒तं च॒ भव्यं॑ च॒ मनो॑ ज॒गाम॑ दूर॒कम् ।**
**तत्त॒ आ व॑र्तयामसी॒ह क्षया॑य जी॒वसे॑ ॥ १२ ॥**

यत् । ते॒ । भू॒तम् । च॒ । भव्य॑म् । च॒ । मनः॑ । ज॒गाम॑ । दू॒र॒कम् ।
तत् । ते॒ । आ । व॒र्त॒या॒म॒सि॒ । इ॒ह । क्षया॑य । जी॒वसे॑ ॥ १२ ॥

हे सुबन्धो यत्ते मनः भूतं च भव्यं च इत्यनेन भूतभव्यात्मककालव्यतिरेकेण कस्यचिद-भावात्तन्मात्रस्य पृथगेवाभिधानात्[1] कृत्स्नं प्रपञ्चमुक्तं भवति। तत्र सर्वत्र गतं मनो जीवनाय निवासाय चावर्तयामः ॥ ॥ २१ ॥

'प्र तारि' इति दशर्चं षष्ठं सूक्तं बन्ध्वादीनां चतुर्णां गौपायनानामार्षम्। आद्याः सप्त त्रिष्टुभः। अष्टमी पञ्चाष्टका पङ्क्तिः। नवमी षडष्टका महापङ्क्तिः। दशमी पङ्क्त्युत्तरा। 'आर्षी दशकावष्टकाश्च' (अनु. ९. ११) इत्युक्तलक्षणसद्भावात्[2]। एकाक्षराधिक्याद्भुरिग्विशेषणेयं वेदितव्या। सूक्तस्यादितश्चतस्रो देवताप्राधान्येन निर्ऋतिमभिलक्ष्य निर्ऋतेर्निवृत्त्यर्थं बन्ध्वादयोऽजपन्। 'मो षु णः सोम' इति चतुर्थ्यामेव मृत्युनिवृत्त्यर्थं सोममस्तुवन्। अतश्चतसृणां निर्ऋतिर्देवता चतुर्थ्याः सोमश्च। 'असुनीते मनः' इति द्वाभ्यामसुनीतिनाम्नीं देवीमस्तुवन् अतस्तयोः सा देवता। 'पुनर्नो असुम्' इत्यस्याः पृथिव्यादयो लिङ्गोक्ता[3] देवताः[3]। ततस्तिसृभिः त्रिष्टाभिः[4] पङ्क्तिमहापङ्क्तिपङ्क्त्युत्तराभिर्द्यावापृथिव्याविति द्यावापृथिव्यौ देवते। 'समिन्द्र' इत्यर्धर्चस्येन्द्रो देवता। तथा चानुक्रान्तं—'प्र तारीति दशर्चे चत्वारो निर्ऋत्यपनोदनार्थं जेपुश्चतुर्थ्यां सोमं चास्तुवन्मृत्योरपगमायोत्तराभ्यां दैवीमसुनीतिं सप्तम्या लिङ्गोक्तदेवताः त्रिष्टाभिः पङ्क्तिमहापङ्क्तिपङ्क्त्युत्तराभिर्द्यावापृथिव्यौ समिन्द्रेतीन्द्रं चार्धर्चेन' इति। गतो विनियोगः ॥

**प्र ता॒र्यायुः॑ प्र॒त॒रं नवी॑यः॒ स्थाता॑रेव॒ क्रतु॑मता॒ रथ॑स्य ।**
**अध॒ च्यवा॑न॒ उत्त॑वी॒त्यर्थं॑ परात॒रं सु निर्ऋ॑तिर्जिहीताम् ॥ १ ॥**

प्र । ता॒रि॒ । आयुः॑ । प्र॒ऽत॒रम् । नवी॑यः । स्थाता॑राऽइव । क्रतु॑ऽमता । रथ॑स्य ।
अध॑ । च्यवा॑नः । उत् । त॒वी॒ति॒ । अर्थ॑म् । प॒रा॒ऽत॒रम् । सु । निःऽऋ॑तिः । जि॒ही॒ता॒म् ॥ १ ॥

सुबन्धोः आयुः आयुष्यं प्र तारि प्रवर्धताम्। प्रपूर्वस्तिरतिर्वर्धनार्थः। कथं प्रवर्धतामिति उच्यते। प्रतरं प्रकृष्टतरं नवीयः नवतरम्। जीवनोपेतमित्यर्थः। निर्ऋत्यनुग्रहादेवमायुर्वर्धताम्। तत्र दृष्टान्तः। क्रतुमता कर्मवता सारथिना रथस्य स्थातारेव रथे स्थितानिव[5] वर्धते[5] तद्वत्। अध अथ च्यवानः जीवितात्प्रच्यवमानः अर्थं स्वाभिलषितमायुर्लक्षणम् उत्तवीति वर्धयति। सुबन्धुप्राणापहर्त्री[6] निर्ऋतिः पापदेवता परातरम् अत्यन्तं दूरतरं जिहीतां[7] परित्यज्य गच्छतु ॥

---

१. म–पृथगभिधानादेव। २. त१.२.३.७-म१.१.४.६.८–इत्युक्तसद्भावात्। ३. त-म-मु–लिङ्गोक्तदेवताः। ४. ग-त-म–द्यावापृथिव्यौ अष्टाभिः। ५. ग४-त१.२.३.७–स्थिता वर्धते; म–स्थिता वर्धते; मु–स्थिता यथा वर्धते। ६. म–°प्राणापहर्त्री। ७. त१.२.३.६.७.८-म–परिजिहीतां।

सामन्नु राये निधिमन्न्वन्नं करामहे सु पुरुध श्रवांसि ।
ता नो विश्वानि जरिता ममत्तु परातरं सु निर्ऋतिर्जिहीताम् ॥ २ ॥

सामन् । नु । राये । निधिऽमत् । नु । अन्नम् । करामहे । सु । पुरुध । श्रवांसि ।
ता । नः । विश्वानि । जरिता । ममत्तु । पराऽतरम् । सु । निःऽऋतिः । जिहीताम् ॥ २ ॥

सामन्नु साम्नि गीयमाने सति । नु चार्थे । राये जीवायुरूपधनार्थं निधिमत् निधानवत् अन्नं हविश्च करामहे कुर्मः । अत्रापि नु इति चार्थे । निर्ऋत्यै[1] स्तुतिं हविश्चोभयं कुर्म इत्यर्थः[2] । तदेवाह । सु सुष्ठु पुरुध पुरुधा बहुप्रकारं श्रवांसि अन्नानि हवींषि करामहे । ता तानि हवींषि नः अस्माकं संबन्धीनि विश्वानि सर्वाणि जरिता जीर्णा स्तुता वा । 'जरा स्तुतिः' (निरु. १०.८) । ममत्तु स्वदताम् । आस्वाद्य च निर्ऋतिः परातरम् अत्यर्थं दूरदेशं जिहीतां गच्छतु ॥

अभी ष्व१र्यः पौंस्यैर्भवेम द्यौर्न भूमिं गिरयो नाज्रान् ।
ता नो विश्वानि जरिता चिकेत परातरं सु निर्ऋतिर्जिहीताम् ॥ ३ ॥

अभि । सु । अर्यः । पौंस्यैः । भवेम । द्यौः । न । भूमिम् । गिरयः । न । अज्रान् ।
ता । नः । विश्वानि । जरिता । चिकेत । पराऽतरम् । सु । निःऽऋतिः । जिहीताम् ॥ ३ ॥

वयम् अर्यः अरीन् शत्रून् पौंस्यैः पुंस्त्वैः बलैः सु सुष्ठु अभि भवेम । द्यौर्न भूमिं सूर्यो यथा स्वरश्मिभिर्भूमिमभिभवति तद्वत् । गिरयो नाज्रान् । गिरिर्मेघः । ते यथा अज्रान्[3] अजनशीलान् मेघानभिभवन्ति तद्वत् । ता तानि यानि नः अस्माभिः कृतानि स्तोत्राणि तानि विश्वानि सर्वाणि जरिता स्तुता सती निर्ऋतिः चिकेत जानाति । शिष्टमुक्तम् ॥

मो षु णः सोम मृत्यवे परा दाः पश्येम नु सूर्यमुच्चरन्तम् ।
द्युभिर्हितो जरिमा सू नो अस्तु परातरं सु निर्ऋतिर्जिहीताम् ॥ ४ ॥

मो इति । सु । नः । सोम । मृत्यवे । परा । दाः । पश्येम । नु । सूर्यम् । उत्ऽचरन्तम् ।
द्युऽभिः । हितः । जरिमा । सु । नः । अस्तु । पराऽतरम् । सु । निःऽऋतिः । जिहीताम् ॥ ४ ॥

हे सोम नः अस्मान् सु सुष्ठु मृत्यवे मो परा दाः मैव परादानं कुरु । मृत्य्वधीनान् मा कार्षीः । किंतु नु इदानीम् उच्चरन्तम् ऊर्ध्वं गच्छन्तमुदयन्तं सूर्यं पश्येम[4] । चिरकालं जीवेमेत्यर्थः । जीवाभावे सूर्यदर्शनासंभवादित्यभिप्रायः । किंच द्युभिः । अहर्नामैतत् । अहोभिः दिवसैः हितः प्रेरितः जरिमा जराभावः नः अस्माकं सु सुखकरः अस्तु । शिष्टमुक्तम् ॥

असुनीते मनो अस्मासु धारय जीवातवे सु प्र तिरा न आयुः ।
रारन्धि नः सूर्यस्य संदृशि घृतेन त्वं तन्वं वर्धयस्व ॥ ५ ॥

असुऽनीते । मनः । अस्मासु । धारय । जीवातवे । सु । प्र । तिर । नः । आयुः ।
ररन्धि । नः । सूर्यस्य । सम्ऽदृशि । घृतेन । त्वम् । तन्वम् । वर्धयस्व ॥ ५ ॥

१. त-म—'निर्ऋत्यै' नास्ति । २. त-भ-मु—निर्ऋत्यै इत्यर्थः । ३. ग-त-भ-मु—'अज्रान्' नास्ति ।
४. त-भ-मु—पश्येम पश्यामः ।

हे असुनीते मनुष्याणामसूनां नेत्रि देवि अस्मासु मनः पुनः धारय। किंच जीवातवे जीवितुं नु प्र तिर सुष्ठु वर्धय नः अस्माकम् आयुः। किंच रन्धि स्थापय नः अस्मान् सूर्यस्य संदृशि चिरसंदर्शने। त्वं च घृतेन अस्मदभिदत्तेन तन्वं शरीरं[1] वर्धयस्व वर्धय ॥२२॥

**असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम्।**
**ज्योक् पश्येम सूर्यमुच्चरन्तमनुमते मृळया नः स्वस्ति ॥ ६ ॥**

असुऽनीते। पुनः। अस्मासु। चक्षुः। पुनरिति। प्राणम्। इह। नः। धेहि। भोगम्।
ज्योक्। पश्येम। सूर्यम्। उत्ऽचरन्तम्। अनुऽमते। मृळय। नः। स्वस्ति ॥ ६ ॥

हे असुनीते प्राणदायिनि[2] देवि अस्मासु। अस्मदीये सुखमधावित्यर्थः। पुनः चक्षुः प्रकाशकं नयनम्। ईक्षणसामर्थ्यमित्यर्थः। किंच प्राणं पुनः अस्मासु धेहि स्थापय। वयं च ज्योक् चिरम् उच्चरन्तम् उद्गच्छन्तं सूर्यं[3] पश्येम। हे अनुमते देवि स्वस्ति अविनाशं यथा स्यात्तथा[4] नः अस्मान् मृळय सुखय ॥

**पुनर्नो असुं पृथिवी ददातु पुनर्द्यौर्देवी पुनरन्तरिक्षम्।**
**पुनर्नः सोमस्तन्वं ददातु पुनः पूषा पथ्यां३ या स्वस्तिः ॥ ७ ॥**

पुनः। नः। असुम्। पृथिवी। ददातु। पुनः। द्यौः। देवी। पुनः। अन्तरिक्षम्।
पुनः। नः। सोमः। तन्वम्। ददातु। पुनरिति। पूषा। पथ्याम्। या। स्वस्तिः ॥ ७ ॥

पृथिवी देवी नः अस्मभ्यम् असुं प्राणं ददातु। पुनः द्यौः देवता असुं ददातु। तथा अन्तरिक्षम् अन्तरिक्षदेवता असुं ददातु। तथा सोमः नः तन्वं शरीरं पुनः ददातु[5]। तथा पूषा पोषाभिमानिनी[6] देवता[7] पथ्याम्। 'पन्था अन्तरिक्षम्' (निरु. ११.४५)। तत्र भवां वाचम्। वागात्मकः शब्दो ह्याकाशादुत्पद्यते। तां पुनः ददातु। किंच[8] या स्वस्तिः या लोके वेदे च स्वस्तिरुच्यते तामपि पूषा प्रयच्छतु[8]। यद्वा। पूषा वाचं प्रयच्छतु। या स्वस्तिर्वागात्मिका देव्यस्ति सा पथ्यां वाचं प्रयच्छतु। 'वाग्वै पथ्या स्वस्तिः' (श. ब्रा. ३. २. ३. ८) इति ब्राह्मणम् ॥

**शं रोदसी सुबन्धवे यह्वी ऋतस्य मातरा।**
**भरतामप यद्रपो द्यौः पृथिवि क्षमा रपो मो षु ते किं चनाममत् ॥ ८ ॥**

शम्। रोदसी इति। सुऽबन्धवे। यह्वी इति। ऋतस्य। मातरा।
भरताम्। अप। यत्। रपः। द्यौः। पृथिवि। क्षमा। रपः।
मो इति। सु। ते। किम्। चन। आममत् ॥ ८ ॥

१. ग४-स१.२.३.७-स्वशरीरं। २. ग-स१ २.३.७.८-भ-मु-प्राणप्रदायिनि। ३. ग-स-भ५.६.८-मु-सूर्यं देवं। ४. ग-स-भ-मु-तथा। ५. भ-ददातु किंच या स्वस्तिर्या लोके वेदे च स्वस्तिरुच्यते तामपि पूषा प्रयच्छतु। ६. स१.२.३.७-भ४.६.८-पोषाभिमानि। ७. स-भ-देवता वा। ८. भ-'किंच..... प्रयच्छतु' नास्ति।

इत्यादिभिस्तिसृभिः[1] द्यावापृथिव्योः स्तुतिः। रोदसी द्यावापृथिव्यौ सुबन्धवे नां सुखं प्रयच्छताम्। कीदृश्यौ ते। यह्वी महत्यौ ऋतस्य यज्ञस्योदकस्य वा मातरा निर्मात्र्यौ। यद्रपः पापं कृच्छ्रमस्ति[2] तत् अप भरताम् अपहरताम् अपनयताम्। हे द्यौः हे पृथिवि हे द्यावा-पृथिव्यौ क्षमा क्षमायां सत्याम्। यद्वा क्षमा पृथगप्युच्यते। क्षमाप्यपहरतु[3]। एवमुक्त्वा सुबन्धुं बन्ध्वादयो ब्रुवते। हे सुबन्धो ते त्वां मो षु मैव सुष्ठु किं चन रपः कृच्छ्रम् आममत् हिनस्तु॥

**अवे द्वके अवं त्रिका दिवश्चरन्ति भेषजा।**
**क्षमा चरिष्ण्वेककं भरतामप यद्रपो**
**द्यौः पृथिवि क्षमा रपो मो षु ते किं चनाममत्॥ ९॥**

अव। द्वके इति। अव। त्रिका। दिवः। चरन्ति। भेषजा।
क्षमा। चरिष्णु। एककम्। भरताम्। अप। यत्। रपः।
द्यौः। पृथिवि। क्षमा। रपः। मो इति। सु। ते। किम्। चन। आममत्॥ ९॥

दिवः द्युलोकात् भेषजा भेषजानि द्वके द्विकं त्रिका त्रिकं च अव चरन्ति। अत्राश्विनौ[4] द्विकमवचरतः। इळा सरस्वती भारती त्रिकमवचरन्ति। क्षमा क्षमायां चरिष्णु चरति एककम् एकं भेषजमित्यभिप्रायमाह। तानि सर्वाणि सुबन्धोः प्राणं परिरक्षन्त्विति शेषः॥

**समिन्द्रेरय गामनड्वाहं य आवहदुशीनराण्या अनः।**
**भरतामप यद्रपो द्यौः पृथिवि क्षमा रपो मो षु ते किं चनाममत्॥ १०॥**

सम्। इन्द्र। ईरय। गाम्। अनड्वाहम्। यः। आ। अवहत्। उशीनराण्याः। अनः।
भरताम्। अप। यत्। रपः। द्यौः। पृथिवि। क्षमा। रपः।
मो इति। सु। ते। किम्। चन। आममत्॥ १०॥

हे इन्द्र सम् ईरय संप्रेरय। किम्। गां गन्तारम् अनड्वाहम् अनोवहनसमर्थम्[5]। यः अनड्वान् आवहत् आवहत्यस्मान्प्रति। किम्। अनः शकटम्। कस्य। उशीनराण्याः एतन्नामिकाया ओषधेः। यथार्तमनुलिम्पन्ति सौशीनराणी। भरतामित्यादि गतम्॥        ॥ २३ ॥

'आ जनम्' इति द्वादशर्चमष्टादशं सूक्तम्। गौपायना बन्ध्वादय ऋषयः। चतुर्थ्यादिकस्यास्य स्वसैषां मातर्षिका। आदितः पञ्च गायत्र्यः। अष्टमीनवम्यौ पङ्क्ती। शिष्टा अनुष्टुभः। आदितः सप्तर्चामसमातिनाम्नो राज्ञः स्तूयमानत्वात् स एव देवता। पञ्चम्या इन्द्रः। षष्ठ्या अप्यसमातिः। ततः पञ्चानां सुबन्धोर्जीवितावाह्वानरूपोऽर्थो देवता। 'अयं मे हस्तः' इत्यस्याः लब्धसंज्ञस्य सुबन्धोः स्पर्शनहेतुभूतो देवता। तथा चानुक्रमणिका—'आ जनमिति द्वादशार्चमागुष्टुभं चतसृभिरसमाति-मस्तुवन्पञ्चम्यैन्द्री षष्ठ्यागस्त्यस्य स्वसा मातैषां राजानमसमातिं पराभिः सुबन्धोर्जीवमाह्वयंस्तमन्त्यया लब्धसंज्ञमस्तुवन् पञ्चाद्या गायत्र्योऽष्टम्याद्ये पङ्क्ती' इति॥

१. त-मु—इदमादिभिस्त्रिभिः। २. त-म२.४.८-मु—कृच्छ्रं चास्ति। ३. म१.७—धीरप्यपहरतु। ४. त१.२.३.६.७.८ म-मु—तत्राश्विनौ। ५. त-म२.८-मु—°समर्थं गां।

**आ जनं॑ त्वे॒षसं॑दृशं॒ माही॑नाना॒मुप॑स्तुतम् । अग॑न्म॒ बिभ्र॑तो॒ नमः॑ ॥ १ ॥**

आ । जन॑म् । त्वे॒षऽसं॑दृशम् । माही॑नानाम् । उप॑ऽस्तुतम् । अग॑न्म । बिभ्र॑तः । नमः॑ ॥ १ ॥

इदमादिभिर्निभिरमुं राजानं स्तुवन्ति । वयं बन्ध्वादयः जनं जनपदमसमातिमित्येवंभूतम्[1] आ अगन्म अभिगताः । गमेर्लुङि 'मन्त्रे घस॰' इति च्लेर्लुक् । 'म्वोश्च' इति मकारस्य नकारः । कीदृशं जनम् । त्वेषसंदृशं दीप्तदर्शनं माहीनानां महताम् उपस्तुतम् उपगतस्तुतिम् । 'तादौ च॰' इति गतेः प्रकृतिस्वरः । कीदृशा वयम् । नमः नमस्कारं बिभ्रतः धारयन्तः[2] । कुर्वन्त इत्यर्थः । यद्वा । जनमसमातिमित्यर्थः । किंच समानम् । नमो[3] बिभ्रत[4] इति राजकृते नमस्कारं धारयन्त इत्यर्थः ॥

**अस॑माति॒ नि॒तोश॑नं त्वे॒षं नि॒य॒यिनं॒ रथ॑म् । भ॒जेर॑थस्य॒ सत्प॑तिम् ॥ २ ॥**

अस॑मातिम् । नि॒ऽतोश॑नम् । त्वे॒षम् । नि॒ऽय॒यिन॑म् । रथ॑म् । भ॒जेऽर॑थस्य । सत्ऽप॑तिम् ॥ २ ॥

असमातिं राजानं नितोशनं शत्रूणां हन्तारम् । नितोशतिर्वधकर्मा । त्वेषं दीप्तम् । निययिनं रथम् इत्युपमाप्रधानो निर्देशः । रथवत् सर्वाभिमतप्राप्तिसाधनं भजेरथस्य एतन्नामकस्य राज्ञो वंशे जातम् । यद्वा । एतन्नामा कश्चिदस्य शत्रुः । तस्य[2] निययिनम् । 'हलदन्तात्॰' ( पा. सू. ६. ३. ९ ) इति सप्तम्या अलुक् । सत्पतिं सतां पालकम् ॥

**यो जना॑न्म॒हि॒षाँ इ॑वाति॒त॒स्थौ पवी॑रवान् । उ॒ताप॑वीरवान्यु॒धा ॥ ३ ॥**

यः । जना॑न् । म॒हि॒षान्ऽइ॑व । अ॒ति॒ऽत॒स्थौ । पवी॑रवान् । उ॒त । अप॑वीरवान् । यु॒धा ॥ ३ ॥

यः असमातिः जनान् स्वविरोधिभूतान् अतितस्थौ अतिक्रम्य तिष्ठति । पराभावयतीत्यर्थः[5] । क[5] इव[5] । महिषान् सिंह इव । कीदृशः सन् । पवीरवान् । पवीरः पविः । स्तनवान् । उत अपि च अपवीरवान् अपगतवज्रः सन् । शक्रसाहाय्यमपि कदाचिन्नापेक्षत इत्यर्थः । किं कुर्वन् । युधा योधनेन । युद्धेनेत्यर्थः ॥

**यस्ये॑क्ष्वा॒कुरुप॑ व्र॒ते रे॒वान्म॑रा॒य्येध॑ते । दि॒वीव॒ पञ्च॑ कृ॒ष्टयः॑ ॥ ४ ॥**

यस्य॑ । इ॒क्ष्वा॒कुः । उप॑ । व्र॒ते । रे॒वान् । म॒रा॒यी । एध॑ते । दि॒विऽइ॑व । पञ्च॑ । कृ॒ष्टयः॑ ॥ ४ ॥

यस्य जनपदस्य इक्ष्वाकुः राजा व्रते कर्मणि रक्षणरूपे उप एधते प्रवर्धते । कीदृशः सन् । रेवान् रयिवान् मरायी शत्रूणां मारकश्च सन् । विशेषणद्वयेन जनानां दास्यादिरूपेण धनत्वमः पराजोपद्रुतापत्तिश्चोक्ता भवति । एवं सति तद्विषयस्था पञ्च कृष्टयः निषादपञ्चमाश्चत्वारो वर्णाः दिवीव द्युलोके यथा संकल्पसिद्धाः सन्तः सुखिनो भवन्ति तद्वत्सुखिनो भवन्तीति शेषः ॥

**इन्द्र॑ क्ष॒त्रास॑मातिषु॒ रथ॑प्रोष्ठेषु धारय । दि॒वीव॒ सूर्यं॑ दृ॒शे ॥ ५ ॥**

इन्द्र॑ । क्ष॒त्रा । अस॑मातिषु । रथ॑ऽप्रोष्ठेषु । धा॒रय॒ । दि॒विऽइ॑व । सूर्य॑म् । दृ॒शे ॥ ५ ॥

अनयेन्द्रमाह्वयतेऽसमात्यर्थम् । हे इन्द्र क्षत्रा क्षत्राणि बलानि रथप्रोष्ठेषु असमातिषु । एकस्मिन् बहुवचनं पूजार्थम् । रथप्रोष्ठेऽसमातौ धारय । दिवीव सूर्यं दिवि यथा सूर्यं दृशे सर्वेषां दर्शनाय स्थापितवानसि तद्वदत्र बलं धारय ॥

१. त१.२.३.७-म१ २.४.७–'ममुनीति असुनीतिस्वभूते । २. त-म१.२.४.६ ८–धारयनः । ३. त१.२.३.६ ७.८-म–आबिभ्रत । ४. त२ ३.७-म–'तस्य' नास्ति । ५ ग-त-मु–पराभवतीत्यर्थः; म–पराभवेत्यर्थः । ६. ग-त-म-मु–किमिव ।

अगस्त्यस्य नद्भ्यः सप्ती युनक्षि रोहिता ।
पणीन्न्यक्रमीरभि विश्वान्राजन्नराधसः ॥ ६ ॥

अगस्त्यस्य । नत्ऽभ्यः । सप्ती इति । युनक्षि । रोहिता ।
पणीन् । नि । अक्रमीः । अभि । विश्वान् । राजन् । अराधसः ॥ ६ ॥

अनयागस्त्यस्य स्वसा बन्ध्वादीनां माता राजानं स्तौति । हे राजन् असमाते त्वम् अगस्त्यस्य ऋषेः नद्भ्यः नह्यतिभ्यो बन्ध्वादिभ्यो निमित्तभूतेभ्यस्तेषां धनप्राप्त्यै सप्ती सर्पणस्वभावावश्वौ रोहिता रोहितवर्णौ युनक्षि योजय रथे । तथा कृत्वा विश्वान् सर्वान् अराधसः अदातॄनयजमानान् पणीन् वणिजः लुब्धकान् नि निकृष्टं नितरां वा अभि अक्रमीः अभिभव ॥ ॥ २४ ॥

अयं मातायं पितायं जीवातुरागमत् । इदं तव प्रसर्पणं सुबन्धवेहि निरिहि ॥७॥

अयम् । माता । अयम् । पिता । अयम् । जीवातुः । आ । अगमत् ।
इदम् । तव । प्रऽसर्पणम् । सुबन्धो इति सुऽबन्धो । आ । इहि । निः । इहि ॥ ७ ॥

अत्र शेषे शाट्यायनकम्—' अथाग्निं द्वैपदेन सूक्तेनास्तुवन् । अग्निः स्तुत आजगाम । आगत्य चाह किंकामा आगच्छतेति । सुबन्धोरेवासुं पुनर्वेन्नयामेत्यब्रुवन् । एषामन्तःपरिधिरित्यब्रवीत्समावक्षु-मिति । तमिराह[1] । अयं[2] मातायं पिता ' इति । शौनकश्च ' स्तुतः स राजा सुप्रीतस्तस्थौ गौपायनान्-अभि ॥ सूक्तेन तेऽस्तुवन्नग्निं द्वैपदेन यथाविधि । अथाग्निरब्रवीदेतानयमन्तःपरिध्यसुः ॥ सुबन्धोरस्य चैक्ष्वाकोर्मया गुप्तो हितार्थिना । सुबन्धवे प्रदायासुं लोकेभ्युक्त्वा च पावकः ॥ स्तुतो गौपायनैः प्रीतो जगाम त्रिदिवं प्रति । अयं मातेति हृष्टास्ते सुबन्धोरसुमाह्वयन् ॥ शरीरमभिनिर्दिश्य सुबन्धोः पतितं भुवि । सूक्तशेषं जगुश्चास्य चेतसो धारणाय ते ' ( बृहद्दे. ७ ९७, १०१ ) इति ॥ अयम् अग्निः माता । अयम् एव पिता । अयं जीवातुः जीवयिता आगमत् आजगाम । अतो हे सुबन्धो जीवपरिधौ वर्तमान[2] इदं तव शरीरं तव प्रसर्पणं प्रकर्षेण सर्पणसाधनम् । अत इदं प्रति एहि आगच्छ । निरिहि निर्गच्छ परिधेः सकाशात् । अन्य एवं व्याचक्षते । हे निर्गतप्राण सुबन्धो अयम् । विभक्तिव्यत्ययः । इयं मातायं पितायं जीवातुर्जीवनफलभूतः पुत्रश्चागमदिति मेत्यच्यते । सर्वे त्वामागता दुःखिताः सन्तः । शिष्टं समानम् ॥

यथा युगं वरत्रया नह्यन्ति धरुणाय कम् ।
एवा दाधार ते मनो जीवातवे न मृत्यवेऽथो अरिष्टतातये ॥ ८ ॥

यथा । युगम् । वरत्रया । नह्यन्ति । धरुणाय । कम् ।
एव । दाधार । ते । मनः । जीवातवे । न । मृत्यवे । अथो इति । अरिष्टऽतातये ॥ ८ ॥

यथा युगं वरत्रया पाशेन नह्यन्ति बध्नन्ति धरुणाय रथादिधारणाय । कम् इति पादपूरणः । एव एवं ते मनः दाधार परिधारयामि । किमर्थम् । जीवातवे जीवनाय न मृत्यवे मरणाय च अथो अपि च अरिष्टतातये अविनाशाय । स्वार्थिकस्तातिः ॥

---

१. त१.२.३.७-म१.८-तमिराहुरयं; म४-तमिराहुरयं; म७-तमिराहयं; मु-तं निराहुरयं ।
२. त-म१.२.७-वर्तमाने ।

यथेयं पृथिवी मही दाधारेमान्वनस्पतीन् ।
एवा दाधार ते मनो जीवातवे न मृत्यवेऽथो अरिष्टतातये ॥ ९ ॥

यथा । इयम् । पृथिवी । मही । दाधार । इमान् । वनस्पतीन् ।
एव । दाधार । ते । मनः । जीवातवे । न । मृत्यवे । अथो इति । अरिष्टऽतातये ॥ ९ ॥

यथेयं पृथिवी मही[1] इमान् वनस्पतीन् वृक्षादीन् दाधार । शिष्टं सुगमम् ॥

यमादहं वैवस्वतात्सुबन्धोर्मन आभरम् ।
जीवातवे न मृत्यवेऽथो अरिष्टतातये ॥ १० ॥

यमात् । अहम् । वैवस्वतात् । सुऽबन्धोः । मनः । आ । अभरम् ।
जीवातवे । न । मृत्यवे । अथो इति । अरिष्टऽतातये ॥ १० ॥

इदं निगदसिद्धम् ॥

न्यग्वातोऽव वाति न्यक्तपति सूर्यः ।
नीचीनमघ्न्या दुहे न्यग्भवतु ते रपः ॥ ११ ॥

न्यक् । वातः । अव । वाति । न्यक् । तपति । सूर्यः ।
नीचीनम् । अघ्न्या । दुहे । न्यक् । भवतु । ते । रपः ॥ ११ ॥

वातः वायुर्द्युलोकात् न्यक् नीचीनम् अव वाति गच्छति । सूर्यः च न्यक् तपति । अघ्न्या अहननीया गौः नीचीनं दुहे दुग्धे । एवं ते रपः पापं न्यक् नीचीनं भवतु ॥

अयं मे हस्तो भगवानयं मे भगवत्तरः ।
अयं मे विश्वभेषजोऽयं शिवाभिमर्शनः ॥ १२ ॥

अयम् । मे । हस्तः । भगऽवान् । अयम् । मे । भगवत्ऽतरः ।
अयम् । मे । विश्वऽभेषजः । अयम् । शिवऽअभिमर्शनः ॥ १२ ॥

अनया बन्ध्वादयो लब्धजीवं सुबन्धुं पाणिभिरस्पृशन् । अयं मे हस्तो भगवान्[2] यस्मात् सजीवं[3] सुबन्धुं स्पृशति तस्मात् । तथा अयं मे हस्तः भगवत्तरः अतिशयेन भगवान् । तथा अयं मे हस्तः विश्वभेषजः जीवचिकित्सासाधनसर्वौषधवान् तत्स्थानीयो वा । अयं शिवाभिमर्शनः मङ्गलस्पर्शनः । यतो जीवन्तं स्पृष्टवान् इत्यर्थः ॥　　　॥ २५ ॥　　　॥ ४ ॥

पञ्चमेऽनुवाकेऽष्टौ सूक्तानि । तत्र 'इदमित्था' इति सप्तविंशत्यृचं प्रथमं सूक्तं मानवस्य नाभानेदिष्ठस्यार्षं त्रैष्टुभम् । इदमादीनि षट् सूक्तानि वैश्वदेवानि । तथा चानुक्रम्यते — 'इदमित्था सप्ताधिका नाभानेदिष्ठो मानवो वैश्वदेवं तत्' इति । पृष्ठ्यस्य षष्ठेऽहनि वैश्वदेवशस्त्र आभिप्लविकाति-

१. ग-त४.५–मही महती; त१.२.३.७–महती । २. ग-त-मु–भगवान् भाग्यवान् । ३. त-म१.६.८–सजीवः; म६–सजीवं ।

वैशमासस्य उपासनात्मका इत्येतस्य स्थाने इदं सूक्तम् । सूत्रितं च—'उद्धृत्य'[1] चोत्तमं[2] सूक्तं शंसेदिदमित्था रौद्रमिति ' ( आश्व. श्रौ ८. १ ) इति[3] । ऐतरेयब्राह्मणं—' नाभानेदिष्ठं वै मानवं ब्रह्मचर्यं वसन्तं भ्रातरो निरभजन्सोऽब्रवीदेत्य किं मह्यमभाक्तेत्येतमेव निष्ठावमववदितारमित्यब्रुवन् ' ( ऐ. ब्रा. ५. १४ ) इत्यादि । तत्र नाभानेदिष्ठो भ्रातृभिर्भागे निराकृतः पितृसामीप्यमागम्य किं मह्यं भागं न कल्पितवानसीत्यपृच्छत् । स च किमनेन भागेन । अङ्गिरसः स्वर्गार्थं सत्रमासीनाः षष्ठाहःपर्यन्तमनुष्ठाय मुह्यन्ति । तान् ' इदमित्था ' इति सूक्ते शंसय ते स्वर्गं यन्तो यदिमा गाः[3] सहस्रसंख्याकाः दास्यन्तीति पित्रा प्रेरितोऽङ्गिरसो समीपमागम्य तेभ्यः सत्रपरिवेषणं गोसहस्रमुत्कोचं परिकल्प्य तानेते सूक्ते षष्ठेऽहन्यशंसयत् । ते च तत्सूक्तमाहात्म्यात्सत्रं पारं प्राप्य स्वर्गं गमिष्यन्तोऽस्मै गोसहस्रं प्रादुः । तं च तद्गोसहस्रं स्वीकुर्वाणं कश्चन कृष्णशवासी पुरुष उत्तरत उत्थाय ब्राह्मण मदीयं[4] वास्तोष्पभागं मा स्वीकुर्वित्यब्रवीत् । स च मह्यमङ्गिरसः प्रादुरिति प्रत्यब्रवीत् । तर्हि ब्राह्मण तव पितरमेव पृच्छ कस्यैष भागः प्राप्नुयादित्युक्तः पितृसमीपमागत्य पित्रा तद्दायस्थं तवास्य इति तेनोक्तस्तवैवायं भाग इति मम पिताप्यवोचदिति प्रत्युवाच । ततो यथार्थकथनेन तुष्टः पुरुषो नाभानेदिष्ठायैव स्वं भागं प्रादादित्युक्तम् । तथा च तैत्तिरीयब्राह्मणेऽपि ' मनुः पुत्रेभ्यो दायं व्यभजत् स नाभानेदिष्ठं[5] ' ( तै. सं. ३. १. ९. ४ ) इत्यादिनायमर्थ उक्तः । तत्सर्वमत्रानुसंधेयम् ॥

इदमित्था रौद्रं गूर्तवचा ब्रह्म क्रत्वा शच्यामन्तराजौ ।
क्राणा यदस्य पितरा मंहनेष्ठाः पर्षत्पक्थे अहन्ना सप्त होतॄन् ॥ १ ॥

इदम् । इत्था । रौद्रम् । गूर्तऽवचाः । ब्रह्म । क्रत्वा । शच्याम् । अन्तः । आजौ ।
क्राणा । यत् । अस्य । पितरा । मंहनेऽस्थाः । पर्षत् । पक्थे । अहन् । आ । सप्त । होतॄन् ॥ १ ॥

गूर्तवचाः उद्यतवचनो नाभानेदिष्ठः इदं अस्य स्तोत्रं रौद्रं रुद्रदेवताकम्[6] इत्था इत्थम् इदानीं क्रियमाणप्रकारं क्रत्वा प्रज्ञानेन निष्पाद्यं स्तोत्रं शच्याम् अन्तः कर्मणि सत्रमध्ये आजौ अङ्गिरसां संघे करोतीति शेषः । यत् स्तोत्रं क्राणा भागं कुर्वाणौ भागं कुर्वाणौ अस्य पितरा पितरौ मातापितरावन्ये च मंहनेष्ठाः भागप्रदाने वर्तमाना[7] आगत्य गोदानसमर्थनत्वेनाकल्पयन्निति[8] शेषः । तेन नाभानेदिष्ठः पक्थे पक्तव्ये अहन् अहनि । षष्ठेऽहनीत्यर्थः । ' ते षष्ठंषष्ठमेवाहरागत्य[9] मुह्यन्ति[10] तानेते[10] सूक्ते षष्ठेऽहनि शंसय ' ( ऐ. ब्रा. ५.१४ ) इत्युक्तत्वात् । सप्त होतॄन् होतृप्रशास्तृब्राह्मणाच्छंसिप्रभृतीन् आ पर्षत् समर्थोऽपूरयत् । इदमित्थेति सूक्ताभ्यां यज्ञं पारं प्रापयामासेत्यर्थः ॥

स इद्दानाय दभ्याय वन्वञ्च्यवानः सूदैरमिमीत वेदिम् ।
तूर्वयाणो गूर्तवचस्तमः क्षोदो न रेत इतऊति सिञ्चत् ॥ २ ॥

सः । इत् । दानाय । दभ्याय । वन्वन् । च्यवानः । सूदैः । अमिमीत । वेदिम् ।
तूर्वयाणः । गूर्तवचःऽतमः । क्षोदः । न । रेतः । इतःऽऊति । सिञ्चत् ॥ २ ॥

सः इत् स कृष्णशवासी पुरुषो रुद्रात्मकः दानाय स्तोतृणां धनप्रदानाय दभ्याय शत्रूणां वधाय च वन्वन् स्तोतॄन् संभजन् सूदैः सूदकैर्हिंसकैः[11] शस्त्रैः च्यवानः रक्षांसि च्यावयन् वेदिम्

१ त-भ—उद्धृत्ये । २. त-भ-मु—' इति ' नास्ति । ३. त-भ—' गाः ' नास्ति । ४. ग-त६.८-भ४.६-मु—भस्मदीयं; त१.२.३-भ२.८—मस्मदीयं । ५. ग-त-भ१.२.४.६.८-नाभानेदिष्ठं वै मानवं । ६. ग-त-मु—क्षुभ्यमाणं । ७. भ-प्रवर्तमाना । ८. भ—त्पलाभ° । ९. त-भ-मु—षष्ठमेवा° । १०. त-भ—मुह्यन्ते । ११. ग-त-भ४.६.८—हिंसकैः; भ१.२.७—सूदकैः ।

असिञ्चत परिषिक्तवान्। यज्ञवास्त्वधितिष्ठन्नित्यर्थः। 'तं कृष्णशवास्युत्तरत' उपोत्थायाभ्यब्रवीत्[1] मम वा इदं मम वै वास्तुहमिति' (ऐ. ब्रा. ५. १४) इति ब्राह्मणम्। तदेवाह। तूर्वयाणः तूर्णगमनः गूर्तवचस्तमः अत्यन्तमुद्यतवचाः[2] रुद्रः क्षोदो न उदकमिव। उदकं यथा घनः सिञ्चति महत् एतैः स्वसामर्थ्यम् इतऊति इतोगमनं यथा भवति तथा सिञ्चत् प्रेरितवानित्यर्थः। यद्वा। अनेनोत्तरार्धेनोत्तराभ्यां च प्रासङ्गिक्यश्विनोः स्तुतिः क्रियते। तूर्वयाणस्तूर्णगमनोऽतिशयेनोद्यतवचनो रुद्रः क्षोदो न उदकमिव ऐत उत्पादनमःसत्त्वोपेतं ऐत इतऊति सिञ्चत् अवधारयामासाश्विनौ। अन्यत्रैतऊतिरिपश्विनोरभिधानादन्यत्र तथा रुद्रपुत्रत्वासिद्धेश्चायमर्थो लभ्यते ॥

मनो॒ न येषु॒ हव॑नेषु ति॒ग्मं विपः॒ शच्या॑ वनु॒थो द्रव॑न्ता ।
आ यः शर्या॑भिस्तुविनृ॒म्णो अ॒स्याश्री॑णीता॒दिशं॒ गभ॑स्तौ ॥ ३ ॥

मनः॑ । न । येषु॑ । हव॑नेषु । ति॒ग्मम् । विपः॑ । शच्या॑ । व॒नु॒थः । द्रव॑न्ता ।
आ । यः । शर्या॑भिः । तु॒वि॒ऽनृ॒म्णः । अ॒स्य । अश्री॑णीत । आ॒ऽदिश॑म् । गभ॑स्तौ ॥ ३ ॥

हे अश्विनौ युवां मनो न मन इव यथा मनः तिग्मं तीक्ष्णमाशु धावति आगच्छति[3] एवं येषु हवनेषु आह्वानेषु विपः स्तोतुः शच्या प्रज्ञानेन गन्तव्यमिति बुद्ध्या द्रवन्ता द्रवन्तौ गच्छन्तौ वनुथः संभजथः[4]। यः अध्वर्युः आ आभिमुख्येन तुविनृम्णः प्रभूतहविर्लक्षणधनः सन् अस्य कर्मणि प्रवृत्तस्य मम संबन्धी शर्याभिः अङ्गुलीभिः अश्रीणीत श्रीणाति। किं कृत्वा। गभस्तौ हस्ते धृत्वा आदिशम् आदिश्य। इदमभिश्रयामीति निर्दिश्येत्यर्थः। तादृशं मदीयमध्वर्युं येषु हवनेषु वनुथः संभजथः[5] तौ युवां हुव इत्युत्तरत्र संबन्धः ॥

कृ॒ष्णा यद्गोष्व॑रु॒णीषु॒ सीद॑द्दि॒वो नपा॑ताश्विना हुवे वाम् ।
वी॒तं मे॑ य॒ज्ञमा ग॑तं मे॒ अन्नं॑ वव॒न्वांसा॒ नेष॒मस्मृ॑तध्रू ॥ ४ ॥

कृ॒ष्णा । यत् । गोषु॑ । अ॒रु॒णीषु॑ । सीद॑त् । दि॒वः । नपा॑ता । अ॒श्वि॒ना॒ । हु॒वे । वा॒म् ।
वी॒तम् । मे॒ । य॒ज्ञम् । आ । ग॒त॒म् । मे॒ । अन्न॑म् । व॒व॒न्वांसा॑ । न । इष॑म् । अस्मृ॑तध्रू॒ इत्यस्मृ॑तऽध्रू ॥ ४ ॥

कृष्णा रात्रिः यत् यदा अरुणीषु अरुणवर्णासु गोषु सीदत् निवसति। उषा विभासनाय[6] रथमधितिष्ठतीत्यर्थः। 'अरुण्यो गाव उषसाम्' इति निरुक्तम्। उषःकाले हे दिवो नपाता दीप्यमानस्य स्वर्गस्य प्रकाशात्मकस्य यागस्य[7] वा न पातयितारौ हे अश्विनौ वां हुवे आह्वये। वीतं कामयेथां मे अन्नं हविर्लक्षणम्। तदर्थं मे यज्ञम् आ गतम् आगच्छतम्। इषम् अन्नं ववन्वांसा न संभजमानाविव। मद्यागतम्। कीदृशौ युवाम्। अस्मृतध्रू अस्मृतद्रोहौ सपि द्रोहमस्मरन्तौ ॥

प्र॒थि॒ष्ट यस्य॑ वी॒रक॑र्ममि॒ष्णदनु॑ष्ठितं॒ नु नर्यो॒ अपौ॑हत् ।
पुन॒स्तदा वृ॑हति॒ यत्क॒नाया॑ दुहि॒तुरा अनु॑भृतमन॒र्वा ॥ ५ ॥

१. त-भ—कृष्णशवास्युपोत्थाया* । २. भ१.२—अत्यंत गूर्तवचा; भ५—अत्यंतं गूर्तवचा । ३. ग४-त-मु—'आगच्छति' नास्ति, भ१.४.८—एजति, भ२ एजति । ४. ग-त-भ३.४.८—'संभजथः' नास्ति । ५. ग-त-भ६-मु—'संभजथः' नास्ति । ६. ग-त-भ१.२.४.६.८-मु—विभानाय । ७. त१.२.३.७-मु—'यागस्य' नास्ति; भ१.२.४.७.८—स्वर्गस्य ।

प्रथिष्ट । यस्य । वीरऽकर्मम् । इष्णत् । अनुऽस्थितम् । नु । नर्यः । अप । औहत् ।
पुनरिति । तत् । आ । वृहति । यत् । कनायाः । दुहितुः । आः । अनुऽभृतम् । अनर्वा ॥५॥

यथा स्वाधीन भगवान् रुद्रः प्रजापतिर्वास्तोष्पतिं रुद्रमसृजत् तमेनदादिभिस्त्तुमभिवदति । यस्य प्रजापतेः इष्णत् गच्छत् वीरकर्मम् । लिङ्गव्यत्ययः । वीरकर्म[1] । रेत इत्यर्थः[2] । येन रेतस्यो-त्पन्ना वीरा भवन्ति तादृशेनः प्रथिष्ट प्रथितमासीत् तद्रेतः अनुष्ठितं प्रजापतिनापत्यार्थं निषिक्तं नर्यः नरेभ्यो हितो यद्वा मनुष्येभ्यो देवेभ्यो हितो रुद्रः अपौहत् अपोहति । तदेवाह । पुनस्तत् रेतः आ वृहति सर्वत उत्क्षिपति उद्गमयति पुरुषाकारेण स्वयमुत्पन्नः सन् । कीदृशं रेतः । यत् रेतः कनायाः कान्तायाः दुहितुः स्वदुहितुः तस्यामित्यर्थः । तत्र प्रजापतिना अनुभृतम् आः आसीत् । मस्तेः सिपि 　　। कीदृशो रुद्रः । अनर्वा अन्यस्मिन्नप्रत्युतः । 'प्रजापतिर्वै स्वां दुहितरमभ्य-ध्यायद्दिवमित्यन्य आहुरुषसमित्यन्ये' ( ऐ. ब्रा. ३. ३३ ) इति ब्राह्मणम् ॥ 　　॥ २६ ॥

मध्या यत्कर्त्वमभवदभीके कामं कृण्वाने पितरि युवत्याम् ।
मनानग्रेतो जहतुर्वियन्ता सानौ निषिक्तं सुकृतस्य योनौ ॥ ६ ॥

मध्या । यत् । कर्त्वम् । अभवत् । अभीके । कामम् । कृण्वाने । पितरि । युवत्याम् ।
मनानक् । रेतः । जहतुः । विऽयन्ता । सानौ । निऽसिक्तम् । सुऽकृतस्य । योनौ ॥ ६ ॥

कामं यथेच्छं कृण्वाने कुर्वाणे पितरि प्रजापतौ युवत्यां दुहितर्युषसि दिवि वा । 'दिव-मित्यन्ये' इति हि ब्राह्मणं प्रदर्शितम् । मध्या तयोर्मध्येऽन्तरिक्षमध्ये वा अभीके समीपे[3] यत् कर्त्वं कर्म अभवत् मिथुनीभावाख्यं तदानीं मनानक् अल्पं[4] रेतः जहतु त्यक्तवन्तौ । किं कुर्वाणाविति तत्राह । वियन्ता परस्परमभिगच्छन्तौ । प्रजापतिना सानौ समुच्छ्रिते स्थाने सुकृतस्य यज्ञस्य योनौ निषिक्तम् आसीदित्यर्थः । ततो रुद्र उत्पन्न इत्यर्थः ॥

पिता यत्स्वां दुहितरमधिष्कन्क्ष्मया रेतः संजग्मानो नि षिञ्चत् ।
स्वाध्योऽजनयन्ब्रह्म देवा वास्तोष्पतिं व्रतपां निरतक्षन् ॥ ७ ॥

पिता । यत् । स्वाम् । दुहितरम् । अधिऽस्कन् । क्ष्मया । रेतः । सम्ऽजग्मानः । नि । सिञ्चत् ।
सुऽआध्यः । अजनयन् । ब्रह्म । देवाः । वास्तोः । पतिम् । व्रतऽपाम् । निः । अतक्षन् ॥७॥

पिता प्रजापतिः यत् यदा स्वां दुहितरं दिवमुषसं वा अधिष्कन् अभ्यस्कन्दत तदानी-मेव क्ष्मया पृथिव्या सह संजग्मानः संगच्छमानः प्रजापतिरस्मिँल्लोके रोहितं भूतामृश्यो भूत्वा रेतः नि षिञ्चत् निषेकमकरोत् । 'तामृश्यो भूत्वा रोहितं भूतामभ्यैत्' ( ऐ. ब्रा. ३. ३३ ) इति ब्राह्मणम् । तदानीं स्वाध्यः सुध्यानाः सुकर्माणो वा देवाः ब्रह्म अजनयन् उत्पादयन्[5] । किं तद्ब्रह्मेति तदाह । वास्तोष्पतिं यज्ञवास्तुस्वामिनं व्रतपां व्रतस्य कर्मणः रक्षःप्रभृतिभ्यः पालकं निरतक्षन् समुदपादयन्[6] । यज्ञवास्तुस्वामित्वं यस्मात् कर्मरक्षकत्वेन निर्मितवन्त इत्यर्थः ॥

१. म–'वीरकर्म...इत्यर्थः' नास्ति । २. त अ–ते पितरि । ३. त१.२.६.७.८-अ४.८–प्रत्ये समीपे, त४.५–पत्ये समीपे; अ१.७–प्रेत्य समीपे; अ२–मत्य समीपे; अ६–पत्ये समीपे; मु–पाते समीपे । ४. त-अ–अलं । ५. ग-त-अ–उत्पादयन् । ६. ग–संपादयन्; त-अ४.६.८-मु–समपादयन्; अ१.२.७–समुत्पादयन् ।

स ईं वृषा न फेनमस्यदाजौ स्मदा परैदप दभ्रचेताः ।
सरत्पदा न दक्षिणा परावृङ् न ता नु मे पृशन्यो जगृभ्रे ॥ ८ ॥

सः । ईम् । वृषा । न । फेनम् । अस्यत् । आजौ । स्मत् । आ । परा । ऐत् । अप । दभ्रऽचेताः ।
सरत् । पदा । न । दक्षिणा । पराऽवृक् । न । ताः । नु । मे । पृशन्यः । जगृभ्रे ॥ ८ ॥

अङ्गिरसो यज्ञान्ते नाभानेदिष्ठो गोभिरागच्छन्तं वास्तोष्पतिं पुरतः पश्यन् वदति । स ईम् सोऽयं वृषा न वर्षक इन्द्र इव न यथा वसुभिर्धनम् आजौ संग्रामे फेनमस्यत् क्षिप्तवान् तद्वत्क्षेपमना वास्तोष्पतिरिदानीं त्वेन वास्तुभागो युक्त इति यथार्थकथनानन्तरं स्मत् अस्मत्तः आ अप परैत् अपपरागच्छति । दभ्रचेताः अल्पमनस्को यः कश्चित् दक्षिणा दक्षिणार्थानां गवां परावृक् परावर्जयिता सन् पदा पदानि न सरत् न सरति अस्मदभिमुखमागच्छति । मे मम संबन्धिन्यः ताः गाः अङ्गिरोभिर्दत्ताः पृशन्यः पशिकानामभिस्पर्शनकुशलो रुद्रः न जगृभ्रे न गृह्णातीत्येवमाशास्ते ॥

मक्षू न वह्निः प्रजाया उपब्दिरग्निं न नग्न उप सीददूधः ।
सनितेध्मं सनितोत वाजं स धर्ता जज्ञे सहसा यवीयुत् ॥ ९ ॥

मक्षु । न । वह्निः । प्रऽजायाः । उपब्दिः । अग्निम् । न । नग्नः । उप । सीदत् । ऊधः ।
सनिता । इध्मम् । सनिता । उत । वाजम् । सः । धर्ता । जज्ञे । सहसा । यविऽयुत् ॥ ९ ॥

वास्तोष्पतिना रुद्रेण गोष्वसक्तेऽस्मिन् यज्ञे वह्निः वह्निवद्दाहको राक्षसादिः मक्षु[1] न शीघ्रं न उप सीदत् नागच्छति[2] । यो वह्निः प्रजायाः उपब्दिः उपपीडको भवति । यज्ञविघातार्थमागच्छति । महिषादिरूपायाः प्रजाया न पीडां करोत्यहनि । तथा ऊधः । रात्रिनामैतत् । रात्रावपि अग्निं ज्वलन्तं नग्नः विवसनो राक्षसादिः न उप सीदत् । एवं रुद्रे रक्षितरि सति सः अग्निः इध्मं सनिता जज्ञे उत्पन्नः । उत अपि च वाजम् अन्नं हविः सनिता जज्ञे । सः धर्ता यज्ञस्य फलस्य वा धारक उत्पन्नः सोऽग्निः सहसा बलेन[3] यवीयुत् यज्ञविघ्नकर्तॄणां रक्षःप्रभृतीनां योक्ता जज्ञे ॥

मक्षू कनायाः सख्यं नवग्वा ऋतं वदन्त ऋतयुक्तिमग्मन् ।
द्विबर्हसो य उप गोपमागुरदक्षिणासो अच्युता दुदुक्षन् ॥ १० ॥

मक्षु । कनायाः । सख्यम् । नवऽग्वाः । ऋतम् । वदन्तः । ऋतऽयुक्तिम् । अग्मन् ।
द्विऽबर्हसः । ये । उप । गोपम् । आ । अगुः । अदक्षिणासः । अच्युता । दुधुक्षन् ॥ १० ॥

नवग्वाः अङ्गिरसः । गवामयनाख्यं सत्रमनुतिष्ठतामङ्गिरसां मध्ये ये नवसु मासेषु लब्धगावः सन्त उत्थितास्ते नवग्वाः । ते ऋतं वदन्तः मक्षु शीघ्रं कनायाः कमनीयायाः स्तुतेर्नाभानेदिष्ठप्रेरितायाः सकाशात् ऋतयुक्तिम् उदकयोगपरिसमाप्तिम् अग्मन् प्राप्ताः । यद्वा । ऋतयुक्तिं यज्ञयोगोपेतमृतं सत्यं स्तुतिं वदन्तोऽङ्गिरसः कनायाः पुत्र्याः सख्यमगमन्निति योजना । द्विबर्हसः

1 ङ-भ-'मक्षु' नास्ति । 2 'न नागच्छति' नास्ति; भ- न गच्छति । 3. ग-यस्य बलेन; ग१. २.३.६.७.८-भ२ ४.५.६.८-यज्ञस्य बलेन; त४.५-जीवस्य बलेन ।

द्युवोः स्थानयोर्द्यावापृथिव्योः परिवृताः ये अङ्गिरसः गोपं गोपायितारं नाभानेदिष्ठमिन्द्रं वा उप आगुः उपगताः ते अदक्षिणासः दक्षिणारहिताः । 'अदक्षिणानि सत्राणीत्याहुः' इति हि वचनं 'ये यजमानास्त ऋत्विजः' इति । ते च अच्युता उदकान्यक्षीणानि फलानि वा दुदुह्रन् ॥ ॥ २० ॥

मक्षू कनायाः सख्यं नवीयो राधो न रेत ऋतमित्तुरण्यन् ।
शुचि यत्ते रेक्ण आयजन्त सबर्दुघायाः पय उस्रियायाः ॥ ११ ॥

मक्षु । कनायाः । सख्यम् । नवीयः । राधः । न । रेतः । ऋतम् । इत । तुरण्यन् ।
शुचि । यत् । ते । रेक्णः । आ । अयजन्त । सबःऽदुघायाः । पयः । उस्रियायाः ॥ ११ ॥

मक्षु क्षिप्रं कनायाः कमनीयायाः[1] घर्मदोग्ध्र्याः नवीयः नवतरं सख्यम् । प्राप्नोति शेषः । अथवा नवीय इति राधोविशेषणम् । नवतरं राधः धनमिव रेतः सिच्यमानम् ऋतम् उदकं तुरण्यन् दिवः सकाशात्प्रेरितवन्तः । हे इन्द्र ते तुभ्यं यत्[2] यदा[3] रेक्णः पायोलक्षणं धनम् आ अभिमुख्येन अयजन्त अपूजयन् । कीदृशं रेक्णः । सबर्दुघायाः । सबरिति अमृतनाम । अमृतदोग्ध्र्याः उस्रियायाः गोः पयः पानयोग्यं रसम्[3] । तस्योदकं तुरण्यन्निति । अत्राध्वर्युब्राह्मणम्—'अङ्गिरसो वै सत्रमासत तेषां पृश्निर्घर्मधुगासीत् सर्जीषेणाजीवस् तेऽब्रुवन् कस्मै नु सत्रमास्महे येऽस्या ओषधीर्न जनयाम इति ते दिवो वृष्टिमसृजन्त' ( तै. ब्रा. २. १. १. १ ) इति ॥

पश्वा यत्पश्चा वियुता बुधन्तेति ब्रवीति वक्तरी रराणः ।
वसोर्वसुत्वा कारवोऽनेहा विश्वं विवेष्टि द्रविणमुप क्षु ॥ १२ ॥

पश्वा । यत् । पश्चा । विऽयुता । बुधन्त । इति । ब्रवीति । वक्तरि । रराणः ।
वसोः । वसुऽत्वा । कारवः । अनेहा । विश्वम् । विवेष्टि । द्रविणम् । उप । क्षु ॥ १२ ॥

यत् यदा स्तोतारः पश्वा पशुना । गोसमूहेनेत्यर्थः । तेन वियुता वियुक्तानि स्वकीयानि गोस्थानानि पश्चा पश्चात् बुधन्त अजानन् । तदानीं कारवः । कारुरित्यर्थः । स्तोता इति ब्रवीति इत्थं ब्रूते । किमिति । वक्तरि स्तोतरि रराणः रममाणः वसोः वासकात् वसुत्वा अतिशयेन वासयिता । यद्वा । वसुत्वेति समूहार्थे त्वा[4] नामकरणः । गोरूपधनस्यातिशयेन गोसमूहवानित्यर्थः । अनेहा अपाप इन्द्रः विश्वं सर्वं[5] द्रविणं गोरूपं पणिभिरपहृतं धनं क्षु । भक्षित्यर्थः । क्षीप्रम् उप विवेष्टि उपव्याप्नोति पुनरादातुम् । अयमर्थः । यदेन्द्रस्य स्तोतारोऽसुरैरपहृतमस्मदीयं गोधनं जानन्ति[6] ततः प्रागेवागत्येन्द्रस्तं न्यरुणदिति[7] ॥

तदिन्न्वस्य परिषद्वानो अग्मन्पुरू सदन्तो नार्षदं बिभित्सन् ।
वि शुष्णस्य संग्रथितमनर्वा विदत्पुरुप्रजातस्य गुहा यत् ॥ १३ ॥

तत् । इत् । नु । अस्य । परिऽसद्वानः । अग्मन् । पुरु । सदन्तः । नार्सदम् । बिभित्सन् ।
वि । शुष्णस्य । सम्ऽग्रथितम् । अनर्वा । विदत् । पुरुऽप्रजातस्य । गुहा । यत् ॥ १३ ॥

१. ग-त-मु—कमनीयायाः पृश्न्याः । २. त-भ—यदा । ३. ग-भ-मु—रसमवर्षत । ४. त-भ-मु—त्वो । ५. ग४-त-भ२,६,८—'सर्वं' नास्ति । ६. ग-त१,२,३,६,७,८-भ१,२,४,६-मु—न जानीते । ७. ग४—निरुध्यति; त-भ—निरुध्यदिति ।

तदित् सद्यैव क्षु क्षिप्रम् अस्य इन्द्रस्य परिषद्वानः परितो वर्तमानाः परिचारका रश्मयः अग्मन् प्रकाशनार्थमगच्छन्। पुरु पुरूणि कृत्रिमाणि सदन्तः सीदन्तोऽसुराः नार्षदं नृषदः पुत्रं विभित्सन् भेत्तुमैच्छन्। किंचायं शुष्णस्य एतन्नामकस्यासुरस्य पुरुप्रजातस्य बहुधाप्रादुर्भावस्य संग्रथितं मर्म भिनत् वेत्ति। अथमिन्द्रः यत् असुरस्य दुर्ज्ञेयं मर्म गुहा गुहायां गोपितं तदभिनत्॥

भर्गो ह नामोत यस्य देवाः स्व१र्ण ये त्रिषधस्थे निषेदुः।
अग्निर्ह नामोत जातवेदाः श्रुधी नो होतर्ऋतस्य होताध्रुक्॥ १४॥

भर्गः। ह। नाम। उत। यस्य। देवाः। स्वः। न। ये। त्रिऽसधस्थे। निऽसेदुः।
अग्निः। ह। नाम। उत। जातऽवेदाः। श्रुधि। नः। होतः। ऋतस्य। होता। अध्रुक्॥ १४॥

उत अपि च भर्गो ह नाम तत्तेजः किल प्रसिद्धं यस्य तेजस आत्मभूतस्य संबन्धिनि त्रिषधस्थे बर्हिषि ये देवाः सन्ति ते सर्वे स्वर्ण स्वर्गे यथा तथैव निषेदुः निषीदन्ति। उत अपि च तत्तेजः अग्निर्ह नाम अग्निः किल नाम। उतापि च जातवेदाः जातप्रज्ञो जातानां वेदिता एतदपि तस्य तेजसो नाम। अतो भर्गो ह्यग्निरिति जातवेदा इति च त्रीणि नामानीत्यर्थः। अथ प्रत्यक्षकृतः। हे होतः होमनिष्पादकोक्तनामाग्ने ऋतस्य होता यज्ञस्य संबन्धिनां देवानामाह्वाता अध्रुक् द्रोहरहितस्त्वं नः अस्माकमाह्वानं श्रुधि शृणु॥

उत त्या मे रौद्रावर्चिमन्ता नासत्याविन्द्र गूर्तये यजध्यै।
मनुष्वद्वृक्तबर्हिषे रराणा मन्दू हितप्रयसा विक्षु यज्यू॥ १५॥

उत। त्या। मे। रौद्रौ। अर्चिऽमन्ता। नासत्या। इन्द्र। गूर्तये। यजध्यै।
मनुष्वत्। वृक्तऽबर्हिषे। रराणा। मन्दू इति। हितऽप्रयसा। विक्षु। यज्यू इति॥ १५॥

उत अपि च हे इन्द्र त्या तौ प्रसिद्धौ रौद्रौ[1] रुद्रपुत्रौ। 'क्षोदो न रेत इतऊति सिञ्चत्' (ऋ. सं. १०. ६१. २) इति हि रुद्रपुत्रत्वमुक्तम्। अर्चिमन्ता दीप्तिमन्तौ नासत्यौ अश्विनौ मे गूर्तये स्तुतये यजध्यै यागाय[2] च भवेतामिति शेषः। किंच मनुष्वत् मम पितुर्मनोरिव तस्य यज्ञे यथा तथैव वृक्तबर्हिषे स्तीर्णबर्हिषे मह्यं रराणा रममाणौ मन्दू मदिष्णू हितप्रयसा प्रेरितधनौ विक्षु ऋत्विक्ष्वस्मदीयेषु तथा[3] यज्यू यष्टव्यौ भवतामिति शेषः॥ ॥ २८ ॥

अयं स्तुतो राजा वन्दि वेधा अपश्च विप्रस्तरति स्वसेतुः।
स कक्षीवन्तं रेजयत्सो अग्निं नेमिं न चक्रमर्वतो रघुद्रु॥ १६॥

अयम्। स्तुतः। राजा। वन्दि। वेधाः। अपः। च। विप्रः। तरति। स्वऽसेतुः।
सः। कक्षीवन्तम्। रेजयत्। सः। अग्निम्। नेमिम्। न। चक्रम्। अर्वतः। रघुऽद्रु॥ १६॥

अयं वेधाः सर्वस्य विधाता राजा सोमः स्तुतः सर्वैः वन्दि स्तूयतेऽस्माभिः। किंच विप्रः विशेषेण पूरको विप्रवच्छुद्धो वा स्वसेतुः यस्य स्वभूता रश्मयो जगद्बन्धकाः सन्ति स सोमः अपश्च अन्तरिक्षं च तरति व्याप्नोति प्रतिदिनम्। सः सोमः कक्षीवन्तम् ऋषिं पर्वतमध्ये

१. ख-भ–'रौद्री' नास्ति। २. ग१.२.३.७-भ२.४.६.८–योगाय। ३. ग-भ१.२.४.६.८–तो।

सोमार्थं गतं रेजयत् अकम्पयत्। सः स एव आग्निः हविर्भोढुमवाप्तं सन्तं पक्षाभ्यामप्सु मथितं रेजयत्। कम्पने छान्दसः। नेमिं[1] गमनशीलं रघुद्रु[2] लघुगमनं अक्रम् अर्वतः अर्वन्तोऽश्वा इव ते यथा तथा रेजयत्। जुमभावश्छान्दसः ॥

**स द्विबन्धुर्वैतरणो यष्टा सबर्धुं धेनुमस्वं दुहध्यै ।**
**सं यन्मित्रावरुणा वृञ्ज उक्थैर्ज्येष्ठेभिरर्यमणं वरूथैः ॥ १७ ॥**

सः । द्विऽबन्धुः । वैतरणः । यष्टा । सबःऽधुम् । धेनुम् । अस्वम् । दुहध्यै ।
सम् । यत् । मित्रावरुणा । वृञ्जे । उक्थैः । ज्येष्ठेभिः । अर्यमणम् । वरूथैः ॥ १७ ॥

सः अग्निः द्विबन्धुः द्वयोर्लोकयोर्बन्धुभूतः वैतरणः सर्वस्य विशेषेण तारयिता । यष्टा । वितरणार्हो हविष्प्रदानार्हः । यष्टा देवानां याजकोऽग्निः सबर्धुम् अमृतोपमपयोदोग्ध्रीं धेनुम् अस्वम् अप्रसूतां निवृत्तप्रसवां स्वयं दुहध्यै दोहायाकरोत् । यत् यदा स वायुः मित्रावरुणौ अर्यमणं च ज्येष्ठेभिः ज्येष्ठैः प्रशस्तैः वरूथैः वरणीयैः उक्थैः शस्त्रैः सं वृञ्जे सम्यक्स्तौति । यदा स वायुर्मित्रावरुणयोर्यमणां स्तुतिं करोति तदा तेषामाज्ञयाग्निर्निवृत्तप्रसवां पयोदोग्ध्रीमकरोदिति ॥

**तद्बन्धुः सूरिर्दिवि ते धियंधा नाभानेदिष्ठो रपति प्र वेनन् ।**
**सा नो नाभिः परमास्य वा घाहं तत्पश्चा कतिथश्चिदास ॥ १८ ॥**

तत्ऽबन्धुः । सूरिः । दिवि । ते । धियम्ऽधाः । नाभानेदिष्ठः । रपति । प्र । वेनन् ।
सा । नः । नाभिः । परमा । अस्य । वा । घ ।
अहम् । तत् । पश्चा । कतिथः । चित् । आस ॥ १८ ॥

तद्बन्धुः । सैव पृथिवी बन्धुकोऽस्यस्वधिष्ठानत्वेन[3] यस्यासौ तद्बन्धुः । तन्मातृक इत्यर्थः । सूरिः स्तुतेः प्रेरकः दिवि वर्तमानस्य ते तव स्वभूत इति शेषः । त्वदपत्यभूत इति यावत् । पर्वतासार्ध्यान्संबन्धमात्रमात्यं प्रतीयते । तथादित्यपुत्रो मनुर्मनोः पुत्रो नाभानेदिष्ठ इत्येवं सूर्यापत्यत्वेऽपि पर्यवस्यति । सूर्यनाभानेदिष्ठयोः संबन्धप्रकारमपाद उत्तरमन्त्रे च वक्ष्यते । स च धियंधाः कर्मणां धारको नाभानेदिष्ठः वेनन् अङ्गिरोभ्यो गोसहस्रं वेनन् कामयन् प्र रपति प्रकथति । स्तौतीत्यर्थः । वा अपि चेत्यर्थः । सा द्यौः नः अस्माकं परमा उत्कृष्टा नाभिः बन्धिका च अस्य आदित्यस्य अधिष्ठानभूतास्ति । घ इति पूरणः । अहं तत् तस्यादित्यस्य पश्चा[4] पश्चादनन्तरं कतिथः कतिपयानां पूरणः आस अभवम् । अनेन ममादित्येन जन्यजनकभावः संबन्धः संनिकृष्ट इत्युक्तं भवति ॥

**इयं मे नाभिरिह मे सधस्थमिमे मे देवा अयमस्मि सर्वः ।**
**द्विजा अह प्रथमजा ऋतस्येदं धेनुरदुहज्जायमाना ॥ १९ ॥**

इयम् । मे । नाभिः । इह । मे । सधऽस्थम् । इमे । मे । देवाः । अयम् । अस्मि । सर्वः ।
द्विऽजाः । अह । प्रथमऽजाः । ऋतस्य । इदम् । धेनुः । अदुहत् । जायमाना ॥ १९ ॥

---

१. ग-त४.५.६-म—नेमिं न । २. त-म१.८—रघुद्रु रघुद्रु । ३. ग-त१ २-३.६.७.८-म-मु—अधिकोऽस्य । ४. अ—'पश्चा' नास्ति ।

इयं माध्यमिका वाक् मे नाभिः संनाहिनी। आदित्यस्य तस्याश्चाभेदाद्रूपसाम्याद्वा माध्यमिका[1] वागसन्धिका भवति। तथा च ब्राह्मणम्—'सा या वाक्सौ स आदित्यः' (श. ब्रा. १०.५.१.४) इति ब्राह्मणम्। इह अस्मिन्मण्डले मे मम सधस्थं स्थानम्। इमे मे देवाः द्योतमाना रश्मयः मे मम स्वभूताः। प्रथमः अहम् अस्मि सर्वः। सूर्यस्य स्वस्यैकेन प्रकारेणाभेदात्तद्द्वारा सर्वात्मकत्वम्। अह किंचार्थः। द्विजाः विप्राः ऋतस्य प्रथमजाः सत्यस्य प्रथमजाः सत्यभूतस्य ब्रह्मणः प्रथमापत्याः। धेनुः प्रीणयित्री माध्यमिका वाक् जायमाना इदं सर्वम् अदुहत् दुदोह। उदकादर्थादित्यर्थः ॥

अधासु मन्द्रो अरतिर्विभावाव स्यति द्विवर्तनिर्वनेषाट्।
ऊर्ध्वा यच्छ्रेणिर्न शिशुर्दन्मक्षू स्थिरं शेवृधं सूत माता ॥ २० ॥

अध। आसु। मन्द्रः। अरतिः। विभाऽवा। अव। स्यति। द्विऽवर्तनिः। वनेषाट्।
ऊर्ध्वा। यत्। श्रेणिः। न। शिशुः। दन्। मक्षु। स्थिरम्। शेऽवृधम्। सूत। माता ॥ २० ॥

अध अथ आसु यजमानेषु दिक्षु मन्द्रः मोदमानः अरतिः गन्ता विभावा दीप्तिमान् द्विवर्तनिः द्वयोः लोकयोः गन्ता वनेषाट् वने काष्ठजातमभिभवितानिः अव स्यति अवसक्तो भवति यागार्थम्। यत् च योऽग्निः ऊर्ध्वा उन्मुखा श्रेणिर्न शिशुः शंसनीयः सेनेव मक्षु क्षिप्रं[2] दन् शत्रून् दमयति तमिमं स्थिरं स्थिरात्मके शेवृधं सुखस्य वर्धकं माता अरणिः सूत सूते जनयामास ॥ ॥ २१ ॥

अधा गाव उपमातिं कनाया अनु श्वान्तस्य कस्य चित्परेयुः।
श्रुधि त्वं सुद्रविणो नस्त्वं याळाश्वघ्नस्य वावृधे सूनृताभिः ॥ २१ ॥

अध। गावः। उपऽमातिम्। कनायाः। अनु। श्वान्तस्य। कस्य। चित्। परा। ईयुः।
श्रुधि। त्वम्। सुऽद्रविण। नः। त्वम्। याट्। आश्वऽघ्नस्य। ववृधे। सूनृताभिः ॥ २१ ॥

अध संप्रति कस्य चित् श्वान्तस्य प्रवृद्धस्य श्वान्तस्य वा[3]। आत्मनो निर्देशः। इन्द्रस्य नाभानेदिष्ठस्य कनायाः कमनीयायाः स्तुतेः गावः वाचः। यद्वा। वाचः स्तुतयः कनायाः कमनीयायाः स्तुतेः उपमातिम् उपमानभूतमिन्द्रम् अनु परेयुः अनु परागच्छन्ति। हे सुद्रविणः सुधनाग्ने त्वं श्रुधि शृणु। नः अस्माकमिममिन्द्रं याट् अयाट् यज। त्वं च आश्वघ्नस्य अश्वघ्नोऽश्वमेधयाजी मनुः तस्य पुत्रस्य मम सूनृताभिः स्तुतिभिः ववृधे वर्धसे। पुरुषव्यत्ययः। प्रथमार्थं वर्धन इति परोक्षेण निर्देशः ॥

अध त्वमिन्द्र विद्ध्यस्मान्महो राये नृपते वज्रबाहुः।
रक्षा च नो मघोनः पाहि सूरीननेहसस्ते हरिवो अभिष्टौ ॥ २२ ॥

अध। त्वम्। इन्द्र। विद्धि। अस्मान्। महः। राये। नृऽपते। वज्रऽबाहुः।
रक्ष। च। नः। मघोनः। पाहि। सूरीन्। अनेहसः। ते। हरिऽवः। अभिष्टौ ॥ २२ ॥

१. म-त-म१.२.४.६.८-°माध्यमिको। २. ग-त-मु-क्षिप्रं। ३. ग-त४ ५-मु-वेति; त१.२.३.७.८-म६.८-वे।

हे[1] इन्द्र[1] अध अधुना वज्रबाहुः त्वम् अस्मान् महः महते राये धनाय चिद्धि आनीहि । हे इन्द्र मघोनः हविष्मतः सूरीन् स्तुतिप्रेरकान् नः अस्मान् रक्ष च । हे हरिवः हरिभ्यां तद्वन्निन्द्र ते तव अभिष्टौ अभिगमने अनेहसः अपापाः स्यामेति शेषः ॥

अध॒ यद्रा॑जाना॒ गवि॑ष्टौ॒ सर॑त्सर॒ण्युः का॒रवे॑ जर॒ण्युः ।
विप्रः॒ प्रेष्ठः॒ स ह्ये॑षां ब॒भूव॒ परा॑ च॒ वक्ष॑दु॒त प॑र्ष॑देना॒न् ॥ २३ ॥

अध॑ । यत् । रा॒जा॒ना॒ । गोऽइ॑ष्टौ । सर॑त् । स॒र॒ण्युः । का॒रवे॑ । ज॒र॒ण्युः ।
विप्रः॑ । प्रेष्ठः॑ । सः । हि । ए॒षा॒म् । ब॒भूव॑ । परा॑ । च॒ । वक्ष॑त् । उ॒त । प॒र्ष॑त् । ए॒ना॒न् ॥ २३ ॥

हे राजाना राजमानौ मित्रावरुणौ अध अधुना सत्रसमाप्तौ यत् यस्मात् गविष्टौ गवामेषणायां सत्यां सरण्युः सरणशीलो मनुः सरत् गच्छति कारवे कर्माणि[2] कुर्वतेऽङ्गिरसां गणाय । लिप्सिच्छन् । जरण्युः तस्मा अङ्गिरसो गणाय स्तुतिमिच्छन्[3] । तस्मात् सः विप्रः नाभानेदिष्ठः एषाम् अङ्गिरसां प्रेष्ठः प्रियतमः बभूव भवतु । हि इति पूरणः । तेषां कर्तव्यं परा च वक्षत् पराबहतु । उत अपि च एनान् अङ्गिरसः पर्षत् पारयतु[4] इत्यात्मन[5] एवाशास्ते[6] ॥

अधा॒ न्व॑स्य॒ जेन्य॑स्य पु॒ष्टौ वृथा॒ रेभ॑न्त ईमहे॒ तदू॒ नु ।
स॒र॒ण्युर॑स्य सू॒नुरश्वो॒ विप्र॑श्चासि॒ श्रव॑सश्च सा॒तौ ॥ २४ ॥

अध॑ । नु । अ॒स्य॒ । जेन्य॑स्य । पु॒ष्टौ । वृथा॑ । रेभ॑न्तः । ई॒म॒हे॒ । तत् । ऊँ इति॑ । नु ।
स॒र॒ण्युः । अ॒स्य॒ । सू॒नुः । अश्वः॑ । विप्रः॑ । च॒ । अ॒सि॒ । श्रव॑सः । च॒ । सा॒तौ ॥ २४ ॥

अनया वरुणं पृथक् स्तौति । अध अथ नु क्षिप्रम् अस्य जेन्यस्य जयशीलस्य स्तुत्या जेतव्यस्य वा तत् स्वभूतं गवादिधनं पुष्टौ पोषे निमित्ते सति तस्य पुष्ट्यर्थं वा वृथा अनायासेन रेभन्तः स्तुवन्तः नु क्षिप्रम् ईमहे याचामहे । सरण्युः शीघ्रमरणशीलः अश्वः अस्य वरुणस्य सूनुः पुत्रः । वरुणाद्ध्यश्व उत्पन्नः । अथ प्रत्यक्षकृतः । हे वरुण त्वं विप्रश्चासि विप्रवत्पूज्यः सुखी वा भवसि । श्रवसश्च अन्नस्य सातौ लाभे अस्माकमन्नलाभाय प्रवृत्तश्च भवसि[6] ॥

यु॒वोर्यदि॑ स॒ख्याया॒स्मे शर्धा॑य॒ स्तोमं॑ जुजु॒षे नम॑स्वान् ।
वि॒श्वत्र॒ यस्मि॒न्ना गिरः॑ समी॒चीः पू॒र्वीव॑ गा॒तुर्दाश॑त्सू॒नृता॑यै ॥ २५ ॥

यु॒वोः । यदि॑ । स॒ख्याय॑ । अ॒स्मे इति॑ । शर्धा॑य । स्तोम॑म् । जु॒जु॒षे । नम॑स्वान् ।
वि॒श्वत्र॑ । यस्मि॑न् । आ । गिरः॑ । स॒म्ऽई॒चीः । पू॒र्वीऽइ॑व । गा॒तुः । दाश॑त् । सू॒नृता॑यै ॥ २५ ॥

हे मित्रावरुणौ युवोः युवयोः शर्धाय बलवते अस्मे अस्माकं सख्याय । षष्ठ्यर्थे चतुर्थी । युवयोः सख्याय अस्मे अस्माकं शर्धाय बलाय च । यदि नमस्वान् अन्नवानध्वर्युः स्तोमवान् होता वा स्तोमं जुजुषे सेवते । यस्मिन् सख्ये सिद्धे सति विश्वत्र विश्वस्मिञ्जनपदे गिरः अङ्गिरसां

१. ग४—हे नृपते नृणां पालक इंद्र । २. ग-त-म२.४.६.८-मु—कर्म । ३. त१.२.४.५.६.७.८-म—स्तुतिमिच्छन् जरण्युः । ४. ग४—प्रापयतु; त-भ-मु—पारयति । ५. ग-त४.५—इत्यात्मानमेवाशास्ते; त१.२.३-६.७ ८-म१—इत्यात्मान एवाशास्ते । ६. त-म—भवति ।

संबन्धिन्यः[१] समीचीः सम्यञ्चः आ गच्छन्तीति शेषः । उदाहरणं[२] गृह इदं गृहाण इदं गृहाणेत्येवंरूपाः शृण्वन्त इत्यर्थः । यद्वा । यागानुष्ठातृणां स्तुतिगिर आगच्छन्तीति । पूर्वीव गातुः प्राची दिगिव सा यथा गच्छतो सुखं प्रयच्छति तद्वत्[३] । यद्वा । पूर्वी[४] पुरा[५] प्रसिद्धा पुरातनीव गातुः सरणिरिव सा यथा गच्छतो सुखं प्रयच्छति तद्वत् । सूनृताये प्रियसत्यरूपायै स्तुतिवाचे दाशत्[५] प्रयच्छतु[५] ॥

स गृ॒णा॒नो अ॒द्भिर्दे॒ववा॒निति॑ सु॒बन्धु॒र्नम॑सा सू॒क्तैः ।
वर्ध॑दु॒क्थैर्वचो॑भि॒रा हि नू॒नं व्यध्वैति॒ पय॑स उ॒स्रिया॑याः ॥ २६ ॥

सः । गृ॒णा॒नः । अ॒त्ऽभिः । दे॒वऽवा॑न् । इति॑ । सु॒ऽबन्धुः॑ । नम॑सा । सु॒ऽउ॒क्तैः ।
वर्ध॑त् । उ॒क्थैः । वचः॑ऽभिः । आ । हि । नू॒नम् । वि । अध्वा॑ । एति॑ । पय॑सः । उ॒स्रिया॑याः ॥ २६ ॥

अद्भिः देवताभिः देववान् सुबन्धुः शोभनबन्धनः सः वरुणः इति इत्थंकृतप्रकारेण नमसा नमस्कारेण सूक्तैः च गृणानः स्तूयमानः सन् वर्धत् वर्धताम् । उक्थैर्वचोभिः उच्यमानैः प्रशस्तैर्वा स्तुतिवचोभिः नूनम् इदानीम् आ गच्छत्विति शेषः । हि इति पूरणः । तस्य यागार्थम् उस्रियायाः गोः पयसः अध्वा मार्गः वि एति । स्तनाग्राणि क्षरन्तीत्यर्थः ॥

त ऊ॒ षु णो॑ म॒हो य॑जत्रा भू॒त दे॑वास ऊ॒तये॑ स॒जोषाः॑ ।
ये वाजाँ॒ अन॑यता वि॒यन्तो॒ ये स्था नि॑चे॒तारो॒ अमू॑राः ॥ २७ ॥

ते । ऊं॒ इति॑ । सु । नः॒ । म॒हः । य॒ज॒त्राः॒ । भू॒त । दे॒वा॒सः॒ । ऊ॒तये॑ । स॒ऽजोषाः॑ ।
ये । वाजा॑न् । अन॑यत । वि॒ऽयन्तः॑ । ये । स्थ । नि॒ऽचे॒तारः॑ । अमू॑राः ॥ २७ ॥

अनयाङ्गिरस आचाष्टे । हे यजत्राः यष्टव्याः देवासः देवाः ते यूयम् । उ इति पूरणः । महः महते नः अस्माकम् ऊतये रक्षणाय सजोषाः संगताः भूत भवत । ये च यूयम् अङ्गिरसो मह्यं वाजान् अन्नानि अनयत प्रापयथ वियन्तः सततसुखाय[६] विविधं गच्छन्तः सन्तः । ये च यूयम् अमूराः अमूढाः । पदाहःप्रयोगमौढ्यरहिता इत्यर्थः । सादृशाः निचेतारः सर्वां चिकित्सारः स्थ भवथ । ते सजोषा भूतेति समन्वयः ॥ ॥ ३० ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्य-
धुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
ऋक्संहिताभाष्येऽष्टमाष्टके प्रथमोऽध्यायः ॥

१. गचे-त२.३.७-म१.२.६.८—संबंधिनि । २. त—उदाहरणं । ३. ग-त-म१.२.४.६.८—'तद्वत्' नास्ति । ४. ग-म-म—पुरा पूर्वी । ५. ग-त-म२.४.६.८—'दाशत् प्रयच्छतु' नास्ति; म७—दाशत; मु—दाशत् सुखं प्रयच्छतु । ६. ग७—सततसुखाय; त१.२.३-म१.२.४.६.८—सा तत्याय । म१—सतत तत्याय ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥
व्याख्याय प्रथमे विद्वानष्टमस्याष्टकस्य यः।
अध्यायं सायणामात्यो[1] द्वितीयं व्याचिकीर्षति॥

तत्र 'ये यज्ञेन' इत्येकादशर्चमनुवाकापेक्षया द्वितीयं सूक्तं मानवस्य नाभानेदिष्ठस्यार्षम्। आदितश्चतस्रो जगत्यः। पञ्चम्यनुष्टुप्। षष्ठी बृहती। सप्तमी सतोबृहती। अष्टमीनवम्यावनुष्टुभौ। दशमी गायत्री। एकादशी त्रिष्टुप्। आदितः षळ्णां विश्वे देवा अङ्गिरसो वा देवता। सप्तमी वैश्वदेवी। अष्टम्याद्यासु चतसृषु सावर्णेर्महाराजस्य धर्मः स्तूयते। अतस्तास्तद्देवताकाः। तथा चानुक्रम्यते— 'ये यज्ञेनैकादशाद्याः षळङ्गिरसां स्तुतिर्वान्त्या त्रिष्टुब्जगत्यनुष्टुब्बृहती सतोबृहत्यनुष्टुभौ गायत्री चतस्रोऽन्त्याः सावर्णेर्दानस्तुतिः' इति। षष्ठेऽहनि वैश्वदेवशस्त्र इदं सूक्तम्। सूत्रितं च— 'इदमित्था रौद्रमिति प्रागुपोत्तमाया ये यज्ञेनेत्यावपते' ( आश्व. श्रौ. ८. १ ) इति॥

ये यज्ञेन दक्षिणया समक्ता इन्द्रस्य सख्यममृतत्वमानश।
तेभ्यो भद्रमङ्गिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः॥ १ ॥

ये। यज्ञेन। दक्षिणया। सम्ऽअक्ताः। इन्द्रस्य। सख्यम्। अमृतऽत्वम्। आनश।
तेभ्यः। भद्रम्। अङ्गिरसः। वः। अस्तु। प्रति। गृभ्णीत। मानवम्। सुऽमेधसः॥ १ ॥

नाभानेदिष्ठः स्वपित्रा मनुनाभ्यनुज्ञातः सत्रमासीनानङ्गिरसोऽभ्येत्य मां प्रतिगृह्णीत युष्मभ्यं यज्ञं प्रज्ञापयामीति यदुक्तवान् तदुच्यते। इतिहासस्तु इदमित्थेति पूर्वसूक्ते 'नाभानेदिष्ठं शंसति नाभानेदिष्ठं वै मानवम्' ( ऐ. ब्रा. ५. १४ ) इति ब्राह्मणानुसारेण 'मनुः पुत्रेभ्यो दायं व्यभजत्' ( तै. सं. ३. १. ९. ४ ) इति तैत्तिरीयब्राह्मणानुसारेण च सम्यगभिहितः। तथा चास्या ऋचोऽयमर्थः। यज्ञेन यजनीयेन हविषा दक्षिणया ऋत्विग्भ्यो देयया समक्ताः संगताः ये अहीनैकाहसत्राणि[2] कुर्वन्तो यूयम् इन्द्रस्य सख्यं सखिकर्म अत एव अमृतत्वम् अमरणधर्म देवत्वम् आनश आनशिध्वे प्राप्ताः स्थ। अश्नोतेर्लिटि मध्यमे व्यत्ययेन बहुवचनम्। 'अश्नोतेश्च' इति नुडागमः। यद्वृत्तयोगादनिघातः। हे अङ्गिरसः तेभ्यः वः युष्मभ्यं भद्रं कल्याणं कर्म अस्तु। हे सुमेधसः सुप्रज्ञा हे अङ्गिरसः ते यूयमिदानीमागतं मानवं मनोः पुत्रं मां प्रति गृभ्णीत प्रतिगृह्णीत। मयि प्रतिगृहीते सति यज्ञं साधु करिष्यामीति तदर्थं प्रतिगृह्णीत॥

य उदाजन् पितरो गोमयं वस्वृतेनाभिन्दन् परिवत्सरे वलम्।
दीर्घायुत्वमङ्गिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः॥ २ ॥

ये। उत्ऽआजन्। पितरः। गोऽमयम्। वसु। ऋतेन। अभिन्दन्। परिऽवत्सरे। वलम्।
दीर्घायुऽत्वम्। अङ्गिरसः। वः। अस्तु। प्रति। गृभ्णीत। मानवम्। सुऽमेधसः॥ २ ॥

१. म–सायणाचार्यो। २. ग४-ट१.२.७-म१–अहर्नैकाहसहस्राणि; ट३–अहीनैकाहसहस्राणि; म२–अहीनैकाहादिसहस्राणि, म४.६.७.८-मु–अहीनैकाहसहस्राणि।

हे अङ्गिरसः पितरः अस्माकं पूर्वजत्वेन पितृभूताः ये यूयं गोमयं गवात्मकं पणिभिरपहृतं वसु धनम् उदाजन् तैरधिष्ठितात्पर्वतादुदगमयत । किंच ऋतेन सत्यभूतेन यज्ञेन परिवत्सरे पर्यागते वत्सरे संपूर्णे । सत्रान्त इत्यर्थः । तत्र वलं बलनामानं गवामपहर्तारमसुरम् अभिन्दत अनाशयत तेभ्यः वः युष्मभ्यं दीर्घायुत्वं प्रभूतजीवनम् अस्तु । शेषं पूर्ववत् ॥

य ऋतेन सूर्यमारोहयन्दिव्यप्रथयन्पृथिवीं मातरं वि ।
सुप्रजास्त्वमङ्गिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥ ३ ॥

ये । ऋतेन । सूर्यम् । आ । अरोहयन् । दिवि । अप्रथयन् । पृथिवीम् । मातरम् । वि ।
सुप्रजाःऽत्वम् । अङ्गिरसः । वः । अस्तु । प्रति । गृभ्णीत । मानवम् । सुऽमेधसः ॥ ३ ॥

हे अङ्गिरसः ये भवन्तः ऋतेन सत्यभूतेन यज्ञेन दिवि द्युलोके सूर्यं सुष्ठु सर्वस्य प्रेरकमादित्यम् आरोहयन् अस्थापयन् किंच मातरं सर्वेषां निर्मात्रीं पृथिवीं वि अप्रथयन् प्रसिद्धामकुर्वन् सत्रादिकर्मकरणेन तेभ्यः युष्मभ्यं सुप्रजास्त्वं सुपुत्रत्वम् अस्तु ॥ 'नित्यमसिच् प्रजामेधयोः' इत्यसिच् समासान्तः । तस्मात्त्वप्रत्ययः ॥

अयं नाभा वदति वल्गु वो गृहे देवपुत्रा ऋषयस्तच्छृणोतन ।
सुब्रह्मण्यमङ्गिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥ ४ ॥

अयम् । नाभा । वदति । वल्गु । वः । गृहे । देवऽपुत्राः । ऋषयः । तत् । शृणोतन ।
सुऽब्रह्मण्यम् । अङ्गिरसः । वः । अस्तु । प्रति । गृभ्णीत । मानवम् । सुऽमेधसः ॥ ४ ॥

हे देवपुत्राः देवानां पुत्रा अग्नेः पुत्राः ऋषयः अतीन्द्रियार्थस्य द्रष्टारो हे अङ्गिरसः अयं नाभा नाभानेदिष्ठः पुरोवर्ती जनः वः युष्माकं गृहे गृहभूते यज्ञे वल्गु कल्याणं वचः वदति । तत् वाक्यं यूयं शृणोतन सहनादरेण शृणुत । 'श्रु श्रवणे' । 'तप्तनप्तनथनाश्च' इति तनबादेशः । तेभ्यो युष्मभ्यं सुब्रह्मण्यं शोभनं ब्रह्मवर्चसम् अस्तु । इदानीमागतं मानवं मां प्रति गृभ्णीत प्रतिगृह्णीत ॥

विरूपास इदृषयस्त इद्गम्भीरवेपसः ।
ते अङ्गिरसः सूनवस्ते अग्नेः परि जज्ञिरे ॥ ५ ॥

विऽरूपासः । इत् । ऋषयः । ते । इत् । गम्भीरऽवेपसः ।
ते । अङ्गिरसः । सूनवः । ते । अग्नेः । परि । जज्ञिरे ॥ ५ ॥

परोक्षकृतमर्धर्चमाह । ऋषयः कर्मणां द्रष्टार एत ऋषयः विरूपासः इत् अन्योन्यं वर्णतो रूपतश्च नानारूपा भवन्ति । ते इत् त एवासौ अङ्गिरसः गम्भीरवेपसः । वेप इति कर्मनाम । गम्भीरकर्माणो भवन्ति । ते इमे अङ्गिरसः सूनवः पुत्राः खलु । तदेवाह । ते इमे अङ्गिरसः अग्नेः परि जज्ञिरे सर्वतो जाताः प्रादुर्भूताः । 'येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्' (ऐ. ब्रा. ३. ३४) इति ब्राह्मणम् । अत्र निरुक्तं च द्रष्टव्यम् (निरु. ३. १७) ॥ ॥ १ ॥

१. ग-त-म-'नाभा' नास्ति । २. ग-त-म-मु-'प्रति गृभ्णीत' नास्ति । ३. ग-त४.५-प्रमाणतो; त१.२.६.७.८-म१.२.४.६.८-प्रणतो । ४. त१.२.३.-म२.६.८-ते न इमे ।

ये अग्नेः परि जज्ञिरे विरूपासो दिवस्परि ।
नवग्वो नु दशग्वो अङ्गिरस्तमः सचा देवेषु मंहते ॥ ६ ॥

ये । अग्नेः । परि । जज्ञिरे । विऽरूपासः । दिवः । परि ।
नवऽग्वः । नु । दशऽग्वः । अङ्गिरःऽतमः । सचा । देवेषु । मंहते ॥ ६ ॥

विरूपासः विविधरूपाः ये अङ्गिरसः दिवस्परि द्युलोकात् अग्नेः परि जज्ञिरे परितो जाताः । यद्वा । दिवस्परि । परिः पञ्चम्यर्थद्योतकः । स्वतेजसा दीप्यमानादग्नेर्जाताः । तेषां[1] मध्ये नवग्वः दशग्वः च अङ्गिरस्तमः अङ्गिरसां वरिष्ठः । सत्रमासीनानामङ्गिरसां मध्ये कश्चन नवसु मासेषु कर्म कृत्वोदतिष्ठत् केचन दशसु मासेष्वित्येवमाङ्गिरसामयनमुक्तम् । तेषामग्निर्नवग्वश्च दशग्वश्चोक्तः । तादृशः देवेषु सचा सहावस्थितः[2] सोऽङ्गिराः मंहते मह्यं धनं प्रयच्छति । मंहतिर्दानकर्मा ॥

इन्द्रेण युजा निः सृजन्त वाघतो व्रजं गोमन्तमश्विनम् ।
सहस्रं मे ददतो अष्टकर्ण्यः श्रवो देवेष्वक्रत ॥ ७ ॥

इन्द्रेण । युजा । निः । सृजन्त । वाघतः । व्रजम् । गोऽमन्तम् । अश्विनम् ।
सहस्रम् । मे । ददतः । अष्टऽकर्ण्यः । श्रवः । देवेषु । अक्रत ॥ ७ ॥

वाघतः कर्मणां वोढारो विश्वे देवा अङ्गिरसो वा इन्द्रेण युजा सहायेन निः सृजन्त निरगमयन् । किम् । गोमन्तं गोयुक्तम् अश्विनम् अश्ववन्तं पणिभिरपहृतं व्रजम् । ते मे मां प्रति सहस्रं सहस्रसंख्याकं धनं ददतः प्रयच्छन्तः अष्टकर्ण्यः । अष्ट इति 'अशू व्याप्तौ' निष्ठायां रूपम् । विस्तृतकर्णाः । उपलक्षणमेतत् । व्याप्तसर्वावयवा गावः । 'सहस्रं मह्यं प्रयच्छन्तः' देवेषु इन्द्रादिषु श्रवः हविर्लक्षणमन्नं कीर्तिं वा अक्रत अकुर्वत । करोतेर्लुङि 'मन्त्रे घस' इति च्लेर्लुक् । एवं नाभानेदिष्ठेनाङ्गिरसः स्तुतास्तस्मै धनं प्रादुः । तदुक्तं शौनकेन—'कृतयोऽङ्गिरसस्तुष्टा सहदुर्मानवाय तु । तत्पुण्याय च कर्माणि ये यज्ञेनैव कीर्तयन्[3]' ॥

उत्तराभिश्चतसृभिरस्मै सावर्ण्यस्य सावर्णिना महत्त्वं तत्राशास्यते । तदप्युक्तं शौनकेन— 'सावर्णिना च यद्दत्तं मानवाय महद्वसु । तदुक्तं सूक्तशेषेण प्र नूनं जायतामिति' ॥

प्र नूनं जायतामयं मनुस्तोक्मेव रोहतु ।
यः सहस्रं शताश्वं सद्यो दानाय मंहते ॥ ८ ॥

प्र । नूनम् । जायताम् । अयम् । मनुः । तोक्मऽइव । रोहतु ।
यः । सहस्रम् । शतऽअश्वम् । सद्यः । दानाय । मंहते ॥ ८ ॥

अयं सावर्णिः मनुः नूनं क्षिप्रं प्र जायतां प्रजातो भवतु । धनादिभिः पुत्रादिभिश्च रोहतु प्रादुर्भवतु । तत्र दृष्टान्तः । तोक्मेव । यथा जलक्लिन्नं बीजं प्रादुर्भवति एवं कर्मफलसंयुक्तः स मनुः पुत्रादिभिः रोहतु । यः अयं मनुः शताश्वं बहुश्वसंयुक्तं सहस्रं गवां सद्यः तत्कालमेव दानाय मंहते अस्मा ऋषये दातुं प्रेरयति ॥

१. ग-ग१.२.३-म१.२.४.६—तेषामेषां; ग६.८-म७—तेषां येषां । २. त-म—सह स्थितः । ३. त-ग१.६.८—यज्ञेनेति कीर्तयन्; म२.७-मु—यज्ञेनेति कीर्तयत् ।

न तमश्नोति कश्चन दिवइव सान्वारभम्।
सावर्ण्यस्य दक्षिणा वि सिन्धुरिव पप्रथे॥ ९॥

न। तम्। अश्नोति। कः। चन। दिवःऽइव। सानु। आऽरभम्।
सावर्ण्यस्य। दक्षिणा। वि। सिन्धुःऽइव। पप्रथे॥ ९॥

तं सावर्णिं मनुं कश्चन कश्चिदपि आरभम् आरब्धुं स्वकर्मणा न अश्नोति न व्याप्नोति। यथा मनुः प्रयच्छति तथान्यो दातुं न शक्नोतीत्यर्थः। कथंस्थितम्। दिवइव द्युलोकस्य सानु समुच्छ्रितं तेजसा केनचिदप्यप्रधृष्यमादित्यमिव स्थितम्। आरभम्। 'शकि णमुल्कमुलौ' (पा. सू. ३. ४. १२) इति कमुल्। तस्य सावर्ण्यस्य मनोरियं गवादिदक्षिणा सिन्धुरिव स्यन्दमाना नदीव पृथिव्यां पप्रथे विप्रथते। विस्तीर्णा भवति॥

उत दासा परिविषे स्मद्दिष्टी गोपरीणसा। यदुस्तुर्वश्च मामहे॥ १०॥

उत। दासा। परिऽविषे। स्मद्दिष्टी इति स्मत्ऽदिष्टी। गोऽपरीणसा।
यदुः। तुर्वः। च। ममहे॥ १०॥

उत अपि च स्मद्दिष्टी कल्याणादर्शिनौ गोपरीणसा गोपरीणसौ गोभिः परिवृतौ बहुगवादियुक्तौ दासा दासवत् प्रेष्यवत् स्थितौ तेनाधिष्ठितौ यदुः च तुर्वश्च एतन्नामकौ राजानौ परिविषे अस्य सावर्णेर्मनोर्भोजनाय ममहे पशून्प्रयच्छतः। प्रत्येकमन्वयादेकवचनम्॥

सहस्रदा ग्रामणीर्मा रिषन्मनुः सूर्येणास्य यतमानैतु दक्षिणा।
सावर्णेर्देवाः प्र तिरन्त्वायुर्यस्मिन्नश्रान्ता असनाम वाजम्॥ ११॥

सहस्रऽदाः। ग्रामऽनीः। मा। रिषत्। मनुः। सूर्येण। अस्य। यतमाना। एतु। दक्षिणा।
सावर्णेः। देवाः। प्र। तिरन्तु। आयुः। यस्मिन्। अश्रान्ताः। असनाम। वाजम्॥ ११॥

सहस्रदाः[1] गवादीनां सहस्रस्य दाता ग्रामणीः ग्रामाणां नेता कर्ता जनपदानामयं मनुः मा रिषत् न केनचिदपि रिष्टो हिंसितो भवतु। यद्वा। कर्मनेतृनस्मान्मा हिनस्तु किंतु धनादिदानेन पूजयतु। अस्य यतमाना गच्छन्ती दक्षिणा सूर्येण सह एतु संगच्छताम्। त्रिषु लोकेषु प्रसिद्धा भवत्वित्यर्थः। तस्यास्य सावर्णेः सवर्णपुत्रस्य मनोः देवाः इन्द्रादयः आयुः जीवनं प्र तिरन्तु प्रवर्धयन्तु। अश्रान्ताः कर्मसु[2] अनलसाः[3] सर्वं कर्म कुर्वन्तो वयं यस्मिन्[4] मनौ वाजं गोलक्षणमन्नम् असनाम संभजेमहि। नाभानेदिष्ठोऽहमलभ इत्याशास्ते॥ ॥ २॥

'परावतो ये' इति सप्तदशर्चं तृतीयं सूक्तं प्लतेः पुत्रस्य गयस्यार्षम्। षोडशीसप्तदश्यौ त्रिष्टुभौ। पञ्चदशी त्रिष्टुब्जगती वा। शिष्टाश्चतुर्दश जगत्यः। 'स्वस्ति नः पथ्यासु' इति द्वे पथ्यास्वस्तिदेवताके। शिष्टा वैश्वदेव्यः। तथा चानुक्रान्तं—'परावतस्यूना गयः प्लातो द्विस्त्रिष्टुबन्त्ये द्वे स्वस्ति नस्त्रिष्टुब्वा सह चोत्तरया पथ्यास्वस्तिदेवत्या' इति। पृष्ठ्याभिप्लवषडहयोस्तृतीयेऽहनि

1. ग न-भ-सु—'सहस्रदाः' नास्ति। 2. ग-ता-भ—कर्मसु कर्मणि। 3. ग-त२.३.४.५.६-भ—अनलसमानाः। 4. त-भ६.८-सु—अस्मिन्।

वैश्वदेवशस्त्र एतत्सूक्तं वैश्वदेवनिविद्धानम् । सूत्रितं च—'अयमश्वो जातः परावतो य इति वैश्वदेवम्' (आश्व. श्रौ. ७. ७) इति ॥

**परावतो ये दिधिषन्त आप्यं मनुप्रीतासो जनिमा विवस्वतः ।**
**ययातेर्ये नहुष्यस्य बर्हिषि देवा आसते ते अधि ब्रुवन्तु नः ॥ १ ॥**

पराऽवतः । ये । दिधिषन्ते । आप्यम् । मनुऽप्रीतासः । जनिम । विवस्वतः ।
ययातेः । ये । नहुष्यस्य । बर्हिषि । देवाः । आसते । ते । अधि । ब्रुवन्तु । नः ॥ १ ॥

ये देवाः परावतः दूरदेशादागत्य आप्यं ज्ञातेयं मनुष्यैः सह बन्धुत्वं दिधिषन्ते धारयन्ति । यद्वा । हविषां प्रदातृभिर्मनुष्यैः सह सख्यं कुर्म इति परस्परं सन्दधते । 'धिष शब्दे' जौहोत्यादिकः । छान्दसो झस्यान्तादेशः । 'धिष धारणे' इति केचिदभ्युपगम्यते । उक्तार्थमेव विशिनष्टि । मनुप्रीतासः मनुष्यैः प्रीता देवाः विवस्वतः विवस्वत्पुत्रस्य मनोः जनिम जन्मानि मनुष्यान् धारयन्ति । किंच ये देवाः नहुष्यस्य[1] नहुषपुत्रस्य ययातेः एतन्नामकस्य राजर्षेः बर्हिषि यज्ञे आसते उपविशन्ति ते देवाः नः अस्मान् अधि ब्रुवन्तु धनादिप्रदानेनास्मानधिकं वदन्तु । पूजयन्त्वित्यर्थः ॥

**विश्वा हि वो नमस्यानि वन्द्या नामानि देवा उत यज्ञियानि वः ।**
**ये स्थ जाता अदितेरद्भ्यस्परि ये पृथिव्यास्ते म इह श्रुता हवम् ॥ २ ॥**

विश्वा । हि । वः । नमस्यानि । वन्द्या । नामानि । देवाः । उत । यज्ञियानि । वः ।
ये । स्थ । जाताः । अदितेः । अत्ऽभ्यः । परि । ये । पृथिव्याः । ते । मे । इह । श्रुत । हवम् ॥ २ ॥

हे देवाः इन्द्रादयः । हिरवधारणे । वः युष्माकमेव नामानि नमनीयानि विश्वा सर्वाणि शरीराणि नमस्यानि नमस्कारार्हाणि भवन्ति वन्द्या वन्द्यानि स्तोतव्यानि च भवन्ति । उत अपि च वः युष्माकं तानि शरीराणि यज्ञियानि यज्ञार्हाणि भवन्ति । ये[2] यूयम् अदितेः अदीनात् द्युलोकात् अद्भ्यः । अन्तरिक्षनामैतत् । अन्तरिक्षात् । परि पञ्चम्यर्थद्योतकः । पृथिव्याः च जाताः प्रादुर्भूताः स्थ भवथ ते यूयम् इह अस्मिन्यज्ञे आगत्य मे मदीयं हवम् आह्वानं श्रुत शृणुत ॥

अग्निष्टोमे वैश्वदेवशस्त्रे 'येभ्यो माता' इत्येषा धाय्या । सूत्रितं च—'अयं वेनश्चोदयत्पृश्निगर्भा येभ्यो माता मधुमत्' (आश्व. श्रौ. ५. १८) इति ॥

**येभ्यो माता मधुमत्पिन्वते पयः पीयूषं द्यौरदितिरद्रिबर्हाः ।**
**उक्थशुष्मान् वृषभरान्त्स्वप्नसस्ताँ आदित्याँ अनु मदा स्वस्तये ॥ ३ ॥**

येभ्यः । माता । मधुऽमत् । पिन्वते । पयः । पीयूषम् । द्यौः । अदितिः । अद्रिऽबर्हाः ।
उक्थऽशुष्मान् । वृषऽभरान् । सुऽअप्नसः । तान् । आदित्यान् । अनु । मद । स्वस्तये ॥ ३ ॥

माता सर्वस्य निर्मात्री पृथिवी येभ्यः देवेभ्यो देवार्थं मधुमत् माधुर्योपेतं पयः सारभूतं क्षीरं पिन्वते क्षरति । तथा अदितिः अदीना अद्रिबर्हाः मेघैः परिवृढा महती परिवृढमेघा[3] वा

१. म–'नहुष्यस्य' नास्ति । २. म–ते । ३. म-ख-भ–परिवृढमेघा ।

द्यौः च पीयूषं पिन्वते । द्यावापृथिव्यौ हविष्मदाप्यायत इत्यर्थः । ऋषिरात्मानं संबोध्याह । उक्थशुष्मान् स्तुतिबलान् वृषभरान् वृष्टेराहर्तॄन् । 'हृग्रहोर्भः' इति भः । स्वप्नसः सुकर्मणः तान् आदित्यान् अदितेः पुत्रान् देवान् स्वस्तये अविनाशाय अनु मद अनुस्तुहि । माद्यतेर्लोटि व्यत्ययेन शप् । मन्त्रेऽस्य स्तुत्यर्थस्य[1] 'अनित्यमागमशासनम्' इति नुमभावः ॥

नृचक्षसो अनिमिषन्तो अर्हणा बृहद्देवासो अमृतत्वमानशुः ।
ज्योतीरथा अहिमाया अनागसो दिवो वर्ष्माणं वसते स्वस्तये ॥ ४ ॥

नृऽचक्षसः । अनिऽमिषन्तः । अर्हणा । बृहत् । देवासः । अमृतऽत्वम् । आनशुः ।
ज्योतिःऽरथाः । अहिऽमायाः । अनागसः । दिवः । वर्ष्माणम् । वसते । स्वस्तये ॥ ४ ॥

नृचक्षसः कर्मनेतॄणां मनुष्याणां द्रष्टारः अत एव अनिमिषन्तः निमेषमकुर्वाणाः सर्वदा जागरूकाः देवासः देवाः अर्हणा लोकस्य परिचरणार्थं स्तोमयत्वात् बृहत् वृद्धिमत् अमृतत्वम् अमरणधर्मत्वम् आनशुः प्राप्ताः । देवाः खलु मनुष्यैः पूज्याः । तस्मात्पूजार्हत्वं देवत्वमानशिरे । अत एव ज्योतीरथाः दीप्यमानरथोपेताः अहिमायाः कैश्चिदप्यहन्तव्यप्रज्ञाः अनागसः पापरहिता आदित्याः दिवः द्युलोकस्य वर्ष्माणं नाभिस्थानं समुच्छ्रितं देशं स्वस्तये अविनाशाय लोकस्य क्षेमकरणार्थं वसते अधिवसन्ति । यद्वा स्वतेजसाऽऽच्छादयन्ति ॥

सम्राजो ये सुवृधो यज्ञमाययुरपरिह्वृता दधिरे दिवि क्षयम् ।
ताँ आ विवास नमसा सुवृक्तिभिर्महो आदित्याँ अदितिं स्वस्तये ॥ ५ ॥

सम्ऽराजः । ये । सुऽवृधः । यज्ञम् । आऽययुः । अपरिऽह्वृताः । दधिरे । दिवि । क्षयम् ।
तान् । आ । विवास । नमसा । सुवृक्तिऽभिः । महः । आदित्यान् । अदितिम् । स्वस्तये ॥५॥

सम्राजः सर्वेषां राजानः स्वतेजोभिः सम्यग्राजमानाः सुवृधः सुवृद्धाः ये देवाः यज्ञम् आययुः आयान्ति सोमादिहविर्भक्षणार्थम् । ततः अपरिह्वृताः कैश्चिदप्यहिंसिता ये देवाः दिवि द्युलोके क्षयं निवासं दधिरे विदधति कुर्वन्ति । ऋषिरात्मानमाह । महः महतो गुणाधिक्येन आदित्यान् अदितेः पुत्रान् तान् प्रसिद्धान् देवान् अदितिं देवानां मातरमेतत्स्वामिकां च स्वस्तये अविनाशाय नमसा हविर्लक्षणेनान्नेन सुवृक्तिभिः शोभनाभिः स्तुतिभिश्च आ विवास आभिमुख्येन परिचर । विवासतिः परिचरणकर्मा ॥ ॥ ३ ॥

को वः स्तोमं राधति यं जुजोषथ विश्वे देवासो मनुषो यति ष्ठन ।
को वोऽध्वरं तुविजाता अरं करद्यो नः पर्षदत्यंहः स्वस्तये ॥ ६ ॥

कः । वः । स्तोमम् । राधति । यम् । जुजोषथ । विश्वे । देवासः । मनुषः । यति । स्थन ।
कः । वः । अध्वरम् । तुविऽजाताः । अरम् । करत् । यः । नः । पर्षत् । अति । अंहः । स्वस्तये ॥६॥

ऋषिर्देवान् प्रति बहुधा वितर्कयति । हे देवाः वः युष्माकं कः स्तोता स्तोमं त्रिवृत्पञ्चदशादिलक्षणं राधति संसाधयति । न कश्चिदस्तीत्यर्थः । यद्वा । मदन्यः को वो युष्मभ्यं स्तोमं करोति ।

१. ग०-त०—स्तुत्यर्थस्य व्यत्ययेन परस्मैपदं ।

यूयं वः स्तोतारं जुजोषथ सेवध्वे । ' जुषी प्रीतिसेवनयोः ' । लेटि सपः श्लुः । अडागमः । किंच हे मनुषः मनुष्यस्तोत्रार्हा हे विश्वे देवासः देवा यूयं यति यत्संख्याः स्थन भवथ । यच्छब्दादपि छान्दसो डतिप्रत्ययः । हे तुविजाताः बहुजन्मानः हे देवा युष्मदर्थं कः वा यजमानः अध्वरं यज्ञम् अरं करत् अलंकरोति स्तुतिभिर्हविर्भिश्च । मद्न्यो नास्तीत्यर्थः । यः यज्ञः नः अस्मान् स्वस्तये अविनाशाय अंहः पापरूपं मार्गमवैदिकम् अति पर्षत् अति-पारयति तं यज्ञं को नालंकरोतीति ॥

**येभ्यो होत्रां प्रथमामायेजे मनुः समिद्धाग्निर्मनसा सप्त होतृभिः ।**

**त आदित्या अभयं शर्म यच्छत सुगा नः कर्त सुपथा स्वस्तये ॥ ७ ॥**

येभ्यः । होत्राम् । प्रथमाम् । आऽयेजे । मनुः । समिद्धऽअग्निः । मनसा । सप्त । होतृऽभिः ।
ते । आदित्याः । अभयम् । शर्म । यच्छत । सुऽगा । नः । कर्त । सुऽपथा । स्वस्तये ॥७॥

समिद्धाग्निः हविर्भिः सम्यग्दीप्ताग्निः मनुः वैवस्वतो मनुष्याणां प्रथमभावी श्रद्धायेन मनसा सप्त सप्तसंख्याकैः होतृभिः वषट्कर्तृभिर्ऋत्विग्भिश्च सह येभ्यः युष्मभ्यं प्रथमां प्रथमं मुख्यं यद्वा सर्वेषां मनुष्याणामग्रे क्रियमाणत्वादाद्यां होत्राम् । हूयन्ते हवींष्यत्रेति होत्रा यज्ञः । तम् । यद्वा । आहूयन्ते देवा स्तुतिभिरत्रेति । तं यज्ञम् आयेजे आभिमुख्येनेष्टवान् । यजेर्लिटि रूपम् । यद्वा । लङि ' लोपश्च आत्मनेपदेषु ' इति तलोपः । ' यजिवप्योरुक्तिलेऽयं वक्तव्यम् ' ( का. ६. १. १२०. ४ ) इति वचनादेकारः । हे आदित्याः अदितेः पुत्रा हे देवाः ते यूयं नोऽस्मभ्यम् अभयं शर्म च सुखं प्रयच्छत । किंच नः अस्माकं स्वस्तये क्षेमाय सुपथा सुपथानि शोभनान् वैदिकमार्गान् सुगा सुखेन गन्तव्यान् कर्त कुरुत । करोतेर्लोटि ' बहुलं छन्दसि ' इति विकरणस्य लुक् । तबादेशः ॥

**य ईशिरे भुवनस्य प्रचेतसो विश्वस्य स्थातुर्जगतश्च मन्तवः ।**

**ते नः कृतादकृतादेनसस्पर्यद्या देवासः पिपृता स्वस्तये ॥ ८ ॥**

ये । ईशिरे । भुवनस्य । प्रऽचेतसः । विश्वस्य । स्थातुः । जगतः । च । मन्तवः ।
ते । नः । कृतात् । अकृतात् । एनसः । परि । अद्य । देवासः । पिपृत । स्वस्तये ॥ ८ ॥

प्रचेतसः प्रकृष्टज्ञानाः मन्तवः सर्वस्य बोद्धारः ये देवाः स्थातुः स्थावरस्य जगतः जङ्गमस्य विश्वस्य सर्वस्य भुवनस्य लोकस्य ईशिरे ईश्वरा भवन्ति । अत्र प्रत्यक्षकृतः । हे देवासः देवा एवं उक्तगुणाः ते यूयं नः अस्मान् कृतात् कायिकात्पापात् अकृतात् करचरणादिभिरकृतात् एनसः किंतु मानसात्पापाच्च अद्य अस्मिन्दिने स्वस्तये अविनाशायायुषोऽभिवृद्धये पिपृत पारयत । पापरहितान् कुरुतेत्यर्थः ॥

**भरेष्विन्द्रं सुहवं हवामहेंऽहोमुचं सुकृतं दैव्यं जनम् ।**

**अग्निं मित्रं वरुणं सातये भगं द्यावापृथिवी मरुतः स्वस्तये ॥ ९ ॥**

भरेषु । इन्द्रम् । सुऽहवम् । हवामहे । अंहःऽमुचम् । सुऽकृतम् । दैव्यम् । जनम् ।
अग्निम् । मित्रम् । वरुणम् । सातये । भगम् । द्यावापृथिवी इति । मरुतः । स्वस्तये ॥ ९ ॥

१. त-भ-'वः' नास्ति । २. भ-त-तस्य तबादेशः ।

ᵛअंहोमुचम् अंहसः पापस्य मोचकं ᵛसुहवं शोभनाह्वानम् ᵛइन्द्रं ᵛभरेषु। भृणन्ति भर्त्सयन्ति विनाशयन्ति शत्रूनत्रेति भराः संग्रामाः। तेषु ᵛहवामहे रक्षणायाह्वयामः। किंच ᵛसुकृतं सुकर्माणं ᵛदैव्यं देवसंबन्धिनमन्यं ᵛजनं चाह्वयामहे। तं जनमुद्दिशामि। ᵛअग्निं ᵛमित्रं ᵛवरुणं ᵛभगं भजनीयमेतन्नामानं देवं ᵛद्यावापृथिवी द्यावापृथिव्यौ ᵛमरुतः च ᵛसातये अन्नलाभाय ᵛस्वस्तये अविनाशाय रक्षणायाह्वयामहे॥

अदितिदेवताकस्य पशोः 'सुत्रामाणम्' इत्येषा वपायागस्य याज्या। सूत्रितं च—'अदिति-र्जनिष्ट सुत्रामाणं पृथिवीं द्यामनेहसम्' (आश्व. श्रौ. ३. ८) इति। प्रायणीयेष्टावादित्यस्य हविष एषैवानुवाक्या। सैषोदयनीयायां याज्या। सूत्रितं च 'सुत्रामाणं पृथिवीं द्यामनेहसं महीमू षु मातरं सुव्रतानाम्' (आश्व. श्रौ. ४. ३) इति। प्रयाणेऽनयर्चा नावमारोहेत्। सूत्रितं च—'सुत्रामाणं पृथिवीं द्यामनेहसमिति नावम्[1]' (आश्व. गृ. २. ६. ८) इति॥

**सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम्।**
**दैवीं नावं स्वरित्रामनागसमस्रवन्तीमा रुहेमा स्वस्तये॥ १०॥**

सुऽत्रामाणम्। पृथिवीम्। द्याम्। अनेहसम्। सुऽशर्माणम्। अदितिम्। सुऽप्रनीतिम्।
दैवीम्। नावम्। सुऽअरित्राम्। अनागसम्। अस्रवन्तीम्। आ। रुहेम। स्वस्तये॥१०॥

द्युलोको नौरूपकतया स्तूयते। ᵛसुत्रामाणं सुष्ठु त्रायन्तीं ᵛपृथिवीं विस्तृताम् ᵛअनेहसं पापरहितां ᵛसुशर्माणं शोभनसुखयुक्ताम् ᵛअदितिम् अदीनां ᵛसुप्रणीतिं सुप्रणयनां सुष्ठु प्रणेत्रीं ᵛदैवीं देवसंबन्धिनीं ᵛस्वरित्रां शोभनारित्रां जलाहरणशीलनाराद्युक्ताम्[2] ᵛअनागसं पापरहिताम् ᵛअस्रवन्तीम् अगच्छन्तीमविनश्वरीं ᵛनावं नावमिव स्थितां ᵛद्यां ᵛस्वस्तये अविनाशाय देवत्वप्राप्तये ᵛआ ᵛरुहेम समारोहेम। रोहतेर्लिङि 'लिङ्याशिष्यङ्' इत्यङ्प्रत्ययः॥ ॥४॥

**विश्वे यजत्रा अधि वोचतोतये त्रायध्वं नो दुरेवाया अभिह्रुतः।**
**सत्यया वो देवहूत्या हुवेम शृण्वतो देवा अवसे स्वस्तये॥ ११॥**

विश्वे। यजत्राः। अधि। वोचत। ऊतये। त्रायध्वम्। नः। दुःऽएवायाः। अभिऽह्रुतः।
सत्यया। वः। देवऽहूत्या। हुवेम। शृण्वतः। देवाः। अवसे। स्वस्तये॥ ११॥

हे ᵛयजत्राः यजनीयाः हे ᵛविश्वे सर्वे देवाः यूयम् ᵛऊतये रक्षणार्थम् ᵛअधि ᵛवोचत अस्मानधिब्रूत। आभाष्य च ᵛअभिह्रुतः अभिहिंसित्र्याः ᵛदुरेवायाः दुर्गतेः ᵛनः अस्मान् ᵛत्रायध्वम्। यद्येवं कुरुथ तर्हि हे ᵛदेवाः ᵛशृण्वतः स्तोत्राण्यस्माभिरुक्तानि तादृशान् ᵛवः युष्मान् ᵛसत्यया यथार्थभूतया ᵛदेवहूत्या। देवा हूयन्तेऽनयेति[3] देवहूतिः स्तुतिः। तया वयं ᵛहुवेम आह्वयेम। किमर्थम्। ᵛअवसे रक्षणाय शत्रुभ्यः ᵛस्वस्तये क्षेमाय जीवनाभिवृद्धये च॥

१. ग-त१.२.३.७-भ६.७—नावं नवरथेनेति; त४.६.८-भ१.४.५-नावं न रथेनेति; त५-नावमारुहेमेति; भ२ नावं रथेनेति; भ८—नावं न रथेति। २. ग४—अलाक्षरणशील°; त६.८—जलहेलाहरणशील°; भ१.८—जलाहल्याहरणशील°; भ२—जला[illegible]लीहरणशील°; भ५—जलहेलाहरणशील°। ३. ग-त—आहूयते°।

अपामीवामप विश्वामनाहुतिमपारातिं दुर्विदत्रामघायतः ।
आरे देवा द्वेषो अस्मद्युयोतनोरु णः शर्म यच्छता स्वस्तये ॥ १२ ॥

अप । अमीवाम् । अप । विश्वाम् । अनाहुतिम् । अप । अरातिम् । दुःऽविदत्राम् । अघऽयतः ।
आरे । देवाः । द्वेषः । अस्मत् । युयोतन । उरु । नः । शर्म । यच्छत । स्वस्तये ॥ १२ ॥

हे देवाः अमीवां रोगादिकं यद्वा रोगवद्बाधकं शत्रुमस्मत्तो दूरे अप कुरुत पृथक्कुरुत । तथा विश्वां सर्वाम् अनाहुतिं देवानामनाह्वानबुद्धिं यद्वा देवानां महाशत्रुं पृथक्कुरुत । किंच अरातिम् अदानं लोभबुद्धिं यद्वा देवेभ्यो हविषामदातारं शत्रुम् अप गमयत । अपि च अघायतः पापमिच्छतः शत्रोः दुर्विदत्रां दुर्ज्ञानं दुष्टां बुद्धिम् इत्थं च द्वेषः द्वेष्टॄन् सर्वाञ्छत्रून् अस्मत् अस्मत्तः आरे दूरे युयोतन पृथक्कुरुत । एवं सति यूयं नः अस्मभ्यम् उरु विस्तीर्णं शर्म सुखं स्वस्तये कल्याणाय प्रयच्छत ॥

अरिष्टः स मर्तो विश्व एधते प्र प्रजाभिर्जायते धर्मणस्परि ।
यमादित्यासो नयथा सुनीतिभिरति विश्वानि दुरिता स्वस्तये ॥ १३ ॥

अरिष्टः । स । मर्तः । विश्वः । एधते । प्र । प्रऽजाभिः । जायते । धर्मणः । परि ।
यम् । आदित्यासः । नयथ । सुनीतिऽभिः । अति । विश्वानि । दुःऽइता । स्वस्तये ॥ १३ ॥

हे देवाः विश्वः सर्वः मर्तः स मनुष्यः अरिष्टः कैश्चिदप्यहिंसितः सन् एधते पश्वादिभिर्वर्धते । तथा धर्मणस्परि धारकात्कर्मणोऽनन्तरं स मनुष्यः प्रजाभिः पुत्रादिभिः प्र जायते प्रकर्षेणाभिवृद्धो भवति । हे आदित्यासः आदित्या देवाः यं मनुष्यं सुनीतिभिः सुनयनैः विश्वानि सर्वाणि दुरिता दुरितानि पापानि तदुपलक्षणानि स्वस्तये क्षेमाय अति नयथ अतीत्य सन्मार्गं नयथ । स वर्धते इति समन्वयः ॥

यं देवासोऽवथ वाजसातौ यं शूरसाता मरुतो हिते धने ।
प्रातर्यावाणं रथमिन्द्र सानसिमरिष्यन्तमा रुहेमा स्वस्तये ॥ १४ ॥

यम् । देवासः । अवथ । वाजऽसातौ । यम् । शूरऽसाता । मरुतः । हिते । धने ।
प्रातःऽयावानम् । रथम् । इन्द्र । सानसिम् । अरिष्यन्तम् । आ । रुहेम । स्वस्तये ॥ १४ ॥

हे देवासः देवाः वाजसातौ अन्नभजनेऽन्नलाभे वा यं रथम् अवथ रक्षथ हे मरुतः शूरसाता । संग्रामनामैतत् । शूराः स्वस्मिन् म्रियन्तेऽत्रेति[1] शूराः सीयन्ते विनाश्यन्ते वाऽत्रेति[2] । तस्मिन्युद्धे यं रथं हिते निहिते धने धनमुद्दिश्य । 'निमित्तात्कर्मसंयोगे' (पा. सू. २. ३. ३६. ५) इति सप्तमी । तदुद्दिश्य रक्षथ । सर्वेषां देवानां मुख्यत्वादिन्द्रमेवाभिलक्ष्य वक्त्युत्तरार्धेन[3] । हे इन्द्र सर्वेषां मुख्य प्रातर्यावाणं प्रातरेव युद्धं प्रति गन्तारं सानसिं संभजनीयम् अरिष्यन्तं कैश्चिदप्यहिंसितम् । यद्वा । इन्द्रसहायानां मरुतामबाधकम् । तं रथं स्वस्तये अस्माकं रक्षणाय वयम् आ रुहेम आरोहेम ॥

---

१. ग—म्रियतेऽत्रेति, त-भ—म्रियंतेऽत्रेति । २. भ-त-भ—°रत्येति । ३. त-भ—वदत्युत्तरार्धेन ।

प्रायणीयेष्टौ पथ्यास्वस्तेर्यागस्य ' स्वस्ति नः पथ्यासु ' इत्येषानुवाक्या । उत्तरा याज्या । सूत्रितं च—' स्वस्ति नः पथ्यासु धन्वस्विति द्वे अग्ने नय सुपथा राये अस्मान् ' ( आश्व. श्रौ. ४. ३ ) इति । उदयनीयायामेते एव विपर्यस्ते याज्यानुवाक्ये । सूत्रितं च—' विपरीताश्च याज्यानुवाक्याः ' इति ॥

स्वस्ति नः पथ्यासु धन्वसु स्वस्त्य१प्सु वृजने स्वर्वति ।
स्वस्ति नः पुत्रकृथेषु योनिषु स्वस्ति राये मरुतो दधातन ॥ १५ ॥

स्वस्ति । नः । पथ्यासु । धन्वऽसु । स्वस्ति । अप्ऽसु । वृजने । स्वःऽवति ।
स्वस्ति । नः । पुत्रऽकृथेषु । योनिषु । स्वस्ति । राये । मरुतः । दधातन ॥ १५ ॥

हे मरुतः मितराविणो देवाः नः अस्माकं पथ्यासु पथियोग्येषु मार्गकेषु देशेषु[1] स्वस्ति कल्याणं कुरुत । तथा धन्वसु निरुदकेषु देशेषु[2] स्वस्ति कल्याणमुदकजननलक्षणं कुरुत । तथा अप्सु उदकेषु स्वस्ति । तथा स्वर्वति सर्वैरायुधैर्युक्ते सेनालक्षणे वृजने शत्रूणामावर्जके बले च कल्याणं कुरुत । नः अस्माकं पुत्रकृथेषु पुत्राणां कर्तृषूत्पादकेषु स्त्रीणां योनिषु स्वस्ति कल्याणं यथा गर्भा न पतन्ति तथा क्षेमं कुरुत । किंच नोऽस्माकं राये धनाय गवादिलक्षणाय स्वस्ति क्षेमं दधातन धत्त कुरुत ॥

स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभि या वाममेति ।
सा नो अमा सो अरणे नि पातु स्वावेशा भवतु देवगोपा ॥ १६ ॥

स्वस्तिः । इत् । हि । प्रऽपथे । श्रेष्ठा । रेक्णस्वती । अभि । या । वामम् । एति ।
सा । नः । अमा । सो इति । अरणे । नि । पातु । सुऽआवेशा । भवतु । देवऽगोपा ॥ १६ ॥

या पृथिवी गन्तुमुद्युक्तानां प्रपथे प्रकृष्टाय मार्गाय स्वस्तिरित् क्षेमकारिण्येव भवति[3] श्रेष्ठा प्रशस्यतमा रेक्णस्वती धनवती या पृथिवी वामं वननीयं यज्ञम् अभि एति उत्तरवेद्यात्मना वाभिप्राप्नोति सा पृथिवी नः अस्माकम्[4] अमा । गृहनामैतत् । गृहं[5] रक्षतु । तथा सो सा उ सैव अरणे गन्तव्ये देशेऽरणेऽरमणेऽरण्यादिके देशे वा नोऽस्मान् नि पातु नितरां रक्षतु । तथा देवगोपा देवा गोपायितारो यस्याः सति सा पृथिव्यस्माकं स्वावेशा शोभननिवासा भवतु ॥

एवा प्लतेः सूनुरवीवृधद्वो विश्व आदित्या अदिते मनीषी ।
ईशानासो नरो अमर्त्येनास्तावि जनो दिव्यो गयेन ॥ १७ ॥

एव । प्लतेः । सूनुः । अवीवृधत् । वः । विश्वे । आदित्याः । अदिते । मनीषी ।
ईशानासः । नरः । अमर्त्येन । अस्तावि । जनः । दिव्यः । गयेन ॥ १७ ॥

हे विश्वे आदित्याः सर्वे देवाः हे अदिते देवानां मातरेतन्नामिके[6] देवि वः युष्मान् मनीषी प्राज्ञः स्तोता प्लतेः एतन्नामकस्यर्षेः सूनुः पुत्रो गयो नाम एव एवमुक्तरीत्या अवीवृधत्

१. ग-त१.२.३.७—देशेषु न । २. ग-त-भ१.२.६.७.८—तथा नोऽस्माकं । ३. ग-त-भ भवतु । ४. ग-त-भ—अस्मान् । ५. त-गृहे । ६. ग-त१.२.३.६.७.८ भ—मातृभूते एतन्नामिके ।

स्तुतिभिरवर्धयत् । वर्धतेर्ण्यन्तस्य लुङि रूपम् । असर्त्येन मनुष्यधर्मरहितेन स्तुतेन येन देवजनेन नरः मनुष्याः ईशानासः धनस्येश्वराः स्वामिनो भवन्ति सः विश्वः विश्वे सर्वः जनः देवगणः गयेन एतन्नामकेन मया अस्तावि अभिष्टुतोऽभूत् । स्तौतेः कर्मणि लुङि चिणि रूपम् ॥　　॥ ५ ॥

'कथा' इति सप्तदशर्चं चतुर्थं सूक्तं प्लातस्य गयस्यार्षं वैश्वदेवम् । 'यां मे धियम्' इत्येषा द्वादशी षोडशीसप्तदश्यौ च त्रिष्टुभः शेषा जगत्यः । तथा चानुक्रान्तं- 'कथा यां मे त्रिष्टुप्' इति । गतो विनियोगः ॥

कथा देवानां कतमस्य यामनि सुमन्तु नाम शृण्वतां मनामहे ।
को मृळाति कतमो नो मयस्करत्कतम ऊती अभ्या ववर्तति ॥ १ ॥

कथा । देवानाम् । कतमस्य । यामनि । सुऽमन्तु । नाम । शृण्वताम् । मनामहे ।
कः । मृळाति । कतमः । नः । मयः । करत् । कतमः । ऊती । अभि । आ । ववर्तति ॥ १ ॥

ऋषिर्बहुधारमानं वितर्कयति । यामनि । यान्ति गच्छन्त्यत्रेति यामा यज्ञः । तस्मिन् शृण्वताम् अस्माभिरुक्तानि स्तोत्राणि देवानां मध्ये कतमस्य देवस्य सुमन्तु सुष्ठु मननीयं स्तोतव्यं नाम कथा कथं मनामहे उच्चारयामः । अस्मान् कः वा मृळाति । 'मृळतिस्पृत्यदयाकर्मा' ( निरु. १०. १५ ) इति यास्कः । कृपां करोति । कतमः वा नः अस्माकं मयः सुखं करत् करोति । कतमः वा ऊती । चतुर्थ्याः पूर्वसवर्णदीर्घः । ऊत्यै अस्माकं रक्षणाय अभ्या ववर्तति अभ्यागच्छतीत्यर्थः ॥

क्रतूयन्ति क्रतवो हृत्सु धीतयो वेनन्ति वेनाः पतयन्त्या दिशः ।
न मर्डिता विद्यते अन्य एभ्यो देवेषु मे अधि कामा अयंसत ॥ २ ॥

क्रतुऽयन्ति । क्रतवः । हृत्ऽसु । धीतयः । वेनन्ति । वेनाः । पतयन्ति । आ । दिशः ।
न । मर्डिता । विद्यते । अन्यः । एभ्यः । देवेषु । मे । अधि । कामाः । अयंसत ॥ २ ॥

हृत्सु हृदयेषु[2] धीतयः निधातव्याः निहिताः क्रतवः प्रज्ञाः क्रतूयन्ति अग्निहोत्रादिकर्म कर्तुमिच्छन्ति । तदेवाह । वेनाः कान्ताः प्रज्ञाः वेनन्ति देवान् कामयन्ते । 'वेनो वेनतेः कान्तिकर्मणः' ( निरु. १०. ३८ ) इति यास्कः । तथा दिशः अस्माभिर्निर्दिश्यमानाः प्रेर्यमाणाः कामाः आ पतयन्ति देवान् फलाभासय आगच्छन्ति । यतः एभ्यः देवेभ्यः अन्यः देवः एषां कामानां मर्डिता सुखयिता न विद्यते । किं बहुना । देवेषु अधि । अधिशब्दः सप्तम्यर्थद्योतकः । इन्द्रादिषु देवेषु मे मदीयाः कामाः अयंसत नियम्यन्ते । यच्छतेः कर्मणि लुङि रूपम् ॥

नरा वा शंसं पूषणमगोह्यमग्निं देवेद्धमभ्यर्चसे गिरा ।
सूर्यामासा चन्द्रमसा यमं दिवि त्रितं वातमुषसमक्तुमश्विना ॥ ३ ॥

नराशंसम् । वा । पूषणम् । अगोह्यम् । अग्निम् । देवऽइद्धम् । अभि । अर्चसे । गिरा ।
सूर्यामासा । चन्द्रमसा । यमम् । दिवि । त्रितम् । वातम् । उषसम् । अक्तुम् । अश्विना ॥ ३ ॥

१. ग-ख-भ-'शेषा जगत्यः' नास्ति । २. ग-त-अस्माकं हृदयेषु ।

ऋषिः स्वात्मानं संबोध्याह । नराशंसम् । 'उभे वनस्पत्यादिषु युगपत्' इत्युभयपदप्रकृतिस्वरत्वम् । संहितायां विप्रकर्षश्छान्दसः । नरैः शंसनीयमेतन्नामानं पूषणं स्तोतॄणां धनदानेन पोषकमेतन्नामानं तथा अगोह्यम् अगूहितमप्रतिगतमप्रकाश्यं देवेद्धं वामदेवादिभिर्ऋषिभिर्दीपितम् अग्निं च गिरा स्तुत्या अभ्यर्चसे अभिष्टुहि । तथा सूर्यामासा चन्द्रमसा[1] । मा इति[1] चन्द्रमसो विशेषणम् । मानि पक्षमिति माश्चन्द्रमाः । तौ सूर्याचन्द्रमसौ दिवि द्युलोके स्थितौ यमं च त्रितं त्रिषु लोकेषु ततं स्वमहिम्ना विस्तृतं त्रिस्थानं वा तमिन्द्रं वातं वायुम् उषसम् उषःकालम् अक्तुं रात्रिम् अश्विना अश्विनौ चैतान्सर्वान् नराशंसादीन् स्तोत्रैरभिष्टुहि ॥

**कथा कविस्तुवीरवान् कया गिरा बृहस्पतिर्वावृधते सुवृक्तिभिः ।**
**अज एकपात्सुहवेभिर्ऋक्वभिरहिः शृणोतु बुध्न्यो हवीमनि ॥ ४ ॥**

कथा । कविः । तुविऽरवान् । कया । गिरा । बृहस्पतिः । ववृधते । सुवृक्तिऽभिः ।
अजः । एकऽपात् । सुऽहवेभिः । ऋक्वऽभिः । अहिः । शृणोतु । बुध्न्यः । हवीमनि ॥ ४ ॥

कविः क्रान्तप्रज्ञोऽग्निः कथा कथं केन प्रकारेण तुवीरवान् बहुस्तोतृयुक्तो भवति ॥ मत्वर्थीयप्रत्ययात्पूर्वस्य । यद्वा । तुविरवशब्दस्य रो मत्वर्थीयः । बाहुलकयुक्तस्वर्यः स्वरितो भवति ॥ कया वा गिरा स्तुत्या बहुमान् भवति । बृहस्पतिः[2] एतन्नामको देव सुवृक्तिभिः शोभनाभिः स्तुतिभिस्तथा वावृधते[3] । तथा एकपात् । एकोऽसहाय एव पततीति गच्छतीत्येकपात् । तादृशो दिवो धारयिता अजः एतन्नामको देवश्च सुहवेभिः शोभनाह्वानैः ऋक्वभिः मन्त्रवद्भिः स्तोत्रैः वावृधते एते सर्वे देवा वर्धन्ते । क्रियापेक्षया बहुवचनम् । 'वृधु वृद्धौ' । व्यत्ययेन शपः श्लुः । अहिर्बुध्न्यश्च एतन्नामको देवश्च हवीमनि आह्वाने अस्मान् शृणोतु ॥

**दक्षस्य वादिते जन्मनि व्रते राजाना मित्रावरुणा विवाससि ।**
**अतूर्तपन्थाः पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु ॥ ५ ॥**

दक्षस्य । वा । अदिते । जन्मनि । व्रते । राजाना । मित्रावरुणा । आ । विवाससि ।
अतूर्तऽपन्थाः । पुरुऽरथः । अर्यमा । सप्तऽहोता । विषुऽरूपेषु । जन्मऽसु ॥ ५ ॥

हे अदिते पृथिवि दक्षस्य सूर्यस्य जन्मनि उदयप्रभाते व्रते तस्य यज्ञकर्मणि राजाना राजमानौ[4] मित्रावरुणौ[5] विवाससि । वाशब्द उपमार्थः । यथा त्वं वेदिभूता सती तौ परिचरसि एवमिदानीमप्यस्मद्यज्ञे कुर्विति पृथिवीमाशास्ते । सः अर्यमा अरीणां तमसां यन्ता नियन्ता सूर्यः विषुरूपेषु नानारूपेषु[6] जन्मसु कर्मसु[7] अस्मदनुग्रहन् सप्तहोता । सप्त रश्मयो यस्मिन् रसान् जुह्वति प्रक्षिपन्ति स एतादृशो भवति । अतूर्तपन्थाः अतूर्तः सर्वत्ररहितः पन्था यस्य सः । नियतगतित्वात् त्वरमाणो ह्यनियतगतिर्भवति । पुरुरथः । रथो रंहतेः । प्रवृद्धं भुक्तिभेदाद्बहुरंहणो भवति । यद्वा । हे अदिते प्रातःसवनि संध्ये दक्षस्यादित्यस्य जन्मन्युदयाख्ये जन्मनि कर्मणि । उदयस्यादित्य इत्यर्थः । वाशब्दः श्रुतिसाम्यार्थो दक्षस्य वा जन्मनि स्वतन्त्रस्य वा जन्मनि यज्ञादिति । राजाना[8] दीप्यमानौ

१. ग-त२.४.५.७—चंद्रमसा मासेति; त१.२.८-भ—चंद्रमसेति । २. त—बृहस्पतिर्वा बृहस्पतिः; भ१.६.७—बृहस्पतिः बृहस्पतिर्वा । ३. ग-त-भ२.६.८—वावृधते वर्धते । ४. त३-भ१.२.७—राजानौ । ५. ग-त४—मित्रावरुणा मित्रावरुणौ । ६. भ—'नानारूपेषु' नास्ति । ७. ग-त-भ—'कर्मसु' नास्ति । ८. ग-त-भ—तत्र राजाना ।

मित्रावरुणा । 'अहर्वै मित्रो रात्रिर्वरुणः' ( ऐ. ब्रा. ४.१० ) इति श्रुतेरहोरात्रौ मित्रावरुणावुच्येते । तौ चिकित्सन्ति परिचरन्ति । कथम् । तदनुप्रवेशेन । अयं हि संध्यायां रात्रिमनुप्रविशत्यर्यमाहरिति । उत्तरार्धः पूर्ववत् । सप्तहोता । क्रतोरर्थेनिकर्मण इदं रूपम् । सप्तसंख्याका वषट्कर्तारो होतारः स्तोतारः सन्तीति । अथवा सप्तहोता । सलिलेन्दुवाङ्सर्पातिसहिताः सप्तसंख्या यस्य होतारो भवन्ति तादृशः । अत्र निरुक्तं — 'वसूनां वा वाजिने जन्मनि कर्मणि[1] अते[2] राजानौ' ( निरु. ११ २३ ) इत्यादि ॥ ५ ॥

ते नो अर्वन्तो हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनो मितद्रवः ।
सहस्रसा मेधसाताविव त्मना महो ये धनं समिथेषु जभ्रिरे ॥ ६ ॥

ते । नः । अर्वन्तः । हवनऽश्रुतः । हवम् । विश्वे । शृण्वन्तु । वाजिनः । मितऽद्रवः ।
सहस्रऽसाः । मेधसाताऽइव । त्मना । महः । ये । धनम् । सम्ऽइथेषु । जभ्रिरे ॥ ६ ॥

हवनश्रुतः आह्वानं शृण्वन्तः वाजिनः बलवन्तः मितद्रवः मितमार्गगमनाः परिच्छिन्नद्रवणाः विश्वे सर्वे प्रसिद्धाः अर्वन्तः अश्वा इन्द्रादीनां वाहनभूता हर्यादयः नः अस्माकं हवम् आह्वानं शृण्वन्तु । कीदृशाः । मेधसाताविव । मेधाः स्तुतयः सायन्ते संभज्यन्तेऽत्रेति मेधसातिर्यज्ञः । तस्मिन्निव त्मना आत्मनैव सहस्रसाः सहस्रसंख्याकधनस्य दातारः ते शृण्वन्तु ये अश्वाः समिथेषु । संग्रामनामैतत् । संगच्छन्ते योद्धारोऽत्रेति । तेषु संग्रामेषु महः महत् धनं जभ्रिरे शत्रुभ्य आहरन्ति । हृञ् हरणे ॥

प्र वो वायुं रथयुजं पुरंधिं स्तोमैः कृणुध्वं सख्याय पूषणम् ।
ते हि देवस्य सवितुः सवीमनि क्रतुं सचन्ते सचितः सचेतसः ॥ ७ ॥

प्र । वः । वायुम् । रथऽयुजम् । पुरम्ऽधिम् । स्तोमैः । कृणुध्वम् । सख्याय । पूषणम् ।
ते । हि । देवस्य । सवितुः । सवीमनि । क्रतुम् । सचन्ते । सऽचितः । सऽचेतसः ॥ ७ ॥

हे स्तोतारः वः यूयं वायुं रथयुजं रथस्य योक्तारं पुरंधिम् बहुकर्माणमिन्द्रं पूषणम् एतन्नामानं च स्तोमैः त्रिवृत्पञ्चदशादिलक्षणैः सख्याय सखिकर्मणे प्र कृणुध्वं प्रकुरुध्वम् । यथा तेऽस्माकं धनादिप्रदानेन सखायो भवन्ति तथा कुरुत । हि यस्मात् सचितः ज्ञानयुक्ताः ते देवाः सचेतसः परस्परं समानबुद्धयः सन्तः सवितुः सर्वस्य प्रेरकस्य देवस्य आदित्यस्य सवीमनि प्रसवेऽह्नि क्रतुं यज्ञं सचन्ते सेवन्ते तस्मात् प्रकुरुध्वम् ॥

त्रिः सप्त सस्रा नद्यो महीरपो वनस्पतीन्पर्वताँ अग्निमूतये ।
कृशानुमस्तॄन्तिष्यं सधस्थ आ रुद्रं रुद्रेषु रुद्रियं हवामहे ॥ ८ ॥

त्रिः । सप्त । सस्राः । नद्यः । महीः । अपः । वनस्पतीन् । पर्वतान् । अग्निम् । ऊतये ।
कृशानुम् । अस्तॄन् । तिष्यम् । सधऽस्थे । आ । रुद्रम् । रुद्रेषु । रुद्रियम् । हवामहे ॥ ८ ॥

त्रिः सप्त एकविंशतिसंख्याकाः सस्राः सरन्तीः नद्यः नदीः । सरस्वती सरयुः सिन्धुरिति त्रयाणां गणानां प्रधानभूताः । तादृशीः नदीः महीः महतीः अपः तासामुदकानि सोमाभिषेकार्थं

१. तन्मु—मते कर्माणि । २. ऋ४.५.६.८-मं७—मनुद्वा ।

अभ्यर्तान् दास्यतोऽस्मदादीन् अर्वतान् सोमाभिषवार्थं ग्रावाणः अग्निं होमनिष्पादकं कृशानुं सोमपालमेतन्नामानं गन्धर्वम् असृन् इषूणां क्षेप्तॄंस्तदनुचरान् गन्धर्वान् ऊतये सोमरक्षणाय तिष्यं नक्षत्रं च रुद्रियं रुद्रस्तोमार्हे[1] रुद्रं हविर्भागिनं रुद्रमेतन्नामानं यद्वा यज्ञपरिशिष्टस्वामिनं रुद्रं च एतान् सर्वान् सबाधः। सह निघ्नन्त्यत्रेति सबाधो यज्ञः। तस्मिन् रुद्रेषु स्तोत्रकारिषु तदर्थं हवामहे स्तुत्यर्थमाह्वयामहे ॥

सरस्वती सरयुः सिन्धुरूर्मिभिर्महो महीरवसा यन्तु वक्षणीः ।
देवीरापो मातरः सूदयित्न्वो घृतवत्पयो मधुमन्नो अर्चत ॥ ९ ॥

सरस्वती । सरयुः । सिन्धुः । ऊर्मिऽभिः । महः । महीः । अवसा । आ । यन्तु । वक्षणीः ।
देवीः । आपः । मातरः । सूदयित्न्वः । घृतऽवत् । पयः । मधुऽमत् । नः । अर्चत ॥ ९ ॥

महः महतोऽपि महीः महत्योऽत्यन्तं महत्यः ऊर्मिभिः सहिताः सरस्वती सरयुः सिन्धुः एतन्नाम्न्य एकविंशतिर्नद्याख्याः वक्षणीः इमा नद्यः अवसा रक्षणेन हेतुना आ यन्तु अस्मदीयं यज्ञं प्रत्यागच्छन्तु। ततः देवीः देवनशीलाः मातरः मातृभूताः सूदयित्न्वः प्रेरयित्र्यः नाराभ् आपः घृतवत् घृतयुक्तं मधुमत् मधुसहितमग्नीयं पयः नः अस्मभ्यम् अर्चत प्रयच्छन्तु ॥

उत माता बृहद्दिवा शृणोतु नस्त्वष्टा देवेभिर्जनिभिः पिता वचः ।
ऋभुक्षा वाजो रथस्पतिर्भगो रण्वः शंसः शशमानस्य पातु नः ॥ १० ॥

उत । माता । बृहत्ऽदिवा । शृणोतु । नः । त्वष्टा । देवेभिः । जनिऽभिः । पिता । वचः ।
ऋभुक्षाः । वाजः । रथःऽपतिः । भगः । रण्वः । शंसः । शशमानस्य । पातु । नः ॥ १० ॥

उत अपि च बृहद्दिवा। 'महद्दिवा' (निरु. ११, ४९) इति यास्कः। महती दिवा दीप्तिर्यस्याः सा माता देवमाता नः अस्माकमाह्वानं शृणोतु। तथा देवेभिः देवैरग्न्यादिभिः जनिभिः देवपत्नीभिश्च पिता सर्वेषां त्वष्टा एतन्नामकोऽस्मदीयं वचः शृणोतु। तथा ऋभुक्षा इन्द्रः वाजः तत्सहायो वाजो नाम सौधन्वनः कनीयान् रथस्पतिः रथस्य पतिः भगः च तथा रण्वः रमणीयः शंसः स्तुत्यो मरुद्गणश्च ततः शशमानस्य शंसमानस्य स्तोतुः नः अस्मान् पातु रक्षतु ॥ ॥ ७ ॥

रण्वः संदृष्टौ पितुमाँइव क्षयो भद्रा रुद्राणां मरुतामुपस्तुतिः ।
गोभिः ष्याम यशसो जनेष्वा सदा देवास इळया सचेमहि ॥ ११ ॥

रण्वः । सम्ऽदृष्टौ । पितुमान्ऽइव । क्षयः । भद्रा । रुद्राणाम् । मरुताम् । उपऽस्तुतिः ।
गोभिः । स्याम । यशसः । जनेषु । आ । सदा । देवासः । इळया । सचेमहि ॥ ११ ॥

संदृष्टौ संदर्शने रण्वः रमणीयो मरुद्गणः पितुमानिव अन्नवानिव क्षयः निवासः स्तोतॄणां भवति। रुद्राणां रुद्रपुत्राणां तेषां मरुताम् उपस्तुतिः अनुग्रहबुद्धिः भद्रा कल्याणी भवति।

१. ग–रुद्राणां स्तोमार्हं, त२.६.७.८–म१.२.६–रुद्राः स्तोमार्हं।

तस्मात् जनेषु जनानां मध्ये वयं गोभिः गवादिभिः यशसः यशस्विनः स्याम भवेम । अथ अनन्तरं हे देवासः देवा युष्मान् सदा सर्वदा इळया अन्नेन हविर्लक्षणेन सचेमहि सचेम[1] संगच्छेम[1] ॥

**यां मे धियं मरुत इन्द्र देवा अददात वरुण मित्र यूयम् ।**
**तां पीपयत पयसेव धेनुं कुविद्गिरो अधि रथे वहाथ ॥ १२ ॥**

याम् । मे । धियम् । मरुतः । इन्द्र । देवाः । अददात । वरुण । मित्र । यूयम् ।
ताम् । पीपयत । पयसाऽइव । धेनुम् । कुवित् । गिरः । अधि । रथे । वहाथ ॥ १२ ॥

हे मरुतः हे इन्द्र देवाः हे वरुण हे मित्र यूयं यां धियं यत्कर्म मे मह्यम् अददात दत्तवन्तः स्थ । मरुत इत्यत्र वाक्यभेदादनिघातः । पूर्वपूर्वस्याविद्यमानवत्त्वाभावादाद्युदात्तत्वम् । तां धियं पीपयत फलेनाप्याययत । तत्र दृष्टान्तः । पयसेव[2] धेनुम् । नवप्रसूतिकां गां क्षीरेण यथाप्याययन्ति तद्वत् । किंच गिरः अस्मदीयाः स्तुतीः अधि[3] रथे[3] आत्मीये रथे कुवित् बहुवारं वहाथ प्राप्ताः[4] स्थ[4] । स्तुतेषु सत्सु यज्ञं प्रत्यागमनाय रथारूढा भवथ ॥

**कुविदङ्ग प्रति यथा चिदस्य नः सजात्यस्य मरुतो बुबोधथ ।**
**नाभा यत्र प्रथमं संनसामहे तत्र जामित्वमदितिर्दधातु नः ॥ १३ ॥**

कुवित् । अङ्ग । प्रति । यथा । चित् । अस्य । नः । सऽजात्यस्य । मरुतः । बुबोधथ ।
नाभा । यत्र । प्रथमम् । सम्ऽनसामहे । तत्र । जामिऽत्वम् । अदितिः । दधातु । नः ॥ १३ ॥

अङ्ग इति संबुद्धौ । हे मरुतः यूयं नोऽस्मान् कुवित् बहुवारं प्रति बुबोधथ तथा प्रतिबुध्यध्वम् । कुविद्योगादनिघातः । यथा नः अस्मान् सजात्यस्य अस्य बान्धवस्य चित्तमुपलभ्य[?] कुरुथ तथा जानीथ । ततः नाभा पृथिव्या नाभिस्थाने यत्र यस्मिन्नुत्तरवेदिलक्षणे देशे प्रथमम् एव संनसामहे हविषा यत्र संगच्छेमहि तत्र एव देशे अदितिः देवानां माता नः अस्माकं जामित्वं मनुष्यैः सह बान्धवं दधातु विदधातु ॥

**ते हि द्यावापृथिवी मातरा मही देवी देवाञ्जन्मना यज्ञिये इतः ।**
**उभे बिभृत उभयं भरीमभिः पुरू रेतांसि पितृभिश्च सिञ्चतः ॥ १४ ॥**

ते इति । हि । द्यावापृथिवी इति । मातरा । मही इति ।
देवी इति । देवान् । जन्मना । यज्ञिये इति । इतः ।
उभे इति । बिभृतः । उभयम् । भरीमऽभिः । पुरु । रेतांसि । पितृऽभिः । च । सिञ्चतः ॥ १४ ॥

मातरा सर्वस्य जगतो निर्मात्र्यौ अत एव मही महत्यौ देवी देवनशीले यज्ञिये यज्ञार्हे ते द्यावापृथिवी द्यावापृथिव्यौ देवान् इन्द्रादीन् जन्मना एव इतः हि प्राप्नुतः खलु ।

---

१. ग-त१.३.७-म१.२.४.६.७.८—समचेमः संगच्छामः; त२.६.८-म५—सचेमः संगच्छामः; त४.५—सचेम संगच्छेमः । २. ग-त-भ—पयसेव यथा । ३. त-म-मु—रथेऽधिरथे । ४. त१.२.३.६.७.८-म१.२.६.८—प्राप्ता; त४.५—प्रापयथ; म७—प्राप्त स्तुत ।

'इषु गतौ' । लटि रूपम् । किंच उभे द्यावापृथिव्यौ शचीभिः आत्मीयाभिर्विधैः ऋतस्यं जलं देवान्मनुष्यांश्च बिभ्रतः धारयन्तः पोषयतः । तथा पितृभिः पालकैर्देवैः मंहते ते पुरु पुरूणि भूयांसि रेतांसि उदकानि भिक्षन्तः क्षरन्तः । प्रत्यक्षेण धारयन्तः ॥

वि षा होत्रा विश्वमश्नोति वार्यं बृहस्पतिररमतिः पनीयसी ।

ग्रावा यत्र मधुषुदुच्यते बृहदवीवशन्त मतिभिर्मनीषिणः ॥ १५ ॥

वि । सा । होत्रा । विश्वम् । अश्नोति । वार्यम् । बृहस्पतिः । अरमतिः । पनीयसी ।

ग्रावा । यत्र । मधुऽसुत् । उच्यते । बृहत् । अवीवशन्त । मतिऽभिः । मनीषिणः ॥ १५ ॥

होत्रा । वाङ्नामैतत् । आहूयन्तेऽनया देवा इति । सा वाक् वार्यं वरणीयं विश्वं सर्वं पश्वादिसहितं धनं वि अश्नोति विविधं व्याप्नुते । कीदृशी । बृहस्पतिः बृहतां महतां पालयित्री अरमतिः पर्याप्तस्तुतिः यद्वा कुत्राप्यनुपरता पनीयसी अत्यन्तं देवानां स्तोत्रकारिणी । यत्र यस्यां होत्रायां मधुषुत् सोममभिषुण्वन् बृहत् महान् ग्रावा उच्यते अभिधीयते । स्तूयत इत्यर्थः । तं स्तुतिमन्तं यज्ञं मनीषिणः देवाः मतिभिः स्तुतिभिः सह अवीवशन्त कामयन्ते । वशेर्ण्यन्तस्य लुङि रूपम् । यद्वा । मनीषिणः स्तोतारः स्तुतिभिर्देवानभ्यक्तं कामयमानान् कुर्वन्ति ॥

एवा कविस्तुविरवाँ ऋतज्ञा द्रविणस्युर्द्रविणसश्चकानः ।

उक्थेभिरत्र मतिभिश्च विप्रोऽपीपयद्गयो दिव्यानि जन्म ॥ १६ ॥

एव । कविः । तुविऽरवान् । ऋतऽज्ञाः । द्रविणस्युः । द्रविणसः । चकानः ।

उक्थेभिः । अत्र । मतिऽभिः । च । विप्रः । अपीपयत् । गयः । दिव्यानि । जन्म ॥ १६ ॥

कविः क्रान्तप्रज्ञः तुविरवान् । मत्वर्थीयप्रत्ययश्छान्दसः । बहुस्तुतियुक्तः ऋतज्ञाः यज्ञस्य वेदिता द्रविणस्युः धनकामः । 'सर्वप्रातिपदिकेभ्यो लालसायाम्' इति सुगागमः । तस्यैव विवरणवचनं द्रविणसश्चकानः इति । पश्वादिधनं कामयमान इत्यर्थः । विप्रः मेधावी गयः नामर्षिः एवमुक्तप्रकारेण अत्र सूक्ते उक्थेभिः शस्त्रैः मतिभिः स्तुतिभिः च दिव्यानि दिवि जातानि जन्म जननानि देवान् अपीपयत् अवर्धयत्[1] । अस्तावीदित्यर्थः ॥

एवा प्लतेः सूनुरवीवृधद्वो विश्व आदित्या अदिते मनीषी ।

ईशानासो नरो अमर्त्येनास्तावि जनो दिव्यो गयेन ॥ १७ ॥

एव । प्लतेः । सूनुः । अवीवृधत् । वः । विश्वे । आदित्याः । अदिते । मनीषी ।

ईशानासः । नरः । अमर्त्येन । अस्तावि । जनः । दिव्यः । गयेन ॥ १७ ॥

इयं व्याख्याता ॥ ॥ ८ ॥

'अग्निरिन्द्रः' इति पञ्चदशर्चं षष्ठं सूक्तं वसुक्रपुत्रस्य वसुकर्णस्यार्षं वैश्वदेवम् । पञ्चदशी त्रिष्टुप् शिष्टा जगत्यः । तथा चानुक्रम्यते—'अग्निरिन्द्रः पञ्चोना वासुक्रो वसुकर्णस्त्रिष्टुबन्तं तु' इति ॥

१. म—'अवर्धयत्' नास्ति ।

अग्निरिन्द्रो वरुणो मित्रो अर्यमा वायुः पूषा सरस्वती सजोषसः ।
आदित्या विष्णुर्मरुतः स्वर्बृहत्सोमो रुद्रो अदितिर्ब्रह्मणस्पतिः ॥ १ ॥

अग्निः । इन्द्रः । वरुणः । मित्रः । अर्यमा । वायुः । पूषा । सरस्वती । सऽजोषसः ।
आदित्याः । विष्णुः । मरुतः । स्वः । बृहत् । सोमः । रुद्रः । अदितिः । ब्रह्मणः । पतिः ॥ १ ॥

अग्न्यादय आदित्यादयः बृहत् बृहती स्वः द्यौश्च सोमादय एते देवाः सजोषसः संगताः सन्तोऽन्तरिक्षं स्वमहिम्नापूरयन्तीत्युत्तरेण संबन्धः ॥

इन्द्राग्नी वृत्रहत्येषु सत्पती मिथो हिन्वाना तन्वा समोकसा ।
अन्तरिक्षं मह्या पप्रुरोजसा सोमो घृतश्रीर्महिमानमीरयन् ॥ २ ॥

इन्द्राग्नी इति । वृत्रऽहत्येषु । सत्पती इति सत्ऽपती । मिथः । हिन्वाना । तन्वा । समऽओकसा ।
अन्तरिक्षम् । महि । आ । पप्रुः । ओजसा । सोमः । घृतऽश्रीः । महिमानम् । ईरयन् ॥ २ ॥

वृत्रहत्येषु वृत्रहननेषु युद्धेषु । महा । कर्मणि छान्दसः क्यप् । वृत्राणि शत्रवो हन्यन्तेऽत्रेति वृत्रहत्या युद्धानि । तेषु मिथः परस्परं तन्वा शरीरेण तत्रस्थेन बलेन शत्रून् हिन्वाना प्रेरयन्तौ सत्पती सतां पती समोकसा समानस्थानौ इन्द्राग्नी घृतश्रीः उदकं वसतीवर्याख्यं श्रयमाणः महिमानम् आत्मीयम् ईरयन् सर्वत्रोदीरयन्नुद्गमयन् सोमः च एते सर्वे च महि महत् अन्तरिक्षम् ओजसा स्वबलेन आ पप्रुः आपूरयन्ति । 'प्रा पूरणे' ॥

तेषां हि मह्ना महतामनर्वणां स्तोमाँ इयर्म्यृतज्ञा ऋतावृधाम् ।
ये अप्सवमर्णवं चित्रराधसस्ते नो रासन्तां महये सुमित्र्याः ॥ ३ ॥

तेषाम् । हि । मह्ना । महताम् । अनर्वणाम् । स्तोमान् । इयर्मि । ऋतऽज्ञाः । ऋतऽवृधाम् ।
ये । अप्सवम् । अर्णवम् । चित्रऽराधसः । ते । नः । रासन्ताम् । महये । सुऽमित्र्याः ॥ ३ ॥

मह्ना स्वमहत्त्वेन महताम् अनर्वणाम् अन्यस्मिन्नप्रत्यृतानां शत्रुभिरनभिगन्तव्यानाम्[1] ऋतावृधां सत्यभूतेन यज्ञेन वृद्धानां तेषाम् अग्न्यादीनां देवानामेव ऋतज्ञाः यज्ञस्य ज्ञाताहं स्तोमान् इयर्मि प्रेरयामि । 'ऋ गतिप्रापणयोः' । जौहोत्यादिकः । चित्रराधसः चायनीयधनोपेता यद्वा पश्वादिलक्षणबहुधनाः ये देवाः अप्सवम् । अप्स इति रूपनाम । रूपवन्तम् अर्णवम् । 'अर्णसः सलोपश्च' ( पा. ५. २. १०९. ३ ) इति मत्वर्थीयो वप्रत्ययः । उदकवन्तं मेघं वर्षन्ति ते सुमित्र्याः शोभनसखिकर्माणः ते देवाः नः अस्मभ्यं महये जनेषु मध्ये पूजार्थं धनं रासन्तां प्रयच्छन्तु । 'रासृ दाने' ॥

स्वर्णरमन्तरिक्षाणि रोचना द्यावाभूमी पृथिवीं स्कम्भुरोजसा ।
पृक्षाइव महयन्तः सुरातयो देवाः स्तवन्ते मनुषाय सूरयः ॥ ४ ॥

स्वःऽनरम् । अन्तरिक्षाणि । रोचना । द्यावाभूमी इति । पृथिवीम् । स्कम्भुः । ओजसा ।
पृक्षाःऽइव । महयन्तः । सुऽरातयः । देवाः । स्तवन्ते । मनुषाय । सूरयः ॥ ४ ॥

१. ग-स१.२.३.७.८-मनु—°रभिगतव्यानां; त४-५—°र्गतानां; त६—°र्गतव्यानां ।

तदु श्रेष्ठं सवनं सुनोतनात्यो न हस्तयतो अद्रिः सोतरि ।
विदद्ध्य१र्यो अभिभूति पौंस्यं महो राये चित्तरुते यदर्वतः ॥ २ ॥

तत् । ऊँ इति । श्रेष्ठम् । सवनम् । सुनोतन । अत्यः । न । हस्तऽयतः । अद्रिः । सोतरि ।
विदत् । हि । अर्यः । अभिऽभूति । पौंस्यम् । महः । राये । चित् । तरुते । यत् । अर्वतः ॥२॥

हे ग्रावाणः यूयं तदु तमेव[1] श्रेष्ठं प्रशस्यं सवनं सोमं सुनोतन अभिषुणुत । अथैकवद्वाह । अद्रिः अभिषवग्रावा हस्तयतः हस्ताभ्यां गृहीतः सन् अत्यो न अश्व इव भवति सोतरि अभिषवकर्तर्यध्वर्यौ । स यथा हस्ताभ्यां दृढं गृहीतोऽपि चलति तद्वत् । अर्यः ग्राव्णामभिषवाय प्रेरको यजमानः अभिभूति शत्रूणामभिभावुकं पौंस्यं बलं विदद्धि लभते खलु देवेभ्यः । यद्वा । अभिषवायाध्वर्य्वादिः[2] प्रेरितो[3] ग्रावाभिभूति पौंस्यं विदद्धसमानार्थम् । किंच महे महते राये चित् धनायापि यत् यो ग्रावा अर्वतः अश्वान् तरुते तनुते प्रयच्छति ॥

तदिद्ध्यस्य सवनं विवेरपो यथा पुरा मनवे गातुमश्रेत् ।
गोअर्णसि त्वाष्ट्रे अश्वनिर्णिजि प्रेमध्वरेष्वध्वराँ अशिश्रयुः ॥ ३ ॥

तत् । इत् । हि । अस्य । सवनम् । विवेः । अपः । यथा । पुरा । मनवे । गातुम् । अश्रेत् ।
गोऽअर्णसि । त्वाष्ट्रे । अश्वऽनिर्निजि । प्र । ईम् । अध्वरेषु । अध्वरान् । अशिश्रयुः ॥ ३ ॥

इत् इति पूरणः । अस्य ग्राव्णः तत् सवनम् अभिषवोपेतमस्मदीयं सोमयागाख्यम् अपः कर्म विवेः व्याप्नोतु । विपूर्वस्य वेतेर्लङ्यद्भावश्छान्दसो लुक् । वेतेर्विपूर्वस्य वा छान्दसे श्नौ चापरूपमिति संदेहादनवग्रहः । समासस्वरः । यथा पुरा मनवे राज्ञे गातुं गमनम् अश्रेत् आजगाम तद्वत्[4] व्याप्नोतु । किंच गोअर्णसि गोरूपे अपहृतैर्गोभिः परिवृते तथा अश्वनिर्णिजि । निर्णिगिति रूपनाम । अश्वरूपे । अपहृतैरश्वैर्युक्त इत्यर्थः । ईदृशे त्वाष्ट्रे त्वष्टुः पुत्रे हन्तव्ये सतीति शेषः । ईम् एतान् अध्वरान् असुरैरहिंस्यानध्वरसाधकान् चोपलान् अध्वरेषु अशिश्रयुः आश्रयन्ति पूर्वे यजमानाः ॥

अप हत रक्षसो भङ्गुरावतः स्कभायत निर्ऋतिं सेधतामतिम् ।
आ नो रयिं सर्ववीरं सुनोतन देवाव्यं भरत श्लोकमद्रयः ॥ ४ ॥

अप । हत । रक्षसः । भङ्गुरऽवतः । स्कभायत । निःऽऋतिम् । सेधत । अमतिम् ।
आ । नः । रयिम् । सर्वऽवीरम् । सुनोतन । देवऽअव्यम् । भरत । श्लोकम् । अद्रयः ॥४॥

हे अद्रयः यूयम् अप हत विनाशयत रक्षसः राक्षसान् । कीदृशान् । भङ्गुरावतः भञ्जकेन कर्मणा तद्वतः । तथा स्कभायत दूरे परिहरत निर्ऋतिं पापदेवताम् । यथास्मान् यज्ञं नागच्छति तथा । किंच[5] सेधत निषेधत अमतिं हिंसामतिं रक्षःप्रभृतिम्[5] । किंच नः अस्माकं सर्ववीरं बहुपुत्राद्युपेतं रयिं धनम् आ सुनोतन । अभिषवेण पुत्रपश्वादीनां लाभादेवमुक्तम् । किंच देवाव्यं देवप्रीणनं श्लोकं[6] भरत संपादयत ॥

---

१. त–तदेव । २. भ–अभिषवस्याध्वर्य्वादयः । ३. म–त१.२.३.४.५.७–भ२–प्रेरिताः; त६.८–भ१.४.६–प्रेरिता । ४. त–भ–तत् । ५. त६.८–भ–' किंच ...... रक्षःप्रभृति ' नास्ति । ६. ग–श्लोक शब्द है स्पष्ट। ।

दिवश्चिदा वोऽमवत्तरेभ्यो विभ्वना चिदाश्वपस्तरेभ्यः ।
वायोश्चिदा सोमरभस्तरेभ्योऽग्नेश्चिदर्च पितुकृत्तरेभ्यः ॥ ५ ॥

दिवः । चित् । आ । वः । अमवत्ऽतरेभ्यः । विऽभ्वना । चित् । आशुअपःऽतरेभ्यः ।
वायोः । चित् । आ । सोमरभःऽतरेभ्यः । अग्नेः । चित् । अर्च । पितुकृत्ऽतरेभ्यः ॥ ५ ॥

दिवश्चित् आदित्यादपि अमवत्तरेभ्यः अत्यन्तं बलवद्भ्यः वः युष्मभ्यम् आ अर्च अस्तौदध्वर्युः । यद्वा । हे अध्वर्य्वादयः वो यूयमुच्यमानलक्षणेभ्यो ग्रावभ्य आ सर्वतोऽर्च अर्चतेत्येवं प्रतिवाक्यं योज्यम् । विभ्वना चित् । विभ्वा सुधन्वनः पुत्रः । तेनापि आशुअपस्तरेभ्यः शीघ्रकर्मभ्य इत्यर्थः । विभ्वादीनां त्रयाणां चमसादिनिर्माणकर्म प्रसिद्धम् । वायोश्चित् वायोरपि सोमरभस्तरेभ्यः सोमाभिषवार्थेनात्यन्तं वेगेन युक्तेभ्यः । वायोरपि ग्रावाणो वेगवन्तो भवन्ति सोमाभिषवार्थम् । अग्नेश्चित् अग्नेरपि पितुकृत्तरेभ्यः अत्यन्तमन्नसाधकेभ्यः । ईदृशेभ्यो ग्रावभ्यः प्रीणनाय यूयमर्चतेति ॥ ५ ॥

भुरन्तु नो यशसः सोत्वन्धसो ग्रावाणो वाचा दिविता दिवित्मता ।
नरो यत्र दुहते काम्यं मध्वाघोषयन्तो अभितो मिथस्तुरः ॥ ६ ॥

भुरन्तु । नः । यशसः । सोतु । अन्धसः । ग्रावाणः । वाचा । दिविता । दिवित्मता ।
नरः । यत्र । दुहते । काम्यम् । मधु । आऽघोषयन्तः । अभितः । मिथःऽतुरः ॥ ६ ॥

यशसः यशस्विनः ग्रावाणः नः अस्मभ्यं सोतु सुतम् अन्धसः सोमस्य रसं भुरन्तु भरन्तु संपादयन्तु । उकारश्छान्दसः । किंच दिवित्मता दीप्तिमत्या । लिङ्गव्यत्ययः । वाचा स्तुतिवाचा दिविता दिवितायां दीप्तिमत्यां वा अस्मान् कुर्वन्तु । सोमयागे स्थापयन्त्वित्यर्थः । कैषा[1] दीप्तिमतीति उच्यते । नरः नेतार ऋत्विजः यत्र यागे काम्यं कमनीयं मधु सोमरसं दुहते । किं कुर्वन्तः । आघोषयन्तः सर्वतोऽभिषवशब्दं स्तोत्रशस्त्रादिरूपं वा शब्दं कुर्वन्तः । अभितः सर्वतः मिथस्तुरः त्वरमाणाः । सा दीप्तिमतीति ॥

सुन्वन्ति सोमं रथिरासो अद्रयो निरस्य रसं गविषो दुहन्ति ते ।
दुहन्त्यूधरुपसेचनाय कं नरो हव्या न मर्जयन्त आसभिः ॥ ७ ॥

सुन्वन्ति । सोमम् । रथिरासः । अद्रयः । निः । अस्य । रसम् । गोऽइषः । दुहन्ति । ते ।
दुहन्ति । ऊधः । उपऽसेचनाय । कम् । नरः । हव्या । न । मर्जयन्ते । आसऽभिः ॥ ७ ॥

रथिरासः रयवन्तो[2] वेगवन्तः अद्रयः ग्रावाणः सोमं सुन्वन्ति । ग्रावाणः अस्य सोमस्य रसं निः दुहन्ति निःशेषेण दुहन्ति । गविषः स्तुतिवाचमिच्छन्तः सन्तः । ते दुहन्ति ऊधः रसं सोमसंबन्धिनम् । किमर्थम् । उपसेचनाय अग्नेः । कम् इति पादपूरणः । नरः नेतारोऽभिषवकर्तार ऋत्विजः हव्या न हवींषि यान्युपसेचनानन्तरम् आसभिः स्वास्यैः मर्जयन्ते शोधयन्ति । शेषभक्षणेन शुद्धीकुर्वन्ति । यद्वा । अमी होतुर्यथापवित्रास्पुरास्तभिरास्योपलक्षितैः स्तोत्रैर्मर्जयन्ते ॥

---

१. ग-त१.२.३.७.८-म-मु—कैषा; त६—कैषा । २. म-त१.२.३.६.७.८-भ—'रयवन्तो' नास्ति ।

एते नरः स्वपसो अभूतन य इन्द्राय सुनुथ सोममद्रयः ।
वामंवामं वो दिव्याय धाम्ने वसुवसु वः पार्थिवाय सुन्वते ॥ ८ ॥

एते । नरः । सुऽअपसः । अभूतन । ये । इन्द्राय । सुनुथ । सोमम् । अद्रयः ।
वामम्ऽवामम् । वः । दिव्याय । धाम्ने । वसुऽवसु । वः । पार्थिवाय । सुन्वते ॥ ८ ॥

हे नरः नेतारः हे अद्रयः एते यूयं स्वपसोऽभूतन शोभनाभिषवकर्माणो भवत । ये यूयम् इन्द्राय सोमं सुनुथ वः यूयं वामंवामं यद्यद्वननीयं धनमस्ति तत्तत् दिव्याय धाम्ने तेजसे कुरुत । तथा वसुवसु यद्यद्वासयोग्यं धनमस्ति तत् वः यूयं पार्थिवाय सुन्वते यजमानाय कुरुत ॥ ॥ ९ ॥

'अभ्रप्रुषः' इत्यष्टर्चं नवमं सूक्तं भृगुगोत्रस्य स्यूमरश्मेरार्षं मरुद्देवताकम् । पञ्चमी जगती शिष्टाः सप्त त्रिष्टुभः । तथा चानुक्रान्तम्—' अभ्रप्रुषः स्यूमरश्मिर्भार्गवो मारुतं तु पञ्चमी जगती ' इति । गतो विनियोगः ॥

अभ्रप्रुषो न वाचा प्रुषा वसु हविष्मन्तो न यज्ञा विजानुषः ।
सुमारुतं न ब्रह्माणमर्हसे गणमस्तोष्येषां न शोभसे ॥ १ ॥

अभ्रऽप्रुषः । न । वाचा । प्रुष । वसु । हविष्मन्तः । न । यज्ञाः । विऽजानुषः ।
सुऽमारुतम् । न । ब्रह्माणम् । अर्हसे । गणम् । अस्तोषि । एषाम् । न । शोभसे ॥ १ ॥

अभ्रप्रुषो न मेघान्निर्गच्छन्त उदकबिन्दव इव वाचा स्तुत्या प्रीता मरुतः वसु धनं प्रुष सिञ्चन्ति । व्यत्ययेन बहुवचनम् । किंच हविष्मन्तो न यज्ञाः हविर्भिर्युक्ता यागा इव विजानुषः जगतो विजनयितारो भवन्ति । अथ समुदायेनाह । तेषाम् एषां सुमारुतं[1] शोभनानां मरुतां ब्रह्माणं महान्तं गणम् अर्हसे पूजार्थं न अस्तोषि नास्तौषम् । न स्तुतवानस्मीतः पूर्वम् । तथा शोभसे शोभार्थमपि मारुतं गणं न अस्तोषि । अत इदानीं नूतनेन स्तोत्रेण स्तौमीत्यर्थः ॥

श्रिये मर्यासो अञ्जीँरकृण्वत सुमारुतं न पूर्वीरति क्षपः ।
दिवस्पुत्रास एता न येतिर आदित्यासस्ते अक्रा न वावृधुः ॥ २ ॥

श्रिये । मर्यासः । अञ्जीन् । अकृण्वत । सुऽमारुतम् । न । पूर्वीः । अति । क्षपः ।
दिवः । पुत्रासः । एताः । न । येतिरे । आदित्यासः । ते । अक्राः । न । ववृधुः ॥ २ ॥

श्रिये शोभार्थं[2] मर्यासः मारका मनुष्यरूपा वा मरुतः । पूर्वं मनुष्याः सन्तः पञ्चमसुकृतविशेषेण अमरा आसन् । ते अञ्जीन् अञ्जकान्याभरणानि अकृण्वत कुर्वन्ति । किमर्थम् । श्रिये स्वशरीरशोभनार्थम्[3] । सुमारुतं[4] शोभनानां मरुतां गणं पूर्वीः बह्वयः क्षपः क्षपयित्र्यः सेनाः न अति न पराभावयन्तीति शेषः । किंच दिवः द्युदेवतायाः पुत्रासः पुत्राः एताः गन्तारः न येतिरे निर्गच्छन्ति । ते आदित्यासः अदितेः पुत्राः अक्राः आक्रमणशीला मरुतः न वावृधुः न वर्धन्ते । यतोऽस्माभिर्न स्तुता अत इति भावः ॥

1. ग-त-भ—सुमारुतं न । 2. ग-त४.५—शोभनार्थं । 3. ग४—'शोभार्थं । 4. त-भ—तं सुमारुतं ।

प्र ये दिवः पृथिव्या न बर्हणा त्मना रिरिच्रे अभ्रान्न सूर्यः ।
पाजस्वन्तो न वीराः पनस्यवो रिशादसो न मर्या अभिद्यवः ॥ ३ ॥

प्र । ये । दिवः । पृथिव्याः । न । बर्हणा । त्मना । रिरिच्रे । अभ्रात् । न । सूर्यः ।
पाजस्वन्तः । न । वीराः । पनस्यवः । रिशादसः । न । मर्याः । अभिऽद्यवः ॥ ३ ॥

ये मरुतः दिवः पृथिव्याः न पृथिव्याश्च । नेति चार्थे । बर्हणा महत्त्वेन त्मना आत्मनैव रिरिच्रे रिरिचिरे अतिरिक्ता अभवन् स्वशरीरेण अभ्रात्[1] अभ्रादिव[2] सूर्यः[2] । किंच पाजस्वन्तो न वीराः बलवन्तो वीरा इव पनस्यवः स्तुतिकामा भवन्ति । किंच रिशादसो न मर्याः हिंसकानामसितारो मनुष्या इव अभिद्यवः अभिगतदीप्तयो भवन्ति ॥

युष्माकं बुध्ने अपां न यामनि विथुर्यति न मही श्रथर्यति ।
विश्वप्सुर्यज्ञो अर्वागयं सु वः प्रयस्वन्तो न सत्राच आ गत ॥ ४ ॥

युष्माकम् । बुध्ने । अपाम् । न । यामनि । विथुर्यति । न । मही । श्रथर्यति ।
विश्वऽप्सुः । यज्ञः । अर्वाक् । अयम् । सु । वः । प्रयस्वन्तः । न । सत्राचः । आ । गत ॥ ४ ॥

हे मरुतः युष्माकं बुध्ने परस्परसंघाते अपां न यामनि प्रवृद्धानामुदकानां गमन इव मही महती भूः न विथुर्यति न व्यथते । नापि श्रथर्यति न विशीर्णा भवति । शीघ्रगतयोऽपि यूयमेनां न पीडयथेत्यर्थः । विश्वप्सुः विश्वरूपः अयं यज्ञः यागसाधनं हविः वः युष्माकम् अर्वाक् अभिमुखं सु सुष्ठु गच्छति । प्रयस्वन्तो न अन्नवन्तः परिष्कर्तार इव सुखप्रदाः सन्तः सत्राचः सहाञ्चनाः आ गत आगच्छत । संघाकारेणागच्छतेत्यर्थः । 'सप्तगणा वै मरुतः' (तै. सं. २. २. ५. ७) इति श्रुतेः ॥

यूयं धूर्षु प्रयुजो न रश्मिभिर्ज्योतिष्मन्तो न भासा व्युष्टिषु ।
श्येनासो न स्वयशसो रिशादसः प्रवासो न प्रसितासः परिप्रुषः ॥ ५ ॥

यूयम् । धूःऽसु । प्रऽयुजः । न । रश्मिऽभिः । ज्योतिष्मन्तः । न । भासा । विऽउष्टिषु ।
श्येनासः । न । स्वऽयशसः । रिशादसः । प्रवासः । न । प्रऽसितासः । परिऽप्रुषः ॥ ५ ॥

हे मरुतः यूयं धूर्षु रथसंबन्धिनीषु रश्मिभिः योक्त्रैः प्रयुजः प्रयुक्ताः बद्धा अश्वा इव परिप्रुषः परितो गन्तारः स्थ । तथा ज्योतिष्मन्तो न तेजस्वन्त आदित्यादय इव भासा युक्ता भवथ व्युष्टिषु उषःसूदितासु । किंच श्येनासो न श्येना इव[3] स्वयशसः स्वायत्तयशसः ते यथा रिशादसः हिंसकानामसितारस्तद्वद्रिशादसः स्वायत्तयशसश्च । किंच प्रवासो न प्रवासिन इव पथिका इव प्रसितासः प्रसिद्धयानाः । उक्तरूपा मरुतः परिप्रुषः परितो गन्तारो भवथ ॥ १० ॥

प्र यद्वहध्वे मरुतः पराकाद्यूयं महः संवरणस्य वस्वः ।
विदानासो वसवो राध्यस्याराच्चिद्द्वेषः सनुतर्युयोत ॥ ६ ॥

१. ग-ल-म—अभ्राश्च सूर्यः । २. म- 'अभ्रादिव सूर्यः' नास्ति । ३. त-भ-मु—इव किंच ।

प्र। यत्। वहध्वे। मरुतः। पराकात्। यूयम्। महः। सम्ऽवरणस्य। वस्वः।
विदानासः। वसवः। राध्यस्य। आरात्। चित्। द्वेषः। सनुतः। युयोत॥ ६॥

हे मरुतः यूयं यत् यदा पराकात् अत्यन्तं दूरदेशात् प्र वहध्वे[1] आगच्छथ तदानीं[2] महः महत् संवरणस्य संवरणीयं राध्यस्य संराधनीयं वस्वः वसु धनं विदानासः प्रयच्छन्तो हे वसवः यूयम् आराच्चित् दूरादेव युयोत पृथक्कुरुत। कानिति उच्यते। द्वेषः द्वेष्टॄन्। कीदृशान्। सनुतः अन्तर्हितान्। निगूढानित्यर्थः। सनुतरित्यन्तर्हितनाम॥

य उदृचि यज्ञे अध्वरेष्ठा मरुद्भ्यो न मानुषो ददाशत्।
रेवत्स वयो दधते सुवीरं स देवानामपि गोपीथे अस्तु॥ ७॥

यः। उत्ऽऋचि। यज्ञे। अध्वरेऽस्थाः। मरुत्ऽभ्यः। न। मानुषः। ददाशत्।
रेवत्। सः। वयः। दधते। सुऽवीरम्। सः। देवानाम्। अपि। गोऽपीथे। अस्तु॥७॥

अध्वरेष्ठाः यागे सीदन् मानुषः यः[3] यजमानः यज्ञे उदृचि सति। ऋक्शब्देन स्तोत्रमुपलक्ष्यते। यज्ञे समाप्तस्तुतिके सति संपूर्णे सति मरुद्भ्यो न मरुद्भ्यश्च इन्द्राग्न्यादिभ्योऽध्वर्युभ्य[4] ऋत्विगादिभ्यः ददाशत् दद्यात्। यद्वा यत्र उदृच्युपक्रान्त इत्यर्थः। तस्मिन् यज्ञे मरुद्भ्य इन्द्राग्न्यस्मै इन्द्राय ददाशत् ददाति। सः यजमानः रेवत् धनवत्[5] सुवीरं शोभनपुत्राद्युपेतं वयः अन्नं दधते धारयति। व्यत्ययेनैकवचनम्। स देवानाम् इन्द्रादीनाम् अपि गोपीथे सोमपाने अस्तु भवतु॥

ते हि यज्ञेषु यज्ञियास ऊमा आदित्येन नाम्ना शंभविष्ठाः।
ते नोऽवन्तु रथतूर्मनीषां महश्च यामन्नध्वरे चकानाः॥ ८॥

ते। हि। यज्ञेषु। यज्ञियासः। ऊमाः। आदित्येन। नाम्ना। शम्ऽभविष्ठाः।
ते। नः। अवन्तु। रथऽतूः। मनीषाम्। महः। च। यामन्। अध्वरे। चकानाः॥ ८॥

ते हि ते खलु यज्ञेषु यागेषु यज्ञियासः यज्ञार्हाः यष्टव्याः ऊमाः अवितारः आदित्येन नाम्ना आदित्यसंबन्धिनोदकेन शंभविष्ठाः सुखस्य भावयितारः। यद्वा। आदित्याख्येन नाम्नादित्यनामकेन देवेन सह शंभविष्ठाः। ते मरुतः नः अस्मान् अवन्तु। रथतूः रथतुरो रथस्य यज्ञगमनसाधनस्य त्वरयितारः सन्तः मनीषां स्तुतिमवन्तु रक्षन्तु। कीदृशास्ते। अध्वरे यामन् यागगमने महः महद्धविः चकानाः कामयमानाः॥ ॥ १॥

'विप्रासः' इत्यष्टर्चं दशमं सूक्तम्। पञ्चम्याद्यास्तिस्रो द्वितीया चेति चतस्रो जगत्यः। शिष्टाश्चतस्रस्त्रिष्टुभः। पूर्ववदृषिदेवते। तथा चानुक्रान्तं—'विप्रासो द्वितीया पञ्चम्याद्याश्च तिस्रो जगत्यः' इति। गतो विनियोगः॥

विप्रासो न मन्मभिः स्वाध्यो देवाव्यो न यज्ञैः स्वप्नसः।
राजानो न चित्राः सुसंदृशः क्षितीनां न मर्या अरेपसः॥ १॥

१. ग—प्रवहध्वे। २. ग-त४.५—तथानीं यूयं; त१.२.३.६.७.८-अ१.२.४.६.८—तदानीं यूयं। ३. त-अ-मु—'यः' नास्ति। ४. त-मु—'मध्वर्युप्रभृतिभ्यः'। ५. त१.२.३.७-मु—रयिमत्; म—'धनवत्' नास्ति।

विप्रासः । न । मन्मऽभिः । सुऽआध्यः । देवऽअव्यः । न । यज्ञैः । सुऽअप्नसः ।
राजानः । न । चित्राः । सुऽसंदृशः । क्षितीनाम् । न । मर्याः । अरेपसः ॥ १ ॥

विप्रासो न विप्रा ब्राह्मणा इव ते यथा मन्मभिः स्तुतिभिः स्वाध्यः शोभनाध्याना भवन्ति एवं¹ मरुतोऽप्यस्मदीयैर्मननीयैः स्तोत्रैः स्वाध्यः सुमनसो भवन्ति । अथवा । मन्मभिः स्तोत्रैर्युक्ता विप्रासो न मेधाविनः स्तोतार इव स्वाध्यो यज्ञे यजमाने वा सुध्याना इत्यर्थः । तथा यज्ञैः यागैः देवाव्यो न देवानां तर्पयितारो यजमाना इव स्वप्नसः । अप्न इति कर्मनाम । शोभनकर्माणः । ते यथा कर्मसु व्यापृता भवन्ति तद्वद्वृष्टिप्रदानादिकर्मसु व्यापृता इत्यर्थः । राजानो न मूर्धाभिषिक्ताः क्षितिपतय इव चित्राः चायनीयाः पूजनीयाः । यद्वा चित्राभरणाः । तथा सुसंदृशः सुष्ठु दर्शनीयाः । तथा क्षितीनां निवासानां स्वामिनः मर्याः न मनुष्या इव अरेपसः अपापाः । यथा प्रतिग्रहयाजनमन्यत्रापन्ना स्वगृह एवानुतिष्ठन्तो निर्दोषा भवन्ति तादृशा इत्यर्थः । ईदृशाः शोभन्त इत्यर्थः ॥

अग्निर्न ये भ्राजसा रुक्मवक्षसो वातासो न स्वयुजः सद्यऊतयः ।
प्रज्ञातारो न ज्येष्ठाः सुनीतयः सुशर्माणो न सोमा ऋतं यते ॥ २ ॥

अग्निः । न । ये । भ्राजसा । रुक्मऽवक्षसः । वातासः । न । स्वऽयुजः । सद्यःऽऊतयः ।
प्रऽज्ञातारः । न । ज्येष्ठाः । सुऽनीतयः । सुऽशर्माणः । न । सोमाः । ऋतम् । यते ॥ २ ॥

हे मरुतः अग्निर्न अग्निरिव स² यथा³ भ्राजसा तेजसा शोभते तद्वद्भ्राजसा युक्ताः किंच रुक्मवक्षसः रुक्मालंकृतवक्षस्काः वातासो न प्रत्यक्षवाता इव स्वयुजः स्वयं⁴ युज्यमानाः सद्यऊतयः सद्योगमनाः प्रज्ञातारो न प्रकर्षेण ज्ञातारो ज्ञानिन इव ज्येष्ठाः पूज्याः सुनीतयः सुनयनाः सुशर्माणो न सोमाः सुसुखाः सोमा इव ते यूयम् ऋतं यते यज्ञं गच्छते यजमानाय गच्छतेति ॥

वातासो न ये धुनयो जिगत्नवोऽग्नीनां न जिह्वा विरोकिणः ।
वर्मण्वन्तो न योधाः शिमीवन्तः पितॄणां न शंसाः सुरातयः ॥ ३ ॥

वातासः । न । ये । धुनयः । जिगत्नवः । अग्नीनाम् । न । जिह्वाः । विऽरोकिणः ।
वर्मण्ऽवन्तः । न । योधाः । शिमीऽवन्तः । पितॄणाम् । न । शंसाः । सुऽरातयः ॥ ३ ॥

ये मरुतः वातासो न वायव इव धुनयः शत्रूणां कम्पयितारः जिगत्नवः गमनशीलाः । अत्र मारुते सूक्ते मरुतामेव दृष्टान्तकथने संचरणस्वभाववायुपदार्थतदभिमानिदेवताभेदेनाविरुद्धम् । तथा अग्नीनां न जिह्वाः अग्नीनां ज्वाला इव विरोकिणः विरोचनशीलमुखाः । तथा वर्मण्वन्तो न योधाः कवचिनो योद्धार इव शिमीवन्तः शौर्यकर्मवन्तः । तथा पितॄणां न शंसाः पितॄणां जनकानां शंसा वाच इव सुरातयः सुदानाः । एवंमहानुभावा एते मरुतोऽस्मद्यज्ञमागच्छन्तु ॥

१. त-मु-एवमेते । २. ग-त-अ-' स ' नास्ति । ३. त४.५.७-' यथा ' नास्ति । ४. त-अ१. १.४.६.८-स्वयुज्यमानाः ।

रथानां न येऽराः सनाभयो जिगीवांसो न शूरा अभिद्यवः ।
वरेयवो न मर्या घृतप्रुषोऽभिस्वर्तारो अर्कं न सुष्टुभः ॥ ४ ॥

रथानाम् । न । ये । अराः । सऽनाभयः । जिगीवांसः । न । शूराः । अभिऽद्यवः ।
वरेऽयवः । न । मर्याः । घृतऽप्रुषः । अभिऽस्वर्तारः । अर्कम् । न । सुऽस्तुभः ॥ ४ ॥

रथानां न रथचक्राणामिव अराः ते यथा बहवोऽपि सनाभयः समाननाभयो भवन्ति तद्वत् ये परस्परं सनाभयः समानबन्धना एकस्मिन्नेवान्तरिक्षे वर्तमानाः । परस्परं बन्धुभूता इत्यर्थः । जिगीवांसो न शूराः जयशीलाः शूरा इव अभिद्यवः अभिगतदीप्तयः किंच वरेयवो न मर्याः वृतं वरं परस्मै प्रदातुमिच्छन्तो मनुष्या इव घृतप्रुषः उदकसेक्तारः । उदकपूर्वं हि वराणि वसूनि दीयन्ते नियमेन । वृष्ट्युदकप्रदा इत्यर्थः । किंच अभिस्वर्तारः अर्कं न अर्कमर्चनीयं स्तोत्रमभिस्वर्तारोऽभितः शब्दयितारो वन्दिन इव सुष्टुभः सुशब्दाः ॥

अश्वासो न ये ज्येष्ठास आशवो दिधिषवो न रथ्यः सुदानवः ।
आपो न निम्नैरुदभिर्जिगत्नवो विश्वरूपा अङ्गिरसो न सामभिः ॥ ५ ॥

अश्वासः । न । ये । ज्येष्ठासः । आशवः । दिधिषवः । न । रथ्यः । सुऽदानवः ।
आपः । न । निम्नैः । उदऽभिः । जिगत्नवः । विश्वऽरूपाः । अङ्गिरसः । न । सामऽभिः ॥ ५ ॥

ये मरुतः अश्वासो न अश्वा इव ज्येष्ठासः ज्येष्ठाः प्रशस्यतमाः आशवः शीघ्रगमनाः । तथा दिधिषवो न वसूनां धारका इव रथ्यः रथस्वामिनः सुदानवः सुदानाः । तथा आपो न आप इव निम्नैः प्रवणैः उदभिः उदकैः सह जिगत्नवः गमनशीलाः । तथा विश्वरूपाः नानारूपाः सामभिः युक्ताः अङ्गिरसो न अङ्गिरस इव । सर्वदा सामगा इत्यर्थः ॥ ॥ १२ ॥

ग्रावाणो न सूरयः सिन्धुमातर आदर्दिरासो अद्रयो न विश्वहा ।
शिशूला न क्रीळयः सुमातरो महाग्रामो न यामन्नुत त्विषा ॥ ६ ॥

ग्रावाणः । न । सूरयः । सिन्धुऽमातरः । आऽदर्दिरासः । अद्रयः । न । विश्वहा ।
शिशूलाः । न । क्रीळयः । सुऽमातरः । महाऽग्रामः । न । यामन् । उत । त्विषा ॥ ६ ॥

सूरयः उदकस्य प्रेरकाः ग्रावाणो न मेघा इव सिन्धुमातरः नदीनिर्मातारः । आदर्दिरासः आदरणशीलानि अद्रयो न वज्रायायुधानीव विश्वहा सर्वदा शत्रूणां हन्तार इत्यर्थः । यद्वा । सर्वदा अद्रयो न वज्रा इव शत्रूणामादर्दिरास आदरणशीलाः । सुमातरः शोभनमातृकाः शिशूला न शिशव इव क्रीळयः विहर्तारः । उत अपि च महाग्रामो न महाजनसंघ इव यामन् यामनि गमने त्विषा दीप्त्या युक्ता भवन्ति । तेऽस्मद्यज्ञमागच्छन्तु ॥

उषसां न केतवोऽध्वरश्रियः शुभंयवो नाञ्जिभिर्व्यश्वितन् ।
सिन्धवो न ययियो भ्राजदृष्टयः परावतो न योजनानि ममिरे ॥ ७ ॥

उषसाम् । न । केतवः । अध्वरऽश्रियः । शुभम्ऽयवः । न । अञ्जिऽभिः । वि । अश्वितन् ।
सिन्धवः । न । ययियः । भ्राजत्ऽऋष्टयः । पराऽवतः । न । योजनानि । ममिरे ॥ ७ ॥

ये मरुतः उषसां न केतवः उषसां रश्मय इव अध्वरश्रियः यज्ञस्याश्रयितारो[1] भवन्ति । तथा शुभंयवो न कल्याणकामा वरा इव अञ्जिभिः आभरणैः व्यश्वितन् दीप्यन्ते । 'श्विता वर्णे' । लङि रूपम् । तथा सिन्धवो न नद्य इव ययियः गमनशीलाः भ्राजदृष्टयः दीप्यमानायुधाः परावतो न दूराध्वगामिनो यद्वा इव योजनानि दूरदेशान् ममिरे परिच्छिन्दन्ति । तेऽस्मद्यज्ञमागच्छन्त्विति ॥

सुभागान्नो देवाः कृणुता सुरत्नानस्मान्स्तोतॄन्मरुतो वावृधानाः ।
अधि स्तोत्रस्य सख्यस्य गात सनाद्धि वो रत्नधेयानि सन्ति ॥ ८ ॥

सुऽभागान् । नः । देवाः । कृणुत । सुऽरत्नान् । अस्मान् । स्तोतॄन् । मरुतः । ववृधानाः ।
अधि । स्तोत्रस्य । सख्यस्य । गात । सनात् । हि । वः । रत्नऽधेयानि । सन्ति ॥ ८ ॥

अनया स्तुतिमुपसंहरति । हे मरुतः देवाः वावृधानाः स्तुत्या वर्धमाना यूयं स्तोतॄन् नः अस्मान् सुभागान् सुधनान् कृणुत कुरुत । तथा सुरत्नान् शोभनरत्नान् कृणुत । यद्वा । सुरत्नान् शोभनरमणीयस्तोत्रानस्मानिति संबन्धनीयम् । किंच यूयं सख्यस्य स्तोत्रस्य सखिभूतं स्तोत्रम् अधि गात अधिगच्छत । वः युष्माकं रत्नधेयानि रत्नदानानि अस्मद्विषयाणि सनाद्धि चिरकालादारभ्य खलु सन्ति ॥        ॥ १२ ॥

'अपश्यम्' इति सप्तर्चमेकादशं सूक्तमाग्नेयं त्रैष्टुभम् । सौचीकगुणोऽग्निर्वैश्वानरगुणो वाथवा सप्तिर्नाम वाजंभरपुत्र । तथा चानुक्रान्तम्—'अपश्यं सप्त सौचीकोऽग्निर्वैश्वानरो वा सप्तिर्वा वाजंभर आग्नेयं तु' इति । प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभे छन्दस्याग्नेये क्रतौ विनियुक्ते ... सूत्रितं च—'अपश्यमस्य महत इति सूक्ते' ( आश्व. श्रौ. ४. १३ ) इति ॥

अपश्यमस्य महतो महित्वममर्त्यस्य मर्त्यासु विक्षु ।
नाना हनू विभृते सं भरेते असिन्वती बप्सती भूर्यत्तः ॥ १ ॥

अपश्यम् । अस्य । महतः । महिऽत्वम् । अमर्त्यस्य । मर्त्यासु । विक्षु ।
नाना । हनू इति । विभृते इति विऽभृते । सम् । भरेते इति ।
असिन्वती इति । बप्सती इति । भूरि । अत्तः ॥ १ ॥

अस्य अग्नेः महतः मंहनीयस्य महित्वं महत्त्वम् अपश्यं पश्यामि । कीदृशस्यास्य । मर्त्यासु विक्षु मनुष्यरूपासु प्रजासु तासां हृदये अमर्त्यस्य अमरणस्वभावस्य वैश्वानररूपेण वर्तमानस्य । यद्वा । मर्त्यासु विक्षु ऋत्विग्यजमानरूपासु प्रजास्वमर्त्यस्य सर्वदा जागरितस्य । अथ दावाग्निरूपोऽग्निरुच्यते । अस्याग्नेः हनू शिप्रे नाना विभृते विभिन्ने सं भरेते संभरतो दन्तैः । तथा कृत्वा असिन्वती असंखादन्त्यौ स्तोतारं बप्सती भक्षयन्त्यौ भूरि प्रभूतं काष्ठमरण्ये वर्तमानम् अत्तः भक्षयतः ॥

गुहा शिरो निहितमृधगक्षी असिन्वन्नत्ति जिह्वया वनानि ।
अत्राण्यस्मै पड्भिः सं भरन्त्युत्तानहस्ता नमसाधि विक्षु ॥ २ ॥

१. ग-स-भ१.२.४.६.८—यज्ञस्य सेवितारो ।

गुहा । शिरः । निऽहितम् । ऋधक् । अक्षी इति । असिन्वन् । अत्ति । जिह्वया । वनानि ।
अत्राणि । अस्मै । पड्ऽभिः । सम् । भरन्ति । उत्तानऽहस्ताः । नमसा । अधि । विक्षु ॥ २ ॥

अस्याग्नेः शिरः मूर्धा गुहा गुहायां निहितं मनुष्योदरेषु वर्तते । अस्य अक्षी अक्षिणी ऋधक् पृथङ्निहिते निहिते चन्द्रसूर्यात्मना । तावेवाक्षिणी इत्यर्थः । ईदृशो योऽग्निः असिन्वन् वल्लीरसंखादन् जिह्वया वनानि अत्ति काष्ठानि भक्षयति दाहभूतः अस्मै अग्नयेऽध्वर्य्वादयः पड्भिः पादैरभिगम्य अत्राणि[1] सं भरन्ति संपादयन्ति हवींषि । कथंभूताः । उत्तानहस्ताः पात्रधारणार्थमुत्तानकराः नमसा नमस्कारेण युक्ताः । कुत्र । अधि विक्षु प्रजास्वृत्विक्षु मध्ये ॥

प्र मातुः प्रतरं गुह्यमिच्छन् कुमारो न वीरुधः सर्पदुर्वीः ।
ससं न पक्वमविदच्छुचन्तं रिरिह्वांसं रिप उपस्थे अन्तः ॥ ३ ॥

प्र । मातुः । प्रऽतरम् । गुह्यम् । इच्छन् । कुमारः । न । वीरुधः । सर्पत् । उर्वीः ।
ससम् । न । पक्वम् । अविदत् । शुचन्तम् । रिरिह्वांसम् । रिपः । उपऽस्थे । अन्तरिति ॥ ३ ॥

अयमग्निः मातुः पृथिव्याः संबन्धिनीः उर्वीः बह्वीः वीरुधः लताः इच्छन् तथा प्रतरं प्रकृष्टतरं गुह्यं गोप्यं तासां वीरुधां मूलमपीच्छन् कामयमानः प्र सर्पत् प्रसर्पति प्रसरति । किमिव । कुमारो न कुमार इव । स यथा स्तन्यं पातुं जानुभ्यां सर्पति तद्वत् । ससं न पक्वं पक्वमन्नमिव शुचन्तं दीप्यमानं नीरसं वृक्षं रिपः पृथिव्याः उपस्थे अन्तः उत्सङ्गेऽन्तः अविदत् विन्दति । पुनः कीदृशम् । रिरिह्वांसम् आकाशमास्वादयन्तम् । यद्वा । मूलैर्मातरं पृथिवीं रिरिह्वांसम् ॥

तद्वामृतं रोदसी प्र ब्रवीमि जायमानो मातरा गर्भो अत्ति ।
नाहं देवस्य मर्त्यश्चिकेताग्निरङ्ग विचेताः स प्रचेताः ॥ ४ ॥

तत् । वाम् । ऋतम् । रोदसी इति । प्र । ब्रवीमि । जायमानः । मातरा । गर्भः । अत्ति ।
न । अहम् । देवस्य । मर्त्यः । चिकेत । अग्निः । अङ्ग । विऽचेताः । सः । प्रऽचेताः ॥ ४ ॥

हे रोदसी द्यावापृथिव्यौ वां युवां तत् ऋतं सत्यं प्र ब्रवीमि यदरणिभ्यां जायमानः उत्पन्नः गर्भः गर्भस्थानीयोऽग्निः मातरा अरणी अत्ति भक्षयति । देवस्य द्योतनादिगुणस्याग्नेः[2] वर्तनं मर्त्यः मनुष्यः अहं न चिकेत न जानामि । हे अङ्ग वैश्वानर अग्निः अरणिभ्यामुत्पन्नः विचेताः विविधज्ञानवान् स प्रचेताः[3] प्रकृष्टज्ञानः[4] । अतो न जानामीत्यर्थः । अथवाग्नेरन्यात्मानमेव संबोध्य ब्रवीमि । अग्निरेव विचेताः बहुधा जानाति स प्रचेताः[4] स एव जानाति । स्वमहिमानं नाहं स्तोतुं प्रभवामीत्यर्थः ॥

यो अस्मा अन्नं तृष्वा१दधात्याज्यैर्घृतैर्जुहोति पुष्यति ।
तस्मै सहस्रमक्षभिर्वि चक्षेऽग्ने विश्वतः प्रत्यङ्ङसि त्वम् ॥ ५ ॥

१. ग-त-म—' अत्राणि ' नास्ति । २. त१.२.३.६.७.८-म४.६.८-सु—द्योतमानादिगुणस्याग्नेः; त४.५—द्योतमानस्याग्नेः; म१.२ ७—दानादिगुणस्याग्नेः । ३. ग-त—प्रचेताः स एव । ४. म—' प्रकृष्टज्ञानः ... प्रचेताः ' नास्ति ।

यः । अस्मै । अन्नम् । तृषु । आऽदधाति । आज्यैः । घृतैः । जुहोति । पुष्यति ।
तस्मै । सहस्रम् । अक्षऽभिः । वि । चक्षे । अग्ने । विश्वतः । प्रत्यङ् । असि । त्वम् ॥ ५ ॥

यः यजमानः अस्मै अग्नये तृषु क्षिप्रम् अन्नम् आदधाति करोति आज्यैर्घृतैः क्षरद्रूपैः[1] दीप्तैर्वा सोमरसैः जुहोति पुष्यति पुष्णाति चैनं काष्ठैः तस्मै । तमित्यर्थः । तं सहस्रं सहस्रसंख्याकैः अक्षभिः अक्षिस्थानीयाभिरपरिमिताभिर्ज्वालाभिः वि चक्षे विचष्टे[2] विपश्यति[2] । अथ प्रत्यक्षकृतः । हे अग्ने त्वं विश्वतः सर्वतः प्रत्यङ्ङसि प्रत्यगञ्चनो भवसि । भक्तानुकूल्येन प्रवर्तमानो[3] भवसि ॥

किं देवेषु त्यज एनश्चकर्थाग्ने पृच्छामि नु त्वामविद्वान् ।
अक्रीळन् क्रीळन् हरिरत्तवेऽदन्वि पर्वशश्चकर्त गामिवासिः ॥ ६ ॥

किम् । देवेषु । त्यजः । एनः । चकर्थ । अग्ने । पृच्छामि । नु । त्वाम् । अविद्वान् ।
अक्रीळन् । क्रीळन् । हरिः । अत्तवे । अदन् ।
वि । पर्वऽशः । चकर्त । गाम्ऽइव । असिः ॥ ६ ॥

हे अग्ने त्वां नु क्षिप्रं देवेषु किं त्यजः क्रोधम् एनः पापं च[4] चकर्थ कृतवानसीति अविद्वान् अहं पृच्छामि । सावज्ञं हसन्तमपि पृच्छामि । किंच अक्रीळन् कश्चिद्देवोऽविहरन् क्रीळन् कश्चिद्देवो विनोदयन्लीलया दहन् हरिः हरितवर्णः सन् अत्तवे अत्तव्यम् अदन् भक्षकाष्ठादिकं पर्वशः संधौ संधौ वि चकर्त विविधं करोषि । गामिवासिः गां यथा असिः स्वधितिः पर्वशश्छिनत्ति तद्वत् ॥

विषूचो अश्वान्युयुजे वनेजा ऋजीतिभी रशनाभिर्गृभीतान् ।
चक्षदे मित्रो वसुभिः सुजातः समानृधे पर्वभिर्वावृधानः ॥ ७ ॥

विषूचः । अश्वान् । युयुजे । वनेऽजाः । ऋजीतिऽभिः । रशनाभिः । गृभीतान् ।
चक्षदे । मित्रः । वसुऽभिः । सुऽजातः । सम् । आनृधे । पर्वऽभिः । ववृधानः ॥ ७ ॥

अयमग्निः विषूचः विष्वगञ्चनान् अश्वान् व्यापकान् महतो वृक्षान् सर्वतो गन्तृनश्वानेव वा युयुजे युङ्क्ते वनेजाः वने प्रवृद्धः संपन्नः सन् । कीदृशानश्वान् । ऋजीतिभिः ऋजुगामिनीभिः रशनाभिः रशनास्थानीयाभिर्लताभिः गृभीतान्[5] परिगृहीतान् वेष्टितान् । साक्षादश्वपक्षे ऋजुगतिभिः[6] प्रसिद्धाभी रशनाभिर्गृभीतान् गृहीतान् स्वकीयानश्वान् शीघ्रवाहाय रथे योजितवानित्यर्थः । तादृशोऽग्निः चक्षदे चक्षाद्[7] व्यक्तीकरोति वसूनि मित्रः अस्माकं मित्रभूतः वसुभिः वासकैः रश्मिभिः सुजातः सुष्ठु प्रवृद्धः सन् । किंच समानृधे सम्यग्वर्धते पर्वभिः काष्ठखण्डैः वावृधानः वर्धमानः ॥ ॥ १४ ॥

---

१. त-म—अक्षरद्रूपैः । २. त१.२—विचक्षे विपश्यति; त३.६.८-भ६.८—विचष्टे विपश्यति; त४ ५—विचष्टे; भ१.२.४.७—विचष्टे पश्यति । ३. त२.३.६.७.८-भ४.६.८—प्रवर्तनो । ४. ग-त-भ—' च ' नास्ति । ५. त-भ -'गृभीतान्' नास्ति । ६. ग—ऋजुगत्रीभिः; त१.२.३-भ—ऋजुगतिर्नीभिः । ७. ग-त-भ—' चक्षाद् ' नास्ति ।

'अग्निः सप्तिम्' इति सप्तमं द्वादशर्चं सूक्तं सौचीकस्य वैश्वानरस्याग्नेरार्षं त्रैष्टुभमाग्नेयम्। 'अग्निः सप्तिम्' इत्यनुक्रान्तम्। प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

अ॒ग्निः सप्तिं॑ वाज॒भरं॑ ददात्य॒ग्निर्वी॒रं श्रुत्यं॑ कर्म॒निःष्ठाम्।
अ॒ग्नी रोद॑सी॒ वि च॑रत्सम॒ञ्जन्न॒ग्निर्नारीं॑ वी॒रकु॑क्षिं॒ पुरं॑धिम् ॥ १ ॥

अ॒ग्निः। सप्ति॑म्। वा॒ज॒म्ऽभ॒रम्। द॒दा॒ति॒। अ॒ग्निः। वी॒रम्। श्रुत्य॑म्। क॒र्म॒निःऽस्था॑म्।
अ॒ग्निः। रोद॑सी॒ इति॑। वि। च॒र॒त्। स॒म्ऽअ॒ञ्जन्।
अ॒ग्निः। नारी॑म्। वी॒रऽकु॑क्षिम्। पुर॑म्ऽधिम् ॥ १ ॥

अयम् अग्निः सप्तिं सर्पणस्वभावमश्वं वाजंभरं युद्धे शत्रून् जित्वान्नसंपादकं ददाति स्तोतृभ्यः। तथा अग्निर्वीरं वीर्यवन्तं पुत्रं श्रुत्यं पितृव्यपदेशकं कर्मनिःष्ठां यागेऽनन्यचित्तं ददाति। अग्नी रोदसी द्यावापृथिव्यौ समञ्जन् सम्यगञ्जयन् वि चरत् विविधं चरति। अयम् अग्निर्नारीं योषितं वीरकुक्षिं वीरप्रसवकुक्षिं पुरंधिं च करोति ॥

अ॒ग्नेरप्न॑सः स॒मिद॑स्तु भ॒द्राग्निर्म॒ही रोद॑सी॒ आ वि॑वेश।
अ॒ग्निरेकं॑ चोदयत्स॒मत्स्व॒ग्निर्वृ॒त्राणि॑ दयते पु॒रूणि॑ ॥ २ ॥

अ॒ग्नेः। अप्न॑सः। स॒म्ऽइत्। अ॒स्तु॒। भ॒द्रा। अ॒ग्निः। म॒ही इति॑। रोद॑सी॒ इति॑। आ। वि॒वे॒श॒।
अ॒ग्निः। एक॑म्। चो॒द॒य॒त्। स॒मत्ऽसु॑। अ॒ग्निः। वृ॒त्राणि॑। द॒य॒ते॒। पु॒रूणि॑ ॥ २ ॥

अप्नसः कर्मवतः अग्नेः समित् भद्रा अस्तु। अयम् अग्निः मही महत्यौ[1] रोदसी द्यावापृथिव्यौ आ विवेश आविष्टवान् स्वतेजसा। तथायम् अग्निरेकम् असहायमेव चोदयत् चोदयति प्रेरयति समत्सु संग्रामेषु[2]। युद्धे स्वभक्तं स्वयं सहायः सन् जयिनं करोतीत्यर्थः। तथा अग्निर्वृत्राणि पुरूणि बहून् शत्रून् दयते हन्ति ॥

अ॒ग्निर्ह॒ त्यं जर॑तः॒ कर्ण॑मावा॒ग्निर॒द्भ्यो निर॑दह॒ज्जरू॑थम्।
अ॒ग्निरत्रिं॑ घ॒र्म उ॑रुष्यद॒न्तर॒ग्निर्नृ॒मेधं॑ प्र॒जया॑सृज॒त्सम् ॥ ३ ॥

अ॒ग्निः। ह॒। त्यम्। जर॑तः। कर्ण॑म्। आ॒व॒। अ॒ग्निः। अ॒त्ऽभ्यः। निः। अ॒द॒ह॒त्। जरू॑थम्।
अ॒ग्निः। अत्रि॑म्। घ॒र्मे। उ॒रु॒ष्य॒त्। अ॒न्तः। अ॒ग्निः। नृ॒ऽमेध॑म्। प्र॒ऽजया॑। अ॒सृ॒ज॒त्। सम् ॥ ३ ॥

अग्निर्ह अयमग्निः खलु त्यं तं प्रसिद्धं जरतः कर्णं जरत्कर्णनामानमृषिम् आव ररक्ष। तथायम् अग्निः अद्भ्यः जरूथम् एतन्नामानमसुरम् निरदहत् निर्दग्धवान्। तथा अग्निरत्रिं महर्षिं घर्मे अन्तः कर्षीसेऽवस्थितम् उरुष्यत् ररक्ष। तथायम् अग्निर्नृमेधम् एतन्नामकमृषिं प्रजया पुत्रादिलक्षणया सम् असृजत् संयुयोज[3] ॥

अ॒ग्निर्दा॒द्द्रवि॑णं वी॒रपे॑शा अ॒ग्निरृषिं॒ यः स॒हस्रा॑ स॒नोति॑।
अ॒ग्निर्दि॒वि ह॒व्यमा त॑ताना॒ग्नेर्धामा॑नि॒ विभृ॑ता पुरु॒त्रा ॥ ४ ॥

१. ग-ल-भ-महत्यौ। २. ल१.२.३-भ-संग्रामे। ३. ग-समयोजयत्।

अग्निः । दात् । द्रविणम् । वीरऽपेशाः । अग्निः । ऋषिम् । यः । सहस्रा । सनोति ।
अग्निः । दिवि । हव्यम् । आ । ततान । अग्नेः । धामानि । विऽभृता । पुरुऽत्रा ॥ ४ ॥

अयम् अग्निः वीरपेशाः प्रेरकज्वालारूपः द्रविणं धनं दात् ददाति । तथा अग्निर्ऋषिं मन्त्रद्रष्टारं पुत्रं प्रयच्छतीति शेषः । ऋषिः[1] विशेष्यते । यः ऋषिः सहस्रा गवां सहस्राणि सनोति भजते दक्षिणात्वेन तमृषिं ददातीति । तथा अग्निः दिवि द्युलोके हव्यं यजमानैर्हुतम् आ ततान देवेषु विस्तारयति । तथा अग्नेर्धामानि शरीराणि विभृता विभृतानि संभृतानि पुरुत्रा बहुषु स्थानेष्वाहवनीयधिष्ण्यादिषु क्षित्यादिषु वा ॥

अग्निमुक्थैर्ऋषयो वि ह्वयन्तेऽग्निं नरो यामनि बाधितासः ।
अग्निं वयो अन्तरिक्षे पतन्तोऽग्निः सहस्रा परि याति गोनाम् ॥ ५ ॥

अग्निम् । उक्थैः । ऋषयः । वि । ह्वयन्ते । अग्निम् । नरः । यामनि । बाधितासः ।
अग्निम् । वयः । अन्तरिक्षे । पतन्तः । अग्निः । सहस्रा । परि । याति । गोनाम् ॥ ५ ॥

अग्निमुक्थैः शस्त्रैः ऋषयः पूर्वे वि ह्वयन्ते विविधमाह्वयन्ति यज्ञे स्तवीये । अग्निं नरः मनुष्याः यामनि संग्रामे । यातिर्वधकर्मसु पठितः । बाधितासः शत्रुभ्यो बाधिताः आह्वयन्ति जयार्थम् । तथा अग्निं वयः पक्षिणः अन्तरिक्षे पतन्तः पश्यन्ति रात्रिषु । 'तस्मादिमा वयांसि नक्तं नाध्यासते' ( तै. सं. ५. ६. ४. ४ ) इति ब्राह्मणम् । यद्वा हव्यभूतमग्निमन्तरिक्षगाः वयः पतन्ति । तथा अग्निः गोनां गवां सहस्रा सहस्राणि परि परितः याति गच्छति ॥

अग्निं विश ईळते मानुषीर्या अग्निं मनुषो नहुषो वि जाताः ।
अग्निर्गान्धर्वीं पथ्यामृतस्याग्नेर्गव्यूतिर्घृत आ निषत्ता ॥ ६ ॥

अग्निम् । विशः । ईळते । मानुषीः । याः । अग्निम् । मनुषः । नहुषः । वि । जाताः ।
अग्निः । गान्धर्वीम् । पथ्याम् । ऋतस्य । अग्नेः । गव्यूतिः । घृते । आ । निऽसत्ता ॥ ६ ॥

अग्निं विशः प्रजा ऋत्विग्यजमानलक्षणाः ईळते स्तुवन्ति । याः मानुषीः मानुष्यो मनुष्याज्जाताः ता ईळते । तथा अग्निं मनुषः मनुष्याः नहुषः राज्ञः सकाशात् जाताः प्रजा विविधं स्तुवन्तीति । अग्निर्गान्धर्वीम् । वाङ्नामैतत् । वाचं शृणोति । कीदृशीं गान्धर्वीम् । ऋतस्य यज्ञस्य पथ्यां पथि हिताम् । अग्नेः महात्मनः गव्यूतिः मार्गः घृते आज्ये[2] आ निषत्ता सर्वतो निषण्णो भवति ॥

अग्नये ब्रह्म ऋभवस्ततक्षुरग्निं महामवोचामा सुवृक्तिम् ।
अग्ने प्राव जरितारं यविष्ठाग्ने महि द्रविणमा यजस्व ॥ ७ ॥

अग्नये । ब्रह्म । ऋभवः । ततक्षुः । अग्निम् । महाम् । अवोचाम । सुऽवृक्तिम् ।
अग्ने । प्र । अव । जरितारम् । यविष्ठ । अग्ने । महि । द्रविणम् । आ । यजस्व ॥ ७ ॥

---

१. त४.५–ऊ ऋषिः ।   २. त-म—आज्येन ।

अग्नये इदं स्तोत्रम् ऋत्विजः मेधाविनः ततक्षुः अकुर्वन्। वयं च मही महान्तम् अग्निं प्रति सुवृक्तिं स्तुतिम् अवोचाम। हे यविष्ठ युवतम अग्ने जरितारं स्तोतारं प्राव प्ररक्ष। हे अग्ने महि महत् द्रविणं धनम् आ यजस्व प्रयच्छेत्यर्थः। अत्र प्रतिवाक्यमग्न्यभिधानं तस्य स्तुत्यत्वप्रदर्शनार्थम्॥ ॥ १५ ॥

'य इमा' इति सप्तर्चं त्रयोदशं सूक्तं भुवनपुत्रस्य विश्वकर्मण आर्षं त्रैष्टुभं विश्वकर्मदेवत्यम्। तथा चानुक्रान्तं—'य इमा विश्वकर्मा भौवनो वैश्वकर्मणं तु' इति। गतः सूक्तविनियोगः। अत्र वाजसनेयकं—'ब्रह्म वै स्वयंभु तपोऽतप्यत। तदैक्षत न वै तपस्यानन्त्यमस्ति हन्ताहं भूतेष्वात्मानं जुहवानि भूतानि चात्मनीति तत्सर्वेषु भूतेष्वात्मानं हुत्वा' (श. ब्रा. १३. ७. १) इत्यादि॥

य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीददिपता नः।

स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आ विवेश॥ १॥

यः। इमा। विश्वा। भुवनानि। जुह्वत्। ऋषिः। होता। नि। असीदत्। पिता। नः।

सः। आऽशिषा। द्रविणम्। इच्छमानः। प्रथमऽछत्। अवरान्। आ। विवेश॥ १॥

अत्र निरुक्तं—'विश्वकर्मा सर्वमेधे सर्वाणि भूतानि जुहवांचकार स आत्मानमप्यन्ततो जुहवांचकार। तदभिवादिन्येषर्ग्भवति य इमा विश्वा भुवनानि जुह्वदिति' (निरु. १०.२६) इति। यः विश्वकर्मैतन्नामकः ऋषिः भुवनपुत्रः होता होमनिष्पादकः सन् विश्वा सर्वाणि भुवनानि जुह्वत् होमं कुर्वन्। प्रथमं सर्वं जगज्जुह्वदित्यर्थः। पश्चादसौ न्यसीदत्। पिता जनकः। आत्मकृतेन कर्मणा देहोत्पत्तेः। न चैकस्य जन्यजनकभावो विरुध्यते तपोबलेन शरीरद्वयस्वीकारात्। 'स एकधा भवति' (छा. उ. ७. २६. २) इत्यादिश्रुतेः। सः ऋषिः आशिषा आशीःप्रतिपादकेन सूक्तवाकादिना द्रविणं धनं स्वर्गाख्यम् इच्छमानः कामयमानः प्रथमच्छत् प्रथमसर्वभुवनाच्छादयिता अवरान् निकृष्टान् भूतान् स्वात्मनाहुतान् आ विवेश आविष्टवान्। अग्निमित्युक्तार्थ एव पुनर्विशेषेणोक्तः। एवमुक्तस्याधियज्ञपरतया योज्यम्। अथाध्यात्मपरतयोच्यते। यो विश्वकर्मा परमेश्वर इमा विश्वा भुवनानि जुह्वत् प्रलयकाले पृथिव्यादीनिमान् सप्त लोकान् स्वात्मन्याहुतिप्रक्षेपवत्संहरन् परितोऽवस्थितः ऋषिः द्रष्टा सर्वज्ञो होता संहाररूपस्य होमस्य कर्ता सोऽस्माकं पिता जनको न्यसीदत् स्वयं स्थितवान्। अयमर्थः। प्रलयकाले प्राप्ते सति सर्वाँल्लोकान् संहृत्यास्माकमपि संहर्ता पुनः स्रष्टा च सन् सर्वज्ञो यः परमेश्वरः स्वयमेक एवासीत्। तथा हि श्रुतयः—'आत्मा वा इदमेक एवाग्र आसीत्' (ऐ. आ. २. ४. १) 'सदेव सोम्येदमग्र आसीत्' (छा. उ. ६. २. १) इत्यादिकाः। स तादृशः परमेश्वर आशिषा 'बहु स्यां प्रजायेय' इत्येवरूपया पुनःपुनः सिसृक्षया द्रविणमिच्छमानः धनोपलक्षितं जगद्भोगमाकाङ्क्षमाणः प्रथमच्छत् प्रथमं मुख्यं निष्प्रपञ्चं पारमार्थिकं रूपमावृण्वन् अवरान् स्वसृष्टान् प्राणिहृदयप्रदेशान् आ विवेश आविष्टवान् जीवरूपेण। तथा च श्रूयते—'सोऽकामयत बहु स्यां प्रजायेयेति स तपोऽतप्यत स तपस्तप्त्वेदं सर्वमसृजत यदिदं किंच तत्सृष्ट्वा तदेवानुप्राविशत्' (तै. आ. ८. ६) इति। एवमन्या अप्युपनिषद उदाहार्याः॥

वैश्वदेवस्य पशोर्वपाया अनुवाक्या 'किं स्वित्' इत्येषा। सूत्रितं च—'किं स्विदासीदधिष्ठानं यो नः पिता जनिता' (आश्व. श्रौ. ३. ८) इति॥

१. त-भ-अन्वा। २. त-विभक्ता। ३. त१,२,३ भ५,७-प्रथमकाले। ४. ग-त४,५,६,७-बहु।

किं स्विदासीदधिष्ठानमारम्भणं कतमत्स्वित्कथासीत् ।
यतो भूमिं जनयन्विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः ॥ २ ॥

किम् । स्वित् । आसीत् । अधिऽस्थानम् । आऽरम्भणम् । कतमत् । स्वित् । कथा । आसीत् ।
यतः । भूमिम् । जनयन् । विश्वऽकर्मा । वि । द्याम् । और्णोत् । महिना । विश्वऽचक्षाः ॥ २ ॥

पूर्वमन्त्रे जगत्प्रलयकाले संहृत्य पश्चात्सिसृक्षायां सर्वं सृष्ट्वा तत्र प्रविष्ट इत्युक्तम् । अत्र तस्य द्वितीयस्याधिष्ठानजगदुपादानकारणयोरसंभवात्सृष्टिरनुपपन्नेत्याक्षिपति । लोके हि घटं चिकीर्षुः कुलालो गृहादिकं किंचित्स्थानमधिष्ठाय मृद्रूपेणारम्भद्रव्येण[1] चक्रादिभिरुपकरणैर्घटं निष्पादयति । तद्वदीश्वरस्य जगदात्मकद्यावापृथिव्योरुत्पादनवेलायाम् अधिष्ठानं किं स्विदासीत् किं नामाभूत् । न किंचिदित्यर्थः । तथा तयोः आरम्भणं कतमत्स्वित्[2] । आरभ्यतेऽनेनेत्यारम्भणमुपादानकारणम् । तदपि कतमत्स्यात् । तदपि नेत्यर्थः । यद्यपि संभवेदारम्भणं[3] कथासीत् कथमभूत् । किं रूपं सदस्य भवेदित्यर्थः । उभयमपि नोपपद्यते । सर्वस्याद्वैतत्वादसत्त्वात् । असत्त्वेन मृदात्मकयोर्द्यावापृथिव्योरुपादानानर्हत्वात् 'नान्यत्किंचन मिषत्' ( ऐ. आ. २. ४. १ ) इति श्रुतेश्चेत्यभिप्रायः । यतः यस्मादधिष्ठानादारम्भणाच्च विश्वचक्षाः[4] सर्वद्रष्टा विश्वकर्मा परमेश्वरः भूमिं जनयन् वर्तते तथा द्यां दिवं वि और्णोत् व्यवृणोत् सृष्टवान् महिना स्वमहत्त्वेन[5] । किं स्विदासीदिति[5] ॥

विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ।
सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन्देव एकः ॥ ३ ॥

विश्वतःऽचक्षुः । उत । विश्वतःऽमुखः । विश्वतःऽबाहुः । उत । विश्वतःऽपात् ।
सम् । बाहुऽभ्याम् । धमति । सम् । पतत्रैः । द्यावाभूमी इति । जनयन् । देवः । एकः ॥ ३ ॥

अनया सर्वात्मकत्वेन कुलालादिविलक्षणत्वादधिष्ठानाद्यभावेऽपि स्रष्टुं शक्नोतीत्याह । विश्वतश्चक्षुः सर्वतो व्याप्तचक्षुः । उत अपि च विश्वतोमुखः । तथा[6] विश्वतोबाहुः । उत अपि च विश्वतस्पात् । स एवंविधः परमेश्वरः स्वस्मिंस्त्रैलोक्यमुत्पादयतीत्यर्थः । कथमिति उच्यते । बाहुभ्यां दिवं सं धमति । धमतिर्गतिकर्मा । सम्यक्प्रेरयति । तथा पतत्रैः गमनशीलैः पादैः पृथिवीं सं धमतीति । उभयोरेव श्रवणं प्राधान्याभिप्रायम् । एवं द्यावाभूमी[7] जनयन् दिवं च पृथिवीं चोत्पादयन् देवः द्योतमानः स्वयंप्रकाशः परमेश्वरः एकः असहाय एव वर्तते ॥

किं स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद्भुवनानि धारयन् ॥ ४ ॥

किम् । स्वित् । वनम् । कः । ऊँ इति । सः । वृक्षः । आस ।
यतः । द्यावापृथिवी इति । निःऽततक्षुः । मनीषिणः । मनसा । पृच्छत । इत् । ऊँ इति । तत् ।
यत् । अधिऽअतिष्ठत् । भुवनानि । धारयन् ॥ ४ ॥

१. ग-त—°मारम्भद्रव्येण । २. ग-त-म२.६—कतमस्विदासीत् । ३. ग-त-म२.६.८—संभवदा-रम्भणं । ४. ग-त-म—भूमिं विश्वचक्षाः । ५. म७—स्वमहत्त्वेन स्वरूपेण किं पदार्थ रूपोऽभूदिति प्रश्नार्थः । न किंचिदासीदिति । ६. ग-त१.२.३.६.७.८-म—स तथा । ७. ग-त६.८—द्यावापृथिवी; त-म२.४.५—द्यां पृथिवीं, म७—द्यावापृथिवी ।

पूर्वस्याप्युत्तरं तदेव भूम्यादिकारणमिति । तदेवानया प्रश्नकथनव्याजेनोच्यते । लोके हि प्रौढं प्रासादं निर्मिमाणः कस्मिंश्चित्प्रौढे वने कंचित्[1] महान्तं वृक्षं छित्त्वा[2] तक्षणादिना स्तम्भादिकं संपादयति । इह तु परमेश्वरप्रेरिता जगत्स्रष्टारः यतः यस्माद्वनाद्यं वृक्षमाश्रित्य द्यावापृथिवी निष्टतक्षुः तक्षणेन द्यावापृथिव्यौ निष्पादितवन्तः तत् वनं किं स्वित् किं नाम स्यात् । तथा क उ स वृक्ष आस कस्तादृशो महान् वृक्षोऽभूत् । हे मनीषिणः मननशीला ईश्वराः तदुभयं मनसा जिज्ञासायुक्तेन पृच्छतेदु पृच्छतैव । किंच ईश्वरः भुवनानि धारयन् यत् स्थानम् अध्यतिष्ठत् तत् अपि पृच्छत । एतस्य सर्वस्याप्युत्तरं 'ब्रह्म[3] स वृक्ष आसीत्' इत्यादिकमुत्तरम् ॥

साकमेधेषु वैश्वकर्मण एककपालस्य 'या ते धामानि' इत्येषा याज्या । सूत्रितं च—'विश्वकर्मन् हविषा वावृधानो या ते धामानि परमाणि यावमा' (आश्व. श्रौ. २. १८) इति । पूर्वोक्तस्य पशोर्हविष एषैव याज्या । सूत्रितं च—'या ते धामानि परमाणि यावमा य इमे द्यावापृथिवी जनित्री' (आश्व. श्रौ. ३. ८) इति ॥

या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमा ।
शिक्षा सखिभ्यो हविषि स्वधावः स्वयं यजस्व तन्वं वृधानः ॥ ५ ॥

या । ते । धामानि । परमाणि । या । अवमा । या । मध्यमा । विश्वऽकर्मन् । उत । इमा ।
शिक्ष । सखिऽभ्यः । हविषि । स्वधाऽवः । स्वयम् । यजस्व । तन्वम् । वृधानः ॥ ५ ॥

अनया भौवनो विश्वकर्मा जगत्कारणं विश्वकर्मदेवं स्तौति । हे विश्वकर्मन् या यानि ते तव परमाणि धामानि शरीराणि सन्ति या यानि च मध्यमा मध्यमानि शरीराणि सन्ति उत अपि च या यानि अवमा अवमानि शरीराणि सन्ति इमानि च तानीमानि सर्वाणि शरीराणि सखिभ्यः अस्मभ्यं यष्टुं हविषि मयि हविर्भूते सति शिक्ष देहि । हे स्वधावः हविर्लक्षणान्नवन् स्वयम् एव त्वं तन्वं स्वकीयं पूर्वोक्तं त्रिविधं शरीरं वृधानः हविषा वर्धमानः सन् । अनेन धामत्रैविध्योपन्यासेनोत्कृष्टभूतानि देवादिशरीराणि मध्यमभूतानि मनुष्यादिशरीराणि निकृष्टभूतानि कृमिकीटादिशरीराणि च परिगृहीतानि । किं बहुना सर्वं जगदुपात्तं भवति । उक्तव्यतिरेकेण निरवयवस्य परमेश्वरस्य विग्रहाभावात् 'तदैक्षत बहु स्यां प्रजायेय' (छा. उ. ६. २. ३) इत्यादिश्रुतिभ्यः परमेश्वरस्यैव देवादिभेदेन बहुभावावगमात् ॥

तस्मिन्नेव वैश्वकर्मणपशौ वपापुरोडाशयोः 'विश्वकर्मन् हविषा' इति क्रमेण[4] द्वे[4] अनुवाक्ये । सूत्रितं च—'विश्वकर्मन् हविषा वावृधान इति द्वे विश्वकर्मा विमना आद्विहायाः' (आश्व. श्रौ. ३.८) इति । साकमेधेषु वैश्वकर्मणस्य 'विश्वकर्मन् हविषा' इत्येषैवानुवाक्या । सूत्रं तु पूर्वमुदाहृतम् ॥

विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् ।
मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥ ६ ॥

विश्वऽकर्मन् । हविषा । ववृधानः । स्वयम् । यजस्व । पृथिवीम् । उत । द्याम् ।
मुह्यन्तु । अन्ये । अभितः । जनासः । इह । अस्माकम् । मघऽवा । सूरिः । अस्तु ॥ ६ ॥

हे विश्वकर्मन् विश्वविषयकर्मोपेतात्मक परमेश्वर हविषा हविर्भूतेन मया विश्वकर्मणा मया दत्तेन वा हविषा वावृधानः वर्धमानः । 'विश्वकर्मा सर्वाणि भूतानि जुहवांचकार स आत्मा-

१. ग–किंचित् । २. ग–छित्त्वा । ३. ग-ङ-अ२.५.६–ब्रह्मवनं ब्रह्म । ४. ग-ङ–द्वे क्रमेण ।

समभ्यनक्तो सुहवोचकार’ इति हि निरुक्तं पूर्वमुदाहृतम्। स्वयम् एव पृथिवीम् उत अपि च द्यां दिवं च स्वसृष्टे द्यावापृथिव्यौ स्वयं यज्ञः सन् यजस्व पूजय। अन्ये सपत्नोऽन्ये अभितः जनाः यष्टारोऽस्मद्यागविरोधिनो वा मुह्यन्तु मुग्धा भवन्तु अभितः सर्वतः। अथ परोक्षकृतः। इह अस्मिन्यागे अस्माकं मघवा अस्मत्प्रत्तेन हविर्लक्षणेन धनेन धनवान् सः सूरिः स्वर्गादिफलस्य प्रेरकः अस्तु भवतु। अत्र ‘विश्वकर्मन् हविषा वर्धमानः’ (निरु. १०. २७) इत्यादि निरुक्तमनुसंधेयम्॥

वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्या हुवेम।
स नो विश्वानि हवनानि जोषद्विश्वशंभूरवसे साधुकर्मा॥७॥

वाचः। पतिम्। विश्वऽकर्माणम्। ऊतये। मनःऽजुवम्। वाजे। अद्य। हुवेम।
सः। नः। विश्वानि। हवनानि। जोषत्। विश्वऽशंभूः। अवसे। साधुऽकर्मा॥७॥

वाचस्पतिं मन्त्रात्मकस्य वचसः स्वामिनं विश्वकर्माणं विश्वकर्तारं मनोजुवं मनोवेगगमनं देवं वाजे यज्ञे अद्य अस्मिन्दिने ऊतये तर्पणाय हुवेम आह्वयाम। सः देवः नः अस्माकं विश्वानि सर्वाणि हवनानि जोषत् सेवताम्। किमर्थम्। अवसे अस्माकं रक्षणाय। स विशेष्यते। विश्वशंभूः विश्वस्य सुखस्योत्पादकः साधुकर्मा च॥ ॥१६॥

‘चक्षुषः’ इति सप्तर्चं चतुर्दशं सूक्तम्। ऋष्याद्याः पूर्ववत्। ‘चक्षुषः’ इत्यनुक्रान्तम्। गतः सूक्तविनियोगः॥

चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नम्नमाने।
यदेदन्ता अददृहन्त पूर्व आदिद्द्यावापृथिवी अप्रथेताम्॥१॥

चक्षुषः। पिता। मनसा। हि। धीरः। घृतम्। एने इति। अजनत्। नम्नमाने इति।
यदा। इत्। अन्ताः। अददृहन्त। पूर्वे। आत्। इत्। द्यावापृथिवी इति। अप्रथेताम्॥१॥

चक्षुषः चक्षुरुपलक्षितस्येन्द्रियसंघात्मकस्य शरीरस्य पिता उत्पादयिता। यद्वा। चक्षुः प्रकाशकं तेजः। तस्योत्पादयिता। मनसा न हि मत्समोऽस्ति कश्चिदिति बुद्ध्या हि[1] खलु धीरः धृष्टो विश्वकर्मा प्रथमं घृतम् उदकम् अजनत् अजनयत्। ‘आपो वा इदमग्रे’ (तै. सं. ७. १. ५. १) ‘अप एव ससर्जादौ’ (मनु. १. ८) इत्यादिश्रुतिस्मृती स्याताम्। पश्चात् एने द्यावापृथिव्यौ नम्नमाने तस्मिन्नुदके इतस्ततश्चलन्त्यौ योऽजनयत्[2]। अथ यदेत् यदैव अन्ताः पर्यन्तप्रदेशाः पूर्वे पुराणा द्यावापृथिव्योः संबन्धिनः अददृहन्त दृढा अभवन्। विश्वकर्मणा दृढाः संपादिता इत्यर्थः। आदित् अनन्तरमेव द्यावापृथिवी द्यावापृथिव्यौ अप्रथेतां यथाकामं प्रथिते अभूताम्॥

वैश्वकर्मणस्य पशोर्हविष एषानुवाक्या। ‘विश्वकर्मा विमना आद्विहायाः किं स्विदासीदधिष्ठानम्’ (आश्व. श्रौ. ३. ८) इति सूत्रितम्॥

विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत संदृक्।
तेषामिष्टानि समिषा मदन्ति यत्रा सप्तऋषीन्पर एकमाहुः॥२॥

---

१. ख-अ–‘ हि ’ नास्ति। २. ग-ख-मध–यौ या अजनत् अजनयत्; मध.७.८–यौ या अजनयत्।

विश्वऽकर्मा । विऽमनाः । आत् । विऽहायाः । धाता । विऽधाता । परमा । उत । सम्ऽदृक् ।
तेषाम् । इष्टानि । सम् । इषा । मदन्ति । यत्र । सप्तऽऋषीन् । परः । एकम् । आहुः ॥ २ ॥

अयं मन्त्रोऽधियज्ञाध्यात्मयोर्भेदेन द्विधा व्याख्येयः । तत्र प्रथमं दैवतमधिकृत्योच्यते । विश्वकर्मा बहुविधप्रकाशवृष्टिप्रदानादिकर्मणां कर्तादित्यः स च विमनाः विभूतमनाः । आत् इत्यनर्थकः सर्वत इत्यर्थे वा । विहायाः विविधमाता । महानित्यर्थः । धाता वृष्ट्यादिकर्ता च विधाता जगतः कर्ता च परमा परमः संदृक् संद्रष्टा च भूतानाम् । तेषां सप्तर्षीणाम्[1] । ज्योतिषां रश्मीनामित्यर्थः । परमपदे वक्ष्यमाणत्वात्[2] । इष्टानि स्थानानि शरीराणि वा इषा उदकेन सं मदन्ति संमोदन्ते यत्र यस्मिन्नादित्ये तं देवं सप्तर्षीन् । सप्तर्षिभ्य इत्यर्थः । तेभ्यः परः परस्तात् एकम् एव आदित्यम् आहुः मन्त्रविदः । अध्यात्मपक्ष उच्यते । विश्वकर्मा च परमात्मा प्राणप्रकाशाभ्यामुपेतः सन् बहुकर्मा भवति । स च विमना विभूतमना विहाया वस्तुतो महान् विशेषेण सुकृतदुष्कृतफलस्याधाता धाता विधाता च परमोत संदृक् परमश्च सद्रष्टेन्द्रियाणाम् । तेषां सप्तर्षीणां चक्षुरादीनामिन्द्रियाणामिष्टानि स्वरूपाण्यन्नेन सह सं मदन्ति संमोदन्ते यत्र यस्मिन्नात्मनि तमात्मानं सप्तर्षीन् सप्तसंख्याकेभ्यः सर्पणस्वभावेभ्यो वा परः परस्ताद्वर्तमानमिन्द्रियाद्यतीतमेकं परमात्मानमाहुस्तत्त्वविदः । अत्र 'विश्वकर्मा विभूतमना व्याप्ता' ( निरु. १०. २६ ) इत्यादि निरुक्तमनुसंधेयम् ॥

पूर्वोक्त एव पशौ पुरोडाशस्य 'यो नः पिता' इत्येषा याज्या । सूत्रितं च—'यो नः पिता जनिता यो विधाता या ते धामानि परमाणि यावमा' ( आश्व. श्रौ. ३. ८ ) इति ॥

यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा ।
यो देवानां नामधा एक एव तं संप्रश्नं भुवना यन्त्यन्या ॥ ३ ॥

यः । नः । पिता । जनिता । यः । विऽधाता । धामानि । वेद । भुवनानि । विश्वा ।
यः । देवानाम् । नामऽधाः । एकः । एव । तम् । सम्ऽप्रश्नम् । भुवना । यन्ति । अन्या ॥ ३ ॥

यः विश्वकर्मा नः अस्माकं पिता पालयिता । न केवलं पालकः किंतु जनिता उत्पादकः । किमनेनास्माकमुत्पादक इति संकोचेन । यो विधाता सर्वस्य जगत उत्पादको यो विश्वकर्मा नोऽस्माकमुत्पन्नानि धामानि देवानां तेजःस्थानानि वेद वेत्ति । किं बहुना । विश्वा विश्वानि भुवना भूतजातानि तेन वेत्ति । यः च देवानाम् अग्निवाय्वादीनां नामधाः नाम्नां धाता इन्द्रादीन्निर्माय तेषामिन्द्रादि नाम कृत्वा तत्तत्पदेषु स्थापयिता एक एव । तं देवम् अन्या अन्यानि भुवना भूतजातानि संप्रश्नं कः परमेश्वर इति पृच्छन्तो यन्ति प्राप्नुवन्ति ॥

त आयजन्त द्रविणं समस्मा ऋषयः पूर्वे जरितारो न भूना ।
असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि ॥ ४ ॥

ते । आ । अयजन्त । द्रविणम् । सम् । अस्मै । ऋषयः । पूर्वे । जरितारः । न । भूना ।
असूर्ते । सूर्ते । रजसि । निऽसत्ते । ये । भूतानि । सम्ऽअकृण्वन् । इमानि ॥ ४ ॥

1. त–सप्तर्षीणां सप्तप्राणां । 2. ग४-त-म२.४.८–व्याचक्षमाणत्वात्; म७–व्याख्यानत्वात् ।

ते पूर्वे ऋषयः अस्मै विश्वकर्मणे द्रविणं चरुपुरोडाशादिलक्षणं[1] धनं सं सम्यक् आयजन्त सर्वतो यजन्ते। जरितारो न भूना स्तोतारो यथा भूम्ना महता स्तोत्रेण[2] यजन्ति तद्वत्। ये महर्षयः असूर्ते सरणवर्जिते सूर्ते सरणसहिते स्थावरजङ्गमात्मके रजसि लोके निषत्ते निषण्णे निश्चलमवस्थिते भूतानि भूतानि भुवनानि। प्राणिन इत्यर्थः। समकृण्वन् सम्यग्धारितान्यकुर्वन्। अथवायमर्थः। ये स्थावरजङ्गमात्मके जगति वर्तमानानेतान् प्राणिनस्तेजसा समकृण्वन् ते[3] पूर्वे ऋषयो द्रष्टारो रश्मयोऽस्मा आदित्यात्मकाय विश्वकर्मणे द्रविणं तेज आयजन्त ॥

**परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति ।**
**कं स्विद्गर्भं प्रथमं दध्र आपो यत्र देवाः समपश्यन्त विश्वे ॥ ५ ॥**

परः । दिवा । परः । एना । पृथिव्या । परः । देवेभिः । असुरैः । यत् । अस्ति ।
कम् । स्वित् । गर्भम् । प्रथमम् । दध्रे । आपः । यत्र । देवाः । सम्ऽअपश्यन्त । विश्वे ॥५॥

यद्वाक्षरतत्त्वं दिवा परः द्युलोकादपि परस्ताद्वर्तमानं तथा एना अस्याः पृथिव्याः परः परस्ताद्वर्तमानं तथा देवेभिः देवैः[4] परस्ताद्वर्तमानम् असुरैः परस्ताद्वर्तमानं[4] च यदस्ति तद्गुहायामवस्थितं कं स्विद्गर्भं गर्भवत्सर्वस्य ग्राहकं तत्त्वम् आपः प्रथमं दध्रे धृतवत्यः। यत्र यस्मिन् गर्भे देवाः इन्द्रादयः विश्वे सर्वेऽपि समपश्यन्त संगताः परस्परं पश्यन्ति। एवं जानन्नेव कश्चित्तत्त्वविन्प्रश्नं करोति ॥

**तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे ।**
**अजस्य नाभावध्येकमर्पितं यस्मिन्विश्वानि भुवनानि तस्थुः ॥ ६ ॥**

तम् । इत् । गर्भम् । प्रथमम् । दध्रे । आपः । यत्र । देवाः । सम्ऽअगच्छन्त । विश्वे ।
अजस्य । नाभौ । अधि । एकम् । अर्पितम् । यस्मिन् । विश्वानि । भुवनानि । तस्थुः ॥ ६ ॥

अनया पूर्वमन्त्रोक्तस्य प्रश्नस्योत्तरमभिधीयते। तमित् तमेव विश्वकर्माणं गर्भं गर्भस्थानीयं प्रथमम् इतरसृष्टेः पूर्वम् आपः दध्रे धृतवत्यः। यत्र गर्भे विश्वे सर्वे देवाः इन्द्रादयः समगच्छन्त[5] संगता भवन्ति। तस्य अजस्य नाभौ अधि नाभौ। अधीति सप्तम्यर्थानुवादी। एकमर्पितम् इत्यण्डाभिप्रायेणोक्तम्। अण्डं हि प्राक्सर्गान्नाभिस्थाने तिष्ठति। यस्मिन् अण्डे विश्वानि भुवनानि सर्वाणि भूतजातानि तस्थुः तिष्ठन्ति। अथवा। अजस्य जन्मरहितस्य ब्रह्मणः स्वसृष्टे जले शयानस्य नाभौ सर्वजगद्धेतुके उदके एकं ब्रह्माण्डमर्पितं स्थापितम्। सिद्धं समानम्। अथास्मिन्नर्थे स्मृतिः—'अप एव ससर्जादौ तासु वीर्यमवाकिरत्। तदण्डमभवद्धैमं सूर्यकोटिसमप्रभम्' ( मनु. १.८-९ ) इति ॥

**न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव ।**
**नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥ ७ ॥**

न । तम् । विदाथ । यः । इमा । जजान । अन्यत् । युष्माकम् । अन्तरम् । बभूव ।
नीहारेण । प्रऽआवृताः । जल्प्या । च । असुऽतृपः । उक्थऽशासः । चरन्ति ॥ ७ ॥

---

१. गश-त-भ१.८—चरुपुरोडाशा° । २. त-भ—स्तोत्रेण यथा । ३. त-भ—'ते' नास्ति । ४. त-भ—देवैरसुरैश्च अपरः परस्ताद्वर्तमानं । ५. त-भ—समगच्छति ।

हे नराः तं विश्वकर्माणं न विदाथ न जानीथ य इमा इमानि भूतानि जजान उत्पादितवान्। देवदत्तोऽहं यज्ञदत्तोऽहमिति व्यवह्रियमाणं विश्वकर्माणं जानीम इति यद्युच्येत तदसत् न अहंप्रत्ययगम्यं जीवरूपं विश्वकर्मणः परमेश्वरस्य तत्त्वं किंतु युष्माकम् अहंप्रत्ययगम्यानां जीवानाम् अन्तरम् अन्यत् अहंप्रत्ययगम्याद्व्यतिरिक्तं सर्वकारणं ब्रह्माख्यं परमेश्वरतत्त्वं बभूव भवति विद्यते। जीवरूपं तत्त्वमपि कुतो न विद्म इति चेत् श्रूयताम्। नीहारेण प्रावृताः यूयं नीहारसदृशेनाज्ञानेनाच्छन्नाः अतो न जानीथ। यथा नीहारो नात्यन्तमसन् दृष्टेरावरकत्वात् नाप्यत्यन्तं सत् काष्ठपाषाणादिरूपान्तरेण संबन्धुमयोग्यत्वात् एवमज्ञानमपि नात्यन्तमसदीश्वरतत्त्वावरकत्वात् नापि सत् बोधमात्रनिवर्त्यत्वात्। ईदृशेनाज्ञानेन भवन्तः सर्वे जीवाः प्रावृताः। न केवलं प्रावृतत्वं किंतु जल्प्या च देवोऽहं मनुष्योऽहमित्याद्यनृतजल्पनेन प्रावृताः। किंच असुतृपः केनाप्युपायेन असून् प्राणांस्तृप्यन्तः। उदरंभरा इत्यर्थः। न तु पारमेश्वरं तत्त्वं विचारितवन्तः। न केवलमिहलोकभोगमात्रतृप्ताः उक्थशासः नानाविधेषु यज्ञेषु उक्थं प्रउगनिष्केवल्यादिकं शंसन्तः चरन्ति पृथिव्यां वर्तन्ते। केवलमैहिकामुष्मिकभोगपरा वर्तध्वेऽतो विश्वकर्माणं देवं न जानीथेत्यर्थः॥ ॥ १७ ॥

‘यस्ते मन्यो’ इति सप्तर्चं पञ्चदशं सूक्तम्। मन्युर्नाम तपसः पुत्र ऋषिः। आद्या जगती शिष्टास्त्रिष्टुभः। इदमुत्तरं च मन्युदेवत्यम्। तथा चानुक्रान्तं—‘यस्ते मन्यो मन्युस्तापसो मान्यवं तु जगत्यादि’ इति। आभिचारिकेऽभिचारसाधने यज्ञ एतत्सूक्तं विनियुक्तम्। सूत्रितं च—‘त्वया मन्यो यस्ते मन्यो’ ( आश्व. श्रौ. ९. ७ ) इति॥

यस्ते॑ म॒न्योऽवि॑धद्वज्र सायक॒ सह॒ ओजः॑ पुष्यति॒ विश्व॑मानु॒षक्।
सा॒ह्याम॒ दास॒मार्यं॒ त्वया॑ यु॒जा सह॑स्कृतेन॒ सह॑सा॒ सह॑स्वता॥ १ ॥

यः। ते॒। म॒न्यो॒ इति॑। अवि॑धत्। व॒ज्र॒। सा॒य॒क॒। सहः॑। ओजः॑। पु॒ष्य॒ति॒। विश्व॑म्। आ॒नु॒षक्। स॒ह्याम॑। दास॑म्। आर्य॑म्। त्वया॑। यु॒जा। सहः॑ऽकृतेन। सह॑सा। सह॑स्वता॥ १ ॥

हे मन्यो क्रोधाभिमानिन् देव। ‘मन्युर्मन्यतेर्दीप्तिकर्मणः क्रोधकर्मणो वधकर्मणो वा’ ( निरु. १०. २९ ) इति निरुक्तम्। यः यजमानः ते तुभ्यम् अविधत् परिचरति हे वज्र वज्रवत्सारभूत सायक सायकवच्छत्रूणां हिंसक स मनुष्यः सहः बलं बाह्यम् ओजः शारीरं बलं च आनुषक् आनुषक्तं पुष्यति त्वदनुग्रहात्संग्रामे। वयमपीदृशास्त्वत्प्रसादात् दासम् उपक्षयकर्तारम् आर्यम् अस्मत्तोऽधिकं पोषयितारं शत्रुं साह्याम अभिभवेम। केन साधनेनेति तदुच्यते। त्वया युजा त्वया सहायेन। सहायो विशेष्यते। सहस्कृतेन बलोत्पादितेन सहसा सहमानेन परान् सहस्वता बलवता। ईदृशेन त्वया[1] सहायेनेत्यर्थः[2]॥

म॒न्युरिन्द्रो॑ म॒न्युरे॒वास॑ दे॒वो म॒न्युर्होता॒ वरु॑णो जा॒तवे॑दाः।
म॒न्युं विश॑ ईळते॒ मानु॑षी॒र्याः पा॒हि नो॑ मन्यो॒ तप॑सा स॒जोषाः॑॥ २ ॥

म॒न्युः। इन्द्रः॑। म॒न्युः। ए॒व। आ॒स॒। दे॒वः। म॒न्युः। होता॑। वरु॑णः। जा॒तऽवे॑दाः। म॒न्युम्। विशः॑। ई॒ळ॒ते॒। मानु॑षीः। याः। पा॒हि। नः॒। म॒न्यो॒ इति॑। तप॑सा। स॒ऽजोषाः॑॥२॥

अयं मन्युरिन्द्रः मन्युरेव देवः सर्वोऽपि मन्युरेव आस अभवत्। मन्युः एव होता होमनिष्पादकोऽग्निः। तथा मन्युः वरुणः अपि जातवेदाः जातप्रज्ञो वरुणः। सर्वेष्वपि तेजस्विषु

१. मं४-स-म२.६—महता त्वया; म१.४.८—सता त्वया। २. ग-स-म२.६—सहायेनाभिभवेमेत्यर्थः।

मन्युसद्भावात्। याः मानुषीः मनुष्योऽपत्यभूताः विशः प्रजाः सन्ति ताः मन्युमेव देवम् ईळते स्तुवन्ति। हे मन्यो तपसा एतन्नामकेनास्मत्पित्रा सजोषाः समानप्रीतिस्त्वं पाहि रक्ष॥

अभीहि मन्यो तवसस्तवीयान् तपसा युजा वि जहि शत्रून्।
अमित्रहा वृत्रहा दस्युहा च विश्वा वसून्या भरा त्वं नः॥ ३॥

अभि। इहि। मन्यो इति। तवसः। तवीयान्। तपसा। युजा। वि। जहि। शत्रून्।
अमित्रऽहा। वृत्रऽहा। दस्युऽहा। च। विश्वा। वसूनि। आ। भर। त्वम्। नः॥ ३॥

हे मन्यो त्वम् अभीहि अभिगच्छास्मच्छत्रून्। कीदृशस्त्वम्। तवसः बलवतोऽपि तवीयान् अत्यन्तं बलवान्। स त्वं तपसा अस्मत्पित्रा युजा सहायेन शत्रून् वि जहि। किंच अमित्रहा अमित्राणां हन्ता। अमित्रोऽस्निग्धः। तथा वृत्रहा आवरकाणां शत्रूणां हन्ता तथा दस्युहा च। दस्युरुपक्षयकारी शत्रुः। तादृश मन्युदेव त्वं विश्वा सर्वाणि वसूनि धनानि नः अस्मभ्यम् आ भर आहर॥

त्वं हि मन्यो अभिभूत्योजाः स्वयंभूर्भामो अभिमातिषाहः।
विश्वचर्षणिः सहुरिः सहावानस्मास्वोजः पृतनासु धेहि॥ ४॥

त्वम्। हि। मन्यो इति। अभिभूतिऽओजाः। स्वयम्ऽभूः। भामः। अभिमातिऽसहः।
विश्वऽचर्षणिः। सहुरिः। सहावान्। अस्मासु। ओजः। पृतनासु। धेहि॥ ४॥

हे मन्यो त्वम् अभिभूत्योजाः परेषामभिभावुकबलः स्वयंभूः स्वयमेवोत्पन्नः भामः क्रुद्धः अभिमातिषाहः। अभिमतो हिंसन्तीत्यभिमातयः शत्रवः। तेषामभिभविता। विश्वचर्षणिः सर्वेषां द्रष्टा सहुरिः सहनशीलः सहावान् सहनवान् ईदृशस्त्वम् अस्मासु पृतनासु संग्रामेषु ओजः बलं धेहि देहि॥

अभागः सन्नप परेतो अस्मि तव क्रत्वा तविषस्य प्रचेतः।
तं त्वा मन्यो अक्रतुर्जिहीळाहं स्वा तनूर्बलदेयाय मेहि॥ ५॥

अभागः। सन्। अप। पराऽइतः। अस्मि। तव। क्रत्वा। तविषस्य। प्रचेत इति प्रऽचेतः।
तम्। त्वा। मन्यो इति। अक्रतुः। जिहीळ।
अहम्। स्वा। तनूः। बलऽदेयाय। मा। आ। इहि॥ ५॥

हे प्रचेतः प्रकृष्टज्ञान मन्यो तविषस्य महतः तव क्रत्वा कर्मणा अभागः भागरहितः सन्। त्वां यज्ञेऽयाजकः सन्नित्यर्थः। त्वदनुग्रहरहितोऽहम् अप परेतोऽस्मि युद्धे शत्रुभिरभिभूतः सन् दूरं गतोऽस्मि। तं तादृशं भागरहितं त्वा त्वां हे मन्यो अक्रतुः कर्मरहितः अहं जिहीळ क्रुद्धं कृतवानित्यर्थः। यद्वा अहमेव त्वत्सहायत्वेन क्रोधितवान्। अथेदानीं स्वा तनूः मम शरीरभूतस्त्वं बलदेयाय बलदानाय मा इहि मां आगच्छ॥

अयं ते॑ अस्म्युप॒ मेह्य॒र्वाङ् प्र॑तीची॒नः स॑हुरे विश्वधायः ।
मन्यो॑ वज्रिन्न॒भि मामा व॑वृत्स्व॒ हना॑व॒ दस्यूँ॑रु॒त बो॑ध्या॒पेः ॥ ६ ॥

अयम् । ते॒ । अ॒स्मि॒ । उप॑ । मा॒ । आ । इ॒हि॒ । अ॒र्वाङ् । प्र॒ती॒ची॒नः । स॒हु॒रे॒ । वि॒श्व॒ऽधा॒यः॒ ।
मन्यो॒ इति॑ । व॒ज्रि॒न् । अ॒भि । माम् । आ । व॒वृ॒त्स्व॒ । हना॑व । दस्यू॑न् । उ॒त । बो॒धि॒ । आ॒पेः ॥ ६ ॥

हे सहुरे शत्रूणां सहनशील विश्वधायः विश्वस्य धर्तर्मन्यो अयं जनोऽहं ते तव अस्मि कर्मकृत् । यत एवमतः प्रतीचीनः प्रतिगन्ता अर्वाङ् अस्मदभिमुखं मा मां उप इहि उपागच्छ । हे मन्यो वज्रिन् माम् अभि आ ववृत्स्व अभ्यावर्तस्व । किमर्थमभ्यागमनमिति चेदुच्यते । हनाव आवां दस्यून् शत्रून् । उत अपि च आपेः बन्धुं बोधि बुध्यस्व ॥

अ॒भि प्रेहि॑ दक्षिण॒तो भ॑वा॒ मेऽधा॑ वृ॒त्राणि॑ जङ्घनाव॒ भूरि॑ ।
जु॒होमि॑ ते ध॒रुणं॒ मध्वो॒ अग्र॑मु॒भा उ॑पां॒शु प्र॑थ॒मा पि॑बाव ॥ ७ ॥

अ॒भि । प्र । इ॒हि॒ । द॒क्षि॒ण॒तः । भ॒व॒ । मे॒ । अध॑ । वृ॒त्राणि॑ । ज॒ङ्घ॒ना॒व॒ । भूरि॑ ।
जु॒होमि॑ । ते॒ । ध॒रुण॑म् । मध्वः॑ । अग्र॑म् । उ॒भौ । उ॒प॒ऽअं॒शु । प्र॒थ॒मा । पि॒बा॒व॒ ॥ ७ ॥

हे मन्यो अभि प्रेहि अभिगच्छ । मम युद्धं गत्वा च मे मम दक्षिणतो भव । अध अथ आवां वृत्राणि शत्रून् भूरि प्रभूतं जङ्घनाव हनाव । ते तुभ्यम् अग्रं श्रेष्ठं मध्वः मधु सोमरसं जुहोमि । उभौ त्वं चाहं च उपांशु अप्रकाशं प्रथमा प्रथमौ सन्तौ पिबाव ॥ ॥ १८ ॥

'त्वया मन्यो' इति सप्तर्चं षोडशं सूक्तम् । आदितस्तिस्रस्त्रिष्टुभस्ततश्चतस्रो जगत्यः । पूर्वमृषिदेवते । तथा चानुक्रान्तं—'त्वया मन्यो चतुर्जगत्यन्तम्' इति । अभिप्लवाख्येकाह इदं सूक्तं मरुत्वतीयशस्त्रे निविद्धानम् । सूत्रं पूर्वसूक्त एवोदाहृतम् । विश्वजिदभिभूतिषु चतुर्ष्वेकाहेष्वेते सूक्ते मरुत्वतीयनिष्केवल्ययोः शस्ये । सूत्रितं च—'विश्वजिदभिभूत्योरिषुवज्रयोश्च मन्युसूक्ते[1]' (आश्व. श्रौ. ९. ८) इति ॥

त्वया॑ मन्यो स॒रथ॑मारु॒जन्तो॒ हर्ष॑माणासो धृषि॒ता म॑रुत्वः ।
ति॒ग्मेष॑व॒ आयु॑धा सं॒शिशा॑ना अ॒भि प्र य॑न्तु॒ नरो॑ अ॒ग्निरू॑पाः ॥ १ ॥

त्वया॑ । म॒न्यो॒ इति॑ । स॒ऽरथ॑म् । आ॒ऽरु॒जन्तः॑ । हर्ष॑माणासः । धृ॒षि॒ताः । म॒रु॒त्वः॒ ।
ति॒ग्मऽइ॑षवः । आयु॑धा । स॒म्ऽशिशा॑नाः । अ॒भि । प्र । य॒न्तु॒ । नरः॑ । अ॒ग्निऽरू॑पाः ॥ १ ॥

हे मन्यो हे मरुत्वः त्वया सरथं समानमेकमेव रथमारुह्येति शेषः । आरुजन्तः[2] गच्छन्तः हर्षमाणासः हृष्टाः धृषिताः धृष्टाः तिग्मेषवः तीक्ष्णबाणाः आयुधा आयुधानि संशिशानाः सम्यक्तीक्ष्णयन्तः नरः युद्धस्य नेतार इन्द्रादयो देवास्मदनुचरा वा अग्निरूपाः अग्निवत्तीक्ष्णदाहादिकर्माणो यद्वा संनद्धाः कवचिनः अभि प्र यन्तु युद्धे सहायार्थम् । अत्र 'त्वया मन्यो सरथमारुजन्तः' (निरु. १०. ३०) इत्यादि निरुक्तमनुसंधेयम् ॥

---

1. ग-त१.२.३.६.७.८-भ-मन्युसूक्तौ । 2. छ-भ९-रुजन्तो ।

अ॒ग्निरि॑व मन्यो त्विषि॒तः स॑हस्व सेना॒नीर्नः॑ सहुरे हू॒त ए॑धि ।
ह॒त्वाय॒ शत्रू॒न्वि भ॑जस्व॒ वेद॒ ओजो॒ मिमा॑नो॒ वि मृधो॑ नुदस्व ॥ २ ॥

अ॒ग्निःऽइ॑व । म॒न्यो॒ इति॑ । त्वि॒षि॒तः । स॒ह॒स्व॒ । से॒ना॒ऽनीः । नः॒ । स॒हु॒रे॒ । हू॒तः । ए॒धि॒ ।
ह॒त्वाय॑ । शत्रू॑न् । वि । भ॒ज॒स्व॒ । वेदः॑ । ओजः॑ । मिमा॑नः । वि । मृधः॑ । नु॒द॒स्व॒ ॥ २ ॥

हे मन्यो अग्निरिव त्विषितः ज्वलितः सहस्व अभिभव शत्रून् । हे सहुरे सहनशील सेनानीः एधि भव नः अस्माकं संग्रामे हूतः सन् । किंच हत्वाय हत्वा शत्रून्वि भजस्व प्रयच्छास्माकं वेदः धनं शत्रुसंबन्धि । किंच ओजो मिमानः अस्माकं बलं कुर्वन् मृधः शत्रून् वि नुदस्व घातयेत्यर्थः ॥

सह॑स्व मन्यो अ॒भिमा॑तिम॒स्मे रु॒जन्मृ॒णन्प्र॑मृ॒णन्प्रेहि॒ शत्रू॑न् ।
उ॒ग्रं ते॒ पाजो॑ न॒न्वा रु॑रु॒ध्रे व॒शी वशं॑ नयस एकज॒ त्वम् ॥ ३ ॥

सह॑स्व । म॒न्यो॒ इति॑ । अ॒भिऽमा॑तिम् । अ॒स्मे इति॑ ।
रु॒जन् । मृ॒णन् । प्र॒ऽमृ॒णन् । प्र । इ॒हि॒ । शत्रू॑न् ।
उ॒ग्रम् । ते॒ । पाजः॑ । न॒नु । आ । रु॒रु॒ध्रे॒ । व॒शी । वश॑म् । न॒य॒से॒ । ए॒क॒ऽज॒ । त्वम् ॥ ३ ॥

हे मन्यो अस्मे अस्माकम् अभिमातिम् अभिमन्तारं शत्रुं सहस्व अभिभव । रुजन् हिंसन्[1] मृणन्[1] प्रमृणन् प्रकर्षेण हिंसन् यथा पुनर्न जीवेत्तथा कुर्वस्त्वं[2] शत्रून् प्रति प्रेहि । ते तव पाजः बलम् उग्रम् उद्गूर्णं कं ननु आ रुरुध्रे आरुन्धन्ति । न तथा संभवति हे एकज त्वम् असहायः वशी त्वं वशं नयसे प्रापयसि शत्रुम् ॥

एको॑ ब॒हूना॑मसि मन्यवीळि॒तो विशं॑विशं यु॒धये॒ सं शि॑शाधि ।
अकृ॑त्तरु॒क्त्वया॑ यु॒जा व॒यं द्यु॒मन्तं॒ घोषं॑ विज॒याय॑ कृण्महे ॥ ४ ॥

एकः॑ । ब॒हूना॑म् । अ॒सि॒ । म॒न्यो॒ इति॑ । ई॒ळि॒तः । विश॑म्ऽविशम् । यु॒धये॑ । सम् । शि॒शा॒धि॒ ।
अकृ॑त्तऽरुक् । त्वया॑ । यु॒जा । व॒यम् । द्यु॒ऽमन्त॑म् । घोष॑म् । वि॒ऽज॒याय॑ । कृ॒ण्म॒हे॒ ॥ ४ ॥

हे मन्यो ईळितः स्तुतस्त्वम् एकः एव असहाय एव बहूनां शत्रूणाम् असि भवसि पर्याप्तो हन्तुम् । अतः विशंविशं तां तामस्मद्विरोधिनीं प्रजां युधये युद्धाय सं शिशाधि सम्यक् तीक्ष्णीकुरु । किंच हे अकृत्तरुक् अच्छिन्नदीप्ते त्वया युजा सहायेन वयं द्युमन्तं दीप्तिमन्तं घोषं सिंहनादलक्षणं विजयाय विशिष्टजयार्थं[2] कृण्महे कुर्मः[3] ॥

वि॒जे॒ष॒कृदिन्द्र॑ इवानवब्र॒वो॒३॑ऽस्माकं॑ मन्यो अधि॒पा भ॑वे॒ह ।
प्रि॒यं ते॒ नाम॑ सहुरे गृणीमसि वि॒द्मा तमुत्सं॒ यत॑ आब॒भूथ॑ ॥ ५ ॥

१. त–मृणन् हिंसन् ; भ–हिंसन् । २ ग–त–म१.२.४.६.८–कुर्वन् । ३. स१.२.३.६.७.८–भ–कृण्महे ।

विजेषऽकृत् । इन्द्रःऽइव । अनवऽब्रवः । अस्माकम् । मन्यो इति । अधिऽपाः । भव । इह । प्रियम् । ते । नाम । सहुरे । गृणीमसि । विद्म । तम् । उत्सम् । यतः । आऽबभूथ ॥५॥

हे मन्यो इन्द्र इव विजेषकृत् विजयकर्ता । तथा अनवब्रवः अनिन्दितवचनः । 'अनवब्रवोऽनवक्षिप्तवचनः' ( निरु. ६. २९ ) इति यास्कः । ईदृशस्त्वम् अस्माकम् अधिपाः अधिकं पाता रक्षिता भव इह अस्मिन्युद्धे । हे सहुरे शत्रूणां सहनशील ते प्रियं नाम स्तोत्रं गृणीमसि गृणीमः स्तुमः । यतः यस्मात् स्थानात् त्वम् आबभूथ आभवसि प्रवृद्धो भवसि तम् उत्सं बलस्योद्भवितारं विद्म जानीमः ॥

आभूत्या सहजा वज्र सायक सहो बिभर्ष्यभिभूत उत्तरम् ।
क्रत्वा नो मन्यो सह मेद्येधि महाधनस्य पुरुहूत संसृजि ॥ ६ ॥

आऽभूत्या । सहऽजाः । वज्र । सायक । सहः । बिभर्षि । अभिऽभूते । उतऽतरम् ।
क्रत्वा । नः । मन्यो इति । सह । मेदी । एधि । महाऽधनस्य । पुरुऽहूत । सम्ऽसृजि ॥६॥

हे वज्र वज्रवत्सारभूत हे सायक शत्रूणामन्तकर अभिभूते शत्रूणामभिभावुक मन्यो आभूत्या । आभूतिरभिभवः । तेन सहजाः सहैवोत्पन्नस्त्वं उत्तरम् उत्कृष्टतरं सहः बलं बिभर्षि धारयसि । हे मन्यो क्रत्वा कर्मणा सह नः अस्माकं मेदी एधि स्निग्धो भव । कुत्रेति तदुच्यते । महाधनस्य । संग्रामनामैतत् । संग्रामस्य संसृजि सर्गे । हे पुरुहूत बहुभिराहूतेति मन्युसंबोधनम् ॥

संसृष्टं धनमुभयं समाकृतमस्मभ्यं दत्तां वरुणश्च मन्युः ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥ ७ ॥

सम्ऽसृष्टम् । धनम् । उभयम् । सम्ऽआकृतम् । अस्मभ्यम् । दत्ताम् । वरुणः । च । मन्युः ।
भियम् । दधानाः । हृदयेषु । शत्रवः । पराऽजितासः । अप । नि । लयन्ताम् ॥ ७ ॥

संसृष्टम् अविभागमापन्नम् उभयम् उभयविधं धनं समाकृतं सम्यगानीतम् अस्मभ्यं दत्ताम् । कः[1] । वरुणश्च देवः मन्युः च । भियं भयं हृदयेषु दधानाः शत्रवः अस्मद्विरोधिनः पराजितासः पराजिताः अप नि लयन्तां अपनिर्लीना भवन्तु ॥ ॥ १९ ॥ ॥ ६ ॥

सप्तमेऽनुवाके षट् सूक्तानि । तत्र 'सत्येन' इति सप्तचत्वारिंशदृचं प्रथमं सूक्तं सवितृसुतायाः सूर्याया आर्षम् । 'मनोऽनः' इति तिस्रः 'अनृक्षराः' इति द्वे 'गृभ्णामि' इति द्वे 'यदश्विना पृच्छमानौ' इत्येका 'पूषा त्वेतो नयतु' इत्येका 'अघोरचक्षुः' इति चैवमेता दशानुष्टुभः । 'तृष्टमेतत्' इत्येषोरोबृहती [illegible] । 'पूर्वापरं चरतः' 'इह प्रियं प्रजया' 'आ नः प्रजां जनयतु' इत्येतास्तिस्रो जगत्यः । शिष्टास्त्रिष्टुभः । आदितः पञ्चानामृचां सोमो देवता । तत एकादशभिः सूर्या स्वविवाहं स्तुतवती । अतस्तत्र योऽर्थः प्रतिपाद्यते स एव देवतात्वेन विज्ञेयः । 'या तेनोच्यते सा देवता' इति न्यायात् । सप्तदश्या देवा देवता । अष्टादश्याः सोमार्कौ । एकोनविंश्याश्चन्द्रमाः । 'सुकिंशुकम्' इत्याद्या नवर्चो विवाहमन्त्रा आशिषः प्रतिपादकाः । अतस्तत्र तत्र प्रतिपाद्योऽर्थो देवता । 'परा देहि' 'अश्लीला तनूः' इति द्वे वध्वा विवाहकाले परिहितस्य वाससः

1. तरु.३.१७-म१.५-की ।

संस्पर्शनिन्दाविन्दी । 'पे वध्वमग्रहम्' इति दंपत्योः क्षयरोगस्य नाशिनी । अतस्तद्देवताका[1] । परिशिष्टानां षोडशानां सूर्या देवता । तथा चानुक्रान्तं— 'सत्येन सप्तचत्वारिंशत्' सर्वमनुक्रान्तम्[2] । सूक्तविनियोगो लैङ्गिकः ॥

सत्येनोत्तभिता भूमिः सूर्येणोत्तभिता द्यौः ।
ऋतेनादित्यास्तिष्ठन्ति दिवि सोमो अधि श्रितः ॥ १ ॥

सत्येन । उत्तभिता । भूमिः । सूर्येण । उत्तभिता । द्यौः ।
ऋतेन । आदित्याः । तिष्ठन्ति । दिवि । सोमः । अधि । श्रितः ॥ १ ॥

सत्येन ब्रह्मणानन्तात्मना । ब्रह्म खलु देवानां मध्ये सत्यभूतः । तेनाधःस्थितेन भूमिः उत्तभिता उपरि स्तम्भिता[3] । यथाधो न पतेत्तथा कृता । यद्वा । सत्येन अनृतप्रतियोगिना धर्मेण भूमिरुत्तभितोन्नता फलिता भवतीत्यर्थः । असति सत्ये भूम्यां सस्यादयो न फलन्ति । तथा सूर्येण देवेन द्यौः उत्तभिता । सूर्यो हि द्युस्थानत्वाद्दिवं दधार । ऋतेन यज्ञेन आदित्याः अदितेः पुत्रा देवाः तिष्ठन्ति । यज्ञे यजमानदत्तेन स्वस्वभागेन तृप्ता देवा उपजीवन्ति । दिवि द्युलोके सोमः देवानामाप्यायनकारी[4] वल्लीरूपो देवतारूपश्च अधि श्रितः अधितिष्ठति । इति स्वपतिं सोमं सूर्या स्तौति ॥

सोमेनादित्या बलिनः सोमेन पृथिवी मही ।
अथो नक्षत्राणामेषामुपस्थे सोम आहितः ॥ २ ॥

सोमेन । आदित्याः । बलिनः । सोमेन । पृथिवी । मही ।
अथो इति । नक्षत्राणाम् । एषाम् । उपऽस्थे । सोमः । आऽहितः ॥ २ ॥

सोमेनादित्याः अदितेः पुत्रा इन्द्रादयः बलिनः भवन्ति । ऐन्द्रवायवादिग्रहपरिग्रहादिति[5] भावः । तथा सोमेन आहुत्यात्मनाग्नौ हुतेन पृथिवी भूमिः मही महती भवति । आहुत्या वृष्टिद्वारेण सस्यादिसंपत्तेः । अथो अपि चायं सोमः नक्षत्राणामेषाम् । न क्षं क्षयन्त इति नक्षत्रा ग्रहचमसादयः । तेषामेषाम् उपस्थे सोमः रसात्मकः आहितः । यद्वा । प्रसिद्धानामेव नक्षत्राणामुपस्थ उपस्थाने द्युलोके सोम आहितः । 'तृतीयस्यामितो दिवि सोम आसीत्तं गायत्र्याहरत्' ( तै. ब्रा. ३. २. १. १ ) इत्यादिश्रुतेः । देवतारूपसोमपक्षे । सोमेनादित्या देवा बलिनो बलवन्तो भवन्ति तस्यैकैककलास्वादनात् । 'प्रथमां पिबते वह्निर्द्वितीयां पिबते रविः' इत्यादिस्मृतेः । सोमेन पृथिवी मही । अमृतसेकेनौषध्याद्यभिवृद्धया[6] पृथिव्या बलवत्त्वम् । चन्द्रस्य नक्षत्राणामुपस्थे स्थितिः प्रसिद्धा ॥

सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिम् ।
सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन ॥ ३ ॥

सोमम् । मन्यते । पपिऽवान् । यत् । सम्ऽपिंषन्ति । ओषधिम् ।
सोमम् । यम् । ब्रह्माणः । विदुः । न । तस्य । अश्नाति । कः । चन ॥ ३ ॥

१. त-भ—अतस्तद्देवताकाः । २. ग४-त१.२.७—पुस्तकेषु संपूर्णः पाठो दत्तः । ३. त-भं—स्तभिता । ४. त-भ१.४.६.७.८—देवतानामा° । ५. ग१.९—°ग्रहपानादिति; ग४—°ग्रहभक्षणादिति; त-भ१.२.४.६.८—°ग्रहपरादिति । ६. त-भ१.२.४.६.८—°भिवृद्धये ।

रक्षिता। यथा न क्षुप्यति तथा। वायुः सोमस्य प्रसिद्धो लोके। किंच मासः। 'मसी परिमाणे'। मस्यते परिमीयत इति मासः सोमः। स च समानां संवत्सराणाम् आकृतिः आकर्ता व्यवच्छेदको भवति। संवत्सरे संवत्सरे[1] वसन्तादिकालेष्वनुष्ठीयमानत्वात् 'वसन्ते वसन्ते ज्योतिषा यजेत' इति श्रुतेः। यद्वा। सोमाधारवनस्पतिविकारग्रहद्वारेण वायुः सोमरसस्य[2] रक्षिता भवति। 'वायुगोपा वनस्पतयः' इति श्रुतेः। एवं वल्लीरूपसोमपक्षे योजना। चन्द्रपक्षे तु। हे देव सोम यद्यदा त्वा त्वां प्रपिबन्ति रश्मयोऽपरपक्षे ततोऽनन्तरमेव पूर्वपक्षे पुनराप्यायसे। वायुश्च सोमस्य तव रक्षिता। वाय्वधीनत्वाच्चन्द्रगतेः। किंच समानां संवत्सराणां मासः। पञ्चम्येकवचनमेतत्। मासस्याकृतिश्च कर्ता त्वं भासि। एकैककलाह्रासवृद्धिभ्यां हि मासः पूर्यते तैः संवत्सर इति॥ ॥ १० ॥

रैभ्यासीदनुदेयी नाराशंसी न्योचनी।
सूर्याया भद्रमिद्वासो गाथयैति परिष्कृतम्॥ ६ ॥

रैभी। आसीत्। अनुऽदेयी। नाराशंसी। निऽओचनी।
सूर्यायाः। भद्रम्। इत्। वासः। गाथया। एति। परिऽकृतम्॥ ६ ॥

आभिः सूर्या स्वविवाहमकरोदित्युक्तम्। सूर्या सावित्री सुते। रैभी। रैभ्यः काश्चनर्चः। 'रैभीः शंसति रेभन्तो वै देवाश्चर्षयश्च स्वर्गं लोकमायन्' (ऐ. ब्रा. ६. ३२) इत्यादिब्राह्मणविहिता रैभ्यः[3]। सा[4] रैभी अनुदेयी आसीत्। नीयमानवधूविनोदनायानुदीयमाना सख्यासीत्। तथा नाराशंसी। 'प्राता रत्नम्' ( ऋ. सं. १. १२५. १ ) इत्यादिका मनुष्याणां स्तुतयो नाराशंस्यः। सा नाराशंसी न्योचनी। उचतिः सेवाकर्मा। सा वधूशुश्रूषार्थं दीयमाना दास्यभवत्। सूर्यायाः मम भद्रं वासः विचित्रं दुकूलादिकमाच्छादनयोग्यं वस्त्रं गाथया परिष्कृतम् अलंकृतम् एति। 'गाथा गीयते' इत्यादिब्राह्मणोक्ता गाथा। तया गाथया यत्परिष्कृतमस्ति तद्वासोऽभवदिति॥

चित्तिरा उपबर्हणं चक्षुरा अभ्यञ्जनम्।
द्यौर्भूमिः कोश आसीद्यदयात्सूर्या पतिम्॥ ७ ॥

चित्तिः। आः। उपऽबर्हणम्। चक्षुः। आः। अभिऽअञ्जनम्।
द्यौः। भूमिः। कोशः। आसीत्। यत्। अयात्। सूर्या। पतिम्॥ ७ ॥

चित्तिः देवता उपबर्हणम् आः आसीत्। चक्षुः अभ्यञ्जनम् आः आसीत्। तथा हि। वृत्रस्य कनीनिका परापतत्त्रिककुदाम पर्वते। तेन त्रैककुदेनाञ्जनसजातीयेन चक्षुषी आञ्जते। तच्चक्षुरेवाञ्जनमासीदिति। द्यौः च भूमिः च कोशः आसीत्[5]। कोशस्थानीये[1] अभूताम्। यत् यदा सूर्या पतिं स्वकीयं नवभर्तारं सोमम् अयात् अगच्छत् तदैवमुपकरणान्यासन्॥

स्तोमा आसन्प्रतिधयः कुरीरं छन्द ओपशः।
सूर्याया अश्विना वराग्निरासीत्पुरोगवः॥ ८ ॥

१. त१.२ ३.६.७.८-भ-'संवत्सरे' नास्ति। २. ग-त-भ-सोमस्य। ३. त१.२.३.६.८-भ४. ६८-रैभ्यासीः; त७-भ२-रैभ्यासीत्; भ१.७-रैभ्यासिः। ४. ग-त-भ-'आसीत्' नास्ति। ५. ग२-कोशस्थानीयौ; ग४-कोशस्थानीय; त-भ-कोशस्थानीया।

स्तोमाः । आसन् । प्रतिऽधयः । कुरीरम् । छन्दः । ओपशः ।
सूर्यायाः । अश्विना । वरा । अग्निः । आसीत् । पुरःऽगवः ॥ ८ ॥

सूर्यायाः रथस्य स्तोमाः त्रिवृदादयः प्रतिधयः आसन्। प्रतिधीयन्त इति प्रतिधय ईषा-तिर्यग्गतकाष्ठादयः। तथा कुरीरं छन्दः कुरीरनामकं छन्दोऽनसः ओपशः अभवत्। येनोपशेरते स ओपशः। तादृशायाः सूर्यायाः अश्विना अश्विनौ वरा वरावास्तामिति शेषः। तस्या विवाहे पुरोगवः पुरोगन्ता पुरतो गन्ता[1] यः पूर्वमेव प्रस्तावार्थं गच्छति तादृशोऽग्निः अग्निरासीत्। 'प्रजापतिर्वै[2] सोमाय राज्ञे दुहितरं प्रायच्छत्सूर्यां सावित्रीं तस्यै सर्वे देवा वरा आगच्छन्' (ऐ. ब्रा. ४.७) इत्यादि हि ब्राह्मणम्। अत्रायमभिप्रायः। प्रजापतिः सविता स्वदुहितरं सोमाय[3] प्रायच्छत्[3]। सोमाय दास्यामीति मनीषामकरोत्। तस्मिन् समये पुष्या उपचारार्थं प्रदानान्युत्काम्यभवन्। तथा च सत्यश्विनौ प्रबलौ[4] सम्यगाजिं पुरतो गत्वा तामलभेतामिति। उत्तरत्रापि 'सोमो वधूयुरभवत्' इत्यादिनायमेवार्थः स्पष्टो भविष्यति। 'ओपावृणीत जेन्या' (ऋ.सं.१.११९.५) इत्यादिकमुक्तम्॥

सोमो वधूयुरभवदश्विनास्तामुभा वरा ।
सूर्यां यत्पत्ये शंसन्तीं मनसा सविताददात् ॥ ९ ॥

सोमः । वधूऽयुः । अभवत् । अश्विना । आस्ताम् । उभा । वरा ।
सूर्याम् । यत् । पत्ये । शंसन्तीम् । मनसा । सविता । अददात् ॥ ९ ॥

सोमो वधूयुः वधूकामो वरः अभवत्। तस्मिन् समये अश्विना अश्विनौ उभा उभौ वरा वरौ आस्ताम् अभूताम्। यत् यदा सूर्यां पत्ये शंसन्तीं पतिं कामयमानाम्। पर्याप्तयौवना-मित्यर्थः। सूर्यां मनसा सहिताम्[5] सोमाय वराय सविता तत्पिता अददात् प्रादात् स्वीकृतां चकार ॥

मनो अस्या अन आसीद् द्यौरासीदुत च्छदिः ।
शुक्रावनड्वाहावास्तां यदयात्सूर्या गृहम् ॥ १० ॥

मनः । अस्याः । अनः । आसीत् । द्यौः । आसीत् । उत । छदिः ।
शुक्रौ । अनड्वाहौ । आस्ताम् । यत् । अयात् । सूर्या । गृहम् ॥ १० ॥

अस्याः सूर्यायाः पतिगृहं गच्छन्त्याः अनः रथः मनः आसीत्। या पतिगृहं त्वरया गच्छेयमिति मतिरस्ति सा एव आसीत्। उत अपि च तस्याः अनसः द्यौः द्युलोकः छदिः उपर्यपिधानम् आसीत्। शुक्रौ दीप्तौ सूर्याचन्द्रमसौ अनड्वाहौ रथस्य वोढारौ आस्ताम् अभवताम्। यत् यदा सूर्या गृहं सोमस्य अयात् अगात्॥ ॥ २१ ॥

ऋक्सामाभ्यामभिहितौ गावौ ते सामनावितः ।
श्रोत्रं ते चक्रे आस्तां दिवि पन्थाश्चराचरः ॥ ११ ॥

ऋक्ऽसामाभ्याम् । अभिऽहितौ । गावौ । ते । सामनौ । इतः ।
श्रोत्रम् । ते । चक्रे इति । आस्ताम् । दिवि । पन्थाः । चराचरः ॥ ११ ॥

१. ग-त-भ—गंतासीत्। २. त-भ—प्रजापतिः। ३. त-भ—'सोमाय प्रायच्छत्' नास्ति। ४. त१.५.६.७.८-भ१.२.४.६.८—प्रबलौ सबलौ। ५. त४.५—सहिता।

हे सूर्ये देवि ते तव ऋक्सामाभ्याम् अभिधानीयाभ्याम् अभिहितौ गावौ[1] गोस्थानीयौ सूर्याचन्द्रमसौ सामनौ सामानौ[2] सन्तौ इतः गच्छतः । अनोवाहौ[3] पत्युर्गृहं प्रति गच्छतः । ते तव श्रोत्रम् । श्रोत्रे इत्यर्थः । वरस्य गुणग्राहिणी श्रोत्रे एव चक्रे आस्ताम् । मनोरूपस्य रथस्य श्रोत्रे चक्रे अभवतामित्यर्थः । दिवि पन्थाश्चराचरः चलाचलोऽत्यन्तं गमनसाधनभूतो मार्गोऽभूत् । रथसंचारप्रदेशो द्युलोक आसीत् ॥

शुची ते चक्रे यात्या व्यानो अक्ष आहतः ।
अनो मनस्मयं सूर्यारोहत्प्रयती पतिम् ॥ १२ ॥

शुची इति । ते । चक्रे इति । यात्याः । विऽआनः । अक्षः । आऽहतः ।
अनः । मनस्मयम् । सूर्या । आ । अरोहत् । प्रऽयती । पतिम् ॥ १२ ॥

यात्याः गच्छन्त्याः ते तव अनसः चक्रे चङ्क्रमणशीले रथाङ्गे शुची श्रोत्रे आस्ताम् । व्यानः तव व्यानो वायुः अक्षः । उभयरथचक्रच्छिद्रगामिनी या काष्ठा सा च रथस्य सर्वं भारं वहति । सोऽक्षो व्यानोऽभूत् । मनस्मयं मनोमयम् अनः शकटं सूर्या[4] पतिं[4] सोमं प्रति प्रयती प्रकर्षेण गच्छन्ती आरोहत् आरूढवती । पतिं प्रति जिगमिषोर्मनोरूपस्य रथस्य पत्युर्गुणभाषिणी श्रोत्रे एव चक्रे अभूतां व्यानो धारको वायुश्रेष्ठकोऽक्षोऽभूदित्यर्थः[5] ॥

सूर्याया वहतुः प्रागात्सविता यमवासृजत् ।
अघासु हन्यन्ते गावोऽर्जुन्योः पर्युह्यते ॥ १३ ॥

सूर्यायाः । वहतुः । प्र । अगात् । सविता । यम् । अवऽअसृजत् ।
अघासु । हन्यन्ते । गावः । अर्जुन्योः । परि । उह्यते ॥ १३ ॥

सोमाय प्रदित्सितायाः सूर्यायाः वहतुः । कन्याप्रियार्थं दातव्यो गवादिपदार्थो वहतुः । स च प्रागात् तस्या अपि पूर्वमगच्छत् । यं वहतुं सविता अस्याः पिता अवासृजत् अवसृष्टवान् । प्रादादित्यर्थः । कदा सागच्छत् कदा वहतुरित्युभयोः काल उच्यते । अघासु । मघास्वित्यर्थः । मघानक्षत्रेषु गावः सवित्रा दत्ता गावः सोमगृहं प्रति हन्यन्ते दण्डैस्ताड्यन्ते प्रेरणार्थम् । अर्जुन्योः । फल्गुन्योरित्यर्थः । तयोर्नक्षत्रयोः सवितुः सकाशात् परि सोमगृहं प्रति उह्यते नीयते रथेन[6] ॥

यदश्विना पृच्छमानावयातं त्रिचक्रेण वहतुं सूर्यायाः ।
विश्वे देवा अनु तद्वामजानन्पुत्रः पितराववृणीत पूषा ॥ १४ ॥

यत् । अश्विना । पृच्छमानौ । अयातम् । त्रिऽचक्रेण । वहतुम् । सूर्यायाः ।
विश्वे । देवाः । अनु । तत् । वाम् । अजानन् । पुत्रः । पितरौ । अवृणीत । पूषा ॥ १४ ॥

१. ग४–नियमितौ गावौ । २. ग–त१.२.३.४.५.७–भ७–'सामानौ' नास्ति । ३. ग–त१.२.३.६.७–भ२.८–अनोवोढा; त४.५–अनोवोग्रा; भ४.६.७–अनोवोढा । ४. त–भ–सूर्या मति । ५. ग–त–भ१.२.४.६.८–वायुश्रेष्ठको° । ६. ग१.२–रथेन प्राप्यते मघाभिर्गाव इत्यादि दृष्टं; ग४–त४.५–भ१.२.६–पुस्तकेषु 'रथेन' इत्यस्यानन्तरं किंचिदवकाशो विद्यते ।

हे अश्विना अश्विनौ यत् यदा पृच्छमानौ सवितारं प्रष्टुम् अयातम् अगच्छतम्। केन साधनेनायातं तदुच्यते। त्रिचक्रेण चक्रत्रययुक्तेन रथेन। किं पृच्छमानौ। सूर्यायाः वहतुम्। विवाहमित्यर्थः। तत् तदानीं वां युवां सवितारं प्रति गच्छन्तौ विश्वे सर्वे देवाः अनु अजानन् अनुज्ञातवन्तः। तथा पितरौ पुत्रः अश्विनोः पुत्रः पूषा अवृणीत वृतवान् ॥

यदयातं शुभस्पती वरेयं सूर्यामुप ।
क्वैकं चक्रं वामासीत्क्व देष्ट्राय तस्थथुः ॥ १५ ॥

यत् । अयातम् । शुभः । पती इति । वरेऽयम् । सूर्याम् । उप ।
क्व । एकम् । चक्रम् । वाम् । आसीत् । क्व । देष्ट्राय । तस्थथुः ॥ १५ ॥

हे शुभस्पती उदकस्य स्वामिनौ यत् यौ अयातम् अगच्छतम्। कं प्रति। वरेयं वरणीयायाः सूर्यायाः संबन्धिनं वरयोग्यमित्यर्थं वा। सवितारमित्यर्थः। किमर्थम्। सूर्यामुप गन्तुम्। वां भवतोः संप्रति दृश्यमानमिदम् एकं चक्रं क्व आसीत् पुरा। क्व वां युवां देष्ट्राय दानाय प्रवृत्तौ तस्थथुः इत्यश्विनोर्निवासं पृच्छति ॥ ॥ २२ ॥

द्वे ते चक्रे सूर्ये ब्रह्माण ऋतुथा विदुः ।
अथैकं चक्रं यद्गुहा तदद्धातय इद्विदुः ॥ १६ ॥

द्वे इति । ते । चक्रे इति । सूर्ये । ब्रह्माणः । ऋतुऽथा । विदुः ।
अथ । एकम् । चक्रम् । यत् । गुहा । तत् । अद्धातयः । इत् । विदुः ॥ १६ ॥

अथ स्वयमेव स्वात्मानं प्रति सूर्या वदति। हे सूर्ये ते तव द्वे चक्रे प्रकाशे पुरः स्थे द्वे एव चन्द्रसूर्यात्मके ऋतुथा ऋतुषु विनिर्दिष्टे चक्रे ब्रह्माणः ब्राह्मणाः विदुः। अथैकं चक्रं तृतीयं संवत्सरात्मकं गुहा गुहायां निहितं यत् अस्ति तदद्धातय इत्। एतन्मेधाविनामसु पठितम् ( नि. ३. १५. २१ )। मेधाविन एव विदुः जानन्ति ॥

सूर्यायै देवेभ्यो मित्राय वरुणाय च ।
ये भूतस्य प्रचेतस इदं तेभ्योऽकरं नमः ॥ १७ ॥

सूर्यायै । देवेभ्यः । मित्राय । वरुणाय । च ।
ये । भूतस्य । प्रऽचेतसः । इदम् । तेभ्यः । अकरम् । नमः ॥ १७ ॥

सूर्यायै सूर्यस्य पत्न्यै देवेभ्यः अग्न्यादिभ्यः मित्राय वरुणाय च ये च भूतस्य भूतजातस्य प्रचेतसः सुमतयोऽभिमतप्रदा भवन्ति तेभ्यः सर्वेभ्यः इदं नमः नमस्कारम् अकरं करोमि ॥

पूर्वापरं चरतो माययैतौ शिशू क्रीळन्तौ परि यातो अध्वरम् ।
विश्वान्यन्यो भुवनाभिचष्ट ऋतूँरन्यो विदधज्जायते पुनः ॥ १८ ॥

पूर्वऽअपरम् । चरतः । मायया । एतौ । शिशू इति । क्रीळन्तौ । परि । यातः । अध्वरम् ।
विश्वानि । अन्यः । भुवना । अभिऽचष्टे । ऋतून् । अन्यः । विऽदधत् । जायते । पुनः इति ॥ १८ ॥

कश्चित्पूर्वं गच्छति सूर्यः । अन्यस्तमनुचरति चन्द्रमाः । एवं पूर्वापरं पौर्वापर्येण मायया स्वप्रज्ञानेन एतौ आदित्यचन्द्रमसौ चरतः गच्छतो दिवि । तौ शिशू । शिशुवत्क्रमणात्मकत्वाद्वा शिशू इत्युच्येते । शिशू सन्तौ क्रीळन्तौ अन्तरिक्षे विहरन्तौ अध्वरं परि यातः यज्ञं प्रतिगच्छतः । तयोः अन्यः आदित्यः विश्वानि भुवना भुवनानि अभिचष्टे अभिपश्यति । ऋतून् वसन्तादीन् अन्यः चन्द्रमाः विदधत् कुर्वन् मासानर्धमासांश्च कुर्वन् पुनः जायते । यद्यप्युभयोरपि पुनर्जनिरस्ति तथापि सूर्यस्य सर्वदा प्रवृद्धेरवयवो नाभिप्रेतः । चन्द्रस्य तु ह्रासवृद्धिसद्भावात्पुनःपुनर्जायत इत्युक्तिर्युक्ता । ' चन्द्रमा वै जायते पुनः ' ( तै. ब्रा. ३. ९. ५. ४ ) इत्यादिश्रुतेः[1] ॥

अतिमूर्तिनाम्न्येकाहे शुक्लपक्षे चान्द्रमसेष्टिः । तत्र ' नवोनवः ' इत्येषा याज्या । सूत्रितं च— ' नवोनवो भवति जायमानस्तरणिर्विश्वदर्शतः ' ( आश्व. श्रौ. ९. ८ ) इति ॥

नवोनवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् ।

भागं देवेभ्यो वि दधात्यायन् प्र चन्द्रमास्तिरते दीर्घमायुः ॥ १९ ॥

नवःऽनवः । भवति । जायमानः । अह्नाम् । केतुः । उषसाम् । एति । अग्रम् ।

भागम् । देवेभ्यः । वि । दधाति । आऽयन् । प्र । चन्द्रमाः । तिरते । दीर्घम् । आयुः ॥ १९ ॥

अयं चन्द्रमाः जायमानः प्रतिदिनं जायमानः एकैककलाभिवृद्ध्योत्पद्यमानः सन् नवोनवो भवति प्रतिदिनं नूतन एव भवति । एतत्पूर्वपक्षाभिप्रायम् । तथा अह्नां दिवसानां केतुः प्रज्ञापकः प्रतिपदादीनां तिथीनां चन्द्रकलाह्रासवृद्ध्यधीनत्वात् । तादृशश्चन्द्रमाः उषसां प्रभातानाम्[2] अग्रम् एति । एतत्कृष्णपक्षान्ताभिप्रायम् । केचनैनं पादमादित्यदेवत्यमाहुः[3] । तस्मिन् पक्षेऽह्नां केतुत्वमुषसामग्रगतिश्च प्रसिद्धे । देवेभ्यः भागं हविर्भागं वि दधाति करोति उभयपक्षान्ते । किं कुर्वन् । आयन् प्रतिदिनं ह्रासवृद्ध्या पक्षान्तमभिगच्छन् । एतदर्धमासाभिप्रायम् । चन्द्रमाः उक्तलक्षणो देवः दीर्घमायुः तिरते वर्धयति ॥

सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् ।

आ रोह सूर्ये अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व ॥ २० ॥

सुऽकिंशुकम् । शल्मलिम् । विश्वऽरूपम् । हिरण्यऽवर्णम् । सुऽवृतम् । सुऽचक्रम् ।

आ । रोह । सूर्ये । अमृतस्य । लोकम् । स्योनम् । पत्ये । वहतुम् । कृणुष्व ॥ २० ॥

सुकिंशुकं शोभनकिंशुकवृक्षनिर्मितं तथा शल्मलिं शाल्मलिवृक्षनिर्मितं विश्वरूपं नानारूपं हिरण्यवर्णं हितरमणीयवर्णं हिरण्यालंकारयुक्तं वा सुवृतं सुष्ठुवर्तनं सुचक्रं शोभनचक्रोपेतं रथं हे सूर्ये आ रोह । अमृतस्य लोकं स्थानं स्योनं सुखकरं पत्ये सोमाय वहतुं वहनसाधनं प्रापणं कृणुष्व कुरुष्व । अत्र निरुक्तं ( १२. ८ ) द्रष्टव्यम् ॥ ॥ २३ ॥

उदीर्ष्वातः पतिवती ह्ये३षा विश्वावसुं नमसा गीर्भिरीळे ।

अन्यामिच्छ पितृषदं व्यक्तां स ते भागो जनुषा तस्य विद्धि ॥ २१ ॥

१. ग-त-°श्रुतेश्च । २. ग-ता-भ१.२.४.६.८–प्रभातानां । ३. ग-°देवत्वमाहुः ।

उत् । ईर्ष्व । अतः । पतिऽवती । हि । एषा । विश्वऽवसुम् । नमसा । गीःऽभिः । ईळे ।
अन्याम् । इच्छ । पितृऽसदम् । विऽअक्ताम् । सः । ते । भागः । जनुषा । तस्य । विद्धि ॥ २१ ॥

आभिर्नूर्णां विवाहः स्तूयते । हे विश्वावसो अतः स्थानात् कन्यासमीपात् उदीर्ष्व उत्तिष्ठ । यतः एषा कन्या पतिवती हि संजाता अतः उदीर्ष्वेति वा अतःशब्दो योज्यः । विश्वावसुम् एतन्नामानं गन्धर्वं नमसा नमस्कारेण गीर्भिः स्तुतिभिश्च ईळे स्तौमि । तदेनां विहाय कां स्वीकरोमीति यदि ब्रूषे तर्हि अन्यां पितृषदं पितृकुले स्थितां व्यक्ताम् अनूढां परिस्फुटां विगताञ्जनां वा । स्तनोद्गमादिरहितत्वेनाप्रौढामित्यर्थः । सः तादृशः पदार्थः ते तव भागः कल्पितः । तस्य मे[1] भागं विद्धि जानीहि जनुषा जन्मना । लभस्वेत्यर्थः ॥

उदीर्ष्वातो विश्वावसो नमसेळामहे त्वा ।
अन्यामिच्छ प्रफर्व्यं सं जायां पत्या सृज ॥ २२ ॥

उत् । ईर्ष्व । अतः । विश्वावसो इति विश्वऽवसो । नमसा । ईळामहे । त्वा ।
अन्याम् । इच्छ । प्रऽफर्व्यम् । सम् । जायाम् । पत्या । सृज ॥ २२ ॥

अतः अस्मात्स्थानात् हे विश्वावसो कन्याकामिन् गन्धर्व उदीर्ष्व उद्गच्छ । 'ईर गतौ' । आदादिकः । अनुदात्तेत् । तस्य लोटि रूपम् । 'विश्वावसुर्नाम गन्धर्वः कन्यानामधिपतिर्वतः । लभामि तेन कन्याम्' इति हि मन्त्रः । तादृशं देव त्वां नमसा नमस्कारेण ईळामहे स्तुमः । स त्वम् अन्यां प्रफर्व्यं बृहन्नितम्बां[2] कन्याम् इच्छ । जायां मां पत्या सह पुनः सं सृज ॥

अनृक्षरा ऋजवः सन्तु पन्था येभिः सखायो यन्ति नो वरेयम् ।
समर्यमा सं भगो नो निनीयात्सं जास्पत्यं सुयममस्तु देवाः ॥ २३ ॥

अनृक्षराः । ऋजवः । सन्तु । पन्थाः । येभिः । सखायः । यन्ति । नः । वरेऽयम् ।
सम् । अर्यमा । सम् । भगः । नः । निनीयात् ।
सम् । जाःऽपत्यम् । सुऽयमम् । अस्तु । देवाः ॥ २३ ॥

हे देवाः पन्थाः पन्थानो मार्गाः अनृक्षराः । ऋक्षरः कण्टक उच्यते । कण्टकरहिताः ऋजवः अकुटिलाश्च सन्तु येभिः यैः पथिभिः नः अस्माकं सखायः वरप्रेषिताः वरेयं वरैर्याचितव्यं पितरं प्रति यन्ति गच्छन्ति ते पन्था इति । किंच अर्यमा देवः[3] नः अस्मान्[1] सं निनीयात् सम्यक् प्रापयेत् । तथा भगः देवः सं निनीयात् । हे देवाः आर्यमणमस्तु पतिकुलमिति शेषः । तथैव जास्पत्यं जायापत्योर्युगलं सुयमम् अस्तु सुमिथुनमस्तु ॥

पत्न्या योक्त्रविमोचने 'प्र त्वा मुञ्चामि' इत्येषा । सूत्रितं च — 'अथास्या योक्त्रं विचृतेत्प्र त्वा मुञ्चामि वरुणस्य पाशात्' ( आश्व. श्रौ. १. ११ ) इति ॥

प्र त्वा मुञ्चामि वरुणस्य पाशाद्येन त्वाबध्नात्सविता सुशेवः ।
ऋतस्य योनौ सुकृतस्य लोकेऽरिष्टां त्वा सह पत्या दधामि ॥ २४ ॥

१. ल-म-ते । २. म-ल१,२,३ ६.५.८.म-'बृहन्नितम्बां' नास्ति । ३. ल-म-देवोऽर्यमा ।

प्र । त्वा । मुञ्चामि । वरुणस्य । पाशात् । येन । त्वा । अबध्नात् । सविता । सुऽशेवः ।
ऋतस्य । योनौ । सुऽकृतस्य । लोके । अरिष्टाम् । त्वा । सह । पत्या । दधामि ॥ २४ ॥

बालां प्राग्भिन् सविता प्रेरितो वरुण आत्मपाशैर्बध्नाति । तस्मात् वरुणस्य पाशात् हे वधु त्वा त्वां प्र मुञ्चामि येन पाशेन त्वा त्वां सविता वरुणस्य प्रेरकः सुशेवः सुसुखः अबध्नात् बन्धनं कृतवान् । यज्ञविनियोगपक्षे पत्नीं योक्त्रेण बध्नाति । बन्धनस्य वरुणोऽभिमानी । अतो वरुणपाशाद्योक्त्रात् मुञ्चामि येन योक्त्रेण सविता कर्मणामनुज्ञाता देव ऋत्विग्द्वारेणाबध्नात्[1] । तं[2] मोचयित्वा च ऋतस्य यज्ञस्य योनौ स्थाने यागभूमौ सुकृतस्य लोके कर्मक्षेत्रे भूलोके च अरिष्टाम् अहिंसितां त्वां पुत्रार्थं पत्या सह दधामि स्थापयामि ॥

प्रेतो मुञ्चामि नामुतः सुबद्धाममुतस्करम् ।
यथेयमिन्द्र मीढ्वः सुपुत्रा सुभगासति ॥ २५ ॥

प्र । इतः । मुञ्चामि । न । अमुतः । सुऽबद्धाम् । अमुतः । करम् ।
यथा । इयम् । इन्द्र । मीढ्वः । सुऽपुत्रा । सुऽभगा । असति ॥ २५ ॥

इतः पितृकुलात् प्र मुञ्चामि त्वां न अमुतः भर्तृगृहात् प्रमुञ्चामि । अमुतः भर्तृगृहे सुबद्धां करम् । यथेयं कन्या हे इन्द्र मीढ्वः सेक्तः सुपुत्रा सुभगा सुष्ठुभाग्या वा असति भवति तथा कुरु ॥　　॥ २५ ॥

विवाहानन्तरभाविनि प्रयाणे ‘पूषा त्वेतो नयतु’ इत्यनया रथादियानमारोहयेत् । सूत्रितं च— ‘पूषा त्वेतो नयतु हस्तगृह्येति यानमारोहयेत्’ ( आश्व. गृ. १. ८. १ ) इति ॥

पूषा त्वेतो नयतु हस्तगृह्याश्विना त्वा प्र वहतां रथेन ।
गृहान् गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमा वदासि ॥ २६ ॥

पूषा । त्वा । इतः । नयतु । हस्तऽगृह्य । अश्विना । त्वा । प्र । वहताम् । रथेन ।
गृहान् । गच्छ । गृहऽपत्नी । यथा । असः । वशिनी । त्वम् । विदथम् । आ । वदासि ॥ २६ ॥

हस्तगृह्य आत्तहस्तः पूषा त्वा त्वाम् इतः नयतु प्रापयतु । अश्विना अश्विनौ त्वा त्वां रथेन प्र वहतां प्रगमयताम् । गृहान् भर्तृसंबन्धिनः गच्छ त्वं[3] गृहपत्नी यथासः भवसि स्वगृहस्वामिनी भवसि । वशिनी सर्वेषां गृहगतानां वशं प्रापयित्री पत्युर्वशे वर्तमाना वा विदथं पतिगृहम् आ वदासि आवदसि । गृहस्थितं भृत्यादिजनमाचर ॥

‘इह प्रियम्’ इत्येषा ऋक् गृहप्रवेशनी । सूत्रितं च— ‘इह प्रियं प्रजया ते समृध्यतामिति गृहं प्रवेशयेत्’ ( आश्व. गृ. १. ८. ८ ) इति ॥

इह प्रियं प्रजया ते समृध्यतामस्मिन् गृहे गार्हपत्याय जागृहि ।
एना पत्या तन्वं१ सं सृजस्वाधा जिव्री विदथमा वदाथः ॥ २७ ॥

---

१. ग-त३—ऋत्विग्व्याजेनाबध्नात्; त१.२.३.५.६.८-म२.४.६—ऋत्विग्व्याजेनाबध्नात् । २. ग-त-म१. २.४.६.८—‘तं’ नास्ति । ३. त-म—त्वं यथा ।

इह । प्रियम् । प्रऽजया । ते । सम् । ऋध्यताम् । अस्मिन् । गृहे । गार्हऽपत्याय । जागृहि ।
एना । पत्या । तन्वम् । सम् । सृजस्व । अध । जिव्री इति । विदथम् । आ । वदाथः ॥ २७ ॥

हे वधु ते तव इह अस्मिन् पतिकुले प्रियं प्रजया सह समृध्यताम्। अस्मिन्गृहे गार्हपत्याय गृहपतित्वाय जागृहि बुध्यस्व। एना अनेन पत्या सह तन्वं स्वीयं शरीरं सं सृजस्व। संसृष्टा भव। अध अथ जिव्री जीर्णौ जायापती युवां विदथं गृहम् आ वदाथः आभिमुख्येन वदतम्[1] ॥

नीललोहितं भवति कृत्यासक्तिर्व्यज्यते ।
एधन्ते अस्या ज्ञातयः पतिर्बन्धेषु बध्यते ॥ २८ ॥

नीलऽलोहितम् । भवति । कृत्या । आसक्तिः । वि । अज्यते ।
एधन्ते । अस्याः । ज्ञातयः । पतिः । बन्धेषु । बध्यते ॥ २८ ॥

कृत्या अभिचाराभिमानिनी देवता नीललोहितं भवति। नीलं च लोहितं च तस्या रूपं भवतीत्यर्थः। सा कृत्या आसक्तिः आसक्तादयो संबद्धा व्यज्यते। त्यज्यत इत्यर्थः। तस्यां कृत्यायामपगतायाम् अस्याः वध्वाः ज्ञातयः एधन्ते वर्धन्ते। पतिः च बन्धेषु सांसारिकेषु बध्यते ॥

परा देहि शामुल्यं ब्रह्मभ्यो वि भजा वसु ।
कृत्यैषा पद्वती भूत्वी जाया विशते पतिम् ॥ २९ ॥

परा । देहि । शामुल्यम् । ब्रह्मऽभ्यः । वि । भज । वसु ।
कृत्या । एषा । पत्ऽवती । भूत्वी । आ । जाया । विशते । पतिम् ॥ २९ ॥

शामुल्यम्। शामलमित्यर्थः। शमलं शारीरं मलम्। शरीरावच्छन्नस्य[2] मलस्य धारकं वस्त्रं परा देहि परात्यज। तत्पापनिवृत्त्यर्थं ब्रह्मभ्यः ब्राह्मणेभ्यः वसु धनं वि भज प्रयच्छेत्यर्थः। किमर्थं वधूवासःपरित्याग इति चेत् उच्यते। एषा कृत्या पद्वती पादवती सती जाया भूत्वी[3] भूत्वा पतिं विशते। कृत्यारूपवासःप्रवेशात् कृत्या जाया भूत्वा विशत इत्युपचर्यते। तत्परित्यागे कृत्यैव त्यक्ता भवतीत्यर्थः। यदि वधूवासः स्वयं निधत्ते तदैवं भवतीति वधूवासःसंस्पर्शनं निन्दायुक्तम् ॥

अश्रीरा तनूर्भवति रुशती पापयामुया ।
पतिर्यद्वध्वो वाससा स्वमङ्गमभिधित्सते ॥ ३० ॥

अश्रीरा । तनूः । भवति । रुशती । पापया । अमुया ।
पतिः । यत् । वध्वः । वाससा । स्वम् । अङ्गम् । अभिऽधित्सते ॥ ३० ॥

१. ग४-त४.५–वदथः; त१.२.३.६.८-म–वदतः। २. ग-त१.२.३.७–शरीराच्छन्नस्य; त४.५–शरीरोच्छन्नस्य; त६-७–शरीरामरीछन्नस्य; त८–शरीरामषीछन्नस्य; म१.४.७.८–छिन्नस्य। ३. ग-त-म–‘भूत्वी’ नास्ति।

अत्रापि वधूवासःसंस्पर्शनिन्दोच्यते । तनूः वरस्य संबन्धिनी अश्लीरा अश्लीका भवति । कथं स्यादिति उच्यते । रुशती । रुशदिति वर्णनाम । दीप्तया अमुया अनया पापया पापरूपया कृत्यया[1] युक्ता चेत्तनूः । तदेवाह । पतिर्यत् यदि वध्वो वाससा स्वमङ्गमभिधित्सते परिधातुमिच्छति ॥　　॥ २५ ॥

ये वध्वश्चन्द्रं वहतुं यक्ष्मा यन्ति जनादनु ।
पुनस्तान् यज्ञिया देवा नयन्तु यत आगताः ॥ ३१ ॥

ये । वध्वः । चन्द्रम् । वहतुम् । यक्ष्माः । यन्ति । जनात् । अनु ।
पुनरिति । तान् । यज्ञियाः । देवाः । नयन्तु । यतः । आऽगताः ॥ ३१ ॥

वध्वश्चन्द्रं[2] हिरण्यरूपं वहतुं ये यक्ष्माः व्याधयः अनु यन्ति प्राप्नुवन्ति जनात् अस्मद्विरोधिनः सकाशात् । यद्वा । जनाय्यमानाद्यस्मात् । तान्[3] पुनः नयन्तु प्रापयन्तु यज्ञियाः यज्ञार्हाः देवाः इन्द्रादयः । यत आगताः यस्मात् यक्ष्मा आगतास्तत्र नाशयन्तु ॥

वध्वाः प्रयाणे 'मा विदन्' इत्येषा जप्या । सूत्रितं च—'कल्याणेषु देवकुलचतुष्पथेषु मा विदन् परिपन्थिन इति जपेत्' ( आश्व. गृ. १. ८. ६ ) इति ॥

मा विदन् परिपन्थिनो य आसीदन्ति दंपती ।
सुगेभिर्दुर्गमतीतामप द्रान्त्वरातयः ॥ ३२ ॥

मा । विदन् । परिऽपन्थिनः । ये । आऽसीदन्ति । दंपती इति दम्ऽपती ।
सुऽगेभिः । दुःऽगम् । अति । इताम् । अप । द्रान्तु । अरातयः ॥ ३२ ॥

परिपन्थिनः पर्यवस्थातारः शत्रवः मा विदन् मा प्रापयन् ये परिपन्थिनः दंपती आसीदन्ति अभिगच्छन्ति । सुगेभिः सुगमैर्मार्गैः दुर्गं दुःखेन गन्तुं शक्यं दुर्गमं देशम् अतीतां अतिगच्छताम् । अरातयः अदातारः शत्रवः अप द्रान्तु अपगच्छन्तु[4] ॥

सुमङ्गलीरियं वधूरिमां समेत पश्यत ।
सौभाग्यमस्यै दत्त्वायाथास्तं वि परेतन ॥ ३३ ॥

सुऽमङ्गलीः । इयम् । वधूः । इमाम् । सम्ऽएत । पश्यत ।
सौभाग्यम् । अस्यै । दत्त्वाय । अथ । अस्तम् । वि । परा । इतन ॥ ३३ ॥

इयं वधूः सुमङ्गलीः शोभनमङ्गला । अतः इमां सर्वे आशीःकर्तारः समेत संगच्छत । तां पश्यत च । तां संगताश्च दृष्ट्वा अस्यै वध्वै सौभाग्यं दत्त्वाय दत्त्वा अथ अस्तम् । गृहनामैतत् । स्वस्वसंबन्धिनं वि परेतन विविधं परागच्छत ॥

---

१. ग-त-स-कृत्यया यदि । २. त-अ-ये वध्वश्चंद्रं । ३. ग-त-तान् यक्ष्मान् । ४. ग४-अपगच्छंतु । विधिवासदेशे वध्वा निविक्षमाणतान् मनुष्यान् सुमंगलीरियमनया ईक्षते । तथा च सूत्रितं-वासे वासे सुमंगलीरियं वधूरितीक्षकानीक्षेत ( आश्व. गृ. १.८.७ ) इति ।

तृष्टमेतत्कटुकमेतदपाष्ठवद्विषवन्नैतदत्तवे ।
सूर्यां यो ब्रह्मा विद्यात्स इद्वाधूयमर्हति ॥ ३४ ॥

तृष्टम् । एतत् । कटुकम् । एतत् । अपाष्ठऽवत् । विषऽवत् । न । एतत् । अत्तवे ।
सूर्याम् । यः । ब्रह्मा । विद्यात् । सः । इत् । वाधूऽयम् । अर्हति ॥ ३४ ॥

अनयापि वधूवस्त्रपरित्यागः प्रतिपाद्यते । एतत् वस्त्रं तृष्टं दाहजनकम् । तथा एतत् कटुकम् । तथा अपाष्ठवत् । अपाष्ठमपरिस्थितमृजीषम् । तद्वत् । तथा विषवत् । नैतत् वस्त्रम् अत्तवे अत्तव्यम् । अनुपयोग्यम् । यो ब्रह्मा ब्राह्मणः सूर्याम् इमानीं प्रस्तुतां देवीं विद्यात् सम्यग्जानीयात् स इत् स एव वाधूयं वधूवस्त्रम् अर्हति[1] ॥

आशसनं विशसनमथो अधिविकर्तनम् ।
सूर्यायाः पश्य रूपाणि तानि ब्रह्मा तु शुन्धति ॥ ३५ ॥

आऽशसनम् । विऽशसनम् । अथो इति । अधिऽविकर्तनम् ।
सूर्यायाः । पश्य । रूपाणि । तानि । ब्रह्मा । तु । शुन्धति ॥ ३५ ॥

आशसनं सूत्रधानम् । तदान्यवर्णं भवति । विशसनं शिरसि निधीयमानम् । तादृशं दशान्ते निधीयमानम् अधिविकर्तनं यत्त्रिधा वासो विकृन्तन्ति । तान्याशसनादीनि वासांस्यव-स्थितानि सूर्यायाः रूपाणि भवन्ति । तानि पश्य । एवंभूतान्याशसनादीनि पुरा सूर्यास्वशरीरे स्थितान्यमङ्गलानि वासांसि विधत्ते । तानि रूपाणि सूर्याविद् ब्रह्मा तु ब्राह्मण एव तस्माद्वाससः सकाशात् शुन्धति अपनयति ॥ ॥ २६ ॥

विवाहे कन्याहस्तग्रहणे 'गृभ्णामि' इत्येषा । सूत्रितं च—'गृभ्णामि ते सौभगत्वाय हस्तमि-त्यङ्गुष्ठमेव गृह्णीयात्' ( आश्व. गृ. १. ७. ३ ) इति ॥

गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासः ।
भगो अर्यमा सविता पुरंधिर्मह्यं त्वादुर्गार्हपत्याय देवाः ॥ ३६ ॥

गृभ्णामि । ते । सौभगऽत्वाय । हस्तम् । मया । पत्या । जरत्ऽअष्टिः । यथा । असः ।
भगः । अर्यमा । सविता । पुरम्ऽधिः । मह्यम् । त्वा । अदुः । गार्हऽपत्याय । देवाः ॥ ३६ ॥

हे वधु ते तव हस्तम् अहं गृभ्णामि गृह्णामि । किमर्थम् । सौभगत्वाय सौभाग्याय । मया पत्या त्वं यथा जरदष्टिः प्राप्तवार्धक्या असः भवसि । भगो अर्यमा सविता पुरंधिः पूषा एते[2] देवाः त्वा त्वां मह्यम् अदुः दत्तवन्तः । किमर्थम् । गार्हपत्याय । यथाहं गृहपतिः स्यामिति ॥

तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या३ वपन्ति ।
या न ऊरू उशती विश्रयाते यस्यामुशन्तः प्रहराम शेपम् ॥ ३७ ॥

१. ग—अर्हति । अन्यस्तु प्रतिगृह्णानः प्रत्यर्थं धारितवतः सूर्याविदे वधूवस्त्रं दद्यादिति । २. त-म—स्वेते

ताम् । पूषन् । शिवऽतमाम् । आ । ईरयस्व । यस्याम् । बीजम् । मनुष्याः । वपन्ति ।
या । नः । ऊरू इति । उशती । विऽश्रयाते । यस्याम् । उशन्तः । प्रऽहराम । शेपम् ॥३७॥

हे पूषन् पोषकैतन्नामक देव शिवतमाम् अत्यन्तमङ्गलभूतां ताम्[1] एरयस्व आ ईरय सर्वतः प्रेरय । यस्याम् ऊरौ बीजं रेतोलक्षणं मनुष्या वपन्ति आदधते । या नः अस्माकम् ऊरू उशती कामयमाना विश्रयाते । यस्याम् ऊरौ उशन्तः कामयमाना वयं शेपं स्पर्शनशीलं पुंस्प्रजननं प्रहराम । ऊरौ व्यञ्जनसंबन्धं करवामेत्यर्थः ॥

**तुभ्यमग्रे पर्यवहन्त्सूर्यां वहतुना सह ।**
**पुनः पतिभ्यो जायां दा अग्ने प्रजया सह ॥ ३८ ॥**

तुभ्यम् । अग्रे । परि । अवहन् । सूर्याम् । वहतुना । सह ।
पुनरिति । पतिऽभ्यः । जायाम् । दाः । अग्ने । प्रऽजया । सह ॥ ३८ ॥

गन्धर्वा हे अग्ने तुभ्यमग्रे पर्यवहन् । प्रायच्छन्नित्यर्थः । काम् । सूर्याम् । केन सह । वहतुना सह । त्वं च तां सूर्यां वहतुना सह सोमाय प्रायच्छः । तद्वदिदानीमपि हे अग्ने पुनः पतिभ्यः स्वभर्त्रे जायां प्रजया सह दाः देहि ॥

**पुनः पत्नीमग्निरदादायुषा सह वर्चसा ।**
**दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् ॥ ३९ ॥**

पुनरिति । पत्नीम् । अग्निः । अदात् । आयुषा । सह । वर्चसा ।
दीर्घऽआयुः । अस्याः । यः । पतिः । जीवाति । शरदः । शतम् ॥ ३९ ॥

पुनः स्वगृहीतां पत्नीम् अग्निः आयुषा[2] सह वर्चसा सह[2] अदात् प्रायच्छत् । अस्याः अग्निदत्तायाः यः पतिः पुमान् सः दीर्घायुः सन् शरदः शतं शतसंवत्सरं जीवाति जीवतु ॥

**सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः ।**
**तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥ ४० ॥**

सोमः । प्रथमः । विविदे । गन्धर्वः । विविदे । उत्ऽतरः ।
तृतीयः । अग्निः । ते । पतिः । तुरीयः । ते । मनुष्यऽजाः ॥ ४० ॥

जातां कन्यां सोमः प्रथमभावी सन् विविदे लब्धवान् । गन्धर्वः उत्तरः सन् विविदे लब्धवान् । अग्निः तृतीयः पतिः ते तव । पश्चात् मनुष्यजाः पतिः तुरीयः चतुर्थः ॥ ॥२०॥

**सोमो ददद्गन्धर्वाय गन्धर्वो ददग्नये ।**
**रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥ ४१ ॥**

---

१. ख-ग-तां ऊरू । २. ग-त-मु—आयुषा वर्चसा च सह; भ—आयुषा सह वर्चसा च ।

सोमः । द॒द॒त् । ग॒न्ध॒र्वाय॑ । ग॒न्ध॒र्वः । द॒द॒त् । अ॒ग्नये॑ ।
र॒यिम् । च॒ । पु॒त्रान् । च॒ । अ॒दा॒त् । अ॒ग्निः । मह्य॑म् । अथो॒ इति॑ । इ॒माम् ॥ ४१ ॥

सोमः गान्धर्वाय प्रथमं ददत् प्रादात् । गान्धर्वः अग्नये प्रादात् । अथो अपि च अग्निः इमां कन्यां रयिं धनं पुत्रांश्च मह्यम् अदात् ॥

इ॒हैव स्तं॒ मा वि यौ॑ष्टं॒ विश्व॒मायु॒र्व्य॑श्नुतम् ।
क्रीळ॑न्तौ पु॒त्रैर्नप्तृ॑भि॒र्मोद॑मानौ॒ स्वे गृ॒हे ॥ ४२ ॥

इ॒ह । ए॒व । स्त॒म् । मा । वि । यौ॒ष्ट॒म् । विश्व॑म् । आयुः॑ । वि । अ॒श्नु॒त॒म् ।
क्रीळ॑न्तौ । पु॒त्रैः । नप्तृ॑ऽभिः । मोद॑मानौ । स्वे । गृ॒हे ॥ ४२ ॥

इहैव स्तम् इहैवास्मिँल्लोके स्तं भवतम् । मा वियौष्टं मा पृथग्भूतम् । विश्वमायुर्व्यश्नुतं प्राप्नुतम् । किंच पुत्रैर्नप्तृभिः पौत्रैः सह स्वे गृहे मोदमानौ भवतमिति शेषः ॥

गृहप्रवेशे ' आ नः प्रजां जनयतु ' इत्याद्याश्चतस्रो होमार्थाः । सूत्रितं च— ' आ नः प्रजां जनयतु प्रजापतिरिति चतसृभिः प्रत्यृचं हुत्वा ' ( आश्व. गृ. १. ८. ९ ) इति ॥

आ नः॑ प्र॒जां ज॑नयतु प्र॒जाप॑तिराजर॒साय॒ सम॑नक्त्वर्य॒मा ।
अदु॑र्मङ्गलीः पतिलो॒कमा वि॑श॒ शं नो॑ भव द्वि॒पदे॒ शं चतु॑ष्पदे ॥ ४३ ॥

आ । नः॒ । प्र॒ऽजाम् । ज॒न॒य॒तु॒ । प्र॒जाऽप॑तिः । आ॒ऽज॒र॒साय॑ । सम् । अ॒न॒क्तु॒ । अ॒र्य॒मा ।
अदुः॑ऽमङ्गलीः । प॒ति॒ऽलो॒कम् । आ । वि॒श॒ । शम् । नः॒ । भ॒व॒ । द्वि॒ऽपदे॑ । शम् । चतुः॑ऽपदे ॥ ४३ ॥

प्रजापतिः देवः नः अस्माकं प्रजाम् आ जनयतु । अर्यमा च आजरसाय जरापर्यन्तं जीवनाय समनक्तु संगमयतु । सा त्वम् अदुर्मङ्गलीः दुर्मङ्गलरहिता सुमङ्गली । यद्वा । या मङ्गलाचारान् दूषयति सा दुर्मङ्गली । ततोऽन्या अदुर्मङ्गली । तादृशी सती पतिलोकं पतिसमीपम् आ विश प्राप्नुहि । नः अस्माकं द्विपदे शं भव । तथा च शं चतुष्पदे भव ॥

अघो॑रचक्षु॒रप॑तिघ्न्येधि शि॒वा प॒शुभ्यः॑ सु॒मनाः॑ सु॒वर्चाः॑ ।
वी॒र॒सूर्दे॒वका॑मा स्यो॒ना शं नो॑ भव द्वि॒पदे॒ शं चतु॑ष्पदे ॥ ४४ ॥

अघो॑रऽचक्षुः । अप॑तिऽघ्नी । ए॒धि॒ । शि॒वा । प॒शुऽभ्यः॑ । सु॒ऽमनाः॑ । सु॒ऽवर्चाः॑ ।
वी॒र॒ऽसूः । दे॒वऽका॑मा । स्यो॒ना । शम् । नः॒ । भ॒व॒ । द्वि॒ऽपदे॑ । शम् । चतुः॑ऽपदे ॥ ४४ ॥

हे वधु[2] त्वम् अघोरचक्षुः क्रोधरहभयंकरचक्षुः[3] एधि भव । तथा अपतिघ्नी भव । तथा पशुभ्यः शिवा हितकरी भव सुमनाः सुवर्चाः च भव । वीरसूः पुत्राणामेव प्रसवित्री देवकामा स्योना सुखकरा च भव ॥

१. गर–किंच क्रीळंतौ । २. गन्ता-भ–वधूः । ३. त-भ–क्रोधाद्भयंकरचक्षुः ।

इ॒मां त्वमि॑न्द्र मीढ्वः सुपु॒त्रां सु॒भगां॑ कृणु ।
दशा॑स्यां पु॒त्राना धे॑हि॒ पति॑मेकाद॒शं कृ॑धि ॥ ४५ ॥

इ॒माम् । त्वम् । इ॒न्द्र॒ । मी॒ढ्वः॒ । सु॒ऽपु॒त्राम् । सु॒ऽभगा॑म् । कृ॒णु॒ ।
दश॑ । अ॒स्या॒म् । पु॒त्रान् । आ । धे॒हि॒ । पति॑म् । ए॒का॒द॒शम् । कृ॒धि॒ ॥ ४५ ॥

हे इन्द्र त्वम् इमां वधूं सुपुत्रां सुभगां च कृणु कुरु। अस्यां वध्वां दश पुत्रान् आ धेहि। पतिमेकादशं कृधि। दश पुत्राः पतिरेकादशो यथा स्यात्तथा कुरु॥

स॒म्राज्ञी॒ श्वशु॑रे भव स॒म्राज्ञी॑ श्व॒श्र्वां भ॑व ।
नना॑न्दरि स॒म्राज्ञी॑ भव स॒म्राज्ञी॒ अधि॑ दे॒वृषु॑ ॥ ४६ ॥

स॒म्ऽरा॒ज्ञी॒ । श्वशु॑रे । भ॒व॒ । स॒म्ऽरा॒ज्ञी॒ । श्व॒श्र्वाम् । भ॒व॒ ।
नना॑न्दरि । स॒म्ऽरा॒ज्ञी॒ । भ॒व॒ । स॒म्ऽरा॒ज्ञी॒ । अधि॑ । दे॒वृषु॑ ॥ ४६ ॥

हे वधु श्वशुरादिषु त्वं सम्राज्ञी भव। देवृषु। देवरेष्वित्यर्थः॥

'समञ्जन्तु' इत्येषा वरस्य दधिप्राशने वधूवरयोर्हृदयस्पर्शने वा विनियुक्ता। तथा च सूत्रितं —'समञ्जन्तु विश्वे देवा इति दध्नः[1] प्राश्य प्रतिप्रयच्छेदाज्यशेषेण वानक्ति हृदये' (आश्व. गृ. १. ८. ९) इति॥

सम॑ञ्जन्तु॒ विश्वे॑ दे॒वाः समापो॒ हृद॑यानि नौ ।
सं मा॑त॒रिश्वा॒ सं धा॒ता समु॒ देष्ट्री॑ दधातु नौ ॥ ४७ ॥

सम् । अ॒ञ्ज॒न्तु॒ । विश्वे॑ । दे॒वाः । सम् । आपः॑ । हृद॑यानि । नौ॒ ।
सम् । मा॒त॒रिश्वा॑ । सम् । धा॒ता । सम् । ऊँ इति॑ । देष्ट्री॑ । द॒धा॒तु॒ । नौ॒ ॥ ४७ ॥

विश्वे देवाः सर्वे देवाः नौ हृदयानि मानसानि समञ्जन्तु सम्यगञ्जन्तु। अपगतदुःखादि-क्लेशानि कृत्वा लौकिकवैदिकविषयेषु प्रकाशयुक्तानि कुर्वन्त्वित्यर्थः। आपः च सम् अञ्जन्तु। तथा मातरिश्वा नौ हृदयानि सं दधातु। आवयोर्बुद्धीः परस्परानुकूलाः करोत्वित्यर्थः। धाता च सं दधातु। देष्ट्री दात्री फलानाम्। सरस्वतीत्यर्थः। सा च सं दधातु संधानं करोतु॥ ॥२८॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्य-
धुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
ऋक्संहिताभाष्येऽष्टमाष्टके तृतीयोऽध्यायः॥

१. ग१.२-स-म१.२.४.७.८-दधि।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥

अथ सप्तमाष्टकस्य चतुर्थोऽध्याय आरभ्यते। तत्र 'वि हि' इति त्रयोविंशत्यृचं द्वितीयं सूक्तम्। वृषाकपिर्नामेन्द्रस्य पुत्रः। स चेन्द्राणीन्द्रश्चैते त्रयः संभूय संवादं कृतवन्तः। तत्र 'वि हि सोतोरसृक्षत' 'किं सुबाहो स्वङ्गुरे' 'इन्द्राणीमासु नारिषु' इति द्वे 'उक्ष्णो हि मे' 'अयमेमि' इति षण्णां तृचानां इत्येता नवर्च इन्द्रवाक्यानि। अतस्तासामिन्द्र[1] ऋषिः। 'परा हीन्द्र' इति पञ्च 'अवीराम्' इति द्वे 'वृषभो न तिग्मशृङ्गः' इत्याद्याश्चतस्र इत्येकादशर्च इन्द्राण्या वाक्यानि। अतस्तासामिन्द्राण्यृषिः। 'उवे अम्ब' 'वृषाकपायि रेवति' 'पर्शुर्ह नाम' इति तिस्रो वृषाकपेर्वाक्यानि। अतस्तासां वृषाकपिर्ऋषिः। सर्वं सूक्तमैन्द्रं पञ्चपदापङ्क्तिच्छन्दस्कम्। तथा चानुक्रान्तं—'वि हि त्र्यधिकैन्द्री वृषाकपिरिन्द्राणीन्द्रश्च समूदिरे पाङ्क्तम्' इति। षष्ठेऽहनि ब्राह्मणाच्छंसिन उक्थ्यशस्त्रे[2] एतत्सूक्तम्। सूत्रितं च—'अथ वृषाकपिं शंसेद्यथा होताज्यायां चतुर्थे' (आश्व. श्रौ. ८. ३) इति। यदि षष्ठेऽहन्युक्थ्यस्तोत्राणि द्विपदासु न स्तुवीरन् मासका यदि वेदमहरग्निष्टोमः स्यात्तदानीं ब्राह्मणाच्छंसी माध्यंदिने सवने आरम्भणीयाया[3] ऊर्ध्वमेतत्सूक्तं शंसेद्विश्वजित्यपि। तथा च सूत्रितं—'सुकीर्तिं ब्राह्मणाच्छंसी वृषाकपिं च पङ्क्तिशंसम्' (आश्व. श्रौ. ८. ४) इति॥

**वि हि सोतोरसृक्षत नेन्द्रं देवममंसत।**
**यत्रामदद्वृषाकपिरर्यः पुष्टेषु मत्सखा विश्वस्मादिन्द्र उत्तरः॥ १॥**

वि। हि। सोतोः। असृक्षत। न। इन्द्रम्। देवम्। अमंसत।
यत्र। अमदत्। वृषाकपिः। अर्यः। पुष्टेषु। मत्ऽसखा। विश्वस्मात्। इन्द्रः। उत्ऽतरः॥ १॥

सोतोः सोमाभिषवं कर्तुं वि असृक्षत। यागं प्रति मया विसृष्टा अनुज्ञाताः स्तोतारो वृषाकपेर्यष्टारः। हि इति पूरणः। तत्र देवं द्योतमानम् इन्द्रं मां न अमंसत। मया प्रेरिताः सन्तोऽपि ते स्तोतारो न स्तुतवन्तः। किंतु मम पुत्रं वृषाकपिमेव स्तुतवन्तः। यत्र येषु पुष्टेषु सोमेन प्रवृद्धेषु यागेषु अर्यः स्वामी वृषाकपिः मम पुत्रः मत्सखा मम सखिभूतः सन् अमदत् सोमपानेन हृष्टोऽभूत्। यद्यप्येवं तथापि[4] इन्द्रः अहं विश्वस्मात् सर्वस्माज्जगतः उत्तरः उत्कृष्टतरः। माधवभट्टास्तु वि हि सोतोरित्येषर्गिन्द्राण्या वाक्यमिति मन्यन्ते। तथा च तद्वचनम्। इन्द्राण्यै कल्पितं हविः कश्चिन्मृगोऽदूदुषदिन्द्रपुत्रस्य वृषाकपेर्विषये वर्तमानः। तत्रेन्द्रमिन्द्राणी वदति। तस्मिन्पक्षे त्वस्या ऋचोऽयमर्थः। सोतोः सोमाभिषवं कर्तुं वि व्यसृक्षन्। उपरतसोमाभिषवा आसन् यजमाना इत्यर्थः। किंच मम पतिमिन्द्रं देवं नामंसत स्तोतारो न स्तुवन्ति। कुत्रेति चेदाह। यत्र यस्मिन् जनपदे पुष्टेषु प्रवृद्धेषु धनेष्वर्यः स्वामी वृषाकपिरमदत्। मत्सखा मत्प्रियश्चेन्द्रो विश्वस्मात् सर्वस्माज्जगत उत्तरः उत्कृष्टतरः॥

**परा हीन्द्र धावसि वृषाकपेरति व्यथिः।**
**नो अह प्र विन्दस्यन्यत्र सोमपीतये विश्वस्मादिन्द्र उत्तरः॥ २॥**

१. त४.५.८-भ–अत आसामिंद्र। २. त१.२.३–उक्थिशस्त्रे; त७-भ–उक्थशस्त्रे। ३. त-भ–आरम्भणीयाया। ४. त-भ–तथा हि।

परा॑ । हि । इ॒न्द्र॒ । धाव॑सि । वृ॒षाक॑पेः । अति॑ । व्यथिः॑ ।
नो इति॑ । अह॑ । प्र । वि॒न्द॒सि॒ । अ॒न्यत्र॑ । सोम॑ऽपीतये । विश्व॑स्मात् । इन्द्रः॑ । उत्ऽत॑रः ॥२॥

हे इन्द्र त्वम् अति अत्यन्तं व्यथिः चलितः वृषाकपेः वृषाकपिं परा धावसि प्रतिगच्छसि । अन्यत्र सोमपीतये सोमपानाय नो अह नैव च प्र विन्दसि प्रगच्छसीत्यर्थः । सोऽयम् इन्द्रः विश्वस्मात् उत्तरः ॥

किम॒यं त्वां वृ॒षाक॑पिश्च॒कार॒ हरि॑तो मृ॒गः ।
यस्मा॑ इर॒स्यसीदु॒ न्व१॒॑र्यो वा॑ पुष्टि॒मद्वसु॒ विश्व॑स्मा॒दिन्द्र॒ उत्त॑रः ॥ ३ ॥

किम् । अ॒यम् । त्वाम् । वृ॒षाक॑पिः । च॒कार॑ । हरि॑तः । मृ॒गः ।
यस्मै॑ । इ॒र॒स्यसि॑ । इत् । ऊँ इति॑ । नु । अ॒र्यः । वा॒ । पु॒ष्टि॒ऽमत् । वसु॑ ।
विश्व॑स्मात् । इन्द्रः॑ । उत्ऽत॑रः ॥ ३ ॥

हे इन्द्र त्वां प्रति हरितः हरितवर्णः मृगः मृगभूतः अयं वृषाकपिः । मृगजातिर्हि वृषाकपिः । किं प्रियं चकार अकार्षीत् । यस्मै[2] वृषाकपये पुष्टिमत् पोषयुक्तं वसु धनम् अर्यो वा उदार इव स त्वं नु क्षिप्रम् इरस्यसीत् प्रयच्छस्येव । यः इन्द्रः विश्वस्मात् उत्तरः ॥

यमि॒मं त्वं वृ॒षाक॑पिं प्रि॒यमि॑न्द्राभि॒रक्ष॑सि ।
श्वा न्व॑स्य जम्भिष॒दपि॒ कर्णे॑ वराह॒युर्विश्व॑स्मा॒दिन्द्र॒ उत्त॑रः ॥ ४ ॥

यम् । इ॒मम् । त्वम् । वृ॒षाक॑पिम् । प्रि॒यम् । इ॒न्द्र॒ । अ॒भि॒ऽरक्ष॑सि ।
श्वा । नु । अ॒स्य॒ । ज॒म्भि॒ष॒त् । अपि॑ । कर्णे॑ । व॒रा॒ह॒ऽयुः । विश्व॑स्मात् । इन्द्रः॑ । उत्ऽत॑रः ॥४॥

हे इन्द्र त्वं प्रियम् इष्टं पुत्रं यमिमं वृषाकपिम् अभिरक्षसि परिपालयसि अस्य एनं वृषाकपिम् । द्वितीयार्थे षष्ठी । वराहयुः वराहमिच्छन् श्वा नु क्षिप्रं जम्भिषत् भक्षयतु । अपि च कर्णे गृह्णात्विति शेषः । श्वानो हि वराहमिच्छन्ति । सिद्धमन्यत् ॥

प्रि॒या त॒ष्टानि॑ मे क॒पिर्व्य॑क्ता॒ व्य॑दूदुषत् ।
शिरो॒ न्व॑स्य रावि॒षं न सु॒गं दु॒ष्कृते॑ भुवं॒ विश्व॑स्मा॒दिन्द्र॒ उत्त॑रः ॥ ५ ॥

प्रि॒या । त॒ष्टानि॑ । मे॒ । क॒पिः । विऽअ॑क्ता । वि । अ॒दू॒दु॒ष॒त् ।
शिरः॑ । नु । अ॒स्य॒ । रा॒वि॒ष॒म् । न । सु॒ऽगम् । दुः॒ऽकृते॑ । भु॒व॒म् । विश्व॑स्मात् । इन्द्रः॑ । उत्ऽत॑रः ॥५॥

मे मह्यमिन्द्राण्यै तष्टानि यजमानैः कल्पितानि प्रिया प्रियाणि व्यक्ता व्यक्तान्याज्यैर्विशेषेणाक्तानि हवींषि कश्चित् वृषाकपेर्विषये वर्तमानः कपिः व्यदूदुषत् दूषयामास । ततोऽहम् अस्य तत्कपिस्वामिनो वृषाकपेः शिरो नु क्षिप्रं राविषं लुनीयाम् । दुष्कृते दुष्टस्य कर्मणः कर्त्रे वृषाकपयेऽस्मै सुगं सुखं न भुवम् अहं न भवेयम् । अस्मै सुखप्रदात्री न भवामीत्यर्थः । अस्या[3] मम पतिः इन्द्रः विश्वस्मात् उत्तरः ॥  ॥ १ ॥

---

१. त-म–' अति ' नास्ति । २. त–तस्मै । ३. ग–ट१,२,३,६,७,८–म–यस्याः ।

न मत्स्त्री सुभसत्तरा न सुयाशुतरा भुवत् ।
न मत्प्रतिच्यवीयसी न सक्थ्युद्यमीयसी विश्वस्मादिन्द्र उत्तरः ॥ ६ ॥

न । मत् । स्त्री । सुभसत्ऽतरा । न । सुयाशुऽतरा । भुवत् ।
न । मत् । प्रतिऽच्यवीयसी । न । सक्थि । उत्ऽयमीयसी । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ ६ ॥

मत् मत्तोऽन्या स्त्री नारी सुभसत्तरा अतिशयेन सुभगा न भुवत् न भवति । नास्तीत्यर्थः । किंच मत्तोऽन्या स्त्री सुयाशुतरा अतिशयेन सुसुखातिशयेन सुपुत्रा वा न भवति । तथा च मन्त्रान्तरं— ‘ ददाति मह्यं यादुरी याशूनां भोज्या शता ’ ( ऋ. सं. १. १२६. ६ ) इति । किंच मत् मत्तोऽन्या[1] प्रतिच्यवीयसी पुमांसं प्रति शरीरस्यात्यन्तं च्यावयित्री न अस्ति । किंच मत्तोऽन्या स्त्री सक्थ्युद्यमीयसी संभोगेऽत्यन्तसुखेप्सी न अस्ति । न मत्तोऽन्या काचिदपि नारी मैथुनेऽनुगुणं सक्थ्युद्यच्छतीत्यर्थः । मम पतिः इन्द्रः विश्वस्मात् उत्तरः उत्कृष्टः ॥

उवे अम्ब सुलाभिके यथेवाङ्ग भविष्यति ।
भसन्मे अम्ब सक्थि मे शिरो मे वीव हृष्यति विश्वस्मादिन्द्र उत्तरः ॥ ७ ॥

उवे । अम्ब । सुऽलाभिके । यथाऽइव । अङ्ग । भविष्यति ।
भसत् । मे । अम्ब । सक्थि । मे । शिरः । मे । विऽइव । हृष्यति ।
विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ ७ ॥

एवमिन्द्राण्या शप्तो वृषाकपिर्ब्रवीति । उवे इति संबोधनार्थो निपातः । हे अम्ब मातः सुलाभिके शोभनलाभे त्वया यथैव येन प्रकारेणैवोक्तं तथैव तत् अङ्ग क्षिप्रं भविष्यति भवतु । किमनेन त्वदननुप्रीतिकारिणा मृगेण मम प्रयोजनम् । किंच मे मम पितुः त्वदीयो भसत् भग उपयुज्यताम् । किंच मम पितुस्त्वदीयं सक्थि चोपयुज्यताम् । किंच मे मम पितरमिन्द्रं त्वदीयं शिरः च प्रियालापेन वीव यथा कोकिलादिः पक्षी तद्वत् हृष्यति हर्षयतु । मम पिता इन्द्रः विश्वस्मात् उत्तरः ॥

किं सुबाहो स्वङ्गुरे पृथुष्टो पृथुजाघने ।
किं शूरपत्नि नस्त्वमभ्यमीषि वृषाकपिं विश्वस्मादिन्द्र उत्तरः ॥ ८ ॥

किम् । सुबाहो इति सुऽबाहो । सुऽअङ्गुरे । पृथुस्तो इति पृथुऽस्तो । पृथुऽजघने ।
किम् । शूरऽपत्नि । नः । त्वम् । अभि । अमीषि । वृषाकपिम् । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ ८ ॥

क्रुद्धामिन्द्र[2] उपशमयति । हे सुबाहो हे शोभनबाहो स्वङ्गुरे शोभनाङ्गुलिके पृथुष्टो पृथुकेशसंघाते पृथुजघने विस्तीर्णजघने शूरपत्नि वीरभार्ये हे इन्द्राणि त्वं नः अस्मदीयं वृषाकपिं किं किमर्थम् अभ्यमीषि अभिक्रुध्यसि । एकः किंशब्दः पूरणः । यस्य पिता इन्द्रः अहं विश्वस्मात् उत्तरः ॥

---

१. ग४—मत्तोन्या स्त्री । २. ग.त४—क्रुद्धामिद्राणीमिद्र, त२.५.६.७—क्रुद्धामिन्द्राणीं ।

अवीरामिव मामयं शराररभि मन्यते ।
उताहमस्मि वीरिणीन्द्रपत्नी मरुत्सखा विश्वस्मादिन्द्र उत्तरः ॥ ९ ॥

अवीराम्ऽइव । माम् । अयम् । शरारुः । अभि । मन्यते ।
उत । अहम् । अस्मि । वीरिणी । इन्द्रऽपत्नी । मरुत्ऽसखा । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ ९ ॥

पुनरिन्द्रमिन्द्राणी[1] ब्रवीति[2] । शरारुः घातुको[2] मृगः अयं वृषाकपिः माम् इन्द्राणीम् अवीरामिव अभि मन्यते विजानाति । उत अपि च इन्द्रपत्नी इन्द्रस्य भार्या अहम् इन्द्राणी वीरिणी पुत्रवती मरुत्सखा मरुद्भिर्युक्ता च अस्मि भवामि । यस्या मम पतिः इन्द्रः विश्वस्मात् उत्तरः ॥

संहोत्रं स्म पुरा नारी समनं वाव गच्छति ।
वेधा ऋतस्य वीरिणीन्द्रपत्नी महीयते विश्वस्मादिन्द्र उत्तरः ॥ १० ॥

सम्ऽहोत्रम् । स्म । पुरा । नारी । समनम् । वा । अव । गच्छति ।
वेधाः । ऋतस्य । वीरिणी । इन्द्रऽपत्नी । महीयते । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ १० ॥

नारी स्त्री ऋतस्य सत्यस्य वेधाः विधात्री वीरिणी पुत्रवती इन्द्रपत्नी इन्द्रस्य भार्येन्द्राणी संहोत्रं स्म समीचीनं यज्ञं खलु समनं संग्रामं वा । 'समिथे समनम्' इति संग्रामनामसु पाठात् । अव प्रति पुरा गच्छति । महीयते स्तोतृभिः स्तूयते च । तस्याः मम पतिः इन्द्रः विश्वस्मात् उत्तरः ॥        ॥ २ ॥

इन्द्राणीमासु नारिषु सुभगामहमश्रवम् ।
नह्यस्या अपरं चन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः ॥ ११ ॥

इन्द्राणीम् । आसु । नारिषु । सुऽभगाम् । अहम् । अश्रवम् ।
नहि । अस्याः । अपरम् । चन । जरसा । मरते । पतिः । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ ११ ॥

अथेन्द्राणीमिन्द्रः स्तौति । आसु सौभाग्यवत्तया प्रसिद्धासु नारिषु स्त्रीषु[3] स्त्रीणां मध्ये इन्द्राणीं सुभगां सौभाग्यवतीम् अहम् इन्द्रः अश्रवम् अश्रौषम् । किंच अस्याः इन्द्राण्याः पतिः पालकः विश्वस्मात् उत्तरः उत्कृष्टतरः[4] इन्द्रः अपरं चन अन्यज्जनजातमिव जरसा वयोहान्या नहि मरते न खलु म्रियते । यद्वा । इदं वृषाकपेर्वाक्यम् । तस्मिन्[5] पक्षे त्वहमिति शब्दो वृषाकपिपरतया योज्यः । अन्यत्समानम् ॥

नाहमिन्द्राणि रारण सख्युर्वृषाकपेरृते ।
यस्येदमप्यं हविः प्रियं देवेषु गच्छति विश्वस्मादिन्द्र उत्तरः ॥ १२ ॥

न । अहम् । इन्द्राणि । ररण । सख्युः । वृषाकपेः । ऋते ।
यस्य । इदम् । अप्यम् । हविः । प्रियम् । देवेषु । गच्छति । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ १२ ॥

१. त—पुनरिन्द्राणी ब्रूते । २ ग-त-भ—'घातुको' नास्ति । ३. त-भ१.२.४—'स्त्रीषु' नास्ति ।
४. त-भ—उत्कृष्टः । ५. त-भ१.२.४.६.८—यस्मिन् ।

हे इन्द्राणि अहम् इन्द्रः सख्युः मम सखिभूतात् वृषाकपेः ऋते विना वृषाकपिं विना न रणे न रमे । अस्य यस्य वृषाकपेः अप्सु जलेषु संस्कृतं प्रियं प्रीतिकरम् इदम् उपस्थितं हविः देवेषु देवानां मध्ये यस्य ममेन्द्रस्य[1] सकाशं गच्छति । यस्मादहम् इन्द्रः सर्वस्मात् उत्तरः । यद्वा । अयमर्थः । हे इन्द्राणि वृषाकपेः सख्युरिन्द्रादृतेऽहं वृषाकपिर्न रणे न रमे । अन्यत्समानम् ॥

वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे ।
घसत्त इन्द्र उक्षणः प्रियं काचित्करं हविर्विश्वस्मादिन्द्र उत्तरः ॥ १३ ॥

वृषाकपायि । रेवति । सुऽपुत्रे । आत् । ऊं इति । सुऽस्नुषे ।
घसत् । ते । इन्द्रः । उक्षणः । प्रियम् । काचित्ऽकरम् । हविः । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ १३ ॥

हे वृषाकपायि । कामानां वर्षकत्वाद्भीषयितृत्वाद्वा कपिर्वृषाकपिः । तस्य पत्नि । यद्वा । वृषाकपेर्माता मातरित्यर्थः । रेवति धनवति सुपुत्रे शोभनपुत्रे सुस्नुषे शोभनस्नुषे हे इन्द्राणि ते तवायम् इन्द्रः उक्षणः सेचनसमर्थान् आदु अनन्तरमेव । शीघ्रमेवेत्यर्थः । पशून् घसत् ग्रसतु । किंच[2] काचित्करम् । कं सुखम् । तस्यापि चित् संघः । तत्करं हविः प्रियम् इष्टं कुर्विति शेषः । किंच ते पतिः इन्द्रः विश्वस्मात् उत्तरः । तथा च यास्कः—'वृषाकपायि रेवति सुपुत्रे मध्यमेन सुस्नुषे माध्यमिकया वाचा । स्नुषा साधुसादिनीति[3] वा साधुसानिनीति वा । प्रियं कुरुष्व सुखाचयकरं हविः सर्वस्माद्य इन्द्र उत्तरः' ( निरु. १२. ९ ) इति ॥

उक्ष्णो हि मे पञ्चदश साकं पचन्ति विंशतिम् ।
उताहमद्मि पीव इदुभा कुक्षी पृणन्ति मे विश्वस्मादिन्द्र उत्तरः ॥ १४ ॥

उक्ष्णः । हि । मे । पञ्चऽदश । साकम् । पचन्ति । विंशतिम् ।
उत । अहम् । अद्मि । पीवः । इत् । उभा । कुक्षी इति । पृणन्ति । मे ।
विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ १४ ॥

अथेन्द्रो ब्रवीति । मे मदर्थं पञ्चदश पञ्चदशसंख्याकान् विंशतिं विंशतिसंख्याकांश्च उक्ष्णः वृषभान् साकं सह मम भार्ययेन्द्राण्या प्रेरिता यष्टारः पचन्ति । उत अपि च अहमपि तान् भक्षयामि । अदन्वा चाहं पीव इत् स्थूल एव भवामीति शेषः । किंच मे मम उभा उभौ[4] कुक्षी पृणन्ति सोमेन पूरयन्ति यष्टारः । सोऽहम् इन्द्रः सर्वस्मात् उत्तरः ॥

वृषभो न तिग्मशृङ्गोऽन्तर्यूथेषु रोरुवत् ।
मन्थस्त इन्द्र शं हृदे यं ते सुनोति भावयुर्विश्वस्मादिन्द्र उत्तरः ॥ १५ ॥

वृषभः । न । तिग्मऽशृङ्गः । अन्तः । यूथेषु । रोरुवत् ।
मन्थः । ते । इन्द्र । शम् । हृदे । यम् । ते । सुनोति । भावयुः । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ १५ ॥

अथेन्द्राणी ब्रवीति । तिग्मशृङ्गः तीक्ष्णशृङ्गः वृषभो न यथा वृषभः यूथेषु गोसंघेषु अन्तः मध्ये रोरुवत् शब्दं कुर्वन् गा अभिरमयति तथा हे इन्द्र त्वं मामभिरमयेति शेषः । किंच

1. त-भ-महेन्द्रस्य । 2. त-किंच त्वं । 3. त१.१.३.१-साधुवादिनीति । 4. त-उभौ च ।

हे इन्द्र ते तव हृदे हृदयाय मन्थः एषो मथनवेलायां शब्दं कुर्वन् शं[1] सुखकरो भवत्विति शेषः। किंच ते तुभ्यं यं सोमं भावयुः भावमिच्छन्तीन्द्राणी सुनोति अभिषुणोति सोऽपि शंकरो भवत्वित्यर्थः। मम पतिः इन्द्रः विश्वस्मात् उत्तरः॥ ॥ ३॥

न सेशे यस्य रम्बतेऽन्तरा सक्थ्या३ कपृत्।
सेदीशे यस्य रोमशं निषेदुषो विजृम्भते विश्वस्मादिन्द्र उत्तरः॥ १६॥

न। सः। ईशे। यस्य। रम्बते। अन्तरा। सक्थ्या। कपृत्।
सः। इत्। ईशे। यस्य। रोमशम्। निऽसेदुषः। विऽजृम्भते।
विश्वस्मात्। इन्द्रः। उत्ऽतरः॥ १६॥

हे इन्द्र सः जनः न ईशे मैथुनं कर्तुं नेष्टे न शक्नोति यस्य जनस्य कपृत् शेपः[2] सक्थ्या सक्थिनी अन्तरा रम्बते लम्बते। सेत् स एव स्त्रीजने ईशे मैथुनं कर्तुं शक्नोति यस्य जनस्य निषेदुषः शयानस्य रोमशम् उपस्थं विजृम्भते विवृतं भवति। यस्य च पतिः इन्द्रः विश्वस्मात् उत्तरः॥

न सेशे यस्य रोमशं निषेदुषो विजृम्भते।
सेदीशे यस्य रम्बतेऽन्तरा सक्थ्या३ कपृद्विश्वस्मादिन्द्र उत्तरः॥ १७॥

न। सः। ईशे। यस्य। रोमशम्। निऽसेदुषः। विऽजृम्भते।
सः। इत्। ईशे। यस्य। रम्बते। अन्तरा। सक्थ्या। कपृत्। विश्वस्मात्। इन्द्रः। उत्ऽतरः॥ १७॥

सः जनः न ईशे मैथुनं कर्तुं नेष्टे यस्य जनस्य निषेदुषः शयानस्य रोमशम् उपस्थं विजृम्भते विवृतं भवति। सेत् स एव जनः ईशे इष्टे मैथुनं कर्तुं शक्नोति यस्य जनस्य कपृत् प्रजननं सक्थ्या सक्थिनी अन्तरा रम्बते लम्बते। सिद्धमन्यत्। पूर्वोक्तव्यतिरेकोऽत्र द्रष्टव्यः। एवंरूपास्वपि विपत्स्विन्द्राणीन्द्रे वदति। अत्र त्वविपत्स्विन्द्र इन्द्राण्यौ वदतीत्यविरोधः॥

अयमिन्द्र वृषाकपिः परस्वन्तं हतं विदत्।
असिं सूनां नवं चरुमादेधस्यान आचितं विश्वस्मादिन्द्र उत्तरः॥ १८॥

अयम्। इन्द्र। वृषाकपिः। परस्वन्तम्। हतम्। विदत्।
असिम्। सूनाम्। नवम्। चरुम्। आत्। एधस्य। अनः। आऽचितम्।
विश्वस्मात्। इन्द्रः। उत्ऽतरः॥ १८॥

हे इन्द्र अयं वृषाकपिः परस्वन्तं परस्वमात्मनो विषयेऽवर्तमानं हतं हिंसितं विदत् विन्दतु। तथा हतस्य[3] विशसनाय असिं खड्गं सूनाम् उद्धाने पाकार्थं नवं अपवं चरुं भाण्डम्[4] आत् अनन्तरम् एधस्य काष्ठस्य आचितं पूर्णम् अनः शकटं च विन्दतु। मम पतिः इन्द्रः विश्वस्मात् उत्तरः॥

१. ग-त-म—'शं' नास्ति। २. त—शेपः प्रजननं। ३. त-म १ २.४.६.८—हतस्य तस्य। ४. त—भाण्डं च।

अयमेमि विचाकशद्विचिन्वन्दासमार्यम् ।
पिबामि पाकसुत्वनोऽभि धीरमचाकशं विश्वस्मादिन्द्र उत्तरः ॥ १९ ॥

अयम् । एमि । विऽचाकशत् । विऽचिन्वन् । दासम् । आर्यम् ।
पिबामि । पाकऽसुत्वनः । अभि । धीरम् । अचाकशम् । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ १९ ॥

अथेन्द्रो ब्रवीति । विचाकशत् पश्यन् यजमानान् दासम् उपक्षपयितारमसुरम् आर्यम् अपि च विचिन्वन् पृथक्कुर्वन् अयम् अहमिन्द्रः एमि यज्ञं प्रति गच्छामि[1] । यज्ञं गत्वा च पाकसुत्वनः । पचतीति पाकः । सुनोतीति सुत्वा । हविषां पक्तुः सोमस्याभिषोतुर्यजमानस्य पाकेन विपक्वेन मनसा सोमस्याभिषोतुर्वा यजमानस्य संबन्धिनं सोमं पिबामि । तथा धीरं धीमन्तं यजमानम् अभि अचाकशम् अभिपश्यामि । सोऽहम् इन्द्रः विश्वस्मात् उत्तरः ॥

धन्व च यत्कृन्तत्रं च कति स्वित्ता वि योजना ।
नेदीयसो वृषाकपेऽस्तमेहि गृहाँ उप विश्वस्मादिन्द्र उत्तरः ॥ २० ॥

धन्व । च । यत् । कृन्तत्रम् । च । कति । स्वित् । ता । वि । योजना ।
नेदीयसः । वृषाकपे । अस्तम् । आ । इहि । गृहान् । उप । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ २० ॥

धन्व निरुदकोऽरण्यरहितो देशः । कृन्तत्रं कर्तनीयमरण्यम् । यत् यत् च धन्व च कृन्तत्रं च भवति[2] । धन्वोऽङ्गारमरण्यमेवंविधं भवति न स्वल्पमिति विपिनम् । तस्य शत्रुनिलयस्यास्मदीयगृहस्य च मध्ये कति स्वित् ता तानि योजना योजनानि स्थितानि । नात्यन्तदूरे तत्सवतीत्यर्थः । अतः नेदीयसः अतिशयेन समीपस्थाच्छत्रुनिलयात् हे वृषाकपे त्वम् अस्तम् अस्माकं गृहं वि इहि विशेषेणागच्छ । आगत्य च गृहान् यज्ञगृहान् उप गच्छ । यतोऽहम् इन्द्रः सर्वस्मादुत्कृष्टः ॥

पुनरेहि वृषाकपे सुविता कल्पयावहै ।
य एष स्वप्ननंशनोऽस्तमेषि पथा पुनर्विश्वस्मादिन्द्र उत्तरः ॥ २१ ॥

पुनः । आ । इहि । वृषाकपे । सुविता । कल्पयावहै ।
यः । एषः । स्वप्नऽनंशनः । अस्तम् । एषि । पथा । पुनः । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ २१ ॥

आगत्य प्रतिगतं वृषाकपिमिन्द्रो ब्रवीति । हे वृषाकपे त्वं पुनरेहि अस्मान् प्रत्यागच्छ । आगते च त्वयि सुविता सुवितानि कल्याणानि त्वत्प्रीतिकराणि[3] कर्माणि कल्पयावहै कुर्यावहै च आवामुभौ पर्यालोच्य कुर्याव । किंच यः स्वप्ननंशनः उदयेन सर्वस्य प्राणिनः स्वप्नानां नाशयिता आदित्यः सः एषः त्वं पथा मार्गेण अस्तम् आत्मीयमावासं पुनः एषि गच्छसि । यतोऽहम् इन्द्रः विश्वस्मात् उत्तरः । तथा च यास्कः—' सुप्रसूतानि वः कर्माणि कल्पयावहै य एष स्वप्ननंशनः स्वप्नान्नाशयत्यादित्य उदयेन सोऽस्तमेषि पथा पुनः ' ( निरु. १२. २८ ) इति ॥

१. ल—' यज्ञं प्रति गच्छामि ' नास्ति । २. त१.२ ४.५.६-अ२.४.६—भवत; त३-म८—भवतः । ३. म—°प्रीतिकरणानि ।

यदुदञ्चो वृषाकपे गृहमिन्द्राजगन्तन ।
क्व१ स्य पुल्वघो मृगः कमगञ्जनयोपनो विश्वस्मादिन्द्र उत्तरः ॥ २२ ॥

यत् । उदञ्चः । वृषाकपे । गृहम् । इन्द्र । अजगन्तन ।
क्व । स्यः । पुल्वघः । मृगः । कम् । अगन् । जनऽयोपनः । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ २२ ॥

गत्वा पुनरागतं वृषाकपिमिन्द्रः पृच्छति । हे इन्द्र परमैश्वर्यवन् हे वृषाकपे यूयम् उदञ्चः उद्गामिनः सन्तो मद्गृहम् अजगन्तन आगच्छत[1] । एकस्यापि बहुवचनं पूजार्थम् । तत्र भवतः संबन्धी पुल्वघः बहूनां भीमरसानामत्ता स्यः सः मृगः क्व अभूत् जनयोपनः जनानां मोहयिता मृगः कं वा देशम् अगन् अगच्छत् । सोऽहम् इन्द्रः विश्वस्मात् उत्तरः । यद्वा इन्द्राणीवाक्यमिदम् । अत्र यास्कः—‘ यदुदञ्चो वृषाकपे गृहमिन्द्राजगमत क स्य पुल्वघो मृगः क स बह्वादी मृगः । मृगो मार्ष्टेर्गतिकर्मणः । कमगमद्देशं जनयोपनः ’ ( निरु. १३. ३ ) इति ॥

पर्शुर्ह नाम मानवी साकं ससूव विंशतिम् ।
भद्रं भल त्यस्या अभूद्यस्या उदरमामयद्विश्वस्मादिन्द्र उत्तरः ॥ २३ ॥

पर्शुः । ह । नाम । मानवी । साकम् । ससूव । विंशतिम् ।
भद्रम् । भल । त्यस्यै । अभूत् । यस्याः । उदरम् । आमयत् । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ २३ ॥

इन्द्रविसृज्यमानमनेन[2] मन्त्रेण वृषाकपिराशास्ते । हे भल इन्द्रेण विसृज्यमान वर । भलतिर्भेदनकर्मा । पर्शुः नाम मृगी । ह इति पूरणः । मानवी मनोर्दुहितेयं विंशतिं विंशतिसंख्याकान् पुत्रान् साकं सह ससूव अजीजनत् । त्यस्यै तस्यै भद्रं भजनीयं कल्याणम् अभूत् भवतु । लोडर्थे लुङ् । यस्याः उदरम् आमयत् गर्भस्थैर्विंशतिभिः पुत्रैः पुष्टमासीत् । मम पिता इन्द्रः विश्वस्मात् उत्तरः ॥ ॥ ५ ॥

‘ रक्षोहणम् ’ इति पञ्चविंशत्यृचं तृतीयं सूक्तम् । पायुर्नाम भारद्वाज ऋषिः । द्वाविंशाद्याश्चतस्रोऽनुष्टुभः । शिष्टा एकविंशतिस्त्रिष्टुभः । रक्षोहाग्निर्देवता । तथा चानुक्रान्तं—‘ रक्षोहणं पञ्चाधिका पायुराग्नेयं राक्षोघ्नं चतुरनुष्टुबन्तम् ’ इति । गतः सूक्तविनियोगः । अङ्गारविहरणे ‘ परि त्वाग्ने ’ इत्येषा जप्या । सूत्रितं च—‘ धिष्ण्यावताम्[3] ’ इत्यादिना ‘ परि त्वाग्ने पुरं वयम् ’ ( आश्व. श्रौ. ५. १३ ) इत्यन्तेन ॥

रक्षोहणं वाजिनमा जिघर्मि मित्रं प्रथिष्ठमुप यामि शर्म ।
शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा स रिषः पातु नक्तम् ॥ १ ॥

रक्षःऽहनम् । वाजिनम् । आ । जिघर्मि । मित्रम् । प्रथिष्ठम् । उप । यामि । शर्म ।
शिशानः । अग्निः । क्रतुऽभिः । सम्ऽइद्धः । सः । नः । दिवा । सः । रिषः । पातु । नक्तम् ॥ १ ॥

रक्षोहणं रक्षसां हन्तारं वाजिनं बलवन्तमन्नवन्तं वाग्निम् आ जिघर्मि घृतेनाजुहोमि । किंच मित्रं यजमानानां सखायं प्रथिष्ठं पृथुतमं शर्म गृहम्[4] उप यामि उपगच्छामि । सोऽयम्

१. गर–आगच्छत । २. ग४–इंद्रेण विज्यमानं शरमनेन मंत्रेण; त–हे इंद्र विसृज्यमानं अनंतरमंत्रेण; भ–हे इंद्र विसृज्यमानमनेन मंत्रेण । ३. त–धिष्ण्यावतां; आश्व श्रौ.–धिष्ण्यवतां । ४. भ–शरणं ।

अग्निः शिशानः ज्वालास्तीक्ष्णीकुर्वन् क्रतुभिः कर्मपरैः पुरुषैः समिद्धः[1] प्रज्वालितो भवति । किंच सः अग्निः नः अस्मान् दिवा अहनि रिषः हिंसकाद्राक्षसः पातु रक्षतु । सः अग्निः नक्तं रात्रौ चास्मान्राक्षसः पातु ॥

अयोदंष्ट्रो अर्चिषा यातुधानानुप स्पृश जातवेदः समिद्धः ।
आ जिह्वया मूरदेवान् रभस्व क्रव्यादो वृक्त्व्यपि धत्स्वासन् ॥ २ ॥

अयःऽदंष्ट्रः । अर्चिषा । यातुऽधानान् । उप । स्पृश । जातऽवेदः । सम्ऽइद्धः ।
आ । जिह्वया । मूरऽदेवान् । रभस्व । क्रव्यऽअदः । वृक्त्वी । अपि । धत्स्व । आसन् ॥ २ ॥

हे जातवेदः जातधन जातप्रज्ञ वा त्वं समिद्धः अस्माभिर्दीप्तः अयोदंष्ट्रः अयोमयदंष्ट्रः । तीक्ष्णदंष्ट्र[2] इत्यर्थः । यातुधानान् राक्षसान् अर्चिषा ज्वालया उप स्पृश । संदहेत्यर्थः । किंच त्वं मूरदेवान् मूढदेवान् मारकव्यापारान् राक्षसान् जिह्वया ज्वालया आ रभस्व मारयेत्यर्थः । मारयित्वा च क्रव्यादः मांसभक्षकान् राक्षसान् वृक्त्वी छित्त्वा आसन् आस्ये अपि धत्स्व अपिधेहि । आच्छादयेत्यर्थः ॥

उभोभयाविन्नुप धेहि दंष्ट्रा हिंस्रः शिशानोऽवरं परं च ।
उतान्तरिक्षे परि याहि राजञ्जम्भैः सं धेह्यभि यातुधानान् ॥ ३ ॥

उभा । उभयाविन् । उप । धेहि । दंष्ट्रा । हिंस्रः । शिशानः । अवरम् । परम् । च ।
उत । अन्तरिक्षे । परि । याहि । राजन् । जम्भैः । सम् । धेहि । अभि । यातुऽधानान् ॥ ३ ॥

हे उभयाविन् उभाभ्यां दंष्ट्राभ्यां युक्ताग्ने त्वं हिंस्रः राक्षसानां हिंसकः सन् उभा उभे दंष्ट्रा दंष्ट्रे शिशानः तीक्ष्णीकुर्वन् उप धेहि यथार्हेषु राक्षसेषु प्रतिष्ठापय । किंच अवरं परं च अज्ञातं रक्ष । उत अपि च हे राजन् दीप्ताग्ने त्वम् अन्तरिक्षे स्थितान् राक्षसान् परि याहि परिगच्छ । परिगत्य च तान् यातुधानान् राक्षसान् जम्भैः भक्षणसाधनभूताभिः दंष्ट्राभिः[3] अभि सं धेहि संयोजय । भक्षयेत्यर्थः ॥

यज्ञैरिषूः संनममानो अग्ने वाचा शल्याँ अशनिभिर्दिहानः ।
ताभिर्विध्य हृदये यातुधानान् प्रतीचो बाहून् प्रति भङ्ग्ध्येषाम् ॥ ४ ॥

यज्ञैः । इषूः । सम्ऽनममानः । अग्ने । वाचा । शल्यान् । अशनिऽभिः । दिहानः ।
ताभिः । विध्य । हृदये । यातुऽधानान् । प्रतीचः । बाहून् । प्रति । भङ्ग्धि । एषाम् ॥ ४ ॥

हे अग्ने त्वं यज्ञैः अस्मदीयैर्बलकरैर्यागैः वाचा अस्मदीयया स्तुत्या च इषूः बाणान् संनममानः संनमयन् शल्यान् तेषां शल्यान् अशनिभिः दीप्तिभिः दिहानः[4] तीक्ष्णीकुर्वन् ताभिः इषुभिः यातुधानान् राक्षसान् हृदये विध्य । ततः एषां यातुधानानां संबन्धिनः प्रतीचः युद्धाय त्वां[5] प्रतिगतान् बाहून् प्रति भङ्ग्धि प्रत्यामर्दय ॥

१. भ–'समिद्धः' नास्ति । २. त-भ१.४.७–'तीक्ष्णदंष्ट्रः' नास्ति । ३. त१.२.३.६.७.८-भ–'दंष्ट्राभिः' नास्ति । ४. त१.२.३.६.७.८–भ–संदिहानः । ५. त-भ–'त्वां' नास्ति ।

अग्ने त्वचं यातुधानस्य भिन्धि हिंस्राशनिर्हरसा हन्त्वेनम् ।
प्र पर्वाणि जातवेदः शृणीहि क्रव्यात्क्रविष्णुर्वि चिनोतु वृक्णम् ॥ ५ ॥

अग्ने । त्वचम् । यातुऽधानस्य । भिन्धि । हिंस्रा । अशनिः । हरसा । हन्तु । एनम् ।
प्र । पर्वाणि । जातऽवेदः । शृणीहि । क्रव्यऽअत् । क्रविष्णुः । वि । चिनोतु । वृक्णम् ॥५॥

हे जातवेदः जातधन जातप्रज्ञ वा अग्ने त्वं यातुधानस्य राक्षसस्य त्वचं भिन्धि दारय[1]। एनं भिन्नत्वचं यातुधानं हिंस्रा हिंसनशीला[2] तव अशनिः वज्रं हरसा तापेन हन्तु हिनस्तु। हतस्य राक्षसस्य पर्वाणि शरीरपर्वाणि च प्र शृणीहि छिन्धीत्यर्थः। छिन्नेषु च शरीरसंधिषु सत्सु वृक्णं छिन्नसंधिमेनं यातुधानं क्रविष्णुः मांसमिच्छन्[3] क्रव्यात्[3] मांसभक्षको वृकादिः वि चिनोतु। भक्षयत्वित्यर्थः ॥ ॥ ५ ॥

यत्रेदानीं पश्यसि जातवेदस्तिष्ठन्तमग्न उत वा चरन्तम् ।
यद्वान्तरिक्षे पथिभिः पतन्तं तमस्ता विध्य शर्वा शिशानः ॥ ६ ॥

यत्र । इदानीम् । पश्यसि । जातऽवेदः । तिष्ठन्तम् । अग्ने । उत । वा । चरन्तम् ।
यत् । वा । अन्तरिक्षे । पथिऽभिः । पतन्तम् । तम् । अस्ता । विध्य । शर्वा । शिशानः ॥६॥

हे जातवेदः उत्पन्नप्रज्ञ अग्ने त्वं यत्र पृथिव्यां तिष्ठन्तम् उत अपि च चरन्तं यद्वान्तरिक्षे पथिभिः आकाशमार्गैः[4] पतन्तं गच्छन्तं यातुधानम् इदानीं संप्रति पश्यसि तं यातुधानम् अस्ता शराणां क्षेप्ता त्वं शिशानः शरांस्तीक्ष्णीकुर्वन् शर्वा शरेण विध्य ॥

उतालब्धं स्पृणुहि जातवेद आलेभानादृष्टिभिर्यातुधानात् ।
अग्ने पूर्वो नि जहि शोशुचान आमादः क्ष्विङ्कास्तमदन्त्वेनीः ॥ ७ ॥

उत । आऽलब्धम् । स्पृणुहि । जातऽवेदः । आऽलेभानात् । ऋष्टिऽभिः । यातुऽधानात् ।
अग्ने । पूर्वः । नि । जहि । शोशुचानः । आमऽअदः । क्ष्विङ्काः । तम् । अदन्तु । एनीः ॥७॥

उत अपि च हे जातवेदः अग्ने त्वम् आलब्धं हन्तुं हस्ताभ्यामारब्धं स्तोतारं यष्टारं वा आलेभानात् आलभमानात् यातुधानात् राक्षसात् ऋष्टिभिः आत्मीयैरायुधविशेषैः स्पृणुहि पालय। रक्षेत्यर्थः। किंच पूर्वः मुख्यस्त्वं शोशुचानः प्रज्वलन् नि जहि तं हन्तुमुद्युक्तं यातुधानं मारय। किंच तं यातुधानम् आमादः अपक्वस्य मांसस्य भक्षकाः क्ष्विङ्काः शब्दकारिण्यः। '[illegible] शब्दे'। यद्वा। क्ष्विङ्का नाम पक्षिविशेषाः। एनीः गन्त्र्यः[5] अदन्तु भक्षयन्तु ॥

इह प्र ब्रूहि यतमः सो अग्ने यो यातुधानो य इदं कृणोति ।
तमा रभस्व समिधा यविष्ठ नृचक्षसश्चक्षुषे रन्धयैनम् ॥ ८ ॥

इह । प्र । ब्रूहि । यतमः । सः । अग्ने । यः । यातुऽधानः । यः । इदम् । कृणोति ।
तम् । आ । रभस्व । सम्ऽइधा । यविष्ठ । नृऽचक्षसः । चक्षुषे । रन्धय । एनम् ॥ ८ ॥

---

१. ह–विदारय। २. ग-त-भ–हिंसनशीला। ३. ह-भ–'मांसमिच्छन् क्रव्यात्' नास्ति।
४. ह-भ–आकाशमार्गैः। ५. ग१,२–गन्त्र्यः श्वेता वा।

हे यविष्ठ युवतम अग्ने यः यातुधानः राक्षसोऽस्मद्यज्ञविघ्नकारी यः अन्योऽपि पिशाचादिः इदं यज्ञदूषणादि करोति सः अतमः । तमवधारणार्थम् । इह अस्मिन्सर्वाहुतिप्रय-यागकर्मणि वर्तमानाय मह्यं प्र ब्रूहि । तं पापकारिणं समिधा स्वकीयेन तेजसा आ रभस्व हन्तुं प्रारभस्व । ततः एनं पापिष्ठं नृचक्षसः नृणां द्रष्टुस्तव चक्षुषे तेजसे रन्धय वशं नय । तेजसा संदहेत्यर्थः ॥

तीक्ष्णेनाग्ने चक्षुषा रक्ष यज्ञं प्राञ्चं वसुभ्यः प्र णय प्रचेतः ।
हिंस्रं रक्षांस्यभि शोशुचानं मा त्वा दभन्यातुधाना नृचक्षः ॥ ९ ॥

तीक्ष्णेन । अग्ने । चक्षुषा । रक्ष । यज्ञम् । प्राञ्चम् । वसुऽभ्यः । प्र । नय । प्रचेत इति प्रऽचेतः ।
हिंस्रम् । रक्षांसि । अभि । शोशुचानम् । मा । त्वा । दभन् । यातुऽधानाः । नृऽचक्षः ॥ ९ ॥

हे अग्ने त्वं तीक्ष्णेन तिग्मेन चक्षुषा तेजसा यज्ञम् अस्मदीयं यागं रक्ष पालय । किंच हे प्रचेतः प्रकृष्टज्ञानाग्ने प्राञ्चं प्राञ्चितारं यज्ञं वसुभ्यः वसूनामर्थाय प्र णय प्रकर्षेण नय । किंच हे नृचक्षः नृणां द्रष्टरग्ने रक्षांसि हिंस्रं हिंसनशीलम् अभि शोशुचानम् अभिप्रदीप्तं त्वा त्वां यातुधानाः राक्षसाः मा दभन् मा हिंसिषुः ॥

नृचक्षा रक्षः परि पश्य विक्षु तस्य त्रीणि प्रति शृणीह्यग्रा ।
तस्याग्ने पृष्टीर्हरसा शृणीहि त्रेधा मूलं यातुधानस्य वृश्च ॥ १० ॥

नृऽचक्षाः । रक्षः । परि । पश्य । विक्षु । तस्य । त्रीणि । प्रति । शृणीहि । अग्रा ।
तस्य । अग्ने । पृष्टीः । हरसा । शृणीहि । त्रेधा । मूलम् । यातुऽधानस्य । वृश्च ॥ १० ॥

हे अग्ने नृचक्षाः नृणां द्रष्टा त्वं विक्षु मनुष्येषु हिंसकत्वेन वर्तमानं रक्षः राक्षसं परि पश्य सर्वतोऽवलोकय । अवलोक्य च तस्य रक्षसः त्रीणि अग्रा[1] अग्राणि शिरांसि प्रति शृणीहि छिन्द्धीत्यर्थः । ततः तस्य रक्षसः पृष्टीः पार्श्वस्थान् राक्षसानपि हरसा स्वकीयेन तेजसा शृणीहि मारय । एवं त्रेधा यातुधानस्य तस्य राक्षसस्य मूलं पादं वृश्च छिन्द्धि ॥ ॥ ७ ॥

त्रिर्यातुधानः प्रसितिं त एत्वृतं यो अग्ने अनृतेन हन्ति ।
तमर्चिषा स्फूर्जयञ्जातवेदः समक्षमेनं गृणते नि वृङ्धि ॥ ११ ॥

त्रिः । यातुऽधानः । प्रऽसितिम् । ते । एतु । ऋतम् । यः । अग्ने । अनृतेन । हन्ति ।
तम् । अर्चिषा । स्फूर्जयन् । जातऽवेदः । समऽअक्षम् । एनम् । गृणते । नि । वृङ्धि ॥ ११ ॥

हे जातवेदः जातप्रज्ञ अग्ने ते त्वदीयां[2] प्रसितिं ज्वालाप्रबन्धनं यातुधानः राक्षसः त्रिः त्रीन्वारान् एतु गच्छतु । त्रिर्बद्धं यत्तत्सुबद्धं भवति हि । किंच यः यातुधानः राक्षसः ऋतं सत्यम् अनृतेन असत्येन हन्ति हिनस्ति तं यातुधानम् अर्चिषा स्वकीयेन तेजसा स्फूर्जयन् निष्पिषन् । स्फूर्जतिरत्र निष्पेषणकर्मा । एनं यातुधानं गृणते स्तोत्रं कुर्वते मह्यं समक्षं प्रत्यक्षं[3] नि वृङ्धि । निगृह्य वर्जय वृकेण ॥

१. ल-भ–' अग्रा ' नास्ति । २. ल-भ–त्वदीयां । ३. ल१.३.६.७.८-भ–' समक्षं ' नास्ति ।

तद॑ग्ने॒ चक्षु॒: प्रति॑ धेहि रे॒भे श॑फा॒रुजं॒ येन॒ पश्य॑सि यातु॒धान॑म् ।
अ॒थ॒र्व॒वज्ज्योति॑षा॒ दैव्ये॑न स॒त्यं धूर्व॑न्तम॒चितं॒ न्यो॑ष ॥ १२ ॥

तत् । अ॒ग्ने॒ । चक्षु॑: । प्रति॑ । धे॒हि॒ । रे॒भे । श॒फ॒ऽआ॒रुज॑म् । येन॑ । पश्य॑सि । या॒तु॒ऽधान॑म् ।
अ॒थ॒र्व॒ऽवत् । ज्योति॑षा । दैव्ये॑न । स॒त्यम् । धूर्व॑न्तम् । अ॒चित॑म् । नि । ओ॒ष॒ ॥ १२ ॥

हे अग्ने त्वं रेभे शब्दायमाने राक्षसे तत् चक्षुः तेजः प्रति धेहि प्रक्षिप येन चक्षुषा शफारुजं शफाभ्यामारुजन्तं शफसदृशैर्नखैः मानुषानभिमुख्येन भञ्जकं यातुधानं राक्षसं पश्यसि । किंच सत्यं धूर्वन्तम् अमत्येन हिंसन्तम् अचितम् अज्ञानं दैव्येन दिवि भवेन ज्योतिषा तेजसा अथर्ववत् न्योष नितरां दह । दध्यङ्ङाथर्वणो[1] रक्षांसि हन्तीति प्रसिद्धम् ॥

यद॑ग्ने अ॒द्य मि॑थु॒ना शपा॑तो॒ यद्वा॒चस्तृ॒ष्टं ज॒नय॑न्त रे॒भाः ।
म॒न्योर्मन॑सः शर॒व्या॒३॒॑ जाय॑ते॒ या तया॑ विध्य॒ हृद॑ये यातु॒धाना॑न् ॥ १३ ॥

यत् । अ॒ग्ने॒ । अ॒द्य । मि॒थु॒ना । शपा॑तः । यत् । वा॒चः । तृ॒ष्टम् । ज॒नय॑न्त । रे॒भाः ।
म॒न्योः । मन॑सः । श॒र॒व्या॑ । जाय॑ते । या । तया॑ । वि॒ध्य॒ । हृद॑ये । या॒तु॒ऽधाना॑न् ॥ १३ ॥

हे अग्ने यत् यदा अद्य अस्मिन्नहनि[2] मिथुना स्त्रीपुंसौ शपातः परस्परमाक्रोशतः यत् यदा रेभाः स्तोतारः वाचः संबन्धि तृष्टं कटुकं परस्पराक्रोशनलक्षणमक्षरं वा जनयन्त । परस्परमाक्रोशन्तीत्यर्थः । तदा मन्योः दीप्तस्य क्रुद्धस्य वा तत्र । तथा च यास्कः—‘ मन्युर्मन्यतेर्दीप्तिकर्मणः क्रोधकर्मणो वधकर्मणो वा ’ ( निरु. १०. २९ ) इति । मनसः प्रकाशात् या शरव्या इषुः जायते तया शरव्यया यातुधानान् राक्षसान् हृदये विध्य ताडय । मारयेत्यर्थः ॥

परा॑ शृणीहि॒ तप॑सा यातु॒धाना॒न्परा॑ग्ने॒ रक्षो॒ हर॑सा शृणीहि ।
परा॒र्चिषा॒ मूर॑देवाञ्छृणीहि॒ परा॑सु॒तृपो॑ अ॒भि शोशु॑चानः ॥ १४ ॥

परा॑ । शृ॒णी॒हि॒ । तप॑सा । या॒तु॒ऽधाना॑न् । परा॑ । अ॒ग्ने॒ । रक्षः॑ । हर॑सा । शृ॒णी॒हि॒ ।
परा॑ । अ॒र्चिषा॑ । मूर॑ऽदेवान् । शृ॒णी॒हि॒ । परा॑ । अ॒सु॒ऽतृप॑: । अ॒भि । शोशु॑चानः ॥ १४ ॥

हे अग्ने यातुधानान्[3] तपसा तापेन परा शृणीहि मारय । किंच रक्षो हरसा स्वकीयेनौष्ण्येन परा शृणीहि । किंच मूरदेवान् मारकव्यापारान् राक्षसान् अर्चिषा स्वकीयेन तेजसा परा शृणीहि । अपि च असुतृपः मनुष्याणामसुभिस्तृप्ता ये तानपि परा शृणीहीत्यर्थः ॥

परा॒द्य दे॒वा वृ॑जि॒नं शृ॑णन्तु प्र॒त्यगे॑नं श॒पथा॑ यन्तु तृ॒ष्टाः ।
वा॒चास्ते॒नं शर॑व ऋच्छन्तु॒ मर्म॒न्विश्व॑स्यैतु॒ प्रसि॑तिं यातु॒धानः॑ ॥ १५ ॥

परा॑ । अ॒द्य । दे॒वाः । वृ॒जि॒नम् । शृ॒ण॒न्तु॒ । प्र॒त्यक् । ए॒न॒म् । श॒पथाः॑ । य॒न्तु॒ । तृ॒ष्टाः ।
वा॒चाऽस्ते॒नम् । शर॑वः । ऋ॒च्छ॒न्तु॒ । मर्म॑न् । विश्व॑स्य । ए॒तु॒ । प्रऽसि॑तिम् । या॒तु॒ऽधानः॑ ॥ १५ ॥

१. त-भ—आथर्वणो दध्यङ्ङथर्वा । २. त१.२.३.६ ७.८-म-मु—अद्यास्मिन्नहनि; त४—यद्यस्मिन्नहनि; त५—यद्यास्मिन्नहनि । ३. ग-त१.२.३.६.७.८-म—‘ यातुधानान् ’ नास्ति ।

अद्य अस्मिन्नहनि देवाः अग्निपुरोगाः सर्वे देवाः वृजिनं प्राणिनां प्राणैर्वर्जिततरं यातुधानं परा शृणन्तु[1]। अथ एनम् आयान्तं राक्षसं जुष्टाः कटुका अस्माभिरुक्ताः शपथाः प्रत्यक् यन्तु। किंच वाचास्तेनम् अनृतवचनमेनं यातुधानं शरवः शराः मर्मन् मर्मणि ऋच्छन्तु गच्छन्तु। विश्वस्य[3] व्याप्तस्याग्नेः प्रसितिं जालम्। तथा च यास्कः—'प्रसितिः प्रसयनात्तन्तुर्वा[4] जालं वा' ( निरु. ६. १२ ) इति। जाले यातुधानः राक्षसः एतु गच्छतु ॥ ॥ ७ ॥

**यः पौरु॑षेयेण क्र॒विषा॑ समङ्क्ते॒ यो अश्व्ये॑न प॒शुना॑ यातु॒धानः॑ ।**
**यो अ॒घ्न्याया॒ भर॑ति क्षी॒रम॑ग्ने॒ तेषां॑ शी॒र्षाणि॒ हर॒साऽपि॑ वृश्च ॥ १६ ॥**

यः । पौरु॑षेयेण । क्र॒विषा॑ । स॒म्ऽअ॒ङ्क्ते । यः । अश्व्ये॑न । प॒शुना॑ । या॒तु॒ऽधानः॑ ।
यः । अ॒घ्न्यायाः॑ । भर॑ति । क्षी॒रम् । अ॒ग्ने॒ । तेषा॑म् । शी॒र्षाणि॑ । हर॑सा । अपि॑ । वृ॒श्च॒ ॥ १६ ॥

यः यातुधानः राक्षसः पौरुषेयेण पुरुषसंबन्धिना क्रविषा मांसेन समङ्क्ते आत्मानं संगमयति। यः च अश्व्येन अश्वसमूहेन। तदीयेन मांसेनेत्यर्थः। आत्मानं संगमयति। यो वा यातुधानोऽन्येन पशुना आत्मानं संगमयति। यः वा यातुधानः अघ्न्यायाः गोः क्षीरं भरति हरति। हे अग्ने त्वं तेषां सर्वेषामपि राक्षसानां शीर्षाणि शिरांसि हरसा त्वदीयेन तेजसा वृश्च छिन्धि ॥

**सं॒व॒त्स॒रीणं॒ पय॑ उ॒स्रिया॑या॒स्तस्य॒ माशी॑द्यातु॒धानो॑ नृचक्षः ।**
**पी॒यूष॑मग्ने य॒त॒मस्तितृ॑प्सा॒त्तं प्र॒त्यञ्च॑म॒र्चिषा॑ विध्य॒ मर्म॑न् ॥ १७ ॥**

सं॒व॒त्स॒रीण॑म् । पयः॑ । उ॒स्रिया॑याः । तस्य॑ । मा । अ॒शी॒त् । या॒तु॒ऽधानः॑ । नृ॒ऽच॒क्षः॒ ।
पी॒यूष॑म् । अ॒ग्ने॒ । य॒त॒मः । तितृ॑प्सात् । तम् । प्र॒त्यञ्च॑म् । अ॒र्चिषा॑ । वि॒ध्य॒ । मर्म॑न् ॥ १७ ॥

हे नृचक्षः नृणां द्रष्टः अग्ने उस्रियायाः अस्मदीयायाः गोः। 'उस्रिया अघ्न्या' इति गोनामसु पाठात्। संवत्सरीणं संवत्सरेण भवं यत् पयः अस्ति यातुधानः राक्षसः तस्य माशीत् तत्पयः मा भक्षयतु। किंच यतमः यो राक्षसः पीयूषं पीयूषेण। विभक्तिव्यत्ययः। अस्मदीयाया गोः पयसा तितृप्सात् आत्मानं तर्पयितुमिच्छति तं प्रत्यञ्चं युद्धायाभिमुखं प्रतिगतं राक्षसं मर्मन् मर्मणि प्राणवियोगस्थाने अर्चिषा स्वकीयेन तेजसा विध्य ताडय। मारयेत्यर्थः ॥

**वि॒षं गवां॑ यातु॒धानाः॑ पिबन्त्वा वृ॑श्च्यन्ता॒मदि॑तये दु॒रेवाः॑ ।**
**परै॑नान्दे॒वः स॑वि॒ता द॑दातु॒ परा॑ भा॒गमोष॑धीनां जयन्ताम् ॥ १८ ॥**

वि॒षम् । गवा॑म् । या॒तु॒ऽधानाः॑ । पि॒ब॒न्तु॒ । आ । वृ॒श्च्य॒न्ता॒म् । अदि॑तये । दुः॒ऽएवाः॑ ।
परा॑ । ए॒नान् । दे॒वः । स॒वि॒ता । द॒दा॒तु॒ । परा॑ । भा॒गम् । ओष॑धीनाम् । ज॒य॒न्ता॒म् ॥ १८ ॥

हे अग्ने यातुधानाः राक्षसाः गवां पशूनां गृहे स्थितं विषं पिबन्तु। किंच अदितये अदित्यर्थं दुरेवाः दुस्तरा यातुधानाः आ वृश्च्यन्तां त्वदीयैरायुधैराच्छिद्यन्ताम्। किंच सविता देवः एनान् राक्षसान् परा ददातु हिंसकेभ्यः प्रयच्छतु। अपि च तेऽमी राक्षसाः ओषधीनां स्वभूतं भागं भजनीयमशं परा जयन्तां लभन्तामित्यर्थः[5] ॥

---

१. ग-त-भ१.२.४.६.८—शृणंतु पराशृण्वंतु। २. त—प्रत्यगेनमायंतु। ३. ग-त४—किंच विश्वस्य। ४. ग-त-भ—प्रसहनात्तं तुर्वा। ५. ग४—न लभंतामित्यर्थः।

सनादग्ने मृणसि यातुधानान्न त्वा रक्षांसि पृतनासु जिग्युः ।
अनु दह सहमूरान् क्रव्यादो मा ते हेत्या मुक्षत दैव्यायाः ॥ १९ ॥

सनात् । अग्ने । मृणसि । यातुऽधानान् । न । त्वा । रक्षांसि । पृतनासु । जिग्युः ।
अनु । दह । सहऽमूरान् । क्रव्यऽअदः । मा । ते । हेत्याः । मुक्षत । दैव्यायाः ॥ १९ ॥

हे अग्ने त्वं सनात् चिरादेवारभ्य यातुधानान् राक्षसान् मृणसि बाधसे । तथापि त्वा त्वां पृतनासु संग्रामेषु रक्षांसि राक्षसाः न जिग्युः नाजयन् । किंच स त्वमधुना अनु अनुक्रमेण सहमूरान् मूरेन सहितान् मारकव्यापारेण युक्तान् क्रव्यादः मांसभक्षकान् राक्षसान् दह तेजसा भस्मीकुरु । किंच तव संबन्धिनः दैव्यायाः दैव्यात् हेत्याः आयुधात् ते यातुधानाः मा मुक्षत मुक्ता मा भूवन् ॥

त्वं नो अग्ने अधरादुदक्तात्त्वं पश्चादुत रक्षा पुरस्तात् ।
प्रति ते ते अजरासस्तपिष्ठा अघशंसं शोशुचतो दहन्तु ॥ २० ॥

त्वम् । नः । अग्ने । अधरात् । उदक्तात् । त्वम् । पश्चात् । उत । रक्ष । पुरस्तात् ।
प्रति । ते । ते । अजरासः । तपिष्ठाः । अघऽशंसम् । शोशुचतः । दहन्तु ॥ २० ॥

हे अग्ने त्वं नः अस्मान् अधरात् दक्षिणतः । उत्तरदिक्समभिव्याहारादधरशब्दोऽत्र दक्षिणदिक्पर इति विज्ञायते । उदक्तात् उत्तरतश्च रक्ष पाहि । उत अपि च हे अग्ने त्वं पश्चात् पश्चिमतः पुरस्तात् पूर्वतश्च नोऽस्मान् रक्ष । चतसृषु दिक्ष्ववस्थितेभ्यो राक्षसेभ्योऽस्मान् पाहीत्यर्थः । किंच ते[1] तव संबन्धिनः ते तपिष्ठाः अतिशयेन तप्यमानाः अजरासः जरावर्जिताः शोशुचतः ज्वलन्तः सन्तो रश्मयः अघशंसं पापशंसकं राक्षसं प्रति दहन्तु भस्मीकुर्वन्तु ॥ ॥ ८ ॥

पश्चात्पुरस्तादधरादुदक्तात्कविः काव्येन परि पाहि राजन् ।
सखे सखायमजरो जरिम्णेऽग्ने मर्ताँ अमर्त्यस्त्वं नः ॥ २१ ॥

पश्चात् । पुरस्तात् । अधरात् । उदक्तात् । कविः । काव्येन । परि । पाहि । राजन् ।
सखे । सखायम् । अजरः । जरिम्णे । अग्ने । मर्तान् । अमर्त्यः । त्वम् । नः ॥ २१ ॥

हे राजन् दीप्ताग्ने कविः क्रान्तदर्शनस्त्वं काव्येन कविकर्मणा पश्चात् पश्चिमतः पुरस्तात् पूर्वतः अधरात् दक्षिणतश्च उदक्तात् उत्तरतश्च अस्मान् परि पाहि परितो रक्ष । किंच हे सखे मित्रभूताग्ने अजरः जरारहितस्त्वं मां सखायं जरिम्णे जरायै कुरु । त्वत्प्रसादादहं चिरं जीवामीत्यर्थः । एतदेव दर्शयति । हे अग्ने अमर्त्यः मरणधर्मरहितः त्वं मर्तान् मरणधर्मवतः नः अस्मान् जरिम्णे जरायै[2] कुर्विति शेषः[2] ॥

परि त्वाग्ने पुरं वयं विप्रं सहस्य धीमहि ।
धृषद्वर्णं दिवेदिवे हन्तारं भङ्गुरावताम् ॥ २२ ॥

---

१. ग-घ-म-' ते ' नास्ति । २. वि१-२-३-६-७-८-म-कुर्वित्यर्थः ।

परि । त्वा । अग्ने । पुरम् । वयम् । विप्रम् । सहस्य । धीमहि ।
धृषत्ऽवर्णम् । दिवेऽदिवे । हन्तारम् । भङ्गुरऽवताम् ॥ २२ ॥

हे सहस्य सहसे हित सहसो जात वा अग्ने पुरं पूरकं विप्रं मेधाविनं धृषद्वर्णं धर्षकरूपं भङ्गुरावतां भञ्जनकर्मयुक्तानां रक्षसां दिवेदिवे प्रत्यहं हन्तारं हिंसितारं त्वा त्वां वयं पायुनामधेया भारद्वाजा रक्षसां हननाय परि धीमहि ॥

विषेण भङ्गुरावतः प्रति ष्म रक्षसो दह ।
अग्ने तिग्मेन शोचिषा तपुरग्राभिर्ऋष्टिभिः ॥ २३ ॥

विषेण । भङ्गुरऽवतः । प्रति । स्म । रक्षसः । दह ।
अग्ने । तिग्मेन । शोचिषा । तपुःऽअग्राभिः । ऋष्टिऽभिः ॥ २३ ॥

हे अग्ने त्वं भङ्गुरावतः भञ्जनकर्मयुक्तान् रक्षसः राक्षसान् विषेण व्यापकेन तिग्मेन तीक्ष्णेन शोचिषा तेजसा प्रति दह भस्मीकुरु । तथा तपुरग्राभिः तपनशीलाग्राभिः ऋष्टिभिः । ऋष्टय आयुधविशेषाः । ताभिरपि प्रति दह ॥

प्रत्यग्ने मिथुना दह यातुधाना किमीदिना ।
सं त्वा शिशामि जागृह्यदब्धं विप्र मन्मभिः ॥ २४ ॥

प्रति । अग्ने । मिथुना । दह । यातुऽधाना । किमीदिना ।
सम् । त्वा । शिशामि । जागृहि । अदब्धम् । विप्र । मन्मऽभिः ॥ २४ ॥

हे अग्ने त्वं मिथुना मिथुनभूतानि किमीदिना । किमिदानीमिति ये चरन्ति ते किमीदिनः । तान् । तथा च यास्कः—' किमीदिने किमिदानीमिति चरते किमिदं किमिदमिति वा ' ( निरु. ६. ११ ) इति । यातुधाना यातुधानान्राक्षसान् प्रति दह । किंच हे विप्र मेधाविन्नग्ने अदब्धं केनाप्यहिंसितं त्वा त्वां मन्मभिः स्तुतिभिरहं सं शिशामि तीक्ष्णीकरोमीत्यर्थः । अतस्त्वं जागृहि निद्रां मा कुरु । बुध्यस्वेत्यर्थः ॥

प्रत्यग्ने हरसा हरः शृणीहि विश्वतः प्रति ।
यातुधानस्य रक्षसो बलं वि रुज वीर्यम् ॥ २५ ॥

प्रति । अग्ने । हरसा । हरः । शृणीहि । विश्वतः । प्रति ।
यातुऽधानस्य । रक्षसः । बलम् । वि । रुज । वीर्यम् ॥ २५ ॥

हे अग्ने त्वं हरसा त्वदीयेन तेजसा । तथा च यास्कः—' हरो हरतेर्ज्योतिर्हर उच्यते ' ( निरु. ४. १९ ) इति । यातुधानस्य राक्षसस्य[1] हरः[2] हरणशीलं बलं प्रति शृणीहि नाशयेत्यर्थः । तथा रक्षसः राक्षसस्य वीर्यं च वि रुज भञ्जय ॥ ॥ ९ ॥

१. गा२-राक्षसस्य बलं । २. त-भ१.२.४.६.८-' हरः ' नास्ति ।

'हविष्पान्तम्' इत्येकोनविंशत्यृचं चतुर्थं सूक्तं त्रैष्टुभम्। मूर्धन्वानृषिः। स चाङ्गिरसो वाम-देव्यो वा। सूर्यो वैश्वानरगुणकोऽग्निश्च समुदितो देवता। तथा चानुक्रान्तं—'हविरेकोनाङ्गिरसो मूर्ध-न्वान्वामदेव्यो वा सौर्यवैश्वानरीयम्' इति। व्यूढस्य दशरात्रस्य पञ्चमेऽहन्याग्निमारुत एतद्वैश्वानरीय-निविद्धानम्। सूत्रितं च—'हविष्पान्तमभिहोता गृहपतिः स राजा' (आश्व. श्रौ. ८. ८) इति ॥

हविष्पान्तमजरं स्वर्विदि दिविस्पृश्याहुतं जुष्टमग्नौ।
तस्य भर्मणे भुवनाय देवा धर्मणे कं स्वधया पप्रथन्त ॥ १ ॥

हविः। पान्तम्। अजरम्। स्वःऽविदि। दिविऽस्पृशि। आऽहुतम्। जुष्टम्। अग्नौ।
तस्य। भर्मणे। भुवनाय। देवाः। धर्मणे। कम्। स्वधया। पप्रथन्त ॥ १ ॥

पान्तं पानीयं सोमात्मकम् अजरं जरारहितं जुष्टं देवानां प्रियं यत् हविः स्वर्विदि सूर्यस्य वेदितरि दिविस्पृशि दिवि स्पृशति अग्नौ आहुतम् अभिहुतं तस्य सोमात्मकस्य हविषः भर्मणे भरणाय भुवनाय भावनाय च धर्मणे धारणाय च कं सर्वस्य सुखकरमिममग्निं देवाः स्वधया अन्नेन पप्रथन्त प्रथयन्ति। तथा च यास्कः—'हविर्यत्पानीयमजरं सूर्यविदि दिविस्पृ-श्यभिहुतं जुष्टमग्नौ तस्य भरणाय च भावनाय च धारणाय चैतेभ्यः सर्वेभ्यः कर्मभ्यो देवा इममग्नि-मन्नेनाप्रथन्त' (निरु. ७. २५) इति ॥

गीर्णं भुवनं तमसापगूळ्हमाविः स्वरभवज्जाते अग्नौ।
तस्य देवाः पृथिवी द्यौरुतापोऽरणयन्नोषधीः सख्ये अस्य ॥ २ ॥

गीर्णम्। भुवनम्। तमसा। अपऽगूळ्हम्। आविः। स्वः। अभवत्। जाते। अग्नौ।
तस्य। देवाः। पृथिवी। द्यौः। उत। आपः। अरणयन्। ओषधीः। सख्ये। अस्य ॥ २ ॥

गीर्णं पूर्वं[1] निगीर्णं[1] तमसा अन्धकारेण अपगूळ्हम् आच्छादितं स्वः सर्वं भुवनम् अग्नौ यस्मिन् वैश्वानरे जाते उत्पन्ने सति आविः अभवत् आविर्भवति तस्य अस्य वैश्वानरस्याग्नेः सख्ये सखिकर्मणि देवाः इन्द्रादयः पृथिवी भूमिश्च द्यौः च आपः अन्तरिक्षं चोदकानि च ओषधीः ओषध्यश्च अरणयन् अरमन्त। प्रीतिं कुर्वन्त इत्यर्थः ॥

देवेभिर्न्विषितो यज्ञियेभिरग्निं स्तोषाण्यजरं बृहन्तम्।
यो भानुना पृथिवीं द्यामुतेमामाततान रोदसी अन्तरिक्षम् ॥ ३ ॥

देवेभिः। नु। इषितः। यज्ञियेभिः। अग्निम्। स्तोषाणि। अजरम्। बृहन्तम्।
यः। भानुना। पृथिवीम्। द्याम्। उत। इमाम्। आऽततान। रोदसी इति। अन्तरिक्षम् ॥ ३ ॥

यज्ञियेभिः यज्ञार्हैः देवेभिः देवैरिन्द्रादिभिः नु क्षिप्रम् इषितः[2] अहम् अजरं जरारहितं बृहन्तं महान्तम् अग्निं तं वैश्वानराग्निं स्तोषाणि स्तोषामि[3]। यः वैश्वानराग्निः भानुना तेजसा पृथिवीं भूमिम् उत अपि च इमां द्यां दिवं च[4] आततान[4] आतनोति। तदेव दर्शयति। रोदसी द्यावापृथिव्यौ आततान आतनोति। विस्तारयतीत्यर्थः ॥

१. त–भुवने गीर्णं; क१.२.७–पूर्णं निगीर्णं। २. ग–इषितः प्रेषितः। ३. ग-मु–स्तौमि।
४. ग-द७.५–अंतरिक्षं च; त१.२.३.६-मु–चांतरिक्षं च।

यो होतासीत्प्रथमो देवजुष्टो यं समाञ्जन्नाज्येना वृणानाः ।
स पतत्रीत्वरं स्था जगद्यच्छ्वात्रमग्निरकृणोज्जातवेदाः ॥ ४ ॥

यः । होता । आसीत् । प्रथमः । देवऽजुष्टः । यम् । सम्ऽआञ्जन् । आज्येन । वृणानाः ।
सः । पतत्रि । इत्वरम् । स्थाः । जगत् । यत् । श्वात्रम् । अग्निः । अकृणोत् । जातऽवेदाः ॥४॥

यः वैश्वानरोऽग्निः देवजुष्टः देवैः सेवितः प्रथमः मुख्यः होता आसीत् अभूत् यं च वैश्वानराग्निं यजमानाः वृणानाः आज्येन समाञ्जन् समञ्जन्ति जातवेदाः जातप्रज्ञो जातधनो वा सः वैश्वानरः अग्निः पतत्रि पतनशीलं पक्षिजातम् इत्वरं गमनशीलं सरीसृपादिकं स्थाः स्थावरं वृक्षादिरूपं च जगत् । स्थावरं जङ्गमं च जगदित्यर्थः । श्वात्रं क्षिप्रमेव अकृणोत् अजनयत् । तथा च यास्कः—'स पतत्रि चेत्वरं स्थावरं जङ्गमं च यत्तत्क्षिप्रमग्निरकरोज्जातवेदाः' ( निरु. ५. ३ ) इति ॥

यज्जातवेदो भुवनस्य मूर्धन्नतिष्ठो अग्ने सह रोचनेन ।
तं त्वाहेम मतिभिर्गीर्भिरुक्थैः स यज्ञियो अभवो रोदसिप्राः ॥ ५ ॥

यत् । जातऽवेदः । भुवनस्य । मूर्धन् । अतिष्ठः । अग्ने । सह । रोचनेन ।
तम् । त्वा । अहेम । मतिऽभिः । गीःऽभिः । उक्थैः । सः । यज्ञियः । अभवः । रोदसिऽप्राः ॥५॥

हे जातवेदः जातप्रज्ञ अग्ने यत् यस्त्वं भुवनस्य त्रैलोक्यस्य मूर्धन् मूर्धनि रोचनेन आदित्येन सह अतिष्ठः स्थितवानसि तं वैश्वानराग्निं त्वा त्वां मतिभिः अर्चनीयाभिः गीर्भिः स्तुतिभिः उक्थैः शस्त्रैश्च अहेम प्रपद्यामहे । 'हि गतौ' इति धातुः । सः वैश्वानरस्त्वं रोदसिप्राः द्यावापृथिव्योः पूरयिता यज्ञियः यज्ञार्हश्च अभवः भवसि ॥ ॥ १० ॥

मूर्धा भुवो भवति नक्तमग्निस्ततः सूर्यो जायते प्रातरुद्यन् ।
मायामू तु यज्ञियानामेतामपो यत्तूर्णिश्चरति प्रजानन् ॥ ६ ॥

मूर्धा । भुवः । भवति । नक्तम् । अग्निः । ततः । सूर्यः । जायते । प्रातः । उत्ऽयन् ।
मायाम् । ऊँ इति । तु । यज्ञियानाम् । एताम् । अपः । यत् । तूर्णिः । चरति । प्रऽजानन् ॥६॥

अग्निः वैश्वानरोऽग्निः नक्तं रात्रौ भुवः भूतजातस्य मूर्धा शिरोवत्प्रधानभूतः भवति । रात्रौ सर्वप्राणिनामालोकस्य तदधीनत्वात् । ततः रात्रेरनन्तरं प्रातरुद्यन् सूर्यो जायते । अहनि स एव वैश्वानरोऽग्निः सूर्यो भवतीत्यर्थः । किंच यज्ञियानां यज्ञसंपादिनां देवानां मायामु प्रज्ञामेव एतां मन्यन्ते कवय इति शेषः । यत् प्रजानन् प्रज्ञायमानः सूर्यः तूर्णिः त्वरमाणः सन् अपः अन्तरिक्षं कर्म वा चरति । तथा च यास्कः—'मूर्धा मूर्तमस्मिन्धीयते मूर्धा यः सर्वेषां भूतानां भवति नक्तमग्निस्ततः सूर्यो जायते प्रातरुद्यन्स एव[1] । प्रज्ञां त्वेतां मन्यन्ते यज्ञियानां देवानां यज्ञसंपादिनामपो यत्कर्म चरति प्रजानन्सर्वाणि स्थानान्यनुसंचरति त्वरमाणः' ( निरु. ७. २७ ) इति ॥

दृशेन्यो यो महिना समिद्धोऽरोचत दिवियोनिर्विभावा ।
तस्मिन्नग्नौ सूक्तवाकेन देवा हविर्विश्व आजुहवुस्तनूपाः ॥ ७ ॥

---

१. तभ–एव ।

हुवेऽन्यः । यः । महिना । सम्ऽइद्धः । अरोचत । दिविऽयोनिः । विभाऽवा ।
तस्मिन् । अग्नौ । सूक्तऽवाकेन । देवाः । हविः । विश्वे । आ । अजुहवुः । तनूऽपाः ॥७॥

यः वैश्वानरोऽग्निः महिना महत्त्वेन हवेन्यः सर्वैर्हवनीयः समिद्धः सम्यग्दीप्तः दिविऽयोनिः द्युस्थानः विभावा दीप्तिमांश्च सन् अरोचत दीप्यते तस्मिन् वैश्वानरे अग्नौ तनूपाः शरीराणां रक्षकाः विश्वे सर्वे देवाः सूक्तवाकेन 'इदं द्यावापृथिवी' इत्यादिवाक्येन स्तोत्राणां वचनेन वा हविः आजुहवुः आभिमुख्येन जुहुवुः¹ ॥

सूक्तवाकं प्रथममादिदग्निमादिद्धविरजनयन्त देवाः ।
स एषां यज्ञो अभवत्तनूपास्तं द्यौर्वेद तं पृथिवी तमापः ॥ ८ ॥

सूक्तऽवाकम् । प्रथमम् । आत् । इत् । अग्निम् । आत् । इत् । हविः । अजनयन्त । देवाः ।
सः । एषाम् । यज्ञः । अभवत् । तनूऽपाः । तम् । द्यौः । वेद । तम् । पृथिवी । तम् । आपः ॥८॥

प्रथमं पूर्वं सूक्तवाकम् 'इदं द्यावापृथिवी' इत्यादि वाक्यं मनसा निरूपयन्ति आदित् अनन्तरमेव अग्निं मथनेनोत्पादयन्ति । आदित् अनन्तरमेव देवाः हविरजनयन्त जनयन्ति । सः वैश्वानरोऽग्निः एषां देवानां यज्ञः यष्टव्यः अभवत् भवति । सः तनूपाः शरीराणां रक्षिता च भवति । तम् अग्निं द्यौः द्युलोकः वेद जानाति । तम् अग्निं पृथिवी भूमिरपि च जानाति । तम् अग्निम् आपः अन्तरिक्षं च जानाति ॥

यं देवासोऽजनयन्ताग्निं यस्मिन्नाजुहवुर्भुवनानि विश्वा ।
सो अर्चिषा पृथिवीं द्यामुतेमामृजूयमानो अतपन्महित्वा ॥ ९ ॥

यम् । देवासः । अजनयन्त । अग्निम् । यस्मिन् । आ । अजुहवुः । भुवनानि । विश्वा ।
सः । अर्चिषा । पृथिवीम् । द्याम् । उत । इमाम् । ऋजुऽयमानः । अतपत् । महिऽत्वा ॥९॥

यं वैश्वानरम् अग्निं देवासः देवाः अजनयन्त उत्पादितवन्तः यस्मिन् च उत्पन्ने वैश्वानरेऽग्नौ विश्वा विश्वानि भुवनानि भूतानि आजुहवुः आभिमुख्येन जुहुवुः सर्वमेधे सः वैश्वानरोऽग्निः अर्चिषा तेजसा पृथिवीम् अन्तरिक्षम् । 'आपः पृथिवी' इत्यन्तरिक्षनामसु पाठात् । द्यां दिवं च उत अपि च इमां भूमिं च ऋजूयमानः ऋजुगमनः महित्वा महत्त्वेन अतपत् सर्वं तपति ॥

स्तोमेन हि दिवि देवासो अग्निमजीजनञ्छक्तिभी रोदसिप्राम् ।
तमू अकृण्वन्त्रेधा भुवे कं स ओषधीः पचति विश्वरूपाः ॥ १० ॥

स्तोमेन । हि । दिवि । देवासः । अग्निम् । अजीजनन् । शक्तिऽभिः । रोदसिऽप्राम् ।
तम् । ऊँ इति । अकृण्वन् । त्रेधा । भुवे । कम् । सः । ओषधीः । पचति । विश्वऽरूपाः ॥१०॥

१. गघ-त१.२.५.६–आभिमुख्येनाजुहवु, त४–आभिमुख्येनाजुहुवुः; म१.४.६–आभिमुख्येन जुहुवुः; म७ आभिमुख्येन जहुवुः ।

देवासः देवाः शक्तिभिः कर्मभिः रोदसिप्राम् द्यावापृथिव्योरापूरयितारम् अग्निं सूर्यात्मकं दिवि द्युलोके स्तोमेन हि स्तुत्या खलु अजीजनन् उत्पादितवन्तः। अपि च तम् उ तमेव कं सुखकरम् अग्निं यज्ञे त्रेधा भुवे त्रेधाभावाय अकृण्वन् कुर्वन्ति। सः पृथिव्यां वर्तमानः विश्वरूपाः सर्वरूपाः ओषधीः व्रीह्याद्यास्तेन तेनोपकारेण पचति। अत्र यास्कः—'स्तोमेन यं हि[1] दिवि देवासोऽग्निमजनयञ्छक्तिभिः[2] कर्मभिर्द्यावापृथिव्योः पूरणं[3] तमकुर्वंस्त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः। यदस्य दिवि तृतीयं तदसावादित्य इति हि ब्राह्मणम्' ( निरु. ७.२८ ) इति ॥ ११ ॥

यदेदेनमदधुर्यज्ञियासो दिवि देवाः सूर्यमादितेयम्।
यदा चरिष्णू मिथुनावभूतामादित्प्रापश्यन्भुवनानि विश्वा ॥ ११ ॥

यदा। इत्। एनम्। अदधुः। यज्ञियासः। दिवि। देवाः। सूर्यम्। आदितेयम्।
यदा। चरिष्णू इति। मिथुनौ। अभूताम्। आत्। इत्। प्र। अपश्यन्। भुवनानि। विश्वा ॥ ११ ॥

यदेत् यदैव प्रातः आदितेयम् अदितेः पुत्रं सूर्यम् एनम् अग्निं च यज्ञियासः यज्ञार्हाः देवाः दिवि द्युलोके अदधुः धृतवन्तः। यदा चेमौ चरिष्णू चरणशीलौ सूर्यवैश्वानरौ मिथुनौ अभूतां प्रादुरभूताम्। आदित् अनन्तरमेव विश्वा विश्वानि भुवनानि भूतजातानि प्रापश्यन् तौ पश्यन्ति। अत्र यास्कः—'यदैनमदधुर्यज्ञियाः सर्वे दिवि देवाः सूर्यमदितेः[4] पुत्रं[4] यदा चरिष्णू मिथुनौ प्रादुरभूतां सर्वदा सहचारिणावुषाश्चादित्यश्च। मिथुनौ कस्मान्मिनोतिः श्रयतिकर्मा थु इति नामकरणस्थकारो वा नयतिः परो वनिर्वा समाश्रितावन्योन्यं नयतो वनुतो वा। मनुष्यमिथुनावप्येतस्मादेव मेथन्तावन्योन्यं वनुत इति वा' ( निरु. ७. २९ ) इति ॥

विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्।
आ यस्ततानोषसो विभातीरपो ऊर्णोति तमो अर्चिषा यन् ॥ १२ ॥

विश्वस्मै। अग्निम्। भुवनाय। देवाः। वैश्वानरम्। केतुम्। अह्नाम्। अकृण्वन्।
आ। यः। ततान। उषसः। विऽभातीः। अपो इति। ऊर्णोति। तमः। अर्चिषा। यन् ॥ १२ ॥

देवाः इन्द्रादयः विश्वस्मै[5] भुवनाय[6] वैश्वानरं विश्वनरहितम् अग्निम् अह्नां दिवसानां केतुं प्रज्ञापकम् अकृण्वन् अकुर्वन्। यः वैश्वानरोऽग्निः उषसः विभातीः विविधं दीप्यमानाः आ ततान विस्तारयति। किंच सोऽयं यन् गच्छन् तमः अन्धकारम् अर्चिषा तेजसा अपो ऊर्णोति अपगमयति ॥

वैश्वानरं कवयो यज्ञियासोऽग्निं देवा अजनयन्नजुर्यम्।
नक्षत्रं प्रत्नममिनच्चरिष्णु यक्षस्याध्यक्षं तविषं बृहन्तम् ॥ १३ ॥

वैश्वानरम्। कवयः। यज्ञियासः। अग्निम्। देवाः। अजनयन्। अजुर्यम्।
नक्षत्रम्। प्रत्नम्। अमिनत्। चरिष्णु। यक्षस्य। अधिऽअक्षम्। तविषम्। बृहन्तम् ॥ १३ ॥

१. त१.३-भ-हि यं। २. भ-'शक्तिभिः' नास्ति। ३. त१.२.७-आपूरणं। ४. ग-त१.५-सूर्यमादितेयमदितेः पुत्रं; त१.६-सूर्यमदितेः यमदिते पुत्रं। ५. ग-त-विश्वस्मै सर्वस्मै। ६. त-भ-भुवनाय।

कवयः मेधाविनः यज्ञियासः यज्ञार्हा यज्ञसंपादिनो वा देवाः अजुर्यं जरावर्जितमहिंस्यं वा वैश्वानरं विश्वनरहितं सूर्यात्मकम् अग्निम् अजनयन् उत्पादितवन्तः । स च देवैरुत्पादितोऽग्निः नक्षत्रं कृत्तिकादि प्रत्नं पुराणं चरिष्णु चरणशीलं यक्षस्य । यक्षतिः पूजार्थः । 'प्रयक्षम्' (ऋ. सं. २. ५. १) इत्यादौ दर्शनात् । यक्षस्य पूज्यस्य देवस्य अध्यक्षं प्रत्यक्षं स्वामिनं वा तविषं वृद्धं बृहन्तं महान्तम् अमिनात् हिंसितवान् । तेजसाभिभूतवानित्यर्थः ॥

वैश्वानरं विश्वहा दीदिवांसं मन्त्रैरग्निं कविमच्छा वदामः ।
यो महिम्ना परिबभूवोर्वी उतावस्तादुत देवः परस्तात् ॥ १४ ॥

वैश्वानरम् । विश्वहा । दीदिऽवांसम् । मन्त्रैः । अग्निम् । कविम् । अच्छ । वदामः ।
यः । महिम्ना । परिऽबभूव । उर्वी इति । उत । अवस्तात् । उत । देवः । परस्तात् ॥१४॥

विश्वहा सर्वदा दीदिवांसं दीप्तं कविं क्रान्तप्रज्ञं वैश्वानरम् अग्निं मन्त्रैः अच्छ वदाम अभिष्टुमः । यः वैश्वानरोऽग्निः महिम्ना महत्त्वेन उर्वी द्यावापृथिव्यौ परिबभूव परिभवति । उत अपि च अयम् अवस्तात् अधस्तात् तपति । उत अपि चायं सूर्यात्मकः देवः परस्तात् उपरिष्टाच्च तपतीत्यर्थः[1] ॥

द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम् ।
ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं च ॥ १५ ॥

द्वे इति । सृती इति । अशृणवम् । पितॄणाम् । अहम् । देवानाम् । उत । मर्त्यानाम् ।
ताभ्याम् । इदम् । विश्वम् । एजत् । सम् । एति । यत् । अन्तरा । पितरम् । मातरम् । च ॥१५॥

पितॄणां देवानां च उत अपि मर्त्यानां मनुष्याणां च द्वे सृती द्वौ मार्गौ देवयानपितृयाणाख्यौ अहम् अशृणवम् अश्रौषम् । यत् विश्वं पितरं पालकत्वेन पितृभूतां द्यां मातरं च धारकत्वेन मातृभूतां पृथिवीं च अन्तरा द्यावापृथिव्योर्मध्ये भवति तत् इदं विश्वम् अग्निना संस्कृतं सत् एजत् देवलोकं पितृलोकं च गच्छत् ताभ्यां देवयानपितृयाणाख्याभ्यां मार्गाभ्यां समेति गच्छति । तौ च मार्गौ भगवता दर्शितौ—'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् । तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते । एकया यात्यनावृत्तिमन्ययावर्तते पुनः ॥ नैते सृती पार्थ जानन्योगी मुह्यति कश्चन' (भ.गी.८.२४-२७) इति ॥१२॥

द्वे समीची बिभृतश्चरन्तं शीर्षतो जातं मनसा विमृष्टम् ।
स प्रत्यङ् विश्वा भुवनानि तस्थावप्रयुच्छन् तरणिर्भ्राजमानः ॥ १६ ॥

द्वे इति । समीची इति सम्ऽईची । बिभृतः । चरन्तम् । शीर्षतः । जातम् । मनसा । विऽमृष्टम् ।
सः । प्रत्यङ् । विश्वा । भुवनानि । तस्थौ । अप्रऽयुच्छन् । तरणिः । भ्राजमानः ॥ १६ ॥

---

१. म-त-म१.४.६.७--अपि च ।

समीची संगते द्वे द्यावापृथिव्यौ चरन्तं गच्छन्तं शीर्षतः शिरसः जातम् उत्पन्नम्। तथा च निगमान्तरम्—'उत मन्येऽहमेनमनयोर्हि शिरस्तोऽयं प्रजायते' इति। यद्वा। सर्वशिरोभूताद्दादित्याज्जातमित्यर्थः। मनसा। मन्यतिरर्चतिकर्मा। अर्चनीयया स्तुत्या विमृष्टं शोधितं संस्कृतमग्निं बिभृतः धारयतः। सः अप्रयुच्छन् अप्रमाद्यन् तरणिः क्षिप्रकारी भ्राजमानः दीप्यमानोऽग्निः विश्वा विश्वानि भुवनानि¹ प्रत्यङ् अभिमुखः तस्थौ तिष्ठति। तथा च श्रूयते—'तस्मात्सर्व एव मन्यन्ते मां प्रत्युदगात्' ( तै. सं. ६. ५. ४. १ ) इति॥

यत्रा वदेते अवरः परश्च यज्ञन्योः कतरो नौ वि वेद।
आ शेकुरित्सधमादं सखायो नक्षन्त यज्ञं क इदं वि वोचत्॥ १७॥

यत्र। वदेते इति। अवरः। परः। च। यज्ञऽन्योः। कतरः। नौ। वि। वेद।
आ। शेकुः। इत्। सधऽमादम्। सखायः। नक्षन्त। यज्ञम्। कः। इदम्। वि। वोचत्॥ १७॥

यत्र यस्मिन्काले अवरः पार्थिवोऽग्निर्दैव्यो होता परश्च मध्यमो वायुश्च उभौ वदेते विवादं कुर्वाते यज्ञन्योः यज्ञस्य नेत्रोः नौ आवयोर्मध्ये कतरः भूयिष्ठं यज्ञं वि वेद वेत्ति तत्र सखायः समानख्याना ऋत्विजः सधमादं यज्ञम् आ शेकुः कर्तुं शक्नुवन्ति। तथा यज्ञं नक्षन्त अभ्युपयन्ति अनुतिष्ठन्ति च ये तेषां विदुषां यज्ञमनुतिष्ठतां मध्ये कः विद्वाननुष्ठाता वा इदम् अस्य विवादस्य² निर्णयरूपं वाक्यं वि वोचत् ब्रवीति। माध्यमिकमिममग्निं ब्रवीति। तथा च यास्कः—'यत्र विवदेते दैव्यौ होतारावयं चाग्निरसौ च मध्यमः कतरो नौ यज्ञे भूयो वेदेत्याशक्नुवन्ति तत्सहमदनं समानख्याना ऋत्विजस्तेषां यज्ञं समश्नुवानानां को न इदं विवक्ष्यति' (निरु. ७. ३०) इति॥

कत्यग्नयः कति सूर्यासः कत्युषासः कत्यु स्विदापः।
नोपस्पिजं वः पितरो वदामि पृच्छामि वः कवयो विद्मने कम्॥ १८॥

कति। अग्नयः। कति। सूर्यासः। कति। उषसः। कति। ऊँ इति। स्वित्। आपः।
न। उपऽस्पिजम्। वः। पितरः। वदामि। पृच्छामि। वः। कवयः। विद्मने। कम्॥ १८॥

एवं विवदमानावग्निवायू पितॄन् प्रश्नमेतनुः। तत्र मध्यमस्तान् पृच्छति। कत्यग्नयः। अग्नयः कति कतिसंख्याकाः सूर्यासः सूर्याश्च कतिसंख्याकाः। उषासः उषसश्च कतिसंख्याकाः। आपः च कति। उ इति पूरणः। स्विच्छब्दोऽत्र विचारणार्थः। हे पितरः वः युष्माकम् उपस्पिजम्। उपस्पिजमिति स्पर्धायुक्तं वचनमुच्यते। पूर्वोक्तं प्रश्नवचनमेतत् न वदामि³। किं तर्ह्यहमजानन् हे कवयः मेधाविनः युष्मान् विद्मने विज्ञानाय कं सुखं वक्तृपर्यालोचनक्लेशमन्तरेण पृच्छामि। अत्रोत्तराणि वालखिल्यसंहितायां दर्शितानि—'एक एवाग्निर्बहुधा समिद्ध एकः सूर्यो विश्वमनु प्रभूतः। एकैवोषाः सर्वमिदं वि भात्येकं वा इदं वि बभूव सर्वम्' ( ऋ. सं. ८. ५८. २ ) इति॥

यावन्मात्रमुषसो न प्रतीकं सुपर्ण्यो३ वसते मातरिश्वः।
तावद्दधात्युप यज्ञमायन्ब्राह्मणो होतुरवरो निषीदन्॥ १९॥

यावत्ऽमात्रम्। उषसः। न। प्रतीकम्। सुऽपर्ण्यः। वसते। मातरिश्वः।
तावत्। दधाति। उप। यज्ञम्। आऽयन्। ब्राह्मणः। होतुः। अवरः। निऽसीदन्॥ १९॥

१. ग१.२–भुवना भुवनानि। २. ग–विवादस्य। ३. ग–ख१.३.६.८–अ२.८–वदामि न वदामि।

प्रकृतस्य वैश्वानरस्य विषये यः प्रश्नस्तस्य निर्णयमनया बदन्ति। हे मातरिश्वः मातर्यन्तरिक्षे श्वसन् माध्यमिक वायो यावन्मात्रं यावदेव सुपर्ण्यः सुपतना रात्रयः उषसः प्रतीकं मुखं प्रकाशाख्यं दर्शनं वा। न इति पूरणः। वसते आच्छादयन्ति तावत् एव ब्राह्मणः होता अवरः निकृष्टः[1] होतुः अस्याग्नेर्वैश्वानरस्य दैव्यस्य होतुः[1] निषीदन्[2] हौत्रं कर्म कर्तुमुपविशन् यज्ञमावन् उपगच्छन्[3] उप दधाति। होतृकर्म स्वकृतं धारयति। तथा च यास्कः—'यावन्मात्रमुषसः प्रत्यक्तं भवति प्रतिदर्शनमिति वास्त्युपमानस्य संप्रत्यर्थे प्रयोग इहेव निधेहीति यथा सुपर्ण्यः सुपतना एता रात्रयो वसते मातरिश्वञ्ज्योतिर्वर्णस्य तावदुपदधाति यज्ञमागच्छन् ब्राह्मणो होतास्याग्ने-र्होतुरवरो निषीदन् होतृजपस्त्वग्निर्वैश्वानरीयो भवति' ( निरु. ७. ३१ ) इति॥ ॥ १९ ॥

'इन्द्रं स्तव' इत्यष्टादशर्चं पञ्चमं सूक्तं वैश्वामित्रस्य रेणोरार्षं त्रैष्टुभमैन्द्रम्। अनुक्रान्तं च—'इन्द्रं स्तव द्व्यूना रेणुः' इति। सूर्यस्तुकाम्यैकाह इदं सूक्तं निष्केवल्यनिविद्धानम्। सूत्रितं च—'सूर्यस्तुता यशस्कामः पिबा सोममभीन्द्रं स्तवेति मध्यंदिनः[4]' ( आश्व. श्रौ. ९. ८ ) इति॥

**इन्द्रं स्तवा नृतमं यस्य मह्ना विबबाधे रोचना वि ज्मो अन्तान्।**

**आ यः पप्रौ चर्षणीधृद्वरोभिः प्र सिन्धुभ्यो रिरिचानो महित्वा॥ १॥**

इन्द्रम्। स्तव। नृऽतमम्। यस्य। मह्ना। विऽबबाधे। रोचना। वि। ज्मः। अन्तान्।

आ। यः। पप्रौ। चर्षणिऽधृत्। वरःऽभिः। प्र। सिन्धुऽभ्यः। रिरिचानः। महिऽत्वा॥ १॥

हे स्तोतः त्वं नृतमं नेतृतमम् इन्द्रं स्तव स्तुहि। यस्य इन्द्रस्य मह्ना महत्त्वम्। विभक्ति-व्यत्ययः। रोचना परेषां तेजांसि विबबाधे विबाधते। अभिभवतीत्यर्थः। वि ज्मः पृथिव्याश्च अन्तान् पर्यन्तानभिभवति। यः चेन्द्रः चर्षणीधृत् मनुष्याणां धर्ता सिन्धुभ्यः समुद्रेभ्योऽपि महित्वा महत्त्वेन प्र रिरिचानः प्रवर्धमानश्च सन् वरोभिः तमसां वारकैस्तेजोभिः आ पप्रौ द्यावापृथिव्यावापूरयति॥

**स सूर्यः पर्युरू वरांस्येन्द्रो ववृत्याद्रथ्येव चक्रा।**

**अतिष्ठन्तमपस्यं१ न सर्गं कृष्णा तमांसि त्विष्या जघान॥ २॥**

सः। सूर्यः। परि। उरु। वरांसि। आ। इन्द्रः। ववृत्यात्। रथ्याऽइव। चक्रा।

अतिष्ठन्तम्। अपस्यम्। न। सर्गम्। कृष्णा। तमांसि। त्विष्या। जघान॥ २॥

सूर्यः सुवीर्यः सः प्रसिद्धः इन्द्रः उरु बहूनि वरांसि तेजांसि परि आ ववृत्यात् पर्यावर्तयति। तत्र दृष्टान्तः। रथ्येव यथा[5] सारथी[5] रथसंबन्धीनि चक्रा चक्राणि आवर्तयति तद्वदित्यर्थः। किंच सोऽयम् अतिष्ठन्तं शीघ्रं गच्छन्तम् अपस्यं न कर्मवन्तमिव सर्गम्। सृज्यत इति सर्गोऽश्वः। तं कृष्णा कृष्णानि तमांसि त्विष्या दीप्त्या जघान हन्ति॥

१. ग-त-म—अग्नेः निकृष्टः। २. ग१.२—होतुर्वा निषीदन्; ल-भ४.८—होतुर्ज्ञाननिषीदन्, भ१—होतु-ज्ञनिदन्; भ२—होतुरवरो निषादन्; भ६-मु—होतुर्ज्ञाने निषीदन्। ३. त—उपागच्छन्। ४. ग-त-म-मु—माध्यंदिनः। ५. ग-म—यथा रथी; त—सारथी।

समानमस्मा अनपावृदर्च क्ष्मया दिवो असमं ब्रह्म नव्यम् ।
वि यः पृष्ठेव जनिमान्यर्य इन्द्रश्चिकाय न सखायमीषे ॥ ३ ॥

समानम् । अस्मै । अनपऽवृत् । अर्च । क्ष्मया । दिवः । असमम् । ब्रह्म । नव्यम् ।
वि । यः । पृष्ठाऽइव । जनिमानि । अर्यः । इन्द्रः । चिकाय । न । सखायम् । ईषे ॥ ३ ॥

हे स्तोतः त्वं समानं मया सह अनपावृत् अपगतिरहितं क्ष्मया दिवः दिवः पृथिव्याश्च असमम् असमानमतिरिक्तम्। महदित्यर्थः। नव्यं नवतरमन्यैरकृतपूर्वं ब्रह्म स्तोत्रम् अस्मै इन्द्राय अर्च उच्चारय। यः इन्द्रः जनिमानि यज्ञेषु जातानि पृष्ठेव पृष्ठसंज्ञकानि स्तोत्राणीव अर्यः अरीन् शत्रून् वि चिकाय विचिनोति सखायं च न ईषे नेच्छति ॥

इन्द्राय गिरो अनिशितसर्गा अपः प्रेरयं सगरस्य बुध्नात् ।
यो अक्षेणेव चक्रिया शचीभिर्विष्वक्तस्तम्भ पृथिवीमुत द्याम् ॥ ४ ॥

इन्द्राय । गिरः । अनिशितऽसर्गाः । अपः । प्र । ईरयम् । सगरस्य । बुध्नात् ।
यः । अक्षेणऽइव । चक्रिया । शचीभिः । विष्वक् । तस्तम्भ । पृथिवीम् । उत । द्याम् ॥ ४ ॥

इन्द्राय इन्द्रार्थम् अनिशितसर्गाः अनवकृतविसर्गा उपर्युपरि वर्तमाना याः गिरः स्तुतयः ताभिर्गीर्भिः सगरस्य अन्तरिक्षस्य[1]। 'सगरं समुद्रः' इत्यन्तरिक्षनामसु पाठात्। बुध्नात् प्रदेशात् अपः उदकानि प्रेरयं प्रेरयामि। यः[2] इन्द्रः शचीभिः कर्मभिः पृथिवीम् उत अपि च द्यां दिवं चक्रिया रथचक्राणि अक्षेणेव यथा रथाक्षेण[3] तद्वत् विष्वक् सर्वतः तस्तम्भ अस्तम्नात् ॥

आपान्तमन्युस्तृपलप्रभर्मा धुनिः शिमीवाञ्छरुमाँ ऋजीषी ।
सोमो विश्वान्यतसा वनानि नार्वागिन्द्रं प्रतिमानानि देभुः ॥ ५ ॥

आपान्तऽमन्युः । तृपलऽप्रभर्मा । धुनिः । शिमीऽवान् । शरुऽमान् । ऋजीषी ।
सोमः । विश्वानि । अतसा । वनानि । न । अर्वाक् । इन्द्रम् । प्रतिऽमानानि । देभुः ॥ ५ ॥

आपान्तमन्युः आपातितमन्युः[4] तृपलप्रभर्मा प्राणैः क्षिप्रप्रहारी धुनिः शत्रूणां कम्पयिता शिमीवान् कर्मवान् शरुमान् आयुधवान् ऋजीषी ऋजीषवान् सोमो विश्वानि सर्वाणि अतसा अतसमयानि वनानि अरण्यानि यद्वदत्तीति शेषः। प्रतिमानानि प्रतिमानभूतानि समानानि द्रव्याणीत्यर्थः। इन्द्रम् अर्वाक् न देभुः। दभ्नोतिरत्राकर्षणकर्मा। तुल्यतः क्रीयमाणा-न्यस्मदभिमुखतया नाकर्षयन्ति। लघूनि भवन्तीत्यर्थः। अन्यत्र प्रतिनिधीयमानानि[5] गुरूणि ताभ्या-स्ताभिमुखमाकर्षन्ति नैवमिन्द्रं कुर्वन्तीति। सर्वेभ्यो महानिन्द्र इत्यर्थः। त्रयः पादाः सौम्यास्तुरीय-स्त्वैन्द्रः। तथा च यास्कः—'आपातितमन्युस्तृप्रप्रहारी क्षिप्रप्रहारी[6] सोमो वेन्द्रो वा धुनिर्धूनोतेः शिमीति कर्मनाम शमयतेर्वा शक्नोतेर्वर्जीषी सोमो यत्सोमस्य पूयमानस्यातिरिच्यते तदृजीषमपार्जितं भवति तेनर्जीषी सोमोऽथाप्यैन्द्रो निगमो भवत्यृजीषी वज्रीति'। सोमः सर्वाण्यतसानि वनानि

१. त-भ—अंतरिक्षं च। २. ग१.२-न-अ-मु—'यः' नास्ति। ३. त२.७-भ—रथाक्षेणेव। ४. ग२—आपादित°। ५. त-भ—प्रतिनिधीयमानानि। ६. त१.२.७-मु क्षिप्रप्रहारी सुप्रहारी।

भार्योगिन्द्रं प्रतिमानानि दम्नुवन्ति नैवं प्रतिमिमते नैनं तानि दम्नुवन्ति' (निरु. ५. ११) इति ॥ ॥ १३ ॥

न यस्य॒ द्यावा॑पृथि॒वी न धन्व॒ नान्तरि॑क्षं॒ नाद्र॑यः॒ सोमो॑ अक्षाः ।
यद॑स्य म॒न्युर॑धिनी॒यमा॑नः शृ॒णाति॑ वी॒ळु रु॒जति॑ स्थि॒राणि॑ ॥ ६ ॥

न । यस्य॑ । द्यावा॑पृथि॒वी इति॑ । न । धन्व॑ । न । अ॒न्तरि॑क्षम् । न । अद्र॑यः । सोम॑ः । अ॒क्षा॒रिति॑ ।
यत् । अ॒स्य॒ । म॒न्युः । अ॒धि॒ऽनी॒यमा॑नः । शृ॒णाति॑ । वी॒ळु । रु॒जति॑ । स्थि॒राणि॑ ॥ ६ ॥

द्यावापृथिवी द्यावापृथिव्यौ यस्य इन्द्रस्य प्रतिमानभूते[1] न भवतः । न[2] धन्व उदकमपि प्रतिमानभूतं न भवति । नान्तरिक्षम्[3] अन्तरिक्षमपि प्रतिमानभूतं न भवति । नाद्रयः[4] पर्वताश्च प्रतिमानभूता न भवन्ति । तस्येन्द्रस्य सोमः अक्षाः क्षरति । किंच यत् यदा अस्य इन्द्रस्य मन्युः क्रोधः अधिनीयमानः शत्रूणामुपरि प्राप्यमाणो भवति तदानीमयमिन्द्रः वीळु दृढं शृणाति हिनस्ति । स्थिराणि रुजति भिनत्ति च ॥

ज॒घान॑ वृ॒त्रं स्वधि॑ति॒र्वने॑व रु॒रोज॒ पुरो॒ अर॑द॒न्न सिन्धू॑न् ।
बि॒भेद॑ गि॒रिं नव॒मिन्न कु॒म्भमा गा इन्द्रो॑ अकृणुत स्व॒युग्भिः॑ ॥ ७ ॥

ज॒घान॑ । वृ॒त्रम् । स्व॒ऽधि॑तिः । वना॑ऽइव । रु॒रोज॑ । पुरः॑ । अर॑दत् । न । सिन्धू॑न् ।
बि॒भेद॑ । गि॒रिम् । नव॑म् । इत् । न । कु॒म्भम् । आ । गाः । इन्द्रः॑ । अ॒कृ॒णु॒त॒ । स्व॒युक्ऽभिः॑ ॥ ७ ॥

इन्द्रः वृत्रम् असुरं जघान हतवान् । अपि च स्वधितिः परशुः वनेव वनानीव पुरः शत्रुनगरीः रुरोज रुजति भिनत्ति । शत्रुनगरीर्भित्त्वा च सिन्धून् नदीः अरदत् वृत्रयुद्धकेनालिखत् । न इति संप्रत्यर्थे । किंच गिरिं मेघं नवं न नवमिव कुम्भं कलशं बिभेद इत् भिनत्त्येव । किंच इन्द्रः स्वयुग्भिः स्वयं युज्यमानैर्मरुद्भिः गाः उदकानि आ अकृणुत अस्मदभिमुखं करोति ॥

त्वं ह॒ त्यदृ॑ण॒या इ॑न्द्र॒ धीरो॒ऽसिर्न पर्व॑ वृजि॒ना शृ॑णासि ।
प्र ये मि॒त्रस्य॒ वरु॑णस्य॒ धाम॑ यु॒जं न जना॑ मि॒नन्ति॑ मि॒त्रम् ॥ ८ ॥

त्वम् । ह॒ । त्यत् । ऋ॒ण॒ऽयाः । इ॒न्द्र॒ । धीरः॑ । अ॒सिः । न । पर्व॑ । वृ॒जि॒ना । शृ॒णा॒सि॒ ।
प्र । ये । मि॒त्रस्य॑ । वरु॑णस्य । धाम॑ । यु॒जम् । न । जना॑ः । मि॒नन्ति॑ । मि॒त्रम् ॥ ८ ॥

इन्द्र धीरः प्राज्ञः त्वं ह त्वं खलु त्यत् तत् ऋणयाः स्तोतृविषयाणामृणानां प्रापयितासि । किंच त्वम् असिर्न खड्ग इव पर्व पशूनां पर्वाणि वृजिना वृजिनानि स्तोतॄणामुपद्रवाणि[5] शृणासि हिंसि । किंच मित्रस्य वरुणस्य मित्रावरुणयोः धाम धारकं कर्म युजं न युक्तमिव मित्रं ये जना नृशंसाः जनाः प्र मिनन्ति प्रकर्षेण हिंसन्ति तानपि शृणासीत्यर्थः ॥

प्र ये मि॒त्रं प्रार्य॒मणं॑ दु॒रेवाः॒ प्र सं॒गिरः॒ प्र वरु॑णं मि॒नन्ति॑ ।
न्य१॒॑मित्रे॑षु व॒धमि॑न्द्र॒ तुम्रं॒ वृष॒न्वृषा॑णमरु॒षं शि॑शीहि ॥ ९ ॥

१. त–प्रतिमानभूतं न भवति; भ–प्रमाणभूते न भवतः । २. त-भ–'न' नास्ति । ३. त-भ–अंतरिक्षे । ४. त-भ–अद्रयः । ५. त-भ१.२.४.६–°मुपद्रवाणां; भ८–°मुपद्रव्याणां ।

प्र । ये । मित्रम् । प्र । अर्यमणम् । दुःऽएवाः । प्र । सम्ऽगिरः । प्र । वरुणम् । मिनन्ति ।
नि । अमित्रेषु । वधम् । इन्द्र । तुम्रम् । वृषन् । वृषाणम् । अरुषम् । शिशीहि ॥ ९ ॥

ये दुरेवाः दुष्टगमना जनाः मित्रं देवं प्र मिनन्ति प्रहिंसन्ति अर्यमणं च देवं प्र मिनन्ति संगिरः समीचीनस्तुतिमतो मरुतश्च प्र मिनन्ति वरुणं च देवं प्र मिनन्ति तेषु अमित्रेषु शत्रुषु । शत्रुष्वित्येतदर्थः। हे वृषन् कामानां वर्षक इन्द्र त्वं तुम्रं गमनशीलं वृषाणं कामानां वर्षकम् अरुषम् आरोचमानं वधं वज्रम् । ' वधः वज्रः ' इति वज्रनामसु पाठात् । नि शिशीहि तीक्ष्णीकुरु ॥

इन्द्रो दिव इन्द्र ईशे पृथिव्या इन्द्रो अपामिन्द्र इत्पर्वतानाम् ।
इन्द्रो वृधामिन्द्र इन्मेधिराणामिन्द्रः क्षेमे योगे हव्य इन्द्रः ॥ १० ॥

इन्द्रः । दिवः । इन्द्रः । ईशे । पृथिव्याः । इन्द्रः । अपाम् । इन्द्रः । इत् । पर्वतानाम् ।
इन्द्रः । वृधाम् । इन्द्रः । इत् । मेधिराणाम् । इन्द्रः । क्षेमे । योगे । हव्यः । इन्द्रः ॥ १० ॥

दिवः द्युलोकस्य इन्द्र ईशे ईष्टे पृथिव्याः भूमेरपि इन्द्रः ईशे ईश्वरो[1] भवति । अपाम् उदकानामपि इन्द्रः ईश्वरो भवति । पर्वतानां मेघानामपि इन्द्रः ईश्वरो भवति । वृधां वृद्धानामपि इन्द्रः एवेश्वरः । मेधिराणां प्राज्ञानामपि इन्द्रः एव ईश्वरो भवति । किंच इन्द्रः क्षेमे लब्धस्य धनस्य परिपालने हव्यः ह्वातव्यः योगे अलब्धस्य धनस्य लाभेऽपि इन्द्रः एव ह्वातव्यो भवति ॥ ॥ १५ ॥

प्राक्तुभ्य इन्द्रः प्र वृधो अहभ्यः प्रान्तरिक्षात्प्र समुद्रस्य धासेः ।
प्र वातस्य प्रथसः प्र ज्मो अन्तात्प्र सिन्धुभ्यो रिरिचे प्र क्षितिभ्यः ॥ ११ ॥

प्र । अक्तुऽभ्यः । इन्द्रः । प्र । वृधः । अहःऽभ्यः । प्र । अन्तरिक्षात् । प्र । समुद्रस्य । धासेः ।
प्र । वातस्य । प्रथसः । प्र । ज्मः । अन्तात् । प्र । सिन्धुऽभ्यः । रिरिचे । प्र । क्षितिऽभ्यः ॥ ११ ॥

इन्द्रः अक्तुभ्यः रात्रिभ्यः प्र वृधः प्रवृद्धः । अहभ्यः दिवसेभ्योऽपि प्र वृधः अधिकः । अन्तरिक्षात् अपि प्रवृद्धः । समुद्रस्य अब्धेः धासेः धारकस्थानादपि प्रवृद्धः । वातस्य वायोः प्रथसः प्रथिम्नोऽपि प्रवृद्धः । ज्मः पृथिव्याः अन्तात् पर्यन्तादपि प्रवृद्धः । सिन्धुभ्यः नदीभ्यश्च प्र रिरिचे अतिरिच्यते । महान् भवतीत्यर्थः । क्षितिभ्यः मनुष्येभ्योऽपि प्र रिरिचे ॥

प्र शोशुचत्या उषसो न केतुरसिन्वा ते वर्ततामिन्द्र हेतिः ।
अश्मेव विध्य दिव आ सृजानस्तपिष्ठेन हेषसा द्रोघमित्रान् ॥ १२ ॥

प्र । शोशुचत्याः । उषसः । न । केतुः । असिन्वा । ते । वर्तताम् । इन्द्र । हेतिः ।
अश्माऽइव । विध्य । दिवः । आ । सृजानः । तपिष्ठेन । हेषसा । द्रोघऽमित्रान् ॥ १२ ॥

हे इन्द्र ते तव असिन्वा भेदनरहिता[2] हेतिः वज्राख्यमायुधं शोशुचत्याः ज्वलन्त्याः उषसः न यथोषसः केतुः पताकास्थानीयो रश्मिस्तद्वज्ज्वलन्ती प्र वर्तताम् । किंच तपिष्ठेन

१. ख१.२.३.७-मु—एव ईश्वरो । २. ग४-मु—भेदनरहिता; ख-भ—भेदेन रहिता ।

अतिशयेन शत्रूणां तापयित्र्या हेत्या बाधकारिण्या हेत्या द्रोघमित्रान् । द्रुग्धानि मित्राणि येषां ते द्रोघमित्राः । तान् शत्रून् विध्य ताडय । तत्र दृष्टान्तः । दिव आ सृजानः सृज्यमानः अशनिरिव । यथाशनिः[1] वृक्षान्[2] विध्यति तद्वदित्यर्थः ॥

अन्वह मासा अन्विद्वनान्यन्वोषधीरनु पर्वतासः ।
अन्विन्द्रं रोदसी वावशाने अन्वापो अजिहत जायमानम् ॥ १३ ॥

अनु । अह । मासाः । अनु । इत् । वनानि । अनु । ओषधीः । अनु । पर्वतासः ।
अनु । इन्द्रम् । रोदसी इति । वावशाने इति । अनु । आपः । अजिहत । जायमानम् ॥ १३ ॥

जायमानं प्रादुर्भवन्तम् इन्द्रं मासाः चैत्रादयः अनु अजिहत अनुगच्छन्ति । अह इति पूरणः । वनानि अरण्यान्यपीन्द्रम् अनु अजिहत । इत् इति पूरणः । ओषधीः ओषध्योऽपि इन्द्रम् अनु गच्छन्ति । पर्वतासः पर्वता अपीन्द्रम् अनु गच्छन्ति । वावशाने कामयमाने रोदसी द्यावापृथिव्यावपि इन्द्रम् अनु गच्छतः । आपः उदकान्यपीन्द्रम् अनु गच्छन्ति । मासाद्यभिमानि- देवताः प्रादुर्भवन्तमिन्द्रमनुगच्छन्तीत्यर्थः ॥

कर्हि स्वित्सा त इन्द्र चेत्यासदघस्य यद्भिनदो रक्ष एषत् ।
मित्रक्रुवो यच्छसने न गावः पृथिव्या आपृगमुया शयन्ते ॥ १४ ॥

कर्हि । स्वित् । सा । ते । इन्द्र । चेत्या । असत् । अघस्य । यत् । भिनदः । रक्षः । आऽईषत् ।
मित्रऽक्रुवः । यत् । शसने । न । गावः । पृथिव्याः । आऽपृक् । अमुया । शयन्ते ॥ १४ ॥

हे इन्द्र ते तव सा हेतिरिषुर्वा चेत्या चेतयितव्या शत्रुषु क्षेप्तव्या कर्हि स्वित् कदा वा असत् भविष्यति । यत् यया हेत्या रक्षम् अघस्य । द्वितीयार्थे षष्ठी । अहन्तम् एषत् युद्धार्थमागच्छत् रक्षः भिनदः अभिनः । यत् यया च मित्रक्रुवः मित्राणां क्रूरस्य कर्मणः कर्तारो जनाः पृथिव्याः संबन्धिनि शसने विशसनस्थाने गावो न पशव इव आपृक् आपर्चनाहताः सन्तः अमुया अनया पृथिव्या संगता युद्धे शयन्ते शेरते ॥

शत्रूयन्तो अभि ये नस्ततस्रे महि व्राधन्त ओगणास इन्द्र ।
अन्धेनामित्रास्तमसा सचन्तां सुज्योतिषो अक्तवस्ताँ अभि ष्युः ॥ १५ ॥

शत्रुऽयन्तः । अभि । ये । नः । ततस्रे । महि । व्राधन्तः । ओगणासः । इन्द्र ।
अन्धेन । अमित्राः । तमसा । सचन्ताम् । सुऽज्योतिषः । अक्तवः । तान् । अभि । स्युरिति स्युः ॥ १५ ॥

हे इन्द्र[3] शत्रूयन्तः[4] महि महान्तो व्राधन्तः अस्मान् बाधमानाः ओगणासः संघीभूताः ये शत्रवः नः अस्मान् अभि ततस्रे निक्षिपन्ति ते अमित्राः शत्रवः अन्धेन तमसा महान्धकारेण सचन्तां संगच्छन्ताम् । किंच तान् अमित्रान् सुज्योतिषः दिवसाः अक्तवः रात्रयश्च अभि ष्युः अभिभवन्तु ॥

१. त४.५—यथास्मा । २. ग-त४.५—वृक्षादीन्; त१.२.३.६.७—वृक्षसमान् । ३. त१.२.३.६.७.८-भ—'इंद्र' नास्ति । ४. ग४—शत्रूयंतः शत्रुत्वमिच्छंतः ।

पु॒रूणि॒ हि त्वा॒ सव॑ना॒ जना॑नां॒ ब्रह्मा॑णि॒ मन्द॑न् गृ॒णता॒मृषी॑णाम् ।
इ॒मामा॒घोष॒न्नव॑सा॒ सहू॑तिं ति॒रो विश्वाँ॒ अर्च॑तो याह्य॒र्वाङ् ॥ १६ ॥

पु॒रूणि॑ । हि । त्वा॒ । सव॑ना । जना॑नाम् । ब्रह्मा॑णि । मन्द॑न् । गृ॒णता॑म् । ऋषी॑णाम् ।
इ॒माम् । आ॒ऽघोष॑न् । अव॑सा । सऽहू॑तिम् । ति॒रः । विश्वा॑न् । अर्च॑तः । या॒हि॒ । अ॒र्वाङ् ॥ १६ ॥

हे इन्द्र त्वा त्वां जनानां संबन्धीनि पुरूणि बहूनि सवना सवनानि ब्रह्माणि स्तोत्राणि च मन्दन् स्तुवन्ति मोदयन्ति वा । गृणतां स्तुवताम्[1] ऋषीणाम् इमां सहूतिं स्तुतिं एवम् आघोषन् महती शोभना चेयं स्तुतिरिति वदन् अर्चतः स्तुवतोऽन्यान् विश्वान् सर्वानपि तिरः तिरस्कृत्य अवसा रक्षणेन सह अर्वाङ् अस्मदभिमुखं याहि गच्छ[2] ॥

ए॒वा ते॑ व॒यमि॑न्द्र भु॒ञ्जती॑नां वि॒द्याम॑ सुम॒ती॒नां नवा॑नाम् ।
वि॒द्याम॒ वस्तो॒रव॑सा गृ॒णन्तो॑ वि॒श्वामि॑त्रा उ॒त त॑ इन्द्र नू॒नम् ॥ १७ ॥

ए॒व । ते॒ । व॒यम् । इ॒न्द्र॒ । भु॒ञ्जती॑नाम् । वि॒द्याम॑ । सु॒ऽम॒ती॒नाम् । नवा॑नाम् ।
वि॒द्याम॑ । वस्तोः॑ । अव॑सा । गृ॒णन्तः॑ । वि॒श्वामि॑त्राः । उ॒त । ते॒ । इ॒न्द्र॒ । नू॒नम् ॥ १७ ॥

हे इन्द्र ते तवैव भुञ्जतीनां रक्षन्तीः प्रियाः वयं विश्वामित्रपुत्रा रेणवः विद्याम लभेमहि । उत अपि च हे इन्द्र ते तव नवानां नूतनाः सुमतीनां सुमतीरनुग्रहबुद्धीः वस्तोः अहनि अवसा रक्षणार्थं गृणन्तः नूनं त्वां स्तुवन्त एव विश्वामित्राः विश्वामित्रपुत्रा वयं विद्याम लभेमहि ॥

शु॒नं हु॑वेम म॒घवा॑न॒मिन्द्र॑म॒स्मिन् भरे॒ नृत॑मं॒ वाज॑सातौ ।
शृ॒ण्वन्त॑मु॒ग्रमू॒तये॑ स॒मत्सु॒ घ्नन्तं॑ वृ॒त्राणि॑ सं॒जितं॒ धना॑नाम् ॥ १८ ॥

शु॒नम् । हु॒वेम॒ । म॒घऽवा॑नम् । इन्द्र॑म् । अ॒स्मिन् । भरे॑ । नृऽत॑मम् । वाज॑ऽसातौ ।
शृ॒ण्वन्त॑म् । उ॒ग्रम् । ऊ॒तये॑ । स॒मत्ऽसु॑ । घ्नन्त॑म् । वृ॒त्राणि॑ । स॒म्ऽजित॑म् । धना॑नाम् ॥ १८ ॥

अस्मिन्भरे संग्रामे शुनं सुखं मघवानं धनवन्तं शृण्वन्तम् अस्मदीयस्याह्वानस्य श्रोतारम् उग्रम् उद्गूर्णं समत्सु संग्रामेषु वृत्राणि शत्रून् घ्नन्तं मारयन्तं धनानां शत्रुधनानां संजितं सम्यगेव जेतारम् इन्द्रं वाजसातौ अन्नस्य लाभाय ऊतये रक्षणाय च हुवेम आह्वयेम ॥ ॥ १६ ॥

'सहस्रशीर्षा' इति षोडशर्चं षष्ठं सूक्तम् । नारायणो नामर्षिः । अन्त्या त्रिष्टुप् शिष्टा अनुष्टुभः । अव्यक्तमहदादिविलक्षणश्चेतनो यः पुरुषः 'पुरुषान्न परं किंचित्' (क. उ. ३. ११) इत्यादिश्रुतिषु प्रसिद्धः स देवता । तथा चानुक्रान्तं—'सहस्रशीर्षा षोळश नारायणः पौरुषमानुष्टुभं त्रिष्टुबन्तं तु' इति । गतो विनियोगः ॥

स॒हस्र॑शीर्षा॒ पुरु॑षः सहस्रा॒क्षः स॒हस्र॑पात् ।
स भूमिं॑ वि॒श्वतो॑ वृ॒त्वात्य॑तिष्ठद्दशाङ्गु॒लम् ॥ १ ॥

---

१. त१.२.३.६.७.८-म—'स्तुवतां' नास्ति । २. म-त४.५—आगच्छ ।

सहस्रऽशीर्षा । पुरुषः । सहस्रऽअक्षः । सहस्रऽपात् ।

सः । भूमिम् । विश्वतः । वृत्वा । अति । अतिष्ठत् । दशऽअङ्गुलम् ॥ १ ॥

सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराडाख्यो यः पुरुषः[1] सोऽयं सहस्रशीर्षा । सहस्रशब्दस्योपलक्षणत्वादनन्तैः शिरोभिर्युक्त इत्यर्थः । यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात्तदीयान्येवेति सहस्रशीर्षत्वम् । एवं सहस्राक्षित्वं सहस्रपात्त्वं च । सः पुरुषः भूमिं ब्रह्माण्डगोलकरूपां विश्वतः सर्वतः वृत्वा परिवेष्ट्य दशाङ्गुलं दशाङ्गुलपरिमितं देशम् अत्यतिष्ठत् अतिक्रम्य व्यवस्थितः । दशाङ्गुलमित्युपलक्षणम् । ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्यावस्थित इत्यर्थः ॥

पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥

पुरुषः । एव । इदम् । सर्वम् । यत् । भूतम् । यत् । च । भव्यम् ।

उत । अमृतऽत्वस्य । ईशानः । यत् । अन्नेन । अतिऽरोहति ॥ २ ॥

यत् इदं वर्तमानं जगत् तत् सर्वं पुरुष एव । यत् च भूतम् अतीतं जगत् यच्च भव्यं भविष्यज्जगत् तदपि पुरुष एव । यथास्मिन् कल्पे वर्तमानाः प्राणिदेहाः[2] सर्वेऽपि विराट्पुरुषस्यावयवाः तथैवातीतागामिनोरपि कल्पयोर्द्रष्टव्यमित्यभिप्रायः । उत अपि च अमृतत्वस्य देवत्वस्य अयम् ईशानः स्वामी । यत् यस्मात्कारणात् अन्नेन प्राणिनां भोग्येनान्नेन[3] निमित्तभूतेन[4] अतिरोहति स्वकीयां कारणावस्थामतिक्रम्य परिदृश्यमानां जगदवस्थां प्राप्नोति तस्मात्प्राणिनां कर्मफलभोगाय जगदवस्थास्वीकारान्नेदं तस्य वस्तुत्वमित्यर्थः[5] ॥

एतावानस्य महिमातो ज्यायाँश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ३ ॥

एतावान् । अस्य । महिमा । अतः । ज्यायान् । च । पुरुषः ।

पादः । अस्य । विश्वा । भूतानि । त्रिऽपात् । अस्य । अमृतम् । दिवि ॥ ३ ॥

अतीतानागतवर्तमानरूपं जगद्यावदस्ति एतावान् सर्वोऽपि अस्य पुरुषस्य महिमा स्वकीयसामर्थ्यविशेषः । न तु तस्य वास्तवस्वरूपम् । वास्तवस्तु पुरुषः अतः महिम्नोऽपि ज्यायान् अतिशयेनाधिकः । एतच्चोभयं स्पष्टीक्रियते । अस्य पुरुषस्य विश्वा सर्वाणि भूतानि कालत्रयवर्तीनि प्राणिजातानि पादः चतुर्थोंऽशः[6] । अस्य पुरुषस्य अवशिष्टं त्रिपात् स्वरूपम् अमृतं विनाशरहितं सत् दिवि द्योतनात्मके स्वप्रकाशस्वरूपे व्यवतिष्ठत इति शेषः । यद्यपि 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. आ. ८.१, तै. उ. २.१) इत्याम्नातस्य परब्रह्मण इयत्ताभावात्[7] पादचतुष्टयं निरूपयितुमशक्यं तथापि जगदिदं ब्रह्मस्वरूपापेक्षयाल्पमिति विवक्षितत्वात् पादत्वोपन्यासः ॥

---

१. त१.२.३.६.७.८-म-'पुरुषः' नास्ति । २. त१.२.३-म२.७.८-प्राणिदेहाः । ३. त-म-मु-अन्नेन भोग्येन । ४. त१.२.३.६.७.८-म-मु-निमित्तेन । ५. म-त-वस्तुतत्त्वमित्यर्थः । ६. त-म-चतुर्थोंऽशः । ७. म-त४.५-मु-इयत्ताया अभावात्; त१.३.६.७.८-म४.८-इयत्ता अभावात् ।

त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः ।
ततो विष्वङ् व्यक्रामत्साशनानशने अभि ॥ ४ ॥

त्रिऽपात् । ऊर्ध्वः । उत् । ऐत् । पुरुषः । पादः । अस्य । इह । अभवत् । पुनरिति ।
ततः । विष्वङ् । वि । अक्रामत् । साशनानशने इति । अभि ॥ ४ ॥

योऽयं त्रिपात् पुरुषः संसाररहितो[1] ब्रह्मस्वरूपः[2] सोऽयम् ऊर्ध्वः उदैत् अस्मादज्ञानकार्यात्संसाराद्बहिर्भूतोऽत्रत्यैर्गुणदोषैरस्पृष्ट उत्कर्षेण स्थितवान् । तस्य[3] अस्य सोऽयं[3] पादः लेशः सोऽयम् इह मायायां पुनः अभवत् सृष्टिसंहाराभ्यां पुनःपुनरागच्छति । अस्य सर्वस्य जगतः परमात्मलेशत्वं भगवताप्युक्तं—'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' ( भ. गी. १०. ४२ ) इति । ततः मायायामागत्यानन्तरं विष्वङ् देवमनुष्यतिर्यगादिरूपेण[4] विविधः सन् व्यक्रामत् व्याप्तवान् । किं कृत्वा । साशनानशने अभिलक्ष्य । साशनं भोजनादिव्यवहारोपेतं चेतनं प्राणिजातम्[5] अनशनं तद्रहितमचेतनं गिरिनद्यादिकम् । तदुभयं यथा स्यात्तथा स्वयमेव विविधो भूत्वा व्याप्तवानित्यर्थः ॥

तस्माद्विराळजायत विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥

तस्मात् । विऽराट् । अजायत । विऽराजः । अधि । पुरुषः ।
सः । जातः । अति । अरिच्यत । पश्चात् । भूमिम् । अथो इति । पुरः ॥ ५ ॥

विष्वङ् व्यक्रामदिति यदुक्तं तदेवात्र प्रपञ्च्यते । तस्मात् आदिपुरुषात् विराट् ब्रह्माण्डदेहः अजायत उत्पन्नः । विविधानि[6] राजन्ते वस्तून्यत्रेति[7] विराट् । विराजोऽधि विराड्देहस्योपरि तमेव देहमधिकरणं कृत्वा पुरुषः तद्देहाभिमानी कश्चित् पुमान् अजायत । सोऽयं सर्ववेदान्तवेद्यः परमात्मा स्वयमेव[8] स्वकीयया मायया विराड्देहं ब्रह्माण्डरूपं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवत् । एतच्चाथर्वणिका उत्तरतापनीये विस्पष्टमामनन्ति—'स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैव' ( नृ. ता. २. १. ९ ) इति । स जातः विराट् पुरुषः अत्यरिच्यत अतिरिक्तोऽभूत् । विराड्व्यतिरिक्तो देवतिर्यङ्मनुष्यादिरूपोऽभूत् । पश्चात् देवादिजीवभावादूर्ध्वं भूमिं ससर्जेति शेषः । अथो भूमिसृष्टेरनन्तरं तेषां जीवानां पुरः ससर्ज । पूर्यन्ते सप्तभिर्धातुभिरिति पुरः शरीराणि ॥१७॥

यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ ६ ॥

यत् । पुरुषेण । हविषा । देवाः । यज्ञम् । अतन्वत ।
वसन्तः । अस्य । आसीत् । आज्यम् । ग्रीष्मः । इध्मः । शरत् । हविः ॥ ६ ॥

---

१. ग-त-अ४-मु-संसारस्पर्शरहितो । २. ग-त१.२.३.६.७.८-भ-ब्रह्मस्वरूपः । ३. ग-तस्य सोयं; त-अ४.७-तस्य सोयं । ४. त-भ-देवतिर्यगादिरूपेण । ५. त-मु-प्राणिजातं लक्ष्यते । ६. ग-त४.५-भ-विविधे । ७. त६-भ८-वस्तून्यत्रेति । ८. त-भ-स एव ।

यत् यदा पूर्वोक्तक्रमेणैव[1] शरीरेषूत्पन्नेषु[1] सत्सु देवाः उत्तरसृष्टिसिद्ध्यर्थं बाह्यद्रव्यस्यानुत्पन्नत्वेन हविरन्तरासंभवात् पुरुषस्वरूपमेव मनसा हविष्ट्वेन संकल्प्य पुरुषेण पुरुषाख्येन हविषा मानसं यज्ञम् अतन्वत अन्वतिष्ठन् तदानीम् अस्य यज्ञस्य वसन्तः वसन्तर्तुरेव आज्यम् आसीत् अभूत्। तमेवाज्यत्वेन संकल्पितवन्त इत्यर्थः। एवं ग्रीष्म इध्मः आसीत्। तमेवेध्मत्वेन संकल्पितवन्त इत्यर्थः। तथा शरद्धविः आसीत्। तामेव[2] पुरोडाशादिहविष्ट्वेन संकल्पितवन्त इत्यर्थः। पूर्वं[3] पुरुषस्य हविःसामान्यरूपत्वेन संकल्पः। अनन्तरं वसन्तादीनामाज्यादिविशेषरूपत्वेन[4] संकल्प इति द्रष्टव्यम्॥

तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः।
तेन देवा अयजन्त साध्या ऋषयश्च ये॥ ७॥

तम्। यज्ञम्। बर्हिषि। प्र। औक्षन्। पुरुषम्। जातम्। अग्रतः।
तेन। देवाः। अयजन्त। साध्याः। ऋषयः। च। ये॥ ७॥

यज्ञं यज्ञसाधनभूतं तं पुरुषं पशुत्वभावनया[5] यूपे बद्धं बर्हिषि मानसे यज्ञे प्रौक्षन् प्रोक्षितवन्तः। कीदृशमित्यत्राह। अग्रतः सर्वसृष्टेः पूर्वं पुरुषं जातं पुरुषत्वेनोत्पन्नम्। एतच्च प्रागेवोक्तं 'तस्माद्विराळजायत विराजो अधि पूरुषः' इति। तेन पुरुषरूपेण पशुना देवा अयजन्त। मानसयागं निष्पादितवन्त इत्यर्थः। के ते देवा इत्यत्राह। साध्याः सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयः तदनुकूलाः ऋषयः मन्त्रद्रष्टारः च ये सन्ति। ते सर्वेऽप्ययजन्तेत्यर्थः॥

तस्माद्यज्ञात् सर्वहुतः संभृतं पृषदाज्यम्।
पशून् ताँश्चक्रे वायव्यानारण्यान् ग्राम्याश्च ये॥ ८॥

तस्मात्। यज्ञात्। सर्वऽहुतः। सम्ऽभृतम्। पृषत्ऽआज्यम्।
पशून्। तान्। चक्रे। वायव्यान्। आरण्यान्। ग्राम्याः। च। ये॥ ८॥

सर्वहुतः। सर्वात्मकः पुरुषः यस्मिन् यज्ञे हूयते सोऽयं सर्वहुत्। तादृशात् तस्मात् पूर्वोक्तात् मानसात् यज्ञात् पृषदाज्यं दधिमिश्रमाज्यं संभृतं संपादितम्। दधि चाज्यं चेत्येवमादिभोग्यजातं सर्वं संपादितमित्यर्थः। तथा वायव्यान् वायुदेवताकाँल्लोकप्रसिद्धान् आरण्यान् पशून् चक्रे उत्पादितवान्। आरण्या हरिणादयः। तथा ये च ग्राम्याः गवाश्वादयः तानपि चक्रे। पशूनामन्तरिक्षद्वारा वायुदेवत्यत्वं यजुर्ब्राह्मणे समाम्नायते—'वायवः स्थेत्याह वायुर्वा अन्तरिक्षस्याध्यक्षाः। अन्तरिक्षदेवत्याः खलु वै पशवः। वायव एवैनान्परिददाति' (तै. ब्रा. ३. २. १. ३) इति॥

तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत॥ ९॥

तस्मात्। यज्ञात्। सर्वऽहुतः। ऋचः। सामानि। जज्ञिरे।
छन्दांसि। जज्ञिरे। तस्मात्। यजुः। तस्मात्। अजायत॥ ९॥

१. त१.२.३.४.५.६.७-म८—'क्रमेण देवशरीरे'। २. त-म—तमेव। ३. त-मु—एवं। ४. ग—°माज्यादिरूपविशेषत्वेन। ५. त—पशुत्वभागाय; म७—पशुत्वभावनाय।

सर्वहुतः तस्मात् पूर्वोक्तात् यज्ञात् ऋचः सामानि च जज्ञिरे उत्पन्नाः। तस्मात् यज्ञात् छन्दांसि गायत्र्यादीनि जज्ञिरे। तस्मात् यज्ञात् यजुः अपि अजायत॥

तस्मादश्वा अजायन्त ये के चोभयादतः।
गावो ह जज्ञिरे तस्मात् तस्माज्जाता अजावयः॥ १०॥

तस्मात्। अश्वाः। अजायन्त। ये। के। च। उभयादतः।
गावः। ह। जज्ञिरे। तस्मात्। तस्मात्। जाताः। अजावयः॥ १०॥

तस्मात् पूर्वोक्ताद्यज्ञात् अश्वा अजायन्त उत्पन्नाः। तथा ये के च अश्वव्यतिरिक्ता गर्दभा अश्वतराश्च उभयादतः ऊर्ध्वाधोभागयोरुभयोः दन्तयुक्ताः सन्ति तेऽप्यजायन्त[1]। तथा तस्मात् यज्ञात् गावः च जज्ञिरे। किंच तस्मात् यज्ञात् अजावयः च जाताः॥ ॥ १८ ॥

यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्।
मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते॥ ११॥

यत्। पुरुषम्। वि। अदधुः। कतिधा। वि। अकल्पयन्।
मुखम्। किम्। अस्य। कौ। बाहू इति। कौ। ऊरू इति। पादौ। उच्येते इति॥ ११॥

प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुं ब्रह्मवादिनां प्रश्ना उच्यन्ते। प्रजापतेः प्राणरूपा देवाः यत् यदा पुरुषं विराड्रूपं व्यदधुः संकल्पेनोत्पादितवन्तः[2] तदानीं कतिधा कतिभिः प्रकारैः व्यकल्पयन् विविधं कल्पितवन्तः। अस्य पुरुषस्य मुखं किम्[3] आसीत्। कौ बाहू अभूताम्। का ऊरू। कौ च पादावुच्येते। प्रथमं सामान्यरूपः प्रश्नः पश्चात् मुखं[3] किमित्यादिना विशेषविषयाः प्रश्नाः॥

ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत॥ १२॥

ब्राह्मणः। अस्य। मुखम्। आसीत्। बाहू इति। राजन्यः। कृतः।
ऊरू इति। तत्। अस्य। यत्। वैश्यः। पत्ऽभ्याम्। शूद्रः। अजायत॥ १२॥

इदानीं पूर्वोक्तानां प्रश्नानामुत्तराणि दर्शयति। अस्य प्रजापतेः ब्राह्मणः ब्राह्मणत्वजातिविशिष्टः पुरुषः मुखमासीत् मुखादुत्पन्न इत्यर्थः। योऽयं राजन्यः क्षत्रियत्वजातिमान्[4] पुरुषः सः बाहू कृतः बाहुत्वेन निष्पादितः। बाहुभ्यामुत्पादित इत्यर्थः। तत् तदानीम् अस्य प्रजापतेः यत् यौ ऊरू तद्रूपः वैश्यः संपन्नः। ऊरुभ्यामुत्पन्न इत्यर्थः। तथास्य पद्भ्यां पादाभ्यां शूद्रः शूद्रत्वजातिमान् पुरुषः अजायत। इयं च मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिर्यजुःसंहितायां सप्तमकाण्डे 'स मुखतस्त्रिवृतं निरमिमीत' (तै. सं. ७. १. १. ४) इत्यादौ विस्पष्टमाम्नाता। अतः प्रश्नोत्तरे उभे अपि तत्परतयैव[5] योजनीये॥

१. त१.२.६.७—तस्मादप्यजायंत। २. त—कालेनोत्पादितवंतः। ३. त—'किम्...मुखं' नास्ति। ४. त-मु—क्षत्रियत्वजातिविशिष्टः। ५. ग-म२—तत्परैव; त१.३.४.५.६.८—तत्परेणैव; त७-मु—तत्परतयैव।

चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।
मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥ १३ ॥

चन्द्रमाः । मनसः । जातः । चक्षोः । सूर्यः । अजायत ।
मुखात् । इन्द्रः । च । अग्निः । च । प्राणात् । वायुः । अजायत ॥ १३ ॥

यथा दध्याज्यादिद्रव्याणि गवादयः पशव ऋगादिवेदा ब्राह्मणादयो मनुष्याश्च तस्मादुत्पन्ना एवं चन्द्रादयो देवा अपि तस्मादेवोत्पन्ना इत्याह । प्रजापतेः मनसः सकाशात् चन्द्रमाः जातः । चक्षोः च चक्षुषः सूर्यः अपि अजायत । अस्य मुखादिन्द्रश्चाग्निश्च देवावुत्पन्नौ । अस्य प्राणाद्वायुरजायत ॥

नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन् ॥ १४ ॥

नाभ्याः । आसीत् । अन्तरिक्षम् । शीर्ष्णः । द्यौः । सम् । अवर्तत ।
पत्ऽभ्याम् । भूमिः । दिशः । श्रोत्रात् । तथा । लोकान् । अकल्पयन् ॥ १४ ॥

यथा चन्द्रादीन् प्रजापतेर्मनःप्रभृतिभ्योऽकल्पयन्[1] तथा अन्तरिक्षादीन् लोकान् प्रजापतेः नाभ्यादिभ्यो[2] देवाः[2] अकल्पयन् उत्पादितवन्तः । एतदेव दर्शयति । नाभ्याः प्रजापतेर्नाभेः अन्तरिक्षमासीत् । शीर्ष्णः शिरसः द्यौः समवर्तत उत्पन्ना । अस्य पद्भ्यां पादाभ्यां भूमिः उत्पन्ना । अस्य श्रोत्रात् दिशः उत्पन्नाः ॥

सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् ॥ १५ ॥

सप्त । अस्य । आसन् । परिऽधयः । त्रिः । सप्त । सम्ऽइधः । कृताः ।
देवाः । यत् । यज्ञम् । तन्वानाः । अबध्नन् । पुरुषम् । पशुम् ॥ १५ ॥

अस्य सांकल्पिकयज्ञस्य[3] गायत्र्यादीनि सप्त छन्दांसि परिधयः आसन् । ऐष्टिकस्याहवनीयस्य त्रयः परिधय उत्तरवेदिकास्त्रय आदित्यश्च सप्तमः परिधिप्रतिनिधिरूपः । अत एवाम्नायते— 'न पुरस्तात्परि दधात्यादित्यो ह्येवोद्यन् पुरस्ताद्रक्षांस्यपहन्ति' (तै. सं. २.६.६.३) इति । तत्र एत आदित्यसहिताः सप्त परिधयोऽत्र सप्त छन्दोरूपाः । तथा समिधः त्रिः सप्त त्रिगुणीकृतसप्तसंख्याकाः एकविंशतिः कृताः । 'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः' (तै. सं. ५.१.१०.३) इति श्रुताः पदार्था एकविंशतिदारुयुक्तेध्मत्वेन भाविताः । यत् यः पुरुषो वैराजोऽस्ति तं पुरुषं देवाः प्रजापतिप्राणेन्द्रियरूपाः यज्ञं तन्वानाः मानसं यज्ञं तन्वानाः कुर्वाणाः पशुम् अबध्नन् विराट्पुरुषमेव पशुत्वेन भावितवन्तः । एतदेवाभिप्रेत्य पूर्वत्र 'यत्पुरुषेण हविषा' इत्युक्तम् ॥

---

१. स-भ२.४.६.८—प्रजापतेर्मनःप्रभृतयो°; भ७—प्रजापतेर्मनसःप्रभृतयो° । २. त१-२-६—नाभ्यादयो देवा अवयवा; त३.७—नाभ्यादयोऽवयवा; त८-भ—नाभ्यादयो देवा । ३. त—सांकल्पिकस्य यज्ञस्य ।

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ १६ ॥

यज्ञेन । यज्ञम् । अयजन्त । देवाः । तानि । धर्माणि । प्रथमानि । आसन् ।
ते । ह । नाकम् । महिमानः । सचन्त । यत्र । पूर्वे । साध्याः । सन्ति । देवाः ॥ १६ ॥

पूर्वं प्रपञ्चेनोक्तमर्थं संक्षिप्यात्र दर्शयति । देवाः प्रजापतिप्राणरूपाः यज्ञेन यथोक्तेन मानसेन संकल्पेन यज्ञं यथोक्तयज्ञस्वरूपं प्रजापतिम् अयजन्त पूजितवन्तः । तस्मात्पूजनात् तानि प्रसिद्धानि धर्माणि जगद्रूपविकाराणां धारकाणि प्रथमानि मुख्यानि[1] आसन् । एतावता सृष्टिप्रतिपादकसूक्तभागार्थः संगृहीतः । अथोपासनतत्फलानुवादकभागार्थः संगृह्यते । यत्र यस्मिन् विराट्प्राप्तिरूपे नाके पूर्वे साध्याः पुरातना विराडुपास्तिसाधकाः देवाः सन्ति तिष्ठन्ति तत् नाकं विराट्प्राप्तिरूपं स्वर्गं ते महिमानः तदुपासका महात्मानः सचन्त समवयन्ति प्राप्नुवन्ति ॥
॥ १९ ॥ ॥ ७ ॥

अष्टमेऽनुवाके नव सूक्तानि । 'सं जागृवद्भिः' इति पञ्चदशर्चं प्रथमं सूक्तं वीतहव्यपुत्रस्यारुणनाम्न आर्षमाग्नेयम् । अन्त्या त्रिष्टुप् शिष्टा जगत्यः । तथा चानुक्रान्तं—'सं जागृवद्भिः पञ्चोनारुणो वैतहव्य आग्नेयम्' इति । प्रातरनुवाकाश्विनशस्त्रयोर्जागते छन्दसीदं सूक्तम् । सूत्रितं च—'सं जागृवद्भिरिति इच्छिशोर्वमुं न चित्रमहस्तमिति आगतम्' ( आश्व. श्रौ. ४. १३ ) इति ॥

सं जागृवद्भिर्जरमाण इध्यते दमे दमूना इषयन्निळस्पदे ।
विश्वस्य होता हविषो वरेण्यो विभुर्विभावा सुषखा सखीयते ॥ १ ॥

सम् । जागृवत्ऽभिः । जरमाणः । इध्यते । दमे । दमूनाः । इषयन् । इळः । पदे ।
विश्वस्य । होता । हविषः । वरेण्यः । विऽभुः । विभाऽवा । सुऽसखा । सखिऽयते ॥ १ ॥

हे अग्ने जागृवद्भिः जागरणशीलैः स्तोतृभिः जरमाणः स्तूयमानः दमूनाः दममनाः दानमना दान्तमना वा इळः इळायाः पदे स्थाने उत्तरवेद्याम् इषयन् अन्नमिच्छन् विश्वस्य सर्वस्य हविषः होता वरेण्यः वरणीयः विभुः व्याप्तः विभावा दीप्तिमान् सुषखा शोभनसखा भवान् सखीयते सखित्वमिच्छते यजमानाय सम् इध्यते सम्यग्दीप्यते ॥

स दर्शतश्रीरतिथिर्गृहेगृहे वनेवने शिश्रिये तक्ववीरिव ।
जनंजनं जन्यो नाति मन्यते विश आ क्षेति विश्योर् विशंविशम् ॥ २ ॥

सः । दर्शतऽश्रीः । अतिथिः । गृहेऽगृहे । वनेऽवने । शिश्रिये । तक्ववीःऽइव ।
जनम्ऽजनम् । जन्यः । न । अति । मन्यते । विशः । आ । क्षेति । विश्यः । विशम्ऽविशम् ॥ २ ॥

दर्शतश्रीः दर्शनीयविभूतिः अतिथिः[2] अतिथिभूतः सः अग्निः गृहेगृहे यजमानानां गृहेषु वनेवने सर्वेषु वनेषु[3] च शिश्रिये श्रयति । किंच जन्यः जनहितः सोऽग्निः जनंजनं सर्वं जनं[4]

१. ख–मुख्यानि भूतानि । २. ग-त२.४.५.६-मु–'अतिथिः' नास्ति । ३. ग-त४–वृक्षेषु, त१.२-३.५.६.८-म२.४.८–वृक्षेषु । ४. ग-त-म२.४.५.८–जातं ।

तक्ष्वीरिव गच्छन्त्य आसते अस्मयते न विसृज्य गच्छन्तीत्यर्थः । तदेव दर्शयति । विशः विड्भ्यो हितः सोऽग्निः विशो मनुष्यान् आ क्षेति अभिगच्छति । किंच विशंविशं सर्वो विशः प्रजा अधितिष्ठतीति शेषः ॥

सुदक्षो दक्षैः क्रतुनासि सुक्रतुरग्ने कविः काव्येनासि विश्ववित् ।
वसुर्वसूनां क्षयसि त्वमेक इद् द्यावा च यानि पृथिवी च पुष्यतः ॥ ३ ॥

सुऽदक्षः । दक्षैः । क्रतुना । असि । सुऽक्रतुः । अग्ने । कविः । काव्येन । असि । विश्वऽवित् ।
वसुः । वसूनाम् । क्षयसि । त्वम् । एकः । इत् । द्यावा । च । यानि । पृथिवी इति । च । पुष्यतः ॥ ३ ॥

हे अग्ने त्वं दक्षैः बलैः सुदक्षः सुबलः असि भवसि । किंच क्रतुना कर्मणा सुक्रतुः शोभनकर्मासि । किंच काव्येन मेधाविकर्मणा कविः मेधावी असि । किंच विश्ववित् सर्वज्ञोऽसि । किंच वसूनां धनानां वसुः वासयितासि । किंच हे अग्ने त्वमेक इत् एक एव क्षयसि निवससि । किंच द्यावा च पृथिवी च द्यावाभूमी यानि वसूनि पुष्यतः संवर्धयतः[1] तेषां दिव्यानां पार्थिवानां च धनानामीशिषे इत्यर्थः[2] ॥

प्रजानन्नग्ने तव योनिमृत्वियमिळायास्पदे घृतवन्तमासदः ।
आ ते चिकित्र उषसामिवेतयोऽरेपसः सूर्यस्येव रश्मयः ॥ ४ ॥

प्रऽजानन् । अग्ने । तव । योनिम् । ऋत्वियम् । इळायाः । पदे । घृतऽवन्तम् । आ । असदः ।
आ । ते । चिकित्रे । उषसाम्ऽइव । एतयः । अरेपसः । सूर्यस्यऽइव । रश्मयः ॥ ४ ॥

हे अग्ने तव ऋत्वियम् ऋतौ भवं घृतवन्तं घृतेन सहितं योनिं निवासस्थानम् इळायास्पदे उत्तरवेद्यां प्रजानन् त्वम् आसदः आसीदसि । किंच ते तव रश्मयः उषसामिव यथोषसाम् एतयः गन्त्र्यः प्रकाशलक्षणा आगमयो वा निर्गता रश्मयो दृश्यन्ते तद्वत् आ चिकित्रे प्रज्ञायन्ते । सूर्यस्येव यथा सूर्यस्य अरेपसः पापरहिता निर्गताः रश्मयः दृश्यन्ते तद्वदा चिकित्रे प्रज्ञायन्ते ॥

तव श्रियो वर्ष्यस्येव विद्युतश्चित्राश्चिकित्र उषसां न केतवः ।
यदोषधीरभिसृष्टो वनानि च परि स्वयं चिनुषे अन्नमास्ये ॥ ५ ॥

तव । श्रियः । वर्ष्यस्यऽइव । विऽद्युतः । चित्राः । चिकित्रे । उषसाम् । न । केतवः ।
यत् । ओषधीः । अभिऽसृष्टः । वनानि । च । परि । स्वयम् । चिनुषे । अन्नम् । आस्ये ॥ ५ ॥

हे अग्ने तव श्रियः रश्मिलक्षणा विभूतयः चित्राः विचित्राः चिकित्रे प्रज्ञायन्ते । तत्र दृष्टान्तः । वर्ष्यस्येव यथा वर्षितुर्मेघस्य संबन्धिन्यः विद्युतः उषसां न यथा चोषसां केतवः प्रज्ञानास्तस्याः प्रकाशाः प्रज्ञायन्ते तद्वदित्यर्थः । कदेत्यत आह । यत् यदा त्वम् ओषधीः व्रीह्याद्याः[3]

१. ग-त४-५—संवर्धयतः; ख१.२.३.६.७—संवर्धयत् । २. ग-ख-मु—इति शेषः । ३. ग-ख-मु—व्रीहिय-वाद्याः; मच—व्रीह्यादया; म४.६.८—व्रीह्याद्यान्या ।

वनानि अरण्यानि च अभिसृष्टः सृष्टो दग्धुं विसृष्टः सन्[1] स्वयम्[1] आत्मना आस्ये मुखे अन्नम् अदनीयं स्थावरलक्षणं परि चिनुषे परिक्षिपसीत्यर्थः[2] ॥ ॥ २० ॥

**तमोषधीर्दधिरे गर्भमृत्वियं तमापो अग्निं जनयन्त मातरः ।**
**तमित्समानं वनिनश्च वीरुधोऽन्तर्वतीश्च सुवते च विश्वहा ॥ ६ ॥**

तम् । ओषधीः । दधिरे । गर्भम् । ऋत्वियम् । तम् । आपः । अग्निम् । जनयन्त । मातरः ।
तम् । इत् । समानम् । वनिनः । च । वीरुधः । अन्तःऽवतीः । च । सुवते । च । विश्वहा ॥ ६ ॥

ऋत्वियम् ऋतौ प्राप्तं गर्भं गर्भभूतं तं प्रकृतमग्निम् ओषधीः ओषध्यः दधिरे धारयन्ति । तम् एव अग्निं मातरः धारकत्वेन मातृस्थानीयाः आपः च जनयन्त जनयन्ति । किंच वनिनः वनस्पतयः च समानं गर्भभावेन प्रवेशात् एकतुल्यं तमित् तमेवाग्निं जनयन्ति । किंच तमेवाग्निम् अन्तर्वतीः गर्भवत्यः वीरुधः ओषधयः च विश्वहा सर्वदा सुवते जनयन्ति ॥

**वातोपधूत इषितो वशाँ अनु तृषु यदन्ना वेविषद्वितिष्ठसे ।**
**आ ते यतन्ते रथ्यो३ यथा पृथक्छर्धांस्यग्ने अजराणि धक्षतः ॥ ७ ॥**

वातऽउपधूतः । इषितः । वशान् । अनु । तृषु । यत् । अन्ना । वेविषत् । विऽतिष्ठसे ।
आ । ते । यतन्ते । रथ्यः । यथा । पृथक् । शर्धांसि । अग्ने । अजराणि । धक्षतः ॥ ७ ॥

हे अग्ने यत्[1] यदा त्वं[3] वातोपधूतः वायुना कम्पितः वशान् कान्तान् वनस्पतीन् अनु प्रति तृषु क्षिप्रम् इषितः प्रेरितश्च[4] सन् अन्ना अदनीयानि वनस्पत्यादीनि स्थावराणि वेविषत् व्याप्नुवन् वितिष्ठसे इतस्ततो गच्छसि तदानीं धक्षतः काष्ठानि दहतः ते तव अजराणि जरारहितानि शर्धांसि तेजांसि यथा रथ्यः रथिनः तद्वत् पृथक्[5] आ यतन्ते गच्छन्ति[6] ॥

**मेधाकारं विदथस्य प्रसाधनमग्निं होतारं परिभूतमं मतिम् ।**
**तमिदर्भे हविष्या समानमित्तमिन्महे वृणते नान्यं त्वत् ॥ ८ ॥**

मेधाऽकारम् । विदथस्य । प्रऽसाधनम् । अग्निम् । होतारम् । परिऽभूतमम् । मतिम् ।
तम् । इत् । अर्भे । हविषि । आ । समानम् । इत् । तम् । इत् । महे । वृणते । न । अन्यम् । त्वत् ॥ ८ ॥

मेधाकारं प्रज्ञायाः कर्तारं विदथस्य यज्ञस्य प्रसाधनं प्रकर्षेण साधकं[7] होतारं देवानामाह्वातारं परिभूतमम् अतिशयेन शत्रूणां परिभवितारं मतिं मन्तारं यं त्वाम् अग्निं वृणीमहे इति शेषः । तमित् तमेवाग्निम्[8] अर्भे अल्पे हविषि चतुरवत्तादिके हविषि समानमित् सदैव ऋत्विजः आ वृणते प्रार्थयन्ते । महे महति सोमात्मके हविष्यपि तमित् तमेवाग्निं वृणते । त्वत् त्वत्तः अन्यम् अतिरिक्तं देवं न वृणते ॥

१. ग–सतते; त-भ२.४.६.८–सन् सं । २. ग२–प्रक्षिपसीत्यर्थः; ग४-त३.४.५–प्रक्षेपसीत्यर्थः; त१.७–प्रक्षेपामीत्यर्थः; त२.६–प्रक्षेपमीत्यर्थः, त८–प्रक्षिपमीत्यर्थः; भ–पक्षिपसीत्यर्थः । ३. ग४–यथदा; त१.२.६.८-भ–त्वं यथदा त्वं; त३.४.५.७-मु–त्वं यथदा । ४. ग-त१.२.३ ६.७.८-भ–प्रेषितश्च । ५. ग-त-मु–पृथक् पृथक् । ६. त-मु–आगच्छंति । ७. त–साधकं । ८. ग-त-भ–तमेवाग्निं त्वां ।

त्वामिदत्र वृणते त्वायवो होतारमग्ने विदथेषु वेधसः ।
यद्देवयन्तो दधति प्रयांसि ते हविष्मन्तो मनवो वृक्तबर्हिषः ॥ ९ ॥

त्वाम् । इत् । अत्र । वृणते । त्वाऽयवः । होतारम् । अग्ने । विदथेषु । वेधसः ।
यत् । देवऽयन्तः । दधति । प्रयांसि । ते । हविष्मन्तः । मनवः । वृक्तऽबर्हिषः ॥ ९ ॥

हे अग्ने होतारं[1] देवानां ह्वातारमग्निं त्वामित् त्वामेव त्वायवः त्वत्कामाः वेधसः कर्मणां कर्तार ऋत्विजः अत्र अस्मिँल्लोके विदथेषु यज्ञेषु वृणते प्रार्थयन्ते । कदेत्यत्राह । यत् यदा देवयन्तः देवान्यष्टुं स्तोतुं वेच्छन्तः वृक्तबर्हिषः छिन्नबर्हिषः हविष्मन्तः संस्कृतहविष्काः मनवः मनुष्या ऋत्विजः ते तुभ्यं प्रयांसि हवींषि दधति धारयन्ति । प्रयच्छन्तीत्यर्थः ॥

तवाग्ने होत्रं तव पोत्रमृत्वियं तव नेष्ट्रं त्वमग्निदृतायतः ।
तव प्रशास्त्रं त्वमध्वरीयसि ब्रह्मा चासि गृहपतिश्च नो दमे ॥ १० ॥

तव । अग्ने । होत्रम् । तव । पोत्रम् । ऋत्वियम् । तव । नेष्ट्रम् । त्वम् । अग्नित् । ऋतऽयतः ।
तव । प्रऽशास्त्रम् । त्वम् । अध्वरिऽयसि । ब्रह्मा । च । असि । गृहऽपतिः । च । नः । दमे ॥ १० ॥

हे अग्ने तव होत्रं होतृकर्म । त्वया विना तस्याभावात् । किंच तव एव[2] ऋत्वियम् ऋतौ भवं प्राप्तानुष्ठानकालं पोत्रं पोतृकर्म । त्वया विना तस्याप्यभावात् । किंच तव एव नेष्ट्रं नेष्टृकर्म । किंच ऋतायतः ऋतं यज्ञं कर्तुमिच्छतो यजमानस्य त्वम् एव अग्नित् नान्यः कश्चित् । किंच तव एव प्रशास्त्रं प्रशास्तृकर्म । किंच हे अग्ने त्वम् एव अध्वरीयसि अध्वरं यज्ञं कर्तुमिच्छसि । तव हेतुत्वात्त्वत्कर्तृकत्वम् । किंच त्वमेव ब्रह्मा असि । त्वया विना तस्याभावात् । किंच नः अस्माकं दमे गृहे गृहपतिः यजमानोऽसि । त्वया विनास्माकं यजमानत्वाभावात् ॥ ॥ २१ ॥

यस्तुभ्यमग्ने अमृताय मर्त्यः समिधा दाशदुत वा हविष्कृति ।
तस्य होता भवसि यासि दूत्यमुप ब्रूषे यजस्यध्वरीयसि ॥ ११ ॥

यः । तुभ्यम् । अग्ने । अमृताय । मर्त्यः । सम्ऽइधा । दाशत् । उत । वा । हविःऽकृति ।
तस्य । होता । भवसि । यासि । दूत्यम् । उप । ब्रूषे । यजसि । अध्वरिऽयसि ॥ ११ ॥

हे अग्ने अमृताय मरणधर्मरहिताय तुभ्यं यः मर्त्यः मनुष्यः समिधा समिधम्[3] । द्वितीयायाः 'सुपां सुलुक्' इत्याकारः । दाशत् ददाति प्रयच्छति उत वा अपि वा हविष्कृति । हविषां कृत् करणं यस्मिन् स हविष्कृत् । तस्मिन्यज्ञे हवींषि ददातीति[4] शेषः । तस्य मनुष्यस्य होता देवानामाह्वाता भवसि । किंच त्वं दूत्यं देवान् प्रति दूतकर्म कर्तुं यासि गच्छसि । किंच त्वं ब्रह्मा भूत्वास्मिन् कर्मणि युष्मभ्यमिमानि हवींषि यजमानेन प्रहितानीति उप ब्रूषे उपकल्प्य ब्रवीषि । किंच त्वं यजसि यजमानो भूत्वा देवेभ्यो हवींषि ददासि । किंच त्वं तथा[5] पूर्वोक्तप्रकारेण[6] अध्वरीयसि अध्वर्युरिवाचरसि । अथवाध्वरं[7] यज्ञं कर्तुमिच्छसि ॥

१. त-भ-'होतारं' नास्ति । २. त-मु-'एव' नास्ति । ३. त-समिद्धः; म१.२-समिध; म४.६.८-समिधा । ४. त-मु-ददातीति संस्कृते यस्मिन् तद्यज्ञमनुतिष्ठतीति; भ-ददातीति संस्कृतिर्यस्मिन् तद्यज्ञमनुतिष्ठतीति । ५. त-यथा । ६. ग-"प्रकारेण तस्य । ७. त-मु-अन्यथा ।

इमा अस्मै मतयो वाचो अस्मदाँ ऋचो गिरः सुष्टुतयः समग्मत ।
वसूयवो वसवे जातवेदसे वृद्धासु चिद्वर्धनो यासु चाकनत् ॥ १२ ॥

इमाः । अस्मै । मतयः । वाचः । अस्मत् । आ । ऋचः । गिरः । सुऽस्तुतयः । सम् । अग्मत ।
वसुऽयवः । वसवे । जातऽवेदसे । वृद्धासु । चित् । वर्धनः । यासु । चाकनत् ॥ १२ ॥

जातवेदसे जातप्रज्ञाय वसवे वासयित्रे अस्मै अग्नये मतयः पूजयित्र्यः इमाः वाचः वसूयवः अस्मदर्थं धनकामाः सत्यः अस्मत् अस्मत्तो निर्गत्य आ समग्मत आभिमुख्येन संगच्छन्ते । तमिममग्निं प्रीणयन्त्वित्यर्थः[1] । काः पुनस्ताः । सुष्टुतयः शोभनस्तुतिरूपाः ऋचः ऋगात्मिकाः गिरः वाचः । तथा यासु वृद्धासु चित् स्वत एव वृद्धास्वपि[2] वर्धनः पुनरपि वर्धयिता सन्नग्निः चाकनत् स्तोतॄन् कामयते । इमा मतय इत्यन्वयः ॥

इमां प्रत्नाय सुष्टुतिं नवीयसीं वोचेयमस्मा उशते शृणोतु नः ।
भूया अन्तरा हृद्यस्य निस्पृशे जायेव पत्य उशती सुवासाः ॥ १३ ॥

इमाम् । प्रत्नाय । सुऽस्तुतिम् । नवीयसीम् । वोचेयम् । अस्मै । उशते । शृणोतु । नः ।
भूयाः । अन्तरा । हृदि । अस्य । निऽस्पृशे । जायाऽइव । पत्ये । उशती । सुऽवासाः ॥ १३ ॥

प्रत्नाय पुरातनाय उशते स्तोत्रं कामयमानाय अस्मै अग्नये नवीयसीं नवतरामन्यैः अकृतपूर्वां सुष्टुतिं शोभनां स्तुतिं वोचेयम् अहं वदामि । सोऽग्निरस्मदीयां स्तुतिं शृणोतु । किंचाहम् अस्य अग्नेः हृदि हृदये तत्रापि अन्तरा मध्ये निस्पृशे संस्पर्शनाय । गुणैरनुप्रवेशायेत्यर्थः । भूयाः भूयासम् । व्यत्ययेन मध्यमः । अग्नेर्हृदिस्पृगहं स्यामित्यर्थः । अथवा मम सुष्टुतेरनुप्रवेशाय[3] भवेति योज्यम् । समानमन्यत् । तत्र दृष्टान्तः । पत्ये पत्युर्हृदयस्य मध्ये सुवासाः शोभनवस्त्रादिना मण्डिता जाया उशती कामयमाना यथेष्टतमा भवति तद्वदित्यर्थः ॥

यस्मिन्नश्वास ऋषभास उक्षणो वशा मेषा अवसृष्टास आहुताः ।
कीलालपे सोमपृष्ठाय वेधसे हृदा मतिं जनये चारुमग्नये ॥ १४ ॥

यस्मिन् । अश्वासः । ऋषभासः । उक्षणः । वशाः । मेषाः । अवऽसृष्टासः । आऽहुताः ।
कीलालऽपे । सोमऽपृष्ठाय । वेधसे । हृदा । मतिम् । जनये । चारुम् । अग्नये ॥ १४ ॥

यस्मिन्[4] अग्नौ उक्षणः उक्षाणः । 'वा षपूर्वस्य निगमे' इति दीर्घविकल्पः । सेचनसमर्थाः अश्वासः अश्वाः ऋषभासः वृषभाश्च वशाः स्वभाववन्ध्याश्च[5] मेषाः च अवसृष्टासः देवतार्थम् अवसृष्टाः परित्यक्ताः सन्तोऽश्वमेधे आहुताः आभिमुख्येन हुता भवन्ति कीलालपे सौत्रामण्यां सुरां पिबते । 'कीलालम्' इत्युदकनामसु पाठात् । उदकं[6] पिबते सोमपृष्ठाय सोमयुक्तः पृष्ठ उपरिभागो यस्य तस्मै सोमपृष्ठाय वेधसे विधात्रे तस्मै अग्नये हृदा हृदयेन चारुं कल्याणीं मतिं स्तुतिं जनये जनयामि । उत्पादयामि ॥

---

१. म–पूजयन्त्वित्यर्थः । २. ठ-मु–पद्वृद्धास्वपि । ३. ग–मनसि सुष्ठु अनुप्रविष्टो । ४. त–अस्मिन् । ५. त–स्वभाववन्ध्याश्च । ६. ग-त–' उदकं ' नास्ति ।

आहाव्यग्ने हविरास्ये ते स्रुचीव घृतं चम्वीव सोमः ।
वाजसनिं रयिमस्मे सुवीरं प्रशस्तं धेहि यशसं बृहन्तम् ॥ १५ ॥

आऽहावि । अग्ने । हविः । आस्ये । ते । स्रुचिऽइव । घृतम् । चम्विऽइव । सोमः ।
वाजऽसनिम् । रयिम् । अस्मे इति । सुऽवीरम् । प्रऽशस्तम् । धेहि । यशसम् । बृहन्तम् ॥ १५ ॥

हे अग्ने ते तव आस्ये मुखे हविः पुरोडाशादिकं हविरस्माभिः आहावि समन्तं प्रक्षिप्यते । तत्र दृष्टान्तौ । घृतम् आज्यं स्रुचीव यथा स्रुचि । चम्वीव सोमः । यथा चमसे सोमः तद्वदित्यर्थः । तथा त्वं वाजसनिम् अन्नस्य दातारं सुवीरं शोभनपुत्रोपेतं प्रशस्तं सुवर्णादिकं यशसं यशस्विनं कीर्तिमन्तं बृहन्तम् अपरिमितं महान्तं वा रयिं रमणीयं धनम् अस्मे अस्मभ्यं धेहि देहि ॥　　　　॥ २२ ॥

‘यज्ञस्य’ इति पञ्चदशर्चं द्वितीयं सूक्तं मनोः पुत्रस्य शार्यातस्यार्षं जागतं बहुदेवताकम् । तथा चानुक्रान्तं—‘यज्ञस्य शार्यातो मानवो वैश्वदेवं तु जागतम्’ इति । चातुर्विंशिक आरम्भणीयेऽहनि वैश्वदेवशस्त्र इदं सूक्तं वैश्वदेवनिविद्धानम् । सूत्रितं च—‘ते हि द्यावापृथिवी यज्ञस्य वो रथ्यम्’ (आश्व. श्रौ. ७. ७) इति । पृष्ठ्याभिप्लवषडहयोर्द्वितीयेऽहन्यपीदं[1] वैश्वदेवनिविद्धानम् । ‘चातुर्विंशिकेन तृतीयसवनम्’ (आश्व. श्रौ. ७. ६) इति सूत्रकृतातिदिष्टत्वात् ॥

यज्ञस्य वो रथ्यं विश्पतिं विशां होतारमक्तोरतिथिं विभावसुम् ।
शोचञ्छुष्कासु हरिणीषु जर्भुरद्वृषा केतुर्यजतो द्यामशायत ॥ १ ॥

यज्ञस्य । वः । रथ्यम् । विश्पतिम् । विशाम् । होतारम् । अक्तोः । अतिथिम् । विभाऽवसुम् ।
शोचन् । शुष्कासु । हरिणीषु । जर्भुरत् । वृषा । केतुः । यजतः । द्याम् । अशायत ॥ १ ॥

हे देवाः वः यूयं यज्ञस्य रथ्यं नेतारं विश्पतिं मनुष्याणां पालकं स्वामिनं वा[2] विशां देवानां होतारम् आह्वातारम् अक्तोः रात्रेः अतिथिम् अतिथिभूतं विभावसुं विविधदीप्तिधनं समग्निं परिचरतेति शेषः । शुष्कासु शुष्कमूलास्वोषधीषु शोचन् ज्वलन् हरिणीषु हरितवर्णासु आर्द्रास्वोषधीषु जर्भुरत् भक्षयन् कुटिलं गच्छन् वा वृषा कामानां वर्षिता केतुः प्रज्ञापकः यजतः यष्टव्योऽग्निः द्यां दिवम् अशायत प्रतिशेते ॥

इममञ्जस्पामुभये अकृण्वत धर्माणमग्निं विदथस्य साधनम् ।
अक्तुं न यह्वमुषसः पुरोहितं तनूनपातमरुषस्य निंसते ॥ २ ॥

इमम् । अञ्जःऽपाम् । उभये । अकृण्वत । धर्माणम् । अग्निम् । विदथस्य । साधनम् ।
अक्तुम् । न । यह्वम् । उषसः । पुरःऽहितम् । तनूऽनपातम् । अरुषस्य । निंसते ॥ २ ॥

उभये देवमनुष्याः अञ्जस्पाम् अञ्जसा रक्षकं धर्माणं धारकम् इमम् अग्निं विदथस्य यज्ञस्य साधनं साधयितारम् अकृण्वत अकुर्वत । किंच अरुषस्य आरोचमानस्य वायोः तनूनपातं पुत्रं यह्वं महान्तं पुरोहितम्[3] उषसः अक्तुं न रश्मिभिरञ्जकमादित्यमिव निंसते चुम्बयन्ति । आश्रयन्त इत्यर्थः ॥

१. ख१.२.६.८-म१.२ ४.६.८—पृष्ठ्याभिप्लव°। २. ख-म—‘वा’ नास्ति। ३. ग-ख-मु—पुरोहितमिममग्निं।

बळ॑स्य नी॒था वि प॒णेश्च॑ मन्महे व॒या अ॑स्य॒ प्रहु॑ता आ॒सुरत्त॑वे ।
य॒दा घो॒रासो॑ अमृत॒त्वमाश॒तादिज्जन॑स्य॒ दैव्य॑स्य चर्किरन् ॥ ३ ॥

बट् । अ॒स्य॒ । नी॒था । वि । प॒णेः । च॒ । म॒न्म॒हे॒ । व॒याः । अ॒स्य॒ । प्रऽहु॑ताः । आ॒सुः॒ । अत्त॑वे ।
य॒दा । घो॒रासः॑ । अ॒मृ॒त॒ऽत्वम् । आश॑त । आत् । इत् । जन॑स्य । दैव्य॑स्य । च॒र्कि॒र॒न् ॥ ३ ॥

विपणेः अस्माभिर्विविधं पणितव्यस्य स्तुत्यस्याग्नेः नीथा नीथान्यस्मत्संबन्धीनि प्रज्ञानानि बट् सत्यानि स्युरिति मन्महे वयं कामयामहे । किंच अस्य अग्नेः वयाः अस्मदीया शाखाभूताः अत्तवे भक्षणाय प्रहुताः आसुः भवेयुरिति कामयामहे । किंच यदा यस्मिन् काले घोरासः घोराः[1] अग्नेर्ज्वालाः अमृतत्वम् अविनाशित्वम् आशत प्राप्नुवन्ति आदित् अनन्तरमेवास्माकमृत्विजः दैव्यस्य देवेषु भवस्य जनस्य अग्नेरर्थाय चर्किरन् किरेयुः[2] । अग्नौ हवींषि प्रक्षिपेयुरित्यर्थः ॥

ऋ॒तस्य॒ हि प्रसि॑ति॒र्द्यौरु॒रु व्यचो॒ नमो॑ म॒ह्य॑१॒॑रम॑तिः॒ पनी॑यसी ।
इन्द्रो॑ मि॒त्रो वरु॑णः॒ सं चि॑कित्रि॒रेऽथो॒ भगः॑ सवि॒ता पू॒तद॑क्षसः ॥ ४ ॥

ऋ॒तस्य॑ । हि । प्रऽसि॑तिः । द्यौः । उ॒रु । व्यचः॑ । नमः॑ । म॒ही । अर॑मतिः । पनी॑यसी ।
इन्द्रः॑ । मि॒त्रः । वरु॑णः । सम् । चि॒कि॒त्रि॒रे॒ । अथो॒ इति॑ । भगः॑ । स॒वि॒ता । पू॒तऽद॑क्षसः ॥ ४ ॥

ऋतस्य यज्ञस्य संबन्धिनमेनमग्निं प्रति प्रसितिः विस्तृता द्यौः उरु विस्तीर्णं व्यचः व्याप्तमन्तरिक्षं च पनीयसी स्तुत्यतमा अरमतिः पर्यन्तरहिता मही पृथिवी च नमः नमनं कुर्वन्तीति शेषः । अथो अपि च एनमग्निम् इन्द्रो मित्रः च वरुणः च भगः च सविता पूतदक्षसः शुद्धबला एते देवा एनमग्निं सं चिकित्रिरे ज्ञानाय संजानते ॥

प्र रु॒द्रेण॑ य॒यिना॑ यन्ति॒ सिन्ध॑वस्ति॒रो म॒हीमर॑मतिं दधन्विरे ।
येभिः॒ परि॑ज्मा परि॒यन्नु॒रु ज्रयो॒ वि रोरु॑वज्ज॒ठरे॒ विश्व॑मु॒क्षते॑ ॥ ५ ॥

प्र । रु॒द्रेण॑ । य॒यिना॑ । य॒न्ति॒ । सिन्ध॑वः । ति॒रः । म॒हीम् । अर॑मतिम् । द॒ध॒न्वि॒रे॒ ।
येभिः॑ । परि॑ऽज्मा । प॒रि॒ऽयन् । उ॒रु । ज्रयः॑ । वि । रोरु॑वत् । ज॒ठरे॑ । विश्व॑म् । उ॒क्षते॑ ॥ ५ ॥

सिन्धवः स्यन्दनशीला आपः ययिना गमनशीलेन रुद्रेण रुद्रपुत्रेण मरुद्गणेन सह प्र यन्ति[3] । अथ बहुवचनाद् । तेऽमी मरुतः अरमतिम् । रमतिर्विरामोऽवसानम् । तद्रहितामपर्यन्तां महीं पृथिवीं तिरः दधन्विरे तिरस्कुर्वन्तीत्यर्थः । परिज्मा परितो गन्तेन्द्रः परियन् परितो गच्छन् येभिः यैः मरुद्भिः सह उरु ज्रयः बहुवेगं करोतीति शेषः । किंच जठरे अन्तरिक्षे रोरुवत् शब्दं कुर्वन् पर्जन्यो यैर्मरुद्भिः सह विश्वं भुवनम् उक्षते सिञ्चति[4] ॥ ॥ २१ ॥

क्राणा रु॒द्रा म॒रुतो॑ वि॒श्वकृ॑ष्टयो दि॒वः श्ये॒नासो॒ असु॑रस्य नी॒ळयः॑ ।
तेभि॑श्चष्टे॒ वरु॑णो मि॒त्रो अ॑र्य॒मेन्द्रो॑ दे॒वेभि॑रर्व॒शेभि॒रर्व॑शः ॥ ६ ॥

१. ग-ता-मु-घोरा भयंकराः । २. ग-त-मु-प्रक्षिपेयुः । ३. ग-यंति प्रगच्छंति । ४. त-सिंचति ।

ऋाणाः । रुद्राः । मरुतः । विश्वऽकृष्टयः । दिवः । श्येनासः । असुरस्य । नीळयः ।
तेभिः । चष्टे । वरुणः । मित्रः । अर्यमा । इन्द्रः । देवेभिः । अर्वशेभिः । अर्वशः ॥ ६ ॥

ˇअसुरस्य मेघस्य ˇनीळयः आवासभूताः ˇदिवः अन्तरिक्षस्य संबन्धिनः ˇश्येनासः श्येनाः शंसनीयगतयः ˇविश्वकृष्टयः व्याप्तमनुष्याः ˇरुद्राः रुद्रपुत्रा ये ˇमरुतः ˇऋाणाः स्वाधिकारकर्माणि कुर्वाणा आसत इति शेषः । ˇतेभिः तैः ˇअर्वशेभिः अश्ववद्भिः सोमवद्भिर्वा ˇदेवेभिः देवैः सह ˇअर्वशः अश्ववान् सोमवान्वा ˇइन्द्रः ˇचष्टे पश्यति । ˇवरुणः च ˇमित्रः च ˇअर्यमा च सोमवद्भिः मरुद्भिः सह पश्यन्ति ॥

इन्द्रे भुजं शशमानास आशत सूरो दृशीके वृषणश्च पौंस्ये ।
प्र ये न्वस्यार्हणा ततक्षिरे युजं वज्रं नृषदनेषु कारवः ॥ ७ ॥

इन्द्रे । भुजम् । शशमानासः । आशत । सूरः । दृशीके । वृषणः । च । पौंस्ये ।
प्र । ये । नु । अस्य । अर्हणा । ततक्षिरे । युजम् । वज्रम् । नृऽसदनेषु । कारवः ॥ ७ ॥

ये ˇशशमानासः शशमानाः[1] स्तोतारः ˇइन्द्रे स्तुते सति ˇभुजं पालनम् ˇआशत प्राप्नुवन्ति । ˇसूरः सूर्ये स्तुते सति ˇदृशीके दर्शनं सर्वेवस्तुविषयं प्राप्नुवन्ति । ˇवृषणः वर्षितरीन्द्रे स्तुते ˇपौंस्यं बलं च प्राप्नुवन्ति । किंच ˇये ˇकारवः स्तोतारः ˇअस्य इन्द्रस्य ˇअर्हणा पूजनानि ˇनु क्षिप्रं ˇततक्षिरे प्रकृष्टानि कुर्वन्ति ते स्तोतारः ˇनृषदनेषु नरः कर्तृत्वेन येषु सीदन्ति तिष्ठन्ति तेषु यज्ञेषु ˇयुजं सहायमिन्द्रस्य ˇवज्रं प्राप्नुवन्ति ॥

सूरश्चिदा हरितो अस्य रीरमदिन्द्रादा कश्चिद्भयते तवीयसः ।
भीमस्य वृष्णो जठरादभिश्वसो दिवेदिवे सहुरिः स्तन्नबाधितः ॥ ८ ॥

सूरः । चित् । आ । हरितः । अस्य । रीरमत् । इन्द्रात् । आ । कः । चित् । भयते । तवीयसः ।
भीमस्य । वृष्णः । जठरात् । अभिऽश्वसः । दिवेऽदिवे । सहुरिः । स्तन् । अबाधितः ॥८॥

ˇसूरः सूर्योऽपि ˇअस्य इन्द्रस्य परमेश्वरस्य परमात्मन आज्ञां परिपालयितुं मन्वानः ˇहरितः अश्वान् प्रेरयतीति शेषः । प्रेरयन्नप्यति ˇआ ˇरीरमत् आभिमुख्येन रमयति । यः ˇकश्चित् देवोऽपि स्रष्टो[2] ˇभयते बिभेति स देवः ˇतवीयसः प्रवृद्धात् ˇइन्द्रात् परमात्मनो भयादेव बिभेति । तथा च तैत्तिरीये पठितं—'भीषास्माद्वातः पवते' (तै उ. २. ८) इत्यादिना । किंच ˇवृष्णः कामानां वर्षितुः ˇभीमस्य सर्वभयंकरस्य परमात्मनः परमेश्वरस्य ˇदिवेदिवे अन्वहम् ˇअभिश्वसः आभिमुख्येन श्वसतः ˇजठरात् उदरादन्तरिक्षात् ˇसहुरिः सहनशीलः[3] ˇअबाधितः बाधरहितः ˇस्तन् स्तनयति शब्दं करोति ॥

स्तोमं वो अद्य रुद्राय शिक्वसे क्षयद्वीराय नमसा दिदिष्टन ।
येभिः शिवः स्ववाँ एवयावभिर्दिवः सिषक्ति स्वयशा निकामभिः ॥ ९ ॥

१. म-ता४.५—शंसमानाः; त१.९.३.६ ७—शंसमानासः । २. म—दृष्ट; त१.२.३.६.७—दृष्टो; त४.५—दृष्टो । ३. त-मु—सहनशीलः सन् ।

स्तोमम् । वः । अद्य । रुद्राय । शिक्वसे । क्षयत्ऽवीराय । नमसा । दिदिष्टन ।
येभिः । शिवः । स्वऽवान् । एवयावऽभिः । दिवः । सिसक्ति । स्वऽयशाः । निकामऽभिः ॥ ९ ॥

एवयावभिः अश्वैरागच्छद्भिः येभिः यैर्मरुद्भिः सह[1] स्ववान् ज्ञातिमान् स्वयशाः स्वभूतकीर्तिः शिवः सुखकरः परमेश्वरः दिवः द्युलोकाद्यजमानान्[2] सिषक्ति सेवते हे ऋत्विजः यूयम् अद्य अस्मिन् यागे निकामभिः नियताभिलाषैः[3] मरुद्भिः सहिताय क्षयद्वीराय क्षितशत्रवे[4] शिक्वसे शरणे शक्ताय रुद्राय नमसा अन्नेन नमस्कारेण वा सह स्तोमं स्तोत्रं दिदिष्टन दिशत सृजत । समर्पयतेत्यर्थः ॥

ते हि प्रजाया अभरन्त वि श्रवो बृहस्पतिर्वृषभः सोमजामयः ।
यज्ञैरथर्वा प्रथमो वि धारयद्देवा दक्षैर्भृगवः सं चिकित्रिरे ॥ १० ॥

ते । हि । प्रऽजायाः । अभरन्त । वि । श्रवः । बृहस्पतिः । वृषभः । सोमऽजामयः ।
यज्ञैः । अथर्वा । प्रथमः । वि । धारयत् । देवाः । दक्षैः । भृगवः । सम् । चिकित्रिरे ॥ १० ॥

हि यस्मात्कारणात् वृषभः कामानां वर्षिता बृहस्पतिः सोमजामयः अन्ये सोमबन्धवः[5] ते विश्वे देवाः प्रजायाः अर्थाय श्रवः अन्नं वि अभरन्त विभरन्ति वृष्टिद्वारेण पोषयन्ति तस्मात्कारणात् तासां[6] प्रजानां मध्ये अथर्वा नामर्षिः प्रथमः[7] प्रथममेव[8] क्रियमाणैः[9] यज्ञैः वि धारयत् देवान् कर्ममार्गान् वा विश्लिष्टानकरोत् । अत्र निगमः—'यज्ञैरथर्वा प्रथमः पथस्तते' ( ऋ. सं. १. ८३. ५ ) इति । अथ दक्षैः बलैः सह देवाः विश्वे भृगवः ऋषयश्च सं चिकित्रिरे अथर्वणा कृतं यज्ञं गत्वा पश्चात् संज्ञातवन्तः ॥ ॥ २४ ॥

ते हि द्यावापृथिवी भूरिरेतसा नराशंसश्चतुरङ्गो यमोऽदितिः ।
देवस्त्वष्टा द्रविणोदा ऋभुक्षणः प्र रोदसी मरुतो विष्णुरर्हिरे ॥ ११ ॥

ते इति । हि । द्यावापृथिवी इति । भूरिऽरेतसा । नराशंसः । चतुःऽअङ्गः । यमः । अदितिः ।
देवः । त्वष्टा । द्रविणःऽदाः । ऋभुक्षणः । प्र । रोदसी इति । मरुतः । विष्णुः । अर्हिरे ॥ ११ ॥

भूरिरेतसा बहूदके द्यावापृथिवी द्यावापृथिव्यौ यमः देवः अदितिः च त्वष्टा देवः च द्रविणोदाः अग्निश्च ऋभुक्षणः ऋभवश्च रोदसी रुद्रस्य पत्नी च मरुतः देवाश्च विष्णुः[10] च[10] एते विश्वे देवाः चतुरङ्गः चतुर्भिरङ्गैर्युक्तेऽस्मिन्[11] नराशंसः नराशंसनामधेये यज्ञे प्र[12] अर्हिरे अस्माभिः स्तोतृभिः पूज्यन्ते[12] ॥

उत स्य न उशिजामुर्विया कविरहिः शृणोतु बुध्न्यो हवीमनि ।
सूर्यामासा विचरन्ता दिविक्षिता धिया शमीनहुषी अस्य बोधतम् ॥ १२ ॥

१. त-म१.२.४.६.८–सहजाः । २. त-म६.८–द्युलोकान्यजमाना वा; म१.२.४.७–द्युलोकाद्यजमानो वा । ३. त-भ–नियताभिलषितैः । ४. ग४–क्षपितशत्रवे; त१.२.७-म४.६.८–रक्षितशत्रवे; त३–क्षतशत्रवे, म१ २–नाशितशत्रवे । ५. ग-भ–सोमबन्धकाः, त-मु–सोमबन्धुकाः । ६. ग-त-म१.४.५.६–तेषां । ७. ग-भ–'प्रथमः' नास्ति । ८. त–'प्रथममेव' नास्ति । ९. त–विक्रियमाणैः । १०. त–रुद्राय च । ११. त-मु–चतुर्भिर्युक्तोऽभिरस्मिन् । १२. त मु–विष्णुरस्माभिः स्तोतृभिरर्हिरे प्रपूज्यते ।

उत । स्यः । नः । उशिजाम् । उर्विया । कविः । अहिः । शृणोतु । बुध्न्यः । हवीमनि ।
सूर्यामासा । विऽचरन्ता । दिविऽक्षिता । धिया । शमीनहुषी इति । अस्य । बोधतम् ॥ १२ ॥

उत अपि च नः अस्माकम् उशिजां कामयमानानामृत्विजाम् उर्विया उर्वी महतीं स्तुतिं कविः मेधावी बुध्न्यः बुध्ने अन्तरिक्षे भवः सः अहिः देवः हवीमनि हूयन्ते यत्र देवेभ्यो हवींषि तस्मिन्यज्ञे शृणोतु । दिविक्षिता दिवि वसन्तौ विचरन्ता विशेषेण चरन्तौ सूर्यामासा सूर्याचन्द्रमसौ धिया बुद्ध्या अस्य स्तोत्रमिदं बोधतं बुध्येताम् । शमी कर्मवती पृथिवी । 'शमी' इति कर्मनामसु पाठात् । नहुषी द्यौः । अत्र वाजसनेयकं—'द्यौर्नहुषीयं वै शमी तस्या एष गर्भः' इति । हे द्यावापृथिव्यौ युवां[1] स्तोत्रं धिया स्वीयया प्रज्ञया बुध्येतमवगच्छतमित्यर्थः ॥

प्र नः पूषा चरथं विश्वदेव्योऽपां नपादवतु वायुरिष्टये ।
आत्मानं वस्यो अभि वातमर्चत तदश्विना सुहवा यामनि श्रुतम् ॥ १३ ॥

प्र । नः । पूषा । चरथम् । विश्वऽदेव्यः । अपाम् । नपात् । अवतु । वायुः । इष्टये ।
आत्मानम् । वस्यः । अभि । वातम् । अर्चत । तत् । अश्विना । सुऽहवा । यामनि । श्रुतम् ॥ १३ ॥

पूषा देवः नः अस्माकं संबन्धिनं चरथं जङ्गमं प्र अवतु प्रकर्षेण रक्षतु । किंच विश्वदेव्यः विश्वदेवहितः अपां नपात् वायुः इष्टये यज्ञस्य निष्पत्त्यर्थं प्रावतु । किंच आत्मानं सर्वेषामात्मभूतं वातं वायुं वस्यः वसीयः प्रशस्यतरमन्नं प्राप्तुम् । अस्मभ्यमन्नं कामयमानमिति शेषः । हे अश्विना अश्विनौ सुहवा स्वाह्वानौ युवां यामनि यागगमने तत् इदं स्तोत्रं श्रुतं शृणुतम् ॥

विशामासामभयानामधिक्षितं गीर्भिरु स्वयशसं गृणीमसि ।
ग्नाभिर्विश्वाभिरदितिमनर्वणमक्तोर्युवानं नृमणा अधा पतिम् ॥ १४ ॥

विशाम् । आसाम् । अभयानाम् । अधिऽक्षितम् । गीःऽभिः । ऊँ इति । स्वऽयशसम् । गृणीमसि ।
ग्नाभिः । विश्वाभिः । अदितिम् । अनर्वणम् । अक्तोः । युवानम् । नृऽमनाः । अध । पतिम् ॥ १४ ॥

अभयानां संसारभयरहितानाम् आसां विशां मनुष्याणाम् अधिक्षितम् अन्तर्निवसन्तं[2] स्वयशसं स्वयं समुपार्जितकीर्तिमेनमग्निं गीर्भिः स्तुतिभिः गृणीमसि वयं स्तुमः । किंच अनर्वणम् अप्रत्यृतां पत्युरपत्यान्तरेणाप्रतिगताम् अदितिम् अदीनां देवमातरं विश्वाभिः सर्वाभिः ग्नाभिः देवपत्नीभिः सहितां स्तुमः । किंच अक्तोः रात्रेः युवानं स्वतेजसा मिश्रयितारं चन्द्रमसं स्तुमः । किंच नृमणाः नृषु मनुष्येष्वनुग्राहकमना यः तमादित्यं स्तुमः । अध अथ पतिं सर्वस्य पालकमिन्द्रं स्तुमः ॥

रेभदत्र जनुषा पूर्वो अङ्गिरा ग्रावाण ऊर्ध्वा अभि चक्षुरध्वरम् ।
येभिर्विहाया अभवद्विचक्षणः पाथः सुमेकं स्वधितिर्वनन्वति ॥ १५ ॥

रेभत् । अत्र । जनुषा । पूर्वः । अङ्गिराः । ग्रावाणः । ऊर्ध्वाः । अभि । चक्षुः । अध्वरम् ।
येभिः । विऽहायाः । अभवत् । विऽचक्षणः । पाथः । सुऽमेकम् । स्वऽधितिः । वनन्ऽवति ॥ १५ ॥

1. त१.२.३.६.७–युवां बुद्धया; त४.५.८-म–युवां बुध्न्या । 2. त-म१.४.६.८–अंतरभिनिवसंतं ।

अङ्गिरा नामर्षिरार्त्विज्येन वृतः सन् देवान् स्तौति । अत्र अस्मिन् यज्ञे अमुया अनया पूर्वः प्रथमः अङ्गिराः नामर्षिः एभिः देवान् स्तौति । ग्रावाणः च ऊर्ध्वाः उन्नताः सन्तः अध्वरं यज्ञसाधनं सोमम् अभि चक्षुः अभिपश्यन्ति । विचक्षणः विद्वानिन्द्रः येभिः यैः ग्रावभिरभिषवसंबन्धिभिः शब्दैः विहायाः महान् अभवत् । हृष्टोऽभूदित्यर्थः । अस्येन्द्रस्य स्वधितिः वज्रः वनन्वति उदकवति मार्गे पाथः अन्नसाधनं सुमेकं शोभनमुदकं निरगमयदिति शेषः ॥ ॥२५॥

'महि' इति पञ्चदशर्चं तृतीयं सूक्तम् । तान्वो नाम पृथोः पुत्र ऋषिः । द्वितीयातृतीये त्रयोदशी चेति तिस्रोऽनुष्टुभः । नवम्यक्षरसंख्यया पङ्क्तिर्न पादैः । एकादशी न्यङ्कुसारिण्यष्टकद्वादशकाष्टकवती । पञ्चदशी पुरस्ताद्बृहत्यष्टाद्वादशकाष्टका । शिष्टा नव प्रस्तारपङ्क्तिच्छन्दस्काः । आद्यौ जागतौ[1] द्वौ[1] गायत्रौ सा प्रस्तारपङ्क्तिः । विश्वे देवा देवता । तथा चानुक्रान्तं—'महि तान्वः पार्थः प्रस्तारपाङ्क्तं पुरस्ताद्बृहत्यन्तं त्रयोदश्युपान्त्ये चानुष्टुभौ नवम्यक्षरैः पङ्क्तिरेकादशी न्यङ्कुसारिणी' इति । गतो विनियोगः ॥

महि द्यावापृथिवी भूतमुर्वी नारी यह्वी न रोदसी सदं नः ।
तेभिर्नः पातं सह्यस एभिर्नः पातं शूषणि ॥ १ ॥

महि । द्यावापृथिवी इति । भूतम् । उर्वी इति । नारी इति । यह्वी इति । न । रोदसी इति । सदम् । नः ।
तेभिः । नः । पातम् । सह्यसः । एभिः । नः । पातम् । शूषणि ॥ १ ॥

हे द्यावापृथिवी द्यावापृथिव्यौ युवां महि अत्यन्तं यथा भवति तथा उर्वी विस्तीर्णे भूतं भवतम् । किंच यह्वी महत्यौ रोदसी द्यावापृथिव्यौ नारी न स्त्रियाविव नः अस्माकं सदं सदा भवतम् । किंच युवां शूषणि नः अस्माकं शत्रुबले युष्मदीयैः एभिः पालनैः पातं रक्षतम् । किंच युष्मदीयैः तेभिः तैः पालनैः नः अस्माकं सह्यसः अतिशयेनास्मानभिभवितुः शत्रोरपि पातं रक्षतम् ॥

यज्ञेयज्ञे स मर्त्यो देवान्त्सपर्यति । यः सुम्नैर्दीर्घश्रुत्तम आविवासात्येनान् ॥ २ ॥

यज्ञेऽयज्ञे । सः । मर्त्यः । देवान् । सपर्यति ।
यः । सुम्नैः । दीर्घश्रुत्ऽतमः । आऽविवासाति । एनान् ॥ २ ॥

स मर्त्यः मनुष्यः यज्ञेयज्ञे सर्वेषु यज्ञेषु देवान्[2] सर्वान्[2] सपर्यति[4] परिचरति यः दीर्घश्रुत्तमः अतिशयेन दीर्घस्य बहोः शास्त्रस्य श्रोता यो मनुष्यः सुम्नैः सुखकरैर्हविर्भिः एनान् देवान् आविवासाति[3] परिचरति । असुखकरैर्हविर्भिः कृतमपि कर्म समर्थं न भवतीत्यर्थः ॥

विश्वेषामिरज्यवो देवानां वार्महः । विश्वे हि विश्वमहसो विश्वे यज्ञेषु यज्ञियाः ॥ ३ ॥

विश्वेषाम् । इरज्यवः । देवानाम् । वाः । महः ।
विश्वे । हि । विश्वऽमहसः । विश्वे । यज्ञेषु । यज्ञियाः ॥ ३ ॥

---

१. ग-त-मु—द्वौ आगतौ ततो द्वौ । २. त-मु—सर्वान् देवान् । ३. त-मु—आविवासति । ४. त१-२—सपर्यति सपर्यामि न; त३.८-मु—सपर्ययि; त४.५.६.७—सपर्यति सपर्यामि ।

हे विश्वे एषामित्थम् भुवनानामीश्वराः देवाः द्योतमानविगुणयुक्तानां भवतो महः महत् वाः वरणीयं धनं विभजत इति शेषः । तदस्मभ्यं दत्तेति भावः । किंच विश्वे सर्वे यूयं विश्वमहसः व्याप्ततेजस्काः । किंच विश्वे यूयं यज्ञेषु यज्ञियाः यष्टव्याः ॥

**ते घा राजानो अमृतस्य मन्द्रा अर्यमा मित्रो वरुणः परिज्मा ।**
**कद्रुद्रो नृणां स्तुतो मरुतः पूषणो भगः ॥ ४ ॥**

ते । घ । राजानः । अमृतस्य । मन्द्राः । अर्यमा । मित्रः । वरुणः । परिऽज्मा ।
कत् । रुद्रः । नृणाम् । स्तुतः । मरुतः । पूषणः । भगः ॥ ४ ॥

अर्यमा देवः मित्रः च परिज्मा सर्वतोगामी सर्वत्राप्रतिहतगतिः वरुणः[1] अन्यो देवजन-र्भिवन्द्यः स्तुतः रुद्रः च पूषणः सर्वस्य पोषयितारो मरुतः च भगः च एते[2] देवाः मन्द्राः सर्वैः स्तुत्याः सन्तः नृणां मनुष्याणां कत् सुखं प्रयच्छतेति शेषः । ते सर्वे अमृतस्य अमृत-सदृशस्य हविषः राजानः घ ईश्वराः खलु ॥

**उत नो नक्तमपां वृषण्वसू सूर्यामासा सदनाय सधन्या ।**
**सचा यत्साद्येषामहिर्बुध्नेषु बुध्न्यः ॥ ५ ॥**

उत । नः । नक्तम् । अपाम् । वृषण्वसू इति वृषण्ऽवसू । सूर्यामासा । सदनाय । सऽधन्या ।
सचा । यत् । सादि । एषाम् । अहिः । बुध्नेषु । बुध्न्यः ॥ ५ ॥

उत अपि च हे वृषण्वसू वर्षणधनसंबन्धिनौ युवाम् अपाम् उदकानां संबन्धिनौ सधन्या सधन्यौ समानधनौ सूर्यामासा सूर्याचन्द्रमसौ बुध्नेषु अन्तरिक्षेषु निवासस्थानेषु मेघेषु यत्[3] यः अहिर्बुध्न्यः देवः[4] सादि सीदति तिष्ठति एषाम् एभिः[5] सचा सह युवां नक्तं रात्रावहनि चोरुष्यतमिति[6] वक्ष्यमाणेन संबन्धः ॥  ॥ २१ ॥

**उत नो देवावश्विना शुभस्पती धामभिर्मित्रावरुणा उरुष्यताम् ।**
**महः स राय एषतेऽति धन्वेव दुरिता ॥ ६ ॥**

उत । नः । देवौ । अश्विना । शुभः । पती इति । धामऽभिः । मित्रावरुणा । उरुष्यताम् ।
महः । सः । रायः । आ । ईषते । अति । धन्वऽइव । दुःऽइता ॥ ६ ॥

उत अपि च शुभस्पती शुभस्योदकस्य[7] पती अश्विना अश्विनौ देवौ नः अस्मान् धामभिः आत्मीयैः शरीरैः[8] उरुष्यतां रक्षताम् । किंच मित्रावरुणौ आत्मीयैः शरीरैरुरुष्यतां रक्षताम् । यं यजमानं युष्मदभी देवा रक्षन्ति सः महः महान्ति रायः धनानि एषते आभि-मुख्येन गच्छति प्राप्नोति । किंच दुरिता दुरितानि शीघ्रम् अति अतिगन्तातिक्रान्ता च भवति । तत्र दृष्टान्तः । धन्वेव । यथा पथिको निरुदकान् देशानतिक्रामति तद्वदित्यर्थः ॥

---

१. त-म१.२.४.६.८—'वरुणः' नास्ति । २. त-म१.४.८—ये एते । ३. ग-त-म—'यत्' नास्ति । ४. त-म—देवो यत् । ५. ग—तेषामिति; त-म—तैरेषामिति । ६. ग-त-म—चोरुष्यतामिति । ७. त-म—उदकस्य । ८. म—'शरीरैः' नास्ति ।

उत नो रुद्रा चिन्मृळतामश्विना विश्वे देवासो रथस्पतिर्भगः।
ऋभुर्वाज ऋभुक्षणः परिज्मा विश्ववेदसः॥ ७॥

उत। नः। रुद्रा। चित्। मृळताम्। अश्विना। विश्वे। देवासः। रथःपतिः। भगः।
ऋभुः। वाजः। ऋभुक्षणः। परिऽज्मा। विश्वऽवेदसः॥ ७॥

उत चित् अपि च रुद्रा रुद्रपुत्रौ अश्विना अश्विनौ नः अस्मान् मृळतां सुखयताम्। किंच रथस्पतिः रथस्य पतिः पूषा ऋभुः वाजः अन्नवान् भगः च परिज्मा परितो गन्ता वायुश्चेति[1] विश्वे सर्वे देवासः देवाः सुखयन्तु। हे विश्ववेदसः विश्ववेदाः सर्वप्रज्ञाः सर्वधना वा हे ऋभुक्षणः महान्तो महादयो देवा यूयं सुखयत॥

ऋभुर्ऋभुक्षा ऋभुर्विधतो मद आ ते हरी जूजुवानस्य वाजिना।
दुष्टरं यस्य साम चिदृधग्यज्ञो न मानुषः॥ ८॥

ऋभुः। ऋभुक्षाः। ऋभुः। विधतः। मदः। आ। ते। हरी इति। जूजुवानस्य। वाजिना।
दुस्तरम्। यस्य। साम। चित्। ऋधक्। यज्ञः। न। मानुषः॥ ८॥

ऋभुक्षाः महानिन्द्रः ऋभुः यशसा भाति। किंच विधतः त्वां परिचरतो यजमानस्य मदः हर्षोऽपि ऋभुः यशसा भाति[2]। हे इन्द्र आ जूजुवानस्य यागं प्रति शीघ्रमागच्छतः ते तव हरी अश्वावपि वाजिना वाजिनौ बलवन्तौ। किंच यस्य इन्द्रस्य संबन्धि साम चित् गीयमानं सामापि दुस्तरं रक्षोभिरप्रापणीयम्। एषः यज्ञः मानुषः मनुष्यसाधारणः न किंच ऋधक् पृथक्। दिव्य इत्यर्थः॥

कृधी नो अह्रयो देव सवितः स च स्तुषे मघोनाम्।
सहो न इन्द्रो वह्निभिर्न्येषां चर्षणीनां चक्रं रश्मिं न योयुवे॥ ९॥

कृधि। नः। अह्रयः। देव। सवितरिति। सः। च। स्तुषे। मघोनाम्।
सहो इति। नः। इन्द्रः। वह्निऽभिः। नि। एषाम्।
चर्षणीनाम्। चक्रम्। रश्मिम्। न। योयुवे॥ ९॥

हे सवितः प्रेरक नः अस्मान् अह्रयः अलज्जनवधनाभावलज्जितान् कृधि कुरु। किंच सः त्वं मघोनां धनवतां यजमानानां संबन्धिभिर्ऋत्विग्भिः स्तुषे स्तूयसे। इन्द्रः वह्निभिः वोढृभिः मरुद्भिः सह सहः बलं चर्षणीनां मनुष्याणां नः अस्माकं नि योयुवे भृशं मिश्रयतु। तत्र दृष्टान्तः। चक्रं रथस्य चक्रं रश्मिं न। यथा रश्मिं चक्रादिकं तद्वदित्यर्थः॥

ऐषु द्यावापृथिवी धातं महदस्मे वीरेषु विश्वचर्षणि श्रवः।
पृक्षं वाजस्य सातये पृक्षं रायोत तुर्वणे॥ १०॥

---

१. क-ख-घ-वायुश्चैते; भ७-सूर्यश्चेति। २. क-भ-भवति, ख-भवति।

आ । एषु । द्यावापृथिवी इति । धातम् । महत् । अस्मे इति । वीरेषु । विश्वऽचर्षणि । श्रवः ।
पृक्षम् । वाजस्य । सातये । पृक्षम् । राया । उत । तुर्वणे ॥ १० ॥

हे द्यावापृथिवी द्यावापृथिव्यौ युवाम् अस्मे अस्माकं संबन्धिषु एषु वीरेषु पुत्रेषु विश्वचर्षणि सर्वमनुष्योपेतं महत् श्रवः यशः आ धातम् आधत्तं दत्तम् । किंच वाजस्य बलस्य सातये संभजनाय पृक्षं पाककर्मार्थं दत्तम् । उत अपि च तुर्वणे शत्रूणां तरणाय राया धनेन सह पृक्षम् अन्नं दत्तम् ॥   ॥ २७ ॥

एतं शंसमिन्द्रास्मयुष्ट्वं कूचित्सन्तं सहसावन्नभिष्टये सदा पाह्यभिष्टये ।
मेदतां वेदता वसो ॥ ११ ॥

एतम् । शंसम् । इन्द्र । अस्मऽयुः । त्वम् । कूऽचित् । सन्तम् । सहसाऽवन् । अभिष्टये ।
सदा । पाहि । अभिष्टये । मेदताम् । वेदता । वसो इति ॥ ११ ॥

हे वसो वासयितः सहसावन् बलवन् इन्द्र अस्मयुः अस्मान्कामयमानः त्वं कूचित् क्वचिदपि सन्तं स्थितम् एतम् इमं शंसं स्तोतारम् अभिष्टये अभिलषितसिद्ध्यर्थमपि च अभिष्टये यागार्थं सदा सर्वदा पाहि रक्ष । किंच वेदता त्वदीयेन प्रज्ञानेन स्तोतारं मां मेदतां पुष्यस्व ॥

एतं मे स्तोमं तना न सूर्ये द्युतद्यामानं वावृधन्त नृणाम् ।
संवननं नाश्व्यं तष्टेवानपच्युतम् ॥ १२ ॥

एतम् । मे । स्तोमम् । तना । न । सूर्ये । द्युतत्ऽयामानम् । ववृधन्त । नृणाम् ।
सम्ऽवननम् । न । अश्व्यम् । तष्टाऽइव । अनपऽच्युतम् ॥ १२ ॥

नृणां नेतॄणां देवशत्रूणां[1] संवननं न संभजनं सम्यग्हिंसनमिवावस्थितं मे मदीयम् एतम्[2] इदं स्तोमं[3] स्तोत्रं वावृधन्त ऋत्विजो वर्धयन्तु । तत्र दृष्टान्तः । सूर्ये द्युतद्यामानं दीप्तगमनं तना न विस्तृतान् रश्मीन् वर्धयन्ति तद्वदित्यर्थः । अनपच्युतं च्युतिरहितम् अश्व्यम् अश्वार्हं रथं तष्टेव यथा वर्धकी रथिष्वागतेषु संस्कृतं रथं संस्कारस्थानात्प्रेरयति तद्वदित्यर्थः ॥

वावर्त येषां राया युक्तैषां हिरण्ययी ।
नेमधिता न पौंस्या वृथेव विष्टान्ता ॥ १३ ॥

ववर्त । येषाम् । राया । युक्ता । एषाम् । हिरण्ययी ।
नेमऽधिता । न । पौंस्या । वृथाऽइव । विष्टऽअन्ता ॥ १३ ॥

येषां[4] देवानां स्वभूतेन राया अस्मभ्यं दातव्येन धनेन युक्ता स्तुतिः आवर्तते तेषां एषाम् अर्थाय हिरण्ययी हिरण्मयी हिरण्यालंकारवत् प्रीतिकरासम्मुखात्[5] पुनःपुनरावर्तते इत्यर्थः । तत्र

१. ग-त-भ-मु—देवानां शत्रूणां । २. ग-त-भ—एतमिमं । ३. ग-त—'स्तोमं' नास्ति । ४. ग१.२-त-भ१.२.४.६.८—एषां । ५. ग—प्रीतिकरसन्मुखा; भ१.२.४.६.८—प्रीतिकरासम्मुखा; भ७—प्रीतिकरी सती मुखात् ।

देहान्तः । ^(य)दीक्ष्या दीक्ष्याणि बलानि ^(ऐ)रमधिताः ^(न) नेमधितौ संग्रामे ^(वि)हाय्या स्वाहावसाना ^(सू)र्येव यथा घटिकायन्त्रमाला[1] तद्वदित्यर्थः ॥

प्र तद्दुःशीमे पृथवाने वेने प्र रामे वोचमसुरे मघवत्सु ।
ये युक्त्वाय पञ्च शतास्मयु पथा विश्राव्येषाम् ॥ १४ ॥

प्र । तत् । दुःऽशीमे । पृथवाने । वेने । प्र । रामे । वोचम् । असुरे । मघवत्ऽसु ।
ये । युक्त्वाय । पञ्च । शता । अस्मऽयु । पथा । विऽश्रावि । एषाम् ॥ १४ ॥

^(ये) देवाः ^(पञ्च) ^(शता) शतानि रथान् ^(युक्त्वाय) अश्वैर्युक्त्वा ^(अस्मयु) अस्मत्कामाः सन्तः ^(पथा) यज्ञमार्गेण गच्छन्ति तेषाम् ^(एषां) देवानां ^(विश्रावि) देवानां लोके वा विशेषेण श्रावकगुणयुक्तं[2] ^(तत्) स्तोत्रं ^(दुःशीमे) दुःशीमनाम्नि ^(पृथवाने) । पृथवानः पृथिः । तस्मिन् ^(वेने) च ^(असुरे) बलवति ^(रामे) चैतेषु राजसु ^(प्र) ^(वोचं) प्रब्रवीमि । प्रख्यापयामीत्यर्थः । ^(मघवत्सु) अन्येषु धनवत्सु च प्रख्यापयामीत्यर्थः ॥

अधीन्न्वत्र सप्ततिं च सप्त च ।
सद्यो दिदिष्ट तान्वः सद्यो दिदिष्ट पार्थ्यः सद्यो दिदिष्ट मायवः ॥ १५ ॥

अधि । इत् । नु । अत्र । सप्ततिम् । च । सप्त । च ।
सद्यः । दिदिष्ट । तान्वः । सद्यः । दिदिष्ट । पार्थ्यः । सद्यः । दिदिष्ट । मायवः ॥ १५ ॥

^(अत्र) एषु राजसु ^(तान्वः) नामर्षिः गवां ^(सप्त) ^(च) सप्ततिं ^(च) ^(नु) क्षिप्रं ^(सद्यः) ^(इत्) सद्य एव ^(अधि) ^(दिदिष्ट) । अधिपूर्वो दिशिर्याचनार्थः । याचते । किंच ^(पार्थ्यः)[3] नाम पृथुनामकस्य कुले पृथोः पुत्रः कश्चित् ^(सद्यः) एव गवां सप्तसप्ततिमधि ^(दिदिष्ट) । किंच ^(मायवः) अपि ^(सद्यः) एवाधि ^(दिदिष्ट) ॥ ॥ २८ ॥

' प्रैते ' इति चतुर्दशर्चं चतुर्थं सूक्तं कद्र्वाः पुत्रस्य सर्पस्यार्बुदस्यार्षम् । पञ्चमी सप्तमी चतुर्दशी त्रिष्टुभः शिष्टा एकादश जगत्यः । सोमाभिषवार्था ग्रावाणोऽत्र देवता । तथा चानुक्रान्तं—' प्रैते चतुर्दश सर्पोऽर्बुदः काद्रवेयो ग्राव्णोऽस्तौज्जगत्यन्त्ये त्रिष्टुभौ सप्तमी च ' इति । ग्रावस्तोत्र एतत्सूक्तम् । सूत्रितं च—' प्रैते वदन्त्विति सर्बुदं[4] ग्रावस्तुत्याः आ च त्वामेते प्र वो ग्रावाण इति सूक्तयोः ' ( आश्व. श्रौ. ५. १२ ) इति । यद्वा । इदमेकमेव सूक्तं ग्रावस्तोत्रम् । सूत्रितं च—' अर्बुदमेवैके प्र वो ग्रावाण इत्येके ' ( आश्व. श्रौ. ५. १२ ) इति ॥

प्रैते वदन्तु प्र वयं वदाम ग्रावभ्यो वाचं वदता वदद्भ्यः ।
यदद्रयः पर्वताः साकमाशवः श्लोकं घोषं भरथेन्द्राय सोमिनः ॥ १ ॥

प्र । एते । वदन्तु । प्र । वयम् । वदाम । ग्रावऽभ्यः । वाचम् । वदत । वदत्ऽभ्यः ।
यत् । अद्रयः । पर्वताः । साकम् । आशवः । श्लोकम् । घोषम् । भरथ । इन्द्राय । सोमिनः ॥ १ ॥

---

१. ग–घटिका यहस्य यथा माला; तअ.५–घटिकात्रयमाला; म७–घटितात्मयंत्रमाला । २. त–म१. २.४.६.८–श्रावकं गुणयुक्तं । ३. त२–मु–पार्थ्यो म१–पार्थ्यो; म७–पार्थ्यौ । ४. त–म१.७–मु–वदन्त्यर्बुदं ।

एते ग्रावाण उपलाः प्र वदन्तु अभिषवशब्दं कुर्वन्तु । वयं यजमानाः वदद्भ्यः अभिषवशब्दं कुर्वद्भ्यः ग्रावभ्यः ग्राव्णामर्थाय वाचं प्र वदाम । किंच हे ऋत्विजो यूयमपि स्तुतिलक्षणां वाचं वदत पठत । यत् यदा अद्रयः आदरणीया एते आशवः सोमाभिषवार्थे[1] क्षिप्रकारिणः पर्वताः ग्रावाणः सर्वे यूयं साकं सह इन्द्राय इन्द्रार्थं श्लोकं श्रोतव्यं घोषम् अभिषवशब्दं भरथ पोषयथ तदानीं सोमिनः सोमवन्तः सोमेन युक्ता[2] भवथ[2] ॥

एते वदन्ति शतवत्सहस्रवदभि क्रन्दन्ति हरितेभिरासभिः ।
विष्ट्वी ग्रावाणः सुकृतः सुकृत्यया होतुश्चित्पूर्वे हविरद्यमाशत ॥ २ ॥

एते । वदन्ति । शतऽवत् । सहस्रऽवत् । अभि । क्रन्दन्ति । हरितेभिः । आसऽभिः ।
विष्ट्वी । ग्रावाणः । सुऽकृतः । सुऽकृत्यया । होतुः । चित् । पूर्वे । हविःऽअद्यम् । आशत ॥ २ ॥

शतवत्सहस्रवत् यथा शतं मनुष्याः सहस्रसंख्यापरिमिता मनुष्याश्च वदन्ति तद्वत् एते ग्रावाणः[3] वदन्ति शब्दं कुर्वन्ति । किंच हरितेभिः सोमसंसर्गाद्धरितवर्णैः आसभिः आस्यैः अभि क्रन्दन्ति । सोममभिलक्ष्य देवानाह्वयन्तीत्यर्थः । किंच सुकृतः शोभनकर्माणः ग्रावाणः विष्ट्वी यज्ञं प्राप्य होतुः देवानामाह्वातुरग्नेः पूर्वे चित् पूर्वमेव अद्यं भक्षणीयं हविः आशत प्राप्नुवन्ति ॥

एते वदन्त्यविदन्नना मधु न्यूङ्खयन्ते अधि पक्व आमिषि ।
वृक्षस्य शाखामरुणस्य बप्सतस्ते सूभर्वा वृषभाः प्रेमराविषुः ॥ ३ ॥

एते । वदन्ति । अविदन् । अना । मधु । नि । ऊङ्खयन्ते । अधि । पक्वे । आमिषि ।
वृक्षस्य । शाखाम् । अरुणस्य । बप्सतः । ते । सूभर्वाः । वृषभाः । प्र । ईम् । अराविषुः ॥ ३ ॥

अरुणस्य अरुणवर्णस्य वृक्षस्य शाखां बप्सतः भक्षयन्तः ते सूभर्वाः सोमभक्षकाः वृषभाः प्रेमराविषुः शब्दयन्ति । यथा पक्वे आमिषि अधि आमिषे क्रव्यादो मांसभक्षकाश्च मांसविषये यथा न्यूङ्खयन्ते शब्दविशेषं कुर्वन्ति तद्वत् एते ग्रावाणः वदन्ति शब्दं कुर्वन्ति । किंच मधु मदकरं[4] सोमम् अना आस्येन अविदन् लभन्ते ॥

बृहद्वदन्ति मदिरेण मन्दिनेन्द्रं क्रोशन्तोऽविदन्नना मधु ।
संरभ्या धीराः स्वसृभिरनर्तिषुराघोषयन्तः पृथिवीमुपब्दिभिः ॥ ४ ॥

बृहत् । वदन्ति । मदिरेण । मन्दिना । इन्द्रम् । क्रोशन्तः । अविदन् । अना । मधु ।
सम्ऽरभ्य । धीराः । स्वसृऽभिः । अनर्तिषुः । आऽघोषयन्तः । पृथिवीम् । उपब्दिऽभिः ॥ ४ ॥

मदिरेण मदकरेण मन्दिना अभिषूयमाणेन सोमेन इन्द्रं क्रोशन्तः आह्वयन्त एते ग्रावाणः बृहत् अत्यन्तं वदन्ति शब्दायन्ते । किंच अना आस्येन मधु मदकरं सोमम् अविदन् अलभन्त । किंच संरभ्य संरब्धा भूत्वा धीराः दृढाः सन्तः उपब्दिभिः शब्दैः पृथिवीम् आघोषयन्तः पूरयन्तः स्वसृभिः अङ्गुलिभिः सह अनर्तिषुः नृत्यन्ति ॥

१. त-भ-सोममभिषवार्थे । २. ग-भ५-क्षिता भवथ; त-युता अभवन्; भ१.६.८-क्षिता भवतः; भ२-लिप्ता भवतः; भ४.७-क्षिता भवत । ३. त-'ग्रावाणः' नास्ति । ४. भ१.२.७-मधुरं ।

सुपर्णा वाचमक्रतोप द्यव्याखरे कृष्णा इषिरा अनर्तिषुः ।
न्यङ्ङि यन्त्युपरस्य निष्कृतं पुरू रेतो दधिरे सूर्यश्वितः ॥ ५ ॥

सुऽपर्णाः । वाचम् । अक्रत । उप । द्यवि । आऽखरे । कृष्णाः । इषिराः । अनर्तिषुः ।
न्यक् । नि । यन्ति । उपरस्य । निःऽकृतम् । पुरु । रेतः । दधिरे । सूर्यऽश्वितः ॥ ५ ॥

सुपर्णाः सुपतना ग्रावाणः उप उपलक्ष्य समीपे द्यवि अन्तरिक्षे वाचम् अभिषवशब्दम् अक्रत कुर्वन्ति । किंच आखरे । मृगाणां यत्र आखरः । तस्मिन् इषिराः गमनशीलाः कृष्णाः कृष्णमृगा इव सूर्यश्वितः सूर्यवच्छ्वेतवर्णा दृप्ताः अनर्तिषुः नृत्यन्ति । निष्कृतं ग्रावभिः पीडितं सन् उपरस्य उपलस्य न्यक् अधोमुखे सोमं नि यन्ति निगमयन्ति । किंच पुरु बहु रेतः सोमलक्षणमुदकं दधिरे धारयन्ति ॥ ॥ २९ ॥

उग्राइव प्रवहन्तः समायमुः साकं युक्ता वृषणो बिभ्रतो धुरः ।
यच्छ्वसन्तो जग्रसाना अराविषुः शृण्व एषां प्रोथथो अर्वतामिव ॥ ६ ॥

उग्राःऽइव । प्रऽवहन्तः । सम्ऽआयमुः । साकम् । युक्ताः । वृषणः । बिभ्रतः । धुरः ।
यत् । श्वसन्तः । जग्रसानाः । अराविषुः । शृण्वे । एषाम् । प्रोथथः । अर्वताम्ऽइव ॥ ६ ॥

वृषणः । फलं वर्षतीति वृषा यज्ञः । तस्य धुरः धुरं भारं बिभ्रतः धारयन्त एते ग्रावाणः साकं सोमेन सह युक्ताः सन्तः प्रवहन्तः रथं प्रकर्षेण वोढारः उग्राः उद्गूर्णा[1] अश्वाः इव समायमुः समायच्छन्ति । आयता भवन्तीत्यर्थः । यत् यदा श्वसन्तः अभिषवसमय उत्पतननिपतनव्यापारजनितेन वायुना श्वसन्त इव स्थिता ग्रावाणः जग्रसानाः सोमं ग्रसमानाः अराविषुः शब्दायन्ते तदानीम् एषां ग्राव्णां संबन्धी प्रोथथः मुखाच्छब्दः शृण्वे श्रूयते । तत्र दृष्टान्तः । अर्वतामिव । अश्वानां संबन्धिनो मुखाद्घोषशब्दो यथा तद्वदित्यर्थः ॥

दशावनिभ्यो दशकक्ष्येभ्यो दशयोक्त्रेभ्यो दशयोजनेभ्यः ।
दशाभीशुभ्यो अर्चताजरेभ्यो दश धुरो दश युक्ता वहद्भ्यः ॥ ७ ॥

दशावनिऽभ्यः । दशऽकक्ष्येभ्यः । दशऽयोक्त्रेभ्यः । दशऽयोजनेभ्यः ।
दशाभीशुऽभ्यः । अर्चत । अजरेभ्यः । दश । धुरः । दश । युक्ताः । वहत्ऽभ्यः ॥ ७ ॥

दशावनिभ्यः । कर्माण्यवन्ति गच्छन्तीत्यवनयः । दशावनयोऽङ्गुलयो येषां ग्राहकत्वेन संबन्धिनस्ते दशावनयः । तान् ग्राव्णः । द्वितीयार्थे चतुर्थी । दशकक्ष्येभ्यः । कक्ष्याः प्रकाशका अङ्गुलयो येषां ते दशकक्ष्याः । तान् । दशयोक्त्रेभ्यः । योक्त्रवद्बन्धनसाधनभूता दशाङ्गुलयो[2] येषां तान् । दशयोजनेभ्यः । सोमेन सह योजने साधनभूता दशाङ्गुलयो येषां तान् । दशाभीशुभ्यः । कर्माण्यभितो व्याप्नुवन्तीत्यभीशवोऽङ्गुलयो दश येषां तान् । अजरेभ्यः जरावर्जितान् दश दशभिः धुरः धूर्भिः हिंसितृभिः । तृतीयार्थे प्रथमा । युक्ताः युक्तान् । द्वितीयार्थे प्रथमा । वहद्भ्यः वहतोऽभिषवाख्ये कर्मणि व्याप्रियमाणान् अर्चत स्तुत । हे ऋत्विज इति शेषः । अत्र

1. त- उद्गूर्णवर्णा । 2. ग-त-भ- ' दशाङ्गुलयो ' नास्ति ।

यास्कः—'अवनयोऽङ्गुलयो भवन्त्यवन्ति कर्माणि। कक्ष्याः प्रकाशयन्ति कर्माणि। योक्त्राणि योजनानीति व्याख्यातमभीशवोऽभ्यश्नुवते कर्माणि। दश धुरो दश युक्ता वहत। धूर्धूर्वतेर्वधकर्मण इयमपीतरा धुरेतस्मादेव विहन्ति वहं धारयतेर्वा' ( निरु. ३. ९ ) इति ॥

ते अद्र॒यो॑ द॒शय॑न्त्रास आ॒शव॒स्तेषा॑मा॒धानं॒ पर्ये॑ति हर्य॒तम् ।
त ऊ॑ सु॒तस्य॑ सो॒म्यस्यान्ध॑सों॒ऽशोः पी॒यूषं॑ प्रथ॒मस्य॑ भेजिरे ॥ ८ ॥

ते । अद्र॑यः । दश॑ऽयन्त्रासः । आ॒शव॑ः । तेषा॑म् । आ॒ऽधान॑म् । परि॑ । ए॒ति॒ । ह॒र्य॒तम् ।
ते । ऊं॒ इति॑ । सु॒तस्य॑ । सो॒म्यस्य॑ । अन्ध॑सः । अं॒शोः । पी॒यूष॑म् । प्र॒थ॒मस्य॑ । भे॒जि॒रे॒ ॥ ८ ॥

अद्रयः आदरणीयाः आशवः क्षिप्रकारिणः ते[1] एते प्रकृता ग्रावाणः दशयन्त्रासः दशयन्त्राः। तेषाम् एषां ग्राव्णां संबन्धि सत् आधानं प्रक्षेपणमभिषवकर्म हर्यतं स्पृहणीयं पर्येति परितो गच्छति। ते एते ग्रावाण एव सुतस्य अभिषुतस्य सोम्यस्य सोमस्य संबन्धिनः[2] अंशोः खण्डस्वरूपस्य अन्धसः अन्नस्य पीयूषम् अमृतं[3] प्रथमं[3] भेजिरे[4] ॥

ते सो॑मा॒दो॑ हरी॒ इन्द्र॑स्य निंसतें॒ऽशुं दु॒हन्तो॒ अध्या॑सते॒ गवि॑ ।
तेभि॑र्दु॒ग्धं प॑पि॒वान्त्सो॒म्यं मध्विन्द्रो॑ वर्धते॒ प्रथ॑ते वृषा॒यते॑ ॥ ९ ॥

ते । सो॒म॒ऽअद॑ः । हरी॒ इति॑ । इन्द्र॑स्य । नि॒ंस॒ते॒ । अं॒शुम् । दु॒हन्त॑ः । अधि॑ । आ॒स॒ते॒ । गवि॑ ।
तेभि॑ः । दु॒ग्धम् । प॒पि॒ऽवान् । सो॒म्यम् । मधु॑ । इन्द्र॑ः । व॒र्ध॒ते॒ । प्रथ॑ते । वृ॒ष॒ऽयते॑ ॥ ९ ॥

सोमादः सोमस्यात्तारः ते प्रकृता[5] एते[6] ग्रावाणः इन्द्रस्य हरी अश्वौ निंसते निक्षन्ति चुम्बन्ति। प्राप्नुवन्तीत्यर्थः। किंच गवि अभिषवणचर्मणि[7] अंशुं सोमं दुहन्तः आसते[8]। किंच इन्द्रः तेभिः तैः दुग्धं सोम्यं सोममयं मधु मधुरं पपिवान् पीतवान् वर्धते वृद्धशरीरो भवति। प्रथते विस्तीर्णशरीरश्च भवति। वृषायते वृषेवाचरति ॥

वृषा॑ वो अं॒शुर्न किला॑ रिषाथ॒नेळा॑वन्तः॒ सद॒मित्स्थ॑नाशि॑ताः ।
रैव॒त्येव॒ मह॑सा॒ चार॑वः स्थ॒न यस्य॒ ग्रावा॑णो॒ अजु॑षध्वमध्व॒रम् ॥ १० ॥

वृषा॑ । वः॒ । अं॒शुः । न । किल॑ । रि॒षा॒थ॒न॒ । इळा॑ऽवन्तः । सद॑म् । इत् । स्थ॒न॒ । आशि॑ताः ।
रैव॒त्याऽइ॑व । मह॑सा । चार॑वः । स्थ॒न॒ । यस्य॑ । ग्रावा॑णः । अजु॑षध्वम् । अ॒ध्व॒रम् ॥ १० ॥

अंशुः सोमः वः युष्माकं वृषा वर्षिता भविष्यति। यूयमपि न रिषाथन किल न रिष्यथ न[9] शीर्णा[9] भवथ किल। किंच इळावन्तः अन्नवन्त इव यूयं सदमित् सदैव आशिताः भोजिताः[10] स्थन भवथ। किंच रैवत्येव यथा रैवन्तस्तेजसा युक्ता भवन्ति तद्वत् महसा तेजसा युक्ताः चारवः कल्याणाः स्थन भवथ। हे ग्रावाणः यूयं यस्य यजमानस्य अध्वरं यज्ञम् अजुषध्वम् असेवध्वम् ॥ ॥ १० ॥

१. त१.२.७-भ४.६.८ ते उ ते। २. ग-त-मु—सोमसंबंधिनः। ३. म१.२.३.७-मु अमृतं प्रथमस्य; भ२—प्रथममसृतं। ४. त—भेजिरे भजंत इति। ५. भ—प्रकृता। ६. त-मु—'एते' नास्ति। ७. त-म१.२.४.६.८—अभिषवणकर्मणि। ८. भ७—अध्यासते। ९. ग—विशीर्णा; म—विस्तीर्णा। १०. त-मु—भोजयिताः।

तृदिला अतृदिलासो अद्रयोऽश्रमणा अशृथिता अमृत्यवः ।
अनातुरा अजराः स्थामविष्णवः सुपीवसो अतृषिता अतृष्णजः ॥ ११ ॥

तृदिलाः । अतृदिलासः । अद्रयः । अश्रमणाः । अशृथिताः । अमृत्यवः ।
अनातुराः । अजराः । स्थ । अमविष्णवः । सुऽपीवसः । अतृषिताः । अतृष्णऽजः ॥ ११ ॥

अश्रमणाः श्रमणवर्जिताः[1] अश्लथिताः अन्यैरशिथिलीकृताः अमृत्यवः अमारिताः अनातुराः अरोगाः अजराः जरारहिताः स्थ भवथ । किंच अमविष्णवः उत्क्षेपणावक्षेपणगत्युपेताः[2] हे ग्रावाणः तृदिलाः अन्येषां भेदकाः अतृदिलासः स्वयमन्येनाभिन्नाः[3] सुपीवसः[4] सुबलाः अतृषिताः तृष्णारहिताः अतृष्णजः निःस्पृहा भवथ ॥

ध्रुवा एव वः पितरो युगेयुगे क्षेमकामासः सदसो न युञ्जते ।
अजुर्यासो हरिषाचो हरिद्रव आ द्यां रवेण पृथिवीमशुश्रवुः ॥ १२ ॥

ध्रुवाः । एव । वः । पितरः । युगेऽयुगे । क्षेमऽकामासः । सदसः । न । युञ्जते ।
अजुर्यासः । हरिऽसाचः । हरिद्रवः । आ । द्याम् । रवेण । पृथिवीम् । अशुश्रवुः ॥ १२ ॥

हे ग्रावाणः युगेयुगे सर्वेषु युगेषु ध्रुवा एव निश्चला एव वः युष्माकं पितरः पितृभूताः पर्वताः क्षेमकामासः क्षेमकामाः[5] सदसः सदांसि[6] आत्मना न युञ्जते न संयोजयन्ति[6] । अजुर्यासः जरारहिताः हरिषाचः सोमस्य संभक्तारः हरिद्रवः सोमसंसर्गाद्धरितवर्णाः द्यां दिवं पृथिवीं च रवेण अभिषवशब्देन अशुश्रवुः श्रावयन्ति ॥

तदिद्वदन्त्यद्रयो विमोचने यामन्नञ्जस्पा इव घेदुपब्दिभिः ।
वपन्तो बीजमिव धान्याकृतः पृञ्चन्ति सोमं न मिनन्ति बप्सतः ॥ १३ ॥

तत् । इत् । वदन्ति । अद्रयः । विऽमोचने । यामन् । अञ्जःपाःऽइव । घ । इत् । उपब्दिऽभिः ।
वपन्तः । बीजम्ऽइव । धान्यऽकृतः । पृञ्चन्ति । सोमम् । न । मिनन्ति । बप्सतः ॥ १३ ॥

अद्रयः आदरणीया ग्रावाणः यामन् यामनि गमने अञ्जस्पाः । अञ्जसा यान्ति[7] रक्षन्तीत्यञ्जस्पाः[7] । तेषां रथानाम् इव उपब्दिभिः तदित् सर्वैवाभिषवकर्म विमोचने घेत्[8] तत्[8] सोमरसविमोचनवेलायामपि वदन्ति प्रकाशयन्ति । किं च बप्सतः सोमं भक्षयन्तो ग्रावाणः वपन्तः

१. ग-त-भ१.२.४.६.८-मु-श्रमवर्जिताः । २. ग१.२-उत्क्षेपणापक्षेपणाभ्यां युताः; ग४-त१.२.६-उत्क्षेपणापक्षेपणगत्या ता अतृष्णजः; त४.५-उत्क्षेपणापक्षेपणगत्यासुपीवसः; त७.८-भ१.२.४.८-उत्क्षेपणावक्षेपणगत्या ताः ( भ४-'ता' नास्ति ) अतृष्णजः ( भ८-अतृजः ); भ७-उत्क्षेपणवक्षेपणगत्यो-पेताः । ३. भ१.२.७-स्वयमन्योन्याभिन्नाः । ४. ग-त-भ१.२.४.६.८-' सुपीवसः ' नास्ति । ५. त-भ-क्षेमकामाः सदसो न कामासः । ६. ग४-भ५-सदमिथो न युञ्जते अजुर्यासो हरिषाचो हरिद्रवः आ द्यां रवेण सदांसि आत्मना न युञ्जते न संयोजयति; त-भ१.२ ४.६.७.८-'सदांस्यात्मना...संयोजयन्ति' नास्ति । ७. भ-याति गच्छती", त-भ१.२-याति गच्छती"; भ८-याति गच्छती" । ८. ग-त-अप्येतत्; भ-प्येतत् ।

शम्याकृतः कृषीवलाः बीजमिव यथा पृञ्चन्ति सहस् सोमं पृञ्चन्ति । संपर्चयन्तीत्यर्थः । न एवं मिनन्ति । न हिंसन्तीत्यर्थः ॥

सुते अध्वरे अधि वाचमक्रता क्रीळयो न मातरं तुदन्तः ।
वि षू मुञ्चा सुषुवुषो मनीषां वि वर्तन्तामद्रयश्चायमानाः ॥ १४ ॥

सुते । अध्वरे । अधि । वाचम् । अक्रत । आ । क्रीळयः । न । मातरम् । तुदन्तः ।
वि । सु । मुञ्च । सुसुऽवुषः । मनीषाम् । वि । वर्तन्ताम् । अद्रयः । चायमानाः ॥ १४ ॥

चायमानाः पूज्यमानाः अद्रयः आदरणीया ग्रावाणः अध्वरेऽधि यज्ञे सुते सोमेऽभिषुते मातरं तुदन्तः हस्तेन ताडयन्तः आ क्रीळयो न आक्रीडकाः कुमाराः शब्दं यथा कुर्वन्ति तथा वाचं शब्दम् अक्रत कुर्वन्ति । सुषुवुषः सोममभिषुतवतः ग्राव्णः मनीषां स्तुतिं वि मुञ्च विशेषेण[1] मुञ्च[1] । किंच अद्रयः वि वर्तन्ताम् अभिषवस्थानाद् विमुच्यन्तु ॥ ॥ ३१ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्येऽष्टमाष्टके चतुर्थोऽध्यायः समाप्तः ॥

---

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
अष्टकेऽष्टमकेऽध्यायश्चतुर्थः संप्रदर्शितः ।
श्रीमता सायणार्येण पञ्चमोऽथ प्रदर्श्यते ॥

तत्र 'हये जाये' इत्यष्टादशर्चं पञ्चमं सूक्तं त्रैष्टुभम् । अत्रानुक्रमणिका—'हये ऊनोर्वशीमैळः पुरूरवाः पूर्वोपितात्कामात्[2] पुनरलाभायतीमनुमैच्छत्सा ममनिच्छन्ती प्रत्याचष्टे इव इषुर्नो कदा सुदेवोऽन्तरिक्षप्रा सचेति तिस्रश्चैकान्तर्या जिता उर्वश्याः' इति । 'हये जाये' 'इषुर्न श्रिये' 'या सुजूर्णिः' 'कदा सूनुः' 'सुदेवो अद्य' 'अन्तरिक्षप्रां' 'सचा यदासु जहतीषु' इत्याद्यास्तिस्रश्चेति नवर्च ऐळस्य पुरूरवसो वाक्यानि । अतस्तासां स ऋषिः । शिष्टा नवोर्वश्या वाक्यानि । अतस्तासु सर्षिका । उभयोर्वाक्येषु योऽर्थः प्रतिपाद्यते सा देवता । गतो विनियोगः ॥

ऐळोर्वशीतिहासोऽत्र वैशद्याय[3] प्रकथ्यते । मित्रश्च वरुणश्चोभौ दीक्षितौ प्रेक्ष्य चोर्वशीम् ॥१॥
रेतः सिषिचतुः सद्यस्तत्कुम्भे न्यपतदुत्तदा । तां शपयन्तौ मनुजलोक्या भूम्यां भवेति तौ ॥२॥
अथान्तर इळो राजा मनोः पुत्रैश्च संयुतः । मृगयां संचरन् तस्थौ देवीक्रीडं विवेश ह ॥३॥
यत्र[4] देवं गिरिसुता सर्वैर्भावैरतोषयत् । अत्राविशत्पुमान्स्त्री स्यादित्युक्त्या तत्र चाविशत् ॥४॥
स्त्री भूत्वा ईडितः सोऽयाचच्छरणं शिवमञ्जसा । इळां प्रसादयतां राजन्नियुक्तः शंभुना नृपः ॥५॥
जगाम शरणं देवीमात्मनः पुंस्त्वसिद्धये । अकरोत्सा नृपं देवी षण्मासात्प्राक्पुंस्त्ववत्कम् ॥६॥
ततः कदाचित्स्त्रीकाले नृपः सौन्दर्यमोहितः । अप्सरोभ्यो विशिष्टां तामिळां संगतवान् बुधः ॥७॥

---

१. म—'विशेषेण मुञ्च' नास्ति । २. त-मं१.२.४.६.८—पूर्वोपितान् कामान् ; अनु—पूर्वोपिता कामात् । ३. त१.२.३.६.७—वैशद्यार्थं । ४. त—तत्र ।

तदेलायां सोमपुत्राज्जातो राजा पुरूरवाः । तमुर्वशी तु चकमे प्रतिष्ठानपुरे स्थितम् ॥८॥
तस्याहमत्र नग्नं त्वां दृष्ट्वा यामि यथागतम्[1] । सुता उरणकौ त्वं[2] च[3] समीपे कुरु मे सुतम् ॥९॥
इति सा समयं कृत्वा रमयामास तं नृपम् । चतुरब्दे गते रात्रौ देवैरुरणकद्वयम् ॥१०॥
हृतं तस्य ध्वनिं श्रुत्वा नग्न एव स भूपतिः । उत्थाय जिघृक्षुस्तावागच्छेत्येवं जल्पकोऽभवत्[3] ॥११॥
विद्युता दर्शितोऽस्यै[4] स[4] नग्न एव पुरूरवाः । अथ सा दृष्टनग्नं[5] तमुर्वशी तु दिवं ययौ[6] ॥१२॥
तत उन्मत्तवद्राजा दिदृक्षुस्तामितस्ततः । कुर्वन्नन्वेषणं तीरे सरसो मानसस्य ताम् ॥१३॥
विहरन्तीमप्सरोभिः सहापश्यत्पुरूरवाः । पुनः स चकमे भोक्तुमुर्वशीं च पुरूरवाः ॥१४॥
सार्धं साप्यनयदुक्ता च प्रत्याचष्टे व्रजेति तम् । इत्युर्वश्यैळसंवादमिममेषोऽभ्यसूचयत्[7] ॥१५॥ इति॥

अत्र वाजसनेयकम्—'उर्वशी हाप्सराः पुरूरवसमैडं चकमे तं ह विन्दमानोवाच त्रिः स्म माह्नो[8] वैतसेन दण्डेन हतादकामां स्म मा निपद्यासै मो स्म त्वा नग्नं दर्शमेष वै न स्त्रीणामुपचार इति । स हास्मिञ्ज्योगुवासापि हास्मादगर्भिण्यास तावज्ज्योग्घास्मिन्नुवास ततो ह गन्धर्वाः समूदिरे ज्योग्वा इयमुर्वशी मनुष्येष्ववात्सीदुपजानीत यथेयं पुनरागच्छेदिति तस्यै हाविरुरणा शयन उपबद्धास ततो ह गन्धर्वा अन्यतरमुरणं प्रमेथुः । सा होवाचावीर इव बत मेऽजन इव पुत्रं हरन्तीति द्वितीयं प्रमेथुः सा ह तथैवोवाच । अथ हायमीक्षांचक्रे कथं नु तदवीरं कथमजनं[9] स्याद्यत्राहं स्यामिति स नग्न एवानूत्पपात चिरं तन्मेने यद्वासः पर्यधास्यत ततो ह गन्धर्वा विद्युतं जनयांचक्रुस्तं यथा दिवैवं नग्नं ददर्श ततो हैवेयं तिरोबभूव पुनरैमीत्येत्तिरोभूतां स आध्या जल्पन्कुरुक्षेत्रं समया चचारान्यतःप्लक्षेति बिसवती तस्यै हाध्यन्तेन वव्राज तद्ध ता अप्सरस आतयो भूत्वा परिपुप्लुविरे । तं हेयं ज्ञात्वोवाच अयं वै स मनुष्यो यस्मिन्नहमवात्समिति ता होचुस्तस्मै व आविरसामेति तथेति तस्मै हाविरासुः । तां हायं ज्ञात्वाभिपरोवाद हये जाये मनसा' ( श. ब्रा. ११. ५. १ ) इत्यादि ॥

**हये जाये मनसा तिष्ठ घोरे वचांसि मिश्रा कृणवावहै नु ।**
**न नौ मन्त्रा अनुदितास एते मयस्करन्परतरे चनाहन् ॥ १ ॥**

हये । जाये । मनसा । तिष्ठ । घोरे । वचांसि । मिश्रा । कृणवावहै । नु ।
न । नौ । मन्त्राः । अनुदितासः । एते । मयः । करन् । परऽतरे । चन । अहन् ॥ १ ॥

पुरूरवसो[10] वाक्यम् । जायां पश्यन् वदति । हे हये हे घोरे । अस्माकं दुःखजनकत्वात् । घोरकारिणि जाये मनसा अस्मद्विषयानुरागयुक्तेन मनसा युक्ता सती तिष्ठ क्षणमात्रं संनिधावेव निवस । हये इत्यस्य निपातस्याकच्छान्दसः । किमर्थं संस्थानमिति तत्राह । वचांसि वाक्यानि मिश्राणि[11] उक्तिप्रत्युक्तिरूपाणि नु अद्य क्षिप्रं वा कृणवावहै करवावहै । 'कृवि हिंसाकरणयोः' । 'धिन्विकृण्व्योरच' इत्युप्रत्ययः । किमर्थं वचसः करणमिति[12] चेदुच्यते । नौ आवयोः मन्त्राः रहस्यार्थाः एते विवक्षिताः अनुदितासः अव्याह्रियमाणाः[13] परस्परमनभाष्यमाणा गुप्तिकाः सन्तः परतरे चनाहन् । चनेति निपातसमुदायोऽप्यर्थे । अनेकेषु दिवसेषु परमेऽप्यहनि मयः । सुखनामैतत् । सुखं न करन् कुर्वन्ति[14] । अतः कृणवावहा इति ॥

१. त१.३.४.५.७—तथागतो, त२.६.८-अ१.२.८—तथागता । २. त१.२.३.६—त्वस्य । ३. त१.२.३.६.७—जल्पको नृपः; त४.४—जल्पको नृपा । ४. अ२—दर्शिता राज्ञो । ५. अ५—नष्टसमया । ६. अ२—गता । ७. अ५—°संवादमिमिहासोप्य° । ८. त१-अ२.८—माह्नो अथयो । ९. अ५—कथं नु तदजनं । १०. त-मु—हये जाये पुरूरवसो । ११. ग—मिश्रा मिश्राणि । १२. त१.६.७.८-अ—कारणमिति । १३. त—अव्याक्रियमाणाः । १४. ग-त४—न कुर्वन्ति ।

किमे॒ता वा॒चा कृ॑णवा॒ तवा॒हं प्राक्र॑मिषमु॒षसा॑मग्रि॒येव॑ ।
पुरू॑रवः॒ पुन॒रस्तं॒ परे॑हि दुरा॒पना॒ वात॑इ॒वाह॑मस्मि ॥ २ ॥

किम् । ए॒ता । वा॒चा । कृ॒णव॒ । तव॑ । अ॒हम् । प्र । अ॒क्र॒मि॒ष॒म् । उ॒षसा॑म् । अ॒ग्रि॒याऽइ॑व ।
पुरू॑रवः । पुन॑ः । अस्त॑म् । परा॑ । इ॒हि । दुः॒ऽआ॒प॒ना । वात॑ःऽइव । अ॒हम् । अ॒स्मि॒ ॥ २ ॥

अनया तमुर्वशी प्रत्युवाच । एता एतया वाचा केवलया पुनःसंभोगरहितया किं कृणव किं करवाव । अहं तिष्ठन्ती त्वत्सकाशात् प्राक्रमिषम् अतिक्रान्तवत्यस्मि । अतिक्रमे दृष्टान्तः । उषसामग्रियेव । बह्वीनामुषसां मध्येऽग्र्याग्रे भवा पूर्वोषाः प्राक्रमीद्यथा तथाहमपीति । यस्मादेवं तस्माद्धे पुरूरवः त्वं पुनः अस्मत्सकाशात् अस्तं गृहं परेहि परागच्छ । मा मय्यभिलापं कार्षीः । स्वस्या दुर्ग्रहत्वमाह । अहं वातइव वायुरिव दुरापना दुष्प्रापा दुरापा वा अस्मि । 'दुरापा वा अहं त्वयैतर्ह्यस्मि पुनर्गृहानिहीति हैवैनं तदुवाच ' ( श. ब्रा. ११. ५. १. ७ ) इति वाजसनेयकम् ॥

इषु॒र्न श्रि॒य इ॑षु॒धेर॑स॒ना गो॒षाः श॑त॒सा न रंहिः॑ ।
अ॒वीरे॒ क्रतौ॒ वि द॑वि॒द्युत॒न्नोरा॒ न मा॒युं चि॑तयन्त॒ धुन॑यः ॥ ३ ॥

इषु॑ः । न । श्रि॒ये । इ॒षु॒ऽधेः । अ॒सना॑ । गो॒ऽसाः । श॒त॒ऽसाः । न । रंहि॑ः ।
अ॒वीरे॑ । क्रतौ॑ । वि । द॒वि॒द्यु॒त॒त् । न । उरा॑ । न । मा॒युम् । चि॒त॒य॒न्त॒ । धुन॑यः ॥ ३ ॥

अनया पुरूरवाः स्वस्य विरहजनितं वैक्लव्यं तां प्रति ब्रूते । इषुधेः । इषवो धीयन्तेऽस्मिन्निति इषुधिर्निषङ्गः । ततः सकाशात् इषुः असना असनाय प्रक्षेप्तुं[1] न भवति श्रिये विजयार्थम् । त्वद्विरहव्याकुलस्य युद्धाय चित्तानवधानात् । तथा रंहिः वेगवानहं शत्रुसकाशात् गोषाः तेषां शत्रूणां गवां संभक्ता न अभवम् । तथा शतसाः धनानामपरिमितानां शत्रुधनानां संभक्ता नाभवम् । किंच अवीरे वीरवर्जिते क्रतौ[2] राजकर्मणि सति न वि दविद्युतत् न विद्योतते मत्सामर्थ्यम् । किंच धुनयः कम्पयितारोऽस्मदीया भटाः उरा उरौ । 'सुपां सुलुक्' ' इति सप्तम्या डादेशः । विस्तीर्णे संग्रामे मायुम् । मीयते प्रक्षिप्यत इति मायुः शब्दः । 'कृवापाजि' ' इत्यादिनोण् । सिंहनादं न चितयन्त न बुध्यन्ते । 'चिती संज्ञाने ' । अस्माण्णिचि संज्ञापूर्वकस्य विधेरनित्यत्वाल्लघूपधगुणाभावः । छान्दसो लङ्[3] ॥

सा वसु॒ दध॑ती॒ श्वशु॑राय॒ वय॒ उषो॒ यदि॒ वष्ट्यन्ति॑गृहात् ।
अस्तं॑ ननक्षे॒ यस्मि॑ञ्चा॒कन्दिवा॒ नक्तं॑ श्नथि॒ता वै॑त॒सेन॑ ॥ ४ ॥

सा । वसु॑ । दध॑ती । श्वशु॑राय । वयः॑ । उषः॑ । यदि॑ । वष्टि॑ । अन्ति॑ऽगृहात् ।
अस्त॑म् । न॒न॒क्षे॒ । यस्मि॑न् । चा॒कन् । दिवा॑ । नक्त॑म् । श्न॒थि॒ता । वै॒त॒सेन॑ ॥ ४ ॥

इयमुत्तरा[4] चोर्वशीवाक्यम्[5] । आद्येन[6] पुरात्मना कृतमुपसे[6] निवेदयति । हे उषः सा इयमुर्वशी वसु वासकं वयः अन्नं श्वशुराय भर्तुः पुरूरवसः पित्रे दधती प्रयच्छन्ती तत्र गृहे

१. ग-त३.४.५-म- ' प्रक्षेप्तुं ' नास्ति; त१.२.६.७.८-प्रक्षिप्तुं । २. म- ' क्रतौ ' नास्ति । ३. त-लक्; म-लुङ् । ४. त-मु-इयमुत्तरा । ५. त-मु-चोर्वशीवाक्ये । ६. ग-अनेन परमात्मना कृतमुपसे; त-आद्येन पुरात्मना कृतमुषसे, म७-आद्येन पुरातनकृतमुषसे ।

स्थिता अपि पति वहि कामयते तदा अन्तिगृहात् । स्वकर्मभोगगृहान्तिके यत् श्वशुरस्य भोजनगृहं तदन्तिगृहम् । तस्माद्गृहादुर्वशी अस्तं पतिगृहं नक्षते व्याप्नोति । यस्मिन्[1] गृहे चाकन् कामयत उर्वशी । सा[2] चोर्वशी[2] दिवा नक्तम् अहनि रात्रौ च वैतसेन । 'शेपो वैतस इति पुंस्प्रजननस्य' ( निरु. ३. २१ ) इति निरुक्तम् । पुंस्प्रजननेन श्नथिता ताडिता च[3] भवति । एवमुर्वश्यात्मानं परोक्षेण निर्दिदेश ॥

## त्रिः स्म माह्नः श्नथयो वैतसेनोत स्म मेऽव्यत्यै पृणासि ।
## पुरूरवोऽनु ते केतमायं राजा मे वीर तन्व१स्तदासीः ॥ ५ ॥

त्रिः । स्म । मा । अह्नः । श्नथयः । वैतसेन । उत । स्म । मे । अव्यत्यै । पृणासि ।
पुरूरवः । अनु । ते । केतम् । आयम् । राजा । मे । वीर । तन्वः । तत् । आसीः ॥ ५ ॥

अनेन पुरूरवसमेव संबोध्योक्तवती । हे पुरूरवः त्वं मा माम् अह्नः अहनि वैतसेन दण्डेन पुंस्प्रजननेन त्रिः त्रिवारम् । 'द्वित्रिचतुर्भ्यः सुच्' ( पा. सू. ५.४.१८ ) । श्नथयः स्म । अश्नथयः अताडयः । 'कृत्वोऽर्थप्रयोगे॰' ( पा. सू. २. ३. ६४ ) इति कालवाचिनोऽहःशब्दादधिकरणे षष्ठी । उत अपि च । स्म इति पूरणः । अव्यत्यै । सपत्नीभिः सह पर्यायेण पतिमागच्छति सा व्यती । न तादृश्यव्यती । तस्यै मे मह्यं पृणासि पूरयसि । एवं बुद्ध्वा हे पुरूरवः ते तव केतं गृहम् अनु आयम् अन्वगमं पूर्वम् । हे वीर राजा त्वं च मे मम तन्वः शरीरस्य तत् तदा आसीः अभवः । सुखयितेति शेषः । परमप्येतेन[4] सम्भवः[4] किमिति कामतरो[5] भवसीत्युवाच ॥ ४१ ॥

## या सुजूर्णिः श्रेणिः सुम्नआपिर्ह्रदेचक्षुर्न ग्रन्थिनी चरण्युः ।
## ता अञ्जयोऽरुणयो न सस्रुः श्रिये गावो न धेनवोऽनवन्त ॥ ६ ॥

या । सुऽजूर्णिः । श्रेणिः । सुम्नऽआपिः । ह्रदेऽचक्षुः । न । ग्रन्थिनी । चरण्युः ।
ताः । अञ्जयः । अरुणयः । न । सस्रुः । श्रिये । गावः । न । धेनवः । अनवन्त ॥ ६ ॥

पुरूरवसो वाक्यम् । या सुजूर्णिः सुजवा पुनरागमिष्यामीति तथा या श्रेणिः या सुम्नआपिः या ह्रदेचक्षुः । नकारः समुच्चये । ताभिश्चान्याभिरालिभूताभिरप्सरोभिः सहिता ग्रन्थिनी ग्रन्थनवती मंदमंगती चरण्युः चरणशीलोर्वश्यागमत् । यद्वा । ग्रन्थिनीत्येतदप्सरोनामधेयम् । या सुजूर्णिः सुजवोर्वशी या ताभिः सह जगाम[6] । ताः अप्सरसः अञ्जयः आभरणोपेताः अरुणयः अरुणवर्णाः न सस्रुः पूर्ववन्न गच्छन्ति । श्रिये श्रवणाय धेनवः नवप्रसूताः गावो न गाव इव । आश्चर्यार्थे[7] यथा गावः अनवन्त शब्दायन्ते तथा न शब्दयन्तीति व्यतिरेके दृष्टान्तः ॥

## समस्मिञ्जायमान आसत ग्ना उतेमवर्धन्नद्य१ः स्वगूर्ताः ।
## महे यत्त्वा पुरूरवो रणायावर्धयन्दस्युहत्याय देवाः ॥ ७ ॥

सम् । अस्मिन् । जायमाने । आसत । ग्नाः । उत । ईम् । अवर्धन् । नद्यः । स्वऽगूर्ताः ।
महे । यत् । त्वा । पुरूरवः । रणाय । अवर्धयन् । दस्युऽहत्याय । देवाः ॥ ७ ॥

१. त-मु—तस्मिन् । २. त१.२.३.६.७—पुरूरवसो वाचं, त४.५—पुरूरवसा चोर्वशी । ३ ग-त-'च' नास्ति । ४. ग-अ—परमप्युपरतव्ये । ५. भ१—कामतरो; भ४—कामवशो; भ७—कामुकतरो । ६. ग—आजगाम । ७. ग-अ-मु—आशिरार्थे ।

अनयैताभिः सह संसर्गस्त्वयानुभूत इत्युर्वशी वदति । अस्मिन् पुरूरवसि जायमाने सति[1] ग्नाः अप्सरसो देववेश्या अपि सम् आसत संगता अभवन् । अथवा जायमाने यज्ञार्थं प्रवर्धमाने[2] सति ग्ना देवपत्न्योऽपि समासत समभवन् । उत अपि च ईम् एनं पुरूरवसं स्वगूर्तः स्वयं-गामिन्यः नद्यः तासामाश्रयभूता अवर्धयन् । किंच हे पुरूरवः यत् यस्मात् त्वा त्वां महे महते रणाय रमणीयाय संग्रामाय दस्युहत्याय दस्युहननाय[3] देवाः त्वाम् अवर्धयन् ॥

सचा यदासु जहतीष्वत्कममानुषीषु मानुषो निषेवे ।
अप स्म मत्तरसन्ती न भुज्युस्ता अत्रसन्रथस्पृशो नाश्वाः ॥ ८ ॥

सचा । यत् । आसु । जहतीषु । अत्कम् । अमानुषीषु । मानुषः । निऽसेवे ।
अप । स्म । मत् । तरसन्ती । न । भुज्युः । ताः । अत्रसन् । रथऽस्पृशः । न । अश्वाः ॥ ८ ॥

इतःप्रभृति त्रीण्यैळवाक्यानि । तत्रादितो द्वाभ्यामुर्वशीमन्याश्च सह स्तौति । यत् यदा सचा सहायभूतः पुरूरवाः अत्कं स्वकीयं रूपम् । अत्क इति रूपनाम । जहतीषु परित्यजन्तीषु अमानुषीषु देवताभूतास्वप्सरःसु मानुषः सन् निषेवे अभिमुखं गच्छति तदानीं ताः अप्सरसः मत् मत्तः अप अपसृत्य अत्रसन् । त्रसतिर्गतिकर्मा । गच्छन्ति । पलायने दृष्टान्तः । तरसन्ती भुज्युः[4] न[5] । तरसचास मृगः । तस्य स्त्री भुज्युर्भोगसाधनभूता स्त्री मृगी । सा यथा व्याधाद्भीता पलायते । किंच रथस्पृशो नाश्वाः रथे नियुक्ता अश्वा इव । यथा[5] ते[5] पलायन्ते तद्वत्पलायन्त इति । उर्वश्यानेकाभिरस्माभिः सह भोगमनुभुक्तवानसीत्युक्तः प्रत्याचष्टे ॥

यदासु मर्तो अमृतासु निस्पृक्सं क्षोणीभिः क्रतुभिर्न पृङ्क्ते ।
ता आतयो न तन्वः शुम्भत स्वा अश्वासो न क्रीळयो दन्दशानाः ॥ ९ ॥

यत् । आसु । मर्तः । अमृतासु । निऽस्पृक् । सम् । क्षोणीभिः । क्रतुऽभिः । न । पृङ्क्ते ।
ताः । आतयः । न । तन्वः । शुम्भत । स्वाः । अश्वासः । न । क्रीळयः । दन्दशानाः ॥ ९ ॥

यत् यदा आसु अमृतासु अप्सरःसु मर्तः मनुष्यः पुरूरवाः निस्पृक् निःशेषेण स्पृशन् क्षोणीभिः वाग्भिः क्रतुभिर्न कर्मभिश्च सं पृङ्क्ते संपर्कं करोति । नकारः समुच्चयार्थः । ताः अप्सरसः आतयः आतिभूतास्तदानीं स्वाः तन्वः आत्मीयानि रूपाणि न शुम्भत न प्रकाश-यन्ति । अश्वासो न अश्वा इव क्रीळयः संक्रीडमानाः दन्दशानाः दन्दशूका जिह्वाभिरात्मीयाः सृक्का भक्षयन्तः । ते यथा चापल्येन धावन्तः स्वरूपं न प्रयच्छन्ति रथिकाय तद्वदिति दुःखादूचे ॥

विद्युन्न या पतन्ती दविद्योद्भरन्ती मे अप्या काम्यानि ।
जनिष्टो अपो नर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः ॥ १० ॥

विऽद्युत् । न । या । पतन्ती । दविद्योत् । भरन्ती । मे । अप्या । काम्यानि ।
जनिष्टो इति । अपः । नर्यः । सुऽजातः । प्र । उर्वशी । तिरत । दीर्घम् । आयुः ॥ १० ॥

---

१. ग-त१.२.६.७.८-भ४.५.६.८-वर्धमाने, त३ मु-'सति' नास्ति; भ२-सति वर्धमाने । २. त१.२.३.६.७.८-भ२.६.८-प्रवृद्धमाने; त४.५-प्रवर्तमाने । ३. ग-त-दस्युहननाय च । ४. त३.७-न भुज्युः । ५. ग-त-ते यथा ।

अनयोर्वशी स्तौति । या उर्वशी विद्युन्न विद्युदिव पतन्ती गच्छन्ती दविद्योत् द्योतते । किं कुर्वती । अप्या । अप इत्यन्तरिक्षनाम । तत्संबन्धीनि व्याप्तानि[1] वा[1] काम्यानि अस्मदभिमतान्युदकानि वा मे मह्यं भरन्ती संपादयन्ती । यद्वा आगतायास्तस्याः सकाशात्[2] अपः व्याप्तः कर्मसु कर्मवान्[3] वा नर्यः[3] नरेभ्यो हितः सुजातः सुजननः पुत्रः जनिष्टो अजनिष्ट उत्पद्यते तदानीं मम[4] उर्वशी[4] दीर्घमायुः प्र तिरत प्रवर्धयति । ' प्रजामनु प्र जायसे तदु ते मर्त्यामृतम् ' ( तै. ब्रा. १. ५. ५. ६ ) इति हि मन्त्रः ॥ ॥ २ ॥

जज्ञिष इत्था गोपीथ्याय हि दधाथ तत्पुरूरवो म ओजः ।
अशासं त्वा विदुषी सस्मिन्नहन्न म आशृणोः किमभुग्वदासि ॥ ११ ॥

जज्ञिषे । इत्था । गोऽपीथ्याय । हि । दधाथ । तत् । पुरूरवः । मे । ओजः ।
अशासम् । त्वा । विदुषी । सस्मिन् । अहन् ।
न । मे । आ । अशृणोः । किम् । अभुक् । वदासि ॥ ११ ॥

इत्था इत्थं गोपीथ्याय । गौः पृथिवी । पीथं पालनम् । स्वार्थिकस्तद्धितः । भूमेः रक्षणाय जज्ञिषे हि जातोऽसि खलु पुत्ररूपेण । ' आत्मा वै पुत्रनामा ' इति श्रुतेः । पुनस्तदेवाह । हे पुरूरवः मे ममोदरे मयि ओजः अपत्योत्पादनसामर्थ्यं दधाथ[5] मयि निहितवानसि । तत् तथास्तु । अथापि स्थातव्यमिति चेत् तत्राह । अहं विदुषी भाविकार्यं जानती[6] सस्मिन्नहन्[7] सर्वस्मिन्नहनि त्वया[8] कर्तव्यं त्वा त्वाम् अशासं शिक्षितवत्यस्मि । त्वं मे मम वचनं न आशृणोः न शृणोषि । किं त्वम् अभुक् अभोक्तापालयिता प्रतिज्ञातार्थमपालयन् वदासि[9] हये जाय इत्यादिकमपं प्रलापम् । संवत्सरान्ते आगमनाय दिवसे[10] त्रिवारं गमनस्य एकद्वयमस्माकं पुत्रत्वेन परिकल्प्य अपत्योत्पादनपर्यन्तं[11] वसामि नग्नं त्वा यदाद्राक्षं तदा गच्छामीत्येवरूपो मिथःसमयः ' उर्वशी हाप्सराः पुरूरवसमैळं चकमे तं ह विन्दमानोवाच त्रिः स्म माह्नो वैतसेन दण्डेन ' ( श. ब्रा. ११. ५. १ ) इत्यादि वाजसनेयकमुदाहृतम् ॥

कदा सूनुः पितरं जात इच्छाच्चक्रन्नाश्रु वर्तयद्विजानन् ।
को दंपती समनसा वि यूयोदध यदग्निः श्वशुरेषु दीदयत् ॥ १२ ॥

कदा । सूनुः । पितरम् । जातः । इच्छात् । चक्रन् । न । अश्रु । वर्तयत् । विऽजानन् ।
कः । दंपती इति दम्ऽपती । सऽमनसा । वि । यूयोत् ।
अध । यत् । अग्निः । श्वशुरेषु । दीदयत् ॥ १२ ॥

१. त-आप्यानि; मु-अप्यानि । २. ग४-म५ सकाशाद्यदि, त१ २.३.६ ८-म१.४-सकाशाद्यद्वि; त४-सकाशान्दादि; त७-सकाशाद्यद्वि; म२.६.७-सकाशाद्यदि । ३. ग१.२-कृतवान्वा नर्यः; त१.२.३.६-नवान्नर्यो, न४-कर्मवान्वा नया, ग८-नवा नर्यो, न७-नव त्वो नर्या; त८ म१.२.४ ६.८-तवान्वा नर्यो; म७-भवतन्वा नर्या । ४ त-मार्वशी । ५. ग-त-मु-दधाथ निदधाथ । ६. ग-त-म-जानती त्वं । ७. ग४-त्वेनास्मिन्नहन्, त२.६-त्वस्मिन्नहन्; त३.४.५-त्वमस्मिन्नहन् । ८. त-मु-त्वया वत् । ९. ग-त४.५-म१.५-वदासि वदसि; ग८-म२.८-वदसि । १०. ग-त-म-आहनि दिवसे । ११. त१.२.३.६.७-पुत्रोत्पादनपर्यंते ।

इदं पुरूरवसो वाक्यम्। कदा कस्मिन् काले सूनुः तवोदरजातः सन् पितरं माम् इच्छात् इच्छेत्। 'इषु इच्छायाम्'। लेटि शपि 'इषुगमियमां छः' इति छादेशः। 'लेटोऽडाटौ' इत्याडागमः। कदा वा विजानन् पितरं मामधिगच्छन् चक्रन् क्रन्दमानः अश्रु वर्तयत्[1]। नेति चार्थे। किंच कः किंविधः सन् सूनुः समनसा समनसौ समनस्कौ[2] दंपती जायापती त्वां मां च वि यूयोत् विश्लेषयेत्। 'यु मिश्रणामिश्रणयोः'। यौतेश्छान्दसः शपः श्लुः। तुजादित्वादभ्यासस्य दीर्घः। अध अधुना यत् यदा अग्निः तव हृदयस्थिततेजोरूपो गर्भः श्वशुरेषु दीदयत् दीप्यते। दीदयतिर्दीप्तिकर्मेति[3] नैरुक्तो धातुः॥

प्रति ब्रवाणि वर्तयते अश्रु चक्रन्न क्रन्ददाध्ये शिवायै।
प्र तत्ते हिनवा यत्ते अस्मे परेह्यस्तं नहि मूर मापः॥ १३॥

प्रति। ब्रवाणि। वर्तयते। अश्रु। चक्रन्। न। क्रन्दत्। आऽध्ये। शिवायै।
प्र। तत्। ते। हिनव। यत्। ते। अस्मे इति।
परा। इहि। अस्तम्। नहि। मूर। मा। आपः॥ १३॥

इदमुर्वशीवाक्यम्। हे पुरूरवः त्वां प्रति ब्रवाणि प्रतिवच्मि। त्वदपत्यम्[4] अश्रु बाष्पं वर्तयते वर्तयिष्यति। आध्ये आध्याते वस्तुनि शिवायै शिवे कल्याणे समुपस्थिते सति चक्रन् रुदन्नश्रूणि विमुञ्चन् न क्रन्दत्। नकारश्चार्थे। रोदिष्यति चेत्यर्थः। तत् त्वदपत्यं ते तुभ्यं हिनव प्रहिणोमि यत् अपत्यं ते तव संबन्धि अस्मे अस्मासु निहितम्। त्वं परेहि अस्तम्। अस्तमिति गृहनाम। स्वगृहं प्रतिगच्छ। हे मूर मूढ मा मां नहि आपः न प्राप्नोषि। हिनवेत्यत्र हिनोतेः 'छन्दसि लुङ्लङ्लिटः' इति भविष्यदर्थे लङि मिपोऽमादेशः। गुणः। अन्त्यलोपश्छान्दसः। बहुलवचनादडभावः। आपः। 'आप्लृ व्याप्तौ'। लिटि 'तिङां तिङो भवन्ति' इति थलो णल्॥

सुदेवो अद्य प्रपतेदनावृत्परावतं परमां गन्तवा उ।
अधा शयीत निर्ऋतेरुपस्थेऽधैनं वृका रभसासो अद्युः॥ १४॥

सुऽदेवः। अद्य। प्रऽपतेत्। अनावृत्। पराऽवतम्। परमाम्। गन्तवै। ऊँ इति।
अध। शयीत। निःऽऋते। उपऽस्थे। अध। एनम्। वृकाः। रभसासः। अद्युः॥ १४॥

अथ परिदूनः पुरूरवा उवाच। सुदेवः त्वया सह सुक्रीडः पतिः अद्य प्रपतेत्। अत्रैव प्रपततु। अथवा अनावृत् अनावृत्तः सन् परमां परावतं दूरादपि दूरदेशं गन्तवै गन्तुं महाप्रस्थानगमनं कुर्वन्। अध अथवा यत्रकुत्रापि गन्तुमसमर्थः निर्ऋतेः पृथिव्याः उपस्थे शयीत शयनं कुर्यात्। यद्वा। निर्ऋतिः पापदेवता। तस्या उपस्थे उत्संगे संनिधौ म्रियतामित्यर्थः। अध अथवा एनं वृकाः आरण्याः श्वानः रभसासः[5] वेगवन्तः अद्युः भक्षयन्तु। अत्र वाजसनेयकं—'सुदेवोऽद्योद्बध्नीत प्र वा पतेत्तदेनं वृका वा श्वानो वाद्युरिति हैव तदुवाच' (श. ब्रा. ११. ५. १. ८) इति॥

१. ग-ग७—वर्तयत् वर्तयेत्; त१ २.६.८-म—वर्तयत् वर्तयेत। २. ग-त-भ-मु—'समनस्कौ' नास्ति। ३. त४—दीधीङ् दीप्तिदेवनयोः। अस्माच्छान्दसाल्लङि यदि रूपं दीदेतिर्दीप्तिकर्मेति। ४. ग.त१.२.३.६.७.८-म—त्वदपत्यं; त४.५—यदपत्यं। ५. त—रभसासो रभसाः।

पुरू॑रवो॒ मा मृ॑था॒ मा प्र प॑प्तो॒ मा त्वा॒ वृका॑सो॒ अशि॑वास उ क्षन् ।
न वै स्त्रैणा॑नि स॒ख्यानि॑ सन्ति सालावृ॒का॑णां॒ हृद॑यान्ये॒ता ॥ १५ ॥

पुरू॑रवः । मा । मृ॒थाः॒ । मा । प्र । प॒प्तः॒ । मा । त्वा॒ । वृका॑सः । अशि॑वासः । ऊँ इति॑ । क्ष॒न् ।
न । वै । स्त्रैणा॑नि । स॒ख्यानि॑ । स॒न्ति॒ । सा॒ला॒वृ॒काणा॑म् । हृद॑यानि । ए॒ता ॥ १५ ॥

तमित्थं प्रत्युवाच । हे पुरूरवः त्वं मा मृथाः मृतिं मा प्राप्नुहि । म्रियतेर्लुङि थासि ‘ह्रस्वादङ्गात्’ इति सिचो लोपः । तथा मा प्र पप्तः अत्रैव पतनं मा कार्षीः । पतेर्लुङि लृदित्वात् ‘पुषादि॰’ इत्यादिना च्लेरङ् । ‘पतः पुम्’ इति पुम् । तथा त्वा त्वाम् अशिवासः अशुभाः वृकासः वृकाः मा उ क्षन् । उ इत्येवकारार्थे । अक्षन् । माभ्यवहारयन्तु । किमित्यैवमसदुपक्रममिदं करोषि । मा कार्षीरित्यर्थः । अदेर्लुङि ‘लुङ्सनोर्घस्लृ’ (पा. सू. २. ४. ३७) इति घस्लादेशः । ‘मन्त्रे घस॰’ इति च्लेर्लुक् । ‘गमहन॰’ इत्यादिनोपधालोपः । ‘शासिवसि॰’ इत्यादिना षत्वम् । ‘खरि च’ इति चर्त्वम् । बाहुलकादडभावः । अथ[1] स्वस्नेहस्यासारतामाह[1] । स्त्रैणानि स्त्रीणां कृतानि सख्यानि न वै सन्ति । न सन्ति खलु । अभावे कारणमाह । एता एतानि सख्यानि सालावृकाणां हृदयानि तेषां हृदयानि यथा वत्सादीनां विश्वासघातकानि तद्वत् । अत्र वाजसनेयकं—‘मैतदादृथा न वै स्त्रैणं सख्यमस्ति पुनर्गृहानिहीति हैवैनं तदुवाच’ (श. ब्रा. ११. ५. १. ९) इति ॥ ॥ ३ ॥

यद्विरू॑पा॒चरं॒ मर्त्ये॒ष्ववसं॒ रात्रीः॑ श॒रद॒श्चत॑स्रः ।
घृ॒तस्य॑ स्तो॒कं स॒कृदह्न॑ आश्नां॒ तादे॒वेदं ता॑तृपा॒णा च॑रामि ॥ १६ ॥

यत् । विऽरू॑पा । अच॑रम् । मर्त्ये॑षु । अव॑सम् । रात्रीः॑ । श॒रदः॑ । चत॑स्रः ।
घृ॒तस्य॑ । स्तो॒कम् । स॒कृत् । अह्नः॑ । आ॒श्ना॒म् । तात् । ए॒व । इ॒दम् । त॒तृ॒पा॒णा । च॒रा॒मि॒ ॥ १६ ॥

यत् यदा विरूपा[2] मनुष्यसंपर्कादुद्गतसहजभूतवेषरूपा यथानुकूल्येन नानारूपा वा मर्त्येषु मनुष्येषु अचरं तदानीं रात्रीः प्रशस्यरात्रीः चतस्रः शरदः अवसं न्यवसम् । अत्यन्तसंयोगे द्वितीया । तदानीं घृतस्य स्तोकं सकृदह्न आश्नाम् । तादेव तेनैव स्तोकेनाहम् इदं संप्रति तातृपाणा तृप्ता सती चरामि ॥

अ॒न्त॒रि॒क्ष॒प्रां रज॑सो वि॒मानी॒मुप॑ शिक्षाम्यु॒र्वशीं॒ वसि॑ष्ठः ।
उप॑ त्वा रा॒तिः सु॑कृ॒तस्य॒ तिष्ठा॒न्नि व॑र्तस्व॒ हृद॑यं तप्यते मे ॥ १७ ॥

अ॒न्त॒रि॒क्ष॒ऽप्राम् । रज॑सः । वि॒ऽमानी॑म् । उप॑ । शि॒क्षा॒मि॒ । उ॒र्वशी॑म् । वसि॑ष्ठः ।
उप॑ । त्वा॒ । रा॒तिः । सु॒ऽकृ॒तस्य॑ । तिष्ठा॑त् । नि । व॒र्त॒स्व॒ । हृद॑यम् । त॒प्य॒ते॒ । मे॒ ॥ १७ ॥

अन्तरिक्षप्रां स्वतेजसान्तरिक्षस्य पूरयित्रीं तथा रजसः रञ्जकस्योदकस्य विमानीं निर्मात्रीम् उर्वशीं वसिष्ठः समानानां मध्येऽतिशयेन वासयिताहम् उप शिक्षामि वशे नयामि । सुकृतस्य शोभनकर्मणः रातिः दाता पुरूरवाः त्वा त्वाम् उप तिष्ठात् उपतिष्ठतु । मे हृदयं तप्यते[3] । अतो नि वर्तस्व । एवं राजोवाच[3] ॥

---

१. त-मु—अथात्मनः स्नेहस्या॰ । २. त-मु—विरूपा परे । ३. म—‘तप्यते...राजोवाच’ नास्ति ।

इति॑ त्वा दे॒वा इ॒म आ॑हुरैळ॒ यथे॑मे॒तद्भव॑सि मृ॒त्युब॑न्धुः ।
प्र॒जा ते॑ दे॒वान् ह॒विषा॑ यजाति स्व॒र्ग उ॒ त्वमपि॑ माद॒यासे ॥ १८ ॥

इति॑ । त्वा॒ । दे॒वाः । इ॒मे । आ॒हुः॒ । ऐळ॒ । यथा॑ । ई॒म् । ए॒तत् । भव॑सि । मृ॒त्युऽब॑न्धुः ।
प्र॒ऽजा । ते॒ । दे॒वान् । ह॒विषा॑ । य॒जा॒ति॒ । स्वः॒ऽगे । ऊँ इति॑ । त्वम् । अपि॑ । मा॒द॒यासे॒ ॥ १८ ॥

हे[1] ऐळ पुरूरवः त्वा त्वाम् इमे देवाः इति आहुः । मृत्युबन्धुः मृत्योः[1] बन्धकः मृत्योर्बन्धुभूतो वा मृत्युवशमप्राप्तुवंश्च यथं यथा एतद्भवसि[2] भविष्यसि प्रजा प्रकर्षेण जायमानस्त्वं[3] ते तव संबन्धिनो यष्टव्यान् देवान् हविषा यजाति यजसि । स्वर्ग उ स्वर्गे एव त्वमपि मादयासे मादयसेऽस्माभिः सह । एवमाहुरित्यर्थः । यस्मादेवं करोषि तस्माद्विलापं हित्वा सुखी भवेति[4] सेयं पुरूरवसं प्रत्युवाच ॥　　॥ ४ ॥

अथ 'प्र ते महे' इति त्रयोदशर्चं षष्ठं सूक्तम् । वरुणाङ्गिरस ऋषिः इन्द्रस्य पुत्रः सर्वहरिर्वा नाम । द्वादशीत्रयोदश्यौ त्रिष्टुभौ शिष्टा एकादश जगत्यः । इन्द्रस्यार्थौ हरी । तयोरत्र स्तूयमानत्वात्तद्देवताकमिदम् । तथा चानुक्रान्तं—'प्र ते त्रयोदश बरुः सर्वहरिर्वैन्द्रो हरिस्तुतिर्द्वित्रिष्टुबन्तम्[5]' इति । अतिरात्रे तृतीये पर्याये ब्राह्मणाच्छंसिन एतत्सूक्तम् । सूत्रितं च—'प्र ते महे ऽर्ता शचीवतस्तव वीर्येणेति याज्या' ( आश्व. श्रौ. ६. ४ ) इति । षोडशिशस्त्रेऽप्याद्यस्तृचः शंसनीयः । सूत्रितं च—'प्र ते महे विदथे शंसिषं हरी इति तिस्रो जगत्यः' ( आश्व. श्रौ. ६. २ ) इति ॥

प्र ते॑ म॒हे वि॒दथे॑ शंसिषं॒ हरी॒ प्र ते॑ वन्वे व॒नुषो॑ हर्य॒तं मद॑म् ।
घृ॒तं न यो हरि॑भि॒श्चारु॒ सेच॑त॒ आ त्वा॑ विशन्तु॒ हरि॑वर्पसं॒ गिरः॑ ॥ १ ॥

प्र । ते॒ । म॒हे । वि॒दथे॑ । शं॒सि॒ष॒म् । हरी॒ इति॑ । प्र । ते॒ । व॒न्वे॒ । व॒नुषः॑ । ह॒र्य॒तम् । मद॑म् ।
घृ॒तम् । न । यः । हरि॑ऽभिः । चारु॑ । सेच॑ते । आ । त्वा॒ । वि॒श॒न्तु॒ । हरि॑ऽवर्पसम् । गिरः॑ ॥ १ ॥

हे इन्द्र ते तव हरी अश्वौ महे महति विदथे यज्ञे प्र शंसिषम् अशंसिषम् । अस्ताविषम् । तथा वनुषः । 'वनु हिंसायाम्' । हिंसकस्य ते तव हर्यतम् । 'हर्य गतिकान्त्योः' । तस्यौणादिकोऽतच् । चित्स्वरेणान्तोदात्तः । कमनीयं मदं प्र वन्वे प्रयाचेऽस्मदभिमतम् । 'वनु याचने' । यः इन्द्रः हरिभिः हरितवर्णैरश्वैः मध्याग्नो[6] गत्वा चारु चरणीयं घृतं न घृतमिव सुप्तमुदकं सेचते वर्षति तं त्वां हरिवर्पसम् । वर्प इति रूपनाम । हरितरूपं त्वा त्वाम् आ विशन्तु गिरः अस्मदीयाः स्तुतिवाचस्तव मदाय ॥

हरिं॒ हि योनि॑म॒भि ये स॒मस्व॑रन् हि॒न्वन्तो॒ हरी॑ दि॒व्यं यथा॒ सदः॑ ।
आ यं पृ॒णन्ति॒ हरि॑भि॒र्न धे॒नव॒ इन्द्रा॑य शू॒षं हरि॑वन्तमर्चत ॥ २ ॥

हरि॑म् । हि । योनि॑म् । अ॒भि । ये । स॒म्ऽअस्व॑रन् । हि॒न्वन्तः॑ । हरी॒ इति॑ । दि॒व्यम् । यथा॑ । सदः॑ ।
आ । यम् । पृ॒णन्ति॑ । हरि॑ऽभिः । न । धे॒नवः॑ । इन्द्रा॑य । शू॒षम् । हरि॑ऽवन्तम् । अ॒र्च॒त॒ ॥ २ ॥

---

१. भ-'हे ... ... मृत्योः' नास्ति । २. त-एतद्भवति । ३. त-जायमानाः । ४. त-भवसि । ५. त१.२.३.६.८-भ१.२.४.७.८-'स्तुतिस्त्रिष्टुबन्तं । ६. ग-भ१.४.५.६.८-मेघान्; त१.२.३.७-मेघाने; त६.८-मघाने; भ२-मघोन् ।

ये पूर्वे स्तोतार ऋषयः योनिम् इन्द्रस्य स्थानभूतम् हरिम् अश्वम् अभि समस्वरन्। 'स्वृ शब्दोपतापयोः'। अभिसंस्तुवन्ति। किं कुर्वन्तः। दिव्यं देवसंबन्धि सदः यागगृहं यथा प्रेरयन्त्यश्वं तथा हरी अश्वौ हिन्वन्तः प्रेरयन्तः। सोमेऽभिषुते सति स्वयमेवेन्द्रो रथेऽश्वौ प्रेरयति अतः स्तोतॄणां हरिप्रेरणत्वम्। यद्वा[1]। दिव्यं सद इन्द्रः प्राप्नुयाद्यथा[2] तथा[3] हरी[3] स्तुतिभिर्हिन्वन्तः प्रेरयन्तः। यम् इन्द्रम् धेनवः नवप्रसूताः गावो यथा पृणन्ति क्षीरादिभिः। अत्र पुरस्तादुपचाराऽपि नकार उपमार्थीयः। हरिभिः हरितवर्णैः सोमैः अत्र पृणन्ति पूरयन्ति च[4]। तथा यूयमपि इन्द्राय इन्द्रस्य हरिवन्तं शूषं बलम् अर्चत पूजयत हे स्तोतारः स्तुतिभिः॥

सो अ॑स्य॒ वज्रो॒ हरि॑तो॒ य आ॑य॒सो हरि॒र्निका॑मो॒ हरि॒रा गभ॑स्त्योः।
द्यु॒म्नी सु॑शि॒प्रो हरि॑मन्युसायक॒ इन्द्रे॒ नि रू॒पा हरि॑ता मिमिक्षिरे॥ ३॥

सः। अ॒स्य। वज्रः॑। हरि॑तः। यः। आ॒य॒सः। हरिः॑। नि॒ऽकामः॑। हरिः॑। आ। गभ॑स्त्योः।
द्यु॒म्नी। सु॒ऽशि॒प्रः। हरि॑मन्युऽसायकः। इन्द्रे॑। नि। रू॒पा। हरि॑ता। मि॒मि॒क्षि॒रे॥ ३॥

अस्य इन्द्रस्य यः[5] वज्रः हरितः हरितवर्णः यः आयसः अयःसारभूतोऽस्ति निर्मितः। स च हरिः[6] हरितवर्णो वज्रः निकामः नितरां कमनीयः। सः आ हन्ता शत्रूणाम्। तादृशो वज्रः गभस्त्योः हस्तयोर्वर्तत इति शेषः। अयमिन्द्रः द्युम्नी। द्युम्नं द्योतमानं धनम्। तद्वान् सुशिप्रः शोभनहनुः हरिमन्युसायकः। यस्य मन्युः[7] सायकः शत्रुहन्ताभिगन्ता वा भवति। यद्वा शत्रुहन्ता कोपः सायकश्च यस्य स तादृशो भवति। एवं बहुधा। इन्द्रे रूपा रूपाणि सर्वाणि हरिता हरितानि नि मिमिक्षिरे मिश्रितानि बभूवुः। मिहेः सनन्तात्कर्मणि लिटि रूपम्॥

दि॒वि न के॒तुरधि॑ धायि हर्य॒तो वि॒व्यच॒द्वज्रो॒ हरि॑तो॒ न रंह्या॑।
तु॒दद॒हिं हरि॑शिप्रो॒ य आ॑य॒सः स॒हस्र॑शोका अभवद्धरिम्भ॒रः॥ ४॥

दि॒वि। न। के॒तुः। अधि॑। धा॒यि॒। ह॒र्य॒तः। वि॒व्यच॑त्। वज्रः॑। हरि॑तः। न। रंह्या॑।
तु॒दत्। अहि॑म्। हरि॑ऽशिप्रः। यः। आ॒य॒सः। स॒हस्र॑ऽशोकाः। अभ॑वत्। ह॒रि॒म्ऽभ॒रः॥ ४॥

दिवि अन्तरिक्षे केतुः प्रकाशेन सर्वस्य प्रज्ञापक आदित्य इव स यथाधि निहित एवमयमिन्द्रः अधि धायि अध्यधायि[8] स्तोतृभिरधिनिहितः। किंचेन्द्रस्य वज्रः हर्यतः स्पृहणीयः सन् विव्यचत् व्याप्नोति[9] व्याप्तवान् शत्रुसंघम्। तत्र दृष्टान्तः। हरितो न हरितवर्णा अध्वाहर्तारो[10] वाश्वा आदित्यसंबन्धिनः। ते यथा रंह्या रंहणेन वेगेन व्याप्नुवन्ति व्याप्तव्यम्। यः अस्य वज्रः आयसः अयोविकारः अहिं वृत्रं मेघं वा तुदत् हिनस्ति। सोऽयं[11] महानुभावः हरिशिप्रः सोमपानरसेन[12] हरितवर्णतरसिकस्तद्वर्णहनुर्वा हरिम्भरः हर्योर्भर्तेन्द्रः[13] सहस्रशोकाः अभवत्। 'शुच दीप्तौ'। अपरिमितदीप्तिर्भवति॥

---

१. ग–यद्वा यथा। २. ग-त-भ–प्राप्नुयात्तथा। ३. त-भ–हरी रथाय। ४. ग–आप्रीणयंति वा; त४.५.८-भ१.२.४.६.८–वा; त१-२.३.६.७-मु–'च' नास्ति। ५. त-भ–'सः' नास्ति। ६. त-भ–'हरिः' नास्ति। ७. ग-त-भ–'मन्युः' नास्ति। ८. त१.२.३.६.७.८-भ–'अध्यधायि' नास्ति। ९. त१.२.३.६.७.८-भ२.६.८-मु–विव्याप्नोति। १०. ग-भ२.८–असाध्वाहर्तारो, त४.५–असाधा वर्तते; भ६–अस्याध्वाहर्तारो। ११. ग–सोऽयं। १२ त४.५–°रसेन। १३. ग-भ–हर्यो भर्तेन्द्रः।

त्वंत्वमहर्यथा उपस्तुतः पूर्वेभिरिन्द्र हरिकेश यज्वभिः ।
त्वं हर्यसि तव विश्वमुक्थ्य१मसामि राधो हरिजात हर्यतम् ॥ ५ ॥

त्वम्ऽत्वम् । अहर्यथाः । उपऽस्तुतः । पूर्वेभिः । इन्द्र । हरिऽकेश । यज्वऽभिः ।
त्वम् । हर्यसि । तव । विश्वम् । उक्थ्यम् । असामि । राधः । हरिऽजात । हर्यतम् ॥ ५ ॥

हे इन्द्र हे हरिकेश हरितरोमवदश्व त्वंत्वं[1] त्वमेव सर्वत्र यज्ञे अहर्यथाः अकामयथाः स्तोत्रं हवींषि । कीदृशस्त्वम् । पूर्वेभिः पूर्वतनैः यज्वभिः यजमानैः उपस्तुतः सन् । हे हरिजात हरितवर्णः सन् प्रादुर्भूत हारकप्रादुर्भाव वा । शत्रुवधार्थं प्रादुर्भूतेत्यर्थः । हे तादृशेन्द्र त्वं तव । स्वभूतमिति शेषः । विश्वं व्याप्तं सोमचरुपुरोडाशादिरूपं सर्वं वा । यद्वा । यत्र यानि यानि हवींषि दीयन्ते तत्सर्वं वा । तथा उक्थ्यं प्रशस्यम् असामि असाधारणमसमं कृत्स्नं हर्यतं कान्तं राधः अन्नं हविर्लक्षणं हर्यसि कामयसे ॥　　॥ ५ ॥

ता वज्रिणं मन्दिनं स्तोम्यं मद इन्द्रं रथे वहतो हर्यता हरी ।
पुरूण्यस्मै सवनानि हर्यत इन्द्राय सोमा हरयो दधन्विरे ॥ ६ ॥

ता । वज्रिणम् । मन्दिनम् । स्तोम्यम् । मदे । इन्द्रम् । रथे । वहतः । हर्यता । हरी इति ।
पुरूणि । अस्मै । सवनानि । हर्यते । इन्द्राय । सोमाः । हरयः । दधन्विरे ॥ ६ ॥

ता तौ प्रसिद्धौ हर्यता हर्यतौ गन्तारौ कान्तौ वा हरी हरितवर्णावश्वौ मन्दिनं मोदमानं स्तोम्यं स्तुत्यर्हं वज्रिणम् इन्द्रं मदे निमित्ते[2] रथे वहतः धारयतः[3] । यज्ञसदस्यर्दियं प्रापयतः । अस्मै हर्यते कान्ताय इन्द्राय पुरूणि बहूनि सवनानि प्रातरादीनि हरयः हरितवर्णाः सोमाः दधन्विरे निर्धीयन्ते ॥

अरं कामाय हरयो दधन्विरे स्थिराय हिन्वन् हरयो हरी तुरा ।
अर्वद्भिर्यो हरिभिर्जोषमीयते सो अस्य कामं हरिवन्तमानशे ॥ ७ ॥

अरम् । कामाय । हरयः । दधन्विरे । स्थिराय । हिन्वन् । हरयः । हरी इति । तुरा ।
अर्वत्ऽभिः । यः । हरिऽभिः । जोषम् । ईयते । सः । अस्य । कामम् । हरिऽवन्तम् । आनशे ॥ ७ ॥

अरम् अलं पर्याप्तं कामाय इन्द्रकामनाय हरयः हरितवर्णाः सोमाः दधन्विरे । ते च हरयः स्थिराय युद्धेऽपलायितायेन्द्राय तुरा तुरौ त्वरमाणौ हरी अश्वौ हिन्वन् प्रेरयन्ति । यः अर्वद्भिः सरणकुशलैः हरिभिः अश्वैः जोषं शूरैः सेव्यं संग्रामम् ईयते गच्छति सः रथः अस्य इन्द्रस्य स्वभूतं कामं कमनीयं हरिवन्तं सोमवन्तं यज्ञम् आनशे व्याप्नोति ॥

हरिश्मशारुर्हरिकेश आयसस्तुरस्पेये यो हरिपा अवर्धत ।
अर्वद्भिर्यो हरिभिर्वाजिनीवसुरति विश्वा दुरिता पारिषद्धरी ॥ ८ ॥

१. त-मु-त्वं । २. त४.५—मदनिमित्ते । ३. त४.५—मापयतः ।

हरिऽश्मशारुः । हरिऽकेशः । आयसः । तुरःऽपेये । यः । हरिऽपाः । अवर्धत ।
अर्वत्ऽभिः । यः । हरिऽभिः । वाजिनीऽवसुः ।
अति । विश्वा । दुःऽइता । पारिषत् । हरी इति ॥ ८ ॥

हरिश्मशारुः हरितवर्णश्मश्रुः हरिकेशः हरितवर्णकेशः आयसः अयोमयहृदयः[1] । शत्रूणां घातक इत्यर्थः । एतादृशः यः इन्द्रः तुरस्पेये तूर्णं पातव्ये सोमे हरिपाः हरितवर्णसोमपाः अवर्धत वर्धते यः च अर्वद्भिः गन्तृभिः हरिभिः अश्वैः सोमैर्वा वाजिनीवसुः । वाजिनमन्नं हविर्लक्षणम् । तदस्या अस्तीति वाजिनी क्रिया । सैव वसु धनं यस्य स तथोक्तः । यज्ञधन इत्यर्थः । यद्वा । वाजिनमेव वाजिनी । तदेव धनं यस्य । स एवमुक्तलक्षण इन्द्रः हरी रथे योजयित्वा विश्वा विश्वानि सर्वाणि दुरिता अस्माकं दुरितानि अति पारिषत् पारयतु[2] । पारयतेर्लेटि सिप्यडागमः ॥

स्रुवेव यस्य हरिणी विपेततुः शिप्रे वाजाय हरिणी दविध्वतः ।
प्र यत्कृते चमसे मर्मृजद्धरी पीत्वा मदस्य हर्यतस्यान्धसः ॥ ९ ॥

स्रुवाऽइव । यस्य । हरिणी इति । विऽपेततुः । शिप्रे इति । वाजाय । हरिणी इति । दविध्वतः ।
प्र । यत् । कृते । चमसे । मर्मृजत् । हरी इति । पीत्वा । मदस्य । हर्यतस्य । अन्धसः ॥ ९ ॥

यस्य इन्द्रस्य हरिणी हरितवर्णावश्वौ विपेततुः रथं इन्द्रमारोप्य विपततो यज्ञमस्मदीयम् । यद्वा । यस्य हरिणी हरितवर्णे कनीनिके विपेततुः सोमं प्रति विपततः । तत्र दृष्टान्तः । स्रुवेव । यथा स्रुवा स्रुचौ हविषा पूर्णौ पात्रविशेषौ होमार्थं विपततः तद्वत् । तथा यस्य च हरिणी हरितवर्णे शिप्रे हनू वाजाय सोमलक्षणायान्नाय दविध्वतः कम्पयतः पुरतः प्रत्तस्य[3] सोमस्य प्रीत्या[4] चलतः[4] । तथा यत् यदा कृते संस्कृते चमसे वर्तमानं मदस्य मदकरं हर्यतस्य कान्तम् अन्धसः अन्नं सोमं पीत्वा हरी अश्वौ प्र मर्मृजत प्रमार्ष्टि । तदानीं स्तुत इत्यर्थः ॥

उत स्म सद्म हर्यतस्य पस्त्यो३रत्यो न वाजं हरिवाँ अचिक्रदत् ।
मही चिद्धि धिषणाहर्यदोजसा बृहद्वयो दधिषे हर्यतश्चिदा ॥ १० ॥

उत । स्म । सद्म । हर्यतस्य । पस्त्योः । अत्यः । न । वाजम् । हरिऽवान् । अचिक्रदत् ।
मही । चित् । हि । धिषणा । अहर्यत् । ओजसा । बृहत् । वयः । दधिषे । हर्यतः । चित् । आ ॥ १० ॥

उत अपि च हर्यतस्य कमनीयस्येन्द्रस्य सद्म सदनं पस्त्योः द्यावापृथिव्योः संबन्धि । सोऽयम् अत्यो न अश्व इव वाजं संग्रामं हरिवान् अश्ववान् अचिक्रदत् गच्छति । तथा हि यस्मात् हे इन्द्र त्वां मही महती धिषणा स्तुतिः ओजसा बलेन युक्तमिन्द्रम् अहर्यत् कामयते । चित् इति पूरणः । अतो वाजमचिक्रदत् । तथा सति हे इन्द्र हर्यतः काम्यमानस्य यजमानस्य[5] बृहत् महत् वयः अन्नम् आ दधिषे धारयसि[6] । आप्रयच्छसि । चित् इति पूरणः ॥ ॥ ६ ॥

---

१. त१.२.३.६.७-मु-°हृदयोऽस्य । २. त-म-पारयति । ३. त१.२.६.७-प्रयत् प्रत्यस्य । ४. ग-प्रियां चलतः; त-प्रिया चलतः; भ१.७-प्रियचलजाः; भ२.४-प्रियचलतः; भ६-प्रियाचलतः; भ८-प्रिया-चलतः । ५. ग-त१.२.३.६.७-भ१.२.४.५.८-यजमानस्य । ६. ग-त१२३६७-भ-मु-'धारयसि' नास्ति ।

आ रोद॑सी हर्य॑माणो महि॒त्वा नव्यं॑नव्यं हर्यसि॒ मन्म॒ नु प्रि॒यम् ।
प्र प॒स्त्य॑मसुर हर्य॒तं गोरा॒विष्कृ॑धि॒ हर॑ये॒ सूर्या॑य ॥ ११ ॥

आ । रोद॑सी॒ इति॑ । हर्य॑माणः । म॒हि॒ऽत्वा । नव्य॑म्ऽनव्यम् । ह॒र्य॒सि॒ । मन्म॑ । नु । प्रि॒यम् ।
प्र । प॒स्त्य॑म् । अ॒सु॒र॒ । ह॒र्य॒तम् । गोः । आ॒विः । कृ॒धि॒ । हर॑ये । सूर्या॑य ॥ ११ ॥

हे इन्द्र हर्यमाणः कामयमानः महित्वा महत्त्वेन रोदसी द्यावापृथिव्यौ आ । पूरयसीति शेषः । तथा नव्यंनव्यं नवतरं प्रियं प्रियकरं मन्म मननीयं स्तोत्रं नु क्षिप्रं हर्यसि कामयसे । हे असुर बलवन् । असुः प्राणः । तद्वन् । मत्वर्थीयो रः । तादृशेन्द्र गोः । जात्येकवचनम् । गवां हर्यतं स्पृहणीयं पस्त्यं गृहं गोरुदकस्योत्पादकं स्थानं वा हरये उदकस्य हर्त्रे सूर्याय प्र प्रकर्षेण आविष्कृधि प्रकटीकुरु ॥

आ त्वा॑ ह॒र्यन्तं॑ प्र॒युजो॒ जना॑नां॒ रथे॑ वहन्तु॒ हरि॑शिप्रमिन्द्र ।
पिबा॒ यथा॒ प्रति॑भृतस्य॒ मध्वो॒ हर्य॑न्य॒ज्ञं स॑ध॒मादे॒ दशो॑णिम् ॥ १२ ॥

आ । त्वा॒ । ह॒र्यन्त॑म् । प्र॒ऽयुजः॑ । जना॑नाम् । रथे॑ । व॒ह॒न्तु॒ । हरि॑ऽशिप्रम् । इ॒न्द्र॒ ।
पिब॑ । यथा॑ । प्रति॑ऽभृतस्य । मध्वः॑ । हर्य॑न् । य॒ज्ञम् । स॒ध॒ऽमादे॑ । दश॑ऽओणिम् ॥ १२ ॥

हे इन्द्र हरिशिप्रं हरितवर्णशिप्रं त्वा त्वां हर्यन्तं यज्ञं कामयमानं प्रयुजः रथे प्रयुक्ता अश्वाः रथे स्थापयित्वा जनानाम् ऋत्विग्यजमानानामन्तिकं[1] वहन्तु[2] प्रापयन्तु । यथा येन प्रकारेण प्रतिभृतस्य ग्रहादिषु संभृतं मध्वः मधु सोमरसं यज्ञं यागसाधनं दशोणिम् । ओणयोऽङ्गुलयः । दशभिरङ्गुलिभिः संपादितं सोमं हर्यन् कामयमानः सन् पिब पिबसि सधमादे संग्रामे[3] जयार्थं[3] तथा वहन्त्वित्यर्थः ॥

'अपाः पूर्वेषाम्' इत्येषा षोडशिशस्त्रस्य याज्या । सूत्रितं च—'एवा हि शक्रो वशी हि शक्र इति जपित्वापाः पूर्वेषां हरिवः सुतानामिति यजति' ( आश्व. श्रौ. ६. २ ) इति ॥

अपाः॒ पूर्वे॑षां हरिवः सु॒ताना॒मथो॑ इ॒दं सव॑नं॒ केव॑लं ते ।
म॒म॒द्धि सोमं॒ मधु॑मन्तमिन्द्र स॒त्रा वृ॑षञ्ज॒ठर॒ आ वृ॑षस्व ॥ १३ ॥

अपाः॑ । पूर्वे॑षाम् । ह॒रि॒ऽवः॒ । सु॒ताना॑म् । अथो॒ इति॑ । इ॒दम् । सव॑नम् । केव॑लम् । ते॒ ।
म॒म॒द्धि । सोम॑म् । मधु॑ऽमन्तम् । इ॒न्द्र॒ । स॒त्रा । वृ॒ष॒न् । ज॒ठरे॑ । आ । वृ॒ष॒स्व॒ ॥ १३ ॥

हे इन्द्र[4] सुतानाम् अभिषुतानां पूर्वेषां प्रातःसवनसंपादितानाम् । कर्मणि षष्ठ्यावेते । अभिषुतान् प्रातःसवनिकान् सोमानित्यर्थः । तान् अपाः अपिबः । हे हरिवः इतीन्द्रसंबोधनम् । हरिभ्यामश्वाभ्यां तद्वन् । यद्वा ऋक्सामात्मकाभ्यां हरिभ्यां युक्त । 'ऋक्सामे वा इन्द्रस्य हरी' ( ऐ. ब्रा. २. २४; तै. सं. ६. ५. ९. २ ) । 'ताभ्यामेव हरति' इति ब्राह्मणम् । अथो अपि च इदं माध्यंदिनं सवनं केवलं ते तवैवासाधारणम् । 'माध्यंदिनं सवनं केवलं ते' ( ऋ. सं.

1. स४.५–यजमाना" । 2. ग-त-भ-मु–प्रति वहन्तु । 3. स-भ–संग्रामजयार्थं । 4. ग-स-मु–इंद्र त्वं ।

४. ३५. ७ ) इति हि मन्त्रान्तरम्। तस्मिन् सवने हे ˇइन्द्र ˇमधुमन्तं माधुर्योपेतं ˇसोमं ˇममद्धि पिब। आस्वादयेत्यर्थः। मदिरयास्वादनकर्मा। पिबन्तु मदन्तु वियन्तु इति च मन्त्रः। ˇसत्रा ˇभूषन्। सत्राशब्दो भूयिष्ठवचनः। हे भूयिष्ठमर्पितरिन्द्र ˇअस्य ˇआ ˇवृषस्व आसिञ्चस्व ॥ ॥७॥

'या ओषधीः' इति त्रयोविंशत्यृचं सप्तमं सूक्तम्। अथर्वणः पुत्रस्य भिषङ्नाम्न आर्षम्। आनुष्टुभमोषधिदेवताकम्। तथा चानुक्रान्तं—'या ओषधीस्त्र्यधिकाथर्वणो भिषगोषधिस्तुतिरानुष्टुभम्' इति। दीक्षितानां ज्वराद्युपतापे संजातेऽनेन सूक्तेन मार्जयेत्। सूत्रितं च—'ओषधिसूक्तेन चाभ्यभ्यानुमृजेत्' ( आश्व. श्रौ. ६. ९ ) इति ॥

या ओष॑धीः॒ पूर्वा॑ जा॒ता दे॒वेभ्य॑स्त्रियु॒गं पु॒रा।
मनै॑ नु ब॒भ्रूणा॑म॒हं श॒तं धामा॑नि स॒प्त च॑ ॥ १ ॥

याः॑। ओष॑धीः। पूर्वाः॑। जा॒ताः। दे॒वेभ्यः॑। त्रि॒ऽयु॒गम्। पु॒रा।
मनै॑। नु। ब॒भ्रूणा॑म्। अ॒हम्। श॒तम्। धामा॑नि। स॒प्त। च॒ ॥ १ ॥

ˇयाः ˇओषधीः ओषधयः ˇपूर्वाः पुरातन्यः ˇजाताः उत्पन्नाः। केभ्यः सकाशात्। ˇदेवेभ्यः जगन्निर्मातृभ्यः। यद्वा। देवाः द्योतमाना ऋतवः। तेभ्यः। कस्मिन् काले। ˇत्रियुगं त्रिषु[1] युगेषु[1]। विशेषेण[2] प्रादुर्भावापेक्षया कृतादियुगत्रयमुक्तं कलौ त्वत्यन्ताल्पत्वानुपेक्षितम्। अथवा त्रिषु युगेषु वसन्ते प्रावृषि शरदि चेत्यर्थः। ˇअहं ˇबभ्रूणां बभ्रुवर्णानां सोमाद्योषधीनां ˇशतं ˇसप्त ˇच ˇधामानि अनुलेपमार्जनाभिषेकादिरूपेणाश्रयभूतानि[3] स्थानानि ˇनु क्षिप्रं ˇमनै मन्ये। संभावयामीत्यर्थः। अत्र वाजसनेयकं—'या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरेत्यृतवो वै देवास्तेभ्य एतास्त्रिः पुरा जायन्ते वसन्ते प्रावृषि शरदि मनै नु बभ्रूणामहमिति सोमो वै बभ्रुः सौम्या ओषधयः ओषधयः पुरुषः शतं धामानीति यदिदं शतायुः शतार्थः[4] शतवीर्यः एतानि हास्य तानि* शतं धामानि सप्त चेति। य एवेमे सप्त शीर्षन्प्राणास्तानेतदाह' ( श. ब्रा. ७. २. ४. २६ ) इति। अत्र निरुक्तं च—'या ओषधयः[4] पूर्वा जाता देवेभ्यस्त्रीणि युगानि पुरा मन्ये नु तद्बभ्रूणामहं बभ्रुवर्णानां भरणानां हरणानामिति वा शतं धामानि सप्त चेति। धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानीति। जन्मान्यत्राभिप्रेतानि सप्तशतानि सप्त शतं पुरुषस्य मर्मणां तेष्वेना दधाति' ( निरु. ९.२८ ) इति॥

श॒तं वो॑ अम्ब॒ धामा॑नि स॒हस्र॑मु॒त वो॒ रुहः॑।
अधा॑ शतक्रत्वो यू॒यमि॒मं मे॑ अग॒दं कृ॑त ॥ २ ॥

श॒तम्। वः॒। अ॒म्ब॒। धामा॑नि। स॒हस्र॑म्। उ॒त। वः॒। रुहः॑।
अध॑। श॒त॒ऽक्र॒त्वः॒। यू॒यम्। इ॒मम्। मे॒। अ॒ग॒दम्। कृ॒त॒ ॥ २ ॥

हे ˇअम्ब मातर ओषधयः ˇवः युष्माकं ˇधामानि स्थानानि जन्मानि वा ˇशतम् अपरिमितानि। ˇउत अपि च ˇवः युष्माकं ˇरुहः प्ररोहः प्रोद्गमः ˇसहस्रम् अपरिमितः[6]। ˇअध अपि च हे ˇशतक्रत्वः शतकर्माणः ˇयूयमिमं ˇमे मां मदीयं वा जनमामयग्रस्तम् ˇअगदम्। गदो रोगः। तद्रहितं ˇकृत कुरुत ॥

१. ग-म—त्रियुगेषु। २. त-म२.४.६.८—विशेष॰। ३. ग-त-मु—अनुलेपसंमार्जनाभिषेक॰। ४. म—'शतार्थः ... ... ... ओषधयः' नास्ति। * त-मु—'तानि' नास्ति। ५. त४.५—स्थानान्यत्रा॰। ६. ग-त-म-मु—अपरिमितं।

ओषधीः प्रति मोदध्वं पुष्पवतीः प्रसूवरीः ।
अश्वाइव सजित्वरीर्वीरुधः पारयिष्णवः ॥ ३ ॥

ओषधीः । प्रति । मोदध्वम् । पुष्पऽवतीः । प्रऽसूवरीः ।
अश्वाःऽइव । सऽजित्वरीः । वीरुधः । पारयिष्णवः ॥ ३ ॥

हे ओषधीः ओषधयः प्रति मोदध्वं इमं रुग्णं प्रति मुदिता हृष्टा भवत । कीदृश्यो यूयम् । पुष्पवतीः पुष्पवत्यः प्रसूवरीः । प्रकर्षेण सुवन्त उपभोगायेति प्रसवाः फलानि । तद्वत्यः । किंच अश्वाइव अश्वजाता हया इव सजित्वरीः सह रोगं जयन्त्यः वीरुधः विरोहन्त्यः पारयिष्णवः रुग्णं पुरुषं पारयन्त्यो रोगात् ॥

ओषधीरिति मातरस्तद्वो देवीरुप ब्रुवे ।
सनेयमश्वं गां वास आत्मानं तव पूरुष ॥ ४ ॥

ओषधीः । इति । मातरः । तत् । वः । देवीः । उप । ब्रुवे ।
सनेयम् । अश्वम् । गाम् । वासः । आत्मानम् । तव । पुरुष ॥ ४ ॥

हे ओषधीः ओषधयः देवीः देव्यो द्योतनादिगुणका हे मातरः जनानां मातृभूताः । मातृवद्धित-कारित्वान्मातृत्वोपचारः । अथवा मातरः आरोग्यनिर्मात्र्यः वः युष्माकं संबन्धिनं भिषजं तत् वक्ष्यमाणम् इति इत्थम् उप ब्रुवे उप ब्रवीमि । किं तदिति चेत् उच्यते । ओषध्यर्थमहम् अश्वं गां वासः अंशुकं किं बहुना आत्मानम् अपि हे पुरुष चिकित्सक तव तुभ्यं सनेयं ददामि ॥

अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता ।
गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥ ५ ॥

अश्वत्थे । वः । निऽसदनम् । पर्णे । वः । वसतिः । कृता ।
गोऽभाजः । इत् । किल । असथ । यत् । सनवथ । पुरुषम् ॥ ५ ॥

हे ओषधिदेवताः वः युष्माकम् अश्वत्थे निषदनं नितरां वर्तनम् । तथा वः युष्माकं पर्णे पलाशे वसतिः निवासः कृता । 'तृतीयस्यामितो दिवि सोम आसीत्तं गायत्र्याहरत्तस्य पर्णमच्छिद्यत तत्पर्णोऽभवत् तत्पर्णस्य पर्णत्वम्' ( तै. ब्रा. १. १. ३. १० ) इति ब्राह्मणात्पलाशस्य पर्णत्वप्रसिद्धिः । अश्वत्थपलाशयोर्यज्ञयोग्यत्वप्राधान्यापेक्षयोपादानम् । किंच गोभाजः इत्किल गवां भाजयित्र्य एव असथ भवथ खलु । यत् यदि सनवथ संभजध्वे पुरुषं तर्ह्येवं भवथेति । 'वन षण संभक्तौ'। लेट्यडागमः । व्यत्ययेनोप्रत्ययः । यद्वा । औत्सर्गिकः शप्येति द्विविकरणता ॥  ॥ ८ ॥

यत्रौषधीः समग्मत राजानः समिताविव ।
विप्रः स उच्यते भिषग्रक्षोहामीवचातनः ॥ ६ ॥

यत्र । ओषधीः । सम्ऽअग्मत । राजानः । समितौऽइव ।
विप्रः । सः । उच्यते । भिषक् । रक्षःऽहा । अमीवऽचातनः ॥ ६ ॥

॰यत्र यस्मिन् देशे ॰ओषधीः ओषधयः[1] ॰समग्मत संगच्छन्ते[2]। ॰राजानः ॰समिताविव संग्रामे यथा संगता भवन्ति तद्वत्। तासां नानाविधानामोषधीनां संगमनं यस्मिन् देशेऽस्ति तत्र ॰विप्रः प्राज्ञः ब्राह्मणः ॰सः ॰भिषक् ॰उच्यते ॰रक्षोहा रक्षोहन्ता। ॰अमीवचातनः। अमीवा व्याधिः। तस्य चातनश्चातयिता नाशयिता[3] च भवति तदानीम्॥

अश्वावतीं सोमावतीमूर्जयन्तीमुदोजसम्।
आवित्सि सर्वा ओषधीरस्मा अरिष्टतातये॥ ७॥

अश्वऽवतीम्। सोमऽवतीम्। ऊर्जयन्तीम्। उत्ऽओजसम्।
आ। अवित्सि। सर्वाः। ओषधीः। अस्मै। अरिष्टऽतातये॥ ७॥

अश्वावत्याद्यः प्रधानभूता ओषधयश्चतस्रः[4]। ताः ॰सर्वाः ॰ओषधीः ॰आवित्सि आजाने। लभामीत्यर्थः। ॰अस्मा ॰अरिष्टतातये[5]। अमुं रोगं विनाशयितुमित्यर्थः॥

उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते।
धनं सनिष्यन्तीनामात्मानं तव पूरुष॥ ८॥

उत्। शुष्माः। ओषधीनाम्। गावः। गोस्थात्ऽइव। ईरते।
धनम्। सनिष्यन्तीनाम्। आत्मानम्। तव। पुरुष॥ ८॥

॰ओषधीनां ॰शुष्माः बलानि ॰उत् ॰ईरते उद्गच्छन्ति। स्वयमेव स्ववीर्यं प्रोद्भवयन्तीत्यर्थः। ॰गावो ॰गोष्ठादिव। ता यथा ततः सकाशादुदीरते तद्वत्। कीदृशीनामोषधीनाम्। उच्यते। ॰धनं स्वसामर्थ्यलक्षणं ॰सनिष्यन्तीनां दातुमिच्छन्तीनाम्। कं प्रतीति उच्यते। हे ॰पूरुष पुरुष रोगग्रस्त ॰तव ॰आत्मानं शरीरं प्रति। यद्वा। प्ररोहन्तीरोषधीर्वक्ष्यति। हे पुरुष प्रियकृत्त्वादोषधिस्वामिन् तवात्मानं वर्धयितुं[6] धनं सनिष्यन्तीनां वीरुधामोषधीनां शुष्मा उदीरते॥

इष्कृतिर्नाम वो माताथो यूयं स्थ निष्कृतीः।
सीराः पतत्रिणीः स्थन यदामयति निष्कृथ॥ ९॥

इष्कृतिः। नाम। वः। माता। अथो इति। यूयम्। स्थ। निःऽकृतीः।
सीराः। पतत्रिणीः। स्थन। यत्। आमयति। निः। कृथ॥ ९॥

हे ओषधयः ॰वो ॰माता जननी ॰इष्कृतिर्नाम, सर्वेषां व्रणानां निष्कर्त्रीति प्रसिद्धा। यस्मात्सा व्रणं निष्करोति। ॰अथ अतो ॰यूयम् अपि ॰निष्कृतीः निष्कृतयः ॰स्थ भवथ। किंच यूयं ॰सीराः सरणशीलाः पतत्रिणीः ॰पतनवत्यश्च ॰स्थन भवथ। 'तप्तनप्' इति तनादेशः। किंच पुरुषः ॰यत् यदि ॰आमयति व्याधितो भवति तं ॰निष्कृथ संस्कुरुथ॥

अति विश्वाः परिष्ठाः स्तेनइव व्रजमक्रमुः।
ओषधीः प्राचुच्यवुर्यत्किं च तन्वो॑ रपः॥ १०॥

१. ग-त-भ-मु-ओषध्यः। २. गर-समगच्छन। ३. त-भ-मु-'नाशयिता' नास्ति। ४. ग-त-भ-ओषध्यश्चतस्रः। ५. त-मु-अरिष्टतातये अस्मै रोगाय। ६. तर.५-दर्शयितुं।

अति । विश्वाः । परिऽस्थाः । स्तेनःऽइव । व्रजम् । अक्रमुः ।
ओषधीः । प्र । अचुच्यवुः । यत् । किम् । च । तन्वः । रपः ॥ १० ॥

विश्वाः व्याप्ताः परिष्ठाः परितः स्थिता ओषधयः अति अक्रमुः व्याधीनतिक्रान्तवत्यः । स्तेनइव व्रजम् । यथा स्तेनो व्रजमत्यक्रमीत् तद्वत् । तथा कृत्वा ओषधीः ओषधयः प्राचुच्यवुः प्रच्यावयन्ति यत्किं च तन्वः रुग्णशरीरस्य रपः पापं व्याधिलक्षणमस्ति तदिति ॥ ॥ ९ ॥

यदिमा वाजयन्नहमोषधीर्हस्त आदधे ।
आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥ ११ ॥

यत् । इमाः । वाजयन् । अहम् । ओषधीः । हस्ते । आऽदधे ।
आत्मा । यक्ष्मस्य । नश्यति । पुरा । जीवऽगृभः । यथा ॥ ११ ॥

अहं यत् यदि इमाः ओषधीः हस्ते आदधे आधारयामि । किं कुर्वन् । वाजयन् रुग्णं बलिनं कुर्वन् । ततः पुरा यक्ष्मस्य रोगस्य आत्मा नश्यति नष्टो भवति जीवगृभो यथा । जीवानां शकुन्यादीनां ग्राहकाद्व्याधाद्यथा जीवा नश्यन्ति तद्वत् । यद्वा । जीवगृभो मृत्योः सकाशा-ज्जीवोऽपहियते तद्वत् ॥

यस्यौषधीः प्रसर्पथाङ्गमङ्गं परुष्परुः । ततो यक्ष्मं वि बाधध्व उग्रो मध्यमशीरिव ॥ १२ ॥

यस्य । ओषधीः । प्रऽसर्पथ । अङ्गम्ऽअङ्गम् । परुःऽपरुः ।
ततः । यक्ष्मम् । वि । बाधध्वे । उग्रः । मध्यमशीःऽइव ॥ १२ ॥

हे ओषधीः ओषधयः[1] यस्य रुग्णस्य अङ्गमङ्गं यद्यदङ्गं परुष्परुः यत्पर्व प्रसर्पथ प्रकर्षेण गच्छथ ततः अङ्गात्पर्वणश्च यक्ष्मं व्याधिं वि बाधध्वे । उग्रः उद्गूर्णबलः मध्यमशीः मध्यमस्थाने वर्तमानो राजा यथा[2] उपद्रवकारिणः समन्तान्स्थितान् शत्रून् पदे पदे विबाधते तद्वत् ॥

साकं यक्ष्म प्र पत चाषेण किकिदीविना ।
साकं वातस्य ध्राज्या साकं नश्य निहाकया ॥ १३ ॥

साकम् । यक्ष्म । प्र । पत । चाषेण । किकिदीविना ।
साकम् । वातस्य । ध्राज्या । साकम् । नश्य । निऽहाकया ॥ १३ ॥

हे अस्मदीयस्य पुरुषस्य शरीराधिष्ठायिन् यक्ष्म व्याधे त्वं साकं सहैव प्र पत प्रकर्षेण शीघ्रं गच्छ । केन साकमिति । उच्यते । चाषेण अतिशीघ्रं पतता चाषाख्येन पक्षिणा सह । तथा किकिदीविना पक्षिणा च सह । तथा वातस्य शीघ्रं गच्छतो वायोः ध्राज्या । 'ध्रज गतौ' । गत्या वेगेन सह गच्छ । तथा निहाकया गोधिकया साकं नश्य नाशं प्राप्नुहि ॥

अन्या वो अन्यामवत्वन्यान्यस्या उपावत ।
ताः सर्वाः संविदाना इदं मे प्रावता वचः ॥ १४ ॥

१. ग-त-भ—ओषध्यः । २. ग-त-भ—' यथा ' नास्ति ।

अन्या । वः । अन्याम् । अवतु । अन्या । अन्यस्याः । उप । अवत ।

ताः । सर्वाः । सम्ऽविदानाः । इदम् । मे । प्र । अवत । वचः ॥ १४ ॥

हे ओषधयः वः युष्माकं मध्ये अन्या ओषधिः अन्याम् ओषधिम् अवतु प्राप्नोतु । अवतिरत्र गत्यर्थः । तथा अन्यान्यस्याः समीपम् उपावत उपगच्छत । एवं याः सन्ति भिन्नास्मोषधयः ताः सर्वाः संविदानाः परस्परमैकमत्यं प्राप्ताः सत्यः इदं मे मदीयं वचः प्रार्थनालक्षणं वचनं प्रावत प्ररक्षत ॥

याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ॥ १५ ॥

याः । फलिनीः । याः । अफलाः । अपुष्पाः । याः । च । पुष्पिणीः ।

बृहस्पतिऽप्रसूताः । ताः । नः । मुञ्चन्तु । अंहसः ॥ १५ ॥

याः फलिनीः फलवत्यः याः अफलाः फलवर्जिताः याः अपुष्पाः पुष्परहिताः याश्च पुष्पिणीः पुष्पवत्यः बृहस्पतिप्रसूताः । बृहस्पतिर्मन्त्राभिमानी देवः । तेनानुज्ञाताः । ताः नः अस्मान् अंहसः मुञ्चन्तु मोचयन्तु ॥ ॥ १० ॥

मुञ्चन्तु मा शपथ्या३दथो वरुण्यादुत ।
अथो यमस्य पड्बीशात् सर्वस्माद्देवकिल्बिषात् ॥ १६ ॥

मुञ्चन्तु । मा । शपथ्यात् । अथो इति । वरुण्यात् । उत ।

अथो इति । यमस्य । पड्बीशात् । सर्वस्मात् । देवऽकिल्बिषात् ॥ १६ ॥

मा माम् ओषधयः शपथ्यात् शपथसंजातादेनसः सकाशात्[1] मुञ्चन्तु । अथो अपि च वरुण्यात् वरुणसंभवात् मां मुञ्चन्तु । वरुणोऽपि स्वपाशेन जातमात्रं पुरुषं बध्नाति । उत इति पूरणः । अथो अपि च यमस्य पड्बीशात् पादबन्धनाद्निगडान्मुञ्चन्तु । न केवलं वरुणादेः पापात् किंतु सर्वस्माद्देवकिल्बिषात् देवैः कृतात्पापान्मुञ्चन्तु ॥

अवपतन्तीरवदन् दिव ओषधयस्परि ।
यं जीवमश्नवामहै न स रिष्याति पूरुषः ॥ १७ ॥

अवऽपतन्तीः । अवदन् । दिवः । ओषधयः । परि ।

यम् । जीवम् । अश्नवामहै । न । सः । रिष्याति । पुरुषः ॥ १७ ॥

दिवः द्युलोकात् अवपतन्तीः अवपतन्त्यः ओषधयः इत्थं परि अवदन् । किमिति उच्यते । यं जीवं[2] जीवन्तम्[3] अश्नवामहै व्याप्नुमः न सः पूरुषः पुरुषः रिष्याति रिष्यति विनश्यति[4] ॥

१. ग-त१.२.३.६.७.८-मञ्मु-पापात् । २. त-' जीवं ' नास्ति । ३. भ-' जीवन्तं ' नास्ति । ४. ग-त७-मु-न हिंस्यते; त१.२-म हिंस्यते; त३.६-म हिंस्येत; त८-भ-न हिंस्यात् ।

या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः ।
तासां त्वमस्युत्तमारं कामाय शं हृदे ॥ १८ ॥

याः । ओषधीः । सोमऽराज्ञीः । बह्वीः । शतऽविचक्षणाः ।
तासाम् । त्वम् । असि । उत्ऽतमा । अरम् । कामाय । शम् । हृदे ॥ १८ ॥

या ओषधीः ओषधयः सोमराज्ञीः सोमो राजा स्वामी यासां तास्तथोक्ताः बह्वीः असंख्याताः शतविचक्षणाः बहुदर्शना हे सोमाख्ये ओषधे तासाम् ओषधीनां त्वम् उत्तमा असि । यस्मादेवं तस्मात् अरम् अलमत्यर्थं कामाय कान्ताय हृदे हृदयाय शं सुखकरी भवेति शेषः ॥

या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु ।
बृहस्पतिप्रसूता अस्यै सं दत्त वीर्यम् ॥ १९ ॥

याः । ओषधीः । सोमऽराज्ञीः । विऽस्थिताः । पृथिवीम् । अनु ।
बृहस्पतिऽप्रसूताः । अस्यै । सम् । दत्त । वीर्यम् ॥ १९ ॥

या ओषधीः ओषधयः[1] सोमराज्ञीः पृथिवीमनु विष्ठिताः विविधं स्थिताः दिवः सकाशादागत्य पृथिव्यां नानाभेदेन स्थिताः बृहस्पतिप्रसूताः बृहस्पतिनाभ्यनुज्ञाताः सत्यो यूयम् अस्यै रुग्णतन्वे वीर्यं सं दत्त संधत्त ॥

मा वो रिषत्खनिता यस्मै चाहं खनामि वः ।
द्विपच्चतुष्पदस्माकं सर्वमस्त्वनातुरम् ॥ २० ॥

मा । वः । रिषत् । खनिता । यस्मै । च । अहम् । खनामि । वः ।
द्विऽपत् । चतुःऽपत् । अस्माकम् । सर्वम् । अस्तु । अनातुरम् ॥ २० ॥

हे ओषधयः वः युष्मान् मा रिषत् मा हिंस्यात् । कः । खनिता भूमेः खननकर्ता । यस्मै रुग्णाय चाहं खनामि वः युष्मान् । किंच अस्माकं संबन्धि द्विपत् पुत्रभृत्यादिकं[2] चतुष्पत् गोमहिष्यादिकं च यदस्ति तत् सर्वम् अनातुरम् अरोगम् अस्तु ॥

याश्चेदमुपशृण्वन्ति याश्च दूरं परागताः ।
सर्वाः संगत्य वीरुधोऽस्यै सं दत्त वीर्यम् ॥ २१ ॥

याः । च । इदम् । उपऽशृण्वन्ति । याः । च । दूरम् । पराऽगताः ।
सर्वाः । सम्ऽगत्य । वीरुधः । अस्यै । सम् । दत्त । वीर्यम् ॥ २१ ॥

याश्च ओषधयः इदं स्तोत्रम् उपशृण्वन्ति याश्च ओषधयः दूरं परागताः सर्वाः वीरुधः संगत्य संगताः सत्यो हे वीरुधः अस्यै रुग्णतन्वे वीर्यं सं दत्त ॥

१. ग-ल-म-' ओषधयः ' नास्ति ।　२. त१.२.३.६.७.८-म-पुत्रभृत्यादिकं ।

ओषधयः सं वदन्ते सोमेन सह राज्ञा ।
यस्मै कृणोति ब्राह्मणस्तं राजन् पारयामसि ॥ २२ ॥

ओषधयः । सम् । वदन्ते । सोमेन । सह । राज्ञा ।
यस्मै । कृणोति । ब्राह्मणः । तम् । राजन् । पारयामसि ॥ २२ ॥

ओषधयः सर्वाः सोमेन राज्ञा सह सं वदन्ते संवादं कुर्वन्ति । किमिति तदुच्यते । यस्मै रुग्णाय ब्राह्मणः ओषधिमाहात्म्यज्ञो ब्राह्मणो वैद्यः कृणोति करोति चिकित्सां तं रुग्णं हे राजन् पारयामसि पारयामः ॥ इदन्तो मसिः ॥

त्वमुत्तमास्योषधे तव वृक्षा उपस्तयः ।
उपस्तिरस्तु सोऽस्माकं यो अस्माँ अभिदासति ॥ २३ ॥

त्वम् । उत्ऽतमा । असि । ओषधे । तव । वृक्षाः । उपस्तयः ।
उपस्तिः । अस्तु । सः । अस्माकम् । यः । अस्मान् । अभिऽदासति ॥ २३ ॥

हे ओषधे सोमाख्ये त्वम् ओषधीनामन्यासाम्[1] उत्तमासि । तव वृक्षाः सर्वे उपस्तयः अधःशायिन एव । तथा सति सः उपस्तिरस्तु अधःशायी भवतु योऽस्मान् अभिदासति अभिहिनस्ति भ्रातृव्य इति ॥ ॥ ११ ॥

‘बृहस्पते प्रति’ इति द्वादशर्चमष्टमं सूक्तं त्रैष्टुभं बृहस्पतिमित्रादिसर्वदेवताकम् । आर्ष्टिषेणपुत्रो देवापिर्नामर्षिः । तथा चानुक्रान्तं—‘बृहस्पते द्वादशार्ष्टिषेणो देवापिर्वृष्टिकामो देवांस्तुष्टाव’ । गतः सूक्तविनियोगः । अस्य सूक्तस्याख्यानं निरुक्तकारः प्रदर्शयति—‘देवापिश्चार्ष्टिषेणः शंतनुश्च कौरव्यौ भ्रातरौ बभूवतुः । स शंतनुः कनीयानभिषेचयांचक्रे देवापिस्तपः[2] प्रतिपेदे । ततः शंतनो राज्ये द्वादश वर्षाणि देवो न ववर्ष । तमूचुर्ब्राह्मणा अधर्मस्त्वया चरितो ज्येष्ठं भ्रातरमन्तरित्याभिषेचितं तस्मात्ते देवो न वर्षतीति । स शंतनुर्देवापिं शिशिक्ष राज्येन । तमुवाच देवापिः पुरोहितस्तेऽसानि याजयानि च त्वेति । तस्यैतद्वर्षकामसूक्तम्’ ( निरु. २. १० ) इति ॥

बृहस्पते प्रति मे देवतामिहि मित्रो वा यद्वरुणो वासि पूषा ।
आदित्यैर्वा यद्वसुभिर्मरुत्वान्स पर्जन्यं शंतनवे वृषाय ॥ १ ॥

बृहस्पते । प्रति । मे । देवताम् । इहि । मित्रः । वा । यत् । वरुणः । वा । असि । पूषा ।
आदित्यैः । वा । यत् । वसुऽभिः । मरुत्वान् । सः । पर्जन्यम् । शम्ऽतनवे । वृषय ॥ १ ॥

तत्र ब्रह्मण्ये प्रवृत्तो बृहस्पतिमनुधावति । हे बृहस्पते मे मम वृष्ट्यर्थं[3] प्रति देवतां प्रति इहि प्रतिगच्छ । यद्वा सर्वा देवताः प्रतिगच्छ । यदि त्वं मित्रो वा असि अथवा[4] वरुणः असि यद्वा पूषा असि अथवा[5] आदित्यैः द्वादशादित्यैरन्यैरादित्यैः वसुभिः वासकैरष्टवसुभिर्धरध्रुवादिभिः सह मरुत्वान् । मरुतो देवाः । तद्वानसि । सः त्वं पर्जन्यं तर्पयितारं मेघं शंतनवे राज्ञे वृषाय वर्षय । ‘छन्दसि शायजपि’ इति व्यत्ययेन शपोऽपि शायजादेशः ॥

---

१. ग-स-भ—ओषधीनामन्येषां । २. ग-स१.२.३ ६.८-अ४.५.८—स देवापिस्तपः । ३. त१.२.३. ६.७.८-अ१.२.४.८—वृष्ट्यर्थं । ४. त१.२.३.६.७—वा अथवा; त४.५—वा यद्वा । ५. ग४—वा अथवा ।

आ देवो दूतो अजिरश्चिकित्वान् त्वद्देवापे अभि मामगच्छत् ।
प्रतीचीनः प्रति मामा ववृत्स्व दधामि ते द्युमतीं वाचमासन् ॥ २ ॥

आ । देवः । दूतः । अजिरः । चिकित्वान् । त्वत् । देवऽआपे । अभि । माम् । अगच्छत् ।
प्रतीचीनः । प्रति । माम् । आ । ववृत्स्व । दधामि । ते । द्युऽमतीम् । वाचम् । आसन् ॥ २ ॥

देवः कश्चित् दूतः अजिरः गमनशीलः चिकित्वान् चेतनावान् हे देवापे त्वत् त्वत्सकाशात् त्वया प्रेषितः सन् माम् अभि आ अगच्छत् अभ्यागच्छतु । हे बृहस्पते प्रतीचीनः अस्मदभिमुखः मां प्रति आ ववृत्स्व मां प्रत्यागच्छ । ते तुभ्यं त्वदर्थं द्युमतीं दीप्तियुक्तां वाचं स्तुतिरूपां दधामि[1] आसन् आस्येऽस्मदीये ॥

अस्मे धेहि द्युमतीं वाचमासन् बृहस्पते अनमीवामिषिराम् ।
यया वृष्टिं शंतनवे वनाव दिवो द्रप्सो मधुमाँ आ विवेश ॥ ३ ॥

अस्मे इति । धेहि । द्युऽमतीम् । वाचम् । आसन् । बृहस्पते । अनमीवाम् । इषिराम् ।
यया । वृष्टिम् । शम्ऽतनवे । वनाव । दिवः । द्रप्सः । मधुऽमान् । आ । विवेश ॥ ३ ॥

हे बृहस्पते त्वम् अस्मे अस्मासु द्युमतीं दीप्तिमतीं वाचं स्तोत्रात्मिकाम् आसन् आस्येऽस्मदीये धेहि स्थापय । कीदृशीं वाचम् । अनमीवाम् अमीवारहिताम् । वाचोऽमीवा नाम गद्गदादिदोषः । तथा इषिरां गमनशीलाम् । यया वाचा स्तुत्यात्मिकया देवानिष्ट्वा शंतनवे वृष्टिकामाय वनाव संभजेवहि वृष्टिं त्वं चाहं च दिवः द्युलोकात् । त्वयाधिष्ठितः द्रप्सः उदकस्यन्दः मधुमान् माधुर्योपेतः आ विवेश आविशति । तां वाचमिति समन्वयः ॥

आ नो द्रप्सा मधुमन्तो विशन्त्विन्द्र देह्यधिरथं सहस्रम् ।
नि षीद होत्रमृतुथा यजस्व देवान् देवापे हविषा सपर्य ॥ ४ ॥

आ । नः । द्रप्साः । मधुऽमन्तः । विशन्तु । इन्द्र । देहि । अधिऽरथम् । सहस्रम् ।
नि । सीद । होत्रम् । ऋतुऽथा । यजस्व । देवान् । देवऽआपे । हविषा । सपर्य ॥ ४ ॥

नः अस्मान् द्रप्साः वृष्टिसंस्त्यायाः मधुमन्तः माधुर्योपेताः आ विशन्तु । हे इन्द्र परमेश्वर बृहस्पते अधिरथं रथस्याप्युपरि वर्तमानं सहस्रं सहस्रसंख्याकं धनं देहि[2] धेहि । यद्वा । रथमधिकं यस्य सहस्रस्य तादृशं गोसहस्रम् । हे देवापे नि षीद होत्रम् । आर्त्विज्ये निषीद । निषण्णश्च त्वम् ऋतुथा काले काले यजस्व यष्टव्यान् देवान् स्तुत्या हविषा च सपर्य परिचर ॥

आर्ष्टिषेणो होत्रमृषिर्निषीदन् देवापिर्देवसुमतिं चिकित्वान् ।
स उत्तरस्मादधरं समुद्रमपो दिव्या असृजद्वर्ष्या अभि ॥ ५ ॥

आर्ष्टिषेणः । होत्रम् । ऋषिः । निऽसीदन् । देवऽआपिः । देवऽसुमतिम् । चिकित्वान् ।
सः । उत्ऽतरस्मात् । अधरम् । समुद्रम् । अपः । दिव्याः । असृजत् । वर्ष्याः । अभि ॥ ५ ॥

१. ग-त्र४.५-दधामि धारयामि । २. ग-म-' देहि ' नास्ति ।

आर्ष्टिषेणः ऋष्टिषेणस्य पुत्रः देवापिः ऋषिः देवसुमतिं देवानां कल्याणीं मतिं स्तुतिं चिकित्वान् जानन् होत्रं होतृकर्म कर्तुं निषीदन् निषण्णो भवति। स उत्तरस्मात् उपरि वर्तमानादन्तरिक्षाख्यात् समुद्रात् अधरम् अधो वर्तमानं पार्थिवं समुद्रम् अभि दिव्याः दिवि भवाः वर्ष्याः वर्षभवाः अपः असृजत् सृजतु। अत्र 'आर्ष्टिषेण ऋष्टिषेणस्य पुत्रः' (निरु. २. ११) इत्यादि निरुक्तं द्रष्टव्यम् ॥

अस्मिन्त्समुद्रे अध्युत्तरस्मिन्नापो देवेभिर्निवृता अतिष्ठन्।
ता अद्रवन्नार्ष्टिषेणेन सृष्टा देवापिना प्रेषिता मृक्षिणीषु ॥ ६ ॥

अस्मिन्। समुद्रे। अधि। उत्ऽतरस्मिन्। आपः। देवेभिः। निऽवृताः। अतिष्ठन्।
ताः। अद्रवन्। आर्ष्टिषेणेन। सृष्टाः। देवऽआपिना। प्रऽइषिताः। मृक्षिणीषु ॥ ६ ॥

अस्मिन् पार्थिवे समुद्रे पूरणीये सति। अधि इति सप्तम्यर्थानुवादी। उत्तरस्मिन् समुद्रे अन्तरिक्षाख्ये आपः उदकानि देवेभिः द्योतमानैः निवृताः निरुद्धाः अतिष्ठन्। ताः आपः आर्ष्टिषेणेन ऋष्टिषेणस्य पुत्रेण देवापिना सृष्टाः प्रेषिताः प्रकर्षेणेच्छां प्राप्ताः काङ्क्षिताः मृक्षिणीषु मृष्टवतीषु परिमृष्टासु स्थलीषु अद्रवन् स्रवन्ति ॥ ॥ १२ ॥

यद्देवापिः शंतनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत्।
देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अयच्छत् ॥ ७ ॥

यत्। देवऽआपिः। शम्ऽतनवे। पुरःऽहितः। होत्राय। वृतः। कृपयन्। अदीधेत्।
देवऽश्रुतम्। वृष्टिऽवनिम्। रराणः। बृहस्पतिः। वाचम्। अस्मै। अयच्छत् ॥ ७ ॥

यत् यदा देवापिः आर्ष्टिषेणः शंतनवे स्वभ्रात्रे कौरव्याय पुरोहितः सन् होत्राय होत्रार्थं वृतः सन् देवश्रुतम्। देवा एनं शृण्वन्तीति देवश्रुत्। तं तथा वृष्टिवनिं वृष्टियाचिनं बृहस्पतिम् अदीधेत् अन्वध्यायत् स च रराणः रममाणः बृहस्पतिः देवः अस्मै देवापये वाचम् अयच्छत् ॥

यं त्वा देवापिः शुशुचानो अग्न आर्ष्टिषेणो मनुष्यः समीधे।
विश्वेभिर्देवैरनुमद्यमानः प्र पर्जन्यमीरया वृष्टिमन्तम् ॥ ८ ॥

यम्। त्वा। देवऽआपिः। शुशुचानः। अग्ने। आर्ष्टिषेणः। मनुष्यः। सम्ऽईधे।
विश्वेभिः। देवैः। अनुऽमद्यमानः। प्र। पर्जन्यम्। ईरय। वृष्टिऽमन्तम् ॥ ८ ॥

हे अग्ने यं त्वा त्वां शुशुचानः स्तोत्रेण ज्वलन् मनुष्यः आर्ष्टिषेणः देवापिः समीधे सम्यग्दीपयति स त्वं विश्वेभिः सर्वैः देवैः अनुमद्यमानः अनुमाद्यमानः[1] सन् पर्जन्यं मेघं वृष्टिमन्तं वर्षणवन्तं प्र ईरय गमय ॥

त्वां पूर्व ऋषयो गीर्भिरायन्त्वामध्वरेषु पुरुहूत विश्वे।
सहस्राण्यधिरथान्यस्मे आ नो यज्ञं रोहिदश्वोप याहि ॥ ९ ॥

---

1. ग-त४.५-म-अनुमोद्यमानः।

त्वाम् । पूर्वे । ऋषयः । गीःऽभिः । आयन् । त्वाम् । अध्वरेषु । पुरुऽहूत । विश्वे ।
सहस्राणि । अधिऽरथानि । अस्मे इति । आ । नः । यज्ञम् । रोहित्ऽअश्व । उप । याहि ॥९॥

हे अग्ने त्वां पूर्वे ऋषयः गीर्भिः स्तुतिभिः आयन् आगच्छन् । तथा हे पुरुहूत बहुभिराहूताग्ने विश्वे सर्वेऽपीदानींतना यजमानाः अध्वरेषु यज्ञेषु स्तुतिभिः गच्छन्तीति[1] शेषः । किंच[2] सहस्राणि सहस्रसंख्यानि गोयूथानि अधिरथानि रथाधिकानि अस्मे[*] अस्माकं शंतनुना हविष्प्रदत्वेन संकल्पितानि भवन्त्विति शेषः[3] । हे रोहिदश्व नो यज्ञम् उप याहि उपागच्छ ॥

एतान्यग्ने नवतिर्नव त्वे आहुतान्यधिरथा सहस्रा ।
तेभिर्वर्धस्व तन्वः शूर पूर्वीर्दिवो नो वृष्टिमिषितो रिरीहि ॥ १० ॥

एतानि । अग्ने । नवतिः । नव । त्वे इति । आऽहुतानि । अधिऽरथा । सहस्रा ।
तेभिः । वर्धस्व । तन्वः । शूर । पूर्वीः । दिवः । नः । वृष्टिम् । इषितः । रिरीहि ॥ १० ॥

हे अग्ने गवां नवतिः नव च तथा एतानि अधिरथानि सहस्रा सहस्राणि च रथाधिकानि गवां सहस्राणि च त्वे त्वयि आहुतानि त्वयि प्रक्षिप्तव्ये सत्याहुतानि । यद्वा । त्वे त्वयि आहुतानि[3] समर्पितानीत्यर्थः । तेभिः तैः प्रत्तैः पूर्वीः बह्वीः तन्वः तनूः शुष्मदीप्ताः वर्धस्व वर्धय । नः अस्मदर्थं दिवः द्युलोकात् वृष्टिम् इषितः प्रार्थितः सन् रिरीहि प्रयच्छ ॥

एतान्यग्ने नवतिं सहस्रा सं प्र यच्छ वृष्ण इन्द्राय भागम् ।
विद्वान् पथ ऋतुशो देवयानानप्यौलानं दिवि देवेषु धेहि ॥ ११ ॥

एतानि । अग्ने । नवतिम् । सहस्रा । सम् । प्र । यच्छ । वृष्णे । इन्द्राय । भागम् ।
विद्वान् । पथः । ऋतुऽशः । देवऽयानान् । अपि । औलानम् । दिवि । देवेषु । धेहि ॥ ११ ॥

हे अग्ने गवाम् एतानि नवतिं सहस्रा सहस्राणि च वृष्णे वर्षित्रे इन्द्राय भागं सं प्र यच्छ । तदीयत्वेनोपकल्पितमस्मै देहि । किंच देवयानान् पथः देवयानान् मार्गान् विद्वान् त्वम् ऋतुशः काले काले औलानम् अपि कुरुकुलजातमपि शान्तनवं देवेषु मध्ये धेहि निधेहि स्थापय ॥

अग्ने बाधस्व वि मृधो वि दुर्गहापामीवामप रक्षांसि सेध ।
अस्मात्समुद्राद्बृहतो दिवो नोऽपां भूमानमुप नः सृजेह ॥ १२ ॥

अग्ने । बाधस्व । वि । मृधः । वि । दुःऽगहा । अप । अमीवाम् । अप । रक्षांसि । सेध ।
अस्मात् । समुद्रात् । बृहतः । दिवः । नः । अपाम् । भूमानम् । उप । नः । सृज । इह ॥ १२ ॥

हे अग्ने[4] दुर्गहा दुर्गाहाणि दुःखेन गाहितव्यानि शत्रुपुराणि वि बाधस्व । तथा अमीवां रोगम् अप सेध । तथा रक्षांसि अप सेध अपसारय । अस्मात् समुद्रात् समुद्रवत्साधनात्[5]

१. ग–स्तुवन्तीति; त-भ– गच्छन्तीति । २. ग–स त्वमधिरथानि सहस्राणि रथोपरि वर्तमानानि धनानि सहस्रसंख्याकानि अस्मभ्यं यच्छेति शेषः । * त-भ–'अस्मे' नास्ति । ३. ग१.२–आहुतानि आहुतानि; ग४–आहुतान्याहुतानि; त९–आहुतानि आहुतानि; त६.८-भ१.४.७–आहुतानि आहुतानि । ४. भ१.२–अग्ने मृधः शत्रून् विबाधस्व तथा । ५. ग४–समुद्रतरणसाधनात्; त१.२.३.७-भ६.२.४.८–समुद्रवरणसाधनात् ।

वाजं शूरैर्गन्तव्यं संग्रामं यातां सः इन्द्रः। 'न लोकाव्यय' इति षष्ठीप्रतिषेधः। अपदुष्पदा अपगतदुष्पदत्वेन यन् गच्छन् सनिष्यन् तत्र शत्रुधनानि संभक्तुमिच्छन् परि षदत् परिषीदति। कुत्रेति उच्यते। स्वर्षाता स्वर्षातौ सर्वैराभोप्ये संग्रामे[1]। किंच अनर्वा युद्धे अप्रत्यृत[2] इन्द्रः शतदुरस्य शतद्वारस्य शत्रुपुरस्य अन्तर्निहितं यत् वेदः धनमस्ति तद्धनं वर्पसा आवरकेण बलेन अभि भूत्[2] अभिभवति। किं कुर्वन्। शिश्नदेवान् अब्रह्मचर्यान् शतद्वारेषु शत्रुपुरसंबन्धिषु वर्तमानान् घ्नन् हिंसन्॥

स यह्व्यो३ऽवनीर्गोष्वर्वा जुहोति प्रधन्यासु सस्निः।
अपादो यत्र युज्यासोऽरथा द्रोण्यश्वास ईरते घृतं वाः॥ ४॥

सः। यह्व्यः। अवनीः। गोषु। अर्वा। आ। जुहोति। प्रऽधन्यासु। सस्निः।
अपादः। यत्र। युज्यासः। अरथाः। द्रोणिऽअश्वासः। ईरते। घृतम्। वारिति वाः॥४॥

सः इन्द्रः अर्वा मेघेष्वभिगन्ता सस्निः सरणकुशलः प्रधन्यासु प्रकृष्टधननिमित्तासु गोषु भूमिषु यह्व्यः। महन्नामैतत्। महतीः अवनीः। अवनीत्युदकनाम आपः। ताः आ जुहोति आक्षिपति। यत्र यासु भूमिषु अपादः पादरहिताः अरथाः रथवर्जिताः। पादरहिताः केवलं रथेन गच्छन्ति। केनापि शून्याः द्रोण्यश्वासः द्रुतव्यापनाः युज्यासः युज्या इन्द्रस्य सख्यो नद्यः वाः वारकं घृतम् उदकम् ईरते प्रेरयन्ति तत्राजुहोति॥

स रुद्रेभिरशस्तवार ऋभ्वा हित्वी गयमारेअवद्य आगात्।
वम्रस्य मन्ये मिथुना विवव्री अन्नमभीत्यारोदयन्मुषायन्॥ ५॥

सः। रुद्रेभिः। अशस्तऽवारः। ऋभ्वा। हित्वी। गयम्। आरेऽअवद्यः। आ। अगात्।
वम्रस्य। मन्ये। मिथुना। विवव्री इति विऽवव्री। अन्नम्। अभिऽइत्य। अरोदयत्। मुषायन्॥५॥

सः इन्द्रः रुद्रेभिः रुद्रपुत्रैर्मरुद्भिः सहितः आगात् आगच्छतु। कीदृशः[3]। अशस्तवारः स्तोतृभिरप्रार्थितधनः। स्वयमेव प्रदातेत्यर्थः। तथा ऋभ्वा महान् गयं हित्वी हित्वा स्वस्थानं परित्यज्यागात् आगच्छतु[4]। तत्र संबन्धः। आरेअवद्यः दूरेगतगर्हः। किंच वम्रस्य एतन्नामकस्य ऋषेर्मम मिथुना मिथुनौ मातापितरौ विवव्री विगतवस्त्रौ मन्ये अवगच्छामि। अयमिन्द्रः अन्नं शत्रुसंबन्धि अभीत्य अभिप्राप्य मुषायन् मुष्णन् अरोदयत् रोदयति। 'छन्दसि शायजपि' इत्यत्रापि मुषेः श्नः शायजादेशः॥

स इद्दासं तुवीरवं पतिर्दन् षळक्षं त्रिशीर्षाणं दमन्यत्।
अस्य त्रितो न्वोजसा वृधानो विपा वराहमयोअग्रया हन्॥ ६॥

सः। इत्। दासम्। तुविऽरवम्। पतिः। दन्। षट्ऽअक्षम्। त्रिऽशीर्षाणम्। दमन्यत्।
अस्य। त्रितः। नु। ओजसा। वृधानः। विपा। वराहम्। अयःऽअग्रया। हन्निति हन्॥ ६॥

---

१. ख-ग–' संग्रामे ' नास्ति। २. ग–' अप्रत्यृत ..... भूत् ' नास्ति। ३. ग-ख–कीदृशः सः।
४. ग-ख-ग–आगच्छति।

स इत् स एवेन्द्रः पतिः सर्वस्य स्वामी दासम् उपक्षपयितारं तुवीरवं बहुशब्दं संग्रामे भयंकरं शब्दं कुर्वाणं वृत्रं दन् दमयन् व्यंसम् अक्षिपक्ष्मकोपेतं त्रिशीर्षाणं त्रिशिरस्कं त्वष्टुः पुत्रं विश्वरूपं दमन्यत् दमितुं प्रहर्तुमैच्छत्। अवधीदित्यर्थः। यद्वा। दमयतीति दमनः। नन्द्यादित्वात् ल्युः। स इवाचरति। 'उपमानादाचारे' (पा. सू. ३. १. १०) इति क्यच्यन्त्यलोपश्छान्दसः। ततो लङि 'बहुलं छन्दसि' इत्यडभावः। किंच त्रितः एतन्नामा महर्षिः अस्य इन्द्रस्य ओजसा बलेन वृधानः वर्धमानः विपा अङ्गुल्या। कीदृश्या। अयोअग्रया अयोवत्कठिननखया वराहं वराहारम्[1] उदकवन्तं मेघं व्यहन्[2] विहतवान्॥ ॥ १७ ॥

स दुह्वणे मनुष ऊर्ध्वसान आ साविषदर्शसानाय शरुम्।
स नृतमो नहुषोऽस्मत्सुजातः पुरोऽभिनदर्हन् दस्युहत्ये॥ ७॥

सः। दुह्वणे। मनुषे। ऊर्ध्वसानः। आ। साविषत्। अर्शसानाय। शरुम्।
सः। नृऽतमः। नहुषः। अस्मत्। सुऽजातः। पुरः। अभिनत्। अर्हन्। दस्युऽहत्ये॥ ७॥

सः इन्द्रः दुह्वणे दुह्वणाय वधं शत्रुभिर्हिंसनीयाय मनुषे मनुष्याय योद्धुं स्वभक्ताय ऊर्ध्वसानः। ऊर्ध्वं उच्छ्रितः शौर्यादिभिर्गुणैरधिकः सन्[3] स्यति शत्रूणामन्तं करोतीत्यूर्ध्वसः। स[3] इवाचरन्। ऊर्ध्वसशब्दादाचारार्थे क्विबन्ताच्छानच्[4]। अर्शसानाय शत्रूणां हिंसित्रे शरुं हिंसकमायुधम् आ साविषत् आभिमुख्येन प्रसौति यच्छति। यद्वा। दुह्वणे मनुषे द्रोग्धव्याय मनुष्याय अर्शसानाय स्वभक्तहिंसित्रे तस्य यथार्थमूर्ध्वसानः सन् शरुम् आ साविषत् वज्रं प्रेरयति। सः एवेन्द्रः नहुषः मनुष्यात् नृतमः मनुष्याणां नेतृतमः संग्रामे शूराणां गमयितृतमः। यद्वा। नृतमो नहुषो बन्धकश्च। अस्मत् अस्मदर्थं सुजातः सुष्ठु प्रादुर्भूतः अर्हन् पूज्यः सन् दस्युहत्ये। दस्यवः उपक्षपयितारः शत्रवः। तेषां हत्यं हननं यस्मिन् तादृशे[5] संग्रामे पुरः शत्रूणां शरीराणि अभिनत् भिन्नवान्॥

सो अभ्रियो न यवस उदन्यन् क्षयाय गातुं विदन्नो अस्मे।
उप यत्सीददिन्दुं शरीरैः श्येनोऽयोपाष्टिर्हन्ति दस्यून्॥ ८॥

सः। अभ्रियः। न। यवसे। उदन्यन्। क्षयाय। गातुम्। विदत्। नः। अस्मे इति।
उप। यत्। सीदत्। इन्दुम्। शरीरैः। श्येनः। अयःऽअपाष्टिः। हन्ति। दस्यून्॥ ८॥

सः इन्द्रः अभ्रियः न। न भ्राजन्तेऽपो बिभ्रतीति वाभ्राणि मेघाः। तेषां संघोऽभ्रियः[6]। स इव यवसे गवादिभक्षणसाधनाय तृणाय उदन्यन् उदकं दातुमिच्छन्। तथा क्षयाय गमनाय निवासाय वा अस्मे अस्माकं गातुं[7] मार्गं विदत् लम्भयत्। नः इति पूरणः। तादृशः सन् यत् यदा इन्दुं सोमं शरीरैः स्वशरीरावयवैरङ्गैः उप सीदत् उपगच्छति। यच्छब्दयोगादनिघातः। तदानीं श्येनः। सादृश्यप्रधानोऽयं[8] निर्देशः। श्येनसदृशः श्येनवत्प्रशंसनीयगमनः

१. त१-२-३.६.७-मु-'वराहारं' नास्ति; त४.५-वराहाकारं। २ त१.२.३ ६.७-व्यवहन्। ३. ग-त-भ-'सन् ... ... स' नास्ति। ४. त-१.२.३.७-क्विबन्तादसानच्; भ-क्विबन्तादस्तानच्। ५. त-स तादृशे; भ-सा तादृशे। ६. त४.५-संबंधी अभियः। ७. त-भ-गातुमस्माकं। ८. ग१-त-भ-सदृश°; ग४-तादृश°।

अयोपाष्टिः । अयस्मयीभिरष्टिभिर्यस्य स अद्रेतोऽपाष्टिः पार्ष्णिः । अथोमयोऽपाष्टिः पार्ष्णिर्यस्य सः । दस्यून् शत्रून् हन्ति हिनस्ति ॥

स व्राधतः शवसानेभिरस्य कुत्साय शुष्णं कृपणे परादात् ।
अयं कविमनयच्छस्यमानमत्कं यो अस्य सनितोत नृणाम् ॥ ९ ॥

सः । व्राधतः । शवसानेभिः । अस्य । कुत्साय । शुष्णम् । कृपणे । परा । अदात् ।
अयम् । कविम् । अनयत् । शस्यमानम् । अत्कम् । यः । अस्य । सनिता । उत । नृणाम् ॥ ९ ॥

सः इन्द्रः व्राधतः[1] महन्नामैतत् । महतोऽपि शत्रून् शवसानेभिः बलमाचरद्भिरायुधैः अस्य अस्यतु । 'असु क्षेपणे' । व्यत्ययेन मध्यमः । कुत्साय[2] एतन्नामकाय कृपणे स्तोत्रे । कृपतिः स्तुतिकर्मा । शुष्णं शोषकमेतन्नामकमसुरं परादात् पराभूय खण्डितवान्[3] । 'कुत्साय शुष्णमशुषं नि बर्हीः' ( ऋ. सं. ४. १६. १२ ) इति मन्त्रान्तरम् । किंच अयम् इन्द्रः कविम् उशनसम् । कविरिति पितुर्नाम्ना पुत्रस्यापि व्यवहार उपचारात् । शास्यमानं स्तूयमानम् अनयत् धनं प्रापयत् ... तिरोहितम् । यद्वा । कविं भार्गवमेव स्तोतृभिः शास्यमानं स्वयमनयत् । यः कविः अस्य इन्द्रस्य अत्कं रूपं[4] सनिता संभक्ता भवति । 'न लोकाव्यय॰' इति षष्ठीप्रतिषेधः । उत अपि च नृणां नृत्यादिनेतॄणामिन्द्रानुचराणां मरुतां यः कविः सनिता तमनयदिति ॥

अयं दशस्यन्नर्येभिरस्य दस्मो देवेभिर्वरुणो न मायी ।
अयं कनीन ऋतुपा अवेद्यमिमीताररुं यश्चतुष्पात् ॥ १० ॥

अयम् । दशस्यन् । नर्येभिः । अस्य । दस्मः । देवेभिः । वरुणः । न । मायी ।
अयम् । कनीनः । ऋतुऽपाः । अवेदि । अमिमीत । अररुम् । यः । चतुःऽपात् ॥ १० ॥

अयम् इन्द्रः दशस्यन् स्तोतृभ्यो धनं प्रयच्छन् । दशस्यतिर्दानकर्मा । नर्येभिः[5] नर्यैर्नृहितैः मरुद्भिः अस्य अस्यति । छन्दसस्तिपो लोपः । यद्वा । व्यत्ययेन लोण्मध्यमः । तथा देवेभिः द्योतमानैः स्वतेजोभिः दस्मः दर्शनीयः वरुणो न वरुण इव । वरुणस्तमोवारक आदित्यो वरुण एव वा । स इव मायी मायावान्[6] । तथा अयं कनीनः कमनीयः ऋतुपाः ऋतौ पाता अवेदि अज्ञायि । तथा अररुम् असुरमेतन्नामानम् अमिमीत अमिनात् । यः अररुः चतुष्पात् पादचतुष्टयोपेतः । 'मीङ् हिंसायाम्' । लङि 'बहुलं छन्दसि' इति विकरणस्य श्लुः ॥

अस्य स्तोमेभिरौशिज ऋजिश्वा व्रजं दरयद्वृषभेण पिप्रोः ।
सुत्वा यद्यजतो दीदयद्गीः पुर इयानो अभि वर्पसा भूत् ॥ ११ ॥

अस्य । स्तोमेभिः । औशिजः । ऋजिश्वा । व्रजम् । दरयत् । वृषभेण । पिप्रोः ।
सुत्वा । यत् । यजतः । दीदयत् । गीः । पुरः । इयानः । अभि । वर्पसा । भूत् ॥ ११ ॥

---

१. ग१.२-त१.२.३.६.७.८-म–व्राधतो व्राधन् । २. ग–यः कुत्साय; त-अ१.२.४.८–अयः कुत्साय । ३. ग४–खंडितवान् शो ( अवसं )कने लेटि रूपं । ४. ग४–आरुमीवरूपं । ५. ग१.२-त-अ१.२.४.८–स नर्येभिः । ६. ग-त१.२.३.६.७-मु–मायावान् प्रज्ञावान् ।

अस्य इन्द्रस्य स्तोमेभिः स्तोत्रैः औशिजः उशिजः पुत्रः ऋजिश्वा एतन्नामा वृषभेण[1] वर्षकेण वृषभेण वा युक्तं व्रजं गोष्ठं पिप्रोः एतन्नामकस्यासुरस्य संबन्धिनं तेनापहृत्य पालितं दरयत् अदारयत्। यत् यदा सुत्वा सोमस्य सोता। 'सुयजोर्ङ्वनिप्' इति ङ्वनिप्। 'ह्रस्वस्य पिति०' इति तुक्। यजतः यज्ञियः गीः स्तुतिवाचः दीदयत् दीपितवान्। तथा यदा इयानः[2] गच्छन् पुरः शत्रुपुराणि। यद्वा। पुरः पुर इव संघीभूतानि पापानि। अभि भूत् अभिभवति। केन साधनेन। वर्पसा। रूपनामैतत्। रूपेणेन्द्रानुगृहीतेन। यदैवमकरोत् तदा व्रजं दरयदिति संबन्धः ॥

**एवा महो असुर वक्षथाय वम्रकः पड्भिरुप सर्पदिन्द्रम्।**
**स इयानः करति स्वस्तिमस्मा इषमूर्जं सुक्षितिं विश्वमाभाः ॥ १२ ॥**

एव । महः । असुर । वक्षथाय । वम्रकः । पट्ऽभिः । उप । सर्पत् । इन्द्रम् ।
सः । इयानः । करति । स्वस्तिम् । अस्मै ।
इषम् । ऊर्जम् । सुऽक्षितिम् । विश्वम् । आ । अभाः ॥ १२ ॥

अनया स्तुतिमुपसंहृत्याभिमतं वम्रकः प्रार्थयते। हे असुर बलवन्निन्द्र त्वाम् एव एवमुक्तप्रकारेण महः महतो हविषः स्तोत्रस्य वा वक्षथाय वहनाय महतः स्वर्गादेः प्रापणाय वा पड्भिः पादैः उप सर्पत् उपागमत्। सः इयानः उपगम्यमानः[3] सन् करति करोतु स्वस्तिम् अविनाशम् अस्मै वम्रकाय। तथा इषम् अन्नम् ऊर्जं रसं सुक्षितिं सुनिवासं सम्यक् विश्वं सर्वम् आभाः आहरतु ॥ ॥ १५ ॥ ॥ ८ ॥

अष्टमेऽनुवाके त्रयोदश सूक्तानि। तत्र 'इन्द्र दृह्य' इति द्वादशर्चं प्रथमं सूक्तं वन्दनपुत्रस्य दुवस्योरार्षं वैश्वदेवम्। द्वादशी त्रिष्टुप्। शिष्टा जगत्यः। तथा चानुक्रान्तम्—'इन्द्र दुवस्युर्वान्दनो वैश्वदेवं त्वन्त्या त्रिष्टुप्' इति। गतो विनियोगः ॥

**इन्द्र दृह्य मघवन्त्वावदिद्भुज इह स्तुतः सुतपा बोधि नो वृधे।**
**देवेभिर्नः सविता प्रावतु श्रुतमा सर्वतातिमदितिं वृणीमहे ॥ १ ॥**

इन्द्र । दृह्य । मघऽवन् । त्वाऽवत् । इत् । भुजे । इह । स्तुतः । सुतऽपाः । बोधि । नः । वृधे ।
देवेभिः । नः । सविता । प्र । अवतु । श्रुतम् । आ । सर्वऽतातिम् । अदितिम् । वृणीमहे ॥ १ ॥

हे इन्द्र मघवन् धनवन् त्वं त्वावदित् त्वत्सदृशमेव शत्रुबलं दृह्य मारय। किमर्थम्। भुजे अस्माकं भोगाय[4]। तदर्थम् इह अस्मिन् यज्ञे स्तुतः सन् सुतपाः सुतस्य अभिषुतस्य सोमस्य पाता बोधि बुध्यस्व। अवेहीत्यर्थः। किमर्थम्। नः अस्माकं वृधे वर्धनाय। किंच देवेभिः देवैः सह नः अस्माकं श्रुतं विश्रुते यज्ञे सविता सर्वस्य स्वस्वकर्मसु प्रेरको देवः प्रावतु प्ररक्षतु। किंच सर्वतातिम्। स्वार्थिकस्तातिल्। सर्वां सर्वात्मिकाम्। यद्वा। सर्वे तायन्तेऽस्यामिति सर्वतातिः। छान्दसो दीर्घः। तादृशीम् अदितिम् अखण्डनीयां देवमातरम् आ वृणीमहे ॥

१. वि-स१.२.३.६.७-मु—वृषभेण वर्षकेण। २. ग.१.२-स-भ—'इयानः' नास्ति। ३. स१.२.३.४.५.६-भ१.२.४.७—उपगम्यमानः। ४. स४.५—भोगाय।

भरा॑य सु भ॑रत भा॒गमृ॒त्वियं॒ प्र वा॒यवे॑ शुचि॒पे क्र॒न्ददि॑ष्टये ।
गौ॒रस्य॒ यः पय॑सः पी॒तिमा॑न॒श आ स॒र्वता॑ति॒मदि॑तिं वृणीमहे ॥ २ ॥

भरा॑य । सु । भ॒र॒त॒ । भा॒गम् । ऋ॒त्वियम् । प्र । वा॒यवे॑ । शु॒चि॒ऽपे । क्र॒न्दत्ऽइ॑ष्टये ।
गौ॒रस्य॑ । यः । पय॑सः । पी॒तिम् । आ॒न॒शे । आ । स॒र्वऽता॑तिम् । अदि॑तिम् । वृ॒णी॒म॒हे॒ ॥२॥

भराय संग्रामकारिणे सर्वेषां पोषकाय वेन्द्राय ऋत्वियं काले कालं प्राप्तकालं भागं सु भरत सुष्ठु संपादयत हे ऋत्विजः । तथा शुचिपे शुद्धस्य सोमस्य पात्रे क्रन्ददिष्टये शब्दितगमनाय । वायोः शीघ्रगमने हि शब्दः प्रत्यक्षः । तादृशाय वायवे देवाय प्र भरत भागमिति शेषः । यः देवः गौरस्य गौरवर्णस्य पशोः पयसः पीतिं पानम् आनशे प्राप्नोति तस्मै वायवे । शिष्टमुक्तम् ॥

आ नो॑ दे॒वः स॑वि॒ता सा॑वि॒षद्वय॑ ऋजू॒यते॒ यज॑मानाय सुन्व॒ते ।
यथा॑ दे॒वान्प्र॑ति॒भूषे॑म पाक॒वदा स॒र्वता॑ति॒मदि॑तिं वृणीमहे ॥ ३ ॥

आ । नः॒ । दे॒वः । स॒वि॒ता । सा॒वि॒ष॒त् । वयः॑ । ऋ॒जु॒ऽय॒ते । यज॑मानाय । सु॒न्व॒ते ।
यथा॑ । दे॒वान् । प्र॒ति॒ऽभूषे॑म । पा॒क॒ऽव॒त् । आ । स॒र्वऽता॑तिम् । अदि॑तिम् । वृ॒णी॒म॒हे॒ ॥३॥

सविता सर्वस्य प्रेरकः सूर्यः नः अस्माकं संबन्धिने ऋजूयते ऋजुकामाय सुन्वते अभिषवं कुर्वते यजमानाय वयः अन्नं पाकवत् पाकोपेतम् । व्यवहितमप्येतदत्र संबध्यते । आ सावि॒षत् आभिमुख्येन प्रसौति[1] । सौतेर्व्यत्ययेन लेटि रूपम् । यथा येन प्रकारेण देवान् प्रतिभूषेम प्रतिभजेम । भवतेर्लिङि सिप्यार्धे । द्विविकरणता । यद्वा । ‘ भूष अलंकारे ’ । भौवादिकः । भूषयेमेत्यर्थः ॥

इन्द्रो॑ अ॒स्मे सु॒मना॑ अस्तु वि॒श्वहा॒ राजा॒ सोमः॑ सुवि॒तस्याध्ये॑तु नः ।
यथा॑यथा मि॒त्रधि॑तानि संद॒धुरा स॒र्वता॑ति॒मदि॑तिं वृणीमहे ॥ ४ ॥

इन्द्रः॑ । अ॒स्मे इति॑ । सु॒ऽमनाः॑ । अ॒स्तु॒ । वि॒श्वहा॑ । राजा॑ । सोमः॑ । सु॒वि॒तस्य॑ । अधि॑ । ए॒तु॒ । नः॒ ।
यथा॑ऽयथा । मि॒त्रऽधि॑तानि । स॒म्ऽद॒धुः । आ । स॒र्वऽता॑तिम् । अदि॑तिम् । वृ॒णी॒म॒हे॒ ॥ ४ ॥

इन्द्रः देवः अस्मे अस्माकं सुमनाः सुमनस्कः अनुग्रहचेताः अस्तु भवतु । विश्वहा सर्वेष्वप्यहःसु । राजा सोमः च नः अस्माकं सुवितस्य सुवितं स्तोत्रम् अध्येतु अधिगच्छतु । यथायथा येनयेन प्रकारेण अस्माकं मित्रधितानि मित्रनिहितानि धनानि संदधुः तथाधिगच्छतु सोमः । तथेन्द्रोऽपि सुमना अस्त्विति समन्वयः ॥

इन्द्र॑ उ॒क्थेन॒ शव॑सा॒ परु॑र्दधे॒ बृह॑स्पते प्रतरी॒तास्यायु॑षः ।
य॒ज्ञो मनुः॒ प्रम॑तिर्नः पि॒ता हि क॒मा स॒र्वता॑ति॒मदि॑तिं वृणीमहे ॥ ५ ॥

इन्द्रः॑ । उ॒क्थेन॑ । शव॑सा । परुः॑ । द॒धे॒ । बृह॑स्पते । प्र॒ऽत॒री॒ता । अ॒सि॒ । आयु॑षः ।
य॒ज्ञः । मनुः॑ । प्रऽम॑तिः । नः॒ । पि॒ता । हि । क॒म् । आ । स॒र्वऽता॑तिम् । अदि॑तिम् । वृ॒णी॒म॒हे॒ ॥५॥

1. त-म-मु-प्रसौति ।

अयम् इन्द्रः उक्थेन शवसा स्तुत्येन बलेन पर्वः यज्ञियम् अस्मदीयं वा बर्हिः धारयति। हे बृहस्पते आयुषः ममायुष्यस्य प्रतरीता प्रवर्धयिता असि भव। तथा यज्ञो मनुः मन्ता प्रमतिः प्रकृष्टा मतिर्यस्य सः नः पिता पालकः सन् शं सुखं प्रयच्छतु। यद्वा। यज्ञो मन्वो बुद्धिश्च प्रत्येकं सुखं प्रयच्छतु॥

इन्द्रस्य नु सुकृतं दैव्यं सहोऽग्निर्गृहे जरिता मेधिरः कविः।
यज्ञश्च भूद्विदथे चारुरन्तम आ सर्वतातिमदितिं वृणीमहे॥ ६॥

इन्द्रस्य। नु। सुऽकृतम्। दैव्यम्। सहः। अग्निः। गृहे। जरिता। मेधिरः। कविः।
यज्ञः। च। भूत्। विदथे। चारुः। अन्तमः। आ। सर्वऽतातिम्। अदितिम्। वृणीमहे॥ ६॥

दैव्यं देवानां हितं सहः बलं यदस्ति[1] तत् इन्द्रस्य* सुकृतं इन्द्रेण खलु सुष्ठु संपादितम्। यद्वा। यत्सुकृतं दैव्यं सहो बलं[1] मरुत्संज्ञकमस्ति तदिन्द्रस्य नु इन्द्रस्य संबन्धि खलु। अथवा। इन्द्रस्य नु[2] संबन्धि सुकृतं दैव्यं सहो देवार्हं बलम् अग्निर्गृहे अस्मदीये यागगृहे वर्तत इति शेषः। इन्द्रस्य संबन्धी सुष्ठु संपादितो देवानां बलभूतोऽग्निर्गार्हपत्यः सन् वर्तत इत्यर्थः। स चाग्निः जरिता देवानां स्तोता मेधिरः। मेधो यज्ञो हविर्वा। तद्वान् कविः क्रान्तप्रज्ञः यज्ञः यष्टव्यः च भूत् भवति। कुत्र। विदथे यज्ञे। किंच सोऽग्निः चारुः चरणीयः अन्तमः अस्माकमन्तिकतमश्च॥ ॥ १६ ॥

न वो गुहा चकृम भूरि दुष्कृतं नाविष्ट्यं वसवो देवहेळनम्।
माकिर्नो देवा अनृतस्य वर्पस आ सर्वतातिमदितिं वृणीमहे॥ ७॥

न। वः। गुहा। चकृम। भूरि। दुःऽकृतम्। न। आविःऽत्यम्। वसवः। देवऽहेळनम्।
माकिः। नः। देवाः। अनृतस्य। वर्पसः। आ। सर्वऽतातिम्। अदितिम्। वृणीमहे॥७॥

हे देवाः[3] वः युष्माकं गुहा गुहायां प्रच्छन्ने देशे भूरि प्रभूतं दुष्कृतं पापम्। द्रोहमित्यर्थः। न चकृम। तथा आविष्ट्यम् आविः संभूते देवहेळनं देवानां क्रोधने तन्निमित्तं द्रोहं न चकृम हे वसवः वासका देवाः। किंच हे देवाः नः अस्माकम् अनृतस्य वर्पसः रूपस्य माकिः माकिः मा भूत्। इतः परं मानुषं रूपं मा भूदित्यर्थः। शिष्टमुक्तम्॥

अपामीवां सविता साविषन्न्यग्वरीय इदप सेधन्त्वद्रयः।
ग्रावा यत्र मधुषुदुच्यते बृहदा सर्वतातिमदितिं वृणीमहे॥ ८॥

अप। अमीवाम्। सविता। साविषत्। न्यक्। वरीयः। इत्। अप। सेधन्तु। अद्रयः।
ग्रावा। यत्र। मधुऽसुत्। उच्यते। बृहत्। आ। सर्वऽतातिम्। अदितिम्। वृणीमहे॥ ८॥

सविता सर्वस्य प्रेरकः सवितृदेवोऽस्माकं संबन्धिनम् अमीवां रोगम् अप साविषत् अपप्रेरयतु। अपगमयत्वित्यर्थः। तथा वरीय इत् उरुतरमपि पापं न्यक् नीचीनम् अप सेध-

१. ग-भ-'यदस्ति...बलं' नास्ति। * भ७–इन्द्रस्य नु। २. ग-त४-भ७-नु–नु इन्द्रस्य: त१.२.३.७-म१.२.४.८– नु इन्द्रस्य नु। ३. त१.२.३.७-म१.२.४.८–देव।

स्वयुषः पर्वताभिमानिनो[1] देवा[1] अभिषवाश्मानो वा । एतत्सर्वं कुत्र भवतीति चेत् उच्यते । यत्र यस्मिन् प्रदेशे यस्मिन् काले वा मधुरस्य[2] सोमस्य सोता ग्रावा बृहत् प्रवृद्धम् उच्यते स्तूयते तत्र ॥

ऊर्ध्वो ग्रावा वसवोऽस्तु सोतरि विश्वा द्वेषांसि सनुतर्युयोत ।
स नो देवः सविता पायुरीड्य आ सर्वतातिमदितिं वृणीमहे ॥ ९ ॥

ऊर्ध्वः । ग्रावा । वसवः । अस्तु । सोतरि । विश्वा । द्वेषांसि । सनुतः । युयोत ।
सः । नः । देवः । सविता । पायुः । ईड्यः । आ । सर्वऽतातिम् । अदितिम् । वृणीमहे ॥ ९ ॥

हे वसवः देवाः सोतरि सोमाभिषवकर्तरि मयि ग्रावा ऊर्ध्वः उन्नतः अस्तु । तेनोच्छ्रितेन विश्वा द्वेषांसि सर्वानपि द्वेष्टॄन् सनुतः निगूढान् युयोत पृथक्कुरुत । सः सविता देवः नः अस्माकं पायुः पालयिता । ‘कृवापाजि०’ इत्यादिनोण्[3] । प्रत्ययस्वरः । सः ईड्यः स्तोतव्यश्च ॥

ऊर्जं गावो यवसे पीवो अत्तन ऋतस्य याः सदने कोशे अङ्ग्ध्वे ।
तनूरेव तन्वो अस्तु भेषजमा सर्वतातिमदितिं वृणीमहे ॥ १० ॥

ऊर्जम् । गावः । यवसे । पीवः । अत्तन । ऋतस्य । याः । सदने । कोशे । अङ्ग्ध्वे ।
तनूः । एव । तन्वः । अस्तु । भेषजम् । आ । सर्वऽतातिम् । अदितिम् । वृणीमहे ॥ १० ॥

हे गावः आशिराधाः यूयं यवसे तृणवति देशे पीवः प्रवृद्धम् ऊर्जं रसम् अत्तन अत्त । याः[4] ऋतस्य यज्ञस्य सदने गृहे कोशे गोष्ठे दोहनस्थाने अङ्ग्ध्वे व्यञ्जयथ ता अत्तन । तनूरेव । जन्ये जनकशब्दः । तनूरेव क्षीरमेव तन्वः सोमरसस्य भेषजम् अस्तु । यद्वा । पृथगेव वाक्यम् । अस्माकं तन्वो भेषजमस्तु । किंच तनूरेव पशुशरीरमेव । पशुना यागे सति स्वर्गस्य संपादयितुं शक्यत्वात् ॥

क्रतुप्रावा जरिता शश्वतामव इन्द्र इद्भद्रा प्रमतिः सुतावताम् ।
पूर्णमूधर्दिव्यं यस्य सिक्तय आ सर्वतातिमदितिं वृणीमहे ॥ ११ ॥

क्रतुऽप्रावा । जरिता । शश्वताम् । अवः । इन्द्रः । इत् । भद्रा । प्रऽमतिः । सुतऽवताम् ।
पूर्णम् । ऊधः । दिव्यम् । यस्य । सिक्तये । आ । सर्वऽतातिम् । अदितिम् । वृणीमहे ॥ ११ ॥

क्रतुप्रावा कर्मणां पूरकः । ‘प्रा पूरणे’ । ‘आतो मनिन्०’ इत्यादिना वनिप् । जरिता स्तोता । यजमाने साधु सोमः कृत इति स्तौति[5] । यद्वा । शश्वतां सर्वेषां जरयिता इन्द्रः इत् इन्द्र एव सुतावतां सोमवतां यजमानानाम् अवः रक्षकः भद्रा भद्रया स्तुत्या प्रमतिः । यस्य इन्द्रस्य सिक्तये सेकाय पानाय ऊधः उन्नततरं द्रोणकलशं पूर्णं सोमेन पूर्णं भवति स पूताशः[6] स एव प्रमतिरिति ॥

१. ग-त३-पर्वताभिमानिदेवाः; स१.२.६.७.८-भ-पर्वताभिमानिदेवताः । २. ग-मधुसुत् मधुरस्य । ३. त३.७-सु-इत्यादिना उण्प्रत्ययः । ४. ग-त-भ-या युष्मान् । ५. ग-त-भ-स्तौति अथवा स्तुत्यर्थः । ६. स-भ-एताशः ।

चित्रस्ते भानुः क्रतुप्रा अभिष्टिः सन्ति स्पृधो जरणिप्रा अधृष्टाः ।
रजिष्ठया रज्या पश्व आ गोस्तूतूर्षति पर्यग्रं दुवस्युः ॥ १२ ॥

चित्रः । ते । भानुः । क्रतुऽप्राः । अभिष्टिः । सन्ति । स्पृधः । जरणिऽप्राः । अधृष्टाः ।
रजिष्ठया । रज्या । पश्वः । आ । गोः । तूतूर्षति । परि । अग्रम् । दुवस्युः ॥ १२ ॥

हे इन्द्र ते भानुः प्रकाशः चित्रः आश्चर्यभूतश्चायनीयो वा । तथा क्रतुप्राः स भानुरस्माकं कर्मणां पूरकः अभिष्टिः अन्वेषणीयः । हे इन्द्र ते जरणिप्राः स्तोतॄणां धनस्य पूरयित्र्यः अधृष्टाः अन्यैरप्रधृष्याः स्पृधः स्पर्धाः सन्ति । यस्मादेवं तस्मात् रजिष्ठया ऋजुतमया रज्या रज्ज्वा गोः पश्वः पशोः अग्रं दुवस्युः परिचरणमिच्छन्नेतन्नामर्षिः परि तूतूर्षति अभित्वरयति ॥ ॥ १७ ॥

'उद्बुध्यध्वम्' इति द्वादशर्चं द्वितीयं सूक्तं सौम्यपुत्रस्य बुधस्यार्षम् । 'आ वो धियम्' इति नवमी 'कपृन्नरः' इत्यन्त्या च द्वे जगत्यौ । चतुर्थीषष्ठ्यौ गायत्र्यौ 'निराहावान्' इति पञ्चमी बृहती । शिष्टास्त्रिष्टुभः । विश्वे देवा देवता । ऋत्विक्स्तुतिरूपोऽर्थो वा देवता । तथा चानुक्रान्तम्— 'उद्बुध्यध्वं बुधः सौम्य ऋत्विक्स्तुतिर्वा नवम्यन्त्ये जगत्यौ गायत्र्योर्मध्ये पञ्चमी बृहती' इति । गतः सूक्तविनियोगः ॥

उद्बुध्यध्वं समनसः सखायः समग्निमिन्ध्वं बहवः सनीळाः ।
दधिक्रामग्निमुषसं च देवीमिन्द्रावतोऽवसे नि ह्वये वः ॥ १ ॥

उत् । बुध्यध्वम् । सऽमनसः । सखायः । सम् । अग्निम् । इन्ध्वम् । बहवः । सऽनीळाः ।
दधिऽक्राम् । अग्निम् । उषसम् । च । देवीम् । इन्द्रऽवतः । अवसे । नि । ह्वये । वः ॥ १ ॥

अग्निं चेष्यमाणा ऋत्विजो वदन्ति । हे सखायः सखिभूता ऋत्विजः समनसः समानमनस्काः परस्परमद्रोग्धारः । अन्योन्यं कर्मानुकूला इत्यर्थः । तादृशा यूयम् उत् उत्कर्षं बुध्यध्वं जानीध्वम् । उत्तरत्र युष्माकं कर्तव्यमेवोपदिशति । तथा अग्निं सम् इन्ध्वं सम्यग्दीपयध्वम् । 'ञिइन्धी दीप्तौ' । रौधादिकः । लोटि 'श्नसोरल्लोपः' इत्यल्लोपः । बहवः अनेके सनीळाः समाननिवासाः एकस्यामेव शालायां निवसन्तः । अहं च दधिक्राम् एतन्नामिकां देवताम् अग्निम् उषसं च देवीम् एतान् देवान् इन्द्रावतः इन्द्रेण युक्तान् वः युष्मान् अवसे अस्माकं रक्षणाय नि नितरां ह्वये आह्वयामि ॥

मन्द्रा कृणुध्वं धिय आ तनुध्वं नावमरित्रपरणीं कृणुध्वम् ।
इष्कृणुध्वमायुधारं कृणुध्वं प्राञ्चं यज्ञं प्र णयता सखायः ॥ २ ॥

मन्द्रा । कृणुध्वम् । धियः । आ । तनुध्वम् । नावम् । अरित्रऽपरणीम् । कृणुध्वम् ।
इष्कृणुध्वम् । आयुधा । अरम् । कृणुध्वम् । प्राञ्चम् । यज्ञम् । प्र । नयत । सखायः ॥ २ ॥

मन्द्रा मन्द्राणि मदकराणि स्तोत्राणि कृणुध्वं कुरुध्वं हे सखायः । 'कृवि हिंसाकरणयोः'[1] । 'धिन्विकृण्व्योरच' इत्युप्रत्ययः । अकारश्चान्तादेशः । यद्वा करोतेर्व्यत्ययेन श्नुः । तथा धियः

1. कृवि—हिंसाकरणयोश्च ।

कर्माणि वपनप्रवेशकर्षणादीनि आ तनुध्वं विस्तारयत । तथा अरित्रपरणीं कर्षणादिरूपेणारित्रेण पारयितव्यां नावं वपनाख्यां कृणुध्वं कुरुध्वम् । तथा आयुधा आयुधानि सीरयुगादीनि अरम् अलं कृणुध्वम् । हे सखायः ऋत्विजः प्राञ्चं प्रागञ्चनं यज्ञं यष्टव्यमग्निं प्र णयत प्रकर्षेण नयत । प्राचीं कर्षणं प्राञ्चं कुरुतेत्यर्थः ॥

युनक्त सीरा वि युगा तनुध्वं कृते योनौ वपतेह बीजम् ।
गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्यः पक्वमेयात् ॥ ३ ॥

युनक्त । सीरा । वि । युगा । तनुध्वम् । कृते । योनौ । वपत । इह । बीजम् ।
गिरा । च । श्रुष्टिः । सऽभराः । असत् । नः । नेदीयः । इत् । सृण्यः । पक्वम् । आ । इयात् ॥३॥

हे सखायो यूयं सीरा सीराणि युनक्त युङ्ग्ध्वमनड्भिः सह । युजेर्लोटि 'तप्तनप्तनथनाश्च' इति तबादेशः[1] । अत एव अङित्वात् 'श्नसोरल्लोपः' इत्यल्लोपाभावः । तदर्थं युगा युगानि वि तनुध्वं विस्तारयध्वम् । कृते च योनौ इह सीतायां बीजं ग्राम्यमारण्यं च वपत निवपत । तिलमाषव्रीहियवादिकं ग्राम्यसप्तकं वेणुश्यामाकनीवारादिकमारण्यबीजसप्तकं च कृष्टाकृष्टयोर्निवपतेत्यर्थः । 'सप्त ग्राम्याः कृष्टे सप्तारण्या अकृष्टे' इत्यापस्तम्बः । तथा नः अस्माकं गिरा स्तुत्या प्रशस्त्या सहास्माकं श्रुष्टिः अन्नं सभराः सभरम् असत् भवति भवतु । तथा नेदीय इत् अन्तिकमेव[2] सृण्यः । सृणिरङ्कुशः । अङ्कुशवद्वक्रो लवित्रः । पक्वं सस्यम् आ इयात् आभिमुख्येन गच्छतु[3] । श्रुष्टिः सभरा असत् सृण्यः पक्वमेयादिति चकारयोगानुवृत्तेः 'चवायोगे प्रथमा' इति प्रथमस्य निघाताभावः ॥

सीरा युञ्जन्ति कवयो युगा वि तन्वते पृथक् । धीरा देवेषु सुम्नया ॥ ४ ॥

सीरा । युञ्जन्ति । कवयः । युगा । वि । तन्वते । पृथक् । धीराः । देवेषु । सुम्नऽया ॥ ४ ॥

कवयः मेधाविन ऋत्विजः सीरा[4] सीराणि कर्षणसाधनानि युञ्जन्ति योजयन्ति । युगा युगान्यपि पृथक् परस्परं वि तन्वते भिन्नप्रदेशानि[5] कुर्वन्ति । कीदृशाः कवयः । देवेषु विषये धीराः धीमन्तः । किमर्थम् । सुम्नया । सुम्नमिति सुखनाम । सुखेच्छया । सुम्नशब्दात् क्यजन्तात् 'अ प्रत्ययात्' इत्यकारप्रत्ययः । 'सुपां सुलुक्' इति तृतीयाया आकारः । अथवा धीरा धीमन्तो देवेषु सुम्नया सुखेन । देवेषु सुखं भूयादिति । 'सुपां सुलुक्' इति विभक्तेर्याजादेशः ॥

निराहावान्कृणोतन सं वरत्रा दधातन ।
सिञ्चामहा अवतमुद्रिणं वयं सुषेकमनुपक्षितम् ॥ ५ ॥

निः । आऽहावान् । कृणोतन । सम् । वरत्राः । दधातन ।
सिञ्चामहै । अवतम् । उद्रिणम् । वयम् । सुऽसेकम् । अनुपऽक्षितम् ॥ ५ ॥

हे सखायः आहावान् । आहूयन्ते पानार्थं गावोऽस्मिन्नित्याहावा निपानानि । अग्नीत्यादिवृषिवपन-प्रवेशकर्षणार्थगोपानसाधनतृणभक्षणपानपात्राण्युच्यन्ते । तानाहावान् निः कृणोतन निष्कुरुत । आङ्पूर्वात् ह्वयतेः 'निपानमाहावः' (पा. सू. ३. ३. ७४) इति निपातितः । थाथादिस्वरः । कृणोतन ।

१. त-म—तनबादेशः । २. ग-त१.२.३.६.७.८-म-मु—अंतिक एव; त४.५—अंतरिक्ष एव । ३. ग१.२-त-म-मु—गच्छति; ग४—गच्छत । ४. त—सुसीराः । ५. त-म—भिन्नप्रदेशान् ।

व्रजं कृणुध्वं स हि वो नृपाणो वर्म सीव्यध्वं बहुला पृथूनि ।
पुरः कृणुध्वमायसीरधृष्टा मा वः सुस्रोच्चमसो दृंहता तम् ॥ ८ ॥

व्रजम् । कृणुध्वम् । सः । हि । वः । नृऽपानः । वर्म । सीव्यध्वम् । बहुला । पृथूनि ।
पुरः । कृणुध्वम् । आयसीः । अधृष्टाः । मा । वः । सुस्रोत् । चमसः । दृंहत । तम् ॥८॥

हे ऋत्विजः व्रजं कृणुध्वं व्रजं गोष्ठं कुरुध्वम् । आशिरदोहार्थं गोस्थानं कुरुत । स हि स खलु वः नृपाणः नेतॄणां देवानां पालयिता । देवपानसाधन इति । सोमाश्रयरूपेण चाशिररूपेण वा गोः पयआदिकं देवाः पिबन्ति खलु । वर्म वर्माणि सीव्यध्वम् । वर्मशब्दः प्रधानस्योभयतः आरब्धत्वसाम्यात् प्रयाजादीनि प्राप्यानि प्रतीच्यानि चाङ्गानि वर्माणि । तानि सीव्यध्वं दलयध्वम् । कुरुध्वमित्यर्थः । कीदृशानि वर्माणि । बहुला बहुलान्यनेकानि । तानि च पृथूनि विस्तीर्णानि । तथा पुरः पुराणि धिष्ण्यादीनि यष्टव्यानां देवानां वा पुरः शरीराणि आयसीः अयोमयवत्सारभूताः अधृष्टाः अन्यैः अधृष्याः । धृष्णीया भक्ता वा पुर इत्युच्यन्ते । तानुकूलस्थानान् कुरुत । वः युष्मदीयः चमसः यज्ञाङ्गो भक्षणसाधनश्चमस एव वा । चमसपक्षे सामान्येनैकवचनम् । मा सुस्रोत् मा स्रवेत् । स्रवतेर्लुङि 'बहुलं छन्दसि' इति शपः श्लुः । तं दृंहत दृढीकुरुत । यथा विकलो न भवति तथा कुरुत । 'दृह दृहि वृद्धौ' । भौवादिकः । तस्माल्लोटि इदित्वान्नुम् । ऋत्विक्स्तुतिपक्ष एवम् । वैश्वदेवपक्षे । अस्मदीया योद्धारो यूयम्[१] । नरो योद्धारः पिबन्ति प्रत्यर्थिनां प्राणानिति नृपाणः । स तादृशो युष्मदीयः खलु । गोष्ठपक्षे नराणां पानसाधनः स खलु । पातेः 'करणाधिकरणयोश्च' इति ल्युट् । वर्म वर्माणि कवचानि सीव्यध्वं बहुलानि पृथूनि च यथा भवन्ति तथा । पुरः पुरीः कृणुध्वमायसीरन्यैरधृष्टाश्च । चमसोऽन्नसाधनो मा सुस्रोत् मा स्रवेत् । तं दृंहतेति । इति देवतानुग्रहलक्षणफलो वर्तते ॥

आ वो धियं यज्ञियां वर्त ऊतये देवा देवीं यजतां यज्ञियामिह ।
सा नो दुहीयद्यवसेव गत्वी सहस्रधारा पयसा मही गौः ॥ ९ ॥

आ । वः । धियम् । यज्ञियाम् । वर्ते । ऊतये । देवाः । देवीम् । यजताम् । यज्ञियाम् । इह ।
सा । नः । दुहीयत् । यवसाऽइव । गत्वी । सहस्रऽधारा । पयसा । मही । गौः ॥ ९ ॥

हे देवाः स्तोतार ऋत्विजः वः युष्माकम् ऊतये यज्ञियां यज्ञार्हां धियं बुद्धिम् आ वर्ते आवर्तये । यद्वा । हे देवा ऋत्विजः वो यज्ञियां धियं युष्माकं कर्मण्यनेन संबन्धिनीमस्माकमूतये[२] रक्षणाय आ वर्त । अपि वा देवा एव संबोध्याः । हे देवाः वो युष्माकं धियं बुद्धिमा वर्ते आवर्तयामि । किमर्थम् । ऊतयेऽस्माकं रक्षणाय । कीदृशीं धियम् । यज्ञियां यज्ञार्हां देवीं द्योतमानां यजतां पूज्याम् । इह अस्मिन् यागे अस्यां भूमौ वा । पुनो यज्ञियामिति शब्दः पूरणः । सा धीः नः अस्माकं दुहीयत् दुह्यात् । तत्र दृष्टान्तः । यवसेव यवसानि भक्षयित्वेव गत्वी पुनर्गोष्ठं गत्वा । [illegible] । पयसा सहस्रधारा मही महती गौः यथा दुग्धे तद्वत् ॥

१. ग४–यूयं विशेषाः देवानां आनुकूल्येनैव कुरुतेति सूक्तद्रष्टा यजमानो ब्रूते । अपि व्रजं कृणुध्वं व्रजः संघातमकः स 'संग्रामः' तं कृणुध्वं । अथवा शत्रुसंघं कृणुध्वं । अवारणं कुरुध्वमित्यर्थः । यो नृपाणः । २. त-भ–संबन्धिनाम्* ।

आ तू षिञ्च हरिमीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः ।
परि ष्वजध्वं दश कक्ष्याभिरुभे धुरौ प्रति वह्निं युनक्त ॥ १० ॥

आ । तु । सिञ्च । हरिम् । ईम् । द्रोः । उपऽस्थे । वाशीभिः । तक्षत । अश्मन्ऽमयीभिः ।
परि । स्वजध्वम् । दश । कक्ष्याभिः । उभे इति । धुरौ । प्रति । वह्निम् । युनक्त ॥ १० ॥

हे अध्वर्यो त्वम् ईम् एनं हरिं हरितवर्णं सोमं द्रोः द्रुमविकारस्य पात्रस्य उपस्थे उपरि आ सिञ्च आसेकं कुरु । तु इति पूरणः । तदर्थं हे पात्रसंपादिनः अश्मन्मयीभिः अयःशिलासारभूताभिः वाशीभिः तक्षत पात्राणि । नकारोपजनश्छान्दसः । मयटः टित्वात् ङीप् । तानि पात्राणि सोमपूर्णानि दश दशसंख्याकानि कक्ष्याभिः प्रकारैः पर्यायेण परि ष्वजध्वं संस्कुरुध्वम् । आसादयत । यद्वा । वाशीभिरश्मन्मयीभिर्द्विविधां यज्ञाकरं तक्षत । ते च दश कक्ष्याभिर्दशसंख्याकाभिः रज्जुभिः परि ष्वजध्वम् । उभे धुरौ युगसंबन्धिन्यौ प्रति वह्नी वाहकावनड्वाहौ युनक्त[1] । अथवायं मन्त्रश्चनःशेपकर्षणसाधनहलविषयतया व्याख्येयः ॥

उभे धुरौ वह्निरापिब्दमानोऽन्तर्योनेव चरति द्विजानिः ।
वनस्पतिं वन आस्थापयध्वं नि षू दधिध्वमखनन्त उत्सम् ॥ ११ ॥

उभे इति । धुरौ । वह्निः । आऽपिब्दमानः । अन्तः । योनाऽइव । चरति । द्विऽजानिः ।
वनस्पतिम् । वने । आ । अस्थापयध्वम् । नि । सु । दधिध्वम् । अखनन्त । उत्सम् ॥ ११ ॥

हविर्धानशकटस्य उभे धुरौ आपिब्दमानः आपिशब्दमानः वह्निः हविर्धानकोऽनड्वान् योनी अन्तः इव द्विजानिः द्विजायः तयोरन्तः[2] चरति । तं वनस्पतिं वनस्पतिविकारं शकटं वने वनसंबन्धिनि वृक्षे । मेथीभूत इत्यर्थः । तत्र आस्थापयध्वम् । यद्वा । वने वननीये देश आस्थापयध्वम् । तत्पश्चात्[3] तत्रत्यं सोमं सु[4] सुष्ठु नि दधिध्वं सुखं यथा भवति तथा स्थापयतास्मद्यम् । अभिषवप्रदेशे च[5] पश्चात् उत्सं नद्दसम् अखनन्त संपादयतेत्यर्थः । अथवायमपि मन्त्रः कर्षणपरो व्याख्येयः । यस्य लाङ्गलस्योभे धुरावापिब्दमानोऽपिशब्दमानो वह्निरनड्वान् अन्तर्योनाविवेत्यादि समानम् । तादृशं वनस्पतिं वनस्पतिविकारं लाङ्गलं वने वननीये वपनार्थे[6] कर्षणप्रदेश आस्थापयध्वम् । सु सुष्ठु सर्वत्र तं लाङ्गलं नि दधिध्वम् । उत्सं सेकसाधनं गर्तं सिक्तं वा प्रदेशमखनन्त ॥

षष्ठेऽहनि ब्राह्मणाच्छंसिशस्त्रे ' कपृन्नरः ' इत्येषा । ' कपृन्नरो मद्व प्राचीरजगमेति चैते ' (आश्व. श्रौ. ८. ३ ) इति ॥

कपृन्नरः कपृथमुद्दधातन चोदयत खुदत वाजसातये ।
निष्टिग्र्यः पुत्रमा च्यावयोतय इन्द्रं सबाध इह सोमपीतये ॥ १२ ॥

कपृत् । नरः । कपृथम् । उत् । दधातन । चोदयत । खुदत । वाजऽसातये ।
निःऽटिग्र्यः । पुत्रम् । आ । च्यावय । ऊतये । इन्द्रम् । सऽबाधः । इह । सोमऽपीतये ॥ १२ ॥

---

१. गश-त४.५–युनक्त योजयत । २. ग-त-भ–तेषामन्तः । ३. ग-त-मु–आस्थापयत पश्चात् । ४. त-भ–' सु ' नास्ति । ५. ग-त-भ-मु–वा । ६. ग-त१.२.६–वपनार्थं ।

हे नरः नेतार ऋत्विजः एष इन्द्रः कपृत्। सुखस्य पूरको मनुष्याणां स्तोतॄणां च। कमिति सुखनाम। तं कपृथं सुखस्य पूरयितारमिन्द्रं चोदयत प्रेरयत सुदत सुदेत क्रीडयत। 'सुदं क्रीडायां' औणादिकः। व्यत्ययेन शः। रेफलोपश्छान्दसः। संपिष्ट संस्कुरुतेत्यर्थः। किमर्थम्। वाजसातये अन्नस्य लाभाय। तदेवाह। हे होतः निष्टिग्र्यः पुत्रम्। निष्टिं दितिं स्वसपत्नीं गिरतीति निष्टिग्रीरदितिः। तस्याः पुत्रम् इन्द्रं सबाधः। सह बाधैः प्रयासरूपैः कर्मभिर्बाध्यन्त इति सबाध ऋत्विजः। तथाविधा यूयं सोमपीतये तस्य सोमपानाय ऊतये अस्माकं रक्षणाय वा आ च्यावय। व्यत्ययेनैकवचनम्। आच्यावयतेत्यर्थः॥  ॥ ११॥

'प्र ते रथम्' इति द्वादशर्चं तृतीयं सूक्तम्। भर्म्यश्वपुत्रो मुद्गल ऋषिः। आद्या तृतीयान्त्या चेति तिस्रो बृहत्यः। शिष्टा नव त्रिष्टुभः। द्रुघणो नाम मुद्गरः। तद्देवत्यमिदमिन्द्रदेवत्यं वा। तथा चानुक्रान्तं— 'प्र ते मुद्गलो भार्म्यश्व ऋषभेण द्रुघणेन चाजिं जिगायेति द्रौघणं वाद्या तृतीयान्त्या च बृहत्यः' इति। गतो विनियोगः। अत्राहुः— 'मुद्गलस्य हृता गावश्चोरैस्तत्कथा अब्रुवन्। स शिष्टं शकटे कृत्वा तस्यैक अनुवाहनम्। द्रुघणं युयुजेऽन्यत्र चोरमार्गानुसारकः। द्रुघणं चाग्रतः क्षिप्त्वा चोरेभ्यो जगृहे स्वगाः' इति। तथा निरुक्तेऽपीयं कथा सूचिता— 'मुद्गलो भार्म्यश्व ऋषिर्वृषभं च द्रुघणं च युक्त्वा संग्रामे व्यवहृत्याजिं जिगाय' (निरु. ९. २३) इति॥

प्र ते रथं मिथूकृतमिन्द्रोऽवतु धृष्णुया।
अस्मिन्नाजौ पुरुहूत श्रवाय्ये धनभक्षेषु नोऽव॥ १॥

प्र। ते। रथम्। मिथुऽकृतम्। इन्द्रः। अवतु। धृष्णुऽया।
अस्मिन्। आजौ। पुरुऽहूत। श्रवाय्ये। धनऽभक्षेषु। नः। अव॥ १॥

हे मुद्गल ते रथं मिथूकृतं मिथःकृतमसहायं कृतम्। अथवा मिथुरिति मिथ्यानाम। अश्वादिभिः शून्यं कृतं धृष्णुया धर्षणशीलः इन्द्रोऽवतु रक्षतु। यद्वा। धृष्णुया धर्षणशीलेन वज्रेण। उभयत्र 'सुपां सुलुक्°' इति सुपो याजादेशः। अथ प्रत्यक्षकृतः। हे पुरुहूत बहुभिराहूतेन्द्र अस्मिन्नाजौ संग्रामेऽपहृतगोभिश्चोरैः कृते संग्रामे। कीदृशे। श्रवाय्ये श्रोतव्ये। विश्रुत इत्यर्थः। 'श्रुदक्षि°' (उ. सू. ३.९६) इत्यादिना आय्यप्रत्ययः। धनभक्षेषु अस्मासु गोरूपधनभजनकामेषु सत्सु। यद्वा। गोरूपधनस्य भक्षकेषु चोरेषु जेतव्येषु सत्सु। नः[1] अस्मान्[1] अव रक्ष॥

उत्स्म वातो वहति वासो अस्या अधिरथं यदजयत्सहस्रम्।
रथीरभून्मुद्गलानी गविष्टौ भरे कृतं व्यचेदिन्द्रसेना॥ २॥

उत्। स्म। वातः। वहति। वासः। अस्याः। अधिऽरथम्। यत्। अजयत्। सहस्रम्।
रथीः। अभुत्। मुद्गलानी। गोऽइष्टौ। भरे। कृतम्। वि। अचेत्। इन्द्रऽसेना॥ २॥

अस्याः 'रथीरभून्मुद्गलानी' इति वक्ष्यमाणत्वादस्य मुद्गलस्य पत्न्याः सारथिभूतायाः वासः अंशुकं वातः वायुः उत् वहति ऊर्ध्वं प्रापयति। श्रमजनितस्वेदापनयाय। अथवा शीघ्ररथधावनजनितो वायुरंशुकं चालयतीत्यर्थः। कदेति उच्यते। यत् यदा अधिरथम् अधिकं रथमास्था सहस्रं सहस्रसंख्याकं गोसंघम् अजयत् तदा। यद्वा गोसहस्रमजयदस्या इति वा योज्यम्। गवीगाःस्तेनै

१. वि१.२.३.६.७—नोऽस्माकं।

निधानः । शविष्ठी गवामपहरणानामेषणे मुद्गलानी मुद्गलस्य स्त्री रथीरभूत् सारथिरभवत् । छान्दस ईकारलुक् । इन्द्रसेना स्तुत्या परितुष्टस्येन्द्रस्य सेना । यद्वा । इन्द्रस्य शत्रूणां दारयितुर्मुद्गलस्य सेनारूपा[1] मुद्गलानी । भरे संग्रामे कृतं संपादितं गोधनं व्यचेत् व्यचिनोत् । शत्रुभ्यः पृथक्कृतवती । चयतेर्लङि ' बहुलं छन्दसि ' इति विकरणस्य लुक् ॥

अन्तर्यच्छ जिघांसतो वज्रमिन्द्राभिदासतः ।
दासस्य वा मघवन्नार्यस्य वा सनुतर्यवया वधम् ॥ ३ ॥

अन्तः । यच्छ । जिघांसतः । वज्रम् । इन्द्र । अभिऽदासतः ।
दासस्य । वा । मघऽवन् । आर्यस्य । वा । सनुतः । यवय । वधम् ॥ ३ ॥

हे इन्द्र जिघांसतः हन्तुमिच्छतः अभिदासतः अभिद्रुह्यतः शत्रोः वज्रम् अन्तर्यच्छ अन्तर्गमय । तदेवाह । हे मघवन् धनवन्निन्द्र दासस्य वा उपक्षीणस्याल्पस्य आर्यस्य अभिगन्तव्यस्य महतो वा शत्रोः वधम् । वधनामैतत् । हननसाधनं वज्रं सनुतः । अन्तर्हितनामैतत् । अन्तर्हितं गूढं प्रयुज्यमानं यवय पृथक्कुरु ॥

उद्नो ह्रदमपिबज्जर्हृषाणः कूटं स्म तृंहदभिमातिमेति ।
प्र मुष्कभारः श्रव इच्छमानोऽजिरं बाहू अभरत्सिषासन् ॥ ४ ॥

उद्नः । ह्रदम् । अपिबत् । जर्हृषाणः । कूटम् । स्म । तृंहत् । अभिऽमातिम् । एति ।
■ । मुष्कऽभारः । श्रवः । इच्छमानः । अजिरम् । बाहू इति । अभरत् । सिसासन् ॥ ४ ॥

अत्र वृषभः स्तूयते । वृषभः उद्नः उदकस्य ह्रदम् अगाधजलाशयम् अपिबत् जर्हृषाणः अत्यन्तं हर्षितः सन् । तथा कूटं पर्वतशृङ्गं चौरर्गोपिधानार्थं निर्मितं तृंहत् स्म शृङ्गेण विहिंसितवान् । व्यदारयदित्यर्थः । तथा कृत्वा अभिमातिमेति शत्रुं गच्छति हन्तुम् । पश्चात् मुष्कभारः प्रवृद्धमुष्कः । प्रवृद्धस्य वृषभस्य हि मुष्कवृद्धिर्भवति । तथा प्रवृद्धो वृषभः श्रवः । श्रूयत इति श्रवो यशः । इच्छमानः इच्छन् अजिरं गमनशीलं शत्रुं बाहू बाहुभ्यां बाह्वोर्वा प्र अभरत् प्रहृतवान्[2] । यद्वा अजिरमिति क्षिप्रनाम । क्षिप्रं सिषासन् संभक्तुमिच्छन् बाहू प्राभरत् । प्रसारितवानित्यर्थः ॥

न्यक्रन्दयन्नुपयन्त एनममेहयन् वृषभं मध्य आजेः ।
तेन सूभर्वं शतवत्सहस्रं गवां मुद्गलः प्रधने जिगाय ॥ ५ ॥

नि । अक्रन्दयन् । उपऽयन्तः । एनम् । अमेहयन् । वृषभम् । मध्ये । आजेः ।
तेन । सुऽभर्वम् । शतऽवत् । सहस्रम् । गवाम् । मुद्गलः । प्रऽधने । जिगाय ॥ ५ ॥

मुद्गल आह । तेनेति तच्छब्दश्रुतेर्यच्छब्दाध्याहारः । यम् एनं वृषभं न्यक्रन्दयन् नितरां क्रन्दनमकुर्वन् । के । उपयन्तः समीपे गच्छन्तो नरः । यथा प्रचण्डेन क्रन्दनेन शत्रवो भीताः पलायन्ते तथाकुर्वन् । किम् । वृषभं वर्षकं सेक्तारम् आजेः संग्रामस्य मध्ये अमेहयन् मूत्रपुरीषोत्सर्गं

१. ग४–सेवारूपा; त१.२.३.६.७.८-म१.२.४.८–सेनारूपी, न४.५–सेनारूपा; म७–सेनानीरूपी ।
२. त३.७-भ-मु–प्रहृतवान् ।

विश्रामार्थं कारितवन्तः । सुभर्वम् । भर्वतिरत्तिकर्मा । शोभनयवसादिभक्षकम् । तादृशो यथा भवति तथा कुर्वेत्यर्थः । यद्वा एतद्गोसहस्रविशेषणम् । तेन उक्तरूपेण वृषभेण सुभर्वं सुष्ठु यवसादिभक्षणवत् शतोपेतं गवां सहस्रं मुद्गलः एतन्नामाहं प्रधने संग्रामे जिगाय अजैषम् ॥

कुकर्दवे वृषभो युक्त आसीदवावचीत्सारथिरस्य केशी ।
दुधेर्युक्तस्य द्रवतः सहानस ऋच्छन्ति ष्मा निष्पदो मुद्गलानीम् ॥ ६ ॥

ककर्दवे । वृषभः । युक्तः । आसीत् । अवावचीत् । सारथिः । अस्य । केशी ।
दुधेः । युक्तस्य । द्रवतः । सह । अनसा । ऋच्छन्ति । स्म । निःऽपदः । मुद्गलानीम् ॥ ६ ॥

ककर्दवे हिंसनाय शत्रूणां वृषभः वर्षिता गौः युक्तः आसीत् रथे संबद्धोऽभूत् । केशी केशवान् प्रभूतकेशवान् अस्य राज्ञः रथस्य वा सारथिः । मुद्गलानीत्यर्थः । सारथ्याभिप्रायेण केशीति पुंलिङ्गता । अवावचीत् वृषभभयजनकं शत्रुभयजनकं वाक्रोशमकरोत् । अथवा । केशी केशिनी सारथिरस्य । अमुमित्यर्थः । अमुं वृषभं शब्दमकारयत् । 'वच परिभाषणे' इत्यस्य केवलस्यान्तर्णीतण्यर्थस्य यङ्लुगन्तस्य लुङि रूपम् । अथवा । अस्य सारथिः सहायभूतः केशी प्रकृष्टकेशो वृषभोऽवावचीत् भृशमशब्दयत् । एवंभूतस्य दुधेः दुर्धरस्य अनसा सह द्रवतः शीघ्रं शत्रुमध्ये रथेन सह धावतो वृषभस्य भयंकरशब्देन निष्पदः निर्गच्छन्तो चोरादयः मुद्गलानीं मुद्गलस्य योषितं सारथिभूतां प्रति ऋच्छन्ति स्म अगच्छन्नित्यर्थः । 'पाघ्रा°' इत्यादिना ऋच्छादेशः ॥ ॥ २० ॥

उत प्रधिमुदहन्नस्य विद्वानुपायुनग्वंसगमत्र शिक्षन् ।
इन्द्र उदावत्पतिमघ्न्यानामरंहत पद्याभिः ककुद्मान् ॥ ७ ॥

उत । प्रऽधिम् । उत् । अहन् । अस्य । विद्वान् । उप । अयुनक् । वंसगम् । अत्र । शिक्षन् ।
इन्द्रः । उत् । आवत् । पतिम् । अघ्न्यानाम् । अरंहत । पद्याभिः । ककुत्ऽमान् ॥ ७ ॥

उत अपि च विद्वान् स[1] मुद्गलः अस्य रथस्य प्रधिम् । प्रधिरक्षच्छिद्रकाष्ठः प्रान्तकाष्ठः । स च रथावयवानामुपलक्षकः । रथावयवम् उदहन् उदगमयत् । रथं संनद्धं इत्यर्थः । तदनन्तरम् अत्र रथे वंसगं वननीयगमनं वृषभं शिक्षन् शिक्षयन् रज्जुषु स्थापयन् उपायुनक् रथसमीपे युगेऽयोजयत् । युजेर्लङि सिपो हल्ङ्यादिलोपः । एवं सति इन्द्रः देवः अघ्न्यानाम् अहन्तव्यानां गवां पतिम् उत् उत्कर्षम् आवत् रक्षामकरोत् । पश्चात् ककुद्मान् वृषभः पद्याभिः सरणिभिः अरंहत वेगेनागमत् । रंहिर्गत्यर्थः ॥

शुनमष्ट्राव्यचरत्कपर्दी वरत्रायां दार्वानह्यमानः ।
नृम्णानि कृण्वन्बहवे जनाय गाः पस्पशानस्तविषीरधत्त ॥ ८ ॥

शुनम् । अष्ट्राऽवी । अचरत् । कपर्दी । वरत्रायाम् । दारु । आऽनह्यमानः ।
नृम्णानि । कृण्वन् । बहवे । जनाय । गाः । पस्पशानः । तविषीः । अधत्त ॥ ८ ॥

शुनम् इति सुखनाम । सुखं यथा भवति तथा । अष्ट्रावी । अष्ट्रा प्रतोदः तद्वान् । छान्दसो विनिः । कपर्दी कपर्दवान् अचरत् संचरति । किं कुर्वन् । वरत्रायां बध्रौ दारु काष्ठं रथाङ्गभूतम्

1. क-त-म १.२.४.८-मु—'स' नास्ति ।

बृहन्ताऽइव । गम्भरेषु । प्रतिऽस्थाम् । पादाऽइव । गाधम् । तरते । विदाथः ।
कर्णाऽइव । शासुः । अनु । हि । स्मराथः । अंशाऽइव । नः । भजतम् । चित्रम् । अप्नः ॥९॥

बृहन्तेव बृहन्ताविव प्रांशू पुरुषौ यथा गम्भरेषु[1] गहनेषु जलेषु प्रतिष्ठां विन्दतः तद्वत् गह्वरेषु गम्भीरेषु दुष्प्रवेशेषु स्थानेषु प्रतिष्ठाम् अवस्थितिमास्पदं युवां विदाथः[2] जानीथः। पादेव पादाविव यथा तरते। षष्ठ्यर्थे चतुर्थी। तरतः पुरुषस्य पादौ यथा गाधं जलं विन्तः तद्वद्युवां तार्येषु जलेषु गाधं विदाथः जानीथः। 'विद ज्ञाने'। लेट्याडागमः। कर्णेव यथा कर्णावुक्तं शब्दं विन्तः तद्वद्युवां शासुः शासितारं स्तुतिं कुर्वाणं जनम् अनु हि स्मराथः अनुकूलं जानीथः खलु। स्मरतेर्लेट्याडागमः। हियोगादनिघातः। 'अधीगर्थदयेशां कर्मणि' (पा. सू. २. ३. ५२) इति शासुरित्यस्य षष्ठी। अंशेव अंशाविव यथावयवौ[3] तद्वन्तं यथा भजेते तद्वद्युवां नः अस्मदीयं चित्रं चायनीयम् अप्नः कर्म भजतम् आश्रयतम्॥ अप्नः। 'आप्लृ व्याप्तौ'। अस्मादापः कर्माख्यायां 'ह्रस्वो नुट् च वा' (उ. सू. ४. २०७) इत्यसुन् तत्संनियोगेन ह्रस्वो नुडागमश्च। नित्स्वरेणाद्युदात्तः॥

आरङ्गरेव मध्वेरयेथे सारघेव गवि नीचीनबारे।
कीनारेव स्वेदमासिष्विदाना क्षामेवोर्जा सूयवसात् सचेथे॥ १०॥

आरङ्गराऽइव । मधु । आ । ईरयेथे इति । सारघाऽइव । गवि । नीचीनऽबारे ।
कीनाराऽइव । स्वेदम् । आऽसिस्विदाना । क्षामऽइव । ऊर्जा । सुयवसऽअत् । सचेथे इति ॥१०॥

आरङ्गरेव। 'गॄ शब्दे'। अस्माद्भावे ऋदोरप्। अरमलं पर्याप्तं गरः शब्दनम्। तस्य संबन्धिनौ॥ 'तस्येदम्' इत्यण्॥ शब्दयन्तौ भेकाविव यथा मधु जलं प्रेरयतः तद्वद्युवाम् एरयेथे प्रेरयथः॥ 'ईर प्रेरणे'। चौरादिकः॥ सारघेव सारघाविव। सरघा मधुमक्षिका। सरघैव सारघा। प्रज्ञादित्वादण् (पा. सू. ५. ४. ३८)। ते[4] यथा नीचीनबारे नीचीनद्वारे मधुपुटे मधु प्रेरयतः तद्वद्युवां नीचीनबारे न्यग्भूतद्वारे गवि गोरूधसि क्षीरं प्रक्षिपथः। कीनारेव कीनाराविव कुत्सितमनुष्यौ यथा स्विद्यमानौ भवतः तद्वत् स्वेदं स्विद्यमानं जलम् आसिस्विदाना आ समन्तात् स्वेदयन्तौ प्रक्षारयन्तौ भवथः॥ 'ञिष्विदा गात्रप्रक्षरणे'। अनुदात्तेत्। तस्माच्छान्दसे लिटि कानजादेशः॥ क्षामेव। 'क्षै जै षै क्षये'। अस्मादन्तो मनिन्। ह्रस्वश्छान्दसः। क्षामा क्षीणा गौः सुयवसात्। अदेः क्विप्। शोभनं यवसं घासादिकं भक्षयन्ती क्षीररूपेणान्नेन समवेता यथा भवति तद्वद्युवाम् ऊर्जा हवीरूपेणान्नेन सचेथे संगच्छेथे॥ 'षच समवाये'॥

ऋध्याम स्तोमं सनुयाम वाजमा नो मन्त्रं सरथेहोप यातम्।
यशो न पक्वं मधु गोष्वन्तरा भूतांशो अश्विनोः काममप्राः॥ ११॥

ऋध्याम । स्तोमम् । सनुयाम । वाजम् । आ । नः । मन्त्रम् । सऽरथा । इह । उप । यातम् ।
यशः । न । पक्वम् । मधु । गोषु । अन्तः । आ । भूतऽअंशः । अश्विनोः । कामम् । अप्राः ॥११॥

१. त-भ-'गम्भरेषु' नास्ति। २. ग-त-भ-'विदाथः' नास्ति। ३. ग४-त४.५-यथा वस्त्रस्यावयवौ। ४. त-भ-तथा।

हे अश्विनौ युवां स्तोमं त्रिवृत्पञ्चदशादिकम् ऋध्याम ऋध्यास्म वर्धयेम ॥ 'ऋधु वृद्धौ'। अस्मादाशीर्लिङि 'किदाशिषि' इति यासुटः कित्त्वम् ॥ वाजं हविर्लक्षणमन्नं युवाभ्यां सनुयाम प्रयच्छेम ॥ 'षणु दाने'। तनादिकः। विधिलिङ्। वाक्यभेदादनिघातः ॥ तस्माद्युवां सरथा सरथौ समानरथावेकस्मिन्नेव रथमारूढौ सन्तौ इह अस्मिन् कर्मणि नः अस्मदीयं मन्त्रं मननीयं स्तोत्रम् उप यातम् उपागच्छतम्। गोष्वन्तः। गोष्ववस्थितं पक्वं परिपक्वम् अत एव मधु मधुरं यशो न। यश इत्यन्ननाम। नञर्थे। क्षीराद्यविलक्षणं महार्घेऽश्वमीयमानमन्नं यथापेक्ष्यागच्छत-मिति संबन्धः। एवमुक्तप्रकारेण भूतांशः एतन्नामर्षिः अश्विनोः कामम् अभिलाषमाभिरीभिः स्तुतिभिः आ अप्राः आपूरयत्। संपूर्णमकार्षीदित्यर्थः ॥ 'प्रा पूरणे'। अदादिकः। व्यत्ययेन मध्यमः ॥ अत्राश्विने सूक्ते सर्वाण्यपि पदानि दुर्ज्ञेयान्यस्माभिर्दिङ्मात्रं प्रदर्शितानि। पूर्वैर्निरुक्तव्याकरणादिभिरर्थविशेषे बुद्धिमद्भिरूह्यानि ॥ ॥ २ ॥

'आविः' इत्येकादशर्चमष्टमं सूक्तम्। दिव्यो नामाङ्गिरस ऋषिः। प्रजापतेः सुता दक्षिणा सा वा ऋषिका। 'शतधारं वायुम्' इति चतुर्थी जगती शिष्टा दश त्रिष्टुभः। अनेन सूक्तेन ऋत्विग्भ्यो दीयमाना दक्षिणा तद्दातारो यजमाना वा स्तूयन्ते। अतः सैव देवता। तथा चानुक्रान्तम्—'आविर्दिव्यो दक्षिणा वा प्राजापत्या दक्षिणां तद्दातॄन्वास्तौच्चतुर्थी जगती' इति। गतो विनियोगः ॥

**आविरभून्महि माघोनमेषां विश्वं जीवं तमसो निरमोचि ।**
**महि ज्योतिः पितृभिर्दत्तमागादुरुः पन्था दक्षिणाया अदर्शि ॥ १ ॥**

आविः । अभूत् । महि । माघोनम् । एषाम् । विश्वम् । जीवम् । तमसः । निः । अमोचि ।
महि । ज्योतिः । पितृऽभिः । दत्तम् । आ । अगात् । उरुः । पन्थाः । दक्षिणायाः । अदर्शि ॥ १ ॥

इदं सूक्तं दक्षिणाया वा तद्दातॄणां वा स्तावकम्। दक्षिणा तु यागाङ्गं यागस्तु सायंकाले न क्रियते। 'न सायमस्ति देवया अजुष्टम्' (ऋ. सं. ५. ७७. २) इत्यादिश्रवणात्। तस्मात् अह्न्येव कर्तव्यः। अतश्च सूर्योदयात्प्रागवर्तीति सूक्तादौ सूर्योदयोऽभिधीयते। माघोनम्। मघवेन्द्रः[1]। इन्द्रश्च सूर्यः 'चैत्रमासे तपेदिन्द्रः' इति स्मरणात्। तस्य संबन्धि ॥ 'तस्येदम्' इत्यण्। अतद्धिते प्रत्यये संप्रसारणमभिहितम् (पा. सू. ६. ४. १३३)। सर्वविधीनां छन्दसि विकल्पितत्वादत्र तद्धितेऽपि संप्रसारणम् ॥ सूर्यात्मकस्येन्द्रस्य स्वभूतं महि महत् तेजः एषां यजमानानां यागसिद्ध्यर्थम् आविरभूत्। प्रकाशितमुद्गतमभूत्। तत्र विश्वं सर्वं जीवं स्थावर-जङ्गमात्मकं जगत् तमसः सकाशात् निरमोचि[2] निर्मुक्तमभूत्[2]। मुक्तेः[3] कर्मणि लुङि चिणि रूपम्। अथानन्तरं पितृभिः यत् पितृभिर्देवैः दत्तं नो* हविर्यागमाश्रित्य तत्[3] महि महत् ज्योतिः सूर्याख्यम् आगात् आगच्छति। पश्चात् दक्षिणायाः यागाङ्गभूतायाः उरुः महान् पन्थाः मार्गः अदर्शि सर्वैर्यजमानैर्दृष्टोऽभूत्। सर्वे यागं कृत्वा ऋत्विग्भ्यो दक्षिणां दत्तवन्त इत्यर्थः ॥

**उच्चा दिवि दक्षिणावन्तो अस्थुर्ये अश्वदाः सह ते सूर्येण ।**
**हिरण्यदा अमृतत्वं भजन्ते वासोदाः सोम प्र तिरन्त आयुः ॥ २ ॥**

१. त-म—मघोन इन्द्रः। २. म—'निरमोचि निर्मुक्तमभूत्' नास्ति; त४.५—तेन निर्मुक्तमभूत्। ३. म—'मुक्तेः...तत्' नास्ति। * त४.५—आत्मनो।

उच्चा । दिवि । दक्षिणाऽवन्तः । अस्थुः । ये । अश्वऽदाः । सह । ते । सूर्येण ।
हिरण्यऽदाः । अमृतऽत्वम् । भजन्ते । वासःऽदाः । सोम । प्र । तिरन्ते । आयुः ॥ २ ॥

दक्षिणावन्तः दक्षिणाया दातृत्वेन तद्वन्तो दक्षिणां दत्तवन्तो यजमानाः उच्चा उच्चैः स्थानैः स्थिते दिवि द्युलोके अस्थुः तिष्ठन्ति। सामान्येनोक्त्वा दातृविशेषाणां फलविशेषमाह। अश्वदाः अश्वानां दातारः ये यजमानाः ते सूर्येण सर्वस्य स्वस्वकर्मणि प्रेरकेणादित्येन सह तिष्ठन्ति। ये हिरण्यदाः[1] हिरण्यदातारः ते अमृतत्वम् अमरणधर्मत्वं देवत्वं भजन्ते। 'अमृतं वै हिरण्यम्' (तै. सं. ५.२.७.२) इत्याम्नानात्। तथा 'सौम्यं वै वासः' (तै. ब्रा. २.२.५) इति श्रवणात् सोम एव संबोध्यते। हे सोम वासोदाः त्वद्देवस्य वस्त्राणां[2] दातारो ये सन्ति ते त्वया सह तिष्ठन्तीति शेषः। एते सर्वे आयुः जीवनं प्र तिरन्ते प्रवर्धयन्ति। प्रपूर्वस्तिरतिर्वृद्ध्यर्थः ॥

दैवी पूर्तिर्दक्षिणा देवयज्या न कवारिभ्यो नहि ते पृणन्ति ।
अथा नरः प्रयतदक्षिणासोऽवद्यभिया बहवः पृणन्ति ॥ ३ ॥

दैवी । पूर्तिः । दक्षिणा । देवऽयज्या । न । कवऽअरिभ्यः । नहि । ते । पृणन्ति ।
अथ । नरः । प्रयतऽदक्षिणासः । अवद्यऽभिया । बहवः । पृणन्ति ॥ ३ ॥

दैवी देवसंबन्धिनी ॥ 'देवाद्यञञौ' (पा. सू. ४. १. ८५. ३) इत्यञ्। तादृशी पूर्तिः पालिनी तत्साध्या देवयज्या ॥ 'छन्दसि निष्टर्क्य°' (पा. सू. ३. १. १२३) इति निपातितः ॥ देवयागः। तदङ्गभूता दक्षिणा न कवारिभ्यः ॥ 'ऋ गतौ' इत्यस्य 'अच इः' (उ. सू. ४.१३८) इतीप्रत्ययः ॥ कुत्सितगन्तृभ्योऽयष्टृभ्यः। एतेभ्यो न भवति। यद्वा। देवानां स्वभूता पूर्तिः पूरयित्री स्तुतिभिर्हविर्भिश्च तादृशी देवयज्या दक्षिणा च तेभ्यो न भवतः। तत्र हेतुरुच्यते। हि यस्मात् ते कुत्सितगन्तारः नहि पृणन्ति देवान् स्तुतिभिर्हविर्भिश्च न प्रीणयन्ति। 'पृण प्रीणने'। तौदादिकः। अथ इति प्रश्ने। यष्टॄणां देवयागादि कथं भवति। उच्यते। नरः कर्मणां नेतारः अत एव प्रयतदक्षिणासः दत्तदक्षिणाः बहवः यजमानाः अवद्यभिया ॥ 'अवद्यपण्यवर्या गर्ह्य°' (पा. सू. ३. १. १०१) इति यत्प्रत्ययान्तत्वेन निपातितः ॥ पापभिया। विहितानुष्ठाने दुरितानि भवन्ति खलु। तस्मात्तद्भिया पृणन्ति देवान् प्रीणयन्ति। तस्माद्यष्टॄणां देवयागदक्षिणा भवतीत्यर्थः[3] ॥

शतधारं वायुमर्कं स्वर्विदं नृचक्षसस्ते अभि चक्षते हविः ।
ये पृणन्ति प्र च यच्छन्ति संगमे ते दक्षिणां दुहते सप्तमातरम् ॥ ४ ॥

शतऽधारम् । वायुम् । अर्कम् । स्वःऽविदम् । नृऽचक्षसः । ते । अभि । चक्षते । हविः ।
ये । पृणन्ति । प्र । च । यच्छन्ति । सम्ऽगमे । ते । दक्षिणाम् । दुहते । सप्तऽमातरम् ॥ ४ ॥

शतधारं बहुधारेणोपेतं वायुम् एतन्नामकं स्वर्विदं स्वर्गस्य लम्भकं सर्वस्य वेत्तारं वा अर्कम् अर्चनीयमादित्यं च एतौ नृचक्षसः नृणां द्रष्टॄनन्यानिन्द्रादीन् देवांश्चाभिलक्ष्य ते यजमानाः हविः चक्षते। तेभ्यो दातुं पश्यन्ति जानन्ति[4]। चष्टेर्लटि रूपम्। किंच संगमे कर्मकरणार्थम्

१. त-म–'हिरण्यदाः' नास्ति। २. त-म-मु–तद्देवस्य°। ३. त-अ१.२.४.८–भवतीत्यर्थः।
४. त-म–'जानन्ति' नास्ति।

ऋत्विजोऽत्र संगच्छन्त इति संगमः ॥ ' यदवृत्तान्नित्यम् ' इत्यभिकरणेऽप् । थाथादिस्वरः ॥ तस्मिन् यज्ञे ये यज्वानः पृणन्ति स्तुतिभिः प्रीणयन्ति । ये च तेभ्यो देवेभ्यो हवींषि प्र यच्छन्ति । उभयत्र यद्योगादनिघातः । ते सहस्रधारम् । सहस्रसंख्याका मातृभूता अग्निष्टोमादिसंस्था यस्यां भवन्ति सा । यद्वा । सहस्रसंख्याका मातरः कर्मणां निर्मातारः कर्तारो होत्रादयः सन्ति । तादृशीं दक्षिणां दुहते ऋत्विग्भ्यो दुहन्ति ॥

दक्षिणावान् प्रथमो हूत एति दक्षिणावान् ग्रामणीरग्रमेति ।
तमेव मन्ये नृपतिं जनानां यः प्रथमो दक्षिणामाविवाय ॥ ५ ॥

दक्षिणाऽवान् । प्रथमः । हूतः । एति । दक्षिणाऽवान् । ग्रामऽनीः । अग्रम् । एति ।
तम् । एव । मन्ये । नृऽपतिम् । जनानाम् । यः । प्रथमः । दक्षिणाम् । आऽविवाय ॥ ५ ॥

हूतः ऋत्विग्भिराहूतः दक्षिणावान् यजमानः प्रथमः सर्वेषां मुख्यः सन् एति सर्वत्र गच्छति । तथा ग्रामणीः ग्रामाणां नेता धनवत्त्वेन तेषां कर्ता दक्षिणावान् सः अग्रमेति । सर्वेषां प्रथममेव गच्छति । तमेव नृपतिं नराणां पालयितारमिति मन्ये ऋषिरहमवबुध्ये प्रथमः यः[1] जनानां दक्षिणाम् आविवाय आगमयति । वी गत्यादिषु । तस्य लिटि रूपम् । तं नृपतिमिति मन्ये । यद्वा । जनानामिति पूर्ववाक्यशेषः । जनानां मध्ये तमेव मनुष्याणां स्वामिनमिति मन्ये ॥ ॥ ३ ॥

तमेव ऋषिं तमु ब्रह्माणमाहुर्यज्ञन्यं सामगामुक्थशासम् ।
स शुक्रस्य तन्वो वेद तिस्रो यः प्रथमो दक्षिणया रराध ॥ ६ ॥

तम् । एव । ऋषिम् । तम् । ऊँ इति । ब्रह्माणम् । आहुः । यज्ञऽन्यम् । सामऽगाम् । उक्थऽशासम् ।
सः । शुक्रस्य । तन्वः । वेद । तिस्रः । यः । प्रथमः । दक्षिणया । रराध ॥ ६ ॥

तमेव दक्षिणाया दातारम् ऋषिम् अतीन्द्रियार्थदर्शिनं यद्वा सत्कर्मकरणेन ऋषिमित्याहुः । तथा तमु तमेव ब्रह्माणमाहुः । किंच तमेव यज्ञन्यम् ॥ ' णीञ् प्रापणे ' । क्विप् । ' उदात्तस्वरित-योर्यणः° ' इत्यतः स्वरितत्वम् ॥ यज्ञस्य नेतारमध्वर्युमित्याहुः । तमेव सामगां साम्नां गातार-मिति । तथा उक्थशासम् । ' शन्सु स्तुतौ ' । क्विप् । संहितायां दीर्घश्छान्दसः । उक्थशसं शस्त्राणां शंसितारं होतारमिति ब्रुवन्ति । दक्षिणादानेन सत्कर्मणः परिग्रहात् । सः दाता शुक्रस्य दीप्यमानस्य ज्योतिषः तिस्रः तन्वः अग्निवैद्युतादित्यात्मकानि त्रीणि शरीराणि वेद जानाति । यद्वा । शुक्रस्य दीप्तस्याग्नेराहवनीयाद्यात्मकानि[2] त्रीणि शरीराणि जानाति । प्रथमः मुख्यः यः जनः दक्षिणया रराध ऋत्विगादीनाराधयति ॥ ' राध संसिद्धौ ' । लिटि रूपम् । लित्स्वरः ॥

दक्षिणाश्वं दक्षिणा गां ददाति दक्षिणा चन्द्रमुत यद्धिरण्यम् ।
दक्षिणान्नं वनुते यो न आत्मा दक्षिणां वर्म कृणुते विजानन् ॥ ७ ॥

दक्षिणा । अश्वम् । दक्षिणा । गाम् । ददाति । दक्षिणा । चन्द्रम् । उत । यत् । हिरण्यम् ।
दक्षिणा । अन्नम् । वनुते । यः । नः । आत्मा । दक्षिणाम् । वर्म । कृणुते । विऽजानन् ॥ ७ ॥

---

१. त१.३.४.५.७.८-अ-मु-यो जनः । २. त-अं-मु-°राहवनीयात्मकानि ।

दक्षिणा स्तोतृभ्यः अश्वं ददाति। तथा गां च ददाति। तथा चन्द्रं सुवर्णं ददाति। उत अपि च यत् हिरण्यं रजतमस्ति। 'एतद्वै हिरण्यम्' (तै. सं. १.५.१.२) इत्याम्नानात्। तच्च ददाति। किंच सा अन्नं[1] वनुते ददाति। वनोतिरत्र दानार्थः। तस्मात् नः अस्माकं यः आत्मा अस्ति सः वर्म विजानन् कवचं यथा युद्धानां निवारकं तद्वदरिष्टानि वारयतीति कवचमिति विजानन् दक्षिणाम् अश्वादिदानलक्षणां कृणुते। ऋत्विग्भ्यः करोति॥

न भो॒जा म॑म्रु॒र्न न्य॑र्थमी॑यु॒र्न रि॑ष्यन्ति॒ न व्य॑थन्ते ह भो॒जाः।
इ॒दं यद्विश्वं॒ भुव॑नं॒ स्व॑श्चै॒तत्सर्वं॒ दक्षि॑णैभ्यो ददाति॥ ८॥

न। भो॒जाः। म॒म्रुः। न। नि॒ऽअ॒र्थम्। ई॒युः। न। रि॒ष्य॒न्ति॒। न। व्य॒थ॒न्ते॒। ह। भो॒जाः।
इ॒दम्। यत्। विश्व॑म्। भुव॑नम्। स्वः॑। च। ए॒तत्। सर्व॑म्। दक्षि॑णा। ए॒भ्यः। द॒दा॒ति॒॥ ८॥

भोजाः भोजयितारो धनादिदानेन दातारः न ममुः न म्रियन्ते। देवत्वं भजन्त इत्यर्थः। अत एव न्यर्थम्॥ 'ऋ गतौ'। उषिकुषिगार्तिभ्यस्थन् (उ. सू. २. ४)। समासे थाथादिस्वरः॥ निकृष्टां गतिं न ईयुः न प्राप्नुवन्ति॥ 'इण् गतौ'। लिटि 'दीर्घ इणः किति' (पा. सू. ७. ४. ६९) इति दीर्घः॥ तथा न रिष्यन्ति। केनचिदप्यहिंसिता भवन्ति। कर्मणि व्यत्ययेन परस्मैपदम्। अत एव भोजाः दातारः न व्यथन्ते। परकृतं न भीता न बाधिता वा भवन्ति। ह प्रसिद्धौ। किंच इदं परिदृश्यमानं विश्वं सर्वं भुवनं यत् भूतजातमस्ति स्वश्च स्वर्गलोकश्च एतत्सर्वं दक्षिणा स्वयम् एभ्यः सदातृभ्यः ददाति प्रयच्छति॥

भो॒जा जि॑ग्युः सुर॒भिं योनि॒मग्रे॑ भो॒जा जि॑ग्युर्व॒ध्वं१॒॑ या सु॒वासाः॑।
भो॒जा जि॑ग्युरन्तः॒पेयं॒ सुरा॑या भो॒जा जि॑ग्यु॒र्ये अहू॑ताः प्र॒यन्ति॑॥ ९॥

भो॒जाः। जि॒ग्युः॒। सु॒र॒भिम्। योनि॑म्। अग्रे॑। भो॒जाः। जि॒ग्युः॒। व॒ध्व॑म्। या। सु॒ऽवासाः॑।
भो॒जाः। जि॒ग्युः॒। अ॒न्तः॒ऽपेय॑म्। सुरा॑याः। भो॒जाः। जि॒ग्युः॒। ये। अहू॑ताः। प्र॒ऽयन्ति॑॥ ९॥

भोजाः दातारः अग्रे प्रथममेव योनिं क्षीरादेरुत्पत्तिस्थानं सुरभिं धेनुं जिग्युः। शत्रुभ्यो जितवन्तः॥ 'जि जये'। लिटि 'सन्लिटोर्जेः' इत्यभ्यासादुत्तरस्य कवर्गादेशः॥ तथा भोजाः दातारः वध्वं वधूं नवोढां स्त्रीं जिग्युः। या स्त्रीः सुवासाः शोभनवासा अस्ति तां जिग्युः। किंच भोजाः शत्रूणां सुरायाः अन्तःपेयम् अन्तःपानं जिग्युः॥ 'पा पाने'। भावे यत्। 'ईद्यति' इतीत्वम्। आर्धधातुकलक्षणो गुणः। कृदुत्तरपदप्रकृतिस्वरत्वम्॥ ये शत्रवः अहूताः कलाधिक्येनानाहूयमानाः प्रयन्ति प्रमुखमागच्छन्ति तान् भोजाः दक्षिणाया दातारो जनाः जिग्युः जयन्ति॥

भो॒जाया॒श्वं सं मृ॑जन्त्या॒शुं भो॒जाया॑स्ते क॒न्या॒३॒॑ शुम्भ॑माना।
भो॒जस्ये॒दं पु॑ष्क॒रिणी॑व॒ वेश्म॒ परि॑ष्कृतं देवमा॒नेव॑ चि॒त्रम्॥ १०॥

भो॒जाय॑। अश्व॑म्। सम्। मृ॒ज॒न्ति॒। आ॒शुम्। भो॒जाय॑। आ॒स्ते॒। क॒न्या॑। शुम्भ॑माना।
भो॒जस्य॑। इ॒दम्। पु॒ष्क॒रिणी॑ऽइव। वेश्म॑। परि॑ऽकृतम्। दे॒व॒मा॒नाऽइ॑व। चि॒त्रम्॥ १०॥

१. त१.२-३.६.७.८-भ१.४.७-अर्धं च।

भोजाय दात्रे आशुं शीघ्रगामिनम् अश्वं सं मृजन्ति। परिचारकाः सम्यगलंकुर्वन्ति। 'मृजू शौचालंकारयोः'। तथा कन्या। कन्यात्वेनात्र संनिकृष्टादभिनवं यौवनं लक्ष्यते। अभिनवयौवना शुम्भमाना शरीरावयवविशेषशोभया वस्त्राद्यलंकारशोभया च शोभमाना स्त्री तस्मै भोजाय दात्रे आस्ते। तथा भोजस्य दातुरेव इदम् आह्लादकरं वेश्म गृहं भवति। कीदृशम्। पुष्करिणीव। पुष्कराणि पद्मानि यस्याः सन्तीति पुष्करिणी सरसी। सा यथा पद्महंसादिभिरलंकृता भवति तद्वत् परिष्कृतं चित्रादिभिरलंकृतम्॥ परिपूर्वस्य करोतेर्भूषणार्थे संहितायां सुडागमः। 'परिनिविभ्यः' इति षत्वम्। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्॥ तथा देवमानेव। 'सुपां सुलुक्' इति प्रथमैकवचनस्याकारः॥ देवमानमिव देवयानमिव चित्रं मनोहरं वेश्म तस्य भवति॥

भोजमश्वाः सुष्ठुवाहो वहन्ति सुवृद्रथो वर्तते दक्षिणायाः।
भोजं देवासोऽवता भरेषु भोजः शत्रून्त्समनीकेषु जेता॥ ११॥

भोजम्। अश्वाः। सुष्टुऽवाहः। वहन्ति। सुऽवृत्। रथः। वर्तते। दक्षिणायाः।
भोजम्। देवासः। अवत। भरेषु। भोजः। शत्रून्। सम्ऽअनीकेषु। जेता॥ ११॥

सुष्टुवाहः॥ 'वह प्रापणे'। 'वहश्च' इति ण्विप्रत्ययः। शोभनवहनसमर्थाः अश्वाः भोजं दातारं वहन्ति। कर्मार्थं देशं प्रापयन्ति। ततः दक्षिणायाः दातुर्यजमानस्य सुवृत् सुष्ठु चक्रादिवर्तनं यस्य सोऽयमीदृशः रथः वर्तते। अथ प्रत्यक्षः। हे देवासः हे देवा इन्द्रादयः भरेषु। ह्रियत[1] आहवनीयादिरूपेणाग्निरत्रेति भरा यज्ञाः। यद्वा। 'भृ भर्त्सने'। भृणन्ति भर्त्सयन्ति योद्धारः अत्रेति भराः संग्रामाः। तेषु भोजं दातारम् अवत रक्षत। ततो युष्माभिः पालितः भोजः धनादिदानेन जनानां भोजयिता सन् समनीकेषु संग्रामेषु शत्रून् जेता जयशीलो भवति॥ 'जि जये'। ताच्छीलिकस्तृन्। अत एव 'न लोकाव्यय०' इति षष्ठ्याः प्रतिषेधः॥ ४ ॥

'किमिच्छन्ती' इत्येकादशर्चं नवमं सूक्तं त्रैष्टुभम्। ऐन्द्रपुरोहितस्य बृहस्पतेर्गोषु बलनाम्नोऽसुरस्य भटैः पणिनामकैरसुरैरपहृत्य गुहायां निहितासु सतीषु बृहस्पतिप्रेरितेनेन्द्रेण गवामन्वेषणाय सरमा नाम देवशुनी प्रेषिता। सा च महतीं नदीमुत्तीर्य वलपुरं प्राप्य गुप्तस्थाने नीतास्ता गा ददर्श। अथ तस्मिन्नन्तरे पणय इदं वृत्तान्तमवगच्छन्त एनां मित्रीकर्तुं संवादमकुर्वन्। तत्र प्रथमातृतीयाद्या अयुजोऽन्त्यावर्जिताः पणीनां वाक्यानि। अत्र त ऋषयः सरमा देवता। द्वितीयाचतुर्थ्याद्या युज एकादशी च षट् सरमाया वाक्यानि। अतस्तासु सर्पिः पणयो देवता। तथा चानुक्रान्तं—'किमिच्छन्ती पणिभिरसुरैर्निगूळ्हा गा अन्वेष्टुं सरमां देवशुनीमिन्द्रेण प्रहितामसुरिभः पणयो मित्रीयन्तः प्रोचुः सा तान्युग्मास्याभिरनिच्छन्ती प्रत्याचष्टे' इति। गतो विनियोगः॥

किमिच्छन्ती सरमा प्रेदमानड् दूरे ह्यध्वा जगुरिः पराचैः।
कास्मेहितिः का परितक्म्यासीत्कथं रसाया अतरः पयांसि॥ १॥

किम्। इच्छन्ती। सरमा। प्र। इदम्। आनट्। दूरे। हि। अध्वा। जगुरिः। पराचैः।
का। अस्मेऽहितिः। का। परिऽतक्म्या। आसीत्। कथम्। रसायाः। अतरः। पयांसि॥ १॥

अन्यत्रागच्छन्ती सरमां दृष्ट्वा पणयो वदन्ति। सरमा सरणशीलत्वादेवंनाम्नी देवशुनी किमिच्छन्ती[2] किं प्रार्थयमाना सती इदम् अस्मदीयं स्थानं प्र आनट् प्राप्नोत्॥ आनडिति नशिः

1. ता१.२.३.६.७.८-मर२.५-ह्रियत। 2. त-म-मु-'किमिच्छन्ती' नास्ति।

व्याप्तिकर्मा । तस्य लुङि 'मन्त्रे घस०' इत्यादिना च्लेर्लुक् । छन्दस्यपि दृश्यत इत्याडागमः ॥ ᵛपरायैः पराणि पराङ्मुखत्वाद्यावृत्तिवर्जितानि यानि गमनानि तैः ᵛजगुरिः उद्गूर्णः । महता प्रयत्नेनापि गन्तुं न शक्यत इत्यर्थः ॥ 'गॄ निगरणे' । 'आदृगमहन०' इत्यादिना किन्प्रत्ययः । 'बहुलं छन्दसि' (पा. सू. ७. १. १०३) इत्युत्वम् ॥ तादृशोऽयम् ᵛअध्वा ᵛदूरे ᵛहि विप्रकृष्टः खलु । यद्वा । परायैः पराक्रमैर्जगुरिरुद्गूर्णः गन्त्री पार्ष्णिभागमनवलोकमाना मार्गमिदं कथं प्राप्नोषि । दूरेऽयमध्वा अस्मभ्यमपि गन्तुं न शक्यते । अतो वयमेतां पृच्छामः । हे सरमे ᵛका कीदृशी ᵛअस्मेहितिः । कोऽस्मास्वर्थहितिः । कोऽस्मासु त्वदपेक्षितार्थो निहितः । यद्वा । अस्मासु कोऽर्थो गतः । दधातेर्हिनोतेर्वा क्तिनि रूपम् । आगच्छन्त्यास्तव ᵛका कीदृशी ᵛपरितक्म्या रात्रिः ᵛआसीत् । यद्वा । तकतिर्गत्यर्थः । परितक्म्यं परितो गमनं भ्रमणं वा कीदृक्समासीत् । ᵛकथं च[१] ᵛरसायाः शब्दायमानाया अन्तरिक्षगताया योजनशतविस्तीर्णायाः ᵛपयांसि उदकानि ᵛअतरः तीर्णवत्यसि । एतद्ब्रूहि । अत्र 'किमिच्छन्ती सरमेदं प्रानट्' (निरु. ११. २५) इत्यादिकं निरुक्तं द्रष्टव्यम् ॥

इन्द्रस्य दूतीरिषिता चरामि मह इच्छन्ती पणयो निधीन्वः ।
अतिष्कदो भियसा तन्न आवत्तथा रसाया अतरं पयांसि ॥ २ ॥

इन्द्रस्य । दूतीः । इषिता । चरामि । महः । इच्छन्ती । पणयः । निऽधीन् । वः ।
अतिऽस्कदः । भियसा । तत् । नः । आवत् । तथा । रसायाः । अतरम् । पयांसि ॥ २ ॥

अनया तान् सरमा[२] प्रत्युवाच । हे ᵛपणयः पणनामका असुराः ᵛइन्द्रस्य ᵛदूतीः । 'सुपां सुलुक्०' इति प्रथमैकवचनस्य सुश्छान्दसः । अहम् ᵛइषिता तेनैव प्रेषिता सती ᵛचरामि । युष्मदीयं स्थानमागच्छामि । किमर्थम् । ᵛवः युष्मदीयान् युष्मदीये पर्वतेऽधिष्ठापितान् ᵛमहः महतः ᵛनिधीन् बृहस्पतेर्गोनिधीन् ᵛइच्छन्ती कामयमाना सती चरामि । किंच ᵛअतिष्कदः ॥ 'स्कन्दिर् गतिशोषणयोः' । भावे क्विप् । अतिष्कन्दनादतिक्रमणाज्जातेन ᵛभियसा भयेन ᵛतत् नदीजलं ᵛनः । पूजायां बहुवचनम् । माम् ᵛआवत् अरक्षत् । ᵛतथा तेन प्रकारेण ᵛरसायाः नद्याः ᵛपयांसि उदकानि ᵛअतरं तीर्णवत्यस्मि ॥

कीदृङ्ङिन्द्रः सरमे का दृशीका यस्येदं दूतीरसरः पराकात् ।
आ च गच्छान्मित्रमेना दधामाथा गवां गोपतिर्नो भवाति ॥ ३ ॥

कीदृङ् । इन्द्रः । सरमे । का । दृशीका । यस्य । इदम् । दूतीः । असरः । पराकात् ।
आ । च । गच्छात् । मित्रम् । एन । दधाम । अथ । गवाम् । गोऽपतिः । नः । भवाति ॥ ३ ॥

तेषां वाक्यम् । हे ᵛसरमे तव स्वामी ᵛइन्द्रः ᵛकीदृङ् । किंपराक्रमवान् । ᵛका ᵛदृशीका । तस्य कीदृशी दृष्टिः । दृष्टिरूपा सेना कियती । ᵛयस्य ᵛदूतीः दूती त्वम् ᵛइदम् अस्मदीयं स्थानं ᵛपराकात् अतिदूरात् ᵛअसरः आगमः । इति तामुक्त्वा इदानीं ते परस्परमाहुः । एषा सरमा ᵛआ ᵛगच्छात् ᵛच आगच्छतु च । लेट्याडागमः । स्वामी ᵛभवाति भवतु । न ह्येकस्या गोः किंतु बहूनां गवां स्वामी भवतु । पुनरुक्तिभ्यां स्वामित्वं बाहुल्यं च विवक्ष्यते ॥

१. ग-त-अ१.२.४.८-मु-चा । २. ग-सरमा म ऊचौ; ख-भ-मु-सरमेत्यूचे ।

नाहं तं वेद दभ्यं दभत्स यस्येदं दूतीरसरं पराकात् ।
न तं गूहन्ति स्रवतो गभीरा हता इन्द्रेण पणयः शयध्वे ॥ ४ ॥

न । अहम् । तम् । वेद । दभ्यम् । दभत् । सः । यस्य । इदम् । दूतीः । असरम् । पराकात् ।
न । तम् । गूहन्ति । स्रवतः । गभीराः । हताः । इन्द्रेण । पणयः । शयध्वे ॥ ४ ॥

सरमा वदति । हे पणयः तम् इन्द्रं दभ्यं हन्तव्यमिति न वेद न[1] जानामि । दभेः अचो यत् । कथम् । सः इन्द्रः दभत् सर्वान् जनान् दभति हिनस्त्येव ॥ दभेर्लेटि रूपम् । वाक्यभेदादनिघातः ॥ यस्य दूतीः दूती अहम् इदं युष्मदीयं स्थानं पराकात् अतिदूराद्देशात् असरं प्राप्ताभूवम् । इन्द्रो हिंसितव्यो[2] न भवतीत्यत्र युक्तिमाह । स्रवतः । स्रवणं स्रवः । तमाचरन्ति ॥ आचारार्थे क्विप् । तुगागमः । जसि रूपम् ॥ स्रवणशीलाः गभीराः गम्भीरा नद्यः तम् इन्द्रं न गूहन्ति न संवृण्वन्ति । नाच्छादयन्ति । किंत्वाविष्कुर्वन्ति । वयं यस्य महिम्ना समुद्रं प्रतितरामः । तस्मादर्हितस्य इत्येवं प्रकटीकुर्वन्ति । 'गुहू संवरणे' । भौवादिकः । तस्मात् पणयः यूयम् इन्द्रेण तादृक्पराक्रमेण हताः सन्तः शयध्वे ॥ 'शीङ् स्वप्ने' । 'बहुलं छन्दसि' इति शपो लुगभावः ॥

इमा गावः सरमे या ऐच्छः परि दिवो अन्तान्सुभगे पतन्ती ।
कस्त एना अव सृजादयुध्व्युतास्माकमायुधा सन्ति तिग्मा ॥ ५ ॥

इमाः । गावः । सरमे । याः । ऐच्छः । परि । दिवः । अन्तान् । सुऽभगे । पतन्ती ।
कः । ते । एनाः । अव । सृजात् । अयुध्वी । उत । अस्माकम् । आयुधा । सन्ति । तिग्मा ॥ ५ ॥

क्रुद्धाः पणयः प्रत्यूचुः । हे सुभगे शोभनसौभाग्यवति[3] हे सरमे दिवः द्युलोकस्य अन्तान् पर्यन्तान् परि पतन्ती कुत्र गावस्तिष्ठन्तीति परितो गच्छन्ती त्वम् इमाः परिदृश्यमानाः याः गावः । सुब्व्यत्ययः । गाः ऐच्छः कामयसे ताः एनाः गाः ते त्वदीयः कः अयुध्वी अयुद्ध्वा अव सृजात् । अस्मात् पर्वतादवसृजेत् । विनिर्गमयेत् । सृजेर्लेटि रूपम् । अयुध्वी । युधेः क्त्वाप्रत्यये 'स्नात्व्यादयश्च' इति निपातितः । नञ्समासत्वाल्ल्यबादेशाभावः । नञः प्रकृतिस्वरत्वम् । उत अपि च अस्माकं तिग्मा तीक्ष्णानि आयुधा आयुधानि सन्ति । तस्मादस्माभिर्युद्धमकृत्वा को वा गा आहरति[4] ॥ ॥ ५ ॥

असेन्या वः पणयो वचांस्यनिषव्यास्तन्वः सन्तु पापीः ।
अधृष्टो व एतवा अस्तु पन्था बृहस्पतिर्व उभया न मृळात् ॥ ६ ॥

असेन्या । वः । पणयः । वचांसि । अनिषव्याः । तन्वः । सन्तु । पापीः ।
अधृष्टः । वः । एतवै । अस्तु । पन्थाः । बृहस्पतिः । वः । उभया । न । मृळात् ॥ ६ ॥

सा तानित्याह । हे पणयः वः युष्माकं वचांसि पूर्वोक्तानि वचनानि असेन्या असेन्यानि । सेनार्हाणि न भवन्ति ॥ सेनाशब्दात् तदर्हतीत्यर्थे 'छन्दसि च' इति यत्प्रत्ययः । नञा समासः । 'ययतोश्चातदर्थे' ( पा. सू. ६. २. १५६ ) इत्युत्तरपदान्तोदात्तत्वम् ॥ तथा तन्वः युष्मदीयानि

१. त-म-सु—'न' नास्ति । २. म५—हिंसितो । ३. त-सु—शोभनभाग्यवति । ४. त१—हरेदिति ।

शरीराणि अनिषव्याः इषुभिर्हिंसितुमशक्यानि च सन्तु पराक्रमराहित्येन । पूर्ववत् प्रत्ययः । 'ओर्गुणः' (पा. सू. ६. ४. १४६ ) इति गुणः । स्वरश्च तादृक् । यद्वा पापीः पापयुक्तानि सन्तु ॥ 'छन्दसीवनिपौ' इतीप्रत्ययः । वसः सुः । किंच वः युष्मदीयः पन्थाः मार्गः एतवै गन्तुम् अधृष्टः असमर्थः अस्तु ॥ 'इण् गतौ' इत्यस्य तुमर्थे तवैप्रत्ययः । 'तवै चान्तश्च युगपत्' (पा. सू. ६. २. ५१ ) इति धातोः प्रत्ययस्य च युगपदुदात्तत्वम् । तत्र हेतुमाह । वः युष्मदीयान् उभया उभयविधान् पूर्वोक्तांस्तान्वो देहान् बृहस्पतिः इन्द्रप्रेरितः न मृळात् न सुखयेत् । किंतु बाधेत ॥ 'मृड सुखने' । लेटयाडागमः ॥

**अयं निधिः सरमे अद्रिबुध्नो गोभिरश्वेभिर्वसुभिर्न्यृष्टः ।**
**रक्षन्ति तं पणयो ये सुगोपा रेकु पदमलकमा जगन्थ ॥ ७ ॥**

अयम् । निऽधिः । सरमे । अद्रिऽबुध्नः । गोभिः । अश्वेभिः । वसुऽभिः । निऽऋष्टः ।
रक्षन्ति । तम् । पणयः । ये । सुऽगोपाः । रेकु । पदम् । अलकम् । आ । जगन्थ ॥ ७ ॥

ते पुनराहुः । हे सरमे अयं निधिः अस्मदीयः कोशः अद्रिबुध्नः । 'बन्ध बन्धने' । 'बन्धेर्ब्रधिबुधी च' ( उ. सू. ३. ५ ) इति नक्प्रत्ययो बुध इत्यादेशः । अद्रिर्बन्धको यस्य तादृशः । तथा व्याप्तैः गोभिरश्वेभिः अश्वैश्च वसुभिः आत्मनीयैर्धनैश्च न्यृष्टः नितरां प्राप्तो भवति ॥ 'ऋषी गतौ' । क्तप्रत्यये 'श्वीदितो निष्ठायाम्' इतीट्प्रतिषेधः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ॥ सुगोपाः । 'गुपु रक्षणे' । आयप्रत्ययान्तात् क्विपि अतोलोपयलोपौ । सुष्ठु गोपायितारः ये पणयः तेऽसुराः तं निधिं रक्षन्ति पालयन्ति[1] । रेकु । 'रेकृ शङ्कायाम्' । औणादिक उप्रत्ययः । शङ्कितं गोभिः शब्दायमानं पदम् अस्माभिः पालितं स्थानम् अलकं व्यर्थमेव आ जगन्थ आगतवत्यसि ॥ गमेर्लिटि[2] रूपम् ॥

**एह गमन्नृषयः सोमशिता अयास्यो अङ्गिरसो नवग्वाः ।**
**त एतमूर्वं वि भजन्त गोनामथैतद्वचः पणयो वमन्नित् ॥ ८ ॥**

आ । इह । गमन् । ऋषयः । सोमऽशिताः । अयास्यः । अङ्गिरसः । नवऽग्वाः ।
ते । एतम् । ऊर्वम् । वि । भजन्त । गोनाम् । अथ । एतत् । वचः । पणयः । वमन् । इत् ॥ ८ ॥

सरमा पुनः प्रत्युवाच । हे पणयः सोमशिताः सोमेन तीक्ष्णीकृताः सोमपानेन मत्ताः ॥ 'शिञ् निशाने' । कर्मणि क्तप्रत्ययः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् ॥ तादृशाः नवग्वाः नवगतयः । यद्वा । अङ्गिरसो सत्रमासीनानां मध्ये केचन नवसु मास्सूदतिष्ठन् ते नवग्वाः । अनेन दशग्वा अप्युपलक्ष्यन्ते । उभयविधास्ते अङ्गिरसः ऋषयः तेषां प्रथमः अयास्यः एतन्नामा च त एते इह युष्मदीये स्थाने आ गमन् आगच्छेयुः ॥ गमेः 'छन्दसि लुङ्लङ्लिटः' इति सार्वकालिको लुङ् । लृदित्वाच्च्लेरङ् ॥ आगत्य च ते गोनाम् ॥ 'गोः पादान्ते' इति छन्दसि नुडागमः ॥ गवाम् ऊर्वं तं समूहं वि भजन्त विभागं कुर्युः ॥ अत्रापि पूर्ववत् सार्वकालिको लुङ् ॥ अथ अनन्तरं पणयः यूयम् एतद्वचः एवं यत् व्यर्थमागतासीति यद्वाक्यमवोचत तद्वाक्यं तथा वमन्नित् वमन्तः परित्यजन्त एव भवथ ॥ 'वमु उद्गिरणे' । शतरि 'सुपां सुलुक्' इति जसो लुक् । नुमागमः । संयोगान्तस्य लोपः । यद्वा । लङि रूपम् । स्वरश्छान्दसः ॥

१. त४.५—पालयंति तस्मात्तं । २. स-मु—गमेर्लिटि ।

एवा च त्वं सरम आजगन्थ प्रबाधिता सहसा दैव्येन ।
स्वसारं त्वा कृणवै मा पुनर्गा अप ते गवां सुभगे भजाम ॥ ९ ॥

एव । च । त्वम् । सरमे । आऽजगन्थ । प्रऽबाधिता । सहसा । दैव्येन ।
स्वसारम् । त्वा । कृणवै । मा । पुनः । गाः । अप । ते । गवाम् । सुऽभगे । भजाम ॥ ९ ॥

तथैवमुक्ते सति पणयः प्रत्ययवाक्यमाहुः । हे सरमे त्वं दैव्येन देवसंबन्धिना सहसा बलेन प्रबाधिता यथा तथा बलपुरं प्राप्य तत्र स्थिता गा दृष्ट्वा पुनरागच्छेति तेन प्रपीडिता एवम् एवं[1] चेद् आजगन्थ आगतवत्यसि ॥ चशब्दश्चेदर्थे । 'निपातैर्यद्यदिहन्त०' इति तिङो निघाताभावः । गमेर्लिटि थलि रूपम् । 'सह सुपा' इत्यत्र सहेति योगविभागात् समासः । 'तिङि चोदात्तवति' इति गतेर्निघातः[2] । लित्स्वरः[3] ॥ तर्हि त्वा त्वां स्वसारं भगिनीं कृणवै करवै । समुदायापेक्षयैकवचनम् । त्वं तु पुनः मा गाः । इन्द्रादीन् मा गच्छ । अपि तर्हि हे सुभगे सरमे ते त्वदीयानां गवां समूहं पर्वतादपगमय्य भजाम । त्वं च वयं च विभजाम । विभागं करवामेत्यर्थः ॥

नाहं वेद भ्रातृत्वं नो स्वसृत्वमिन्द्रो विदुरङ्गिरसश्च घोराः ।
गोकामा मे अच्छदयन्यदायमपात इत पणयो वरीयः ॥ १० ॥

न । अहम् । वेद । भ्रातृऽत्वम् । नो इति । स्वसृऽत्वम् । इन्द्रः । विदुः । अङ्गिरसः । च । घोराः ।
गोऽकामाः । मे । अच्छदयन् । यत् । आयम् । अप । अतः । इत । पणयः । वरीयः ॥ १० ॥

सा[4] तान्[4] प्रत्याचष्टे । हे पणयः अहं भ्रातृत्वं न वेद न जानामि । तथा स्वसृत्वं च नो वेद नैव जानामि । के जानन्ति तानाह । इन्द्रः घोराः शत्रूणां भयंकराः अङ्गिरसश्च विदुः जानन्ति । किंच महत्त्वात् स्थानादहं यत् यदा आयम् इन्द्रादीन् प्राप्तवम् ॥ 'अय पय गतौ' । लङि रूपम् ॥ तदा मे मदीयाः गोकामाः युष्माभिरपहृता गाः कामयमाना इन्द्रादयः अच्छदयन् । युष्मदीयं स्थानमाच्छादयन्ति । 'छद अपवारणे' । अतः कारणाद् पणयः[5] वरीयः उरुतरं गवां स्थानं परित्यज्य अप इत अन्यत्स्थानं प्रति गच्छत । यद्वा । वरीयः प्रभूतमतिदूरं देशं गच्छत ॥ इत । 'इण् गतौ' । लोटि रूपम् । वरीयः । उरुशब्दादीयसुनि 'प्रियस्थिर०' इत्यादिना वरादेशः ॥

दूरमित पणयो वरीय उद्गावो यन्तु मिनतीरृतेन ।
बृहस्पतिर्या अविन्दन्निगूळ्हाः सोमो ग्रावाण ऋषयश्च विप्राः ॥ ११ ॥

दूरम् । इत । पणयः । वरीयः । उत् । गावः । यन्तु । मिनतीः । ऋतेन ।
बृहस्पतिः । याः । अविन्दत् । निऽगूळ्हाः । सोमः । ग्रावाणः । ऋषयः । च । विप्राः ॥ ११ ॥

हे पणयः यूयं वरीयः उरुतरं दूरं दूरदेशम्[6] इत गच्छत । युष्माभिरपहृताः गावः ऋतेन सत्येन मिनतीः मिनत्यो द्वारस्य पिधायकं पर्वतं हिंसत्यो विदारयन्त्यः उत् यन्तु

१. ग२–एवा च एवं । २. त-अ–गमेर्निघातः । ३. त१.२.३ ६.७.८-म१.४.५.७–लित्स्वरः; त४.५.म८-मु–लित्स्वरः; भ२–लित्कारेण । ४. ग–अन्यान् स तान्; त-अ–अन्यान् सा तान् । ५. घ२-त४.५–पणयो यूयं । ६. त१.२ ३.७-म१.४-मु–देशं ।

तस्मादुद्गच्छन्तु । ऋता । विनतीः । व्यत्ययेन कर्मणि कर्तृ[1] । नीयमाना गुहाभिर्मोच्यमानास्ता गावः । सुम्नयत्यः । या ऋतेन स्तुतिभिर्गन्तव्येनाङ्गिरसा सहायेन बृहस्पतेस्तस्य गच्छन्तु पर्वतादुद्गच्छन्तु । विगूळ्हाः निगूढाः स्थापिताः याः गाः बृहस्पतिः अविन्दत् लभते तथा सोमः तदभिषवकारिणः ग्रावाणः च विप्राः मेधाविनः ऋषयः अङ्गिरसः च लभन्ते॥ 'विद्लृ लाभे'। तौदादिकः । तस्मात् 'छन्दसि लुङ्लङ्लिटः' इति भविष्यदर्थे लङ् । 'शे मुचादीनाम्' इति नुमागमः ॥    ॥ ६ ॥

'तेऽवदन्' इति सप्तर्चं दशमं सूक्तम् । जुहूर्नाम ब्रह्मवादिन्यृषिः । ब्रह्मपुत्र ऊर्ध्वनाभा नाम वा । षष्ठीसप्तम्यावनुष्टुभौ । शिष्टाः पञ्च त्रिष्टुभः । विश्वे देवा देवता । तथा चानुक्रान्तं—'तेऽवदन्सप्त जुहूर्ब्रह्मजाया ब्राह्मो वोर्ध्वनाभा वैश्वदेवं अनुष्टुबन्तम्' इति । गतो विनियोगः ॥

तेऽवदन्प्रथमा ब्रह्मकिल्बिषेऽकूपारः सलिलो मातरिश्वा

वीळुहरास्तप उग्रो मयोभूरापो देवीः प्रथमजा ऋतेन ॥ १ ॥

ते । अवदन् । प्रथमाः । ब्रह्मऽकिल्बिषे । अकूपारः । सलिलः । मातरिश्वा ।
वीळुऽहराः । तपः । उग्रः । मयःऽभूः । आपः । देवीः । प्रथमऽजाः । ऋतेन ॥ १ ॥

अत्रेतिहासमाचक्षते । जुहूरिति वाङ्नाम । सा ब्रह्मणो जाया च । बृहस्पतेर्वाक्पतित्वाद्बृहस्पतेर्जुहूर्नाम भार्या बभूव । कदाचिदस्य किल्बिषमस्या दौर्भाग्यरूपेणाजायत । अत एव स एनां पर्यत्याक्षीत् । अनन्तरमादित्यादयो देवा मिथो विचार्यैनामकिल्बिषां कृत्वा पुनर्बृहस्पतये प्रादुरिति । तदत्र वर्ण्यते । प्रथमाः मुख्याः ते देवाः ब्रह्मकिल्बिषे ॥ षष्ठीसमासः । समासस्वरः ॥ ब्रह्मणो बृहस्पतेः किल्बिषे पापे जुह्वा दौर्भाग्यरूपे विषये अवदन् । निष्कृतिमुपायमवोचन् ॥ उकारपरत्वादत्र प्रकृतिभावाभावः ॥ के ते । अकूपारः । अत्र यास्कः—'आदित्योऽप्यकूपार उच्यतेऽकूपारो भवति दूरपारः' ( निरु. ४. १८ ) इति । अकुत्सितपारो महागमिरादित्यः सलिलः अन्तरिक्षस्थः वरुणः मातरिश्वा वायुः वीळुहराः ॥ हरतेरसुनि रूपं हर इति । हरति विनाशयति तमांसीति हरस्तेजः । प्रभूततेजस्कः । तपः । तृतीयायाः सुः । तपसा तापनेन उग्रः उद्गूर्णोऽग्निः मयोभूः सुखस्य भावयिता सोमः देवीः देव्यः आपः । कीदृश्यः । ऋतेन सत्यभूतेन ब्रह्मणा प्रथमजाः आदित एवोत्पादिताः । एत उपायमुक्त्वा प्रायश्चित्तमप्यकारयन्निति भावः ॥

सोमो राजा प्रथमो ब्रह्मजायां पुनः प्रायच्छदहृणीयमानः ।

अन्वर्तिता वरुणो मित्र आसीदग्निर्होता हस्तगृह्या निनाय ॥ २ ॥

सोमः । राजा । प्रथमः । ब्रह्मऽजायाम् । पुनरिति । प्र । अयच्छत् । अहृणीयमानः ।
अनुऽअर्तिता । वरुणः । मित्रः । आसीत् । अग्निः । होता । हस्तऽगृह्य । आ । निनाय ॥ २ ॥

प्रथमः मुख्यः सोमो राजा अहृणीयमानः पापापगमनेनाक्रुध्यमानः सन् तामेतामकिल्बिषां ब्रह्मजायां पुनः बृहस्पतये प्रायच्छत् । ततः वरुणः अन्वर्तिता ॥ ऋतिः सौत्रो धातुर्घृणायां वर्तते । तस्य तृचि रूपम् ॥ सोऽयमनुमोदयिता आसीत् । सर्वथा त्वं परिगृहाणेति दयामकार्षीत् । तथा मित्रः च । अनन्तरं होता देवानामाह्वाता[2] मनुष्याणां होमनिष्पादको वा अग्निः हस्तगृह्य

---

१. ग-घ-भ-सता । २. त-भ-देवानां ।

तां हस्ते गृहीत्वा ^४आ ^४निनाय आनैषीत् । प्रापयदित्यर्थः ॥ हस्तगृह्य । ' नित्यं हस्ते पाणावुपयमने ' ( पा. सू. १. ४. ७७ ) इति हस्तशब्दस्य गतिसंज्ञायां प्रादिना समासे ल्यप् । एकारलोपश्छान्दसः । यद्वा । हस्तशब्दात् परस्य गृहेश्छान्दसो समासल्यपौ ॥

हस्तेनैव ग्राह्य आधिरस्या ब्रह्मजायेयमिति चेदवोचन् ।
न दूताय प्रह्ये तस्थ एषा तथा राष्ट्रं गुपितं क्षत्रियस्य ॥ ३ ॥

हस्तेन । एव । ग्राह्यः । आऽधिः । अस्याः । ब्रह्मऽजाया । इयम् । इति । च । इत् । अवोचन् ।
न । दूताय । प्रऽह्ये । तस्थे । एषा । तथा । राष्ट्रम् । गुपितम् । क्षत्रियस्य ॥ ३ ॥

देवा बृहस्पतिमूचुः । हे बृहस्पते ^४अस्याः ^४आधिः । आधीयन्त आभरणान्यत्रेत्याधिः शरीरम् ॥ ' उपसर्गे घोः किः ' ( पा. सू. ३. ३. ९२ ) इति किप्रत्ययः । अस्याः शरीरं ^४हस्तेनैव ^४ग्राह्यः ग्रहीतव्यमेव । पुनस्ते देवा इदानीम् ^४इयं ^४ब्रह्मजाया ^४इति एव ^४अवोचन् अवादिषुः ॥ चशब्दश्चेदर्थे । अत एव ' निपातैर्यद्यदिहन्त° ' इति तिङो निघाताभावः । ' ब्रूञ् व्यक्तायां वाचि ' । लुङि ब्रुवो वचिः । ' अस्यतिवक्तिख्यातिभ्योऽङ् ' इति च्लेरङादेशः । ' वच उम् ' इत्युमागमः । अडागमस्वरः ॥ ^४इत् अवधारणे । ^४एषा ब्रह्मजाया पुरा ^४प्रह्ये ॥ ' हि गतौ वृद्धौ च ' । कर्मण्यौणादिकः क्विप् । तुगभावश्छान्दसः । क्विप्यपि संज्ञापूर्वकस्य विधेरनित्यत्वाद्गुणाभावः । ' उदात्तस्वरितयोर्यणः° ' इति सुपः स्वरितत्वम् ॥ प्रहिताय ^४त्वया भार्यान्वेषणार्थं प्रेषिताय ^४दूताय ^४तथा ^४न ^४तस्थे । स्वात्मानं न प्रकाशयति ॥ तिष्ठतेर्लिटि ' प्रकाशनस्थेयाख्ययोश्च ' ( पा. सू. १. ३. २३ ) इत्यात्मनेपदम् । ' श्लाघह्नुङ्स्थाशपाम्° ' ( पा. सू. १. ४. ३४ ) इति दूतस्य संप्रदानसंज्ञा ॥ तत्र दृष्टान्तः । यथा ^४क्षत्रियस्य राज्ञः ^४गुपितं रक्षितं ^४राष्ट्रं राज्यं शत्रवे यथा न प्रकाशयति तद्वदसौ शौर्यादियुक्ततया तस्मै स्वात्मानं न प्रकाशितवती । इदानीं तु सन्निहितत्वेन प्रकाशमानेयं[१] ब्रह्मजायेत्यवोचन् ॥

देवा एतस्यामवदन्त पूर्वे सप्तऋषयस्तपसे ये निषेदुः ।
भीमा जाया ब्राह्मणस्योपनीता दुर्धां दधाति परमे व्योमन् ॥ ४ ॥

देवाः । एतस्याम् । अवदन्त । पूर्वे । सप्तऽऋषयः । तपसे । ये । निऽसेदुः ।
भीमा । जाया । ब्राह्मणस्य । उपऽनीता । दुःऽधाम् । दधाति । परमे । विऽओमन् ॥ ४ ॥

^४पूर्वे चिरंतनाः ^४देवाः आदित्यादयः ^४एतस्यां विषये ^४अवदन्त[२] । इयं पापरहितेत्यवादिषुः । तथा ^४ये ^४सप्तर्षयः । समासस्वरः । सप्तसंख्याका ऋषयः ^४तपसे तपश्चरणाय ^४निषेदुः निषण्णा बभूवुः । सदेर्लिटि रूपम् । उपसर्गेण समासः । सदिरप्रतेः इति षत्वम् । तेऽप्यवादिषुः । ततः ^४भीमा शत्रुभ्यो भयानकी भयंकरी शुद्धवती एषा ^४जाया ^४ब्राह्मणस्य बृहस्पतेः ^४उपनीता । समीपे देवैः स्थापिता ॥ ' णीञ् प्रापणे ' । कर्मणि क्तः । ' गतिरनन्तरः ' इति गतेः प्रकृतिस्वरत्वम् । तथा हि । तपःप्रभावः ^४दुर्धां दुर्धानामपि ^४परमे ^४व्योमन् व्योमन्युत्तमे स्थाने ^४दधाति निदधाति खलु । तस्मात् एनामपि देवतापरिग्रहरूपस्तपोमहिमा बृहस्पतेरन्तिके स्थापयति ॥

१. त-म१.२.४.८–°मानेदं । २. त४.५–अवदन् ।

ब्रह्मचारी चरति वेविषद्विषः स देवानां भवत्येकमङ्गम् ।
तेन जायामन्वविन्दद्बृहस्पतिः सोमेन नीतां जुह्वं१ न देवाः ॥ ५ ॥

ब्रह्मऽचारी । चरति । वेविषत् । विषः । सः । देवानाम् । भवति । एकम् । अङ्गम् ।
तेन । जायाम् । अनु । अविन्दत् । बृहस्पतिः । सोमेन । नीताम् । जुह्वम् । न । देवाः ॥५॥

एवं स्वपतिना परित्यक्तेति जुहूः परोक्षतया वदति । हे देवाः एषः सः ब्रह्मचारी जायाभावेन ब्रह्मचारी चरति । अत एव विषः सर्वेषु यज्ञेषु व्याप्नुवन् देवान् वेविषत् स्तुतिभिर्हविर्भिश्च व्याप्नुवन् देवानाम् एकम् अङ्गं भवति । जायापती यज्ञस्य द्वे अङ्गे खलु ॥ वेविषत् । ‘विष्लृ व्याप्तौ’ । जौहोत्यादिकः । ‘निजां त्रयाणां गुणः श्लौ’ ( पा. सू. ७. ४. ७५ ) इत्यभ्यासस्य गुणः । शतुः ‘नाभ्यस्ताच्छतुः’ इति नुमागमप्रतिषेधः । ‘अभ्यस्तानामादिः’ इत्याद्युदात्तत्वम् ॥ तेन देवानां परिचरणेन बृहस्पतिः जायां जुहूनामिकां माम् अन्वविन्दत् । अनुगम्य अलभत[1] । नशब्द उपमार्थे । एवं यथा सोमेन नीतां ‘सोमो ददद्गन्धर्वाय’ ( ऋ. सं. १०. ८५. ४१ ) इत्यादिक्रमेण नीतां जुह्वं जुहूं यथा लब्धवान् तद्वदिदानीमपि ॥ जुह्वम् । ‘हु दानादनयोः’ । ‘अन्येभ्योऽपि दृश्यते’ इति क्विप् । ‘जुहोतेर्दीर्घश्च’ इति द्विर्वचनं दीर्घश्च । ‘उदात्तयणो हल्पूर्वात्’ इति विभक्त्युदात्तत्वे प्राप्ते ‘नोङ्धात्वोः’ इति प्रतिषेधे ‘उदात्तस्वरितयोर्यणः०’ इति स्वरितत्वम् ॥

पुनर्वै देवा अददुः पुनर्मनुष्या उत ।
राजानः सत्यं कृण्वाना ब्रह्मजायां पुनर्ददुः ॥ ६ ॥

पुनः । वै । देवाः । अददुः । पुनः । मनुष्याः । उत ।
राजानः । सत्यम् । कृण्वानाः । ब्रह्मऽजायाम् । पुनः । ददुः ॥ ६ ॥

लाभहेतुमाह । देवाः ब्रह्मजायां जुहूं बृहस्पतये पुनः अददुः । वैशब्दः प्रसिद्धिवाची । उत अप्यर्थे । मनुष्याः अपि पुनः अददुः । एवं देवमनुष्यैः कृते दाने सत्यं यथार्थं कृण्वानाः कुर्वाणाः राजानः अपि पुनः तस्मै ददुः । एवमन्यजायापहारेऽप्यभिमिते[2] पापमपि व्यपगतमिति भावः ॥

पुनर्दाय ब्रह्मजायां कृत्वी देवैर्निकिल्बिषम् ।
ऊर्जं पृथिव्या भक्त्वायोरुगायमुपासते ॥ ७ ॥

पुनःऽदाय । ब्रह्मऽजायाम् । कृत्वी । देवैः । निःऽकिल्बिषम् ।
ऊर्जम् । पृथिव्याः । भक्त्वाय । उरुऽगायम् । उप । आसते ॥ ७ ॥

देवैः । ‘सुपां सुपो भवन्ति’ इति प्रथमायास्तृतीयादेशः ॥ देवाः निकिल्बिषम् ॥ अर्थाभावे अव्ययीभावः । समासस्वरः ॥ तस्याः किल्बिषाभावं कृत्वी ॥ ‘स्नात्व्यादयश्च’ इति निपातितः ॥ कृत्वा ब्रह्मजायां ब्रह्मणो बृहस्पतेर्भार्यां पुनर्दाय पुनर्दत्त्वा ॥ ‘पुनश्चनसौ छन्दसि गतिसंज्ञा वक्तव्या’ ( पा. सू. १. ४. ६०. २ ) इति पुनःशब्दस्य गतिसंज्ञायां समासल्यपौ । ‘न ल्यपि’ (*पा. सू. ६.

---

१. ख१.२.३–अलभत; ग७–ब१.२.४.८–अलभत; भ७–अन्वैच्छत् । २. ग–एवं देवमनुष्या अददु* ।

५. ६९ ) इतीट्प्रतिषेधः । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ <sup>१</sup>पृथिव्याः <sup>१</sup>ऊर्जं रसभूतमन्नं हवीरूपं <sup>१</sup>भक्षयाय ॥ ' क्वौ यक् ' ( पा. सू. ७. १. ४७ ) इति यगागमः ॥ भक्त्या विभज्य <sup>१</sup>उरुगायं बहुकीर्ति बहुभिः स्तोतव्यं वा शार्ङ्गरवं यज्ञम् <sup>१</sup>उपासते सेवन्ते ॥ ॥ ७ ॥

' समिद्धः ' इत्येकादशर्चमेकादशं सूक्तं त्रैष्टुभम् । भार्गवो जमदग्निर्ऋषिः । तस्य पुत्रो रामो वा यः परशुराम इति प्रख्यातः । आप्रीसूक्तमिदम् । अतः समिदादयः सतनूनपातो नराशंसवर्जिताः प्रत्यृचं देवताः । तथा चानुक्रान्तं—' समिद्ध एकादश जमदग्निर्वा भार्गवो जामदग्न्यो वा राम आप्रियः ' इति । यद्वा जामदग्न्यानामिदमाप्रीसूक्तं यद्वाविशेषेण सर्वेषाम् । सूत्रितं च—' समिद्धो अद्येति सर्वेषां यथर्षि वा ' ( आश्व. श्रौ. ३. २ ) इति । अग्निचयनप्रकृतौ प्राजापत्ये पशौ सर्वेषां नित्यमिदमाप्रीसूक्तम् । सूत्रितं च—' प्राजापत्ये तु जामदग्न्यः सर्वेषाम् ' ( आश्व. श्रौ. ३. २ ) इति ॥

**समिद्धो अद्य मनुषो दुरोणे देवो देवान्यजसि जातवेदः ।**
**आ च वह मित्रमहश्चिकित्वान्त्वं दूतः कविरसि प्रचेताः ॥ १ ॥**

सम्ऽइद्धः । अद्य । मनुषः । दुरोणे । देवः । देवान् । यजसि । जातऽवेदः ।
आ । च । वह । मित्रऽमहः । चिकित्वान् । त्वम् । दूतः । कविः । असि । प्रऽचेताः ॥ १ ॥

हे <sup>१</sup>जातवेदः जातप्रज्ञाग्ने <sup>१</sup>देवः स्वतेजसा दीप्यमानस्त्वं <sup>१</sup>मनुषः मनुष्यस्य यष्टुः <sup>१</sup>दुरोणे । गृहनामैतत् । दुरवने आयासेन रक्षितव्ये गृहे <sup>१</sup>अद्य अस्मिन् कर्मणि <sup>१</sup>समिद्धः सम्यक् प्रज्वलितः सन् <sup>१</sup>देवान् इन्द्रादीन् <sup>१</sup>यजसि । हविर्भिः पूजय ॥ समिद्धः । ' इन्धी दीप्तौ ' । कर्मणि क्तः । ' श्वीदितो निष्ठायाम् ' इतीट्प्रतिषेधः । ' गतिरनन्तरः ' इति गतेः प्रकृतिस्वरत्वम् ॥ हे <sup>१</sup>मित्रमहः सूर्यवत्तोमलक्षणत्वेन मित्रभूतानां स्तोतॄणां पूजयितः तैः पूज्यमान वाग्ने <sup>१</sup>चिकित्वान् तैः कृताः स्तुतीः प्रजानन् चेतनावान् वा त्वमस्मदीये यज्ञे देवान् <sup>१</sup>आ <sup>१</sup>वह <sup>१</sup>च । आप्रापय ॥ ' वह प्रापणे ' । लोटि रूपम् । ' चवायोगे प्रथमा ' इति न निघातः ॥ तथा <sup>१</sup>कविः क्रान्तप्रज्ञः अत एव <sup>१</sup>प्रचेताः प्रकृष्टज्ञानः <sup>१</sup>त्वं <sup>१</sup>दूतः देवानां हविष्प्रापणेन हितकारी भवसि ॥

**तनूनपात्पथ ऋतस्य यानान्मध्वा समञ्जन्त्स्वदया सुजिह्व ।**
**मन्मानि धीभिरुत यज्ञमृन्धन्देवत्रा च कृणुह्यध्वरं नः ॥ २ ॥**

तनूऽनपात् । पथः । ऋतस्य । यानान् । मध्वा । सम्ऽअञ्जन् । स्वदय । सुऽजिह्व ।
मन्मानि । धीभिः । उत । यज्ञम् । ऋन्धन् । देवऽत्रा । च । कृणुहि । अध्वरम् । नः ॥ २ ॥

हे <sup>१</sup>तनूनपात् । नपादित्यनन्तरापत्यनामधेयम् । गौरत्र[1] तनूरुच्यते[1] ततः अस्यां भोगाः क्षीरादय इति । तस्याः पयो आज्यं तस्मादग्निः । यद्वा । अन्तरिक्षे तता आपस्तनूः ताभ्य ओषध्यादयः तेभ्योऽग्निरिति । एवंरूप हे <sup>१</sup>सुजिह्व शोभनज्वाल । यद्वा जिह्वेति वाङ्नाम । शोभनवागग्ने <sup>१</sup>ऋतस्य यज्ञस्य <sup>१</sup>यानान् फलप्राप्तिहेतून् <sup>१</sup>पथः मार्गान् हविरादिकान् <sup>१</sup>मध्वा मदकरेण रसेन यद्वा माधुर्योपेतेन रसेन <sup>१</sup>समञ्जन् सम्यग्व्यापयन् <sup>१</sup>स्वदय स्वादय । स्वादूकुरु ॥ ' ष्वद आस्वादने ' । णिच्युपधावृद्ध्यभावश्छान्दसः ॥ किंच <sup>१</sup>मन्मानि । मन्यतेरर्चतिकर्मणः । मननीयानि अस्मदभिप्रेतानि स्तोत्राणि <sup>१</sup>धीभिः प्रज्ञाभिः कर्मभिर्वा <sup>१</sup>उत अपि च <sup>१</sup>यज्ञं यजनीयं हविश्च <sup>१</sup>ऋन्धन्

१. त१.२.३.४.५.६.८-म—गौरुच्यते ।

सहस्राणि कुर्वन् नः अस्मदीयम् अध्वरं यज्ञं देवत्रा देवेषु कृणुहि कुरु ॥ देवताच्छब्दात् 'देवमनुष्य॰' इत्यादिना सप्तम्यर्थे त्राप्रत्ययः ॥

आजुह्वान ईड्यो वन्द्यश्चा याह्यग्ने वसुभिः सजोषाः ।
त्वं देवानामसि यह्व होता स एनान्यक्षीषितो यजीयान् ॥ ३ ॥

आऽजुह्वानः । ईड्यः । वन्द्यः । च । आ । याहि । अग्ने । वसुऽभिः । सऽजोषाः ।
त्वम् । देवानाम् । असि । यह्व । होता । सः । एनान् । यक्षि । इषितः । यजीयान् ॥ ३ ॥

हे अग्ने त्वमस्मत्कर्मणि[1] आ याहि आगच्छ । कीदृशः । आजुह्वानः देवानामाह्वाता । 'हु दानादनयोः' । जौहोत्यादिकः । अभ्यस्तस्वरः । ईड्यः । ईडिरध्येषणाकर्मा । अध्येष्यः प्रार्थ्यमानः[2] वन्द्यः स्तोतव्यः वसुभिः देवैः सजोषाः सह प्रीयमाणः । आगत्य च हे यह्व । महन्नामैतत् । हे महन् सः त्वं देवानां होता आह्वाता असि । अतः यजीयान् ॥ यष्टृशब्दादीयसुनि 'तुरिष्ठेमेयःसु' इति तृचो लोपः ॥ यष्टृतरः सः त्वम् इषितः अस्माभिरध्येषितः प्रार्थितः सन् एतान् देवान् यक्षि यज । हविषा पूजय ॥

प्राचीनं बर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नाम् ।
व्यु प्रथते वितरं वरीयो देवेभ्यो अदितये स्योनम् ॥ ४ ॥

प्राचीनम् । बर्हिः । प्रऽदिशा । पृथिव्याः । वस्तोः । अस्याः । वृज्यते । अग्रे । अह्नाम् ।
वि । ऊँ इति । प्रथते । विऽतरम् । वरीयः । देवेभ्यः । अदितये । स्योनम् ॥ ४ ॥

यदिदं प्राचीनं प्रागग्रं प्राङ्मुखं बर्हिः अस्ति तदिदं पृथिव्याः वेदिलक्षणायाः वस्तोः ॥ 'वस आच्छादने' । तुन्प्रत्ययः । 'चतुर्थ्यर्थे बहुलं छन्दसि' इति षष्ठी । यद्वा । भावलक्षणे तोसुन् द्रष्टव्यः । वसनायाच्छादनार्थम् अह्नाम् अग्रे पूर्वाह्णे प्रदिशा प्रकर्षेण दिश्यमानेन मन्त्रेण अस्याः प्राच्या दिशः वृज्यते स्तृणते आह्रियते । तथा च निगमः—'स आ वहन्ति कवयः पुरस्तात्' (तै. सं. १.१.९.१) इत्यादि । तदाहृतं वरीयः उरुतरं बर्हिः वितरं विस्तीर्णतरं यथा भवति तथा वि प्रथते । विविधमेव वेद्यां प्रस्तृतं भवति । तथा देवेभ्यः अदितये[3] वेदिलक्षणायै पृथिव्यै च स्योनं सुखकरं भवति । विस्तीर्णे बर्हिषि देवाः सुखं निषीदन्ति ॥

व्यचस्वतीरुर्विया वि श्रयन्तां पतिभ्यो न जनयः शुम्भमानाः ।
देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणाः ॥ ५ ॥

व्यचस्वतीः । उर्विया । वि । श्रयन्ताम् । पतिऽभ्यः । न । जनयः । शुम्भमानाः ।
देवीः । द्वारः । बृहतीः । विश्वम्ऽइन्वाः । देवेभ्यः । भवत । सुप्रऽअयनाः ॥ ५ ॥

व्यचस्वतीः । व्यचो व्यापनम् । तद्वत्यः ॥ 'वा छन्दसि' इति पूर्वसवर्णदीर्घः ॥ ता द्वारदेवताः उर्विया ॥ उरुशब्दात्तृतीयैकवचने 'इयाडियाजीकाराणामुपसंख्यानम्' (पा. सू. ७. १.

---

१. ग-त-म२.८–त्वस्मिन् कर्मणि; म१–त्वमस्मि कर्मणि; म४–त्वमस्मिन्कर्मणि;, म७–त्वमस्म कर्मणि । २. त४.५–पूज्यमानः । ३. ग१.२–अदितये अदीनायै ।

१९. १ ) इतीयादेशः ॥ उरुत्वेन वि श्रयन्तां विशेषेणाश्रिता भवन्तु । तत्र दृष्टान्तः । पतिभ्यो न यथा पतीनामर्थाय संभोगकाले शुम्भमानाः शोभमानाः जनयः जाया विश्रयन्ति तद्वदस्मिन् कर्मणि[1] विश्रयन्ताम् । हे बृहतीः महत्यो हे विश्वमिन्वाः ॥ इविः प्रीणनार्थः । तस्मात् कर्मण्युपपदे अण् । इविरम्बाकुम् । 'तत्पुरुषे कृति बहुलम्' इत्यत्र बहुलवचनात् द्वितीयाया अलुक् ॥ सर्वस्य प्रीणयित्र्यो हे द्वारः देवीः द्वाराभिमानिन्यो हे देव्यः यूयं देवेभ्यः देवानामर्थाय सुप्रायणाः सुगमनाः सुविवृताः भवत ॥ ॥ ८ ॥

## आ सुष्वयन्ती यजते उपाके उषासानक्ता सदतां नि योनौ ।
## दिव्ये योषणे बृहती सुरुक्मे अधि श्रियं शुक्रपिशं दधाने ॥ ६ ॥

आ । सुस्वयन्ती इति । यजते इति । उपाके इति । उषसानक्ता । सदताम् । नि । योनौ ।
दिव्ये इति । योषणे इति । बृहती इति । सुरुक्मे इति सुऽरुक्मे ।
अधि । श्रियम् । शुक्रऽपिशम् । दधाने इति ॥ ६ ॥

सुस्वयन्ती । 'षम ष्टम गतौ'। धातुरुपसर्गस्य सोर्द्विर्वचनं छान्दसम् । सुष्ठु अयन्त्यौ गच्छन्त्यौ । यद्वा । स्वपेर्ण्यन्तस्य वर्णलोपः ॥ सुष्वापयन्त्यौ । यजते यष्टव्ये उपाके उपकान्ते उषासानक्ता उषाश्च नक्तं च ॥ द्वन्द्वे 'उषासोषसः' ( पा. सू. ६. ३. ३१ ) इत्युषासादेशः[2] । 'देवताद्वन्द्वे च' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् ॥ अहोरात्रदेव्यौ योनौ अस्मिन् यज्ञस्थाने नि[3] नितरां नियमेन वा आ सदताम् आसीदताम् । सदेर्लुङि लृदित्वाच्च्लेरङ् । कीदृश्यौ । दिव्ये दिवि भवे योषणे योषिताविव प्रीणयित्र्यौ । यद्वा । योषणे समिते[4] परस्परतोऽविमिश्रिते । बृहती गुणैर्महत्यौ सुरुक्मे शोभनदीप्ते ॥ रुक्मम् । रोचतेर्मक्प्रत्यये कुत्वे च कृते रूपम् ॥ शुक्रपिशं शोभमानरूपां[5] श्रियम् अधि दधाने अधिकं धारयन्त्यौ ॥

## दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै ।
## प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता ॥ ७ ॥

दैव्या । होतारा । प्रथमा । सुऽवाचा । मिमाना । यज्ञम् । मनुषः । यजध्यै ।
प्रऽचोदयन्ता । विदथेषु । कारू इति । प्राचीनम् । ज्योतिः । प्रऽदिशा । दिशन्ता ॥ ७ ॥

दैव्या ॥ 'देवाद्यञञौ' इति यञ्प्रत्ययः[6] । देवसंबन्धिनौ होतारौ होमनिष्पादकौ होतृनामकावग्न्यादित्यावस्मिन् यज्ञे आसीदताम् । कीदृशौ । प्रथमा मनुष्यहोतुः पूर्वभाविनौ सुवाचा शोभनस्तोत्रौ मनुषः मनुष्यस्य सर्वस्य वसु यजध्यै याजनिष्पत्तये ॥ यजेस्तुमर्थे अध्यैप्रत्ययः ॥ यज्ञं मिमाना निर्मिमानावुत्पादयन्तौ विदथेषु । विदन्त्यत्रर्त्विजः स्वस्वकर्माणीति विदथा यज्ञाः । तेष्वृत्विजो यजमानांश्च प्रचोदयन्ता प्रेरयन्तौ कारू स्तुतीनां कर्तारौ प्राचीनं पूर्वस्यां दिशि यज्ञस्थलेन स्थितमाहवनीयाख्यं ज्योतिः प्रदिशा प्रकृष्टेनोपदिष्टमार्गेण यद्वा अतिदेशमार्गेण मन्त्रेण दिशन्ता निर्दिशन्तौ ॥

१. ग४.५–यज्ञकर्मणि । २. ग४.५–'देवः सुपो कादेशः । ३. त-म–'नि' नास्ति । ४. त-म–समिते । ५. ग४.५–शोभमानरूपा । ६. त-म–प्रत्ययः ।

आ नो॑ य॒ज्ञं भार॑ती॒ तूय॑मे॒त्विळा॑ मनु॒ष्वदि॒ह चे॒तय॑न्ती ।
ति॒स्रो दे॒वीर्ब॒र्हिरेदं स्यो॒नं सर॑स्वती॒ स्वप॑सः सदन्तु ॥ ८ ॥

आ । नः॒ । य॒ज्ञम् । भार॑ती । तूय॑म् । ए॒तु॒ । इळा॑ । म॒नु॒ष्वत् । इ॒ह । चे॒तय॑न्ती ।
ति॒स्रः । दे॒वीः । ब॒र्हिः । आ । इ॒दम् । स्यो॒नम् । सर॑स्वती । सु॒ऽअप॑सः । स॒द॒न्तु॒ ॥ ८ ॥

भारती । भरत आदित्यः । तस्य स्वभूता दीप्तिः ॥ 'तस्येदम्' इत्यर्थे अणादिरित्याद्युदात्तत्वम् (पा. सू. ४. १. ८६)। 'टिड्ढाणञ्' इति ङीप् । नः अस्मदीयं यज्ञं तूयं क्षिप्रम् आ एतु आगच्छतु । तथा मनुष्वत् मनुष्यो यथा इदं मया कर्तव्यमिति जानाति तद्वत् चेतयन्ती जानाना इळा देवी च इह अस्मिन् कर्मण्यागच्छतु । तथा सरस्वती च । स्वपसः सुकर्माणः । अप इति कर्मनाम ॥ आप्नोतेरसुनि आपः कर्माख्यायां ह्रस्वः । बहुव्रीहौ 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् ॥ एताः तिस्रो देवीः देव्यः स्योनं सुखकरम् इदं बर्हिः इमं यज्ञम् आ सदन्तु आसीदन्तु प्राप्नुवन्तु ॥ सदेर्लोटि सीदादेशाभावश्छान्दसः ॥

त्वाष्ट्रस्य पशोर्वपायाः 'य इमे' इत्येषानुवाक्या । सूत्रितं च—'य इमे द्यावापृथिवी जनित्री तन्नस्तुरीपमध पोषयित्नु' (आश्व. श्रौ. ३. ८) इति ॥

य इ॒मे द्यावा॑पृथि॒वी जनि॑त्री रू॒पैरपिं॑श॒द्भुव॑नानि॒ विश्वा॑ ।
तम॒द्य हो॑तरिषि॒तो यजी॑यान्दे॒वं त्वष्टा॑रमि॒ह य॑क्षि वि॒द्वान् ॥ ९ ॥

यः । इ॒मे इति॑ । द्यावा॑पृथि॒वी इति॑ । जनि॑त्री॒ इति॑ । रू॒पैः । अपिं॑शत् । भुव॑नानि । विश्वा॑ ।
तम् । अ॒द्य । हो॒त॒रिति॑ । इ॒षि॒तः । यजी॑यान् । दे॒वम् । त्वष्टा॑रम् । इ॒ह । य॒क्षि॒ । वि॒द्वान् ॥ ९ ॥

यः त्वष्टा देवः जनित्री विश्वस्य जनयित्र्यौ इमे द्यावापृथिवी ॥ द्यौश्च पृथिवी च । 'दिवो द्यावा' इति द्यावादेशः । आद्युदात्तः । पृथिवीशब्दो ङीषन्तत्वेनान्तोदात्तः । 'देवताद्वन्द्वे च' इति पूर्वोत्तरपदयोः प्रकृतिस्वरत्वम् ॥ द्यावापृथिव्यौ रूपैः देवतिर्यङ्मनुष्यादिरूपाकारैः अपिंशत् रूपवत्यावकरोत् ॥ 'पिश अवयवे' । तौदादिकः । 'शे मुचादीनाम्' इति नुमागमः ॥ तथा विश्वा सर्वाणि भुवनानि भूतजातानि रूपयुक्तान्यकरोत् । हे होतः यजीयान् यष्टृतमः विद्वान् सर्वं जानानः त्वम् इषितः अस्माभिरध्येषितः प्रार्थितः सन् इह अस्मिन् कर्मणि अद्य अस्मिन् दिने तं त्वष्टारं देवं यक्षि । स्तुतिभिर्हविर्भिश्च यज पूजय ॥

उ॒पाव॑सृज॒ त्मन्या॑ सम॒ञ्जन्दे॒वानां॒ पाथ॑ ऋतु॒था ह॒वींषि॑ ।
वन॒स्पति॑ः शमि॒ता दे॒वो अ॒ग्निः स्वद॑न्तु ह॒व्यं मधु॑ना घृ॒तेन॑ ॥ १० ॥

उ॒प॒ऽअव॑सृज । त्मन्या॑ । स॒म्ऽअ॒ञ्जन् । दे॒वाना॑म् । पाथ॑ः । ऋ॒तु॒ऽथा । ह॒वींषि॑ ।
व॒न॒स्पति॑ः । श॒मि॒ता । दे॒वः । अ॒ग्निः । स्वद॑न्तु । ह॒व्यम् । मधु॑ना । घृ॒तेन॑ ॥ १० ॥

हे वनस्पते यूप त्मन्या ॥ आत्मन्शब्दस्य तृतीयैकवचने त्मादेशः । 'मन्त्रेष्वाङ्यादेरात्मनः' इत्याकारलोपः ॥ आत्मनैव ऋतुथा काले काले प्राप्ते काले देवानाम् अर्थाय पाथः पशुलक्षण-

१. ख१-२.३.६.७.८-म-'तूयं' नास्ति । २. ख४.५-कर्माख्यायां ह्रस्वो नुट् चेति । ३. ख-म-मु-ङीषन्तत्वेनान्तोदात्तः । ४. ख४.५-युगपत्प्रकृतिस्वरत्वं ।

मधुमन्त्यानि च हवींषि समञ्जन् सम्यगक्तीकुर्वन् उपावसृज उपागमय प्रयच्छ॥ 'गतिर्गतौ' (पा. सू. ८. १. ७० ) इति गतेर्निघातः॥ किंच वनस्पतिः योऽयं यूपः शमिता एतन्नामकः देवः यद्वा शामित्रः अग्निः देवो दीप्यमान आहवनीयाख्योऽग्निरिति त्रयः मधुना मधुरेण घृतेन। यद्वा मधूदकेन प्रोक्षणोपनयनादिगतेन घृतेन च। हव्यं हवनयोग्यं स्वदन्तु स्वादूकुर्वन्तु॥

सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत्पुरोगाः।
अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतं हविरदन्तु देवाः॥ ११॥

सद्यः। जातः। वि। अमिमीत। यज्ञम्। अग्निः। देवानाम्। अभवत्। पुरःऽगाः।
अस्य। होतुः। प्रऽदिशि। ऋतस्य। वाचि। स्वाहाऽकृतम्। हविः। अदन्तु। देवाः॥ ११॥

अयमग्निः सद्यः तदानीमेव जातः जायमान एव यज्ञं व्यमिमीत विशेषेण निर्मिमीते। उत्पादयति॥ 'माङ् माने शब्दे च'। जौहोत्यादिकः॥ अत एवायम् अग्निः देवानां पुरोगाः प्रथमगामी मुख्यः अभवत्॥ गमेर्विट्प्रत्यय आत्वे च कृते रूपम्॥ ततः प्रदिशि प्रकृष्टायां दिशि प्राच्याम् ऋतस्य आहवनीयात्मनावस्थितस्य अस्य होतुः होमनिष्पादकस्याग्नेः वाचि। अत्र वागास्य आस्यं लक्ष्यते। वाच्यास्ये स्वाहाकृतं स्वाहाकारेण प्रक्षिप्तं हविः सर्वे देवाः अदन्तु भक्षयन्तु। इदं सूक्तं यास्केन सम्यगभ्यधायि ( निरु. ८.५–२१ )। तदत्रानुसंधेयम्॥ ॥ १०॥

'मनीषिणः' इति दशर्चं द्वादशं सूक्तं वैरूपस्याष्ट्रादंष्ट्रस्यार्षं त्रैष्टुभमैन्द्रम्। तथा चानुक्रम्यते— 'मनीषिणो दशाष्ट्रादंष्ट्रः' इति। गतो विनियोगः॥

मनीषिणः प्र भरध्वं मनीषां यथायथा मतयः सन्ति नृणाम्।
इन्द्रं सत्यैरेरयामा कृतेभिः स हि वीरो गिर्वणस्युर्विदानः॥ १॥

मनीषिणः। प्र। भरध्वम्। मनीषाम्। यथाऽयथा। मतयः। सन्ति। नृणाम्।
इन्द्रम्। सत्यैः। आ। ईरयाम। कृतेभिः। सः। हि। वीरः। गिर्वणस्युः। विदानः॥ १॥

हे मनीषिणः स्तोतारः मनीषां मनस ईषित्रीं स्तुतिमिन्द्राय प्र भरध्वं कुरुत। नृणां कर्मनेतॄणां युष्माकं यथायथा[1] मतयः सन्ति भवन्ति तथा बुद्ध्यनुसारेण स्तुतिं कुरुध्वम्[2]। वयं च कृतेभिः कृतैः सत्यैः यथार्थभूतैः स्तोत्रैः इन्द्रम् एरयाम यज्ञं प्रत्यागमयाम॥ 'ईर गतौ'। ण्यन्तस्य लोट्॥ हि यतः विदानः जानानः समर्थः[3] स इन्द्रः गिर्वणस्युः। गीर्भिर्वननमिच्छन्ति संभजन्त[4] इति गीर्वणसः स्तोतारः॥ वनतेरसुनि रूपम्। उपपदस्य दीर्घाभावश्छान्दसः। तदन्तात् क्यच्। 'क्याच्छन्दसि' इत्युप्रत्ययः॥ स्तोतॄन् कामयमानः खलु। अतस्तमभिष्टुत॥

ऋतस्य हि सदसो धीतिरद्यौत्सं गार्ष्टेयो वृषभो गोभिरानट्।
उदतिष्ठत्तविषेणा रवेण महान्ति चित्सं विव्याचा रजांसि॥ २॥

ऋतस्य। हि। सदसः। धीतिः। अद्यौत्। सम्। गार्ष्टेयः। वृषभः। गोभिः। आनट्।
उत्। अतिष्ठत्। तविषेण। रवेण। महान्ति। चित्। सम्। विव्याच। रजांसि॥ २॥

१. त१.२.३.६.७.८-म—यथा। २. ग-त१ २.३.६.७.८-म—प्रकुरुध्वं। ३. म—वीरः समर्थः।
४. ग—संभजंति।

ऋतस्य उदकस्य सदसः स्थानस्यान्तरिक्षस्य धीतिः धारकः स इन्द्रः अद्यौत् द्योतते प्रकाशते। हि प्रसिद्धौ॥ 'द्युत दीप्तौ'। लुङि 'द्युद्भ्यो लुङि' इति परस्मैपदम्। [illegible] छान्दसः। हलन्तलक्षणा वृद्धिरपि॥ यद्वा। अद्यौत्। तापक इन्द्रो यजमानमभिगच्छति॥ 'द्यु अभिगमने[1]' आदादिकः। लङ्[2]। 'उतो वृद्धिर्लुकि हलि' इति वृद्धिः॥ गार्ष्टेयः। सकृत्प्रसूता धेनुर्गृष्टिः। तस्या अपत्यं वृषभो गोभिः सम् आनट् संव्याप्नोति। तथैवेन्द्रोऽपि सर्वं जगत् महिम्ना व्याप्नोति। तथा तविषेण। महन्नामैतत्। महता रवेण शब्देन उदतिष्ठत्। उत्थितः उद्गतोऽभवत्। अत एव महान्ति चित् महान्त्यपि रजांसि उदकानि भुवनानि वा सं विव्याच संव्याप्नोति॥

इन्द्रः किल श्रुत्या अस्य वेद स हि जिष्णुः पथिकृत्सूर्याय।
आन्मेनां कृण्वन्नच्युतो भुवद्गोः पतिर्दिवः सनजा अप्रतीतः॥ ३॥

इन्द्रः। किल। श्रुत्यै। अस्य। वेद। सः। हि। जिष्णुः। पथिऽकृत्। सूर्याय।
आत्। मेनाम्। कृण्वन्। अच्युतः। भुवत्। गोः। पतिः। दिवः। सनऽजाः। अप्रतिऽइतः॥ ३॥

अस्य अस्मदीयस्य स्तोत्रस्य श्रुत्यै श्रवणाय इन्द्रः किल इन्द्र एव वेद जानाति। स हि स एव जिष्णुः शत्रूणां जयशीलः सूर्याय पथिकृत् मार्गकर्ता भवति। किंच अच्युतः शत्रुभिरगमनीयो वृषणश्वस्य मेनाम् आत्मार्थं कृण्वन् कुर्वन् इन्द्रः आत्। आगच्छदस्मदीयं यज्ञम्। 'मेनाभवो वृषणश्वस्य सुक्रतो' (ऋ. सं. १. ५१. १३) इति मन्त्रान्तरम्॥ 'अस गतिदीप्त्यादानेषु'। भौवादिकः। ---॥ दिवः द्युलोकस्य च पतिः[3] भुवत् अभूत्॥ भवतेर्लेट्। वाक्यभेदादनिघातः॥

इन्द्रो मह्ना महतो अर्णवस्य व्रतामिनादङ्गिरोभिर्गृणानः।
पुरूणि चिन्नि तताना रजांसि दाधार यो धरुणं सत्यताता॥ ४॥

इन्द्रः। मह्ना। महतः। अर्णवस्य। व्रता। अमिनात्। अङ्गिरःऽभिः। गृणानः।
पुरूणि। चित्। नि। ततान। रजांसि। दाधार। यः। धरुणम्। सत्यऽताता॥ ४॥

इन्द्रः अङ्गिरोभिः ऋषिभिः गृणानः स्तूयमानः सन् महतो अर्णवस्य॥ 'अर्णसो लोपश्च' (पा. ५. २. १०९. ३) इति वप्रत्ययः॥ उदकवतो मेघस्य व्रता[4] व्रतानि कर्माणि मह्ना स्वमहिम्नैव अमिनात् अहिंसीत्॥ 'मीङ् हिंसायाम्'। लङि 'मीनातेर्निगमे' इति ह्रस्वः॥ ततः पुरूणि चित् बहून्येव रजांसि उदकानि नि ततान नीचीनान्यकरोत्। यः इन्द्रः सत्यताता सत्यैर्देवैस्तते। यद्वा। सत्यशब्दादपि स्वार्थिकस्तातिल् द्रष्टव्यः। सत्ये। द्युलोके धरुणं धारकं वज्रं दाधार[5] अधारयत्[5]॥

इन्द्रो दिवः प्रतिमानं पृथिव्या विश्वा वेद सवना हन्ति शुष्णम्।
मही चिद्द्यामातनोत्सूर्येण चास्कम्भ चित्कम्भनेन स्कभीयान्॥ ५॥

१. त४.५–अभिगमने। २. त-म–लङ्। ३. ग-त४.५–पतिः स्वामी। ४. त-म–'व्रता' नास्ति।
५. त-म–दाधारयत्।

इन्द्रः । दिवः । प्रतिऽमानम् । पृथिव्याः । विश्वा । वेद । सवना । हन्ति । शुष्णम् ।
महीम् । चित् । द्याम् । आ । अतनोत् । सूर्येण । चास्कम्भ । चित् । स्कम्भनेन । स्कभीयान् ॥५॥

दिवः द्युलोकस्य पृथिव्याः च प्रतिमानं महत्त्वेन प्रतिनिधिः इन्द्रः विश्वा सर्वाणि सवना सवनानि वेद सोमपानार्थं जानाति । शुष्णं सर्वस्य शोषकमेतन्नामानमसुरं हन्ति । वाक्यभेदादनिघातः । अपि च महीं चित् महतीमपि[1] द्यां सूर्येण आतनोत् । सर्वत्र प्रकाशयुक्तामकरोत् । स्कभीयान् स्कम्भयितॄणां मध्ये श्रेष्ठः सः स्कम्भनेन चित् निरोधकसाधनेन सामर्थ्येनैव चास्कम्भ । द्युलोकमवष्टब्धमकरोत् ॥ स्कभिः सौत्रो धातुः । लिटि 'तुजादीनाम्०' इति दीर्घः । चित्स्कम्भनेन इत्यत्र संहितायां सलोपः । उत्पूर्वस्य स्कम्भेः 'उदः स्थास्तम्भोः०' (पा.सू. ८. ४. ६१) इति सलोप उक्तः । चित्पूर्वस्य स्कम्भेरपि भवति छन्दोविषयत्वात् ॥ ॥ १० ॥

वज्रेण हि वृत्रहा वृत्रमस्तरदेवस्य शूशुवानस्य मायाः ।
वि धृष्णो अत्र धृषता जघन्थाथाभवो मघवन् बाह्वोजाः ॥ ६ ॥

वज्रेण । हि । वृत्रऽहा । वृत्रम् । अस्तः । अदेवस्य । शूशुवानस्य । मायाः ।
वि । धृष्णो इति । अत्र । धृषता । जघन्थ । अथ । अभवः । मघऽवन् । बाहुऽओजाः ॥६॥

हे इन्द्र वृत्रहा वृत्रस्य हन्ता वज्रेण वृत्रम् अस्तः अस्तृणाः । अवधीः ॥ स्तृणातेर्लङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । सिपि गुणः । हियोगादनिघातः ॥ अनन्तरं हे धृष्णो धर्षणशील त्वम् अदेवस्य अद्योतमानस्य शूशुवानस्य स्वबलेन वर्धमानस्य तस्य मायाः धृषता समर्थेन वज्रेण अत्र अस्मिन् काले एव वि जघन्थ विनाशितवानसि ॥ हन्तेर्लिटि थलि 'अभ्यासाच्च' इति कुत्वम् ॥ अथ हे मघवन् धनवन्निन्द्र बाह्वोजाः भुजबलवान् अभवः ॥

सचन्त यदुषसः सूर्येण चित्रामस्य केतवो रामविन्दन् ।
आ यन्नक्षत्रं ददृशे दिवो न पुनर्यतो नकिरद्धा नु वेद ॥ ७ ॥

सचन्त । यत् । उषसः । सूर्येण । चित्राम् । अस्य । केतवः । राम् । अविन्दन् ।
आ । यत् । नक्षत्रम् । ददृशे । दिवः । न । पुनः । यतः । नकिः । अद्धा । नु । वेद ॥ ७ ॥

यत् यदा उषसः उषःकालाः सूर्येण सूर्यात्मकेनेन्द्रेण सचन्त संगच्छन्ते । 'षच समवाये' । भौवादिकः । तदानीम् अस्य स्वभूताः केतवः सर्वस्य प्रज्ञापका रश्मयः चित्रां नानावर्णां रां रायं धनम् अविन्दन् अलभन्त । पुनः उदयानन्तरं यत् यदा दिवः नक्षत्रं न आ ददृशे न दृश्यते ॥ दृशेः कर्मणि लिट् । यद्योगादनिघातः ॥ तदानीं यतः ॥ इणः[2] शत्रन्तस्य ङसि 'शतुरनुमो नद्यजादी' इति विभक्तेरुदात्तत्वम् ॥ सर्वत्र गच्छतोऽस्य रश्मीन् नकिः न कश्चित् नु वेद जानाति । एतत् अद्धा सत्यमेव ॥

दूरं किल प्रथमा जग्मुरासामिन्द्रस्य याः प्रसवे सस्रुरापः ।
क्व स्विदग्रं क्व बुध्न आसामापो मध्यं क्व वो नूनमन्तः ॥ ८ ॥

---

१. त-म-महीमपि । २. त-म-सु-'इणः' नास्ति ।

दूरम् । किल । प्रथमाः । जग्मुः । आसाम् । इन्द्रस्य । याः । प्रऽसवे । सस्रुः । आपः ।
क्व । स्वित् । अग्रम् । क्व । बुध्नः । आसाम् । आपः । मध्यम् । क्व । वः । नूनम् । अन्तः ॥८॥

आसाम् अपां मध्ये प्रथमाः प्रथमगामिन्यस्ता आपः दूरं किल जग्मुः । दूरमेव गताः[1] । याः आपः इन्द्रस्य प्रसवे प्रेरणे ॥ 'षू प्रेरणे' । 'अपस्पृधेथामिति वक्तव्यम्' ( पा. सू. ६. १. ३६. ४ ) इत्यपवादेऽप् । 'याथादिस्वरमविकाराम्' इत्युत्तरपदान्तोदात्तत्वम् ॥ तस्य आज्ञायां सस्रुः सरन्ति । गच्छन्ति खलु । अथ प्रत्यक्षकृतः । हे आपः आसां युष्माकम् अग्रं क्व स्वित् । कुत्र वर्तते । बुध्नः मूलं च क्व । तथा वः युष्माकं मध्यं च क्व नूनम् इदानीं युष्माकम् अन्तः अवसानं च क्व । सर्वगतत्वादनिर्ज्ञायमानागमना आस्थितिरित्यर्थः ॥ क्व । किंशब्दात् सप्तम्यर्थे 'किमोऽत्' इत्यत्प्रत्ययः । 'क्वाति' इति क्वादेशः । तित्स्वरितः । अन्तः । अमेर्गत्यर्थस्य 'असिहसि०' इत्यादिना तन्प्रत्ययः[2] ॥

सृजः सिन्धूँरहिना जग्रसानाँ आदिदेताः प्र विविज्रे जवेन ।
मुमुक्षमाणा उत या मुमुच्रेऽधेदेता न रमन्ते नितिक्ताः ॥ ९ ॥

सृजः । सिन्धून् । अहिना । जग्रसानान् । आत् । इत् । एताः । प्र । विविज्रे । जवेन ।
मुमुक्षमाणाः । उत । याः । मुमुच्रे । अध । इत् । एताः । न । रमन्ते । निऽतिक्ताः ॥ ९ ॥

हे इन्द्र अहिना अहन्तव्येन वृत्रेण मेघेन वा जग्रसानान् ॥ 'ग्रस अदने' । अनुदात्तेत् । छन्दसि लिटः कानच् ॥ ग्रस्ताः सिन्धून् स्यन्दमाना अपः सृजः असृजः[3] निरगमयः । आदित् । इत्यवधारणे । अनन्तरमेव एताः आपः जवेन वेगेन प्र विविज्रे । सर्वत्र अत्यर्थं चलिता बभूवुः ॥ 'ओविजी भयचलनयोः' । अनुदात्तेत् । लिटि 'इरयो रे' ( पा. सू. ६.४.७६ ) इतीरो रेआदेशः ॥ उत अपि च मुमुक्षमाणाः इन्द्रेण मोचयितुमिष्यमाणाः याः आपः मुमुच्रे इन्द्रेण मोचिता अभूवन् ॥ मुचेः कर्मणि लिट् ॥ अध अनन्तरमेव नितिक्ताः नितरां मुक्ता आपः न रमन्ते । एकत्र न क्रीडन्ति । किंतु सर्वत्र गमनशीला इत्यर्थः ॥

सध्रीचीः सिन्धुमुशतीरिवायन्त्सनाज्जार आरितः पूर्भिदासाम् ।
अस्तमा ते पार्थिवा वसून्यस्मे जग्मुः सूनृता इन्द्र पूर्वीः ॥ १० ॥

सध्रीचीः । सिन्धुम् । उशतीःऽइव । आयन् । सनात् । जारः । आरितः । पूःऽभित् । आसाम् ।
अस्तम् । आ । ते । पार्थिवा । वसूनि । अस्मे इति । जग्मुः । सूनृताः । इन्द्र । पूर्वीः ॥ १० ॥

सध्रीचीः ॥ 'सहस्य सध्रिः' इति सध्र्यादेशः । 'अञ्चतेश्चोपसंख्यानम्' इति ङीप् । अल्लोपदीर्घौ । 'वा छन्दसि' इति पूर्वसवर्णदीर्घः ॥ सहाञ्चनाः सहगमना आपः सिन्धुं समुद्रं भर्तारम् आयन् आगच्छन् । तत्र दृष्टान्तः । उशतीरिव यथा कामयमानाः स्त्रियः स्वपतिमभिगच्छन्ति तद्वत् । जारः शत्रूणां जरयिता पूर्भित् इन्द्रः सनात् चिरादेव आसाम् अपाम् आरितः प्रेरकत्वेन स्वामी भवति । हे इन्द्र अस्मे अस्माकं स्वभूतानि पार्थिवा पार्थिवानि वसूनि धनवन्तीनि हवींषि पूर्वीः बह्व्यः सूनृताः वाचः स्तुतिलक्षणाश्च ते त्वदीयम् अस्तं

१. ख-म१.४.८-गु-दूरमेवागताः । २. ग-तन्प्रत्ययः । ३. ख-म-'असृजः' नास्ति ।

गृहम् आ जग्मुः आगच्छन्तु । यद्वा अस्मदीयाः स्तुतयस्ते गृहं गच्छन्तु । अस्माकं गृहं त्वदीयानि पार्थिवानि धनान्यभिगच्छन्तु ॥ गमेश्छन्दसि सार्वकालिको लिट् ॥ ॥ ११ ॥

‘ इन्द्र पिब ’ इति दशर्चं त्रयोदशं सूक्तं त्रैष्टुभमैन्द्रम् । नभःप्रभेदनो नाम वैरूपपुत्र ऋषिः । तथा चानुक्रम्यते—‘ इन्द्र पिब नभःप्रभेदनः ’ इति । गतो विनियोगः ॥

इन्द्र पिब प्रतिकामं सुतस्य प्रातःसावस्तव हि पूर्वपीतिः ।
हर्षस्व हन्तवे शूर शत्रूनुक्थेभिष्टे वीर्या प्र ब्रवाम ॥ १ ॥

इन्द्र । पिब । प्रतिऽकामम् । सुतस्य । प्रातःऽसावः । तव । हि । पूर्वऽपीतिः ।
हर्षस्व । हन्तवे । शूर । शत्रून् । उक्थेभिः । ते । वीर्या । प्र । ब्रवाम ॥ १ ॥

हे इन्द्र त्वं प्रतिकामं ये ये कामास्तांस्तान्प्रति । अव्ययीभावसमासः । तस्य स्वरः । यथेष्टं सुतस्य अभिषुतस्य यो भागस्तुभ्यं दातव्यस्तं पिब ॥ आमन्त्रितस्याविद्यमानवत्त्वेन पादादित्वान्निघातः ॥ प्रातःसावः प्रातःसवनेऽभिषूयमाणः सोमः तव हि । तृतीयार्थे षष्ठी । त्वयैव पूर्वपीतिः प्रथमत एव पातव्यः । यद्वा । प्रातःसावः । मत्वर्थाः सुः । प्रातःसवने तवैव प्रथमपानं खलु । ऐन्द्रवायवग्रहे ह्यादित एवेन्द्रः पिबति ॥ तत्पुरुषे दासीभारादित्वात्पूर्वपदान्तोदात्तत्वम् । यद्वा बहुव्रीहिः ॥ ततो हे शूर समर्थ त्वं शत्रून् हन्तवे हन्तुं हर्षस्व हृष्टो भव । अथ ते त्वदीयानि वीर्या वृत्रहननादिलक्षणानि वीर्याणि उक्थेभिः उक्थैः शस्त्रैः प्र ब्रवाम प्रकर्षेण ब्रवाम ॥

यस्ते रथो मनसो जवीयानेन्द्र तेन सोमपेयाय याहि ।
तूयमा ते हरयः प्र द्रवन्तु येभिर्यासि वृषभिर्मन्दमानः ॥ २ ॥

यः । ते । रथः । मनसः । जवीयान् । आ । इन्द्र । तेन । सोमऽपेयाय । याहि ।
तूयम् । आ । ते । हरयः । प्र । द्रवन्तु । येभिः । यासि । वृषऽभिः । मन्दमानः ॥ २ ॥

हे इन्द्र मनसः अपि जवीयान् अतिशयेन[1] गन्ता ते त्वदीयः यः रथः अस्ति तेन रथेन सोमपेयाय अस्मदीयं सोमं पातुम् आ याहि आगच्छ ॥ ‘ पा पाने ’ । अचो यत् । ‘ ईद्यति ’ इतीत्वम् । आर्धधातुकलक्षणो गुणः । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ तथा ते त्वदीयाः हरयः रथे संयुक्ता अश्वाः तूयं क्षिप्रम् आ आभिमुख्येन प्र द्रवन्तु प्रगच्छन्तु । वृषभिः सेक्तृभिः येभिः यैरश्वैः मन्दमानः मोदमानः सन् यासि गच्छसि । ‘ हरी इन्द्रस्य ’ ( नि. १. १५. १ ) इति वचनादिन्द्रस्य द्वित्वेनाश्वाविति न चोदनीयम् ‘ आ त्वा सहस्रमा शतम् ’ ( ऋ. सं. ८. १. २४ ) इत्यादिनिगमान्तरे दर्शनात् ॥

हरित्वता वर्चसा सूर्यस्य श्रेष्ठै रूपैस्तन्वं स्पर्शयस्व ।
अस्माभिरिन्द्र सखिभिर्हुवानः सध्रीचीनो मादयस्वा निषद्य ॥ ३ ॥

हरित्वता । वर्चसा । सूर्यस्य । श्रेष्ठैः । रूपैः । तन्वम् । स्पर्शयस्व ।
अस्माभिः । इन्द्र । सखिऽभिः । हुवानः । सध्रीचीनः । मादयस्व । निऽसद्य ॥ ३ ॥

१. ल-अ- ‘ अतिशयेन ’ नास्ति ।

हे इन्द्र हरित्वता ॥ हरिच्छब्दान्मतुप् 'झयः' (पा. सू. ८.२.१०) इति वत्वम् ॥ हरिद्वर्णयुक्तेन सूर्यस्य वर्चसा तेजसा सदृशैः श्रेष्ठैः प्रशस्यतमैरात्मीयैः रूपैः तन्वम् आत्मीयं शरीरं सवीर्यं वा । बाह्र । तावत इति तन्नूर्धसः । तं स्पर्शयस्व । तेजोयुक्तं कुरु । किंच सध्रीचीनः ॥ 'विभाषाञ्चेरदिक्स्त्रियाम्' इति खप्रत्ययः ॥ सहगमनस्त्वं सखिभिः सखिभूतैः अस्माभिः हुवानः आहूयमानः सन् निषद्य यज्ञे निषण्णो भूत्वा मादयस्व । सोमपानेन हृष्टो भव ॥

यस्य॒ त्यत्ते॑ महि॒मानं॒ मदे॑ष्वि॒मे म॒ही रोद॑सी॒ नावि॑विक्ताम् ।
तदोक॒ आ हरि॑भिरिन्द्र यु॒क्तैः प्रि॒येभि॑र्याहि प्रि॒यमन्न॒मच्छ॑ ॥ ४ ॥

यस्य॑ । त्यत् । ते॒ । म॒हि॒मान॑म् । मदे॑षु । इ॒मे इति॑ । म॒ही इति॑ । रोद॑सी॒ इति॑ । न । अवि॑विक्ताम् ।
तत् । ओकः॑ । आ । हरि॑ऽभिः । इ॒न्द्र॒ । यु॒क्तैः । प्रि॒येभिः॑ । या॒हि॒ । प्रि॒यम् । अन्न॑म् । अच्छ॑ ॥ ४ ॥

हे इन्द्र इमे मही महत्यौ रोदसी द्यावापृथिव्यौ यस्य ते तव सोमपानेन जनितेषु मदेषु संभूतं त्यत् तं महिमानं न अविविक्तां न पृथक्कृतवत्यौ किंतु[1] यस्य महिम्न्येव स्थिते ॥ 'विचिर् पृथग्भावे' । जौहोत्यादिकः । लङि 'संज्ञापूर्वको विधिरनित्यः' इत्यभ्यासस्य गुणाभावः । यद्योगादनिघातः ॥ प्रियेभिः प्रियतमैः रथे युक्तैः हरिभिः अश्वैः प्रियं प्रीणनकरम् अन्नं सोमलक्षणम् अच्छ अभिलक्ष्य तदोकः अस्मदीयं यज्ञसदनम् आ याहि आगच्छ ॥

यस्य॒ शश्व॑त्पपि॒वाँ इ॑न्द्र॒ शत्रू॑ननानुकृ॒त्या रण्या॑ च॒कर्थ॑ ।
स ते॑ पु॒रंधिं॒ तवि॑षीमियर्ति॒ स ते॒ मदा॑य सु॒त इ॑न्द्र॒ सोमः॑ ॥ ५ ॥

यस्य॑ । शश्व॑त् । प॒पि॒ऽवान् । इ॒न्द्र॒ । शत्रू॑न् । अ॒न॒नु॒ऽकृ॒त्या । रण्या॑ । च॒कर्थ॑ ।
सः । ते॒ । पु॒र॒म्ऽधिम् । तवि॑षीम् । इ॒य॒र्ति॒ । सः । ते॒ । मदा॑य । सु॒तः । इ॒न्द्र॒ । सोमः॑ ॥ ५ ॥

हे इन्द्र पपिवान् ॥ पिबतेः[2] क्वसौ 'वस्वेकाजाद्घसाम्' इतीडागमः ॥ सोमं पीतवांस्त्वम् अननुकृत्या अनुकरणरहितेन सकृत्प्रहारेण शत्रुहननसमर्थेन रण्या सांग्रामिकेणायुधेन[3] । रणशब्दात् साध्वर्थे प्राग्घितीयो[4] यत् ॥ यस्य यजमानस्य शत्रून् शश्वत् बहुवारं चकर्थ हतवानसि ॥ 'कृञ् हिंसायाम्' । लिटि थलि यद्योगादनिघाते लित्स्वरः ॥ सः यष्टा[5] ते त्वदर्थं तविषीं महतीं पुरंधिं बह्वीं स्तुतिम् इयर्ति प्रेरयति ॥ 'ऋ गतौ' । जौहोत्यादिकः । 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्येत्वम् । 'अभ्यासस्यासवर्णे' इतीयङ् ॥ हे इन्द्र सुतः अभिषुतः सः सोमः ते मदाय समर्थो भवति । यद्वा । स यष्टा सुतः सोमः । सुब्व्यत्ययः । अभिषुतं सोमं त्वन्मदाय प्रेरयति ॥   ॥ १२ ॥

इ॒दं ते॒ पात्रं॒ सन॑वित्तमिन्द्र॒ पिबा॒ सोम॑मे॒ना श॑तक्रतो ।
पू॒र्ण आ॑हा॒वो म॑दि॒रस्य॒ मध्वो॒ यं विश्व॒ इद॑भि॒हर्य॑न्ति दे॒वाः ॥ ६ ॥

इ॒दम् । ते॒ । पात्र॑म् । सन॑ऽवित्तम् । इ॒न्द्र॒ । पिब॑ । सोम॑म् । ए॒ना । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो ।
पू॒र्णः । आ॒ऽहा॒वः । म॒दि॒रस्य॑ । मध्वः॑ । यम् । विश्वे॑ । इत् । अ॒भि॒ऽहर्य॑न्ति । दे॒वाः ॥ ६ ॥

१. ग२-स्वस्य; त१.२.१.६.७.८-म१.२.४.८-मु-किंतु तस्य; म७-किंतु । २. ग-त१.२.३.६.७.८-म-मु-पातेः । ३. त-म-मु-सांयुगीनेनायुधेन । ४. त-म-प्रातघहतीयो । ५. ग-त-म-यष्टा ।

हे इन्द्र ते त्वदर्थं चारु चमसादिकं समचितम् । अस्माभिर्निरायेव कल्पम् । 'चायृ पूजानिशामनयोः' । कर्माणि निष्ठा । हे शतक्रतो बहुकर्मन्निन्द्र एना एतेन पात्रेण सोमं पिब । यतः मदिरस्य मदकरस्य मध्वः मधुनः सोमस्य आहावः पानस्थानीयपात्रविशेषः पूर्णः पूरितोऽभूत् ॥ 'ह्वेञ् स्पर्धायाम्' । 'निपानमाहावः' ( पा. सू. ३. ३. ७४ ) इति निपातितः । स्तुतिभिराहूयमाना देवा अत्र सोमं पिबन्तीति । थाथादिस्वरः ॥ यम् उ नु यमाहावमेव विश्वे सर्वे देवाः अभिहर्यन्ति अभिकामयन्ते । 'हर्य गतिकान्त्योः' । औणादिकः । यद्योगादिकारो निपाताभावे 'तिङि चोदात्तवति' इति गतेर्निघातः ॥

वि हि त्वामि॑न्द्र पुरु॒धा जना॑सो हि॒तप्र॑यसो वृषभ॒ ह्वय॑न्ते ।
अ॒स्माकं॑ ते॒ मधु॑मत्तमानी॒मा भु॑व॒न्त्सव॑ना॒ तेषु॑ हर्य ॥ ७ ॥

वि । हि । त्वाम् । इ॒न्द्र । पु॒रु॒ऽधा । जना॑सः । हि॒तऽप्र॑यसः । वृ॒ष॒भ॒ । ह्वय॑न्ते ।
अ॒स्माक॑म् । ते॒ । मधु॑मत्ऽतमानि । इ॒मा । भु॒व॒न् । सव॑ना । तेषु॑ । ह॒र्य॒ ॥ ७ ॥

हे इन्द्र वृषभ कामानां वर्षक हितप्रयसः । प्रय इत्यन्ननाम प्रीणनकारित्वात् । संभृतहविष्काः जनासः जनाः पुरुधा बहुधा । हि त्ववधारणे । त्वाम् एव वि ह्वयन्ते विविधमाह्वयन्ति ॥ 'ह्वेञ् स्पर्धायाम्' । 'निसमुपविभ्यो ह्वः' इत्यात्मनेपदम् ॥ अस्माकं स्वभूतानि इमा इमानि सवना सवनानि ते त्वदर्थं मधुमत्तमानि अतिशयेन सोमवन्ति भुवन् अभवन् । तस्मात्त्वं तेषु सवनेषु हर्य सोमान् कामयस्व ॥

प्र ते॑ इन्द्र पू॒र्व्याणि॒ प्र नू॒नं वी॒र्या॑ वोचं प्रथ॒मा कृ॒तानि॑ ।
स॒तीन॑मन्युरश्रथा॒यो अद्रिं॑ सुवेद॒नाम॑कृणो॒र्ब्रह्म॑णे॒ गाम् ॥ ८ ॥

प्र । ते॒ । इ॒न्द्र॒ । पू॒र्व्याणि॑ । प्र । नू॒नम् । वी॒र्या॑ । वो॒च॒म् । प्र॒थ॒मा । कृ॒तानि॑ ।
स॒तीन॑ऽमन्युः । अ॒श्र॒थ॒यः॒ । अद्रि॑म् । सु॒ऽवे॒द॒नाम् । अ॒कृ॒णोः॒ । ब्रह्म॑णे । गाम् ॥ ८ ॥

हे इन्द्र ते त्वदीयानि प्रथमा आदितः कृतानि पूर्व्याणि पुरातनानि च वीर्या[1] वीर्याणि नूनम् इदानीं प्र प्र वोचं प्रकर्षेण वदामि । पुनः प्रशब्दः पूरणः ॥ वोचम् । लुङि 'ब्रुवो वचिः' । 'वच उम्' ॥ कानि तानि । सतीनमन्युः । सतीनमित्युदकनाम । उदकाभिवर्षणबुद्धियुक्तस्त्वम् अद्रिं मेघम् अश्रथयः श्लथमकरोः । ब्रह्मणे बृहस्पतये गां पणिभिरपहृतां सुवेदनां सुष्ठु ज्ञापनीयाम् अकृणोः अकरोरित्यादीनि ॥

नि षु सी॑द गणपते ग॒णेषु॒ त्वामा॑हु॒र्विप्र॑तमं कवी॒नाम् ।
न ऋ॒ते त्वत्क्रि॑यते॒ किं च॒नारे म॒हाम॒र्कं म॑घवञ्चि॒त्रम॑र्च ॥ ९ ॥

नि । सु॒ । सी॒द॒ । ग॒ण॒ऽप॒ते॒ । ग॒णेषु॑ । त्वाम् । आ॒हुः॒ । विप्र॑ऽतमम् । क॒वी॒नाम् ।
न । ऋ॒ते । त्वत् । क्रि॒य॒ते॒ । किम् । च॒न । आ॒रे । म॒हाम् । अ॒र्कम् । म॒घ॒ऽव॒न् । चि॒त्रम् । अ॒र्च॒ ॥ ९ ॥

हे गणपते त्वं गणेषु स्तोतृगणेषु सु सुष्ठु नि षीद । स्तुतिश्रवणार्थं निषण्णो भव । यतः कवीनां क्रान्तप्रज्ञानां मध्ये त्वां विप्रतमम् अतिशयेन मेधाविनमिति आहुः । किंच त्वत्

1. ख-म-स्पर्धायां शब्दे च । 2. ग-ख-ड-म-'वीर्या' नास्ति ।

क्रते ॥ 'अन्यारादितरर्ते' (पा. सू. २. ३. २९) इति पञ्चमी ॥ त्वां वर्जयित्वा किं च कर्म आरे दूरे समीपे वा न क्रियते । [illegible] । ततो हे मघवन् धनवन्निन्द्र महो महान्तम् अर्कम् अर्चनीयमस्मदीयं त्रिष्टुप्छन्दस्कादिलक्षणं स्तोत्रं चित्रं नानारूपं कृत्वा अर्च पूजय । विधेहि ॥ 'अर्च पूजायाम्' । भौवादिकः ॥

अभिख्या नो मघवन्नाधमानान्त्सखे बोधि वसुपते सखीनाम् ।
रणं कृधि रणकृत्सत्यशुष्माभक्ते चिदा भजा राये अस्मान् ॥ १० ॥

अभिऽख्या । नः । मघऽवन् । नाधमानान् । सखे । बोधि । वसुऽपते । सखीनाम् ।
रणम् । कृधि । रणऽकृत् । सत्यऽशुष्म । अभक्ते । चित् । आ । भज । राये । अस्मान् ॥ १० ॥

हे मघवन् धनवन्निन्द्र नाधमानान् ॥ 'नाधृ नाथृ याच्ञोपतापैश्वर्याशीःषु' । भौवादिकः । अनुदात्तेत् ॥ याचमानान् नः अस्मान् अभिख्या[1] अभिख्यापनेन तेजसा युक्तान् कुरु । प्रसिद्धान् वा कुरु । हे सखे धनदानेन हे वसुपते वसूनां स्वामिन् त्वं सखीनां स्तोतृत्वेन सखिभूतानामस्माकं स्वभूतानि स्तोत्राणि बोधि बुध्यस्व ॥ 'बुध अवगमने' । भौवादिकः । लोटि छान्दसः शपो लुक् । 'छन्दस्युभयथा' इति हेरार्धधातुकत्वेनाङित्त्वात् 'अङितश्च' इति हेर्धिभावः । अत एव गुणः । सार्वधातुकत्वेन ङित्वादन्तोदात्तत्वम् । वर्णलोपश्छान्दसः ॥ हे रणकृत् शत्रुभिः सह युद्धकर्तः अत एव हे सत्यशुष्म यथार्थबलोपेत त्वं रणं कृधि कुरु । शत्रून् जहि ॥ करोतेर्लोटि 'श्रुशृणुपृकृवृभ्यश्छन्दसि' इति हेर्धिः ॥ किंच अभक्ते चित् असंभजनीये स्थानेऽपि अस्मान् राये धनाय आ भज भागिनः कुरु ॥ 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः ॥ ॥१३॥ ॥९॥

दशमेऽनुवाके षोडश सूक्तानि । तत्र 'तमस्य' इति दशर्चं प्रथमं सूक्तमैन्द्रम् । शतप्रभेदनो नाम वैरूप ऋषिः । अन्त्या त्रिष्टुप् शिष्टा जगत्यः । तथा चानुक्रान्तं—'तमस्य शतप्रभेदनस्त्रिष्टुबन्तम्'[2] इति । दशरात्रस्याष्टमेऽहनि मरुत्वतीय एतत्सूक्तम् । सूत्रितं च—'तमस्य द्यावापृथिवी महाँ इन्द्रो नृवदिति मरुत्वतीयम्' (आश्व. श्रौ. ८. ७) इति ॥

तमस्य द्यावापृथिवी सचेतसा विश्वेभिर्देवैरनु शुष्ममावताम् ।
यदैत्कृण्वानो महिमानमिन्द्रियं पीत्वी सोमस्य क्रतुमाँ अवर्धत ॥ १ ॥

तम् । अस्य । द्यावापृथिवी इति । सऽचेतसा । विश्वेभिः । देवैः । अनु । शुष्मम् । आवताम् ।
यत् । ऐत् । कृण्वानः । महिमानम् । इन्द्रियम् । पीत्वी । सोमस्य । क्रतुऽमान् । अवर्धत ॥ १ ॥

सचेतसा सह चेतयन्त्यौ द्यावापृथिवी द्यावापृथिव्यौ विश्वेभिः सर्वैः देवैः सह अस्य ॥ अन्वादेशेऽशादेशोऽनुदात्तः (पा. सू. २. ४. ३२) ॥ एतस्येन्द्रस्य तं शुष्मं शत्रूणां शोषकं बलम् अनु आवतां रक्षताम् । तस्य बलं पूर्वमस्मात् रक्षतु पश्चादेतेऽपि रक्षतामिति भावः । अवतेर्लङ् । कृण्वानः वृत्रवधादिकं कुर्वाणः सः महिमानम् इन्द्रियम् इन्द्रस्यात्मनः पर्याप्तं वीर्यं च यत् यदा ऐत् प्राप्नोत् ॥ 'इण् गतौ' । आदादिकः । 'आडजादीनाम्' इत्याडागमः ॥ तदा क्रतुमान् कर्मवान् सः सोमस्य पीत्वी सोमं पीत्वा अवर्धत ॥ 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानसंज्ञा । 'चतुर्थ्यर्थे बहुलम्' इति षष्ठी । पीत्वी । 'स्नात्व्यादयश्च' इति निपातितः ॥

१. त-म-'अभिख्या' नास्ति । २. अनु-शतप्रभेदनोऽन्त्या त्रिष्टुप् ।

तम॑स्य॒ विष्णु॑र्महि॒मान॒मोज॑सां॒शुं द॑ध॒न्वान्मधु॑नो॒ वि र॑प्शते ।
दे॒वेभि॒रिन्द्रो॑ म॒घवा॑ स॒याव॑भिर्वृ॒त्रं ज॑घ॒न्वाँ अ॑भव॒द्वरे॑ण्यः ॥ २ ॥

तम् । अ॒स्य॒ । विष्णुः॑ । म॒हि॒मान॑म् । ओज॑सा । अं॒शुम् । द॒ध॒न्वान् । मधु॑नः । वि । र॒प्श॒ते॒ ।
दे॒वेभिः॑ । इन्द्रः॑ । म॒घऽवा॑ । स॒याव॑ऽभिः । वृ॒त्रम् । ज॒घ॒न्वान् । अ॒भ॒व॒त् । वरे॑ण्यः ॥ २ ॥

विष्णुः एतन्नामकः । व्यापको यज्ञो वा । मधुनः मदकरस्य सोमस्य अंशुं लताखण्डं दधन्वान् प्रेरयन् ॥ धवेर्गत्यर्थस्य क्वसौ इदित्वान्नुमागमे कृते वलि लोपः ॥ ओजसा स्ववीर्येण संजातम् अस्य इन्द्रस्य तं महिमानं वि रप्शते विविधं शब्दयति । स्तौति । मघवा धनवान् सयावभिः ॥ यातेः ‘ आतो मनिन्० ’ इति क्वनिप् ॥ सहगन्तृभिः देवेभिः देवैः मरुद्भिश्च वृत्रं जघन्वान् हतवान् इन्द्रः वरेण्यः सर्वैर्वरणीयः संभजनीयः अभवत् ॥

वृ॒त्रेण॒ यदहि॑ना॒ बिभ्र॒दायु॑धा स॒मस्थि॑था यु॒धये॒ शंस॑मा॒विदे॑ ।
विश्वे॑ ते॒ अत्र॑ म॒रुतः॑ स॒ह त्मनाव॑र्धन्नुग्र महि॒मान॑मिन्द्रि॒यम् ॥ ३ ॥

वृ॒त्रेण॑ । यत् । अहि॑ना । बिभ्र॑त् । आयु॑धा । स॒म्ऽअस्थि॑थाः । यु॒धये॑ । शंस॑म् । आ॒ऽविदे॑ ।
विश्वे॑ । ते॒ । अत्र॑ । म॒रुतः॑ । स॒ह । त्मना॑ । अव॑र्धन् । उ॒ग्र॒ । म॒हि॒मान॑म् । इ॒न्द्रि॒यम् ॥ ३ ॥

युधये योधनाय आयुधा आयुधानि वज्रादीनि बिभ्रत् धारयन्निन्द्र त्वं यत् यदा अहिना आहन्तव्येन वृत्रेण[1] समस्थिथाः सह स्थितः ॥ तिष्ठतेर्लुङि ‘ समवप्रविभ्यः स्थः ’ ( पा. सू. १. ३. २२ ) इत्यात्मनेपदम् । ‘ स्थाघ्वोरिच्च ’ इति सिचः कित्त्वमिकारश्चान्तादेशः । ‘ ह्रस्वादङ्गात् ’ ( पा. सू. ८. २. २७ ) इति सिचो लोपः । यद्योगादनिघातः । ‘ तिङि चोदात्तवति ’ इति गतेर्निघातः ॥ तत् आविदे ॥ तुमर्थे केन्प्रत्ययः ॥ तव वृत्रवधादिकं वीर्यं प्रज्ञापयितुं शंसम् प्रशंसम् । शब्दैरहं स्तौमि ॥ ‘ शन्सु स्तुतौ ’ । ल्युट् । वाक्यभेदादनिघातः ॥ किंच हे उग्र उद्गूर्णबल अत्र अस्मिन् काले एव ते त्वदीयं महिमानमिन्द्रियं वीर्यं च विश्वे सर्वे मरुतः त्मना आत्मना सह एव अवर्धन् । वर्णलोपश्छान्दसः । अवर्धयन् । मरुतो हीन्द्रस्य वीर्यं भवति ॥

ज॒ज्ञा॒न ए॒व व्य॑बाधत॒ स्पृधः॒ प्राप॑श्यद्वी॒रो अ॒भि पौंस्यं॒ रण॑म् ।
अवृ॑श्चद॒द्रिमव॑ स॒स्यदः॑ सृ॒जदस्त॑भ्ना॒न्नाकं॑ स्वप॒स्यया॑ पृ॒थुम् ॥ ४ ॥

ज॒ज्ञा॒नः । ए॒व । वि । अ॒बा॒ध॒त॒ । स्पृधः॑ । प्र । अ॒प॒श्य॒त् । वी॒रः । अ॒भि । पौंस्य॑म् । रण॑म् ।
अवृ॑श्चत् । अ॒द्रिम् । अव॑ । स॒ऽस्यदः॑ । सृ॒जत् । अस्त॑भ्नात् । नाक॑म् । सु॒ऽअ॒प॒स्यया॑ । पृ॒थुम् ॥ ४ ॥

स इन्द्रः जज्ञान एव ॥ ‘ जनी प्रादुर्भावे ’ । छान्दसस्य लिटः कानच् ॥ जायमान एव स्पृधः शत्रून् व्यबाधत अत्यर्थमपीडयत् ॥ स्पृधः । ‘ स्पर्ध संघर्षे ’ । क्विप् । ‘ अपस्पृधेथाम्० ’ इति निपातनेनैकत्र संप्रसारणदर्शनादत्रापि भवति ॥ अत एव वीरः समर्थः सः रणं संग्रामम् अभिलक्ष्य पौंस्यम् आत्मीयं बलं प्रापश्यत् । अस्यैतावद्बलमिति प्रकर्षेण पश्यति । जानाति । किंच अद्रिं मेघम् अवृश्चत् वर्षणार्थमच्छिनत्[2] । अनन्तरं सस्यदः ॥ ‘ स्यन्दू प्रस्रवणे ’ । क्विप् । धातुनलोपः । सह स्यन्दमाना अपः अव असृजत् अवाङ्मुखमसृजत् निरगमयत् । तथा सः पृथुं

---

१. त१.२.३-म—वृत्रेणाऽऽस्थितः । २. त१.२.३.६.७.८-म१.२.४.८—वर्षणार्थं॰ ।

महान्तं नाकं द्युलोकं स्वपस्यया ॥ सुप आत्मनः क्यच् । ' अ प्रत्ययात् ' ( पा. सू. ३.३.१०२ ) इति स्त्रियामप्रत्ययः ॥ सोमनकर्मेच्छया अस्तभ्नात् । निरुद्धमकरोत् ॥ स्तम्भिः सौत्रो धातुः ॥

आदिन्द्रः॑ स॒त्रा तवि॑षीरपत्यत॒ वरी॑यो॒ द्यावा॑पृथि॒वी अ॑बाधत ।
अवा॑भरद्धृषि॒तो वज्र॑माय॒सं शेवं॑ मि॒त्राय॒ वरु॑णाय दा॒शुषे॑ ॥ ५ ॥

आत् । इन्द्रः॑ । स॒त्रा । तवि॑षीः । अ॒प॒त्य॒त॒ । वरी॑यः । द्यावा॑पृथि॒वी इति॑ । अ॒बा॒ध॒त॒ ।
अव॑ । अ॒भ॒र॒त् । धृ॒षि॒तः । वज्र॑म् । आ॒य॒सम् । शेव॑म् । मि॒त्राय॑ । वरु॑णाय । दा॒शुषे॑ ॥ ५ ॥

आत् अपि च स इन्द्रः तविषीः महतीः सेनाः सत्रा सहैव अपत्यत अगच्छत् । ' पत गतौ ' । चैवादिकः । वर्णव्यत्ययः ॥ यद्वा । पत्यत इत्यैश्वर्यकर्मा । सेनानामीष्टे[1] । तासामीश्वरोऽभवदित्यर्थः । स एव द्यावापृथिवी द्यावापृथिव्यौ वरीयः ॥ तृतीयायाः सुः ॥ उरुतरेण महिम्ना अबाधत । तयोरन्तःस्थितान् शत्रूनबाधीदित्यर्थः । धृषितः शत्रुवधे प्रगल्भः सन् आयसम् अयोमयं वज्रम् अवाभरत् अधारयत्[2] । किमर्थम् । मित्राय वरुणाय दाशुषे हविर्दत्तवते यजमाने च शेवं सुखं कर्तुम् ॥  ॥ १४ ॥

इन्द्र॑स्या॒त्र तवि॑षीभ्यो विर॒प्शिन॑ ऋघाय॒तो अ॑रंहयन्त म॒न्यवे॑ ।
वृ॒त्रं यदु॒ग्रो व्यवृ॑श्च॒दोज॑सा॒पो बिभ्र॑तं॒ तम॑सा॒ परी॑वृतम् ॥ ६ ॥

इन्द्र॑स्य । अत्र॑ । तवि॑षीभ्यः । वि॒ऽर॒प्शिनः॑ । ऋ॒घा॒य॒तः । अ॒रं॒ह॒य॒न्त॒ । म॒न्यवे॑ ।
वृ॒त्रम् । यत् । उ॒ग्रः । वि । अवृ॑श्चत् । ओज॑सा । अ॒पः । बिभ्र॑तम् । तम॑सा । परि॑ऽवृतम् ॥ ६ ॥

अत्र अस्मिन् काल एव विरप्शिनः महतो विविधं शब्दायमानस्य वा ऋघायतः शत्रून् हिंसतः इन्द्रस्य तविषीभ्यः । षष्ठ्यर्थे चतुर्थी । बलानां मन्यवे प्रख्यापनाय[3] अरंहयन्त । आपो निरगच्छन् । रहिर्गत्यर्थः । उग्रः उद्गूर्णः सः अपः उदकानि बिभ्रतं धारयन्तं तमसा परीवृतं परितो वेष्टितम् । वृणोतेः कर्मणि क्तः । ' गतिरनन्तरः ' इति स्वरः । संहितायाम् ' उपसर्गस्य घञि ' ( पा. सू. ६. ३. १२२ ) इति दीर्घः ॥ तं वृत्रं यत् यस्मिन् काले ओजसा स्ववीर्येण व्यवृश्चत् अवधीत् ॥

या वी॒र्या॑णि प्रथ॒मानि॒ कर्त्वा॑ महि॒त्वेभि॒र्यत॑मानौ स॒मीय॑तुः ।
ध्वा॒न्तं तमोऽव॑ दध्वसे ह॒त इन्द्रो॑ म॒ह्ना पू॒र्वहू॑तावपत्यत ॥ ७ ॥

या । वी॒र्या॑णि । प्र॒थ॒मानि॑ । कर्त्वा॑ । म॒हि॒ऽत्वेभिः॑ । यत॑मानौ । स॒म्ऽई॒य॒तुः ।
ध्वा॒न्तम् । तमः॑ । अव॑ । द॒ध्व॒से॒ । ह॒ते । इन्द्रः॑ । म॒ह्ना । पू॒र्वऽहू॑तौ । अ॒प॒त्य॒त॒ ॥ ७ ॥

महित्वेभिः महनीयैः स्वबलैः यतमानौ युद्धाय प्रयत्नं कुर्वन्तौ इन्द्रवृत्रौ[4] प्रथमानि पूर्वभावीनि कर्त्वा । कृत्यार्थे त्वन्प्रत्ययः । कर्तव्यानि या यानि वीर्याणि समीयतुः संयोजयामासतुः ॥ ' इण् गतौ ' । किति ' दीर्घ इणः किति ' ( पा. सू. ७. ४. ६९ ) इति दीर्घः ॥ तयोर्मध्ये

१. म१.२३.७-म१.४.७.८—सेना ईष्टे; भर—सेनामीष्टे । २. त१.२.३.६.८—म१.४—आधारयत् ।
३. स-म—अप्रख्यापनाय । ४. स—' इन्द्रवृत्रौ ' नास्ति ।

इन्द्रेण वृत्रे हते सति द्यावाभूमी अतिशिथिले तमः अव अपश्यताम् । अवस्थानं विगतमभूत् ॥ घसेर्लिट् । क्रियावचलोपः ॥ इन्द्रः तु महा स्वमहिम्ना पूर्वहूतौ प्रथमाह्वाने अपत्यत अगच्छत् । शूराणां मध्येऽयमेव प्रथममाहूयमानोऽभवदित्यर्थः ॥

विश्वे देवासो अध वृष्ण्यानि तेऽवर्धयन्त्सोमवत्या वचस्यया ।
रद्धं वृत्रमहिमिन्द्रस्य हन्मनाग्निर्न जम्भैस्तृष्वन्नमावयत् ॥ ८ ॥

विश्वे । देवासः । अध । वृष्ण्यानि । ते । अवर्धयन् । सोमऽवत्या । वचस्यया ।
रद्धम् । वृत्रम् । अहिम् । इन्द्रस्य । हन्मना । अग्निः । न । जम्भैः । तृषु । अन्नम् । आवयत् ॥ ८ ॥

हे इन्द्र अध वृत्रहननानन्तरं विश्वे देवासः देवा ऋत्विजः सोमवत्या सोमयुक्तया वचस्यया स्तुतीच्छया ते त्वदीयानि वृष्ण्यानि बलानि अवर्धयन्[1] वर्धयन्ति[1] । इन्द्रस्य हन्मना हननसाधनेन वज्रेण रद्धम् । 'रध हिंसासंराध्योः' । हिंसितम् अहिं वृत्रम् अपामावरकं मेघं तृषु क्षिप्रम् अन्नम् आवयत् अभक्षयत् । तच्छब्देनोदकेन संपादितमन्नं जनोऽभक्षयदित्यर्थः । आवयतिरत्तिकर्मा । तत्र दृष्टान्तः । अग्निर्न यथाग्निः जम्भैः आत्मीयैर्दन्तैरन्नं भक्षयति तद्वत् ॥

भूरि दक्षेभिर्वचनेभिर्ऋक्वभिः सख्येभिः सख्यानि प्र वोचत ।
इन्द्रो धुनिं च चुमुरिं च दम्भयञ्छ्रद्धामनस्या शृणुते दभीतये ॥ ९ ॥

भूरि । दक्षेभिः । वचनेभिः । ऋक्वऽभिः । सख्येभिः । सख्यानि । प्र । वोचत ।
इन्द्रः । धुनिम् । च । चुमुरिम् । च । दम्भयन् । श्रद्धाऽमनस्या । शृणुते । दभीतये ॥ ९ ॥

हे स्तोतारः दक्षेभिः वर्धनहेतुभिः ऋक्वभिः ॥ 'छन्दसीवनिपौ' इति वनिप्प्रत्ययः । अयस्मयादित्वेन भत्वाज्जश्त्वाभावः । पदत्वात् कुत्वम् (का. १. ४. २०) ॥ मन्त्रयुक्तैः सख्येभिः ॥ सख्यर्हमित्यर्थे 'छन्दसि च' इति यप्रत्ययः[2] ॥ सख्युरिन्द्रस्य योग्यैः वचनेभिः वचनैः स्तोत्रैः सख्यानि स्तुत्यस्तोतृलक्षणान्यभिलक्ष्य भूरि बहुवारम् इन्द्रं प्र वोचत प्रब्रूत अभिष्टुत । इन्द्रः तु दभीतये एतन्नामकाय राजर्षये धुनिं च चुमुरिं च एतन्नामकौ द्वावसुरौ दम्भयन् हिंसन् श्रद्धामनस्या । मनःशब्दात् क्यच् । श्रद्धायुक्तया मनस इच्छया शृणुते । युष्माभिः कृतानि स्तोत्राणि शृणोति ॥

त्वं पुरूण्या भरा स्वश्व्या येभिर्मंसै निवचनानि शंसन् ।
सुगेभिर्विश्वा दुरिता तरेम विदो षु ण उर्विया गाधमद्य ॥ १० ॥

त्वम् । पुरूणि । आ । भर । सुऽअश्व्या । येभिः । मंसै । निऽवचनानि । शंसन् ।
सुऽगेभिः । विश्वा । दुःऽइता । तरेम । विदो इति । सु । नः । उर्विया । गाधम् । अद्य ॥ १० ॥

हे इन्द्र त्वं स्वश्व्या स्वश्व्यानि शोभनाश्वयुक्तानि पुरूणि बहूनि धनानि मह्यम् आ भर आहर प्रयच्छ । निवचनानि नितरां वक्तव्यानि स्तोत्राणि शंसन् अहं येभिः धनैः मंसै ।

१. स-भ-अवर्धयंत । २. न-भ-मु-यप्रत्ययः ।

मन्यतिरर्चतिकर्मा । देवान् पूजयामि तानि देहि ॥ मन्यतेर्लोटि 'बहुलं छन्दसि' इति विकरणस्य लुक् । सिप्यडागमः । सिपः पित्त्वेनानुदात्तत्वाद्धातुस्वरः ॥ सुगेभिः सुष्ठु गन्तव्यैस्तैस्तैः स्तोत्रैर्वा विश्वा सर्वाणि दुरिता दुरितानि पापानि तरेम । हे इन्द्र अत्र अस्मिन् कर्मणि गाधं प्रध्यमानं क्रियमाणं नः अस्मदीयं स्तोत्रम् उर्विया उरुत्वेन बहुत्वेन सु सुष्ठु विद्धि । विद ज्ञाने । आर्गामिक ॥ ॥ १५ ॥

'घर्मा' इति दशर्चं द्वितीयं सूक्तं वैश्वदेवम् । सध्रिर्नाम वैरूप ऋषिः । तपसः पुत्रो घर्मो वा । चतुर्थी जगती । शिष्टास्त्रिष्टुभः । तथा चानुक्रान्तं—'घर्मा सध्रिस्तापसो वा घर्मो वैश्वदेवं चतुर्थी जगती' इति । गतो विनियोगः ॥

घुर्मा समन्ता त्रिवृतं व्यापतुस्तयोर्जुष्टिं मातुरिश्वा जगाम ।
दिवस्पयो दिधिषाणा अवेषन्विदुर्देवाः सहसामानमर्कम् ॥ १ ॥

घर्मा । समऽअन्ता । त्रिऽवृतम् । वि । आपतुः । तयोः । जुष्टिम् । मातरिश्वा । जगाम ।
दिवः । पयः । दिधिषाणाः । अवेषन् । विदुः । देवाः । सहऽसामानम् । अर्कम् ॥ १ ॥

समन्ता समन्तौ संव्याप्तदिगन्तौ घर्मा । 'घृ क्षरणदीप्त्योः' । घर्मौ दीप्यमानावग्न्यादित्यौ त्रिवृतम् । 'त्रयो वा इमे त्रिवृतो लोकाः' ( ऐ. आ. १ १. २ ) इत्याम्नानात् । त्रैलोक्यं व्यापतुः । स्वतेजोभिर्व्याप्तवन्तौ । मातरिश्वा अन्तरिक्षे वर्तमानो वायुः तयोः अग्न्यादित्ययोः जुष्टिं प्रीतिं जगाम गतवान् । यदा सहसामानम् । सामशब्द उपलक्षकः । वेदत्रयतेजःसहितम् । 'सर्वं तेजः सामरूप्यं ह शश्वत्' ( तै. ब्रा. ३. १२. ९. २ ) इत्याम्नानात् । ईदृशम् अर्कम् अर्चनीयं सूर्यं देवाः दीप्यमानाः स्वरश्मयः विदुः विविदुः लेभिरे प्रापुः तदा दिधिषाणाः लोकधारणशीलास्ते दिवः द्युलोकस्य संबन्धि पयः उदकम् अवेषन् व्याप्तवन्तः । अवर्षुरित्यर्थः[2] ॥ दिवस्पय इत्यत्र 'षष्ठ्याः पतिपुत्र॰' इति सत्वम् । दिधिषाणाः । 'धिष[3] धारणे' । कानच् । शपः श्लुः । यद्वा । 'धि धारणे' । समन्तस्य चानश् । 'अभ्यासस्य समि' इति दीर्घाभावश्छान्दसः । यद्वा । समन्तौ संगतौ घर्मौ स्वयं दीप्यमानौ जीवेश्वरौ त्रिवृतं सत्त्वरजस्तमोगुणात्मिकां मायां व्यापतुः । नियन्तृनियन्तव्यभावेन मातरिश्वा परमात्मा तयोर्जुष्टिं संभोक्तव्यपदार्थैः संजातां प्रीतिं जगाम । गतवान्[4] । तं परमात्मानं वेदमयमिमं सूर्यमिति देवा जानन्ति ॥

तिस्रो देष्ट्राय निर्ऋतीरुपासते दीर्घश्रुतो वि हि जानन्ति वह्नयः ।
तासां नि चिक्युः कवयो निदानं परेषु या गुह्येषु व्रतेषु ॥ २ ॥

तिस्रः । देष्ट्राय । निःऽऋतीः । उप । आसते । दीर्घऽश्रुतः । वि । हि । जानन्ति । वह्नयः ।
तासाम् । नि । चिक्युः । कवयः । निऽदानम् । परेषु । याः । गुह्येषु । व्रतेषु ॥ २ ॥

निर्ऋतीः । पृथिवीनामैतत् । अनेनेतरलोकावुपलक्ष्येते । तत्राधिष्ठिताः तिस्रः अग्न्यादिदेवताः देष्ट्राय हविषां प्रदानाय उपासते । यजमाना उपासनं कुर्वते । ततः दीर्घश्रुतः प्रभूतकीर्तयः वह्नयः जगतः प्रापिकास्ता देवताः वि जानन्ति । एतैः कृतामुपासनां जानन्त एव । यद्वा ।

1. म-ता-अ-मु—'सु' नास्ति । 2. त१.२.३.६.७.८-अ—अवर्षुः त४.५—अवर्षुरित्यर्थः । 3. ग त२. ३.६.७.८-अ—धिषु । 4. म-त१.२.३.६.७.८-म१.२.४.५.८—गमितवान् ।

निर्ऋतीः । निःशेषेण ऋच्छन्ति गच्छन्तीति निर्ऋतयः । तास्तिस्रः सृष्टिस्थितिसंहृतीः देहत्रयात्मकाः कर्मभोगदानायोपासते ते दीर्घश्रुतो दीर्घे[1] संसारे श्रूयमाणा मन्तव्यत्वज्ञानादिपदार्थं जानन्तः । मन्त्र-रहस्यादिरूपमजानन्त इत्यर्थः । अत एव बहवः संसारस्य पारं तत्ता न जानन्ति । कवयः क्रान्त-दर्शिनस्तु तासां सृष्ट्यादीनामवस्थादीनां वा निदानं मूलकारणं परमात्मानं नि चिक्युः नितरां चिन्वन्ति जानन्ति । परेषु उत्कृष्टेषु वा गुह्येषु वा गोप्येषु कर्मसु यमनियमादिषु व्रतेषु[2] याः प्रवृत्तयः सन्ति तासां निदानं नि चिक्युः जानन्ति ॥ 'चिञ् चयने' । लिटि 'विभाषा चेः' इत्यभ्यासादुत्तरस्य कवर्गादेशः[3] । यद्वा । चायतेर्लिटि 'चायः की' ( पा. सू. ६. १. ३५ ) इति छन्दसि की इत्यादेशः ॥

चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते ।
तस्यां सुपर्णा वृषणा नि षेदतुर्यत्र देवा दधिरे भागधेयम् ॥ ३ ॥

चतुःऽकपर्दा । युवतिः । सुऽपेशाः । घृतऽप्रतीका । वयुनानि । वस्ते ।
तस्याम् । सुऽपर्णा । वृषणा । नि । सेदतुः । यत्र । देवाः । दधिरे । भागऽधेयम् ॥ ३ ॥

चतुष्कपर्दा चतुष्कोणा युवतिः स्त्रीरूपा सुपेशाः शोभनालंकारा घृतप्रतीका घृतप्रमुखहविष्का घृतवती वेदिः वयुनानि ज्ञातव्यानि पदार्थजातानि कर्माणि स्तोत्राणि वा वस्ते आच्छादयति । तस्यां वेद्यां वृषणा वृषणौ हविषां वर्षितारौ सुपर्णा सुपर्णौ सुपतनौ आग्नेयौ यजमानपत्न्यौ वा नि षेदतुः निषण्णौ भवतः । यत्र यस्यां वेद्यां देवाः अग्न्यादयः भागधेयम् । स्वार्थिको धेयप्रत्ययः । स्वस्वभागं हविः दधिरे धारयन्ति । यद्वा । चतुष्कपर्दा नामाख्यातोपसर्गनिपात-प्रकाराः कपर्दस्थानीया यस्याः सा युवतिस्तरुणी नित्या घृतप्रतीका दीप्यमानवर्णावयवोपनिषदी वाक् वयुनानि ज्ञानानि वस्ते आच्छादयति । तस्यां वाचि सुपर्णा सुपर्णौ जीवपरमात्मानौ निषण्णौ भवतः । यत्र । 'इतराभ्योऽपि दृश्यन्ते' इति तृतीयार्थे त्रल्प्रत्ययः । यया वाचा देवा भागं धारयन्ति ॥

एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे ।
तं पाकेन मनसापश्यमन्तितस्तं माता रेळ्हि स उ रेळ्हि मातरम् ॥ ४ ॥

एकः । सुऽपर्णः । सः । समुद्रम् । आ । विवेश । सः । इदम् । विश्वम् । भुवनम् । वि । चष्टे ।
तम् । पाकेन । मनसा । अपश्यम् । अन्तितः ।
तम् । माता । रेळ्हि । सः । ऊँ इति । रेळ्हि । मातरम् ॥ ४ ॥

एकः सर्वकार्येष्वसहायः सुपर्णः सुपतनो मध्यमस्थानो देवः समुद्रम् अन्तरिक्षम् आ विवेश आविशति । आविश्य च स इदं विश्वं सर्वं भुवनं भूतजातं वि चष्टे । अनुग्राहक-तयाभिपश्यति । तम् एवंरूपं देवं पाकेन परिपक्वेन मनसा अन्तितः समीपेऽहम् अपश्यम् अद्राक्षम् । किंच माता उदकानां निर्मात्री माध्यमिका वाक् तं रेळ्हि आस्वादयति । उपजीव्य-मात्रमत्र लक्ष्यते । स उ स खलु मातरं वाचं रेळ्हि लेढि । तामेवोपजीवति । 'लिह आस्वा-दने' । यद्वा । सुपर्णः पक्षवान् शरीराधारसंचार्येकः प्राणवायुः परमात्मा वा समुद्रम् । समुद्द्रवन्ति

१. त-म१.२.४.८—दीर्घे । २. ग-त-म—' व्रतेषु ' नास्ति । ३. त-म-मु—कवर्गादेशः । ४. त१.२.३.६.७.८-अ२.४.८—दधत ।

आपोऽस्मादियति समुद्रमन्तरिक्षम् । यद्वा । समुद्द्रवणं[1] सर्वतो[2] गमनम् । तच्छीलं प्राणवायुसमाविष्ट-वान् । 'तत्सृष्ट्वा तदेवानुप्राविशत्' ( तै. आ ८. ६ ) इति श्रुतेः । वायुपक्षे[2] बाह्यवायुरूपेण[3] आ विवेश । स इदं विश्वं सर्वं लोकं वि चष्टे विशेषेण व्यापयति । सति हि प्राणे परमात्मनि वा जीवन्तः पुरुषा लोकं विख्यातं कुर्वन्ति । तं देवमुपासकोऽहं[4] पाकेन परिपक्वज्ञानेन मनसा अन्तितः ॥ अन्तिकशब्दात्तसिः । अन्तिकस्य तसि कादिलोपो बहुलमाद्युदात्तत्वं च ( पा. सू. ६. ४. १७९. ८ ) इति कादिलोपः ॥ अन्तिके समीपे स्वहृदयेऽपश्यम् । तं प्राणं माता वाक् रेळ्हि[5] । वाक् प्राणेऽन्तर्भवतीत्यर्थः । स्वापे हि वाग्व्यापारो न दृश्यते प्राणव्यापारस्तु दृश्यत इति ॥

सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति ।
छन्दांसि च दधतो अध्वरेषु ग्रहान्त्सोमस्य मिमते द्वादश ॥ ५ ॥

सुऽपर्णम् । विप्राः । कवयः । वचःऽभिः । एकम् । सन्तम् । बहुधा । कल्पयन्ति ।
छन्दांसि । च । दधतः । अध्वरेषु । ग्रहान् । सोमस्य । मिमते । द्वादश ॥ ५ ॥

विप्राः मेधाविनः कवयः क्रान्तप्रज्ञा मनुष्याः सुपर्णं सुपतनम् एकं सन्तं परमात्मानं वचोभिः स्तुतिलक्षणैर्वचनैः बहुधा बहुप्रकारं कल्पयन्ति कुर्वन्ति । किंच त एव कवयः अध्वरेषु यज्ञेषु छन्दांसि गायत्र्यादीनि सप्त छन्दांसि दधतः स्तोत्रशस्त्रादिना धारयन्तो द्वादश-संख्याकान्[6] सोमस्य ग्रहान् ग्रहणसाधनानि पात्राण्युपांश्वन्तर्यामादीनि मिमते निर्मिमते ॥ ग्रहान् । गृह्यन्त एभिरिति ग्रहाः । 'ग्रहवृदृनिश्चिगमश्च' इति करणेऽप्प्रत्ययः । सोमस्येति कर्मणि षष्ठी । द्वादशेत्यत्र 'संख्या' ( पा. सू. ६. २. ३५ ) इति पूर्वपदप्रकृतिस्वरत्वम् ॥      ॥ १६ ॥

षट्त्रिंशांश्च चतुरः कल्पयन्तश्छन्दांसि च दधत आद्वादशम् ।
यज्ञं विमाय कवयो मनीष ऋक्सामाभ्यां प्र रथं वर्तयन्ति ॥ ६ ॥

षट्ऽत्रिंशान् । च । चतुरः । कल्पयन्तः । छन्दांसि । च । दधतः । आऽद्वादशम् ।
यज्ञम् । विऽमाय । कवयः । मनीषा । ऋक्ऽसामाभ्याम् । प्र । रथम् । वर्तयन्ति ॥ ६ ॥

पूर्वं सामान्येन यज्ञग्रहानुक्त्वेदानीं सर्वग्रहादिपूर्वको यज्ञोऽभिधीयते । षट्त्रिंशान् । द्वावुपांश्व-न्तर्यामौ[7] । ऐन्द्रवायवमैत्रावरुणौ द्विदेवत्यग्रहाः । द्वौ शुक्रामन्थिनौ । आग्रयण उक्थ्यो ध्रुव इति त्रयः । ऋतुग्रहा द्वादश । ऐन्द्राग्नो वैश्वदेवश्च द्वौ । त्रयो मरुत्वतीयाः । एको माहेन्द्रः । आदित्य-सावित्रौ द्वौ । वैश्वदेवः पात्नीवतो हारियोजन इति त्रयो[8] ग्रहाः । एवं षट्त्रिंशद्भवन्ति । ज्योतिष्टोमे पूर्वं षट्त्रिंशद्ग्रहाः द्वादशाहाभ्यां दधिग्रहः षोडशीति चेति चत्वारः । एतांश्चत्वारिंशत्संख्याकान् ग्रहान् कल्पयन्तः सोमेन पूरयन्तः । किंच आद्वादशम् ॥ 'आङ् मर्यादाभिविध्योः' ( पा. सू. २. १. १३ ) इत्यव्ययीभावसमासः । तस्य स्वरः ॥ द्वादशसंख्याकमद्रगादिसत्रसमाप्तिपर्यन्तं

1. ग–समुंद्रनं; त१.२.३.६.७.८–समंदनं, त४.५–समुंदवे; म२.४.८–मुमंदनं, म७–समुद्रनं ।
२. त१.२.३.६.७.८-म–'सर्वतो ...... वायुपक्षे' नास्ति । ३. ग–बाह्यवायुरूपेण; त१.२.३.६.७.८-म–वायुरूपेण । ४. त१.२.३.६.७.८-म२.४.८–सदेवमु° । ५. त४.५–रेळ्हि । अध्ययनकाले वाग्व्यापारो दृष्टः । सह प्राणो हि मातरं वाचं रेळ्हि । ६. ग–द्वादश द्वादशसंख्याकान् । ७. त४–षट्-त्रिंशत्संख्याकान् तांश्चतुरश्च ग्रहान् । एते तैत्तिरीयारण्यके ज्योतिष्टोमे समाम्नायते प्राणापाना-भ्यामेवोपांश्वन्तर्यामौ । ८. त-म–'त्रयो' नास्ति ।

छन्दांसि गायत्र्यादीनि दधतः स्तुतवाक्यादिरूपेण धारयन्तः कवयो मनीषा । तृतीयाया आकारः । मनीषया बुद्ध्या एवं यज्ञं विमाय निर्माय रथम् । रमन्त्यत्रेति[1] रथो यज्ञः । तं रथं यज्ञम् ऋक्सामाभ्यां प्र वर्तयन्ति प्रकर्षेण संपादयन्ति ॥ चतुर इत्यत्र 'चतुरः शसि' ( पा. सू. ६. १. १६७ ) इत्यन्तोदात्तत्वम् ॥

चतु॑र्दशान्ये म॑हि॒मानो॑ अस्य॒ तं धीरा॑ वा॒चा प्र ण॑यन्ति स॒प्त ।
आप्ता॑नं ती॒र्थं क इ॒ह प्र वो॑च॒द्येन॑ प॒था प्र॒पिब॑न्ते सु॒तस्य॑ ॥ ७ ॥

चतुः॑ऽदश । अ॒न्ये । म॒हि॒मानः॑ । अ॒स्य॒ । तम् । धीराः॑ । वा॒चा । प्र । न॒य॒न्ति॒ । स॒प्त ।
आप्ता॑नम् । ती॒र्थम् । कः । इ॒ह । प्र । वो॒च॒त् । येन॑ । प॒था । प्र॒ऽपिब॑न्ते । सु॒तस्य॑ ॥ ७ ॥

अस्य यज्ञरूपस्य परमात्मनः अन्ये चतुर्दश[2] चतुर्दशसंख्याकाः[2] महिमानः विभूतयो भवन्ति । तं यज्ञं सप्त[3] सप्तसंख्याकाः धीराः धीमन्तो होत्रादयः वाचा मन्त्ररूपया प्र णयन्ति प्रकर्षेण नयन्ति । आप्तानम् ॥ 'आप्लृ व्याप्तौ' । तान्छीलिके चानशि व्यत्ययेन विकरणस्य व्यत्ययः[4] ॥ व्यापनशीलं तीर्थं पापोत्तारणसमर्थं ज्ञानात्मकमव्ययम् इह अस्मिन् यज्ञे कः प्र वोचत् को वक्ति । न कोऽपीत्यर्थः । येन पथा येन यज्ञमार्गेण सुतस्य अभिषुतं सोमं प्रपिबन्ते देवा अतिशयेन पिबन्ति ॥ 'पा पाने' । 'पाघ्रा०' इत्यादिना पिबादेशः । व्यत्ययेन आत्मनेपदम् । उपसर्गेण समासः । यद्योगादनिघाते 'तिङि चोदात्तवति' इति गतेर्निघातः ॥

स॒ह॒स्र॒धा प॑ञ्चद॒शान्यु॒क्था याव॒द्द्यावा॑पृथि॒वी ताव॒दित्तत् ।
स॒ह॒स्र॒धा म॑हि॒मानः॑ स॒हस्रं॒ याव॒द्ब्रह्म॒ विष्ठि॑तं॒ ताव॑ती॒ वाक् ॥ ८ ॥

स॒ह॒स्र॒ऽधा । प॒ञ्च॒ऽद॒शानि॑ । उ॒क्था । याव॑त् । द्यावा॑पृथि॒वी इति॑ । ताव॑त् । इत् । तत् ।
स॒ह॒स्र॒ऽधा । म॒हि॒मानः॑ । स॒हस्र॑म् । याव॑त् । ब्रह्म॑ । विऽस्थि॑तम् । ताव॑ती । वाक् ॥ ८ ॥

सहस्रधा सहस्रसंख्याकेषु ब्रह्मादिस्तम्बपर्यन्तेषु देहेषु पञ्चदशानि । चक्षुः श्रोत्रं मनो वाक् प्राण इत्येतानि पञ्च । तद्धातुत्वेन मातापित्रोः सकाशादागतानि पृथिव्यप्तेजोवाय्वाकाशरूपाणि भूतानि मिलितानि दश । एवं पञ्चदशसंख्याकानि उक्था उक्थान्युत्कृष्टान्यङ्गानि विद्यन्ते प्राणिदेहेषु[5] जातेषु । द्यावापृथिवी ॥ षष्ठीद्विवचनस्य 'सुपां सुलुक्' इति पूर्वसवर्णदीर्घः ॥ द्यावापृथिव्योः यावत् यत्परिमाणमस्ति तावदित् तत्परिमाणमेवास्माधिष्ठितं प्राणिदेहजातं भवति । यावत्तावच्छब्दयोः[6] 'यत्तदेतेभ्यः परिमाणे वतुप्' ( पा. सू. ५. २. ३९ ) 'आ सर्वनाम्नः' ( पा. सू. ६. ३. ९१ ) इति दीर्घः ॥ किंच सहस्रधा सहस्रसंख्याकेषु सहस्रं महिमानः सहस्रसंख्याका महान्तो व्यवहारविशेषा भवन्ति । प्रतिविषयं प्रतिक्षणं दर्शनश्रवणादिव्यवहारनिष्पत्तेः[7] । सहस्रधेत्यत्र विधार्थे धाप्रत्ययः । ब्रह्म जगत्कारणं वस्तु यावत् नानाविधप्राणिदेहरूपेण यावत्परिमाणं भूत्वा विष्ठितं विशेषेण स्थितं वाक् तावती तत्परिमाणा भवति । प्रत्येकमस्याभिधेयार्थसंपर्कैकनामापेक्षत्वात् ।

१. ग२—रमतेऽत्रेति । २. ग-त-भ—चतुर्दशलोकाः, मु—चतुर्दशसंख्याका लोकाः । ३. ग-त-भ-मु—'सप्त' नास्ति । ४. ग—धा; त१.२.३.६.७.८ भ—च; त४.५—क्षा । ५. ग२-त४.५—इत्थं प्राणिदेहेषु; त१.२.३.६.७-भ—उक्थप्राणिदेहेषु । ६. ग-त४.५—यत्तच्छब्दयोः । ७. त-भ१.४.८—°व्यवहारव्यनिष्पत्तेः; भ२—°व्यवहारत्वनिष्पत्तेः ।

अन्यत्रापि श्रूयते—'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते' (तै. आ. ३. १२. ७) इति । 'सहस्रधा पञ्चदशान्युक्थेति यत्र हि दृश्यतो भवन्ति' (ऐ. आ. १. ३. ८) इत्यादिकमारण्यकमत्रानुसंधेयम् ॥

कश्छन्दसां योगमा वेद धीरः को धिष्ण्यां प्रति वाचं पपाद ।
कमृत्विजामष्टमं शूरमाहुर्हरी इन्द्रस्य नि चिकाय कः स्वित् ॥ ९ ॥

कः । छन्दसाम् । योगम् । आ । वेद । धीरः । कः । धिष्ण्याम् । प्रति । वाचम् । पपाद ।
कम् । ऋत्विजाम् । अष्टमम् । शूरम् । आहुः । हरी इति । इन्द्रस्य । नि । चिकाय । कः । स्वित् ॥ ९ ॥

धीरः धीमान् कः मानुषः छन्दसां गायत्र्यादीनां योगं स्तुतशस्त्रात्मना नियोगम् आ वेद आजानाति । कः वा धिष्ण्याम् । धिष्ण्यानि होत्रादीनां सद स्थानानि[1] । तदर्हां वाचं प्रति पपाद प्रतिपादयति । करोति । किंच ऋत्विजां होत्रादीनां सप्तानाम् अष्टमम् अष्टसंख्यापूरकं शूरं स्वतन्त्रं कम् आहुः वदन्ति । कः स्वित् कः खलु इन्द्रस्य हरी ऋक्सामरूपौ द्वावश्वौ । 'ऋक्सामे वा इन्द्रस्य हरी' (तै. सं. ६.५.९.२) इत्याम्नायते । तादृशौ हरी नि चिकाय नितरां पूजयति । जानाति । वेदिता प्रतिपादयिताष्टसंख्यापूरकस्य देवस्य ज्ञाता वा परमात्मनोऽन्यो नास्तीत्यर्थः ॥

भूम्या अन्तं पर्येके चरन्ति रथस्य धूर्षु युक्तासो अस्थुः ।
श्रमस्य दायं वि भजन्त्येभ्यो यदा यमो भवति हर्म्ये हितः ॥ १० ॥

भूम्याः । अन्तम् । परि । एके । चरन्ति । रथस्य । धूःऽसु । युक्तासः । अस्थुः ।
श्रमस्य । दायम् । वि । भजन्ति । एभ्यः । यदा । यमः । भवति । हर्म्ये । हितः ॥ १० ॥

एके केचन सप्ताश्वाः भूम्याः पृथिव्याः । अनेन द्युलोकोऽप्युपलक्ष्यते । द्युलोकस्य च अन्तं पर्यन्तं परि चरन्ति । तदानीं सर्वत आगच्छन्ति । तदा च तेऽश्वाः रथस्य धूर्षु युगादिभागेषु युक्तासः युक्ताः सन्तः अस्थुः तिष्ठन्ति । एभ्यः अश्वेभ्यः श्रमस्य दायम् ॥ 'दो अवखण्डने' । घञ् । 'कर्षात्वतः' इत्यन्तोदात्तत्वम् ॥ श्रमस्य नाशकं घासादिकं वि भजन्ति देवाः प्रयच्छन्ति । यदा यस्मिन् काले यमः नियन्ता सूर्यः हर्म्ये हर्म्यस्थानीये रथे हितः निहितः भवति । तदैते भजन्तीत्यर्थः[2] ॥ ॥ १० ॥

'चित्रः' इति नवर्चं तृतीयं सूक्तमाग्नेयम् । उपस्तुतो नाम वृष्टिहव्यपुत्र ऋषिः । अष्टमी त्रिष्टुप् । नवमी शक्वरी । आदितः सप्त जगत्यः । तथा चानुक्रान्तं—'चित्र नव वार्षिहव्य उपस्तुत आग्नेयं जागतं त्रिष्टुप्शक्वर्यन्तम्' इति । प्रातरनुवाकाश्विनशस्त्रयोर्जागते छन्दसीदं सूक्तम् । सूत्रितं च—'चित्र इच्छिशोर्वसुं न चित्रमहसमिति जागतम्' (आश्व. श्रौ. ४. १३) इति ॥

चित्र इच्छिशोस्तरुणस्य वक्षथो न यो मातरावप्येति धातवे ।
अनूधा यदि जीजनदधा च नु ववक्ष सद्यो महि दूत्यं चरन् ॥ १ ॥

---

१. म–स्थानानि मार्जालीयश्च; त१.२.३.६.७.८–म१.२.४.८–स्थानानि मार्जेय; त४.५–स्थानानि मार्जारश्च; म७–स्थानानि मार्जयत । २. म-स-म—मर्यादीत्यर्थः ।

चित्रः । इत् । शिशोः । तरुणस्य । वक्षथः । न । यः । मातरौ । अपिऽएति । धातवे । अनूधाः । यदि । जीजनत् । अध । च । नु । ववक्ष । सद्यः । महि । दूत्यम् । चरन् ॥ १ ॥

शिशोः शिशुभूतस्य अत एव तरुणस्य नूतनस्याग्नेः वक्षथः । वहेरौणादिकोऽथप्रत्ययः[1] । हविर्वहनं चित्र इत् आश्चर्यभूतमेव । यः अग्निः मातरौ सर्वस्य निर्मात्र्यौ मातृपितृभूते द्यावापृथिव्यावरण्यौ वा धातवे न अप्येति । 'धेट् पाने'। तुमर्थे तवेन्प्रत्ययः । स्तनपानायापि न गच्छति । 'इण् गतौ'। अप्युपसर्गेण समासः । 'तिङि चोदात्तवति' इति गतेर्निघातः । अनूधाः । बहुव्रीहिः । समासान्तस्यानङो विधायकस्य स्त्रियामेवाभावात् (पा. सू. ५.४.१३१) । प्रत्येकविवक्षयैकवचनम् । ऊधोरहितोऽयं लोकोऽसौ लोकश्चेममग्निं यदि अजीजनत् अजीजनत् अजनयत् । तर्हि स्तनपानाय न गच्छतीति युक्तम् । तथा न भवति । किंतु द्यावापृथिव्यौ[2] सर्वेषां कामदुघे खलु । तथापि न याति । तस्मादस्य हविर्वहनं चित्रम्[3] । अध च उत्पत्त्यनन्तरमेव नु अद्य अस्मिन् दिने सद्यः तदानीमेव शीघ्रं महि महत् दूत्यम् । 'दूतस्य भागकर्मणी' (पा. सू. ४. ४. १२०) इति कर्मणि यत्प्रत्ययः । दूतकर्म चरन्[4] ववक्ष । देवान् प्रति हवींषि वहति ॥

अग्निर्ह नाम धायि दन्नपस्तमः सं यो वना युवते भस्मना दता ।
अभिप्रमुरा जुह्वा स्वध्वर इनो न प्रोथमानो यवसे वृषा ॥ २ ॥

अग्निः । ह । नाम । धायि । दन् । अपःऽतमः । सम् । यः । वना । युवते । भस्मना । दता । अभिऽप्रमुरा । जुह्वा । सुऽअध्वरः । इनः । न । प्रोथमानः । यवसे । वृषा ॥ २ ॥

अपस्तमः । अपःशब्दस्यान्तोदात्तत्वेन आद्युदात्तो भवति इति ज्ञायते । अन्यथा 'आपः कर्माख्यायाम्' इत्यसुनि कृते आद्युदात्तत्वमेव स्यात् । अपस्वितमः कर्मवत्तमः अग्निः नाम । तृतीयाया लुक् । नाम्ना नमयित्र्या हविषा स्तोत्रेण वा धायि यजमानैर्धार्यते खलु । यतः दन् यष्टॄणां फलदाता । 'डुदाञ् दाने'। हेतौ[5] 'छन्दस्युभयथा' इति शतुरार्धधातुकत्वेन आकारलोपः । अत एव शपोऽसंभवः । यः अग्निः भस्मना भासकेन प्रकाशकेन तेजसा दता दन्तेन च वना[6] वनान्यरण्यानि सं युवते संयुनक्ति । संदहतीति यावत् । 'यु मिश्रणामिश्रणयोः'। व्यत्ययेन शः । आत्मनेपदं च । दता । दन्तशब्दस्य 'पद्दन्' इत्यादिना दद्भावः । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । किंच अभिप्रमुरा । 'मुर्छा मोहसमुच्छ्राययोः'। अस्मात् क्विपि 'राल्लोपः' इति छकारलोपः । 'मुर संवेष्टने' इत्यस्माद्वा क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । अभितः समुच्छ्रितेनोद्यतेन यद्वा सर्वतो हविर्भिः संवेष्टितेन जुह्वा घृतधारकेण पात्रविशेषेण स्वध्वरः शोभनयज्ञोऽग्निः अदनीये[7] हविषि चरतीति शेषः । तत्र दृष्टान्तः । इनः ईश्वरः प्रोथमानः पर्याप्तः पुष्टाङ्गः वृषा यवसे न यथा वृषभो घासादिषु चरति ॥

तं वो विं न द्रुषदं देवमन्धस इन्दुं प्रोथन्तं प्रवपन्तमर्णवम् ।
आसा वह्निं न शोचिषा विरप्शिनं महिव्रतं न सरजन्तमध्वनः ॥ ३ ॥

१. ग–त१.२.३.६.७.८–म–यु–वहेरौणादिको° । २. ग–द्यावापृथिव्यौ हि; त१.२.३.६.७.८–म१.४.७–द्यावापृथिव्यौ तु; म२.८–द्यावापृथिव्यौ नु । ३. त-म–'चित्रं' नास्ति । ४. ग–चरन् आचरन् । ५. ग–हेतौ शतरि । ६. त-म–'वना' नास्ति । ७. ग–त१.२.३.७.८–म१.२.४.७–खादनीये; त६–म८–स्वादनीये ।

कण्वतमः ॥ कणतेः शब्दार्थात् 'अशिप्रुषि°' इत्यादिना क्वन्प्रत्ययः ॥ अतिशयेन स्तोता अत एव कण्वसखा ॥ बहुव्रीहित्वात् समासान्तोदात्ताभावः[1] ॥ कण्वाः स्तोतारः सखायो यस्य स तादृशः अर्यः ॥ 'स्वामिन्यन्तोदात्तत्वं वक्तव्यम्' ( पा. सू. ३.१.१०३. १ ) इत्यन्तोदात्तत्वम् ॥ स्वामी सर्वस्येश्वरः स इत् स एव अग्निः परस्य विप्रकृष्टस्य बाह्यस्य अन्तरस्य अव्यवहितस्य समीपे वर्तमानस्य च शत्रोः तरुषः तारयिता विनाशयिता भवति । सः अग्निः गृणतः स्तोतॄन् अस्मान् पातु रक्षतु ॥ 'गॄ शब्दे' । क्र्यादिकः । 'शतुरनुमो नद्यजादी' इति विभक्तेरुदात्तत्वम् ॥ तथा सूरीन् । 'षू प्रेरणे' । हविषां प्रेरयितॄनस्मान् रक्षतु । किंच तेषाम् एषां नः अस्माकम् भद्रः रक्षणमन्नं वा अग्निर्ददातु प्रयच्छतु[2] ॥ ॥ १८ ॥

वाजिन्तमाय सह्यसे सुपित्र्य तृषु च्यवानो अनु जातवेदसे ।
अनुद्रे चिद्यो धृषता वरं सते महिन्तमाय धन्वनेदविष्यते ॥ ६ ॥

वाजिन्ऽतमाय । सह्यसे । सुऽपित्र्य । तृषु । च्यवानः । अनु । जातऽवेदसे ।
अनुद्रे । चित् । यः । धृषता । वरम् । सते । महिन्ऽतमाय । धन्वना । इत् । अविष्यते ॥ ६ ॥

हे सुपित्र्य । पितुरागतः पित्र्यः ॥ 'पितुर्यच्च' ( पा. सू. ४. ३. ७९ ) इति यत्प्रत्ययः ॥ शोभनपित्र्य हे अग्ने वाजिन्तमाय अतिशयेनान्नवते अत्यर्थं[3] बलवते वा ॥ 'नाद्घस्य' इति नुडागमः ॥ सह्यसे सहीयसे शत्रूणामतिशयेनाभिभवित्रे जातवेदसे जातप्रज्ञाय तुभ्यं[4] त्वां[4] स्तोतुं तृषु क्षिप्रम् अनु च्यवानः स्तुतिभिरनुगत उद्युक्तोऽस्मि ॥ 'क्रियार्थोपपदस्य च कर्मणि' इति जातवेदःशब्दस्य चतुर्थी । सह्यसे । सहस्विन्शब्दादीयसुनि 'विन्मतोर्लुक्' इतीयसुन ईकारलोपः छान्दसः[5] ॥ अनुद्रे चित् उदकवर्जिते स्थले । आपदीत्यर्थः । शत्रुभिः सेवासातासापदि धृषता शत्रुधर्षणसमर्थेन धन्वना इत् आत्मीयेन धनुषैव अविष्यते पालकाय सते भूयमे ॥ 'शतुरनुमः°' इति विभक्तेरुदात्तत्वम् ॥ महिन्तमाय पूज्यतमाय दातृतमाय वा ईदृशायाग्नये यः अहं वरं वरणीयं हविः प्रयच्छामि सोऽहं स्तुतिमपि तस्मै करोमीत्यर्थः ॥

एवाग्निर्मर्तैः सह सूरिभिर्वसुः ष्टवे सहसः सूनरो नृभिः ।
मित्रासो न ये सुधिता ऋतायवो द्यावो न द्युम्नैरभि सन्ति मानुषान् ॥ ७ ॥

एव । अग्निः । मर्तैः । सह । सूरिऽभिः । वसुः । स्तवे । सहसः । सूनरः । नृऽभिः ।
मित्रासः । न । ये । सुऽधिताः । ऋतऽयवः । द्यावः । न । द्युम्नैः । अभि । सन्ति । मानुषान् ॥ ७ ॥

सहसः बलस्य सूनरः सुष्ठु प्रेरकः । यद्वा । सूनुरित्यस्य वर्णव्यत्ययः । सूनरः सूनुः । बलेन मथ्यमानत्वात्तस्य पुत्रः । अग्निः नृभिः कर्मनेतृभिः मर्तैः मनुष्यैः सह सूरिभिः विद्वद्भिः[6] अस्माभिः वसु धनमभिलक्ष्य एव एवं स्तवे स्तूयते । वसु इवे इत्यत्र संहितायां 'पूर्वपदात्°' इति षत्वम् ॥ मित्रासो न सुहृद इव सुधिताः सुहितास्तृप्ताः ॥ दधातेर्निष्ठायां 'सुधित-

1. त१.२.६.७—समासांतस्य टचो चोपसंभवं; त३.८-म२.५.८—समासांतस्य टचो संभवं; ग—समासांतस्य यो संभवः; म१.४—समासांतस्य यो संभवं, म७—समासांतस्य । २. त१.१.२.६.७. ८-म—रक्षतु । ३. ग-त-म—अत्यर्थं । ४. त-म—त्वां तुभ्यं । ५. ग-त४.५—छांदसः । अनुद्रे चिदनुदक-स्थलेपि धृषता धृषेन धन्वनेत् । धन्व इत्युदकनाम । उदकेनैव अविष्यते स्तोतॄणां रक्षकाय । यद्वा । ६. त-म२. ८—' विद्वद्भिः ' नास्ति ।

वसुधित०' ( पा. सू. ७. ४. ७५ ) इति निपातिताः। 'सुधितावसुधितनेमधितधिष्व' इति काशिकापाठः॥ अस्मदीयाः ... 'न ब्रह्मसुतस्य' इति दीर्घत्वयोः प्रतिषेधः॥ ईदृशाः ये सूरयः यातो न द्योतमाना[1] इव[2] वृत्रैः। 'युतं द्योततेर्यतो वार्ध वा' ( निरु. ५. ५ ) इति यास्कः। अभिभवन्तीर्बलैरस्मदीयैर्वशोभितानि भानुवान् बाहुबलात् जनान्[2] अभि सन्ति अभिभवन्ति॥ यद्वृत्तयोगादनिघातः॥

**ऊर्जो नपात्सहसावन्निति त्वोपस्तुतस्य वन्दते वृषा वाक्।**
**त्वां स्तोषाम त्वया सुवीरा द्राघीय आयुः प्रतरं दधानाः॥ ८॥**

ऊर्जः। नपात्। सहसाऽवन्। इति। त्वा। उपऽस्तुतस्य। वन्दते। वृषा। वाक्।
त्वाम्। स्तोषाम। त्वया। सुऽवीराः। द्राघीयः। आयुः। प्रऽतरम्। दधानाः॥ ८॥

ऊर्जो नपात्। नपादित्यपत्यनाम। अन्नस्य पुत्र। 'अन्नं वा आज्यम्' इति अन्नत्वेन प्रबुध्यमानत्वात्। बलस्य वा पुत्र॥ 'सुबामन्त्रिते पराङ्गवत्स्वरे' इत्यूर्जं इत्यस्य पराङ्गवद्भावेन आमन्त्रितत्वे 'आमन्त्रितस्य च' इति षाष्ठिकमाद्युदात्तत्वम्॥ हे सहसावन् सहस्विन्नग्ने त्वा त्वाम् इति एवम् उपस्तुतस्य एतन्नामकस्यर्षेर्यस्य वृषा हविषा वर्षयित्री तैः सहिता वाक् स्तुति वन्दते स्तौति॥ वृषा। 'इगुपधज्ञा०' इति कः। अजादित्वाट्टाप्॥ किंच वयं त्वां स्तोषाम स्तवाम। स्तौतेर्लेट्याडागमः। ततः त्वया सुवीराः शोभनपुत्राः स्याम। द्राघीयः दीर्घतमम् आयुः जीवनं प्रतरम् अत्यर्थं दधानाः धारयन्तो भवेम॥

**इति त्वाग्ने वृष्टिहव्यस्य पुत्रा उपस्तुतास ऋषयोऽवोचन्।**
**तांश्च पाहि गृणतश्च सूरीन्वषड्वषळित्यूर्ध्वासो**
**अनक्षन्नमो नम इत्यूर्ध्वासो अनक्षन्॥ ९॥**

इति। त्वा। अग्ने। वृष्टिऽहव्यस्य। पुत्राः। उपऽस्तुतासः। ऋषयः। अवोचन्।
तान्। च। पाहि। गृणतः। च। सूरीन्। वषट्। वषट्। इति। ऊर्ध्वासः। अनक्षन्।
नमः। नमः। इति। ऊर्ध्वासः। अनक्षन्॥ ९॥

हे अग्ने त्वा त्वाम् इति एवमुक्तप्रकारेण वृष्टिहव्यस्य एतन्नामकस्यर्षेः पुत्राः उपस्तुतासः उपस्तुता एतदभिधानाः ऋषयः सूक्तद्रष्टारः अवोचन् अस्तुवन्। तान् ऋषीन् च त्वं पाहि रक्ष॥ 'चवायोगे प्रथमा' इति न निघातः॥ तथा गृणतः स्तोतॄन् सूरीन् विदुषः च पाहि। वषट् वषडिति मन्त्रेण ऊर्ध्वासः हविष्प्रदानार्थमूर्ध्वमुखहस्ताः सन्तः अनक्षन् व्याप्नुवन्[3]। नक्षतिर्व्याप्तिकर्मा। नमो नम इति एवम् ऊर्ध्वासः स्तोतुमुद्युक्ताः अनक्षन्। य उभययुक्ताः तानुभयविधान् यष्टॄन् स्तोतॄन् पालय॥    ॥ १९॥

'पिब' इति नवर्चं चतुर्थं सूक्तं त्रैष्टुभमैन्द्रम्। स्थूरस्यापत्यं स्थौरोऽग्नियुताख्य ऋषिरग्नियूपाख्यो वा। तथा चानुक्रम्यते—'पिब स्थौरोऽग्नियुतोऽग्नियूपो वा' इति। गतो विनियोगः॥

१. ग—द्योतमाना देवाः; त१.२.३.६.७.८-म—'द्योतमानाः' नास्ति, त४.५—द्योतमाना वा।
२. त१.२.३.६.७.८-म—'इव...जनान्' नास्ति। ३. ग-म—स्वां व्याप्नुवन्।

पिबा सोमं महत इन्द्रियाय पिबा वृत्राय हन्तवे शविष्ठ ।
पिब राये शवसे हूयमानः पिब मध्वस्तृपदिन्द्रा वृषस्व ॥ १ ॥

पिब । सोमम् । महते । इन्द्रियाय । पिब । वृत्राय । हन्तवे । शविष्ठ ।
पिब । राये । शवसे । हूयमानः । पिब । मध्वः । तृपत् । इन्द्र । आ । वृषस्व ॥ १ ॥

हे इन्द्र त्वं महते प्रभूताय इन्द्रियाय इन्द्रस्यात्मनो लिङ्गाय वीर्याय सोमम् अस्माभिर्दीयमानं[1] पिब ॥ 'इन्द्रियमिन्द्रलिङ्ग°' (पा. सू. ५. २. ९३) इत्यादिनेन्द्रियशब्दो घजन्तत्वेन निपातितः ॥ हे शविष्ठ अतिशयेन प्रवृद्ध वृत्राय हन्तवे वृत्रं हन्तुं सोमं पिब ॥ 'क्रियाग्रहणं कर्तव्यम्' इति वृत्रस्य संप्रदानत्वम् ॥ तथा हूयमानः अस्माभिराहूयमानस्त्वं राये धनाय ॥ 'ऊडिदम्°' इत्यादिना विभक्तेरुदात्तत्वम् ॥ शवसे बलाय[2] । धनाबलयोः प्रदानाय सोमं पिब । मध्वः मदकरान् सर्वान् सोमान् पिब ॥ 'वा छन्दसि' इति पूर्वसवर्णदीर्घाभावः । अनन्तरं हे इन्द्र तृपत् तृप्तो भवन् आ वृषस्व । अस्मदभिलषितान्यासिञ्च[3] । वर्षस्व ॥ तृपत् । 'तृम्प तृप्तौ' । तौदादिकः । 'अनित्यमागमशासनम्' इति नुमभावः ॥

अस्य पिब क्षुमतः प्रस्थितस्येन्द्र सोमस्य वरमा सुतस्य ।
स्वस्तिदा मनसा मादयस्वार्वाचीनो रेवते सौभगाय ॥ २ ॥

अस्य । पिब । क्षुऽमतः । प्रऽस्थितस्य । इन्द्र । सोमस्य । वरम् । आ । सुतस्य ।
स्वस्तिऽदाः । मनसा । मादयस्व । अर्वाचीनः । रेवते । सौभगाय ॥ २ ॥

हे इन्द्र क्षुमतः स्तुतियुक्तस्य यद्वा हवीरूपान्नवतः प्रस्थितस्य हविर्धानादुत्तरवेदिं प्रति प्रस्थापितस्य सुतस्य अभिषुतस्य अस्य सोमस्य वरं वरणीयं त्वदीयं भागम् आ आभिमुख्येन पिब ॥ प्रस्थितस्य । तिष्ठतेः कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ॥ ततः स्वस्तिदाः कल्याणस्य दाता त्वं मनसा अन्तःकरणेन मादयस्व हृष्टो भव । यद्वा । अस्मानपि हृष्टान् कुरु । तदेवोच्यते । रेवते धनवते सौभगाय[4] सौभाग्याय तदस्मभ्यं दातुम् अर्वाचीनः अभिमुखागमनो भव ॥ 'विभाषाञ्चेरदिक्स्त्रियाम्' इति खः । रयिशब्दात् मतुपः 'छन्दसीरः' इति वत्वम् । 'रयेर्मतौ बहुलम्' इति संप्रसारणम् । पूर्वरूपत्वे गुणः । सौभगाय । उद्गात्रादिषु सुभगमन्त्र इति पठ्यते । तस्योत्तरपदस्य 'हृद्भग°' इति वृद्धिर्नेष्यते सर्वविधीनां छन्दसि विकल्पितत्वात् । ञित्स्वरेणाद्युदात्तत्वम् ॥

ममत्तु त्वा दिव्यः सोम इन्द्र ममत्तु यः सूयते पार्थिवेषु ।
ममत्तु येन वरिवश्चकर्थ ममत्तु येन निरिणासि शत्रून् ॥ ३ ॥

ममत्तु । त्वा । दिव्यः । सोमः । इन्द्र । ममत्तु । यः । सूयते । पार्थिवेषु ।
ममत्तु । येन । वरिवः । चकर्थ । ममत्तु । येन । निःऽरिणासि । शत्रून् ॥ ३ ॥

१. त-म—अस्माभिर्दीयमानं । २. ग—अबलायास्मभ्यं । ३. त१.२.३.६.७.८-म२.८—अस्मदभिलषितानासिञ्च, त४.५—अस्मदभिमतानासिञ्च, म१.४.७—अस्मदभिलक्षितानासिञ्च । ४. त-म—'सौभगाय' नास्ति ।

हे इन्द्र त्वा त्वां दिव्यः दिवि भवः सोमः ममत्तु। आत्मीयफलप्रदानेन मादयतु। देवा अपरपक्षे सोमस्य कलां पिबन्ति॥ मदेर्लोटि व्यत्ययेन श्नुः। 'भीह्री०' (पा. सू. ६. १. १९२) इत्यादिना पितः पूर्वस्योदात्तत्वम्॥ तथा पार्थिवेषु पृथिव्यां भवेषु देवयजनेषु यः सोमोऽस्माभिः सूयते अभिषूयते सोऽप्यस्माभिर्दत्तः ममत्तु त्वां हर्षयतु। येन सोमेन वरिवः वरणीयं धनं चकर्थ कृतवानसि स च ममत्तु॥ करोतेर्लिट्। यद्योगादनिघाते लित्स्वरः॥ किंच येन शत्रून् परिरिणासि निर्गमयसि[1] सोऽपि ममत्तु त्वां मादयतु॥ रिणासि। 'री गतिरेषणयोः'। क्र्यादिः। प्वादीनां ह्रस्वत्वम्॥

आ द्विबर्हा अमिनो यात्विन्द्रो वृषा हरिभ्यां परिषिक्तमन्धः।
गव्या सुतस्य प्रभृतस्य मध्वः सत्रा खेदामरुशहा वृषस्व॥ ४॥

आ। द्विऽबर्हाः। अमिनः। यातु। इन्द्रः। वृषा। हरिऽभ्याम्। परिऽसिक्तम्। अन्धः।
गवि। आ। सुतस्य। प्रऽभृतस्य। मध्वः। सत्रा। खेदाम्। अरुशऽहा। आ। वृषस्व॥४॥

द्विबर्हाः द्वयोर्लोकयोः परिवृढः। महान्। द्वाभ्यां स्तुतशस्त्राभ्यां वर्धनीयः॥ बृहेर्वर्धनार्थस्य कर्तरि कर्मणि वा असुन्॥ अमिनः। अमतेर्गत्यर्थादौणादिक इनच्। सर्वत्र गन्ता। यद्वा। कान्त्यर्थात्। सर्वैः काम्यमानः। अत एव वृषा अभिलषितानां वर्षकः इन्द्रः परिषिक्तं वसतीवरीभिः परितः सिक्तम् अन्धः अस्मदीयं सोमलक्षणमन्नं प्रति हरिभ्याम् एतन्नामकाभ्यामश्वाभ्यां सह आ यातु आगच्छतु। अथ प्रत्यक्षः। हे इन्द्र अरुशहा। अरुशाः शत्रवः। तेषां हन्ता॥ अर्तेरौणादिक उशन्। 'बहुलं छन्दसि' इति हन्तेः क्विप्॥ सत्रा। सप्तम्या डादेशः। अस्मदीये सत्रे यज्ञे गवि आनडुहे चर्मणि सुतस्य अभिषुतस्य प्रभृतस्य पात्रेषु प्रहृतस्य। हृग्रहोर्भः। ईरितस्य मध्वः मदकरस्य सोमस्य पानेन हृष्टः सन् खेदां छिद्यमानानां शत्रूणामुच्छित्तये आभिमुख्येन वृषस्व वृष इवाचर॥ वृषशब्दादाचारार्थे क्विप्। व्यत्ययेनात्मनेपदम्। खेदाम्। 'खिद दैन्ये'। कर्मणि घञन्तस्यामि नुडभावश्छान्दसः॥

नि तिग्मानि भ्राशयन् भ्राश्यान्यव स्थिरा तनुहि यातुजूनाम्।
उग्राय ते सहो बलं ददामि प्रतीत्या शत्रून् विगदेषु वृश्च॥ ५॥

नि। तिग्मानि। भ्राशयन्। भ्राश्यानि। अव। स्थिरा। तनुहि। यातुऽजूनाम्।
उग्राय। ते। सहः। बलम्। ददामि। प्रतिऽइत्य। शत्रून्। विऽगदेषु। वृश्च॥ ५॥

हे इन्द्र भ्राश्यानि प्रकाश्यानि तिग्मानि तीक्ष्णान्यायुधानि नितरां भ्राशयन् प्रकाशयन्। 'भ्राशृ दीप्तौ'। स त्वं यातुजूनाम्। जु इति सौत्रो धातुः। 'अन्यत्रापि०' इत्यत्र जवतेर्दीर्घः (का. ३. २. १७८. १)। 'क्विप् च' इति क्विप्। दीर्घस्यामि नुडागमश्छान्दसः॥ यातुधानानां स्थिरा[2] स्थिराणि दृढान्यपि शरीराणि अव तनुहि। अवस्तादनुभूतान् पातय। उग्राय उद्गूर्णबलाय ते तुभ्यं सहः शत्रुसहनसमर्थं बलं बलहेतुकं हविः ददामि अहं प्रयच्छामि। ततः विगदेषु[3]। विविधं गदन्ति शब्दायन्ते[4]॥ गदेः 'घञर्थे कविधानम्' इत्यधिकरणे कः॥ शत्रून् प्रतीत्य प्रतिगम्य प्रतिकूलं गत्वा वृश्च तांश्छिन्धि॥ 'ओव्रश्चू छेदने'। तौदादिकस्य लोट्॥ ॥१०॥

१. ग–स्वस्थानान्निर्गमयसि। २. त-म–'स्थिरा' नास्ति। ३. ग–विगदेषु संग्रामेषु। ४. ग–शब्दायन्तेऽत्रेति।

सीध्वरः॥ 'गेहे कः' (पा. सू. ३. १. १४४) इति ग्रहेः कप्रत्ययः। 'ग्रहिज्या॰' (पा. सू. ६. १. १६) इत्यादिना संप्रसारणम्। 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम्। शोभनं वीर्यं यस्येति बहुव्रीहौ 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम्॥

जुषाणो अग्ने प्रति हर्य मे वचो विश्वानि विद्वान्वयुनानि सुक्रतो।
घृतनिर्णिग्ब्रह्मणे गातुमेरय तव देवा अजनयन्ननु व्रतम्॥ २॥

जुषाणः। अग्ने। प्रति। हर्य। मे। वचः।
विश्वानि। विद्वान्। वयुनानि। सुक्रतो इति सुऽक्रतो।
घृतऽनिर्निक्। ब्रह्मणे। गातुम्। आ। ईरय। तव। देवाः। अजनयन्। अनु। व्रतम्॥२॥

हे अग्ने जुषाणः प्रीयमाणस्त्वं मे मम वचः वचनं स्तोत्रं प्रति हर्य कामयस्व। 'हर्य गतिकान्त्योः'। तथा हे सुक्रतो शोभनकर्मन् शोभनप्रज्ञ वा त्वं विश्वानि सर्वाणि वयुनानि। ज्ञाननामैतत् इह[1] ज्ञातव्ये वर्तते। ज्ञातव्यान्यर्थजातानि विद्वान् जानन् वर्तसे। हेतौ शतृप्रत्ययः। यतो जानासि ततो हेतोर्मद्वचनं कामयस्वेत्यर्थः। हे घृतनिर्णिक् घृतेनाज्येन निर्णिज्यमान शुन्ध्यमानशरीर। 'णिजिर् शौचपोषणयोः'। यद्वा। निर्णिगिति रूपनाम। दीप्तरूपाग्ने ब्रह्मणे ब्राह्मणाय यजमानाय गातुं गन्तव्यं सामर्थ्यं[2] वा यज्ञम् एरय आगमय। तव यत्नं त्वदीयं यज्ञकर्म अनु पश्चात् देवाः इन्द्रादयः सर्वे अजनयन्। यजमानाय फलानि जनयन्ति। अतस्त्वदीयं यज्ञं यजमानाय प्रापयेत्यर्थः॥ लक्षणेऽनोः कर्मप्रवचनीयत्वम्। व्रतमिति कर्मप्रवचनीययुक्ते इति द्वितीया। जनेर्ण्यन्ताच्छान्दसो लङ्। 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' इति मित्त्वात् 'मितां ह्रस्वः' इति ह्रस्वत्वम्॥

सप्त धामानि परियन्नमर्त्यो दाशद्दाशुषे सुकृते मामहस्व।
सुवीरेण रयिणाग्ने स्वाभुवा यस्त आनट् समिधा तं जुषस्व॥ ३॥

सप्त। धामानि। परिऽयन्। अमर्त्यः। दाशत्। दाशुषे। सुऽकृते। ममहस्व।
सुऽवीरेण। रयिणा। अग्ने। सुऽआभुवा। यः। ते। आनट्। सम्ऽइधा। तम्। जुषस्व॥३॥

हे अग्ने सप्त सप्तसंख्याकानि धामानि स्थानानि पृथिव्यादिलोकात्मकानि परियन् परितो गच्छन् अमर्त्यः मरणधर्मरहितस्त्वं यो यजमानः पुरोडाशादीनि[3] हवींषि दाशत् प्रयच्छति तस्मै दाशुषे दत्तवते सुकृते सुष्ठु यागं कृतवते मामहस्व। अपेक्षितं धनं ददस्व। महतिर्दानकर्मा॥ 'सुकर्मपाप॰' (पा. सू. ३. २. ८९) इत्यादिना सुपूर्वात्कृञो भूते काले क्विप्॥ यः च यजमानः समिधा समिन्धनसाधनेनैधसा हे अग्ने ते त्वाम् आनट् प्राप्नोति॥ नशतिर्व्याप्तिकर्मा। अस्माच्छान्दसो लङ्। 'बहुलं छन्दसि' इति शपो लुक्। 'छन्दस्यपि दृश्यते' इत्याडागमः। अश्नोतेर्वा व्यत्ययेन श्नम्॥ तं यजमानं सुवीरेण। शोभनवीराः पुत्रा यस्य॥ 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम्॥ तादृशेन स्वाभुवा सुष्ठु आ समन्ताद्भुवा वर्धिष्णुना[4] रयिणा धनेन दातव्येन सार्धं जुषस्व[5]॥

१. ग-त४.५-म२–इह तु। २. ग-त-अ–'ज्ञातव्यं' नास्ति। ३. ग-त४.५-म२–चरुपुरोडाशादीनि। ४. त१.२.३ ६.७.८-अ–'वर्धिष्णुना' नास्ति। ५. ग-त४.५-म२–जुषस्व सेवस्व।

यज्ञस्य केतुं प्रथमं पुरोहितं हविष्मन्त ईळते सप्त वाजिनम् ।
शृण्वन्तमग्निं घृतपृष्ठमुक्षणं पृणन्तं देवं पृणते सुवीर्यम् ॥ ४ ॥

यज्ञस्य । केतुम् । प्रथमम् । पुरःऽहितम् । हविष्मन्तः । ईळते । सप्त । वाजिनम् ।
शृण्वन्तम् । अग्निम् । घृतऽपृष्ठम् । उक्षणम् । पृणन्तम् । देवम् । पृणते । सुऽवीर्यम् ॥ ४ ॥

यज्ञस्य यागस्य केतुं प्रज्ञापकं प्रथमं सर्वेषु देवेषु मुख्यं प्रथमस्थानं वा पुरोहितं पुरतो हितकारिणम् । यद्वा । पुरस्तात् पूर्वस्यां दिश्याहवनीयरूपेण निहितम् ॥ 'पूर्वाधरा०'[1] (पा. सू. ५. ३. ३९) इत्यादिना पूर्वशब्दादसिःप्रत्ययः । तत्संनियोगेन प्रकृतेः पुरादेशश्च । 'तद्धितश्चासर्वविभक्तिः' (पा. सू. १. १. ३८) इत्यव्ययसंज्ञायां 'पुरोऽव्ययम्' (पा. सू. १. ४. ६७) इति गतिसंज्ञा । धाञः कर्मणि निष्ठा । दधातेर्हिः । ततः समासे 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ॥ वाजिनं बलवन्तमन्नवन्तं वा शृण्वन्तम् अस्मत्स्तुतीः श्रोत्रेण जानन्तं घृतपृष्ठं दीप्तपृष्ठं दीप्ताङ्गम् उक्षणं वाग्द्वारेण वृष्टेः संभक्तारं यद्वा सेचनसमर्थं युवानं पृणते हविर्भिः प्रीणयित्रे यजमानाय ॥ 'पृण प्रीणने' । तौदादिकः । 'शतुरनुमः०' इति विभक्तेरुदात्तत्वम् । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थी ॥ हविर्भिः प्रीणयन्तं यजमानं पृणन्तं धनैः प्रीणयन्तम् । यद्वा । पृणातिर्दानकर्मा । हवींषि ददते यजमानाय पृणन्तं धनानि प्रयच्छन्तम् । सुवीर्यं शोभनवीर्योपेतं देवं द्योतमानं दानादिगुणयुक्तं वा एवंगुणविशिष्टम् अग्निं हविष्मन्तः हविर्भिर्युक्ताः सप्त होतृप्रमुखा वषट्कर्तारः ईळते स्तुवन्ति ॥ 'ईड स्तुतौ' । आदादिकः ॥

त्वं दूतः प्रथमो वरेण्यः स हूयमानो अमृताय मत्स्व ।
त्वां मर्जयन्मरुतो दाशुषो गृहे त्वां स्तोमेभिर्भृगवो वि रुरुचुः ॥ ५ ॥

त्वम् । दूतः । प्रथमः । वरेण्यः । सः । हूयमानः । अमृताय । मत्स्व ।
त्वाम् । मर्जयन् । मरुतः । दाशुषः । गृहे । त्वाम् । स्तोमेभिः । भृगवः । वि । रुरुचुः ॥५॥

हे अग्ने त्वं दूतः देवानां दूतकर्मणि नियुक्तः प्रथमः मुख्यः प्रथितः प्रख्यातो वा वरेण्यः संभजनीयश्चासि । सः त्वम् अमृताय अमरणाय तदर्थं नोऽस्माभिः हूयमानः हविषा तर्प्यमाणो वा सन् मत्स्व तृप्यस्व ॥ 'मदी हर्षे' । छान्दसो विकरणस्य लुक् ॥ अपि च त्वां मध्यमस्थाने वैद्युतरूपेण वर्तमानं मरुतः तन्नाम्ना देवगणाः मर्जयन् मार्जयन्ति अलंकुर्वन्ति । तथा दाशुषः हवींषि दत्तवतो यजमानस्य गृहे स्तोमेभिः स्तोमैः स्तोत्रैः भृगवः भृगुगोत्रा ऋषयस्त्वां वि रुरुचुः विशेषेण दीपयन्ति ॥ भृगुशब्दादुत्पन्नस्य तद्धितस्य 'अत्रिभृगुकुत्स०' (पा. सू. २.४.६५) इत्यादिना बहुषु लुक् । रुरुचुः[1] । 'रुच दीप्तौ'[1] । अस्माच्छान्दसो लिट् ॥ ॥ ५ ॥

इषं दुहन्त्सुदुघां विश्वधायसं यज्ञप्रिये यजमानाय सुक्रतो ।
अग्ने घृतस्नुस्त्रिरृतानि दीद्यद्वर्तिर्यज्ञं परियन्त्सुक्रतूयसे ॥ ६ ॥

इषम् । दुहन् । सुऽदुघाम् । विश्वऽधायसम् । यज्ञऽप्रिये । यजमानाय । सुक्रतो इति सुऽक्रतो ।
अग्ने । घृतऽस्नुः । त्रिः । ऋतानि । दीद्यत् । वर्तिः । यज्ञम् । परिऽयन् । सुक्रतुऽयसे ॥६॥

---

१. ग-ड-भ१.२.४.८— 'रुरुचुः । रुच दीप्तौ' नास्ति ।

हे सुकृती सुकर्मन् शोभनप्रज्ञ वा अग्ने यज्ञप्रिये यज्ञैर्हविर्भिर्देवान् प्रीणयितरे यजमानाय विश्वधायसं विश्वस्य सर्वस्य धारयित्रीं सुदुघां दोग्ध्रीं सुखाकां धेनुरूपिणीं गाम् इषम् इष्यमाणं भागफलरूपं पयः दुहन् क्षारयन् तथा घृतस्नुः घृतमाज्येन प्रस्नातः ॥ स्नातेरौणादिकः कुप्रत्ययः॥ यद्वा । घृतो[1] दीप्तः[1] स्नुः सानुः समुच्छ्रितो ज्वालासमूहो यस्य स तथोक्तः ॥ 'पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु' 'षडादिषु सांसप्रत्नुः नागुपसंख्यानम्' ( पा. सू. ६. १. ६३. १ ) इति सानुशब्दस्य स्नुभावः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥ ईडितस्त्वं त्रिः त्रिवारमावृत्तानि ऋतानि सत्यभूतानि पृथिव्यादीनि त्रीणि स्थानानि । यद्वा[2] गार्हपत्यादीनि स्थानानि[2] दीद्यत् दीपयन् वर्तिः सर्वं यज्ञगृहं सर्वमनुष्ठीयमानं यागं च परियन् परितो गच्छन् तत्तद्यज्ञगृहं तं तं यज्ञं च प्राप्नुवन् सुक्रतूयसे । शोभनं क्रतुं यज्ञमात्मन इच्छसि । यद्वा । शोभनः क्रतुर्यस्यासौ सुक्रतुर्यजमानः । स इवाचरसि । स यथा सम्यगनुष्ठाने प्रवर्तते एवं त्वमपि स्वयमेव यागस्य सम्यङ्निष्पत्त्यर्थं प्रवर्तस इत्यर्थः ॥

त्वामिद॒स्या उ॒षसो॒ व्यु॑ष्टिषु दू॒तं कृ॑ण्वा॒ना अ॑यजन्त॒ मानु॑षाः ।

त्वां दे॒वा म॑ह॒याय्या॑य वावृधु॒राज्य॑मग्ने निमृ॒जन्तो॑ अध्व॒रे ॥ ७ ॥

त्वाम् । इत् । अस्याः । उ॒षसः॑ । वि॒ऽउ॑ष्टिषु । दू॒तम् । कृ॒ण्वा॒नाः । अ॒य॒ज॒न्त॒ । मानु॑षाः ।

त्वाम् । दे॒वाः । म॒ह॒याय्या॑य । व॒वृ॒धुः॒ । आज्य॑म् । अ॒ग्ने॒ । नि॒ऽमृ॒जन्तः॑ । अ॒ध्व॒रे ॥ ७ ॥

अस्याः इदानीं दृश्यमानायाः उषसः व्युष्टिषु विवासनेषु प्रभातेषु सत्सु हे अग्ने त्वामित् त्वामेव देवानां दूतं कृण्वानाः कुर्वाणाः मानुषाः मनुष्याः अयजन्त यजन्ति । सर्वदेवात्मकं त्वामेव यजन्तीत्यर्थः । तथा देवाः अपि त्वां महयाय्याय पूजार्थं ॥ 'मह पूजायाम्' । अस्मादौणादिको भाव आय्यप्रत्ययः ॥ आत्मनः पूजार्थं वावृधुः वर्धयन्ति । किं कुर्वन्तः । अध्वरे । ध्वरो हिंसानिमित्तः प्रत्यवायः । तद्रहिते यागे आज्यम् । उपलक्षणमेतत् । आज्योपलक्षितं सर्वं हविः निमृजन्तः त्वयि निमार्जयन्तः । प्रक्षिपन्त इत्यर्थः ॥

नि त्वा॒ वसि॑ष्ठा अह्वन्त वा॒जिनं॑ गृ॒णन्तो॑ अग्ने वि॒दथे॑षु वे॒धसः॑ ।

रा॒यस्पोषं॑ यज॑मानेषु धारय यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ८ ॥

नि । त्वा॒ । वसि॑ष्ठाः । अ॒ह्व॒न्त॒ । वा॒जिन॑म् । गृ॒णन्तः॑ । अ॒ग्ने॒ । वि॒दथे॑षु । वे॒धसः॑ ।

रा॒यः । पोष॑म् । यज॑मानेषु । धा॒र॒य॒ । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभिः॑ । सदा॑ । नः॒ ॥ ८ ॥

हे अग्ने विदथेषु । विदन्त्यस्मिन् यष्टव्यान् देवानिति विदथो यज्ञः । तेषु वेधसः कर्मणां विधातारः गृणन्तः स्तुवन्तः वसिष्ठाः वसिष्ठपुत्रा ऋषयः वाजिनम् अन्नवन्तं बलवन्तं वा त्वां[3] नि अह्वन्त नितरामाह्वयन् । प्रस्तावितुर्वा ॥ ह्वेञो लुङि 'निसमुपविभ्यो ह्वः' ( पा. सू. १.३. ३० ) इत्यात्मनेपदम् । 'आत्मनेपदेष्वन्यतरस्याम्' ( पा. सू.३.१.५४ ) इति च्लेरङादेशः । वसिष्ठशब्दाद्विहितस्यापत्यार्थप्रत्ययस्य 'अत्रिभृगुकुत्स॰' ( पा. सू. २. ४. ६५ ) इत्यादिना बहुषु लुक् ॥ स त्वं यजमानेषु अस्मासु रायः धनस्य पोषं पुष्टं धारय अवस्थापय ॥ 'छन्दसि बहुलम्॰' इत्यादिना रायस्पदात् षष्ठ्या अलुक् । 'षष्ठ्याः पतिपुत्र॰' ( पा. सू. ८. ३. ५३ ) इति विसर्जनीयस्य सत्वम् ॥ गतमन्यत् । एकस्मिन्नप्यग्नौ पूजार्थं बहुवचनम् ॥ ॥ ६ ॥

१. ट१.२.३.६.७.८-म८-घृतदीप्तः; म१.२.७—घृतवद्दीप्तः । २. क-ख-म१.४.७.८—'यद्वा... स्थानानि' नास्ति । ३. म७—त्वा त्वां ।

'अयं वेनः' इत्यष्टर्चमेकादशं सूक्तं भार्गवस्य वेनस्यार्षं त्रैष्टुभम्। वेनो देवता। तथा चानुक्रान्तम्—'अयं वेनो वैन्यम्' इति। प्रवर्ग्येऽभिष्टव आद्यानुवक्तव्या। सूत्रितं च—'एके द्रप्सस्थायं वेनश्चोदयत्पृश्निगर्भाः' (आश्व. श्रौ. ४. ६) इति। वैश्वदेवशस्त्रेऽप्येषा धाय्या। सूत्रितं च—'तं प्रत्नथायं वेनश्चोदयत्पृश्निगर्भाः' (आश्व. श्रौ. ५. १८) इति॥

अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने।
इममपां संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति॥ १॥

अयम्। वेनः। चोदयत्। पृश्निऽगर्भाः। ज्योतिःऽजरायुः। रजसः। विऽमाने।
इमम्। अपाम्। सम्ऽगमे। सूर्यस्य। शिशुम्। न। विप्राः। मतिऽभिः। रिहन्ति॥१॥

वेनः कान्तः एतत्संज्ञो मध्यस्थानो देवः ज्योतिर्जरायुः। ज्योतिर्द्योतमानो मेघो जरायुः। उदरे गर्भो येन वेष्टितोऽवतिष्ठते तज्जरायु। तदिव वेष्टको यस्य स तथोक्तः। मेघमध्ये गर्भवदवस्थित इत्यर्थः। विमाने। विमीयन्ते[1] निर्मीयन्ते[1] अस्मिन्नाप इति विमानमन्तरिक्षम्। रजसः उदकस्य निर्मातर्यन्तरिक्षे स्थितः सन् अयं वेनः पृश्निगर्भाः। पृश्निरादित्यः। तस्य गर्भभूताः। यद्वा। पृश्नयः सर्वोज्ज्वलवर्णाः सूर्यरश्मयः तेषां गर्भभूता अन्तरिक्षस्था अपः चोदयत्। पृथिवीं प्रति प्रेरयति। अपाम् उदकानामान्तरिक्ष्याणां सूर्यस्य च संगमे संगमनेऽन्तरिक्षे स्थितम् इमं वेनं विप्राः मेधाविनः स्तोतारः मतिभिः स्तुतिभिः रिहन्ति। रिहतिरर्चतिकर्मा। अर्चन्ति। पूजयन्ति। स्तुवन्तीत्यर्थः। शिशुं न। यथा बालं पुत्रं मातापितरौ बान्धवाः स्तुतिपदैरुपलालयन्ति तद्वत्॥

तस्मिन्नेवाभिष्टवे 'समुद्रादूर्मिम्' इत्येषा। सूत्र्यते हि—'समुद्रादूर्मिमुदियर्ति वेनो द्रप्सः समुद्रमभि यज्जिगाति' (आश्व. श्रौ. ४. ७) इति॥

समुद्रादूर्मिमुदियर्ति वेनो नभोजाः पृष्ठं हर्यतस्य दर्शि।
ऋतस्य सानावधि विष्टपि भ्राट् समानं योनिमभ्यनूषत व्राः॥ २॥

समुद्रात्। ऊर्मिम्। उत्। इयर्ति। वेनः। नभःऽजाः। पृष्ठम्। हर्यतस्य। दर्शि।
ऋतस्य। सानौ। अधि। विष्टपि। भ्राट्। समानम्। योनिम्। अभि। अनूषत। व्राः॥२॥

समुद्द्रवन्त्यस्मादाप इति समुद्रमन्तरिक्षम्। तस्मात् ऊर्मिं जलसमूहम् अयं वेनः उदियर्ति उद्गमयति। अधः पातयतीत्यर्थः। कीदृशः। नभोजाः। नभस्याकाशे … । इमं वेनमभि शब्दायन्ते॥ 'णु स्तुतौ'। कुटादिः। छान्दसो लुङ्॥

समानं पूर्वीरभि वावशानास्तिष्ठन्वत्सस्य मातरः सनीळाः।
ऋतस्य सानावधि चक्रमाणा रिहन्ति मध्वो अमृतस्य वाणीः॥ ३॥

समानम्। पूर्वीः। अभि। वावशानाः। तिष्ठन्। वत्सस्य। मातरः। सऽनीळाः।
ऋतस्य। सानौ। अधि। चक्रमाणाः। रिहन्ति। मध्वः। अमृतस्य। वाणीः॥ ३॥

१. त-अ-विमायते निर्मायते।

पूर्वीः बह्व्यः समानं वेनस्यात्मनश्च साधारणं स्थानं प्राप्य अभि वावशानाः अभितः शब्दायमानाः । यद्वा । तमेव वेनमभिकामयमानाः । वत्सस्य वत्सस्थानीयस्य वैद्युताग्नेः मातरः मातृभूताः सनीळाः समाननिलयाः एवंविधा आन्तरिक्ष्या आपः तिष्ठन् तिष्ठन्ति । अपि च ऋतस्य उदकस्य सानावधि सानौ[1] समुच्छ्रितेऽन्तरिक्षस्थाने चक्रमाणाः प्रवर्तमानाः मध्वः मधुरस्य अमृतस्य उदकस्य वाणीः वाण्यः शब्दाः रिहन्ति इमं वेनमर्चन्ति । अलंकुर्वन्तीत्यर्थः ॥

**जानन्तो रूपमकृपन्त विप्रा मृगस्य घोषं महिषस्य हि ग्मन् ।**
**ऋतेन यन्तो अधि सिन्धुमस्थुर्विदद्गन्धर्वो अमृतानि नाम ॥ ४ ॥**

जानन्तः । रूपम् । अकृपन्त । विप्राः । मृगस्य । घोषम् । महिषस्य । हि । ग्मन् ।
ऋतेन । यन्तः । अधि । सिन्धुम् । अस्थुः । विदत् । गन्धर्वः । अमृतानि । नाम ॥ ४ ॥

विप्राः मेधाविनः स्तोतारोऽस्य वेनस्य रूपं जानन्तः अकृपन्त स्तुवन्ति । कृपतिः स्तुतिकर्मा । कथमस्य रूपं जानन्तीत्यत आह । मृगस्य अन्वेषणीयस्य महिषस्य । महन्नामैतत् । महतो वेनस्य घोषं गर्जितलक्षणं मेघस्थं शब्दं हि यस्मात् ग्मन् अभिगच्छन्ति अतस्तादृशं रूपं जानन्तीत्यर्थः ॥ गमेश्छान्दसे लुङि 'बहुलं छन्दसि' इति शपो लुक् । 'गमहन०' इत्युपधालोपः । 'बहुलं छन्दस्यमाङ्योगेऽपि' (पा. सू. ६. ४. ७५) इत्यडभावः । अपि च ऋतेन सत्यभूतेन स्तोत्रेण यज्ञेन वा यन्तः तं वेनं गच्छन्तः प्राप्नुवन्तो जनाः सिन्धुं स्यन्दनशीलं जलसमूहम् अधि अस्थुः अधितिष्ठन्ति । तेषां स वेनो वृष्टिं करोतीत्यर्थः । तत्र किं कारणमिति चेत् यतोऽयं गन्धर्वः गवामुदकानां धर्ता वेनः अमृतानि अमरणहेतुभूतानि नाम । उदकनामैतत् । अमृतशीलानि उदकानि विदत् वेद जानाति । तस्य वशे वर्तन्त इत्यर्थः । अतस्तत्सकाशात् वृष्टिः सुलभा ॥

**अप्सरा जारमुपसिष्मियाणा योषा बिभर्ति परमे व्योमन् ।**
**चरत्प्रियस्य योनिषु प्रियः सन्त्सीदत्पक्षे हिरण्यये स वेनः ॥ ५ ॥**

अप्सराः । जारम् । उपऽसिष्मियाणा । योषा । बिभर्ति । परमे । विऽओमन् ।
चरत् । प्रियस्य । योनिषु । प्रियः । सन् । सीदत् । पक्षे । हिरण्यये । सः । वेनः ॥ ५ ॥

अप्सराः अपां सारयित्र्यप्सु क्रीडार्थं सरन्ती वा उपसिष्मियाणा कान्तसमीपमुपगम्येषद्धसन्ती ॥ 'ष्मिङ् ईषद्धसने' । छान्दसो लिट् । तस्य 'लिटः कानज्वा' इति कानच् ॥ ईदृशी योषा स्त्री विद्युद्रूपा जारम् अपां जरयितारम् । यद्वा । जार उपपतिः । स इव प्रियम् । इमं वेनं परमे उत्कृष्टे व्योमन् व्योमन्यन्तरिक्षे बिभर्ति पोषयति । धारयति वा । यथा काचिद्रूपवती योषिज्जारमुपगम्येषद्धसन्ती तं निर्जने स्थले पुष्णाति तद्वदनेन वेनेन विद्युन्मत इत्यर्थः । प्रियस्य अस्य वेनस्य योनिषु स्थानेषु चरत् । विद्युद्रूपा योषिच्चरति गच्छति । अभिसारिकारूपा स्वयमेव गच्छति । सः च वेनः प्रियः अस्या अनुकूलतमः सन् हिरण्यये हिरण्मये हिरण्मयवद्भास्वरे हितरमणीयरूपे वा पक्षे आत्मनः पक्षभूते मेघे सीदत् सीदति । तया सहोपविशति ॥ ॥ ७ ॥

अभिप्लवे 'नाके सुपर्णम्' इत्येषा । सूत्रितं च—'नाके सुपर्णमुप यत्पतन्तमिति समाप्य प्रणवेनोपविशेत्' (आश्व. श्रौ. ७. ७) इति ॥

---

१. ग-त४.५-म६-'सानौ' नास्ति ।

नाके॑ सुप॒र्णमुप॒ यत्पत॑न्तं हृ॒दा वेन॑न्तो अ॒भ्यच॑क्षत त्वा ।
हिर॑ण्यपक्षं॒ वरु॑णस्य दू॒तं य॒मस्य॒ योनौ॑ शकु॒नं भु॑र॒ण्युम् ॥ ६ ॥

नाके॑ । सु॒ऽप॒र्णम् । उप॑ । यत् । पत॑न्तम् । हृ॒दा । वेन॑न्तः । अ॒भि । अच॑क्षत । त्वा॒ ।
हिर॑ण्यऽपक्षम् । वरु॑णस्य । दू॒तम् । य॒मस्य॑ । योनौ॑ । श॒कु॒नम् । भु॒र॒ण्युम् ॥ ६ ॥

हे वेन यदा त्वां हृदा हृदयेन मनसा वेनन्तः कामयमानाः स्तोतारः नाके अन्तरिक्षे यत्[1] यदा[1] अभ्यचक्षत अभिपश्यन्ति तदानीं त्वम् उप आगच्छसीति शेषः । कथंभूतम् । सुपर्णं शोभनपतनं पतन्तम् अन्तरिक्षे गच्छन्तं हिरण्यपक्षं हिरण्मयाभ्यां पक्षाभ्यामुपेतं वरुणस्य जलाभिमानिनो देवस्य दूतं चारं[2] यमस्य नियामकस्य वैद्युताग्नेः योनौ स्थानेऽन्तरिक्षे शकुनं पक्षिरूपेण वर्तमानं भुरण्युं भर्तारम् । यद्वा । वृष्टिप्रदानादिना सर्वस्य जगतः पोषकम् ॥ 'भुरण धारणपोषणयोः' । कण्ड्वादिः । अस्मादौणादिक उप्रत्ययः ॥

ऊ॒र्ध्वो ग॑न्ध॒र्वो अधि॒ नाके॑ अस्थात्प्र॒त्यङ् चि॒त्रा बिभ्र॑द॒स्यायु॑धानि ।
वसा॑नो॒ अत्कं॑ सुर॒भिं दृ॒शे कं स्व१॒॑र्ण नाम॑ जनत प्रि॒याणि॑ ॥ ७ ॥

ऊ॒र्ध्वः । ग॒न्ध॒र्वः । अधि॑ । नाके॑ । अ॒स्था॒त् । प्र॒त्यङ् । चि॒त्रा । बिभ्र॑त् । अ॒स्य॒ । आयु॑धानि ।
वसा॑नः । अत्क॑म् । सु॒र॒भिम् । दृ॒शे । कम् । स्वः॑ । न । नाम॑ । ज॒न॒त॒ । प्रि॒याणि॑ ॥ ७ ॥

ऊर्ध्वः उपरिदेशे वर्तमानः गन्धर्वः गवामुदकानां धर्ता ॥ 'गवि गम् धृञो धः' इति गोशब्दोपपदात् 'धृञ् धारणे' इत्यस्माद्धप्रत्ययः उपपदस्य गन्भावश्च ॥ ईदृशो वेनः प्रत्यङ् अस्मत्प्रत्यञ्चनोऽभिमुखः सन् नाके अधि अन्तरिक्षे अस्थात् तिष्ठति । किं कुर्वन् । अस्य आत्मनः स्वभूतानि चित्रा चित्राणि चायनीयान्याश्चर्यभूतानि वा आयुधानि बिभ्रत् धारयन् ॥ बिभर्तेः शतरि 'भृञामित्' इत्यभ्यासस्येत्त्वम् । 'नाभ्यस्ताच्छतुः' इति नुम्प्रतिषेधः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ॥ तथा सुरभिं शोभनम् अत्कम् आत्मीयं व्याप्तं रूपं वसानः सर्वमाच्छादयन् । किमर्थम् । दृशे दर्शनार्थम् ॥ 'दृशे विख्ये च' इति केप्रत्ययान्तो निपात्यते ॥ कम् इति पूरणः । तत्र दृष्टान्तः । स्वर्णं । स्वः शोभनारण आदित्यः । स यथात्मीयं रूपं दर्शनाय सर्वमाच्छादयति तद्वत् । तदनन्तरं नाम नामानि नमनशीलान्युदकानि प्रियाणि सर्वेषामनुकूलानि जनत जनयति । वृष्टिमुत्पादयतीत्यर्थः ॥

प्रवर्ग्येऽभिष्टवे 'द्रप्सः समुद्रम्' इत्येषा । सूत्रितं च— 'द्रप्सः समुद्रमभि यज्जिगाति सखे सखायमभ्या ववृत्स्व' ( आश्व. श्रौ. ४. ७ ) इति ॥

द्र॒प्सः स॑मु॒द्रम॒भि यज्जिगा॑ति॒ पश्य॒न् गृध्र॑स्य॒ चक्ष॑सा॒ विध॑र्मन् ।
भा॒नुः शु॒क्रेण॑ शो॒चिषा॑ चका॒नस्तृ॒तीये॑ चक्रे॒ रज॑सि प्रि॒याणि॑ ॥ ८ ॥

द्र॒प्सः । स॒मु॒द्रम् । अ॒भि । यत् । जिगा॑ति । पश्य॑न् । गृध्र॑स्य । चक्ष॑सा । विऽध॑र्मन् ।
भा॒नुः । शु॒क्रेण॑ । शो॒चिषा॑ । च॒का॒नः । तृ॒तीये॑ । च॒क्रे॒ । रज॑सि । प्रि॒याणि॑ ॥ ८ ॥

१. ग-ख–' यदा ' नास्ति । २. ग–चारं; ख१.२.३.६.७.८–ग१.३.७.८–चारकं ।

ᵛविधर्मन् विधर्मणि विधारकेऽन्तरिक्षे स्थितः ᵛद्रप्सः द्रवणशीलः । यद्वा । द्रप्सः उदकबिन्दुवत् महान् ॥ अर्शआदित्वादच् । ᵛगृध्रस्य गृध्नो रसानभिकाङ्क्षतः सूर्यस्य ᵛवक्षसा तेजसा ᵛचक्षयन् प्रकाशमानो वेनः ᵛयत् यदा ᵛसमुद्रं समुन्दनशीलं मेघम् ᵛअभि ᵛजिगाति अभिगच्छति तदानीं ᵛभानुः सूर्यः ᵛशुक्रेण शुभ्रेण ᵛशोचिषा तेजसा ᵛतृतीये ᵛरजसि लोके ᵛचकानः दीप्यमानः ᵛप्रियाणि सर्वेषामभीष्टान्युदकानि ᵛचक्रे करोति ॥ ॥८॥

' इमं नो अग्ने ' इति नवर्चं द्वादशं सूक्तम् । द्वितीयाद्याभिस्तिसृभिरग्निर्ऋषिर्भूत्वा स्वात्मानं देवतारूपिणमस्तौत् । अतस्तासां स एवर्षिर्देवता च । शिष्टाभिरग्निवरुणसोमा अस्तुवन् । अतस्तासां त एव ऋषयः । आद्याग्नेयी । षष्ठ्याद्यास्तिस्र ऐन्द्र्यः । शिष्टासु चतसृषु लिङ्गोक्तदेवता । सप्तमी जगती शिष्टास्त्रिष्टुभः । तथा चानुक्रान्तम्—' इमं नो नवैन्द्रीस्तिस्र इन्द्रोऽग्निवरुणसोमानामावपरिषी तिस्र आग्नेय्यस्तिस्र शिष्टा यथानिपातं सप्तमी जगती ' इति । गतो विनियोगः ॥

**इमं नो अग्न उप यज्ञमेहि पञ्चयामं त्रिवृतं सप्ततन्तुम् ।**
**असो हव्यवाळुत नः पुरोगा ज्योगेव दीर्घं तम आशयिष्ठाः ॥ १ ॥**

इमम् । नः । अग्ने । उप । यज्ञम् । आ । इहि । पञ्चऽयामम् । त्रिऽवृतम् । सप्तऽतन्तुम् ।
असः । हव्यऽवाट् । उत । नः । पुरःऽगाः । ज्योक् । एव । दीर्घम् । तमः । आ । अशयिष्ठाः ॥ १ ॥

भ्रातृषु हविर्वहनेषु मृतेषु मरणभीत्या कृतपलायनं गुहायां निगूढमग्निमन्यायाः सूक्तद्रष्टार ऋषयोऽनयाह्वयन् । हे ᵛअग्ने ᵛनः अस्माकम् ᵛइमं ᵛयज्ञम् ᵛउप ᵛएहि उपागच्छ । प्राप्नुहि । मा पलायिष्ठाः । कीदृशम् । ᵛपञ्चयामं यजमानपञ्चमैर्ऋत्विग्भिर्नियमितम् । यद्वा । धानाकरम्भादिभिः पञ्चभिः हविर्भिः पञ्चभिः प्रयाजैर्वा प्राप्तम् । ᵛत्रिवृतं पाकयज्ञहविर्यज्ञसोमयज्ञभेदेन सवनत्रयात्मना वा त्रिगुणं ᵛसप्ततन्तुं सप्त तन्तवस्तनितारः कर्मणां विस्तारयितारो होत्रकाः सप्त वषट्कर्तारो यस्य । यद्वा । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोळशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्तधा विस्तीर्यमाणम्[1] । ईदृशं यज्ञमुपगम्य चानन्तरं ᵛनः अस्माकं ᵛहव्यवाट् हव्यानां हविषां वोढा ᵛअसः भव ॥ अस्तेर्लेट्यडागमः ॥ ᵛउत अपि च ᵛनः अस्माकं ᵛपुरोगाः पुरतो गन्ता भव ॥ जनसनखनक्रमगमो विट् । ' विड्वनोरनुनासिकस्यात् ' इत्यात्वम् ॥ ᵛज्योक् चिरकालम् ᵛएव अस्मान् परित्यज्य ᵛदीर्घं ᵛतमः महदन्धकारं गुहायाम् ᵛआशयिष्ठाः । आस्थाय[2] शयनमकार्षीः । इत ऊर्ध्वं तस्मात् स्थानादस्मानागच्छेत्यर्थः ॥

**अदेवाद्देवः प्रचता गुहा यन् प्रपश्यमानो अमृतत्वमेमि ।**
**शिवं यत्सन्तमशिवो जहामि स्वात्सख्यादरणीं नाभिमेमि ॥ २ ॥**

अदेवात् । देवः । प्रऽचता । गुहा । यन् । प्रऽपश्यमानः । अमृतऽत्वम् । एमि ।
शिवम् । यत् । सन्तम् । अशिवः । जहामि । स्वात् । सख्यात् । अरणीम् । नाभिम् । एमि ॥ २ ॥

ᵛअदेवात् अदेवनशीलात् ᵛगुहा गुहायां वर्तमानात् ॥ ' सुपां सुलुक् ' इति सप्तम्या लुक् ॥ ᵛप्रचता देवानां प्रचायकेन हेतुना ᵛयन् निर्गच्छन् ᵛदेवः देवनशीलोऽहं ᵛप्रपश्यमानः देवैर्मह्यं कल्पितं प्रयाजानुयाजादिलक्षणं हविर्भागं प्रपश्यमानो निरीक्षमाणः सन् ᵛअमृतत्वमेमि । मरणधर्मराहित्यं देवत्वं प्राप्नोमि ॥ एतेर्लट्येवामनेपदम् ॥ हविर्वहनाद्भीतः पलायितोऽप्स्वादिषु स्थानेषु

1. प-स१.२.३.६.७.८-म१.२.४.८—विस्तार्यमाणं । 2. स१.२.३.७-म१.२.४.८—आस्थाय ।

निगूढः पुनर्देवैर्निर्वहनाय प्रार्थ्यमानस्तैर्दत्तेन हविषा अहं देवत्वं आसवानस्मीत्यर्थः । यद्यप्यहं गुहातो निर्गत्य प्रकाशमानः सन् शोभनं यज्ञं निवर्तयामि तथापि ᵛशिवं शोभनं ᵛसख्यं सखित्वं यजमानं ᵛअशिवः अशोभनरूपोऽप्रकाशमानः सन् ᵛयत् यस्मिन् समाहितकाले ᵛजहामि परित्यजामि तदानीं ᵛयामि गहनसीलो गम्भनशीलात् ᵛअरणीम् अश्वत्थमेव ᵛस्वात्सख्यात् आत्मीयात् सखित्वाच्चिर-कालमशरण्योऽहं तत्र न्यवात्समिति स्नेहवशात् ᵛएमि प्राप्नोमि ॥

**पश्यन्नन्यस्या अतिथिं वयाया ऋतस्य धाम वि मिमे पुरूणि ।**

**शंसामि पित्रे असुराय शेवमयज्ञियाद्यज्ञियं भागमेमि ॥ ३ ॥**

पश्यन् । अन्यस्याः । अतिथिम् । वयायाः । ऋतस्य । धाम । वि । मिमे । पुरूणि ।

शंसामि । पित्रे । असुराय । शेवम् । अयज्ञियात् । यज्ञियम् । भागम् । एमि ॥ ३ ॥

मम स्थानभूता या पृथिवी ततः ᵛअन्यस्याः ᵛवयायाः गन्तव्यायाः दिवः संबन्धिनम् ᵛअतिथिं सततगामिनं सूर्यं ᵛपश्यन्[1] जानन् सूर्यस्य गतिमनुसृत्य वसन्तादिकाले ᵛऋतस्य यज्ञस्य ᵛधाम धामानि शरीराणि ᵛपुरूणि बहूनि ᵛवि ᵛमिमे निर्मिमे निष्पादयामि । ततः ᵛपित्रे पितृ-भूताय द्युलोकवर्तिने देवजनाय ᵛअसुराय शत्रुक्षेपणकुशलाय ᵛशेवं सुखमुद्दिश्य होता भूत्वा अहं उक्थानि ᵛशंसामि । यत एवं तस्मात्कारणात् ᵛअयज्ञियात् यज्ञानर्हात्प्रदेशान्निर्गत्य ᵛयज्ञियं यज्ञार्हं वेदिलक्षणं भूभागं हविर्लक्षणं वा ᵛएमि प्राप्नोमि ॥ यज्ञशब्दादर्हार्थे 'यज्ञर्त्विग्भ्यां घखञौ' (पा. सू. ५. १. ७१ ) इति घप्रत्ययः ॥

**बह्वीः समा अकरमन्तरस्मिन्निन्द्रं वृणानः पितरं जहामि ।**

**अग्निः सोमो वरुणस्ते च्यवन्ते पर्यावर्द्राष्ट्रं तदवाम्यायन् ॥ ४ ॥**

बह्वीः । समाः । अकरम् । अन्तः । अस्मिन् । इन्द्रम् । वृणानः । पितरम् । जहामि ।

अग्निः । सोमः । वरुणः । ते । च्यवन्ते । परिऽआवर्त् । राष्ट्रम् । तत् । अवामि । आऽअयन् ॥ ४ ॥

ᵛअस्मिन् वेदिलक्षणस्थाने ᵛबह्वीः ᵛसमाः बहून् संवत्सरान् ᵛअकरम् अकार्षम् । चिरकालं न्यवात्सम् । तत्र ᵛइन्द्रं ᵛवृणानः संभजमानः ᵛपितरम् तत्पादकमरण्यात्मकं ᵛजहामि परित्यजामि । यदा त्वहं देवेभ्यो निर्गत्य गुहायां निगूढः तदा ᵛते देवाः ᵛअग्निः ᵛसोमो ᵛवरुणः च ᵛच्यवन्ते । राष्ट्रात् प्रच्युता अभवन् । एकस्याप्यग्नेर्हविर्वोढृत्वरूपेण देवतात्मना च पृथक्त्वात्परोक्षनिर्देशः । ᵛआयन्[2] पुनरागच्छन्नहं यज्ञाहूमसुरैरपहृतं ᵛपर्यावर्त् पर्यावर्तमानं मदभिमुखं पुनरावर्तमानं ᵛतत् ᵛराष्ट्रं राज्यं यज्ञभूमिम् ᵛअवामि असुरेभ्यो रक्षामि ॥ पर्यावर्त् । छान्दसत्वाद्वृतेः 'अन्येभ्योऽपि दृश्यन्ते' (पा. सू. ३. २. ७५ ) इति क्विप् । 'रात्सस्य' (पा. सू. ८. २. २४ ) इति नियमात् 'संयोगान्तस्य०' (पा. सू. ८. २. २३ ) इति लोपाभावः ॥

**निर्माया उ त्ये असुरा अभूवन्त्वं च मा वरुण कामयासे ।**

**ऋतेन राजन्ननृतं विविञ्चन्मम राष्ट्रस्याधिपत्यमेहि ॥ ५ ॥**

---

१. ग-क१.२.३.६.७.८-अ२.४.८—पश्यन् । २. क१.३.६.७.८-अ१.३.४.५.८—आयन् पुनरागत्य ।

निःऽमायाः । ऊँ इति । त्ये । असुराः । अभूवन् । त्वम् । च । मा । वरुण । कामयासे ।
ऋतेन । राजन् । अनृतम् । विऽविञ्चन् । मम । राष्ट्रस्य । अधिऽपत्यम् । आ । इहि ॥५॥

त्ये ते असुराः मय्यागते सति निर्मायाः मायारहिताः अभूवन् । आसुर्यः सर्वा माया मया दग्धा आसन्नित्यर्थः । हे वरुण त्वं च ॥ अयं चशब्दश्चेदर्थे वर्तमानश्चाप्यसि निपाता-न्तरम् । अनेन युक्तत्वात् कामयासे इति तिङ्विभक्तेः ‘ निपातैर्यद्यदिहन्त ’ ( पा. सू. ८. १. ३० ) इति निघातप्रतिषेधः ॥ हे वरुण त्वं चेत् मा कामयासे मां कामयेथाः तर्हि हे राजन् ईश्वर ऋतेन सत्येनास्मदीयेन कर्मणा अनृतम् असत्यभूतं मायामयमासुरं चरित्रं विविञ्चन् पृथक्कुर्वन् अपसारयन् मम राष्ट्रस्य मया पालयितुं राज्यं तस्य आधिपत्यम् अधिपतित्वमीश्वरत्वम् एहि आगच्छ ॥ ५ ॥

इदं स्वरिदमिदास वाममयं प्रकाश उर्व१न्तरिक्षम् ।
हनाव वृत्रं निरेहि सोम हविष्ट्वा सन्तं हविषा यजाम ॥ ६ ॥

इदम् । स्वः । इदम् । इत् । आस । वामम् । अयम् । प्रऽकाशः । उरु । अन्तरिक्षम् ।
हनाव । वृत्रम् । निःऽएहि । सोम । हविः । त्वा । सन्तम् । हविषा । यजाम ॥ ६ ॥

इयमृगग्नेर्वरुणस्य वा वाक्यम् । हे सोम इदं स्वः अयं द्युलोकः यत्रायं शोभनारणः सूर्यः इदमित् इदमेव वामं वननीयम् आस बभूव । इदंशब्देन प्रकृतं स्वः परामृश्यते । अयं च प्रकाशः प्रकाशस्याधारभूतः उरु विस्तीर्णमिदम् अन्तरिक्षं हे सोम एतत्सर्वं[1] पश्य । अत एव अस्मिन्समये[2] आवां वृत्रं हनाव हिंसाव[3] । तदर्थं निरेहि निष्क्रम्यागच्छ । हविः सन्तं लतारूपेण हविर्भवन्तं देवतात्मानं त्वां हविषा चरुपुरोडाशादिना वयं यजाम ॥

कविः कवित्वा दिवि रूपमासजदप्रभूती वरुणो निरपः सृजत् ।
क्षेमं कृण्वाना जनयो न सिन्धवस्ता अस्य वर्णं शुचयो भरिभ्रति ॥ ७ ॥

कविः । कविऽत्वा । दिवि । रूपम् । आ । असजत् । अप्रऽभूती । वरुणः । निः । अपः । सृजत् ।
क्षेमम् । कृण्वानाः । जनयः । न । सिन्धवः । ताः । अस्य । वर्णम् । शुचयः । भरिभ्रति ॥ ७ ॥

कविः क्रान्तदर्शी मित्रः कवित्वा कवित्वेन ॥ ‘ सुपां सुलुक्० ’ इति तृतीयाया आकारः ॥ क्रान्तदर्शनेन दिवि द्युलोके रूपम् आत्मीयं तेजः आसजत् आसक्तं करोति ॥ ‘ षञ्ज सङ्गे ’ । अस्माल्लङि शपि ‘ दंशसञ्जस्वञ्जां शपि ’ ( पा. सू. ६. ४. २५ ) इति नलोपः ॥ अप्रभूती अप्रभूत्या ॥ ‘ सुपां सुलुक्० ’ इति तृतीयायाः पूर्वसवर्णदीर्घः ॥ अप्रभूत्याल्पेनैव यत्नेन वरुणः मेघात् अपः निः सृजत् निरगमयत् । वरुणेन विसृष्टास्ता आपः सिन्धवः स्यन्दनशीला नद्यो भूत्वा जनयो न जाया इव यथा जायाः पत्युः क्षेमकारिण्यो भवन्ति तथा क्षेमं कुर्वाणा जगतो रक्षणं कुर्वाणाः शुचयः शुद्धा दीप्यमाना वा अस्य वरुणस्य वर्णं शुक्लं भास्वररूपं भरिभ्रति । भृशं बिभ्रति धारयन्ति ॥ दाधर्त्यादिसूत्रे ( पा. सू. ७. ४. ६५ ) ‘ भरिभ्रत् ’ इति निपातनाद्धिभर्तेः यङ्लुक्यभ्यासस्य जश्त्वाभावः[5] ॥

---

१. त-म१.२.४.८—एतत्सोमे । २. ग-त-म१.२.८—एतस्मिन् समये; म७—एतत्समये । ३. त१.२.३.६.७.८-म१.४.७.८—हिंसाव । ४. त-म—अप्रभूत्या । ५. ग-त१.२.३.६.७.८-म१.४.७.८—जश्त्वादेशः ।

सप्त त्रिष्टुभः । तथा चानुक्रान्तम्—'अहमष्टौ वागाम्भृणी तुष्टावात्मानं द्वितीया जगती' इति। गतो विनियोगः ॥

अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः ।
अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॥ १ ॥

अहम् । रुद्रेभिः । वसुऽभिः । चरामि । अहम् । आदित्यैः । उत । विश्वऽदेवैः ।
अहम् । मित्रावरुणा । उभा । बिभर्मि । अहम् । इन्द्राग्नी इति । अहम् । अश्विना । उभा ॥ १ ॥

अहं सूक्तस्य द्रष्ट्री वागाम्भृणी यत् ब्रह्म जगत्कारणं तद्रूपा भवन्ती रुद्रेभिः रुद्रैरेकादशभिः । इत्थंभावे तृतीया । तदात्मना चरामि । एवं वसुभिः इत्यादौ तत्तदात्मना चरामीति योज्यम्[1] । तथा मित्रावरुणा मित्रं च वरुणं च ॥ 'सुपां सुलुक्०' इति द्वितीयाया आकारः ॥ उभा उभौ अहम् एव ब्रह्मीभूता बिभर्मि धारयामि । इन्द्राग्नी अपि अहम् एव धारयामि । उभा उभौ अश्विना अश्विनावपि अहम् एव धारयामि । मयि हि सर्वं जगच्छुक्तौ रजतमिवाध्यस्तं सद् दृश्यते । माया च जगदाकारेण विवर्तते । तादृश्या मायाया आधारत्वेनासङ्गस्यापि ब्रह्मण उक्तस्य सर्वस्योपपत्तिः ॥

अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम् ।
अहं दधामि द्रविणं हविष्मते सुप्राव्ये यजमानाय सुन्वते ॥ २ ॥

अहम् । सोमम् । आहनसम् । बिभर्मि । अहम् । त्वष्टारम् । उत । पूषणम् । भगम् ।
अहम् । दधामि । द्रविणम् । हविष्मते । सुप्रऽअव्ये । यजमानाय । सुन्वते ॥ २ ॥

आहनसम् आहन्तव्यमभिषोतव्यं सोमं यद्वा शत्रूणामाहन्तारं दिवि वर्तमानं देवतात्मानं सोमम् अहम् एव बिभर्मि । तथा त्वष्टारम् उत अपि च पूषणं भगं च अहम् एव बिभर्मि । तथा हविष्मते हविर्भिर्युक्ताय सुप्राव्ये शोभनं हविर्देवानां प्रापयित्रे तर्पयित्रे ॥ अवतेस्तर्पणार्थात् 'अवितृस्तृतन्त्रिभ्य ईः' ( उ. सू. ३. १५८ ) इतीकारप्रत्ययः । चतुर्थ्येकवचने यणि 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इति सुपः स्वरितत्वम् ॥ सुन्वते सोमाभिषवं कुर्वते ॥ 'शतुरनुमः०' इति चतुर्थ्या उदात्तत्वम् ॥ ईदृशाय यजमानाय द्रविणं धनं यागफलरूपम् अहम् एव दधामि धारयामि । एतच्च ब्रह्मणः फलदातृत्वं 'फलमत उपपत्तेः' ( ब्र. सू. ३. २. ३८ ) इत्यधिकरणे भगवता भाष्यकारेण समर्थितम् ॥

अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् ।
तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम् ॥ ३ ॥

अहम् । राष्ट्री । सम्ऽगमनी । वसूनाम् । चिकितुषी । प्रथमा । यज्ञियानाम् ।
ताम् । मा । देवाः । वि । अदधुः । पुरुऽत्रा । भूरिऽस्थात्राम् । भूरि । आऽवेशयन्तीम् ॥ ३ ॥

अहं राष्ट्री । ईश्वरनामैतत् । सर्वस्य जगत ईश्वरी । तथा वसूनां धनानां संगमनी संगमयित्र्युपासकानां प्रापयित्री । चिकितुषी यत्साक्षात्कर्तव्यं परं ब्रह्म तज्ज्ञातवती स्वात्मतया

१. त७.५—योज्यं । उतापि च आदित्यैः सह चरामि । उतापि च विश्वदेवैश्च ।

साक्षात्कृतवती। अत एव यज्ञियानां यज्ञार्हाणां प्रथमा मुख्या। ता एवंगुणविशिष्टामहं मां भूरिस्थात्रां बहुभावेन प्रपञ्चात्मनावतिष्ठमानां भूरि भूरीणि बहूनि भूतजातानि आवेशयन्तीं जीवभावेनात्मानं प्रवेशयन्तीमीदृशीं मां पुरुत्रा बहुषु देशेषु व्यदधुः देवाः विदधति कुर्वन्ति। उक्तप्रकारेण वैश्वरूप्येणावस्थानात्[1]। यत्कुर्वन्ति तत्सर्वं मामेव कुर्वन्तीत्यर्थः॥

मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम्।
अमन्तवो मां त उप क्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि॥ ४ ॥

मया। सः। अन्नम्। अत्ति। यः। विऽपश्यति। यः। प्राणिति। यः। ईम्। शृणोति। उक्तम्।
अमन्तवः। माम्। ते। उप। क्षियन्ति। श्रुधि। श्रुत। श्रद्धिऽवम्। ते। वदामि॥ ४॥

यः अन्नमत्ति सः भोक्तृशक्तिरूपया मया एवान्नमत्ति। यः च विपश्यति। आलोकयतीत्यर्थः। यः च प्राणिति श्वासोच्छ्वासरूपं व्यापारं करोति सोऽपि मयैव। यश्च उक्तं शृणोति॥ 'श्रु श्रवणे'। 'श्रुवः शृ च' इति श्नुप्रत्ययः। धातोः शृभावः॥ य ईदृशीमन्तर्यामिरूपेण स्थितां मां न जानन्ति ते[2] अमन्तवः अमन्यमाना अजानन्तः उप क्षियन्ति। उपक्षीणाः संसारेण हीना भवन्ति॥ मन्यतेरौणादिकस्तुप्रत्ययः। नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वम्। यद्वा। भावे तुप्रत्ययः। ततो बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। मननमन्तवो मतिप्रज्ञानरहिता इत्यर्थः॥ हे श्रुत विश्रुत सखे श्रुधि। मया वक्ष्यमाणं शृणु॥ छान्दसो विकरणस्य लुक्। 'श्रुशृणुपृकृवृभ्यश्छन्दसि' इति हेर्धिभावः॥ किं तच्छ्रोतव्यम्। श्रद्धिवम्। श्रद्धिः श्रद्धा। तया युक्तम्। श्रद्धायत्नेन लभ्यमित्यर्थः। मत्वन्तरोऽप्युपसर्गवद्वृत्तिरिष्यते ( पा.सू. १. ४.७७.२ ) इति श्रच्छब्दस्योपसर्गवद्वृत्तेर्भावात् 'उपसर्गे घोः किः' इति किप्रत्ययः। मत्वर्थीयो वः॥ ईदृशं ब्रह्मात्मकं वस्तु ते तुभ्यं वदामि उपदिशामि॥

अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः।
यं कामये तंतमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्॥ ५ ॥

अहम्। एव। स्वयम्। इदम्। वदामि। जुष्टम्। देवेभिः। उत। मानुषेभिः।
यम्। कामये। तम्ऽतम्। उग्रम्। कृणोमि। तम्। ब्रह्माणम्। तम्। ऋषिम्। तम्। सुऽमेधाम्॥ ५॥

अहं स्वयम् एव इदं वस्तु ब्रह्मात्मकं वदामि उपदिशामि। देवेभिः देवैरिन्द्रादिभिरपि जुष्टं सेवितम्। उत अपि च मानुषेभिः मनुष्यैरपि जुष्टम्। ईदृगवस्थावस्थिताहं यं कामये यं पुरुषं रक्षितुमहं वाञ्छामि तंतं पुरुषम् उग्रं कृणोमि। सर्वेभ्योऽधिकं करोमि। तम् एव ब्रह्माणं स्रष्टारं करोमि। तम् एव ऋषिम् अतीन्द्रियार्थदर्शिनं करोमि। तम् एव सुमेधां शोभनप्रज्ञं च करोमि॥ ॥ ११ ॥

अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्तवा उ।
अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश॥ ६ ॥

अहम्। रुद्राय। धनुः। आ। तनोमि। ब्रह्मऽद्विषे। शरवे। हन्तवै। ऊँ इति।
अहम्। जनाय। सऽमदम्। कृणोमि। अहम्। द्यावापृथिवी इति। आ। विवेश॥ ६॥

---

1. त-मु-विश्वरूपेणावस्थानात्। 2. त१.२.३.६.७-म-ते मां।

पुरा त्रिपुरविजयसमये रुद्राय रुद्रस्य । षष्ठ्यर्थे चतुर्थी । महादेवस्य धनुः चापम् अहम् आ तनोमि । ज्ययाततं करोमि । किमर्थम् । ब्रह्मद्विषे ब्राह्मणानां द्वेष्टारं शरवे शरुं हिंसकं त्रिपुरनिवासिनमसुरं हन्तवे हन्तुं हिंसितुम् ॥ हन्तेः 'तुमर्थे सेसेन्०' (पा. सू. ३.४.९) इति तवेन्प्रत्ययः । 'अन्तश्च तवै युगपत्' (पा. सू. ६. १. २००) इत्याद्यन्तयोर्युगपदुदात्तत्वम् । 'शॄ हिंसायाम्' इत्यस्मात् 'शॄस्वृस्निहि०' इत्यादिना उप्रत्ययः । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थी ॥ उक्तवदः स्वरः । अहम् एव समदम् । समानं माद्यन्त्यस्मिन्निति समत्संग्रामः । स्तोतृजनार्थं शत्रुभिः सह संग्राममहमेव कृणोमि करोमि । तथा द्यावापृथिवी दिवं च पृथिवीं चान्तर्यामितया अहम् एव आ विवेश प्रविष्टवती ॥

अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वन्तः समुद्रे ।
ततो वि तिष्ठे भुवनानु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि ॥ ७ ॥

अहम् । सुवे । पितरम् । अस्य । मूर्धन् । मम । योनिः । अप्ऽसु । अन्तरिति । समुद्रे ।
ततः । वि । तिष्ठे । भुवना । अनु । विश्वा । उत । अमूम् । द्याम् । वर्ष्मणा । उप । स्पृशामि ॥७॥

'द्यौः[1] पिता' (तै. ब्रा. ३.७.५.४) इति श्रुतेः पिता द्यौः । पितरं दिवम् अहं सुवे प्रसुवे जनयामि । 'आत्मन आकाशः संभूतः' (तै. आ. ८. १) इति श्रुतेः । कुत्रेति तदाह । अस्य परमात्मनः मूर्धन् मूर्धन्युपरि[2] । कारणभूते[2] तस्मिन् हि वियदादिकार्यजातं सर्वं वर्तते तन्तुषु पट इव । मम च योनिः कारणं समुद्रे । समुद्रवन्त्यस्माद्भूतजातानीति समुद्रः परमात्मा । तस्मिन् अप्सु व्यापनशीलासु धीवृत्तिषु अन्तः मध्ये यद्ब्रह्म चैतन्यं तन्मम कारणमित्यर्थः । यत इदंभूता अहमस्मि ततः हेतोः विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि अनु प्रविश्य वि तिष्ठे । विविधं व्याप्य तिष्ठामि ॥ 'समवप्रविभ्यः स्थः' (पा. सू. १.३.२२) इत्यात्मनेपदम् ॥ उत अपि च अमूं द्यां विप्रकृष्टदेशेऽवस्थितं स्वर्गलोकम् । उपलक्षणमेतत् । एतदुपलक्षितं कृत्स्नं विकारजातं वर्ष्मणा कारणभूतेन मायात्मकेन मदीयेन देहेन उप स्पृशामि । यद्वा । अस्य भूलोकस्य[3] मूर्धन् मूर्धन्युपर्यन्तं पितरमाकाशं सुवे । समुद्रे जलधावप्सूदकेष्वन्तर्मध्ये मम योनिः कारणभूतोऽम्भृणाख्य ऋषिर्वर्तते । यद्वा । समुद्रेऽन्तरिक्षेऽप्स्वम्मयेषु देवशरीरेषु मम कारणभूतं ब्रह्म चैतन्यं वर्तते । ततोऽहं कारणात्मिका सती सर्वाणि भुवनानि व्याप्नोमि । अन्यत्समानम् ॥

अहमेव वातइव प्र वाम्यारभमाणा भुवनानि विश्वा ।
परो दिवा पर एना पृथिव्यैतावती महिना सं बभूव ॥ ८ ॥

अहम् । एव । वातःऽइव । प्र । वामि । आऽरभमाणा । भुवनानि । विश्वा ।
परः । दिवा । परः । एना । पृथिव्या । एतावती । महिना । सम् । बभूव ॥ ८ ॥

विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि कार्याणि आरभमाणा कारणरूपेणोत्पादयन्ती अहमेव परेणानधिष्ठिता स्वयमेव प्र वामि प्रवर्ते । वातइव यथा वातः परेणाप्रेरितः सन् स्वेच्छयैव प्रवाति तद्वत् । उक्तं सर्वं निगमयति । परो दिवा । पर इति सकारान्तं परस्तादित्यर्थे वर्तते यथा अध इत्यधस्तादर्थे । तद्योगे च तृतीया सर्वत्र दृश्यते । दिव आकाशस्य परस्तात् । एना

१. त०-द्यौर्मे । २. म०-मूर्धनि परमकारणभूते । ३. म०-भूतस्य ।

पृथिव्या ॥ ' द्वितीयाटौस्स्वेनः ' ( पा. सू. २. ४. ३४ ) इतीरम एनादेशः[1] । अस्याः पृथिव्याः परः परस्तात् । द्यावापृथिव्योरुपादानमुपलक्षणम् । एतदुपलक्षितात् सर्वस्मात् विकारजातात्[2] परस्ताद्वर्तमाना सङ्गोदासीनकूटस्थब्रह्मचैतन्यरूपाहं महिना महिम्ना एतावती सं बभूव । एतच्छब्देनोक्तं सर्वं परामृश्यते । एतत्परिमाणमस्याः ॥ ' यत्तदेतेभ्यः परिमाणे° ' ( पा. सू. ५. २. ३९ ) इति वतुप् । ' आ सर्वनाम्नः ( पा.सू.६.३.९१ ) इत्यात्वम् ॥ सर्वजगदात्मनाहं संभूतास्मि ॥ महच्छन्दसीमनिचि ' टेः ' ( पा. सू. ६. ४. १५५ ) इति टिलोपः । ततः तृतीयाया उदात्तनिवृत्तिस्वरेण तस्या उदात्तत्वम् । छान्दसो मलोपः ॥   ॥१२॥

' न तम् ' इत्यष्टर्चं चतुर्दशं सूक्तं शैलूषपुत्रस्य कुल्मलबर्हिषस्यार्षं वामदेवपुत्रस्यांहोमुङ्नाम्नो वा । वैश्वदेवम् । अष्टमी त्रिष्टुप् शिष्टा उपरिष्टाद्बृहत्यः । द्व्यष्टकद्वादशकक्युपरिष्टाद्बृहती । ' अन्त्ये-ऽथ्रुपरिष्टाद्बृहती ' ( अनु. ७. ४ ) इति हि तल्लक्षणम् । तथा चानुक्रान्तं— ' न तं शैलूषः[3] कुल्मलबर्हिषो[4] वामदेव्यो वांहोमुग्वैश्वदेवमुपरिष्टाद्बार्हतमन्त्या त्रिष्टुप् ' इति । गतो विनियोगः ॥

न तमंहो न दुरितं देवासो अष्ट मर्त्यम् ।
सजोषसो यमर्यमा मित्रो नयन्ति वरुणो अति द्विषः ॥ १ ॥

न । तम् । अंहः । न । दुःऽइतम् । देवासः । अष्ट । मर्त्यम् ।
सऽजोषसः । यम् । अर्यमा । मित्रः । नयन्ति । वरुणः । अति । द्विषः ॥ १ ॥

हे देवासः देवाः ॥ आज्जसेरसुक् ॥ तं मर्त्यं मनुष्यम् अंहः पापं दुरितं नरकरूपं दुर्गमनं च न अष्ट न प्राप्नोति ॥ अशेश्छान्दसे लुङि 'मन्त्रे घस' इति च्लेर्लोपः । अडभावश्छान्दसः ॥ अरीन्नियच्छतीति अर्यमा प्रतीतिर्ज्ञापको देवः मित्रः पापान्निवारयिता देवः वरुणः । एते त्रयो देवाः सजोषसः संगताः समानं प्रीयमाणा वा भवन्तः द्विषः द्वेष्टॄन् शत्रूनतिक्रम्य यं स्तोतारं नयन्ति अभिमतं देशं प्रापयन्ति तं नाष्टेत्यन्वयः ॥

तद्धि वयं वृणीमहे वरुण मित्रार्यमन् ।
येना निरंहसो यूयं पाथ नेथा च मर्त्यमति द्विषः ॥ २ ॥

तत् । हि । वयम् । वृणीमहे । वरुण । मित्र । अर्यमन् ।
येन । निः । अंहसः । यूयम् । पाथ । नेथ । च । मर्त्यम् । अति । द्विषः ॥ २ ॥

हिरवधारणे । तद्धि तदेव रक्षणं वयं वृणीमहे प्रार्थयामहे ॥ ' सतिशिष्टोऽपि विकरणस्वरो लसार्वधातुकस्वरं न बाधते ' ( पा. म. ६. १. १५८. ११ ) इति वचनात्तिङ एव स्वरः शिष्यते । ' हि च ' इति निघातप्रतिषेधः ॥ हे वरुण हे मित्र हे अर्यमन् येन रक्षणेन मर्त्यं स्तोतारम् अंहसः पापात् यूयं निः पाथ निःशेषेण रक्षथ ॥ ' पा रक्षणे ' । आदादिकः । 'यद्वृत्ता-न्नित्यम् ' इति निघातप्रतिषेधः ॥ येन च[5] रक्षणेन मर्त्यं मनुष्यं स्तोतारं द्विषः अति नेथ अतीत्य नयथ अभीष्टं प्रापयथ तद्वृणीमह इत्यन्वयः ॥ नयतेश्छान्दसः शपो लुक् ॥

---

१. त१.२.६.७-भर-एनादेशः । सुपां सुलुगिति तृतीयाया अजादेशः । २. त४.५-भूतजातात् । ३. त७-अनु-शैलूषिः । ४. अनु-कुल्मल° । ५. त१.१.३.६.७.८-भ-' च ' नास्ति ।

ते नूनं नोऽयमूतये वरुणो मित्रो अर्यमा ।
नयिष्ठा उ नो नेषणि पर्षिष्ठा उ नः पर्षण्यति द्विषः ॥ ३ ॥

ते । नूनम् । नः । अयम् । ऊतये । वरुणः । मित्रः । अर्यमा ।
नयिष्ठाः । ऊँ इति । नः । नेषणि । पर्षिष्ठाः । ऊँ इति । नः । पर्षणि । अति । द्विषः ॥ ३ ॥

अयं वरुणो मित्रश्च अर्यमा च देवाः नः अस्माकम् ऊतये रक्षणाय नूनम् अवश्यं भवन्तु । नेषणि नेतव्ये विषये हे वरुणादयः यूयं नः अस्मान् नयिष्ठाः नयत ॥ वचनव्यत्ययः । यद्वा । प्रत्येकाभिप्रायेणैकवचनम् । छान्दसो लुङ् ॥ उशब्दः समुच्चये पदपूरणार्थो वा । पर्षणि पारयितव्ये विषये नः अस्मान् द्विषः अति पर्षिष्ठाः अतिपारयत ॥ नयिष्ठा इतिवत्प्रक्रिया ॥

यूयं विश्वं परि पाथ वरुणो मित्रो अर्यमा ।
युष्माकं शर्मणि प्रिये स्याम सुप्रणीतयोऽति द्विषः ॥ ४ ॥

यूयम् । विश्वम् । परि । पाथ । वरुणः । मित्रः । अर्यमा ।
युष्माकम् । शर्मणि । प्रिये । स्याम । सुऽप्रनीतयः । अति । द्विषः ॥ ४ ॥

हे देवा वरुणादयः यूयं विश्वं सर्वं जगत् परि पाथ परितो रक्षथ । हे सुप्रणीतयः शोभनप्रणयना मित्रादयः युष्माकं युष्मदीये युष्माभिर्दत्ते प्रिये अनुकूले देये शर्मणि सुखे वयं स्याम भवेम । द्विषः द्वेष्टॄंश्च अति क्रामेम ॥

आदित्यासो अति स्रिधो वरुणो मित्रो अर्यमा ।
उग्रं मरुद्भी रुद्रं हुवेमेन्द्रमग्निं स्वस्तयेऽति द्विषः ॥ ५ ॥

आदित्यासः । अति । स्रिधः । वरुणः । मित्रः । अर्यमा ।
उग्रम् । मरुत्ऽभिः । रुद्रम् । हुवेम । इन्द्रम् । अग्निम् । स्वस्तये । अति । द्विषः ॥ ५ ॥

आदित्यासः अदितेः पुत्रा वरुणादयो देवाः स्रिधः हिंसकान् शत्रून् अस्मान् अति नयन्तु । मरुद्भिः पुत्रैः सहितम् उग्रम् उद्गूर्णतेजसं[1] रुद्रम् इन्द्रमग्निं च स्वस्तये क्षेमाय हुवेम आह्वयेमहि ॥ ह्वयतेराशीर्लिङि 'बहुलं छन्दसि' इति संप्रसारणम् । लिङ्याशिष्यङ् ॥ आहूतास्ते अस्मान् द्विषः द्वेष्टॄन् अति नयन्तु ॥

नेतार ऊ षु णस्तिरो वरुणो मित्रो अर्यमा ।
अति विश्वानि दुरिता राजानश्चर्षणीनामति द्विषः ॥ ६ ॥

नेतारः । ऊँ इति । सु । नः । तिरः । वरुणः । मित्रः । अर्यमा ।
अति । विश्वानि । दुःऽइता । राजानः । चर्षणीनाम् । अति । द्विषः ॥ ६ ॥

नेतारः नयनकुशलाः ॥ नयतेः साधुकारिणि तृन् ॥ वरुणादयो देवाः नः अस्माकं पापानि सु[2] सुष्ठु तिरः तिरोधानमदर्शनं नयन्तु । उ इति पूरणः । चर्षणीनां मनुष्याणां राजानः

१. ग–उद्गूर्णतेजस्कं । २. ल-भ१.२.४.८–'सु' नास्ति ।

स्वामिनो वरुणादयो देवाः विश्वानि सर्वाणि दुरिता दुरितानि दुर्गमनानि पापफलरूपाण्यस्मान् अति नयन्तु । द्विषः द्वेष्टॄन् शत्रूंश्च अति नयन्तु ॥ ‘नामन्यतरस्याम्’ इति षट्त्रिचतुर्भ्यः परस्य नाम उदात्तत्वम् ॥

शुनमस्मभ्यमूतये वरुणो मित्रो अर्यमा ।
शर्म यच्छन्तु सप्रथ आदित्यासो यदीमहे अति द्विषः ॥ ७ ॥

शुनम् । अस्मभ्यम् । ऊतये । वरुणः । मित्रः । अर्यमा ।
शर्म । यच्छन्तु । सऽप्रथः । आदित्यासः । यत् । ईमहे । अति । द्विषः ॥ ७ ॥

वरुणादयो देवाः ऊतये रक्षार्थं शुनं सुखम् अस्मभ्यं स्तोतृभ्यः प्रयच्छन्तु । तथा आदित्यासः अदितेः पुत्रास्ते सप्रथः सर्वतः पृथु विस्तीर्णं शर्म सुखं च यच्छन्तु अस्मभ्यं ददतु । यत् शर्म वयम् ईमहे याचामहे । द्विषः च अति नयन्तु ॥

यथा ह त्यद्वसवो गौर्यं चित्पदि षिताममुञ्चता यजत्राः ।
एवो ष्वस्मन्मुञ्चता व्यंहः प्र तार्यग्ने प्रतरं न आयुः ॥ ८ ॥

यथा । ह । त्यत् । वसवः । गौर्यम् । चित् । पदि । षिताम् । अमुञ्चत । यजत्राः ।
एवो इति । सु । अस्मत् । मुञ्चत । वि । अंहः । प्र । तारि । अग्ने । प्रऽतरम् । नः । आयुः ॥ ८ ॥

हे वसवः वासकाः हे यजत्राः यागार्हा मित्रादयो देवाः ॥ ‘अभिनक्षि’[1] (उ. सू. ३. १०५) इत्यादिना यजेरत्रप्रत्ययः ॥ त्यत् तां प्रसिद्धां यूयम् ॥ ‘सुपां सुलुक्’ इति विभक्तेर्लुक् ॥ यथा ह यथा खलु पदि पादे षितां बद्धाम् । ‘पद्दन्’ इत्यादिना पादशब्दस्य पदादेशः । ‘ऊडिदं-पदादि’ (पा. सू. ६. १. १७१) इत्यादिना सप्तम्या उदात्तत्वम् । ‘षिञ् बन्धने’ इत्यस्मा-न्निष्ठा ॥ ईदृशीं गौर्यं[2] गौरीं गौरवर्णां सोमक्रयणीं गाम् ॥ ‘षिद्गौरादिभ्यश्च’ (पा. सू. ४. १. ४१) इति ङीष् । ‘अमि पूर्वः’ (पा. सू. ६. १. १०७) इत्यत्र ‘वा छन्दसि’ (पा. सू. ६. १. १०६) इत्यनुवर्तनात्पूर्वरूपस्य पूर्वसवर्णदीर्घस्य चाभावे यण् । ‘उदात्तस्वरितयोर्यणः’ इति परस्यानुदात्तस्य स्वरितत्वम् ॥ ईदृशीं गाम् अमुञ्चत यथा खलु यूयं विश्वावसोर्गन्धर्वान्मोचितवन्तः एवो एवमेव अस्मत् अस्मत्तः अंहः पापं सुष्ठु वि मुञ्चत विश्लेषयत । हे अग्ने नः अस्माकम् आयुः जीवनं प्रतरं प्र तारि । प्रकर्षेण त्वया प्रवर्धताम् । प्रपूर्वस्तिरतिर्वर्धनार्थः ॥ प्रशब्दात्तरपि ‘अमु च छन्दसि’ (पा. सू. ५. ४. १२) इत्यमुप्रत्ययः ॥ ॥ ११ ॥

‘रात्री’ इत्यष्टर्चं पञ्चदशं सूक्तं सोभरिपुत्रस्य कुशिकस्यार्षम् । यद्वा । भारद्वाजस्य सुता रात्र्याख्या अस्य सूक्तस्यर्षिका । गायत्रं रात्रिदेवताकम् । तथा चानुक्रान्तं—‘रात्री कुशिकः सौभरो रात्रिर्वा भारद्वाजी रात्रिस्तवं गायत्रम्’ इति । दुःस्वप्नदर्शने उपोषितेन कर्त्रा पायसेन होतव्यम् । तत्रैतत्सूक्तं करणत्वेन विनियुक्तम् । तथा चारण्यके सूत्रितं—‘स यद्येतेषां किंचित्पश्येदुपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रीसूक्तेन प्रत्यृचं हुत्वा’ (ऐ. आ. ३. २. ४) इति ॥

रात्री व्यख्यदायती पुरुत्रा देव्यक्षभिः । विश्वा अधि श्रियोऽधित ॥ १ ॥

रात्री । वि । अख्यत् । आऽयती । पुरुऽत्रा । देवी । अक्षऽभिः ।
विश्वाः । अधि । श्रियः । अधित ॥ १ ॥

---

१. गघ-यूई । २. ग-त४.५-भ२-गौर्यं चित् ।

आयती आगच्छन्ती ॥ आङ्पूर्वादेतेः शतर्यदादिभ्यश्शपो लुक् । ‘ इणो यण् ’ ( पा. सू. ६. ४. ८१ ) इति यणादेशः । ‘ उगितश्च ’ ( पा. सू. ४. १ ६ ) इति ङीप् । ‘ शतुरनुमः ’ इति नद्या उदात्तत्वम् ॥ अक्षभिः[1] अक्षिस्थानीयैः प्रकाशमानैर्नक्षत्रैः ॥ ‘ छन्दस्यपि दृश्यते ’ इत्यक्षिशब्दस्यानङादेशः ॥ यद्वा । अक्षभिरञ्जकैः तेजोभिः[2] । पुरुत्रा बहुषु देशेषु देवी देवनशीला ॥ ‘ देवमनुष्यपुरुषपुरुमर्त्येभ्यः ’ इत्यादिना पुरुशब्दात्सप्तम्यर्थे त्राप्रत्ययः ॥ रात्री इयं रात्रिदेवता व्यख्यत् विचष्टे विशेषेण पश्यति ॥ ‘ रात्रेश्चाजसौ ’ ( पा. सू. ४. १. ३१ ) इति ङीप् । चष्टेश्छान्दसे लुङि ‘ अस्यतिवक्ति॰ ’ इत्यादिना च्लेरङादेशः ॥ अपि चैषा विश्वाः सर्वाः श्रियः शोभाः अधि अधित अधिधारयति ॥ दधातेर्लुङि[3] ‘ स्थाघ्वोरिच्च ’ इतीत्वम् । सिचः कित्वम् । ‘ ह्रस्वादङ्गात् ’ इति सिचो लोपः ॥

ओर्व॑प्रा अम॑र्त्या नि॒वतो॑ दे॒व्यु१॒॑द्वतः॑ । ज्योति॑षा बाधते॒ तमः॑ ॥ २ ॥

आ । उ॒रु । अ॒प्राः॒ । अम॑र्त्या । नि॒ऽवतः॑ । दे॒वी । उ॒त्ऽवतः॑ । ज्योति॑षा । बा॒ध॒ते॒ । तमः॑ ॥ २ ॥

अमर्त्या मरणरहिता देवी देवनशीला रात्रिः उरु विस्तीर्णमन्तरिक्षम् आ अप्राः । प्रथमतस्तमसापूरयति ॥ ‘ प्रा पूरणे ’ । आदादिकः । लङि व्यत्ययेन मध्यमः ॥ तथा निवतः नीचीनान्गुल्मादीन् उद्वतः उच्छ्रितान् वृक्षादींश्च स्वकीयेन तेजसावृणोति[4] । तदनन्तरं तत् तमः अन्धकारं ज्योतिषा ग्रहनक्षत्रादिरूपेण तेजसा बाधते पीडयति ॥

निरु॒ स्वसा॑रमस्कृतो॒षसं॑ दे॒व्या॑य॒ती । अपेदु॑ हासते॒ तमः॑ ॥ ३ ॥

निः । ऊँ इति॑ । स्वसा॑रम् । अ॒स्कृ॒त॒ । उ॒षस॑म् । दे॒वी । आ॒ऽय॒ती ।
अप॑ । इत् । ऊँ इति॑ । हा॒स॒ते॒ । तमः॑ ॥ ३ ॥

आयती आगच्छन्ती देवी देवनशीला रात्रिः स्वसारं भगिनीम् उषसं निः अस्कृत निष्करोति । प्रकाशेन संस्करोति । निवर्तयतीत्यर्थः । तस्यामुषसि जातायां तमः अपेत् हासते अपैव गच्छति ॥ ‘ ओहाङ् गतौ ’ । लेट्यडागमः । ‘ सिब्बहुलम् ’ इति सिप् ॥

सा नो॑ अ॒द्य यस्या॑ व॒यं नि ते॒ याम॒न्नवि॑क्ष्महि । वृ॒क्षे न व॑स॒तिं वयः॑ ॥ ४ ॥

सा । नः॒ । अ॒द्य । यस्याः॑ । व॒यम् । नि । ते॒ । याम॑न् । अवि॑क्ष्महि । वृ॒क्षे । न । व॒स॒तिम् । वयः॑ ॥ ४ ॥

अद्य अस्मिन् काले नः अस्माकं सा रात्रिदेवता प्रसीदतु यस्याः रात्रेः यामन् यस्मिन् प्राप्ते सत्यां वयं नि अविक्ष्महि निविशामहे सुखेन गृह आस्महे ॥ विशेर्लुङि ‘ नेर्विशः ’ ( पा. सू. १. ३. १७ ) इत्यात्मनेपदम् । छान्दसः शपो लुक् ॥ तत्र दृष्टान्तः । वयः पक्षिणः वृक्षे न यथा वृक्षे नीडाख्ये वसतिं रात्रौ निवासं कुर्वन्ति तथा निवसाम इत्यर्थः ॥

नि ग्रामा॑सो अविक्षत॒ नि प॒द्वन्तो॒ नि प॒क्षिणः॑ । नि श्ये॒नास॑श्चिद॒र्थिनः॑ ॥ ५ ॥

नि । ग्रामा॑सः । अ॒वि॒क्ष॒त॒ । नि । प॒त्ऽवन्तः॑ । नि । प॒क्षिणः॑ । नि । श्ये॒नासः॑ । चि॒त् । अ॒र्थिनः॑ ॥ ५ ॥

ग्रामासः ग्रामाः । अत्र ग्रामशब्दो जनसमूहे वर्तते यथा ग्राम आगत इति । सर्वे जनाः नि अविक्षत । तस्यां रात्र्यामागतायां निविशन्ते । शेरते ॥ निपूर्वाद्विशतेश्छान्दसे लुङि पूर्ववदात्मनेपदम् ।

1. त१.२.३.६.८-म–अक्षिभिः । 2. ग–तमोभिः । 3. त१.२.३.६.७.८-म–तथा दधातेर्लुङि । 4. ग–तमसावृणोति ।

'वाल इगुपधात्किदः कसः' ( पा. सू. १. १. ७५ ), 'क्त्वस्यापि' ( पा. सू. ७.३.७२ ) इत्यकारलोपः ॥ तथा पद्वन्तः पादयुक्ता गवाश्वादयश्च निविशन्ते । तथा पक्षिणः पक्षोपेताश्च निविशन्ते । अर्थिनः । अर्तेरर्थो गमनम् । शीघ्रगमनयुक्ताः । श्येनासश्चित् श्येना[1] अपि यस्यां रात्र्यां निविशन्ते एषा रात्रिः सर्वाणि भूतजातान्यहनि[2] संचारेण श्रान्तानि स्वयमागत्य सुखयतीत्यर्थः ॥

यावया वृक्यं१ वृकं यवय स्तेनमूर्म्ये । अथा नः सुतरा भव ॥ ६ ॥

यवय । वृक्यम् । वृकम् । यवय । स्तेनम् । ऊर्म्ये । अथ । नः । सुऽतरा । भव ॥ ६ ॥

हे ऊर्म्ये । रात्रिनामैतत् । रात्रे वृक्यं वृकस्य स्त्रियं वृकं चास्मान् हिंसन्तं यवय । अस्मत्तः पृथक्कुरु । अस्मान् बाधितुं यथा न प्राप्नोति तथा । स्तेनं तस्करं च यवय । अस्मत्तो वियोजय । अथ अनन्तरं नः अस्माकं सुतरा सुखेन तरणीया क्षेमकरी भव ॥

उप मा पेपिशत्तमः कृष्णं व्यक्तमस्थित । उष ऋणेव यातय ॥ ७ ॥

उप । मा । पेपिशत् । तमः । कृष्णम् । विऽअक्तम् । अस्थित । उषः । ऋणाऽइव । यातय ॥ ७ ॥

पेपिशत् भृशं पिंशत् सर्ववस्तून्यालिम्पत् तमः अन्धकारं कृष्णं कृष्णवर्णं व्यक्तं विशेषेण स्वभासा सर्वस्याञ्जकं स्पष्टरूपं वा ईदृशं नैशं तमो माम् उप अस्थित उपागच्छत् ॥ संगतकरणे आत्मनेपदम् ॥ हे उषः उषोदेवते त्वम् ऋणेव ऋणानीव तत्तमो यातय अपगमय । स्तोतॄणामृणानि यथा धनप्रदानेनापाकरोषि तथा तमोऽप्यपसारयेत्यर्थः ॥

उप ते गा इवाकरं वृणीष्व दुहितर्दिवः । रात्रि स्तोमं न जिग्युषे ॥ ८ ॥

उप । ते । गाःऽइव । आ । अकरम् । वृणीष्व । दुहितः । दिवः । रात्रि । स्तोमम् । न । जिग्युषे ॥ ८ ॥

हे रात्रि रात्रिदेवते ते त्वां गा इव पयसो दोग्ध्रीर्धेनूरिव उपेत्य आकरं स्तुतिभिरभिमुखीकरोमि ॥ करोतेश्छान्दसे लुङि 'कृमृदृरुहिभ्यः' इति च्लेरङादेशः ॥ दिवः दुहितः द्योतमानस्य सूर्यस्य पुत्रि यद्वा दिवसस्य तनये ॥ 'परमपि छन्दसि' ( पा. सू. २. १. २. ६ ) इति परस्य षष्ठ्यन्तस्य पूर्वाङ्गवद्भावात् पदद्वयसमुदायस्याष्टमिकं सर्वानुदात्तत्वम् ॥ त्वत्प्रसादात् जिग्युषे शत्रून् जिग्युषो[3] मम स्तोमं न स्तोत्रमिव हविरपि वृणीष्व त्वं भजस्व ॥ जयतेर्लिटः क्वसुः । 'सन्लिटोर्जेः' इत्यभ्यासादुत्तरस्य जकारस्य कुत्वम् । 'षष्ठ्यर्थे चतुर्थी वक्तव्या' इति चतुर्थी । 'वसोः संप्रसारणम्' इति संप्रसारणम् ॥ ॥ १४ ॥

'ममाग्ने' इति नवर्चं षोडशं सूक्तमाङ्गिरसस्य विहव्यस्यार्षं वैश्वदेवम् । अन्त्या जगती शिष्टास्त्रिष्टुभः । अनुक्रम्यते हि—'ममाग्ने नव विहव्यो वैश्वदेवं जगत्यन्तम्' इति । संस्थे निविद्धानीये वैश्वदेवसूक्तस्य पुरस्तादेतत् शंस्यम् । सूत्रितं च—'ममाग्ने वर्चो इति वैश्वदेवसूक्तस्यापि चैतेष्वेव निविदो दध्यात्' ( आश्व. श्रौ. ९.९ ) इति । समावर्तनेऽनेन सूक्तेन शिष्यासुना प्रत्यृचं समिदाधातव्या । सूत्रितं च—'ममाग्ने वर्च इति प्रत्यृचं समिधोऽभ्यादध्यात्' (आश्व. गृ.३.९.२) इति ॥

ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम ।
मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम ॥ १ ॥

---

१. थ-त्र.५-अर-श्येना शुभ्राः । २. त१.२.३.६.७.८-भ-भूतान्यहनि । ३. थ-जितवतो ।

मर्म । अग्ने । वर्चः । विऽहवेषु । अस्तु । वयम् । त्वा । इन्धानाः । तन्वम् । पुषेम ।
मह्यम् । नमन्ताम् । प्रऽदिशः । चतस्रः । त्वया । अधिऽअक्षेण । पृतनाः । जयेम ॥ १ ॥

हे अग्ने । विविधमाहूयन्ते येषु शूरा इति विहवाः संग्रामाः । यद्वा । विविधं यागार्थं देवा आहूयन्त एष्विति विहवा यज्ञाः ॥ 'ह्वः संप्रसारणं च न्यभ्युपविषु' (पा. सू. ३. ३. ७२) इत्यधिकरणेऽप् संप्रसारणं च । थाथादिनोत्तरपदान्तोदात्तत्वम् । संग्रामेषु यज्ञेषु वा वर्चः दीप्तिः त्वदनुग्रहात् मम अस्तु भवतु । वयं च त्वा त्वाम् इन्धानाः समिद्भिर्दीपयन्तः तन्वं तव शरीरं पुषेम हविर्भिर्वर्धयेम ॥ इन्धेः शानचि श्नसोरल्लोपः उदात्तनिवृत्तिस्वरेण शानच आद्युदात्तत्वे प्राप्ते 'विभाषा चण्विण्धातसः' (पा. सू. ६. १. २१५) इत्याद्युदात्तत्वम् ॥ तन्वं[1] पुषेम ॥ पुषेर्लिङि लिङ्याशिष्यङ् ॥ अपि च मह्यं मदर्थम् । 'ङयि च' (पा. सू. ६. १. २१२) इत्यस्मद आद्युदात्तत्वम् ॥ चतस्रः प्रदिशः प्रकृष्टा दिशः । तद्वासिनो जना इत्यर्थः । नमन्तां स्वत एव प्रह्वीभवन्तु । नमतेः कर्मकर्तरि लोटि 'न दुहस्नुनमाम्°' इति यक्प्रतिषेधः ॥ त्वया अस्माभिर्हविर्भिः प्रवर्धितेन अध्यक्षेण ईश्वरेण सता पृतनाः शत्रुसेनाः जयेम अभिभवेम ॥

मर्म देवा विहवे सन्तु सर्व इन्द्रवन्तो मरुतो विष्णुरग्निः ।
ममान्तरिक्षमुरुलोकमस्तु मह्यं वातः पवतां कामे अस्मिन् ॥ २ ॥

मर्म । देवाः । विऽहवे । सन्तु । सर्वे । इन्द्रऽवन्तः । मरुतः । विष्णुः । अग्निः ।
मर्म । अन्तरिक्षम् । उरुऽलोकम् । अस्तु । मह्यम् । वातः । पवताम् । कामे । अस्मिन् ॥ २ ॥

सर्वे देवाः विहवे संग्रामे यज्ञे वा मम सन्तु ममैव साधका भवन्तु । के पुनस्ते । इन्द्रवन्तः इन्द्रेण युक्ताः मरुतो विष्णुरग्निश्च । तथा अन्तरिक्षं मम उरुलोकं विस्तीर्णप्रकाशकम् अस्तु ॥ 'लोकृ दर्शने' । भावे घञ् । लोक आलोकः प्रकाशः । उरुर्लोको यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥ अपि च अस्मिन् कामे कामयितव्ये फले निमित्तभूते सति वातः वायुः पवताम् अनुगुणं प्रवातु ॥ 'पूङ् पवने' । भौवादिकः । 'ऊदित्स्वम्°' इत्यादिना इटः सतिश्या उदात्तत्वम् ॥

मयि देवा द्रविणमा यजन्तां मय्याशीरस्तु मयि देवहूतिः ।
दैव्या होतारो वनुषन्त पूर्वेऽरिष्टाः स्याम तन्वा सुवीराः ॥ ३ ॥

मयि । देवाः । द्रविणम् । आ । यजन्ताम् । मयि । आऽशीः । अस्तु । मयि । देवऽहूतिः ।
दैव्याः । होतारः । वनुषन्त । पूर्वे । अरिष्टाः । स्याम । तन्वा । सुऽवीराः ॥ ३ ॥

देवाः सर्वे द्रविणं धनं मयि स्तोतरि आ यजन्तां गमयन्तु । मह्यं ददत्वित्यर्थः । तथा आशीः आशंसनीयं यज्ञफलं च मयि एव अस्तु । देवानां हूतिराह्वानमस्मिन्निति देवहूतिः यज्ञः । स च मयि अस्तु । अपि च देवानामिमे दैव्याः । 'देवाद्यञञौ' इति यञ् । तादृशाः होतारः साधुहोमनिष्पादका मदीया ऋत्विजः पूर्वे अस्मदीयेभ्य ऋत्विग्भ्यः प्रथमभाविनः सन्तः वनुषन्त देवान् संभजन्ताम् ॥ वनतेर्लङ्छान्दसे लङि 'व्यत्ययो बहुलम्' इति श्यो विकरणा उभयत्र सिप्कर्षी च । अडभावश्छान्दसः ॥ वयं च तन्वा शरीरेण अरिष्टाः अहिंसिताः सुवीराः सुपुत्राश्च स्याम भवेम ॥ 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् ॥

---

1. त-भ-प्रार्थे ।

मह्यं यजन्तु मम यानि हव्याकूतिः सत्या मनसो मे अस्तु ।
एनो मा नि गां कतमच्चनाहं विश्वे देवासो अधि वोचता नः ॥ ४ ॥

मह्यम् । यजन्तु । मम । यानि । हव्या । आऽकूतिः । सत्या । मनसः । मे । अस्तु ।
एनः । मा । नि । गाम् । कतमत् । चन । अहम् । विश्वे । देवासः । अधि । वोचत । नः ॥ ४ ॥

मह्यं मदर्थं यजन्तु ऋत्विजो देवान् हविर्भिर्यजन्तु । यद्वा । षष्ठ्यर्थे चतुर्थी । मह्यं मदीया ऋत्विज इत्यर्थः । मम स्वभूतानि हव्यानि यानि हवींषि चरुपुरोडाशादीनि सन्ति तैर्यजन्त्वित्यर्थः । तथा मे मनसः आकूतिः संकल्पनमभीष्टस्य प्रार्थनं सत्या यथार्थम्[1] अस्तु । अपि च अहं कतमच्चन किमपि एनः पापं मा नि गां मा नियतं निकृष्टतरं वा गच्छेयम् । पापं मा कार्षमित्यर्थः ॥ एतेर्माङि लुङि 'इणो गा लुङि' इति गादेशः । 'गातिस्था०' इति सिचो लुक् ॥ अपि च हे विश्वे सर्वे देवासः देवाः यूयं नः अस्माकम् अधि वोचत विवादपदेषु पक्षपातेन ब्रूत ॥ वचेर्लोटि व्यत्ययेनाङ् । 'वच उम्' इत्युमागमः ॥

देवीः षळुर्वीरुरु नः कृणोत विश्वे देवास इह वीरयध्वम् ।
मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन् ॥ ५ ॥

देवीः । षट् । उर्वीः । उरु । नः । कृणोत । विश्वे । देवासः । इह । वीरयध्वम् ।
मा । हास्महि । प्रऽजया । मा । तनूभिः । मा । रधाम । द्विषते । सोम । राजन् ॥ ५ ॥

हे षट् उर्वीः षट्संख्याका उर्व्यः । एताश्चान्यत्राम्नायन्ते—'षण्मोर्वीरंहसः पान्तु द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चौषधयश्च' इति । ईदृश्यो हे देवीः देव्यः ॥ जसि 'वा छन्दसि' इति पूर्वसवर्णदीर्घः । 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' इत्यस्याविद्यमानवत्त्वनिषेधेन षळुर्वीरित्यनयोरामन्त्रितयोः पदात्परत्वादाष्टमिकमामन्त्रितानुदात्तत्वम् ॥ ता यूयम् उरु विस्तीर्णं धनं नः अस्माकं कृणोत कुरुत ॥ 'कृवि हिंसाकरणयोश्च' । 'धिन्विकृण्व्योरच' इत्यु-प्रत्ययः । 'तप्तनप्तनथनाश्च' इति तस्य तनादेशः ॥ हे विश्वे सर्वे देवासः देवाः यूयं च इह अस्मिन् धने प्राप्तव्ये विषये वीरयध्वं विक्रामयत । यथा वयं तद्धनं लभेमहि तथा वीर्यवन्तो यूयं प्रयतध्वमित्यर्थः ॥ 'वीर विक्रान्तौ' । अपि च प्रजया पुत्रादिरूपया मा हास्महि वयं मा परित्यज्येमहि[2] । मा च तनूभिः शरीरैस्त्यज्येमहि[3] । अस्मान् कदाचिदपि पुत्रादयः शरीराणि च मा परित्याक्षुरित्यर्थः ॥ 'ओहाक् त्यागे' । अस्मात् कर्मणि लुङि चिण्वद्भावाभावे रूपमेतत् ॥ तथा हे राजन् राजमान यद्वास्माकं स्वामिन् हे सोम द्विषते अप्रीतिं कुर्वते ॥ द्विषेः शतरि अदादित्वात् शपो लुक् । 'शतुरनुमः०' इति विभक्तेरुदात्तत्वम् । 'षष्ठ्यर्थे चतुर्थी वक्तव्या' इति चतुर्थी ॥ द्विषतः शत्रोः मा रधाम मा वशं प्राप्नुयाम तथा त्वं कुर्वित्यर्थः । 'रध्यतिर्वशगमने' ( निरु. ६. ३२ ) इति यास्कः । यद्वा । द्विषते शत्रवे तदर्थं मा रधाम । परिपक्वा हननार्हा मा भूम ॥ 'रध हिंसासंराद्ध्योः' । संराद्धिः पाक इति तद्वृत्तिः । माङि लुङि पुषादित्वात् च्लेरङादेशः ॥ ॥ १५ ॥

अग्ने मन्युं प्रतिनुदन्परेषामदब्धो गोपाः परि पाहि नस्त्वम् ।
प्रत्यञ्चो यन्तु निगुतः पुनस्तेऽमैषां चित्तं प्रबुधां वि नेशत् ॥ ६ ॥

१. क-ख-ग-घ-यथार्था । २. ख-ग-परित्यज्येमहि । ३. ख-ग-°त्यज्येमहि ।

अग्ने । मन्युम् । प्रतिऽनुदन् । परेषाम् । अदब्धः । गोपाः । परि । पाहि । नः । त्वम् ।
प्रत्यञ्चः । यन्तु । निऽगुतः । पुनः । ते । अमा । एषाम् । चित्तम् । प्रऽबुधाम् । वि । नेशत् ॥ ६ ॥

हे अग्ने परेषां शत्रूणां मन्युं क्रोधं प्रतिनुदन् प्रतिमुखं प्रेरयन् तिरस्कुर्वन् अदब्धः केनाप्यहिंसितो गोपाः गोपायिता ॥ 'गुपू रक्षणे' इत्यस्मात् आयप्रत्ययान्तात् क्विपि वेरपृक्तस्य लोपात् पूर्वं वलि लोपे रूपमेतत् ॥ ईदृशः त्वं नः अस्मान् परि पाहि परितः सर्वतो रक्ष । ते शत्रवः प्रत्यञ्चः प्रत्यञ्चन्तः प्रतिनिवर्तमानाः निगुतः ॥ 'गुङ् अव्यक्ते शब्दे' । अस्मात् क्विपि तुक् ॥ भयेन गद्गदरूपमव्यक्तं शब्दं नितरां कुर्वन्तः पुनः यन्तु स्वकीयं स्थानं पुनर्गच्छन्तु । अपि च प्रबुधां प्रबुध्यमानानाम् एषां[1] शत्रूणां[1] चित्तं ज्ञानसाधनं मनः अमा सह युगपदेव वि नेशत् विनश्यतु ॥ प्रत्येकाभिप्रायेणैकवचनम् । 'णश अदर्शने' इत्यस्माच्छान्दसो लुङ् । पुषादित्वात् च्लेरङादेशः । 'नशिमन्योरलिट्येत्वं वक्तव्यम्' ( पा. सू. ६.४.१२०.५ ) इत्यकारस्यैत्वम् ॥

धाता धातृणां भुवनस्य यस्पतिर्देवं त्रातारमभिमातिषाहम् ।
इमं यज्ञमश्विनोभा बृहस्पतिर्देवाः पान्तु यजमानं न्यर्थात् ॥ ७ ॥

धाता । धातृणाम् । भुवनस्य । यः । पतिः । देवम् । त्रातारम् । अभिमातिऽसहम् ।
इमम् । यज्ञम् । अश्विना । उभा । बृहस्पतिः । देवाः । पान्तु । यजमानम् । निऽअर्थात् ॥ ७ ॥

धातृणां स्रष्टृणामपि धाता स्रष्टा भुवनस्य कृत्स्नस्य भूतजातस्य यः इन्द्रः सविता वा पतिः पालयिता तं देवं देवनशीलं त्रातारं सर्वेभ्यो भयेभ्यः पालयितारम् अभिमातिषाहम् अभिमातीनां शत्रूणां सोढारमभिभवितारम् एवंगुणविशिष्टमिन्द्रं सवितारं वा स्तौमीति शेषः ॥ 'षह अभिभवे' । 'छन्दसि सहः' इति ण्विप्रत्ययः । छान्दसं विभक्त्युदात्तत्वम् ॥ उभा उभावश्विनौ बृहस्पतिः चैतत्प्रमुखाः सर्वे देवाः इमं यज्ञम् अनुष्ठीयमानं यजमानं च न्यर्थात् निकृष्टादर्थात् पापात् । यद्वा । अर्थस्य प्रयोजनस्याभावो न्यर्थम् । तस्मात् पान्तु रक्षन्तु सफलं कुर्वन्त्वित्यर्थः ॥ 'नेरनिधाने' ( पा. सू. ६. २. १९२ ) इत्युत्तरपदान्तोदात्तत्वम् ॥

उरुव्यचा नो महिषः शर्म यंसदस्मिन्हवे पुरुहूतः पुरुक्षुः ।
स नः प्रजायै हर्यश्व मृळयेन्द्र मा नो रीरिषो मा परा दाः ॥ ८ ॥

उरुऽव्यचाः । नः । महिषः । शर्म । यंसत् । अस्मिन् । हवे । पुरुऽहूतः । पुरुऽक्षुः ।
सः । नः । प्रऽजायै । हरिऽअश्व । मृळय । इन्द्र । मा । नः । रिरिषः । मा । परा । दाः ॥ ८ ॥

उरुव्यचाः विस्तीर्णव्यापनः महिषः महान् पूज्यो वा पुरुहूतः बहुभिर्यजमानैराहूतः पुरुक्षुः बहुनिवासः ॥ क्षियतेः 'मितद्र्वादिभ्य उपसंख्यानम्' ( पा. सू. ३. २. १८०. १ ) इति डुप्रत्ययः ॥ यद्वा । पुरुभिर्बहुभिः शब्द्यमानः[2] स्तूयमानः ॥ पूर्ववत् डुप्रत्ययः । औणादिके कर्मणि क्विपि वा 'अनित्यमागमशासनम्' इति तुगभावः ॥ ईदृशः इन्द्रः अस्मिन् हवे यज्ञे । ह्वयन्ते अस्मिन् इन्द्रादय इति हवो यज्ञः । जुहोतेरधिकरणेऽप् ॥ यद्वा । अस्मिन् हवे त्वद्विषये आह्वाने ॥ 'भावेऽनुपसर्गस्य' इति ह्वयतेरप् संप्रसारणं च ॥ नः अस्मभ्यं शर्म सुखं यंसत् यच्छतु ददात्वित्यर्थः ॥

1. ग–अप्रमत्तानामेषां शत्रूणां; ड४.५-ग१२–आगतामेतेषां शत्रूणां । २. ड४.५–शंस्यमानः ।

यमेर्लेट्यडागमः। 'सिब्बहुलम्' इति सिप्॥ हे हर्यश्व हरी अश्वौ यस्य तादृश हे इन्द्र सः त्वं नः अस्माकं प्रजायै। द्वितीयार्थे चतुर्थी। प्रजां पुत्रपौत्रादिकां सुखय सुखय। नः अस्मान् मा रीरिषः मा हिंसीः। मा च परा दाः। पराहत्य परित्यागः। मा परित्याक्षीरित्यर्थः॥

ये नः॑ स॒पत्ना॒ अप॒ ते भ॑वन्त्विन्द्रा॒ग्निभ्या॒मव॑ बाधामहे॒ तान्।
वस॑वो रु॒द्रा आ॑दि॒त्या उ॑परि॒स्पृशं॑ मो॒ग्रं चेत्ता॑रमधिरा॒जम॑क्रन्॥ ९॥

ये। नः॒। स॒ऽपत्नाः॑। अप॑। ते। भ॒व॒न्तु॒। इ॒न्द्रा॒ग्निऽभ्या॑म्। अव॑। बा॒धा॒म॒हे॒। तान्।
वस॑वः। रु॒द्राः। आ॒दि॒त्याः। उ॒प॒रि॒ऽस्पृश॑म्। मा॒। उ॒ग्रम्। चेत्ता॑रम्। अ॒धि॒ऽरा॒जम्। अ॒क्र॒न्॥ ९॥

नः अस्माकं ये सपत्नाः शत्रवः ते अप भवन्तु अपगता भवन्तु। स्वस्थानादपगताः प्रच्युता भवन्तु। तान् सपत्नान् इन्द्राग्निभ्यां हविर्भिः स्तुत्या च प्रसन्नाभ्यामनुगृहीता वयम् अव बाधामहे निकृष्टतरं विनाशयामः। अपि च वसवो रुद्रा आदित्याश्च मा माम् उपरिस्पृशम् उपरतपदस्य संस्प्रष्टारं सर्वेभ्यः श्रेष्ठम् अक्रन् कुर्वन्तु। तथा उग्रम् उद्गूर्णबलं चेत्तारं चेतितारम्॥ छान्दस इडभावः॥ सर्वस्य ज्ञातारम् अधिराजं सर्वेषामधीश्वरं च मां कुर्वन्तु॥ करोतेश्छान्दसे लुङि 'मन्त्रे घस॰' इत्यादिना च्लेर्लुक्॥ ॥ १६ ॥ ॥ १० ॥

एकादशेऽनुवाके त्रयोविंशतिसंख्याकानि सूक्तानि। तत्र 'नासदासीत्' इति सप्तर्चं प्रथमं सूक्तं त्रैष्टुभम्। परमेष्ठी नाम प्रजापतिर्ऋषिः। वियदादिभावानां सृष्टिस्थितिप्रलयादीनामत्र प्रतिपाद्यत्वात् तेषां[१] कर्ता परमात्मा देवता। तथा चानुक्रान्तं— 'नासत्सप्त प्रजापतिः परमेष्ठी भाववृत्तं तु' इति। गतो विनियोगः॥

नास॑दासी॒न्नो सदा॑सीत्त॒दानीं॒ नासी॒द्रजो॒ नो व्यो॑मा प॒रो यत्।
किमाव॑रीवः॒ कुह॒ कस्य॒ शर्म॒न्नम्भः॒ किमा॑सी॒द्गह॑नं गभी॒रम्॥ १॥

न। अस॑त्। आ॒सी॒त्। नो इति॑। सत्। आ॒सी॒त्। त॒दानी॑म्।
न। आ॒सी॒त्। रजः॑। नो इति॑। विऽओ॑म। प॒रः। यत्।
किम्। आ। अ॒व॒री॒व॒रि॒ति॑। कुह॑। कस्य॑। शर्म॑न्। अम्भः॑। किम्। आ॒सी॒त्। गह॑नम्। ग॒भी॒रम्॥ १॥

'तपसस्तन्महिनाजायतैकम्' इत्यादिनाग्रे सृष्टिः प्रतिपादयिष्यते। अधुना ततः प्रागवस्था निरस्तसमस्तप्रपञ्चा या प्रलयावस्था सा निरूप्यते। तदानीं प्रलयदशायामवस्थितं यदस्य जगतो मूलकारणं तत् असत् शशविषाणवन्निरुपाख्यं न आसीत्। न हि तादृशात् कारणादस्य सतो जगत उत्पत्तिः संभवति। तथा नो सत् नैव सदात्मवत् सत्त्वेन निर्वाच्यम् आसीत्। यद्यपि सदसदात्मकं प्रत्येकं विलक्षणं भवति तथापि भावाभावयोः सहावस्थानमपि[२] संभवति। कुतस्तयोः तादात्म्यमिति उभयविलक्षणमनिर्वाच्यमेवासीदित्यर्थः। ननु नो सदिति पारमार्थिकसत्त्वस्य निषेधः। व्यावहारिकस्याप्यनिर्वाच्यत्वप्रसङ्गः। अथोच्येत। न[३]। आनीदवातमिति तस्य सत्त्वमग्रे वक्ष्यते परिशेषान्मायायाः पृथक् सत्त्वं निषिध्यत इति। एवमपि तदानीमिति विशेषणानर्थक्यं व्यवहारदशायामपि

१. त१.२.३.६.७.८-अ-धूर्ता। २. ग-त-अ२.५-सद्भावावस्थानमपि। ३. अ-त१.२.३.६.७.८-अ-'न' नास्ति।

सर्वेषां शीघ्रव्यापनेन[1] तस्य क्रमस्य दुर्लक्षणत्वादेतेषु त्रिषु स्थानेषु प्राथम्यं कुत्रेति विचार्यते। एवं नाम शीघ्रं सर्वतो दिक्षु सर्गो निष्पन्न इत्यर्थः। एतदेव विभजते। सृष्टेषु कार्येषु मध्ये केचित्पदार्थाः रेतोधाः रेतसो बीजभूतस्य कर्मणो विधातारः कर्तारो भोक्तारश्च जीवाः आसन्। अन्ये भावाः महिमानः। स्वार्थिक इमनिच्। महान्तो वियदादयो भोग्याः आसन्। एवं मायासहितः परमेश्वरः सर्वं जगत् सृष्ट्वा स्वयं चानुप्रविश्य भोक्तृभोग्यादिरूपेण विभागं कृतवानित्यर्थः। अयमेवार्थस्तैत्तिरीयके 'तत्सृष्ट्वा तदेवानुप्राविशत्' ( तै. आ. ८. ६ ) इत्यारभ्य प्रतिपाद्यते। तत्र च भोक्तृभोग्ययोर्मध्ये स्वधा। अन्ननामैतत्। भोग्यप्रपञ्चः अवस्तात् अवरो निकृष्ट आसीत्। प्रयतिः प्रयतिता भोक्ता परस्तात् पर उत्कृष्ट आसीत्। भोग्यप्रपञ्चं भोक्तृप्रपञ्चस्य शेषभूतं कृतवानित्यर्थः। 'विभाषा परावराभ्याम्' ( पा. सू. ५. ३. २९ ) इति प्रथमार्थे अस्तातिः। 'अस्ताति च' ( पा. सू. ५. ३. ४० ) इत्यवरशब्दस्यावादेशः। अवस्तादिति संहितायाम् ईषाअक्षादित्वात् प्रकृतिभावः॥

को अद्धा वेद क इह प्र वोचत्कुत आजाता कुत इयं विसृष्टिः।
अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव॥ ६॥

कः। अद्धा। वेद। कः। इह। प्र। वोचत्। कुतः। आऽजाता। कुतः। इयम्। विऽसृष्टिः।
अर्वाक्। देवाः। अस्य। विऽसर्जनेन। अथ। कः। वेद। यतः। आऽबभूव॥ ६॥

एवं भोक्तृभोग्यरूपेण सृष्टिः संग्रहेण प्रतिपादिता। 'एतावद्वा इदमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नाद'(श. ब्रा. १.४.२.१३) इतिवत्। अथेदानीं सा सृष्टिर्दुर्विज्ञानेति न विस्तरेणाभिहितेत्याह को अद्धेति। कः पुरुषः अद्धा पारमार्थ्येन वेद जानाति। कः वा इह अस्मिंल्लोके प्र वोचत् प्रब्रूयात्। इयं दृश्यमाना विसृष्टिः विविधा भूतभौतिकभोक्तृभोग्यादिरूपेण बहुप्रकारा सृष्टिः कुतः कस्मादुपादानकारणात्। कुतः कस्माच्च निमित्तकारणात् आजाता समन्ताज्जाता प्रादुर्भूता। एतदुभयं सम्यक् को वेद को वा विस्तरेण वक्तुं शक्नुयादित्यर्थः। ननु देवाः प्रजानन्तः। सर्वज्ञास्ते ज्ञास्यन्ति वक्तुं च शक्नुवन्तीत्यत[2] आह अर्वागिति। देवाः च अस्य जगतो विसर्जनेन वियदादिभूतोत्पत्त्यनन्तरं विविधं पार्थिवं सर्जनं सृष्टिस्तेन अर्वाक् अर्वाचीनाः कृताः। भूतसृष्टेः पश्चाज्जाता इत्यर्थः। तथाविधास्ते कथं स्वोत्पत्तेः पूर्वकालीनां सृष्टिं जानीयुः। अजानन्तो वा कथं प्रब्रूयुः। उक्तं दुर्विज्ञानत्वं[3] निगमयति। अथ एवं सति देवा अपि न जानन्ति किल[4]। तद्व्यतिरिक्तः कः नाम मनुष्यादिः वेद तज्जगत्कारणं जानाति यतः कारणात् कृत्स्नं जगत् आबभूव प्रजायत[5]॥

इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न।
यो अस्याध्यक्षः परमे व्योमन्त्सो अङ्ग वेद यदि वा न वेद॥ ७॥

इयम्। विऽसृष्टिः। यतः। आऽबभूव। यदि। वा। दधे। यदि। वा। न।
यः। अस्य। अधिऽअक्षः। परमे। विऽओमन्। सः। अङ्ग। वेद। यदि। वा। न। वेद॥७॥

उक्तप्रकारेण यथेदं जगत्सर्जनं दुर्विज्ञानं एवं सृष्टं तज्जगत् दुर्धरमपीत्याह इयमिति। यतः[6] उपादानभूतात् परमात्मनः इयं विसृष्टिः विविधा गिरिनदीसमुद्रादिरूपेण विचित्रा सृष्टिः

१. त४.५-म७-शीघ्रव्यापने। २. ग-भ-शक्यतीत्यत। ३. ग-त१.२.३.६.७.८म-दुर्ज्ञानत्वं। ४. त१.२.३.६.७.८-म-'किल' नास्ति। ५. ग-त१.२.३.६.७.८-आजायत। ६. त-भ-'यतः' नास्ति।

तन्तुभिः तनितृभिर्विस्तारयितृभिर्विश्वदेवादिभूतैः यः सर्वात्मकः यज्ञः विश्वतः सर्वतः ततः विस्तृतः । तथा एकशतम् । एकं च शतं चैकशतम् । 'संख्या' इति पूर्वपदप्रकृतिस्वरत्वम् । एकोत्तरशतमित्यर्थः । यद्वा येषु सत्स्वेषु आग्नीध्रसंवत्सरेषु जीवति तदभिप्रायेणात्र शतसंख्या[1] । जीवता तेन प्रजापतिना सार्धमेकशतमित्युच्यते । यथा 'शतायुर्वै पुरुषः शतवीर्य आत्मैकशतः' ( तै. ब्रा. १.७.६.५ ) इति । अत्यन्तसंयोगे द्वितीया । यद्वा शतसंवत्सरपर्यन्तं देवकर्मभिः देवानुद्दिश्य क्रियमाणैः कृतैः कर्मभिः आयतः दीर्घीभूतः । शतसंवत्सरावस्थायी । एवमायामविस्तारवान् यः यज्ञः सर्वात्मको यज्ञस्तं यज्ञम् इमे पितरः पालकाः प्रजापतेः प्राणभूता विश्वसृजो देवाः वयन्ति निर्मिमते । ये देवाः आययुः तदन्यं सर्वं जगत् सर्जनेन व्यापुः । अपि च प्र वय अप वयेति । प्रवानं नाम प्रकृष्टस्य केवलस्य भोक्तृप्रपञ्चस्य सर्जनम् । अपवानं नाम अपकृष्टस्य निकृष्टस्य अचेतनस्य भोग्यप्रपञ्चस्य सर्जनम् । 'वेञ् तन्तुसंताने' । 'मयुखवेऽन्यतरस्याम्' ( पा. सू. १. ३. १ ) इति लोट् । तस्य 'लोटो हिस्वौ' इत्यनुवृत्तेर्हिरादेशः । सम्प्रसारणादेशः । 'अतो हेः' इति लुक् । प्र वयाप वयेति वदन्तः प्रवानमपवानं च कुर्वन्त इत्यर्थः । एवंभूताः सन्तस्ते विश्वसृजः तते विस्तृते सत्यलोके आसते प्राणरूपेण प्रजापतिमुपासते । यद्वा ज्योतिष्टोमादिरेव एवंरूपत्वेन पटात्मना वर्ण्यते । यो यज्ञो ज्योतिष्टोमादिस्तन्तुभिः तन्तुस्थानीयैः अग्निष्टोमात्यग्निष्टोमादिसंस्थाभेदैः सहभिन्नकर्तृभिर्वा विश्वतः सर्वतस्ततो विस्तृतः । तथैकशतम् । तृतीयार्थे प्रथमा । एकाधिकेनाग्निचयनेन[2] युक्तैः देवकर्मभिः[3] गवामयनप्रभृतिकैः विश्वसृजामयनान्तैः एकाहाहीनसत्रात्मकैर्वा आयतो दीर्घीभूत एवमायामविस्तारवान् यज्ञात्मकोऽयं पटः प्रजापतिना सृष्टः । तं पटं पितरोऽस्माकं पितृभूताः इमेऽङ्गिरसो वयन्ति । तस्य पटस्य प्राचीनतन्तुस्थानीयानि स्तुतशस्त्राणि प्र[4] वय[4] त्वं कुरु अप वय तिरश्चीनतन्तुस्थानीयानि यजूंषि त्वं कुरु इत्येवं परस्परं नियुञ्जाना आसते नियुञ्जन्ति[5] ॥ एवं विस्तृतस्य यज्ञस्य प्रजापतेः सकाशादुत्पत्तिकथनद्वारा प्रतिपाद्यते ॥

पुमाँ एनं तनुत उत्कृणत्ति पुमान्वि तत्ने अधि नाके अस्मिन् ।
इमे मयूखा उप सेदुरू सदः सामानि चक्रुस्तसराण्योतवे ॥ २ ॥

पुमान् । एनम् । तनुते । उत् । कृणत्ति । पुमान् । वि । तत्ने । अधि । नाके । अस्मिन् ।
इमे । मयूखाः । उप । सेदुः । ऊँ इति । सदः । सामानि । चक्रुः । तसराणि । ओतवे ॥ २ ॥

पुमान् पुरुष आदिपुरुषः प्रजापतिः एनं यज्ञं तनुते विस्तारयति । सृजतीत्यर्थः । तथा च ब्राह्मणे — 'स प्रजापतिर्यज्ञमतनुत तमाहरत्तेनायजत' ( ऐ. ब्रा. ५.२२ ) इति 'प्रजापतिर्यज्ञमसृजत यज्ञं सृष्टमनु ब्रह्मक्षत्रे असृज्येताम्' ( ऐ. ब्रा. ७.१९ ) इति च । स एव पुमान् सृष्टं तं यज्ञम् उत्कृणत्ति उद्वेष्टयति । 'कृती वेष्टने' । रौधादिकः । स एव पुमान् प्रजापतिः अस्मिन् भूलोके नाके । अकं दुःखं नास्त्यस्मिन्निति नाकः स्वर्गलोकः । 'नभ्राण्नपात्' इत्यादिना नञः प्रकृतिभावः । तत्र च वि तत्ने इमं यज्ञं विस्तारयति । अधिः सप्तम्यर्थानुवादी । तनोतेर्लिटि 'तनिपत्योश्छन्दसि' इत्युपधालोपः । तस्य स्वरनिबन्धनत्वात् द्विर्वचनम् । मयूखाः रश्मिभूतास्तस्य प्रजापतेः प्राणात्मकाः इमे विश्वसृजो देवाः सदः सदनं देवयजनस्थानम् उप सेदुः । विश्वसर्जनहेतुभूतं विश्वसृजामयनाख्यं यज्ञं कर्तुमुपसीदन्ति । उपसद्य च सामानि रथन्तरादीनि ओतवे वयनाय यज्ञाख्यं पटमोतुं[6] तसराणि तिर्यक्सराणि[7] तिरश्चीनसूत्राणि चक्रुः[8] ॥

1. म१.४.५.८-म२.४.७.८—शतपाल्यकाः । २. त१.२.३.६.७.८-म२.४.८-एकाधिकेनाग्निचयनेन । ३. ग—देवकर्मभिः देवानां कर्मभिः; त१.७—म२.८—देवकर्मभिः देवकर्मभिः । ४. त-म२.४.८—'प वय' नास्ति । ५. ग—नियोजति । ६. त-म—पटं वातुं । ७. ग-त४.५—तिर्यक्प्रसरणानि । ८. म२—चक्रुः कृतवन्तः ।

कासीत्प्रमा प्रतिमा किं निदानमाज्यं किमासीत्परिधिः क आसीत् ।
छन्दः किमासीत्प्रउगं किमुक्थं यद्देवा देवमयजन्त विश्वे ॥ ३ ॥

का । आसीत् । प्रऽमा । प्रतिऽमा । किम् । निऽदानम् ।
आज्यम् । किम् । आसीत् । परिऽधिः । कः । आसीत् ।
छन्दः । किम् । आसीत् । प्रउगम् । किम् । उक्थम् । यत् । देवाः । देवम् । अयजन्त । विश्वे ॥ ३ ॥

विश्वसर्गोपायत्वेन प्रजापतिना सृष्टे यज्ञे विश्वस्य स्रष्टारो विश्वसृजो देवा विश्वसर्जनाय तं यज्ञमन्वतिष्ठन् । तस्मिन् समये जगतोऽनुत्पत्तेर्जगदन्तःपातिनो यागोपकरणभूताः पदार्थाः कथमासन्नित्यनया प्रश्नः क्रियते । यत् यदा विश्वे सर्वे साध्याः देवाः देवं प्रजापतिम् अयजन्त तदानीं तस्य यज्ञस्य प्रमा प्रमाणम् इयत्ता का कथंभूता आसीत् । तथा प्रतिमा । हविष्प्रतियोगित्वेन मीयते निर्मीयत इति प्रतिमा देवता । सा च[1] तस्य यज्ञस्य कासीत् । तथा निदानम् आदिकारणं यागेऽप्रवृत्तस्य प्रवर्तकं फलं किम् आसीत् । तथा आज्यं घृतमेतदुपलक्षितं हविर्वा तस्य यज्ञस्य किमासीत् । तथा परिधिः । परितो धीयन्त इति व्यु. परिधयो बाहुमात्राः पलाशादिवृक्षजन्याः । परिपूर्वात् दधातेः 'उपसर्गे घोः किः' (पा. सू. ३. ३. ९२) इति किप्रत्ययः । सामान्यापेक्षमेकवचनम् । परिधयः क आसन्नित्यर्थः । तथा तस्य यज्ञस्य गायत्र्यादिकं छन्दः किमासीत् । तथा प्रउगम् उक्थम् । उपलक्षणमेतत् । आज्यप्रउगादीन्युक्थानि शस्त्राणि वा कान्यासन् । एतेषु प्रश्नेषु यथाक्रममुत्तरं सूचेनाह ॥

अग्नेर्गायत्र्यभवत् सयुग्वोष्णिहया सविता सं बभूव ।
अनुष्टुभा सोम उक्थैर्महस्वान् बृहस्पतेर्बृहती वाचमावत् ॥ ४ ॥

अग्नेः । गायत्री । अभवत् । सऽयुग्वा । उष्णिहया । सविता । सम् । बभूव ।
अनुऽस्तुभा । सोमः । उक्थैः । महस्वान् । बृहस्पतेः । बृहती । वाचम् । आवत् ॥ ४ ॥

सयुग्वा सहयुक्ता अग्नेः सहायभूता गायत्र्यभवत् । षष्ठ्यन्तात् प्रजापतेर्मुखादजायत । देवतासु मध्येऽग्निः छन्दःसु गायत्री च उभावप्यजायेतामित्यर्थः । तथा च तैत्तिरीयकम्—'प्रजापतिरकामयत प्र जायेयेति स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवतान्वसृज्यत गायत्री छन्दः' (तै. सं. ७. १. १. ४) इति । उष्णिहया[2] उष्णिक्छन्दसा सह सविता देवः सं बभूव तस्मात् प्रजापतेर्जज्ञे । 'दाबं[3] चापि[3] हलन्तानाम्' इति वचनादुष्णिहशब्दात् टाप् । तथा[4] महस्वान् तेजस्वी सोमः उक्थैः स्तुतशस्त्रैः अनुष्टुभा अनुष्टुप्छन्दसा च सार्धं तस्मादेव प्रजापतेरजायत । तथा बृहस्पतेः देवस्य वाचं वाक्यं बृहती छन्दः आवत् अरक्षत् अगच्छद्वा । बृहत्या[5] सार्धं[5] बृहस्पतिरपि तस्मात् प्रजापतेर्जज्ञ इत्यर्थः ॥

विराण्मित्रावरुणयोरभिश्रीरिन्द्रस्य त्रिष्टुबिह भागो अह्नः ।
विश्वान् देवाञ्जगत्या विवेश तेन चाकॢप्र ऋषयो मनुष्याः ॥ ५ ॥

---

१. ता-म-मु-रा । २. ग-म२—तथोष्णिहया । ३. त४.५.म७—आपे चैव । ४. त१.२.३.६.७—तथा तद् । ५. त१.२.३.६.७.८.म१.४.७.८—'बृहत्या सार्धं' नास्ति ।

ईदृशं ^१यज्ञं ^२ये ^३पूर्वे साध्या देवाः प्रजापतेः प्राणभूताः ^४अवपश्यन्त अन्वपश्यन् ^५तान् देवान् प्राणात्मना सर्वत्र वर्तमानान् ^६चक्षसा दर्शनहेतुना ^७मनसा ^८पश्यन् जानन् ^९मन्ये । तानेव विश्वसृजः[1] देवान् स्तौमि । मन्यतिरर्चतिकर्मा ॥

सहस्तौमाः सहछन्दस आवृतः सहप्रमा ऋषयः सप्त दैव्याः ।
पूर्वेषां पन्थामनुदृश्य धीरा अन्वालेभिरे रथ्यो३ न रश्मीन् ॥ ७ ॥

सहऽस्तौमाः । सहऽछन्दसः । आऽवृतः । सहऽप्रमाः । ऋषयः । सप्त । दैव्याः ।
पूर्वेषाम् । पन्थाम् । अनुऽदृश्य । धीराः । अनुऽआलेभिरे । रथ्यः । न । रश्मीन् ॥ ७ ॥

स्तोमैः त्रिवृत्पञ्चदशादिभिः सह वर्तमानाः ^१सहस्तोमाः ^२सहछन्दसः गायत्र्यादिभिः छन्दोभिः सह वर्तमानाः ^३आवृतः आवर्तमानाः ^४सहप्रमाः । प्रमितिः प्रमा यज्ञस्वरूपपरिज्ञानम् । तेन सह वर्तमानाः ^५दैव्याः देवस्य प्रजापतेः संबन्धिनः यद्वा देवानां यष्टव्यानां संबन्धिनः ^६ऋषयः मन्त्रद्रष्टारः ^७सप्त संख्याकाः शीर्षण्याः । यद्वा । मरीचिप्रमुखाः सप्त होत्रादयः सप्त वषट्कर्तारो[2] वा । एवंविधा एते ^८पूर्वेषां पूर्वपुरुषाणामङ्गिरःप्रभृतीनां विश्वसृजां देवानां वा ^९पन्थां पन्थानमनुष्ठानमार्गम् ^{१०}अनुदृश्य क्रमेण ज्ञात्वा ^{११}धीराः धीमन्तः सन्तः ^{१२}अन्वालेभिरे अनुक्रमेण आरब्धवन्तः । यागानुष्ठाने प्रवृत्ता इत्यर्थः । ^{१३}रथ्यो ^{१४}न यथा रथिनो रथेन युक्ता रथस्य नेतारः सूताः ^{१५}रश्मीन् अश्वनियोजनार्थान्[3] प्रग्रहान् सम्यग्ग्रहस्य नयनाय हस्तेनान्वारभन्ते । अन्वारभ्य च सम्यक् तं रथं प्रवर्तयन्ति एवमेतेऽप्यनुष्ठानमार्गं श्रुतितोऽवगम्य सम्यक्सम्पादितवन्त इत्यर्थः ॥  ॥१८॥

'अप प्राचः' इति सप्तर्चं तृतीयं सूक्तं कक्षीवतः पुत्रस्य सुकीर्तेरार्षम् । चतुर्थ्यनुष्टुप् शिष्टाः षट् त्रिष्टुभः । चतुर्थीपञ्चम्यावश्विदेवत्ये शिष्टा ऐन्द्र्यः । तथा चानुक्रान्तम्—'अप प्राचः सुकीर्तिः काक्षीवतो मध्येऽनुष्टुप्सोत्तरा चाश्विन्यौ' इति । षष्ठेऽहनि ब्राह्मणाच्छंसिन उक्थशस्त्र एतत्सूक्तम् । सूत्रितं च—'सुकीर्तिं ब्राह्मणाच्छंसी वृषाकपिं च पङ्क्तिशंसम्' (आश्व. श्रौ. ८. ४) इति । चातुर्विंशिकेऽहनि माध्यंदिने सवने मैत्रावरुणस्य 'अप प्राचः' इत्येषारम्भणीया ऋजुत्वप्रगाथात्पूर्वं शंसनीया । सूत्रितं च—'ऋजुनीती प्रगाथा अप प्राच इन्द्र विश्वाँ अमित्रान्' (आश्व. श्रौ. ७.४) इति । अहर्गणेष्वपि द्वितीयादिष्वहःसु तस्यैव तस्मिन्नेव काले आरम्भणीया । सूत्रितं च—'आरम्भणीयाः पर्यासान् कद्वतोऽहरहःशस्यानीति होत्रका द्वितीयादिष्वेव' (आश्व. श्रौ.७.१) इति ॥

अप प्राच इन्द्र विश्वाँ अमित्रानपापाचो अभिभूते नुदस्व ।
अपोदीचो अप शूराधराच उरौ यथा तव शर्मन् मदेम ॥ १ ॥

अप । प्राचः । इन्द्र । विश्वान् । अमित्रान् । अप । अपाचः । अभिऽभूते । नुदस्व ।
अप । उदीचः । अप । शूर । अधराचः । उरौ । यथा । तव । शर्मन् । मदेम ॥ १ ॥

हे ^१इन्द्र ^२प्राचः प्रमुखमञ्चतः प्राग्देशे वर्तमानान् । अस्मत्तः पूर्वभागे वर्तमानानित्यर्थः । प्रपूर्वादञ्चतेः 'ऋत्विक्[^]' इत्यादिना क्विन् । 'अनिदिताम्' इति नलोपः । शसि 'अचः' इत्यकारलोपे 'चौ' इति दीर्घत्वम् । 'अनिगन्तोऽञ्चतौ वप्रत्यये' (पा. सू. ६.२ ५२) इति गतेः

1. ग-त्र१.२.३.६.७.८-म-विश्वस्य सृजः । 2. त-म१.२.४.८—वषट्कारो । 3. म-त्र१.२.३.६.७.८-म-मु-रथे अश्वानियोजनार्थान् ।

प्रकृतिस्वरत्वम् । तादृशान् विश्वान् सर्वान् अमित्रान् शत्रून् अप नुदस्व अस्मत्तोऽपगमय । तथा हे अभिभूते शत्रूणामभिभवितरिन्द्र अपाचः अपमुखमञ्चतः पृष्ठभागे वर्तमानान् सर्वान् शत्रून् अप नुदस्व । अपि च उदीचः ऊर्ध्वमञ्चतः उपरि वर्तमानान् । उत्पूर्वादञ्चतेः पूर्ववत् क्विनि ‘ उद ईत् ’ इत्यञ्चतेरकारस्येकारः । पूर्ववत्स्वरः । तथाविधानपि शत्रून् अप नुदस्व । तथा हे शूर शौर्यवन्निन्द्र अधराचः अधरदेशमधोभागमञ्चतश्च अधस्तनानपि शत्रून् अप नुदस्व । अधरशब्दोपपदादञ्चतेः क्विनि पूर्ववत् प्रक्रिया । ‘ चौ ’ इति पूर्वपदस्यान्तोदात्तः । उरौ विस्तीर्णे तव संबन्धिनि त्वया दत्ते शर्मन् शर्मणि गृहे सुखे वा यथा वयं मदेम निरुपद्रवाः सन्तो हृष्येम तथा त्वं सर्वत्र वर्तमानानस्मदीयान् शत्रून् विनाशयेत्यर्थः ॥

कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय ।
इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमोवृक्तिं न जग्मुः ॥ २ ॥

कुवित् । अङ्ग । यवऽमन्तः । यवम् । चित् । यथा । दान्ति । अनुऽपूर्वम् । विऽयूय ।
इहऽइह । एषाम् । कृणुहि । भोजनानि । ये । बर्हिषः । नमःऽवृक्तिम् । न । जग्मुः ॥ २ ॥

अङ्ग हे इन्द्र यवमन्तः यवादिधान्ययुक्ताः कर्षकाः यवं चित् । उपलक्षणमेतत् । यवगोधूमादीन् अनुपूर्वं यो यो धान्यविशेषः प्रथमं पच्यते तेनानुपूर्व्येण वियूय पृथक्कृत्य यथा कुवित् बहुलं दान्ति लुनन्ति । ‘ दाप् लवने ’ । आदादिकः । विपूर्वात् यौतेर्ल्यपि ‘युप्लुवोर्दीर्घश्छन्दसि’ ( पा. सू. ६.४.५८ ) इति दीर्घः । एवम् इहेह अस्मिन्नस्मिन् देशे सर्वस्मिन् एषां यजमानानां भोजनानि । धननामैतत् । भोगसाधनानि धनानि कृणुहि कुरु । यस्मिन्[1] यस्मिन् देशे यद्धनमपेक्षितं तदनुगुणं प्रयच्छेत्यर्थः ॥ ‘ उतश्च प्रत्ययाच्छन्दसि वावचनम् ’ ( पा. सू. ६.४. १०६.१) इति हेर्लुगभावः । एषामित्युक्ते के पुनरिमे इत्यत आह । ये यजमानाः बर्हिषः यज्ञस्य नमोवृक्तिं नमसो हविर्लक्षणस्यान्नस्य नमस्कारात्मकस्य स्तोत्रस्य वा वर्जनमकरणं न जग्मुः न प्राप्नुवन्ति किंतु सर्वदा हविर्भिर्यजन्ति स्तुतिभिः स्तुवन्ति च । एषां कृणुहीत्यन्वयः ॥

नहि स्थूर्यृतुथा यातमस्ति नोत श्रवो विविदे संगमेषु ।
गव्यन्त इन्द्रं सख्याय विप्रा अश्वायन्तो वृषणं वाजयन्तः ॥ ३ ॥

नहि । स्थूरि । ऋतुऽथा । यातम् । अस्ति । न । उत । श्रवः । विविदे । सम्ऽगमेषु ।
गव्यन्तः । इन्द्रम् । सख्याय । विप्राः । अश्वऽयन्तः । वृषणम् । वाजयन्तः ॥ ३ ॥

एकेन धुर्येण युक्तमनः स्थूरि इत्युच्यते । ऋतुथा ऋतौ यस्मिन् काले प्राप्तव्यं तस्मिन्काले स्थूरि अनः यातं तं देशं प्राप्तं नहि अस्ति न हि भवति । एकेन धुर्येण युक्तः शकटः शीघ्रं गन्तव्यं न प्राप्नोतीत्यर्थः । उत अपि च संगमेषु संग्रामेषु[2] श्रवः अन्नं यशो वा न विविदे न लभते । इन्द्रस्तु तद्विलक्षणः । वृषणं वर्षितारं तम् इन्द्रं गव्यन्तः गा इच्छन्तः विप्राः मेधाविनो वयं सख्याय सखिकर्मणे आह्वयाम इति शेषः । कर्तृभूताः । अश्वायन्तः अश्वानात्मन इच्छन्तः वाजयन्तः अन्नकामाः[3] बलकामाश्च[3] ॥

सौत्रामण्यां सुराग्रहाणां पुरोनुवाक्या ‘ युवम् ’ इत्येषा । सूत्रितं च—‘ युवं सुराममश्विनेति ग्रहाणां पुरोनुवाक्या ’ (आश्व. श्रौ. ३.९) इति ॥

१. त-म१.४.८–सु–यस्य । २. त२.६.७–संगमनेषु । ३. त७–अन्नकामाश्च ।

युवं सुराममश्विना नमुचावासुरे सचा ।
विपिपाना शुभस्पती इन्द्रं कर्मस्वावतम् ॥ ४ ॥

युवम् । सुरामम् । अश्विना । नमुचौ । आसुरे । सचा ।
विऽपिपाना । शुभः । पती इति । इन्द्रम् । कर्मऽसु । आवतम् ॥ ४ ॥

हे अश्विना अश्विनौ हे शुभस्पती उदकस्य शोभनालंकारस्य वा पती पालयितारौ सुरामं सुष्ठु रमणसाधनमिदं हविः विपिपाना विशेषेण पीतवन्तौ युवं युवां सचा सह संगतौ आसुरे असुरयुद्धे नमुचौ एतत्संज्ञे असुरे हन्तव्ये सति कर्मसु बोधनकर्मसु इन्द्रम् आवतम् अरक्षतम् ॥ विपिपाना । 'पा पाने' इत्यस्मात् लिटः कानच् । 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम् । शुभस्पती इति 'सुबामन्त्रिते॰' इति षष्ठ्यन्तस्य पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्याष्टमिकं सर्वानुदात्तत्वम् ॥

पूर्वोक्तानामेव ग्रहाणां 'पुत्रमिव' इति याज्या । सूत्रितं च—'पुत्रमिव पितरावश्विनोभेति याज्या' (आश्व. श्रौ. ३.९) इति ॥

पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दंसनाभिः ।
यत्सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णक् ॥ ५ ॥

पुत्रम्ऽइव । पितरौ । अश्विना । उभा । इन्द्र । आवथुः । काव्यैः । दंसनाभिः ।
यत् । सुरामम् । वि । अपिबः । शचीभिः । सरस्वती । त्वा । मघऽवन् । अभिष्णक् ॥५॥

हे इन्द्र त्वां पितरौ मातापितरौ पुत्रमिव । 'पिता मात्रा' (पा. सू. १.२.७०) इति पितुः शेषः । उभा उभौ अश्विनौ काव्यैः प्रशस्यैः दंसनाभिः आत्मीयैः कर्मभिः आवथुः । मध्यमो व्यत्ययेन । आवतुः रक्षतुः । त्वं च सुरामं सुखेन रमणसाधनं हविः यत् यदा शचीभिः शक्तिभिः सार्धं व्यपिबः विशेषेण पीतवानसि तदा हे मघवन् धनवन्निन्द्र सरस्वती देवी त्वा त्वाम् अभिष्णक् उपासेवत । भिष्णक् उपसेवायाम् । कण्ड्वादिः । छान्दसो यगभावः । शपि 'बहुलं छन्दसि' इति शपो लुक् । 'हल्ङ्याब्भ्यः॰' इति लोपः ॥

इन्द्रः सुत्रामा स्ववाँ अवोभिः सुमृळीको भवतु विश्ववेदाः ।
बाधतां द्वेषो अभयं कृणोतु सुवीर्यस्य पतयः स्याम ॥ ६ ॥

इन्द्रः । सुऽत्रामा । स्वऽवान् । अवःऽभिः । सुऽमृळीकः । भवतु । विश्वऽवेदाः ।
बाधताम् । द्वेषः । अभयम् । कृणोतु । सुऽवीर्यस्य । पतयः । स्याम ॥ ६ ॥

तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ।
स सुत्रामा स्ववाँ इन्द्रो अस्मे आराच्चिद्द्वेषः सनुतर्युयोतु ॥ ७ ॥

तस्य । वयम् । सुऽमतौ । यज्ञियस्य । अपि । भद्रे । सौमनसे । स्याम ।
सः । सुऽत्रामा । स्वऽवान् । इन्द्रः । अस्मे इति । आरात् । चित् । द्वेषः । सनुतः । युयोतु ॥७॥

'त्रातारमिन्द्रम्' इत्यस्मिन् वर्गे व्याख्याते (ऋ. सं. ६.४७.११–१३)। अक्षरार्थस्तु। सुष्ठु त्राता धनवान् सर्वस्य वेदिता इन्द्रो रक्षणैः सुष्ठु सुखयिता भवतु शत्रूंश्च हिनस्तु अभयं च करोत्वस्माकम्। अतो वयं वीर्यस्य योग्यस्य धनस्य स्वामिनो भवेमेति॥ सप्तम्यास्तु। तस्य यज्ञार्हस्य इन्द्रस्यानुग्रहबुद्धौ भजनीये सौमनस्ये च वयं विषयभूता भवेम। सुष्ठु त्राता धनवान् स इन्द्रोऽस्मत्तो दूरदेशे द्वेष्टृजनं योधयत्विति॥ ॥ १९ ॥

'ईजानम्' इति सप्तर्चं चतुर्थं सूक्तं नृमेधपुत्रस्य शकपूतस्यार्षं मित्रावरुणदेवताकम्। आद्या तु लिङ्गोक्तभूम्यादिदेवताका न्यङ्कुसारिणी द्वितीयद्वादशकन्यष्टकवती। द्वितीयाषष्ठ्यौ प्रस्तारपङ्क्ती द्विद्वादशकाष्टकवती। सप्तमी महासतोबृहती त्र्यष्टकद्विद्वादशकवती। शिष्टाश्चितस्रो विराड्रूपा एकादशिनस्त्रयोऽष्टकश्चेति लक्षणलक्षिताः। तथा चानुक्रान्तम्—'ईजानं शकपूतो नार्मेधो मैत्रावरुणं न्यङ्कुसारिण्याद्या लिङ्गोक्तदेवतान्त्या[1] महासतोबृहत्युपाद्योपान्त्ये[2] प्रस्तारपङ्क्ती शेषा विराड्रूपाः' इति। गतो विनियोगः॥

ई॒जा॒नमिद् द्यौर्गू॒र्ताव॑सुरीजा॒नं भूमि॑र॒भि प्र॑भू॒षणि॑।
ई॒जा॒नं दे॒वाव॒श्विना॑व॒भि सु॒म्नैर॑वर्धताम्॥ १॥

ई॒जा॒नम्। इत्। द्यौः। गू॒र्तऽव॑सुः। ई॒जा॒नम्। भूमिः॑। अ॒भि। प्र॒ऽभू॒षणि॑।
ई॒जा॒नम्। दे॒वौ। अ॒श्विनौ॑। अ॒भि। सु॒म्नैः। अ॒व॒र्ध॒ता॒म्॥ १॥

गूर्तवसुः। गूर्तमुद्यतं स्तोतृभ्यो दानाय हस्ते धृतं वसु धनं यस्याः सा तथोक्ता। 'गुरी उद्यमने'। निष्ठा। 'श्वीदितो निष्ठायाम्' इतीट्प्रतिषेधः। 'नसत्तनिषत्त॰' इत्यादिना निपातनान्नत्वाभावः। 'अन्येषामपि॰' इति सांहितिको दीर्घः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्॥ ईदृशी द्यौः द्युलोकाभिमानिनी देवता ईजानम् इत् यष्टारमित्थम्भूतमेव पुरुषमभिवर्धयति। यजेर्लिटः कानच्। 'वचिस्वपि॰' इति संप्रसारणे द्विर्वचनम्। तथा भूमिः च प्रभूषणि प्रभवने यद्वा प्रकृष्टभूषणे अलंकारे निमित्तभूते सति ईजानम् अभिवर्धयति। अपि च देवौ दानादिगुणयुक्तौ अश्विनौ ईजानम् इत्थम्भूतं पुरुषं सुम्नैः धनैः अभि अवर्धताम् अभिवर्धयतः। सुम्नैरन्तर्भावितण्यर्थात् व्यत्ययो लङ्॥

ता वां मि॒त्रावरुणा धार॒यत्क्षि॑ती सुषु॒म्नेषि॑त॒त्वता॑ यजामसि।
यु॒वोः क्रा॒णाय॑ स॒ख्यैर॒भि ष्या॑म र॒क्षसः॑॥ २॥

ता। वा॒म्। मि॒त्रावरुणा। धा॒रय॑त्क्षिती॒ इति॑ धा॒रय॑त्ऽक्षिती। सु॒ऽसु॒म्ना। इ॒षि॒त॒त्वता॑। य॒जा॒म॒सि॒।
यु॒वोः। क्रा॒णाय॑। स॒ख्यैः। अ॒भि। स्या॒म॒। र॒क्षसः॑॥ २॥

हे मित्रावरुणा मित्रावरुणौ धारयत्क्षिती ध्रियमाणमनुष्यकौ। यद्वा क्षितिरिति मनुष्यनाम। हवींषि धारयन्तः क्षितयो मनुष्या ययोः स्वभूतास्तथाविधौ। सुषुम्ना सुसुम्नौ सुधनौ[3] सुष्ठु सुखौ वा ता तौ वां युवाम् इषितत्वता इषितत्वेन। तृतीयैकवचने छान्दसस्तकारोपजनः। यद्वा। भावप्रत्ययान्तात् पुनरपि भावप्रत्ययो विकल्पश्च यद्वत्। इषितत्वतेन प्राप्यत्वेन। इतो तृतीया। यतो

1. अनु.—मैत्रावरुणमाद्या लिङ्गोक्तदेवता न्यङ्कुसारिण्यन्त्या। 2. त१.२.३.१.८-म१.४.७.८—°द्योपान्त्ये च। 3. म१-त४.५-म२—शोभनधनौ; त१.२.३.७-म१.४.७.८—'सुधनौ' नास्ति।

अस्मिन् । सु । एतत् । शकऽपूते । एनः । हिते । मित्रे । निऽगतान् । हन्ति । वीरान् ।
अवोः । वा । यत् । धात् । तनूषु । अवः । प्रियासु । यज्ञियासु । अर्वा ॥ ५ ॥

योऽयं शकपूताख्य ऋषिः ^५अस्मिन् ^५शकपूते स्थितम् ^५एतत् ^५एनः पापं शत्रूणां पापकरणमायुधं वा ^५मित्रे देवे ^५हिते हिताचरणपरेऽनुकूले सति ^५निगतान् नितान्तम्यान् हननार्थं नियमेन प्राप्तवतः ^५वीरान् शत्रोः पुत्रादीन् ^५सु[1] सुष्ठु ^५हन्ति हिनस्ति । अस्मिन्नृषौ समवेतं[2] पापार्थं तन्मित्रस्य प्रसादेन तदीयेषु तनूषु स्वकार्यं दुःखं जनयतीत्यर्थः । निगतान् । निपूर्वाद्गमेः कर्मणि निष्ठा । 'गति-रनन्तरः[2]' इति गतेः प्रकृतिस्वरत्वम् । कर्देत्यत आह । ^५अवोः हविर्भिस्तर्पयितुः । अवतेरौणादिक उप्रत्ययः । तस्य यजमानस्य ^५यज्ञियासु यज्ञार्हासु क्रियासु ^५तनूषु शरीरेषु ^५अर्वा अभिगन्ता मित्रो वरुणो वा ^५यत् यदा[3] ^५अवः रक्षणं ^५धात् दधाति निदधाति स्थापयति । यदा । यदा[4] अर्वा अभिगन्ता स ऋषिः अवितुः रक्षितुर्मित्रस्य वरुणस्य वा यागार्हासु क्रियासु तनूषु शरीरेषु अवो हविर्लक्षणमन्नं धात् धारयति । तदानीं मित्रे वरुणे चानुकूले सति तद्देवो वीरान् हन्तीत्यर्थः ॥

युवोर्हि मातादितिर्विचेतसा द्यौर्न भूमिः पयसा पुपूतनि ।
अव प्रिया दिदिष्टन सूरो निनिक्त रश्मिभिः ॥ ६ ॥

युवोः । हि । माता । अदितिः । विऽचेतसा । द्यौः । न । भूमिः । पयसा । पुपूतनि ।
अव । प्रिया । दिदिष्टन । सूरः । निनिक्त । रश्मिऽभिः ॥ ६ ॥

हे ^५विचेतसा विशिष्टज्ञानौ मित्रावरुणौ ^५युवोर्हि युवयोः खलु ^५माता जननी ^५अदितिः अदीना अखण्डनीया वा भवति । सैव भूमिः । 'इयं वा अदितिः' (तै. सं. ५.२.६.१) इति श्रुतेः । ^५द्यौर्न यथा द्युलोकः ^५पयसा वृष्ट्युदकेन सर्वं जगत् पुनाति एवमेषा[5] सा ^५भूमिः पयसा आसेचनेन रसेन हवि-रात्मना परिणतेन ^५पुपूतनि परिपवने यजमानानां पापस्य शोधने हेतुर्भवतीत्यर्थः ॥ पूतेरन्त्यात्पूयतेर्वा कनिन्प्रत्ययः[6] । छान्दसं द्विर्वचनम् । तौ युवामतिविश्य पूर्वं ^५प्रिया प्रियाणि धनानि ^५अव ^५दिदिष्टन अवाङ्मुखमस्मदभिमुखं दिशत दत्त ॥ 'दिश अतिसर्जने' । अस्माल्लोटि छान्दसः शपः श्लुः । 'तप्तनप्तनथनाश्च' इति तशब्दस्य तनादेशः ॥ अपि च ^५सूरः सूर्यस्य ^५रश्मिभिः किरणैः ^५निनिक्त अस्मान् शोधयत पोषयत वा । 'णिजिर् शौचपोषणयोः' । जौहोत्यादिकः । 'संज्ञापूर्वको विधिरनित्यः' इति 'णिजां त्रयाणां' (पा. सू. ७. ४. ७५) इत्यभ्यासस्य गुणो न क्रियते ॥

युवं ह्यप्नराजावसीदतं तिष्ठद्रथं न धूर्षदं वनर्षदम् ।
ता नः कणूकयन्तीर्नृमेधस्तत्रे अंहसः सुमेधस्तत्रे अंहसः ॥ ७ ॥

युवम् । हि । अप्नऽराजौ । असीदतम् । तिष्ठत् । रथम् । न । धूःऽसदम् । वनऽसदम् ।
ता । नः । कणूकऽयन्तीः । नृऽमेधः । तत्रे । अंहसः । सुऽमेधः । तत्रे । अंहसः ॥ ७ ॥

हे मित्रावरुणौ ^५युवं ^५हि युवां खलु ^५अप्नराजौ अप्नसा कर्मणा, प्रवर्तनप्रकाशनादिना राज-मानौ दीप्यमानौ सन्तौ ^५असीदतं स्वकीये स्थाने निषीदथः आसाथे ॥ अप्न इति कर्मनाम । 'आपः

१. ग-भ–'सु' नास्ति । २. ल१.२.३.६.७.८-भ१.४.५.८–'समवेतं...गतेरनन्तरः' नास्ति ।
३. ल-भ–वहा । ४. ल-भ–'यदा' नास्ति । ५. भ-ल१.२.३.६.७.८-भ–एवमेव । ६. भ-ल४.५-भ२.७–कनिन्प्रत्ययः ।

कर्मण्याप्यो ह्रस्वो नुट् च वा' ( उ. सू. ४. २०७ ) इत्यासेतेः असुन् तस्य नुडागमो धातोर्ह्रस्वश्च। तस्मिन्नुपपदे राजतेः 'सत्सूद्विष°' इत्यादिना क्विप्। 'वीनोपधसनादीनां छन्दसि लोपो वक्तव्यः' ( पा. म. ६. १. १०९. ६ ) इत्यप्रसः सकारलोपः ॥ तौ मित्रावरुणौ कक्षयन्तीः। कक्षतिः शब्दार्थः। कम्पनमाक्रोशरूपं शब्दमभिगच्छन्तीः ताः प्रसिद्धाः शात्रवीः प्रजा अभितिष्ठतम्। च संप्रत्यर्थे। संप्रति रथं तिष्ठत् अधितिष्ठताम्। तिष्ठतेर्लेट्यडागमः। 'इतश्च लोपः' इतीकारलोपः। प्रत्येकाभिप्रायेणैकवचनम्। कीदृशं रथम्। धूर्षदं धुर्यमध्योर्बद्धदेशे सीदन्तं वनर्षदं[1] वनेषूद्यानेषु क्रीडार्थं निषीदन्तम्[1]। यद्वा। वनमित्युदकनाम। समुद्रमध्ये हि वरुणो निवसति। वने समुद्रोदके निषीदन्तम्। उभयत्रापि पूर्ववत् क्विप्। वनसदमित्यत्र छान्दसः सांहितिको रेफोपजनः। हे मित्रावरुणौ युवाभ्यां नृमेधः मम पिता अंहसः पापात् तत्रे त्रातो रक्षितो बभूव। 'त्रैङ् पालने' इत्यस्मात् कर्मणि लिट्। यद्वा उपचाराज्जन्ये जनकशब्दः। नृमेधस्य पुत्रः शकपूतोऽहं पापात् युवाभ्यां तत्रे रक्षितोऽस्मि। सुमेधः अन्योऽपि सुप्रज्ञो यजमानः अंहसः पापात् तत्रे युवाभ्यामेवारक्ष्यत। 'भीत्रार्थानाम्' ( पा. सू. १. ४. २५ ) इत्यंहसोऽपादानसंज्ञा ॥　　॥२०॥

'प्रो षु' इति सप्तर्चं पञ्चमं सूक्तं पिजवनपुत्रस्य सुदास आर्षमैन्द्रम्। आद्यस्तृचः शाक्वरः। षट्पञ्चाशदक्षरा शाक्वरी। द्वितीयस्तृचो महापङ्क्तिकः। षळष्टका महापङ्क्तिः। सप्तमी त्रिष्टुप्। तथा चानुक्रान्तं—'प्रो षु सुदाः पैजवनः शाक्वरमहापङ्क्त्यावाद्यौ तृचावन्त्या[2] त्रिष्टुप्' इति। षोळशिशस्त्र आद्यस्तृचः शंसनीयः। सूत्रितं च—'त्रिकद्रुकेषु महिषो यवाशिरं प्रो ष्वस्मै पुरोरथमिति तृचावतिच्छन्दसौ' ( आश्व. श्रौ. ६. २ ) इति। महाव्रते माध्यंदिनसवने मरुत्वतीयेऽनुरूपतृचस्य 'प्रो ष्वस्मै' इत्येका। तथैव पञ्चमारण्यके सूत्रितं च—'प्रो ष्वस्मै पुरोरथमित्यस्योऽनुरूपः[3]' ( ऐ. आ. ५. १. १ ) इति ॥

प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत ।
अभीके चिदु लोककृत्संगे समत्सु वृत्रहास्माकं बोधि चोदिता
नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ १ ॥

प्रो इति । सु । अस्मै । पुरःऽरथम् । इन्द्राय । शूषम् । अर्चत ।
अभीके । चित् । ऊँ इति । लोकऽकृत् । सम्ऽगे । समत्ऽसु । वृत्रऽहा ।
अस्माकम् । बोधि । चोदिता । नभन्ताम् । अन्यकेषाम् । ज्याकाः । अधि । धन्वऽसु ॥१॥

अस्मै इन्द्राय। षष्ठ्यर्थे चतुर्थी। अस्येन्द्रस्य पुरोरथं रथस्य पुरः पुरस्तात्। 'पुरोऽव्ययम्' इति गतिसंज्ञायां गतिसमासः। रथस्याग्रतो वर्तमानं शूषं बलं सु प्रो अर्चत। हे स्तोतारः सुष्ठु प्रकर्षेण स्तुत। प्र उ इति निपातसमुदायः प्रो इति। 'ओत्' इति प्रगृह्यसंज्ञम्। इन्द्रो विशेष्यते। समत्सु। समानं माद्यन्त्यत्रेति समदः संग्रामाः। औणादिकोऽधिकरणे क्विप्। 'समानस्य छन्दसि°' इति सभावः। समत्सु संग्रामेषु संगे संगमने शत्रुवधके। 'डोऽन्यत्रापि दृश्यते' ( पा. सू. ३. २. ४८ ) इति गमेर्डः। अभीके चित् अभ्यर्णेऽपि निकटे प्राप्तेऽपि केशाकेशियुद्धावस्थायामपि लोककृत् स्थितिकृत् पलायिता[4] स्थिरश्च वृत्रहा वृत्राणामावरकाणां हन्ता एवंविधः स इन्द्रः अस्माकं स्तोतॄणां चोदिता धनानां प्रेरिता सन् बोधि। अस्माभिः कृतानि परिचरणानि बुध्यताम्।

१. त१.२.३.६.७.८-म१.४.५.७.८—'वनर्षदं...निषीदन्तं' नास्ति। २. अनु.-सूची त्रिष्टुबन्त्या।
३. त१.२.३.७-म१.२.८—°मित्यनुरूपः। ४. ग१-त४.५-म७.८—पलायिता।

बुधेश्चान्यसे लुङि 'दीपजनबुध०' इत्यादिना कर्तरि च्लेश्चिणादेशः। 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः। अपि च अन्यकेषां कुत्सितानामन्येषां शत्रूणाम् अधि[1] धन्वसु धनुःष्वधिरोपिता ज्याकाः कुत्सिता ज्याः नभन्तां हिंसन्त्यो नश्यन्तु। ज्याशब्दात् कुत्सायां प्रागिवात्कः (पा. सू. ५. ३. ७०; ७४)। 'णभ तुभ हिंसायाम्'। क्रैयादिकः। व्यत्ययेन शप्॥

त्वं सिन्धूँरवासृजोऽधराचो अहन्नहिम् ।
अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यं तं त्वा परि ष्वजामहे
नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ २॥

त्वम् । सिन्धून् । अव । असृजः । अधराचः । अहन् । अहिम् ।
अशत्रुः । इन्द्र । जज्ञिषे । विश्वम् । पुष्यसि । वार्यम् । तम् । त्वा । परि । स्वजामहे ।
नभन्ताम् । अन्यकेषाम् । ज्याकाः । अधि । धन्वऽसु ॥ २ ॥

हे इन्द्र त्वं सिन्धून् स्यन्दनशीलान् जलपूरान् अधराचः अधरमधोमुखमञ्चतो गन्तॄन् अवासृजः मेघान्निरगमयः। यतस्त्वम् अहिम् अन्तरिक्षे गतं मेघम् अहन् हतवानसि। यद्वा। अहिमागत्य हन्तारं सर्वस्य जगत आवरकं वृत्रमसुरमहन् हतवानसि। अतो हे इन्द्र त्वम् अशत्रुः शत्रुरहितः जज्ञिषे जायसे। न सन्ति शत्रवोऽस्येति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। जनेर्लिटि 'गमहन०' इत्यादिनोपधालोपः। 'द्विर्वचनेऽचि' इति स्थानिवद्भावात् द्विर्वचनम्। तथा विश्वं सर्वं वार्यं वरणीयं संभजनीयं धनं पुष्यसि पोषयसि। 'वृङ् संभक्तौ'। ऋहलोर्ण्यत्। 'ईडवन्दवृशंसदुहां ण्यतः' इत्याद्युदात्तत्वम्। तं तादृशं त्वा त्वां परि ष्वजामहे हविर्भिः स्तुतिभिश्चालिङ्गनं कुर्मः। वशीकुर्म इत्यर्थः। 'ष्वञ्ज परिष्वङ्गे'। 'दंशसञ्जस्वञ्जां शपि' (पा. सू. ६. ४. २५) इत्यनुनासिकलोपः। गतमन्यत्॥

वि षु विश्वा अरातयोऽर्यो नशन्त नो धियः ।
अस्तासि शत्रवे वधं यो न इन्द्र जिघांसति या ते रातिर्ददिर्वसु
नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ ३ ॥

वि । सु । विश्वाः । अरातयः । अर्यः । नशन्त । नः । धियः ।
अस्ता । असि । शत्रवे । वधम् । यः । नः । इन्द्र । जिघांसति । या । ते । रातिः । ददिः । वसु ।
नभन्ताम् । अन्यकेषाम् । ज्याकाः । अधि । धन्वऽसु ॥ ३ ॥

विश्वाः सर्वाः अरातयः अदातारः अर्यः अभिगन्त्र्यः नः अस्माकं शत्रुभूताः प्रजाः सु[2] सुष्ठु वि नशन्त विनश्यन्तु। हे इन्द्र त्वदर्थं धियः कर्माणि स्तुतयो वा प्रवर्तन्ताम्। हे इन्द्र यः नः अस्मान् जिघांसति हन्तुमिच्छति। हन्तेः सनि 'अज्झनगमां सनि' इति दीर्घः। 'अभ्यासाच्च' इति कुत्वम्। तस्मै शत्रवे वधं हननसाधनमायुधम् अस्तासि क्षेप्ता भवसि। 'असु क्षेपणे'। तार्च्छीलिकस्तृन्। ते तव या रातिः धनप्रदानहेतुर्हस्तः। 'रा दाने'। कस्मै किम्।

१. त-म-' अधि ' नास्ति। २. त-म-' सु ' नास्ति।

'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः' इति क्तिन उदात्तत्वम्। सा रातिः ˇवसु धनं ˇददिः अस्मभ्यं दाता भवतु। 'आदृगमहन' इति ददातेः किन्प्रत्ययः। 'न लोकाव्यय' इति वसुशब्दात् षष्ठ्यभावः। सिद्धमन्यत्॥

यो न॑ इन्द्राभितो जनो॑ वृकायुरादिदे॑शति ।
अधस्पदं तमीं॑ कृधि विबाधो अ॑सि सासहिर्नभ॑न्तामन्यकेषां॑ ज्याका अधि धन्व॑सु ॥४॥

यः । नः । इन्द्र । अभितः॑ । जनः॑ । वृकऽयुः । आऽदिदे॑शति ।
अधःऽपदम् । तम् । ईम् । कृधि । विऽबाधः । असि । ससहिः ।
नभ॑न्ताम् । अन्यकेषा॑म् । ज्याकाः । अधि॑ । धन्व॑ऽसु ॥ ४ ॥

हे ˇइन्द्र ˇयः ˇजनः ˇवृकायुः। वृको हिंसकोऽरण्यश्वा स्तेनो वा। स इवाचरन् ˇनः अस्मान् ˇअभितः सर्वतः ˇआदिदेशति अभिलक्ष्य आयुधान्यतिसृजति। दिशतेर्लेट्यडागमः। छान्दसः शपः श्लुः। 'नाभ्यस्तस्याचि पिति' इत्यत्र 'बहुलं छन्दसीति वक्तव्यम्' इति वचनात् प्रतिषेधाभावे लघूपधगुणः। 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्। ˇतम् ईम् इमं जनम् ˇअधस्पदं पादस्याधस्ताद्वर्तमानं ˇकृधि कुरु। करोतेश्छान्दसो विकरणस्य लुक्। 'श्रुशृणुपृकृवृभ्यः' इति हेर्धिः। यतस्त्वं ˇविबाधः विशेषेण बाधिता शत्रूणां ˇसासहिः ˇअभिभविता च ˇअसि[1]। सिद्धः शेषः॥

यो न॑ इन्द्राभिदास॑ति सना॑भिर्यश्च निष्ट्यः॑ ।
अव॑ तस्य बलं॑ तिर म॒हीव॒ द्यौरध॑ त्मना॑ नभ॑न्तामन्यकेषां॑ ज्याका अधि धन्व॑सु ॥५॥

यः । नः । इन्द्र । अभिऽदास॑ति । सऽना॑भिः । यः । च । निष्ट्यः॑ ।
अव॑ । तस्य॑ । बल॑म् । तिर । मही॑ऽइव । द्यौः । अध॑ । त्मना॑ ।
नभ॑न्ताम् । अन्यकेषा॑म् । ज्याकाः । अधि॑ । धन्व॑ऽसु ॥ ५ ॥

हे ˇइन्द्र ˇयः[2] ˇसनाभिः समानजन्मा शत्रुः ˇनः अस्मान् ˇअभिदासति उपक्षयति ˇयः ˇच ˇनिष्ट्यः निकृष्टजन्मा अस्मानुपक्षयति॥ जातार्थे निकुष्टवाचिनो निःशब्दादव्ययात्त्यप् (पा. सू. ४. २. १०४)। 'ह्रस्वात्तादौ तद्धिते' (पा. सू. ८. ३. १०१) इति षत्वम्॥ ˇअध अनन्तरमेव ˇमहीव ˇद्यौः महती द्यौरिव विस्तृतं ˇतस्य शत्रोः ˇबलं ˇत्मना आत्मना। 'मन्त्रेष्वाङ्यादेरात्मनः' इत्याकारलोपः। स्वयमेव ˇअव[3] ˇतिर जहि[3]। अवतिरतिर्वधकर्मा। गतमन्यत्॥

वयमि॑न्द्र त्वायवः॑ सखित्वमा र॑भामहे ।
ऋतस्य॑ नः पथा न॑याति विश्वा॑नि दुरिता नभ॑न्तामन्यकेषां॑ ज्याका अधि धन्व॑सु ॥६॥

वयम् । इन्द्र । त्वाऽयवः॑ । सखिऽत्वम् । आ । रभामहे ॥ ऋतस्य॑ । नः । पथा । नय ।
अति॑ । विश्वा॑नि । दुःऽइता । नभ॑न्ताम् । अन्यकेषा॑म् । ज्याकाः । अधि॑ । धन्व॑ऽसु ॥ ६ ॥

हे ˇइन्द्र ˇत्वायवः त्वामात्मन इच्छन्तः ˇवयं ˇसखित्वं सखिकर्म यज्ञात्मकम् ˇआ ˇरभामहे उपक्रमामहे। ˇऋतस्य सत्यस्य यज्ञस्य ˇपथा मार्गेण। नयत छेर्लोपः। उदात्तनिवृत्तिस्वरेण तृतीयाया

१. ब—बाधि भवसि। २. त-भ—'यः' नास्ति। ३. त-भ—अवतिर जहि।

उदात्तत्वम्। विश्वानि सर्वाणि दुरिता दुरितानि दुर्गमनानि पापानि तत्फलानि च नः अस्मान् अति अव अतिपारय। गतमन्यत्॥

अस्मभ्यं सु त्वमिन्द्र तां शिक्ष या दोहते प्रति वरं जरित्रे।
अच्छिद्रोध्नी पीपयद्यथा नः सहस्रधारा पयसा मही गौः॥ ७॥

अस्मभ्यम्। सु। त्वम्। इन्द्र। ताम्। शिक्ष। या। दोहते। प्रति। वरम्। जरित्रे।
अच्छिद्रऽऊध्नी। पीपयत्। यथा। नः। सहस्रऽधारा। पयसा। मही। गौः॥ ७॥

हे इन्द्र त्वं तां गाम् अस्मभ्यं स्तोतृभ्यः सु शिक्ष प्रदेहि। शिक्षतिर्दानकर्मा। या गौः जरित्रे स्तोत्रे वरं वरणीयं पयः प्रति दोहते प्रतिदिनं नैरन्तर्येण दुग्धे॥ दुहेः 'बहुलं छन्दसि' इति शपो लुगभावः। अनुपदेशात् लसार्वधातुकानुदात्तत्वे शपः पित्वादनुदात्तत्वम्। धातुस्वरः शिष्यते। वरम्। 'वृञ् वरणे' इत्यस्मात् 'ग्रहवृदृनिश्चिगमश्च' इति कर्मण्यप्॥ सा प्रता गौः अच्छिद्रोध्नी निश्छिद्रोधस्का अत एव सहस्रधारा बहुभिः क्षीरधाराभिरुपेता मही महती सती यथा नः अस्मान् पयसा क्षीरेण पीपयत् प्रवर्धयेत् तथा तां कुर्विति शेषः॥ 'ओप्यायी वृद्धौ'। ण्यन्ताच्छान्दसो लुङ्। व्यत्ययेन धातोः पीभावः। अडभावश्छान्दसः॥ ॥२१॥

'उभे यत्' इति सप्तर्चं षष्ठं सूक्तं युवनाश्वपुत्रस्य मान्धातुरार्षम्। 'पूर्वेण' इत्यर्धर्च-संहितायाः सप्तम्यास्तु गोधा नाम ब्रह्मवादिन्यृषिः। सप्तमी पङ्क्तिः। शिष्टाः षळष्टिका महापङ्क्त्यः। इन्द्रो देवता। तथा चानुक्रान्तम्—'उभे सप्त मान्धाता यौवनाश्वो महापाङ्क्तं पङ्क्तिरन्त्या सामध्यर्धां गोधापश्यत्' इति। गतः सूक्तविनियोगः। चातुर्विंशिकेऽहनि माध्यंदिनेऽच्छावाकस्या-सत्सूक्तो वैकल्पिकः स्तोत्रियः। सूत्रितं च—'उभे यदिन्द्र रोदसी अव यत्त्वं शतक्रतो' (आश्व. श्रौ. ७. ४) इति॥

उभे यदिन्द्र रोदसी आपप्राथोषाइव।
महान्तं त्वा महीनां सम्राजं चर्षणीनां देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत्॥ १॥

उभे इति। यत्। इन्द्र। रोदसी इति। आऽपप्राथ। उषाःऽइव।
महान्तम्। त्वा। महीनाम्। सम्ऽराजम्। चर्षणीनाम्।
देवी। जनित्री। अजीजनत्। भद्रा। जनित्री। अजीजनत्॥ १॥

हे इन्द्र उभे रोदसी द्यावापृथिव्यौ यत् यस्मात् आपप्राथ तेजसाप्रासि आपूरयसि। 'प्रा पूरणे'। आदादिकः। छान्दसो लिट्। उषाइव यथोषाः स्वभासा सर्वं जगदापूरयति तद्वत्। तं महीनां महतां देवानामपि महान्तम् अधिकं चर्षणीनां मनुष्याणामपि सम्राजम् ईश्वरमिन्द्रं त्वा त्वां देवी देवमहीला जनित्री साधु जनयित्री अदितिः अजीजनत् अजनयत्। जनेर्ण्यन्तात् लुङि चङि रूपमेतत्। यस्मादेषा जनित्री ईदृशं पुत्रम् अजीजनत् अतः कारणात् सा[1] भद्रा कल्याणी प्रशस्ता जाता। जनेर्ण्यन्तात् साधुकारिणि तृच्। 'जनिता मन्त्रे' इतीडादौ णिलोपो[3] निपात्यते। 'ऋन्नेभ्यः' इति ङीप्॥

---

1. ख-म१.७–भद्रत्वम्; ख-म२.४.८–भद्रत्व न। 2. म७–अस्तौ। 3. ख-म–णिलोपो।

अव स्म दुर्हणायतो मर्तस्य तनुहि स्थिरम्।
अधस्पदं तमीं कृधि यो अस्माँ आदिदेशति
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत्॥ २ ॥

अव। स्म। दुःऽहनायतः। मर्तस्य। तनुहि। स्थिरम्।
अधःऽपदम्। तम्। ईम्। कृधि। यः। अस्मान्। आऽदिदेशति।
देवी। जनित्री। अजीजनत्। भद्रा। जनित्री। अजीजनत्॥ २॥

दुर्हणायतः दुःखमदं हननमाचरतः मर्तस्य मनुष्यस्य शत्रोः स्थिरं दृढं बलम् अव तनुहि। अवततं[1] नीचीनं कुरु। स्म इति पूरकः। तं शत्रुम् ईम् एनम् अधस्पदं पादयोरधस्तादवस्थानं कृधि कुरु। यः शत्रुः अस्मानादिदेशति जिघांसति। समानमन्यत्॥

अव त्या बृहतीरिषो विश्वश्चन्द्रा अमित्रहन्।
शचीभिः शक्र धूनुहीन्द्र विश्वाभिरूतिभिर्देवी
जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत्॥ ३ ॥

अव। त्याः। बृहतीः। इषः। विश्वऽचन्द्राः। अमित्रऽहन्।
शचीभिः। शक्र। धूनुहि। इन्द्र। विश्वाभिः। ऊतिऽभिः।
देवी। जनित्री। अजीजनत्। भद्रा। जनित्री। अजीजनत्॥ ३॥

हे अमित्रहन् अमित्राणां शत्रूणां हन्तः शक्र इन्द्र शचीभिः आत्मीयाभिः शक्तिभिः आत्मीयैः कर्मभिर्वा त्याः ताः प्रसिद्धाः बृहतीः महतीः। 'बृहन्महतोरुपसंख्यानम्' इति ङीप उदात्तत्वम्। विश्वश्चन्द्राः। विश्वानि सर्वाणि चन्द्राणि हिरण्यानि यासां ताः। 'ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे' इति सुडागमः। 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम्। एवंभूताः इषः अन्नानि विश्वाभिः सर्वाभिः ऊतिभिः रक्षाभिः सार्धम् अव धूनुहि अस्मास्ववाङ्मुखं कम्पय। अस्मदभिमुखं गमयेत्यर्थः। गतमन्यत्॥

चातुर्विंशिकेऽहनि माध्यंदिनेऽच्छावाकस्य 'अव यत्त्वम्' इति तृचो वैकल्पिकोऽनुरूपः। सूत्रं तु सूक्तादावुदाहृतम्॥

अव यत्त्वं शतक्रतविन्द्र विश्वानि धूनुषे।
रयिं न सुन्वते सचा सहस्रिणीभिरूतिभिर्देवी
जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत्॥ ४ ॥

अव। यत्। त्वम्। शतक्रतो इति शतऽक्रतो। इन्द्र। विश्वानि। धूनुषे।
रयिम्। न। सुन्वते। सचा। सहस्रिणीभिः। ऊतिऽभिः।
देवी। जनित्री। अजीजनत्। भद्रा। जनित्री। अजीजनत्॥ ४॥

---

[1] ल-म-अवतं।

यद्योपयामसि योपयामः। अनलुप्तत्वेन विमोहयामः। ' युप विमोहने '। किं तर्हि ? सम्यक्त्वं मन्त्रेण स्मार्तं श्रुतौ विधिवाक्ये प्रतिपाद्यं युष्माद्विषयं कर्म तत् चरामसि आचरामः। अनुतिष्ठामः। अपि च पक्षेभिः पक्षैः पक्षस्थानीयैः स्तुतवाक्यैः अपिकक्षेभिः। अपिकक्षो नाम बाह्वोर्मध्यभागः। पक्षस्य अपिकक्षभूतैर्हविर्भिः अत्र अस्मिन् यज्ञेऽभितः सर्वतो युष्मान् सं रभामहे सम्यगालभामहे ॥  ॥ ११ ॥

' यस्मिन् ' इति सप्तर्चं सप्तमं सूक्तं यमगोत्रस्य कुमारस्यार्षमानुष्टुभं यमदेवत्यम्। तथा चानुक्रान्तं—' यस्मिन् कुमारो यामायनो याममानुष्टुभं तु ' इति ॥

यस्मि॑न्वृ॒क्षे सु॑पला॒शे दे॒वैः सं॒पिब॑ते य॒मः ।
अत्रा॑ नो वि॒श्पतिः॑ पि॒ता पु॑रा॒णाँ अनु॑ वेनति ॥ १ ॥

यस्मि॑न् । वृ॒क्षे । सु॒ऽप॒ला॒शे । दे॒वैः । स॒म्ऽपिब॑ते । य॒मः ।
अत्र॑ । नः॒ । वि॒श्पतिः॑ । पि॒ता । पु॒रा॒णान् । अनु॑ । वे॒न॒ति॒ ॥ १ ॥

वृक्षे। लुप्तोपममेतत्। वृक्षवत् सुपलाशे शोभनपलाशोपेते शोभनोद्यानसहिते। यद्वा। शोभनपर्णोपेते वृक्षे। तादृशस्य वृक्षस्य मूलं यथौष्ण्यजनितश्रमापनोदनेन सुखकरं भवति तद्वत् सुखकरे यस्मिन् स्थाने देवैः परिजनभूतैः यमः नियन्ता वैवस्वतः संपिबते सह सुकृते। पिबतिरत्यर्थः। विश्पतिः विशां प्रजानामधिपतिः पिता नः। व्यत्ययेन बहुवचनम्। मम नचिकेतसो जनको वाजश्रवसः अत्र अस्मिन् यमस्य स्थाने पुराणान् पुरातनान् अत्र चिरकालं निवसतः पितॄन् अनु तेषां पश्चात् तत्समीपे निवसत्वयमिति वेनति मां कामयते। नचिकेता नाम कुमारो वाजश्रवसेन पित्रा यमलोकं प्रस्थापितः सन् यमं दृष्ट्वा प्रसाद्य पुनरपीमं लोकमाजगाम। अयमर्थ इहमादिकैर्मन्त्रैः प्रतिपाद्यते। यद्वा। कुमारो नाम नचिकेतसोऽन्यः कश्चिदृषिः। यच्छतीति यम आदित्यः। सप्तकेन सूक्तेन तुष्टाव। सुपलाशे वृक्ष इव यस्मिन् शोभने स्थाने यम आदित्यो देवैः। दीव्यन्तीति देवा रश्मयः। तैः संपिबते संगच्छते। उपसर्गवशात् पिबतिरत्र गत्यर्थः। व्यत्ययेनात्मनेपदम्। अत्र अस्मिन् स्थाने स्थितो विश्पतिर्विशां प्रजानां प्रकाशनप्रवर्षणादिना पालयिता प्राणात्मना सर्वेषां जनकः स आदित्यः पुराणांश्चिरंतनान् पितॄन् नोऽस्मानपि वेनति अनुग्राहकत्वेन कामयते। यद्वा। अत्र स्थाने स्थिताम् नोऽस्माकं पुराणान् पूर्वपुरुषाननु वेनति अनुक्रमेण कामयते॥

पु॒रा॒णाँ अ॑नु॒वेन॑न्तं॒ चर॑न्तं पा॒पया॑मु॒या ।
अ॒सू॒यन्न॒भ्य॑चाकशं॒ तस्मा॑ अस्पृहयं॒ पुनः॑ ॥ २ ॥

पु॒रा॒णान् । अ॒नु॒ऽवेन॑न्तम् । चर॑न्तम् । पा॒पया॑ । अ॒मु॒या ।
अ॒सू॒यन् । अ॒भि । अ॒चा॒क॒श॒म् । तस्मै॑ । अ॒स्पृ॒ह॒य॒म् । पुन॒रिति॑ ॥ २ ॥

पुराणान् पुरातनान् पितॄन् अनुवेनन्तं मामनुगतं कामयमानम् अमुया अनया पापया निकृष्टया बुद्ध्या सह चरन्तं वर्तमानं पितरं वाजश्रवसम् असूयन् सुखेन जीवन्तं मां मृत्युसमीपं प्रेषितवानिति मानसेनोपतापेन युक्तः सन् प्रथमम् अभ्यचाकशम्। अयं पश्यतिकर्मा। अभ्य-

१. अनु.–हि। २. त१.२.३.६.७.८-म–' भुङ्क्ते...नचिकेतसः ' नास्ति। ३. त-म–' देवैः ' नास्ति। ४. ग-त१.२.३.६.७.८-म–' पिबतिरत्र ...... पालयिता ' नास्ति।

पश्यम् । 'असुङ् मानस उपतापे'। कण्ड्वादिः । पुनः पश्चात् तस्मा अस्पृहयं पितुराज्ञया तं मृत्युं प्राप्तुमैच्छम् । 'स्पृह ईप्सायाम्'। चुरादिरदन्तः । 'स्पृहेरीप्सितः' ( पा. सू. १.४.३६ ) इति संप्रदानसंज्ञायां तच्छब्दाच्चतुर्थी । यद्वा । पुराणान् चिरंतनान् स्तोतॄन् पूर्वपुरुषान् पितॄन् वा अनुवेनन्तमनुक्रमेण कामयमानं चरन्तम् उदयास्तमयाभ्यां दिवि परिवर्तमानमनया पापया निकृष्टया स्तोतुमसमर्थया बुद्ध्या असूयम् । गुणेषु दोषाविष्करणमसूया । परकीयगुणेषु दोषानाविष्कुर्वन्नन्यथाकरवम् । अयमपि कश्चिदिति सामान्यरूपेणाभ्यगच्छम् । इदानीं तु पुनस्तस्यादित्यस्य माहात्म्यं जानन्[1] तस्मा अस्पृहयम् । तमेवादित्यं स्तुतिभिः परिचरणात्मकैः कर्मभिश्च प्राप्तुमैच्छम्[2] ॥

यं कुमार नवं रथमचक्रं मनसाकृणोः ।
एकेषं विश्वतः प्राञ्चमपश्यन्नधि तिष्ठसि ॥ ३ ॥

यम् । कुमार । नवम् । रथम् । अचक्रम् । मनसा । अकृणोः ।
एकऽईषम् । विश्वतः । प्राञ्चम् । अपश्यन् । अधि । तिष्ठसि ॥ ३ ॥

नचिकेतसं कुमारं यमोऽनयोत्तरया च प्रलोभयति[3] । हे कुमार नवम् अभिनवमिमं पूर्वमदृष्टम् । अभिनवत्वमेव व्यनक्ति । अचक्रं चक्ररहितं तम्[4] एकेषम्[4] एकेषा यस्य तादृशं तथापि विश्वतः सर्वतः प्राञ्चं प्रकर्षेणाञ्चन्तं गच्छन्तं यं रथं मनसाकृणोः मत्समीपं प्रतिगमनाय अध्यवसायात्मकमीदृशं यं रथमकरोः कृत्वा[5] च अपश्यन् कर्तव्याकर्तव्यविभागमजानन्[6] अधि तिष्ठसि रथमारोहसि । यद्वा । स्तोतारं कुमाराख्यमृषिमादित्यः प्रत्यक्षः सन् देहात्मनोर्विवेकं बोधयति । हे कुमार नवे चक्ररहितम् एकेषम् । एकः प्राण ईषास्थानीयो यस्य । ईदृशमभिनवं सर्वतो गच्छन्तं शारीरात्मकं यं रथं मनसान्तःकरणेन अकृणोः अकरोः । संकल्पात्मकेन मनसा हि कामो जायते[7] । तस्यां हि कामनायां पुण्यपापात्मकं कर्म[8] क्रियते । तेन च भोगप्रदानायेदं शरीरमारभ्यत इति परंपरया मनसः शरीरनिष्पादकत्वम् । तं शरीरात्मकं[8] रथमपश्यन्नजानन् । 'लक्षणहेत्वोः०' ( पा. सू. ३.२.१२६ ) इति हेतौ शतृप्रत्ययः । तत्स्वरूपापरिज्ञानाद्धेतोरधितिष्ठसि । भोगायतनत्वेन स्वीकरोषि ॥

यं कुमार प्रावर्तयो रथं विप्रेभ्यस्परि ।
तं सामानु प्रावर्तत समितो नाव्याहितम् ॥ ४ ॥

यम् । कुमार । प्र । अवर्तयः । रथम् । विप्रेभ्यः । परि ।
तम् । साम । अनु । प्र । अवर्तत । सम् । इतः । नावि । आऽहितम् ॥ ४ ॥

हे कुमार नाचिकेतः यं पूर्वोक्तमधिष्ठितं रथं प्रावर्तयः मत्समीपं प्रत्यगमयः विप्रेभ्यः मेधाविभ्यः परि उपरि भूलोके वर्तमानानां मेधाविनां बान्धवानामुपरिष्टात् । अन्तरिक्ष इत्यर्थः । 'पञ्चम्याः परावध्यर्थे' इति विसर्जनीयस्य सत्वम् । तं रथं साम पित्रा कृतं सान्त्वनं यमसमीपं गत्वा एवमेव त्वया वक्तव्यमिति प्रत्यागमनकारणमुपायोपदेशनम् अनु प्रावर्तत । इतः अस्माल्लोकादन्वगच्छत् । कथंभूतम् । नावि नौवत्तरणसाधनायां बुद्धौ सम् आहितं सम्यक्स्थितम् । यद्वा ।

१. त४.५–जानन्नहं । २. ग-त१.२.३.६.७.८-म–आप्तुमैच्छं । ३. त४.५–प्रचोदयति । ४. त-म–'तमेकेषं' नास्ति । ५. त१.२.३.६.७.८-म१.२.४.८–कृत्वा वा । ६. त-म–कर्तव्यविभाग° । ७. त-म–जन्यते । ८. त-म–'कर्म ... ... शरीरात्मकं' नास्ति. ।

मुनयः । वातऽरशनाः । पिशङ्गाः । वसते । मला ।
वातस्य । अनु । ध्राजिम् । यन्ति । यत् । देवासः । अविक्षत ॥ २ ॥

वातरशनाः वातरशनस्य पुत्राः मुनयः अतीन्द्रियार्थदर्शिनो जूतिवातजूतिप्रभृतयः पिशङ्गा पिशङ्गानि कपिलवर्णानि मला मलिनानि वल्कलरूपाणि वासांसि वसते आच्छादयन्ति । 'वस आच्छादने' । आदादिकः । ईदृशास्ते यत् यदा देवासः देवाः तपसो महिम्ना दीप्यमानाः सन्तः अविक्षत देवतास्वरूपं प्राविशन् । विशेर्लुङि शल इगुपधादनिटः क्सः । नेर्विश इत्यात्मनेपदम् । तदा ते वातस्य वायोः ध्राजिं गतिम् अनु यन्ति अनुगच्छन्ति । प्राणोपासनया प्राणरूपिणो वायुभावं प्रपन्ना इत्यर्थः ॥

उन्मदिता मौनेयेन वाताँ आ तस्थिमा वयम् ।
शरीरेदस्माकं यूयं मर्तासो अभि पश्यथ ॥ ३ ॥

उत्ऽमदिताः । मौनेयेन । वातान् । आ । तस्थिम । वयम् ।
शरीरा । इत् । अस्माकम् । यूयम् । मर्तासः । अभि । पश्यथ ॥ ३ ॥

मौनेयेन मुनिभावेन लौकिकसर्वव्यवहारविसर्जनेन[1] उन्मदिताः उन्मत्ता उन्मत्तवदाचरन्तः । यद्वा । उत्कृष्टं मदं हर्षं प्राप्ताः । वयं वातान् वायूनस्माभिरुपास्यमानान् आ तस्थिम आस्थितवन्तः । हे मर्तासः मनुष्याः अस्माकं शरीरेत् शरीराण्येव यूयं केवलम् अभि पश्यथ । नास्मान्[2] । यतो वयं नीरूप्येण वायुना सायुज्यं प्राप्ताः ॥

अन्तरिक्षेण पतति विश्वा रूपावचाकशत् ।
मुनिर्देवस्यदेवस्य सौकृत्याय सखा हितः ॥ ४ ॥

अन्तरिक्षेण । पतति । विश्वा । रूपा । अवऽचाकशत् ।
मुनिः । देवस्यऽदेवस्य । सौकृत्याय । सखा । हितः ॥ ४ ॥

मुनिः अत्यर्थो द्रष्टा प्रकाशक ऋषिर्ज्योतिरूपतां सूर्यात्मतां वा तदुपासनया प्राप्तः सन् अन्तरिक्षेण आकाशेन पतति गच्छति । किं कुर्वन् । विश्वा विश्वानि सर्वाणि रूपाणि रूप्यमाणानि पदार्थजातानि अवचाकशत् अभिपश्यन् स्वतेजसा दर्शयन् । तथा देवस्यदेवस्य । 'नित्यवीप्सयोः' इति द्विर्वचनम् । 'अनुदात्तं च' इति परस्याम्रेडितस्यानुदात्तत्वम् । सर्वस्यापि देवस्य सखा सखिभूतः अत एव सौकृत्याय । सुष्ठु देवाननुद्दिश्य क्रियमाणं यागात्मकं कर्म सुकृतम् । तस्य भावाय सम्यगनुष्ठापनाय हितः निहितः स्थापितो भवति ॥

वातस्याश्वो वायोः सखाथो देवेषितो मुनिः ।
उभौ समुद्रावा क्षेति यश्च पूर्व उतापरः ॥ ५ ॥

वातस्य । अश्वः । वायोः । सखा । अथो इति । देवऽइषितः । मुनिः ।
उभौ । समुद्रौ । आ । क्षेति । यः । च । पूर्वः । उत । अपरः ॥ ५ ॥

---

१. त-म—लौकिकस्य सर्व° । २. त-म-गु—नास्मान् ।

वातस्य वायोर्गतिरिव अश्वः व्याप्तः । यद्वा । वायोः अश्विता भोक्ता । वायुरेव तस्याहार इत्यर्थः । अत एव वायोः सखा मित्रभूतः अथो अपि च देवेषितः देवेन द्योतमानेन वायुना सूर्येण वा इषितः प्राप्तः[1] । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । ईदृशो मुनिः केशिसंज्ञकः कश्चिदन्यप्रकारेण वायुरूपः सूर्यरूपो वा सन् उभौ समुद्रौ उभयौ आ क्षेति अभिगच्छति । 'क्षि निवासगत्योः' । छान्दसो विकरणस्य लुक् । कौ तौ समुद्रौ । यश्च पूर्वः समुद्रः । उतशब्दश्चार्थे । यश्च अपरः समुद्रः ॥

अप्सरसां गन्धर्वाणां मृगाणां चरणे चरन् ।
केशी केतस्य विद्वान्त्सखा स्वादुर्मदिन्तमः ॥ ६ ॥

अप्सरसाम् । गन्धर्वाणाम् । मृगाणाम् । चरणे । चरन् ।
केशी । केतस्य । विद्वान् । सखा । स्वादुः । मदिन्ऽतमः ॥ ६ ॥

अप्सरसां देवस्त्रीणां गन्धर्वाणां चरणे संचारभूते दिव्यन्तरिक्षे च तथा मृगाणां सिंहादीनां संचारस्थले पृथिव्यां चरन् व्याप्य संचरन् केशी अग्निर्वायुः सूर्यो वा केतस्य ज्ञातव्यस्य सर्वस्यार्थजातस्य विद्वान् यद्वा ज्ञातव्यस्याश्चर्यस्यैतस्य सखा विद्वान् अविशेषात् सर्वं जानन् स्वादुः स्वादयिता[2] रसयिता सर्वस्य रसस्योत्पादकः अत एव मदिन्तमः मादयितृतमो भवति । 'नाद्घस्य' इति नुडागमः ॥

वायुरस्मा उपामन्थत्पिनष्टि स्मा कुनंनमा ।
केशी विषस्य पात्रेण यद्रुद्रेणापिबत्सह ॥ ७ ॥

वायुः । अस्मै । उप । अमन्थत् । पिनष्टि । स्म । कुनंनमा ।
केशी । विषस्य । पात्रेण । यत् । रुद्रेण । अपिबत् । सह ॥ ७ ॥

केशी रश्मिभिर्युक्तः सूर्यः रुद्रेण रुद्ररूपेण मरुद्गणेन । यद्वा । 'रुद्रो वा एष यदग्निः' (तै. सं. ५.५.९.१) इति श्रवणाद्रुद्रो वैद्युताग्निः । तेन सह वर्तमानो विषस्य । उदकनामैतत् । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । विषमुदकं पात्रेण पानसाधनेन रश्मिजालेन यत् यदा[3] अपिबत् पिबति तदा अस्मै केशिने वायुः उपामन्थत् । भृशं सर्वं रसमुपमथ्नाति । यद्वा । यदापिबत् पीतवान् भवति तदा सूर्यमण्डले घनीभूतमस्य तदुदकं वायुरुपमथ्नाति । मन्थनेन वैद्युताग्निमालोडयति । तथा कुनंनमा कुत्सितमपि सुष्ठु नमयित्री स्वयं नमयितुमशक्यत्वात् स्वतन्त्रा माध्यमिका वाक् पिनष्टि स्म । यथावस्तात् पतति तथा चूर्णीकरोति । स्मेति प्रसिद्धौ । कुपूर्वान्नमयतेः पचाद्यचि 'अन्येष्वपि च' इति षष्ठ्या लुक् । बाधादिसोऽन्त्यपदान्तोदात्तत्वम् ॥ ॥ २५ ॥

'उत देवाः' इति सप्तर्चं नवमं सूक्तमानुष्टुभं वैश्वदेवं भरद्वाजकश्यपगोतमात्रिविश्वामित्रजमदग्निवसिष्ठा इति क्रमेण प्रत्यृचमृषयः । तथा चानुक्रान्तम्—'उत देवाः सप्तैकर्चा वैश्वदेवम्' इति । गतो विनियोगः ॥

उत देवा अवहितं देवा उन्नयथा पुनः । उतागश्चक्रुषं देवा देवा जीवयथा पुनः ॥ १ ॥

१. त४.५—व्याप्तः । २. म—स्वदयिता । ३. त-भ-मु—'यदा' नास्ति ।

उत । देवाः । अवऽहितम् । देवाः । उत् । नयथ । पुनरिति । उत । आगः ।
चक्रुषम् । देवाः । देवाः । जीवयथ । पुनरिति ॥ १ ॥

उत[1] अपि च हे देवाः अवहितम् उन्नयथ[1]। उत अपि च हे देवाः आगः अपराधं चक्रुषं कृतवन्तं मां तस्मादागसो रक्षत। हे देवाः रक्षितारः च पुनः पश्चात् जीवयथ चिरजीविनं कुरुत ॥

द्वाविमौ वातौ वात आ सिन्धोरा परावतः ।
दक्षं ते अन्य आ वातु परान्यो वातु यद्रपः ॥ २ ॥

द्वौ । इमौ । वातौ । वातः । आ । सिन्धोः । आ । पराऽवतः ।
दक्षम् । ते । अन्यः । आ । वातु । परा । अन्यः । वातु । यत् । रपः ॥ २ ॥

इमौ दृश्यमानौ द्वौ वातौ पुरोवातः पश्चाद्वातश्च आ सिन्धोः आ समुद्रात्। मर्यादायामाकारः। यद्वा आ परावतः समुद्रादपि यो दूरदेशः तं देशमवधीकृत्य वातः गच्छतः। 'वा गतिगन्धनयोः'। आदादिकः। तयोर्वातयोः अन्यः एको हे स्तोतः ते तव दक्षं बलम् आ वातु आगमयतु। अन्यः च त्वदीयं यद्रपः पापं तत् परा वातु परागमयतु ॥

आ वात वाहि भेषजं वि वात वाहि यद्रपः ।
त्वं हि विश्वभेषजो देवानां दूत ईयसे ॥ ३ ॥

आ । वात । वाहि । भेषजम् । वि । वात । वाहि । यत् । रपः ।
त्वम् । हि । विश्वऽभेषजः । देवानाम् । दूतः । ईयसे ॥ ३ ॥

हे वात भेषजं सुखं व्याध्युपशमनमौषधं वा आ वाहि आगमय। हे वात यद्रपः अस्मदीयं पापं तत् वि वाहि विगमय। अस्मत्तो विश्लेषय। त्वं हि खलु देवानां दूतः विश्वभेषजः। विश्वानि भेषजानि यस्मिन्। 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम्। ईदृशश्च सन् ईयसे सततं गच्छसि ॥ 'ईङ् गतौ'। दैवादिकः। श्यनो नित्त्वात् 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वम्। 'हि च' इति निघातप्रतिषेधः ॥

आ त्वागमं शंतातिभिरथो अरिष्टतातिभिः ।
दक्षं ते भद्रमाभार्षं परा यक्ष्मं सुवामि ते ॥ ४ ॥

आ । त्वा । अगमम् । शंतातिऽभिः । अथो इति । अरिष्टतातिऽभिः ।
दक्षम् । ते । भद्रम् । आ । अभार्षम् । परा । यक्ष्मम् । सुवामि । ते ॥ ४ ॥

१. ग–उतापि च हे देवाः अवहितमधोनिहितं पुनरुन्नयथ दारिद्र्यपीडितमाढ्यं कुरुथ; त१.३.४.५.६.८–'उत ... ... उन्नयथ' नास्ति; त७–उतापि च हे देवा यूयं अवहितं दारिद्र्येणाधः पातितं मां पश्यतेति शेषः। हे देवाः मां रक्षत पुनः पश्चात् उन्नयथ उद्धरत उत्कृष्टं स्थानं प्रापयतेत्यर्थः; भ–उतापि च हे देवा अवहितं।

ᵛअस्य यजमानस्य ᵛएषः इन्द्रः ᵛअनुस्पष्टः दृष्टिगोचरो भवति ᵛयः ᵛएषाम् मध्ये ᵛअस्मै इन्द्राय ᵛसोमं ᵛसुनोति अभिषुणोति । ᵛमघवा धनोपेत इन्द्रः ᵛतं यजमानम् ᵛअरत्नौ हस्ते ᵛबिभर्ति सम्यग्धृत्वा धारयति रक्षिता सन् हत्वा च ᵛब्रह्मद्विषः तैजसत्वेऽप्यर्थित एव सन् ᵛब्रह्मद्विषः ब्राह्मणद्वेष्टॄन् सर्वान् ᵛहन्ति हिनस्ति ॥

शुनासीरीये पर्वणि 'इन्द्राय शुनासीराय पुरोडाशं द्वादशकपालम्' इत्यस्य 'अश्वायन्तः' इत्येषा याज्या । इन्द्रो वा शुन इति नैकविधकस्यापि हविष इयमेव याज्या । सूत्रितं च—'अश्वायन्तो गव्यन्तो वाजयन्तः शुनं हुवेम मघवानमिन्द्रम्' ( आश्व. श्रौ. २. २० ) इति ॥

अश्वायन्तो गव्यन्तो वाजयन्तो हवामहे त्वोपगन्तवा उ ।
आभूषन्तस्ते सुमतौ नवायां वयमिन्द्र त्वा शुनं हुवेम ॥ ५ ॥

अश्वऽयन्तः । गव्यन्तः । वाजऽयन्तः । हवामहे । त्वा । उपऽगन्तवै । ऊँ इति ।
आऽभूषन्तः । ते । सुऽमतौ । नवायाम् । वयम् । इन्द्र । त्वा । शुनम् । हुवेम ॥ ५ ॥

ᵛअश्वायन्तः अश्वानात्मन इच्छन्तः ॥ क्यचि 'अश्वाघस्यात्' ( पा. सू. ७. ४. ३७ ) इत्यात्वम् ॥ ᵛगव्यन्तः गा आत्मन इच्छन्तः ॥ 'वान्तो यि प्रत्यये' ( पा. सू. ६. १. ७९ ) इत्यवादेशः ॥ ᵛवाजयन्तः अन्नं वाजेन शूर्पादिना प्रज्वलयन्तः ॥ 'वज गतिगन्धनयोः' । णिचि 'वो विधूनने जुक्' ( पा. सू. ७. ३. ३८ ) इति जुगागमः । अस्माच्छतर्यदुपदेशाल्लसार्वधातुकस्वरेणाद्युदात्तत्वे[1] प्राप्ते चित्वादन्तोदात्तत्वे[2] ततो णिच एव स्वरः शिष्यते ॥ अपर आह । वाजमन्नमात्मन इच्छन्त इति । तदानीमवग्रहाभावस्वरौ[3] छान्दसौ मन्तव्यौ । एवंभूता वयं हे इन्द्र त्वाम् ᵛउपगन्तवै उपगन्तुं प्राप्तुं ᵛहवामहे आह्वयामहे ॥ गमेः 'तुमर्थे सेसेन्' इति तवैप्रत्ययः । गतिसमासे 'तवै चान्तश्च युगपत्' इति गतेः प्रकृतिस्वरत्वमुत्तरपदस्यान्तोदात्तत्वम् ॥ ᵛउ इति पूरकः । हे ᵛइन्द्र ᵛते तव ᵛनवायाम् अभिनवायां प्रशस्तायां ᵛसुमतौ शोभनबुद्धौ[4] ᵛआभूषन्तः आ समन्तादवस्थिता वर्तमानाः । यद्वा । आ समन्ताद्भूषयन्तोऽलंकुर्वन्तस्त्वदनुग्रहबुद्धौ वर्तमानाः ᵛवयं ᵛशुनं सुखकरं त्वां ᵛहुवेम आह्वयेम ॥ ॥१८॥

'मुञ्चामि' इति पञ्चर्चं दशमं सूक्तं प्राजापत्यस्य यक्ष्मनाशनाख्यस्यार्षम् । आन्त्यानुष्टुप् शिष्टास्त्रिष्टुभः । यक्ष्मनाशनं लिङ्गोक्ता देवता । तथा चानुक्रान्तं—'मुञ्चामि प्राजापत्यो यक्ष्मनाशनो राजयक्ष्मघ्नमन्त्यानुष्टुप्' इति । क्षयरोगप्रमुखस्य[5] व्याधिजातस्योपशमनार्थमनेन सूक्तेन होतव्यम् । सूत्र्यते हि—'व्याधितस्यातुरस्य[6] यक्ष्मगृहीतस्य वा पञ्चाहुतिभिर्मुञ्चामि त्वा हविषा जीवनाय कमित्येतेन' ( आश्व. गृ. ३. ६. ४-५ ) इति ॥

मुञ्चामि त्वा हविषा जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात् ।
ग्राहिर्जग्राह यदि वैतदेनं तस्या इन्द्राग्नी प्र मुमुक्तमेनम् ॥ १ ॥

मुञ्चामि । त्वा । हविषा । जीवनाय । कम् । अज्ञातऽयक्ष्मात् । उत । राजऽयक्ष्मात् ।
ग्राहिः । जग्राह । यदि । वा । एतत् । एनम् ।
तस्याः । इन्द्राग्नी इति । प्र । मुमुक्तम् । एनम् ॥ १ ॥

---

१. त१.२.३.६.७.८-म-°न्तुदात्ते; त४.५-°न्तुदात्तं । २. त-म-मु-°दनुदात्तत्वे । ३. त-म-इदानीम° । ४. ग-म२-शोभनबुद्धौ अनुग्रहबुद्धौ । ५. ग-त४.५-क्षयरोगप्रमुखस्य । ६. त२.३.४.५.६.८-म-व्याधितस्याधितस्य ।

हे यक्ष्माभिभूत हविषा अनेन करणभूतेन साधनेन होमेन[1] त्वा त्वाम् अज्ञातयक्ष्मात्। अयमेतत्संज्ञ[2] इत्यज्ञातः शरीरगतो रोगोऽज्ञातयक्ष्मः। तस्माद्रोगात् मुञ्चामि विश्लेषयामि। किमर्थम्। जीवसे कं जीवनार्थम्। इह लोके चिरकालावस्थानार्थमित्यर्थः। कमिति पूरकः। उत अपि च राजयक्ष्मात्। यक्ष्माणां राजा यक्ष्मरोगो राजयक्ष्मः। राजदन्तादित्वादुपसर्जनस्य परनिपातः (पा. सू. २. २. ३१)। तस्मादपि त्वां मुञ्चामि। यदि वा यदि च एतत् एतस्मिन् समये एनं व्याधितं पुरुषं ग्राहिः ग्रहणशीला ग्रहरूपा देवता जग्राह गृहीतवती तस्याः देवतायाः सकाशादेनं इन्द्राग्नी एनं प्र मुमुक्तं प्रमोचयतम्॥

यदि॑ क्षि॒तायु॒र्यदि॑ वा॒ परे॑तो॒ यदि॑ मृ॒त्योर॑न्ति॒कं नी॑त ए॒व।
तमा ह॑रामि॒ निर्ऋ॑तेरु॒पस्था॒दस्पा॑र्शमेनं श॒तशा॑रदाय॥ २॥

यदि॑। क्षि॒तऽआ॑युः। यदि॑। वा॒। परा॑ऽइतः। यदि॑। मृ॒त्योः। अ॒न्ति॒कम्। निऽइ॑तः। ए॒व। तम्। आ। ह॒रा॒मि॒। निःऽऋ॑तेः। उ॒पऽस्था॑त्। अस्पा॑र्शम्। ए॒न॒म्। श॒तऽशा॑रदाय॥२॥

यदि स रोगग्रस्तः क्षितायुः क्षीणायुर्भवति यदि वा परेतः अस्माल्लोकात् परागतो भवति यदि च मृत्योः वैवस्वतस्य अन्तिकं निकटं नीतः नितरां प्राप्तः एव भवति एवंभूतमपि तं पुरुषं निर्ऋतेः पापदेवताया आयुषः[3] क्षयकारिण्याः उपस्थात् उपस्थानात्[4] आ हरामि आनयामि आवर्तयामि। आहृत्य च एनं शतशारदाय शतसंवत्सरजीवनार्थम् अस्पार्शं प्रबलं करोमि। 'स्पृ प्रीतिबलनयोः'॥

स॒ह॒स्रा॒क्षेण॑ श॒तशा॑रदेन श॒तायु॑षा ह॒विषाहा॑र्षमेनम्।
श॒तं यथे॒मं श॒रदो॒ नया॒तीन्द्रो॒ विश्व॑स्य दुरि॒तस्य॑ पा॒रम्॥ ३॥

स॒ह॒स्र॒ऽअ॒क्षेण॑। श॒तऽशा॑रदेन। श॒तऽआ॑युषा। ह॒विषा॑। आ। अ॒हा॒र्ष॒म्। ए॒न॒म्। श॒तम्। यथा॑। इ॒मम्। श॒रदः॑। नया॑ति। इन्द्रः॑। विश्व॑स्य। दुः॒ऽइ॒तस्य॑। पा॒रम्॥ ३॥

सहस्राक्षेण। सहस्रमिति बहुनाम। सहस्रमक्षीणि चक्षूंषि यस्य हविषः फलत्वेन क्रियन्ते तत् सहस्राक्षम्। 'बहुव्रीहौ सक्थ्यक्ष्णोः' (पा. सू. ५. ४. ११३) इति षच् समासान्तः। शरदः संबन्धी शारदः संवत्सरः। शतं शारदा यस्य तत्तथोक्तम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। अत एव शतायुषा शतसंवत्सरपरिमितमायुर्जीवनं फलभूतं यस्य तादृशेन[5] हविषा। यद्वा। सहस्राक्ष इन्द्रः। तेन शतशारदेन शरदां संवत्सराणां शतस्य दातृत्वेन संबन्धिना कर्त्रा शतायुषा हविषा करणभूतेन। एनं यक्ष्मगृहीतम् आहार्षं रोगादनैषम्[6]। यथा येन प्रकारेण इमं पुरुषं शतं शरदः संवत्सरान्। अत्यन्तसंयोगे द्वितीया। एतावन्तं कालम् इन्द्रो विश्वस्य सर्वस्य दुरितस्य दुःखस्य पारम् अवसानं दुःखराहित्यं नयाति नयेत् तथाहार्षमित्यर्थः॥

श॒तं जी॑व श॒रदो॒ वर्ध॑मानः श॒तं हे॑म॒न्ताञ्छ॒तमु॑ वस॒न्तान्।
श॒तमि॑न्द्रा॒ग्नी स॑वि॒ता बृह॒स्पतिः॑ श॒तायु॑षा ह॒विषे॒मं पुन॑र्दुः॥ ४॥

१. त-म१.२.४.८—साधनहोमेन। २. त-अ१.९.४.८—अनेन तत्संज्ञ। ३. त१.२.३.७-म१.२.४.८—मानुषः; अ७—मनुष्य। ४. ग-त४.५-म२—उपस्थानात् समीपात्। ५. ग-त१.२.३.६.७.८-म—तादृशेनानेन; त४.५—तादृशमनेन। ६. ग-म४.५-म२—रोगादानैषं, त१.२.३.६.७—रोगादानैष।

शतम् । जीव । शरदः । वर्धमानः । शतम् । हेमन्तान् । शतम् । ऊँ इति । वसन्तान् ।
शतम् । इन्द्राग्नी इति । सविता । बृहस्पतिः । शतऽआयुषा । हविषा । इमम् । पुनः । दुः ॥४॥

हे यक्ष्मगृहीमुक्त ‘वर्धमानः अहरहरभिवृद्धिं प्राप्नुवंस्त्वं ‘शतं ‘शरदः शतसंख्याकान् शरदृतून् ‘जीव प्राणान् धारय । पूर्ववदत्यन्तसंयोगे द्वितीया । ‘शतं ‘हेमन्तान् हेमन्तर्तूंश्च जीव ‘शतं ‘वसन्तान् च । उकारः समुच्चये । अपि च ‘इन्द्राग्नी इन्द्रश्चाग्निश्च ‘सविता प्रेरको देवश्च ‘बृहस्पतिः बृहतां देवानां पालयिता देवश्च ‘शतायुषा शतसंवत्सरपरिमितस्यायुषो हेतुभूतेन ‘हविषा तर्प्यमाणाः सन्तः ‘इमं जनं ‘पुनर्दुः पुनरस्मभ्यं प्रादुः ॥

आहार्षं त्वाविदं त्वा पुनरागाः पुनर्नव ।
सर्वाङ्ग सर्वं ते चक्षुः सर्वमायुश्च तेऽविदम् ॥ ५ ॥

आ । अहार्षम् । त्वा । अविदम् । त्वा । पुनः । आ । अगाः । पुनःऽनव ।
सर्वऽअङ्ग । सर्वम् । ते । चक्षुः । सर्वम् । आयुः । च । ते । अविदम् ॥ ५ ॥

हे व्याधिगृहीत ‘त्वा त्वाम् ‘आहार्षं मृत्योः सकाशादाहृतवानस्मि । अत एव ‘त्वा त्वाम् ‘अविदम् अलप्सि । हे ‘पुनर्नव पुनरभिनव[1] ‘पुनरागाः पुनरस्मत्समीपमागच्छ । हे ‘सर्वाङ्ग सर्वैरविकलैरङ्गैरुपेत ‘ते तव ‘सर्वं ‘चक्षुः । उपलक्षणमेतत् । इन्द्रियवर्गं सकलम् ‘अविदं लब्धवानस्मि । ‘ते तव ‘आयुः जीवनं ‘च ‘सर्वं संपूर्णमविदम् ॥      ॥ १९ ॥

‘ ब्रह्मणाग्निः ’ इति षड्ऋचमेकादशं सूक्तमानुष्टुभम् । ब्रह्मपुत्रो रक्षोहा नामर्षिः । अपप्रसव-समाधानरूपस्य गर्भरक्षणस्य[2] प्रतिपाद्यत्वात्तद्देवताकमिदम् । अनुक्रान्तं च— ‘ ब्रह्मणा षड् ब्राह्मो रक्षोहा गर्भसंस्रावे प्रायश्चित्तमानुष्टुभं हि ’ इति । विनियोगो लिङ्गादवगन्तव्यः ॥

ब्रह्मणाग्निः संविदानो रक्षोहा बाधतामितः ।
अमीवा यस्ते गर्भं दुर्णामा योनिमाशये ॥ १ ॥

ब्रह्मणा । अग्निः । सम्ऽविदानः । रक्षःऽहा । बाधताम् । इतः ।
अमीवा । यः । ते । गर्भम् । दुःऽनामा । योनिम् । आऽशये ॥ १ ॥

‘ब्रह्मणा मन्त्रेण सह ‘संविदानः ऐकमत्यं प्राप्तः ‘रक्षोहा रक्षसां हन्ता ‘अग्निः ‘इतः अस्मात्स्थानात् राक्षसादिकं ‘बाधतां हिनस्तु । ‘यः राक्षसः ‘अमीवा रोगरूपः सन् ‘ते तव ‘गर्भम् ‘आशये आशेते । ‘ लोपस्त आत्मनेपदेषु ’ इति तलोपः । हन्तुं प्राप्नोति । ‘दुर्णामा अर्शो-नाम्नो रोगः । तद्रूपः सन् यश्च ते तव ‘योनिं रेतस आधाने गर्भस्थानमाशेते[3] तं बाधतामित्यन्वयः ॥

यस्ते गर्भममीवा दुर्णामा योनिमाशये ।
अग्निष्टं ब्रह्मणा सह निष्क्रव्यादमनीनशत् ॥ २ ॥

यः । ते । गर्भम् । अमीवा । दुःऽनामा । योनिम् । आऽशये ।
अग्निः । तम् । ब्रह्मणा । सह । निः । क्रव्यऽअदम् । अनीनशत् ॥ २ ॥

---

१. ग-त१.६–पुनरभिनवमुत्पन्न; त२.३–पुनरभिनवमुत्पन्न; त७–पुनरभिनवमुत्पन्न; भ१.४.८–पुनर-भिनवमुत्पन्न, भ२–पुनरभिनवमुत्पन्न । २. त४.५–गर्भलक्षणस्य । ३. त४.५–गर्भस्थायतनमाशेते ।

गतः पूर्वोऽर्धर्चः । ते क्रव्यादं मांसाशिनं राक्षसादिकं ब्रह्मणा सहितः अग्निः निःशेषेण अनीनशत्[1] नाशयतु ॥

यस्ते हन्ति पतयन्तं निषत्स्नुं यः सरीसृपम् ।
जातं यस्ते जिघांसति तमितो नाशयामसि ॥ ३ ॥

यः । ते । हन्ति । पतयन्तम् । निऽसत्स्नुम् । यः । सरीसृपम् ।
जातम् । यः । ते । जिघांसति । तम् । इतः । नाशयामसि ॥ ३ ॥

हे योषित् ते तव गर्भाशये पतयन्तं पतन्तं रेतोरूपेण गच्छन्तं तदनन्तरं तत्र निषत्स्नुं निषीदन्तं च गर्भं यः राक्षसादिः हन्ति हिनस्ति ततो मासत्रयादूर्ध्वं भासमानावयवं सरीसृपं सर्पणशीलं च गर्भं यः[2] हन्ति जातं[2] दशसु मासेषूत्पन्नं ते तव शिशुं यः राक्षसादिः जिघांसति हन्तुमिच्छति तमितः स्थानात् नाशयामसि नाशयामः[3] ॥

यस्त ऊरू विहरत्यन्तरा दंपती शये ।
योनिं यो अन्तरारेळिह तमितो नाशयामसि ॥ ४ ॥

यः । ते । ऊरू इति । विऽहरति । अन्तरा । दंपती इति दम्ऽपती । शये ।
योनिम् । यः । अन्तः । आऽरेळिह । तम् । इतः । नाशयामसि ॥ ४ ॥

हे योषित् ते तव ऊरू पादमूलौ यः राक्षसादिः विहरति गर्भघाताय विश्लिष्टौ करोति दंपती अन्तरा जायापत्योर्मध्ये गर्भहननार्थं यश्च शये शेते यः च योनिम् अन्तः प्रविश्य आरेळिह निषिक्तं रेतो जिह्वया आस्वादयति ॥ भक्षयतीत्यर्थः । ‘ लिह आस्वादने ’ । अदादिकः । [illegible] ॥

यस्त्वा भ्राता पतिर्भूत्वा जारो भूत्वा निपद्यते ।
प्रजां यस्ते जिघांसति तमितो नाशयामसि ॥ ५ ॥

यः । त्वा । भ्राता । पतिः । भूत्वा । जारः । भूत्वा । निऽपद्यते ।
प्रऽजाम् । यः । ते । जिघांसति । तम् । इतः । नाशयामसि ॥ ५ ॥

हे योषित् यः राक्षसः भ्राता भ्रातृरूपो भूत्वा पतिः भर्तृरूपो वा भूत्वा त्वां निपद्यते अभिगच्छति । अथवा जारः उपपतिरूपो वा भूत्वा अभिगच्छति । एवंभूतः यः राक्षसादिः ते तव प्रजां जिघांसति हन्तुमिच्छति । समानमन्यत् ॥

यस्त्वा स्वप्नेन तमसा मोहयित्वा निपद्यते ।
प्रजां यस्ते जिघांसति तमितो नाशयामसि ॥ ६ ॥

यः । त्वा । स्वप्नेन । तमसा । मोहयित्वा । निऽपद्यते ।
प्रऽजाम् । यः । ते । जिघांसति । तम् । इतः । नाशयामसि ॥ ६ ॥

१. त-भ-अनीनशत् नाशयत् । २. त७.५-योनिजातं । ३. त-भ-नाशयाम ।

हे योषित् यः राक्षसादिः स्वप्नेन स्वप्नावस्थया[1] तमसा निद्रया[2] भूत्वा त्वां मोहयित्वा सुप्तां प्राप्य निपद्यते गर्भघाताय गच्छति । अन्यत्पूर्ववत् ॥ ॥ २० ॥

'अक्षीभ्याम्' इति षळृचं द्वादशं सूक्तमानुष्टुभम् । कश्यपगोत्रोत्पन्नो विवृहा नामर्षिः । यक्ष्मनाशनप्रतिपाद्यत्वात्तद्देवताकं कृत्स्नं सूक्तम् । अनुक्रान्तं च—'अक्षीभ्यां विवृहा काश्यपो यक्ष्मघ्नम्' इति । लैङ्गिको विनियोगः ॥

अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां छुबुकादधि ।
यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वाया वि वृहामि ते ॥ १ ॥

अक्षीभ्याम् । ते । नासिकाभ्याम् । कर्णाभ्याम् । छुबुकात् । अधि ।
यक्ष्मम् । शीर्षण्यम् । मस्तिष्कात् । जिह्वायाः । वि । वृहामि । ते ॥ १ ॥

हे यक्ष्मगृहीत ते तव अक्षीभ्यां चक्षुर्भ्यां यक्ष्मरोगं वि वृहामि उद्धारयामि । विश्लेषयामीत्यर्थः । 'ई च द्विवचने' (पा. सू. ७. १. ७७) इत्यक्षिशब्दस्यैकारान्तादेशः । स चोदात्तः । तथा नासिकाभ्यां घ्राणेन्द्रियाभ्यां कर्णाभ्यां श्रोत्राभ्यां च छुबुकात् चुबुकादोष्ठस्याधःप्रदेशात् । अधिरनर्थकः[3] । अपि च शीर्षण्यम् । शिरसि[4] भवो रोगः शीर्षण्यः । 'भवे छन्दसि' इति यत् । 'ये च तद्धिते' (पा. सू. ६. १. ६१) इति शिरसः शीर्षन्नादेशः । 'ये चाभावकर्मणोः' (पा. सू. ६. ४. १६८) इति प्रकृतिभावः ॥ ईदृशं यक्ष्मं रोगं ते तव मस्तिष्कात् । शिरसोऽन्तरवस्थितो मांसविशेषो मस्तिष्कः । तस्मात् जिह्वायाः रसनायाश्च सकाशाद्वि वृहामि उद्धारयामि । पृथक्करोमीत्यर्थः । 'वृहू उद्यमने' इति धातुः ॥

ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात् ।
यक्ष्मं दोषण्यमंसाभ्यां बाहुभ्यां वि वृहामि ते ॥ २ ॥

ग्रीवाभ्यः । ते । उष्णिहाभ्यः । कीकसाभ्यः । अनूक्यात् ।
यक्ष्मम् । दोषण्यम् । अंसाभ्याम् । बाहुऽभ्याम् । वि । वृहामि । ते ॥ २ ॥

हे व्याधिगृहीत उष्णिहाभ्यः ऊर्ध्वाभिमुखं स्निग्धाभ्य नरस्नासाभ्यां[5] वा स्नायुभ्यः ग्रीवाभ्यः गलगताभ्यो धमनीभ्यः ते तव यक्ष्मं वि वृहामि । तथा कीकसाभ्यः अस्थिभ्यः अनूक्यात् अस्थिसंधेश्च यक्ष्मं वि वृहामि । 'उच समवाये' । अनूच्यते समवेयत इत्यनूक्यः संधिरनूक्यः । ण्यत्प्रकरणे यत् । 'चजोः कु घिण्ण्यतोः' इति कुत्वम् । तित्स्वरितः । अपि च दोष्णोर्भवं दोषण्यम् । पूर्ववत्यति 'पद्दन्' इत्यादिना दोःशब्दस्य दोषन्नादेशः । पूर्ववत्प्रकृतिभावः । तमपि[6] यक्ष्मं रोगं ते तव अंसाभ्यां बाहुभ्यां च वि वृहामि । हस्तयोरूर्ध्वभागावंसावधोभागौ बाहू ॥

आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोर्हृदयादधि ।
यक्ष्मं मतस्नाभ्यां यक्नः प्लाशिभ्यो वि वृहामि ते ॥ ३ ॥

1. त१.२.६.८.म१—स्वप्नावस्थाया; त४.५.७.म४.मु—स्वप्नावस्थायां । 2. त४.५—निद्रायां । 3. त.म.मु—अधिर्निरर्थकः । 4. त.म—शिरसो । 5. त४.५—उत । 6. त.म—कर्म तमपि ।

आन्त्रेभ्यः । ते । गुदाभ्यः । वनिष्ठोः । हृदयात् । अधि ।
यक्ष्मम् । मतस्नाभ्याम् । यक्नः । प्लाशिऽभ्यः । वि । वृहामि । ते ॥ ३ ॥

हे यक्ष्माभिभूत ते तव[1] आन्त्रेभ्यः । आन्त्रं पुरीतदन्नपानयोराधारभूतम्[2] । तत्संबन्धिभ्यः स्नायुभ्यः गुदाभ्यः याभिर्नाडीभिरन्नरसः समानवायुना धातुषु नीयते ताभ्यो नाडीभ्यश्च सकाशात् यक्ष्मं वि वृहामि । तथा वनिष्ठोः स्थविरान्त्रात् हृदयादधि हृदयपुण्डरीकाच्च यक्ष्मं वि वृहामि । अपि च ते तव मतस्नाभ्याम् । मतस्नौ पार्श्वयोर्वर्तमानावाम्रफलाकृती वृक्कौ । ताभ्यां यक्नः । हृदयसमीपे वर्तमानः कालमांसविशेषो यकृत् । तस्माच्च । "पद्दन्" इत्यादिना यकृच्छब्दस्य यकन्नादेशः । प्लाशिभ्यः अन्येभ्योऽपि क्लोमप्लीहादिसंज्ञेभ्यश्च मांसेभ्यश्च यक्ष्मं रोगं वि वृहामि उत्क्षिपामि ॥

ऊरुभ्यां ते अष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्याम् ।
यक्ष्मं श्रोणिभ्यां भासदाद्भंससो वि वृहामि ते ॥ ४ ॥

ऊरुऽभ्याम् । ते । अष्ठीवत्ऽभ्याम् । पार्ष्णिऽभ्याम् । प्रऽपदाभ्याम् ।
यक्ष्मम् । श्रोणिऽभ्याम् । भासदात् । भंससः । वि । वृहामि । ते ॥ ४ ॥

हे रुग्ण ते तव ऊरुभ्याम् अष्ठीवद्भ्यां जानुभ्यां च यक्ष्मं वि वृहामि । तथा पार्ष्णिभ्यां पादस्यापरभागाभ्यां प्रपदाभ्यां पादाग्राभ्यां च यक्ष्मं वि वृहामि । अपि च श्रोणिभ्यां जघनाभ्यां च यक्ष्मं वि वृहामि । तथा भासदात् । भसत् कटिप्रदेशः । तत्संबन्धात् भंससः भासमानात् पायोः ते तव यक्ष्मं वि वृहामि ॥

मेहनाद्वनंकरणाल्लोमभ्यस्ते नखेभ्यः ।
यक्ष्मं सर्वस्मादात्मनस्तमिदं वि वृहामि ते ॥ ५ ॥

मेहनात् । वनम्ऽकरणात् । लोमऽभ्यः । ते । नखेभ्यः ।
यक्ष्मम् । सर्वस्मात् । आत्मनः । तम् । इदम् । वि । वृहामि । ते ॥ ५ ॥

वनंकरणात् । वनमुदकं शारीरम्[3] । तत्क्रियते विसृज्यते येन तद्वनंकरणम् । तस्मात् मेहनात् मेढ्रात् ते तव लोमभ्यः नखेभ्यः च यक्ष्मं वि वृहामि । किं बहुना । इदम् इदानीं तं यक्ष्मं सर्वस्मादात्मनः कृत्स्नादेव ते तव शारीरात् वि वृहामि ॥

अङ्गादङ्गाल्लोम्नोलोम्नो जातं पर्वणिपर्वणि ।
यक्ष्मं सर्वस्मादात्मनस्तमिदं वि वृहामि ते ॥ ६ ॥

अङ्गात्ऽअङ्गात् । लोम्नःऽलोम्नः । जातम् । पर्वणिऽपर्वणि ।
यक्ष्मम् । सर्वस्मात् । आत्मनः । तम् । इदम् । वि । वृहामि । ते ॥ ६ ॥

अङ्गादङ्गात् सर्वेभ्योऽङ्गेभ्यः लोम्नोलोम्नः सर्वेभ्यो लोमभ्यश्च पर्वणिपर्वणि अवयवानां संधौ[4] जातम् उत्पन्नं यक्ष्मं वि वृहामि । अन्यद्गतम् ॥ ॥२१॥

---

१. त१.२.३.७-म१.२.८-तव स्वं । २. त१.२.२.६.७-°राधारभूतं । ३. त-म-मु-शारीरं । ४. मर-संधी संधौ ।

'अपेहि' इति पञ्चर्चं त्रयोदशं सूक्तमाङ्गिरसस्य प्रचेतस आर्षम्। तृतीया त्रिष्टुप् पञ्चमी पङ्क्तिः। दुःस्वप्ननाशनं देवता। तथा चानुक्रान्तम्—'अपेहि पञ्च प्रचेता दुःस्वप्नघ्नं पङ्क्त्यन्तं त्रिष्टुम्मध्यम्' इति। लैङ्गिको विनियोगः॥

**अपेहि मनसस्पतेऽप क्राम परश्चर।**
**परो निर्ऋत्या आ चक्ष्व बहुधा जीवतो मनः॥ १॥**

अप। इहि। मनसः। पते। अप। क्राम। परः। चर।
परः। निःऽऋत्यै। आ। चक्ष्व। बहुधा। जीवतः। मनः॥ १॥

हे मनसस्पते स्वप्नावस्थस्य मनसः स्वामिन् दुःस्वप्नाधिदेव अपेहि अपगच्छ। स्वप्नावस्थावतो मनसो निर्गच्छ। निर्गत्य च अप क्राम। देशान्तरं गन्तुं पादौ विक्षिप। दूरदेशं गच्छेत्यर्थः। अपक्रम्य च परः परस्ताद्विप्रकृष्टे देशे चर यथेष्टं वर्तस्व। अपि च निर्ऋत्यै पापदेवतायै परः परस्ताद्वर्तमानायै आ चक्ष्व। अयं न बाधनीय इति ब्रूहि। जीवतः मम मनः बहुधा बहुप्रकारं भवति। भोक्तव्येषु बहुषु विषयेषूत्सुकं मनः वर्तते। अतस्तद्विनाशकं दुःस्वप्नदर्शनं मा भवत्वित्यर्थः॥

**भद्रं वै वरं वृणते भद्रं युञ्जन्ति दक्षिणम्।**
**भद्रं वैवस्वते चक्षुर्बहुत्रा जीवतो मनः॥ २॥**

भद्रम्। वै। वरम्। वृणते। भद्रम्। युञ्जन्ति। दक्षिणम्।
भद्रम्। वैवस्वते। चक्षुः। बहुऽत्रा। जीवतः। मनः॥ २॥

भद्रं वै शोभनमेव वरं वरणीयं दुःस्वप्नविनाशरूपं फलं वृणते सर्वे जनाः प्रार्थयन्ते। दक्षिणं प्रवृद्धं भद्रं शोभनं सत्फलं युञ्जन्ति प्राप्नुवन्ति च। वैवस्वते विवस्वतः पुत्रे यमे विषये भद्रं शोभनमेव चक्षुः दर्शनमहं प्रार्थये। दुःस्वप्नाधिदेवो वैवस्वतोऽस्मान्मा बाधताम्। भद्रमेव दर्शनमिह लोकेऽवस्थानलक्षणं करोत्वित्यर्थः। बहुत्रा बहुषु हि विषयेषु जीवतः मम मनः वर्तते॥

**यदाशसा निःशसाभिशसोपारिम जाग्रतो यत्स्वपन्तः।**
**अग्निर्विश्वान्यप दुष्कृतान्यजुष्टान्यारे अस्मद्दधातु॥ ३॥**

यत्। आऽशसा। निःऽशसा। अभिऽशसा। उपऽआरिम। जाग्रतः। यत्। स्वपन्तः।
अग्निः। विश्वानि। अप। दुःऽकृतानि। अजुष्टानि। आरे। अस्मत्। दधातु॥ ३॥

यत् दुष्कृतम् आशसा आशंसनेनाभिलाषेण जाग्रतः जागरणावस्थायां वर्तमाना वयम् उपारिम उपगतवन्तः स्म यत् च स्वपन्तः स्वप्नावस्थां प्राप्ता उपगतवन्तः स्म। तथा निःशसा निर्शंसनेन निर्गताभिलाषेण अभिशसा अभिगताभिलाषेण च कारणेनावस्थाद्वये यद्दुष्कृतमुपागच्छेम[1]। तानि विश्वानि सर्वाणि अजुष्टानि असेव्यान्यप्रियाणि वा दुष्कृतानि दुष्कर्माणि अग्निः अस्मत् आरे अस्मत्तो दूरदेशे अप दधातु अपक्रम्य स्थापयतु॥

१. त१.२.३.७–म१.२.८–°मुपागच्छाम; म७–°मुपगच्छेम।

यदि॑न्द्र ब्रह्मणस्पतेऽभिद्रो॒हं चरा॑मसि । प्रचे॑ता न आङ्गिर॒सो द्वि॑ष॒तां पा॒त्वंह॑सः ॥४॥

यत् । इ॒न्द्र॒ । ब्र॒ह्म॒णः॒ । प॒ते॒ । अ॒भि॒ऽद्रो॒हम् । चरा॑मसि ।

प्रऽचे॑ताः । नः॒ । आ॒ङ्गि॒र॒सः । द्वि॒ष॒ताम् । पा॒तु॒ । अंह॑सः ॥ ४ ॥

हे इन्द्र हे ब्रह्मणस्पते युवयोर्विषये यत् अभिद्रोहम् अभितो द्रोहकं पापं दुःस्वप्नकारणं चरामसि आचरामः कुर्मः तस्मादभिद्रोहाद्यस्मात् रक्षतमिति शेषः । अपि च आङ्गिरसः अङ्गिरोभिः स्तोतृभिः सवाभ्यस्तः[1] प्रचेताः प्रकृष्टज्ञानो वरुणश्च द्विषतां द्वेष्टॄणाम् अंहसः तत्कर्तृकाद्दुःस्वप्नविषयात्पापात् नः अस्मान् पातु रक्षतु । यद्वा । विभक्तिव्यत्ययः । आङ्गिरसमङ्गिरोगोत्रं प्रचेतसमृषिं नः । वचनव्यत्ययः । मां द्विषतामंहसः पातु । प्रकृतत्वादिन्द्र इति गम्यते ॥

अजै॑ष्मा॒द्यास॑नाम॒ चाभू॒मानाग॑सो व॒यम् ।
जा॒ग्र॒त्स्व॒प्नः सं॑क॒ल्पः पा॒पो यं द्वि॒ष्मस्तं स ऋ॑च्छतु॒ यो नो॒ द्वेष्टि॒ तमृ॑च्छतु ॥५॥

अजै॑ष्म । अ॒द्य । अस॑नाम । च॒ । अभू॑म । अना॑गसः । व॒यम् ।

जा॒ग्र॒त्ऽस्व॒प्नः । स॒म्ऽक॒ल्पः । पा॒पः । यम् । द्वि॒ष्मः । तम् । सः । ऋ॒च्छ॒तु॒ ।

यः । नः॒ । द्वेष्टि॑ । तम् । ऋ॒च्छ॒तु॒ ॥ ५ ॥

अद्य अस्मिन् काले अजैष्म । जेतव्यानि सर्वाणि जितवन्तोऽभूम दुःस्वप्नस्य नष्टत्वात् । तदनन्तरम् असनाम च संभक्तव्यानि च समभजाम । तथा वयम् अनागसः अनपराधाश्च अभूम । जाग्रत्स्वप्नावस्थयोः संबन्धी पापः पापकस्वरूपः सः संकल्पः दुःस्वप्नाध्यवसायः यं शत्रुं वयं द्विष्मः तम् ऋच्छतु प्राप्नोतु । यः च नः अस्मान् द्वेष्टि तमृच्छतु प्राप्नोतु ॥२२॥

'देवाः' इति पञ्चर्चं चतुर्दशं सूक्तं निर्ऋतिपुत्रस्य कपोताख्यस्यार्षं त्रैष्टुभं वैश्वदेवम् । तथा चानुक्रान्तं—'देवा नैर्ऋतः कपोतः कपोतोपहतौ प्रायश्चित्तं[2] वैश्वदेवम्' इति । कपोतो यदि गृहं प्रविशेत् तदानेन सूक्तेन होतव्यम् । सूत्र्यते हि—'कपोतश्चेदगारमुपहन्यादनुपतेद्वा देवाः कपोत इति प्रत्यृचं जुहुयाज्जपेद्वा' (आश्व. गृ. ३. ७. ७) इति ॥

दे॒वाः क॒पोत॑ इषि॒तो यदि॒च्छन्दू॒तो निर्ऋ॑त्या इ॒दमा॑ज॒गाम॑ ।
तस्मा॑ अर्चाम कृ॒णवा॑म॒ निष्कृ॑तिं॒ शं नो॑ अस्तु द्वि॒पदे॒ शं चतु॑ष्पदे ॥१॥

दे॒वाः॒ । क॒पोतः॑ । इ॒षि॒तः । यत् । इ॒च्छन् । दू॒तः । निःऽऋ॑त्याः । इ॒दम् । आ॒ऽज॒गाम॑ ।

तस्मै॑ । अ॒र्चा॒म॒ । कृ॒णवा॑म । निःऽकृ॑तिम् । शम् । नः॒ । अ॒स्तु॒ । द्वि॒ऽपदे॑ । शम् । चतुः॑ऽपदे ॥ १ ॥

हे देवाः इषितः प्रेषितः निर्ऋत्याः पापदेवतायाः दूतः अनुचरः कपोतः यत् बाधकम् इच्छन् अभिलषन् इदम् अस्मदीयं गृहम् आजगाम प्राप्नोत् तस्मै बाधनाय तच्छान्तिनिमित्तमेवम् अर्चाम । युष्मान् हविषा पूजयाम । ततः निष्कृतिं कपोतप्रवेशजन्यस्य दोषस्य परिहृतिं कृणवाम । अनेन हविर्दानेन करवाम । अतः नः अस्माकं द्विपदे पुत्राय[3] शं सुखम् अस्तु चतुष्पदे गवाश्वप्रभृतये च शं सुखमस्तु ॥

---

1. ख१.२.३.७-म१.२.४.८-संबंधः; म७-संबंधनः । २. अनु.—मावश्चित्तमिदं । ३. क-ख४.५-पुत्राद्ये ।

शिवः कपोत इषितो नो अस्त्वनागा देवाः शकुनो गृहेषु ।
अग्निर्हि विप्रो जुषतां हविर्नः परि हेतिः पक्षिणी नो वृणक्तु ॥ २ ॥

शिवः । कपोतः । इषितः । नः । अस्तु । अनागाः । देवाः । शकुनः । गृहेषु ।
अग्निः । हि । विप्रः । जुषताम् । हविः । नः । परि । हेतिः । पक्षिणी । नः । वृणक्तु ॥ २ ॥

हे देवाः नः अस्माकं गृहेषु इषितः गतः कपोताख्यः शकुनः पक्षी शिवः सुखकरः अनागाः अपापहेतुश्च अस्तु । हि यस्मात् विप्रः मेधावी अग्निः नः अस्माकं हविः युष्मभ्यं परिकल्पितं जुषतां जुषते अतो युष्मत्प्रसादात् पक्षिणी पक्षोपेता हेतिः हननहेतुः कपोतः नः अस्मान् परि वृणक्तु अस्मान् परित्यजतु । मा बाधतामित्यर्थः ॥

हेतिः पक्षिणी न दभात्यस्मानाष्ट्र्यां पदं कृणुते अग्निधाने ।
शं नो गोभ्यश्च पुरुषेभ्यश्चास्तु मा नो हिंसीदिह देवाः कपोतः ॥ ३ ॥

हेतिः । पक्षिणी । न । दभाति । अस्मान् । आष्ट्र्याम् । पदम् । कृणुते । अग्निऽधाने ।
शम् । नः । गोभ्यः । च । पुरुषेभ्यः । च । अस्तु ।
मा । नः । हिंसीत् । इह । देवाः । कपोतः ॥ ३ ॥

पक्षिणी पक्षोपेता हेतिः हननहेतुः कपोतः अस्मान् न दभाति न हिनस्तु । आष्ट्र्यां व्याप्तायामरण्यान्याम् अग्निधाने अग्निर्निधीयतेऽस्मिन्नित्यग्निसहिते प्रदेशे पदं स्थानं कृणुते करोति । तत्रैव प्रदेशे निवसत्वित्यर्थः । यद्वा[1] । अश्नन्त्यस्मिन्नित्याष्ट्री पचनशाला । तस्याम् । अग्निधाने यत्र पचनार्थमग्निर्निधीयते तस्मिन् प्रदेशे पदं पादविधानं[2] कृणुते करोति । तद्धेतुको बाधो मोऽस्माकं न भवत्वित्यर्थः । अपि च नः अस्माकं गोभ्यश्च पुरुषेभ्यश्च शं सुखं संसर्जनीयानां दोषाणां शान्तिर्वा अस्तु भवतु । हे देवाः इह अस्मिन् गृहे कपोतः नः अस्मान् मा हिंसीत् । युष्मदनुग्रहात् मा बाधताम् ॥

यदुलूको वदति मोघमेतद्यत्कपोतः पदमग्नौ कृणोति ।
यस्य दूतः प्रहित एष एतत्तस्मै यमाय नमो अस्तु मृत्यवे ॥ ४ ॥

यत् । उलूकः । वदति । मोघम् । एतत् । यत् । कपोतः । पदम् । अग्नौ । कृणोति ।
यस्य । दूतः । प्रऽहितः । एषः । एतत् । तस्मै । यमाय । नमः । अस्तु । मृत्यवे ॥ ४ ॥

उलूकः घूकसंज्ञः पक्षी यत् अशोभनं वदति ब्रवीति आत्मीयेन शब्देन सूचयति एतत् मोघं निष्फलमस्तु । कपोतः च अग्नौ अग्निमति गृहमध्ये यत् पदं कृणोति करोति एतदपि मोघं निर्वीर्यमस्तु । प्रहितः प्रेषितः एषः कपोतः यस्य स्वामिनः दूतः अनुचरो भवति तस्मै[3] नाम[4] मृत्यवे मारयित्रे यमाय[5] एतत्[6] नमः प्रणामः अस्तु भवतु ॥

---

1. त-अ-' यद्वा ' नास्ति । २. त-अ-पदा निधानं । ३. त-अ-तस्य । ४. ग१-मद्राय । ५. ग-त४, ५-' यमाय ' नास्ति । ६. त१.२.३.६.७.८-अ-एतन्नामकाय; त४.५-एवं ।

ऋचा कपोतं नुदत प्रणोदमिषं मदन्तः परि गां नयध्वम् ।
संयोपयन्तो दुरितानि विश्वा हित्वा न ऊर्जं प्र पतात्पतिष्ठः ॥ ५ ॥

ऋचा । कपोतम् । नुदत । प्रऽनोदम् । इषम् । मदन्तः । परि । गाम् । नयध्वम् ।
सम्ऽयोपयन्तः । दुःऽइतानि । विश्वा । हित्वा । नः । ऊर्जम् । प्र । पतात् । पतिष्ठः ॥ ५ ॥

हे देवाः ऋचा मन्त्रेण स्तूयमानाः सन्तो यूयं प्रणोदं प्रकर्षेण नोदनीयं बहिष्कर्तव्यं कपोतं पक्षिणं नुदत अस्माद्गृहात् प्रेरयत निर्गमयत । तथा मदन्तः अस्माभिर्दत्तैर्हविर्भिर्माद्यन्तः इषम् अन्नं गां च परि णयध्वं परितोऽस्मभ्यं प्रापयत । किं कुर्वन्तः । विश्वा विश्वानि सर्वाणि दुरितानि कपोतोपद्रवनिजन्यानि दोषजातानि संयोपयन्तः अदृश्यानि कुर्वन्तः । अपि च पतिष्ठः अतिशयेन पतिता शीघ्रोत्पातकः[1] कपोतः नः अस्माकम् ऊर्जम् अन्नं हित्वा परित्यज्य प्र पतात् प्रकर्षेण पततु । पक्षाभ्यामुत्पततु ॥ ॥२३॥

'ऋषभम्' इति पञ्चर्चं पञ्चदशं सूक्तं वैराजस्य शाक्वरस्य वर्षभाख्यस्यार्षं पञ्चमी षडृचा महापङ्क्तिः[2] । सपत्नघ्नाख्योऽर्थो देवता । तथा चानुक्रान्तम्—'ऋषभमृषभो वैराजः शाक्वरो वा सपत्नघ्नमानुष्टुभं महापङ्क्त्यन्तम्' इति । प्रयाणसमये जपेत् । सूत्रितं च—'ऋषभं मा समानानामित्यभिक्रामन्' (आश्व. गृ. २. ६. १२) इति ॥

ऋषभं मा समानानां सपत्नानां विषासहिम् ।
हन्तारं शत्रूणां कृधि विराजं गोपतिं गवाम् ॥ १ ॥

ऋषभम् । मा । समानानाम् । सऽपत्नानाम् । विऽससहिम् ।
हन्तारम् । शत्रूणाम् । कृधि । विऽराजम् । गोऽपतिम् । गवाम् ॥ १ ॥

हे सपत्नबाधाभिमानिन्निन्द्र[3] मा मां समानानां सदृशानामस्मत्कुलीनानां मध्ये ऋषभम् ऋषभवत्प्रशस्तं कृधि कुरु । तथा सपत्नानां शत्रूणां विषासहिं विशेषेणाभिभवितारं कुरु । येऽस्मत्कुल एव जाता अस्मास्वकर्मैवाभिद्रुह्याचरन्ति ते सपत्नाः । अपि च शत्रूणाम् अन्येषामपि शातयितॄणां वैरिणां हन्तारं[4] हिंसितारं कृधि कुरु । तथा विराजं विशेषेण राजमानं गोपतिं गोस्वामिनं च मां कुरु । न केवलमेकस्या एव गोः पतिम् अपि तु सर्वासामित्याह गवाम् इति ॥

अहमस्मि सपत्नहेन्द्र इवारिष्टो अक्षतः ।
अधः सपत्ना मे पदोरिमे सर्वे अभिष्ठिताः ॥ २ ॥

अहम् । अस्मि । सपत्नऽहा । इन्द्रःऽइव । अरिष्टः । अक्षतः ।
अधः । सऽपत्नाः । मे । पदोः । इमे । सर्वे । अभिऽस्थिताः ॥ २ ॥

१. त-म२.४.८—शीघ्रोत्पादनः; म१—शीघ्रोत्पादकः । २. म७—महापंक्तिः । शिष्टा अनुष्टुभः । ३. त१.२.३.६.७.८-म१.४.५.८—सपत्नाभिमानिन्निति । ४. ग-त१.२.३.६.७.८-म४.५—हंतारं मां; म२.८—हंतारं मा ।

अहं सपत्नहा सपत्नानां शत्रूणां हन्ता असिम भवामि । इन्द्र इव इन्द्रो यथा केनाप्यहिंसितो भवति तथाहमपि अरिष्टः अहिंसितः अक्षतः अव्रणश्च भवामि । इमे दृश्यमानाः सर्वे सपत्नाः मे मम पद्वोः पादयोः अधः अधस्तात् अभिष्ठिताः आक्रान्ता भवन्तु ॥

**अत्रैव वोऽपि नह्याम्युभे आर्त्नीइव ज्यया ।**
**वाचस्पते नि षेधेमान्यथा मदधरं वदान् ॥ ३ ॥**

अत्र । एव । वः । अपि । नह्यामि । उभे इति । आर्त्नी इवेत्यार्त्नीऽइव । ज्यया ।
वाचः । पते । नि । सेध । इमान् । यथा । मत् । अधरम् । वदान् ॥ ३ ॥

हे सपत्नाः यत्र देशे यूयं निवसथ अत्रैव अस्मिन्नेव देशे वः युष्मान् अपि नह्यामि अपिनद्धान् पाशैर्बद्धान् करोमि ज्यया मौर्व्या उभे आर्त्नी इव । यथा हे धनुषः कोटी दृढं बध्येते तथेत्यर्थः । हे वाचस्पते वाचः वाग्देवस्य पालयितरेव इमान् सपत्नान् नि षेध प्रतिषेध । यथा येन प्रकारेण मत् मत्तः अधरं निकृष्टतरं वदान् वदन्ति तथा निरुद्धवाचः कुर्वित्यर्थः ॥

**अभिभूरहमागमं विश्वकर्मेण धाम्ना ।**
**आ वश्चित्तमा वो व्रतमा वोऽहं समितिं ददे ॥ ४ ॥**

अभिऽभूः । अहम् । आ । अगमम् । विश्वऽकर्मेण । धाम्ना ।
आ । वः । चित्तम् । आ । वः । व्रतम् । आ । वः । अहम् । सम्ऽइतिम् । ददे ॥ ४ ॥

हे सपत्नाः अभिभूः अभिभविता अहं विश्वकर्मेण सर्वकर्मक्षमेण धाम्ना धारकेण तेजसा बलेन वा सार्धम् आगमम् आगतवानस्मि । अतः वः युष्माकं चित्तं मनः आ ददे गृह्णामि । मनोगतं धैर्यं हरामीत्यर्थः । वः युष्माकं व्रतं कर्म चाहम् आ ददे । वः युष्मदीयः यः समितिः संग्रामः तं च अहम् आ ददे अपहरामि ॥

**योगक्षेमं व आदायाहं भूयासमुत्तम आ वो मूर्धानमक्रमीम् ।**
**अधस्पदान्म उद्वदत मण्डूकाइवोदकान्मण्डूका उदकादिव ॥ ५ ॥**

योगऽक्षेमम् । वः । आऽदाय । अहम् । भूयासम् । उत्ऽतमः । आ । वः । मूर्धानम् । अक्रमीम् ।
अधःऽपदात् । मे । उत् । वदत । मण्डूकाःऽइव । उदकात् । मण्डूकाः । उदकात्ऽइव ॥ ५ ॥

हे सपत्नाः वः युष्माकं योगक्षेमम् । अप्राप्तस्य धनस्य[1] प्राप्तिर्योगः । प्राप्तस्य रक्षणं क्षेमः । तदुभयम् आदाय युष्मत्तो गृहीत्वा अहम् उत्तमः श्रेष्ठः भूयासम् । ततः वः युष्माकं मूर्धानं शिरः आ अक्रमीम् आक्रमिषम् । पादेनाधितिष्ठामि ॥ क्रमेर्लुङि अमो मश् (पा. सू. ७.१.४०) । 'ह्म्यन्त' (पा. सू. ८. २. २८) इति सिचो लोपः ॥ अनन्तरं मे मम अधस्पदात् पादस्याधस्तादवर्तमाना यूयम् उद्वदत उच्चैराक्रोशत । उदकात् गृहाजलाद्यधःप्रदेशे वर्तमानाः मण्डूकाइव । यथा ते भृशमाक्रोशन्ति तथोद्वदतेत्यर्थः । मण्डूका उदकादिव इति पुनरुक्तिरादरार्था ॥　॥२७॥

---

1. सं१.२.३.६.७.८-म१.४.५-' धनस्य ' नास्ति ।

'तुभ्येदम्' इति चतुर्ऋचं षोडशं सूक्तं विश्वामित्रजमदग्न्योरार्षं जागतमैन्द्रम्। 'सोमस्य राज्ञः' इत्येषा तृतीया वरुणविधात्रनुमतिधातृसोमबृहस्पतींल्लिङ्गोक्तदेवताका। तथा चानुक्रान्तं— 'तुभ्येदं चतुष्कं विश्वामित्रजमदग्नी जागतं तृतीया लिङ्गोक्तदेवता वा[1]' इति। पक्षे इन्द्र एव देवता अन्ये तु निपातभाज इति वाशब्दस्यार्थः। गतो विनियोगः॥

तुभ्येदमिन्द्र परि षिच्यते मधु त्वं सुतस्य कलशस्य राजसि।
त्वं रयिं पुरुवीरामु नस्कृधि त्वं तपः परितप्याजयः स्वः॥ १॥

तुभ्य। इदम्। इन्द्र। परि। सिच्यते। मधु। त्वम्। सुतस्य। कलशस्य। राजसि।
त्वम्। रयिम्। पुरुऽवीराम्। ऊँ इति। नः। कृधि।
त्वम्। तपः। परिऽतप्य। अजयः। स्वरिति स्वः॥ १॥

हे इन्द्र इदं मधु सोमलक्षणं तुभ्यं त्वदर्थं परि षिच्यते आहवनीये प्रक्षिप्यते। त्वम् एव सुतस्य अभिषुतस्य कलशस्य द्रोणकलशावस्थितस्य सोमस्य राजसि ईशिषे। राजतिरैश्वर्यकर्मा। सः त्वं नः अस्माकं पुरुवीरां बहुपुत्रां[2] रयिं धनं कृधि कुरु। उशब्दः पूरकः। यद्वा अवधारणे। बहुपुत्रोपेतमेव धनं कुरु न केवलमित्यर्थः। तथा त्वं तपः सततं ध्यानात्मकमैश्वर्य परितप्य अनुष्ठाय स्वः स्वर्गम् अजयः जितवानसि॥

स्वर्जितं महि मन्दानमन्धसो हवामहे परि शक्रं सुताँ उप।
इमं नो यज्ञमिह बोध्या गहि स्पृधो जयन्तं मघवानमीमहे॥ २॥

स्वःऽजितम्। महि। मन्दानम्। अन्धसः। हवामहे। परि। शक्रम्। सुतान्। उप।
इमम्। नः। यज्ञम्। इह। बोधि। आ। गहि। स्पृधः। जयन्तम्। मघऽवानम्। ईमहे॥ २॥

स्वर्जितम् उक्तप्रकारेण स्वर्गस्य जेतारं महि महान्तम् अन्धसः अन्नस्य सोमस्य पानेन मन्दानं मोदमानं हृष्यन्तं शक्रं सर्वकार्येषु शक्तमिन्द्रं सुतानुप अभिषुतान् सोमान् प्रति परि हवामहे। परित आह्वयामहे। हे इन्द्र इत्थमाहूयमानस्त्वं नः अस्माकम् इमं यज्ञम् इह अस्मिन् देशे बोधि बुध्यस्व। बुद्ध्वा च आ गहि आगच्छ। स्पृधः स्पर्धमानाः शत्रुसेनाः जयन्तम् अभिभवन्तं मघवानं धनवन्तं त्वाम् ईमहे। अपेक्षितानि धनानि याचामहे॥

सोमस्य राज्ञो वरुणस्य धर्मणि बृहस्पतेरनुमत्या उ शर्मणि।
तवाहमद्य मघवन्नुपस्तुतौ धातर्विधातः कलशाँ अभक्षयम्॥ ३॥

सोमस्य। राज्ञः। वरुणस्य। धर्मणि। बृहस्पतेः। अनुऽमत्याः। ऊँ इति। शर्मणि।
तव। अहम्। अद्य। मघऽवन्। उपऽस्तुतौ।
धातः। विधातरिति विऽधातः। कलशान्। अभक्षयम्॥ ३॥

राज्ञः राजमानस्य सोमस्य वरुणस्य च[3] संबन्धिनि[3] धर्मणि[4] धारके यज्ञे वर्तमानस्तथा बृहस्पतेरनुमत्याः संबन्धिनि शर्मणि शरणे यज्ञगृहे वर्तमानः अहं हे मघवन् इन्द्र तव उप-

1. अनु.-'वा' नास्ति। 2. त-भ-मु-बहुपुत्रां। 3. त१.२.३.६.७.८-भ-मु-तत्संबंधिनि। 4. त१.२.३.६.७.८-भ१.४.५. ८-मु-कर्मणि।

स्तुतीः स्तौमि अत्र इदानीं प्रवृत्तोऽस्मि । हे धातः हे एतत्संज्ञक देव हे विधातः एतत्संज्ञक देव युवाभ्यामनुज्ञातः कलशात् कलशस्थात् हुतशिष्टात् सोमात् अभक्षम् भक्षितवानस्मि ॥

प्रसूतो भक्षमकरं चरावपि स्तोमं चेमं प्रथमः सूरिरुन्मृजे ।
सुते सातेन यद्यागमं वां प्रति विश्वामित्रजमदग्नी दमे ॥ ४ ॥

प्रऽसूतः । भक्षम् । अकरम् । चरौ । अपि । स्तोमम् । च । इमम् । प्रथमः । सूरिः । उत् । मृजे ।
सुते । सातेन । यदि । आ । अगमम् । वाम् । प्रति । विश्वामित्रजमदग्नी इति । दमे ॥ ४ ॥

हे इन्द्र प्रसूतः त्वया प्रेरितोऽहं चरौ चरणीये चरुणा वा युक्ते यज्ञे भक्षम् अपि भक्षणीयं चर्वादि हविश्च अकरं त्वदर्थमकार्षम् । प्रथमः मुख्यः सूरिः स्तोताहम् इमं स्तोमं स्तोत्रं च त्वदर्थम् उन्मृजे उन्मार्ज्मि संस्करोमि । उच्चारयामीत्यर्थः । इदानीमिन्द्रः अन्तरात्मरूपः सन् सूक्तस्य द्रष्टारावृषी संबोध्य ब्रूते । हे विश्वामित्रजमदग्नी वां युवां प्रति दमे यज्ञगृहे सुते अभिषुते सोमे सति सातेन संभजनीयेन धनेन सार्धं यदि यदा यस्मिन् कालेऽहम् आगमम् आगच्छामि तदा युवां स्तोत्रं कुरुतमित्यर्थः ॥　　॥ २५ ॥

'वातस्य' इति चतुर्ऋचं सप्तदशं सूक्तं वातगोत्रस्यानिलाख्यस्यार्षं त्रैष्टुभं वायुदेवताकम् । तथा चानुक्रान्तं—'वातस्यानिलो वातायनो वायव्यम्' इति । गतो विनियोगः ॥

वातस्य नु महिमानं रथस्य रुजन्नेति स्तनयन्नस्य घोषः ।
दिविस्पृग्यात्यरुणानि कृण्वन्नुतो एति पृथिव्या रेणुमस्यन् ॥ १ ॥

वातस्य । नु । महिमानम् । रथस्य । रुजन् । एति । स्तनयन् । अस्य । घोषः ।
दिविऽस्पृक् । याति । अरुणानि । कृण्वन् । उतो इति । एति । पृथिव्या । रेणुम् । अस्यन् ॥ १ ॥

वातस्य वायोः रथस्य रंहणशीलस्य महिमानं माहात्म्यं नु क्षिप्रं प्रब्रवीमि । अस्य वायोः घोषः शब्दः स्तनयन् गिरिगह्वरादिषु विविधं शब्दमुत्पादयन् रुजन् सर्वं स्थावरजङ्गमजातं भञ्जन् एति गच्छति । स च वायुः दिविस्पृक् दिवमाकाशं स्पृशन् व्याप्नुवन् अरुणानि अरुणवर्णानि विकृतरूपाणि दिगन्तराणि कृण्वन् कुर्वन् याति प्राप्नोति । उतो अपि च पृथिव्या भूमेः रेणुं पांसुम् अस्यन् गृहीत्वा सर्वत्र विक्षिपन् एति गच्छति । अत एव अरुणानि कृण्वन् इत्युक्तम् ॥

सं प्रेरते अनु वातस्य विष्ठा ऐनं गच्छन्ति समनं न योषाः ।
ताभिः सयुक्सरथं देव ईयतेऽस्य विश्वस्य भुवनस्य राजा ॥ २ ॥

सम् । प्र । ईरते । अनु । वातस्य । विऽस्थाः । आ । एनम् । गच्छन्ति । समनम् । न । योषाः ।
ताभिः । सऽयुक् । सऽरथम् । देवः । ईयते । अस्य । विश्वस्य । भुवनस्य । राजा ॥ २ ॥

विष्ठाः विशेषेणावस्थिताः पर्वताद्याः वातस्य वायोरनुगुणं सं प्रेरते संप्रगच्छन्ति । यदभिमुखो वायुर्वर्तते तदभिमुखाः प्रकम्पन्त इत्यर्थः । समनं न संग्राममिव एनं वायुं योषाः मिश्रयोषितो वडवाः आ गच्छन्ति । ताभिः वडवाभिः सयुक् स्वयमेव युज्यमानः सरथं समान-

मेकं रथमारुह्य देवः दीप्यमानः वायुः ईयते गच्छति । ‘ ईङ् गतौ ’ । अस्य विश्वस्य सर्वस्य भुवनस्य द्वितीयविकारभाजो भूतजातस्य राजा स्वामी भवति । यद्वा । समनं युद्धं युद्धं योधाः कामिन्य इव एवं वायुं तदनुकुमारिरूपाः स्त्रियोऽभिगच्छन्ति । ताभिः सरथं सहरथं देव ईयत इति ॥

अन्तरिक्षे पथिभिरीयमानो न नि विशते कतमच्चनाहः ।
अपां सखा प्रथमजा ऋतावा क्व स्विज्जातः कुत आ बभूव ॥ ३ ॥

अन्तरिक्षे । पथिऽभिः । ईयमानः । न । नि । विशते । कतमत् । चन । अहः ।
अपाम् । सखा । प्रथमऽजाः । ऋतऽवा । क्व । स्वित् । जातः । कुतः । आ । बभूव ॥ ३ ॥

अन्तरिक्षे नभसि विद्यमानैः पथिभिः मार्गैः ईयमानः गच्छन् वायुः कतमच्चनाहः एकमपि दिनं न नि विशते नोपविशति । किंतु सर्वदैव गच्छति । ‘ नेर्विशः ’ ( पा. सू. १.३.१७ ) इत्यात्मनेपदम् । अपि च अपाम् उदकानां सखा । ‘ वायुर्वै वृष्ट्या ईशे ’ ( तै. सं. २.४.९.१ ) इति श्रुतेः । प्रथमजाः सर्वेभ्यः प्राणिभ्यः पूर्वोत्पन्न एव ऋतावा सत्यवान् यज्ञवान् वा एवंभूतो वायुः क्व स्वित् कुत्र खलु देशे जातः उत्पन्नः कुतः कस्माच्च देशाद्विनिष्क्रम्य आ बभूव इदं सर्वं जगद्व्याप्नोत् । सर्वदा सर्वत्र वर्तमानत्वादस्योत्पत्तिर्व्याप्तिप्रकारश्च न केनापि ज्ञातुं शक्यत इत्यर्थः ॥

आत्मा देवानां भुवनस्य गर्भो यथावशं चरति देव एषः ।
घोषा इदस्य शृण्विरे न रूपं तस्मै वाताय हविषा विधेम ॥ ४ ॥

आत्मा । देवानाम् । भुवनस्य । गर्भः । यथाऽवशम् । चरति । देवः । एषः ।
घोषाः । इत् । अस्य । शृण्विरे । न । रूपम् । तस्मै । वाताय । हविषा । विधेम ॥ ४ ॥

अयं वायुः देवानाम् इन्द्रादीनामपि आत्मा जीवरूपेण तेष्ववस्थानात् भुवनस्य अपि भूतजातस्य गर्भः गर्भवत्प्राणरूपेणाभ्यन्तरे वर्तमानः एषः ईदृशः देवः यथावशं यथाकामं यथेच्छं चरति वर्तते । अनिवारितगतिः सन् कश्चिदूर्ध्वं गच्छति कश्चिन्नीचैर्गच्छति कुतश्चिच्छरीरान्निष्क्रामति अन्यच्च शरीरं प्रविशतीत्येवं यथेच्छं वर्तत इत्यर्थः । अस्य वायोरागच्छतः घोषाः इत् शब्दा एव शृण्विरे श्रूयन्ते । रूपं स्वरूपं तु न दृश्यते नीरूपत्वात् । शब्दविषयत्वेन शब्देनैवानुमीयत इत्यर्थः । तस्मै वाताय वायवे हविषा चरुपुरोडाशादिलक्षणेन विधेम परिचरेम ॥ ॥ २६ ॥

‘ मयोभूः ’ इति चतुर्ऋचमष्टादशं सूक्तं कक्षीवत्पुत्रस्य शबरस्यार्षं त्रैष्टुभं गोदेवत्यम् । अनुक्रान्तं च— ‘ मयोभूः शबरः काक्षीवतो गव्यम् ’ इति । शालाग्र वनं प्रतिष्ठमाना गा आदितो द्वाभ्यामभिमन्त्रणीयाः । सूत्रितं च— ‘ गाः प्रतिष्ठमाना अनुमन्त्रयेत मयोभूर्वातो अभि वातूस्रा इति द्वाभ्याम् ’ ( आश्व. गृ. २. १०. ५ ) इति ॥

मयोभूर्वातो अभि वातूस्रा ऊर्जस्वतीरोषधीरा रिशन्ताम् ।
पीवस्वतीर्जीवधन्याः पिबन्त्ववसाय पद्वते रुद्र मृळ ॥ १ ॥

मयःऽभूः । वातः । अभि । वातु । उस्राः । ऊर्जस्वतीः । ओषधीः । आ । रिशन्ताम् ।
पीवस्वतीः । जीवऽधन्याः । पिबन्तु । अवसाय । पत्ऽवते । रुद्र । मृळ ॥ १ ॥

१. त१.२.३.६.७.८-म१.४.८–ईशते ।

वातः वायुः मयोभूः सुखस्य भावयिता सन् उस्राः गाः अभि वातु अभिगच्छतु। ताश्च गावः ऊर्जस्वतीः रसवतीः ओषधीः बलवन्ति[1] तृणानि आ रिशन्ताम् अभितः स्वादयन्तु। तथा पीवस्वतीः प्रवृद्धाः जीवधन्याः जीवानां प्रीणयित्रीरुदकं पिबन्तु। हे रुद्र ज्वरादिरोगस्य प्रेरकेण संहर्तर्देव पद्वते पादयुक्ताय अन्नाय भक्षाय गोरूपाय मृळ उपचर्यां कुरु। मा बाधस्वेत्यर्थः ॥

**याः सरूपा विरूपा एकरूपा यासामग्निरिष्ट्या नामानि वेद ।**

**या अङ्गिरसस्तपसेह चक्रुस्ताभ्यः पर्जन्य महि शर्म यच्छ ॥ २ ॥**

याः । सऽरूपाः । विऽरूपाः । एकऽरूपाः । यासाम् । अग्निः । इष्ट्या । नामानि । वेद ।
याः । अङ्गिरसः । तपसा । इह । चक्रुः । ताभ्यः । पर्जन्य । महि । शर्म । यच्छ ॥ २ ॥

याः गावः सरूपाः समानरूपा याश्च विरूपाः विभिन्नरूपा याश्च एकरूपाः एकेनैव वर्णेनोपेताः[2] यासां च गवां नामानि इडे रन्तेऽदित इत्यादीनि इष्ट्या यागेन हेतुना अग्निः वेद जानाति याः च गाः अङ्गिरसः ऋषयः तपसा पशुप्राप्तिसाधनेन चित्रायागादिलक्षणेन इह अस्मिँल्लोके चक्रुः कृतवन्तः ताभ्यः सर्वाभ्यो गोभ्यो हे पर्जन्य महि महत् शर्म सुखं यच्छ प्रदेहि ॥

'या देवेषु' इति द्वाभ्यां सायं गृहमागच्छन्तीर्गा अनुमन्त्रयेत[3]। सूत्र्यते हि—'या देवेषु तन्वमैरयन्तेति च सूक्तशेषम्। आगावीयमेके' (आश्व. गृ. २. १० ६-७) इति ॥

**या देवेषु तन्वमैरयन्त यासां सोमो विश्वा रूपाणि वेद ।**

**ता अस्मभ्यं पयसा पिन्वमानाः प्रजावतीरिन्द्र गोष्ठे रिरीहि ॥ ३ ॥**

याः । देवेषु । तन्वम् । ऐरयन्त । यासाम् । सोमः । विश्वा । रूपाणि । वेद ।
ताः । अस्मभ्यम् । पयसा । पिन्वमानाः । प्रजाऽवतीः । इन्द्र । गोऽस्थे । रिरीहि ॥ ३ ॥

याः गावः देवेषु यष्टव्येषु तन्वम् आत्मीयं शरीरम् ऐरयन्त हविरूपेण प्रेरयन्ति यासां च गवां विश्वा सर्वाणि रूपाणि रूप्यमाणानि क्षीरादीनि श्रयणद्रव्याणि सोमः वेद जानाति अस्मभ्यम् अस्मदर्थं पयसा क्षीरेण पिन्वमानाः वर्धमाना अत एव प्रजावतीः प्रजाभिर्वत्सैरुपेताः ताः गाः हे इन्द्र गोष्ठे अस्मदीये[4] रिरीहि गमय ॥ 'री गतिरेषणयोः'। छान्दसो विकरणस्य श्लुः ॥

**प्रजापतिर्मह्यमेता रराणो विश्वैर्देवैः पितृभिः संविदानः ।**

**शिवाः सतीरुप नो गोष्ठमाकुस्तासां वयं प्रजया सं सदेम ॥ ४ ॥**

प्रजाऽपतिः । मह्यम् । एताः । रराणः । विश्वैः । देवैः । पितृऽभिः । सम्ऽविदानः ।
शिवाः । सतीः । उप । नः । गोऽस्थम् । आ । अकरित्यकः ।
तासाम् । वयम् । प्रऽजया । सम् । सदेम ॥ ४ ॥

१. त-म—'बलवन्ति' नास्ति। २. त१.२.३.६.७.८-म—एकेनैव रूपेणोपेताः; त४.५—अनेकरूपेणोपेताः। ३. त१.२.३.६.७.८-म-मु—अनुमन्त्रयितव्याः; त४.५—अनुमन्त्रयीत। ४. त४.५-म२—अस्मदीये व्रजे।

प्रजापतिः विधाता मह्यं स्तोत्रे एताः गाः अरराणः प्रयच्छन् । रातेर्लिटि रूपम् । छान्दसः शपः श्लुः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ॥ विश्वैः सर्वैः देवैः पितृभिः च संविदानः ऐकमत्यं गतः सन् शिवाः सतीः कल्याणीर्भवन्तीर्गाः नः अस्माकं गोष्ठं गवाम् उप गोष्ठसमीपे आ अकः करोतु । तासां गवां प्रजया संतानेन वयं सं सदेम संगच्छेमहि । सदेराशिषि लिङि लिङ्याशिष्यङ् ॥ ॥ २० ॥

'विभ्राट्' इति चतुर्ऋचमेकोनविंशं सूक्तं सूर्यपुत्रस्य विभ्राण्नामकस्यार्षं सूर्यदेवत्यम् । आद्यास्तिस्रो जगत्यः । [illegible] आस्तारपङ्क्तिश्चतुर्थी । तथा चानुक्रान्तं— 'विभ्राड्विभ्राट् सौर्यः सौर्यं जागतमास्तारपङ्क्त्यन्तम्' इति । विषुवति निष्केवल्य आवपनार्थः स्तोत्रियः । सूत्रितं च— 'विभ्राड्बृहत्पिबतु सोम्यं मधु नमो मित्रस्य वरुणस्य चक्षस इति स्तोत्रियानुरूपौ' ( आश्व. श्रौ. ८. ६ ) इति । वाजपेयेऽतिरिक्तोक्थस्य विभ्राडित्येषा याज्या । सूत्र्यते हि— 'विभ्राड्बृहत्पिबतु सोम्यं मध्विति याज्या तस्य गवां शतानाम्' ( आश्व. श्रौ. ९. ९ ) इति ॥

विभ्राड् बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम् ।
वातजूतो यो अभिरक्षति त्मना प्रजाः पुपोष पुरुधा वि राजति ॥ १ ॥

विऽभ्राट् । बृहत् । पिबतु । सोम्यम् । मधु । आयुः । दधत् । यज्ञऽपतौ । अविऽह्रुतम् ।
वातऽजूतः । यः । अभिऽरक्षति । त्मना । प्रऽजाः । पुपोष । पुरुधा । वि । राजति ॥ १ ॥

विभ्राट् विभ्राजमानो विशेषेण दीप्यमानः सूर्यः बृहत् महत्[1] परिवृढं सोम्यं सोममयं मधु पिबतु । किं कुर्वन् । यज्ञपतौ यजमाने अविह्रुतम् अकुटिलम् आयुः दधत् कुर्वन् । यः सूर्यः वातजूतः वातेन महावायुना प्रेर्यमाणः सन् त्मना आत्मना स्वयमेव अभिरक्षति सर्वं जगदभिपश्यन् पालयति । राशिचक्रस्य वायुप्रेर्यत्वात् सूर्यस्यापि तत्प्रेर्यत्वम् । स सूर्यः प्रजाः पुपोष वृष्ट्यादिप्रदानेन पोषयति पुरुधा बहुधा वि राजति विशेषेण दीप्यते च ॥

विभ्राड् बृहत्सुभृतं वाजसातमं धर्मन्दिवो धरुणे सत्यमर्पितम् ।
अमित्रहा वृत्रहा दस्युहन्तमं ज्योतिर्जज्ञे असुरहा सपत्नहा ॥ २ ॥

विऽभ्राट् । बृहत् । सुऽभृतम् । वाजऽसातमम् । धर्मन् । दिवः । धरुणे । सत्यम् । अर्पितम् ।
अमित्रऽहा । वृत्रऽहा । दस्युहन्ऽतमम् । ज्योतिः । जज्ञे । असुरऽहा । सपत्नऽहा ॥ २ ॥

विभ्राट् विभ्राजमानं बृहत् प्रौढं सुभृतं सुपुष्टं वाजसातमं वाजस्यान्नस्य बलस्य वा दातृतमं धर्मन् धर्मणि वायुना धारयितव्ये दिवः द्युलोकस्य धरुणे धारके सूर्यमण्डले अर्पितं निक्षिप्तं सत्यम् अविनश्वरम् अमित्रहा अमित्राणामप्रियाणां हन्तृ वृत्रहा वृत्राणामावरकाणां हन्तृ दस्युहन्तमं दस्यूनामुपक्षपयितॄणां हन्तृतमम् असुरहा असुराणां क्षेप्तॄणां घातकं सपत्नहा सपत्नानां सहजशत्रूणामपि घातकमीदृग्भूतं ज्योतिः सौरं तेजः जज्ञे प्रादुर्भवति ॥

इदं श्रेष्ठं ज्योतिषां ज्योतिरुत्तमं विश्वजिद्धनजिदुच्यते बृहत् ।
विश्वभ्राड् भ्राजो महि सूर्यो दृश उरु पप्रथे सह ओजो अच्युतम् ॥ ३ ॥

१. त१.२.३.६.७.८-म-'महत्' नास्ति ।

इदम् । श्रेष्ठम् । ज्योतिषाम् । ज्योतिः । उत्ऽतमम् । विश्वऽजित् । धनऽजित् । उच्यते । बृहत् ।
विश्वऽभ्राट् । भ्राजः । महि । सूर्यः । दृशे । उरु । पप्रथे । सहः । ओजः । अच्युतम् ॥३॥

इदं सौरं तेजः श्रेष्ठं प्रशस्यतमं ज्योतिषाम् अन्येषां ग्रहनक्षत्रादीनामपि ज्योतिः प्रकाशकमत एव उत्तमम् उत्कृष्टं विश्वजित् विश्वस्य सर्वस्य जेतृ धनजित् धनस्य च जेतृ बृहत् प्रभूतम् उच्यते । एवंगुणविशिष्टमिति सर्वैरभिधीयते । अपि च विश्वभ्राड् विश्वस्य प्रकाशयिता भ्राजः भ्राजमानः महि महान् सूर्यः दृशे दर्शनाय उरु विस्तीर्णं सहः तमसोऽभिभवितृ अच्युतं च्युतिरहितमविनाशम् ओजः तेजोरूपं बलं पप्रथे विस्तारयति ॥

विभ्राजञ्ज्योतिषा स्व१रगच्छो रोचनं दिवः ।
येनेमा विश्वा भुवनान्याभृता विश्वकर्मणा विश्वदेव्यावता ॥ ४ ॥

विऽभ्राजन् । ज्योतिषा । स्वः । अगच्छः । रोचनम् । दिवः ।
येन । इमा । विश्वा । भुवनानि । आऽभृता । विश्वऽकर्मणा । विश्वदेव्यऽवता ॥ ४ ॥

हे सूर्य ज्योतिषा तेजसा स्वः सर्वं जगत् विभ्राजन् विभ्राजयन् दिवः संबन्धि रोचनं रोचमानं स्थानम् अगच्छः प्राप्नोः । विश्वकर्मणा सर्वव्यापारहेतुना विश्वदेव्यावता । विश्वेषां देवानां हितो यस्मादिति विश्वदेव्यः । तद्वता येन सौरेण तेजसा इमा इमानि परिदृश्यमानानि विश्वा सर्वाणि भुवनानि उदकानि भौमानि आभृता सर्वकाल आभृतानि भवन्ति । यद्वा । सर्वाणि भूतजातान्याभृता समन्ताद्धृतानि पोषितानि भवन्ति । तेन ज्योतिषा इत्यन्वयः ॥ ॥ २८ ॥

'त्वं त्यम्' इति चतुर्ऋचं षष्ठं सूक्तं भृगुपुत्रस्येटस्यार्षं गायत्रमैन्द्रम् । अनुक्रान्तं च— 'त्वं त्यमिटो भार्गवो गायत्रम्' इति । गतो विनियोगः ॥

त्वं त्यमि॒टतो॒ रथ॒मिन्द्र॒ प्राव॑: सु॒ताव॑तः । अशृ॑णोः सो॒मिनो॒ हव॑म् ॥१॥

त्वम् । त्यम् । इटतः । रथम् । इन्द्र । प्र । आवः । सुतऽवतः । अशृणोः । सोमिनः । हवम् ॥ १॥

हे इन्द्र सुतावतः[1] सुतेनाभिषुतेन सोमेन युक्तस्य इटतः इटस्य । 'सुपां सुलुक्' इति तसिः । एतत्संज्ञस्यर्षेः त्यं तं प्रसिद्धं रथं प्राव प्ररक्षः । सोमिनः सोमयुक्तस्य मम हवम् आह्वानम् अशृणोः शृणु ॥

त्वं म॒खस्य॒ दोध॑तः॒ शिरोऽव॑ त्व॒चो भ॑रः । अग॑च्छः सो॒मिनो॑ गृ॒हम् ॥२॥

त्वम् । मखस्य । दोधतः । शिरः । अव । त्वचः । भरः । अगच्छः । सोमिनः । गृहम् ॥ २ ॥

हे इन्द्र त्वं मखस्य यज्ञस्य दोधतः कम्पमानस्य देवेभ्यः पलायमानस्य शिरः प्रधानं रूपं त्वचः त्वगुपलक्षिताच्छरीरात् अव भरः । अवयुत्य पृथक्कृत्य हृतवानसि । देवेभ्यो निष्क्रान्तस्य पुरुषाकारस्य धन्विनो यज्ञस्य शिर इन्द्रो वम्रिरूपेण ज्याघातनद्वारा पुरा चिच्छेद । तदभिप्रायेणेदमुक्तम् । श्रूयते हि—'तस्येन्द्रो वम्रिरूपेण धनुर्ज्यामच्छिनत्तस्य स्वेन धनुरार्त्निः शिर उत्पिपेष स प्रवर्ग्योऽभवत्' ( तै. आ. १. ५. २ ) इति । स त्वं सोमिनः सोमवतो मम गृहम् अगच्छः आगच्छ ॥

१. ग-म७—त्वं सुतावतः ।

त्वं त्यमिन्द्र मर्त्यमास्त्रबुध्नाय वेन्यम्। मुहुः श्रथ्ना मनस्यवे ॥ ३ ॥

त्वम्। त्यम्। इन्द्र। मर्त्यम्। आस्त्रऽबुध्नाय। वेन्यम्। मुहुः। श्रथ्नाः। मनस्यवे ॥ ३ ॥

हे इन्द्र त्वं त्यं तं मर्त्यं मनुष्यं वेन्यं वेनस्य पुत्रं पृथुम् आस्त्रबुध्नाय। आस्त्रबुध्नो नाम कश्चित्। तस्य पुत्राय मनस्यवे मननार्हं स्तोत्रमिच्छते मुहुः सकृत् श्रथ्नाः अहिंसीः[1]। वशमनयः[2] इत्यर्थः॥

त्वं त्यमिन्द्र सूर्यं पश्चा सन्तं पुरस्कृधि। देवानां चित्तिरो वशम् ॥४॥

त्वम्। त्यम्। इन्द्र। सूर्यम्। पश्चा। सन्तम्। पुरः। कृधि। देवानाम्। चित्। तिरः। वशम् ॥४॥

हे इन्द्र त्वं त्यं[3] सूर्यं सायंसमये पश्चा पश्चात् सन्तं भवन्तं पुरः परेद्युः प्रातःकाले पुरस्तात् कृधि करोषि। लकारव्यत्ययः। कीदृशम्। देवानां चित् देवानामपि तिरः तिरोहितं तैरपि क्व गत इति दुर्विज्ञानं वशं कान्तम्॥ ॥ २९ ॥

'आ याहि' इति चतुर्ऋचमेकविंशं सूक्तमाङ्गिरसस्य संवर्तस्यार्षमुषोदेवताकम्। चतस्रोऽपि विराजिका द्विपदा विराजः। तथा चानुक्रान्तम्—'आ याहि संवर्त उषस्यं द्वैपदम्' इति। प्रथमे छन्दोमे वैश्वदेवसूक्तात्पूर्वमिदं सूक्तम्। सूत्रितं च—'आ याहि वनसेमा नु कं यज्ञेन इति द्विपदासूक्तानि' (आश्व. श्रौ. ८. ७) इति। महाव्रतेऽपि निष्केवल्य एतत्। तथैव पञ्चमारण्यके सूत्रितम्—'आ याहि वनसा सहेति नव समाम्नाताः' (ऐ. आ. ५. २. २) इति॥

आ याहि वनसा सह गावः सचन्त वर्तनिं यदूधभिः ॥ १ ॥

आ। याहि। वनसा। सह। गावः। सचन्त। वर्तनिम्। यत्। ऊधऽभिः ॥ १ ॥

हे उषः वनसा वननीयेन तेजसा धनेन वा सार्धम् आ याहि आगच्छ। गावः उषसो वाहनभूताः वर्तनिं रथं सचन्त सेवन्ते। अतस्तेन रथेनायाहीत्यर्थः। यत् या गावः ऊधभिः उपलक्षिताः प्रभूताः। पीना इत्यर्थः। ता गाव इति संबन्धः॥

आ याहि वस्व्या धिया मंहिष्ठो जारयन्मखः सुदानुभिः ॥ २ ॥

आ। याहि। वस्व्या। धिया। मंहिष्ठः। जारयत्ऽमखः। सुदानुऽभिः ॥ २ ॥

हे उषः वस्व्या प्रशस्तया धिया अनुग्रहबुद्ध्या कर्मणा स्तुत्या वा सार्धम् आ याहि आगच्छ। स योऽस्माकं सुदानुभिः शोभनदानैर्दातृभिः पुरुषैः मंहिष्ठः धनानां दातृतमः अत एव जारयन्मखः समापयद्यज्ञश्च भवति॥

पितुभृतो न तन्तुमित्सुदानवः प्रति दध्मो यजामसि ॥ ३ ॥

पितुऽभृतः। न। तन्तुम्। इत्। सुऽदानवः। प्रति। दध्मः। यजामसि ॥ ३ ॥

पितुभृतो न अन्नस्य भर्तार इव सुदानवः शोभनदाना वयं तन्तुमित् तन्तुं[4] विस्तीर्णमेव[5] प्रति दध्मः। उपरमं अनुपादनरूपेण धारयामः। तेन च यज्ञेन त्वामुपक्ते यजामसि॥

१. ग-अ—अहिंसीत्। २. ग१.२.३.६.८-भ१—वशमानय। ३. ग७—त्यं तं। ४. ग-ग-भ१.४.८—तन्तुं; भ२—तं तं। ५. ग—विस्तीर्णं यज्ञमेव।

दशमेऽहनि प्रातरनुवाक उषस्ये क्रतौ 'उषो भद्रेभिः' इत्यस्याः स्थाने 'उषा अप स्वसुः' इत्येषा[1]। सूत्रितं च—'उषा अप स्वसुस्तम इति[1] पच्छो द्विपदां त्रिरुषस्ये' (आश्व. श्रौ. ८. १२) इति ॥

उषा अप स्वसुस्तमः सं वर्तयति वर्तनिं सुजातता ॥ ४ ॥

उषाः । अप । स्वसुः । तमः । सम् । वर्तयति । वर्तनिम् । सुऽजातता ॥ ४ ॥

इयम् उषाः स्वसुः भगिन्या रात्रेः संबन्धि तमः अन्धकारम् अप सं वर्तयति। आत्मीयेन तेजसापगमयति। सुजातता सुजातत्वमात्मनः सुप्रजातत्वं च वर्तनिं रथं प्रापयति ॥३०॥

'आ त्वा' इति षडृचं द्वाविंशं सूक्तमाङ्गिरसस्य ध्रुवस्यार्षमानुष्टुभम्। अभिषिक्तस्य राज्ञः स्तुतिरूपोऽर्थो देवता। तथा चानुक्रान्तम्—'आ त्वा षड् ध्रुवो राज्ञः स्तुतिरानुष्टुभं तु' इति। राज्ञो युद्धाय संनहनेऽनेन सूक्तेनाभिमन्त्रणं पुरोधसा कर्तव्यम्। सूत्रितं च—'आ त्वाहार्षमन्तरेधीति पश्चाद्रथस्यावस्थाय' (आश्व. गृ. ३. १२. २) इति ॥

आ त्वाहार्षमन्तरेधि ध्रुवस्तिष्ठाविचाचलिः ।
विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधि भ्रशत् ॥ १ ॥

आ । त्वा । अहार्षम् । अन्तः । एधि । ध्रुवः । तिष्ठ । अविऽचाचलिः ।
विशः । त्वा । सर्वाः । वाञ्छन्तु । मा । त्वत् । राष्ट्रम् । अधि । भ्रशत् ॥ १ ॥

हे राजन् त्वा त्वाम् आ अहार्षम् अस्मद्राष्ट्रस्य स्वामित्वेनानैषम्। स त्वम् अन्तः अस्मासु मध्ये एधि स्वामी भव। ध्रुवः नित्यः सन् अविचाचलिः अतिशयेन चलनरहित[2] एव[2] सन् तिष्ठ राष्ट्रमधितिष्ठ। सर्वाः च विशः प्रजाः त्वा त्वां वाञ्छन्तु। अयमेव अस्माकं[3] राजास्त्विति कामयन्तु। 'वाछि इच्छायाम्'। त्वत् त्वत्सकाशात् राष्ट्रं राज्यं मा अधि भ्रशत् मा भ्रश्यतु। मा वियुक्तं भवतु। 'भ्रन्शु अधःपतने' ॥

इहैवैधि माप च्योष्ठाः पर्वत इवाविचाचलिः ।
इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमु धारय ॥ २ ॥

इह । एव । एधि । मा । अप । च्योष्ठाः । पर्वतःऽइव । अविऽचाचलिः ।
इन्द्रःऽइव । इह । ध्रुवः । तिष्ठ । इह । राष्ट्रम् । ऊँ इति । धारय ॥ २ ॥

हे राजन् इह अस्मिन् एव राज्ये[4] एधि स्वामित्वेन सर्वदा वर्तमानो भव। माप च्योष्ठाः अपच्युतो मा भूः। मापगमः[5]। पर्वतइव यथा पर्वतो नैश्चल्येनावतिष्ठते एवम् अविचाचलिः चलनरहितो भव। इन्द्रइव यथा स्वर्गे इन्द्रः एवम् इह लोके त्वं ध्रुवस्तिष्ठ स्थिरो भव। राष्ट्रम् उ राष्ट्रं च इह लोके धारय। स्वे स्वे कर्मण्यवस्थापय ॥

१. त१.२.३.६.७.८-म१.४.५.८–इति। २. ग-त१.२.३.६.७.८-म–चलनरहितश्च। ३. ग२–सर्वथास्माकं; त१.२.३.६.७.८-म१.२.४.५.८–सर्वास्माकं। ४. म७–राष्ट्रे। ५. त-म१.२.४.८–मापगमः।

इ॒मामिन्द्रो॑ अदीधरद्ध्रु॒वं ध्रु॒वेण॑ ह॒विषा॑ ।
तस्मै॒ सोमो॒ अधि॑ ब्रव॒त्तस्मा॑ उ॒ ब्रह्म॑ण॒स्पतिः॑ ॥ ३ ॥

इ॒मम् । इन्द्रः॑ । अ॒दी॒ध॒र॒त् । ध्रु॒वम् । ध्रु॒वेण॑ । ह॒विषा॑ ।
तस्मै॑ । सोमः॑ । अधि॑ । ब्र॒व॒त् । तस्मै॑ । ऊं॒ इति॑ । ब्रह्म॑णः । पतिः॑ ॥ ३ ॥

इमम् अभिषिक्तं ध्रुवेण स्थिरेण हविषा तर्प्यमाणः इन्द्रः ध्रुवं स्थिरम् अदीधरत् धारयतु । सोमः च तस्मै राज्ञे अधि ब्रवत् अधिब्रवीतु । मदीयोऽयमिति पक्षपातवचनं करोतु । तस्मा उ तस्मा एव ब्रह्मणस्पतिः मन्त्रस्य पालको देवश्चाधिब्रवीतु ॥

ध्रु॒वा द्यौर्ध्रु॒वा पृ॑थि॒वी ध्रु॒वासः॒ पर्व॑ता इ॒मे ।
ध्रु॒वं विश्व॑मि॒दं जग॑द्ध्रु॒वो राजा॑ वि॒शाम॒यम् ॥ ४ ॥

ध्रु॒वा । द्यौः । ध्रु॒वा । पृ॒थि॒वी । ध्रु॒वासः॑ । पर्व॑ताः । इ॒मे ।
ध्रु॒वम् । विश्व॑म् । इ॒दम् । जग॑त् । ध्रु॒वः । राजा॑ । वि॒शाम् । अ॒यम् ॥ ४ ॥

द्यौः ध्रुवा स्थिरा भवति । पृथिवी च ध्रुवा स्थिरा भवति । इमे दृश्यमानाः पर्वताः महीधराश्च ध्रुवासः स्थिराः । इदं विश्वं सर्वं जगत् ध्रुवं स्थिरं भवति । एवमेव अयं विशां प्रजानां राजा स्वामी सन् ध्रुवः स्थिरो भवतु ॥

ध्रु॒वं ते॒ राजा॒ वरु॑णो ध्रु॒वं दे॒वो बृह॒स्पतिः॑ ।
ध्रु॒वं त॒ इन्द्र॑श्चा॒ग्निश्च॑ रा॒ष्ट्रं धा॑रयतां ध्रु॒वम् ॥ ५ ॥

ध्रु॒वम् । ते॒ । राजा॑ । वरु॑णः । ध्रु॒वम् । दे॒वः । बृह॒स्पतिः॑ ।
ध्रु॒वम् । ते॒ । इन्द्रः॑ । च॒ । अ॒ग्निः । च॒ । रा॒ष्ट्रम् । धा॒र॒य॒ता॒म् । ध्रु॒वम् ॥ ५ ॥

हे राजन् ते तव राष्ट्रं राजा राजमानः वरुणः ध्रुवं स्थिरं धारयतु । देवः दानादिगुणयुक्तः बृहस्पतिः ध्रुवं धारयतु । इन्द्रश्च अग्निश्च उभावपि ते तव राष्ट्रं ध्रुवं स्थिरं धारयताम् । इन्द्राग्न्योरुभयोरपेक्षया ध्रुवशब्दस्य द्विः प्रयोगः ॥

ध्रु॒वं ध्रु॒वेण॑ ह॒विषा॒भि सोमं॑ मृशामसि ।
अथो॑ त॒ इन्द्रः॒ केव॑ली॒र्विशो॑ बलि॒हृत॑स्करत् ॥ ६ ॥

ध्रु॒वम् । ध्रु॒वेण॑ । ह॒विषा॑ । अ॒भि । सोम॑म् । मृ॒शा॒म॒सि॒ ।
अथो॒ इति॑ । ते॒ । इन्द्रः॑ । केव॑लीः । विशः॑ । ब॒लि॒ऽहृतः॑ । क॒र॒त् ॥ ६ ॥

ध्रुवेण स्थिरेण हविषा पुरोडाशादिना[1] युक्तं ध्रुवं स्थिरं सोमम् अभि मृशामसि अभिमृशामः । देवतामभिलक्ष्य यागार्थं वयमृत्विजः संस्पृशामः । अथो अथानन्तरमेव इन्द्रः विशः प्रजाः ते तवैव केवलीः असाधारणाः सतीः बलिहृतः करस्य[2] प्रदात्रीः करत् करोतु ॥ ३१ ॥

1. त१.२.३.६.७–चरुपुरोडाशादि, त४.५.८-म१.२.४.८–पुरोडाशादि । 2. त१.२.३.७-म१.२.४.८–कारस्य ।

'अभीवर्तेन' इति पञ्चर्चं त्रयोविंशं सूक्तमाङ्गिरसस्याभीवर्तस्यार्षमानुष्टुभम्। पूर्ववद्ब्रह्मणस्पतिर्देवता। तथा चानुक्रान्तम्—'अभीवर्तेन पञ्चाभीवर्तः' इति। पुरोहित इदं सूक्तं राजानं युद्धाय कृतसंनाहं वाचयीत। सूत्र्यते हि—'अथैनं सारथ्यमाणमुपारुह्याभीवर्तं वाचयति[1]' (आश्व. गृ. ३. १२. १२) इति॥

अभीवर्तेन हविषा येनेन्द्रो अभिवावृते।
तेनास्मान् ब्रह्मणस्पतेऽभि राष्ट्राय वर्तय॥ १॥

अभिऽवर्तेन। हविषा। येन। इन्द्रः। अभिऽववृते।
तेन। अस्मान्। ब्रह्मणः। पते। अभि। राष्ट्राय। वर्तय॥ १॥

अभीवर्तेन। अभिवर्तन्तेऽनेनेत्यभीवर्तः॥ करणे घञ्। थाथादिस्वरेणोत्तरपदान्तोदात्तत्वम्। 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (पा. सू. ६. ३. १२२) इति दीर्घः॥ ईदृशेन येन हविषा साधनेन इन्द्रः अभिववृते सर्वमभिजगाम तेन हविषैतद्वतः अस्मान् हे ब्रह्मणस्पते राष्ट्राय राज्यं प्राप्तुम् अभि वर्तय अभिगमय॥

अभिवृत्य सपत्नानभि या नो अरातयः।
अभि पृतन्यन्तं तिष्ठाभि यो न इरस्यति॥ २॥

अभिऽवृत्य। सऽपत्नान्। अभि। याः। नः। अरातयः।
अभि। पृतन्यन्तम्। तिष्ठ। अभि। यः। नः। इरस्यति॥ २॥

हे राजन् सपत्नान् शत्रून् अभिवृत्य अभितो गत्वा स्थितान् याः अस्माकं याः अरातयः अदानशीलाः प्रजाः सन्ति ता अपि अभि तिष्ठ अभिभव। पृतन्यन्तं पृतनाः सेना आत्मन इच्छन्तं युयुत्सुं च अभि तिष्ठ॥ पृतनाशब्दात् क्यचि 'कव्यध्वरपृतनस्य[2]' इत्यन्तलोपः॥ यः च नः अस्मभ्यम् इरस्यति ईर्ष्यति। इरस् तिरस् ईर्ष्यायां कण्ड्वादिः। तमपि अभि तिष्ठ। यद्वा। प्रकृतो ब्रह्मणस्पतिरेवात्रापि संबोध्यः॥

अभि त्वा देवः सविताभि सोमो अवीवृतत्।
अभि त्वा विश्वा भूतान्यभीवर्तो यथाससि॥ ३॥

अभि। त्वा। देवः। सविता। अभि। सोमः। अवीवृतत्।
अभि। त्वा। विश्वा। भूतानि। अभिऽवर्तः। यथा। अससि॥ ३॥

हे राजन् देवः दानादिगुणयुक्तः सविता त्वा त्वाम् अभि अवीवृतत् अभिवर्तयतु। अभिगमयतु राष्ट्रम्। सोमः च अभि वर्तयतु। विश्वा विश्वानि सर्वाण्यपि भूतानि पृथिव्यादीनि त्वाम् अभि वर्तयन्तु। यथा येन प्रकारेण त्वम् अभीवर्तः अससि अभितः सर्वत्र वर्तमानो भवसि॥ असतेर्लेट्यडागमः। शपो लुगभावः॥

येनेन्द्रो हविषा कृत्व्यभवद् द्युम्न्युत्तमः।
इदं तदक्रि देवा असपत्नः किलाभुवम्॥ ४॥

१. त१.२.३.७-वाचयीत; भर.४.८-वाचयीत इति।

येनं । इन्द्रः । हविषा॑ । कृत्वी । अभ॑वत् । द्युम्नी । उत्ऽतमः ।
इदम् । तत् । अक्रि । देवाः । असपत्नः । किल॑ । अभुवम् ॥ ४ ॥

येन हविषा अस्माभिरिदानीं दत्तेन प्रीणितः इन्द्रः कृत्वी वृत्रवधादेः कर्मणः कर्ता अभवत् द्युम्नी । द्युम्नं द्योततेर्यशो वान्नं वा । तद्वान् अत एव उत्तमः उत्कृष्टतमश्चाभवत् तत् इदं हविः हे देवाः अक्रि अकारि । यद्वा । अहमकार्षम् । अत एवाहम् असपत्नः किल अभुवम् । शत्रुरहितोऽप्यभवं[1] खलु ॥

असपत्नः सपत्नहाभिराष्ट्रो विषासहिः ।
यथाहमेषां भूतानां विराजानि जनस्य च ॥ ५ ॥

असपत्नः । सपत्नऽहा । अभिऽराष्ट्रः । विऽससहिः ।
यथा । अहम् । एषाम् । भूतानाम् । विऽराजानि । जनस्य । च ॥ ५ ॥

सपत्नहा सपत्नानां शत्रूणां हन्ता अत एव असपत्नः शत्रुरहितोऽहमभूवम् । अभिराष्ट्रः अभिगतराष्ट्रः प्राप्तराज्यः सन् विषासहिः शत्रूणां विशेषेणाभिभविता चाभूवम् । यथा येन प्रकारेण अहमेषां[2] दृश्यमानानां सर्वेषां भूतानां प्राणिनां जनस्य च सेवकस्यामात्यादेश्च विराजानि ईश्वरो भवानि तथा सपत्नहा विषासहिश्चाभूवमित्यर्थः ॥ ॥ ३२ ॥

' प्र वः ' इति पञ्चर्चं चतुर्विंशं सूक्तं गायत्रम् । अर्बुदस्य सर्पस्य पुत्र ऊर्ध्वग्रावा नामर्षिः । सोमाभिषवार्था ग्रावाणो देवता । तथा चानुक्रान्तं—' प्र वः पञ्चोर्ध्वग्रावार्बुदिर्ग्राव्णोऽस्तौद्गायत्रम् ' इति । ग्रावस्तोत्र एतत्सूक्तम् । सूत्रितं च—' आ व ऋञ्जसे प्र वो ग्रावाण इति सूक्तयोः ' ( आश्व. श्रौ. ५. १२ ) इति । यद्वा । इदमेकमेव सूक्तं ग्रावस्तोत्रम् । सूत्र्यते हि—' प्र वो ग्रावाण इत्येक उक्तं सर्पेणम् ' ( आश्व. श्रौ. ५. १२ ) इति ॥

प्र वो॑ ग्रावाणः सवि॒ता दे॒वः सु॑वतु॒ धर्म॑णा । धू॒र्षु यु॑ज्यध्वं सुनु॒त ॥ १ ॥

प्र । वः । ग्रावाणः । स॒विता । दे॒वः । सु॒वतु । धर्म॑णा । धूः॒ऽसु । यु॒ज्यध्वम् । सु॒नु॒त ॥ १ ॥

हे ग्रावाणः सोमाभिषवार्थाः पाषाणाः वः युष्मान् सविता प्रेरकः देवः धर्मणा आत्मीयेन धारकेण कर्मणा प्र सुवतु अभिषवार्थं प्रेरयतु । ' षू प्रेरणे ' । तौदादिकः । यूयं च धूर्षु अभिषवस्थानेषु प्रात्स्वादिसवनादिषु युज्यध्वं युक्ता भवत । अनन्तरं सुनुत अभिषुणुत सोमम् ॥

ग्रावा॑णो॒ अप॑ दु॒च्छुना॒मप॑ सेधत दु॒र्मति॑म् । उ॒स्राः क॑र्तन भेष॒जम् ॥ २ ॥

ग्रावा॑णः । अप॑ । दु॒च्छुना॑म् । अप॑ । से॒ध॒त॒ । दुः॒ऽम॒तिम् । उ॒स्राः । क॒र्त॒न॒ । भे॒ष॒जम् ॥ २ ॥

हे ग्रावाणः दुच्छुनां दुःखकारिणीं शत्रुभूतां प्रजाम् अप सेधत अस्मत्तोऽपगमयत । ' षिधु गत्याम् ' । तथा दुर्मतिं दुष्टाभिसंधिं च अप सेधत । भेषजं सुखमस्माकं यथा भवति तथा उस्राः गाः कर्तन कुरुत ॥ करोतेश्छान्दसो विकरणस्य लुक् । ' तप्तनप्तनथनाश्च ' इति तनबादेशः ॥

ग्रावा॑ण॒ उप॑रे॒ष्वा म॑ही॒यन्ते॑ स॒जोष॑सः । वृष्णो॒ दध॑तो॒ वृष्ण्य॑म् ॥ ३ ॥

ग्रावा॑णः । उप॑रेषु । आ । म॒ही॒यन्ते॑ । स॒ऽजोष॑सः । वृष्णे॑ । दध॑तः । वृष्ण्य॑म् ॥ ३ ॥

1. स१.२.३.६.७.८–' शत्रुरहितोऽप्यभवं ' नास्ति । २. ल-म–एषामहं ।

ग्रावाणः दिक्ष्ववस्थिताः पाषाणाः सजोषसः सह प्रीयमाणाः संगताः सन्तो वा उपरेषु। उपरो नामाभिषवाय चतुर्णां ग्राव्णां मध्ये स्थापितो विस्तृतः पाषाणः। प्रदेशापेक्षं बहुवचनम्। उपरस्य प्रान्तेषु महीयन्ते प्रकाशन्ते। आकारः पूरणः। किं कुर्वन्तः। वृष्णो वर्षितुः सोमस्य वृष्ण्यं वीर्यं दुहन्तः प्रयच्छन्तः ॥

**ग्रावा॑णः सवि॒ता नु वो॑ दे॒वः सु॑वतु॒ धर्म॑णा । यज॑मानाय सुन्व॒ते ॥ ४ ॥**

ग्रावा॑णः । स॒वि॒ता । नु । वः॒ । दे॒वः । सु॒व॒तु॒ । धर्म॑णा । यज॑मानाय । सु॒न्व॒ते ॥ ४ ॥

देवः दानादिगुणयुक्तः सविता हे ग्रावाणः वः युष्मान् धर्मणा आत्मीयेन धारणेन नु क्षिप्रं सुवतु अभिषवे प्रेरयतु। किमर्थम्। सुन्वते सोमाभिषवं कुर्वते यजमानाय यजमानार्थम्। तस्य यागनिष्पत्तये इत्यर्थः ॥ ॥ ३३ ॥

'प्र सूनवः' इति चतुर्ऋचं पञ्चविंशं सूक्तम्। ऋभुपुत्रः सूनुर्नामर्षिः। द्वितीया गायत्री शिष्टास्तिस्रोऽनुष्टुभः। आद्यार्भवदेवत्या शिष्टा आग्नेय्यः। तथा चानुक्रान्तम्—'प्र सूनवः सूनुरार्भव आग्नेयमानुष्टुभं द्वितीया गायत्र्याद्यार्भवी' इति। गतो विनियोगः॥

**प्र सू॒नव॑ ऋभू॒णां बृ॒हन्न॑वन्त वृ॒जना॑ ।**
**क्षामा॒ ये वि॒श्वधा॑यसो॒ऽश्न॑न्धे॒नुं न मा॒तर॑म् ॥ १ ॥**

प्र । सू॒नवः॑ । ऋ॒भू॒णाम् । बृ॒हत् । न॒व॒न्त॒ । वृ॒जना॑ ।
क्षाम॑ । ये । वि॒श्वऽधा॑यसः । अश्न॑न् । धे॒नुम् । न । मा॒तर॑म् ॥ १ ॥

सूनवः पुत्रसंज्ञाः ऋभूणाम्। ऋभुर्विभ्वा वाज इति त्रयाणामपि प्रथमेन व्यपदेशः। तेषां पुत्राः बृहत् प्रभूतं वृजना। संग्रामनामैतत्। वृजनं संग्रामं प्र नवन्त। नवतिर्गतिकर्मा। प्रगच्छन्ति। प्रकर्षेण गच्छन्ति। प्रकृष्टगमनेन जयो लक्ष्यते। तत्र शत्रूञ्जयन्तीत्यर्थः। सूनुर्नामर्षिरात्मानमेव परोक्षेण निर्दिशन्। एकस्मिन्नपि पूजार्थं बहुवचनम्। ये ऋभवः विश्वधायसः विश्वस्य धारकाः क्षाम भूमिम् अश्नन् व्याप्नुवन्[1]। 'अशू व्याप्तौ'। व्यत्ययेन श्ना। धेनुं न। धेनुः प्रीणयित्री गौः। तामिव तेषामृभूणामित्यन्वयः। यद्वा। सूर्यरश्मयोऽप्यृभव उच्यन्ते। ये उरु भासमानाः सूर्यरश्मयो विश्वधायसो विश्वं सर्वं रसं धयन्तः[2] पिबन्तः[3]। यद्वा। वृष्ट्यादिप्रदानेन सर्वस्य धारकाः। एवंभूताः सन्तः क्षाम भूमिम् अश्नन् अभुञ्जत तदीयं सर्वं रसमपिबन्। तत्र दृष्टान्तः। मातरं जननीं धेनुं पयस्विनीं गां यथा वत्सः पिबति तथा। ते ऋभवोऽभवन् तेषामृभूणामित्यन्वयः॥

अग्निप्रणयने 'प्र देवम्' इति तृचोऽनुवक्तव्यः। सूत्रितं च—'प्रेषितोऽग्निप्रणयनीयाः प्रतिपद्यते प्र देवं देव्या धियेति तिस्रः' (आश्व. श्रौ. २. १७) इति ॥

**प्र दे॒वं दे॒व्या धि॒या भर॑ता जा॒तवे॑दसम् । ह॒व्या नो॑ वक्षदानु॒षक् ॥ २ ॥**

प्र । दे॒वम् । दे॒व्या । धि॒या । भर॑त । जा॒तऽवे॑दसम् । ह॒व्या । नः॒ । व॒क्ष॒त् । आ॒नु॒षक् ॥ २ ॥

हे ऋत्विग्यजमानाः देवं दानादिगुणयुक्तं जातवेदसं जातानां वेदितारं जातप्रज्ञं जातधनं वा इममग्निं प्र भरत प्रकर्षेण हरत। यद्वा। प्राञ्चं नयत। केन साधनेनेति तदाह। देव्या दीप्तया धिया प्रज्ञया कर्मणा वा। यद्वा। एषा सहयोगे तृतीया। देव्या धिया युक्तम्। किं प्रयो-

१. त१.९.३.६.७.८-भ१.४.८—'व्याप्नुवन्' नास्ति। २. त१.२.३.६.७.८-भ१.४.८—धयन्तः। ३. त६-पिबन्तः, भ७—पिबति।

जनमिति चेत्। नः अस्माकं हव्या हव्यानि हवींषि आनुषक् आनुपूर्व्यादनुक्रमेण वक्षत्। अयमग्निर्वहेत्। देवान् प्रापयेत्॥ वहेर्लेटि 'सिब्बहुलम्०' इति सिप्॥

अयमु ष्य प्र देवयुर्होता यज्ञाय नीयते।
रथो न योरभीवृतो घृणीवाञ्चेतति त्मना॥ ३॥

अयम्। ऊँ इति। स्यः। प्र। देवऽयुः। होता। यज्ञाय। नीयते।
रथः। न। योः। अभिऽवृतः। घृणिऽवान्। चेतति। त्मना॥ ३॥

अयमु अयमेव स्यः सोऽग्निः देवयुः[1] देवान् यष्टुमिच्छन् भवति॥ देवशब्दात्क्यचि 'न च्छन्दस्यपुत्रस्य०' इतीत्वदीर्घयोः प्रतिषेधः॥ अयमेव होता देवानामाह्वाता। अयमेव यज्ञाय यागार्थं प्र प्रणीयते आहवनीयदेशं प्रति प्रकर्षेण नीयते। अपि च रथः रंहणशीलः सूर्यो रथवान् वा॥ छान्दसो मत्वर्थीयस्य लोपः॥ स यथा घृणीवान् दीप्तिमान् तद्वद्दीप्तः योः मिश्रयिता हविषां देवैः संगमयिता॥ यौतेः 'अन्येभ्योऽपि दृश्यन्ते' इति विच्॥ अभीवृतः ऋत्विग्यजमानैरावेष्टितः॥ वृणोतेः कर्मणि 'अन्येषामपि०' इति पूर्वपदस्य दीर्घः। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्॥ एवंभूतोऽग्निः त्मना आत्मना स्वयमेव चेतति सम्यग्देवान् यष्टुं जानाति॥ 'मन्त्रेष्वाङ्यादेरात्मनः' इत्याकारलोपः॥

अयमग्निरुरुष्यत्यमृतादिव जन्मनः। सहसश्चित् सहीयान् देवो जीवातवे कृतः॥ ४॥

अयम्। अग्निः। उरुष्यति। अमृतात्ऽइव। जन्मनः।
सहसः। चित्। सहीयान्। देवः। जीवातवे। कृतः॥ ४॥

अयमग्निः अमृतात् अमरणाद्देवाद्देवनिमित्ताद्भयादिव[2] जन्मनः जायमानात् मनुष्यात् मनुष्यनिमित्ताद्भयादपि उरुष्यति तस्माद्रक्षति॥ 'उरुष्यती रक्षाकर्मा' (निरु. ५. २३) इति यास्कः। भाववाचिनोऽमृतशब्दस्य नञा बहुव्रीहौ 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम्। 'भीत्रार्थानाम्०' (पा. सू. १. ४. २५) इत्यपादानसंज्ञा॥ अपि चायं देवः सहसश्चित्॥ सह इति बलनाम। तस्मादुत्तरस्य मत्वर्थीयस्य 'बहुलं छन्दसि' इति लुक्॥ चिच्छब्दोऽप्यर्थे। सहस्वतो बलवतोऽपि सहीयान् बलवत्तरः॥ सहस्विशब्दादीयसुनि 'विन्मतोः०' इति विनो लुक्। 'टेः' इति टिलोपः॥ एवंभूतो देवः जीवातवे जीवनहेतवे यागाय कृतः ब्रह्मणा सृष्टः॥ ॥ ३५॥

'पतङ्गम्' इति तृचं चतुर्विंशं सूक्तं प्राजापत्यस्य पतङ्गस्यार्षम्। आद्या जगती ततस्त्रिष्टुभौ। मायाभेदस्य प्रतिपाद्यत्वात्तद्देवत्यमिदं सूक्तम्। अनुक्रान्तं च—'पतङ्गं तृचं पतङ्गः प्राजापत्यो मायाभेदं जगत्यादि' इति। प्रवर्ग्येऽभिष्टव आद्ये ऋचौ। सूत्रितं च—'पतङ्गमक्तमसुरस्य मायया यो नः सनुत्यः' (आश्व. श्रौ. ४. ६) इति॥

पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति मनसा विपश्चितः।
समुद्रे अन्तः कवयो वि चक्षते मरीचीनां पदमिच्छन्ति वेधसः॥ १॥

पतङ्गम्। अक्तम्। असुरस्य। मायया। हृदा। पश्यन्ति। मनसा। विपःऽचितः।
समुद्रे। अन्तरिति। कवयः। वि। चक्षते। मरीचीनाम्। पदम्। इच्छन्ति। वेधसः॥ १॥

१. त१.२.३.६.७.८-म-मु—मो देवयुः। २. त-म—°द्भयादेन।

असुरस्य असमकुशलस्य[1] सर्वोपाधिविनिर्मुक्तस्य परब्रह्मणः संबन्धिन्या मायया त्रिगुणात्मिकया अक्तं व्यक्तमभिव्यक्तम्। यद्वा। मायेति प्रज्ञानाम। प्रज्ञया संवर्द्धं सर्वज्ञं पतङ्गम्। पतति गच्छतीति पतङ्गः सूर्यः। तं विपश्चितः विद्वांसः हृदा हृदयेन। तात्स्थ्यात्ताच्छब्द्यम्। हृदि स्थितेन मनसा पश्यन्ति जानन्ति। कवयः क्रान्तदर्शिनस्ते समुद्रे। समुद्द्रवन्त्यस्मादापः इति समुद्रं सूर्यमण्डलम्। तस्मिन् अन्तः मध्ये वि चक्षते विपश्यन्ति। मण्डलान्तर्वर्तिनं हिरण्मयं पुरुषमपि जानन्तीत्यर्थः। च एवं वेधसः विधातारः उक्तप्रकारेण सूर्योपासनस्य कर्तारस्ते मरीचीनां रश्मीनां पदं स्थानं सूर्यमण्डलम् इच्छन्ति अभिलषन्ति। तदुपासनया प्राप्नुवन्तीत्यर्थः। यद्वा। मायया अक्तं जीवरूपोपाधिव्यक्तमात्मानं विपश्चितो वेदान्ताभिज्ञा हृदयेनान्तर्मुखेन मनसा पतङ्गम्। पतति व्याप्नोतीति पतङ्गः परमात्मा। तं पश्यन्ति। उपाधिनिराकरणेन जीवात्मनः परमात्मना तादात्म्यं साक्षात्कुर्वन्तीत्यर्थः। अपि च ते कवयः क्रान्तदर्शिनो वेदान्ताभिज्ञाः समुद्रे। समुद्द्रवन्त्यस्माद्भूतानीति समुद्रः परमात्मा। तस्मिन्नधिष्ठानभूतेऽन्तर्मध्ये सर्वं दृश्यजातमध्यस्तत्वेन वि चक्षते विपश्यन्तीति। अतो दृश्यव्यतिरिक्तस्य सर्वस्य मिथ्यात्वाद्वेधसो विधातारस्ते मरीचीनां वृत्तिज्ञानानां पदमधिष्ठानभूतं सच्चित्सुखात्मकं यत्परं ब्रह्म तदेवेच्छन्ति। तद्भावप्राप्तिमेव कामयन्ते॥

वामदेव्ये पशौ 'पतङ्गो वाचम्' इति पुरोडाशस्यानुवाक्या। सूत्रितं च—'यद्वाग्वदन्त्यविचेतनानि पतङ्गो वाचं मनसा बिभर्ति' (आश्व. श्रौ. ३. ८) इति॥

पतङ्गो वाचं मनसा बिभर्ति तां गन्धर्वोऽवदद्गर्भे अन्तः।
तां द्योतमानां स्वर्यं मनीषामृतस्य पदे कवयो नि पान्ति॥ २॥

पतङ्गः। वाचम्। मनसा। बिभर्ति। ताम्। गन्धर्वः। अवदत्। गर्भे। अन्तरिति।
ताम्। द्योतमानाम्। स्वर्यम्। मनीषाम्। ऋतस्य। पदे। कवयः। नि। पान्ति॥ २॥

पतङ्गः सूर्यः वाचं त्रयीरूपां मनसा प्रज्ञया बिभर्ति धारयति। श्रूयते हि—'ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः' (तै. ब्रा ३.१२.९.१) इति। ताम् एव वाचं गर्भे शरीरस्य मध्ये वर्तमानः गन्धर्वः। गाः शब्दान् धारयतीति गन्धर्वः प्राणवायुः। अन्तः मध्ये अवदत् वदति प्रेरयति। 'मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम्' (पा. शि. ७) इति स्मरणात्। द्योतमानां स्वर्यं स्वर्गप्राप्तिं स्वर्गाय हितां वा मनीषां मनस ईशित्रीं तां त्रयीरूपां वाचम् ऋतस्य यज्ञस्य सत्यभूतस्य सूर्यस्य वा पदे स्थाने कवयः मेधाविन ऋषयः नि पान्ति। अध्यापनेन नितरां रक्षन्ति। यद्वा। पतङ्गः सर्वोपाधिशून्यो व्यापकः परमात्मा। स[2] सृष्ट्यादौ वाचं मनसा बिभर्ति। कानि कानि स्रष्टव्यानीति पर्यालोचनेन मनसा सकलार्थप्रतिपादकं वेदं परामृष्टवानित्यर्थः। स्मर्यते हि—'वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः' इति। गर्भे हिरण्मये ब्रह्माण्डेऽन्तर्वर्तमानो गन्धर्वो हिरण्यगर्भस्तां वाचमवदत् प्रथममुच्चारितवान्। द्योतमानत्वादिगुणविशिष्टां तां वाचं कवयः क्रान्तदर्शिनो देवा ऋतस्य सत्यस्य ब्रह्मणः पदे स्थाने नि पान्ति नितरां रक्षन्ति॥

प्रवर्ग्येऽभिष्टवे 'अपश्यं गोपाम्' इत्येषा। सूत्रितं च—'अपश्यं गोपामनिपद्यमानं सके द्रप्सस्य' (आश्व. श्रौ. ४. ६) इति॥

---

१. त१.२.३ भ—असुरनकुलस्य; त७—असुरकुलस्य। २. त१.२.३.६.८—'स' नास्ति।

अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम्।
स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः॥ ३॥

अपश्यम्। गोपाम्। अनिऽपद्यमानम्। आ। च। परा। च। पथिऽभिः। चरन्तम्।
सः। सध्रीचीः। सः। विषूचीः। वसानः। आ। वरीवर्ति। भुवनेषु। अन्तरिति॥ ३॥

व्याख्यातेयमस्यवामीयसूक्ते (ऋ. सं. १. १६४. ३१)। गोपां गोपायितारमादित्यम् अपश्यम् अज्ञासिषम्। एष हि सर्वाणि भूतजातान्युदयास्तमयादिकर्मणा गोपायति। कीदृशम्। अनिपद्यमानम् ऊर्ध्वं गच्छन्तम्। न ह्यसौ कदाचिन्नीचैः पतति। पथिभिः आकाशमार्गैः पूर्वाह्णे आ चरन्तम् अस्मानभिलक्ष्य गच्छन्तं सायंसमये परा चरन्तं पराङ्मुखं गच्छन्तम्। प्रकारद्वयसमुच्चयार्थौ चशब्दौ। सः सूर्यः सध्रीचीः सहाञ्चन्तीः विषूचीः विविधं पृथक्पृथगञ्चन्तीः स्वस्वव्यापाराय गच्छन्तीः। प्राच्याद्या महादिशः सध्रीच्यो विषूच्यः कोणदिशः। वसानः स्वभासाच्छादयन् प्रकाशयन् भुवनेषु लोकेषु अन्तः मध्ये आ वरीवर्ति। पुनःपुनरुदयन् अस्तं गच्छंश्चावर्तते। यद्वा। गोपां शरीरस्य गोपायितारमनिपद्यमानमविनाशिनमविपद्यमा[1] च परा चाभिमुखेन च पराङ्मुखेन च पथिभिर्नाडीलक्षणैर्मार्गैश्चरन्तं[2] शरीरे वर्तमानं प्राणमपश्यम्[3] अहमद्राक्षम्॥ ॥३५॥

'त्यम् षु' इति षडृचं सप्तविंशं सूक्तं तार्क्ष्यपुत्रस्यारिष्टनेमेरार्षं त्रैष्टुभं तार्क्ष्यदेवताकम्। तथा चानुक्रान्तं—'त्यम् षु अरिष्टनेमिस्तार्क्ष्यस्तार्क्ष्यम्' इति। अहर्गणेषु द्वितीयादिष्वहःसु निष्केवल्यसूक्तानां पुरस्तादिदं सूक्तं शंसनीयम्। सूत्रितं च—'त्यमू षु वाजिनं देवजूतमिति तार्क्ष्यमग्रे निष्केवल्यसूक्तानाम्' (आश्व. श्रौ. ७. १) इति। विषुवति तु निष्केवल्यसूक्तानामन्त एव तत्सूक्तम्। सूत्र्यते हि—'त्यमू ष्वितीह तार्क्ष्यमन्ततः' (आश्व. श्रौ. ८. ६) इति। महाव्रतेऽपि निष्केवल्य एतत्। तथैव पञ्चमारण्यके सूत्र्यते (ऐ. आ. ५. ३. १)॥

त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम्।
अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम॥ १॥

त्यम्। ऊँ इति। सु। वाजिनम्। देवऽजूतम्। सहऽवानम्। तरुतारम्। रथानाम्।
अरिष्टऽनेमिम्। पृतनाजम्। आशुम्। स्वस्तये। तार्क्ष्यम्। इह। हुवेम॥ १॥

त्यमु तं प्रसिद्धमेव तार्क्ष्यं तृक्षपुत्रं सुपर्णम्॥ तृक्षाद्यण्। गर्गादिः॥ स्वस्तये क्षेमाय इह अस्मिन् कर्मणि हुवेम भृशमाह्वयेमहि[4]॥ 'बहुलं छन्दसि' इति ह्वयतेः संप्रसारणम्। लिङ्याशिष्यङ्। यद्वा। प्रार्थनायां लिङि व्यत्ययेन शः॥ कीदृशम्। वाजिनं बलवन्तमन्नवन्तं वा देवजूतं देवैः सोमाहरणाय प्रेरितम्॥ जु इति गत्यर्थः सौत्रो धातुः। अस्मात् कर्मणि निष्ठा। 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम्॥ यद्वा। देवैः प्रीयमाणं तर्प्यमाणम्। यदाह[5] यास्कः—'जूतिर्गतिः प्रीतिर्वा देवजूतं देवगतं देवप्रीतं वा' (निरु. १०. २८) इति। सहावानं सहस्वन्तं बलवन्तमभिभवनवन्तं वा अत एव रथानाम् अस्मदीयानां तरुतारं संग्रामे जेतारम्[6]। यद्वा। रंहणशील

१. त१.२.३.६.७ ८-म-°विनाधिनमा। २. म७—°मार्गैरंतश्चरंतं। ३. त१.२.३.६.७ ८-म१. ४.७.८—अपश्यं। ४. त१.२.३.६.७.८-म—भृशमाह्वयेमहीति। ५. त१.२.३.७-मु—तदाह। ६. त१. २.३.६.७ ८-म७—नेतारं, त४.५—तारं; म१.२.४.५—नेतारं; म८—अतारं।

इमे लोका रथाः । तान् सोमाहरणसमये क्षिप्रं तरितारम्¹ । श्रूयते हि—‘एष इमाँल्लोकान्सद्यस्तरति’ (ऐ. ब्रा. ४. २०) इति ॥ तरतेस्तृचि ‘प्रसितस्कभित॰’ इत्यादावुडागमो निपात्यते (पा. सू. ७. २. ३४) ॥ अरिष्टनेमिम् अहिंसितरथम् । यद्वा । नेमिर्नेमनशीलमायुधम् । अहिंसितायुधम् । अथवा । उपचारात्मके अन्यशब्दः । अरिष्टनेमेर्नेमं जनकम् । पृतनाजं पृतनानां शत्रुसेनानां प्राजितारं प्रगमयितारं जेतारं वा । ‘अज गतिक्षेपणयोः’ । अस्मात्क्विप् । ‘वलादावार्धधातुके विकल्प इष्यते’ (का. २. ४. ५६. २) इति वच्यादेशाभावः । जयतेर्वा इमन्यतः । आशुं शीघ्रगामिनम् ॥

इन्द्रस्येव रातिमाजोहुवानाः स्वस्तये नावमिवा रुहेम ।
उर्वी न पृथ्वी बहुले गभीरे मा वामेतौ मा परेतौ रिषाम ॥ २ ॥

इन्द्रस्यऽइव । रातिम् । आऽजोहुवानाः । स्वस्तये । नावम्ऽइव । आ । रुहेम ।
उर्वी इति । न । पृथ्वी इति । बहुले इति । गभीरे इति ।
मा । वाम् । आऽइतौ । मा । पराऽइतौ । रिषाम ॥ २ ॥

इन्द्रस्येव तार्क्ष्यस्य रातिं दानम् आजोहुवानाः पुनःपुनराह्वयन्तो वयं स्वस्तये अविनाशाय नावमिव नौर्यथा दुरवगाहं समुद्रं तारयति तथा दुःखस्य तारयित्रीं नाम् आ रुहेम आरूढा भूयास्म ॥ रुहेराशीर्लिङि लिङ्याशिष्यङ् ॥ हे उर्वी उर्व्यौ विस्तीर्णे हे पृथ्वी पृथिवी प्रथिते विख्याते हे बहुले अनल्पे गभीरे गाम्भीर्योपेते ईदृश्यौ हे द्यावापृथिव्यौ । नशब्दः संप्रत्यर्थे । संप्रति वां युवयोः संनिधौ एतौ तार्क्ष्यस्यागमने परेतौ परागमने च वयं मा रिषाम हिंसिता मा भूम ॥ आङ्परोरभ्यामुत्तरस्येणो भावे क्तिन् । ‘तादौ च निति॰’ इति गतेः प्रकृतिस्वरत्वम् ॥

सद्यश्चिद्यः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान ।
सहस्रसाः शतसा अस्य रंहिर्न स्मा वरन्ते युवतिं न शर्याम् ॥ ३ ॥

सद्यः । चित् । यः । शवसा । पञ्च । कृष्टीः । सूर्यःऽइव । ज्योतिषा । अपः । ततान ।
सहस्रऽसाः । शतऽसाः । अस्य । रंहिः । न । स्म । वरन्ते । युवतिम् । न । शर्याम् ॥ ३ ॥

यः चित् योऽपि तार्क्ष्यः सद्यः शीघ्रं शवसा आत्मीयेन बलेन अपः उदकानि अन्तरिक्षस्थानानि ततान विस्तारितवान् सूर्यइव यथा सूर्यः सर्वस्य प्रेरक आदित्यः ज्योतिषा आत्मीयेन तेजसा वर्षित्रीः अपो विस्तारयति तद्वत् । कृष्टयः मनुष्याः । पञ्च कृष्टीः पञ्चविधान् कृष्टीन् मनुष्यान् प्रति । निषादपञ्चमाश्चत्वारो वर्णा इत्यर्थः । अस्य तार्क्ष्यस्य रंहिः गतिः सहस्रसाः सहस्रसंख्यस्य धनस्य दात्री संभक्त्री वा भवति । तथा शतसाः शतस्य च दात्री संभक्त्री वा भवति ॥ सनतेः सनोतेर्वा ‘जनसनखन॰’ इति विट् । ‘विड्वनोरनुनासिकस्यात्’ इत्यात्वम् । अ स्म न खलु ईदृशीं तार्क्ष्यस्य² गतिं वरन्ते के चन वारयन्ति । तत्र दृष्टान्तः । शर्यां शरकाण्डमयीमिषुं धनुषो मुक्तां युवतिं न लक्ष्येण मिश्रीभवन्तीमिव । सा यथा दुर्निवारा तथैषा कैश्चिदपि वारयितुमशक्येत्यर्थः । अत्र निरुक्तं—‘सद्योऽपि यः शवसा बलेन तनोत्यपः सूर्य इव ज्योतिषा पञ्च मनुष्यजातानि सहस्रसानिनी शतसानिन्यस्य सा गतिर्न स्मैनां वारयन्ति प्रयुवतीमिव शरमयीमिषुम्’ (निरु. १० २९) इति ॥ ॥ ३१ ॥

१. ग२-त४.५-म१.४.७-तरितारं; त१.२.३.६.७–नेतारं । २. त-भ-मु–संबंधि ।

'उत्तिष्ठत' इति तृचमष्टाविंशं सूक्तमैन्द्रम्। आद्यानुष्टुप् शिष्टे त्रिष्टुभौ। उशीनरपुत्रः शिबिर्नाम राजा प्रथमाया ऋषिः। काशीनामाधिपतिः प्रतर्दनो नाम द्वितीयायाः। रौहिदश्वपुत्रो वसुमना नाम तृतीयायाः। तथा चानुक्रान्तम्—'उत्तिष्ठतैकर्चाः शिबिरौशीनरः काशिराजः प्रतर्दनो रौहिदश्वो वसुमना आद्यानुष्टुप्' इति। दधिघर्मे आद्या वक्तव्या। सूत्रितं च—'होतर्वदस्वेत्युक्त उत्तिष्ठताव पश्यतेत्याह' (आश्व. श्रौ. ५. १३) इति॥

उत्तिष्ठताव पश्यतेन्द्रस्य भागमृत्वियम्।
यदि श्रातो जुहोतन यद्यश्रातो ममत्तन॥ १॥

उत्। तिष्ठत। अव। पश्यत। इन्द्रस्य। भागम्। ऋत्वियम्।
यदि। श्रातः। जुहोतन। यदि। अश्रातः। ममत्तन॥ १॥

हे ऋत्विजः उत्तिष्ठत। आसनादूर्ध्वमुत्तिष्ठत। नोपविशत। ऊर्ध्वकर्मत्वादात्मनेपदाभावः (पा. सू. १. ३. २४)। उत्थाय ऋत्वियम् ऋतौ वसन्तादिकाले भवम् इन्द्रस्य भागं भजनीयं दधिघर्मं पच्यमानम् अव पश्यत निरीक्षध्वम्॥ ऋतुशब्दाद्भवार्थे छन्दसि घस्। 'सिति च' (पा. सू. १. ४. १६) इति पदसंज्ञया भसंज्ञाया बाधादोर्गुणाभावः। भजेः कर्मणि घञन्तो भागशब्दः। 'कर्षात्वतः०' इत्यन्तोदात्तत्वम्॥ यदि स भागः श्रातः पक्वस्तर्हि जुहोतन। इन्द्रार्थमग्नौ जुहुत। 'तप्तनप्तनथनाश्च' इति तस्य तनबादेशः। 'भीह्री०' (पा. सू. ६. १. १९२) इत्यादिना पिति प्रत्यये पूर्वस्योदात्तत्वम्। यद्यश्रातः अपक्वः तर्हि ममत्तन माद्यत। मद्। स्तुतिभिर्मोदयत॥ अत्र तेनैव सूत्रेण तनबादेशः॥

तस्यैव दधिघर्मस्य 'श्रातं हविः' इत्येषानुवाक्या। सूत्रितं च—'श्रातं हविरित्युक्तः श्रातं हविरित्यन्वाह' (आश्व. श्रौ. ५. १३) इति॥

श्रातं हविरो ष्विन्द्र प्र याहि जगाम सूरो अध्वनो विमध्यम्।
परि त्वासते निधिभिः सखायः कुलपा न व्राजपतिं चरन्तम्॥ २॥

श्रातम्। हविः। ओ इति। सु। इन्द्र। प्र। याहि। जगाम। सूरः। अध्वनः। विऽमध्यम्।
परि। त्वा। आसते। निधिऽभिः। सखायः। कुलऽपाः। न। व्राजऽपतिम्। चरन्तम्॥ २॥

हे इन्द्र हविः दधिघर्माख्यं त्वदीयं[1] श्रातं पक्वम्॥ 'श्रीञ् पाके' इत्यस्माण्णिजन्तात् 'श्रपस्रुधेयाम्०' इत्यादौ श्राभावो निपात्यते। ओ आ उ सु सुष्ठु प्र याहि प्रकर्षेण शीघ्रमागच्छ। सूरः सूर्यः अध्वनः गन्तव्यस्य मार्गस्य विमध्यं विकृष्टमध्यमीषदूनं मध्यभागं जगाम गतवान्। तव यागार्थं मध्याह्नो जात इत्यर्थः। सखायः समानख्याना ऋत्विजश्च निधिभिः निहितैः अभिन्यासादिभिः[2] सोमैः[2] सार्धं त्वा त्वां परि आसते पर्युपासते। तत्र दृष्टान्तः। कुलपाः न कुलस्य वंशस्य रक्षकाः पुत्रा यथा व्राजपतिम्। व्राजा गन्तव्या गृहाः। तेषां पतिं चरन्तं गच्छन्तमुपासते तद्वदित्यर्थः॥ 'व्रज गतौ'। अस्मात्कर्मणि घञ्। 'अजिव्रज्योश्च' (पा. सू. ७. ३. ६०) इति कुत्वनिषेधः। 'कर्षात्वतः०' इत्यन्तोदात्तत्वे 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम्॥

तस्यैव दधिघर्मस्य 'श्रातं मन्ये' इत्येषा याज्या। सूत्र्यते हि—'श्रातं मन्य ऊधनि श्रातमग्नाविति यजति' (आश्व. श्रौ. ५. १३) इति॥

१. त-भ-मु-तदीयं। २. त४.५-अभिषुत्या सहितैः।

श्रातं म॑न्य॒ ऊध॑नि श्रा॒तम॒ग्नौ सुश्रा॑तं मन्ये॒ तदृ॒तं नवी॑यः ।
माध्यं॑दिनस्य॒ सव॑नस्य द॒ध्नः पिबे॑न्द्र वज्रिन्पुरुकृज्जुषा॒णः ॥ ३ ॥

श्रातम् । म॒न्ये॒ । ऊध॑नि । श्रा॒तम् । अ॒ग्नौ । सुऽश्रा॑तम् । म॒न्ये॒ । तत् । ऋ॒तम् । नवी॑यः ।
माध्यं॑दिनस्य । सव॑नस्य । द॒ध्नः । पिब॑ । इ॒न्द्र॒ । व॒ज्रि॒न् । पु॒रु॒ऽकृ॒त् । जु॒षा॒णः ॥ ३ ॥

ऊधनि गोरूधस्येतद्धिधर्माख्यं हविः पयोरूपेण श्रातं पक्वमिति मन्ये जाने । पुनश्च दुग्धं पयः अग्नौ अपि श्रातं पक्वम् । इदानीं दध्यवस्थमप्यग्नौ पच्यते । अतः सुश्रातं सुपक्वमिति मन्ये जाने । अत एतद्धविः ऋतं सत्यभूतं नवीयः नवतरं अत्यप्रसरं भवति । हे वज्रिन् वज्रवन् हे पुरुकृत् बहुकर्मकृत् इन्द्र जुषाणः प्रीयमाणस्त्वं माध्यंदिनस्य मध्यंदिने भवस्य सवनस्य सोमस्य संबन्धिनः दध्नः । कर्मणि षष्ठी । दधिघर्माख्यं हविः पिब ॥ ३७ ॥

'प्र ससाहिषे' इति तृचमेकोनत्रिंशं सूक्तमिन्द्रपुत्रस्य जयस्यार्षं त्रैष्टुभमैन्द्रम् । तथा चानुक्रान्तं—'प्र ससाहिषे जय ऐन्द्रः' इति । गतः सूक्तविनियोगः । दर्शे इन्द्रस्य हविषः 'प्र ससाहिषे' इत्येषा याज्या । सूत्रितं च—'प्र ससाहिषे पुरुहूत शत्रून् महाँ इन्द्रो य ओजसा' (आश्व. श्रौ. १.६) इति । एकादशिन ऐन्द्रपशौ पुरोळाशस्यैषैव याज्या । सूत्रितं च—'प्र ससाहिषे पुरुहूत शत्रून् स्वस्तये वाजिभिश्च प्रणेतः' (आश्व. श्रौ. ३.७) इति । देवसुवां हविःषु इन्द्रस्यैषैवानुवाक्या । सूत्रितं च—'प्र ससाहिषे पुरुहूत शत्रून् भुवस्त्वमिन्द्र ब्रह्मणा महान्' (आश्व. श्रौ. ४.११) इति ॥

प्र स॑सा॒हिषे पुरुहूत॒ शत्रू॒ञ्ज्येष्ठ॑स्ते॒ शुष्म॑ इ॒ह रा॒तिर॑स्तु ।
इन्द्रा भ॑र॒ दक्षि॑णेना॒ वसू॑नि॒ पतिः॒ सिन्धू॑नामसि रे॒वती॑नाम् ॥ १ ॥

प्र । स॒स॒हि॒षे॒ । पु॒रु॒ऽहू॒त॒ । शत्रू॑न् । ज्येष्ठः॑ । ते॒ । शुष्मः॑ । इ॒ह । रा॒तिः । अ॒स्तु॒ ।
इन्द्र॑ । आ । भ॒र॒ । दक्षि॑णेन । वसू॑नि । पतिः॑ । सिन्धू॑नाम् । अ॒सि॒ । रे॒वती॑नाम् ॥ १ ॥

हे पुरुहूत बहुभिराहूतेन्द्र शत्रून् वैरिणः प्र ससाहिषे प्रकर्षेणाभिभवसि । ते तव शुष्मः शोषकं बलं ज्येष्ठः प्रशस्यतमं वृद्धतमं वा भवति । इह अस्मिन् कर्मणि रातिः तव दानम् अस्तु अस्मभ्यं भवतु । तदर्थं हे इन्द्र दक्षिणेन हस्तेन वसूनि धनानि आ भर आहर आनय । त्वं रेवतीनां रयिमतीनां बहुधनानां सिन्धूनां स्यन्दनशीलानां नदीनां पतिः असि स्वामी भवसि ॥ रयिशब्दान्मतुपि 'रयेर्मतौ बहुलम्' इति संप्रसारणम् । 'छन्दसीरः' इति मतुपो वत्वम् । 'रेशब्दाच्च' (का. ६.१.१७६.१) इति तस्योदात्तत्वम् ॥

वैमृधस्य हविषः 'मृगो न' इत्येषा याज्या । सूत्रितं च—'वि न इन्द्र मृधो जहि मृगो न भीमः कुचरो गिरिष्ठाः' (आश्व. श्रौ. २.१०) इति ॥

मृ॒गो न भी॒मः कु॑च॒रो गि॑रि॒ष्ठाः प॑रा॒वत॒ आ ज॑गन्था॒ परस्याः ।
सृ॒कं सं॒शाय॑ प॒विमि॑न्द्र ति॒ग्मं वि शत्रू॑न्ताळ्हि॒ वि मृधो॑ नुदस्व ॥ २ ॥

मृ॒गः । न । भी॒मः । कु॒च॒रः । गि॒रि॒ऽस्थाः । प॒रा॒ऽवतः॑ । आ । ज॒ग॒न्थ॒ । पर॑स्याः ।
सृ॒कम् । स॒म्ऽशाय॑ । प॒विम् । इ॒न्द्र॒ । ति॒ग्मम् । वि । शत्रू॑न् । ता॒ळ्हि॒ । वि । मृधः॑ । नु॒द॒स्व॒ ॥ २ ॥

१. ख–एव हविः । २. ख१.२.३.६.७.८–अ–दधि हविः ।

ᵛकुचरः कुत्सितचरणः ᵛगिरिष्ठाः पर्वतनिवासी ᵛमृगो ᵛन सिंह इव हे इन्द्र त्वं ᵛभीमः भयंकरोऽसि । स त्वं ᵛपरस्याः ᵛपरावतः अतिशयेन दूरात् द्युलोकात् ᵛआ ᵛजगन्थ आगच्छ ॥ गमेश्छान्दसे लिटि[1] क्रादिनियमप्राप्तस्येटः ' उपदेशेऽत्वतः ' ( पा. सू. ७.२.६२ ) इति प्रतिषेधः ॥ आगम्य च ᵛसृकं सरणशीलं ᵛतिग्मं तीक्ष्णं ᵛपविं वज्रं ᵛसंशाय सम्यक् तीक्ष्णीकृत्य ᵛशत्रून् अस्मदीयान् वैरिणो हे ᵛइन्द्र तेन वज्रेण ᵛवि ᵛताळ्हि विशेषेण ताडय । विनाशयेत्यर्थः ॥ ' तड आघाते ' । अस्माल्लोटि व्यत्ययेन शपो लुक् ॥ तथा ᵛमृधः संग्रामोद्युक्तान् युयुत्सूनन्यानपि ᵛवि ᵛनुदस्व विशेषेण[2] तिरस्कुरु ॥

**इन्द्र॑ क्ष॒त्रम॒भि वा॒ममोजोऽजा॑यथा वृषभ चर्षणी॒नाम् ।**
**अपा॑नुदो॒ जन॑ममित्र॒यन्त॑मु॒रुं दे॒वेभ्यो॑ अकृणोरु लो॒कम् ॥ २ ॥**

इन्द्र॑ । क्ष॒त्रम् । अ॒भि । वा॒मम् । ओजः॑ । अजा॑यथाः । वृ॒ष॒भ॒ । च॒र्ष॒णी॒नाम् ।
अप॑ । अ॒नु॒दः॒ । जन॑म् । अ॒मि॒त्र॒ऽयन्त॑म् । उ॒रुम् । दे॒वेभ्यः॑ । अ॒कृ॒णोः॒ । ऊँ॒ इति॑ । लो॒कम् ॥ २ ॥

हे ᵛइन्द्र ᵛक्षत्रं क्षतात्त्रायकं ᵛवामं वननीयं ᵛओजः बलमभिलक्ष्य ᵛअजायथाः उत्पन्नोऽसि । हे ᵛवृषभ कामानां वर्षितः ᵛचर्षणीनां मनुष्याणामस्माकम् ॥ ' आमन्त्रितस्य च ' इति आमन्त्रितस्याद्युदात्तत्वम् ॥ ᵛअमित्रयन्तम् । अमित्रः शत्रुः । स इवाचरन्तं ᵛजनम् ᵛअपानुदः अपागमयः । ᵛदेवेभ्यः च ᵛउरुं विस्तीर्णं ᵛलोकं स्वर्गाख्यम् ᵛअकृणोः अकार्षीः । उशब्दः समुच्चये ॥ ॥ ३८ ॥

' प्रथः ' इति तृचं त्रिंशं सूक्तं वैश्वदेवं त्रैष्टुभम् । वासिष्ठः प्रथसंज्ञ ऋषिः प्रथमायाः । भारद्वाजः सप्रथाख्य ऋषिर्द्वितीयायाः । सूर्यपुत्रो घर्म ऋषिस्तृतीयायाः । तथा चानुक्रान्तं— ' प्रथश्चैकर्चाः प्रथो वासिष्ठः सप्रथो भारद्वाजो घर्मः सौर्यो वैश्वदेवम् ' इति । अश्वमेधेऽभिप्लव एतत्सूक्तम् । सूत्रितं च— ' गणानां त्वा प्रथश्च यस्य ' ( आश्व. श्रौ. ४. ६ ) इति ॥

**प्रथ॑श्च॒ यस्य॑ स॒प्रथ॑श्च॒ नामानु॑ष्टुभस्य ह॒विषो॑ ह॒विर्यत् ।**
**धा॒तुर्द्युता॑नात्सवि॒तुश्च॒ विष्णो॑ रथंत॒रमा ज॑भारा॒ वसि॑ष्ठः ॥ १ ॥**

प्रथः॑ । च॒ । यस्य॑ । स॒ऽप्रथः॑ । च॒ । नाम॑ । आनु॑ऽस्तुभस्य । ह॒विषः॑ । ह॒विः । यत् ।
धा॒तुः । द्युता॑नात् । स॒वि॒तुः । च॒ । विष्णोः॑ । र॒थ॒म्ऽत॒रम् । आ । ज॒भा॒र॒ । वसि॑ष्ठः ॥ १ ॥

ᵛयस्य वसिष्ठस्य ᵛप्रथः ᵛनाम पुत्रो यस्य भरद्वाजस्य ᵛसप्रथः नाम पुत्रः तयोर्मध्ये ᵛवसिष्ठः ᵛआनुष्टुभस्य अनुष्टुप्छन्दस्का युक्तस्य ᵛहविषः घर्माख्यस्य ᵛयत् ᵛहविः हविष्प्रापकं ᵛरथंतरम् । रथंतरःसाधनं साम तद्रथंतरम् । ᵛधातुः धातृसंज्ञाद्देवात् ᵛद्युतानात् द्योतमानात् ᵛसवितुश्च ᵛविष्णोः च ᵛआ ᵛजभार आजहार । हृतवान् ॥ ' हृग्रहोर्भः ' इति भत्वम् । रथशब्दोपपदात्तरतेः संज्ञायां ' भृतॄवृजि[3] ' इति खच् । ' अरुर्द्विषदजन्तस्य ' इति मुमागमः ॥

**अवि॑न्दन्ते॒ अति॑हितं॒ यदासी॑द्य॒ज्ञस्य॒ धाम॑ पर॒मं गुहा॒ यत् ।**
**धा॒तुर्द्युता॑नात्सवि॒तुश्च॒ विष्णो॑र्भ॒रद्वा॑जो बृ॒हदा च॑क्रे अ॒ग्नेः ॥ २ ॥**

अवि॑न्दन् । ते । अति॑ऽहितम् । यत् । आसी॑त् । य॒ज्ञस्य॑ । धाम॑ । प॒र॒मम् । गुहा॑ । यत् ।
धा॒तुः । द्युता॑नात् । स॒वि॒तुः । च॒ । विष्णोः॑ । भ॒रत्ऽवा॑जः । बृ॒हत् । आ । च॒क्रे॒ । अ॒ग्नेः ॥ २ ॥

1. तथ–लिटि थलि । 2. तथ.५–विशेषेण प्रेरय ।

ते धात्रादयः तत् अविन्दन् अलभन्त यत् बृहत्साम आज्यं घर्मस्य हविषः संस्कारकम् अति-हितं तिरोहितम् आसीत्। यत् च बृहत्साम यज्ञस्य ज्योतिष्टोमादेः परमम् उत्कृष्टं धाम धारकं शरीरभूतं वा गुहा गुहायामस्मदादिविषये निहितमासीत् तत्ते धात्रादयोऽलभन्त। तेभ्यः अग्नेः च सकाशात् बृहत् साम भरद्वाजः ऋषिः आ चक्रे आभिमुख्येन कृतवान्। आहृतवानित्यर्थः॥

तेऽविन्दन्मनसा दीध्याना यजुः ष्कन्नं प्रथमं देवयानम्।
धातुर्द्युतानात्सवितुश्च विष्णोरा सूर्यादभरन्घर्ममेते॥ ३॥

ते। अविन्दन्। मनसा। दीध्यानाः। यजुः। स्कन्नम्। प्रथमम्। देवऽयानम्।
धातुः। द्युतानात्। सवितुः। च। विष्णोः। आ। सूर्यात्। अभरन्। घर्मम्। एते॥ ३॥

ते धात्रादयः दीध्यानाः दीप्यमानाः सन्तः मनसा बुद्ध्या अविन्दन् अलभन्त। किं तत्। यजुः यागसाधनं स्कन्नं स्कन्दनीयमासेचनीयं प्रवृञ्जनसाधनं प्रथमं मुख्यं देवयानं देवानां प्राप्तिसाधनं घर्मम्। एवं धात्रादिभिः प्रथममुपलब्धं तं घर्मं धातुः द्योतमानात् सवितुः विष्णोः सूर्यात् च एते ऋत्विजः आ अभरन् आहरन्। आनीतवन्त इत्यर्थः॥ ॥ १९ ॥

'बृहस्पतिः' इति तृचमेकत्रिंशं सूक्तं बृहस्पतिदेवत्यं त्रैष्टुभम्। बृहस्पतिपुत्रस्तपुर्मूर्धा नामर्षिः। तथा चानुक्रान्तं—'बृहस्पतिस्तपुर्मूर्धा बार्हस्पत्यो बार्हस्पत्यम्' इति। गतो विनियोगः॥

बृहस्पतिर्नयतु दुर्गहा तिरः पुनर्नेषदघशंसाय मन्म।
क्षिपदशस्तिमप दुर्मतिं हन्नथा करद्यजमानाय शं योः॥ १॥

बृहस्पतिः। नयतु। दुःऽगहा। तिरः। पुनः। नेषत्। अघऽशंसाय। मन्म।
क्षिपत्। अशस्तिम्। अप। दुःऽमतिम्। हन्। अथ। करत्। यजमानाय। शम्। योः॥ १॥

बृहस्पतिः बृहतां देवानां पतिः पालयिता॥ 'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च' (पा. म. ६. १. १५७) इति सुडागमस्तलोपश्च। 'उभे वनस्पत्यादिषु' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम्॥ दुर्गहा दुर्गमनानां हन्ता स देवः तिरः नयतु तिरस्कर्तव्यानि पापान्यपनयतु। अघशंसाय अस्माकमनर्थमाशंसमानाय पुरुषाय मन्म। मन्यतेर्दीप्तिकर्मणो मन्म। दीप्तमायुधं पुनः नेषत् नयतु। नयतेर्लेट्यडागमः। 'सिब्बहुलम्' इति सिप्। अपि च अशस्तिम् अप्रशस्तिं शत्रुं क्षिपत् क्षिपतु अस्मत्तः प्रेरयतु। दुर्मतिं दुर्बुद्धिं च अप हन् अपहन्तु। अथ अनन्तरं शं रोगाणां शमनं योः भयानां यावनं च करत्॥

नराशंसो नोऽवतु प्रयाजे शं नो अस्त्वनुयाजो हवेषु।
क्षिपदशस्तिमप दुर्मतिं हन्नथा करद्यजमानाय शं योः॥ २॥

नराशंसः। नः। अवतु। प्रऽयाजे। शम्। नः। अस्तु। अनुऽयाजः। हवेषु।
क्षिपत्। अशस्तिम्। अप। दुःऽमतिम्। हन्। अथ। करत्। यजमानाय। शम्। योः॥ २॥

पञ्चसु प्रयाजेषु द्वितीयः प्रयाजो नराशंसदेवताकः। तस्मिन् प्रयाजे देवताभूतः नराशंसः नरैः शंसनीयोऽग्निः नः अस्मान् अवतु रक्षतु। हवेषु आह्वानेषु सत्सु अनुयाजः। त्रयोऽनुयाजाः। द्वितीयोऽनुयाजो नराशंसः। तस्यानुयाजस्य देवताभूतो नराशंसोऽग्निश्च नः अस्माकं शं सुखकरः अस्तु। बृहस्पतिश्च अशस्तिं क्षिपत् इत्यादि पूर्ववत्॥

तपुर्मूर्धा तपतु रक्षसो ये ब्रह्मद्विषः शरवे हन्तवा उ ।
क्षिपदशस्तिमप दुर्मतिं हन्नथा करद्यजमानाय शं योः ॥ ३ ॥

तपुःऽमूर्धा । तपतु । रक्षसः । ये । ब्रह्मऽद्विषः । शरवे । हन्तवै । ऊँ इति ।
क्षिपत् । अशस्तिम् । अप । दुःऽमतिम् । हन् । अथ । करत् । यजमानाय । शम् । योः ॥३॥

तपुर्मूर्धा तापकशिरस्को बृहस्पतिः रक्षसः ये ब्रह्मद्विषः ब्राह्मणद्वेष्टारो राक्षसाः तान् राक्षसान् तपतु तापयतु । दहत्वित्यर्थः । किमर्थम् । शरवे शरुं हिंसकं रक्षसामधिपतिं हन्तवै हन्तुम् । अनुचरान् पूर्वं नाशयतु पश्चादेनमपि नाशयत्वित्यर्थः । 'शॄ हिंसायाम्' इत्यस्मात् 'शॄस्वृस्निहि' इत्यादिना उप्रत्ययः । 'नित्' इत्यनुवृत्तेराद्युदात्तत्वम् । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थी । हन्तेः 'तुमर्थे सेसेन्' इति तवैप्रत्ययः । 'अन्तश्च तवै युगपत्' इत्याद्यन्तयोर्युगपदुदात्तत्वम् । उशब्दः पूरकः ॥ ॥ ४० ॥

'अपश्यम्' इति तृचं द्वाविंशं सूक्तं त्रैष्टुभम् । प्रजापतिपुत्रः प्रजावानामर्षिः । ऋचः क्रमेण यजमानपत्नीहोतॄणामाशिषः प्रतिपादिकाः । अतस्तद्देवताकाः । तथा चानुक्रान्तम्—'अपश्यं प्रजावान् प्राजापत्योऽन्वृचं यजमानपत्नीहोत्राशिषः' इति । प्रवर्ग्येऽभिष्टव एतत्सूक्तम् । सूत्र्यते हि—'अपश्यं त्वेत्येतस्यायया यजमानमीक्षते द्वितीयया पत्नीं तृतीययात्मानम्' ( आश्व. श्रौ. ४. ६ ) इति ॥

अपश्यं त्वा मनसा चेकितानं तपसो जातं तपसो विभूतम् ।
इह प्रजामिह रयिं रराणः प्र जायस्व प्रजया पुत्रकाम ॥ १ ॥

अपश्यम् । त्वा । मनसा । चेकितानम् । तपसः । जातम् । तपसः । विऽभूतम् ।
इह । प्रऽजाम् । इह । रयिम् । रराणः । प्र । जायस्व । प्रऽजया । पुत्रऽकाम ॥ १ ॥

हे यजमान त्वा त्वां मनसा बुद्ध्या अपश्यम् अदर्शम् । कीदृशम् । चेकितानं कर्माणि बुध्यमानं जानन्तं तपसः दीक्षारूपात्कर्मणः[1] जातं पुनरुत्पन्नं यद्वा जन्मान्तरानुष्ठितात्सुकृतादुत्पन्नं तपसः अनुष्ठीयमानाद्यज्ञाद्धेतोः विभूतं व्याप्तं सर्वत्र प्रख्यातम् । हे पुत्रकाम पुत्रान् कामयमान स त्वम् इह अस्मिँल्लोके प्रजां पुत्रपौत्रादिरूपां रराणः रमयन् रयिं धनम्[2] इह अस्मिँल्लोके रमयन् प्रजया प्रजनेन प्र जायस्व[3] पुत्रादिरूपेणोत्पद्यस्व[4] । प्रजा उत्पादयेत्यर्थः ॥

अपश्यं त्वा मनसा दीध्यानां स्वायां तनू ऋत्व्ये नाधमानाम् ।
उप मामुच्चा युवतिर्बभूयाः प्र जायस्व प्रजया पुत्रकामे ॥ २ ॥

अपश्यम् । त्वा । मनसा । दीध्यानाम् । स्वायाम् । तनू इति । ऋत्व्ये । नाधमानाम् ।
उप । माम् । उच्चा । युवतिः । बभूयाः । प्र । जायस्व । प्रऽजया । पुत्रऽकामे ॥ २ ॥

हे पत्नि[5] दीध्यानां दीप्यमानां स्वायाम् आत्मीयायां तनू तन्वां शरीरे ऋत्व्ये । ऋतुकाले भवं गर्भधारणरूपं कर्म करिष्यम् । तन्निमित्तभूते नाधमानां भर्तुरुपगमनं याचमानां त्वा त्वां मनसा अपश्यम् अज्ञासम् । हे पुत्रकामे पुत्रान् कामयमाने माम् उप मत्समीपं

१. त१.१.३.६ ७—शरवे शृ; त८—किमर्थं शरवे शृ । २. त१.१.३.६.७.८-म२.४.८—दीक्षारूपा° । ३. त४.५—धनं च । ४. त१.२.२.६.७.८-म—जायस्व प्रजा उत्पादय; त४.५—जायस्व प्रजा उत्पादयस्व । ५. त१.२.६.८-म१.४.७—°णोत्पाद्यस्व । ६. त४.५—युवति ।

प्राप्य सा त्वम् जन्या जनयित्री युवतिः तरुणी असूताः सूता । 'छन्दस्युभयथा' इत्यार्धधातुकत्वात् । तस्य छान्दसः भुट् । अविस्यापि व्यत्ययेन 'मयतेरः' (पा. सू. ७. ४. ७२) इत्यभ्यासस्यात्वम् । युवतिर्भूत्वा च प्रजया प्रजनेन प्र आयस्व पुत्रान् प्रसूष्व । 'जनी प्रादुर्भावे'। श्यनि 'ज्ञाजनोर्जा' इति जादेशः ॥

अहं गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वन्तः ।
अहं प्रजा अजनयं पृथिव्यामहं जनिभ्यो अपरीषु पुत्रान् ॥ ३ ॥

अहम् । गर्भम् । अदधाम् । ओषधीषु । अहम् । विश्वेषु । भुवनेषु । अन्तरिति ।
अहम् । प्रऽजाः । अजनयम् । पृथिव्याम् । अहम् । जनिऽभ्यः । अपरीषु । पुत्रान् ॥ ३ ॥

अहं होता ओषधीषु शाल्यादिषु फलार्थं गर्भमदधां धारयामि । विश्वेषु सर्वेष्वन्येष्वपि भुवनेषु भूतजातेषु अन्तः मध्ये अहम् एव गर्भं धारयामि । तथा पृथिव्यां भूम्यां प्रजाः सर्वान् मनुष्यान् अहम् अजनयं जनयामि । जनिभ्यः जायाभ्यः अपरीषु अन्यास्वपि[1] स्त्रीषु पुत्रान् अहम् अजनयं जनयामि । मन्त्राभ्यासेन यागेन सर्वस्योत्पत्तेरहं सर्वजननहेतुर्भवामीत्यर्थः ॥      ॥ २१ ॥

'विष्णुः' इति तृचं सप्तदशं सूक्तमानुष्टुभम् । गर्भाणां कर्ता त्वष्टा नामर्षिः प्रजापतिपुत्रो विष्णुर्वा । लिङ्गोक्ता विष्णुत्वष्टृप्रजापतिसिनीवालीसरस्वत्यश्विन इति देवताः । तथा चानुक्रान्तं— 'विष्णुस्त्वष्टा गर्भकर्ता विष्णुर्वा प्राजापत्यो गर्भार्थाशीर्लिङ्गोक्तदेवतमानुष्टुभम्' इति । लैङ्गिको विनियोगः ॥

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।
आ सिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ १ ॥

विष्णुः । योनिम् । कल्पयतु । त्वष्टा । रूपाणि । पिंशतु ।
आ । सिञ्चतु । प्रजाऽपतिः । धाता । गर्भम् । दधातु । ते ॥ १ ॥

विष्णुः व्यापको देवः योनिं गर्भाधानस्थानं कल्पयतु करोतु । त्वष्टा तनुकर्ता एतत्संज्ञको देवश्च रूपाणि निरूपकाणि स्त्रीत्वपुंस्त्वाभिव्यञ्जकानि चिह्नानि पिंशतु अवयवीकरोतु ॥ 'पिश अवयवे'। तुदादित्वात्तुम् ॥ एवं प्रक्लृप्तायां योन्यां प्रजापतिः रेतः आ सिञ्चतु निषिञ्चतु । विसृजत्वित्यर्थः । धाता धारको देवो हे जाये ते तव गर्भं गर्भरूपेण परिणतं तद्रेतः दधातु । तवैव धारयतु । स्रावपातापत्तिर्मा भूदित्यर्थः ॥

गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ।
गर्भं ते अश्विनौ देवावा धत्तां पुष्करस्रजा ॥ २ ॥

गर्भम् । धेहि । सिनीवालि । गर्भम् । धेहि । सरस्वति ।
गर्भम् । ते । अश्विनौ । देवौ । आ । धत्ताम् । पुष्करऽस्रजा ॥ २ ॥

हे सिनीवालि एतत्संज्ञे देवि गर्भं धेहि । निषिक्तं गर्भं धारय । हे[2] सरस्वति त्वं च निषिक्तं गर्भं धारय[2] । हे जाये पुष्करस्रजा पुष्करमालिनौ स्वर्णकमलाभरणौ अश्विनौ देवौ ते तव गर्भम् आ धत्तां प्रक्षिपताम् । कुरुतामित्यर्थः ॥

हिरण्ययी अरणी यं निर्मन्थतो अश्विना ।
तं ते गर्भं हवामहे दशमे मासि सूतवे ॥ ३ ॥

1. त४.५–अपरास्वपि । 2. त१.२.३.१.७.८-म१.४.५.८–'हे सरस्वति……धारय' नास्ति ।

हि॒र॒ण्ययी॒ इति॑ । अ॒रणी॒ इति॑ । यम् । निः॒ऽमन्थ॑तः । अ॒श्विना॑ ।
तम् । ते॒ । गर्भ॑म् । ह॒वा॒म॒हे॒ । द॒श॒मे । मा॒सि । सूत॑वे ॥ ३ ॥

हिरण्ययी हिरण्मय्यौ अरणी यं गर्भमुद्दिश्य अश्विना अश्विनौ देवौ निर्मन्थतः निर्मथितवन्तौ हे नारि ते तुभ्यं त्वदर्थं तं गर्भं हवामहे आह्वयामहे । दशमे मासि सूतवे प्रसोतुम् ॥ 'पद्दन्' इत्यादिना मासशब्दस्य मास्भावः । सूतेः 'तुमर्थे सेसेन्' इति तवेन्प्रत्ययः ॥ ॥ ४२ ॥

'महि' इति तृचं चतुर्विंशं सूक्तं वरुणपुत्रस्य सत्यधृतेरार्षं गायत्रमादित्यदेवताकम् । तथा चानुक्रान्तं— 'महि सत्यधृतिर्वारुणिरादित्यं स्वस्त्ययनं गायत्रं तु' इति । अन्तेवासिनं प्रवसन्तं शिष्यमाचार्योऽनेन सूक्तेनाभिमन्त्रयते । सूत्र्यते हि— 'महि त्रीणामित्यनुमन्त्र्यैनमतिसृजेत् न कुतश्चिद्भयं भवतीति विज्ञायते' ( आश्व. गृ. ३. १०. ७-८ ) इति ॥

महि॑ त्री॒णामवो॑ऽस्तु द्यु॒क्षं मि॒त्रस्या॑र्य॒म्णः । दु॒रा॒धर्षं॒ वरु॑णस्य ॥ १ ॥
महि॑ । त्री॒णाम् । अवः॑ । अ॒स्तु॒ । द्यु॒क्षम् । मि॒त्रस्य॑ । अ॒र्य॒म्णः । दुः॒ऽआ॒धर्ष॑म् । वरु॑णस्य ॥ १ ॥

त्रीणां त्रयाणां मित्रस्य अर्यम्णः वरुणस्य च द्युक्षं दीप्तमत एव दुराधर्षम् अन्यै- र्धर्षितुं बाधितुमशक्यं महि महत् अवः रक्षणमस्माकम् अस्तु । 'त्रीणामित्यपि छन्दसि दृश्यते' ( का. ७. १. ५३. १ ) इति वचनात् त्रयादेशाभावः । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् ॥

न॒हि तेषा॑म॒मा च॒न नाध्व॑सु वार॒णेषु॑ । ईशे॑ रि॒पुर॒घशं॑सः ॥ २ ॥
न॒हि । तेषा॑म् । अ॒मा । च॒न । न । अध्व॑ऽसु । वा॒र॒णेषु॑ । ईशे॑ । रि॒पुः । अ॒घऽशं॑सः ॥ २ ॥

अमेति गृहनाम । अमा चन गृहेष्वपि तेषां वरुणमित्रार्यम्णां तदनुगृहीतानां स्तोतॄणां वा अघशंसः अघमनर्थमाशंसमानः रिपुः शत्रुः नहि ईशे न खलु[1] हिंसितुमीष्टे ॥ 'लोपस्त आत्मनेपदेषु' इति तलोपः । अनुदात्तेत्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः शिष्यते[2] ॥ तथा अध्वसु मार्गेषु वारणेषु यत्र पुरुषा निवार्यन्ते तेषु च स्थानेषु शत्रुर्बाधयितुं न ईशे ॥

यस्मै॑ पु॒त्रासो॒ अदि॑तेः॒ प्र जी॒वसे॒ मर्त्या॑य । ज्योति॒र्यच्छ॒न्त्यज॑स्रम् ॥ ३ ॥
यस्मै॑ । पु॒त्रासः॑ । अदि॑तेः । प्र । जी॒वसे॑ । मर्त्या॑य । ज्योतिः॑ । यच्छ॑न्ति । अज॑स्रम् ॥ ३ ॥

अदितेः अदीनाया देवमातुः पुत्रासः पुत्रा मित्रादयः यस्मै मर्त्याय मनुष्याय स्तोत्रे अजस्रम् अविच्छिन्नं ज्योतिः तेजः जीवसे जीवितुं प्र यच्छन्ति तस्य शत्रुर्नेश्वर इत्यर्थः ॥ ॥ ४३ ॥

'वातः' इति तृचं पञ्चविंशं सूक्तं वातगोत्रस्योलस्यार्षं गायत्रं वायुदेवताकम् । तथा चानुक्रान्तं— 'वात उलो वातायनो वायव्यम्' इति । गतो विनियोगः ॥

वात॒ आ वा॑तु भेष॒जं श॒म्भु म॑यो॒भु नो॑ हृ॒दे । प्र ण॒ आयूं॑षि तारिषत् ॥ १ ॥
वातः॑ । आ । वा॒तु॒ । भे॒ष॒जम् । श॒म्ऽभु । म॒यः॒ऽभु । नः॒ । हृ॒दे ।
प्र । नः॒ । आयूं॑षि । ता॒रि॒ष॒त् ॥ १ ॥

वातः वायुः नः अस्माकं हृदे हृदयाय भेषजम् औषधमुदकं वा आ वातु आगमयतु । कीदृशमुदकम्[3] । शंभु रोगशमनस्य भावयितृ मयोभु सुखस्य च भावयितृ । अपि च नः अस्माकम् आयूंषि प्र तारिषत् प्रवर्धयतु ॥

---

१. स१.२.३.६.७.८-अ—न हि त्वा खलु । २. स१.२.३ ६.७.८-अ—'शिष्यते' नास्ति । ३. स१. २.३.६.७.८-अ-शु—ईदृशमुदकं ।

उत वात पितासि न उत भ्रातोत नः सखा। स नो जीवातवे कृधि ॥ २ ॥

उत। वात। पिता। असि। नः। उत। भ्राता। उत। नः। सखा।
सः। नः। जीवातवे। कृधि ॥ २ ॥

उत अपि च हे वात त्वं नः अस्माकं पिता असि उत्पादको भवसि। उत अपि च भ्राता भवसि[1]। उत अपि च नः अस्माकं सखा समानख्यानो मित्रभूतश्च भवसि। सः त्वं नः अस्मान् जीवातवे जीवनहेतवे आयुषे कृधि कुरु॥ करोतेश्छान्दसो विकरणस्य लुक्। 'श्रुशृणुपॄकृवृभ्यः०' इति हेर्धिः॥

यददो वात ते गृहेऽमृतस्य निधिर्हितः। ततो नो देहि जीवसे ॥ ३ ॥

यत्। अदः। वात। ते। गृहे। अमृतस्य। निऽधिः। हितः। ततः। नः। देहि। जीवसे ॥ ३ ॥

हे वात वायो ते तव गृहे स्थाने यददः योऽसौ अमृतस्य अमरणस्य निधिः निक्षेपः हितः स्थापितो वर्तते ततः तस्मान्निधेरमृतत्वं जीवसे नः अस्माकं जीवनाय देहि प्रयच्छ॥ ॥ ४४ ॥

'प्राग्नये' इति पञ्चर्चं षड्विंशं सूक्तमग्नेः पुत्रस्य वत्सस्यार्षं गायत्रमाग्नेयम्। तथा चानुक्रान्तं —'प्राग्नये पञ्चाग्नेयो वत्स आग्नेयं तु' इति। प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे छन्दस्याग्नेये क्रतौ इदमादिके द्वे सूक्ते। सूत्र्यते हि—'प्राग्नये वाचमिति सूक्ते इमां मे अग्ने समिधम्' (आश्व. श्रौ. ४. १३) इति। वैश्वदेवस्य नवमेऽहन्याग्निमारुत इदं आग्नेयसूक्तं निविद्धानम्। सूत्रितं च—'मरुतो यस्य हि प्राग्नये वाचमित्याग्निमारुतम्' (आश्व. श्रौ. ८. ११) इति॥

प्राग्नये वाचमीरय वृषभाय क्षितीनाम्। सः नः पर्षदति द्विषः ॥ १ ॥

प्र। अग्नये। वाचम्। ईरय। वृषभाय। क्षितीनाम्। सः। नः। पर्षत्। अति। द्विषः ॥ १ ॥

हे स्तोतः अग्नये स्तुतिरूपां वाचं प्र ईरय उच्चारय। कथंभूताय। क्षितीनां मनुष्याणां यजमानानां वृषभाय कामानां वर्षित्रे। किं प्रयोजनमिति चेत्। सः अग्निः नः अस्मान् द्विषः द्वेष्टॄन् अति पर्षत् अतिपारयेत्॥

यः परस्याः परावतस्तिरो धन्वातिरोचते। स नः पर्षदति द्विषः ॥ २ ॥

यः। परस्याः। पराऽवतः। तिरः। धन्व। अतिऽरोचते। सः। नः। पर्षत्। अति। द्विषः ॥ २ ॥

यः अग्निः परस्याः परावतः अतिशयितादूरदेशात् तिरः। प्राप्तनामैतत्। प्राप्तसंबन्धे धन्व मरुभूमिं जलवर्जितं देशम् अतिरोचते अतिक्रम्य प्रज्वलति। यद्वा। धन्व अन्तरिक्षम्। धन्वन्यन्तरिक्षे तिरस्तिर्यगतिरोचते सूर्यो प्रकाशते। गतमन्यत्॥

यो रक्षांसि निजूर्वति वृषा शुक्रेण शोचिषा। स नः पर्षदति द्विषः ॥ ३ ॥

यः। रक्षांसि। निऽजूर्वति। वृषा। शुक्रेण। शोचिषा। सः। नः। पर्षत्। अति। द्विषः ॥ ३ ॥

वृषा वर्षिता यः अग्निः शुक्रेण निर्मलेन शुभ्रवर्णेन वा शोचिषा तेजसा रक्षांसि राक्षसादीन् शत्रून् निजूर्वति निहिनस्ति। जूर्वी हिंसार्थः। गतमन्यत्॥

यो विश्वाभि विपश्यति भुवना सं च पश्यति। स नः पर्षदति द्विषः ॥ ४ ॥

यः। विश्वा। अभि। विऽपश्यति। भुवना। सम्। च। पश्यति। सः। नः। पर्षत्। अति। द्विषः ॥ ४ ॥

---

१. भ—असि।

यः अग्निः सूर्यरूपेण विश्वा विश्वानि सर्वाणि भूतजातानि अभि अभिमुखं विपश्यति विशेषेण तेजसा प्रेक्षते । प्रकाशयतीत्यर्थः । भुवना भुवनानि भूतजातानि सं पश्यति च सम्यग्जानाति च । अन्यत्सिद्धम्[1] ॥

**यो अ॒स्य पा॒रे रज॑सः शु॒क्रो अ॒ग्निरजा॑यत । स नः॑ पर्ष॒दति॒ द्विषः॑ ॥ ५ ॥**

यः । अ॒स्य । पा॒रे । रज॑सः । शु॒क्रः । अ॒ग्निः । अजा॑यत । सः । नः॒ । प॒र्ष॒त् । अति॑ । द्विषः॑ ॥ ५ ॥

अस्य रजसः[2] लोकस्यान्तरिक्षस्य पारे उपरिदेशे[3] शुक्रः शुभ्रवर्णः यः अग्निः विद्युदात्मना[4] सूर्यात्मना वा अजायत प्रादुर्भवति सः नः अस्मान् द्विषः द्वेष्टॄन् अति पर्षत् अतिपारयतु ॥ ॥ ४५ ॥

'प्र नूनम्' इति तृचं नवत्रिंशं सूक्तमग्निपुत्रस्य श्येनस्यार्षं गायत्रम् । जातवेदोगुणकोऽग्निर्देवता । तथा चानुक्रान्तं—'प्र नूनं तृचमाग्नेयः श्येनो जातवेदस्यम्' इति । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

**प्र नू॒नं जा॒तवे॑दस॒मश्वं॑ हिनोत वा॒जिन॑म् । इ॒दं नो॑ ब॒र्हिरा॒सदे॑ ॥ १ ॥**

प्र । नू॒नम् । जा॒तऽवे॑दसम् । अश्व॑म् । हि॒नो॒त॒ । वा॒जिन॑म् । इ॒दम् । नः॒ । ब॒र्हिः । आ॒ऽसदे॑ ॥ १ ॥

जातवेदसं जातानां वेदितारं जातधनादिकं वा अश्वं कर्मसिव्याप्नुवन्तं वाजिनम् अन्नवन्तं हे ऋत्विग्यजमानाः नूनम् अवश्यं प्र हिनोत प्रवर्धयत । यद्वा । अश्वमिव स्तुतिभिः प्रेरयत । 'हि गतौ वृद्धौ च' । अस्माल्लोटि तशब्दस्य 'तप्तनप्तनथनाश्च' इति तबादेशः । किमर्थम् । नः अस्माकम् इदं बर्हिः आस्तीर्णम् आसदे आसत्तुं प्राप्तुम् । बर्हिरासीदत्वित्यर्थः ॥ सदेः 'कृत्यार्थे तवैकेन्'[॰] इति केन्प्रत्ययः ॥

**अ॒स्य प्र जा॒तवे॑दसो॒ विप्र॑वीरस्य मी॒ळ्हुषः॑ । म॒हीमि॑यर्मि सुष्टु॒तिम् ॥ २ ॥**

अ॒स्य । प्र । जा॒तऽवे॑दसः । विप्र॑ऽवीरस्य । मी॒ळ्हुषः॑ । म॒हीम् । इ॒य॒र्मि॒ । सु॒ऽस्तु॒तिम् ॥ २ ॥

जातवेदसः जातानां वेदितुः विप्रवीरस्य । विप्रा मेधाविनो यजमाना वीराः पुत्रा यस्य । तादृशस्य मीळ्हुषः सेक्तुः अस्य अग्नेः महीं[5] महतीं सुष्टुतिं शोभनां स्तुतिं प्र इयर्मि प्रेरयामि ॥ 'ऋ गतौ' । जौहोत्यादिकः । 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्येत्वम् ॥

**या रुचो॑ जा॒तवे॑दसो देव॒त्रा ह॑व्य॒वाह॑नीः । ताभि॑र्नो य॒ज्ञमि॑न्वतु ॥ ३ ॥**

याः । रुचः॑ । जा॒तऽवे॑दसः । दे॒व॒ऽत्रा । ह॒व्य॒ऽवाह॑नीः । ताभिः॑ । नः॒ । य॒ज्ञम् । इ॒न्व॒तु॒ ॥ ३ ॥

जातवेदसः अग्नेः याः रुचः रोचमानाः कालीकरालीप्रभृतयः सप्त जिह्वाः देवत्रा देवान् प्रति ॥ 'देवमनुष्यपुरुषपुरुमर्त्येभ्यः'" ( पा.सू. ५.४.५६ ) इत्यादिना द्वितीयार्थे त्राप्रत्ययः ॥ हव्यवाहनीः[6] हव्यानां हविषां वोढ्र्यः प्रापयित्र्यो भवन्ति ॥ 'वा छन्दसि' इति जसि पूर्वसवर्णदीर्घः ॥ ताभिः जिह्वाभिः नः अस्माकं यज्ञं यागसाधनं हविः इन्वतु देवान्[7] प्रापयतु । 'इवि व्याप्तौ' । इदित्वान्नुम् ॥ ॥ ४६ ॥

'आयं गौः' इति तृचमशीतिर्थं सूक्तं गायत्रम् । सार्पराज्ञी नामर्षिका । सैव देवता सूर्यो वेति । तथा चानुक्रान्तम्—'आयं गौः सार्पराज्ञ्यात्मदैवतं सौर्यं वा' इति । अभिप्लाव्येऽहनि मानसग्रह

१. त१.२.३.६.७.८-म–'अन्यत्सिद्धं' नास्ति । २. त४.५–'रजसः' नास्ति । ३. त४.५–उपरिदेशे रजसः रजसो । ४. त१.२.३.६.७.८-म-मु-वैद्युतात्मना । ५. त१.२.३.७-म१.२.४.८–'महीं' नास्ति; म७–पदि । ६. त-म–'हव्यवाहनीः' नास्ति । ७. त१.२.३.६.७.८-म१.२.४.८–'देवान् प्रापयतु' नास्ति ।

एतत्सूक्तं शंसनीयम् । सूत्रितं च— 'आयं गौः पृश्निरक्रमीदित्युपांशु तिस्रः पत्नीः सस्था' ( आश्व. श्रौ. ८. १३ ) इति ॥

आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रयन्त्स्वः ॥ १ ॥

आ । अयम् । गौः । पृश्निः । अक्रमीत् । असदत् । मातरम् । पुरः ।
पितरम् । च । प्रऽयन् । स्वरिति स्वः ॥ १ ॥

गौः गमनशीलः पृश्निः आश्चर्यः प्राप्ततेजाः अयं सूर्यः आ अक्रमीत् आक्रान्तवान् । उदयाचलं प्राप्तवानित्यर्थः । आक्रम्य च पुरः पुरस्तात् पूर्वस्यां दिशि मातरं सर्वस्य भूतजातस्य निर्मात्रीं पृथिवीम् असदत् आसीदति प्राप्नोति । सदेश्छान्दसो लुङ् । लृदित्वाच्च्लेरङादेशः । ततः पितरं पालकं द्युलोकं[1] चशब्दादन्तरिक्षं च प्रयन्[2] प्रकर्षेण शीघ्रं गच्छन् स्वः स्वरणः शोभनगमनो भवति । यद्वा । पितरं स्वर्गलोकं प्रयन् वर्तते ॥

अन्तश्चरति रोचनास्य प्राणादपानती । व्यख्यन्महिषो दिवम् ॥ २ ॥

अन्तरिति । चरति । रोचना । अस्य । प्राणात् । अपऽअनती ।
वि । अख्यत् । महिषः । दिवम् ॥ २ ॥

अस्य सूर्यस्य रोचना रोचमाना दीप्तिः अन्तः शरीरमध्ये मुख्यप्राणात्मना चरति वर्तते । किं कुर्वती । प्राणादपानती । मुख्यप्राणस्य प्राणापानौ पञ्च वृत्तयः । तत्र प्राणनं नाडीभिरूर्ध्वं वायोर्निर्गमनम् । तथाविधात् प्राणात् प्राणनादनन्तरमपानती । अपाननं नाडीभिरवाङ्मुखं वायोर्नयनम् । तत्कुर्वती ॥ अपपूर्वादनितेर्लटः शतृ । अदादित्वाच्छपो लुक् । 'उगितश्च' इति ङीप् । 'शतुरनुमः°' इति नद्या उदात्तत्वम् ॥ यद्वा । अन्तर्द्यावापृथिव्योर्मध्ये अस्य सूर्यस्य रोचना रोचमाना दीप्तिः चरति गच्छति ॥ 'रुच दीप्तौ' । 'अनुदात्तेतश्च हलादेः' ( पा. सू. ३. २. १४९ ) इति युच् ॥ किं कुर्वती । प्राणात्प्राणनादुदयादनन्तरमपानती सायंसमयेऽस्तं गच्छन्ती । ईदृश्या दीप्त्या युक्तः । अत एव महिषः महान् सूर्यो दिवम् अन्तरिक्षमुदयास्तमययोर्मध्ये व्यख्यत् विचष्टे । प्रकाशयति ॥ महेः 'अविमह्योष्टिषच्' ( उ. सू. १. ४६ ) इत्यौणादिकष्टिषच्प्रत्ययः । चक्षिङः ख्याञ् । छान्दसे लुङि 'अस्यतिवक्ति°' इत्यादिना च्लेरङादेशः ॥

त्रिंशद्धाम वि राजति वाक्पतङ्गाय धीयते । प्रति वस्तोरह द्युभिः ॥ ३ ॥

त्रिंशत् । धाम । वि । राजति । वाक् । पतङ्गाय । धीयते । प्रति । वस्तोः । अह । द्युऽभिः ॥ ३ ॥

त्रिंशद्धाम[3] धामानि स्थानानि । वचनव्यत्ययः । वस्तोः वासरस्याहोरात्रस्यावयवभूतानि । अहशब्दोऽवधारणे । द्युभिः सूर्यस्य दीप्तिभिरेव वि राजति विराजन्ते विशेषेण दीप्यन्ते । व्यत्ययेनैकवचनम् । मुहूर्तान्यत्र धामान्युच्यन्ते । पञ्चदश रात्रेः पञ्चदशाह्नः । पतङ्गाय । पतति गच्छतीति पतङ्गः सूर्यः । तस्मै[4] स्तुतिरूपा वाक् प्रति धीयते प्रतिमुखं[5] स्तोतृभ्यः[5] क्रियते[6] । यद्वा । वस्तोरहनि त्रिंशद्धामानि । घटिकाभिप्रायमेतत् । त्रिंशद्घटिकाः । अत्यन्तसंयोगे द्वितीया । एतावन्तं कालं द्युभिः दीप्तिभिरसौ सूर्यो वि राजति । विशेषेण दीप्यते । तस्मिन्नेव समये वाक् त्रयीरूपा तस्मै सूर्यरूपाय[7] पतङ्गाय प्रति धीयते प्रतिमुखं धार्यते । सूर्यं स्तौत इत्यर्थः । श्रूयते हि— 'ऋग्भिः

---

१. त१.२.२.६.७.८-म१.२.७.८—भूलोकं । २. त१.२.३.६.७.८—प्रयच्छति; म१.२.४.८—प्रयच्छन् । ३. त१.२.३.७-म२.४.८—त्रिंशत् । ४. त४.५—तस्मै सूर्याय । ५. त१.२.३.६.७.८-म—'प्रतिमुखं स्तोतृभ्यः' नास्ति । ६. त४.५—अभिधीयते । ७. त१.२.३.६.७.८-म—'सूर्यरूपाय' नास्ति ।

सूर्योऽहं दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः ' ( तै. ब्रा. ३. १२. ९. १ ) इत्यादि । यद्वा ऋषिरिदं सूक्तं सार्वात्म्यात्मस्तुतिः तथा सूर्यात्मना स्तुवत इत्यवगन्तव्यम् ॥ ॥ ४७ ॥

' ऋतम् ' इति तृचात्मकमेकोनविंशं सूक्तं माधुच्छन्दसोऽघमर्षणस्यार्षमानुष्टुभम् । सृष्ट्यादीनां भावानां सृष्ट्यादिप्रतिपादकत्वात्तादृश एवार्थो देवता । तथा चानुक्रान्तम्—' ऋतं माधुच्छन्दसोऽघमर्षणो भाववृत्तमानुष्टुभं तु ' इति । लिङ्गादिविनियोगोऽवगन्तव्यः ॥

ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥ १ ॥

ऋतं च सत्यं च अभीद्धात् तपसः अधि अजायत । ततः रात्री अजायत ततः समुद्रः अर्णवः ॥ १ ॥

ऋतमिति सत्यनाम । ऋतं मानसं यथार्थसंकल्पनं सत्यं वाचिकं यथार्थभाषणम् । एतदुभयमपि शास्त्रीयं धर्मजातं लक्ष्यते । तत्सर्वमभीद्धादभितो दीप्तात् पुरा सृष्ट्यर्थं कृतात्तपसोऽधि । अधिरुपर्यर्थे । तपस उपर्यजायत । उदपद्यत । ' तपसस्तप्त्वेदं सर्वमसृजत ' ( तै. आ. ८. ६ ) इति श्रुतेः । तपश्चात्र स्रष्टव्यपर्यालोचनलक्षणम् । ' यस्य[1] ज्ञानमयं तपः ' ( मु. उ. १. १. ९ ) इति श्रुत्यन्तरात् ॥ अभिपूर्वादिन्धेः कर्मणि निष्ठा । ' श्वीदितो निष्ठायाम् ' ( पा. सू. ७. २. १४ ) इतीट्प्रतिषेधः । ' गतिरनन्तरः ' इति गतेः प्रकृतिस्वरत्वम् । ' स्वरितो वानुदात्ते पदादौ ' इत्येकादेशः स्वरितः ॥ यद्वा । अभीद्धादभितः प्रकाशमानात्[2] परमात्मनो मायाधिष्ठानरूपात्तपसः ऋतं सत्यं[3] चाजायत[3] ॥ ' जनिकर्तुः प्रकृतिः ' ( पा. सू. १. ४. ३० ) इति प्रकृतेरपादानसंज्ञा ॥ ततस्तस्मादेवेश्वराद्रात्री । उपलक्षणमेतदहोऽपि । अहश्च रात्रिश्चाजायत ॥ ' रात्रेश्चाजसौ ' ( पा. सू. ४. १. ३१ ) इति ङीप् । ततस्तस्मादेवेश्वरादर्णवोऽर्णसोदकेन युक्तः समुद्रश्चाजायत । समुद्रशब्दोऽन्तरिक्षोदध्योः साधारण इत्यभिमतार्थस्य प्रकाशनायार्णवशब्देन विशेष्यते । ' अर्णसः सलोपश्च ' ( का. ५. २. १०९. ३ ) इति मत्वर्थीयो वप्रत्ययः सलोपश्च ॥

समुद्रादर्णवादधि संवत्सरो अजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ २ ॥

समुद्रात् अर्णवात् अधि संवत्सरः अजायत । अहोरात्राणि विदधत् विश्वस्य मिषतः वशी ॥ २ ॥

अर्णवात्समुद्रादध्यूर्ध्वं संवत्सरः संवत्सरोपलक्षितः सर्वः कालोऽजायत । श्रूयते हि— ' सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि कला मुहूर्ताः काष्ठाश्च ' ( तै. आ. १०. १. २ ) इति । स ईश्वरोऽहोरात्राण्येतदुपलक्षितानि सर्वाणि भूतजातानि विदधत् कुर्वन् सन् ॥ ' अन्यस्तात्वात्तादिः ' इत्याद्युदात्तत्वम् । ततः समासे कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ मिषतो[4] निमिषादियुक्तस्य विश्वस्य सर्वस्य प्राणिजातस्य वशी स्वामी भूत्वा वर्तते[4] ॥

सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥ ३ ॥

सूर्याचन्द्रमसौ धाता यथापूर्वम् अकल्पयत् । दिवम् च पृथिवीम् च अन्तरिक्षम् अथो इति स्वः ॥ ३ ॥

१. त१.२.३.७-म२.४.८–' यस्य ' नास्ति । २. त४.५–प्रकाशमानात् स्वप्रकाशात् । ३. त४.५–च सत्यं चाजायत । ४. त१.४.५.८-म४.५.७.८–' मिषतो ... वर्तते ' नास्ति; म२–विश्वस्य त्रैलोक्यस्य मिषतः जायमानस्य वशी स्वामी; त१.२.६.७–स तादृशो धाता परमेश्वरः सूर्यादिदेवान् पृथिव्यादिलोकांश्च यथापूर्वं अतीतसृष्टौ यस्य यादृशं रूपं तादृशमनतिक्रम्य अकल्पयत् संकल्पमात्रेण संपादितवान् । दिवं चेत्युपात्तत्वात् स्वःशब्देन भोगविशेषो विवक्षितः । अघमर्षणं कृत्वा । तत कर्म्मणपाहुर्नार्यास्तित्व मन्त्रो दर्शयति । तैत्तिरीयोपनिषदे बृहदारण्यके माधवीव्याख्याविधिः; त१.४.५.८-म४.५.८–पुस्तकेषु तृतीयमन्त्रस्य भाष्यं नास्ति ।

सूर्याचन्द्रमसौ अकल्पयत् व्यदधात्[1] दिवं च पृथिवीं चान्तरिक्षं च एवं त्रिभुवनं स्वः । स्वः-शब्दः सुखवाची । दिवो विशेषणम् । सुखरूपां दिवम् । तदेतत्सर्वं धाता विधाता यथापूर्वं पूर्वस्मिन् कल्पे अकल्पयत् सृष्टवान् तथैवागामिन्यपि कल्पे कल्पयिष्यतीत्यर्थः ॥　॥ ४८ ॥

'संसम्' इति चतुर्ऋचं चत्वारिंशं सूक्तं संवननस्यार्षम् । 'समानो मन्त्रः' इति तृतीया त्रिष्टुप् शिष्टास्तिस्रोऽनुष्टुभः । प्रथमाया अग्निर्देवता[2] । शिष्टानां संज्ञानम् । अनुक्रम्यते च—'संसं चतुष्कं संवननः संज्ञानमाद्याग्नेयी तृतीया त्रिष्टुप् तृतीया त्रिष्टुप्[3]' इति[3] । 'आनुष्टुभं तु' इति पूर्वसूक्तस्याद्यशिष्टानामनुष्टुप्त्वम् । सूक्तविनियोगो लैङ्गिकः ॥

संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ । इळस्पदे समिध्यसे स नो वसून्या भर ॥ १ ॥

सम्ऽसम् । इत् । युवसे । वृषन् । अग्ने । विश्वानि । अर्यः । आ ।
इळः । पदे । सम् । इध्यसे । सः । नः । वसूनि । आ । भर ॥ १ ॥

हे वृषन् कामानां वर्षितः अग्ने अर्यः ईश्वरस्त्वम् । 'अर्यः स्वामिवैश्ययोः' (पा. सू. ३. १. १०३) इति यत्प्रत्ययान्तो निपातितः । 'अर्यः स्वाम्याख्यायाम्' (फि. सू. ३. १८) इत्यन्तोदात्तत्वम् । स त्वं विश्वानि सर्वाणि भूतजातानि संसम् । 'प्रसमुपोदः पादपूरणे' (पा. सू. ८. १. ६) इति समो द्विर्वचनम् । इत्शब्दोऽवधारणे । आ समन्तात् सं युवसे मिश्रयसि । देवेषु मध्ये त्वमेव सर्वाणि भूतजातानि वैश्वानरात्मना व्याप्नोषि[4] । नान्य इत्यर्थः । किंच इळः इडायाः पृथिव्याः पदे स्थाने उत्तरवेदिलक्षणे[5] । 'एतद्वा इळायास्पदं यदुत्तरवेदीनाभिः' (ऐ. ब्रा. १.२८) इति ब्राह्मणम् । तत्र त्वं समिध्यसे ऋत्विग्भिः संदीप्यसे । सः[6] तादृशस्त्वं नः अस्माकं वसूनि धनानि आ भर आहर ॥

सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे संजानाना उपासते ॥ २ ॥

सम् । गच्छध्वम् । सम् । वदध्वम् । सम् । वः । मनांसि । जानताम् ।
देवाः । भागम् । यथा । पूर्वे । सम्ऽजानानाः । उपऽआसते ॥ २ ॥

हे स्तोतारः यूयं सं गच्छध्वम् । संगताः[7] संभूता भवत[7] ॥ 'समो गम्यृच्छि॰' इत्यादिना गमेरात्मनेपदम् ॥ तथा सं वदध्वं सह वदत । परस्परं विरोधं परित्यज्यैकविधमेव वाक्यं ब्रूतेति यावत् । 'व्यक्तवाचां समुच्चारणे' (पा. सू. १. ३. ४८) इति वदेरात्मनेपदम् । वः युष्माकं मनांसि सं जानताम् । समानमेकरूपमेवार्थमवगच्छन्तु ॥ 'संप्रतिभ्यामनाध्याने' (पा. सू. १. ३. ४६) इति जानातेरात्मनेपदम् ॥ यथा पूर्वे पुरातनाः देवाः संजानानाः ऐकमत्यं प्राप्ता हविर्भागम् उपासते यथास्वं स्वीकुर्वन्ति तथा यूयमपि वैमत्यं परित्यज्य धनं स्वीकुरुतेति शेषः ॥

समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम् ।
समानं मन्त्रमभि मन्त्रये वः समानेन वो हविषा जुहोमि ॥ ३ ॥

---

१. अ२—व्यदधातौ स्यातां । २. त१.२.३.६.७.८-म—अग्निर्देवता । ३. त७—त्रिष्टुबिति तदेतत्सूक्तसहस्रं सप्तसप्ताक्षं षडधिकसूक्तभेदे पारायणपाठे शाकल्ये शैशिरीयके नमः शौनकाय नमः शौनकायेति इति सर्वानुक्रमसमाप्तिः । ४. त-म—त्वमेव व्याप्नोषि । ५. त-म—वेदिलक्षणे । ६. त१.२.३.६.७.८-म—'सः' नास्ति । ७. त१.२.३.६.७.८-म—संगता अभवन्; त४.५—संगताः संभूता भवत ।

समानः । मन्त्रः । सम्ऽइतिः । समानी । समानम् । मनः । सह । चित्तम् । एषाम् ।
समानम् । मन्त्रम् । अभि । मन्त्रये । वः । समानेन । वः । हविषा । जुहोमि ॥ ३ ॥

पूर्वोऽर्धर्चः परोक्षकृत. उत्तरः प्रत्यक्षकृतः । एषाम् एकस्मिन् कर्मणि सह प्रवृत्तानामृत्विजां स्तोतॄणां वा मन्त्रः स्तुतिः वाक्यात्मिका गुप्तभाषणं वा समानः एकविधोऽस्तु । तथा समितिः प्राप्तिरपि समानी एकरूपास्तु ॥ 'केवलमामक' इत्यादिना समानशब्दात् ङीप् । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् । तथा[1] मनः मननसाधनमन्तःकरणं चैषां समानम् एकविधमप्यस्तु । चित्तं विचारजं ज्ञानं तथा[2] सह सहितं परस्परस्यैकार्थ्येनैकीभूतमस्तु । अहं च वः युष्माकं समानम्[3] एकविधं मन्त्रम् अभि मन्त्रये । ऐकविध्याय संस्करोमि । तथा वः युष्माकं स्वभूतेन समानेन साधारणेन हविषा चरुपुरोडाशादिना अहं जुहोमि ॥ 'तृतीया च होश्छन्दसि' (पा. सू. २. ३. ३) इति कर्मणि कारके तृतीया ॥ वषट्कारेण हविः प्रक्षेपयामीत्यर्थः ॥

समानी व आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति ॥ ४ ॥

समानी । वः । आऽकूतिः । समाना । हृदयानि । वः ।
समानम् । अस्तु । वः । मनः । यथा । वः । सुऽसह । असति ॥ ४ ॥

हे ऋत्विग्यजमानाः वः युष्माकम् आकूतिः संकल्पोऽध्यवसायः समानी एकविधोऽस्तु । तथा वः युष्माकं हृदयानि समाना समानान्येकविधानि सन्तु । तथा वः युष्माकं मनः अन्तःकरणम् । प्रत्येकापेक्षयैकवचनम् । तदपि समानमस्तु । यथा वः युष्माकं सुसह शोभनं साहित्यम् असति भवति तथा समानमस्त्वित्यन्वयः ॥ असतेर्लेटि 'बहुलं छन्दसि' इति शपो लुगभावः ॥ ॥ ४९ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्येऽष्टमाष्टकेऽष्टमोऽध्यायः संपूर्णः ॥

॥ इति दशमं मण्डलं समाप्तम् ॥

॥ ऋग्वेदसंहिता समाप्ता ॥

१. त१.२.३.६.७.८-म-यथा । २. त४.५-तथा चित्तं । ३. त१.२.३.७-अ१.८-'समानं' नास्ति ।

# PREFACE

**Introductory:**—The Ṛgveda Saṁhitā has, according to the Śākala śākhā, 1017 hymns. According to the Caraṇavyūha, the Ṛgveda Saṁhitā has come down in five[1] recensions: Śākala, Bāṣkala, Āśvalāyana, Śāṅkhāyana[2] and Māṇḍūkāyana. Of these, the Śākala recension is well known and has come down in a definite form The other recensions did not differ much from the Śākala recension except an omission or addition of certain hymns or verses within or without the Maṇḍalas and also within or without the hymns, as well as certain changes in the order of hymns or verses. No definite conclusions seem to have been drawn as to the exact nature of each of these recensions for want of decisive data. The additional hymns or verses called *Khilāni* have come down traditionally even though it has not been possible to attribute them to definite recensions and it is customary to publish them as a supplement to the Ṛgveda Saṁhitā in the Śākala recension. Thus Prof. Max Muller has published at the end of his great edition[3] of Ṛgveda Saṁhitā with the commentary of Sāyaṇācārya, 32 Khilas with or without accents which he found in certain MSS. of Ṛgveda. Prof. Theodor Aufrecht in his edition[4] of Ṛgveda Saṁhitā printed in Roman characters has published 25 Khilas some of which are different from those in Max Müller's edition. The Bombay edition[5] of Ṛgveda Saṁhitā with Sāyaṇabhāṣya edited by the two Mahamahopādhyāyas Rajaramaśastri Bodas and Śivaramaśastri Gore gives a good number of Khilas including the Nivids, Praiṣas, Puroruças, Kuntāpas etc under the title *Pariśiṣṭāni*. The Nirnayasagar edition of Ṛgveda Saṁhitā (Bombay 1891) also gave the Khilas. Prof. Peterson in his Catalogue of MSS. in the Alwar State Library has reproduced a few, though not all, Khilas with accents found in certain Saṁhitā and Pada MSS. of Ṛgveda deposited in that Library Recently Pandit S D. Satavalekar of Aundh (Dist. Satara) has published in his edition of Ṛgveda Saṁhitā (Aundh, 1940) 36 Khilas, some of which are not found in the abovementioned editions either fully or in part. Pandit Satavalekar, however, has not

1. Besides these five, many more Śākhās (21, 25 or 27) are said to have existed.

2. It is to be noted that Kauṣītaki is different from Śāṅkhāyana. A Kauṣītakī Gṛhya Sūtra as different from the Śāṅkhāyana Gṛhya has recently been published (Dr. T. R. Chintamani, Madras, 1944) and the publication of other Kauṣītaki texts is also promised.

3. Second edition, Oxford 1890-2.

4. Second edition, Bonn 1877.

5. Bombay, Śaka 1810-12.

The Anuvākānukramaṇī and Ārṣānukramaṇī are said to have been composed by Śaunaka. Since, however, they expressly use the term Khila,[1] they cannot be attributed to him. Ārṣānukramaṇī is much later than Anuvākānukramaṇī ; the composer of the former work holds the Khila collection as a unitary work composed by Gautama Vāmadeva.[2] Āśvalāyana and Śāṅkhāyana do not know the term Khila The sanctity of Khilas was much degraded in the period of Dharmaśāstra.[3] Ṣaḍguruśiṣya, the commentator of Sarvānukramaṇī who flourished at the end of the 12th century A.D., had the same ignorance about the Khilas as at present.[4] The ignorance regarding the Khilas gradually grew so far that several modern popular hymns with religious contents which originated in connection with popular cults (e g. Serpent-cult, Durgā-cult) began to be considered as *Khilāni*. These later hymns are partly added to some old Khilas without regard to their different contents, so that consequently several Khila texts were affected by modern supplements (e g II 1 , 6 , 12 , 14 , III. 10 , 12 , 17 , IV. 20). Only in a few quite modern Khila MSS. such later texts are given as independent texts. The term *Pariśiṣṭāni* is met with only in modern works like the Prayogaratna.

**Acknowledgments** · I have to perform the pleasant duty of acknowledging the help received by me in accomplishing this work I have already stated that I have chiefly based the text of the Khilas on that in the Kashmir MS published by Dr. Scheftelowitz in his "Apokryphen des Ṛgveda." It is, therefore, my first duty to acknowledge my indebtedness to him. I began the study of the Khilas three years ago when the dark clouds of war had suffocated the atmosphere of the whole world. Copies of Scheftelowitz's work were not easily available, and it was with the utmost efforts that I could procure one for my purpose. It is a matter of relief that the war has come to an end before the publication of this work. I must also acknowledge the help I obtained from other editions of Khilas and other Sanskrit works, and I express my thanks to their editors. To the various MSS. libraries I am indebted for allowing me to use the valuable MSS of Khilas in their possession. I have especially to thank Pandit Satavalekar of Aundh (Dist Satara) for kindly keeping at my disposal his two MSS. of Śāṅkhāyana śākhā of Ṛgveda. I have also derived help from the writings of Oldenberg, Hillebrandt, Macdonell, Keith, and others to whom my thanks are due. I must also acknowledge the help I received from certain scholars who kindly procured for me certain valuable and rare printed books. Last, but not least, I must also thank those scholars who gave me their valuable advice with regard to the preparation of this work.

C. G. KASHIKAR

1. Comp. Anuvākānu. Verses 7, 17, 36, 39.
2. Ārṣānu. X 102. For different views regarding the date and authorship of Ārṣānukramaṇī, see Macdonell, Bṛhaddevatā, Part I, Preface, p. xxiii. Festgruss an R. von Roth, p. 112 , A. B. Keith, JRAS 1907, pp. 226 ff.
3. Comp. Manu. III, 232.
4. Comp. Sarvānu. I. 99,

# प्रास्ताविकम्

अद्यैतावत्पर्यन्तमृग्वेदस्य शाकलसंहितां मुद्रयन्त्यधुना खिलानि संगृह्यन्ते । चरणव्यूहमते ऋग्वेदसंहितायाः पञ्च शाखा वर्तन्ते शाकलबाष्कलाश्वलायनशाङ्खायनमाण्डूकाख्या इति । केषां-चिन्मते ऋग्वेदस्यैकविंशतिः पञ्चविंशतिः सप्तविंशतिर्वा शाखा विद्यन्ते । शाङ्खायनशाखा कौषीतकि-शाखा चेत्येकस्या एव शाखाया नामद्वयमित्येतावत्कालपर्यन्तं निर्धारितमासीत् । किंत्वधुना कौषीतकि-शाखायाः शाङ्खायनशाखाया भिन्नत्वं सिद्धम् । मद्रपुरे ( मद्रासनगरे ) डॉ. टी. आर् . चिन्तामणि-महोदयैः कौषीतकिगृह्यसूत्रं शाङ्खायनगृह्यसूत्राद्भिन्नमधुनैव मुद्रापितं वर्तते । कौषीतकिश्रौतसूत्रं कौषीतकिब्राह्मणं चेति ग्रन्थद्वयं शाङ्खायनश्रौतसूत्रब्राह्मणाभ्यां भिन्नमचिरादेव प्रकाशयिष्यत इत्यपि तैरुद्घोषितम् । तयोर्मुद्रणानन्तरमृग्वेदसंहितायाः कौषीतकिशाखायां को विशेष आसीदिति ज्ञातुं सुकरं भवेदित्याशास्यते ।

ऋग्वेदसंहितायाः सर्वासु शाखासु शाकलशाखैव सर्वत्र प्रसिद्धा । इतरासां शाखानां कीदृशो भेद आसीदिति निश्चितं वक्तुमशक्यप्रायम् । तथापि बहोः कालादारभ्येतरशाखागतान्यधि-कानि सूक्तानि मन्त्रा वा खिलसंज्ञया प्रसिद्धाः परंपरयागता लिखितपुस्तकेषूपलभ्यन्ते मुद्रापिताश्च । एवं मॅक्सम्यूलरमुद्रिते ऋग्वेदभाष्यपुस्तके ३१ खिलानि मुद्रापितानि । आउफ्रेक्ट्महाशयैः रोमन-लिप्यां मुद्रिते ऋग्वेदपुस्तके २५ खिलानि वर्तन्ते तेषु मध्ये कानिचित् मॅक्सम्यूलरखिलेभ्यो भिन्नानि । मुम्बापुरीमुद्रिते ऋग्वेदभाष्यपुस्तके बहूनि परिशिष्टानि निविद्प्रैषपुरोरुक्कुन्तापसहितानि मुद्रापितानि सन्ति । एवं निर्णयसागरयन्त्रालये मुद्रिते ऋग्वेदसंहितापुस्तकेऽपि खिलान्यन्तर्भा-वितानि । पीटर्सनमहाशयैः अलवरनगरस्थलिखितपुस्तकानां सूची कारिता । तत्र कानि-चित् खिलानि मुद्रापितानि वर्तन्ते । औन्धनगरे पं. सातवळेकरमहोदयैरधुनैव प्रकाशिते ऋग्वेद-संहितापुस्तके खिलसूक्तानि मुद्रापितानि तेषु कानिचित्पूर्वनिर्दिष्टपुस्तकेष्वनुपलब्धानि । खिलानां ' परिशिष्टम् ' इति संज्ञा केषुचिदर्वाचीनग्रन्थेष्वेव दृश्यते ।

काश्मीरदेशे ऋग्वेदसंहिताया एकं प्राचीनं लिखितपुस्तकं सखिलं शारदालिप्यां लिखितं बुह्लरमहाशयैः संपादितम् । तत्र प्रत्येकमण्डलान्ते सर्वाणि खिलसूक्तानि क्रमेण संगृहीतानि वर्तन्ते । पुण्यपत्तनस्थ-डेक्कन कॉलेज ग्रंथालयार्थं संपादितमेतल्लिखितपुस्तकमधुना पुण्यपत्तनस्थ-भाण्डारकर-प्राच्यविद्यासंशोधनमन्दिरे स्थापितमस्ति । एतत्काश्मीरपुस्तकगतानि खिलानि टिप्पण्यादिभिस्तथोद्-घातेन च संयोज्य शेफ्टेलोविट्झमहाशयैः १९०६ खिस्ताब्दे जार्मण्यदेशे रोमनलिप्यां मुद्रापितानि । पूर्वतनान् सर्वान् खिलसंग्रहानतीत्यायं खिलग्रन्थो वर्तते । अतस्तमेवानुसृत्यात्र खिलानां मुद्रणमु-चितं मन्ये ।

एतत्काश्मीरपुस्तकं भूर्जपत्रेषु लिखितमतीव जीर्णम् । एतत् ४०० वर्षेभ्यः प्राक् लिखितमिति बुह्लरमहाशयानां मतम् । तस्य १११ पत्राणि सन्ति । १०६ पत्रपर्यन्तं शाकलसंहिता कात्यायनीय-सर्वानुक्रमण्या सहिता लिखितास्ति । तत्र मण्डलानां गणनमस्ति नाष्टकानाम् । चतुःषष्ट्यध्यायेषु संहिता विभक्ता । अनुवाकानां सूक्तानां च परिगणनं नास्ति । अध्यायेषु वर्गाः परिगणिताः । प्रत्यध्यायं तावत्परिमाणा सर्वानुक्रमणी आदौ दत्ता । ऋग्वेदसंहितान्ते १०६–१४१ पत्रेषु खिलग्रन्थो लिखितः । स पञ्चस्वध्यायेषु विभक्तः । खिलानामृषिच्छन्दोदेवतादिप्रतिपादिकानुक्रमण्यपि वर्तते । अध्यायादौ च तस्य तत्तदध्यायस्थानुक्रमण्यंशो दत्तः । अनुक्रमण्यां प्रतिसूक्तं मन्त्रसंख्यापि दत्ता । तेन खिलस्वरूपज्ञानं सुकरं भवति । शौनकीयबृहद्देवताप्रातिशाख्यादिग्रन्थेषु खिलविषये यल्लिखितं तदनुकूलमेव खिलानुक्रमणीवचनम् । खिलान्ते महानाम्न्यस्तथा प्रैषसूक्तम् । ऋग्वेद-

संहितायां यत्र तत्खिलं निवेशनीयं पठनीयं वा तस्य तत्स्थानम्। यद्यप्येकानि खिलान्येकत्र वर्तन्ते तर्हि अन्यखिलान्ते स्वक्रमप्रतीकमुपन्यस्तम्।

एतत्पुस्तकमेकेनैव न केवलं स्वकायमेवैतल्लिपिबद्धं कृतं किंतु कस्मिंश्चित् शारदालिपिलिखिते पुस्तके दृष्ट्वा लिखितमिति तदुत्तमुद्रिकाभ्यो ज्ञायते। अस्मिन् पुस्तके संहिता खिलानि च स्वरचिह्नयुतानि। किंत्वस्य स्वरलेखनपद्धतिः सर्वथा भिन्ना वर्तते। प्रायेण लिखितपुस्तकेषु स्वरितमुपरिचिह्नाङ्कितं वर्ततेऽनुदात्तं चाधस्ताच्चिह्नाङ्कितम्। अस्मिन् पुस्तके तावदुदात्तः जात्यस्वरितश्चेति द्वावेव दर्शितौ अनुदात्त इतरस्वरितश्च वर्जितौ। उदात्तः उपरिस्थितरेखया प्रदर्शितः जात्यस्वरितश्च ॰ अनेन चिह्नेन। खिलेष्वेतच्चिह्नं द्विवारमागतम् (१.११.४;१९.७)। पदं पदमाद्युदात्तं स्वरितादि वा चेत् जात्यस्वरचिह्नमेवैव दर्शितः। स्वरितस्य ह्रस्वत्वेऽपि त्रिकम्प एव लिखितः। तस्याधस्तादनुदात्तचिह्नमुपरि वा स्वरितचिह्नं कृतम्। इयं स्वरपद्धतिः मैत्रायणीकाठकसंहितयोः स्वरपद्धत्या साम्यमावहति तस्या आधारभूता चेति शेफ्टेलोविट्ज़्महाशयानां मतम्। तैः स्वकीयपुस्तके इयमेव स्वरलेखनपद्धतिरवलम्बिता। यथाप्यत्र सैव स्वीकृता। काश्मीरखिलेभ्योऽधिकानि यानि खिलानि तैः स्वकीयपुस्तके मुद्रापितानि तेषां मध्ये केषुचित् सूक्तेष्वेतच्छ्रियैवोदात्तस्वरो दर्शितः। यथा मायदधिकानि खिलानि स्वररहितमेव मुद्रापितानि यतस्तेषां स्वरविषये मुद्रितपुस्तकानां लिखितपुस्तकानां चैकमत्यं नास्ति। मॅक्समुल्लरमहोदयैरपि स्वकीयपुस्तके खिलानि प्रायः स्वररहितान्येव मुद्रापितानि।

खिलपाठनिर्धारणविषये ये ये ग्रन्था मया समवलोकितास्तेषां मध्ये श्रीयुतगारस्य–पण्डितलालचंद्रकरमहोदयैः प्रदत्तं ऋग्वेदस्य शाङ्खायनशाखाया नागरीलिप्यां लिखितं पुस्तकद्वयं प्रथमं निर्देष्टव्यमर्हति। तयोरेकं पुस्तकं गुर्जरदेशे जीर्णदुर्गे (= जुनागढनगरे) संवत् १७५३ वर्षे लिखितमपरं च नवानगरे संवत् १८९२ वर्षे लिखितमस्ति। उभयोरप्यनुःपष्ठाध्यायेषु संहिता विभक्ता। अष्टकानि न परिगणितानि। मण्डलानामारम्भस्तत्र दर्शितः। स्वरा रक्तवर्णेनाङ्किताः। नवानगरपुस्तके अनुदात्तस्वरितौ प्रचलितरीत्यैव दर्शितौ। जुनागढपुस्तके अनुदात्तो यथापूर्वं दर्शितः स्वरितस्तु अनुदात्तवदेव किंतु अक्षरं मध्ये भित्त्वा दर्शितः। पीटर्सन्महाशयैः अलवरनगरस्थानि ऋग्वेदस्य शाङ्खायनसंहितायाः पदपाठस्य च पुस्तकानि दृष्ट्वा सूचीपत्रे तान्युपवर्णितानि। तत्रत्य एकस्मिन् संहितापुस्तके स्वरितचिह्नमेतद्रीत्या एवमिति तैर्लिखितम्। जुनागढ-नवानगरपुस्तकयोः सादृश्यात् केवलं तयोः प्राचीनतरं जुनागढपुस्तकमेवास्मिन् ग्रन्थे यथोपयुक्तं 'जुना' इति संज्ञया तत्र तत्र निर्दिष्टं च। अस्य पुस्तकस्य शाङ्खायनशाखीयत्वे लिखितं प्रमाणं नास्ति। अलवरनगरस्थानि लिखितपुस्तकान्यपि शाङ्खायनशाखानुसारीणि इति पीटर्सन्महाशयानां मतम्। तेष्वपि शाङ्खायनशाखीयत्वे लिखितं प्रमाणं नास्ति। किंतु गुर्जरदेशीया ब्राह्मणाः शाङ्खायनिन इति लोकप्रसिद्धिमाश्रित्यैतेषां पुस्तकानां शाङ्खायनशाखीयत्वमनुमन्तुमुचितम्। एतत्पुस्तकस्थानि खिलानि शाङ्खायनशाखायां संहितान्तर्गतानि खिलत्वेनैव वा तेषां मन्त्रान्तर्भाव इति वक्तुं दुष्करम्। पुस्तकेषु तावत् खिलानि अध्यायान्तर्गतान्यन्तर्भूतानि सन्तीति स्पष्टम्। चरणव्यूहभाष्ये शाङ्खायनशाखाया वैशिष्ट्यं दर्शितं तद्यथा—'यमृत्विजो' इति दशमं वालखिल्यसूक्तं (ऋ. सं. ८.५८) अपठित्वा तत्रस्थौ 'एक एवाग्निः' 'यमृत्विजो' इति द्वौ मन्त्रौ ऋ. सं. १०.८८.१८ अनन्तरं ('कत्यग्नयः कति सूर्यासः' इति मन्त्रस्यानन्तरं) खिलत्वेन पठन्त्यादिति। एतदनुसारेण जुनागढपुस्तके दशमं वालखिल्यसूक्तं वर्जयित्वा तत्स्थौ द्वौ मन्त्रौ 'कत्यग्नयः' इत्यस्यानन्तरं लिखितौ। अलवरपुस्तके इदं शाङ्खायनशाखावैशिष्ट्यं वर्तते न वा इति न ज्ञायते। पीटर्सन्महाशयानां ईदृश्यां सूच्यां तत्र दर्शितम्। भारतवर्षस्थमहाराष्ट्रमुद्रितऋग्वेदपुस्तकस्य तुलनया पीटर्सन्महाशयैः अलवरपुस्तके खिलानि दृष्टानि वर्णितानि च। जुनागढपुस्तकेऽविद्यमानानि खिलानि अलवरपुस्तके वर्तन्ते न

## ९१० सिलानि

वा, वर्लंन्गे येल् कीलसंस्तेषां वाक् इत्यस्मिन् विषये जिज्ञासासमशिष्यत एव। अलवरपुस्तकमपि स्वयं द्रष्टुं मे मनीषासीत् किंतु लिखितपुस्तकानि पुस्तकालयाद्बहिर्न नेयानीति पुस्तकालयाधिकारिणां नियमवशात् न द्रष्टुं पारितवान्। तत्रस्थपुस्तकानां पीटर्सन्महाशयकृतं वर्णनमनुसृत्यैव कार्यं निर्वर्तनीयम्।

अलवर-जुनागढपुस्तकयोस्तुलनया अधोलिखिता विशेषाः खिलविषये दृष्टिगोचरा भवन्ति—

(१) 'यत्सूर्णैरध्ययनम्' इति खिलं अलवरपुस्तके ऋ. सं. ५. ५१ अनन्तरं वर्तते। जुनागढपुस्तके तु ऋ. सं. ६. ४८ अनन्तरम्।

(२) श्रीसूक्तं (२. ६) अलवरपुस्तके नास्ति। जुनागढपुस्तके विद्यते।

(३) शिवसंकल्पसूक्तं (४. ११) अलवरपुस्तके नास्ति। जुनागढपुस्तके विद्यते।

(४) ३. १९, ३. २०, ४. १२ इति त्रीणि खिलानि जुनागढपुस्तके विद्यन्ते। अलवरपुस्तके तेषामभावो दृश्यते।

(५) २. १२ खिलं जुनागढपुस्तके पूर्णं अलवरपुस्तके त्रुटम्। २. १३ खिले तृतीयमन्त्रानन्तरं जुनागढपुस्तके त्रयो मन्त्रा अधिकाः। ४. २ खिले (रात्रिसूक्ते) जुनागढपुस्तके अलवरपुस्तकापेक्षया मन्त्रद्वयमधिकम्।

एतान् विशेषान् वर्जयित्वा अलवर-जुनागढपुस्तकयोरन्यत्सर्वं समानम्। एतस्मादेवानुमीयते यदेतानि खिलानि यद्यपि प्रायः वर्गगणनायामन्तर्भावितानि तथापि ऋग्वेदस्य शाङ्खायनसंहितायां न परिगणितान्यासन्निति। केषां केषां खिलानां शाङ्खायनशाखायां खिलत्वेनान्तर्भाव आसीदित्ययं तावदपरो विषयः। 'विदा मघवन् विदाः' इत्युभयोः पुस्तकयोरन्त्यं खिलम्। तदनन्तरं 'अग्निर्देवेद्धः विदा मघवन्विदो' इत्यंशोऽप्युभयोः समान एव। उभयोः पुस्तकयोः खिलपाठोऽपि प्रायः समानः। जुनागढपुस्तके ये पाठभेदा उपलभ्यन्ते ते सर्वे यथा तत्र तत्र प्रदर्शिताः। उपरिनिर्दिष्टेषु खिलेषु जुनागढपुस्तकस्य यद्वैशिष्ट्यं तदपि तत्र तत्र टिप्पणीषु दर्शितमेव।

जर्मन्यदेशे ट्युबिङ्गन्नगरस्थपुस्तकालये खिलानां लिखितपुस्तकद्वयं (३०, १५५ क्रमाङ्कयुतं) वर्तते। तयोः केवलं निविद्प्रैषकुन्तापात्मको खिलभागोऽस्ति। तस्याः पाठभेदाः शेफ्टेलोवित्स्महाशयैः स्वकीयटिप्पण्यां दत्ताः। तेषु बहूनां पाठभेदानामितरपुस्तकपाठैः साम्यात्ते नोद्धृताः। ये विशिष्टाः पाठभेदाः कतिचित्सन्ति ते मूलपुस्तकमनिर्दिश्य प्रदर्शिताः।

अस्मिन् खिलसंग्रहे त्रयोदशमन्त्रात्मिका शिवसंकल्पोपनिषद् (खिल ४. ११) विद्यते। लण्डननगरे ब्रिटिश म्युझियम्-संज्ञकसंग्रहालये वर्तमाने ऋग्वेदसंहितापुस्तके (क्रमाङ्कः Add. 5351) सैवाष्टाविंशतिमन्त्रात्मिकास्ति। शेफ्टेलोवित्स्महाशयैः पूर्वस्मिन्ग्रन्थे प्रकाशितस्तस्य पाठो यथा तस्य खिलस्य टिप्पण्यां समुद्धृतः। जुनागढपुस्तके तत्समान एव पाठः। पं. सातवलेकरमहोदयैर्मुद्रितायां ऋग्वेदसंहितायां १६ मन्त्रात्मिका शिवसंकल्पोपनिषद् कश्चिद्भिन्नपाठेन भिन्नक्रमेण च मुद्रिता।

सुविज्ञातं श्रीसूक्तमस्मिन् खिलग्रन्थे २. ६ खिलत्वेनागतम्। प्राचीनकालादारभ्यैतद् भारतवर्षे वैदिकधर्मानुयायिभिः पठ्यते। श्रुतिस्मृत्यादिग्रन्थेषु तद्गताः केचन मन्त्रा उद्धृताः सन्ति। अस्य श्रीसूक्तस्यासंख्यातानि लिखितपुस्तकानि भारतवर्षे उपलभ्यन्ते। श्रीसूक्तस्य मन्त्रसंख्याविषये मन्त्रक्रमविषये पाठविषये च बहुधः परंपरा दृश्यन्ते। शेफ्टेलोवित्स्महाशयैः इंग्लंडदेशे विद्यमानानि श्रीसूक्तस्य लिखितपुस्तकानि समवलोक्य तद्गताः पाठभेदा अन्यत्र निबन्धरूपेण संगृहीताः। तेषु विशेषवैचित्र्यस्याभावात् अत्र ते नोद्धृताः। श्रीसूक्तपाठविनिश्चयार्थं मयापि विभिन्नग्रन्थालयस्थानि श्रीसूक्तस्य ४७ लिखितपुस्तकान्यवलोकितानि। परं तेषां पाठभेदानां पूर्वसंकलितपाठैः प्रायः समानत्वात् तत्तल्लिखितपुस्तकपाठोद्धरणमनावश्यकमित्यवकल्पयामि। ये केवलं विशिष्टाः पाठ-

अपि निर्दिष्टाः । खिलानां संहितादिग्रन्थानां च यत्र रचनासाम्यं विद्यते तादृशानि स्थलानि तत्संबद्धाः पाठभेदाश्च तैः समुल्लिखिताः । ताननुसृत्य मयापि प्रतिखिलं टिप्पणी कृता किंतु न तस्य टिप्पणी यथातथमनुसृता । रचनासाम्यविषये मूलग्रन्थानवलोक्य आवश्यकतानुसारं शोधनं न्यूनपूरणं च सम्पादितम् । येऽधिकाः खिलमन्त्राः पाठभेदा वा मुद्रितपुस्तकेषु लिखितपुस्तकेषु चोपलब्धास्ते टिप्पण्यां संगृहीताः । काश्मीरपुस्तकस्थखिलपाठः शेफ्टेलोविट्स्महाशयैः यथा मुद्रितः प्रायस्तथैव मयापि स्वीकृतः । यत्र क्वचित् पाठविषये आकाङ्क्षासीत्तत्र काश्मीरपुस्तकमपि मयावलोकितम् । यत्र काश्मीरपुस्तकस्थं पाठं त्यक्त्वा शुद्धः पाठः साधारं तैः स्वीकृतः अशुद्धः पाठश्च टिप्पण्यां निर्दिष्टस्तत्र तादृशोऽशुद्धः पाठो मया न निर्दिष्टः । केषुचित्स्थलेष्वशुद्धं पाठं मूले तथैव स्थापयित्वा शुद्धः पाठः तैः टिप्पण्यां संसूचितः । एतादृशाः केचन सूचिताः पाठा विशेषतः सौपर्णसूक्तगता मया मूले विनिवेशिताः । पाठविनिश्चितौ यत्नविस्तारेऽपि केचन विपर्यासास्तेषां टिप्पणीष्वागतास्ते तत्रैव द्रष्टव्याः । क्वचित् लिखितपुस्तकस्थमशुद्धं पाठं त्यक्त्वा मुद्रितपुस्तकाधारेण लिखितपुस्तकाधारेण वा शुद्धः पाठो मयापि स्वीकृतः । ए. बी. कीथमहाशयैः काश्मीरखिलग्रन्थविमर्शसमये ये शुद्धाः पाठाः संसूचितास्तेऽत्र स्वीकृताः ।

खिलानां टिप्पण्यो मया संस्कृतभाषायामेव लिखिताः । लेखनसंक्षेपसिद्ध्यर्थं कानिचिच्चिह्नानि प्रयुक्तानि तानि संक्षेपविवरणे प्रदर्शितानि । टिप्पणीलेखने अयं क्रमः स्वीकृतः —

(१) अध्यायस्यानुक्रमणी अध्यायस्यादौ कृता । अनुक्रमणीपाठभेदा अन्यत्रैव निर्दिष्टाः ।

(२) ऋग्वेदसंहितायां खिलं यत्र पठनीयं तस्य स्थानस्य निर्देशः ।

(३) येषु येषु ग्रन्थेषु खिलं पूर्णतयांशतो वा मुद्रितं तेषां नामनिर्देशः ।

(४) येषु येषु वैदिकग्रन्थेष्वितरग्रन्थेषु च खिलं पूर्णत्वेनांशतो वा मन्त्रक्रमभेदेन पाठभेदेन वागतं तेषां नामादिनिर्देशः ।

(५) मन्त्रक्रमेण पाठभेदनिदर्शनम् । स्वीकृतपाठः स्थूलाक्षरैः प्रथमं विन्यस्तः तदाधारभूतग्रन्थनामभिः सह । अनन्तरं पाठभेदास्तत्तद्ग्रन्थनिर्देशेन कृताः । यत्र स्वीकृतपाठस्याधारो न प्रदर्शितः पाठभेदस्याधारमात्रः तत्र स्वीकृतपाठाधारस्य कश्मीरपुस्तकस्य निर्देशो न कृत इति मन्तव्यम् ।

(६) मुद्रितखिलपुस्तकेषु इतरग्रन्थेषु च विद्यमाना अधिका मन्त्राः ।

(७) अधिकानां मन्त्राणां पाठभेदाः ।

खिलसूक्तानां निर्माणकालस्तेषामृग्वेदसंहितया वाक्यकालादिसाम्यादिभिः संबन्धश्चेत्येतस्मिन् विषये शेफ्टेलोविट्स्महाशयैः जर्मनभाषायां लिखिते स्वीये पुस्तके निबन्धेषु च बहु प्रपञ्चितम् । तस्य सारोऽत्रैवाङ्ग्लभाषानिबद्धायां प्रस्तावनायामनूदितः ।

शेफ्टेलोविट्स्महाशयैर्मुद्रितं काश्मीरखिलग्रन्थमनुसृत्य मयात्र खिलानि संगृहीतानीति पूर्वमेवोक्तम् । अतस्तेभ्यः प्रथमं धन्यवादवितरणमुचितं मन्ये । इतराणि मुद्रितखिलपुस्तकानि अन्ये संस्कृतग्रन्थाश्च खिलपाठनिर्धारणे मयोपयुक्तास्तेषां कर्तारोऽपि धन्यवादार्हाः । औन्धनगरस्थाः पंडित-सातवळेकरमहोदयाः स्वसंपादितऋग्वेदाश्वलायनसंहितापुस्तकद्वयमुपयोगार्थं दत्त्वा मामुपकृतवन्तोऽतस्ते विशेषतो धन्यवादार्हाः । तथा च तञ्जौर-तिरुपती-अडयार-इत्यादिनगरस्थग्रन्थालयगतानि बहूनि लिखितखिलपुस्तकानि मया दृष्टानि । तेषामधिकृतेभ्योऽपि मया धन्यवादा वितीर्यन्ते । आङ्ग्ल-जर्मनभाषयोर्लिखिता केचन ग्रन्था निबन्धाश्च मयात्र ग्रन्थस्य रचनार्थमवलोकितास्तेषां कर्तारोऽपि धन्यवादार्हाः । अन्ते चास्मिन् खिलमुद्रणविषये वैदिकैः संशोधनेन मुद्रितपुस्तकप्रदानेनान्यप्रकारेण वा साहाय्यमाचरितं तेभ्योऽपि धन्यवादान् वितरामि

विद्वद्वशंवदः
चिं. ग. काशीकरः

# खिलटिप्पणीषु निर्दिष्टानां ग्रन्थानां संक्षेपसूची

अथर्व = अथर्ववेदसंहिता

ऋग्वे = ऋग्वेदस्पर्कः ( मुम्बापुरीमुद्रितः )

अल = पीटर्सनमहोदयेन प्रकाशितानि अल्वरनगरस्थलिखितपुस्तकगतानि ऋग्वेदपरिशिष्टानि[1] ।

आउ = आउफ्रेख्टमहोदयप्रकाशिता ऋग्वेदसंहिता

आचं = आह्निकचन्द्रिका

आपगृ = आपस्तम्बगृह्यसूत्रम्

आपमं = आपस्तम्बमन्त्रपाठः

आपश्रौ = आपस्तम्बश्रौतसूत्रम्

आर्षानु = आर्षानुक्रमणी ( बिब्लिओथिका इंडिका सेरिज़् , कलकत्ता )

आश्वगृ = आश्वलायनगृह्यसूत्रम्

आश्वमं = आश्वलायनमन्त्रसंहिता[2]

आश्वश्रौ = आश्वलायनश्रौतसूत्रम्

आसू = आह्निकसूत्रावलिः ( मुम्बापुरीमुद्रिता )

ऋवि = ऋग्विधानम् ( जयपुरे पं. जगदीशशास्त्रिणा मुद्रापितम्, संवत् १९९७ )

ऋप्रा = ऋग्वेदप्रातिशाख्यम् ( डॉ. मंगलदेवशास्त्रिभिः संपादितम् )

ऋब्र = ऋग्वेदीयब्रह्मकर्मसमुच्चयः ( मुम्बापुर्यां मुद्रितः )

ऋमं = ऋग्वेदमन्त्रपाठः ( मुम्बापुर्यां निर्णयसागरयन्त्रालये १८९१ खिस्ताब्दे मुद्रितः )

ऋसं = ऋग्वेदसंहिता

ऐआ = ऐतरेयारण्यकम्

ऐब्रा = ऐतरेयब्राह्मणम्

औंध = औंधनगरे पं. सातवलेकरमहोदयैः मुद्रिता ऋग्वेदसंहिता ( द्वितीयावृत्तिः )

कपिसं = कपिष्ठलकठसंहिता

का = काश्मीरदेशे शारदालिप्यां लिखितो खिलग्रन्थः[3]

कासं = काठकसंहिता

कौसू = कौशिकगृह्यसूत्रम्

क्रिप्रसं = क्रियमाणप्रयोगसंग्रहः ( अहमदाबादनगरे प्रकाशितः )

खागृ = खादिरगृह्यसूत्रम्

खिलानु = खिलानुक्रमणी

गोगृ = गोभिलगृह्यसूत्रम्

गोब्रा = गोपथब्राह्मणम्

जुना = जुनागढलिखितपुस्तकम्[4]

तं = तञ्जौरग्रन्थालयस्थलिखितपुस्तकम्

तैआ = तैत्तिरीयारण्यकम्

तैब्रा = तैत्तिरीयब्राह्मणम्

तैसं = तैत्तिरीयसंहिता

तैसंध्या = तैत्तिरीयसंध्याभाष्यम् ( पुण्यपत्तने १८९९ खिस्ताब्दे मुद्रितम् )

धपंशा = धनिष्ठापञ्चकशान्तिः (मुम्बापुरीमुद्रिता)

धसिं = धर्मसिन्धुः

निरु = निरुक्तं यास्काचार्यकृतं

नृताउ = नृसिंहतापनीयोपनिषत्

षंब्रा = षड्विंशब्राह्मणम्

पञ्चासू = पञ्चामृताद्यभिषेकसूत्रम् ( मुम्बापुरीमुद्रितं शके १८०० )

पागृ = पारस्करगृह्यसूत्रम्

पैप्प. अथर्व = पैप्पलाद-अथर्ववेदसंहिता ( लवपुरे डॉ. रघुवीरेण परिष्कृता )

प्रर = प्रयोगरत्नं नारायणभट्टकृतं ( मुम्बापुर्यां मुद्रितं शके १०८३ )

1. A second Report of operations in search of Sanskrit MSS. in the Bombay Circle by Peter Peterson, Bombay 1884.

2. India Office Library MSS. Nos. 378 [1970] and 379 [781] as described by Dr. V. M. Apte in ABORI Vol XX, Parts III-IV, pp. 249-61, 1938-39. आश्वमसं[1] = MS. No. 378; आश्वमसं[2] = MS. No. 379.

3. Apokryphen des Ṛgveda, Dr. phil. J. Scheftelowitz, Breslau 1906.

4. See Preface p. 894.

बौधसू = बौधायनधर्मसूत्रम्
बृहदे = बृहद्देवता ( हार्वर्ड ओरिएण्टल् सेरीस् )
मै = मैक्समुलरमहोदयेन प्रकाशिता सभाष्या ऋग्वेदसंहिता
मनाउ = महानारायणोपनिषद्
मंदी = मन्त्रार्थदीपिका ( काश्यां प्रकाशिता )
मभा = महाभारतम् (पुण्यपत्तनस्थ-भाण्डारकर-प्राच्यविद्यासंशोधनमन्दिरमुद्रितम् )
मंब्रा = मन्त्रब्राह्मणम्
मागृ = मानवगृह्यसूत्रम्
मामंसं = माध्यंदिनमन्त्रसंहिता
माश्रौ = मानवश्रौतसूत्रम्
मु = मुम्बापुरीमुद्रिता सभाष्या ऋग्वेदसंहिता
मैसं = मैत्रायणीसंहिता
म्यु = लण्डननगरे ब्रिटिशम्युझीअमूमध्ये वर्तमानऋग्वेदसंहिताया लिखितपुस्तकम्[1]
वासं = वाजसनेयिसंहिता
विप = विवाहपद्धतिः ( मुम्बापुर्यां १८८६ खिस्ताब्दे मुद्रिता)
वैसू = वैतानश्रौतसूत्रम्
शब्रा = शतपथब्राह्मणम्
शांआ = शाङ्खायनारण्यकम्
शांक = शांतिकमलाकरः
शांगृ = शाङ्खायनगृह्यसूत्रम्
शांब्रा = शाङ्खायनब्राह्मणम्
शांम = शान्तिमयूखः ( मुम्बापुर्यां १८०१ शके मुद्रापितः )
शांश्रौ = शांखायनश्रौतसूत्रम्
शांसा = शांतिसारः ( मुम्बापुर्यां १७८३ शके मुद्रितः )
श्वेउ = श्वेताश्वतरोपनिषद्
संकौ = संस्कारकौस्तुभः ( मुम्बापुर्यां खिस्ताब्दे १८६१ मुद्रितः )
संभास = संध्याभाष्यसमुच्चयः ( पुण्यपत्तने १८९९ खिस्ताब्दे मुद्रितः )
साम = सामवेदसंहिता
सामविब्रा = सामविधानब्राह्मणम्
सुप = सुपर्णाध्यायः
हिगृ = हिरण्यकेशिगृह्यसूत्रम्
हिश्रौ = हिरण्यकेशिश्रौतसूत्रम्
हिसंध्या = हिरण्यकेशित्रिकालसंध्या ( मुम्बापुरीमुद्रिता )

## संक्षेपचिह्नानि

| | | |
|---|---|---|
| = | = | समानम् [ identical with ] |
| ≏ | = | अंशतः समानम् [ approaches or partly identical with ] |
| → | = | द्रष्टव्यम् [ Cf. ] |

मन्त्रसंख्याया उपरितने कोणे विद्यमाना संख्या प्रायो ऋग्मन्त्रस्य अर्धसंख्यां बोधयति।

1. No. Add 5351, Comp. Khila IV. 11.

# अथ खिलानि

## प्रथमोऽध्यायः

ॐ नमो विष्णवे। अथ खिलेषु सूक्तप्रतीकाद्युक्तं प्रयोजनं ......... सत्यर्षादीनामभिदैवता लक्षणानि च। छन्दसां चाधिक्यं च। कृतिः प्रकृतिराकृतिर्विकृतिः संकृतिरभिकृतिरुत्कृतिरित्यशीत्य-क्षरादीनि,[1] चतुरुत्तराण्येव[2] यजूंषि, संख्यानुवर्तनादितुल्यं ऋषीणां च तुल्यनाम्नां गोत्रसमादेशो, खिलान्यन्तरं मन्त्रोक्तान्येव संख्यादीनि संभवेत् ॥

१. → खिल ४.९

२. निविद् पुरोरुचः प्रैषाः कुन्तापा इति चत्वारि यजूंषि

सं तूर्णं शश्वत् पञ्च ताक्ष्यः सुपर्णं आश्विनं यै सप्त सप्तम्याग्नेयी परा ऐन्द्री एकादशी वा नवमी लिङ्गोक्ता देवता अष्टम्यादि[1] विराड्रूपाश्चतस्रो[1] अगस्त्य उरोबृहती प्र सप्त प्राङ्गयो त्रिष्टुप्त्रिपदी द्वितीया जगती षष्ठी विराट्स्थाना ज्योतिष्मन्तं दश भारद्वाजो ज्योतिष्मती षडृचाद्या लिङ्गोक्तदेवता-मनुष्टुब्ज्यन्त्ये च कुत्सा एकादशाश्विनः कुश आद्याः षड् लिङ्गोक्तदेवता आनुष्टुभमिमानि सप्तपुन-र्दृष्टा ऐन्द्रावरुणं जगतमयं षड् रेवाणाह्वो यदा तूर्णं यामुनिः प्रमेत्रा यं पड् यज्ञवल्क्योऽयं चातुष्कं गौरीवीतिरिद्मसौ चक्षुषी आश्विनापदोपः षष्ठी जगत्यन्त्रानुक्तगोत्राः सौपर्णाः ॥

१. 'अष्टमा विराड्रूपा चतस्रो' इति साधु

१

संमैक्षिष्यो॒र्ध्वमहस आदित्येन सहीयसा। अहं यशस्विनां यशो विश्वा रूपाण्या ददे ॥ १ ॥

उर्यन्नद्य वि नो भज पिता पुत्रेभ्यो यथा। दीर्घायुत्वस्य हेशिषे तस्य नो धेहि सूर्य ॥ २ ॥

उर्यन्तं त्वा मित्रमह आरोहन्तं विचक्षण। पश्येम शरदः शतं जीवेम शरदः शतम् ॥ ३ ॥

अभि त्यं मेषं पुरुहूतमृग्मियम्० ॥ ऋ. सं. १. ५१. १

ऋसं १.५० अनन्तरं पठनीयम्।

मं१–आउ१–औध।

१. समैक्षिष्योर्ध्वमहस–का; शनैश्चित्सूर्येण–मं-आउ; शनैश्चिदद्य सूर्येण–औध. विश्वा रूपाण्या–का; विश्वारूपाण्या–मं-आउ; विश्वारूपसुपा–औध। २. = तैब्रा ३.७.६.२२; २[२] = खिल१.५.५[२]; धेहि–का; देहि–तैब्रा-मं-आउ। ३[१]. = ऋसं १.५०.११; तैब्रा ३.७.६.२२. ३[२] = ऋसं ७.६६.१६; अथर्व १९. ६७. १-२; मैसं ४.९.२०; वासं ३६.२४; तैआ ४.४२.५; मागृ १.२२. ११[२]; हिगृ १.७.१०; पागृ १.११.९; मंपा २.५.१३-१४. ४ = खिल १.५.६;→ऋसं १०.३७.७-८।

२

शंसमासत्या युवयोर्महित्वं गावो अर्चन्ति सदमित्पुरुक्षू।

यदूहथुरश्विना भुज्युमस्तमनारम्भणे अध्वनि तौग्र्यमस्तम् ॥ १ ॥

यद्दक्षं श्वेतं दधतो अभिर्द्यानासत्या भुज्यू सुमताय पेरवे।

तां वा रतिं विदथेषु विप्रा रेभन्तो दस्राव्गमन्मनस्युम् ॥ २ ॥

आ नो विपन्यू सवनं जुषेथामा वां हंसाः शुशुजो वहन्तु ।
युवां स्तोमासो जनयो न मर्या उशन्तो दस्रा वृषणा सचन्ते ॥ ३ ॥
आ नो यातं त्रिवृता सोमपेयं रथेन युक्षा सवनं मदाय ।
स्तीर्णं वां बर्हिः सुषुता मधूनि युक्ता होतारो रथिरा सुहस्ताः ॥ ४ ॥
वासात्यौ चित्रौ जगतो निधानौ द्यावाभूमी शृणुतं रोदसी मे ।
तावश्विना रासभाश्वा हवं मे शुभस्पती आगतं सूर्यया सह ॥ ५ ॥
प्रैषः सन्तु मधुनो घृतस्य तीव्रं सोमं नि वपन्तु शुष्मिणः ।
एवं तथा युवत्यश्विनौ वाहू ऊर्जं दुहतु मधुना घृतेन ॥ ६ ॥
अग्ने मन्दन्तु यतयः स्तोमाः प्र णु रथं दिवं यान्ति घर्मम् ।
चतुर्दशं त्रिदिवं युवानमोजो मिमातु द्रविणं सुमेके ॥ ७ ॥
हरिं हिनोमि दयमानो अंशुं पुरुमीळ्हं वृषभं जयान् ।
हरिवं हरितः सतोवं युक्तानेमिं त्रिनाभिं वरुणं प्रगाथः स्वस्तये ॥ ८ ॥
सोमो वैष्णवं महिमानमोजः सप्त ऋषयः सुवीरा नराः प्रीणयन्ति ।
सौधन्वनासः सुहस्ताः शमीभिस्त्वष्टमाङ्गिरसंमृभवं स्वस्तये ॥ ९ ॥
इहेह वो मघवन्नि दधामि ध्रुवं तीव्रं च तं हदियन्ते बृहस्पतिम् ।
सं ते दधामि द्रविणं हविष्मते घर्मश्चित्ततः प्रवृजे वहन्ति ॥ १० ॥
शश्वत्सौपर्णौ विषितस्तुकौ वायसे विश्वमुजः परिरक्षी नृचक्षसौ ।
इयं हि त्वा दयमाने पृथक्विमौ वायसौ दोषादयमानो अबूबुधत् ॥ ११ ॥
समेकनेमिं त्रिवृतं षोळशारं शतारं विंशति प्रत्यराभिः ।
अष्टकैः षड्भिर्विश्वरूपैकपाशं त्रिमार्गभेदं द्विनिमित्तैकमोहम् ॥ १२ ॥
सदं सद्मेकमेकं तस्थुषः पञ्चत्रिंशाददशापरम् । त्रिंशतं शिवं नवगुह्यं यज्ञमष्टषष्ठं विदत् ॥ १३ ॥
अतिष्ठदर्कं वृषणं सुवीरं दधन्वं देवं हरिमिन्द्रकेशाम् ।
आयौ इन्द्रः षोळशी शर्म यच्छतु षड्वर्मिणमेकं ध्रुवन्ति साकम् ॥ १४ ॥

एतदादीन्येकादश सौपर्णसूक्तानि । तथा चात्र बृहद्देवता ( ३.११८-११९ )–' सम्यद्धि वामिति । दशाश्विनालोमालीति इन्द्रावरुणयोः स्तुतिः । सौपर्णेयास्तु ताः काश्चिक्षिपातस्तुतिषु स्तुताः'[1] ॥ ऋग्विधानमपि ( १.१०८ )–' सौपर्णानि पवित्राणि सूक्तान्येकादशाभ्यसेत् । काद्रवन् पुत्रान् पशून् त्रिरो स्वर्गमायुरनन्धताम् '[2] ॥

१. → ऋसं १.११६.५ : यदश्विना ऊहथुर्भुज्युमस्तम् । २[१]. ' सदश्वं श्वेतं दधतुरहिहत्यासत्या भुज्यू सुमताय पेदवे ' इति शुद्धं स्यात् । ३[१]. सचन्ते; सचेन्ते-का → ऋसं १.११६.६; ११७.९; ११८.९; ११९.१०; १०.३९.१०, ७.७१.५. ४. आ नो यातं → ऋसं ४.४४.५; ८.८.५. रथिराः; रथिनाः इति का–पुस्तकस्थो मुद्रितपाठोऽशुद्धः स्यात् । खिल १.३.३; १०.१ द्रष्टव्यम्[३] । ५. = तैब्रा १.१०.२. वासात्यौ–का-तैब्रा; → निरु १२.२. शृणुतं रोदसी मे–का; परन्तु सं

स्थासो—तैआ। ६. प्रेषः ( = प्र + इषः ); पैषः—का. ऊर्जं सुहस्तु—का; → ऋसं ८.७१.१६; १००.१०. ७. प्रमन्यन्तु; मन्यन्तु—का. ओजो मिमातु—का; 'ओजो मिमाते' इति भाव्यं → ऋसं ७.८२.१। ८. अंशु—का; अंशु ? → हरिरंशुः—ऋसं९.९२.१. हरितः—का; हरितं ? सुचक्रनेमिं—का; सुचनेमिं ? प्रगाथः इति पदं सर्वथानावश्यकम्। ९¹. प्रीणयन्ति—का; 'प्रीणन्ति' इति मूलपाठः स्यात्, ९².→ ऋसं १.६०.३: इन्द्रस्य सख्यमृभवः समानशुर्मनोर्नपातो अपसो दधन्विरे। सौधन्वनासो अमृतत्वमेरिरे विष्ट्वी शमीभिः सुकृतः सुकृत्यया; → ऋसं ७.३५.१२: शं न ऋभवः सुकृतः सुहस्ताः। १०. इहेह—का; इरेह ? धर्मविसतः प्रवृजे = ऋसं ५.३०.१५. ११². इषं 'इ' धातो रूपं;→ इयाम्—ऋसं ७.८१.४. पृषद्भिः—का; पृषद्भिः पृदद्भिः इति वा स्यात्। अवृक्षुषत्; अवुकुषत्—का; → खिल ५.११.१. १२. = मैउ १.४. षोळशारं शताधारं—का; षोडशान्तं शताधारं—मैउ → मभाआदि. १.३.१४: एकां नाभिं समसता अराः। १३¹. सद्यमेकमेकं; सदमेकमकं—का. दश°—का; 'दशं' इत्यपि संभवेत्। १४¹. वृषन्वं देवौ → ऋसं ८.११.१. १४².→ वासं २६.१०; तैसं १.४.४१: महाँ इन्द्रो वज्रबाहुः षोळशी शर्म यच्छतु।

1. Cf. Bṛhaddevatā, Part II, pp. 112–13.

2. For the Ṛgvidhāna I have used the edition in Roman characters of Rudolf Meyer (Berlin 1878) as well as the Sanskrit transliteration of the same by Pandit Jagadish Shastri (Lahore, 1940). The transliterator does not seem to have paid proper attention to the Khilas treated in the Ṛgvidhāna. By *Sauparṇāni* he means RV. I. 74–84! See also notes to Khila IV. 11.

3. Cf. A. B. Keith, JRAS 1907, p. 225

२

प्र धारा यन्तु मधुनो घृतस्य यद्विन्दतं सूरी उस्रियायाम्।
मित्रावरुणी भुवनस्य कारू ता मे अश्विना जुषतां सवना ॥ १ ॥
सुखं रथं शतयातानमाशुं प्रातर्यावाणं सुवृतं हिरण्ययम्।
आ तिष्ठथात्र दुहिता विवस्वतस्तमेवाश्विनावसे करामहे ॥ २ ॥
ये वामश्वासो रथिरा विपश्चितो वातध्राजिरः सुयुजो घृतश्चुतः।
येभिर्याथ उप सूर्यां वरेयं तेभिर्नो दस्रा वर्धतं समत्सु ॥ ३ ॥
यद्वा रेभो अश्विना पोषयित्नु यद्वा सभो वध्रिमत्यैः सुदानू।
यस्माज्जज्ञे देवकामः सुदक्षस्तदस्मै दत्तं भिषजावभिष्टु ॥ ४ ॥
येन्नासत्या भेषजं चित्रभानू येनावथुस्तोककामामु नु घोषाम्।
तदस्मै दत्तं त्रिषु पुंसु वध्र्यै येनाविन्दतु नयं सा सुहस्त्यम् ॥ ५ ॥
यक्षद् वां दस्रावस्मिन्सुते नासत्या होता कृणोतु वेधाः।
सिसक्तु नार्यृतप्रजाता वि पर्वाणि जिहतां सूतवा उ ॥ ६ ॥
एवा निषक्तोपनिषक्ता विप्रा युवां रेभत्यौ सयुजा सुपर्ण्यौ।
अकाम्यक्रतुर्विदथेषु शंसा धत्तं तयोस्तनयं तोकमग्र्यम् ॥ ७ ॥

इदं सूक्तं आश्व १.११.१४ मध्ये निर्दिष्टम्; ऐब्रा ६.२५.७; ८.१०.४ सायणभाष्ये:—'प्र धारा यन्तु मधुन इति सौपर्णसूक्तम्'।

४[२]. → ऋसं १०.३८.४ : अर्वाञ्चमिन्द्रमवसे करामहे । ५[१]. यातधाजिषः → तैआ १.११.७ : यातधाजिगति. ५[२]. याथ उप सूर्या वरेयं → ऋसं १०.८५.१५ = अथर्व १४.१.१५ : अयातं .... .वरेयं सूर्यामुप । ६[१]. = अथर्व १.११.१[१]: वषट् ते पूषन्नस्मिन्त्सूतावर्यमा होता कृणोतु वेधाः । ६[२]. = अथर्व १.११.१[२] ।

४

ज्योतिष्मन्तं केतुमन्तं त्रिचक्रं सुखं रथं सुषदं भूरिमायम् ।
चित्रामघा यस्य योगेऽधिजज्ञे तं वां हुवे अति रिक्तं पिबध्यै ॥ १ ॥
युवं देवा क्रतुना पूर्व्येण युक्ता रथेन तविषं यजत्रा ।
आ गच्छतं नासत्या शचीभिरिदं तृतीयं सवनं पिबाथः ॥ २ ॥
युवां देवास्त्रय एकादशासः सत्या सत्यस्य दधिरे पुरस्तात् ।
अस्माकं यज्ञं सवनं जुषाणा पातं सोममश्विना दीद्यग्नी ॥ ३ ॥
पनाय्यं तदश्विना कृतं वां वृषभो दिवो रजसः पृथिव्याः ।
सहस्रं शंसा उत ये गविष्ठौ सर्वाँ इत्ताँ उप यात पिबध्यै ॥ ४ ॥
अयं वां भागो निहितो यजत्रेमा गिरो नासत्योप यातम् ।
पिबत सोमं मधुमन्तमश्विना प्र दाश्वांसमवतं शचीभिः ॥ ५ ॥
ज्योतिष्मन्तं सुप्रतीकमजस्रेण भानुना दधिग्नी । शिवं प्रजानां कृणुष्व मा हिंसीः पुरुषं जगत् ॥ ६ ॥
धाता रातिः सवितेदं जुषन्तां त्वष्टा यद्दूतो अभवद्विवस्वतः ।
सं वामश्विभ्यामुषसा सजूस्तमूर्ध्वं गव्यं महि गृणान इन्द्र ॥ ७ ॥
भरद्वाजस्य सुन्वतो यविष्ठो याह्यग्ने मधुमत्तमः सुतः ।
सोमस्य मा तवसो दीप्यानो अच्छा कोशे जनयित्वाञ्चतो भुवत् ॥ ८ ॥
अग्निः पूर्युर्ब्रह्मणस्पतिः सोमो देवेभ्यो यमत् । इन्द्रस्याधिपत्ये मे बृहस्पते हवींषि ते ॥ ९ ॥
ऊर्ध्वं भाव्यं जनयन्तो देवा अग्रे यदब्रुवन् । यस्त्वेदं ब्राह्मणो विद्यात्तस्य देवा असन्वशे ॥ १० ॥

१. = ऋसं ८.५८.३ ( वालखिल्य १०.३ ). २–५. = ऋसं ८.५७.१–४ ( वालखिल्य ९ ). ४. = अथर्व २०.१४३.९; आश्वश्रौ ९.११. १[१]. भूरिमायं–का; भूरिवारं–ऋसं. । ३. सत्या–का; सत्याः–ऋसं. दधिरे–का; ददृशे–ऋसं । ४[१]. गविष्ठौ–का; गविष्टौ–ऋसं–अथर्व. यात–का; याता–ऋसं । ५[२]. °मश्विना–का, °मस्मे–ऋसं । ६[१]. ∸ तैसं ४.१.३.१; ५.१.४ १; मैसं २.७.२ : ज्योतिष्मन्तं त्वाग्ने सुप्रतीकमजस्रेण भानुना दीद्यानम्. ६[२]. → मैसं २.७.२; तैसं ४.१.३.१; ५.१.४.१ : शिवं प्रजाभ्योऽहिंसन्तम्. मा हिंसीः = अथर्व १८.४.३०; → मनाउ २.१० : मा नो हिंसीर्जातवेदो गामश्वं पुरुषं जगत् । ७. → वासं ८.१७; तैसं १.४.४४; अथर्व ३.८.२; मैसं १.३.३८; कासं ४.१२; ११.९; ऋसं१.५८.१ : धाता रातिः सवितेदं जुषन्तां प्रजापतिर्निधिपा देवो अग्निः । त्वष्टा मद्दूतो अभवद्विवस्वतः, अश्विभ्यामुषसा सजूः = ऋसं १.४४.१४. ऊर्ध्वं गव्यं महि गृणान इन्द्र = ऋसं ६.१७.१ । ८. मधुमत्तमः सुत = ऋसं ९.१०५.३. सोमस्य मा तवसो = ऋसं ३.१.१; मैसं ४.११.२; कासं २.१५. दीप्यानो; दीप्याना–का. अच्छा कोशं = ऋसं ९.१०७.१२ । ९. अग्निः

६

इमानि वां भागधेयानि सिस्रत इन्द्रावरुणा प्र महे सुतेषु वाम् ।
यज्ञेयज्ञे हि सवना भुरण्यथो यत्सुन्वते यजमानाय शिक्षथः ॥ १ ॥
निष्षिध्वरीरोषधीराप आस्ताामिन्द्रावरुणा महिमानमाशत ।
या तस्थत् रजसस्पारे अध्वनो ययोः शत्रुर्नकिरादेव ओहते ॥ २ ॥
सत्यं तदिन्द्रावरुणा घृतश्चुतं मध्व ऊर्मिं दुहते सप्त वाणीः ।
ताभिर्दाश्वांसमवत शुभस्पती यो वामदब्धो अभि पाति चित्तिभिः ॥ ३ ॥
घृतप्रुषः सौम्या जीरदानवः सप्त स्वसारः सदन ऋतस्य ।
या ह वामिन्द्रावरुणा घृतश्चुता ताभिर्धत्तं यजमानाय शिक्षतम् ॥ ४ ॥
अवोचाम महते सौभगाय सत्यं त्वेषाभ्यां महिमानमिन्द्रियम् ।
अस्मान्त्स्विन्द्रावरुणा घृतश्चुता त्रिभिः सप्तेभिरवतं शुभस्पती ॥ ५ ॥
इन्द्रावरुणा यदृषिभ्यो मनीषां वाचो मतिं श्रुतमधत्तमग्रे ।
तानि च्छन्दांस्यसृजन्त धीरा यज्ञं तन्वानास्तपसाभ्यपश्यन् ॥ ६ ॥
इन्द्रावरुणा सौमनसमदृप्तं रायस्पोषं यजमानेषु धत्तम् ।
प्रजां पुष्टिं रयिमस्मासु धत्तं दीर्घायुत्वाय प्र तिरतं न आयुः ॥ ७ ॥

ऋसं ८.५९ ( वालखिल्य ११ ); ऐब्रा ६.२५ ( सायणभाष्य ); शांश्रौ ९.२०.१४ ( भाष्य ); बृहदे १.११९ एतेभ्यो ज्ञायते यदिदं सौपर्णं सूक्तमिति । आश्वश्रौ.८.२; शांश्रौ १२.११.१७ अत्रापि निर्दिष्टम् ।

१[१]. हि—का; ह—ऋसं । २. निष्षिध्वरीरोषधीराप = ऋसं ३.५५.२२. आभ्यामि°—का; आस्तामि°—ऋसं. महिमानमाशत = ऋसं १.८५.२. तस्थत् रजसस्पारे—का; सिस्रत् रजसः पारे—ऋसं । ३[१]. घृतश्चुतं—का, इरस्य वा—ऋसं । ४[२]. धत्तं—का; धत्त—ऋसं । ५[२]. घृतश्चुता त्रिभिः सप्तेभि°—का; घृतश्चुतस्त्रिभिः साप्तेभि°—ऋसं । ६. मनीषा—का; मनीषां—ऋसं. °मधत्तमग्रे—का; °मदत्तमग्रे—ऋसं. तानि च्छन्दांस्य°—का; यानि स्थानान्य°—ऋसं. °पश्यन्—का; °पश्यं—ऋसं । ७[२]. रयिमस्मासु—का; धृतिमस्मासु—ऋसं ।

७

अयं सोमः सुशमी अद्रिबुध्नः परिष्कृतो मतिभिरुक्थशस्तः ।
गोभिः श्रीतो मत्सरः सामगीतो मधु पर्वाते परि वां सुशिप्रा ॥ १ ॥
अस्य पाजसः पिबतं सुतस्य वरिष्ठाभ्याः परिपूतस्य वृष्णः ।
तावश्विना जठरमा पृणेथामथा मनो वसुधेयाय धत्तम् ॥ २ ॥
एह यातं तन्वा शाशदाना मधूनि नक्षमाणौ नु मेधा ।
वि स्वां मन्द्रां पुरुरेजमाना सुवायती हवते वां मनीषा ॥ ३ ॥
सुखं नासत्या रथमंशुमन्तं स्योनं सुवह्निमधि तिष्ठतं युवम् ।
यं वां वहन्ति हरितो वहिष्ठा शतमश्वा यदि वा सप्त देवा ॥ ४ ॥

यं वेन तागच्छतं मानवस्य शार्यातस्य शदनं शस्यमाना ।
अबीभयु सधमादं चकानेश्च्यवनो देवान्युवयोः स एषः ॥ ५ ॥
आ नो अश्विना त्रिवृता रथेनार्वाञ्चं रयिं वहतं सुवीरम् ।
शृण्वन्ता वामवसे जोहवीमि वृधे च नो भवतं वाजसातौ ॥ ६ ॥

१[१]. गोभिः श्रीतो = ऋसं ८.८२.५ । २[१]. अठरमा पृणेथां = ऋसं ६.६९.७. अथा मनो वसुधेयाय = अथर्व ३.४.४ : अधा°। ३[१]. तन्वा३शाशदाना = ऋसं १.१२४.६ । ४. = अथर्व ११.२.७ । ५[१]. → ऋसं १.११२.१६; १७; शाश्रा ४.१.५.२; ऐबा ४.३२ । ६. = ऋसं १.३४.१२.

८

यदा युञ्जाथे मघवानमाशुं पुरुस्पृहं पृतनाज्यं सुवीरम् ।
स्वश्वं दक्षा रथमा हवेषु तदा युवीयेति रसं तनूनाम् ॥ १ ॥
मन्दिष्ठा इमे कवयश्चरन्ति भरेषु न मथिता तुवीशासः ।
वाचं हिन्वाना पुरुशंसं वा हविष्मती सवने मन्दयध्यै ॥ २ ॥
श्रुतं हवं तर्पयतं मरुत्सु काममेषामो वह्यो हवींषि ।
अध स्तोतॄन् यजमानं च पातमूतिभिर्नृपती या अभीके ॥ ३ ॥

१. पुरुस्पृहं पृतनाज्यं सुवीरं = खिल १.५.८[१]. रसं तनूनां = ऋसं ७.१०४.१० । २. मथिता–का; मथिताः ? ३[१]. तर्पयतं...काममेषां = ऋसं १.५४.९ : तर्पय काममेषाम् ।

९

यं गच्छथः सुतपा देववन्तं हविष्कृतं वृषणा रातहव्यम् ।
स पुष्यत्यन्नं शतमाविरुक्थ्य३मना पिबन् प्रयतमादयिरनु ॥ १ ॥
या दंसांसि जरिता दुधरा वां या शंसन्ति जरितारः सुतेषु ।
यानीह पुष्यन्तु विश्वा जनेषु यैरश्वथो विदथे सोमपेयम् ॥ २ ॥
यद्दुशन्ता वृषणा या दधीचे शिरो भिषजा समधत्तमर्वाक् ।
तद्वां मती मधुना तं युवाना वेरट्कृतं भसथो मन्दसाना ॥ ३ ॥
मा वोच आथर्वण यद् ब्रवीमि मधु तेऽन्यैर्वीरतरैरचित्तम् ।
यदन्वशासन् मघवा दधीचं तद्वामवश्च्छिरसा हयस्य ॥ ४ ॥
यदा गच्छादीक्षितो वज्रबाहुर्धत्ते पितृभ्या मधु नो दधीचा ।
आ तिरोऽपं दुरस्तुते मा वदेति यदा वदत्सा युवयो. सुकीर्तिः ॥ ५ ॥
याभिः शचीभिर्वृषणा दधीचे याभिस्तुरं कावषेयं मखस्य ।
याभिर्धियं जिन्वथाके निपाना ताभिर्नोऽवतं विदथे गभीरा ॥ ६ ॥

२. यैरश्वथो; येरश्वो–का । ३[१]. दधीचे शिरो = ऋसं १.११७.२२ : दधीचेऽश्व्यं शिरः → ऋसं १.११६.१२; शबा १४.१.१.१८-२५ । ४[१]. → ऋसं १.११६.१२[१] मध्वाथर्वणो वामश्वस्य

सोम्यं प्र यदीमुवाच;→ऋसं १.११७.२२। ५. पितृभ्यां–का, पितृभ्यो ? दुष्श्रुते मा वदेति–का; दुःश्रुता मा वदाति ? ६. याभिः शर्चीभिर्वृषणा ≍ ऋसं १.११२.८. तुरं कावषेयं→शब्रा ९.५. २.१५; १०.६.५.९, ऐब्रा ४.२७; ७.१४; ८.२१; बृउ ६.५.४।

१०

अयं सोमो देवया वां सुमेधा हृदिस्पृग् यानि त्रिषणा मियानः ।
स्वादिष्ठो हव्यान्मधुनो घृताद्वा नूत्नो वां स्तोमो अश्विनावहमेमि ॥ १ ॥
प्र वां मही मन्दते देवकामा यद्वैरयासो वयुनानि विश्वा ।
तावश्विना पुरुभुजा सुशस्ती ऋषिहिता महतं विश्ववेनाम् ॥ २ ॥
यो वां गोमानश्ववान् सूनृतावान् पुरुश्चन्द्रः स्पार्हः स्पार्हयिष्णुः ।
यं जोहवीमि रथिरो गविष्ठी तमह्वे रयिमां विश्वरूपम् ॥ ३ ॥
सुवृद्रथो वां वृषणा सुवह्निः पुरुस्पृहो वसुविद्वो वयोधाः ।
येन वाजान् वहतं स्पार्हवीराननुक्रमयः शुरुधोऽश्वांश्च माध्वी ॥ ४ ॥

२[१]. यद्वैरयासो–का; यवेरयासो ? वयुनानि विश्वा ≍ ऋसं १.१५.१०; ७५.१४। ४[१]. सुवृद्रथो ≍ ऋसं १.१८३.२.

११

इदं देवा भागधेयं पुराणं यदाङ्गिरे हविता यज्ञियासः ।
एषं स्य घर्मः परिपूत ऋग्भिस्तं वप्सथो रथिरो विदद्वन्ता ॥ १ ॥
वृक्णं शिरो वृषणा यन्मखस्य शिरो भिषजा समधत्तमर्वाक् ।
तद्वां नरः सारं चारु चित्रं सदा गृणन्ति कवयः सुतेषु ॥ २ ॥
येन देवा अघ्नत सं रपांसि येनासहन्त पृतना अदेवीः ।
येनाभवन्नमृताः सोमधानं तमर्पयतं शिरसा हयस्य ॥ ३ ॥
पुरा त्रिशीर्ष्णो विदथेन देवा नाशाशणोरुन्धत नापि नाकम् ।
ईजाना बर्हीरु समा यदास्य शिरो दत्तं समधान्वारुहन् स्वः ॥ ४ ॥
यद्वां माता उप आतिष्ठदुग्रं सुवृद्रथानव्यथ्यं सरण्यूः ।
तत्र वां माध्वी मध्वाहितं सुनीथं प्रत्नमश्विना मयोभु ॥ ५ ॥
युवं त्रिभिश्चित्तयथोऽपि नाकं युवं पयांसि शक्करीषु धत्तम् ।
युवं वीरुद्भिः सृजतं महीमं युवं सर्तवे सृजतं त्रीं सिन्धून् ॥ ६ ॥
युवं माध्वी मधुभिः सारघेभिर्युवं भेषजा स्थो भिषजा सुपाणी ।
युवं रथेभी रथिरै स्थ उभा सुमङ्गलावमीवचातनेभिः ॥ ७ ॥
तन्मे दत्तं चक्षुरक्ष्णोर्विचक्षे पश्यामो येन स्वरिमा दिशश्च ।
येनाभिख्याय वि भवाम शाकं दुहैणावामश्विना शूरसातौ ॥ ८ ॥

३[1]. → ऋसं १०.१७१.२; खिल १.६.३[1]। ३[2]. **शिरसा हृदयस्य** ≡ खिल १.६.४[2]। ४[1]. → शबा १४.१.१.१८; १४.२.१.११; ४.१.५.१३-१८, ऋसं १.११६.१२. **वर्वीरु सभा** ≡ ऋसं १०.१२४.४। ५[1]. **सरण्यूः** ≡ ऋसं १०.१७.२; अथर्व १८.२.३३। ६[2]. **सर्तवे सृजतं वि सिन्धून्** → ऋसं १.३२.१२; २.१९.१२।

१२

आश्विना वहतं पीवरीः स्वधावतीर्दासपत्नीरिरावतीः ।
युवोर्दानासो दिवि नादितेयो युवोः पयांसि दुदुहिरे सुदुघाः ॥ १ ॥
यद्रेभं दस्रा विनिगूळ्हमप्सु युवायन्तं वाजयन्तमृबीसात् ।
उन्निन्यथुरश्विना बध्रिमाशुं तद्वां व्रतं महयन्त्युक्थशासः ॥ २ ॥
या वां नु सीरिरे या पृथिव्यां या वीरुत्सु प्रावत्सु यान्तरिक्षे ।
या वीरेषु सूरिषु यापि नाके ताभिर्नः शर्म यच्छत युवाना ॥ ३ ॥
यो वां भरित्रा सुकृतो मघानि प्रयन्त्राणि द्विषतो बर्हणानि ।
श्रात्राणि शश्वतो सातयन्ति ताभिर्नः शर्म यच्छतं युवाना ॥ ४ ॥
यो वां त्रिचक्रः सुपविः सुशस्तिस्त्रिबन्धुरः केतुमान् वातरंहाः ।
योगे यस्य वि तनोत्यभीशुं विभावरीः सद्यो यन्मयोभु ॥ ५ ॥
युवमूहथुर्विमदाय जायां युवं वशां शयवे धेनुमक्नताम् ।
युवमायुषा तारयतं प्र वन्धनमत्रिममुक्तं युवमंहसो वि ॥ ६ ॥
घ्नन्तं मेषान् वृक्ये शिवायै पिता चकार ऋषिमन्धमश्विना ।
तस्मिन्नृज्राश्वे चक्षुषी अधत्तमाविष्कृणुतं पुनरस्य लोकम् ॥ ७ ॥
यद्वां चक्षुर्दिवि यत्सुपर्णो येन पश्यथो भुवनान्यमर्त्याः ।
तन्मे दत्तं चक्षुषी देवबन्धू नमस्या विन्देय पुरुधा चकानाम् ॥ ८ ॥
**उपप्रयन्तो अध्वरम्०** ॥ ऋ. सं. १. ७४. १

इत्यृग्वेदे खिले प्रथमोऽध्यायः ।

'उपप्रयन्तो अध्वरम्' (ऋसं १.७४.१) इति सूक्तान्तेन ज्ञायते यद्द्वितीयादिद्वादशपर्यन्तान्येकादश सौपर्णसूक्तानि ऋसं १.७३ अन्ते पठितव्यानीति।

१[1]. **वहतं पीवरीः** ≡ ऋसं ८.५.२०. **नादितेयो**–का, नादितेया? २[1]. ≐ ऋसं १०.३९.९ युवं ह रेभं वृषणा गुहा हितमुदैरयतं......। युवमृबीसमुत तप्तमत्रय ओमन्वन्तं चक्रथुः. रेभं → ऋसं १.११६.२४; ११७.४; ११८.६। ३. **ताभिः**–का; तेभिः? ४. **यो**–का; या? **श्रात्राणि शश्वतो** ≡ खिल ४.७.२[1]। ६. **युवमूहथुर्विमदाय जायां** ≐ ऋसं १.११७.२० : युवं शचीभिर्विमदाय जायां न्यूहथुः. **शयवे धेनुं** ≡ ऋसं १०.३९.१३; ≐ ऋसं १.११८.८. **आयुषा तारयतं प्र वन्धनं** ≐ ऋसं १.११६.१० : प्र दीर्घेण वन्दनस्तार्यायुषा. **अत्रिममुक्तं युवमंहसो** ≐ ऋसं १.११७.३ : अंहसः..... अत्रिं मुञ्चथो। ७. **पिता चकार ऋषिमन्धं** ≐ ऋसं १.११६.१६ : मेषान् वृक्ये......पितान्धं चकार; मेषान् वृक्ये–ऋसं १.११७.१७. **ऋज्राश्वे चक्षुषी** ≡ ऋसं १.११७.१७[2]। ८. **सुपर्णो**–का; सुपर्णौ? **अमर्त्याः**–का; अमर्त्या? **विन्देय**–का; विन्देयं?

# द्वितीयोऽध्यायः

ॐ मैका भद्रं पञ्चानुष्टुभो जातवेदसे जातवेदस्यं स्वस्त्ययनं द्वे यर्थस्तेका हिरण्य-वर्णामेकोना श्रीर्मांगंधी श्रीरलक्ष्मीश्च सैव्यमानुष्टुभं वै सकर्यन्तं हिंसाग्नेयी चतुर्थी प्रस्तारपङ्क्तिस्त्रिष्टुभौ पञ्चदस्युपरिष्टाद्बृहती श्रीः[1] पुत्राः[1] परे षट् चिक्लीतः पञ्चानन्दकर्दमौ वैश्वदेवं मयि गृह्णेयः क्षेपो जात-वेदस्यं बृहत्यादि सं स्वस्ति स्थिति संज्ञवान् वैश्वदेवं द्वितीयादि त्रिष्टुभौ आ ते सप्त प्रजापत्यम् गर्भा-र्थाशीस्तुतिः[2] प्रजापतिरैन्द्रवायव्यौ चतुर्थी बृहती पञ्चमी प्रस्तारपङ्क्तिरश्विभिः पञ्च जीवपुत्र आभिचारम-भतिजगत्यानुष्टुप्[3] त्रिष्टुबन्तं वास्तुरेकस्मस्तुतिः शंवर्तीः षट् शान्तिरानुष्टुभं पञ्चम्यादि बृहती जगत्यौ स्वंभका यस्योपानुष्टुप्[4] वालखिल्याः परेऽष्टौ[5]।

१. 'श्रीपुत्राः' इति साधु;→बृहद्दे ५.९१.
२. 'आशीःस्तुतिः' इति शुद्ध.
३. आभिचारम°–Macdonell, Bṛhad. Part II, p. 190; अभिचारम° -Scheftelowitz
४. उप ( म वद ) इत्यस्या ऋषिर्वसिष्ठ इति लिख. ९.७
५. 'वालखिल्याः परेऽष्टौ' इति वस्तुतस्तृतीयाध्यायं समन्वेति

**।**

मा बिभेर्न मरिष्यसि परि त्वा पामि सर्वतः।
घनेन हन्मि वृश्चिकमहिं दण्डेनागतम् ॥ १ ॥
त्वमग्ने द्युभिस्त्वमाशुशुक्षणिः० ॥ ऋ. सं. २. १. १

प्रथममण्डलान्ते पठनीयम्। ऋसं १.१९१.१० अन्ते पठनीयमिति सु।
मैर–सु–आउर–अल–जुला–ऋमं–ऋत्र ( शान्तिपाठ ) पञ्चाम्–आश्वलं–औंध।
१. मा बिभेर्न मरिष्यसि = अथर्व ५.३०.८। १². = अथर्व १०.४.९. अहिं–का–सु–अथर्व; अहं–मै–आउ–अल–ऋमं–ऋत्र–पञ्चाम्।

मै–आउ–अल–ऋमं–ऋत्र–पञ्चाम् पुस्तकेषु बहवो मन्त्रा अस्मिन्सूक्तेऽधिकत्वेनोपलभ्यन्ते पाठ-वैषम्येण। ऋमं–पाठोऽयो दीयते–

आदित्यरथवेगेन विष्णोर्बाहुबलेन च। गरुडपक्षनिपातेन भूमिं गच्छ महायशाः ॥ २ ॥
गरुडस्य जातमात्रेण त्रयो लोकाः प्रकम्पिताः। प्रकम्पिता मही सर्वा सशैलवनकानना ॥ ३ ॥
गगने पक्षवातेन ज्योतिषं न प्रकाशते।
देवता भयभीताश्च मारुतो न प्रवायति मारुतौ न प्रवायत्यां मम ॥ ४ ॥
मा सर्प भद्र भद्रं ते दूरं गच्छ महायशाः। जनमेजयस्य यज्ञान्ते आस्तीकवचनं स्मर ॥ ५ ॥
आस्तीकवचनं श्रुत्वा यः सर्पो न निवर्तते। शतधा भिद्यते मूर्ध्नि शिंशवृक्षफलं यथा ॥ ६ ॥
अगस्त्यो माधवश्चैव मुचुकुन्दो महामुनिः। कपिलो मुनिरास्तीकः पञ्चैते सुखशायिनः ॥ ७ ॥
नर्मदायै नमः प्रातर्नर्मदायै नमो निशि। नमोऽस्तु नर्मदे तुभ्यं त्राहि मां विषसर्पतः ॥ ८ ॥
यो जरत्कारुणा जातो जरत्कन्यां महायशाः। तस्य सर्पोऽपि भद्रं ते दूरं गच्छ महायशाः।
तस्य सर्पस्य सर्पत्वं तस्मै सर्प नमोऽस्तु ते ॥ ९ ॥

आउ–पुस्तके १–६ मन्त्राः। सु–पुस्तके सप्तमो मन्त्रो नास्ति। अल–पञ्चाम्–पुस्तकयोः केवलं १-४ मन्त्राः।

२. विष्णोर्बाहु°–ऋर्म–ऋम–पञ्चास्; विष्णुबाहु°–मॅ–मु–आउ–अल. निपातेन भूमौ; मातेन भूमौ–अल. महायशाः; महाविषः–अल। २-४¹ = सुप २.१-२. ३¹. आतमात्रेण–मॅ–मु–आउ–ऋर्म–ऋम–पञ्चास्; आतमात्रस्य–अल–सुप; पातमात्रेण–औध। ४¹. ज्योतिषं न प्रकाशते; न ज्योतींषि प्रकाशति–सुप। ४². अल–सुप–पाठौ भिन्नौ। अल–देवता भयवित्रस्ता मारुतो नष्टचेतनाः; सुप–देवता भयवित्रस्ता नष्टशेषश्च मारुतः. भयभीताश्च; भयवित्रस्ता–आउ। ५. गो–का; गोः–हरेषु. महायशाः; महाविष–आउ–औध. जनमेजयस्य–ऋर्म–मॅ–मु; जन्मेजयस्य–आउ–ऋम–पञ्चास्। ५-६ = मभा १. ५३. २२ (टिप्पणी)। ७. = मॅ १. अगस्त्यो माधवः–ऋम; अगस्त्यं माधवं–ऋर्म–पञ्चास्; अगस्तिर्माधवः–मॅ. मुचुकुन्दो; मुचकुंद–पञ्चास्. ७². = तै : अफलकमास्तिकं चैव पंचैतानि स्मरेन्निति पंचैतानि स्मरेन्नित्यों नमः। ८. = मॅ १०। ९. = मॅ ७. जरत्कार्वा; जरत्कार्वा–औध. सर्पोऽपि–ऋर्म–ऋम; सर्पाप–मॅ; सर्पापि–मु; स्मराभि–औध. दूरं; भूमि–मॅ. महायशा ; महाविष–औध। ९¹. (केवलं ऋर्म–मध्य एव वर्तते) ≡ खिल २. १४. ८².

अधोलिखितः मॅ ८ मन्त्रः ऋर्म–पुस्तके नास्ति—

असितिं चार्त्तिसिद्धिं च सुनीतिं चापि यः स्मरेत् ।
दिवा वा यदि वा रात्रौ नास्ति सर्पभयं हरेत् ॥

---

अधोलिखितं खिलसूक्तं ऋसं २. ३२ अनन्तरं पठनीयमिति औधपुस्तके—

कुहूमहं सुकृतं विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि ।
सा नो ददातु श्रवणं पितॄणां तस्यै ते देवि हविषा विधेम ॥ १ ॥
कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषः शृणोतु ।
सं दाशुषे किरतु भूरि वामं रायस्पोषं यजमाने दधातु ॥ २ ॥
अनु नोऽद्यानुमतिर्यज्ञं देवेषु मन्यताम् । अग्निश्च हव्यवाहनो भवतं दाशुषे मयः ॥ ३ ॥
अन्विदनुमते त्वं मन्यासै शं च नस्कृधि । क्रत्वे दक्षाय नो हिनु प्र ण आयूंषि तारिषत् ॥ ४ ॥
धाता दधातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन वावनत् ॥ ५ ॥
धाता ददातु दाशुषे वसूनि प्रजाकामाय मीढुषे दुरोणे ।
तस्मै देवा अमृताः सं व्ययन्तां विश्वे देवासो अदितिः सजोषाः ॥ ६ ॥
धाता ददातु दाशुषे प्राचीं जीवातुमक्षिताम् । वयं देवस्य धीमहि सुमतिं वाजिनीवतः ॥ ७ ॥
धाता प्रजाया उत राय ईशे धातेदं विश्वं भुवनं जजान ।
धाता कृष्टीरनिमिषाभि चष्टे धात्र इद्धव्यं घृतवज्जुहोत ॥ ८ ॥

एतस्मिन् विषये बृहद्देवतावचनम् (४. ८७-८८)—'तत्पूर्वे द्वे ऋचौ कुह्वाः कुहूमहमिति स्तुते । तदुत्तरे द्वेऽनुमतेरनु नोऽन्विदिति स्तुते । धातुश्चतस्रस्तत्रादौ धाता ददातु नो रयिम् ॥' एतेनैव क्रमेण तैत्तिरीयसंहितायां (३. ३. ११) कुहूमहमित्यादिसूक्तगताः सर्वे मन्त्रा उपलभ्यन्ते। प्रथमं ०५-८ इति धातृदेवताकाश्चत्वारो मन्त्राः ५, ८, ७, ६ इति क्रमेण वर्तन्ते । अनन्तरं ३, ४ इति अनुमतिदेवताकौ मन्त्रौ तदनन्तरं ऋसं. २. ३२.४-५ एतौ राकाया मन्त्रौ वर्तेते । समनन्तरमेव १, २ इति कुहूदेवताकौ मन्त्रौ समागतौ (तैसं ३. ३. ११. ५)। किन्त्वयं सार्धश्लोकात्मकोऽसौ बृहद्देवतायाः सर्वेषु लिखितपुस्तकेषु नास्ति। अतः तस्य मूलपाठत्वं सन्देहास्पदम्[1] । काश्मीरखिलग्रन्थ इदं सूक्तं नास्ति। औधपुस्तकस्थो मन्त्राणां क्रमः तैसं क्रमाद्भिन्न एव। इदं सूक्तं ऋसं २. ३२ अनन्तरं

1. Cf. Scheftelowitz, p. 25. A. B. Keith considers the Bṛhaddevatā verses as original, Comp. JRAS 1907, p. 229.

२

भद्रं वद दक्षिणतो भद्रमुत्तरतो वद । भद्रं पुरस्तान्नो वद भद्रं पश्चात् कपिञ्जल ॥ १ ॥
भद्रं वद पुत्रैर्भद्रं वद गृहेषु च । भद्रमस्माकं वद भद्रं नो अभयं वद ॥ २ ॥
भद्रमधस्तान्नो वद भद्रमुपरिष्टान्नो वद । भद्रंभद्रं न आ वद भद्रं नः सर्वतो वद ॥ ३ ॥
असपत्नं पुरस्तान्नः शिवं दक्षिणतस्कृधि । अभयं सततं पश्चाद्भद्रमुत्तरतो गृहे ॥ ४ ॥
यौवनानि महयसि जिग्युषामिव दुन्दुभिः । शकुन्तक प्रदक्षिणं शतपत्राभि नो वद ॥ ५ ॥
**आवदंस्त्वं शकुने भद्रमा वद०** ॥ ऋ. सं. २. ४३. ३

ऋसं २. ४३. २ अनन्तरं पठनीयम् । मं–मु–औध-मते द्वितीयमण्डलान्ते पठनीयम् । मं–औध-पुस्तकयोः खिलान्ते ' आवदंस्त्वम् ' ( ऋसं २.४३.३ ) इति मन्त्रः संपूर्णः पठितः । आश्वमंसं[1]–पुस्तके द्वितीयमण्डलान्ते ' भद्रं वद दक्षिणतः ' इति मन्त्रं पठित्वानन्तरं ' अथ परशिष्टम् ' ( पदशिष्टं अथवा परिशिष्टं ? ) इत्युक्तम् । एतद्ग्रन्थकर्तृमते प्रथमो मन्त्रः ऋसं. २. ४३ मध्ये समाविष्टः खिलसूक्तं च द्वितीयमन्त्रादारब्धम् । आश्वमंसं[2]–मध्येऽस्य सूक्तस्य चत्वारो मन्त्राः—१, २[2] + ४[1], ४[2] + ५[1], ५[2], ऋसं. २. ४३. ३.

मॅ३–मु–आउ३–ऋमं–ऋम–औध–आश्वमंसं–अल–जुना ।

१. = निरु ९. ५. कपिञ्जल; कपिंजर–ऋग्र. १. ७. ५. → कौसू ४६. ५४. । २[2]. अस्माकं; अस्माकं नो–मु–ऋम. अभयं वद; अभयं कृधि–ऋम । ३[2]. आ वद; आ भर–ऋम । ४[1]. असपत्नं; असपत्नः–मु ।

३

जागर्षि त्वं भुवने जातवेदो जागर्षि यत्र यजते हविष्मान् ।
इदं हविः श्रद्दधानो जुहोमि तेन पासि गुह्यं नाम गोनाम् ॥ १ ॥
**विदा दिवो विष्यन्नद्रिमुक्थैः०** ॥ ऋ. सं. ५. ४५. १

ऋसं ५.४४ अनन्तरं पठनीयम् ।

मॅ४–आउ४–मु–ऋमं–आश्वमंसं–अल–जुना ।

१[2]. **तेन पासि गुह्यं नाम गोनाम्** = ऋसं ५. ३. ३.

मॅ५–मु–अल–औध–अनुसारेण ऋसं ५. ४६ अनन्तरमधो लिखितं खिलं पठनीयम्–

सूर्याग्ने तृणाम्यसावरण्ये योऽकेऽपि वा । वस्तृणैरभ्ययनं तदधीतं स्तृणानि भव ते भव ॥ १ ॥
वार्षिकूपस्तडागानां समुद्रं गच्छ स्वाहाग्नि गच्छ स्वाहा ॥ २ ॥

पठनीयमिति यदुक्तं तदपि तैसं–पाठेन सम्यक्तया न गम्यते इति । औन्धपुस्तके इदं सूक्तं केवलमभ्यूहमात्रे-णैव स्वीकृतमिति तत्पुस्तकसंपादकैरावेदितम् । आश्वश्रौ १.१०; ४.१२; ६.१४ द्रष्टव्यम् ।

१-२. ≐ अथर्व ७. ४७. १,२. ३-४ ≐ अथर्व ७. २०. १,२; → खिल ३. १५. ३. ५, ६, ७. ≐ अथर्व ७. १७. १, ३, २; → खिल ३. १५. १.

१. **सुष्टुतं**; सुभगा–तैसं. **पितॄणां**; पितॄणां–तैसं. **तस्यै ते**; तस्यास्ते–तैसं । २. **हविषः शृणोतु**; हविषश्चिकेतु–तैसं. **यजमाने**; चिकितुषे–तैसं । ३. **अवतं**; अवता–तैसं । ४. **नस्कृधि**; नः कृधि–तैसं. **तारिषत्**; तारिषः–तैसं । ५. **दधातु**; ददातु–तैसं । ७. **वाजिने**; नो रयिं–तैसं. **वाजिनीवतः**; सत्यराधसः । ८. **प्रजानामुत**; प्रजाया उत–तैसं. तैसं–मध्ये उत्तरार्धः सर्वथा भिन्नो वर्तते–धाता पुत्रं यजमानाय दाता तस्मा उ हव्यं घृतवद्विधेम ।

ऋनुभा ५. ४९; ऋविध १. २१. १ द्रष्टव्यम् । १[१]. सूकाग्ने तृणाद्यभावरम्ये बोदके पिबेत्–अल; सूकाग्रेऽस्येतृणान्यन्नाविरिणे बोदकेऽपि वा–औंध. १[२]. वस्तूर्णे*–अल; यदस्तूर्णेरधीतं तत्तृणानि भवति सुर्वे–औंध । २. 'अग्ने गच्छ स्वाहा' मु–पुस्तके नास्ति ।

४

स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं महद्भूतं वायसं देवतानाम् ।
असुरघ्नमिन्द्रसखं समत्सु बृहद्यशो नावमिवा रुहेम ॥ १ ॥
अंहोमुचमाङ्गिरसं गयं च स्वस्त्यात्रेयं मनसा च तार्क्ष्यम् ।
प्रयतपाणिः शरणं प्र पद्ये स्वस्ति संबाधेष्वभयं नो अस्तु ॥ २ ॥

**प्र श्यावाश्व धृष्णुया० ॥ ऋ. सं. ५. ५२. १**

ऋसं ५. ५१ अनन्तरं पठनीयम् । आश्वगृ ३. ११. १ भाष्यमपि द्रष्टव्यम् ।

मैं६–मु–आउ५–ऋमे–ऋम ( शान्तिपाठ )–औंध–आश्वमेसं–अल–जुना–सुप१०. ५-६ ।

१. **स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं**; स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः–नृताउ १. १; मर ( पुण्याह )- **महद्भूतं**, महाद्भूतं–भाउ. **नावमिवा रुहेम** = ऋसं १०.१७८.२ । २[१]. **नो अस्तु**; च नो अस्तु–भाउ.

५

वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्मद्विषो जहि ॥ १ ॥

**प्र सम्राजे बृहदर्चा गभीरम्० ॥ ऋ. सं. ५. ८५. १**

ऋसं ५. ८४ अनन्तरं पठनीयम् ।

मैं७–आउ६–मु–आश्वमेसं–औंध–अल–जुना । पञ्चाम्–पुस्तकेऽयं मन्त्रः श्रीसूक्तस्य चतुर्विंशतितममन्त्रत्वेनागतः ।

१. ∗ ऋसं ५. ८४. ३ : यत्ते अभ्रस्य विद्युतो दिवो वर्षन्ति वृष्टयः ।

६

हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममा वह ॥ १ ॥
तां म आ वह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥ २ ॥

---

हे जातवेदः । जातानि वेद जातप्रज्ञो वा । जाते जाते विद्यत इति वा । हे अग्ने त्वं हिरण्यवर्णां हिरण्यस्य सुवर्णस्य वर्णः कान्तिस्तद्वद्वर्णो यस्यास्ताम् । हरिणीं हरितवर्णाम् । हरिणीरूपधरां वा । श्रीर्भूत्वा हरिणीरूपमरण्ये संचचार हेति देवीपुराणाच्च । सुवर्णरजतस्रजाम् । सुवर्णस्य पुष्पाणि सुवर्णानि एवं रजतस्य रजतानि तेषां स्रक् माला यस्यास्ताम् । स्रक्साहचर्यात् पुष्पाणीत्यवगम्यते । पुष्पसादृश्यात् पुष्पे फले लुक् । आर्षं चैव हलन्तानामित्याप् । यद्वा सुवर्णरजतविकृतशृङ्खलाम् । सुष्ठु वर्णो यस्य तत्सुवर्णं यद्रजतं तत्सुवर्णरजतं तद्विकृतशृङ्खलां वा । चन्द्रां चन्द्रवत्प्रकाशमानाम् । तद्रूपेणावस्थितां वा । हिरण्मयीं हिरण्यस्वरूपाम् । हिरण्यविग्रहां वा । लक्ष्मीं लक्षणवतीम् । 'लक्ष्मीर्लाभाद्वा लक्षणाद्वा' ( निरु. ४. १० ) इत्यादिनिरुक्तात् । एवंरूपां श्रियं मे मह्यं मदर्थमा वह । आह्वय । अग्नेर्देवहोतृत्वादाह्वाने तद्योग्यमिति भावः । 'अग्निर्वै देवानां होता' ( ऐ. ब्रा. २. ७ ) इति श्रुतेः ॥ १ ॥

हे जातवेदः अग्ने त्वमनपगामिनीमपगमनरहिताम् । अनपायिनीमित्यर्थः । तां वक्ष्यमाणलक्षणां लक्ष्मीं मे मह्यमा वह । आह्वय । यस्यां श्रीदेव्यामावाहितायां सत्यां हिरण्यं सुवर्णं गां धेनुमश्वं वाजिनं पुरुषान् पुत्रपौत्रमित्रदासभूतानहं विन्देयं प्राप्नुयाम् ॥ २ ॥

अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम् । श्रियं देवीमुप ह्वये श्रीर्मा देवी जुषताम् ॥ ३ ॥
कांसोस्मि तां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ।
पद्मेस्थितां पद्मवर्णां तामिहोप ह्वये श्रियम् ॥ ४ ॥
चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ।
तां पद्मिनीमीं शरणं प्र पद्ये अलक्ष्मीर्मे नश्यतां त्वां वृणोमि ॥ ५ ॥
आदित्यवर्णे तपसोऽधि जातो वनस्पतिस्तव वृक्षोऽथ बिल्वः ।
तस्य फलानि तपसा नुदन्तु मायान्तरा याश्च बाह्या अलक्ष्मीः ॥ ६ ॥
उपैतु मां देवसखः कीर्तिश्च मणिना सह । प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे ॥ ७ ॥

अश्वपूर्वाम् अश्वाः पूर्वे पुरोगा यस्यास्ताम् । अथवाऽश्वपूर्णामश्वैः पूर्णाम् । अश्वपूर्णामिति केचित् । रथमध्यां रथा मध्ये यस्यास्ताम् । हस्तिनादप्रबोधिनीम् । हस्तिनां गजानां नादेन बृंहितेन गजयुक्तरथ(?)-नादेन वा प्रबोधिनी प्रकर्षेण ज्ञापयित्रीम् । देवीं देवनशीलाम् । द्योतनशीलां वा । श्रियं भजनीयाम् । सेनारूपां वा । उप ह्वये समीपे प्रत्याह्वये । एतादृशी देवी श्रीर्मा मां जुषतां सेवताम् ॥ ३ ॥

कां वाङ्मनसयोरगोचरां दुर्निरूपस्वरूपामित्यर्थः । ब्रह्मरूपां वा । को ह वै नाम प्रजापतिरिति श्रुत्यन्तरात् । क इति ब्रह्मणो नामेति पुराणाच्च । सोस्मिताम् । आ ईषदुद्गते स्मिते हास्ये तद्युक्ताम् । उपाक्षरलोपश्छान्दसः । हिरण्यप्राकारां हिरण्यस्य सुवर्णस्य प्राकार आवरणं यस्यास्ताम् । हिरण्यमयः प्राकार आकृतिर्यस्यास्तामिति वा । आर्द्रां क्लिन्नां क्षीरोदधेरुत्पन्नत्वात् । करुणार्द्रां वा । सन्नशब्दोऽत्राभूर्ध्व-स्थत्वादि(?) । आर्द्रया सह इत्यादौ तथा दर्शनात् । अन्यद्यदाहुलकम् । ज्वलन्तीं प्रकाशमानाम् । तृप्तां प्रीतामपि च तर्पयन्तीं भक्तान् मनोरथैरिति शेषः । पद्मेस्थितां कमले निषण्णामासीनाम् । पद्मवर्णां कमलवर्णाम् । तामिति प्रसिद्धां श्रियमिहोप ह्वये समीपे प्रत्याह्वये ॥ ४ ॥

अत्र प्र पद्य इत्यस्यानन्तरमेकेन सन्धिप्रक्षेपः प्रामादिकः । चन्द्रां चन्द्रवत् प्रकाशमानां प्रभासाम् । प्रकृष्टा भाः कान्तिर्यस्यास्ताम् । आपं पैषेव्याप(?) । यशसा कीर्त्या ज्वलन्तीं प्रकाशमानाम् । लोके सर्वलोके देवजुष्टां देवैरिन्द्रादिभिर्जुष्टां सेविताम् । प्रीतां वा । उदारां महत्त्वां प्रगल्भां वा । पद्मिनीं पद्मलतारूपाम् । पद्माकारां वा । ईमिति निपातोऽनर्थकः । 'मिताक्षरेष्वनर्थकाः कमीमिद्विति' ( निरु. १. ९ ) इति यास्क-वचनात् । ईकारवाच्यां वा । तां श्रियं लोक इह लोके शरणं रक्षित्रीं प्र पद्ये प्रपन्नोऽस्मि । अहमिति शेषः । अतो हे श्रीः मे ममालक्ष्मीरश्रीर्नश्यतां नाशं प्राप्नोतु । एतादृशीं त्वां वृणोमि । शरणत्वेन स्वीकुर्वे ॥ ५ ॥

वृक्षोऽथेत्यन्तःपादमपि पूर्वरूपं बाहुलकात् । आदित्यवर्णे । आदित्यस्य सूर्यस्य वर्ण इव वर्णो यस्यास्तस्याः संबोधनम् । हे श्रीः तव तपसः नियमादेतावनस्पतिः । 'अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः' ( मनु. १. ४७ ) इति मानवस्मरणात् । बिल्वः बिल्वनामको वृक्षो द्रुमोऽधिजातः प्रादुर्भूतः । त्वत्करादिति शेषः । 'वामाकन्यायाः वामी जाता बिल्वो लक्ष्म्याः करेऽभवत्' इति वामनपुराणात् । अथानन्तरं तस्य बिल्वस्य फलानि पक्वशलाटुकानि तपसा त्वत्तपसा । त्वदनुग्रहेणेत्यर्थः । अन्तरा अन्तरि-न्द्रियसंबन्धिनी माया अज्ञानं तत्कार्याणि च याश्च बाह्या बहिरिन्द्रियसंबन्धिन्यो यास्ता अलक्ष्मीरश्रियो नुदन्तु अपनुदन्तु । निवारयन्त्वित्यर्थः ॥ ६ ॥

हे श्रीः देवसखः देवो महादेवस्तस्य सखा कुबेरः । कीर्तिः कीर्त्यभिमानिनी दक्षकन्या देवता । कुबेरकोशाध्यक्षा वा । सा च मणिना चिन्तामणिना मणिभद्रेण कोशाध्यक्षेण वा सह सार्धमुपैतु उप-गच्छतु । अहमस्मिन् राष्ट्रे जनपदे प्रादुर्भूतोऽस्मि । उत्पन्नोऽस्मि । स आगत्य कीर्तिं यशः कोशं वा ऋद्धिं सर्ववस्तुसमृद्धिं मे मह्यं ददातु प्रयच्छतु ॥ ७ ॥

## ॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्। निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥१॥
प्राज्ञः श्रीसायणाचार्यो व्याख्याय परमेष्ठके। स्फुटं द्वितीयमध्यायं तृतीयं व्याकरोत्यथ॥२॥

तत्र देवानामिति नवर्चमनुवाकापेक्षया चतुर्थं सूक्तमानुष्टुभं देवदेवत्यं लौक्यो बृहस्पतिराङ्गिरसएव वा बृहस्पतिर्ऋषिः अथवा दक्षस्य दुहितादितिर्ऋषिका। तथाचानुक्रान्तं—देवानांनव लौक्यो वा बृहस्पतिर्वाङ्गिरसो दाक्षायण्यदितिर्वा दैवमानुष्टुभमिति। गतः सूक्तविनियोगः।

तत्र प्रथमा—

ॐम् देवानां नु वयं जाना प्र वोचाम विपन्यया।
उक्थेषु शस्यमानेषु यः पश्यादुत्तरे युगे॥ १ ॥

देवानाम्। नु। वयम्। जाना। प्र। वोचाम। विपन्यया।
उक्थेषु। शस्यमानेषु। यः। पश्यात्। उत्ऽतरे। युगे॥ १ ॥

अदितिर्दाक्षायण्यनेन सूक्तेन स्वयं यथादित्यानजनयत् तद्ब्रवीति बृहस्पतिर्ऋषिपक्षे स ऋषिः अदितेः सकाशात् आदित्योत्पत्तिप्रकारमाह वयं देवानामादित्यानां जाना जन्मानि प्र वोचाम प्रकर्षेण ब्रवाम विपन्यया विस्पष्टया वाचा वयमिति योजयेति चोभयत्र पूजार्थं बहुवचनं। अथैकवचनाह यो देवानां गणः पूर्वे युगे उत्पन्नोऽपि उक्थेषु शस्यमानेषु यागे शस्त्रेषूच्यमानेषु उत्तरे युगे वर्तमानं स्तुवन्तं स्तोतारं पश्यात् पश्यति अनेकेष्वपि युगेषु गतेषु कर्मसु स्तूयमानो वर्ततइत्यर्थः॥ १ ॥

१. हम देवों या आदित्यों के जन्म को स्पष्ट रूप से कहते हैं। आगे आनेवाले युग में देव-संघ, यज्ञानुष्ठान होने पर, स्तोता को देखेगा।

अथ द्वितीया—

ब्रह्मणस्पतिरेता सं कर्मार इवाधमत्। देवानां पूर्व्ये युगेऽसतः सदजायत॥२॥

ब्रह्मणः। पतिः। एता। सम्। कर्मारःऽइव। अधमत्।
देवानाम्। पूर्व्ये। युगे। असतः। सत्। अजायत॥ २ ॥

ब्रह्मणोऽस्य पतिरदितिः एतान्येतानि देवानां जन्मानि कर्मारइव तथा शक्त्या आर्मि उपधमति सन्धुक्षणार्थं एवं समधमत उदपादयदित्यर्थः। देवानां पूर्व्ये युगे आदिसृष्टावित्यर्थः देवानुपादानकारणादसतोनामरूपवर्जितत्वेनासत्समानाद्ब्रह्मणः सकाशात्सत् नामरूपविशिष्टं देवादिकं अजायत प्रादुरभूत्। असद्वाइदमग्रआसीत्ततोवैसदजायतेतिहि श्रुतिः। न सदात्मकस्य प्रपंचस्यासत्कारणत्वं युक्तमिति वाच्यं छन्दोगैः कथमसतः सज्जायेतेत्यसत्कारणत्वमाक्षिप्य सदेवसोम्येदमग्रआसीदित्यवधारितत्वात्। तर्हि असत्कारणप्रतिपादकवाक्यानां का गतिरिति चेत् तेषामव्याकृतत्वाभिप्रायत्वात् तद्धेदंतर्ह्यव्याकृतमासीदित्यादिश्रुतेः। यद्येवं तर्ह्यदितेः सकाशात्कथं देवाद्युत्पत्तिः वायोरग्निरित्यादिवत् अधिष्ठानसकाशादुत्पत्तेः यद्वा देवानां कारणभूतं सदसतोब्रह्मणः सकाशादुत्पन्नमिति योजनादुक्तन्यायोस्मिन्पक्षेपि समानएव॥ २॥

२. आदि सृष्टि में ब्रह्मणस्पति (वा अदिति) ने कर्मकार के समान देवों को उत्पन्न किया। असत् वा अविद्यमान (नाम-रूप-विहीन) से सत् (नाम-रूप आदि) उत्पन्न हुआ।

अथ तृतीया—

देवानांयुगेप्रथमेसतःसदजायत।
तदाशाअन्वजायन्ततदुत्तानपदस्परि॥ ३॥

देवानाम्। युगे। प्रथमे। असतः। सत्। अजायत। तत्।
आशाः। अनु। अजायन्त। तत्। उत्तानऽपदः। परि॥ ३॥

पूर्वार्धमुक्तं तदनुआशादिशोजायन्त तत्परि तदनन्तरमित्यर्थः उत्तानपदः उत्तानमूर्ध्वतानं पदमस्ये त्युत्तानपदोवृक्षाः ते अजायन्त प्रादुरभवन्॥ ३॥

३. देवोत्पत्ति के पूर्व समय में असत् से सत् उत्पन्न हुआ। इसके अनन्तर दिशायें उत्पन्न हुईं और दिशाओं के अनन्तर वृक्ष उत्पन्न हुए।

अथ चतुर्थी—

भूर्जज्ञउत्तानपदोभुवआशाअजायन्त।
अदितेर्दक्षोअजायतदक्षाद्वदितिःपरि॥ ४॥

भूः। जज्ञे। उत्तानऽपदः। भुवः। आशाः। अजायन्त। अदितेः।
दक्षः। अजायत। दक्षात्। ऊँ इति। अदितिः। परि॥ ४॥

भूरुत्तानपदो वृक्षात् अग्रे यथा भुवः सकाशादाशा अजायन्त तथा अदितेर्दक्षः अजायत उत्पन्नः दक्षादु दक्षादपि अदितिः पर्यजायत ननूत्पन्नं कार्यं स्वस्यैव कारणमपि भवतीति विप्रतिषिद्धमिति चोद्यं यास्काचार्यः इदमेव वाक्यमुदाहृत्य विरोधमाशंक्य परिहरति यथाहि—अदितेर्दक्षोऽजायत दक्षाद्वा अदितिः परीति च तत्कथमुपपद्येत समानजन्मानौ स्यातामित्यपि वा देवधर्मेणेतरेतरजन्मानौ स्यातामितरेतरप्रकृती इति[1] ॥ ४ ॥

४. वृक्षों से पृथ्वी उत्पन्न हुई और पृथ्वी से दिशायें उत्पन्न हुईं । अदिति से दक्ष उत्पन्न हुए और दक्ष से अदिति ।

अदितिदेवताके पशौ अदितिर्ह्यजनिष्टेत्येषा हविषोऽनुवाक्या । सूत्रितं च—अदितिर्ह्यजनिष्ट सुत्रामाणं पृथिवीं द्यामनेहसमिति ।

सैषा पंचमी—

अदि॑ति॒र्ह्यज॑निष्ट॒ दक्ष॒ या दु॑हि॒ता तव॑ ।
तां दे॒वा अन्व॑जायन्त भ॒द्रा अ॒मृत॑बन्धवः ॥ ५ ॥ १ ॥

अदि॑तिः । हि । अज॑निष्ट । दक्ष॑ । या । दु॒हि॒ता । तव॑ । ताम् ।
दे॒वाः । अनु॑ । अ॒जा॒य॒न्त॒ । भ॒द्राः । अ॒मृत॑ऽबन्धवः ॥ ५ ॥ १ ॥

हे दक्ष या तव दुहिताभूत् सा अदितिरजनिष्ट हि पुत्रानादित्यान् तदेवाह यदिमा अन्वजायन्त भद्राः स्तुत्या भजनीया अमृतबन्धवः अमरणबन्धनाः ॥ ५ ॥

५. दक्ष, तुम्हारी पुत्री अदिति ने देवों को जन्म दिया । देवता स्तुत्य और अमर हैं ।

॥ इत्यष्टमस्य तृतीये प्रथमो वर्गः ॥ १ ॥

अथ षष्ठी—

यद्दे॑वा अ॒दः स॑लि॒ले सुसं॑रब्धा॒ अति॑ष्ठत ।
अत्रा॑ वो॒ नृत्य॑तामिव ती॒व्रो रे॒णुरपा॑यत ॥ ६ ॥

यत् । दे॒वाः । अ॒दः । स॒लि॒ले । सुऽसं॑रब्धाः । अति॑ष्ठत । अत्र॑ ।
वः॒ । नृत्य॑ताम्ऽइव । ती॒व्रः । रे॒णुः । अप॑ । आय॑त ॥ ६ ॥

---

1 नि० ११, २३ ।

अनयोत्तरेण चादित्यः स्तूयते यद्यदा हे देवाः अदःअमुष्मिन्सलिले यूयं सुसंरब्धाः सुष्ठु संरब्धाः परस्परंसंलग्नाः अतिष्ठत। आपोवाइदंसर्वमग्रआसन्नित्यादाविति श्रुतिस्मृती। अत्रास्मिन् सलिलेनृत्यतामिव वोयुष्माकं संबन्धी तीव्रोदुःसहोरेणुर्धूलिरेकः अपायत अपागच्छत दिवं यदि गच्छति सूर्योनिपात्य परामार्तण्डमास्यदिति वक्ष्यति ॥ ६ ॥

६. देवता लोग इस सलिल में रहकर महोत्साह प्रकट करने लगे। वे मानो नाचने लगे। इससे दुःसह धूलि उठी।

यद्देवायतयोयथाभुवनान्यपिन्वत ।
अत्रासमुद्रआगूळ्हमासूर्यमजभर्तन ॥ ७ ॥

यत् । देवाः । यतयः । यथा । भुवनानि । अपिन्वत । अत्र ।
समुद्रे । आ । गूळ्हम् । आ । सूर्यम् । अजभर्तन ॥ ७ ॥

यद्यदा हे देवायतयोयथा वृष्ट्या नियमयन्तीति वा अवर्षणेन यातयन्तीति वा यतयोमेघाः ते यथा उदकैर्भुवनानि लोकं पूरयन्ति तद्वत् स्वतेजोभिः अपिन्वत पूरितवन्तः अत्र समुद्रेषु आगूळ्हं निगूढं सूर्यं भावरूपाय आजभर्तन आहृतवन्तः ॥ ७ ॥

७. मेघों के समान देवों ने सारे संसार को ढक लिया। आकाश में सूर्य निगूढ थे। देवों ने उन्हें प्रकाशित किया।

अष्टौपुत्रासोअदितेर्येजातास्तन्व१स्परि ।
देवाँउपप्रैत्सप्तभिःपरामार्ताण्डमास्यत् ॥ ८ ॥

अष्टौ । पुत्रासः । अदितेः । ये । जाताः । तन्वः । परि । देवान् ।
उप । प्र । ऐत् । सप्तऽभिः । परा । मार्ताण्डम् । आस्यत् ॥ ८ ॥

अष्टौ पुत्रासः पुत्राः मित्रादयः अदितेर्भवन्ति ये अदितेस्तन्वः परि शरीरात् जातास्तस्याः अदितेरष्टौ पुत्रा अध्वर्युब्राह्मणे परिगणिताः। तथाहि— तानुक्रमिष्यामो मित्रश्च वरुणश्च धाता चार्यमा चांशश्च भगश्च विवस्वानादित्यश्चेति[1]। तथाहि तत्रैव प्रदेशान्तरे अदितिं प्रस्तुत्याम्नातं—अस्या उच्छेषणमददुस्तत्प्राश्नात् सा रेतोऽधत्त तस्यै चत्वार आदित्या अजायन्त सा द्वितीयमपचदित्यादिना[2] अष्टानामादित्यानामुत्पत्तिर्वर्णिता। सादितिः सप्तभिः पुत्रैर्देवानुपप्रैत् जगाम अष्टमं पुत्रं मार्ताण्डं सूर्यं परास्यत् उपरि आक्षिपदित्यर्थः ॥ ८ ॥

८. अदिति के आठ पुत्र (मित्र, वरुण, धाता, अर्यमा, अंश, भग, विवस्वान और आदित्य) हुए, जिनमें से सात को लेकर वह देवलोक में गईं और आठवें सूर्य को आकाश में छोड़ दिया।

---

१ तै० आरण्यके। २ तै० सं० ६.५.६।

अथ नवमी—

सप्तभिः पुत्रैरदितिरुप प्रैत्पूर्व्यं युगम्।
प्रजायै मृत्यवे त्वत्पुनर्मार्ताण्डमाभरत् ॥ ९ ॥ २ ॥

सप्तऽभिः। पुत्रैः। अदितिः। उप। प्र। ऐत्। पूर्व्यम्। युगम्।
प्रऽजायै। मृत्यवे। त्वत्। पुनः। मार्ताण्डम्। आ।
अभरत् ॥ ९ ॥ २ ॥

पूर्वमृचोक्तस्यार्थः पुनरुच्यते सप्तभिर्मार्ताण्डव्यतिरिक्तैर्मित्रादिभिरदितिः पूर्व्यं पुराणमुत्तमं युगं उपप्रैत् उपगता अथ प्रजायै प्राणिनामुत्पत्तये मृत्यवे तेषां मरणाय मार्ताण्डं मृतादण्डाज्जातत्वादेवं मार्ताण्डनामानं सूर्यं पुनराभरदाहरत् द्युलोके अधारयत् प्राणिमरणजननादीनां सूर्योदयास्तमयायत्तता स्फुटा। तस्यै न्यूनमाण्डमथापयेत्यादिब्राह्मणं ॥ ९ ॥

९. उत्तम युग में सात पुत्रों को लेकर अदिति चली गई और जन्म तथा मृत्यु के लिए सूर्य को आकाश में रख दिया।

॥ इत्यष्टमस्य तृतीये द्वितीयो वर्गः ॥ २ ॥

जनिष्ठा इत्येकादशर्चं पंचमं सूक्तं शक्तिपुत्रस्य गौरिवीतेरार्षं मारुत्वतं त्रैष्टुभं। तथा चानुक्रान्तं—जनिष्ठा एकादश गौरिवीतिरिति। अग्निष्टोमे मरुत्वतीये शस्त्रे इदं सूक्तं निविद्धानं। सूत्रितं च—जनिष्ठा उग्र इत्येकभूयसीः शस्त्वा मरुत्वतीयां निविदं दध्यादिति। सौमिकचातुर्मास्येषु वैश्वदेवेऽप्येतन्मरुत्वतीये निविद्धानं। सूत्रितं च—जनिष्ठा उग्र ओजस इति माध्यन्दिन इति। महाव्रतेऽपि निष्केवल्य एतत्सूक्तं। तथैव पंचमारण्यके सूत्रितं—जनिष्ठा उग्रः सहसे तुरायेति निविद्धानमिति।

तत्र प्रथमा—

जनिष्ठा उग्रः सहसे तुराय मन्द्र ओजिष्ठो बहुलाभिमानः।
अवर्धन्निन्द्रं मरुतश्चिदत्र माता यद्वीरं दधनद्धनिष्ठा ॥ १ ॥

जनिष्ठाः। उग्रः। सहसे। तुराय। मन्द्रः। ओजिष्ठः।
बहुलऽअभिमानः। अवर्धन्। इन्द्रम्। मरुतः। चित्।
अत्र। माता। यत्। वीरम्। दधनत्। धनिष्ठा ॥ १ ॥

---

१ तै० सं० ६.५.६।

हे इन्द्र सहसे बलाय तुराय शत्रूणां हिंसनाय त्वं उग्र उद्गूर्णबलोऽजनिष्ठाः अजायथाः। कीदृशस्त्वं मन्द्रः स्तुत्यः ओजिष्ठः ओजः शारीरबलं अतिशयेन तद्वान् बहुलाभिमानः भूरि-लाभिमानी ईदृशं महानुभावं इन्द्रं अत्र वृत्रवधे मरुतश्चित् मरुतोऽप्यवर्धन् स्तुत्या साहाय्येन वा वर्धितवन्तः यद्यदा धनिष्ठाधारयित्री इन्द्रमाता वीरं दधनत् अधारयत्॥ १॥

१. इन्द्र, जिस समय गर्भ-धारयित्री इन्द्र-माता ने इन्द्र को जन्म दिया, उस समय मरुतों ने महानुभाव इन्द्र को यह कहकर प्रशंसित किया कि, तुम बल और शत्रु-विनाश के लिए जन्मे हो; तुम वीर, स्तुत्य, ओजस्वी और अतीव अभिमानी हो।

द्रुहोनिषत्तापृशनीचिदेवैःपुरूशंसेनवावृधुष्टइन्द्रम्।
अभीवृतेवतामहापदेनध्वान्तात्प्रपित्वादुदरन्तगर्भाः॥ २॥

द्रुहः। निऽसत्ता। पृशनी। चित्। एवैः। पुरु। शंसेन। ववृधुः।
ते। इन्द्रम्। अभिवृताऽइव। ता। महाऽपदेन।
ध्वान्तात्। प्रऽपित्वात्। उत्। अरन्त। गर्भाः॥ २॥

द्रुहो द्रोग्धुरिन्द्रस्य पृशनी चित् सेनापि निषत्ता तत्सन्निधौ निषण्णाभूत् एवैर्गन्तृभिर्मरुद्भिः सहितमिन्द्रं निषण्णेति संबन्धः तेपि मरुतः पुरुप्रभूतेन शंसेन स्तोत्रेण इन्द्रं ववृधुरवर्धयन् वृत्रं जिघांसन्तं अथ महापदेन महता व्रजेन अभीवृतेव परिवृतानीव गवादीनि यानि यथा आवरणापगमे निर्गच्छन्ति तद्वत् तान्युदकानि ध्वान्तादन्धकाररूपात् प्रपित्वात् आसन्नात् मायाद्गर्भाः गर्भभूतान्युदकानि उदरन्त उदगच्छन्॥ २॥

२. गमनशील मरुतों के साथ द्रोहक इन्द्र के पास सेना बैठी हुई है। मरुतों ने प्रचुर स्तोत्र के साथ इन्द्र को वर्द्धित किया। जैसे गायें विशाल गोष्ठ के बीच आच्छादित रहती हैं और आच्छादन के दूर होते ही बाहर निकलती हैं, वैसे गर्भ अर्थात् वृष्टि-जल व्यापक अन्धकार के बीच से बाहर निकला।

ऋष्वातेपादाप्रयज्जिगास्यवर्धन्वाजाउतयेचिदत्र।
त्वमिन्द्रसालावृकान्त्सहस्रमासंदधिषेअश्विनाववृत्याः॥ ३॥

ऋष्वा। ते। पादा। प्र। यत्। जिगासि। अवर्धन्। वाजाः।
उत। ये। चित्। अत्र। त्वम्। इन्द्र। सालावृकान्। सहस्रम्।
आसन्। दधिषे। अश्विना। आ। ववृत्याः॥ ३॥

हे इन्द्र ते पादौ ऋभ्वा महान्तौ तादृशस्त्वं यद्यदा जिगासि गच्छसि तदानीं वाजाश्वग-
ः अवर्धन् अवर्धयन् । उतापि च येचित् ये केचन देवाः सन्ति ते अपि अवर्धयन् हे इन्द्र
त्वं सहस्रं सालावृकान् आसन् आस्ये दधिषे धारयसि तदानीमश्विना अश्विनावपि
आववृत्याः आवर्तयेः ॥ ३ ॥

३. इन्द्र, तुम्हारे चरण महान् हैं। जिस समय तुम जाते हो, उस समय ऋभु लोग वर्द्धित होते हैं। जो देवता हैं, वो सब वर्द्धित होते हैं। इन्द्र तुम एक सहस्र वृक को मुख में धारण करते हो। अश्विद्वय को फिरा सकते हो।

समनातूर्णिरुपयासियज्ञमानासत्यासख्यायवक्षि ।
वसाव्यामिन्द्रधारयःसहस्राश्विनाशूरददतुर्मघानि ॥ ४ ॥

समना । तूर्णिः । उप । यासि । यज्ञम् । आ । नासत्या ।
सख्याय । वक्षि । वसाव्याम् । इन्द्र । धारयः । सहस्रा ।
अश्विना । शूर । ददतुः । मघानि ॥ ४ ॥

हे इन्द्र समना संग्रामे तूर्णिः त्वरमाणोऽपि यज्ञमुपयासि उपगच्छसि तदानीं नासत्या अश्विनौ सख्याय वक्षि वहसि हे इन्द्र वसाव्यां वसुसमूहं सहस्रा सहस्रां बहुसंख्यां धारयः धारयसि अस्माकमर्थाय हे शूर अश्विना अश्विनावपि तवानुचरौ मघानि धनानि ददतुः अस्मभ्यं प्रयच्छतः ॥ ४ ॥

४. इन्द्र युद्ध की शीघ्रता होने पर भी तुम यज्ञ में आते हो। उस समय तुम अश्विद्वय के साथ मैत्री करते हो। हमारे लिए तुम सहस्र धनों को धारण करते हो। अश्विद्वय भी हमें धन देते हैं।

अथ पंचमी—

मन्दमानऋतादधिप्रजायैसखिभिरिन्द्रइषिरेभिरर्थम् ।
आभिर्हिमायाउपदस्युमागान्मिहःप्रतम्राअवपत्तमांसि ॥५॥३॥

मन्दमानः । ऋतात् । अधि । प्रऽजायै । सखिऽभिः । इन्द्रः ।
इषिरेभिः । अर्थम् । आ । आभिः । हि । मायाः । उप । दस्युम् ।
आ । अगात् । मिहः । प्र । तम्राः । अवपत् । तमांसि ॥ ५ ॥ ३ ॥

इन्द्रः अस्मात् यज्ञात् अधि हर्षितैः गमनशीलैः सखिभिर्मरुद्भिः सह मन्दमानो यजमानाय धनं प्रयच्छति स इन्द्रः आभिः प्रजाभिः निमित्तभूताभिः मायाः दस्युभिर्निर्मिता विनाशयितुं दस्युमुपागात् स इन्द्रः वर्षाः अवर्षणेन व्यापयित्रीर्महोवृष्टीः प्रावपत् तमांसि च प्रावपत् व्यनाशयदित्यर्थः ॥ ५ ॥

५. यज्ञ में आह्लादित होकर इन्द्र गतिशील मरुतों के साथ यजमान को धन देते हैं। इन्द्र ने यजमान के लिए दस्यु की माया को विनष्ट किया उन्होंने वृष्टि बरसाई और अन्धकार को विनष्ट किया।

॥ इत्यष्टमस्य तृतीये तृतीयो वर्गः ॥ ३ ॥

अथ षष्ठी—

सनामानाचिद्ध्वसयोन्यस्माअवाहन्निन्द्रउषसोयथानः ।
ऋष्वैरगच्छःसखिभिर्निकामैःसाकंप्रतिष्ठाहृद्याजघन्थ ॥ ६ ॥

सऽनामाना । चित् । ध्वसयः । नि । अस्मै । अव । अहन् । इन्द्रः । उषसः । यथा । अनः । ऋष्वैः । अगच्छः । सखिऽभिः । निऽकामैः । साकम् । प्रतिऽस्था । हृद्या । जघन्थ ॥ ६ ॥

अयमिन्द्रो वृत्रं हन्तुं सनामानाचित् समाननामानौ निध्वसयः न्यगमयत् अथेन्द्रस्त्वं वृत्रमवाहन् अवहतवान् यथोषसोऽनः शकटमवनाशितवान् तद्वत् । अथ प्रत्यक्षेणोच्यते हे इन्द्र त्वं ऋष्वैर्दीप्तैर्महद्भिर्वा निकामैः नितरां वृत्रवधं कामयमानैः सखिभिर्मरुद्भिः साकं वृत्रं हन्तुं अगच्छः आगत्य च प्रतिष्ठा प्रतिष्ठानानि शरीराणि हृद्या हृद्यानि रमणीयानि जघन्थ हतवानसि हन्तेस्थलि वधादेशोऽत्वतहीह्मप्रतिषेधः ॥ ६ ॥

६. इन्द्र सब शत्रुओं को समान रूप से नष्ट करते हैं। जैसे इन्होंने उषा के शकट को नष्ट किया, वैसे ही शत्रु को विध्वस्त किया। दीप्त, महान्, वृत्र-वधाभिलाषी और मित्र मरुतों के इन्द्र वृत्र-वध के लिए गये। इन्द्र, शत्रुओं के सुन्दर-सुन्दर शरीरों को तुमने विध्वस्त किया।

त्वंजघन्थनमुचिंमखस्युंदासंकृण्वानऋषयेविमायम् ।
त्वंचकर्थमनवेस्योनान्पथोदेवत्राञ्जसेवयानान् ॥ ७ ॥

त्वम् । जघन्थ । नमुचिम् । मखस्युम् । दासम् । कृण्वानः । ऋषये । विऽमायम् । त्वम् । चकर्थ । मनवे । स्योनान् । पथः । देवऽत्रा । अञ्जसाऽइव । यानान् ॥ ७ ॥

हे इन्द्र त्वं नमुचिं एतत्संज्ञकमसुरं जघन्थ हतवानसि कीदृशं मखस्युं कर्मणेर्ष्यं विधातुमिच्छन्तं यद्वा त्वदीयं धनमिच्छन्तं किं कुर्वन् दासं उपक्षपयितारं नमुचिमसुरं ऋषये मनवे विमायं विगतमायं कृण्वानः कुर्वन् । किंच त्वं देवत्रा देवेषु मध्ये मनवे ऋषये सामान्येन मनुष्याय वा पथो मार्गान् स्योनान् चकर्थ कृतवानसि अथवा देवत्रा देवेषु मध्ये गन्तव्यान् मार्गानिति वा संबन्धः स्योनान् चकर्थेत्युक्तमेव विवृणोति अञ्जसेयानानिति इवेत्येवकारार्थे अञ्जसैव अकुटिलेनैव यानान् गन्तॄन् मार्गान् अकरोः अथवा मार्गेणाकुटिलेनैव गन्तॄन् चकर्थ यथा लोके शीघ्रं गतो मार्ग इति मार्गस्य गन्तृत्वोपचारः तद्वदत्रापि यातत्वं द्रष्टव्यं ॥ ७ ॥

७. इन्द्र, तुम्हारा धन चाहनेवाले नमुचि को तुमने मार दिया । विघातक नमुचि नामक असुर को, मनु (ऋषि) के पास, तुमने माया-शून्य कर दिया । देवों के बीच मनु (सामान्यतया मनुष्य-मात्र) के लिए तुमने पथ प्रस्तुत कर दिये हैं । वे पथ देव-लोक में जाने के लिए सरल हैं ।

त्वमेतानिपप्रिषेविनामेशानइन्द्रदधिषेगभस्तौ ।
अनुत्वादेवाःशवसामदन्त्युपरिबुध्नान्वनिनश्चकर्थ ॥ ८ ॥

त्वम् । एतानि । पप्रिषे । वि । नाम । ईशानः । इन्द्र ।
दधिषे । गभस्तौ । अनु । त्वा । देवाः । शवसा ।
मदन्ति । उपरिऽबुध्नान् । वनिनः । चकर्थ ॥ ८ ॥

हे इन्द्र त्वं एतानि नाम नामानि नामकान्युदकानि विपप्रिषे विपूरयसि हे इन्द्र ईशानः सर्वस्येश्वरस्त्वं गभस्तौ हस्ते दधिषे धारयसि वज्रं धनं वा । किंच त्वा त्वां शवसा बलेनोपेतं देवाः सर्वे अनुमदन्ति अनुष्टुवन्ति सर्वे वनिनः उदकपयोमेघान् रश्मीन्वा उपरिबुध्नान् उपरिमूलान् अधोमुखान् चकर्थ कृतवानसि ॥ ८ ॥

८. इन्द्र, तुम इसे (संसार को) जल या तेज से परिपूर्ण करते हो । इन्द्र, तुम सबके स्वामी हो । तुम हाथ में वज्र धारण करते हो । सारे देवता बलधारी तुम्हारी स्तुति करते हैं । तुमने मेघों का मुँह नीचे कर दिया है ।

अथ नवमी—

चक्रंयदस्याप्स्वानिषत्तमुतोतदस्मैमध्विच्चच्छद्यात् ।
पृथिव्यामतिषितंयदूधःपयोगोष्वदधाओषधीषु ॥ ९ ॥

चुक्रम् । यत् । अस्य । अप्ऽसु । आ । निऽसत्तम् । उतो इति । तत् ।
अस्मै । मधुं । इत् । चुच्छद्यात् । पृथिव्याम् । अतिंऽसितम् ।
यत् । ऊधः । पयः । गोषु । अदंधाः । ओषधीषु ॥ ९ ॥

परामासित्वेहननार्थं खवोचित् अपिता अस्माइन्द्राय मधितव् उदकमपि चच्छद्यात् पृथिव्यामतिसितंविमुक्तंयदवमेस्तियउदकमस्तिननापोगोष्ठादिषुवादधाइति ॥ ९ ॥

९. जल के बीच इन्द्र का चक्र स्थापित है। यह इन्द्र के लिए मधु का छेदन कर दें। इन्द्र, तुमने तृण-लता आदि में जो दूध वा जल रक्खा है, वह गायों के स्तन से अतीव शुभ्र मूर्ति में निकलता है।

अश्वादियायेतियद्वदन्त्योजसोजातमुतमन्यएनम् ।
मन्योरियायहर्म्येषुतस्थौयतःप्रजज्ञइन्द्रोअस्यवेद ॥ १० ॥

अश्वात् । इयाय । इति । यत् । वदन्ति । ओजसः । जातम् ।
उत । मन्ये । एनम् । मन्योः । इयाय । हर्म्येषु । तस्थौ ।
यतः । प्रऽजज्ञे । इन्द्रः । अस्य । वेद ॥ १० ॥

इन्द्रसामर्थ्यं दृष्ट्वा केचिदेनमश्वादादित्यादियाय उदितवानिति वदन्ति यद्यपि तथापि अहमेनमोजसोबलाज्जातं मन्ये जानामि अस्य तेजस्वित्वं दृष्ट्वा सूर्यादुत्पन्नइति तेषां मतिः अहं लोकप्रदार्थोजातइति मन्ये यतोयं वृत्रादीन् हतवान् इति अथवायं मन्योः क्रोधादियाय उदितवान् अतोहर्म्येषु शत्रुसंबन्धिषु गृहेषु हर्म्येष्वेव वा तस्थौ तिष्ठति यतोयं प्रजज्ञे उत्पन्नइतीन्द्रएवास्य स्वस्येत्यर्थः सामर्थ्यं वेद जानाति नत्वन्योज्ञातुमीष्टे ॥ १० ॥

१०. कुछ लोग कहते हैं कि, इन्द्र की उत्पत्ति अश्व वा आदित्य से हुई है। परन्तु मैं जानता हूँ कि, इन्द्र की उत्पत्ति बल से हुई है। इन्द्र क्रोध से उत्पन्न होकर शत्रुओं की अट्टालिकाओं के ऊपर चढ़ गये। इन्द्र कहाँ से उत्पन्न हुए हैं, यह बात वही जानते हैं।

वयःसुपर्णाउपसेदुरिन्द्रंप्रियमेधाऋषयोनाधमानाः ।
अपध्वान्तमूर्णुहिपूर्धिचक्षुर्मुमुग्ध्यस्मान्निधयेवबद्धान् ॥ ११ ॥ ४ ॥

वयः । सुऽपर्णाः । उप । सेदुः । इन्द्रम् । प्रियऽमेधाः । ऋषयः ।
नाधमानाः । अप । ध्वान्तम् । ऊर्णुहि । पूर्धि । चक्षुः ।
मुमुग्धि । अस्मान् । निधयाऽइव । बद्धान् ॥ ११ ॥ ४ ॥

वयोगन्तारः सुपर्णाः सुपतना आदित्यरश्मय इन्द्रमुपसेदुरुपसन्ना अभवन्। कीदृशाः प्रियमेधाः प्रिययज्ञाः ऋषयो द्रष्टारः नाधमानाः यज्ञं याचमानाः याचनप्रकार उच्यते हे इन्द्र ध्वान्तमन्धकारमपोर्णुहि परिहर पूर्धि पूरय च चक्षुस्तेजः मुमुग्धि मोचय चास्मान् निधयेव बद्धान् निधा पाश्या भवति पाश्या पाशसमूहः पाशसमूहेन बद्धान् यथा मुंचन्ति तद्वत् अत्र वयोवैवंसुपर्णमित्यादिकं निरुक्तं द्रष्टव्यं ॥ ११ ॥

११. गमनशील और भली भाँति गिरनेवाली आदित्य किरणें इन्द्र के पास गईं—यज्ञाभिलाषी ऋषि ही पक्षी हैं, जिनकी प्रार्थना इन्द्र से थी। इन्द्र, अन्धकार को दूर करो, नेत्र को आलोक से भर दो। हम पाश से बद्ध हैं, हमें उससे छुड़ाओ।

॥ इत्यष्टमस्य तृतीये चतुर्थो वर्गः ॥ ४ ॥

वसूनामिति षळृचं षष्ठं सूक्तं ऋष्याद्याः पूर्ववत्। वसूनां षळित्यनुक्रान्तं। गतो विनियोगः।

वसूनांवाचर्कृषइयक्षन्धियावायज्ञैर्वारोदस्योः।
अर्वन्तोवायेरयिमन्तःसातौवनुंवायेसुश्रुणंसुश्रुतोधुः ॥ १ ॥

वसूनाम्। वा। चर्कृषे। इयक्षन्। धिया। वा। यज्ञैः।
वा। रोदस्योः। अर्वन्तः। वा। ये। रयिऽमन्तः। सातौ।
वनुम्। वा। ये। सुऽश्रुणम्। सुऽश्रुतः। धुरितिधुः ॥ १ ॥

इयक्षन् धनानि दातुमिच्छन् इन्द्रो वसूनां धनानां लाभाय वा चर्कृषे आकृष्यते धिया या धीः कर्म धार्यमाणत्वात् यज्ञादिकर्मणा वा निमित्तेनाकृष्यते यज्ञैर्वा निमित्तभूतैः कृष्यते कैरिति उच्यते रोदस्योर्द्यावापृथिव्योः संबन्धिभिर्देवैः मनुष्यैश्चेत्यर्थः सातौ संग्रामे धनलब्धे सति ये अर्वन्तो गच्छन्तो रयिमन्तो भवन्ति तैरप्याकृष्यते ये वनुं वा हिंसां वा सुश्रुणं सुप्रसिद्धां अत्यन्तदुर्जयविषयां सुश्रुतः सुश्रवसः प्रसिद्धाः कुर्वन्ति तैरपीन्द्र आकृष्यते इति ॥ १ ॥

१. धनवान के लिए इन्द्र यज्ञ के द्वारा आकृष्ट किये जाते हैं। वे देवों और मनुष्यों के द्वारा आकृष्ट होते हैं। युद्ध में धन का उपार्जन करनेवाले घोड़े उन्हें आकृष्ट कर रहे हैं। जो यशस्वी व्यक्ति शत्रु-संहार करते हैं; वे इन्द्र को आकृष्ट कर रहे हैं।

हवंएषामसुरोनक्षतद्यांश्रवस्यतामनसानिंसतक्षाम्।
चक्षाणायत्रसुवितायदेवाद्यौर्नवारेभिःकृणवन्तस्वैः ॥ २ ॥

---

१ नि० ४।२।

इ॒र्वः । ए॒षा॒म् । असु॑रः । न॒क्ष॒त॒ । द्याम् । श्र॒व॒स्यता॑ । मन॑सा ।
निं॒स॒त॒ । क्षाम् । च॒क्षा॒णाः । यत्र॑ । सु॒वि॒ताय॑ । दे॒वाः ।
द्यौः । न । वारे॑भिः । कृ॒णव॑न्त । स्वैः ॥ २ ॥

एषामनुष्ठातॄणामंगिरसां हवआह्वानशब्दः असुरइन्द्रस्य प्रेरकोयां दिवं नक्षत व्याप्नोत् तत्रत्याइन्द्रसंबन्धिनोदेवाः श्रवस्यता अन्नमिच्छता मनसा क्षां पृथिवीं नींसत प्राप्नुवन्। यत्र यस्यां पृथिव्यां चक्षाणाः पणिभिरपहृतागाः पश्यन्तोदेवाः सुविताय सुष्ठु हिताय स्वात्मनोऽभ्युदयाय द्यौ नं आदित्यइव वारेभिः वरणीयैः स्वैःस्वेजोभिः कृणवन्त प्रकाशमकुर्वन् गवां मद्यामायान्धकारमपनेतुमिति शेषः। अथवा एषां यज्विनामपहृतानां गवां हवः असुरः इन्द्रस्य प्रेरयिता सन् नक्षत इन्द्रप्रेरिताअंगिरसः श्रवस्यता अन्नं कीर्तिं वा इच्छता मनसा क्षां भूमिं निंसत अनुष्ठातॄणां गाः प्रदर्शयितुमित्यर्थः। इतरत्समानं ॥ २ ॥

२. अंगिरा लोगों के आह्वान-निनाद ने आकाश को पूर्ण कर दिया। इन्द्र को और अन्न को चाहनेवाले देवों ने अनुष्ठाताओं को गायें दिखाने के लिए पृथिवी को प्राप्त किया। पृथिवी पर पणियों के द्वारा अपहृत गायों को देखते हुए देवों ने अपने हित के लिए, आकाश में आदित्य के समान, अपने तेज से प्रकाश किया।

इ॒यमे॑षाम॒मृता॑नां॒गीःस॒र्वता॑ता॒येकृ॒पण॑न्त॒रत्न॑म् ।
धियं॑चय॒ज्ञंच॒साध॑न्त॒स्तेनो॑धान्तुवस॒व्य१॒॑मसा॑मि ॥ ३ ॥

इ॒यम् । ए॒षा॒म् । अ॒मृता॑नाम् । गीः । स॒र्वऽता॑ता । ये ।
कृ॒पण॑न्त । रत्न॑म् । धिय॑म् । च॒ । य॒ज्ञम् । च॒ । साध॑न्तः ।
ते । नः॒ । धा॒न्तु॒ । व॒स॒व्य॑म् । असा॑मि ॥ ३ ॥

इयमेषाममृतानां मरणरहितानां देवानां गीः स्तुतिः क्रियते इति शेषः ये देवाः सर्वताता सर्वतातौ यज्ञे कृपणन्त प्रयच्छन्ति याच्यन्ते वा रत्नं रमणीयं धनं धियं चास्मदीयां स्तुतिं यज्ञं च साधन्तः साधयन्तस्तेनोऽस्मभ्यं वसव्यं वसुसमूहं असामि अनल्पं असाधारणं वा धान्तु प्रयच्छन्तु ॥ ३ ॥

३. यह अमर देवों की स्तुति की जाती है। वे यज्ञ में नाना उत्तमोत्तम वस्तुएँ देते हैं। वे हमारी स्तुति और यज्ञ को सिद्ध करते हुए असाधारण धन दें।

आ॒तत्त॑इन्द्रा॒यवः॑पनन्ता॒भिय॑ऊ॒र्वंगोम॑न्तं॒तितृ॑त्सान् ।
स॒कृ॒त्स्वं१॒॑येपु॑रुपु॒त्रांम॒हींस॒हस्र॑धारांबृह॒तींदुदु॑क्षन् ॥ ४ ॥

आ । तत् । ते । इन्द्र । आयवः । पनन्त । अभि । ये । ऊर्वम् ।
गोऽमन्तम् । तितृत्सान् । सकृत्ऽस्वम् । ये । पुरुऽपुत्राम् । महीम् ।
सहस्रऽधाराम् । बृहतीम् । दुदुक्षन् ॥ ४ ॥

हे इन्द्र ते तव आयवो मनुष्या अंगिरसस्तत्तदा आपनन्त आ सर्वतः पनन्त स्तुवन्त्यंगिरसो गोमन्तमूर्वं संघं पणिभिरपहृतं गवां तितृत्सान् हिंसितुमैच्छन् तृदेर्हिंसार्थस्य सन्नन्तस्य छेत्याद्यागमः संयोगादनिघातः व्यत्ययस्वरः । येऽगिरसः सकृत्स्वं या सकृत् सूते सा सकृत्सूः तां सकृत्प्रसवां पुरुपुत्रां बह्वोषधिवनस्पतिरूपपुत्रां सहस्रधारां बहुलकामानामुत्पादयित्रीं बृहतीं विस्तृतां महीं भूमिं यद्वा पुरुपुत्रां बह्वोषधिवनस्पतिरूपपुत्रां सहस्रधारां बहुकामवर्षित्रीं महीं महतीं पृथ्वीं या बृहतीं परिमाणरहितां दिवं दुदुक्षन् दुदुहुः ते पनन्तेति संबन्धः सकृत्पौरुणायवेत्याद्युक्तं ॥ ४ ॥

४. इन्द्र, जो लोग शत्रुओं से गोधन ले लेना चाहते हैं, वे तुम्हारी ही स्तुति करते हैं। यह विशाल पृथिवी एक बार उत्पन्न हुई है; परन्तु अनेक सन्तानें (शस्य आदि) उत्पन्न करती हैं। ये सहस्र धाराओं में सम्पत्ति-रूप दुग्ध का दान करती हैं। जो लोग इस पृथ्वी-धेनु को दुहना चाहते हैं, वे भी इन्द्र की ही स्तुति करते हैं।

शचीवइन्द्रमवसेकृणुध्वमनानतंदमयन्तंपृतन्यून् ।
ऋभुक्षणंमघवानंसुवृक्तिंभर्तायोवज्रंनर्यंपुरुक्षुः ॥ ५ ॥

शचीऽवः । इन्द्रम् । अवसे । कृणुध्वम् । अनानतम् । दमयन्तम् ।
पृतन्यून् । ऋभुक्षणम् । मघऽवानम् । सुऽवृक्तिम् । भर्ता ।
यः । वज्रम् । नर्यम् । पुरुऽक्षुः ॥ ५ ॥

हे शचीवः कर्मवन्तो यजमानाः व्यत्ययेनैकवचनं इन्द्रं देवमवसे रक्षणाय कृणुध्वं कुरुध्वं कीदृशमिन्द्रं अनानतं कदाचिदपि परेषामनवनतं पृतन्यून् पृतनाइच्छतः शत्रून् दमयन्तं वशं प्रापयन्तं ऋभुक्षणं महान्तं मघवानं धनवन्तं सुवृक्तिं सुष्टुतिं यः पुरुक्षुः बहुशब्दवन्नोन्नं नरेभ्यो हितं असुरविघातकत्वात् तादृशं वज्रं भर्ता बिभर्ति तमिन्द्रमवसे कृणुध्वमिति ॥ ५ ॥

५. कर्मनिष्ठ पुरोहितो, कभी भी अवनत न होनेवाले, शत्रुओं का दमन करनेवाले, महान् धनी, सुन्दर स्तुतिवाले और मनुष्य-हित के लिए वज्र धारण करनेवाले इन्द्र की शरण में रक्षा के लिए जाओ।

निष्केवल्ये महावानेत्येषा धाय्या । सूत्रितं च—महावानेति धाय्या पिबासुतस्य रसिनः इति साममगाथ इति । महाव्रतेऽप्येषा तथैव पंचमारण्यके सूत्रितं—महावानेति धाय्या स्वादोरित्था इति ।

---

१ ऋ० सं० ४. ८. ४ ।

सैषा षष्ठी—

यद्वावानपुरुतमंपुराषाळावृत्रहेन्द्रोनामान्यप्राः ।
अचेतिप्रासहस्पतिस्तुविष्मान्यदीमुश्मसिकर्तवेकरत्तत् ॥६॥५॥

यत् । ववान॑ । पुरुऽतमम् । पुराषाट् । आ । वृत्रऽहा । इन्द्रः॑ । नामा॑नि ।
अप्राः । अचेति । प्रऽसहः॑ । पतिः॑ । तुविष्मान् । यत् ।
ईम् । उश्मसि॑ । कर्तवे । कर॑त् । तत् ॥ ६ ॥ ५ ॥

यद्यदा पुरुतमं अत्यन्तप्रवृद्धतमं वृत्रं ववान हन्ति पुराषाट् शत्रुपुराणामभिभवितेन्द्रः तदानीं आ अनन्तरमेव वृत्रहेन्द्रो नामान्युदकानि अप्राः पूरयति व्यत्ययेन मध्यमः सोऽयमिन्द्रः प्रासहः शत्रूणां प्रकर्षेणाभिभविता पतिः सर्वस्य स्वामी तुविष्मान् तुवीति बहुनाम तत्सामर्थ्याद्धनं परिगृह्यते बहुधन इत्यर्थः ईदृशः सन् अचेति सर्वैः प्रज्ञातः समहानिन्द्रो यदीं यदेतत्कर्म उश्मसि वयं कामयामहे तत्करत् करोत्येव इदं भवत्विदं भवत्विति यत् कामयामहे तत्तदानी-मेव करोत्येव नोदास्त इत्यर्थः । सैतदेव प्रत्यपश्यत यद्वावानपुरुतमंपुराषाळित्यादिकं ब्रा-ह्मणमनुसन्धेयं ॥ ६ ॥

६. शत्रु-पुरी ध्वंसक इन्द्र ने जिस समय अत्यन्त प्रवृद्ध शत्रु का संहार किया, उस समय वृत्रघ्न होकर उन्होंने जल से पृथिवी को पूर्ण किया। उस समय सबने समझा कि, इन्द्र अत्यन्त बली और क्षमताशाली हैं। हम जो कुछ चाहते हैं, इन्द्र सबको पूर्ण करते हैं।

॥ इत्यष्टमस्य तृतीये पंचमोवर्गः ॥ ५ ॥

प्रसुवइति नवर्चं सप्तमं सूक्तं प्रियमेधपुत्रस्य सिन्धुक्षित आर्षं जागतं नदीदेवताकं । त-थाचानुक्रान्तं—प्रसु नव सिन्धुक्षित् प्रैयमेधो नदीस्तुतिर्जागतं त्विति । गतोविनियोगः ।

तत्र प्रथमा—

प्रसुवआपोमहिमानमुत्तमंकारुर्वोचातिसदनेविवस्वतः ।
प्रसप्तसप्तत्रेधाहिचक्रमुःप्रसृत्वरीणामतिसिन्धुरोजसा ॥ १ ॥

प्र । सु । वः । आपः । महिमानम् । उत्ऽतमम् । कारुः । वोचाति ।
सदने । विवस्वतः । प्र । सप्तऽसप्त । त्रेधा । हि । चक्रमुः ।
प्र । सृत्वरीणाम् । अति । सिन्धुः । ओजसा ॥ १ ॥

---

१ ऐ० ब्रा० ३. २२ ।

हे आपोवोयुष्माकं महिमानं महत्त्वं सुस्तोत्रं उत्तमं उत्कृष्टतमं कारुः स्तोतासिन्धुक्षिदहं विवस्वतः परिचरणवतोयजमानस्य सदने यज्ञगृहे प्र सु सुष्ठु प्रवोचाति प्रब्रवीमि तानपः सप्त सप्तभूता त्रेधा पृथिव्यामन्तरिक्षे दिवि चेति त्रेधा त्रिप्रकारं चक्रमुः प्राक्रमन् प्रसृत्वरीणां आसां मध्ये सिन्धुरेतन्नामिका नदी ओजसा स्वबलेन अति सर्वा अपि नदीरतिक्रम्य प्रवहती ति शेषः ॥१॥

१. जल, सेवक यजमान के गृह में तुम्हारी उत्तम महिमा को मैं कहा करता हूँ। नदियाँ, सात-सात करके तीन प्रकार (पृथिवी, आकाश और द्युलोक) से चलीं। सबसे अधिक बहनेवाली सिन्धु ही है।

प्रतेऽरद्द्वरुणोयातवेपथःसिन्धोयद्वाजाँअभ्यद्रवस्त्वम् ।
भूम्याअधिप्रवतायासिसानुनायदेषामग्रंजगतामिरज्यसि ॥२॥

प्र । ते । अरदत् । वरुणः । यातवे । पथः । सिन्धो इति । यत् ।
वाजान् । अभि । अद्रवः । त्वम् । भूम्याः । अधि । प्रऽवता ।
यासि । सानुना । यत् । एषाम् । अग्रम् । जगताम् । इरज्यसि ॥ २ ॥

हे सिन्धो देवि ते तव यातवे गमनाय वरुणोदेवः पथोमार्गान् प्रारदत् प्राचीनं व्यलिखत् प्राहि प्राक् प्रवहति अथवा प्रकृष्टं इतरनदीभ्योप्यत्यन्तं विस्तृतं व्यदारयत् यत्यस्मात् हे सिन्धो वाजानन्नान्यभि अभिलक्ष्य त्वमभ्यद्रवः अभ्यगच्छः। किंच त्वं भूम्या अधि उपरि सानुना समुच्छ्रितेन प्रवता मार्गेण यासि गच्छसि सिन्धुः खलु पर्वतान् विभिद्य प्रवाहेन समुच्छ्रितेन मार्गेण गच्छन्ती त्वमेषां सर्वेषां जगतां जंगमानां प्राणिनामग्रं प्रत्यक्षं इरज्यसि ईशिषे॥२॥

२. सिन्धु, जिस समय तुम शस्यशाली प्रदेश की ओर चलो, उस समय वरुण ने तुम्हारे गमन के लिए विस्तृत पथ बना दिया। तुम भूमि के ऊपर उत्तम मार्ग से जाती हो। तुम सब नदियों के ऊपर विराजमान हो।

दिविस्वनोयततेभूम्योपर्यनन्तंशुष्ममुदियर्तिभानुना ।
अभ्रादिवप्रस्तनयन्तिवृष्टयःसिन्धुर्यदेतिवृषभोनरोरुवत् ॥३॥

दिवि । स्वनः । यतते । भूम्या । उपरि । अनन्तम् । शुष्मम् ।
उत् । इयर्ति । भानुना । अभ्रात्ऽइव । प्र । स्तनयन्ति ।
वृष्टयः । सिन्धुः । यत् । एति । वृषभः । न । रोरुवत् ॥ ३ ॥

भूम्योपरि भूमेरुपरि प्रवर्तमानः स्वनोदिवि यतते गच्छति दिवं व्याप्नोति सेयं सिन्धु-रनन्तं अपर्यन्तं शुष्मं वेगं भानुना दीप्तेनोर्मिणा उदियर्ति उद्गमयति अभ्रादिव अन्तरिक्षा-यथा वृष्टयः प्रस्तनयन्ति तद्वत् अस्याः शब्दाः प्रादुर्भवन्ति यदा सिन्धुरियं रोरुवत् भृशं शब्दयत् वृषभोन वृषभइवेति गच्छति तदेवं भवति ॥ ३ ॥

३. पृथिवी से सिन्धु का शब्द उठकर आकाश को घहरा देता है। यह महावेग और दीप्त लहरों के साथ जाती है। जिस समय सिन्धु वृषभ के समान प्रबल शब्द करती हुई आती है, उस समय विदित होता है कि, आकाश (वा मेघ) से घोर गर्जन-तर्जन के साथ वृष्टि हो रही है।

अभित्वासिन्धोशिशुमिन्नमातरोवाश्राअर्षन्तिपयसेवधेनवः ।
राजेवयुध्वानयसित्वमित्सिचौयदासामग्रंप्रवतामिनक्षसि ॥ ४ ॥

अभि । त्वा । सिन्धो इति । शिशुम् । इत् । न । मातरः । वाश्राः ।
अर्षन्ति । पयसाऽइव । धेनवः । राजाऽइव । युध्वा । नयसि ।
त्वम् । इत् । सिचौ । यत् । आसाम् । अग्रम् । प्रऽवताम् । इनक्षसि ॥ ४ ॥

हे सिन्धो त्वा त्वां शिशुमिव मातरः मातरः पुत्रमिव वाश्राः शब्दयन्त्यइतरानद्यः अ-भ्यर्षन्ति अभिगच्छन्ति पयसेवधेनवः पयसा युक्तावत्समभिकागावइव । किंच युध्वा यु-द्धकृद्राजेव त्वमिव त्वमेव सिचौ सिच्यमानौ भटौ नयसि यद्यदा आसां प्रवतां त्वया सहगच्छन्तीनामग्रं अग्रे इनक्षसि व्याप्नोषि सर्वासां पुरतोगच्छसि ॥ ४ ॥

४. जैसे शिशु के पास माता जाती हैं और दुग्धवती गायें बछड़े के पास जाती हैं, वैसे ही शब्द करती हुई अन्य नदियाँ सिन्धु के पास जाती हैं। जैसे युद्ध-कर्त्ता राजा सेना ले जाता है, वैसे ही तुम अपनी सहगा-मिनी दो नदियों को लेकर आगे-आगे जाती हो।

इमंमेगङ्गेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्या ।
असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ ५ ॥ ६ ॥

इमम् । मे । गङ्गे । यमुने । सरस्वति । शुतुद्रि । स्तोमम् । सचत ।
परुष्णि । आ । असिक्न्या । मरुत्ऽवृधे । वितस्तया ।
आर्जीकीये । शृणुहि । आ । सुऽसोमया ॥ ५ ॥ ६ ॥

अथ प्रधानभूताः सप्तनद्यः तदवयवभूतास्तिस्रः स्तूयन्ते हे गंगे हे यमुने हे सरस्वति हे शुतुद्रि हे परुष्णि हे असिक्न्या अवयवभूतया सहिते मरुद्वृधे वितस्तया सोमया च सहिते आर्जीकीये त्वं चेदं सप्त नद्योयूयं मे स्तोमं स्तोत्रं अस्मदीयं आसचत आसेवध्वं शृणुहि

शृणुत च आर्जीकीया आ वितस्तया सुषोमया च साहित्यं निरुक्ते उक्तं—वितस्तया चार्जीकीये आ शृणुहि सुषोमया चेति । अथ गंगा गमनादित्यादि निरुक्तं द्रष्टव्यं ॥ ५ ॥

५. हे गंगा यमुना, सरस्वती, शुतुद्री (सतलज), परुष्णी (रावी), असिक्नी (चिनाब) के साथ मरुद्वृधा (चिनाब और झेलम के बीच की या चिनाब की पश्चिमवाली मरुवर्दवन नाम की सहायक नदी), वितस्ता (झेलम), सुषोमा (सोहान) और आर्जीकीया (व्यास), तुम लोग मेरे इस स्तोत्र का भाग कर लो और सुनो।

तृष्टामया प्रथमं यातवे सजूः सुसर्त्वा रसया श्वेत्या त्या ।
त्वं सिन्धो कुभया गोमतीं क्रुमुं मेहत्न्वा सरथं याभिरीयसे ॥ ६ ॥

तृष्टऽअमया । प्रथमम् । यातवे । सऽजूः । सुऽसर्त्वा । रसया ।
श्वेत्या । त्या । त्वम् । सिन्धो इति । कुभया । गोऽमतीम् ।
क्रुमुम् । मेहत्न्वा । सऽरथम् । याभिः । ईयसे ॥ ६ ॥

हे सिन्धो त्वं क्रुमुं क्रमणीयां गोमतीं नदीं यातवे गन्तुं पर्वतादवरुह्य प्रथमं तृष्टामया नद्या सजूः संगतासि पश्चात् सुसर्त्वा रसया श्वेत्यात्या कुभया मेहत्न्वा च सह याभिस्त्वं सरथं समानं रथमारुह्य ईयसे गच्छसि ॥ ६ ॥

६. सिन्धु, पहले तुम तृष्टामा (सिन्धु की पश्चिमी सहायक नदी) के साथ चली। पुनः सुसर्त्तु, रसा और श्वेत्या (ये तीनों सिन्धु की पश्चिमी सहायक नदियाँ हैं) से मिलीं। तुम क्रमु (कुर्रम) और गोमती (गोमल) को, कुभा ("काबुल" नदी) और मेहत्नू (सिन्धु की पश्चिमी सहायक नदी) से मिलाती हो। इन नदियों के साथ तुम बहती हो।

ऋजीत्येनी रुशती महित्वा परि ज्रयांसि भरते रजांसि ।
अदब्धा सिन्धुरपसामपस्तमाश्वा न चित्रा वपुषीव दर्शता ॥ ७ ॥

ऋजीती । एनी । रुशती । महिऽत्वा । परि । ज्रयांसि । भरते ।
रजांसि । अदब्धा । सिन्धुः । अपसाम् । अपःऽतमा । अश्वा । न ।
चित्रा । वपुषीऽइव । दर्शता ॥ ७ ॥

ऋजीति ऋजुगामिनी एनी श्वेतवर्णा रुशती दीप्यमाना सिन्धुः ज्रयांसि वेगवन्ति रजांसि उदकानि परिभरते प्रभरति धारयति अदब्धा अहिंसिता सिन्धुरपसां कर्मवतीनां मध्ये अपस्तमा वेगात्मकर्मवती भवति अश्वा न वडवेव चित्रा चायनीया वपुषी वपुष्मती योषिदिव दर्शता दर्शनीया भवति ॥ ७ ॥

---

१ नि० ९.२६ ।

७. सिन्धु नदी सरल-गामिनी, श्वेतवर्णा और प्रदीप्ता हैं। सिन्धु का वेगशाली जल चारों ओर जाता है। नदियों में से सबसे वेगवती सिन्धु ही है। यह घोड़ी के समान अद्भुत है और मोटी स्त्री के समान दर्शनीया है।

स्वश्वासिन्धुःसुरथासुवासाहिरण्ययीसुकृतावाजिनीवती ।
ऊर्णावतीयुवतिःसीलमावत्युताधिवस्तेसुभगामधुवृधम् ॥ ८ ॥

सुऽअश्वा । सिन्धुः । सुऽरथा । सुऽवासाः । हिरण्ययी । सुऽकृता । वाजिनीऽवती । ऊर्णाऽवती । युवतिः । सीलमाऽवती । उत । अधि । वस्ते । सुऽभगा । मधुऽवृधम् ॥ ८ ॥

हेयं सिन्धुः स्वश्वा शोभनाश्वोपेता सुरथा शोभनरथा सुवासाः शोभनवसना हिरण्ययी हिरण्मयाभरणा सुकृता वाजिनीवती अन्नवती ऊर्णावती यस्याः समीपे देशे सन्त्यूर्णाः यासां रोमभिः कंबलाः क्रियन्ते युवतिर्नित्यतरुणी सर्वदा अहीनोदका सीलमावती सीराणि ययोपष्या रज्जुरूपया बध्यन्ते सा सीलमेति निगद्यते कर्षीवद्भिः तादृगोषध्युपेता उतापि च सुभगा सिन्धुर्मधुवृधं मधुवर्धकं निर्गुंड्यादिकं अधिवस्ते आच्छादयति यस्यास्तीरे निर्गुंड्यादीनि बहूनि सन्ति ॥ ८ ॥

८. सिन्धु शोभन अश्वों, सुन्दर रथ, सुन्दर वस्त्र, सुवर्णाभरण, सुन्दर सज्जा, अन्न और पशुलोमवाली है। सिन्धु नित्यतरुणी और तिनकों (सीलमा) वाली है। सौभाग्यवती सिन्धु मधुवर्द्धक पुष्पों से आच्छादित है।

सुखंरथंयुयुजेसिन्धुरश्विनंतेनवाजंसनिषदस्मिन्नाजौ ।
महान्ह्यस्यमहिमापनस्यतेदब्धस्ययशसोविरप्शिनः ॥९॥ ७॥

सुऽखम् । रथम् । युयुजे । सिन्धुः । अश्विनम् । तेन । वाजम् । सनिषत् । अस्मिन् । आजौ । महान् । हि । अस्य । महिमा । पनस्यते । अदब्धस्य । स्वऽयशसः । विऽरप्शिनः ॥ ९ ॥ ७ ॥

सिन्धुर्देवता सुखं सुखकरं शोभनद्वारं वा अश्विनमश्ववन्तं रथं युयुजे युनक्ति तेन रथेन वाजमन्नं सनिषत् प्रयच्छतु अस्मिन्नाजौ संग्रामे यज्ञे वा अस्य सिन्धुरथस्य महिमा महान् हि पनस्यते स्तूयते कीदृशस्यास्य अदब्धस्य अन्यैरहिंसितस्य स्वयशसः स्वायत्तकीर्तेः विरप्शिनः महतोऽत्यन्तमहतः ॥ ९ ॥

९. सिन्धु सुखकर और अश्ववाले रथ को जोतती है। उस रथ से वह अन्न दे। यज्ञ में सिन्धु के रथ की महिमा गाई जाती है। सिन्धु का रथ अहिंसित कीर्तिकर और महान् है।

आव ऋञ्जस इत्यष्टर्चमष्टमं सूक्तं इरावतः पुत्रस्य सर्पजातेर्जरत्कर्णनाम्न आर्षं जागतं सोमाभिषवसाधनभूता ग्रावाणः देवता। तथा चानुक्रान्तं—आवोऽष्टौ सर्प ऐरावतो जरत्कर्णो ग्राव्णोऽस्तौदिति। ग्रावस्तोत्रे एतत्सूक्तं। सूत्रितं च—आव ऋञ्जसे प्रैतो ग्रावाण इति द्वे तृचयोरन्तरोपरिष्टात्पुरस्ताद्वेति।

तत्र प्रथमा—

आवऋञ्जसऊर्जांव्युष्टिष्विन्द्रंमरुतोरोदसीअनक्तन।
उभेयथानोअहनीसचाभुवासदःसदोवरिवस्यातउद्भिदा॥ १॥

आ। वः। ऋञ्जसे। ऊर्जाम्। विऽउष्टिषु। इन्द्रम्। मरुतः।
रोदसी इति। अनक्तन। उभे इति। यथा। नः। अहनी इति।
सचाऽभुवा। सदःऽसदः। वरिवस्यातः। उत्ऽभिदा॥ १॥

हे ग्रावाणो वो युष्मान् ऊर्जां सारभूतानामन्नानां सोमानां व्युष्टिषु विभातेषु सत्सु आऋञ्जसे आप्रसाधयामि यूयं सोमेनेन्द्रं मरुतो रोदसी द्यावापृथिव्यौ चानक्तन व्यञ्जयत सोमान् उभे सचाभुवा सहोत्पन्नेऽहनी द्यावापृथिव्यौ सदःसदः सर्वेषु यागगृहेषु वरिवस्यातः परिचरतः उद्भिदा उद्भेदकेन धनेन पूरयतमिति॥ १॥

१. पत्थरो, अन्नवाली उषा के आते ही तुम्हें मैं प्रस्तुत करता हूँ। तुम सोम देकर इन्द्र, मरुत् और द्यावापृथिवी को अनुकूल करो। ये द्यावापृथिवी एक साथ हम लोगों में से प्रत्येक के गृह में सेवा ग्रहण कर गृहों को धन से पूर्ण कर दें।

अथ द्वितीया—

तदुश्रेष्ठंसवनंसुनोतनात्योनहस्तयतोअद्रिःसोतरि।
विदद्ध्य१र्योअभिभूतिपौंस्यंमहोरायेचित्तरुतेयदर्वतः॥ २॥

तत्। ऊँ इति। श्रेष्ठम्। सवनम्। सुनोतन। अत्यः। न।
हस्तऽयतः। अद्रिः। सोतरि। विदत्। हि। अर्यः। अभिऽभूति।
पौंस्यम्। महः। राये। चित्। तरुते। यत्। अर्वतः॥ २॥

हे ग्रावाणो यूयं तदु तमेव प्रशस्यं श्रेष्ठं सवनं सोमं सुनोतन अभिषुणुत। अथैकवचनम्—अद्रिरभिषवमाणो हस्तयतो हस्ताभ्यां गृहीतः सन् अत्यो न अश्व इव भवति सोतरि अभिषव-

कर्तरि अध्वर्यौ तयथा हस्ताभ्यां हर्तं गृहीतोपि भवत्यत् तद्वत् अर्थः ग्राव्णः अभिषवाय प्रेरकोभ्यज्यमानः अभिभूति शत्रूणामभिभावुकं पौंस्यं बलं विदद्धि लभते खलु देवेभ्यः । यद्वा अभिषवायाध्वर्युभिः प्रेरितो ग्रावा अभिभूति पौंस्यं विदत् यजमानार्थं । किंच महोमहते राये स्वित् धनायापि यत् योग्राग्रा अर्वतोश्वान् तरुते वनुते प्रयच्छति ॥ २ ॥

२. हाथों से पकड़े जाने पर अभिषव-प्रस्तर घोड़े के समान हो जाता है। श्रेष्ठ सोम को तुम प्रस्तुत करो। प्रस्तर से सोमाभिषव करनेवाला यजमान शत्रुओं को हटानेवाला बल प्राप्त करता है। यह अश्व देता है, जिससे यथेष्ट धन मिलता है।

तदिद्ध्यस्यसवनंविवेरपोयथापुरामनवेगातुमश्रेत् ।
गोअर्णसित्वाष्ट्रेअश्वनिर्णिजिप्रेमध्वरेष्वध्वराँअशिश्रयुः ॥ ३ ॥

तत् । इत् । हि । अस्य । सवनम् । विवेः । अपः । यथा । पुरा ।
मनवे । गातुम् । अश्रेत् । गोऽअर्णसि । त्वाष्ट्रे । अश्वऽनिर्णिजि ।
प्र । ईम् । अध्वरेषु । अध्वरान् । अशिश्रयुः ॥ ३ ॥

इदिति पूरणः अस्य ग्राव्णः तत्सवनमभिषवोपेतमस्मदीयं सोमयागाख्यं अपः कर्म विवेः व्याप्नोतु विपूर्वस्य वेतेर्लेङि अदादित्वाच्छपोलुक् वेतेर्विपूर्वस्य वा छान्दसेष्वोवा पररूपमिति सन्ध्यक्षरमध्यगः समासस्वरः । यथा पुरा मनवे राज्ञे गातुं गमनमश्रेत् आश्रयाय तद्वद्व्याप्नोतु । किंच गोअर्णसि गोरूपे अपहवैर्गोभिः परिवृते तथा अश्वनिर्णिजि निर्णिगिति रूपनाम अश्वरूपे अपहवैरश्वैर्युक्तइत्यर्थः ईदृशे त्वाष्ट्रे त्वष्टुः पुत्रे हन्तव्ये सतीति शेषः ईमिमाव् अध्वरानध्वरैर्हिंस्यान् अध्वरसाधकान् तोपहान् अध्वरेष्वशिश्रयुः आश्रयन्ति पूर्वे यजमानाः ॥ ३ ॥

३. जैसे प्राचीन समय में मनु के यज्ञ में सोमरस आया था, वैसे ही इस प्रस्तर के द्वारा निष्पीड़ित सोम जल में प्रवेश करे। गायों को जल में स्नान कराने, गृह-निर्माण-कार्य और घोड़ों को स्नान कराने के समय, यज्ञ-काल में, इस अविनश्वर सोमरस का आश्रय लिया जाता है।

अपहतरक्षसोभङ्गुरावतःस्कभायतनिर्ऋतिंसेधतामतिम् ।
आनोरयिंसर्ववीरंसुनोतनदेवाव्यंभरतश्लोकमद्रयः ॥ ४ ॥

अप । हत । रक्षसः । भङ्गुरऽवतः । स्कभायत । निःऽऋतिम् । सेधत ।
अमतिम् । आ । नः । रयिम् । सर्वऽवीरम् । सुनोतन । देवऽअव्यम् ।
भरत । श्लोकम् । अद्रयः ॥ ४ ॥

हे ग्रावाणो यूयं अपहत विनाशयत रक्षो राक्षसान् कीदृशान् भंगुरावतः भंजकेन कर्मणा युक्तान् यथास्मभ्यमापद् दूरे परिहरत निर्ऋतिं पापदेवतां यथास्मान्नागच्छति तथा । किंच सेधत निषेधत अमतिं हिंसाबुद्धिं रक्षःप्रभृतेः । किंच नोऽस्माकं सर्ववीरं बहुपुत्रादियुक्तं रयिं धनं आसुवत अभिषवेन पुत्रपश्वादीनां प्राप्तिर्देवप्रयुक्तं । किंच देवाव्यं देवप्रीणनं श्लोकं भरत संपादयत ॥ ४ ॥

४. पत्थरो, भञ्जक राक्षसों को विनष्ट करो। निर्ऋति (पाप-देवता) को दूर करो। दुर्बुद्धि को हटाओ। सन्तान-युक्त धन दो। देवों को प्रसन्न करनेवाले श्लोक का सम्पादन करो।

दिवश्चिदावोऽमवत्तरेभ्योविभ्वनाचिदाश्वपस्तरेभ्यः ।
वायोश्चिदासोमरभस्तरेभ्योऽग्नेश्चिदर्चपितुकृत्तरेभ्यः ॥ ५ ॥ ८ ॥

दिवः । चित् । आ । वः । अमवत्ऽतरेभ्यः । विऽभ्वना । चित् ।
आश्वपःऽतरेभ्यः । वायोः । चित् । आ । सोमरभःऽतरेभ्यः ।
अग्नेः । चित् । अर्च । पितुकृत्ऽतरेभ्यः ॥ ५ ॥ ८ ॥

किंच दिवश्चिदादित्यादपि अमवत्तरेभ्यः अत्यन्तं बलवद्भ्यः यो युष्माकं अर्चनस्तोत् अभ्यर्चयुः । यद्वा हे अध्वर्यो दीप्यमानलक्षणेभ्यो ग्रावभ्यः आसर्वतः अर्च अर्चतेत्येवं यदि वाक्यं योज्यं । विभ्वना चिद् विभ्वा सुधन्वनः पुत्रः तेनापि आश्वपस्तरेभ्यः शीघ्रकर्मभ्य इत्यर्थः ऋभ्वादीनां त्रयाणां चमसादिशीघ्रकर्म प्रसिद्धं वायोश्चिद् वायोरपि सोमरभस्तरेभ्यः सोमाभिषवार्थेनात्यन्तेन वेगेन युक्तेभ्यः वायोरपि ग्रावाणो वेगवत्तरा भवन्ति सोमाभिषवार्थं अग्नेश्चिद् अग्नेरपि पितुकृत्तरेभ्यः अत्यन्तमन्नसाधकेभ्यः ईदृशेभ्यो ग्रावभ्यः प्रीणनाय यूयमर्चतेति ॥ ५ ॥

५. जो आकाश से भी तेजस्वी या बली हैं, जो सुधन्वा के पुत्र विभ्वा से भी शीघ्र-कर्मा हैं, जो वायु से भी सोमाभिषव में वेगशाली हैं और जो अग्नि से भी अधिक अन्नदाता हैं, उन पत्थरों की, देवों की प्रसन्नता के लिए, पूजा करो।

॥ इत्यष्टमस्य तृतीयेऽष्टमो वर्गः ॥ ८ ॥

अथ षष्ठी—

भुरन्तुनोयशसःसोत्वन्धसोग्रावाणोवाचादिवितादिवित्मता ।
नरोयत्रदुहतेकाम्यंमध्वाघोषयन्तोअभितोमिथस्तुरः ॥ ६ ॥

भुरन्तु । नः । यशसः । सोतु । अन्धसः । ग्रावाणः । वाचा ।
दिविता । दिवित्मता । नरः । यत्र । दुहते । काम्यम् ।
मधु । आऽघोषयन्तः । अभितः । मिथःऽतुरः ॥ ६ ॥

यशसो यशस्विनो ग्रावाणो नोऽस्मदर्थं सोतु सुतं अन्धसः सोमस्य रसं भुरन्तु भरन्तु संपादयन्तु उकारश्छान्दसः । किंच ते दिवित्मता दीप्तिमत्या लिङ्गव्यत्ययः वाचा स्तुतिवाचा दिविता दिवितायां दीप्तिमत्यां अस्मान् कुर्वन्तु सोमयागे स्थापयन्त्वित्यर्थः । केयं दीप्तिमतीति उच्यते— नरो नेतार ऋत्विजो यत्र यागे काम्यं कमनीयं मधु सोमरसं दुहते किं कुर्वन्तः आघोषयन्तः सर्वतोऽभिषवशब्दं स्तोत्रशस्त्रादिरूपं वा शब्दं कुर्वन्तः अभितः सर्वतः मिथस्तुरः त्वरमाणाः सा दीप्तिमतीति ॥ ६ ॥

६. यशस्वी प्रस्तर हमारे लिए अभिषुत सोम का रस सम्पादित करें। वे स्तोत्र के साथ उज्ज्वल वाक्य के द्वारा उज्ज्वल सोम-याग में हमें स्थापित करें। नेता ऋत्विक् लोग स्तोत्र-ध्वनि और परस्पर शीघ्रता करते-करते कमनीय सोम-रस, सोम-यज्ञ में दुहते हैं।

सुन्वन्ति सोमं रथिरासो अद्रयो निरस्य रसं गविषो दुहन्ति ते ।
दुहन्त्यूधरुपसेचनाय कं नरो हव्या न मर्जयन्त आसभिः ॥ ७ ॥

सुन्वन्ति । सोमम् । रथिरासः । अद्रयः । निः । अस्य । रसम् ।
गोऽइषः । दुहन्ति । ते । दुहन्ति । ऊधः । उपऽसेचनाय ।
कम् । नरः । हव्या । न । मर्जयन्ते । आसऽभिः ॥ ७ ॥

रथिरासो रथवन्तो रंहणवन्तः अद्रयो ग्रावाणः सोमं सुन्वन्ति ते ग्रावाणोऽस्य सोमस्य रसं निर्दुहन्ति निःशेषेण दुहन्ति गविषः स्तुतिवाचमिच्छन्तः सन्तः दुहन्त्यूधो रसं सोमसंबन्धिनं । किमर्थं उपसेचनायाग्नेः । कमिति पदपूरणः । नरो नेतारोऽभिषवकर्तारः ऋत्विजो हव्या हवींषि च अग्न्युपसेचनानन्तरं आसभिः स्वास्यैः मर्जयन्ते शोधयन्ति शेषभक्षणेन शुद्धीकुर्वन्ति । यद्वासौ होतुर्देशापविभाव पुरा आसभिरास्योपलक्षितैः स्तोत्रैर्मर्जयन्ते ॥ ७ ॥

७. चालित होकर वे पत्थर सोम चुआते हैं। वे स्तोत्र की इच्छा करते हुए, अग्नि के सेचन के लिए, सोम-रस दुहते हैं। अभिषव-कारी ऋत्विक् लोग मुख से शेष सोम का पान करके शुद्धि करते हैं।

एते नरः स्वपसो अभूतन य इन्द्राय सुनुथ सोममद्रयः ।
वामंवामं वो दिव्याय धाम्ने वसुवसु वः पार्थिवाय सुन्वते ॥ ८ ॥ १ ॥

एते। नरः। सुऽअपसः। अभूतन। ये। इन्द्राय। सुनुथ।
सोमम्। अद्रयः। वामम्ऽवामम्। वः। दिव्याय। धाम्ने।
वसुऽवसु। वः। पार्थिवाय। सुन्वते ॥ ८ ॥ ९ ॥

हे नरोनेतारः हे अद्रयः एते यूयं स्वपसः अभूतन शोभनाभिषवकर्माणोभवत ये यूय-मिन्द्राय सोमं सुनुथ दोयूयं वामंवामं वननीयं धनं अस्ति तत्दिव्याय धाम्ने देवत्से कु-रुत तथा वसुवसु वासयोग्यं धनमस्ति वः यूयं पार्थिवाय सुन्वते यजमानाय कुरुत॥८॥

८. नेताओ और पत्थरो, तुम शोभन अभिषव के कर्ता होओ। इन्द्र के लिए सोमाभिषव करो। दिव्य लोक के लिए तुम लोग अद्भुत सम्पत्ति उपस्थित करो। जो कुछ निवास-योग्य धन है, उसे यजमान को दो।

॥ इत्यष्टमस्य तृतीये नवमोवर्गः ॥ ९ ॥

अभ्रप्रुषइत्यष्टर्चं नवमं सूक्तं भृगुगोत्रस्य स्यूमरश्मेरार्षं मरुद्देवताकं पंचमी जगती शिष्टाः सप्त त्रिष्टुभः। तथाचानुक्रान्तं—अभ्रप्रुषः स्यूमरश्मिर्मार्गवोमारुतं तु पंचमी जगतीति। गतोविनियोगः।

अभ्रप्रुषोनवाचाप्रुषावसुहविष्मन्तोनयज्ञाविजानुषः।
सुमारुतंनब्रह्माणमर्हसेगणमस्तोष्येषांनशोभसे ॥ १ ॥

अभ्रऽप्रुषः। न। वाचा। प्रुष। वसु। हविष्मन्तः। न। यज्ञाः।
विऽजानुषः। सुऽमारुतम्। न। ब्रह्माणम्। अर्हसे।
गणम्। अस्तोषि। एषाम्। न। शोभसे ॥ १ ॥

अभ्रप्रुषोन मेघान्निर्गच्छन्तउदकबिन्दवइव वाचा स्तुत्या प्रीतामरुतोवसु धनं प्रुष सिंचं-ति व्यत्ययेन बहुवचनं। किंच हविष्मन्तोन यज्ञाः हविर्भिर्युक्तायागाइव विजानुषः जगतोवि-जनयितारोभवन्ति। अथ समुदायेनाह तेषामेषां सुमारुतं शोभनानां मरुतां ब्रह्माणं महान्तं गणं अर्हसे पूजार्थं नास्तोषि नास्तौषं न स्तुतवानस्मि इतः पूर्वं। तथा शोभसे शोभार्थमपि मारुतं गणं नास्तोषि अतइदानीं नूतनेन स्तोत्रेण स्तौमीत्यर्थः ॥ १ ॥

१. स्तुति से प्रसन्न होकर मरुत् लोग मेघ-निर्गत वारि-बिन्दु के समान धन बरसाते हैं। हवि से युक्त यज्ञ के समान संसार की उत्पत्ति के कारण मरुत् हैं। मरुतों के महान् दल की पूजा वास्तव में मैंने नहीं की है। शोभा के लिए भी मैंने स्तोत्र नहीं किया।

अथ द्वितीया—

श्रियेमर्यासोअञ्जीँरकृण्वतसुमारुतंनपूर्वीरतिक्षपः ।
दिवस्पुत्रासएतानयेतिरआदित्यासस्तेअक्रानवावृधुः ॥ २ ॥

श्रिये । मर्यासः । अञ्जीन् । अकृण्वत । सुऽमारुतम् । न । पूर्वीः ।
अति । क्षपः । दिवः । पुत्रासः । एताः । न । येतिरे ।
आदित्यासः । ते । अक्राः । न । ववृधुः ॥ २ ॥

श्रिये शोभार्थं मर्यासोमारकाः मनुष्यरूपावा मरुतः पूर्वं मनुष्याः सन्तः पश्चात्सुकृतविशेषेण अमराआसन् ते अञ्जीनञ्जकान्याभरणानि अकृण्वत कुर्वन्ति । किमर्थं श्रिये स्वशरीरशोभनार्थं सुमारुतं शोभनानां मरुतां गणं पूर्वीः बह्वयः क्षपः क्षपयित्र्यः सेनाअपि न पराभावयन्तीति शेषः । किंच दिवोद्युदेवतायाः पुत्रासः पुत्राः एतागन्तारः नयेतिरे निर्गच्छन्ति ते आदित्यासः अदितेः पुत्राअक्रा आक्रमणशीलामरुतोन वावृधुः नवर्धन्ते यतोस्माभिर्न स्तुताभवन्निति भावः ॥ २ ॥

२. मरुत् लोग पहले मनुष्य थे, पीछे, पुण्य के द्वारा, देवता बन गये। एकत्र सेना भी मरुतों का पराभव नहीं कर सकती। हमने इनकी स्तुति नहीं की; इसलिए ये द्युलोक के मरुत् अब भी दिखाई नहीं दिये और न ये आक्रमणशील बढ़े।

प्रयेदिवःपृथिव्यानबर्हणात्मनारिरिच्रेअभ्रान्नसूर्यः ।
पाजस्वन्तोनवीराःपनस्यवोरिशादसोनमर्याअभिद्यवः ॥ ३ ॥

प्र । ये । दिवः । पृथिव्याः । न । बर्हणा । त्मना । रिरिच्रे ।
अभ्रात् । न । सूर्यः । पाजस्वन्तः । न । वीराः । पनस्यवः ।
रिशादसः । न । मर्याः । अभिऽद्यवः ॥ ३ ॥

ये मरुतोदिवः पृथिव्यान पृथिव्याश्चनेति चार्थे बर्हणा महत्त्वेन त्मना आत्मनैव रिरिच्रे रिरिचिरे अतिरिक्ताअभवन् स्वशरीरेण अभ्रान्न अभ्रादिव सूर्यः । किंच पाजस्वन्तोन वीराः बलवन्तोवीराइव पनस्यवः स्तुतिकामाभवन्ति । किंच रिशादसोन मर्याः रिपूणामत्तारो मनुष्याइव अभिद्यवोभिगतदीप्तयोभवन्ति ॥ ३ ॥

३. स्वर्ग और पृथिवी पर ये मरुत् स्वयं बढ़े हैं। जैसे सूर्य मेघ से निकलते हैं, वैसे ही मरुत् बाहर हुए। ये वीर पुरुषों के समान स्तोत्राभिलाषी होते हैं। शत्रु-घातक मनुष्यों के समान ये दीप्त होते हैं।

युष्माकँबुध्नेअपांनयामंनिविथुर्यतिनमहीश्रथर्यति ।
विश्वप्सुर्यज्ञोअर्वागयंसुवःप्रयस्वन्तोनसत्राचआगत ॥ ४ ॥

युष्माकम् । बुध्ने । अपाम् । न । यामनि । विथुर्यति । न ।
मही । श्रथर्यति । विश्वऽप्सुः । यज्ञः । अर्वाक् । अयम् ।
सु । वः । प्रयस्वन्तः । न । सत्राचः । आ । गत ॥ ४ ॥

हे मरुतो युष्माकं बुध्ने परस्परसंघाते अपां न यामनि यद्वदपामुदकानां गमनइव मही महती भूमिर्न विथुर्यति नव्यथते नापि श्रथर्यति न विशीर्णा भवति शीघ्रगतयोपि यूयमेनां न पीडयथेत्यर्थः । विश्वप्सुः विश्वरूपोयं यज्ञो यागसाधनं हविः वो युष्माकमर्वागभिमुखं सु सुष्ठु गच्छति प्रयस्वन्तोन अन्नवन्तः परिष्कर्तारइव सुखप्रदाः सन्तः सत्राचः सहाञ्चना आगत आगच्छत संघाकारेणागच्छतेत्यर्थः । सप्तगणा वै मरुत इति श्रुतेः ॥ ४ ॥

४. मरुतो, जिस समय तुम लोग परस्पर प्रतिघातक और वृष्टि-पात करते हो, उस समय पृथिवी न तो कातर होती और न दुर्बल ही होती है। तुम्हें हवि दिया गया है। तुम लोग अन्नवाले व्यक्तियों के समान एकत्र होकर आओ।

यूयंधूर्षुप्रयुजोनरश्मिभिर्ज्योतिष्मन्तोनभासाव्युष्टिषु ।
श्येनासोनस्वयशसोरिशादसःप्रवासोनप्रसितासःपरिप्रुषः ॥५॥ १०॥

यूयम् । धूःऽसु । प्रऽयुजः । न । रश्मिऽभिः । ज्योतिष्मन्तः । न ।
भासा । विऽउष्टिषु । श्येनासः । न । स्वऽयशसः । रिशादसः ।
प्रवासः । न । प्रऽसितासः । परिऽप्रुषः ॥ ५ ॥ १० ॥

हे मरुतो यूयं धूर्षु रथसंबन्धिनीषु रश्मिभिर्योक्त्रैः प्रयुजः प्रयुक्ताअश्वाइव परिप्रुषः परितोगन्तारः स्थ तथा ज्योतिष्मन्तोन तेजस्वन्तः आदित्यादयइव भासा दीप्त्या युक्ताभवथ व्युष्टिषु उषस्सु व्युदितासु किंच श्येनासोन श्येनाइव । किंच स्वयशसः स्वायत्तयशसः ते यथा रिशादसोरिशतामसितारः तद्वत् रिशादसः स्वायत्तयशसश्च । किंच प्रवासोन प्रवासिनइव पथिकाइव प्रसितासः प्रसित्वपालाः उदकरूपमरुतः परिप्रुषः परितोगन्तारोभवथ ॥ ५ ॥

५. रस्सी से रथ में जोते घोड़े के समान तुम लोग गमनशील हो। तुम लोग प्रभात-कालीन आलोक के समान प्रकाशवान् हुए हो। श्येन पक्षी के समान तुम लोग शत्रु को दूर करते हो और अपनी कीर्ति स्वयं उपार्जित करते हो। पथिकों के समान तुम लोग चारों ओर जाकर वर्षा बरसाते हो।

॥ इत्यष्टमस्य तृतीये दशमोवर्गः ॥ १० ॥

---

१ तै॰ सं॰ २.२.५ ।

अथ षष्ठी--

प्रयद्वहध्वेमरुतःपराकाद्यूयंमहःसंवरणस्यवस्वः ।
विदानासोवसवोराध्यस्याराच्चिद्द्वेषःसनुतर्युयोत ॥ ६ ॥

प्र । यत् । वहध्वे । मरुतः । पराकात् । यूयम् । महः ।
सम्ऽवरणस्य । वस्वः । विदानासः । वसवः । राध्यस्य ।
आरात् । चित् । द्वेषः । सनुतः । युयोत ॥ ६ ॥

हे मरुतो यूयं यद्यदा पराकात् अत्यन्तं दूरदेशाद्वहध्वे आगच्छथ तदानीं महो महत् संवरणस्य संवरणीयं राध्यस्य संराधनीयं वस्वो वसु धनं विदानासः प्रयच्छन्तो वसवो यूयमाराच्चिद् दूरादेव युयोत पृथक्कुरुत । कानिति उच्यते द्वेषो द्वेष्टॄन् कीदृशान् सनुतः अन्तर्हितान् निगूढानित्यर्थः । सनुतरित्यन्तर्हितनाम ॥ ६ ॥

६. मरुतो, तुम लोग बहुत दूर से यथेष्ट गुप्त धन ले आते हो। धन प्राप्त करके तुम लोग द्वेषी शत्रुओं को गुप्त रीति से दूर करते हो।

यउदृचियज्ञेअध्वरेष्ठामरुद्भ्योनमानुषोददाशत् ।
रेवत्सवयोदधतेसुवीरंसदेवानामपिगोपीथेअस्तु ॥ ७ ॥

यः । उत्ऽऋचि । यज्ञे । अध्वरेऽस्थाः । मरुत्ऽभ्यः । न ।
मानुषः । ददाशत् । रेवत् । सः । वयः । दधते । सुऽवीरम् ।
सः । देवानाम् । अपि । गोऽपीथे । अस्तु ॥ ७ ॥

अध्वरेष्ठाः यागे तिष्ठन्मानुषो यजमानो यज्ञे उदृचि सति ऋक्शब्देन स्तोत्रमुपलक्ष्यते यज्ञे समाप्तस्तुतिके सति संपूर्णे सति मरुद्भ्यो न मरुद्भ्य एवान्येषामप्युपमार्थीयः ऋत्विगादिभ्यो ददाशत् दद्यात् यद्वा उदृचि उपक्रान्ते इत्यर्थः तस्मिन्यज्ञे मरुद्भ्य एवान्यस्माइन्द्राय ददाशत् ददाति स यजमानो रेवद्धनवद्यिमत् सुवीरं शोभनपुत्राद्युपेतं वयोऽन्नं दधते धारयति अस्मयैनेत्येवं स देवानामिन्द्रादीनामपि गोपीथे सोमपाने अस्तु भवतु ॥ ७ ॥

७. जो मनुष्य यज्ञ-समाप्ति होने पर यज्ञानुष्ठान करके मरुतों को दान देता है, उसे अन्न, धन और जन की प्राप्ति होती है। वह देवों के साथ सोमपान करता है।

अथाष्टमी—

तेहियज्ञेषुयज्ञियासऊमाआदित्येननाम्नाशंभविष्ठाः ।
तेनोऽवन्तुरथतूर्मनीषांमहश्चयामन्नध्वरेचकानाः ॥ ८ ॥ ११ ॥

ते । हि । यज्ञेषु । यज्ञियासः । ऊमाः । आदित्येन । नाम्ना ।
शम्ऽभविष्ठाः । ते । नः । अवन्तु । रथऽतूः । मनीषाम् ।
महः । च । यामन् । अध्वरे । चकानाः ॥ ८ ॥ ११ ॥

ते हि ते खलु यज्ञेषु यागेषु यज्ञियासो यज्ञार्हा यज्ञव्या ऊमा अवितार आदित्येन नाम्ना आदित्यसंबन्धेनोदकेन शंभविष्ठाः सुखस्य भावयितारः यद्वा आदित्याख्येन नाम्ना आदित्यनामकेन देवेन सह शंभविष्ठाः ते मरुतो नोऽस्मान् अवन्तु रथतूः रथतुरः रथस्य यज्ञगमनसाधनस्य त्वरयितारः सन्तो मनीषां स्तुतिं अवन्तु रक्षन्तु कीदृशास्ते अध्वरे यामन् यामनि गमने महो महद्धविश्चकानाः कामयमानाः ॥ ८ ॥

८. मरुत् लोग यज्ञीय हैं। वे यज्ञ के समय रक्षक हैं। आकाश के जल से अदिति सुख देती हैं। वह क्षिप्रकारी रथ से आकर हमारी बुद्धि की रक्षा करें। यज्ञ में आकर यथेष्ट हवि का भक्षण करते हैं।

॥ इत्यष्टमस्य तृतीये एकादशो वर्गः ॥ ११ ॥

विप्रासइत्यष्टर्चं दशमं सूक्तं पंचम्याद्यास्तिस्रो द्वितीया चेति चतस्रो जगत्यः शिष्टास्त्रिष्टुभः पूर्ववदृषिदेवते । तथाचानुक्रान्तं—विप्रासो द्वितीयापंचम्याद्याश्च तिस्रो जगत्य इति । गतो विनियोगः ।

तत्र प्रथमा—

विप्रासोनमन्मभिःस्वाध्योदेवाव्योनयज्ञैःस्वप्नसः ।
राजानोनचित्राःसुसंदृशःक्षितीनांनमर्याअरेपसः ॥ १ ॥

विप्रासः । न । मन्मऽभिः । सुऽआध्यः । देवऽअव्यः । न ।
यज्ञैः । सुऽअप्नसः । राजानः । न । चित्राः । सुऽसन्दृशः ।
क्षितीनाम् । न । मर्याः । अरेपसः ॥ १ ॥

विप्रासो न विप्रा ब्राह्मणा इव ते यथा मन्मभिः स्तुतिभिः स्वाध्यः शोभनाध्याना भवन्त्येवमेव मरुतोऽप्यस्मदीयैर्मन्मभिर्मननीयैः स्तोत्रैः स्वाध्यः सुमनसो भवन्ति अथवा मन्मभिः स्तोत्रै

पुंकाविप्रासोन्मेधाविनः स्तोतारइव स्वाध्यः यज्ञे यजमाने वा स्वाध्यानाइत्यर्थः यथा यज्ञैर्यज्ञैर्देवान्योन देवानां सर्वमिज्यारोयजमानाइव स्वपसः अपइति कर्मनाम शोभनकर्माणः ते यथा कर्मसु व्यापृताभवन्ति तद्वद्वृष्टिप्रदानादिकर्मसु व्यापृताइत्यर्थः राजानोन मूर्धाभिषिक्ताः क्षितिपतयइव चित्राश्चायनीयाः पूजनीयाः यद्वा चित्राभरणाः यथा सुसन्दृशः सुदर्शनीयाः यथा क्षितीनां निवासानां स्वामिनोमर्यान मनुष्याइव अरेपसः अपापाः यथा प्रतिग्रहार्थमन्यत्रागमना स्वगृहस्वामुविन्तोनिर्दोषाभवन्ति तद्वदाइत्यर्थः ईदृशाः शोभनाइत्यर्थः ॥ १ ॥

१. स्तोत्र-परायण मेधावी स्तोताओं के समान यज्ञ में मरुत् लोग शोभन ध्यानवाले हैं। जैसे देवों के सर्वक यजमान कर्म में व्यस्त रहते हैं, वैसे ही वृष्टि-प्रदान आदि कर्मों में मरुत् लोग व्यापृत रहते हैं। मरुत् लोग राजाओं के समान पूजनीय, दर्शनीय और गृहस्वामी मनुष्यों के समान निष्पाप और शोभित हैं।

अ॒ग्निर्न ये भ्राज॑सा रु॒क्मव॑क्षसो॒ वातासो॒ न स्व॒युजः॑ स॒द्यऊ॑तयः ।
प्र॒ज्ञा॒तारो॒ न ज्येष्ठाः॑ सुनी॒तयः॑ सु॒शर्मा॑णो॒ न सोमा॑ ऋ॒तं य॒ते ॥ २ ॥

अ॒ग्निः । न । ये । भ्राज॑सा । रु॒क्मऽव॑क्षसः । वातासः । न ।
स्व॒ऽयुजः॑ । स॒द्यःऽऊ॑तयः । प्र॒ऽज्ञा॒तारः॑ । न । ज्येष्ठाः॑ ।
सु॒ऽनी॒तयः॑ । सु॒ऽशर्मा॑णः । न । सोमाः॑ । ऋ॒तम् । य॒ते ॥ २ ॥

ये मरुतोग्निर्नअग्निरिव स यथा भ्राजसा तेजसा शोभते तद्वद्भ्राजसा युक्ताः। किंच रुक्मवक्षसोरुक्मालंकृतवक्षस्काः वातासोन प्रत्यक्षवायवइव स्वयुजः स्वयं युज्यमानाः सद्यः ऊतयः सद्योगमनाः प्रज्ञातारोन प्रकर्षेण ज्ञातारोज्ञानिनइव ज्येष्ठाः पूज्याः सुनीतयः सुनयनाः सुशर्माणोन सोमाः सुमुखाः सोमाइव ते यूयं ऋतं यज्ञं गच्छते यजमानाय गच्छतेति ॥ २ ॥

२. मरुत् लोग अग्नि के समान तेज से शोभित हैं। उनके वक्षस्थल में स्वर्णालंकार शोभा पाते हैं। वे वायु के समान क्षिप्रगन्ता हैं। ज्ञाता ज्ञानियों के समान वे पूज्य हैं। सुन्दर नेत्रों और सुन्दर मुखवाले सोम समान वे यज्ञ में जाते हैं।

वातासो॒ न ये धुन॑यो जिग॒त्नवो॒ऽग्नी॒नां न जि॒ह्वा वि॑रो॒किणः॑ ।
वर्म॑ण्वन्तो॒ न यो॒धाः शिमी॑वन्तः पितॄ॒णां न शंसाः॑ सुरा॒तयः॑ ॥ ३ ॥

वातासः । न । ये । धुन॑यः । जि॒ग॒त्नवः॑ । अ॒ग्नी॒नाम् । न ।
जि॒ह्वाः । वि॒ऽरो॒किणः॑ । वर्म॑ण्ऽवन्तः । न । यो॒धाः ।
शिमी॑ऽवन्तः । पि॒तॄ॒णाम् । न । शंसाः॑ । सु॒ऽरा॒तयः॑ ॥ ३ ॥

ये मरुतो वातासोन वाता इव धुनयः शत्रूणां कंपयितारो जिगत्नवो गमनशीलाः अस्मिन्सूक्ते मरुतामेव दृष्टान्तकथनं संचरणस्वभाववायुपदार्थवदभिमानिदेवताभेदेनाविरुद्धं तथाग्नीनां न जिह्वाः अग्नीनां ज्वाला इव विरोकिणः विरोचनशीलमुखाः तथा वर्मण्वन्तोन योधाः कवचिनो योद्धार इव शिमीवन्तः शौर्यकर्मवन्तः तथा पितॄणां न शंसाः पितॄणां जनकानां शंसावाच इव सुराधसः सुदानाः एवं महानुभावाः एते मरुतोऽस्मद्यज्ञमागच्छन्तु ॥ ३ ॥

३. मरुत् लोग (वायु के अभिमानी देव) वायु के समान शत्रुओं को कँपानेवाले और गतिशील हैं। अग्नि की ज्वाला के समान शोभन मुखवाले हैं। कवचधारी योद्धाओं के समान वे शौर्य कर्मवाले हैं। पितरों के वचन के समान दानी हैं।

रथानांनयेऽराःसनाभयोजिगीवांसोनशूराअभिद्यवः।
वरेयवोनमर्याघृतप्रुषोऽभिस्वर्तारोअर्कंनसुष्टुभः ॥ ४

रथानाम् । न । ये । अराः । सऽनाभयः । जिगीवांसः । न ।
शूराः । अभिऽद्यवः । वरेऽयवः । न । मर्याः । घृतऽप्रुषः ।
अभिऽस्वर्तारः । अर्कम् । न । सुऽस्तुभः ॥ ४ ॥

रथानां न रथचक्राणामिव अराः ते यथानेकेऽपि सनाभयः समाननाभयो भवन्ति एवं ये परस्परं सनाभयः समानबन्धनाः एकस्मिन्नेवान्तरिक्षे वर्तमानाः परस्परं शुश्रूषव इत्यर्थः जिगीवांसोनशूराः जयशीलाः शूरा इव अभिद्यवः अभिगतदीप्तयः किंच वरेयवो न मर्याः पूर्वं वरं परस्मै प्रदातुमिच्छन्तो मनुष्या इव घृतप्रुषः उदकसेक्तारः उदकपूर्वं हि वराणि वस्तूनि दीयन्ते नियमेन वृष्ट्युदकप्रदा इत्यर्थः । किंच अभिस्वर्तारः अर्कंन अर्कमर्चनीयं स्तवमभिस्वर्तारः अभितः शब्दयितारो बन्दिन इव सुष्टुभः सुस्तुत्याः ॥ ४ ॥

४. मरुत् लोग रथचक्र के डंडों के समान एक नाभि (आश्रय या अन्तरिक्ष) वाले हैं। वे जयशील शूरों के समान दीप्तिवाली हैं। दानेच्छु मनुष्यों के समान वे जल-सेचक हैं। सुन्दर स्तोत्र करनेवालों के समान वे सुशब्दवाले हैं।

अश्वासोनयेज्येष्ठासआशवोदिधिषवोनरथ्यःसुदानवः।
आपोननिम्नैरुदभिर्जिगत्नवोविश्वरूपाअङ्गिरसोनसामभिः॥५॥१२॥

अश्वासः । न । ये । ज्येष्ठासः । आशवः । दिधिषवः । न ।
रथ्यः । सुऽदानवः । आपः । न । निम्नैः । उदऽभिः । जिगत्नवः ।
विश्वऽरूपाः । अङ्गिरसः । न । सामऽभिः ॥ ५ ॥ १२ ॥

अभयानां संसारभयरहितानां आसां विशां मनुष्याणां अधिक्षितमन्तर्निवसन्तं स्वयशसं स्वयमुपार्जितकीर्तिमेनमग्निं गीर्भिः स्तुतिभिः गृणीमसि वयं स्तुमः किंचानर्वणमप्रत्यृतं पत्युरमन्यूनत्वेनापतिगत्वां अदितिमदीनां देवमातरं विश्वाभिः सर्वाभिः ग्नाभिर्देवपत्नीभिः सहितां स्तुमः किंचाक्तोरात्रेर्युवानं स्वतेजसा मिश्रयितारं चन्द्रमसं स्तुमः किंच नृमणाः नृषु मनुष्येषु अनुग्राहकमनाः स्वमादित्यं स्तुमः अथापपतिं सर्वस्य पालकमिन्द्रं स्तुमः ॥ १४ ॥

१४. सारी प्रजा को जो अभय देने के स्वामी हैं, जो अपनी कीर्ति का स्वयं उपार्जन करते हैं, उनकी हम स्तुति करते हैं। देवपत्नियों के साथ अविचल अदिति और रात्रि-पति चन्द्रमा की हम स्तुति करते हैं। वे मनुष्यों पर अनुग्रह करते हैं।

रेभदत्रंजनुषापूर्वोअङ्गिराग्रावाणऊर्ध्वाअभिचक्षुरध्वरम् ।
येभिर्विहायाअभवद्विचक्षणःपाथःसुमेकंस्वधितिर्वनन्वति॥१५॥२५॥

रेभत् । अत्र । जनुषा । पूर्वः । अङ्गिराः । ग्रावाणः । ऊर्ध्वाः ।
अभि । चक्षुः । अध्वरम् । येभिः । विऽहायाः । अभवत् ।
विऽचक्षणः । पाथः । सुऽमेकम् । स्वऽधितिः । वनन्ऽवति ॥१५॥२५॥

अंगिरानाम ऋषिरार्त्विज्येन वृतः सन् देवान् स्तौति अत्रास्मिन्यज्ञे जनुषा जन्मना पूर्वः प्रथमोंगिरानामऋषिः रेभत् देवान् स्तौति ग्रावाणश्चोर्ध्वा उद्यताः सन्तःअध्वरं यज्ञस्य साधनं सोमं अभिचक्षुरभिपश्यन्ति विचक्षणोविद्वानिन्द्रोयेभिर्यैर्ग्रावभिरभिषवसंबन्धिभिः शब्दैर्विहाया-महानभवत् हृष्टोभूदित्यर्थः अस्येन्द्रस्य स्वधितिर्वज्रोवनन्वति उदकवति मार्गे पाथोजलसाध-नं सुमेकं शोभनमुदकं निरगमयदिति शेषः ॥ १५ ॥

१५. ज्येष्ठ अङ्गिरा ऋषि इस यज्ञ में स्तुति करते हैं। प्रस्तर ऊपर उठकर यज्ञीय सोम को प्रस्तुत करते हैं। सोम को पीकर बुद्धिशाली इन्द्र मोटे हुए—उनका अस्त्र उत्तम वारि-वर्षण करने लगा।

॥ इत्यष्टमस्य चतुर्थे पंचविंशोवर्गः ॥ २५ ॥

महीति पंचदशर्चं तृतीयं सूक्तं तान्वोनाम पृथोः पुत्रऋषिः द्वितीया तृतीया नवमीत्रयोदशी-चेति तिस्रोनुष्टुभः नवमी अक्षरसंख्ययापंक्तिः एकादशीन्यंकुसारिणी अष्टकद्वादशकद्वयष्टक-वती पंचदशी पुरस्ताद्बृहती आद्यद्वादशकमष्टका शिष्टानव प्रस्तारपंक्तिच्छन्दस्काः आद्योद्वौ-चागतौतयोद्वौगायत्रौसाप्रस्तारपंक्तिः विश्वेदेवा देवता। तथाचानुक्रान्तं—महि तान्वः पार्थः प्रस्तारपंक्तिः पुरस्ताद्बृहत्यन्त्यं नवमीत्रयोदश्युपान्त्येचानुष्टुभोनवम्यक्षरैः पंक्तिरेकादशी न्यंकुसारिणी-ति गतोविनियोगः।

अथ प्रथमा—

महिद्यावापृथिवीभूतमुर्वीनारीयह्वीनरोदसीसदंनः।
तेभिर्नःपातंसह्यसएभिर्नःपातंशूषणि ॥ १ ॥

महि । द्यावापृथिवी इति । भूतम् । उर्वी इति । नारी इति ।
यह्वी इति । न । रोदसी इति । सदम् । नः । तेभिः । नः ।
पातम् । सह्यसः । एभिः । नः । पातम् । शूषणि ॥ १ ॥

हे द्यावापृथिवी द्यावापृथिव्यौ युवां महि अत्यन्तं यथा भवति तथा उर्वी विस्तीर्णे भूते भवतं किंच यह्वी महत्यौ रोदसी द्यावापृथिव्यौनारीव स्त्रियाविव नोस्माकं सदं सदा-भवतं किंच युवां शूषणि नोस्माकं शत्रुबलेयुष्मदीयैरेभिःपालनैः पातंरक्षतं। किंच युष्मदीयि-तेभिः तैः पालनैर्नोस्माकं सह्यसोतिशयेनाभिभवितुः शत्रोरपि पातं रक्षतं ॥ १ ॥

१. द्यावापृथिवी, तुम लोग अतीव विस्तृत होओ। विशाल-मूर्त्ति होकर तुम लोग, स्त्री के समान, हमारे गृह में आओ। इन रक्षणों से हमें शत्रु से बचाओ। इन कार्यों के द्वारा हमें शत्रु से भली भाँति बचाओ।

यज्ञेयज्ञेसमर्त्योदेवान्सपर्यति। यःसुम्नैर्दीर्घश्रुत्तमआविवासात्येनान् ॥२॥

यज्ञेऽयज्ञे । सः । मर्त्यः । देवान् । सपर्यति । यः । सुम्नैः ।
दीर्घश्रुत्ऽतमः । आऽविवासाति । एनान् ॥ २ ॥

समर्त्योमनुष्यः यज्ञेयज्ञे सर्वेषु यज्ञेषु सर्वान् देवान् सपर्यति परिचरति योदीर्घश्रुत्तमःअ-तिशयेन दीर्घस्य बहोः शास्त्रस्य श्रोतायोमनुष्यः सुम्नैः सुखकरैर्हविर्भिः एनान् देवान् आ-विवासति परिचरति अप्तुखकरैर्हविर्भिः कंवमपि कर्म सपर्यायै भवतीत्यर्थः ॥ २ ॥

२. जो मनुष्य सभी यज्ञों में देवों की सेवा करता है और जो अनेक शास्त्रों का श्रोता सुखकर हवि के द्वारा देवों की सेवा करता है, (वही प्रकृत देव-सेवक है।)

अथ तृतीया—

विश्वेषामिरज्यवोदेवानांवामहः।
विश्वेहिविश्वमहसोविश्वेयज्ञेषुयज्ञियाः ॥ ३ ॥

विश्वेषाम् । इरज्यवः । देवानाम् । वाः । महः । विश्वे । हि ।
विश्वऽमहसः । विश्वे । यज्ञेषु । यज्ञियाः ॥ ३ ॥

हे विश्वेषामिरज्यवोभुवनानामीश्वरादेवानां द्योतमानानां द्योतनादिगुणयुक्तानां भवतां महः महद् वाः वरणीयं धनं विद्यते इतिशेषः तदस्मभ्यं दत्तेतिभावः किंच सर्वे विश्वे यूयं विश्वमहसोव्याप्ततेजस्काः किंच विश्वे हि यूयं यज्ञेषु यज्ञियाः यष्टव्याः ॥ ३ ॥

३. देवता लोग सबके प्रभु हैं। उनका दान महान् है। वे सब प्रकार के बलों से बली हैं। वे सब यज्ञों के समय यज्ञ-भाग पाते हैं।

तेघाराजानोअमृतस्यमन्द्राअर्यमामित्रोवरुणःपरिज्मा।
कद्रुद्रोनृणांस्तुतोमरुतःपूषणोभगः ॥ ४ ॥

ते। घ। राजानः। अमृतस्य। मन्द्राः। अर्यमा।
मित्रः। वरुणः। परिऽज्मा। कत्। रुद्रः। नृणाम्।
स्तुतः। मरुतः। पूषणः। भगः ॥ ४ ॥

अर्यमादेवः मित्रश्च परिज्मासर्वतोगामी सर्वेषामविहतगतिर्वरुणोदेवश्च ऋत्विग्भिः स्तुतो-रुद्रश्च पूषणः सर्वस्य पोषयितारोमरुतश्च भगश्च एते देवामन्द्राः सर्वे स्तुत्याः सन्तोनृणां मनुष्याणां कत् सुखं प्रयच्छतेति शेषः ते सर्वे अमृतस्यामृतसदृशस्य हविषोराजानोघ ईश्वराः खलु॥४॥

४. जिन रुद्र-पुत्रों की स्तुति करने पर मनुष्यों को सुख मिलता है वे अर्यमा, मित्र, सर्वज्ञ वरुण और भग अमृत के राजा, स्तुत्य और पुष्टि-कर्ता हैं।

उतनोनक्तमपांवृषण्वसूसूर्यामासासदनायसधन्या।
सचायत्साद्येषामहिर्बुध्नेषुबुध्न्यः ॥ ५ ॥ २६ ॥

उत। नः। नक्तम्। अपाम्। वृषण्वसू इति। वृषण्ऽवसू।
सूर्यामासा। सदनाय। सऽधन्या। सचा। यत्। सादि।
एषाम्। अहिः। बुध्नेषु। बुध्न्यः ॥ ५ ॥ २६ ॥

उतापिच वृषण्वसू वर्षणधनावश्विनौ युवां अपामुदकानां संबन्धिनौ सधन्या सधन्यौ-समानधनौ सूर्यामासा सूर्याचन्द्रमसौ बुध्नेष्वन्तरिक्षेषु निवासस्थानेषु मेघेषु योहिर्बुध्न्योदेवोसादि सीदति तिष्ठति तैरेषामेभिः सचा सह युवां नक्तं रात्रावहनि चोरुष्यतामिति वक्ष्यमाणेन संबन्धः ॥ ५ ॥

५. जिस समय अहिर्बुध्न्य जल के साथ एकत्र होकर बैठते हैं, उस समय सूर्य और चन्द्रमा एकत्र बैठकर दिन-रात जल-स्वरूप धन का वर्षण करते हैं।

॥ इत्यष्टमस्य चतुर्थे षड्विंशोवर्गः ॥ २६ ॥

अथ षष्ठी—

उतनोदेवावश्विनाशुभस्पतीधामभिर्मित्रावरुणाउरुष्यताम् ।
महःसरायएषतेतिधन्वेवदुरिता ॥ ६ ॥

उत । नः । देवौ । अश्विना । शुभः । पती इति । धामऽभिः ।
मित्रावरुणौ । उरुष्यताम् । महः । सः । रायः । आ । ईषते ।
अति । धन्वऽइव । दुःऽइता ॥ ६ ॥

उतापि च शुभस्पती अश्विना अश्विनौ देवौ नोऽस्मान् धामभिरात्मीयैः शरीरैः उरुष्यतां रक्षतां किंच मित्रावरुणावात्मीयैः शरीरैः रक्षतां यं यजमानं पुरुषममीदेवारक्षन्ति समहोमहान्ति रायोधनान्याईषते आभिमुख्येन गच्छति प्राप्नोति । किंच दुरिता दुरितानि शीघ्रमत्यतिक्रान्ता च भवति । दृष्टान्तः—धन्वेव यथा पथिकोनिरुदकान् देशान् अतिक्रामति तद्वदित्यर्थः ॥ ६ ॥

६. कल्याण के अधिपति अश्विद्वय, मित्र और वरुण अपने शरीरों या तेज से हमारी रक्षा करें। इनके द्वारा रक्षित यजमान बहुत धन पाता है और मरुभूमि के समान दुर्गति से पार पाता है।

उतनोरुद्राचिन्मृळतामश्विनाविश्वेदेवासोरथस्पतिर्भगः ।
ऋभुर्वाजऋभुक्षणःपरिज्माविश्ववेदसः ॥ ७ ॥

उत । नः । रुद्रा । चित् । मृळताम् । अश्विना । विश्वे ।
देवासः । रथःपतिः । भगः । ऋभुः । वाजः ।
ऋभुक्षणः । परिऽज्मा । विश्वऽवेदसः ॥ ७ ॥

उतापि च रुद्रा रुद्रपुत्रा अश्विनावश्विनौ नोऽस्मान् मृळतां सुखयतां किंच रथस्पतिः रथस्य पतिः पूषा ऋभुर्वाजोऽन्नवान् भगश्च परिज्मा परितोगन्ता वायुश्चैते विश्वे सर्वे देवाः सुखयन्तु हे विश्ववेदसोविश्ववेदाः सर्वप्रज्ञाः सर्वधनावा हे ऋभुक्षणोमहान्तोमहावयोदेवायूयं सुखयत ॥७॥

७. हम स्तुति करते हैं। रुद्रपुत्र वायु, अश्विद्वय, समस्त देवता, रथारूढ पूषा, ऋभु, अन्नवान् भग, सर्वत्रगामी इन्द्र, सर्वज्ञाता ऋभुक्षण आदि हमें सुख दें।

अथाष्टमी—

ऋभुर्ऋभुक्षाऋभुर्विधतोमदआतेहरीजूजुवानस्यवाजिना ।
दुष्टरंयस्यसामचिदृधग्यज्ञोनमानुषः ॥ ८ ॥

ऋभुः । ऋभुक्षाः । ऋभुः । विधतः । मदः । आ । ते ।
हरी इति । जूजुवानस्य । वाजिना । दुस्तरम् । यस्य ।
साम । चित् । ऋधक् । यज्ञः । न । मानुषः ॥ ८ ॥

ऋभुक्षा महानिन्द्रः ऋभुर्महेन भाति किंच विधतः त्वां परिचरतोयजमानस्य मदोहर्षोपि ऋभुर्यत्तेन भाति हे इन्द्र आजूजुवानस्य प्रविशीघ्रमागच्छतस्ते तव हरी अश्वावपि वाजिना वाजिनौ बलवन्तौ किंच यस्येन्द्रस्य संबन्धि सामचिद्दीयमानं सामापि दुस्तरं रक्षोभिरपापणीयं एषयज्ञः मानुषः मनुष्यसाधारणोन किंतु ऋधक् पृथक् दिव्यइत्यर्थः ॥ ८ ॥

८. महान् इन्द्र यज्ञ के द्वारा प्रभायुक्त होते हैं। इन्द्र, जिस समय तुम वेगशाली रथ की योजना करते हो, उस समय यज्ञकर्ता भी आनन्द पाते हैं। इन्द्र के लिए जो सोम का पान होता है, वह असाधारण है। उनके लिए जो यज्ञानुष्ठान होता है, वह मनुष्य के लिए साध्य नहीं है। वह दिव्य है।

कृधीनोअह्रयोदेवसवितःसचंस्तुषेमघोनाम् ।
सहोनइन्द्रोवह्निभिर्न्येषांचर्षणीनांचक्रंरश्मिनयोयुवे ॥ ९ ॥

कृधि । नः । अह्रयः । देव । सवितरिति । सः । च । स्तुषे ।
मघोनाम् । सहो इति । नः । इन्द्रः । वह्निऽभिः । नि । एषाम् ।
चर्षणीनाम् । चक्रम् । रश्मिम् । न । योयुवे ॥ ९ ॥

हे सवितः प्रेरक नोस्मान् अहयःअनवनतवदनानलज्जितान् कृधि कुरु किंच सत्वं मघोनां धनवतां यजमानानां संबन्धिभिः ऋत्विग्भिः स्तुतः स्तुषेस्तूयसे इन्द्रोवह्निभिः वोढृभिर्मरुद्भिः सहसहो बलं चर्षणीनां मनुष्याणां नोस्माकं नियोयुवे भृशं निमिश्रयतु तत्रदृष्टान्तः—चक्रं रथस्य चक्रं रश्मिं न यथा रश्मिचक्रादिकं तद्वदित्यर्थः ॥ ९ ॥

९. प्रेरक देव, हमें अलज्जित करो। तुम धनी यजमानों के ऋत्विकों के द्वारा स्तुत होते हो। इन्द्र हमारे बल-रूप हैं। उन्होंने इन मनुष्यों के यज्ञ में आने के लिए अपने उज्ज्वल रथ-चक्र में मानो वायु को जोता—महावेग से पधारे।

ऐषुद्यावापृथिवीधातंमहदस्मेवीरेषुविश्वचर्षणिश्रवः ।
पृक्षंवाजस्यसातयेपृक्षंरायोततुर्वणे ॥ १० ॥ २७ ॥

आ । एषु । द्यावापृथिवी इति । धातम् । महत् । अस्मे इति ।
वीरेषु । विश्वऽचर्षणि । श्रवः । पृक्षम् । वाजस्य ।
सातये । पृक्षम् । राया । उत । तुर्वणे ॥ १० ॥ २७ ॥

हे द्यावापृथिवी द्यावापृथिव्यौ युवामस्मेस्माकंसंबन्धिष्येषु वीरेषु पुत्रेषु विश्वचर्षणि. स र्वमनुष्योपेतं महद् श्रवोयशः आधावयाथत्तं किंच वाजस्य बलस्य सातये संभजनाय पृक्षं पालकमन्नं दत्तं उतापिच तुर्वणे शत्रूणां वरणाय राया धनेन पृक्षं अन्नं दत्तं ॥ १० ॥

१०. द्यावापृथिवी, तुम लोग हमारे पुत्रादि को प्रभूत अन्न दो। वह अन्न लोगों के लिए यथेष्ट हो, बलकर हो, धन-लाभ और विपत्ति से परित्राण पाने के लिए उपयोगी हो।

॥ इत्यष्टमस्य चतुर्थे सप्तविंशोवर्गः ॥ २७ ॥

एतंशंसमिन्द्रास्मयुष्ट्वंकूचित्सन्तंसहसावन्नभिष्टयेसदापाह्यभिष्टये। मेदतांवेदतावसो ॥ ११ ॥

एतम्। शंसम्। इन्द्र। अस्मऽयुः। त्वम्। कूऽचित्।
सन्तम्। सहसाऽवन्। अभिष्टये। सदा। पाहि।
अभिष्टये। मेदताम्। वेदता। वसो इति ॥ ११ ॥

हे वसो वासयितः सहसावन् बलवन्निन्द्रास्मयुरस्मान्कामयमानस्त्वं कूचित् क्वचित् अ पि सन्तं स्थितं एतमिमं शंसं स्तोतारमभिष्टये अभिलषितसिध्यर्थं अपिचाभिष्टये यागार्थं सदा सर्वदा पाहि रक्ष किंच मेदतां त्वदीयेन महानेन स्तोतारं मां वेदतावुध्यस्व ॥ ११ ॥

११. इन्द्र, जिस समय तुम हमारे पास आने की इच्छा करते हो, उस समय स्तोता जहाँ कहीं भी रहे, यज्ञ करते समय उसकी रक्षा करो। हे धनद, तुम्हारी ओर स्तुति करता है, उसको जानो।

एतंमेस्तोमंतनानसूर्येद्युतद्यामानंवावृधन्तनृणाम्।
संवननंनाश्व्यंतष्टेवानपच्युतम् ॥ १२ ॥

एतम्। मे। स्तोमम्। तना। न। सूर्ये। द्युतत्ऽयामानम्।
ववृधन्त। नृणाम्। सम्ऽवननम्। न। अश्व्यम्।
तष्टाऽइव। अनपऽच्युतम् ॥ १२ ॥

. नृणां नेतॄणां देवानां शत्रूणां संवननंसंभजनं सम्यक्हिंसनमेवावस्थितं मे मदीयमेत- मिमं स्तोमं स्तोत्रं ववृधन्त कतिजोवर्धयन्तु। तत्रदृष्टान्तः सूर्येद्युतद्यामानं दीप्तगमनं तनान विस्तृतान्नरश्मीन् वर्धयन्ति यद्वदित्यर्थः अनपच्युतं च्युतिरहितं अश्व्यं अश्वार्हं रथं तष्टेव य- था वर्धकीरथिम्यागतेषु संस्कृतं रथं संस्कारस्थानात् प्रेरयति यद्वदित्यर्थः ॥ १२ ॥

१२. मेरा यह विस्तृत स्तोत्र, दीप्ति के साथ, सूर्य के लिए जाता है और मनुष्यों को भी बढ़ाता है। जैसे बढ़ई अश्व के खींचने योग्य सुदृढ़ रथ बनाता है, वैसे ही मैंने इसे बनाया है।

वावर्तुयेषांरायायुक्तैषांहिरण्ययी । नेमधितानपौंस्यावृथेवविष्टान्ता॥१३॥

ववर्त । येषाम् । राया । युक्ता । एषाम् । हिरण्ययी । नेमऽधिता ।
न । पौंस्या । वृथाऽइव । विष्टऽअन्ता ॥ १३ ॥

येषां देवानां स्वभूतेन रायास्मभ्यं दातव्येन धनेन युक्ता स्तुतिः आवर्त्यं वर्तते येषामे-
षामपि हिरण्ययी हिरण्मयी हिरण्यालंकारवत् प्रीतिकरास्मन्मुखात् पुनः पुनरावर्तत इत्यर्थः ।
अत्र दृष्टान्तः—पौंस्या पौंस्यानि बलानि नेमधिता नेमधितौ संग्रामे विष्टान्ता व्याप्तावसाना वृथेव
यथा घटिकायंत्रपालावद्‌इत्यर्थः ॥ १३ ॥

१३. जिनके पास हम धन की इच्छा करते हैं, उनके लिए हम अत्यन्त
उत्तम स्तोत्र का बार-बार पारायण करते हैं। जैसे युद्ध के सैनिक बार-
बार अग्रसर होते हैं अथवा जैसे घटीचक्र श्रेणीबद्ध होकर आगे-पीछे
चलता है, हमारे स्तोत्र भी वैसे ही हैं।

प्रतद्दुःशीमेपृथवानेवेनेप्ररामेवोचमसुरेमघवत्सु ।
येयुक्त्वायपञ्चशतास्मयुपथाविश्राव्येषाम् ॥ १४ ॥

प्र । तत् । दुःऽशीमे । पृथवाने । वेने । प्र । रामे । वोचम् ।
असुरे । मघवत्ऽसु । ये । युक्त्वाय । पञ्च । शता ।
अस्मऽयु । पथा । विऽश्रावि । एषाम् ॥ १४ ॥

ये देवाः पंच शता शतानि रथान् युक्त्वाश्वैर्युक्त्वा अस्मयुरस्मत्कामाः सन्तः पथा
यज्ञमार्गेणागच्छन्ति येषामेषां देवानां विश्राविदेवानां लोके वाग्विशेषेण श्रावकगुणयुक्तं तत्स्तो-
त्रं दुःशीमे दुःशीमनाम्नि पृथवाने पृथवानः पृथिरस्मिन् वेनेष असुरे बलवति रामे चैतेषु
राजसु प्रवोचं प्रब्रवीमि प्रख्यापयामीत्यर्थः मघवत्सु अन्येषु धनवत्सु च प्रख्यापयामीत्य-
र्थः ॥ १४ ॥

१४. जैसे सब देवता पाँच सौ रथों में घोड़े जोतकर, यज्ञ में आने
के लिए, मार्ग में जाते हैं, वैसे ही उनके प्रशंसा-युक्त स्तोत्र का पाठ मैंने
दुःशीम, पृथवान्, वेन और बली राम आदि धनपति राजाओं के पास
किया है।

अथ पञ्चदशी—

अधीन्न्वत्रसप्ततिंचसप्तच ।
सद्योदिदिष्टतान्वःसद्योदिदिष्टपार्थ्यःसद्योदिदिष्टमायवः॥१५॥२८॥

अधि । इत् । नु । अत्रे । सप्ततिम् । च । सप्त । च ।
सद्यः । दिदिष्ट । तान्वः । सद्यः । दिदिष्ट । पार्थ्यः ।
सद्यः । दिदिष्ट । मायवः ॥ १५ ॥ २८ ॥

अत्रैषुराजसु तान्वोनामऋषिः गवां सप्तसप्तर्तिं च नु क्षिप्रंसद्य इव सद्यएवाधिदिदिष्ट अ-भिपूर्वोदिशिर्याचनार्थः ययाचे किंच पार्थ्योनामयुवनाश्वनामकस्य कुले पृथेः पुत्रः कश्चित् सद्यएव गवां सप्तसप्ततिं अधिदिदिष्ट मायवोपिसद्यएवाधिदिदिष्ट ॥ १५ ॥

१५. इन राजाओं से तान्व, पार्थ्य और मायव आदि ऋषियों ने शीघ्र ही सतहत्तर गायें माँगीं।

॥ इत्यष्टमस्य चतुर्थेऽष्टाविंशोवर्गः ॥ २८ ॥

प्रैतेवदंति चतुर्दशर्चं चतुर्थं सूक्तं कद्रुःपुत्रस्य सर्पस्यार्बुदस्यार्षं पञ्चमी सप्तमी चतु-र्दशी त्रिष्टुभः शिष्टाएकादशजगत्यः सोमाभिषवार्थाग्रावाणोत्र देवताः । तथाचानुक्रांतं—प्रै-तेचतुर्दश सर्पोर्बुदः काद्रवेयोग्राव्णोस्तौत् पञ्चम्यन्त्येत्रिष्टुभौ सप्तमीचेति । ग्रावस्तोत्रे एतत्सूक्तं । सूत्रितंच—प्रैतेवदन्त्यर्बुदं प्रागुत्तमायाआवर्तंश्च सेपयोग्रावाणइति सूक्तयोरिति । षष्ठेहनेप सूक्तं ग्रावस्तोत्रं । सूत्रितंच—अर्बुदमेवेत्येके प्रतेग्रावाणइत्येके ।

तत्र प्रथमा—

प्रैतेवदन्तुप्रवयंवदामग्रावभ्योवाचंवदतावदंद्भ्यः ।
यदद्रयःपर्वताःसाकमाशवःश्लोकंघोषंभरथेन्द्रायसोमिनः ॥ १ ॥

प्र । एते । वदन्तु । प्र । वयम् । वदाम । ग्रावऽभ्यः । वाचम् ।
वदत । वदत्ऽभ्यः । यत् । अद्रयः । पर्वताः । साकम् । आशवः ।
श्लोकम् । घोषम् । भरथ । इन्द्राय । सोमिनः ॥ १ ॥

एते ग्रावाण उपलाः प्रवदन्तु अभिषवशब्दं कुर्वन्तु वयं यजमानाः वदद्भ्योभिषवशब्दं कुर्वद्भ्योग्रावभ्योग्राव्णामर्थाय वाचं प्रवदाम किंच हे ऋत्विजः स्तुतिलक्षणां वाचं वदत यद्वत् यथा अद्रयः आदरणीयादृढाः आशवः सोमाभिषवार्थं प्रकारिताः पर्वताः ग्रावाणः सर्वे यूयं साकं सहेन्द्रायेन्द्रार्थं श्लोकं श्रोतव्यं घोषं अभिषवशब्दं भरथ पोषयथ यदानीं सोमिनः सोमवन्तः सोमेन तृप्ताभवथ ॥ १ ॥

१. प्रस्तर अभिषव-शब्द करें। हम यजमान उन प्रस्तरों की स्तुति करते हैं। ऋत्विको, स्तोत्रपाठ करो। आदरणीय और दृढ़ प्रस्तर, इन्द्र के लिए सोमाभिषव का शब्द करो। सोमवालो, सोम से तृप्त होओ।

अथ द्वितीया—

एतेवदन्तिशतवत्सहस्रवदभिक्रन्दन्तिहरितेभिरासभिः ।
विष्ट्वीग्रावाणःसुकृतःसुकृत्ययाहोतुश्चित्पूर्वेहविरद्यमाशत ॥ २ ॥

एते । वदन्ति । शतऽवत् । सहस्रऽवत् । अभि । क्रन्दन्ति ।
हरितेभिः । आसऽभिः । विष्ट्वी । ग्रावाणः । सुऽकृतः । सुऽकृत्यया ।
होतुः । चित् । पूर्वे । हविःऽअद्यम् । आशत ॥ २ ॥

शतवत्सहस्रवद्यथा शतं मनुष्याःसहवदन्ति सहस्रवत्परिमिता मनुष्याश्च यद्वदेवं ग्रावाणोवदन्ति शब्दं कुर्वन्ति किंच हरितेभिः सोमसंसर्गाद्धरितवर्णैः आसभिः आस्यैरभिक्रन्दन्ति सोममभिलक्ष्य देवानाह्वयन्तीत्यर्थः किंच सुकृतः शोभनकर्माणो ग्रावाणोविष्ट्वी यज्ञंप्राप्य होतुर्देवानामाह्वातुरग्नेः पूर्वेचित् पूर्वमेवाद्यं भक्षणीयं हविराशत प्राप्नुवन्ति ॥ २ ॥

२. ये पत्थर सौ वा सहस्र व्यक्तियों के समान शब्द करते हैं। ये सोम-संसर्ग से हरित-वर्ण मुखों से देवों को बुलाते हैं। शोभनकर्मा ये पत्थर यज्ञ को पाकर देवाह्वान करनेवाले अग्नि के पूर्व ही भक्षणीय हवि को पाते हैं।

एतेवदन्त्यविदन्ननामधुन्यूङ्खयन्तेअधिपक्वआमिषि ।
वृक्षस्यशाखामरुणस्यबप्सतस्तेसूभर्वावृषभाःप्रेमराविषुः ॥ ३ ॥

एते । वदन्ति । । अविदन् । अना । मधु । नि । ऊङ्खयन्ते ।
अधि । पक्वे । आमिषि । वृक्षस्य । शाखाम् । अरुणस्य । बप्सतः ।
ते । सूभर्वाः । वृषभाः । प्र । ईम् । अराविषुः ॥ ३ ॥

अरुणस्यारुणवर्णस्य वृक्षस्य शाखां बप्सतोभक्षयन्तस्ते सूभर्वाः शोभनभक्षावृषभाः प्रेमराविषुः प्रशब्दयन्ति यथा पक्वे आमिषि अध्यामिषे क्रव्यादोमांसभक्षकाश्च मांसविषये यथा न्यूङ्खयन्ते शब्दविशेषं कुर्वन्ति किंच मधु मदकरं सोमं अना आस्येनाविदन् लभन्ते ॥ ३ ॥

३. नये वर लाल रंग की शाखा को खाते हुए शोभन भोजनवाले वृषभों के समान ये प्रस्तर शब्द करते हैं। जैसे मांस भक्षण करनेवाले मांस-पाक होने पर आनन्द-ध्वनि करते हैं, वैसे ही ये भी शब्द करते हैं।

बृहद्वदन्तिमदिरेणमन्दिनेन्द्रंक्रोशन्तोविदन्ननामधु ।
संरभ्याधीराःस्वसृभिरनर्तिषुराघोषयन्तःपृथिवीमुपब्दिभिः ॥ ४ ॥

बृहत् । वदन्ति । मदिरेण । मन्दिना । इन्द्रम् । क्रोशन्तः ।
अविदन् । अना । मधु । सम्ऽरभ्य । धीराः । स्वसृऽभिः ।
अनर्तिषुः । आऽघोषयन्तः । पृथिवीम् । उपब्दिऽभिः ॥ ४ ॥

मदिरेण मदकरेण मन्दिना अभिषूयमाणेन सोमेन इन्द्रं क्रोशन्तः आह्वयन्तः एते ग्रावाणो बृहद्वत्यन्तं वदन्ति शब्दयन्ति किंच अना आस्येन मधु मदकरं सोममविदन् अलभन्त किंच संरभ्य संरब्धाभूत्वा धीराः धृष्टाः सन्तः उपब्दिभिः शब्दैः पृथिवीमाघोषयन्तः पूरयन्तः स्वसृभिरंगुलीभिः सहानर्तिषुः नृत्यन्ति ॥ ४ ॥

४. मदकर और बुलाये जाते हुए सोम से ये प्रस्तर इन्द्र को बुलाते हुए विशाल शब्द करते हैं। इन्होंने मुख से मदकर सोम को प्राप्त किया। ये अभिषव-कार्य में लगकर और धीर होकर अपने शब्दों से पृथिवी को भरते हुए भगिनी-स्वरूप अँगुलियों के साथ नाचते हैं।

सुपर्णावाचमक्रतोपद्यव्याखरेकृष्णाइषिराअनर्तिषुः ।
न्यङ्निर्यन्त्युपरस्यनिष्कृतंपुरुरेतोदधिरेसूर्यश्वितः ॥ ५ ॥ २९ ॥

सुऽपर्णाः । वाचम् । अक्रत । उप । द्यवि । आऽखरे । कृष्णाः ।
इषिराः । अनर्तिषुः । न्यक् । नि । यन्ति । उपरस्य । निःऽकृतम् ।
पुरु । रेतः । दधिरे । सूर्यऽश्वितः ॥ ५ ॥ २९ ॥

सुपर्णाः सुपतनाः ग्रावाणः उपरपलस्य समीपे द्यव्यन्तरिक्षे वाचमभिषवशब्दं अक्रत कुर्वन्ति किंच आखरे मृगाणां वजमाखरस्तस्मिन् इषिरा गमनशीलाः कृष्णाः कृष्णमृगा इव सूर्यश्वितः सूर्यवत् श्वेतवर्णाः कृष्णाः अनर्तिषुः नृत्यन्ति निष्कृतं ग्रावभिः पीडितं सत् उपरस्योपलस्य न्यक् अधोमुखं सोमं नियन्ति निगमयन्ति किंच पुरु बहु रेतः सोमलक्षणमुदकं दधिरे धारयन्ति ॥ ५ ॥

५. प्रस्तरों का शब्द सुनकर विदित होता है कि, आकाश में पक्षी शब्द करते हैं। ये मृगों के स्थान में गमनशील कृष्ण-सार मृगों के समान गति-शील होकर नाच रहे हैं। निष्पीड़ित सोमरस को ये प्रस्तर नीचे गिराते हैं—मानो सूर्य के समान श्वेतवर्ण जल धारण करते हैं।

॥ इत्यष्टमस्य चतुर्थे एकोनत्रिंशोवर्गः ॥ २९ ॥

उग्राइवप्रवहन्तःसमायमुःसाकंयुक्तावृषणोबिभ्रतोधुरः ।
यच्छ्वसन्तोजग्रसानाअराविषुःशृण्वएषांप्रोथथोअर्वतामिव ॥ ६ ॥

उग्राःऽइव । प्रऽवहन्तः । सम्ऽआयमुः । साकम् । युक्ताः ।
वृषणः । बिभ्रतः । धुरः । यत् । श्वसन्तः । ग्रसमानाः । अराविषुः ।
शृण्वे । एषाम् । प्रोथथः । अर्वताम्ऽइव ॥ ६ ॥

वृषणः फलं वर्षतीति वृषा यज्ञः तस्य धुरः धुरं भारं बिभ्रतो धारयन्तः एते ग्रावाणः साकं सोमेन सह युक्ताः सन्तः प्रवहन्तः रथं एकधुरेण वोढार उग्रा अश्वा इव समायमुः समागच्छन्ति आयता भवन्तीत्यर्थः यद्यदा श्वसन्तोऽभिषवसमये उत्पतननिपतनव्यापारजनितेन वायुना श्वसन्त इव स्थिता ग्रावाणः ग्रसमानाः सोमं ग्रसमानाः अराविषुः शब्दायन्ते तदानीमेषां ग्राव्णां संबन्धि प्रोथयोर्मुखात् शब्दः शृण्वे श्रूयते । तत्र दृष्टान्तः—अर्वतामिव अश्वानां संबन्धिनो मुखाद्धेषाशब्दो यथा तद्वदित्यर्थः ॥ ६ ॥

६. जैसे बली अश्व परस्पर मिलकर और रथ की धुरा को धारण करके रथ ले जाते हैं और शरीर को बढ़ाते हैं, वैसे ही ये प्रस्तर भी आयत होकर सोमरस को बरसाते हैं। ये सोम का ग्रास करते-करते, श्वास के साथ, शब्द करते हैं। घोड़ों के समान इनके मुख से निकले शब्द को मैं सुनता हूँ।

दशावनिभ्योदशकक्ष्येभ्योदशयोक्त्रेभ्योदशयोजनेभ्यः ।
दशाभीशुभ्योअर्चताजरेभ्योदशधुरोदशयुक्तावहद्भ्यः ॥ ७ ॥

दशावनिऽभ्यः । दशऽकक्ष्येभ्यः । दशऽयोक्त्रेभ्यः । दशऽयोजनेभ्यः ।
दशाभीशुऽभ्यः । अर्चत । अजरेभ्यः । दश । धुरः । दश ।
युक्ताः । वहत्ऽभ्यः ॥ ७ ॥

दशावनिभ्यः कर्माण्यवन्ति गच्छन्तीत्यवनयः दशावनयोऽङ्गुलयो येषां ग्राहकत्वेन संबन्धिनः ते दशावनयः तान् ग्राव्णः द्वितीयार्थे चतुर्थी दशकक्ष्येभ्यः कक्ष्याः प्रकाशिका अंगुलयो येषां ते दशकक्ष्याः तान् दशयोक्त्रेभ्यो योक्त्रवद् बन्धने साधनभूता दशांगुलयो येषां तान् दशयोजनेभ्यः सोमेन सह योजने साधनभूता दशाङ्गुलयो येषां तान् दशाभीशुभ्यः कर्माण्यभितो व्याप्नुवन्तीत्यभीशवोऽङ्गुलयो दश येषां तान् अजरेभ्यः जरावर्जितान्दश दशभिः धुरः धूर्भिः हिंसितृभिः तृतीयार्थे प्रथमा युक्ता युक्तान् द्वितीयार्थे प्रथमा वहद्भ्यो वहतोऽभिषवाख्ये कर्मणि व्याप्रियमाणानर्चत स्तुत हे ऋत्विज इति शेषः । अत्र यास्कः—अवनयोऽङ्गुलयो भवन्त्यवन्ति कर्माणि कक्ष्याः

प्रकाशयन्तिकर्माणियोक्त्राणि योजयन्तीति व्याख्यातमभीशवोऽश्वमुखवेकर्माणि दशधुरोद-शयुक्ताश्रह्व्यः धुर्धुर्वितैर्वधकर्मणश्चरमणीयराधुरेवस्मादेवविहरन्ति वहन्ति धारयतेर्वेति[1] ॥ ७ ॥

७. इन अविनाशी प्रस्तरों का गुण-कीर्त्तन करो। सोम के अभिषव के समय, जब कि, दस अँगुलियाँ इन्हें छूती हैं, उस समय इन दस अँगु-लियों को प्रस्तर-स्वरूप घोड़ों की दस वरत्रा (कसने का रस्सा= तंग) अथवा दस योक्त्र (घोड़े के सामान), दस रथ जोतने की रस्सियाँ अथवा दस लगाम जाना जाता है। या दस रथ-धुरायें इकट्ठा होकर ढोती हैं।

तेअद्रयोदशयन्त्रासआशवस्तेषामाधानंपर्येतिहर्यतम्।
तऊंसुतस्यसोम्यस्यान्धसोंऽशोःपीयूषंप्रथमस्यभेजिरे ॥ ८ ॥

ते। अद्रयः। दशऽयन्त्रासः। आशवः। तेषाम्। आऽधानम्।
परि। एति। हर्यतम्। ते। ऊँ इति। सुतस्य। सोम्यस्य।
अन्धसः। अंशोः। पीयूषम्। प्रथमस्य। भेजिरे ॥ ८ ॥

अद्रयः आदरणीयाआशवः क्षिप्रकारिणस्ते एते प्रस्तराश्रावाणोदशयन्त्रासोदशयन्त्रास्ते षामेषां ग्राव्णां संबन्धि यदाधानमस्तेषणमभिषवकर्म हर्यतंस्पृहणीयं पर्येति परितोगच्छति इव ते ग्रावाणएव सुतस्याभिषुतस्य सोमस्य सोमसंबन्धिनःअंशोः खंडस्वरूपस्यान्धसोऽन्नस्य पीयूषममृतं प्रथमस्य भेजिरे इति ॥ ८ ॥

८. ये प्रस्तर दस अँगुलियों को बन्धन की रस्सी के समान पाकर शीघ्र-शीघ्र काम करते हैं। इनके द्वारा उत्पादित सोमरस हरित-वर्ण होकर आ रहा है। सोम के टुकड़े कूटे जाकर और अन्नरूप धारण करके अमृतरस निकालते हैं। सोम का प्रथम अंश ये ही पाते हैं।

तेसोमादोहरीइन्द्रस्यनिंसतेंऽशुंदुहन्तोअध्यासतेगवि।
तेभिर्दुग्धंपपिवान्सोम्यंमध्विन्द्रोवर्धतेप्रथतेवृषायते ॥ ९ ॥

ते। सोमऽअदः। हरी इति। इन्द्रस्य। निंसते। अंशुम्।
दुहन्तः। अधि। आसते। गवि। तेभिः। दुग्धम्। पपिऽवान्।
सोम्यम्। मधु। इन्द्रः। वर्धते। प्रथते। वृषऽयते ॥ ९ ॥

ते सोमादः सोमस्याचाराः ते प्रस्तराः ग्रावाणइन्द्रस्य हरी अश्वौ निंसतेनिक्षंति चुंबन्ति प्राप्नुवन्तीत्यर्थः किंच गवि गव्ये अभिषवणचर्मण्यंशुं सोमं दुहन्तः अध्यासते किंचेन्द्र स्तेभिस्तैर्दुग्धं सोम्यं सोममयं मधु मदकरं पपिवान् पीतवान् वर्धते वृद्धशरीरोभवति प्रथते विस्तीर्णशरीरश्च भवति वृषायते वृषेवाचरति ॥ ९ ॥

---

१ नि० ३. ९।

९. वे पत्थर सोम का भक्षण करके इन्द्र के दो घोड़ों को चूमते हैं—अर्थात् इन्द्र के रथ के पास जाते हैं। डाँठ अंशु से रस निकलकर गोचर्म के ऊपर आता है। ये पत्थर सोम से जो मधुर रस निकालते हैं, उसे पीकर इन्द्र फूलते और बढ़ते हैं—साँड़ के समान बल प्रकट करते हैं।

वृषावोअंशुर्नकिलारिषाथनेळावन्तःसदमित्स्थनाशिताः।
रैवत्येवमहसाचारवःस्थनयस्यग्रावाणोअजुषध्वमध्वरम्॥१०॥२०॥

वृषा। वः। अंशुः। न। किल। रिषाथन। इळाऽवन्तः।
सदम्। इत्। स्थन। आशिताः। रैवत्याऽइव। महसा। चारवः।
स्थन। यस्य। ग्रावाणः। अजुषध्वम्। अध्वरम्॥ १०॥ २०॥

अंशुः सोमो वो युष्माकं वृषा सेक्ता वर्षिता भविष्यति यूयमपि न रिषाथन न रिष्यथ न क्षीणा भवथ किल। किंच इळावन्तोऽन्नवन्तश्च यूयं सदमित् सदैवाशिताः भोजयिताः स्थन भवथ किंच रैवत्येव यथा रेवन्तः तेजसा युक्ता भवन्ति तद्वत् महसा तेजसा युक्ताश्चारवः कल्याणाः स्थन भवथ हे ग्रावाणो यूयं यस्य यजमानस्याध्वरं यज्ञमजुषध्वं सेवध्वं॥ १०॥

१०. प्रस्तरो, सोम का अंशु, खण्ड वा डाँठ तुम्हें रस देगा; तुम निराश नहीं होना। तुम जिनके यज्ञ में रहते हो, वे सदा अन्न और भोजनवाले होते हैं और सदा धनी लोगों के समान उज्ज्वल तेज से युक्त होते हैं।

॥ इत्यष्टमस्य चतुर्थे विंशोवर्गः॥ २०॥

तृदिलाअतृदिलासोअद्रयोश्रमणाअशृथिताअमृत्यवः।
अनातुराअजराःस्थामविष्णवःसुपीवसोअतृषिताअतृष्णजः॥११॥

तृदिलाः। अतृदिलासः। अद्रयः। अश्रमणाः। अशृथिताः।
अमृत्यवः। अनातुराः। अजराः। स्थ। अमविष्णवः।
सुऽपीवसः। अतृषिताः। अतृष्णऽजः॥ ११॥

अश्रमणाः श्रमवर्जिताः अशृथिताः अन्यैरशिथिलीकृताः अमृत्यवः अमारिताः अनातुरा अरोगाः अजरा जरारहिताः स्थ भवथ किंचामविष्णवः उत्क्षेपणापक्षेपणगत्योपेताः हे ग्रावाणस्तृदिलाः अन्येषां भेदकाः अतृदिलासः स्वयमन्येनाभिन्नाः सुपीवसः सुबलाः अतृषिताः तृष्णारहिताः अतृष्णजः निःस्पृहाः भवथ॥ ११॥

११. तुम स्वयं निराश न होकर दूसरे को निराश करनेवाले हो। तुम्हें परिश्रम, शिथिलता, मृत्यु, जरा, रोग, तृष्णा और स्पृहा नहीं है। तुम मोटे हो। तुम लोग फेंकने और बटोरने में बहुत निपुण हो।

अथ द्वादशी—

ध्रुवाएववःपितरोयुगेयुगेक्षेमंकामासःसदसोनयुञ्जते ।
अजुर्यासोहरिषाचोहरिद्रवआद्यांरवेणपृथिवीमशुश्रवुः ॥ १२ ॥

ध्रुवाः । एव । वः । पितरः । युगेऽयुगे । क्षेमंऽकामासः । सदसः ।
न । युञ्जते । अजुर्यासः । हरिऽसाचः । हरिद्रवः ।
आ । द्याम् । रवेण । पृथिवीम् । अशुश्रवुः ॥ १२ ॥

हे ग्रावाणोयुगेयुगे सर्वेषु युगेषु ध्रुवाएव वोयुष्माकं पितरः पितृभूताः पर्वताः क्षेमकामासः क्षेमकामाः सदसः सदांसि आत्मना नयुंजते न संयोजयन्ति अजुर्यासोजरारहिता हरिषाचः सोमस्य संसक्तारः हरिद्रवः सोमसंसर्गाद्धरितवर्णाः द्यां दिवं पृथिवीं च रवेणाभिषवशब्देनाशुश्रवुः श्रावयन्ति ॥ १२ ॥

१२. तुम्हारे पूर्वज पर्वत युग-युगान्तरों से स्थिर हैं, पूर्णाभिलाष हैं और किसी भी कारण से अपना स्थान नहीं छोड़ते। वे अजर और हरे वृक्ष से युक्त हैं। हरे वर्ण के होकर पक्षियों के कलरव के द्वारा द्यावापृथिवी को पूर्ण करते हैं।

तदिद्वदन्त्यद्रयोविमोचनेयामन्नञ्जस्पाइवघेदुपब्दिभिः ।
वपन्तोबीजमिवधान्याकृतःपृञ्चन्तिसोमंनमिनन्तिबप्सतः ॥ १३ ॥

तत् । इत् । वदन्ति । अद्रयः । विऽमोचने । यामन् । अञ्जःपाःऽइव ।
घ । इत् । उपब्दिऽभिः । वपन्तः । बीजम्ऽइव । धान्यऽकृतः ।
पृञ्चन्ति । सोमम् । न । मिनन्ति । बप्सतः ॥ १२ ॥

अद्रयः आदरणीयाः ग्रावाणोयामन् यामनि अंजसा अंजसा यान्ति गच्छन्तीत्यंजस्याः तेषां रथानामिवोपब्दिभिः तदित् तदेवाभिषवकर्म विमोचनेएव तत्सोमरसविमोचनवेलायामभिवदन्ति प्रकाशयन्ति । बप्सतः सोमं भक्षयन्तोग्रावाणएव वपन्तोधान्याकृतः कृषीवलाः बीजमिव यथा पृंचंति संपर्चयन्ति तद्वत्सोमंपृंचंतिसंपर्चयन्तीत्यर्थः नपनंमिनन्ति नहिंसन्तीत्यर्थः ॥ १३ ॥

१३. जैसे रथारोही लोग रथ चलाने के स्थान पर रथ चलाकर ध्वनि प्रकट करते हैं, वैसे ही ये पत्थर सोमरस को उत्पन्न करने के समय शब्द करते हैं। जैसे धान्य बोनेवाले धान्य बोते हैं, वैसे ही ये सोमरस फैलाते हैं। ये खाकर उसे नष्ट नहीं करते।

अथ चतुर्दशी—

सुतेअंध्वरेअधिवाचमक्रताक्रीळयोनमातरंतुदन्तः ।
विषूमुंञ्चासुषुवुषोंमनीषांविवर्तन्तामद्रयश्चायंमानाः॥ १४॥३१॥

सुते । अध्वरे । अधि । वाचंम् । अक्रत । आ । क्रीळयंः । न ।
मातरंम् । तुदन्तः । वि । सु । मुञ्च । सुसुऽवुषंः । मनीषाम् ।
वि । वर्तन्ताम् । अद्रंयः । चायंमानाः ॥ १४ ॥ ३१ ॥

चायमानाः पूज्यमानाः अद्रयः आदरणीयाग्रावाणः अध्वरे अधियज्ञे सुते सोमेभिषुते मातरं तुदन्तोहस्तेन ताडयन्तआक्रीळयोनाक्रीडकाः कुमाराः शब्दं यथा कुर्वन्ति तथा वाचं शब्दमक्रत कुर्वन्ति सुषुवुषः सोममभिषुतवतोग्राव्णोमनीषां स्तुतिं विमुंच विशेषेण मुंच किंच अद्रयोविवर्तन्तां अभिषवशब्दं मुंचन्तु ॥ १४ ॥

१४. सोमाभिषव होने पर पत्थर शब्द करते हैं—मानो क्रीड़ाशील बालक क्रीड़ास्थल में अपनी माता को ठेलकर शब्द करते हैं। जो पत्थर सोमरस का अभिषव कर चुके हैं, उनकी स्तुति करो। प्रस्तर, प्रस्तुत होकर, घूमें।

॥ इत्यष्टमस्य चतुर्थे एकत्रिंशोवर्गः ॥ ३१ ॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्। पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥
इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण साय-णाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्येऽष्टमाष्टके चतुर्थोध्यायः ॥ ४ ॥

---

तावज्ज्योग्घास्मिन्नुवास ततो ह गंधर्वाः समूदिरे ज्योग्वा इयमुर्वशी मनुष्येष्ववात्सीदुपजानीत य-
थेयं पुनरागच्छेदिति तस्यै हाविर्द्व्युरणा शयन उपबद्धास ततो ह गंधर्वा अन्यतरमुरणं प्रमेथुः सा-
होवाचावीर इव बतेऽजन इव पुत्रं हरन्तीति द्वितीयं प्रमेथुः सा ह तथैवोवाचाथ हायमीक्षांचक्रे क-
थं न्वदवीरं कथमजनः स्यां यत्राहं स्यामिति स नग्न एवानूत्पपात चिरं तन्मेने यद्वासः पर्यधास्यत
ततो ह गंधर्वा विद्युतं जनयांचक्रुस्तं यथा दिवैवं नग्नं ददर्श ततो हैवेयं तिरोबभूव पुनरैमीत्येव तिरो-
भूतां स आध्याजल्पन्कुरुक्षेत्रं समया चचारान्यतः प्लक्षेति बिसवती तस्यै हाध्यन्तेन वव्राज तद्ध
ता अप्सरस आतयो भूत्वा परिपुप्लुविरे तं हेयं ज्ञात्वोवाचायं वै स मनुष्यो यस्मिन्नहमवात्समिति
ता होचुस्तस्मै वा आविरसामेति तथेति तस्मै हाविरासुस्तां हायं ज्ञात्वाभिपरोवाद हये जाये मन-
सेत्यादि ।

तत्र प्रथमा—

ॐ हये जाये मनसा तिष्ठ घोरे वचांसि मिश्रा कृणवावहै नु ।
न नौ मन्त्रा अनुदितास एते मयस्करन्परतरे चनाहन् ॥ १ ॥

हये । जाये । मनसा । तिष्ठ । घोरे । वचांसि । मिश्रा । कृणवावहै ।
नु । न । नौ । मन्त्राः । अनुऽदितासः । एते । मयः । करन् ।
परऽतरे । चन । अहन् ॥ १ ॥

हयेजाये इति पुरूरवसो वाक्यं । जायां प्रत्यब्रवीत् हये हे घोरे अस्माकं दुःखजनकत्वात्
घोरकारिणि जाये मनसा अस्मद्विषयेणानुरागवता मनसा युक्ता सती तिष्ठ क्षणमात्रं संनिधावेव
तिष्ठ इयङ्गत्यस्य निघाताभावश्छान्दसः । किमर्थं संस्थानमिति तत्राह वचांसि वाक्यानि
मिश्राणि उक्तिप्रत्युक्तिरूपाणि नु अद्य क्षिप्रं वा कृणवावहै करवावहै कृवि हिंसाकरणयोश्च
धिन्विकृण्व्योरच्चेत्युप्रत्ययः । किमर्थं वचसः करणमिति चेत् उच्यते नौ आवयोः मंत्राः रह-
स्यार्थाः एते विवक्षिता अनुदितासः अव्याह्रियमाणाः परस्परमसंभाष्यमाणाः गुंफिताः सन्तः
परतरे चनाहन् चनेति निपातसमुदायश्चार्थे अनेकेषु दिवसेषु परमेष्वहनि मयः सुखमेतत्
सुखं न करन् कुर्वन्ति अतः कृणवावहा इति ॥ १ ॥

१. (पुरूरवा की उक्ति)—अयि निष्ठुर पत्नी, अनुरागी चित्त से ठहरो। हम लोग शीघ्र कथनोपकथन करें। इस समय यदि हम दोनों में बातें नहीं होंगी तो आनेवाले दिनों में सुख नहीं होगा।

अथ द्वितीया—

किमेतावाचाकृणवातवाहंप्राक्रमिषमुषसामग्रियेव ।
पुरूरवःपुनरस्तंपरेहिदुरापनावातइवाहमस्मि ॥ २ ॥

किम् । एता । वाचा । कृणव । तव । अहम् । प्र । अक्रमिषम् ।
उषसाम् । अग्रियाऽइव । पुरूरवः । पुनः । अस्तम् । परा । इहि ।
दुःऽआपना । वातःऽइव । अहम् । अस्मि ॥ २ ॥

अनया तं उर्वशी प्रत्युवाच—एता एतया वाचा केवलया पुनः संभोगरहितया किंकृणव किंकरवाव अहं तव इदानीं त्वत्सकाशात् प्राक्रमिषं अतिक्रान्तवत्यस्मि। अतिक्रमे दृष्टान्तः—उषसामग्रियेव बह्वीनामुषसां मध्ये अग्रिया अग्रेभवा पूर्वां पूर्वोषाः प्राक्रमीद्यथाहमपीति। यस्मादेवं तस्मात् हे पुरूरवः त्वं पुनरस्मत्सकाशादस्तं गृहं परेहि परागच्छ मय्यभिलाषं माकार्षीः। स्वस्यायहत्वमाह अहं वात इव वायुरिव दुरापना दुष्प्रापा दुरापा वा अस्मि। दुरापावा अहं त्वयैवाहमस्मि पुनर्गृहाणिहीति हैवैनं तदुवाचेति वाजसनेयकं ॥ २ ॥

२. (उर्वशी की उक्ति)—केवल बात-चीत से क्या होगा? प्रथम उषा के समान तुम्हारे पास से मैं चली आ रही हूँ। हे पुरूरवा, तुम अपने घर लौट जाओ। मैं वायु के समान दुष्प्राप्य हूँ।

अथ तृतीया—

इषुर्नश्रियइषुधेरसनागोषाःशतसानरंहिः ।
अवीरेक्रतौविदविद्युतन्नोरानमायुंचितयन्तधुनयः ॥ ३ ॥

इषुः । न । श्रिये । इषुऽधेः । असना । गोऽसाः । शतऽसाः । न ।
रंहिः । अवीरे । क्रतौ । वि । दविद्युतत् । न । उरा । न ।
मायुम् । चितयन्त । धुनयः ॥ ३ ॥

अनया पुरूरवाःस्वस्यविरहजनितं वैक्लव्यं तां प्रति ब्रूते—इषुधेः इषवो धीयन्ते अस्मिन्नितीषुधिर्निषङ्गः तस्मात् सकाशादिषुरसना असनाय प्रक्षेप्तुं न भवति श्रिये विजयार्थं त्वद्विरहाद्युद्धेष्वबुद्धावप्यनिधानात् तथा रंहिर्वेगवानहं शत्रुसकाशाद्गोषाः येषां शत्रूणां गवां संभक्तानाभवं तथा शतसाः शतानामपरिमितानां शत्रुधनानां संभक्ताभवं किंचावीरे वीरवर्जिते क्रतौ

राजकर्मणि सति नविदद्विद्युतत् न विद्योतते मत्सामर्थ्यं किंच पुनयः कंपयितारोस्मदीयानराः उरा उरौ सुपांसुलुगिति साम्याडादेशः विस्तीर्णेसंग्रामे मायुं मीयते प्रक्षिप्यते इतिमायुः शब्दः छ्यापाजीत्यादिना उण् सिंहनादं न चितयन्त न बुध्यन्ते। चिती संज्ञाने अस्माणिमाचि संज्ञापूर्वकस्य विधेरनित्यत्वाल्लघूपधगुणाभावः छान्दसोल्ङ् ॥ ३ ॥

३. (पुरुरवा का कथन)—तुम्हारे विरह के कारण मेरे तुणीर से बाण नहीं निकलता, जय-श्री नहीं मिलती और युद्ध में जाकर मैं अपरिमित गायों को नहीं ले आ सकता। राज-कार्य वीर-विहीन हो गया है। इसकी कोई शोभा नहीं है। मेरे सैनिकों ने युद्ध में सिंहनाद करने की चिन्ता छोड़ दी थी।

सावसुदधतीश्वशुरायवयउषोयदिवष्ट्यन्तिगृहात्।
अस्तंननक्षेयस्मिञ्चाकन्दिवानक्तंश्नथितावैतसेन ॥ ४ ॥

सा। वसु। दधती। श्वशुराय। वयः। उषः। यदि। वष्टि। अन्तिऽगृहात्। अस्तम्। ननक्षे। यस्मिन्। चाकन्। दिवा। नक्तम्। श्नथिता। वैतसेन ॥ ४ ॥

इयमुत्तराचोर्वशीवाक्ये—आद्येन पुरात्मना छर्वं उषसे निवेदयति हे उषः सेयमुर्वशी वसु वासकं वयोन्नं श्वशुराय भर्तुः पुरूरवसः पित्रे दधती प्रयच्छन्ती यत्र गृहे स्थिता यदि यतिं वष्टि कामयते तदान्तिगृहात् स्वभर्तृभोगगृहान्तिकं यत् श्वशुरस्य भोजनगृहं तदन्तिगृहं तस्माद्गृहात्सोर्वशी अस्तं पतिगृहं ननक्षे व्याप्नोति यस्मिन् गृहे चाकन् कामयते उर्वशी सा-चोर्वशी दिवानक्तं अहनि रात्रौ च वैतसेन शेपोवैवतसइतिपुंस्यजननस्येति निरुक्तं। पुंस्यजननेन श्नथिता ताडिता भवति। एवमुर्वशी आत्मानं परोक्षेणनिर्दिदेश ॥ ४ ॥

४. (उर्वशी का कथन)—उषा, यदि उर्वशी श्वशुर को भोजन-सामग्री देने की इच्छा करती, तो सन्निहित गृह से पति के शयन-गृह में जाती और दिन-रात स्वामी के पास रमण-सुख भोगती।

त्रिःस्ममाह्नःश्नथयोवैतसेनोतस्ममेऽव्यत्यैपृणासि।
पुरूरवोनुतेकेतमायंराजामेवीरतन्व१स्तदासीः ॥ ५ ॥ १ ॥

त्रिः। स्म। मा। अह्नः। श्नथयः। वैतसेन। उत। स्म। मे। अव्यत्यै। पृणासि। पुरूरवः। अनु। ते। केतम्। आयम्। राजा। मे। वीर। तन्वः। तत्। आसीः ॥ ५ ॥ १ ॥

१ नि० ३.२१।

अनेन पुरूरवसमेव संबोध्योक्तवती हे पुरूरवस्त्वं मा मां अह्नः अहनि वैतसेन दंडेन पुं-व्यंजनेन त्रिः त्रिवारं त्रिरिति चतुर्थ्यः सुच् श्नथयःस्म अश्नथयः अताडयः कृत्वोर्थप्रयोगे इति कालवाचिनोऽहःशब्दात् अधिकरणे षष्ठी उतापि च स्मेति पूरणः अव्यत्यै सपत्नीभिः सह प-र्यायेण पतिमागच्छति साव्यती नताहशी अव्यती तस्यै मे मह्यं पृणासि पूरयसि एवं सुभ्या हे पुरूरवः ते केतं गृहमन्वायं अन्वगमं। पूर्वं हे वीर राजा त्वं मे मम तन्वः शरीरस्य तत्तदा आसीः अभवः सुखयितेति शेषः। परमप्येवं मन्तव्यं किमिति कातरोभवसीत्युवाच ॥ ५॥

५. पुरूरवा, तुम दिन में मुझे तीन बार पुरुष-दण्ड से ताड़ित करते थे। किसी सपत्नी के साथ मेरी प्रतिद्वन्द्विता नहीं थी। मुझे ही तुम नियमित रूप से सन्तुष्ट करते थे। तुम्हारे गृह में मैं आई। तुम मेरे वीर राजा हुए। तुम मेरे सारे सुखों के विधायक हुए।

॥ इत्यष्टमस्य पञ्चमे प्रथमोवर्गः ॥ १ ॥

**यासुजूर्णिःश्रेणिःसुम्नआपिर्ह्रदेचक्षुर्नग्रन्थिनीचरण्युः।**
**ताअञ्जयोऽरुणयोनसस्रुःश्रियेगावोनधेनवोऽनवन्त ॥ ६ ॥**

या। सुऽजूर्णिः। श्रेणिः। सुम्नेऽआपिः। ह्रदेऽचक्षुः। न। ग्रन्थिनी। चरण्युः। ताः। अञ्जयः। अरुणयः। न। सस्रुः। श्रिये। गावः। न। धेनवः। अनवन्त ॥ ६ ॥

पुरूरवसोवाक्यं यासुजूर्णिः सुजवा एतन्नामिकास्ति यथा या श्रेणिः यासुम्नआपिः या ह्रदेचक्षुः नकारः समुच्चये याभिरन्यत्राभिराडिभूताभिर्मानिनीभिः सहिता ग्रंथिनी ग्रथनवती संदर्भवती चरण्युश्चरणशीला उर्वश्यागगाम यद्वा ग्रंथिनीत्येतत् तत्रिभूताप्सरोनामधेयं या सुजूर्णिः सुजवा उर्वशी सा ताभिः सह जगाम ताअप्सरसोऽञ्जयआभरणोपेताअरुणयोरुण-वर्णान सस्रुः पूर्ववन्न गच्छन्ति श्रिये श्रयणाय धेनवः नवप्रसूतागावोन गावइव आशिरार्थं यथा गावो नवन्त शब्दायन्ते यथा न शब्दयन्तीति व्यतिरेके दृष्टान्तः ॥ ६ ॥

६. (पुरूरवा की उक्ति)—सुजूर्णि, श्रेणि, सुम्न, आपि, ह्रदेचक्षु, ग्रन्थिनी, चरण्यू आदि जो महिलायें वा अप्सरायें थीं, तुम्हारे आने के बाद वे सब मेरे पास वेश-भूषा करके नहीं आती थीं। गोष्ठ में जाते समय जैसे गायें बोलती हैं, वैसे शब्द करके वे सब अब मेरे गृह में नहीं आती थीं।

**समस्मिञ्जायमानआसतग्नाउतेमवर्धन्नद्यः१स्वगूर्ताः।**
**महेयत्त्वापुरूरवोरणायावर्धयन्दस्युहत्यायदेवाः ॥ ७ ॥**

सम् । अस्मिन् । जायमाने । आसत । ग्नाः । उत । ईम् ।
अवर्धन् । नद्यः । स्वऽगूर्ताः । महे । यत् । त्वा । पुरूरवः । रणाय ।
अवर्धयन् । दस्युऽहत्याय । देवाः ॥ ७ ॥

अनयैतानि संसर्गस्यानुभूतत्वादुर्वशी वदति अस्मिन्पुरूरवसि जायमाने ग्ना अप्सरसो देववेश्याः अपि समासत संगता अभवन् अथवा जायमाने यज्ञार्थं प्रवर्धमाने सति ग्नाः देवपत्न्योपि समासत समभवन् उतापि च ईमेनं पुरूरवसं स्वगूर्ताः स्वयं गामिन्यो नद्यस्तासामाप्यायभूता अवर्धयन्। किंच हे पुरूरवो यद्यस्मात् त्वा त्वां महे महते रणाय रमणीयाय संग्रामाय दस्युहत्याय दस्युहननाय देवास्त्वामवर्धयन् ॥ ७ ॥

७. (उर्वशी की उक्ति)—जिस समय पुरुरवा ने जन्म ग्रहण किया, उस समय देव-पत्नियाँ देखने आईं। अपनी शक्ति से बहनेवाली नदियों ने भी उनकी संवर्द्धना की। पुरुरवा, तुम्हें दस्यु-वध करने को, घोर युद्ध में भेजने के लिए, देवता लोग तुम्हारी संवर्द्धना करने लगे।

सचा॒ यदा॑सु॒ जह॑ती॒ष्वत्क॒ममा॑नुषीषु॒ मानु॑षो नि॒षेवे॑ ।
अप॑ स्म॒ मत्त॒रस॑न्ती॒ न भु॒ज्युस्ता अ॑त्रसन्रथ॒स्पृशो॒ नाश्वाः॑ ॥ ८ ॥

सचा॑ । यत् । आसु॑ । जह॑तीषु । अत्क॑म् । अमा॑नुषीषु । मानु॑षः ।
नि॒ऽसेवे॑ । अप॑ । स्म॒ । मत् । त॒रस॑न्ती । न । भु॒ज्युः । ताः ।
अ॒त्र॒स॒न् । र॒थ॒ऽस्पृशः॑ । न । अश्वाः॑ ॥ ८ ॥

इदमादीनि त्रीण्यैळवाक्यानि तत्रादितो द्वाभ्यामुर्वशीमन्याश्च सह स्तौति यद्यदा सचा सहायभूतः पुरूरवः अत्कं स्वकीयं रूपं अत्कइति रूपनाम जहतीषु परित्यजन्तीषु अमानुषीषु देवताभूतास्वप्सरःसु मानुषः सन् निषेवे अभिमुखं गच्छति तदानीं ताअप्सरसो मत् मत्तः अप अपसृत्यात्रसन् त्रसिर्गतिकर्मा गच्छन्ति। पलायने दृष्टान्तः—तरसंती भुज्युर्न तरसं नाममृगः तस्य स्त्री भुज्युः भोगसाधनभूता स्त्री मृगी सा यथा व्याघ्रादीता पलायते। किंच रथस्पृशो नाश्वाः रथे नियुक्ताअश्वाइव ते यथा पलायन्ते तद्वत्पलायन्तइति उर्वश्याऽनेकाभिरप्सरोभिः सह भोगमनुभुक्तवानस्मीत्युक्तः प्रत्याचष्टे ॥ ८ ॥

८. (पुरुरवा का कथन)—जिस समय मनुष्य होकर पुरुरवा अप्सराओं की ओर अग्रसर हुए, उस समय वे अपना रूप छोड़कर अन्तर्धान हो गईं। जैसे डर के मारे हरिणी भागती है अथवा जैसे रथ में जोते हुए घोड़े भागते हैं, वैसे ही वे चली गईं।

यदा॑सु॒ मर्तो॑ अ॒मृता॑सु नि॒स्पृक्सं क्षो॒णीभिः॒ क्रतु॑भि॒र्न पृ॒ङ्क्ते ।
ता आ॒तयो॒ न त॒न्वः॑ शुम्भत॒ स्वा अश्वा॑सो॒ न क्री॒ळयो॒ दन्द॑शानाः ॥ ९ ॥

यत् । आसु । मर्तः । अमृतांसु । निऽस्पृक् । सम् । क्षोणीभिः ।
क्रतुऽभिः । न । पृङ्क्ते । ताः । आतयः । न । तन्वः । शुंभत ।
स्वाः । अश्वासः । न । क्रीळयः । दन्दशानाः ॥ ९ ॥

यद्यदा आसु अमृतास्वप्सरस्सु मर्तो मनुष्यः पुरूरवा निस्पृक् निःशेषेण स्पृशन् क्षोणीभिर्वाग्भिः क्रतुभिर्न कर्मभिश्च संपृंक्ते संपर्कं करोति नकारः समुच्चयार्थीयः । ता अप्सरसः आतयः आतिभूतास्तदानीं स्वास्तन्वः आत्मीयानि रूपाणि न शुंभत न प्रकाशयन्ति अश्वासोन अश्वा इव क्रीळयः संक्रीडमाना दंदशानाः दंदशूकाः जिह्वाभिरास्योपाः सुकाशक्षयन्तः ते यथा तदानीं स्वचापल्येन धावन्तः स्वरूपं न प्रयच्छन्ति रथिकाय तद्वदिति दुःखाद्ब्रूते ॥९॥

९. जिस समय पुरुरवा मनुष्य होकर देवलोकवासिनी अप्सराओं के साथ बातें करने और उनका शरीर छूने को आगे बढ़े, उस समय वे लुप्त हो गईं—अपने शरीर को नहीं दिखाया—क्रीड़ाशील अश्वों के समान भाग गईं।

विद्युन्नयापतन्तीदविद्योद्भरन्तीमेअप्याकाम्यांनि ।
जनिष्टोअपोनर्यःसुजातःप्रोर्वशीतिरतदीर्घमायुः ॥ १० ॥ २ ॥

विऽद्युत् । न । या । पतन्ती । दविद्योत् । भरन्ती । मे । अप्या ।
काम्यानि । जनिष्टोइति । अपः । नर्यः । सुऽजातः । प्र ।
उर्वशी । तिरत । दीर्घम् । आयुः ॥ १० ॥ २ ॥

अनयोर्वशीं स्तौति योर्वशी विद्युन्न विद्युदिव पतन्ती गच्छन्ती दविद्योत् द्योतते किं कुर्वती अप्या आप इत्यन्तरिक्षनाम तत्संबन्धीनि अप्यानि काम्यान्यस्मदभिमतानि उदकानि मे मह्यं भरन्ती संपादयन्ती यदा आगता यास्तस्याः सकाशादपोऽप्याः कर्मसु नर्यो नरेभ्यो हितः सुजातः सुजननः पुनो जनिष्टो अजनिष्ट उत्पद्यते तदानीं सम्योर्वशी दीर्घमायुः प्रतिरत प्रवर्धयति । प्रजामनुप्रजायसेतदुतेमर्त्यामृतमितिहिमंत्रः ॥ १० ॥

१०. जिस उर्वशी ने आकाश से पतनशील विद्युत् के समान शुभ्रता धारण की थी और मेरे सारे मनोरथों को पूर्ण किया था, उसके गर्भ से मनुष्य का औरस सुन्दर पुत्र जन्मा था। उर्वशी उसे दीर्घायु करे।

॥ इत्यष्टमस्य पंचमे द्वितीयोवर्गः ॥ २ ॥

---

१ तै० आ० १. ५. ५ ।

अथैकादशी—

जज्ञिषइत्थागोपीथ्यायहिदधाथतत्पुरूरवोमओजः ।
अशासन्त्वाविदुषीसस्मिन्नहन्नमआशृणोःकिमभुग्वदासि॥११॥

जज्ञिषे । इत्था । गोऽपीथ्याय । हि । दधाथ । तत् । पुरूरवः ।
मे । ओजः । अशासम् । त्वा । विदुषी । सस्मिन् । अहन् । न ।
मे । आ । अशृणोः । किम् । अभुक् । वदासि ॥ ११ ॥

इत्था इत्थं गोपीथ्याय गोः पृथिव्याः पीथं पालनं स्वार्थिकस्तद्धितः भूमेरक्षणाय जज्ञिषे हि जातोसि खलु पुत्ररूपेण आत्मावैपुत्रनामेतिश्रुतेः । पुनर्देव्याह हे पुरूरवः मे ममोदरेऽपि ओजः अपत्योत्पादनसामर्थ्यं दधाथ निदधाथ मयि निहितवानसि तत्तथास्तु अथापि स्थातव्यमिति चेत्तत्राह विदुषी भाविकार्यं जानती सस्मिन्नहन् सर्वस्मिन्नहनि त्वया यत्कर्तव्यं तत् त्वां अशासं शिक्षितवत्यस्मि त्वं मे मम वचनं नाशृणोः नाशृणोषि किं त्वं अभुक् अभोक्ता अपालयिता प्रतिज्ञातार्थमपालयन् वदासि इयेजायेइत्यादिरूपं प्रलापं । वदेर्लेट्याडागमः। अहन् अहनि दिवसे त्रिवारं मासस एडकद्वयमस्माकं पुत्रत्वेन परिकल्प्य पुत्रोत्पादनपर्यन्तं वसामि नग्नं त्वां यद्यद्राक्षं तदागच्छामीत्येवं रूपोमिथः समयः ॥ उर्वशीहाप्सराःपुरूरवसमैळं चकमे तंहविन्दमानोवाच त्रिःस्ममाह्नोवैतसेनदण्डेनेत्यादि वाजसनेयकमुदाहृतं ॥ ११ ॥

११. (उर्वशी का कथन)—पुरूरवा, पृथिवी की रक्षा के लिए तुमने पुत्र को जन्म दिया था, मेरे गर्भ में वीर्य-पात किया था, मैंने तुमसे बारबार कहा है कि, क्या होने से मैं तुम्हारे पास नहीं रहूँगी; क्योंकि मैं यह बात जानती थी। परन्तु मेरी बात नहीं सुनी। इस समय पृथिवी-पालन-कार्य को छोड़कर क्यों वृथा बात करते हो ?

अथ द्वादशी—

कदासूनुःपितरंजातइच्छाच्चक्रन्नाश्रुवर्तयद्विजानन् ।
कोदम्पतीसमनसावियूयोदधयदग्निःश्वशुरेषुदीदयत् ॥१२॥

कदा । सूनुः । पितरम् । जातः । इच्छात् । चक्रन् । न । अश्रु ।
वर्तयत् । विऽजानन् । कः । दम्पती इति दम्ऽपती । सऽमनसा ।
वि । यूयोत् । अध । यत् । अग्निः । श्वशुरेषु । दीदयत् ॥ १२ ॥

इदं पुरूरवसोवाक्यं कदा कस्मिन्काले सूनुस्तवोदरजातः सन् पितरं मामिच्छात् इच्छेत् इषु इच्छायां लेटि शपि इषुगमियमामिति छादेशः लेटोडाटाविति अडागमः कदा वा

विजानन् पितरं मामधिगच्छन् चक्रन् क्रन्दमानः अश्रु वर्तयेत् नेति वार्थे किंच कः किंविधः तव सूनुः समनसा समनसौ दंपती जायापती त्वां मां च वियूयोत् विश्लेषयेत् युमिश्रणामिश्रणयोः यौतेश्छान्दसः शपः श्लुः तुजादित्वादभ्यासदीर्घः अथाधुना यमग्निस्तव हृदयस्थितस्तेजोरूपो गर्भः श्वशुरेषु दीदयत् दीप्यते दीदयतिर्दीप्तिकर्मेति नैरुक्तो धातुः ॥ १२ ॥

१२. (पुरूरवा की उक्ति)—कब तुम्हारा पुत्र मुझे चाहेगा? यदि वह मेरे पास आवे, तो क्या वह नहीं रोवेगा? आँसू नहीं गिरावेगा? परस्पर प्रेम से सम्पन्न स्त्री-पुरुष में विच्छेद करने की किसकी इच्छा होगी? तुम्हारे श्वशुर के गृह में तेजोरूप गर्भ प्रदीप्त हो उठा।

प्रतिब्रवाणिवर्तयतेअश्रुंचक्रन्नक्रंदद्आध्येंशिवायै ।
प्रतत्तेहिनवायत्तेअस्मेपरेह्यस्तंनहिमूरमापः ॥ १३ ॥

प्रति । ब्रवाणि । वर्तयते । अश्रु । चक्रन् । न । क्रन्दत् । आऽध्ये । शिवायै । प्र । तत् । ते । हिनव । यत् । ते । अस्मे इति । परा । इहि । अस्तम् । नहि । मूर । मा । आपः ॥ १३ ॥

उर्वशीवाक्यं—हे पुरूरवस्त्वां प्रति ब्रवाणि प्रतिवच्मि त्वदपत्यं अश्रु बाष्पं वर्तयते वर्तयिष्यति आध्ये आध्याते वस्तुनि शिवायै शिवे कल्याणे उपस्थिते सति चक्रत् रुदत् अश्रूणि विमुञ्चन् न क्रन्दत् नकारश्चार्थे रोत्स्यतीत्यर्थः यत् तदपत्यं ते तुभ्यं हिनव प्रहिणोमि यदपत्यं ते तव संबन्धि अस्मे अस्मासु निहितं । त्वं परेहि अस्तमिति गृहनाम स्वगृहं प्रविगच्छ हे मूर मूढ मा मां नहि आपः न प्राप्नोषि हि नवेत्यत्र हिनोतेश्छन्दसि लुङ्लङ्लिट इति भविष्यति लङि मिप आमादेशः गुणः अन्त्यलोपश्छान्दसः बहुलवचनादडभावः । आपः आप्लृ व्याप्तौ लिटि सिब्बिजोऽभवन्तीति ठकोठेट् ॥ १३ ॥

१३. (उर्वशी का कथन)—मैं तुम्हारी बात का उत्तर देती हूँ। तुम्हारे पास पुत्र जाकर अश्रु-पात या क्रन्दन नहीं करेगा। मैं उसकी कल्याण-कामना करूँगी। तुम्हारे पुत्र को मैं तुम्हारे पास भेज दूँगी। मूढ़, अपने घर को लौट जाओ। अब मुझे नहीं पा सकोगे।

सुदेवोअद्यप्रपतेदनावृत्परावतंपरमांगन्तवाउं ।
अधाशयीतनिर्ऋतेरुपस्थेधैनंवृकारभसासोअद्युः ॥ १४ ॥

सुऽदेवः । अद्य । प्रऽपतेत् । अनावृत् । पराऽवतम् । परमाम् । गन्तवै । ऊँ इति । अध । शयीत । निःऽऋतेः । उपऽस्थे । अध । एनम् । वृकाः । रभसासः । अद्युः ॥ १४ ॥

अथ परिद्यूनः पुरूरवा उवाच सुदेवः त्वया सह सुक्रीडः पतिरद्य प्रपतेत् अत्रैव प्रपततु अथवा अनावृत् अनावृतः सन् परमां परावतं दूरादपि दूरदेशं गन्तवै गन्तुं महाप्रस्थानगमनं कुर्यात् अथाथवा यत्र कुत्रापि गन्तुं समर्थः सन् निर्ऋतेः पृथिव्या उपस्थे शयीत शयनं कुर्यात् यद्वा निर्ऋतिः पापदेवता तस्या उपस्थे उत्संगे संनिधौ म्रियतामित्यर्थः अध अथैनं वृका अरण्यश्वानो रभसासो वेगवन्तः अद्युर्भक्षयन्तु । अत्र वाजसनेयकं—सुदेवोऽद्योद्बन्धनमृच्छेत् प्रपतेद्वेदे- नं वृकाः श्वानो वाद्युरिति हैवमुवाचेति ॥ १४ ॥

१४. (पुरुरवा की उक्ति)—तुम्हारा प्रेमी पति (मैं) आज गिर पड़ा—फिर कभी नहीं उठा। वह बहुत दूर चला गया। वह निर्ऋति (दुर्गति) में मर जाय। उसे वृक आदि खा जायें।

**पुरूरवोमामृथामाप्रपप्तोमात्वावृकासोअशिवासउक्षन् ।**
**नवैस्त्रैणानिसख्यानिसन्तिसालावृकाणांहृदयान्येता ॥ १५ ॥३॥**

पुरूरवः । मा । मृथाः । मा । प्र । पप्तः । मा । त्वा । वृकासः ।
अशिवासः । ऊँ इति । क्षन् । न । वै । स्त्रैणानि । सख्यानि ।
सन्ति । सालावृकाणाम् । हृदयानि । एता ॥ १५ ॥ ३ ॥

इतरा प्रत्युवाच—हे पुरूरवः त्वं मा मृथाः मृतिं मा प्राप्नुहि म्रियतेर्लुङि थासि ह्रस्वाद- ङ्गादिति सिचो लोपः । तथा मा प्रपतः अत्रैव पतनं माकार्षीः पतेर्लुङि लृदित्वात् पुषादिद्युतादि- ना च्लेरङ् पतः पुमिति पुम् । तथा त्वा त्वां अशिवासोऽशुभा वृकासो वृका मो क्षन् उ इत्येवकारार्थः अ- क्षन् मा भक्षयन्तु किमित्येवमस्मदुपर्यायं करोषि माकार्षीरित्यर्थः अदेर्लुङि लुङ्सनोर्घस्लृ इति घस्लादेशः मन्त्रे घसेति च्लेर्लुक् गमहनेत्युपधालोपः शासिवसीत्यादिना षत्वं खरि चेति चर्त्वं बहुलं छन्दसीत्यडभावः । अथास्त्र स्नेहस्यासारतामाह स्त्रैणानि स्त्रीणां कृतानि सख्यानि नवै सन्ति न सन्ति खलु । अभावे कारणमाह एता एतानि सख्यानि सालावृकाणां हृदयानि ते- षां हृदयानि यथा वत्सादीनां विश्वासापन्नानां घातुकानि तद्वत् । अत्र वाजसनेयकं मैवदाह- धानवै स्त्रैणं सख्यमस्ति पुनर्गृहानेहीति हैवैनं तदुवाचेति ॥ १५ ॥

१५. (उर्वशी की उक्ति)—पुरुरवा, तुम मृत्यु-कामना मत करो। यहाँ मत गिरो। तुम्हें वृक (भेड़िया) आदि न खायें। स्त्रियों का प्रेम या मैत्री स्थायी नहीं होती। स्त्रियों और वृकों का हृदय एक समान होता है।

॥ इत्यष्टमस्य पंचमे तृतीयो वर्गः ॥ ३ ॥

अथ षोडशी—

यद्विरू॑पाच॑रं॒ मर्त्ये॒ष्ववसं॒ रात्रीः॑ श॒रद॒श्चत॑स्रः ।
घृ॒तस्य॑ स्तो॒कं स॒कृदह्न॑ आश्नां॒ तादे॒वेदं ता॑तृपा॒णा च॑रामि ॥ १६ ॥

यत् । विऽरू॑पा । अच॑रम् । मर्त्ये॑षु । अव॑सम् । रात्रीः॑ । श॒रदः॑ ।
चत॑स्रः । घृ॒तस्य॑ । स्तो॒कम् । स॒कृत् । अह्नः॑ । आ॒श्ना॒म् ।
तात् । ए॒व । इ॒दम् । त॒तृ॒पा॒णा । च॒रा॒मि ॥ १६ ॥

यद्यदा विरूपा परं मनुष्यस्य संपर्काद् विगतसहजभूतदेवरूपा पत्यानुकूल्येन नानारूपाया मर्त्येषु मनुष्येषु अचरं तदानीं रात्रीः पूरयित्रीश्चतस्रः शरदः अवसं न्यवसं अत्यन्तसंयोगे द्वितीया तदानीं घृतस्य स्तोकं सकृदह्न आश्नां तादेव तेनैव स्तोकेनाहमिदं संप्रति तातृपाणा तृप्ता सती चरामि ॥ १६ ॥

१६. मैं नाना रूपों में मनुष्यों में घूमी हुई हूँ। मैंने मनुष्यों में चार वर्ष रात्रि-वास किया है। दिन में एक बार कुछ घी पीकर क्षुधा-निवृत्ति करते हुए मैंने भ्रमण किया है।

अ॒न्त॒रि॒क्ष॒प्रां रज॑सो वि॒मानी॒मुप॑ शिक्षाम्यु॒र्वशीं॒ वसि॑ष्ठः ।
उप॑ त्वा रा॒तिः सु॑कृ॒तस्य॒ तिष्ठा॒न्नि व॑र्तस्व॒ हृद॑यं तप्यते मे ॥ १७ ॥

अ॒न्त॒रि॒क्ष॒ऽप्राम् । रज॑सः । वि॒ऽमानी॑म् । उप॑ । शि॒क्षा॒मि॒ ।
उ॒र्वशी॑म् । वसि॑ष्ठः । उप॑ । त्वा॒ । रा॒तिः । सु॒ऽकृ॒तस्य॑ ।
तिष्ठा॑त् । नि । व॒र्त॒स्व॒ । हृद॑यम् । त॒प्य॒ते॒ । मे॒ ॥ १७ ॥

अन्तरिक्षप्रां स्वतेजसान्तरिक्षस्य पूरयित्रीं तथा रजसोरञ्जकस्योदकस्य विमानीं निर्मात्रीं उर्वशीं वसिष्ठः समानानां मध्येऽतिशयेन वासयिताहं उपशिक्षामि वशंनयामि सुकृतस्य शोभनकर्मणोरातिर्दाता पुरूरवाः त्वा त्वां उपतिष्ठात् उपतिष्ठतु मे हृदयं तप्यते अतोनिवर्तस्व एवं राजोवाच ॥ १७ ॥

१७. (पुरूरवा का कथन)—अन्तरिक्ष को पूर्ण करनेवाली और जल को बनानेवाली उर्वशी को वसिष्ठ (अतीव वासयिता पुरूरवा) वश में ले आते हैं। शुभ-कर्म-दाता पुरूरवा तुम्हारे पास रहे। मेरा हृदय जल रहा है; इसलिए हे उर्वशी, लौटो।

अथाष्टादशी—

इतित्वादेवाइमआहुरैळयथेमेतद्भवसिमृत्युबन्धुः ।
प्रजातेदेवान्हविषायजातिस्वर्गउत्वमपिमादयासे ॥ १८ ॥ ४ ॥

इति । त्वा । देवाः । इमे । आहुः । ऐळ । यथा । ईम् । एतत् । भवसि । मृत्युऽबन्धुः । प्रऽजा । ते । देवान् । हविषा । यजाति । स्वःऽगे । ऊँ इति । त्वम् । अपि । मादयासे ॥ १८ ॥ ४ ॥

हे ऐळ पुरूरवस्त्वा त्वां इमे देवा इत्याहुः मृत्युबन्धुर्मृत्योर्बन्धको मृत्योर्बन्धुर्भूतो वा मृत्युवशगमनायार्हस्त्वं यथाई एतद्भवसि प्रजाः प्रकर्षेण जायमानस्त्वं तव संबन्धिनो यष्टव्यान् देवान् हविषा यजाति यजसि स्वर्गे च स्वर्गेएव त्वमपि मादयासे मदयसि अस्माभिः सह एवमाहुरित्यर्थः यस्मादेवं करोषि तस्मादभिलाषं हित्वा सुखी भवेति सेयं पुरूरवसं प्रत्युवाच॥१८॥

१८ (उर्वशी की उक्ति)—इला-पुत्र पुरूरवा, ये सारे देवता तुमसे कह रहे हैं कि, तुम मृत्युजयी होओगे, हवि से देवों की पूजा करोगे और स्वर्ग में जाकर आमोद-आह्लाद करोगे।

॥ इत्यष्टमस्य पञ्चमे चतुर्थो वर्गः ॥ ४ ॥

प्रतेमहइति त्रयोदशर्चं षष्ठं सूक्तं वरुर्नामांगिरस ऋषिः इन्द्रस्य पुत्रः सर्वहरिर्वा नाम द्वादशीत्रयोदश्यौ त्रिष्टुभौ शिष्टा एकादश जगत्यः इन्द्रस्याश्वौ हरी तयोश्च स्तूयमानत्वात्तद्देवताकमिदं तथाचानुक्रान्तं—प्रतेसप्तोना वरुः सर्वहरिर्वैन्द्रो हरिस्तुतिर्द्वित्रिष्टुबन्तं । अतिरात्रे तृतीये पर्याये ब्राह्मणाच्छंसिन एतत्सूक्तं सूत्रितंच—प्रतेमहऋजीषीप्राचीवस्तवध्यैयणोति प्राग्न्येति । षोडशिशस्त्रेप्याद्यस्तृचः शंसनीयः । सूत्रितंच—प्रतेमहेविदथेशंसिषंहरीइति तिस्रोजगत्यइति ।

तत्र प्रथमा—

प्रतेमहेविदथेशंसिषंहरीप्रतेवन्वेवनुषोहर्यतंमदम् ।
घृतंनयोहरिभिश्चारुसेचतआत्वाविशन्तुहरिवर्पसंगिरः ॥ १ ॥

प्र । ते । महे । विदथे । शंसिषम् । हरी इति । प्र । ते । वन्वे । वनुषः । हर्यतम् । मदम् । घृतम् । न । यः । हरिऽभिः । चारु । सेचते । आ । त्वा । विशन्तु । हरिऽवर्पसम् । गिरः ॥ १ ॥

हे इन्द्र ते तव हरी अश्वौ महे महति विदथे यज्ञे प्रशंसिषं अशंसिषं अस्ताविषं। यथा वनुषः वनु हिंसायां हिंसकस्य ते तव हर्यतं हर्य गतिकान्त्योः तस्यौणादिकः अतच् चित्स्वरेणान्तोदात्तः कमनीयं मदं मदन्ते मयाचे अस्मदभिमतं। वनु याचने यमिन्द्रो हरिभिः हरितवर्णैः अश्वैर्मयागमंगत्वा चारु चरणीयं घृतं न घृतमिव सुपूर्ण उदकं सेचयते वर्षति तं तादृशं हरितवर्णं वर्पइति रूपनाम हरितरूपं त्वा त्वां आविशन्तु गिरोऽस्मदीयाः स्तुतिवाचस्तव मदाय॥१॥

१. इन्द्र, इस महायज्ञ में तुम्हारे दोनों घोड़ों की मैंने स्तुति की। तुम शत्रु-हिंसक हो। भली भाँति मत्त होओ, मैं यही प्रार्थना करता हूँ। हरित-वर्ण अश्व से आकर घृत के समान सुन्दर जल गिराओ। तुम सुन्दर हो। तुम्हारे पास मेरे स्तोत्र जायें।

हरिं॒हियोनि॑म॒भियेस॒मस्व॑रन्हि॒न्वन्तो॒हरी॑दि॒व्यंयथा॒सदः॑।
आयंपृ॒णन्ति॒हरि॑भि॒र्नधे॒नव॒इन्द्रा॑यशू॒षंहरि॑वन्तमर्चत ॥ २ ॥

हरि॑म् । हि । योनि॑म् । अ॒भि । ये । स॒म्ऽअस्व॑रन् । हि॒न्वन्तः॑ । हरी॒ इति॑ । दि॒व्यम् । यथा॑ । सदः॑ । आ । यम् । पृ॒णन्ति॑ । हरि॑ऽभिः । न । धे॒नवः॑ । इन्द्रा॑य । शू॒षम् । हरि॑ऽवन्तम् । अ॒र्च॒त ॥ २ ॥

ये पूर्वे स्तोतारस्तयोर्योनिं इन्द्रस्य स्थानभूतं हरिं अश्वं अभिसमस्वरन् स्वृ शब्दोपतापयोः अभिसंस्तुवन्ति किंकुर्वन्तः दिव्यं देवसंबन्धि सदो यागगृहं यथा प्रेरयन्तीन्द्रं तथा हरी अश्वौ हिन्वन्तः प्रेरयन्तः सोमेऽभिषुते सति स्वयमेवेन्द्रो रथेऽश्वौ प्रेरयति अतः स्तोतॄणां हरिप्रेरणत्वं। यद्वा दिव्यं सदः इन्द्रः प्राप्नुयात्तथा हरिं रथाय स्तुतिभिर्हिन्वन्तः प्रेरयन्तः यमिन्द्रं धेनवः नवप्रसूता गावो यथा पृणन्ति क्षीरादिभिः। अत्र पुरस्तादुपचारोऽपि नकारश्चपमार्थीयः। हरिभिः हरितवर्णैः सोमैराप्रृणन्ति पूरयन्ति तथा यूयमपीन्द्रायेन्द्रस्य हरिवन्तं शूषं बलं अर्चत पूजयत हे स्तोतारः स्तुतिभिः॥ २ ॥

२. स्तोताओ, तुम लोगों ने इन्द्र को यज्ञ की ओर बुलाया है और यज्ञ-गृह की ओर इन्द्र के दोनों घोड़ों को लाये हो। घोड़ों के साथ इन्द्र के बल-वीर्य की स्तुति करो। देखो, जैसे गायें दूध देती हैं, वैसे ही इन्द्र को हरित-वर्ण सोमरस के द्वारा तृप्त करो।

सोअ॑स्य॒वज्रो॒हरि॑तो॒यआ॑य॒सोहरि॒र्निका॑मो॒हरि॒रागभ॑स्त्योः।
द्यु॒म्नीसु॑शि॒प्रोहरि॑मन्युसायक॒इन्द्रे॒निरू॒पाहरि॑तामिमिक्षिरे ॥ ३ ॥

सः । अ॒स्य । वज्रः॑ । हरि॑तः । यः । आ॒य॒सः । हरिः॑ । निऽका॑मः । हरिः॑ । आ । गभ॑स्त्योः । द्यु॒म्नी । सु॒ऽशि॒प्रः । हरि॑मन्युऽसायकः । इन्द्रे॑ । नि । रू॒पा । हरि॑ता । मि॒मि॒क्षि॒रे ॥ ३ ॥

अस्येन्द्रस्य वज्रोहरितोहरिवर्णः यआयसः अयसःसारभूतोस्ति निर्मितः सच हरिर्हरिवर्णो-वज्रोनिकामः नितरां कमनीयः सआहन्ता शत्रूणां तादृशोवज्रोगभस्त्योःहस्तयोर्वर्तते इतिशेषः। अयमिन्द्रोद्युम्नी द्युम्नं द्योतमानं धनं तद्वान् सुशिप्रः शोभनहनुः हरिमन्युसायकः यस्य मन्युः सायकः शत्रुहन्ताभिगन्तावा भवति यद्वा शत्रुहन्ता कोपः सायकश्च यस्य सतादृशोभवति। किंच बहूनां इन्द्रे रूपा रूपाणि सर्वाणि हरिता हरितानि निमिमिक्षिरे निषिक्तानि समुद्गः मिहेः सम्बन्धात्कर्मणि छिटि रूपं ॥ ३ ॥

३. इन्द्र का लोहे का जो वज्र है, वह हरित-वर्ण और सुन्दर है। वह शत्रु-नाशक है और दोनों हाथों में धारण किया जाता है। इन्द्र धनी हैं, सुगठित जबड़ोंवाले हैं और बाण के द्वारा क्रोध के साथ शत्रु-संहार करते हैं। हरित-वर्ण सोमरस के द्वारा इन्द्र को अभिषिक्त किया गया।

दि॒वि न के॒तुरधि॑ धायि हर्य॒तो वि॒व्यच॒द्वज्रो॒ हरि॑तो॒ न रंह्या॑।
तु॒दद॒हिं हरि॑शिप्रो॒ य आ॑य॒सः स॒हस्र॑शोका अभवद्धरिम्भ॒रः ॥ ४ ॥

दि॒वि। न। के॒तुः। अधि॑। धा॒यि॒। ह॒र्य॒तः। वि॒व्यच॑त्। वज्रः॑।
हरि॑तः। न। रंह्या॑। तु॒दत्। अहि॑म्। हरि॑ऽशिप्रः। यः।
आ॒य॒सः। स॒हस्र॑ऽशोकाः। अ॒भ॒व॒त्। ह॒रि॒म्ऽभ॒रः ॥ ४ ॥

दिव्यन्तरिक्षे केतुः प्रकारेन सर्वस्य प्रज्ञापकआदित्यइव सयथा अधिनिहितः एवमयमिन्द्रः अधिधायि अध्यधायि स्तोतृभिरधिनिहितः किंचेन्द्रस्य वज्रः हर्यतः स्पृहणीयः सन् विव्यचत् विव्याप्नोति व्याप्तव्यं शत्रुसंघं। तत्र दृष्टान्तः—हरितोन हरितवर्णाअश्वा इवांरो-णा अश्वाआदित्यसंबन्धिनस्ते यथा रंह्या रंहणेन वेगेन व्याप्नुवन्ति व्याप्तव्यं योस्य वज्रः आयसः अयोविकारः अहिं वृत्रं मेघंवा तुदत् हिनस्ति योयं महानुभावोहरिशिप्रः सोमपान-रसेन हरितवर्णनासिकः तद्वर्णहनुर्वा हरिंभरः हर्योर्भर्ताइन्द्रः सहस्रशोकाः अभवत् शुच दीप्तौ अपरिमितदीप्तिर्भवति ॥ ४ ॥

४. आकाश में सूर्य के समान उज्ज्वल वज्र धृत हुआ—मानो उसने अपने वेग से सारी दिशाओं को व्याप्त किया। सुगठित जबड़ों से युक्त और सोमरस पीनेवाले इन्द्र ने लौहमय वज्र के द्वारा वृत्र को मारने के समय असीम दीप्ति प्राप्त की।

त्वंत्वम॑हर्यथा॒ उप॑स्तुतः॒ पूर्वे॑भिरिन्द्र हरिकेश॒ यज्व॑भिः।
त्वं ह॑र्यसि॒ तव॒ विश्व॑मु॒क्थ्य१॒॑मसा॑मि॒ राधो॑ हरिजात हर्य॒तम् ॥ ५ ॥५॥

त्वम्ऽत्वम् । अहर्यथाः । उपऽस्तुतः । पूर्वेभिः । इन्द्र ।
हरिऽकेश । यज्वऽभिः । त्वम् । हर्यसि । तवं । विश्वम् ।
उक्थ्यम् । असामि । राधः । हरिऽजात । हर्यतम् ॥ ५ ॥५ ॥

हे इन्द्र हे हरिकेश हरितरोमवदश्व त्वं त्वमेव सर्वत्र यज्ञे अहर्यथाः अकामयथाः स्तोमं हविर्षा । कीदृशस्त्वं पूर्वेभिः पूर्वतनैर्यज्वभिर्यजमानैरुपस्तुतः सन् हे हरिजात हरितवर्णः सन् प्रादुर्भूत हारकप्रादुर्भाव वा शत्रुवधार्थं प्रादुर्भूतेत्यर्थः हे तादृशेन्द्र त्वं तव स्वभूतमिति शेषः विश्वं व्याप्तं सोमचरुपुरोडाशादिरूपं सर्वं वा यद्वा यत्र यानि यानि हवींषि दीयन्ते तत्सर्वं वा तथा उक्थ्यं प्रशस्यं असामि असाधारणं असमं कृत्स्नं हर्यतं कान्तं राधोन्नं हविर्लक्षणं हर्यसि कामयसे ॥ ५ ॥

५. हरित केशोंवाले इन्द्र, पूर्वकालीन यजमान तुम्हारी स्तुति करते थे और तुम यज्ञ में आते थे। तुम हरित होओ। इन्द्र, तुम्हारा सब प्रकार का अन्न प्रशंसा के योग्य है, निरुपम और उज्ज्वल है।

॥ इत्यष्टमस्य पञ्चमे पञ्चमोवर्गः ॥ ५ ॥

तावुज्रिणंमुन्दिनुंस्तोम्युंमद्इन्द्रंरथेवहतोहर्यताहरी ।
पुरूण्यस्मैसवंनानिहर्यतइन्द्रायुसोमाहरयोदधन्विरे ॥ ६ ॥

ता । वुज्रिणम् । मुन्दिनम् । स्तोम्यम् । मदे । इन्द्रम् । रथे ।
वहतः । हर्यता । हरी इति । पुरूणि । अस्मै । सवनानि ।
हर्यते । इन्द्राय । सोमाः । हरयः । दधन्विरे ॥ ६ ॥

ता तौ प्रसिद्धौ हर्यता हर्यतौ गन्तारौ कान्तौ वा हरी हरितवर्णौ अश्वौ मन्दिनं मोदमानं स्तोम्यं स्तुत्यर्हं वज्रिणमिन्द्रं मदे निमित्ते रथे वहतः धारयतः प्रापयतः अस्मै हर्यते कान्तायेन्द्राय पुरूणि बहूनि सवनानि प्रातरादीनि हरयो हरितवर्णाः सोमाः दधन्विरे निधीयन्ते ॥ ६ ॥

६. स्तुत्य और वज्रधर इन्द्र जिस समय सोमरस के पान के आमोद में प्रवृत्त होते हैं, उस समय वो कमनीय घोड़े रथ में जोते जाकर उन्हें ढोते हैं। कान्त इन्द्र के लिए अनेक बार सोमरस अभिषुत किया जाता है।

अथ सप्तमी—

अरंकामायुहरयोदधन्विरेस्थिरायहिन्वुन्हरयोहरीतुरा ।
अर्वद्भिर्योहरिभिर्जोषुमीयतेसोअस्यकामुंहरिवन्तमानशे ॥ ७ ॥

अरम् । कामाय । हरयः । दधन्विरे । स्थिराय । हिन्वन् । हरयः ।
हरी इति । तुरा । अर्वत्ऽभिः । यः । हरिऽभिः । जोषम् ।
ईयते । सः । अस्य । कामम् । हरिऽवन्तम् । आनशे ॥ ७ ॥

अरमलं पर्याप्तं कामायेन्द्रकामनाय हरयो हरितवर्णाः सोमा दधन्विरे ते च हरयः स्थिराय युद्धे अपालितायेन्द्राय तुरा तुरौ त्वरमाणौ हरी अश्वौ हिन्वन् प्रेरयन्ति यःअर्वद्भिररणकुशलैर्हरिभिरश्वैर्जोषं शूरैः सेव्यं संग्राममीयते गच्छति स रथोऽस्येन्द्रस्य स्वभूतं कामं कमनीयं हरिवन्तं सोमवन्तं यज्ञं आनशे व्याप्नोति ॥ ७ ॥

७. अविचल इन्द्र के लिए यथेष्ट सोमरस रक्खा गया है। वही सोमरस इन्द्र के घोड़ों को यज्ञ की ओर वेगवान् करता है। हरित-वर्ण घोड़े जिस रथ को युद्ध में ले जाते हैं, वही रथ इस रमणीय सोमयज्ञ में आकर अधिष्ठित हुआ है।

हरिश्मशारुर्हरिकेशआयसस्तुरस्पेयेयोहरिपाअवर्धत ।
अर्वद्भिर्योहरिभिर्वाजिनीवसुरतिविश्वादुरितापारिषद्धरी ॥ ८ ॥

हरिऽश्मशारुः । हरिऽकेशः । आयसः । तुरःऽपेये । यः ।
हरिऽपाः । अवर्धत । अर्वत्ऽभिः । यः । हरिऽभिः । वाजिनीऽवसुः ।
अति । विश्वा । दुःऽइता । पारिषत् । हरी इति ॥ ८ ॥

हरिश्मशारुर्हरितवर्णश्मश्रुः हरिकेशः हरितवर्णकेशः आयसः अयोमयइवयोऽस्य शत्रूणां घातकइत्यर्थः एवंभूतोयइन्द्रः तुरस्पेये तूर्णं पातव्ये सोमे हरिपाः हरितवर्णसोमपाः अवर्धत वर्धते यश्चार्वद्भिर्गन्तृभिर्हरिभिरश्वैः सोमैर्वा वाजिनीवसुः वाजिनमन्नं हविर्लक्षणं तदस्यास्तीति वाजिनी क्रिया सैव वसु धनं यस्य सतथोक्तः यज्ञधनइत्यर्थः। यद्वावाजिनमेव वाजिनी तदेव धनं यस्य सएवमुक्तलक्षणइन्द्रोहरी रथे योजयित्वा विश्वा विश्वानि सर्वाणि दुरिता अस्माकं दुरितानि पारिषत् पारयतु पारयतेर्लेटि सिप्यडागमः ॥ ८ ॥

८. इन्द्र का श्मश्रु (दाढ़ी-मूँछ) हरित या उज्ज्वल है। वे लोहे के समान दृढ़काय हैं। वे सोम पाते हैं। शीघ्र-शीघ्र सोमपान करके अपने शरीर को फुलाते हैं। उनकी सम्पत्ति यज्ञ है। हरितवर्ण के घोड़े उन्हें यज्ञ में ले जाते हैं। वे दो घोड़ों पर चढ़कर सारी दुर्गति दूर कर देते हैं।

स्रुवेवयस्यहरिणीविपेततुःशिप्रेवाजायहरिणीदविध्वतः ।
प्रयत्कृतेचमसेमर्मृजद्धरीपीत्वामदस्यहर्यतस्यान्धसः ॥ ९ ॥

सुवाऽइव । यस्यं । हरिणी इति । विऽपेततुः । शिप्रे इति ।
वाजाय । हरिणी इति । दविध्वतः । प्र । यत् । कृते । चमसे ।
मर्मृजत् । हरी इति । पीत्वा । मदस्य । हर्यतस्य । अन्धसः ॥ ९ ॥

यस्येन्द्रस्य हरिणी हरितवर्णावश्वौ विपेततुः रथे इन्द्रमारोप्य विपततोपन्नमस्मदीयं । यद्वा यस्य हरिणी हरितवर्णे कनीनिके विपेततुः सोमं प्रति विपततः तत्रदृष्टान्तः—स्रुवेव यथा स्रुचा स्रुवौ हविषा पूर्णौ पात्रविशेषौ होमार्थं विपततःतद्वत् । तथा यस्य च हरिणी हरितवर्णे शिप्रे हनू वाजाय सोमलक्षणायान्नाय दविध्वतः कंपयतः पुरतः प्रत्तस्य सोमस्य पीत्वा चलतः तथा यद्यद्वा कृते संस्कृते चमसेवर्तमानं मदस्य मदकरं हर्यतस्य कान्तं अन्धसोन्नं सोमं पीत्वा हरी अश्वौ प्रमर्मृजत् प्रमार्ष्टि तदानीं स्तुमइत्यर्थः ॥ ९ ॥

९. इन्द्र के दो हरित या उज्ज्वल नेत्र स्रुवा नामक यज्ञ-पात्र के समान यज्ञ में लगे। वे अन्न-भक्षण करने के लिए अपने दोनों हरित या उज्ज्वल जबड़े कँपाते हैं। परिष्कृत चमस के बीच जो कमनीय सोमरस था, उसे पीकर वे अपने दो घोड़ों के शरीर को परिष्कृत करते हैं।

उतस्मसद्महर्यतस्यपस्त्योरत्योनवाजंहरिवाँअचिक्रदत् ।
महीचिद्धिधिषणाहर्यदोजसाबृहद्वयोदधिषेहर्यतश्चिदा ॥ १० ॥ ६ ॥

उत । स्म । सद्म । हर्यतस्य । पस्त्योः । अत्यः । न । वाजम् ।
हरिऽवान् । अचिक्रदत् । मही । चित् । हि । धिषणा । अहर्यत् ।
ओजसा । बृहत् । वयः । दधिषे । हर्यतः । चित् । आ ॥ १० ॥ ६ ॥

उतापिच हर्यतस्य कमनीयस्येन्द्रस्य सद्म सदनं पस्त्योः द्यावापृथिव्योः संबन्धि सोमम् अत्योन अश्वइव वाजं संग्रामं हरिवान् अश्ववान् अचिक्रदत् गच्छति । तथा हि यस्मात् हे इन्द्र त्वां मही महती धिषणा स्तुतिरोजसा बलेन युक्तमिन्द्रं अहर्यत् कामयते चिदिति पूरणः अतोवाजमचिक्रदत् तथासति हे इन्द्र हर्यतः कामयमानस्य यजमानस्य बृहत् महत् वयोन्नं आदधिषे आपयच्छसि । चिदितिपूरणः ॥ १० ॥

१०. हरित या कमनीय इन्द्र का आवास-स्थान द्यावापृथिवी पर ही है। वे रथ पर चढ़कर घोड़े के समान महावेग से युद्ध में जाते हैं। अत्यन्त उत्कृष्ट स्तोत्र उनकी प्रशंसा करता है। हरितवर्ण वा उज्ज्वल इन्द्र, तुम अपनी शक्ति से प्रचुर अन्न दिया करते हो।

॥ इत्यष्टमस्य पंचमे षष्ठोवर्गः ॥ ६ ॥

आरोदसीहर्यमाणोमहित्वानव्यंनव्यंहर्यसिमन्मनुप्रियम् ।
प्रपस्त्यमसुरहर्यतंगोराविष्कृधिहरयेसूर्याय ॥ ११ ॥

आ। रोदसी इति। हर्यमाणः। महिऽत्वा। नव्यंम्ऽनव्यम्। हर्यसि।
मन्म। नु। प्रियम्। प्र। पस्त्यंम्। असुर। हर्यतम्। गोः।
आविः। कृधि। हरये। सूर्याय॥ ११॥

हे इन्द्र हर्यमाणः कामयमानो महित्वा महत्त्वेन रोदसी द्यावापृथिव्यौ आपूरयसीति शेषः। तथा नव्यंनव्यं नवतरं प्रियं प्रियकरं मन्म मननीयं स्तोत्रं नुक्षिप्रं हर्यसि कामयसे हे असुर बलवन् असुः प्राणः तद्वन् मत्वर्थीयो रः छान्दसो गोः जातावेकवचनं गवां हर्यतं स्पृहणीयं पस्त्यं गृहं गोरुदकस्योकगुणकं स्थाने वा हरये उदकस्य हर्त्रे सूर्याय प्रकर्षेण आविष्कृधि प्रकटीकुरु॥ ११॥

११. इन्द्र, तुम अपनी महिमा के द्वारा द्यावापृथिवी को व्याप्त करके नित्य नये और प्रिय स्तोत्र पाते हो। असुर (बली) इन्द्र, गायों के उत्कृष्ट स्थान को जल-हरण-कर्त्ता सूर्य के पास प्रकट करो।

आत्वांहर्यन्तंप्रयुजोजनांनांरथेवहन्तुहरिंशिप्रमिन्द्र।
पिबायथाप्रतिभृतस्यमध्वोहर्यन्यज्ञंसधमादेदशोंणिम्॥ १२॥

आ। त्वा। हर्यन्तंम्। प्रऽयुजः। जनांनाम्। रथे। वहन्तु।
हरिंऽशिप्रम्। इन्द्र। पिबं। यथा। प्रतिऽभृतस्य। मध्वः।
हर्यन्। यज्ञम्। सधऽमादे। दशंऽओणिम्॥ १२॥

हे इन्द्र हरिशिप्रं हरितवर्णशिप्रं त्वा त्वां हर्यन्तं यज्ञं कामयमानं प्रयुजोरथे प्रयुक्ताअश्वारथे स्थापयित्वा जनानां ऋत्विग्यजमानानां अन्तिके प्रति वहन्तु प्रापयन्तु यथा येन प्रकारेण प्रतिभृतस्य गृहादिषु संभृतं मध्वोमधु सोमरसं यज्ञं यागसाधनं दशोणिं ओणयोंगुल्यः दशभिरंगुलीभिः संपादितं सोमं हर्यन् कामयमानः सन् पिब पिबसि सधमादे संग्रामेजयार्थं तथा वहन्त्वित्यर्थः॥ १२॥

१२. हरित वर्ण के जबड़ोंवाले इन्द्र, तुम्हारे घोड़े रथ में जोते जाकर तुम्हें मनुष्य के यज्ञ में ले आवें। तुम्हारे लिए जो मधुर सोमरस प्रस्तुत हुआ है, उसे पियो। जो सोम दस अँगुलियों से प्रस्तुत होकर यज्ञ का उपकरण-स्वरूप हुआ, युद्ध के समय तुम उसे पीने की इच्छा करो।

अपाःपूर्वेषामित्येषा षोडशिग्रहस्य याज्या। सूत्रितंच—एवाहिशक्रोवशीहिशक्रइति अपिबापाःपूर्वेषांहरिवःसुतानामिति यजतीति।

सैषा त्रयोदशी—

अपाःपूर्वेषांहरिवःसुतानामथोइदंसवनंकेवलंते।
ममद्धिसोमंमधुमन्तमिन्द्रसत्रावृषञ्जठरआवृषस्व ॥ १३ ॥ ७ ॥

अपाः । पूर्वेषाम् । हरिऽवः । सुतानाम् । अथो इति । इदम् ।
सवनम् । केवलम् । ते । ममद्धि । सोमम् । मधुऽमन्तम् । इन्द्र ।
सत्रा । वृषन् । जठरे । आ । वृषस्व ॥ १३ ॥ ७ ॥

हे इन्द्र त्वं सुतानामभिषुतानां पूर्वेषां प्रातःसवने संपादितानां कर्मणि यष्टव्यत्वेनाभिषुतान् प्रातःसवनिकान् सोमानित्यर्थः तानपाः अपिबः हे हरिवः हरिवन्निन्द्रसंबोधनं हरिभ्यामश्वाभ्यां तद्वन् यद्वा ऋक्सामात्मकाभ्यां हरिभ्यां युक्त । ऋक्सामे वा इन्द्रस्य हरी । वाग्वा एष हरती वि ब्राह्मणे अथो अपि चेदं माध्यंदिनं सवनं केवलं ते तवैवासाधारणं । माध्यंदिनं सवनं केवलं तवेति हि ब्राह्मणे । तस्मिन् हे इन्द्र मधुमन्तं माधुर्योपेतं सोमं ममद्धि पिब आस्वादयेत्यर्थः मदिरथास्वादनकर्मा पिबन्तु मदन्तु वियंत्विति च मंत्रः । सत्रा वृषन् सत्राशब्दो भूयिष्ठवचनः हे भूयिष्ठं वर्षितरिन्द्र जठरे आवृषस्व आसिंचस्व ॥ १३ ॥

१३. अश्ववाले इन्द्र, पहले (प्रातःसवन में) जो सोम प्रस्तुत हुआ है, उसका तुमने पान किया है। इस समय (माध्यन्दिन सवन में) जो प्रस्तुत हुआ है, वह केवल तुम्हारे लिए। इन्द्र, इस मधुर सोम का आस्वादन करो। प्रचुर वृष्टि-कर्त्ता इन्द्र, अपना उदर भिगोओ।

॥ इत्यष्टमस्य पंचमे सप्तमो वर्गः ॥ ७ ॥

या ओषधीरिति त्रयोविंशत्यृचं सप्तमं सूक्तं अथर्वणपुत्रस्य भिषङ्नाम्न आर्षं आनुष्टुभमोषधिदेवताकं । तथा चानुक्रान्तं—या ओषधीरूना भिषगाथर्वणो ओषधिस्तुतिरानुष्टुभमिति । दीक्षितानां ज्वराद्युपतापे संजाते अनेन सूक्तेन मार्जयेत् । सूत्रितं च— ओषधिसूक्तेन चाज्याभ्यनुष्टयेदिति ।

तत्र प्रथमा—

याओषधीःपूर्वाजातादेवेभ्यस्त्रियुगंपुरा।
मनैनुबभ्रूणामहंशतंधामानिसप्तच ॥ १ ॥

---

१ ऐ० ब्रा० २. २४. । २ ऋ०सं० ३. ७. ६ ।

२२

याः । ओषधीः । पूर्वाः । जाताः । देवेभ्यः । त्रिऽयुगम् । पुरा ।
मनै । नु । बभ्रूणाम् । अहम् । शतम् । धामानि । सप्त । च ॥ १ ॥

या ओषधीरोषधयः पूर्वाः पुरातन्यो जाता उत्पन्नाः केभ्यः सकाशात् देवेभ्यो यज्ञनिर्मातृभ्यः यद्वा देवा द्योतमाना ऋतवः तेभ्यः कस्मिन्काले त्रियुगं त्रिषु युगेषु विशेषेणप्रादुर्भावापेक्षया कृतादियुगत्रयमुक्तं कलौ त्वल्पत्वादुपेक्षितं अथवा त्रिषु युगेषु वसन्ते प्रावृषि शरदि चेत्यर्थः। अहं बभ्रूणां बभ्रुवर्णानां सोमाद्योषधीनां शतं सप्त च धामानि अनुलेपसंमार्जनाभिषेकादिरूपेणाश्रयभूतानि स्थानानि नु क्षिप्रं मनै मन्ये संभावयामीत्यर्थः। अत्र वाजसनेयकं— या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरेति ऋतवो वै देवास्तेभ्य एतास्त्रिः पुरा जायन्ते वसन्ते प्रावृषि शरदि मनै नु बभ्रूणामहमिति सोमो वै बभ्रुः सौम्या ओषधय ओषधयः पुरुषः शतं धामानीति यदिदं शतायुः शतवीर्यः शतवीर्यस्तस्मिन्नाह शतं धामानि सप्त चेति यदेवैतत्सप्त शीर्षन्प्राणास्तानेतदाहेति। अत्र निरुक्तं च— या ओषधयः पूर्वा जाता देवेभ्यस्त्रीणि युगानि पुरा मन्ये नु तद् बभ्रूणामहं बभ्रुवर्णानां हरणानां भरणानामिति वा शतं धामानि सप्त चेति धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानीति जन्मान्यत्राभिप्रेतानि सप्तशतानि सप्तशतं पुरुषस्य मर्मणां तेष्वेना दधातीति[1] ॥ १ ॥

१. पूर्व समय में, तीन युगों (सत्य, त्रेता और द्वापर या वसन्त, वर्षा और शरद्) में, जो ओषधियाँ प्राचीन देवों ने बनाई हैं, वे सब पिङ्गल-वर्ण ओषधियाँ एक सौ सात स्थानों में विद्यमान हैं, मैं ऐसा जानता हूँ।

अथ द्वितीया—

शतंवोअम्बधामानिसहस्रमुतवोरुहः।
अधाशतक्रत्वोयूयमिमंमेअगदंकृत ॥ २ ॥

शतम् । वः । अम्ब । धामानि । सहस्रम् । उत । वः । रुहः ।
अध । शतऽक्रत्वः । यूयम् । इमम् । मे । अगदम् । कृत ॥ २ ॥

हे अंब मातरः ओषधयो वो युष्माकं धामानि स्थानानि जन्मानि वा शतं अपरिमितानि उतापि च वो युष्माकं रुहः प्ररोहः प्रोद्गमः सहस्रं अपरिमितं अध अपि च हे शतक्रत्वः शतकर्माणो यूयमिमं मे मां मदीयं वा जनममगदं अगदं गदो रोगः तद्रहितं कृत कुरुत ॥ २ ॥

२. मातृ-रूप ओषधियो, तुम्हारे जन्म असीम हैं और तुम्हारे प्ररोहण अपरिमित हैं। तुम सौ कर्मोंवाली हो। तुम मुझे आरोग्य प्रदान करो।

1 नि० ९, २८, ।

अथ तृतीया—

ओषधीःप्रतिमोदध्वंपुष्पवतीःप्रसूवरीः ।
अश्वाइवसजित्वरीर्वीरुधःपारयिष्ण्वः ॥ ३ ॥

ओषधीः । प्रति । मोदध्वम् । पुष्पऽवतीः । प्रऽसूवरीः ।
अश्वाःऽइव । सऽजित्वरीः । वीरुधः । पारयिष्ण्वः ॥ ३ ॥

हे ओषधीरोषधयः प्रतिमोदध्वं इमं रुग्णं प्रति मुदिताहृष्टाभवत कीदृश्योयूयं पुष्पवतीः पुष्पवत्यः प्रसूवरीः प्रकर्षेण सूयन्तउपभोगायेति प्रसवाः फलानि तद्वत्यः किंचाश्वाइव अश्वानामाहर्यादिव सजित्वरीः सह रोगं जयंत्यः वीरुधोविरोहन्त्यः पारयिष्ण्वः पुरुषं पारयन्त्यो-रोगात् ॥ ३ ॥

३. ओषधियो, तुम फूल और फलवाली हो। तुम रोगी के प्रति सन्तुष्ट होओ। तुम घोड़ों के समान रोगों के लिए जयशील हो और पुरुषों को रोग से पार ले जानेवाली हो।

ओषधीरितिमातरस्तद्वोदेवीरुपब्रुवे ।
सनेयमश्वंगांवासआत्मानंतवपूरुष ॥ ४ ॥

ओषधीः । इति । मातरः । तत् । वः । देवीः । उप । ब्रुवे ।
सनेयम् । अश्वम् । गाम् । वासः । आत्मानम् । तव । पुरुष ॥ ४ ॥

हे ओषधीरोषधयः देवीर्दिव्योद्योतनादिगुणकाहे मातरोजननानां मातृभूताः ... दिवका-रित्वान्मातृत्वोपचारः अथवा मातरश्चारोग्यनिर्मात्र्योवोयुष्माकं संबन्धिनं भिषजं तद्वक्ष्यमा-णं इतीत्थं उपब्रुवे उपब्रवीमि । किंतदिति चेत् उच्यते—ओषध्यर्थं अहं अश्वं गां वासोंऽशुकं किंबहुना आत्मानमपि हेपुरुष चिकित्सक तव तुभ्यं सनेयं ददामि ॥ ४ ॥

४. दीप्तिशाली ओषधियो, तुम मातृ-रूप हो। तुम्हारे सामने मैं स्वीकार करता हूँ कि, चिकित्सक को गौ, अश्व, वस्त्र और अपने को भी देने को प्रस्तुत हूँ।

अश्वत्थेवोनिषदनंपर्णेवोवसतिष्कृता ।
गोभाजइत्किलासथयत्सनवथपूरुषम् ॥ ५ ॥ ८ ॥

अश्वत्थे । वः । निऽसदनम् । पर्णे । वः । वसतिः । कृता ।
गोऽभाजः । इत् । किल । असथ । यत् । सनवथ । पुरुषम् ॥ ५ ॥ ८ ॥

हे ओषधिदेवताः वो युष्माकमश्वत्थे निषदनं निषण्णं वसनं तथा वो युष्माकं पर्णे पलाशे वसतिर्निवासः कृता । तृतीयस्यामितो दिवि सोम आसीत्तं गायत्र्याहरत्तस्य पर्णमच्छिद्यत तत्पर्णोऽभवत्तत्पर्णस्य पर्णत्वमिति[1] ब्राह्मणात् । पलाशस्य पर्णत्वप्रसिद्धिः अश्वत्थपलाशयोर्यज्ञियत्वात् ओषधीनामाश्रयत्वमित्यपेक्षयोपादानं । किंच गोभाजइत् किल यत् यदा सनवथ खलु यदि सनवथ संभजथ पूरुषं पुरुषं यजमानं भवथेति । सनवथ सनोतेः लेट्यडागमः व्यत्ययेन उपस्यायः यद्वा औत्सर्गिकः शप्चेति विकरणत्वा ॥ ५ ॥

५. ओषधियो, तुम्हारा अश्वत्थ वृक्ष और पलाश वृक्ष पर निवास-स्थान है। जिस समय तुम लोग रोगी के ऊपर अनुग्रह करती हो, उस समय तुम्हें गायें देना उचित है—तुम विशिष्ट कृतज्ञता की पात्रा हो।

॥ इत्यष्टमस्य पंचमेऽष्टमोवर्गः ॥ ८ ॥

यत्रौषधीः सम॒ग्मत॒ राजा॑नः॒ समि॑ताविव ।
विप्रः॒ स उ॑च्यते भि॒षग्र॑क्षो॒हामी॑व॒चात॑नः ॥ ६ ॥

यत्र॑ । ओष॑धीः । स॒म्ऽअग्म॑त । राजा॑नः । समि॑तौऽइव । विप्रः॑ ।
सः । उ॒च्य॒ते॒ । भि॒षक् । र॒क्षः॒ऽहा । अ॒मी॒व॒ऽचात॑नः ॥ ६ ॥

यत्र यस्मिन्देशे ओषधीरोषध्यः समग्मत संगच्छन्ते राजानः समिताविव संग्रामे यथा तत्र यथा संगता भवन्ति तद्वत् तासां नानाविधानामोषधीनां संगमनं यस्मिन्देशेऽस्ति तत्र विप्रः प्राज्ञो ब्राह्मणः स भिषगुच्यते रक्षोहा रक्षोहन्ता अमीवचातनः अमीवा व्याधिः तस्य चातयिता च भवति तदानीम् ॥ ६ ॥

६. जैसे राजा लोग समिति में एकत्र होते हैं, वैसे ही जिसके पास ओषधियाँ हैं या जो उन्हें जानता है, उसी बुद्धिमान् भिषक् को चिकित्सक कहा जाता है। वह रोगों का विनाश-कर्त्ता है।

अ॒श्वा॒व॒तीं सो॑माव॒तीमू॒र्जय॑न्तीमु॒दो॑जसम् ।
आवि॑त्सि॒ सर्वा॒ ओष॑धीर॒स्मा अ॑रि॒ष्टता॑तये ॥ ७ ॥

अ॒श्व॒ऽव॒तीम् । सो॒म॒ऽव॒तीम् । ऊ॒र्जय॑न्तीम् । उत्ऽओ॑जसम् ।
आ । अ॒वि॒त्सि॒ । सर्वाः॑ । ओष॑धीः । अ॒स्मै । अ॒रि॒ष्टऽता॑तये ॥ ७ ॥

---

1 तै० ब्रा० १. १. ३ ।

अश्वावत्यादयः प्रधानभूताः ओषध्यस्ताः ताः सर्वा ओषधीरावित्सि आवाने स्वीकरोमी-त्यर्थः अस्मा अरिष्टतातये अस्मै रोगाय अमुं रोगं विनाशयितुमित्यर्थः ॥ ७ ॥

७. इसे नीरोग करने के लिए मैं अश्वावती, सोमवती, ऊर्जयन्ती, उदोजस आदि ओषधियों को जानता हूँ।

उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते।
धनं सनिष्यन्तीनामात्मानं तव पूरुष ॥ ८ ॥

उत्। शुष्माः। ओषधीनाम्। गावः। गोस्थात्ऽइव। ईरते।
धनम्। सनिष्यन्तीनाम्। आत्मानम्। तव। पुरुष ॥ ८ ॥

ओषधीनां शुष्माः बलानि उदीरते उद्गच्छन्ति कुर्वन्ते स्ववीर्यं मोचयन्तीत्यर्थः। गोष्ठा-दिव गा यथा ततः सकाशादुदीरते तद्वत् कीदृशानामोषधीनां उच्यते धनं स्वसामर्थ्यल-क्षणं सनिष्यन्तीनां दातुमिच्छन्तीनां किमर्थमिति उच्यते हे पूरुष पुरुष रोगग्रस्त तवात्मानं शरी-रं प्रति। यद्वा परोक्षमीरोषधीर्ददृशा वदति हे पुरुष प्रियंगवाद्योषधिस्थानमिव तव आत्मानं वर्ध-यितुं धनं सनिष्यन्तीनां व्रीह्याद्योषधीनां शुष्मा उदीरते ॥ ८ ॥

८. रोगी, जैसे गोष्ठ से गायें बाहर होती हैं, वैसे ही ओषधियों से उनका गुण बाहर होता है। ये ओषधियाँ तुम्हें स्वास्थ्य-धन देंगी।

इष्कृतिर्नाम वो माताथो यूयं स्थ निष्कृतीः।
सीराः पतत्रिणीः स्थन यदामयति निष्कृथ ॥ ९ ॥

इष्कृतिः। नाम। वः। माता। अथो इति। यूयम्। स्थ।
निःऽकृतीः। सीराः। पतत्रिणीः। स्थन। यत्।
आमयति। निः। कृथ ॥ ९ ॥

हे ओषधयो वो माता जननी इष्कृतिर्नाम सर्वेषां रुजानां निष्कर्त्रीति प्रसिद्धा यस्मा त्सा-रुजं निष्करोति अथो अतो यूयमपि निष्कृतीः निष्कृतयः स्थ भवथ किंच यूयं सीराः सरण-शीलाः पतत्रिणीः पतनवत्यश्च स्थन भवथ वमनविरेचनादिषु। किंच पुरुषो यद्यदि आमय-ति व्याधितो भवति तं निष्कृथ संस्कुरुथ ॥ ९ ॥

९. ओषधियो, तुम्हारी माता का नाम इष्कृति (नीरोग करनेवाली) है। तुम लोग भी रोगों को दूर करनेवाली हो। जो कुछ शरीर को पीड़ा देता है, उसे तुम लोग वेग से बाहर निकाल दो। तुम रोगी को नीरोग करती हो।

अथ दशमी—

अति॒विश्वाः॑परि॒ष्ठाःस्ते॒नइ॑वव्र॒जम॑क्रमुः ।
ओष॑धीः॒प्राचु॑च्यवु॒र्यत्किंच॑त॒न्वो॒३॑रपः॑ ॥ १० ॥ ९ ॥

अति॑ । विश्वाः॑ । प॒रि॒ऽस्थाः । स्ते॒नःऽइ॑व । व्र॒जम् । अ॒क्र॒मुः॒ ।
ओष॑धीः । प्र । अ॒चु॒च्य॒वुः॒ । यत् । किम् । च॒ । त॒न्वः॑ । रपः॑ ॥ १० ॥ ९ ॥

विश्वा व्याप्ताः परिष्ठाः परितः स्थिताः ओषधयः अत्यक्रमुः व्याधीन् अतिक्रान्तवत्यः स्तेनइव व्रजं यथा स्तेनो व्रजं अत्यक्रमीत् तद्वत् तथा कृत्वा ओषधीरोषधयः प्राचुच्यवुः प्रच्यावयन्ति यत्किंच तन्वो व्रणशरीरस्य रपः पापं व्याधिलक्षणमस्ति तदिति ॥ १० ॥

१०. जैसे कोई चोर गोष्ठ को लाँघकर जाता है, वैसे ही विश्वव्यापी और सर्वत्र ओषधियाँ रोगों को लाँघ जाती हैं। शरीर में जो पीड़ा होती है, उसे ओषधियाँ दूर करती हैं।

॥ इत्यष्टमस्य द्वितीये नवमो वर्गः ॥ ९ ॥

यदि॒मावा॒जय॑न्न॒हमोष॑धी॒र्हस्त॑आद॒धे ।
आ॒त्माय॒क्ष्मस्य॑नश्यतिपु॒राजी॑व॒गृभो॑यथा ॥ ११ ॥

यत् । इ॒माः । वा॒जय॑न् । अ॒हम् । ओष॑धीः । हस्ते॑ । आ॒ऽद॒धे ।
आ॒त्मा । यक्ष्म॑स्य । न॒श्य॒ति॒ । पु॒रा । जी॒व॒ऽगृभः॑ । य॒था॒ ॥ ११ ॥

अहं यदीमा ओषधीर्हस्ते आदधे आधारयामि किंकुर्वन् वाजयन् रुग्णं बलिनं कुर्वन् तदा पुरा यक्ष्मस्य रोगस्यात्मा नश्यति । जीवगृभो यथा जीवानां शकुन्यादीनां ग्राहकात् व्याधाद्यथा जीवा नश्यन्ति तद्वत् । यद्वा जीवगृभो मृत्योः सकाशात् जीवो नश्यते तद्वत् ॥ ११ ॥

११. जभी मैं इन सब ओषधियों को हाथ में ग्रहण करता हूँ और रोगी का दौर्बल्य दूर करता हूँ, तभी रोग की आत्मा वैसे ही मर जाती है, जैसे मृत्यु से जीव मर जाता है।

यस्यौ॑षधीः प्र॒सर्प॒थाङ्ग॑मङ्गं॒परु॑ष्परुः ।
ततो॒यक्ष्मं॒विबा॑धध्वउ॒ग्रोम॑ध्यम॒शीरि॑व ॥ १२ ॥

यस्य॑ । ओ॒ष॒धीः॒ । प्र॒ऽसर्प॑थ । अङ्ग॑म्ऽअङ्गम् । परुः॑ऽपरुः । ततः॑ ।
यक्ष्म॑म् । वि । बा॒ध॒ध्वे॒ । उ॒ग्रः । म॒ध्य॒म॒शीःऽइ॑व ॥ १२ ॥

हे ओषधीः ओषधयो यस्य रुग्णस्याङ्गमङ्गं यद्यदङ्गं परुःपरुः यद्यत्पर्व प्रसर्पथ प्रकर्षेणाश्रयथ ततोऽङ्गात् पर्वणश्च यक्ष्मं व्याधिं विबाधध्वे उग्रउद्गूर्णबलोमध्यमशीः मध्यमस्थाने वर्तमानोराजा यथोपद्रवकारिणः समन्तात् शत्रून् परेषेद् विबाधते तद्वत् ॥ १२ ॥

१२. ओषधियो, जैसे बली और मध्यस्थ व्यक्ति सबको अधीन करते हैं, वैसे ही, ओषधियो, तुम लोग जिसके अङ्ग-प्रत्यङ्ग और ग्रन्थि-ग्रन्थि में विचरण करती हो, उसके रोग सभी शरीरावयवों से दूर करती हो।

साकंयक्ष्मप्रपतचाषेणकिकिदीविना ।
साकंवातस्यध्राज्यासाकंनश्यनिहाकया ॥ १३ ॥

साकम् । यक्ष्म । प्र । पत । चाषेण । किकिदीविना । साकम् । वातस्य । ध्राज्या । साकम् । नश्य । निऽहाकया ॥ १३ ॥

हेऽस्मदीयस्य पुरुषस्य शरीराधिष्ठायिन् यक्ष्म व्याधे त्वं साकं सहैव प्रपत प्रकर्षेण शीघ्रं गच्छ केन साकमिति उच्यते—चाषेण अतिशीघ्रं पतता चाषाख्येन पक्षिणा सह तथा किकिदीविना पक्षिणा च सह तथा वातस्य शीघ्रं गच्छतो वायोर्ध्राज्या प्रगत्या गत्या वेगेन सह गच्छ तथा निहाकया गोधिकया साकं नश्य नाशं प्राप्नुहि ॥ १३ ॥

१३. नीलकण्ठ और किकिदीवि (श्येन ?) पक्षी जैसे द्रुत वेग से उड़ जाते हैं अथवा जैसे वायु वेग से बहता है वा जैसे गोधा (गोह) दौड़ती है, वैसे ही, रोग, तुम भी शीघ्र दूर होओ।

अथ चतुर्दशी—

अन्यावोअन्यामवत्वन्यान्यस्याउपावत ।
ताःसर्वाःसंविदानाइदंमेप्रावताचः ॥ १४ ॥

अन्या । वः । अन्याम् । अवतु । अन्या । अन्यस्याः । उप । अवत । ताः । सर्वाः । सम्ऽविदानाः । इदम् । मे । प्र । अवत । वचः ॥ १४ ॥

---

१ तैत्तिरीयशाखायां तु—साकंयक्ष्मप्रपतश्येनेनकिकिदीविना । साकंवातस्यध्राज्यासाकंनश्य-निहाकयेति । श्लेष्मावरुद्धकण्ठजन्यध्वनेरनुकरणार्थोऽयं किकिशब्दः तेन किकिना ध्वनिविशेषेण दीव्यति व्यवहरतीति रोगविशेषः स च श्लेष्मजन्यः श्येनवत्तीक्ष्णत्वात्पित्तजन्योरोगः श्येनः हे यक्ष्म राजयक्ष्मादिरोग त्वं पित्तजन्येन श्लेष्मजन्येन च रोगेण साकं प्रपत प्रकर्षेण नष्टोभव तथा वातस्य ध्राज्या वातरोगस्य गत्या व्याप्त्या साकं नष्टोभव तथा यया पीडया निहतोऽस्मि हाकष्टमिति शब्दं करोमि सा निहाका तया सह नष्टोभवेति ॥

हे ओषधयो वो युष्माकं मध्ये अन्याओषधिरन्यामोषधिमवतु प्राप्नोतु अवतिरत्र गत्यर्थः। तथान्यान्यस्याः समीपमुपावत उपगच्छत एवं याः सन्ति क्षित्यामोषधयः ताः सर्वाः संविदानाः परस्परमेकमत्यं प्राप्ताः सत्यइदं मे मदीयं वचः प्रार्थनालक्षणं वचनं प्रावत प्ररक्षत ॥१४॥

१४. ओषधियो, तुम लोगों में एक ओषधि दूसरी के पास जाय और दूसरी तीसरी के पास जाय। इस प्रकार संसार की सारी ओषधियाँ एकमत होकर मेरी प्रार्थना की रक्षा करें।

याःफलिनीर्याअफलाअपुष्पायाश्चपुष्पिणीः।
बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वंहसः ॥ १५ ॥ १० ॥

याः। फलिनीः। याः। अफलाः। अपुष्पाः। याः। च। पुष्पिणीः।
बृहस्पतिऽप्रसूताः। ताः। नः। मुञ्चन्तु। अंहसः ॥ १५ ॥ १० ॥

याः फलिनीः फलवत्यः याः अफलाः फलवर्जितायाश्च अपुष्पाः पुष्परहितायाश्च पुष्पिणीः पुष्पवत्यः बृहस्पतिप्रसूताः बृहस्पतिर्मन्त्राभिमानी देवः तेनानुज्ञातास्तानोऽस्मानंहसो मुंचन्तु मोचयन्तु ॥ १५ ॥

१५. फलवती और फलशून्या तथा पुष्पवती और पुष्पशून्या ओषधियाँ, बृहस्पति के द्वारा उत्पादित होकर, हमें पाप से बचावें।

॥ इत्यष्टमस्य पंचमे दशमोवर्गः ॥ १० ॥

मुञ्चन्तुमाशपथ्या३दथोवरुण्यादुत।
अथोयमस्यपड्वीशात्सर्वस्माद्देवकिल्बिषात् ॥ १६ ॥

मुञ्चन्तु। मा। शपथ्यात्। अथो इति। वरुण्यात्। उत। अथो इति। यमस्य। पड्वीशात्। सर्वस्मात्। देवऽकिल्बिषात् ॥ १६ ॥

मा मां ओषधयः शपथ्यात् शपथसंभवादेनसः पापात् मुंचन्तु अथो अपि च वरुण्यात् वरुणसंभवात् मां मुंचन्तु वरुणोपि स्वपाशेन पातमात्रं पुरुषं बध्नाति उतेति पूरणः अथो अपि च यमस्य पड्वीशात् पादबन्धनात् निगडात् मुंचन्तु न केवलं वरुणादेः पापात् सर्वस्मात् देवकिल्बिषात् देवैः कृतात्पापात् मुंचन्तु ॥ १६ ॥

१६. शपथ से उत्पन्न पाप से मुझे ओषधियाँ बचावें। वरुण के पाश और यम की बेड़ी से भी बचावें। देवों के पाश से भी बचावें।

अथ सप्तदशी—

अवपर्तन्तीरवदन्दिवओषधयस्परि ।
यंजीवमश्नवामहैनसरिष्यातिपूरुषः ॥ १७ ॥

अवऽपर्तन्तीः । अवदन् । दिवः । ओषधयः । परि । यम् । जीवम् ।
अश्नवामहै । न । सः । रिष्याति । पुरुषः ॥ १७ ॥

दिवो द्युलोकादवपतन्तीरवपतन्त्य ओषधयस्तत्परि पर्यवदन् किमिति उच्यते यं जीवं जीवन्तमश्नवामहै व्याप्नुमोन सपूरुषः पुरुषोरिष्याति रिष्यति न हिंस्यते ॥ १७ ॥

१७. स्वर्ग से नीचे आते समय ओषधियों ने कहा था कि, हम जिस प्राणी पर अनुग्रह करती हैं, उसका कोई अनिष्ट न हो।

याओषधीःसोमराज्ञीर्बह्वीःशतविचक्षणाः ।
तासांत्वमस्युत्तमारंकामायशंहृदे ॥ १८ ॥

याः । ओषधीः । सोमऽराज्ञीः । बह्वीः । शतऽविचक्षणाः । तासाम् ।
त्वम् । असि । उत्ऽतमा । अरम् । कामाय । शम् । हृदे ॥ १८ ॥

या ओषधीरोषधयः सोमराज्ञीः सोमो राजा स्वामी यासां तास्तथोक्ताः बह्वीः असंख्याताः शतविचक्षणाः बहुदर्शनाः हे सोमाख्य ओषधे तासामोषधीनां त्वमुत्तमासि यस्मादेवं तस्मात् अरमलं पर्याप्तं कामाय कान्ताय हृदे हृदयाय शं सुखकरी भवेति शेषः ॥ १८ ॥

१८. जिन ओषधियों का राजा सोम है और जो ओषधियाँ असीम उपकार करती हैं, ओषधि, उनमें तुम श्रेष्ठ हो, तुम वासना को पूरी करने और हृदय को सुखी करने में समर्थ हो।

अथैकोनविंशी—

याओषधीःसोमराज्ञीर्विष्ठिताःपृथिवीमनु ।
बृहस्पतिप्रसूताअस्यैसंदत्तवीर्यम् ॥ १९ ॥

याः । ओषधीः । सोमऽराज्ञीः । विऽस्थिताः । पृथिवीम् । अनु ।
बृहस्पतिऽप्रसूताः । अस्यै । सम् । दत्त । वीर्यम् ॥ १९ ॥

याओषधीः सोमराज्ञीः पृथिवीमनुविष्ठिताः विविधं स्थितादिवः सकाशात् आगत्य पृ-थिव्यां नानाभेदेन स्थिताः बृहस्पतिप्रसूताबृहस्पतिनानुज्ञाताः तत्योषधयः अस्मै कृण्वते वीर्यं सन्दत्त सन्दत्त ॥ १९ ॥

१९. जिन ओषधियों का राजा सोम है और जो पृथिवी के नाना स्थानों में अविच्छिन्न हैं, वे ही बृहस्पति के द्वारा उत्पादित ओषधियाँ इस रोगी को बल दें अथवा इस उपस्थित ओषधि को वीर्यवती करें।

मावोरिषत्खनितायस्मैचाहंखनामिवः ।
द्विपच्चतुष्पदस्माकंसर्वमस्त्वनातुरम् ॥ २० ॥

मा । वः । रिषत् । खनिता । यस्मै । च । अहम् । खनामि । वः ।
द्विऽपत् । चतुःऽपत् । अस्माकम् । सर्वम् । अस्तु । अनातुरम् ॥ २० ॥

हे ओषधयोवोयुष्मान् मारिषत् माहिंस्यात् कः खनिता भूमेः खननकर्ता यस्मै कृण्वा-यथाहं खनामि सोपुष्मान् किंचास्माकं संबन्धि द्विपत् पुत्रभृत्यादिकं चतुष्पत् गोमहिष्या-दिकं यदस्ति तत्सर्वमनातुरमरोगमस्तु ॥ २० ॥

२०. ओषधियो, मैं तुम्हें खोदकर निकालनेवाला हूँ। मुझे नष्ट नहीं करना। जिसके लिए खोदता हूँ, वह भी नष्ट नहीं हो। हमारी जो द्विपद और चतुष्पद आदि सम्पत्तियाँ हैं, वे नीरोग रहें।

याश्चेदमुपशृण्वन्तियाश्चदूरंपरागताः ।
सर्वाःसंगत्यवीरुधोस्यैसंदत्तवीर्यम् ॥ २१ ॥

याः । च । इदम् । उपऽशृण्वन्ति । याः । च । दूरम् । पराऽगताः ।
सर्वाः । सम्ऽगत्य । वीरुधः । अस्यै । सम् । दत्त । वीर्यम् ॥ २१ ॥

याश्चोषधयः इदं स्तोत्रमुपशृण्वन्ति याश्चोषधयोदूरं परागताः सर्वावीरुधः संगत्य संग-ताः सत्योहे वीरुधोस्यै कृण्वते वीर्यं सन्दत्त ॥ २१ ॥

२१. जो ओषधियाँ मेरा यह स्तोत्र सुनती हैं और जो अत्यन्त दूर पर हैं (इसी लिए स्तोत्र नहीं सुना है), वे सब इकट्ठी होकर इस ओषधि को वीर्यवती करें।

ओषधयःसंवदन्तेसोमेनसहराज्ञा ।
यस्मैकृणोतिब्राह्मणस्तंराजन्पारयामसि ॥ २२ ॥

ओषधयः । सम् । वदन्ते । सोमेन । सह । राज्ञा । यस्मै । कृणोति ।
ब्राह्मणः । तम् । राजन् । पारयामसि ॥ २२ ॥

ओषधयः सर्वाः सोमेन राज्ञा सह संवदन्ते संवादं कुर्वन्ति किमिति तदुच्यते—यस्मै कृ-त्याय ब्राह्मणः ओषधिसामर्थ्यज्ञोब्राह्मणोवैद्यः कृणोति करोति चिकित्सां तं कृत्यं हे राजन् पारयामसि पारयाम इत्योषधयः ॥ २२ ॥

२२. ओषधियाँ सोम राजा के साथ यह कथोपकथन करती हैं। राजन्, जिसकी चिकित्सा स्तोता करते हैं, उसे ही हम बचाते हैं।

त्वमुत्तमास्योषधेतववृक्षाउपस्तयः ।
उपस्तिरस्तुसोऽस्माकंयोअस्माँअभिदासति॥२३॥११॥

त्वम् । उत्ऽतमा । असि । ओषधे । तव । वृक्षाः । उपस्तयः । उपस्तिः ।
अस्तु । सः । अस्माकम् । यः । अस्मान् । अभिऽदासति॥२३॥११॥

हे ओषधे सोमाख्ये त्वं ओषधीनामन्यासामुत्तमासि तव वृक्षाः सर्वे उपस्तयः अधः-शायिनएव यथासति सउपस्तिरस्तु अधःशायीभवतु योऽस्मानभिदासति अभिहिनस्ति बाध-यति ॥ २३ ॥

२३. ओषधि, तुम श्रेष्ठ हो। जितने वृक्ष हैं, सब तुमसे हीन हैं। जो हमारा अनिष्ट-चिन्तन करता है, वह हमारे पास न आय।

॥ इत्यष्टमस्य पंचमे एकादशोवर्गः ॥ ११ ॥

बृहस्पतेप्रतीति द्वादशर्चमष्टमं सूक्तं त्रैष्टुभं बृहस्पतिमित्रादिसर्वदेवताकं आर्ष्टिषेणपुत्रोदे-वापिर्नामऋषिः । तथाचानुक्रान्तं—बृहस्पतेद्वादशार्ष्टिषेणोदेवापिर्वृष्टिकामोदेवांस्तुष्टाव । गतःसू-क्तविनियोगः । अस्य सूक्तस्याख्यानं निरुक्तकारः प्रदर्शयति—देवापिश्चार्ष्टिषेणः शन्तनुश्चकौ-रव्यौ भ्रातरौ बभूवतुः सशन्तनुः कनीयानभिषेचयांचक्रे सदेवापिस्तपःप्रतिपेदे ततः शन्तनोः राज्येद्वादशवर्षाणि देवोनववर्ष तमूचुर्ब्राह्मणाअधर्मस्त्वयाचरितो ज्येष्ठंभ्रातरमन्तरित्याभिषेचितं तस्मात्तेदेवोनवर्षतीति शन्तनुर्देवापिं शिशिक्षराज्येन तमुवाचदेवापिः पुरोहितस्तेसानि याजया-नि चत्वेतितस्यैतद्वर्षकामसूक्तमिति ।

तत्र प्रथमा—

बृहस्पतेप्रतिमेदेवतामिहिमित्रोवायद्वरुणोवासिपूषा ।
आदित्यैर्वायद्वसुभिर्मरुत्वान्त्सपर्जन्यंशन्तनवेवृषाय ॥ १ ॥

---

१ नि० २. १० ।

बृह॑स्पते । प्रति॑ । मे॒ । दे॒वता॑म् । इ॒हि॒ । मि॒त्रः । वा॒ । यत् । वरु॑णः । वा॒ । असि॑ । पू॒षा । आ॒दि॒त्यैः । वा॒ । यत् । वसु॑ऽभिः । म॒रुत्वा॑न् । सः । प॒र्जन्य॑म् । शम्ऽत॑नवे । वृ॒ष॒य॒ ॥ १ ॥

हे बृहस्पते यद्वा ऋचोबृहस्पतिमनुधावति हे बृहस्पते मे मम वृष्ट्यर्थं प्रतिदेवतां प्रतीहि प्रतिगच्छ यद्वान्यादेवताः प्रतिगच्छ यदि त्वं मित्रोवासि वा अथवा वरुणोसि यद्वा पूषासि अथवा आदित्यैर्द्वादशादित्यैः अरुणादिभिर्वसुभिर्वासकैरष्टवसुभिर्धरध्रुवादिभिः सह मरुत्वान् मरुतोदेवास्तद्वानसि सत्वं पर्जन्यं वर्षयितारं मेघं शन्तनवे राज्ञे वृषाय वर्षय छन्दसि-शायजपीति व्यत्ययेन शपोपि शायजादेशः ॥ १ ॥

१. बृहस्पति, तुम मेरे लिए प्रत्येक देवता के पास जाओ। तुम मित्र, वरुण, पूषा अथवा आदित्यों और वसुओं के साथ इन्द्र (मरुत्वान्) ही हो। तुम शन्तनु (याज्ञिक) राजा के लिए मेघ से जल बरसाओ।

आ दे॒वो दू॒तो अ॑जि॒रश्चि॑कि॒त्वान्त्वद्दे॑वापे अ॒भि माम॑गच्छत् ।
प्र॒ती॒ची॒नः प्रति॒ माम॒ा व॑वृत्स्व॒ दधा॑मि ते द्यु॒मतीं॒ वाच॑मा॒सन् ॥ २ ॥

आ । दे॒वः । दू॒तः । अ॒जि॒रः । चि॒कि॒त्वान् । त्वत् । दे॒व॒ऽआ॒पे॒ । अ॒भि । माम् । अ॒ग॒च्छ॒त् । प्र॒ती॒ची॒नः । प्रति॑ । माम् । आ । व॒वृ॒त्स्व॒ । दधा॑मि । ते॒ । द्यु॒ऽमती॑म् । वाच॑म् । आ॒सन् ॥ २ ॥

देवः कश्चिद्दूतः अजिरोगमनशीलश्चिकित्वान् चेतनावान् हे देवापे त्वत् त्वत्तः सकाशात् त्वया प्रेषितः सन् मामभ्यागच्छत् अभ्यागच्छतु हे बृहस्पते प्रतीचीनोस्मदभिमुखोमां प्रत्या ववृत्स्व मां प्रत्यागच्छ तेतुभ्यं त्वदर्थं द्युमतीं दीप्तियुक्तां वाचं स्तुतिरूपां दधामि आसन्नास्ये समीपे ॥ २ ॥

२. देवापि, कोई एक ज्ञानी और शीघ्रगामी देवता दूत होकर तुम्हारे यहाँ से मेरे पास आवे। बृहस्पति, हमारे प्रति अभिमुख होकर आओ। हमारे मुँह में तुम्हारे लिए शुभ्र स्तोत्र वर्त्त है।

अथ तृतीया—

अ॒स्मे धे॑हि द्यु॒मतीं॒ वाच॑मा॒सन्बृह॑स्पते अनमी॒वामि॑षि॒राम् ।
यया॑ वृ॒ष्टिं शन्त॑नवे॒ वना॑व दि॒वो द्र॒प्सो मधु॑माँ॒ आ वि॑वेश ॥ ३ ॥

अस्मे इति । धेहि । द्युऽमतीम् । वाचम् । आसन् । बृहस्पते ।
अनमीवाम् । इषिराम् । यया । वृष्टिम् । शम्ऽतनवे ।
वनाव । दिवः । द्रप्सः । मधुऽमान् । आ । विवेश ॥ ३ ॥

हे बृहस्पते त्वं अस्मे अस्मासु द्युमतीं दीप्तिमतीं वाचं स्तोत्रात्मिकां आसन्नास्ये स्व कीये धेहि स्थापय । कीदृशीं वाचं अनमीवां अमीवारहितां वाचः अमीवानाम गद्गदादिदोषः तथा इषिरां गमनशीलां यया वाचा स्तुत्यात्मिकया देवानिष्ट्वा शन्तनवे वृष्टिकामाय वनाव संभजेवहि वृष्टिं त्वं चाहं च दिवो द्युलोकात्त्वयाधिष्ठितोद्रप्स उदकस्पन्दः मधुमान् माधुर्योपेतः आविवेश आविशति मां वाचमिति समन्वयः ॥ ॥ ३ ॥

३. बृहस्पति, हमारे मुँह में तुम एक ऐसा शुभ्र स्तोत्र डाल दो, जिसमें अस्पष्टता न हो और भली भांति स्फूर्ति हो, उसके द्वारा हम शन्तनु के लिए वृष्टि को उपस्थित करें। मधु-युक्त रस आकाश से आवे।

आनो॑द्र॒प्सामधु॑मन्तोविश॒न्त्विन्द्र॑दे॒ह्यधि॑रथंस॒हस्र॑म् ।
निषी॑दहो॒त्रमृ॑तु॒थाय॑जस्वदे॒वान्दे॑वापेह॒विषा॑सपर्य ॥ ४ ॥

आ । नः॒ । द्र॒प्साः । मधु॑ऽमन्तः । वि॒श॒न्तु॒ । इन्द्र॑ । दे॒हि ।
अधि॑ऽरथम् । स॒हस्र॑म् । नि । सी॒द॒ । हो॒त्रम् । ऋ॒तु॒ऽथा ।
य॒ज॒स्व॒ । दे॒वान् । दे॒व॒ऽआ॒पे॒ । ह॒विषा॑ । स॒प॒र्य॒ ॥ ४ ॥

नान् द्रप्साः वृष्टिसंस्त्यायाः मधुमन्तो माधुर्योपेताः आविशन्तु हे इन्द्र परमेश्वर त्वं
रथस्याप्युपरि वर्तमानं सहस्रं सहस्रसंख्याकं धनं धेहि यद्वा रथमधिकं च
ताहशं मोसहस्रं हे देवापे निषीद होत्रं आर्त्विज्ये निषीद निषण्णश्च त्वमृतुथा
कालेकाले यजस्व यष्टव्यान् देवान् स्तुत्या हविषा च सपर्य परिचर ॥ ४ ॥

४. मधु-युक्त रस (वृष्टि-वारि) हमारे लिए आवे। इन्द्र, रथ के ऊपर रखकर विस्तृत धन दो। देवापि, इस होम-कार्य में आकर बैठो। यथाकाल देवों का पूजन करो और होमीय द्रव्य देकर सन्तुष्ट करो।

अथ पंचमी—

आर्ष्टि॒षेणो॑हो॒त्रमृषि॑र्नि॒षीद॒न्देवापि॑र्देवसुम॒तिं चि॑कि॒त्वान् ।
स उत्त॑रस्मा॒दध॑रंसमु॒द्रम॒पोदि॒व्या अ॑सृजद्व॒र्ष्या अ॒भि ॥ ५ ॥

आर्ष्टिषेणः। होत्रम्। ऋषिः। निऽसीदन्। देवऽआपिः।
देवऽसुमतिम्। चिकित्वान्। सः। उत्ऽतरस्मात्। अधरम्।
समुद्रम्। अपः। दिव्याः। असृजत्। वर्ष्याः। अभि ॥ ५ ॥

आर्ष्टिषेणः ऋष्टिषेणस्य पुत्रो देवापिर्ऋषिः देवसुमतिं देवानां कल्याणीं मतिं स्तुतिं चिकित्वान् जानन् होत्रं होतृकर्म कर्तुं निषीदन् निषण्णोभवति स उत्तरस्मादुपरिवर्तमानादन्तरिक्षाख्यात् समुद्रात् अधरमधोवर्तमानं पार्थिवं समुद्रमभि दिव्या दिविभवा वर्ष्या वर्षभवा आपः असृजत् सृजतु। अत्रार्ष्टिषेणऋष्टिषेणस्यपुत्रइत्यादिनिरुक्तंद्रष्टव्यं ॥ ५ ॥

५. ऋष्टिषेण के पुत्र देवापि ऋषि तुम्हारे लिए उत्तम स्तुति करना स्थिर करके हवन करने को बैठे। उस समय वे ऊपर के समुद्र (अन्तरिक्ष) से नीचे के पार्थिव समुद्र में वृष्टि-जल ले आये।

अस्मिन्त्समुद्रेअध्युत्तरस्मिन्नापोदेवेभिर्निवृताअतिष्ठन्।
ताअद्रवन्नार्ष्टिषेणेनसृष्टादेवापिनाप्रेषितामृक्षिणीषु॥ ६ ॥ १२ ॥

अस्मिन्। समुद्रे। अधि। उत्ऽतरस्मिन्। आपः। देवेभिः।
निऽवृताः। अतिष्ठन्। ताः। अद्रवन्। आर्ष्टिषेणेन। सृष्टाः।
देवऽआपिना। प्रऽइषिताः। मृक्षिणीषु ॥ ६ ॥ १२ ॥

अस्मिन्पार्थिवे समुद्रे पूरणीये सति अधीति सप्तम्यर्थानुवादी उत्तरस्मिन् समुद्रे अन्तरिक्षाख्ये आपउदकानि देवेभिर्द्योतमानैः निवृता निरुद्धाअतिष्ठन् ताआपः आर्ष्टिषेणेन ऋष्टिषेणपुत्रेण देवापिना सृष्टाः प्रेषिताः प्रकर्षेणेच्छां प्राप्ताः कांक्षिताः मृक्षिणीषु मृष्टवतीषु परिस्पष्टासु स्थलीषु अद्रवन् स्रवन्ति ॥ ६ ॥

६. अन्तरिक्ष (समुद्र) को देवों ने आकाश में ढककर रक्खा है। ऋष्टिषेण के पुत्र देवापि ने इस जल को संचालित किया। उस समय स्वच्छ भूमि पर जल बहने लगा।

॥ इत्यष्टमस्य पंचमे द्वादशोवर्गः ॥ १२ ॥

अथ सप्तमी—

यद्देवापिःशन्तनवेपुरोहितोहोत्रायवृतःकृपयन्नदीधेत्।
देवश्रुतंवृष्टिवनिंरराणोबृहस्पतिर्वाचमस्माअयच्छत् ॥ ७ ॥

१ नि० ७. २७।

यत् । देवऽआपिः । शम्ऽतनवे । पुरःऽहितः । होत्राय । वृतः ।
कृपयन् । अदीधेत् । देवऽश्रुतम् । वृष्टिऽवनिम् । रराणः ।
बृहस्पतिः । वाचम् । अस्मै । अयच्छत् ॥ ७ ॥

यद्यदा देवापिरार्ष्टिषेणः शन्तनवे स्वभ्रात्रे कौरव्याय पुरोहितः सन् होत्राय होत्रार्थं वृतः सन् देवश्रुतं देवाएनं शृण्वन्तीति देवश्रुत् तं तथा वृष्टिवनिं वृष्टियाचनं बृहस्पतिं अदीधेत् अध्यायत् तदा रराणो रममाणो बृहस्पतिर्देवोऽस्मै देवापये वाचमयच्छत् ॥ ७ ॥

७. जिस समय शन्तनु के पुरोहित देवापि (कौरव) ने, होम करने के लिए उद्यत होकर, जलोत्पादक देव-स्तोत्र को निरूपित किया, उस समय सन्तुष्ट होकर बृहस्पति ने उनके मन में स्तोत्र का उदय कर दिया।

यंत्वादेवापिःशुशुचानोअग्नआर्ष्टिषेणोमनुष्यःसमीधे ।
विश्वेभिर्देवैरनुमद्यमानःप्रपर्जन्यमीरयावृष्टिमन्तम् ॥ ८ ॥

यम् । त्वा । देवऽआपिः । शुशुचानः । अग्ने । आर्ष्टिषेणः ।
मनुष्यः । सम्ऽईधे । विश्वेभिः । देवैः । अनुऽमद्यमानः ।
प्र । पर्जन्यम् । ईरय । वृष्टिऽमन्तम् ॥ ८ ॥

हे अग्ने यं त्वा त्वां शुशुचानः स्तोत्रेण ज्वलन् मनुष्यः आर्ष्टिषेणोदेवापिः समीधे सम्यक् दीपयति सत्वं विश्वेभिः सर्वैर्देवैरनुमद्यमानः अनुमोद्यमानः सन् पर्जन्यं मेघं वृष्टिमन्तं वर्षणवन्तं प्रेरय गमय ॥ ८ ॥

८. अग्नि, ऋष्टिषेण के पुत्र देवापि नामक मनुष्य ने कमनीय होकर तुम्हें प्रज्वलित किया। देवों का सहयोग पाकर तुम जलवर्षक मेघ को प्रज्वलित करो।

अथ नवमी—

त्वांपूर्वऋषयोगीर्भिरायन्त्वामध्वरेषुपुरुहूतविश्वे ।
सहस्राण्यधिरथान्यस्मेआनोयज्ञंरोहिदश्वोपयाहि ॥ ९ ॥

त्वाम् । पूर्वे । ऋषयः । गीःऽभिः । आयन् । त्वाम् । अध्वरेषु ।
पुरुऽहूत । विश्वे । सहस्राणि । अधिऽरथानि । अस्मे इति ।
आ । नः । यज्ञम् । रोहितऽअश्व । उप । याहि ॥ ९ ॥

हे अग्ने त्वां पूर्वे कवयो गीर्भिः स्तुतिभिरायन् आगच्छन् तथा हे पुरुहूत बहुभिराहूताग्ने विश्वे सर्वे इदानीन्तना यजमाना अध्वरेषु यज्ञेषु स्तुतिभिर्गच्छन्तीति शेषः। किंच सहस्राणि सहस्रसंख्याकानि गोयूथानि अधिरथानि रथाधिकानि अस्मे अस्माकं शन्तनुना दक्षिणात्वेन संकल्पितानि भवन्तीति शेषः। हे रोहिदश्व नोऽस्मानुपयाहि उपागच्छ ॥ ९ ॥

९. अग्नि, पूर्व के ऋषि लोग स्तुतियों के साथ तुम्हारे पास आये थे। बहुतों के द्वारा आहूत अग्नि, इस समय के सब यजमान यज्ञों में स्तुतियों के साथ तुम्हारे पास आते हैं। रथ के साथ सहस्र पदार्थ शन्तनु राजा ने दक्षिणा में दिये। रोहित नामक अश्ववाले अग्नि, पधारो।

एतान्यग्ने नवतिर्नव त्वे आहुतान्यधिरथा सहस्रा ।
तेभिर्वर्धस्व तन्वः शूर पूर्वीर्दिवो नो वृष्टिमिषितो रिरीहि ॥ १० ॥

एतानि । अग्ने । नवतिः । नव । त्वे इति । आऽहुतानि ।
अधिऽरथा । सहस्रा । तेभिः । वर्धस्व । तन्वः । शूर ।
पूर्वीः । दिवः । नः । वृष्टिम् । इषितः । रिरीहि ॥ १० ॥

हे अग्ने नवतिर्नव च तथा एतानि अधिरथानि सहस्रा सहस्राणि च रथाधिकानि नवतिः सहस्राणि च त्वे त्वयि आहुतानि त्वयि प्रीणयितव्ये सति आहुतानि यद्वा त्वे त्वय्याहुतानि समर्पितानीत्यर्थः तेभिस्तैः पशुभिः पूर्वीर्बह्वीः तन्वः तनूर्युष्मदीयाः वर्धस्व वर्धय नोऽस्मदर्थं दिवो द्युलोकात् वृष्टिमिषितः प्रार्थितः सन् रिरीहि पूरय ॥ १० ॥

१०. अग्नि, रथों के साथ ९९ सहस्र पदार्थ तुममें आहुति-रूप में दिये गये हैं। उनसे तुम अपने शरीर को मोटा करो। द्युलोक से हमारे लिए वृष्टि करो।

एतान्यग्ने नवतिं सहस्रा सं प्र यच्छ वृष्ण इन्द्राय भागम् ।
विद्वान्पथ ऋतुशो देवयानानप्यौलानं दिवि देवेषु धेहि ॥ ११ ॥

एतानि । अग्ने । नवतिम् । सहस्रा । सम् । प्र । यच्छ । वृष्णे ।
इन्द्राय । भागम् । विद्वान् । पथः । ऋतुऽशः । देवऽयानान् ।
अपि । औलानम् । दिवि । देवेषु । धेहि ॥ ११ ॥

हे अग्ने नवतिं एतानि नवतिं सहस्रा सहस्राणि च वृष्णे वर्षित्रे इन्द्राय भागं संप्रयच्छ दत्तेत्यर्थः ऋत्विग्भ्यो देहि किंच देवयानान् पथो देवयानान् मार्गान् विद्वांस्त्वं ऋतुशः कालेकाले औलानमपि कुरुकुलजातमपि शान्तनवं देवेषु मध्ये धेहि निधेहि स्थापय ॥ ११ ॥

११- अग्नि नब्बे सहस्र आहुतियों में से इन्द्र का भाग दो। सारे देवयनों को जाननेवाले तुम यथासमय कौरव शन्तनु को देवों के बीच स्थापित करना।

अग्ने॒ बाध॑स्व॒ वि मृधो॒ वि दु॒र्गहाप॒ामी॑वा॒मप॒ रक्षां॑सि सेध।
अ॒स्मात्स॑मु॒द्राद्बृ॑ह॒तो दि॒वो नो॒ऽपां भू॒मान॒मुप॑ नः सृजे॒ह ॥१२॥ १३॥

अग्ने॑। बाध॑स्व। वि। मृधः॑। वि। दुः॒ऽगहा॑। अप॑। अमी॑वाम्।
अप॑। रक्षां॑सि। से॒ध॒। अ॒स्मात्। स॒मु॒द्रात्। बृ॒ह॒तः। दि॒वः।
नः॒। अ॒पाम्। भू॒मान॑म्। उप॑। नः॒। सृ॒ज॒। इ॒ह ॥ १२ ॥ १२ ॥

हे अग्ने दुर्गहा दुर्गहाणि दुःखेन गाहितव्यानि शत्रुपुराणि विबाधस्व तथा अमीवां रोगं अपसेध तथा रक्षांस्यपसेध अपगमय अस्मात्समुद्रात् समुद्रवणसाधनात् बृहतो महतो दिवो द्युलोकादन्तरिक्षाद्वापामुदकानां भूमानं बहुभावं वृष्टिसंस्थायं इहास्मिन् लोके उपसृज प्रयच्छेत्यर्थः ॥ १२ ॥

१२- अग्नि, शत्रुओं की दुर्गम पुरियों को नष्ट करो। रोग और राक्षसों को दूर करो। इस संसार में महान् अन्तरिक्ष से असीम जल ले आओ।

॥ इत्यष्टमस्य पञ्चमे त्रयोदशोवर्गः ॥ १३ ॥

कंन इति द्वादशर्चं नवमं सूक्तं वैखानसस्य वम्रस्यार्षं त्रैष्टुभमैन्द्रं। तथाचानुक्रान्तं—कं नो वम्रो वैखानस इति। गतो विनियोगः।

तत्र प्रथमा—

कं न॑श्चि॒त्रमि॑षण्यसि चिकि॒त्वान्पृ॑थु॒ग्मानं॑ वा॒श्रं वा॑वृ॒धध्यै॑।
कत्तस्य॒ दातु॒ शव॑सो॒ व्यु॑ष्टौ॒ तक्ष॒द्वज्रं॑ वृत्र॒तुर॒मपि॑न्वत् ॥१॥

कम्। नः॒। चि॒त्रम्। इ॒ष॒ण्य॒सि॒। चि॒कि॒त्वान्। पृ॒थु॒ऽग्मान॑म्।
वा॒श्रम्। व॒वृ॒धध्यै॑। कत्। तस्य॑। दातु॑। शव॑सः। विऽउ॑ष्टौ।
तक्ष॑त्। वज्र॑म्। वृ॒त्र॒ऽतुर॑म्। अपि॑न्वत् ॥ १ ॥

हे इन्द्र नोऽस्माकं चित्रं चायनीयं कं धनविशेषं इषण्यसि प्रेरयसि चिकित्वान् सर्वेषामेरणीयमिति जानन् कीदृशं तं पृथुग्मानं पृथुगमनं प्राप्नुवन्तं वाश्रं शब्दनीयं स्तुत्यं किमर्थं

मरुत्वते अस्माकं वर्धनाय। किंच तस्येन्द्रस्य शवसोबलस्य वृधौ व्युच्छने सति कद्वासु किं-दानं अस्माकं भवतीतिशेषः येनवज्रं वृत्रतुरं वृत्रस्यावरकस्य पापस्य हिंसकं त्वष्टा तक्षत् अतक्षत् साधुसंपादितवान् अपिन्वत् असिंचच्च तस्य शवसोऽभ्युद्याविति संबन्धः। यद्वा हे इन्द्र कत् किं तस्य बलस्य दानं भवति यं वज्रमिन्द्रार्थं तक्षदिति योजनं। यद्वा त्वष्टा वज्रमतक्षदितिमंत्रान्तरं ॥१॥

१. इन्द्र, तुम जानकर हमें विचित्र सम्पत्ति देते हो। वह सम्पत्ति बढ़ती है, वह प्रशंसनीय है और वह हमें बढ़ाती है। इन्द्र के बल की वृद्धि के लिए हमें क्या देना होगा? उनके लिए वृत्र-हिंसक वज्र बनाया गया है। उन्होंने वृष्टि-वर्षण किया।

सहियुताविद्युतावेतिसामपृथुंयोनिमसुरत्वाससाद।
ससनीळेभिःप्रसहानोअस्यभ्रातुर्नऋतेसप्तथस्यमायाः ॥ २ ॥

सः। हि। द्युता। विऽद्युता। वेति। साम। पृथुम्। योनिम्।
असुरऽत्वा। ससाद। सः। सऽनीळेभिः। प्रऽसहानः।
अस्य। भ्रातुः। न। ऋते। सप्तथस्य। मायाः ॥ २ ॥

सहि सखल्विन्द्रोद्युता द्योतमानेन विद्युता एतन्नामकेनायुधेन युक्तः सन् साम स्तोत्रात्मकं यज्ञसंबन्धि वेति गच्छति तथा असुरत्वा असुरत्वेन बलेन युक्तः सन् पृथुं विस्तीर्णं योनिं फलस्योत्पादकं यज्ञं ससाद संगतोभवति सइन्द्रः सनीळेभिः नीडं स्थानं समानैर्मरुद्भिर्युक्तः सन् प्रसहानः अभिभवन् भवति तस्य सप्तथस्य आदित्यानां धात्रादीनां मध्ये सप्तमस्येन्द्रस्य भ्रातुः भागैर्भक्तव्यस्य मायाआसुरीः ऋतेयज्ञेन संभवतीति शेषः ॥ २ ॥

२. इन्द्र विद्युत् नामक आयुध से युक्त होकर यज्ञ में सामगान के प्रति जाते हैं। वे बल-पूर्वक अनेक स्थानों पर अधिकार कर डालते हैं। वे समान-स्थान में रहनेवाले मरुतों के साथ शत्रु को हराते हैं। वे आदित्यों के सप्तम भ्राता हैं। उनको त्याग करके कोई कार्य नहीं हो सकता।

सवाजंयातापदुष्पदायन्त्स्वर्षातापरिषदत्सनिष्यन्।
अनर्वायच्छतदुरस्यवेदोघ्नञ्छिश्नदेवाँअभिवर्पसाभूत् ॥ ३ ॥

सः। वाजम्। याता। अपदुःऽपदा। यन्। स्वःऽसाता। परि।
सदत्। सनिष्यन्। अनर्वा। यत्। शतऽदुरस्य। वेदः।
घ्नन्। शिश्नऽदेवान्। अभि। वर्पसा। भूत् ॥ ३ ॥

१ ऋ० सं० ८, १, ५।

सार्यं शूरैर्गन्तव्यं संग्रामं याता गच्छन् गडोकाव्ययेति गडीपविशेषः अपदुष्पदा अपगत-दुष्टपतनेन पथा गच्छन् सनिष्यन् तत्र शत्रुधनानि संभक्तुमिच्छन् परिषदः परिषीदति कुर्वेति कथ्येते स्वर्षाता स्वर्षातौ सर्वंडाशेषेते संग्रामे। किंचानर्वा युद्धे अपत्युर्वन्नः शतदुरस्य शत-द्वारस्य शत्रुपुरस्यान्तर्निहितं यद्वेदोधनमस्ति तद्धनं वर्धंता आवरकेण बलेन अभिभुवन् अ-भिभवति। किंकुर्वन् शिश्नदेवान् अब्रह्मचर्यान् शतद्वारेषु शत्रुपुरसंबन्धिषु वर्तमानान् घ्नन् हिंसन् ॥ ३ ॥

३. वे सुन्दर गति से जाकर युद्ध-क्षेत्र में अवस्थित होते हैं। वे अविचल होकर सौ दरवाजोंवाली शत्रुपुरी से धन ले आते हैं और इन्द्रिय-परायण दुरात्माओं को अपने तेज से हराते हैं।

सयह्व्योऽवनीर्गोष्वर्वाजुहोतिप्रधन्यासुसस्रिः।
अपादोयत्रयुज्यासोरथाद्रोण्यश्वासईरतेघृतंवाः ॥ ४ ॥

सः। यह्व्यः। अवनीः। गोषु। अर्वा। आ। जुहोति। प्रऽधन्यासु।
सस्रिः। अपादः। यत्र। युज्यासः। अरथाः।
द्रोणिऽअश्वासः। ईरते। घृतम्। वारिति वाः ॥ ४ ॥

सऽस्यः अर्वा मेघेषु अभिगन्ता सस्रिः सरणकुशलः प्रधन्यासु प्रकृष्टधननिमित्तासु गोषु भू-मिषु यह्वः महन्नामैतत् महतीरवनीः अवन्तीत्यवनयः आपः ता आजुहोति आक्षिपति यत्र यासु भूमिषु अपादः पादरहिताः अरथा रथवर्जिताः पादरहिताः केचन रथेन गच्छन्ति केचापि शून्याः द्रोण्यश्वासः युतव्याप्ता युज्यासो युज्याः इन्द्रस्य सख्योनद्योवाः वारकं घृतमुदकं ईरते प्रेरयन्ति तत्राजुहोति ॥ ४ ॥

४. वे मेघों की ओर जाकर और मेघ में भ्रमण करके उर्वरा भूमि पर बहुत जल गिराते हैं। उन सब जलवाले स्थानों पर अनेक छोटी-छोटी नदियाँ एकत्र होकर घृत के समान जल को बहाती हैं। उनके न चरण हैं, न रथ है और न डोंगी (द्रोणि) है।

अथ पञ्चमी—

सरुद्रेभिरशस्तवारऋभ्वाहित्वीगयमारेअवद्यआगात्।
वम्रस्यमन्येमिथुनाविवव्रीअन्नमभीत्यारोदयन्मुषायन् ॥ ५ ॥

सः। रुद्रेभिः। अशस्तऽवारः। ऋभ्वा। हित्वी। गयम्।
आरेऽअवद्यम्। आ। अगात्। वम्रस्य। मन्ये। मिथुना।
विवव्री इति विऽवव्री। अन्नम्। अभिऽइत्य। अरोदयत्। मुषायन् ॥ ५ ॥

सइन्द्रोरुद्रेभीरुद्रपुत्रैर्मरुद्भिः सहितआगात्आगच्छतु। कीदृशःअशस्तवारःस्तोतृभिरप्रार्थित-वरणः स्वयमेव प्रदातेत्यर्थः तथा ऋभ्वा महान् गयं हित्वी हित्वा स्वस्थानं परित्यज्यआगा-दागच्छतु इति संबन्धः आरे अवद्यः दूरेगतमहाः किंच वम्रस्यैतन्नामकस्य ममर्षेः मिथुनौ मातापितरौ विवव्री विगतज्वरौ मन्ये अवगच्छामि अयं वम्रः अन्नं शत्रुसंबन्धि अभीत्य अभिप्राप्य मुषायन् मुष्णन् अरोदयन् रोदयति छन्दसिशायजपीत्यहावपि मुषेः श्नः शाय-जादेशः ॥ ५ ॥

५. इन्द्र, बिना प्रार्थना के ही, मनोरथ को पूर्ण करते हैं। वे प्रकाण्ड हैं। उनके पास दुर्नाम नहीं जाता। वे अपने स्थान से रुद्र-पुत्र मरुतों के साथ यहाँ आवें। मुझ वम्र के माता-पिता का क्लेश चला गया; क्योंकि मैंने शत्रु-धन का हरण कर लिया है और शत्रुओं को रुलाया है।

सइद्दासंतुवीरवंपतिर्दन्षळक्षंत्रिशीर्षाणंदमन्यत्।
अस्यत्रितोन्वोजसावृधानोविपावराहमयोअग्रयाहन् ॥६॥१४॥

सः। इत्। दासम्। तुविऽरवम्। पतिः। दन्। षट्ऽअक्षम्।
त्रिऽशीर्षाणम्। दमन्यत्। अस्य। त्रितः। नु। ओजसा।
वृधानः। विपा। वराहम्। अयःऽअग्रया। हन् ॥ ६ ॥ १४ ॥

सएव सइन्द्रः पतिः सर्वस्य स्वामी दासं उपक्षयपितारं तुवीरवं बहुशब्दं संग्रामे भयं-करं शब्दं कुर्वाणं वृत्रं दन् दमयन् षळक्षं अक्षिषट्कोपेतं त्रिशीर्षाणं त्रिशिरस्कं त्वष्टुः पुत्रं विश्वरूपं दमन्यत् दमितुं महर्तुमैच्छत अवधीदित्यर्थः यद्वादमयतीति दमनः नन्द्यादित्वाल्ल्युः दमनइवाचरति उपमानादाचारइति क्यचि अंत्यटोपश्छान्दसः यतोलङि बहुलंछन्दसीत्यडभावः। किंच त्रितएतन्नामामहर्षिरस्येन्द्रस्योजसा बलेन वृधानोवर्धमानोविपा अंगुल्या कीदृश्या अयो-ग्रया अयोवत्कठिननखया वराहं उदकवन्तं मेघं व्यहन् विहतवान् ॥ ६ ॥

६. प्रभु इन्द्र ने कोलाहल करनेवाले दासों का शासन किया था। उन्होंने तीन कपालों और छः आँखोंवाले विश्वरूप (त्वष्टा के पुत्र) को मारा था। इन्द्र के तेज से तेजस्वी होकर त्रित ने लोहे के समान तीखे नखोंवाली अँगुलियों से वराह का वध किया था।

॥ इत्यष्टमस्य पञ्चमे चतुर्दशोवर्गः ॥ १४ ॥

अथ सप्तमी—

सद्रुह्वणेमनुषऊर्ध्वसानआसाविषदर्शसानायशरुम्।
सनृतमोनहुषोस्मत्सुजातःपुरोभिनदर्हन्दस्युहत्ये ॥ ७ ॥

सः । द्रुह्वणे । मनुषे । ऊर्ध्वऽसानः । आ । साविषत् ।
अर्शसानाय । शरुम् । सः । नृऽतमः । नहुषः । अस्मत् ।
सुऽजातः । पुरः । अभिनत् । अर्हन् । दस्युऽहत्ये ॥ ७ ॥

स इन्द्रो द्रुह्वणे द्रुहणाय इदं शत्रुजिघांसव्याय मनुषे मनुष्याय योद्धे स्वभक्ताय ऊर्ध्वसा-
नः ऊर्ध्वमुच्छ्रितः शौर्यादिभिर्गुणैरधिकः सन् स्वयि शत्रूणामन्तं करोतीत्यूर्ध्वसा सहवाचरत्
ऊर्ध्वशब्दाद्वाचारार्थे क्विबन्तादसानच् अर्शसानाय शत्रूणां हिंसित्रे स्वरुं हिंसकमायुधमासाविषत्
आभिमुख्येन प्रसौति प्रयच्छति । यद्वा द्रुह्वणे मनुषे द्रोग्धव्याय मनुष्यायार्शसानाय स्वभक्त-
हिंसित्रे तस्य यथार्थं ऊर्ध्वसानः सन् शरुमासाविषत् वज्रं प्रेरयति स एवेन्द्रो नहुषो मनुष्यान् नृ-
तमः मनुष्याणां नेतृतमः संग्रामे शूराणां गमयितृतमः यद्वा नृषमो नहुषो बन्धकः अस्मत् अ-
स्मदर्थं सुजातः सुष्ठुप्रादुर्भूतः अर्हन् पूज्यः सन् दस्युहत्ये दस्यवउपक्षपयितारः शत्रवः तेषां हत्यं
हननं यस्मिन् तथाविधे संग्रामे पुरः शत्रूणां शरीराण्यभिनत् भिन्नवान् ॥ ७ ॥

७. उनके किसी भक्त को यदि शत्रु लोग युद्ध के लिए बुलाते हैं, तो वे दर्प के साथ शरीर को फुलाकर शत्रु-वध करने के लिए उत्तम अस्त्र प्रदान करते हैं। वे मनुष्यों के सर्व श्रेष्ठ नेता हैं। दस्यु-विनाश के समय मान्य इन्द्र ने अनेक शत्रु-पुरियों को ध्वस्त किया था।

सोअभ्रियोनयवसउदन्यन्क्षयायगातुंविदन्नोअस्मे ।
उपयत्सीददिन्दुंशरीरैःश्येनोयोपाष्टिर्हन्तिदस्यून् ॥ ८ ॥

सः । अभ्रियः । न । यवसे । उदन्यन् । क्षयाय । गातुम् ।
विदत् । नः । अस्मे इति । उप । यत् । सीदत् । इन्दुम् ।
शरीरैः । श्येनः । अयःऽअपाष्टिः । हन्ति । दस्यून् ॥ ८ ॥

स इन्द्रः अभ्रियोन अभ्राणन्ते अपो बिभर्तीति वा अभ्राणि मेघाः तेषां संघोऽभ्रियः स इव यवसे गवादिभक्षणसाधनाय तृणाय उदन्यन् उदकं दातुमिच्छन् तथा क्षयाय गमनाय निवा-
साय वा अस्मे अस्माकं गातुं मार्गं विदत् अलभत नः इति पूरणः तादृशः सन् यद्यदा इन्दुं सोमं
शरीरैः स्वशरीरावयवैः अंगैरुपसीदत् उपगच्छति यच्छद्वयोमादनिघातः तदानीं श्येनः सादृ-
श्यप्रधानोऽयं निर्देशः श्येनसदृशः श्येनवच्छंसनीयगमनः अयोपाष्टिः अयमयहिन्याश्रिर्यस्य सम्दे-
शः अपाष्टिः पार्ष्णिः अयोमयः अपाष्टिः पार्ष्णिर्यस्य सः दस्यून् शत्रून् हन्ति हिनस्ति ॥ ८ ॥

८. वे मेघ-समुदाय के समान तृणमयी भूमि पर जल गिराते हैं। उन्होंने हमारे निवास का मार्ग बताया है। वे अपने शरीर के सारे अंगों में सोम गिराकर, श्येन पक्षी के समान, लोहे के सदृश तीक्ष्ण और दृ-पृष्ठ से दस्युओं का वध करते हैं।

अथ नवमी—

सवाधतःशवसानेभिरस्यकुत्सायशुष्णंकृपणेपरादात् ।
अयंकविमनयच्छस्यमानमत्कंयोअस्यसनितोतनृणाम् ॥ ९ ॥

सः । वाधतः । शवसानेभिः । अस्य । कुत्साय । शुष्णम् ।
कृपणे । परा । अदात् । अयम् । कविम् । अनयत् । शस्यमानम् ।
अत्कम् । यः । अस्य । सनिता । उत । नृणाम् ॥ ९ ॥

सइन्द्रोवाधतः महतामेवत् महतोपि शत्रून् शवसानेभिः बलमाचरद्भिः आयुधैरस्य अस्यतु असुक्षेपणे व्यत्ययेन मध्यमः कुत्साय एतन्नामकाय कृपणे स्तोत्रे कृपतिः स्तुतिकर्मा शुष्णं शोषकमेतन्नामकमसुरं परादात् पराभूय खंडितवान् । कुत्सायशुष्णमशुषंनिबर्हीरिति मंत्रा न्तरं । किंचायमिन्द्रः कविमुशनसं कविरिति पितृनाम्नापुत्रस्यापि व्यवहारः उपचारात् शस्यमा नं स्तूयमानं अनयत् वशंप्रापयत् तस्यविरोधिनं यद्वा कविंभार्गवमेव स्तोतृभिः शस्यमानं स्वव शमनयत् यः कविरस्येन्द्रस्य अत्कं रूपं सनिता संभक्ता भवति नलोकाम्नयेति षष्ठीपविशेषः उतापिच नृणां वृत्रवधादिनेतॄणां इन्द्रानुचराणां मरुतां यः कविः सनिता तमनयदिति ॥ ९ ॥

९. ये पराक्रमी शत्रुओं को दृढ़ अस्त्र के द्वारा भगा देते हैं। उन्होंने कुत्स नामक व्यक्ति का स्तोत्र सुनकर शुष्ण नामक असुर को छेदा था। उन्होंने स्तोता और कवि उशना के विरोधियों को वश में किया था। ये उशना और दूसरों को दान देते हैं।

अयंदशस्यन्नर्येभिरस्यदस्मोदेवेभिर्वरुणोनमायी ।
अयंकनीनऋतुपाअवेद्यमिमीताररुंयश्चतुष्पात् ॥ १० ॥

अयम् । दशस्यन् । नर्येभिः । अस्य । दस्मः । देवेभिः । वरुणः ।
न । मायी । अयम् । कनीनः । ऋतुऽपाः । अवेदि ।
अमिमीत । अररुम् । यः । चतुःऽपात् ॥ १० ॥

अयमिन्द्रोदशस्यन् स्तोतृभ्योधनं प्रयच्छन् दशस्यतिर्दानकर्मा सनर्येभिर्नर्यैः गृहीते मरुद्भिः अस्य अस्यति छान्दसस्तिलोपः यद्वा व्यत्ययेन लोण्मध्यमः तथा देवेभिर्द्योतमानैः स्तवेभोभिर्दस्मोदर्शनीयः वरुणोन वरुणइव वरुणस्तमोवारकआदित्योवरुणएव वा सइव

१ ऋ० सं० १.५.१९ ।

मायी मायावान् प्रज्ञावान् सधार्थं कनीनः कमनीयः कतीपाका ऋतुपा अवेदि अज्ञायि यथा अररुमसुरं एतन्नामानं अभिमीत अभिनात् घोररूपत्वात् पादचतुष्टयोपेतः । मीङ् हिंसायां लङि बहुलंछन्दसीति विकरणस्य श्लुः ॥ १० ॥

१०. मनुष्य-हितैषी मरुतों के साथ धनेच्छु होकर इन्द्र ने धन भेजा था। वे वरुण के समान अपने तेज से सुन्दर और शक्तिमान् हैं। वे रमणीय मूर्त्ति हैं। उन्हें सभी यथासमय रक्षक जानते हैं। उन्होंने चार पैरोंवाले शत्रु को मार डाला।

अस्यस्तोमेभिरौशिजऋजिश्वाव्रजंदरयद्वृषभेणपिप्रोः ।
सुत्वायद्यजतोदीदयद्गीःपुरइयानोअभिवर्पसाभूत् ॥ ११ ॥

अस्य । स्तोमेभिः । औशिजः । ऋजिश्वा । व्रजम् । दरयत् ।
वृषभेण । पिप्रोः । सुत्वा । यत् । यजतः । दीदयत् । गीः ।
पुरः । इयानः । अभि । वर्पसा । भूत् ॥ ११ ॥

अस्येन्द्रस्य स्तोमेभिः स्तोत्रैः औशिजः उशिजः पुत्रऋजिश्वा एतन्नामा वृषभेण वज्रेण वृषभेणवा युक्तं व्रजं गोष्ठं पिप्रोः एतन्नामकस्यासुरस्य संबन्धिनं तेनापहृत्य धारितं दरयत् अदारयत् यद्यदा सुत्वा सोमस्य सोता सुपयोऽर्हनिर् हविर्वनिप् इत्यस्त्यपितीति वृक्त् यजतो यजनीयोगीः स्तुतिवाचोदीदयत् दीपितवान् तदा यजदेवानोऽगच्छन् पुरः शत्रुपुराणि यद्वा पुरः पुरइव संघीभूतानि पापानि अभिभूत् अभिभवति केन साधनेन वर्पसा रूपनामैतत् रूपेण इन्द्रानुगृहीतेन यदेवमकरोत्तदा व्रजं दरयदिति संबन्धः ॥ ११ ॥

११. उशिज् के पुत्र ऋजिश्वा ने इन्द्र की स्तुति करके वज्र के द्वारा पिप्रु के गोष्ठ को विदीर्ण किया। जिस समय ऋजिश्वा ने सोम को प्रस्तुत करके यज्ञ में स्तोत्र किया, उस समय आकर इन्द्र ने शत्रु-पुरियों को विनष्ट किया।

एवामहोअसुरवक्षथायवम्रकःपड्भिरुपसर्पदिन्द्रम् ।
सइयानःकरतिस्वस्तिमस्माइषमूर्जंसुक्षितिंविश्वमाभाः॥१२॥१५॥

एव । महः । असुर । वक्षथाय । वम्रकः । पड्ऽभिः । उप ।
सर्पत् । इन्द्रम् । सः । इयानः । करति । स्वस्तिम् । अस्मै । इषम् ।
ऊर्जम् । सुऽक्षितिम् । विश्वम् । आ । अभारित्यभाः ॥ १२ ॥ १५ ॥

अनया स्तुतिमुपसंहृत्याभिमतं वम्रकः प्रार्थयते हे असुर बलवन्निन्द्र त्वां एव एवमुक्तप्रकारेण महोमहतोऽर्हविषः स्तोमस्य वावक्षथाय वहनाय महतः स्वमदिः शपथाय वा पड्भि

पादैः उपसर्पत् उपागमत् सदयानः उपगम्यमानः सन् करति करोतु स्वस्ति अविनाशं अस्मै वम्रकाय तथा इषमन्नं ऊर्जं रसं सुक्षितिं सुनिवासं सम्यक् विश्वं सर्वमाभाः आहरतु ॥१२॥

१२. बली (असुर) इन्द्र, मैं वम्र तुम्हें प्रकृत हवि देने की इच्छा से पैदल चलकर तुम्हारे पास आया हूँ। तुम मेरा मंगल करो। अन्न, बल और उत्तम गृह आदि सारी वस्तुएँ प्रदान करो।

॥ इत्यष्टमस्य द्वितीये पञ्चदशोवर्गः ॥ १५ ॥

॥ इति दशमे मण्डलेऽष्टमोऽनुवाकः ॥८॥

नवमेऽनुवाके त्रयोदशसूक्तानि तत्रेन्द्रदृह्येति द्वादशर्चं प्रथमं सूक्तं वन्दनपुत्रस्य दुवस्यो-रार्षं वैश्वदेवं द्वादशी त्रिष्टुप् शिष्टाजगत्यः। तथाचानुक्रान्तं—इन्द्रदुवस्युर्वान्दनोवैश्वदेवं त्व-न्त्यात्रिष्टुबिति। गतोविनियोगः।

इन्द्रदृह्यंमघवन्त्वावदिद्भुजइहस्तुतःसुतपाबोधिनोवृधे।
देवेभिर्नःसवितापावतुश्रुतमासर्वतातिमदितिंवृणीमहे ॥ १ ॥

इन्द्र। दृह्य। मघऽवन्। त्वाऽवत्। इत्। भुजे। इह। स्तुतः।
सुतऽपाः। बोधि। नः। वृधे। देवेभिः। नः। सविता। प्र।
अवतु। श्रुतम्। आ। सर्वऽतातिम्। अदितिम्। वृणीमहे ॥ १ ॥

हे इन्द्र मघवन् धनवन् त्वं त्वावदित् त्वत्सदृशमेव शत्रुबलं दृह्य मारय किमर्थं भुजे अ-स्माकं भोगाय तदर्थमिहास्मिन्यज्ञे स्तुतः सन् सुतपाः सुतस्याभिषुतस्य सोमस्य पाता बो-धि बुध्यस्व भवेत्यर्थः किमर्थं नोऽस्माकं वृधे वर्धनाय किंच देवेभिर्देवैः सह नोऽस्माकं श्रुतं विश्रुतं यज्ञं सविता सर्वस्य स्वस्वकर्मसु प्रेरकोदेवः प्रावतु प्ररक्षतु। किंच सर्वतातिं स्वार्थिक-स्तातिल् सर्वां सर्वात्मिकां यद्वा सर्वैर्वायन्ते अस्यामिति सर्वतातिः तां छान्दसोदीर्घः तादृशी-मदितिं अखंडनीयां देवमातरमावृणीमहे ॥ १ ॥

१. धनी इन्द्र, अपने समान बली शत्रु-सैन्य का वध करो। स्तोत्र को ग्रहण कर और सोम को पीकर हमारी रक्षा के लिए प्रस्तुत रहो। हमारी श्रीवृद्धि करो। अन्य देवों के साथ सविता देव हमारे विख्यात यज्ञ की रक्षा करें। हम सर्वग्राहिणी अदिति की प्रार्थना करते हैं।

अथ द्वितीया—

भरायसुभरतभागमृत्वियंप्रवायवेशुचिपेक्रन्ददिष्टये।
गौरस्ययःपयसःपीतिमानशआसर्वतातिमदितिंवृणीमहे ॥ २ ॥

भराय। सु। भरत। भागम्। ऋत्वियम्। प्र। वायवे।
शुचिऽपे। क्रन्दत्ऽइष्टये। गौरस्य। यः। पयसः। पीतिम्।
आनशे। आ। सर्वऽतातिम्। अदितिम्। वृणीमहे ॥ २ ॥

भराय संग्रामकारिणे सर्वेषां पोषकाय वा इन्द्राय ऋत्वियं कालजातं प्राप्तकालं भागं सुभरत सुष्ठु संपादयत हे ऋत्विजः तथा शुचिपे शुद्धस्य सोमस्य पात्रे क्रन्ददिष्टये शब्दितगमनाय वायोः शीघ्रगमने हि शब्दः प्रत्यक्षः तादृशाय वायवे देवाय प्रभरत भागमिति विशेषः योदेवोगौरस्य गौरवर्णस्य पयसः पयसः पीतिं पानमानशे प्राप्नोति तस्मै वायवे इत्युक्तं ॥ २॥

२. युद्ध के लिए उपस्थित ऋतु के अनुकूल यज्ञ-भाग वायु को दो। वे विशुद्ध सोम का पान करते हैं। उनके जाने के समय शब्द होता है। वे शुभ्र दुग्ध के पीने में लगे हैं। हम सर्वग्राहिणी अदितिदेवी की प्रार्थना करते हैं।

आनोदेवःसविितासाविषद्वयऋजूयतेयजमानायसुन्वते।
यथादेवान्प्रतिभूषेमपाकवदासर्वतातिमदितिंवृणीमहे ॥ ३ ॥

आ। नः। देवः। सविता। साविषत्। वयः। ऋजुऽयते।
यजमानाय। सुन्वते। यथा। देवान्। प्रतिऽभूषेम।
पाकऽवत्। आ। सर्वऽतातिम्। अदितिम्। वृणीमहे ॥ २ ॥

सविता सर्वस्य प्रेरकः सूर्यो नोऽस्माकं संबन्धिने ऋजूयते ऋजुकामाय सुन्वतेऽभिषवं कुर्वते यजमानाय वयोऽन्नं पाकवत् पाकोऽपेर्व्यवहितमप्येतदत्रसंबध्यते आसाविषत् आभिमुख्येन प्रसौति सौतेर्ण्यन्ताल्लुङि रूपं यथा येन प्रकारेण देवान् प्रतिभूषेम प्रतिसेवेम भवतेर्लिङि सिप्शपौ द्विविकरणता यद्वा भूष अलंकारे भौवादिकः भूषयेमेत्यर्थः ॥ ३ ॥

३. हमारे सरलता चाहनेवाले और अभिषव-कर्त्ता यजमान को सवितादेवता अन्न दें, ताकि उस परिपक्व अन्न से देवों की पूजा की जा सके। सर्व ग्राहिणी अदितिदेवी की हम प्रार्थना करते हैं।

इन्द्रोअस्मेसुमनाअस्तुविश्वहाराजासोमःसुवितस्याध्येतुनः।
यथायथामित्रधितानिसंदधुरासर्वतातिमदितिंवृणीमहे ॥ ४ ॥

इन्द्रः। अस्मे इति। सुऽमनाः। अस्तु। विश्वहा। राजा। सोमः।
सुवितस्य। अधि। एतु। नः। यथाऽयथा। मित्रऽधितानि।
सम्ऽदधुः। आ। सर्वऽतातिम्। अदितिम्। वृणीमहे ॥ ४ ॥

इन्द्रोदेवोस्मे अस्माकं सुमनाः सुमनस्कोनुग्रहचेताअस्तु भवतु विश्वहा सर्वेष्वप्यहस्सु राजा सोमश्च नोस्माकं सुवितस्य सुवितं स्तोत्रं अध्येतु अधिगच्छतु यथायथा येनयेनप्रकारेणास्माकं मित्रधितानि मित्रनिहितानि धनानि सन्दधुः तथाधिगच्छतु सोमः यथेन्द्रोपि सुमनाअस्त्विति समन्वयः ॥ ४ ॥

४. इन्द्र प्रतिदिन हमारे प्रति प्रसन्न रहें। हमारे यज्ञ में सोम राजा अधिष्ठान करें। बन्धुओं के आयोजन के अनुसार उक्त कर्म सम्पन्न हो। सर्वग्राहिणी अदिति की हम प्रार्थना करते हैं।

**इन्द्रउक्थेनशवसापरुर्दधेबृहस्पतेप्रतरीतास्यायुषः।**
**यज्ञोमनुःप्रमतिर्नःपिताहिकमासर्वतातिमदितिंवृणीमहे ॥ ५ ॥**

इन्द्रः। उक्थेन। शवसा। परुः। दधे। बृहस्पते। प्रऽतरीता।
असि। आयुषः। यज्ञः। मनुः। प्रऽमतिः। नः। पिता। हि। कम्।
आ। सर्वऽतातिम्। अदितिम्। वृणीमहे ॥ ५ ॥

अयमिन्द्रउक्थेन शवसा स्तुत्येन बलेन परुः पर्व यज्ञियमस्मदीयं वा दधे धारयति हे बृहस्पते आयुषोस्माकमायुष्यस्य प्रतरीता प्रवर्धयितासि भव तथा यज्ञोमनुर्मन्ता प्रमतिः प्रकृष्टमतिर्यस्य सः नः पिता पालकः सन् कं सुखं प्रयच्छतु यद्वा यज्ञोमनोर्मनुरिव प्रत्येकं सुखं प्रयच्छतु ॥ ५ ॥

५. इन्द्र स्तुत्य बल से हमारे यज्ञ की रक्षा करते हैं। बृहस्पति, तुम परमायु प्रदान किया करते हो। यज्ञ ही हमारी गति, मति, रक्षक और सुख है। सर्वग्राहिणी अदिति की हम प्रार्थना करते हैं।

**इन्द्रस्यनुसुकृतंदैव्यंसहोग्निर्गृहेजरितामेधिरःकविः।**
**यज्ञश्चभूद्विदथेचारुरन्तमआसर्वतातिमदितिंवृणीमहे ॥६॥१६॥**

इन्द्रस्य। नु। सुऽकृतम्। दैव्यम्। सहः। अग्निः। गृहे। जरिता।
मेधिरः। कविः। यज्ञः। च। भूत्। विदथे। चारुः। अन्तमः।
आ। सर्वऽतातिम्। अदितिम्। वृणीमहे ॥ ६ ॥ १६ ॥

दैव्यं देवानां हितं सहोबलं यदस्ति तदिन्द्रस्य नु सुकृतं इन्द्रेण खलु सुष्ठु संपादितं यद्वा यत्सुकृतं दैव्यं सहोबलं मरुत्संज्ञकमस्ति तदिन्द्रस्य नु इन्द्रसंबन्धि खलु अथवा इन्द्रस्य नु इन्द्रस्य संबन्धि सुकृतं दैव्यं सहोदेवार्हं बलमग्निर्गृहे अस्मदीये यागगृहे वर्तते हविर्विशेषः इन्द्र-

स्य संबन्धि सुष्ठु संपादितोदेवानां बलभूतोऽग्निर्गार्हपत्यः सन् वर्तते इत्यर्थः सचाग्निर्जरिताऽदेवानां स्तोतापेधिरः मेधोयज्ञोऽहविर्वा सद्वान् कविः क्रान्तप्रज्ञो यज्ञोयष्टव्यश्च भूत् भवति कुत्र विदथे यज्ञे । किंच सोग्निश्चारुश्चरणीयः अन्तमः अस्माकमन्तिकतमश्च ॥ ६ ॥

६. देवों का बल इन्द्र ने ही बनाया है। गृहस्थित अग्नि देवों की स्तुति करते, यज्ञ करते और कार्य-निर्वाह करते हैं। वे यज्ञ के समय पूज्य और रमणीय तथा हम लोगों के अपने हैं। सर्व-ग्राहिणी अदिति की हम प्रार्थना करते हैं।

नवोगुहाचकृमभूरिदुष्कृतंनाविष्ट्यंवसवोदेवहेळनम् ।
माकिर्नोदेवाअनृतस्यवर्पसआसर्वतातिमदितिंवृणीमहे ॥ ७ ॥

न । वः । गुहा । चकृम । भूरि । दुःऽकृतम् । न । आविःऽत्यम् । वसवः । देवऽहेळनम् । माकिः । नः । देवाः । अनृतस्य । वर्पसः । आ । सर्वऽतातिम् । अदितिम् । वृणीमहे ॥ ७ ॥

हे देवाः युष्माकं गुहा गुहायां प्रच्छन्ने देशे भूरि प्रभूतं दुष्कृतं पापं द्रोहमित्यर्थः न चकृम तथा आविष्ट्यं आविः संभूतं देवहेळनं देवानां क्रोधनं तन्निमित्तं द्रोहं नचकृम हे वसवो वासकादेवाः । किंच हे देवानोस्माकं अनृतस्य वर्पसोरूपस्य प्राप्तिर्माकिर्माभूत् इतः परं मानुषं रूपं माभूदित्यर्थः शिष्टमुक्तं ॥ ७ ॥

७. वसुओ, तुम्हारे परोक्ष में हमने कोई विशेष अपराध नहीं किया है। तुम्हारे सामने भी हमने ऐसा कोई कार्य नहीं किया है, जो देवों के क्रोध का कारण बने। देवो, हमें मिथ्या नहीं करना। सर्वग्राहिणी अदिति की हम प्रार्थना करते हैं।

अपामीवांसवितासाविषन्न्य१ग्वरीयइदपसेधन्त्वद्रयः ।
ग्रावायत्रमधुषुदुच्यतेबृहदासर्वतातिमदितिंवृणीमहे ॥ ८ ॥

अप । अमीवाम् । सविता । साविषत् । न्यक् । वरीयः । इत् । अप । सेधन्तु । अद्रयः । ग्रावा । यत्र । मधुऽसुत् । उच्यते । बृहत् । आ । सर्वऽतातिम् । अदितिम् । वृणीमहे ॥ ८ ॥

सविता सर्वस्य प्रेरकः सवितृदेवोनोस्माकं संबन्धिनममीवां रोगं अपसाविषत् अपप्रेरयतु अपगमयत्वित्यर्थः । तथावरीयइत् उरुतरमपि पापं न्यक् नीचीनमपसेधन्त्वद्रयः पर्वताभिमानिनोदेवाः अभिषवग्राव्णोवा एतत्सर्वं कुत्र भवत्विति चेत् उच्यते यत्र यस्मिन्प्रदेशे यस्मिन्यागे वा मधुरस्य सोमस्य सोता ग्रावा बृहत्प्रवृद्धमुच्यते स्तूयते तत्र ॥ ८ ॥

८. जहाँ मधु के समान सोमरस प्रस्तुत किया जाता और अनन्तर अभिषव-प्रस्तर को भली भाँति स्तुत किया जाता है, वहाँ का रोग सविता हटाते हैं और पर्वत वहाँ का गुरुतर अनर्थ दूर करते हैं। सर्वग्राहिणी अदिति की हम प्रार्थना करते हैं।

ऊर्ध्वोग्रावावसवोस्तुसोतरिविश्वाद्वेषांसिसनुतर्युयोत ।
सनोदेवःसवितापायुरीड्यआसर्वतातिमदितिंवृणीमहे ॥ ९ ॥

ऊर्ध्वः । ग्रावा । वसवः । अस्तु । सोतरि । विश्वा । द्वेषांसि ।
सनुतः । युयोत । सः । नः । देवः । सविता । पायुः । ईड्यः ।
आ । सर्वऽतातिम् । अदितिम् । वृणीमहे ॥ ९ ॥

हे वसवो देवाः सोतरि सोमाभिषवकर्तरि मयि ग्रावा ऊर्ध्वः उन्नतोऽस्तु तेनोच्छ्रितेन विश्वा द्वेषांसि सर्वानपि द्वेष्टॄन् सनुतः निगूढान् युयोत पृथक्कुरुत स सविता देवो नोऽस्माकं पायुः पालयिता कृवापाजीत्यादिनाउण् प्रत्ययः स ईड्यः स्तोतव्यश्च ॥ ९ ॥

९. वसुओ, सोम को प्रस्तुत करने का प्रस्तर ऊपर उठे। तब तक तुम लोग शत्रुओं को अव्यक्त भाव से अलग-अलग करो। सविता रक्षा करनेवाले हैं। उनका स्तोत्र करना चाहिए। सर्वग्राहिणी अदिति की हम प्रार्थना करते हैं।

ऊर्जंगावोयवसेपीवोअत्तनऋतस्ययाःसदनेकोशेअङ्ग्ध्वे ।
तनूरेवतन्वोअस्तुभेषजमासर्वतातिमदितिंवृणीमहे ॥ १० ॥

ऊर्जम् । गावः । यवसे । पीवः । अत्तन । ऋतस्य । याः । सदने ।
कोशे । अङ्ग्ध्वे । तनूः । एव । तन्वः । अस्तु । भेषजम् ।
आ । सर्वऽतातिम् । अदितिम् । वृणीमहे ॥ १० ॥

हे गावः आशिरार्थं यूयं यवसे तृणवति देशे पीवः प्रवृद्धं ऊर्जं रसं अत्तन अत्त ऋत-स्य यज्ञस्य सदने गृहे कोशे गोष्ठे दोहनस्थाने अङ्ग्ध्वे अंचयथ ता अत्तन तनूरेव तन्वे ज-नकशब्दः तनूरेव शरीरमेव तन्वः सोमरसस्य भेषजमस्तु यद्वा पृथगेव वाक्यं अस्माकं तन्वो भे-षजमस्तु किंच तनूरेव पशुशरीरमेव पशुना यागे सति स्वर्गस्य संपादयितुं शक्यत्वात् ॥ १० ॥

१०. गायो, तुम लोग गोचर-भूमि पर विचरण करके मोटी बनो। यज्ञ में तुम लोग दुग्ध-पात्र में दूध देती हो। तुम्हारा दूध सोमरस के औषध के समान हो। सर्वग्राहिणी अदिति की हम प्रार्थना करते हैं।

क्रतुप्रावाजरिताशश्वतामवइन्द्रइद्भद्राप्रमतिःसुतावताम् ।
पूर्णमूधर्दिव्यंयस्यसिक्तयआसर्वतातिमदितिंवृणीमहे ॥ ११ ॥

क्रतुऽप्रावा । जरिता । शश्वताम् । अवः । इन्द्रः । इत् । भद्रा ।
प्रऽमतिः । सुतऽवताम् । पूर्णम् । ऊधः । दिव्यम् । यस्य ।
सिक्तये । आ । सर्वऽतातिम् । अदितिम् । वृणीमहे ॥ ११ ॥

क्रतुप्रावा कर्मणां पूरकः प्रापूरणे आतोमनिन्नित्यादिना वनिप् जरिता स्तोता यजमानं साधु सोमः करोति स्तौति यद्वा शश्वतां सर्वेषां जरयिता इन्द्रइत् इन्द्रएव सुतावतां सोमवतां यजमानानां अघोरक्षको भद्रा भद्रया स्तुत्या प्रमतिः यस्येन्द्रस्य सिक्तये सेकाय पानाय ऊधः उद्भवनं द्रोणकलशं पूर्णं सोमेनपूर्णं भवति सएवाश्वः सएव प्रमतिरिति ॥ ११ ॥

११. इन्द्र यज्ञ को पूर्ण करते हैं, सबको जरा-युक्त करते हैं। वे युवक और सोम-यज्ञ-कर्त्ता की रक्षा करते हैं और उत्तम स्तोत्र पाकर अनुकूल होते हैं। उनके पान के लिए उद्धत द्रोण-कलश सोम से परिपूर्ण है। सर्वग्राहिणी अदितिदेवी की हम प्रार्थना करते हैं।

चित्रस्तेभानुःक्रतुप्राअभिष्टिःसन्तिस्पृधोजरणिप्राअधृष्टाः ।
रजिष्ठयारज्यापश्वआगोस्तूतूर्षतिपर्यग्रंदुवस्युः ॥ १२ ॥ १७ ॥

चित्रः । ते । भानुः । क्रतुऽप्राः । अभिष्टिः । सन्ति । स्पृधः ।
जरणिऽप्राः । अधृष्टाः । रजिष्ठया । रज्या । पश्वः । आ ।
गोः । तूतुर्षति । परि । अग्रम् । दुवस्युः ॥ १२ ॥ १७ ॥

हे इन्द्र ते भानुः प्रकाशश्चित्रः आश्चर्यभूतः चायनीयोवा तथा क्रतुप्राः समानुरस्माकं कर्मणां पूरकः अभ्यष्टिरन्वेषणीयः हे इन्द्र ते जरणिप्राः स्तोतॄणां धनस्य पूरयितारः अधृष्टाः अन्यैरप्रधृष्याः स्पृधः स्पर्धाः सन्ति यस्मादेवं तस्मात् रजिष्ठया ऋजुतमया रज्या रज्ज्वा गोः पश्वः पशोः अग्रं दुवस्युः परिचरणमिच्छन् एतन्नामा ऋषिः परितूतूर्षति अभित्वरयति ॥ १२ ॥

१२. इन्द्र, तुम्हारा प्रकाश आश्चर्यजनक है। वह प्रकाश कर्म-पूरक है। उसकी प्रार्थना करनी चाहिए। तुम्हारा दुर्द्धर्ष कार्य सारे स्तोताओं की मनःकामना पूर्ण करता है। इसी लिए दुवस्यु ऋषि अतीव सरल रज्जु के द्वारा गाय का अग्रभाग शीघ्र खींचते हैं।

॥ इत्यष्टमस्य पञ्चमे सप्तदशोवर्गः ॥ १७ ॥

उद्बुध्यध्वमिति द्वादशर्चं द्वितीयं सूक्तं सोमपुत्रस्य बुधस्यार्षं आद्योधिपदवि नवमी कष्-भरस्स्यंता च द्वे जगत्यौ चतुर्थीषष्ठ्यौ गायत्र्यौ निराद्यावानिति पञ्चमी बृहती शिष्टास्त्रिष्टुभः विश्वेदेवादेवता ऋत्विक्स्तुतिर्वासोमोवा देवता। तथाचानुक्रान्तं—उद्बुध्यध्वं बुधः सौम्यऋत्विक्स्तुतिर्वा नवम्यन्त्येजगत्यौ गायत्र्योर्मध्ये पञ्चमी बृहती। गतः सूक्तविनियोगः।

तत्र प्रथमा—

**उद्बुध्यध्वंसमनसःसखायःसमग्निमिन्ध्वंबहवःसनीळाः ।**
**दधिक्रामग्निमुषसंचदेवीमिन्द्रावतोऽवसेनिह्वयेवः ॥ १ ॥**

उत् । बुध्यध्वम् । सऽमनसः । सखायः । सम् । अग्निम् ।
इन्ध्वम् । बहवः । सऽनीळाः । दधिऽक्राम् । अग्निम् । उषसम् ।
च । देवीम् । इन्द्रऽवतः । अवसे । नि । ह्वये । वः ॥ १ ॥

अग्निं चेध्यमाणमृत्विजो वदन्ति हे सखायः सखिभूता ऋत्विजः समनसः समानमनस्काः परस्परमद्रोग्धारः अन्योन्यं कर्मानुकूला इत्यर्थः तादृशा यूयं उत् उत्कृष्टं बुध्यध्वं जानीध्वं उपरतं युष्माकं कर्तव्यमेषोपदिशति तथाग्निं समिन्ध्वं सम्यग् दीपयध्वं इन्धी दीप्तौ रौधादिकः लोटि श्नसोरल्लोप इत्यल्लोपः बहवोऽनेके सनीळाः समाननिवासाः एकस्यामेव शालायां निवसन्तः अहं च दधिक्रां एतन्नामिकां देवतां अग्निमुषसं च देवीं द्योतमानां देवानिन्द्रावतः इन्द्रेण युक्तान् वो युष्मानवसे अस्माकं रक्षणाय नि नितरां ह्वये आह्वयामि ॥ १ ॥

१. मित्र ऋत्विको, समान-मना होकर जागो। अनेक लोग एक स्थानवासी होकर अग्नि को प्रज्वलित करो। मैं दधिक्रा, उषा, अग्नि और इन्द्र को, रक्षण के लिए, बुलाता हूँ।

**मन्द्राकृणुध्वंधियआतनुध्वंनावमरित्रपरणींकृणुध्वम् ।**
**इष्कृणुध्वमायुधारंकृणुध्वंप्राञ्चंयज्ञंप्रणयतासखायः ॥ २ ॥**

मन्द्रा । कृणुध्वम् । धियः । आ । तनुध्वम् । नावम् ।
अरित्रऽपरणीम् । कृणुध्वम् । इष्कृणुध्वम् । आयुधा । अरम् ।
कृणुध्वम् । प्राञ्चम् । यज्ञम् । प्र । नयत । सखायः ॥ २ ॥

मन्द्रा मन्द्राणि मदकराणि स्तोत्राणि कृणुध्वं कुरुध्वं हे सखायः कृवि हिंसाकरणयोश्च धिन्विकृण्व्योरच्चेत्युप्रत्ययः अकारश्चान्तादेशः यद्वा करोतेर्व्यत्ययेन श्नुः तथा धियः कर्माणि वपनप्रदेशकर्षणादीनि आतनुध्वं विस्तारयत तथा अरित्रपरणीं कर्षणादिरूपेणारित्रेण पारयित्र्यां नावं वपनाख्यां कृणुध्वं कुरुध्वं तथा आयुधा आयुधानि सीरयुगादीनि अरं अलं कृणुध्वं हे सखायः ऋत्विजः प्राञ्चं प्रागञ्चनं यज्ञं यष्टव्यं अग्निं प्रणयत प्रकर्षेण नयत यद्वा कर्षणं प्राञ्चं कुरुतेत्यर्थः ॥ २ ॥

२. मित्रो, मदकर स्तोत्र करो। कर्षण (जोताई) आदि कर्मों का विस्तार करो। हल वपन-रूपिणी और पार लगानेवाली नौका प्रस्तुत करो। हल के फल या फाल को तेज और सुशोभित करो। मित्रो, उत्तम यज्ञ का अनुष्ठान करो।

अथ तृतीया—

युनक्त सीरा वि युगा तनुध्वं कृते योनौ वपतेह बीजम् ।
गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्यः पक्वमेयात् ॥ ३ ॥

युनक्त । सीरा । वि । युगा । तनुध्वम् । कृते । योनौ । वपत ।
इह । बीजम् । गिरा । च । श्रुष्टिः । सऽभराः । असत् । नः ।
नेदीयः । इत् । सृण्यः । पक्वम् । आ । इयात् ॥ ३ ॥

हे सखायो यूयं सीरा सीराणि युनक्त युङ्ध्वं अनडुद्भिः सह युजेर्लोटि मध्यमबहुवचने तप्तनप्तनथनाश्चेति तनबादेशः अवयवाक्तित्वाच्छसोरल्लोपश्च्यल्लोपाभावः तदर्थं युगा युगानि वितनुध्वं विस्तारयध्वं कृते च योनौ इह सीतायां बीजं ग्राम्यमारण्यं च वपत निक्षिपत तिलमाषव्रीह्यादिकं ग्राम्यसप्तकं वेणुश्यामाकनीवारादिकं आरण्यबीजसप्तकं चाकृष्टाकृष्टयोर्निवपतेत्यर्थः । सग्राम्याः कृष्टे सहारण्या अकृष्टे इत्यापस्तंबः । तथा नोऽस्माकं गिरा स्तुत्या भवत्स्वाम्या सहास्माकं श्रुष्टिरन्नं सभराः सभरं असत भवति भवतु तथा नेदीय इत् अन्तिकमेव सृण्यः सृणिरं कुशः अंकुशवद्वक्रोऽलवित्रः पक्वं सस्यमेषाव आभिमुख्येन गच्छति श्रुष्टिः सभराऽसत् सृण्यः पक्वमेयादिति यच्छानुवृत्तेस्तत्प्रयोगेऽप्यपरेति प्रथमस्य निघातस्याभावः ॥ ३ ॥

३. ऋत्विको, हल योजित करो। युगों (जुआठों) को विस्तृत करो। यहाँ जो क्षेत्र प्रस्तुत किया गया है, उसमें बीज बोओ। हमारी स्तुतियों के साथ हमारा अन्न परिपूर्ण हो। हँसुए (सृणि) पास के पके धान्य में गिरे।

सीरा युञ्जन्ति कवयो युगा वि तन्वते पृथक् । धीरा देवेषु सुम्नया ॥ ४ ॥

सीरा । युञ्जन्ति । कवयः । युगा । वि । तन्वते ।
पृथक् । धीराः । देवेषु । सुम्नऽया ॥ ४ ॥

कवयो मेधाविन ऋत्विजः सीरा सीराणि कर्षणसाधनानि नियुञ्जन्ति योजयन्ति युगा युगान्यपि पृथक् परस्परं वितन्वते भिन्नप्रदेशानि कुर्वन्ति कीदृशाः कवयः देवेषु विषये धीराः धीमन्तः किमर्थं सुम्नया सुखमिति सुम्ननाम सुखेच्छया सुम्नयाञ्चाल्लक्यन्तात्स्त्रियामप्रत्ययादित्यकारप्रत्ययः सुपांसुलुगिति तृतीयाया आकारः अथवा धीरा धीमन्तः देवेषु सुम्नया सुम्नेन देवेषु सुखं भूयादिति सुपांसुलुगित्यादिना विभक्तेर्याजादेशः ॥ ४ ॥

४. लाङ्गल (हल) जोते जाते हैं। कर्म-कर्ता लोग जुआठों (युगों) को अलग करते हैं और बुद्धिमान् लोग सुन्दर स्तोत्र पढ़ रहे हैं।

अथ पंचमी—

निराहावान्कृणोतन सं वरत्रा दधातन ।
सिञ्चामहा अवतमुद्रिणं वयं सुषेकमनुपक्षितम् ॥ ५ ॥

निः । आऽहावान् । कृणोतन । सम् । वरत्राः । दधातन ।
सिञ्चामहै । अवतम् । उद्रिणम् । वयम् ।
सुऽसेकम् । अनुपऽक्षितम् ॥ ५ ॥

हे ऋत्विजः आहावान् आहूयन्ते पानार्थं गावोऽत्रेत्याहावा निपानानि अश्वोचित्यादवि-क्षणनप्रदेशकर्षणार्थं गोपानसाधनद्रुममयपानपात्राण्युच्यते तानाहावान्निष्कृणोतन निष्कुरुत आङ्पूर्वाद्ध्वयतेर्निपानमाहाव इति निपातितः थाथादिस्वरः कृणोतन तप्तनप्तनथनाश्चेत्यादिना तनप् तेना-ङित्वाद्गुणः आत्मत्वयोरात इत्याकारलोपः । किमर्थमाहावकरणं वरत्रस्थापनं चेति अत्रोच्य-ते वयं अवतमवटं सिंचामहे कीदृशमवटं उद्रिणं उदकवन्तं सुषेकं सुष्ठु सेक्तुं शक्यं अनुपक्षितं मनुपक्षीणं कदाचिदप्युदकोपक्षयरहितं ॥ ५ ॥

५. पशुओं के जलपान-स्थान को बनाओ। वरत्रा (चर्म-रज्जु) को योजित करो। अधिक, अक्षय और सेचन-समर्थ गढ्ढे से जल लेकर हम सींचते हैं।

इष्कृताहावमवतं सुवरत्रं सुषेचनम् । उद्रिणं सिञ्चे अक्षितम् ॥ ६ ॥ १८ ॥

इष्कृतऽआहावम् । अवतम् । सुऽवरत्रम् । सुऽसेचनम् ।
उद्रिणम् । सिञ्चे । अक्षितम् ॥ ६ ॥ १८ ॥

इष्कृताहावं संस्कृताहावं अवतं अवटं द्रोणं सिंचे सेचयामि पुनः कीदृशमवटं सुवरत्रं शोभनवरत्रोपेतं सुषेचनं शोभनोदकसेकोपेतं उद्रिणं उदकवन्तं अक्षितमक्षीणं ॥ ६ ॥

६. पशुओं का जलपान-स्थान प्रस्तुत हुआ है। अधिक, अक्षय और जल-पूर्ण गढ्ढे में सुन्दर चर्म-रज्जु है। बड़ी सरलता से जल-सेचन किया जाता है। इससे जल लेकर सेचन करो।

॥ इत्यष्टमस्य पंचमेऽष्टादशो वर्गः ॥ १८ ॥

अथ सप्तमी—

प्रीणीताश्वान्हितं जयाथ स्वस्तिवाहं रथमित्कृणुध्वम् ।
द्रोणाहावमवतमश्मचक्रमंसत्रकोशं सिञ्चता नृपाणम् ॥ ७ ॥

अथाष्टमी--

व्रजंकृणुध्वंसहिवोनृपाणोवर्मसीव्यध्वंबहुलापृथूनि ।
पुरःकृणुध्वमायसीरधृष्टामावःसुस्रोच्चमसोदृंहतातम् ॥ ८ ॥

व्रजम् । कृणुध्वम् । सः । हि । वः । नृऽपानः । वर्म । सीव्यध्वम् ।
बहुला । पृथूनि । पुरः । कृणुध्वम् । आयसीः । अधृष्टाः ।
मा । वः । सुस्रोत् । चमसः । दृंहत । तम् ॥ ८ ॥

हे ऋत्विजो व्रजं कृणुध्वं व्रजं गोष्ठं कुरुध्वं आशिरदोहार्थं गोस्थानं कुरुत सहि सखलु वो नृपाणः नेतॄणां देवानां पानस्य देवपानसाधनमिति सान्नाय्यरूपेण वा आशिररूपेण वा गोः पयआदिकं देवाः पिबन्ति खलु वर्म वर्माणि सीव्यध्वं वर्मवत् पयानस्योभयतआच्छादकत्वात् चमसादीनि पात्राणि सदीव्यानि चोगानि वर्माणि तानि सीव्यध्वं दृढयध्वं कुरुध्वमित्यर्थः । कीदृशानि वर्माणि बहुला बहुलानि अनेकानि तानि च पृथूनि विस्तीर्णानि तथा पुरः पुराणि धिष्ण्यादीनि यज्ञस्थानां देवानां वा पुरः शरीराणि आयसीः अयोमयवत् सारभूताः अधृष्टाः अन्यैरधृष्याः पूरणीयामहावा पुरस्त्युष्यन्ते तानुकल्क्षणात् कुरुत वो युष्मदीयश्चमसो यज्ञा-ख्यो भक्षणसाधनश्चमसस्य वा चमसपक्षे सामान्येनैकवचनं मा सुस्रोत् मा स्रवेत् स्रवतेर्लुङि ब-हुलंछन्दसीति चापःश्लुः तं दृंहत दृढीकुरुत यथाविकलोन भवति तथा कुरुत दृह दृहि वृद्धौ भौवादिकः तस्माल्लोटि इदित्वान्नुम् ऋत्विक्स्तुतिपक्षे एवं । वैश्वदेवपक्षे अस्मदीयायोव्रजारो-प्यं नरोयोव्रजः पिबन्ति मत्यार्थिनां प्राणानिति नृपाणः सताददृशो युष्मदीयः खलु गोष्ठपक्षे न-राणां पानसाधनः स खलु पाद्यैः करणाधिकरणयोश्चेति ल्युट् वर्म वर्माणि कवचानि सीव्यध्वं बहुलानिपृथूनिच यथाभवन्ति तथा पुरः पुरीः कृणुध्वमायसीरन्यैरधृष्टाश्च चमसः जलग-साधनपात्रं मासुस्रोत् मा स्रवेत् तं दृंहतेतिदेवतानुग्रहलब्धफलोपदति ॥ ८ ॥

८. गोष्ठ प्रस्तुत करो। वह स्थान ही मनुष्यों के जलपान के लिए उपयुक्त है। अनेक स्थूल कवच सी कर प्रस्तुत करो, दृढ़तर लौहमय पात्र प्रस्तुत करो और चमस को दृढ़ करो, ताकि इससे जल न चू सके।

अथ नवमी--

आवोधियंयज्ञियांवर्तऊतयेदेवादेवींयजतांयज्ञियामिह ।
सानोदुहीयद्यवसेवगत्वीसहस्रधारापयसामहीगौः ॥ ९ ॥

आ । नः । धियम् । यज्ञियाम् । वर्ते । ऊतये । देवाः । देवीम् ।
यजताम् । यज्ञियाम् । इह । सा । नः । दुहीयत् । यवसाऽइव ।
गत्वी । सहस्रऽधारा । पयसा । मही । गौः ॥ ९ ॥

हे देवाः स्तोतारऋत्विजोयोयुष्माकमूतये यज्ञियां यज्ञार्हां धियं बुद्धिं आवर्ते प्रवर्तये य द्वा हे देवाऋत्विजोयोयज्ञियां धियं युष्माकं कर्तव्यत्वेन संबन्धिनोऽस्माकं ऊतये रक्षणायावर्ते अथवा देवाएव संबोध्याः हे देवावोयुष्माकं धियं बुद्धिं आवर्ते आवर्तयामि किमर्थं ऊतयेऽस्माकं रक्षणाय कीदृशीं धियं यज्ञियां यज्ञार्हां देवीं द्योतमानां यजतां पूज्यां इहास्मिन्यागेऽस्यां भूमौ वा एकोयज्ञियामितिशब्दः पूरणः सा धीर्नोऽस्माकं दुहीयत् दुह्यात् । दृष्टान्तः— यवसेवा यवसानि भक्षयित्वेव गत्वी पुनर्गोष्ठं गत्वा पीत्वेतिवत् पयसा सहस्रधारा मही महती गौर्यथा दुग्धे तद्वत् ॥ ९ ॥

९. देवो वा ऋत्विको, मैं तुम्हारे ध्यान को प्रवृत्त करता हूं, ताकि तुम रक्षा करो। वह ध्यान यज्ञोपयोगी है, वही तुम्हें यज्ञ-भाग देता है। जैसे घास खाकर गायें सहस्र धाराओं से दूध देती हैं, वैसे ही वह ध्यान हमारी अभिलाषा पूर्ण करे।

आ तू षिञ्च हरिमीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः ।
परि ष्वजध्वं दश कक्ष्याभिरुभे धुरौ प्रति वह्निं युनक्त ॥ १० ॥

आ । तु । सिञ्च । हरिम् । ईम् । द्रोः । उपऽस्थे । वाशीभिः ।
तक्षत । अश्मन्ऽमयीभिः । परि । स्वजध्वम् । दश । कक्ष्याभिः ।
उभे इति । धुरौ । प्रति । वह्निम् । युनक्त ॥ १० ॥

हे अध्वर्यो त्वं एनं हरिं हरितवर्णं सोमं द्रोः द्रुमविकारस्य पात्रस्योपस्थउपरि आसिञ्च आसेकं कुरु तुइति पूरणः। तदर्थं हे पात्रसंपादिनः अश्मन्मयीभिः अयःशिलासारभूताभिः वाशीभिस्तक्षत पात्राणि । नकारोपजनश्छान्दसः मयटः टित्वात् ङीप् । तानि पात्राणि सोमपूर्णानि एवं दशसंख्याकानि कक्ष्याभिः प्रकारैः पर्यायेण परिष्वजध्वं संस्कुरुध्वं आसादयत यद्वा वाशीभिरश्मन्मयीभिर्हविर्धानशकटे तक्षत तेन दशकक्ष्याभिर्दशसंख्याकाभीरज्जुभिः परिष्वजध्वं उभे धुरौ युगसंबन्धिन्यौ वह्निं वाहकावनड्वाहौ युनक्त अथवायं मंथप्रयनसेचकर्षणसाधनहलविषयत्वयाप्याख्येयः ॥ १० ॥

१०. काठ के पात्र में रक्खे हुए हरित-वर्ण सोम को सिंचित करो। प्रस्तरमय कुठारों से पात्र प्रस्तुत करो। दस अंगुलियों के द्वारा पात्र को वेष्टन करके धारण करो। वाहक पशुओं को रथ की दोनों धुराओं में योजित करो।

अथैकादशी—

उभे धुरौ वह्निरापिब्दमानोऽन्तर्योनेव चरति द्विजानिः।
वनस्पतिं वन आस्थापयध्वं नि षू दधिध्वमखनन्त उत्सम्॥ ११॥

उभे इति। धुरौ। वह्निः। आऽपिब्दमानः। अन्तः। योनाऽइव। चरति। द्विऽजानिः। वनस्पतिम्। वने। आ। अस्थापयध्वम्। नि। सु। दधिध्वम्। अखनन्तः। उत्सम्॥ ११॥

हविर्धानशकटस्योभे धुरौ आपिब्दमानः आशब्दयमानो वह्निर्वाहकोऽनड्वान् योनावन्तरिव द्विजानिः द्विजायः यथोऽन्तश्चरति तं वनस्पतिं वनस्पतिविकारं शकटं वने वनसंबन्धिनि वृक्षे मेथीमूले इत्यर्थः तत्रास्थापयध्वं यद्वा वने वननीये देशे आस्थापयध्वं आस्थापयत पश्चात्तदर्थं सोमं सु सुष्ठु निदधिध्वं सुखं यथा भवति तथा स्थापयतासंयां अभिषवप्रदेशे वा पश्चादुत्सं तद्रसं अखनन्त संपादयतेत्यर्थः। अथवायमपि मंत्रः कर्षणपरोऽव्याख्येयः। यस्य लांगलस्योभे धुरावपिब्दमानः शब्दयमानो वह्निरनड्वान् अन्तर्योनाविवेत्यादि समानं तादृशं वनस्पतिं वनस्पतिविकारं लांगलं वने वननीये वपनार्थकर्षणप्रदेशे आस्थापयध्वं सु सुष्ठु सर्वत्र तं लांगलं निदधिध्वं उत्सं सेकसाधनं गर्तं सिक्त्वा प्रदेशं अखनन्तः॥ ११॥

११. रथ की दोनों धुराओं को शब्दायमान करके रथ-वाहक पशु वैसे ही विचरण करता है, जैसे दो स्त्रियों का स्वामी रति-क्रीड़ा करता है। काठ के शकट को काठ के आधार पर रक्खो, भली भाँति संस्थापित करो—ताकि शकट आधार-शून्य न होने पावे।

छोहनिमाक्षणाच्छंसिशस्त्रे कपृन्नर इत्येषा—कपृन्नरोऽयक्षमाचीरजगन्वेति सूत्रितं हि।

सैषा द्वादशी—

कपृन्नरः कपृथमुद्दधातन चोदयत खुदत वाजसातये।
निष्टिग्र्यः पुत्रमा च्यावयोतय इन्द्रं सबाध इह सोमपीतये॥ १२॥ १९॥

कपृत्। नरः। कपृथम्। उत्। दधातन। चोदयत। खुदत। वाजऽसातये। निष्टिग्र्यः। पुत्रम्। आ। च्यवय। ऊतये। इन्द्रम्। सऽबाधः। इह। सोमऽपीतये॥ १२॥ १९॥

हे नरो नेतारऋत्विजः एष इन्द्रः कपृत् सुखस्य पूरको महतां स्तोतॄणां च कमिति सुखनाम कपृथं सुखस्य पूरयितारमिन्द्रं चोदयत प्रेरयत खुदत खुदं क्रीडमत खुदं क्रीडायां भौवादिकः व्यत्ययेन शः रेफलोपश्छान्दसः संपिष्ट संस्कुरुतेत्यर्थः किमर्थं वाजसातये अन्नस्य

कामाय यदेवाह—हे होतः निष्टिग्र्यः पुत्रं निष्टिं दितिं स्वसपत्नीं गिरतीति निष्टिग्रीरदितिः तस्याः पुत्रमिन्द्रं सबाधः सहबाधैः भयासत्त्वैः कर्मभिर्बाध्यन्त इति सबाधऋत्विजः यथाविधापूर्वं सोमपीतये तस्य सोमपानायोतयेऽस्माकं रक्षणाय वा च्यवय व्यत्ययेनैकवचनं आच्यावयतेत्यर्थः ॥ १२ ॥

१२. कर्माध्यक्षो, इन्द्र सुख के दाता हैं। इन्हें सुखमय सोम दो। अन्न देने के लिए इन्हें प्रेरित करो, अनुरुद्ध करो। इन्द्र अदिति के पुत्र हैं। तुम सब लोगों को पीड़ा का डर है। फलतः रक्षण के लिए उन्हें यहाँ बुलाओ, ताकि सोमपान करें।

॥ इत्यष्टमस्य पञ्चमे एकोनविंशो वर्गः ॥ १९ ॥

प्र ते रथमिति द्वादशर्चं षष्ठं सूक्तं भार्म्यश्वपुत्रो मुद्गलऋषिः आद्या तृतीया अन्त्या चेति तिस्रो बृहत्यः शिष्टानव त्रिष्टुभः द्रुघणो नाम मुद्गरः देवत्यमिदं इन्द्रदेवत्यं वा । तथा चानुक्रान्तं—प्र ते मुद्गलो भार्म्यश्वो द्रुघणेन वृषभेण चाजिं जिगायेति द्रौघणं वाद्यातृतीयोत्त्याश्च बृहत्य इति । गतो विनियोगः । अत्राहुः—मुद्गलस्य हृता गावश्चोरैस्त्वेका गरद्गवं । तमिष्टं शकटे कृत्वा गलैकमगुराद्गवं ॥ १ ॥ द्रुघणं युयुजे तत्र चौरमार्गानुसारकः । द्रुघणं चाग्रतः क्षिप्त्वा चौरेभ्यो गाः पुनः स्वगा इति ॥ २ ॥ तथा निरुक्तेऽपीयं कथा सूचिता—मुद्गलो भार्म्यश्व ऋषिर्वृषभं च द्रुघणं च युक्त्वा संग्रामे व्यवहृत्याजिं जिगायेति ।

प्रतेरथंमिथूकृतमिन्द्रोऽवतुधृष्णुया ।
अस्मिन्नाजौपुरुहूतश्रवाय्येधनभक्षेषुनोऽव ॥ १ ॥

प्र । ते । रथम् । मिथुऽकृतम् । इन्द्रः । अवतु । धृष्णुऽया ।
अस्मिन् । आजौ । पुरुऽहूत । श्रवाय्ये । धनऽभक्षेषु । नः । अव ॥ १ ॥

हे मुद्गल ते रथं मिथूकृतं मिथःकृतं असहायं कृतं अथवा मिथुरिति मिथ्यानाम अश्वादिभिः शून्यं कृतं धृष्णुया धर्षणशील इन्द्रः अवतु रक्षतु यद्वा धृष्णुया धर्षणशीलेन वज्रेण उभयत्र सुपां सुलुगिति सुपो याजादेशः । अथ प्रत्यक्षकृतः हे पुरुहूत बहुभिराहूतेन्द्र अस्मिन्नाजौ संग्रामे अपहृतगोभिश्चोरैः कृते संग्रामे कीदृशे श्रवाय्ये श्रोतव्ये विश्रुत इत्यर्थः श्रुदक्षीत्यादिना आय्यप्रत्ययः धनभक्षेषु अस्मासु गोरूपधनभजनकामेषु सत्सु यद्वा गोरूपधनस्य भक्षकेषु चौरेषु जेतव्येषु सत्सु नोऽस्मानवरक्ष ॥ १ ॥

१. मुद्गल, युद्ध में जिस समय तुम्हारा रथ असहाय होता है, उस समय दुर्द्धर्ष इन्द्र उसकी रक्षा करें। इन्द्र, इस प्रसिद्ध युद्ध में, धनोपार्जन के समय, तुम हमारी रक्षा करना।

---

१ नि० ९. २३ ।

अथ द्वितीया—

उत्स्म॒वातो॑वहति॒वासो॑अस्या॒अधि॑रथं॒यदज॑यत्स॒हस्र॑म् ।
र॒थीर॑भून्मुद्ग॒लानी॒गवि॑ष्टौ॒भरे॑कृ॒तंव्य॑चेदिन्द्रसे॒ना ॥ २ ॥

उत् । स्म॒ । वातः॑ । व॒ह॒ति॒ । वासः॑ । अ॒स्याः॒ । अधि॑ऽरथम् ।
यत् । अज॑यत् । स॒हस्र॑म् । र॒थीः । अ॒भू॒त् । मु॒द्ग॒लानी॑ । गोऽइ॑ष्टौ ।
भरे॑ । कृ॒तम् । वि । अ॒चे॒त् । इ॒न्द्र॒ऽसे॒ना ॥ २ ॥

अस्याः रथीरभून्मुद्गलानीति वक्ष्यमाणत्वादस्य मुद्गलस्य पत्न्याः सारथिभूतायाः वासोंऽशुकं वातो वायुरुद्वहति ऊर्ध्वं प्रापयति श्रमजनितस्वेदापनयाय अथवा शीघ्ररथधावनजनितो वायुरंशुकं चालयतीत्यर्थः। कदेत्युच्यते—यद्यदाधिरथं अधिकं रथमारूढा सहस्रं सहस्रसंख्याकं गोसंघमजयत्तदा यद् वा गोसहस्रमजयत् अस्या इति वा योज्यं यद्योगाज्जयतेर्नैनिघातः गविष्टौ गवामन्वेषणे मुद्गलानी मुद्गलस्य पत्नी रथीरभूत् सारथिरभवत् छान्दसमानुक् इन्द्रसेनाख्या परिवृढस्येन्द्रस्य सेनानी यद्वा इन्द्रस्य शत्रूणां दारयितुः मुद्गलस्य सेनानीरूपा मुद्गलानी भरे संग्रामे कृतं संपादितं गोसंघं व्यचेत् व्यचिनोत् शत्रुभ्यः पृथक्कृतवती चयतेर्लङि बहुलं छन्दसीति विकरणस्य लुक् ॥ २ ॥

२. जिस समय रथ पर चढ़कर मुद्गल की पत्नी (मुद्गलानी) सहस्र गायों को जीतनेवाली हुई, उस समय उनके वस्त्र का संचालन वायु ने किया। गायों के जीतने के समय मुद्गल-पत्नी रथी हुई। इन्द्र-सेना नाम की वह मुद्गलानी युद्ध के समय शत्रुओं के हाथ से गायों को ले आई।

अ॒न्तर्य॑च्छ॒जिघां॑सतो॒वज्र॑मिन्द्राभि॒दास॑तः ।
दास॑स्यवामघव॒न्नार्य॑स्यवास॒नुत॒र्यव॑यावधम् ॥ ३ ॥

अ॒न्तः । य॒च्छ॒ । जिघां॑सतः । वज्र॑म् । इ॒न्द्र॒ । अ॒भि॒ऽदास॑तः ।
दास॑स्य । वा॒ । म॒घ॒ऽव॒न् । आर्य॑स्य । वा॒ । स॒नु॒तः । य॒व॒य॒ । व॒धम् ॥ ३ ॥

हेन्द्र जिघांसतो हन्तुमिच्छतः अभिदासतः अभिद्रवतः शत्रोर्वज्रमन्तर्यच्छ अन्तर्गमय। किंचाह—हे मघवन् धनवन्निन्द्र दासस्य वा उपक्षीणस्याल्पस्य आर्यस्याभिगन्तव्यस्य महतो वा शत्रोः वधं वधनायैव हननसाधनं वज्रं सनुतः अन्तर्हितनामैतत् अन्तर्हितं गूढं युध्यमानं यवय पृथक्कुरु ॥ ३ ॥

३. इन्द्र, अनिष्टकर्त्ता और मारने को तैयार शत्रुओं के ऊपर वज्र-पात करो। दासजातीय हो या आर्यजातीय हो, शत्रु का, गूढ़ रूप से, वध करो।

अथ चतुर्थी—

उन्नोह्रदमपिबज्जर्हृषाणःकूटंस्मतृंहदभिमातिमेति।
प्रमुष्कभारःश्रवइच्छमानोजिरंबाहूअभरत्सिषासन्॥ ४॥

उन्नः। ह्रदम्। अपिबत्। जर्हृषाणः। कूटम्। स्म। तृंहत्।
अभिऽमातिम्। एति। प्र। मुष्कऽभारः। श्रवः। इच्छमानः।
अजिरम्। बाहू इति। अभरत्। सिसासन्॥ ४॥

अत्र वृषभः स्तूयते वृषभः उन्नः उदकस्य ह्रदं अगाधजलाशयमपिबत् जर्हृषाणः अत्यन्तं हृषितः सन् तथा कूटं पर्वतशृंगं चोरैर्गोपिधानार्थं निहितं तृंहत् स्म शृंगेण विहिंसितवान् व्यदारयदित्यर्थः। तथा कृत्वा अभिमातिमेति शत्रुं गच्छति हन्तुं पश्चान्मुष्कभारः महामुष्कः प्रवृद्धस्य वृषभस्य हि मुष्कवृद्धिर्भवति तथा प्रवृद्धो वृषभः श्रवः सूयतइति श्रवो यशः इच्छमानः इच्छन् अजिरे गमनशीलं शत्रुं बाहू बाहुभ्यां बाह्वोर्वा प्राभरत् प्रहृतवान् यद्वा अजिरमिति क्षिप्रनाम क्षिप्रं सिषासन् संभक्तुमिच्छन् बाहू प्राभरत् प्रसारितवानित्यर्थः॥ ४॥

४. यह वृषभ महानन्द के साथ जल पी चुका। अपनी सींग से मिट्टी के ढेर को खोदकर वह शत्रु की ओर दौड़ा। उसका अण्डकोष लम्बायमान है। आहार की इच्छा से वह दोनों सींगों को तेज करके शीघ्र आ रहा है।

अथ पंचमी—

न्यक्रन्दयन्नुपयन्तएनममेहयन्वृषभंमध्यआजेः।
तेनसूभर्वंशतवत्सहस्रंगवांमुद्गलःप्रधनेजिगाय॥ ५॥

नि। अक्रन्दयन्। उपऽयन्तः। एनम्। अमेहयन्। वृषभम्।
मध्ये। आजेः। तेन। सुऽभर्वम्। शतऽवत्। सहस्रम्।
गवाम्। मुद्गलः। प्रऽधने। जिगाय॥ ५॥

मुद्गलमाह तेनेति पञ्चम्यर्धर्चस्य मध्यमाध्याहारः यमेनं वृषभं न्यक्रन्दयन् नितरां क्रन्दनमकुर्वन् के उपयन्तः समीपे गच्छन्तो नराः यथा महता क्रन्दनेन शत्रवो भीताः पलायन्ते तथा कुर्वन् किं वृषभं वर्षकं सेक्तारं आजेः संग्रामस्य मध्ये अमेहयन् मूत्रपुरीषोत्सर्गं विश्रामार्थं कारितवन्तः सुभर्वं सर्वैर्विरचितकर्मा शोभनपणकादिभक्षकं [illegible]

यथा स्यात्तेत्यर्थः । यद्वैवं दोसहस्रविशेषणं येन ककुद्रूपेण वृषभेण सुगवं सुष्ठु गमनशीलत्वादि शोभनपृष्ठवीर्यमेवं गवां सहस्रं मुद्गलप्रतनामाहं प्रधने संग्रामे जिगाय अजैषं ॥ ५ ॥

५. मनुष्यों ने इस वृषभ के पास जाकर उसे गरजाया और युद्ध के बीच उससे मूत्र-त्याग कराया। इससे मुद्गल ने उत्तम और आहार-पटु सैकड़ों-सहस्रों गायों को जीता।

ककर्दवे वृषभो युक्त आसीदवावचीत्सारथिरस्य केशी ।
दुधेर्युक्तस्य द्रवतः सहानस ऋच्छन्ति ष्मा निष्पदो मुद्गलानीम् ॥ ६ ॥ २० ॥

ककर्दवे । वृषभः । युक्तः । आसीत् । अवावचीत् । सारथिः ।
अस्य । केशी । दुधेः । युक्तस्य । द्रवतः । सह । अनसा ।
ऋच्छन्ति । स्म । निःऽपदः । मुद्गलानीम् ॥ ६ ॥ २० ॥

ककर्दवे हिंसनाय शत्रूणां वृषभो वर्षिता गोभिर्युक्त आसीत् रथे संबद्धोऽभूत् केशी केशवान् प्रग्रहवान् अस्य राज्ञो रथस्य वा सारथिर्मुद्गलानीत्यर्थः सारथ्यभिप्रायेण केशीति पुंलिङ्गता अवावचीत् वृषभभयजनकं शत्रुभयजनकं वा क्रोशं अकरोत् अथवा केशी केशिनी सारथिरस्य अमुमित्यर्थः अमुं वृषभं शब्दमकारयत् वच परिभाषणे इत्यस्य केवलस्य अन्तर्णीतण्यर्थस्य यङ्लुगन्तस्य लङि रूपं अथवा अस्य सारथिः सहायभूतः केशी प्रकृष्टकेशो वृषभः अवावचीत् भृशमशब्दयत् । एवंभूतस्य दुधेः दुर्धरस्य अनसा सह द्रवतः शीघ्रं शत्रुमध्ये रथेन सह धावतो वृषभस्य भयंकरशब्देन निष्पदो निर्गच्छन्त्यो योद्धारो मुद्गलानीं मुद्गलस्य योषितं सारथिभूतां पत्नीं ऋच्छन्ति स्म अगच्छन्नित्यर्थः पाघ्रेत्यादिना ऋच्छादेशः ॥ ६ ॥

६. शत्रु-हिंसा के लिए वृषभ योजित किया गया। उसकी रस्सी को धारण करनेवाली सारथि मुद्गलानी गरजने लगीं। रथ में जोते गये उस वृष को पकड़कर रखा नहीं गया। वह शकट लेकर दौड़ा। सेनायें मुद्गलानी के पीछे-पीछे चलीं।

॥ इत्यष्टमस्य पंचमे विंशोवर्गः ॥ २० ॥

अथ सप्तमी—

उत प्रधिमुदहन्नस्य विद्वानुपायुनग्वंसगमत्र शिक्षन् ।
इन्द्र उदावत्पतिमघ्न्यानामरंहत पद्याभिः ककुद्मान् ॥ ७ ॥

उत । प्रऽधिम् । उत् । अहन् । अस्य । विद्वान् । उप । अयुनक् ।
वंसगम् । अत्र । शिक्षन् । इन्द्रः । उत् । आवत् । पतिम् ।
अघ्न्यानाम् । अरंहत । पद्याभिः । ककुत्ऽमान् ॥ ७ ॥

उतापि च विद्वान् मुद्गलोऽस्य रथस्य प्रधिं प्रधिरपच्छिन्नकाष्ठपात्रकादः सन् रथावयवा-नामुपलक्षकः रथावयवमुदहन् उदगमयत् रथं समनह्यदित्यर्थः। तदनन्तरमत्र रथे वंसगं वन-नीयगमनं वृषभं शिक्षन् शिक्षयन् रज्जुषु स्थापयन् उपायुनक् रथसमीपे युगे अयोजयत् यु-जेर्लङि सिपो हल्ङ्यादिलोपः एवंसति इन्द्रोदेवः अघ्न्यानां अहन्तव्यानां गवां पतिं उदवत् उत्क-र्षेणावत् रक्षामकरोत् पश्चात्ककुद्मान् वृषभः पद्याभिः सरणिभिः अरंहत वेगेनागमदरंहिष्टेत्य-र्थः ॥ ७ ॥

७. विद्वान् मुद्गल ने रथ-चक्र को चारों ओर बाँध दिया। बड़ी निपुणता से उन्होंने रथ में बैल को जोता। गायों के पति उस वृष को इन्द्र ने बचाया। वह वृष बड़े वेग से मार्ग पर चला।

शुनमष्ट्राव्यचरत्कपर्दी वरत्रायां दार्वानह्यमानः।
नृम्णानि कृण्वन्बहवे जनाय गाः पस्पशानस्तविषीरधत्त ॥ ८ ॥

शुनम् । अष्ट्राऽवी । अचरत् । कपर्दी । वरत्रायाम् ।
दारु । आऽनह्यमानः । नृम्णानि । कृण्वन् । बहवे ।
जनाय । गाः । पस्पशानः । तविषीः । अधत्त ॥ ८ ॥

शुनमिति सुखनाम सुखं यथाभवति तथा अष्ट्रावी अष्ट्राप्रतोदः तद्वान् छान्दसोविनिः कपर्दी कपर्दवान् अचरत् संचरति। किंकुर्वन् वरत्रायां वध्रौ दारुकाष्ठं रथाङ्गभूतमानह्यमानः सर्वतोबध्नन् पुनः किंकुर्वन् बहवे जनाय स्वपुत्रभृत्यादिलक्षणाय नृम्णानि धनानि शत्रुसंब-न्धीनि सुखानिवा कृण्वन् गाः पस्पशानः स्पृशन् स्पशबाधनस्पर्शनयोः छान्दसोलिटि कानच् एवंकुर्वन् तविषीर्बलानि अधत्त धत्ते धनंप्राप्नोतीत्यर्थः ॥ ८ ॥

८. चाबुक और रस्सीवाला या डोल (कपर्द) वाला चर्मरज्जु (वरत्रा) के द्वारा रथाङ्ग को बाँधते हुए भली भाँति विचरण करने लगा। अनेक लोगों के धन का उद्धार करने लगा। अनेकानेक गायों को घर लाया।

अथ नवमी—

इमं तं पश्य वृषभस्य युञ्जं काष्ठाया मध्ये द्रुघणं शयानम्।
येन जिगाय शतवत्सहस्रं गवां मुद्गलः पृतनाज्येषु ॥ ९ ॥

इमम् । तम् । पश्य । वृषभस्य । युञ्जम् । काष्ठायाः । मध्ये ।
द्रुऽघनम् । शयानम् । येन । जिगाय । शतऽवत् ।
सहस्रम् । गवाम् । मुद्गलः । पृतनाऽज्येषु ॥ ९ ॥

कंचनसहायं सेनादिसहायाभावेन जयविषये उपहासं कुर्वाणं पविष्यतीति राजानु-षणेन वृषभेण पार्ष्णिं जिगायेत्युक्तत्वात् पूर्वं वृषभोवर्णितः अत्रद्रुघणोवर्ण्यते हेसखे इमिमं द्रुघणं पश्य कीदृशमिममिति उच्यते युजेरसमासेइति नुम् युञ्जं युज्यते इति युक् सखायुज-भस्य सखिभूतं वृषभोपायंसमर्थं साधयति तावन्तमेव साधयन्तमित्यर्थः। पुनः कीदृशं काष्ठा-यामध्ये। आज्यन्तोपिकाष्ठाउच्यते इतिनिरुक्तं। आज्यं तस्य मध्ये संग्रामइत्यर्थः। तत्र श-यानं हन्तव्यान् सर्वान् हत्वा सुखेन स्वपन्तं निर्व्यापारत्वेन वर्तमानं ईदृशं द्रुममयं घनं पश्येत्य-र्थः येन द्रुघणेन शतवत् शतोपेतं गवां सहस्रं पृतनाज्येषु संग्रामे जिगाय अहमजैषं तमिमं पश्येति समन्वयः जयतेर्लिट् सन्लिटोर्जेरित्यभ्यासादुत्तरस्य कुत्वं मिथोणाद्द ॥ ९ ॥

९. युद्ध-सीमा में जो मुद्गल गिरा हुआ है, उसने उस वृष का साथ दिया था। इसके द्वारा मुद्गल ने सैकड़ों और सहस्रों गायों को जीता था।

आरेअघाकोन्वी३त्थाददर्शयंयुञ्जन्तितम्वास्थापयन्ति ।
नास्मैतृणंनोदकमाभरन्त्युत्तरोधुरोवहतिप्रदेदिशत् ॥ १० ॥

आरे । अघा । कः । नु । इत्था । ददर्श । यम् । युञ्जन्ति । तम् । ऊँ इति । आ । स्थापयन्ति । न । अस्मै । तृणम् । न । उदकम् । आ । भरन्ति । उत्ऽतरः । धुरः । वहति । प्रऽदेदिशत् ॥ १० ॥

यआरे समीपएव अघा अघानि दुःखानि शत्रुरूपाणि करोति तं कोनामनु इदानीं इत्था इत्थं ददर्श पश्यति। किंच यं द्रुघणं युञ्जन्ति रथे तमु तमेवास्थापयन्ति आरोहयन्तीत्यर्थः। अथवा यं रथे युञ्जन्ति तमेव प्रहरणार्थमास्थापयन्ति उभयविधकार्यमेकः करोतीत्यर्थः। कि-चास्मै तृणं नाभरन्ति नाहरन्ति तथोदकं नाहरन्ति हग्रहोर्भइति भत्वं ईदृशोद्रुघण उत्तरोदक्षि-णस्य वृषभस्य सख्युत्तरः सन् धुरोरथभारस्य रथधुरं वहति प्रदेदिशत् प्रकर्षेण जयं स्वामिने प्रदिशन् शत्रूणां वा भयंप्रदिशन् वहति दिशअतिसर्जने इत्यस्माद्यङ्लुगन्ताच्छतरिरूपं ॥ १० ॥

१०. किसी ने अत्यन्त दूर देश में वा समीप में कभी ऐसा देखा है ? जो रथ में योजित किया जाता है, वही उसपर प्रहरण के लिए बैठाया जाता है। इसे घास और जल नहीं दिया गया है; तो भी यह रथ-धुरा का भार ढो रहा है। यह प्रभु को विजयी भी करता है।

अथैकादशी—

परिवृक्तेवपतिविद्यमानट्पीप्यानाकूचक्रेणेवसिञ्चन् ।
एषैष्याचिद्रथ्याजयेमसुमङ्गलंसिनवदस्तुसातम् ॥ ११ ॥

---

१ नि० २. १५।

परिवृक्ताऽइव । पतिऽविद्यम् । आनट् । पीप्याना ।
कूचक्रेणऽइव । सिञ्चन् । एषऽएष्या । चित् । रथ्या ।
जयेम । सुऽमङ्गलम् । सिनऽवत् । अस्तु । सातम् ॥ ११ ॥

अथ मुद्गलानी सारथिः स्तूयते—एषा मुद्गलानी परिवृक्तेव वृषीवर्जने परित्यक्ता पत्या पत्याविमुक्ता योषिदिव सा यथा पतिविधं विधोविधोऽभिलषणीयः पतिरसौ विद्यमपतिविद्यमानये पशुरूपविविधं आनट् आनड्व्याप्तिकर्मा नशेर्लुङि मंत्रेघसेति चुर्लुक् छन्दस्यपि दृश्यतइत्यन- जादीनामप्याडागमः अस्तोर्वेर्वा ढिटि नलोपश्छान्दसः तथा पतिसमीपं सारथित्वेनागत्य पी- प्याना वर्धमाना भवति किमिव कूचक्रेणेव सिंचन् कुः पृथिवी तस्याश्चकोपलयः कूचकः येन वर्षणीयत्वेन निमित्तेन सिंचन् जलंवर्षन् मेघइव सयथा अन्तरिक्षे स्वल्पमात्रोपि वर्षणसमये महान् भवति तद्वदियमपि शत्रुमध्ये शरधारावर्षन्ती वर्धतइत्यर्थः । तथा एषैष्या एषितव्यो- गोसंघः एषः तमिच्छतीत्येषैषी ईदृश्या तयारथ्या सारथिभूतया जयेम शत्रुभिरपहृतं गोसंघं तस्याः सातं दत्तं संभक्तं वा सुमंगलं शोभनमंगलवत् सिनवत् सिनमन्नं तद्वदस्तु गोरूप- मन्नवत् भवतु ॥ ११ ॥

११. पति-वियुक्ता स्त्री के समान मुद्गलानी ने वर्धित प्रदर्शित करके पति के धन का ग्रहण किया—उन्होंने मानो मेघ के समान बाण-वर्षण किया। ऐसे सारथि के द्वारा हम जय प्राप्त करें। हमें अन्न आदि मिले।

अथ द्वादशी—

त्वंविश्व॑स्य॒जग॑तश्चक्षु॑रिन्द्रासि॒चक्षु॑षः ।
वृषा॒यदा॒जिंवृष॑णा॒सिषा॑ससि॒चो॒दय॒न्वध्रि॑णायु॒जा ॥ १२ ॥ २१ ॥

त्वम् । विश्वस्य । जगतः । चक्षुः । इन्द्र । असि । चक्षुषः ।
वृषा । यत् । आजिम् । वृषणा । सिसाससि । चोदयन् ।
वध्रिणा । युजा ॥ १२ ॥ २१ ॥

सूक्तस्य विकल्पेनैन्द्रत्वात् आर्षविन्द्रस्य स्तुतत्वादन्त्येपि इन्द्रः स्तूयते । हेइन्द्र त्वं विश्व- स्य सर्वस्यजगतः चक्षुः चक्षुष्मतः पश्यतोवाजगतः चक्षुरसि प्रत्येकमुत्पत्तिविशिष्टचक्षुःस- त्त्वेपि सर्वस्य साधारणं चक्षुरसि त्वया सृष्टत्वानैहिकामुष्मिकपदार्थान्पश्यन्तीत्यर्थः त्वामेव हि यज्ञादिना लब्ध्वा पुरुषार्थान् साधयन्ति यद्वा विश्वस्य जगतोपरिमितं चक्षुरसि तस्यापि

चक्षुषस्त्वं चक्षुरसि यद्यस्मात् वृषा अभिमतवर्षकस्त्वं आजिं मुद्गलस्य मम संग्रामं वध्रिणा पाशेन युजा युजौ युक्तौ वृषणा वृषणौ वर्षकावश्वौ रथे योजयित्वा चोदयत् शत्रुषु प्रेरयत् सिषाससि आजिं संभक्तुमिच्छसि तस्माच्चक्षुरसि ॥ १२ ॥

१२. इन्द्र, तुम सारे संसार के नेत्र-रूप हो। जिन्हें नेत्र हैं, उनके भी तुम नेत्र हो। तुम जल-वर्षक हो। दो अश्वों को रज्जु के द्वारा एकत्र बाँध करके चलाते और धन देते हो।

॥ इत्यष्टमस्य पञ्चमे एकविंशोवर्गः ॥ २१ ॥

आशुःशिशानइति त्रयोदशर्चं चतुर्थं सूक्तं इन्द्रपुत्रस्य अप्रतिरथनाम्नआर्षं त्रयोदश्यनुष्टुप् शिष्टास्त्रिष्टुभः बृहस्पतेपरिदीयेत्यस्या बृहस्पतिर्देवता अमीषां चित्तमित्यस्या अप्वाख्या देवी देवता शिष्टाऐन्द्र्यः त्रयोदशी विकल्पेन मारुती तथाचानुक्रान्तं—आशुः सप्तोनैन्द्रोप्रतिरथश्चतुर्थीं बार्हस्पत्योपान्त्याप्वादेव्यन्त्यानुष्टुम्मारुतीवेति । साग्निचित्येकतौ चित्याग्निषु प्रणीयमानेषु दक्षिणतोवजता ब्रह्मणैतत्सूक्तं जप्यं । तथाचसूत्रितं—दक्षिणतश्चव्रजं जपत्याशुःशिशानइतिसूक्तं समाप्येति । ब्रह्मप्रतिरथंजपित्वेतिच । युद्धार्थं राज्ञः सन्नहनेअनेन सूक्तेन राजा ईक्षितव्यः । सूत्रितं अथैनमन्वीक्षेताप्रतिरथे शासनसौपर्णैरिति ।

तत्र प्रथमा—

आशुःशिशानोवृषभोनभीमोघनाघनःक्षोभणश्चर्षणीनाम् ।
संक्रन्दनोनिमिषएकवीरःशतंसेनाअजयत्साकमिन्द्रः ॥ १ ॥

आशुः । शिशानः । वृषभः । न । भीमः । घनाघनः ।
क्षोभणः । चर्षणीनाम् । सम्ऽक्रन्दनः । अनिऽमिषः । एकऽवीरः ।
शतम् । सेनाः । अजयत् । साकम् । इन्द्रः ॥ १ ॥

अयमिन्द्रः आशुः शीघ्रकारी व्यापकोवा शिशानः निशितः शत्रूणां भयजनकत्वेनेत्यर्थः कइव वृषभोनभीमः बिभेत्यस्मादिति भीमः तादृशोवृषभइव सयथा तीक्ष्णाभ्यां शृंगाभ्यां भीमोभवति तद्वत् अथवा शिशानः तीक्ष्णमतिः व्यत्ययेनात्मनेपदं वृषभोनभीमः वृषभो यथा शृंगाभ्यां भयजनकस्तद्वच्छत्रूणां भयजनकश्च घनाघनः घातकः शत्रूणां हन्तेः पंचाधचि इन्तेर्घंश्चेतिद्विर्वचनं अभ्यासस्याडागमः घत्वंच घात्वभ्यासयोः । चर्षणीनां चर्षणयोमनुष्याः मनुष्याणां द्वेष्याणां क्षोभणः क्षोभयिता संक्रन्दनः सम्यक्क्रन्दयिता प्राणिनां आकर्षणेन

प्रहारेणवा अनिमिषः चक्षुर्निमेषरहितः सर्वदा स्वपरगमनयुद्धादिकार्येष्ववहितइत्यर्थः एकवीरः वीरयत्यमित्रानितिवीरः एकश्चासौ वीरश्च एकवीरः अथवा एकएव विक्रान्तः असहायेन कार्यक्षमइत्यर्थः । ईदृशोयमिन्द्रः शतं सेनाः साकं सह एकोद्योगेनैव अजयत् जयति ॥ १ ॥

१. इन्द्र सर्वव्यापी शत्रुओं के लिए तीक्ष्ण, वृषभ के समान भयंकर, शत्रुहन्ता तथा मनुष्यों को विचलित करनेवाले हैं। मनुष्य त्रस्त होते हैं। वे शत्रुओं को रुलाते और सदा चारों ओर दृष्टि रखनेवाले हैं। उन्होंने एकत्र विराट् सेना को जीता है।

संक्रन्दनेनानिमिषेणजिष्णुनायुत्कारेणदुश्च्यवनेनधृष्णुना ।
तदिन्द्रेणजयतत्सहध्वंयुधोनरइषुंहस्तेनवृष्णा ॥ २ ॥

सम्ऽक्रन्दनेन । अनिऽमिषेण । जिष्णुना । युत्ऽकारेण ।
दुःऽच्यवनेन । धृष्णुना । तत् । इन्द्रेण । जयत । तत् ।
सहध्वम् । युधः । नरः । इषुऽहस्तेन । वृष्णा ॥ २ ॥

अस्तुनामेन्द्र उक्तविधस्तथाप्यस्माकं किमिति चेत्तत्राह संक्रन्दनेन अनिमिषेण चोक्तलक्षणेन जिष्णुना जयशीलेन युत्कारेण योधनं युत् युद्धकारिणा कर्मण्यण् दुश्च्यवनेन अन्यैरविचाल्येन च्युङ्च्युङ् गतौ छन्दसि गत्यर्थेभ्यइति युच् धृष्णुना धर्षकेण ईदृशेनेन्द्रेण युधं जयत तत् शत्रुबलं सहध्वं अभिभवत । हेयुधोयोद्धारो हेनरोनेतारः विभाषितं विशेषवचने बहुवचनमिति विशेषवचनं बहुवचनमिति पूर्वस्याविद्यमानत्वनिषेधादुत्तरं निहन्यते । पुनः कीदृशेनेन्द्रेणेति इषुहस्तेन वृष्णा वर्षित्राच ॥ २ ॥

२. योद्धा मनुष्यो, इन्द्र को सहायक पाकर विजयी बनो। विपक्ष को पराजित करो। वे शत्रुओं को रुलाते और सदा चारों ओर दृष्टि रखते हैं। वे युद्ध करके विजयी बनते हैं। उन्हें कोई भी स्थान-भ्रष्ट नहीं कर सकता। वे दुर्द्धर्ष हैं। उनके हाथों में बाण है। वे जल बरसाते हैं।

सइषुहस्तैःसनिषङ्गिभिर्वशीसंस्रष्टासयुधइन्द्रोगणेन ।
संसृष्टजित्सोमपाबाहुशर्ध्युग्रधन्वाप्रतिहिताभिरस्ता ॥ ३ ॥

सः । इषुऽहस्तैः । सः । निषङ्गिऽभिः । वशी । सम्ऽस्रष्टा । सः ।
युधः । इन्द्रः । गणेन । संसृष्टऽजित् । सोमऽपाः । बाहुऽशर्धी ।
उग्रऽधन्वा । प्रतिऽहिताभिः । अस्ता ॥ ३ ॥

पूर्वमंत्रे इन्द्रेण जयतेत्युक्तं अत्रेन्द्रस्य जयसाधनसमर्थत्वं प्रतिपादयति सइन्द्रइषुहस्तैः भटैः मरुदादिभिर्वशीनरैस्त्वत्प्राप्तं, तथानिषङ्गिभिर्युक्तः निषङ्गः खड्गः तद्वद्भिर्वशी सचेन्द्रायुधो

युध्यमानः सन् इगुपधलक्षणः कः अथवा युधो युद्धे योगंणेन शत्रुसंघेन सह संस्रष्टा एकीभावशीलः स एवंविधः अतः संसृष्टजित् ये परस्परैकमत्येन युद्धाय संसृष्टा भवन्ति तेषां जेता तथा सोमपाः सोमस्य पाता बाहुशर्धी शर्धो बलं तद्वान् मत्वर्थीय इनिः यद्वा शृधु प्रसहने बाहुभ्यां शर्धयतीत्यभिभवतीति बाहुशर्धी सुप्यजातौ णिनिस्ताच्छील्ये इति णिनिः उग्रधन्वा उद्यतधन्वा प्रतिहिताभिः शत्रुषु प्रेरिताभिरिषुभिः अस्ता मारयिता यश्शत्रून्मुंचति तथ धन्वानभवन्तीत्यर्थः ईदृशेनेन्द्रेण जयतेति संबन्धः ॥ ३ ॥

३. बाण और तुणीरवाले उनके संग में रहते हैं। वे सबको वश में करते हैं। युद्धकाल में वे विशाल शत्रुओं के साथ युद्ध करते हैं। जो उनके सामने आता है, उसे वे जीत लेते हैं। वे सोमपान करते हैं। उनका भुजबल विलक्षण है और धनु भयावह है। उसी धनुष से बाण छोड़कर वे शत्रु को गिराते हैं।

बृहस्पतेपरिदीयारथेनरक्षोहामित्राँअपबाधमानः ।
प्रभञ्जन्त्सेनाःप्रमृणोयुधाजयन्नस्माकमेध्यविता रथानाम् ॥ ४ ॥

बृहस्पते । परि । दीय । रथेन । रक्षःऽहा । अमित्रान् ।
अपऽबाधमानः । प्रऽभञ्जन् । सेनाः । प्रऽमृणः । युधा । जयन् ।
अस्माकम् । एधि । अविता । रथानाम् ॥ ४ ॥

हे बृहस्पते बृहतां पते पालयितर्देव रथेन परीदीय परिगच्छ दीयतिर्गतिकर्मा आगत्य च रक्षोहा रक्षसां हन्ता अमित्रान् शत्रून् अपबाधमानः सर्वतोनाशयन् तथा सेनाः शत्रुसंबन्धिनीः प्रभंजन् प्रकर्षेण नाशयन् प्रमृणः प्रकर्षेण हिंसन् मृण हिंसायां इगुपधलक्षणः कः केन हिंसन् युधा युद्धेन सावेकाचइति विभक्तेरुदात्तत्वं जयन् एवं सर्वत्र जयं प्रतिपद्यमानः ईदृशस्त्वं अस्माकं रथानामविता रक्षिता एधि भव ॥ ४ ॥

४. बृहस्पति, राक्षसों का वध कर, शत्रुओं को दुःख पहुंचाकर और रथ पर चढ़कर पधारो। शत्रु-सेना को ध्वस्त करो, विपक्ष के योद्धाओं को मार डालो, विजयी बनो और हमारे रथों की रक्षा करो।

बलविज्ञायःस्थविरःप्रवीरःसहस्वान्वाजीसहमानउग्रः ।
अभिवीरोअभिसत्वासहोजाजैत्रमिन्द्ररथमातिष्ठगोवित् ॥ ५ ॥

बलऽविज्ञायः । स्थविरः । प्रऽवीरः । सहस्वान् । वाजी ।
सहमानः । उग्रः । अभिऽवीरः । अभिऽसत्वा । सहःऽजाः ।
जैत्रम् । इन्द्र । रथम् । आ । तिष्ठ । गोऽवित् ॥ ५ ॥

सर्वस्य भूतस्य बलं विजानातीति बलविज्ञायः यद्वा बलं ममायमिति सर्वैर्बलत्वेन विज्ञायतइति बलविज्ञायः सर्वस्य बलभूतइत्यर्थः स्थविरोमहान् प्रवीरः प्रकर्षेणवीरः सहस्वान् पराभिभवसामर्थ्यवान् वाजी वेगनवान् अन्नवान्वा सहमानः शत्रूणामभिभविता उग्रः उद्गूर्णबलः अभिवीरः अभिगताबीरावीर्यवन्तोनुचरायस्य सतथोक्तः अभिसत्वा अभिगतसत्वा सहोजाः सहसोबलाज्जातः एवं महानुभावस्त्वं हेइन्द्र जैत्रं जयशीलं रथं आतिष्ठ अस्मत्सहायार्थं आरोढुमर्हसि त्वंच गोवित् उदकस्य लब्धा वेदितावा ॥ ५ ॥

५. इन्द्र, तुम शत्रु-बल-ज्ञाता, अनन्त काल के प्राचीन, उत्कृष्ट वीर, तेजस्वी, वेगशाली, भयंकर और विपक्ष-विजयी हो। वीरों के प्रति दौड़ो और प्राणियों के प्रति दौड़ो। तुम बल के पुत्र-स्वरूप हो। तुम गायों को जीतने के लिए जयशील रथ पर चढ़ो।

गोत्रभिदंगोविदंवज्रबाहुंजयन्तमज्मप्रमृणन्तमोजसा ।
इमंसजाताअनुवीरयध्वमिन्द्रंसखायोअनुसंरभध्वम् ॥ ६ ॥२२॥

गोत्रऽभिदम् । गोऽविदम् । वज्रऽबाहुम् । जयन्तम् । अज्म ।
प्रऽमृणन्तम् । ओजसा । इमम् । सऽजाताः । अनु । वीरयध्वम् ।
इन्द्रम् । सखायः । अनु । सम् । रभध्वम् ॥ ६ ॥ २२ ॥

गोत्रभिदं गाउदकानि त्रायन्तइति गोत्रामेघाः यद्वा गौर्भूमिः तां त्रायन्तइति गोत्राः पर्वताः तेषां भेत्तारं गोविदं उदकस्य लब्धारं वज्रबाहुं वज्रहस्तं प्रहरणार्थमुद्यतइति परनिपातः जयन्तं जयनशीलं अज्म गमनशीलं शत्रुबलं ओजसा बलेन जयन्तं यद्वा अज्म आजिं जयन्तं ओजसा बलेन प्रमृणन्तं शत्रूनभिभवन्तं ईदृशं महानुभावमिममिन्द्रं हे सजाताः सहोत्पन्नाः योद्धारोयूयं अनुवीरयध्वं एनमग्रतः कृत्वा अनुपश्चाद्वीरयध्वं वीरकर्मयुद्धं कुरुध्वं शूरवीरविक्रान्तौ वीरशब्दात्तत्करोति तदाचष्टइति णिच् हेसखायः परस्परं सखिभूताः यूयमिममिन्द्रं संरभमाणमनुसंरभध्वं ॥ ६ ॥

६. इन्द्र मेघों को फाड़नेवाले और गायों को प्राप्त करनेवाले हैं। उनके हाथों में वज्र है। वे अस्थिर शत्रु-सैन्य को अपने तेज से जीतते और मारते हैं। हे अपने वीरो, इन्हें आगे करके वीरता दिखाओ। सखा लोगो, इनके अनुकूल होकर पराक्रम प्रदर्शित करो।

॥ इत्यष्टमस्य पंचमे द्वाविंशोवर्गः ॥ २२ ॥

अभिगोत्राणिसहसागाहमानोदयोवीरःशतमन्युरिन्द्रः
दुश्च्यवनःपृतनाषाळयुध्योऽस्माकंसेनाअवतुप्रयुत्सु ॥ ७ ॥

अभि। गोत्राणि। सहसा। गाहमानः। अदयः। वीरः।
शतऽमन्युः। इन्द्रः। दुःऽच्यवनः। पृतनाषाट्। अयुध्यः।
अस्माकम्। सेनाः। अवतु। प्र। युत्ऽसु॥ ७॥

अयमिन्द्रो गोत्राणि मेघान् सहसा बलेन अभिगाहमानः प्रविशन् अदयः निर्दयः वीरः विक्रान्तः शतमन्युः बहुयज्ञः बहुक्रोधो वा दुश्च्यवनः अन्यैरचाल्यः स्वयं पृतनाषाट् शत्रुसेनानामभिभविता छन्दसि सहः इति ण्विः सहेः साडः सः इति मूर्धन्यादेशः अयुध्यः संप्रहर्तुमशक्यः युधसंप्रहारे छान्दसः क्यप् ईदृश इन्द्रोऽस्माकं सेनाः युत्सु संग्रामेषु प्रावतु प्रकर्षेण रक्षतु॥ ७॥

७. सौ यज्ञ करनेवाले और वीर इन्द्र मेघों की ओर दौड़ते हैं। वे निर्दय बली हैं। वे कभी स्थान-भ्रष्ट नहीं होते। वे शत्रुओं की सेना को हराते हैं। उनके साथ कोई युद्ध नहीं कर सकता। युद्धस्थल में वे हमारी सेनाओं को बचावें।

इन्द्रआसांनेताबृहस्पतिर्दक्षिणायज्ञःपुरएतुसोमः।
देवसेनानामभिभञ्जतीनांजयन्तीनांमरुतोयन्त्वग्रम्॥ ८॥

इन्द्रः। आसाम्। नेता। बृहस्पतिः। दक्षिणा। यज्ञः। पुरः।
एतु। सोमः। देवऽसेनानाम्। अभिऽभञ्जतीनाम्। जयन्तीनाम्।
मरुतः। यन्तु। अग्रम्॥ ८॥

आसां अस्मत्सहायार्थमागतानां देवसेनानां अयमिन्द्रो नेता नायकोऽस्तु तथा बृहस्पतिः पुर एतु एवं दक्षिणा यज्ञः सोमश्च पुर एत्विति प्रत्येकं संबन्धः। तथा देवसेनानां अभिभञ्जतीनां अस्मदमित्रानाभिमुख्येन मर्दयन्तीनां जयन्तीनां छन्दसीति नामदुदात्तत्वं जयन्तीनामित्यत्र बहुलवचनान्न भवति आसामग्रं मरुतोऽपि गच्छन्तु॥ ८॥

८. इन्द्र उन सब सेनाओं के सेनापति हैं। बृहस्पति उन सेनाओं की दाहिनी ओर रहें। यज्ञोपयोगी सोम उनके आगे रहें। मरुद्गण शत्रु-भयकर्त्री और विजयिनी देव-सेनाओं के आगे-आगे जायें।

इन्द्रस्यवृष्णोवरुणस्यराज्ञआदित्यानांमरुतांशर्धउग्रम्।
महामनसांभुवनच्यवानांघोषोदेवानांजयतामुदस्थात्॥ ९॥

इन्द्रस्य। वृष्णः। वरुणस्य। राज्ञः। आदित्यानाम्। मरुताम्।
शर्धः। उग्रम्। महाऽमनसाम्। भुवनऽच्यवानाम्। घोषः।
देवानाम्। जयताम्। उत्। अस्थात्॥ ९॥

वृष्णोवर्षकस्येन्द्रस्य राज्ञोवरुणस्य आदित्यानां मरुतांच उग्रं उद्गूर्णं शर्धोबलं अस्माकं भवत्विति शेषः। किंच महामनसां उदारमनसां भुवनच्यवानां भुवनानां च्यावयितॄणां देवानां घोषः अयं शब्दः उदस्थात् उत्तिष्ठति अनूर्ध्वकर्मत्वादात्मनेपदाभावः॥ ९ ॥

९. वारि-वर्षक इन्द्र, राजा वरुण, आदित्यगण और मरुद्गण की शक्ति अत्यन्त भयानक है। महानुभाव देवता लोग जिस समय भुवन को कँपाकर विजयी होने लगे, उस समय कोलाहल उपस्थित हुआ।

उद्धर्षयमघवन्नायुधान्युत्सत्वनांमामकानांमनांसि।
उद्वृत्रहन्वाजिनांवाजिनान्युद्रथानांजयतांयन्तुघोषाः॥ १० ॥

उत्। हर्षय। मघऽवन्। आयुधानि। उत्। सत्वनाम्।
मामकानाम्। मनांसि। उत्। वृत्रऽहन्। वाजिनाम्। वाजिनानि।
उत्। रथानाम्। जयताम्। यन्तु। घोषाः॥ १० ॥

हेमघवन्निन्द्रास्मदीयान्यायुधानि उद्धर्षय उत्कृष्टं हर्षय महरणेषूत्सुकानि भवन्त्वित्यर्थः। मामकानां मदीयानां सत्वनां प्राणिनां सैनिकानां मनांसि चोद्धर्षय हेवृत्रहन्निन्द्र वाजिनां अश्वानां वाजिनानि वेगाः उद्यन्तु तथा जयतां रथानां घोषाउद्यन्तु॥ १० ॥

१०. इन्द्र, अस्त्र-शस्त्र प्रस्तुत करो। हमारे अनुचरों के मन को उत्साहित करो। वृत्रघ्न इन्द्र, घोड़ों का बल बढ़े। जयशील रथ की निर्घोष ध्वनि उठे।

अस्माकमिन्द्रःसमृतेषुध्वजेष्वस्माकंयाइषवस्ताजयन्तु।
अस्माकंवीराउत्तरेभवन्त्वस्माँउदेवाअवताहवेषु॥ ११॥

अस्माकम्। इन्द्रः। समऽऋतेषु। ध्वजेषु। अस्माकम्। याः
इषवः। ताः। जयन्तु। अस्माकम्। वीराः। उत्ऽतरे। भवन्तु।
अस्मान्। ऊँ इति। देवाः। अवत। हवेषु॥ ११॥

अस्माकं संबन्धिष्वेव समृतेषु परसेनां संप्राप्तेषु ध्वजेषु ध्वजवत्सु सैनिकेषु इन्द्रोरक्षिता भवतु तथा अस्माकं याइषवः सन्ति ताएव जयन्तु शत्रून्। तथास्माकं वीराभटाउत्तरे उपरिभवन्तु हेदेवाअस्माँउ अस्मानेव अवत रक्षत हवेषु संग्रामेषु॥ ११ ॥

११. जिस समय पताका फहराई जाती है, उस समय इन्द्र हमारी ही ओर रहते हैं। हमारे बाण विजयी हों। हमारे वीर श्रेष्ठ हों, देवो, युद्ध में हमारी रक्षा करो।

अथ द्वादशी—

अमीषांचित्तंप्रतिलोभयन्तीगृहाणाङ्गान्यप्वेपरेहि ।
अभिप्रेहिनिर्दहहृत्सुशोकैरन्धेनामित्रास्तमसासचन्ताम् ॥ १२ ॥

अमीषाम् । चित्तम् । प्रतिऽलोभयन्ती । गृहाण । अङ्गानि ।
अप्वे । परा । इहि । अभि । प्र । इहि । निः । दह । हृत्ऽसु ।
शोकैः । अन्धेन । अमित्राः । तमसा । सचन्ताम् ॥ १२ ॥

हे अप्वे पापाभिमानिनि देवते अमीषां योद्धॄणां शत्रूणां चित्तं प्रतिलोभयन्ती विमोहयन्ती सती अंगानि तेषामवयवान् शिरआदिकान् गृहाण स्वीकुरु अभिप्रेहि अभिगच्छ तेषां समीपं गत्वा च हृत्सु हृदयेषु शोकैर्निर्दह नितरां भस्मी कुरु । ते अमित्रा अस्मच्छत्रवोऽन्धेन तमसा सचन्तां संगच्छन्तां ॥ १२ ॥

१२. हे पापाभिमानी देवता (अप्वा), तुम चले जाओ और उन शत्रुओं के मन को प्रलुब्ध करो। उनके शरीरों में पैठो। उनकी ओर जाओ। शोक के द्वारा उनके हृदय में दाह उत्पन्न करो। शत्रु लोग अन्धकारमयी रजनी में एकत्र हों।

प्रेताजयतानरइन्द्रोवःशर्मयच्छतु ।
उग्रावःसन्तुबाहवोनाधृष्यायथासथ ॥ १३ ॥ २३ ॥

प्र । इत । जयत । नरः । इन्द्रः । वः । शर्म । यच्छतु । उग्राः ।
वः । सन्तु । बाहवः । अनाधृष्याः । यथा । असथ ॥ १३ ॥ २३ ॥

हे नरो नेतारः संग्रामस्य निर्वोढारो योद्धारः प्रेत प्रकर्षेण गच्छत गत्वा च जयत तान् प्रतिभटान् । तिङः परत्वात्तिङ्ङतिङ इति निघाताभावः । वो युष्माकमिन्द्रः शर्म सुखं यच्छतु प्रयच्छतु वो बाहव उग्रा उद्गूर्णबलाः सन्तु भवन्तु अनाधृष्या अन्यैरनभिभव्याः यूयमसथ भविष्यथ तथा उग्राः सन्तु वो बाहवः ॥ १३ ॥

१३. मनुष्यो, अग्रसर होओ। जयी होओ। इन्द्र तुम्हें सुखी करें। तुम लोग जैसे दुर्द्धर्ष हो, वैसी ही भयंकर तुम्हारी बाहें हों।

॥ इत्यष्टमस्य पंचमे त्रयोविंशो वर्गः ॥ २३ ॥

असावीत्येकादशर्चं पञ्चमं सूक्तं वैश्वामित्रस्याष्टकस्यार्षं त्रैष्टुभमैन्द्रं । तथा चानुक्रान्तम्— असाव्येकादशाष्टको वैश्वामित्र इति । गतः सूक्तविनियोगः ।

तत्र प्रथमा—

असाविसोमःपुरुहूततुभ्यंहरिभ्यांयज्ञमुपयाहितूयम् ।
तुभ्यंगिरोविप्रवीराइयानादधन्विरइन्द्रपिबासुतस्य ॥ १ ॥

असावि । सोमः । पुरुऽहूत । तुभ्यम् । हरिऽभ्याम् । यज्ञम् ।
उप । याहि । तूयम् । तुभ्यम् । गिरः । विप्रऽवीराः ।
इयानाः । दधन्विरे । इन्द्र । पिब । सुतस्य ॥ १ ॥

हे पुरुहूत बहुभिः स्तोतृभिराहूत तुभ्यं त्वदर्थं सोमः असावि अभिषुतोऽभूत् षुञ् अभिषवे इत्यस्मात् कर्मणि लुङ् अतोहरिभ्यां हरितवर्णाभ्यामश्वाभ्यां यज्ञमस्मदीयं तूयं तूर्णं उपयाहि उपागच्छ तुभ्यं त्वदर्थं गिरोऽस्मदीयाः स्तुतयोविप्रवीराः विप्रामेधाविनोवीराविशेषेण प्रेरयितारः प्रोत्साहयितारोयासां तास्तथोक्ताः इयानागमनशीला दधन्विरे गम्यन्तेऽस्माभिः युष्मत्प्रीणनाय प्राप्यन्त इत्यर्थः । इङ् गतौ ताच्छीलिकश्चानश् छान्दसोविकरणस्य लुक् धविर्गत्यर्थः इदित्वान्नुम् कर्मणिछान्दसोलिट् । यतएवमतः सुतस्याभिषुतस्यांशं सुतं सोमं वा पिब ॥ १ ॥

१. बहुतों के द्वारा आहूत इन्द्र, तुम्हारे लिए सोम अभिषुत हुआ है। दोनों घोड़ों के द्वारा शीघ्र ही यज्ञ में पधारो। प्रधान-प्रधान स्तोताओं ने, तुम्हारे लिए, स्तोत्र पाठ करके यह सोम दिया है। इन्द्र, सोम-पान करो।

प्रथमेपर्यायि ब्राह्मणाच्छंसि शस्त्रे अप्सुधूतस्येत्येषा याज्या । सूत्रितंच—अप्सुधूतस्यहरिवः पिबेहेति याज्येति ।

सैषा सूक्ते द्वितीया—

अप्सुधूतस्यहरिवःपिबेहनृभिःसुतस्यजठरंपृणस्व ।
मिमिक्षुर्यमद्रयइन्द्रतुभ्यंतेभिर्वर्धस्वमदमुक्थवाहः ॥ २ ॥

अप्ऽसु । धूतस्य । हरिऽवः । पिब । इह । नृऽभिः । सुतस्य ।
जठरम् । पृणस्व । मिमिक्षुः । यम् । अद्रयः । इन्द्र । तुभ्यम् ।
तेभिः । वर्धस्व । मदम् । उक्थऽवाहः ॥ २ ॥

हेहरिवः ऋक्सामेवा इन्द्रस्य हरी इति श्रुतेः । स्तोत्रशस्त्राधारभूताभ्यामृक्सामाभ्यां हरिभ्यां तद्वन्निन्द्र अप्सु एकधनादिषूदकेषु धूतस्य कंपितस्य अभिषुतस्येत्यर्थः तथानृभिः कर्मनेतृभिः कर्म

१ ऐ० ब्रा० २. २४.

निर्वाहकैः अध्वर्य्वादिभिः सुतस्याभिषुतस्य उभयथाक्रियामहणं कर्तव्यमिति कर्मणः संप्रदान संज्ञायां चतुर्थ्यर्थे बहुलंछन्दसीति षष्ठी । ईदृशं सोममिहास्मिन्यज्ञे पिब पीत्वा च जठरं स्वकीयं पृणस्व पूरयस्व चादिलोपे विभाषेति प्रथमातिङ्विभक्तिर्न निहन्यते । यं सोमं अद्रयोऽभिषवग्रावाणः हे इन्द्र तुभ्यं त्वदर्थं सिषिक्षुः सेक्तुमभिषोतुमैच्छन् अभिषवमकुर्वन्नित्यर्थः मिहसेचनस्य सनि लिङ्युसि रूपं । हे उक्थवाहः उक्थैः शस्त्रैः उह्यमानस्तेभिस्तैर्मदं वर्धस्व ॥ २ ॥

२. हरि नामक घोड़ों के स्वामी इन्द्र, कर्मकर्त्ता जिसे प्रस्तुत और जल में परिष्कृत करके ले आये हैं, उसी सोम का पान करो। उदर भरो। तुम्हारे लिए पत्थरों ने जो सेचन किया है, उसके द्वारा मत्त होओ और अपनी स्तुतियों को ग्रहण करो।

द्वितीयपर्याये ब्राह्मणाच्छंसिनः प्रोग्रामित्येषा याज्या । सूत्रितं च—अश्वावतिप्रथमः प्रोग्रां पीतिं वृष्ण इयर्मि सत्यामिति याज्येति ।

प्रोग्रांपीतिंवृष्णइयर्मिसत्यांप्रयैसुतस्यहर्यश्वतुभ्यम् ।
इन्द्रधेनाभिरिहमादयस्वधीभिर्विश्वाभिःशच्यागृणानः ॥ ३ ॥

प्र । उग्राम् । पीतिम् । वृष्णे । इयर्मि । सत्याम् । प्रऽयै ।
सुतस्य । हरिऽअश्व । तुभ्यम् । इन्द्र । धेनाभिः ।
इह । मादयस्व । धीभिः । विश्वाभिः । शच्या । गृणानः ॥ ३ ॥

हे हर्यश्व वृष्णे वर्षकाय तुभ्यं उग्रां उद्गूर्णां सत्यां पीतिं सोमपानं प्रेयर्मि प्रेरयामि किमर्थं प्रयै प्रगमनाय । कस्य पीतिं सुतस्याभिषुतस्य । अथो हे इन्द्र शच्या शक्त्या कर्मणा वा गृणानः स्तूयमानस्त्वं विश्वाभिः सर्वाभिः धेनाभिः स्तुतिवाग्भिः विश्वाभिर्धीभिः सर्वैः कर्मभिश्चेहास्मिन् यज्ञे मादयस्व तृप्यस्व मदतृप्तियोगे आत्मनेपदं ॥ ३ ॥

३. हरि नामक घोड़ों के प्रभु इन्द्र, सोम अभिषुत (प्रस्तुत) हुआ है। तुम वर्षक हो। तुम्हारे यज्ञागमन की सम्भावना देखकर तुम्हारे पान के लिए सोम प्रेरित करता हूं। इन्द्र, उत्तमोत्तम स्तोत्र पाकर आमोद करो। विविध कार्य करो। नाना प्रकार से तुम्हारा स्तोत्र हो।

तृतीये पर्याये ब्राह्मणाच्छंसिनः शस्त्रे ऊतीशचीवइत्येषा याज्या । सूत्रितं च—ऊतीशचीवस्तव वीर्येणेति याज्येति ।

ऊतीशचीवस्तववीर्येणवयोदधानाउशिजऋतज्ञाः ।
प्रजावदिन्द्रमनुषोदुरोणेतस्थुर्गृणन्तःसधमाद्यासः ॥ ४ ॥

ऊती । शची॒ऽवः॒ । तव॑ । वी॒र्येण । वयः॑ । दधा॑नाः । उ॒शिजः॑ ।
ऋ॒त॒ऽज्ञाः । प्र॒जाऽव॑त् । इ॒न्द्र॒ । मनु॑षः । दु॒रो॒णे । त॒स्थुः ।
गृ॒णन्तः॑ । स॒ध॒ऽमाद्या॑सः ॥ ४ ॥

हे शचीवः शक्तिमन्निन्द्र तव ऊती ऊत्या रक्षणेन तव वीर्येण वयोऽन्नं प्रजावत्प्रजोपेतं द-धानाः धारयन्तः उशिजस्त्वामेव कामयमानाः ऋतज्ञाः ऋतं यज्ञमर्हा जानन्तोऽङ्गिरसः सप्त-गुविदन्वः षष्ठेऽहनि प्रयोगमूढाः सन्तो नाभानेदिष्ठेन पारंगताः यद्वा अतस्तेषामृतज्ञत्वं ईदृशोऽङ्गि-रसो मनुषो मनुष्यस्य यजमानस्य दुरोणे यज्ञगृहे गृणन्तस्त्वां स्तुवन्तः सधमाद्यासः सहमाद्यन्तः तस्थुः तिष्ठन्ति मादयतेः कृत्यल्युटो बहुलमिति वचनात्कर्तरि अचो यदिति यत् छान्दसः सधादे-शः प्रयोगमपि तिष्ठेमेत्यर्थः ॥ ४ ॥

४. क्षमताशाली इन्द्र, उशिज् वंशवाले यज्ञ करना जानते हैं। जो लोग तुम्हारा आश्रय पाकर, तुम्हारे प्रभाव से अन्न लाभ करके और सन्तान-प्राप्ति करके यजमान के घर में रह गये, वे सब आनन्द-निमग्न होकर तुम्हारी स्तुति करने लगे।

प्रणी॑तिभिष्टे हर्यश्व सु॒ष्टोः सु॑षु॒म्नस्य॑ पुरु॒रुचो॒ जना॑सः ।
मंहि॑ष्ठामू॒तिं वि॒तिरे॒ दधा॑नाः स्तो॒तार॑ इन्द्र॒ तव॑ सू॒नृता॑भिः ॥ ५ ॥ २४ ॥

प्रणी॑तिऽभिः । ते॒ । ह॒रि॒ऽअ॒श्व॒ । सु॒ऽस्तोः । सु॒ऽसु॒म्नस्य॑ ।
पु॒रु॒ऽरुचः॑ । जना॑सः । मंहि॑ष्ठाम् । ऊ॒तिम् । वि॒ऽति॑रे । दधा॑नाः ।
स्तो॒तार॑म् । इ॒न्द्र॒ । तव॑ । सू॒नृता॑भिः ॥ ५ ॥ २४ ॥

हे हर्यश्व हरितवर्णाश्वोपेतेन्द्र सुष्टोः सुष्टु स्तूयमानस्य सुषुम्नस्य सु सुखस्य सुधनस्य वा पुरुरुचो बहुदीप्तेस्ते तव प्रणीतिभिः प्रणयनैर्धनादिप्रदानैर्जनासो जनाः स्तोतारः सूनृताभिः प्रि-यसत्यात्मिकाभिर्वाग्भिः एतत् प्रणीतिभिरित्यनेन समुच्चीयते वितिरे अन्योन्यार्थिभ्यो वितर-णाय मंहिष्ठां अतिशयेन मंहनीयां तव संबन्धिनीं ऊतिं रक्षां दधाना आसत इति शेषः ॥ ५ ॥

५. हरि नामक घोड़ों के स्वामी इन्द्र, तुम्हारा स्तोत्र सुन्दर है। तुम्हारा धन आश्चर्यजनक है और तुम्हारी उज्ज्वलता अत्यन्त है। तुम जो कुछ सुन्दर और यथार्थ स्तोत्र बना चुके हो अथवा धनादि प्रदान कर चुके हो, उनसे तुम्हारी स्तुति करके अनेकों ने आत्म-रक्षा की है और दूसरों की भी रक्षा की है।

उप॒ ब्रह्मा॑णि हरिवो॒ हरि॑भ्यां॒ सोम॑स्य याहि पी॒तये॑ सु॒तस्य॑ ।
इन्द्र॑ त्वा य॒ज्ञः क्षम॑माणमान॒ड्दा॒श्वाँ अ॑स्यध्व॒रस्य॑ प्र॒के॒तः ॥ ६ ॥

उप । ब्रह्माणि । हरिऽवः । हरिऽभ्याम् । सोमस्य । याहि ।
पीतये । सुतस्य । इन्द्र । त्वा । यज्ञः । क्षममाणम् । आनट् ।
दाश्वान् । असि । अध्वरस्य । प्रऽकेतः ॥ ६ ॥

हेहरिवोहरिवन्निन्द्र सुतस्याभिषुतस्य सोमस्य पीतये पानाय ब्रह्माणि परिवृढानि अस्मदीयानि कर्माणि स्तोत्राणि वा उपयाहि उपागच्छ केन साधनेनेति तदुच्यते—हरिभ्यामश्वाभ्यां ताभ्यां युक्तेन रथेनेत्यर्थः यद्वा हरिभ्यां हरिवइति संबन्धनीयं। हेइन्द्र क्षममाणं त्वा त्वां यज्ञः सोमयाग आनट् व्याप्नोति नशतेर्लुङि मंत्रेघसेति च्लेर्लुक् छन्दस्यपि दृश्यते इति आडागमः अश्नोतेर्वा लिटिछान्दसस्तत्प्रत्ययस्यलोपः अश्नोतेश्चेति नुडागमः अध्वरस्य यागस्य प्रकेतः प्रकर्षेण ज्ञातास्त्वं दाश्वानसि दातासि कर्मफलस्य ॥ ६॥

६. हरियों के प्रभु इन्द्र, जो सोम अभिषुत किया गया है, उसे पीने के लिए हरि नाम के दोनों घोड़ों के द्वारा सारे यज्ञों में जाया करते हो। तुम शक्तिशाली हो। तुम्हें ही यज्ञ प्राप्त करते हैं। यज्ञीय विषय को समझ करके तुम दान करते हो।

सहस्रवाजमभिमातिषाहंसुतेरणंमघवानंसुवृक्तिम् ।
उपभूषन्तिगिरोअप्रतीतमिन्द्रंनमस्याजरितुःपनन्त ॥ ७ ॥

सहस्रऽवाजम् । अभिमातिऽसहम् । सुतेऽरणम् । मघऽवानम् ।
सुऽवृक्तिम् । उप । भूषन्ति । गिरः । अप्रतिऽइतम् । इन्द्रम् ।
नमस्याः । जरितुः । पनन्त ॥ ७ ॥

सहस्रवाजं अपरिमितान्नं अपरिमितबलं वा अभिमातिषाहं अभिमातीनां सर्वतोहिंसकानां शत्रूणामभिभवितारं सुतेरणं अभिषुते सोमे रममाणं मघवानं धनवन्तं सुवृक्तिं शोभनस्तुतिकं अप्रतीतं युद्धे अन्यैरप्रतिगतमिन्द्रं गिरः स्तुतिरूपावाचः उपभूषन्ति अलंकुर्वन्ति तदेवाह जरितुः स्तोतुः नमस्याः स्तुतयः पनन्त स्तुवन्ति ॥ ७ ॥

७. जिनके पास असीम अन्न है, जो शत्रुओं को पराजित करते हैं, जो सोम से प्रसन्न होते हैं, जिनका स्तोत्र करने पर आनन्द मिलता है और जिनके विपक्ष में कोई नहीं जा सकता, उन्हें स्तोत्र विभूषित करते हैं और स्तोताओं के प्रणाम उनकी पूजा करते हैं।

सप्तापोदेवीःसुरणाअमृक्तायाभिःसिन्धुमतरइन्द्रपूर्भित् ।
नवतिंस्रोत्यानवचस्रवन्तीर्देवेभ्योगातुंमनुषेचविन्दः ॥ ८ ॥

सप्त । आपः । देवीः । सुऽरणाः । अमृक्ताः । याभिः । सिन्धुम् ।
अतरः । इन्द्र । पूःऽभित् । नवतिम् । स्रोत्याः । नव । च ।
स्रवन्तीः । देवेभ्यः । गातुम् । मनुषे । च । विन्दः ॥ ८ ॥

हेइन्द्र त्वदाज्ञया सप्त सप्तसंख्याका आपः अपूपादेवीः देव्योगंगाद्याः सुरणाः सुष्ठुरम-माणाः शोभमानाः शोभनशब्दा वा । रणिः शब्दार्थः बहिरण्योरुपसंख्यानमिति भावेअप् बहु-व्रीहावाद्युदात्तं प्रत्ययस्वरेणान्तोदात्तत्वं । अमृक्ता अहिंसिताः प्रवहन्तीविशेषः हेइ-न्द्र पूर्भित् पुरां भेत्ता त्वं याभिर्गंगादिभिः सप्तनदीभिः सिंधुं समुद्रमतरः मार्गमदाइत्यर्थः । यद्वा सप्तसर्पणस्वभावाः उक्तलक्षणाः आपोदेव्यः त्वयासृष्टाः प्रवहन्ति याभिः सिन्धुं नदीमा-तरः । किंच त्वं नवतिं नवच नवोत्तरं नवतिसंख्याकाः स्रवन्तीः प्रवहन्तीः स्रोत्याः नदीनामैतत् नदीर्देवेभ्योहविर्थं मनुषे मनुष्याय भोगार्थंच गातुं गन्तव्यं तासां मार्गंच विन्दः अलभ-थाः ॥ ८ ॥

८. इन्द्र, रमणीय और अमित गतिवाली गङ्गा आदि सात नदियों के द्वारा तुमने शत्रु पुरियों को नष्ट करके सिन्धु को (सागर को) बढ़ाया। तुमने देवों और मनुष्यों के उपकार के लिए निन्यानबे नदियों का मार्ग परिष्कृत किया है।

अपोमहीरभिशस्तेरमुञ्चोजागरास्वधिदेवएकः ।
इन्द्रयास्त्वंवृत्रतूर्येचकर्थताभिर्विश्वायुस्तन्वंपुपुष्याः ॥ ९ ॥

अपः । महीः । अभिऽशस्तेः । अमुञ्चः । अजागः । आसु ।
अधि । देवः । एकः । इन्द्र । याः । त्वम् । वृत्रऽतूर्ये । चकर्थ ।
ताभिः । विश्वऽआयुः । तन्वम् । पुपुष्याः ॥ ९ ॥

हेइन्द्र महीर्महतीरपउदकानि अभिशस्तेः अभिशंसकाद्वृत्रादमुंचः आसु मुक्तास्वप्सु देव-स्त्वमेकः एकएवासहायः सन् अध्यजागः अप्रमत्तोभवसि यद्वा अधीति सप्तम्यर्थानुवादी हेइ-न्द्र त्वं याअपोवृत्रतूर्ये वृत्रहत्यायां चकर्थ करोषि ताभिरद्भिर्विश्वाभिः सर्वाभिस्त्वं तनुं स्वकीयं शरीरं पुपुष्याः पोषयेः पुषपुष्टावित्यस्य व्यत्ययेनश्लुः ॥ ९ ॥

९. तुमने जल का आवरण खोल दिया है। तुम जल लाने को अकेले ही प्रस्तुत हुए थे। इन्द्र, वृत्र-वध के उपलक्ष में तुमने जो कार्य किये हैं, उनके द्वारा सारे संसार के शरीर का पोषण किया है।

वीरेण्यःक्रतुरिन्द्रःसुशस्तिरुतापिधेनापुरुहूतमीट्टे ।
आर्दयद्वृत्रमकृणोदुलोकंससाहेशक्रःपृतनाअभिष्टिः ॥ १० ॥

वीरेण्यः । क्रतुः । इन्द्रः । सुऽशस्तिः । उत । अपि । धेना ।
पुरुऽहूतम् । ईट्टे । आर्दयत् । वृत्रम् । अकृणोत् । ऊँ इति ।
लोकम् । ससहे । शक्रः । पृतनाः । अभिऽस्थिः ॥ १० ॥

इन्द्रोवीरेण्योवीरैर्गन्तव्यः अतिशयेन वीरोवा क्रतुः कर्मवान् सुशस्तिः शोभनस्तुतिकः उतापिच अपीत्यनर्थकः अपिच धेना वाङ्नामैतत् मौणधिश्री स्तुतिवाक् पुरुहूतं इन्द्रं ईट्टे स्तौति पूजयतिवा यतउक्तलक्षणः अतः स्तौतीत्यर्थः किंचायं वृत्रं आवरकमेतन्नामकमसुरं आर्दयत् हतवानित्यर्थः । उ अपिच लोकं लोक्यतइतिलोकः प्रकाशः तमकृणोदकरोत् आवरकमसुरं हत्वा प्रकाशं कृतवानित्यर्थः नकेवलं तमेकमेव अपितु शक्रः शक्तइन्द्रः अभिष्टिः शत्रूणामभिगन्ता पृतनाः शत्रुसेनाः ससहे अभ्यभवत् ॥ १० ॥

१०. इन्द्र, महावीर और क्रिया-कुशल हैं। उनका स्तोत्र करने पर आनन्द होता है। उत्तम स्तोत्र अर्चित होकर उनकी पूजा करता है। उन्होंने वृत्र का वध किया, संसार को बनाया, शक्तिशाली हो शत्रु-पराभव किया और शत्रु-सेना के प्रतिकूल गये।

शुनंहुवेममघवानमिन्द्रमस्मिन्भरेनृतमंवाजसातौ ।
शृण्वन्तमुग्रमूतयेसमत्सुघ्नन्तंवृत्राणिसंजितंधनानाम् ॥११॥२५॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे ।
नृऽतमम् । वाजऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु ।
घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ ११ ॥ २५ ॥

इयं पूर्वं व्याख्याता ॥ ११ ॥

११. स्थूलकाय और धनी इन्द्र को बुलाते हैं। युद्ध के समय जब कि अन्न आदि को बाँटा जायगा, तब इन्द्र ही प्रधानतया अध्यक्षता करेंगे। अपने पक्ष की रक्षा के लिए वे युद्ध में उग्र मूर्त्ति धारण करते, शत्रुओं को मारते, वृत्रों का नाश करते और धन जीतते हैं।

॥ इत्यष्टमस्य पंचमे पंचविंशोवर्गः ॥ २५ ॥

कदेत्येकादशर्चं षष्ठं सूक्तं ऐन्द्रं कुत्सपुत्रोनाम्ना दुर्मित्रोगुणतः सुमित्रः यद्वा नाम्ना सुमित्रोगुणतोदुर्मित्रः सऋषिः हरी यस्य युजा वज्रंयमकाश्वि द्वे पिपीलिकमध्ये एकादशपदैकादशके औष्णिही अंत्यात्रिष्टुप् आद्यागायत्रीवा अक्षरव्यूहेन पक्षान्तरे उष्णिक् शिष्टाभिः सर्वाभिः समोष्णिहः । तथाचानुक्रान्तं—कदाकौत्सोदुर्मित्रोनामतः सुमित्रोगुणतः सुमित्रोवा नामादुर्मित्रोगुणतऔष्णिहं हरीयस्यं पिपीलिकमध्ये त्रिष्टुबंत्याद्यागायत्रीवेति । गतोविनियोगः ।

तत्र प्रथमा—

कदावसोस्तोत्रंहर्यतआवश्मशारुधद्वाः । दीर्घंसुतंवाताप्याय ॥१॥

कदा । वसो इति । स्तोत्रम् । हर्यते । आ । अव । श्मशा ।
रुधत् । वारिति वाः । दीर्घम् । सुतम् । वाताप्याय ॥ १ ॥

हे वसो वासयितरिन्द्र स्तोत्रमस्मत्कर्तृकं हर्यते कामयमानाय कामयमानं त्वां क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थी कदा कस्मिन्काले अवरुधत् अवरोत्स्यति अवरुध्य च कदा वाः वारयिष्यति तादृशकालः कदास्माकं संभविष्यतीत्याशास्ते रुधेर्लुङि इरितो वेति च्लेरङादेशः वारिति वृणोतेर्ण्यन्तात्क्विप् छान्दसः शपो लुक् छन्दस्युभयथेति विप आर्धधातुकत्वाण्णेरनिटीति णिलोपे हल्ङ्याभ्य इति तिलोपः । तत्र दृष्टान्तः—अश्नुवे क्षेत्रमिति श्मशा कुल्या लुप्तोपममेतत् यथा कुल्या इतस्ततउदकान्यवरुणद्धि अवरुध्य च वारयति तथेत्यर्थः । किमुद्दिश्यावरोध इति तदाह दीर्घं सवनत्रयरूपेण आयतं सुतमभिषुतं सोमं प्रति किमर्थमिति तदाह वाताप्याय वातेनाप्यते अवस्तान्निपात्यत इति वाताप्यमुदकं तस्य प्रदानायेत्यर्थः ॥१॥

१. इन्द्र, तुम स्तोत्राभिलाष करते हो। स्तोत्र किया गया है। वृष्टि के लिए यथेष्ट सोम प्रस्तुत किया गया है। हमारे खेत की जल-प्रणाली कब जल-पूर्ण होगी?

अथ द्वितीया—

हरीयस्यसुयुजाविव्रतावेरर्वन्तानुशेपा ।
उभारजीनकेशिनापतिर्दन् ॥ २ ॥

हरी इति । यस्य । सुऽयुजा । विऽव्रता । वेः । अर्वन्ता । अनु ।
शेपा । उभा । रजी इति । न । केशिना । पतिः । दन् ॥ २ ॥

यस्येन्द्रस्य हरी हरितवर्णावश्वौ सुयुजा सुयुजौ सुष्ठु नियोज्यौ सुशिक्षितावित्यर्थः विव्रता व्रतमिति कर्मनाम विशिष्टकर्माणौ अर्वन्तौ अरणकुशलौ शेपा शेपौ शेपवन्तौ मत्वर्थो लुप्यते प्रशस्तपुंस्त्वावित्यर्थः उभा उभौ रजीन रजसी द्यावापृथिव्याविव यद्वा महान्तौ रंजकौ सूर्याचन्द्रमसाविव केशिना केशिनौ प्रकाशमानौ केशवन्तौ वा ईदृशावश्वौ हे इन्द्र प्ररूपते तव स्वभूतौ तयोः पतिः स्वामी त्वं दन् धनानि प्रयच्छन् अनुवेः स्तुतशस्त्रादीन्यनुका-

मपस्य दृम्भिति दधातेः शतरि छन्दस्युभयथेत्यार्धधातुकत्वादातोलोप इटि चेत्याकारलोपः अत एव श्नाभावश्च ॥ २ ॥

२. उनके दो घोड़े सुशिक्षित हैं। वे अनेक कार्य करते हैं। वे दोनों शुभ्र और केशवाले हैं। उनके स्वामी इन्द्र, दान करने के लिए आवें।

अप॒ योरिन्द्रः॒ पाप॑ज॒ आ मर्तो॒ न श॑श्रमा॒णो बि॑भी॒वान् ।
शु॒भे यद्यु॑यु॒जे तवि॑षीवान् ॥ ३ ॥

अप॑ । योः । इन्द्रः॑ । पाप॑जे । आ । मर्तः॑ । न । श॒श्र॒मा॒णः ।
बि॒भी॒वान् । शु॒भे । यत् । यु॒यु॒जे । तवि॑षीऽवान् ॥ ३ ॥

यइन्द्रः पापजे आ आङ्त्यनर्थकः पापाज्जायतइति पापजोवृत्रः तस्मिन् मर्तोन मनुष्यइव शश्रमाणः तेन सह युद्धे श्राम्यन् बिभीवान् बिभ्यच्च भवति श्राम्यतेश्छन्दसि लिट् तस्य व्यत्ययेन कानच् सइन्द्रोयदा तविषीवान् मरुद्भिर्बलैर्बलवान् युयुजे युज्यते संपद्यते शुभे शोभार्थं तदानीमपयोः तस्य वृत्रस्यापयोः अपयोजिता भवति ॥ ३ ॥

३. शोभा के लिए जिस समय बली इन्द्र ने घोड़ों को जोता, उस समय सारे पाप-फल दूर हुए, उस समय मनुष्य सुखी हुए।

सचा॒योरिन्द्र॒श्चर्कृ॑ष॒ आँ उ॑पान॒सः स॑प॒र्यन् ।
न॒दयो॒र्विव्र॑तयो॒ः शूर॒ इन्द्रः॑ ॥ ४ ॥

सचा॑ । आ॒योः । इन्द्रः॑ । चर्कृ॑षे । आ । उ॒पा॒न॒सः । स॒प॒र्यन् ।
न॒दयोः॑ । विऽव्र॑तयोः । शूरः॑ । इन्द्रः॑ ॥ ४ ॥

आयोः मनुष्यनामैतत् मनुष्यस्य स्तोतुः चर्कृषे पुनःपुनर्विलेखनाय धनप्रदानायेत्यर्थः सचासह दातव्यैर्धनैः सहितः यद्वा आयोः सचासहायभूतः उपानसः अनउपगतवान् अस्मादयः क्रान्ताद्यर्थे द्वितीययेति प्रादिसमासः अनसन्तान्नपुंसकादिति समासान्तष्टच् आरूढरथइत्यर्थः सपर्यन् धनैः स्तोतारं पूजयन् यद्वा व्यत्ययेन कर्मप्रत्ययः स्तुतिभिर्हविर्भिश्च पूज्यमानः उक्तगुणविशिष्टः सन् आ आगच्छति उपसर्गश्रुतेरुचितक्रियाध्याहारः। कीदृशइन्द्रः नदयोः हेषाशब्दं कुर्वतोः विव्रतयोः विशिष्टकर्मणोरश्वयोः नियन्ताशूरोविक्रान्तः ॥ ४ ॥

४. मनुष्यों से पूजा पाकर इन्द्र ने सारे धनों को एकत्र कर डाला। वे नाना कार्य करनेवाले और शब्दायमान दो घोड़े चलाने लगे।

अथ पञ्चमी—

अधि॒ यस्त॒स्थौ केश॑वन्ता॒ व्यच॑स्वन्ता॒ न पु॒ष्ट्यै ।
व॒नोति॒ शिप्रा॑भ्यां शि॒प्रिणी॑वान् ॥ ५ ॥ २६ ॥

अधि॑ । यः । त॒स्थौ । केश॑ऽवन्ता । व्यच॑स्वन्ता । न । पु॒ष्ट्यै ।
व॒नोति॑ । शिप्रा॑भ्याम् । शि॒प्रिणी॑ऽवान् ॥ ५ ॥ २६ ॥

य इन्द्रः केशवन्ता केशिनौ व्यचस्वन्ता व्यचनवन्तौ व्याप्तिमन्तौ नेत्यनर्थकोनिपातः ईदृशावश्वौ पुष्ट्यै पोषणाय यजमानस्यात्मनो वा अधितस्थौ अधितिष्ठति आरोहति अधिशीङ्स्थासां कर्मेति कर्मणोऽधिकरणसंज्ञा । यद्वा नेति चार्थे तेन गुणौ समुच्चीयेते प्रशस्तकेशौ व्यचस्वन्तौ चेत्यर्थः सः शिप्राभ्यां हनूभ्यां प्रशस्ताभ्यां शिप्रिणीवान् शिप्रवानिन्द्रः एकोपसर्गीयोनुवाद वनोति सोमान् याचते वनुयाचने यद्वा वनुष्यतिर्हन्तिकर्मा शत्रून् हिनस्ति ॥ ५॥

५. केशवाले और विशाल, दोनों घोड़ों पर चढ़कर, अपनी देह की पुष्टि के लिए इन्द्र अपने सुघटित दोनों जबड़ों को चलाते हुए आहार माँगने लगे।

प्रास्तौ॑दृ॒ष्वौजा॑ ऋ॒ष्वेभि॑स्त॒तक्ष॒ शूरः॒ शव॑सा ।
ऋ॒भुर्न क्रतु॑भिर्मात॒रिश्वा॑ ॥ ६ ॥

प्र । अ॒स्तौ॒त् । ऋ॒ष्वऽओ॑जाः । ऋ॒ष्वेभिः॑ । त॒त॒क्ष॒ । शूरः॑ ।
शव॑सा । ऋ॒भुः । न । क्रतु॑ऽभिः । मा॒त॒रिश्वा॑ ॥ ६ ॥

ऋष्वौजाः दर्शनीयबलोऽन्यावबलो वा ऋष्वेभिर्दर्शनीयैर्मरुद्भिः सह प्रास्तौत् प्रस्तौति स्तुत्यादिकं सम्यक्करणेनेति प्रशंसति यद्वा कर्मणि कर्तृप्रत्ययः प्रकर्षेण स्तुतोऽभूत् यदिन्द्रः शूरो विक्रान्तो मातरिश्वा वृष्टेर्निर्माता अन्तरिक्षे श्वसन् वर्तमानः सन् शवसा बलेन क्रतुभिः क्रियमाणैः कर्मभिः यद्वा क्रतुरिति प्रज्ञानाम बलेन प्रज्ञाभिश्च ततक्ष वृत्रवधादिकं चकार तत्र दृष्टान्तः—ऋभुर्न ऋभव इव सुपांसुलुगिति जसः सुः आदेशः ऋभवो यथा कर्मभिः प्रज्ञाभि-मानन्यसाधारणरथचमसादिनिर्माणमकुर्वन् तद्वदित्यर्थः ॥ ६ ॥

६. इन्द्र की शक्ति अतीव सुन्दर है। वे सुशोभन हैं। वे मरुतों के साथ यजमान को साधुवाद करते हैं। वे अन्तरिक्ष में रहते हैं। जैसे ऋभुओं ने कर्म-कौशल से रथ आदि का निर्माण किया है, वैसे ही वीर इन्द्र ने अपने बल से अनेक वीर-कार्य किये हैं।

अथ सप्तमी—

वज्रंयश्चक्रेसुहनायदस्यवेहिरीमशोहिरीमान् ।
अरुतहनुरद्भुतंनरजः ॥ ७ ॥

वज्रम् । यः । चक्रे । सुऽहनाय । दस्यवे । हिरीमशः । हिरीमान् ।
अरुतऽहनुः । अद्भुतम् । न । रजः ॥ ७ ॥

य इन्द्रः सुहनाय सुष्ठु हननीयाय दस्यवे उपक्षपयित्रे शत्रवे तस्य वधाय वज्रं प्रहरणसाधनमायुधं चक्रे कृतवान् स त्वं वृजिना शिशीहीति उत्तरेण संबन्धः । कीदृश इन्द्रः हिरीमशः हरितश्मश्रुः पृषोदरादिः हिरीमान् हरिताश्वो हरितवर्णो वा अरुतहनुः अबाधितहनुः किमिव अद्भुतं न रजः अद्भुतमिति महन्नाम रज इति लोकमन्तरिक्षमुच्यते महदन्तरिक्षमिव यथा अन्यैरबाध्यं भवति तद्वत् ॥ ७ ॥

७ दस्यु का वध करने के लिए उन्होंने वज्र प्रस्तुत किया था। उनके श्मश्रु (दाढ़ी-मूंछ) हरितवर्ण हैं। उनके घोड़े भी हरितवर्ण हैं। उनके जबड़े सुन्दर हैं। वे आकाश के समान विशाल हैं।

अवनोवृजिनाशिशीह्यृचावनेमानृचः ।
नाब्रह्मायज्ञऋधग्जोषतित्वे ॥ ८ ॥

अव । नः । वृजिना । शिशीहि । ऋचा । वनेम । अनृचः ।
न । अब्रह्मा । यज्ञः । ऋधक् । जोषति । त्वे इति ॥ ८ ॥

हे इन्द्र नोऽस्माकं वृजिना वृजिनानि वर्जनीयानि पापानि अवशिशीहि अत्यर्थं तनूकुरु विनाशयेत्यर्थः वयं च ऋचा स्तुत्या साधनेन अनृचः अस्तुतिकान् अयजमानान् वनेम हिंसाम अब्रह्मा ब्रह्म परिवृढं स्तोत्रं स्तुतिविरहितो यज्ञ ऋधक् सस्तुतिकाद्यज्ञात्पृथग्भूतस्त्वे त्वयि न जोषति न सेवते त्वां न प्रीणयतीत्यर्थः । जुषी प्रीतिसेवनयोः व्यत्ययेन शप् परस्मैपदं च ॥ ८ ॥

८ इन्द्र, हमारे सारे पापों को विनष्ट करो। हम ऋचाओं के प्रभाव से ऋक्शून्य व्यक्तियों का वध कर सकें। जिस यज्ञ में स्तुति का संसर्ग नहीं है, वह कभी भी स्तोत्रवाले यज्ञ के समान तुम्हें प्रीतिप्रद नहीं होता।

अथ नवमी—

ऊर्ध्वायत्तेत्रेतिनीभूद्यज्ञस्यधूर्षुसद्मन् ।
सजूर्नावंस्वयशसंसचायोः ॥ ९ ॥

ऊर्ध्वा । यत् । ते । त्रेतिनी । भूत् । यज्ञस्य । धूःऽसु । सद्मन् ।
सऽजूः । नावम् । स्वऽयशसम् । सचा । आयोः ॥ ९ ॥

हेइन्द्र तेतव स्वभूतात्रेतिनी त्रेताग्निरयं यद्वा त्रेतिनी क्रिया सा यपदा ऊर्ध्वा उन्नता प्र-भूता भूत्भूत् धयोगादनिघातः कुत्र स्थानइति यज्ञस्य यागस्य सद्मन् सदने केष्विति धूर्षु कर्मणां वोढृष्वृत्विक्षु तदानीं सजूः यजमानेन मरुद्भिर्वा सह प्रीयमाणः सन् आयोर्मनुष्यस्य यजमानस्य सचा सह तेन साकं स्वयशसं स्वायत्तयशस्कं यशः साधनं नावं तरणसाधनं त-रणिं आरोहसीतिशेषः एकमेव रथं यज्ञं यजमानश्चारोहति स्वतरणार्थं तमेव त्वमस्य साधक-मारोहसीत्यर्थः । यद्वा नावं रथं स्वयशसं आयोर्यजमानस्य सचा सहायभूतः सजूस्तेन सह प्रीयमाणआरोहेत्यर्थः ॥ ९ ॥

९. जिस समय यज्ञभार-वाहक ऋत्विकों ने यज्ञ-गृह में कार्यारम्भ किया, उस समय तुम यजमान के साथ एक नौका पर चढ़कर यजमान को तारो।

श्रियेतेपृश्निरुपसेचनीभूच्छ्रियेदर्विररेपाः ।
ययास्वेपात्रेसिञ्चसउत् ॥ १० ॥

श्रिये । ते । पृश्निः । उपऽसेचनी । भूत् । श्रिये । दर्विः ।
अरेपाः । यया । स्वे । पात्रे । सिञ्चसे । उत् ॥ १० ॥

हे इन्द्र तेतव संबन्धिनः सोमस्य श्रिये श्रयणाय पृश्निःगौःपृश्निवर्णाउपसेचनी पयसां दोग्ध्री भूत् भवतु तथा दर्विररमिररेपाः अपापासती तेश्रिये हविषः श्रयणायभूत्भवतु यया दर्व्या त्वंस्वकीये पात्रे पानसाधने मुखे उत्सिञ्चसे उपर्याकृष्य पिबसि साश्रियेभूदिति संबन्धः॥१०॥

१०. बूँदवाली गाय तुम्हारे मङ्गल के लिए हो। जिस पात्र के द्वारा तुम अपने पात्र में मधु ले लेते हो, वह दर्वी (पात्र-विशेष) निर्मल और कल्याणकर हो।

शतंवायदसुर्यप्रतित्वासुमित्रइत्थास्तौद्दुर्मित्रइत्थास्तौत् ।
आवोयद्दस्युहत्येकुत्सपुत्रंप्रावोयद्दस्युहत्येकुत्सवत्सम् ॥११॥२७॥

शतम् । वा । यत् । असुर्य । प्रति । त्वा । सुऽमित्रः । इत्था ।
अस्तौत् । दुःऽमित्रः । इत्था । अस्तौत् । आवः । यत् । दस्युऽहत्ये ।
कुत्सऽपुत्रम् । प्र । आवः । यत् । दस्युऽहत्ये । कुत्सऽवत्सम् ॥ ११॥२७॥

हे असुर्य बलवन्निन्द्र असुरत्वेनासुरसंबन्धित्वात् त्वा त्वां प्रति शतं वा शतसंख्याकं धनं शब्देनापरिमितं धनं वा यद्यदा कामितवानित्यर्थः यद्यदा च दस्युहत्ये दस्युहनने शत्रुवधे कुत्सपुत्रं दुर्मित्रं आवः रक्षितवानसि तथा कुत्सवत्सं कुत्सपुत्रं प्रावः प्रकर्षेण रक्षितवानसि अवरक्षणादौ लङि आडजादीनामित्याडागमः पादादित्वादनिघातः पुनरुक्तिरादरार्था । तदानीं सुमित्रोनामा इत्थमस्तौत् तथा दुर्मित्रोगुणत इत्थमस्तौत् तद्विपरीतं वा मृदन्यं सुमित्रोनामा दुर्मित्रो गुणतइति कात्यायनेन तथोक्तेः । स इत्था इत्थमनेन स्तवप्रकारेणास्तौत् अस्तावीत् इत्थास्तौदिति द्विरुक्तिः स्तुतिसमाप्त्यर्था ॥ ११ ॥

११. बली इन्द्र, तुम्हारे लिए इस प्रकार से सुमित्र ने एक सौ स्तोत्र पढ़े—दुर्मित्र ने भी स्तुति की; क्योंकि तुमने दस्यु-हत्या के समय कुत्स-पुत्र की रक्षा की है।

॥ इत्यष्टमस्य चतुर्थे सप्तविंशोवर्गः ॥ २७ ॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये अष्टमाष्टके पञ्चमोध्यायः ॥ ५ ॥

## ॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा योवेदेभ्योऽखिलं जगत् । निर्ममे तमहंवन्दे विद्यातीर्थमहेश्वरं ॥ १ ॥
अष्टमे पंचमाध्यायं व्याख्याय मतिकोविदः । सायणार्यस्तथोध्यायं षष्ठंच व्याचिकीर्षति ॥ २ ॥

तत्र उभाउनूनमित्येकादशर्चं आद्यं अनुवाकशेषस्य सप्तमं सूक्तं त्रैष्टुभं आश्विदेवत्यं कश्यपपुत्रोभूतांशोनामऋषिः । तथाचानुक्रम्यते—उभौ भूतांशः काश्यपआश्विनमिति । अश्वो-र्यामेच्छावाकातिरिक्तोक्थ्ये एतत्सूक्तं । सूत्रितंच—उभाउनूनं दैव्याहोतारा प्रथमापुरोहितेति परिधानीयेति ।

तत्र प्रथमा—

ॐम् उभाउनूनंतदिदर्थयेथेवितन्वाथेधियोवस्त्रापसेव ।
सध्रीचीनायातवेप्रेमजीगःसुदिनेवपृक्षआतंसयेथे ॥ १ ॥

उभौ । ऊँ इति । नूनम् । तत् । इत् । अर्थयेथे इति । वि ।
तन्वाथे इति । धियः । वस्त्रा । अपसाऽइव । सध्रीचीना । यातवे ।
प्र । ईम् । अजीगरिति । सुदिनाऽइव । पृक्षः । आ । तंसयेथे इति ॥ १ ॥

हे अश्विनौ उभौ युवां नूनमिदानीं तदित् अस्माभिर्दीयमानं हविः क्रियमाणं स्तोत्रमे-व अर्थयेथे प्रार्थयथः । अर्थयाच्ञायां चौरादिकः अनुदात्तेत् । उःपूरणः संप्रार्थ्यैव धियः कर्माणि स्तुतीर्वा वितन्वाथे विस्तारयथः । तनुविस्तारे तनादिकः । तत्र दृष्टान्तः—अपसेव अ-पसा अपस्विनौ कुविंदौ यथा वस्त्रा वस्त्राणि विस्तारयतः अपःशब्दान्मत्वर्थीयोविनिः तस्यब-हुलंछन्दसीतिलुक् प्रातिपदिकस्वरेणान्तोदात्तः । वमयपस्तुपआकारः ईमयं यजमानः सध्रीची-ना सध्रीचीनौ सहाञ्चनौ युवां सहपूर्वादंचतेः क्विनि सहस्य सध्रिरितिसध्र्यादेशः । विभाषां-चेरदिक्स्त्रियामितिखः सुपआकारादेशः यातवे यातुं तुमर्थेतवेन्प्रत्ययः अभिमतप्राप्त्यर्थं प्राजीगः प्रकर्षेण स्तौति । यद्वा युवां प्रति स्तुतीरुद्गिरति गृणातेः गृनिगरणेवा एतस्माल्लुङि बहुलंछ-न्दसीति विकरणस्यश्लुः बहुलंछन्दसीत्यभ्यासस्येत्वं दीर्घश्छान्दसः गुणेकृते हल्ङ्यादिना

विलोपः। किंच सुदिनेव सुदिनेषु अन्नानि यथा अलंकुर्वन्ति यद्वा सुदिना सुदिनौ अहोरात्रयोः प्रवर्तकत्वेन तद्वन्तौ सूर्याचन्द्रमसौ स्वरश्मिभिर्यथा अन्नान्यलंकुरुतः तद्वत् युवां पृक्षः अन्नानीवत् ओकृभिः संपृच्यन्तेइति पृक्षोऽन्नानि आवंसयेथे समन्तादलंकुरुथः। वसिर्भूषणालंकारे चौरादिकः ॥ १ ॥

१. अश्विद्वय, तुम दोनों हमारी आहुति के अभिलाषी हो रहे हो। जैसे-जैसे तन्तुवाय वस्त्र का विस्तार करता है, वैसे ही तुम लोग हमारे स्तोत्र का विस्तार कर देते हो। यह यजमान यह कहकर भली भाँति तुम लोगों की स्तुति करता है कि, तुम लोग एक साथ आते हो। चन्द्र-सूर्य के समान तुम लोग खाद्य द्रव्य को आलोकित करके बैठे हो।

उष्टारेव फर्वरेषु श्रयेथे प्रायोगेव श्वात्र्या शासुरेथः।
दूतेव हि ष्ठो यशसा जनेषु माप स्थातं महिषेवावपानात् ॥ २ ॥

उष्टाराऽइव। फर्वरेषु। श्रयेथे इति। प्रायोगाऽइव। श्वात्र्या।
शासुः। आ। इथः। दूताऽइव। हि। स्थः। यशसा। जनेषु।
मा। अप। स्थातम्। महिषाऽइव। अवऽपानात् ॥ २ ॥

उष्टारेव उष्टारौ कामयेते गन्तव्यं देशमिति उष्टारौ मार्गगस्य वोढारावनड्वाहाविव वशकान्त्यावित्यस्मात् तृचि छान्दसं संप्रसारणं इडभावश्च तौ यथा संपूर्णघासेषु संचरतः तद्वत् फर्वरेषु स्तुतिभिर्हविर्भिश्च पूरयितृषु जनेषु श्रयेथे तत्स्वीकरणार्थं आश्रयथः। फर्वतिः पूरणार्थः। अस्मादौणादिकोऽरन्प्रत्ययः। प्रायोगेव प्रायोगौ प्रयोक्तव्यावनड्वाहाविव प्रपूर्वाद्युजेः कर्मणि घञि उपसर्गस्य दीर्घः थाथादिस्वरेणान्तोदात्तः। तौ यथा श्वात्र्या श्वात्र्यौ शु क्षिप्रं अतनं श्वात्रं तत्र साधू भवतः तद्वत् यद्वा युद्धार्थं प्रयोक्तव्यावश्वाविव श्वात्र्यौ श्वात्रमिति धननाम तत्र भवौ धनस्य साधकावित्यर्थः। तौ युवां शासुः शंसितुः स्तोतुः स्तुतिमभि एथः आगच्छथः इण् गतौ आदादिकः दूतेव दूताविव यथा राज्ञः प्रियतमौ दूतौ जनपदेषु यशस्विनौ भवतः तद्वत् जनेषु स्तोतृषु यशसा यशस्विनौ स्थो हि भवथः खलु। अस्तेर्लटि रूपं हियोगादनिघातः महिषेव महिषाविव यथा आरण्यौ महिषौ अवपानात् पीयतेऽस्मिन्निति पानं ह्रदादि अधिकरणे ल्युट् पानमेवावपानं सन्निकृष्टात् पानात् नापगच्छतः तद्वत् युवां अस्मदीयाद्धविषः सोमात् मापस्थातं मापक्रम्य तिष्ठतं तिष्ठतेर्लुङि गातिस्थेति सिचो लुक् नमाङ्योगे इत्यडागमाभावः ॥ २ ॥

२. जैसे दो बैल गोचर-भूमि में विचरण करते हैं, वैसे ही तुम लोग यज्ञ-दान-समर्थ व्यक्ति के पास जाते हो। रथ में जोते दो वृषों या अश्वों के समान धन-दान के लिए तुम लोग स्तोता के पास आया करते हो। दूत के समान तुम लोग लोगों के पास यशस्वी बनो। जैसे दो महिष जल-पान-स्थान से नहीं हटते, वैसे ही तुम लोग भी सोमपान से नहीं हटना।

अथ तृतीया–

साकंयुजाशकुनस्येवपक्षापश्वेवचित्रायजुरागमिष्टम् ।
अग्निरिवदेवयोर्दीदिवांसापरिज्मानेवयजथःपुरुत्रा ॥ ३ ॥

साकम्ऽयुजा । शकुनस्यऽइव । पक्षा । पश्वाऽइव । चित्रा । यजुः ।
आ । गमिष्टम् । अग्निःऽइव । देवऽयोः । दीदिऽवांसा ।
परिज्मानाऽइव । यजथः । पुरुऽत्रा ॥ ३ ॥

शकुनस्येव पक्षिण इव यथा पक्षिणः पक्षा पक्षौ संहत्य वर्तमानौ तद्वत् साकंयुजा साकं युजौ सहावियुज्य वर्तमानौ भवथः । युजेः सत्सूद्विषेत्यादिना क्विप् पश्वेव पशू इव । सुपामाकारः। तौ यथा चायनीयौ तद्वत् चित्रा चित्रौ चायनीयौ युवां यजुः यजतौ अस्मदीयौ आगमिष्टं आगच्छतं । यजेरौणादिकोऽत्रावेडसिन् प्रत्ययः । गमिष्टं गमेर्लोटि सिब्बहुलं लेटीति सिप् सिप आर्धधातुकत्वाद्गमेरिट् परस्मैपदेष्विति इडागमः । देवयोः देवानिच्छतो यजमानस्य यज्ञे अग्निरिव अग्निर्यथा हविर्भिः स्तुतिभिश्च दीप्यते तद्वत् दीदिवांसा दीदिवांसौ स्तुतिभिः दीप्तौ भवथः दीव्यतेः क्वसौ वस्वेकाजाद्घसामिति नियमादिडभावः वलिलोपे तुजादित्वादभ्यासस्य दीर्घः । परिज्मानेव परिज्मानाविव परितः अजतो गच्छतः कर्मकरणार्थमिति परिज्मानावध्वर्यूइव स्थितौ युवां पुरुत्रा बहुषु देशेषु यजथः देवान्पूजयथः । अश्विनावध्वर्यू इत्याम्नानात् । यद्वा परिज्मानेव परितो गन्तारौ पुरो वा पश्चाद्वा तौ यथा बहुषु देशेषु यजथः संगच्छमानौ भवथः यजदेवपूजासंगतिकरणदानेषु पुरुत्रा देवमनुष्येष्वित्यादिना त्राप्रत्ययः ॥ ३ ॥

३. जैसे पक्षी के दो पंख आपस में मिले रहते हैं, वैसे ही तुम लोग भी परस्पर मिले हुए हो। दो अद्भुत पशुओं के समान इस यज्ञ में आये हो। यज्ञ-कर्त्ता अग्नि के समान तुम लोग दीप्तिवाले हो। सर्वत्रविहारी दो पुरोहितों के समान तुम लोग नाना स्थानों में देव-पूजा किया करते हो।

अथ चतुर्थी–

आपीवोअस्मेपितरेवपुत्रोग्रेवरुचानृपतीवतुर्यै ।
इर्येवपुष्ट्यैकिरणेवभुज्यैश्रुष्टीवानेवहवमागमिष्टम् ॥ ४ ॥

---

ऐ० ब्रा० १, १७।

आपी इति। वः। अस्मे इति। पितराऽइव। पुत्रा। उग्राऽइव।
रुचा। नृपतीइवेति नृपतीऽइव। तुर्यै। इर्याऽइव। पुष्ट्यै।
किरणाऽइव। भुज्यै। श्रुष्टीवानाऽइव। हवम्। आ। गमिष्टम् ॥४॥

अस्मे अस्माकं वोयुवां पुत्रायांबहुवचनं आपी प्राप्तौ बन्धुभूतौ भवथः। पितरेव पितराविव यथापितरौ प्रति पुत्रा पुत्रौ बंधुभूतौ भवतः तद्वत्। यद्वा पुत्रा षष्ठ्या आकारः। पुत्राणां पितरौ बन्धू यथा उग्रेव उग्राविव यथा उग्रौ स्वतेजसा उद्गूर्णौ अग्न्यादित्यौ यथारुचा रोचमानौ भवतः तद्वत् रुचा दीप्त्या युक्तौ रोचतेर्भावेक्विप् सावेकाचइति विभक्तेरुदात्तत्वं। यद्वा रुचा आरोचमानौ भवथः रोचतेरिगुपधलक्षणः कः सुप आकारः नृपतीव यथा नृणां पालयितारौ राजानौ संभ्रमयुक्तायै सेनायै रक्षकत्वेन भवतस्तद्वत् तुर्यै कर्मार्थं त्वरमाणायै संभ्रमवत्यै जनतायै युवां अभीष्टदातृत्वेन भवथः। तुरत्वरणे इगुपधात्किदितीन्प्रत्ययः। कृदिकारादक्तिनइतिङीप् उदात्तयणोहल्पूर्वादिति विभक्तेरुदात्तत्वं। इर्येव इर्याविव इराअन्नं तद्भवौ भवार्थेयत् अन्नवन्तावाढ्यौ स्वजनपरिपोषणाय भवतः तद्वत् युवां पुष्ट्यै धनादिदानेनास्माकं परिपोषणाय भवथः। किरणेव किरणाविव यथा आग्नेयादित्यकिरणौ सर्वेषां प्रकाशनादिद्वारेण भोगाय भवतः। तद्वत् भुज्यै स्तोतॄणां परिभोगाय भवथः। श्रुष्टीवानेव श्रुष्टिवन्ताविव श्रुष्टीति क्षिप्रनाम मत्वर्थीयोवनिप् तद्वन्तावश्वौ यथा लक्ष्यं देशं प्रति शीघ्रंगच्छतस्तद्वत् यद्वा श्रुष्टीवानेव श्रुष्टीति सुखनाम तद्वन्तौ पुरुषौ यथा क्रीडार्थमागच्छतः तद्वद्युवां हवमस्मदीयमाह्वानं प्रत्यागमिष्टं आगच्छतं। हवं भावेऽनुपसर्गस्येति ह्वयतेरप् संप्रसारणंच ॥ ४ ॥

४. जैसे माता-पिता पुत्र के प्रति आसक्त रहते हैं, वैसे ही तुम लोग हमारे प्रति होओ। तुम लोग अग्नि और सूर्य के समान दीप्तिशील होओ, राजा के समान क्षिप्रकारी होओ, धनी व्यक्ति के समान उपकारी होओ और सूर्य-किरणों के समान आलोक देते हुए लोगों के सुख-भोग के अनुकूल होओ। सुखी मनुष्य के समान इस यज्ञ में पधारो।

अथ पंचमी—

वंसंगेवपूषर्याशिम्बातामित्रेवऋताशतराशातपन्ता।
वाजेवोच्चावयसाघर्म्येष्ठामेषेवेषासपर्या३पुरीषा ॥ ५ ॥ ३ ॥

वंसगाऽइव। पूषर्या। शिम्बाता। मित्राऽइव। ऋता। शतरा।
शातपन्ता। वाजाऽइव। उच्चा। वयसा। घर्म्येऽस्था।
मेषाऽइव। इषा। सपर्या। पुरीषा ॥ ५ ॥ १ ॥

वंसगेव वंसगाविव वननीयगमनौ वृषणाविव तौ यथा पूषर्यां पूषर्यौ पूषणेश्वरौ पुशावयशाविरपर्थः । वद्वधुवां स्फोवांगावयवौ पुषपुष्टौ अस्मादौणादिकोभावेअरन्प्रत्ययः । छन्दस्यावे छन्दसीविषय् तित्स्वरितः तथा शिंवावा शिंवावौ सुखनामैतत् शिंवेन दुःखानां तनूकरणेन हेतुनाविवं व्याप्तमिति शिञ्निशाने अस्माच्छिंवमिति वाहुलकाद्वमप्रत्ययोमुक्च निपात्यते अततेः कर्मणिचन् सुपआडादेशः सुखकरौभवथः । मित्रेव मित्राविव मित्रशब्देन वरुणो प्युपलक्ष्यते सहावस्थितमित्रावरुणाविव ऋवा ऋतौ सत्यभूतौ वद्वयथार्थदर्शिनौ भवथः यथा शवरा शतं शतसंख्याकानि बहूनि रायोधनानिययोः सन्ति तौ तथोक्तौ सुपोडादेशः । यद्वा शवमनेकमिश्चियमसाद्वादि रातिददातीति शतरासुखं तेन यद्वन्तौ शावपन्वा शातपन्वौ तीक्ष्ण स्तुतिको शातं तीक्ष्णं पन्नं पनतेर्बाहुलकात्तन् यद्वा शातपन्वा शातेन दुःखानां तनूकरणेन पन्यते स्तूयतइति शातपन्तंसुखं शोतनूकरणे निष्ठा । पनतेस्वन् तेन युवां सुखवन्तौ भवथः । यद्यपि शिंवाता शवरा शातपन्वेति त्रीण्यपि सुखनामानि तथापि कालत्रयेपि अश्विनोः सुखकरत्वस्य विवक्षितत्वेन विषयभेदात्पौनरुक्त्यम् । वाजेव वाजाविव यथा अश्वौ घासादिना उभौ संपूर्णावयवौ तद्वत् वयसा हवीरूपेणान्नेन हेतुना उच्चैर्वर्तमानौ पुष्टावित्यर्थः । उच्चा उच्चैःशब्दात् सुपोडादेशः डित्वाट्टिलोपः धर्म्येष्ठा धर्मस्थौ धर्मदीप्तमन्तरिक्षं तत्संबन्धिनिर्देशो सूर्याचन्द्रमसोरूपेणावस्थितौ भवथः । सूर्यचन्द्रमसाविति यास्कः । यद्वा धर्मे प्रवर्ग्ये भवं धर्म्यं हविः तत्र देवत्वेनावस्थितौ भवथः विडतेरन्येभ्योपिदृश्यन्तइतिविच् तत्पुरुषेकृतिबहुलमिति पूर्वपदस्यसप्तम्याअलुक् मेषेव मेषाविव तौ यथा अन्नेन परिचरणीयौ तद्वत् युवां इषा हवीरूपेण अन्नेन सपर्या सपर्यौ परिचरणीयौ भवथः । सपरशब्दः कंड्वादिः सपर्यतिः परिचरणकर्मा । पुरीषा पुरीषौ धनादिदानेन स्तोतृणां पोषयितारौ यद्वा हविर्भिः पोषणीयौ भवथः । पुरीषं पुष्णातेः पोषयतेर्वेतियास्कः ॥ ५ ॥

५. सुन्दर गतिवाले दो वृषों के समान तुम लोग हृष्ट-पुष्ट और सुदृश्य हो तथा मित्र और वरुण के समान तुम लोग यथार्थदर्शी, वदान्य और दुःख-ह्रास-पूर्वक, स्तुति प्राप्त करते हो। दो घोड़ों के समान तुम लोग खाकर मोटे-तगड़े हो गये हो। तुम लोग प्रकाशमय आकाश में रहते हो। भेड़ों के समान तुम लोग यथेष्ट भोजनादि करके सुघटित अङ्ग-प्रत्यङ्गवाले हुए हो।

॥ इत्यष्टमस्य षष्ठे प्रथमोवर्गः ॥ १ ॥

सृण्येवजर्भरीतुर्फरीतूनैतोशेवतुर्फरीपर्फरीका ।
उदन्यजेवजेमनामदेरूतामेजराय्वजरंमरायु ॥ ६ ॥

---

१ नि० १२, १ । २ नि० २, २२ ।

सृण्याऽइव । जर्भरी इति । तुर्फरीतू इति । नैतोशाऽइव ।
तुर्फरी इति । पर्फरीका । उदन्यजाऽइव । जेमना । मदेरू इति ।
ता । मे । जराधु । अजरम् । मरायु ॥ ६ ॥

सृण्येव सृण्याविव सृणिरंकुशः तत्र साधुरिति यत् अंकुशार्हौ मत्तगजाविव जर्भरी गात्रविनामं कुर्वन्तौ जृभी गात्रविनामे अस्मादौणादिकोरिप्रत्ययः यद्वा सृण्येव सृणिर्द्विविधा मत्तगजस्य एकनावस्थापयित्री एका अपरा बाधयित्री सर्वैः किच्चेति औणादिकोनिप्रत्ययः कित्वादगुणः इकारादकिनइतिङीप् सुपआकारः उदात्तस्वरितयोर्यणइति स्वरितः । तादृशौ सृण्याविव जर्भरी भर्तारौ एकनैवावस्थापकौ तथा तुर्फरी तुर्फरीतारौ शत्रूणां हन्तारौ जर्भरी भरतेर्यङ्लु-गन्तादौणादिकईप्रत्ययः अभ्यासस्यजकारश्छान्दसः तृफतृंफहिंसायां अस्मात् तृजन्तस्यतुर्फ-रीतारावित्यस्य पृषोदरादित्वाद्वर्णविकारः । यद्वा अस्माद्बाहुलकादौणादिकः अरीतुप्रत्ययः । एतच्च अत्रनिरुक्ते–द्विविधासृणिर्भवति भर्ताच हन्ताच तथाश्विनौ चापिभर्तारौ जर्भरी भ-र्तारावित्यस्य तुर्फरीतू हन्तारावित्यादि । नैतोशेव नितोशतिर्वधकर्मा नितोशयतीतिनितोशः तस्यापत्यं नैतोशः ताविव तुर्फरी शत्रूणां हन्तारौ तृफतिर्हिंसार्थः । अस्मादौणादिकोरिप्रत्ययः उर्कश्च पर्फरीका पर्फरीकौ शत्रूणां विदारयितारौ त्रिफलाविशरणे अस्मात्पर्फरीकादयश्चेति ई-कप्रत्ययान्तोनिपात्यते । यद्वा स्तोतृजनानां धनादिदानेन पूरयितारौ । पृपालनपूरणयोः अ-स्मादीकनि पूर्ववत्सर्वंनिपात्यते पर्विः पूरणार्थोवा उदन्यजेव उदन्यजेइव उदकेभवमुदन्यं प-द्भ्योमासित्यादिना अयास्यप्रभृतिष्वपि उदन्यादेशः तत्रजाताविव निर्मलौ कान्तियुक्तावित्यर्थः । जेमना जेमनौ जयशीलौ जयतेरन्येभ्योपिदृश्यन्तइति मनिन् दीर्घाभावश्छान्दसः । मदेरू मदविशेषेणयत्तौ स्तुत्यौवा ता तौ पूर्वोक्तगुणावश्विनौ युवां मे मदीयं जरायु जरायुक्तं अतए-व मरायु मरणशीलं शरीरं अजरं जरारहितं मरणधर्मरहितं कुरुतं । नञोजरमरमित्रमृताइति नञुत्तरस्यजरशब्दस्य आद्युदात्तत्वं ॥ ६ ॥

६. हाथी को रोकनेवाले और मारनेवाले अंकुशों के समान तुम लोग रोकनेवाले या भरण करनेवाले (जर्भरि) और हन्ता (तुर्फरि) हो। हन्ता (नैतोश) के समान तुम लोग शत्रुओं के मारनेवाले हो; इसी लिए तुम लोगों को शत्रु-विदारक (फर्फरी का) अथवा यजमान-पालक कहा गया है। तुम लोग ऐसे निर्मल हो, मानो जल में उत्पन्न हुए हो, तुम लोग बली और विजयी हो। मेरी मरण-धर्मशील देह को फिर यौवन दो।

पज्रेव चर्चरं जारं मरायु क्षद्मेवार्थेषु तर्तरीथ उग्रा ।
ऋभू नापत्खरमज्रा खरज्रुर्वायुर्न पर्फरत्क्षयद्रयीणाम् ॥ ७ ॥

---

१ नि० १३.५।

पज्राऽइव । चर्चरम् । जारम् । मरायु । क्षद्मऽइव । अर्थेषु ।
तर्तरीथः । उग्रा । ऋभू इति । न । आपत् । खरमज्रा । खरऽज्रुः ।
वायुः । न । पर्फरत् । क्षयत् । रयीणाम् ॥ ७ ॥

हे उग्रा उग्रौ उद्गूर्णतेजस्कौ अश्विनौ पज्रेव पज्राविव मार्जितबलौ वीराविव स्थितौ यद्वा पज्रेव जिह्मिअभिमते पादाभ्यामभिगच्छन्तौ समर्थाविव स्थितौ युवां चर्चरं चरणशीलं जारं जरायुक्तं अतएव मरायु मरणशीलं मदीयं शरीरं अर्थेषु गन्तव्येषु वरीतव्येष्वापदादिषु क्षद्मेव उदकनामैतत् उदकमिव तर्तरीथः अत्यन्तं तारयथः। तृ प्लवनतरणयोः यङ्लुगन्ताल्लटि छन्दस्युभयथेति थास आर्धधातुकत्वेनेडागमः दृतोर्वेविदीर्घः ऋभून ऋभुरिव दार्ष्टान्तिकसाम्यादत्र द्विवचनं ऋभुर्यथा स्वनिर्मितो रथमापत् तद्वत् खरमज्रा खरं तीक्ष्णं मज्जयितारौ शोधयितारौ अत्यन्तं शुद्धबलावित्यर्थः टुमस्जो शुद्धौ अस्मादौणादिकोरन्प्रत्ययः तादृशौ युवां खरज्रुः तीक्ष्णगतिः अतिशयेन वेगवान् ऋभुभिर्दत्तो रथो युवां आपत् आप्नोत् आप्लृ व्याप्तौ लदित्वाच्च्लेरङ् स रथः वायुरिव पर्फरत् सर्वत आपूरयत् सर्वं गन्तव्यमव्याप्नोदित्यर्थः पॄ पूरणे अस्माल्लेटि बहुलंछन्दसीति शपः श्लुः अभ्यासस्य रुगागमः चलोपश्च लेटोडाटावित्यडागमः तथा संएषः रयीणां धनानां धनानि क्षयत् शत्रुभ्य आगमयत् क्षि निवासगत्योः अस्मादन्तर्णीतण्यर्थात् लेट्यडागमः। यद्वा क्षयतिरैश्वर्यकर्मा धनानामीष्टे छान्दसमनुदात्तत्वं ॥ ७ ॥

७. तीव्र बली अश्विद्वय, जैसे दीर्घ चरणवाला व्यक्ति दूसरे को जल से पार कर देता है, वैसे ही तुम लोग मेरी मरण-धर्मशील देह को विपत्ति से पार करके अभिलषित विषय में ले चलो। ऋभु के समान तुमने अत्यन्त संस्कृत रथ पाया है। वह शीघ्रगामी रथ वायु के समान उड़कर शत्रु का धन ले आया है।

अथाष्टमी—

घर्मेव मधु जठरे सनेरू भगेविता तुर्फरी फारिवारम् ।
पतरेव चचरा चन्द्रनिर्णिङ्मनऋङ्गा मनन्या न जग्मी ॥ ८ ॥

घर्माऽइव । मधु । जठरे । सनेरू इति । भगेऽअविता । तुर्फरी इति ।
फारिवा । अरम् । पतराऽइव । चचरा । चन्द्रऽनिर्निक् ।
मनःऽऋङ्गा । मनन्या । न । जग्मी इति ॥ ८ ॥

घर्मेव घर्माविव महावीराविव जठरे स्वोदरे मधु मधुनः षष्ठ्यर्थे घृतस्य सनेरू संभकारौ भजनसंभक्तौ अस्मादौणादिकरुप्रत्ययः भगेविता भगो धनं तद्विषयरक्षणयुक्तौ भवथे-

र्थिकः तत्पुरुषे कृतिबहुलमिति बहुलवचनाद्बहुव्रीहावप्यलुक् । यद्वा अववेस्तृजन्तस्य सुपो-डादेशः स्वरश्छान्दसः । अरमलं तुर्फरी शत्रूणां हिंसितारौ अतएव फारिवा फारिरायुधं ययोस्तौ भवथः । स्फुरतिर्वधकर्मा अस्मात् जिचिचिस्फुरोणाविति आलं ददन्वादिप्रत्ययः सकारलोप-श्छान्दसः । छन्दसीवनिपाविति मत्वर्थीयो वनिप् । सुपो डादेशः पर्वरेव पत्वराविव पवनशीलौ पक्षिणाविव चचरा संचरन्तौ चन्द्रनिर्णिक् निर्णिगिति रूपनाम सुपो लुक् चन्द्रनिर्णिजौ चन्द्रस-दृशरूपयुक्तौ यद्वा चन्द्रमाह्लादकं रूपं ययोस्तौ सर्वेवि मनस्कंमा मनस्तापसाधनं ययोस्तौ कंग-तिप्रसाधनकर्मा । अस्माद्भावे घञ् बहुव्रीहिस्वरः मनन्याव मनन्यौ यथा मनने साधू स्तुत्या-वित्यर्थः । मननशब्दात् तत्र साधुरिति यत् तित्स्वरितः साद्दशाविव अगमी यज्ञं प्रत्यागमनशीलौ भवतः गमेराङ्गमहनश्चेति किन्प्रत्ययः ॥ ८ ॥

८. महावीर के समान तुम लोग अपने पेट में घृत गिरा लो। तुम लोग धन के रक्षक और अस्त्र लेकर शत्रुओं के वध-कर्त्ता हो। तुम लोग पक्षी के समान सुन्दर और सर्वत्रविहारी हो। इच्छा करने के साथ ही तुम लोग भूषित होते हो और स्तोत्र के लिए यज्ञ में आते हो।

बृहन्तेव गम्भरेषु प्रतिष्ठां पादेव गाधं तरते विदाथः ।
कर्णेव शासुरनु हि स्मराथोंऽशेव नो भजतं चित्रमप्नः ॥ ९ ॥

बृहन्ताऽइव । गम्भरेषु । प्रतिऽस्थाम् । पादाऽइव । गाधम् । तरते । विदाथः । कर्णाऽइव । शासुः । अनु । हि । स्मराथः । अंशाऽइव । नः । भजतम् । चित्रम् । अप्नः ॥ ९ ॥

बृहन्तेव बृहन्ताविव पांशु पुरुषौ यथा गम्भरेषु गहनेषु जलेषु प्रतिष्ठां विदतस्तद्वत् गम्भरे-षु गंभीरेषु दुष्प्रवेशेषु स्थानेषु प्रतिष्ठां अवस्थितिमास्पदं युवां विदाथः जानीथः । पादेव पा-दाविव यथा तरते पदचर्येचतुर्थी तरतः पुरुषस्य पादौ यथा गाधजलं विदाथः तद्वत् युवां गो-येषु जलेषु गाधं विदाथः जानीथः विद ज्ञाने लेट्याडागमः कर्णेव यथा कर्णौ शब्दं विदतुः तद्वत् युवां शासुः शासितारं स्तुतिं कुर्वाणं जनं अनु हि स्मराथः अनुकूलं जानीथः खलु । स्मर तेर्लेटयडागमः हियोगादनिघातः अधीगर्थदयेशांकर्मणीति शासुरित्यस्य षष्ठी अंशेव अंशाविव यथा वयसौ वहन्तौ यज्ञं भजेते तद्वत् युवां नोऽस्मदीयं चित्रं चायनीयं अप्नःकर्म भजतं आप्न यतं अप्नः आप्नुव्यात्तौ अस्मादापःकर्माख्यायां ह्रस्वो नुट् चेति असुन् तत्संनियोगेन ह्रस्वो नुडागम श्च नित्स्वरेणाद्युदात्तः ॥ ९ ॥

९. जैसे लम्बे पैर रहने पर, गम्भीर जल के पार होने के समय, आश्रय मिलता है, वैसे ही तुम लोग आश्रय दो। तुम लोग, दोनों कानों के समान, स्तोता की स्तुति को, ध्यान से, सुनते हो। दो यज्ञाङ्गों के समान हमारे इस विचित्र यज्ञ में पधारो।

अथ दशमी—

आरङ्गरेव मध्वेरयेथे सारघेव गवि नीचीनबारे।
कीनारेव स्वेदमासिष्विदाना क्षामेवोर्जा सुयवसात्सचेथे॥ १०॥

आरङ्गराऽइव। मधु। आ। ईरयेथे इति। सारघाऽइव। गवि।
नीचीनऽबारे। कीनाराऽइव। स्वेदम्। आऽसिस्विदाना।
क्षामऽइव। ऊर्जा। सुयवसऽअत्। सचेथे इति॥ १०॥

आरंगरेव भृशब्दे अस्माद्धातेर्बाहुलकादौरण् अरमठं पर्याप्तं गरः शब्दनं यस्य संबन्धिनो य-स्येदमित्यण् शब्दयन्तौ मेघाविव यथा मधु जलं प्रेरयतः तद्वद् युवां एरयेथे प्रेरयथः। ईर-प्रेरणे चौरादिकः। सारघेव सारघाविव सरघा मधुमक्षिका सरघैव सारघा प्रज्ञादित्वादण् देव-था नीचीनबारे नीचीनद्वारे मधुपूर्णे मधु प्रेरयतः तद्वत्। युवां नीचीनबारे न्यग्मुखद्वारे गवि गोरूपस्थे क्षीरं प्रक्षिपथः। कीनारेव कीनाराविव कुत्सितमनुष्यौ यथा स्विद्यमानौ भवतस्त-द्वत्स्वेदं स्विद्यमानं जलमासिष्विदाना आसमन्तात्स्वेदयन्तौ प्रक्षारयन्तौ भवथः। ञिष्विदा गात्रप्रक्षरणे अनुदात्तेत् तस्माच्छान्दसेऽलिटि कानजादेशः। क्षामेव क्षैणेनैकत्ये अस्मात्रावोम-निन्। ह्रस्वश्छान्दसः क्षामा क्षीणा गौः सुयवसात् अदेःक्विप् शोभनं यवसं घासादिकं भक्ष-यन्ती क्षीररूपेणान्नेन समवेता भवति तद्वत् युवां ऊर्जा हवीरूपेणान्नेन सचेथे संगच्छे-थे। षच समवाये॥ १०॥

१०. जैसे बोलनेवाली दो मधुमक्खियाँ मधु के छाते में मधु का सेचन करती हैं, वैसे ही तुम लोग गाय के स्तन में मधुतुल्य दुग्ध का संचार कर दो। जैसे श्रमजीवी श्रम करके पसीने से तर हो जाता है, वैसे ही तुम लोग भी स्वेदवाले होकर जल-सेचन करो। जैसे दुर्बल गाय गोचर-भूमि में जाकर अपना आहार पाती है, वैसे ही तुम लोग भी यज्ञ में आकर आहार पाते हो।

ऋध्याम स्तोमं सनुयाम वाजमा नो मन्त्रं सरथेहोप यातम्।
यशो न पक्वं मधु गोष्वन्तरा भूतांशो अश्विनोः काममप्राः॥ ११॥२॥

ऋध्याम। स्तोमम्। सनुयाम। वाजम्। आ। नः। मन्त्रम्।
सऽरथा। इह। उप। यातम्। यशः। न। पक्वम्। मधु। गोषु।
अन्तः। आ। भूतऽअंशः। अश्विनोः। कामम्। अप्राः॥ ११॥२॥

हे अश्विनौ वयं स्तोमं त्रिवृत्पंचदशादिकं अवृधाम अवृध्यास्म वर्धयेम । वृधु वृद्धौ अ-स्मादाशीर्लिङि किदाशिषीति यासुटः कित्त्वं । वाजं हविर्लक्षणमन्नं युवाभ्यां सनुयाम प्रयच्छेम षणुदाने तानादिकः विधिलिङ् वाक्यभेदादनिघातः । तस्माद्युवां सरथा सरथौ समानरथौ एकमेवरथमारूढौ सन्तौ इहास्मिन्कर्मणि नोऽस्मदीयं मंत्रं मननीयं स्तोत्रमुपयातं उपागच्छतं । गोरन्धः गोरूधस्यान्तःस्थितं पक्वं परिणतं अतएवमधु मधुरं यथा न यथाहृत्यस्तनाम नञर्थे क्षीरास्पादिलक्षणं महावीरे अवनीयमानमन्नं यथापेक्ष्य आगच्छतमिति संबन्धः । एवमुक्तप्र-कारेण भूतांशः एतन्नामाऋषिः अश्विनोः काममभिलाषमाशीयाभिः स्तुतिभिः अप्राः आ-पूरयत् । संपूर्णमकार्षीदित्यर्थः । प्रा पूरणे आदादिकः । व्यत्ययेनमध्यमः । अत्राश्विनेसूक्ते स-र्वाण्यपिपदानि दुर्व्युत्पादानि अस्माभिर्दिङ्मात्रं प्रदर्शितानि एवं निरुक्तव्याकरणादिभिरर्थवि-शेषे बुद्धिमद्भिरुन्नेयानि ॥ ११ ॥

११. हम स्तोत्र-विस्तार करते हैं और आहार का वितरण करते हैं; इसलिए तुम लोग एक रथ पर चढ़कर हमारे यज्ञ में आओ। गाय के स्तन में सुमिष्ट आहार के समान दुग्ध है। भूतांश ऋषि ने यह स्तोत्र करके अश्विद्वय का मनोरथ पूर्ण किया।

॥ इत्यष्टमस्य षष्ठे द्वितीयोवर्गः ॥ २ ॥

आविरित्येकादशर्चंसप्तमंसूक्तं दिव्योनामांगिरसऋषिः प्राजापत्यावा दक्षिणानामर्षि-का शततारंवानुमिति चतुर्थीजगती शिष्टास्त्रिष्टुभः अनेनसूक्तेन ऋत्विग्भ्योदीयमानाद-क्षिणा तद्दातारोयजमानावा स्तूयन्ते अतः सैवदेवता । तथाचानुक्रान्तं—आविर्दिव्योदक्षिणावा प्राजापत्यादक्षिणा तद्दातॄन्वास्तौत् चतुर्थी जगतीति । गतोविनियोगः ।

तत्र प्रथमा—

**आविर्भून्महिमाघोनमेषांविश्वंजीवंतमसोनिरमोचि ।**
**महिज्योतिःपितृभिर्दत्तमागादुरुःपन्थादक्षिणायाअदर्शि ॥ १ ॥**

आविः । अभूत् । महि । माघोनम् । एषाम् । विश्वम् । जीवम् । तमसः । निः । अमोचि । महि । ज्योतिः । पितृऽभिः । दत्तम् । आ । अगात् । उरुः । पन्थाः । दक्षिणायाः । अदर्शि ॥ १ ॥

इदंसूक्तं दक्षिणायावा तद्दातॄणांवा स्तावकं दक्षिणासु यागांगं यागस्तु सायंकाले भवि-ष्यते नक्षत्रमस्तिदेवयाजनमुष्टमित्यादि[1] श्रवणात् । तस्मादह्न्येव कर्तव्यः । अहश्च सूर्योदयात् प-

१ ऋ० सं० ६. ४. १८ ।

भ्राजनवीति सूक्तादौ सूर्योदयोऽभिधीयते मघोनां मघोनः इन्द्रः इन्द्रश्च सूर्यः। चैत्रमासे यथा इन्द्र इतिस्मरणात्। तस्य संबन्धि तस्येदमित्यण् अतद्धिते प्रत्यये संप्रसारणमभिहितं सर्वविधीनां छन्दसि विकल्पितत्वादत्र तद्धितेऽपि संप्रसारणं। सूर्यात्मकस्येन्द्रस्य स्वभूतं महि महच्चेतः यजमानानां यागसिद्ध्यर्थं आविरभूत् प्रकाशितमुद्गतमभूत्। तत विश्वं सर्वं जीवं स्थावरजंगमात्मकं जगत्तमसः सकाशान्निरमोचि निर्मुक्तमभूत् मुचेः कर्मणि लुङि चिणि रूपं अथापन्त्वरं पितृभिरेव पितृभिर्देवैर्दत्तं नोऽह विशामागमनाय तदेव हि महत् ज्योतिः सूर्याख्यं आगात् आगच्छति पश्चाद्दक्षिणायाः यागाङ्गभूतायाः उरुर्महान् पंथा मार्गः अदर्शि सर्वैर्यजमानैर्दृष्टोऽभूत् सर्वे यागं कृत्वा ऋत्विग्भ्यो दक्षिणां दत्तवन्त इत्यर्थः ॥ १ ॥

१. इन यजमानों के यज्ञ-निर्वाह के लिए सूर्य-रूपी इन्द्र का विपुल तेज प्रकट हुआ। सारे प्राणी अन्धकार से बाहर आये। पितरों के द्वारा दी गई ज्योति उपस्थित हुई। दक्षिणा देने की प्रशस्त पद्धति उपस्थित हुई।

उच्चादिविदक्षिणावन्तोअस्थुर्येअश्वदाःसहतेसूर्येण ।
हिरण्यदाअमृतत्वंभजन्तेवासोदाःसोमप्रतिरन्तआयुः ॥ २ ॥

उच्चा । दिवि । दक्षिणाऽवन्तः । अस्थुः । ये । अश्वऽदाः । सह । ते । सूर्येण । हिरण्यऽदाः । अमृतऽत्वम् । भजन्ते । वासःऽदाः । सोम । प्र । तिरन्ते । आयुः ॥ २ ॥

दक्षिणावन्तः दक्षिणाया देयत्वेन तद्वन्तः दक्षिणां दत्तवन्तो यजमानाः उच्चा उच्चैः स्थानैः स्थिते दिवि द्युलोके अस्थुः तिष्ठन्ति सामान्येनोक्त्वा। दातृविशेषाणां फलविशेषमाह अश्वदाः अश्वानां दातारो ये यजमानाः ते सूर्येण सर्वस्य स्वस्वकर्मणि प्रेरकादित्येन सह तिष्ठन्ति ये हिरण्यदाः हिरण्यदातारः ते अमृतत्वं अमरणधर्मत्वं भजन्ते अमृतं वै हिरण्यमित्याम्नानात् यथा सौम्यं वै वास इति श्रवणात्। सोम एव संबोध्यते हे सोम वासोदाः वस्त्राणां दातारो ये सन्ति ते त्वया सह तिष्ठन्तीति शेषः। एते सर्वे आयुः जीवनं प्रतिरन्ते प्रवर्धयन्ति प्रपूर्वस्तिरतिर्वृद्ध्यर्थः ॥ २ ॥

२. जो लोग दक्षिणा देते हैं, वे स्वर्ग में उच्च आसन पाते हैं। अश्व-दाता सूर्य के साथ एकत्र होते हैं। सुवर्णदाता अमरता पाते हैं। वस्त्रदाता लोग सोम के पास जाते हैं। सभी दीर्घायु होते हैं।

दैवीपूर्तिर्दक्षिणादेवयज्यानकवारिभ्योनहितेपृणन्ति ।
अथानरःप्रयतदक्षिणासोवद्यभियाबहवःपृणन्ति ॥ ३ ॥

दैवी । पूर्तिः । दक्षिणा । देवऽयज्या । न । कवऽअरिभ्यः । नहि ।
ते । पृणन्ति । अथ । नरः । प्रयतऽदक्षिणासः । अवद्यऽभिया ।
बहवः । पृणन्ति ॥ ३ ॥

दैवी देवसंबन्धिनी देवायज्ञार्थमित्यर्थः तादृशी पूर्तिः पालनी यत्साध्या देवयज्या छन्दसि निष्टर्क्येति निपातितः देवयागः तदंगभूता दक्षिणा न कवारिभ्यः कवतेः कुत्सितार्थस्य अचइरिति ईपत्ययः । कुत्सितगन्तृभ्यः अयष्टृभ्यः एतेभ्यः नभवन्ति यज्ञ देवानां स्वभूता पूर्तिः पूरयित्री स्तुतिभिः हविर्भिश्च तादृशी देवयज्या दक्षिणाच तेभ्योनभवतः । तत्र हेतुरुच्यते—हि यस्मात् ते कुत्सितगन्तारः नहि पृणन्ति देवान् स्तुतिभिर्हविर्भिश्च न प्रीणयन्ति पृणप्रीणने तौदादिकः अथेतिमध्ये बहूनां देवयागादिकर्थंभवति उच्यते नरः कर्मणांनेतारः अतएव प्रयतदक्षिणासः दत्तदक्षिणा बहवोयजमानाः अवद्यभिया अवद्यपण्यवर्यागर्ह्येति यत्प्रत्ययान्तत्वेननिपातितः पापभिया विहितानुष्ठाने दुरितानिभवन्तिखलु तस्माच्चद्भीत्या पृणन्ति देवान्प्रीणयन्ति तस्माद्बहूनां देवपालनयागदक्षिणाभवतीत्यर्थः ॥ ३ ॥

३. दक्षिणा के द्वारा पुण्य कर्म की पूर्णता प्राप्त की जाती है—यह देव-पूजा का अङ्ग-स्वरूप है। जिनका आचरण खराब है, उनका कार्य देवता लोग नहीं पूरा करते। जो लोग पवित्र दक्षिणा देते हैं, निन्दा से डरते हैं, वे अपने कर्म को पूर्ण करते हैं।

शतधारंवायुमर्कंस्वर्विदंनृचक्षसस्तेअभिचक्षतेहविः ।
येपृणन्तिप्रचयच्छन्तिसंगमेतेदक्षिणांदुहतेसप्तमातरम् ॥ ४ ॥

शतऽधारम् । वायुम् । अर्कम् । स्वःऽविदम् । नृऽचक्षसः । ते ।
अभि । चक्षते । हविः । ये । पृणन्ति । प्र । च । यच्छन्ति ।
सम्ऽगमे । ते । दक्षिणाम् । दुहते । सप्तऽमातरम् ॥ ४ ॥

शतधारं बहुधारेणोपेतं वायुं पवनात्मकं स्वर्विदं स्वर्गस्यलंभकं सर्वस्यवेदितारंवा अर्कम् अर्चनीयं आदित्यंच एतौ नृचक्षसः नृणां द्रष्टॄन् अन्यानिन्द्रादीन्देवांश्चाभिलक्ष्य ते यजमाना हविश्चक्षते तेभ्योदातुं पश्यन्ति चष्टेर्लटिरूपं । किंच संगमे कर्मकरणार्थमृत्विजोयत्रसंगच्छन्तइति संगमः यज्ञस्तस्मिन्सम्पद्येति अधिकरणेअप् थाथादिस्वरः तस्मिन्यज्ञे ये यष्टारः पृणन्ति स्तुतिभिः प्रीणयन्ति येच तेभ्योदेवेभ्योहवींषि प्रयच्छन्ति उभयत्रप्रयोगादनिघातः ते सप्तमातरं सप्तसंख्याकामातृभूता अग्निष्टोमादिसंस्था यस्याभवन्ति सा यज्ञ सप्तसंख्याकामातरः कर्मणांनिर्मातारः कर्णारोहोत्रादयः सन्ति तादृशीं दक्षिणां दुहते ऋत्विग्भ्योदुहन्ति ॥ ४ ॥

४. जो वायु सैकड़ों मार्गों से बहता है, उसके लिए आकाश, सूर्य तथा अन्यान्य मनुष्य-हितैषी देवों के लिए होमीय द्रव्य (हवि) दिया

जाता है। जो लोग देवों को तृप्त करते और दान देते हैं, उनका मनोरथ दक्षिणा पूरा करती है। यह दक्षिणा पाने के अधिकारी सात पुरोहित विद्यमान हैं।

दक्षि॒णावा॑न्प्रथ॒मो हू॒त ए॑ति दक्षि॒णावा॑न्ग्राम॒णीरग्र॑मेति ।
तमे॒व म॑न्ये नृ॒पतिं॒ जना॑नां॒ यः प्र॑थ॒मो दक्षि॑णामावि॒वाय॑ ॥ ५ ॥ ३ ॥

दक्षि॑णाऽवान् । प्र॒थ॒मः । हू॒तः । ए॒ति॒ । दक्षि॑णाऽवान् । ग्रा॒म॒ऽनीः । अग्र॑म् । ए॒ति॒ । तम् । ए॒व । म॒न्ये॒ । नृ॒ऽपति॑म् । जना॑नाम् । यः । प्र॒थ॒मः । दक्षि॑णाम् । आ॒ऽवि॒वाय॑ ॥ ५ ॥ ३ ॥

हूतः ऋत्विग्भिराहूतः दक्षिणावान्यजमानः प्रथमः सर्वेषां मुख्यः सन् एति सर्वं गच्छति । तथा ग्रामणीः ग्रामाणां नेता प्रधानत्वेन तेषां कर्ता दक्षिणावान् सः अग्रमेति सर्वेषां प्रथममेव गच्छति । तमेव नृपतिं नराणां पालयितारमिति मन्ये । ऋषिरहमवगच्छे प्रथमो योजनः प्रजानां दक्षिणामाविवाय आगमयति वीगत्यादिषु तस्य लिटि रूपं तं नृपतिमिति मन्ये यद्वा जनाना मिति पूर्ववाक्यशेषः जनानां मध्ये तमेव मनुष्याणां स्वामिनमिति मन्ये ॥ ५ ॥

५. दाता को सबसे पहले बुलाया जाता है। वे ग्रामाध्यक्ष होते हैं और सबके आगे-आगे जाते हैं। जो सबसे पहले दक्षिणा देते हैं, उन्हें मैं सबका राजा जानता हूँ।

॥ इत्यष्टमस्य षष्ठे तृतीयो वर्गः ॥ ३ ॥

तमे॒व ऋषिं॒ तमु॑ ब्र॒ह्माण॑माहुर्यज्ञ॒न्यं॑ साम॒गामु॑क्थ॒शास॑म् ।
स शु॒क्रस्य॑ त॒न्वो॑ वेद ति॒स्रो यः प्र॑थ॒मो दक्षि॑णया र॒राध॑ ॥ ६ ॥

तम् । ए॒व । ऋषि॑म् । तम् । ऊँ॒ इति॑ । ब्र॒ह्माण॑म् । आ॒हुः॒ । य॒ज्ञ॒ऽन्य॑म् । सा॒म॒ऽगाम् । उ॒क्थ॒ऽशास॑म् । सः । शु॒क्रस्य॑ । त॒न्वः॑ । वे॒द॒ । ति॒स्रः । यः । प्र॒थ॒मः । दक्षि॑णया । र॒राध॑ ॥ ६ ॥

तमेव दक्षिणाया दातारं ऋषिमतीन्द्रियार्थदर्शिनं यद्वा सत्कर्मकरणेन ऋषिमित्याहुः तथा तमु तमेव ब्रह्माणमाहुः किंच तमेव यज्ञन्यं नीञ् प्रापणे क्विप् उदात्तस्वरितयोर्यण् इत्यमः स्वरितत्वं यज्ञस्य नेतारं अध्वर्युमित्याहुः तमेव सामगां साम्नां गातारमिति तथा उक्थशासं शंस्तुती क्विप् संहितायांदीर्घश्छान्दसः उक्थशासं शस्त्राणां शंसितारं होतारमिति ब्रुवन्ति दक्षिणादानेन तत्कर्मणः परिग्रहाय सदाता शुक्रस्य दीप्यमानस्य ज्योतिषः तिस्रस्तन्वः अग्निवेद्यु

वादित्यात्मकानि त्रीणि शरीराणि वेद जानाति यद्वा शुक्रस्य दीप्तस्याग्नेः आहवनीयात्मकानि त्रीणि शरीराणि जानाति प्रथमोमुख्योयोजनः दक्षिणयाराराध ऋत्विगादीनाराधयति राघसंसिद्धौ छिदिरूपं छिरस्वरः ॥ ६ ॥

६. जो सर्व-प्रथम दक्षिणा देकर पुरोहित को तुष्ट करते हैं, वे ही ऋषि और ब्रह्मा कहे जाते हैं, वे ही यज्ञ के अध्यक्ष, सामगाता और स्तोता कहे जाते हैं। वे अग्नि की तीनों मूर्तियों को जानते हैं।

दक्षिणाश्वंदक्षिणागांददातिदक्षिणाचन्द्रमुतयद्धिरण्यम् ।
दक्षिणान्नंवनुतेयोनआत्मादक्षिणांवर्मकृणुतेविजानन् ॥ ७ ॥

दक्षिणा । अश्वम् । दक्षिणा । गाम् । ददाति । दक्षिणा । चन्द्रम् । उत । यत् । हिरण्यम् । दक्षिणा । अन्नम् । वनुते । यः । नः । आत्मा । दक्षिणाम् । वर्म । कृणुते । विऽजानन् ॥ ७ ॥

दक्षिणा यष्टृभ्यःअश्वं ददाति तथा गांच ददाति तथा चन्द्रं सुवर्णं ददाति उतापिच यद्धिरण्यं रजतमस्ति रजतं हिरण्यंदत्याम्नानात् तच्चददाति किंच सा अन्नं वनुते ददाति यः-नोस्माकमात्मा अन्नं तद्ददातीत्यर्थः। तस्मात्कोस्मदीयोयआत्मास्ति स वर्म विजानन् कवचं यथायुधानां निवारकं तद्वत् दुरितानि वारयतीति कवचमिति विजानन् दक्षिणा अश्वादिदानशीलां कृणुते ऋत्विग्भ्यः करोति ॥ ७ ॥

७. दक्षिणा में अश्व, गाय और मनःप्रसादकर सुवर्ण पाया जाता है। हमारा आत्म-स्वरूप जो आहार है, वह भी दक्षिणा से पाया जाता है। विद्वान् व्यक्ति दक्षिणा का, देह-रक्षक कवच के समान, व्यवहार करते हैं।

अथाष्टमी—

नभोजामम्रुर्नन्यर्थमीयुर्नरिष्यन्तिनव्यथन्तेहभोजाः ।
इदंयद्विश्वंभुवनंस्वश्चैतत्सर्वंदक्षिणैभ्योददाति ॥ ८ ॥

न । भोजाः । मम्रुः । न । निःऽअर्थम् । ईयुः । न । रिष्यन्ति । न । व्यथन्ते । ह । भोजाः । इदम् । यत् । विश्वम् । भुवनम् । स्वरिति स्वः । च । एतत् । सर्वम् । दक्षिणा । एभ्यः । ददाति ॥ ८ ॥

भोजाः भोजयितारः धनादिदानेन दातारोनमम्रुः नम्रियन्ते देवत्वं भजन्तइत्यर्थः। अतएव न्यर्थं कुत्सां उपिकुत्सितार्तिभ्यः इत्यत्र समासेपाथादिस्वरः निकृष्टां गतिं नेयुः नप्राप्नुवन्ति। रुणमतौ छिदिदीर्घश्छन्दसः इत्यदीर्घः तथा नरिष्यन्ति केश्चिदप्यहिंसिताभवन्ति कर्मणि व्य-

त्ययेनपरस्मैपदं अतएव भोजाः दातारः न व्यथन्ते परस्परं न भीता न बाधिता भवन्ति । इ ष-सिद्धौ । किंच इदं परिदृश्यमानं विश्वं सर्वं भुवनं भूतजातमस्ति स्वः स्वर्गलोकश्च एतत्सर्वं दक्षिणास्त्वयं एभ्यस्तदातृभ्योददाति प्रयच्छति ॥ ८ ॥

८. दाताओं की मृत्यु नहीं होती—वे देवता हो जाते हैं। वे दरिद्र नहीं होते—वे क्लेश, व्यथा वा दुःख भी नहीं पाते। इस पृथिवी वा स्वर्ग में जो कुछ है, सो सब उन्हें दक्षिणा देती है।

भोजाजिग्युःसुरभिंयोनिमग्रेभोजाजिग्युर्वध्वंयासुवासाः ।
भोजाजिग्युरन्तःपेयंसुरायाभोजाजिग्युर्येअहूताःप्रयन्ति ॥ ९ ॥

भोजाः । जिग्युः । सुरभिम् । योनिम् । अग्रे । भोजाः । जिग्युः ।
वध्वम् । या । सुऽवासाः । भोजाः । जिग्युः । अन्तःऽपेयम् ।
सुरायाः । भोजाः । जिग्युः । ये । अहूताः । प्रऽयन्ति ॥ ९ ॥

भोजाः दातारः अग्रे प्रथममेव योनिं क्षीरादेरुत्पत्तिस्थानं सुरभिं धेनुं जिग्युः शत्रुभ्यो-जितवन्तः । जिजये लिटि सन्लिटोर्जेरिति अभ्यासादुत्तरस्य कवर्गादेशः । तथा भोजा दातारः वध्वं वधूं नवोढां स्त्रीं जिग्युः याऽसौ सुवासाः शोभनवासा अस्ति तां जिग्युः किंच भोजाः शत्रूणां सुरायाः अन्तःपेयं अन्तःपानं जिग्युः पापाने भावेयत् ईद्यतीतीत्वं आर्धधातुकलक्षणो-गुणः कृदुत्तरपदप्रकृतिस्वरत्वं येऽस्मान् अहूताः बलाधिक्येनानाहूयमानाः प्रयन्ति प्रमुखमा-गच्छन्ति तान् भोजाः दक्षिणाया दातारो जनाः जिग्युर्जयन्ति ॥ ९ ॥

९. घी, दूध देनेवाली गाय को तो दाता लोग सबसे पहले पाते हैं। वे सुन्दर परिच्छदवाली नवोढ़ा स्त्री पाते हैं। वे सुरा (मदिरा का सार) (क्या सोम?) पाते हैं। दाता लोग ही चढ़ा-ऊपरी करनेवाले शत्रुओं को जीतते हैं।

अथ दशमी—

भोजायाश्वंसंमृजन्त्याशुंभोजायास्तेकन्याशुम्भमाना ।
भोजस्येदंपुष्करिणीववेश्मपरिष्कृतंदेवमानेवचित्रम् ॥ १० ॥

भोजाय । अश्वम् । सम् । मृजन्ति । आशुम् । भोजाय ।
आस्ते । कन्या । शुम्भमाना । भोजस्य । इदम् । पुष्करिणीऽइव ।
वेश्म । परिऽकृतम् । देवमानाऽइव । चित्रम् ॥ १० ॥

भोजाय दात्रे आशुं शीघ्रगामिनमश्वं संमृजन्ति परिचारकाः सम्यगलंकुर्वन्ति । मृजू-शौचालंकारयोः तथा कन्या कन्यात्वेनासन्निकर्षादभिनवं यौवनं लक्ष्यते अभिनवयौवना

शुंभमाना शरीरावयवविशेषशोभया तथा वस्त्राद्यलंकारशोभयाच शोभमाना स्त्री तस्मै भो-जाय दात्रे आस्ते। तथा भोजस्य दातुरेव हृदयाह्लादकरं वेश्मगृहं भवति। कीदृशं पुष्क-रिणीव पुष्कराणि पद्मानि यस्याः सन्तीति पुष्करिणी सरसी सा यथा पद्महंसादिभिरलंकृ-ता भवति तद्वत् परिष्कृतं वितानादिभिरलंकृतं। परिपूर्वस्यकरोतेर्भूषणार्थे संहितायांसुडागमः परिनिविभ्यइतिसुटःषत्वं गतिरनन्तरइतिगतेः प्रकृतिस्वरत्वं। तथा देवमानेव सुपांसुलुगिति प्रथमैकवचनस्याकारः देवमानमिव चित्रं मनोहरं वेश्म तस्य भवति॥ १०॥

१०. दाता को शोभमाना अन्न, अलंकृत करके, दिया जाता है। उसके लिए सुन्दरी स्त्री उपस्थित रहती है। पुष्करणी के समान निर्मल और देवालय के समान मनोहर गृह दाता के लिए ही विद्यमान हैं।

भोजमश्वाःसुष्ठुवाहोवहन्तिसुवृद्रथोवर्ततेदक्षिणायाः।
भोजंदेवासोवताभरेषुभोजःशत्रून्त्समनीकेषुजेता॥ ११॥ ४॥

भोजम्। अश्वाः। सुष्ठुऽवाहः। वहन्ति। सुऽवृत्। रथः। वर्तते। दक्षिणायाः। भोजम्। देवासः। अवत। भरेषु। भोजः। शत्रून्। समऽअनीकेषु। जेता॥ ११॥ ४॥

सुष्ठुवाहः वहप्रापणे वहश्चेतिण्विप्रत्ययः शोभनवहनसमर्थाः अश्वाः भोजं दातारं वह-न्ति लक्ष्यंदेशंप्रापयन्ति तथोदक्षिणायाः दातुर्यजमानस्य सुवृत् सुष्ठुचक्रादिवर्तनं यस्यसोऽश्वा-दिसहितोरथोवर्तते। अथप्रत्यक्षः हे देवासः हे देवाइन्द्रादयः भरेषु भ्रियते आहवनीयादिरूपे-णाग्निरत्रेतिभराः यज्ञाः। यद्वा भृञ्भर्त्सने भृणन्तिभर्त्सयन्ति योद्धारोऽत्रेतिभराः संग्रामाः तेषु भोजं दातारं अवत रक्षत ततः युष्माभिः पालितोभोजः धनादिदानेन जनानां भोजयिता सन् सम-नीकेषु संग्रामेषु शत्रून् जेता जयशीलोभवति। जियेर्वाच्छीलिकस्तृन् अतएव नलोका-व्ययेतिशत्रुशब्दस्य षष्ठीप्रतिषेधः॥ ११॥

११. सुन्दर वहनकर्त्ता अश्वदाता को ले जाते हैं। उसी के लिए सुघटित रथ विद्यमान है। युद्ध के समय देवता लोग दाता की रक्षा करते हैं। युद्ध में दाता शत्रुओं को जीतता है।

॥ इत्यष्टमस्य षष्ठे चतुर्थोवर्गः॥ ४॥

किमिच्छन्तीत्येकादशर्चं नवमंसूक्तं त्रैष्टुभं इन्द्रपुरोहितस्य बृहस्पतेः गोषु बलनाम्नोऽसुरस्य भटैः पणिनामकैरसुरैरपहृत्य गुहायां निहितासु सतीषु बृहस्पतिप्रेरितेनेन्द्रेण गवामन्वेषणाय सरमाना-मदेवशुनी प्रेषिता साच महतीं नदीमुत्तीर्य बलपुरंप्राप्य गुप्तस्थाने निहितास्तागाअदर्शत् अथ प-

स्मिन्नन्तरे पणयः इदं वृत्तान्तमवगच्छन्तः एनां मित्रीकर्तुं संवादमकुर्वन्। तत्र प्रथमा तृतीया-द्याः अयुजोऽस्यार्धर्चाः पणीनां वाक्यानि अत्र ते ऋषयः सरमा देवता। द्वितीयाचतुर्थ्याद्याः युजः एता एकादशी च षट् सरमाया वाक्यानि अतस्तासु साऽऋषिः पणयो देवता। तथा चानुक्रान्तं— किमिच्छन्ती पणिभिरसुरैर्निगूळ्हा गा अन्वेष्टुं सरमां देवशुनीमिन्द्रेण प्रहितां सामयुग्मिः पणयो मि-त्रीयन्तः प्रोचुः सा तानयुग्भिः प्रत्याचष्टे इति। गतो विनियोगः।

तत्र प्रथमा—

किमिच्छन्ती सरमा प्रेदमानड्दूरे ह्यध्वा जगुरिः पराचैः।
कास्मेहितिः का परितक्म्यासीत्कथं रसाया अतरः पयांसि॥ १॥

किम्। इच्छन्ती। सरमा। प्र। इदम्। आनट्। दूरे। हि।
अध्वा। जगुरिः। पराचैः। का। अस्मेऽहितिः। का। परिऽतक्म्या।
आसीत्। कथम्। रसायाः। अतरः। पयांसि॥ १॥

अनया आगच्छन्तीं सरमां दृष्ट्वा पणयो वदन्ति सरमा सरणशीला एतन्नामिका देवशु-नी किं प्रार्थयमाना इच्छन्ती इदमस्मदीयं स्थानं प्रानट् प्राप्नोत् नशिर्व्याप्तिकर्मा। तस्य लुङि मन्त्रे घसेत्यादिना च्लेर्लुक् छन्दस्यपि दृश्यते इति आडागमः। पराचैः पराञ्चि पराङ्मुखा-न्यावृत्तिवर्जितानि यानि गमनानि तैर्जगुरिः उद्गूर्णः महता प्रयत्नेनापि गन्तुं न शक्यत इत्यर्थः। गृ निगरणे आदृगमहनेत्यादिना किन्प्रत्ययः बहुलं छन्दसीत्युत्वं तादृशोऽयमध्वा दूरे हि विप्र-कृष्टः खलु। यद्वा पराचैः पराञ्चनैः जगुरिः अत्यर्थं गन्ता प्राप्यागमनाऽऽलोकमानाः सती इदं स्थानं प्राप्नोति दूरे अयमध्वा यदृच्छया गन्तुं न शक्यते अतो वयमेतां पृच्छामः। हे सरमे का कीदृशी अस्मेहितिः कोऽस्मास्वर्थं हितिः कोऽस्मासु त्वदपेक्षितार्थो निहितः यद्वा अस्मासु कोऽर्थोगतः हि धातोर्हिनोतेर्वा क्तिनि रूपं आगच्छन्त्यास्तव का कीदृशी परितक्म्या रात्रिरासीत् यद्वा तकतिर्गत्यर्थः परितकनं परितो गमनं भ्रमणं वा कीदृशमासीत् कथं वा रसायाः शब्दाय-मानायाः अन्तरिक्षनद्याः योजनशतविस्तीर्णायाः पयांस्युदकानि अतरः तीर्णवत्यसि एतदद। अत्र किमिच्छन्तीः सरमेदं प्रानडित्यादि निरुक्तं द्रष्टव्यं॥ १॥

१. (पणियों की उक्ति)—सरमा, तुम क्या किसी प्रार्थना के लिए यहाँ आई हो? यह मार्ग तो बहुत दूर का है। इस मार्ग पर आते समय पीछे की ओर दृष्टि फेरने पर नहीं आना हो सकता। हमारे पास ऐसी कौन-सी वस्तु है, जिसके लिए तुम आई हो? कितनी रातों में आई हो? नदी के जल को पार कैसे किया?

---

१ नि० ११. २५।

इन्द्रस्य दूतीरिषिता चरामि मह इच्छन्ती पणयो निधीन्वः ।
अतिष्कदो भियसा तन्न आवत्तथा रसाया अतरं पयांसि ॥ २ ॥

इन्द्रस्य । दूतीः । इषिता । चरामि । महः । इच्छन्ती । पणयः ।
निऽधीन् । वः । अतिऽस्कदः । भियसा । तत् । नः । आवत् ।
तथा । रसायाः । अतरम् । पयांसि ॥ २ ॥

अनया तान् सरमेत्युक्ते हे पणयः एतन्नामका असुराः इन्द्रस्य दूतीः सुपांसुलुगिति प्रथमैकवचनस्य सुश्छान्दसः अहं इषिता तेनैवप्रेषिता सती चरामि युष्मदीयंस्थानमागच्छामि । किमर्थं वो युष्मदीयान् युष्मदीयेपर्वते अवस्थापितान् महो महतः निधीन् गूहस्थलेषु निधीन् इच्छन्ती काममाना सती चरामि । किंच अतिष्कदः स्कन्दिर्गतिशोषणयोः भावे क्विप् अतिष्कन्दनात् अतिक्रमणाद्भावेन भियसा भयेन तन्नदीजलं नः पूजायां बहुवचनं मां आवत् अरक्षत् । तथा तेन प्रकारेण रसायानद्याः पयांस्युदकानि अतरं तीर्णवत्यस्मि ॥ २ ॥

२. (सरमा की उक्ति)—पणिगण, इन्द्र की दूती होकर मैं आई हूँ। तुमने जो गोधन एकत्र किया है, उसे ग्रहण करने की मेरी इच्छा है। जल ने मुझे बचाया है। जल का डर तो हुआ था; किन्तु पीछे उसे लाँघकर मैं चली आई। इस प्रकार मैं नदी के पार चली आई।

कीदृङ्ङिन्द्रः सरमे का दृशीका यस्येदं दूतीरसरः पराकात् ।
आ च गच्छान्मित्रमेना दधामाथा गवां गोपतिर्नो भवाति ॥ ३ ॥

कीदृङ् । इन्द्रः । सरमे । का । दृशीका । यस्य । इदम् । दूतीः ।
असरः । पराकात् । आ । च । गच्छात् । मित्रम् । एन । दधाम ।
अथ । गवाम् । गोऽपतिः । नः । भवाति ॥ ३ ॥

तेषां वाक्यं हे सरमे तव स्वामीन्द्रः कीदृक् किंपराक्रमवान् कादृशीका यस्य कीदृशी दृष्टिः दृष्टिरूपा सेना किमयी यस्य दूतीः दूती त्वं इदमस्मदीयंस्थानं पराकादविदूरादसरः आगमः । इति तामुक्त्वा इदानीं ते परस्परमाहुः एषा सरमा आगच्छात् च आगच्छतु च गमे-र्लेटि आडागमः स्वामी भवाति भवतु नैकस्या गोः किंतु बहूनां गवां स्वामी भवतु इत्या-शिष्यां स्वामित्वं बाहुल्यं च विवक्ष्यते ॥ ३ ॥

३. (पणियों की उक्ति)—सरमा, जिन इन्द्र की दूती बनकर तुम इतनी दूर से आई हो, वे इन्द्र कैसे हैं? उनका कितना पराक्रम है? उनकी कैसी सेना है? इन्द्र आवें। उन्हें हम मित्र मानने को प्रस्तुत हैं। वे हमारी गायें लेकर उनके स्वत्वाधिकारी बनें।

अथ चतुर्थी—

नाहंतंवेंदुदभ्यंदभत्सयस्येदंदूतीरसंरपराकात् ।
नतंगूहन्तिस्रवतोंगभीराहताइन्द्रेणपणयःशयध्वे ॥ ४ ॥

न । अहम् । तम् । वेद । दभ्यम् । दभत् । सः । यस्य । इदम् ।
दूतीः । असरम् । पराकात् । न । तम् । गूहन्ति । स्रवतः । गभीराः ।
हताः । इन्द्रेण । पणयः ॥ शयध्वे ॥ ४ ॥

सरमाऽवदत् हे पणयः तमिन्द्रं दभ्यं हिंसितव्यं नवेद नजानामि दभेरचोयत् कथं सइन्द्रः दभत् सर्वाञ्छत्रून्दभति हिनस्त्येव दभेर्लेटिरूपं वाक्यभेदादनिघातः यस्यदूतीः अहं इदं युष्मदीयं स्थानं पराकात् अतिदूरदेशात् असरं प्राप्तासम् । इन्द्रोहिंसितव्योनभवतीत्यत्र युक्तिमाह स्रवतः स्रवणं स्रवः समाचरन्ति आचारार्थे क्विप् ... स्रवणशीलाः गभीरा गंभीरानद्यः तं इन्द्रं नगूहन्ति नसंवृण्वन्ति नाच्छादयन्ति । किंतु आविष्कुर्वन्ति यथा यस्य महिमा समुद्रं प्रतिसरामस्तस्मादहिंस्यइति एनं प्रकटीकुर्वन्ति । गुहूसंवरणे भौवादिकः । तस्मात् हे पणयोयूयं इन्द्रेण तादृशपराक्रमेणहताः सन्तः शयध्वे शीङ्स्वप्ने बहुलंछन्दसीति शपोलुगभावः ॥ ४ ॥

४. (सरमा की उक्ति)—जिन इन्द्र की दूती बनकर मैं दूर देश से आई हूँ, उन्हें कोई हरा नहीं सकता। वे ही सबको हराते हैं। गहन-गम्भीर नदियाँ भी उनकी गति को रोकने में समर्थ नहीं हैं। पणियो, तुम्हें निश्चय ही इन्द्र मारकर सुला देंगे।

अथ पंचमी—

इमागावःसरमेयाऐच्छःपरिदिवोअन्तान्त्सुभगेपतन्ती ।
कस्तएनाअवसृजादयुध्व्युतास्माकमायुधासन्तितिग्मा ॥५॥५॥

इमाः । गावः । सरमे । याः । ऐच्छः । परि । दिवः । अन्तान् ।
सुऽभगे । पतन्ती । कः । ते । एनाः । अव । सृजात् । अयुध्वी ।
उत । अस्माकम् । आयुधा । सन्ति । तिग्मा ॥ ५ ॥ ५ ॥

क्रुद्धाः पणयः प्रत्यूचुः हे सुभगे शोभनभाग्यवति हेसरमे दिवः द्युलोकस्य अन्तान् पर्यन्तान् परिपतन्ती कुत्रगतास्विति परितोगच्छन्ती त्वं इमाः परिदृश्यमानाः याः गावः इन्द्रस्य गाः ऐच्छः कामयसे ताः एना गाः ते त्वदीयः कः अयुध्वी अयुध्वा अवसृजात्

अस्मात्सर्वस्मादप्यमुत्वेव विनिर्ममयेव । सुवेर्लेटिरूपं अयुष्मी युवेःक्त्वाप्रत्यये स्वाल्यादयश्चेति निपातिनः नञ्समासत्वाद्व्यपदेशाभावः नञःपक्षनिस्वरत्वंच उतापिच अस्माकं तिग्मा तीक्ष्णान्यायुधा आयुधानि सन्ति तस्मादस्माभिर्युद्धमकृत्वा कोवागा आहरति ॥ ५ ॥

५. (पणियों की उक्ति)—सुन्दरी सरमा, तुम स्वर्ग की शेष सीमा पर से आ रही हो; इसलिए इन गायों में से जिन-जिनको चाहो, हम तुम्हें दे सकते हैं। बिना युद्ध के कौन तुम्हें गायें देता ? हमारे पास भी अनेक तीक्ष्ण आयुध हैं।

॥ इत्यष्टमस्य षष्ठे पंचमोवर्गः ॥ ५ ॥

असेन्यावःपणयोवचांस्यनिषव्यास्तन्वःसन्तुपापीः ।
अधृष्टोवएतवाअस्तुपन्थाबृहस्पतिर्वउभयानमृळात् ॥ ६ ॥

असेन्या । वः । पणयः । वचांसि । अनिषव्याः । तन्वः । सन्तु । पापीः । अधृष्टः । वः । एतवै । अस्तु । पन्थाः । बृहस्पतिः । वः । उभया । न । मृळात् ॥ ६ ॥

सा तां निराह हे पणयः वोयुष्माकं वचांसि पूर्वोक्तानि वचनान्यसेन्या असेन्यानि सेन्यानि सेनार्हाणि नभवन्ति सेनाशब्दात्तदर्हतीत्यर्थेछन्दसिचेति यत्प्रत्ययः नञ्समासः । ययतोश्चातदर्थइति उत्तरपदान्तोदात्तत्वं । तथा तन्वः युष्मदीयानि शरीराणि अनिषव्याः इष्वर्हाणि न सन्तु पराक्रमराहित्येन पूर्ववत्प्रत्ययः ओर्गुणइतिगुणः स्वरश्चतादृक् । यतः पापीः पापयुक्तानिसन्तु छन्दसीवनिपाविति ईप्रत्ययः । अतस्त्वाः किंच वोयुष्मदीयः पंथामार्गःएतवै गन्तुं अधृष्टः असमर्थोस्तु इणुगतावित्यस्य तुमर्थेतवैप्रत्ययः तवैचान्तश्चयुगपदिति धातोः प्रत्ययान्तस्य युगपदुदात्तत्वं तत्र हेतुमाह वोयुष्मदीयान् उभया उभयविधान् पूर्वोक्तान्तन्वोदेहान् बृहस्पतिरिन्द्रोवेरिस्तोनमृळात् नसुखयतु किंतु बाधेत मृडसुखने लेट्याडागमः ॥ ६ ॥

६. (सरमा=इन्द्र की कुतिया की उक्ति)—तुम्हारी बातें सैनिकों के योग्य नहीं हैं। तुम्हारे शरीरों में पाप है। ये शरीर कहीं इन्द्र के बाणों का लक्ष्य न हो जायें। तुम्हारे यहाँ यह जो आने का मार्ग है, इसपर देवता लोग कहीं आक्रमण न कर बैठें। मुझे सन्देह है कि, पीछे बृहस्पति तुम्हें क्लेश देंगे—यदि तुम गायें नहीं दे दोगे, तो आपदायें सन्निकट हैं।

अयंनिधिःसरमेअद्रिबुध्नोगोभिरश्वेभिर्वसुभिर्न्यृष्टः ।
रक्षन्तितंपणयोयेसुगोपारेकुपदमलकमाजगन्थ ॥ ७ ॥

अयम् । निऽधिः । सरमे । अद्रिऽबुध्नः । गोभिः । अश्वेभिः । वसुऽभिः । निऽऋष्टः । रक्षन्ति । तम् । पणयः । ये । सुऽगोपाः । रेकु । पदम् । अलकम् । आ । जगन्थ ॥ ७ ॥

पणयः पुनराहुः हे सरमे अयंनिधिः अस्मदीयः कोशः अद्रिबुध्नः पर्वतबन्धने पर्वतैर्वेष्टि-तुभीर्वेति नमस्यः बुधइत्यादेशः अद्रिर्बुध्नकोऽस्य शाद्यः यथा आश्वैर्गोभिः अश्वेभिः अश्वैश्च वसुभिरात्मीयैः धनैश्च न्यृष्टः नितरांसम्बद्धोभवति । ऋषीगतौ क्तप्रत्ययेऽश्वीदितोनिष्ठायामितीट्प्रतिषेधः । गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वं सुगोपाः गुपूरक्षणे आयप्रत्ययान्त्वात्क्विपि अतोलोपयलोपौ सुष्ठु गोपायितारोयेपणयः तेऽसुराः तंनिधिं रक्षन्ति पालयन्ति । रेकु रेक्षशंकायां औणादिकउप्रत्ययः शंकितं गोभिः शब्दायमानं पदं अस्माभिः पालितंस्थानं रेळकं व्यर्थमेव आजगंथ आगतवत्यसि । गमेर्लेटिरूपं ॥ ७ ॥

७. (पणियों की उक्ति)—सरमा, हमारी सम्पत्ति पर्वतों के द्वारा सुरक्षित है—गायों, अश्वों और अन्यान्य धनों से पूर्ण है। रक्षा-कार्य में समर्थ पणि लोग इस सम्पत्ति की रखवाली करते हैं। गायों के द्वारा शब्दायमान हमारे स्थान को तुम व्यर्थ ही आई हो।

एहगमन्नृषयःसोमशिताअयास्योअङ्गिरसोनवग्वाः ।
तएतमूर्वंविभजन्तगोनामथैतद्वचःपणयोवमन्नित् ॥ ८ ॥

आ । इह । गमन् । ऋषयः । सोमऽशिताः । अयास्यः ।
अङ्गिरसः । नवऽग्वाः । ते । एतम् । ऊर्वम् । वि । भजन्त ।
गोनाम् । अथ । एतत् । वचः । पणयः । वमन् । इत् ॥ ८ ॥

सरमा पुनः प्रत्युवाच हे पणयः सोमशिताः सोमेन तीक्ष्णीकृताः सोमपानेन मत्ताः शिञ्निशाने कर्मणिक्तप्रत्ययः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वं । नवग्वाः नवगतयः यद्वा अंगिरसां सत्रमासीनानां मध्ये केचन नवसु मासेषु अभ्युत्तिष्ठन् ते नवग्वाः अनेन दशग्वाअप्युपलक्ष्यन्ते । उभयविधास्तेऽङ्गिरसऋषयः तेषां प्रथमोऽयास्यः एवञ्चामाच येऽप्येते इह युष्मदीयेस्थाने आगमन् आगच्छेयुः । गमेश्छन्दसि लुङ्लङ्लिटइति सार्वकालिकोलुङ् ऌदि-त्वात् च्लेरङ् । आगत्य च ते गोनां गोःपादान्तइति छन्दसिनुडागमः गवां ऊर्वं समूहं विभजन्त विभागंकुर्युः अत्रापि पूर्ववत्सार्वकालिकोलुङ् । अथानन्तरं पणयोयूयं एतद्वचः पूर्वप्रार्थमागतासीति यद्वाक्यमवोचत तद्वाक्यं तद्वावमन्नित् वमन्तः परित्यजन्त एव भवथ । वमुउद्गिरणे सर्वारस्तुपांसुलुगिति जसोलुक् नुमागमः संयोगान्तलोपः यद्वा लङि रूपं स्वरश्छान्दसः ॥८॥

८. (सरमा की उक्ति)—आङ्गिरस अयास्य ऋषि और नवगुगण, सोमपान से प्रमत्त होकर, यहाँ आवेंगे और इन सारी गायों का भाग करके इन्हें ले जायेंगे। पणियो, उस समय तुम्हें ऐसी दर्पोक्ति छोड़नी पड़ेगी।

अथ नवमी—

एवाचत्वंसरमआजगन्थप्रबाधितासहसादैव्येन ।
स्वसारंत्वाकृणवैमापुनर्गाअपतेगवांसुभगेभजाम ॥ ९ ॥

एव । च । त्वम् । सरमे । आऽजगन्थ । प्रऽबाधिता । सहसा ।
दैव्येन । स्वसारम् । त्वा । कृणवै । मा । पुनः । गाः । अप ।
ते । गवाम् । सुऽभगे । भजाम ॥ ९ ॥

यथा एवमुक्तेऽपि पणयः प्रणयवाक्यमाहुः हे सरमे त्वं दैव्येन देवसंबन्धिना सहसा ब-
लेन प्रबाधिता यथावथा चन्दुरं प्राप्य व्यवस्थितागाः पुनरागच्छेति तेन प्रपीडिता-
त्वं एवंचैव आजगन्थ आगतवत्यसि चशब्दश्चेदर्थे निपातैर्यद्यदिहन्तेति निघाताभावः गमे-
र्लिटि थलि रूपं सहसुपेत्यत्र सहेतियोगविभागात् समासः तिङि चोदात्तवतीति गतेर्निघातः नि-
स्वरः तर्हि त्वा त्वां स्वसारं भगिनीं कृणवै करवै समूहापेक्षयैकवचनं त्वं तु पुनः मागाः इ-
न्द्रादीन्मागच्छ अपि तर्हि हे सुभगे सरमे ते त्वदीयानां गवांसमूहं पर्वतादपगमय्य प्रणाम
त्वंच वयंच विभजाम विभागं करवामेत्यर्थः ॥ ९ ॥

९. (पणिगण की उक्ति)—सरमा, डरकर देवों ने तुम्हें यहाँ भेजा है; इसी लिए तुम आई हो। तुम्हें हम भगिनी-स्वरूप समझते हैं। तुम अब नहीं लौटना। सुन्दरी, हम गोधन का भाग देते हैं।

अथ दशमी—

नाहंवेदभ्रातृत्वंनोस्वसृत्वमिन्द्रोविदुरङ्गिरसश्चघोराः ।
गोकामामेअच्छदयन्यदायमपातइतपणयोवरीयः ॥ १० ॥

न । अहम् । वेद । भ्रातृऽत्वम् । नो इति । स्वसृऽत्वम् । इन्द्रः ।
विदुः । अङ्गिरसः । च । घोराः । गोऽकामाः । मे । अच्छदयन् ।
यत् । आयम् । अप । अतः । इत । पणयः । वरीयः ॥ १० ॥

सा तान्प्रत्याचष्टे हे पणयः अहं भ्रातृत्वं नवेद् नजानामि । तथा स्वसृत्वंच नोवेद नै-
वजानामि । केजानन्ति तदुच्यते इन्द्रः घोराः शत्रूणांभयंकराः अंगिरसश्च विदुर्जानन्ति किंच
अस्मात् स्थानात् अहं यथदायं इन्द्रादीन् प्रामयं अपगच्छगतौ लङिरूपं तदा मे मदीयागो-
कामाः युष्माभिरपहृतागाः कामयमानाइन्द्रादयः अच्छदयन् युष्मदीयंस्थानं आच्छादय-

न्ति । छन्दस्यपवारणे अतःकारणात् हे पणयो वरीयः उरुतरं गवांवृन्दं परित्यज्यअपेत अन्यस्थानं प्रतिगच्छत । यद्वा वरीयः प्रभूतं अतिदूरं देशंगच्छत । एव इणगतौ लोटिरूपं वरीयः उरुशब्दादीयसुनि प्रियस्थिरेत्यादिनावरादेशः ॥ १० ॥

१०. (सरमा की उक्ति)—मैं भ्राता और भगिनी की कथा नहीं समझ सकती। इन्द्र और पराक्रमी अङ्गिरो वंशीय जानते हैं कि, गायें पाने के लिए मुझे उन्होंने, रक्षा-पूर्वक, भेजा है। मैं उनका आश्रय पाकर आई हूँ। पणियो, यहाँ से बहुत दूर भाग जाओ।

दूरमित पणयो वरीय उद्गावो यन्तु मिनतीर्ऋतेन ।
बृहस्पतिर्या अविन्दन्निगूळ्हाः सोमो ग्रावाण ऋषयश्च विप्राः ॥ ११ ॥ ६ ॥

दूरम् । इत । पणयः । वरीयः । उत् । गावः । यन्तु । मिनतीः ।
ऋतेन । बृहस्पतिः । याः । अविन्दत् । निऽगूळ्हाः । सोमः ।
ग्रावाणः । ऋषयः । च । विप्राः ॥ ११ ॥ ६ ॥

हे पणयः यूयं वरीयउरुतरं दूरदेशं इत गच्छत । युष्माभिरपहृतागावः ऋतेन सत्येन मिनतीः मिनत्यः द्वारस्यपिधायकंपर्वतं हिंसन्त्योविदारयन्त्यः उद्यन्तु तस्मादुद्गच्छन्तु । यद्वा मिनतीः व्यत्ययेन कर्मणिशत्रा । मीयमाना युष्माभिः बाध्यमानास्तागावः ऋतं यज्ञं गत्वा स्तुतिभिर्गन्तव्येनेन्द्रेण सहायेन बृहस्पत्यादयउद्यन्तु पर्वतादुद्गमयन्तु निगूळ्हा नितरांस्थापितायाःगाः बृहस्पतिः अविन्दत् लप्स्यते । यथा सोमः तदभिषवकारिणोग्रावाणश्च विप्रामेधाविन ऋषयः अंगिरसश्च लप्स्यन्ते । विदॢलाभे तौदादिकः तस्माच्छन्दसिलुङ्लङ्लिटइति भविष्यदर्थेलङ् शेमुचादीनामिति नुमागमः ॥ ११ ॥

११. पणियो, यहाँ से बहुत दूर भाग जाओ। गायें कष्ट पा रही हैं। वे धर्म के आश्रय में इस पर्वत से लौट चलें। बृहस्पति, सोम, सोमाभिषव-कर्त्ता पत्थर, ऋषि और मेधावी लोग इस गुप्त स्थान में स्थित गायों की बात जान गये हैं।

॥ इत्यष्टमस्य पंचमे षष्ठोवर्गः ॥ ६ ॥

तेऽवदन्नितिसप्तर्चं दशमंसूक्तं जुहूर्नामब्रह्मवादिनी ऋषिः ब्रह्मपुत्र ऊर्ध्वनाभानामवा एतावुभावनुष्टुभौ शिष्टाः पञ्चत्रिष्टुभः विश्वेदेवादेवता । तथाचानुक्रान्तम्—तेऽवदन्सप्त जुहूर्ब्रह्मजाया ब्राह्मोवोर्ध्वनाभा वैश्वदेवं द्व्यनुष्टुबन्तमिति । गतोविनियोगः ।

तेऽवदन्प्रथमा ब्रह्मकिल्बिषेऽकूपारः सलिलो मातरिश्वा ।
वीळुहरास्तपउग्रो मयोभूरापो देवीः प्रथमजा ऋतेन ॥ १ ॥

ते । अवदन् । प्रथमाः । ब्रह्मऽकिल्बिषे । अकूपारः । सलिलः ।
मातरिश्वा । वीळुऽहराः । तपः । उग्रः । मयःऽभूः । आपः ।
देवीः । प्रथमऽजाः । ऋतेन ॥ १ ॥

अत्रेतिहासमाचक्षते जुहूरिति वाङ्नाम सा ब्रह्मणो जाया च बृहस्पतेर्भार्या स बृहस्पतेर्जु-हूर्नामभार्या बभूव कदाचिदस्याः किल्बिषमस्या दौर्भाग्यरूपेणासीच्चक्रे अतएव स एनामपर्यत्याक्षीत् अनन्तरमादित्यादयो देवाः मिथो विचार्य एनामकिल्बिषां कृत्वा पुनर्बृहस्पतये प्रादुरिति । तदनया-ऽर्च्यते—प्रथमा मुख्यास्ते देवाः ब्रह्मकिल्बिषे षष्ठीसमासः समासस्वरः ब्रह्मणो बृहस्पतेः किल्बिषे पापे जुहूदौर्भाग्यरूपे विषये अवदन् निष्कृत्युपायमब्रोचन् नकारपरत्वाद्वत्वपक्षविभाषाभावः । अकूपारः । अत्र यास्कः—आदित्योऽप्यकूपार उच्यते कूपारो भवति दूरपार इति । अकुत्सितपा-रः महागतिरादित्यः सलिलः अब्देवता वरुणः मातरिश्वा वायुः वीळुहराः हरतेरसुनिरूपं हरस्वि हरति विनाशयति तमांसीति हरस्तेजः प्रभूततेजस्कः तपः तृतीयायाः लुक् तपसा तापनेन उग्रः उद्गूर्णोऽग्निः मयोभूः सुखस्य भावयिता सोमः देवीः देव्यः आपः कीदृश्यः ऋतेन सत्यभू-तेन ब्रह्मणा प्रथमजाः आदितएवोत्पादिताः एते उपायमुक्त्वा प्रायश्चित्तमप्यकारयन्निति भावः॥ १॥

१. जिस समय बृहस्पति ने अपनी पत्नी जुहू का त्याग कर दिया—इस प्रकार ब्रह्म-किल्बिष प्राप्त किया, उस समय सूर्य, शीघ्रगामी वायु, प्रज्वलित अग्नि, सुखकर सोम, जल के अधिष्ठाता देवता वरुण और सत्य-स्वरूप प्रजापति की अन्य सन्ततियों ने कहा—प्रायश्चित्त कराया।

अथ द्वितीया—

सोमोराजाप्रथमोब्रह्मजायांपुनःप्रायच्छदहृणीयमानः ।
अन्वर्तितावरुणोमित्रआसीदग्निर्होताहस्तगृह्यानिनाय ॥ २ ॥

सोमः । राजा । प्रथमः । ब्रह्मऽजायाम् । पुनरिति । प्र । अयच्छत् ।
अहृणीयमानः । अनुऽअर्तिता । वरुणः । मित्रः । आसीत् ।
अग्निः । होता । हस्तऽगृह्य । आ । निनाय ॥ २ ॥

प्रथमो मुख्यः सोमो राजा अहृणीयमानः पापापगमेनालज्जमानः सन् तामेनामकिल्बि-षां ब्रह्मजायां पुनर्बृहस्पतये प्रायच्छत् । ततः वरुणः अन्वर्तिता भवतिः सोमोधातुः घृणायां वर्तते तस्य तृचिरूपं सोममनुमोदयितासीत् सर्वथा त्वं गृहाणेति दयामकार्षीत् तथा मित्रश्च अन-

१ नि० ४. १८ ।

ध्वरं होता देवानामाह्वाता मनुष्याणां होमनिष्पादकोऽग्निः हस्तगृह्य वा हस्तेगृहीत्वा आनिनाय आनैषीत् मार्गादित्यर्थः। हस्तगृह्य नित्यंहस्तेपाणावुपयमनइति हस्तेशब्दस्य गतिसंज्ञायां ग्रहिणा समासेल्यप् एकारलोपश्छान्दसः यद्वा हस्तशब्दात्परस्य सुपश्छान्दसो समासत्वेपि॥२॥

२. लज्जा छोड़कर सोम राजा ने पवित्र-चरित्रा स्त्री को सर्वप्रथम बृहस्पति को दिया। मित्र और वरुण ने इसका अनुमोदन किया। होम-निष्पादक अग्नि हाथ से पकड़कर पत्नी को ले आये।

हस्तेनैवग्राह्यआधिरस्याब्रह्मजायेयमितिचेदवोचन्।
नदूतायप्रह्येतस्थएषातथाराष्ट्रंगुपितंक्षत्रियस्य॥ ३॥

हस्तेन। एव। ग्राह्यः। आऽधिः। अस्याः। ब्रह्मऽजाया। इयम्।
इति। च। इत्। अवोचन्। न। दूताय। प्रऽह्ये। तस्थे।
एषा। तथा। राष्ट्रम्। गुपितम्। क्षत्रियस्य॥ ३॥

देवा बृहस्पतिमूचुः हे बृहस्पते अस्याः आधिः आधीयन्ते आभरणान्यत्रेति आधिः शरीरं उपसर्गेघोःकिरितिकिप्रत्ययः अस्याः शरीरं हस्तेनैव ग्राह्यः गृहीतव्यएव पुनः तेदेवा इदानीमियं ब्रह्मजायेत्येवावोचन् अवादिषुः च शब्दश्चेदर्थे अतएव निपातैर्यद्यदिहन्तेति निघाताभावः ब्रूञ्व्यक्तायांवाचि लुङिब्रुवोवचिः अस्यतिवक्तिख्यातिभ्योऽङितिच्लेरङादेशः वच उमित्युमागमः अडागमस्वरः इदवधारणे एषा ब्रह्मजाया पुरा प्रह्ये हिंसनीये कर्मण्यौणादिकः क्विप् गुणाभावश्छान्दसः ह्वेञ्स्पर्धायां संज्ञापूर्वकस्य विधेरनित्यत्वाद्गुणाभावः उदात्तस्वरितयोर्यणइति सुपः स्वरितत्वं प्रहिताय त्वया भार्यान्वेषणार्थं प्रेषिताय दूताय तथा नतस्थे स्वात्मानं नप्रकाशयति तिष्ठतेर्लिटि प्रकाशनस्थेयाख्ययोश्चेत्यात्मनेपदं श्लाघह्नुङ्स्थाशपांज्ञीप्स्यमानइति दूतस्य संप्रदानसंज्ञा। अत्रदृष्टान्तः—यथा क्षत्रियस्यराज्ञः गुपितं रक्षितं राष्ट्रं राज्यं शत्रवे यथा नप्रकाशयति तद्वदसौ दौर्भाग्ययुक्तया तस्मै स्वात्मानं नप्रकाशितवती इदानींतु तद्राहित्येन प्रकाशमानात्वं ब्रह्मजायेत्यब्रुवन्॥ ३॥

३. "इन पत्नी की देह को हाथ से छूना चाहिए—ये यथाविधि विवाहित पत्नी हैं।"—ऐसा सबने कहा। इन्हें खोजने के लिए जो दूत भेजा गया था, उसके प्रति ये अनासक्त रहीं। जैसे बली राजा का राज्य सुरक्षित रहता है, वैसे ही इनका सतीत्व सुरक्षित रहा।

देवाएतस्यामवदन्तपूर्वेसप्तऋषयस्तपसेयेनिषेदुः।
भीमाजायाब्राह्मणस्योपनीतादुर्धांदधातिपरमेव्योमन्॥ ४॥

देवाः । एतस्याम् । अवदन्त । पूर्वे । सप्तऽऋषयः । तपसे । ये ।
निऽसेदुः । भीमा । जाया । ब्राह्मणस्य । उपऽनीता ।
दुःऽधाम् । दधाति । परमे । विऽओमन् ॥ ४ ॥

पूर्वे चिरन्तनादेवाः आदित्यादयः एतस्यांविषये अवदन्त इयं पापरहितेत्यवादिषुः तथा ये सप्तऋषयः समासस्वरः सप्तसंख्याकाऋषयः तपसे तपश्चरणाय निषेदुर्निषण्णाआसन् । सदेर्लिटिरूपं उपसर्गेणसमासः यद्योगादनिघातः तेऽप्यवादिषुः ततः भीमा शत्रुरूपाणां पापानां भयंकरी पतिव्रत्नी एषाजाया ब्राह्मणस्य बृहस्पतेरुपनीता समीपे देवैःस्थापिता नीञ् प्रापणे कर्मणिक्तः गतिरनन्तरइति गतेःप्रकृतिस्वरत्वं तथाहि तपःप्रभावः दुर्धां दुर्धानामपि परमे व्योमन् व्योमनि उत्तमेस्थाने दधाति विदधातिखलु । तस्मादेनामपि देवतापरिग्रहरूपः तपोमहिमा बृहस्पतेरन्तिके स्थापयति ॥ ४ ॥

४. तपस्या में प्रवृत्त सप्तर्षियों और प्राचीन देवों ने इन पत्नी की बात कही है। ये अत्यन्त शुद्ध-चरित्रा हैं। इन्होंने बृहस्पति से विवाह किया है। तपस्या और सच्चरित्रता से निकृष्ट पदार्थ भी उत्तम स्थान में स्थापित हो सकता है।

अथ पंचमी—

ब्रह्मचारीचरतिवेविषद्विषःसदेवानांभवत्येकमङ्गम् ।
तेनजायामन्वविन्दद्बृहस्पतिःसोमेननीतांजुह्वंनदेवाः ॥ ५ ॥

ब्रह्मऽचारी । चरति । वेविषत् । विषः । सः । देवानाम् ।
भवति । एकम् । अङ्गम् । तेन । जायाम् । अनु । अविन्दत् ।
बृहस्पतिः । सोमेन । नीताम् । जुह्वम् । न । देवाः ॥ ५ ॥

एवं स्वपतिः प्राप्तंभवेदिति जुहूः परोक्षतयावदति हे देवाः पूर्वं ब्रह्मचारी जायाभावेन ब्रह्मचारीचरति अतएव विषः सर्वेषु यज्ञेषु व्याप्नुवन् देवान्वेविषत् स्तुतिभिर्हविर्भिश्च व्याप्नुवन् देवानामेकमंगंभवति जायापती यज्ञस्यैकमंगंखलु वेविषत् विष्लृव्याप्तौ जुहोत्यादिकः णिजां त्रयाणांगुणः श्लावित्यभ्यासस्यगुणः शतुर्नाभ्यस्ताच्छतुरिति नुमागमप्रतिषेधः अभ्यस्ताना-मादिरित्याद्युदात्तत्वं । तेन देवानां परिचरणेन बृहस्पतिः जायां जुहूनामिकां यां अन्वविन्दत् अनुगम्यालभत् । नशब्दउपमार्थे पूर्वं यथा सोमेननीतां सोमोऽददद्गन्धर्वायेत्यादि क्रमेणनीतां जुहूं जुहूं यथा लब्धवान् तद्वदिदानीमपि जुहूं हुदानादनयोः अन्येभ्योपिदृश्यन्तेइतिक्विप् जु-

होर्वेदेबेतिद्विर्वचनंदीर्घश्च उदात्तयणोहल्पूर्वादितिविभक्त्युदात्तत्वेप्राप्ते नोङ्धात्वोरितितत्प्रतिषेधे स्वाप्तस्वरितयोर्यणइतिस्वरितत्वं ॥ ५ ॥

५. स्त्री के अभाव में बृहस्पति ब्रह्मचर्य के नियम का पालन करते हैं। वे सारे देवों के साथ एकात्मा होकर उनके अङ्ग-विशेष हो गये हैं। जैसे उन्होंने प्रथम सोम के हाथ से भार्या को पाया था, वैसे ही इस समय भी उन्होंने फिर जुहू नाम की पत्नी को प्राप्त किया।

पुनर्वैदेवाअंददुःपुनर्मनुष्याउत ।
राजानःसत्यंकृण्वानाब्रह्मजायांपुनर्ददुः ॥ ६ ॥

पुनः । वै । देवाः । अददुः । पुनः । मनुष्याः । उत । राजानः ।
सत्यम् । कृण्वानाः । ब्रह्मऽजायाम् । पुनः । ददुः ॥ ६ ॥

लाभहेतुमाह देवाः ब्रह्मजायां जुहूं बृहस्पतये पुनरददुः वैशब्दः प्रसिद्धवाची उतास्य-र्थे मनुष्याअपि पुनरददुः एवं देवमनुष्यैः कर्वदानं सत्यं यथार्थं कृण्वानाः कुर्वाणा राजानोऽपि पुनस्तस्मैददुः एवं अव्यवहार्यत्वनिमित्तं पापमपि व्यनाशयन्निति भावः ॥ ६ ॥

६. देवों और मनुष्यों ने पुनः बृहस्पति को उनकी पत्नी को समर्पित कर दिया। राजाओं ने भी पुनः शपथ के साथ शुद्ध-चरित्रा पत्नी को समर्पित किया।

पुनर्दायब्रह्मजायांकृत्वीदेवैर्निकिल्बिषम् ।
ऊर्जंपृथिव्याभक्त्वायोरुगायमुपासते ॥ ७ ॥ ७ ॥

पुनःऽदाय । ब्रह्मऽजायाम् । कृत्वी । देवैः । निःऽकिल्बिषम् ।
ऊर्जम् । पृथिव्याः । भक्त्वाय । उरुऽगायम् । उप । आसते ॥ ७ ॥ ७ ॥

देवैः सुपांसुलुगिति भिसऐसादेशः देवाः निकिल्बिषं अर्थाभावेऽव्ययीभावः समासस्वरः तस्याकिल्बिषाभावं कृत्वी स्नात्व्यादयश्चेतिनिपातितः कृत्वा ब्रह्मजायां ब्रह्मणोबृहस्पतेर्भार्यां पुनर्दाय पुनर्दत्वा पुनश्चनसौच्छन्दसि गतिसंज्ञावक्तव्येति पुनःशब्दस्य गतिसंज्ञायां समासल्यपौ नल्यपीतीत्वप्रतिषेधः कृदुत्तरपदप्रकृतिस्वरत्वं पृथिव्याःऊर्जं रसभूतं अन्नं हवीरूपं भक्त्वाय क्त्वोयगितियगागमः भक्त्वा विभज्य उरुगायं बहुकीर्तिं बहुभिः स्तोतव्यं वा बार्हस्पत्यंपदं उपासते सेवन्ते ॥ ७ ॥

७. शुद्ध-चरित्रा पत्नी को फिर लाकर देवों ने बृहस्पति को निष्पाप किया। अनन्तर पृथिवी का सर्वश्रेष्ठ अन्न विभक्त करके सभी सुख से अवस्थान करने लगे।

॥ इत्यष्टमस्य षष्ठे सप्तमोवर्गः ॥ ७ ॥

समिद्धइत्येकादशर्चं एकादशंसूक्तं त्रैष्टुभं भार्गवोजमदग्निर्ऋषिः तत्पुत्रोरामोवा यःपरशुरामइतिप्रख्यातः आप्रीसूक्तमिदं अतः समिदाद्याः तनूनपान्नराशंसवर्जिताः प्रत्यृचंदेवताः। तथाचानुक्रान्तं—समिद्धएकादश जमदग्निस्तत्पुत्रोवाराम आप्रियइति। पशौ जामदग्न्यानामिदमाप्रीसूक्तं यद्वा अ.परोषेण सर्वेषां। सूत्रितंच समिद्धोअद्येति पच इतीति। अग्निचयनांगभूते प्राजापत्येपशौ सर्वेषां नित्यमिदमाप्रीसूक्तं। सूत्रितंच—प्राजापत्ये तु जामदग्न्यः सर्वेषामिति।

तत्र प्रथमा—

समिद्धोअद्यमनुषोदुरोणेदेवोदेवान्यजसिजातवेदः।
आचवहमित्रमहश्चिकित्वान्त्वंदूतःकविरसिप्रचेताः॥ १॥

सम्ऽइद्धः। अद्य। मनुषः। दुरोणे। देवः। देवान्। यजसि। जातऽवेदः। आ। च। वह। मित्रऽमहः। चिकित्वान्। त्वम्। दूतः। कविः। असि। प्रऽचेताः॥ १॥

हे जातवेदोजातप्रज्ञाग्ने देवः स्वतेजसा दीप्यमानस्त्वं मनुषः मनुष्यस्य यष्टुः दुरोणे गृहनामैतत् दुरवने आयासेन रक्षितव्येगृहे अद्यास्मिन्कर्मणि समिद्धः सम्यक्प्रज्वालितःसन् देवानिन्द्रादीन्यजसि हविर्भिः पूजय समिद्धः इन्धीदीप्तौ कर्मणिक्ते श्वीदितोनिष्ठायामितीट्प्रतिषेधः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वं हे मित्रमहः सुरूपस्तोतॄलक्षणत्वेन मित्रभूतानां स्तोतॄणां पूजयितस्तैः पूज्यमानवाग्ने चिकित्वान् वैःकृताःस्तुतीः प्रजानन् चेतनावान्वा त्वं अस्मदीयेयज्ञे देवानावहचआभिमुख्येन वहप्रापय वहप्रापणे ःतिरूपं चवायोगेप्रथमेतिननिघातः। तथा कविः क्रान्तप्रज्ञः अतएव प्रचेताः प्रकृष्टज्ञानस्त्वं दूतः देवानां हविःप्रापणेन हितकारीभवसि॥ १॥

१- ज्ञानी अग्नि, तुम मनुष्यों के गृह में आज समिद्ध होकर अपने देवता और अन्यान्य देवों की पूजा करो। तुम्हारा मित्र तुम्हारी पूजा करता है—यह जानकर तुम देवों को ले आओ; क्योंकि तुम उत्तम बुद्धि से युक्त और क्रिया-कुशल दूत हो।

अथ द्वितीया—

तनूनपात्पथऋतस्ययानान्मध्वासमञ्जन्त्स्वदयासुजिह्व।
मन्मानिधीभिरुतयज्ञमृन्धन्देवत्राचकृणुह्यध्वरंनः॥ २॥

तनूऽनपात्। पथः। ऋतस्य। यानान्। मध्वा। सम्ऽअञ्जन्।
स्वदय। सुऽजिह्व। मन्मानि। धीभिः। उत। यज्ञम्। ऋन्धन्।
देवऽत्रा। च। कृणुहि। अध्वरम्। नः॥ २ ॥

हे तनूनपात् नपादिति अनन्तरापत्यनामधेयं गौरत्र तनूरुच्यते ततोऽस्यां भोगाः क्षीरादयइति तस्याः पयोजायते पयसश्चाज्यं तस्मादग्निः। यद्वा अन्तरिक्षे तताआपस्तन्वः ताभ्यओषध्यादयः तेभ्योऽग्निरिति एवंरूप हे सुजिह्व शोभनज्वाल यद्वा जिह्वेतिवाङ्नाम शोभनवाक् अग्ने ऋतस्य यज्ञस्य यानान् फलप्राप्तिहेतून् पथोमार्गान् हविरात्मकान् मध्वा मदकरेणरसेन यद्वा वाग्जनितेनरसेन समंजन् सम्यग्दीपयन् स्वदय स्वादयस्व स्वादुकुरु। स्वदआस्वादने णिचिउपधावृद्ध्यभावश्छान्दसः। किंच मन्मानि मन्यतेरर्चतिकर्मणः मननोपायान्यस्मदभिप्रेतानि स्तोत्राणि धीभिः प्रज्ञाभिः कर्मभिर्वा उतापिच यज्ञं यजनीयं हविश्चऋन्धन् समृद्धानिकुर्वन् नोऽस्मदीयमध्वरं यज्ञं देवत्रा देवेषु कृणुहि कुरु। देवशब्दात् देवमनुष्येत्यादिना सप्तम्यर्थे त्राप्रत्ययः॥ २ ॥

२. हे तनूनपात् (अग्नि), यज्ञ-गमन के जो पथ (हवि आदि) हैं, उन्हें मधु-मिश्रित करके अपनी सुन्दर शिखा से स्वाद लो। सुन्दर भावों के द्वारा स्तोत्रों और यज्ञ को समृद्ध करो और हमारे यज्ञ को देव-भोग्य कर दो।

आजुह्वानईड्योवन्द्यश्चायाह्यग्नेवसुभिःसजोषाः।
त्वंदेवानामसियह्वहोतासएनान्यक्षीषितोयजीयान् ॥ ३ ॥

आऽजुह्वानः। ईड्यः। वन्द्यः। च। आ। याहि। अग्ने।
वसुऽभिः। सऽजोषाः। त्वम्। देवानाम्। असि। यह्व।
होता। सः। एनान्। यक्षि। इषितः। यजीयान् ॥ ३ ॥

हे अग्ने त्वमस्मिन्कर्मण्यायाहि आगच्छ कीदृशः आजुह्वानः देवानामाह्वाता हुदाना-दनयोः जौहोत्यादिकः अभ्यस्तस्वरः ईड्यः ईडिरध्येषणाकर्मा अध्येष्यः प्रार्थ्यमानः वन्द्यः स्तोतव्यः वसुभिर्देवैः सजोषाः सहप्रीयमाणः आगत्यच हे यह्व महन्नामैतत् हे महन् सत्वं देवानां होता आह्वातासि ततः यजीयान् यष्टृशब्दादीयसुनि तुरिष्ठेमेयःस्विति तृलोपः यष्टृतरः सत्वं इषितः अस्माभिरध्येषितः प्रार्थितः सन् एनान् देवान् यक्षि यज ह-विषा पूजय ॥ ३ ॥

३. अग्नि, तुम देवों को बुलानवाले, प्रार्थनीय और प्रणाम के योग्य हो। वसुओं के साथ पधारो। हे महान् पुरुष, तुम देवों के होता हो। तुम्हें प्रेरित किया जाता है। तुम्हारे समान कोई यज्ञ नहीं कर सकता। तुम इन सारे देवों के लिए यज्ञ करो।

अथ चतुर्थी—

प्राचीनंबर्हिःप्रदिशापृथिव्यावस्तोरस्याव॑ज्यतेअग्रेअह्नाम् ।
व्युंप्रथतेवितरंवरीयोदेवेभ्योअदितयेस्योनम् ॥ ४ ॥

प्राचीनम् । बर्हिः । प्रऽदिशा । पृथिव्याः । वस्तोः । अस्याः ।
वृज्यते । अग्रे । अह्नाम् । वि । ऊँ इति । प्रथते । विऽतरम् ।
वरीयः । देवेभ्यः । अदितये । स्योनम् ॥ ४ ॥

यदिदं प्राचीनं प्रागंचितं प्राङ्मुखं बर्हिरस्ति यदिदं पृथिव्याः वेदिलक्षणायाः वस्तोः वसआच्छादने तुन्प्रत्ययः चतुर्थ्यर्थे बहुलंछन्दसीतिषष्ठी यद्वा भावलक्षणेतोसुन् तृचन्यः व-सनायाच्छादनार्थं अह्नामग्रे पूर्वाह्णे प्रदिशा प्रकर्षेण दिश्यमानेनमंत्रेण अस्याः प्राच्यादिशः वृज्यते स्तृयते आह्रियते । तथाचनिगमः—वज्राबहन्तिकवयःपुरस्तादित्यादि । तच्चाहृतं वरी-यउरुतरं बर्हिः वितरं विस्तीर्णं यथाभवति तथा विप्रथते विविधमेवबेधां प्रस्तृतंभवति । तथा देवेभ्यःअदितये वेदिलक्षणायै पृथिव्यैच स्योनं सुखकरं भवति । विस्तीर्णेबर्हिषि देवाः सुखं निषीदन्ति ॥ ४ ॥

४. पूर्वाह्ण में, वेदी को ढँकने के लिए, कुश को पूर्वमुख करके बिछाया जाता है। वह परम सुन्दर कुश और विस्तृत किया जाता है। उसपर अदिति और अन्य देवता लोग सुख से बैठते हैं।

अथ पञ्चमी—

व्यचंस्वतीरुर्वियाविश्रयन्तांपतिभ्योनजनयःशुम्भमानाः ।
देवींर्द्वारोबृहतीर्विश्वमिन्वादेवेभ्योभवतसुप्रायणाः ॥ ५ ॥ ८ ॥

व्यचस्वतीः । उर्विया । वि । श्रयन्ताम् । पतिऽभ्यः । न । जनयः ।
शुम्भमानाः । देवीः । द्वारः । बृहतीः । विश्वम्ऽइन्वाः ।
देवेभ्यः । भवत । सुप्रऽअयनाः ॥ ५ ॥ ८ ॥

व्यचस्वतीः व्यचोव्यापनं तद्वत्यः वाछन्दसीति पूर्वसवर्णदीर्घः द्वारदेवताः उर्विया उ-रुशब्दात् तृतीयैकवचने इयाडियाजीकाराणामुपसंख्यानमितीयादेशः उरुत्वेन विश्रयन्तां वि-शेषेणाश्रिताभवन्तु । तत्रदृष्टान्तः—पतिभ्योन यथा पत्नीनामर्थाय संभोगकाले शुंभमानाः शोभमानाः जनयः विश्रयन्ति तद्वदस्मिन्कर्मणि विश्रयन्तां बृहतीर्महत्यः । हे विश्वमिन्वाः

इति: प्रीणनार्थः तस्मात्कर्मण्युपपदेऽण् इतित्वामुम् तत्पुरुषे कृतिबहुलमित्यत्र बहुलवचनात् द्वितीयाया अप्यलुक् सर्वस्य प्रीणयित्र्यः हे द्वारो देवीः द्वाराभिमानिन्यो हे देव्यः यूयं देवेभ्यः देवानामर्थाय सुप्रायणाः सुखगमनाः सुविवृता भवत ॥ ५ ॥

५. जैसे स्त्रियाँ वेश-भूषा करके पतियों के पास अपने शरीर को प्रकट करती हैं, वैसे ही इन सब सुनिर्मित द्वारों की अभिमानिनी देवियाँ पृथक् हो जायें—विस्तृत रूप से खुल जायें। द्वार-देवियो, देवता सरलता से जा सकें, इस प्रकार खुल जाओ।

॥ इत्यष्टमस्य पञ्चदशोवर्गः ॥ ८ ॥

आसुष्वयन्तीयजतेउपाकेउषासानक्तासदतांनियोनौ।
दिव्येयोषणेबृहतीसुरुक्मेअधिश्रियंशुक्रपिशंदधाने ॥ ६ ॥

आ। सुस्वयन्ती इति। यजते इति। उपाके इति। उषसानक्ता। सदताम्। नि। योनौ। दिव्ये इति। योषणे इति। बृहती इति। सुरुक्मे इति सुऽरुक्मे। अधि। श्रियम्। शुक्रऽपिशम्। दधाने इति ॥ ६ ॥

सुष्वयन्ती अयपयमवौ शरीरं उपसर्गस्य सोर्दीर्घत्वं छान्दसं सुष्ठु अयन्त्यौ गच्छन्त्यौ वा स्वपेर्यन्तस्य वर्णलोपः सुष्वापयन्त्यौ यजते यजत्ये उपाके उपक्रान्ते उषासानक्ता उषाश्च नक्तं च द्वन्द्वे उषासोषसः इति उषासादेशः देवताद्वन्द्वे चेति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वं अहो-रात्रदेव्यौ योनौ अस्मिन्यज्ञस्थाने नितरां नियमेन वा आसदतां आसीदतां। सदेर्लुङि लृ-दित्वाच्च्लेरङ् कीदृश्ये दिव्ये दिविभवे योषणे योषिताविव प्रीणयित्र्यौ यद्वा योषणं समिश्रे पर-स्परतो विविक्ते बृहती गुणैर्महत्यौ सुरुक्मे शोभनदीप्ते रुक्मं रोचतेर्मक्प्रत्ययः कुत्सेच कुत्सेतरूपं शुक्रपिशं शोचमानरूपं श्रियं अधिदधाने अधिकं धारयन्त्यौ ॥ ६ ॥

६. उषा देवी और रात्रिदेवी लोगों के लिए सुषुप्ति से उत्पन्न सुख उत्पन्न कर दें। वे यज्ञ-भाग की अधिकारिणी हैं। वे परस्पर मिलकर यज्ञ-स्थान में बैठें। वे—दिव्य-लोक-वासिनी स्त्री के समान अत्यन्त गुण-वती, परम शोभा से युक्त और उज्ज्वल श्री धारण करनेवाली हैं।

दैव्याहोतारापृथमासुवाचामिमानायज्ञंमनुषोयजध्यै।
प्रचोदयन्ताविदथेषुकारूप्राचीनंज्योतिःप्रदिशादिशन्ता ॥ ७ ॥

दैव्या। होतारा। प्रथमा। सुऽवाचा। मिमाना। यज्ञम्। मनुषः। यजध्यै। प्रऽचोदयन्ता। विदथेषु। कारू इति। प्राचीनम्। ज्योतिः। प्रऽदिशा। दिशन्ता ॥ ७ ॥

दैव्या देवात्यञ्ञाविति यञ्प्रत्ययः देवसंबन्धिनौ होतारा होमनिष्पादकौ होतृनामकौ अग्न्यादित्यौ अस्मिन्यज्ञे आसीदताम् । कीदृशौ प्रथमामनुष्यहोतुः पूर्वभाविनौ सुवाचा शोभनस्तोत्रौ मनुषोमनुष्यस्य सर्वस्य यज्ञः यजध्यै यागनिवृत्तये यजेस्तुमर्थेऽध्यैन्प्रत्ययः यज्ञं मिमाना निर्मिमानौ उत्पादयन्तौ विदथेषु विदंत्यत्रऋत्विजः स्वस्वकर्माणीति विदथाः यज्ञाः तेषु ऋत्विजोयजमानांश्च प्रचोदयन्ता प्रेरयन्तौ कारू स्तुतीनांकर्तारौ प्राचीनं पूर्वस्यांदिशि यदृव्यतेनस्थितं आहवनीयाख्यं ज्योतिः प्रदिशा प्रकृष्टेनोपदिष्टमार्गेण यद्वा प्रदिश्यमानेन मंत्रेण दिशन्ता निर्वहन्तौ ॥ ७ ॥

७. दोनों देव—होता (अग्नि और आदित्य) ही प्रथम उत्तम वाक्यों से स्तोत्र करते हैं—मनुष्य के यज्ञ के लिए अनुष्ठान-कार्य का निर्माण कर देते हैं। वे पुरोहितों को विभिन्न अनुष्ठानों में प्रेरित करते हैं। वे क्रिया-कुशल हैं और पूर्व दिशा के प्रकाश को उत्पन्न करते हैं।

आनोयज्ञंभारतीतूयमेत्विळामनुष्वदिहचेतयन्ती ।
तिस्रोदेवीर्बर्हिरेदंस्योनंसरस्वतीस्वपसःसदन्तु ॥ ८ ॥

आ । नः । यज्ञम् । भारती । तूयम् । एतु । इळा । मनुष्वत् ।
इह । चेतयन्ती । तिस्रः । देवीः । बर्हिः । आ । इदम् ।
स्योनम् । सरस्वती । सुऽअपसः । सदन्तु ॥ ८ ॥

भारती भरतआदित्यः तस्यस्वभूतादीप्तिः तस्येदमित्यर्थे उत्सादित्वादञ् टिड्ढाणञिति ङीप् नोस्मदीयंयज्ञंतूयं क्षिप्रं एतु आगच्छतु । तथा मनुष्वत् मनुष्योयथा इदं मयाकर्तव्यमिति जानाति तद्वत् चेतयन्ती जानाना इळादेवीच इहास्मिन्कर्मणि आगच्छतु । तथा सरस्वती च स्वपसः सुकर्माणः अपइति कर्मनाम आप्नोतेरसुनि आपःकर्माख्यायांह्रस्वः बहुव्रीहौआद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वं । एतास्तिस्रोदेवीः देव्यः स्योनं सुखकरं इदं बर्हिः इमं यज्ञं आसदन्तु आसीदन्तु प्राप्नुवन्तु सदेर्लोटिसीदादेशाभावश्छान्दसः ॥ ८ ॥

८. भारतीदेवी (सूर्य-दीप्ति) हमारे यज्ञ में शीघ्र आवें। इलादेवी इस यज्ञ की बात का स्मरण करके, मनुष्य के समान, आगमन करें। ये दोनों और सरस्वतीदेवी—ये तीन चमत्कार-कार्य-कारिणी देवियाँ सामने के सुखावह आसन पर आकर बैठें।

त्वाष्ट्रस्यपशोर्वपायाः यइमेद्यावेत्येषानुवाक्या । सूत्रितंच—यइमेद्यावापृथिवीजनित्री यच्चस्तुरीपमधपोषयित्न्विति ।

यइमेद्यावापृथिवीजनित्रीरूपैरपिंशद्भुवनानिविश्वा ।
तमद्यहोतरिषितोयजीयान्देवंत्वष्टारमिहयक्षिविद्वान् ॥ ९ ॥

यः । इमे इति । द्यावापृथिवी इति । जनित्री इति । रूपैः ।
अपिंशत् । भुवनानि । विश्वा । तम् । अद्य । होतः । इषितः ।
यजीयान् । देवम् । त्वष्टारम् । इह । यक्षि । विद्वान् ॥ ९ ॥

यस्त्वष्टा देवः जनित्री विश्वस्य जनयित्र्यौ इमे द्यावापृथिवी द्वन्द्वे दिवो द्यावादेशः आद्युदात्तः । पृथिवीशब्दो ङीषन्तत्वेनान्तोदात्तः देवताद्वन्द्वे चेति पूर्वोत्तरपदयोः प्रकृतिस्वरत्वं द्यावापृथिव्यौ रूपैः देवतिर्यङ्मनुष्याद्याकारैः अपिंशत् रूपवत्यावकरोत् पिश अवयवे तौदादिकः । शे मुचादीनामिति नुमागमः । तथा विश्वा सर्वाणि भुवनानि भूतजातानि रूपयुक्तान्यकरोत् हे होतः यजीयान् यष्टृतमः विद्वान् सर्वं जानानः त्वं इषितः अस्माभिरध्येषितः प्रार्थितः सन् इहास्मिन् कर्मणि अद्यास्मिन्दिने तं त्वष्टारं देवं यक्षि स्तुतिभिर्हविर्भिर्वा यज पूजय ॥ ९ ॥

९. द्यावापृथिवी देवों की मातृ-स्वरूपिणी हैं। होता, जिन देवता ने उन दोनों को उत्पन्न करके सारे संसार में नाना प्राणियों की सृष्टि की है, उन्हीं त्वष्टा देव की आज तुम पूजा करो। तुम्हारे पास अन्न है, तुम विद्वान् हो और तुम्हारे समान दूसरा कोई यज्ञ नहीं कर सकता।

उपावसृजत्मन्यासमञ्जन्देवानांपाथऋतुथाहवींषि ।
वनस्पतिःशमितादेवोअग्निःस्वदन्तुहव्यंमधुनाघृतेन ॥ १० ॥

उपऽअवसृज । त्मन्या । सम्ऽअञ्जन् । देवानाम् । पाथः ।
ऋतुऽथा । हवींषि । वनस्पतिः । शमिता । देवः । अग्निः ।
स्वदन्तु । हव्यम् । मधुना । घृतेन ॥ १० ॥

हे वनस्पते यूप त्मन्या आत्मशब्दस्य तृतीयैकवचने यादेशः मन्त्रेष्वाङ्यादेरात्मन इत्याकारलोपः आत्मनैव ऋतुथा काले काले प्राप्ते काले देवानामर्थाय पाथः पशुलक्षणमन्नं अन्यानि च हवींषि समञ्जन् सम्यक् व्यक्तीकुर्वन् उपावसृज उपागम्य प्रयच्छ । गतिर्गताविति निघातः । किंच वनस्पतिर्योऽयं यूपः शमिता एतन्नामको देवः यद्वा शामित्रोऽग्निः देवो दीप्यमानः आहवनीयाख्योऽग्निश्च एते त्रयः मधुना मधुरेण घृतेन यद्वा मधुना उदकेन प्रोक्षणोपनयनादिगतेन घृतेन च हव्यं हवनयोग्यं स्वदन्तु स्वादं कुर्वन्तु ॥ १० ॥

१०. यूप (यज्ञ में पशुओं के बाँधने के काष्ठ), तुम स्वयं, यथासमय, देवों के लिए अन्न और अन्यान्य होमीय द्रव्य लाकर निवेदित करो। वनस्पति, शमिता नामक देव और अग्नि, मधु और घृत के साथ, होमीय द्रव्य का आस्वादन करें।

सद्योजातोव्यमिमीतयज्ञमग्निर्देवानामभवत्पुरोगाः ।
अस्यहोतुःप्रदिश्यृतस्यवाचिस्वाहाकृतंहविरदन्तुदेवाः ॥ ११ ॥ ९ ॥

स॒द्यः । जा॒तः । वि । अ॒मि॒मी॒त॒ । य॒ज्ञम् । अ॒ग्निः । दे॒वाना॑म् ।
अ॒भ॒व॒त् । पु॒रः॒ऽगाः । अ॒स्य । होतुः॑ । प्र॒ऽदिशि॑ । ऋ॒तस्य॑ ।
वा॒चि । स्वाहा॑ऽकृतम् । ह॒विः । अ॒द॒न्तु॒ । दे॒वाः ॥ ११ ॥ ९ ॥

अयमग्निः सद्यस्तदानीमेव जातोजायमानएव यज्ञं व्यमिमीत विशेषेण निर्मिमीते उत्पादयति । माहुत्यानेशब्देच चौहोत्यादिकः अतएवायमग्निः देवानां पुरोगाः प्रथमगामी मुख्योऽभवत् गर्भेविद्धमन्यप्रेआलेचकत्वेरूपं । ततः प्रदिशि प्रकृष्टायांदिशि प्राच्यां कृतस्य आहवनीयात्मनाआगतस्यास्य होतुर्होमनिष्पादकस्याग्नेः वाचि अवयवागामयप्रआस्येलक्षयते वाचि आस्ये स्वाहाकृतं स्वाहाकारेण प्रक्षिप्तं हविः सर्वेदेवा अदन्तु । इदंसूक्तं यास्केन सम्यगव्याख्यायि यथानुसंधीयेयं ॥ ११ ॥

११. जन्म के साथ ही अग्नि ने यज्ञ-निर्माण किया और देवों के अग्रगामी मुख्य हुए। अग्नि स्वरूप होता मन्त्र-पाठ करें। यज्ञोपयोगी वेद-वाक्य उच्चारित हों। स्वाहा के साथ जो होमीय द्रव्य दिया जाता है, उसका भक्षण देवता करें।

॥ इत्यष्टमस्य षष्ठे नवमोवर्गः ॥ ९ ॥

मनीषिणइत्येकादशर्चं द्वादशंसूक्तं वैरूपस्याष्ट्रादंष्ट्रस्यार्षं त्रैष्टुभमैन्द्रं । तथाचानुक्रम्यते—मनीषिणोदश्याष्ट्रादंष्ट्रइति । गतोविनियोगः ।

तत्र प्रथमा—

मनी॑षिणः॒ प्र भ॑रध्वं मनी॒षां यथा॑यथा म॒तयः॒ सन्ति॑ नृ॒णाम् ।
इन्द्रं॑ स॒त्यैरेर॑यामा कृ॒तेभिः॒ स हि वी॒रो गि॑र्वण॒स्युर्विदा॑नः ॥ १ ॥

मनी॑षिणः । प्र । भ॒र॒ध्व॒म् । म॒नी॒षाम् । यथा॑ऽयथा । म॒तयः॑ ।
सन्ति॑ । नृ॒णाम् । इन्द्र॑म् । स॒त्यैः । आ । ई॒र॒या॒म॒ । कृ॒तेभिः॑ ।
सः । हि । वी॒रः । गि॒र्व॒ण॒स्युः । विदा॑नः ॥ १ ॥

हे मनीषिणः स्तोतारः मनीषां मनसईषित्रीं स्तुतिमिन्द्राय प्रभरध्वं कुरुत नृणां कर्मनेतृणां युष्माकं यथायथामतयः सन्ति भवन्ति तथा बुद्ध्यनुसारेणस्तुतिं कुरुध्वं । वयंच कृतेभिः कृतैः सत्यैः यथार्थभूतैः स्तोत्रैः इन्द्रमेरयाम यज्ञंप्रत्यागमयाम ईरगतौ ण्यन्तस्यलोट् । हि यस्मात् विदानः जानानः समर्थः सइन्द्रः गिर्वणस्युः गीर्भिः वनन्ति संभजन्तेइति गिर्वणसः

1 नि० ८.५. अष्टमाध्याये पंचमीं कंडिकामारभ्य एकविंशतिकंडिकापर्यंतम्।

स्तोतारः यथैवेह नित्यं यजमानस्यैषां मनीषाभावस्तथा भवत । सत्यात्मकेन कर्मणा छन्दसीतिस्मरणात् स्तोतॄन् कामयमानः खलु अवसरमभिप्रेत ॥ १ ॥

१. स्तोताओ, तुम्हारी बुद्धि का उदय जैसे-जैसे होता है, वैसे-वैसे तुम लोग स्तोत्र-पाठ करो। सत्कर्मानुष्ठान करके इन्द्र को बुलाया जाय; क्योंकि वीर इन्द्र स्तोत्र जानने पर स्तोताओं का प्यार करते हैं।

ऋतस्य हि सदसो धीतिरद्यौत्सं गार्ष्टेयो वृषभो गोभिरानट् ।
उदतिष्ठत्तविषेणा रवेण महान्ति चित्सं विव्याचा रजांसि ॥ २ ॥

ऋतस्य । हि । सदसः । धीतिः । अद्यौत् । सम् । गार्ष्टेयः ।
वृषभः । गोभिः । आनट् । उत् । अतिष्ठत् । तविषेण ।
रवेण । महान्ति । चित् । सम् । विव्याच । रजांसि ॥ २ ॥

ऋतस्योदकस्य सदसः स्थानस्यान्तरिक्षस्य धीतिर्धारकः स इन्द्रः अद्यौत् द्योतते प्रकाशते । हि प्रसिद्धौ । वृषभो गार्ष्टेयः सकृत्प्रसूताया धेन्वा अपत्यं वृषभः गोभिः समानट् संव्याप्नोति तथा एषोऽपि सर्वं स्थानं व्याप्नोति तथा तविषेण महता रवेण शब्देन उदतिष्ठत् प्रादुर्भवत् । अतएव महान्ति चित् महान्त्यपि रजांसि उदकानि भुवनानि वा संविव्याच संव्याप्नोति ॥ २ ॥

२. जल का आधार (अन्तरिक्ष) धारण करनेवाले इन्द्र प्रकाशित होते हैं। अल्पवयस्क गाय के गर्भ से उत्पन्न वृष जैसे गायों के साथ मिलता है, वैसे ही इन्द्र सर्वव्यापी होते हैं। विलक्षण कोलाहल के साथ इन्द्र प्रकट होते हैं। वे बृहत्-बृहत् जलराशि बनाते हैं।

इन्द्रः किल श्रुत्या अस्य वेद स हि जिष्णुः पथिकृत्सूर्याय ।
आन्मेनां कृण्वन्नच्युतो भुवद्गोः पतिर्दिवः सनजा अप्रतीतः ॥ ३ ॥

इन्द्रः । किल । श्रुत्यै । अस्य । वेद । सः । हि । जिष्णुः ।
पथिऽकृत् । सूर्याय । आत् । मेनाम् । कृण्वन् । अच्युतः ।
भुवत् । गोः । पतिः । दिवः । सनऽजाः । अप्रतिऽइतः ॥ ३ ॥

अस्यास्मदीयस्य स्तोत्रस्य श्रुत्यै श्रवणाय इन्द्रः किल इन्द्र एव वेद जानाति स हि खलु जिष्णुः शत्रूणां जयशीलः सूर्याय पथिकृत् मार्गकर्ता भवति । किंच अच्युतः शत्रुभिरच्याव्यः

वृषणश्वस्य मेनाभवत्मात्मानं कुर्वन्निन्द्रः आव आगच्छति अस्मदीयं यज्ञं । मेनाभवो वृषण-श्वस्य सुक्रतो इति मन्त्रान्तरं । अस गतिदीप्त्यादानेषु औणादिकः दिवो द्युलोकस्य च पतिः भुवदभूत् अभवदेवेन्द्र वाक्यभेदादनिघातः ॥ ३ ॥

३. इस स्तोत्र का श्रवण इन्द्र ही जानते हैं। वे जयशील हैं। उन्होंने सूर्य का मार्ग बना दिया है। अविचल इन्द्र ने से [illegible] को प्रकट किया। वे गायों के सत्वाधिकारी और स्वर्ग के प्रभु हुए। वे चिरन्तन हैं। उनके विपक्ष में कोई नहीं जा सकता।

इन्द्रो॑ म॒ह्ना म॑ह॒तो अ॑र्ण॒वस्य॑ व्र॒ता मि॑नाद॒ङ्गिरो॑भिर्गृणा॒नः ।
पु॒रूणि॑ चि॒न्नि त॑तान॒ रजां॑सि दा॒धार॒ यो ध॒रुणं॑ स॒त्यता॑ता ॥ ४ ॥

इन्द्रः॑ । म॒ह्ना । म॒ह॒तः । अ॒र्ण॒वस्य॑ । व्र॒ता । मि॒ना॒त् ।
अ॒ङ्गिरः॑ऽभिः । गृ॒णा॒नः । पु॒रूणि॑ । चि॒त् । नि । त॒ता॒न॒ ।
रजां॑सि । दा॒धार॑ । यः । ध॒रुण॑म् । स॒त्यऽता॑ता ॥ ४ ॥

इन्द्रः अङ्गिरोभिर्ऋषिभिर्गृणानः स्तूयमानःसन् महतोर्णवस्य अर्णसः सलोपश्छेतिवम-त्ययः उदकवतो मेघस्य व्रता व्रतानि कर्माणि मह्ना स्वमहिम्नैव मिनात् अहिंसीत् । मीङ् हिंसायां लङि मीनातेर्निगम इति ह्रस्वः ततः पुरूणिचित् बहून्येव रजांस्युदकानि नितता नी-चीनान्यकरोत् यइन्द्रः सत्यताता सत्यैः देवैः तते यद्वा सत्यशब्दादपि स्वार्थिकस्तातिल् सत्य-मः सत्ये द्युलोके धरुणं धारकं बलं दाधाराधारयत् ॥ ४ ॥

४. अङ्गिरा की सन्ततियों ने जिस समय स्तोत्र किया, उस समय इन्द्र ने, अपनी महिमा से, विशाल मेघ का कार्य नष्ट किया। उन्होंने बहुत अधिक जल बनाया। उन्होंने सत्य-रूप द्युलोक में बल धारण किया।

इन्द्रो॑ दि॒वः प्र॑ति॒मानं॑ पृथि॒व्या विश्वा॑ वेद॒ सव॑ना॒ हन्ति॒ शुष्णं॑ ।
म॒हीं चि॒द्द्यामात॑नो॒त्सूर्ये॑ण चा॒स्कम्भ॑ चि॒त्कम्भ॑नेन॒ स्कभी॑यान् ॥ ५ ॥ १० ॥

इन्द्रः॑ । दि॒वः । प्र॒ति॒ऽमान॑म् । पृ॒थि॒व्याः । विश्वा॑ । वे॒द॒ । सव॑ना ।
हन्ति॑ । शुष्ण॑म् । म॒हीम् । चि॒त् । द्याम् । आ । अ॒त॒नो॒त् । सूर्ये॑ण ।
चा॒स्कम्भ॑ । चि॒त् । स्कम्भ॑नेन । स्कभी॑यान् ॥ ५ ॥ १० ॥

दिवो द्युलोकस्य पृथिव्याश्च प्रतिमानं महत्त्वेन प्रतिनिधिरिन्द्रो विश्वा सर्वाणि सवना सवनानि वेद सोमपानार्थं जानाति शुष्णं सर्वस्य शोषकं एतन्नामानमसुरं हन्ति वाक्यभेदा-दनिघातः अपिच महींचित् महतीमपि द्यां सूर्येण आतनोत् सर्वप्रकाशयुक्तामकरोत् । स्क-

१ ऋ० सं० १. ४. ११ ।

धीयात् स्कंभयितॄणांमध्ये श्रेष्ठः सत्कंभनेनचित् निरोधनसाधनेन सामर्थ्येनैव चास्कंभ द्यु-
लोकमवरुद्धमकरोत् स्कंभिः रोधनेधातुः छिदि पुगागमनाभितिदीर्घः चित्कंभनेनेत्यत्र संहितायां
सलोपः वस्तूर्वस्यस्तंभेः उदःस्थास्तंभोरितिसलोपवत्कः चित्पूर्वस्यस्तंभेरपिभवति छन्दोविष-
यत्वात् ॥ ५ ॥

५. एक ओर इन्द्र हैं और दूसरी ओर द्यावापृथिवी हैं—दोनों के बराबर इन्द्र हैं। वे सारे सोम यज्ञों की बातें जानते हैं। वे ताप नष्ट करते हैं। सूर्य के द्वारा उन्होंने प्रकाण्ड आकाश को सुसज्जित किया है। वे धारण करने में दक्ष हैं। ज्ञानी स्तम्भ के द्वारा उन्होंने आकाश को ऊपर धारण कर रक्खा है।

वज्रेणहिवृत्रहावृत्रमस्तरदेवस्यशूशुवानस्यमायाः ।
विधृष्णोअत्रधृषताजघन्थाथाभवोमघवन्बाह्वोजाः ॥ ६ ॥

वज्रेण । हि । वृत्रऽहा । वृत्रम् । अस्तः । अदेवस्य । शूशुवानस्य ।
मायाः । वि । धृष्णो इति । अत्र । धृषता । जघन्थ ।
अथ । अभवः । मघऽवन् । बाहुऽओजाः ॥ ६ ॥

हे इन्द्र वृत्रहा वृत्रस्यहन्ता वज्रेण वृत्रमस्तः अस्तृणाः अवधीः । स्तृणातेर्लङि बहु-
लंछन्दसीति विकरणस्यलुक् सिपिगुणः हियोगादनिघातः । अनन्तरं हे धृष्णो धर्षणशील त्वं
अदेवस्य अद्योतमानस्य शूशुवानस्य स्वबलेनवर्धमानस्य तस्यमायाः धृषता समर्थेनवज्रेण
अत्रास्मिन् कालएव विजघंथ विनाशितवानसि । हन्तेर्लिटि थलिअभ्यासाद्धेर्विकुत्वं अथ हे
मघवन् धनवन्निन्द्र बाह्वोजाः भुजबलवानभवः ॥ ६ ॥

६. इन्द्र, तुम वृत्रघ्न हो—वज्र से वृत्र को मारा है। जिस समय यज्ञ-विरोधी वृत्र बढ़ रहा था, उस समय दुर्द्धर्ष तुमने वज्र-द्वारा उसकी सारी माया को नष्ट कर डाला। बली इन्द्र, इसके अनन्तर तुम बहुत बल से बली हुए।

सचन्तयदुषसःसूर्येणचित्रामस्यकेतवोराममविन्दन् ।
आयन्नक्षत्रंददृशेदिवोनपुनर्यतोनकिरद्धानुवेद ॥ ७ ॥

सचन्त । यत् । उषसः । सूर्येण । चित्राम् । अस्य । केतवः ।
राम् । अविन्दन् । आ । यत् । नक्षत्रम् । ददृशे । दिवः ।
न । पुनः । यतः । नकिः । अद्धा । नु । वेद ॥ ७ ॥

यद्यदा उषसः उषःकालाः सूर्येण सूर्यात्मकेनेन्द्रेण सचन्त संगच्छन्ते । षच समवाये भौवादिकः । तदानीमस्य सूर्यस्य केतवः सर्वस्य प्रज्ञापकारश्मयः चित्रां नानावर्णां रां रायं श्रियं अविन्दन् अलभन्त । पुनरुदयानन्तरं यद्यदा दिवो नक्षत्रं न ददृश्रे न दृश्यते दृशेः कर्मणि लिट् यत्योगादनिघातः तदानीं यतः अर्यमस्य शासि शासुरनुशासकात् आदित्याद्विरोचनाद्वाच्यत्वं सर्वमगच्छतोऽपरस्यैव नकिर्नकश्चिदपि न वेद जानाति । एवम् अत्र सत्यमेव ॥ ७ ॥

७. जिस समय उषादेवियाँ सूर्य से मिलीं; उस समय सूर्य-किरणों ने नाना वर्णों की शोभा धारण की। अनन्तर, जिस समय, आकाश में नक्षत्र दिखाई दिया, उस समय कोई भी मार्गगामी सूर्य का कुछ देख नहीं सका।

दूरंकिलंप्रथमाजंग्मुरासामिन्द्रस्ययाःप्रसुवेसस्रुरापः ।
कस्विदग्रंक्वबुध्नआंसामापोमध्यंक्वोनूनमन्तः ॥ ८ ॥

दूरम् । किल । प्रथमाः । जग्मुः । आसाम् । इन्द्रस्य । याः ।
प्रऽसवे । सस्रुः । आपः । क्व । स्वित् । अग्रम् । क्व । बुध्नः ।
आसाम् । आपः । मध्यम् । क्व । वः । नूनम् । अन्तः ॥ ८ ॥

आसामपांमध्ये प्रथमाः प्रथमगामिन्यस्ताआपः दूरंकिलजग्मुः दूरमेवागताः याआपः इन्द्रस्य प्रसवे प्रेरणे । षूप्रेरणे ऋदोरप् इतिप्राप्ते प्रसवौचेतिविकल्पमिति अपवादेन् थाथघञ्क्ताजबित्र-काणामितिउत्तरपदान्तोदात्तत्वं । तस्याज्ञायां सस्रुः सरन्ति गच्छन्तिखलु । अथ प्रत्यक्षकृतः हे आपः आसां युष्माकमग्रं क्वस्वित् कुत्रवर्तते बुध्नोमूलंच क्व । तथा योयुष्माकं मध्यंसक्व नू-नमिदानीमस्माकमन्तोवसानंचक्व सर्वगतत्वादनिर्ज्ञायमानगमनाआस्तेत्यर्थः । क्व किंशब्दात् सप्तम्यर्थे किमोत्दित्यत्प्रत्ययः क्वातीतिकादेशः तित्स्वरितः अंतः अमेर्गत्यर्थस्य असिहसी-त्यादिनातन्प्रत्ययः ॥ ८ ॥

८. इन्द्र की आज्ञा से जो जल बहने लगा था, वह प्रथम जल बहुत दूर गया था। जल का अग्रभाग कहाँ है ? मस्तक कहाँ है ? जल, तुम्हारा मध्य स्थान वा चरम सीमा कहाँ है ?

सृजःसिन्धूँरहिनाजग्रसानाँआदिदेताःप्रविविज्रेजवेन ।
मुमुक्षमाणाउतयामुमुच्रेधेदेतानरमन्तेनितिक्ताः ॥ ९ ॥

सृजः । सिन्धून् । अहिना । जग्रसानान् । आत् । इत् । एताः । प्र ।
विविज्रे । जवेन । मुमुक्षमाणाः । उत । याः । मुमुच्रे । अर्ध ।
इत् । एताः । न । रमन्ते । निःऽतिक्ताः ॥ ९ ॥

हे इन्द्र अहिना आहन्तव्येन वृत्रेण मेघेन वा अवसानात् प्रसज्यदने अनुदात्तेत्व छन्दसि लिट्कानच् मस्याः सिन्धून् स्यन्दमाना अपः सृजः असृजः निरगमयः । आदित् इदवधारणे अनन्तरमेव एता आपः जवेन वेगेन प्रविविज्रे सर्वत्रात्यन्तं चलिता बभूवुः । ओविजी भयचलनयोः उदात्तेत्व लिटि इरयोरे इति इरयोरे आदेशः । यदा चिद् मुमुक्षमाणाः इन्द्रेणामोचयितुमिष्यमाणाया आपः मुमुचे इन्द्रेण मोचिता अभूवन् । मुचेः कर्मणि लिट् अथेद् अनन्तरमेव निविकाः निवरां शुद्धा आपः नरमन्ते एकत्र न क्रीडन्ते किन्तु सर्वत्र गमनशीला इत्यर्थः ॥ ९ ॥

९. इन्द्र, जिस समय वृत्रासुर जल को प्राप्त कर रहा था, उस समय तुमने जल का मोचन किया था। उसी समय जल वेग के साथ सर्वत्र दौड़ा था। जिस समय इन्द्र ने अपनी इच्छा से जल को मुक्त किया था, उस समय वह विशुद्ध जल स्थिर नहीं रह सका।

सध्रीचीः सिन्धुमुशतीरिवायन्सनाज्जार आरितः पूर्भिदासाम् ।
अस्तमा ते पार्थिवा वसून्यस्मे जग्मुः सूनृता इन्द्र पूर्वीः ॥ १० ॥ ११ ॥

सध्रीचीः । सिन्धुम् । उशतीःऽइव । आयन् । सनात् । जारः ।
आऽरितः । पूःऽभित् । आसाम् । अस्तम् । आ । ते । पार्थिवा ।
वसूनि । अस्मे इति । जग्मुः । सूनृताः । इन्द्र । पूर्वीः ॥ १० ॥ ११ ॥

सध्रीचीः सहस्य सध्रिरिति सध्र्यादेशः अंचतेश्चोपसंख्यानमिति ङीप् अचोपदीर्घौ चाछन्दसीति पूर्वसवर्णदीर्घः सहांचनाः सहगमना आपः सिंधुं समुद्रं भर्तारमायन् आगच्छन् । यद्वच्छन्दः उशतीरिव यथा कामयमानाः स्त्रियः स्वपतिमभिगच्छन्ति तद्वत् जारः शत्रूणां जारयिता पूर्भिदिन्द्रः सनाच्चिरादेव आसामपां आरितः प्रेरकत्वेन स्वामी भवति । हे इन्द्र अस्मे अस्माकं स्वभूतानि पार्थिवा पार्थिवानि वसूनि धनवत्तीर्णमिनूणि हवींषि पूर्वीः बह्वः सूनृताश्च स्तुतिलक्षणाश्च ते त्वदीयमस्तं गृहमाजग्मुः आगच्छन्तु । यद्वा अस्मदीयाः स्तुतयः वेपहं गच्छन्तु अस्माकं गृहं त्वदीयानि पार्थिवा पार्थिवानि धनान्यभिगच्छन्तु गमेश्छन्दसि सार्वकालिके लिट् ॥ १० ॥

१०. सारे जल मानो कामातुरा स्त्री के समान होकर और एकत्र मिलकर समुद्र की ओर चले। शत्रु-पुर-ध्वंसक और शत्रु-जर्जर-कर्त्ता इन्द्र सदा ही सारे जलों के प्रभु हैं। इन्द्र, हमारी पृथिवी पर स्थित नाना यज्ञ-सामग्री और चिराभ्यस्त अनेक प्रीतिप्रद स्तोत्र तुम्हारे पास जायँ।

॥ इत्यष्टमस्य चतुर्थे एकादशो वर्गः ॥ ११ ॥

इन्द्र पिबेति दशर्चं नवमोदशं सूक्तं वैष्टुभमैन्द्रं नभः प्रभेदनो नाम वैरूपगोत्र ऋषिः तथा चानुक्रम्यते—इन्द्र पिब नभः प्रभेदन इति । गतो विनियोगः ।

तत्र प्रथमा—

इन्द्र॒ पिब॑ प्रति॒का॒मं सु॒तस्य॑ प्रातःसा॒वस्तव॒ हि पू॒र्वपी॑तिः ।
हर्ष॑स्व॒ हन्त॑वे शूर॒ शत्रू॑नु॒क्थेभि॑ष्टे वी॒र्या॒३॒॑ प्र ब्र॑वाम ॥ १ ॥

इन्द्र॑ । पिब॑ । प्र॒ति॒ऽका॒मम् । सु॒तस्य॑ । प्रा॒तः॒ऽसा॒वः । तव॑ । हि ।
पू॒र्वऽपी॑तिः । हर्ष॑स्व । हन्त॑वे । शूर॑ । शत्रू॑न् । उ॒क्थेभिः॑ ।
ते॒ । वी॒र्या॑ । प्र । ब्र॒वा॒म॒ ॥ १ ॥

हेइन्द्र त्वं प्रतिकामं येयेकामाः तांस्तानभि अव्ययीभावसमासः तस्यस्वरः यथेच्छं सुतस्याभिषुतस्य योभागः तुभ्यं दातव्यः तंपिब आमंत्रितस्याविद्यमानत्वेन पादादित्वादनिघातः प्रातःसावः प्रातःसवनेभिषूयमाणः सोमः तवहि त्वदीयार्थेषष्ठी त्वय्येव पूर्वपीतिः प्रथमपानयोग्यः यद्वा प्रातःसावः सप्तम्याः सुः प्रातःसवने तवैव प्रथमपानं खलु ऐन्द्रवायवग्रहे हि आदित एवेन्द्रः पिबति तत्पुरुषे तुल्यार्थेत्यादिना पूर्वपदप्रकृतिस्वरत्वं यद्वा बहुव्रीहिः तथा हे शूर समर्थ त्वं शत्रून् हन्तवे हन्तुं हर्षस्व हृष्टोभव अथ ते त्वदीयानि वीर्या वृत्रहननादिलक्षणानि वीर्याणि उक्थेभिः शस्त्रैः प्रब्रवाम प्रकर्षेण वदाम ॥ १ ॥

१. इन्द्र, सोम प्रस्तुत हुआ है। जितना चाहो, पियो। जो सोम प्रातः-काल प्रस्तुत होता है, वह सबसे आगे तुम्हारे पान के योग्य है। वीर इन्द्र, शत्रु-वध के लिए उत्साह-युक्त होओ। हम मन्त्रों के द्वारा तुम्हारे वीरत्व की प्रशंसा करते हैं।

यस्ते॒ रथो॒ मन॑सो॒ जवी॑या॒नेन्द्र॒ तेन॑ सोम॒पेया॑य याहि ।
तूय॒मा ते॒ हर॑यः॒ प्र द्र॑वन्तु॒ येभि॒र्यासि॒ वृष॑भि॒र्मन्द॑मानः ॥ २ ॥

यः । ते॒ । रथः॑ । मन॑सः । जवी॑यान् । आ । इ॒न्द्र॒ । तेन॑ । सो॒म॒ऽपेया॑य ।
या॒हि॒ । तूय॑म् । आ । ते॒ । हर॑यः । प्र । द्र॒व॒न्तु॒ । येभिः॑ । यासि॑ ।
वृष॑ऽभिः । मन्द॑मानः ॥ २ ॥

हेइन्द्र मनसोपि जवीयान् अतिशयेन गन्ता त्वदीयोयोरथोस्ति तेन रथेन सोमपेयाय मत्सदीयं सोमं पातुं आयाहि आगच्छ। पा पाने भावे अचोयत् ईद्यतीतीत्वं आर्धधातुकलक्षणोगुणः कृदुत्तरपदप्रकृतिस्वरत्वं तथा ते त्वदीया हरयः रथे संयुक्ता अश्वाः तूयं क्षिप्रमाभिमुख्येन प्रद्रवन्तु प्रगच्छन्तु वृषभिः सेक्तृभिः येभिः यैः अश्वैः मन्दमानः मोदमानः सन् यासि

गच्छसि हरीवन्दस्येति वचनादिन्द्रस्य हरीवाश्वाविति मयोदनीयं । आत्वाश्वहस्तनाथवर्ति-
त्यादिनिगमान्तरदर्शनात् ॥ २ ॥

२. इन्द्र, तुम्हारा रथ मन से भी अधिक शीघ्रगामी है। उसी रथ पर चढ़कर सोमपान के लिए आओ। जिन घोड़ों की सहायता से तुम आनन्द के साथ जाते हो, वे हरि नामक घोड़े शीघ्र दौड़ें।

हरित्वता वर्चसा सूर्यस्य श्रेष्ठै रूपैस्तन्वं स्पर्शयस्व ।
अस्माभिरिन्द्र सखिभिर्हुवानः सध्रीचीनो मादयस्वा निषद्य ॥ ३ ॥

हरित्वता । वर्चसा । सूर्यस्य । श्रेष्ठैः । रूपैः । तन्वम् ।
स्पर्शयस्व । अस्माभिः । इन्द्र । सखिऽभिः । हुवानः ।
सध्रीचीनः । मादयस्व । निऽसद्य ॥ ३ ॥

हेइन्द्र हरित्वता हरिच्छब्दान्मतुपोऽसयइति वर्णं हरिद्वर्णयुक्तेन सूर्यस्य वर्चसा तेजसा तदर्थैः श्रेष्ठैः प्रशस्यतमैरासीयैरूपैः तन्वमात्मीयं शरीरं मदीयं वा यद्वा वायवेइति वसूर्यः सः तं स्पर्शयस्व तेजोयुक्तं कुरु । किंच सध्रीचीनः विभाषञ्चिरदिक्स्त्रियामिति स्वप्रत्ययः मरुद्भिः सहाञ्चनस्त्वं सखिभिः सखिभूतैरस्माभिर्हुवानः आहूयमानः सन् निषद्य यज्ञे निषण्णो भूत्वा मा-द्यस्व सोमपानेन हृष्टो भव ॥ ३ ॥

३. इन्द्र, हरित-वर्ण तेज के द्वारा और सूर्य की अपेक्षा भी श्रेष्ठतर नाना शोभाओं के द्वारा अपने शरीर को विभूषित करो। हम बन्धुत्व के साथ तुम्हें बुलाते हैं। हमारे साथ बैठकर सोम-पान से प्रमत्त होओ।

यस्य त्यत्ते महिमानं मदेष्विमे मही रोदसी नाविविक्ताम् ।
तदोक आ हरिभिरिन्द्र युक्तैः प्रियेभिर्याहि प्रियमन्नमच्छ ॥ ४ ॥

यस्य । त्यत् । ते । महिमानम् । मदेषु । इमे इति । मही इति ।
रोदसी इति । न । अविविक्ताम् । तत् । ओकः । आ । हरिऽभिः ।
इन्द्र । युक्तैः । प्रियेभिः । याहि । प्रियम् । अन्नम् । अच्छ ॥ ४ ॥

हेइन्द्र इमे मही महत्यौ रोदसी द्यावापृथिव्यौ यस्य तेतव सोमपानेन जनितेषु मदेषु संभूतं त्यत् तं महिमानं नाविविक्तां नपृथक्कुरुतः किन्तु यस्य महिम्नेव विवृतः विचिर् पृ-थग्भावे जौहोत्यादिकः छान्दसे लुङि संज्ञापूर्वकोविधिरनित्यइत्यभ्यासस्य गुणाभावः यद्योगादनिघा-तः । प्रियेभिः प्रियतमैः रथेयुक्तैर्हरिभिः अश्वैः प्रियं प्रीणनकरं अन्नं सोमलक्षणमच्छाभिल-क्ष्य तदोकः अस्मदीयं यज्ञसदनमायाहि आगच्छ ॥ ४ ॥

---

१ ऋ० सं० ५, ५, १४ ।

४. सोम-पान से मत्त होने पर जो तुम्हारी महिमा होती है, उसे ये द्यावापृथिवी नहीं धारण कर सकतीं। इन्द्र, अपने स्नेह-पात्र घोड़ों को जोतकर सुस्वादु यज्ञ-सामग्री की ओर, यजमान के गृह में, आओ।

यस्यशश्वत्पपिवाँइन्द्रशत्रूननानुकृत्यारण्याचकर्थ।
सतेपुरंधिंतविषीमियर्तिसतेमदायसुतइन्द्रसोमः॥ ५॥ १२॥

यस्य। शश्वत्। पपिऽवान्। इन्द्र। शत्रून्। अननुऽकृत्या। रण्या। चकर्थ। सः। ते। पुरम्ऽधिम्। तविषीम्। इयर्ति। सः। ते। मदाय। सुतः। इन्द्र। सोमः॥ ५॥ १२॥

हे इन्द्र पपिवान् पायेः क्वसौ वस्वेकाजाद्घसामिति इडागमः सोमं पीतवांस्त्वं अननुकृत्या अनुकरणरहितेन असदृशेन शत्रुहननसमर्थेन रण्या संयुगीनेनायुधेन रणशब्दात्साध्वर्थे प्राग्घितोयत् यस्य यजमानस्य शत्रून्शश्वद्बहुवारं चकर्थ हतवानसि कृञ्हिंसायां छन्दसि प्रयोगादनिषावे छित्स्वरः सयष्टा तेत्वदर्थं तविषीं महतीं पुरंधिं बह्वीं स्तुतिं इयर्ति प्रेरयति। ऋगतौ जौहोत्यादिकः अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वं अभ्यासस्यासवर्णइतीयङ् हेइन्द्र सुतोभिषुतः ससोमः ते मदाय समर्थोभवति यद्वा सयष्टा सुतः सोमः सुव्यत्ययः अभिषुतं सोमं त्वन्मदाय प्रेरयति॥ ५॥

५. इन्द्र, जिसका प्रतिदिन सोम-पान करके तुमने अत्यन्त बल दिखाते हुए शत्रु-वध किया है, वही यजमान तुम्हारे लिए यथेष्ठ स्तोत्र प्रेरित कर रहा है। तुम्हारे मनोरंजन के लिए सोम प्रस्तुत किया गया है।

॥ इत्यष्टमस्य षष्ठे द्वादशोवर्गः॥ १२॥

अथ षष्ठी—

इदंतेपात्रंसनवित्तमिन्द्रपिबासोममेनाशतक्रतो।
पूर्णआहावोमदिरस्यमध्वोयंविश्वइदभिहर्यन्तिदेवाः॥ ६॥

इदम्। ते। पात्रम्। सनऽवित्तम्। इन्द्र। पिब। सोमम्। एना। शतक्रतो इति शतऽक्रतो। पूर्णः। आऽहावः। मदिरस्य। मध्वः। यम्। विश्वे। इत्। अभिऽहर्यन्ति। देवाः॥ ६॥

हेइन्द्र तेत्वदर्थं पात्रं चमसादिकं सनवित्तं अस्माभिश्चिरादेव लब्धं विदुलाभे कर्मणि निष्ठा हेशतक्रतो बहुकर्मन्निन्द्र एना एनेन पात्रेण सोमं पिब यतः मदिरस्य मदकरस्य मध्वः मधुनः सोमस्य आहावः पानस्थानोमपात्रविशेषः पूर्णः पूरितोभूत् हेइन्द्र सर्वांया निशामया-

छान्दसवि निपातितः स्तुतिभिराहूयमानादेवाः अत्र सोमं पिबन्तीति थाथादिस्वरः यमिद य-मादायमेव विश्वे सर्वे देवाः अभिहर्यन्ति अभिकामयन्ते हर्यगतिकान्त्योः भौवादिकः यद्यो-गाचिद्धोनिघाताभावे तिङिचोदात्तवतीति यतेर्निघातः ॥ ६ ॥

६. सौ यज्ञ करनेवाले इन्द्र, इस सोम-पात्र को तुम बराबर पाया करते हो। इससे पियो। जिसे देवता चाहते हैं, उसी मधु-तुल्य और मत्तता-कारक सोम के पात्र को परिपूर्ण कर दिया गया है।

विहित्वामिन्द्रपुरुधाजनासोहितप्रयसोवृषभह्वयन्ते ।
अस्माकंतेमधुमत्तमानीमाभुवन्त्सवनातेषुहर्य ॥ ७ ॥

वि । हि । त्वाम् । इन्द्र । पुरुधा । जनासः । हितऽप्रयसः ।
वृषभ । ह्वयन्ते । अस्माकम् । ते । मधुमत्ऽतमानि ।
इमा । भुवन् । सवना । तेषु । हर्य ॥ ७ ॥

हेन्द्र वृषभ कामानां वर्षक हितप्रयसः प्रयइत्यन्ननाम प्रीणनकारित्वात् संभृतहवि-ष्काः जनासोजनाः पुरुधा बहुधा हिरवधारणे त्वामेव विह्वयन्ते विविधमाह्वयन्ति ह्वेञ् स्प-र्धायां निसमुपविभ्योह्वइत्यात्मनेपदं अस्माकं स्वभूतानि इमा इमानि सवना सवनानि ते त्व-दर्थं मधुमत्तमानि अतिशयेन सोमवन्ति भुवन् अभूवन् तस्मात् त्वं तेषु सवनेषु हर्य सोमा-न् कामयस्व ॥ ७ ॥

७. इन्द्र, अन्न संग्रह करके तुम्हें अनेक लोग, नाना स्थानों में, सोम-पान के लिए, निमन्त्रित करते हैं। परन्तु हमारा प्रस्तुत किया गया सोम तुम्हें सबसे मधुर हो—इसी में तुम्हारी रुचि उत्पन्न हो।

अथाष्टमी—

प्रतइन्द्रपूर्व्याणिप्रनूनंवीर्यावोचंप्रथमाकृतानि ।
सतीनमन्युरश्रथायोअद्रिंसुवेदनामकृणोर्ब्रह्मणेगाम् ॥ ८ ॥

प्र । ते । इन्द्र । पूर्व्याणि । प्र । नूनम् । वीर्या । वोचम् ।
प्रथमा । कृतानि । सतीनऽमन्युः । अश्रथयः । अद्रिम् ।
सुऽवेदनाम् । अकृणोः । ब्रह्मणे । गाम् ॥ ८ ॥

हेन्द्र ते त्वदीयानि प्रथमा आदितः कृतानि पूर्व्याणि पुरातनानिच वीर्या वीर्याणि नूनमिदानीं प्रवोचं प्रकर्षेण वदामि एकः प्रधानः पुरुषः। वोचं ब्रूञि ब्रुवोवचिः छेरल् कामि

यानि सतीनमन्युः सतीनमित्युदकनाम उदकाभिवर्षणबुद्धियुक्तः त्वं अद्रिं मेघं अश्नथयः वज्रेणाहिंसीः ब्रह्मणे बृहस्पतये गां पणिभिरपहृतां धेनुं सुष्ठु ज्ञापनीयां अकृणोरक-रोरित्यादीनि ॥ ८ ॥

८. इन्द्र, पूर्वकाल में सबसे आगे तुमने जो वीरत्व दिखाया था, उसकी मैं प्रशंसा करता हूँ। जल के लिए तुमने मेघ को फाड़ा था और स्तोता के लिए गाय की प्राप्ति सुलभ कर दी थी।

निषुसीदगणपतेगणेषुत्वामाहुर्विप्रतमंकवीनाम् ।
नऋतेत्वत्क्रियतेकिंचनारेमहामर्कंमघवञ्चित्रमर्च ॥ ९ ॥

नि । सु । सीद । गणऽपते । गणेषु । त्वाम् । आहुः । विप्रऽतमम् ।
कवीनाम् । न । ऋते । त्वत् । क्रियते । किम् । चन । आरे ।
महाम् । अर्कम् । मघऽवन् । चित्रम् । अर्च ॥ ९ ॥

हेगणपते त्वं गणेषु स्तोतृगणेषु सुष्ठु निषीद स्तुतिश्रवणार्थं निषण्णोभव यतः कवीनां क्रान्तप्रज्ञानां मध्ये त्वा त्वां विप्रतमं अतिशयेन मेधाविनमित्याहुः किंच त्वदृते अन्यारादित-रर्तेइति पंचमी त्वां वर्जयित्वा किंचनकर्म आरे दूरे समीपेवा नक्रियते तस्मान्निषीद तथा हेमघवन् धनवन्निन्द्र महां महान्तं अर्कमर्चनीयं अस्मदीयं त्रिवृत्पंचदशादिलक्षणं स्तोमं चित्रं नानारूपं कृत्वा अर्च पूजय विधेहि । अर्चपूजायां भौवादिकः ॥ ९ ॥

९. बहुतों के अधिपति इन्द्र, स्तोताओं के बीच में बैठो। क्रिया-कुशल व्यक्तियों में तुम्हें लोग सर्वापेक्षा बुद्धिमान् कहते हैं। समीप या दूर में तुम्हारे अतिरिक्त कोई अनुष्ठान नहीं होता। धनी इन्द्र, हमारी ऋचाओं को विस्तारित और नाना-रूप कर दो।

अभिख्यानोमघवन्नाधमानान्त्सखेबोधिवसुपतेसखीनाम् ।
रणंकृधिरणकृत्सत्यशुष्माभक्तेचिदाभजारायेअस्मान् ॥ १० ॥ १२ ॥

अभिऽख्या । नः । मघऽवन् । नाधमानान् । सखे । बोधि ।
वसुऽपते । सखीनाम् । रणम् । कृधि । रणऽकृत् । सत्यऽशुष्म ।
अभक्ते । चित् । आ । भज । राये । अस्मान् ॥ १० ॥ १२ ॥

हेमघवन् धनवन्निन्द्र नाधमानान् नाथृनाधृयाच्ञोपतापैश्वर्याशीःषु भौवादिकः अनुदा-त्तेत् याचमानान् नोऽस्मान् अभिख्या अभिख्यापनेन तेजसा युक्तान् कुरु प्रसिद्धान्वाकुरु हे-सखे धनदानेन हेवसुपते वसूनां स्वामिन् त्वं सखीनां स्तोतृत्वेन सखिभूतानामस्माकं स्वबु-

यामि स्तोत्राणि बोधि बुध्यस्व बुध अवगमने भौवादिकः लोटि छान्दसः शपो लुक् छन्दस्युभयथेति हेरार्धधातुकत्वेनाङित्वात् अङितश्चेति हेर्धिभावः अतएव गुणः सार्वधातुकत्वेन ङित्त्वादन्त्योदात्तत्वं वर्णलोपश्छान्दसः हे रणकृत् शत्रुभिः सह युद्धकर्तः अतएव हे सत्यशुष्म यथार्थबलोपेत त्वं रणं कृधि कुरु शत्रून् जहि । करोतेर्लोटि श्रुशृणुपृकृवृभ्यश्छन्दसीति हेर्धिः । किंच अभक्तेचिद् असंभजनीये स्थानेपि अस्मान् राये धनाय आभज भागिनः कुरु द्व्यचोतस्तिङ इति संहितायां दीर्घः ॥ १० ॥

१०. धनी इन्द्र, हम तुम्हारे याचक हैं। हमें तेजस्वी कर दो। धनाधिपति और मित्र इन्द्र, यह जानो कि, हम तुम्हारे बन्धु हैं। युद्धकर्त्ता इन्द्र, तुम्हारी शक्ति ही यथार्थ है। जहाँ धन-प्राप्ति की कोई सम्भावना नहीं हो, वहाँ भी तुम हमें धन-भागी करो।

॥ इत्यष्टमस्य षष्ठे त्रयोदशो वर्गः ॥ १३ ॥

॥ इति दशमे मंडले नवमोनुवाकः ॥ ९ ॥

दशमेनुवाके षोडशसूक्तानि तत्र तमस्येति दशर्चं प्रथमं सूक्तं ऐन्द्रं शतप्रभेदनोनाम वैरूपऋषिः अन्त्या त्रिष्टुप् शिष्टाजगत्यः । तथाचानुक्रान्तं—तमस्य शतप्रभेदनस्त्रिष्टुबन्त्यमिति । दशरात्रस्याष्टमेहनि मरुत्वतीय एतत्सूक्तं । सूत्रितंच—तमस्य द्यावापृथिवी महाँइन्द्रो नृवदिति मरुत्वतीयमिति ।

तमस्य द्यावापृथिवी सचेतसा विश्वेभिर्देवैरनु शुष्ममावताम् ।
यदैत्कृण्वानो महिमानमिन्द्रियं पीत्वी सोमस्य क्रतुमाँ अवर्धत ॥ १ ॥

तम् । अस्य । द्यावापृथिवी इति । सऽचेतसा । विश्वेभिः । देवैः । अनु । शुष्मम् । आवताम् । यत् । ऐत् । कृण्वानः । महिमानम् । इन्द्रियम् । पीत्वी । सोमस्य । क्रतुऽमान् । अवर्धत ॥ १ ॥

सचेतसा सहचेतस्कौ द्यावापृथिवी द्यावापृथिव्यौ विश्वेभिः सर्वैर्देवैः सह अन्वादेशे अशादेशोनुदात्तः एतस्येन्द्रस्य तं शुष्मं शत्रूणां शोषकं बलमन्वावतां रक्षतां तस्य बलं पूर्वमस्माद् रक्षतु पश्चादेते अपि रक्षतामितिभावः अवतेर्लङ् । कृण्वानः वृत्रवधादिकं कुर्वाणः सन् महिमानं इन्द्रियं इन्द्रस्यात्मनः पर्याप्तं वीर्यं च यदा ऐत् प्राप्नोत् । इण् गतौ आदादिकः आडजादीनामित्याडागमः तदा क्रतुमान् कर्मवान् सः सोमस्य पीत्वी सोमं पीत्वा अवर्धत । क्रियाग्रह-

यं कर्तव्यमिति कर्मणः संप्रदानसंज्ञा चतुर्थ्यर्थे बहुलमिति षष्ठी पीती स्वाप्यादयश्चेति नि-
पातितः ॥ १ ॥

१. अन्यान्य देवों के साथ द्यावापृथिवी मनोयोग-पूर्वक इन्द्र के बल की रक्षा करें। जब कि, वह वीरता प्राप्त करते-करते अपनी उपयुक्त महिमा को प्राप्त हुए, तब सोम-पान करते-करते अनेक कार्यों का सम्पादन करके वृद्धिगत हुए।

तम॑स्य॒ विष्णु॑र्महि॒मान॒मोज॑सां॒शुं द॑ध॒न्वान्मधु॑नो॒ वि र॑प्शते ।
दे॒वेभि॒रिन्द्रो॑ म॒घवा॑ स॒याव॑भिर्वृ॒त्रं ज॑घ॒न्वाँ अ॑भव॒द्वरे॑ण्यः ॥ २ ॥

तम् । अ॒स्य॒ । विष्णुः॑ । म॒हि॒मान॑म् । ओज॑सा । अं॒शुम् । द॒ध॒न्वान् ।
मधु॑नः । वि । र॒प्श॒ते॒ । दे॒वेभिः॑ । इन्द्रः॑ । म॒घऽवा॑ । स॒याव॑ऽभिः ।
वृ॒त्रम् । ज॒घ॒न्वान् । अ॒भ॒व॒त् । वरे॑ण्यः ॥ २ ॥

विष्णुरेतन्नामकः व्याप्तो यज्ञो वा मधुनः मदकरस्य सोमस्य अंशुं लताखंडं दधन्वान् प्रेरयन् धवेर्गत्यर्थस्य क्वसौ इदन्त्वान्नुमागमेछन्दसि वलिलोपः ओजसा स्ववीर्येण संभावयस्ये-न्द्रस्य तं महिमानं विरप्शते विविधं शब्दयति स्तौति मघवा धनवान् सयावभिः यातैः आ-लोपनिमिति कनिप् सहगन्तृभिः देवेभिः देवैर्मरुद्भिश्च वृत्रं जघन्वान् हतवान् इन्द्रः वरेण्यः सर्वैर्वरणीयः संभजनीयोऽभवत् ॥ २ ॥

२. विष्णु ने मधुर सोमलता—खण्ड को भेजकर इन्द्र की उस महिमा की, उत्साह के साथ, घोषणा की। धनी इन्द्र सहयोगी देवों के साथ एकत्र होकर और वृत्र का वध करके सर्वश्रेष्ठ हुए।

वृ॒त्रेण॒ यदहि॑ना॒ बिभ्र॑दायु॒धा स॒मस्थि॑था यु॒धये॒ शंस॑मा॒विदे॑ ।
विश्वे॑ ते॒ अत्र॑ म॒रुतः॑ स॒ह त्मनावर्ध॑न्नुग्र महि॒मान॑मिन्द्रि॒यम् ॥ ३ ॥

वृ॒त्रेण॑ । यत् । अहि॑ना । बिभ्र॑त् । आयु॑धा । स॒म्ऽअस्थि॑थाः ।
यु॒धये॑ । शंस॑म् । आ॒ऽविदे॑ । विश्वे॑ । ते॒ । अत्र॑ । म॒रुतः॑ । स॒ह ।
त्मना॑ । अव॑र्धन् । उ॒ग्र॒ । म॒हि॒मान॑म् । इ॒न्द्रि॒यम् ॥ ३ ॥

युधये युद्धाय आयुधा आयुधानि वज्रादीनि बिभ्रत् धारयन्निन्द्रः त्वं यदा अहि-
ना अहन्तव्येन वृत्रेण समस्थिथाः सङ्गतोऽभूः तिष्ठतेर्लुङि समवप्रविभ्यःस्थ इत्यात्मनेपदं स्था-
घ्वोरिच्चेति सिचः कित्वं इकारश्चान्तादेशः ह्रस्वादङ्गादिति सिचो लोपः यद्योगादनिघातः वि-
भक्तिषोडशचतुर्वीति मतेर्निघातः तदा आविदे तुमर्थे केन्प्रत्ययः । तव वृत्रवधादिकं वीर्यमज्ञाप-

पितुं शंसमशंसं शस्तैरहं स्तौमि शंसु स्तुतौ लङ् वाक्यभेदादनिघातः किंच हे इन्द्र यद्धूर्णवत अ-स्मिन्काल एव तेत्वदीयं महिमानमिन्द्रियं वीर्यंच विश्वे सर्वे मरुतः त्मना आत्मना सहैव अव-र्धन् वर्णलोपश्छान्दसः अवर्धयन् मरुतो हीन्द्रस्य वीर्यं भवति ॥ ३ ॥

३. उग्रतेजा इन्द्र जिस समय तुम स्तुति की इच्छा से अस्त्र-शस्त्र धारण करके, दुर्धर्ष वृत्र के साथ, युद्ध करने के लिए आगे बढ़े, उस समय सारे मरुद्गण ने तुम्हारी महिमा बढ़ा दी और स्वयं भी वे वृद्धि को प्राप्त हुए।

जज्ञान एव व्यबाधत स्पृधः प्रापश्यद्वीरो अभि पौंस्यं रणम्।
अवृश्चदद्रिमव सस्यदः सृजदस्तभ्नान्नाकं स्वपस्यया पृथुम् ॥ ४ ॥

जज्ञानः। एव। वि। अबाधत। स्पृधः। प्र। अपश्यत्। वीरः।
अभि। पौंस्यम्। रणम्। अवृश्चत्। अद्रिम्। अव। सऽस्यदः।
सृजत्। अस्तभ्नात्। नाकम्। सुऽअपस्यया। पृथुम् ॥ ४ ॥

स इन्द्रः जज्ञान एव जनी प्रादुर्भावे छान्दसस्य लिटः कानच् जायमान एव स्पृधः शत्रून् व्यबाधत अत्यर्थमपीडयत् स्पृधः स्पर्ध संघर्षे क्विप् अपस्पृधेथामिति निपातनेन एकवचनसंप्रसारणदर्शनाद् अत्रापि भवति अतएव वीरः समर्थः सः रणं संग्राममभिलक्ष्य पौंस्यमात्मीयं बलं प्रापश्यत् अस्यैतद्बलमिति प्रकर्षेण पश्यति जानाति। किंच अद्रिं मेघं अवृश्चत् वज्रेणाच्छिनत् अनन्तरं सस्यदः स्यन्दू प्रस्रवणे क्विप् वसिनलोपः सहस्यन्दमाना अपः अवसृजत् अधस्तादसृजत् निरगमयत् तथा सः पृथुं महान्तं नाकं द्युलोकं स्वपस्यया शुभमात्मनः क्यच् अपत्यसादिति सिवाम प्रत्ययः शोभनकर्मेच्छया अस्तभ्नात् निरुद्धमकरोत् संहितः सौ षोपाः ॥ ४ ॥

४. जन्म के साथ ही इन्द्र ने शत्रु-दमन किया था। उन्होंने युद्ध का विचार करके अपने पौरुष की वृद्धि की ओर ध्यान दिया। उन्होंने वृत्र का छेदन किया, मनुष्यों को छुड़ाया और उत्तम उद्योग करके विस्तृत स्वर्गलोक को ऊपर उठा रक्खा।

आदिन्द्रः सत्रा तविषीरपत्यत वरीयो द्यावापृथिवी अबाधत।
अवाभरद्धृषितो वज्रमायसं शेवं मित्राय वरुणाय दाशुषे ॥ ५ ॥ १४ ॥

आत्। इन्द्रः। सत्रा। तविषीः। अपत्यत। वरीयः।
द्यावापृथिवी इति। अबाधत। अव। अभरत्। धृषितः।
वज्रम्। आयसम्। शेवम्। मित्राय। वरुणाय। दाशुषे ॥ ५ ॥ १४ ॥

आदयीत स इन्द्रः तविषीः महतीः सेनाः सहैव अपत्यताम् अच्छाय पदगवी दैवादिकः क-र्त्र्यव्यत्ययः यद्वा पत्यतिरैश्वर्यकर्मा सेनानामीष्टे तासामीश्वरोऽभवदित्यर्थः। स एव द्यावापृथिवी द्यावापृथिव्यौ परीयः तयोपायाः स्तुः उरुतरेण महिम्ना अवबाधत तयोरन्तःस्थितान् शत्रूनवधी-दित्यर्थः। धृषितः शत्रुवधे प्रगल्भः सन् आयसमयोमयं वज्रमन्वाभरत् अधारयत्। किमर्थं मित्राय वरुणाय दाशुषे हविर्दत्तवते यजमाने शेवं सुखं कर्तुं ॥ ५ ॥

५. विशाल-विशाल सेनाओं की ओर इन्द्र एकाएक दौड़े। अपनी विशिष्ट महिमा से उन्होंने द्यावापृथिवी को वशीभूत किया। जो वज्र दान परायण वरुण और मित्र के सुख का जनक है, इन्द्र ने उसी लौहमय वज्र को दुर्धर्ष रूप से धारण किया।

॥ इत्यष्टमस्य षष्ठे चतुर्दशोवर्गः ॥ १४ ॥

इन्द्रस्यात्रतविषीभ्योविरप्शिनऋघायतोअरंहयन्तमन्यवे।
वृत्रंयदुग्रोव्यवृश्चदोजसापोबिभ्रंतंतमसापरीवृतम् ॥ ६ ॥

इन्द्रस्य। अत्र। तविषीभ्यः। विऽरप्शिनः। ऋघायतः।
अरंहयन्त। मन्यवे। वृत्रम्। यत्। उग्रः। वि। अवृश्चत्।
ओजसा। अपः। बिभ्रतम्। तमसा। परिऽवृतम् ॥ ६ ॥

अत्रास्मिन् काले एव विरप्शिनः महतः विविधं शब्दायमानस्य वा ऋघायतः शत्रून् हिंसतः इन्द्रस्य तविषीभ्यः षष्ठ्यर्थे चतुर्थी बलानां मन्यवे प्रख्यापनाय अरंहयन्त आपो निरगच्छन् रहिर्गत्यर्थः उग्रः उद्गूर्णः सः अपः उदकानि बिभ्रतं धारयन्तं तमसा परीवृतं परितो वेष्टितं वृणोतेः कर्मणि क्तः गतिरनन्तर इति स्वरः संहितायामुपसर्गस्य घञीति दीर्घः वृत्रं यदस्मिन्काले ओजसा स्ववीर्येण व्यवृश्चत् अत्यर्थमवधीत् ॥ ६ ॥

६. इन्द्र नाना प्रकार के शब्द कर रहे थे और शत्रु-वध कर रहे थे। उनके बल-विक्रम की घोषणा करने के लिए जल निर्गत हुआ। वृत्र ने अन्धकार से घिरकर जल को धारण कर रक्खा था; परन्तु तीक्ष्ण तेजवाले इन्द्र ने बल-पूर्वक वृत्र को काट डाला।

यावीर्याणिप्रथमानिकर्त्वामहित्वेभिर्यतमानौसमीयतुः।
ध्वान्तंतमोवदध्वसेहतइन्द्रोमह्नापूर्वहूतावपत्यत ॥ ७ ॥

या। वीर्याणि। प्रथमानि। कर्त्वा। महिऽत्वेभिः। यतमानौ।
समऽईयतुः। ध्वान्तम्। तमः। अव। दध्वसे। हते।
इन्द्रः। मह्ना। पूर्वऽहूतौ। अपत्यत ॥ ७ ॥

महित्वेभिः मंहनीयैः स्वबलैः यतमानौ युद्धाय प्रयत्नं कुर्वतो इन्द्रवृत्रौ प्रथमानि पूर्वभावीनि कर्त्वा कृत्यार्थे त्वन् प्रत्ययः कर्तव्यानि या यानि वीर्याणि समीयतुः संयोजयामासतुः इणगतौ लिटि दीर्घ इणः कितीति दीर्घः तयोर्मध्ये इन्द्रेण वृत्रे हते सति ध्वान्तं अतिनिविडं तमः अवध्वसे अवद्ध्वसे अवध्वस्तं विनष्टमभूत् ध्वंसेर्लिट् कितामलोपः इन्द्रस्तु महा स्वमहिम्ना पूर्वहूतौ प्रथमाह्वाने अपत्यत अगच्छत् शूराणां मध्ये अयमेव प्रथमोहूयमानोऽभवदित्यर्थः ॥ ७ ॥

७. आपस में होड़ करके इन्द्र और वृत्र प्रथम-प्रथम अपनी-अपनी वीरता दिखाकर महाक्रोध के साथ युद्ध करने लगे। वृत्र के विनाश के अनन्तर घना अन्धकार विनष्ट हुआ। इन्द्र की महिमा ही ऐसी है कि, वीरों की नाम-गणना के समय सबसे प्रथम इन्द्र का ही नाम लिया जाता है।

विश्वेदेवासोअधवृष्ण्यानितेऽवर्धयन्त्सोमवत्यावचस्यया ।
रद्धंवृत्रमहिमिन्द्रस्यहन्मनाग्निर्नजम्भैस्तृष्वन्नमावयत् ॥ ८ ॥

विश्वे । देवासः । अध । वृष्ण्यानि । ते । अवर्धयन् । सोमऽवत्या ।
वचस्यया । रद्धम् । वृत्रम् । अहिम् । इन्द्रस्य । हन्मना ।
अग्निः । न । जम्भैः । तृषु । अन्नम् । आवयत् ॥ ८ ॥

हे इन्द्र अथ वृत्रहननानन्तरं विश्वेदेवासो देवा ऋत्विजः सोमवत्या सोमयुक्तया वचस्यया स्तुतीच्छया ते त्वदीयानि वृष्ण्यानि बलानि अवर्धयन् वर्धयन्ति इन्द्रस्य हन्मना हननसाधनेन वज्रेण रद्धं रधहिंसासंराध्योः हिंसितमहिं वृत्रं अपामावरकं मेघं तृषु क्षिप्रमन्नमावयत् अभक्षयत् तज्जन्येनोदकेन संपादितमन्नं जनः भक्षयदित्यर्थः आवयतिरत्तिकर्मा । तत्र दृष्टान्तः—अग्निर्न यथाग्निः जम्भैः ज्वालीयैः दन्तैः अन्नं भक्षयति तद्वत् ॥ ८ ॥

८. इन्द्र, सोमरस और स्तोत्र के द्वारा देवों ने तुम्हारी संवर्द्धना की। इन्द्र ने दुर्द्धर्ष वृत्र का वध कर डाला। इससे शीघ्र ही लोगों को अन्न-प्राप्ति हुई। जैसे अग्नि अपनी शिखा के द्वारा जलाने योग्य वस्तु का भक्षण करते हैं, वैसे ही लोग दाँतों से अन्न चबाने लगे।

भूरिदक्षेभिर्वचनेभिर्ऋक्वभिःसख्येभिःसख्यानिप्रवोचत ।
इन्द्रोधुनिंचचुमुरिंचदम्भयञ्छ्रद्धामनस्याशृणुतेदभीतये ॥ ९ ॥

भूरि । दक्षेभिः । वचनेभिः । ऋक्वऽभिः । सख्येभिः । सख्यानि ।
प्र । वोचत । इन्द्रः । धुनिम् । च । चुमुरिम् । च ।
दम्भयन् । श्रद्धाऽमनस्या । शृणुते । दभीतये ॥ ९ ॥

हेस्तोतारः दसेभिः वर्धनहेतुभिः ऋकभिः छन्दसीवनिपाविति वनिप् प्रत्ययः अयस्मयादित्वेन भत्वात् अश्वाभावः पदत्वात्कुत्वं मंत्रयुक्तैः सख्येभिः तदर्हतीत्यर्थे छन्दसिचेति यप्रत्ययः सह्यपुरिस्मस्य यांग्यैः वचनेभिः वचनैः स्तोत्रैः सख्यानि सुत्यस्तोवृक्षलक्षणान्यभिलक्ष्य चुमिरं चुमुरिं इन्द्रं मयोचत अभूत् अभिष्टुत इन्द्रस्तु दभीतये एतन्नामकाय राजर्षये चुमिंच चुमुरिंच एतन्नामकौ द्वावसुरौ हंतुमचन् हिंसन् श्रद्धायमनस्या मनःशब्दात्क्यच् श्रद्धायुक्तया मनसश्रद्धया शृणुते युष्माभिः क्रतानि स्तोत्राणि शृणोति ॥ ९ ॥

९. स्तोताओ, इन्द्र ने जो लता के कार्य किये हैं, उनको प्रशंसा, उत्तमोत्तम वाक्यों और बन्धुजनोचित छन्दों के द्वारा, करो। इन्द्र ने चुमि और चुमुरि नामक असुरों का वध किया है और विश्वासी मन से दभीति राजा की प्रार्थना सुनी है।

त्वंपुरूण्याभरास्वश्व्यायेभिर्मंसैनिवचनानिशंसन्।
सुगेभिर्विश्वादुरितातरेमविदोषुणउर्वियागाधमद्य ॥ १० ॥१५॥

त्वम्। पुरूणि। आ। भर। सुऽअश्व्या। येभिः। मंसै।
निऽवचनानि। शंसन्। सुऽगेभिः। विश्वा। दुःऽइता। तरेम।
विदो इति। सु। नः। उर्विया। गाधम्। अद्य ॥ १० ॥ १५ ॥

हे इन्द्र त्वं स्वश्व्या स्वश्व्यानि शोभनाश्वयुक्तानि पुरूणि बहूनि धनानिमस्माभर आहर प्रयच्छ निवचनानि नितरां वक्तव्यानि स्तोत्राणि शंसन् अहं येभिः धनैः मंसै मन्यतिर्याचिकर्मा देवान्तुजयानि तानि देहि मन्यतेर्लोटि बहुलं छन्दसीति विकरणस्यलुक् सिप्बहुलं लेटीति सिबागमः सिपः पित्वेनानुदात्तत्वात् धातुस्वरः सुगेभिः सुष्ठु गन्तव्यैस्तैर्धनैः स्तोत्रैर्वा विश्वा सर्वाणि दुरिता दुरितानि पापानि तरेम हेइन्द्र अद्यास्मिन्कर्मणि गाधं ग्रथ्यमानं क्रियमाणं नोस्मदीयं स्तोत्रं उर्विया उरुत्वेन बहुमानेन सु सुष्ठु विदोविद्ध जानीहीत्यर्थः ॥ १० ॥

१०. इन्द्र, मैंने जो स्तोत्र के समय में प्रचुर सम्पत्ति और उत्तमोत्तम घोड़ों की अभिलाषा की थी, वह सब दो। मैं पाप को लाँघकर कल्याण प्राप्त करूँ। हम जो स्तोत्र बना रहे हैं, उसे जानकर ध्यान दो।

॥ इत्यष्टमस्य षष्ठे पंचदशोवर्गः ॥ १५ ॥

घर्मेति दशर्चं द्वितीयं सूक्तं सघ्रिर्नामवैरूपऋषिः तपसः पुत्रोघर्मोवा चतुर्थी जगती शिष्टास्त्रिष्टुभः। तथाचानुक्रान्तं—घर्मासघ्रिस्तापसोवाघर्मोवैश्वदेवंचतुर्थीजगतीति। गतोविनियोगः।

तत्र प्रथमा—

घर्मासमन्तात्रिवृतंव्यापतुस्तयोर्जुष्टिंमातरिश्वाजगाम ।
दिवस्पयोदिधिषाणाअवेषन्विदुर्देवाःसहसामानमर्कम् ॥ १ ॥

घर्मा । सम्ऽअन्ता । त्रिऽवृतम् । वि । आपतुः । तयोः ।
जुष्टिम् । मातरिश्वा । जगाम । दिवः । पयः । दिधिषाणाः ।
अवेषन् । विदुः । देवाः । सहऽसामानम् । अर्कम् ॥ १ ॥

समन्ता समन्तौ संव्याप्नुवन्तौ घर्मा घृ क्षरणदीप्त्योः घर्मौ दीप्यमानौ अग्न्यादित्यौ त्रिवृतं । त्रयो वा इमे त्रिवृतो लोका इत्याम्नानात् । त्रैलोक्यं व्यापतुः स्वतेजोभिः व्याप्तवन्तौ मातरिश्वा अन्तरिक्षे वर्तमानो वायुः तयोरग्न्यादित्ययोः जुष्टिं प्रीतिं जगाम गतवान् यदा सहसामानं सामशब्दउपलक्षकः वेदत्रयतेजःसहितं । सर्वं तेजः सामरूपं ह शश्वदित्याम्नानात् । ईदृशमर्कं अर्चनीयं सूर्यं देवाः दीप्यमानाः स्वरश्मयो विदुः विविदुः लेभिरे प्रापुः । तदा दिधिषाणाः लोकधारणशीलाः ते दिवः द्युलोकस्य संबन्धि पयः उदकमवेषन् व्याप्तवन्तः वर्षुरित्यर्थः । दिवस्पयइत्यत्र षष्ठ्याः पतिपुत्रेति सत्वं । दिधिषाणाः धिष धारणे शानच् शपः श्लुः यद्वा धिष धारणे सन्नन्तस्य शानच् अज्झनगमां सनीति दीर्घाभावश्छान्दसः । यद्वा समंतौ संगतौ घर्मौ स्वयंदीप्यमानौ जीवेश्वरौ त्रिवृतं सत्वरजस्तमोगुणात्मिकां मायां व्यापतुः नियन्तृनियन्तव्यभावेन । मातरिश्वा परमात्मा तयोर्जुष्टिं संभोक्तव्यपदार्थैः सेवां प्रीतिं जगाम गतवान् तं परमात्मानं वेदमयं इमं सूर्यं इति देवा जानन्ति ॥ १ ॥

१. सूर्य और अग्नि नामक प्रदीप्त देवता चारों ओर जाकर त्रिभुवन-व्यापी हुए। मातरिश्वा (अन्तरिक्ष-स्थित वायुदेव) ने उनकी प्रसन्नता प्राप्त की। जिस समय देवों ने साम-मन्त्र और सूर्य को प्राप्त किया, उस समय उन लोगों ने, त्रिभुवन की रक्षा के लिए आकाशीय जल की सृष्टि की।

अथ द्वितीया—

तिस्रोदेष्ट्रायनिर्ऋतीरुपासतेदीर्घश्रुतोविहिजानन्तिवह्नयः ।
तासांनिचिक्युःकवयोनिदानंपरेषुयागुह्येषुव्रतेषु ॥ २ ॥

तिस्रः । देष्ट्राय । निःऽऋतीः । उप । आसते । दीर्घऽश्रुतः ।
वि । हि । जानन्ति । वह्नयः । तासाम् । नि । चिक्युः । कवयः ।
निऽदानम् । परेषु । या । गुह्येषु । व्रतेषु ॥ २ ॥

निर्ऋतीः पृथिवीनामैतत् अनेन इतरलोकावुपलक्ष्येते तत्राधिष्ठितास्तिस्रः अग्न्यादिदेव-ताः देष्ट्राय हविषां प्रदानाय उपासते यजमानाउपासनं कुर्वते ततः दीर्घश्रुतः प्रभूतकीर्तयोव-ह्नयः जगतः पापिकाः तादेवताः विजानन्ति एतैः कृतामुपासनां मन्यतएव । यद्वा निर्ऋतीः निः-शेषेण ऋच्छंति गच्छन्तीति निर्ऋतयः तास्तिस्रः सृष्टिस्थितिसंहृतीः देष्ट्राय आत्मनः कर्मभो-गदानाय उपासते ये दीर्घश्रुतः दीर्घं संसारे शृण्वन्तः मन्तव्यद्रष्टव्यादिपदार्थं जानन्तः मंतद्र-ष्ट्रादिरूपमजानन्तइत्यर्थः । अतएववह्नयः संसारस्य वोढारः तानजानन्ति कवयः क्रान्तद-र्शिनस्तु तासां सृष्ट्यादीनामग्न्यादीनां वा निदानं मूलकारणं परमात्मानं निचिक्युः नितरां चिक्यन्ति जानन्ति परेषु उत्कृष्टेषु वा गुह्येषु गोपनीयेषु कर्मसु यमनियमादिषु व्रतेषु याः प्रवृ-त्तयः सन्ति तासां निदानं निचिक्युः जानन्ति चिञ् चयने लिटि विभाषाचेरित्यभ्यासादुत्त-रस्य कवर्गादेशः यद्वा चायतेर्लिटि चायःकीति छन्दसि कीत्यादेशः ॥ २ ॥

२. याज्ञिक लोग यज्ञ के समय तीन निर्ऋतियों (अग्नि, सूर्य और वायु) की उपासना करते हैं। इसके अनन्तर यशस्वी अग्निदेवों का परिचय देवों से होता है। विद्वान् लोग अग्नि आदि का मूल कारण जानते हैं। वे परम गोपनीय व्रत में रहते हैं।

अथ तृतीया—

चतुष्कपर्दायुवतिःसुपेशाघृतप्रतीकावयुनानिवस्ते ।
तस्यांसुपर्णावृषणानिषेदतुर्यत्रदेवादधिरेभागधेयम् ॥ ३ ॥

चतुःऽकपर्दा । युवतिः । सुऽपेशाः । घृतऽप्रतीका । वयुनानि । वस्ते । तस्याम् । सुऽपर्णा । वृषणा । नि । सेदतुः । यत्र । देवाः । दधिरे । भागऽधेयम् ॥ ३ ॥

चतुष्कपर्दा चतुष्कोणा युवतिः स्त्रीरूपा सुपेशाः शोभनालंकारा घृतप्रतीका घृतमुख-हविष्का एवंरूपावेदिः वयुनानि ज्ञातव्यानि पदार्थजातानि कर्माणि स्तोत्राणि वा वस्ते आ-च्छादयति तस्यां वेद्यां वृषणा वृषणौ हविषां वर्षितारौ सुपर्णा सुपर्णौ सुपतनौ जायापती य-जमानब्रह्माणौ वा निषेदतुः निषण्णौ भवतः यत्र यस्यां वेद्यां देवाअग्न्यादयः भागधेयं स्वार्थि-कोधेयप्रत्ययः स्वस्वभागं हविर्दधिरे धारयन्ति यद्वा चतुष्कपर्दा नामाख्यातोपसर्गनिपाताश्चत्वारः कपर्दस्थानीयायस्याः सा युवतिस्तरुणी नित्याघृतप्रतीका दीप्यमानवर्णावयवा एवंभूता औपनि-षदीवाक् वयुनानि ज्ञानानि वस्ते आच्छादयति तस्यां वाचि सुपर्णा सुपर्णौ जीवपरमात्मानौ

निषण्णौ भवतः यत्र स्वरास्थोपि दृश्यंतइति तृतीयार्थे मत्प्रत्ययः यथा भागा देवाभागं धारयन्ति ॥ ३ ॥

३. एक युवती (यज्ञ-वेदी) है। उसके चार कोने हैं। उसकी मूर्त्ति सुन्दर और (घृत के कारण) स्निग्ध है। वह उत्तमोत्तम वस्त्र (यज्ञ-सामग्री) धारण करती है। दो पक्षी (यजमान और पुरोहित) उसपर बैठते हैं। वहाँ देवता लोग अपना-अपना भाग पाते हैं।

एकःसुपर्णःससमुद्रमाविवेशसइदंविश्वंभुवनंविचष्टे ।
तंपाकेनमनसापश्यमन्तितस्तंमातारेळ्हिसउरेळ्हिमातरम् ॥ ४ ॥

एकः । सुऽपर्णः । सः । समुद्रम् । आ । विवेश । सः । इदम् ।
विश्वम् । भुवनम् । वि । चष्टे । तम् । पाकेन । मनसा । अपश्यम् ।
अन्तितः । तम् । माता । रेळ्हि । सः । ऊँ इति । रेळ्हि । मातरम् ॥ ४ ॥

एकः सर्वकार्येष्वसहायः सुपर्णः सुपतनः मध्यमस्थानोदेवः समुद्रमन्तरिक्षं आविवेश आविशति आविश्य च सइदंविश्वं सर्वं भुवनं भूतजातं विचष्टे अनुग्राहकतयाभिपश्यति तमेवं रूपं देवं पाकेन परिपक्वेन मनसा अन्तितः समीपेऽहमपश्यं अदर्शं । किंच माता उदकानां निर्मात्री माध्यमिकावाक् तं रेळ्हि आस्वादयति उपजीवनमात्मनमलक्ष्यते स उ स खलु मातरं वाचं रेळ्हि लेढि तामेवोपजीवति लिहआस्वादने । यद्वा सुपर्णः पक्षवान् निराधारसंचारी एकः प्राणवायुः परमात्मा वा समुद्रं समुद्द्रवन्ति आपोस्मादिति समुद्रमन्तरिक्षं यद्वा समुद्रवं सर्वलोकमूलं पञ्चीकृतं प्रपंचजातमाविवेश तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः । वायुपक्षे प्राण्यादिरूपेणाविवेश सइदं विश्वं सर्वं लोकं विचष्टे विशेषेण ख्यापयति सति हि प्राणे परमात्मनि वा जीवन्तः पुरुषा लोकं विख्यातं कुर्वन्ति तमेवं उपासकोऽहं पाकेन परिपक्वज्ञानेन मनसा अन्तितः अन्तिकशब्दात्तसिः अन्तिकस्यतसि कादिलोपो भवत्याद्युदात्तत्वंच इति कादिलोपः अन्तिके समीपे स्वहृदये अपश्यं तं प्राणं मातावाक् रेळ्हि वाक्प्राणेनान्तर्भवतीत्यर्थः । स्वापे हि वाग्व्यापारोनदृश्यते प्राणव्यापारस्तु दृश्यतइति ॥ ४ ॥

४. एक पक्षी (प्राण वायु) समुद्र (ब्रह्माण्ड) में पैठा। वह सारा विश्व देखता है। परिपक्व बुद्धि के द्वारा मैंने उसको देखा है। वह निकट-वर्त्तिनी माता (वाक्) का आस्वादन करता है और माता भी उसका आस्वादन करती है।

सुपर्णंविप्राःकवयोवचोभिरेकंसन्तंबहुधाकल्पयन्ति ।
छन्दांसिचदधतोअध्वरेषुग्रहान्त्सोमस्यमिमतेद्वादश ॥ ५ ॥१६॥

सुऽपर्णम् । विप्राः । कवयः । वचःऽभिः । एकम् । सन्तम् ।
बहुधा । कल्पयन्ति । छन्दांसि । च । दधतः । अध्वरेषु । ग्रहान् ।
सोमस्य । मिमते । द्वादश ॥ ५ ॥ १६ ॥

विप्रामेधाविनः कवयः क्रान्तप्रज्ञाः मनुष्याः सुपर्णं सुपतनं एकं सन्तं परमात्मानं वचोभिः स्तुतिलक्षणैर्वचनैर्बहुधा बहुप्रकारं कल्पयन्ति कुर्वन्ति । किंच तएव कवयः अध्वरेषु यज्ञेषु छन्दांसि गायत्र्यादीनित्तस्छन्दांसि दधतः स्तोत्रशस्त्रादिना धारयन्तः द्वादशसंख्याकान् सोमस्य ग्रहान् ग्रहणसाधनानि पात्राणि उपांश्वन्तर्यामादीनि मिमते निर्मिमते ग्रहान् गृह्यते एभिरिति ग्रहाः ग्रहवृदृनिश्चिगमश्चेति करणे अप्प्रत्ययः सोमस्येति कर्मणिषष्ठी द्वादशेत्यत्र संख्या इति पूर्वपदप्रकृतिस्वरत्वं ॥ ५ ॥

५. पक्षी (परमात्मा) एक है; परन्तु क्रान्तदर्शी विद्वान् लोग उसकी अनेक प्रकार से कल्पना करते हैं। वे यज्ञ-काल में नाना प्रकार के छन्दों का उच्चारण करते और बारह (उपांशु, अन्तर्याम आदि) सोम-पात्र स्थापित करते हैं।

॥ इत्यष्टमस्य षष्ठे षोडशोवर्गः ॥ १६ ॥

अथ षष्ठी—

षट्त्रिंशांश्चचतुरःकल्पयन्तश्छन्दांसिचदधतआद्वादशम् ।
यज्ञंविमायकवयोमनीषऋक्सामाभ्यांप्ररथंवर्तयन्ति ॥ ६ ॥

षट्ऽत्रिंशान् । च । चतुरः । कल्पयन्तः । छन्दांसि । च । दधतः ।
आऽद्वादशम् । यज्ञम् । विऽमाय । कवयः । मनीषा ।
ऋक्ऽसामाभ्याम् । प्र । रथम् । वर्तयन्ति ॥ ६ ॥

पूर्वं सामान्येन यज्ञमहानुक्त्वा इदानीं सर्वग्रहादिपूर्वकोयज्ञोभिधीयते । षट्त्रिंशान् द्वौ उपांश्वन्तर्यामौ ऐन्द्रवायववारुणपयोर्द्विदेवत्याग्रहाः द्वौ शुक्रामन्थिनौ आग्रयणउक्थ्योध्रुवश्चेति त्रयः ऋतुग्रहाः द्वादश ऐन्द्राग्नो वैश्वदेवश्च द्वौ त्रयोमरुत्वतीया एकोमाहेन्द्र आदित्यसावित्रौद्वौ वैश्वदेवः पात्नीवतोहारियोजनइति नवोग्रहाः एवं षट्त्रिंशद्भवन्ति । अत्याग्निष्टोमे पूर्वे षट्त्रिंशद्ग्रहाः सर्वंश्वदाभ्यौ दधिग्रहः षोडशीचेति चत्वारएतान् चत्वारिंशत्संख्याकान् ग्रहान्कल्पयन्तः सोमेन पूरयन्तः । किंच आद्वादशं आङ्मर्यादाभिविध्योरित्यव्ययीभावसमासः तस्य स्वरः द्वादशसंख्याकप्रउगादिशस्त्रसमाप्तिपर्यन्तं छन्दांसि गायत्र्यादीनि दधतः सन्तः शस्त्रादिरूपेण

धारयन्तः कवयः मनीषा तृतीयाया आकारः मनीषया बुद्ध्या एवं यज्ञं विमाय निर्माय रथं रमन्त्यनेनेति रथो यज्ञः तं रथं यज्ञं ऋक्सामाभ्यां प्रवर्तयन्ति प्रकर्षेण संपादयन्ति चतुरश्चत्वार चतुरः शसीत्यन्तोदात्तत्वं ॥ ६ ॥

६. पण्डित लोग चालीस प्रकार के सोम-पात्र स्थापित करके वा छन्द उच्चारण करते हैं और बारह प्रकार के छन्द कहते वा सोम-पात्र रखते हैं। इस प्रकार वह बुद्धि-पूर्वक अनुष्ठान करके ऋक् और साम के द्वारा यज्ञ-रथ चलाते हैं।

चतुर्दशान्येमहिमानोअस्यतंधीरावाचाप्रणयन्तिसप्त ।
आमानंतीर्थंकइहप्रवोचद्येनपथाप्रपिबन्तेसुतस्य ॥ ७ ॥

चतुःऽदश । अन्ये । महिमानः । अस्य । तम् । धीराः । वाचा ।
प्र । नयन्ति । सप्त । आमानम् । तीर्थम् । कः । इह । प्र । वोचत् ।
येन । पथा । प्रऽपिबन्ते । सुतस्य ॥ ७ ॥

अस्य यज्ञरूपस्य परमात्मनः अन्ये चतुर्दश चतुर्दशसंख्याका लोकाः महिमानः विभूतयो भवन्ति तं यज्ञं सप्तसंख्याका धीराः धीमन्तः होत्रादयः वाचा शस्त्ररूपया प्रणयन्ति प्रकर्षेण नयन्ति आमानं आप्लृव्याप्तौ धात्वोरित्ये चामनि व्यत्ययेन विकरणस्यव्यत्ययः व्यापनशीलं तीर्थं पापोत्तारणसमर्थं चात्वालोत्करमध्यदेशं इहास्मिन्यज्ञे कः प्रवोचत् कोवक्ति नकोपीत्यर्थः। येन पथा येनयज्ञमार्गेण सुतस्याभिषुतं सोमं प्रपिबन्ते देवाः अतिशयेन पिबन्ति पाघ्रेत्यादिना पिबादेशः व्यत्ययेनात्मनेपदं उपसर्गेण समासः यद्योगादनिघाते तिङि चोदात्तवतीति गतेर्निघातः ॥ ७ ॥

७. इस यज्ञ (परमात्मा) की चौदह महिमायें (भुवन) हैं। सात होता आदि शस्त्र वाक्य के द्वारा यज्ञ-सम्पादन करते हैं। यज्ञ-मार्ग में उपस्थित होकर देवता लोग सोम-पान करते हैं। उस विश्व-व्यापी यज्ञ-मार्ग की बात का कौन वर्णन करे?

सहस्रधापञ्चदशान्युक्थायावद्द्यावापृथिवीतावदित्तत् ।
सहस्रधामहिमानःसहस्रंयावद्ब्रह्मविष्ठितंतावतीवाक् ॥ ८ ॥

सहस्रऽधा । पञ्चऽदशानि । उक्था । यावत् । द्यावापृथिवी इति ।
तावत् । इत् । तत् । सहस्रऽधा । महिमानः । सहस्रम् । यावत् ।
ब्रह्म । विऽस्थितम् । तावती । वाक् ॥ ८ ॥

सहस्रधा सहस्रसंख्याकेषु ब्रह्मादिस्तंभपर्यन्तेषु देहेषु पंचदशानि चक्षुःश्रोत्रमनोवाक् प्राण इत्येतानि पंच तदाधारत्वेन मातापित्रोः सकाशात् आगतानि पृथिव्यप्तेजोवाय्वाकाशरूपाणि भूतानि मिलितानि दश एवं पंचदशसंख्याकानि उक्थाउक्थानि उत्कृष्टान्यङ्गानि विद्यन्ते प्राणिदेहेषु जातेषु द्यावापृथिवी षष्ठीद्विवचनस्य सुपांसुलुगिति पूर्वसवर्णदीर्घः द्यावापृथिव्योः यावत्परिमाणमस्ति तावदिव तत्परिमाणमेव आत्माधिष्ठितं प्राणिदेहजातं भवति यावत्तावच्छब्दयोः यत्तदेतेभ्यः परिमाणेवतुपि आसर्वनाम्नइति दीर्घः। किंच सहस्रधा सहस्रसंख्याकेषु सहस्रं महिमानः सहस्रसंख्याका महान्तोव्यवहारविशेषाभवन्ति प्रतिविषयं प्रतिलक्षणं दर्शनश्रवणादिव्यवहारनिष्पत्तेः सहस्रधेत्यत्र विधार्थे धाप्रत्ययः ब्रह्म जगत्कारणं वस्तु यावत् नानाविधप्राणिदेहरूपेण यावत्परिमाणं भूत्वा विष्ठितं विशेषेण स्थितं वाक् तावती तत्परिमाणाभवति एकैकस्याभिधेयार्थस्यैकैकनामापेक्षणात्। अन्यत्रापिश्रूयते—सर्वाणि रूपाणि विचित्यधीरोनामानि कृत्वाभिवदन्यदास्तइति। सहस्रधा पंचदशान्युक्थेति पंचहिदशवोभवन्तीत्यादिकमारण्यकमत्रानुसंधेयं ॥ ८ ॥

८. पन्द्रह सहस्र उक्थ मन्त्र हैं। द्यावापृथिवी के समान ही उक्थ भी बृहत् हैं। स्तोत्र की महिमा सहस्र प्रकार की है। जैसे स्तोत्र असीम हैं, वैसे ही वाक्य भी।

कश्छन्दसांयोगमावेदधीरःकोधिष्ण्यांप्रतिवाचंपपाद।
कमृत्विजामष्टमंशूरमाहुर्हरीइन्द्रस्यनिचिकायकःस्वित् ॥ ९ ॥

कः। छन्दसाम्। योगम्। आ। वेद। धीरः। कः। धिष्ण्याम्।
प्रति। वाचम्। पपाद। कम्। ऋत्विजाम्। अष्टमम्। शूरम्।
आहुः। हरी इति। इन्द्रस्य। नि। चिकाय। कः। स्वित् ॥ ९ ॥

धीरोधीमान् कोप्रानुषः छन्दसां गायत्र्यादीनां योगं स्तुतशस्त्रात्मना योगमावेद आजानाति। कोवाधिष्ण्यां धिष्ण्यानि होत्रादीनां सदस्थानानि तदर्हांवाचं प्रतिपपाद प्रतिपादयति करोति। किंच ऋत्विजां होत्रादीनां सप्तानां अष्टमं अष्टसंख्यापूरकं शूरं स्वर्गं कमाहुः वदन्ति। कः स्वित् कः खलु इन्द्रस्य हरी ऋक्सामरूपौ द्वावश्वौ ऋक्सामेवाइन्द्रस्यहरी इत्याम्नायते। तादृशौ हरी निचिकाय नितरां पूजयति जानाति। वेदिता प्रतिपादयिता अष्टसंख्या परिपूरकस्य देवस्य ज्ञाता वा परमात्मनोन्योनास्तीत्यर्थः ॥ ९ ॥

९. कौन ऐसे पण्डित हैं, जो सारे छन्दों की बात जानते हैं? किसने मूल-वाक्य को समझा है? कौन ऐसे प्रधान पुरुष हैं, जो सातों पुरोहितों के ऊपर अष्टम हो सकें? इन्द्र के हरित वर्ण घोड़े को किसने देखा वा समझा है?

अथ दशमी—

**भूम्या अन्तं पर्येके चरन्ति रथस्य धूर्षु युक्तासो अस्थुः ।**
**श्रमस्य दायं वि भजन्त्येभ्यो यदा यमो भवति हर्म्ये हितः ॥१०॥१७॥**

भूम्याः । अन्तम् । परि । एके । चरन्ति । रथस्य । धूःऽसु ।
युक्तासः । अस्थुः । श्रमस्य । दायम् । वि । भजन्ति । एभ्यः ।
यदा । यमः । भवति । हर्म्ये । हितः ॥ १० ॥ १७ ॥

एके केचन सप्ताश्वाः भूम्याः पृथिव्याः अनेन द्युलोकोऽप्युपलक्ष्यते द्युलोकस्य च अन्तं पर्यन्तं परिचरन्ति तदानीं सर्वतःआगच्छन्ति तथा चत्वेश्वाः रथस्य धूर्षु युगादिभारेषु युक्तासः युक्ताः सन्तः अस्थुः तिष्ठन्ति एभ्योऽश्वेभ्यः श्रमस्यदायं दोऽवखंडने यत् कर्षात्वयइत्यन्तोदात्तत्वं । श्रमस्यनाशकं घासादिकं विभजन्ति देवाः प्रयच्छन्ति यदा यस्मिन् काले यमोनियन्ता सूर्यः हर्म्ये हर्म्यस्थानीयेरथे हितोनिहितोभवति तदा एतेभजन्तीत्यर्थः ॥ १० ॥

१०. कुछ घोड़े पृथिवी की शेष सीमा तक विचरण करते हैं और कुछ रथ की धुरा में ही जोते रहते हैं। जिस समय सारथि रथ के ऊपर रहता है, उस समय परिश्रम दूर करने के लिए घोड़ों को उपयुक्त आहार दिया जाता है।

॥ इत्यष्टमस्य षष्ठे सप्तदशोवर्गः ॥ १७ ॥

चित्रइदितिनवर्चं तृतीयंसूक्तं आग्नेयं उपस्तुतोनामवृष्टिहव्यपुत्रऋषिः अष्टमीत्रिष्टुप् नवमीशक्वरी आदितःसप्तजगत्यः । तथाचानुक्रान्तं—चित्रनव वार्ष्टिहव्यउपस्तुतआग्नेयं जागतं त्रिष्टुप्शक्वर्यन्तमिति । प्रातरनुवाकाश्विनशस्त्रयोः जागतेछन्दसीदंसूक्तं । सूत्रितंच—चित्रइच्छिशोर्वैश्वानरमहस्रमितिजागतमिति ।

तत्र प्रथमा—

**चित्र इच्छिशोस्तरुणस्य वक्षथो न यो मातरावप्येति धातवे ।**
**अनूधा यदि जीजनदधा च नु ववक्ष सद्यो महि दूत्यं१ चरन् ॥ १ ॥**

चित्रः । इत् । शिशोः । तरुणस्य । वक्षथः । न । यः । मातरौ ।
अपिऽएति । धातवे । अनूधाः । यदि । जीजनत् । अध । च ।
नु । ववक्ष । सद्यः । महि । दूत्यम् । चरन् ॥ १ ॥

शिशोः शिशुभूतस्य अतएव तरुणस्य नूतनस्याग्नेः वक्षथः वहेरौणादिकोथप्रत्ययः। हविर्वहनं चित्रमाश्चर्यभूतं एव योजातोग्निः मातरौ सर्वस्यनिर्मात्र्यौ मातापितृभूते द्यावापृथिव्यावरण्यौवा धातवे नाप्येति धेट्पाने तुमर्थे तवेन्प्रत्ययः पानायापिनगच्छति इण्गतौ उदित्युपसर्गेणसमासः तिङ्चोदात्तवतीति गतेर्निघातः अनूधाः नञ्बहुव्रीहिः समासान्तस्यानङःस्त्रियामिहत्वादभावः प्रत्येकविवक्षयैकवचनं। कथोरहितोयंलोकोत्तरोलोकश्च एवमग्निं यदिजीजनत अजीजनत अजनयत् तर्हिस्तनपानाय न गच्छतीतिस्तुकं यथानभवति किंतु द्यावापृथिव्यौ सर्वेषां कामदुघे खलु तथापि नयाति तस्मादस्यहविर्वहनं चित्रं। अथच तत्सद्यनन्तरमेव नु अद्यास्मिन्दिने सद्यस्तदानीमेव शीघ्रं महि महत् दूत्यं दूतस्य भावकर्मणीकर्मणि यत् प्रत्ययः दूतकर्म चरन् चरन् देवान्प्रति हवींषि वहति ॥ १ ॥

१. इन नवीन बालक अग्नि का क्या ही अद्भुत प्रभाव है ! दूध पीने के लिए यह बालक माता-पिता के पास नहीं जाता। इसके पान के लिए स्तन-दुग्ध नहीं है; परन्तु यह बालक प्रादुर्भूत हुआ है। जन्म के साथ ही इस बालक ने कठिन दूत-कार्य का भार ग्रहण करके उसका निर्वाह किया।

अग्निर्ह नाम धायि दन्नपस्तमः सं यो वना युवते भस्मना दता।
अभिप्रमुरा जुह्वा स्वध्वर इनो न प्रोथमानो यवसे वृषा ॥ २ ॥

अग्निः। ह। नाम। धायि। दन्। अपःऽतमः। सम्। यः।
वना। युवते। भस्मना। दता। अभिऽप्रमुरा। जुह्वा।
सुऽअध्वरः। इनः। न। प्रोथमानः। यवसे। वृषा ॥ २ ॥

अपस्तमः अपःशब्दस्यान्तोदात्तत्वेन मत्वर्थोलुप्तइति ज्ञायते। अन्यथा आपःकर्माख्यायामित्यसुन्प्रत्यये आद्युदात्तत्वमेवस्यात् अपस्वितमः कर्मवत्तमोग्निर्नाम तृतीयायालुक् नाम्ना नमयित्र्या हविषा स्तोत्रेणवा धायि यजमानैः धार्यतेखलु यतः दन् यष्टॄणां धनदाता डुदाञ्दाने हेतौ छन्दस्युभयथेति शतुरार्धधातुकत्वेनाकारलोपः अतएव श्नपोसंभवः योग्निः भस्मना भासकेन प्रकाशकेन तेजसा दता दंष्ट्रेणच वना वनानि अरण्यानि संयुवते संयुनक्ति संवृणीतिवायत्। युमिश्रणामिश्रणयोः व्यत्ययेनशः आत्मनेपदं दता दन्तशब्दस्य पद्दन्नित्यादिनादत्भावः ऊडिदमिति विभक्तेराद्युदात्तत्वं। किंच अभिप्रमुरा मूर्छामोहसमुच्छ्राययोः अस्मात् क्विपि राल्लोपइति छकारलोपः। मुरसंवेष्टनेइत्यस्माद्वाक्विप् कृदुत्तरपदप्रकृतिस्वरत्वं। अभितः

समुच्छ्रितेनोद्यतेन महा सर्वतोहविर्भिः संविहितेन जुह्वा एतन्नामकेन पात्रविशेषेण स्वध्वरः शोभनयज्ञोऽग्निः अदनीये हविषि चरतीति शेषः । तत्र दृष्टान्तः—वनः न समर्थः शोभमानः पर्याप्तः पुष्टांगो वृषभ यवसेन यथा वृषभो घासादिषु चरति ॥ २ ॥

२. जो नाना कार्य करनेवाले और दाता हैं, उन्हीं अग्नि का आधान किया गया। ये ज्योतिरूप दाँत से वन लोगों का भक्षण करते हैं। जुहू नामक उज्ज्वपात्र में इन्द्र को यज्ञ-भाग दिया गया। जैसे हृष्ट-पुष्ट और बली वृष घास खाता है, वैसे ही ये यज्ञ-भाग का भक्षण करते हैं।

तंवोविंनद्रुषदंदेवमन्धसइन्दुंप्रोथन्तंप्रवपन्तमर्णवम् ।
आसावह्निंनशोचिषाविरप्शिनंमहिव्रतंनसरजन्तमध्वनः ॥ ३ ॥

तम् । वः । विम् । न । द्रुऽसदम् । देवम् । अन्धसः । इन्दुम् ।
प्रोथन्तम् । प्रऽवपन्तम् । अर्णवम् । आसा । वह्निम् । न ।
शोचिषा । विऽरप्शिनम् । महिऽव्रतम् । न । सरजन्तम् । अध्वनः ॥ ३ ॥

हे स्तोतारः वः यूयं तमग्निं अभिष्टुत कीदृशं विं न पक्षिणमिव द्रुषदं द्रुषु अरणि-रूपेषु सीदन्तं देवं द्योतमानं अन्धसः इन्दुं स्तोतॄणामन्नस्य क्लेदयितारं प्रापयितारं । उन्देरिच्चा-देरित्युप्रत्ययः निदित्यनुवृत्तेराद्युदात्तत्वं । प्रोथन्तं शब्दायमानं प्रवपन्तं अत्यर्थं वनानां दाहकं अर्णवं अर्णसः सलोपश्चेति मत्वर्थीयो वः अर्णसो लोपश्चेत्यादिक्रमेण उदकवन्तं आसा आस्यशब्दस्य पद्दन्नित्यादिना आसन्नादेशः वर्णलोपश्छान्दसः आस्येन वह्निं हविषां वोढारं यद्वा आसा अन्तिकनामैतत् देवानां समीपे हविषां प्रापकं । वहनेदृष्टान्तः—वह्निं न वह्निर्वा अनड्वानिति श्रवणादनड्वाहमिव वहने समर्थं शोचिषा स्वदीप्त्या विरप्शिनं महन्नामैतत् महान्तं महिव्रतं महाकर्माणमादित्यमिव अध्वनः सरजन्तं मार्गान् सह युगपदेव रंजयन्तं एवंगुणमग्निं अभिष्टुत सरजन्तं रंज रागे रंजेः शपि रंजेश्चेति नलोपे सहस्य सभावे व्यत्ययेन रूपं यद्वा सरतीति सरः सरस्योदकस्य जनयितारं जनेस्तत्करोत्यर्थे रूपमिति वा व्युत्पत्त्यनव-धारणादनवग्रहः ॥ ३ ॥

३. पक्षी के समान अग्नि वृक्ष (अरणि) का आश्रय करते हैं। ये प्रदीप्त अन्न के दाता हैं। ये शब्द करते हुए वन को जलाते हैं, जल धारण करते हैं, मुख के द्वारा हव्य का वहन करते हैं और आलोक के द्वारा महान् होते हैं। उनका कार्य महान् है। अपने मार्ग को वे रक्त-वर्ण कर देते हैं। उन अग्नि की, स्तोताओ, स्तुति करो।

वियस्यतेज्रयसानस्याजरधक्षोर्नवाताःपरिसन्त्यच्युताः ।
आरण्वासोयुयुधयोनसत्वनंत्रितंनशन्तप्रशिषन्तइष्टये ॥ ४ ॥

वि । यस्यं । ते । जयसानस्यं । अजर । धक्षोः । न । वाताः ।
परि । सन्ति । अच्युताः । आ । रण्वासः । युयुधयः । न ।
सत्वनम् । त्रितम् । नशन्त । प्र । शिषन्तः । इष्टये ॥ ४ ॥

हे अजर जरारहिताग्ने जयसानस्य जयतिर्गत्यर्थः ताच्छील्यकादस्मादप्यसानच्प्रत्ययः गमनशीलस्य धक्षोः दहेः सन् द्विवचनप्रकरणे छन्दसिवेति वक्तव्यमिति द्विर्वचनाभावः धक्ष्यादुप्रत्ययः । अरण्यदहनेच्छोः यस्यते तव स्वभूताः अच्युताः शत्रुभिरच्यवनीयाः प्रभावाः वातान वातवत्त्व विपरिसन्ति सर्वतोविशेषेण वर्तन्ते । सन्ति असलेर्लट् प्रयोगादनिघातः युयुधयोन युधेः किन्प्रत्ययः योद्धार इव रण्वासः शीघ्रंगन्तारः शब्दायमानाऋत्विजः इष्टये यागाय प्रशिषन्तप्रकर्षेण शिषन्तः शिषासन्तः संप्रकुमिच्छन्तः । सत्वनं बलवन्तं त्रितं त्रिष्वाहवनीयादिस्थानेषु वर्तं विस्तृतं त्वां आनशंत स्तुतिभिर्हविर्भिश्च व्याप्नुवन्ति । आङ्पूर्वोनशिर्व्याप्तिकर्मा आक्षाणः आनडिति व्याप्तिकर्मसु पाठात् ॥ ४ ॥

४. अजर अग्नि, जिस समय तुम दाह करते हो, उस समय वायु आकर तुम्हारी चारों ओर ठहरते हैं और अविचलित पुरोहित लोग, यज्ञ के अवसर पर, स्तुति करते हुए, तुम्हें घेरकर खड़े हो जाते हैं। उस समय तुम तीन मूर्तियाँ (आहवनीय आदि) धारण करते हो, बल प्रकाश करते हो, इधर-उधर जाते हो। पुरोहित लोग, योद्धाओं के समान, कोलाहल करने लगते हैं।

अथ पंचमी—

सइदग्निःकण्वतमःकण्वसखार्यःपरस्यान्तरस्यतरुषः ।
अग्निःपातुगृणतोअग्निःसूरीन्अग्निर्ददातुतेषामवोनः ॥ ५ ॥ १८ ॥

सः । इत् । अग्निः । कण्वऽतमः । कण्वऽसखा । अर्यः । परस्य ।
अन्तरस्य । तरुषः । अग्निः । पातु । गृणतः । अग्निः । सूरीन् ।
अग्निः । ददातु । तेषाम् । अवः । नः ॥ ५ ॥ १८ ॥

कण्वतमः कणतेः शब्दार्थादशुपुषीत्यादिना क्वन्प्रत्ययः अतिशयेन स्तोता अतएव कण्वसखा बहुव्रीहितात्समासान्तोदात्ताभावः कण्वाः स्तोतारः सखायोयस्य सखायाः अर्यः स्वामिन्यन्तोदात्तत्वंवक्तव्यमित्यन्तोदात्तत्वं स्वामी सर्वस्येश्वरः सइत् सएवाग्निः परस्य विप्रकृष्टस्य वासस्य अन्तरस्य अव्यवहितस्य समीपेवर्तमानस्य च शत्रोः तरुषः तारयिता विनाशयिता भवति सोग्निः गृणतः स्तोतॄन् अस्मान् पातु रक्षतु गृशब्देक्र्यादिकः शतुर्नुमोनद्य-

आदीदवि विभक्तेरुदात्तत्वं । तथा सुरीन् पूरेरणे हविषां प्रेरयितॄनस्मान् रक्षतु । किंच येषामेषां मोऽस्माकं अघोरक्षणमन्नं वा अग्निरदातु प्रयच्छतु ॥ ५ ॥

५. वे अग्नि ही सबसे अधिक शब्द करनेवाले हैं। जो सदाक्त स्तोत्र करते हैं, उनके सुम सखा हो। वे प्रभु हैं और समीपस्थ शत्रु का विनाश करनेवाले हैं। अग्नि स्तोताओं के और विद्वानों के रक्षक हैं। वे उन्हें और हमें आश्रय देते हैं।

वाजिन्तमायसह्यसेसुपित्र्यतृषुच्यवानोअनुजातवेदसे।
अनुद्रेचिद्योधृषतावरंसुतेमहिन्तमायधन्वनेदविष्यते ॥ ६ ॥

वाजिन्ऽतमाय । सह्यसे । सुऽपित्र्य । तृषु । च्यवानः । अनु । जातऽवेदसे । अनुद्रे । चित् । यः । धृषता । वरम् । सुते । महिन्ऽतमाय । धन्वना । इत् । अविष्यते ॥ ६ ॥

हे सुपित्र्य पितुरागतः पित्र्यः पितुर्यदिवियत्प्रत्ययः शोभनपित्र्य हे अग्ने वाजिन्तमाय अतिशयेनान्नवते अत्यन्तबलवते वा लाढ्स्येतिनुडागमः सह्यसे सहीयसे शत्रूणामतिशयेनाभिभवित्रे जातवेदसे जातप्रज्ञाय तुभ्यं त्वां स्तोतुं तृषु क्षिप्रं अनुच्यवानः स्तुतिभिरनुगच्छः वयुक्तोसि । क्रियार्थोपपदस्यच कर्मणीति जातवेदःशब्दस्य चतुर्थी । सह्यसे सहस्विन् शब्दादीयसुनि विन्मतोर्लुगिति ईयसुनईकारलोपश्छान्दसः अनुद्रेचित् उदकवर्जितस्थाने आपदीत्यर्थः शत्रुभिः संजातायामापदि धृषता शत्रुधर्षणसमर्थेन धन्वनेव आत्मीयेन धनुषैव अविष्यते पालकाय सते धृष्णते शत्रुरनुमहविविभक्तेरुदात्तत्वं महिन्तमाय पूज्यतमाय दातृतमाय वा ईदृशायाग्नये योऽहं वरं वरणीयं हविः प्रयच्छामि सोऽहं स्तुतिमपि तस्मै करोमीत्यर्थः ॥ ६ ॥

६. शोभन पितावाले अग्नि, तुम्हारे समान अन्नवाला कोई भी नहीं है। तुम बली और सर्वश्रेष्ठ हो तथा विपत्ति के समय धनुष धारण करके रक्षा करते हो। उन ज्ञानी अग्नि को, उत्साह के साथ, यज्ञ-सामग्री दो और शीघ्र स्तुति करने को प्रस्तुत होओ।

एवाग्निर्मर्तैःसहसूरिभिर्वसुष्टवेसहसःसूनरोनृभिः।
मित्रासोनयेसुधिताऋतायवोद्यावोनद्युम्नैरभिसन्तिमानुषान् ॥ ७ ॥

एव । अग्निः । मर्तैः । सह । सूरिऽभिः । वसुः । स्तवे । सहसः । सूनरः । नृऽभिः । मित्रासः । न । ये । सुऽधिताः । ऋतऽयवः । द्यावः । न । द्युम्नैः । अभि । सन्ति । मानुषान् ॥ ७ ॥

सहसोबलस्यसूनरः सुष्टुप्रेरकः यद्वा सूनुरित्यस्य वर्णव्यत्ययः सूनरः सूनुः बलेनमथ्य-मानत्वाचस्यपुत्रोऽग्निः शुचिः कर्मनेतृभिः सर्वैः मनुष्यैः सह सूरिभिः विद्वद्भिः अस्माभिः नमस्य-नमभिलक्ष्य एव एवं स्तवे स्तूयते बहुष्टवस्त्यत्र संहितायांपूर्वपदादिविषत्वं मित्रासोम सु-हृदश्च सुधिताः सुहिताः तृप्ताः दधातेर्निष्ठायां सुधितवसुधितेतिनिपातितः सुधितार्थास्तृप्यर्थाः इति काशिकायामुक्तं । मर्त्तयः यज्ञंकामयमानाः नच्छन्दस्यपुत्रस्येति दीर्घत्वयोः प्रतिषेधः ईदृशाये सूरयः यावोन द्योतमानाइव द्युभिः द्युम्नंद्योततेर्यशोवान्नंवेतियास्कः । अभिभवन्तेसूर्ये-रार्भिर्यशोभिर्वा मानुषान् शासवान् जनानभिसन्ति अभिभवन्ति यद्वृत्तयोगादनिघातः ॥ ७ ॥

७. ज्ञाता और कार्य-कर्ता मनुष्य अग्नि की स्तुति करते हुए उन्हें सम्पत्ति और बल पुत्र कहते हैं। यज्ञानुष्ठान करनेवाले बन्धु के समान अग्नि-कृपा में तृप्ति प्राप्त करते हैं। वे ज्योतिर्मय ग्रह, नक्षत्र आदि के समान अपने तेज से शत्रु-मनुष्यों को हराते हैं।

ऊर्जोनपात्सहसावन्निति॑त्वोपस्तुतस्यवन्दतेवृषावाक् ।
त्वांस्तोषामत्वयासुवीराद्राघीयआयुःप्रतरंदधानाः ॥ ८ ॥

ऊर्जः । नपात् । सहसाऽवन् । इति॑ । त्वा । उपऽस्तुतस्य॑ ।
वन्दते । वृषा॑ । वाक् । त्वाम् । स्तोषाम । त्वया॑ । सुऽवीराः ।
द्राघीयः । आयुः । प्रऽतरम् । दधानाः ॥ ८ ॥

ऊर्जोनपात् नपादित्यपत्यनाम अन्नस्यपुत्र अन्नंवाआज्यमितिश्रवणात् तेन मन्थ्य-मानत्वात् बलस्यवापुत्र सुबामंत्रितेपरांगवत्स्वरइत्यूर्जइत्यस्य परांगवद्भावेनामंत्रितत्वे आमं-त्रितस्यचेति षाष्ठिकमाद्युदात्तत्वं । हे सहसावन् सहस्विन्नग्ने त्वा त्वां इत्येवं उप-स्तुतस्य स्तावकस्य ऋषेर्मम वृषा हविषांवर्षयित्री वैः सहितावा स्तुतिर्वन्दते स्तौति । वृषा ग्रुपधलोपिकः अवाघवदाप् । किंच वयं त्वां स्तोषाम स्तवाम स्तौतेर्लेट्यडागमः ततः त्वया सुवीराः शोभनपुत्राः स्याम द्राघीयः दीर्घतमं आयुर्जीवनं प्रतरं अत्यर्थंदधानाः धारयन्तो-भवेम ॥ ८ ॥

८. बल के पुत्र और शक्तिशाली अग्नि, मेरा नाम "उपस्तुत" है। मेरा वर्षक स्तोत्र तुम्हारी स्तुति करता है। हम तुम्हारी स्तुति करते हैं, तुम्हारी दया से हम दीर्घायु हों और सन्तान प्राप्त करें।

इतित्वाग्नेवृष्टिहव्यस्यपुत्राउपस्तुतासऋषयोवोचन् ।
तांश्चपाहिगृणतश्चसूरीन्वषड्वषळित्यूर्ध्वासोअनक्षन्
नमोनमइत्यूर्ध्वासोअनक्षन् ॥ ९ ॥ १९ ॥

इति । त्वा । अग्ने । वृष्टिऽहव्यस्य । पुत्राः । उपऽस्तुतासः ।
ऋषयः । अवोचन् । तान् । च । पाहि । गृणतः । च । सूरीन् ।
वषट् । वषट् । इति । ऊर्ध्वासः । अनक्षन् । नमः । नमः । इति ।
ऊर्ध्वासः । अनक्षन् ॥ ९ ॥ १९ ॥

हे अग्ने त्वा त्वां इत्येवमुक्तप्रकारेण वृष्टिहव्यस्य एतन्नामकस्य ऋषेः पुत्रा उपस्तुतास उपस्तुता एतदभिधाना ऋषयः सूक्तद्रष्टारो अवोचन् अस्तुवन् तानपि त्वं पाहि रक्ष चयोगे प्रथमेति न निघातः । तथा गृणतः स्तोतॄन् सूरीन् विदुषश्च पाहि वषड्वषडिति मन्त्रेण ऊर्ध्वासः हविःप्रदानार्थं ऊर्ध्वमुखहस्ताः सन्तः अनक्षन् व्याप्नुवन् नक्षतिर्व्याप्तिकर्मा नमोनम इत्येवं ऊर्ध्वासः स्तोतुमुद्युक्ताः अनक्षन् ये उक्तगुणाः तानुभयविधान् यष्टॄन् स्तोतॄन् पालय ॥ ९ ॥

९. वृष्टिहव्य नामक ऋषि के पुत्र "उपस्तुत" आदि ने तुम्हारी स्तुति की। उनकी और स्तोता विद्वानों की रक्षा करो। उन्होंने "वषट्" मन्त्र और "नमोनमः" वाक्य से तुम्हारी स्तुति की।

॥ इत्यष्टमस्य षष्ठे एकोनविंशोवर्गः ॥ १९ ॥

पिबेति नवर्चं चतुर्थं सूक्तं त्रैष्टुभमैन्द्रं स्थूलनाम्नः पुत्रः अग्नियुताख्य ऋषिः अग्नियूपाख्यो वा । तथाचानुक्रम्यते—पिबस्थौरोऽग्नियुतोऽग्नियूपो वेति गतोविनियोगः ।

**पिबासोमंमहतइन्द्रियायपिबावृत्रायहन्तवेशविष्ठ ।**
**पिबरायेशवसेहूयमानःपिबमध्वस्तृपदिन्द्रावृषस्व ॥ १ ॥**

पिब । सोमम् । महते । इन्द्रियाय । पिब । वृत्राय ।
हन्तवे । शविष्ठ । पिब । राये । शवसे । हूयमानः ।
पिब । मध्वः । तृपत् । इन्द्र । आ । वृषस्व ॥ १ ॥

हे इन्द्र त्वं महते प्रभूताय इन्द्रियाय इन्द्रस्यात्मनोजुष्टाय वीर्याय सोमं अस्माभिः दीयमानं पिब इन्द्रियमिन्द्रलिङ्गमित्यादिनेन्द्रियशब्दोयजन्तत्वेन निपातितः । हे शविष्ठ अतिशयेनबलवन् वृत्राय हन्तवे वृत्रंहन्तुं सोमं पिब क्रियाग्रहणंकर्तव्यमिति वृत्रस्यसंप्रदानत्वं तथाहूयमानोस्माभिराहूयमानस्त्वं राये धनाय ऊडिदमित्यादिना विभक्तेरुदात्तत्वं शवसेचाय धनान्नयोः प्रदानाय सोमं पिब । मध्वः मदकरान् सर्वान् सोमान् पिब वाछन्दसीति पूर्वसवर्णदीर्घा-

भावः । अनन्तरं हे इन्द्र तृपत्तृप्तोभवन् आवृषस्व अस्मदभिलषितान्याभिसिंच ददस्व । तृपत् तृं-पतृप्रीतावौदादिकः अनित्यमागमशासनमिति नुमभावः ॥ १ ॥

१. बलियों में अग्रगण्य इन्द्र, प्रचुर बल की प्राप्ति के लिए और वृत्र के वध के लिए सोम-पान करो। अन्न और धन के लिए तुम्हें बुलाया जाता है। सोम-पान करो। मधुतुल्य सोम का पान करो और तृप्त होकर जल बरसाओ।

अस्यपिबक्षुमतःप्रस्थितस्येन्द्रसोमस्यवरमासुतस्य ।
स्वस्तिदामनसामादयस्वार्वाचीनोरेवतेसौभगाय ॥ २ ॥

अस्य । पिब । क्षुऽमतः । प्रऽस्थितस्य । इन्द्र । सोमस्य ।
वरम् । आ । सुतस्य । स्वस्तिऽदाः । मनसा । मादयस्व ।
अर्वाचीनः । रेवते । सौभगाय ॥ २ ॥

हे इन्द्र क्षुमतः स्तुतियुक्तस्य यद्वा हवीरूपान्नवतः प्रस्थितस्य हविर्धानादुत्तरवेदिंप्रति प्रस्थापितस्य सुतस्याभिषुतस्यास्य सोमस्य वरं वरणीयं त्वदीयं भागं आभिमुख्येन पिब प्र-स्थितस्य तिष्ठतेःकर्मणिनिष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वं ततः स्वस्तिदाः कल्याणस्यदा-ता त्वं मनसा अन्तःकरणेन मादयस्व हृष्टोभव यद्वा अस्मानपि हृष्टान् कुरु तदेवोच्यते रेवते धनवते सौभगाय सौभाग्याय तदस्मभ्यं दातुं अर्वाचीनः अभिमुखांचनोभव विभाषाञ्चेरदिक्-स्त्रियामितिखः रयिशब्दान्मतुपः छन्दसीरइतिवत्वं रयेर्मतौबहुलमितिसंप्रसारणं पूर्वरूपत्वेगुणः । सौभगाय उद्गात्रादिषु सुभगान्मंत्रइतिपठ्यते तस्योत्तरपदस्य हृद्भगेतिवृद्धिर्नेष्यते सर्वविधी-नांछन्दसिविकल्पितत्वात् ञित्स्वरेणाद्युदात्तत्वं ॥ २ ॥

२. इन्द्र, यह सोम प्रस्तुत है। इसके साथ खाद्य द्रव्य है। सोम क्षरित हो रहा है। इसके सार भाग का पान करो। कल्याण दो, मन ही मन आनन्द प्राप्त करो तथा धन और सौभाग्य देने के लिए अग्रसर होओ।

अथ तृतीया—

ममत्तुत्वादिव्यःसोमइन्द्रममत्तुयःसूयतेपार्थिवेषु ।
ममत्तुयेनवरिवश्चकर्थममत्तुयेननिरिणासिशत्रून् ॥ ३ ॥

ममत्तु । त्वा । दिव्यः । सोमः । इन्द्र । ममत्तु । यः ।
सूयते । पार्थिवेषु । ममत्तु । येन । वरिवः । चकर्थ ।
ममत्तु । येन । निःऽरिणासि । शत्रून् ॥ ३ ॥

हे इन्द्र त्वा त्वां दिव्यः दिविभवः सोमः ममत्तु आत्मीयकर्तृकमदानेन मादयतु देवाहि अपरपक्षे सोमस्यकर्तारः पिबन्ति मदेर्लोटि व्यत्ययेनश्लुः शोहीत्यादिनापितःपूर्वस्योदात्तत्वं। तथा पार्थिवेषु पृथिव्यांभवेषु देवयजनेषु यः सोमोस्माभिः सूयते अभिषूयते सोपि अस्माभिर्दत्तो- ममत्तु त्वांहर्षयतु येनसोमेन वरिवः वरणीयं धनं चकर्थ कृतवानसि सचममत्तु करोतेर्लिट् य- योगादनिघातेलित्स्वरः। किंच येन शत्रून् निरिणासि निर्गमयसि सोपि ममत्तु त्वां मादयतु रिणासि रीगतिरेषणयोः क्र्यादिः प्वादीनांह्रस्वत्वम् ॥ ३ ॥

३- इन्द्र, स्वर्गीय सोम तुम्हें मत्त करे। पृथिवीस्थ मनुष्यों के मध्य जो प्रस्तुत हुआ है, वह भी तुम्हें मत्त करे। जिससे तुम धन दो, वही सोम मत्त करे। जिसके द्वारा शत्रु-वध करते हो, वह भी मत्त करे।

आद्विबर्हाअमिनोयात्विन्द्रोवृषाहरिभ्यांपरिषिक्तमन्धः।
गव्यासुतस्यप्रभृतस्यमध्वःसत्राखेदामरुशहावृषस्व ॥ ४ ॥

आ। द्विऽबर्हाः। अमिनः। यातु। इन्द्रः। वृषा। हरिऽभ्याम्।
परिऽसिक्तम्। अन्धः। गवि। आ। सुतस्य। प्रऽभृतस्य।
मध्वः। सत्रा। खेदाम्। अरुशऽहा। आ। वृषस्व ॥ ४ ॥

द्विबर्हाः द्वयोर्लोकयोः परिवृढः यद्वा द्वाभ्यां स्तुतशस्त्राभ्यां वर्धनीयः वृहेर्वर्धनार्थस्य कर्तरिकर्मणिवा असुन् अमिनः अमवेर्गत्यर्थादौणादिकइनच् सर्वत्रगन्ता यद्वा कान्त्यर्थात् सर्वैः काम्यमानः अतएव वृषा अभिलषितानां वर्षकइन्द्रः परिषिक्तं वसतीवरीभिः परितः सि- क्तं अन्धः अस्मदीयं सोमलक्षणमन्नं यातु हरिभ्यां एतन्नामकाभ्यामश्वाभ्यां सहायातु आ- गच्छतु। अथ प्रत्यक्षः। हे इन्द्र अरुशहा अरुशाः शत्रवः तेषांहन्ता अर्तेरौणादिकउशन् बहु- लंछन्दसीतिहन्तेःक्विप् सत्रा सत्रम्याडादेशः अस्मदीयसत्रे यज्ञे गवि आनडुहेचर्मणि सुतस्या- भिषुतस्य प्रभृतस्य पानेपुष्टस्य इयहोमैः ईदृशस्य मध्वः मदकरस्य सोमस्य पानेन हृष्टः सन् खेदां खिद्यमानानां शत्रूणां उत्सिचयसे आभिमुख्येन वृषस्व वृषइवाचर वृषशब्दादाचारा- र्थेक्विप् व्यत्ययेनात्मनेपदं खेदां खिददैन्ये कर्मणिघञंतस्याभिनुङभावश्छान्दसः ॥ ४ ॥

४. इन्द्र इस लोक और परलोक में दृढ़, सर्वत्र-गन्ता और वृष्टिदाता हैं। हमने सोम-रूप आहारीय द्रव्य का चारों ओर सिञ्चन किया है। दोनों घोड़ों के द्वारा इन्द्र उसके पास आवें। शत्रु-घातक इन्द्र, मधु- तुल्य सोम गोचर्म के ऊपर डाला हुआ और परिपूर्ण है। वृष के समान बल का प्रकाश करके यज्ञ के शत्रुओं का विनाश करो।

निति॒ग्मानि॑भ्रा॒शय॒न्भ्राश्या॒न्यव॑स्थि॒रात॑नुहि॒यातु॒जूना॑म्।
उ॒ग्राय॑ते॒सहो॒बल॑न्ददामि॒प्रती॑त्या॒शत्रू॑न्विग॒देषु॑वृश्च ॥ ५ ॥ २० ॥

नि । तिग्मानि । भ्राशयन् । भ्राश्यानि । अव । स्थिरा ।
तनुहि । यातुऽजूनाम् । उग्राय । ते । सहः । बलम् ।
ददामि । प्रतिऽइत्य । शत्रून् । विऽगदेषु । वृश्च ॥ ५ ॥ २० ॥

हे इन्द्र भ्राश्यानि प्रकाश्यानि तिग्मानि तीक्ष्णान्यायुधानि नितरां भ्राशयन् प्रकाशयन् भ्राश्दीप्तौ सन्नं यातुजूनां जुहविसैवोधातुः भ्राजभासेत्यत्र जवतेर्दीर्घः क्विप्चेतिक्विप् दीर्घस्य आमिनुडागमश्छान्दसः यातुधानानां स्थिरा स्थिराणि दृढान्यपि शरीराणि अवतनुहि अव-स्तात्तनुभूतान् पातय उग्राय उद्गूर्णबलाय ते तुभ्यं सहः शत्रुसहनसमर्थं बलं बलहेतुकं हविः ददामि अहं प्रयच्छामि । वद: विगदेषु विविधं गदन्ति शब्दायन्ते भदेर्घञर्थेकविधानमित्य-धिकरणेकः शत्रून् प्रतीत्य प्रतिगम्य प्रतिकूलंमत्वा वृश्च तान् छिन्धि ओव्रश्चूछेदने वैरा-दिकोठोद् ॥ ५ ॥

५. इन्द्र, तीक्ष्ण अस्त्रों को दिखाते हुए राक्षसों को भूमिशायी करो। तुम्हारी मूर्त्ति भयंकर है। तुम्हें बल और उत्साह बढ़ानेवाला सोम हम देते हैं। शत्रुओं के सामने जाकर कोलाहलमय युद्ध के बीच उन्हें काट डालो।

॥ इत्यष्टमस्य षष्ठे विंशोवर्गः ॥ २० ॥

व्य१र्यइन्द्रतनुहिश्रवांस्योजःस्थिरेवधन्वनोभिमातीः ।
अस्मद्र्यग्वावृधानःसहोभिरनिभृष्टस्तन्वंवावृधस्व ॥ ६ ॥

वि । अर्यः । इन्द्र । तनुहि । श्रवांसि । ओजः । स्थिराऽइव ।
धन्वनः । अभिऽमातीः । अस्मद्र्यक् । वावृधानः ।
सहःऽभिः । अनिऽभृष्टः । तन्वम् । वावृधस्व ॥ ६ ॥

हेइन्द्र अर्यः स्वामी त्वं श्रवांसि अन्नानि श्रवइत्यन्ननाम अस्मभ्यं वितनुहि विस्ता-रय प्रयच्छ तनोतेर्लोटि उतश्चप्रत्ययाच्छन्दसि वावचनमिति हेर्लुगभावः । तथा अभिमातीः अभितोमातीः मानं येषांते अभिमातयः शत्रवः तान् प्रति ओजआत्मीयं वीर्यं स्थिरेव स्थिराण्येव धन्वनः धनूंषिच विस्तारय तैः शत्रून् जहीत्यर्थः । अपिच अस्मद्र्यक् अस्मद-भिमुखांचनः विष्वग्देवयोश्चटेरद्र्यंचवावित्यद्र्यादेशः अद्रिसध्र्योरन्तोदात्तत्वेन निपातनात् उदात्तस्वरितयोर्यणइति धातोरकारस्यानुदात्तस्य स्वरितत्वं सहोभिरात्मीयैर्बलैर्वावृधानः प्रवृद्धः भवस्व अनिभृष्टः शत्रुभिरपरिभवनीयः त्वं तन्वं आत्मीयं शरीरं वावृधस्व वर्धय प्र-वृद्धां तन्वं तन्यतइति तनूर्यज्ञः तं वर्धय त्वदागमनेनहि यज्ञोवर्धते ॥ ६ ॥

६. प्रभु इन्द्र, अन्न का विस्तार करो, शत्रुओं के ऊपर अपना अभि-लषित प्रभाव और धनुष फैलाओ। हमारे अनुकूल होकर बढ़ो। शत्रुओं से पराजय न प्राप्त करके अपने बल से शरीर को बढ़ाओ।

अथ सप्तमी—

इदं हविर्मघवन्तुभ्यं रातं प्रति सम्राळहृणानो गृभाय ।
तुभ्यं सुतो मघवन्तुभ्यं पक्वो३ऽद्धीन्द्र पिब च प्रस्थितस्य ॥ ७ ॥

इदम् । हविः । मघऽवन् । तुभ्यम् । रातम् । प्रति । सम्ऽराट् ।
अहृणानः । गृभाय । तुभ्यम् । सुतः । मघऽवन् । तुभ्यम् ।
पक्वः । अद्धि । इन्द्र । पिब । च । प्रऽस्थितस्य ॥ ७ ॥

हे मघवन् धनवन् सम्राट् सम्यक् राजमान सर्वेषामीश्वरेति वा इदं सोमादिलक्षणं रातं अस्माभिर्दत्तं हविः हे इन्द्र तुभ्यं अहृणानः अक्रुध्यन् प्रतिगृभाय प्रतिगृहाण ग्रहेर्लोटि श्नाप्रत्ययस्य छन्दसि शायजपीति शायजादेशः हृग्रहोर्भ इति भः संनिपातपरिभाषाया अनित्यत्वाद्धेर्लुक् हे मघवन् तुभ्यमेवायं सोमः सुतः अभिषुतः तुभ्यमेवायं पुरोडाशादिः पक्वः हे इन्द्र तं पुरोडाशमद्धि भक्षय । किंच प्रस्थितस्य हविर्धानादुत्तरवेदिं प्रस्थापितं सोमं पिब । चवायोगे-त्यनिघातः यद्वा आमन्त्रितस्याविद्यमानत्वेन तिङ्ङतिङ इत्यनिघातः ॥ ७ ॥

७. धनी इन्द्र, इस यज्ञ-सामग्री को तुम्हारे लिए हम अर्पित करते हैं। सम्राट् इन्द्र, क्रोध न करके इसे ग्रहण करो। धनी इन्द्र, सोम प्रस्तुत हुआ है। तुम्हारे लिए खाद्य पकाया गया है। यह सारा द्रव्य तुम्हारे पास जाता है। पियो और खाओ।

अथाष्टमी—

अद्धीदिन्द्र प्रस्थितेमा हवींषि चनो दधिष्व पचतोत सोमम् ।
प्रयस्वन्तः प्रति हर्यामसि त्वा सत्याः सन्तु यजमानस्य कामाः ॥ ८ ॥

अद्धि । इत् । इन्द्र । प्रऽस्थिता । इमा । हवींषि । चनः ।
दधिष्व । पचता । उत । सोमम् । प्रयस्वन्तः । प्रति ।
हर्यामसि । त्वा । सत्याः । सन्तु । यजमानस्य । कामाः ॥ ८ ॥

हे इन्द्र प्रस्थिता प्रस्थितानि उत्तरवेदिं प्रति इमा इमानि शेश्छन्दसि बहुलमिति शेर्लोपः हवींषि अद्धीत् भक्षयैव चनः चन इत्यन्ननाम तद्दधिष्व धारय उदरे प्रक्षिप दधातेर्लोटि छन्दस्युभयथेति थास आर्धधातुकत्वात् इडागमः पचता पक्वानि सवनीयपुरोडाशादीनि चकारस्य पचेर्भृमृदृशीत्यादिना कर्मणि अतच् प्रत्ययः उतापि च सोमं पिब ततः प्रयस्वन्तः प्रीणयन्ती-

श्रि पयोरूपं येन तदुभयः सन्तः त्वा त्वां प्रति इयमिसि इयमिः कामयामहे धनादीनि । इयर्मिः प्रेप्साकर्मा इदंतोमसिः तस्मात् यजमानस्य यागं कुर्वाणस्य कामाः धनादिविषयाअभिलाषाः सत्याः यथार्थाः सन्तु पूरुषयोःशानजिति यजेः शानन् प्रत्ययः नित्वादाद्युदात्तः ॥ ८ ॥

८. इन्द्र, यह सारी यज्ञ-सामग्री तुम्हारे पास जाती है। जो आहारीय द्रव्य पकाया गया है और जो सोम है, उन दोनों को ही पाओ। अन्न लेकर हम तुम्हें भोजन के लिए निमन्त्रित करते हैं। यजमानों के मन की वासनायें सफल हों।

प्रेन्द्राग्निभ्यांसुवचस्यामियर्मिसिन्धाविवप्रेरयन्नावमर्कैः ।
अयाइवपरिचरन्तिदेवायेअस्मभ्यंधनदाउद्भिदश्च ॥ ९ ॥ २१ ॥

प्र । इन्द्राग्निऽभ्याम् । सुऽवचस्याम् । इयर्मि । सिन्धौऽइव ।
प्र । ईरयम् । नावम् । अर्कैः । अयाःऽइव । परि । चरन्ति ।
देवाः । ये । अस्मभ्यम् । धनऽदाः । उत्ऽभिदः । च ॥ ९ ॥ २१ ॥

इन्द्राग्निभ्यां देवाभ्यां सुवचस्यां छन्दसि चेति यत्प्रत्ययः सुवचनार्हां स्तुतिमहं प्रेयर्मि प्रेरयामि । ऋगतौ जौहोत्यादिकः अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वं छेवदादन्हे चेति इन्द्राग्नो- रुभयपदप्रकृतिस्वरत्वे माघे नोत्तरपदेनुदात्तादाविति प्रतिषेधः सिंधाविव सिन्धौ नद्यां यथा नावं प्रेरयति तद्वत् अर्कैरर्चनीयैर्मन्त्रैः सहितां स्तुतिं प्रेरयं मयादिदं ईरगतौ प्रयन्तस्य लङ्युत्तमस्यामादेशः स्तुतास्ते देवाः अयाइव अयन्ति कर्मकरणार्थं गच्छन्तीत्यया ऋत्विजः कर्म- कराचा तद्वत् परिचरन्ति अस्मान् धनादिदानेन पूजयन्ति येदेवाः अस्मभ्यं धनदाः धनस्य दातारः उद्भिदः अस्मच्छत्रूणामुद्भेत्तारश्च येसन्ति ॥ ९ ॥

९. अग्नि और इन्द्र के लिए सुरचित स्तुति मैं प्रेरित करता हूँ। जैसे नदी में नाव भेजी जाती है, वैसे ही पूजनीय मन्त्रों से मैंने स्तुति प्रेरित की। पुरोहितों के समान देवता लोग परिचर्या करते हैं। वे हमारे शत्रुओं का विनाश करने के लिए हमें धन देते हैं।

नवाइति नवर्चं पंचमं सूक्तं भिक्षुर्नामआंगिरसऋषिः प्रथमाद्वितीये जगत्यौ शिष्टाः स- प्तत्रिष्टुभः अत्र धनस्यान्नस्यच दानं स्तूयते अतस्तद्देवत्यमिदं । तथाचानुक्रान्तं—नवाउभिक्षु- र्धनान्नदानप्रशंसाद्येजगत्याविति । गतोविनियोगः ।

तत्र प्रथमा—

नवाउदेवाःक्षुधमिद्वधंददुरुताशितमुपगच्छन्तिमृत्यवः ।
उतोरयिःपृणतोनोपदस्यत्युतापृणन्मर्डितारंनविन्दते ॥ १ ॥

न । वै । ऊँ इति । देवाः । क्षुधम् । इत् । वधम् । ददुः । उत ।
आशितम् । उप । गच्छन्ति । मृत्यवः । उतो इति । रयिः । पृणतः ।
न । उप । दस्यति । उत । अपृणन् । मर्डितारम् । न । विन्दते ॥ १ ॥

भिक्षुः प्रथमं व्यतिरेकमुखेनान्नदानं प्रशंसति देवाः खलु सर्वेषां क्षुधं नददुः नप्रा-यच्छन् किंतु वधमित् वधमेव दत्तवन्तः एवाहर्थो वधरूपां क्षुधं अन्नदानेन यः शमयति स-दाता खलु वहति पूर्णः यः अदत्वा भुंक्ते तं आशितं भुंजानं पुरुषं अपि मृत्यवः मरणान्युप-गच्छन्ति समीपे यान्ति आशितः कर्मेत्याद्युदाचत्वं । क्षुधार्तानां भोक्तॄणांच मरणं समानं किं दानेन धननाशरूपेण अतआह उतो उशब्दस्तथ्यर्थे पृणतः प्रयच्छतः पुरुषस्य रयिः ध-नं नोपदस्यति नउपक्षीयते दसुउपक्षये दैवादिकः पृणदाने तौदादिकः तस्य शत्रन्तस्य शतु-रनुमोनद्यजादीइति विभक्तेरादुदात्तत्वं दानप्रसंगेनादातारं दूषयति अपृणन् अप्रयच्छन् पुरुष-स्तु मर्डितारं आत्मनः सुखयितारं नविन्दते न कुत्रापि लभते इह यन्यतः अदानेन नसुख-यन्ति देवाअपि हविःप्रदानाभावात् ॥ १ ॥

१. देवों ने क्षुधा (भूख) की जो सृष्टि की है, वह प्राण-नाशिनी है। परन्तु आहार करने पर भी तो प्राण को मृत्यु से छुट्टी नहीं मिलती। तो भी दाता का धन कम नहीं होता। अदाता को कोई सुखी नहीं कर सकता।

अथ द्वितीया—

यआध्रायचकमानायपित्वोन्नवान्त्सन्रफितायोपजग्मुषे ।
स्थिरंमनःकृणुतेसेवतेपुरोतोचित्समर्डितारंनविंदते ॥ २ ॥

यः । आध्राय । चकमानाय । पित्वः । अन्नऽवान् । सन् ।
रफिताय । उपऽजग्मुषे । स्थिरम् । मनः । कृणुते । सेवते ।
पुरा । उतो इति । चित् । सः । मर्डितारम् । न । विन्दते ॥ २ ॥

यः पुरुषः स्वयमन्नवानपि आध्राय आध्रीयतेऽसावित्याध्रोदुर्बलः तस्मै पित्वः पितूनन्ना-नि चकमानाय चकमानः कान्तिकर्मा रफिताय रफतिर्हिंसार्थः दारिद्र्येण हिंसिताय उपजग्मुषे गृहं प्रत्यागताय अतिशयेन मनआत्मीयं अन्तःकरणं अदाने स्थिरं कृणुते कुरुते मनःस्थैर्य-करणेन तं क्लेशयतीत्यर्थः । कृणुते कृविहिंसाकरणयोः धिन्विकृण्व्योरच्चेति उप्रत्ययः करो-

तेर्वा व्यत्ययेन श्नुः विकरणस्वरः सतिशिष्टोपि लसार्वधातुकस्वरं नबाधते इति लसार्वधातुकस्वरः। नकेवलं क्लेशकरणं अपितु पुरा तस्य पुरस्तादेव सेवते भोगान् सोपि मर्डितारं आत्मनः सुखयितारं नविन्दते नकुत्रापि लभते ॥ २ ॥

२. जिस समय कोई भूखा मनुष्य भीख माँगने को उपस्थित होता है, अन्न की याचना करता है, उस समय जो अन्नवाला होकर भी हृदय को निष्ठुर रखता और सामने ही भोजन करता है, उसे कोई सुखदाता नहीं मिल सकता।

सइद्भोजोयोगृहवेददात्यन्नकामायचरतेकृशाय ।
अरमस्मैभवतियामहूताउतापरीषुकृणुतेसखायम् ॥ ३ ॥

सः । इत् । भोजः । यः । गृहवे । ददाति । अन्नऽकामाय ।
चरते । कृशाय । अरम् । अस्मै । भवति । यामऽहूतौ ।
उत । अपरीषु । कृणुते । सखायम् ॥ ३ ॥

अन्वयमुखेन प्रशंसति सइत् सएव भोजः दाताखलु यः गृहवे गृह्णातेर्गत्यर्थस्य कर्म स्यः प्रतिग्रहीत्रे अन्नकामाय अन्नं याचमानाय चरते गृहमागतवते कृशाय दारिद्र्येण एतादृशायाचिताय अन्नं ददाति प्रयच्छति अभ्यस्तानामादिरित्याद्युदात्तत्वं यामहूतौ यामागन्तारो देवाः अनयाविः कर्तिस्तुसहसहत्यादिना मन् प्रत्ययः ते आहूयन्तेऽनेनेति यामहूतिः यज्ञः तस्मिन् तस्मै दात्रे फलं अरमलं पर्याप्तं भवति कामप्रदानं भवतीत्यर्थः । उतापिच अपरीषु केवलपापकेति लोप् अन्यासु शत्रवीषु सेनासु सखायं कृणुते तद्वदाचरतीत्यर्थः तस्य सर्वे सखायएव नशत्रवइत्यर्थः ॥ ३ ॥

३. अन्न की इच्छा से किसी दुर्बल व्यक्ति के भिक्षा माँगने पर जो अन्न-दान करता है, वही दाता है। उसे सम्पूर्ण यज्ञ-फल मिलता है और वह शत्रुओं में भी सखा पा लेता है।

नससखायोनददातिसख्येसचाभुवेसचमानायपित्वः ।
अपास्मात्प्रेयान्नतदोकोअस्तिपृणन्तमन्यमरणंचिदिच्छेत् ॥ ४ ॥

न । सः । सखा । यः । न । ददाति । सख्ये । सचाऽभुवे ।
सचमानाय । पित्वः । अप । अस्मात् । प्र । इयात् । न । तत् ।
ओकः । अस्ति । पृणन्तम् । अन्यम् । अरणम् । चित् । इच्छेत् ॥ ४ ॥

व्यतिरेकेणनिन्दामाह सपुरुषः सखा नभवति यः पुरुषः सचाभुवे सर्वदा सहभवनशीलाय सचमानाय सेवमानाय उपसर्जनीभूताय सख्ये सखिजनाय पित्वः पितूनन्नानि नददाति नप्रयच्छति ससुहृत्तमोभवतीत्यर्थः अस्माददातुः सख्युः सः अपप्रेयात् अपगच्छेत् यथैनं परित्यज्य गच्छेत् इणोलिङि यासुट् अस्मिं अस्य ओकः निवासः नास्ति नभवति सदनंहि बन्धुभिः परिगतं। सगतः पुरुषः पृणन्तंप्रयच्छन्तं अन्यमरणं चित् अर्यं स्वामिनमेव इच्छेत् कामयेत ॥ ४ ॥

४. अपना साथी पास आता है और मित्र होकर भी जो व्यक्ति उसे अन्नवान नहीं करता, वह मित्र कहाने योग्य नहीं है। उसके पास से चला जाना ही उचित है। उसका गृह गृह ही नहीं है। उस समय किसी धनी दाता के यहाँ जाना ही उचित है।

पृणीयादिन्नाधमानायतव्यान्द्राघीयांसमनुपश्येतपन्थाम्।
ओहिवर्तन्तेरथ्येवचक्रान्यमन्यमुपतिष्ठन्तरायः ॥ ५ ॥ २२ ॥

पृणीयात्। इत्। नाधमानाय। तव्यान्। द्राघीयांसम्। अनु। पश्येत। पन्थाम्। ओ इति। हि। वर्तन्ते। रथ्याऽइव। चक्रा। अन्यम्ऽअन्यम्। उप। तिष्ठन्त। रायः ॥ ५ ॥ २२ ॥

धनवन्तं पुरुषं दाने प्रेरयति तव्यान् तवीयान् धनैरतिशयेन प्रवृद्धः पुरुषः नाधमानाय याचमानायार्थिने पृणीयादित् धनानि दद्यादेव पृपालनपूरणयोः प्वादीनां ह्रस्वः यदि दद्यात् द्राघीयांसं दीर्घशब्दादीयसुनि प्रियस्थिरेत्यादिना द्राघि इत्यादेशः दीर्घतमं पथां पंथानं सुकृतमार्गमनुपश्येत अनुपश्येत व्यत्ययेनात्मनेपदं। तत्र कारणमाह रायो धनानि ओहि आउ आवर्तन्ते खलु एकत्र नतिष्ठन्तीत्यर्थः। तत्र दृष्टान्तः—रथ्येव यथा रथ्यानि रथाद्यदिति तस्येदमित्यर्थे यत् रथसंबन्धीनि चक्राणि उपर्यधोभावेनावर्तन्ते तद्वत् आवृत्तिमेव दर्शयति अन्यमन्यं पुरुषं धनान्युपतिष्ठन्ते समवेतानि भवन्ति। उपाद्देवपूजासंगतिकरणइत्यात्मनेपदं तस्माद्धनानि देयानीतिभावः ॥ ५ ॥

५. याचक को अवश्य धन देना चाहिए। दाता को अत्यन्त लम्बा मार्ग (पुण्य-पथ) मिलता है। जैसे रथ-चक्र नीचे-ऊपर घूमता है, वैसे ही धन भी कभी किसी के पास रहता है और कभी दूसरे के पास चला जाता है—कभी एक स्थान पर स्थिर नहीं रहता।

॥ इत्यष्टमस्य षष्ठे द्वाविंशोवर्गः ॥ २२ ॥

अथ षष्ठी—

मोघमन्नँविन्दतेअप्रचेताःसत्यंब्रवीमिवधइत्सतस्य ।
नार्यमणंपुष्यतिनोसखायंकेवलाघोभवतिकेवलादी ॥ ६ ॥

मोघम् । अन्नम् । विन्दते । अप्रऽचेताः । सत्यम् । ब्रवीमि ।
वधः । इत् । सः । तस्य । न । अर्यमणम् । पुष्यति । नो इति ।
सखायम् । केवलऽअघः । भवति । केवलऽआदी ॥ ६ ॥

अदातारं दूषयति अप्रचेताः अप्रकृष्टज्ञानः दानेचेतोमनोयस्य नभवति सभोघं व्यर्थमेवा-न्नं विन्दते लभते । विदुलाभे तौदादिकः शेमुचादीनामिति नुमागमः । इदं सत्यं यथार्थमेवेति ब्रवीमि ऋषिरहं वदामि नकेवलं व्यर्थं किंतु तस्य पुरुषस्य तदन्नंवधएव अन्नं परासुरयतः स्वच्छन्दस्य वधसामानाधिकरण्यात् पुंल्लिंगता यथाणेरणावित्यत्र यत्कर्मसएवकर्तेति । अथवा सनिरर्थकोवधएव सः पुरुषः अर्यमणं उपलक्षणमिदं सर्वान् देवान् अर्यमादीन्नपुष्यति हविः प्रदानेन नपोषयति नो नापि सखायं समानख्यानं अभ्यागतमतिथिं मित्रवर्गं च नपोषयति पु-ष्यतेः दैवादिकः यच्छन्दाध्याहारादनिघातः अतएव केवलादी अदेः सुप्यजातावितिणिनिः अतउपधालक्षणावृद्धिः केवलमसाक्षिकमन्नं भुंजानः सकेवलाघोभवति केवलपापवान्भवति अघमेवकेवलं तस्य शिष्यते नैहिकं नामुष्मिकमिति तस्माद्यथा कथंचिद्दातव्यमित्यभिप्रायः ॥ ६ ॥

६. जिसका मन उदार नहीं है, उसका भोजन करना वृथा है। उसका भोजन उसकी मृत्यु के समान है। जो न तो देवता को देता है और न मित्र को देता है और स्वयं भोजन करता है, वह केवल पाप ही खाता है।

अथ सप्तमी—

कृषन्नित्फालआशितंकृणोतियन्नध्वानमपवृङ्क्तेचरित्रैः ।
वदन्ब्रह्मावदतोवनीयान्पृणन्नापिरपृणन्तमभिष्यात् ॥ ७ ॥

कृषन् । इत् । फालः । आशितम् । कृणोति । यन् । अध्वानम् ।
अप । वृङ्क्ते । चरित्रैः । वदन् । ब्रह्मा । अवदतः । वनीयान् । पृणन् ।
आपिः । अपृणन्तम् । अभि । स्यात् ॥ ७॥

हेवृषन् कामानां वर्षितरग्ने अर्यईश्वरस्त्वं अर्यःस्वामिवैश्ययोरिति यत्प्रत्ययान्तोनि-पातितः अर्यः स्वाम्याख्यायामित्यन्तोदात्तत्वं सत्वं विश्वानि सर्वाणि भूतजातानि संसं प्रसमु-पोदःपादपूरणइति समोद्विर्वचनं इच्छन्दोवधारणे आसमन्तात् संयुवसे मिश्रयसि । देवेषुमध्ये त्वमेवसर्वाणि भूतजातानि वैश्वानरात्मना व्याप्नोषि नान्यइत्यर्थः । किंच इळः इडायाः पृथिव्याः पदे स्थाने उत्तरवेदिलक्षणे एतद्वाइळायास्पदं यदुत्तरवेदीनाभिरितिब्राह्मणं । सत्वं समिध्यसे ऋत्विग्भिः संदीप्यसे स तादृशस्त्वं नोस्माकं वसूनि धनानि आभराहर ॥ १॥

१. अग्नि, तुम कामवर्षक और प्रभु हो। तुम विशेष रूप से प्राणियों में मिश्रित हो। तुम यज्ञ-वेदी पर जलते हो। हमें धन दो।

संगच्छध्वंसंवदध्वंसंवोमनांसिजानताम् ।
देवाभागंयथापूर्वेसंजानानाउपासते ॥ २ ॥

सम् । गच्छध्वम् । सम् । वदध्वम् । सम् । वः । मनांसि । जानताम् ।
देवाः । भागम् । यथा । पूर्वे । सम्ऽजानानाः । उपऽआसते ॥ २ ॥

हेस्तोतारोयूयं संगच्छध्वं संगताः संभूताः भवत समोगम्यृच्छीत्यादिनागमेरात्मनेपदं तथा संवदध्वं सहवदत परस्परं विरोधंपरित्यज्य एकविधमेववाक्यंमूतेतियावत् व्यक्तवाचांसमु-च्चारणेइति वदेरात्मनेपदं वोयुष्माकं मनांसि संजानतां समानमेकरूपमेवार्थं अवगच्छन्तु सं-प्रतिभ्यामनाध्यानइति जानातेरात्मनेपदं यथा पूर्वे पुरातनाः देवाः संजानानाः ऐकमत्यंप्राप्ताः हविर्भागं उपासते यथास्वं स्वीकुर्वंति तथा यूयमपि वैमत्यंपरित्यज्य धनं स्वीकुरुतेति-शेषः ॥ २ ॥

२. स्तोताओ, तुम मिलित होओ, एक साथ होकर स्तोत्र पढ़ो और तुम लोगों का मन एकसा हो। जैसे प्राचीन देवता, एक-मत होकर, अपना हविर्भाग स्वीकार करते हैं, वैसे ही तुम लोग भी, एक-मत होकर, धनादि ग्रहण करो।

अथ तृतीया—

समानोमन्त्रःसमितिःसमानीसमानंमनःसहचित्तमेषाम् ।
समानंमन्त्रमभिमन्त्रयेवःसमानेनवोहविषाजुहोमि ॥ ३ ॥

१ ऐ० ब्रा० १. २८।

सु॒मा॒नः । मन्त्रः॑ । सम्ऽइ॑तिः । स॒मा॒नी । स॒मा॒नम् । मनः॑ ।
स॒ह । चि॒त्तम् । ए॒षा॒म् । स॒मा॒नम् । मन्त्र॑म् । अ॒भि । म॒न्त्र॒ये॒ ।
वः॒ । स॒मा॒नेन॑ । वः॒ । ह॒विषा॑ । जु॒हो॒मि॒ ॥ २ ॥

पूर्वोर्धर्चः परोक्षकृतः उत्तरःप्रत्यक्षकृतः एषां एकस्मिन्कर्मणि सहप्रवृत्तानां ऋत्विजां स्तोतॄणांवा मंत्रः स्तुतिः शस्त्रात्मिका गुप्तभाषणंवा समानएकविधोस्तु तथा समितिः प्राप्तिरपि समानी एकरूपास्तु केवलमामकेत्यादिना समानशब्दान्ङीप् उदात्तनिवृत्तिस्वरेणङीपउदात्तत्वं तथा मनः मननसाधनमन्तःकरणं चैषांसमानमेकविधमप्यस्तु चित्तं विचारजं ज्ञानं तथा सह सहितं परस्परस्यैकार्थेनैकीभूतमस्तु अहं वोयुष्माकंसमानमेकविधं मंत्रं अभिमंत्रये ऐकविध्याय संस्करोमि तथा वोयुष्माकं स्वभूतेन सहमानेन साधारणेन हविषा चरुपुरोडाशादिनाहं जुहोमि तृतीयाचहोश्छन्दसीति कर्मणिकारकेतृतीया वषट्कारेण हविः प्रक्षेपयामीत्यर्थः ॥ ३ ॥

३. इन पुरोहितों की स्तुति एक सी हो, इनका आगमन एक साथ हो और इनके मन (अन्तःकरण) तथा चित्त (विचारजन्य ज्ञान) एकविध हों। पुरोहितो, मैं तुम्हें एक ही मन्त्र से मन्त्रित (संस्कृत) करता हूँ और तुम्हारा, साधारण हवि से, हवन करता हूँ।

स॒मा॒नीव॒आकू॑तिःसमा॒नाहृद॑यानिवः ।
स॒मा॒नम॑स्तुवो॒मनो॒यथा॑वः॒सुस॒हास॑ति ॥ ४ ॥ ४९ ॥

स॒मा॒नी । वः॒ । आऽकू॑तिः । स॒मा॒ना । हृद॑यानि । वः॒ । स॒मा॒नम् ।
अ॒स्तु॒ । वः॒ । मनः॑ । यथा॑ । वः॒ । सुऽस॑ह । अस॑ति ॥ ४ ॥ ४९ ॥

हे ऋत्विग्यजमानाः वोयुष्माकं आकूतिःसंकल्पोध्यवसायः समाना एकविधोस्तु तथा वोयुष्माकं हृदयानि समानानि एकविधानि संतु तथा वोयुष्माकं मनः अन्तःकरणं प्रत्येकापेक्षयैकवचनं तदपि समानमस्तु यथा वोयुष्माकं सुसह शोभनसाहित्यं असति भवति तथा समानमस्त्वित्यन्वयः असतेर्लेटि बहुलंछन्दसीति शपोलुगभावः ॥ ४ ॥

४. यजमान-पुरोहितो, तुम्हारा अध्यवसाय एक हो, तुम्हारे हृदय एक हों और तुम्हारा अन्तःकरण (मन) एक हो। तुम लोगों का सम्पूर्ण रूप से संघटन हो।

॥ इत्यष्टमस्याष्टमे एकोनपंचाशोवर्गः ॥ ४९ ॥

॥ इति दशमे मण्डले द्वादशोनुवाकः ॥ १२ ॥

वेदार्थस्यप्रकाशेन तमोहार्दं निवारयन् ।

पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्येऽष्टमाष्टकेऽष्टमोऽध्यायः ॥ ८ ॥

॥ इति दशमं मण्डलं समाप्तम् ॥

## ॥ अष्टमाष्टकः समाप्तः ॥

# ॥ समाप्तेयमृक्संहिता ॥

# वैदिक-संहिता

- ☆ **ऋग्वेद संहिता।** मूलमात्र (गुटका)
- ☆ **ऋग्वेद संहिता।** मूलमात्र।
- ☆ **ऋग्वेद संहिता।** भाषामात्र। रामगोविन्द त्रिवेदी
- ☆ **ऋग्वेद संहिता।** सायणाचार्य कृत भाष्य एवं हिन्दी व्याख्या सहित। 1-8 भाग सम्पूर्ण
- ☆ **ऋग्वेद संहिता।** (प्रथम अध्याय, सूक्त 1-19) हिन्दी व्याख्या तथा हिन्दी अंग्रेजी अनुवाद। सम्पादक-प्रो. उमाशंकर शर्मा 'ऋषि'
- ☆ **शुक्लयजुर्वेद संहिता।** मूलमात्र (गुटका)
- ☆ **शुक्लयजुर्वेद संहिता।** सम्पा. श्री दौलतराम गौड़
- ☆ **शुक्लयजुर्वेद संहिता।** मूलमात्र। (निर्णयसागर संस्करण)
- ☆ **शुक्लयजुर्वेद संहिता।** पदपाठ-उव्वट-महीधरभाष्य संवलित-तत्त्वबोधिनी हिन्दी व्याख्या सहित। डॉ. रामकृष्ण शास्त्री
- ☆ **सामवेद संहिता।** मूलमात्र (गुटका)
- ☆ **सामवेद संहिता।** सायणभाष्य तथा पं. रामस्वरूप शर्मा 'गौड़' कृत हिन्दी भाषानुवाद सहित।
- ☆ **अथर्ववेद संहिता।** मूलमात्र (गुटका)
- ☆ **अथर्ववेद संहिता।** सायणभाष्य तथा पं. रामस्वरूप 'गौड़' कृत हिन्दी भाषानुवाद सहित। 1-8 भाग


**चौखम्बा विद्याभवन**

**वाराणसी**